# श्रीमद्वाल्मीकिरामायणम्

## श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(प्रथमसंपुटः—बालकाण्डः)




प्राच्य विद्या संशोधनालयः

मैसूरुविश्वविद्यानिलयः

मैसूरु

१९६०

# श्रीमद्वाल्मीकिरामायणम्

श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(प्रथमसंपुटः—बालकाण्डः)



प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मैसूरु

१९६०

ORIENTAL RESEARCH INSTITUTE, SANSKRIT SERIES 102

GENERAL EDITOR:

H. DEVEERAPPA, M.A.,
*Director*

# ŚRĪMADVĀLMĪKIRĀMĀYAṆA

WITH

## AMṚTAKATAKA OF MĀDHAVAYOGI

(VOL. I—BĀLAKĀṆḌA)

EDITOR:

VIDWAN K. S. VARADACHARYA,
*Research Assistant*



ORIENTAL RESEARCH INSTITUTE

UNIVERSITY OF MYSORE

MYSORE

1960

प्राच्यविद्यासंशोधनालयसंस्कृतग्रन्थमाला १०२

प्रधानसम्पादकः
ह्वेच्. देवीरप्प, एम्.ए.,
डैरेक्टर्

# श्रीमद्वाल्मीकिरामायणम्

## श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(प्रथमसंपुटः—बालकाण्डः)

सम्पादकः
विद्वान् के. एस्. वरदाचार्यः,
रिसर्च् असिस्टेण्ट्




प्राच्यविद्यासंशोधनालयः
मैसूरुविश्वविद्यानिलयः
मैसूरु
१९५९

# PREFACE

IT is well known that there are several editions of the great epic, Vālmīki Rāmāyaṇa, with or without commentary. But an authoritative edition of this great work is under preparation in one of our sister Institutes, the Oriental Institute, Baroda.

This Institute therefore, has undertaken to bring out a critical edition of the same with the Amṛtakataka commentary of the Mādhavayogi (about 1700 A.D.). 'Amṛtakataka' is brought to light for the first time.

Vidwan Sri K. S. Varadacharya, one of the Research Assistants of our Institute, has edited the work ably. He has also discussed, in brief, the date of the commentator and the special features and importance of the commentary. I wish to state that it is also intended to give the critical introduction and appreciation of the same in a separate volume after the whole work is published. The second volume is under preparation.

My thanks are due to the authorities of the Palace Saraswati Bhandara, Mysore and Oriental Manuscripts

Library, Madras, for lending their manuscript copies of the work for collation. My thanks are also due to the Deputy Director of Printing and Stationery, Government Branch Press, Mysore, for getting the work printed in time and in an efficient manner.

H. DEVEERAPPA,

*Director,*
*Oriental Research Institute.*

DATE 3-4-1959
MYSORE.

# प्रस्तावना

'वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः।

श्रृण्वन् रामकथानादं को न याति परां गतिम्'

तथ्यमिदं वाक्यमक्षरशः। बहुभ्यः बहुधा श्रुतमपीदं रामायणं न हि कस्यापि सहृदयस्य रसिकस्य मनस्यलंभावमापादयति।

आदिकाव्यत्वेन प्रसिद्धमिदं श्रीमद्वाल्मीकिमहर्षिविरचितं रामायणं न केवलं कालापेक्षया आद्य, अपि च 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इत्युक्तरामणीयकविशिष्टेषु काव्येषु आद्यं— रमणीयतममिति वचनं नूनं विदितवेदनमेव।

अत एव बहुशः प्रकाशितस्याप्यस्य रामायणस्य पुनरपि प्रकाशने वयमत्युत्सुका एव। तत्रापि परमिदमामोदस्थानं— यत्—एतावता कालेनाप्रकाशितेन अमृतकतकाख्यव्याख्यानेन समलङ्कृतमिदं इदानीं सहृदयेभ्य उपायनीक्रियत इति।

'रामायण' पदनिर्वचनम्

'रामायण' पदं च एवं व्याकुर्वन्ति *—

महेश्वरतीर्थः—'रामः अयनं—प्रतिपाद्यः यस्य तत् रामायणम्'

गोविन्दराजः—'रामस्य अयनं—रामायणं—रामचरितमित्यर्थः। रामः अय्यते प्राप्यते अनेनेति वा रामायणम्। रामः अयनं प्रतिपाद्यः यस्येति वा रामायणम्'

कतकः—'अयनं चरितं, रामस्यायनं रामायणम्। 'पूर्वपदात् संज्ञायां—'इति णत्वम्'

---

* बाल. 1–99 श्लोकव्याख्यानानि, 4–7 श्लोकव्याख्यानानि च द्रष्टव्यानि।

तिलकः—'रामः अयनं—प्रतिपाद्यः यस्य तत् रामायणम्'

शिरोमणिः—'रामायणं रामप्रतिपादकं, रामप्रापकं वा'।

परन्त्वेष्वर्थेषु रामचरितप्रतिपादकत्वात् 'रामायणम्' इत्यर्थः स्वादुतमः।

एतद्ग्रन्थप्रधानप्रतिपाद्यविषये विप्रतिपत्तिः

एवमस्य महाकाव्यस्य रामायणमित्याख्यया रामचरितमेव विषय इति स्पष्टत्वेऽपि विवदन्त एव मनीषिणः। एतत्काव्यविषय-प्रतिपादकश्लोकस्य दर्शने युक्त एव च विवादः। यथा –

*'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्।
पौलस्त्यवधमित्येव चकार चरितव्रतः'

इति सोऽयं श्लोकः। अत्र रामचरितस्य, सीताचरितस्य पौलस्त्य-वधस्य च विषयत्वे सामान्यतोऽभिहिते—

गोविन्दराजः—ननु काव्यमिदं नारंभणीयम्; 'काव्यालापांश्च वर्जयेत्' इति निषेधादित्याशङ्क्याह—रामायणमिति। समस्तगुणसंपन्नरामविषयत्वान्नास्य निषिद्धत्वं, किन्तूपादेयत्वमेवेत्यर्थः। इदं च रामचरितप्रतिपादनमप्राधान्येन। प्राधान्येन तु सीताचरितमेव प्रतिपाद्यत इत्याह—कृत्स्नं सीतायाश्चरितमिति। कृत्स्नं रामायणं सीताचरितपरं। अत एवोक्तं श्रीगुणरत्नकोशे—'श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे' (श्लो. 14) इति। आभाणकश्च—'प्रातर्द्यूतप्रसङ्गेन मध्याह्ने स्त्रीप्रसङ्गतः। रात्रौ चोरप्रसङ्गेन कालो गच्छति धीमताम्' इति †। अत एव 'कृपावानविकत्थनः' इत्याद्युक्तलक्षणधीरोदात्तरूपो रामः कुशलवाभ्यां रामायणं श्रुतवान्। रामायणस्य रामैकपरत्वे स्वेनैव सदसि श्रवणं न सङ्गच्छते। सीतापरत्वे तु सङ्गच्छते, विरहिणः कामिनीकथाचरितश्रवणस्य स्वाभाव्यात्। एवं व्यञ्जनावृत्त्या सीतारामयोः प्रतिपादनमुक्त्वा शब्दवृत्त्या सिद्धमितिवृत्तमाह—पौलस्त्येति। पौलस्त्यवधस्य फलत्वात्तेन व्यपदेशः। ... ....इत्येवेत्यस्यायमर्थः-

---

* बाल. 4-7. † महाभारतरामायणभागवतान्यत्र विवक्षितानि.

पौलस्त्यवधव्याजेनाप्रधानरामचरितं, प्रधानसीताचरितं कृतवानिति । यच्चकार तद्गापयामासेति योजना । उत्तरश्लोके 'अगायताम्' इत्यनुवादात् ।"

कतकः—'सीताचरितप्रतिपादकमपि काव्यं कृत्स्नमपि पौलस्त्यवधमित्येव चकार। तथा च शिशुपालवधे माघकाव्यमितिवत् पौलस्त्यवधे 'रामायणम्' इत्येव काव्यस्य विशिष्य प्रतिप्राद्यांशः सर्गान्तेषु वक्तव्यः—इत्यावेदितम् । इदमेव चोक्तं प्रागपि—'दशशिरसश्च वधं निशामयध्वम्' इति'।

तिलकः—'रामस्य अयनं—चरितं, तत्प्रतिपादकं च महत् काव्यं पौलस्त्यवधमित्येवंनामकं चकार। यथा कृष्णचरितवर्णनरूपमाघकाव्यस्य शिशुपालवधमिति नाम'।

शिरोमणिः—'पौलस्त्यवधं—रावणवधप्रतिपादकं, रामायणं-रामचरितप्रतिपादकं, सीतायाश्चरितं-सीतासम्बन्धिचरितविशिष्टं अत एव महत्—सर्वश्रेष्ठं, अत एव च कृत्स्नं—संपूर्णम्'............ इति यत् काव्यं चकार तदेवाग्रहयतेत्यर्थः।'

### रामचरितस्यैव प्राधान्यं युक्तम्

एवं व्याख्यातृषु विवदत्स्वपि इदमत्र द्रष्टव्यम्। अस्य काव्यस्य प्रसिद्धिः रामायणमिति । रामायणपदं च 'रामस्य अयनं' इति व्युत्पत्तिसिद्धम् । अत्र संज्ञायां णत्वविधानेन 'रामायण' पदस्य संज्ञात्वेऽपि यौगिकार्थः न परित्यक्तुं शक्यः; नारायणादिपदवत्। न हि इदं पदं डित्थादिपदवत् केवलरूढं, किन्तु योगरूढम्। एवञ्चास्य काव्यस्य रामचरितमेव विषय इति एतन्नाम्ना स्पष्टमवगम्यते ।

अपि चात्रेमानि वाक्यान्यवधेयानि—

'यः पठेद्रामचरितम्' (बाल—1-98)

'रामस्य चरितं कृत्स्नम्' (बाल—2-32)

'वृत्तं कथय वीरस्य' (बाल—2-33)

'कुरु रामकथां पुण्याम्' (बाल—2-36)

'रघुवरचरितं मुनिप्रणीतम्' (बाल—2-43)

'रघुवंशस्य चरितम्' (बाल—3-9)

'प्राप्तराज्यस्य रामस्य + चकार चरितं कृत्स्नम्'
(बाल—4-1)

'रामस्य ये चेमां संहिताम्' (युद्ध—131-124)

'चरितं राघवस्य' (उत्तर—111-19) (उत्तर—111-23)

'रघुनाथस्य चरितम्' (उत्तर—111-21)

'चरितं तव' (उत्तर—94-27)

'शुश्राव रामचरितम्' (उत्तर—74-14 & 16)

इत्यादीनि। एवं स्वरसतः प्रतीतस्यार्थस्य बाधने किं नियामकं स्यात्? 'कृत्स्नं सीतायाश्चरितं' इति वाक्यं, स्वप्रशंसापरकाव्यस्य रामेण श्रवणानुपपत्तिश्चेति तत्र निमामकं वक्तव्यम्।

परन्तु 'कृत्स्न' पदस्य पूर्वेणाप्यन्वयसंभवात् अन्यथासिद्धमिदम्।

'रामस्य चरितं कृत्स्नं कुरु त्वम्' (बाल—2-32)

'रामस्य चकार चरितं कृत्स्नम्' (बाल—4-1)

'कृत्स्नं रामायणं काव्यम्' (बाल—2-41, उत्तर—93-4)

इत्यादिषु कृत्स्नपदं काव्यविशेषणमेवेति प्रकृतेऽपि तथैव युक्तम्। कृत्स्नमिति क्रियाविशेणं वा। अन्यथा 'कृत्स्नं सीताचरितं' इत्यर्थो बाधितः स्यात्। 'कृत्स्नं रामचरितं' इत्यर्थे तु तत्पत्न्याः सीतायाः चरितस्य, फलस्य रावणवधस्य च रामचरितन्यग्भूतत्वेन न कश्चन बाधः।

'श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे'* इत्युक्तिरपि 'श्रियं त्वत्तोऽप्युच्चैर्वयमिह भणामः श्रृणुतराम्'† इत्यादिवत् स्तोतव्यवस्तुन्यादरातिशयात्।

---

* श्रीगुणरत्नकोशे—श्लो 14. † श्रीगुणरत्नकोशे—श्लो 9.

'प्रातर्द्यूतप्रसङ्गेन' इत्यादिवचनमपि चमत्कारविशेषमात्रम्; अन्यथा भारतस्य द्यूतप्रधानत्वप्रसङ्गात्।

किञ्चात्र 'कृत्स्नं रामायणं सीताचरितपरम्' इति नेयं वाचो युक्तिः, तेषां पदानां द्वितीयान्तत्वात्। अन्यथा 'पौलस्त्य-वधम्' इत्यनुपपन्नं स्यात्, वधशब्दो हि पुंलिङ्गान्तः।

अतः अत्रैवमन्वयः,—एतत्सर्गारम्भ एव 'चकार चरितं कृत्स्नं' इति रामायणरचनमभिहितम्, अतः पुनरत्र 'रामायणं चकार' इति कथनस्य न प्रसक्तिः। प्रथममुक्तस्य विवरणरूप-मिदमिति कथने, तर्हि तदनन्तरमेवायं श्लोकः स्यात्। न तु एतावद्व्यवधानेन। 1-2 श्लोकाभ्यां रामायणरचनमुक्तम्। 3 श्लोकेन रामायणप्रयोगाधिकार्यन्वेषणमभिहितम्। 4 श्लोकेन कुशलवागमनं, 5 श्लोकेन कुशलवयोः प्रयोगार्हत्वेन वाल्मीकिदर्शनं, 6 श्लोकेन तेभ्यो रामायणप्रदानं चाभिहितम्। 8-9 श्लोकाभ्यां कुशलवाभ्यां रामयणगानमुक्तम्। एतादृशक्रममध्ये, तृतीयश्लोक एव 'कृत्वाऽपि तत्' इति रामायणरचनस्य वृत्तत्वेनानुवादे स्पष्टे सति च 7 श्लोकेन पुनरपि 'रामायणं चकार' इति कथनं कथं घटताम्। 'इत्येवं' इत्यस्य स्वरसतोऽन्वयो न भवत्येव। 'इत्येव' इति पाठेऽपि तथैव।

किञ्च, 'तावग्राहयत' इत्यत्र 'तौ अपाठयत' इति स्वरसतो निर्वाहसंभवे स्वार्थणिजाश्रयणमयुक्तम्। 'अग्राहयत' इति च द्विकर्मकः। 'तौ' इत्येकं कर्माभिहितम्। किं अपाठयत्? इति द्वितीयकर्मप्रश्ने तदुत्तरसमर्पकत्वमेवानन्तरश्लोकस्य युक्तम्। एवमेव शिरोमणिना व्याख्यातम्। परन्तु शिरोमणिव्याख्यानेऽपि क्लेशो वर्तत एव। 'इति यत् काव्यं चकार' इत्यन्वये, इतिशब्देन व्यवधा-नात्। पौलस्त्यवधादिशब्दानां द्वितीयान्तत्वं च न स्यात्। 'चकारेति यत् तदेवाग्राहयत' इति त्वनन्वितम्' यच्छब्दो हि तदा धात्वर्थकर्मवाची, तस्य पाठनं न संभवत्येव। यत्तच्छब्दाध्याहारश्च।

अत एवमन्वयो युक्तः—'तावग्राहयत' इत्यस्यैव द्वितीय कर्म-समर्पकं 'पौलस्त्यवधं' इति पर्यन्तम्। 'इत्येवं चकार चरितव्रतः'

इति भिन्नं वाक्यं पूर्वोक्तरामायणरचन—कुशलवपरिग्रहण-रामायणपाठनरूपाणां कर्मणां सामान्यत उपसंहारार्थं प्रवृत्तम्। एवञ्च—प्रभुः—वाल्मीकिः तौ-कुशलवौ सीताचरितप्रतिपादकं रावणवधप्रतिपादकं, रामचरितपरं रामायणसंज्ञकं कृत्स्नमपि महत् काव्यमग्रहायत—अपाठयत। कृत्स्नमिति क्रियाविशेषणं वा। इत्येवं स्वकर्तव्यं सर्वं कृत्वा वाल्मीकिः कृतकृत्योऽभूत् इति 'इत्येवं चकार चरितव्रतः' इत्यनेनोच्यते। इत्येवेति पाठेऽपि अर्थस्तुल्य एव। एवं वाल्मीकिकृत्योपसंहारकथनानन्तरं शिष्यकर्तव्यमनन्तरश्लोकैः 'पाठ्ये गेये च मधुरं+मधुरं ताव-गायताम्' इत्यादिभिरुच्यते।

एवञ्च न कोऽपि दोषः प्रसज्यते।

तथाच पूर्वोदाहृतैर्बहुभिर्वचनैः रामचरितस्यैव प्राधान्य-प्रतीतौ नायं श्लोको बाधक इति रामचरितमेव प्रधानविषयोऽस्य काव्यस्येति युक्तम्।

अविकत्थनो रामः स्वप्रशंसापरं काव्यं कथं सदसि शुश्राव ? कथं वा स्वचरितपरं काव्यं स्वयमेव 'महानुभावं चरितं निबोधत'* इति प्रशशंस ?

अत्रेमानि व्याख्यानानि—

कतकः—'परिषदि स्वप्रशंसार्थकत्वेन महापुरुषत्वात् लज्जया शनैश्शनैः प्रवृत्तिरिति द्योत्यते† शनैरिति पदेन।'

तिलकः—'अस्य श्लोकस्य लक्ष्मणादीनामेदच्छ्रवणप्रवर्तकार्थ-त्वेन—न दोषः'।

शिरोमणिः—'एतेन आत्मयशो न श्राव्यमित्याशङ्क्य सीता-चरितत्वात् रघुनाथेन श्रुतमिति — शङ्कासमाधानमापाततो रमणीयम्। आत्मयशो न श्राव्यमित्यादिनिषेधानां गर्वनिवारण-तात्पर्यकाणां संभावितगर्ववत्प्राकृतजनपरत्वेन अत्र निषेधशङ्कान-वसरत्वात्। सीताचरितपरत्वेन समाधानमप्ययुक्तम्, तच्चरितस्य रामचरितानतिरेकेण शङ्कायास्तादवस्थ्यात्। ............ अत एव

---

* बाल 4–30. † बाल. 4–31.

'काव्यं रामायणं कृत्स्नं' इत्यादौ काव्यं रामायणत्वेन विशेषितम्। 'सीतायाश्चरितं महत्' इति सीताचरितस्य महत्वोक्त्या सीताचरितस्य प्राधान्यमिति तु न भ्रमितव्यम्; तत्रत्यमहच्छब्दः काव्यान्वयीति तत्रैव निर्णीतत्वात्'।

अत्र कतकोक्तं शिरोमण्युक्तं च समाधानं हृदयङ्गममेव।

वस्तुतस्तु—'आत्मप्रशंसा त्याज्या' इत्यादौ स्वेन स्वस्य प्रशंसनस्यैव हेयत्वमुच्यते। तदेव 'विकत्थनत्वम्'। अत एव 'प्रत्यक्षे गुरवः स्तुत्याः' इत्यादिवचनं सङ्गच्छते। अन्यकर्तृकस्वप्रशंसाश्रवणं तु कवीनामाश्रयदातॄ राज्ञो नैव दोषावहम्। स्वबिरुदादीन् खलु स्वपुरतो घोषयन्ति राजानः। प्रयोजनं तु तस्य—प्रजानां स्वस्मिन् अनुरागस्य विश्वासस्य चाधानमित्याद्यन्यदेतत्। सहस्रनामसु भगवतो हि 'स्तवप्रियः' इति नाम पठ्यते।

किञ्च आत्मचरितश्रवणं, आत्मप्रशंसनं च विलक्षणमेव। महात्मानोऽपि स्वचरितं स्वयं लिखन्ति इदानीं; न हि ते स्वप्रशंसकाः। अतः चरितमन्यत्, प्रशंसा चान्यैवेति।

एवञ्चास्य महाकाव्यस्य रामचरितप्राधान्ये न किञ्चिद्बाधकम्। आदरविशेषवशाच्च सीताचरितप्राधान्यवचनं महतां केषाञ्चिदिति भावयामः।*

गोविन्दराजार्या अपि द्वितीयसर्गव्याख्यायां† 'प्रबन्धनायकस्य रामस्य नायकगुणा दर्शिताः, नायकगुणवर्णनेन हि काव्यं प्रथते' इति वदन्तः हार्दं भावमावेदयन्ति।

### शृण्वन् रामकथानादम्!

'शृण्वन् रामकथाकाव्यं को न याति परां गतिं' इति न श्रूयते, किन्तु 'रामकथानादम्' इति। अतः प्रस्तावनारंभे 'तथ्यमिदं वाक्यमक्षरशः' इत्युक्तमस्माभिः। तथा हि—

अस्य आद्यकाव्यत्वेन प्रसिद्ध्या इदं रामायणं इतरलौकिककाव्यवर्गेष्वेवान्तर्भवतीति वक्तव्यम्। परन्तु आर्षकाव्यं स्यान्नाम। आर्षत्वं तद्वैशिष्ट्यहेतुः स्यात् कामम्!

---

* बाल. 4–31 श्लोकटिप्पण्यपि द्रष्टव्या. † बाल. 2-32.

काव्यं हि द्विविधं—दृश्यं, श्रव्यं च। श्रव्यमपि पद्य-गद्य-चम्पूभेदेन भिन्नम्। तत्र पद्यकाव्यस्य लक्षणं तु—*'सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्' इत्यारभ्योक्तं प्रसिद्धमेव।

परन्त्वत्रेदं विमर्शनीयम्—लक्ष्यानुगुणमेव लक्षणं निरुच्यते लाक्षणिकैः। तत्र पूर्वोक्तरीत्या लक्षणं निर्वचन्तः लाक्षणिकाः किमिति प्रथमलक्ष्यभूतरामायणगतं वैशिष्ट्यं उपेक्षितवन्तः? इति न जानीमः।

अत्रेमे श्लोकखण्डाः अवधानार्हाः—

'सर्वश्रुतिमनोहरम्' (बाल—4-22)
'पाठ्ये गेये च मधुरम्' (बाल—4-8)
'काव्यमेतदगायताम्' (बाल—4-9)
'अगायतां मार्गविधानसंपदा' (बाल—4-39)
'जगतुस्तौ समाहितौ' (बाल—4-18)
'इदं काव्यमगायताम्' (बाल—4-14)
'मधुरं तावगायताम् (बाल—4-19)
'विश्रुतार्थमगायताम्' (बाल—4-28)
'श्रोत्राश्रयसुखं गेयम्' (बाल—4-29)
'रामायणं काव्यं गायेथाम्' (उत्तर—93-5)
'आस्वाद्यास्वाद्य गायताम्' (उत्तर—93-8)
'ततो गेयं प्रवर्तताम्' (उत्तर—93-10)
'गेया मधुरया गिरा' (उत्तर—93-11)
'सुमधुरं गायेथाम्' (उत्तर—93-14)
'आदिप्रभृति गेयम्' (उत्तर—93 15)
'गायेथां मधुरं गेयम्' (उत्तर—93-16)
'सर्वं तत्रोपगायताम्' (उत्तर—94-1)
'गेयेन समलङ्कृतम्' (उत्तर—93-2) इत्यादयः।

* एतत्संपुट एव 87 पुटे द्रष्टव्यम्।

एतेन इदं काव्यं न केवलं पठ्यकाव्यं, अपि तु गेयकाव्यमपीति। यद्यपि श्रव्यकाव्येषु पठ्यगेयविभागाकरणात् सर्वेषामपि श्रव्यकाव्यानां पठ्यत्वं गेयत्वं च वर्तत एवेति समर्थयितुं शक्यम्, अथापि काव्यलक्षणवाक्यपर्यालोडने—आलङ्कारिकाणां काव्यार्थविषये—ध्वन्यलङ्कारवर्णनादिविषये—यावान् आदरः न तावान् तस्य सुश्राव्यत्वविषय इति प्रतिभाति। यत्र कुत्रचिदुच्यमानं सुश्राव्यत्वमपि शब्दसौष्ठवादतिरिक्तं गानार्हत्वं न निर्बन्धयति। अयमर्थ इदानीन्तनानामस्माकमनुभवपथ एव वर्तत इति नाधिकं वक्तव्यम्।

लोके हि सामान्यतः सङ्गीतसाहित्ययोः निर्दुष्टयोर्मेलनं काचित्कमेव। अतः आगच्छता कालेन गम्भीरेषु विषयेष्ववगाहनेच्छूनां तर्कपूर्वकचर्चाप्रवणमतीनां आलङ्कारिकाणां 'सर्वमपि काव्यं गानार्हं भवेत्' इति मनीषा प्रायः गलितेव प्रतिभाति। रामायणे परमयं विशेषः—इदं न केवलं पठ्यकाव्यं, किन्तु गेयकाव्यमपीति।

### रामायणप्रयोगाधिकारी ?

रामायणं विरच्य भगवान् वाल्मीकिः तस्य प्रचाराय समुचितमधिकारिणं चिन्तयन्नासीत्। तदा द्वौ कुमारौ समुपस्थितौ तच्चिन्ताशमनायेव। महर्षिश्च तावेव रामायणप्रचाराय समुचिताधिकारिणाविति तौ तदर्थं पर्यग्रहीत्।

### कुशीलवौ !

कौ तौ? न कुशलवौ, अपि तु कुशीलवौ। तथाह्युक्तम्—

'कृत्वा तु तन्महाप्राज्ञः सभविष्यं सहोत्तरम्।
चिन्तयामास को न्वेतत् प्रयुञ्जीयादिति प्रभुः॥
तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः।
अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ॥
कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ।
भ्रातरौ स्वरसंपन्नौ ददर्शाश्रमवासिनौ॥

स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ ' इति ॥

(बाल.—4, 3-6)

भगवान् वाल्मीकिः स्वाधीनसर्वशब्दः 'कुशलवौ' इति वक्तव्ये किमिति 'कुशीलवौ' इति तौ तत्र तत्र निर्दिशति? रामायणगानानुगुणसंगीतज्ञानस्वरसंपत्त्यादिकं तयोरासीदितीममर्थं प्राधान्येन सूचयितुमेव तथा प्रायुङ्क्तेति मन्यामहे ।

एवञ्च एतादृशाधिकारिण एव भगवता स्वकृतरामायणप्रचारणाय ग्रहणात् नूनं महर्षिर्वाल्मीकिः स्वकृतेः पठ्यकाव्यत्वापेक्षया गेयकाव्यत्वमेव बहुमन्यत इति वयं विभावयामः ।

### महर्षिर्वाल्मीकिः

रामायणविषये, तत्कर्तुः महर्षेः वाल्मीकेः कालादिविषये च पराक्रान्तं सूरिभिः । एतद्विषये वक्तव्यं सर्वं पश्चाद्विचारयामः । महाभारतकोशवत् रामायणकोशमपि विस्तृतं रामायणगतसर्वविशेषार्थसङ्ग्राहकं प्रकटीचिकीर्षवो वयम् । अतस्तद्विषये इदानीं नाधिकं प्रस्तूयते ।

### श्रीमाधवयोगिनः

अमृतकतकव्याख्यातुः अपरिचितत्वेन तस्य परिचयमात्रं इदानीं क्रियते । अधिकं तु परस्तात् ।

अस्य व्याख्यानस्य कर्ता च 'माधवयोगी' इति तत्तत्काण्डव्याख्याया अन्तिमवाक्यादवगम्यते । सुगृहीतनामधेयः सायणमाधवो वा अयं? उतान्यः? इति विचारणायां द्वितीय एव पक्षः प्रतिष्ठितो भवति ।

### कतकव्याख्यानोद्देशः

स्वव्याख्याया उद्देशमेवमेते प्रकटयन्ति व्याख्यारम्भे—

'असङ्गतव्याकृतिपांसुपङ्किलं
रामायणं तीर्थसमुद्धृतामृतम् ।
योगीन्द्रवाणीकतकाद्विपङ्किलं
सर्वोपकारक्षममस्तु सर्वदा ॥' इति ।

अत्र प्रथमपादेन प्रायः गोविन्दराजव्याख्यां, द्वितीयपादेन महेश्वरतीर्थव्याख्यां चैते कटाक्षयन्तीति प्रतिभाति। यतः उत्तरत्र बहुषु स्थलेषु प्राय इमे एव व्याख्याने एते खण्डयन्ति।

माधवयोगिनां कालः

गोविन्दराजैः महेश्वरतीर्थनाम्नः उल्लेखात् * महेश्वरतीर्थेभ्यः अर्वाचीनाः गोविन्दराजा इति स्पष्टमवगम्यते। स्वीयव्याख्यारम्भे नारायणतीर्थान् नमस्कुर्वन्ति † महेश्वरतीर्थाः। महेश्वरतीर्थाः नारायणतीर्थानां ‡ पुत्रा इति, शिष्या इति च विवादः। 'देशिकान्' इति पदप्रयोगात् शिष्या एत इति स्वरसम्। उभयथाऽपि नारायणतीर्थकालनिर्णये महेश्वरतीर्थानामपि कालः निर्णीयेत। नारायणतीर्थैः मधुसूधनसरस्वतीविरचितसिद्धान्तबिन्दोः व्याख्या कृतेति § ज्ञायते। अपि च नारायणतीर्थाः स्वीयभक्तिचन्द्रिकाग्रन्थे मधुसूदनसरस्वतीः उल्लिखन्ति च। एतेन ज्ञायते—प्रथमं मधुसूदनसरस्वत्यः, ततः नारायणतीर्थाः, ततः महेश्वरतीर्थाः, ततः गोविन्दराजाः, ततो माधवयोगिनः इति क्रमः इति। मधुसूधनसरस्वतीनां कालश्च ‖ क्रैस्त 1540—1623—इति ज्ञायते। एवञ्च नारायणतीर्थाः क्रैस्त—षोडशशतकान्तिमभागे

---

* अयो-101 सर्गारंभे—'अत्र महेश्वरतीर्थेन—' इत्यादिवाक्यं द्रष्टव्यम्।

† 'प्रणमय्य नारायणतीर्थदेशिकान्—' इत्यादिश्लोको द्रष्टव्यः।

‡ See page 414 of Silver Jubilee Vol. of Bhandarkar Oriental Research Institute, Poona.

§ नारायणतीर्थविरचितायाः काश्यां सरस्वतीभवनात् प्रकाशितायाः भक्तिचन्द्रिकायाः भूमिकां पश्यत।

‖ काश्यां सरस्वतीभवनात् प्रकाशितायाः मधुसूदनसरस्वतीविरचितवेदान्तकल्पलतिकाया भूमिकां पश्यत। महामहोपाध्याया अनन्तकृष्णशास्त्रिमहोदया अपि स्वसंपादिते 'न्यायामृताद्वैतसिद्धी' ग्रन्थारंभे षोडशशतकान्तिमभाग एव मधुसूदनसरस्वतीनां काल इति वदन्ति।

सप्तदशशतकारम्भे वा स्युः। तच्छिष्याः महेश्वरतीर्थाश्च सप्तदश-शतकपूर्वभागे स्युः। गोविन्दराजाश्च सप्तदशशतकोत्तरभागे स्युः*—इति कतककृतां माधवयोगिनां कालः—तदनन्तरमेवेति निश्चीयते।

एवं पूर्वावधौ निश्चिते उत्तरावधिं एवं निश्चिनुमः। तिलक-नाम्नः रामायणव्याख्यानस्य कर्ता 'रामः' स्वव्याख्यायां कतकं बहुश उद्धरति। विशिष्य युद्धकाण्डान्ते एवं वदति।

'निर्मलं कतकक्षोदादपि रामायणार्णवम्।
अत्यन्तं निर्मलं चक्रे रामः स्वमतिवाससा॥' इति।

उत्तरकाण्डान्ते—अयमेव श्लोकः—'रामायणार्णवम्' इति-स्थाने—'रामायणाम्बुधिम्' इति किञ्चिद्व्यत्यस्तो दृश्यते।

अयं च तिलककर्ता 'रामः' कः? इति संशये नागेशभट्टस्यैव 'रामः' इति नामान्तरमिति केचिदभिप्रयन्ति। कुत्रचित् ताल-पत्रेषु अन्ते तथा निर्देशोऽपि दृश्यते। शिरोमणिव्याख्याकर्ताऽपि तिलकसम्मतं पाठं निर्दिशन् † 'इति भट्टपाठ' इति बहुश-उल्लिखति। तत्र—नागेशभट्ट एव भट्टपदाभिधेय इति भाति। परन्तु तिलकव्याख्यातुर्न तथोक्तिं पश्यामः। 'रामाभिरामे श्रीरामीये' इत्येव सर्वत्र दृश्यते। पूर्वोक्तश्लोकेऽपि 'रामः' इत्येव स्वनामानं निर्दिष्टवान् सः।

नागेशभट्टस्यैव उत्तराश्रमे 'रामतीर्थः' इति नाम स्यादिति केचिदभिप्रयन्ति। परन्तु तीर्थोपपदं तु तस्य नाम न कुत्रापि पश्यामः।

---

* गोविन्दराजानां कालविषये श्री. K. V. रङ्गस्वामैय्यङ्गार्याः, श्री. P. P. S. शास्त्रिणश्च अन्यथान्यथैवाभिप्रायमाविष्कुर्वन्ति (See page 30 & 414 in Silver Jubilee Volume of Bhandarkar Oriental Research Institute, Poona.) तत्सर्वस्यात्राप्रस्तुतत्वान्ना-धिकं लिखामः।

† बा. 4–4 श्लो, 4–7 श्लो, 4. 34. श्लोकानां शिरोमणिव्याख्याद्रष्टव्या।

एवं स्थिते तिलकस्य नागेशविरचितत्वेन व्यवहारे इदमेव मूलं स्यात्।

तिलकव्याख्यायां—युद्धकाण्डान्ते 'निर्मलं कतकक्षोदात्' इत्यादिश्लोकसमनन्तरं अयं श्लोको दृश्यते—

'भट्टनागेशपूज्येन सेतुः श्रीरामवर्मणा।
कृतः सर्वोपकृतये श्रीमद्रामायणाम्बुधौ॥'

इति। अत्र नागेशभट्टनामदर्शनात् तिलकस्य नागेशभट्टविरचितत्वेन कैश्चिल्लिपिकारैः मातृकासु निर्देशः कृतः, एवं मातृकादर्शनतः रामवर्मैव रामतीर्थः कृतः इति च प्रतिभाति। *

---

* इदमत्रालोचनीयम्—भट्टनागेशेत्यादिश्लोके कर्तृवाचकं पदं किम्? भट्टनागेशपूज्यपदं वा? श्रीरामवर्मपदं वा? नानयोर्विशेषणविशेष्यभावेनान्वयो युक्तः। तदानीं 'पूज्येन' इति पदमनन्वितम्। ब्राह्मणस्य नागेशस्य 'वर्म' उपपदकत्वं च न संभवति। 'शर्म' पदस्थाने 'वर्म' पदं प्रामादिकं स्याद्वा? इत्यपि न युक्तम्। तदा हि एकस्यैव 'गृहस्थाश्रमे नागेशभट्ट इति, सन्यासाश्रमे च 'रामशर्म' इति नामेति निर्वाह्यम्। सन्यासिनोऽपि शर्मोपपदकत्वमयुक्तमेव। 'श्रीरामयोगिना' इत्येव लिखेत्तदा।

अतो वयमेवं भावयामः—भट्टनागेशः शब्देन्दुशेखरारम्भे एवं लिखति—

'याचकानां कल्पतरोररिकक्षहुताशनात्।
श्रृङ्गबेरपुराधीशात् रामतो लब्धजीविकः॥'

इति। अत्र श्रृङ्गबेरपुराधीशत्वेन निर्दिष्टो राम एव पूर्वश्लोके 'रामवर्म' पदेन निर्दिष्टः, क्षत्रियाणां 'वर्मो'पपदकत्वात्। तादृशरामाल्लब्धजीविकत्वात् नागेशभट्टस्य तस्मिन् कार्तज्ञ्यमूलकः पूज्यभावः असीत्। अतः 'भट्टनागेशपूज्येन' इति विशेषणं दत्तम्। अथवा भट्टनागेशः पूज्यः यस्येति बहुव्रीहिर्वा।

परन्तु तिलककर्ता राम एव स्यात्, न तु नागेशभट्ट इति भावयामः। अत एव उत्तरकाण्डान्ते—'रामो रामायणाम्भोधौ सेतुं कृत्वा सुविस्तरम्।' इति श्लोके नागेशभट्टनाम न निर्दिष्टमिति।

एवं विमर्शयत्स्वस्मासु अस्मत्पक्षमेव सिद्धान्तयत् स्पष्टं प्रमाणान्तरमप्यु-

यथा तथा वा भवतु। तिलकव्याख्यायाः नागेशभट्टकालिकत्वं तु निर्विवादम्। नागेशभट्टकालश्च क्रि-श-1730-1810 इत्यभिप्रयन्ति।*

एवञ्च क्रैस्तषोडशशतकान्तिमभागस्थनारायणतीर्थशिष्याणां महेश्वरतीर्थानां, महेश्वरतीर्थानन्तरकालिकानां क्रैस्तसप्तदशशतकोत्तरभागे स्थितानां गोविन्दराजानां च कतकव्याख्यायां उल्लेखदर्शनात्, 1730-1810कालिके तिलके कतकोल्लेखनाच्च क्रैस्तशकस्य सप्तदशशतकोत्तरभागादारभ्याष्टादशे पूर्वभागपर्यन्तः (मार्कि 1675-1750) माधवयोगिनां काल इति भावयामः। †

एतावता प्रबन्धेन एते माधवयोगिनः ‡ सायणमाधवादन्या इति स्पष्टम्।

---

पलब्धम्—रामवर्मणा कृतमध्यात्मरामायणस्य एकं व्याख्यानं उपलभ्यते। तदारंभे इमे श्लोका दृश्यन्ते—

"श‍ृङ्गबेरपुरेशेन रिपुकक्षदवाग्निना।
अर्थिनां कल्पवृक्षेण विद्वज्जनसभासदा॥

भट्टनागेशशिष्येण बध्यते रामवर्मणा।
सेतुः परोपकृतयेऽध्यात्मरामायणाम्बुधौ॥

इति। शब्देन्दुशेखरारंभे, रामायणतिलकव्याख्यायां च उपलभ्यमानान् श्लोकान् उपरितनश्लोकांश्च परामृशतां अर्थनिर्णयः अतिसुलभ एव। एवं 'भट्टनागेशपूज्येन' इत्यत्र 'भट्टनागेशशिष्येण' इत्येतदनुसारात् बहुव्रीहिरेवेति च न पृथग्वक्तव्यम्॥

* युधिष्ठिरमीमांसककृते हिन्दीभाषात्मके संस्कृतव्याकरणेतिहासग्रन्थे द्वादशाध्यायं पश्यत।

† P.P.S. शास्त्रिमहाशयास्तु सप्तदशशतकमध्यकालः कतककृत इत्यभिप्रयन्ति। (See page 414 of Silver Jubilee Volume of Bhandarkar Oriental Research Institute, Poona.)

‡ बाल 37-60 श्लोकव्याख्या द्रष्टव्या।

माधवयोगिनां देशः

अयं च माधवयोगी दाक्षिणात्यः द्राविड इत्यवगम्यते। तथा हि मङ्गलश्लोके—

'कालहस्तीशमेकाम्रनाथं वेदगिरीश्वरम्।
स्वमनःप्राणदेहान्तस्थितांस्त्रीन् ब्रह्मणो भजे॥'

इति कालहस्तिनाथं, काञ्च्यां विद्यमानं एकाम्रनाथं, तिरुक्कलुकुन्रम् (திருக்கழுக்குன்றம்) इति प्रसिद्धक्षेत्रे विद्यमानं वेदगिरीश्वरं च स्तौत्ययम्। इदं च क्षेत्रत्रयं मद्रास् नगरप्रान्त एव वर्तते। अतोऽयं तत्प्रान्तीय एव स्यात्।

किञ्च व्याख्यायां मध्ये मध्ये वृक्षाद्यसाधारणनाम्नां द्राविडभाषया विवरणं दृश्यते *। सर्वास्वपि मातृकासु दर्शनात् नेदं लेखकानामेवेति संशेतुं शक्यम्। द्राविडपदस्य परित्यागे 'सारसः (288 फुटे) इत्यादिव्याख्येयपदग्रहणमेव व्यर्थमापद्येत; पर्यायसंस्कृतपदादर्शनात्।

किञ्च 'पिपासा' इत्यस्मिन्नर्थे 'दाह'पदं प्रयुङ्क्तेऽयम् †। पिपासाया दाहशब्देन व्यवहारः द्राविडभाषायामेव दृश्यते।

अपि च 'विवाहः' इत्यस्मिन्नर्थे 'कल्याण' पदं प्रयुङ्क्तेऽयम्। ‡ अयमपि व्यवहारः द्राविडभाषायामेव।

किं बहुना! अयोध्याकाण्डे सप्ततितमसर्गे 'रथान् मण्डलचक्रान्' इति श्लोके-मण्डलाकारतया रथप्रवर्तनसाधनं चक्रं-मण्डलचक्रम्—चतुर्दिक्चक्रमध्यस्थं; यथाऽस्माभिः काञ्च्यादावनुभूयते' इति व्याकुर्वन्तो माधवयोगिनः काञ्चीप्रान्तीया इति सुस्पष्टमवगच्छामः।

---

* यथा–223फुटे–'झिल्लिका–சில்வண்டு' इत्यादि। तथा 288 फुटे 'सारसः–வெண்ணாரை' इत्यादि। अयोध्याकाण्डादावप्येतादृशानि पदानि बहूनि दृश्यन्ते।

† बाल 37 सर्गे 30 श्लोकव्याख्या द्रष्टव्या।

‡ 67–28 श्लोकव्याख्यां, 68–5 श्लोकव्याख्यां च पश्यत।

इमे च माधवयोगिनः किंसिद्धान्तावलम्बिन इति विचारयामः—

बालकाण्डव्याख्यायामन्ते सर्वास्वपि मातृकासु अयं श्लोकः परिदृश्यते।

'यः सर्वोपनिषद्व्याख्यामङ्गलाभरणं व्यधात्।
ब्रह्मजिज्ञासतां, तस्मै नमो माधवयोगिने'॥

इति। अयं श्लोकः मातृकालेखकैः तच्छिष्यैः लिखितः स्यात्।

उपनिषन्मङ्गलाभरणनामकः कश्चन ग्रन्थः अमुद्रित उपलभ्यते। प्रसिद्धैरुपनिषद्व्याख्यातृभिः अव्याख्याता बह्वय उपनिषदः तत्र व्याख्याता वर्तन्ते। ग्रन्थकारनामादिकं तु न पश्यामः। अथापि विषयदृष्ट्या, शैलीपरिशीलनेन, पूर्वोदाहृतश्लोकबलेन, तत्रापि 'सर्वोपनिषद्व्याख्या' पदावलोकनेन च एभिरेव माधवयोगिभिर्विरचितं तदिति स्पष्टं वक्तुं शक्यते। विस्तरस्तु परस्तात्।

इमे च न विवर्ताद्वैतिनः*; केषांचिदभिप्रायवत् नापि विशिष्टाद्वैतिनः†। किन्तु परिणामाद्वैतिनः इति रामायणव्याख्यायाः, उपनिषन्मङ्गलाभरणस्य च दर्शनेन स्पष्टमवगम्यते।

परिणामाद्वैतिनौ च द्वौ, भास्करः, यादवप्रकाशश्च। नेमे भास्करपक्षानुसारिणः, यतः उपनिषन्मङ्गलाभरणे परमहंसस्य सन्यासिनः त्रिदण्डादीनामपि परित्यागः एभिः कथितः। भास्करस्य तु त्रिदण्डित्वेनैव प्रसिद्धिः।

---

* तैत्तरीयोपनिषद्व्याख्यायां 'तत्सत्यमित्याचक्षते' इत्यस्य व्याख्यानावसरे विवर्तवादिसम्मतं जगन्मिथ्यात्वं विस्तरशः खण्डयित्वा जगत्सत्यत्वं स्थापितम्।

† मद्रास् नगरीय प्राच्यकोशागारीयानुक्रमणिकायां (Alphabetical Index of Sanskrit Manuscripts) तथा निर्दिष्टम्।

उपनिषन्मङ्गलाभरणे, अत्रैव रामायणव्याख्यायां च ब्रह्मण एव जीवभावावबोधनात् नेमे विशिष्टाद्वैतिनः। प्रथमसर्गीय. 12–17 श्लोकव्याख्यां च पश्यत।

एवं तत्त्वनिरूपणप्रक्रियाऽपि भास्करसिद्धान्तापेक्षया विलक्षणा दृश्यते। अतोऽयमन्ततः यादवप्रकाशमतानुसारीति वक्तव्यम्। यादवप्रकाशमतीयग्रन्थस्य कस्याप्यनुपलंभेन एतदपि न निर्धारयितुं शक्यम्।

अथ वा अन्यमेव ब्रह्मपरिणामवादं इमे माधवयोगिनः स्वातन्त्र्येण स्थापयन्ति वेत्यपि उत्प्रेक्षितुमवकाशो वर्तते; यत एभिः उपनिषदो व्याख्याताः, *आकरग्रन्थोल्लेखश्च तत्र तत्र दृश्यते।

सर्वथा तु एते व्याख्यातारः वैदुष्ये, निष्पक्षपातित्वे च गणनार्हा एवेति व्याख्याद्रष्टॄणां स्वयं भासेत।

एते व्याकरणशास्त्रे, वेदान्ते च केवलं न निष्णाताः; अपि तु तन्त्रमन्त्रशास्त्रे, योगशास्त्रे, रसशास्त्रे चात्यन्तं परिश्रमशालिन इति एतद्व्याख्याद्रष्टृभिः स्पष्टमवगम्येत।

### एतद्व्याख्यानस्य शैली, वैशिष्ट्यं च

एतद्व्याख्यानस्य शैली तु किञ्चिद्विचित्रैव दृश्यते। तत्रापि वेदान्त-मन्त्रतन्त्ररसवादादिप्रक्रियानिरूपणावसरे अत्यन्तविचित्रैव दृश्यते।

ग्रन्थेषु श्लोकप्रक्षेपादिकं कथं भवतीत्यमुमंशं एते स्पष्टं विशदयन्ति। यथा 78 पुटे—'प्राचीनेन केनचित् सर्गश्लोकसंख्यागणकेन स्मार्तश्रोत्रियश्लोकवत् स्वमतिसौकर्यसिद्धये स्थूलदृशा संख्यापरिज्ञानाय कृतोऽयं श्लोको ग्रन्थसमीपे च लिखितः। तत्तु मूलग्रन्थान्तर्गतमिति भ्रान्त्या सर्वेषामपि सामान्यतः संख्यापरिज्ञानमस्त्विति प्राचीनैरपि ग्रन्थान्तः परिक्षिप्तः। सर्वथाऽयं श्लोकः प्रक्षिप्त एव। अस्य व्याख्याने प्रत्यक्षस्वप्नदर्शननिमित्तवैषम्यतश्च वयं प्रक्षिप्तत्वं निरचैषिष्म' इति।

---

* अस्मिन्नेव संपुटे 48 पृष्ठे 'अस्मदन्तेवास्यनुग्रहाय यद्वक्तव्यं तत् आकरे प्रपञ्चितम्' इति दृश्यते। उपनिषन्मङ्गलाभरणेऽपि महानारायणीयविवरणे 'आकरे सिद्धान्तद्वितीयसूत्रे यावच्छक्यं तत्रैव द्रष्टव्यम्' इत्युक्तम्।

एवं सर्गसंख्यायां न्यूनाधिकभावे हेतुरप्युच्यते । यथा (437 पुटे) 'एवमादावस्थले सर्गोच्छेदात् * ऋष्युपदिष्टसर्गसंख्यातोऽप्यधिकदर्शनम्' इति ।

एवं स्वस्य सूक्ष्मदर्शनसामर्थ्यबलाद्वा, प्रमाणान्तरबलाद्वा एते माधवयोगिनः प्रतिसर्गं श्लोकसंख्यां निष्कृष्य निर्दिशन्तीतीदं वैशिष्ट्यमप्यस्य व्याख्यानस्य । वदन्ति च तथा (78 पुटे) 'वयं तु श्लोकान् प्रतिसर्गं संगणय्य संकलय्य पश्चान्महासंख्यां परिच्छेत्स्यामः' इति । एतत्प्रतिज्ञानुरोधेन तथा प्रतिसर्गं कटपयादिसंख्यया श्लोकसंख्यां निर्दिशन्ति च । क्वचित्सर्गे लेखकप्रमादाद्वा अन्यस्माद्वा कारणात् श्लोकसंख्या न दृश्यते । †

प्रतिदशसर्गं आहत्य श्लोकसंख्या च दशमसर्गान्ते विंशसर्गान्ते च निर्दिष्टा । तदुपरि तु न दृश्यते । स एषः कस्य वा प्रमादः ? इति न जानीमः ।

बालकाण्डान्ते तु—

'बालकाण्डे तु सर्गाणां कथिता सप्तसप्ततिः ।
श्लोकानां द्वे सहस्रे च साशीतिशतकद्वयम् ॥

इत्याहत्य सर्गश्लोकसंख्या निर्दिष्टा । परन्तु तत्र प्रतिसर्गमुक्तसंख्यासंकलने एतच्छलोकोक्तसंख्यातो न्यूनाधिकभावो दृश्यते । तत्र कतरत् प्रामादिकमित्यादिविचारः नातिप्रयोजनक इति इदानीमुपेक्षितम् ।

प्रतिसर्गमुक्तायां संख्यायां विरोधप्रतीत्यादिकं तु तत्र तत्रैव ‡ टिप्पण्यां परिशीलितम् । श्लोकसर्गकाण्डादिविषये बह्व्यो विप्रतिपत्तयो वर्तन्ते । बालकाण्डः सर्वोऽपि प्रक्षिप्त इति, उत्तर-

---

* पूर्वं 'चतुर्विंशत्सहस्राणि' इत्यादिश्लोकस्य प्रक्षिप्तत्वं वदन्त एवैतेऽत्र तस्य श्लोकस्यार्षत्वमपि वदन्तीत्येतदवधेयम् ।

† 7, 11, 12, प्रभृतिषु ।

‡ 24, 38, 63, 65 प्रभृति सर्गेषु ।

काण्डोऽपि प्रक्षिप्त एवेति, काण्डत्रयमेव वाल्मीकिकृतामितीत्येवमादयो बहवो वादाः प्रचरन्ति। एतत्सर्वमपि पश्चाद्विस्तरेण विचारयामः।

एतद्ग्रन्थसम्पादनक्रमः

एतद्ग्रन्थसंपादने उपयोजिता मातृकाः—

1. अमृतकतकव्याख्याकोशाः—

   (i) एतत्पुस्तकभण्डारगतं 2604 अङ्कितं तालपत्रात्मकं ग्रन्थलिप्यां लिखितं 'क' संज्ञितम्।

   (ii) श्रीमन्महाराजास्थानीयसरस्वतीभण्डारगतं 487 अङ्कितं तालपत्रात्मकं आन्ध्रलिप्यां लिखितं 'ख' संज्ञितम्।

   (iii) उपरिनिर्दिष्टभण्डारगतं 746 अङ्कितं तालपत्रात्मकं ग्रन्थलिप्यां लिखितं 'ग' संज्ञितम्।

   (iv) मद्रास् नगरीय प्राच्यग्रन्थकोशागारगतं R. 3754 अङ्कितं कागदपत्रात्मकं ग्रन्थलिप्यां लिखितं 'घ' संज्ञितम्।

2. मूलपाठशोधनायोपयोजिता ग्रन्थाः—

   (i) कुंभघोणस्थमध्वविलासपुस्तकालयप्रकाशितं 'ङ' संज्ञितम्।

   (ii) 'निर्णय सागर' मुद्रणालयप्रकाशितं तिलकव्याख्यायुतं 'च' संज्ञितम्।

   (iii) मद्रासनगरे सरस्वतीनिलयमुद्रितं सव्याख्यं प्राचीनं 'छ' संज्ञितम्।

   (iv) 'गुजराती' मुद्रणालयप्रकाशितं व्याख्याचतुष्टययुक्तं 'ज' संज्ञितम्।

   (v) मदरास् 'ला जर्नल्' मुद्रणालयप्रकाशितं मूलमात्रं 'झ' संज्ञितम्।

एवं आहत्य ग्रन्थनवकं प्राधान्येनोयोपजितम् । एतदुपर्यपि संशयादिवारणाय एतत्कोशागारस्थाः बहवः कोशाः आवश्यक भागे परिशीलिताः । मूलपाठविषये—व्याख्यानुरोधी पाठ एव मूले निवेशितः । पाठान्तरेषु च समीचीनान्येव निर्दिष्टानि, न सर्वाणि ।

शिरोलेख (Heading) विषये नूतनः क्रमः अनुसृतः । प्रतिसर्गं अनुगतो विषयः वामभागे समसंख्याकपुटे निर्दिष्टः । सर्गावान्तरविषयस्तु दक्षिणभागे विषमसंख्याकपुटे निर्दिष्टः । तत्रापि यावत्संभवं तत्तत्पुटानुगुणः कथाभागः यथा अनुस्यूतः स्यात् तथा श्लोकरूपेणैव शिरोलेखने निर्दिष्टः । एवं सति च तादृशश्लोकानामेकत्र मेलने रामायणकथा संग्रहेण ज्ञायेत । विषयसूचीदर्शनेनायमर्थः स्पष्टः स्यात् ।

चतुर्थसर्गपर्यन्तभागस्योपोद्घातरूपत्वेन तत्पर्यन्तं उपरिनिर्दिष्टक्रमेण श्लोकैर्न शिरोलेखो निवेशितः, किन्तु वाक्यैरेव ।

टिप्पणीलेखनसमये कारणान्तरवशात् येषां मुख्यानां श्लोकानां टिप्पण्यो न संयोजिताः, तत्र वक्तव्यं विषयानुक्रमणिकाया अनन्तरं संयोजितम् ।

सन्ति विचारणीया बहवो विषयाः, परन्तु रामायणकोशसमुपाहरणस्मरणमस्मल्लेखनीप्रसरमिदानीं निरुणद्धीति विज्ञापयामः ।

अन्तत इदमवश्यनिवेदनीयम्—

अस्मत्सहोद्योगिनः एतत्संशोधनालयपण्डिताः सर्वथोत्तमर्णा एव मम, येषां हार्देन सहकारेणैव एतद्ग्रन्थसंपादनं यथाशक्ति सुसुखं निर्वर्तितमिति ।

मैसूरु,
28-11-1958

नव्यमङ्गलाभिजनः,
वरदाचार्यः

श्रीमद्वाल्मीकिरामायणबालकाण्डस्य

# विषयानुक्रमणिका



## अवान्तरविषयाः

| श्लोकसंख्या | १७ | | |
|---|---|---|---|
| २२ | ससृजुः स्वसुतान् देवाः चतुर्मुखनियोगतः । | .... | १७३ |
| | ऋक्षवानरगोपुच्छरूपयुक्तान् बलान्वितान् ॥ | ... | १७५ |
| २३ | जुगोप वाली तान् सर्वान् विष्णुसाहाय्यकारिणः । | .... | १७७ |
| | **१८** | | |
| | निर्वृत्ते तु क्रतौ, मासे द्वादशे, शुभवासरे ॥ | .... | १७९ |
| २४ | कौसल्या सुषुवे रामं, कैकेयी भरतं ततः । | .... | १८१ |
| | उभौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे ततः ॥ | .... | १८३ |
| २५ | अभ्यवर्धन्त ते सर्वे सदा लोकहिते रताः । | .... | १८५ |
| | ततः कदाचिदागच्छत् विश्वामित्रो महामुनिः ॥ | .... | १८७ |
| २६ | पूजयामास राजा तं विश्वामित्रं महामुनिम् । | .... | १८९ |
| | पप्रच्छ राजा तं त्वेवं 'ब्रूहि किं करवाणि ते ?' | ... | १९१ |
| | **१९** | | |
| २७ | प्रत्युवाच मुनिस्त्वेवं 'यष्टुमिच्छाम्यहं नृप ! | .... | १९३ |
| | मारीचप्रमुखान् हन्यात् रामस्तद्विघ्नकारिणः' | .... | १९५ |
| २८ | स तन्निशम्य राजेन्द्रः खिन्नः प्रत्यब्रवीन्मुनिम् । | .... | १९७ |
| | **२०** | | |
| | ऊनषोडशवर्षोऽयं रामो हन्यात् कथं नु तान् ॥ | .... | १९९ |
| २९ | न रामो राक्षसैर्योद्धा ते हि मायाविनो भृशम् । | .... | २०१ |
| | अतो मे तनयं बालं नैव दास्यापि राघवम् ॥ | .... | २०३ |

---

श्लोकसंख्या

२१

| | | |
|---|---|---|
| ३० | तच्छ्रुत्वा वचनं राज्ञः समन्युः कौशिकोऽभवत् । | .... २०५ |
| | ततो वसिष्ठो राजानं सान्त्वयामास तत्त्ववित् ॥ | .... २०७ |

२२

| | | |
|---|---|---|
| ३१ | ततः संप्रेषयामास राजा रामं सलक्ष्मणम् । | .... २०९ |
| | विश्वामित्रं महात्मानं तावुभावन्वगच्छताम् ॥ | .... २११ |
| ३२ | उपादिशत्तयोर्विद्यां बलामतिबलां मुनिः । | .... २१३ |

२३

| | | |
|---|---|---|
| | तां रात्रिमतिसंहृष्टा ऊषुस्ते सरयूतटे ॥ | .... २१५ |
| ३३ | ततः कामाश्रमं प्रापुः, तत्कथां मुनिरब्रवीत् । | .... २१७ |
| | अपूजयन्मुनिश्रेष्ठं तत्रत्या मुनयस्तदा ॥ | ... २१९ |

२४

| | | |
|---|---|---|
| ३४ | ततस्ततार सहितस्ताभ्यां गङ्गां स कौशिकः । | .... २२१ |
| | गङ्गाया दक्षिणे तीरे विविशुर्गहनं वनम् ॥ | .... २२३ |
| ३५ | अवसत् ताटका यस्मिन् वने परमदारुणा । | .... २२५ |

२५

| | | |
|---|---|---|
| | अब्रवीच्चरितं तस्याः पृष्टो रामेण कौशिकः ॥ | .... २२७ |
| ३६ | एनां राघव ! दुर्वृत्तां जहीति मुनिरादिशत् । | .... २२९ |

---

श्लोकसङ्ख्या

३५

तत: शोणां च ते तीर्त्वा प्रापुर्गङ्गानदीं शुभाम् ॥ .... २८७

५१ गङ्गायाश्चरितं वक्तुं मुनिस्तत्रोपचक्रमे । .... २८९

३६

आसीत् हिमवत: कन्याद्वयं गङ्गेत्युमेति च ॥ .... २९१

५२ तयोरुमां तु रुद्राय ददौ शैलवर: सुताम् । .... २९३

सेनापतिमभीप्सन्तस्त्वस्तुवन् ईश्वरं सुरा: ॥ .... २९५

५३ सोऽत्यजत् स्वीयतेजोंऽशं भूमौ संप्रार्थित: सुरैः । .... २९७

३७

तत्याजाग्नौ तु तत्तेज: पृथिवी वोढुमक्षमा ॥ .... २९९

५४ सोऽपि तत्याज गङ्गायां, कुमारस्तदजायत । .... ३०१

ववृधे षण्मुखो भूत्वा कृत्तिकानां पयः पिबन् ॥ .... ३०३

५५ स भूत्वा देवसेनानी: अजयत् दैत्यवाहिनीम् । .... ३०५

३८

पूर्वमासीदयोध्यायां सगरो नाम भूमिप: ॥ .... ३०७

५६ स इयाज, जहाराश्वं यज्ञियं तस्य वासव: । .... ३०९

३९

स पुत्रान् संदिदेशाथ तस्याश्वस्य गवेषणे ॥ .... ३११

५७ ते विचिक्युर्महीं कृत्स्नां सपर्वतवनार्णवाम् । .... ३१३

---

श्लोकसंख्या

५०

| | | |
|---|---|---|
| | अथ ते मिथिलां प्रापुः, जनकस्तानपूजयत् ॥ .... | ३७१ |

५१

| | | |
|---|---|---|
| ७२ | तत्राब्रवीत् शतानन्दः विश्वामित्रकथां मुदा । .... | ३७३ |
| | अयं गाधिसुतः पूर्वं राजाऽऽसीत् सुबहुश्रुतः ॥ .... | ३७५ |
| ७३ | कदाचित्तु ससैन्यः स परिचक्राम मेदिनीम् । .... | ३७७ |

५२

| | | |
|---|---|---|
| | परिक्रामन् स तु प्राप वसिष्ठाश्रममुत्तमम् ॥ .... | ३७९ |
| ७४ | तस्यातिथ्यं मुनिश्चक्रे कामधेन्वाः सहायतः । .... | ३८१ |

५३

| | | |
|---|---|---|
| | तां कामधेनुं शबलामैच्छत् गाधिसुतस्तदा ॥ .... | ३८३ |
| ७५ | नाङ्गीचकार तद्याच्ञां वसिष्ठो जपतां वरः । .... | ३८५ |

५४

| | | |
|---|---|---|
| | ततस्तां शबलां धाष्ट्यार्त् विश्वामित्रोऽन्वकर्षत ॥ .... | ३८७ |
| ७६ | सुरभिः साऽसृजत् सेनां वसिष्ठस्याज्ञया तदा । .... | ३८९ |

५५

| | | |
|---|---|---|
| | तया विध्वंसितं सर्वं विश्वामित्रबलं क्षणात् ॥ .... | ३९१ |
| ७७ | ततस्तप्त्वा शिवाल्लेभे धनुर्वेदं स कौशिकः । .... | ३९३ |

---

श्लोकसंख्या ६१

| | | | |
|---|---|---|---|
| | तस्मिन् कालेऽम्बरीषस्य जह्रे यज्ञपशुं वृषा ॥ | .... | ४२३ |
| ८५ | स त्वक्रीणात् शुनश्शेफं पशुप्रतिनिधिं नरम् । | .... | ४२५ |

६२

| | | | |
|---|---|---|---|
| | स दीनः शरणं प्राप विश्वामित्रं तपोधनम् ॥ | .... | ४२७ |
| ८६ | उपादिशत्स गाथे द्वे दिव्ये प्राणप्रदे मुदा । | .... | ४२९ |
| | ते जपन् स शुनश्शेफो दीर्घमायुरवाप्तवान् ॥ | .... | ४३१ |

६३

| | | | |
|---|---|---|---|
| ८७ | ततो मेनकया सङ्गात् निवृत्तस्तपसो मुनिः । | .... | ४३३ |
| | अथो निर्विण्णहृदयः पुनस्तेपे स कौशिकः ॥ | .... | ४३५ |
| ८८ | तद्दृष्ट्वा संभ्रमं प्रापुः सुराः सेन्द्रमरुद्गणाः । | .... | ४३७ |

६४

| | | | |
|---|---|---|---|
| | प्राहिण्वन् तस्य नाशार्थं रम्भामप्सरसं सुराः ॥ | .... | ४३९ |
| ८९ | शशाप रम्भां स क्रोधात्, अथ सन्तापमागतः । | .... | ४४१ |

६५

| | | | |
|---|---|---|---|
| | पुनश्च स महाघोरं तपश्चक्रे सुदुष्करम् ॥ | .... | ४४३ |
| ९० | ततो ब्रह्माज्ञया सोऽयं ब्रह्मर्षित्वमविन्दत । | .... | ४४५ |
| | वसिष्ठोऽप्यनुमेने तत् प्रार्थितः सुरसत्तमैः ॥ | .... | ४४७ |
| ९१ | श्रुत्वा कौशिकवृत्तान्तं सर्वे मुमुदिरे तदा । | .... | ४४९ |

---

श्लोकसंख्या **७६**

| | | | |
|---|---|---|---|
| १०७ | रामस्तु रोषितस्तेन तस्माज्जग्राह तद्धनुः । | .... | ५१३ |
| | लीलया पूरयामास रामस्तद्वैष्णवं धनुः ॥ | .... | ५१५ |
| १०८ | दृष्ट्वा परशुरामस्तद्भग्नदर्पोऽभवत्तदा । | .... | ५१७ |
| | रामं परशुरामश्च स्तुत्वाऽगच्छत् यथाऽऽगतम् ॥ | .... | ५१९ |

**७७**

| | | | |
|---|---|---|---|
| १०९ | ततः प्रस्थाय ते सर्वे त्वयोध्यां प्राविशन् पुरीम् । | .... | ५२१ |
| | कस्य चित्त्वथ कालस्य भरतः केकयान् ययौ ॥ | .... | ५२३ |
| ११० | शत्रुघ्नोऽपि तदा तेन नीतः प्रीतिपुरस्कृतः । | .... | ५२५ |
| | रामश्च सीतया सार्धं रेमे द्वादशवत्सरान् ॥ | .... | ५२७ |

---

# * द्रष्टव्यविशेषविषयसूचनी



* एतत्संपुटे कतकव्याख्यायां, टिप्पण्यां च विचारिता इमे विषयाः। अधिकाः केचन विषयाः एतदनन्तरं द्रष्टव्याः।

# अवधेयविशेषविषयाः

स. श्लो.

82–13 लक्ष्यलक्षणलक्षितौ। अत्र 'सर्वलक्षणक्षितौ' इति गोविन्दराजीये। लक्षितसर्वलक्षणौ—ज्ञातसर्वशब्द-लक्षणावित्यर्थः ॥—गो.

94–14 नाविद्वान् विद्यते तदा। तदा दशरथराज्यपालनकाले। अनेनायं श्लोको जानपदविषय इति गम्यते। तेनात्र न पौनरुक्त्यशङ्का ॥—गो.

100–26 सा योजने च द्वे भूयः। एवं चतुरङ्गबलसंपत्त्या न नगरमात्रं अप्रधृष्यं, किन्त्वभितो द्वे योजने दुर्गमे इत्याह—सेति। सा नगरी भूयः—नगराद्बहिरपि द्वे योजने—द्वयोर्योजनयोः, अत्यन्तसंयोगे द्वितीया, सत्यनामा—यथार्थनामा—गो.

101-1 अमात्याः। 'अमा सह वसन्तीति अमात्याः' इति कतकः। 'अमान्तिकसहार्थयोः' इति कोशात् समीपवाचि 'अमा' इत्यव्ययम्। तथा च अमासह भवन्तीति अमात्या इति निर्वचनम्। अमात्यानां कर्मसचिवत्वेन ते सदा राज्ञस्समीप एव भवन्तीत्य-भिप्रायः ॥

102–4 मन्त्रिणश्च तथाऽपरे ॥ अत्रेदं प्रतीयते—राज्यनिर्वह-णाय राज्ञः सहायभूताः सचिवाः द्विविधाः। कर्मसचिवाः मन्त्रसचिवाश्चेति। मन्त्रसचिवाः देशहितं विचिन्त्य समीचीनं मार्गं प्रदर्शयन्ति, न ते

---

गो—गोविन्दराजीयम्। शि—शिरोमणिः। ति—तिलकः। ती—महेश्वरतीर्थीयम्।

स. श्लो.

कार्यक्षेत्रं प्रविशन्ति। कर्मसचिवास्तदुपदिष्टं कार्यं साधयन्ति। कार्योपदेशः, कार्यनिर्वर्तनं च तयोरसङ्कीर्णो विशेषः। कर्मसचिवाः अमात्यपदेन, मन्त्रसचिवाः मन्त्रिपदेन च व्यवह्रियन्ते। कुत्रचित् व्यतिकरव्यवहारश्च सन्निवेशविशेषनिबन्धनः। समयविशेषे हि उभयोरप्युभयं भवति। एवञ्च सुमन्त्राद्याः अष्टौ अमात्याः। वसिष्ठाद्याश्चाष्टौ मन्त्रिणः। अमात्यानां नामानि तु 'धृष्टिर्जयन्त' इत्यादिना पूर्वश्लोके कथितानि। मन्त्रिणां नामानि तु पाठान्तरत्वेन परिगणिते श्लोके दृश्यन्ते। अयोध्याकाण्डे 'मार्कण्डेयोऽथ मौद्गल्यः वामदेवश्च कश्यपः। कात्यायनो गौतमश्च जाबालिश्च महायशाः। एते द्विजाः सहामात्यैः पृथग्वाचमुदैरयेन्। वसिष्ठमेवाभिमुखाः' (अयो. 67-3) इत्यादौ च निर्दिष्टानि मन्त्रिनामानि। 'सहामात्यैः' इत्यनेन अमात्यवर्गः एभ्यो विलक्षण इति स्पष्टम्। कुत्राचित् नामविपर्यस्तु एकस्यानेकनामवत्त्वादिभिः निर्वाह्य इति। एषु मन्त्रिषु वसिष्ठवामदेवौ पुरोहितावपीति ज्ञेयम्॥

103 चारेणापि चिकीर्षितं। अत्र चिकीर्षितमपीत्यन्वयः।

108-5 समानयदिति। अत्र 'समानयत् स तान् सर्वान् गुरूंस्तान् सपुरोहितान्' इति व्याख्यासम्मतः पाठः॥

110-12 पुत्रान्। एकपुत्रस्यापुत्रप्रायत्वात् 'एष्टव्या बहवः पुत्राः' इति वचनाच्च 'पुत्रान्' इति बहुवचनम्—गो. 'दशास्यां पुत्रानाधेहि' इतिरीत्याऽस्यापि ब्राह्मणाशीर्वादरूपत्वेन 'पुत्रान्' इति बहुवचनमित्याशयः॥

111-16 शक्यः प्राप्तुं। यदि क्रतुसत्तमेऽस्मिन्नश्वमेधे कष्टः—परमकष्टसंपादकः अपराधः—विधिहानिः न भवेत् तर्हि सर्वेणापि महीक्षिता अयं यज्ञः कर्तुं शक्यः—शि.

स. श्लो.

111-17 छिद्रं हि मृगयन्ते। यज्ञादिषु मन्त्रक्रियालोपादिना राक्षसत्वं प्राप्ता ब्राह्मणाः—ब्रह्मराक्षसाः विद्वांसः—यज्ञतन्त्रज्ञाः छिद्रं—अपचारं मृगयन्ते। ते चेषदपचारं दृष्ट्वा स्वयं तेषु प्रविश्यापचारधारां संपादयन्ते—ति.

114-4 नान्यं जानाति। सदा पित्रनुवर्तनात् अन्यं कमपि विषयं, पुरुषं वा न जानाति। हेतुत्वे प्रतियोगित्वे वा पञ्चमी। 'नित्यं' इति स्थाने 'मर्त्यं' इत्यपि पाठः। तदा स्पष्ट एवार्थः॥

116-12 विभण्डकसुतं। अस्य 'आनाय्य' इति पूर्वश्लोकेनान्वयः॥

111-18 ऋश्यशृङ्गस्तु जामाता॥ अङ्गराजमित्रत्वस्य राज्ञि वक्ष्यमाणत्वेन मित्रजामाता स्वस्यापि जामातैव—ति.

दशरथस्यौरसी शान्ता, दत्ता रोमपादस्य—गो. शान्ता रोमपादस्य सुतेति कतककारादयः, दशरथस्य सुतेति गोविन्दराजादयः। अत्रेदमवधेयम्—'ऋश्यशृङ्गस्तु जामाता पुत्रांस्तव' इत्यत्र 'तव जामाता' इत्यन्वयः गोविन्दराजसम्मतः। शान्ता दशरथस्यौरसीति च तत्सम्मतम्। कन्या चास्य महाभागा शान्ता नाम भविष्यति (11-3) इत्यत्रापि शान्ताया दशरथसुतात्वं स्वरसतः प्रतीयते। एवमन्वयस्य रामायणशिरोमणिकारसम्मतत्वेऽपि 'रोमपादमित्रत्वाद्दशरथस्य, रोमपादजामातुः दशरथजामातृत्वेन व्यपदेशः' इत्येव तदाशयः॥

उत्तरत्र 'शान्ता तव सुता' (11-19) इति रोमपादं प्रति दशरथोक्तिः दृश्यते। तत्र शान्ताया रोमपादसुतात्वं स्पष्टं। दशरथेन दत्तत्वात् तथा व्यपदेश इति गोविन्दराजाशयः स्यात्। तत्रैव 'सख्यं सम्बन्धकं चैव' (11-18) इत्यनेन दशरथ-

स. श्लो.

रोमपादयोः सङ्ख्यातिरिक्तः सम्बन्धः आसीदिति प्रतीयते। शान्ताया जनकपितृत्वरूपः सम्बन्धः दशरथस्येति तत्र गोविन्दराजीयम्। नवमसर्गे रोमपादमित्रत्वात् रोमपादजामाता दशरथस्यापि जामातैव इति निर्वहन्नपि शिरोमणिकारः अत्र (11-18) 'सम्बन्धकं—शान्ताजनकत्वेन तच्छ्वशुरत्वरूपं'—इत्याह। भागवते 'रोमपाद इति ख्यातस्तस्मै दशरथः सखा। शान्तां स्वकन्यां प्रायच्छत् ऋश्यशृङ्ग उवाह ताम्' (9-23-7) इति श्लोकः अत्रोपष्टम्भकः। एवं स्थिते-दशरथस्यापुत्रत्वव्यपदेशः राज्यार्हपुरुषसन्तत्यभावात्, राजमहिषीषु पुत्रानुत्पत्तेरिति वा निर्वाह्यम्॥

परन्तु हरिवंशे—'अथ चित्ररथस्यापि पुत्रो दशरथोऽभवत्। रोमपाद इति ख्यातो यस्य शान्ता सुताऽभवत्' (1-31-46) इति दृश्यते। अनेन रोमपादस्यैव दशरथ इति नामान्तरमासीदिति ज्ञायते। एवञ्च दशरथसुतेत्युक्ते रोमपादसुतेत्येवार्थः। अत एव कतककारोऽपि—11-5 श्लोकव्याख्याने—'कश्चित् दशरथस्य शान्ताख्या भविष्यतीत्यवोचत्। एवं मृषा प्रलप्य तत्समर्थनाय भूयोऽनेकमृषाऽवोचत्' इत्याह॥

एवं गोविन्दराजस्य मृषावादित्वकल्पनस्य सुलभत्वेऽपि भागवतश्लोकस्य का गतिः? कतकरीत्या भागवतोक्तं सर्वथा निरवकाशम्। गोविन्दराजीयरीत्या तु हरिवंशोक्तं सावकाशम्; 'सुता—दत्तसुता' इति वक्तुं सुशकत्वात्। अत एव तिलककृदपि ९ सर्गे कतकरीतिमनुसरन्नपि २२ सर्गे 'रोमपादेन सम्बन्धश्चायं तादृशः, येन दशरथस्यापि जामातृत्वव्यवहारयोग्यः ऋश्यशृङ्गः। एतदेवाभिप्रेत्योक्तं प्राक् 'तव जामाता' इति। क्वचिच्चैवं पठ्यतेऽपि—

स. श्लो.

अनेन मेऽनपत्याय दत्तेयं वरवर्णिनी। याचते पुत्रतुल्यैषा शान्ता प्रियतरात्मजा। सोऽयं ते श्वशुरो ब्रह्मन् यथैवाहं तथा नृपः' इति। (अत्र याचत इति चतुर्थ्यन्तम्) अत एव प्राक् सान्तः-पुरस्याङ्गदेशगमनमुक्तम्। कन्यास्नेहाद्धि तासां (अन्तःपुरस्त्रीणां) गमनमिति भाति' (11-18) इति व्याचख्याविति॥

123–22 गच्छन्ति स्मापदेशात्॥ देशात्—तस्मात्प्रदेशात् अपगच्छन्ति स्म—इति वाऽन्वयः॥

123-23 दुःखं स्म परिवर्तते। अत्र दुःखमिति क्रियाविशेषणं वा।

124–30 वव्रे प्रसादं विप्रेन्द्रात्। शपेदिति भीतः ऋश्यश्टङ्गात् प्रसादं वव्रे - प्रसादप्रार्थनायाः फलमाह—मेति॥—विप्रं—विभण्डकं मन्युर्मा विशत्विति विप्रेन्द्रात् ऋश्यश्टङ्गादेव प्रसादं वव्रे। त्वदानयनेन त्वत्पितुः विभण्डकस्य मयि मन्युर्यथा नोदेति तथा स त्वया प्रार्थनीय इति ऋश्यश्टङ्गमेव नराधिपः प्रार्थयामासेति—ति.

128–6 प्रदास्यते पुत्रवन्तं। पुत्रवन्तं—पुत्रप्रदानसमर्थं पुत्रयुक्तं वा - गो। पुत्रवन्तमित्यनेन 'जातपुत्रः कृष्णकेशः अग्नीनादधीत' इति विध्युक्तमग्न्याधानाधिकारित्वं सूचितम्। तेनाहिताग्नित्वेनार्त्विज्याधिकारस्तस्योक्तः—ति.

129–11 पुरा देवयुगे। एतच्चतुर्युगात् प्राक्तनचतुर्युग्याद्ये—ति-ती. देवयुगे—कृतयुगे। यद्वा हे देव पुरा युगे-कृतयुग इत्यर्थः—गो.

133–2 देववर्णिनम्। 'वर्णः स्वर्णे व्रते स्तुतौ' इति कोशात् वर्णशब्दस्य व्रतार्थकत्वेन देवव्रतिनमिति वाऽर्थः। तेन सामान्यमनुष्यैरनुष्ठातुमशक्यैर्व्रतैर्विशिष्टत्वं बोधितम्।

सं. श्लो.

150-33 वावातामपरे तथा। अत्र श्लोके 'हयेन' इति स्थाने 'हस्तेन' इत्यपि पाठः। 'ब्रह्मादयः चत्वारः प्रधानऋत्विजः महीषीपरिवृक्तिभ्यां सह वावातां अपरां पालाकलीं च राज्ञो दक्षिणार्थं परिगृह्य हस्तेन समयोजयन्—रमणवद्धस्तेनागृह्णन्। अत्र श्रुतिः 'अम्बे अम्बाल्यम्बिकेति पत्नीमुदानयति' इत्यादिः। उदानयति—हस्तेन गृह्णातीत्यर्थं इति भास्करः। सूत्रं च—'महिषीं ब्रह्मणे ददाति वावातां होत्रे परिवृक्तिमुद्गात्रे पालाकलीमध्वर्यवे' इति। पश्चात् प्रतिनिधिद्रव्यदानेन निवर्त्यैरन्। 'कृताभिषेका महिषी परिवृक्तिरुपेक्षिता। वावाता भोगिनी पात्रप्रदा पालाकली मता' इति वैजयन्ती।—गो.

अथ होत्रादयो महिष्या—कृताभिषेकया परिवृत्त्या—राज्ञो भोगाद्बहिष्कृतया दास्या च सह वावातां—राज्ञो वल्लभां भुजिष्यां अश्वेन समयोजयन्निति सम्बन्ध इति केचित्। अपरे तु वावाताशब्दो राज्ञो मध्यमजातीयद्वितीयभार्यावाची। तदुक्तमैतरेयारण्यकभाष्ये तृतीयपञ्चिकास्थद्वाविंशतिखण्डस्थवावातेति प्रतीकव्याख्यानावसरे—'राज्ञां हि त्रिविधाः स्त्रियः; उत्तममध्यमाधमजातीयाः। तासां मध्ये उत्तमजातेः क्षत्रियाया महिषीति नाम, मध्यमजातेर्वैश्याया वावातेति, अधमजातेः शूद्रायाः परिवृक्तिरिति'। अत एवाश्वलायनसूत्रे दशमाध्यायेऽष्टमखण्डस्थवावातेतिप्रतीकं गृहीत्वा, द्वितीया भार्येति व्यख्यातं नारायणवृत्तिकृता—ति.

हयेन—अश्वेन समयोजयन्—अश्वाङ्गसंयोजनरूपविधिं कारयामासुरित्यर्थः। एतेन पत्नीदानपरत्वेन व्याख्यानं प्रत्युक्तम्; दानस्यात्रानुक्तेः, अध्याहारे गौरवाच्च—शि.

स. श्लो.

उदानयति इत्यस्य आह्वयति इति सायणभाष्यम्। भट्टभास्करभाष्ये चायं श्लोको दृश्यते 'महिष्याः सचिवस्थाने राजपुत्रयशश्शतं स्मृताः। वावातायाः अराजोग्रदारास्साहाय्यके शतम्। दारास्तु सूतग्रामिण्यां परिवृक्तयास्सहायताम्। शतं कुर्वन्ति पञ्चाशत् पञ्चाशद्वर्गयोर्द्वयोः'। इति।

154–51 ततः प्रसर्पकेभ्यः। प्रसर्पकेभ्यः—यज्ञदर्शनार्थमागतेभ्यः—'यावन्तो वै सदस्यास्ते सर्वे दक्षिण्याः इति श्रुतेः—गो.

182–14 कुलीरेऽभ्युदिते रवौ। कुलीरे-कर्कटके रवौ अभ्युदिते—अभिवृद्धे—प्रकाशमान इति यावत्। तथा च रात्रौ मीनलग्ने भरतजन्म, परदिने कटकलग्ने लक्ष्मणशत्रुघ्नयोर्जन्मेति सिद्धम्। एतेनांशादिभेदेऽपि पञ्च ग्रहोच्चत्वादिकं चतुर्णामपि समानमित्युक्तं भवति॥

188–41 ब्रह्माणमिव वासवः। ब्रह्माणं—चतुर्मुखम्—गो. अत्र 'सपुरोधाः प्रत्युज्जगाम' इति कथनात् बृहस्पतिसहितः इन्द्रः दृष्टान्तत्वेन सम्मत इति प्रतिभाति। ततश्च ब्रह्मा चतुर्मुख एव वक्तव्य इति गोविन्दराजाशयः॥

197–17 अभिप्रेतमसंसक्तं। अभिप्रेतं—नेयत्वेन मम सम्मतमिति वाऽर्थः। एतेन 'भवद्यज्ञः खलु रक्षणीयः, तदर्थं—राम एव प्रेषणीय इति कुतः? अन्यमेव प्रेषयामि' इति मा वद' इति पूर्वमेव सूच्यते। असंसक्तमिति क्रियाविशेषणं वा॥

197–19 धर्मार्थसहितं। अर्थः—रामस्यास्त्रादिलाभरूपः—ति.

207–17 संहारान्नाम दुर्धर्षान्। अत्र वक्तव्यं उत्तरत्र (28–3 पुट 244) वक्ष्यामः।

210–7 त्रिशीर्षाविव पन्नगौ। अत्र 'कलापिनौ धनुष्पाणी' इति विशेषणद्वयस्वारस्यात्, एकपार्श्वे धनुः अपर-

स. श्लो.

पार्श्वे तूणीरः, मध्ये शिर इति त्रिशीर्षपन्नगोपमात्वम-भिमतमिव ॥

210–10 कुमाराविव पावकी । पावकी—पावकात् प्रादुर्भूतौ स्कन्दविशाखौ-'ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान् प्रभुः । स्कन्दो विशाखः शाकश्च नैगमेषश्च पृष्ठतः' इति भारतोक्तेः—गो.

211–12 मन्त्रग्रामं गृहाण त्वं । मन्त्रग्रामं—मन्त्रसमष्टिरूपं; इदं बलाबलयोः प्रत्येकं विशेषणम्—गो.

215–2 कौसल्या सुप्रजा राम । हे राम त्वया कौसल्या सुप्रजा —शोभनपुत्रवती—ति.

शोभना प्रजा—पुत्रः यस्याः सा सुप्रजाः, त्वज्जननी कौसल्या सुपुत्रा । यद्वा स्वगतवचनम्—एतज्जननी कौसल्या सुप्रजाः—यद्वा कौसल्यायाः सुप्रजा इति सम्बोधनम् । कर्मधारयेप्यार्षोऽसिच् । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः, 'सुपां सुलुक्' इत्या-दिना पूर्वसवर्णदीर्घो वा, गो. अत्र कतकव्याख्या स्वरसा ॥

221–5 तस्य शब्दस्य निश्चयम् । प्रथमं सामान्यतः शब्दं शुश्राव । स च शब्दः किंकारणक इति प्रथमं ना-वगतम् । नदीमध्यमागम्य तोयस्य तस्य शब्दस्य निश्चयं—तोयसम्बन्धिशब्दविषयकनिश्चयं आगम्य पप्रच्छेत्युत्तरत्रान्वयः । प्रथमं शब्दश्रवणमात्रं, अनन्तरं स्वयं तोयसंघर्षरूपकारणनिश्चयः । अनन्तरं तोयविशेषजिज्ञासया प्रश्नः ॥

225–25 ताटका नाम, भद्रं ते । अस्मिन् रामायणे एतत्पूर्वापर-प्रकरणेष्वपि बहुषु 'भद्रं ते' इति वाक्यं असकृत् श्रूयते । कुत्र चित् मंगलाशंसारूपार्थस्य साम-जस्यसंभवेऽपि सर्वत्र तादृशोऽर्थो न स्वरसः ।

स. श्लो.

यथा—इमौ कुमारौ, भद्रं ते, देवतुल्यपराक्रमौ' (48-2) (50-17) इदं जगाद, भद्रं ते, राजानं घोररूपिणम् (58-14) सोमदा नाम, भद्रं ते, ऊर्मिलातनया तदा (33-12) इत्यादौ। एवं बहुषु विचित्रेष्वपि प्रकरणेषु 'भद्रं ते' इत्यस्य श्रवणात् इयं महर्षेर्वाक्यशैली स्याद्वेति संशेमहे। लोके हि प्रायः हुंकार, इतिकार, अथकारादयः कैश्चित् वाक्यमध्ये तत्र तत्र प्रयुज्यन्ते ॥

230-20 अनिद्रं लोकमिच्छन्ती। अत्र 'अनिन्द्रं लोकमिच्छन्ती' इति गोविन्दराजादिसम्मतः, पुराणाद्यनुगुणश्च पाठः। ब्रह्माण्डपुराणे मध्यमभागे द्विसप्ततितमाध्याये इयं कथा श्रूयते। पुरा युद्धे देवैः पराजितानां दैत्यानां पुनः विजयसंपादनाय शुक्राचार्यः तीव्रं तपश्चचार। तत् ज्ञात्वा देवाः, तपस्समाप्तेः प्रागेव दैत्यान् जिघांसवः तान् अभ्यद्रवन्। भीता दैत्याः शुक्रं तपोगतं स्मृत्वा, तन्मातरं भृगुपत्नीं शरणं ययुः। तत्राप्यभिद्रुत्य राक्षसान् हन्तुमागतान् इन्द्रप्रमुखान् देवान् दृष्ट्वा सा भृगुपत्नी लोकमनिन्द्रं-कर्तुमारेभे। तदा इन्द्रेण प्रार्थितः विष्णुः लोकहितार्थं भृगुपत्न्याः शिरश्चिच्छेदेति ॥

244-3 संहारं व्याजहाराथ। अत्र तिलककतककारादयः संहारमन्त्रोपदेशातिरिक्तं सत्यवदाद्यस्त्रोपदेशमभिप्रयन्ति। महेशतीर्थगोविन्दराजादयस्तु 'अस्त्राणां त्वहमिच्छामि संहारं मुनिपुङ्गव' इति रामप्रश्नदर्शनात् सत्यवदादीनि संहारमन्त्राणामेव नामधेयानीत्यभिप्रयन्ति। परन्तु पूर्वं (21-17) 'संहारान् नाम दुर्धर्षान्' इत्यनेन संहारपदं अस्त्रविशेषपरमिति सर्वैः प्रतिपादितम्। तेषां कृशाश्वतनयत्वं च तत्रोक्तम्। 'कृशाश्वतनयान् राम' (10) इत्यनेन तान्येवात्र प्रत्यभिज्ञायन्ते। अतः सत्यवदादीनि अस्त्रान्तराण्ये-

स. श्लो.

देति कतककृतामाशयः। 'अस्त्राणामहमिच्छामि संहारं' इति रामः संहारक्रमं पप्रच्छ, एवं स्थिते अस्त्रान्तराणामुपदेशः कथं घटताम्? इति चेत्— प्रयोगास्त्राण्यन्यानि, तदनुगुणानि सत्यवदादीनि संहारास्त्राणि च स्वतन्त्राण्यन्यान्येवेति न विरोधः। अथवा, रामः संहारक्रमं पप्रच्छ। ऋषिश्च 'संहारं व्याजहार' इति वाक्यसमाप्तिः। तेन च रामपृष्ट-संहारक्रमोपदेशवृत्तान्तः समापित एव। अनन्तरं च ऋषिः सन्तुष्टः अस्त्रान्तराण्यप्युपदिशति—अथे-त्यादिना। एवं सति च 'पात्रभूतोऽसि राघव' (10) इति श्लाघनं स्वरसम्। तथा च संहारक्रम-प्रश्नात् शब्दसारूप्येणोद्बुद्धसंस्कारो महर्षिः कृशाश्व-तनयान् संहारनामकान् मन्त्रानपि सत्पात्राय रामायोपदिदेशेति॥

286–22 अस्तंगत इवांशुमान्। सूर्येऽस्तमिते खलु लोको निद्राति, तथा महर्षौ निद्रिते इतरे सर्वेऽपि निद्रातुमुपचक्रमुरिति भावः। अत्र 'मुनिरस्तंगतां-शुमान्' इति व्याख्यासम्मतः पाठः॥

296–20 सुप्रीतमनसस्तदा। अत्र 'लोकानुग्रहाय मूलतेजसो धृतत्वात् देवकार्याय स्कन्नतेजसश्च दत्तत्वात् सन्तोष इति व्याख्या। परन्तु—स्कन्नं तेज एव देवकार्यं साधयिष्यतीति पूर्वं नोक्तम्। 'यत्र जातः महा-तेजाः' (19) इत्यादिकं च भविष्यत्कथासूचनाय विश्वामित्रेणैव कथितम्। अत एवोत्तरसर्गे सेना-पतिप्राप्तये देवाः पुनर्ब्रह्माणमभिजग्मुरित्युच्यते। अतश्च अत्र मनसः प्रीतिः स्वप्रार्थनया शिवेन तेजसो धरणेन लोकाविनशादेवेति युक्तम्। अत एवेश्व-श्वरोऽप्याह—'धारयिष्याम्यहं तेजः—त्रिदशाः पृथिवी चैव निर्वाणमधिगच्छतु' (14) इति॥

297–21 समन्युरशपत्। अब्रवीदित्यस्यैव विवरणं अशपदिति॥

स. श्लो.

297–25 अवने नैकरूपा। 'अवनेऽप्येकरूपा' इति व्याख्यासम्मतः पाठः॥

301-12 शैलपुत्र्यां। इदं गंगायामित्यस्य विशेषणम्।

302–17 सर्वदेवहुताशनः। 'अग्निर्वै सर्वा देवताः' इत्यादिश्रुत्या अग्नेस्सर्वदेवात्मकत्वम्। गोविन्दराजीये—सर्वदेवानां हुतं अश्नातीत्यर्थ उक्तः॥

332–18 पारिप्लवगताश्चापि। वाहनादिसम्मर्दवशात् पारिप्लवं—चलनं गताः इति वाऽर्थः॥

334–26 पवित्रमिति पस्पृशुः। पवित्रं–पावनम्। तत्र ज्ञापकहेतुमाह—भवाङ्गपतितमिति। भवेन रुद्रेण शिरसा धृतत्वात् पवित्रमिति ज्ञात्वा पस्पृशुरित्यर्थः। पवित्रमिति सामान्यतः उक्त्या भवस्य, अन्येषां च पवित्रमित्युक्तम्। ............यद्वा, भवाङ्गपतितत्वात् पवित्रं, न तु पूर्ववदतिपवित्रम्। अत एव पस्पृशुः, न तु सस्नुः। यद्वा, यद्यपि भवाङ्गात् पतितम्, तथापि विष्णुपादोद्भवत्वात् पवित्रमिति वा, 'नदी वेगेन शुद्ध्यति' इति न्यायात् भवसंपर्कविगमेन पवित्रमिति वा पस्पृशुः—गो.

भवाङ्गपतितं। भवाङ्गात् पतितमित्यतःपवित्रं–अतिशुद्धं तोयं पस्पृशुरेव। ............अत्र पस्पृशुरेवेत्युक्त्या न सस्नुरिति फलितम्। तेनावगाहनानर्हवेगवत्त्वं तज्जलस्य सूचितम्। शि.

पस्पृशुः—सस्नुः—ति. ती.

351–15 तमहं त्वत्कृते। अमोघभर्त्रनुग्रहेणाप्रतिबन्धसुतोत्पत्तिं मन्वाना ऋजुतया शुश्रूषाफलमुक्तवती—गो.

एतेन दितेः कारुण्यं जातमिति सूचितम्। तेन वक्ष्यमाणाशुचित्वहेतुभूतानवधानता दितेः ज्ञानपूर्विकेति व्यक्तम्। शि.

स. श्लो.

351-16 पादौ कृत्वाऽथ शीर्षतः। शीर्षतः—शय्यायां शीर्षस्थाने पादौ कृत्वा निद्रया अपहृता—निद्रया गृहीतेत्यर्थः—ती.

शीर्षतः—शिरसि पादौ कृत्वा स्थितेति शेषः। मध्याह्नः शयनपरिग्रहप्रसङ्गाभावेनासन एवोपविशन्त्यास्तस्या निद्रापारवश्येन नम्रं शिरः पादयोः संसक्तमभवदित्यर्थः—गो.

दिवास्वापरूपपापेन, शय्यायां पादस्थाने मस्तककरणेन चाशुचित्वं सूचितम्। केचित्तु उपविष्टाया एव प्रहृतया पादपर्यन्तं शिरस्सम्बन्धेन शीर्षे पादसम्बधः, तेन ब्राह्मणस्य शूद्रस्पर्श इव शिरसः पादस्पर्शेऽशुचित्वं सूचितम्। तपसि स्थितायाः शय्यासम्बन्धाभावेन पूर्वव्याख्याया अयुक्तत्वादित्याहुः। परे तु भूशयनेऽपि दक्षिणपूर्वदिशोः शिरःस्थापनयोग्यतायाः स्मृतिषूक्तेः तद्वैपरीत्येन शयनस्याशुचित्वसूचकत्वमस्त्येवेत्याहुः—ति.

अत्र ब्रह्माण्डपुराणस्य मध्यमभागगतपञ्चमाध्यायस्य श्लोकोऽयं अवधेयः—

निद्रयाऽपहृता देवी शिरः कृत्वा तु जानुनि।
केशान् कृत्वा तु पादस्थान् सा तु सुष्वाप देवता॥

अधस्ताद्यत्तु नाभेर्वै सर्वं तदशुचि स्मृतम्' इति।

एवञ्च मध्याह्ने शयनस्य निषिद्धत्वेन जानू आकुंच्योपविष्टा दितिः निद्रापरवशाऽभूत्। तदा च केशाः विशीर्णाः पादयोरपतन्। तथा च शिरसः पाद संपर्कः समजनीत्यशुचित्वं स्पष्टमुपपादितम्॥

———

# ‘ शोधनिका ’

| पुटः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 9 | 9 | रोषद्देवा | रोषाद्देवा |
| 14 | 9 | इत्येवा | इत्येव |
| 17 | 9 | विशाषा | विशेषा |
| | 13 | शास्त्राथ | शास्त्रार्थ |
| 19 | 17 | ब्रह्मा | ब्रह्मा |
| 22 | 18 | तृती | द्विती |
| 27 | 23 | उपे | उपै |
| 28 | 4 | समा वन | समावन |
| 39 | 5 | साता | सीतां |
| 42 | 14 | चतुवर्णा | चतुर्वर्णा |
| 46 | 15 | गावां | गवां |
| 48 | 18 | धिकोर | धिकारे |
| 49 | 16 | सङ्कल्पत्व | सङ्कल्पत्वत |
| 50 | 2 | तत्तत्प्रति | तत्तत्प्राति |
| 52 | 20 | अघ्र्योंद | अग्रोद (पा). |
| 59 | 2 | बहुश्श्रुतः | बहुश्रुतः |
| 61 | 21 | मित्यत | मित्यतः |
| 74 | 4 | *ऋक्षस्य | ऋक्षस्य |

* एवं ‘ ऋश्यश्शृङ्गः ’ इत्यादावपि ‘ ऋ ’ कारो बोध्यः.

| पुटः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 74 | 9 | वना | वचना |
| 80 | 11 | श्रृङ्गार | शृङ्गार |
| | 13 | प्रवृत्य | प्रवृत्यु |
| 81 | 8 | वोत्थितौ (पा) | वोध्दृतौ |
| 112 | 6 | तद्यथाविधि पूर्वं | तद्यथा विधिपूर्वं |
| 124 | 19 | विप्रेन्द्रात् | विप्रेन्द्रं (पा) |
| 137 | 1 | चकारः | चकार |
| 139 | 16 | यौता | यौना |
| 144 | 17–20 | १० | ८ |
| 146 | 11 | ब्राह्य | ब्राह्म |
| 163 | 22 | रोषः | शेषः |
| 164 | 16 | महात्ता | महात्त |
| 170 | 9 | अविष्ट | अवशिष्ट |
| 173 | 18 | तादृशां | तांश्च |
| 176 | 9 | वहवो | बहवो |
| 177 | 3 | नभस्थ | नभस्स्थ |
| 184 | 5 | भतानां | भूतानां |
| | 14 | मत्प्रताचा | मत्प्रतीचा |
| 185 | 16 | सवाप्रय | सर्वप्रिय |
| 187 | 2 | दप्ति | दीप्त |
| 194 | 4 | स मांस | तौ मांस (पा) |
| 198 | 8 | इत्यर्षे | इत्यार्षे |
| | 13 | २९ | २१ |
| 204 | 2 | :सुबद्ध | :सुबाह्न |

| पुटः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 205 | 7 | शुश्च च | शुश्च |
| 222 | 21 | गमागमे | गमागमौ |
| 223 | 11 | किमिय | किमिद् |
| 229 | 6 | ण्यदि | ण्यादि |
| 230 | 2 | रक्ष | रक्षण |
| 246 | 20 | एवमस्वि | एवमस्त्वि |
| 269 | 17 | र्धमश्च | धर्मश्च |
| 271 | 2 | मगधान् | मागधान् |
| 272 | 14 | स्येत्य | स्मेत्य |
| 288 | 14 | हि तथा | तथा हि |
| 307 | 9 | पत्निभ्यां | पत्नीभ्यां |
| 308 | 7 | अस्य ब | अस्या ब |
| 312 | 4 | उकथ्याह | उकथ्याहे |
| 313 | 16 | मैकैको | मेकैको |
| 315 | 1 | मभि | मथा |
| 316 | 6 | शब्दैवा | शब्दैर्वा |
| | 13 | पृथिव्यायां | पृथिव्यां |
| 338 | 20 | वद्ब्रह्म | वद्ब्रह्म |
| 339 | 20 | मुात्का | मुक्त्वा |
| 340 | 17 | वतरणां | वतरणं |
| 345 | 8 | निर्मिथ | निर्मथ |
| | 13 | षष्ठि | षष्टि |
| 347 | 14 | वात् | त्वात् |
| 351 | 23 | वक्तत्रः | वक्रतः |
| 352 | 17 | अभिदं | अभिन्दं |

| पृट: | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 368 | 8 | शापस्थान्त | शापस्यान्त |
| 371 | 7 | समर्थां | समर्था |
| 374 | 3 | शाता | शता |
| 384 | 12 | मन्निनित्य | मन्नित्य |
| | 21 | विद्विद्या | विद्या |
| 406 | 21 | उक्त | उक्तः |
| 410 | 21 | त्यर्यः | त्यर्थः |
| 412 | 10 | य दूषय | ये दूषय |
| 429 | 5 | ुत्राणां | पुत्राणां |
| 443 | 5 | मारध | मारब्ध |
| 444 | 21 | जानिमो | जानीमो |
| 457 | 3 | धनुर्भङ्ग | धनुर्भङ्गः |
| 479 | 9 | श्रेष्ठ ! कुलं | श्रेष्ठकुलं |

———

॥ श्रीः ॥

॥ श्रीरामचन्द्रपरब्रह्मणे नमः ॥

# श्रीमद्वाल्मीकिरामायणम्

## श्रीमन्माधवयोगिविरचितया अमृतकतकाख्यव्याख्यया युतम्

## बालकाण्डः

### प्रथमः सर्गः

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १ ॥

अमृतकतकव्याख्या

[1] कालहस्तीशमेकाम्रनाथं वेदगिरीश्वरम् ।
स्वमनःप्राण[2]देहान्त[3]स्स्थितांस्त्रीन्ब्रह्मणो भजे ॥
हैरण्यगर्भं यत्तेजः श्रीप्रजेशावतारितम् ।
चतुर्मुखचतुर्व्यूहं त्रिपदार्थं सदा भजे ॥
अम्बाब्ध्यष्टाक्षरोल्लासव्यष्टश्लोकसहस्रकम् ।
महाषोढात्मकाण्डं यत् तद्रामायणमाद्रिये ॥
असङ्गतव्याकृतिपांसुपङ्किलं
रामायणं तीर्थसमुद्धृतामृतम् ।
योगीन्द्रवाणीकतकाद्विपङ्किलं
सर्वोपकारक्षममस्तु सर्वदा ॥

[1] वन्दे–क. [2] देहात्म–क. [3] स्थितांस्तान्–क.

भो भोः किमिदं रामायणं व्याख्येयं ? उत न ? यदि प्रयोजनं व्याख्येयं ; यदि नो, न व्याख्येयम् । प्रयोजनमप्यैहिकमामुष्मिकं वा स्यात् । न तु कृषिवाणिज्यसेवादिना धनधान्यादिवदैहिकं किञ्चित्प्रयोजनं रामायणपाठात्पश्यामः । नाप्यामुष्मिकं ; [1] निरयं निस्तितीर्षुः स्वरारुरुक्षुर्मुमुक्षुर्वा [2] रामायणमाम्नेयात् इति श्रुतिस्स्मृतिर्वा न ह्यस्ति, पारलौकिके चार्थे त एव प्रमाणम् ॥

अपि च विशिष्यामुष्मिकश्रेयोऽर्थिभिरिदमनादर्तव्यं ; काव्यत्वात् । 'काव्यालापांश्च वर्जयेत्' इति स्मृतिघण्टाघोषः । काव्यता चास्याविवादा सर्वलोकस्य ॥

अत्रोच्यते —यत्तावदवादि—निष्प्रयोजनत्वतो न व्याख्येयमिति—तदपेशलम् । एक[3]भुक्तनियमेन गृहोचितब्रह्मचर्येण श्रवणकाले (षु) वीटीचर्वणास [4] त्संभाषणसांसारिकव्यापारान्तरपरित्यागपूर्वं [5]गन्धपुष्पादि[6]पूजितरामायणार्थतत्त्वविन्निजाचार्यात्समग्रश्रद्धाभक्त्युप—बृंहिततया यथाविधि रामायणश्रवणतो मन्त्रायुर्वेदवदपरोक्षमेव सुपुत्रादिप्राप्तिमहारोग[7]विमोचनादीष्टप्राप्त्यनिष्टपरिहारयोरतिप्रसिद्धत्वात् ॥

अपि च गृहक्षेत्रादिबलारोग्यादिबाह्यान्तरार्थसिद्धिद्वादशकोचितपल्लवैः तथा द्वेषभेदादिक्रियासिद्धिद्वाशकोचितपल्लवैश्च शास्त्रसिद्धैरुपेततया अम्बाया उपासने उक्तसिद्धीनां शास्त्रसिद्धत्वात् । अपरोक्षानुभवसिद्धत्वाच्च । अम्बाविलासभूतरामायणध्यानेनापि यथोक्तार्थसिद्धेर्न्यायप्राप्तत्वाच्च । कार्यभूतप्रकृतिरपि यथाकारणं यथाबलं तमोनिवृत्त्यादिप्रयोजन[8]करणम् ॥

---

[1] निरयात्तितीर्षुः–ग. [2] भवान् रामा–ग. [3] भक्ति–ग. [4] द्वक्षण–क.
[5] गन्धाक्षतादि–ग. [6] पूजितात्–ग. [7] विमोकादी–ग. [8] कर एव ?–ग.

यच्चावादि रामायणस्यामुष्मिकार्थसाधकत्वे प्रमाणाभाव इति — तदप्यसुष्ठु । 'इदं पवित्रं पापघ्नं' इत्यादि 'जनश्च शूद्रोऽपि महत्त्वमीयात्' [1] इत्यन्तैः श्लोकैरामुष्मिकानिष्टपरिहारेष्टप्राप्तिप्रकाशनस्य यथोचितैहिकार्थसाधकत्वस्य च सुस्पष्टमत्रैव श्रूयमाणत्वात् । तथा 'शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा । स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा' इति शतकोटिप्रविस्तरब्राह्मालौकिकमूलरामायणवचनतो ब्रह्मलोकावाप्तेरतिप्रकाशत्वात् । तथा ग्रन्थान्तरे च सकलैहिकामुष्मिकफलसाधकत्वस्मरणाच्च ॥

न च स्वस्मिन् स्वयमेव प्रमाणमिति न युज्यत इति—परमाप्तपरमर्षिप्रणीतत्वेन रामायणमात्रस्य प्रामाणिकत्वे सिद्धे स्वविषयकत्वे[2]ऽन्यविषयकत्वे[3] च तत्प्रतिपाद्यार्थस्य प्रमाणत्वात् । यथा सिद्धप्रामाण्यया श्रुत्या 'वाचा विरूपनित्यया' 'अनन्ता वै वेदाः' इत्यादिवाक्यैः प्रतिपाद्यमाने वेदनित्यत्वे भगवदहर्भेदवशात्तदुचितसन्निवेशविशेषं [4] जानात्येव, [5] सैव प्रमाणम् ॥

अपि [6] चाम्बया ब्रह्मानुस[7]न्धानवशाद्ब्रह्मलोकावाप्तिवदम्बाविलासरामायणेन ब्रह्मलीलाविलासावतारवैभावानुसन्धानेन च विभूतिसंपत्तिरपि न्यायसिद्धा । 'देवो भूत्वा देवानप्येति' तथा 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' इत्यादेश्च । ब्रह्मावतारो भगवान्राम इति च सुस्पष्टम् । प्रक्रमे पुत्रकामेष्टिना यज्ञेन सुप्रीतेन ब्रह्मणा स्वस्यैव तेजसः [8] स्वीयपुरुषद्वारा प्रदापितस्याविर्भावितलीलाविग्रहत्वात् । अन्ते च "रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति" इति ब्रह्मलोकप्राप्तेश्च सुस्पष्टत्वात् । भगवतोंऽशावतारत्वस्य च स्वशक्त्यं-

---

[1] इत्यादिभिः—क.　[2] त्वस्या—ग.　[3] त्वस्य—ग.　[4] जानन्त्येव—ग.
[5] स्वप्रमा—ग.　[6] अम्बाया—क.　[7] न्धानात् ब्रह्म—ग.　[8] यज्ञपुरुष—ग.

*

शतिघोरांशस्य शक्तित्वाविशेषप्राप्तस्य शोधनेन दिव्यशाक्तितासंपादनं प्रयोजनम् । देवीघोरांशं तच्छोधनं च संप्रदायविदो विदुः ॥

*ननु किमस्ति यथाधीतमन्त्रस्य शोधनमपि? किं न शृणोषि? "अभि नो वीरो अर्वति क्षमेत । प्रजायेमहि रुद्र प्रजाभिः" इति यथाधीतमन्त्रस्य ब्राह्मणेन शोधनं क्रियते । 'त्वं नो वीरो अर्वति क्षमेथा इति ब्रूयान्नाभि न इति। अनभिमानुको हैष देवः प्रजा भवति। प्रजायेमहि रुद्रिय प्रजाभिः इति ब्रूयान्न रुद्रेत्येतस्यैव नाम्नः परिहृत्यै' इत्याद्यम् । एवमेव श्रीमद्रहस्योपनिषदादौ शोधनादि । प्रयोजनाय [1]शोधनाद्युपायोप्युदेति । ततोऽस्ति । तत्र दशरथपुत्र-प्रति[2]बन्धादिः प्रथमपादघोरांश[3]कृतः । राज्यापहारवन[4]वासादिः द्वितीयपादघोरांश[5]कृतः । सीतापहा[6]रादिस्तृतीयपादघोरांश[7]कृतः । किं बहुना! सर्वमेव रामचरितं अस्मदादीनामम्बाक्षरार्थवियोगिनामम्बा-क्षरार्थसुप्रोतसुदर्शनं' आप्ततमशिष्याणां च। तत् स्थितं सार्थकत्वं व्याख्येयबीजम् ॥

यच्चावादि—[8]काव्यकृतेरनुपादेयतेति—अत्र ब्रूमः—उभयथाऽस्ति—काव्यशब्दः—"कबृ-वर्णनस्तुत्योः" [9]इत्यस्मादौणादिकाकि-[10]प्रत्ययजनितकविशब्दादुत्पन्नः चित्तविकृतिजनिद्वाराऽगम्यगमनान्त-

---

*'रौद्रिं रोहिणीमालभेताभिचरन्' इत्येतस्मिन् अभिचारकर्मणि विनियुक्तोऽयं मन्त्रः। अभिनो वीर इति संहितापाठस्थाने त्वं नो वीर इति पाठमेव शंसनकाले ब्रूयात् । अभि न इति पाठे, एष देवः रुद्रः प्रजा अभिलक्ष्य ताः श्रयिष्यामीति मन्वीत । तेन चानेनाभिचारेण स्वप्रजाक्षय एव स्यात् । त्वं न इति पाठे तु रुद्रः अनभिमानुको भवतीत्यर्थः । कलिकतामुद्रितपुस्तकरीत्या तु, अनभिमानुक इति स्थाने—अनभिमारुक इति पाठः, अभिमारुकः—नाशकः, त्वं इति पाठे एव रुद्रो नाशको न स्यादिति भावः ।

[1] शोधनाद्वायो व्यादेदिति ?—**ग.** [2] बन्ध्यादि—**ग.** [3,5,7] कृतम्—**ग.** [4] वासादि—**ग.** [6] रादितृती—**ग.** [8] काव्यत्वतोऽनु—**ग.** [9] अस्तादेरौणा—**ग.** [10] प्रत्ययात्—**क.**

महानर्थहेतुयोषिदासवाद्यसद्विषयवर्णनासन्मनुष्यस्तुत्यादिप्रतिपादकग्रन्थसन्दर्भविशेषार्थक एकः काव्यशब्दः। अपरस्तु—वारि वहतीति वलाहक इतिवत् "क्रान्तं वेत्तीति कविः" इत्यतीन्द्रियतत्त्वार्थविदः—अनुग्रहाय तत्प्रवक्तारो व्यासादयः पृषोदरादिवत्साधुनानेन कविशब्देनोच्यन्ते। तस्येयं कृतिः—कर्म काव्यमिति ब्राह्मणादेराकृतिगणत्वात् कर्मणि ष्यञन्तः। तस्यास्य काव्यस्य चतुर्विधपुरुषार्थसाक्षात्साधनत्वेन सर्वप्रयत्नोपसंग्राह्यत्वात् रामायणस्य तथात्वस्य प्रागेव प्रतिपादितत्वात् इतरकाव्यकोश्यनभिनिवेशः॥

एवं विशिष्टविषयप्रयोजनवदिदं किमधिकारम्? त्रैवर्णिकाधिकारम्। त्रिपदाविलासत्वात्॥

ननु त्रैवर्णिकस्य स्वकुलदैवतब्रह्मानुसन्धानस्य स्वकुलविद्ययैव सिद्धत्वात् किमेतेन? उच्यते—पञ्चाङ्गसन्ध्यावन्दनाद्यनुष्ठान*रहितेन त्रैवर्णिकेन अम्बया ब्रह्मशक्त्यनुसन्धानं; प्रातर्मध्याह्नसन्ध्ययोश्चैव तयानुसन्धानं; समस्तवैश्वदेवप्राणाग्निहोत्राद्यनन्तरं पुनस्सायंसन्ध्यावन्दनपर्यन्तमम्बया ब्रह्मानुसन्धान(योगात्)म्। तत्र च काले तेषां भगवदनुसन्धानप्रयोजनं च भवति। अतिमानुषभगवद्रामचन्द्रचरितश्रवणेन प्रत्यक्षसन्तोषभक्त्यतिशयपापक्षयादिश्च भवति। अपि चाम्बानधिकृतब्राह्मणीब्रह्मकुलदाससच्छूद्राणामपि पुण्यलोकादिप्राप्तिहेतुभगवच्छ्रवणं [1]सप्रयोजनं भवति। तदपीहाङ्गीकृतमेव—"जनश्च शूद्रोऽपि महत्त्वमीयात्" इति। एवं चतुर्णामाश्रममात्राधिकारम्, न सङ्कराधिकारम्; अम्बासम्बन्धिसम्बन्धस्याप्यभावात्॥

अथ काव्यविषयस्य रामचरितस्य काव्यस्य च प्रतिपाद्यप्रतिपादकभावस्सम्बन्धः। उक्तप्रयोजनस्य काव्यस्य च साध्यसाधनभाव-

---

* सहितेन इति स्यात्.　　[1] सप्रयोजनमपि—ग.

स्सन्बन्धः । एवं समग्र[1]प्रवृत्त्यंशोपेतं रामायणं व्याख्येयं [2]प्रतिष्ठितम् ॥

अथादिकविर्वाल्मीकिर्दिव्यकाव्यकृतिशक्तये कृतकाष्ठसमाधिसाधितपरमादृष्टसुप्रीतभगवन्नियोगसमुपागतं देवर्षिं नारदं दिव्यं काव्यनायकं पृच्छति स्म । पृष्टस्स यथावद्भगवन्मुखश्रुतं तद्दिव्यकाव्यविषयं प्रपञ्चश्रुतं तदीयचरितञ्चानुस्मृत्य संक्षिप्योपदिश्य अथ सरहस्योऽशेषोऽस्य विस्तरः स्वतः प्रतिभात्वित्यनुगृह्य यथागतं जगाम । ततस्तदनुग्रहस्मृतत्रिपदावलम्बनेन भगवत्प्रपञ्चितं रामचरितं सरहस्यं निरवशेषमनुस्मृत्य स्वयमपि त्रिपदावलम्बनेनैव चतुर्विंशतिसाहस्र्या समग्रहीत् ॥

तस्यास्य दिव्यकाव्यस्याद्यसर्गो वाल्मीकेर्नारदस्योपदेशः । तत्र च 'नापृष्टः कस्यचिद्ब्रूयात्' इति न्यायेनापेक्षितप्रश्नाक्षेपः--'तपस्स्वाध्यायेत्यादि--'श्रुत्वा चैतत्' इत्यन्तो ग्रन्थः । अत्र--तपस्त्वेन श्रुतः स्वाध्यायः तपस्स्वाध्यायः । श्रूयते च तथा--'तप एव तत्तप्यते । तपो हि स्वाध्यायः' इति । उक्तश्रुत्यर्थसिद्धस्वाध्यायस्य तपस्त्वमापस्तम्बश्च स्मरति--"तपस्स्वाध्याय इति ब्राह्मणम् । तत्र श्रूयते 'तपो हि स्वाध्यायः' इति" इति । *स्वाध्यायश्चाप्रायत्यानध्ययनकालदेशादिपरिहारादिनियमोपेततया स्वशाखाध्ययनम् । तस्मिन्निरतः तदभ्यासनिरत इति यावत् । [3]†अत्र तपश्च स्वध्यायश्च तपस्स्वाध्यायौ तयोर्निरत इति द्वंद्वस्तूपेक्ष्यः । गौणतपोविशिष्टैकपरपुंविशेषप्रसिद्धमुनिपुङ्गवशब्देनैव तपस्सम्पत्तिमत्तायास्सिद्धत्वात् । [4]अन्वयेन मृदुमतिसौकर्याय व्याकुर्मः । वाग्विदां- स्वरूपतोऽर्थतश्च शब्दब्रह्मतत्त्वविदां

---

* अप्रायत्यं—आलस्यं - अनादरो वा. † गोविन्दराजस्येदं व्याख्यानम्.

[1] प्रवृत्तयज्ञोपेतं—क. [2] प्रतिष्ठितं भवति—ग. [3] अत्र हि—ग.
[4] अन्वयमुखेन—ग.

पणिनिपतञ्जल्यादीनाम् । निर्धारणे षष्ठी । वरं–तदन्यूनतया तत्त्वविद्मिति यावत् । मुनिशब्दो व्याकृतार्थः । मुनिपुङ्गवमिति । 'सप्तमी' इति योगविभागात्समासः । 'न निर्धारणे' इति निषेधात् षष्ठीसमासोऽशक्याश्रयः । पुमांश्चासौ गौश्च पुङ्गव इति, 'गोरतद्धितलुकि' इति टप् समासान्तः । व्युत्पत्तिमात्रमिदं । श्रैष्ठ्ये रूढस्तु पुङ्गवशब्दः । एवंविशिष्टं नारदं । तपस्वी–गौणमुख्यतपोयुक्तः । तत्र तप इति 'तपो नाऽनशनात्परम्' इति श्रुतेः कृच्छ्रचान्द्रायणैकादश्युपवासादिलक्षणं मुख्यतपः । 'मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमं तपः' इत्यादिश्रुतं गौणम् । एवंभूतो वाल्मीकिः प्रपच्छेत्यन्वयः । अत्र प्रष्टुरुक्तविशेषणेन दिव्यकाव्यविषयादिश्रवणाधिकारसम्पत्तिर्द्योतिता । वक्तुरप्युक्तविशेषणैः क्रमात्प्रतिपादनापेक्षितं सर्वज्ञत्वं वाग्मित्वं च प्रतिपादितम् । ग्रहणधारणसिद्धिहेतुशिष्यानुग्रहशक्तिमत्वं च प्रतिपादितम् ॥ १ ॥

**को न्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान् ।**
**धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥**

किं पप्रच्छेत्यतः प्रश्नाभिनयः—को न्वस्मिन्नित्यादि । नुशब्दो वितर्के । सांप्रतं–संप्रतिपर्यायं स्वरादित्वादव्ययं । वर्तमानकालेऽस्मिन् लोके भूलक्षणे को नु गुणवान्? भूमप्रशंसादौ मतुप् । सहजनित्यानन्द-(नित्य)कल्याणगुणवान् को नु दिव्यः पुरुषः? अस्यैव प्रपञ्चः कश्च वीर्यवानित्यादि । दिव्यास्त्रबलादिजः शक्तिविशेषो वीर्यम् । वीर्यवदिदमौषधमित्यादौ शक्तिविशेषे सुप्रसिद्धो वीर्यशब्दः । सकृद्व्याकृतश्शब्दः पुनर्न व्याख्यायते; ग्रन्थगौरवात् । अतस्तत्र सा व्याकृतिर्हृदि धार्या । [1] धर्मज्ञश्च–श्रौतस्मार्तसकलधर्म[2]रहस्यज्ञश्च । बह्वीमप्यपकृतिमुपेक्ष्य एका-

---

[1] कश्च श्रौत–ग. [2] रहस्यज्ञः–क.

मप्युपकृतिं बह्वीयसीं मन्यत इति कृतज्ञः। सत्यवाक्यः—[1]यथाश्रुतदृष्टार्थवक्ता। दृढव्रतः—आपद्यपि धर्माय परिगृहीतव्रतविशेषशैथिल्यरहितः ॥ २ ॥

**चारित्रेण च को युक्तः सर्वभूतेषु को हितः।**
**विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३ ॥**

*'अर्तिलू' इत्यादिना इत्रप्रत्ययान्तो वृत्तसंपत्तिवाची चरित्रशब्दः। तस्माद्वायसादिवत्स्वार्थिकोऽण्। तेन को युक्तः? सर्वभूतेषु—सर्वप्राणिषु। "यतश्च निर्धारणम्" इति सप्तमी। कः—प्राणी—पुमान् हितः—सर्वस्मै हितः। ऐहिकामुष्मिकहितावहः। तथात्वं च भगवत एव समस्ति; यतो रावणस्यापि परलोकहित[2]मवाक्षीत्। †कश्चिदिह सर्वप्राणिष्वपि हितकरणशील इति हितशब्दयोगमावृत्तसर्वभूतशब्दस्याह—तदसत्—हितयोगे चतुर्थ्या भाव्यत्वात्। को विद्वान्—आत्मानात्मसकलपदार्थतत्त्वज्ञः। "विदेश्शतुर्वसुः"। सामर्थ्यं—लौकिकव्यवहारे प्रजारञ्जनादौ चातुर्यं, तद्वान्। [3]अतिकामसौन्दर्यतो नित्यसौमुख्यतश्च एकरूपतया प्रियं दर्शनं यस्य स तथा। एकं प्रति प्रियं दर्शनं यस्यासौ एकप्रियदर्शन इति कश्चित्। तेनानेन किं प्राशस्त्यं प्रतिपादितं; स्वदासादिकमेकं मुक्त्वा सर्वाप्रियत्वस्य प्रतिपादनात् ॥ ३ ॥

---

* यद्यपि—वयःशब्दस्य प्रज्ञादिगणपाठान्तर्भावो दृश्यते न तु चरित्रशब्दस्येति न चरित्रशब्दादण्प्रसक्तिः? न च प्रज्ञादिराकृतिगणः। तथाऽपाठात्—तथापि—आकृतिगणत्वमभिमन्य तथोक्तं बहुप्रयोगानुसारात्। वस्तुतस्तु—'चरेर्वृत्ते' [६२२] इत्यौणादिकणित्रन् प्रत्ययान्तोऽयं स्वरस इति ॥ † गोविन्दराजः—महेश्वरतीर्थो वा।

[1] यथादृष्टश्रुततत्त्वार्थ—ग. [2] मकार्षीत्—क. [3] निष्काम—ग.

आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः ।
*कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४ ॥

आत्मवान्—वशी—जितान्तःकरणः । क्रोधः—त्रिविधजिघांसा । जितक्रोधः—त्रिविधजिघांसा विहितापि व्यर्थहिंसाप्रसङ्गरहित इति यावत् । द्युतिः—सर्वलोकदिदृक्षाजननी देहसौन्दर्यकान्तिविशेषलहरी तद्वान् । अनसूयकः—विद्यौन्नत्यादिपरौन्नत्यासहनमसूया, तद्रहित इति यावत् । असु उपतापे इत्यस्मात्कण्वादियगन्तात् ण्वुलि अनसूयक इति । संयुगे—यथाप्राप्तयुद्धकाले जातरोषस्य कस्य रोषद्दोवा अपि—इन्द्रादयोऽपि बिभ्यति । अभ्यस्तत्वाददादेशः । अविषयानस्मानपि भगवत्क्रोधस्संहरिष्यतीति भयं प्राप्नुवन्तीत्यर्थः । एवं पाङ्क्ते मार्गे स्थिते—कस्येति षष्ठी ऋषिवचनत्वादित्याह कश्चित् ॥ ४ ॥

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥ ५ ॥

उक्तगुणजातसामान्यनिर्देशापेक्षया एतदिति नपुंसकं । यदेतदुपन्यस्तं तदेतद्दिव्यपुरुषगुणजातं त्वेतादृशस्यास्तीति श्रोतुमहामिच्छामि । उक्तगुणसामग्र्या एकत्रातिदुर्लभत्वात्तादृशविशेषजिज्ञासायां मे परं—सर्वस्मादपि कौतूहलान्तरादुत्कटं कौतूहलं वर्तते एवं पाङ्क्ते एवमितिपाठः सम्यगिति कश्चित् । ननु कथं त्वत्पृष्टस्सर्वो मया शक्यप्रत्युत्तर इत्यतो—महर्ष इत्यादि । हे महर्षे—अपरोक्षातीन्द्रियाशेषार्थ ! इदं हेतुगर्भविशेषणम् । हि—यस्मात् त्वमेवंविधं यथोक्त-

* जातरोषस्य कस्य संयुगे देवाश्च बिभ्यति इत्यन्वयः । यद्वा-संयुगे जातरोषस्य कस्य बिभ्यतीत्येवान्वयः । शेषे षष्ठी । 'संज्ञापूर्वको विधिरनित्यः' इत्यपादानसंज्ञापूर्वक पञ्चम्यभावः—गो.

कल्याणगुणाकरं नरं—दिव्यपुरुषं ज्ञातुं समर्थोऽसि—सर्वलोकप्रसिद्ध-सामर्थ्योऽसि ; तस्मात्त्वत्त एव श्रोतुमिच्छामीति पूर्वेणान्वयः ॥ ५ ॥

**श्रुत्वा चैतत् त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।**
**श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ६ ॥**

श्रुत्वेति ॥ त्रिलोकज्ञः—भूर्भुवःस्वर्लोकलक्षणांस्त्रीन् लोकान् तत्रत्यवृत्तान्तांश्च जानातीति तथा । एवमत्र समाहारद्विगुत्वाभावान्न ङीप् । नारदो वाल्मीकेः एतत्—यथोक्तरूपं वचः श्रुत्वा श्रूयतामिति चामन्त्र्य—सम्बोध्य स्वरहस्यस्य चिरप्रतिपिपादयिषितस्य प्रतिपादन-लाभेन प्रहृष्टो भूत्वा वक्ष्यमाणलक्षणं वाक्यमब्रवीत् । अत्र कूजन्त-मित्यादिपुराणपाठीयान् श्लोकानपि व्याकुर्वन् तत्र वाल्मीकिशब्दोऽ-पत्यार्थेऽपि साधुः, *गहादिपाठादित्याह । तदेतद्गहादिपाठस्य वाल्मीकिशब्दोऽपि छप्रत्ययप्रकृतिरित्येतावन्मात्रसमर्थत्वेन तदीयव्युत्पत्ति-विशेषे औदासीन्यात् । कथं तर्हि तस्य साधुता ? बाह्वादीञन्तत्वादेव । कथं बाह्वादिपाठस्य न ? कारान्तता उपपद्यते ? इञन्तत्वात् । क्वचित् "अत इञ्" अपवादापवादार्थत्वात् । सुमित्रादौ प्रत्ययान्तरबाधनार्थ-त्वात् । गणत्वेन क्वचिदनपत्यार्थेऽपीञन्तत्वाच्च । यद्वाऽयमप्यपत्यार्थे-ञन्तः । कथं ? वल्मीकगर्भान्निर्गतत्वोपाधिना वल्मीकापत्यत्वस्य गोणीपुत्रः कलशीसुत इत्यादिवत्सुवचत्वात् । यद्वा वल्मीको नाम कश्चिदृषिः ; तस्यापत्यमिति वा । यद्वा दाडिमादिवदव्युत्पन्नः केवल-संज्ञाशब्दः । यद्वा दैवगत्या किञ्चिदवयवव्युत्पत्तेश्च सत्वात्पङ्कजादिव-द्योगरूढो वा ॥ ६ ॥

**बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।**
**मुने ! वक्ष्याम्यहं बुध्वा तैर्युक्तः श्रूयतां नरः ॥ ७ ॥**

---

*वाल्मीकिशब्दस्य साधुत्वमात्रे प्रमाणं—गहादिपाठादिति, न त्वपत्यार्थत्वेऽपि । अत एवोत्तरत्र दूषणमपि संगच्छते ।

त्वया ये बहवो गुणाः कीर्तिताः, त एते प्राकृतपुरुषमात्रे दुर्लभा एव । अथ च—अथापि हे मुने! यस्तैर्युक्तः तं बुध्वा—स्मृत्वाऽहं वक्ष्यामि । तादृशो नरः श्रूयताम् । प्राप्तकाले लोट् । तस्य श्रवणं ते प्राप्तकालमित्यर्थः ॥ ७ ॥

**इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।**
**नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥ ८ ॥**

इक्ष्वाकुवंशात्प्रभवः—आविर्भावो यस्य स तथा । रामो नाम—राम इति प्रसिद्धः—जनैश्च तथा श्रुतोऽस्ति कश्चित् । तस्मिन्नेवैकत्र सर्वे त्वत्पृष्टा गुणा इति शेषः । त एते गुणाः त्वदपृष्टानेकगुणाश्च, अनन्तकल्याणालयत्वं रामस्य द्योतयितुं प्रतिपाद्यन्ते—नियतेत्यादि । नियतात्मा—निगृहीतान्तःकरणः । वीर्यादिकं व्याकृतम् । आपत्सम्पदोरविकृतिश्चित्तस्य—धृतिः—तद्वान् । वशी—जिताशेषबहिःकरणः ॥ ८ ॥

**बुद्धिमान् नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः ।**
**विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ९ ॥**

बुद्धिः—तत्त्वज्ञानसाधनं सत्त्वप्रधानमन्तःकरणम् । सर्वत्रात्र प्रशंसादौ यथायोगं मतुप् । बुद्धेः प्राशस्त्यं सकृद्गृहीताविस्मरणावापोद्वापादिशक्तिमत्त्वम् । नीतिः—कामन्दकादिप्रसिद्धराजनीतिः । वाग्मी—"वाचो ग्मिनिः" प्रशस्तवाक् । त्रिलोकशेखरीभूतनिजशासन इति यावत् । श्रीमान्—शोभैश्वर्योभयप्रकारनिस्तुलाधिकश्रीयुक्तः । शत्रुनिबर्हणः—शत्रूणां बाह्यान्तराणां यथाकालं यथोचितं निबर्हणः । "कृत्यल्युटो बहुलम्" इति कर्तरि ल्युट् । धातूनामनेकार्थत्वान्निपूर्वो बृहिर्हिंसार्थः । विपुलांस इत्यादिना सामुद्रिकं लक्षणं कथ्यते । इदमपृष्टगुणकथनम् । विपुलः—विशालः-उत्कृष्टः-उन्नतः अंसः—भुज-

शिरो यस्य स तथा । "स्कन्धो भुजशिरोंऽसोऽस्त्री" इति निघण्टुः । तदुन्नतत्वं सुलक्षणम् । तथाऽऽह वररुचिः—

"कक्षः कुक्षिश्च वक्षश्च घ्राणः स्कन्धो ललाटिका ।
सर्वभूतेषु निर्दिष्टा उन्नतास्तु सुखप्रदाः ॥"

इति । महाबाहुः । "आन्महत" इत्यात्वम् । तत् ब्रह्मत्वलक्षणम् । तथा हि—

"शिरो ललाटश्रवणे ग्रीवा वक्षश्च हृत्तथा ।
उदरं पाणिपादौ च पृष्ठं दश बृहत्सुखम् ॥"

इति ब्राह्मे । कम्बुवद्रेखात्रयविशिष्टा ग्रीवा यस्य स तथा । कम्बुः—शङ्खः । हनुः—कपोलोपरिभागः । तस्य महत्त्वं मांसलत्वम् । तच्च लक्षणम्—"पूर्णमांसलहनुस्तु भूमिपः" इति संहितायाम् ॥ ९ ॥

**महोरस्को महेष्वासो गूढजत्रुररिन्दमः ।**
**आजानुबाहुस्सुशिरास्सुललाटस्सुविक्रमः ॥ १० ॥**

महत् विशालं उरः यस्य स तथा । "उरः प्रभृतीनि" इति नित्यः कप् । 'उरश्शिरो ललाटश्च' इत्यारभ्य "विशालास्ते सुखप्रदाः" इति शास्त्रम् । महेष्वासः—महान् इष्वासः—धनुरस्य । अस्यतेः करणे घञ् । गूढे—मांसलत्वान्मग्ने जत्रुणी—वक्षांससन्धिगतास्थिनी यस्य स तथा । अरीन्—पापान्तरायादिलक्षणान्निजभक्तानां दमयतीति अरिन्दमः । "संज्ञायां भृतृ ..." इत्यादिना दमेः खच् । अरिन्दम इति राज्ञोऽन्वर्थसंज्ञा । शत्रुञ्जयो हस्तीत्यादिवत् । आजानुबाहुः—जानुपर्यन्तदीर्घबाहुः । "दीर्घभ्रूबाहुमुष्कश्च चिरञ्जीवी धनी नरः" इति ब्राह्मे । शिरसस्सुष्ठुत्वं समवृत्तत्वम् । तच्च लक्षणम् ।

"समवृत्तशिराश्चैव छत्राकारशिरास्तथा ।
एकछत्रां महीं भुङ्क्ते दीर्घमायुश्च विन्दति ॥"

इति नारदः। सुललाटः—ललाटस्य रेखाविशेषवत्त्वं सौष्ठवम्। तच्च लक्षणम्—

"ललाटे यस्य दृश्यन्ते चतुस्त्र्येकरेखकाः।
शतद्वयं शत षष्टिस्तस्यायुर्विंशतिस्तथा"

इति कात्यायनः। विक्रमः—पदविक्षेपः; तस्य सौष्ठवं गम्भीरत्वम्। तच्च लक्षणं—"स्वरो गतिश्च नाभिश्च गम्भीरः स प्रशस्यते" इति ब्राह्मे ॥ १० ॥

**समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान्।**
**पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ ११ ॥**

समः—नातिदीर्घो नातिह्रस्वः। "षण्णवत्यङ्गुलोत्सेधो यः पुमान् स दिवौकसाम्" इति ब्राह्मे। अंश इति शेषः। समानि—अन्यूनानधिकपरिमाणानि विभक्तानि—पृथक्कृतानि अंगानि यस्य स तथा। कानि पुनस्तानि?

"भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुकौ।
कूर्परौ मणिबंधौ च जानुनी वृषणे कटी।
करौ पादौ स्फिजौ यस्य समौ ज्ञेयस्स भूपतिः"

इत्युक्तानि। स्निग्धवर्णः—स्निग्धश्यामलवर्ण इति यावत्। तत्फलं "स्निग्धेन्द्रनीलवर्णस्तु भोगं विन्दति पुष्कलम्" इति। प्रतापः—ख्यातिमात्रतः अरिहृदयविदारणक्षमं पौरुषम्। "प्रतापौ पौरुषातपौ" इति निघण्टुः। पीनवक्षाः—मांसलसमोन्नतवक्षाः। तादृशवक्षस्त्वस्य सुलक्षणत्वं प्रागेवोक्तम्। "प्यायः पी" "ओदितश्च" इति निष्ठानत्वम्। विशालाक्षः—विस्तृतायताक्षः। "बहुव्रीहौ सक्थ्यक्ष्णोः" इति षच्। "नासिका चक्षुषी कर्णौ प्रजानू यस्य चायताः" इति लक्षणशास्त्रम्।

लक्ष्मीवान्—सीतारूपलक्ष्मीशक्तिमान्। मोपधत्वाद्वत्वम्। एवमु[1]क्त-नित्यशुभानि सामुद्रिकशास्त्रोक्तानि लक्षणानि यस्य स तथा ॥ ११ ॥

**धर्मज्ञस्सत्यसन्धश्च प्रजानां च हिते रतः।**
**यशस्वी ज्ञानसंपन्नः शुचिर्वश्यस्समाधिमान् ॥ १२ ॥**

धर्मज्ञकृतज्ञौ व्याकृतौ। सत्याः—अमोघाः सन्धाः—'सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' इत्येवमादिरूपिण्यः प्रतिज्ञाः यस्य स तथा। प्रजानामित्यादि गतार्थम्। यशस्वी—रावणवधादाचन्द्रतारकानस्तमितदिव्ययशस्सम्पन्नः। असन्ततत्वादिनिः। ज्ञानसंपन्नः—विशिष्य ब्रह्मानन्यताज्ञानपरिपूर्णः। तथा हि—विशिष्य ब्रह्मदर्शनमूलं वचनं—जटायुषं प्रति "मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान्" इति। येभ्य उत्तमा न विद्यन्ते ते अनुत्तमाः—ब्रह्मलोका इति यावत्। तथा च श्रुतिः—"अथ यदतः परो दिवो ज्योतिर्दीप्यते सर्वतः पृष्ठेष्वनुत्तमेषु" इति। ननु कथं "आत्मानं मानुषं मन्ये रामं दशरथात्मजम्" इति रामवचनम्?—ब्रह्मज्ञानवत्वे का दुष्टिः। मानुषदेहोपाधिवशात् यदा रजस्तमस उद्रेकस्तदाऽसमाधिदशायां निजतत्वविस्मरणं स्यात्; स्वप्ननिद्रयोरिव। तथा हि गीयते—"न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः" इति। एवं सति उक्तकादाचित्कमानुषभावस्य अभावप्रतिपादनवृथा-क्लेशः कस्यचित्केवलं श्राद्धः। तच्चासत्—सीताविरहजप्रलापादीनां

---

[1] उक्तरीत्याशु—ग.

सर्वथैवामानुषभावेऽतिदुर्घटत्वात् । यथोक्तब्रह्मज्ञानसंभवाय त्रीणि विशेषणानि—शुचिरित्यादीनि । प्रातस्स्नानादिपूर्वकगायत्रीजपादिना रेचकपूरकाभ्यासादिना प्रत्याहारजनितरागद्वेषहानेन च नित्यशुद्धस्थूलसूक्ष्मान्तरपरिकरत्रयः । वश्यः—वशंगत इति यावत् । अक्रुतकानन्यतायोगेन ब्रह्मतावशं गतः । समाधिमान्—यथेच्छं साकारनिराकारनिजब्रह्मतत्त्वसमाधिमान् । समा—एकीभूता या परेण ब्रह्मणा चित्तस्य आधिः—धारणं समाधिः । निवातनिश्चलदीपवच्चित्तस्य लक्ष्याचलस्थितिरिति यावत् । अत्र वश्य इति आश्रितपरतन्त्र इति समाधिमान्—प्रतिज्ञावान् इति चाह *कश्चित् । तदसत् । सत्यसन्ध इति प्रतिज्ञावत्त्वस्य गतत्वाच्च । आश्रितपारतन्त्रस्यानुग्राहकत्वमात्रतात्पर्यतः पारतन्त्र्यस्य मिथ्यात्वाच्च ॥ १२ ॥

**प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः ।**
**रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ १३ ॥**

प्रजापतिसमः । यद्यपि प्रजापतिसमविष्णुभूमिविराट्प्रधानब्रह्मावतारो रामो भगवान् प्रजापतिर्ब्रह्मैव—अथापि—मानुषवैराजलोकदेहावतारोपाधितस्तदुपाधिसंसर्गजानां धर्माणां सीतामूलमोहशोकादीनां 'इमौ तौ मुनिशार्दूल किङ्करौ समुपस्थितौ' इत्यादिपारतन्त्र्यादीनां आदेहपातमुपाधिप्रयुक्ताशेषनिजनित्यकर्मणां च कियतां अब्रह्मधर्माणामसमाधिकालेष्वनुवर्तनादस्त्येव चोभयोर्भेदः । अथापि भार्गवलोकप्रतिबंधजटायुलोकप्रदानविभीषणशाश्वतराज्यप्रदानहनूमदा—कल्पनित्यत्वभाविकार्यब्रह्मत्वदानसमुद्रसेतुबंधनस्वावतारानुयायिस्वभूम--विमहसर्वदेवावतार (पूर्व) सर्वसेव्यत्वसशरीरसपरिकरब्रह्मलोकनिर्याणा-

---

* गोविन्दराजः.

न्तानां वयमस्मद्देहानामिव स्वकभूमाविग्रहब्रह्माण्डयात्रादिस्वतन्त्रब्रह्मैक-साध्यानां भूयसां ब्रह्मधर्माणां रामोपाधावपि लोकस्य ब्रह्मावतारता-प्रत्यायनायाविर्भावित[1]त्वाद्वा ब्रह्मसमत्वम् । नैवं धर्माः कृष्णाद्यवतारेऽपि । स तु प्रजापतिविष्णुप्रधानः । तथैव तेनैव भगवतोपदिष्टम्— 'महर्षयस्सप्त पूर्वे चत्वारः' इत्यादिना गीतायाम् । श्रीमान्—एवमादीनां भगवत्कल्याणगुणानामादरातिशयजपौनःपुन्यकीर्तनमभ्युदयहेतुतोऽलङ्काराय न दोषगन्धाय । अतः परं व्याकृतपदमतिस्पष्टं पाङ्क्तान्वयश्च त्यज्यते । धाता—योगरूढ्या । तथा हि— 'रामाय रामभद्राय रामचन्द्राय वेधसे' इति (च) ब्रह्मत्वादि-दानीमौपाधिरामविग्रहेणापि पितेव सर्वप्रजाधारणाच्च । रिपु-निषूदन इति । 'नन्द्यादिभ्यो ण्यन्तेभ्यस्संज्ञायाम्' इति वचनात् एवमादौ वा संज्ञायाम् । तथा हि—रिपुं निषूदयतीति रिपुनिषूदन इत्य-ण्यन्तात्कर्तरि नन्द्यादिल्योरयोगात् "कृत्यल्युटो बहुलम्" इत्येव सर्वतो ल्युट् द्रष्टव्यम् । सुषामादित्वात् इह षत्वम् । जीवा ऊर्ध्वस्रोतो-लक्षणाः—तेषां लोकः—समूहः—तस्य अन्नपानादिदानचोराद्युपद्रवत्राणादितः स्थूलदेहरक्षिता । धर्मः श्रौतस्मार्तरूपः । तस्य जीवलोकस्य यो नित्यप्राप्तो वर्णाश्रमधर्मः तस्य तत्तन्मर्यादापालनद्वारा रक्षिता ॥ १३ ॥

**रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।**
**वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ १४ ॥**

न केवलं[2] तस्य ; अपि तु स्वस्य—स्वीयस्य "अध्ययन-मध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं *दायाद्यं सिलोञ्छः ।

---

* पुत्रादिभ्यो दीयत इति दायः, तमादत्त इति दायादः । तस्य भावो दायाद्यं दायस्वीकारः । सिलं—क्षेत्रादिषु पतितं धान्यं, तस्योञ्छनं—आदानम्.

[1] त्वाच्च—ग. [2] एतावत्—ग.

(आप. धर्मसू. २-२०-४) अन्यच्चापरिगृहीतम् (५)। एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाप्य दण्डयुद्धादिकानि (६)" इत्युपदिष्टस्वधर्मस्य च रक्षिता—सादरं सदानुष्ठाता। अपि च स्वजनस्य [1]बन्धुजनस्य स्वभक्तजनस्य च विशिष्य रक्षिता। तथा हि—"राजवंशान् शतगुणान् स्थापयिष्यति राघवः" इति, तथा "सकृदेव प्रपन्नाय" इत्यादिकं च। वेदानां चतुर्णां छन्दःकल्पव्याकरणज्योतिषनिरुक्तशीक्षालक्षणवेदाङ्गानां च पाठतोऽर्थतश्च तत्त्वज्ञः-परमार्थस्वरूपज्ञः। धनुर्वेदः-धनुषो हस्तमुष्टिस्थितिविशेषाकर्षणविमोकादिदिव्यास्त्रादिप्रतिपादकं शास्त्रं; तस्य च वेदत्वमुक्तार्थ[2]शासनोपचारात्। अत एवान्यत्रापि आयुर्वेदादीनि सव्याख्यानि शास्त्राणि स्मृतयश्च सूत्राण्यपि तत्त्वार्थशास्त्रेणोपचाराच्छास्त्राणि ॥ १४ ॥

**सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान्।**
**सर्वलोकप्रियस्साधुरदीनात्मा विचक्षणः॥ १५ ॥**

सर्वमूलशब्दशासनाद्याकरणं च महाशास्त्रं, तथैव कामन्दकादीन्यपि शास्त्रशब्दकानि, सर्वेषामेषामर्थतत्त्वज्ञः। पाठस्य नातिप्रयोजनत्वादर्थविशेषणम्। [3]स्मृतिमान्—उक्ताधीतवेदशास्त्रविस्मरणरहितः। प्रतिभानवान्—व्यवहारकाले श्रुतस्याश्रुतस्य चोचितार्थस्य द्राक्प्रतिभासः प्रतिभा-प्रतिभानं-तद्वान्। सर्वलोकप्रियः-स्वद्रष्टृस्मर्तृसर्वलोकानामिहामुत्र हितावहः। सर्वलोकानां प्रियं [4]यस्मादित्यन्यपदार्थो बहुव्रीहिर्वा। साधुः—[5]मृदुमधुरशुभस्वभावः। इदं पूर्वोक्तविशेषणसाधकं विशेषणम्। यद्येवं साधुद्विजवद्दीनस्वभावस्स्यादित्यत्रोक्तम्-अदीनात्मेति।

---

[1] स्वबन्धु—ग.　[2] वेदनो—ग.　[3] मतिमान्—ग.　[4] यस्येत्य—ग.　[5] मुग्ध—ग.

"शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥" (गी. १८-४३)

इति सहजासाधारणक्षात्रभावेनातिधीरमहाप्रभुस्वभाव एव भवति । अत्र अपकारिष्वपि साधुत्वात्साधुरित्यादिकमसंगतमेवमादौ * कश्चिज्जल्पति । तदसंगतमिति सन्तस्समवेदिषीरन् । तदतःपरमतिविरलं तादृशकश्मलप्रजल्पः प्रकाश्यते । विचक्षणः—यथोचितं लौकिकालौकिकसर्वार्थकृतिकुशलः ॥ १५ ॥

**सर्वदाऽभिगतस्सद्भिस्समुद्र इव सिन्धुभिः ।**
**आर्यस्सर्वसमश्चैव सदैव प्रियदर्शनः ॥ १६ ॥**

होमदेवपूजासभाविष्ठानादिकालेषु, † कामन्दकादिना, (राज्ञा) विमुक्तेषु सर्वेष्वपि तत्तत्कालोचितैस्साद्भिः पुरोहितविद्वन्मन्त्रिप्रधानादिभिश्च 'यथा राजा तथा प्रजाः' इति न्यायेन सात्विकस्वभावैः, समुद्रस्तत्तत्प्रदेशे तत्तत्सिन्धुभिरिवाभिगतः—सेवितः । आर्यः—सार्वभौमत्वादेव सर्वपूज्यः । सर्वसमः-सर्वेष्वपि कर्मायत्तद्वन्द्वमात्रेषु सुखदुःखादिषु हर्षविषादरहितः । शत्रुमित्रोदासीनेषु वैषम्यरहित इत्यन्यः ‡ । किमयं रामः परिव्राट् ? येन तथा स्यात् ॥ १६ ॥

**स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।**
**समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥ १७ ॥**

स रामः एवं क्षत्रियमात्रसामान्यप्राप्तैः सर्वैर्गुणैरुपेतः । चकाराद्वक्ष्यमाणराज्याभिषेकार्हक्षत्रियगुणैश्चोपेतः । कोसलस्यापत्यं स्त्री कौसल्या । 'वृद्धेत् कोसल....' इति ञ्यङ् । 'यङश्चाप्' । तस्या

---

* महेशतीर्थः. † अयं महाभारते उल्लिख्यमानः कामन्दः स्यात्. ‡ महेशतीर्थः.

आनन्दं सुतत्वाद्वर्धयतीति कौसल्यानन्दवर्धनः। एतेन महाकुल-प्रसूतप्रधानमहिषीसुतत्वरूपस्य साक्षादभिषेकापेक्षितधर्मस्य सत्त्वं भगवति दर्शितम्। वक्ष्यमाणास्तु सर्वेऽभिषिषिक्षिते सर्वथाऽपेक्षित-धर्मत्वे स्पष्टाः। गाम्भीर्यं—अगाधाशयत्वं ; तत्र समुद्रतुल्यः। संयुगे सर्वसेनापलायनेऽपि स्वयमचलतयावस्थानं धैर्यम्। राजप्रधानं इष्ट-वियोगादावनतिक्षुभितचित्तत्वं सर्वासाधारणं धैर्यम्। तत्रोभयत्र हिमवत्तुल्यः। अत्र रामस्य सीतावियोगे शोकात् प्रलापदोषमाशंक्य तदभावं समर्थयति *कश्चित्। एवमादिरसङ्गतः प्रत्यक्षवचनाविरुद्धो भाक्तः प्रलापः पृष्ठीकार्य इति प्रागेवोक्तम्। उपाधिगतधर्माणां तु संसर्गस्य यावद्देहपातमवर्ज्यत्वात्। अपि तु परमात्मकुलपरमकल्याण-गुणपरमपतिव्रताया मातुः सीताया वियोगे यदि शोकं प्रलापं च न कुर्यात् तदा शुभाशुभोचितव्यवहाररहितपिशाचतुल्य एव रामः स्यात्। अतस्तत्कालशोकादिकमुक्तं पुरुषोचितमेवेति नायं दोषः ॥ १७ ॥

---

* तीर्थादिभिः स्थलान्तरे एवं समर्थ्यते। रामावतारविषये द्वयी गतिः—

परिपूर्णब्रह्मावतारो रामः इत्येका ; मिश्रावतार एवेत्यपरा। आद्यः पक्षः बहु-सम्मतः। एतत्पक्षे निर्दोषस्य रामस्य परब्रह्मणः सीतावियोगजशोकप्रलापादिरभिनय एवेति बलादङ्गीकरणीयम्। अन्यथा—'पूर्वं मया नूनमभीप्सितानि पापानि कर्माण्यस-कृत्कृतानि' (अर. ६३-४) 'ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम्' (आर. ६७-२४) 'नास्त्यभाग्यतरो लोके मत्तोऽस्मिन् सचराचरे' (आर. ६७-२६) इत्यादिपरश्शत-रामवाक्यैः रामस्य अस्मादृशबद्धजीवापेक्षयाऽपि निकृष्टत्वमेवाङ्गीकार्यं स्यात्। सौलभ्य-सौशील्यादिगुणास्तु संकल्पमात्राधीनसर्वसिद्धिकस्य परब्रह्मणः अनपेक्षितैतादृशक्लिष्टाभिनया-भ्युपगममात्रेणैव लब्धपोषणा इति तु तत्त्वपरिस्थितिरित्यन्यत्र विस्तरः। द्वितीयपक्षे रामस्य शोकाद्यङ्गीकारे न हानिः। व्याख्याकारोऽयं ब्रह्मण एवोपाधिसम्बन्धवशाद्दोष-मङ्गीकरोतीति स्पष्टमवगम्यते। अतोऽनेन रामावतारस्य ब्रह्मावतारत्वाङ्गीकारेऽपि शोका-दिकं वास्तवमेवाङ्गीकर्तुं शक्यत इति भाव्यम् ॥

*विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ १८ ॥

वीर्यं व्याकृतम् ; तत्र विष्णुना तुल्यः । अनुग्रहप्रधानो विराड्विष्णुः, स्वप्रधानो विराट् प्रजापतिः । प्रजापतिरेव विष्णुः ; विष्णुरेव प्रजापतिः ; भेदव्यवहारस्तूपाधिमात्रात् । अयमर्थः श्रीमद्ब्रह्मसिद्धान्तप्रकरणे बहुग्रन्थविस्तृत इति नेह शक्यप्रपञ्चनः । यद्यप्ययमेव रामो विष्णुः प्रजापतिः । तथापि मानुषोपाधिभेदात् सादृश्यम् । एवं सर्वत्र द्रष्टव्यम् । सोमवत् प्रियदर्शनः—सभायां प्रजाव्यवहारनिरीक्षणकाले । कालाग्निसदृशः क्रोधे—युद्धादिकाले । शक्यप्रतिक्रियापकारसाहिष्णुता—क्षमा, तया अन्वितत्वे पृथिवीतुल्यः । पृथिवी हि माता सर्वस्रोतसामनन्यगतिकत्वात् तत्प्रासाद्यं क्षमते ॥ १८ ॥

†धनदेन समस्त्यागे सत्ये धर्म इवापरः ।

धनत्यागे—यज्ञदानादिरूपधर्मार्थवित्तव्ययविषये अपेक्षितधनसंपत्तौ धनदेन—नवनिधीशेन समः । अस्मिन्नेवांशे अयं दृष्टान्तः ; न तु

---

* विष्णोरंशत्वेन रामस्य विष्णुसादृश्यं सुवचमेव............तदंशस्यापि तत्सदृशत्वं युक्तमेव—**गो.**

विष्णुना—स्वेनैव वीर्ये सदृशः—उपमानान्तरराहित्यमनेनोक्तम्—**ती.** विष्णुना सदृश इत्यनन्वयालङ्कारः—**ति.**

† त्यागे सत्यपि धनदेन समः, अनेन अक्षीणकोशत्वं महोदारत्वं चोक्तम्—**ती.**

कुबेरस्य त्यागित्वं 'त्यागे च धनदो यथा' इत्यादिवक्ष्यमाणवचनशतसिद्धम् । न च तस्य लुब्धत्वं कुतश्चित्सिद्धम् । त्यागे सत्यपि धनदवदाढ्यः इति व्याख्यानं तु प्रक्रमविरुद्धम् । न ह्याढ्यत्वं कश्चिद्गुणः । तथा सति लुब्धत्वमेवास्य सिद्धं स्यात्—**गो.**

वस्तुतस्तु—तत्तत्पुण्यपापानुगुणभगवदाज्ञामूलकत्वेन धनदातृत्वमेव साम्यप्रयोजकं युक्तं, न हि स्वैरं धनव्यय औदार्यं किन्तु सत्पात्रेषु यथायोग्यं दानमेव, तदंशे भवति दृष्टान्तः कुबेर इति युक्तम् ॥

त्यागांशे। स तु यक्षगणैः सर्वतः सर्वेषामपि निधीनपहृत्य नित्यं निजनिधीनेव केवलं पूरयति। धनदव्यवहारस्तु भगवदाज्ञया भगवद्वयववस्वदितिदशगणेभ्यो यावद्भगवदाज्ञं ददाति। नान्येभ्यः काचमात्रमपि। सत्यं व्याकृतम्, तत्रापरो धर्म इव। धर्मस्य मूर्त्यन्तरमिवेति यावत्॥

**तमेवंगुणसंपन्नं रामं सत्यपराक्रमम्॥ १९॥**
**ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथस्सुतम्।**
**प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया॥ २०॥**
**यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः।**

"तमेवंगुणसंपन्नम्" इत्यारभ्यायोध्याकाण्डीयः संक्षेपः। अतः प्रागुक्तश्लोकैरेव यथाकथञ्चित् बालकाण्डीयोऽर्थः भगवदवतारादिः सूचितो वेदितव्यः *। तत्र इक्ष्वाकुवंशप्रभव इत्यनेन विश्वामित्रानुग्रहजादिव्यास्त्रसंपत्त्यादिः ताटकावधयज्ञशत्रुनिबर्हणान्तो व्यापारः सूचितः। अथ "विपुलांसः" इत्यादि "लक्ष्मीवान्" इत्यन्तं यौवनदशावर्तिसीतापरिणयादिसंक्षेपः। सत्यपराक्रम इत्यनेन सत्यलोकवर्तिसत्याख्यलोकेशश्रीहिरण्यगर्भभावेन स्वीयेन भार्गवलोकप्रतिबन्धान्तव्यापारः संक्षिप्तो वेदितव्यः। अथ एवंगुणसंपन्नम्—प्रागुक्तनित्यासाधारणकल्याणगुणसंपन्नम्; पश्चादुक्तरीत्या श्रेष्ठगुणैः यौवराज्यसार्वभौमपदाभिषेकार्हविशिष्टगुणैश्च युक्तम्; सत्यपराक्रमं—सत्यपरिपालनबलात् प्रवर्तमानः सत्यः—अमोघः पराक्रमः—परेषां शत्रूणां आक्रमः—अभिभवः

---

* अत्र च नारदेन वाल्मीकिं प्रति विस्तरशः रामायणमुपदिष्टमित्यत्र न किञ्चित् प्रमाणमुपलभ्यते। 'रहस्यं च प्रकाशं च' इत्यादिब्रह्मवरमहिम्ना सर्वं साक्षात्कृत्य रामायणं रचितवानित्येवावगतेः। अतः सर्वार्थानां अस्मिन् सर्गे अन्तर्भावसमर्थनं चमत्कारविशेषार्थमिति॥

यस्य स तथा। *प्रकृतीनां मन्त्रिपुरोहिताद्यष्टादशप्रकृतीनां, हितैः—इहामुत्रहितावहैः कर्मभिर्युक्तं श्रेष्ठं सुतं तं रामं प्रकृतिप्रियकाम्यया—प्रागुक्तप्रकृतीनां मन्त्रिपुरोहिताद्यष्टादशानां प्रियं कर्तुमिच्छया। यद्यपि आत्मन इच्छायां काम्यजपि क्वचित्, अथापि 'छन्दसि परेच्छायामपि काम्यज्वक्तव्यः' इति वचनात् आर्षस्यापि छन्दोवद्भावात् काम्यच्। ततः 'अ प्रत्ययात्' इत्यकारे स्त्रीप्रत्यये टेर्लोपे टाप्। युवा चासौ राजा च युवराजः, तस्य भावः कर्म वा, ब्राह्मणादित्वात् ष्यञ्, यौवराज्यं तेन संयोक्तुं महीपतिः—दशरथः, प्रीत्या—यौवराज्यपदार्हपुत्रानुभवजनितानन्देन ऐच्छत्। सश्वेतच्छत्रे भद्रासने पितरि स्थिते तदतिरिक्तसर्वव्यापारे अभिषेकपूर्वकमधिकृतो युवराजः॥ २०॥

**तस्याभिषेकसंभारान् दृष्ट्वा भार्याऽथ कैकयी॥ २१॥**
**पूर्वं दत्तवरा देवी वरमेनमयाचत।**

अथ तस्य रामस्य, यौवराज्याभिषेकापेक्षितान् संभारान्—"औदुम्बरी आसन्दी, तस्यैव प्रादेशमात्राः पादाः स्युः" इत्यादितः तथा "दधिमधुसर्पिरातपवर्ष्या आपः" इत्यन्ततः बह्वृचब्राह्मणेनोपदिश्यमानान् संभृतान्, दृष्ट्वा—मन्थरावाक्यात् अवगत्य राज्ञः कनीयसी भार्या, पूर्वं—विभक्तिप्रतिरूपकमव्ययम्। 'कालाध्वनोः' इति तृतीयेति कश्चित्। न हि इह अत्यन्तसंयोगं मासमधीत इतिवत् पश्यामः। पूर्वं—पूर्वस्मिन् इन्द्रसहायार्थप्रवृत्तदशरथयुद्धकाले दशरथोपरि प्रयुक्तां आसुरीं मायां धवलाङ्गमुनिदत्तविद्यया निवारयन्त्यै कैकेय्यै तुष्टेन दशरथेन, दत्तवरा—दत्तौ वरौ यस्यै सा तथा, देवी—कृताभिषेका

---

* प्रकृतीनां—प्रजानां—गो.

कैकयी—*केकयस्य अपत्यं स्त्री, 'क्षत्रियसमानशब्दात् जनपदात् तस्य राजन्यपत्यवत्' इत्यञि जनपदे लुप्। 'केकयामित्रयु' इत्यादिना यादेरियादेशे गुणे चादिवृद्धौ 'टिड्ढाणञ्...' इत्यादिना ङीपि 'यस्य—' इति लोपे कैकेयीति भवति। अत्र "अपि माषं मषं कुर्यात् छन्दोभङ्गं न कारयेत्" इति न्यायेन कैकयी इति प्रयोगः। एनं वक्ष्यमाणलक्षणं वरं—पूर्वदत्तं प्राप्तकालत्वादयाचत दशरथं, द्विकर्मकत्वात् याचेः ॥ २१ ॥

**विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २२ ॥**

किं तत् वरद्वयमित्यतः—विवासनमित्यादि। निजराज्यात् रामस्य उद्वासनं तत्र भरतस्य अभिषेचनं च अयाचत ॥ २२ ॥

**स सत्यवचनाद्राजा धर्मपाशेन संयतः।**
**विवासयामास सुतं रामं दशरथः प्रियम् ॥ २३ ॥**

सत्यवचनात्—सत्यप्रतिज्ञत्वादेव हेतोः सत्यमयेन धर्मपाशेन संयतः—बद्धस्सन् दशरथः प्रियं सुतमपि विवासयामास ॥ २३ ॥

**स जगाम वनं वीरः प्रतिज्ञामनुपालयन्।**
**†पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥ २४ ॥**

वीरत्वं—एकेन अनेकैरपराङ्मुखतया धैर्यमनुक्त्वा शोभामुखतया योद्धृत्वं वीरत्वम्। स रामः पितुः प्रतिज्ञां स्वविवासनेन

---

*ननु अञ् प्रत्यये 'केकयमित्रयु' इतीयादेशः किं न स्यात्—उच्यते 'जराया जरस् अन्यतरस्याम्' इत्यतः अन्यतरस्यामित्यनुवृत्तेः तस्य वैकल्पिकत्वात्। न च इयादेशाभाव आर्ष इति वाच्यम्—'कैकेयी कैकयी' इति शब्दभेदप्रकाशिकायामुक्तेः 'प्राक् कैकयीतो भरतस्ततोऽभूत' इति भट्टिप्रयोगाच्च-**गो**. †पितुः वचनमेव निर्देशः—आज्ञा-**गो**.

सत्यतयानुपालयन् । "लक्षणहेत्वोः" इति हेतौ शतृप्रत्ययः । तत एव हेतोर्वनं जगाम। न केवलं स्वेच्छया, अपि तु पितृवचनकृत-निर्देशात्—आज्ञातः । अपि च कैकेय्या मातुश्च प्रियकारणात्—प्रियसिद्धिनिमित्तमपीत्यर्थः । एतेन मातापितृसन्तोषणमेव सर्वात्मना पुत्रस्य परमो धर्म इति सर्वजगतां भगवता रामेणोपदिष्टं भवति ॥ २४ ॥

**तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ।**
**स्नेहाद्विनयसम्पन्नः सुमित्रानन्दवर्धनः ॥ २५ ॥**
**भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ।**

व्रजन्तं भ्रातरं प्रियः—अर्श आद्यच् । रामे सुहृत्प्रीतिमान् भ्राता रामस्य स्वयं दयितः विनयसंपन्नः सुमित्रानन्दवर्धनो लक्ष्मणो भ्राता च, सौभ्रात्रं—"हायनान्तयुवादिभ्योऽण्" इत्यण् । सुभ्रातृभावं अनुदर्शयन्, स्नेहात्—भ्रातृस्नेहादेव जगाम ; न पित्रादिनिर्देशात् ॥ २५ ॥

**रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥ २६ ॥**
**जनकस्य कुले जाता देवमायेव निर्मिता ।**
**सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ॥ २७ ॥**
**सीताप्यनुगता रामं शशिनं रोहिणी यथा ।**

अथ रामस्य दयिता—इष्टा, भार्या, न केवलमिष्टामात्रं—अपि तु प्राणसमा । निरतिशयप्रेमास्पदा ; नित्यं हितकारिणी च । जनकस्य निमिपुत्रस्य कुले—अन्वये जाता । यद्यप्ययोनिजा सीता, अथापि जनककुलजस्य सीरध्वजस्य देवयजनलांगलपद्धतावाविर्भूतत्वा-देवंवादः । कथमेवं प्रादुर्भाव इत्यतो—देवमायेव अचिन्त्योदयस्थिति-तया देवैरेव स्वकार्यसिद्धिकांक्षिभिराविर्भाविता । यथा देव्या उदयस्तथा

तल्लयोप्यचिन्त्यः । तथा भर्तृवियुक्तया बहुकालं स्थितिश्चाचिन्त्य-हेतुका । यद्वा इवशब्द एवार्थः । सा देवेन भगवता स्रष्ट्रा देवकार्याय निर्मिता देवमायैव । 'दैवी ह्येषा गुणमयी मम माया' (गी. ७-१४) इति गीता । भगवतोऽनाद्यनन्ता सहजा शक्तिरेव, न केवलं या काचित् द्रौपद्यादिवदयोनिजा स्त्रीति मातुस्त्वात्यन्तिक-स्वकुलकथनम् । तिलोत्तमादिवद्देवमायेव स्थितेत्यन्यः * । एवमर्थे निर्मितापदं व्यर्थम् । पुंलक्षणै रामवत् सर्वस्त्रीलक्षणसम्पन्ना । पुरुषेषु रामवन्नारीणामुत्तमा वधूः-स्त्री सीता—' सीता लाङ्गलपद्धतिः ' ; तदुत्थ-त्वात्सीता । शशिनं रोहिणी यथा राममनुगता ॥ २७ ॥

**पौरैरनुगतो दूरं पित्रा दशरथेन च ॥ २८ ॥**
**शृङ्गबेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।**
**गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २९ ॥**
**गुहेन सहितो रामो लक्ष्मणेन च सीतया ।**

अथ रामः पौरैः पित्रा दशरथेन च दूरमनुगतः गङ्गाकूले वर्तमानं निषादाधिपतिं प्रियं-इष्टं गुहमासाद्य-गुहादिभिः सहितो रामः आगङ्ग रथेनागतरामविसर्जनार्थमागतं सूतं गङ्गाकूले व्यसर्जयत् ॥ २९ ॥

**† ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥ ३० ॥**
**चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ।**
**रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥ ३१ ॥**
**देवगन्धर्वसंकाशास्तत्र ते न्यवसन् सुखम् ।**

---

* महेशतीर्थः. † यद्वा तेवृदेवन इति धातौ भावे ल्युट् । तेवनेन देवनेन लीलया अनायासेनेत्यर्थः-गो ॥

अथ ते सीतारामलक्ष्मणा वनेन–पुरोवर्तिवनप्राप्तिद्वारेण वनं–अपरं वनं गत्वा; वनमिति जात्या; बहूदका नदीश्च तीर्त्वा 'श्र्युकः किति' इतीण्निषेधः। अनु–पश्चात् चित्रकूटं प्राप्य भरद्वाजस्य शासनात् तत्र रम्यमावसथं–पर्णशालां कृत्वा तत्र रममाणाः देवगन्धर्वसंकाशाः ते त्रयः तत्र वने सुखं न्यवसन् ॥ ३०–३१ ॥

**चित्रकूटं गते रामे पुत्रशोकातुरस्तदा ॥ ३२ ॥**
**राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ।**

चित्रेत्यादि ॥ रामे चित्रकूटं गते सति तदा पुत्रशोकातुरो दशरथो राजा सुतं स्मृत्वा विलपन्–परिदेवनं कुर्वन्नेव तद्दुःखवशात्स्वर्गं जगाम ॥ ३२ ॥

**गते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ ३३ ॥**
**नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ।**

तस्मिन् दशरथे गते–मृते भरतस्तु वसिष्ठप्रमुखैर्द्विजैस्त्रैवर्णिकैस्सह मंत्रिवृद्धैः राज्याय नियुज्यमानो महाबलः–राज्यं कर्तुं समर्थोऽपि सौभ्रात्राद्राज्यं नैच्छत्। राज्यायेति 'तुमर्थाच्च' इत्यादिना चतुर्थी ॥३३॥

**स जगाम वनं वीरो रामपादप्रसादकः ॥ ३४ ॥**

वीरो व्याकृतः। स भरतो रामपादप्रसादकः 'तुमुण्वुलौ क्रियायां क्रियार्थायाम्' इति ण्वुल्। पादशब्दः पूज्यवाची। पूज्यं रामं प्रसादयितुं जगाम ॥ ३४ ॥

**गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ।**
**अयाचत् भ्रातरं राममार्यभावपुरस्कृतः ॥ ३५ ॥**

स भरतो महात्मानं—सत्यप्रतिज्ञत्वाद्यनेकधर्मैर्महान्—वैभववान् आत्मा यस्य तं सत्यपराक्रमं भ्रातरं रामं गत्वा—आर्यभावपुरस्कृतः—विनीतवेषपुरस्कृतस्सन् 'आर्यो हृद्यो विनीतश्च' इति निघण्टुः। तं रामं राज्याय प्रतिनिवर्तितुमयाचत्। [1] याचिर्द्विकर्मकः ॥ ३५ ॥

**त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत्।**

ननु कथं मे प्रतिनिवृत्तिः। पितृमातृदत्तराज्यं त्वमेव किलार्हसीत्यत्राह—त्वमेव राजेति ॥ ननु कथमेवमवधारणमित्यत्राह—धर्मज्ञ इति। ज्येष्ठे श्रेष्ठगुणैर्युक्ते कनीयान् राज्यं नार्हतीत्यनादिप्रवाहासिद्धं धर्मं त्वमेव जानासि। अतः प्रतिनिवर्तितव्यमेव इति न्यायमार्गोपेतं वचो रामं प्रत्यब्रवीत् ॥

**रामोऽपि परमोदारः सुमुखस्सुमहायशाः ॥ ३६ ॥**
**न चैच्छत्पितुरादेशाद्रामो राज्यं महाबलः।**

न च राज्यमैच्छत्तदा ॥ वनवासक्षोदक्षममहत्तरसहजकायबलवान्रामोऽपि राज्यं नैच्छत्। कुत इत्यतो हेतुचतुष्टय—परमोदार इत्यादि। स्वसुखानादरेणाविगीतस्वसुखसाधनस्य परस्मै त्यागस्त्वौदार्यम्। एवं परमोदारत्वाद्राज्यसुखं बालो भरत एव भुङ्क्तामित्युपेक्षिष्ट। सुमुखः। भगवतो रामस्य राज्ये वने वा पादसंवाहनादिसकलबाह्यशुश्रूषायै लक्ष्मण एव। ऐहिकसकलसुखभोगाय राज्ये वने वाऽविशेषेण लोकमाता सीतैव। राज्ये तु प्रजाकार्यनिरीक्षणदुःखमभ्यधिकम्। वने तु तदभावः; योगजसन्तोषश्चाधिकः। अतोराज्याद्वनमेव नः परमं सुखं [2] दैवगत्या लब्धमिति धिया राज्यादपि वनेऽम्लानाभ्यधिकमुखप्रसादयुक्तः। अत उपेक्षिष्ट। सुमहायशाः—

[1] याचेर्द्विकर्मकत्वात्—ग. [2] दैवाल्लब्धं—ग.

मुहुः प्राप्तमपि राज्यं पितुः परलोकहेतुसत्यपरिपालनाय रामो न [1]स्वीकरोतीति सुमहति यशस्यपेक्षा यस्य स तथा। अत उदासि। अथ परमो हेतुः—पितुरादेशादिति। पितुः—चतुर्दशसमा वनवासनियोगस्य परिपालनाद्धेतोः नैच्छत् ॥ ३६ ॥

**पादुके चास्य राज्याय न्यासं दत्त्वा पुनःपुनः ॥ ३७ ॥**
**निवर्तयामास ततो भरतं भरताग्रजः ॥**

यद्येवं—राज्यनाशप्रसङ्गः; तत्रोच्यते—पादुक इत्यादि। चो हेतौ। दत्त्वेति। दाञ् धातोरनेकार्थत्वात् कृतौ। एवं प्रतिनिवृत्तिं याचमानस्यास्य भरतस्य राज्याय—राज्यरक्षणसिद्धये इमे अहल्यादौ दृष्टशक्तिकाचिन्त्यवैभवभगवत्पादस्पृष्टे पादुके एवालं, अतस्तयोर्न्यासं समर्पणं राज्यरक्षार्थं कृत्वा तत एव हेतोर्भरताग्रजो रामश्चतुर्दशसमानन्तरमेव वा सर्वथा प्रतिनिवर्तितव्यमिति तामेव च *प्रतिनिवृत्तिं पुनःपुनर्याचमानं भरतं तदभ्युपगमेन च निवर्तयामास। †कश्चित्तु राज्याय राज्यं कर्तुं पादुके न्यासं दत्त्वेत्ययूयुजत्। अनेन न्यासो निक्षेपो यथा तथा दत्त्वेति वक्तव्यत्वतो न्यासस्य क्रियाविशेषत्वेन क्रियान्तर्भावात् पादुकयोरेव ददाति कर्मत्वात् तेनेदमर्थाभिप्रायस्य स्पष्टत्वात् सर्वथा चतुर्थ्या भाव्यत्वेन षष्ठ्ययोगः। न च न्यासमिति पदेन स्वत्वनिवृत्त्यभावात् संप्रदानाभाव इति; ऋणं यज्ञदत्ताय दत्त्वेत्यादौ चतुर्थ्यभावप्रसङ्गात्। अपि च राज्याय पादुके दत्त्वेत्येतावतैव तदपेक्षितार्थसिद्धेर्न्यास इति पदं सर्वथा व्यर्थम्। न्यासतया स्वत्वनिवृत्तिमकृत्वैव

---

*मूले-प्रतिनिवृत्तिं याचमानं—इत्यध्याहार्यमित्याशयः। गोविन्दराजीये तु—पुनःपुनर्भरतं तस्माद्देशात्—निवर्तयामास। पुनः पुनरित्यनेन भरतस्य रामविरहासहिष्णुत्वं द्योत्यते—इत्युक्तम् † गोविन्दराजः।

[1] स्वीकरोति स्मेति—ग.

दानं च पादुकयो रामस्यावश्यकं किल! यतः प्रत्यावृत्त्यनन्तरं सार्वभौमस्य ते दुर्लभे!! एवमादिदुर्योजनकठिनस्थले इदमेवास्य व्याख्यानं, त्यागो वा। तथाऽग्रेऽपि द्रष्टव्यम् ॥ ३७॥

**स काममनवाप्यैव रामपादावुपस्पृशन् ॥ ३८ ॥**
**नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया।**

स भरत इदानीं रामप्रतिनिवृत्तिरूपं काममनवाप्यैव रामपादावुपस्पृशन्—नमस्कुर्वन् पश्चान्नमस्कृत्य प्रतिनिवृत्तो नन्दिग्रामे स्थित्वा रामः प्रतिज्ञातसमयानन्तरं राज्यायागमिष्यतीति रामागमनगतयाऽऽकाङ्क्षया पादुकां पुरस्कृत्य राज्यमकरोत्—राज्यरक्षां कृतवान् ॥ ३८॥

**गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥ ३९ ॥**
**रामस्तु पुनरालक्ष्य नागरस्य जनस्य च।**
**तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥ ४० ॥**

गत इत्यादि। श्रीमत्त्वादिविशिष्टो रामस्तु अत्यासत्त्या नागरस्य—मन्त्रिवृद्धादिपौरजनस्य सौभ्रात्रादिदिदृक्षया पुनर्भरतस्य च तत्र—चित्रकूटे आगमनं—[1] तत्संभावनां आलक्ष्य—पर्यालोच्य तेषां प्रतिनिवर्तनप्रयासाद्वरमितोऽपि किञ्चिद्दूरदेशगमनमिति सञ्चिन्त्य दण्डकारण्यानां रक्षश्चोरादिभूयिष्ठत्वात् एकाग्रः—सज्जो भूत्वा दण्डकान्—दण्डो नाम राजा तस्य निवासो जनपदः। 'तस्य निवासः' इत्यणो 'जनपदे लुप्' इति प्राग्दीव्यतीयाणो लुपि दण्डः। *जनपदस्तु शुक्रशापेन वनतां प्राप्तः, अतः कुत्सायां कन्। अवान्तरबहुवनत्वाद्दण्डकानिति। प्रविवेश ह। †हेत्यैतिह्ये प्रसिद्धौ ॥ ४०॥

---

*अयं च वृत्तान्तः उत्तरकाण्डे ८७तमे सर्गे द्रष्टव्यः.　† हेति विषादे—**गो.**

[1] तत्संभवं—**ग.**

**प्रविश्य तु महारण्यं रामो राजीवलोचनः ।**
**विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ॥ ४१ ॥**

प्रविश्येति ॥ महच्च तदरण्यं च महारण्यम् । राजीवं—पद्मम् । शरभङ्गाद्या ऋषयः । चापीत्यादि निपातमुच्चयः पद्यपूरकः क्वचित्क्वचित् । इहापि पद्यपूरकः ॥ ४१ ॥

**सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ।**
**अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥ ४२ ॥**
**खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ।**

इध्मवाहननामाऽगस्त्यभ्राता । दिव्यं धनुरादिकं कार्याय प्रतिगृहाणेत्येवंरूपादगस्त्यवचनात् । ऐन्द्रं—*इन्द्रादगस्त्य आगतं शरासनम् । इदमिहानुसन्धेयम्—पूर्वं भार्गवं जित्वा ततः प्राप्तं यद्वैष्णवं धनुर्भगवता वरुणे न्यस्तम्, तदिन्द्रेण वरुणादाहृत्यागस्त्ये स्थापितं रामाय दातुम् । तथा खड्गादिकं च द्रष्टव्यम् । किमर्थमेवं कल्पना ? उच्यते—आरण्ये अगस्त्येनोच्यते—

"इदं दिव्यं महच्चापं हेमरत्नविभूषितम् ।
वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ॥
अमोघः सूर्यसंकाशो ब्रह्मदत्तश्शरोत्तमः ।
दत्तो मम महेन्द्रेण तूणी चाक्षयसायकौ ॥
तद्धनुस्तौ च तूणीरौ शरं खड्गं च मानद ।
जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ॥"

---

*'दत्तो मम महेन्द्रेण' (अर. १३) इति कथितत्वात् । परशुरामाद्गृहीत्व वरुणे न्यस्तं वैष्णवं धनुः—वरुणायाप्रमेयाय ददौ हस्ते महायशाः (बा. ७७-१) इति स्थितेः । तदेव धनुः वरुण इन्द्राय प्रादात् । इन्द्रश्चागस्त्यायेत्यवगम्यते ।

इति स्वेन दीयमानधनुषोऽगस्त्येन वैष्णवत्वप्रतिपादनात् । तूणी चेति चकारेण धनुषोऽपि महेन्द्रदत्तत्वप्रतिपादनं तत्र । यद्वा इन्द्रः परमेश्वरो विष्णुः तस्येदमैन्द्रम् । अनुरूपायुधलाभात्परमप्रीतः । अक्षयाः सायका ययोस्तौ तथा ॥ ४२ ॥

**वसतस्तस्य रामस्य वने वनचरैस्सह ॥ ४३ ॥**
**ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम् ।**

वनचरैः—वानप्रस्थमुनिभिस्सह तस्मिन् वने वसतस्तस्य रामस्यान्तिकं असुररक्षसां—असुराः कबन्धादयः, रक्षांसि—खरादयः तेषां वधाय—वधं प्रार्थयितुं ; 'क्रियार्थोपपदस्य—' इत्यादिना चतुर्थी । सर्वे ऋषयो वनान्तरवर्तिनश्चाभ्यागमन् ॥ ४३ ॥

***स तेषां प्रतिशुश्राव राक्षसानां तदा वने ॥ ४४ ॥**

स रामस्तदा तस्मिन् वने तेषां राक्षसानां वधं तेभ्यः सर्वेभ्य ऋषिभ्यः प्रतिशुश्राव—प्राप्तकालं असुररक्षांसि सर्वथा संहरिष्ये, नोपेक्षे इति प्रतिज्ञातवानित्यर्थः ॥ ४४ ॥

**† प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् ।**
**ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥ ४५ ॥**

एवं ऋषीणामुच्यमानविशेषणानामपेक्षितः रक्षसां वधश्च संयति—यथाप्राप्तकाले करिष्यामीति अचिन्त्यामितनिजशक्तिवैभवाद्रामेण प्रतिज्ञातः ॥ ४५ ॥

---

* सः रामः राक्षसानां वने राक्षसावासभूते वने तेषां ऋषीणां तथा प्रार्थनावचनं प्रतिशुश्राव अंगीचकार—ती ॥ † प्रतिशुश्रावेत्युक्तप्रतिज्ञाप्रकारमेव विशदयति सहेतुकं—प्रतिज्ञातश्चेत्यादि ॥ अतो न पौनरुक्त्यम् ॥

**तेन तत्रैव वसता जनस्थाननिवासिनी ।**
**विरूपिता शूर्पणखा राक्षसी *कामरूपिणी ॥ ४६ ॥**

तेन तत्रैव—दण्डकारण्यदक्षिणप्रदेशवर्तिपञ्चवट्याश्रम इत्यर्थः । †जनस्थानं नाम रावणसामाजिकबलनिवासदेशः । विरूपिता -तत्करोतीति ण्यन्तान्निष्ठा । यद्वा तारकादेराकृतिगणत्वादितच् । नासिकाछेदनेनेति शेषः । शूर्पणखा-'नखमुखात्संज्ञायाम्' इति ङीब्निषेधः । 'पूर्वपदात्संज्ञायां —' इति णत्वम् । ‡कामः-इच्छा । स्वाभीष्टरूपग्रहशक्तिमती ॥ ४६ ॥

**ततश्शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान् ।**
**खरं त्रिशिरसं चैव दूषणं नाम राक्षसम् ॥ ४७ ॥**
**निजघान रणे रामस्तेषां चैव पदानुगान् ।**

सर्वराक्षसानिति ॥ जनस्थाननिवासिन इति शेषः । पदमनुगच्छन्तीति पदानुगाः । 'अन्यत्रापि—' इति वचनाड्डः ; टिलोपः ॥ ४७ ॥

**वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥ ४८ ॥**
**रक्षसां निहतान्यासन् सहस्राणि चतुर्दश ।**

निवसतेति । रामेणेति शेषः । चतुर्दशसहस्रसंख्याकानि रक्षसां सैन्यानीति शेषः ॥ ४८ ॥

**ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः ॥ ४९ ॥**
**सहायं वरयामास मारीचं नाम राक्षसम् ।**

---

* अनेन विरूपणहेतुपरो वृत्तान्तः सूच्यते । † उत्तरकाण्डे 'तपस्विनः स्थित ह्यत्र जनस्थानमतोऽभवत्' (७२-२०) इति दृश्यते ‡ कामरूपिणीत्येतत् व्याकरोति-काम इति.

**वार्यमाणस्सुबहुशो मारीचेन स रावणः ॥ ५० ॥**
**न विरोधो बलवता क्षमो रावण तेन ते ।**

ज्ञातिवधमिति ॥ रावणादयः खरादयश्च द्वैमातुरः विश्रवसः पुत्राः। अतो ज्ञातयो रावणस्य खरादयः। रावणशब्दश्च विश्रवः-प्रकृतिकः। कथम्? विश्रवसः अपत्यमित्यर्थे 'विश्रवणरवण' इत्यसन्नियोगे विश्रवणरवणयोरादेशयोर्विधानात्। मूर्छितः—व्याक्षिप्तचित्तस्सन्। हे रावण! ते बलवता तेन रामेण विरोधो न क्षमः—न युक्तः, न हितः च—परदारहरणस्य परमानर्थत्वात्, बलवद्विरोधस्य खरादेरिव निजनाशान्तत्वाच्चेत्येवं सुबहुशो मारीचेन द्वित्रिःपञ्चसप्तवारं वार्यमाणोऽपि स ज्ञातिवधक्रोधमूर्छितो रावणो मारीचं नाम प्रसिद्धं राक्षसं सीतापहारे सहायं वरयामास। वृञ् श्रौ, श्रायां वृङ्, णौ वृञ् वरण इति स्वार्थेण्यन्तोऽपि धातुरस्ति। तथापि नास्माण्णिच्। अपि तु वरशब्दात् 'तत्करोति' इति णिच् ॥ ४९ ॥ ५० ॥

**अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ ५१ ॥**
**जगाम सहमारीचस्तस्याश्रमपदं तदा ।**

अथोक्तप्रकारं तद्वाक्यं—मारीचवाक्यं तु कालचोदितः—हेतुगर्भं विशेषणम्; विधिचोदितत्वाद्रावणोऽनादृत्य सहमारीचः—'वोपसर्जनस्य' इति विकल्पात् सहशब्दस्य सत्वाभावः। तदा तस्य रामस्य आश्रमपदं जगाम ॥ ५१ ॥

**तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ ५२ ॥**
**जहार भार्यां रामस्य गृध्रं * हत्वा जटायुषम् ।**

---

* यद्यपि सीताहरणानन्तरमेव जटायुर्वधः—अथापि—सीताया लंकानयनपर्यंतव्यापारस्यैव हरणपदार्थत्वात् मध्य एव च जटायुर्वधात् नानुपपत्तिः ॥

मुखं व्यादाय स्वपितीतिवत् क्त्वा—इति तु गोविन्दराजः ॥

मायाविना तेन मारीचेन । 'अस्माया—' इत्यादिना विनिः । नृपात्मजौ दूरमपवाह्य—वहेर्ण्यन्तात् ल्यप्—अपसरणं कारयित्वा । गृध्रं हत्वेति । पक्षापहारेण कण्ठगतप्राणं कृत्वेति यावत् ॥ ५२ ॥

**गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥ ५३ ॥**
**राघवश्शोकसन्तप्तो विललापाकुलेन्द्रियः ।**

निहतं–निहतप्रायम् । श्रुत्वेति । गृध्रमुखादिति शेषः । विललाप—पर्यदेवयत् । आकुलानि–उत्कटरजस्तमोविजृम्भितशोकपरवशानि इन्द्रियाणि यस्य स तथा ॥ ५३ ॥

**ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ ५४ ॥**
**मार्गमाणो वने सीतां राक्षसं संददर्श ह ।**
**कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ ५५ ॥**
**तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ।**

तेनैव शोकेनेति । निवृत्तिहेतुमप्राप्तेनाभिभूयमान एव सन् । मार्गमाण इति । मार्गयमाणः । (संस्कारे वा) णौ मार्ग अन्वेषण इति । *णेर्विकल्पितत्वान्मार्गमाण इति । रूपेण विकृतमिति । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । निहत्य ददाह च । ततस्स कबन्धः स्वर्गं गतः ॥ ५५ ॥

**स चास्य कथयामास शबरीं धर्मचारिणीम् ॥ ५६ ॥**
**[1]श्रमणीं धर्मनिपुणामभिगच्छेति राघवम् ।**

गच्छन् स कबन्धः अस्य रामस्योपचिकीर्षया शबरीं–उच्यमानविशेषणां अभिगच्छेति राघवं कथयामासेति योजना । श्रमणीं–तापसीं;

---

*'आधृषाद्वा' (ग–सू–२०२) इति णिचः विकल्पः ॥

[1] 'श्रमणां'–च.

'श्रमु तपसि खेदे च'। अस्मात्कर्तरि ल्युट्। टित्वात् ङीप्। सर्वतोऽस्माभिरुचित एक एव पाठो निश्चयाय लिख्यते ॥ ५६ ॥

**सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ॥ ५७ ॥**
**शबर्या पूजितस्सम्यग्रामो दशरथात्मजः ।**
**पंपातीरे हनुमता सङ्गतो वानरेण ह ॥ ५८ ॥**
**हनुमद्वचनाच्चैव सुग्रीवेण समागतः ।**
**सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः ॥ ५९ ॥**
**आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः ।**

हनुमद्वचनादिति । ह्रस्वान्तश्शब्दः क्वचत् । छन्दोवत् दीर्घश्च द्रष्टव्यः । सुग्रीवो युष्मत्सङ्गतिमभिकांक्षत इत्यादिरूपं हनूमद्वचनं । सुग्रीवाय चेति । संगतायेति शेषः । शंसदिति । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । महाबल इति । सुग्रीवेण स्वपुरुषार्थसाधकमहाबलत्वेनावगत इत्यर्थः । किमशंसदित्यतः— आदित इत्यादि । तत्–प्रसिद्धं वृत्तं स्वीयं यथा येन–प्रकारेण प्रसिद्धं तथैव तदादितः निजजन्मारभ्याशंसत् । सीताया वृत्तमपि विशिष्य रावणापहारा[1]न्तमशंसत् ॥ ५९ ॥

**सुग्रीवश्चापि तत्सर्वं श्रुत्वा *रामस्य वानरः ॥ ६० ॥**
**चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ।**

वानरः सुग्रीवोऽपि तत्सर्वं च श्रुत्वा स्वसमानदुःखमहाबल-सम्बन्धलाभात् सुप्रीतस्सन् रामेणाग्निसाक्षिकमेव–अग्निस्साक्षी–साक्षा-दनुभविता यस्य तत्तथा । ततः 'शेषाद्विभाषा' इति कप् । पृषोदरादित्वात्साक्षिशब्दस्साधुः । सख्यं चकार ॥ ६० ॥

---

* रामस्य तत्सर्वं श्रुत्वेत्यन्वयः   [1] दिकम–**गा.**

ततो वानरराजेन वैरानुकथनं प्रति ॥ ६१ ॥
रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ।
प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ॥ ६२ ॥

ततो वैरानुकथनं—वालिनस्तव च वैरे किं कारणमिति रामकृतमनुकथनं—अनुप्रश्नं प्रति यत् प्रत्युत्तरमावेदितव्यं तत्सर्वं दुखितेन—रामवद्दारापहारान्तकष्टैस्संजातदुःखेन सुग्रीवेण प्रणयाद्रामायावेदितं तदा । एवं तद्वृत्तांतश्रवणानन्तरकाले रामेण वालिवधं च प्रति—उद्दिश्य प्रतिज्ञातं—अवश्यं हनिष्ये वालिनमिति ॥ ६२ ॥

वालिनश्च बलं तत्र कथयामास वानरः ।
सुग्रीवश्शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ ६३ ॥

तत्र—ऋश्यमूकपर्वते वालिनो बलं च—कक्षीकृतरावणतया पुरा सूर्योदयादरुणोदयानन्तरं चतुस्समुद्रलंघनादिरूपं कथयामास । अपि च सुग्रीवो नित्यं वीर्येण वालिना तुल्यो न वेति शंकितश्चासीत् । मतिबुद्धिसूत्रे चकारेण शंकिताद्याः कर्तरि क्तान्ताः संगृहीताः ॥ ६३ ॥

राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ।
दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥ ६४ ॥

अपि च राघवप्रत्ययार्थं—राघवस्य वालिमहाबलज्ञापनार्थं—उत्तमं—बलप्रत्यायनोत्तमसाधनं महापर्वतसन्निभं दुन्दुभेः कायं दर्शयामास । यस्य काय इदानीमेतादृशस्तादृशो दुन्दुभिश्च वालिना हत इति वालिबलप्रख्यापनं भवति ॥ ६४ ॥

उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ।
पादाङ्गुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ॥ ६५ ॥

कुत्स्मिवदुत्स्मिरपि स्वार्थे णिः । महाबाहुः—महाबलो रामः अस्थि प्रेक्ष्योत्स्मयित्वा—उत्स्मितं—ईषत्स्मयं कृत्वा तत् पादाङ्गुष्ठेन चिक्षेप । क्षिप्तं च तत् दशयोजनपरिमितदूरं संपूर्णं—अनुपचारेण दशयोजनादन्यूनतया क्षिप्तमभूत् ॥ ६५ ॥

**बिभेद च पुनस्सालान् सप्तैकेन महेषुणा ।**
**गिरिं *रसातलं चैव जनयन् प्रत्ययं तदा ॥ ६६ ॥**

पुनश्च प्रत्ययं जनयन् । हेतौ शता । तदा तदर्थं एकेनैव महेषुणा सकृत्प्रयोगेणैव च सप्तसालान्—सालवृक्षान् ततः पुरोवृत्तिगिरिं *रसातलं—षष्ठमधोलोकञ्च बिभेद । पाताले रसातलो नामाधोलोकभेदः । अतलवितलसुतलतलातलमहातलरसातलपाताला इति सप्ताधोलोकाः ॥ ६६ ॥

**ततः प्रीतमनास्तेन विश्वस्तस्स महाकपिः ।**
**किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६७ ॥**

ततः—अनन्तरं भगवदतिरिक्तेन येन केन चिदपि दुष्करेण तेन कर्मणा विश्वस्तः—प्राप्तविस्रंभः । इडभावश्छान्दसः । प्रीतमनाश्च महाकपिः किष्किन्धाख्यां गुहां रामसहितो जगाम । पारस्करप्रभृतिषु 'किष्किन्धा गुहा' इति वचनात् षत्वम् ॥ ६७ ॥

**ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।**
**तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६८ ॥**

ततः अगर्जत् इति पदम् । हरीश्वरो वाली ॥ ६८ ॥

---

* वस्तुतस्त्वत्र रसातलपदं 'अधोभुवनपातालबलिसद्मरसातलम्' इति कोशानुसारेणाधोभुवनसामान्यवाचकं, स्वारस्यातिशयात् ॥

**अनुमान्य तदा तारां सुग्रीवेण समागतः ।**
**निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६९ ॥**

तदाऽङ्गदमुखादवगतसुग्रीवरामसहायं, अत एव संयुगनिर्गमनं वारयन्तीं तारां–स्वस्त्रियं 'मयाऽकृतापकारो रामो मह्यं नापकरिष्यति' इति वचनेनानुमान्य-अनुमतिं करोति, तामनुमानयति । मानयतेः क्त्वाया ल्यप् । 'गतिबुद्धि–' इत्यादिना तारायाः कर्मत्वम् । कृतानुमतिकां कृत्वेत्यर्थः । सुग्रीवेण वाली युद्धाय समागतोऽभवत् । तत्र संयुगे एनं 'वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः' इत्येवंरूपात्सुग्रीववचनात् राघव एकेनैव शरेण निजघान । अत्र सुग्रीववचनस्य हननप्रयोजकत्वकथनमनपकारिवालिवधस्यायुक्तत्वेऽपि मित्रापकारित्वेन हननमिति द्योतनायानुवादरूपम् ॥ ६९ ॥

**ततस्सुग्रीववचनात् हत्वा वालिनमाहवे ।**
**सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ७० ॥**

तत इत्यादि । एवं सुग्रीववचनादाहवे वालिनं हत्वा राघवः सुग्रीवमेव तस्य वालिनो राज्ये प्रत्यपादयत्–प्रतिष्ठापितवान् ॥ ७० ॥

**स च सर्वान् समानीय वानरान् वानरर्षभः ।**
**दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ७१ ॥**

स च दिशः–सर्वा दिशः प्रति, दिदृक्षुः -अन्वेषिषुरिति यावत् ॥ ७१ ॥

**ततो गृध्रस्य वचनात् संपातेर्हनुमान् बली ।**
**शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ७२ ॥**

संपातेः गृध्रस्येति योजना । पुप्लुवे । प्लुगतौ लिट् । प्लुतवान्– उल्लङ्घितवानिति यावत् ॥ ७२ ॥

**तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।**
**ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥ ७३ ॥**

रावणपालितां लङ्कापुरीमासाद्य, 'आङः षदेः गतौ णौ च' इति स्वार्थणिच्चास्ति सदिः । तत्र–लङ्कायां । अशोकवनिकां–अशोकवनं प्रमदावनं, तस्मादज्ञाते संज्ञायां वा कन् । 'प्रत्ययस्थात्' इतीत्वम्, तां ध्यायन्तीं–रामविषयकध्यानारूढां सीतां ददर्श ॥ ७३ ॥

**निवेदयित्वाभिज्ञानं प्रवृत्तिं विनिवेद्य च ।**
**समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ७४ ॥**

अभिज्ञानं–अङ्गुलीयकरूपं । प्रवृत्तिं–स्ववियोगानन्तरजरामसुग्रीवसख्यादिसर्ववृत्तान्तम् । त्रैकालिकसर्वव्यपाराः राघवस्य त्वत्प्रत्यापत्त्येकप्रवृत्तय इति तत्वकथनेन वैदेहीं समाश्वास्य । तोरणं–अशोकवनिकागतप्रासादबहिर्द्वारसन्निवेशं अशोकवनं च मर्दयामास ॥ ७४ ॥

**पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि ।**
**शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ ७५ ॥**

सेनाग्रगाः-सेनापतयः पिङ्गलनेत्रप्रमुखाः । मंत्रिसुताः–जम्बुमाल्यादयः । अक्षो रावणकुमारः । ग्रहणं–इन्द्रजित्प्रयुक्तब्रह्मास्त्रकृतबन्धनम् ॥ ७५ ॥

**अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ।**
**मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृच्छया ॥ ७६ ॥**

'मदस्त्रस्यामोघतस्तेन बन्धनमात्रं, चतुःपञ्चघटिकानन्तरं विमोक्षश्च भवतु' इति भगवतो ब्रह्मणो वरदानानुग्रहात् चतुःपञ्चघटिकानन्तरं ब्रह्मास्त्रेणोन्मुक्तमात्मानं-स्वं ज्ञात्वा *यदृच्छया-कार्यान्तरप्रसङ्गेन रावणदर्शनापेक्षया यन्त्रिणः-बध्वा नेतॄन् तान् राक्षसान् प्रति वीरः-—हन्तुं समर्थोऽपि मर्षयन्-क्षमां कुर्वन् ॥ ७६ ॥

**ततो दग्ध्वा पुरीं लङ्कां ऋते सीतां तु मैथिलीम् ।**
**रामाय प्रियमाख्यातुं पुनरायान् महाकपिः ॥ ७७ ॥**

ततः रावणदर्शनादिव्यापारानन्तरं मैथिलीं-सीतामृते तदवस्थानप्रदेशं विना 'अन्यारात्' इति पञ्चम्यभाव आर्षः । रामाय प्रियं-—सीतादर्शनरूपं प्रियं आख्यातुं पुनः रामान्तिकं महाकपिरायात् ॥७७॥

**सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।**
**न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ ७८ ॥**

सोऽभिगम्य । 'वा ल्यपि' इत्यनुनासिकलोपाभावः । महात्मानं रामं प्रति प्रदक्षिणं-प्रगतो दक्षिणं-[2] प्रदक्षिणाख्योपचारं कृत्वा अमेयात्मा-अपरिच्छेद्यबलबुध्यादिवैभवः सः, दृष्टा सीतेति तत्त्वतः-सार्वविभक्तिकस्तसिः । तत्त्वं न्यवेदयदित्यर्थः । अत्र दर्शनपदप्रथमप्रयोगः हनुमदुक्तिचातुरी । प्रथमतो दिदृक्षितार्थपदग्रहेणादर्शनविषयकसन्देहोदयो मा भूदिति ॥ ७८ ॥

**ततस्सुग्रीवसहितो गत्वा तीरं महोदधेः ।**
**समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥ ७९ ॥**

---

* यदृच्छया प्रयत्नं विना अस्त्रेणोन्मुक्तमात्मानं—**गो.**

[1] प्रदक्षिणेनास्योपचारं—**ग.** [2] प्रार्थन—**ग.**

क्षोभयामासेति । लङ्कागमनमार्ग [1] प्रदानौदासीन्यादिति शेषः ॥ ७९ ॥

**दर्शयामास चात्मानं समुद्रस्सरितां पतिः ।**
**समुद्रवचनाच्चैव नलं सेतुमकारयत् ॥ ८० ॥**

दर्शयामासेति । शरक्षोभित इति शेषः । समुद्रेति । नलं सेतुमकारयादिति । नलेन सेतुं कृतवानित्यर्थः । 'ह्रक्रोरन्यतरस्याम्' इत्यणौ कर्तुः प्रयोज्यस्य कर्मत्वम् ॥ ८० ॥

**तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे ।**
**रामः सीतामनुप्राप्य परां व्रीलामुपागमत् ॥ ८१ ॥**

तेनेति । सेतुनेति यावत् । अनुप्राप्य-प्रत्यापद्य । परां व्रीलां-रक्षोगृहे वत्सरोषितां पुनर्गृहीतवानिति लोकापवादशङ्काजनितां । तथा कथमप्युषितामहमुभयकुलशुद्धो लोकविख्यातकीर्तिवैभवो गृह्णामीति स्वत एव परां व्रीलाम् ॥ ८१ ॥

**तामुवाच ततो रामः परुषं जनसंसदि ।**
**अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ८२ ॥**

ततः-अनन्तरं रामः जनसंसदि तां सीतां प्रति *परुषं रूक्ष-विगर्हितं मर्मस्पृग्वचनान्युवाच । लोकस्य नास्यां रामस्य कामादि-दोषतः पुनर्जिघृक्षास्तीति प्रत्यायनार्थम् । अथ उक्तरूपवचनान्यमृष्य-माणा सती-सा सीता ज्वलनं विवेश । सतीति पातिव्रत्यबलान्निजे-च्छयाग्निप्रादुर्भावनशक्तिमत्वद्योतनाय । वस्तुतो लक्ष्मणप्रादुर्भावितो ज्वलनः ॥ ८२ ॥

---

* इदं क्रियाविशेषणम्.  [1] प्राधनौ—ग.

**ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् ।**
**बभौ रामः संप्रहृष्टः पूजितस्सर्वदैवतैः ॥ ८३ ॥**

ततो जनसंसद्येव 'विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव' इत्येवंरूपादग्निवचनात्स्वयं च विगतकल्मषां ज्ञात्वा लोकस्य च तथात्वं प्रत्याय्य संप्रहृष्टः सर्वदैवतैश्च पूजितो बभौ । एवमेव पाङ्कः क्रमपाठः । *एवं स्थिते 'सदेवर्षि' इत्यर्धानन्तरं 'बभौ रामः' इत्यर्धं लेखकदोषादुपरि लिखितमिति कश्चित् ॥ ८३ ॥

**कर्मणा तेन महता त्रैलोक्यं सचराचरम् ।**
**सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ॥ ८४ ॥**

महता तेन रावणवधान्तेन कर्मणा सचराचरं-चराचरप्रजासहितं चरप्रजाः-तिर्यगूर्ध्वस्रोतसः । अचरप्रजाः-अर्वाक्स्रोतसः । सदेवर्षिगणं-देवगणाः-इन्द्रादयः । ऋषिगणाः-विश्वामित्रादयः । त्रय एव लोकास्त्रैलोक्यम् । चतुवर्णादित्वात् स्वार्थे ष्यञ् । अत ऊर्ध्वं तिर्यगर्वाक्स्रोतसोरपि वाद ऊर्ध्वस्रोतश्शेषत्वात् । सचराचरं-स्वस्वशेषतिर्यगर्वाक्स्रोतोयुक्तं त्रैलोक्यं त्रिलोकवर्त्यशेषमूर्ध्वस्रोतोमात्रं विशिष्य सदेवर्षिगणं तन्महात्मनो राघवस्य तेन कर्मणा निजैहिकामुष्मिकार्थहेतुतपोयज्ञादिप्रवृत्तिप्रत्यूहनिवर्तकेन तुष्टमभवदिति । अत्र सदेवर्षिगणमिति विशिष्य वचनं रावणस्य मर्त्योपेक्षकत्वात्; देवर्षिगणयोरेव साक्षादरातिबुध्या नित्योपद्रवकरणात् रावणवधाद्विशिष्य हर्षः । एवं लक्षणाश्रयेण व्याख्या रावणपीडासन्निवृत्तिपरज्ञानप्रसक्तिराहितार्वाक्तिर्यक्स्रोत-

---

*तिलके—'कर्मणा तेन' इत्युत्तरश्लोकः 'ततोऽग्निवचनात्' इत्यर्धानन्तरं निवेश्य एवं व्याख्यातः । सीतां अङ्गीचकारेति शेषः । तेन कर्मणा सदेवर्षिगणं त्रैलोक्यं तुष्टं—तुतोष । तेन प्रहृष्टो रामो सर्वदैवतैश्च पूजितो बभौ—इति व्याख्यायि ॥

सो रावणवधमूलसन्तोषासम्भवात् , रावणवधाद्यज्ञादिप्रवृत्त्याऽस्माकं वृष्ट्यादिर्भविष्यतीति स्मरणजसन्तोषो दूरापास्तः । ' अथेतरेषां पशू-नामशनायापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विदुः श्वस्तनं न लोकालोकौ त एतावन्तो भवन्ति यथाप्रज्ञं हि संभवाः ' इति श्रुतेः ॥ ८४ ॥

***अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् ।**
**कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद †ह ॥ ८५ ॥**

लङ्कायामिति । लङ्काराज्यपद इत्यर्थः । तदा—विभीषणाभिषेका-नन्तरकाले । रावणवधसीताबन्दीविमोकानन्तरमपि प्राक्प्रतिज्ञात-विभिषणाभिषेकलक्षणकिञ्चित्कृत्यस्यानिर्वर्तितत्वात्तस्य च निर्वृत्तौ सर्वात्मना कृतकृत्यत्वं । अत एव विगतचिकीर्षितकृतिविषयकचिन्ता-तापः प्रमुमोद- मुदहर्षे व्यत्ययात्परस्मैपदम् ॥ ८५ ॥

**देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ।**
**अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ ८६ ॥**

' सुप्तोन्मिषितवदुत्तिष्ठन्तु वानराः ' इत्येवं रूपं वरं देवताभ्यः प्राप्य । सुहृदः—सुग्रीवविभीषणादयः ॥ ८६ ॥

**भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः ।**
**भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयत् ॥ ८७॥**

भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयदिति ।—' चतुर्दशे हि संपूर्णे वर्षेऽहनि रघूत्तम । न द्रक्ष्यामि यदित्वां तु प्रवेक्ष्यामि हुता-

---

*यद्यपि सीतासमागमात्पूर्वं विभीषणलङ्काभिषेकः—तथाप्यत्र क्रमो न विवक्षित इति ज्ञेयम्—**गो**—। † हेति विस्मये प्रसिद्धौ वा—कीदृशं रामस्य सत्यप्रतिज्ञत्व-मिति—**गो** ॥

शनम्' इति भरतेन प्रतिज्ञातत्वात्, भरद्वाजाश्रमे चतुर्दशसमासमाप्त्यनन्तरं एकद्विदिनविलम्बस्य प्राप्तत्वात् स्वागमनप्रबोधनाय हनुमद्विसर्जनम् ॥ ८७ ॥

**पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा ।**
**पुष्पकं तत्समारूह्य नन्दिग्रामं ययौ तदा ॥ ८८ ॥**

पुनरित्यादि । भरद्वाजाश्रमे पुष्पकादवतीर्णत्वात् पुनश्च तत्पुष्पकं समारुह्य पुनश्चाख्यायिकाः—उपलब्धार्थविषयिणी कथा आख्यायिका । भरद्वाजाश्रमावरोहात्पूर्वमिव सीतायै जल्पन्—'जल्पव्यक्तायां वाचि' व्यक्तमालपन् । सुग्रीवसहित इति विभीषणादेरुपलक्षणम् ॥ ८८ ॥

**नन्दिग्रामे जटां हित्वा भ्रातृभिस्सहितोऽनघः ।**
**रामः *सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ ८९ ॥**

नन्दिग्रामे भरतेन सह स्वस्यापि व्रतप्रयुक्तां जटां हित्वा—'जहातेश्च क्त्वि' इति हिभावः—त्यक्त्वा सर्वैर्भ्रातृभिस्सह प्राप्तविसृष्टं राज्यं पुनरवाप्तवान् । अत्रेदमनुसन्धेयम्—रामस्य राज्यप्राप्त्यनन्तरकाले वाल्मीकेः 'को नु' इत्यादिकस्य जिज्ञासितदिव्यकाव्यनायकस्य, अर्थात् काव्यविषयस्य तच्चरितस्य च प्रश्नः । अन्यथा नारदेन तच्चरितोक्तेरपृष्टोत्तरत्वप्रसङ्गात् । तथापृष्टश्च नारदः तादृशं काव्यनायकं 'इक्ष्वाकुवंशप्रभवः' इत्यादिनोपदिश्य 'तमेवं गुणसंपन्नम्' इत्यादिना 'राज्यं पुनरवाप्तवान्' इत्यन्तेन वृत्तं तदीयचरितं चोपदिदेश ॥ ८९ ॥

---

*सीतामनुप्राप्य—समीपेप्राप्य 'रामं रत्नमये पीठे सहसीतं न्यवेशयत्' इत्याद्युक्तरीत्या दिव्यसिंहासने सीतयाऽभिषेकं प्राप्येत्यर्थः—**गो** ॥ सीतामनुप्राप्य मुनिवेषत्यागेन सीतानुरूपं रूपं प्राप्य—**ति** ॥

* प्रहृष्टमुदितो लोकस्तुष्टः पुष्टस्सुधार्मिकः ।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ९० ॥

अतःपरमुत्तरकाव्यविषयं भविष्यत्त्वेनोपदिशति—प्रहृष्टेत्यादि ।—प्रहृष्टः प्रातिस्विकपुत्रपश्वादिसम्पत्त्या ; मुदितः साधारणेन क्षामक्षोभराहित्यजेन मोदेन । लोकः सर्वाः प्रजाः । बहुप्रदाद्भगवतो यावदपेक्षितसांसारिकार्थलाभात्तुष्टः, अत एव पुष्टः—दारिद्र्यकार्श्यरहितः । आमयः—मनःपीडा, रोगः—देहीयो व्याधिः । दुर्भिक्षेण चोरादिजेन च भयेन विवर्जितः । भिक्षाया व्यृद्धिः दुर्भिक्षं, व्यृद्ध्यर्थेऽव्ययीभावः ; भविष्यतीति शेषः ॥ ९० ॥

न पुत्रमरणं केचित् द्रक्ष्यन्ति पुरुषाः क्वचित् ।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥ ९१ ॥

पुत्रमरणं न द्रक्ष्यन्तीति । पितृषु स्वेषु जीवत्स्विति शेषः । † अविधवा इति । अतितीव्रवैराग्येण भर्त्रनुगमनेन, धवाङ्गभूतसत्पुत्रवत्त्वेन वेति शेषः ॥ ९१ ॥

न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः ।
न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा ॥ ९२ ॥
न चापि क्षुद्भयं तत्र न तस्करभयं तथा ।
नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥ ९३ ॥

---

*प्रहृष्ट इति हर्षबाह्यचिह्नमुच्यते । रोमाञ्चितार्थकत्वात् । मुदित इति आन्तरमनःस्थितिरुच्यते ॥

† पतिमरणानन्तरं नावर्तन्तेत्यर्थः । यद्वा विविधाः धवाः यासां ताः विधवाः—व्यभिचारिण्यः—अव्यभिचारिण्यः ॥ कौसल्यादयस्तु पुत्रवत्तया वृद्धतया वा न विधवा इति भावः—गो । वस्तुतस्तु—कौसल्यादीनां वैधव्यं न रामराज्ये प्राप्तं—रामे प्रशासति अविधवा भविष्यन्तीति खलूच्यत इति युक्तम् ॥

क्षुद्भयमिति । क्षुदुपशमोपायाभावजमित्यर्थः ॥ ९३ ॥

**नित्यं प्रमुदितास्सर्वे यथा कृतयुगे तथा ।**

कृतयुगे अधर्मासम्बन्धः स्वाभाविक इति तत्र नित्यं प्रजाप्रमोदः । त्रेतायामधर्मस्य पादांशतस्सम्बन्धप्रसङ्गे रामलक्ष्मणवैभवात् तदनाक्रमात् नित्यप्रमोदत्वम् ॥

**अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥ ९४ ॥**

एवं रामस्य राज्यपरिपालनवैभवचरितमुपादिश्य भविष्यद्रामस्य वृत्तान्त उपदिश्यते—अश्वमेधेत्यादि । अश्वमेधशतैरिष्ट्वेति । तेषां निष्कामतयाऽनुष्ठानात् ब्रह्मलोकहेतुत्वम् । क्त्वाप्रत्ययात्कार्यकारणभावश्चावसितः । यद्यपि ब्रह्मैव भगवान् रामः स्वस्वलोकप्राप्तौ न किञ्चित्साधनमपेक्षते अथापि *मानुषोपाधिप्रयुक्तावर्ज्यसप्ताघशमनद्वारा-ब्रह्मलोकोपयोगः । यथा ब्राह्मणस्यानुपचरितब्रह्ममुक्तेः स्वनित्यब्रह्मलोके ब्रह्मविद्यानुष्ठानोपयोगः† ...... ॥ ९४ ॥

**गवां कोट्ययुतं दत्वा [1] ब्रह्मलोकं प्रयास्यति ।**
**असंख्येयं धनं दत्वा ब्राह्मणेभ्यो महायशाः ॥ ९५ ॥**

---

* यत्तु कतककृता–अश्वमेधाद्यनुष्ठानस्य मानुषोपाधिप्रयुक्तावर्ज्याघशमनद्वारा ब्रह्मलोकप्राप्तौ हेतुत्वमित्युक्तं–तन्न–भगवदवताराणां पुण्यपापसंबन्धस्य सर्वतन्त्रविरुद्धत्वात्। अश्वमेधाद्यनुष्ठानं तु लीलामात्रं लोकोपदेशाय–**ति.**

दशवर्षसहस्राणि अश्वमेधानुष्ठानकाल इत्युक्त्या सीतां विना क्रत्वनुष्ठानस्य वक्ष्यमाणत्वाच्च अभिषेकात् परं स्वल्प एव वर्षसहस्रकाले सीतावियोग इत्यवसीयते । अश्वमेधारम्भश्च रावणवधरूपपापनिबर्हणार्थतया प्रसक्त इत्यविलम्बितः । ततः पूर्वमेव सीतावियोगः, प्रथमाश्वमेधे सीताप्रतिरूपकरणात्–**गो.**

† मातृकायामेवं चिह्नितं । अर्थस्तु यथाश्रुतोऽपि पूर्ण इव ॥

[1] विद्वद्भ्यो विधिपूर्वकं–ङ ॥

असंख्येयं धनं दत्वा ब्रह्मलोकं प्रयास्यतीति पूर्वेण सम्बन्धः ॥ ९५ ॥

**राजवंशान् शतगुणान् स्थापयिष्यति राघवः ।**
**चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति ॥९६॥**

कामरूपकन्याकुब्जादि तत्तद्राज्यपदस्थान् राजवंशान् शत–गुणान्–अनेकगुणवृद्धिमतः स्थापयिष्यति । शाश्वततत्तद्राज्यप्रदानेनेति शेषः । चत्वारो वर्णाश्चातुर्वर्ण्यं, स्वार्थे ष्यञ् । नियोक्ष्यतीति । शङ्कित-स्वधर्मभ्रंशमपीति शेषः ॥ ९६ ॥

**दशवर्षसहस्राणि दशवर्षशतानि च ।**
**रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ॥ ९७ ॥**

ब्रह्मलोकं प्रयास्यतीत्युक्तं ; तत्कियत्कालानन्तरमित्यपेक्षायां–दश-वर्षेत्यादि । उपासित्वेति । राज्यपरिपालनमेव नित्यप्राप्तं योग-बुध्याऽनुष्ठायेत्यर्थः । तथा हि गीयते—'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इति, 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' । इति च । ब्रह्मलोकं गमिष्यतीति । एवं भगवतो रामस्य ब्रह्मत्वं रामतुल्य–यज्ञदानादिनिजनित्यकर्मोपेतयोगिमात्रप्राप्यत्वं ब्रह्मलोकस्यैव सर्वलोकोत्तमत्वं श्रुतिसिद्धं चोपदिष्टं वेदितव्यम् । इह केचिदतिशब्दब्राह्मणाः अविदितकुलदेवताः अनाकुलितकुललोकाः अनुपासितकुलविद्याः अनाश्रितकुलदेशिकाः अखिलवेदशास्त्रनिरति-शयश्रुतब्रह्मतल्लोकप्राशस्त्याः धृष्टधूपपिशाचवत् श्रुततदुत्कर्षामर्षोत्थिता ब्रह्मलोकशब्दयोरन्यथानयने अतिमहत्प्रयतन्ते । कथम्? ब्रह्मेति विष्णुश्शिवो वा तस्य लोको ब्रह्मलोकः । स च भूर्भुवःस्वरादि-सर्वलोकोपरिवर्तिसत्यब्रह्मलोकादपि परः इति ; तथा ब्रह्मैव लोको

ब्रह्मलोक इत्यादि । भगवानेव तेभ्यः प्रतिवक्ति—'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥' इत्यादि 'ततो यान्त्यधमां गतिम्'—इत्यन्तेन । अस्माभिस्तु तेषामस्मदन्तेवास्यनुग्रहाय यद्वक्तव्यं तदाकरे प्रपञ्चितमिति नेह बहुग्रन्थसाध्यतस्सुप्रतिपादनम् । बत नारद एषामदुःखाय विष्णुपदं न प्रायुङ्क्त, नावेदीद्वा? लोकपदं प्रयाणपदं च द्वितीयार्धे व्यक्तं प्रायुङ्क्त ॥ ९७ ॥

**इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम् ।**
**यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ ९८ ॥**

अथ नारदः स्वोपदिष्टसंक्षेपपाठफलं प्रवृत्त्यङ्गमुपदिशति—इदमित्यादि ॥ पूयतेऽनेनेति पवित्रम् । 'कर्तरि चर्षिदेवतयोः' इति यथासंख्यं करणे कर्तरि इत्रः । ऋषिः वेदः । वेदतुल्यञ्चेदम् । तथोक्तं वेदैश्च सम्मितमिति । तुल्यमिति यावत् ॥ ९८ ॥

**एतदाख्यानमायुष्यं पठन् रामायणं नरः ।**
**सपुत्रपौत्रस्सगणः प्रेत्य स्वर्गे महीयते ॥ ९९ ॥**

अनर्थनिवृत्तिवदर्थावाप्तिरप्युपदिश्यते—एतदित्यादि । आयुः प्रयोजनमस्य-आयुष्यं, स्वर्गादिभ्यो यद्वक्तव्यम् । यद्वा निमित्ताधिकारे 'गो ह्यचोऽसंख्या'—इत्यादिना यत् । आयुष्यं वर्चस्यं इत्यादि स्वरितत्वदर्शनात् कश्चन यत् प्रत्यय एवेह मृग्यः । तत्र संयोग रूपे निमित्ते उत्पातरूपे वा निमित्ते अयं यत्प्रत्ययः । अत्र चायुरादि-फलमेव कर्त्रा संयुज्यत इति समस्ति । इह च संयोगरूपनिमित्तम् । आख्यानं-आख्यायिका, उपलब्धार्थम् । रामायणमिति । अयगतौ भावे ल्युट्, अयनं-चरितम् । रामस्यायनं रामायणं, 'पूर्वपदात्संज्ञायां'

इति णत्वम् । पठन्निति हेतौ शता । अत एव हेतोः–सपुत्रेत्यादिफलम् । गणः–दासीदासादिगणः । सपुत्रपौत्रस्सगणः इह ऐहिकान् भोगान् भुक्त्वा प्रेत्य–मृत्वा स्वर्गे–पुण्यलोके महीयते । महधातुः पूजार्थः । स्वर्गिभिस्सत्कृतो मोदत इत्यर्थः ॥ अथात्र रामायणमित्यनेन विस्तृत-संक्षेपाविशेषेणोपदेशे तु सर्वपापेति सर्वशब्दासंकोचेन प्रेत्य सपुत्रपौत्रः स्वर्गे महीयत इति विनाऽध्याहारं यथावस्थितपदान्वयेन ब्रह्मलोका-वाप्तिफलकत्वमेव रामायणस्योपदिश्यत इति युज्यते । ब्रह्मावतारश्च राम इत्यवादिष्ट च न्यायेन । अतस्तच्चरितानुसन्धातुः स्वर्गलोकावाप्ति-र्न्यायसिद्धा । असङ्कोचोपचारेण सर्वपापविमोकश्च ब्रह्मलोकासाधारण-धर्मः । तथाविमोकस्य 'तत्सुकृतदुष्कृते धूनुते' इति श्रुतेः ब्राह्म-लौकिकविरजावगाहैकसाध्यत्वात् । अन्यत्र कुत्रापि कालकृतिमूलपुण्या-तिवाहाविलयात् । प्रेत्य सपुत्रादिकतया महीयमानत्वस्य ब्रह्मलोकाति-रिक्तलोकेऽसम्भवाच्च । तत्र तु "यदि पितृलोककामो भवति सङ्कल्पा-देवास्य पितरस्समुत्तिष्ठन्ति । तेन पितृलोकेन सम्पन्नो महीयते" इत्यादिना छान्दोग्येन प्राप्तब्रह्मलोकमुक्तस्य सत्यसङ्कल्पत्वस्तदिच्छया तत्तत्पितृपुत्रादिसमुत्थानस्य घण्टाघोषत्वात् । ब्रह्मलोकश्च परनाकपर-स्वर्गादितः सर्वोपनिषत्प्रसिद्धः । उक्तविशेषणबलात् परस्वर्गग्रहश्च । अयमेवास्मदभिप्रेतोऽर्थः ॥ ९९ ॥

**पठन् द्विजो वागृषभत्वमीयात्**
**स्यात्क्षत्रियो भूमिपतित्वमीयात् ।**
**वणिग्जनः पण्यफलत्वमीयात्**
**जनश्च शूद्रोऽपि महत्त्वमीयात् ॥ १०० ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे प्रथमः सर्गः ॥

———

एवं चतुर्वर्णसाधारणं फलमुपदिश्य तत्तत्प्रातिस्विकफलोपदेशः—पठन्नित्यादि ॥ हेतौ शता । रामायणमिति शेषः । द्विजः—मुख्यो द्विजः । वागृषभत्वमीयादिति । शब्दब्रह्मपारगो भवतीति यावत् । यदि रामायणं पठन् क्षत्रियः *स्यात् तदाऽसौ भूमिपतित्वमीयात् । 'इण्' आशिषि लिङ् । 'अकृत्सार्वधातुके' इति दीर्घः । ईङ् गताविदस्मादिति † कश्चित् । स त्वात्मनेपदी । पण्यैः-क्रयद्रव्यैः साध्यं मूलात् द्विगुणत्रिगुणवृद्ध्यादिरूपं फलं यस्य, तस्य भावस्तत्त्वम् । शूद्रजनः—द्विजदासोऽपि तदितरसर्वप्रजाभ्यो महत्त्वं—श्रैष्ठ्यं ईयात्—देहान्तरे स्वोपरिवर्णप्राप्तिलक्षणं महत्त्वमीयात् ॥ १०० ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे

प्रथमः सर्गः ॥

---

अथ द्वितीयः सर्गः

**नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः ।**
**पूजयामास धर्मात्मा सहशिष्यो महा[1]मुनिः ॥ १ ॥**

एवं नारदादुपश्रुतदिव्यनायकस्योपश्रुतभूतभविष्यच्चरितरूप-काव्यविषयस्य च वाल्मीकेरपि कालिदासादेरिव काव्यमृषाजल्पस्य प्रसङ्गे तद्वदेव परलोकानुपयुक्तत्वप्रसङ्गे च भगवता ब्रह्मणा काव्यस्य स्वावतारविषयत्वेन स्वविषयकत्वाविशेषात्, स्वविषयकाव्यसन्दर्भस्य श्रुतिवदेव स्वलोकप्राप्तिफलकत्वस्यापि न्याय्यत्वात्, तस्य च सर्वलोकमूर्धन्यस्यान्वर्थसत्याख्यस्य स्वीयब्रह्मलोकस्य सत्यवचनैकलभ्यत्वात्, स्वविषयकदिव्यकाव्यस्य च सत्यवचनत्वाय सरस्वत्या प्रणयनसिद्ध्ये निजप्रादुर्भावा-

---

* स्यादित्यव्ययं यद्यर्थे-गो. ति. † गोविन्दराजः.

[1] मुनिम्—ङ.

त्प्रागेव तस्य मातुः प्रादुर्भवनपूर्वकं निजापरोक्षानुभवपरमानुग्रहं कृत्वा 'न ते वागनृता काव्ये काचिदत्र भविष्यति' इत्यनुग्रहपूर्वं तावत्काव्यकर्तुरेव शाश्वतब्रह्मलोकशाश्वतप्रतिष्ठानुमतिप्रकाशनाय द्वितीयः सर्गः। एतदर्थप्रकाशनमपि प्रागस्मदुक्तरीत्या रामायणस्य साक्षादपवर्गसाधनताधीस्थैर्याय ॥ नारदस्य त्वित्यादि ॥ विशिष्टा—व्याकरण· संस्कारादिविशेषवती विचित्रार्था वा शारदा—वाणी यस्य स विशारदः। लौकिकालौकिकवाक्यसन्दर्भे विशिष्टवाणीशक्तिमानिति यावत्। व्याकृतपदार्थो न विस्मरणीयः। सहशिष्यः। सहस्य सत्वाभावो 'वोपसर्जनस्य' इति। महामुनिः—वाल्मीकिः। नारदस्य तद्वाक्यं श्रुत्वा वाक्यविशारदत्वादेव तद्वाक्यगुणसामग्रीं दृष्ट्वा हृष्ट्वा तद्वाक्यं प्रथमतः पूजयामास—अतिविचित्रं भगवद्वचनमित्यादिवचनेन। नारदं तु यथागतं जिगमिषुं पुनश्च विशिष्य पूजयामास। अयमर्थो यथावत्पूजित इत्युत्तरवाक्याल्लभ्यते। एवं सर्वत्र प्रत्यक्षरं प्रतिश्लोकं समग्रभावप्रकाशनशक्तौ सत्यामपि बहुतरग्रन्थात् मध्यममार्गेणागच्छम् ॥ २ ॥

**यथावत्पूजितस्तेन देवर्षिर्नारदस्तथा।**
**[1]आपृच्छ्यैवाभ्यनुज्ञातः स जगाम विहायसम् ॥ २ ॥**

[2]आपृच्छ्यैव-साधु यामीत्युक्त्वैव। अनुज्ञातश्चैव·यथासुखं विहरतामिति वाल्मीकिनानुगमनपूर्वमभ्यनुज्ञातश्चैव। आभ्यां गुरुशिष्ययोः (शिष्यगुर्वोः) स्नेहभक्तिप्रकाशनम्। विहायसमित्यकारान्तः पुल्लिङ्गः सकारान्तः पुल्लिङ्गो वा द्वितीयान्तः। उभयमप्यस्ति। सः—वाल्मीकिर्मुनिः तस्मिन्-नारदे देवलोकं गते सति स्वयं तदा मुहूर्तं स्वाश्रमे स्थित्वा पश्चान्माध्याह्निकार्थं जाह्नव्या अविदूरतः—समीपे वर्तमानं

---

[1] आपृष्ट्वैव—घ. [2] आपृष्ट्वैव—ग.

तमसानदी[1]तीरं जगाम। *क्वचिदुक्तं "मुहूर्तमिति 'अपवर्गे तृतीया' इति तृतीयार्थे द्वितीया छान्दसी। मुहूर्तकालेन देवलोकं गत इत्यर्थ इति" इत्यादिकं योजनाशक्तिजामिथ्याप्रलापमात्रमिति विद्वद्भिरुपेक्ष्यम्। क्व तृतीयार्थः। क्वापवर्गः। नारदस्येष्टलोकगमनस्य स्मृतिसमकालसाध्यस्य मुहूर्तकालसाध्यत्वं च देवानांप्रियेण केन प्रमाणेनावसितम्॥ ३॥

**स तु तीरं समासाद्य तमसाया मुनिस्तदा।**
**शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम्॥ ४॥**

अकर्दमं-अपङ्कं इत्यर्थः। तीर्थं-पुण्यतीर्थं "ऋषिजुष्टजलं तीर्थं" इति निघण्टुः॥ ४॥

**अकर्दममिदं तीर्थं भरद्वाज निशामय।**
**रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा॥ ५॥**

किमाहेत्यतः—अकर्दममित्यादि। निशामय-अवलोकय। एवं दर्शनार्थत्वात् 'शमोऽदर्शने' इति मित्वाभावाद्ध्रस्वाभावः। किमाहापूर्वमित्यतः—रमणीयमित्यादि। रमणीयत्वे हेतुः—प्रसन्नाम्बिवति। तत्र हेतुः—अकर्दममिति। सन्मनुष्यचित्तस्य कामादिदोषकर्दमराहित्येन नित्यप्रसन्नत्वात्तदंशेऽयं दृष्टान्तः॥ ५॥

**न्यस्यतां कलशस्तात! दीयतां [2]वल्कला मम।**
**इदमेवावगाहिष्ये तमसातीर्थमुत्तमम्॥ ६॥**

न्यस्यतां कलश इति। देवपूजार्थं अर्घ्योदकाय नीयत इति शेषः। वल्कला दीयतामिति—'लिङ्गमशिष्यम्' इति भाष्यकारवचना-

---

* इदं व्याख्यानं गोविन्दराजतीर्थयोरपि सम्मतम्।

[1] तीरन्तु—ग. [2] वल्कलं—ङ. च.

दस्मादेव प्रयोगात् स्त्रीलिङ्गत्वं च। 'वल्कं वल्कलमस्त्रियां' इति निघण्टावपि। इदमेवेति। नात्यासन्नमपि गङ्गातीर्थम्। माध्याह्निकादिकालातिक्रमादिति शेषः॥ ६॥

**एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना।**
**प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः॥ ७॥**

वाल्मीकेनेति। तस्य अपत्यमित्यण्। प्रायच्छतेति छन्दोवशप्राप्तमात्मनेपदम्। गुरोर्नियत इति। सदा सेवापर इति यावत्। अत एव माध्याह्निककालेऽपि सहगमनम्॥ ७॥

**स शिष्यहस्तादादाय वल्कलं नियतेन्द्रियः।**
**विचचार ह पश्यंस्तत् सर्वतो विपुलं वनम्॥ ८॥**

नियतेन्द्रियः—जितेन्द्रिय इति यावत्। विचचार हेति। शौचाचरणप्रसङ्गेन एकान्ततो अनुष्ठानाय चेति शेषः। अत एव शिष्यहस्ताद्वल्कलग्रहपूर्वं गमनम्॥ ८॥

**तस्याभ्याशे तु मिथुनं चरन्तमनपायिनम्।**
**ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिस्वनम्॥ ९॥**

तस्येत्यादि। तस्य—वनस्याभ्याशे—समीपे चरन् भगवान्, (स) तत्र तु-तस्मिन् वनाभ्याश एव चरन्तं अनपायिनं आधिव्याधिमृत्युना कायपीडारहितमिति यावत्। अत एव चारुनिस्वनं क्रौञ्चयोर्मिथुनं ददर्श। अनपायिनमिति पुल्लिङ्गः छान्दसः। परस्तु प्रतिश्लोकमसङ्गतं प्रलपति। दुर्योजं त्यजति। भावगूढार्थं न वेत्त्येकः। अतिशब्दार्थं कथयति।[1] तदस्माभिः उद्भाष्य दूष्यं किं? मसूरिका-

[1] अतः–इति–ग.

जलूकाचिकित्सा शक्या केनापि ? अतोऽस्मदुच्यमानरीतिं तदुच्यमानं च सम्यक्पर्यालोचयतामिदमुचितमिदमनुचितमिति स्वयमेव सुस्पष्टं भवति । अतस्सर्गस्य द्वित्रस्थले परकीयासङ्गतवादमुद्भावयिष्यामः ॥ ९ ॥

**तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ।**
**जघान वैरनिलयो निषादस्तस्य पश्यतः ॥ १० ॥**

तस्मान्मिथुनात्-पुमांसमेकं तु. अत्र 'पञ्चमी विभक्ते' इति निर्धारणाश्रयात् मिथुनात्पुंसो विभागस्य विद्यमानत्वात्पञ्चमी, तन्मिथुनस्य प्रतिसंबन्धिभूतमेकमिति निष्कृष्टार्थः । पापनिश्चयः—अनादिपापवासनावासितबुद्धिः । अत एव वैरनिलयः—निजानपकारिप्राणिष्वकारणवैराश्रयः । एवंभूतो निषादः, तस्य पश्यतः—पश्यन्तं तमानादृत्य, 'षष्ठी चानादरे' इति षष्ठी, जघान ॥ १० ॥

**तं शोणितपरीताङ्गं वेष्टमानं महीतले ।**
**भार्या तु निहतं दृष्ट्वा रुराव करूणां गिरम् ॥ ११ ॥**

तं वेष्टमानं—लुठन्तं निहतं दृष्ट्वा, निषादेनेति शेषः । करुणां गिरं । गृशब्दे, अस्मात्क्विप् । दीनं शब्दं रुराव । रौतेर्लिट् । अत्र धातुमात्रसामान्ये करोतीत्यर्थमात्रे रौतिः । शब्दमकरोदिति यावत् ॥ ११ ॥

**वियुक्ता पतिना तेन द्विजेन सहचारिणा ।**
**ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन च ॥ १२ ॥**

पतित्वादिविशेषणेन तेन द्विजेन वियुक्ताऽभूदित्यन्वयः । अक्रियं वाक्यं अस्तिकरोत्यन्यतरक्रियमिति । पतिना—पत्येत्यर्थः । नाभावः छान्दसः । भक्ष्याहरणात् पक्ष्यन्तराभिभवादेश्च पातीति तथा ।

सहचारिणा—अहोरात्रमिति शेषः। ताम्रशीर्षेण—पुंस्त्वात् कुक्कुटादिवत् ताम्रवर्णशीर्षगतचूडायुक्तेनेति यावत्। मत्तेन—कामसम्भोगवशादिति शेषः। तदेव द्योत्यते—पत्रिणेत्यादिभ्यां; पत्रिणा—सम्भोगकालत्वाद्वितपक्षवता, सहितेन स्त्रिया, उपर्यधोभागे तया सङ्गतेन। एवं कामभोगावस्थितस्य निषादहननात् पूर्वकालीनस्य मिथुनस्य महर्षेर्दर्शनं वैशब्देन द्योत्यते ॥ १२ ॥

**तथा तु तं द्विजं दृष्ट्वा निषादेन निपातितम्।**
**ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ॥ १३ ॥**

तथा तु तमिति। तथा कामभोगदशायामेव तु तं द्विजं निपातितं दृष्ट्वा धर्मात्मनः—दयादाक्षिण्याहिंसामुखधर्मेण प्रवणचित्तस्य महर्षेस्तत एव कारुण्यं—घृणा समपद्यत ॥ १३ ॥

**ततः करुणवेदित्वात् अधर्मोऽयमिति द्विजः।**
**निशाम्य रुदतीं क्रौञ्चीं, इदं वचनमब्रवीत् ॥ १४ ॥**

तत इति। ततो द्विजः—ऋषिः रुदतीं क्रौञ्चीं निशाम्य—अवलोक्य अयमधर्म इति निश्चित्य ॥ १४ ॥

**मा निषाद प्रतिष्ठां त्वं अगमः शाश्वतीस्समाः।**
**यत् क्रौञ्चमिथुनादेकं अवधीः काममोहितम् ॥ १५ ॥**

यद्यपि मृगयाविहारिणः क्षत्रियस्य सुतरां निषादस्य च मृगयासु पशुपक्षिहनने न दोषः। तथापि यत्—यस्मात् काममोहितमवधीः, तत्तस्मादेव हेतोस्त्वं कचिद्देशे नगरे ग्रामे वा गृहक्षेत्रादिमत्तया प्रतिष्ठां—स्थितिं मा गमः। न केवलमल्पायुषस्तवैकस्यायं शापः, अपि तु सन्तानपरम्परया शाश्वतीस्समाः—अपारकालव्यापिन्य इति। कथमेवं आत्मा-

त्मीयानपकारिणि घोरशापप्रवृत्तिः ऋषेः, तत्पापं तेन भुज्यतामित्युपेक्षामात्रस्यैव न्यायप्राप्तत्वात्। तथा हि विश्वामित्रादयः स्वापकारिष्वपि राक्षसादिषु क्षमां कुर्वते "शमो दमस्तपश्शौचं" इत्याद्युपदिष्टसहजब्रह्मधर्मपरिपालनाय। अत्रोच्यते— नैष दोषः; ऋषेरेवंवचनस्य परवशप्रवृत्तत्वात्। किंपारवश्यात्? भगवन्नियोगात् तन्मुखसन्निहितदेवीवशादेव। कथं तर्हि देव्या आदौ शोकशापश्लोकविभावनं? ऋषिप्रणेतव्यस्य शोकरसप्राधान्य[1]सिद्ध्यर्थत्वात्। आदिमध्यावसानेषु तथात्वं स्पष्टम्। तथा त्रैलोक्यानर्थसंहाररूपपरममङ्गलस्य तत्तत्काव्यप्रतिपाद्यार्थस्य सत्यसरस्वतीत्वेनान्यापदेशत आदौ प्रतिपादनार्थत्वाच्च। तथा हि—सादयतेः पचाद्यचि 'सदिरप्रतेः' इति षत्वं। *नितरां सदेवर्षिगणं त्रैलोक्यमवसादयति पीडयतीति निषादः, तस्य सम्बुद्धिः हे निषाद–रावण। यत्–यस्मात् क्रौञ्चमिथुनात्—अल्पीभावार्थत्वात् क्रुञ्चेर्वा सरूपविधिना पचाद्यचि क्रुञ्चतीति क्रुञ्चः। तस्य भावः क्रौञ्चः, क्रौञ्चयोर्मिथुनं तथा; राज्यक्षयवनवासादिदुःखेनाल्पीभूतं–परमकार्श्यं गतं यन्मिथुनं सीतारामलक्षणं तस्यैकमवयवं सीतारूपं, काममोहितं–'धर्माविरुद्धो भूतेषु कामोऽस्मि' इति गीयते, धर्म्यकामभोगसुखितं, यत्–यस्मादवधीः–मिथुनादपहृत्य वियुज्यावधिष्ट–वधाभ्यधिकां पीडां कृतवान् असि, तत्–तस्मादेव, भगवता ते शाश्वतीस्समाः -अनेककोटिकालं, महाजलदुर्गकनकमयलङ्कापुरे सपुत्रपौत्रभृत्यगणतया या प्रतिष्ठा दत्ता तां प्रतिष्ठां अतः परं मा गम इति। इदमेव काव्यप्रतिपाद्यं महर्षिणोपदिश्यते–'तदुपगतेत्यादि–दशशिरसश्च वधं निशामयध्वं' इत्येतत्सर्गान्ते। अतस्सत्यसरस्वत्या देव्या परममङ्गलमेव पुरस्तादाविर्भावितामिति योगिकुलाभिध्येयम्॥ १५॥

---

* इयं व्याख्या तिलेके अनूद्य विस्तरशो दूषिता॥

[1] सिद्धा–**ग**.

**तस्यैवं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः ।**
**शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥ १६ ॥**

तस्यैवं—मानुषेत्याद्युक्तरीत्या ब्रुवतः, 'वर्तमानसामीप्ये वर्तमानवत्' इति लटः शता, उक्तवतस्तस्य मुनेस्स्वोक्तमेव च हृदि वीक्षतः —पर्यालोचयतः । छान्दसं परस्मैपदं । चिन्ता—विचारो बभूव । कीदृश इत्यतः—शोकेत्यादि । अस्य शकुनेः—पतिवियुक्तपक्षिणो दर्शनजेन शोकेनार्तेन—दीनेन मया यदिदं व्याहृतं तदिदं किं गद्यरूपं, पद्यरूपं, आहोस्वित् संस्कृतभाषामात्रमिति चिन्ता बभूवेति पूर्वेणान्वयः ॥ १६ ॥

**चिन्तयन् स महाप्राज्ञश्चकार मतिमान् मतिम् ।**
**शिष्यं चैवाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ॥ १७ ॥**

मतिमान्—प्रशस्तबुद्धिः । महाप्राज्ञः—'प्रज्ञाश्रद्धा' इत्यादिना मत्वर्थीयो णः । ऊहापोहसुशब्दापशब्दपद्यगद्यादिविवेचनचतुर इत्यर्थः । अत एवोक्तश्लोकस्य स्वरूपं चिन्तयन् । मतिं—[1]तत्स्वरूपविषयकनिश्चयबुद्धिं चकार । एवं [2]कृत्वा अथ स मुनिपुङ्गवः शिष्यं प्रतीदं —वक्ष्यमाणलक्षणं वाक्यं चाब्रवीत् ॥ १७ ॥

**पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः ।**
**शोकार्तस्य प्रवृत्तो मे श्लोको[3]भवति नान्यथा ॥ १८ ॥**

पक्षिशोकार्तस्य मे प्रवृत्तोऽयं शब्दसन्दर्भः श्लोक एव भवति, कुत इत्यतः—पादबद्ध इत्यादि । 'अष्टाक्षरा गायत्री' इत्यष्टाक्षरगायत्रीपादवत्तया बद्धः—बन्धः यस्य सन्दर्भस्य स तथा । एतेन न गद्यं नापि संस्कृतमात्रमित्युक्तम् । अपि च न केवलं प्राकृतश्लोकमात्रम् । अपि त्वक्षर-

---

[1] ततः स्वरूप—ग. [2] कृत्वैव—ग. [3] भवतु—ङ.

समः— वृत्तरत्नाकरादिछन्दश्शास्त्रप्रतिपाद्यमानगुरुलघ्वक्षरवैषम्यराहितः । अत एव तन्त्रीलयसमन्वितः—तन्त्रीसम्बन्धेन गीतियोग्यतया समन्वितस्तथा। तथा नृत्तगीततालादियोग्यतया च समन्वितः। लयः—तालमृदङ्गहस्तपादाभिनयानां समकालविरामः। 'लयस्साम्यम्' इत्यमरः। अतोऽयमुक्तः एवंलक्षणः श्लोक एव भवति नान्यथा। न श्लोकाभासादिः। हे भरद्वाज! एवमुक्तश्लोकत्व[1]ज्ञानपूर्वं तदूहश्च ते भवतु—[2]उक्तश्लोकं गृहाणेति यावत्॥ १८॥

**शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम्।**
**प्रतिजग्राह सन्तुष्टस्तस्य तुष्टोऽभवन्मुनिः॥ १९॥**

शिष्यस्त्विति। तस्य मुनेस्तु विशिष्टश्लोकं तदूहं च स्वस्मै ब्रुवतः अनुत्तमं वाक्यं शिष्यो भरद्वाजः संहृष्टो भूत्वा द्राक् प्रतिजग्राह—गुरोः अर्थतः पाठतश्च गृहीतवान्, अतस्तस्य गुरुः अहो ते सौबुध्यमिति तुष्टोऽभवत्॥ १९॥

**सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन् यथाविधि।**
**तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः॥ २०॥**

सोऽभिषेकमिति। अभिषेकमिति मध्याह्नकर्तव्यक्रियासामान्योपलक्षणम्। तमेवार्थमिति—उक्तश्लोकस्यार्थमिति यावत्। उपावर्तत—न्यवर्तत॥ २०॥

**भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान् गुरोः।**
**कलशं पूर्णमादाय पृष्ठतोऽनुजगाम ह॥ २१॥**

---

[1] तत्वज्ञान—ग. [2] पूर्वोक्त—ग.

भरद्वाजः, श्रुतवान्-बहुश्रुतः । *पृष्ठतः-स्कन्धपृष्ठभागेन पूर्णं कलशमादाय तं मुनिं आचार्यं अनुजगामेति योजना ॥ २१ ॥

**स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् ।**
**उपविष्टः कथाश्चान्याश्चकार ध्यानमास्थितः ॥ २२ ॥**

स कथाश्चान्याः-धर्म्याश्चकार । अनन्तरं माध्याह्निककृत्यत्वेन नित्यप्राप्तमम्बया चतुर्मुखध्यानमास्थितो बभूव । †मध्याह्ने चतुर्मुखरुद्र-प्राधान्येनाम्बया ध्यानं गायत्रीहृदयादितः श्रोत्रियमन्त्रप्रसिद्धं चतुर्मुख-रुद्राभेदं मामकास्तु विदुः ॥ २२ ॥

**आजगाम ततो ब्रह्मा लोककर्ता स्वयंप्रभुः ।**
**चतुर्मुखो महातेजा द्रष्टुं तं मुनिपुङ्गवम् ॥ २३ ॥**

आजगामेति । स्वयं प्रभुः- अनन्यमुख[1]निरीक्षकतया भूरादिसर्वलोक लौकिकसर्गादिपञ्चकृत्यापेक्षितसमग्रभूमविधैश्वर्यानन्दशक्तिमान् । अत एव लोककर्ता-लोकानां भूरादीनां तल्लोकस्थत्रिस्रोतसां च सर्गादिपञ्चकृत्य-साक्षात्कर्ता, साक्षादखण्डकाले प्रतिष्ठत्वात् । अत एव महातेजाः-यत्तेजःसमक्षं सर्वतेजांसि चन्द्रग्रहनक्षत्रतारादीन्यस्तं यान्ति । तथा हि श्रुतिः--"अमी य ऋक्षा निहिता स उच्चा । नक्तं ददृश्रे कुह चिद्दिवेयुः ॥" इति । एवं महातेजाश्चतुर्मुखो ब्रह्मेति अम्बाचतुर्व्यूह-विद्यावलम्बनेन तदर्थरामादिचतुर्व्यूहब्रह्मावतारमूर्तिप्राधान्येन च सन्तत-

---

* अनुजगामेत्यनेनैव पृष्ठतो गमनस्य सिद्धत्वादेव व्याख्यातम् । पृष्ठत इत्युक्तिः अव्यवधानसूचनार्था वा । † इदं तिलकेऽनूद्य दूषितम् । ध्यानं---अवशोत्पन्नशोक-विषयचिन्ताम्—इति तु. युक्तं ।

[1] निरीक्षितया-**ग.**

[1]ध्यानप्रवृत्तत्वान्महर्षेस्तदनुग्रहाच्चतुर्मुखमूर्त्यैवागमनम्। चतुर्मुखस्वरूपं तु "यजुरथर्वसामर्चक्षमादिव" इत्याद्युपनिषद्रहस्यप्रकाशितम्। प्राकृतश्रुतिगोचरार्हेऽस्मिन् व्याख्याने वा रहस्यवदनादि प्रापनीय्यम्। मामकास्तु तत्सर्वं विदुरेव। एवं सादर[2]सदाध्यानपरत्वादृषिसत्तमं तं वाल्मीकिं द्रष्टुमाजगाम—तदीयकविताचातुर्यकाव्यौन्मुख्यादिप्रवृत्तिं द्रष्टुम्, दृष्ट्वा तामुपोद्बलयितुमाजगामेत्यर्थः। एतेन लोककर्तुर्भगवतः ऋषेर्दर्शनार्थमागमनमश्रद्धेयमिति शङ्काऽपास्ता ॥ २३ ॥

**वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः।**
**प्रणतः प्राञ्जलिर्भूत्वा तस्थौ परमविस्मितः ॥ २४ ॥**

प्राक् प्रणतः पश्चात् प्राञ्जलिर्भूत्वा तस्थाविति योजना। अत्र 'पाद्यार्घ्यं' इत्युपनिषदुपदिश्यमानषोडशोपचाराणां मध्ये दैवात्सम्पन्नमिहाद्यमुपचारद्वयम् ॥ २४ ॥

**पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः।**
**प्रणम्य विधिवच्चैनं पृष्ट्वा चैव निरामयम् ॥ २५ ॥**

पाद्यादिः उपचारान्तराणामप्युपलक्षकः, तत्रानामयप्रश्न आवाहनशेषः। अव्ययं—व्ययः—जन्मादिनाशान्तविकारः, स्वेतरसर्वसंस्कारस्य तत्साक्षात्प्रवर्तकं, कालोपग्रहत्वतोऽपि व्ययप्रसक्तिशून्यम्, देवं—अपरोक्षानुभूयमानानन्यसामान्यदिव्यार्थं। प्रथमं स्वागतं अत्रभवतां स्वामिनामित्यनामयं पृष्ट्वा—स्वागतप्रश्नं कृत्वा, पाद्याद्युपचारैस्सम्पूज्य पश्चाद्दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीत, इत्याद्युपदिश्यमानन्यायेन विधिवच्च प्रणम्य—ब्राह्मं प्रणामं कृत्वा एनमेवं पूजयामास ॥ २५ ॥

---

[1] प्रवृत्तध्यानत्वा—**ग.** [2] सद्ध्यान—**ग.**

**अथोपविश्य भगवान् आसने परमार्चिते ।**
**वाल्मीकये च ऋषये संदिदेशासनं ततः ॥ २६ ॥**

वाल्मीकये च ऋषय इति पठितव्यम् ।* महर्षय इति पाठे चतुर्थगुर्वक्षरेण छन्दोभङ्गः । आसनं सन्दिदेशेति । आसनोपवेशनानुज्ञां कृतवान् भगवानिति यावत् ॥

**ब्रह्मणा समनुज्ञातः सोऽप्युपाविशदासने ।**

† ब्रह्मणेत्याद्यर्धं स्वस्मिन्नेव परिसमाप्तवाक्यं सत् श्लोकत्वेन गण्यतां, पूर्वापरश्लोकास्सर्वे यथावदर्धद्वयान्विताः ॥ २६ ॥

**उपविष्टे तदा तस्मिन् साक्षाल्लोकपितामहे ।**
**तद्गतेनैव मनसा वाल्मीकिर्ध्यानमाश्रितः ॥ २७ ॥**

उपविष्ट इति । भगवति साक्षादुपाविष्टे सति । तद्गतेनैव-भगवद्गतेनैव मनसा । वाल्मीकिः ‡ ध्यानं—समाधिमाश्रितः ॥ २७ ॥

**पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना ।**
**यत्तादृशं चारुरवं क्रौञ्चं हन्यादकारणात् ॥ २८ ॥**
**शोचन्नेव पुनः क्रौञ्चीमुपश्लोकामिमं जगौ ।**
**पुनरन्तर्गतमना भूत्वा शोकपरायणः ॥ २९ ॥**

अथापि । पापेत्यादिश्लोकद्वयं एकसम्बन्धम् । पापात्मना—पापवासनाविशिष्टचित्तेन । अत एव पशुपक्ष्यादिष्वकारणत एव वैरग्रहणबुद्धिना—नित्यजिघांसोपगृहीतबुद्धिना अहो कष्टं कृतं । किं कष्टं कृतमित्यतः—यदित्यादि । तादृशं सम्भोगप्रसक्तं चारुरवं क्रौञ्चमकारणा-

---

* गो.　† नन्वर्धत्रयकरणं विरुद्ध्यते-मैवं-लेखकदोषेणार्धान्तरपतनसम्भवात्—गो.　‡ अत्रापि २२तम श्लोकवदेव ध्यानं विवक्षितुं युक्तं, उत्तरश्लोकानुगुणं च तत् ।

द्धन्यात्–हतवानस्ति इति यत्, कष्टमेतत्। "यच्चयत्रयोः" इति गर्हायां भूतार्थे लिङ्। एवं वियुक्तां क्रौञ्चीमुद्दिश्य घृणाद्यष्टपात्रबद्धसंसारित्वात् मुहुश्शोचन् भगवत्यन्तर्गतमना भूत्वैव सन् *उप-समीपे भगवद्ध्याने क्रियमाण एवान्तरान्तरा प्रागुक्तभावित्वात् शोकपरायणस्सन् इमं श्लोकं–†पापात्मनेत्याद्युक्तं श्लोकं च पुनःपुनर्जगौ ॥ २८-२९ ॥

तमुवाच ततो ब्रह्मा प्रहस्य मुनिपुङ्गवम्।
श्लोक एव त्वया बद्धो नात्र कार्या विचारणा ॥ ३० ॥

ततो भगवान् ब्रह्मा सर्वान्तर्यामित्वात्तदीयं शापबन्धकृतं दुश्चित्तमालक्ष्य प्रहस्य तं मुनिपुङ्गवं उवाच। किमिति—मच्चित्तेनापि त्वया पारतन्त्र्यात् इदानीमपि शोकव्याजेन श्लोक एव बद्धः। त्वया प्राङ्निश्चितश्लोकत्वश्लोकवदयमपि समीचीनश्लोक एव। नात्र संदर्भमात्रत्वाविचारणा–चिन्ता श्लोकाभासत्वादिचिन्ता वा कार्या। णौ चरसंशये, अस्मात् 'ण्यासश्रन्थो युच्' इति युच् ॥ ३० ॥

मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती।
रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम ॥ ३१ ॥

ननु नाथ! कथं मयि त्वद्ध्यानारूढचित्तेऽपि अन्तरान्तरा मे श्लोकप्रवृत्तिरित्यत उच्यते—मच्छन्दादिति। परमभक्तत्वन्मुखेन मदवताररामचरितविषयकं सत्यं काव्यं प्रवर्तनीयमित्येवंरूपमदभिप्राया-नुवर्तनाद्धेतोः, हे ब्रह्मन्! ते–तव मुखादियं सरस्वती प्रवृत्ता। मदनु-ग्रहात् त्वयि सन्निहितयानया महर्षिसत्तम! रामस्य कृत्स्नं चरितं विषयीकृत्य काव्यं कुरु ॥ ३१ ॥

---

* उपजगौ इत्यन्वयः–गो. † मानिषादेत्याद्युक्तं–इति युक्तम्.

धर्मात्मनो[1] भगवतो लोके रामस्य धीमतः।
वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम् ॥ ३२ ॥

कथं मया कर्तव्यमित्यत्राह—धर्मेति। अस्मिन् लोके इदानीं धर्मात्मनेत्यर्थः ॥ ३२ ॥

रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः।
रामस्य सहसौमित्रे राक्षसानां च सर्वशः ॥ ३३ ॥
वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः।
यच्चाप्यविदितं सर्वं विदितं ते भविष्यति ॥ ३४ ॥

यच्चाप्यविदितमिति। प्राकृतदुर्वेदं प्रसङ्गात् काव्यमध्ये [2]वक्तव्यं ब्रह्मरहस्यान्तमलौकिकार्थतत्त्वं लोकायतान्तलौकिकव्यवहारार्थ-तत्त्वं चेत्यर्थः ॥ ३४ ॥

न ते वागनृता काव्ये काचिदत्र भविष्यति।
कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम् ॥ ३५ ॥

अनृता–मिथ्यार्था। कुरु रामकथां–रामचरितविषयिणी कथा–[3]काव्यप्रबन्धस्तथा ॥ ३५ ॥

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥ ३६ ॥

यद्यपि त्वदाज्ञासन्निहितदेव्यनुग्रहात् काव्यं सुकरम्। अथापि तस्य प्रचारणे मम शक्त्यभावात् किं तेन प्रयोजनमित्यतः–यावदिति। यावत्तावतावधारणार्थाव्ययौ। प्रचरिष्यतीति। मदनुग्रहात् स्वयमेव लोकेष्विति शेषः ॥ ३६ ॥

---

[1] गुणवतो–ङ. [2] कर्तव्यम्–क. [3] वाक्य–क.

**यावद्रामस्य च कथा त्वत्कृता प्रचरिष्यति ।**
**तावदूर्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि ॥ ३७ ॥**

कर्तुश्च तवानन्यदुर्लभफललाभ इत्युच्यते—यावद्रामेति । ऊर्ध्वमधश्चेत्यव्ययम् । ऊर्ध्वं लोका भूरादयः । अधो लोका अतलादयः सप्त । मल्लोकेष्विति । महाविराडण्डविग्रहमदवयवभूतलोकेष्वित्यर्थः। निवत्स्यसीति। वसेस्स्ये परे 'सस्यार्धधातुके' इति तत्त्वम् ॥ ३७ ॥

**इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत ।**
**ततस्सशिष्यो वाल्मीकिर्मुनिर्विस्मयमाययौ ॥ ३८ ॥**

इत्युक्त्वेति। तत्रैवेति। न तु नारदादिवत् ऊर्ध्वादिदेशगमनपूर्वं तस्य अन्तर्धानम् ॥ ३८ ॥

**तस्य शिष्यास्ततस्सर्वे जगुः श्लोकमिमं पुनः ।**
**मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः ॥ ३९ ॥**

इममिति । मा निषादेत्याद्युक्तरूपम् । प्राहुश्चेति। इदं वक्ष्यमाणवचनमिति शेषः ॥ ३९ ॥

**समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा ।**
**सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः ॥ ४० ॥**

किं प्राहुरित्यतः-समेति। अयं श्लोको महर्षिणा समाक्षरैश्चतुर्भिः पादैर्गीतः-श्लोकत्वबुद्धिराहित्येन संस्कृतमात्रत्वेन वर्णितः। सः शोकविषयश्शब्दो भूयोऽनुव्याहरणात्—अनुस्मृत्य व्याहरणाद्धेतोः दैवगत्या श्लोकत्वमागतस्तिष्ठति । अचिन्तिततया एवं कवितामार्गः प्रादुर्भूतोऽस्मदाचार्यस्य। इदमपूर्वमिति प्राहुरित्यन्वयः पूर्वेण। आहुरित्यर्थः । ब्रूते(भूते)र्लिटि 'ब्रुवः पञ्चानाम्' इत्युसाहादेशौ । यद्वा एवमादौ भूतार्थसिद्धये सर्वत्र स्मशब्दोऽध्याहार्यः ॥ ४० ॥

**तस्य बुद्धिरियं जाता वाल्मीकेर्भावितात्मनः ।**
**कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम् ॥ ४१ ॥**

तस्य करवाण्यहमितीयं बुद्धिरिति योजना । रामायणमिति । रामायणाख्यमिति यावत् । ईदृशैरिति—मा निषादेतिवत् श्लोकरूपैरेव सन्दर्भैरित्यर्थः ॥ ४१ ॥

**उदारवृत्तार्थपदैर्मनोरमैः**
**तदास्य रामस्य चकार कीर्तिमान् ।**
**समाक्षरैः श्लोकशतैर्यशस्विनो**
**यशस्करं काव्यमुदारधीर्मुनिः ॥ ४२ ॥**

सत्यसङ्कल्पत्वात् ऋषेः यथासङ्कल्पं क्रियानिवृत्तिरित्युच्यते—उदारेति । "उदारो महति ख्याते" इति वैजयन्ती । वृत्तं—चरितम् । छन्दोवर्तनवाची अयम् । अर्थः—अभिधेयः । पदं—सुप्तिङन्तलक्षणम् । उदाराणि ख्यातानि लोकव्याकरणप्रसिद्धानि वृत्तानि तथा, करणे तृतीया । अत एव मनोरमत्वम् । समाक्षरैः—गुरुलघ्वक्षरवैषम्यरहितैः । अत एव पुरस्ताद्वाल्मीकये च ऋषय इति पाठ इत्युक्तम् । शतशब्दोऽनेकपर्यायः । उदारधीः-महाबुद्धिः । यशस्विनो रामस्य चरितविषयकं लोककवेश्च यशस्करं तत्तादृक्काव्यं चकारेति योजनार्थः ॥ ४२ ॥

**तदुपगतसमाससन्धियोगं**
**सममधुरोपनतार्थवाक्य[1]बन्धम् ।**
**रघुवरचरितं मुनिप्रणीतं**
**दशशिरसश्च वधं निशामयध्वम् ॥ ४३ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे द्वितीयः सर्गः

---

[1] बद्धम्—ङ. च.

एवं काव्यं निर्माय विद्वांसोऽभिमुखीक्रियन्ते–तदुपगतेत्यादि। समासो द्वन्द्वादिः। सन्धिरेकादेशतुगागमादिजः। योगः–विभक्तार्थयोः प्रकृतिप्रत्यययोः। उपगताः–यथाव्याकरणमर्यादं समासादयो यस्मिन् पादे तत्तथा। तस्मान्मत्वर्थीयोऽच्। उपगतसमाससन्धियोगपदवदित्यर्थः। एवं काव्यस्य विशिष्टपदवैभवमुक्त्वा वाक्यवैभवं उच्यते–समेत्यादि। समः–ओजःप्रसादसमः, ओजस्समस्तपदभूयस्त्वं, प्रसादो व्यस्तपद-भूयस्त्वम्। न चागमवत् केवलं ओजोभूयः। न च वेदवत् प्रसाद-भूय इत्यर्थः। मधुरः–वैदर्भरीतिः। तेन मधुरपाकेन, वाक्याश्रितपद-शक्तिवैभवेन उपनतः–उपलभ्यमानस्तत्तत्प्रकरणोचितार्थो यस्मिन् तत्तथा। परस्परान्वितक्रियाकारकपदं वाक्यम्। वाक्यत्वेन [1]बन्धः-सम्बन्धो वाक्य[2]बन्धः। समो मधुरः उपनतार्थो वाक्य[3]बन्धो यस्मिन् काव्ये तत्तथा। एवं विशिष्टपदवाक्यवैभववतोऽपि मिथ्यार्थकत्वादप्रामाण्यप्रसङ्ग इत्यतः-मुनिप्रणीतमिति। भगवदनुग्रहप्राप्तसत्यसरस्वतीकमहर्षिप्रणीतम्। अत एव परं प्रमाणम्। एवमपि लौकिकाप्तवाक्यवत् परलोकानुपयोग इत्यतः–रघुवरचरितमिति। यतो भगवदवतारश्रीरामचरितं अतो ब्रह्म-लोकावाप्तिसाधनं तदिदमेव विशेषविषयप्रयोजनकं काव्यम्, श्रेयोऽ-र्थिनः! निशामयध्वं–सेन्द्राजित्कुम्भकर्णरावणस्यैव त्रिपदाघोरांशजमल-त्वात्तन्नाशपर्यन्तश्रवणत एव युष्माकमपि शुद्धिसिद्धेः आन्तमिदं काव्यं शृणुध्वं इत्यर्थः॥ ४२॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे द्वितीयस्सर्गः

---

[1] बद्धः–क. [2] बद्धः–क. [3] बद्धः–क.

अथ तृतीयः सर्गः

***श्रुत्वा वस्तु [1]समाप्यं तत् धर्मात्मा धर्मसंहितम् ।**
**व्यक्तमन्वेषते भूयो यद्वृत्तं तस्य धीमतः ॥ १ ॥**

एवं नारदात् गुरोः श्रुतदिव्यकाव्यनायकचरितरूपकाव्यविषयकस्य च प्राप्तकाव्यविषयकभगवन्नियोगानुग्रहस्य च महर्षेर्भगवद्योगबलजभगवदनुग्रहात् यत् संक्षेपश्रुतादभ्यधिकं समग्रं रामचरितं दृष्टं तत्सर्वं सामान्यतोऽनुक्रम्यते तृतीयेन—श्रुत्वेत्यादि । वस्तु—काव्यविषयकथाशरीरं नारदाच्छ्रुत्वा समाप्यं—भगवन्नियोगात् सप्रपञ्चप्रतिपादनपूर्वं समापनीयत्वेन च प्राप्तम्, धीमतः—रामस्य यद्वृत्तमस्ति, तत् व्यक्तं—प्रपञ्चनेन सुस्पष्टम्, धर्मसंहितं—प्रसङ्गतस्सकलवर्णाश्रमधर्मोपदेशोपबृंहितम् यथा, भूयः—अभ्यधिकम् । "बहोर्लोपो भू च बहोः" इति बहोर्भूभाव ईयसुनि ईकारलोपश्च । अव्युत्पन्नो भूयश्शब्दोऽप्ययम् । प्रतिपादयितुं अन्वेषते—उद्युङ्क्ते स्म । एवमादौ भूतार्थसिद्धये सर्वत्रस्मशब्दोऽध्याहार्य इति प्रागेवावादिष्म ॥ १ ॥

**उपस्पृश्योदकं सम्यक् मुनिः स्थित्वा कृताञ्जलिः ।**
**प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम् ॥ २ ॥**

उद्योगस्वरूप एवाभिनीयते—उपेति । 'उपस्पर्शस्त्वाचमनम्' इत्यमरः । 'सम्यक् हृदयङ्गमाभिरद्भिः त्रिः प्रोक्ष्य द्विः परिमृज्य' इत्यादिधर्मोपदिश्यमानरीत्या । प्राचीनेति । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति स्वार्थे खः । दर्भेषु स्थित्वेति योजना । अम्बायोगजेनेति शेषः । धर्मेण गतिम्—रामादीनां जन्मादिचरितरूपं अन्वेषते स्म—चिन्तयति स्म ॥ २ ॥

---

* पूर्वसर्गे 'चकार' (श्लोक ४२) इत्युक्तमेवार्थमस्मिन् सर्गे विशदयति ।

[1] समग्रं—ङ. च.

अन्विष्टकार्यसिद्धिरुच्यते :—

**रामलक्ष्मणसीताभी राज्ञा दशरथेन च ।**
**सभार्येण सराष्ट्रेण यत्प्राप्तं तत्र तत्त्वतः ॥ ३ ॥**

**हसितं भाषितं चैव गतिर्यावच्च चेष्टितम् ।**
**तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति ॥ ४ ॥**

भार्याः—राजभार्याः कौसल्याद्याः । रामादिसहितेन दशरथेन यद्वृत्तं—राज्यपरिपालनादिरूपम् । प्राप्तं—प्राप्तानुष्ठानम् । अन्ततो यच्च हसितादिकमपि तत्सर्वम्, धर्मवीर्येण—भगवद्योगबलेन, तत्र—समाधौ, तत्वतः पश्यति स्म ॥ ३-४ ॥

**स्त्रीतृतीयेन च तथा यत्प्राप्तं चरता वने ।**
**सत्यसन्धेन रामेण तत्सर्वं चान्ववैक्षत ॥ ५ ॥**

न केवलमेतावत् । अपि तु *सलक्ष्मणस्य यस्य रामस्य स्त्री—सीता तृतीया सोऽसौ स्त्रीतृतीयः ॥ ५ ॥

**ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः ।**
**पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा ॥ ६ ॥**

समाधिदर्शनस्य च † सन्ध्यादर्शनवत् द्राक् निमेषान्निवर्तनप्रसङ्गात् अकार्यकरतेत्याशङ्क्य भगवद्विशेषानुग्रहमूलत्वान्नैवमित्युच्यते—तत इति । सकलकालदेशसदाव्यापिभगवत्तादात्म्ययोगो योगस्सर्ववेदार्थसिद्धः । तत्र—योगे, पुरा—निजकाव्यकृतिकालात्पुरा यद्वृत्तं रामादिविषयकं यच्चागामि वर्तमानं च तत्सर्वं करतलामलकवत् सुव्यक्तं सुदृढानुभवं च पश्यति स्म ॥ ६ ॥

---

*लक्ष्मणो द्वितीयः, सीता तृतीयेति यावत् । † सन्ध्या-स्वप्नः.

**तत्सर्वं तत्त्वतो दृष्ट्वा धर्मेण स महामतिः ।**
**अभिरामस्य रामस्य तत्सर्वं कर्तुमुद्यतः ॥ ७ ॥**

एवं चिकीर्षितकृतिकरणसमग्रसामग्रीकत्वात्तत्र प्रवर्तत इत्युच्यते—तत्सर्वं कर्तुमिति । तत्सर्वं विषयीकृत्य काव्यं कर्तुमित्यर्थः ॥ ७ ॥

**कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरं ।**
**समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम् ॥ ८ ॥**

न केवलं रामचरितं, अपि तु कामार्थः-कामपुरुषार्थप्रयोजनो यो गुणो वर्णनीयधर्मः शृङ्गारलक्षणः, तेन संयुक्तम् । एतेन काव्यलक्षणयुक्तत्वं समर्थितम् । तथा धर्मार्थः धर्मपुरुषार्थसिद्धिप्रयोजनो यो गुणो वर्णनीयधर्मः तस्य विस्तरेण वर्णनोपेतं, बहुव्रीहिः । अत एव रत्नाढ्यं समुद्रमिव, धर्मप्रयोजनवर्णनान्येवेह रत्नानि । तदुपगतेत्याद्युक्तलक्षणकत्वेन सर्वेषां श्रुतिमनोहरम् । [1] कश्चित्तु सर्वाभिषड्जातिसप्तस्वरसम्बन्धिनीभिः कान्ताभिः द्वाविंशतिश्रुतिभिः मनोहरम् । अत्र शाण्डिल्यः—' सम्प्रयुक्तो विधानेन तथा नाडीसमुद्भवः । सुखहेतुर्ध्वनिर्यस्सः श्रुतिरित्यभिधीयते ॥ कान्ता प्रभावती सिद्धा सुप्रभा चैव षड्जगाः । उग्रा शिखा च दीप्ता च स्युरेता ऋषभानुगाः ॥ गान्धारानुगते द्वे तु नीह्रादिह्लादिनीति च । क्षान्तिस्सर्वसहा धीरा विभूतिर्मध्यमानुगाः ॥ मालिनी चपला लोला सर्वरत्नप्रभावती । इमाश्चतस्रः श्रुतयः पञ्चमानुगताः स्मृताः ॥ विकल्पिनी च शान्ता च हृदयोन्मालिनी तथा । एतास्तु तिस्रः श्रुतयो धैवतानुगमा मताः ॥ विस्तारिणी प्रसन्ना(पद्मा) च निषादानुगते उभे ॥' इतीत्यादि तत्रैव सुस्पष्टम् । तन्त्रीनाडीसमुत्पन्ना(त्स्थाना)दखिलधर्मैश्श्रुतितद्भेदैर्गति-

---

[1] रामानुजः.

विशेषोपयुक्तैः काव्यस्य मनोहरत्वम् । एवमधिकमसङ्गतमेव स्वक-मिथ्यापाण्डित्यप्रकटनाय वृथा ग्रन्थगौरवाय च ब्रूते । तथा प्रकृतिप्रत्य-यविवेचनाबलादर्थविशेषसिद्धिस्थलेऽपि निस्सन्देहप्रकृतिप्रत्ययस्थलेऽपि व्याकरणं लिखति । पदार्थसन्देहरहितस्थलेऽपि निघण्टून् लिखति । मिथ्यापाण्डित्यप्रकटनायै(न एव)व, प्रकटयतु तत्प्रीतिमद्भ्यः ॥ ८ ॥

**स यथा कथितं पूर्वं नारदेन महात्मना ।**
**रघुवंशस्य चरितं चकार भगवान्मुनिः ॥ ९ ॥**

स इति । रघुवंशस्येति बहुव्रीहिः । रामस्येति यावत् । चरितं—तद्विषयककाव्यं इत्यर्थः ॥ ९ ॥

**जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलताम् ।**
**लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यशीलताम् ॥१०॥**

अथ योगतस्स्वोपदृष्टो नारदश्रुतादभ्यधिको यो विशेषस्तदनु-क्रमः क्रियते सामान्यतः काव्यप्रतिपाद्यार्थपरिज्ञानाय—जन्मेति । *सुमहत् वीर्यं यस्मिन् जन्मनि तत्तथा । पुत्रकामेष्टिप्राजापत्योपनीत-भगवद्ब्रह्मतेजोवशवीर्यरूपवीर्यमूलकं यद्रामस्य जन्मावतरणं योगदृष्टं तच्चकारोत्तमे काव्ये इति सर्गान्तार्धेन सम्बन्धः । तथा तदन्तप्रतिपाद्यं सर्वं । तच्चकारेति—तत्प्रतिपादनं चात्र चकारेत्यर्थः । सर्वानुकूलतां सर्वप्राणिनामिहामुत्रार्थानुकूलमनोवाक्कायव्यापरताम् । प्रत्येकं मामको मामक इति अभिस्नेहास्पदताम् । अत्र हेतुः—क्षान्त्यादित्रयम् । शक्यप्रतिक्रियापकारेष्वपि तदपकारोपेक्षा—क्षान्तिः । भृत्येष्वपि परु-षवागादिराहित्यं सौम्यता । सत्यशीलतां—सत्यवचनप्रधानसद्वृत्तताम् । "शीलं स्वभावे सद्वृत्ते"॥ १० ॥

---

* जन्मनः सुमहत्वं दशरथमहातपोबललभ्यत्वं, विष्णोरवतारत्वं च । वीर्यं ताटका-ताटकेयादिहननक्षमं बलम्—गो.

**नाना चित्राः कथाश्चान्या विश्वामित्रसमागमे ।**
**जानक्याश्च विवाहं च धनुषश्च विभेदनम् ॥ ११ ॥**

विश्वामित्रसमागमे नानाचित्रकथाः, लौकिक्यः । धनुर्भेद-जानकीविवाहयोः क्रमेणान्वयो द्रष्टव्यः । तथाग्रेपि क्वचित् । जानक्याश्चेति चकाराद्रूर्मिळादेर्विवाहः ॥ ११ ॥

**रामरामविवादं च गुणान् दाशरथेस्तथा ।**

रामेण—भार्गवेण रामस्य विवादः । तथा गुणानिति भार्गवेणोपदिश्यमानपरमपुरुषत्वादिगुणान् अयोध्याकाण्डादौ वक्ष्यमाणान् राज्याभिषेकार्हगुणांश्च ॥

**तथाऽभिषेकं रामस्य कैकेय्या दुष्टभावताम् ॥ १२ ॥**
**व्याघातं चाभिषेकस्य रामस्य च विवासनम् ।**

व्याघातो विघ्नः ॥ १२ ॥

**राज्ञः [1]शोकविलापं च परलोकस्य चाश्रयम् ॥ १३ ॥**
**[2]प्रकृतीनां विषादं च प्रकृतीनां विसर्जनम् ।**

प्रकृतीनां विसर्जनम् । विवासकाले स्वानुयायिपौराणां प्रतिनिवर्तनम् ॥ १३ ॥

**निषादाधिपसंवादं सूतोपावर्तनं तथा ॥ १४ ॥**
**गङ्गायाश्चापि सन्तारं भरद्वाजस्य दर्शनम् ।**
**भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ॥ १५ ॥**
**वास्तुकर्म [3]निवेशं च भरतागमनं तथा ।**
**प्रसादनं च रामस्य पितुश्च सलिलक्रियाम् ॥ १६ ॥**

---

[1] शोकं विलापं—ङ.　　[2] प्रकृतेस्सामवादं च—ङ.　　[3] विवेशं—ङ.

वास्तुकर्म--चित्रकूटे पर्णशालानिर्माणम् । तत्पूर्वकस्तत्र निवेशः । तथा प्रसादनं च रामस्येति । भरतेनेति शेष ॥ १६ ॥

**पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनम् ।**
**दण्डकारण्यगमनं विराधस्य वधं तथा ॥ १७ ॥**

पादुकयोरग्र्यसिद्धिकः – स्ववत्पूज्यतासिद्धिकः– अभिषेकः—* स्वपादक्रमणरूपिणी अभिषेकभावना । तथा–नन्दिग्रामे निवासनमिति । भरतस्येति शेषः । स्वार्थे णिः । तथाऽग्रेऽपि ॥ १७ ॥

**दर्शनं शरभङ्गस्य सुतीक्ष्णेन समागमम् ।**
**† अनसूया[1]समस्यामप्यङ्गरागस्य चार्पणम् ॥ १८ ॥**

अनसूयासमस्यां–अनसूयया अत्रिपत्न्या समस्या–सङ्गमः । सीताया विशिष्येति शेषः । 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्' इत्यादिशब्दादस्यतेः 'स्त्रियाम्' इति यक्प्रत्ययनिपातः ॥१८॥

**[2]अगस्त्यवचनं चैव जटायोरभिसङ्गमम् ।**
**शूर्पणख्याश्च संवादं विरूपकरणं तथा ॥ १९ ॥**

अगस्त्यवचनमायुधदानादिविषयम् ॥ १९ ॥

---

* पादुकाग्र्याभिषेकं रामकर्तृकमिति भावेनैवं व्याख्यातं । एवं सति नन्दिग्रामनिवासनमित्यत्रापि रामकर्तृको भरतस्य नन्दिग्रामनिवासादेशो विवक्षित इति व्याख्येयं अवैरूप्याय ॥ परंतु 'तवागमनमाकाङ्क्षन् वसन्वै नगराद्बहिः' (अयो. 112-24) इति भरतप्रार्थनां खलु रामोऽनुमेने ॥ वस्तुतस्तु पादुकाग्र्ययोः–पादुकाश्रेष्ठयोः भरतकृतमभिषेकं—इत्यर्थः स्वरसः ॥ † यद्यपि–इदं विराधवधात्पूर्वमेव अथापि नात्र क्रमो विवक्षितः ।

[1] सहास्या–ङ. [2] दर्शनं चाप्यगस्त्यस्य धनुषो ग्रहणं तथा । अनन्तरं पञ्चवट्याश्च गमनं शूर्पणख्याश्च दर्शनम् ॥ इदमर्धं कुत्रचिदधिकं दृश्यते ॥ -ङ.

**वधं खरत्रिशिरसोरुत्थानं रावणस्य च ।**
**मारीचस्य वधं चैव वैदेह्या हरणं तथा ॥ २० ॥**

खरत्रिशिरसोरिति दूषणादेरप्युपलक्षकः । उत्थानं—सीतापहारार्थोद्योगः ॥ २० ॥

**राघवस्य विलापं च गृध्रराजनिबर्हणम् ।**
**कबन्धदर्शनं चैव पम्पायाश्चापि दर्शनम् ॥ २१ ॥**
**शबरीदर्शनं चैव [1] फलमूलाशनं तथा ।**
**प्रलापं चैव पम्पायां [2] हनूमद्दर्शनं तथा ॥ २२ ॥**
**ऋश्यमूकस्य गमनं सुग्रीवेण समागमम् ।**
**प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम् ॥ २३ ॥**

प्रत्ययोत्पादनं—सालादिभेदेन सुग्रीवस्य विश्वासजननम् । सख्यमिति । रामसुग्रीवयोरिति शेषः । विग्रहमिति । युद्धं, वैरानुकथनमिति यावत् ॥ २३ ॥

**वालिप्रमथनं चैव सुग्रीवप्रतिपादनम् ।**
**ताराविलापं समयं [3] वर्षरात्रिनिवासनम् ॥ २४ ॥**

प्रतिपादनमिति । राज्ये स्थापनमिति यावत् । शरदि कार्यार्थोद्योगः कार्य इति रामसुग्रीवकृतस्सङ्केतः—समयः । वर्षरात्रिनिवासनमिति । विरहदुःखपीडया रामस्येति शेषः ॥ २४ ॥

***कोपं राघवसिह्मस्य बलानामुपसंग्रहम् ।**
**दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ॥ २५ ॥**

---

* कोपः सुग्रीवविषयकः.

[1] हनूमद्दर्शनं—ङ.　[2] राघवस्य महात्मनः—ङ.　[3] वर्षरात्र—ङ.

पृथिव्याश्च निवेदनमिति। सीतादर्शनार्थमन्वेषणीयपृथिवीदेशविशेषोपदेशः ; सुग्रीवकृत इति शेषः ॥ २५॥

**अङ्गुलीयकदानं च ऋक्षस्य बिलदर्शनम्।**
**प्रायोपवेशनं चैव संपातेश्चापि दर्शनम् ॥ २६ ॥**

बिलदर्शनं हनूमदादेरिति शेषः। तथाग्रेऽपि ॥ २६ ॥

**पर्वतारोहणं चैव सागरस्यापि लङ्घनम्।**
**समुद्रवचनाच्चैव मैनाकस्य च दर्शनम् ॥ २७ ॥**

समुद्रवनादिति। विश्रमार्थं प्रेषितस्येति शेषः ॥ २७ ॥

***[1]देवताभिप्रसादश्च छायाग्राहस्य दर्शनम्।**
**सिंहिकायाश्च निधनं लङ्कामलयदर्शनम् ॥ २८ ॥**

देवतानामभिप्रसादो देवताभिप्रसादनम्। लङ्कामलयो नामलङ्काद्वीपगतः कश्चिद्गिरिः ॥ २८॥

**रात्रौ लङ्काप्रवेशं च एकस्य च विचिन्तनम्।**
**आपानभूमिगमनमवरोधस्य दर्शनम् ॥ २९ ॥**

एकस्य–असहायस्य। आपानं–पानभूमिः, तद्गमनम् तथा। रावणस्येति शेषः। तथाग्रेऽपि ॥ २९ ॥

**दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम्।**
**अशोकवनिकायानं सीतायाश्चापि दर्शनम् ॥ ३० ॥**
**अभिज्ञानप्रदानं च सीतायाश्चापि भाषणम्।**
**राक्षसीतर्जनं चैव त्रिजटास्वप्नदर्शनम् ॥ ३१ ॥**

अभिज्ञायतेऽनेनेत्यभिज्ञानं–अङ्गुळीयकम् ॥ ३१ ॥

---

*सुरसापरीक्षणानन्तरं देवैः कृतोऽनुग्रहो वा। क्रमस्तु न विवक्षितः।

[1] राक्षसीतर्जनं चैव–ङ. च.

**मणिप्रदानं सीताया वृक्षभङ्गं तथैव च ।**
**राक्षसीविद्रवं चैव किङ्कराणां निबर्हणम् ॥ ३२ ॥**

मणिप्रदानमिति । रामं प्रतीति शेषः ॥ ३२ ॥

**ग्रहणं वायुसूनोश्च लङ्कादाहाभितर्जनम् ।**
**प्रतिप्लवनमेवाथ मधुनिर्यातनं तथा ॥ ३३ ॥**

लङ्कादाहश्च अभितर्जनञ्च तथा । तत्र राक्षसानामिति शेषः । प्रतिप्लवनं—पुनः सागरतरणम् । मधूनां—क्षौद्राणाम् ॥ ३३ ॥

**राघवाश्वासनं चैव मणिनिर्यातनं तथा ।**
**सङ्गमं च समुद्रेण नलसेतोश्च बन्धनम् ॥ ३४ ॥**

निर्यातनं—दानम् । नलबद्धोः यस्सेतुः स नलसेतुः ॥ ३४ ॥

**प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम् ।**
**विभीषणेन संसर्गं वधोपायनिवेदनम् ॥ ३५ ॥**

प्रतारं—भावे घञ् । विभीषणसंसर्गः सेतुबन्धनात्पूर्वम् ॥ ३५ ॥

**कुम्भकर्णस्य निधनं मेघनादनिबर्हणम् ।**
**रावणस्य विनाशं च सीतावाप्तिमरेः पुरे ॥ ३६ ॥**
**विभीषणाभिषेकं च पुष्पकस्य च दर्शनम् ।**

*अरेः पुरे सीतावाप्तिं विभीषणाभिषेकं चेत्यन्वयः ॥ ३६ ॥

**अयोध्यायाश्च गमनं भरद्वाजसमागमम् ।**
**प्रेषणं वायुपुत्रस्य भरतेन समागमम् ॥ ३७ ॥**

---

* अरेः पुर इयेतत् विभीषणाभिषेकं च इत्यत्राप्यन्वेति ।

**रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम् ।**
**स्वराष्ट्ररञ्जनं चैव वैदेह्याश्च विसर्जनम् ॥ ३८ ॥**

अभ्युदयः—उत्सवः ॥ ३८ ॥

**अनागतं च यत्किञ्चिद्रामस्य वसुधातले ।**
***[1] तच्चकारोत्तमे काव्ये वाल्मीकिर्भगवानृषिः ॥ ३९ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे तृतीयः सर्गः

---

अनागतं—ब्राह्मणपुत्रोज्जीवनाश्वमेधयागादि । उत्तमे काव्य इति । समग्रकाव्यलक्षणलक्षितत्वात् काव्योत्तमे, पूर्वोत्तरविभागवतीति शेषः ॥ ३९ ॥ [एकोनचत्वारिंशत्]

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे तृतीयः सर्गः

---

### अथ चतुर्थः सर्गः

**प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।**
**चकार चरितं कृत्स्नं विचित्रपदमर्थवत् ॥ १ ॥**

अथैवं कृतस्य काव्यस्य विना प्रचारं प्रयोजनाभावात् तत्रापि राजसत्काररहिता विद्या नातिप्रकाशते इति न्यायेनाधिराजास्थानीसम्प्राप्तिं विना पूर्वं प्रचारासम्भवात् चतुर्थेन काव्यस्य सार्वभौमास्थानीसम्प्राप्तिः तच्छिष्यद्वारिका प्रतिपाद्यते—प्राप्तेत्यादि । प्राप्तराज्यस्येति बहुव्रीहिः । रामस्य चरितमिति । तद्विषयककाव्यमिति यावत् ॥ १ ॥

---

* उत्तरे काव्ये—उत्तरकाण्डे—**गो.**

[1] तच्चकारोत्तरे—**ङ. च.**

**चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः।**
**तथा सर्गशतं पञ्च षट् काण्डानि तथोत्तरम् ॥ २ ॥**

अथ श्लोकसङ्ख्यापरिच्छेदं प्रक्षेपादिदोषपरिहाराय, सर्गसङ्ख्यापरिच्छेदं च अस्थाने सर्गविच्छेदादितः सर्गन्यूनाधिक्यपरिहाराय च कुरुते—चतुर्विंशदित्यादि। इयं श्लोकानां चतुर्विंशत्सहस्रसङ्ख्या—'तपस्स्वाध्याय' इत्यारभ्य 'तद्ब्रह्माप्यन्वमन्यत' इत्युत्तररामायणसमाप्तिग्रन्थस्य श्लोकराशेरेव, न तु षट्काण्डीयश्लोकानाम्। अत्र कः काण्डः कियच्छ्लोकः? उत्तरश्च कियच्छ्लोकः? इत्यत्र प्राचीनं सोत्तरकाण्डश्लोकसङ्ख्यापरं श्लोकं लिखामः—

"ग्रन्थास्स्युर्बालकाण्डे निजखुरगणिता मान्यभावा द्वितीये
रङ्गे सा श्रीस्तृतीये नरतरुगणिता स्युश्चतुर्थे च काण्डे।
काण्डे स्युः पञ्चमेऽपि स्तननगगणिता नाळधामा च षष्ठे
भोगी रागी परस्मिन् ससुरवर इति स्यात्समस्ता च सङ्ख्या ॥"

परस्मिन्निति—उत्तरकाण्ड इति यावत्। ससुरेत्येवं सङ्ख्याभ्यधिकः सप्तसप्तत्युत्तरद्विशतसङ्ख्याभ्याधिकः उक्तसङ्ख्याभ्याधिक्यकृद्द्वात्रिंशदक्षरप्रमाणेन श्लोकानां परिगणने त्रिष्टुप्जगत्यादिछन्दोभेदवशात् भवतीत्याहुः। तथा सर्गशतं पञ्चेति। पङ्क्तिविंशतीत्यादिना बहुसङ्ख्येयार्थत्वेऽपि शतमिति निपातः। पञ्चसङ्ख्यासङ्ख्येयं सर्गशतम्। तथा इयं षट्काण्डीयसर्गसङ्ख्या। कः काण्डः, कियत्सर्गः इत्यत्रापि तत्सङ्ख्यापरं प्राचीनं श्लोकं पठामः—

"काण्डे किलाद्ये संस्थानं द्वितीये धान्यकानि तु।
मासं तृतीये सन्तस्तु चतुर्थे पञ्चमे जितम्।
षष्ठं यागायनं रागायनं वातायकोऽन्तिमे ॥"

इति। अत्रापि षट्त्रिंशत्सर्गाधिक्यं षट्काण्ड्याः प्रतीयते। अत्र

षट्काण्डसर्गविषयिणी महासङ्ख्यैव पञ्चशती साक्षादुक्ता। षट्त्रिंशद्रूपिणी अल्पसङ्ख्या तु मुनिना उपेक्षिता। एकसर्गस्य द्विधा विच्छेदे द्वयोस्सर्गयोरेकतया मेळनेऽपि न कथञ्चन भारोऽस्ति। ग्रन्थसङ्ख्याया अपरिक्षयात् कथासन्दर्भस्याविच्छेदाच्च। इदमेवोपलक्षणं उत्तरकाव्यस्य सर्गसङ्ख्यानुपदेशेन द्योत्यते। यच्च श्लोकानां ससुरसङ्ख्याभ्यधिकत्वं पुरातनैर्दृष्टं, तत्रापि अक्षरविषयकाणां सहस्राणां महासङ्ख्यानामेव परिच्छेदो दुःखतः कृतः। सूक्ष्मा ससुरसङ्ख्या तु यथा द्योतिता तथान्यदप्यल्पं श्लोकजातमस्ति, तथा सर्गसङ्ख्यायामनुक्तसङ्ख्यासंग्रहाय तथाशब्दस्तत्रापि प्रयुक्तः। वयंतु श्लोकान् प्रतिसर्गं सङ्गणय्य सङ्कलय्य पश्चान्महासङ्ख्यां परिच्छेत्स्यामः। वस्तुतस्तु यथा चरणव्यूहे ऋग्वेदमण्डलवर्गपदसङ्ख्योपदिष्टान्यूनाधिकरहिता अनुभूयते, एवमेव च ऋषीणां सङ्ख्योपदेशकत्वे कापि सङ्ख्या न न्यूनाधिका स्यात्। न ससुरसङ्ख्याग्रन्थः प्रक्षिप्त इति शक्यवादः, साहसमात्रत्वात्। षट्त्रिंशत्सर्गसङ्ख्या च भ्रान्तिकृतेति दुर्वचा। अपि च ग्रन्थसङ्ख्यामुत्तरस्य वदन् तत्सर्गसङ्ख्यां च अवक्ष्यत्। *अतः प्राचीनेन केनचित् सर्वश्लोकसङ्ख्यागणकेन च स्मार्तश्रोत्रियश्लोकवत् स्वमतिसौकर्यासिद्ध्ये स्थूलदृशा सङ्ख्यापरिज्ञानाय कृतोऽयं श्लोको ग्रन्थसमीपे च लिखितः। तत्तु मूलग्रन्थान्तर्गतमिति भ्रान्त्या स्वेषामपि सामान्यतस्सङ्ख्यापरिज्ञानमस्त्विति प्राचीनैरपि ग्रन्थान्तः परिक्षिप्तः। सर्वथाऽयं श्लोकः प्रतिक्षिप्त एव। अस्य व्याख्याने प्रत्यक्षस्वप्नदर्शननिमित्तवैषम्यतश्च वयं प्रक्षिप्तत्वं निरचैषिष्म ॥ २ ॥

**कृत्वापि तन्महाप्रज्ञः सभविष्यं सहोत्तरम्।**
**चिन्तयामास को न्वेषः प्रयुञ्जीयादिति प्रभुः॥ ३॥**

---

* कतककृतस्तु प्रक्षिप्तोऽयं श्लोको न त्वार्ष इत्याहुः—ति.

महाप्राज्ञ इति। प्राज्ञः—'प्रज्ञाश्रद्धा' इत्यादिना णः। तेन महच्छब्दस्य समासः कर्मधारयः। सर्भविष्यमिति। 'लटः शतृ'—इति शत्रभावश्छान्दसः। भविष्यदश्वमेधादिचरिताख्यानोपेतं। अत एव सहोत्तरं, उत्तरकाण्ड एव तत्प्रतिपादनात् तेनैकग्रन्थ्यम्। तं महाकाव्यमपि सत्यसङ्कल्पत्वात् कृत्वा, प्रभुः—प्रवर्तनादिशक्तिमान् ऋषिः, को न्वेतत्काव्यं प्रयुञ्जीयात्—पठित्वाऽऽस्थानीषु प्रचारयेदिति चिन्तयामास। प्रोपाभ्यां इत्यात्मनेपदाभावः परस्मैपदे यासुटि ईडागमश्च छान्दसः। परस्मैपदे सीयुडार्ष इति कश्चित्। नैतत्सीयुट्, एवं रूपयोगात् ॥ ३ ॥

**तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः।**
**अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ ॥ ४ ॥**

तस्य भावितः—पूजितः आत्मा यस्य स तथा। अगृह्णीतामिति। अजादावपि 'ईहल्यघोः' इतीत्वं छान्दसम्। मुनिवेषाविति। राजकुमारयोरपि आश्रमस्थित्युपाधिवशादिति शेषः। कुशश्च लवश्च कुशीलवौ। सामासिकः कुशीभाव आर्षः ॥ ४ ॥

**कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ।**
**भ्रातरौ स्वरसंपन्नौ ददर्शाश्रमवासिनौ ॥ ५ ॥**
**स तु मेधाविनौ दृष्ट्वा वेदे तु परिनिष्ठितौ।**
**वेदोपबृह्मणार्थाय तावग्राहयत प्रभुः ॥ ६ ॥**

स तु मेधाविनौ 'धीर्धारणावती मेधा' 'अस्मायामेधा'इति विनिः। उपबृह्मणं-उपोद्बलकं, वेदप्रतिपाद्यधर्माणामिह सुबोधतया प्रतिपादनात्। अत्र वेदात सामान्यावगतार्थस्य परिज्ञाने बुद्धिसौकर्यमिति उपोद्बलकत्वं काव्यस्य ॥ ६ ॥

एवंभूतपौलस्त्यवधकाव्यस्य शिष्यमुखात् प्रवृत्त्यपदेशः— पाठ्य इत्यादि। आसर्गसमाप्ति पठेर्भावे ण्यः कृतः। पाठ्ये—सामान्यतश्चित्ताह्लादार्थे पठने, गेये 'भव्यगेय' इति निपातः, प्राक्प्रसङ्गोक्ततन्त्रीनाडीसमुत्थश्रुतिभेदोपेततया यत् गानं तत्रोभयत्र च मधुरं श्रोत्रसुखोत्पादनाद्यनुकूलम्। षड्जादयस्सप्तस्वरास्सामान्यतो जातिसंज्ञाः। ताभिर्जातिभिस्सप्तभिर्बद्धम्। गानसमये गातॄणां सप्तस्वरविशिष्टगानानुरोधीति यावत्। अत्र जातिलक्षणे शाण्डिल्यः "सर्वगीतसमाधानो जातिरित्यभिधीयते" इति। गीतं-गानं स समाधीयते येषु सप्तस्वरेषु स सर्वोपि निषादादिसप्तस्वरो जातिरित्यभिधीयत इत्यर्थः। अयमेवार्थस्तेनोत्तरश्लोकेन प्रतिपादितः—"षाड्जी चैवाथ नैषादी धैवती पञ्चमी तथा। माध्यमी चैव गान्धारी साप्तमी त्वार्षभी मता॥"

व्यापारानुरोधितया स्वराणां प्रयोगैकाग्र्यं—अवधानम्। स्थानं च मूर्च्छना च स्थानमूर्च्छने, तत्तत्त्वपरिज्ञाने कोविदौ—समर्थावित्यर्थः। तथाऽऽह स्थानादिस्वरूपं शाण्डिल्यः—"यदूर्ध्वं हृदयग्रन्थेः कपोलफलकादयः। प्राणसञ्चरणं स्थानं स्थानमित्यभिधीयते" इति। तथा—'यत्रैव स्युः स्वराः पूर्णा मूर्च्छना सेत्युदाहृता'। यत्रैवेति। गीतिविशेष इत्यर्थः। स्वराः पूर्णा इति। एकेन गानकर्त्रा षड्जादिस्वरानामविलम्बप्रयोजना पूर्तिः—पूर्णता। रूपिणौ—प्रशंसायामिनिः। प्रशस्तरूपवन्तौ। बिम्बात्—सूर्यादेः, उद्धृतौ—उत्पन्नौ, बिम्बौ—प्रतिबिम्बौ॥ ११॥

> **तौ राजपुत्रौ कार्त्स्न्येन धर्म्यमाख्यानमुत्तमम्।**
> **वाचोविधेयं तत्सर्वं कृत्वा काव्यमनिन्दितौ॥ १२॥**

काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ।
पौलस्त्यवधमित्येव चकार चरितव्रतः ॥ ७ ॥

सीताचरितप्रतिपादकमपि काव्यं कृत्स्नमपि पौलस्त्यवधमित्येव चकार। तथा च शिशुपालवधे माघकाव्यं इतिवत् पौलस्त्यवधे रामायणं इत्येव काव्यस्य विशिष्य प्रतिपद्यांशस्सर्गान्तेषु वक्तव्य इत्यावेदितम् । इदमेव चोक्तं प्रागपि 'दशशिरसश्च वधं निशामयध्वम् ।' इति ॥ ७॥

पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् ।
जातिभिस्सप्तभिर्युक्तं तन्त्रीलयसमन्वितम् ॥ ८ ॥
रसैः श्रृङ्गारकरुणहास्यरौद्रभयानकैः ।
वीरादिभी रसैर्युक्तं काव्यमेतदगायताम् ॥ ९ ॥



इति । तन्त्रीलयसमन्वितमिति । 'पादबद्धोक्षरसमस्तन्त्रीलयसमन्वितः' इति द्वितीयसर्गे व्याकृतः । वीरादीत्यादिशब्देन बीभत्साद्भुतशान्तिरससंग्रहः ॥ ८ ॥ ९ ॥

तौ तु गान्धर्वतत्त्वज्ञौ स्थानमूर्छनकोविदौ ।
भ्रातरौ स्वरसंपन्नौ गन्धर्वाविव रूपिणौ ॥ १० ॥
रूपलक्षणसंपन्नौ मधुरस्वरभाषिणौ ।
बिम्बादिवोत्थितौ बिम्बौ रामदेहात्तथाऽपरौ ॥ ११ ॥

तौ गान्धर्वस्य—समग्रनाट्यस्य तत्त्वज्ञौ तथा,—"पदस्थस्वरसङ्घातस्ताळेन सुमितस्तथा। प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते इति", नृत्तपदविक्रमानुरोधितया तिष्ठतीति पदस्थस्वरः । निषादादिमृदङ्गताळ-

ऋषीणां च द्विजातीनां साधूनां च समागमे ।
यथोपदेशं तत्त्वज्ञौ जगतुस्सुसमाहितौ ॥ १२ ॥
महात्मानौ महाभागौ लक्ष्यलक्षणलक्षितौ ।

तौ धर्म्यं—धर्मादनपेतं । वाचोविधेयमिति । विनापि पुस्तकं पाठयोग्यमिति यावत् । जगतुरिति । गानं कृतवन्ताविति यावत् । महाभागौ । पूज्याविति यावत् । लक्ष्येति । सामुद्रिकशास्त्रविद्भिः यल्लक्ष्यं—परीक्ष्यं लक्षणं—सुलक्षणमस्ति तेन लक्षितौ तथा ॥ १३ ॥

तौ कदाचित्समेतानामृषीणां भावितात्मनाम् ।
मध्येसभं समीपस्थौ इदं काव्यमगायताम् ॥ १४ ॥

भावितः—पूतः ॥ १४ ॥

तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः ।
साधु साध्विति तावूचुः परं विस्मयमागताः ॥ १५ ॥

बाष्पः—आनन्दबाष्पः । साधुसाध्विति योजना ॥ १५ ॥

ते प्रीतमनसः सर्वे मुनयो धर्मवत्सलाः ।
प्रशशंसुः प्रशस्तव्यौ गायमानौ कुशीलवौ ॥ १६ ॥
अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः ।
चिरनिर्वृत्तमप्येतत् प्रत्यक्षमिव दर्शितम् ॥ १७ ॥

प्रशस्तव्याविति । इडभावनलोपौ छान्दसौ । चिरनिर्वृत्तमप्येतदिति । आभ्यां प्रतिपाद्यमानं रावणवधान्तरामचरितमिति यावत् ॥ १७ ॥

प्रविश्य तावुभौ सुष्ठु तथाभावमगायताम् ।
सहितौ मधुरं[1] तारं संपन्नं स्वरसंपदा ॥ १८ ॥

---

[1] रक्तं—ङ. च.

*प्रविश्य, तत्र ऋष्यादिसमीपमिति शेषः । तारं—अत्युच्चैः सम्पन्नं यथा तथा अगायतामिति पूर्वेणान्वयः ॥ १८ ॥

एवं प्रशस्यमानौ तौ तपःश्लाघ्यैर्महर्षिभिः ।
संरक्ततरमत्यर्थं मधुरं तावगायताम् ॥ १९ ॥

एवमिति । अहो गीतस्येत्याद्युक्तरीत्येति यावत् ॥ १९ ॥

प्रीतः कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ ।
[1]प्रसन्नो वल्कलं कश्चित् ददौ ताभ्यां महायशाः ॥ २० ॥

संस्थित इति । तत्र समाज इति शेषः । ॥ २० ॥

आश्चर्यमिदमाख्यानं मुनिना संप्रकीर्तितम् ।
परं कवीनामाधारं समाप्तं च यथाक्रमम् ॥ २१ ॥
अविगीतमिदं गीतं सर्वगीतिषु कोविदौ ।
आयुष्यं पुष्टिजननं सर्वश्रुतिमनोहरम् ॥ २२ ॥
प्रशस्यमानौ सर्वत्र कदाचित्तत्र [2]गायनौ ।
रथ्यासु राजमार्गेषु ददर्श भरताग्रजः ॥ २३ ॥

---

* भावं सुष्ठु प्रविश्य—अवगाह्य—गो.

[1] एतदनन्तरं—अन्यः कृष्णाजिनमदात् यज्ञसूत्रं तथाऽपरः । कश्चित्कमण्डलुं प्रादात् मौञ्जीमन्यो महामुनिः ॥ बृसीमन्यस्तदा प्रादात् कौपीनमपरो मुनिः । ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः ॥ काषायमपरो वस्त्रं चीरमन्यो ददौ मुनिः । जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदान्वितः ॥ यज्ञभाण्डमृषिः कश्चित् काष्ठभारं तथापरः । औदुम्बरीं बृसीमन्यः स्वस्ति केचित्तदाऽवदन् ॥ आयुष्यमपरे प्राहुः मुदा तत्र महर्षयः ॥ ददुश्चैवं वरान् सर्वे मुनयस्सत्यवादिनः ॥ इत्यधिकं—ङ.   [2] गायकौ—ङ.

परं कवीनामाधारमिति। काव्यलक्षणालङ्कारादिविषये दृष्टान्ततया प्रदर्शनोपयुक्तत्वात्। हे सर्वगीतेषु कोविदौ कुशीलवौ! यथाकृतं मुनिना तथैवावधृत्य अविगीतं—अनवद्यं यथा तथा युवाभ्यामिदं आयुष्यादिगुणकं काव्यं गीतमित्येवं प्रशस्यमानौ। तत्र—रथ्यादौ। गायिनौ, 'गस्थकन्' 'ण्युट् च' इति गायतेः कर्तरि ण्युट्, गानं कुर्वाणौ भरताग्रजः—रामः ददर्श ॥ २३ ॥

**स्ववेश्म चानीय ततो भ्रातरौ स कुशीलवौ।**
**पूजयामास पूजार्हौ रामः शत्रुनिबर्हणः ॥ २४ ॥**

**आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः।**
**उपोपविष्टस्सचिवैर्भ्रातृभिश्च समन्वितः ॥ २५ ॥**

सचिवादिभिः उप—समीपे उपविष्टः—व्यापारान्तररहितः ॥२५॥

**दृष्ट्वा तु रूपसंपन्नौ विनीतौ भ्रातरावुभौ।**
**उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तदा ॥ २६ ॥**

**श्रूयतामेतदाख्यानमनयोर्देववर्चसोः।**
**विचित्रार्थपदं सम्यक् गायकौ समचोदयत् ॥ २७ ॥**

अनयोरिति। सकाशादिति शेषः। समचोदयदिति। गातुमिति शेषः ॥ २७ ॥

**तौ चापि मधुरं [1]रक्तं* स्वचिन्तायतनिस्वनम्।**
**तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम् ॥ २८ ॥**

---

* स्वञ्चितः-सुतरां पूजितः आयतः-दीर्घः निस्स्वनः—आलापो यस्मिन्—**गो.** स्वचित्तायतनिस्स्वनं, स्वस्य श्रोतृचित्तस्य चानुरूपः आयतः-तारः निस्स्वनः-नादः यत्र स तथा—**ति.**

[1] व्यक्तं स्वञ्चिता—**ङ.** रक्तं स्वचित्ता—**च.**

तौ स्वचिन्तायतनिस्वनं—स्वीयकाव्यनायकस्य परमकल्याणगुण-चिन्ताजनितेनानन्देन आयतौ निस्वनौ यस्मिन्, गेयविषयसौष्ठवस्मृत्या लोकस्य गीतिनादतारत्वं लोकप्रसिद्धम्। न तयोस्तारं गातव्यमितीच्छया तारस्वनत्वमित्यनेन कश्चनातिशयः। अत्यर्थमगायतामिति योजना ॥२८॥

**ह्लादयन् सर्वगात्राणि मनांसि हृदयानि च।**
**श्रोत्राश्रयसुखं गेयं तद्बभौ जनसंसदि ॥ २९ ॥**

सर्वगात्राणीति। सर्वेषां श्रोतॄणां सर्वाणि गात्राणि। ह्लादयन्—गात्रह्लादो नाम तेषां रोमाञ्चप्रादुर्भावलक्षणः। मनसः आह्लादो नाम निद्रायामिव विस्मृतान्यव्यापारतया तद्गानश्रुतिसुखासक्तिः। हृदयं—'हृद्ययमिति हृदयम्' इत्युपनिषान्निर्वचनात् हार्दाहंभावावच्छिन्नः प्रत्यगात्मा। तस्य ह्लादो नाम भोक्तुर्मे एतद्गानश्रुतिजानन्दभोगोऽस्त्वि-त्याभिनिवेशः। श्रोत्राश्रयसुखमिति बहुव्रीहिः, गेयमन्यपदार्थः। [एकार्थोनत्रिंशत्] ॥ २९ ॥

**इमौ मुनी पार्थिवलक्षणान्वितौ**
**कुशीलवौ चैव महातपस्विनौ।**
**ममापि तद्भूतिकरं प्रचक्षते**
**महानुभावं चरितं निबोधत ॥ ३० ॥**

पुनश्चाख्यानस्यान्विष्य श्रोतव्यताप्रयोजनमुपदिशन् आदरात् पुनराख्यानश्रवणे भगवान् रामः प्रचोदयित्वा—तौ प्राग्वत् सञ्चोद्य स्वयमपि श्रोत्नानन्दसुखपरो बभूवेत्युच्यते—इमावित्यादिद्वाभ्याम्। यत्—यस्मान्महातपस्विनौ—जटावल्कलादिसम्बन्धात्, स्वरूपतस्तु

आजानुबाहुत्वादिपार्थिवलक्षणान्वितौ, इमौ कुशीलवौ मुनी अत्याश्चर्यरूपस्वभावौ प्रबन्धस्य गायकौ, चरितं काव्यप्रबन्धनं च, *महानुभावं—सुशब्दार्थालङ्कारललितसन्दर्भत्वादिविशेषवैभवेन तथा सार्वभौमविषयत्वेन महावैभववत्, अतो युष्माकं श्रेयस्करमिदम्। निबोधत—भ्वादिः बुधिः। न केवलं युष्माकम्, अपि तु ममापि काव्यनायकस्यापि दिव्यलक्षणलक्षितस्वविषयकप्रबन्धस्य च श्रवणम्, भूतिकरं—इहामुत्राभ्युदयकरम्, प्रचक्षते—वदन्ति वृद्धाः। लोकेऽपि चास्ति प्रसिद्धिः—एतद्विषयिणी एतत्कवेः कविता शब्दतोऽर्थतो ध्वनितो वास्याशून्यत्वं प्रतिपादयति, अतोऽयमचिरात् प्रसिद्धिमेष्यतीति। तथा शाब्दादितो मङ्गलपरत्वे तु परममङ्गलं तस्य तस्येति ॥ ३० ॥

ततस्तु तौ रामवचःप्रचोदितौ
अगायतां मार्गविधानसंपदा।
स चापि रामः परिषद्गतश्शनैः
बुभूषयाऽऽसक्तमना बभूव ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे चतुर्थः सर्गः

---

*रामस्य स्वविषयकप्रबन्धश्रवणं महानुभावत्वोक्तिश्च न घटते, रामस्य विकत्थनत्वप्रसङ्गात्—अतः रामायणस्य सीताचरितत्वात् महानुभावत्वं चरितस्योच्यते—पूर्वं च 'सीतायाश्चरितं महत्' इति खलूक्तम्—इति गोविन्दराजः। परन्तु 'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्' इतिपर्यन्तं उद्देश्यवाचकं द्वितीयान्तं, 'पौलस्त्यवधमित्येव' इति च विधेयसमर्पकमिति स्पष्टम्। एवञ्चास्य काव्यस्य सीताचरित्रमात्रं न प्रधानविषय इति युक्तम्। लोकप्रवर्तनाय रामायणस्य प्रशंसनीयत्वात् भरतादिविवक्षया च 'महानुभावं' इत्युक्तं स्यात्। अनन्तरश्लोकव्याख्यायां शनैरिति पदव्याख्यानं द्रष्टव्यम्। अन्ततस्तु 'स्तवप्रियः' इति सहस्रनामान्तर्गतनामनिर्वहणं प्रकृते स्मर्तव्यमिति। महानुभावमित्यस्य चरितशब्दार्थकाव्यविशेषणत्वे तु न कस्यापि कोलाहलस्यावकाशः ॥

यतो मयापि मद्विषयकः सुप्रबन्धश्श्रोतव्य एव अतो गायतामिति रामवचःप्रचोदितौ तौ मार्गविधानसम्पदा—मार्गो देशी चेति गानं द्विप्रकारं—प्राकृतावलम्बि गानं देशी, संस्कृतावलम्बी तु मार्गः, मार्गाख्यगानमार्गावलम्बनसामग्र्या अगायताम्। परिषद्गतः स च रामोऽपि शनैः *बुभूषया—प्रागुक्तरीत्या इहामुत्र स्वाभ्युदयेच्छया, आसक्तमनाः—सजेरन्तर्भावितणिः, प्रबन्धश्रवणे आसञ्जितमना बभूव ह। परिषदि स्वप्रशंसार्थकत्वेन महापुरुषत्वात् लज्जया शनैश्शनैः प्रवृत्तिरिति द्योत्यते शनैरिति पदेन। † इदं सर्गचतुष्टयं उपोद्घातरूपं काव्यशरीरं (द्वात्रिंशच्छ्लोक एकार्धोनः)॥ ३१॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे चतुर्थस्सर्गः

[इत्युपोद्घातः]

---

## अथ पञ्चमः सर्गः

[कथावतारः, अयोध्यावर्णनं च]

**‡ सर्वापूर्वमियं येषामासीत्कृत्स्ना वसुन्धरा।**
**प्रजापतिमुपादाय नृपाणां [1] जयशालिनाम्॥ १॥**

एवं उपोद्घाततः प्रस्तावितकाव्यस्य प्रस्तावो वस्तुनिर्देशतः क्रियते—दशरथो नाम अयोध्याधिपतिरभूदिति। प्रसङ्गात् काव्यलक्षणं पुरवर्णनं च क्रियते—'सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्।

---

* बुभूषया—अनुबुभूषया-श्रोत्रसुखानुभवेच्छयेत्यर्थः—**गो.** † ननु आत्मप्रशंसापरमिदं सर्गत्रयं (२-४) कथमृषिः स्वयमेव वक्तुमर्हतीति चेन्न। अन्यापरिज्ञातस्यैतस्य वृत्तान्तस्य प्रेक्षावत्प्रवृत्त्यर्थमादाववश्यं वक्तव्यत्वात्। यद्वा सर्गत्रयमिदं केनचिद्वाल्मीकिशिष्येण रामायणनिर्वृत्त्यनन्तरं निर्माय वैभवप्रकटनाय सङ्गमितम्—**गो.** ‡ सर्वाऽपूर्वा—सर्वेषामितरेषां राज्ञां अपूर्वा—दुर्लभं यथा भवति तथा आसीत्—**गो.**

[1] जयशालि—**ङ. च.**

आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम् ॥ नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः । विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः । उद्यानसलिलक्रीडामधुपानरतोत्सवैः । मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि ॥ अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम् । काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति । ऊनमप्यत्र यैः कैश्चित् अङ्गैः काव्यं न दुष्यति ' इति पञ्चमेन । सर्वापूर्वमित्यादि । कृत्स्नेयं वसुन्धरा——अरिन्दमवत् 'संज्ञायां—' इत्यादिना खच्, प्रजासर्गादिकारित्वात् प्रजापतिः वैवस्वतमनुः, तं उपादाय–तं उपक्रम्य सन्धायमानानाम् ; जयषाळिनाम्, शलाभेदष्षळयोः ; शलगतौ घञि शालो विशालः, तस्मान्मत्वर्थीय इनिः । *जये शाली-समृद्धः जयशाली । तथाग्रेऽपि । येषां नृपाणां सर्वा पूर्वं यथा तथा स्वमासीत् । सर्वे राजानो यस्यां विषये येषां पूर्वे प्रथमभोक्तारो यथा न सम्भवन्ति तथेत्यर्थः । भूमेः प्रथमाधिपतय इत्यर्थः । यद्वा सर्वापूर्वं—ऐहिकामुष्मिकसर्वापूर्वसाधनमभूत् ॥ १ ॥

**येषां स सगरो नाम सागरो येन खानितः ।**
**[1] षष्टिः पुत्रसहस्राणि यं यान्तं पर्यवारयन् ॥ २ ॥**

अथ असाधारण्यप्रयोजकधर्मान्तरोपदेशः येषामित्यादि । निर्धारणे षष्ठी । सगरो नामाभूदिति शेषः । कोऽस्य विशेष इत्यतः—सागर इत्यादि । षष्टिरिति तु निपातो दर्शितः । तेन पुत्रसहस्राणीति सामानाधिकरण्यम् ॥२॥

**इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् ।**
**महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् ॥ ३ ॥**

इक्ष्वाकूणामिति । तद्राजप्रत्ययस्य बह्वर्थतो लुक् । वंश इति विषयसप्तमी । महदिदमुत्पन्नमाख्यानम् ॥ ३ ॥

---

* जयेन शालन्ते-भासन्त इति जयशालिनः—**गो.**

[1] **षष्टिपुत्र.**

**तदिदं [1] वर्तयिष्यामि सर्वं निखिलमादितः ।**
**धर्मकामार्थसहितं श्रोतव्यमनसूयया ॥ ४ ॥**

तदिदं सर्वं—समग्रमाख्यानं आदितः—आदिमारभ्य निखिलं पूर्वमुत्तरं च, वर्तयिष्यामि—प्रवर्तयिष्यामि ; न तु कृतसमग्रकाव्यस्यैकदेशाप्रवर्तनम् । श्रोतव्यत्वे हेतुगर्भं विशेषणं—धर्मेत्यादि ॥ ४ ॥

**कोसलो नाम मुदितः स्फीतो जनपदो महान् ।**
**निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ ५ ॥**

एवं सप्रयोजनान्तश्रवणोन्मुखान् प्रति श्रावणम्—कोसल इत्यादि । "स्फायः स्फी निष्ठायां" स्फीतः, समृद्ध इत्यर्थः । सरयूतीर इति । तदुपलक्षितप्रदेशविशेष इत्यर्थः ॥ ५ ॥

**अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।**
**मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ ६ ॥**

तत्रेति । कोसलजनपद इति यावत् ॥ ६ ॥

**आयता दश च द्वे च योजनानि महापुरी ।**
**श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७ ॥**

आयता—दीर्घा । सरयूतीरोपश्लेषेणेति शेषः । त्रीणीति । योजनानीति शेषः । विस्तीर्णेति । तिर्यग्विस्तारवतीति यावत् । सुविभक्तमहापथेति । महापथः—बहिर्मार्गः ॥ ७ ॥

**राजमार्गेण महता सुविभक्तेन शोभिता ।**
**मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८ ॥**

---

[1] वर्तयिष्यावः—च.

राजमार्गः । सर्वपण्यशोभितो राजद्वारात् पुरः प्रवृत्तः । मुक्त-पुष्पेत्यादिकं राजमार्गविशेषणम् ॥ ८ ॥

**तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।**
***पुरीमावासयामास [1]दिवि देवपतिर्यथा ॥ ९ ॥**

महाराष्ट्रविवर्धनः । महद्राष्ट्रं वर्धयति–धर्मन्यायबलेन पोषयतीत्यर्थः । पुरीमावासयामासेति । आवासत्वेनाकरोदित्यर्थः । 'तत्करोति' इति णिच् । दिवि देवपतिर्यथा पुरीं–अमरावत्याख्यां आवासयति तथेत्यर्थः ॥ ९ ॥

**कवाटतोरणवतीं सुविभक्तान्तरापणाम् ।**
**सर्वयन्त्रायुधवतीं[2]मुपेतां सर्वशिल्पिभिः ॥ १० ॥**

तोरणं बहिर्द्वारप्रदेशालङ्कारदारु[3]बन्धः । सुविभक्तः अन्तरः-परस्परान्तरालो येषां ते तथा, तादृशा आपणा यस्यां सा तथा । सर्वयन्त्रायुधवतीमिति । प्राकारोपरीति शेषः ॥ १० ॥

**सूतमागधसंबाधां श्रीमतीमतुलप्रभाम् ।**
**उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ॥ ११ ॥**

सूताः–स्तुतिपाठकाः । मागधाः–वंशावलीकीर्तकाः । अट्टालाः –उपरिगृहाः । उच्चेष्वट्टालप्रदेशेषु ध्वजयुक्ताम् । [4]शतं पुरुषान् हन्तीति शतघ्नी–अयोभारनिर्मितः प्राकारोपरि स्थापितो † मुसलविशेषः । 'अमनुष्यकर्तृके च' इति हन्तेष्टक् । उपधालोपादि ॥ ११ ॥

---

* कुशलवाभ्यां रामायणगानकाले दशरथस्याभावादेवमुक्तम् . † यन्त्रविशेषः–**गो.**

[1] दिवं–**ङ.** [2] मुषितां–**च.** [3] प्रबन्धः–**ग.** [4] शतं पुरुषा हन्यन्ते अनयेति–**घ.**

वधूनाटकसङ्घैश्च संयुक्तां सर्वतः पुरीम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १२ ॥

वधूनाटकशालासङ्घातैस्तथा । सर्वतो ग्रन्थगौरवभयात् उचितमेवार्थं निश्चित्य लिखामः । न तु यद्वाऽव्याधिमाश्रयामः । पुरीं सर्वत इति । 'उभसर्वतसोः कार्या' इत्यादिना द्वितीया । आम्रवणेति । 'प्रनिरन्तः' इत्यादिना णत्वम् । सालः—प्राकारः ॥ १२ ॥

दुर्गगम्भीरपरिघां दुर्गामन्यैर्दुरासदाम् ।
वाजिवारणसम्पूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ १३ ॥

[1] जलदुर्गैः गम्भीरा—अगाधा परिघा यस्यां सा तथा । अत एवान्यैः दुर्गा, 'अन्यत्रापि' इति डः । दुरासदां—अशक्यसमीपगमनामित्यर्थः ॥ १३ ॥

सामन्तराजसङ्घैश्च बलिकर्मभिरावृताम् ।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ १४ ॥

समन्ताद्भवाः सामन्ताः । बलिः—करः । मूलप्रभवे दशरथाय बलिदानरूपं कर्म येषां ते तथा ॥ १४ ॥

प्रासादै रत्नविकृतैः [2] पर्वतैरुपशोभिताम् ।
कूटागारैश्च सम्पूर्णामिन्द्रस्येवामरावतीम् ॥ १५ ॥

विशेषेण कृताः विकृताः, पर्वताः—क्रीडापर्वताः । कूटः—शाला । अगारं—गृहम् ॥ १५ ॥

---

[1] दुर्गेण—घ.   [2] सर्वतश्चोप—ङ.

**चित्रामष्टापदाकारां [1] वरनारी[2]गणैर्युताम् ।**
**सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६ ॥**

*अष्टापदं—स्वर्णं, तद्रूपभूषणादिकृतः आकारः—अलङ्कारो यस्याः सा तथा। विमानगृहं—सप्तभूमिगृहम् । 'विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि' इति [3]भास्करः ॥ १६ ॥

**गृहगाढामविच्छिद्रां समभूमौ निवेशिताम् ।**
**शालितण्डुलसम्पूर्णामिक्षुकाण्डरसोदकाम् ॥ १७ ॥**

गृहैः—पौरकुटुम्बिगृहैः गाढां—निबिडाम् । अत एव अविच्छिद्रां—शून्यगृहरहितरथ्याम् । इक्षुकाण्डरससमानस्वादूदकवतीम् ॥ १७ ॥

**दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा ।**
**नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥ १८ ॥**

दुन्दुभीभिरिति । 'अन्येषामपि' इति दीर्घः । भृशं नादिताम् । पृथिव्यां अत्यर्थं—अत्यन्तमनुत्तमाम् ॥ १८ ॥

**विमानमिव सिद्धानां तपसाधिगतं दिवि ।**
**सुनिवेशितवेश्मान्तां नरोत्तमसमावृताम् ॥ १९ ॥**

तपसाधिगतमिति विमानविशेषणम् । सुनिवेशितः वेश्मानामन्तः—अन्तर्गेहप्रदेशः यस्यास्सा तथा ॥ १९ ॥

**ये च बाणैर्न विध्यन्ति विविक्त[4]मपरावरम् ।**
**शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ २० ॥**

---

*'अष्टापदं शारिफलं' इत्यमरः । तदाकारां तत्सदृशसंस्थानामित्यर्थः । मध्ये राजगृहं, चतुर्दिक्षु राजवीथयः । तन्मध्येष्ववकाशाश्चेत्येवंविधसंस्थानामित्यर्थः—**गो.**

[1] नरनारी—ङ. [2] गणायुताम्—ङ. [3] निघण्टुः—ग. [4] मपरापराम्—ङ.

ये च लघुहस्ताः—क्षिप्रकारिणः विशारदाः—अस्त्रशस्त्रप्रयोगसमर्थाः शूराः विविक्तं—स्वयूथ्यात् विवेकं प्राप्तं—भ्रष्टमिति यावत्, तं सुवेषमपि बाणैर्न विध्यन्ति ; यश्चापरावरः—परकीयो स्वकीयश्च केवलप्रेक्षकः तं न विध्यन्ति। शब्दवेध्यं—शब्दमात्रानुमितसत्ताकमनवगतवेध्यावेध्यत्वं न विध्यन्ति। तथा वितथं-विरुध्य युद्धं कृत्वा पश्चात्ततः पलायमानं न विध्यन्ति ; तेषां सहस्रैः पूर्णामित्यग्रेण सम्बन्धः। उक्तविषयकस्सर्वोऽपि वेधः—शास्त्रनिषिद्धः शूरापयशस्करश्च ॥ २० ॥

**सिंहव्याघ्रवराहाणां मत्तानां नर्दतां वने ।**
**हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ २१ ॥**
**तादृशानां सहस्रैस्तामभिपूर्णां महारथैः ।**
**पुरीमावासयामास राजा दशरथस्तदा ॥ २२ ॥**

अथ शत्रुविषयकशौर्यप्रकाशः—सिंहेत्यादि। ये च वने मत्तता-दिगुणानां सिंहादीनां, कृद्योगलक्षणा षष्ठी, बलात्—अस्त्रशस्त्राभ्यास-बलात्, पाणिबलात्, सहजकायबलमूलबाहुबलादपि निशितैर्बाणैर्हन्तारो भवन्ति, तादृशानां सहस्रैरभिपूर्णां। तथा महारथैः—'आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नरः। स महारथसंज्ञस्स्यात्' तैश्च पूर्णां तां पुरीं राजा दशरथः आवासयामास। एवं दृष्टबलसंपत्ति-रुक्ता ॥ २१-२२ ॥

**तामग्निमद्भिर्गुणवद्भिरावृतां**
**द्विजोत्तमैर्वेदषडङ्गपारगैः ।**
**सहस्रदैस्सत्यरतैर्महात्माभिः**
**महर्षिकल्पैः ऋषिभिश्च केवलैः ॥ २३ ॥**

इत्यार्षे श्रीमद्रामायणे वालकाण्डे पञ्चमः सर्गः

---

अथ काव्यलक्षणं वृत्तभेदेन सर्गसमापनं कुर्वता अदृष्टबलसंम्पत्तिश्चोपदिश्यते —अग्निमद्भिरित्यादि । अग्नयस्त्रेधालक्षणाः, गुणाश्शमदमादयः । वेदानां वेदषडङ्गानां च पारगास्तथा । एवं ब्रह्मसङ्घभूयस्त्वम् । अथ राजर्षिसङ्घभूयस्त्वोपदेशः—सहस्रदैरित्यादि । 'दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्' । महर्षिकल्पैः—महर्षितुल्यवृत्तैश्च, केवलैः ऋषिभिश्च, पूर्णां तां इति पूर्वेणान्वयः । गिरि(२३)मानः ॥२३॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे पञ्चमः सर्गः

———

### अथ षष्ठः सर्गः

[दशरथस्य, तत्प्रजानां च वर्णनम्]

तस्यां पुर्यामयोध्यायां वेदवित्सर्वसङ्ग्रहः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १ ॥

अथ काव्योत्तमस्य परलोकोपकारकत्वेन अप्राकृतत्वायान्वयमुखेन राजधर्मः व्यतिरेकमुखेन तत्प्रजाधर्मश्चोपदिश्यते—तस्यामित्यादि । वेदविदिति । त्रैवर्णिकमात्रस्य सर्वाद्योऽयं गुणः । अथ क्षत्रियविशेषधर्मः —सर्वसङ्ग्रह इत्यादि । *सर्वेषां अपरिमितकोशचतुरङ्गबलराष्ट्रदुर्गादीनां सार्वभौमापेक्षितपदार्थानां सङ्ग्रहो यस्मिन् । 'ग्रहवृढ—' इत्यप् । एवं सामादिप्रयोगे एवं फलं भविष्यतीत्यादिलक्षणदीर्घदर्शनशीलः । तेजः—प्रतापः ॥ १ ॥

† इक्ष्वाकूणामतिरथो यज्वा [1] धर्मरतो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २ ॥

---

* सर्वेषामपरिमितचतुरङ्गबलराष्ट्रदुर्गादीनां सङ्ग्राहकः—ति. † इक्ष्वाकूणामिति निर्धारणे षष्ठी । इक्ष्वाकूणां मध्ये अतिरथः.

[1] धर्मपरो—ङ.

'महारथैरेकयोद्धा भवेदतिरथो रथी'। महर्षिकल्पः—व्याकृतचरः ॥ २ ॥

बलवान्निहतामित्रो मित्रवान्विजितेन्द्रियः।
धनैश्च [1]सञ्चयैश्चान्यैः शक्रवैश्रवणोपमः ॥ ३ ॥

धनं—हिरण्यम्। धनापेक्षयान्ये सञ्चयाः—मुक्तादिनवरत्नदिव्याम्बराभरणादयः। विश्रवसोऽपत्यं वैश्रवणः। विश्रवणरवण इत्यण्सन्नियोगे विश्रवणादेश इति प्रागेवोक्तम् ॥ ३ ॥

*यथा मनुर्महातेजा लोकस्य परिरक्षिता।
तथा दशरथो राजा वसञ्जगदपालयत् ॥ ४ ॥

महातेजस्त्वे मनुदृष्टान्तः—तथा तद्वन्महातेजाः—तस्यां पुर्यां वसन् जगदपालयदिति योजना ॥ ४ ॥

तेन सत्याभिसन्धेन त्रिवर्गमनुतिष्ठता।
पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५ ॥

धर्मकामार्थास्त्रिवर्गसंज्ञाः। त्रिवर्गानुष्ठानप्राधान्यं गृहीत्वा पालिताऽभवदिति योजनीयम् ॥ ५ ॥

तस्मिन् पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥ ६ ॥

धर्मात्मानः—धर्मवासनावासितान्तःकरणाः। बहुश्रुता इति बहुव्रीहिः। श्रुतं—वेदशास्त्रलक्षणम्। कर्मणि निष्ठा। प्राप्तोत्तरस्पृहावत्त्वे सति काचमात्रस्यापि दित्साभावो लोभः ॥ ६ ॥

---

* यथा मनुः लोकस्य परिरक्षिता तथेत्यन्वयः.

[1] सङ्गैश्चा—ङ.

**नाल्पसन्निचयः कश्चिदासीत्तस्मिन् पुरोत्तमे ।**
**कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ ७ ॥**

अल्पतया* सन्–विद्यमानो निचयः–धान्यादिसङ्ग्रहो यस्य स तथा । यो हि अगवाश्वधनादिमान्, अत एव असिद्धार्थः–असिद्धैहिकामुष्मिकप्रयोजनः, कुटुम्बी न कश्चिदिति योजनार्थः ॥ ७ ॥

**कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् ।**
**द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ ८ ॥**

कामी–कामैकतत्परः । कदर्यः–' आत्मानं धर्मकृत्यं च पुत्रदारांश्च [1]वञ्चयन् । लोभाद्यः पितरौ भ्रातॄन् स कदर्य इति स्मृतः ॥ ' इति मनुः । नृशंसः–क्रूरः । † द्रष्टुं शक्यमिति छान्दसं नपुंसकत्वम् ॥ ८ ॥

**सर्वे नराश्च नार्यश्च धर्मशीलास्सुसंयताः ।**
**[2]उदिताश्शीलवृत्ताभ्यां महर्षय इवामलाः ॥ ९ ॥**

सुसंयताः–सुष्ठु निगृहीतेन्द्रियाः । सहशीलवृत्ततयोदितत्वे महर्षिदृष्टान्तः ॥ ९ ॥

**नाकुण्डली नामकुटी नास्रग्वी नाल्पभोगवान् ।**
**नामृष्टो [3]नानुलिप्ताङ्गो [4]नासुगन्धश्च विद्यते ॥ १० ॥**

भोगाः–धर्माविरुद्धकामभोगाः । ' निर्णिक्तं शोधितं मृष्टं ' । अमृष्टः–अभ्यङ्गस्नानादिनाऽनिर्णिक्तदेह इति यावत् । नानुलिप्ताङ्ग इति । ' सुप्सुपा ' इति समासः । भद्रदारुपनसादिनाप्यनुलिप्तत्वसम्भवादुच्यते–असुगन्ध इति । अलभ्यचन्दनादिसुगन्ध इति यावत् ॥ १० ॥

---

* सतां उत्कृष्टवस्तूनां निचयः सन्निचयः । अल्पः सन्निचयो यस्य–ति.

† शक्यमिति निपातः ' शक्यमरविन्दसुरभिः ' इति कालिदासेनापि प्रयुक्तः–गो.

[1] पीडयेद्–ग. [2] मुदिताः–ङ. [3] नानलिप्ताङ्गः–ङ. [4] नासुगन्धिश्च–ङ.

**नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् ।**
**नाहस्ताभरणो वाऽपि दृश्यते नाप्यनात्मवान् ॥ ११ ॥**

मृष्ट–पूर्णम् । अन्नाभावप्रयुक्तपूर्णभोजनरहित इति यावत् । नादातेति ।* साक्षिभोजनरहित इति यावत् । अङ्गदं, निष्कं–उरोभूषणं च धरतीति तथा । 'हेम्न्युरोभूषणे निष्के दीनारेऽपि फलेऽपि च' इति निघण्टुः । अनात्मवान्–अजितान्तःकरणः ॥ ११ ॥

**नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः ।**
**कश्चिदासीदयोध्यायां [1] न च निर्वृत्तसङ्करः ॥ १२ ॥**

अयज्वा–सोमयागरहितः । क्षुद्रः–अल्पविद्यैश्वर्यवान्, तिरस्कारार्ह इति यावत् । निर्वृत्तं–अनुष्ठितं सङ्करः–साङ्कर्यं–परक्षेत्रे बीजावापादिसाङ्कर्यं येन स तथा ॥ १२ ॥

**स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः ।**
**दानाध्ययनशीलाश्च संयताश्च [2] प्रतिग्रहे ॥ १३ ॥**

दानाध्ययनेति । 'ततो यत्किंच ददाति सा दक्षिणा' इति नित्यप्राप्तयथाशक्त्यन्नपानादिदानादिमन्तः । संयताः–सङ्कुचिताः ॥ १३ ॥

**† न नास्तिको नानृतको न कश्चिदबहुश्रुतः ।**
**नासूयको न वाऽशक्तो नाविद्वान्विद्यते तदा ॥ १४ ॥**

---

* 'नामृष्टभोजी' इत्यनुपदमेवोक्तत्वादेवं व्याख्यातम्. † पूर्वं 'सत्यवादिनः' (६) 'न च नास्तिकः' (८) इति जनसामान्याभिप्रायेणोक्तम् । इदानीं तु 'ब्राह्मणाः' (१३) इति कथनात् विशिष्योच्यत इति न पौनरुक्त्यम्.

[1] न चावृत्तो न सङ्करः–च. (आवृत्तः=सदाचाररहितः). [2] परिग्रहे–ङ.

नास्ति दिष्टं मतिर्यस्य स नास्तिकः, 'अस्ति नास्ति दिष्टं मतिः' इति ठक्। अनृतकः—असत्यवचनः। अशक्तः—स्वस्यैहिकामुष्मिकार्थसाधनासमर्थः। नाविद्वानिति। गुणवर्णनेष्वादरात् पौनरुक्त्यमदोषायेति प्रागेवोपपादितम्॥ १४॥

**नाषडङ्गविदत्रासीन्नाव्रतो *नासहस्रदः।**
**[1]न दीनः क्षिप्तचित्तो वा व्यथितो वाऽपि कश्चन॥ १५॥**

व्रतं—एकादश्यादिव्रतम्। क्षिप्तचित्त इति। उन्मादादिनेति शेषः। व्यथितः—आधिव्याध्यादिपीडितचित्त इत्यर्थः॥ १५॥

**कश्चिन्नरो वा नारी वा †नाश्रीमान्नाप्यरूपवान्।**
**द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान्॥ १६॥**

स्त्रियास्तु नाश्रीमतीत्याद्यूह्यम्। मूर्धाभिषिक्तो राजा दशरथः, तस्मिन् भक्तिः स्नेहं, तद्रहितो नाभूत्। इदं सर्वप्रजासाधारणं शुभमित्युच्यते॥ १६॥

**वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः।**
**कृतज्ञाश्च वदान्याश्च ‡शूरा विक्रमसंयुताः॥ १७॥**

वर्णेष्वित्यादि। अग्र्यः—ब्राह्मणः। अग्रे भवः, 'अग्राद्यत्', स चतुर्थो येषां वर्णानां ते तथा। 'वदान्यो दानशौण्डस्स्यात्' इति विश्वः॥ १७॥

---

* दानाध्ययनेत्यत्र विद्यादानमुक्तं, अत्र हिरण्यादिदानं—**गो.** † अश्रीमान्—कान्तिरहितः। अरूपवान्—सौन्दर्यरहितः—**गो.** ‡ ब्राह्मणेष्वध्ययनशूरत्वम्। ब्राह्मणानां पराक्रमो वादकथासु—**गो.**

[1] निन्दितः—**ङ.**

दीर्घायुषो नरास्सर्वे धर्मं सत्यं च संश्रिताः ।
सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ १८ ॥
क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः ।
शूद्रास्स्व[1]धर्मनिरतास्त्रीन्वर्णा[2]नुपचारिणः ॥ १९ ॥

ब्रह्ममुखं–ब्रह्मप्रधानम् , तदाज्ञानुवर्तीति यावत् । कश्शूद्रस्य धर्म इत्यतः—त्रीन्वर्णानित्यादि । उपचारिणः–उपचरणशीलाः । चरेस्ताच्छीलिको णिनिः ॥ १९ ॥

सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षता ।
यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥ २० ॥
* योधानामग्निकल्पानां पेशलानाम[3]मर्षिणाम् ।
सम्पूर्णा कृतविद्यानां गुहा केसरिणामिव ॥ २१ ॥

योधानामग्निकल्पानामिति । शौर्यातिशयादग्निकल्पत्वं योधानाम् । पेशलाः–अकुटिलाः । अमर्षिणः–पराभिभवासहिष्णवः । अमर्षिणां सङ्घैः पूर्णेति योज्यम् । कृता–शिक्षिता अस्त्रशस्त्रादिविद्या यैस्ते तथा ॥ २१ ॥

काम्भोजविषये जातैः [4]बाह्लिजैश्च हयोत्तमैः ।
† वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥ २२ ॥

एवं पदातिसौष्ठवमुक्त्वा अश्वादिसौष्ठवोपदेशः–काम्भोजेत्यादि । विषयो देशः । बाह्लीकः बाह्लिरिति गृह्यते नामैकदेशतः, छन्दोवशात् । हरिः–इन्द्रः, तस्य हयः–उच्चैश्रवाः, तद्वदुत्तमा इति यावत् ॥ २२ ॥

---

* 'पूरणगुण' इत्यादिना षष्ठी । योधैः संपूर्णा–गो.　† वनायुः–देशविशेषः । नदीजः–सिन्धुदेशजैः.

[1] कर्म–ङ.　[2] ननुयायिनः–ङ.　[3] नां सुवर्चसाम् , नां मनीषिणाम्–ङ.
[4] बाह्लीकैश्च–ङ. च.

**विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि ।**
**मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः ॥ २३ ॥**

हैमवतैः । 'तत्र जातः' इति शैषिकोऽण् ॥ २३ ॥

**ऐरावतकुलीनैश्च महापद्मकुलैस्तथा ।**
***अञ्जनादपि [1]निष्पन्नैर्वामनादपि च द्विपैः ॥ २४ ॥**

कुले भवाः कुलीनाः । 'कुलात्खः' । पुण्डरीकाख्यो दिग्गजो महापद्म इत्युच्यते, तस्य कुलं–वंशो येषां ते तथा । अञ्जनादिरपि दिग्गजविशेषः ॥ २४ ॥

**†भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगैस्तथा ।**
**भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी ॥ २५ ॥**
**नित्यमत्तैस्सदा पूर्णा नागैरचलसन्निभैः ।**

हिमवति जाता भद्राख्याः । विन्ध्यजाता मन्द्राख्याः । सह्यजाता मृगाख्याः । तत्र त्र्यादिस्वभाववन्तोऽन्ये भद्रमन्द्रमृगाः । द्विस्वभाववन्तो भद्रमन्द्रादयः ॥ २५ ॥

**[2]सा योजने च द्वे भूयः सत्यनामा प्रकाशते ॥ २६ ॥**

पुरी द्वे योजने, द्वयोर्योजनयोरत्यन्तसंयोगे द्वितीया । भूयः–अभ्यधिकम् । सत्यनामा–योद्धुमशक्या अयोध्येत्येवं अन्वर्थनामा प्रका-

---

* अञ्जनो वरुणदिग्गजः । महापद्मः अग्निदिग्गजः । वामनो दक्षिणदिग्गजः ॥

† भद्राः मन्द्राः मृगाश्चेति गजजातित्रयम् । भद्रमन्द्रो भद्रमृगो मृगमन्द्रश्चेति द्विप्रकृतिकाः सङ्कीर्णजातयस्तिस्रः । भद्रमन्द्रमृगाः त्रिप्रकृतिकाः सङ्कीर्णगजाः–**गो.**

[1] निष्क्रान्तैः–**च.** [2] एतदनन्तरं, 'यस्यां दशरथो राजा वसञ्जगदपालयत् ॥' इदमर्धं कुत्रचिदधिकं दृश्यते–**ङ.**

शते । द्वादशयोजनायामायाः तिर्यक् त्रियोजनविस्तारवत्याः तस्याः राज्ञो मूलधाम्न उक्तद्वियोजनमानकत्ववतो भूयः सत्यनामत्वम् । सत्यनामेति । 'डाबुभाभ्याम्' इति डाप् ॥ २६ ॥

तां पुरीं स महातेजा राजा दशरथो महान् ।
शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥ २७ ॥

तां सत्यनामां दृढतोरणार्गलां
गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृसहस्रसङ्कुलां
शशास वै शक्रसमो महीपतिः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे षष्ठः सर्गः

---

शमितः—नाशितः अमित्रो येन स तथा । 'निष्ठायां सेटि' इति णिलोपे अमन्ततो मित्वाद्ध्रस्वः । तां सत्यनामामित्यत्रापि डाप् । [सप्तविंशतिः अर्धाधिका ?] ॥ २८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे षष्ठः सर्गः

---

## अथ सप्तमः सर्गः

[अमात्यादिवर्णनम्]

तस्यामात्या गुणैरासन्निक्ष्वाकोस्तु महात्मनः ।
मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ १ ॥

अथेदानीं सन्मन्त्रिसम्पत्तिरूपो राज्ञो विशेषधर्म उपदिश्यते—तस्येत्यादि । अमात्याः । राज्ञा सर्वराज्यव्यापारेषु सह वसन्तीत्यमात्याः । 'अव्ययात्त्यप्' । गुणैः—अमात्यापेक्षितैर्वक्ष्यमाणैरुपेताः ।

इक्ष्वाकोः—दशरथस्य, तद्वंशजत्वात्ताच्छब्द्यम् । मन्त्रः—कार्यविचारः । इङ्गितं—पौराभिप्रायः, तत् मुखसङ्कोचव्यङ्ग्यवचनादिभिः जानन्तीति तथा ॥ १ ॥

**अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः ।**
**शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥ २ ॥**

शुचयः—असत्यस्वामिद्रोहादिरूपवाङ्मनसाशुचिरहिताः । नित्यशो राजकृत्येषु—तदनुष्ठानेषु अनुरक्ताः—तत्पराः ॥ २ ॥

**धृष्टिर्जयन्तो विजयः [1]सिद्धार्थो ह्यर्थसाधकः ।**
**अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥ ३ ॥**

के च तेऽष्टावित्यत आह—धृष्टिरित्यादि ॥ ३ ॥

**ऋत्विजौ द्वावभिमतौ तस्याऽऽस्तामृषिसत्तमौ ।**
**[2]वसिष्ठो वामदेवश्च मन्त्रिणश्च तथापरे ॥ ४ ॥**

ऋत्विजौ—पुरोहिताविति यावत् । अपर इति । उक्ताष्टप्रधानमन्त्रिव्यतिरिक्ता इति यावत् । **कश्चिदपरः**—"मन्त्रिणः मन्त्रविदः—ऋत्विजः आसन्" इत्याह । तदसत् । उत्तरत्र मन्त्रिगुणवर्णने "प्राप्तकालं च ते दण्डान् धारयेयुस्सुतेष्वपि" इत्यादीनां ब्राह्मणेष्वसम्भावितत्वात् ॥ ४ ॥

**विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः ।**
**परस्परानुरक्ताश्च नीतिमन्तो बहुश्रुताः ॥ ५ ॥**

विद्याविनीता इति । विद्यायाः विनयः किल फलम् ॥ ५ ॥

---

[1] सुराष्ट्रो राष्ट्रवर्धनः । अकोपो धर्मपालश्च सुमन्त्रश्चाष्टमोऽर्थवित् ॥ इत्यधिकं—ङ.

[2] एतदनन्तरं— । सुयज्ञोऽप्यथ जाबालिः काश्यपोऽप्यथ गौतमः ॥ मार्कण्डेयस्तु दीर्घायुस्तथा कात्यायनो द्विजः । एतैर्ब्रह्मर्षिभिर्नित्यमृत्विजस्तस्य पौर्वकाः । इत्यधिकं—ङ.

**श्रीमन्तश्च महात्मानः शास्त्रज्ञा दृढविक्रमाः ।**
**कीर्तिमन्तः प्रणिहिताः यथावचनकारिणः ॥ ६ ॥**

प्रणिहिताः—राजकृत्येषु सावधानाः । यथावचनकारिण इति । राज्ञ इति शेषः ॥ ६ ॥

**तेजःक्षमायशःप्राप्ता स्मितपूर्वाभिभाषिणः ।**
**क्रोधात्कामार्थहेतोर्वा न ब्रूयुरनृतं वचः ॥ ७ ॥**

तेजआदीनि प्राप्ताः । 'द्वितीयाश्रित' इत्यादिना समासः । स्मितेति । स्मितपूर्वतया पूर्वभाषिण इत्यर्थः । कामार्थयोर्हेतुस्तथा ॥७॥

*** तेषामविदितं किंचित् स्वेषु नास्ति परेषु वा ।**
**क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम् ॥ ८ ॥**

अविदितं किं नास्तीत्यतः—क्रियमाणमित्यादि । सन्धिविग्रहादिकमिति शेषः । चारेण, चरसञ्चरणे, चारेण कृतक्रियमाणचिकीर्षितसन्ध्यादिसर्वव्यापारः स्वपरगोचरस्तदज्ञातो नास्तीत्यर्थः । तेषामविदितं इत्यत्र 'मतिबुद्धि' इत्यादिना अविदितमिति कर्तरि क्तस्य योगे "क्तस्य च वर्तमान" इति तेषामिति षष्ठी ॥ ८ ॥

**कुशला व्यवहारेषु † सौहृदेषु परीक्षिताः ।**
**प्राप्तकालं तु ते दण्डं धारयेयुस्सुतेष्वपि ॥ ९ ॥**

---

* क्रियमाणं कृतं चिकीर्षितं—करिष्यमाणं वा स्वराष्ट्रे वा तेषां चारद्वारेणाविदित किञ्चिदपि नास्तीत्यर्थः । † हृदयशुद्धिविषये राज्ञा बहुधा परीक्षिता इत्यर्थः । तदेवोच्यते उत्तरार्धेन.

परीक्षिताः । राज्ञेति शेषः । परीक्षा तु बहुशस्स्वेष्टप्रवृत्तिपरा निष्ठाऽप्रवृत्त्यादिविषयिणी । प्राप्तः सापराधत्वलक्षणः कालो यस्य स तथा । धारयेयुरिति । प्रवर्तयन्तीत्यर्थः ॥ ९ ॥

**कोशसङ्ग्रहणे युक्ता बलस्य च परिग्रहे ।**
**अहितं वाऽपि पुरुषं न [1]हिंस्युरविदूषकम् ॥ १० ॥**

कोशसङ्ग्रहणं बलपरिग्रहहेतुः । बलं–चतुरङ्गबलम् । तस्य परिग्रहः–पुनःपुनरश्वादेस्सङ्ग्रहः । अहितमिति । स्वहिताचरणरहितमुदासीनमिति यावत् । अविदूषकमिति । दोषः–अपराधः, तदकर्तारमिति यावत् । 'दोषो णौ' इत्युत्वम् । तस्मात् स्वार्थण्यन्तात् ण्वुल् ॥ १० ॥

**वीराश्च नियतोत्साहा राजशास्त्रमनुष्ठिताः ।**
**शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् ॥ ११ ॥**

राजशास्त्रं—"राज्ञस्तु विशेषणान् वक्ष्यामः । दक्षिणद्वारं वेश्म पुरं च मापयेत् । अन्तरस्यां पुरी वेश्म" इत्यादिना धर्मशास्त्रेण विशिष्य राज्ञ उपदिश्यमानं शास्त्रं राजशास्त्रम्, कामन्दकादिप्रणीतं सामादिविषयकनीतिशास्त्रं राजनीतिशास्त्रं च । स्तेयानृतरहिताश्शुचयः । विषयो देशः ॥ ११ ॥

**ब्रह्मक्षत्रमहिंसन्तः ते कोशं समपूरयन् ।**
**सुतीक्ष्णदण्डास्संप्रेक्ष्य पुरुषस्य *बलाबलम् ॥ १२ ॥**

ब्रह्मक्षत्रमिति । सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकत्वम् । पुरुषस्य–दण्ड्यपुरुषस्य । बलाबलं–अपराधतारतम्यम् । सम्प्रेक्ष्य तदनुसारेण–सुतीक्ष्णदण्डाः निर्घृणप्रवृत्तदण्डाः । अयं कोशपूरणहेतुः ॥ १२ ॥

---

* बलाबलं–अपराधतारतम्यं शक्तितारतम्यं वा–**गो.** [1] विहिंस्युरदू–**ङ.**

**शुचीनामेकबुद्धीनां सर्वेषां सम्प्रजानताम् ।**
**नासीत्पुरे वा राष्ट्रे वा मृषावादी नरः क्वचित् ॥ १३ ॥**

शुचीनामित्यादि । शुचिशब्दो व्याकृतः । एकबुद्धीनां—अन्योन्यमेककण्ठानाम् , तथा सम्प्रजानतां—पुरराष्ट्रवृत्तान्तं विचारयतां तेषां मन्त्रिणां विचारविषये पुरादौ मृषावादी कश्चन नासीत् । *एवं पाङ्क्ते स्थिते शुचिषु सम्प्रजानत्सु अनृतवादी नासीत् इति भावलक्षणे षष्ठी च भवति, 'षष्ठी चानादरे' इति योगविभागात् , अनादराभावे षष्ठीत्यस्माभिरुच्यत इति मिथ्यापाण्डित्यं प्राचीकटत् ॥ १३ ॥

**कश्चिन्न दुष्टस्तत्रासीत् परदाररतो नरः ।**
**प्रशान्तं सर्वमेवासीत् राष्ट्रं पुरवरं च तत् ॥ १४ ॥**

प्रशान्तं—प्रशान्तान्यायाधर्मकम् ॥ १४ ॥

**सुवाससस्सुवेषाश्च ते च सर्वे सुशीलिनः ।**
**हितार्थं च नरेन्द्रस्य जाग्रतो नयचक्षुषा ॥ १५ ॥**
**†गुरौ गुणगृहीताश्च प्रख्याताश्च पराक्रमे ।**
**विदेशेष्वपि विख्याताः सर्वतो बुद्धिनिश्चयात् ॥ १६ ॥**

गुरौ—स्वस्वाचार्ये गुणगृहीताः—अर्थतः कार्यतश्शुश्रूषागुणेन विद्याग्रहणादौ सौबुद्ध्यादिगुणेन च आप्ततच्छिष्यतया परिगृहीताः । एतेन सर्वमूलसद्गुर्वनुग्रहप्राप्तसर्वविद्यात्वमुपदिष्टम् । कश्चित् गुणगृहीताः—गृहीतगुणदोषाः—आहिताग्निवदित्यादिना मिथ्यामुक्त्वा तस्य व्याख्यानं चाह । तेन गुराविति पदमनन्वितमिव उपेक्षणीयम् । न च गुरावेव

---

* गोविन्दराजीयम् . † आचार्येषु गृहीतगुणाः । गुणमात्रग्राहिणो दोषमपश्यन्त इत्यर्थः—**गो.** गुरोः—सम्बन्धसामान्ये षष्ठी गुरुणा आचार्येण राज्ञा च गुणवत्तया गृहीताः—**ति.**

[1] गुरोर्गुणगृहीताश्च. गुणागुणगृ—**ङ.**

गृहीतगुणदोषा इति; शान्तं पापं, अलमेतन। प्रख्याताश्च पराक्रम इति। अयं सर्वतो विदेशेष्वपि विज्ञातत्वे हेतुः। बुद्धिनिश्चयात्— बुद्धया सम्पन्नसन्ध्यादिशास्त्रविषयको निश्चयस्तथा, तस्मात्॥ १६॥

[1]सन्धिविग्रहतत्त्वज्ञाः प्रकृत्या सम्पदान्विताः॥
मन्त्रसंवरणे [2]सक्ताः श्लक्ष्णास्सूक्ष्मासु बुद्धिषु॥ १७॥
नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः॥

सन्ध्यादितत्त्वज्ञाः प्रकृत्या-राजस्वभावत्वादेव, सम्पदा-धनधान्यदासीदासादिशिबिकाद्यैहिकसम्पदाऽन्विताः। इदमेव च सर्वतस्समर्थत्वे मूलम्। न हि दरिद्रवचः सभामारुरुक्षति। मन्त्रो राष्ट्रव्ययादिविचारः, तद्ग्रहणे-तत्साधनसङ्ग्रहणे इत्यर्थः। सूक्ष्मासु बुद्धिषु-विचारेषु सक्ताः, श्लक्ष्णाः-अरूक्षस्वभावाः॥ १७॥

ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः॥ १८॥
उपपन्नो गुणोपेतैरन्वशासद्वसुन्धराम्।

ईदृशैः-'विद्याविनीताः' इत्याद्यारम्भोपदिष्टविशेषणविशिष्टैः। अत एव गुणोपेतैः समग्रामात्यगुणोपेतैः-तैः अमात्यैः उपपन्न इति योजना। अन्वशासत्-लुङि 'सर्तिशास्ति' इत्यङ्॥ १८॥

अवेक्षमाणश्चारेण प्रजा धर्मेण रञ्जयन्॥ १९॥
प्रजानां पालनं कुर्वन्नधर्मं परिवर्जयन्।

अवेक्षमाणः-स्वपरदेशवृत्तान्तमिति यावत्। अधर्मं परिवर्जयन्निति हेतौ शता॥ १९॥

---

[1] एतत्पूर्वं अभितो गुणवन्तश्च नचासन्गुणवर्जिताः॥ इदमधिकं-ङ. [2] शक्ताः-ङ.

**विश्रुतस्त्रिषु लोकेषु वदान्यस्सत्यसङ्गरः ॥ २० ॥**
**स तत्र पुरुषव्याघ्रश्शशास पृथिवीमिमाम् ।**

अत एव हेतोः—विश्रुत इत्यादि । तत्र—अयोध्यायाम् ॥ २० ॥

**नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः ॥ २१ ॥**
**मित्रवान्नतसामन्तः प्रतापहतकण्टकः ।**
**स शशास जगद्राजा [1]दिवि देवपतिर्यथा ॥ २२ ॥**

मित्रवान् । नताः सामन्ताः यस्मै स तथा । कण्टकाः—शत्रव-श्चोराश्च । यथेति—दिवमिति शेषः ॥ २१ ॥

**तैर्मन्त्रिभिर्मन्त्रहिते नियुक्तैः**
**वृतोऽनुरक्तः कुशलैस्समर्थैः ।**
**स पार्थिवो दीप्तिमवाप युक्तः**
**तेजोमयैर्गोभिरिवोदितोऽर्कः ॥ २३ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे सप्तमः सर्गः

---

मन्त्र इति । मन्त्रो विचारः, तत्साध्यं हितं तथा । कुशलैः—मन्त्रप्रयोगकुशलैः । समर्थैः—मन्त्रतत्त्ववेदनसमर्थैः, तेजोमयैः—स्वार्थिको मयट् । गोभिः—किरणैः युक्तः उदितः—प्राप्तोदयोऽर्क इवेति योजना॥२२॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे सप्तमः सर्गः

---

[1] दिवं—ङ.

अथ अष्टमः सर्गः

[पुत्रार्थं अश्वमेधयजनोद्यमो दशरथस्य]

**तस्य त्वेवंप्रभावस्य धर्मज्ञस्य महात्मनः ।**
**सुतार्थं तप्यमानस्य नासीद्वंशकरस्सुतः ॥ १ ॥**

एवं समग्रसार्वभौमगुणस्यापि सत्पुत्रेणार्जितपितृलोकत्वात्, तदितरगुणानां तदभावे अगुणकल्पत्वात्, 'सर्वं वाऽश्वमेधयाप्नोति' इति श्रुतेः, पुत्रार्थमप्यश्वमेधेन प्रवृत्तिरष्टमेन—तस्येत्यादि। तप्यमानस्येति। तपो लटश्शानचि श्यन्। सन्तापं कुर्वाणस्येत्यर्थः। वंशकरः, कृञो हेतौ टः ॥ १ ॥

**चिन्तयानस्य तस्यैवं बुद्धिरासीन्महात्मनः ।**
**सुतार्थी वाजिमेधेन किमर्थं न यजाम्यहम् ॥ २ ॥**

चिन्तयानस्येति। आनेमुगभावश्छान्दसः। एवमिति वक्ष्यमाणप्रकारम् ॥ २ ॥

**स निश्चितां मतिं कृत्वा यष्टव्यमिति बुद्धिमान् ।**
**मन्त्रिभिस्सह धर्मात्मा सर्वैरेव कृतात्मभिः ॥ ३ ॥**

यष्टव्यमिति निश्चितां मतिमिति योजना ॥ ३ ॥

**ततोऽब्रवीदिदं राजा सुमन्त्रं मन्त्रिसत्तमम् ।**
**शीघ्रमानय मे सर्वान् गुरूंस्तान् सपुरोहितान् ॥ ४ ॥**

**ततस्सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ।**
**समानयत् स तान् सर्वान् समेतान् वेदपारगान् ॥ ५ ॥**

समानयत्स तान्सर्वानिति। तान्—प्रसिद्धान् सपुरोहितांस्तानिति योजनीयम्। तच्छब्दद्वयस्य विद्यमानत्वात् ॥ ५ ॥

**सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ।**
**पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः ॥ ६ ॥**

तत्र सुयज्ञादयः तत्तद्विद्याविशेषगुरवोऽध्यापकाः । वसिष्ठः पुरोहितः । तदेवोक्तम्–पुरोहितं वसिष्ठं चेति । ननु 'उपनयीत तमध्यापयीत' इति विधेरुपनेतुरेवाध्यापकत्वाद्वसिष्ठस्यैव च पुरोहितत्वत उपनेतृत्वात् कथं गुर्वन्तरसंबन्धः—उपनीतस्य स्वयं स्वशिष्यप्रायेषु स्वपौरोहित्यादिव्याक्षेपादध्ययनाय नियोजनादिति ब्रूमः । ये चान्य इति । अश्वमेधार्त्विज्यापेक्षिता इति शेषः ॥ ६ ॥

**तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा ।**
**इदं धर्मार्थसहितं वाक्यं श्लक्ष्णमथाब्रवीत् ॥ ७ ॥**
**मम [1]लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ।**
**तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८ ॥**

पुत्रार्थं–पुत्रप्राप्तिमुद्दिश्य, लालप्यमानस्य–लपेर्यङन्तात् शानच्, पुनः पुनः भृशं विलपतः मम राज्यादिनापि सुखं नास्ति, वै प्रसिद्धौ । तदर्थं पुत्रार्थं हयमेधेन यक्ष्यामीति मतिः–दृढाध्यवसायोऽद्य मम संवृत्तः ॥ ८ ॥

**तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ।**
**कथं प्राप्स्याम्यहं कामं बुद्धिरत्र विचार्यताम् ॥ ९ ॥**

तत्–तस्मात् । अहं यष्टुं–यागकर्मणि प्रवर्तितुं इच्छामि । कर्मणा–विधिना अहं कामं–पुत्रप्राप्तिलक्षणाभीष्टं कथं प्राप्स्यामीत्यत्र बुद्धिः–उपायः विचार्यताम् ॥ ९ ॥

---

[1] अत्र तातप्यमानस्येत्यपि पाठः (तिलके)–च.

ततस्साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ।
वसिष्ठप्रमुखास्सर्वे पार्थिवस्य [1]मुखेरितम् ॥ १० ॥

पार्थिवस्य मुखेरितं—साक्षात्तन्मुखानिर्गतम् ॥ १० ॥

ऊचुश्च परमप्रीताः सर्वे दशरथं वचः ।
[2]सम्भारास्सम्भ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ११ ॥

ते अश्वमेधीयाः प्रसिद्धाः सम्भाराः—एकविंशतियूपपात्रशाला-मुखाः सम्भ्रियन्ताम् ॥ ११ ॥

सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव ।
यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ १२ ॥

पुत्रानिति बहुवचनं विवक्षितबहुत्वम् । धार्मिकी—'धर्मं चरति' इति ठक्, धर्माचरणविषयिणी ॥ १२ ॥

ततः प्रीतोऽभवद्राजा श्रुत्वैतद्द्विजभाषितम् ।
अमात्यांश्चाब्रवीद्राजा हर्षपर्याकुलेक्षणः ॥ १३ ॥

प्रीतोऽभवदिति । सर्वथा प्राप्स्यसे इति प्रतिज्ञानात् । कर्म-कर्तरीदमात्मनेपदम् । हर्षेण-तज्जानन्दाश्रुणा पर्याकुले—परिप्लवे ईक्षणे यस्य स तथा ॥ १३ ॥

सम्भारास्सम्भ्रियन्तां मे गुरूणां वचनादिह ।
समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ॥ १४ ॥

इहेति । अस्मिन् काले सरयूत्तरतीरे चेत्यर्थः । समर्थाधिष्ठितः 'चतुश्शता रक्षन्ति यज्ञस्याघाताय' इति श्रुतेः, रक्षणसमर्थैश्चतुश्शत-राजपुत्रै रक्षित इत्यर्थः । सोपाध्यायः—'अश्वस्य मेध्यस्य पदे पदे जुह्वति' इति होमापेक्षितोपाध्यायसहितस्तथा ॥ १४ ॥

---

[1] मुखाच्च्युतम्—ङ. [2] एतदनन्तरं, सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ इदमधिकं—ङ.

**सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ।**
**शान्तयश्चाभिवर्धन्तां यथाकल्पं यथाविधि ॥ १५ ॥**

शान्तयश्चेति । 'अश्वमुत्सृक्ष्यन्निष्टिभ्यां यजेत शुक्रं चान्द्रमस्या सौर्ययेतरम्' इति श्रौती शान्तिः, स्मार्ती भगवतो ब्रह्मणस्पतेर्विघ्नेश्वरस्य समाराधनलक्षणः, तथान्याश्च शान्तयः—शान्तिकर्माणि अभिवर्द्धन्तां—प्रवर्तयन्तामिति यावत् । 'वर्धन्तु त्वा सुष्टुतयः' इतिवदार्षत्वाच्छपोऽप्यार्थधातुकत्वेन णिलोपः । यथाकल्पं—शान्तिकल्पोक्तपुण्याहवाचनादिकर्मानुक्रमप्रकारम् । यथाविधि—इदं कर्मैवं कर्तव्यमिति विधिं चानतिक्रम्येत्यर्थः ॥ १५ ॥

***शक्यः प्राप्तुमयं यज्ञः सर्वेणापि महीक्षिता ।**
**नापराधो भवेत्कष्टो यद्यस्मिन् क्रतुसत्तमे ॥ १६ ॥**

सर्वेणापि राजमात्रेण—देवतानुग्रहरहितेनापि चेत्यर्थः । अपराधः—प्रायश्चित्तव्यविध्यपराधः । यदिशब्दो यथापर्यायः, अव्ययानामनेकार्थत्वात् । अस्मिन् क्रतौ कष्टस्स यथा न भवेत्तथा प्रयत्यतामिति शेषः ॥ १६ ॥

**† छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः ।**
**निहतस्य च यज्ञस्य सद्यः कर्ता विनश्यति ॥ १७ ॥**

सर्वथा विध्यपराधाभावार्थं यतितव्यमित्याह—छिद्रमित्यादि । विद्वांसः—अश्वमेधप्रवृत्तिं जानन्तः ब्रह्मराक्षसाः—अकृतप्रायश्चित्तप्रतिमहायाज्ययाजनादिपापेन राक्षसत्वं प्राप्ता ब्राह्मणाः, तथा । ये तु

* प्राप्तुं शक्य इति काकुः—ति. अस्मिन् क्रतुसत्तमे अपराधो यथा न भवेत् तथा प्राप्तुं शक्यः किमित्यन्वयो वा. † विद्वांसो ब्रह्मेव, राक्षसा छिद्रं मृगयन्ति—इति केचित् ॥

यज्ञस्वरूपं तदपराधं च सम्यग्जानन्ति, ते तु अश्वमेधे छिद्रं—अपराधं नानाविधं मृगयन्ते—यदि छिद्रं प्राप्नुवन्ति, यज्ञं नाशयन्ति यज्ञस्यात्मसात्करणेन। किं तत इत्यतः—निहतस्य यज्ञस्य कर्ता—यजमानः ऋत्विग्वर्गश्च सद्यो विनश्यति॥ १७॥

तद्यथाविधि पूर्वं मे क्रतुरेष समाप्यते।
तथा विधानं क्रियतां समर्थाः करणेष्विह ॥ १८ ॥

यदेवं तस्माद्यथा चेत् विधिपूर्वमेष क्रतुः समाप्यते तथा विधानं क्रियतां। तथाकरणेषु—अनुष्ठापनेषु यूयं समर्थाः खल्वपीति स्तुतिः ॥ १८ ॥

तथेति चाब्रुवन् सर्वे मन्त्रिणः प्रत्यपूजयन्।
पार्थिवेन्द्रस्य तद्वाक्यं यथाऽऽज्ञप्तं निशम्य ते॥ १९ ॥

तथेत्यादि। ते सर्वे मन्त्रिणः यथा—उक्तप्रकारतो नरेन्द्रेण आज्ञप्तम्—आज्ञापितम्। 'वा दान्त' इत्यादिना वैकल्पिक इडभावो निपातितः। स्वार्थणेर्ज्ञपेर्भावे निष्ठा, आज्ञापनरूपं पार्थिवेन्द्रस्य तद्वाक्यं निशम्य तथेत्यब्रुवन्, समीचीनोऽध्यवसायो महाराजस्येति प्रत्यपूजयंश्च ॥ १९ ॥

तथा द्विजास्ते धर्मज्ञा वर्धयन्तो नृपोत्तमम्।
अनुज्ञातास्ततस्सर्वे पुनर्जग्मुर्यथागतम् ॥ २० ॥

वर्धयन्त इति—आशीर्भिरिति शेषः ॥ २० ॥

विसर्जयित्वा तान् विप्रान् सचिवानिदमब्रवीत्।
ऋत्विग्भिरुपसन्दिष्टो यथावत्क्रतुराप्यताम् ॥ २१ ॥

*उपसन्दिष्ट इति त्रिपदम्, उपदिष्टोऽयं क्रतुः यथावत् समाप्यतामिति योजना। 'व्यवहिताश्च' इति व्यवहितप्रयोग उपसर्गस्य ॥ २१ ॥

इत्युक्त्वा नृपशार्दूलः सचिवान् समुपस्थितान्।
विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २२ ॥
ततस्स गत्वा ताः पत्नीः नरेन्द्रो हृदयप्रियाः।
उवाच दीक्षां विशत यक्ष्येऽहं सुतकारणात् ॥ २३ ॥

ताः पत्नीः—स्ववेश्मगताः पत्नीरित्यर्थः। 'पत्युर्नो यज्ञसंयोगे' इति-नकारोऽन्तादेशः। दीक्षां विशतेति। दीक्षाविषयकदृढबुद्धिं संगच्छ-ध्वमिति यावत् ॥ २३ ॥

तासां तेनातिकान्तेन वचनेन सुवर्चसा।
मुखपद्मान्यशोभन्त पद्मानीव हिमात्यये ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे अष्टमः सर्गः

---

अतिकान्तेन—अत्यन्तमिष्टेन। वर्चो दीप्तिः—सुप्रकाशेन सुशो-भनेनेत्यर्थः। अर्धाधिकचतुर्विंशतिः ॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे अष्टमः सर्गः

---

## अथ नवमः सर्गः

[सुमन्त्रेण दशरथाय सनत्कुमारवचसो निवेदनम्]

एतच्छ्रुत्वा रहस्सूतो राजानमिदमब्रवीत्।
[1] ऋत्विग्भिरुपदिष्टोऽयं पुरावृत्तो मया श्रुतः ॥ १ ॥

---

* उप, सं, दिष्ट इति पदत्रयं, तत्र सं इत्यस्य आप्यतामित्यत्रान्वयः। तथा च उपदिष्टः, समाप्यतामिति निष्पन्नमिति भावः।

[1] एतदनन्तरं—श्रूयतां तत्पुरावृत्तं पुराणे च मया श्रुतम्। इदमर्धं कुत्रचिदधिकं—ङ.

अथ पुत्रप्राप्त्यसाधारणोपायप्रवृत्तिप्रस्तावः—एतच्छ्रुत्वेत्यादि । एतदिति । पुत्रार्थं अश्वमेधप्रवृत्तिमित्यर्थः । सूतः—सुमन्त्रः । * स तूभयधर्मा राज्ञः । इदं—वक्ष्यमाणम् । अयं अश्वमेधप्रवृत्तिरूपपुत्रार्थोपायस्ते ऋत्विग्भिरुपदिष्टः, मया तु पुरावृत्त इति—स्वरूपतोऽन्य एव त्वत्पुत्रावाप्तये श्रुतः ॥ १ ॥

**सनत्कुमारो भगवान् पूर्वं कथितवान् कथाम् ।**
**ऋषीणां सन्निधौ राजन्! तव पुत्रागमं प्रति ॥ २ ॥**

कथमित्यतः—सनत्कुमार इत्यादि । कथामिति । सर्वज्ञत्वाद्भविष्यद्विषयिणीमिति शेषः ॥ २ ॥

**काश्यपस्य तु पुत्रोऽस्ति [1]विभण्डक इति श्रुतः ।**
**ऋश्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति ॥ ३ ॥**

का भविष्यन्मत्पुत्रप्राप्तिविषयिणी कथेत्यतः—काश्यपस्येत्यादि । विभण्डकास्तित्वं सनत्कुमारकथाकथनकालीनम् । ऋश्यशृङ्गजनिस्तस्मात् भाविनी । तदाख्यातो भविष्यतीति । धातुसम्बन्धे प्रत्यया इति न्यायेन भूतभविष्यतोस्साधुत्वम् ॥ ३ ॥

**स वने नित्यसंवृद्धो मुनिर्वन[2]चरस्सदा ।**
**नान्यं जानाति विप्रेन्द्रो नित्यं पित्रनुवर्तनात् ॥ ४ ॥**

नित्यसंवृद्धः—पुरपौरग्रामग्रामीणादिस्वरूपव्यापारानुभवराहित्येनैव संवृद्धः—पित्रा वर्धित इत्यर्थः । अत एव वनचरत्वादि । पित्रनुवर्तनादिति । न क्वापि त्वया गन्तव्यं इति पित्राज्ञानुवर्तनादित्यर्थः ॥ ४ ॥

---

* उभयधर्मा—सूतो मन्त्रिश्च.

[1] विभाण्डकः—ङ. [2] चरैः—ङ.

**द्वैविध्यं ब्रह्मचर्यस्य भविष्यति महात्मनः ।**
**लोकेषु प्रथितं राजन्! विप्रैश्च कथितं सदा ॥ ५ ॥**

द्वैविध्यमित्यादि । यद्ब्रह्मचर्यं लोकेषु मेखलाजिनादिना सर्वलोकस्य प्रसिद्धं, यच्च विप्रैर्याज्ञवल्क्यादिस्मर्तृभिः कथितमृतुगमनलक्षणं गौणब्रह्मचर्यमस्ति तदिदं द्वैविध्यं—द्विप्रकारकब्रह्मचर्यं च महात्मनस्तस्य भविष्यति । द्वे विधे यस्य तद्द्विविधम् , तस्य भाव इति ष्यञ् ॥ ५ ॥

**तस्यैवं वर्तमानस्य कालस्समभिवर्तत ।**
**अग्निं शुश्रूषमाणस्य पितरं च यशस्विनम् ॥ ६ ॥**

अथ कथं तथा वनचरस्य यथोक्तगौणब्रह्मचर्यस्य प्रसक्तिरित्यतः तदुपपादनम्—तस्येत्यादि । अग्न्यादिकं शुश्रूषमाणस्य एवं मुख्यब्रह्मचर्ये वर्तमानस्य कालः—कतिपयः समभिवर्तत । 'छन्दसि लुङ्लङ्लिटः' इति भविष्यति लङ् , अडभावश्छान्दसः, समभिवर्तिष्यते—गमिष्यतीत्यर्थः ॥ ६ ॥

**एतस्मिन्नेव काले तु रोमपादः प्रतापवान् ।**
**अङ्गेषु प्रथितो राजा भविष्यति महाबलः ॥ ७ ॥**

एतस्मिन्—तस्य ब्रह्मचर्यदशायामित्यर्थः ॥ ७ ॥

**तस्य व्यतिक्रमाद्राज्ञो भविष्यति सुदारुणा ।**
**अनावृष्टिस्सुघोरा वै सर्वभूतभयावहा ॥ ८ ॥**

व्यतिक्रमात्—क्षत्रनित्यप्राप्तप्रजापरिपालनवर्णाश्रमशिक्षणादिधर्मविलोपनादित्यर्थः ॥ ८ ॥

**अनावृष्ट्यां तु वृत्तायां राजा दुःखसमन्वितः ।**
**ब्राह्मणाञ्छ्रुतवृद्धांश्च समानीय प्रवक्ष्यति ॥ ९ ॥**

श्रुतेन वृद्धाः श्रुतवृद्धाः ॥ ९ ॥

भवन्तः श्रुतधर्माणो लोकचारित्रवेदिनः ।
[1] समादिशन्तु नियमं प्रायश्चित्तं यथा भवेत् ॥ १० ॥

समादिशन्तु । यथा चेन्मत्पापस्यानावृष्ट्यादिमूलस्य प्रायश्चित्तं भवति तादृङ्नियममनुष्ठेयांशमादिशन्तु ॥ १० ॥

वक्ष्यन्ति ते महीपालं ब्राह्मणा वेदपारगाः ।
आनाय्य च महीपाल ! ऋश्यशृङ्गं सुसत्कृतम् ॥ ११ ॥

एवं राज्ञा पृष्टास्ते शुद्धब्रह्मचारिणे कन्याप्रदानमेव परं प्रायश्चित्तमिति वक्ष्यन्तीत्युपदिश्यते—वक्ष्यन्तीत्यादि—कन्यां प्रयच्छेत्यन्तेन । आनाय्येति । नीञो हेतुमण्ण्यन्ताल्ल्यप् । महीपाल ऋश्येति 'ऋत्यकः' इति प्रकृतिभावः ॥ ११ ॥

विभण्डकसुतं राजन् ! ब्राह्मणं वेदपारगम् ।
प्रयच्छ कन्यां शान्तां वै विधिना सुसमाहितः ॥ १२ ॥

प्रयच्छ । ऋश्यशृङ्गायेति शेषः ॥ १२ ॥

तेषां तु वचनं श्रुत्वा राजा चिन्तां प्रपत्स्यते ।
केनोपायेन वै [3] शक्यमिहानेतुं स वीर्यवान् ॥ १३ ॥

राज्ञश्चिन्ताभिनयः—केनोपायेनेत्यादि । वीर्यवान्—विद्यावृत्ततपोवीर्यवान् ॥ १३ ॥

ततो राजा विनिश्चित्य सह मन्त्रिभिरात्मवान् ।
पुरोहितममात्यांश्च ततः प्रेष्यति सत्कृतान् ॥ १४ ॥

---

[1] एतदनन्तरं, इत्युक्तास्ते ततो राज्ञा सर्वे ब्राह्मणसत्तमाः ॥ इदमर्धमधिकं–ङ.
[2] एतदनन्तरं, विभण्डकसुत राजन्सर्वोपायैरिहानय ॥ इदमर्धमधिकं–ङ. [3] शक्य इहा–ङ.

**ते तु राज्ञो वचश्श्रुत्वा व्यथिता विनताननाः ।**
**न गच्छेम ऋषेर्भीता अनुनेष्यन्ति तं नृपम् ॥ १५ ॥**

ते त्विति । पुरोहितमन्त्रिण इति यावत् । व्यथिताः—अशक्यार्थयोगतः खिन्नाः , अत एव विनताननाः, ऋषेर्विभण्डकाद्भीतास्सन्तो न वयं गच्छेम इत्युक्त्वा तं नृपं रोमपादं अनुनेष्यन्ति । अशक्यार्थत्वात् त्वन्नियोगो नास्माभिरनुष्ठीयते, अतः क्षन्तव्यमित्यनुनेष्यन्ति ॥ १५ ॥

**वक्ष्यन्ति चिन्तयित्वा ते तस्योपायांश्च तत्क्षमान् ।**
**आनेष्यामो वयं विप्रं * न च दोषो भविष्यति ॥ १६ ॥**

एवमनुनीयाथ क्षमान्—उचितान् तदानयनोपायांश्चिन्तयित्वा तस्य राज्ञो वक्ष्यन्ति । अस्मदुक्तं यदि शृणोषि तदा वयं तं विप्रमानेष्यामः । तदाऽस्माकमपि शापादिदोषो न भविष्यति, गणिकाद्वारत्वात् ॥ १६ ॥

**एवमङ्गाधिपेनैव गणिकाभिर्ऋषेस्सुतः ।**
**† आनीतोऽवर्षयद्देवः शान्ता चास्मै प्रदीयते ॥ १७ ॥**
**ऋश्यशृङ्गस्तु ‡ जामाता पुत्रांस्तव विधास्यति ।**
**सनत्कुमारकथितमेतावद्व्याहृतं मया ॥ १८ ॥**

एवं स्वामात्यवचनात् गणिकाश्च प्रेषयता अङ्गाधिपेन गणिकाभिः—द्वाराभिः ऋषेस्सुतः आनीतस्सन् देवः—पर्जन्यः अवर्षयत्– वर्ष-

---

* ऋश्यशृङ्गस्य ब्रह्मचर्यवैफल्यरूपदोषश्च न भविष्यति । यथा गणिकासंपर्को न भवेत्तथाऽऽनेष्याम इत्यर्थः—**गो**. वञ्चनयाऽऽनयनमपि न दोषाय, लोकक्षेमार्थत्वादिति वाऽर्थः

† यद्यपि सनत्कुमारोक्त्यनुरोधेन भविष्यन्निर्देश उचितः ; तथापि राज्ञः सन्तोषाधिक्याय स्वप्रोच्यमानकाले वृत्तमेतदिति बोधयितुं भूतनिर्देशः. ... ये त्वानयनादिसर्वं भविष्यत्त्वेनैव व्याचक्षते तेषां 'कथं आनीतः ?' इति राजप्रश्नानुपपत्तिः—**ति**.

‡ शान्ता दशरथस्यौरसी पुत्री रोमपादस्य दत्ता । अत उभयोर्जामाता ऋश्यशृङ्ग इति—**गो**.

यिष्यति । प्रदीयते–प्रदास्यते, छान्दसो लट् । अत एव ऋश्यशृङ्गस्तु राज्ञो जामाता भविष्यति । स एव तव पुत्रान्विधास्यति—इत्येवमेतावत् सनत्कुमारकथितं मया श्रुतं, इदानीं तुभ्यमिदं व्याहृतं च । अतः परं देवः प्रमाणमिति शेषः ॥ १७-१८ ॥

**अथ हृष्टो दशरथः सुमन्त्रं प्रत्यभाषत ।**
**यथर्श्यशृङ्गस्त्वानीतो विस्तरेण त्वयोच्यताम् ॥ १९ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे नवमः सर्गः

———

हृष्टः–निश्चितपुत्रप्राप्त्युपायलाभात्संतुष्टः । अथोत्तरसर्गप्रतिपाद्यार्थस्य पातनिका—यथेत्यादि । आनीत इति । गणिकाभिः रोमपादेनेति शेषः । धैर्य(१९)मानः ॥ १९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे नवमः सर्गः

———

## अथ दशमः सर्गः

[ऋश्यशृङ्गोपाख्यानम्]

**सुमन्त्रश्चोदितो राज्ञा प्रोवाचेदं वचस्तथा ।**
**[1] यथर्श्यशृङ्गस्त्वानीतः शृणु मे मन्त्रिभिस्सह ॥ १ ॥**

अथ पुरोहिताशक्यानयनः कथं गणिकाभिरानीत इति असम्भावनया तदानयनप्रकारे चोदिते यथाश्रुततत्त्वकथनेन तं सम्भावयति सुमन्त्रः—सुमन्त्र इत्यादि । चोदित इति । विस्तरेणानयनप्रकारकथनायेति शेषः । मन्त्रिभिस्सह संमन्त्र्य रोमपादेन यथर्श्यशृङ्गस्त्वानीतः, तं प्रकारं मे मम सकाशात् शृण्विति योजनार्थः ॥ १ ॥

---

[1] एतदनन्तरं–तन्मे निगदितं सर्वं विस्तरेण शृणुष्व ह ॥ इदमधिकं–ङ.

**रोमपादमुवाचेदं सहामात्यः पुरोहितः ।**
**उपायो निरपायोऽयमस्माभिरभिचिन्तितः ॥ २ ॥**

रोमेत्यादि । सहामात्यः पुरोहितो रोमपादमिदमुवाच । किमुवाचेत्यतः—उपाय इत्यादि ॥ २ ॥

**ऋश्यशृङ्गो वनचरः तपस्स्वाध्यायने रतः ।**
**अनभिज्ञस्स नारीणां विषयाणां सुखस्य च ॥ ३ ॥**

ऋश्येत्यादि । नारीणां विषयाणामिति व्यधिकरणे सम्बन्धमात्रे षष्ठ्यौ ॥ ३ ॥

**इन्द्रियार्थैरभिमतैर्नरचित्तप्रमाथिभिः ।**
**पुरमानाययिष्यामः क्षिप्रं चाध्यवसीयताम् ॥ ४ ॥**

इन्द्रियार्थाः—द्रव्यवस्त्रगीत्यादयः । अध्यवसीयतामिति । अस्मदुक्तार्थकरण इति शेषः ॥ ४ ॥

**गणिकास्तत्र गच्छन्तु रूपवत्यः स्वलङ्कृताः ।**
**प्रलोभ्य विविधोपायैरानयिष्यन्ति सत्कृताः ॥ ५ ॥**

किं मयाऽनुष्ठयमित्यतो—गणिका इत्यादि । सत्कृताः—विचित्राम्बराभरणान्नपानकृतोपचारा गणिका इति योजना ॥ ५ ॥

**श्रुत्वा तथेति राजा च प्रत्युवाच पुरोहितम् ।**
**पुरोहितो मन्त्रिणश्च तथा चक्रुश्च ते तदा ॥ ६ ॥**
**वारमुख्यास्तु तच्छ्रुत्वा वनं प्रविविशुर्महत् ।**

राजा पुरोहितं तथेति प्रत्युवाचेति । मन्नियोगात् भवानेव तथाऽनुतिष्ठत्वित्युक्तवानित्यर्थः । अत्यल्पविषयत्वाद्राज्ञ एवंवादः । अथ पुरो-

हितस्य च द्विजत्वात् गणिकादिव्यवहारोऽनुचित इति सोऽपि मन्त्रिणः प्रत्युवाच गणिकानियोगं। ते मन्त्रिणस्तथा चक्रुः; साक्षाद्गणिकाः प्रैरयन् तच्छ्रुत्वेति यावत् ॥ ६ ॥

**आश्रमस्याविदूरेऽस्मिन् यत्नं कुर्वन्ति दर्शने ॥ ७ ॥**

**ऋषिपुत्रस्य धीरस्य नित्यमाश्रमवासिनः ।**
**पितुस्स नित्यसन्तुष्टो नातिचक्राम चाश्रमात् ॥ ८ ॥**

यद्वनं प्रविविशुः, अस्मिन् वने आश्रमस्य–विभण्डकाश्रमस्य अविदूरे स्थित्वा धीरत्वादिगुणकस्य ऋषिपुत्रस्य दर्शने यत्नं कुर्वन्ति स्म । पितुरिति । उपलालनभेदैरिति शेषः ॥ ८ ॥

**न तेन जन्मप्रभृति दृष्टपूर्वं तपस्विना ।**
**स्त्री वा पुमान् वा यच्चान्यत् सर्वं नगरराष्ट्रजम् ॥ ९ ॥**

नगरजं सत्वं उत्तमाश्वादिकं। राष्ट्रजं सत्वं ग्रामसूकरकुक्कुटादिः ॥

**ततः कदाचित्तं देशमाजगाम यदृच्छया ।**
**विभण्डकसुतस्तत्र ताश्चापश्यद्वराङ्गनाः ॥ १० ॥**

कदाचिदिति। दैवगत्येति। शेषः। तं देशमिति। वारस्त्रीसञ्चार-प्रदेशमित्यर्थः ॥ १० ॥

**ताश्चित्रवेषाः प्रमदा गायन्त्यो मधुरस्वरैः ।**
**ऋषिपुत्रमुपागम्य सर्वा वचनमब्रुवन् ॥ ११ ॥**

**कस्त्वं किं वर्तसे ब्रह्मन् ज्ञातुमिच्छामहे वयम् ।**
**एकस्त्वं विजने घोरे वने चरसि शंस नः ॥ १२ ॥**

कस्त्वमिति। किं जातिः? कस्य पुत्र इत्यर्थः। किं वर्तसे इति। किं नामधेयो वर्तस इत्यर्थः। अपि च विजने एकस्सन् कथं चरसीति प्रश्नत्रयम्॥ १२॥

अदृष्टरूपास्तास्तेन काम्यरूपा वने स्त्रियः।
हार्दात्तस्य मतिर्जाता ह्याख्यातुं पितरं स्वकम्॥ १३॥

अदृष्टरूपाः। इतः प्रागदृष्टैवंरूपाः, अपि च कमनीयरूपाः तास्त्रियः। तेन वने दृष्टा इति शेषः॥ १३॥

पिता विभण्डकोऽस्माकं तस्याहं सुत औरसः।
ऋश्यशृङ्ग इति ख्यातं नाम कर्म च मे भुवि॥ १४॥
इहाश्रमपदेऽस्माकं समीपे शुभदर्शनाः।
करिष्ये वोऽत्र पूजां वै सर्वेषां विधिपूर्वकम्॥ १५॥

इह—वने समीपे वर्तमाने अस्माकं आश्रमपदे वः पूजां करिष्ये इत्यनेन नाहमेकाकी विजने वने पिशाचवत् सञ्चरामि, अपि तु समातापित्रकस्य मे स्वीयं स्थानमेवेत्युक्तं भवति। इहाश्रमपदोऽस्माकमिति पाठोऽस्तीत्यभिप्रेत्य तत्राश्रमपद इति लिङ्गव्यत्यय *इत्यन्ये। तदा तु व्यक्तमेव तृतीयप्रश्नोत्तरम्। अत्र सर्वेषामिति निर्देशस्त्वविवक्षितस्त्रीत्ववस्तुमात्राभिप्रायेण। एतेन स्त्रीविकारापरिज्ञानं द्योतितम्॥

ऋषिपुत्रवचश्श्रुत्वा सर्वासां मतिरास वै।
तदाश्रमपदं द्रष्टुं जग्मुस्सर्वाश्च तेन ताः॥ १६॥
असेः अनुप्रयोगवत् भूभावाभावश्छान्दसः॥ १६॥

---

* गोविन्दराजादयः॥

**आगतानां ततः पूजां ऋषिपुत्रश्चकार ह ।**
**इदमर्घ्यमिदं पाद्यमिदं मूलमिदं फलम् ॥ १७ ॥**
**प्रतिगृह्य तु तां पूजां सर्वा एव समुत्सुकाः ।**
**ऋषेर्भीतास्तु शीघ्रं ता गमनाय मतिं दधुः ॥ १८ ॥**

सर्वा एव समुत्सुका इति। चिरं तदालापसमुत्सुका एवेति यावत्। ऋषेः—विभण्डकात् ॥ १८ ॥

**अस्माकमपि मुख्यानि फलानीमानि वै द्विज !**
**गृहाण प्रति भद्रं ते भक्षयस्व च मा चिरम् ॥ १९ ॥**

मुख्यानीति । प्रशस्तास्वादवन्तीति यावत्। फलानीति प्रतारणार्थं मोदका एवोच्यन्ते। गृहाणप्रतीति। 'छन्दसि परेऽपि' इति प्रयोगः, प्रतिगृहाणेति यावत्। ते भद्रं—भक्षणायातिमधुरम्। अतो भक्षयस्व, मा चिरं—विलम्बं मा कुरु ॥ १९ ॥

**ततस्तास्तं समालिङ्ग्य सर्वा हर्षसमन्विताः ।**
**मोदकान् प्रददुस्तस्मै भक्षांश्च विविधान् शुभान् ॥ २० ॥**

समालिङ्ग्य। स्पर्शतो वशीकरणार्थमिति शेषः। हर्षसमन्विता इति—उभयथापि बालब्रह्मचारितस्सुन्दरालिङ्गनप्राप्त्या स्वकार्यानुकूलस्पर्शसिद्ध्या च ॥ २० ॥

**तानि चास्वाद्य तेजस्वी फलानीति स्म मन्यते ।**
**अनास्वादितपूर्वाणि वने नित्यनिवासिनाम् ॥ २१ ॥**

वने नित्यनिवासिनां अनास्वादितपूर्वाणि, 'पूरणगुण' इति सुहितार्थयोगजषष्ठ्यास्समासनिषेधादेव ज्ञापकात् तृतीयार्थे षष्ठी,

पूर्वमनास्वादितानि । सुप्सुपेति समासः । फलानीति मन्यते स्मेति योजना ॥ २१ ॥

आपृच्छय तु तदा विप्रं व्रतचर्यां निवेद्य च ।
गच्छन्ति स्मापदेशात्ताः भीतास्तस्य पितुः स्त्रियः ॥२२॥

व्रतचर्यामिति । * मिथ्यैव—गत्वास्माभिः किंचिद्व्रतमनुष्ठेयमिति —व्रतानुष्ठानं तस्य निवेद्य तस्मात् अपदेशात् व्याजात् । तस्य पितुः ऋषेः विभण्डकात् भीतास्तास्स्त्रियो गच्छन्ति स्म ॥ २२ ॥

गतासु तासु सर्वासु काश्यपस्यात्मजो द्विजः ।
अस्वस्थहृदयश्चासीद्दुःखं स्म परिवर्तते ॥ २३ ॥

अस्वस्थहृदयः—अप्रसन्नचित्तश्चासीत् । हि—यस्मात् दुःखं—तादृशजैह्वचाक्षुषादिविषयसुखविश्लेषजं संपरिवर्तते स्म ॥ २३ ॥

ततो परेद्युस्तं देशं आजगाम स वीर्यवान् ।
[1] मनोज्ञा यत्र ता दृष्टा वारमुख्याः स्वलङ्कृताः ॥ २४ ॥

तत एव हेतोः । अपरेद्युश्च तं देशं जगाम । तमिति किमित्यतः—मनोज्ञा इत्यादि ॥ २४ ॥

दृष्ट्वैव च तदा विप्रमायान्तं हृष्टमानसाः ।
उपसृत्य ततस्सर्वास्तास्तमूचुरिदं वचः ॥ २५ ॥
एह्याश्रमपदं सौम्य ! ह्यस्माकमिति चाब्रुवन् ।

---

* अस्य निवेद्येत्यत्रान्वयः ॥

[1] एतदनन्तरं—विभण्डकसुतश्श्रीमान् मनसा चिन्तयन्मुहुः ॥ इदमर्धं कुत्रचिदधिकम्—ङ.

**चित्राण्यत्र बहूनि स्युः मूलानि च फलानि च ।**
**तत्राप्येष विधिः श्रीमान् विशेषेण भविष्यति ॥ २६ ॥**

एष विधिरिति—स्वादिष्टभक्षणादिरूपः ॥ २६ ॥

**श्रुत्वा तु वचनं तासां सर्वासां हृदयङ्गमम् ।**
**गमनाय मतिं चक्रे तं च निन्युस्तदा स्त्रियः ॥ २७ ॥**

हृदयङ्गममिति । खच्प्रकरणे 'गमेस्सुप्युपसंङ्ख्यानम्' इति खच् । तं च निन्युरिति । गङ्गायां पूर्वस्थापितं नावमारोप्य प्रवहणेनैवाङ्गदेशं निन्युरिति भारते प्रसङ्गात् ॥ २७ ॥

**तत्र चानीयमाने तु विप्रे तस्मिन्महात्मनि ।**
**ववर्ष सहसा देवो जगत्प्रह्लादयंस्तदा ॥ २८ ॥**

तत्र चाङ्गदेशे तस्मिन्विप्रे आनीयमाने तु देवो ववर्ष ॥ २८ ॥

**[1] वर्षेणैवागतं विप्रं विषयं स्वं नराधिपः ।**
**प्रत्युद्गम्य मुनिं प्रह्वः शिरसा च महीं गतः ॥ २९ ॥**

तदा वर्षेण सहैवाभीष्टेन विषयं स्वं देशमागतं प्रत्युज्जगाम । प्रह्वः—शिरसा महीं गतश्च । प्रथमं केवलाञ्जलिपूर्वं साष्टाङ्गनमस्कारं कृतवानिति यावत् ॥ २९ ॥

**अर्घ्यं च प्रददौ तस्मै न्यायतस्सुसमाहितः ।**
**वव्रे प्रसादं विप्रेन्द्रात् मा विप्रं मन्युराविशेत् ॥ ३० ॥**

वव्र इति । अर्घ्यादिपूजितं तं विप्रं ऋश्यशृङ्गं वव्रे । किं वव्रे ? तस्य प्रसादं—सौमुख्यमेव ; मह्यं नित्यं प्रसन्नो भव, सापराधेऽपि

---

[1] हर्षेणै—ङ.

मयीति। किमर्थमेवं वरणम्। गणिकाभिः पश्चाद्व्यवहारकाले अतिजुगुप्सितप्रतीताभिर्विलोक्य—स्वानयनमन्वीक्ष्य मन्युः ऋश्यशृङ्गं विप्रेन्द्रं मा प्रविशत्विति। ततः प्रसन्नत्वादेव तन्मत्यनुरोधेनान्तःपुरप्रवेशशान्तापरिग्रहतत्सम्बन्धजसन्तोषश्च ॥

सर्वमेतत् बालपिशाचकथोपमं मन्यामहे। कुतः? अज्ञत्वे प्राकृतवद्वर्षानुग्रहनिग्रहादिशक्त्यभावप्रसङ्गात्। पुत्राद्यर्थं याजनादिप्रवृत्त्ययोगात्। स्वपितर्येव निरतिशयनिर्मलब्रह्मचर्यवासतो निखिलवेदशास्त्रज्ञत्वपूर्णतपस्त्वधर्मयोः स्थितयोः, अष्टविधस्त्रीप्रसङ्गपरिहारलक्षणब्रह्मचर्यपरिज्ञाने च स्थिते, स्वस्य च ब्रह्मचर्याश्रमित्वात् तद्भ्रंशे परमानर्थपरिज्ञानवत्त्वे स्थिते शास्त्रत एव, अन्ततो वनचरस्त्रीणामेव अनुभवात् स्त्र्यादिस्वरूपपरिज्ञाने तत्परिहार्यत्वबुद्धौ दृढं जागरूकायां, कथं नाम कटाक्षेणापि स्त्रीं निरीक्षयेत्; कथं च तमुन्मत्तमिव सर्वज्ञं स्त्रीपिशाच्यो विलोभयेयुः? कुतश्च ताः स्वाश्रमपदं प्रापयेत्? पित्राज्ञाभीतः कुतस्तरां प्रपूजयेत्? पितुरसन्निधिकालेऽपि कथं च पित्रनुमतिं पितृप्रीतिं चोपेक्ष्य ता अनुयायात्? कथं च नाम विलोभ्य वाऽऽनीतः? कुतः पुत्रं पिता नामार्गयत? कथं च नेत्रीस्तास्तत्प्रयोजकं राजानं च समाधिना वीक्ष्य तत्क्षणादेव न क्रुद्धश्शपेत्? अतः पिशाचकथोपममिति। अत्रोच्यते-प्रागुक्तरीत्याऽवर्ज्यप्राप्तसार्वज्ञ्यत्वात् प्राचीनकर्मवशात् स्वजन्मविशेषसंम्बन्धवत् प्रारब्धकर्मवशादेव क्षत्रस्त्रीपरिग्रहकश्मलप्राप्तिरपि सर्वज्ञत्वाज्जानान एव तत्प्राप्तिद्वारभूतवेश्यापिशाच्यश्च विलोभ्यमान इवानुचक्रे। पिताऽपि सर्वज्ञतमत्वात् कुलवृद्ध्यै सन्तत्यपेक्षत्वात्तेनापि स्वपुत्रस्य क्षात्रक्षेत्रप्राप्तिं विदित्वा उपेक्ष्यैव तद्विवासं नान्विष्ट। अपि तु दशशिरोपहृतसीतां रामवत् अज्ञातपुत्रविदेशगमनेनेव स्थितमिति सर्वमवदातम्। अतस्त्विह कविनाऽन्यनारीनरापरिज्ञानवर्णनं नित्यप्रत्यङ्मुखत्वपूर्णब्रह्मचर्यत्वगुर्वैकायनलौकिकालौकिकसर्वकृत्यत्वादिशुद्धतरपूर्ण -

ब्रह्मचर्य [1]प्रतिपादनार्थम् । अपूपादेः फलत्वेन मननं च तदशुद्धि-निरासार्थम् । तद्भक्षणादिकं च तासां निजानुकूल्यद्योतनार्थम् । तच्च स्वप्रारब्धभोगशेषतयेत्युक्तमेव ॥ ३१ ॥

अन्तःपुरं प्रविश्यास्मै कन्यां दत्त्वा यथाविधि ।
शान्तां शान्तेन मनसा राजा हर्षमवाप सः ॥ ३१ ॥
एवं स न्यवसत्तत्र सर्वकामैस्सुपूजितः ।
ऋश्यशृङ्गो महातेजाः शान्तया सह भार्यया ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे दशमः सर्गः

---

द्वात्रिंशत् (३२) । आहत्य शतांग (३६५) मानम् ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे दशमः सर्गः

---

### अथ एकादशः सर्गः

[दशरथेन स्वनगरं प्रति ऋश्यशृङ्गानयनम्]

भूय एव हि राजेन्द्र! श्रुणु मे वचनं हितम् ।
यथा स देवप्रवरः कथायामेवमब्रवीत् ॥ १ ॥

एवं रोमपादप्रसङ्गेन दशरथस्य ऋश्यशृङ्गात् पुत्रप्राप्तिकथां ब्रह्मपुत्रीयामुक्त्वा अथ प्राधान्यात् ऋश्यशृङ्गाद्दशरथस्य पुत्रप्राप्तिकथा च कालान्तरोक्ता ब्रह्मपुत्रीयाऽस्तीति सुमन्त्रोऽनेकयुगवृद्धो राज्ञः ऋश्यशृङ्गा-नयनमेव साक्षात्पुत्रप्राप्तिसाधनमिति स्थैर्यायाह—भूय इत्यादि । स देवप्रवर इति । यः पूर्वं रोमपादप्रसङ्गेन त्वत्पुत्रोपायमुक्तवान् स ब्रह्मपुत्र इत्यर्थः । कथायामिति । कालान्तरीयायामिति शेषः ॥ १ ॥

---

[1] प्रतिपादनपरम्—ग.

इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः ।
राजा दशरथो नाम श्रीमान् सत्यप्रतिश्रवः ॥ २ ॥

सत्यप्रतिश्रवः--सत्यप्रतिज्ञः ॥ २ ॥

अङ्गराजेन सख्यं च तस्य राज्ञो भविष्यति ।
कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥ ३ ॥

अङ्गराजेन—रोमपादेन । तस्येति । दशरथस्येति यावत् । येनाङ्गराजेन दशरथस्य सख्यं भविष्यति, अस्याङ्गराजस्य शान्ताख्या कन्या च भविष्यति ॥ ३ ॥

पुत्रस्त्वङ्गाधिराजस्य रोमपाद इति श्रुतः ।
अङ्गराजं दशरथो गमिष्यति महायशाः ॥ ४ ॥

किंनामकोऽसावङ्गदेशाधिपतिः राजा ? येन दशरथस्य सख्यमित्यत्रोक्तम्—पुत्र इत्यादि । अङ्गस्य—अङ्गदेशाधिपतेः राज्ञः पुत्रः, दशरथसखा च रोमपाद इति श्रुतः । तं रोमपादं स्वमित्रं गमिष्यतीति । ऋश्यशृङ्गानयनार्थमिति शेषः ॥ ४ ॥

अनपत्योऽस्मि धर्मात्मन् ! शान्ताभर्ता मम क्रतुम् ।
आहरेत त्वयाऽऽज्ञप्तः सन्तानार्थं कुलस्य च ॥ ५ ॥

तदेव प्रतिपाद्यते—अनपत्योऽस्मीत्यादि । धर्मात्मा- धर्मदेवतावतारमूर्तिः । शान्तायास्त्वत्पुत्र्याः भर्ता त्वद्गृहवासी, ऋश्यशृङ्ग इति यावत् । एवं स्थिते पाङ्क्ते पूर्वापराविरुद्धे * कश्चित्—कन्या चास्येत्यत्र

* रामानुजीयेप्येवमनुवादो दृश्यते. गोविन्दराजीयेऽपि पूर्वं ९–१८ श्लोकव्याख्यानावसरे एवमुक्तम् ।

अस्य दशरथस्य शान्ताख्या भविष्यतीत्यवोचत् । एवं मृषा प्रलप्य तत्समर्थनाय भूयोऽनेकमृषाऽवोचत् । प्रलपतु नाम । आहरेतेति प्रार्थने लिङ् ॥ ५ ॥

श्रुत्वा राज्ञोऽथ तद्वाक्यं मनसा स विचिन्त्य च ।
प्रदास्यते पुत्रवन्तं शान्ताभर्तारमात्मवान् ॥ ६ ॥

मनसा स विचिन्त्येति । दशरथस्यास्मज्जामात्रा यज्ञप्रवर्तनमसहायेन दुश्शकम् । अतो मम दौहित्रसहितमेव जामातरं प्रेषयिष्यामि इति निश्चित्य पुत्रवन्तं शान्ताभर्तारं प्रदास्यते ॥ ६ ॥

प्रतिगृह्य च तं विप्रं स राजा विगतज्वरः ।
आहरिष्यति तं यज्ञं प्रहृष्टेनान्तरात्मना ॥ ७ ॥

तं यज्ञमिति । पुत्रकामेष्टिरूपमिति यावत् ॥ ७ ॥

तं च राजा दशरथो यष्टुकामः कृताञ्जलिः ।
ऋश्यशृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्मवित् ॥ ८ ॥

वरयिष्यतीति । वरः—वरणम् । 'तत्करोति' इति णिच् । टिलोपस्य स्थानिवत्त्वाद्वृद्ध्यभावः । एवं पाङ्क्ते, शाब्दिकमानी कश्चित् 'आधृषाद्वा' इति णिच्, प्रयोगपरम्परावशात् वृद्ध्यभाव इत्यजल्पत् ॥

यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च जनेश्वरः ।
लभते च स तं कामं विप्रमुख्याद्विशां पतिः ॥ ९ ॥

किंविषयकं वरणमित्यतो—यज्ञार्थम् । नापुत्रस्य लोकोऽस्तीति श्रुतेः । प्रसवः—स्वर्गद्वारम् ॥ ९ ॥

पुत्राश्चास्य भविष्यन्ति चत्वारोऽमितविक्रमाः ।
वंशप्रतिष्ठानकराः सर्वलोकेषु विश्रुताः ॥ १० ॥
एवं स देवप्रवरः पूर्वं कथितवान् कथाम् ।
सनत्कुमारो भगवान् पुरा देवयुगे प्रभुः ॥ ११ ॥

पूर्वं-विभक्तिप्रतिरूपकमव्ययम्, पूर्वस्मिन् काले । कस्मिन् पूर्वस्मिन् काले इत्यतः—पुरा देवयुग इति । कृतयुग इति यावत् ॥

स त्वं पुरुषशार्दूल! समानय सुसत्कृतम् ।
[1]स्वयमेव च राजेन्द्र! गत्वा सबलवाहनः ॥ १२ ॥
स्वयमेवेति । न पुरोहितादिद्वारा ॥ १२ ॥
[2]अनुमान्य वसिष्ठं च सूतवाक्यं निशम्य च ।
सान्तःपुरः सहामात्यः प्रययौ यत्र स द्विजः ॥ १३ ॥

अनुमान्य--कृतानुमतिकं कृत्वा । *उक्तप्रक्रियः । पुरोहिते मयि स्थिते कथं यज्ञार्थं अन्यानयनमिति शङ्काप्रसङ्गात्तदनुमतिस्सुमन्त्रोक्त-वृत्तान्तकथनद्वारा । यत्रेति । रोमपादसमीप इत्यर्थः ॥ १३ ॥

वनानि सरितश्चैव व्यतिक्रम्य शनैश्शनैः ।
अभिचक्राम तं देशं यत्र वै मुनिपुङ्गवः ॥ १४ ॥
आसाद्य तं द्विजश्रेष्ठं रोमपादसमीपगम् ।
ऋषिपुत्रं ददर्शादौ दीप्यमानमिवानलम् ॥ १५ ॥

---

*प्रथमसर्गे ६९तमश्लोकव्याख्यायां 'अनुमान्य' इतिशब्दस्य प्रक्रिया उक्तेत्यर्थः । उक्तप्रक्रिय इति बहुव्रीहिः । शब्द इति विशेष्यमध्याहार्यम् ॥

[1] एतदनन्तरं, सुमन्त्रस्य वचश्श्रुत्वा हृष्टो दशरथोऽभवत् ॥ इदमधिकं—ङ.
[2] एतदनन्तर, वसिष्ठेनाभ्यनुज्ञातो राजा सम्पूर्णमानसः ॥ इदमधिकं-ङ.

ततो राजा यथान्यायं पूजां चक्रे विशेषतः ।
सखित्वात्तस्य वै राज्ञः प्रहृष्टेनान्तरात्मना ॥ १६ ॥

ततो राजेति । रोमपाद इति यावत् । तस्य वै राज्ञ इति । दशरथस्येति यावत् ॥ १६ ॥

रोमपादेन चाख्यातमृषिपुत्राय धीमते ।
सख्यं सम्बन्धकं चैव तदा तं प्रत्यपूजयत् ॥ १७ ॥

रोमपादेन स्वस्य दशरथस्य च सख्यं–सखित्वं यौतादिसम्बन्धकं चैव ऋषिपुत्रायाख्यातमभूत् । तदेत्यादि । श्रवणानन्तरकाले तं–दशरथं ऋषिपुत्रः प्रत्यपूजयत् ॥ १७ ॥

एवं सुसत्कृतस्तेन सहोषित्वा नरर्षभः ।
सप्ताष्टदिवसान् राजा राजानमिदमब्रवीत् ॥ १८ ॥

तेन सहेति । रोमपादेन सहेति यावत् ॥ १८ ॥

शान्ता तव सुता राजन् ! सहभर्त्रा विशांपते !
मदीयं नगरं यातु कार्यं हि महदुद्यतम् ॥ १९ ॥

शान्ता तव सुता राजन्–हे रोमपाद! एवं स्पष्टे दशरथस्य कन्या शान्तेति प्रलपितवन्तं किं ब्रूमः ॥ १९ ॥

तथेति राजा संश्रुत्य गमनं तस्य धीमतः ।
उवाच वचनं विप्रं गच्छ त्वं सह भार्यया ॥ २० ॥
ऋषिपुत्रः प्रतिश्रुत्य तथेत्याह नृपं तदा ।
स नृपेणाभ्यनुज्ञातः प्रययौ सह भार्यया ॥ २१ ॥

सह भार्यया प्रतिश्रुत्य–तथा भवत्विति श्वशुरं प्रतिश्रुत्य, नृपं–दशरथं च प्रति तथास्त्वित्याह ॥ २१ ॥

तावन्योन्याञ्जलिं कृत्वा स्नेहात् संश्लिष्य चोरसा ।
ननन्दतुर्दशरथो रोमपादश्च वीर्यवान् ॥ २२ ॥
ततस्सुहृदमापृच्छ्य प्रस्थितो रघुनन्दनः ।
पौरेभ्यः प्रेषयामास दूतान् वै शीघ्रगामिनः ॥ २३ ॥
क्रियतां नगरं सर्वं क्षिप्रमेव स्वलङ्कृतम् ।
धूपितं सिक्तसंमृष्टं पताकाभिरलङ्कृतम् ॥ २४ ॥

स्वलङ्कृतमित्यस्यैव प्रकारकथनं—धूपितमित्यादि । इतजन्तोऽयम् । पूर्वं सिक्तः पश्चात्संमृष्टः तथा । 'पूर्वकाल' इति समासः ॥२४॥

ततः प्रहृष्टाः पौरास्ते श्रुत्वा राजानमागतम् ।
तथा प्रचक्रुस्तत्सर्वं राज्ञा यत्प्रेषितं तदा ॥ २५ ॥
ततः स्वलङ्कृतं राजा नगरं प्रविवेश ह ।
शङ्खदुन्दुभिनिर्घोषैः पुरस्कृत्य द्विजर्षभम् ॥ २६ ॥
ततः प्रमुदितास्सर्वे दृष्ट्वा तं नागरा द्विजम् ।
[1] प्रवेश्यमानं सत्कृत्य नरेन्द्रेणेन्द्रकर्मणा ॥ २७ ॥

द्विजमिति । ऋश्यशृङ्गमिति यावत् । प्रवेश्यमानं सत्कृत्येति । नगरालङ्कारचतुरङ्गबलोपेता[2]भ्युत्थानादिनेति शेषः । इन्द्रसहायार्थं कर्म यस्य स तथा ; एतेन राज्ञस्समग्रमहिमा सूचितः ॥ २८ ॥

अन्तःपुरं प्रवेश्यैनं पूजां कृत्वा विधानतः ।
कृतकृत्यं तदाऽऽत्मानं मेने तस्योपवाहनात् ॥ २९ ॥

उपवाहनात्—स्वसमीपानयनात् ॥ २९ ॥

---

[1] एतदनन्तरं, यथा दिवि सुरेन्द्रेण सहस्राक्षेण काश्यपम् ॥ इत्यधिकम्—ङ.
[2] भ्युत्सवादिना—ग.

अन्तःपुरस्त्रियस्सर्वाः शान्तां दृष्ट्वा तथाऽऽगताम् ।
सह भर्त्रा विशालाक्षीं प्रीत्याऽऽनन्दमुपागमन् ॥ ३० ॥
पूज्यमाना च ताभिस्सा राज्ञा चैव विशेषतः ।
उवास तत्र सुखिता कञ्चित्कालं [1] सहद्विजा ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकादशः सर्गः

———

सहद्विजेति । सहभर्तृकेति यावत् ॥ ३१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकादशः सर्गः

———

अथ द्वादशः सर्गः

[अश्वमेधसंभारः]

ततः काले बहुतिथे कस्मिंश्चित् सुमनोहरे ।
वसन्ते समनुप्राप्ते राज्ञो यष्टुं मनोऽभवत् ॥ १ ॥

एवमानीतादृश्यशृङ्गात् पुत्रप्राप्तौ निश्चितायां तस्याश्च तदसाधारणफलकपुत्रकामेष्टिसाध्यत्वात्तत्फलस्य च पापप्रतिबन्धे प्रतिबन्धस्यावश्यकत्वात् " सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते " इति श्रुतेः सार्वभौमाधिकारिकाश्वमेधेनैव तस्य सार्वभौमस्य सर्वपापनिवृत्तेस्साध्यत्वात् ऋश्यशृङ्गप्रसङ्गात् प्रागेव च सामान्यतस्तत्तत्प्रकृतेस्संक्षिप्तत्वाच्च प्रथमं प्रथमसङ्कल्पिताश्वमेधेन यजनप्रवृत्तिः—ततः काल इत्यादि । बहुतिथे—बहूनां पूरणो बहुतिथः । 'तस्य पूरणे' इति डट्, तस्मिन् परे 'बहुपूगण' इत्यादिनाङ्गस्य तिथुगागमः ; बहुकाल इति यावत् । अतीत इति शेषः । कस्मिंश्चिद्वसन्त इति योजना ॥ १ ॥

---

[1] सहर्त्विजा—ङ.

ततः प्रसाद्य शिरसा तं विप्रं देववर्णिनम् ।
यज्ञाय वरयामास सन्तानार्थं कुलस्य वै ॥ २ ॥

देववर्णिनं—देवतेजसम् । सन्तानार्थं यज्ञायेति । सन्तानप्रयोजनमुद्दिश्य तच्छेषतया अश्वमेधयज्ञार्थमित्यर्थः ॥ २ ॥

तथेति च स राजानमुवाच च सुसत्कृतः ।
[1] सम्भारास्सम्भ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ३ ॥
ततो राजाऽब्रवीत् [2] सूतं ब्राह्मणान् वेदपारगान् ।
सुमन्त्रावाहय क्षिप्रमृत्विजो ब्रह्मवादिनः ॥ ४ ॥

ततो राजा सूतमब्रवीत् । किमब्रवीदित्यतः—ब्राह्मणेत्यादि । हे सुमन्त्र, ब्राह्मणान् वेदपारगान् ऋत्विगादींश्च आवाहयेति ॥ ४ ॥

सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ।
पुरोहितं वसिष्ठं च ये चाप्यन्ये द्विजातयः ॥ ५ ॥
ततस्सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ।
समानयत् स तान् सर्वान् समर्थान् वेदपारगान् ॥ ६ ॥

ततः सुमन्त्र इत्यादिर्गतार्थः ॥ ६ ॥

तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा ।
धर्मार्थसहितं युक्तं श्लक्ष्णं वचनमब्रवीत् ॥ ७ ॥
मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ।
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८ ॥

---

[1] एतदनन्तरं—सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम्—इदमधिकं—ङ. [2] वाक्यं सुमन्त्रं मन्त्रिसत्तमम्—ङ.

तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ।
ऋषिपुत्रप्रभावेन कामान् प्राप्स्यामि चाप्यहम् ॥ ९ ॥
ततस्साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ।
वसिष्ठप्रमुखास्सर्वे पार्थिवस्य मुखाच्च्युतम् ॥ १० ॥
ऋष्यशृङ्गपुरोगाश्च प्रत्यूचुर्नृपतिं तदा ।
[1]सम्भारास्सम्भ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ११ ॥
सर्वथा प्राप्स्यसे पुत्रांश्चतुरोऽमितविक्रमान् ।
यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ १२ ॥
ततः प्रीतोऽभवद्राजा श्रुत्वा तु द्विजभाषितम् ।
अमात्यांश्चाब्रवीद्राजा हर्षेणेदं शुभाक्षरम् ॥ १३ ॥
गुरूणां वचनाच्छीघ्रं सम्भारास्सम्भ्रियन्तु मे ।
समर्थाधिष्ठितश्चाश्वस्सोपाध्यायो विमुच्यताम् ॥ १४ ॥

सम्भ्रियन्तु—सम्भारोपस्थानं कुर्वन्तु । छान्दसं परस्मैपदम् ॥ १४ ॥

सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ।
शान्तयश्चाभिवर्धन्तां यथाकल्पं यथाविधि ॥ १५ ॥
शक्यः कर्तुमयं यज्ञः सर्वेणापि महीक्षिता ।
नापराधो भवेत्कष्टो यद्यस्मिन् क्रतुसत्तमे ॥ १६ ॥
छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः ।
विघ्नितस्य हि यज्ञस्य सद्यः कर्ता विनश्यति ॥ १७ ॥
तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते ।
तथा विधानं क्रियतां समर्थाः करणेष्विह ॥ १८ ॥
तथेति च ततस्सर्वे मन्त्रिणः प्रत्यपूजयन् ।
पार्थिवेन्द्रस्य तद्वाक्यं यथाऽऽज्ञप्तमकुर्वत ॥ १९ ॥

---

[1] एतदनन्तरं ‘ सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ’ इति—ङ.

ततो द्विजास्ते धर्मज्ञमस्तुवन् पार्थिवर्षभम्।
अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् ॥ २० ॥
[1]गतानां तु द्विजातीनां मन्त्रिणस्तान्नराधिपः ॥
विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे द्वादशः सर्गः

---

गतानामित्यादि । गतेषु द्विजातिष्विति यावत् । संवत्सरान्ते यागार्थं अश्वं विसर्जयित्वेति शेषः । 'षष्ठी चानादरे' इति भावलक्षणमात्रेऽपि छन्दसि षष्ठी । तथाऽन्यत्रापि ॥ २१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे द्वादशः सर्गः

---

अथ त्रयोदशः सर्गः
[अश्वमेधदीक्षा]

पुनः प्राप्ते वसन्ते तु पूर्णस्संवत्सरोऽभवत्।
प्रसवार्थं गतो यष्टुं हयमेधेन वीर्यवान् ॥ १ ॥

अथ 'संवत्सरान्ते दीक्षेत' इति सूत्रात् पूर्ववसन्तविसृष्टाश्वस्य पुनः संवत्सरान्ते प्राप्ते दीक्षादिप्रवृत्तिरुपदिश्यते—पुनरित्यादि । पूर्णस्संवत्सरोऽभवदिति । पूर्ववसन्ते ऋत्विजो वरित्वा 'इह धृतिस्स्वाहेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह रमतिस्स्वाहेति चतुर्षु पत्सु जुहोति' इति विहरन्तीकर्मानुष्ठानपूर्वं 'भूरसि भुवे त्वा भव्याय त्वा भविष्यतेत्युत्सृजति सर्वत्वाय' इति विसृष्टाश्वस्येति शेषः । प्रसवार्थमित्यादि । 'प्रजापतये त्वा जुष्टं प्रोक्षामि प्रजापतिं वा एष ईप्सतीत्याहुः योऽश्वमेधेन यजते'

---

[1] इदमधिकम्—ङ.        गतेष्वथ द्विजाग्र्येषु—ङ.

इति श्रुतेः अश्वमेधस्य प्राजापत्यत्वात् पुत्रकामेष्ट्याश्च प्रजापतिदेवताकत्वात् प्रसवफलपाश्चात्ययागफलसिद्धिशेषतया भगवन्तं प्रजापतिं स्वाभिलषितं पुत्रं प्रदास्यन्तं हयमेधेन यष्टुं पुरोहितस्य वसिष्ठस्यान्तिकं गत इत्यर्थः ॥ १ ॥

**अभिवाद्य वसिष्ठं च न्यायतः प्रतिपूज्य च ।**
**अब्रवीत् प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमम् ॥ २ ॥**

वसिष्ठं चेति चकारात् अरुन्धतीं चेत्यर्थः । प्रतिपूज्येति—उपदाविशेषैरिति शेषः । द्विजोत्तमं वाक्यमब्रवीदिति द्विकर्मकत्वात् ॥ २ ॥

**यज्ञो मे क्रियतां विप्र! यथोक्तं मुनिपुङ्गव!**
**यथा न विघ्नः क्रियते यज्ञाङ्गेषु विधीयताम् ॥ ३ ॥**

यज्ञांगेषु—अश्वादिष्विति यावत् ॥ ३ ॥

**भवान् स्निग्धस्सुहृन्मह्यं गुरुश्च परमो महान् ।**
**वोढव्यो भवता चैव भारो यज्ञस्य चोद्यतः ॥ ४ ॥**

स्निग्धस्सुहृदिति । सुहृदः स्निग्धत्वाव्यभिचारात् साधीयस्त्वं स्नेहस्य गम्यते । वोढव्यो भवतेति । प्राप्तकाले कृत्यप्रत्ययः, 'कृत्यानां कर्तरि वा' इति पाक्षिकी कर्तरि तृतीया । उद्यतः । विसृष्टा पुनः प्राप्ताश्वकत्वात् प्राप्तोद्योगकाल इत्यर्थः ॥ ४ ॥

**तथेति च स राजानमब्रवीत् द्विजसत्तमः ।**
**करिष्ये सर्वमेवैतत् भवता यत्समर्थितम् ॥ ५ ॥**

समर्थितमिति—सम्यक् प्रार्थितमिति यावत् ॥ ५ ॥

ततोऽब्रवीत् द्विजान् वृद्धान् यज्ञकर्मसु निष्ठितान् ।
स्थापत्ये निष्ठितांश्चैव वृद्धान् परमधार्मिकान् ॥ ६ ॥

स्थापत्ये—स्थपतिः—रथकारः, तस्य भावः कर्म वा स्थापत्यम्, तत्र निष्ठिताः । कर्मप्रतिपादकमयमत्यादिशास्त्रे निष्ठिताः इति यावत् ॥

कर्मान्तिकान् शिल्पकरान् वर्धकीन् खनकानपि ।
गणकान् शिल्पिनश्चैव तथैव नटनर्तकान् ॥ ७ ॥

कर्मणामन्तः—समाप्तिर्यैस्ते तथा, 'अत इनि ठनौ' इति ठन्, भृतकानिति यावत् । शिल्पं—चित्रादि । वर्धकीन्—सामान्यतक्षा-शिल्पिनश्चर्मकारादयः । नटनर्तकानिति । सूत्रधारा नृत्तकर्तारश्चेत्यर्थः ॥

तथा शुचीन् शास्त्रविदः पुरुषान् सुबहुश्रुतान् ।
यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ॥ ८ ॥

समीहन्तामिति । अब्रवीदिति पूर्वेणान्वयः ॥ ८ ॥

इष्टका बहुसाहस्री शीघ्रमानीयतामिति ।
औपकार्याः क्रियन्तां च राज्ञां बहुगुणान्विताः ॥ ९ ॥

इष्टकेति जात्या । बहुसाहस्री—बहुसहस्रसङ्ख्येया । उपकार्या—राजसद्म, 'सौधोऽस्त्री राजसदनमुपकार्योपकारिका' इति निघण्टुः । स्वार्थिकोऽण् । बहुगुणान्विताः—बह्वन्नपानाद्युपकरणयुक्ताः ॥ ९ ॥

ब्राह्मणावसथाश्चैव कर्तव्याः शतशः शुभाः ।
भक्ष्यान्नपानैर्बहुभिः समुपेताः सुनिष्ठिताः ॥ १० ॥

सुनिष्ठिताः—महावातवर्षादिनिवारणक्षमतया सुप्रतिष्ठिताः ॥ १० ॥

[1] तथा पौरजनस्यापि कर्तव्या बहुविस्तराः ।
आवासा बहुभक्ष्या वै सर्वकामैरुपस्थिताः ॥ ११ ॥
तथा जानपदस्यापि जनस्य बहुशोभनम् ।
दातव्यमन्नं विधिवत् सत्कृत्य न तु लीलया ॥ १२ ॥

सत्कृत्य देयम्—परलोकप्रयोजनबुद्ध्या देयम् । न तु लीलयेति । केवलमुत्सवमात्रबुद्ध्येत्यर्थः ॥ १२ ॥

सर्ववर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ।
न चावज्ञा प्रयोक्तव्या कामक्रोधवशादपि ॥ १३ ॥
यज्ञकर्मणि ये व्यग्राः पुरुषाः शिल्पिनस्तथा ।
तेषामपि विशेषेण पूजा कार्या यथाक्रमम् ॥ १४ ॥
ते च स्युः सम्भृताः सर्वे वसुभिर्भोजनेन च ।

विशेषेणापि पूजा कार्येति । विशिष्टताम्बूलचन्दनसुवस्त्रादिदानेनेति शेषः । यथाक्रममिति । ज्येष्ठानुक्रमेणेत्यर्थः । सर्वे ते चेत्यादि । सर्वे भृतकाः । वसु—धनम् । वस्वादिभिर्यथा सम्भृतास्स्युस्तथा कार्यम् ॥

यथा सर्वं सुविहितं न किञ्चित्परिहीयते ॥ १५ ॥
तथा भवन्तः कुर्वन्तु प्रीतिस्निग्धेन चेतसा ।

सर्वमिति । उक्तोपकरणजातमिति यावत् ॥ १५ ॥

ततस्सर्वे समागम्य वसिष्ठमिदमब्रुवन् ॥ १६ ॥
यथोक्तं तत्सुविहितं न किञ्चित्परिहीयते ।
यथोक्तं तत्करिष्यामो न किञ्चित्परिहास्यते ॥ १७ ॥

---

[1] एतदनन्तरं—आगतानां सुदूराच्च पार्थिवानां पृथक्पृथक् । वाजिवारणशालाश्च तथा शय्यागृहाणि च । भटानां महदावासा वैदेशिकनिवासिनाम् ॥ इदमधिकम्—ङ,

यथोक्तं तत्सुविहितम्, अतः परं यदुक्तं भविष्यति तच्च यथोक्तं करिष्यामः ॥ १७ ॥

**ततः सुमन्त्रमानीय वसिष्ठो वाक्यमब्रवीत् ।**
**निमन्त्रयस्व नृपतीन् पृथिव्यां ये च धार्मिकाः ॥ १८ ॥**

तत इति । द्विजातिनियोजनानन्तरमित्यर्थः ॥ १८ ॥

**ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्चैव सहस्रशः ।**
**समानयस्व सत्कृत्य सर्वदेशेषु मानवान् ॥ १९ ॥**

सर्वदेशेष्विति । स्थितानिति शेषः ॥ १९ ॥

**मिथिलाधिपतिं शूरं जनकं सत्यविक्रमम् ।**
**निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितम् ॥ २० ॥**
**तमानय महाभागं स्वयमेव सुसत्कृतम् ।**
***पूर्वसम्बन्धिनं ज्ञात्वा ततः पूर्वं ब्रवीमि ते ॥ २१ ॥**

वेदेषु निष्ठितं स्वयमेवेति । †न तु मनुष्यमुखेन । कुत एवं विशेषः? कुतश्च तदानयनस्य प्रथममुपदेशः? इत्यतः—पूर्वेत्यादि । पूर्वकालमारभ्यैवास्मद्राज्ञा यौतादिसर्वसम्बन्धवानिति ज्ञात्वा तत एव हेतोः पूर्वं तस्यानयनं ते ब्रवीमि ॥ २१ ॥

**तथा काशीपतिं स्निग्धं सततं प्रियवादिनम् ।**
**वयस्यं राजसिंहस्य स्वयमेवानयस्व ह ॥ २२ ॥**

---

* पूर्वसम्बन्धिनं चिरन्तनसुहृदम् । ततः—पूर्वोक्तेभ्यो नृपतिभ्यः—**गो.** भाविनं सम्बन्धिनं तं योगबलेन ज्ञात्वा पूर्वं तदानयनं ब्रवीमीत्यर्थः—**ति.** † न तु. दूतमुखेनेत्यर्थः । अस्य आनयेत्यत्रान्वयः,

**तथा केकयराजानं वृद्धं परमधार्मिकम् ।**
**श्वशुरं राजसिंहस्य सपुत्रं त्वमिहानय ॥ २३ ॥**

केकयराजानमिति । समासान्तस्यानित्यात्वाट्टजभावः ॥ २३ ॥

**अङ्गेश्वरं महाभागं रोमपादं [1] समीपगम् ।**
**[2] वयस्यं राजसिंहस्य समानय यशस्विनम् ॥ २४ ॥**

समीपगतमिति । आसन्नदेशवर्तिनामिति यावत् ॥ २४ ॥

**प्राचीनान् सिन्धुसौवीरान् सौराष्ट्रेयांश्च पार्थिवान् ।**
**दाक्षिणात्यान्नरेन्द्रांश्च समस्तानानयस्व ह ॥ २५ ॥**

प्राचीनान् । 'विभाषाञ्चेः' इति स्वार्थे खः । प्राग्देशवर्तिन इति यावत् । सिन्धौ सौवीरे सौराष्ट्रे च भवाः, ढ आर्षः । सिन्धुसौवीर-सौराष्ट्रेयान् ॥ २५ ॥

**सन्ति स्निग्धाश्च ये चान्ये राजानः पृथिवीतले ।**
**[3] तानानय यथाक्षिप्रं सानुगान् सहबान्धवान् ॥ २६ ॥**
**वसिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्रस्त्वरितस्तदा ।**
**व्यादिशत् पुरुषांस्तत्र राज्ञामानयने शुभान् ॥ २७ ॥**
**स्वयमेव हि धर्मात्मा प्रययौ मुनिशासनात् ।**
**सुमन्त्रस्त्वरितो भूत्वा समानेतुं महीक्षितः ॥ २८ ॥**

स्वयन्तु त्वरितो भूत्वा समानेतुमिति । वसिष्ठेन विशिष्योक्ता-निति शेषः ॥ २८ ॥

---

[1] सुसत्कृतम्—ङ. [2] एतदनन्तरं तथा कोसलराजानं भानुमन्तं सुसत्कृतम् । मगधाधिपतिं शूरं सर्वशास्त्रविशारदम् ॥ प्राप्तिज्ञं परमोदारं सत्कृतं पुरुषर्षभम् । राज्ञश्शासनमादाय चोदयस्व नृपर्षभान् ॥ [3] एतदनन्तरं एतान् दूतैर्महाभागैरानयस्व नृपाज्ञया ॥ इदमधिकं—ङ.

ते च कर्मान्तिकाः सर्वे वसिष्ठाय च धीमते ।
सर्वं निवेदयन्ति स्म यज्ञे यदुपकल्पितम् ॥ २९ ॥

ते चेति । पूर्वनियुक्ता इत्यर्थः । यज्ञ इति [1] निमित्तसप्तमी ॥२९॥

[2] ततः प्रीतो द्विजश्रेष्ठस्तान् सर्वान् पुनरब्रवीत् ।
अवज्ञया न दातव्यं कस्यचिल्लीलयाऽपि वा ॥ ३० ॥
अवज्ञया कृतं हन्यात् दातारं नात्र संशयः ।

अवश्यशिक्षणीयांश पुनश्च शिक्षयति–अवज्ञयेत्यादि । कुत एवमिहातिवर्तत इत्यत्र–अवज्ञयेत्यादि ॥ ३० ॥

ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः ॥ ३१ ॥
बहूनि रत्नान्यादाय राज्ञो दशरथस्य हि ।

तत इति । सुमन्त्रगमनानन्तरमित्यर्थः । रत्नानीति । मणिमुक्तादिरत्नविचित्राभरणाम्बरचन्दनकुङ्कुमकर्पूराद्युत्तमवस्तूनीत्यर्थः ॥ ३१ ॥

ततो वसिष्ठस्सुप्रीतो राजानमिदमब्रवीत् ॥ ३२ ॥
उपयाता नरव्याघ्र! राजानस्तव शासनात् ।
मया च सत्कृताः सर्वे यथार्हं राजसत्तमाः ॥ ३३ ॥
यज्ञियं च कृतं राजन्! पुरुषैः सुसमाहितैः ।

यज्ञियमिति । यज्ञमर्हति, 'यज्ञर्त्विग्भ्यां घखञौ' इति घः । यज्ञाय यत्सम्पाद्यं तत्सर्वं सम्पादितमित्यर्थः ॥ ३३ ॥

---

[1] निमित्ते सप्तमी–ग. [2] एतदनन्तरं भवद्भिर्न तथा यज्ञे परिहास्येत कश्चन ॥ इत्यधिकम्–ङ.

निर्यातु च भवान् यष्टुं यज्ञायतनमान्तिकात् ॥ ३४ ॥
सर्वकामैरुपहृतैरुपेतं वै समन्ततः ।
द्रष्टुमर्हसि राजेन्द्र मनसेव विनिर्मितम् ॥ ३५ ॥

अन्तिकादिति । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति चकारेण पञ्चमीसमुच्चयः, अन्तिकेन वर्तमानं यज्ञायतनं-शालामित्यर्थः । मनसेवेति क्षिप्रसिद्धत्वे उपकरणसौष्ठवे च दृष्टान्तः ॥ ३५ ॥

*तथा वसिष्ठवचनादृश्यशृङ्गस्य चोभयोः ।
शुभे दिवसनक्षत्रे निर्यातो जगतीपतिः ॥ ३६ ॥
ततो वसिष्ठप्रमुखाः सर्व एव द्विजोत्तमाः ।
ऋश्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा ॥ ३७ ॥
यज्ञवाटगतास्सर्वे यथाशास्त्रं यथाविधि ।
श्रीमांश्च सहपत्नीभी राजा दीक्षामुपाविशत् ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे त्रयोदशः सर्गः

---

आरभन्निति छान्दसः । यज्ञवाटगतास्सर्वे यजमानर्त्विगादयः स्वीयं स्वीयं यज्ञकर्म यथाविधि यथाकल्पसूत्रं यथाशास्त्रं, शास्त्रं-मीमांसा, तच्चानतिक्रम्यारभन्तेत्यर्थः । जाल(३८)मानः सर्गः ॥ ३८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे त्रयोदशः सर्गः

---

* वसिष्ठत्यविभक्तिको निर्देशः । वसिष्ठस्य ऋष्यश्रृङ्गस्य चोभयोरित्यर्थः-**गो.**

## अथ चतुर्दशः सर्गः
[अश्वमेधः]

**अथ संवत्सरे पूर्णे तस्मिन् प्राप्ते तुरङ्गमे ।**
**सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥ १ ॥**

एवं वसन्तोत्सृष्टाश्वत्वात् पुनर्वसन्तप्रवृत्तिकाले तन्मेदःपुरोडाशेन [1]यागाय सम्भारसम्भरणादिशालाप्रवेशनान्तकर्माणि प्रवृत्ते वसन्तान्तरे संवत्सरपूर्तौ मेध्ये तुरङ्गे सदः प्राप्ते सति पश्चाद्यथाविधि यज्ञप्रवृत्त्युपदेशः, काव्यलक्षणत्वाच्च यज्ञवर्णनम्—अथेत्यादि । संवत्सरे पूर्णे इति । त्रिंशद्दिनात्मकसावनमासपरिच्छिन्नोऽत्र संवत्सरो भवतीति सूत्रात् ॥१॥

**ऋश्यशृङ्गं पुरस्कृत्य कर्म चक्रुर्द्विजर्षभाः ।**
**अश्वमेधे महायज्ञे राज्ञोऽस्य सुमहात्मनः ॥ २ ॥**

ऋश्यशृङ्गं पुरस्कृत्येति । अनेन प्रधानार्त्विज्यं ब्रह्मत्वं च तस्येति गम्यते ॥ २ ॥

**कर्म कुर्वन्ति विधिवत् याजका वेदपारगाः ।**
**यथाविधि यथान्यायं परिक्रामन्ति शास्त्रतः ॥ ३ ॥**

यथाविधीति । विधिः—वेदः साक्षात् ; विप्रकीर्णतया वेदविहितार्थस्य प्रयोगानुकूलतया साकल्यविधिः कल्पसूत्रं—शास्त्रम् ; तत्प्रतिपाद्यार्थस्यैव पूर्वोत्तरपक्षप्रवर्तनेन स्थिरीकारिका पूर्वमीमांसा—न्यायः, [3]तदनतिक्रम्येति यावत् । शास्त्रतः परिक्रामन्तीति । अमुकर्त्विजि अमुकं कुर्वाणे तस्मिन्नेव काले अनेनर्त्विजेदं कर्तव्यमित्यादि तच्छास्त्रतः प्रतिपाद्यमानं स्वस्वकर्मकालमविस्मृत्य परिक्रामन्ति-प्रवर्तन्त इत्यर्थः ॥३॥

---

[1] यागादि—**ग.**　[2] मेध्यतुरङ्गे—**ग.**　[3] तच्चानतिक्रम्या—**ग.**

प्रवर्ग्यं शास्त्रतः कृत्वा तथैवोपसदं द्विजाः ।
चक्रुश्च विधिवत्सर्वमाधिकं कर्म शास्त्रतः ॥ ४ ॥

उपसदं । यागविशेषप्राप्तमिष्टिविशेषम् । अधिकमिति । प्रकृत्युपदिष्टांगानुमितौ तत्तद्विकृत्यपेक्षातो विशेषोऽधिकं कर्म ॥ ४ ॥

अभिपूज्य ततो हृष्टाः सर्वे चक्रुर्यथाविधि ।
प्रातस्सवनपूर्वाणि कर्माणि मुनिपुङ्गवाः ॥ ५ ॥

अभिपूज्येति । तत्तत्कर्मभिः पूजनीयां देवतामिति शेषः । अस्यैव प्रपञ्चः—प्रातस्सवनेत्यादि ॥ ५ ॥

ऐन्द्रश्च विधिवद्दत्तो राजा चाभिष्टुतोऽनघः ।
माध्यन्दिनं च सवनं प्रावर्तत यथाक्रमम् ॥ ६ ॥

ऐन्द्रं चेति । इन्द्रदेवताकहविर्विशेषः । राजा—सोमलता । अभिष्टुतः, ग्रावभिस्संक्षुद्य सारनिस्सारणमभिषवः ॥ ६ ॥

तृतीयसवनं चैव राज्ञोऽस्य सुमहात्मनः ।
[1]चक्रुस्ते शास्त्रतो दृष्ट्वा तथा ब्राह्मणपुङ्गवाः ॥ ७ ॥

नचाहुतमभूत्तत्र स्खलितं वाऽपि किं च न ।
दृश्यते ब्रह्मवत्सर्वं क्षेमयुक्तं हि चक्रिरे ॥ १० ॥

अहुतमिति । अन्यथा हुतमित्यर्थः । स्खलितं—अज्ञानतः कस्यचित्कर्मणस्त्यागः । ब्रह्मवत्—मन्त्रवत् । क्षेमः—विध्यपराधराहित्यम् ॥ १० ॥

---

[1] एतदनन्तरं—आह्वयाञ्चक्रिरे तत्र शक्रादीन्विबुधोत्तमान् । ऋश्यश्रृङ्गादयो मन्त्रैः शिक्षाक्षरसमन्वितैः ॥ गीतिभिर्मधुरैः स्निग्धैर्मन्त्राह्वानैर्यथार्हतः । होतारो ददुरावाह्य हविर्भागान्दिवौकसाम् ॥ इदमधिकं—ङ.

न तेष्वहस्सु श्रान्तो वा क्षुधितो वापि दृश्यते ।
नाविद्वान् ब्राह्मणस्तत्र नाशतानुचरस्तथा ॥ ९ ॥

श्रान्तः—स्वार्त्विज्याशक्तः । तत्र—तद्यज्ञर्त्विक्षु । शतं अनुचराः न विद्यन्ते यस्य स तथा ॥ ९ ॥

ब्राह्मणा भुञ्जते नित्यं नाथवन्तश्च भुञ्जते ।
तापसा भुञ्जते चापि श्रमणा भुञ्जते तथा ॥ १० ॥

नाथवन्तः—दासाः—शूद्रा इति यावत् । तापसाः—शैवमार्गगाः[1] शूद्राः । श्रमणाः—त्यक्तपुत्र[2]भृत्यादिसंसाराः काषायाम्बराः शूद्रविशेषाः ॥ १० ॥

वृद्धाश्च व्याधिताश्चैव स्त्रियो बालास्तथैव च ।
अनिशं भुञ्जमानानां न तृप्तिरुपलभ्यते ॥ ११ ॥

व्याधिताः—संजातव्याधयः । स्त्रिय इति— आकुलस्त्रियः । न तृप्तिरुपलभ्यत इति । भोजनसौष्ठवादुदरपूर्तावपि मानसी तृप्तिर्नोपलभ्यते । वतोदरं पूर्णं! एवं भक्ष्यमेवं भोज्यमेवं घनक्षीरशर्कराम्रकदल्यादि, न शक्नुमो भोक्तुं, किं कुर्म इति ॥ ११ ॥

दीयतां दीयतामन्नं वासांसि विविधानि च ।
इति सञ्चोदितास्तत्र तथा चक्रुरनेकशः ॥ १२ ॥

तथा चक्रुरिति । दत्तवन्त इति यावत् ॥ १२ ॥

अन्नकूटाश्च बहवो दृश्यन्ते पर्वतोपमाः ।
दिवसे दिवसे तत्र सिद्धस्य विधिवत्तदा ॥ १३ ॥

---

[1] मार्गक्षिताः—ख.   [2] मित्रादि—ग.

सिद्धस्येति। पक्वस्येति यावत्। इदमन्नकूटा इत्यन्नविशेषणम्। * अन्नेति लुप्तषष्ठीकमार्षम्। अन्नस्य कूटा इति यावत्॥ १३॥

**नानादेशादनुप्राप्ताः पुरुषाः स्त्रीगणास्तथा।**
**अन्नपानैस्सुविहितास्तास्मिन् यज्ञे महात्मनः॥ १४॥**

सुविहिता इति। सुविहिततृप्तिका इति यावत्॥ १४॥

**अन्नं हि विधिवत्स्वादु प्रशंसन्ति द्विजर्षभाः।**
**अहो तृप्ताः स्म भद्रं त इति शुश्राव राघवः॥ १५॥**

**स्वलङ्कृताश्च पुरुषा ब्राह्मणान् पर्यवेषयन्।**
**उपासते च तानन्ये सुमृष्टमणिकुण्डलाः॥ १६॥**

ब्राह्मणपरिवेषणस्य पुरुषकर्तृत्वं भोक्तृबहुत्वेन स्त्र्यसाध्यत्वात्। स्वलङ्कृता इत्यनेन शुचित्वं प्रदर्शितम्। सुमृष्टमणिकुण्डला इत्यनेन यज्ञपरिचारकसत्कारवैभवो राजकृतः प्रकाश्यते। तानिति। परिवेषयितॄनिति यावत्। अन्य इति। तत्सहायभूता हति यावत्। सुमृष्टं-उत्तेजितं -मणिखचितं कुण्डलं-कर्णाभरणविशेषो येषां ते तथा॥ १६॥

**कर्मान्तरे तदा विप्रा हेतुवादान् बहूनपि।**
**प्राहुः स्म वाग्मिनो धीराः परस्परजिगीषया॥ १७॥**

कर्मान्तरे—एकं सवनं समाप्य पुनस्सवनान्तरारम्भकालागमात् पूर्वस्मिन्नन्तरालकाले। हेतूपन्यासविशेषैः परस्परविजिगीषार्थाः वादाः॥ १७॥

**दिवसे दिवसे तत्र संस्तरे कुशला द्विजाः।**
**सर्वकर्माणि चक्रुस्ते यथाशास्त्रं प्रचोदिताः॥ १८॥**

---

* सिद्धस्येति विशेषणान्वयसौकर्याय आह—अन्नेति लुप्तषष्ठीकिमिति। तथा च सिध्दस्यान्नस्य कूटा इत्यन्वयः। न तत एकदेशान्वयदोष इति भावः।

तथा तत्र संस्तरे—तस्मिन्यज्ञे। 'संस्तरौ प्रस्तराध्वरौ'[1]। प्रचोदिता इति। शास्त्रीयब्रूहिप्रेष्यादिशब्दैरिति शेषः ॥ १८ ॥

**नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः।**
**सदस्यास्तस्य वै राज्ञो नावादकुशला द्विजाः ॥ १९ ॥**

सदस्याः—"सदस्या विधिदर्शिनः" इति निघण्टुः ॥ १९ ॥

**प्राप्ते यूपोच्छ्रये तस्मिन् षड् बैल्वाः खादिरास्तथा।**
**तावन्तो बिल्वसहिताः पर्णिनश्च तथापरे ॥ २० ॥**

यूपोच्छ्रये—यूपोत्क्षेपणप्रैषकाल इति यावत्। बैल्वा इति-'तस्य विकारः' इत्यधिकारे 'बिल्वादिभ्योऽण्' इत्यण्। तावन्त इति। षडिति यावत्। अपि त्वेषां विशेषः—बिल्वसहिता इति। बिल्वयूपसमीपे स्वावस्थानवन्तः, प्रयोगेऽयं विशेषः। पर्णिनः—पर्णः-पलाशः; "पलाशे किंशुकः पर्णः"—पर्णः प्रकृतिभूतो येषां यूपानामिति पर्णिनः। तथेति। षट्सङ्ख्याका इति यावत् ॥ २० ॥

**श्लेष्मातकमयो दिष्टो देवदारुमयस्तथा।**
**द्वावेव तत्र विहितौ बाहुव्यस्तपरिग्रहौ ॥ २१ ॥**

श्लेष्मातकः—राज्जुदालपर्यायः। न च *विभ्वेकत्वं विवक्षितम्। दिष्टः-सन्दिष्टः—उपदिष्ट इति यावत्। तथा देवदारुमयोऽप्यस्ति यूपः, अपि तु नायमेकः, नापि षट्, अपि तु तत्र यज्ञे द्वावेव देवदारुयूपौ विहितौ। अपि च बाहुव्यस्तपरिग्रहौ। †आहिताग्न्यादि। व्यस्तबाहुभ्यां—प्रसारितभुजाभ्यां तावदायामेन परिग्रहः—स्वीकारो

* विभ्वेकत्वं–जत्येकत्वमित्यर्थः. † आहिताग्न्यादित्वात्पूर्वनिपात इत्यर्थः.

[1] इति निघण्टुः–ग.

यथोस्तौ तथा । एवं च " राज्जुदालमाग्निष्ठं मिनोति " इत्यनुवाकोपादिष्टा एकविंशतियूपा इहोक्ताः । " पौतुद्रवावभितो भवतः " इति श्रुतेः राज्जुदालयूपस्योभयपार्श्वतो देवदारुयूपौ भवतः । तत्रैकपार्श्ववर्तिदेवदारुयूपस्य दक्षिणतः उत्तरतश्च द्विधा विभक्तबिल्वयूपत्रिकयोस्स्थापनं । तथा तत्पार्श्ववर्तिदेवदारुयूपस्य दक्षिणोत्तरयोः खादिरत्रिकयोः । पलाशयूपास्त्वन्यत्र । एवं च प्रागुक्तबिल्वसमीपवर्तित्वधर्मः खादिरयूपानां सिद्धः । यथोक्तरूपतया बैल्वादियूपस्थापनं सूत्रात् 'त्रयो बैल्वा दक्षिणतस्त्रय उत्तरतः, त्रयः खादिरा दक्षिणतस्त्रय उत्तरतः' इति ॥ २१ ॥

**कारितास्सर्व एवैते शास्त्रज्ञैर्यज्ञकोविदैः ।**
**शोभार्थं तस्य यज्ञस्य काञ्चनालङ्कृता भवन् ॥ २२ ॥**

शास्त्रज्ञैरिति । शिल्पशास्त्रज्ञैश्चेत्यर्थः । काञ्चनालङ्कृता भवन्निति । अभवन्निति यावत् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः ॥२२॥

**एकविंशतियूपास्ते एकविंशत्यरत्नयः ।**
**वासोभिरेकविंशद्भिरेकैकं समलङ्कृताः ॥ २३ ॥**

'चतुर्विंशत्यङ्गुलयोऽरत्निः' इति सूत्रम् ॥ २३ ॥

**विन्यस्ता विधिवत्सर्वे शिल्पिभिस्सुकृता दृढाः ।**
**अष्टाश्रयः सर्व एव श्लक्ष्णरूपसमन्विताः ॥ २४ ॥**

अश्रयः—कोटयः । श्लक्ष्णः—[1] तक्षणसामर्थ्येन श्लक्ष्णेन—श्लक्ष्णस्पर्शवता रूपेण—स्वरूपेण समन्विताः ॥ २४ ॥

---

[1] सामर्थ्यजेन—ख.

**आच्छादितास्ते वासोभिः पुष्पैर्गन्धैश्च पूजिताः ।**
**सप्तर्षयो दीप्तिमन्तो विराजन्ते यथा दिवि ॥ २५ ॥**

यथा विराजन्ते तथा व्यराजन्तेत्यनुकर्षः ॥ २५ ॥

**इष्टकाश्च यथान्यायं कारिताश्च प्रमाणतः ।**
**चितोऽग्निर्ब्राह्मणैस्तत्र कुशलैः शुल्बकर्मणि ॥ २६ ॥**

यथान्यायमिति । अर्धेष्टकामण्डलेष्टकादयश्च यथा चेत् न्यायात्—सूत्रादनपेता भवन्ति तथेत्यर्थः । कारिता इति । शिल्पविद्भिरिति शेषः । अग्निरिति श्रौतमिष्टकानां नाम । शुल्बकर्मणि कुशलैः ब्राह्मणैरग्निश्चितः—कृतचयनः ॥ २६ ॥

**स चित्यो राजसिंहस्य सञ्चितः कुशलैर्द्विजैः ।**
**गरुडो रुक्मपक्षो वै त्रिगुणोऽष्टादशात्मकः ॥ २७ ॥**

एवं चित्यः—चेतव्यः 'चित्याग्निचित्ये च' इति निपातः । सः—अग्निः कुशलैश्चितः । कथं चित इत्यतः—गरुड इत्यादि । गरुडसंस्थानः । रुक्मपक्ष इति । 'सहस्रहिरण्यशल्कैः प्रतिदिशमग्निं प्रोक्षति' इति सूत्रात् रुक्मपक्षत्वम् । एवं पाङ्क्ते, अग्निः—अग्न्याधारभूतो देश इत्याह कश्चित् । त्रिगुणः—त्रिगुणप्रस्तारः । अत एव अष्टादशात्मकः—अष्टादशप्रस्तारात्मकः सञ्चित इत्यन्वयः । 'षट् चितयो भवन्ति' इति श्रुतेः श्येनः षट्चितिको भवति प्रकृतिः, अश्वमेधस्य तत्त्रैगुण्यविधानादष्टादशगुणात्मकः ॥ २७ ॥

**नियुक्तास्तत्र पशवस्तत्तदुद्दिश्य दैवतम् ।**
**उरगाः पक्षिणश्चैव यथाशास्त्रं प्रचोदिताः ॥ २८ ॥**

नियुक्ता इति । 'अमुष्मै त्वा जुष्टं नियुनज्मि' इति देवतोद्देशेन नियुक्ताः । तदेवोक्तम्—तत्तदुद्दिश्य दैवतमिति । के ते पशव

इत्यतः—उरगा इत्यादि । 'इन्द्राय राज्ञे सूकरः' इत्याद्यनुवाकैस्ते प्रतिपादिताः ॥ २८ ॥

**शामित्रे तु हयस्तत्र तथा जलचराश्च ये।**
**ऋत्विग्भिस्सर्वमेवैतन्नियुक्तं शास्त्रतस्तदा ॥ २९ ॥**

तथा हयश्च शामित्रे—मरणविशसनादिकर्मणि नियुक्तं—नियतं —बद्धं ॥ २९ ॥

**पशूनां त्रिशतं तत्र यूपेषु नियतं तदा ।**
**अश्वरत्नोत्तमं तत्र राज्ञो दशरथस्य च ॥ ३० ॥**

अश्वरत्नेषु-अश्वश्रेष्ठेषूत्तमः—श्रेष्ठस्तथा । नियत इत्यनुकर्षः ॥ ३० ॥

**कौसल्या तं हयं तत्र परिचर्य समन्ततः।**
**कृपाणैर्विशशासैनं त्रिभिः परमया मुदा ॥ ३१ ॥**

परिचर्य—प्रोक्षणादिना संस्कृत्य । त्रिभिः कृपाणैः—शस्त्रैः एनं —अश्वं परमया मुदा विशशास। 'महिष्योऽश्वस्यासिपथान् कल्पयन्ति' इति सूत्रम् ॥ ३१ ॥

**पतत्रिणा तदा सार्धं सुस्थितेन च चेतसा।**
**अवसद्रजनीमेकां कौसल्या धर्मकाम्यया ॥ ३२ ॥**

पतत्रिणा—अश्वेन, पुरा अश्वानां पतत्राणि सन्तीति प्रसिद्ध्या त्वेवं वादः । सुस्थितेन—स्थिरेण चेतसा उपलक्षिता सती धर्मकाम्यया ; काम्यजन्तादकारप्रत्यये टाप् ॥ ३२ ॥

**होताऽध्वर्युस्तथोद्गाता हयेन समयोजयन् ।**
**महिष्या परिवृत्त्या च वावातामपरे तथा ॥ ३३ ॥**

राज्ञो भोगात् बहिष्कृता परिवृत्तिः, राज्ञो वल्लभा महिषी, भुजिष्या वावाता, महिषीपरिवृत्तिभ्यां सह वावातां अपरे श्रेष्ठा होत्रादयो हयेन समयोजयन् ॥ ३३ ॥

**पतत्रिणस्तस्य वपां उद्धृत्य नियतेन्द्रियः ।**
**ऋत्विक् परमसंपन्नः श्रपयामास शास्त्रतः ॥ ३४ ॥**
**धूमगन्धं वपायास्तु जिघ्रति स्म नराधिपः ।**
**यथाकालं यथान्यायं निर्णुदन् पापमात्मनः ॥ ३५ ॥**

वपां–चन्द्राख्यं मेदः "चन्द्रनामा मेदोऽस्ति तदुद्धरति नास्य वपा विद्यते' इति सूत्रात् । परमेण–श्रौतप्रयोगचातुर्येण सम्पन्नस्तथा । निर्णुदन् जिघ्रति स्मेति योजना ॥ ३४ ॥ ३५ ॥

**हयस्य यानि चाङ्गानि तानि सर्वाणि ब्राह्मणाः ।**
**अग्नौ प्रास्यन्ति विधिवत्[1] सवसाः षोडशर्त्विजः ॥ ३६ ॥**

तानि सर्वाणि ब्राह्मणाः इत्यार्षं गुर्वक्षरम् । सवसाः–वसासहिताः ॥ ३६ ॥

**प्लक्षशाखासु यज्ञानां अन्येषां क्रियते हविः ।**
**अश्वमेधस्य यज्ञस्य वैतसो भाग इष्यते ॥ ३७ ॥**

अन्येषां–अश्वमेधातिरिक्तयागानां पाशुकं हविः प्लक्षशाखासु क्रियते–निधायावदीयते । अश्वमेधस्य यज्ञस्य योऽयमाश्वो हविर्भागः स वैतसो भवति, वैतसे कटे निधायावदातव्यो भवति। वैतस इति शैषिकोऽण्, दार्षदाः सक्तव इत्यादिवत् ॥ "वैतसः कटो भवति" इति श्रुतेः ॥ ३७ ॥

---

[1] समन्त्राः–ङ.

त्र्यहोऽश्वमेधः सङ्ख्यातः कल्पसूत्रेण ब्राह्मणैः ।
[1]चतुष्टोममहस्तस्य प्रथमं परिकल्पितम् ॥ ३८ ॥
उक्थ्यं द्वितीयं सङ्ख्यातमतिरात्रं तथोत्तरम् ।
कारितास्तत्र बहवो विहिताः शास्त्रदर्शनात् ॥ ३९ ॥

त्र्यह इति । त्रीण्यहानि सवनीयानि यस्य स तथा । अश्वमेधस्यानेकाहस्साध्यत्वेऽपि सवनीयानां प्राधान्यात्तद्ग्रहः । 'अश्वमेधस्य त्रीणि सवनीयान्यहानि' इति कल्पसूत्रेण तन्मूलब्राह्मणैश्चाश्वमेधस्त्र्यहस्सङ्ख्यातः । 'अच्प्रत्यन्वव' इत्यत्र अच् इति योगविभागे त्र्यह इति षष्ठीसमासादचि टिलोपः । तान्येव सवनीयानि त्र्यहानीति गण्यन्ते । चतुष्टोममित्यादि । 'त्रिवृत् पञ्चदशः सप्तदशः एकविंशः' इति स्तोमचतुष्टययुक्तत्वादग्निष्टोमः चतुष्टोमशब्दवाच्यः । उत्तरमिति । तृतीयमिति यावत् । अप्रधानभूताः शास्त्रदर्शनाद्विहिताः बहवः क्रतवश्चात्र कारिताः ॥ ३९ ॥

ज्योतिष्टोमायुषी चैवमति[2]रात्रौ विनिर्मितौ ।
अभिजिद्विश्वजिच्चैव[3]मप्तोर्यामौ *महाक्रतुः ॥ ४० ॥

के ते क्रतव इत्यतः–ज्योतिरित्यादि । आयुः आयुष्टोमः । अतिरात्राविति द्विवचनादतिरात्रस्य द्विः प्रयोगः । तथा अप्तोर्यामाविति ॥ ४० ॥

प्राचीं होत्रे ददौ राजा दिशं स्वकुलवर्धनः ।
अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम् ॥ ४१ ॥
उद्गात्रे वै तथोदीचीं दक्षिणैषा विनिर्मिता ।
हयमेधे महायज्ञे स्वयम्भूविहिते पुरा ॥ ४२ ॥

---

* महाक्रतुरिति जातावेकवचनम् ।

[1] अग्निष्टोम–ङ. [2] रात्रं च निर्मितम्–ङ. [3] मप्तोर्यामो.

प्राचीमित्यादि । 'प्रतिदिशं दक्षिणां ददाति, प्राचीं होतुः दक्षिणां ब्रह्मणः प्रतीचीं अध्वर्योरुदीचीं उद्गातुः' इति सूत्राद्दिशो दक्षिणात्वेन विनिर्मिताः—विहिता इति यावत् । स्वयंभूविहित इति । 'प्रजापतिरश्वमेधमसृजत' इति श्रुतेः ॥ ४२ ॥

**क्रतुं समाप्य तु तथा न्यायतः पुरुषर्षभः ।**
**[1]ऋत्विग्भ्यो हि ददौ राजा धरां तां क्रतुवर्धनः ॥ ४३ ॥**
**ऋत्विजश्चाब्रुवन् सर्वे राजानं गतकल्मषम् ।**
**भवानेव महीं कृत्स्नां एको रक्षितुमर्हति ॥ ४४ ॥**

हि—यस्मात् ऋत्विग्भ्यः सर्वां धरां ददौ, तस्मात् सर्वे ऋत्विजो राजानमब्रुवन् । किमब्रुवन् इत्यत्र—भवानित्यादि ॥ ४४ ॥

**न भूम्या कार्यमस्माकं न हि शक्ताः स्म पालने ।**
**रताः स्वाध्यायकरणे वयं नित्यं हि भूमिप ! ॥ ४५ ॥**
**निष्क्रयं किञ्चिदेवेह प्रयच्छतु भवानिति ।**

न भूम्या कार्यमस्माकमिति । भूमेर्भोगैकप्रयोजनत्वात् न तया नः किंचित्प्रयोजनमित्यर्थः । अपि च तस्याः पालने चोरनिवारणादिद्वारके वयं न हि शक्ताः स्म । कुत इत्यतः—रता इत्यादि । स्वाध्यायकरण इति । स्वाध्यायाभ्यासकर्मणीति यावत् । नापि च दण्डादावस्माकमधिकार इति शेषः । निष्क्रयमित्यादि । 'मूल्यं वस्तु निष्क्रयश्च' इति पर्यायः । मया दत्तकृत्स्नभुवो कथं मूल्यं शक्यदानमित्यतः—किञ्चिदेवेति । यथाशक्ति स्वल्पमेवेति यावत् ॥ ४५ ॥

**मणिरत्नं सुवर्णं वा गावो यद्वा समुद्यतम् ॥ ४६ ॥**
**तत्प्रयच्छ नरश्रेष्ठ ! धरण्या न प्रयोजनम् ।**

[1] एतदनन्तरं—एवं दत्वा प्रहृष्टोऽभूच्छ्रीमानिक्ष्वाकुनन्दनः ॥ इदमधिकं—ङ.

भूमेर्व्यतिरेकेण मया देयं किंचिद्वा किं स्यादित्यतः—मणिरत्न-मित्यादि । मणिरत्नं—मणिश्रेष्ठं ; अनर्घरत्नमिति यावत् । तस्य राजैकार्हत्वात् पक्षान्तरं—सुवर्णं वेत्यादि । समुद्यतमिति । उपस्थितमिति यावत् ॥ ४६ ॥

**एवमुक्तो नरपतिः ब्राह्मणैर्वेदपारगैः ॥ ४७ ॥**

**गवां शतसहस्राणि दश तेभ्यो ददौ नृपः ।**

**दशकोटीस्सुवर्णस्य रजतस्य [1]चतुर्दश ॥ ४८ ॥**

शतसहस्राणि दशेति । दशलक्षमिति यावत् । चतुर्दशेति । चतुर्दशकोटीरिति यावत् ॥ ४८ ॥

**ऋत्विजस्तु ततस्सर्वे प्रददुः सहिता वसु ।**

**ऋश्यशृङ्गाय मुनये वसिष्ठाय च धीमते ॥ ४९ ॥**

ततस्सर्वे ऋत्विजः सहिताः सर्वं वसु दक्षिणाप्राप्तं धनजात-मङ्गीकृत्य दानाय ऋश्यशृङ्गवसिष्ठाभ्यां ददुः ॥ ४९ ॥

**ततस्ते न्यायतः कृत्वा प्रविभागं द्विजोत्तमाः ।**

**सुप्रीतमनसस्सर्वे प्रत्यूचुर्मुदिता भृशम् ॥ ५० ॥**

न्यायतः प्रविभागं कृत्वेति योजना । वसिष्ठादिद्वारा विभज्य गृहीत्वेति यावत् । सुप्रीतमनसः सन्तो राजानं प्रति, सर्वे वयं भृशं मुदिता इत्यूचुः ॥ ५० ॥

**ततः प्रसर्पकेभ्यस्तु हिरण्यं सुसमाहितः ।**

**जाम्बूनदं कोटिसङ्ख्यं ब्राह्मणेभ्यो ददौ तदा ॥ ५१ ॥**

प्रसर्पकेभ्यो ब्राह्मणेभ्य इति । परिचारकद्विजेभ्य इति यावत् । जाम्बूनदं हिरण्यमिति । दशवर्णसुवर्णमिति यावत् ॥ ५१ ॥

---

[1] चतुर्गुणम्—ङ.

[1]दरिद्राय द्विजायाथ हस्ताभरणमुत्तमम् ।
कस्मैचिद्याचमानाय ददौ राघवनन्दनः ॥ ५२ ॥

अथ सर्वदक्षिणादानानन्तरमागताय दरिद्राय याचमानाय दातव्यवस्त्वन्तराभावात् स्वकमेव हस्ताभरणमेव ददौ ॥ ५२ ॥

ततः प्रीतेषु नृपतिर्द्विजेषु द्विजवत्सलः ।
प्रणाममकरोत्तेषां हर्षपर्याकुलेक्षणः ॥ ५३ ॥
तस्याशिषोऽथ विधिवद्ब्राह्मणैः समुदाहृताः ।
उदारस्य नृवीरस्य धरण्यां प्रणतस्य च ॥ ५४ ॥
ततः प्रीतमना राजा प्राप्य यज्ञमनुत्तमम् ।
पापापहं स्वर्नयनं [2]दुस्तरं पार्थिवर्षभैः ॥ ५५ ॥

तत इति । तेन च हस्ताभरणस्य दानेनेत्यर्थः । विविधाशिष इति । 'आब्रह्मन्' 'आयुष्मन्तम्' इत्याद्याः । उदारः-उन्नतचित्तः । पापापहमिति । 'अपे क्लेशतमसोः' इति हन्तेर्डः । पापमेवेह क्लेशतमः-पर्यायाश्रयणेन गृह्यते । अत एव स्वर्नयनं स्वर्गप्रापकं दुस्तरं-प्राकृतेन तरितुमशक्यं, अप्राप्यपारमिति यावत् ॥ ५५ ॥

ततोऽब्रवीदृश्यशृङ्गं राजा दशरथस्तदा ।
कुलस्य वर्धनं त्वं तु कर्तुमर्हसि सुव्रत ! ॥ ५६ ॥
तथेति स राजानमुवाच द्विजसत्तमः ।
[3]भविष्यति सुता राजंश्चत्वारस्ते कुलोद्वहाः ॥ ५७ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे चतुर्दशः सर्गः

———

[1] एतदनन्तरं—काञ्चनानां शतोपेतं नवरत्नैः समाहितम् ॥ इदमधिकं—ङ.
[2] दुष्करं—ङ. [3] एतदनन्तरं—स तस्य वाक्यं मधुरं निशम्य प्रणम्य तस्मै प्रणतो नृपेन्द्रः । जगाम हर्षं परमं महात्मा तमृश्यशृङ्गं पुनरप्युवाच ॥ इदमधिकं—ङ.

पूर्वं यज्ञार्थं प्रसवार्थं स्वर्गार्थं च वृत ऋश्यशृङ्गः। तत्र यज्ञस्तद्द्वारा स्वर्गश्च सिद्धः। ततस्तत्सिद्ध्यनन्तरं अवशिष्टार्थे युङ्क्ष इत्युच्यते—तत इत्यादि। कुलं वर्धयतीति कुलवर्धनम्, तादृशं कर्मेति यावत्॥ सम(५७)मानः॥ ५७॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे चतुर्दशः सर्गः

---

## अथ पञ्चदशः सर्गः

[पुत्रीयेष्टिः, विष्णुं प्रति देवानां प्रार्थना च]

**मेधावी तु ततो ध्यात्वा स किञ्चिदिदमुत्तरम्।**
**लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृपमब्रवीत्॥ १॥**

अथ जलपृथिवीप्रधानस्थूलभूमविग्रहोपग्रहस्य विराजो ब्रह्मणो जलप्राधान्येन प्रजापत्यात्मना सृष्टत्रिस्रोतस [1]आहरतः तत्संसारप्रवृत्तये तद्द्वारा पालनसिद्ध्ये भूमप्राधान्येन विष्ण्वात्मना युगे युगेऽवतारनैसर्गस्य प्रतीतान्नपानादिदेहयात्रात्रिमलवन्निजभूमविग्रहयात्रात्रशजत्रिमलस्य रावणादित्रिरक्षःपरिणतस्य संहाराय त्रेतायामपि यथाप्राप्तकालोचितावतारो दशरथपुत्रप्रवृत्तिप्रसङ्ग उपदिश्यते—मेधावीत्यादिना। ततः—पुत्रोत्पादनप्रतिश्रवानन्तरम्। मेधावी—सदा स्वबुद्धिधृताशेषवेदशास्त्रः। अत एव सदा [2]वेदज्ञः—स्वरूपतोऽर्थतश्च वेदतत्त्ववित्। स ऋश्यशृङ्गः। प्रतिश्रुतांशनिर्वाहाय किं कर्तव्यमिति निश्चेतुं किञ्चित्कालं विकल्पसमाधौ स्थितो ध्यात्वा तत इदमुत्तरं—इदमिहोत्तरमनुष्ठेयकृत्यमिति निश्चित्य पश्चात् लब्धसंज्ञः—समाधिव्युत्थितः तं तु नृपमब्रवीत्॥ १॥

---

[1] आहरन्तं—क. ग. [2] सर्वज्ञ—ग.

इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् ।
अथर्वशिरसि प्रोक्तैः मन्त्रैः सिद्धां विधानतः ॥ २ ॥

किमब्रवीदित्यतः—इष्टिमित्यादि । पुत्रकारणात्—पुत्रप्राप्तिहेतोः, ते पुत्रीयां—पुत्रप्राप्तिनिमित्तभूताम्, निमित्ताधिकारे 'पुत्राच्छ च' इति छः, अथर्वशिरसि प्रोक्तैः मन्त्रैः विधानतः—कल्पसूत्रतः सिद्धामिष्टिं करिष्यामि । इत्युक्त्वेति शेषः ॥ २ ॥

ततः प्रारब्धवानिष्टिं पुत्रीयां पुत्रकारणात् ।
जुहाव चाग्नौ तेजस्वी मन्त्रदृष्टेन कर्मणा ॥ ३ ॥

मन्त्रदृष्टेनेति । मन्त्रपूर्वकतया कल्पसूत्रदृष्टेनेत्यर्थः ॥ ३ ॥

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
भागप्रतिग्रहार्थं वै समवेता यथाविधि ॥ ४ ॥

ततः—तत्रेति यावत् ॥ ४ ॥

ताः समेत्य यथान्यायं तस्मिन् सदसि देवताः ।
अब्रुवँल्लोककर्तारं ब्रह्माणं वचनं महत् ॥ ५ ॥

तस्मिन् सदसि ता देवतास्समेत्येति । अन्तर्धानशक्त्या मर्त्यानवलोकितमिति शेषः । लोककर्तारं—यज्ञदेवतायज्ञपशुयज्ञकर्तृमयसंसारस्रष्टारं भगवन्तं [1] सावित्र्यंशं विराजं—ब्रह्माणमिति यावत् ॥ ५ ॥

भगवंस्त्वत्प्रसादेन रावणो नाम राक्षसः ।
सर्वान्नो बाधते वीर्याच्छासितुं तं न शक्नुमः ॥ ६ ॥

---

[1] सवित्र्यर्थं—ख.

त्वया तस्मै वरो दत्तः प्रीतेन भगवन् पुरा ।
मानयन्तश्च तं नित्यं सर्वं तस्य क्षमामहे ॥ ७ ॥

कुतो युष्मद्बाधनक्षमवीर्यलाभ इत्यतः—त्वयेत्यादि । युष्माकमपि दत्तमेव वीर्यमस्माभिरित्यत्र—मानयन्तश्च तमिति । सर्वदेवताभिरवध्यत्वरूपो यो वरो दत्तस्तं परिपालयन्त इति यावत् ॥ ७ ॥

उद्वेजयति लोकांस्त्रीनुच्छ्रितान् द्वेष्टि दुर्मतिः ।
शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥ ८ ॥

त्रिदशराजानमिति । प्रागप्युक्तमनित्यस्समासान्त इति ॥ ८ ॥

ऋषीन् यक्षान् सगन्धर्वानसुरान् ब्राह्मणांस्तथा ।
अतिक्रामति दुर्धर्षो वरदानेन मोहितः ॥ ९ ॥

असुराः—राहुप्रमुखाः आजानजदेवयोनयः ॥ ९ ॥

नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः ।
चलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते ॥ १० ॥

न प्रतपतीति—अन्तर्भाविताणिः, न तापयतीति यावत् । एवमादिकं तत्कार्यातिशयप्रकाशनपरम् । चलोर्मिभिः मालाऽस्यास्तीति तथा, व्रीह्यादित्वादिनिः ॥ १० ॥

तन्महन्नो भयं तस्माद्राक्षसाद्घोरदर्शनात् ।
वधार्थं तस्य भगवन्नुपायं कर्तुमर्हसि ॥ ११ ॥

एवमुक्तस्सुरैस्सर्वैश्चिन्तयित्वा ततोऽब्रवीत् ।
हन्तायं विदितस्तस्य वधोपायो दुरात्मनः ॥ १२ ॥

एवमुक्त इति । भगवान् ब्रह्मेति शेषः । हन्तेत्यनुकम्पायाम् ॥ १२ ॥

तेन गन्धर्वयक्षाणां देवदानवरक्षसाम् ।
अवध्योऽस्मीति वागुक्ता तथेत्युक्तं च तन्मया ॥ १३ ॥

अयमिति क इत्यतः–तेनेत्यादि । तत् तथास्त्वित्युक्तमिति योजना ॥ १३ ॥

नाकीर्तयदवज्ञानात् तद्रक्षो मानुषांस्तदा ।
तस्मात् स मानुषाद्वध्यो मृत्युर्नान्योऽस्य विद्यते ॥ १४ ॥

तदेति । अवध्यत्ववरणसमय इत्यर्थः । मृत्युः—मृतिसाधकमिति यावत् ॥ १४ ॥

एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणा समुदाहृतम् ।
सर्वे महर्षयो देवाः प्रहृष्टास्तेऽभवंस्तदा ॥ १५ ॥

प्रहृष्टा इति । मनुष्यद्वारेणापि वधश्रवणजस्सन्तोषः ॥ १५ ॥

एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः ।
शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ॥ १६ ॥
वैनतेयं समारुह्य भास्करस्तोयदं यथा ।
तप्तहाटककेयूरो वन्द्यमानस्सुरोत्तमैः ॥ १७ ॥
ब्रह्मणा च समागत्य तत्र तस्थौ समाहितः ।

एतस्मिन्नन्तर इति । मनुष्याद्वधश्रवणजसर्वदेवतासन्तोषकाल इति यावत् । सर्वास्वपि देवतासु भूमावतारो भूमशक्तिप्राधान्यान्मदेकसाध्यः, विशिष्य तु देवारातिसंहारकः । अतो मयेदं सर्वदेवताप्रीतिकरं कृत्य-

मनुष्येयमित्याभिध्याय भगवानपि स्वप्रधानमूर्त्या ब्रह्मणा समागत्य देवकार्येण समाहितस्तस्थौ ॥ १७ ॥

**तमब्रुवन् सुरास्सर्वे समभिष्टूय संनताः ।**
**त्वां नियोक्ष्यामहे विष्णो ! लोकानां हितकाम्यया ॥१८॥**

सन्नताः–प्रणता इति यावत् । हे विष्णो ! त्वां नियोक्ष्यामह इति । प्रागुक्तरीत्या भूमावतारस्य त्वदेकसाध्यत्वादिति भावः ॥ १८ ॥

**राज्ञो दशरथस्य त्वं अयोध्याधिपतेर्विभोः ।**
**धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः ॥ १९ ॥**

**तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ।**
**विष्णो ! पुत्रत्वमागच्छ कृत्वाऽऽत्मानं चतुर्विधम् ॥ २० ॥**

कस्मिन्नियुङ्ध्व इत्यतो राज्ञ इत्यादि । अत्रत्यराजराजपत्नीविशेषणं विष्णोरवतारयोग्यताप्रतिपादकम् ॥ २० ॥

**तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् ।**
**अवध्यं दैवतैर्विष्णो ! समरे जहि रावणम् ॥ २१ ॥**

कुतो ममैष नियोग इत्यतः—अवध्यं दैवतैरित्यादि । 'कृत्यानां कर्तरि वा' इति पक्षे तृतीया । जहि–हन्तेर्जः ॥ २१ ॥

**स हि देवान् सगन्धर्वान् सिद्धांश्च ऋषिसत्तमान् ।**
**राक्षसो रावणो मूर्खो वीर्योत्सेकेन बाधते ॥ २२ ॥**

**ऋषयस्तु ततस्तेन गन्धर्वाप्सरसस्तथा ।**
**क्रीडन्तो नन्दनवने क्रूरेण किल हिंसिताः ॥ २३ ॥**

**वधार्थं वयमायातास्तस्य वै मुनिभिस्सह ।**
**सिद्धगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः ॥ २४ ॥**

त्वं गतिः परमा देव ! सर्वेषां नः परन्तप !
वधाय देवशत्रूणां नृणां लोके मनः कुरु ॥ २५ ॥

हे देव ! नस्सर्वेषां अत्र विषये त्वमेव परमा गतिः–उपायः । नृणामिति । 'नृच' इति पाक्षिको नामि न दीर्घः । मनः कुर्विति । अवतरितुमिति शेषः ॥ २५ ॥

एवमुक्तस्तु देवेशो विष्णुस्त्रिदशपुङ्गवः ।
पितामहपुरोगांस्तान् सर्वलोकनमस्कृतः ॥ २६ ॥
अब्रवीत् त्रिदशान् सर्वान् समेतान् धर्मसंहितान् ।
भयं त्यजत भद्रं वः, हितार्थं युधि रावणम् ॥ २७ ॥
सपुत्रपौत्रं सामात्यं समित्रज्ञातिबान्धवम् ।
हत्वा क्रूरं दुरात्मानं देवर्षीणां भयावहम् ॥ २८ ॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमाम् ॥ २९ ॥

हत्वा वत्स्यामीति योजना ॥ २९ ॥

एवं दत्वा वरं देवो देवानां विष्णुरात्मवान् ।
मानुषे चिन्तयामास जन्मभूमिमथात्मनः ॥ ३० ॥

चिन्तयामासेति । यथा देवैराज्ञप्तं तथेति शेषः ॥ ३० ॥

ततः पद्मपलाशाक्षः कृत्वाऽऽत्मानं चतुर्विधम् ।
पितरं रोचयामास तदा दशरथं नृपम् ॥ ३१ ॥
ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः ।
स्तुतिभिर्दिव्यरूपाभिः तुष्टुवुर्मधुसूदनम् ॥ ३२ ॥

दिव्यरूपाभिः स्तुतिभिस्तुष्टुवुः ॥ ३२ ॥

तमुद्धतं रावणमुग्रतेजसम्
प्रवृद्धदर्पं त्रिदशेश्वरद्विषम् ।
विरावणं साधुतपस्विकण्टकं
तपस्विनामुद्धर तं भयावहम् ॥ ३३ ॥

स्तुत्वा च, उच्यमानविशेषणं रावणं उद्धर—तमुन्मूलय, सबलत्वादिविशेषणकमेव हत्वा स्वर्लोकमागच्छेत्यपि न्ययुञ्जतेति शेषः । विरावणं—विशेषेण त्रिलोकमाक्रन्दयितारं । अत्र तत्तदसाधारणकृत्ये तत्तद्देवस्य तदितरदेवैर्भगवदादिगुरुब्रह्मैकावयवैर्नियोजनम् । तस्य तस्य तत्र तत्र नियोज्यत्वं च गुण एव, न तु दोषः । यथा "तेषामसुराणां तिस्रः पुर आसन्" इत्यारभ्य रुद्रैकसाध्यकृत्ये रुद्रस्य सर्वदेवैर्नियोगः—"रुद्र इत्यब्रुवन्, रुद्रो वै क्रूरः, सोऽस्यत्विति," तथा "यज्ञस्य शिरोऽच्छिद्यत । ते देवा अश्विनावब्रुवन् । भिषजौ वै स्थः इदं यज्ञस्य शिरः प्रतिधत्तम्" इति । तथा "अग्नेस्त्रयो ज्यायांसो भ्रातर आसन्" इत्यादि । "उप न आवर्तस्व, हव्यं नो वह", इति नियोगः । मूढास्तु ततः किञ्चिदुत्कर्षापकर्षं कल्पयन्ति । एकस्य भगवतः श्रीमदादिब्रह्मणोऽपत्यानि त्रिब्रह्ममुखाः सर्वे त्रिदशाः सर्वेऽपि स्वस्वकृत्ये प्रधानभूताः तत्र भगवन्नियोगवन्तश्च । यथा चक्षुरादिः रूपादौ नियतनियोगस्तिष्ठति तथा ॥ ३३ ॥

तमेव हत्वा सबलं सबान्धवं
विरावणं रावणमुग्रपौरुषम् ।
स्वर्लोकमागच्छ गतज्वरश्चिरं
सुरेन्द्रगुप्तं गतदोषकल्मषम् ॥ ३४ ।

इत्यार्षे श्रीमद्रामायणे बालकाण्डे पञ्चदशः सर्गः

———

अत्र स्वर्लोकमित्यस्य गतदोषकल्मषमिति विशेषणमस्ति । तत्र दोषा रागद्वेषमोहादयः । कल्मषं—पापं—स्वहृदि स्वात्मतयाऽवस्थितश्रीमदादिब्रह्मानुपासनादि ब्रह्महत्यान्तम् । एतयोः प्रसङ्गो यत्र गतः तादृश स्वर्लोकमिति । इदं च परस्वर्गाख्ये ब्रह्मलोक एव । समस्तसुरेन्द्रैस्सर्वैरपि यथाभगवद्दत्तस्वस्वदेशमवस्थितैर्गुप्तमिति चासङ्कोचेन ब्रह्मलोक एवास्ति । नापि च शक्रलोकप्रत्यागमनियोगश्च युज्यते । विष्णोर्भगवतो विराड्त्वतो वैराजब्रह्मलोकप्रत्यागतिरेवोपदिश्यते । राज्यमुपासित्वा ब्रह्मलोकं गमिष्यतीति स्पष्टत्वाच्च । तदविदितब्रह्मतत्वा मोहात्स्वकुलदैवब्रह्मापकर्षगवेषणपरमश्रद्धामिथ्यापकर्षं चापादयन्तो वदन्तु नाम । [1]भग(३४)मानः ॥ ३४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे पञ्चदशः सर्गः

---

### अथ षोडशः सर्गः

[पायसोत्पत्तिः, तत्प्राशनं च]

**ततो नारायणो विष्णुर्नियुक्तः सुरसत्तमैः ।**
**जानन्नपि सुरानेवं श्लक्ष्णं वचनमब्रवीत् ॥ १ ॥**

एवं प्राप्तनियोग उक्तावतारोपायश्च भगवान्विष्णुः पुनस्तान् धैर्याय ब्रूते । तदप्यस्माभिरस्मत्कार्यनियुक्तस्य साहाय्यकमस्माभिः कर्तव्यमिति बुद्ध्या । ततो नारायण इत्यादि । नियुक्तः—कृतनियोगः । देवनियोगे दोष इत्याशङ्क्य नियुक्तः-प्रार्थित इति परिहरतीव कश्चित् । अदोषत्वमारादेव तस्योक्तमस्माभिः । जानन्नपीति—तमब्रुवन्नित्यादिपूर्वसर्गोक्तवचनैरिति शेषः ॥ १ ॥

---

[1] वर्गमानः–ख.

उपायः को वधे तस्य राक्षसाधिपतेः सुराः!
यमहं तं समास्थाय निहन्यामृषिकण्टकम् ॥ २ ॥

यमुपायमास्थाय तमहं हन्यां स उपायः क इति योजना ॥ २ ॥

एवमुक्तास्सुरास्सर्वे प्रत्यूचुर्विष्णुमव्ययम् ।
मानुषीं तनुमास्थाय रावणं जहि संयुगे ॥ ३ ॥

स हि तेपे तपस्तीव्रं दीर्घकालमरिन्दम!
येन तुष्टोऽभवद्ब्रह्मा लोकक्[1]त्पूर्वपूर्वजः ॥ ४ ॥

पूर्वेषामपि पूर्वजो ब्रह्मेति । श्रीमच्चतुर्मुखरुद्रश्रीप्रजेशविष्ण्वादयो ये पूर्वे—[2]सर्वसंसारपूर्वभूताः कारणमूर्तयः सन्ति तेषामपि पूर्वजः—भगवान् हिरण्यगर्भ इति यावत् । श्रीमदादिब्रह्मण आन्तरज्ञानमूर्तित्वात् तस्य सर्वपूर्वजत्वं, "हिरण्यगर्भः समवर्तताग्रे" इत्यादेः ॥४॥

सन्तुष्टः प्रददौ तस्मै राक्षसाय वरं प्रभुः ।
नानाविधेभ्यो भूतेभ्यो भयं नान्यत्र मानुषात् ॥ ५ ॥

अवज्ञाताः पुरा तेन वरदाने हि मानवाः ।
एवं पितामहात्तास्मात् वरं प्राप्य स दर्पितः ॥ ६ ॥

उत्सादयति लोकांस्त्रीन् स्त्रियश्चाप्यपकर्षति ।
तस्मात्तस्य वधो दृष्टो मानुषेभ्यः परन्तप! ॥ ७ ॥

इत्येतद्वचनं श्रुत्वा सुराणां विष्णुरात्मवान् ।
पितरं रोचयामास तदा दशरथं नृपम् ॥ ८ ॥

स चाप्यपुत्रो नृपतिस्तस्मिन् काले महाद्युतिः ।
अयजत् पुत्रियामिष्टिं पुत्रेप्सुररिसूदनः ॥९ ॥

---

[1] लोकपूर्वजः—ङ. [2] सर्गसंसार—ग.

स चापीति। स दशरथोऽपीत्यर्थः। तास्मिन् काल इति। भगवद्वतितीर्षाकाल इत्यर्थः। पुत्रियामिति। ह्रस्वश्छान्दसः॥ ९॥

**स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम्।**
**अन्तर्धानं गतो देवैः पूज्यमानो महर्षिभिः॥ १०॥**

निश्चयं—अवतारविषयम्। आमन्त्र्य चेति। साधयामीत्युक्त्वेति यावत्। अन्तर्धानं गत इति। तस्मादेव समाजादिति शेषः॥ १०॥

***ततो वै यजमानस्य पावकादतुलप्रभम्।**
**प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम्॥ ११॥**

यजमानस्य पावकादिति। गार्हपत्यादित्यर्थः। एतदग्नेः पुरुषोत्थानादेवावतार्यमाणं तेजो हैरण्यगर्भमिति सुस्पष्टम्। तस्य तु भूम्यवतारे विष्णूपाधिः द्वारमिति सिद्धान्तः। अतुलप्रभमिति। विद्युदादिवत् दृष्टिप्रतिघातकतेजस्वीति यावत्। महद्भूतमिति। एतेन प्रादुर्भावसमये अनिर्धार्यमाणस्त्रीपुरुषादिलिङ्गविशेषमिति सूचितम्॥ ११॥

**कृष्णं रक्ताम्बरधरं रक्ताक्षं दुन्दुभिस्वनम्।**
**स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम्॥ १२॥**

अनन्तरमाकारानुभवः। कृष्णं—कृष्णवर्णम्। स्निग्धाः—चिक्कणाः हर्यक्षस्येव तनुजाः—लोमानि श्मश्रुप्रवरा मूर्धजाः—केशाश्च यस्य स तथा॥ १२॥

**शुभलक्षणसम्पन्नं दिव्याभरणभूषितम्।**
**शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमम्॥ १३॥**

समुत्सेधोऽत्र उच्छ्रायः। दृप्तशार्दूलविक्रममिति। तद्वद्भयङ्करदर्शनमिति यावत्॥ १३॥

---

* श्लोकपञ्चकमेकान्वयम्-गो.

[1] दिवाकरसमाकारं दीप्तानलशिखोपमम् ।
तप्तजाम्बूनदमयीं राजतान्तपरिच्छदाम् ॥ १४ ॥
दिव्यपायससम्पूर्णां पात्रीं पत्नीमिव प्रियाम् ।
प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥ १५ ॥

दिवाकरसमाकारमिति प्रभामण्डलवत्त्वांशे दृष्टान्तः । तैक्ष्ण्यांशे दृष्टान्तः—दीप्तानलशिखोपममिति । राजतो—रजतविकारः अन्ते—उपरि परिच्छदः—पिधानपात्रं—यस्यास्सा तथा । पात्रीति लिङ्गसामान्यात् । प्रियां पत्नीमिवेति । अयं कविसमाधिः । स्वयं दोर्भ्यां परिगृह्य प्रादुर्भूतमित्यन्वयः । भावे निष्ठा । मायामयीमिव । इव शब्द एवार्थे । भगवतो हिरण्यगर्भस्याचिन्त्यशक्तिदेवमायाविर्भावितामेवेत्यर्थः ॥ १५ ॥

समवेक्ष्याब्रवीद्वाक्यं इदं दशरथं नृपम् ।
प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ! ॥ १६ ॥

दशरथं समवेक्ष्येति योजना । प्राजापत्यं—"पत्यन्तपुरोहितादिभ्यो यक्" इत्यपत्यादिप्राग्दीव्यतीयाधिकारे*ण्यप्रत्ययः, प्रजापतिपुत्रः प्रजापतिनिसृष्टः—प्रजापतेरागत इत्याद्यर्थः ॥ १६ ॥

अतः परं ततो राजा प्रत्युवाच कृताञ्जलिः ।
भगवन् ! स्वागतं तेऽस्तु किमहं करवाणि ते ॥ १७ ॥

---

* 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति प्राग्दीव्यतीयो ण्यप्रत्ययः—गो. अयमेव पाठः साधुरिति भाति.

[1]एतदनन्तरं — सिंहस्कन्धं महाबाहुमङ्गदद्वयशोभितम् ॥ ताराविकृतकल्पेन हारेणोरसि राजितम् । ताराधिपतिकल्पैश्च दन्तैः परमशोभितम् । ज्वलन्निव च तेजोभिर्दीपयन्निव च श्रिया । तप्तजाम्बूनदमयैर्भूषणैर्भूषितं च यत्—इदमधिकं- ङ.

अतः परमिति। प्राजापत्यं मां विद्धीत्युक्त्यनन्तरम्। ततः—तत एव हेतोः। गतभीस्सन् राजा कृताञ्जलिः प्रत्युवाच। महाभूताकारतयोत्थानात्कृत्ययेव नाशशङ्काभीतः पश्चात्प्राजापत्यत्वश्रवणान्निर्भय उवाच ॥ १७ ॥

अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत्।
राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥ १८ ॥

देवानिति। ब्रह्मादीनर्चयता—हयमेधपूर्वकपुत्रकामेष्ट्येति यावत् ॥ १८ ॥

इदं तु नरशार्दूल! पायसं देवनिर्मितम्।
प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ॥ १९ ॥

इदमिति किमित्यतः—इदं त्वित्यादि। देवनिर्मित[1]मिति। देवनिर्मितजलपृथिवीमयभूलोके निजकार्यावताराय प्रजेश[2]विष्ण्वात्मनावतरितव्यत्वात् परमान्नमयप्रजापतिविष्ण्वात्मना देवेन श्रीहिरण्यगर्भेण निर्मितं, अत एव ते प्रजाकरं, धन्यं; 'स्वर्गादिभ्यो यत्' इति यत्; व्युत्पत्तिमात्रमिदम्। प्रशस्तमिति यावत् ॥ १९ ॥

भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै।
तासु त्वं लप्स्यसे पुत्रान् यदर्थं यजसे नृप! ॥ २० ॥

भार्याणामिति षष्ठी छान्दसी। भार्याभ्य इति यावत्। अनुरूपाः—त्वदनुकूलाः एतत्प्राशनोचिताश्चेत्यर्थः, अशभोजने—तस्मात् थस्य तादेशः। 'ईहल्यघोः' इतीत्वम्। यजस इति कर्त्रभिप्रायत्वात् ॥ २० ॥

---

[1] मित्यादि—ग.  [2] विश्वात्मना—क.

तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम्।
पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥ २१ ॥

हिरण्मयीं–[1]हिरण्यविकाराम् । दाण्डिनायनसूत्रे यादिलोपनिपातः ॥ २१ ॥

अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम्।
मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥ २२ ॥

अभितः प्रदक्षिणं–अभिप्रदक्षिणं । अद्भुतप्रख्यं—अद्भुताकारम् ॥ २२ ॥

ततो दशरथः प्राप्य पायसं देवनिर्मितम् ।
बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ॥ २३ ॥
ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम्।
संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ २४ ॥

भूतं कर्तृ। संवर्तयित्वा–समाप्य । तत्कर्मेति । श्रीहिरण्यगर्भतेजोंऽशावतारणकर्मेति यावत्। तत्रेति। अग्निकुण्ड इति यावत् ॥ २४ ॥

हर्षरश्मिभिरुद्योतं तस्यान्तःपुरमाबभौ ।
शारदस्याभिरामस्य चन्द्रस्येव नभोंऽशुभिः ॥ २५ ॥

हर्षेति । हर्षजाः रश्मयः–स्मितज्योत्स्नारूपाः [2]तैरुद्भूतः उद्योतः–प्रकाशो यस्य तत्तथा । अन्तःपुरं तद्वर्तिस्त्रीजातमिति यावत्। शरदि भवश्शारदः । चन्द्रस्यांशुभिः नभ इवेति योजना ॥ २५ ॥

---

[1] हिरण्यकवि–**क**. [2] तदुद्भूतः–**ग**.

**सोऽन्तःपुरं प्रविश्यैव कौसल्यामिदमब्रवीत् ।**
**पायसं प्रतिगृह्णीष्व पुत्रीयं त्विदमात्मनः ॥ २६ ॥**

आत्मन इति । स्वस्या इत्यर्थः । 'मनः' इति ङीब्निषेधः ॥ २६ ॥

**कौसल्यायै नरपतिः पायसार्धं ददौ तदा ।**
**अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ॥ २७ ॥**
**कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ।**
**प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ॥ २८ ॥**
**अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ।**

कौसल्याया इत्यादि । अत्रेदं ब्रह्मविद्भिर्मामकैरनुसन्धेयम् :—
'पुष्पवद्धिरण्यरजश्शचीन्द्रौ धीस्वयम्भुवौ ' इत्युपदिष्टाश्वमेधमहा-यागविकारश्रीमद्ब्रह्मयोगराजब्रह्मविद्याविलासप्रकृतिभूताष्टब्रह्मविद्यातदर्थ – पुण्यकर्मपरमकाष्ठाश्वमेधप्राप्यफलश्रीहिरण्यगर्भतेजोमयमूलविद्यायाः प्राजापत्यपादे ऋश्यशृङ्गबीजान्वयात् श्रीहिरण्यगर्भपादे च गर्भबीजान्वयात् विहितगर्भशक्तिमत्पायसं अष्टब्रह्मविद्यात्मत्वात् अष्टांशं भवति । तस्यास्य पुष्पवतोः भास्करसौरसरस्वतीस्वयम्भुमयांशचतुष्टयमेकमर्धं भवति । चन्द्रपरोरजश्शचीन्द्रमयांशचतुष्टयमपरमर्धं भवति । एवं प्रथमतो द्विधाकृतस्य [1] पायसस्यार्धं स्वायम्भुवान्नापरीतं प्रधानमहिष्यै कौसल्यायै प्रथमं ददौ । अनन्तरमस्यै दत्तमर्धं च द्विधाकृत्य तु तयोश्चैकमर्धं द्विधा कृत्वा तदेकभागं योगप्रधानां कौसल्यामनुव्रतायै सुमित्रायै ददौ । अयमेव भागो भास्करात्मा लक्ष्मणः । ततश्च कौसल्यायां धीस्वयम्भूसौरभागास्त्रयः स्थिताः । अन्तःपूर्णशक्तिर्भगवान् हिरण्यगर्भो रामः । अथैन्द्रमर्धं कैकेय्यै ददौ । तदपि द्विधा कृत्वा अथ तयोश्चैकमर्धं द्विधा कृत्वा तदेकभागं च भोगपत्नीं कैकेयीमप्यनुव्रतायै

[1] तत्पायसस्य-**ग.**

सुमित्रायै ददौ। अयमेव भागश्चन्द्रश्शत्रुघ्नः। अहो भरतश्च पूर्णशक्तिर्विराड्प्रधानः। लक्ष्मणशत्रुघ्नौ मध्यस्थसम्राड्प्रधानौ। भगवान् रामः स्वराट् हिरण्यगर्भ इति। शब्दतो योजयामः। तदा नरपतिः कौसल्यायै समग्रपायसस्यार्धं ददौ। अपि च नराधिपस्सुमित्रायै अर्धादर्धं ददौ। अत्र आवृत्तोऽर्धशब्दो द्रष्टव्यः। तथाऽग्रेपि। तथाचार्धार्धादर्धं ददौ। अथ कैकेय्यै च पुत्रकारणादवशिष्टार्धं—कौसल्यायै दत्तादवशिष्टार्धं ददौ। पुनरेव च नराधिपोऽनुचिन्त्य अमृतोपमं पायसस्यावशिष्टार्धं च सुमित्रायै प्रददौ। अविष्टस्य—कौसल्यादत्तावशिष्टस्य कैकेयीपायसस्यार्धादर्धं ददावित्यर्थः ॥ २८ ॥

**एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥ २९ ॥**

एवमित्यादि। पृथगिति। विभज्येति शेषः ॥ २९ ॥

**तास्त्वेतत्पायसं [1]प्राश्य नरेन्द्रस्योत्तमास्त्रियः।**
**[2]समानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥ ३० ॥**

प्राश्य प्रहर्षोदितचेतसः-उदितं-उन्मिषितं, प्रहर्षविकसितचेतस इति यावत्। ताः उत्तमस्त्रियः नृपतिं समानं मेनिरे। स्वासु समानस्नेहं अपक्षपातमवागमन्। यद्यपि कौसल्याकैकेय्योस्त्रयो भागाः, सुमित्रायै द्वौ; अथापि मय्येवमनुशयो राज्ञः, यदुभयत्रापि मामनुसस्मारेति सुमित्राया अपि सन्तोषः ॥ ३० ॥

**ततस्तु ताः प्राश्य तदुत्तमस्त्रियो**
**महीपतेरुत्तमपायसं पृथक्।**
**हुताशनादित्यसमानतेजसोऽ-**
**चिरेण गर्भान् प्रतिपेदिरे तथा ॥ ३१ ॥**

---

[1] प्राप्य—ङ. च. [2] संमानं-ङ. च.

हुताशनादित्यसमानतेजस इति गर्भविशेषणं दिव्यगर्भवत्स्त्रीविशेषणं च, प्रथमान्ततया रूपं चाविशिष्टम् ॥ ३१ ॥

**ततस्तु राजा प्रतिवीक्ष्य ताः स्त्रियः**
**प्ररूढगर्भाः प्रतिलब्धमानसः ।**
**बभूव हृष्टस्त्रिदिवे यथा हरिः**
**सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥ ३२ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे षोडशः सर्गः

---

प्ररूढगर्भाः प्रतिवीक्ष्य प्रतिलब्धमानसः—प्राप्तगर्भसत्तानिश्चयं मानसं यस्य स तथा । इदं विशेषणं हरेरिन्द्रस्यापि [1] हर्षोत्पत्तौ समानम् । रङ्ग (३२) मानः सर्गः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे षोडशः सर्गः

---

## अथ सप्तदशः सर्गः

[ऋक्षवानराद्युत्पत्तिः]

**पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः ।**
**उवाच देवताः सर्वाः स्वयम्भूर्भगवानिदम् ॥ १ ॥**

अथ प्रपञ्च इव एक एव भगवान् त्रिभूमविग्रहोपगृहीतस्त्रिब्रह्ममूर्तिरपि विराडवतारे वैराजविष्णूपग्रहप्राधान्येनावतीर्णः स्वावयवसर्वत्रिदशानपि [2] स्वस्वस्थूलविराड्विष्णूपग्रहप्राधान्येन प्रधानदेवता-

---

[1] हर्षोत्पत्तौ इति-ग-पुस्तके नास्ति. [2] स्वस्व इति—ग पुस्तके नास्ति.

मयस्वसहायार्थं स्वयमेवावतारनियोगं करोति। (नित्य)अवयव्यवतार-प्रसङ्गादवयवानामप्यवतारोपदेशः—पुत्रत्वमित्यादि। विष्णौ—विराडुप-ग्रहब्रह्माणि। एवं सर्वत्रार्थो द्रष्टव्यः। स्वयम्भूरिति। 'भुवस्संज्ञान्तर-योः' इति क्विप्॥ १॥

**सत्यसन्धस्य वीरस्य सर्वेषां नो हितैषिणः।**
**विष्णोस्सहायान् बलिनः सृजध्वं कामरूपिणः॥ २॥**

सहायानिति। सहायकरणसमर्थानित्यर्थः। ननु कथं विष्णौ पुत्रत्वं गते ब्रह्मा देवान् अवतारे नियुङ्क्ते इति। वालिसुग्रीवादेरुत्पत्ति-वैरादीनां प्रागेव चिरप्रवृत्तत्वात्। उच्यते—पुत्रत्वं गते सहायार्थं सृजध्वमित्ययं भगवन्नियोगः प्राचीन एव। कविस्त्वद्य प्रसङ्गात्प्रति-पादयतीति॥ २॥

**मायाविदश्च शूरांश्च वायुवेगसमान् जवे।**
**नयज्ञान् बुद्धिसम्पन्नान् विष्णुतुल्यपराक्रमान्॥ ३॥**

मायाविद इति। असुरादिमायासंहारसमर्थदेवमायाशक्तिमन्त इति यावत्। जवे—वेगवत्त्वविषये॥ ३॥

**असंहार्यानुपायज्ञान् सिंहसंहननान्वितान्।**
**सर्वास्त्रगुणसम्पन्नानमृतप्राशनानिव॥ ४॥**

असंहार्यानिति। परैरिति शेषः। संहननं—गात्रं—सिंहसंहनन-समानसंहननान्विता इत्यर्थः। अमृतप्राशनाः—देवाः, कर्तरि ल्युट्, देववत्सर्वास्त्रावध्यत्वसम्पन्ना इत्यर्थः॥ ४॥

**अप्सरस्सु च मुख्यासु गन्धर्वीणां तनूषु च।**
**यक्षपन्नगकन्यासु ऋक्षविद्याधरीषु च॥ ५॥**

गन्धर्वीणामिति । 'जातेरस्त्रीविषयात्' इति ङीष् । तथा विद्याधरीष्वित्यपि ॥ ५ ॥

**किन्नरीणां च गात्रेषु वानरीणां तनूषु च ।**
**सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्रमान् ॥ ६ ॥**

हरिरूपेणेति । वानररूपेणेति यावत् । ननु मनुष्यरूपेणैव कुतो नावयवदेवानामप्यवताराः । उच्यते—वनवासे सीतापहारादेव रावणस्य शीर्षच्छेद्यत्वे प्राप्ते तत्र च तपस्विनो रामस्य मनुष्यवेषैरशक्य-संहारसहायत्वात्, वानरशब्दस्यान्वर्थत्वतो मनुष्यवत्सुकरव्यवहारत्वात, नन्दिना कृतस्य रावणशापस्य समर्थत्वाच्च । तथा हि—दिग्विजये रावणं नन्दिकेश्वरो भगवान् [1]रावणकृतपरिहासश्शशाप—"तस्मान्मद्रूप-संयुक्ता मद्वीर्यसमतेजसः । उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः" इति । अकथकमेकं नास्ति । तुल्यपराक्रमानिति । [2]स्वतुल्य-पराक्रमानित्यर्थः, यथाबीजं तथाङ्कुरमिति न्यायेन ॥ ६ ॥

**पूर्वमेव मया सृष्टो जाम्बवानृक्षपुङ्गवः ।**
**जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥ ७ ॥**

यद्देहपरिग्रहनियोगः ? इत्यत्र कार्यार्थमस्माभिरप्यपरिमितज्ञाना-युरैश्वर्यवन्तो ये सृष्टाः, तादृशां अंशतस्स्वीकृत्येत्याह—पूर्वमित्यादि । विराड्व्यतिरिक्तब्रह्मसृष्टेरनेकमूलत्वादाह—जृम्भमाणस्येत्यादि । सहसा—द्रागिति यावत् ॥ ७ ॥

**ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् ।**
**जनयामासुरेवं ते पुत्रान् वानररूपिणः ॥ ८ ॥**

---

[1] रावणं कृतपरिहासं शशाप—क. परन्तु पूर्वमपि रावणं इति पदं वर्तते । भर्ताश्चिन्त्यं. [2] स्वस्वतुल्य—ग.

ऋषयश्च महात्मानः सिद्धाविद्याधरोरगाः ।
चारणाश्च सुतान् वीरान् ससृजुर्वनचारिणः ॥ ९ ॥
वानरेन्द्रं महेन्द्राभमिन्द्रो वालिनमूर्जितम् ।
सुग्रीवं जनयामास तपनस्तपतां वरः ॥ १० ॥

एवमिति । वक्ष्यमाणप्रकारस्तावत्; देवराजः—इन्द्रो वालिनं जनयामास । कथमिदं भगवन्नियोगविपरीततया राघवारातिमेव भगवानिन्द्रस्सृजति! उच्यते—अवतीर्णदेवसेनानुग्रहक्षमराजसिद्धये स्वतुल्य-[1]पराक्रमवालिसर्गः । नास्य रामस्य च किञ्चिन्निमित्तमरातित्वम् । अपि त्वेतत्सख्ये रामस्य वृत्ते अयमेव सीतां क्षणात्प्रत्यर्पयेत् वाली । रावणः चिरकक्षपीडितः [2]तच्चीटीमात्रेण स्वयमेव भीतः सीतां प्रत्यर्पयेत् । ततश्च देवकार्यं न संवृत्तं स्यात् । अत एवास्य वधः स्वसमानदुःखसापेक्षसुग्रीवसख्याय । अतो यावत्सुग्रीवराज्यं देवसेनारक्षणप्रयोजन एव वालिसर्गः । अपि च रामोऽपि महाबलत्वात् स्वयमन्यसख्यं न प्रार्थयेत् । वाली तु सुतरां अकण्टकमहाबलमहाराजो निष्प्रयोजनं रामसख्यं कटाक्षेणापि नेक्षेत । तथा च देवसेनानां सीतान्वेषणादिरामकृत्यानुपयोगः । अत उक्तमेव प्रयोजनम् ॥ १० ॥

बृहस्पतिस्त्वजनयत् तारं नाम महाहरिम् ।
सर्ववानरमुख्यानां बुद्धिमन्तमनुत्तमम् ॥ ११ ॥
धनदस्य सुतः श्रीमान् वानरो गन्धमादनः ।
विश्वकर्मा त्वजनयत् नलं नाम महाहरिम् ॥ १२ ॥
पावकस्य सुतः श्रीमान् नीलोऽग्निसदृशप्रभः ।
तेजसा यशसा वीर्यात् अत्यरिच्यत वानरान् ॥ १३ ॥

---

[1] पराक्रममेव वालि—ग. [2] तच्चीत्कारमात्रेण—ग.

**रूपद्रविणसम्पन्नौ अश्विनौ रूपसम्मतौ ।**
**मैन्दं च द्विविदं चैव जनयामासतुः स्वयम् ॥ १४ ॥**

रूपेण—लक्षणेन, द्रविणेन—वित्तेन सम्पन्नौ तथा । अत एव रूपसम्मतमैन्दद्विविदयोस्सर्गः । रूपसम्मताविति मत्वर्थीयोऽच् । प्रशस्तरूपवत्वेन सर्वलोकसम्मतावित्यर्थः ॥ १४ ॥

**वरुणो जनयामास सुषेणं नाम वानरम् ।**
**शरभं जनयामास पर्जन्यस्तु महाबलम् ॥ १५ ॥**

पर्जन्यः—जगद्वर्षानुग्रहकरभगवद्देवराजमूर्त्यन्तरम् ॥ १५ ॥

**मारुतस्यात्मजः श्रीमान् हनूमान् नाम वानरः ।**
**वज्रसंहननोपेतो वैनतेयसमो जवे ॥ १६ ॥**
**सर्ववानरमुख्येषु बुद्धिमान् बलवानपि ।**

वज्रवदभेद्यसंहननोपेतः । तथा वानरमुख्याः—सुग्रीवादयस्सुषेणान्ताः ॥ १६ ॥

**ते सृष्टा बहुसाहस्रा दशग्रीववधे रताः ॥ १७ ॥**
**अप्रमेयबला वीरा विक्रान्ताः कामरूपिणः ।**

दशग्रीववधे रता इति । भविष्यति निष्ठा [1]छान्दसी, रंस्यमाना इति यावत् । अपि च ये रता भविष्यन्ति तादृशा बहुसाहस्राः सृष्टा इति । धातुसम्बन्धे प्रत्यया इति साधुः ॥ १७ ॥

**मेरुमन्दरसङ्काशा वपुष्मन्तो महाबलाः ॥ १८ ॥**
**ऋक्षवानरगोपुच्छाः क्षिप्रमेवाभिजज्ञिरे ।**

गोपुच्छाः—वानरविशेषाः ॥ १८ ॥

---

[1] छन्दसि—क.

यस्य देवस्य यद्रूपं वेषो यश्च पराक्रमः ॥ १९ ॥
अजायत समस्तेन तस्य तस्य सुतः पृथक् ।

रूपं–नीलपीतादि । वेषो–वृत्तचतुरश्रादिसंस्थानविशेषः ॥१९॥

गोलाङ्गूलिषु चोत्पन्नाः केचित् संमतविक्रमाः ॥ २० ॥
ऋक्षीषु च तथा जाता वानराः किन्नरीषु च ।
देवा महर्षिगन्धर्वाः तार्क्ष्या यक्षा यशस्विनः ॥ २१ ॥
नागाः किम्पुरुषाश्चैव सिद्धविद्याधरोरगाः ।
[1]बहवो जनयामासुः हृष्टास्तत्र सहस्रशः ॥ २२ ॥
वानरान् सुमहाकायान् सर्वान् वै वनचारिणः ।
अप्सरस्सु च मुख्यासु तथा विद्याधरीषु च ॥ २३ ॥
नागकन्यासु च तथा गन्धर्वीणां तनूषु च ।
कामरूपबलोपेता यथाकामं विचारिणः ॥ २४ ॥
सिंहशार्दूलसदृशा दर्पेण च बलेन च ।
शिलाप्रहरणाः सर्वे सर्वे पादपयोधिनः ॥ २५ ॥
नखदंष्ट्रायुधाः सर्वे सर्वे सर्वास्त्रकोविदाः ।

सर्वास्त्रकोविदा इति । देवांशत्वात् स्वयं प्रतिभातसर्वास्त्रपरिहारोपाया इत्यर्थः । नैव तेऽस्त्रप्रयोक्तारः । शिलादिप्रहरणा इत्युक्तत्वात् ॥ २५ ॥

विचालयेयुश्शैलेन्द्रान् भेदयेयुः स्थिरान् द्रुमान् ॥ २६ ॥
क्षोभयेयुश्च वेगेन समुद्रं सरितां पतिम् ।

विचालयेयुरित्यादौ 'शकि लिङ् च' इति लिङ् । 'कम्पने चलिः' इति मित्त्वेपि ह्रस्वाभावश्छान्दसः ॥ २६ ॥

---

[1] एतदनन्तरं–चारणाश्च सुतान् वीरान् ससृजुर्वनचारिणः ॥ इदमधिकं–ङ.

दारयेयुः क्षितिं पद्भ्यामाप्लवेयुर्महार्णवम् ।
नभस्थलं विशेयुश्च गृह्णीयुरपि तोयदान् ॥ २७ ॥

आप्लवेयुरिति । सन्तरेयुरिति यावत् ॥ २७ ॥

गृह्णीयुरपि मातङ्गान् मत्तान् प्रव्रजतो वने ।
नर्दमानाश्च नादेन पातयेयुर्विहङ्गमान् ॥ २८ ॥

प्रव्रजतः । स्वच्छन्दगतीनित्यर्थः ॥ २८ ॥

ईदृशानां सहस्राणि हरीणां कामरूपिणाम् ।
शतं शतसहस्राणि यूथपानां महात्मनाम् ॥ २९ ॥

शतं शतसहस्राणीति । अनेकानीति यावत् ॥ २९ ॥

ते प्रधानेषु यूथेषु हरीणां हरियूथपाः ।
बभूवुर्यूथपश्रेष्ठा वीरांश्चाजनयन् हरीन् ॥ ३० ॥

त इत्यादि । ते प्रागुक्ताः सुग्रीवादिसुषेणान्ताः हरीणां प्रधानेषु यूथेषु—महायूथेषु हरियूथपाः बभूवुः । ते यूथपश्रेष्ठाश्च वीरान् हरीनजनयन् ॥ ३० ॥

अन्ये ऋक्षवतः प्रस्थान् उपतस्थुः सहस्रशः ।
अन्ये नानाविधान् शैलान् काननानि च भेजिरे ॥ ३१ ॥
*सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ॥ ३२ ॥
भ्रातरावुपतस्थुस्ते सर्व एव हरीश्वराः ।
नलं नीलं हनूमन्तमन्यांश्च हरियूथपान् ॥ ३३ ॥

* अत्र, 175 पुटे विद्यमानार्धेन सह इदमर्धं गणनीयम् ।

ते तार्क्ष्यबलसम्पन्नाः सर्वे युद्धविशारदाः ।
विचरन्तोऽर्दयन् दर्पात् सिंहव्याघ्रमहोरगान् ॥ ३४ ॥

तांश्च सर्वान् महाबाहुर्वाली विपुलविक्रमः ।
जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् ॥ ३५ ॥

वाली जुगोपेति देवराजावतारत्वादेव ॥ ३५ ॥

तैरियं पृथिवी शूरैः सपर्वतवनार्णवा ।
कीर्णा विविधसंस्थानैर्नानाव्यञ्जनलक्षणैः ॥ ३६ ॥

विविधसंस्थानैः—स्थूलसूक्ष्मह्रस्वदीर्घादिनानाप्रकारदेहसंस्थानविशेषवद्भिः । नानाविधानि व्यञ्जनानि—अयं सुग्रीवः, अयं हनूमानित्यसाधारणतत्तत्स्वरूपव्यक्त्य[1]साधारणानि लक्षणानि—प्रशस्तहनुयुक्तत्वादिचिह्नानि येषां ते तथा ॥ ३६ ॥

तैर्मेघबृन्दाचलकूटकल्पैः
महाबलैर्वानरयूथपालैः ।
बभूव भूर्भीमशरीररूपैः
समावृता रामसहायहेतोः ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे सप्तदशः सर्गः

———

अचलकूटः—पर्वतशृङ्गः । शरीररूपं—शरीरसंस्थानम् । साल(३७)मानः सर्गः ॥ ३७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे सप्तदशः सर्गः

———

[1] साधारणकारणानि—क. ख.

## अथ अष्टादशः सर्गः
[श्रीरामाद्यवतारः, विश्वामित्रागमनं च]

**निर्वृत्ते तु क्रतौ तस्मिन् हयमेधे महात्मनः ।**
**प्रतिगृह्य सुरा भागान् प्रतिजग्मुर्यथागतम् ॥ १ ॥**

एवं * प्रासङ्गिकावयवदेवताः प्रसङ्गादुक्त्वा प्रकृतप्रधानदेवता प्रतिपाद्यते— निर्वृत्ते त्वित्यादि । 'पुत्रोत्पत्तिं विचिन्तयन्' (श्लो. ७) इत्यन्तो वृत्तानुवादः । निर्वृत्ते—समाप्ते । हयमेध इति । स्वोपकार्य-पुत्रेष्टियुत इति शेषः ॥ १ ॥

**समाप्तदीक्षानियमः पत्नीगणसमन्वितः ।**
**प्रविवेश पुरीं राजा सभृत्यबलवाहनः ॥ २ ॥**

प्रविवेश—प्रवेशाभिमुखो बभूव ॥ २ ॥

**यथार्हं पूजितास्तेन राज्ञा वै पृथिवीश्वराः ।**
**मुदिताः प्रययुर्देशान् प्रणम्य मुनिपुङ्गवम् ॥ ३ ॥**

†[1] मुनिपुङ्गवः वसिष्ठः । पुरोहित आश्रयणीयः किल ॥ ३ ॥

**श्रीमतां गच्छतां तेषां [2] स्वपुराणि पुरात्ततः ।**
**बलानि राज्ञां शुभ्राणि प्रहृष्टानि चकाशिरे ॥ ४ ॥**

शुभ्राणीति । दशरथदत्तवस्त्राभरणादितोऽत्युज्ज्वलानि । तत एव हेतोः प्रहर्षः ॥ ४ ॥

**गतेषु पृथिवीशेषु राजा दशरथस्तदा ।**
**प्रविवेश पुरीं श्रीमान् पुरस्कृत्य [3] द्विजोत्तमान् ॥ ५ ॥**

द्विजोत्तमाः -वसिष्ठाद्याः ॥ ५ ॥

---

* अवयवदेवताः—वानराद्याः, प्रधानदेवता—श्रीरामः.

† मुनिपुङ्गवं—वसिष्ठं ऋष्यश्रृङ्गं च—ति.

[1] मुनिपुङ्गवम्-वसिष्ठम्—ग. [2] स्वगृहाणि—ङ. [3] द्विजोत्तमम्—ङ.

शान्तया प्रययौ सार्धमृश्यशृङ्गस्सुपूजितः ।
[1] अनुगम्यमानो राज्ञाऽथ सानुयात्रेण धीमता ॥ ६ ॥

अनुगम्यमान इति ऋश्यशृङ्गविशेषणं । आर्षं गुरुलघ्वक्षर-वैषम्यम् ॥ ६ ॥

एवं विसृज्य तान् सर्वान् राजा सम्पूर्णमानसः ।
उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ ७ ॥

एवं विसृज्येति । एवं द्विजैस्सह प्रविश्य तांश्च विसृ-ज्येत्यर्थः ॥ ७ ॥

ततो यज्ञे समाप्ते तु *ऋतूनां षट् समत्ययुः ।
ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥ ८ ॥
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ।
ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ॥ ९ ॥
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ।
कौसल्याऽजनयद्रामं सर्वलक्षणसंयुतम् ॥ १० ॥
[2]विष्णोरर्धं महाभागं पुत्रमैक्ष्वाकनन्दनम् ।
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ॥ ११ ॥
यथा वरेण देवानामदितिर्वज्रपाणिना ।

द्वादश इति । 'तस्य पूरणे' इति डट् । चैत्र मास इति । चैत्री पौर्णमास्यस्मिन् [3]मास इति चैत्रः । 'साऽस्मिन् पौर्णमासीति' इति संज्ञायामण् । नवम्या संसृष्टं नावमिकम्, 'संसृष्टे' इति ठक् । 'तदा-

---

* ऋतूनामिति प्रथमार्थे षष्ठी—ति. [1] अन्वीयमानो—ङ. [2] एतदनन्तरम्—लोहिताक्षं महाबाहुं रक्तोष्ठं दुन्दुभिस्वनम्—इदमधिकं—ङ. इति—ख.

द्यास्तिथयो द्वयोः' इति पुंस्त्वम्, नवमीतिथावित्यर्थः। अदितिदैवत्ये नक्षत्र इति। पुनर्वसुनक्षत्र इति यावत्। देवतान्तात्तादर्थ्ये यक् छान्दसः। स्वोच्चसंस्थेषु--स्वस्वोच्चस्थानगतेषु पञ्चसु ग्रहेषु—सूर्याङ्गारकसौरिबृहस्पतिशुक्रेषु। सामान्यतो ग्रहाणामुच्चस्थानानि तु 'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादि तुङ्गाः' इति। वाक्पतिः--बृहस्पतिः। इन्दुना सह प्रोद्यमान इति—पुनर्वसुनक्षत्रस्य कर्कटकराशित्वादेव इन्दुः तत्र। कर्कटकस्तु बृहस्तेरुच्चस्थानम्। सूर्योऽपि स्वोच्चे मेषे स्थितः। एवं मन्दाङ्गारकशुक्रास्तदानीं तुलामकरमीन[1]स्था इति ज्ञेयम्। राममिति। रमन्तेऽस्मिन् लोका इत्यधिकरणे-घञ्। विष्णोरर्धमिति। विष्णवंशस्य पायसस्य प्रथमप्रविभागप्राधान्येन सिद्धम्। ऐक्ष्वाकस्य-दशरथस्य नन्दनम्। 'दाण्डिनायन' इत्यादिना उकारलोपः। वरः-श्रेष्ठः ॥ ११ ॥

**भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ॥ १२ ॥**
**साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः।**

चतुर्भाग इति। चतुरंशोपेतो भागः पायसार्धभागप्राधान्यसिद्धः ॥ १२ ॥

**अथ लक्ष्मणशत्रुघ्नौ सुमित्राऽजनयत् सुतौ ॥ १३ ॥**
**[2]सर्वास्त्रकुशलौ वीरौ विष्णोरर्धसमन्वितौ।**

अथ लक्ष्मणशत्रुघ्नाविति। पायसपूर्वापरार्धैकदेशसिद्धाविति शेषः। तदेवोक्तम्—विष्णोरर्धसमन्वितावविति। प्रथमचरमार्धयोरर्धार्धेति यावत् ॥ १३ ॥

---

[1] स्थाने—क. ख. [2] सर्वार्थकुशलौ—ङ.

**पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः ॥ १४ ॥**
**सार्पे जातौ च सौमित्री कुलीरेऽभ्युदिते रवौ ।**

[1] सार्पः आश्लेषः । सौमित्रीति द्विवचनेन यमत्वं सूच्यते । बाह्वादित्वादिञ् ॥ १४ ॥

**राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे *पृथक् ॥ १५ ॥**
**गुणवन्तोऽनुरूपाश्च रुच्या *प्रोष्ठपदोपमाः ।**

पृथक् गुणवन्त इति । प्रत्येकमनन्यसाधारणगुणवन्त इति यावत् । अनुरूपाः -ज्येष्ठकनिष्ठत्वादिरूपव्यवहारवन्तः । रुच्या--चतुर्ष्वाकारजशोभया—पूर्वोत्तरप्रोष्ठपदाश्चत्वारः, अत एव तदुपमात्वम् ॥ १५ ॥

**जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ १६ ॥**
**देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्चुता ।**

जगुरित्यादि । रामाद्युत्पत्तिकाल इति शेषः ॥ १६ ॥

**उत्सवश्च महानासीदयोध्यायां जनाकुलः ॥ १७ ॥**
**रथ्याश्च जनसम्बाधा नटनर्तकसङ्कुलाः ।**
**[2] गायनैश्च विराविण्यो वादनैश्च तथाऽपरैः ॥ १८ ॥**

गायनैः । गायतेः 'ण्युट् च' इति कर्तरि ण्युट्, गायकैरिति यावत् । तथाऽपरैर्वादनैश्च विराविण्यो रथ्याः आसन्निति योजना ॥ १८ ॥

**प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ।**
**ब्राह्मणेभ्यो ददौ वित्तं गोदानानि सहस्रशः ॥ १९ ॥**

---

*एकत्वेऽपि पृथग्वर्तमानः । एकस्य चतुर्धावस्थाने दृष्टान्तमाह—प्रोष्ठेति ॥ **गो.**

[1] सर्पे आश्लेषे—ग. [2] गायकैः—ङ. एतदनन्तरं—विरेजुर्विपुलास्तत्र सर्वरत्नसमन्विताः—अधिकं—ङ.

प्रदेयाः—पारितोषिकाः । सूताः—पौराणिकाः । मागधाः—वंशावळीकीर्तकाः । वन्दिनः—स्तुतिपाठकाः । वन्दिनामिति सम्बन्धसामान्ये षष्ठी । सूतादिसम्बन्धि यद्देयं पारितोषिकं तत्तेभ्यो ददाविति योजना ॥ १९ ॥

**अतीत्यैकादशाहं तु नामकर्म तथाऽकरोत् ।**

एकादशमासन्नं अहः यस्य तदेकादशाहम् , द्वादशाहमित्यन्यपदार्थः । क्षत्रियस्य द्वादशाहं सूतकमिति स्मृतेरेवं व्याख्या । *इयमेव व्याख्या तु शब्दद्योतिता । नामकर्म—नामकरणम् अकरोत् । पुत्राणां यथाकृतजातकर्मणामिति शेषः ॥

**ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् ॥ २० ॥**
**सौमित्री लक्ष्मणमिति शत्रुघ्नमपरं तथा ।**

कस्य किन्नामेत्यतः—ज्येष्ठमित्यादि । राममिति । रामनामकमिति यावत् । तथाऽग्रेऽपि । सौमित्री—सुमित्रापुत्रौ ॥ २० ॥

**वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा ॥ २१ ॥**

ननु कथं राज्ञो नामकरणादावधिकार इत्यतः—वसिष्ठ इत्यादि । तथा च पुरोहितद्वारा अकरोदित्युक्तं भवति ॥ २१ ॥

**ब्राह्मणान् भोजयामास पौरान् जानपदानपि ।**
**अददद्ब्राह्मणानां च रत्नौघममितं बहु ॥ २२ ॥**

ब्राह्मणानामददादिति। एवमादौ सर्वत्र सम्बन्धसामान्ये षष्ठी । अमितं रत्नौघं बह्वददादिति । बहुप्रकारवदिति क्रियाविशेषणम् । दानस्य बहुप्रकाराः हेमाद्र्यादिस्मृतिप्रसिद्धाः ॥ २२ ॥

---

*लक्ष्मणजन्मदिनापेक्षया एकादशाहत्वं । रामजन्मदिनापेक्षया तु द्वादशदिनं तत् । प्रथमसूतकेनैवेतरेषामपि निवृत्तिस्तथा कथनमिति गोविन्दराजः ॥

**तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् ।**

जन्माक्रियादीनि । जातकर्माद्युपनयनान्तानीति यावत् ॥ २२ ॥

**तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ॥ २३ ॥**
**बभूव भूयो भूतानां स्वयम्भूरिव संमतः ।**

केतुः—बिरुदध्वजः । स यथान्नदानादिकीर्तिं ख्यापयति एवं इक्ष्वाकुकुलवैभवप्रकाशकः । पितुः भूयः—अभ्यधिकं रतिकरः —सन्तोषकरः । अपि च भूतानां—सर्वप्राणिनां स्वयम्भूः—भगवान् हिरण्यगर्भ इव संमतः—नित्यप्रेमास्पदभूतः । कमेकं सिद्धवत्कृत्य दृष्टान्तः ? —उच्यते । भगवतो हिरण्यगर्भस्यैकस्यैव समग्रजगत्सर्गादिपञ्चकृत्यसमग्र सहजशक्तित्वात् । स्वतस्त्वादिशक्तिप्राधान्येन स महेशः सर्वस्रोतास्वितनू उपादानभूय सृजति । ‘ तदात्मानं स्वयमकुरुत ’ इति सर्वत्रिस्रोतास्वितनुमत्प्रताचामनुपचारेण स्वस्यैवोपादानतयावस्थितत्वात् । अत एव श्रुत्या च तत्त्वमस्यादितोऽकृतकतदनन्यताप्रतिपादनात् । क्रिमेरपि स्वस्वात्मनः परमप्रेमास्पदत्वं च सुस्पष्टम् । एतेन कारणगुणा हि कार्ये गुणानारभन्त इति न्यायेन श्रीमदादिब्रह्ममात्रासाधारणधर्मभूतं सर्वसंमतत्वं परमाचिति भगवत्तेजोंऽशप्रधानावतारे भगवत्यपि रामे स्वत एव न्यायप्राप्तमित्युपदिष्टं वेदितव्यम् ॥ २३ ॥

**सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ॥ २४ ॥**
**सर्वे ज्ञानोपपन्नाश्च सर्वे समुदिता गुणैः ।**

ज्ञानोपपन्नाः । आत्मानात्मतत्त्वज्ञानयुक्ता इति यावत् । गुणैः —सर्ववर्णाश्रमसाधारणैः क्षत्रासाधारणैश्च सद्गुणैरिति यावत् ॥ २४ ॥

**तेषामपि महातेजा रामः सत्यपराक्रमः ॥ २५ ॥**
**इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ।**

तेषामपीति निर्धारणे षष्ठी। सर्वगुणसमुदित इति शेषः। इष्टः सर्वस्येत्यादि। गुणकथने पौनरुक्त्यं अलङ्कार इत्यादावेवोक्तम् ॥२५॥

**गजस्कन्धेऽश्वपृष्ठे च रथचर्यासु संमतः ॥ २६ ॥**
**धनुर्वेदे च निरतः पितुः शुश्रूषणे रतः ।**

रथचर्यासु। रणोचितरथप्रचारेष्वित्यर्थः ॥ २६ ॥

**बाल्यात्प्रभृतिसुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ॥ २७ ॥**
**रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ।**

बाल्यादिति । प्रभृतियोगे पञ्चम्यस्ति । लक्ष्मिवर्धन इति । 'ङ्यापोः संज्ञाछन्दसोः' इति ह्रस्वः । परस्तु मृषाह 'इको ह्रस्वः' इति । लोकान् रमयतीति लोकरामः। ण्यन्तात्कर्मण्यण् ॥ २७ ॥

**सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ॥ २८ ॥**
**लक्ष्मणो लक्ष्मिसम्पन्नो बहिः प्राण इवापरः ।**

सर्वेत्यादि। अन्तःप्राणात् अपरः—अन्यः बहिश्चरन् प्राण इव रामस्य निरतिशयप्रेमास्पदभूतो लक्ष्मणः; अत एव रामस्य शरीरतः —स्वशरीरादपि सर्वप्रियकरः—सकलानुकूलकर्मकारी बभूव ॥ २८ ॥

**न च तेन विना निद्रां लभते पुरुषोत्तमः ॥ २९ ॥**
**मृष्टमन्नमुपानीतमश्नाति न हि तं विना ।**

तेन—लक्ष्मणेन, "पृथग्विना" इति तृतीया। अन्यतरस्यांग्रहणात् तं विनेत्यपि ॥ २९ ॥

**यदा हि हयमारूढो मृगयां याति राघवः ॥ ३० ॥**
**तदैनं पृष्ठतोऽभ्येति सधनुः परिपालयन् ।**

मृगया इति निपातः—आखेटः, तमुद्दिश्येति यावत्। सधनुः—धनुस्सहितः। परिपालयन्, रामशरीरमिति शेषः। अयं तु लक्ष्मणस्य भक्त्यतिशयप्रवृत्तः स्वाभाविको व्यापारः, न तु लोकरक्षकस्य रामस्य स्वशरीररक्षणे परापेक्षाऽस्ति ॥ ३० ॥

**भरतस्यापि शत्रुघ्नः लक्ष्मणावरजो हि सः ॥ ३१ ॥**
**प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ।**

हि—यस्मात् शत्रुघ्नो लक्ष्मणावरजः—अवरकालप्राशितकैकेयीपिण्डांशजः, तस्माल्लक्ष्मणो रामस्येव भरतस्य शत्रुघ्नः प्रिय आसीदित्यर्थः ॥ ३१ ॥

**स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः ॥ ३२ ॥**
**बभूव परमप्रीतो देवैरिव पितामहः ।**

चतुर्भिर्देवैः पितामह इवेति। 'वसवः पुरस्तात्, रुद्रा दक्षिणतः, आदित्याः पश्चात्, विश्वेदेवा उत्तरतः' इति श्रुतेः भगवच्चतुर्मुखजैः भगवत्पुत्रैर्वस्वादिभिः तथेन्द्रयमवरुणकुबेरैश्च भगवत्पुत्रैर्भगवानिव परमप्रीत इत्यर्थः ॥ ३२ ॥

**ते यदा ज्ञानसम्पन्नास्सर्वे समुदिता गुणैः ॥ ३३ ॥**
**ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः ।**

ज्ञानादिकं व्याकृतम् ॥ ३३ ॥

**तेषामेवं प्रभावानां सर्वेषां दीप्ततेजसाम् ॥ ३४ ॥**
**पिता दशरथो हृष्टो ब्रह्मा लोकाधिपो यथा ।**

तेषां पिता दशरथः तत्पुत्रलाभतः हृष्टो बभूव। यथा भूरादिब्रह्मलोकान्तसावर्तनावर्तनसकललोकस्य, अस्मच्छरीरेषु वयमिव, साक्षा-

त्स्वामी भगवान् ब्रह्मा हिरण्यगर्भः, सर्वेषामेव दीप्ततेजसां ग्रहनक्षत्र-चन्द्राग्निभास्करादीनां पुत्राणां लाभतो हृष्टो भवति तथेत्यर्थः ॥ ३४ ॥

**ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ॥ ३५ ॥**
**पितृशुश्रूषणरताः धनुर्वेदे च निष्ठिताः ।**

अध्ययनं—नियमोपेतो विद्याभ्यासः । वेदसम्बन्धि वैदिकम् , तादृशेऽध्ययने रताः—नियताः इत्यर्थः ॥ ३५ ॥

**अथ राजा दशरथस्तेषां दारक्रियां प्रति ॥ ३६ ॥**
**चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ।**

दाराक्रिया—विवाहः ॥ ३६ ॥

**तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः ॥ ३७ ॥**
**अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः ।**

मन्त्रिमध्य इति । कदाचित्सभायामवस्थितस्येति शेषः ॥ ३७ ॥

**स राज्ञो दर्शनाकाङ्क्षी द्वाराध्यक्षानुवाच ह ॥ ३८ ॥**
**शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनन्दनम् ।**

कौशिकं—कुशिकगोत्रजम् ॥ ३८ ॥

**तच्छ्रुत्वा वचनं तस्य राज्ञो वेश्म प्रदुद्रुवुः ॥ ३९ ॥**
**सम्भ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः ।**

वेश्मेति । अन्तर्वेश्मेति यावत् । सम्भ्रान्तमनस इति । क्षुभितचित्ता इति यावत् । तेनेति । तदीयेनेति शेषः ॥ ३९ ॥

**ते गत्वा राजभवनं विश्वामित्रमृषिं तदा ॥ ४० ॥**
**प्राप्तमावेदयामासुः [1] नृपायेक्ष्वाकवे तदा ।**

इक्ष्वाकव इति । तद्वंशजत्वात्ताच्छब्द्यम् । तथा सर्वत्र ॥४०॥

**तेषां तद्वचनं श्रुत्वा सपुरोधाः समाहितः ॥ ४१ ॥**
**प्रत्युज्जगाम तं हृष्टो ब्रह्माणमिव वासवः ।**

सपुरोधाः—पुरोहितसहितः । ब्रह्माणमिति । *बृहस्पतिमिति यावत् । तथा हि—'बृहस्पतिर्देवानां ब्रह्म' इति ॥ ४१ ॥

**तं दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतम् ॥ ४२ ॥**
**प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत् ।**

ज्वलितमिति । अकर्मकत्वात् 'गत्यर्थाकर्मक' इति कर्तरि क्तः । संशितव्रतं—तीक्ष्णनियमम् । शो तनूकरणे, 'शाच्छोरन्यतरस्यां'; तादौ कितीत्वम् । उपहारयदिति । अडभावश्छान्दसः ॥ ४२ ॥

**स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा ॥ ४३ ॥**
**कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ।**

कुशलं—यथास्थितस्य परिपालनं; व्ययः—अपायः, तदभावः अव्ययं; सुखाभिवृद्धिमनुपद्रवञ्चेत्यर्थः ॥ ४३ ॥

**पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च ॥ ४४ ॥**
**कुशलं कौशिको राज्ञः पर्यपृच्छत्सुधार्मिकः ।**

किं विषयकः कुशलादिप्रश्न इत्यतः—पुर इत्यादि । अथ विशिष्य प्रश्नः—कुशलमित्यादि ॥ ४४ ॥

---

* ब्रह्माणं—चतुर्मुखम्—गो. [1] नृपायैक्ष्वाकवे—ङ.

**अपि ते सन्नताः सर्वे सामन्ता रिपवो जिताः ॥ ४५ ॥**
**दैवं च मानुषं चापि कर्म ते साध्वनुष्ठितम् ।**

राज्ञो विशेषः कुशलप्रश्नप्रकारः—अपि त इत्यादि । अपिः प्रश्ने । सामन्ताः सन्नताः—प्रवणा अपि ? रिपवो जिता अपि ? दैवं—देवलोकोपकारकम् । मानुषं—मनुष्यलोकोपकारकम् । तत्राद्यं कर्म नित्यनैमित्तिकप्रायश्चित्तरूपं, द्वितीयं सामादिषट्कर्मरूपम् ॥ ४५ ॥

**वसिष्ठं च समागम्य कुशलं मुनिपुङ्गवः ॥ ४६ ॥**
**ऋषींश्चान्यान् यथान्यायं महाभागानुवाच ह ।**

मुनिपुङ्गवः—विश्वामित्रः ; वसिष्ठं च पुरोहितत्वात् राजक्रियाग्निहोत्रदेवपूजागृहादौ स्थितं स्वकार्यार्थं समागम्य—यथान्यायं प्रणामादिपूर्वं सङ्गत्य तान् प्रसिद्धान् वामदेवादीन् ऋषींश्च यथान्यायं समागत्य कुशलं चोवाच । कुशलप्रश्नमपि कृतवानित्यर्थः ॥ ४६ ॥

**ते सर्वे हृष्टमनसस्तत्र राज्ञो निवेशनम् ॥ ४७ ॥**
**विविशुः पूजितास्तत्र निषेदुश्च* यथार्हतः ।**

एवं स्वकार्यार्थं कृतसङ्गमा वसिष्ठादयः सर्वे राज्ञो निवेशनं—तत्सभारूपं विविशुः । पूजिता इति । राज्ञेति शेषः ॥ ४७ ॥

**अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ॥ ४८ ॥**
**उवाच परमोदारो हृष्टस्तमभिपूजयन् ।**

परमोदारः—परमदाता । "उदारो दातृमहतोः" । हृष्टः—पुलकितः । 'हृषेर्लोमसु' इतीडभावः ॥ ४८ ॥

---

* यथाऽर्हतः—यथान्यायं, प्रथमार्थे तसिः—गो.

**यथाऽमृतस्य सम्प्राप्तिः यथावर्षमनूदके ॥ ४९ ॥**
**यथा सदृशदारेषु* पुत्रजन्माप्रजस्य च ।**

अनूदके–'अन्येषामपि' ति दीर्घः । सदृशदारेषु–जातिवयोरूप-कुलगुणतुल्येष्वित्यर्थः ॥ ४९ ॥

**प्रणष्टस्य यथा लाभो यथा हर्षो महोदये ॥ ५० ॥**
**तथैवागमनं मन्ये स्वागतं ते महामुने! ।**

यथा प्रणष्टस्य–अदृष्टस्य निजपित्रादिस्थापितनिध्यादेः लाभः यथा महोदयः-महः-पुत्रविवाहाद्युत्सवः तस्य उदयो यस्य स तथा, तादृशो हर्षो यथा, तथैव ते आगमनं अचिन्तितोपनतमिति सन्तोष-करं सिद्धं मन्ये । हे महामुने! ते स्वागतम् ॥ ५० ॥

**कं च ते परमं कामं करोमि किमु हर्षितः ॥ ५१ ॥**
**पात्रभूतोऽसि मे ब्रह्मन्! दिष्ट्या प्राप्तोऽसि धार्मिक! ।**

कं च ते परमं कामं–अभीष्टं करोमि–कुर्याम्, वर्तमानसामीप्ये वर्तमानवल्लट् । हर्षितः–तत्कारणमपि मे सिध्यति किमु! मे त्वद्विषयकमत्कर्तृकसर्वशुश्रूषाणां पात्रभूतस्त्वं दिष्ट्या–शुभादृष्टवशेन प्राप्तोऽसि ॥ ५१ ॥

**[1]अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ ५२ ॥**
**पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ।**
**ब्रह्मर्षित्वमनु प्राप्तः पूज्योऽसि बहुधा मया ॥ ५३ ॥**

---

* अप्रजस्य–अपुत्रस्य यथा पुत्रजन्मेत्यन्वयः.

[1] एतदनन्तरं–यस्माद्विप्रेन्द्रमद्राक्षं सुप्रभाता निशा मम–इदमधिकं–ङ.

पूर्वं राजर्षिशब्देन—तद्वाच्यसाधकेन तपसा अस्मदादिवत् द्योतितप्रभः–प्रकाशितवैभवः, अनु—पश्चात् ब्रह्मर्षिशब्दवाच्यत्व-साधकेन तपसा ब्रह्मर्षित्वं च प्राप्तः । यदेवं अतः बहुधा—बहुप्रकारेण राजर्षिप्रकारेण ब्रह्मर्षिप्रकारेण च विशिष्य पूज्योऽसि ॥ ५३ ॥

**तदद्भुतमिदं ब्रह्मन्! पवित्रं परमं मम ।**
**शुभक्षेत्रगतश्चाहं तव सन्दर्शनात् प्रभो! ॥ ५४ ॥**

इदमिति । त्वदागमनमित्यर्थः । हे प्रभो! तव सन्दर्शनात् एतद्देहलब्धात् अहं शुभक्षेत्रगतः—ऐहिकामुष्मिकसकलशुभसाधनपुण्यदे-हमेव प्राप्तवानस्मि ; सफलजन्मास्मीति यावत् । " इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते " इति गीतिः ॥ ५४ ॥

**ब्रूहि यत् प्रार्थितं तुभ्यं कार्यमागमनं प्रति ।**
**इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये ॥ ५५ ॥**

तुभ्यमिति षष्ठ्यर्थे चतुर्थी । ते यत्कार्यं प्रति आगमनं तत्ते प्रार्थितं कार्यं ब्रूहि । अभिमतकार्यनियोगेनानुगृहीतोऽहं त्वदर्थपरिवृद्धये—त्वत्प्रयोजनपरिवृद्धिं कर्तुमिच्छामि । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ॥ ५५ ॥

---

**कार्यस्य न विमर्शं च गन्तुमर्हसि कौशिक!**
**कर्ता चाहमशेषेण दैवतं हि भवान् मम ॥ ५६ ॥**

विमर्शः—करिष्यति न वेति संशयः । उक्तविमर्शं विना नियोगहेतुः—दैवतं हीति ॥ ५६ ॥

**मम चायमनुप्राप्तो महानभ्युदयो द्विज!**
**तवागमनजः कृत्स्नो धर्मश्चानुत्तमो मम ॥ ५७ ॥**

इतश्च न विमर्शं [1] गन्तुमर्हसीत्युच्यते—मम चेत्यादि ॥ ५७ ॥

इति हृदयसुखं निशम्य वाक्यं
श्रुतिसुखमात्मवता विनीतमुक्तम् ।
प्रथितगुणयशा गुणैर्विशिष्टः
परम ऋषिः परमं जगाम हर्षम् ॥ ५७ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे अष्टादशः सर्गः

---

हृदयसुखं अत एव श्रुतिसुखं च । विनीतं—विनयान्वितं यथा तथा उक्तम् । प्रथितगुणयशाः—'ततो मूलैः फलैः पर्णैस्तृणैरिति च वर्तयन् चरन्नन्ततः प्रवृत्तानि । ततोऽपो वायुमाकाशम्' इत्युपदिष्टैः प्रसिद्धै [2] श्लौकिकसामान्यतपोगुणैः अम्बाचतुर्व्यूहचतुर्दिगनुष्ठानपरमसाधनैः उपजातब्रह्मदेवाम्बया नूतनस्थिरसर्गप्रवृत्यादिरूपं यशो यस्य स तथा । गुणैः— ब्रह्मर्षित्वप्रापकैश्शमदमतपश्शौचादिनवगुणैर्वसिष्ठादिवद्विशिष्टः, अत एव परमऋषिः । 'ऋत्यक' इति प्रकृतिभावः । *इच्छांश (५७) मानः सर्गः ॥ ५७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे अष्टादशः सर्गः

---

अथ एकोनविंशः सर्गः

[विश्वामित्रवाक्यम्]

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥

---

*अत्र व्याख्यारीत्या ५७ १/२ श्लोकात्मकोऽयं सर्ग इति प्रतीयते । 'अद्य मे सफलं' इति वा अन्यद्वा अर्धमधिकं स्यादिति प्रतिभाति ॥

[1] कर्तुं—ख—ग. [2] श्लोकसामान्य—ग.

अथ राजप्रतिश्रुतस्वकार्येण विश्वामित्रेण स्वकार्यप्रवृत्तिरिव देवकार्य एव प्रवृत्तिः । तच्छ्रुत्वेत्यादि । अद्भुतविस्तरं–' दैवतं हि भवान् मम ' इत्युक्तेः ; अद्भुतः—विस्मयकरः विस्तरः यस्मिन् ' अथ हृष्टमना राजा ' इत्यादिराजवाक्ये तत्तथा । ' प्रथने वावशब्दे ' इति व्युपसर्गे घञ्निषेधः ॥ १ ॥

**सदृशं राजशार्दूल ! तवैतद्भुवि[1] नान्यतः ।**
**महाकुलप्रसूतस्य वसिष्ठव्यपदेशिनः ॥ २ ॥**

सदृशमित्यादि । महावंशप्रसूतत्वादिगुणकस्य तवैव एतत्–उक्तरूपं वचनं सदृशम् । कुतः–यस्मादेतादृशवचनं नान्यतः–अन्यस्माद्यस्मादपि कस्माद्राज्ञः समस्ति, अतस्तवैव सदृशं–युक्तरूपम् । वसिष्ठव्यपदेशिनः । व्यपदेशः–नियोगः सोऽस्यास्तीति इनिः । वसिष्ठनियोगवर्तिन इति यावत् । इदमेव सर्वगुणसम्पात्तिमूलम् ॥ २ ॥

**यत्तु मे हृद्गतं वाक्यं तस्य कार्यस्य निश्चयम् ।**
**कुरुष्व राजशार्दूल ! भव सत्यप्रतिश्रवः ॥ ३ ॥**

यत्त्वित्यादि । अतः परं वक्तव्यं हृद्गतं यन्मे वाक्यं अस्ति, तद्विषयकस्य कार्यस्यावश्य[2]कर्तव्यत्वनिश्चयं कुरुष्व । प्रतिश्रवः –प्रतिज्ञा ॥ ३ ॥

**अहं नियममातिष्ठे [3]विघ्यर्थं पुरुषर्षभ !**
**तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ॥ ४ ॥**

---

[1] नान्यथा–ङ.　[2] कर्तव्यत्वस्य नि–क.　[3] सिध्यर्थं–घ.

**व्रते मे बहुशश्चीर्णे समाप्त्यां राक्षसाविमौ ।**
**मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ।**
**समांसरुधिरौघेण वेदिं तामभ्यवर्षताम् ॥ ५ ॥**

किंतद्वाक्यमित्यत्र 'रामं मे दातुमर्हसि' इति वक्तुं पातनिकां करोति- अहमित्यादि । विधिः—यागः । यदाऽहं यज्ञार्थं नियममातिष्ठे—दीक्षामास्थितोऽस्मि तदा तस्य यज्ञस्य विघ्नकरौ ॥ ४ ॥ कामरूपत्वादिगुणकौ मारीचाद्याख्यौ यौ द्वौ राक्षसौ स्तः, ताविमौ मे—मम व्रते—दीक्षारूपे नियमे बहुशः—अभ्यधिकम्, समाप्तकल्पतयेति यावत्, चीर्णे—अनुष्ठिते सति, चरेः निष्ठायामनिट्त्वम्, ईकारश्च छान्दसः, समाप्त्यां—समाप्तिकाले मांसरुधिरौघेण तां वेदिमभ्यवर्षतां ॥ ५ ॥

**अवधूते तथाभूते तस्मिन्नियमनिश्चये ।**
**कृतश्रमो निरुत्साहस्तस्माद्देशादपाक्रमे ॥ ६ ॥**

तस्मिन् यज्ञे तथाभूते—नाशिते नियमनिश्चये च अवधूते कृतश्रमः -कृतवृथाप्रयासः अत एव निरुत्साहः तस्माद्देशादपाक्रमे—अपगतो भवामि ॥ ६ ॥

**न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव !**
**तथा भूता हि सा चर्या न शापस्तत्र मुच्यते ॥ ७ ॥**

ननु प्रतिसर्गकर्तुः महामहिमस्य ते कियदस्त्येतद्रक्षःप्रक्षेप इत्यत्रोक्तम्—न च म इत्यादि । क्रोधमुत्स्रष्टुमिति । शप्तुमिति यावत् । कुतोऽशाप इत्यतः—तथेत्यादि । हि—यस्मात् सा चर्या—दीक्षा तथाभूता —शापादि प्रवृत्त्यनर्हा, तस्मात् तत्र—तस्यां चर्यायाम् शापो न विमुच्यते —न क्रियते ॥ ७ ॥

**स्वपुत्रं राजशार्दूल! रामं सत्यपराक्रमम्।**
**काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ॥ ८॥**

किं तत इत्यतः—स्वपुत्रमित्यादि। काकपक्षधरं—बालानां शिखा काकपक्षः ॥ ८ ॥

**शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ।**
**राक्षसा ये विकर्तारस्तेषामपि विनाशने ॥ ९ ॥**

किमेतेन पितृमातृपरिपाऌनीयेन बालेनेत्यतः—शक्त इत्यादि। मयेति। पितृस्थानीयेनेति शेषः। दिव्येन स्वेन तेजसा तु ये राक्षसा विकर्तारः—विघ्नकर्तारः तेषां विनाशनेऽपि शक्तः। अतो नाप्रयोजनं तैतन्नयनस्य ॥ ९ ॥

**श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशयः।**
**त्रयाणामपि लोकानां येन ख्यातिं गमिष्यति ॥ १० ॥**

बहुरूपमिति। ऐहिकामुष्मिकबहुविषयत्वेन बहुविधत्वम्। त्रयाणामिति। त्रिष्वपीति यावत्। येनेति। मत्प्रवृत्तश्रेयसेति यावत्॥ १० ॥

**न च तौ राममासाद्य शक्तौ स्थातुं कथञ्चन।**
**न च तौ राघवादन्यो हन्तुमुत्सहते पुमान् ॥ ११ ॥**

आसाद्येति। तत्पुरतो युद्ध इति शेषः ॥ ११ ॥

**वीर्योत्सिक्तौ हि तौ पापौ कालपाशवशं गतौ।**
**रामस्य राजशार्दूल! न पर्याप्तौ महात्मनः ॥ १२ ॥**

कुतो रामादन्यो हन्तुं नोत्सहत इत्यतः—वीर्येत्यादि। रामो वा कथं हन्यादित्यतः—कालेत्यादि। रामस्य—वीर्यायेति शेषः ॥ १२ ॥

[1]न च [2]पुत्रगतं स्नेहं कर्तुमर्हसि पार्थिव! ।
अहं ते प्रतिजानामि हतौ तौ विद्धि राक्षसौ ॥ १३ ॥

पुत्रं गतं-पुत्रगतम् । 'द्वितीया श्रित' इत्यादिना समासः । अस्मासु विसर्जनप्रतिबन्धभूतमिति शेषः ॥ १३ ॥

अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ।
वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः ॥ १४ ॥

कुत एवमित्यतः—अहमित्यादि । रामं वेद्मीति । निरतिशयवैभवश्रीहिरण्यगर्भतेजोविभूत्यवताररूपं रामतत्त्वमित्यर्थः । उक्ततत्त्वज्ञानं ब्रह्मर्षिमात्रसिद्धमित्युच्यते—वसिष्ठ इत्यादि ॥ १४ ॥

यदि ते धर्मलाभं च यशश्च परमं भुवि ।
स्थितमिच्छसि राजेन्द्र! सुतं मे दातुमर्हसि ॥ १५ ॥

न केवलं मत्कार्यमात्रसिद्धिः, अपि तु तवापि; यथेच्छसि तथा कुर्वित्युच्यते—यदीत्यादि । यदि धर्मलाभमिच्छसि, भुवि स्थितं—शाश्वतीं प्रतिष्ठाम् परमं यशश्च यदीच्छसि तदा ते—तव सुतं—रामं मे—मह्यं दातुमर्हसि ॥ १५ ॥

यद्यप्यनुज्ञां काकुत्स्थ! ददते तत्र मन्त्रिणः ।
वसिष्ठप्रमुखाः सर्वे ततो रामं विसर्जय ॥ १६ ॥

---

[1]एतदनन्तरम्—दशरात्रस्तु यज्ञश्च तस्मिन् रामेण राक्षसौ । हन्तव्यौ विघ्नकर्तारौ मम यज्ञस्य वैरिणौ इत्यधिकम्—ङ. [2]पुत्रकृतस्नेहं—ङ. रामं-ङ.

यदि मदुक्तार्थो मद्वचनमात्रतस्ते हितं न भाति, अथापि त्वदिष्टसंमतानामेव वचनानुयोगं कुर्वित्युच्यते—यद्यपीत्यादि। अनुज्ञा—रामदानविषयकानुमतिः। *ततोऽपि—तदापि वा इति योजनार्थः॥ १६॥

**अभिप्रेतमसंसक्तमात्मजं दातुमर्हसि।**
**दशरात्रं हि यज्ञस्य रामं राजीवलोचनम्॥ १७॥**

नापि चिरविप्रयोगः पुत्रेण ते इत्याह—अभिप्रेतमित्यादि। इष्टमिति यावत्। असंसक्तमिति। अतीतबाल्यत्वान्मातापितृकसक्तिरहितं रामं दातुमर्हसि। हि—यस्मात् यज्ञस्य दशरात्रं—यज्ञसम्बधी दशरात्रपरिमितकाल एव राजीवलोचनं रामं अपेक्षते यज्ञपूर्तये, दशानां रात्रीणां समाहारः, द्विगुरेकवचनम्, ततः 'अहस्सर्व' इत्यादिना सङ्ख्यापूर्वरात्र्यन्तादप्यच्। 'रात्राह्न'इत्यादिना पुंस्त्वम्। 'कालाध्वनोः' इति द्वितीया॥ १७॥

**नात्येति कालो यज्ञस्य यथाऽयं मम राघव!**
**तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः॥ १८॥**

हे राघव—दशरथ! ममाऽयं यज्ञस्य कालो यथा—यथोक्तकालं च नात्येति—नाभ्याधिककालविलम्बी भवतीत्यर्थः। आवृत्तिरपीह। तदयमर्थः। हे राघव! ममाऽयं यज्ञस्य कालो यथा नात्येति—नातिपतेत् तथा कुरुष्वेति॥ १८॥

**इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः।**
**विरराम महातेजा विश्वामित्रो महामुनिः॥ १९॥**

धर्मार्थसहितं—धर्मप्रयोजनसहितम्॥ १९॥

**स तन्निशम्य राजेन्द्रो विश्वामित्रवचः शुभम्।**
**शोकमभ्यागमत्तीव्रं व्यषीदत भयान्वितः॥ २०॥**

---

*यद्यपीत्यत्र विद्यमानः 'अपिः' 'तत' इत्यनेन योज्य इत्याह—ततोऽपीति.

व्यषीदत। 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्। व्यत्यया-
दात्मनेपदम्। भयान्वितः—रक्षोनिमित्तपुत्रविपत्तिभययुक्तः॥ २०॥

इति हृदयमनोविदारणं
मुनिवचनं तदतीव शुश्रुवान्।
नरपतिरभवन्महांस्तदा
व्यथितमनाः प्रचचाल चासनात्॥ २१॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकोनविंशः सर्गः

———

हृदयं—हृदयपुण्डरीकं, तद्वर्त्यात्मा तथेत्युच्यते। मनः—तदन्तः-
करणम्। अतीव—अत्यर्थम् हृदयादि विदारणमिति योजना। महान्।
सार्वभौम इति यावत्। महात्मा—महाबुद्धिः। व्यथितमनाः—[1]मूर्च्छित-
चित्तः। आसनाच्चचालेति। अवस्थातुमशक्तो निस्संज्ञः पपातेति यावत्।
आकार (२९ १/२) मानः॥ २१॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकोनविंशः सर्गः

———

अथ विंशः सर्गः

[दशरथसन्तापः]

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम्।
मुहूर्तमिव निस्संज्ञः संज्ञावानिदमब्रवीत्॥ १॥

एवमर्थितरामदानकस्य नृपतेः, रामे प्राकृतमानवमत्या प्राप्तो
लौकिकव्यवहार उपन्यस्यते—तच्छ्रुत्वेत्यादि। अनेन वृत्तानुवादः। इव
शब्द एवार्थे। मुहूर्तं निस्संज्ञ एव—मूर्च्छित एव स्थित्वेत्यर्थः॥ १॥

———

[1] आमूर्च्छित—क. ख.

**ऊनषोडशवर्षो मे रामो राजीवलोचनः।**
**न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २ ॥**

ऊनेति। एकेन द्वाभ्यां वा ऊनाः षोडशवर्षाः यस्य स तथा। इदं विशेषणं 'न युद्धयोग्यतामस्य पश्यामि' इत्युक्तिप्रयोजकम्[1]। षोडशवर्षः कुमारः क्षत्रियकुमार एव कवचधरो युद्धार्हः इति शास्त्रम्। अतो रामो विश्वामित्रायतिकाले द्वादशवर्षः पञ्चदशवर्षो वेति काकदन्तपरीक्षायां बहु प्रयतते* कश्चित् ॥ २ ॥

**इयमक्षौहिणी पूर्णा यस्याहं पतिरीश्वरः।**
**अनया संवृतो गत्वा योद्धाऽहं तैर्निशाचरैः ॥ ३ ॥**

अक्षोहिणीति। 'अक्षादूहिन्यां वृद्धिर्वक्तव्या'। सा च सङ्ख्यादिपर्वोक्ता—एको रथो गजश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ पत्तिं तु त्रिगुणामेकां विदुः सेनामुखं बुधाः। त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ त्रयो गुल्मा गणो नाम, वाहिनी तु गणास्त्रयः। स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ चमूस्तु पृतनास्तिस्रश्चम्वस्तिस्रस्त्वनीकिनी। अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः—इति। यस्याहमिति—सन्धिरार्षः। पतिः, पालयिता—'पातेर्डतिः' ईश्वरः—स्वामी। योद्धेति तृच्। अस्तीति शेषः, तेर्यज्ञविघ्नकरैरिति च शेषः ॥ ३ ॥

**इमे शूराश्च विक्रान्ता भृत्या मेऽस्त्रविशारदाः।**
**योग्या रक्षोगणैर्योद्धुं न रामं नेतुमर्हसि ॥ ४ ॥**

---

* गोविन्दराजः [1] प्रयोजनकं—ग.

अहमेव धनुष्पाणिर्गोप्ता समरमूर्धनि ।
यावत्प्राणान् धरिष्यामि तावद्योत्स्ये निशाचरैः ॥ ५ ॥

*अत एव—समरमूर्धनीत्यादि ॥ ५ ॥

निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता ।
अहं तत्र गमिष्यामि न रामं नेतुमर्हसि ॥ ६ ॥
बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम् ।
न चास्त्रबलसंयुक्तो न च युद्धविशारदः ॥ ७ ॥
न चासौ रक्षसां योग्यः, कूटयुद्धा हि ते भृशम् ।

रामनयने काऽनुपपत्तिरित्यतस्तद्वर्णनम्—बाल इत्यादि । ऊनषोडशवर्षत्वादेव बालत्वम् । अत एवाकृतसर्वविद्यश्च । न हि धनुर्वेदे बालस्याधिकारः । अयमेव हेतुरग्रिमविशेषणानामपि सिद्धौ न चासौ रक्षसां योग्य इति । तत्सम्बन्धिनि रण इति शेषः । कुत इत्यतः—कूटेत्यादि । 'कूटं कपटशालादौ' ॥ ७ ॥

विप्रयुक्तो हि रामेण मुहूर्तमपि नोत्सहे ॥ ८ ॥
जीवितुं मुनिशार्दूल! न रामं नेतुमर्हसि ।

तिष्ठतु रामस्य क्षमचिन्ता ; मद्वृत्तान्त एतावानित्याह—विप्रयुक्त इत्यादि ॥ ८ ॥

अथ वा राघवं ब्रह्मन्! नेतुमिच्छसि सुव्रत! ॥ ९ ॥
चतुरङ्गसमायुक्तं मया च सहितं नय ।

अनन्तरोक्तानुपपत्तिपरिहारः—अथवेत्यादि ॥ ९ ॥

---

* यतोऽहं सकलसेनापरिवृत आगच्छामि—अत एवेत्यर्थः

**षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक! ॥ १० ॥**
**दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ।**

इतश्चेतश्च[1] रामनयनमयुक्तमित्याह–षष्टिरित्यादि । जातस्य ममेति । अतीतानि तदनन्तरमिति शेषः । दुःखं–व्रतोपवासयज्ञदीक्षालक्षणम् ॥ १० ॥

**चतुर्णामात्मजानां हि प्रीतिः परमिका मम ॥ ११ ॥**
**ज्येष्ठं धर्मप्रधानं च न रामं नेतुमर्हसि ।**

परमिका । परमशब्दात्स्वार्थे कः । 'प्रत्ययस्थात' इत्यादिना इत्वम् ॥ ११ ॥

**किंवीर्या राक्षसास्ते च कस्य पुत्राश्च ते च के? ॥ १२ ॥**
**कथंप्रमाणाः के चैतान् रक्षन्ति मुनिपुङ्गव! ।**

अथ सर्वथा रामनयनमन्याय्यमिति प्रतिपादयितुं योद्धव्यरक्षस्वरूपादिप्रश्नः–किंवीर्या इत्यादि । के च त इति । किंनामान इति यावत् । कथंप्रमाणाः–* किंवाक्यप्रमाणकाः ॥ १२ ॥

**कथं च प्रतिकर्तव्यं तेषां रामेण रक्षसाम् ॥ १३ ॥**
**मामकैर्वा बलैर्ब्रह्मन्! मया वा कूटयोधिनाम् ।**

तेषां प्रतिकर्तव्यं–प्रतिक्रिया संहारश्च कथं स्यात् ॥ १३ ॥

**सर्वं मे शंस भगवन्! कथं तेषां मया रणे ॥ १४ ॥**
**स्थातव्यं दुष्टभावानां, वीर्योत्सिक्ता हि राक्षसाः ।**

---

* ते कस्य वाक्यं प्रमाणयन्तीत्यर्थः । कस्य निदेशे वर्तन्त इति यावत्.

[1] न रामनयनं युक्तं–**ग.**

दुष्टभावानां तेषां सम्बाधिनि रण इति योजना ॥ १४ ॥

तस्य तद्वचनं श्रुत्वा विश्वामित्रोऽभ्यभाषत ॥ १५ ॥
पौलस्त्यवंशप्रभवो रावणो नाम राक्षसः ।
स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् ॥ १६ ॥
महाबलो महावीर्यो राक्षसैर्बहुभिर्वृतः ।

त्रैलोक्यं बाधत इति । इदं किं वीर्या इत्यस्योत्तरम् ॥ १६ ॥

श्रूयते हि महावीर्यो रावणो राक्षसाधिपः ॥ १७ ॥
साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुनेः ।

प्रसिद्धश्चायं रावण इत्युच्यते—श्रूयत इति ॥ १७ ॥

यदा स्वयं न यज्ञस्य विघ्नकर्ता महाबलः ॥ १८ ॥
तेन सञ्चोदितौ द्वौ तु राक्षसौ वै महाबलौ ।
मारीचश्च सुबाहुश्च यज्ञविघ्नं करिष्यतः ॥ १९ ॥

यदा स्वयं न विघ्नकर्तेति । अलक्ष्यत्वादिनेति शेषः । तेन सञ्चोदिताविति किंप्रमाणा इत्यस्योत्तरम् ॥ १९ ॥

इत्युक्तो मुनिना तेन राजोवाच मुनिं तदा ।
न हि शक्तोऽस्मि सङ्ग्रामे स्थातुं तस्य दुरात्मनः ॥ २० ॥

अथ रक्षःस्वरूपादि प्रश्ने रावणप्रसङ्गेन स्वयमेव निवृत्तप्रतिक्रियाप्रत्याशो राजाऽऽह—इत्युक्त इत्यादि ॥ २० ॥

स त्वं प्रसादं धर्मज्ञ ! कुरुष्व मम पुत्रके ।
मम चैवाल्पभाग्यस्य दैवतं हि भवान् गुरुः ॥ २१ ॥

अल्पभाग्यस्येति । प्रकृतनियोगकरणासमर्थत्वादित्याशयः । कथं तर्हि मत्प्रसादप्रसङ्ग इत्यत्राह—दैवतं हीत्यादि । देवताः—ब्रह्मविदः

परमाचार्याश्च नित्यकृतार्थत्वतः कुतश्चित्किञ्चिदलाभान्न कोपादिविकृतिं प्राप्नुवन्तीत्याशयः ॥ २१ ॥

**देवदानवगन्धर्वाः यक्षाः पतगपन्नगाः ।**
**न शक्ता रावणं सोढुं किं पुनर्मानवा युधि ॥ २२ ॥**

रावणसङ्ग्रामाद्वैमुख्यमपि न मे दूषणं, अशक्यार्थत्वादित्याह–देवेत्यादि ॥ २२ ॥

**स हि वीर्यवतां वीर्यमादत्ते युधि राक्षसः ।**
**तेन चाहं न शक्नोमि संयोद्धुं तस्य वा बलैः ॥ २३ ॥**
**सबलो वा मुनिश्रेष्ठ! सहितो वा ममात्मजैः ।**

वीर्यमादत्त इति। आहरतीति यावत्। तस्य वा बलैः–मारीचादिभिरिति यावत् ॥ २३ ॥

**कथमप्यमरप्रख्यं सङ्ग्रामाणामकोविदम् ॥ २४ ॥**
**बालं मे तनयं ब्रह्मन्! नैव दास्यामि पुत्रकम् ।**

अमरप्रख्यं–देवतुल्यरूपादिमन्तम्। तर्हि यज्ञरक्षायै देहि इत्यत्राह–सङ्ग्रामाणामित्यादि। पुत्रकमिति। अनुकम्पायां कन्। अनुकम्पाया विषयभूतमिति यावत् ॥ २४ ॥

**अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः ॥ २५ ॥**
**[1]यज्ञविघ्नकरौ तौ, ते नैव दास्यामि पुत्रकम् ।**
**[2]तयोरन्यतरेणाहं योद्धा स्यां स सुहृद्गणः ॥ २६ ॥**

[1] एतदनन्तरं–तौ हि यक्षस्य कन्यायां सुतौ सुन्दोपसुन्दयोः ।
मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ–अधिकं–ङ.

[2] एतदनन्तरं–अन्यथा त्वनुनेष्यामि भवन्तं सहबान्धवः–अधिकं. ङ.

सुन्दोपसुन्दयोस्तौ सुतौ युद्धे कालोपमौ—मारीचसुबाहू इति यावत्। अतः तद्युद्धस्य पुत्रकं न दास्यामीति ॥ २६ ॥

**इति नरपतिजल्पनाद्द्विजेन्द्रं**
**कुशिकसुतं सुमहान् विवेश मन्युः।**
**सुहुत इव समिद्भिराज्यसिक्तः**
**समभवदुज्ज्वलितो महर्षिवह्निः ॥ २७ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे विंशः सर्गः

———

सुहुतः प्रथमं शुष्कसमिद्भिः पश्चादाज्यसिक्तोऽग्निरिवेति योजना। सार (२७) मानः। आहत्य मायास्था (७१५) मानः ॥ २७ ॥

इति श्रीमद्रारामायणामृतकतकटीकायां बालकाण्डे विंशः सर्गः

———

## अथ एकविंशः सर्गः

[वसिष्ठेन दशरथसान्त्वनम्]

**तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम्।**
**समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १ ॥**

एवं स्नेहपाशात् प्राप्तमहानर्थं राजानमन्वर्थपुरोहितस्त्रायत इत्यावेद्यते—तच्छ्रुत्वेत्यादि। स्नेहेन पर्याकुलानि–गद्गदान्यक्षराणि यस्मिन् तत्तथा ॥ १ ॥

**पूर्वमर्थं प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि।**
**राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः ॥ २ ॥**

अर्थमिति। प्रार्थितार्थमित्यर्थः। अयं विपर्यय इति। प्रतिज्ञाहानिरूपोऽयं विपर्ययः राघवाणामस्य कुलस्यायुक्तः ॥ २ ॥

यदीदं ते क्षमं राजन्! गमिष्यामि यथाऽऽगतम्।
मिथ्याप्रतिज्ञः काकुत्स्थ! सुखीभव सबान्धवः॥ ३॥

इदमिति। कुलानुचितार्थानुष्ठानमित्यर्थः। मिथ्याप्रतिज्ञ-इत्यादिः व्यङ्ग्योक्तिः॥ ३॥

तस्य *रोषपरीतस्य विश्वामित्रस्य धीमतः।
चचाल वसुधा कृत्स्ना विविशुश्च च भयं सुराः॥ ४॥

धीमत इति। रोषं दृष्ट्वेति शेषः। सुरा भयं विविशुरिति। जगदन्यथाकृतिसमर्थोऽयमद्य च क्रुद्धः किं करिष्यतीति भयम्॥ ४॥

त्रस्तरूपं स विज्ञाय जगत् सर्वं महानृषिः।
नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत्॥ ५॥

त्रस्तरूपं--भीतस्वरूपं। जगत्–त्रिस्रोतोमात्रं। धीरः--निर्भयः॥ ५॥

इक्ष्वाकूणां कुले जातस्साक्षाद्धर्म इवापरः।
धृतिमान् सुव्रतःश्रीमान् न धर्मं हातुमर्हसि॥ ६॥
त्रिषु लोकेषु विख्यातो ‡धर्मात्मा इति राघवः।
स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि॥ ७॥
संश्रुत्यैवंकरिष्यामीत्यकुर्वाणस्य राघव!
इष्टापूर्तवधो भूयात् तस्माद्रामं विसर्जय॥ ८॥

धर्म इवापर इति। इतः पूर्वमिति शेषः। धर्मात्मा इतीति असन्धिश्छान्दसः। स्वधर्म–सत्यप्रतिज्ञत्वम्॥ ७॥

---

* रोषपरीतस्येत्यादौ सप्तम्यर्थे षष्ठी। तस्मिन् रोषपरीते सतीत्यर्थः–**गो.**

‡ धर्मात्मा इतीत्यत्र वाक्ये संहिताऽनित्या–**गो**॥

अकुर्वाणस्येति । प्रतिज्ञातार्थमननुतिष्ठत इत्यर्थः । इष्टं–अश्वमेधान्तयागः, पूर्तं–वापीकूपतडाकादिप्रतिष्ठा, तयोर्वधः–नाशः भूयात् । भवेदिति यावत ॥ ७ ॥

**कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ।**
**गुप्तं कुशिकपुत्रेण ज्वलनेनामृतं यथा ॥ ९ ॥**

अथ पुत्रविपत्तिभीतिमपनयति–कृतेत्यादि । शक्ष्यन्तीति । प्रधर्षितुमिति शेषः ॥ ९ ॥

**एष विग्रहवान् धर्म एष वीर्यवतां वरः ।**
**एष [1] बुध्याऽधिको लोके तपसश्च परायणम् ॥ १० ॥**

कुत एवं प्रभावः कुशिकपुत्रस्येत्यतः —एष इत्यादि । परं च तत् अयनं–आस्पदं तथा । नातोऽधिकः क्वचित्तपस्वी भूतो भावी वेति यावत् ॥ १० ॥

**एषोऽस्त्रान् विविधान् वेत्ति त्रैलोक्ये सचराचरे ।**
**नैनमन्यः पुमान् वेत्ति न च वेत्स्यन्ति के चन ॥ ११ ॥**

अस्त्रानिति पुल्लिङ्गश्छान्दसः । एनं–एतदवगतमस्त्रसमूहम् ॥ ११ ॥

**[2] नैवं देवा न ऋषयः नासुरा न च राक्षसाः ।**
**गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ १२ ॥**

केचनेत्यस्यैव प्रपञ्चः —नैवं देवा इत्यादि ॥ १२ ॥

**सर्वास्त्राणि कृशाश्वस्य पुत्राः परमधार्मिकाः ।**
**कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति ॥ १३ ॥**

---

[1] विद्याधिको–ङ. [2] न देवाऋषयः केचित्–ङ. च.

ननु कथं देवाद्यनवगतसर्वास्त्रप्राप्तिः ऋषेर्विश्वामित्रस्येत्यतः—सर्वास्त्राणीत्यादि। कृशाश्वः—प्रजापतिष्वेकः। परमधार्मिकाः—प्रतिष्ठावन्त इति यावत्। एतेन पापिदुर्लभत्वं सूचितम्। प्रशासतीति बहुवचनं छान्दसं। प्रशासतस्तस्येति यावत्॥ १३॥

**तेऽपि पुत्राः कृशाश्वस्य * प्रजापतिसुतासुताः।**
**नैकरूपा महावीर्या दीप्तिमन्तो जयावहाः॥ १४॥**

तेषां मातृप्राशस्त्यमपि प्रतिपाद्यते—तेऽपीत्यादि॥ १४॥

**जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे।**
**ते सुवातेऽस्त्रशस्त्राणि शतं परमभास्वरम्॥ १५॥**

के ते प्रजापतिसुते इत्यतः—जया चेत्यादि। शस्त्राणि—शसेः ष्ट्रन्। परविशसितॄणीति यावत्॥ १५॥

**पञ्चाशतं सुतान् लेभे जया नाम परान् पुरा।**
**वधायासुरसैन्यानाममेयान् कामरूपिणः॥ १६॥**

का कति सुतान् इत्यतः—पञ्चाशतमित्यादि। परान्—श्रेष्ठान्॥ १६॥

**सुप्रभाऽजनयच्चापि सुतान् पञ्चाशतं पुनः।**
**संहारान्नामदुर्धर्षान् दुराक्रामान् बलीयसः॥ १७॥**

संहारान्—अन्वर्थसंहारनामकान्। दुर्धर्षान्—परैस्सोढुमशक्यान्। दुराक्रामान्—परैश्चाशक्याक्रमान्॥ १७॥

**तानि चास्त्राणि वेत्त्येष यथावत् कुशिकात्मजः।**
**अपूर्वाणां च जनने शक्तो भूयस्स धर्मवित्॥ १८॥**

अपूर्वाणामिति। विद्याविशेषाणामिति शेषः॥ १८॥

---

* प्रजापतिः दक्षः, तस्य सुतयोः कन्ययोः सुताः.

[1]एवंवीर्यो महातेजा विश्वामित्रो महायशाः ।
न रामगमने राजन्! संशयं गन्तुमर्हसि ॥ १९॥

यदेवमतः—न रामगमन इत्यादि ॥ १९॥

[2]तेषां निग्रहणे शक्तः स्वयं च कुशिकात्मजः ।
तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥ २०॥

वस्तुतस्तु त्वदनुग्रहप्रयोजनमेव विश्वामित्रागमनमित्याह—तेषामित्यादि । पुत्रहितार्थायेति । अतिरहस्यानन्यदुर्लभानेकविद्याप्रदानानुग्रहार्थमित्यर्थः ॥ २०॥

इति मुनिवचनात् प्रसन्नचित्तः
रघुवृषभश्च मुमोद भास्वराङ्गः ।
गमनमभिरुरोच राघवस्य
प्रथितयशाः कुशिकात्मजाय बुद्ध्या ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकविंशः सर्गः

भास्वराङ्गः—"स्थेशभास" इति वरच्, भासनशीलाङ्गः, प्रसन्नमुख इति यावत् । मुमोद—व्यत्ययात्परस्मैपदम् । अतो राघवस्य गमनं अभिरुरोच । अतो राघवं कुशिकात्मजाय दातुं च बुध्या अचिन्तयदिति शेषः । करि (२१) मानस्सर्गः ॥ २१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकविंशतितमः सर्गः

---

[1]एतत्पूर्वं—तेनास्य मुनिमुख्यस्य सर्वज्ञस्य महात्मनः । न किञ्चिदप्यविदितं भूतं भव्यं च राघव—अधिकं—ङ. [2]एतदनन्तरं—धनुर्भृतोऽस्य शक्रस्तु बिभीयात् समरे विभो—इदमधिकं—ङ.

अथ द्वाविंशः सर्गः

[रामलक्ष्मणयोः प्रस्थानं, विश्वामित्रेण विद्योपदेशश्च]

तथा वसिष्ठे ब्रुवति राजा दशरथस्सुतम् ।
प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ॥ १ ॥

अथ रामविद्यादानानुग्रहैकप्रयोजनागमनाद्विश्वामित्रात् भूष्णूरामब्रह्मणः पुरा स्वसृष्टनित्यभ्रातृप्रभास्वकमहाविद्याशक्तिसम्बन्धोपदेशः—तथा वसिष्ठ इत्यादि । आजुहाव । आहूतं च उच्यमानविशेषणकं ददाविति सम्बन्धः ॥ १ ॥

कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च ।
पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ॥ २ ॥

स्वस्त्ययनं—मङ्गलानुष्ठानम् । मङ्गलैः—मङ्गलाचरणमन्त्रैः, "स्वस्तिरिन्द्रस्स्वस्ति नो मिमीताम्" इत्यादिभिः ॥ २ ॥

स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम् ।
[1]ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥ ३ ॥
ततो वायुः सुखस्पर्शो विरजस्को ववौ तदा ।
विश्वामित्रगतं रामं दृष्ट्वा राजीवलोचनम् ॥ ४ ॥

अथ यात्रायां सुनिमित्तसम्पत्त्युपदेशः—तत इत्यादि । विरजस्कः । उरःप्रभृतित्वात् कप् । विश्वामित्रगतमिति द्वितीयासमासः ॥

पुष्पवृष्टिर्महत्यासीत् देवदुन्दुभिनिस्वनैः ।
शङ्खदुन्दुभिनिर्घोषः प्रयाते तु महात्मनि ॥ ५ ॥

---

[1] एतदनन्तरं—ततो भूयो वसिष्ठेन मङ्गलैरभिमन्त्रितम् । आदाय हृष्टो विप्रोऽभूद्दिशा विज्वराऽभवन् ॥ इदमधिकम्—ङ.

शङ्खदुन्दुभिनिर्घोषः स्वपुरजः। प्रयाते। प्रयाणोन्मुख इति यावत् ॥ ५ ॥

**विश्वामित्रो ययावग्रे ततो रामो महायशाः।**
**काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥ ६ ॥**

अथ धर्मप्रयुक्तगतिविशेषोपदेशः—विश्वामित्र इत्यादि। धन्वी—धनुष्मान्। व्रीह्यादित्वादिनिः। उकारान्तोऽप्यस्ति धनुश्शब्दः ॥ ६ ॥

**कलापिनौ धनुष्पाणी शोभयानौ दिशो दश।**
**विश्वामित्रं महात्मानं त्रिशीर्षाविव पन्नगौ ॥ ७ ॥**
**अनुजग्मतुरक्षुद्रौ पितामहमिवाश्विनौ।**

कलापिनौ—सतूणीरौ। "कलापो भूषणे बर्हे तूणीरे संहतावपि"। शोभयानौ—आने मुगभावश्छान्दसः, प्रकाशयन्ताविति यावत्। प्रत्येकं तूणीरद्वयधारणात् त्रिशीर्षपन्नगोपमानम्। अक्षुद्रौ—अनल्पवीर्यादिवैभवौ। अत एवाश्विनोपमानम् ॥ ७ ॥

**तदा कुशिकपुत्रं तु धनुष्पाणी स्वलङ्कृतौ ॥ ८ ॥**
**बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती।**
**कुमारौ चारुवपुषौ भ्रातरौ रामलक्ष्मणौ ॥ ९ ॥**
**अनुयातौ श्रिया दीप्तया शोभयेतामनिन्दितौ।**
**स्थाणुं देवमिवाचिन्त्यं कुमाराविव पावकी ॥ १० ॥**

बद्धं गोधाचर्मकृतमङ्गुलित्राणं ययोस्तौ तथा। शोभयेतामिति। लङि आताम्। अडभावश्छान्दसः। स्थाणुः रुद्रः। अचिन्त्यं—अचिन्त्यवैभवम्। पावकी इति। पावकस्याग्नेरपत्यम्। अत इञ्।

पावकी द्वौ कुमारौ सुब्रह्मण्याविवेत्यभूतोपमान्तः। पावकित्वविशेषणं तेजोविशेषवत्त्वद्योतनाय ॥ १० ॥

अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे।
रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥ ११ ॥

अध्यारूढमर्धं यस्मिन् तत् अध्यर्धम्, ततः कर्मधारयः, सार्धयोजनमिति यावत्। तावद्दूरगमने बालकयोः क्षुत्तृड्पीडाप्रादुर्भावस्यावश्यकत्वात् महावैभव ऋषिर्विनाऽप्यन्नं परमतृप्तये दिव्यविद्ये उपदिशति—रामेत्यादि ॥ ११ ॥

गृहाण वत्स! सलिलं मा भूत् [1]कालस्य पर्ययः।
मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ॥ १२ ॥

सलिलं गृहाणेति। शुद्धाचमनं कुर्विति यावत्। पर्ययः-अतिक्रमः। मन्त्रग्रामं–मन्त्रसमूहम्–*प्रागुक्तजयासुतादिव्यास्त्रशतम्, तथा प्रकृतोपयोगिन्यौ बलामतिबलां च विशिष्य गृहाण। अत्र त्वमित्याद्येकवचनेन रामस्यैव विद्योपदेश इति प्रतिभाति। इदं तु रामस्य विद्योपदेशप्राधान्यद्योतनमात्रम्, उपलक्षणं च लक्ष्मणविद्योपदेशस्यापीति द्रष्टव्यम्। प्रत्यक्षक्षुत्पिपासाशान्तिभावीन्द्रजिज्जयादिगुरुकार्याणां च दिव्यानुग्रहाभावे असाध्यत्वात् ॥ १२ ॥

न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः।
न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ॥ १३ ॥

---

* इयं व्याख्या तिलकेऽनूदिता ॥　　[1] कालविपर्ययः—ङ.

अथ बलातिबलयोरेव विशिष्य फलोपदेशः—न श्रम इत्यादि। बहुदूरगमनादावपीति शेषः। ते—तव। रूपविपर्ययः—वैवर्ण्यम्। प्रमत्तं—क्रीडाद्याक्षिप्तचित्तम्। धर्षणं—अभिभवः ॥ १३ ॥

न बाह्वोः सदृशो वीर्ये पृथिव्यामस्ति कश्चन।
[1]त्रिषु लोकेषु वा राम! न भवेत् सदृशस्तव ॥ १४ ॥

पृथिव्यामस्तीति। वर्तमानसामीप्ये भविष्यति लट्। न भविष्यति इति यावत्। न केवलं पृथिव्यां; अपि तु त्रिष्वित्यादि ॥१४॥

न सौभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये।
नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ! ॥ १५ ॥

*सौभाग्ये इत्यादिकं पदम्। ज्ञानं—तत्त्वज्ञानम्। बुद्धिनिश्चयः ऐहिकविषयः ॥ १५ ॥

एतद्विद्याद्वये लब्धे भविता नास्ति ते समः।
बला चातिबला चैव सर्वज्ञानस्य मातरौ ॥ १६ ॥
[2]क्षुत्पिपासे न ते राम! भविष्येते नरोत्तम!

मातराविति। 'बुभुक्षितं न प्रतिभाति किञ्चित्' इति न्यायेन सर्वाप्रतिभामूलक्षुधादिनिवृत्त्यसाधारणसामर्थ्यात् ॥ १६ ॥

[3] विद्याद्वयमधीयाने यशश्चाप्यतुलं त्वयि ॥ १७ ॥

---

* 'सौभाग्येन' इत्यादिरीत्या तृतीयान्तत्वभ्रमनिरासायेदमुच्यते।

[1] एतदनन्तरं—बलामतिबलां चैव पठतस्तव राघव। इदमधिकं—ङ. [2] एतदनन्तरं—बलामतिबलां चैव पठतः पथि राघव। गृहाण सर्वलोकस्य गुप्तये रघुनन्दन ॥ इदमधिकम्—ङ. [3] 'नृपतेस्त्वय्यधीयाने यशश्चाप्यतुलं भुवि' इत्यपूर्वः पाठो व्याख्यातृसम्मत इव भाति ॥

नृपतेरिति! पुत्रकेति शेषः। अधीयाने त्वयि पथि क्षुत्पिपासे न भविष्येते इति योजना। अपि च यशश्चातुलं भुवि भविष्यति इति शेषः ॥ १७ ॥

**पितामहसुते ह्येते विद्ये तेजस्समन्विते।**
**प्रदातुं तव काकुत्स्थ! सदृशस्त्वं हि धार्मिक! ॥ १८ ॥**

एवं वैभवः कुतः तयोरित्यत्राह—पितामहेत्यादि। एते तव—ते प्रदातुं योग्ये। धार्मिकस्त्वं हि सदृश इति। ब्रह्मपुत्रौ, प्रागुक्तब्रह्मपुत्रांश्च प्रदातुं त्वं हि पात्रं, ब्रह्मांशत्वात्। [1]अत एव तत्प्रदानोचितपरधर्मवत्वाच्च ॥ १८ ॥

**कामं बहुगुणाः सर्वे त्वय्येते नात्र संशयः।**
**तपसा सम्भृते चैते बहुरूपे भविष्यतः ॥ १९ ॥**

अपि च। एते इति व्यत्ययात्प्रथमा, एतयोः सम्प्रदानयोग्याः सर्वे बहुगुणाः त्वयि सन्त्येव, नात्र संशयः। अतो मम तपसा सम्भृते—प्राप्ते एते त्वयि कामं—अभ्यधिकं बहुरूपे—बहुवीर्यविलासवैभवे भविष्यतः। न चात्र संशयः ॥ १९ ॥

**ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः।**
**प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ॥ २० ॥**

जलं स्पृष्ट्वा—आचम्य ॥ २० ॥

**विद्यासमुदितो रामः शुशुभे भूरिविक्रमः।**
**सहस्ररश्मिर्भगवान् शरदीव दिवाकरः ॥ २१ ॥**

---

[1] अत एतत्—**ग.**

स्वतः सहस्ररश्मेः कालविशेषो यथा विशेषाभिव्यक्तिकारकः, एवं स्वतो भूरिविक्रमो रामो विद्यासम्बन्धादभ्यधिकं शुशुभे इत्यर्थः ॥ २१ ॥

गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजे ।
ऊषुस्तां रजनीं तत्र सरय्वां सुसुखं त्रयः ॥ २२ ॥

एवं रामे संप्राप्त(गुरु?)शिष्यसम्बन्धः कुशिकात्मजो गुरुणा शिष्यस्य गुरुसेवाविषये नियोजनीयानि आदेष्टव्यानि—यानि कार्याणि 'अथ यः पूर्वोत्थायी जघन्यसंवेशी, यावदासीनो बाहुभ्यां प्राप्नुयात् , गच्छन्तमनुगच्छेत् , धावन्तमनुधावेत् ' इत्यादीनि तानि सर्वाणि नियुज्य अथ स्वयं तौ चेति त्रयः तां रजनीं तत्र सुखं यथा ऊषुः । रजनीमिति । 'कालाध्वनोः' इति द्वितीया ॥ २२ ॥

दशरथनृपसूनुसत्तमाभ्यां
तृणशयनेऽनुचिते तदोषिताभ्याम् ।
कुशिकसुतवचोऽनुलालिताभ्यां
सुखमिव सा विबभौ विभावरी च ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे द्वाविंशः सर्गः

---

सत्तमाभ्यामित्यादौ 'चतुर्थ्यर्थे बहुलं छन्दसि' इत्यत्र बहुलग्रहणात् षष्ठ्यर्थेऽपि चतुर्थी । तृणाद्यनुचितशयनोषितयोरपि विभावर्यास्सुखवद्विभातत्वे हेतुः—कुशिकसुतवचोऽनुलालितत्वम् । विबभाविति । व्युष्टेति यावत् । गुरु (२३) मानः सर्गः ॥ २३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे द्वाविंशः सर्गः

---

## अथ त्रयोविंशः सर्गः

[कामाश्रमकथा]

**प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः ।**
**अभ्यभाषत काकुत्स्थौ शयानौ पर्णसंस्तरे ॥ १ ॥**

अथ गमनप्रसङ्गात् महारुद्रदिव्यचरितवर्णनं बालकयोः पुण्याय, विस्मयसन्तोषाभ्यां च। प्रभातायामित्यादि। पर्णसंस्तरे—मृदुपर्णादिपरिकल्पितशयनीये। 'ऋदोरप्' इत्यप् ॥ १ ॥

**कौसल्यासुप्रजाराम! पूर्वा सन्ध्या प्रवर्तते ।**
**उत्तिष्ठ नरशार्दूल! कर्तव्यं दैवमाह्निकम् ॥ २ ॥**

किमभ्यभाषतेत्यत्राह—कौसल्येत्यादि। शोभना चेयं प्रजा सुप्रजा; अनेन कौसल्याशब्दस्य षष्ठीतत्पुरुषः, ततः 'सुपां सुलुक्' इत्यादिना सम्बुद्धेराकारः, ततोऽन्तरङ्गः सवर्णदीर्घः। उभयाश्रयेनान्तादिवद्भावात् 'आङ्चापस्सम्बुद्धौ च' इत्येत्वाभावः। हे कौसल्यासुप्रजा! कौसल्यासुपुत्र! एवं महाकौशल्यमार्गानुसारादुक्तं वस्तुतोऽसत्। अपि तु—सुप्रजारूपो रामः—सुप्रजारामः। कौसल्यापदेनास्य षष्ठीतत्पुरुषः। हे कौसल्यापुत्ररामेत्येकं पदम्। पूर्वा सन्ध्या, अत एव आह्निकं—अहनि भवम्, 'कालात् ठञ्', दैवं—कुलदैवतब्रह्मोपासनाविषयं, विशिष्य प्रातर्हिरण्यगर्भोपासनविषयकं च कर्म कर्तव्यम्, अत उत्तिष्ठ ॥ २ ॥

**तस्यर्षेः परमोदारं वचःश्रुत्वा नरोत्तमौ ।**
**स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम् ॥ ३ ॥**

परमोदारं—गम्भीरम्। कृतोदकाविति। कृतौ बाह्यानुष्ठानाङ्गौ—अर्घ्यप्रदानावित्यर्थः। परमं जपं; 'न सावित्र्याः परं जप्यं' इत्यादेः

नित्यप्राप्तत्वात्, स्नानाद्यर्घ्यादेः बाह्यानुष्ठानत्वोपदेशाच्च परमजपो गायत्रीजपः ॥ ३ ॥

कृताह्निकौ महावीर्यौ विश्वामित्रं तपोधनम् ।
अभिवाद्याभिसंहृष्टौ गमनायाभितस्थतुः ॥ ४ ॥

अभितस्थतुरिति । अभिमुखौ स्थितौ इति यावत् ॥ ४ ॥

तौ प्रयातौ महावीर्यौ दिव्यां त्रिपथगां नदीम् ।
ददृशाते ततस्तत्र सरय्वाः सङ्गमे शुभे ॥ ५ ॥

तत इति । प्रयाणानन्तरमिति यावत् ॥ ५ ॥

*तत्राश्रमपदं पुण्यमृषीणामुग्रतेजसाम् ।
बहुवर्षसहस्राणि तप्यतां परमं तपः ॥ ६ ॥

तत्राश्रमेति । गङ्गासरयूसङ्गमदेश इति यावत् । तप्यतामिति । तपतामिति यावत् । कर्तरि यत् छान्दसः ॥ ६ ॥

तं दृष्ट्वा परमप्रीतौ राघवौ पुण्यमाश्रमम् ।
[1]ऊचतुस्तं महात्मानं विश्वामित्रमिदं वचः ॥ ७ ॥

कस्यायमाश्रमः पुण्यः को न्वस्मिन् वसते पुमान् ।
भगवन्! श्रोतुमिच्छावः परं कौतूहलं हि नौ ॥ ८ ॥

वसत इति । वसतीति यावत् ॥ ८ ॥

---

* तत्र—सरयूसङ्गमप्रदेशे आश्रमपदं ददृशाते इति पूर्वश्लोकेनान्वयः । पूर्वश्लोकस्थ 'तत्र' पदस्य तत्र त्रिपथगां नदीं ददृशाते इति पृथगन्वयः ॥

[1] एतदनन्तरं 'कौतूहलात् तौ धर्मज्ञौ वीर्यवन्तं तपोधनम्' इदमधिकम्-ङ.

**तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिपुङ्गवः।**
**अब्रवीच्छ्रूयतां राम! यस्यायं पूर्व आश्रमः॥९॥**

बालकानामज्ञानमूलाभिवादनादिव्यवहारस्य पितृवत्तुल्यानामतिप्रीतिकरत्वाद्धेषे: बालकवचनश्रवणजसन्तोषात्—प्रहस्येति। अथ कस्यायं पूर्वः? इदानीं कः इह वसतीति प्रश्नयोः प्रथमप्रश्नोत्तरं ब्रूते—अब्रवीदित्यादि। यस्यायमाश्रमः पूर्वः—पूर्वकालाधिष्ठेयोऽभूत् स श्रूयताम्॥९॥

**कन्दर्पो मूर्तिमानासीत् काम इत्युच्यते बुधैः॥१०॥**

एवं प्रतिज्ञाय तत्प्रतिपादनाय पातानिका—कन्दर्प इत्यादि। यः काम इति बुधैरुच्यते कन्दर्पपर्यायस्सोऽसौ पुरा मूर्तिमानासीत्॥१०॥

**तपस्यन्तमिह स्थाणुं नियमेन समाहितम्।**
***कृतोद्वाहं तु देवेशं गच्छन्तं समरुद्गणम्।**
**धर्षयामास दुर्मेधा हुङ्कृतश्च महात्मना॥११॥**

किन्ततः इत्यतः—तपस्यन्तमित्यादि। नियमेन समाहितं—समाहितचित्तम्। इह—आश्रमे। तपस्यन्तं—तपश्चरन्तम्। 'कर्मणो रोमन्थतपोभ्यां' इत्यादिना तपश्शब्दात् क्यङ्, 'तपसः परस्मैपदं च' इति। तद्वत्स्थाणुं—तद्वदविकल्पसमाधिम्। अथ तपस्समाधेः कृतोद्वाहं—कृतव्युत्थानम्। अत एव समरुद्गणं यथा तथा व्युत्थानकालोचितलीलाविलासदेशं गच्छन्तं देवेशं दुर्मेधाः कामो धर्षयामास—चित्तविकारोत्पादनेनाऽभिभूतवान्॥११॥

---

* कृतोद्वाहं—कृतपार्वतीपरिणयं, क्रियाविशेषणमिदम्। गच्छन्तं—पार्वतीं प्राप्नुवन्तं—गो. कृतोद्वाहं-करिष्यमाणोद्वाहं, यद्वा कृतोद्वाहं गच्छन्तं—उद्वाहं कृत्वा गमिष्यन्तं, वर्तमानसामीप्ये भविष्यति लट्—ती.

**अवध्यातस्य रुद्रेण चक्षुषा रघुनन्दन !**
**व्यशीर्यन्त शरीरात् स्वात् सर्वगात्राणि दुर्मतेः ॥ १२ ॥**

ततो देवेशेन महात्मना रुद्रेणावध्यातः—कुत एवमिति ध्यानम्, ज्ञातापराधः, ततो हुङ्कृतः, चक्षुषा दग्धश्च । अयं व्यापारः कस्मिंश्चिदहनि रुद्रमूर्तिभेदेन काममूर्तिभेदस्येति द्रष्टव्यम् । ततः किं इत्यतः— व्यशीर्यन्तेत्यादि । शॄ हिंसने । ततश्च कर्तरि श्यन् ॥ १२ ॥

**[2]तत्र गात्रं हतं तस्य निर्दग्धस्य महात्मना ।**
**अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण हि ॥ १३ ॥**

तत्र हतमिति । तस्मिन् काले देशे चेत्यर्थः । हिशब्दः प्रसिद्धौ ॥ १३ ॥

**अनङ्ग इति विख्यातः तदाप्रभृति राघव !**
**स चाङ्गविषयः श्रीमान् यत्राङ्गं प्रमुमोच ह ॥ १४ ॥**

स चाङ्गविषय इत्यादि । यत्र देशे स कामोऽङ्गं मुमोच ह, तत एवान्वर्थनिर्वचनः श्रीमान् सोऽसौ अङ्गविषयः ॥ १४ ॥

**तस्यायमाश्रमः पुण्यः तस्येमे मुनयः पुरा ।**
**शिष्या धर्मपरा नित्यं तेषां पापं न विद्यते ॥ १५ ॥**

*तस्मिन्—अस्मिन् देशे वर्तमानः पुण्योऽयमाश्रमः तस्य—स्थाणोः । इमे हि मुनयः इदानीमिह तपस्यन्तस्तस्य दक्षिणामूर्तिरुद्रस्य पुरा—पूर्वकालमारभ्य सन्तानपरम्परया च शिष्याः । यदेवमतः—धर्मपराः—धर्मैकतत्पराः । अतः तेषां कदापि पापं न विद्यते । एतेन प्रश्नद्वयं तत् प्राप्तोत्तरम् ॥ १५ ॥

---

* तस्मिन्—तादृश इत्यर्थः ।

[1] अवदग्धस्य रौद्रेण—ङ. [2] तस्य गात्रं हतं तत्र—ङ.

**इहाद्य रजनीं राम ! वसेम शुभदर्शन !**
**पुण्ययोः सरितोर्मध्ये श्वस्तरिष्यामहे वयम् ॥ १६ ॥**

सरितोः—गङ्गासरय्वोः ॥ १६ ॥

**अभिगच्छामहे सर्वे शुचयः पुण्यमाश्रमम् ।**
**इह वासः परोऽस्माकं, सुखं वत्स्यामहे निशाम् ।**
**स्नाताश्च कृतजप्याश्च हुतहव्या नरोत्तम ! ॥ १७ ॥**

गङ्गानद्यादिस्नानादिकर्मभिर्युक्ताः, अत एव शुचयः भूत्वैव पुण्यमाश्रममभिगच्छामहे । व्यत्ययात्तङ् ॥ १७ ॥

**तेषां संवदतां तत्र तपोदीर्घेण चक्षुषा ।**
**विज्ञाय परमप्रीता मुनयो हर्षमागमन् ॥ १८ ॥**
**अर्घ्यं पाद्यं तथाऽऽतिथ्यं निवेद्य कुशिकात्मजे ।**
**रामलक्ष्मणयोः पश्चादकुर्वन्नतिथिक्रियाम् ॥ १९ ॥**

तेषां संवदतां ; भावलक्षणे षष्ठी । तत्र आश्रमे तेष्वेवं संवदत्सु तान् अदृष्ट्वाऽपि तत्रत्यमुनयस्तपोमहिम्ना दीर्घदर्शनज्ञानचक्षुषा रामाद्यागमनं विज्ञाय परमप्रीता मुनयः कुशिकात्मजायार्घ्यादिकं निवेद्य हर्षमागमन् ॥ १९ ॥

**सत्कारं समनुप्राप्य कथाभिरभिरञ्जयन् ।**
**यथार्हमजपन् सन्ध्यामृषयस्ते समाहिताः ॥ २० ॥**

अभिरञ्जयन्निति । भोजनात्परमतिष्ठन्निति शेषः । अजपन्निति । नदीतीर इति शेषः ॥ २० ॥

**तत्र वासिभिरानीता मुनिभिः सुव्रतैः सह ।**
**न्यवसन् सुसुखं तत्र कामाश्रमपदे तदा ॥ २१ ॥**

तत्र—आश्रमे निवासिभिः सुव्रतैः मुनिभिः संवेशनाय पुनः स्वाश्रममानीताः तत्र—सर्वकामपरिपूर्णे दुष्कामप्रसक्तिरहिते आश्रमे—श्रीदक्षिणमूर्तिरुद्राश्रमस्थाने तथा सुखं न्यवसन् ॥ २१ ॥

**कथाभिरभिरामाभिः अभिरामौ नृपात्मजौ ।**
**रमयामास धर्मात्मा कौशिको मुनिपुङ्गवः ॥ २२ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे त्रयोविंशः सर्गः

———

खारि (२२) मानः सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे त्रयोविंशः सर्गः

———

### अथ चतुर्विंशः सर्गः

**[गङ्गातरणं, ताटकावनप्रवेशश्च]**

**ततः प्रभाते विमले कृत्वाऽऽह्निकमरिन्दमौ ।**
**विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपागतौ ॥ १ ॥**

अथ बाल्यैकमूललौकिकपरप्रश्नमुचितप्रतिवचनेनोपलालयन् निजाश्रमसमीपवर्तिनिजारातिनिवृत्तिप्रयोजनं वक्ष्यति भगवान् विश्वामित्रः—ततः प्रभात इत्यादि । नद्याः—गङ्गाया इति यावत् ॥ १ ॥

**ते च सर्वे महात्मानो मुनयस्संशितव्रताः ।**
**उपस्थाप्य शुभां नावं विश्वामित्रमथाब्रुवन् ॥ २ ॥**
**आरोहतु भवान्नावं राजपुत्रपुरस्कृतः ।**
**अरिष्टं गच्छ पन्थानं मा भूत् कालविपर्ययः ॥ ३ ॥**

राजपुत्रपुरस्कृत इति तृतीयातत्पुरुषः। तीर्त्वेति शेषः। अरिष्टं-कष्टम्। ताटकोपद्रवादिति शेषः। विपर्ययः—अत्ययः॥ ३॥

**विश्वामित्रस्तथेत्युक्त्वा तानृषीनभिपूज्य च।**
**ततार सहितस्ताभ्यां सरितं सागरङ्गमाम्॥ ४॥**

सागरङ्गमामिति। खच्प्रकरणे 'गमेस्सुप्युपसङ्ख्यानम्' इति खच्॥ ४॥

**ततश्शुश्राव वै शब्दमतिसंरम्भवर्धितम्।**
**मध्यमागम्य तोयस्य [1]तस्य शब्दस्य निश्चयम्॥ ५॥**

अतिसंरम्भेण—तरङ्गपरस्परसङ्घट्टजक्षोभेण वर्धितं—आतिप्रवृद्धम्। निश्चयमिति। सहज औपाधिको वेति निश्चयम्॥ ५॥

**अथ रामस्सरिन्मध्ये पप्रच्छ मुनिपुङ्गवम्।**
**वारिणो भिद्यमानस्य किमयं तुमुलो ध्वनिः॥ ६॥**

अथ तदनन्तरं—जिज्ञासानन्तरम्। भिद्यमानस्य—परस्परं सङ्घट्यमानस्य तुमुलः—निबिडः यः ध्वनिः, स किं वारिस्वभावजो वा उतोपाधिजो वेति प्रश्नः॥ ६॥

**राघवस्य वचश्श्रुत्वा कौतूहलसमन्वितः।**
**कथयामास धर्मात्मा तस्य शब्दस्य निश्चयम्॥ ७॥**
**कैलासपर्वते राम! मनसा निर्मितं सरः।**
**ब्रह्मणा नरशार्दूल! तेनेदं मानसं सरः॥ ८॥**

उपाधिज इति सपातनिकमुत्तरम्—राघवस्येत्यादि। एवमपि प्रश्नो भगवति रामे ब्रह्मणि निजदृढवैभवप्रकटनप्रयोजनः प्रादुर्भूतः; तदेव प्रतिपाद्यते—एतच्छ्रुत्वेत्यादि॥ ८॥

---

[1] सह रामः कनीयसा—ङ.

तस्मात् सुस्राव सरसः साऽयोध्यामुपगूहते ।
सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ ९ ॥

सा-ब्रह्मसरःप्रवृत्तस्रुतिरिति यावत् । तस्यास्सरःप्रवृत्तत्वात् सरयूरिति नाम । सरसो यौति–प्रवर्तते इति सरयूः । पूरुषादिवत् दीर्घः ॥ ९ ॥

तस्यायमतुलः शब्दो जाह्नवीमभि वर्तते ।
वारिसंक्षोभजो राम ! प्रणामं नियतः कुरु ॥ १० ॥

तस्यायमिति सन्धिश्छान्दसः । अभि–अभिगताया इति यावत् । यदेवमतः–वारिसङ्क्षोभजः ॥ १० ॥

ताभ्यां तु तावुभौ कृत्वा प्रणाममतिधार्मिकौ ।
तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ॥ ११ ॥

ताभ्यां–गङ्गासरयूभ्यां ॥ ११ ॥

स वनं घोरसङ्काशं दृष्ट्वा नृपवरात्मजः ।
अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुङ्गवम् ॥ १२ ॥

सङ्काशत इति सङ्काशः, घोरसङ्काशं घोररूपमिति । अविप्रहतं * अप्रहतं, खिलमिति यावत् । † सार्थगमागमाभावात् ॥ १२ ॥

अहो वनमिदं दुर्गं झिल्लिकागणनादितम् ।
भैरवैः श्वापदैः पूर्णं शकुन्तैर्दारुणारवैः ॥ १३ ॥

---

* अविप्रहतं—अक्षुण्णं–ति· गो.

† जनसञ्चाराभावादित्यर्थः. गमागमे–गमनागमने ।

झिल्लिका–"भृङ्गारी चीरिका चीरी झिल्लीका च समा इमाः" (சில்வண்டு)। श्वापदानि–दुष्टमृगाः। दारुणं आरवं येषां ते तथा। शकुन्तो भास उच्यते॥ १३॥

**नानाप्रकारैः शकुनैः वाश्यद्भिर्भैरवस्वनैः।**
**सिंहव्याघ्रवराहैश्च वारणैश्चोपशोभितम्॥ १४॥**

शकुनाः सर्वपक्षिणः। वाश्यद्भिः-कुत्सितं शब्दायमानैः॥ १४॥

**धवाश्वकर्णककुभैः मरुतिन्दुकपाटलैः।**
**सङ्कीर्णं बदरीभिश्च किं न्वेतद्दारुणं वनम्॥ १५॥**

धवः–श्वेताक्षः (நமை)। अश्वकर्णः–सालः, 'इन्द्रद्रुः ककुभोऽर्जुनः' (மருது)। किं नु–किमियम्॥ १५॥

**तमुवाच महातेजा विश्वामित्रो महामुनिः।**
**श्रूयतां वत्स काकुत्स्थ! यस्यैतद्दारुणं वनम्॥ १६॥**

एतद्दारुणं वनं यस्य प्राणिनः, स प्राणी श्रूयतामिति योजना॥ १६॥

**एतौ जनपदौ स्फीतौ पूर्वमास्तां नरोत्तम!**
**मलदाश्च करूशाश्च देवनिर्माणनिर्मितौ॥ १७॥**

तमेव प्रतिपादयितुं पातनिका—एतावित्यादि। स्फीतौ–प्रवृद्धधनधान्यौ। मलदाश्च करूशाश्चेति एतौ देवनिर्माणेन निर्मितनामधेयौ॥ १७॥

**पुरा वृत्रवधे राम! मलेन समभिप्लुतम्।**
**क्षुधा चैव सहस्राक्षं ब्रह्महत्या समाविशत्॥ १८॥**

कोऽसौ देव एतयोर्नामनिर्मातेत्यतः—पुरेत्यादि । मलेन-प्रकृत्या मर्त्यधर्मप्रसिद्धाकारेण तथा तद्धर्मप्रसिद्धक्षुधा च । ब्रह्महत्येत्यादि । 'हनस्त च' इति क्यप्सन्नियोगे हन्तेस्तकारादेशः । वृत्रस्य ब्रह्म-सन्तानत्वात् तद्धनने ब्रह्महत्या ॥ १८ ॥

**तमिन्द्रं स्नापयन् देवा ऋषयश्च तपोधनाः ।**
**कलशैः स्नापयामासुः मलं चास्य प्रमोचयन् ॥ १९ ॥**

तमिन्द्रं देवाः—वस्वादयः कलशैः—गङ्गातीर्थकलशैः स्नापयन्—'ष्णा शौचे' अनुपसर्गे वा मित्, अडभावश्छान्दसः, अस्नापयन् । अथ ऋषयः—वसिष्ठाद्याश्च कलशैः स्नापयामासुः । तद्बलेनास्य मलं करूशपर्यायं क्षुधं च प्रमोचयन् । अडभावश्छान्दसः । तथा सर्वत्राऽग्रे द्रष्टव्यम् ॥ १९ ॥

**इह भूम्यां मलं दत्त्वा दत्त्वा कारूशमेव च ।**
**शरीरजं महेन्द्रस्य ततो हर्षं प्रपेदिरे ॥ २० ॥**

तत इह भूम्यां महेन्द्रस्य शरीरजं मलं कारूशमेव च दत्त्वा ततो हर्षं प्रपेदिरे ॥ २० ॥

**निर्मलो निष्करूशश्च शुचिरिन्द्रो यदाऽभवत् ।**
**ददौ देशस्य सुप्रीतो वरं प्रभुरनुत्तमम् ॥ २१ ॥**

यदा तदेति योजना ॥ २१ ॥

**इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः ।**
**मलदाश्च करूशाश्च ममाङ्गमलधारिणौ ॥ २२ ॥**

कीदृशीं ख्यातिमित्यतः—मलदाश्चेति । दारादिवच्छब्दस्वा-भाव्यमूलं बहुत्वम् । यस्मात् ममाङ्गमलधारिणौ तस्मादिति योजना ॥ २२ ॥

**साधु साध्विति तं देवाः पाकशासनमब्रुवन् ।**
**देशस्य पूजां तां दृष्ट्वा कृतां शक्रेण धीमता ॥ २३ ॥**

शक्रेण कृतां देशस्य पूजां दृष्ट्वा देवाः पाकशासनं साधु साध्वित्यब्रुवन् ॥ २३ ॥

**एतौ जनपदौ स्फीतौ दीर्घकालमरिन्दम !**
**मलदाश्च करूशाश्च मुदितौ धनधान्यतः ॥ २४ ॥**

यदेवमतः—एतावित्यादि ॥ २४ ॥

**कस्यचित्त्वथ कालस्य यक्षी वै कामरूपिणी ।**
**बलं नागसहस्रस्य धारयन्ती तदा ह्यभूत् ॥ २५ ॥**
**ताटका नाम, भद्रं ते, भार्या सुन्दस्य धीमतः ।**

कस्य चिदिति । कियत इति यावत् । कालस्येति । यदा, अपगमे, इति शेषः । ताटका नामाभूत् । हे राम ! ते—तुभ्यम् भद्रं—शुभम् भूयात् । सहस्रनागबलवत्या यक्ष्याः प्रसङ्गे बालस्य त्रासो माभूदिति मध्य एवाशीर्वादो विश्वामित्रस्य ॥ २५ ॥

**मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः ॥ २६ ॥**
**वृत्तबाहुर्महावीर्यो विपुलास्यतनुर्महान् ।**
**राक्षसो भैरवाकारो नित्यं त्रासयते प्रजाः ॥ २७ ॥**

यस्याः, उच्यमानविशेषणकायो नित्यं प्रजास्त्रासयते स मारीचः पुत्रः, साऽभूदिति योजना ॥ २६–२७ ॥

**इमौ जनपदौ नित्यं विनाशयति राघव !**
**मलदांश्च करूशांश्च ताटका दुष्टचारिणी ॥ २८ ॥**
**सेयं पन्थानमावार्य [1]वसत्यत्यर्धयोजने ।**

[1] वसत्यध्यर्ध—ङ.

इमावित्यादि। या विनाशयति सेयमिति योजना। आवार्य-वृद्धिश्छान्दसी, आवृत्य ; निरुध्येति यावत्। अतिक्रान्तोऽर्ध-मत्यर्धम्, ततः कर्मधारयः, अस्माभिरतीतार्धके योजने—अर्ध-योजनदूरे पन्थानमावार्य तिष्ठति ॥ २८ ॥

**अत एव च गन्तव्यं ताटकाया वनं यतः ॥ २९ ॥**
**स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम्।**
**मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ ३० ॥**

यतश्चेदं ताटकावनमस्माभिर्गन्तव्यं अत एव हेतोः हे राम! स्वबाहुबलमाश्रित्य दुष्टचारिणीं मन्नियोगात् त्यक्तस्त्रीवधशङ्को जहि, हत्वा च तमिमं देशं पुनः निष्कण्टकं कुरु ॥ २९–३० ॥

**न हि कश्चिदिमं देशं शक्नोत्यागन्तुमीदृशम्।**
**यक्षिण्या घोरया राम! उत्सादितमसह्यया ॥ ३१ ॥**

ईदृशमिति अनुभूयमानाभिनयः ॥ ३१ ॥

**एतत्ते सर्वमाख्यातं यथैतद्दारुणं वनम्।**
**यक्ष्या चोत्सादितं सर्वं अद्यापि न निवर्तते ॥ ३२ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे चतुर्विंशः सर्गः

---

पृष्टोत्तरमुक्तमुपसंह्रियते—एतादित्यादि। दारुणं सर्वमेतद्वनं—ताटकावनं यथा—येन प्रकारेण यक्ष्योत्सादितं, एतत्ते सर्वमाख्यातं। अपि च अद्यापि यक्ष्युत्सादनमस्य वनस्य न निवर्तते, अतो निष्कण्टकं कुरु। *लीला (३३) (?) मानः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे चतुर्विंश. सर्गः

---

*एतट्टीत्या तु ३३ श्लोकात्मकोऽयं सर्ग इति ज्ञायते। परन्तु ३२ श्लोका एव व्याख्यायिषत। पञ्चमश्लोकानन्तरं ङ–प्रभृतिपुस्तके 'ज्ञातुकामो महातेजाः सहरामः कनीयसा' इत्यधिकार्धस्य दर्शनेऽपि अर्धान्तरं तु नोपलभ्यते।

## अथ पञ्चविंशः सर्गः

[ ताटकावृत्तान्तः, तद्वधसमर्थनं च ]

अथ तस्याप्रमेयस्य मुनेर्वचनमुत्तमम् ।
श्रुत्वा पुरुषशार्दूलः प्रत्युवाच शुभां गिरम् ॥ १ ॥

अथैवं स्त्रीवधे नियोगे सति स्त्रियास्तादृग्बलतद्वधसंशयौ रामस्यापोहति विश्वामित्रः—अथेत्यादि ॥ १ ॥

अल्पवीर्या यदा यक्षाः श्रूयन्ते मुनिपुङ्गव !
[1]कथं नागसहस्रस्य धारयत्यबला बलम् ॥ २ ॥

यदेति। यस्मात् श्रूयन्ते, पुराणादिष्विति शेषः। नागः—गजः। अबलेति[2] साभिप्रायम् ॥ २ ॥

तस्य तद्वचनं श्रुत्वा रामस्य विदितात्मनः ।
विश्वामित्रोऽब्रवीद्वाक्यं शृणु येन बलोत्तरा ॥ ३ ॥
वरदानकृतं वीर्यं धारयत्यबला बलम् ।

वरदानकृतं वीर्यं—तत्कृतं बलं च धारयति ॥ ३ ॥

पूर्वमासीत् महायक्षः सुकेतुर्नाम वीर्यवान् ॥ ४ ॥
अनपत्यः शुभाचारः स च तेपे महत्तपः ।

कुतो वरप्राप्तिरित्यतः—पूर्वमित्यादि । तेप इति । पुत्रार्थं पितामहमुद्दिश्येति शेषः ॥ ४ ॥

पितामहस्तु संप्रीतस्तस्य यक्षपतेस्तदा ॥ ५ ॥
कन्यारत्नं ददौ राम ! ताटकां नाम नामतः ।

कन्यारत्नमिति । उत्तमदिव्यदेवरूपवतीमित्यर्थः ॥ ५ ॥

---

[1] एतदनन्तरं—इत्युक्तं वचनं श्रुत्वा राघवस्यामितौजसः । हर्षयन् श्लक्ष्णया वाचा सलक्ष्मणमरिन्दमम्—इत्यधिकम्—ङ. [2] स्वाभिप्रायम्—क.

दुदौ नागसहस्रस्य बलं चास्याः पितामहः ॥ ६ ॥
न त्वेव पुत्रं यक्षाय ददौ ब्रह्मा महायशाः ।
तां तु जातां विवर्धन्तीं रूपयौवनशालिनीम् ॥ ७ ॥
[1] खज्जुपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् ।

खज्ञोः पुत्रः खज्जुपुत्रः । ननु सुन्दोऽसुरः, सुकेतुर्यक्षः, स कथमसुराय दद्यात् भार्यात्वेन ? यक्षस्यापि देवयोनिमात्रत्वात् । नैर्ऋतानामपि तथात्वादेवैकजात्यं, तदुचितो यौनसम्बन्धः ॥ ७ ॥

कस्य चित्त्वथ कालस्य यक्षी पुत्रमजायत ॥ ८ ॥
मारीचं नाम दुर्धर्षं यः शापाद्राक्षसोऽभवत् ।

अजायतेति । जनी *जनने, जननं—गर्भविमोचनम् ; प्रासोष्टेति यावत् ॥ ८ ॥

सुन्दे तु निहते राम! साऽगस्त्यं मुनिपुङ्गवम् ॥ ९ ॥
ताटका सह पुत्रेण प्रधर्षयितुमिच्छति ।
भक्षार्थं जातसंरम्भा गर्जन्ती साऽभ्यधावत ॥ १० ॥

'शापाद्राक्षसोऽभवत्' इत्युक्ते किंशापादित्यतः—सुन्दे तु निहत इत्यादि । अगस्त्येनेति शेषः । इच्छति–इच्छति स्म । जातसंरम्भा —स्वभर्तृवधजकोपवती । अत एव—भक्षार्थमभ्यधावतेति । एतेन यक्षरक्षोऽसुरादेः पुरुषादत्वादिधर्मवत्वेन च साजात्यं यौनसम्बधार्हं द्रष्टव्यम् ॥ १० ॥

आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः ।
राक्षसत्वं भजस्वेति मारीचं व्याजहार सः ॥ ११ ॥

राक्षसत्वं भजस्वेति । शुद्धदेवयोनिस्वरूपं मुक्त्वेति शेषः ॥ ११ ॥

---

*प्रादुर्भावे इति यावत् । [1] जम्भपुत्राय–ङ.

अगस्त्यः परमक्रुद्धस्ताटकामपि शप्तवान् ।
पुरुषादी महायक्षी विरूपा विकृतानना ॥ १२ ॥
इदं रूपं विहायाथ दारुणं रूपमस्तु ते ।

पुरुषादीति । जातिलक्षणङीष् । कोपवशाद्विरूपविकृताननत्वम् । वैरूप्यं—क्रोधवशजमुखारुण्यादि । इदं रूपं—यक्षीरूपम् । दारुणं रूपमिति । पुत्रवदेव राक्षसं रूपमित्यर्थः ॥ १२ ॥

सैषा शापकृतामर्षा ताटका क्रोधमूर्च्छिता ॥ १३ ॥
देशमुत्सादयत्येनमगस्त्यचरितं शुभम् ।

देशोत्सादने हेतुगर्भविशेषणम्—अगस्त्यचरितमिति ॥ १३ ॥

एनां राघव ! दुर्वृत्तां यक्षीं परमदारुणाम् ॥ १४ ॥
गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ।

यक्षिः यक्षी यक्षिन्—इति रूपत्रयमप्यस्ति ॥ १४ ॥

न ह्येनां शापसंस्पृष्टां कश्चिदुत्सहते पुमान् ॥ १५ ॥
निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन !

शापः—आगस्त्यः ॥ १५ ॥

न हि ते स्त्रीवधकृते घृणा कार्या नरोत्तम ! ॥ १६ ॥
चातुर्वर्ण्यहितार्थाय कर्तव्यं राजसूनुना ।

हे नरोत्तम ! ते स्त्रीवधनिमित्ता या घृणा सा त्वया न कार्येति योजना । कुत एवमित्यतः—चातुर्वर्ण्यहितार्थायेति । स्वार्थे ष्यञ् ॥ १६ ॥

नृशंसमनृशंसं वा प्रजारक्षणकारणात् ॥ १७ ॥
पातकं वा सदोषं वा कर्तव्यं रक्षता [1]सदा ।

---

[1] सता—सतां—ङ.

नृशंसः—क्रूरकर्मा । प्रजारक्षकारणादिति । प्रजारक्षणसिद्धिहेतोरित्यर्थः । रक्षता सदेति । रक्षाधर्मसिद्धिशेषत्वेनेति यावत् ॥ १७ ॥

**राज्यभारनियुक्तानां एष धर्मः सनातनः ॥ १८ ॥**
**अधर्म्यां जहि काकुत्स्थ ! धर्मो ह्यस्या न विद्यते ।**

इतश्चास्या वधो न्याय्य इत्याह—अधर्म्यामिति । धर्मादनपेता धर्म्या, सा न भवतीत्यधर्म्या । अयमेवार्थः स्थिरीक्रियते—धर्म इत्यादि ॥ १८ ॥

**श्रूयते हि पुरा शक्रो विरोचनसुतां नृप ! ॥ १९ ॥**
**पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ।**

प्रजारक्षाप्राप्तोऽधर्म्यस्त्रीवधो धर्म्य एवेतीममर्थं सम्मतिभिः स्थिरीकरोति—श्रूयत इत्यादि । पृथिवीमित्यादि । देवताविग्रहवतीमिति यावत् ॥ २० ॥

**विष्णुना च पुरा राम ! भृगुपत्नी दृढव्रता ॥ २० ॥**
**[1]अनिद्रं लोकमिच्छन्ती काव्यमाता निषूदिता ।**

अनिंद्रं—निद्रासुखरहितम् । काव्यः—शुक्रः ॥ २१ ॥

**एतैश्चान्यैश्च बहुभी राजपुत्र ! महात्मभिः ॥ २१ ॥**
**अधर्मसहिता नार्यो हताः पुरुषसत्तमैः ।**
**तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान्नृप ! ॥ २२ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे पञ्चविंशः सर्गः

---

एतैरिति । छान्दसं बहुत्वम् । एताभ्यां शक्रविष्णुभ्यामित्यर्थः । रुद्र (२२) मानः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे पञ्चविंशः सर्गः

---

[1] अनिन्द्रं—ङ.

अथ षड्विंशः सर्गः

[ताटकावधः]

**मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः ।**
**राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥ १ ॥**

एवं न्यायापनुत्तस्त्रीवधदोषशङ्केन रामेण ताटकावधः । मुनेरित्यादि । अक्लीबं—धृष्टम् ॥ १ ॥

**पितुर्वचननिर्देशात् पितुर्वचनगौरवात् ।**
**वचनं कौशिकस्येति कर्तव्यमविशङ्कया ॥ २ ॥**

पितुरित्यादि । ' कौशिकस्य वचनं अविशङ्कया कर्तव्यं त्वया ' इत्येवंरूपात् पितुर्वचननिर्देशात्—नियोगात् , तस्य च पितुर्वचनगौरवात् —परमाप्तवाक्यत्वेन परमप्रामाण्याच्च भगवन् ! त्वद्वचनं कर्तव्यम् , निश्चितमिति शेषः ॥ २ ॥

**अनुशिष्टोऽस्म्ययोध्यायां गुरुमध्ये महात्मना ।**
**पित्रा दशरथेनाहं नावज्ञेयं च तद्वचः ॥ ३ ॥**

कदैवं पितुः—मद्वचनं कर्तव्यमिति नियोगः ? इत्यतः—अनुशिष्ट इत्यादि । गुरुमध्य इति । वसिष्ठवामदेवाद्यधिष्ठितनिजसभामध्य इत्यर्थः । नावज्ञेयं च तद्वचः—प्रागुक्तहेतोः ॥ ३ ॥

**सोऽहं पितुर्वचःश्रुत्वा शासनाद्ब्रह्मवादिनः ।**
**करिष्यामि न सन्देहः ताटकावधमुत्तमम् ॥ ४ ॥**

एवं पितृवचःश्रुत्वा ततो निष्कम्पप्रवृत्तिः । सोऽहं ब्रह्मवादिनः तव शासनात्—यथाप्राप्तकालात् उत्तमं—उत्तमधर्मभूतताटकावधं करिष्यामि ; न सन्देहः ॥ ४ ॥

**गोब्राह्मणहितार्थाय देशस्यास्य सुखाय च ।**
**तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥ ५ ॥**

कुत एवमित्यतः—तव चेत्यादि । चो हेतौ, च-यस्मात् , अप्रमेयस्य तव वचनं कर्तुमेव पितृनियोगः, तं कर्तुमुद्यतः, अतो न विचिकित्साप्रसङ्गः ॥ ५ ॥

**एवमुक्त्वा धनुर्मध्ये बध्वा मुष्टिमरिन्दमः ।**
**ज्याघोषमकरोत्तीव्रं दिशः शब्देन नादयन् ॥ ६ ॥**

तीव्रं—परुषश्रवणम् ॥ ६ ॥

**[1]तेन शब्देन वित्रस्ता ताटकावनवासिनः ।**

वित्रस्ताः—भीताः ॥ ७ ॥

**ताटका च सुसङ्क्रुद्धा तेन शब्देन मोहिता ॥ ७ ॥**

**तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्च्छिता ।**
**श्रुत्वा चाभ्यद्रवद्वेगात् यतः शब्दो विनिस्सृतः ॥ ८ ॥**

मोहिता—किमिदानीं कर्तव्यमिति सम्भ्रान्तचित्ता यतश्शब्दो विनिस्सृतः, तं शब्दं श्रुत्वा तमेव अभिनिध्याय—आलक्ष्य अभ्यद्रवदिति योजना ॥ ८ ॥

**तां दृष्ट्वा राघवः क्रुद्धां विकृतां विकृताननाम् ।**
**प्रमाणेनाति[2]वृत्तां च, लक्ष्मणं सोऽभ्यभाषत ॥ ९ ॥**

प्रमाणेन—शरीरप्रमाणेन । अतिवृत्तां—अतिप्रवृद्धाम् ॥ ९ ॥

---

[1] एतत्पूर्वं—तस्य संरंभमालोक्य सम्भ्रातुर्मुनिपुङ्गवः । प्रहर्षमतुलं लेभे रामं साध्विति चाब्रवीत्-इत्यधिकं—ङ. [2] वृद्धां-ङ. च.

**पश्य लक्ष्मण ! यक्षिण्या भैरवं दारुणं वपुः ।**
**[1]भिन्देरन् दर्शनादस्या भीरूणां हृदयानि च ॥ १० ॥**
**एनां पश्य दुराधर्षां मायाबलसमन्विताम् ।**
**विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम् ॥ ११ ॥**

विनिवृत्तामिति । अस्मदभियानादिति शेषः ॥ ११ ॥

**न ह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन रक्षिताम् ।**
**वीर्यं चास्या गतिं चापि हनिष्यामीति मे मतिः ॥ १२ ॥**

कुत एवं निवर्तनमात्रमित्यतः—नहीत्यादि । कथमेवं वक्ति ? ताटकावधं करिष्यामीत्युक्त्वा पुनः 'हन्तुं नोत्सहे' इति । प्राणवियोजनेनापि तत्कृतपीडाभावस्यैव साध्यत्वात् पाणिपादादिछेदनेन वीर्यगतिमाया[2]संहारेणाकिंचित्करत्वस्य [3]सिद्धत्वात्तावता गुरुवचनानुष्ठानस्य च सिद्धत्वात् शूरविगर्हितो माऽस्तु स्त्रीवध इति यावत् ॥ १२ ॥

**एवं ब्रुवाणे रामे तु ताटका क्रोधमूर्च्छिता ।**
**उद्यम्य बाहू गर्जन्ती राममेवाभ्यधावत ॥ १३ ॥**

'धावुञ् गतिशुद्ध्योः' इति, उभयपदित्वादस्य—अभ्यधावत इति ॥ १३ ॥

**विश्वामित्रस्तु ब्रह्मर्षिः हुङ्कारेणाभितर्ज्य ताम् ।**
**स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ॥ १४ ॥**

विश्वामित्रस्य दुर्धर्षतेजस्त्वेन तं विसृज्य राममेव मानुषबुद्ध्या धावन्तीं तां ताटकां विश्वामित्रो हुङ्कारेण सामान्यतः अभितर्ज्य,

---

[1] एतदनन्तरं—एनां पश्य दुराधर्षां निर्भिन्नहृदयां क्षितौ । शयानां शयने वीर भूतपापां भयावहाम् ॥ इदमधिकं—ङ. [2] संहरौरकिंचित्—ग. [3] सिद्धान्तितत्वात्—ग.

राघवयोः स्वस्त्यस्तु जयश्चास्त्विति, जयं, जयविषयकाशिषं च अभ्यभाषत। प्रायुङ्क्तेति यावत् ॥ १४ ॥

**उद्धून्वाना रजो घोरं ताटका राघवावुभौ।**
**रजोमेघेन महता मुहूर्तं सा व्यमोहयत् ॥ १५ ॥**

रजोमेघेन–[1]तत्प्रादुर्भावेन रज उद्धून्वानेति योजना ॥ १५ ॥

**ततो [2]मायां समास्थाय शिलावर्षेण राघवौ।**
**अवाकिरत् सुमहता ततश्चुक्रोध राघवः ॥ १६ ॥**

ततो मायां समास्थायेति। अन्तर्धानं गत्वेति यावत्। ततश्चुक्रोधेति। शिलावर्षस्य स्वेषामतिपीडाकरत्वात् स्त्रीप्रयुक्तदाक्षिण्यं विसृज्य भगवान् क्रोधं प्राप्त इत्यर्थः ॥ १६ ॥

**शिलावर्षं महत्तस्याः शरवर्षेण राघवः।**
**[3]प्रतिहत्योपधावन्त्याः करौ चिच्छेद पत्रिभिः ॥ १७ ॥**

प्रतिहत्य। ल्यप्, स्थानिवत्वेन कित्वात् स्वतः पित्वाद्वा अनुनासिकलोपः–निवार्य, अनन्तरं तत्करौ चिच्छेदेति। शिलावर्षादेस्तन्मूलत्वात् ॥ १७ ॥

**ततश्छिन्नभुजां श्रान्तां अभ्याशे परिगर्जतीम्।**
**सौमित्रिरकरोत् क्रोधात् हृतकर्णाग्रनासिकाम् ॥ १८ ॥**

अभ्याशे–समीपे ॥ १८ ॥

---

[1] प्रादुर्भवनेन–ग. [2] मायाञ्चमास्थाय–ङ. [3] अतिवार्योप–ङ.

**कामरूपधरा सद्यः कृत्वा रूपाण्यनेकशः।**
**अन्तर्धानं गता यक्षी मोहयन्ती[1]व मायया।**
**[2]अश्मवर्षं विमुञ्चन्ती भैरवं विचचार ह॥ १९॥**

ताटकायास्सहजाकारस्याकिञ्चित्करत्वात् सा तं परित्यज्य कामरूपशक्तिमत्वात् रूपान्तरं, पुरोऽवस्थानभिया अन्तर्धानं च मायाशक्त्या प्राप्य भैरवमश्मवर्षं विमुञ्चन्ती भैरवा विचचार॥ १९॥

**ततस्तावश्मवर्षेण कीर्यमाणौ समन्ततः॥ २०॥**
**दृष्ट्वा गाधिसुतः श्रीमान् इदं वचनमब्रवीत्।**
**अलं ते घृणया वीर! पापैषा दुष्टचारिणी॥ २१॥**
**यज्ञविघ्नकरी यक्षी पुरा वर्धति मायया।**
**वध्यतां तावदेवैषा पुरा सन्ध्या प्रवर्तते॥ २२॥**
**रक्षांसि सन्ध्याकालेषु दुर्धर्षाणि भवन्ति वै।**

घृणयाऽलमिति। स्त्रीति घृणा माऽस्त्वित्यर्थः। दुष्टचारिणी–अश्मवर्षादिरूपदुष्टव्यापारा, दुष्टं यथा तथा मायाशक्त्यान्तर्धानेन सञ्चरणशीला। एतेन प्रत्यक्षात्मनाशप्रसक्त्या घृणाया अनौचित्यं प्रदर्शितम्। यज्ञविघ्नकरीत्यनेन पारलौकिकात्मीयपुरुषार्थनाशकत्वादनौचित्यं घृणायाः। पुरावर्धतेति। मायया यावद्वर्धते तावत्–तत्कालात् पुरैव–पूर्वमेव एषा वध्यताम्। कुत इदानीमस्या मायावृद्धिप्रसङ्ग इत्यतः—पुरेत्यादि। 'यावत्पुरा' इति भविष्यति लट्, सन्ध्या प्रवर्तिष्यते इत्यर्थः। किं तत इत्यतः–रक्षांसीत्यादि॥ २२॥

**इत्युक्तस्तु तदा यक्षीमश्मवृष्ट्याऽभिवर्षतीम्।**
**दर्शयन् शब्दवेधित्वं तां रुरोध स सायकैः॥ २३॥**

---

[1] स्वमायया–ङ. [2] एतदनन्तरं–ज्यास्वनं चक्रतुर्वीरौ वज्राशनिसमं तदा। मोहिता तेन शब्देन, लब्धसंज्ञा चिराद् तदा॥ इदमधिकं–ङ.

अश्मवृष्ट्येति । करण तृतीया । शब्दमात्रेण लक्ष्यं सम्यक् निश्चित्य वेधी–शब्दवेधी, तादृशं स्वीयं सामर्थ्यं दर्शयन् भूत्वा तां यक्षीं रुरोध ॥ २३ ॥

**सा रुद्धा शरजालेन मायाबलसमन्विता ।**
**अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी ॥ २४ ॥**

शरजालेनेति । शब्दवेधिऽशरजालेनेति यावत् । अभिदुद्रावेति । अन्तर्धानस्याप्रयोजनत्वात् तद्धित्वेति शेषः ॥ २४ ॥

**तामापतन्तीं वेगेन विक्रान्तामशनीमिव ।**
**शरेणोरसि विव्याध, सा पपात, ममार च ॥ २५ ॥**

अशनीमिवेति । 'सर्वतोऽक्तिन्नर्थादित्येके' इति धूळीपाल्यादिवत् ङीष् ॥ २५ ॥

**तां हतां भीमसङ्काशां दृष्ट्वा* सुरपतिस्तदा ।**
**साधु साध्विति काकुत्स्थं, सुराश्च समपूजयन् ॥ २६ ॥**

भीमसङ्काशां–भीमरूपाम् ॥ २६ ॥

**उवाच परमप्रीतः सहस्राक्षः पुरन्दरः ।**
**सुराश्च सर्वे संहृष्टा विश्वामित्रमथाब्रुवन् ॥ २७ ॥**

सहस्राक्षो विश्वामित्रमुवाच इति योजना ॥ २७ ॥

**मुने कौशिक ! भद्रं ते सेन्द्राः सर्वे मरुद्गणाः ।**
**तोषिताः कर्मणाऽनेन स्नेहं दर्शय राघवे ॥ २८ ॥**

सहस्राक्षादयः किमुक्तवन्त इत्यत;––मुने इत्यादि । अनेन कर्मणेति । त्वत्प्रवर्तितताटकावधकर्मणेति यावत् । स्नेहं दर्शयेति ।

---

* सुरपतिः सुराश्च समपूजयन्–इत्यन्वयः ।

मदीयोऽयमाप्ततमाशिष्य इति स्नेहमूलं व्यापारं प्रवर्तयेति यावत् ॥ २८ ॥

प्रजापतेः [1]कृशाश्वस्य पुत्रान् सत्यपराक्रमान् ।
तपोबलभृतो ब्रह्मन् ! राघवाय निवेदय ॥ २९ ॥

कोऽसौ तथा प्रवर्तनीयव्यापारः ? इत्यतः—प्रजापतेरित्यादि ॥ २९ ॥

पात्रभूतश्च ते ब्रह्मन् ! तवानुगमने धृतः ।
कर्तव्यं च महत्कार्यं सुराणां राजसूनुना ॥ ३० ॥

अनुगमने—शुश्रूषणे । धृतः—स्थिरनिश्चयः ॥ ३० ॥

एवमुक्त्वा सुराः सर्वे जग्मुर्हृष्टा यथाऽऽगतम् ।
विश्वामित्रं [2]पुरस्कृत्य, ततः सन्ध्या प्रवर्तते ॥ ३१ ॥

पुरस्कृत्य—पूजयित्वा जग्मुरिति योजना । सन्ध्या—सायंसन्ध्या प्रवर्तते स्म ॥ ३१ ॥

ततो मुनिवरः प्रीतः ताटकावधतोषितः ।
मूर्ध्नि राममुपाघ्राय इदं वचनमब्रवीत् ॥ ३२ ॥
इहाद्य रजनीं राम ! वसेम शुभदर्शन !
श्वः प्रभाते गमिष्यामः तदाश्रमपदं मम ॥ ३३ ॥
विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मजः ।
उवास रजनीं तत्र ताटकाया वने सुखम् ॥ ३४ ॥
[3]मुक्तशापं वनं तच्च तस्मिन्नेव तदाऽहनि ।

मुक्तशापं— अपगतशापजताटकोपद्रवम् ॥ ३४ ॥

---

[1] भृशाश्वस्य—ज. [2] पूजयन्तः-ज. पूजयित्वा—ङ. [3] एतदनन्तरं—चम्पकाशोकपुन्नागमल्लिकाद्यैस्सुशोभितम् । चूतैश्च पनसैः पूगैर्नारिकेलैश्च शोभितम् । वापीकूपतटाकैश्च दीर्घिकाभिरलङ्कृतम । मल्लिकाहेमकूटैश्च मण्टपैरुपशोभितम्—इदमधिकम्—ङ.

**रमणीयं विबभ्राज यथा चैत्ररथं वनम् ॥ ३५ ॥**

ताटकावधतोषितः—प्राप्तसंतोषः । रामेणेति शेषः । अत एव रामाय प्रीतः—प्रसन्नः ॥

**निहत्य तां यक्षसुतां स रामः**
**प्रशस्यमानः सुरसिद्धसङ्घैः ।**
**उवास तस्मिन् मुनिना सहैव**
**प्रभातवेलां प्रतिबोध्यमानः ॥ ३६ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे षड्विंशः सर्गः

———

प्रभातवेलां प्रतिबोध्यमान इति । विश्वामित्रेणेति शेषः । अस्तग (३६ १/२) मानः सर्गः ॥३६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे षड्विंशः सर्गः

———

### अथ सप्तविंशः सर्गः

[सर्वास्त्रग्रहणम्]

**अथ तां रजनीमुष्य विश्वामित्रो महायशाः ।**
**[1]प्रहस्य राघवं वाक्यं उवाच मधुराक्षरम् ॥ १ ॥**

अथ यथादेवतानियोगं विश्वामित्रानुष्ठानम् । अथ तामित्यादि । उष्येति । समासे ल्यप् , 'क्वापि छन्दसि' इत्यपिशब्दात् । राममुखदर्शनसंतोषजो मुख[2]विकासः प्रहासः, सन्तुष्टो मन्दस्मितं कृत्वेति यावत् ॥ १ ॥

---

[1] प्रशस्य—ङ. [2] विलासः—ग.

**परितुष्टोऽस्मि भद्रं ते राजपुत्र! महायशः।**
**प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः॥ २॥**

महायश इति। सम्बुद्धित्वान्न दीर्घः। सर्वशः—सर्वाणीति यावत्॥ २॥

**देवासुरगणान् वाऽपि सगन्धर्वोरगानपि।**
**यैरमित्रान् प्रसह्याजौ वशीकृत्य जयिष्यसि॥ ३॥**

आजौ प्रसह्य—बलात्कारेण संहारेण वा जयिष्यसि, स्वार्थे णिः, जेष्यसि। यदि वा दया, तदा वशीकृत्य संमोहनास्त्रादिना जयिष्यसि॥ ३॥

**तानि दिव्यानि भद्रं ते ददाम्यस्त्राणि सर्वशः।**
**दण्डचक्रं महद्दिव्यं तव दास्यामि राघव!॥ ४॥**

दिव्यास्त्राणामनुक्रमः—दण्डचक्रमित्यादि। दण्डचक्रादयश्चक्रभेदाः॥ ४॥

**[1]धर्मचक्रं ततो वीर! कालचक्रं तथैव च।**
**वज्रमस्त्रं [2]नरश्रेष्ठ! शैवं [3]शूलवरं तथा॥ ५॥**
**अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव!।**
**ददामि ते महाबाहो! ब्राह्ममस्त्रमनुत्तमम्॥ ६॥**

शूलवरं—शूलवरनामकम्। ब्रह्मशिरोऽप्यन्यत्। ब्रह्मास्त्रमप्यन्यत्॥

**गदे द्वे चैव काकुत्स्थ! मोदकी शिखरी उभे।**
**प्रदीप्ते नरशार्दूल! प्रयच्छामि नृपात्मज!॥ ७॥**

मोदकी शिखरीसंज्ञे ये द्वे गदे स्तः, ते उभे च दास्यामि॥ ७॥

---

[1] एतदनन्तरं—विष्णुचक्रं तथाऽत्युग्रं ऐन्द्रमस्त्रं तथैव च—अधिकं—ङ. [2] वरश्रेष्ठ—ञ.
[3] शूलवतम्—ङ. ज.

धर्मपाशमहं राम! कालपाशं तथैव च।
पाशं वारुणमस्त्रं च ददाम्यहमनुत्तमम् ॥ ८ ॥

अस्त्रं चेति। वारुणास्त्रं चेत्यर्थः ॥ ८ ॥

अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन!।
ददामि चास्त्रं पैनाकमस्त्रं नारायणं तथा ॥ ९ ॥

अशन्योर्द्वैतमेव प्रदर्श्यते--शुष्कार्द्रे इति। पिनाकिन इदं पैनाकम् ॥ ९ ॥

आग्नेयमस्त्रं दयितं शिखरं नाम नामतः।
वायव्यं [1] प्रथमं नाम ददामि च, तत्रानघ! ॥ १० ॥

नामतः शिखरं नाम–शिखरमिति प्रसिद्धम्, अग्नेः दयितं –इष्टम् आग्नेयं च प्रथमं नाम–प्रथमसंज्ञम् ॥ १० ॥

अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च।
शक्तिद्वयं च काकुत्स्थ! ददामि तव राघव! ॥ ११ ॥
कङ्कालं मुसलं घोरं कापालमथ [2] कङ्कणम्।
[3]धारयन्त्यसुरा यानि ददाम्येतानि सर्वशः ॥ १२ ॥

धारयन्त्यसुरा यानीति। कङ्कालादीनीति यावत् ॥ १२ ॥

वैद्याधरं महास्त्रं च नन्दनं नाम नामतः।
असिरत्नं महाबाहो! ददामि नृवरात्मज! ॥ १३ ॥

नन्दनं नाम असिरत्नमित्यन्वयः ॥ १३ ॥

---

[1] प्रथनं. मथनं–ङ. [2] किङ्किणीम्–ङ. [3] वधार्थं रक्षसां–ज.

गान्धर्वमस्त्रं दयितं [1]मानवं नाम नामतः ।
प्रस्वापनप्रशमने दद्मि सौरं च राघव ! ॥ १४ ॥

ददामीत्यत्राकारलोपे दद्मीति छान्दसः ॥ १४ ॥

[2]वर्षणं शोषणं चैव सन्तापनविलापने ।
[3]मर्दनं चैव दुर्धर्षं कन्दर्पदयितं तथा ॥ १५ ॥

विलापयति परिदेवयतीति विलापनम् । मर्दयतीति मर्दनम् ॥

पैशाचमस्त्रं दयितं मोहनं नाम नामतः ।
प्रतीच्छ नरशार्दूल ! राजपुत्र ! महायशः ! ॥ १६ ॥

प्रतीच्छ—गृहाण ॥ १६ ॥

तामसं नरशार्दूल ! सौमनं च महाबल !
संवर्तं चैव दुर्धर्षं मौसलं नाम नामतः ॥ १७ ॥

प्रागुक्तासुरमुसलास्त्रादन्यत् मौसलम् ॥ १७ ॥

सत्यमस्त्रं महाबाहो तथा मायाधरं परम् ।
[4]घोरं तेजःप्रभं नाम परतेजोऽपकर्षणम् ॥ १८ ॥
सौम्यास्त्रं शिशिरं नाम त्वाष्ट्रमस्त्रं सुदामनम् ।
दारुणं च भगस्यापि शीतेषुमथ मानवम् ॥ १९ ॥

शीतेषुं मानवमित्यन्वयः ॥ १९ ॥

एतान् राम ! महाबाहो ! कामरूपान् महाबलान् ।
गृहाण परमोदारान् क्षिप्रमेव नृपात्मज ! ॥ २० ॥

---

[1] मोहनं नाम, मानवास्त्रं च ङ. [2] दर्पणं—ङ. [3] मदनं—ङ.
[4] सौरं—ज.

**स्थितस्तु प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा ।**
**ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम् ॥ २१ ॥**

नन्वस्त्राणि दास्यामीति प्रतिश्रुत्य तानि च अनुक्रम्यान्ते मन्त्रग्रामं ददावित्युच्यते । उपसंहारेऽस्त्राणि ददावित्येवान्ते वक्तव्यत्वात् । नैतत्, अनुक्रान्तदिव्यास्त्राणां ब्रह्मपुत्राणां देवतात्वेन मन्त्रैकसहजात्मानः भामण्डलवपुष्मन्तो मण्डलानुग्रहायेति चिद्रहस्यात्, अस्त्रदेवानां स्वस्वमन्त्रस्यैव सहजमूर्तित्वात्, भामण्डलवपुर्ग्रहस्योपासकानुग्रहोपाधिमूलत्वेनासहजत्वादशक्यदानाच्च भद्रतरमुक्तम्—मन्त्रग्रामं ददाविति । *ननु 'मन्त्रग्रामं गृहाण त्वम्' इति बलातिबलादानप्रसङ्गे उक्तः । पुनरिह कुतो मन्त्रग्रामदानं? सत्यमुक्तम्—गृहाणेति, न तु दत्तं, तत्कालोपयोगिबलातिबलामन्त्रस्यैव दानात् ॥ २१ ॥

**सर्वसङ्ग्रहणं येषां दैवतैरपि दुर्लभम् ।**
**तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ॥ २२ ॥**

सर्वेत्यादि । येषां उक्तदिव्यास्त्राणां सर्वसङ्ग्रहणं सर्वेषामुक्तानामेकेन सङ्ग्रहणं कर्तुम् दैवतैरपि दुर्लभं–दुष्करमिति यावत् । कश्चिद्देवोऽपि किञ्चिदेवात्रत्येषु जानाति, न सर्वम्। एवमनेकदुष्प्रापाणि तानि सर्वाणि अस्त्राणि एकस्मै रामाय तदा विप्रः–विश्वामित्रो न्यवेदयत्–दत्तवान् ॥ २२ ॥

**जपतस्तु मुनेस्तस्य विश्वामित्रस्य धीमतः ।**
**उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवम् ॥ २३ ॥**

एवं मन्त्रं दत्त्वा, मन्त्रमिव मन्त्रदैवतान्यपि शिष्यानुवर्तनाय योजयितुं तानि स्मृत्वा जपतो विश्वामित्रस्य मुनेः आज्ञया गृहीत-

---

*इयं व्याख्या तिलकेऽनूद्य दूषिता ।

भामण्डलवपुष्मन्ति सन्ति उपतस्थुः। तत उपस्थितानि विश्वामित्र-नियोजितरामसेवकानि तानि सर्वाण्यस्त्राणि महात्मानं राघवं चोपतस्थुः॥

**ऊचुश्च मुदिताः सर्वे रामं प्राञ्जलयस्तदा।**
**इमे स्म परमोदाराः किङ्करास्तव राघव! ॥ २४ ॥**
**[1]यद्यदिच्छसि, भद्रं ते, तत्सर्वं करवाम वै।**

उपस्थाय, सर्वे अस्त्रदेवताः प्राञ्जलयः साक्षात्स्वाधीनदेवताः ब्रह्मरामसम्बन्धेन मुदिताः सत्यः तं ऊचुः। किमित्यतः—इम इत्यादि। किङ्कराः–नियोज्याः–अङ्गीकृतकैङ्कर्याः ॥ २४ ॥

**ततो रामः प्रसन्नात्मा तैरित्युक्तो महाबलैः ॥ २५ ॥**
**प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना।**
**मानसा मे *भविष्यध्वमिति तानभ्यचोदयत् ॥ २६ ॥**

तान् काकुत्स्थः पाणिना समालभ्य–उपस्पृश्य, स्त्रियं पतिरिव, प्रतिगृह्य च–स्वीकृत्य च तान् मानसा भविष्यध्वमित्यभ्यचोदयत्। मनस्स्मृतिकालोपस्थानाः मानसाः, दार्षदादिवत् शैषिकोऽण्। भविष्यध्वमिति व्यत्ययात्तङ् ॥ २६ ॥

**ततः प्रीतमना रामो विश्वामित्रं महामुनिम्।**
**अभिवाद्य महातेजा गमनायोपचक्रमे ॥ २७ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे सप्तविंशः सर्गः

---

सरो(२७)मानः सर्गः ॥ २७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे सप्तविंशः सर्गः

---

* भूप्राप्ताविति धातुः–गो.

[1] अयंश्लोकः कुत्रचित् प्रक्षिप्तः–ङ.

## अथ अष्टाविंशः सर्गः

### [अस्त्रसंहारग्रहणम्]

**प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनश्शुचिः ।**
**गच्छन्नेव च काकुत्स्थो विश्वामित्रमथाब्रवीत् ॥ १ ॥**

अथावगतप्रयोगास्त्राणां उपसंहारापरिज्ञाने पुनः प्रयोगानर्हत्वेनाप्राप्तप्रायत्वात् परमचतुरेण रामेणावगतास्त्रोपसंहारे च पृष्टे तमुपदिश्य तच्चातुरीस्वावगतसर्वास्त्रपात्रत्वायान्यानपि दिव्यास्त्राण्यसङ्कोचोपचारेण—सर्वास्त्रविदुषे रामायोपदिशति । प्रतिगृह्येत्यादि ॥ १ ॥

**गृहीतास्त्रोऽस्मि भगवन्! दुराधर्षः सुरासुरैः ।**
**अस्त्राणां त्वहमिच्छामि संहारं मुनिपुङ्गव! ॥ २ ॥**

गृहीतास्त्रोऽस्मीति । गृहीतास्त्रप्रयोगमार्गोऽस्मीत्यर्थः ॥ २ ॥

**एवं ब्रुवति काकुत्स्थे विश्वामित्रो महायशाः ।**
**संहारं व्याजहाराथ धृतिमान् सुव्रतश्शुचिः ॥ ३ ॥**

संहारमिति । तत्तदस्त्रमूलमन्त्रवर्तितत्तत्संहारमार्गमित्यर्थः ॥ ३ ॥

***सत्यवन्तं सत्यकीर्तिं धृष्टं रभसमेव च ।**
**प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम् ॥ ४ ॥**

अथ उपदिष्टास्त्रसंहारमार्गोपदेशानन्तरं धृतिमत्त्वादिगुणक ऋषिः सत्यवदादीन्यन्यान्यपि ददाति—सत्यवन्तमित्यादि । ददामीति सर्वत्रान्वयः ॥ ४ ॥

**लक्षाक्षविषमौ चैव दृढनाभसुनाभकौ ।**
**दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ ॥ ५ ॥**

---

* सत्यवदादीन्युपसंहाराणां नामानि । सत्यवन्तमित्यादि सप्तश्लोक्येकान्वया ॥—गो.

**पद्मनाभमहानाभौ दुन्दुनाभसुनाभकौ ।**
**ज्योतिषं कृशनं चैव नैराश्यविमलावुभौ ॥ ६ ॥**

दुन्दुनाभ इति । नामैकदेशे नामग्रहः, दुन्दुभीनाभ इति यावत् ॥ ६ ॥

**[1]यौगन्धरहरिद्रौ च दैत्यप्रशमनौ तथा ।**
**सार्चिर्माली धृतिर्माली वृत्तिमान् रुचिरस्तथा ॥ ७ ॥**

सार्चिर्माल्यादयो ये, तांश्च ददामीति योजना ॥ ७ ॥

**पितृसौमनसं चैव विधूतमकरावुभौ ।**
**करवीरकरं चैव धनधान्यौ च राघव ! ॥ ८ ॥**
**कामरूपं कामरुचिं मोहमावरणं तथा ।**
**जृम्भकं सर्वनाभं च सन्तानवरणौ तथा ॥ ९ ॥**
**कृशाश्वतनयान् राम ! भास्वरान् कामरूपिणः ।**
**प्रतीच्छ मम, भद्रं ते, पात्रभूतोऽसि राघव ! ॥ १० ॥**
**[2]बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना ।**

कृशाश्वेत्यादि । सत्यवदादिवरणान्तान् मया दीयमानान भास्वरत्वादिगुणकान् कृशाश्वतनयान् मम सकाशात् प्रतीच्छ— गृहाण । हे राघव ! यथाऽहं, मत्तोऽधिकं वा सर्वास्त्राधिदैवततत्पितृब्रह्मरूपत्वात् पात्रभूतोऽसि । एवं विश्वामित्रेण बहुकालबहुदेवतोपासनप्राप्तसर्वास्त्राणामप्रयासत एकदैव प्राप्तः भगवान् रामो ब्रह्मैवेति सुज्ञेयम् । न ह्यन्यं ब्रह्मपुत्राः कटाक्षेणापि वीक्षेरन्, येष्वेकोऽपि विश्वामित्रवदेव तत्तच्चिरकालोपासनैकलभ्यः । पितरन्तु पुत्रास्स्वयमेवोपासते । पिता च

---

[1] एतदनन्तरं 'शुचिर्बाहुर्महाबाहुर्निष्कलिर्विरुचिस्तथा' इत्यधिकं क्वचित्—ङ.
[2] एतदनन्तरं 'तत्सर्वमग्रहीद्रामो विश्वामित्रान्महामुनेः' इत्यधिकं—ङ.

स्वेच्छया तान् विनियुङ्क्ष्व । अत एव नियुक्तो रामो बाढं–तथाऽस्त्वित्युक्त्वा प्रहृष्टेनान्तरात्मना जग्राहेति शेषः ॥ १० ॥

**दिव्यभास्वरदेहाश्च मूर्तिमन्तस्सुखप्रदाः ॥ ११ ॥**
**केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा ।**
**चन्द्रार्कसदृशाः केचित् प्रह्वाञ्जलिपुटास्तथा ॥ १२ ॥**
**रामं प्राञ्जलयो भूत्वाऽब्रुवन् मधुरभाषिणः ।**

अथ प्रागुक्तमार्गेण गृहीतदिव्यतादिविशेषणकास्ते प्राञ्जलयो भूत्वा राममब्रुवन्नित्यन्वयः । तत्र प्रह्वा इति शिरःकायप्रावण्यधर्मकाः । अञ्जलेः पुटः–संश्लेषो येषां ते तथा ॥ १२ ॥

**इमे स्म नरशार्दूल! शाधि किं करवाम ते ॥ १३ ॥**

इमे स्मेति । सन्निहिता वयमित्यर्थः । शाधि—आज्ञापय । शाभावस्याबाधसिद्ध्या 'हुझल्भ्यः—' इति धित्वम् ॥ १३ ॥

**मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ ।**
**गम्यतामिति तानाह *यथेष्टं रघुनन्दनः ॥ १४ ॥**

अथ 'ते किं करवाम' इति विज्ञापितवतोऽस्त्रदेवान्नियुङ्क्ते— मानसा इत्यादि । व्याकृतचरश्शब्दः । गम्यतामिति । इदानीमिति शेषः ॥ १४ ॥

**अथ ते राममामन्त्र्य कृत्वा चाभिप्रदक्षिणम् ।**
**[1]एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथाऽऽगतम् ॥ १५ ॥**

---

* यथेष्टं गम्यतामित्यन्वयः । [1] एतदनन्तरं—'प्रणम्य शिरसा रामं सर्वे सम्मतविक्रमाः । ततस्तु रामः काकुत्स्थः शासनात् ब्रह्मवादिनः । लक्ष्मणाय च तान् सर्वान् वरास्त्रान् रघुनन्दनः ॥ संहारान् स च संहृष्टः श्रीमांस्तस्मै न्यवेदयत् ।' इत्यधिकं क्वचित्–ङ.

अभितः प्रदक्षिणं—अभिप्रदक्षिणं। एतेनापि रामस्तत्पिता ब्रह्मेति ज्ञेयम्। न हि देवतास्स्वानुग्राह्ये प्रदक्षिणाद्याचरन्ति ॥ १५ ॥

**स च तान् राघवो ज्ञात्वा विश्वामित्रं महामुनिम्।**
**गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् ॥ १६ ॥**

स च तानिति। पश्चादुपदिष्टास्त्रांश्चेत्यर्थः। ज्ञात्वेति। मन्त्रतो मूर्तितः प्रयोगतश्चेति शेषः ॥ १६ ॥

**किं न्वेतन्मेघसङ्काशं पर्वतस्याविदूरतः।**
**वृक्षषण्डमितो भाति परं कौतूहलं हि मे ॥ १७ ॥**

अथ वक्ष्यमाणार्थबीजप्रक्षेपः—किं न्वेतदित्यादि। मेघसङ्काशमिति काष्ण्यनैपिड्यात्। पर्वतस्याविदूरतः इतः—इह यद्वृक्षषण्डं भाति, एतत् वनवृक्षषण्डं? आश्रमवृक्षषण्डं वा? इति प्रश्नः ॥ १७ ॥

**दर्शनीयमृगाकीर्णं मनोहरमतीव च।**
**नानाप्रकारैश्शकुनैः वल्गुनादैरलङ्कृतम् ॥ १८ ॥**
**निस्सृताः स्म मुनिश्रेष्ठ! कान्ताराद्रोमहर्षणात्।**
**अनया त्ववगच्छामि देशस्य सुखवत्तया ॥ १९ ॥**
**सर्वं मे शंस भगवन्! कस्याश्रमपदं त्विदम्।**

अथ किञ्चित्समीपगमने स्वयमेवाश्रमीयत्वं वृक्षषण्डस्य ज्ञात्वा 'कस्याश्रमपदम्?' इति पृच्छति—दर्शनीयेत्यादि। निस्सृताः स्मेति। यतो दर्शनीयमृगाकीर्णत्वादिलक्षणमिदं वृक्षषण्डं, तस्मात् रोमहर्षणात्—भीत्या रोमाञ्चकारात् दुष्प्रवेशभयदुःखावहकष्टारण्यात् निर्गताः स्म। अपि च अनया देशस्य सुखवत्तया चेदमाश्रमपदमित्यवगच्छामि। तदिदं कस्येत्यादि यन्मे जिज्ञासितं, तत्सर्वं शंस ॥ १९ ॥

**संप्राप्ता यत्र ते पापा ब्रह्मघ्ना दुष्टचारिणः॥ २० ॥**
**तव यज्ञस्य विघ्नाय दुरात्मानो महामते!।**
**भगवंस्तस्य को देशः सा यत्र तव याज्ञिकी॥ २१ ॥**
**रक्षितव्या क्रिया ब्रह्मन्! मम वध्याश्च राक्षसाः।**
**एतत्सर्वं मुनिश्रेष्ठ! श्रोतुमिच्छाम्यहं प्रभो! ॥२२॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे अष्टाविंशः सर्गः

---

सर्वशब्दविवक्षितं स्वजिज्ञास्यान्तरं स्वयमेव ब्रूते रामः—सम्प्राप्ता इत्यादि। ब्रह्मघ्नाः—'अमनुष्यकर्तृके च' इति हन्तेष्टकि 'गमहन' इत्युपधालोपादिः, ब्रह्मघातकत्वादिविशेषणकास्ते पापाः यत्र युष्मदाश्रमप्रदेशे सम्प्राप्ताः तव यज्ञस्य विघ्नाय भवन्ति, यत्र च मया रक्षितव्या सा तव याज्ञिकी क्रिया, यत्र च तच्छेषतया मया राक्षसाश्च वध्याः, तस्य भगवदाश्रमस्य देशः—प्रदेशः कः? एतत्सर्वं श्रोतुमिच्छामि इति। रात्रि(२२)मानः सर्गः॥ २२॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे अष्टाविंशः सर्गः

---

## अथ एकोनत्रिंशः सर्गः

[सिद्धाश्रमवृत्तान्तः]

**अथ तस्याप्रमेयस्य तद्वनं परिपृच्छतः।**
**विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे॥१॥**

अथ प्रागुक्तबीजोऽर्थः प्रकाश्यते—अथ तस्येत्यादि। रामस्य व्याख्यातुमिति। पृष्टोत्तरमिति शेषः॥१॥

**इह राम ! महाबाहो ! विष्णुर्देववरः प्रभुः ।**
**वर्षाणि सुबहून्येव तथा युगशतानि च ॥ २ ॥**
**तपश्चरणयोगार्थमुवास सुमहातपाः ।**

इहेत्यादि । हे राम ! इह–भूलोके इहाश्रमपदे देववरः प्रभुर्विष्णुः–विराट्पुरुषः प्रजापतिर्ब्रह्मा तपश्चरणयोगार्थं तपश्चरणोपेतः, योगः–समाधिः स्वकसहजभूमविराट्तुर्यब्रह्मानन्यतामयनिजतत्त्वानुसन्धानात्मकः, तत्सिद्ध्यर्थं उवास । समूलकार्योपाधेरस्य विराजः तत्त्वव्रते परमकारणं तुरीयं ब्रह्मैव विषयः । उक्तयोगं स्वीयं विराड्विष्णुरेव जगौ—"पश्य मे योगमैश्वरं । परं भावमजानन्तो ममाव्ययमनुत्तमम्" इत्यादि । किमर्थोऽयं योगो विराजः ? तुर्यवदप्रतिहतज्ञानक्रियाशक्तितयैव प्रतियुगं भूत्वा भूत्वा स्वसृष्टस्रोतसः स्वाहरन् तत्पञ्चकृत्यप्रवर्तनार्थमेव । आधारशक्तिप्राधान्यमेव विराजः । केवलं सम्राजः क्रियाशक्तिप्रधान्यम् । स्वराजो भगवतो ज्ञानशक्तिप्राधान्यम् । तुर्यस्य श्रीमदादिगुरोर्ब्रह्मणः सर्वातीतत्वेन विराडादित्रिब्रह्ममूर्तिलीलामूर्तित्वेन च तस्य तस्यैव सर्वं तस्य प्रधानम् । 'प्रजापतिरकामयत प्रजास्सृजेयेति' 'स तपोऽतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत' इत्यादिसर्वश्रुत्यैककण्ठो विराजो नित्यतपश्चरणयोगः । अत एव सुमहातपाः ॥ २ ॥

**एष पूर्वाश्रमो राम ! वामनस्य महात्मनः ॥ ३ ॥**
**सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महातपाः ।**

एष इत्यादि । हे राम ! महात्मनो वामनस्य करिष्यमाणवामनावतारस्य विष्णोः एषः पूर्वाश्रमः–वामनावतारात् पूर्वकाले तदुचितमातापित्रादिपरिकरसिद्धिप्रयोजनकयोगार्थं परिगृहीत आश्रमस्तथा ।

तदा विष्णुतपःकाले अयं सिद्धाश्रम इति ख्यातः । हि यस्मात्, महातपाः—विष्णुरत्र तपस्सिद्धः, तस्मादेव [1] तदाख्या ॥ ३ ॥

**एतस्मिन्नेव काले तु राजा वैरोचनिर्बलिः ॥ ४ ॥**
**निर्जित्य दैवतगणान् सेन्द्रांश्च समरुद्गणान् ।**
**[2] कारयामास तद्राज्यं त्रिषु लोकेषु विश्रुतः ॥ ५ ॥**

एतस्मिन्नेव काले--विष्णोर्विराजस्तपश्चरणकाल एव तद्राज्यं कारयामास, स्वार्थे णिः, इन्द्रादिदेवराज्यं स्वयमेवाभुङ्क्तेति यावत् ॥५॥

**बलेस्तु यजमानस्य देवाः साग्निपुरोगमाः ।**
**समागम्य स्वयं चैव विष्णुमूचुरिहाश्रमे ॥ ६ ॥**

बलेरित्यादि । भावलक्षणे षष्ठी, बलौ यजमाने यागं कुर्वाणे सति, पुरोगमेनाग्निना सहिताः साग्निपुरोगमाः देवाः, अग्निमुखत्वादेव देवानां तत्पुरोगमत्वम्, इहाश्रमे तपश्चरन्तं विष्णुं स्वयमेव समागत्योचुः ॥ ६ ॥

**बलिर्वैरोचनिर्विष्णो ! यजते यज्ञमुत्तमम् ।**
**असमाप्ते क्रतौ तस्मिन् स्वकार्यमभिपद्यताम् ॥ ७ ॥**

किमूचुरित्यतः—बलिरित्यादि । यजत इति । कर्त्रभिप्रायत्वादात्मनेपदम् । ननु कथं असुरस्य यागः? काऽनुपपत्तिः? उच्यते—'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेत् वषट्करिष्यन् साक्षादेव तद्देवतां प्रीणाति' इति श्रुतेस्तत्तद्देवताध्यानपूर्वं तत्तन्मन्त्रेण तत्तदुद्देशेन

---

[1] तथाऽऽख्या—ग. [2] एतदनन्तरम्—'यज्ञं चकार मतिमानसुरेन्द्रो महाबलिः' इत्यधिकं—ङ.

तद्धविःप्रदानं याग इत्यविवादः । एवं च सर्वदेवताऽरातिरसुरः किंदेवताप्रीतये कां देवतां किं फलमुद्दिश्य यजतेति । तर्हि चतुर्थ्यन्तश्शब्द एव देवता । यज्ञार्थश्च शब्दोऽनादिश्रुतिरूपः । तत्प्राप्तिश्चादितिसुतानामिव दितिसुतानामपि स्वपितुर्ब्रह्मणः सुलभा । अतो यागप्रवृत्तिरिति । सत्यम् ; अथापि शब्दमात्रात्मिका देवतेति न युज्यते । 'साक्षादेव तद्देवतां प्रीणाति' इति श्रुतेः । अचेतनशब्दस्य प्रीत्याद्ययोगात् । ततो यजमानस्य स्वर्गादिसिद्ध्ययोगाच्च । अत एव क्रियया फलायोगः विततश्चान्यत्र । अतश्शब्दातिरिक्ता शब्दवाच्या सचेतना वज्रादितत्तच्चिह्नोपेतविग्रहवती देवतेत्यास्थेयम् । न च विग्रहवत्त्वे युगपदनेकयागासान्निधानप्रसङ्ग इति ; दिव्यैश्वर्यशक्तिमत्त्वेन सकृदेवानेकमूर्त्या सर्वयागसान्निध्ये वषट्कारात् । यद्येवं [1]स्थितैवासुरयागानुपपत्तिः ॥

अत्रोच्यते-तावद्यागप्रवृत्तिमूलकारणश्रुतिलाभस्तु सुरासुराविशेषेण स्वपितुः, अविशिष्टशुक्रबृहस्पत्यादिस्वपुरोहितेभ्यो वा । तथा सर्वैरपि श्रौतैर्यज्ञैर्यजनीया देवता तत्प्रीता तत्फलदा अत्र चाविशिष्टा । कथं ? सामान्या यज्ञदेवताः 'अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्चैते देवास्सोमपाः, एकादश प्रयाजा एकादशानूयाजा एकादशोपयाजा एते सोमपाः पशुभाजनास्सोमेन सोमपान् प्रीणाति पशुनाऽसोमपान्, उभये हास्यैता देवताः प्रीता अभीष्टा भवन्ति' इति श्रुतेः सोमपासोमपद्विप्रभेदाः । तत्रासोमपा उपाङ्गदेवताः यस्य सोमपा अङ्गदेवताः, प्रधानदेवता मन्त्रमयो भगवान् प्रजापतिः वषट्कारो दानक्रियात्मा च । स एव कथं ? 'प्रजापतिर्वा एष पितायते यद्यज्ञः' इति, 'एष वै प्रजापतिं सर्वं करोति, योऽश्वमेधेन यजते' इत्यादेः क्रियात्मता भगवतः प्रजापतेः, तथा व्याहृतिजयादिदशहोतृच्छन्दोवीर्यसप्तदशाक्षरीसावित्रीत्रयीमुखसर्वयज्ञमन्त्रात्मता च ।

[1] स्थिरैव—ग.

स एव कथम्?—'प्रजापतिर्वा अयमकारः पवमाननित्याश्रितजलप्राधान्यात्। स एव भूप्राधान्येन वेदिसदस्सर्वसान्नाय्यपुरुषाश्वांतसर्वयज्ञसमारम्भात्मना विष्णुशब्दश्च। तत्र जलभूमयस्यापि विराजो ब्रह्मणस्तु जलमूर्तेरेव प्राधान्यम्। विनाऽपि भुवं वायौ जलं तिष्ठति, न विना जलं भूस्तिष्ठति। अपि च जलकृतसंश्लेषा महाचलधृता जलानुग्रहप्रवृत्तसर्वस्रोतस्सस्यादिपोषवती च। अतः प्रधानदेवता भगवान् प्रजापतिः। तेन भगवता स्वमनःप्राणदेहप्राधान्यसृष्टा वस्वादयः स्वावयवभूता इत्यङ्गदेवतात्वम्; प्रयाजादीनां सोमासम्बन्धादुपाङ्गत्वं भगवतः। तत्र वसुसमष्टिर्वासव इन्द्रः। 'रुद्रो वा एष यदग्निः' इत्यादेः रुद्रसमष्टिरग्निः। एताविन्द्राग्नी च समष्ट्या भगवत्सृष्टौ भगवदङ्गेष्वप्रधानाङ्गभूतौ। एतेन यज्ञदेवताश्च सर्वयज्ञयजमानसाधारणाः। कथं? 'पुरुषे त्वे वाविस्तारामात्मा' 'तदात्मानं स्वयमकुरुत' इत्यादेः। तेजोंऽशप्राधान्येन देवासुरसर्वयजमानोपादानत्वात् भगवान् यज्ञः प्रजापतिः तद्यजमानः प्रत्यगात्मना प्रतितिष्ठति। तस्मिंस्तथा स्थिते तदवयवदेवाश्च तद्यजमानावयवात्मना प्रतितिष्ठन्ति। ते च ते स्वस्वोपादानतः स्वात्मरूपं यज्ञं स्वस्वीययज्ञकर्मणा संस्कृत्य तमेव शाश्वतपरगतिं परलोके प्राप्नुवन्ति। तथा हि श्रुतिः—'यज्ञो वै प्रजापतिः। यज्ञमेव प्रजापतिं संस्करोति। आत्मानमेव तत् संस्करोति। तत्संस्कृतमामात्मानम्। अमुष्मिंल्लोकेऽनु परैति' इति। तथा 'स ईश्वर आर्तिमार्तोः। प्रजापतिस्त्वावैनं तत उन्नेतुमर्हतीत्याहुः। यत्प्राजापत्ययर्चा पुनरेति। प्रजापतिरेवैनं तत उन्नयति। नार्तिमार्च्छति यजमानः' इति। तथा 'प्रजापतिं वा एष ईप्यतीत्याहुः। योऽश्वमेधेन यजते' इत्यादेः। अतस्स्वस्वतत्त्वस्य शाश्वतपरगतेर्भगवतः प्राप्तये इह पूर्णकामा वा देवाः, असुरादयो वा यजन्त इति राजमार्गः॥

यद्येवं बल्यादयः कं देवं द्विषन्ति ? कर्मदेवानित्येव। द्विधा देवाः कर्मदेवाः, आजानजदेवा इति। तत्र ये कर्मणा देवानपि जयन्ति, ते कर्मदेवाः। आजानजा भगवदवयवभूता अनाद्यन्तानित्यसत्यशब्दयज्ञ-मन्त्रार्थभूता यज्ञमन्त्रनित्यसम्बद्धा नित्याश्च, भगवानिव नित्यविचै-श्वर्यानन्दापहतपाप्मत्वाद्यष्टकल्याणगुणाश्च निसर्गतः। त इमे कर्मदेव-प्राप्यगतिरूपाः। 'वसूनां सायुज्यं गच्छति, रुद्राणां सायुज्यं गच्छति' इत्यादेशः। त एते कर्मदेवा विराडादिप्रधानाङ्गपरिचारद्वारा समाजब्रह्म-लोकेषु सामाजिकं लोकमेव कर्मबलेन यान्ति, कर्मक्षये च पुनः पतन्ति। द्वारादिब्रह्मलोकभाजस्तु अंशतो नियतावतारोक्ता तारा न पतन्ति। तिष्ठतु तत्। वक्तव्यः बहुप्रपञ्चः। इह एतान् कर्मदेवान् मनुष्या असुरादयश्च भगवदाश्रयबलेन तत्तत्पदात् प्रच्यावयन्ति। अतस्ते चैषां मानुषा-सुरादिभगवद्यज्ञानां विघ्नं कुर्वन्ति। तथा हि "न चैतदिष्टं देवानां मर्त्यैरुपरिवर्तनं। तस्माद्विघ्नन्ति तद्यज्ञं स्वपदच्युतिभीरवः" इति व्यासादिवचनम्। अतः कर्मदेवैस्स्वारातिबलियज्ञविघ्नाय प्रवृत्तिः। तस्यापि तत्पदप्रच्यावनार्थैव यज्ञप्रवृत्तिरिति सिद्धान्तः॥

स्वकार्यमिति। स्वेषामस्माकं देवानां कार्यं—स्वकार्यम्। अभि-पद्यतामिति। अन्तर्भावितणिः पदिः, अभितः कार्त्स्न्येन सम्पाद्य-तामित्यर्थः॥ ७॥

**ये चैनमभिवर्तन्ते याचितार इतस्ततः।**
**यच्च यत्र यथावच्च सर्वं तेभ्यः प्रयच्छति॥ ८॥**

तथासम्पादने स्वयमेवोपायं वदन्ति—ये चेति। अभिवर्तन्ते—अभितः आगच्छन्ति—इतस्ततः नानादेशादिति यावत्। ये याचितारः यत्र—गोभूहिरण्यादियाचनीयवस्तुविषये यच्च वस्तु याचन्ते, तत्सर्वं तेभ्यो यथावद्यज्ञसाद्गुण्यायावमानादिराहित्येन सत्कारपूर्वं प्रयच्छतीत्यर्थः॥ ८॥

**स त्वं सुरहितार्थाय मायायोगमुपागतः ।**
**वामनत्वं गतो विष्णो ! कुरु कल्याणमुत्तमम् ॥ ९ ॥**

मायायोगमिति । दिव्यवैभवविष्णुतत्त्वसमाच्छादनेन प्राकृतमर्त्यादिभावप्रकाशिका शक्तिर्माया, तस्या योगः-सम्बन्धः, तमुपागतः, तमवष्टभ्येति यावत् । अवतारासाधारणसाधनभूतेयं शक्तिः । तथा च जगौ—'प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया' इति । वामनत्वं-वामनावतारमिति यावत् ॥ ९ ॥

**एतस्मिन्नन्तरे राम ! काश्यपोऽग्निसमप्रभः ।**
**अदित्या सहितो राम ! दीप्यमान इवौजसा ॥ १० ॥**
**देवीसहायो भगवान् दिव्यं वर्षसहस्रकम् ।**
**व्रतं समाप्य, वरदं तुष्टाव मधुसूदनम् ॥ ११ ॥**

एतस्मिन्नन्तर इति । एवं देवैर्वामनावतारप्रार्थनसमय इत्यर्थः । देवानां सिद्धसङ्कल्पत्वात् सङ्कल्पादेवावतारपरिकरसिद्धिरिति प्रदर्श्यते—काश्यप इत्यादि । स्वतः अग्निसमप्रभः, अदित्या सर्वधर्मसाधनशक्तिरूपया सहितः । अत एव ओजसा—अर्चिषा दीप्यमानाग्निरिव काश्यपप्रजापतिः देवीसहायः—स्वधर्मपत्न्यदितिसहितो भूत्वा दिव्यं वर्षसहस्रं विष्णुपुत्रप्राप्त्युद्देशेन व्रतं कृत्वा, तदन्ते व्रतं समाप्य, तदन्ते कृतसन्निधानं वरदं—वरदानोन्मुखं मधुसूदनं तुष्टाव ॥ ११ ॥

**तपोमयं तपोराशिं तपोमूर्तिं तपात्मकम् ।**
**तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् ॥ १२ ॥**

स्तोत्रस्यैव प्रकारः—तपोमयमित्यादि । तपोमयं-तपःप्रचुरम्, 'तत्प्रकृतवचने मयट्' इति मयट्, प्रकृतं—प्रस्तुतं—प्रचुरमिति यावत् । अत एव तपोराशिं-बहुतपस्समष्टयधिकरणम् । अत एव-तपोमूर्तिं-

तपएकारब्धदिव्यलीलाविग्रहम् । अत एव-तपात्मकम्, छान्दसमकारान्तत्त्वम्, यद्वा 'घञर्थे कविधानम्' इति वा, तपनं-तपः, तपेन कृच्छ्रादिलक्षणेन स्वाश्रितेन संस्कृत आत्मा-स्वान्तःकरणं-प्रत्यगात्मा यस्य स तथा, मध्यमपदलोपी समासः । एवं सिद्धाश्रमाचिरानुष्ठित-तपोमयं त्वाम्, अत्रैव सुतप्तेन तपसा-एतद्बलेन पश्यामि ॥ १२ ॥

**शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो !**
**त्वमनादिरनिर्देश्यः त्वामहं शरणं गतः ॥ १३ ॥**

शरीर इति । वैराजतावकभूमविग्रह इति यावत् । जगत्-त्रिस्रोतोमात्रम् । अनिर्देश्यं-एतावत्त्वेनाशक्यपरिच्छेदाविद्यैश्वर्यादिवैभवम् । शरणं-रक्षितारम् ॥ १३ ॥

**तमुवाच हरिः प्रीतः कश्यपं धूतकल्मषम् ।**
**[1]वरं वरय भद्रं ते वरार्होऽसि मतो मम ॥ १४ ॥**

प्रीतः-सुप्रीतः कश्यपमुवाच । किमिति - वरमित्यादि । वरं-अभीष्टं वरय, 'तत्करोति' इति णिच् । भद्रमस्तु । दिव्यवर्षसहस्रतपसः त्वं वरार्हः-वरदानार्ह इति मम मतोऽसि ॥ १४ ॥

**तच्छ्रुत्वा वचनं तस्य मारीचः काश्यपोऽब्रवीत् ।**
**अदित्या देवतानां च मम चैवानुयाचतः ॥ १५ ॥**
**वरं वरद ! सुप्रीतो दातुमर्हसि सुव्रत !**

मरीचेः पुत्रो मारीचः । अदित्या इत्यादौ याचमानाया इत्यासूह्यम् । देवतानां च याचमानानामिति-प्रागुक्तरीत्येति शेषः ॥ १५ ॥

---

[1] एतदनन्तरं-किमिच्छसि वरं श्रेष्ठं वरदोऽसि महाद्युते । इत्यधिकं क्वचित्-ङ.

**पुत्रत्वं गच्छ भगवन्! अदित्या मम चानघ! ॥ १६ ॥**
**भ्राता भव यवीयांस्त्वं शक्रस्यासुरसूदन!**
**शोकार्तानां तु देवानां साहाय्यं कर्तुमर्हसि ॥ १७ ॥**

किं तद्युष्मद्याचकीयं वरमित्यतः—पुत्रत्वमित्यादि। यवीयान्। 'स्थूलदूर' इत्यादिना यणादिपरलोपगुणौ, कनिष्ठ इति यावत् ॥ १७ ॥

**अयं सिद्धाश्रमो नाम प्रसादात् ते भविष्यति।**
**सिद्धे कर्मणि देवेश! उत्तिष्ठ भगवन्नितः ॥ १८ ॥**

अयमिति। यत्राश्रमे तपोमयस्त्वं मया देवैश्चानुभूयसे—अयमित्यर्थः। हे भगवन् देवेश! एतदाश्रमस्थितिसाध्ये तपःकर्मणि सिद्धे सति इह प्रयोजनाभावात् इत उत्तिष्ठ देवकार्याय ॥ १८ ॥

**अथ विष्णुर्महातेजा अदित्यां समजायत।**
**[1]वामनं रूपमास्थाय वैरोचनिमुपागमत् ॥ १९ ॥**

अथ—एवं देवकार्यनियोगानन्तरं ॥ १९ ॥

---

[1] एतदनन्तरं एवमधिकपाठः कुत्रचित्—ङ.

छत्री भिक्षुकरूपेण कमण्डलुशिखोज्वलः। तं दृष्ट्वाऽसुरराजेन्द्रो वामनत्वाच्च विस्मितः।
माधवोऽयमिति ज्ञात्वा पूजयामास धर्मतः। पूजितस्तेन धर्मात्मा सर्वलोकहिताय वै ॥
आसाद्य यजमानं तमुवाच भगवान् हरिः। स्वस्ति तेऽस्तु महाराज यशश्चातीवशोभनः ॥
वयं दानार्थिनो राजन्! श्रुत्वा यज्ञमनुत्तमम्। त्वां दृष्ट्वा तव यागेषु किंचिल्लब्धुमिहागताः ॥
वामनेनैवमुक्तस्तु मुदा राजा तदाऽब्रवीत्। अद्य मे सफलो यज्ञः कृतार्थोऽस्म्यद्य वामन ॥
त्वदर्थं कल्पितं चैव मम सर्वस्वमेव च। धनौघं रत्नराशिं वा भूषणं धान्यसञ्चयम् ॥
ग्रामं वा नगरं वापि राष्ट्रं वा यानमेव वा। हस्त्यश्वरथपत्तीर्वा त्वं लभस्वान्यमेव वा ॥
किमिच्छसि महाबाहो तद्ददामि तवानघ ॥ एवमुक्तस्तदा राज्ञा भगवान् पुरुषोत्तमः।
उवाचेषत्स्मितं कृत्वा यजमानं महाबलिम्—ङ ॥

त्रीन् क्रमानथ भिक्षित्वा प्रतिगृह्य च [1] मानदः।
आक्रम्य लोकान् लोकात्मा सर्वलोकहिते रतः ॥ २० ॥

क्रमः—पदविक्षेपः। *मानद इति। देवानां पूजाप्रदः॥ २० ॥

महेन्द्राय पुनः प्रादात् नियम्य बलिमोजसा।
त्रैलोक्यं स महातेजाः चक्रे शक्रवशं पुनः ॥ २१ ॥

नियम्य—बध्वा ॥ २१ ॥

तेनैष पूर्वमाक्रान्त आश्रमः श्रमनाशनः।
मया तु भक्त्या तस्यैष वामनस्योपभुज्यते ॥ २२ ॥

तेन—वामनेन। पूर्वमिति। वामनावतारात् पूर्वमित्यर्थः। भक्त्या—वामनावतारवति विष्णौ भक्त्या, तस्य—वामनस्य, एष आश्रमः मयाऽप्यद्य उपभुज्यते। मयेत्यस्मच्छब्दो विश्वामित्रार्थः॥ २२ ॥

एतमाश्रममायान्ति राक्षसा विघ्नकारिणः।
अत्रैव पुरुषव्याघ्र! हन्तव्या दुष्टचारिणः ॥ २३ ॥

अथपूर्वसर्गान्तकृतद्वितीयप्रश्नस्योत्तरम्—एतमाश्रमामित्यादि॥ २३॥

---

*मानं द्यति—खण्डयतीति मानदः; निरभिमानो भिक्षित्वेत्यर्थ.—**गो.** [1] मेदिनीम्—**ज.**

[इदं पाठान्तरं पूर्वपुटगतपाठान्तरशेषभूतम्]

एतैः किं मम राजेन्द्र तैस्तु नास्ति प्रयोजनम्। अस्मत्पादत्रयाक्रान्तां देहि भूमिं विभो तदा॥
श्रुत्वा तद्वामनेनोक्तं स्मितं कृत्वाऽसुरोत्तमः। येनेष्टं पूज्यते ब्रह्मैस्तत्कुर्मेति ततोऽब्रवीत्॥
वामनाय महीं दातुं निश्चितेऽसुरसत्तमे। तं निवार्य महाराजं प्राह शुक्रो द्विजोत्तमः॥
विरिञ्चभवशक्राद्या योगिनश्च सुरासुराः। यं न जानन्ति वेदाश्च स एषो विष्णुरव्ययः॥
दानारक्ते ततश्शुक्रे शुक्रं राज रोहितम्। गृहीत्वा ताडयामास वैनतेयो महाबलः॥
पत्न्या सह विनिश्चित्य यजमानो महाबलिः। मायारूपेण देवेशो मम यज्ञं गतो यदि॥
तदैतद्यज्ञसाफल्यमेवमस्त्विति चाब्रवीत्। इति मत्वोदकं दत्तं वामनाय महात्मने॥
तव पादत्रयाक्रान्तां गृहाणाद्य महीं प्रभो। उदके स्पृष्टमात्रे तु विश्वरुपधरो हरिः॥
तत्रस्थ एव ववृधे येन पूर्णं जगत्त्रयम्। सायुधैर्बाहुभिः पूर्णा दिग्विदिक्सर्वमेव हि॥

अद्य गच्छामहे राम ! सिद्धाश्रममनुत्तमम् ।
[1]तदाश्रमपदं तात ! तवाप्येतद्यथा मम ॥ २४ ॥

अनुत्तमं—सर्वोत्तमम् । तातेति उपलालने । हेतौ तत् । एतत् आश्रमपदं यथा मम तथा तवापि सर्वसिद्धिसाधकं सुखावहं च, इति शेषः ॥ २४ ॥

प्रविशन्नाश्रमपदं व्यरोचत महामुनिः ।
शशीव गतनीहारः पुनर्वसुसमन्वितः ॥ २५ ॥
तं दृष्ट्वा मुनयस्सर्वे सिद्धाश्रमनिवासिनः ।
उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् ॥ २६ ॥

उत्पत्योत्पत्येति । सन्तोषातिशयादिति शेषः ॥ २५–२६ ॥

यथार्हं चक्रिरे पूजां विश्वामित्राय धीमते ।
तथैव राजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ॥ २७ ॥
मुहूर्तमिव विश्रान्तौ राजपुत्रावरिन्दमौ ।
प्राञ्जली मुनिशार्दूलमूचतू रघुनन्दनौ ॥ २८ ॥
अद्यैव दीक्षां प्रविश, भद्रं ते, मुनिपुङ्गव !
सिद्धाश्रमोऽयं सिद्धः स्यात् सत्यमस्तु वचस्तव ॥ २९ ॥

अद्यैवेति । प्रवेशदिन एवेति यावत् । दीक्षां प्रविश—परिगृहाण । अद्यैवेति वचनं कालविलम्बकस्याप्रयोजकत्वात् तद्दिनस्य पञ्चाङ्गशुद्ध्यादिबहुगुणयुक्तत्वाच्चेत्याशयेन । अयं सिद्धाश्रमश्च सिद्धस्स्यात्—त्वद्यज्ञसिद्ध्या अन्वर्थसिद्धसंज्ञो भूयात् । 'अत्रैव पुरुषव्याघ्र ! हन्तव्या दुष्टचारिणः' इति याऽभूत् तव वचः, तदपि सत्यमस्तु । राक्षसांश्चात्र हनिष्ये । अतः ते भद्रमस्तु इति योजना ॥ २९ ॥

---

[1] एतदनन्तरं—इत्युक्त्वा परमप्रीतो गृह्य रामं सलक्ष्मणम् । इत्यधिकं क्वचित्—ङ.

एवमुक्तो महातेजा विश्वामित्रो महामुनिः ।
प्रविवेश ततो दीक्षां नियतो नियतेन्द्रियः ॥ ३० ॥

नियतः–निगृहीतान्तःकरणः ॥ ३० ॥

कुमारावपि तां रात्रिमुषित्वा सुसमाहितौ ।
प्रभातकाले चोत्थाय पूर्वां सन्ध्यामुपास्य च ॥ ३१ ॥
स्पृष्टोदकौ शुची जप्यं समाप्य नियमेन च ।
हुताग्निहोत्रमासीनं विश्वामित्रमवन्दताम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकोनत्रिंशः सर्गः

---

कुमाराविति । अभूतोपमेत्युक्तम् । नियमेन जप्यं समाप्य, अग्निहोत्र—अग्नेर्होत्रं -होमं–औपासनं होमं कृत्वा यज्ञशालायां आसीनं विश्वामित्रमवन्दताम् । एवमग्निहोत्रपदस्य व्याख्यानं 'दीक्षा-मध्ये नाग्निहोत्रं, न दर्शपूर्णमासाभ्यां यजते' इत्याग्निहोत्रहोमस्य निषे-धात् । प्रविवेश–तदा दीक्षाप्रवेशस्य प्रागेवोक्तत्वाच्च । राग (३२) मानः सर्गः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकोनत्रिंशः सर्गः

---

अथ त्रिंशः सर्गः

[यज्ञसंरक्षणम्]

अथ तौ देशकालज्ञौ राजपुत्रावरिन्दमौ ।
देशे काले च वाक्यज्ञावब्रूतां कौशिकं वचः ॥ १ ॥

अथ प्रक्रान्तदीक्षापारगमनोपदेशः—अथ तावित्यादि । कौशिकं वचोऽब्रूतामिति । दीक्षायां मौनापरिज्ञानादेवं प्रश्नः ॥ १ ॥

**भगवन्! श्रोतुमिच्छावो यस्मिन् काले निशाचरौ।**
**संरक्षणीयौ तौ ब्रह्मन्! नातिवर्तेत तत्क्षणम्॥ २॥**

यस्मिन्काले प्राप्ते तौ निशाचरौ आवाभ्यां संरक्षणीयौ—यज्ञसंरक्षणाय निवारणीयौ। गहादेराकृतिगणत्वात् 'शेषे' इति लक्षणत्वाच्च उक्तार्थे छः। स कालो यथा चेत् नातिवर्तेत, अतस्तदर्थं, तत्क्षणं—स चासौ क्षणः—तत्क्षणः, तं कालं भगवन् श्रोतुमिच्छावः॥२॥

**एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया।**
**सर्वे ते मुनयः प्रीताः प्रशशंसुर्नृपात्मजौ॥ ३॥**
**अद्यप्रभृति षड्रात्रं रक्षतं राघवौ युवाम्।**
**दीक्षां गतो ह्येष मुनिर्मौनित्वं च गमिष्यति॥ ४॥**

एवं विश्वामित्रे पृष्टे तस्य दीक्षया मौनित्वादृषयः प्रतिब्रुवन्ते—सर्वे त इत्यादि। प्रशशंसुः। प्रशस्य च अद्यप्रभृतीत्यादि गमिष्यतीत्यन्तेन प्रत्युत्तरं चोचुरिति योजना। मौनित्वं च गमिष्यतीति। अद्यापि दीक्षितत्वान्मौनिः, अतः परं षड्रात्रपर्यन्तं च मौनित्वं गमिष्यतत्यिर्थः॥ ४॥

**तौ च तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ।**
**अनिद्रौ षडहोरात्रं तपोवनमरक्षताम्॥ ५॥**
**उपासांचक्रतुर्वीरौ यत्तौ परमधन्विनौ।**
**ररक्षतुर्मुनिवरं विश्वामित्रमरिन्दमौ॥ ६॥**

परमं धनुर्ययोस्तौ—परमधन्विनौ। समासान्तस्तु अनङ्। अनित्यत्वान्न व्रीह्यादित्वादिनिः॥ ६॥

**अथ काले गते तास्मिन् षष्ठेऽहनि समागते।**
**सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः॥ ७॥**

काल इति । पञ्चाहोरात्रलक्षण इत्यर्थः । यत्तः—सज्जः, यती प्रयत्ने, ईदित्वान्निष्ठायां नेट् । अस्मात् ' यजयाच ' इत्यादिना नङि तु यत्न इति । समाहितः—एकाग्रचित्तः ॥ ७ ॥

**रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया ।**
**प्रजज्वाल ततो वेदिः सोपाध्यायपुरोहिता ॥ ८ ॥**

उपाध्यायः–ब्रह्मा । पुरोहितः–उपद्रष्टा । इदमुपलक्षणं ऋत्विगन्तरसाहित्यस्य ॥ ८ ॥

**सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया ।**
***विश्वामित्रेण सहिता वेदिर्जज्वाल सर्त्विजा ॥ ९ ॥**

सदर्भाश्चमसाः स्रुवश्च यस्यां सा तथा । समिद्भिः कुसुमोच्चयैश्च सहिता तथा, विश्वामित्रो यजमानः, तेन मण्डिता–भूषिता ॥

**[1]मन्त्रवच्च यथान्यायं यज्ञोऽसौ संप्रवर्तते ।**
**आकाशे च महान् शब्दः प्रादुरासीद्भयानकः ॥ १० ॥**

यदा संप्रवर्तते स्म तदा आकाश इति योजना ॥ १० ॥

**आवार्य गगनं मेघो यथा प्रावृषि निर्गतः ।**
**तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ॥ ११ ॥**

यथा प्रावृषि निर्गतो मेघो गगनमावार्य—वारयतेः स्वार्थे णेर्ल्यप्, आवृत्याभिधावति, तथा मायां विकुर्वाणौ । मेघः अतिदुर्घोषातिमहाशब्दमहावर्षादिविचित्रकार्यमिव विचित्रप्रवर्तकौ अभ्यधावतामिति योजनार्थः ॥ ११ ॥

---

*एवमेव सर्वत्र दृश्यते । परन्तु–व्याख्यानुसारेण–' जज्वाल सर्त्विजा वेदिः विश्वामित्रेण मण्डिता ' इति स्यात् ॥

[1] एतदनन्तरं ' एवं प्रवर्तिते यज्ञे विश्वामित्रस्य धीमतः ' इत्यधिकं–ङ.

**मारीचश्च सुबाहुश्च तयोरनुचराश्च ये।**
**आगम्य भीमसङ्काशा रुधिरौघमवासृजन् ॥ १२ ॥**

कौ तौ? किं तद्विचित्रकार्यमित्यतः—मारीच इत्यादि ॥१२॥

[1] **सा तेन रुधिरौघेण वेदिर्जज्वाल मण्डिता।**
**सहसाऽभिद्रुतो रामः तानपश्यत् ततो दिवि ॥ १३ ॥**

रुधिरौघेण मण्डितेति। अभ्याश इति शेषः।अभिद्रुतः—अभितश्शालां प्रधावन् तत्रादृष्ट्वा ततो दिवि तानपश्यत् ॥ १३ ॥

[2] **तावापतन्तौ सहसा दृष्ट्वा राजीवलोचनः।**
**लक्ष्मणं त्वनु संप्रेक्ष्य रामो वचनमब्रवीत् ॥ १४ ॥**
**पश्य लक्ष्मण! दुर्वृत्तान् राक्षसान् पिशिताशनान्।**
[3]**मानवास्त्रसमाधूताननिलेन यथा घनान् ॥ १५ ॥**

अनु—पश्चात्। मानवास्त्रसमाधूतान् करोमि, पश्ये, इति योजना ॥ १५ ॥

---

[1] एतदनन्तरं—दृष्ट्वा वेदिं तथाभूतां सानुजः क्रोधसंयुतः। इदमधिकं—ङ.

[2] एतदनन्तरं—असम्भ्रान्तस्त्वरन् किञ्चित् सज्यं कृत्वा महद्धनुः। इत्यधिकं—ङ.

[3] एतदनन्तरं—करिष्यामि न सन्देहो नोत्सहे हन्तुमीदृशान्। इत्युक्त्वा वचनं रामश्चापे सन्धाय वीर्यवान् ॥ एवं वदन्तं तं दृष्ट्वा धनुःप्रवरपाणिनम्। बालोऽयमिति विज्ञाय तमनादृत्य दुर्मती ॥ विश्वामित्रस्य तां वेदिं सत्वरावभ्यधावताम् ॥ तानुदीक्ष्य त्वरन् रामः चापमायम्य वीर्यवान्। इत्यधिकं कुत्रचित्—ङ. एतच्छ्लोकत्रयस्थाने कुत्रचित् एव दृश्यते. एवं ब्रुवाणं मारीचो बालकं हेममालिनम्। तस्यानुजं च हेमाभं शूरं तूच्छ्रितधन्विनम् ॥ राघवौ श्यामहेमाभौ तावपश्यत्तदा दिवि। दृष्ट्वा तेजस्विनौ तौ च अवधूतश्च तेजसा ॥ अवज्ञाय स तौ विप्रान् प्रधर्षयितुमारभत्। तमापतन्तं रामस्तु प्रहसन् लीलया युतः—ङ.

**मानवं परमोदारमस्त्रं परमभास्वरम् ।**
**चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ १६ ॥**

उदारः—श्रेष्ठः ॥ १६ ॥

**स तेन परमास्त्रेण मानवेन समाहतः ।**
**सम्पूर्णं योजनशतं क्षिप्तः सागरसम्प्लवे ॥ १७ ॥**

सम्पूर्णं योजनशतं—तावद्दूरं यथा क्षेपो भवति तथा क्षिप्तः अभूत् । सागरसम्प्लवे—समुद्रोदके ॥ १७ ॥

**विचेतनं विघूर्णन्तं शीतेषुबलताडितम् ।**
**निरस्तं दृश्य मारीचं रामो लक्ष्मणमब्रवीत् ॥ १८ ॥**

शीतेषुरिति मानवास्त्रनाम । दृश्य—दृष्ट्वेति यावत्—इत्यादिरुक्तगतिकः प्रागेव ॥ १८ ॥

**[1] पश्य लक्ष्मण शीतेषुं मानवं धर्मसंहितम् ।**
**मोहयित्वा नयत्येनं न च प्राणैर्व्ययुज्यत ॥ १९ ॥**

धर्मेण संहितः—प्रयुक्तस्तथा । व्ययुज्यतेति । श्यन् ; न वियोजयतीति यावत् । एवमस्त्रवैभवं पश्येति प्रदर्शनम् ॥ १९ ॥

**इमानपि वधिष्यामि निर्घृणान् दुष्टचारिणः ।**
**राक्षसान् पापकर्मस्थान् यज्ञघ्नान् रुधिराशनान् ॥ २० ॥**

यज्ञघ्नान् । 'अमनुष्यकर्तृके च' इति टक् ॥ २० ॥

**[2] इत्युक्त्वा लक्ष्मणं चाशु लाघवं दर्शयन्निव ।**
**संगृह्यास्त्रं ततो रामो दिव्यमाग्नेयमद्भुतम् ।**
**सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ॥ २१ ॥**

---

[1] अयं श्लोकः क्वचित् न दृश्यते—ङ.  [2] अर्धमिदं क्वचिन्नास्ति—ङ.

**शेषान् वायव्यमादाय निजघान महायशाः ।**
**राघवः परमोदारो मुनीनां मुदमावहन् ॥ २२ ॥**

निजघानेति । दूरोत्सारणपूर्वकविनाशनं वायव्यास्त्रफलं, न तूच्चाटनमात्रमिति दर्शितम् ॥ २२ ॥

**स हत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघुनन्दनः ।**
**ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ २३ ॥**
**अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ।**
**निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥ २४ ॥**

निरीतिकाः-निर्बाधाः ॥ २४ ॥

**कृतार्थोऽस्मि महाबाहो! कृतं गुरुवचस्त्वया ।**
**[1]सिद्धाश्रममिदं सत्यं कृतं राम! महायशः! ॥२५॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे त्रिंशः सर्गः

———

सत्यं कृतमिति । अन्वर्थनाम कृतमित्यर्थः । मार्ग(२५)मानः सर्गः ॥ २५॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकण्डे त्रिंशः सर्गः

———

## अथ एकत्रिंशः सर्गः
[मिथिलाप्रस्थानम्]

**अथ तां रजनीं तत्र कृतार्थौ रामलक्ष्मणौ ।**
**ऊषतुर्मुदितौ वीरौ प्रहृष्टेनान्तरात्मना ॥ १ ॥**

एवं स्वयज्ञविघ्ननिवृत्तिनान्तरप्रयोजनं सर्वास्त्रशक्तिसम्बन्धानुग्रहं कृत्वा भगवान् विश्वामित्रस्ततस्सहजलक्ष्मीशक्तिसम्बन्धानुग्रहाय प्रवर्तते—अथ तामित्यादि । तत्रेति । यज्ञशालायामित्यर्थः ॥ १ ॥

---

[2]एतदनन्तरं 'स हि रामं प्रशस्यैवं ताभ्यां सन्ध्यामुपागमत्' इत्यधिकं-ङ.

**प्रभातायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियौ ।**
**विश्वामित्रं मुनींश्चान्यान् सहितावभिजग्मतुः ॥ २ ॥**

कृता पौर्वाह्णिकी क्रिया याभ्यां तौ तथा । 'पुंवत्कर्मधारय' इति पुंवद्भावः । सहितौ—युगपत्समवेतौ ॥ २ ॥

**अभिवाद्य मुनिश्रेष्ठं ज्वलन्तमिव पावकम् ।**
**ऊचतुर्मधुरोदारं वाक्यं मधुरभाषिणौ ॥ ३ ॥**

मुनिश्रेष्ठं—विश्वामित्रम् ॥ ३ ॥

**इमौ स्म मुनिशार्दूल किङ्करौ समुपागतौ ।**
**आज्ञापय यथेष्टं वै शासनं करवाम किम् ॥ ४ ॥**

स्मेत्यव्ययम्, समुपागतौ स्म—आगतावभूव ॥ ४ ॥

**एवमुक्तस्ततस्ताभ्यां सर्व एव महर्षयः ।**
**विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ ५ ॥**

एवं विश्वामित्रनियोगप्रार्थनायां विश्वामित्रेण कृता या रामविसर्जनशङ्का तद्व्यावृत्तये रामाभ्युदयसंपिपादयिषवः ऋषय एव रामं कृत्यविशेषे नियुञ्जत इत्युच्यते—एवमुक्त इत्यादि । विश्वामित्रं पुरस्कृत्येति । कृतविश्वामित्रानुमतिका इति यावत् ॥ ५ ॥

**मैथिलस्य नरश्रेष्ठ ! जनकस्य भविष्यति ।**
**यज्ञः परमधार्मिष्ठस्तस्य यास्यामहे वयम् ॥ ६ ॥**

मिथिलाया ईश्वरो मैथिलः, 'तस्येश्वरः' इत्यण् । अतिशयेन धर्मवान्—धर्मिष्ठः, इष्ठनि, 'विन्मतोर्लुक्' इति मतुपो लुक् । वयमिति । सविश्वामित्रा इत्यर्थः ॥ ६ ॥

**त्वं चैव नरशार्दूल! सहास्माभिर्गमिष्यसि ।**
**अद्भुतं च धनूरत्नं तत्र तद्द्रष्टुमर्हसि ॥ ७ ॥**

यदा अस्माभिस्सह गमिष्यसि तदा अद्भुतमिति योज्यम् । धनूरत्नमिति । धनेरौणादिक उस्प्रत्ययः, धनुश्च तद्रत्नं तथा ॥ ७ ॥

**तद्धि पूर्वं नरश्रेष्ठ! दत्तं सदसि दैवतैः ।**
**अप्रमेयबलं घोरं मखे परमभास्वरम् ॥ ८ ॥**

तद्धि धनूरत्नं माहेश्वरम्, पूर्वं—पूर्वस्मिन् काले, देवान् यजतः सीरध्वजाख्यस्य प्राचीनजनकस्य यज्ञसदसि दैवैस्तन्नगर एव सन्तानपरम्परयाऽवस्थानार्थं दत्तं ; अतस्तत्र तिष्ठतीति शेषः । अप्रमेयबलत्वादि विशेषणं तत् मखे जनकीये द्रक्ष्यसीत्यनुकर्षः ॥ ८ ॥

**नास्य देवा न गन्धर्वा नासुरा न च राक्षसाः ।**
**कर्तुमारोपणं शक्ता न कथञ्चन मानुषाः ॥ ९ ॥**

पूर्वमद्भुतमित्युक्तं, कीदृशं तदित्यपेक्षायामुच्यते—नास्येत्यादि । आरोपणमिति । ज्यारोपणमिति यावत् ॥ ९ ॥

**धनुषस्तस्य वीर्यं तु जिज्ञासन्तो महीक्षितः ।**
**न शेकुरारोपयितुं राजपुत्रा महाबलाः ॥ १० ॥**

जिज्ञासन्त इति । जिज्ञासमाना इति यावत् । राजवेश्मन्यर्चितमिति योजना (?) ॥ १० ॥

**तद्धनुर्नरशार्दूल! मैथिलस्य महात्मनः ।**
**तत्र द्रक्ष्यसि काकुत्स्थ! यज्ञं चाद्भुतदर्शनम् ॥ ११ ॥**

तत्र द्रक्ष्यसीति । मिथिलायां राजवेश्मनीत्यर्थः ॥ ११ ॥

**तद्धि यज्ञफलं तेन मैथिलेनोत्तमं धनुः।**
**याचितं नरशार्दूल! सुनाभं सर्वदैवतैः॥ १२॥**

कुतस्तादृशस्य धनुषः तत्र स्थितिरित्यतः—तद्धीत्यादि। उत्तमं धनुः मैथिलेन निजयज्ञप्रीतदेवेभ्यो निजवेश्मनि नित्यस्थिति याचितम्, सर्वदैवतैश्च तथा दत्तस्थितिकं, तस्य यज्ञफलतया तत्र प्राप्तस्थितिकमित्यर्थः। सुनाभं—शोभना नाभी—मुष्टिबन्धस्थानं यस्य तत् तथा। 'अच्प्रत्यन्वव' इत्यत्र अचीति योगविभागादच्॥ १२॥

*[*]* **आयागभूतं नृपतेस्तस्य वेश्मनि राघव!**
**अर्चितं विविधैर्गन्धैर्माल्यैश्चागरुगन्धिभिः॥ १३॥**

तद्धनुरतस्तस्य नृपतेर्वेश्मनि आयागभूतं—यज्यत इति यागः, कर्माणि घञ्, यजनीयदेवतेति यावत्, तद्भावं प्राप्तं तथा। अत एव —अर्चितमित्यादि॥ १३॥

[†] **एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा।**
**सर्षिसङ्घः सकाकुत्स्थः आमन्त्र्य वनदेवताः॥ १४॥**

एवमुक्त्वेति। स्वशिष्यमहर्षिसङ्घद्वारेणेति यावत्। मुनिवरः— विश्वामित्रः। वनाधिष्ठात्र्यो देवताः—वनदेवताः॥ १४॥

**स्वस्ति वोऽस्तु गमिष्यामि सिद्धस्सिद्धाश्रमादहम्।**
[1] **उत्तरे जाह्नवीकूले हिमवन्तं शिलोच्चयम्॥ १५॥**

सिद्धः—सिद्धयज्ञोऽहम्। क्व गमिष्यसीत्यपेक्षायां—उत्तरमित्यादि। उत्तरे जाह्नवीकूले वर्तमानं हिमवन्तं शिलोच्चयं गमिष्यामीत्यनुकर्षः॥ १५॥

---

* उत्सवे प्राधान्येनार्चितं धनुः आयाग इत्युच्यते—**गो,** † **पूर्वं** विश्वामित्रं पुरस्कृत्येत्यभिधानात्। विश्वामित्रस्यापि वचनेऽन्वयो वर्तत इत्यभिप्रायेणैवमुक्तम्॥

[1] एतदनन्तरं—इत्युक्त्वा मुनिशार्दूलः कौशिकस्स तपोधनः—इदमधिकं-**ङ.**

प्रदक्षिणं ततः कृत्वा सिद्धाश्रममनुत्तमम् ।
उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ १६ ॥
तं प्रयान्तं मुनिवरमन्वयादनु[1]सारिणम् ।
शकटीशतमात्रं च प्रायेण ब्रह्मवादिनाम् ॥ १७ ॥

अनुसारिणं—उत्तरदिगनुसृत्य गच्छन्तं, प्रायेण—बाहुल्येन ब्रह्मवादिनां शकटीशतमात्रं—शकट्यारोपिताग्निहोत्रसंभारादिमच्छतप्रमाणं अनुजग्मुरित्यग्रेण सम्बन्धः ॥ १७ ॥

मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः ।
अनुजग्मुर्महात्मानं विश्वामित्रं महामुनिम् ॥ १८ ॥
निवर्तयामास ततः पक्षिसङ्घान् मृगानपि ।

पक्ष्यादीन्निवर्तयामासेत्यनेन ऋषीणामनिवर्तनमुक्तम् ॥ १८ ॥

ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
वासं चक्रुर्मुनिवराः शोणाकूले समागताः ॥ १९ ॥

तदेवोच्यते—गत्वेत्यादि । शोणेति काचिन्नदी । शोणस्तु नदः पुल्लिङ्गः । स एव वा शोणेत्यपि व्यपदिश्यते ॥ १९ ॥

तेऽस्तं गते दिनकरे स्नात्वा हुतहुताशनाः ।
विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः ॥ २० ॥

अस्तं गत इति । अस्तं गमिष्यतीति यावत् ॥ २० ॥

रामोऽपि सहसौमित्रिर्मुनींस्तानभिपूज्य च ।
अग्रतो निषसादाथ विश्वामित्रस्य धीमतः ॥ २१ ॥

---

[1] सारिणाम्—च.

**अथ रामो महातेजा विश्वामित्रं महामुनिम् ।**
**पप्रच्छ नरशार्दूलः कौतूहलसमन्वितः ॥ २२ ॥**

**भगवन्! [1] किं नु देशोऽयं समृद्धवनशोभितः ।**
**श्रोतुमिच्छामि, भद्रं ते, वक्तुमर्हसि तत्त्वतः ॥ २३ ॥**

अयं देश इति ; शोणाकूलप्रदेश इत्यर्थः । किं नु—किंवैभव इत्यर्थः ॥ २३ ॥

**चोदितो रामवाक्येन कथयामास सुव्रतः ।**
**तस्य देशस्य निखिलमृषिमध्ये महातपाः ॥ २४ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकत्रिंशः सर्गः

---

निखिलमिति । वैभवमिति शेषः । खंवा (२४) मानः सर्गः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकत्रिंशः सर्गः

---

## अथ द्वात्रिंशः सर्गः

[कुशनाभकन्योपाख्यानम्]

**ब्रह्मयोनिर्महानासीत् कुशो नाम महातपाः ।**
**अक्लिष्टव्रत[2]धर्मज्ञश्च सज्जनप्रतिपूजकः ॥ १ ॥**

एवं शोणाकूलप्रदेशवैभवप्रश्ने, अयं देशो मद्वंश्यानामिति प्रतिपादनशेषतया निजान्वयः प्रकाश्यते—ब्रह्मयोनिरित्यादि । ब्रह्मयोनिः—

---

[1] कस्य—ङ.　[2] धर्मज्ञः—ज. ङ.

ब्रह्मपुत्रः-प्राजापत्यः, मन्वादिवत् क्षत्रक्षेत्रप्राधान्यात् क्षत्रियत्वम् । 'क्लिशू विबाधने', अक्लिष्टं-निर्बाधं व्रतं धर्मश्च यस्य स तथा ॥ १ ॥

स महात्मा कुलीनायां [1] युक्तायां [2] सुगुणोल्बणान् ।
वैदर्भ्यां जनयामास सदृशांश्चतुरस्सुतान् ॥ २ ॥
कुशाम्बं कुशनाभं च [3] असूर्तरजसं वसुम् ।

युक्तायां-अशेषोत्तमस्त्रीगुणयुक्तायाम् । असूर्तेति । 'प्रतूर्तसूर्त' इति निपातनम् विद्यते, सूर्तं-निस्सृतं रजो यस्य स तथा । 'अच्' इति योगविभागादच् ॥ २ ॥

दीप्तियुक्तान् महोत्साहान् क्षत्रधर्मचिकीर्षया ॥ ३ ॥
तानुवाच कुशः पुत्रान् धर्मिष्ठान् सत्यवादिनः ।
क्रियतां पालनं पुत्राः ! धर्मं प्राप्स्यथ पुष्कलम् ॥ ४ ॥

पालनं-क्षत्रधर्मपरिपालनम् ॥ ३ ॥

ऋषेस्तु वचनं श्रुत्वा चत्वारो लोकसम्मताः ।
निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ ५ ॥
कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत् पुरीम् ।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ६ ॥
असूर्तरजसो राम ! धर्मारण्यं महीपतिः ।
चक्रे पुरवरं राजा वसुश्चक्रे गिरिव्रजम् ॥ ७ ॥
एषा वसुमती राम ! वसोस्तस्य महात्मनः ।
एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ८ ॥

एषेति । गिरिव्रजपर्यायेत्यर्थः । एषा इत्यपरोक्षनिर्देशः ॥

---

[1] जायायां-ङ. [2] सुमहाबलान्-ज. [3] आधूर्तरजसं-अमूर्तरजसं-ज. ङ. अवर्तरजसं-ङ.

**सुमागधी नदी रम्या मगधन् विश्रुताऽऽययौ ।**
**पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ९ ॥**

सुमागाधी–तत्संज्ञा । आययौ इति पदम् ॥ ९ ॥

**सैषा हि मागधी राम ! वसोस्तस्य महात्मनः ।**
**पूर्वाभिचरिता राम ! सुक्षेत्रा सस्यमालिनी ॥ १० ॥**

हे राम एषा मागधी–मगधादागतत्वेन तथासंज्ञा, एषा शोणा एतद्देशश्च मद्वंश्यस्य वसोर्भवति । सा–पूर्वां दिशमभि चरितं–गमनं यस्यास्सा तथा, पूर्ववाहिनीति यावत् । सुक्षेत्रेति उभयपार्श्वयोरिति शेषः ॥ १० ॥

**कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् ।**
**जनयामास धर्मात्मा घृताच्यां रघुनन्दन ! ॥ ११ ॥**

घृताच्यां-अप्सरस्स्त्रियाम् ॥ ११ ॥

**तास्तु यौवनशालिन्यो रूपवत्यः स्वलङ्कृताः ।**
**उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ १२ ॥**
**गायन्त्यो नृत्यमानाश्च वादयन्त्यश्च सर्वशः ।**
**आमोदं परमं जग्मुर्वराभरणभूषिताः ॥ १३ ॥**
**अथ ताश्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि ।**
**उद्यानभूमिमागम्य तारा इव घनान्तरे ॥ १४ ॥**

आमोदं–सन्तोषम् । उद्यानभूमिमागम्य घनान्तरे–मेघमध्ये–तारा:–तारका इव रेजुः ॥ १३–१४ ॥

**ताः सर्वगुणसम्पन्ना रूपयौवनसंयुताः ।**
**दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १५ ॥**

**अहं वः कामये सर्वा भार्या मम भविष्यथ।**
**मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ॥ १६॥**

वायोर्वशीकरणार्थवादः— मानुषस्त्यज्यतामित्यादि। यदा भविष्यथ–तदा मानुष इति योज्यम्॥ १६॥

**चलं हि यौवनं नित्यं मानुषेषु विशेषतः।**
**अक्षयं यौवनं प्राप्ता अमर्यश्च भविष्यथ॥ १७॥**
**तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः।**
**अपहास्य ततो वाक्यं कन्याशतमथाब्रवीत्॥ १८॥**

वायोर्वाक्यमपहास्येति। 'तत्करोति' इति ण्यन्ताल्ल्यप्, अपहासं कृत्वा॥ १८॥

**अन्तश्चरसि भूतानां सर्वेषां त्वं सुरोत्तम!**
**प्रभावज्ञाः स्म ते सर्वाः किमस्मानवमन्यसे॥ १९॥**

सर्वाः वयं ते प्रभावज्ञाः स्म, स्येत्यव्ययमिति प्रागेवोक्तम्। त्वं चास्मत्प्रभावज्ञः–किमस्मानवमन्यसे॥ १९॥

**कुशनाभसुताः सर्वाः समर्थास्त्वां सुरोत्तम!**
**स्थानाच्च्यावयितुं देवं, रक्षामस्तु तपो वयम्॥ २०॥**

को भवतीनां प्रभाव इत्यतः–कुशेत्यादि। यस्माद्राजर्षेः कुशनाभस्य सर्वा वयं सुताः, अतः त्वां देवमपि स्थानात्–वायुपदात् च्यावयितुं समर्था एव। अपि च सर्वा वयं तु तपः–अक्षतयोनित्वरूपकन्याधर्मं रक्षामः॥ २०॥

* मा भूत् स कालो दुर्मेधः! पितरं सत्यवादिनम् ।
नावमन्यस्व, धर्मेण स्वयं वरमुपास्महे ॥ २१ ॥

हे दुर्मेधः! स कालः—मृत्युस्ते मा भूत् । धर्मेण स्वयमिति । पित्रा स्वयं—स्वेच्छया क्रियमाणेन कन्यादानरूपेण यो वर आयाति तं वरमुपास्महे । वर्तमानसामीप्ये लट् ॥ २१ ॥

पिता हि प्रभुरस्माकं दैवतं परमं हि नः ।
यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥ २२ ॥

अयमेवार्थः स्पष्टं व्याख्यायते—पिता हीत्यादि ॥ २२ ॥

तासां तद्वचनं श्रुत्वा वायुः परमकोपनः ।
[1] प्रविश्य सर्वगात्राणि बभञ्ज भगवान् प्रभुः ॥ २३ ॥
ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् ।
प्रापतन् भुवि संभ्रान्ताः सलज्जाः साश्रुलोचनाः ॥ २४ ॥

सलज्जा इति । अन्याय्यपतिप्रसङ्गतस्सलज्जाः ॥ २४ ॥

स च ता दयिता दीनाः कन्याः परमशोभनाः ।
दृष्ट्वा भग्नास्तदा राजा संभ्रान्त इदमब्रवीत् ॥ २५ ॥

संभ्रान्तः—पर्याकुलचित्तः ॥ २५ ॥

---

* यत्र काले पितरमवमन्य–अपमानविषयं कृत्वा स्वधर्मेण कामेन स्वयं वरमुपास्महे, आत्मना स्वातन्त्र्येण वयं वरमंगीकुर्मः, स कालः कदाचिदपि माभूत्–ति.

[1] एतदनंतरं–अरत्निमात्राकृतयो भग्नदर्पा भयार्दिताः । इदमधिकम्–ङ.

**किमिदं कथ्यतां पुत्र्यः! को धर्ममवमन्यते।**
**[1]कुब्जाः केन कृताः सर्वा वेष्टन्त्यो नाभिभाषथ॥ २६॥**

को धर्ममवमन्यत इति। बलात्कारं करोतीति यावत्॥ २६॥

**एवं राजा विनिश्वस्य [2]समाधिमकरोत् ततः॥ २६॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे द्वात्रिंशः सर्गः

---

एवमिति। पृष्ट्वेति शेषः। समाधिमकरोदिति। किं वक्ष्यन्तीति तद्वचनश्रवणैकाग्रचित्तोऽभूदित्यर्थः। इतर(२६ १/२)मानः सर्गः॥ २६॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे द्वात्रिंशः सर्गः

---

अथ त्रयस्त्रिंशः सर्गः

[कुशनाभकन्यापरिणयः]

**तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः।**
**शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत॥ १॥**

अथ पृष्टप्रत्युत्तरतदुचितोत्तरव्यापारः—तस्येत्यादि॥ १॥

**वायुः सर्वात्मको राजन्! प्रधर्षयितुमिच्छति।**
**अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते॥ २॥**

प्रधर्षयितुं—अभिभवितुं। अशुभं—बलात्काररूपं नावेक्षते स्म॥

---

[1] एतदनन्तरं—श्रोतुमिच्छामि तं पुत्र्यो यस्येदं कर्म गर्हितम्॥ इदमधिकम्—ङ.

[2] समाधिं संदधे—इति सर्वत्र पाठः.

पितृमत्यः स्म, भद्रं ते, स्वच्छन्दे न वयं स्थिताः ।
पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ॥ ३ ॥

किञ्च यतः पितृमत्यः स्म वयं, ततो न स्वच्छन्दे—स्वातन्त्र्ये किञ्चित्पतिस्वीकारविषयके स्थिताः—वर्तामहे । यदेवमतः—नः पितरमेव वृणीष्व त्वम् । स यदि नः—अस्मान् तुभ्यं दास्यते तदा तव भविष्यामः। तव भद्रमस्तु ॥ ३ ॥

तेन पापानुबन्धेन वचनं नप्रतीच्छता ।
एवं ब्रुवन्त्यः सर्वाः स्म वायुना निहता भृशम् ॥ ४ ॥

इत्येवंब्रुवन्तीनां नः वचनं नप्रतीच्छता—अनङ्गीकुर्वता पापानुबन्धेन—अधर्मानुबद्धचित्तेन, तत एव धर्मं ब्रुवन्त्यः सर्वाः वयं वायुना भृशं निहताः ॥ ४ ॥

तासां तद्वचनं श्रुत्वा राजा परमधार्मिकः ।
प्रत्युवाच महातेजाः कन्याशतमनुत्तमम् ॥ ५ ॥
*क्षान्तं क्षमावतां पुत्र्यः कर्तव्यं सुमहत् कृतम् ।
ऐकमत्यमुपागम्य कुलं चावेक्षितं मम ॥ ६ ॥
अलङ्कारो हि नारीणां क्षमा तु पुरुषस्य वा ।
दुष्करं तद्धि वः क्षान्तं त्रिदशेषु विशेषतः ॥ ७ ॥

हे पुत्र्यः ! क्षमावतां—क्षमावत्वे प्रसिद्धभूम्यादिभिः कर्तव्यं—कर्तुमर्हं, 'कृत्यानां कर्तरि वा' इति षष्ठी, यत् क्षान्तं—भावे निष्ठा, क्षमा, तत् भवतीभिः कृतं इदं सुमहत् कर्म ; देवे प्रार्थयमाने—कामवेगस्य,

---

*क्षमैव दुष्करा, ततस्त्रिदशेषु दुष्करा, ततोपि सर्वासामविशेषेण क्षमा दुष्करैवेत्यर्थः—गो.

तथा गात्रं भञ्जयति तदुत्थक्रोधवेगस्य च सहनमपि कृतचित्तत्वरूपं दुष्करमित्यर्थः । पूरुषस्य वेति । अविशेषेणेति शेषः । यच्च भवतीनां क्षान्तमभूत् तत् , त्रिदशेषु–त्रिदशविषयेषु विशेषतो दुष्करं–कामस्य रूपगतिभोगविद्यैश्वर्यपतिविषयत्वात्तद्विषयककामवेगोपशमनं दुष्करमित्यर्थः ॥

**यादृशी वः क्षमा पुत्र्यः ! सर्वासामविशेषतः ।**

अथ अलङ्कारो हीत्यादिना प्रागुक्त एवार्थ आदरात्पुनः प्रतिपाद्यते——यादृशीत्यादि । अविशेषत इति । स्त्रीपुरुषाविशेषेणेति यावत् ॥ ८ ॥

**क्षमा दानं क्षमा सत्यं क्षमा यज्ञश्च पुत्रिकाः ! ॥ ८ ॥**
**क्षमा यशः क्षमा धर्मः क्षमया विष्ठितं जगत् ।**

क्षमाप्रशंसा——क्षमा दानमित्यादि ॥ ८ ॥

**विसृज्य कन्याः काकुत्स्थ ! राजा त्रिदशविक्रमः ॥ ९ ॥**
**मन्त्रज्ञो मन्त्रयामास प्रदानं सह मन्त्रिभिः ।**
**देशकालौ प्रदानस्य सदृशे प्रतिपादनम् ॥ १० ॥**

प्रदानं । कन्याप्रदानमिति यावत् । अथ मन्त्रणीयांशः प्रतिपाद्यते——देश इत्यादि । उचिते देशे काले च यथावत्क्रियमाणकन्याप्रदानस्य सदृशे–स्वकुलादिसदृशे पात्रे यत्प्रदानं सिद्ध्यति, तदर्थं मन्त्रयामासेत्यर्थः ॥ १० ॥

**एतस्मिन्नेव काले तु चूली नाम महामुनिः ।**
**ऊर्ध्वरेताः शुभाचारो ब्राह्मं तप उपागमत् ॥ ११ ॥**

ऊर्ध्वरेताः—सर्वोर्ध्वब्रह्मलोकोन्मुखरेतस्त्रयः । ब्राह्मं तप इति । श्रीमत्स्वकुलब्रह्मविद्यया श्रीमदादिगुरुब्रह्मविषयं तपश्चित्तैकाग्र्यं, 'मनसश्चेन्द्रियाणां च ह्येकाग्र्यं परमं तपः' इति स्मृतिः । अत एव ऊर्ध्वरेतस्त्वविशेषणम् । ब्राह्मतपोमात्रे तस्यावश्यकत्वात् ॥ ११ ॥

**तप्यन्तं तमृषिं तत्र गन्धर्वी पर्युपासते ।**
**सोमदा नाम, भद्रं ते, ऊर्मिलातनया तदा ॥ १२ ॥**

तप्यन्तं—दाहार्थेऽपि व्यत्ययात् श्यन् । गन्धर्वीति । जातिवाचित्वात् ङीष् । यदा चूली तपश्चरति, तत्र—काले ऊर्मिलातनया सोमदा नाम गन्धर्वी 'भगवन्! ते मयि भद्रमस्तु—अनुग्रहबुद्धिरस्तु' इति पर्युपासते स्म । एवमादिदुर्योजस्थलं त्यक्त्वैव गच्छति, विद्धकर्णस्य न विकलतेति न्यायेनान्यः ॥ १२ ॥

**सा च तं प्रणता भूत्वा शुश्रूषणपरायणा ।**
**उवास काले धर्मिष्ठा तस्यास्तुष्टोऽभवद्गुरुः ॥ १३ ॥**

उक्तानुवादपूर्वं गन्धर्व्याः कार्यसिद्धिः प्रदर्श्यते—सा चेत्यादि । काले—शुश्रूषाजनितधर्मपरिपाककाले । गुरुरिति । एतेन गुरुशिष्यभावेन दिव्ययोगिनीयोगिनामकल्मषतपःप्रवृत्तिरस्तीति सुस्पष्टं प्रतिपादितम् ॥

**स च तां कालयोगेन प्रोवाच रघुनन्दन !**
**परितुष्टोऽस्मि, भद्रं ते, किं करोमि तव प्रियम् ॥ १४ ॥**

कालयोगेन—तपःपरिपाककालसम्बन्धेन हेतुना तुष्ट इति शेषः । किं प्रियमिति योजना ॥ १४ ॥

**परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुरस्वरा ।**
**उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥ १५ ॥**

**लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः ।**
**ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि धार्मिकम् ॥ १६ ॥**

ब्राह्म्या लक्ष्म्या—श्रीमूलब्रह्मविद्याजनितया लक्ष्म्या, ब्रह्मवर्चसेनेति यावत्, समुदितः अत एव ब्रह्मभूतः—अकृतकभगवदनन्यताब्रह्मयोगसिद्धः, अपि च महातपाः—कृच्छ्रचान्द्रायणादिवायुभक्षतपोयुक्तो यः पुत्रो भवति तादृशं; अपि च विशिष्य ब्राह्मेण—ब्रह्म—स्वाध्यायः तत्सम्बन्धिना तदभ्यासरूपेण सर्वमूलेन 'तपो हि स्वाध्यायः' इति प्रसिद्धेन तपसा युक्तं पुत्रमिच्छामि ॥ १६ ॥

**अपतिश्चास्मि, भद्रं ते, भार्या चास्मि न कस्यचित् ।**
**ब्राह्मेणोपगतायाश्च दातुमर्हसि मे सुतम्! ॥ १७ ॥**

अपि च भगवन्। अहं अपतिश्चास्मि । इतः परमपि न कस्यचित् भार्याऽस्मि । तथाऽपि मे यथा पुत्रप्राप्तिस्तथा ते मयि भद्रं—अनुग्रहोऽस्तु। एवं ब्रह्मयोगिनं त्वां ब्राह्मेणैव योगेन भगवदनन्यतालक्षणेनोपगतायास्तदुचितमेव च सुतं दातुमर्हसि—न हि विराज इव भगवतो हिरण्यगर्भस्य यौनः पुत्रोऽस्ति ॥ १७॥

**तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ पुत्रमनुत्तमम् ।**
**ब्रह्मदत्त इति ख्यातं मानसं चूलिनः सुतम् ॥ १८ ॥**

एवं शुद्धब्रह्मनिष्ठायाः तस्याः प्रसन्नः चूलिनः—फली फलिन इत्यादिवत् चूली चूलिन इति इनजन्तः । अन्यः चूलिक इति पठितव्यमिति निरबध्नात । चूलिनो महर्षिः तथाविधं—यादृग्गुणको वृतः तादृग्गुणकं ब्रह्मयोगवैभवेन ब्रह्मर्षिणा मनसा दत्तत्वात् ब्रह्मदत्त इति ख्यातं मानसं सुतमदात ॥ १८ ॥

**स राजा सौमदेयस्तु [1] पुरीमध्यावसत्तदा ।**
**कांपिल्यां परया लक्ष्म्या देवराजो यथा दिवम् ॥ १९ ॥**

अथ सौमदेयः—'स्त्रीभ्यो ढक्', सोमदायाः पुत्रः स ब्रह्मदत्तः, गन्धर्व्या सोमदायाः क्षत्रियत्वात् क्षेत्रद्वारप्राप्तया परया लक्ष्म्या [2]कांपिल्यां—कांपिल्यादिनिर्वृत्तां 'सङ्काश कांपिल' इति सङ्काशादित्वात् 'वुञ्छण्' इत्यादिसूत्रेण ण्यः, ततष्टाप् । पुरीं तदा कुशनाभेन वरान्वेषणकाले अध्यावसत्—'उपान्वध्याङ्वसः' इति आधारस्य कर्मत्वं—पुर्यामुषितवानिति यावत् ॥ १९ ॥

**स बुद्धिं कृतवान् राजा कुशनाभः सुधार्मिकः ।**
**ब्रह्मदत्ताय काकुत्स्थ ! दातुं कन्याशतं तदा ॥ २० ॥**

किं तत इत्यतः—स इत्यादि । काकुत्स्थेति रामस्य सम्बुद्धिः । तदा—काम्पिल्यायां ब्रह्मदत्तस्यावासकाले ॥ २० ॥

**तमाहूय महातेजा ब्रह्मदत्तं महीपतिः ।**
**ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना ॥ २१ ॥**
**यथाक्रमं ततः पाणीन् जग्राह रघुनन्दन !**
**ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा ॥ २२ ॥**

तासां पाणीन् इत्यन्वयः । देवपतिदृष्टान्तो दिव्यवैभववत्त्वे; न तु पाणिग्रहांशे । देवपतिशब्देन सोमराजविवक्षायां तु पाणिग्रहांशेऽपि दृष्टान्तः ॥ २२ ॥

**स्पृष्टमात्रे ततः पाणौ विकुब्जा विगतज्वराः ।**
**[3]युक्ताः परमया लक्ष्म्या बभुः कन्या शतं तदा ॥ २३ ॥**

---

[1] पुरीमध्यवसत्—ज. ङ.　　[2] क पुस्तके सर्वत्र 'कांबि' इति पाठः ।
[3] 'युक्तं परमया लक्ष्म्या बभौ कन्याशतं तदा' इति—ङ.

ततः तेन ब्रह्मदत्तेन तासां पाणौ, जामातृस्पृष्टमात्रे सति विकुब्जत्वादिगुणवत्यः शतं कन्या बभुः । *कन्याशतमिति शकारलोपः । इदमेव दिव्यवैभवब्रह्मदत्तजामात्रन्वेषणफलं कुशनाभस्य ॥ २३ ॥

**स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः ।**
**बभूव परमप्रीतः, हर्षं लेभे पुनः पुनः ॥ २४ ॥**

स कुशनाभः तदा वायुना मुक्ताः कन्याः दृष्ट्वा परमप्रीतो बभूव ॥ २४ ॥

**कृतोद्वाहं तु राजानं ब्रह्मदत्तं महीपतिः ।**
**सादरं प्रेषयामास सोपाध्यायगणं तदा ॥ २५ ॥**

प्रेषयामासेति । काम्पिल्यां प्रतीति शेषः ॥ २५ ॥

**सोमदाऽपि सुसंहृष्टा पुत्रस्य सदृशीं क्रियाम् ।**
**यथान्यायं च गन्धर्वी स्नुषास्ताः प्रत्यनन्दत ।**
**[1] स्पृष्ट्वा स्पृष्ट्वा च ताः कन्याः कुशनाभं प्रशस्य च ॥२६॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे त्रयस्त्रिंशः सर्गः

———

सोमदाऽपि—ब्रह्मदत्तमाताऽपि । सदृशीं क्रियामिति । दारक्रियामित्यर्थः-दृष्ट्वेति शेषः । प्रतिनन्दनप्रकारः—स्पृष्ट्वा स्पृष्ट्वेत्यादि । सार (२७) मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणमृतकतकटीकायां बालकाण्डे त्रयस्त्रिंशः सर्गः

———

* 'कन्याइशतम्' इति भाव्यमित्यर्थः । [1] दृष्ट्वा स्पृष्ट्वा—ङ.

अथ चतुस्त्रिंशः सर्गः

[विश्वामित्रवंशवर्णनम्]

**कृतोद्वाहे गते तस्मिन् ब्रह्मदत्ते च राघव !**
**अपुत्रः पुत्रलाभाय पौत्रीमिष्टिमकल्पयत् ॥ १ ॥**

अथ प्रकृते किं ततः इत्यतः—कृतोद्वाह इत्यादि । अपुत्र इति । पूर्वं कन्याशतमात्रस्यैव लाभात् । पुत्रार्थेयं पौत्री ॥ १ ॥

**इष्ट्यां च वर्तमानायां कुशनाभं महीपतिम् ।**
**उवाच परमोदारः कुशो ब्रह्मसुतस्तदा ॥ २ ॥**

कुशः— कुशनाभस्य पिता ॥ २ ॥

**पुत्र ! ते सदृशः पुत्रो भविष्यति सुधार्मिकः ।**
**गाधिं प्राप्यसि तेन त्वं कीर्तिं लोके च शाश्वतीम् ॥ ३ ॥**

किमुवाचेत्यतः—पुत्रेत्यादि । हे पुत्र कुशनाभ ! ते—तव सदृशः सुधार्मिकः पुत्रो भविष्यति, पुत्रीयेष्टिसमाप्त्यनन्तरं किञ्चित्कालात्परं भविष्यति, न तु द्रौपद्यादिवत् तत्कालम् । हे पितः ! कोऽसौ मया प्रापणीयपुत्रः ? इत्यतः—गाधिमिति । गाधिं—गाधिनामानं पुत्रं प्राप्स्यसि; तेन च गाधिना शाश्वतीं—शश्वद्भवां, अण् , बहिषष्टिलोपवचनादव्ययानां भमात्रे टिलोपः क्वचिन्न, ततो ङीष् , कीर्तिं प्राप्स्यति ॥ ३ ॥

**एवमुक्त्वा कुशो राम ! कुशनाभं महीपतिम् ।**
**जगामाकाशमाविश्य ब्रह्मलोकं सनातनम् ॥ ४ ॥**

एवमुक्त्वा कुशः आकाशमाविश्य ब्रह्मलोकं जगाम । एतेन रामवत् कुशस्यापि ब्रह्मपुत्रावतारत्वनिरतिशयवैभवतः पुत्रानुग्रहपूर्वं

सशरीरतया स्वीयब्रह्मलोकप्रत्यापत्तिरुक्ता । अयमर्थ इदानीन्तनाना-
मपि ब्रह्मांशावताराणां अविशिष्टः ॥ ४ ॥

**कस्य चित्त्वथ कालस्य कुशनाभस्य धीमतः ।**
**जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः ॥ ५ ॥**

कस्य चित्त्वथ कालस्येति । अत्ययानन्तरामिति शेषः । गाधि-
रित्येव नामत इति । यथा पित्रा कुशेनोक्तं तेनैव प्रकारेणेत्यर्थः ॥

**स पिता मम काकुत्स्थ ! गाधिः परमधार्मिकः ।**
**कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ! ॥ ६ ॥**

ममेति । अस्मदर्थो विश्वामित्रः । कुशवंशप्रसूत इति यतः
अतः कौशिकोऽस्मि । अपत्यादित्वादापत्यष्ठक् । एवं स्थिते मिथ्या-
प्रक्रियाः बहुजल्पत् शाब्दिकमानी कश्चित् ॥ ६ ॥

**पूर्वजा भगिनी चापि मम राघव ! सुव्रता ।**
**नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७ ॥**

पूर्वजेति । न केवलमहं गाधेरेकः पुत्रः ; मम पूर्वजा ज्येष्ठा
भगिनी चास्ति । ऋचीके प्रतिपादितेति । ऋचीकाय दत्तेति यावत् ॥

**सशरीरा गता स्वर्गं भर्तारमनुवर्तिनी ।**
**कौशिकी परमोदारा प्रवृत्ता च महानदी ॥ ८ ॥**
**दिव्या पुण्योदका रम्या हिमवन्तमुपाश्रिता ।**
**लोकस्य हितकाम्यार्थं प्रवृत्ता भगिनी मम ॥ ९ ॥**

सशरीरा स्वर्गं गतेत्यत्र साधनोपदेशः—भर्तारमनुवर्तिनीति ।
किमुक्तमेतेन ? अनुमरणं कृतवतीत्येव । अपि चान्यदप्यस्ति तस्याश्च-

रितमित्युच्यते—कौशिकीत्यादि । महानदी—महानदीरूपिणी च प्रवृत्ता । कैवं प्रवृत्तेत्यतो—हिमवन्तमुपाश्रितेति । किं प्रयोजनेनैवं प्रवृत्तिरित्यतः—लोकस्येत्यादि । हितकाम्यार्थं[1]—इष्टकाम्यार्थसिद्ध्यर्थमित्यर्थः ॥ ९ ॥

ततोऽहं हिमवत्पार्श्वे वसामि निरतः सुखम् ।
भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन ! ॥ १० ॥

तत इति । यतो भगिन्यां स्नेहसंयुक्तः, तत एव हिमवत्पार्श्वे वर्तमानायां कौशिक्यां निरतः—नित्यप्रतिष्ठितः सुखं वसामि ॥ १० ॥

सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता ।
पतिव्रता महाभागा कौशिकी सरितां वरा ॥ ११ ॥

इतश्च तस्यां वासः—सा त्वित्यादि ॥ ११ ॥

अहं हि नियमाद्राम ! हित्वा तां समुपागतः ।
सिद्धाश्रममनुप्राप्य सिद्धोऽस्मि तव तेजसा ॥ १२ ॥

ननु दिव्यवैभवकौशिकीनित्यप्रतिष्ठस्य कुतास्सिद्धाश्रमागम इत्यतः—अहं हीत्यादि । नियमादिति । गयापिण्डदानवत् सिद्धाश्रमैकसिद्धियागविशेषसिद्धिहेतोरित्यर्थः । आगमनकार्यं च त्वदनुग्रहात् सिद्धमित्याह—सिद्धाश्रममित्यादि ॥ १२ ॥

एषा राम ! ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता ।
देशस्य च महाबाहो ! यन्मां त्वं परिपृच्छसि ॥ १३ ॥

---

[1]हितकामार्थं—घ.

उपसंहरति—एषेत्यादि । मम गाधेरुत्पत्तिः, स्वस्य वंशस्य कुशात् ब्रह्मपुत्रात् उत्पत्तिः कीर्तिता । देशस्य शोणाकूलीयदेशस्य गिरिव्रजस्य प्राचीनकर्त्रधिष्ठानमूलो वैभवश्च कीर्तितः । हे राम ! त्वं यद्वृत्तान्तं मां परिपृच्छसि, वर्तमानसामीप्ये लट्, पर्यपृच्छः, तत्सर्वमुक्तमिति शेषः ॥ १३ ॥

**गतोऽर्धरात्रः काकुत्स्थ ! कथाः कथयतो मम ।**
**निद्रामभ्येहि, भद्रं ते, मा भूद्विघ्नोऽध्वनीह नः ॥ १४ ॥**

अतः परं न प्रष्टव्यमित्याह—गत इत्यादि । अर्धं रात्रेः अर्धरात्रः । 'अर्धं नपुंसकम्' इति समासः । 'अहस्सर्व' इत्यच् । 'रात्राह्न' इत्यादिना पुंस्त्वम् । इहाध्वनि विघ्नो मा भूदिति । श्वोगन्तव्याध्वनि निद्राभावप्रयुक्तजाड्यमूलो विघ्नो मा भूदित्यर्थः ॥ १४ ॥

**निष्पन्दास्तरवः सर्वे निलीना मृगपक्षिणः ।**
**नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ! ॥ १५ ॥**

निष्पन्दास्तरवस्सर्व इति । मध्यरात्रे वायोश्चाल्पस्पन्दादेकदेशस्पन्दमूलशकुन्यादीनामप्यस्पन्दात्तरूणामप्यस्पन्दत्वम् ॥ १५ ॥

**शनैर्वियुज्यते सन्ध्या नभो नेत्रैरिवावृतम् ।**
**नक्षत्रतारागहनं ज्योतिर्भिरवभासते ॥ १६ ॥**

शनैर्वियुज्यत इति । वर्तमानसमीप्ये भूते लट्, वियुक्तेति यावत् । अश्विन्यादिनक्षत्रैः केवलताराभिश्च गहनं—व्याप्तं नभः उक्तरूपैः ज्योतिर्भिः—उपाधिभिः नैत्रैः—चक्षुर्भिः सहस्राक्षवदावृतं—व्याप्तमिव अवभासते । एवं स्थिते नैत्ररंशुकैरित्यादि प्रलपति ॥ १६ ॥

**उत्तिष्ठति च शीतांशुः शशी लोकतमोनुदः ।**
**ह्लादयन् प्राणिनां लोके मनांसि प्रभया विभो ! ॥ १७ ॥**

उत्तिष्ठतीति । 'उदोऽनूर्ध्वकर्मणि' इति निषेधादात्मनेपदाभावः । तमो नुदतीति–तमोनुदः, उपधालक्षणः कः ॥ १७ ॥

**नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः ।**
**यक्षराक्षससङ्घाश्च रौद्राश्च पिशिताशनाः ॥ १८ ॥**

निशायां प्रभवानि नैशानि । 'प्रभवति' इत्यण् ॥ १८ ॥

**एवमुक्त्वा महातेजा विरराम महामुनिः ।**
**साधु सध्विति तं सर्वे ऋषयो ह्यभ्यपूजयन् ॥ १९ ॥**

अभ्यपूजयन् । अस्तुवन्निति यावत् ॥ १९ ॥

**कुशिकानामयं वंशो महान् धर्मपरः सदा ।**
**ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः ॥ २० ॥**

तस्यैव प्रकारविशेषः—कुशिकानामित्यादि । गाधेः कुशिक इति नामान्तरम् । कुशिकस्य गोत्रापत्यं, 'अनृष्यानन्तर्ये' इत्यादिना अञ्, तस्य बहुषु 'यञञोश्च' इति लुक्, कुशिकानां–तद्गोत्रजानामित्यर्थः । ब्रह्मोपमा इति । ब्रह्मर्षितुल्या इति यावत् ॥२०॥

**विशेषेण भवानेव विश्वामित्रो महायशाः ।**
**कौशिकी च सरिच्छ्रेष्ठा कुलोद्योतकरी तव ॥ २१ ॥**

भवानेवेति । महात्मेत्यनुकर्षः ॥ २१ ॥

**इति तैः मुनिशार्दूलैः प्रशस्तः कुशिकात्मजः।**
**निद्रामुपागमच्छ्रीमान् अस्तंगत इवांशुमान् ॥ २२ ॥**

प्रशस्तः—स्तुतः, 'शंसुस्तुतौ' 'यस्य विभाषा' इति नेट्, 'अनिदिताम्' इति नलोपः। श्रीमान्—दिव्यविद्यैश्वर्यवान्। निद्रामुपागमत् इत्यत्र हेतुगर्भं विशेषणम्—अस्तंगत इत्यादि। अस्तमितः अंशुमान्—सूर्यो यस्मै स तथा ॥ २२ ॥

**रामोऽपि सहसौमित्रिः किञ्चिदागतविस्मयः।**
**प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे चतुस्त्रिंशः सर्गः

———

प्रशस्येति ल्यप्। स्थानिवत्त्वेन कित्वादनुनासिकलोपः। सेवते—सेवते स्म। गोष्ठ (२३) मानः सर्गः ॥ २३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे चतुस्त्रिंशः सर्गः

———

## अथ पञ्चत्रिंशः सर्गः

[ उमा-गङ्गोत्पत्तिकथनम् ]

**उपास्य रात्रिशेषं तु शोणाकूले महर्षिभिः।**
**निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥ १ ॥**

एवं रामस्य देशविषयप्रश्नप्रसङ्गे स्ववंशविषयिणीं पुण्यकथामुपवर्ण्य तथैव बाल्यवशात् तदज्ञानप्रवृत्तरामप्रश्नेषु काव्यपरमपुरुषार्थ-

साधकत्वप्रयोजकानां पुण्यकथान्तराणामप्यन्तरान्तरा रामचरितमुपदेशः। उपास्येत्यादि। रात्रिशेषं तु शोणाकूले उपास्य-निद्रया अतीत्य-अतिवाह्य ॥ १ ॥

**सुप्रभाता निशा राम! पूर्वा सन्ध्या प्रवर्तते।**
**उत्तिष्ठोत्तिष्ठ, भद्रं ते, गमनायाभिरोचय ॥ २ ॥**

गमनाय-गमनं कर्तुम्, 'क्रियार्थोपपदस्य' इति चतुर्थी ॥ २ ॥

**तच्छ्रुत्वा वचनं तस्य कृत्वा पौर्वाह्णिकीं क्रियाम्।**
**गमनं रोचयामास वाक्यं चेदमुवाच ह ॥ ३ ॥**

पूर्वाह्णे भवा पौर्वाह्णिकी, 'कालात् ठञ्'॥ ३ ॥

**अयं शोणः शुभजलोऽ*गाधः पुलिनमण्डितः।**
**कतरेण पथा ब्रह्मन्! सन्तरिष्यामहे वयम् ॥ ४ ॥**

अयं शोण इति। शोणैव शोण इति व्यपदिश्यते। कतरेण पथा सन्तरिष्यामह इति प्रश्नबीजम्-अगाध इति। 'अगाधमतलस्पर्शे' इति निघण्टुः ॥ ४ ॥

**एवमुक्तस्तु रामेण विश्वामित्रेण धीमता।**
**एष पन्था मयोद्दिष्टो येन यान्ति महर्षयः ॥ ५ ॥**

एष इत्यादि। येन सर्वे महर्षयो यान्ति, एष एव पन्था [2]मया बालस्य तवापि गमनयोग्य उद्दिष्टः-निश्चितः ॥ ५ ॥

---

*गाधः स्वल्पजलः। अत एव पुलिनमण्डितः सैकतालंकृतः। तथा च नावं विना गन्तुं शक्यते-**गो.** कतरेणेत्युक्त्या तत्र मार्गद्वयेन भनु यसन्तरणमिति ध्वनितम्। एतेन आगाध इति पदच्छेदो न रमणीय इति बोध्यम्—**ति**—॥. अनन्तरश्लोकोपीममर्थं द्रढयति। [1]गाधः-**ङ.** [2]मायाबालस्य-**घ.**

ते गत्वा दूरमध्वानं गतेऽर्धदिवसे तदा।
जाह्नवीं सरितां श्रेष्ठां ददृशुर्मुनिसेविताम् ॥ ६ ॥
तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम्।
बभूवुर्मुनयः सर्वे मुदिताः सहराघवाः ॥ ७ ॥

सारसः—வெண்ணாரை ॥ ७ ॥

[1]सरस्तीरे ततश्चक्रुः त आवासपरिग्रहम्।

आवासाय परिगृह्यत इति आवासपरिग्रहः, सम्मार्जनादिना आवासस्थानञ्चक्रुरिति यावत् ॥

अथ स्नात्वा यथान्यायं संतर्प्य पितृदेवताः ॥ ८ ॥
हुत्वा चैवाग्निहोत्राणि प्राश्य चामृतवद्धविः।
विविशुर्जाह्नवीतीरे शुचौ मुदितमानसाः ॥ ९ ॥
[2] विश्वामित्रं महात्मानं परिवार्य समन्ततः।

अमृतवत्—अमृततुल्यं हविः—पञ्चयज्ञाद्यवशिष्टमन्नं ; हि तथा 'यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्' इति ॥ ९ ॥

अथ तत्र तदा रामो विश्वामित्रमथाब्रवीत् ॥ १० ॥
भगवन्! श्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम्।
त्रैलोक्यं कथमाक्रम्य गता नदनदीपतिम् ॥ ११ ॥

गङ्गां श्रोतुमिति। गङ्गाविषयकं किञ्चित् श्रोतव्यमिति यावत्। किं तदित्यतः—त्रैलोक्येत्यादि। त्रैलोक्यमाक्रम्येति। स्वकस्रोतोभेदेनेति शेषः ॥ ११ ॥

---

[1] एतदनन्तरं 'एवमुक्ता महर्षयो विश्वामित्रेण धीमता। पश्यन्तस्ते प्रयाता वै वनानि विविधानि च ॥' इति श्लोकः अधिकः कुत्रचित्—ङ.

[1] तस्यास्तीरे तदा सर्वे चक्रुर्वासपरिग्रहम्—ज. [2] एतदनन्तरं—विष्ठिताश्च यथान्यायं राघवौ च यथार्हतः। इत्यधिकम्—ङ.

**चोदितो रामवाक्येन विश्वामित्रो महामुनिः ।**
**वृद्धिं जन्म च गङ्गाया वक्तुमेवोपचक्रमे ॥ १२ ॥**

वृद्धिः त्रैलोक्यव्याप्तिरूपिणी ॥ १२ ॥

**नगेन्द्रो हिमवान्नाम धातूनामाकरो महान् ।**
**तस्य कन्याद्वयं राम ! रूपेणाप्रतिमं भुवि ॥ १३ ॥**

धातूनां—अयस्ताम्रादिधातूनाम् ॥ १३ ॥

**या मेरुदुहिता राम ! तयोर्माता सुमध्यमा ।**
**नाम्ना मनोरमा नाम पत्नी हिमवतः प्रिया ॥ १४ ॥**

मेरोर्दुहिता मेरुदुहिता । तयोरिति । कन्ययोरित्यर्थः । मनोरमेति मेनाया नाम ॥ १४ ॥

**तस्यां गङ्गेयमभवत् ज्येष्ठा हिमवतः सुता ।**
**उमा नाम द्वितीयाऽभूत् नाम्ना तस्यैव राघव ! ॥ १५ ॥**
**अथ ज्येष्ठां सुरास्सर्वे देवतार्थचिकीर्षया ।**
**शैलेन्द्रं वरयामासुः गङ्गां त्रिपथगां नदीम् ॥ १६ ॥**

देवतार्थचिकीर्षया—देवतानां प्रयोजनसम्पादनेच्छया । देवताप्रयोजनं च स्वर्लोकस्नानपानादिः, वक्ष्यमाणभगवद्वीर्यधारणं च । त्रयश्च ते पन्थानः, 'ऋक्पूः' इत्यकारस्समासान्तः, त्रिपथात् गच्छतीति तथा ॥ १६ ॥

**ददौ धर्मेण हिमवान् तनयां लोकपावनीम् ।**
**स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ॥ १७ ॥**

धर्मेण—धर्ममार्गेण ददौ । ननु देवप्रयोजनाय कथं स्वर्गमनम् ; न हि जलमाकाशे तिष्ठतीत्यत्रोक्तम्—स्वच्छन्दपथगामिति । स्वच्छन्दः—

स्वेच्छा, तदायत्तः पन्थाः, प्राग्वदकारः, तेन गच्छतीति तथा। 'डोऽन्यत्राऽपि' इति डः। अभ्रजलवत् परिवहादिमहावाय्वैकाधारा भवतीति स्वच्छन्दगतिता॥ १७॥

प्रतिगृह्य त्रिलोकार्थं त्रिलोकहितकारिणः।
गङ्गामादाय तेऽगच्छन् कृतार्थेनान्तरात्मना॥ १८॥
या चान्या शैलदुहिता कन्याऽऽसीद्रघुनन्दन!
उग्रं सा व्रतमास्थाय तपस्तेपे तपोधना॥ १९॥

अथ द्वितीयां कन्यां कस्मै ददाविति प्रसङ्गात् तस्य प्रतिपादनं—या चेत्यादि॥ १९॥

उग्रेण तपसा युक्तां ददौ शैलवरः सुताम्।
रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम्॥ २०॥
एते ते शैलराजस्य सुते लोकनमस्कृते।
गङ्गा च सरितां श्रेष्ठा उमा देवी च राघव!॥ २१॥
एतत्ते सर्वमाख्यातं यथा त्रिपथगा नदी।
खं गता प्रथमं तात! गतिं गतिमतां वरा॥ २२॥
सैषा सुरनदी रम्या शैलेन्द्रस्य सुता तदा।
सुरलोकं समारूढा विपापा जलवाहिनी॥ २३॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे पञ्चत्रिंशः सर्गः

———

एतत्त इति। गङ्गोमयोरुत्पत्त्यादिकमित्यर्थः। यथा त्रिपथगामिनी भवति गङ्गा, तथा प्रतिपादयामीति शेषः। तदेव क्रियते—खमित्यादि। तावच्छब्दो वाक्यालङ्कारे। प्रथमं तावत् खं—खात्मिकां गतिं गता; पश्चात् सुरलोकं च समारूढा अभवत्। अंगार (२३$\frac{1}{2}$) मानः सर्गः॥ २३॥

इत्यार्षे श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे पञ्चत्रिंशः सर्गः

———

अथ षट्त्रिंशः सर्गः

[ईश्वरं प्रति देवानां प्रार्थना]

**उक्तवाक्ये मुनौ तस्मिन् उभौ राघवलक्ष्मणौ ।**
**अभिनन्द्य कथां वीरौ ऊचतुर्मुनिपुङ्गवम् ॥ १ ॥**

एवं गङ्गोमयोरुत्पत्त्यादिके संक्षेपत उक्ते पुनस्तद्विषयकविस्तार-प्रश्ने तत्प्रतिपादनं—उक्तवाक्य इत्यादि । तस्मिन्निति । उपरत इति शेषः ॥ १ ॥

**धर्मयुक्तमिदं ब्रह्मन्! कथितं परमं त्वया ।**
**दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि ॥ २ ॥**
**विस्तरं, विस्तरज्ञोऽसि, दिव्यमानुषसम्भवम् ।**

शैलराजस्य ज्येष्ठाया दुहितुर्दिव्यमानुषसम्भवं-द्युलोकनिबन्धनं मानुषलोकनिबन्धनं च विस्तरं वक्तुमर्हसि ॥ २ ॥

**त्रीन् पथो हेतुना केन प्लावयेल्लोकपावनी ॥ ३ ॥**

को युष्मच्छुश्रूषितो विस्तर इत्यतः—त्रीनित्यादि । त्रीन् पथः—भूर्भुवस्स्वर्मार्गान् केन हेतुना प्लावयेत्? इत्येतद्विषयक एकः शुश्रूषित-विस्तरः ; द्वितीयस्त्रिपथगेति प्रसिद्धिः किं निबन्धना, त्रिलोक्यां गङ्गायाः कर्म चरितं च कीदृशमित्येतद्विषयकश्च विस्तरश्शुश्रूषित इत्यर्थः ॥ ३ ॥

**कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा ।**
**त्रिषु लोकेषु धर्मज्ञ! कर्मभिः कैस्समन्विता ॥ ४ ॥**

कथमिति प्रश्नस्याग्रिमसर्गैरुत्तरं भविष्यति ॥ ४ ॥

**तथा ब्रुवति काकुत्स्थे विश्वामित्रस्तपोधनः ।**
**निखिलेन कथां सर्वां ऋषिमध्ये न्यवेदयत् ॥ ५ ॥**

निखिलेन—कार्त्स्न्येन—विस्तरेणेति यावत् ॥ ५ ॥

**पुरा राम ! कृतोद्वाहो नीलकण्ठो महातपाः ।**
**दृष्ट्वा च स्पृहया देवीं मैथुनायोपचक्रमे ॥ ६ ॥**
**शितिकण्ठस्य देवस्य दिव्यं वर्षशतं गतम् ।**

कृतोद्वाहः—कृतोमापरिणयः । देवीं दृष्ट्वा तया सह मैथुनायेति योजना । गतामिति । क्रीडयेति शेषः ॥ ६ ॥

**[1] तस्य संक्रीडमानस्य महादेवस्य धीमतः ॥ ७ ॥**
**[2] न चापि तनयो राम ! तस्यामासीत् परंतप !**

तनय इति । रुद्रपुत्राय उमासंयोजनपरमयत्नपूर्वं प्रार्थितप्रादुर्भावस्वसेनासेनानीचिकीर्षितो रुद्रतेजोमयस्त्वसह्यः पुत्र इत्यर्थः ॥ ७ ॥

**ततो देवाः [3] समुद्युक्ताः पितामहपुरोगमाः ।**
**यदिहोत्पद्यते भूतं कस्तत् प्रतिसहिष्यते ॥ ८ ॥**

तत इत्यादि । समुद्युक्ता इति । वर्षशतक्रीडा[4]वशान्मुमुक्षाकाले रौद्रतेजसो मोचनं वारयितुं समुद्युक्ता बभूवुरित्यर्थः । एवं व्याख्यानं तु 'यस्मान्निवारिता चैव संगतिः पुत्रकाम्यया' इति ईश्वरीवचनात् वक्ष्यमाणात्स्पष्टम् । कथं रुद्रपुत्राय उमासंयोजनादियत्नं कुर्वद्भिः रुद्रतेजोमोचननिवारणोद्योगः ? इत्यत्रोच्यते—तदित्यादि । इह—अस्यामुमायां अतः परमपि कियत्कालक्रीडानन्तरमीश्वरेच्छया विमुक्तं रौद्रतेजोऽस्यां भूतं—गर्भत्वेन सम्भूतं—सिद्धं, पश्चाद्यथोचितकालानन्तरं यदि लोकवदेव पुत्ररूपं उत्पद्येत कस्तत्प्रतिसहिष्यते ? न कोऽपि देवोऽन्यो वा तत्पुरस्तात् स्थातुं, अन्ततो निरीक्षितुमपि शक्नोति । यतो रुद्रकोपज-

---

[1] एतदनन्तरं 'एवं मन्मथयुद्धे तु तयोर्नासीत्पराजयः' इति चाधिकमन्यत्र—ङ.
[2] एतदनन्तरं—धीमतो देवराजस्य रुद्रस्यापि महात्मनः । इत्यधिकं—ङ. [3]समुद्विग्नाः—ङ.
[4] वशप्राप्तमुमुक्षा—घ.

स्वेदबिन्दुमात्रजो रुद्रकुमारो वीरभद्रोऽशेषदेवैरपि दुस्सहो दुर्निरीक्ष्यश्चेत्यनुभवसिद्धम् । अतो माभूदस्माकमौरसरुद्रकुमारोत्पत्तिरिति निश्चित्य देव्यां तेजस्त्यागं निवारयितुं उद्युक्ता इत्यर्थः ॥ ८ ॥

**अभिगम्य सुराः सर्वे प्रणिपत्येदमब्रुवन् ॥ ९ ॥**

एवं निश्चित्य तदमोकस्य चाचिन्त्यशक्तिवैभवभगवदेकसाध्यत्वात्तमेव तत्र परमं शरणं जग्मुरित्युच्यते—अभिगम्येति ॥ ९ ॥

**देव देव महादेव! लोकस्यास्य हिते रत !**
**सुराणां प्रणिपातेन प्रसादं कर्तुमर्हसि ॥ १० ॥**

प्रणिपातः—अनन्यगतिकतया तत्पादमूलपतनम्, तेन अस्माकं प्रसादं कर्तुमर्हसि ॥ १० ॥

**न लोका धारयिष्यन्ति तव तेजः सुरोत्तम !**
**ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर ॥ ११ ॥**

किं विषयकः प्रसाद इत्यतः—न लोका इत्यादि । भूरादिलोकान्तर्लौकिकसकलप्रजाश्चेत्यर्थः । न धारयिष्यन्ति—अनन्तकोटिवीरभद्रतुल्यं स्मृत्वा च हृदयविदारकं मनस्यपि धर्तुमपि न शक्नुयुः । तेज इति । मुक्त्वा यथावद्गर्भादुत्पन्नमिति शेषः । तर्हि किमस्माभिः कर्तव्यमित्यतः —ब्राह्मेणेत्यादि । ब्राह्मेण—श्रीमदादिगुरुतुर्यब्रह्मगोचरेण तपसा अकृतकतदनन्यतायोगलक्षणेन युक्तो भूत्वा देव्या सह तदङ्गभूतं तप एव चर ॥ ११ ॥

**त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय ।**
**रक्ष सर्वानिमान् लोकान्, नालोकं कर्तुमर्हसि ॥ १२ ॥**

कीदृशमुख्यब्राह्मतपोऽङ्गभूतमस्मच्चरितव्यमित्यतः तन्नियोगः—तेजस्तेजसि धारयेति । 'पुरुषो ह वा अयमादितो गर्भो भवति ।

यदेतत्तद्रेतस्तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजस्सम्भूतमात्मन्येवात्मानं बिभर्ति' इति न्यायेन निजतेजः—पारदरूपं निजतेजसि—सहजाष्टाङ्गयोगरूपे धारय। ननु मत्तेजसि मया धृते मुक्ते वा को लाभः? का हानिर्वा वः? इत्यत्रोच्यते—रक्ष सर्वानिमान् लोकानिति। धृत्वेति शेषः। भवति किल धारणे लोकरक्षा, कथम्? 'अथ यदेतत् पुरुषे रेतो भवत्यादित्यस्य तद्रूपम्' इति श्रुतेः सम्राट्पुरुषस्य ब्रह्मणो रेतोरूपं तेज एवादित्यमण्डलान्तर्यद्धृतं तन्मूलयाऽत्र सकलमपि जगद्रक्षितं भवति। अथ विपर्यये विपर्ययश्च भवतीत्याहुः। नालोकं कर्तुमर्हसीति। निजतेजः पातयित्वाऽऽदित्यं विनाश्य अलोकं—सर्वलोकास्तमयं कर्तुं नार्हसि॥ १२॥

**देवतानां वचः श्रुत्वा सर्वलोकमहेश्वरः।**
**बाढमित्यब्रवीत् सर्वान् [1]ततश्चैवमुवाच ह॥ १३॥**

एवं सर्वदेववचनं श्रुत्वा, सर्वदेवतावयविनस्तस्य च, स्वावयव-सर्वदेवतानाशे स्वस्य च छिन्नाशेषशाखास्थाणुताप्रसङ्गात्, अवश्यं देववचनं कर्तव्यमङ्गीकरोतीत्याह—देवतानां वचःश्रुत्वा बाढमित्यब्रवीदिति। बाढमित्यङ्गीकृतांश एव प्रतिपाद्यते—ततश्चैवमुवाच ह॥१३॥

**धारयिष्याम्यहं तेजः तेजस्येव सहोमया।**
**त्रिदशाः पृथिवी चैव निर्वाणमधिगच्छतु॥ १४॥**

धारयिष्यामीत्यादि। उमया सहेति। उमाऽपि स्ववीर्यं रजोमयेऽग्नौ स्वतेजसि बिभर्तु। 'तद्यदेतत् स्त्रियां लोहितं भवति अग्नेस्तद्रूपम्' इति श्रुतेः मातृरजोऽग्निरेव। अहमपि स्ववीर्यं सृतं सत्त्वमये रसे भरिष्यामि। एवं च। त्रिदशाः पृथिवी चैव निर्वाणं—सौख्यं अधिगच्छतु। ईश्वरयोस्तेजसोर्भुवि पाते दाहदुर्भरत्वाभ्यां पृथिवी-

---

[1] पुनश्चेदमुवा च—ङ.

पीडा—'यदेतद्रेतः, तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजस्सम्भूतम्' इति श्रुतेः। तस्य यथान्यायं योगेन शोधनक्षमपात्रसम्पादनं विना प्राकृतवत्पातने सर्वेऽपि देवा नाशिता भवन्ति। अत एव स्वाविशेषतया सर्वानुग्रहार्थं स्ववीर्यं धारयिष्याव इत्यर्थः ॥ १४ ॥

**यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमम्।**
**धारयिष्यति कस्तन्मे ब्रुवन्तु सुरसत्तमाः! ॥ १५ ॥**

अथ दिव्यवर्षशतसम्भोगवशतो लोकवदेव क्षुभितं क्लेदरूपं यत्तेजः तस्य च गलितस्य स्वावयवधृतस्यामोघस्य चातः परं देवकार्याय सुसहशक्तिसुतसिद्ध्ये मोचनीयस्य किं क्षेममिति भगवान्महेश्वरः पृच्छति—यदिदमित्यादि। स्थानात्—हिरण्मयभूमहृदयपुण्डरीकलक्षणात् शाश्वतस्थानात् क्षुभितं—चिरकालभोगोपाधेरेकदेशे सञ्चालितं अनुत्तमं—देवकार्यार्हसुतसमर्थत्वेन सर्वोत्तमं यदिदं तेजः—क्लेदरूपमस्ति अमोघमिदमपि वा को धारयिष्यति? च्युतत्वादेवोमागर्भानर्हं 'कुम्भे रेतस्सिषिचतुस्समानं। ततोह मानमुदियाय मध्यात्ततो जातमृषिमाहुर्वसिष्ठम्' इति न्यायेन क्वचिद्योनिरूपे क्षेत्रविशेष एव सेचनीयम्। तथा सिक्तं तत् को धारयिष्यति? तत् विचार्य मह्यं ब्रुवन्तु हे सुरसत्तमाः! ॥ १५ ॥

**एवमुक्तास्ततो देवाः प्रत्यूचुर्वृषभध्वजम्।**
**यत्तेजः क्षुभितं ह्येतत् तद्धरा धारयिष्यति ॥ १६ ॥**

एवं पृष्टे उत्तरम्—एवमित्यादि। धरा धारयिष्यतीति। तस्या अशेषसंसारधारणशक्तित्वादेवेत्याशयः ॥ १६ ॥

**एवमुक्तः सुरपतिः प्रमुमोच महीतले।**
**तेजसा पृथिवी येन व्याप्ता सगिरिकानना ॥ १७ ॥**

एवमुक्तः सुरपतिः—रुद्रः येन तेजसा—स्कन्नेनावरेण तेजसाऽपि सगिरिकानना पृथिवी शक्त्या व्याता भवति, तादृशं तेजः प्रमुमोच ह। हः प्रसिद्धौ ॥ १७ ॥

**ततो देवाः पुनरिदं ऊचुश्चाथ हुताशनम् ।**
**प्रविश त्वं महातेजो रौद्रं वायुसमान्वितः ॥ १८ ॥**

अथ पृथिवीमुक्तस्य तेजसो रक्षार्थं 'अग्निः पृथिव्या अधिपतिः' इति पृथिव्यभिमान्यग्निं नियुञ्जते—तत इत्यादि। हुताशनमिति। देवीक्रुद्धोऽशरूपमिति शेषः। अन्यादृशाग्नेः रौद्रतेजस्स्रोतःप्रवेशायोगाद्रसबलसाध्यश्वेतपर्वतायोगाच्च। वायुसमान्वितः इत्यनेन चारणलक्षणप्रवेशोपाय उक्तः। पुनश्शब्दो वाक्यालङ्कारे ॥ १८ ॥

**तदग्निना पुनर्व्याप्तं संजातः श्वेतपर्वतः ।**
**दिव्यं शरवणं चैव पावकादित्यसन्निभम् ॥ १९ ॥**
**यत्र जातो महातेजाः कार्तिकेयोऽग्निसंभवः ।**

तत्—तेजः उक्ताग्निचारणजारणबलात् बद्धं सदुपरि क्रियारहितं केवलं श्वेतपर्वतात्मनावस्थितमभूत्। तच्च श्वेतपर्वतात्मनाऽवस्थिततेजः तत्प्रदेशे तन्महिम्ना दिव्यं पावकादित्यसन्निभं शरवणं चाभूत्। 'प्रनिरन्तरश्शर' इति णत्वम्। यत्र जात इति। जातः भविष्यतीति यावत्। अग्निना कियत्कालं धृत्वा मोक्ष्यमाणत्वादग्निसन्निभत्वं ; कार्तिकेयत्ववत ॥ १९ ॥

**अथोमां च शिवं चैव देवास्सर्षिगणास्तदा ॥ २० ॥**
**पूजयामासुरत्यर्थं सुप्रीतमनसस्तदा ।**

देवास्सुप्रीतमनसस्तदेति। लोकानुग्रहाय मूलतेजसो धृतत्वात्, देवकार्याय स्कन्नतेजसश्च दत्तत्वात् सन्तोषः ॥ २० ॥

[1] अथ शैलसुता राम ! त्रिदशानिदमब्रवीत् ।
समन्युरशपत्सर्वान् क्रोधसंरक्तलोचना ॥ २१ ॥

उमां च शिवं चैव पूजयामासुरित्युक्तम् । तदा उमादेवी पूजां नाङ्गीकरोति स्म, प्रत्युत क्रुद्धैवाभूदित्याह —अथ शैलेत्यादि ॥ २१ ॥

यस्मान्निवारिता चैव सङ्गतिः पुत्रकाम्यया ॥ २२ ॥
अपत्यं स्वेषु दारेषु तस्मान्नोत्पादयिष्यथ ।

किन्निमित्तः क्रोधः, कीदृशश्च तच्छाप इत्यतः—यस्मादित्यादि । यस्मात् मया ईश्वरादौरसपुत्रकाम्ययैव क्रियमाणा सङ्गतिर्निवारिता, तस्मात् हेतोः स्वेषु दारेषु औरसं अपत्यं नोत्पादयिष्यथ ॥ २२ ॥

[2] अद्यप्रभृति युष्माकमप्रजास्सन्तु पत्नयः ॥ २३ ॥
एवमुक्त्वा सुरान् सर्वान् शशाप पृथिवीमपि ।

अत एव—अद्यप्रभृतीत्यादि । मच्छापादेव पत्नयः इत्यादि ॥

अवने नैकरूपा त्वं बहुभार्या भविष्यसि ॥ २४ ॥
न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता ।
प्राप्स्यसि त्वं, सुदुर्मेधे ! मम पुत्रमनिच्छती ॥ २५ ॥

पृथिवीमपि शशापेत्यत्र हेतुः—मम पुत्रमनिच्छतीति । अविघ्नसम्भोगसुखं यथाकालं सम्प्राप्तनिजभर्तृतेजोगर्भभरणरूपं पूर्वं लोकवदौरसं पुत्रं मम ईप्सितं अनिच्छती—अननुकुर्वती, देवेप्सितं चान्याय्यमनुकुर्वती चासीरिति यतः, अतः अनेन हेतुना एकरूपा अपि त्वं

---

[1] एतदनन्तरं—अप्रियस्य कृतस्याद्य फलं प्राप्स्यथ मे सुराः । इत्युक्त्वा सलिलं गृह्य पार्वती भास्वरप्रभा । इत्यधिकं क्वचित्—ङ. [2] एतदनन्तरं 'पत्न्यो न जनयिष्यन्ति ह्यद्यप्रभृति चात्मजान्' इत्यधिकम्—ङ.

भहुभार्या भविष्यसि। पुत्रकृतां—औरसपुत्रकृतां न प्राप्यसीति। मद्वदिति शेषः। सुदुर्मेधे इति। 'नित्यमसिच् प्रजामेधयोः' इत्यासिच् ॥ २५ ॥

**तान् सर्वान् [1]पीडितान् दृष्ट्वा सुरान् सुरपतिस्तदा।**
**गमनायोपचक्राम दिशं वरुणपालिताम् ॥ २६ ॥**

तानित्यादि। पीडितान्—देवीशापात् दुःखितांस्तान् दृष्ट्वा, तस्य चाशक्यपरिहारत्वात्तद्दर्शनपरिहाराय तपश्चरणविषयकनियोगसम्पादनाय च ततो देशात् वरुणपालितां दिशं—पश्चिमदेशं प्रति गमनायोपचक्राम, छान्दसं परस्मैपदम् ॥ २६ ॥

**स गत्वा तप आतिष्ठत् पार्श्वे तस्योत्तरे गिरेः।**
**हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः ॥ २७ ॥**

एवं हिमवतः पश्चिमप्रदेशं गत्वा तत्रापि तत्र गिरेरुत्तरपार्श्वे, तत्रापि हिमवद्भवे शृङ्ग एव देव्या सह तप आतिष्ठत् ॥ २७ ॥

**एष ते विस्तरो राम! शैलपुत्र्या निवेदितः।**
**गङ्गायाः प्रभवं चैव शृणु मे सहलक्ष्मणः ॥ २८ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे षट्त्रिंशः सर्गः

———

उपसंह्रियते—एष त इत्यादि। शैलपुत्र्या विस्तरः—चरितविस्तारो निवेदितः। 'त्रिषु लोकेषु धर्मज्ञ कर्मभिः कैस्समन्विता' इति प्रश्नोत्तरणीयस्य देवगर्भधारणरूपगङ्गाचरितस्योपदेशशेषतयेति शेषः। अथ [2]शेषप्रकृतप्रश्नोत्तरं वक्तुं प्रतिजानीते—गङ्गाया इत्यादि। प्रभवमिति। छान्दसो ह्रस्वः। एशतेजोधारणरूपं प्रभावमित्यर्थः ॥ २८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे षट्त्रिंशः सर्गः

———

[1] व्राडितान्—ङ. [2] शेषिप्रकृत—घ.

## अथ सप्तत्रिंशः सर्गः

[कुमारसम्भवः]

**तप्यमाने तपो देवे देवाः सर्षिगणाः पुरा ।**
**सेनापतिमभीप्सन्तः पितामहमुपागमन् ॥ १ ॥**

अथ यथाप्रतिज्ञमुक्तवैभवोपदेशः—तप्यमान इत्यादि । देवसेनाकार्यचिन्तामकृत्वेति शेषः । सेनापतिं—स्वसेनारक्षकम् ॥ १ ॥

**ततोऽब्रुवन् सुरास्सर्वे भगवन्तं पितामहम् ।**
**प्रणिपत्य सुरास्सर्वे सेन्द्राः साग्निपुरोगमाः ॥ २ ॥**

तत इति । उपगमनानन्तरमित्यर्थः ॥ २ ॥

**[1]येन सेनापतिर्देव ! दत्तो भगवता पुरा ।**
**तपः परममास्थाय तप्यते स्म सहोमया ॥ ३ ॥**

किमब्रुवन्नित्यतः—येनेत्यादि । येन भगवता—रुद्रेण सेनापतिः बीजात्मना दत्तः, स तूष्णीं तपस्तप्यते—अनुतिष्ठति । तपःकर्मकत्वाद्यगात्मनेपदकर्मवद्भावौ । स्मशब्दो वाक्यालङ्कारे ॥ ३ ॥

**यदत्रानन्तरं कार्यं लोकानां हितकाम्यया ।**
**संविधत्स्व विधानज्ञ ! त्वं हि नः परमा गतिः ॥ ४ ॥**

अनन्तरं—बीजमात्रं दत्त्वा तस्योपरमानन्तरं तस्य पुत्राकारसम्पत्तये यत्—संविधेयं तत् संविधत्स्व ॥ ४ ॥

**देवतानां वचः श्रुत्वा सर्वलोकपितामहः ।**
**सान्त्वयन् मधुरैर्वाक्यैः त्रिदशानिदमब्रवीत् ॥ ५ ॥**

सान्त्वयन् । इष्टकार्यालाभखिन्नानिति शेषः ॥ ५ ॥

---

[1] एतदनन्तरं—स न जातोऽद्य भगवन्नस्मद्वैरिनिबर्हणः । तत्पिता भगवान् शर्वो हिमवच्छिखरेऽद्य वै ॥ इत्यधिकं क्वचित्—ङ.

शैलपुत्र्या यदुक्तं [1] तत् अप्रजाः सन्तु पत्नयः ।
तस्या वचनमक्लिष्टं सत्यमेतन्न संशयः ॥ ६ ॥

यत्—यस्मात् शैलपुत्र्या अप्रजा भविष्यथेति उक्तं, तत्—तस्मात् न प्रजास्सन्तु वः । अत एव वः पत्नयश्च अप्रजाः, छान्दस इकारान्तप्रयुक्तो जसो गुणः । ननु भवद्बलात् तद्वचोऽप्यन्यथयितव्यमित्याशङ्कयोच्यते—तस्या इत्यादि । अक्लिष्टमिति । परमापराधमूलतोऽन्यायतः प्राप्तं यतस्तस्मात् सत्यमेव न संशयः । एवं पाङ्क्ते पाठे पाङ्क्ते च व्याख्याने स्थिते "न प्रजास्यथ" इति मृषोक्त्वा तद्व्याख्यानं चाह *कश्चित् ॥ ६ ॥

इयमाकाशगा गङ्गा यस्यां पुत्रं हुताशनः ।
जनयिष्यति देवानां सेनापतिमरिन्दमम् ॥ ७ ॥

तर्हि का गतिरित्यपेक्षायामाह—इयमित्यादि । यस्यां जनयिष्यति सेयमस्तीति योजना ॥ ७ ॥

ज्येष्ठा शैलेन्द्रदुहिता मानयिष्यति तत्सुतम् ।
उमायास्तद्बहुमतं भविष्यति न संशयः ॥ ८ ॥

उचितं चेदमेवेत्याह—ज्येष्ठेत्यादि । मानयिष्यतीति । स्वकनिष्ठापत्यत्वात् स्वापत्यवदिति शेषः ॥ ८ ॥

तच्छ्रुत्वा वचनं तस्य कृतार्था रघुनन्दन !
प्रणिपत्य सुरास्सर्वे पितामहमपूजयन् ॥ ९ ॥

---

* महेश्वरतीर्थः.

[1] न प्रजाः सन्तु पत्निषु—ङ.

**ते गत्वा पर्वतं राम ! कैलासं धातुमण्डितम् ।**
**अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥ १० ॥**

ते कैलासं पर्वतं गत्वेति । तत्रैव भगवत्तेजोऽनुप्रविष्टाग्नेरवस्थानात् ॥

**देवकार्यमिदं देव ! संविधत्स्व हुताशन !**
**शैलपुत्र्यां महातेजः ! गङ्गायां तेज उत्सृज ॥ १२ ॥**

हे महातेज इति सम्बुद्धिः । शैलपुत्र्यां तेज उत्सृजेति । गङ्गायामैश्वरं तेज इत्यर्थः ॥ १२ ॥

**देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः ।**
**गर्भं धारय वै देवि ! देवतानामिदं प्रियम् ॥ १३ ॥**

देवतानां प्रतिज्ञायेति । तथा करोमीति प्रतिज्ञायेत्यर्थः ॥ १३ ॥

**तस्य तद्वचनं श्रुत्वा दिव्यं रूपमधारयत् ।**
**दृष्ट्वा तन्महिमानं स समन्तादवशीर्यत ॥ १४ ॥**

दिव्यं रूपमधारयदिति । स्रोतोरूपं मुक्त्वेति शेषः । अथ तस्या महिमानं दिव्यरूपवैभवं दृष्ट्वा सः—ईश्वरतेजोराशिः पारदः समन्तादवशीर्यत, व्यत्ययात्तङ् । न द्रुतिसंस्कारं प्राप्तमभूदित्यर्थः । उत्तमस्त्रीदर्शने रसेश्वरस्य तद्ग्रहणायोल्लालनं द्वियोजनपर्यन्तमिति सुप्रसिद्धम् ॥ १४ ॥

**समन्ततस्तदा देवीमभ्यषिञ्चत पावकः ।**
**सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ! ॥ १५ ॥**

एवं समन्ततो विकीर्णेन रसेश्वरेण पावको देवीमभ्यषिञ्चत । तेनाभिषिच्यमानेन रसेश्वरेण देवीसुषुम्नेलापिङ्गलादिनाडीरूपाणि सर्वस्रोतांसि पूर्णानि—व्याप्तानि ॥ १५ ॥

तमुवाच ततो गङ्गा सर्वदेवपुरोहितम् ।
अशक्ता धारणे देव ! तव तेजः समुद्धतम् ।
दह्यमानाऽग्निना तेन संप्रव्यथितचेतना ॥ १६ ॥

सर्वदेवपुरोहितं—सर्वदेवानां पुरोयायी, हितकरश्च तथा । 'अग्निमीळे पुरोहितं' 'अग्निर्ब्रह्मा नृषदने विधत्ते' इत्यादेः बृहस्पत्य-परमूर्तिमानित्यर्थः । तव तेजस्समुद्धतं—अग्नेरनुप्रवेशादाग्नेयेन तेजसा च समुद्धतं अत्युग्रशक्तचैश्वरं तेजः—तेजस इति यावत् । कृद्योग-लक्षणषष्ठ्यभावश्छान्दसः । धारणे शक्ता न भवामि । अपि च —दह्यमानेत्यादि ॥ १६ ॥

अथाब्रवीदिदं गङ्गां सर्वदेवहुताशनः ।
इह हैमवते पादे गर्भोऽयं सन्निवेश्यताम् ॥ १७ ॥

सर्वदेवात्मको हुताशनस्तथा ॥ १७ ॥

श्रुत्वा त्वग्निवचो गङ्गा तं गर्भमतिभास्वरम् ।
उत्ससर्ज महातेजः स्रोतोभ्यो हि तदाऽनघ! ॥ १८ ॥

स्रोतोभ्यः उत्कृष्य हिमवत्पार्श्वे उत्ससर्जेति योजना ॥ १८ ॥

यदस्या निर्गतं तस्मात् तप्तजाम्बूनदप्रभम् ।
काञ्चनं धरणीं प्राप्तं हिरण्यममलं शुभम् ॥ १९ ॥
ताम्रं कार्ष्णायसं चैव तैक्ष्ण्यादेवाभ्यजायत ।
मलं तस्याभवत्तत्र त्रपु सीसकमेव च ।
तदेतद्धरणीं प्राप्य नानाधातुरवर्धत ॥ २० ॥

यत्—यस्मात् अस्याः निर्गतं, तस्मात् गङ्गागर्भनिस्सृतिसिद्ध-वेधसंस्कारवैभवादेव तत्तेजः धरणीं प्राप्तं सत् तप्तजाम्बूनदप्रभं—

जम्बूनद्यां भवं जाम्बूनदं–दशवर्णसुवर्णं। जाम्बूनदं–द्रुतजाम्बूनदवर्णं सुवर्णं काञ्चनं प्रथमं अभवत्। पश्चात् अमलं निर्मलं, अत एव शुभदक्षिणालङ्काराद्यर्हं हिरण्यं चाभवत्। 'रजतं हिरण्यमभवत्' इति श्रुतेर्हिरण्यशब्दः स्वर्णरजतसाधारणः। इदमुभयं क्रमात् शुद्धपारदगन्धप्राधान्यात् भवति। पारदे तैक्ष्ण्यैकरूपं मलमस्ति। गन्धे मालिन्यरूपं मलमस्ति। उभयमलमुक्तादग्निबन्धरसात् द्रुतप्राधान्यवेधे स्वर्णं, गन्धप्राधान्यवेधे रजतं, तीक्ष्णमलप्राधान्यवेधे तु ताम्रादिकं मालिन्यं, मलप्राधान्यवेधे तु त्रपुसीसम्। तदेवोक्तम्—ताम्रमित्यादि। तत्र बन्धरसेऽपि यन्मूलं द्रुत्यादिसंस्कारवैकल्यादशोधितमभूत् तस्याभिसम्बन्धात् त्रप्वादिकमभवादिति योजना। नानाधातुरवर्धतेति। उक्तरीत्येति शेषः ॥ १९–२० ॥

निक्षिप्तमात्रे गर्भे तु तेजोभिरभिरञ्जितम्।
सर्वं पर्वतसन्नद्धं सौवर्णमभवद्वनम् ॥ २१ ॥

न केवलं तस्य स्पर्शवेधित्वं, अपि तु रूपवेधित्वमपीत्युच्यते–निक्षिप्तेत्यादि। पर्वतसन्नद्धं–स्वर्णपर्वतीभूतमहारससम्बद्धमिति यावत् ॥

तं देशं तु ततो ब्रह्मा संप्राप्यैनमभाषत।
जातस्य रूपं यत्तस्मात् जातरूपं भविष्यति ॥ २२ ॥
जातरूपमिति ख्यातं तदाप्रभृति राघव!
सुवर्णं पुरुषव्याघ्र! हुताशनसमप्रभम् ॥ २३ ॥
[तृणवृक्षलतागुल्मं सर्वं भवति काञ्चनम्]

यदा काञ्चनीभूतो महारसो रूपवेधी जातस्तदाप्रभृति जातरूपमित्यपि ख्यातम्। जातं सौवर्णं रूपं यस्मात्, स्वासन्नस्य च तत्तथा ॥ २२–२३ ॥

**तं कुमारं ततो जातं सेन्द्राः सह मरुद्गणाः ।**
**क्षीरसम्भावनार्थाय कृत्तिकाः समयोजयन् ॥ २४ ॥**

तं कुमारं तत इति । सुवर्णपर्वतात्मनाऽ[1]वस्थितात्तत एव महारसादानन्दकन्दादिरसशास्त्रोपदिश्यमानरीत्या शब्दवेधित्वसंस्कारे च सति तत्रोच्यमानखेचरदिव्यदेहोत्पत्तिमार्गेण शनैर्जातो यो रुद्रकुमारः तं कुमारं क्षीरसम्भावनार्थाय–क्षीरपानप्रयोजनसिद्धये, कृत्तिका इति, 'सुपां सुलुक्' इत्यादिना भिसस्तु जस्, कृत्तिकाभिः समयोजयन् ॥

**ताः क्षीरं जातमात्रस्य कृत्वा समयमुत्तमम् ।**
**ददुः पुत्रोऽयमस्माकं सर्वासामिति निश्चिताः ॥ २५ ॥**

अथ ताः कृत्तिकाः अयमस्माकं सर्वासां पुत्रो भवतु इति कृतनिश्चयास्सत्यस्तादृशं उत्तमं समयं–भावं स्तन्य[2]प्रवृद्धिहेतुभूतं पुत्रभावं कृत्वा जातमात्रस्य तस्य क्षीरं ददुः ॥ २५ ॥

**ततस्तु दवतास्सर्वाः कार्तिकेय इति ब्रुवन् ।**
**पुत्रस्त्रैलोक्यविख्यातो भविष्यति न संशयः ॥ २६ ॥**

ततः–अनन्तरं तत एव हेतोः सर्वा देवताः स्वयं कार्तिकेय इति ब्रुवन्, अडभावः छान्दसः, उक्तवन्तः । अपि चायं पुत्रः कार्तिकेय इति त्रैलोक्यविख्यातश्च भविष्यतीति अब्रुवन् ॥ २६ ॥

**तेषां तद्वचनं श्रुत्वा स्कन्नं गर्भपरिस्रवे ।**
**स्नापयन् परया लक्ष्म्या दीप्यमानं यथाऽनलम् ॥ २७ ॥**

अथ तेषां–देवानां स्वेष्टानुकूलं वचनं श्रुत्वा [3]आदौ ईश्वरयोस्सकाशात् स्कन्नं, पश्चात् गङ्गाया गर्भात् परिस्रवे सति तत्संस्कारतो

---

[1] व्यवस्थितात् अत–ग [2] प्रवृत्ति–घ. [3] इमं–घ.

लक्ष्म्या परया दीप्यमानं अनलं—अनलवद्दुस्पर्शं—तं सुग्रहप्रयोजनशैत्योपचारसिद्धये स्नापयन्। स्तन्यैरिति शेषः ॥ २७॥

**स्कन्द इत्यब्रुवन् देवाः स्कन्नं गर्भपरिस्रवात्।**
**कार्तिकेयं महाभागं काकुत्स्थ! ज्वलनोपमम् ॥ २८ ॥**

एवं कृत्तिकाभिः पुत्रत्वेन स्वीकृत्य स्तन्यपानानन्तरं पूर्वं कार्तिकेयत्वेनोक्तमुच्यमानविशेषणकं [1]तं प्रागुक्तरीत्या स्कन्नगर्भपरिस्रुतत्वहेतोः स्कन्द इति अन्वर्थनाम च चक्रुरित्यर्थः ॥ २८॥

**गृहीत्वा क्षीरमेकाह्ना सुकुमारवपुस्तदा।**
**अजयत् स्वेन वीर्येण दैत्यसैन्यगणान् विभुः ॥ २९ ॥**

एवं षण्मुखेन यावदपेक्षं क्षीरं गृहीत्वा एकाह्नैव—एकदिनेनैव, 'राजाहः' इति टजभावोऽनित्यत्वात्, सुकुमारवपुः—आप्यायनेन कोमलसुन्दरपुष्टवपुरभवत्। तथा शनैः प्रवृद्धो दैत्यगणानजयत् ॥२९॥

**प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम्।**
**षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः ॥ ३० ॥**

अनन्तरं पानार्थमपि कृत्तिकानां क्षीरं प्रादुर्भूतं। तच्च षण्णां स्तनजक्षीरं अचिन्त्यशक्तित्वाद्दाहातिशयेन च षण्मुखो भूत्वा जग्राह ॥

**सुरसेनागणपतिं ततस्तमतुलद्युतिम्।**
**अभ्यषिञ्चन् सुरगणाः समेत्याग्निपुरोगमाः ॥ ३१ ॥**

तत इति। यतोऽसुरगणमजयत् तत एव हेतोरित्यर्थः ॥ ३१ ॥

**एष ते राम! गङ्गाया विस्तरोऽभिहितो मया।**
**कुमारसम्भवश्चैव धन्यः पुण्यस्तथैव च ॥ ३२ ॥**

---

[1] ततः—घ.

उपसंहारः—एष इत्यादि । विस्तर इति । चरितविस्तर इति यावत् ॥ ३२ ॥

**भक्तश्च यः कार्तिकेये काकुत्स्थ ! भुवि मानवः ।**
**आयुष्मान् पुत्रपौत्रैश्च स्कन्दसालोक्यतां व्रजेत् ॥ ३३ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे सप्तत्रिंशः सर्गः

---

सालोक्यतां, स्वार्थिकःष्यञ्, सलोकतां व्रजेत् । इमं कुमारसम्भवसर्गं पठन्निति शेषः । गङ्गा(३३)मानः सर्गः ॥ ३३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे सप्तत्रिंशःसर्गः

---

## अथ अष्टात्रिंशः सर्गः

[सगरवृत्तान्तः]

**तां कथां कौशिको रामे निवेद्य कुशिकात्मजः ।**
**पुनरेवापरं वाक्यं काकुत्स्थमिदमब्रवीत् ॥ १ ॥**

अथ 'त्रीन् पथो हेतुना केन' इत्यादिप्रश्नस्य चोत्तरार्थं उपोद्घातः—तां कथामित्यादि । इदमपरं वाक्यमिति । [1]अपृष्टोत्तरं वक्ष्यमाणरूपमिति शेषः ॥ १ ॥

**अयोध्याधिपतिः शूरः पूर्वमासीन्नराधिपः ।**
**सगरो नाम धर्मात्मा प्रजाकामः स[2] चाप्रजः ॥ २ ॥**

यस्मात् अप्रजः तस्मात् प्रजाकामः अभूत् ॥ २ ॥

---

[1] पृष्टोत्तरं—ग. [2] चाप्रजाः—झ.

वैदर्भदुहिता राम! केशिनी नाम नामतः।
ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ॥ ३ ॥

विदर्भाधिपतेरपत्यं। 'जनपदशब्दात् क्षत्रियादञ्' इत्यञ् ॥३॥

अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि।
द्वितीया सगरस्यासीत् पत्नी सुमतिसंज्ञिता ॥ ४ ॥

अरिष्टनेमिः—काश्यपः, तस्य दुहिता तथा। 'सुपर्णभगिनी' इत्यारात्प्रयोगात् अरिष्टनेमिः काश्यपः ॥ ४ ॥

ताभ्यां सह तथा राजपत्निभ्यां तप्तवांस्तपः।
हिमवन्तं समासाद्य भृगुप्रस्रवणे गिरौ ॥ ५ ॥

भृग्वधिष्ठितं प्रस्रवणं—प्रवाहः यस्मिन् स तथा। गिरौ—हिमवतः पादपर्वत इति यावत् ॥ ५ ॥

अथ वर्षशते पूर्णे तपसाऽऽराधितो मुनिः।
सगराय वरं प्रादात् भृगुः सत्यवतां वरः ॥ ६ ॥
अपत्यलाभः सुमहान् भविष्यति तवानघ!
कीर्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ! ॥ ७ ॥
एका जनयिता तात! पुत्रं वंशकरं तव।
षष्टिं पुत्रसहस्राणि अपरा जनयिष्यति ॥ ८ ॥

तातेति उपलालने। जनयितेति लुट्। षष्टिमिति। निपातनादेकवचनान्तस्य सहस्राणीत्यनेन सामानाधिकरण्यम् ॥ ८ ॥

भाषमाणं महात्मानं राजपुत्र्यौ प्रसाद्य तम्।
ऊचतुः परमप्रीते कृताञ्जलिपुटे तदा ॥ ९ ॥

भाषमाणमिति। राजपुत्र्याविति छत्रिन्यायेन वादः ॥ ९ ॥

एकः कस्य सुतो ब्रह्मन्! का बहून् जनयिष्यति।
श्रोतुमिच्छावहे ब्रह्मन्! सत्यमस्तु वचस्तव॥ १०॥
तयोस्तद्वचनं श्रुत्वा भृगुः परमधार्मिकः।
उवाच परमां वाणीं स्वच्छन्दोऽत्र विधीयताम् ॥ ११॥

स्वच्छन्दोऽत्रेति। अत्र—उक्तयुष्मत्प्रश्नविषये स्वच्छन्द एव—युष्मदिच्छैव, न तु मया अस्या एकः, अस्य बहव इति निर्णेतव्यं; अत एकोऽस्तु वा बहवो वा सन्तु, यस्यै कस्यै वा। अतः का, कं वरमिच्छामीति भवतीभ्यामेव विधीयतां—नियमः क्रियताम्॥ ११॥

एको वंशकरो वाऽस्तु बहवो वा महाबलाः!
कीर्तिमन्तो महोत्साहाः, का वा कं वरमिच्छति॥ १२॥

वंशकरः—कृञन्तो हेतौ, वंशवृद्धिहेतुत्वगुणोऽत्र वर्णितः॥ १२॥

मुनेस्तु वचनं श्रुत्वा केशिनी रघुनन्दन!
पुत्रं वंशकरं राम! जग्राह नृपसन्निधौ॥ १३॥

नृपसन्निधावित्यनेन तस्यापि साक्षित्वमात्रं, तस्याप्येकानेकवरणनियमाकर्तृतेत्यावेदितम्॥ १३॥

षष्टिं पुत्रसहस्राणि सुपर्णभगिनी तदा।
महोत्साहान् कीर्तिमतो जग्राह सुमतिः सुतान् ॥ १४॥

सुपर्णो गरुडः॥ १४॥

प्रदक्षिणमृषिं कृत्वा शिरसाऽभिप्रणम्य च।
जगाम स्वपुरं राजा सभार्यो रघुनन्दन!॥ १५॥
अथ काले गते तस्मिन् ज्येष्ठा पुत्रं व्यजायत।
असमञ्ज इति ख्यातं केशिनी सगरात्मजम्॥ १६॥

व्यजायत—प्रसूतवती॥ १६॥

**सुमतिस्तु नरव्याघ्र! गर्भतुम्बं व्यजायत।**
**षष्टिः पुत्राः सहस्राणि तुम्बभेदाद्विनिस्सृताः ॥ १७ ॥**

गर्भतुम्भं–गर्भावरणकोशस्तुम्बम् । तुम्बमिति । जालगर्भयुक्ततुम्बानि व्यजायतेति यावत् । कथं ततः पुत्रोदय इत्यतः–षष्टिरित्यादि । तुम्बभेदादिति । न तु गान्धार्या इव पश्चाद्विभजनीया इत्यर्थः ॥ १७ ॥

**घृतपूर्णेषु कुम्भेषु धात्रयस्तान् समवर्धयन् ।**
**कालेन महता सर्वे यौवनं प्रतिपेदिरे ॥ १८ ॥**

तान्–वियुक्ततुम्बान् ॥ १८ ॥

**अथ दीर्घेण कालेन रूपयौवनशालिनः ।**
**षष्टिः पुत्रसहस्राणि सगरस्याभवंस्तदा ॥ १९ ॥**
**स च ज्येष्ठो नरश्रेष्ठः सगरस्यात्मसम्भवः ।**
**बालान् गृहीत्वा तु जले सरय्वा रघुनन्दन ! ॥ २० ॥**
**प्रक्षिप्य प्राहसन्नित्यं मज्जतस्तान् समीक्ष्य वै ।**

ज्येष्ठस्तु असमञ्जः बालान् जले प्रक्षिप्य मज्जतस्तान् समीक्ष्य प्राहसत्–प्रहासं कृत्वा स्थितवानिति यावत् ॥ २० ॥

**एवं पापसमाचारः सज्जनप्रतिबाधकः ॥ २१ ॥**
**पौराणामहिते युक्तः पुत्रो निर्वासितः पुरात् ।**

जनानां प्रतिबाधको जनप्रतिबाधकः । निर्वासितः–निष्कासितः ॥

**तस्य पुत्रोंऽशुमान्नाम असमञ्जस्य वीर्यवान् ॥ २२ ॥**
**संमतः सर्वलोकस्य सर्वस्यापि प्रियंवदः ।**

तस्य असमञ्जस्य अंशुमान् प्रियंवदत्वादिगुणयुक्तत्वात् पितामहस्य—सगरस्य समीपे स्थितः ॥ २२ ॥

ततः कालेन महता मतिस्समभिजायत ॥ २३ ॥
सगरस्य नरश्रेष्ठ! यजेयमिति निश्चिता ।
स कृत्वा निश्चयं राम! सोपाध्यायगणस्तदा ॥ २४ ॥
यज्ञकर्मणि वेदज्ञो यष्टुं समुपचक्रमे ।

इत्यार्षे श्रीमद्रामायणे बालकाण्डे अष्टात्रिंशः सर्गः

---

*मार (२५) मानः सर्गः ॥ २५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे अष्टात्रिंशः सर्गः

---

## अथ एकोनचत्वारिंशः सर्गः

[सगरपुत्रैः पृथिवीविदारणम्]

विश्वामित्रवचः श्रुत्वा कथाऽन्ते रघुनन्दनः ।
उवाच परमप्रीतो मुनिं दीप्तमिवानलम् ॥ १ ॥

एवं यज्ञोपक्रमणश्रवणे सति तस्य सार्वभौमस्वपूर्वकर्तृकत्वात् तत्सिद्धिविस्तारशुश्रूषया रामप्रश्नं तत्प्रतिपादनं । विश्वामित्रेत्यादि । कथान्ते—यज्ञोपक्रम[1]कथनानन्तरम् ॥ १ ॥

श्रोतुमिच्छामि, भद्रं ते, विस्तरेण कथामिमाम् ।
[2]पूर्वको मे कथं ब्रह्मन्! यज्ञं वै समुपाहरत् ॥ २ ॥

---

*सर्वेषु कोशेषु सार्धचतुर्विंशतिश्लोका एव दृश्यन्ते । परन्तु पञ्चत्रिंशसर्गे एकमर्धमधिकं दृश्यते । तदत्र परिगणितं स्याद्वा ॥

[1] कथानन्तरम्—ग. [2] एतदनन्तरं—तस्य तद्वचनं श्रुत्वा कौतूहलसमन्वितः—ङ.

इमामिति । [1] यज्ञोपार्जनकथामित्यर्थः । ननु कस्ते इह आदरातिशय इत्यतः—पूर्वक इत्यादि । मद्वंशकूटस्थ इत्यर्थः ॥ २ ॥

**विश्वामित्रस्तु काकुत्स्थमुवाच प्रहसन्निव ।**
**श्रूयतां विस्तरो राम! सगरस्य महात्मनः ॥ ३ ॥**

स्ववंश्य इति कृत्वा रामस्य च लोकवत् स्नेहः सम्पन्न इति प्रहासः । इव शब्द एवार्थे । प्रसन्नो भूत्वैवेति यावत् । कथामध्ये पुनः कथान्तरप्रश्ने शाखाचङ्क्रमजकोपमकृत्वैवेत्यर्थः । विस्तर इति । यज्ञस्येति शेषः ॥ ३ ॥

**शङ्करश्वशुरो राम! हिमवानचलोत्तमः ।**
**विन्ध्यपर्वतमासाद्य निरीक्षेते परस्परम् ॥ ४ ॥**

विन्ध्यपर्वतमासाद्य—मध्ये महापर्वतानिरोधाभावात् प्राप्य, तथा विन्ध्योऽपि हिमवन्तमित्येवं परस्परमासाद्य प्रागुक्तवीक्षानिरोधाभावादेव निरीक्षेते—अन्योन्यदर्शनं सख्यप्रयुक्तमनुभवतः ॥ ४ ॥

**तयोर्मध्ये प्रवृत्तोऽभूद्यज्ञः स पुरुषोत्तम!**
**स हि देशो नरव्याघ्र! प्रशस्तो यज्ञकर्मणि ॥ ५ ॥**

किं तत इत्यतः—तयोरित्यादि । स हि प्रशस्त इति । 'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः' इति वचनात् । प्रशस्तः—प्रसिद्ध इत्यर्थः ॥ ५ ॥

**तस्याश्वचर्यां काकुत्स्थ! दृढधन्वा महारथः ।**
**अंशुमानकरोत्तात! सगरस्य मते स्थितः ॥ ६ ॥**

चर्या—रक्षा । दृढधन्वा—'धनुषश्च' इत्यनङ् । मते—शासने ॥

---

[1] यज्ञोपसर्जन—ग.

तस्य पर्वणि तं यज्ञं यजमानस्य वासवः ।
राक्षसीं तनुमास्थाय यज्ञियाश्वमपाहरत् ॥ ७ ॥

पर्वणि–[1]उवथ्याह । तं यज्ञमिति । विहन्तुमिति शेषः । यज्ञियः–यज्ञार्हश्चासावश्वस्तथा । 'यज्ञर्त्विग्भ्याम्' इति घः ॥ ७ ॥

ह्रियमाणे तु काकुत्स्थ ! तस्मिन्नश्वे महात्मनः ।
उपाध्यायगणाः सर्वे यजमानमथाब्रुवन् ॥ ८ ॥
अयं पर्वणि वेगेन यज्ञियाश्वोऽपनीयते ।
हर्तारं जहि काकुत्स्थ ! हयश्चैवोपनीयताम् ॥ ९ ॥
यज्ञच्छिद्रं भवत्येतत् सर्वेषामशिवाय नः ।
तत्तथा क्रियतां राजन् ! यथाऽच्छिद्रः क्रतुर्भवेत् ॥ १० ॥

अच्छिद्र इति पदम् ॥ १० ॥

उपाध्यायवचः श्रुत्वा तस्मिन् सदसि पार्थिवः ।
षष्टिं पुत्रसहस्राणि वाक्यमेतदुवाच ह ॥ ११ ॥
गतिं पुत्राः ! न पश्यामि रक्षसां पुरुषर्षभाः ।
मन्त्रपूतैर्महाभागैरास्थितो हि महाक्रतुः ॥ १२ ॥

हे पुत्राः ! हि–यस्मात् महाक्रतुः मन्त्रपूतैर्महाभागैरास्थितः–अधिष्ठितः तस्मात्तस्यास्य रक्षसां मायया यदि छिद्रं स्यात्तदाऽस्माकं गतिं न पश्यामि । तथा तैर्महाभागैरुक्तं 'यज्ञच्छिद्रं भवत्येतत् सर्वेषामशिवाय नः' इति ॥ १२ ॥

तद्गच्छत विचिन्वध्वं पुत्रकाः ! भद्रमस्तु वः ।
[2]समुद्रमालिनीं सर्वां पृथिवीमनुगच्छत ॥ १३ ॥

---

[1] मिथ्यादिहत—ग. [2] एतदनन्तरं–ऐकैकं योजनं पुत्रा विस्तारमभिगच्छत । इत्यधिकम्–ङ.

तत्–तस्मात् गच्छतेत्यादि। अनुगच्छत। अन्विष्यध्वमिति यावत्॥ १३॥

**यावत्तुरगसन्दर्शः तावत् खनत मेदिनीम्।**
**तं चैव हयहर्तारं मार्गमाणा ममाज्ञया॥ १४॥**

भूमेरुपर्यन्वेषणे[1] न लब्धं चेत्तदा–यावत्तुरगेत्यादि॥ १४॥

**दीक्षितः पौत्रसहितः सोपाध्यायगणो ह्यहम्।**
**इह स्थास्यामि, भद्रं वः, यावत्तुरगदर्शनम्॥ १५॥**

स्वस्य तुरगानुगमनमयुक्तमित्याह—दीक्षित इत्यादि। यस्माद्दीक्षितः, तस्मात् 'गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितम्' इत्यादिना 'न प्रवस्तव्यम्' इति निषेधात् अहमिह स्थास्यामि, पौत्रस्य [2]बालत्वतः तत्सहित एव तिष्ठामि॥ १५॥

**इत्युक्ता हृष्टमनसो राजपुत्रा महाबलाः।**
**[3]जग्मुर्महीतलं राम! पितुर्वचनयन्त्रिताः॥ १६॥**

यन्त्रिताः–नियुक्ताः॥ १६॥

**योजनायामविस्तारमेकैको धरणीतलम्।**
**बिभिदुः पुरुषव्याघ्र! वज्रस्पर्शसमैर्नखैः॥ १७॥**

आयामः–दैर्घ्यं। विस्तारः–विशालता च। एकैको धरणीतलं सर्वमपि सस्नेहात्–समुदं बिभिदुरित्यर्थः॥ १७॥

---

[1] यदि न लब्धं–घ. [2] बालकत्वात्–ग. [3] एतदनन्तरं–गत्वा तु पृथिवीं सर्वां, अदृष्ट्वा तं महाबलाः। इत्यधिकम्–ङ.

शूलैरशनिकल्पैश्च हलैश्चापि सुदारुणैः ।
भिद्यमाना वसुमती ननाद रघुनन्दन ! ॥ १८ ॥

भिद्यमानेति । सर्वत इति शेषः । वसुमतीति । तद्वर्तिसर्वस्रोतांसीति यावत् ॥ १८ ॥

नागानां वध्यमानानां असुराणां च राघव !
राक्षसानां च दुर्धर्षः सत्त्वानां निनदोऽभवत् ॥ १९ ॥
योजनानां सहस्राणि षष्टिं तु रघुनन्दन !
बिभिदुर्धरणीं वीक्ष्य रसातलमनुत्तमम् ॥ २० ॥

योजनानामित्यादि । पितृनियुक्तमार्गेण सर्वां सन्दिग्धां खननोपेतां विचित्य पृथिव्यधोभागं रसातलमेव विचेतुं धरणीं एकैकतः योजनानां सहस्राणि षष्टिं तु बिभिदुः ॥ २० ॥

एवं पर्वतसम्बाधं जम्बूद्वीपं नृपात्मजाः ।
खनन्तो नरशार्दूल ! सर्वतः परिचक्रमुः ॥ २१ ॥

पर्वतैस्सम्बाधः—नैबिड्यं—यस्य तत्तथा ॥ २१ ॥

ततो देवास्सगन्धर्वाः सासुरास्सहपन्नगाः ।
सम्भ्रान्तमनसः सर्वे पितामहमुपागमन् ॥ २२ ॥
ते प्रसाद्य महात्मानं विषण्णवदनास्तदा ।
उचुः परमसंत्रस्ताः पितामहमिदं वचः ॥ २३ ॥
भगवन् ! पृथिवी सर्वा खन्यते सगरात्मजैः ।
बहवश्च महात्मनो हन्यन्ते तलवासिनः ॥ २४ ॥

तलवासिनो महात्मान इति । कपिलवद्रसातलवासिनो महात्मानः सिद्धगन्धर्वादयः इत्यर्थः ॥ २४ ॥

अयं यज्ञहरोऽस्माकं अनेनाश्वोऽपनीयते।
इति ते सर्वभूतानि निघ्नन्ति सगरात्मजाः ॥ २५॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकोनचत्वारिंशः सर्गः

---

अपनीयते—अपनीयते स्म इति तत्प्रसङ्गरहितानि सर्वभूतानि राजवदविचार्यैव घ्नन्तीत्यर्थः। माद्री (२५) मानः तर्गः ॥ २५॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकोनचत्वारिंशः सर्गः

---

अथ चत्वारिंशः सर्गः
[सगरपुत्राणां भस्मीभावः]

देवतानां वचः श्रुत्वा भगवान् वै पितामहः।
प्रत्युवाच सुसंत्रस्तान् कृतान्तबलमोहितान् ॥ १॥

एवं भगवता त्रस्तपुत्रत्राणोपदेशपूर्वकं पुनश्च प्रकृतप्रवृत्त्युपदेशः। देवतानामित्यादि। कृतान्तेति। कृत अन्तः—प्रागुक्तरीत्या सर्वलोकनाशः यैस्तानि तथा, तानीमानि सगरसुतबलानि तथा, तैर्मोहिताः—मूर्च्छितचित्तास्तथा ॥ १॥

यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः।
[1]कापिलं रूपमास्थाय धारयत्यनिशं धराम् ॥ २॥

कृत्स्नाऽपीयं वसुधा यस्येति। जलभूमयविराजो भूप्रधानमूर्तित्वाद्वासुदेवस्य भूमेः असाधारणस्वत्वम्। धारयतीति। योगबलनेति शेषः ॥ २॥

---

[1] एतदनन्तरं—महिषी माधवस्यैषा स एष भगवान् प्रभुः। इत्यधिकम्—ङ.

तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः ।
पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः ॥ ३ ॥
सगरस्य च पुत्राणां विनाशो [1]दीर्घदर्शिनाम् ।

पृथिव्या निर्भेदश्च सनातनः—प्रतिकल्पमवश्यंभावी, श्रौतस्मार्तसागरादिशब्दैवा[2]दृष्ट एव । अत एव यथाप्राप्तार्थ इति न तत्र शोकः कार्य इति शेषः । दीर्घदर्शिनां अस्माकं सगरस्य पुत्राणां विनाशस्तु द्रष्टव्य एव । अतः सोऽपि भविष्यति । अतो न शोकः कार्य इत्यर्थः ॥ ४ ॥

पितामहवचः श्रुत्वा त्रयस्त्रिंशदरिन्दम ! ॥ ४ ॥
देवाः परमसंहृष्टाः पुनर्जग्मुर्यथागतम् ।
सगरस्य च पुत्राणां प्रादुरासीन्महात्मनाम् ॥ ५ ॥
पृथिव्यायां भिद्यमानायां निर्घातसमनिस्वनः ।

प्रकृतकार्यप्रवृत्तिः—सगरस्येत्यादि ॥ ५–६ ॥

ततो भित्वा महीं सर्वे कृत्वा चापि प्रदक्षिणम् ॥ ६ ॥
सहिताः सागरास्सर्वे पितरं वाक्यमब्रुवन् ।

सहिताः—एकत्र संहताः ॥ ७ ॥

परिक्रान्ता मही सर्वा सत्त्ववन्तश्च सूदिताः ॥ ७ ॥
देवदानवरक्षांसि पिशाचोरगकिन्नराः ।
न च पश्यामहेऽश्वं तमश्वहर्तारमेव च ॥ ८ ॥
किं करिष्याम, भद्रं ते, बुद्धिरत्र विचार्यताम् ।

---

[1] दृष्ट एव—घ. [2] अदीर्घजीविनाम्—ज. झ.

ते अस्मासु भद्रं—अनुग्रहबुद्धिरस्तु । वयं किं करिष्यामः, सलोपश्छान्दसः ॥ ८ ॥

तेषां तद्वचनं श्रुत्वा पुत्राणां राजसत्तमः ॥ ९ ॥
समन्युरब्रवीद्वाक्यं सगरो रघुनन्दन !
भूयः खनत, भद्रं वः, निर्भिद्य वसुधातलम् ॥ १० ॥
अश्वहर्तारमासाद्य कृतार्थाश्च निवर्तथ ।

भूयो निर्भिद्येति योजना । निवर्तथ—व्यत्ययात् परस्मैपदम्—निवर्तध्वम् ॥ १० ॥

पितुर्वचनमासाद्य सगरस्य महात्मनः ॥ ११ ॥
षष्टिः पुत्रसहस्राणि रसातलमभिद्रवन् ।
खन्यमाने ततस्तस्मिन् ददृशुः पर्वतोपमम् ॥ १२ ॥
दिशागजं विरूपाक्षं धारयन्तं महीतलम् ।

खन्यमान इति । षष्टियोजनसहस्रात्परमपीति शेषः । दिशागजमिति । वाचानिशादिशब्दानां हलन्तानामप्यजादिगणपाठतष्टाप् ॥

सपर्वतवनां कृत्स्नां पृथिवीं रघुनन्दन ! ॥ १३ ॥
शिरसा धारयामास विरूपाक्षो महागजः ।

कृत्स्नामिति । तद्दिक्प्रदेशावच्छिन्नामिति शेषः ॥ १३ ॥

यदा पर्वणि काकुत्स्थ ! विश्रमार्थं महागजः ॥ १४ ॥
खेदाच्चालयते शीर्षं भूमिकम्पस्तदा भवेत् ।

यदा पर्वणि—यस्मिन् काले । "तिथिभेदे क्षणे पर्व" इति निघण्टुः ॥ १४ ॥

ते तं प्रदाक्षिणं कृत्वा दिशापालं महागजम् ॥ १५ ॥
मानयन्तो हि ते राम! जग्मुर्भित्वा रसातलम् ।

मानयन्त इति । दिशागजमिति शेषः ॥ १६ ॥

ततः पूर्वां दिशं भित्वा दक्षिणां बिभिदुः पुनः ॥ १६ ॥
दक्षिणस्यामपि दिशि ददृशुस्ते महागजम् ।
महापद्मं महात्मानं सुमहत्पर्वतोपमम् ॥ १७ ॥
शिरसा धारयन्तं ते विस्मयं जग्मुरुत्तमम् ।
ततः प्रदक्षिणं कृत्वा सगरस्य महात्मनः ॥ १८ ॥
षष्टिः पुत्रसहस्राणि पश्चिमां बिभिदुर्दिशम् ।
पश्चिमायामपि दिशि महान्तमचलोममम् ॥ १९ ॥
दिशागजं सौमनसं ददृशुस्ते महाबलाः ।
तं ते प्रदक्षिणं कृत्वा पृष्ट्वा चापि निरामयम् ॥ २० ॥
खनन्तः समुपक्रान्ता दिशं हैमवतीं ततः ।

निरामयं । कुशलमिति यावत् । खनन्तः—खननं कुर्वाणाः ते हैमवतीं दिशं तदा समुपक्रान्ताः—उपगतवन्तः ॥ २१ ॥

उत्तरस्यां रघुश्रेष्ठ! ददृशुर्हिमपाण्डुरम् ॥ २१ ॥
भद्रं भद्रेण वपुषा धारयन्तं महीमिमाम् ।
समालभ्य ततः सर्वे कृत्वा चैनं प्रदक्षिणम् ॥ २२ ॥
षष्टिः पुत्रसहस्राणि बिभिदुर्वसुधातलम् ।

समालभ्य—उपलभ्येति यावत् ॥ २३ ॥

ततः प्रागुत्तरां गत्वा सागराः प्रथितां दिशम् ॥ २३ ॥
रोषादभ्यखनन् सर्वे पृथिवीं सगरात्मजाः ।

प्रागुत्तरयोरन्तरालं—प्रागुत्तरां—ईशानदिशमिति यावत् ॥ २३ ॥

ते तु सर्वे महात्मानो भीमवेगा महाबलाः ॥ २४ ॥
ददृशुः कपिलं तत्र वासुदेवं सनातनम् ।
हयं च तस्य देवस्य चरन्तमविदूरतः ॥ २५ ॥
प्रहर्षमतुलं प्राप्ताः सर्वे ते रघुनन्दन !
ते तं [1]यज्ञहनं ज्ञात्वा क्रोधपर्याकुलेक्षणाः ॥ २६ ॥
खनित्रलाङ्गलधरा नानावृक्षशिलाधराः ।
अभ्यधावन्त संक्रुद्धाः तिष्ठ तिष्ठेति चाब्रुवन् ॥ २७ ॥

ते तमिति । तं–कपिलमेव यज्ञहनं–यज्ञं हन्तीति, पचाद्यच्, अविचारतस्तमेवाश्वापहारद्वारा यज्ञहन्तारं ज्ञात्वा इत्यर्थः ॥ २७ ॥

अस्माकं त्वं हि तुरगं यज्ञियं हृतवानसि ।
दुर्मेधः ! त्वं हि संप्राप्तान् विद्धि नः सगरात्मजान् ॥ २८ ॥
श्रुत्वा तु वचनं तेषां कपिलो रघुनन्दन !
रोषेण महताऽऽविष्टो हुङ्कारमकरोत्तदा ॥ २९ ॥
ततस्तेनाप्रमेयेन कपिलेन महात्मना ।
भस्मराशीकृताः सर्वे, काकुत्स्थ ! सगरात्मजाः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे चत्वारिंशः सर्गः

---

नीड(३०)मानः सर्गः ॥ ३० ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे चत्वारिंशः सर्गः

---

[1] हयहरं ज्ञात्वा, यज्ञहरं ज्ञात्वा–ङ.

## अथ एकचत्वारिंशः सर्गः

### [सगरयज्ञसमापनम्]

**पुत्रांश्चिरगतान् ज्ञात्वा सगरो रघुनन्दन!**
**नप्तारमब्रवीद्राजा दीप्यमानं स्वतेजसा ॥ १ ॥**

एवमश्ववदश्वान्वेषिष्वपि प्रत्यागमनरहितेषु सगरस्य तदुभयान्वेषणप्रवृत्तिः—पुत्रानित्यादि । चिरगतान् ज्ञात्वेति । अप्रत्यायातानिति शेषः । नप्तारं–पौत्रम् ॥ १ ॥

**शूरश्च कृतविद्यश्च पूर्वैस्तुल्योऽसि तेजसा ।**
**पितॄणां गतिमन्विच्छ येन चाश्वोऽपवाहितः ॥ २ ॥**

पूर्वैः–पितृभिः । गतिं–वृत्तान्तं । येन चाश्वोऽपवाहितः–देशान्तरं प्रापितः, तद्गतिं च अन्विच्छ ॥ २ ॥

**अन्तर्भौमानि सत्त्वानि वीर्यवन्ति महान्ति च ।**
**तेषां त्वं प्रतिघातार्थं सासिं गृह्णीष्व कार्मुकम् ॥ ३ ॥**

भूमेरन्तः यानि भौमानि–भूबिलमाश्रितानि सत्त्वानि–महानागप्रमुखानि सन्ति । कार्मुकाविषयासन्नसंहारार्थं–सासिमिति ॥ ३ ॥

**अभिवाद्याभिवाद्यांस्त्वं हत्वा विघ्नकरानपि ।**
**सिद्धार्थस्सन्निवर्तस्व मम यज्ञस्य पारगः ॥ ४ ॥**

अभिवाद्यान्–अभिवादनमर्हन्तीत्यभिवाद्याः, 'तदर्हति' इति यत् । सिद्धार्थस्सन्निवर्तस्व । अश्वमेधयज्ञस्य पारगः, अन्तर्भावितणिः, गमेः 'अन्तात्यन्त' इत्यादिना डः, पारप्रापकश्च भव ॥ ४ ॥

**एवमुक्तोंऽशुमान् सम्यक् सगरेण महात्मना ।**
**धनुरादाय खड्गं च जगाम लघुविक्रमः ॥ ५ ॥**

सुखार्तं पितृभिर्मार्गं अन्तर्भौमं महात्मभिः।
प्रापद्यत नरश्रेष्ठः तेन राज्ञाऽभिचोदितः ॥ ६ ॥

महात्मभिः पितृभिः भूमेरन्तः सुखार्तं भौममेव मार्गं तद्वृत्तान्तपरिज्ञानाय प्रापद्यत ॥ ६ ॥

दैत्यदानवरक्षोभिः पिशाचपतगोरगैः।
पूज्यमानं महातेजा दिशागजमपश्यत ॥ ७ ॥
स तं प्रदक्षिणं कृत्वा पृष्ट्वा चैव निरामयम्।
पितॄन् स परिपप्रच्छ वाजिहर्तारमेव च ॥ ८ ॥

परिपप्रच्छेति। 'क्व आसत इति' इति शेषः ॥ ८ ॥

दिशागजस्तु तच्छ्रुत्वा प्रत्याहांशुमतो वचः।
आसमञ्ज! कृतार्थस्त्वं सहाश्वः शीघ्रमेष्यसि ॥ ९ ॥

आसमञ्ज—असमञ्जसुत! इञभाव आर्षः। शीघ्रमेष्यसीति। स्वयमेवान्वेषणादिति शेषः ॥ ९ ॥

तस्य तद्वचनं श्रुत्वा सर्वानेव दिशागजान्।
यथाक्रमं यथान्यायं प्रष्टुं समुपचक्रमे ॥ १० ॥
तैश्च सर्वैर्दिशापालैर्वाक्यज्ञैर्वाक्यकोविदैः।
पूजितः सहयश्चैव गन्ताऽसीत्यभिचोदितः ॥ ११ ॥

वाक्यज्ञैः-वक्तुमर्हं—वाक्यम्। 'ऋहलोर्ण्यत्'। 'चजोः कु' इति कुत्वम्। वाक्यकोविदैः। तयोरेव भावे कृत्यः, कालदेशादिवक्तव्यतत्त्वज्ञैः। तदुचितवचनसमर्थैश्चेत्यर्थः। तदुचितवचनं च—स्वयमेवान्विष्येत्यसमदुक्तरूपम् ॥ ११ ॥

तेषां तद्वचनं श्रुत्वा जगाम लघुविक्रमः।
भस्मराशीकृता यत्र पितरस्तस्य सागराः ॥ १२ ॥

सागराः—तस्य पितरो यत्र भस्मराशीकृताः तं प्रदेशं जगाम ॥

स दुःखवशमापन्नस्त्वसमञ्जसुतस्तदा।
चुक्रोश परमार्तस्तु वधात्तेषां सुदुःखितः ॥ १३ ॥

दुःखवशमापन्न इति। गत्वा, दृष्ट्वा च भस्मीभूतपितॄनिति शेषः ॥ १३ ॥

यज्ञियं च हयं तत्र चरन्तमविदूरतः।
ददर्श पुरुषव्याघ्रो दुःखशोकसमन्वितः ॥ १४ ॥
स तेषां राजपुत्राणां कर्तुकामो जलक्रियाम्।
सलिलार्थी महातेजा न चापश्यज्जलाशयम् ॥ १५ ॥
विसार्य निपुणां दृष्टिं ततोऽपश्यत् खगाधिपम्।
पितॄणां मातुलं राम! सुपर्णमनिलोपमम् ॥ १६ ॥

विसार्य—समन्तात् प्रसार्येत्यर्थः। निपुणां—दूरवीक्षणसमर्थाम्। पितॄणां मातुलमिति। सुवर्णभगिनी सुमतिरिति प्रागेवोक्तत्वात्। अनिलोपमामिति। वेगेनेति शेषः ॥ १६ ॥

स चैवमब्रवीद्वाक्यं वैनतेयो महाबलः।
मा शुचः, पुरुषव्याघ्र! वधोऽयं लोकसम्मतः ॥ १७ ॥

माशुच इति। च्लेरङ्। कश्चित् मृषाह द्युतादित्वादङिति, द्युतादिस्सर्वस्तङन्त एव, शुचिस्तु नास्ति तत्र। लोकसम्मतः—लोकहितः। अत एव 'क्तेन च पूजायाम्' इति परोच्यमानषष्ठीसमासनिषेधाप्रसङ्गः ॥

**कपिलेनाप्रमेयेन दग्धा हीमे महाबलाः ।**
**सलिलं नार्हसि प्राज्ञ! दातुमेषां हि लौकिकम् ॥ १८ ॥**

हि—यस्मात् अप्रमेयेन—महात्मना कपिलेन दग्धाः अत एव लौकिकं सलिलं दातुं नार्हसि । "चाण्डालादुदकात् सर्पाद्वैद्युतात् ब्राह्मणादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् । उदकं पिण्डदानं च प्रेतेभ्यो यद्विधीयते । नोपतिष्ठति तत्सर्वमन्तारिक्षे विनश्यति ॥" इति स्मृतेरित्याशयः । प्रकृते ब्राह्मणाद्वधः ॥ १८ ॥

**गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ !**
**तस्यां कुरु महाबाहो ! पितॄणां तु जलक्रियाम् ॥ १९ ॥**
**भस्मराशीकृतानेतान् प्लावयेल्लोकपावनी ।**
**तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया ॥ २० ॥**
**[1] षष्टिं पुत्रसहस्राणि स्वर्गलोकं नयिष्यति ।**

[2] गङ्गायां जलक्रियां कुर्वित्युक्ते--तर्हि देवलोकगत्या गङ्गयोदकक्रिया कार्येति शङ्कायामाह---भस्मेत्यादि । यदा प्लावयेत्तदा क्लिन्नमिति योजना । नयिष्यति । गङ्गोदकसेकरूपसंस्कारेणेति शेषः ॥ २० ॥

**गच्छ चाश्वं महाभाग! सङ्गृह्य पुरुषर्षभ !**
**यज्ञं पैतामहं वीर ! निर्वर्तयितुमर्हसि ॥ २१ ॥**
**सुपर्णवचनं श्रुत्वा सोंऽशुमानतिवीर्यवान् ।**
**त्वरितं हयमादाय पुनरायान्महायशाः ॥ २२ ॥**
**ततो राजानमासाद्य दीक्षितं रघुनन्दन !**
**न्यवेदयद्यथावृत्तं सुपर्णवचनं तथा ॥ २३ ॥**

यथावृत्तमिति । पितृव्यविषयकमिति शेषः ॥ २३ ॥

---

[1] एतदन्तरं—गङ्गामानय, भद्रं ते, देवलोकात् महीतलम् । क्रियतां यदि शक्तोऽसि गङ्गायास्त्ववतारणम् ॥ इत्यधिकम्—ङ. [2] गङ्गया इति स्यात्.

तच्छ्रुत्वा घोरसङ्काशं वाक्यमंशुमतो नृपः ।
यज्ञं निर्वतयामास यथाकल्पं यथाविधि ॥ २४ ॥
स्वपुरं चागमच्छ्रीमान् इष्टयज्ञो महीपतिः ।
गङ्गायाश्चागमे राजा निश्चयं नाध्यगच्छत ॥ २५ ॥

इष्टः यज्ञः यस्येति बहुव्रीहिः । आगम इति । भूमावागम-इत्यर्थः । निश्चयं—उपायनिश्चयं । अध्यगच्छतेति तङ् व्यत्ययात् ॥

अकृत्वा निश्चयं राजा कालेन महता महान् ।
त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं गतः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकचत्वारिंशः सर्गः

---

[1]चारु (२६) मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकचत्वारिंशः सर्गः

---

## अथ द्विचत्वारिंशः सर्गः

[भगीरथतपः]

कालधर्मं गते, राम ! सगरे प्रकृतीजनाः ।
राजानं रोचयामासुरंशुमन्तं सुधार्मिकम् ॥ १ ॥

अथ गङ्गायास्त्रिपथगमनहेतुप्रकार एव प्रस्तुतः प्रतिपाद्यते—कालधर्ममित्यादि । संसारिमात्रस्य कालेनावश्यंभावी धर्मः कालधर्मः, मरणमिति यावत् । प्रकृतीजनाः इति छान्दसो दीर्घः । प्रकृतिजनः अमात्यवर्गः । "प्रकृतिस्सहजे योनावमात्ये परमात्मनि" । राजानं रोचयामासुरिति । न्यायप्राप्तत्वादेव ॥ १ ॥

---

[1] रतमानः—क.

स राजा सुमहानासीदंशुमान् रघुनन्दन !
तस्य पुत्रो महानासीद्दिलीप इति विश्रुतः ॥ २ ॥
तस्मिन् राज्यं समावेश्य दिलीपे रघुनन्दन !
हिमवच्छिखरे पुण्ये तपस्तेपे सुदारुणम् ॥ ३ ॥

तपस्तेप इति । तपःकर्मकतपेः कर्मवद्भावात् सर्वत्रात्मनेपदमित्युक्तमेव । पितॄणां गतय इति शेषः ॥ ३ ॥

द्वात्रिंशच्च सहस्राणि वर्षाणि सुमहायशाः ।
तपोवनं गतो राम ! स्वर्गं लेभे तपोधनः ॥ ४ ॥
दिलीपस्तु महातेजाः श्रुत्वा पैतामहं वधम् ।
दुःखोपहतया बुद्ध्या निश्चयं नाध्यगच्छत ॥ ५ ॥

पैतामहं वधमिति । स्वपितामहानां सागराणामपमृत्युमित्यर्थः ॥

कथं गङ्गावतरणं कथं तेषां जलक्रिया ।
तारयेयं कथं चैतानिति चिन्तापरोऽभवत् ॥ ६ ॥

निश्चयानधिगतिरेवाभिनीयते—कथमित्यादि ॥ ६ ॥

तस्य चिन्तयतो नित्यं धर्मेण विदितात्मनः ।
पुत्रो भगीरथो नाम जज्ञे परमधार्मिकः ॥ ७ ॥
दिलीपस्तु महातेजा यज्ञैर्बहुभिरिष्टवान् ।
त्रिंशद्वर्षसहस्राणि राजा राज्यमकारयत् ॥ ८ ॥
अगत्वा निश्चयं राजा तेषामुद्धरणं प्रति ।
व्याधिना नरशार्दूल ! कालधर्ममुपेयिवान् ॥ ९ ॥

व्याधिनेति । पितॄणामुद्धरणालाभजदुःखजेनेति शेषः ॥ ९ ॥

**इन्द्रलोकं गतो राजा स्वार्जितेनैव कर्मणा ।**
**राज्ये भगीरथं पुत्रमभिषिच्य नरर्षभः ॥ १० ॥**

ननु राज्ये पुत्रं भगीरथमभिषिच्य इन्द्रलोकं दिलीपो गतवानिति इहोच्यते । कालिदासस्तु दिलीपपुत्रं रघुमाह । किमिह प्रमाणम् ? उभयमपि प्रमाणम् । भगीरथपुत्रकदिलीपादन्य एव तद्वंश्यो रघुपुत्रकदिलीप इति ॥ १० ॥

**भगीरथस्तु राजर्षिर्धार्मिको रघुनन्दन !**
**अनपत्यो महातेजाः प्रजाकामः सचाप्रजः ॥ ११ ॥**

अनपत्य इत्यादि व्याकृतचरः ॥ ११ ॥

**मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः ।**
**स तपो दीर्घमातिष्ठत् गोकर्णे रघुनन्दन ! ॥ १२ ॥**

गोकर्णः—हैमवतपादविशेष एव । तपस उत्तरत्रैव गन्तव्यत्वात् ॥

**ऊर्ध्वबाहुः पञ्चतपा मासाहारो जितेन्द्रियः ।**
**तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ॥ १३ ॥**
**अतीतानि महाबाहो ! तस्य राज्ञो महात्मनः ।**

पञ्चाग्निमध्ये तपो यस्य सः पञ्चतपाः । मासस्य सकृदाहारो यस्य सः मासाहारः । उभावपि मध्यमपदलोपिसमासौ । परः पृषोदरादित्वात्साधुत्वमित्याह । तदसत्—यत्र वर्णविकारलोपादेशादि श्मशानबलाहकादिवत्, तत्रैव तेन साधुताया वक्तव्यत्वात् । काकदन्तपरीक्षां करिष्यामीति शाब्दिकत्वमत्या बहुस्थले मृषाप्रासीर्वदति । तत्सर्वं मदुच्यमानरीतिदृक्शाब्दिकशिरोमर्णानाममत्सराणां सुदर्शमित्यर्थवादाः अशक्यगणनातो नानूद्यन्ते । तदप्युच्यमानरीतितः पदवाक्यसाहित्यनिष्णातसूरिदर्शनम् ॥ १३ ॥

**सुप्रीतो भगवान् ब्रह्मा प्रजानां पतिरीश्वरः ॥ १४ ॥**

प्रजानां पतिरिति स्वापत्यत्वादेव । ईश्वर इति अनन्यसामान्यतया सर्वसंसारपञ्चकृत्यप्रवर्तकत्वात् ॥ १४ ॥

**ततस्सुरगणैस्सार्धं उपागम्य पितामहः ।**
**भगीरथं महात्मानं तप्यमानमथाब्रवीत् ॥ १५ ॥**
**भगीरथ महाभाग! प्रीतस्तेऽहं जनेश्वर!**
**तपसा च सुतप्तेन वरं वरय सुव्रत! ॥ १६ ॥**
**तमुवाच महातेजाः सर्वलोकपितामहम् ।**
**भगीरथो महाभागः कृताञ्जलिरुपस्थितः ॥ १७ ॥**
**यदि मे भगवन्! प्रीतो यद्यस्ति तपसः फलम् ।**
**सगरस्यात्मजास्सर्वे मत्तस्सलिलमाप्नुयुः ॥ १८ ॥**

यदि प्रीतः, यद्यस्ति इति वादो दुःखातिशयात् ॥ १८ ॥

**गङ्गायास्सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ।**
**स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥ १९ ॥**

मत्तस्सलिलमाप्नुयुरिति—कीदृशमित्यपेक्षायां—गङ्गाया इत्यादि । एषां भस्मनि गङ्गायास्सलिलक्लिन्न एव स्वर्गं गच्छेयुः, नान्यथा ; तथा गरुत्मद्वचनात् । अतस्तादृशं सलिलं मत्तः आप्नुयुः ॥ १९ ॥

**देया च सन्ततिर्देव! नावसीदेत् कुलं च नः ।**
**इक्ष्वाकूनां कुले देव! एष मेऽस्तु वरः परः ॥ २० ॥**

इक्ष्वाकूनां कुल इति । उत्पन्नस्य मम इति शेषः । परो वर इति । द्वितीयो वर इत्यर्थः ॥ २० ॥

उक्तवाक्यं तु राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षरम् ॥ २१ ॥
मनोरथो महानेषः भगीरथ महारथ!
एवं भवतु, भद्रं ते, इक्ष्वाकुकुलवर्धन! ॥ २२ ॥

मनोरथ इति । तावक इति शेषः ॥ २२ ॥

इयं हैमवती गङ्गा ज्येष्ठा हिमवतस्सुता ।
तां वै धारयितुं शक्तो हरस्तत्र नियुज्यताम् ॥ २३ ॥

इयमिति भगवत्समीपे स्थितत्वान्निर्देशः ॥ २३ ॥

गङ्गायाः पतनं राजन्! पृथिवी न सहिष्यति ।
तां वै धारयितुं वीर! नान्यं पश्यामि शूलिनः ॥ २४ ॥

कुतो हरनियोग इत्यतः—गङ्गाया इत्यादि ॥ २४ ॥

तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् ।
जगाम त्रिदिवं देवस्सह दैवैर्मरुद्गणैः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे द्विचत्वारिंशः सर्गः

---

गङ्गां चाभाष्येति । वत्से [1] राजानं यथाकालमनुगृहाणेत्युक्त्वेति यावत् । दैवैः—आजानजैः । मरुद्गणाः—कर्मदेवाः । [2] मरु (२५) मानः सर्गः ॥ २५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे द्विचत्वारिंशः सर्गः

---

[1] वत्से राजानं—इति-ग. पुस्तके नास्ति. [2] रममानः-क.

## अथ त्रिचत्वारिंशः सर्गः

[गङ्गावतरणम्]

देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीडिताम् ।
कृत्वा वसुमतिं राम! संवत्सरमुपासत ॥ १ ॥

अथ भगीरथस्य गङ्गावतरणयात्राशेषकथनम्—देवदेव इत्यादि । आजानजानामपि देवानां देवः, सर्वालङ्कारोपचारभृतिकृत्यविमुक्तानीत्यादियोगाद्देवतानामीशस्त्वेशित्रनुग्रहादित्युच्यमानदिविदेवधर्मत्वसम्पादकः । अङ्गुष्ठाग्रेति । एकाङ्गुष्ठाग्रेणेति यावत् । उपासतेति । छान्दसं बहुवचनम् । उमापतिमिति शेषः ॥ १ ॥

[ऊर्ध्वबाहुर्निरालम्बो वायुभक्षो निराश्रयः ।
अचलस्स्थाणुवत् स्थित्वा रात्रिंदिवमरिन्दम! ॥]
अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः ।
उमापतिः पशुपती राजानमिदमब्रवीत् ॥ २ ॥
प्रीतस्तेऽहं नरश्रेष्ठ! करिष्यामि तव प्रियम् ।
[तमब्रवीन्नृपवरो गङ्गां धारय वै हर! ॥
इत्युक्तो वचनं भर्गः करिष्यामि प्रियं तव ।]
शिरसा धारयिष्यामि शैलराजसुतामहम् ॥ ३ ॥
[1]ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता ।
तथा सतिमहद्रूपं कृत्वा वेगं च दुस्सहम् ॥ ४ ॥
आकाशादपतद्राम! शिवे शिवशिरस्युत ।

तथा सतीति । ईश्वरेण धारणाङ्गीकारे सतीत्यर्थः । शिवे—शोभने । उत—अनन्तरम् ॥ ४ ॥

---

[1] एतदनन्तरम्—'उमापतेर्वचश्श्रुत्वा गङ्गा क्रोधसमन्विता' इत्यधिकं-ङ. झ.

अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ।
विशाम्यहं हि पातालं स्रोतसा गृह्य शङ्करम् ॥ ५ ॥

ननु महद्रूपं वेगं दुस्सहं च किमर्थमकरोदित्यतः—अचिन्तयदित्यादि ॥ ५ ॥

तस्यावलेपनं ज्ञात्वा क्रुद्धस्तु भगवान् हरः ।
तिरोभावयितुं बुद्धिं चक्रे त्रिनयनस्तदा ॥ ६ ॥

तस्यावलेपनमिति । छान्दसस्सन्धिः । अवलेपनं—स्वस्यापि स्रोतसाऽभिभवनचिन्तारूपं गर्वम् । तिरोभावयितुं—तिरोहितां—अभिभूतां कर्तुम् ॥ ६ ॥

सा तस्मिन् पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ।
हिमवत्प्रतिमे राम! जटामण्डलगह्वरे ॥ ७ ॥

जटामण्डलेन गह्वरे—दुष्प्रवेशनिर्गमे ॥ ७ ॥

सा कथंचिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता ।
नैव निर्गमनं लेभे जटामण्डलमोहिता ॥ ८ ॥

यत्नमास्थिताऽपि महीं गन्तुं नाशक्नोत् । अन्ततः निर्गमनं—जटामण्डलाद्बहिर्निर्गमनमपि न लभे ॥ ८ ॥

तत्रैवा[1]बभ्रमद्देवी संवत्सरगणान् बहून् ।
तामपश्यन् पुनस्तत्र तपः परममास्थितः ॥ ९ ॥

तर्हि किं कृतवतीत्यत्रोच्यते—तत्रैवेत्यादि । अबभ्रमदिति । भ्रान्ताऽभूत् । सन्वदित्वाभावः छान्दसः । अथ जटया तिरोहितां

---

[1] बभ्रमत्—ङ.

गङ्गां अपश्यन् भगीरथः पुनश्च तत्र तत्प्राप्तिविषये हरमुद्दिश्य परमं तप आस्थितः ॥ ९ ॥

**अनेन तोषितश्चासीत् अत्यर्थं रघुनन्दन !**
**विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ॥ १० ॥**

ततः—अनेन तपसा हरः तोषितश्चासीत् । ततस्तुष्टस्सन् हरो बिन्दुसरः प्रति, हिमवति ब्रह्मनिर्मितसरोविशेषो बिन्दुसरः, तत्प्रति विससर्ज ॥ १० ॥

**तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ।**
**ह्लादिनी पावनी चैव नलिनी च तथाऽपरा ॥ ११ ॥**

तस्यामित्यादिना त्रिपथगमनं भगीरथतपोहेतुकमुक्तम् ॥ ११ ॥

**तिस्रः प्राचीं दिशं जग्मुः गङ्गाश्शिवजलाश्शुभाः ।**
**सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ॥ १२ ॥**
**[1]तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ।**
**सप्तमी चान्वगात्तासां भगीरथमथो नृपम् ॥ १३ ॥**

एतेन त्रीन् पथः केन हेतुनेत्यस्योत्तरं जातमेव ॥ १३ ॥

**भगीरथोऽपि राजर्षिः दिव्यं स्यन्दनमाश्रितः ।**
**प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ॥ १४ ॥**

अतः परं 'कर्मभिः कैस्समन्विता' इति बहुवचनदर्शितचरितभेदप्रश्नस्योत्तरम्—भगीरथोऽपीत्यादि । तं चापीति । प्रागुत्तरदिशीव दक्षिणाञ्जिगमिषुश्चाप्यनुव्रजत् । अडभाव आर्षः ॥ १४ ॥

---

[1] एतदनन्तरं—'तथैव चालिका नाम विश्रुता लोकपावनी ।' इत्यधिकं क्वचित्—ङ.

**गगनाच्छङ्करशिरः, ततो धरणिमाश्रिता ।**
**व्यसर्पत जलं तत्र तीव्रशब्दपुरस्कृतम् ॥ १५ ॥**

तीव्रशब्दपुरस्कृतमित्यत्र हेतुः—गगनादित्यादि ॥ १५ ॥

**मत्स्यकच्छपसङ्घैश्च शिंशुमारगणैस्तदा ।**
**पतद्भिः पतितैश्चान्यैः व्यरोचत वसुन्धरा ॥ १६ ॥**

"शिंशुमारस्त्वम्बुकपिः" इति वैजयन्ती । कप्याकारो जलचरविशेष इत्यर्थः । पतद्भिरिति वर्तमानप्रयोगः ॥ १६ ॥

**ततो देवर्षिगन्धर्वा यक्षाः सिद्धगणास्तदा ।**
**व्यलोकयन्त ते तत्र गगनाद्गां गतां तथा ॥ १७ ॥**

गगनात् गां गतामिति । रुद्रजटाकाशात् भुवमित्यर्थः ॥ १७ ॥

**विमानै[1]र्गगनाकारैर्हयैर्गजवरैस्तदा ।**
***पारिप्लव[2]गताश्चापि देवतास्तत्र विष्ठिताः ॥ १८ ॥**

गजवरैरिति । चरन्त इति शेषः । गगनशब्देन मेघा लक्ष्यन्ते । पारिप्लवो यानभेदः (शिबिकादिभेदः) शिबिकादिरूपः कुबेरादेः ; तं गताः । द्वितीयासमासः ॥ १८ ॥

**तदद्भुततमं लोके गङ्गापतनमुत्तमम् ।**
**दिदृक्षवो देवगणाः समीयुरमितौजसः ॥ १९ ॥**

अमितौजसो देवगणाः इत्यनेन वस्वादय उच्यन्ते ॥ १९ ॥

**सम्पतद्भिस्सुरगणैस्तेषामाभरणौजसा ।**
**शतादित्यमिवाभाति गगनं गततोयदम् ॥ २० ॥**

उक्तविशेषणमूलमुपमानं—सम्पतद्भिरित्यादि ॥ २० ॥

---

* पारिप्लवं संभ्रमं गतैरिति विमानादिविशेषणम्—गो.

[1] नगराकारैः—ङ. [2] गतैः—ङ.

**शिशुमारोरगगणैर्मीनैरपि च चञ्चलैः ।**
**विद्युद्भिरिव विक्षिप्तमाकाशमभवत्तदा ॥ २१ ॥**

विक्षिप्तैः—निस्सृतैरिति यावत् । विद्युच्छब्दोऽपि पुल्लिङ्गः, लिङ्गमशास्यमिति प्रयोगैकावसेयत्ववादाल्लिङ्गस्य । कथं तर्हि विद्युदादेर्नियतलिङ्गपाठः ? प्रायोऽभिप्रायादित्येव ॥ २१ ॥

**पाण्डुरैः सलिलोत्पीडैः कीर्यमाणैः सहस्रधा ।**
**शारदाभ्रैरिवाकीर्णैः गगनं हंससंप्लवैः ॥ २२ ॥**

सलिलोत्पीडः—फेनः । सहस्रधा कीर्यमाणैरिति । वाय्वाद्युपाधित इति शेषः । अत एव आकीर्णैश्शारदाभ्रैरिव हंससंप्लवैः हंससमूहैरिव च गगनं आभातीति पूर्वेणान्वयः । एवं पाङ्क्ते पाठे अर्थे च स्थिते आकीर्णमिति पठति । सलिलोत्पीडो जलपिण्ड इति च [1] व्याकरोति ॥

**क्वचिद्द्रुततरं याति कुटिलं क्वचिदायतम् ।**
**विनतं [2] क्वचिदुद्धूतं क्वचिद्याति शनैः शनैः ॥ २३ ॥**

क्वचिद्द्रुततरं यातीति । [3] गङ्गासलिलमिति शेषः । आयतं—बहुप्रदेशव्यापितया विस्तृतप्रवाहं, क्वचिद्विनतं—अगाधदेशे सङ्कुचितप्रवाहं । उद्धूतमिति । पाषाणादिताडनादिति शेषः । इदमेवोर्ध्वपथगमनेऽपि निमित्तम् ॥ २३ ॥

**सलिलेनैव सलिलं क्वचिदभ्याहतं पुनः ।**
**मुहुरूर्ध्वमुखं गत्वा पपात वसुधातलम् ॥ २४ ॥**
**तच्छङ्करशिरोभ्रष्टं भ्रष्टं भूमितले पुनः ।**
**व्यरोचत तदा तोयं निर्मलं गतकल्मषम् ॥ २५ ॥**

निर्मलत्वे हेतुः भ्रंशद्वयम् ॥ २५ ॥

---

[1] महेश्वरतीर्थः. [2] क्वचिदुद्धूतम्—ङ. [3] गाङ्ग सलीलमित्यार्षः—ग.

तत्र देवर्षिगन्धर्वा वसुधातलवासिनः ।
भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ २६ ॥

भवाङ्गं—जटा ॥ २६ ॥

शापात्प्रपतिता ये च गगनाद्वसुधातलम् ।
कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ॥ २७ ॥
[1]धूतपापाः पुनस्तेन तोयेनाथ [2]शुभान्विताः ।
पुनराकाशमाविश्य स्वांल्लोकान् प्रतिपेदिरे ॥ २८ ॥

न केवलं पापसंहारमात्रं कृत्यं गङ्गायाः ; अपि तु पुण्यलोकप्रापणमपीत्युच्यते --पुनराकाशमित्यादि ॥ २८ ॥

मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ।
कृताभिषेको गङ्गायां बभूव विगतक्लमः ॥ २९ ॥

दर्शनमात्रेण मुदितो लोकः विशिष्य स्नानपानादिना मुमुदे ॥

भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वगात् ॥ ३० ॥
देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः ।
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ ३१ ॥
सर्वाश्चाप्सरसो राम! भगीरथ[3]रथानुगाः ।
गङ्गामन्वगमन् प्रीताः सर्वे जलचराश्च ये ॥ ३२ ॥

भगीरथरथानुगास्सन्तो गङ्गामन्वगमन् । एतेन स्वस्वपुरुषार्थप्रयोजना गङ्गासेवोपदिष्टा ॥ ३२ ॥

---

[1] धूतशापाः—ज. [2] सुभास्वता—ङ. ज. [3] रथानुगाम्—घ.

**यतो भगीरथो राजा ततो गङ्गा यशस्विनी ।**
**जगाम सरितां श्रेष्ठा सर्वपापविनाशिनी ॥ ३३ ॥**

यतस्तत इति । यत्र तत्रेति यावत् ॥ ३३ ॥

**ततो हि यजमानस्य जह्नोरद्भुतकर्मणः ।**
**गङ्गा संप्लावयामास यज्ञवाटं महात्मनः ॥ ३४ ॥**

अद्भुतकर्मण इति वक्ष्यमाणगङ्गोपसंहाराभिप्रायकम् ॥ ३४ ॥

**तस्यावलेपनं ज्ञात्वा क्रुद्धो जह्नुश्च राघव !**
**अपिबच्च जलं सर्वं गङ्गायाः *परमाद्भुतम् ॥ ३५ ॥**

[1]तस्यावलेपनं, †प्राग्वत् । सर्वं जलं अपिबत् इति । अगस्त्यस्समुद्रजलमिव योगशक्त्येति शेषः । परमाद्भुतमिति । तदभवल्लोकस्येति शेषः ॥ ३५ ॥

**ततो देवाः सगन्धर्वाः ऋषयश्च सुविस्मिताः ।**
**पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ॥ ३६ ॥**

पूजयन्ति । स्तोत्रादिद्वारेति शेषः ॥ ३६ ॥

**गङ्गां [2]चानुनयन्ति स्म दुहितृत्वे महात्मनः ।**
**ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत् पुनः ॥ ३७ ॥**

दुहितृत्वे–दुहितृभावापत्तौ । शैलराजदुहिताऽहं कथमन्यस्य दुहिता स्यामिति विमतिवशादनुनयो गङ्गायाः । ततस्तुष्ट इति । गङ्गाया देवैस्स्वदुहितृत्वप्रापणादित्यर्थः ॥ ३७ ॥

**[विसृज्य गङ्गां राजेन्द्रो ज्ञात्वा प्राप्तं भगीरथम् ।]**

---

* परमाद्भुतमिति क्रियाविशेषणम्–गो.   † सन्धिरार्ष इति भावः.

[1] तस्यावलेपनं ज्ञात्वा–ग.   [2] चापि नयन्ति–ङ.

[पूजयित्वा यथान्यायं यज्ञवाटमुपागमत् ॥]
तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ।

यतः पीतां पुनश्चासृजत् तस्मादेव हेतोः जह्नुसुतेति समासवृत्त्या, जाह्नवीति तद्धितवृत्त्या च गङ्गा अपत्यतया जह्नोरुच्यते ॥

जगाम च पुनर्गङ्गा भगीरथरथानुगा ॥ ३८ ॥
सागरं चापि सम्प्राप्ता सा सरित्प्रवरा तदा ।
रसातलमुपागच्छत् सिद्ध्यर्थं तस्य कर्मणः ॥ ३९ ॥

तस्य कर्मणः सिद्ध्यर्थमिति । भगीरथस्य स्ववंश्योद्धारकर्मसिद्ध्यर्थम् ॥ ३९ ॥

भगीरथोऽपि राजर्षिः गङ्गामादाय यत्नतः ।
पितामहान् भस्मकृतानपश्यद्दीनचेतनः ॥ ४० ॥

यत्नत इति । यत्नाः प्रागुक्तलक्षणाः । भस्मत्वेन कृताः—भस्मकृताः, कपिलकोपवह्निनेति शेषः ॥ ४० ॥

[1]अथ तद्भस्मनां राशिं गङ्गासलिलमुत्तमम् ।
प्लावयत्, पूतपाप्मानः स्वर्गं प्राप्ता रघूत्तम ! ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे त्रिचत्वारिंशः सर्गः

———

प्लावयत्—सेचयति स्म । ततः पूतपाप्मान इत्यादि । पर्व (४१)मानः सर्गः ॥ ४१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे त्रिचत्वारिंशः सर्गः

———

[1] एतदनन्तरं—ततस्तु गङ्गां प्रतिलभ्य राजा दिलीपसूनुर्गगनाच्च शङ्करात् । दृष्टोवतार्याशु नृपाच्च जह्नोः सम्भावयामास पितामहान्सः ॥ ४६ ॥ इत्यधिकं—ङ. झ.

अथ चतुश्चत्वारिंशः सर्गः

[सगरपुत्रोद्धारः]

स गत्वा सागरं राजा गङ्गयाऽनुगतस्तदा ।
प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः ॥ १ ॥

अथ 'प्लावयत् पूतपाप्मानः' इति प्राक् सङ्क्षेपोक्तबीजार्थस्य विस्तरः—स गत्वेत्यादि । भस्मसात्कृताः—सर्वात्मना भस्मभावापत्तये सम्पादिताः । 'विभाषा साति कार्त्स्न्ये' इति सातिः ॥ १ ॥

भस्मन्यथाप्लुते राम ! गङ्गायाः सलिलेन वै ।
सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥ २ ॥

सर्वलोकानां—सर्वभुवनानां सर्वभुवनवर्तिप्राणिनां च प्रभुः—असङ्कोचोपचारेण ईश्वरः ॥ २ ॥

तारिता नरशार्दूल ! दिवं याताश्च देववत् ।
षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ॥ ३ ॥

तारिताः—प्रेत्यभावादुत्तारिताः देववत् ॥ ३ ॥

सागरस्य जलं लोके यावत् स्थास्यति पार्थिव !
सगरस्यात्मजास्तावत् स्वर्गे स्थास्यन्ति देववत् ॥ ४ ॥

स्वर्गप्राप्तेर्विशेषं चानुगृह्णाति—सागरस्येत्यादि ॥ ४ ॥

इयं हि दुहिता ज्येष्ठा तव गङ्गा भविष्यति ।
त्वत्कृतेन च नाम्नाऽथ लोके स्थास्यति विश्रुता ॥ ५ ॥

त्वत्कृतेनेति । त्वन्मूलत्रिपथगत्वधर्मकृतेनेति यावत् ॥ ५ ॥

गङ्गा त्रिपथगा राजन् ! दिव्या भागीरथीति च ।
त्रीन् पथो भावयन्तीति ततस्त्रिपथगा स्मृता ॥ ६ ॥

तत्कृतनामादिविश्रुतत्वमेव प्रकाशयति—गङ्गा त्रिपथगेत्यादि। तत्कृतनाम्नोऽन्वर्थत्वं दर्शयति—त्रीनित्यादि। अनेन कथं गङ्गा त्रिपथगा श्रुतेत्यस्योत्तरं संवृत्तम्॥ ६॥

पितामहानां सर्वेषां त्वमत्र मनुजाधिप!
कुरुष्व सलिलं राजन्! प्रतिज्ञामपवर्जय॥ ७॥

कुरुष्वेति। गङ्गाजलसेकतः कृतप्रायश्चित्तत्वेन सलिलदानार्हतस्सलिलदानाद्युत्तरक्रियानुमतिः। अपवर्जय। अपवर्गस्समाप्तिः। गुरुत्मदुपदिष्टस्य गङ्गोदकेन सलिलक्रियाप्रतिज्ञानोपदेशस्यानुष्ठानसमाप्तिं कुर्वित्यर्थः॥ ७॥

पूर्वकेण हि ते राजन्! तेनातियशसा तदा।
धर्मिणां प्रवरेणापि नैष प्राप्तो मनोरथः॥ ८॥

पूर्वकेणेति। सगरेणेति यावत्। तस्य गङ्गाऽलाभदुःखित्वकुत्सा कप्रत्ययेन द्योत्यते॥ ८॥

तथैवांशुमता तात! लोकेऽप्रतिमतेजसा।
गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता॥ ९॥
राजर्षिणा गुणवता महर्षिसमतेजसा।
मत्तुल्यतपसा चैव क्षत्रधर्मस्थितेन च॥ १०॥

क्षत्रधर्मे स्थितेनापि मत्तुल्यतपसा। तपः—स्वाध्यायः। अयं ब्रह्मवद्ब्रह्मर्षिवच्च दुर्लभः क्षत्रियेणेति स्तुतिः। महर्षिसमतेजसेति। अनेन पूर्णतपस्त्वं स्वाध्यायातिरिक्तमुक्तमेव॥ १०॥

दिलीपेन महाभाग! तव पित्रातितेजसा।
पुनर्न [1]शकिता नेतुं गङ्गां प्रार्थयताऽनघ!॥ ११॥

---

[1] न शङ्किता—न विचारिता-गो.

गङ्गां पुनर्नेतुं प्रार्थयताऽपि सा पुनर्नेतुं न शकिता सौ नामते-तस्येद्यत्वट्। अशक्या भूदित्यर्थः। * काश्चित् शङ्कितेति मृषोक्तिव्याख्याने प्रायतिष्ट। तथाऽग्रेपि ॥ ११ ॥

सा त्वया [1]समनुक्रान्ता प्रतिज्ञा पुरुषर्षभ !
प्राप्तोऽसि परमं लोके यशः परमसंमतम् ॥ १२ ॥

समनुक्रान्ता–समनुतिष्ठितपारा ॥ १२ ॥

यच्च गङ्गावतरणं त्वया कृतमरिन्दम !
अनेन च भवान् प्राप्तो धर्मस्यायतनं महत् ॥ १३ ॥

प्लावयस्व त्वमात्मानं नरोत्तम ! सदोचिते।
सलिले, पुरुषव्याघ्र ! शुचिः पुण्यफलो भव ॥ १४ ॥

प्लावयस्वेत्यादिरुपसंहारेण वादः। आत्मानं–स्वदेहं। सदोचित इति। कर्कटकमध्येऽपि स्नानोचिते; भूप्रभवनदीनामिव तत्काले भौमत्वमूलरजस्सम्बन्धात् स्नानाद्यनर्हत्वम्। पुण्यफल इति। † मत्वर्थीयोऽजन्तः ॥ १४ ॥

पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम्।
स्वस्ति तेऽस्तु, गमिष्यामि स्वं लोकं, गम्यतां नृप ! ॥१५॥

स्वं लोकं गमिष्यामि इति। त्वया च गम्यतां स्वपुरं, कृतोदकक्रियेणेति शेषः। अयं नियोगो राजधर्मपरिपालनाय ॥ १५ ॥

इत्येवमुक्त्वा देवेशः सर्वलोकपितामहः।
यथाऽऽगतं तथाऽगच्छत् देवलोकं महायशाः ॥ १६ ॥
भगीरथोऽपि राजर्षिः कृत्वा सलिलमुत्तमम्।
यथाक्रमं यथान्यायं सागराणां महायशाः ॥ १७ ॥

---

* महेश्वरतीर्थः गोविन्दराजो वा. † बहुव्रीहिर्वा–ति. [1] समतिक्रान्ता–ङ.

कृतोदकः शुची राजा स्वपुरं प्रविवेश ह ।
समृद्धार्थो नरश्रेष्ठ ! स्वराज्यं प्रशशास ह ॥ १८ ॥

प्रमुमोद च लोकस्तं नृपमासाद्य राघव !
नष्टशोकः समृद्धार्थो बभूव विगतज्वरः ॥ १९ ॥

एष ते, राम ! गङ्गाया विस्तरोऽभिहितो मया ।
स्वस्ति प्राप्नुहि, भद्रं ते, सन्ध्याकालोऽतिवर्तते ॥ २० ॥

उपसंहारः—एष त इत्यादि । स्वस्ति प्राप्नुहि—भद्रं प्राप्नुहि । भद्रं तवास्तु । सन्ध्याकालः-सायंसन्ध्याकालः ॥ २० ॥

धन्यं यशस्यमायुष्यं पुत्र्यं स्वर्गमतीव च ।
यः श्रावयति विप्रेषु क्षत्रियेष्वितरेषु च ॥ २१ ॥
प्रीयन्ते पितरस्तस्य प्रीयन्ते दैवतानि च ।

स्कन्दाख्यानस्येव गङ्गावतरणाख्यानस्य च श्रवणादिफलं—धन्यमित्यादि । 'गोद्यचोऽसङ्ख्यापरिमाणाश्वादेर्यत्' इति यत् । इतरेषु-विट्-शूद्रेष्वति यावत् । प्रीयन्ते—प्रीञ् प्रीणने । पितरः प्रीयन्ते—प्रीता भवन्ति ॥ २१ ॥

इदमाख्यानमव्यग्रो गङ्गावतरणां शुभम् ॥ २२ ॥
यः शृणोति च काकुत्स्थ सर्वान् कामानवाप्नुयात् ।
सर्वे पापाः प्रणश्यन्ति आयुः कीर्तिश्च वर्धते ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे चतुश्चत्वारिंशः सर्गः

गिरि(२३)मानः सर्गः ॥ २३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे चतुश्चत्वारिंशः सर्गः

———

## अथ पञ्चचत्वारिंशः सर्गः

[क्षीरार्णवमथनम्]

विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः ।
विस्मयं परमं गत्वा विश्वामित्रमथाब्रवीत् ॥ १ ॥

अथ महेन्द्रचरितपुण्यकथा च प्रसङ्गात्सर्गत्रयेण—विश्वामित्रवच इत्यादि । विश्वामित्रमब्रवीत् । रात्रिकाले इति शेषः ॥ १ ॥

अत्यद्भुतमिदं ब्रह्मन् ! कथितं परमं त्वया ।
गङ्गावतरणं पुण्यं सागरस्यापि पूरणम् ॥ २ ॥
क्षणभूतेव नौ रात्रिः संवृत्तेयं महातपः !
इमां चिन्तयतस्सर्वां निखिलेन कथां तव ॥ ३ ॥
सन्तुष्टं मे मनो ब्रह्मन् ! इत्युक्त्वा विरराम ह ।

तव कथामिति । तवोपदेशश्रुतार्थमित्यर्थः ॥ ३ ॥

तस्य सा शर्वरी सर्वा सह सौमित्रिणा तदा ॥ ४ ॥
जगाम चिन्तयानस्य विश्वामित्रकथां शुभाम् ।

तस्य रामस्य चिन्तयानस्य जगामेति । तच्चिन्तोपेततया अतीतेत्यर्थः ॥ ४ ॥

ततः प्रभाते विमले विश्वामित्रं महामुनिम् ॥ ५ ॥
उवाच राघवो वाक्यं कृताह्निकमरिन्दमः ।
गता भगवती रात्रिः श्रोतव्यं परमं श्रुतम् ॥ ६ ॥
तराम सरितां श्रेष्ठां पुण्यां त्रिपथगां नदीम् ।
नौरेषा हि सुखास्तीर्णा ऋषीणां पुण्यकर्मणाम् ॥ ७ ॥
भगवन्तमिह प्राप्तं ज्ञात्वा त्वरितमागता ।

राघववचनप्रकारः—गतेत्यादि । तरामः—तरणं कुर्मः । शुभमास्तीर्णं—आस्तरणं यस्यास्सा तथा । ऋषीणां नौस्त्वरितमागतेति योजना ॥ ७ ॥

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ॥ ८ ॥
संतारं कारयामास [1]सर्षिसङ्घः सराघवः ।

कारयामासेति । स्वार्थे णिः । अकरोदिति यावत् * ॥ ८ ॥

उत्तरं तीरमासाद्य सम्पूज्यर्षिगणं तदा ॥ ९ ॥
गङ्गाकूले निविष्टास्ते विशालां ददृशुः पुरीम् ।

सम्पूज्यर्षिगणमिति । नावानायकमिति शेषः ॥ ९ ॥

ततो मुनिवरस्तूर्णं जगाम सह राघवः ॥ १० ॥
विशालां नगरीं रम्यां दिव्यां स्वर्गोपमां तदा ।

दृष्ट्वा विशालां जगामेति योजना ॥ १० ॥

अथ रामो महाप्राज्ञो विश्वामित्रं महामुनिम् ॥ ११ ॥
पप्रच्छ प्राञ्जलिर्भूत्वा विशालामुत्तमां पुरीम् ।

विशालां पप्रच्छेति । विशालाविषयं प्रश्नं कृतवानित्यर्थः ॥

कतरो राजवंशोऽयं विशालायां महामुने !
श्रोतुमिच्छामि, भद्रं ते, परं कौतूहलं हि मे ॥ १२ ॥
तस्य तद्वचनं श्रुत्वा रामस्य मुनिपुङ्गवः ।
आख्यातुं तत्समारेभे विशालस्य पुरातनम् ॥ १३ ॥

---

[1] सर्षिसङ्घस्य कौशिकः–ङ. * कौशिक इति शेषः.

एवं प्रश्ने सम्प्रत्ययं वर्तत इत्युत्तरशेषतया विशालाया महादेवतासिद्धिक्षेत्रत्वेन महाक्षेत्रत्वं, पश्चात्काले विशालपुरीनिर्मितिश्चोच्यते—आख्यातुमित्यादिना। विशालस्येति। विशालापुर्यधिष्ठानदेशस्येत्यर्थः। तस्य पुरातनमिति। विशालापुरीनिर्मितेः प्राक्तनं वृत्तान्तमिति शेषः॥

**श्रूयतां राम! शक्रस्य कथां कथयतः शुभाम्।**
**अस्मिन् देशे तु यद्वृत्तं तदपि शृणु राघव! ॥ १४ ॥**

शक्रस्य कथां विशालवैभवप्रतिपादनशेषतया कथयतो मत्तः सकाशात् कथा श्रूयतां। अस्मिन् देशे—विशालपुर्यधिष्ठानदेशे। यद्वृत्तमिति। पुरातनं भूतत्वेन शृण्विति योजना ॥ १४ ॥

**पूर्वं कृतयुगे राम! दितेः पुत्रा महाबलाः।**
**अदितेश्च महाभाग! वीर्यवन्तः सुधार्मिकाः ॥ १५ ॥**

अदितिपुत्राणामभ्याधिकं विशेषणं—सुधार्मिका इति। आसन्निति शेषः ॥ १५ ॥

**ततस्तेषां नरश्रेष्ठ! बुद्धिरासीन्महात्मनाम्।**
**अमरा अजराश्चैव कथं स्याम निरामयाः ॥ १६ ॥**

म्रियन्त इति मराः; पचाद्यच्। अमराः—मरणधर्मरहिता इति यावत्। जरा—कालवशावर्ज्यप्राप्तदुःखं, आमयाः—शक्याशक्यप्रतिक्रिया व्याधयः। एतावदेव सांसारिकदुःखम्॥ १६॥

**तेषां चिन्तयतां राम! बुद्धिरासीन्महात्मनाम्।**
**क्षीरोदमथनं कृत्वा रसं प्राप्स्याम तत्र वै॥ १७ ॥**

तत्र वै—क्षीरोदे प्रसिद्धं रसं—सारममृतरूपरसायनमित्यर्थः ॥१७॥

**ततो निश्चित्य मथनं योक्त्रं कृत्वा च वासुकिम् ।**
**[1]मन्थानं मन्दरं कृत्वा ममन्थुरमितौजसः ॥ १८ ॥**

**योक्त्रं–मथनरज्जुः । 'वशाखे मन्थमन्थानौ' ॥ १८ ॥**

---

[1]एतदनन्तरं —

अथ वर्षसहस्रेण योक्त्रसर्पशिरांसि च । वमन्त्यतिविषं तत्र ददंशुः दशनैश्शिलाः ॥
उत्पाताग्निसङ्काशं हालाहलमहाविषम् । तेन दग्धं जगत्सर्वं सदेवासुरमानुषम् ॥
अथ देवा महादेवं शङ्कर शरणार्थिनः । जग्मुः पशुपतिं रुद्रं त्राहि त्राहिति तुष्टुवुः ॥
एवमुक्तस्ततो देवैर्देवदेवेश्वरः प्रभुः । प्रादुरासीत्ततोत्रैव शङ्खचक्रधरो हरिः ॥
उवाचैनं स्मितं कृत्वा रुद्रं शूलभृतं हरिः । दैवतैर्मथ्यमाने तु यत्पूर्वं समुपस्थितम् ॥
तत्त्वदीयं सुरश्रेष्ठ सुराणामग्रजोसि यत् । अग्रपूजामिमां मत्वा गृहाणेदं विषं प्रभो ॥
इत्युक्त्वा च सुरश्रेष्ठस्तत्रैवान्तरधीयत । देवतानां भयं दृष्ट्वा श्रुत्वा वाक्यं तु शार्ङ्गिणः ॥
हालाहलविषं घोरं स जग्राहामृतोपमम् । देवान्विसृज्य देवेशो जगाम भगवान् हरः ॥
ततो देवासुराः सर्वे ममन्थू रघुनन्दन । प्रविवेशाथ पातालं मन्थानः पर्वतोनघ ॥
ततो देवाः सगन्धर्वास्तुष्टुवुर्मधुसूदनम् । त्वं गतिः सर्वभूतानां विशेषेण दिवौकसाम् ॥
पालयास्मान् महाबाहो गिरिमुद्धर्तुमर्हसि । इति श्रुत्वा हृषीकेशः कामठं रूपमास्थितः ॥
पर्वतं पृष्ठतः कृत्वा शिश्ये तत्रोदधौ हरिः । पर्वताग्रं तु लोकात्मा हस्तेनाक्रम्य केशवः ॥
देवानां मध्यतः स्थित्वा ममन्थ पुरुषोत्तमः । उदतिष्ठत्स धर्मात्मा आयुर्वेदमयः पुमान् ॥
इत्यधिकम्–ङ. एतच्छ्लोकस्थाने कुत्रचिदेवं पाठः–ङ.

अथ दीर्घेण कालेन कालाग्निसदृशं विषम् । उदतिष्ठन्नरश्रेष्ठ हालहलमिति श्रुतम् ॥
सुरासुराश्च वित्रस्ताः दग्धास्तेन विषाग्निना । शरण्यं शरणं जग्मुर्भगवन्तं महेश्वरम् ॥
कृत्वाऽलपिण्डं पाणिस्थं तद्विषं भगवान् हरः । सर्वलोकहितार्थाय भगवान् परमेश्वरः ॥
कण्ठस्थमकरोत् प्राश्य लीलया लोकपूजित । प्रणम्य विज्वरा जग्मुः देवदेवं वृषध्वजम् ॥
मन्दरं पूर्ववत् कृत्वा ममन्थुरमितौजसः । ततः पर्वतमूलं तु पातालं तु प्रवेशितम् ॥
सुरासुराश्च निश्चेष्टाः बभूवुः क्लेशविक्लवाः । देवदुःखनिवृत्त्यर्थं आगतः पुरुषोत्तमः ॥
भयं त्यजत भद्रं वः उद्धरिष्याम्यहं गिरिम् । इत्युक्त्वा कूर्मरूपेण विशेश क्षीरवारिधौ ॥
मन्दरं पृष्ठतः कृत्वा ववृधे कूर्मरूपधृत् । सुरासुरैरनाक्रान्तमुद्धृतोऽथ नरोत्तम ॥
नगाग्रं पीडयामास वामहस्तेन माधवः । ममन्थ देवतानां च मध्ये नारायणो हरिः ॥
अथ वर्षसहस्रेण ज्येष्ठा नाम वराङ्गना । उत्पपात वरारोहा सागरेरेव कल्पिता ॥
अभवत् पारिजाताख्यः वृक्षः इन्द्राय कल्पितः ॥

अथ वर्षसहस्रेण सदण्डः सकमण्डलुः।
पूर्वं धन्वन्तरिर्नाम अप्सराश्च सुवर्चसः॥ १९॥

धन्वन्तरिरिति। उत्पपातेति योजना। अप्सरा इत्याकारान्तात् बहुवचनम्॥ १९॥

अप्सु निर्मथनादेव रसस्तस्माद्वरस्त्रियः।
उत्पेतुर्मनुजश्रेष्ठ! तस्मादप्सरसोऽभवन्॥ २०॥

अप्सु निर्मिथनादिति। अब्विकारक्षीरनिर्मथनादित्यर्थः। अलुक् छान्दसः। तस्मादिति। मथ्यमानात् क्षीरोदलवणादपां सरसो रसादुत्पन्नत्वादेवेत्यर्थः। पृषोदरादित्वात्साधुः॥ २०॥

षष्टिः कोटयोऽभवंस्तासां अप्सराणां सुवर्चसाम्।
असङ्ख्येयास्तु काकुत्स्थ! यास्तासां परिचारिकाः॥२१॥

तासामिति। षष्टिकोटिसङ्ख्यानां प्रधानाप्सरसामित्यर्थः॥ २१॥

न ताः स्म प्रतिगृह्णन्ति सर्वे ते देवदानवाः।
अप्रतिग्रहणादेव तेन साधारणाः स्मृताः॥ २२॥

न ताः प्रतिगृह्णन्ति स्मेति। अपरिमितपरिचारकोपेतषष्टिकोट्यप्सरस इति यावत्। ममैवेमा नान्यस्येत्यसाधारण्येन न प्रतिगृह्णन्ति स्म, देवा दानवाश्चेत्यर्थः। किं विरक्ताः? उत ताः दुर्भगाः? यतोऽप्रतिग्रहः-उच्यते—तासां देवदानवमध्ये विशिष्य वारुणीवत् किञ्चित्पतिमार्गणाभावेन य आयाति स आयातु न इति सम्मुग्धाकारतया स्थितत्वादेव विशिष्य तासां प्रतिग्रहाभावः। तदेवोक्तम्—अप्रतिग्रहणादित्यादि॥ २२॥

वरुणस्य ततः कन्या वारुणी रघुनन्दन !
उत्पपात महाभागा मार्गमाणा परिग्रहम् ॥ २३ ॥

वरुणस्येति । क्षीरार्णवाधिष्ठातृदेवताया इत्यर्थः । परिग्रहमिति । केनचित् पत्या असाधारण्येन परिग्रहमित्यर्थः ॥ २३ ॥

दितेः पुत्रा न तां राम ! जगृहुर्वरुणात्मजाम् ।
अदितेस्तु सुता वीर ! जगृहुस्तामनिन्दिताम् ॥ २४ ॥

अदितिसुतैर्वारुणीपरिग्रहे हेतुः—अनिन्दितामिति । कथं एतत् ?——शास्त्रेणाधिकारिविशेषविषयेऽविगानात् ; शास्त्रस्य च देवतानधिकारात् स्वरूपतस्तद्ग्राहिणां सुखहेतुत्वश्रवणाच्च अनिन्दितत्वम् ॥ २४ ॥

असुरास्तेन दैतेयाः सुरास्तेनादितेः सुताः ।
हृष्टाः प्रमुदिताश्चासन् वारुणीग्रहणात् सुराः ॥ २५ ॥

सुरास्तेनेति मत्वर्थीयाजन्तः । येन सुरापरिग्रह एषामस्ति तेनेत्यर्थः ॥ २५ ॥

[1] उच्चैःश्रवा हयश्रेष्ठो मणिरत्नं च कौस्तुभम् ।
उदतिष्ठन्नरश्रेष्ठ ! तथैवामृतमुत्तमम् ॥ २६ ॥

---

[1] एतदनन्तरं—

उदतिष्ठन्नरश्रेष्ठ सोमदेवस्तथैव च। तुरगं देवराजाय कौस्तुभं केशवाय च ॥
धन्वन्तरिर्महातेजा लोकरक्षणतत्परः। आयुर्वेदमयो राम तथा साधारणः स्मृतः ॥
सुरासुराश्च गन्धर्वाः क्षोभयामासुरम्बुधिम् । ततो दीर्घेण कालेन चोत्पन्ना कमलालया ॥
अतीव रूपसम्पन्ना प्रथमे वयसि स्थिता। सर्वाभरणपूर्णाङ्गी सर्वलक्षणलक्षिता ॥
मकुटाङ्गदचित्राङ्गी नीलकुञ्चितमूर्धजा । तप्तहाटकसङ्काशा मुक्ताभरणभूषिता ॥
चतुर्भुजा महादेवी पद्महस्ता वरानना। सा च देवी तथोत्पन्ना पद्मा श्रीर्लोकपूजिता ॥
सा पद्मा पद्मनाभस्य ययौ वक्षःस्थलं हरेः । इत्यधिकं क्वचित्—ङ.

**अथ तस्य कृते राम! महानासीत् कुलक्षयः।**
**अदितेस्तु ततः पुत्रा दितेः पुत्रानसूदयन् ॥ २७ ॥**

अथ तस्य कृत इति। तस्यामृतस्य ग्रहणनिमित्तमित्यर्थः। ततः—कलहप्रवृत्त्यनन्तरं ॥ २७ ॥

**एकतामगमन् सर्वे ह्यसुरा राक्षसैस्सह।**
**युद्धमासीन्महाघोरं वीर! त्रैलोक्यमोहनम् ॥ २८ ॥**

असुरा राक्षसैः सह एकतामगमन्। अदितिपुत्रसूद्यमानानां स्वेषां बलसिद्ध्यर्थमिति शेषः। वीरेति सम्बुद्धिः ॥ २८ ॥

**यदा [1]क्षयं गताः सर्वे तदा विष्णुर्महाबलः।**
**अमृतं सोऽहरत्तूर्णं मायामास्थाय मोहिनीम् ॥ २९ ॥**

सर्व इति। परस्परप्रहारेण सामान्यात् सर्वदेवासुरा अमृताभिमानिनो यदा क्षयं गताः—क्षयप्रायं गताः, तदा अमृतस्य सुहरत्वात् सः—प्रसिद्धः विष्णुः मध्यस्थत्वबुद्ध्युत्पादनाय मोहिनीं—काममोहजननीं मायां—मायातनुमास्थाय तूर्णममृतमहरत् ॥ २९ ॥

**ये गताऽभिमुखं विष्णुमक्षयं पुरुषोत्तमम्।**
**सम्पिष्टास्ते तदा युद्धे विष्णुना प्रभविष्णुना ॥ ३० ॥**

अथ ये गताभिमुखं, सवर्णदीर्घ आर्षः, ये सुरा असुरा वा मायामूर्त्या गृहीतामृतं विष्णुमभिमुखा अमृतजिघृक्षया गताः—प्राप्ताः, ते सर्वे तदा मूर्त्यन्तरास्थानेन प्रभविष्णुना विष्णुना युद्धे (सर्वे) सम्पिष्टाः। उभयेषां मध्ये ये जितास्तेभ्य इदं अमृतं [2]दास्यति, बलात्कारेणास्यामृतादित्तूनहं हन्मीत्युक्त्वा सामान्यतस्सर्वे सुरा निवारिता इत्यर्थः ॥

---

[1] क्षयं गतं सर्वम्—ङ. [2] दास्यामि, इति स्यात्।

**अदितेरात्मजा वीरा दितेः पुत्रान्निजघ्निरे ।**
**तस्मिन् युद्धे महाघोरे दैतेयादित्ययोर्भृशम् ॥ २१ ॥**

ततश्चामृतजिघृक्षया जयाय दैतेयादित्ययोः—दितिशब्द औणादिककृतीकारान्तः । तस्मात् 'कृतिकारादक्तिनः' इति ङीषि 'स्त्रीभ्यो ढक्' इति ढकि दैतेयाः, 'दित्यदित्यादित्य' इत्यदितिशब्दात् ण्यः–आदित्याः ; तयोरुभयोः भृशं प्रवृत्ते तस्मिन् युद्धे अदितेरात्मजाः दितेः पुत्रान्निजघ्निरे । धार्मिकत्वतो भगवद्विष्ण्वनुग्रहवत्त्वादिति शेषः ॥

**निहत्य दितिपुत्रांश्च राज्यं प्राप्य पुरन्दरः ।**
**शशास मुदितो लोकान् सर्षिसङ्घान् सचारणान् ॥ ३२ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे पञ्चचत्वारिंशः सर्गः

---

दितिपुत्रांश्च राज्यमित्यत्र चकारेण राज्यममृतं च प्राप्येत्यर्थः । अत्र 'ममन्थुरमितौजसः' इत्यनन्तरं हालाहलोत्पत्त्यादिप्रतिपादकं पुराणान्तरस्थमत्र प्रक्षिप्य *अन्यस्तद्व्याचकार । नास्माभिः प्राचीनसुशुद्धपुस्तकेषु ते श्लोका दृश्यन्ते । ननु कथं तत्प्रसङ्गस्येहावर्णनं ? अमृतप्रदानराहुशिरच्छेदप्रसङ्गस्य वा कुतो न वर्णनं ? सङ्क्षेपादिति चेत्—सा दृष्टिरत्रापि दीयताम् । खल(३२)मानः सर्गः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे पञ्चचत्वारिंशः सर्गः

---

अथ षट्चत्वारिंशः सर्गः

[दितिगर्भभेदनम्]

**हतेषु तेषु पुत्रेषु दितिः परमदुःखिता ।**
**मारीचं काश्यपं राम ! भर्तारमिदमब्रवीत् ॥ १ ॥**

किन्तत इत्यतो ब्रूते—हतेष्वित्यादि ॥ १ ॥

---

* महेश्वरतीर्थः.

हतपुत्राऽस्मि भगवन्! तव पुत्रैर्महा[1]बलैः।
शक्रहन्तारमिच्छामि पुत्रं दीर्घतपोऽर्जितम् ॥ २ ॥

दीर्घेण तपसा आर्जितो दीर्घतपोऽर्जितः ॥ २ ॥

[2]साऽहं तपश्चरिष्यामि गर्भं मे दातुमर्हसि।
ईश्वरं शक्रहन्तारं त्वमनुज्ञातुमर्हसि ॥ ३ ॥

ईश्वरं–त्रैलोक्यनाथम् ॥ ३ ॥

तस्यास्तद्वचनं श्रुत्वा मारीचः काश्यपस्तदा।
प्रत्युवाच महातेजा दितिं परमदुःखिताम् ॥ ४ ॥
एवं भवतु, भद्रं ते, शुचिर्भव तपोधने!
जनयिष्यसि पुत्रं त्वं शक्रहन्तारमाहवे ॥ ५ ॥

शुचिर्भवेति। यावत्पुत्रोत्पत्तीति शेषः ॥ ५ ॥

पूर्णे वर्षसहस्रे तु शुचिर्यदि भविष्यसि।
पुत्रं त्रैलोक्यभर्तारं मत्तस्त्वं जनयिष्यसि ॥ ६ ॥

शुचिर्यदि भविष्यसीति। संवत्सरसहस्रमपीति शेषः ॥ ६ ॥

एवमुक्त्वा महातेजा पाणिना सम्ममार्ज ताम्।
समालभ्य ततः स्वस्तीत्युक्त्वा स तपसे ययौ ॥ ७ ॥

पाणिना तां सम्ममार्जेति। दिव्यपुत्रप्रतिबन्धहेतुपापक्षयार्थमिति शेषः। अथ समालभ्य–उदरं स्पृष्ट्वा स्वस्ति–गर्भरूपं भद्रं तवास्त्वित्यनुगृह्य सः काश्यपः तपसे ययौ ॥ ७ ॥

गते तस्मिन्नरश्रेष्ठ! दितिः परमहर्षिता।
कुशप्लवनमासाद्य तपस्तेपे सुदारुणम् ॥ ८ ॥

कुशप्लवनं–विशालानिर्मितेः पूर्वं तद्देशतपोवनम् ॥ ८ ॥

---

[1] त्मभिः–ङ. [2] एतदनन्तरं ‘बलवन्तं महेष्वासं स्थितिज्ञं समदर्शनम् इत्यधिकं–ङ.

तपस्तस्यां हि कुर्वन्त्यां परिचर्यां चकार ह।
सहस्राक्षो नरश्रेष्ठ! परया गुणसम्पदा ॥ ९॥

परया गुणसम्पदेति। शुश्रूषकसुपुत्रगुणगणसम्पदेत्यर्थः ॥ ९॥

अग्निं कुशान् काष्ठमपः फलं मूलं तथैव च।
न्यवेदयत् सहस्राक्षो यच्चान्यदपि काङ्क्षितम् ॥ १०॥
गात्रसंवहनैश्चैव श्रमापनयनैस्तथा।
शक्रः सर्वेषु कालेषु दितिं परिचचार ह ॥ ११॥

सैव गुणसम्पत् प्रकाश्यते—अग्निं कुशानित्यादि। पुत्रत्वाद्गात्रसंवाहनादिः। दितिं परिचचारेति कथनं एवं पितृवचनस्याशक्यान्यथातनत्वात् भविष्यदरातेः मातृप्रीत्या आराददितिवक्ष्यमाणरीत्या सौमनस्यसिद्ध्येऽसत्याशुच्यवकाशे न्यायप्राप्त रातिविनाशाय। अथापि कथमेतत्परिचर्यामियेष दितिः? दैवमाययैवेति केवलमिहोत्तरम् ॥ १०-११॥

अथ वर्षसहस्रे तु दशोने रघुनन्दन!
दितिः परमसम्प्रीता सहस्राक्षमथाब्रवीत् ॥ १२॥

दशभिरूनं-दशोनम् ॥ १२॥

याचितेन सुरश्रेष्ठ! पित्रा तव महात्मना।
वरो वर्षसहस्रान्ते मम दत्तः सुतं प्रति ॥ १३॥

सुतं प्रतीति। सुतप्राप्तिं प्रतीत्यर्थः ॥ १३॥

तपश्चरन्त्या वर्षाणि दश वीर्यवतां वर!
अवशिष्टानि, भद्रं ते, भ्रातरं द्रक्ष्यसे ततः ॥ १४॥

तदर्थ—तपश्चरन्त्या इति षष्ठी ॥ १४॥

तमहं त्वत्कृते पुत्रं समाधास्ये जयोत्सुकम् ।
त्रैलोक्यविजयं पुत्रं सह भोक्ष्यसि विज्वरः ॥ १५ ॥

हे पुत्र ! अहं तं—त्वद्भ्रातरं त्वज्जयोत्सुकं त्वत्कृते—त्वत्सुखार्थं समाधास्ये—गतवैरं भ्रातृस्नेहवन्तमेव करिष्ये इत्यर्थः । त्रैलोक्यविजयमिति—त्वद्भ्रातृगतामिति शेषः ॥ १५ ॥

एवमुक्त्वा दितिश्शक्रं प्राप्ते मध्यं दिवाकरे ।
निद्रयाऽपहृता देवी पादौ कृत्वाऽथ शीर्षतः ॥ १६ ॥

'प्राप्ते मध्यं दिवाकरे' इत्यनेन दिवास्वापरूपं पापं सूचितम् । पादौ कृत्वाऽथ शीर्षत इति । आद्यादित्वात् षष्ठ्यर्थे तसिः । शीर्षस्याधःस्थाने पादौ कृत्वा । कथमेवं भवति ? शिरसस्तु निद्रावशात् पादयोः प्रह्वता यदा भवति तदैव स्पष्टमुच्यते, पादयोर्निद्रावशतः शिरसः स्थापनेन मूर्धजानामपि पादयोः कृतत्वं भवति ॥ १६ ॥

दृष्ट्वा तामशुचिं शक्रः पादतः कृतमूर्धजाम् ।
शिरस्स्थाने कृतौ पादौ, जहास च मुमोद च ॥ १७ ॥

उक्त एवार्थ उपपाद्यते—शिर इत्यादि । शिरसोऽधस्स्थाने पादौ सुस्पष्टौ कृतौ । एवं च ब्राह्मणस्य शूद्रस्पर्शेनेव शिरःपादस्पर्शतः अशुचिं—प्राप्ताशुचिं तां दृष्ट्वा प्राप्तरन्ध्रत्वात् मुमोद । मोदवशात् जहास च—स्मितमपि प्राप्तवानित्यर्थः । *कश्चित्तु शय्यायां यत्र पादौ निधीयेते तत्र पादयोः स्थाने कृतमूर्धजामित्याह । परिवृत्य शयनमपि किं पापं ? कुतश्च मध्याह्ने यथाप्राप्तशय्याप्रसक्तिः ? तपश्चरन्त्यास्तस्याः कदाऽपि शय्यामात्रस्य ? वक्तव्यः वदतु यथेष्टमज्ञानात् ॥ १७ ॥

---

* महेश्वरतीर्थः । गोविन्दराजीयेऽप्येवं दृश्यते ॥

तस्याः शरीरविवरं प्रविवेश पुरन्दरः ।
गर्भं च सप्तधा, राम! बिभेद परमात्मवान् ॥ १८ ॥

शरीरविवरं गर्भच्छेदाय प्रविवेश । प्रवेशोचितं योनिविवरमित्यर्थः॥

भिद्यमानस्ततो गर्भो वज्रेण शतपर्वणा ।
रुरोद सस्वरं, राम! ततो दितिरबुध्यत ॥ १९ ॥

शतपर्वणेति । 'शतकोटिः' इति प्रसिद्धं शतपर्वत्वं । तत इति । भिद्यमानगर्भस्य रोदनशब्देनेत्यर्थः ॥ १९ ॥

मा रुदो मा रुदश्चेति गर्भं शक्रोऽभ्यभाषत ।
बिभेद च महातेजा रुदन्तमपि वासवः ॥ २० ॥
न हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत् ।
निष्पपात ततश्शक्रो मातुर्वचनगौरवात् ॥ २१ ॥

न हन्तव्य इति । विभागेऽपि प्राणवियोजनं मा कुर्वित्यर्थः ॥

प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत ।
*अशुचिर्देवि! सुप्ताऽसि पादयोः कृतमूर्धजा ॥ २२ ॥
तदन्तरमहं लब्ध्वा शक्रहन्तारमाहवे ।
अभिदं सप्तधा, देवि! तन्मे त्वं क्षन्तुमर्हसि ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे षट्चत्वारिंशः सर्गः

---

* पादयोः कृतमूर्धजा, अत एव अशुचिरसती त्वं सुप्ताऽसि इत्यन्वयः ।

आहवे शक्रस्य—मम हन्तारं अङ्कुरच्छेदन्यायेन अभिन्दं । तन्मे अपचारं त्वं क्षन्तुं अर्हसि । 'यो हिंसार्थमभिक्रान्तं हन्ति, मन्युरेव मन्युं स्पृशति, न तस्मिन् दोषः' इत्यादिधर्मशास्त्रात् स्ववधप्राप्तगर्भादेरपि हननमदोष इति मत्वैवेदं कृतं, अतस्त्वया क्षन्तव्यमेव; न मयि कोऽपि दोष इत्यर्थः । गर (२३) मानः सर्गः ॥ २३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे षट्चत्वारिंशः सर्गः

———

## अथ सप्तचत्वारिंशः सर्गः

[ विशालागमनम् ]

सप्तधा तु कृते गर्भे दितिः परमदुःखिता ।
सहस्राक्षं दुराधर्षं वाक्यं सानुनयाऽब्रवीत् ॥ १ ॥

अथ गर्भभेदात्परं किं वृत्तं दितिशक्रयोरित्यतः—सप्तधेत्यादि । दुराधर्षमिति । न्याय्योपायजेतृत्वादित्याशयः ॥ १ ॥

ममापराधाद्गर्भोऽयं सप्तधा विफलीकृतः ।
नापराधोऽस्ति, देवेश! तवात्र बलसूदन! ॥ २ ॥

स एवोच्यते—ममेत्यादि ॥ २ ॥

प्रियं तु कर्तुमिच्छामि मम गर्भविपर्यये ।
मरुतां सप्त सप्तानां स्थानपाला भवन्त्विमे ॥ ३ ॥

वातस्कन्धा इमे सप्त चरन्तु दिवि पुत्रकाः ।
मारुता इति विख्याता दिव्यरूपा ममात्मजाः ॥ ४ ॥

गर्भस्य विपर्ययः—विपत्तिः, तन्निमित्तप्राप्तौ यत्त्वया कृतं सप्तधा विभागरूपं कर्म, तत् तव यथा प्रियं भवति तथा कर्तुं इच्छामि । कथमि-

स्यतः—मरुतामित्यादि । इमे त्वचो विभक्ताः सप्त वातस्कन्धाः—वातसंस्थानविशेषाः सप्तानां मरुतां सप्तसङ्ख्याका स्थानपाला भवन्तु—लोकरक्षिणो भवन्तु । तदर्थमेव चेमे सप्त मे पुत्रका दिवि—खे चरन्तु । अपि च दिव्यरूपा ममात्मजाः मारुता इति विख्याताश्च भवन्तु ॥

**ब्रह्मलोकं चरत्वेक इन्द्रलोकं तथाऽपरः ।**
**दिवि वायुरिति ख्यातस्तृतीयोऽपि महायशाः ॥ ५ ॥**

केषां सप्तमरुतां स्थानपाला इमे भवन्त्वित्यतः—ब्रह्मलोकमिति । ब्रह्मलोकं—ब्रह्मस्थानं पालयन् चरतु । तथा इन्द्रलोकमित्यादि । दिवि—अन्तरिक्षे, विष्णुलोक इत्यर्थः ॥ ५ ॥

**चत्वारस्तु, सुरश्रेष्ठ! दिशो वै तव शासऽनात् ।**
**सञ्चरिष्यन्तु, भद्रं ते, देवभूता ममात्मजाः ॥ ६ ॥**
**त्वत्कृतेनैव नाम्ना च मारुता इति विश्रुताः ।**

दिशः—पूर्वादिमहादिशः । त्वत्कृतेनेति । मारुदो मारुद इति वचनमूलेनेति शेषः ॥ ६ ॥

**तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरन्दरः ॥ ७ ॥**
**उवाच प्राञ्जलिर्वाक्यं दितिं बलनिषूदनः ।**
**सर्वमेतद्यथोक्तं ते भविष्यति न संशयः ॥ ८ ॥**
**विचरिष्यन्ति, भद्रं ते, देवरूपास्तवात्मजाः ।**

यथोक्तमिति । ब्रह्मविष्णुरुद्रचतुर्दिक्पालस्थानपालकतादिरूपमित्यर्थः । अत्र ब्रह्मादिस्थानपालवायूनां नामानि तु—“गगनस्स्पर्शनो वायुरनिलश्च तथाऽपरः । प्राणः प्राणेश्वरो जीव इत्येते मारुताः स्मृताः” इति । तेषां कर्मनामानि तु—‘आवहप्रवहसंवहोद्वहानुवहपरिवहविहवाः’

इति। तत्र आसमन्ताद्वाही आवहो गगनमयब्रह्मलोकपालकत्वात् गगनाख्यो ज्येष्ठः। तथाऽन्येपि द्रष्टव्याः ॥ ८ ॥

**एवं तौ निश्चयं कृत्वा मातापुत्रौ तपोवने ॥ ९ ॥**
**जग्मतुस्त्रिदिवं, राम! कृतार्थाविति नः श्रुतम्।**

मातापुत्राविति। 'आनङृतः' इत्यत्र ऋत इति पुत्र इत्यप्यनुवर्तनात् पुत्रेत्युत्तरपदे ऋकारान्तस्य आनङ्। नः श्रुतमिति। मतिबुद्धीत्यादिना वर्तमानोक्तेः 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। अस्माभिः श्रूयत इत्यर्थः ॥ ९ ॥

**एष देशस्स काकुत्स्थ! महेन्द्राध्युषितः पुरा ॥ १० ॥**
**दितिं यत्र तपस्सिद्धामेवं परिचचार सः।**

एवं वर्णितेन्द्रचरितस्य प्रकृतशेषत्वं प्रदर्श्यते—एष इत्यादि। स एष इत्यन्वयः। एवमिति प्रागुक्तरीत्यनुवादः ॥ १० ॥

**इक्ष्वाकोस्तु, नरव्याघ्र! पुत्रः परमधार्मिकः ॥ ११ ॥**
**अलम्बुसायामुत्पन्नो विशाल इति विश्रुतः।**

एवमुक्तप्राशस्त्ये देशे विशालोत्पत्तिकथनम्—इक्ष्वाकोस्त्वित्यादि ॥

**तेन चासीदिह स्थाने विशालेति पुरी कृता ॥ १२ ॥**
**विशालस्य सुतो राम! हेमचन्द्रो महाबलः।**

कृता आसीत् इत्यन्वयः। एवं विशालामुपवर्ण्य, 'कतरो राजवंशोऽद्य विशालायाम्' इत्युत्तरशेषतया वंशपरम्परा प्रतिपाद्यते—विशालस्येत्यादि ॥ १२ ॥

**सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरः ॥ १३ ॥**
**सुचन्द्रतनयो राम! धूम्राश्व इति विश्रुतः।**

धूम्राश्वतनयश्चापि सृञ्जयः समपद्यत ॥ १४ ॥
सृञ्जयस्य सुतः श्रीमान् सहदेवः प्रतापवान् ।
कुशाश्वः सहदेवस्य पुत्रः परमधार्मिकः ॥ १५ ॥
कुशाश्वस्य महातेजाः सोमदत्तः प्रतापवान् ।
सोमदत्तस्य पुत्रस्तु काकुत्स्थ इति विश्रुतः ॥ १६ ॥
तस्य पुत्रो महातेजाः सम्प्रत्येष पुरीमिमाम् ।
आवसत्यमरप्रख्यः सुमतिर्नाम दुर्जयः ॥ १७ ॥

पुरीमावसतीति । 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् ॥

इक्ष्वाकोस्तु प्रसादेन सर्वे वैशालिका नृपाः ।
दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः ॥ १८ ॥

विशाला निवासः येषां ते वैशालिकाः । कुमुदादित्वात् ठक् ॥

इहाद्य रजनीं, राम ! सुखं वत्स्यामहे वयम् ।
श्वः प्रभाते, नरश्रेष्ठ ! जनकं द्रष्टुमर्हसि ॥ १९ ॥
सुमतिस्तु महातेजा विश्वामित्रमुपागतम् ।
श्रुत्वा नरवरश्रेष्ठः प्रत्युद्गच्छन्महायशाः ॥ २० ॥

प्रत्युद्गच्छादिति । अभ्युत्थानमकरोदित्यर्थः ॥ २० ॥

पूजां च परमां कृत्वा सोपाध्यायः सबान्धवः ।
प्राञ्जलिः कुशलं पृष्ट्वा विश्वामित्रमथाब्रवीत् ॥ २१ ॥
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे विषयं मुनिः ।
संप्राप्तो दर्शनं चैव नास्ति धन्यतरो मया ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे सप्तचत्वारिंशः सर्गः

———

मया सदृशोऽन्यो धन्यतरो नास्तीति योजना । *वर (२४) मानः सर्गः ? ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे सप्तचत्वारिंशः सर्गः

---

## अथ अष्टचत्वारिंशः सर्गः

[अहल्याशापः]

**पृष्ट्वा तु कुशलं तत्र परस्परसमागमे ।**
**कथाऽन्ते सुमतिर्वाक्यं व्याजहार महामुनिम् ॥ १ ॥**

अथाहल्याशापमोक्षणं, दिव्यरामचरितप्रतिपादनशेषतया अहल्याशापहेतूपदेशादिस्सर्गद्वयेन । पृष्ट्वा त्वित्यादि । कथाऽन्ते व्याजहारेति । अनेन प्रसङ्गान्तरे चिन्ताव्याक्षेपपरिहारेण रामस्वरूपादिविषयप्रश्नादरातिशयो द्योत्यते ॥ १ ॥

**इमौ कुमरौ, [1]भद्रं ते, देवतुल्यपराक्रमौ ।**
**गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ २ ॥**

गजसिंहगती शार्दूलवृषभोपमाविति च क्रमेण रामलक्ष्मणयोर्गमनाकारविषयकोपमाने । गजगती रामः, प्रभुत्वात् ; अन्यगतिर्लक्ष्मणः ; अत एव शार्दूलोपमो रामः, अन्यः अन्योपमः ॥ २ ॥

**पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ।**
**अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ ३ ॥**

समुपस्थितयौवनौ । अत एव रूपेण अश्विनाविव स्थितौ ॥

---

* खरमान इति स्याद्वा । खकार-वकारयोः ग्रन्थलिप्यामक्षरसाम्यात् ।

[1] दृष्टिदोषो मामूदित्याह-भद्रं त इति-**गो** ॥ एकवचनं तु जात्या वा एतादृशकुमारानयितृमुन्यभिप्रायेण वा स्यात् ।

**यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ।**
**कथं पद्भ्यामिह प्राप्तौ ? किमर्थं ? कस्य वा ? मुने ! ॥ ४ ॥**

यदृच्छया—दैववशसम्पन्ननिमित्तविशेषेणेति यावत्। इदं तु वास्तवं किमर्थं–किं प्रयोजनमुद्दिश्य। कस्य वेति। सुताविति शेषः ॥

**भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम्।**
**परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ॥ ५ ॥**

भूषयन्ताविति। निजतेजसेति शेषः। तादृशपुरुषान्तरस्याभावात्—परस्परस्येति। प्रमाणं–आकारप्रमाणम्। इङ्गितं–आन्तराशयबोधकस्मितादिः। चेष्टा–वचनगमनादि ॥ ५ ॥

**किमर्थं च नरश्रेष्ठौ संप्राप्तौ दुर्गमे पथि।**
**वरायुधधरौ वीरौ, श्रोतुमिच्छामि तत्त्वतः ॥ ६ ॥**

किमर्थं प्राप्ताविति। आदरातिशयात् पुनः प्रश्नः ॥ ६ ॥

**[1]तस्य तद्वचनं श्रुत्वा यथावृत्तं न्यवेदयत्।**
**सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ॥ ७ ॥**

यथावृत्तं न्यवेदयदिति। दशरथकुमारावस्मद्यज्ञविघ्ननिवारणार्थं अस्मदा*करणात्–सिद्धाश्रममागताविति सिद्धाश्रमनिवासपर्यन्तवृत्तान्तः–राक्षसानामिति। तद्वधरूपयज्ञविघ्ननिवृत्तिप्रयोजनम्, चकाराज्जनकधनुर्दिदृक्षयैतद्देशगमनं च न्यवेदयदित्यर्थः ॥ ७ ॥

**विश्वामित्रवचःश्रुत्वा राजा [2]परमहर्षितः।**
**अतिथी परमौ प्राप्तौ पुत्रौ दशरथस्य तौ ॥ ८ ॥**

---

* आकरणं—आह्वानम्।

[1] एतदनन्तरं—अयोध्याधिपतेः पुत्रो राज्ञो दशरथस्य हि। मम यज्ञसमाप्त्यर्थमागतौ रामलक्ष्मणौ ॥ सिद्धाश्रममनुप्राप्य राक्षसानभिहत्य च। इमं देशमनुप्राप्तौ वीरौ दशरथात्मजौ ॥—इत्यधिकं–ङ.  [2] परमविस्मितः–ङ.

पूजयामास विधिवत् सत्कारार्हौ महाबलौ ।
ततः परमसत्कारं सुमतेः प्राप्य राघवौ ॥ ९ ॥
उष्य तत्र निशामेकां जग्मतुर्मिथिलां ततः ।

उष्य—उषित्वा ॥ ९ ॥

*[1]तां दृष्ट्वा मुनयस्सर्वे जनकस्य पुरीं शुभाम् ॥ १० ॥
साधु साध्विति शंसन्तो मिथिलां समपूजयन् ।

समपूजयन्निति पूजाप्रकार एव—साधु साध्विति शंसनम् ॥

मिथिलोपवने तत्र आश्रमं दृश्य राघवः । ॥ ११ ॥
पुराणं निर्जनं रम्यं पप्रच्छ मुनिपुङ्गवम् ।

मिथिलाया उप—समीपे वर्तमानं वनं तथा । दृश्य—दृष्ट्वा । पुराणत्वादिविशेषणमाश्रमस्य ॥ ११ ॥

श्रीमदाश्रमसङ्काशं किं न्विदं मुनिवर्जितम् ॥ १२ ॥
श्रोतुमिच्छामि भगवन्! कस्यायं पूर्व आश्रमः ।

आश्रमसङ्काशं—आश्रमवदवभासमानं, नापि चाश्रमशक्यवादम् , इदानीं मुनिवर्जितत्वात् , अत इदं किन्नु ? अस्यैव विवरणम्—कस्यायं पूर्व आश्रम इति । पूर्वः—पूर्वकालस्वभूतः ॥ १२ ॥

तच्छ्रुत्वा राघवेणोक्तं वाक्यं वाक्यविशारदः ॥ १३ ॥
प्रत्युवाच महातेजा विश्वामित्रो महामुनिः ।
हन्त! ते कथयिष्यामि शृणु तत्त्वेन राघव! ॥ १४ ॥
यस्येदमाश्रमपदं शप्तं कोपान्महात्मना ।

---

* तान्—पुरीं प्रति प्रस्थितान् रामादीन्—गो.    [1] तान् दृष्ट्वा—ते दृष्ट्वा—ङ.

प्रश्नस्यास्य अहल्यानुग्रहहेतुकालस्मृतिजसन्तोषः – हन्तेति। महात्मना कोपात् शप्तं–प्राप्तशापं इदं आश्रमपदं यस्य भवति, तत्, कथयिष्यामि ; तत्त्वेन तत् श्रृणिवति योजना ॥ १४ ॥

**गौतमस्य नरश्रेष्ठ ! पूर्वमासीन्महात्मनः ॥ १५ ॥**
**आश्रमो दिव्यसङ्काशः सुरैरपि सुपूजितः ।**

तदेव प्रतिपाद्यते—गौतमस्येत्यादि । दिव्यसङ्काशः–दिव्यत्वेन सङ्काशमानः ॥ १५ ॥

**स चेह तप आतिष्ठदहल्यासहितः पुरा ॥ १६ ॥**
**वर्ष[1]पूगान्यनेकानि राजपुत्र महायशः !**

वर्षपूगानि—अनेकवर्षाणि ॥ १६ ॥

**तस्यान्तरं विदित्वा तु सहस्राक्षः शचीपतिः ॥ १७ ॥**
**मुनिवेषधरोऽहल्यामिदं वचनमब्रवीत् ।**

अन्तरं–मुनिसन्निधानरहितकालं । मुनिवेषधर इति । गौतमवेषधर इत्यर्थः । 'मम रूपं समास्थाय' इति वक्ष्यमाणत्वादेवं व्याख्या ॥ १७ ॥

**ऋतुकालं प्रतीक्षन्ते नार्थिनः *सुसमाहिते !**
**सङ्गमं त्वहमिच्छामि त्वया सह सुमध्यमे ! ॥ १९ ॥**

ऋतुकालं–शास्त्रीयस्त्रीसंसर्गकालं । अर्थिन इति । कामात् सम्भोगार्थिन इत्यर्थः । काले सुसमाहिते–सङ्गमोचितकाले सुसङ्घट्टिते सति ऋतुकालं न प्रतीक्षन्त इति योजना । हे सुमध्यमे ! इत्यनेन स्वेनाप्यभिलष्यदिव्यस्त्रीत्वं सूचितम् ॥ १९ ॥

---

*सुसमाहिते–सम्यक् ब्रह्मणा निर्मिते ! हे अतिसुन्दरीत्यर्थः–**गो.**

[1]पूगान्–**गो.** एतदनन्तरं—'कदाचिद्दिवसे राम ततो दूरं गते मुनौ'–इत्यधिकं–**ङ.**

* मुनिवेषं सहस्राक्षं विज्ञाय रघनन्दन !
[1] मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥ २० ॥

मुनिवेषं सहस्राक्षं विज्ञायेति । 'ऋतुकालं प्रतीक्षन्ते नार्थिनः' इति वचनात् गौतमव्यतिरिक्तस्याश्रमवर्तिसर्वप्राणिजातस्य नैश्शङ्क्याय गौतमवेषधरोऽयमिन्द्र इति विज्ञायेत्यर्थः । अथाऽपि कथमिन्द्रत्वनिश्चयः ? अन्येनैवं मयि प्रवृत्तेरशक्यार्थत्वादित्यनुमानात्, इन्द्रेणैव स्वतस्तत्त्वप्रकाशनाद्वा । देवराजो मामभिलषितवानिति कुतूहलं तथा, तेन हेतुना सम्भोगे मतिं चकार—कृतवती च ॥ २० ॥

अथाब्रवीत् सुरश्रेष्ठं कृतार्थेनान्तरात्मना ।
[2]कृतार्थाऽस्मि सुरश्रेष्ठ ! गच्छ शीघ्रमितः प्रभो ! ॥२१॥

अथ—सम्भोगानन्तरम् ॥ २१ ॥

आत्मानं मां च देवेश ! सर्वदा रक्ष मानद !
इन्द्रस्तु ‡ प्रहसन् वाक्यमहल्यामिदमब्रवीत् ॥ २२ ॥

आत्मन् शब्दः इन्द्रार्थः ॥ २२ ॥

सुश्रोणि ! परितुष्टोऽस्मि गमिष्यामि यथाऽऽगतम् ।
एवं सङ्गम्य तु तया निश्चक्रामोटजात् ततः ॥ २३ ॥
स संभ्रमात् त्वरन् राम ! शङ्कितो गौतमं प्रति ।

स इति पृथक्पदम् । सम्भ्रमः—मोहः; 'सम्भ्रमोऽत्यादरे भये' इति वैजयन्ती । गौतमं प्रति शङ्कितः- शङ्कावान् ॥ २३ ॥

---

* सहस्राक्षं विज्ञाय—कदाचिदपि मुनिना एवमर्थनाभावात्, अन्यस्यात्र प्रवेष्टुमशक्तेः, इन्द्रस्यैवात्मनि बहुकालमभिलाषश्रवणाच्चेति भावः—**गो.** 'मम रूपं समास्थाय' (श्लो. २९) इत्युक्तेरत्र मुनिवेषः गौतमवेषः ।

‡ विशिष्टस्त्रीचरितेन प्रहासः, रक्षणस्य दुर्लभत्वाद्वा—**ति.**

[1] रतिं चकार—**ङ.** [2] कृतार्थोऽसि—**ङ.**

**गौतमं तं ददर्शाथ प्रविशन्तं महामुनिम् ।**
**देवदानवदुर्धर्षं तपोबलसमन्वितम् ॥ २४ ॥**

अथ–उटजनिष्क्रमणसमनन्तरमेव । तं ददर्शेति । यं प्रति शङ्कितवान् तं ददर्श ॥ २४ ॥

**तीर्थोदकपरिक्लिन्नं दीप्यमानमिवानलम् ।**
**गृहीतसमिधं तत्र सकुशं मुनिपुङ्गवम् ॥ २५ ॥**
**दृष्ट्वा सुरपतिस्त्रस्तो [1] विषण्णवदनोऽभवत् ।**

अत एव–विषण्णवदनः ॥ २५ ॥

**अथ दृष्ट्वा सहस्राक्षं मुनिवेषधरं मुनिः ॥ २६ ॥**
**दुर्वृत्तं वृत्तसम्पन्नो रोषाद्वचनमब्रवीत् ।**
**मम रूपं समास्थाय कृतवानसि दुर्मते ! ॥ २७ ॥**
**अकर्तव्यमिदं, तस्मात् विफलस्त्वं भविष्यसि ।**

मम रूपं इति । अस्मच्छब्दो गौतमार्थः । यस्मादिदं अकर्तव्यं–कर्तुमनर्हं कृतवानसि ; तस्मात् त्वं विफलः–विगतवृषणः भविष्यसि । 'लाभनिष्पत्तिभोगेषु बीजे फाले धने फलम्' ॥ २७ ॥

**गौतमेनैवमुक्तस्य सरोषेण महात्मना ॥ २८ ॥**
**[2] पेततुर्वृषणौ भूमौ सहस्राक्षस्य तत्क्षणात् ।**
**तथा शप्त्वा स वै शक्रमहल्यामपि शप्तवान् ॥ २९ ॥**
**इह वर्षसहस्राणि बहूनि त्वं निवत्स्यसि ।**
***वायुभक्षा [3] निराहारा तप्यन्ती भस्मशायिनी ॥ ३० ॥**

---

* अत्र बुद्धिपूर्वकव्यभिचारस्य विधीयमानं प्रायश्चित्तं शापापदेशेनोच्यते । एवं व्यक्ततया वाल्मीकिवचने स्थिते शैलीभवेति शापः, रामपादस्पर्शात् शिलात्वमुक्तिरिति पुराणकथा कल्पान्तरवृत्तमनुसृत्येति बोध्यम्–गो.

[1] विवर्णवदनः–ङ. [2] एतदनन्तरं 'व्यथितस्सहसा चासीद्धतौजा विफलीकृतः । धर्षितस्तपसोग्रेण कश्मलं चैबमाविशत् ॥ इत्यधिकं–ङ. [3] शिला भूत्वा–ङ.

[1]**अदृश्या सर्वभूतानां आश्रमेऽस्मिन् वसिष्यसि ।**

इहेत्यादि । इह—आश्रमे बहूनि वर्षसहस्राणि त्वं निवत्स्यसि । कामेन पीडितवतीत्यतः—वाय्वित्यादि । इहाश्रम एव निराहारा—अन्नपानप्राप्तिरहिता, अत एव तप्यन्ती—परितप्यमाना भस्मशायिनी—नित्यभस्मावृता सर्वभूतानां अदृश्या—दृष्ट्यगोचरा केवलं वायुभक्षा सती वसिष्यसि ॥ ३० ॥

**एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् ॥ ३१ ॥**
**इममाश्रममुत्सृज्य सिद्धचारणसेविते ।**
**हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ॥ ३२ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे अष्टचत्वारिंशः सर्गः

———

एवं शापं उक्त्वा इममाश्रममुत्सृज्य हिमवच्छिखरे तपस्तेपे ।

ननु शिलारूपेणावस्थाने शापं तस्य च रामपादस्पर्शे मोक्षं चोक्तवान् गौतम इति वदन्ति । तत्कथं ? त्वमेव पश्य ; शिलारूपा भवेति शापग्रन्थिः, तथा शिलारूपं जहाविति तन्मोक्षप्रतिपादको ग्रन्थोऽस्तीति सा प्रसिद्धिर्निर्मूला वा ? समूलैव । कथं ? किञ्चित्पुराणप्रसिद्धिमूला । तर्हि तद्भेदं वा प्रमाणं ? *रामेण शरसेतु-

---

* पुराणादिप्रसिद्धशिलारूपप्राप्तिशापस्तु कल्पान्तरीण इति न विरोधः । अत्र शिलारूपत्वे तात्पर्यकल्पने वातभक्षेत्यनेन विरोधः स्पष्ट एवेति केचित् । वस्तुतस्तु अदृश्येत्यस्य स्वरूपेणादृश्या, शिलाप्रतिमारूपेण सर्वदृश्येत्यर्थः । न च तावता चैतन्यहानिरिति, क्षुधादिपीडा स्यादेवेत्यतः —वातभक्षा—इति न कश्चिद्विरोध.—तदुक्तं पाद्मे—'शापदग्धा पुरा भर्त्रा राम ! शक्रापराधतः । अहल्याख्या शिला जज्ञे शतलिङ्गः कृतः स्वराट्' इति—ति—॥

[1] एतदनन्तरं—यदा चैतद्वनं घोरं रामो दशरथात्मजः । आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥ तस्यातिथ्येन दुर्वृत्ते ! लोभमोहविवर्जिता । मत्सकाशे मुदा युक्ता स्वं वपुर्धारयिष्यसि ॥ इदमधिकम्—ङ.

बन्धप्रासिद्धिवत्कल्पभेदे शिलाशापादिप्रसिद्धिरिति । वाल्मीक्यनुभवगोचररामावतारे शिलाहल्यामोक्षणं रामचरिते नास्तीत्येव । *कश्चित्तु पुराणश्लोकं 'एवमुक्त्वा महातेजास्संहारं तु तदाऽकरोत् ।–यदा चैतद्वनं घोरम्' इत्यादि सार्धश्लोकद्वयं गौतमेन शापमोक्षप्रतिपादकं† प्राक्षिपत् । व्याकरोच्च शिलाकथामपि । व्याकरोतु । किं नः ? राग (३२) मानः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे अष्टचत्वारिंशः सर्गः

---

अथ एकोनपञ्चाशः सर्गः

[अहल्याशापनिवृत्तिः]

**विफलस्तु ततः शक्रो देवानग्निपुरो[1]गमान् ।**
**अब्रवीत् [2]त्रस्तवदनः सर्षिसङ्घान् सचारणान् ॥ १ ॥**

अथ कथं शतक्रतोर्धर्मबन्धोः अधर्मप्रवृत्तिरिति शङ्कापरिहाराद्युपदेशपूर्वं प्रकृताश्रमप्रवेशादिव्यापारोपदेशः । विफलस्त्वित्यादि । त्रस्तवदन इति । त्रासेन तत्कार्यं दैन्यं लक्ष्यते । दीनवदन इति यावत् ॥१॥

**कुर्वता तपसो विघ्नं गौतमस्य महात्मनः ।**
**क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम् ॥ २ ॥**

गौतमस्य तपसो विघ्नं कुर्वतेति । अस्मदादिदेवपदापहारहेतुत्वात्तत्तपसः विघ्नस्य स्वात्मरक्षार्थमवश्यकर्तव्यत्वादिति शेषः । एवं च क्रोधमुत्पाद्य तपोनाशरूपं इदं सुरकार्यमेव कृतम् ॥ २ ॥

---

* महेश्वरतीर्थः । तथा हि—'घोरमित्यनेन' इदं वनं मुनिवर्जं भवत्विति गौतमेन शप्तमित्यवगम्यते—'स्वं वपुर्धारयिष्यति' इत्यनेन पद्मपुराणोक्तपाषाणावस्था सूच्यते—तथा च पाद्मे - 'सा ततस्तस्य रामस्य पादस्पर्शान्महात्मनः । अभूत् सुरूपा वनिता समाक्रान्ता महाशिला' इति ॥ † अयं भागः तिलकेऽनूदितः ॥

[1] घसः–ङ. [2] आर्तवदनः–ङ.

**विफलोऽस्मि कृतस्तेन क्रोधात्, सा च निराकृता।**
**शापमोक्षेण महता तपोऽस्यापहृतं मया॥ ३॥**

क्रोधविनश्यत्तपसा तेन ऋषिणाऽहं विफलः कृतोऽस्मि। सा च अहल्या दुष्टचारिणीति निराकृता परित्यक्ता; प्रागुक्तरूपशापपूर्वं। एवं महता उभयत्र शापमोक्षेणास्य तपो मयाऽपहृतम्॥ ३॥

**तस्मात् सुरवराः सर्वे सर्षिसङ्घाः सचारणाः!**
**सुरसाह्यकरं सर्वे सफलं कर्तुमर्हथ॥ ४॥**

यस्मात् एवं, तस्मात् सर्वे यूयं सुरसाह्यकरं मां सफलं कर्तुमर्हथ॥

**शतक्रतोर्वचः श्रुत्वा देवाः साग्निपुरोगमाः।**
**[1]पितृदेवानुपेत्याहुः सर्वे सह मरुद्गणैः॥ ५॥**

पितृदेवाः—अग्निकव्यवाहनादयः, तानुपेत्य हव्यवाहनाग्निमुखेन आहुः, 'अग्नेस्तु वचनं श्रुत्वा' (श्लो. १०) इति वक्ष्यमाणात्वादिहायं विशेषः॥ ५॥

**अयं मेषः सवृषणः शक्रो ह्यवृषणः कृतः।**
**मेषस्य वृषणौ गृह्य [2]शक्रस्याशु प्रयच्छत॥ ६॥**

अयं मेष इति। योऽयं भवतां हविष्ट्वेन वाहनत्वेन च कल्पितः अयमित्यर्थः। गृह्य—गृहीत्वा। मेषस्य वृषणौ अपहृत्य शक्रस्याशु प्रयच्छत। शक्रस्य वृषणौ मेषस्य च प्रयच्छतेति शेषः। न हि मेषान-वृषणान् पश्यामः॥ ६॥

---

[1] एतदनन्तरं—पुराऽविचार्य मोहेन ऋषिपत्नीं शतक्रतुः। धर्षयित्वा मुनेश्शापात्तत्रैव विफलः कृतः। इदानीं कुप्यते देवान् देवराजः पुरन्दरः॥ इत्यधिकं—ङ.
[2] शक्रायाशु—ङ.

*अफलस्तु कृतो मेषः परां[1] पुष्टिं प्रदास्यति ।
भवतां हर्षणार्थे च ये च दास्यन्ति मानवाः ।
[2]अक्षयं हि फलं तेषां यूयं दास्यथ पुष्कलम् ॥ ७ ॥

कथं तर्हि अफलस्तु कृतो मेषः परां पुष्टिं प्रदास्यति ? युष्मभ्यं—युष्मत्प्रीत्यर्थं ये च मानवाः—अफलं मेषं हविष्ट्वेन दास्यन्ति तेषामक्षयं--स्वर्गादिफलं च दास्यथेति वचनमुच्यते । युष्मभ्यं यदा मेषो हविः सम्पद्यते तदा अफलः—फलांशव्यतिरिक्त एव कृतः—हविष्ट्वेन कृतो युष्मत्प्रीतयेऽस्तु, तदीयवृषणस्यैन्द्रत्वेन युष्मत्पशव्यत्वात् त्यक्तवृषणकमेव युष्मत्प्रीतयेऽस्तु ॥ ७ ॥

अग्नेस्तु वचनं श्रुत्वा पितृदेवाः समागताः ।
उत्पाटय मेषवृषणौ सहस्राक्षे न्यवेशयन् ॥ ८ ॥

अग्नेस्तु वचनं श्रुत्वेति । अग्निमुखेन कृतं देवनियोगमित्यर्थः । समागताः—पितृपितामहप्रपितामहत्रिप्रकारस्वगणैस्सम्भूयागताः तथा, तथैव किल तेषामाराधनम् ॥ ८ ॥

तदाप्रभृति काकुत्स्थ ! पितृदेवाः समागताः ।
†अफलान् भुञ्जते मेषान्, फलैस्तेषामयोजयन् ॥ ९ ॥

अफलान्—फलांशव्यतिरिक्तान् ॥ ९ ॥

---

* नन्विदमयुक्तम्, न हि मेषा अवृषणा दृश्यन्त इति चेन्न—अफलः—वृषणभिन्नो यो मेषावयवः भवद्धविष्ट्वेन कल्पितः सः भवतां परां तुष्टिं दास्यतीत्यन्वयात्—ति ॥

† अफलान् मेषान् भुञ्जते । अथापि तेषां—सवृषणानां फलैः—सवृषमेषदानफलैरयोजयन् । दातॄनिति शेषः—**गो. शि.** अफलान्—षण्ढान् तदंशरहितान् वा । यतः तेषां फलैः—फलाभ्यामिन्द्रमयोजयन्—**ति.**

[1] तुष्टिं—ङ. [2] इदमर्धं कुत्रचिन्नास्ति—ङ.

**इन्द्रस्तु मेषवृषणस्तदाप्रभृति राघव!**
**गौतमस्य प्रभावेन [1] तपसश्च महात्मनः ॥ १० ॥**

तपसः प्रभावेणावृषणः पितृदेवतानुग्रहेण सवृषणश्चेत्यर्थः ॥१०॥

**तदागच्छ महातेजः! आश्रमं पुण्यकर्मणः ।**
**तारयैनां महाभागामहल्यां देवरूपिणीम् ॥ ११ ॥**

हे महातेजः राम! पुण्यकर्मणः—गौतमस्य तत्—आश्रमपदं आगच्छ । ननु भगवन्! ताटकावत् शापात् घोररूपाहल्यया अवष्टब्धमाश्रमं कथं गच्छेयमित्य[2]त्रोक्तम्—अहल्यां देवरूपिणीमिति । शापस्य त्वेतदाश्रमावकाशगमनाबाधिकत्वतोऽद्य मुक्तशापत्वतो देवरूपिणीं—देवगणतुल्यरूपिणीं महाभागामेनां—स्वभर्तृप्रतिपत्तिफलकं तदीयमातिथ्यं गृहीत्वा एनां तारय—भर्तृप्रापणेनानुगृहाण ॥ ११ ॥

**विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः ।**
**विश्वामित्रं पुरस्कृत्य तमाश्रममथाविशत् ॥ १२ ॥**
**ददर्श च महाभागां तपसा द्योतितप्रभाम् ।**
**लोकैरपि समागम्य दुर्निरीक्षां सुरासुरैः ॥ १३ ॥**

अथाश्रमं प्रविश्य यथा विश्वामित्रोक्तं तथैव तां पश्यति स्मेत्युच्यते—ददर्श चेत्यादि । मुक्तप्रतिबन्धेन तपसा सहजभूतेन द्योतिता—प्रकाशिता विद्युदादेरिव दुर्निरीक्षा प्रभा यस्यास्सा तथा । अत एव समागम्य—तस्यास्समीपमागत्य सुरासुरैरपि लोकैर्दुर्निरीक्षाम् ॥ १३ ॥

**प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव ।**
**[3] सतुषारावृतां साभ्रां पूर्णचन्द्रप्रभामिव ॥ १४ ॥**
**मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ।**

---

[1] तपसा च—ङ. [2] त्रोत्तरमुक्तं—ग. [3] एतदनन्तरं 'धूमेनापि परीताङ्गीं दीप्तामग्निशिखामिव' इत्यधिकम्—ङ.

प्रयत्नान्निर्मितामित्यादिना देवराजाभिलषीयदिव्यरूपत्वमुक्तम् । [1] सतुषारावृतसाभ्रपूर्णचन्द्रप्रभोपमानं, निबिडवृक्षाश्रममध्यवर्तिशान्ततेजोरूपत्वात् । मध्येऽम्भस इत्यादिना प्रतिमासूर्योपमानं । पृष्ठीकृतावरणोपाधिशुद्धसहजतजसि इदानीं शापान्त एवं स्वभावा एषा ॥ १४ ॥

**सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह ॥ १५ ॥**
**त्रयाणामपि लोकानां यावत् रामस्य दर्शनम् ।**
**शापस्यान्तमुपागम्य तेषां दर्शनमागता ॥ १६ ॥**

सा हि गौतमशापवाक्येन यावद्रामस्य दर्शनं दुर्निरीक्ष्या बभूव । सैषा शापस्यान्तमुपागम्य दिव्यरूपा सती तेषां दर्शनमागता ॥ १६ ॥

**राघवौ त्वतिथी तस्याः पादौ जगृहतुस्तदा ।**
**स्मरन्ती गौतमवचः प्रतिजग्राह सा च तौ ॥ १७ ॥**

गौतमवचः स्मरन्ती—अस्मदाश्रमप्राप्तराघवपूजया पुनरस्मत्सम्बन्धोऽस्त्वित्येवंरूपं स्वभर्तृवचनं स्मरन्ती । तत एव हेतोः तौ प्रतिजग्राह । * तयोः पूजनीयत्वबुद्धिमकरोदित्यर्थः ॥ १७ ॥

**पाद्यमर्घ्यं तथाऽऽतिथ्यं चकार सुसमाहिता ।**
**प्रतिजग्राह † काकुत्स्थो विधिदृष्टेन कर्मणा ॥ १८ ॥**
**पुष्पवृष्टिर्महत्यासीत् देवदुन्दुभिनिस्वनैः ।**
**गन्धर्वाप्सरसां चापि महानासीत् समागमः ॥ १९ ॥**

पुष्पवृष्टिरासीदिति । रामस्येति शेषः ॥ १९ ॥

---

* तौ पादौ प्रतिजग्राह । यत्तु—— पूज्यत्वबुद्धिमकरोदिति—तन्न —अग्रे काकुत्स्थ इति एकवचनात्—ति. † काकुत्स्थः—लक्ष्मणसहितः रामः–शि.

[1] सतुषारावरणसाभ्र–घ.

साधु साध्विति देवास्तामहल्यां समपूजयन् ।
तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगाम् ॥ २० ॥

भगवतो रामस्य ब्रह्मणः पूजया कृतार्थायाः सत्या अहल्यायाः पूजा ॥ २० ॥

गौतमो हि महातेजा अहल्यासहितः सुखी ।
रामं संपूज्य विधिवत् तपस्तेपे महातपाः ॥ २१ ॥

अहल्यासहितस्सुखी रामं संपूज्येत्यनेन पुनस्तत्काल आश्रमप्राप्तिरिति सूचितम् ॥ २१ ॥

रामोऽपि परमां पूजां गौतमस्य महामुनेः ।
सकाशाद्विधिवत्प्राप्य जगाम मिथिलां ततः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकोनपञ्चाशः सर्गः

---

खुर (२२) मानः सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकोनपञ्चाशः सर्गः

---

अथ पञ्चाशः सर्गः

[जनकसमागमः]

ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह ।
विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥ १ ॥

एवमहल्याऽनुग्रहरूपश्रीरामचरितवर्णनानन्तरं जनकधनुर्भङ्गादिदिव्यचरितवर्णनशेषतया जनकदर्शनं प्रतिपाद्यते—ततः प्रागुत्तरामित्यादि। ईशानदिशमित्यर्थः। तत इति। तस्माद्गौतमाश्रमादित्यर्थः ॥ १ ॥

रामस्तु मुनिशार्दूलमुवाच सहलक्ष्मणः ।
साध्वी यज्ञसमृद्धिर्हि जनकस्य महात्मनः ॥ २ ॥

बहूनीह सहस्राणि नानादेशनिवासिनाम् ।
ब्राह्मणानां, महाभाग! वेदाध्ययनशालिनाम् ॥ ३ ॥

अध्ययनशालिनामिति । सङ्घो दृश्यत इति शेषः ॥ ३ ॥

ऋषिवाटाश्च दृश्यन्ते शकटीशतसङ्कुलाः ।
देशो विधीयतां ब्रह्मन्! यत्र वत्स्यामहे वयम् ॥ ४ ॥

शकटीशतेति । अग्निसम्भारशकटीशतैः सङ्कुलाः ऋषिवाटाः—यज्ञार्थमागताग्निहोत्रिमहर्षिनिवासा इत्यर्थः । एवं नैबिड्यात् स्वावासदेशप्रश्नः—देश इत्यादि ॥ ४ ॥

रामस्य वचनं श्रुत्वा विश्वामित्रो महामुनिः ।
[1]निवेशमकरोद्देशे विविक्ते सलिलान्विते ॥ ५ ॥

विविक्ते सलिलान्वित इत्यनेन[2] योगानुष्ठानसौकर्यमुक्तम् ॥

विश्वामित्रमनुप्राप्तं श्रुत्वा स नृपतिस्तदा ।
शतानन्दं पुरस्कृत्य पुरोहित[3]मनिन्दितम् ॥ ६ ॥
प्रत्युज्जगाम सहसा[4] विनयेन समन्वितः ।

प्रत्युज्जगामेति । दीक्षितविमितप्रदेशसीमाक्रमनातिलङ्घयान्निति शेषः ॥ ६ ॥

ऋत्विजोऽपि महात्मानस्त्वर्घ्यमादाय सत्वरम् ॥ ७ ॥
विश्वामित्राय धर्मेण ददुर्मन्त्रपुरस्कृतम् ।
प्रतिगृह्य तु तां पूजां जनकस्य महात्मनः ॥ ८ ॥
पप्रच्छ कुशलं राज्ञो यज्ञस्य च निरामयम् ।

निरामयं— निर्विघ्नम् ॥ ८ ॥

---

[1] निवास—ङ. [2] यागानुष्ठान—ग. [3] मनिन्दितः—ङ. [4] विस्मयेन—ङ.

स तांश्चापि मुनीन् पृष्ट्वा सोपाध्यायपुरोधसः ॥ ९ ॥
यथान्यायं ततः सर्वैः समागच्छत् प्रहृष्टवत् ।

स तांश्चेति । स्वस्यार्घ्यदातॄन् ऋत्विजश्च कुशलं पृष्ट्वेत्यर्थः । प्रहृष्टवदिति । भावे निष्ठान्तान्मतुप् । सन्तोषसहितं यथा तथा सर्वैः संगतो बभूवेत्यर्थः । कश्चित् 'तदर्हम्' इति वतिरित्याह—तदसत्—राजानमर्हति छत्रं राजवदिति अर्हक्रियावत् द्वितीया समर्थो का चन क्रियाऽपीह दृश्यते ? ॥ ९ ॥

अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ॥ १० ॥
आसने भगवन्नास्तां सहैभिर्मुनिसत्तमैः ।
जनकस्य वचः श्रुत्वा निषसाद महामुनिः ॥ ११ ॥
पुरोधा ऋत्विजश्चैव राजा च सह मन्त्रिभिः ।

निषसाद महामुनिरित्यादिना यथान्यायमासनोपवेशः ॥ ११ ॥

आसनेषु यथान्यायमुपविष्टान् समन्ततः ॥ १२ ॥
दृष्ट्वा स नृपतिस्तत्र विश्वामित्रमथाब्रवीत् ।
अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता ॥ १३ ॥
अद्य यज्ञफलं प्राप्तं भगवद्दर्शनान्मया ।

समृद्धिः—अङ्गवैकल्यराहित्येन सद्गुणसमग्राङ्गोपेता जाता । अत एव सफला कृता । इष्टिरिति शेषः ॥ १३ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव! ॥ १४ ॥
यज्ञोपसदनं ब्रह्मन्! प्राप्तोऽसि मुनिभिः सह ।
द्वादशाहं तु ब्रह्मर्षे! शेषमाहुर्मनीषिणः ॥ १५ ॥
ततो भागार्थिनो देवान् द्रष्टुमर्हसि कौशिक!

यज्ञोपसदनं—देवयजनम्। द्वादशाहमिति। द्वादश अहानि समाहृतानि, 'राजाहः' इति टच्, 'न संख्यादेः' इत्यह्नादेशाभावः, द्वादशदिनान्येवावशिष्टानि यज्ञस्येति मनीषिणो विद्वदृत्विज आहुः—वदन्ति। ब्रुवो लटि उसाहौ। देवान् द्रष्टुमर्हसीति। विश्वामित्रे तत्सामर्थ्याविस्मयात् ॥ २६ ॥

इत्युक्त्वा मुनिशार्दूलं प्रहृष्टवदनस्तदा ॥ १६ ॥
पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रणतो नृपः।
इमौ कुमारौ, भद्रं ते, देवतुल्यपराक्रमौ ॥ १७ ॥
गजसिंहगती वीरौ शार्दूलवृषभोपमौ।
पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ॥ १८ ॥
अश्विनाविव रूपेण समुपस्थितयौवनौ।
[1]यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ ॥ १९ ॥
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने! ॥ २० ॥
वरायुधधरौ वीरौ कस्य पुत्रौ महामुने!
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ॥ २१ ॥
परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः।
काकपक्षधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ २२ ॥

इमौ कुमारावित्यादि गतार्थम् ॥ १७ ॥

तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः।
न्यवेदयन्महात्मानौ पुत्रौ दशरथस्य तौ ॥ २३ ॥

---

[1] एतदनन्तरं—पुण्डरीकविशालाक्षौ वरायुधधरावुभौ ॥ बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती। काकपक्षधरौ वीरौ कुमाराविव पावकी। रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणौ ॥ प्राकाश्यं कुलमस्माक मामुद्धर्तुमिहागतौ। इत्यधिकं क्वचित् ॥ ङ.

**सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ।**
**तच्चागमनमव्यग्रं विशालायाश्च दर्शनम् ॥ २४ ॥**
**अहल्यादर्शनं चैव गौतमेन समागमम् ।**
**महाधनुषि जिज्ञासां कर्तुमागमनं तथा ॥ २५ ॥**
**एतत्सर्वं महातेजा जनकाय महात्मने ।**
**निवेद्य विररामाथ विश्वामित्रो महामुनिः ॥ २६ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे पञ्चाशः सर्गः

---

महाधनुषि जिज्ञासां कर्तुं आगमनमिति । ज्ञानमिहापरोक्षं गृह्यते । महाधनुर्विषये रामस्य दिदृक्षां, तथा दृष्टस्य तस्य सज्जीकरणादिकं च कर्तुमिच्छया आगमनमित्येतत् सर्वं निवेद्य विरराम। चारु (२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे पञ्चाशः सर्गः

---

### अथ एकपञ्चाशः सर्गः

[विश्वामित्रचरितोपक्रमः]

**तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः ।**
**हृष्टरोमा महातेजाः शतानन्दो महातपाः ॥ १ ॥**

अथ शतानन्देन निजमात्रनुग्रहाय रामनेतरि विश्वामित्रे परमप्रीत्या तद्वैभववर्णनमुच्चैस्सर्गैः । तस्येत्यादि । हृष्टरोमा—स्वमातुः प्रत्यापत्तिश्रवणजसन्तोषेण सञ्जातरोमाञ्चः ॥ १ ॥

**गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः ।**
**रामसन्दर्शनादेव परं विस्मयमागतः ॥ २ ॥**

**स तौ निषण्णौ संप्रेक्ष्य सुखासीनौ नृपात्मजौ ।**
**शतानन्दो मुनिश्रेष्ठं विश्वामित्रमथाब्रवीत् ॥ ३ ॥**

तौ निषण्णौ संप्रेक्ष्य, तत्रापि रामसंदर्शनादेव परं विस्मयमागतः । अहो महिमा रामस्य ! यन्मे माता कृतार्थीकृतेति विस्मयं प्राप्त इत्यर्थः ॥ ३ ॥

**अपि ते मुनिशार्दूल ! मम माता यशस्विनी ।**
**दर्शिता राजपुत्राय तपो दीर्घमुपागता ॥ ४ ॥**

स एव विस्मयहेतुः प्रकाश्यते—अपि ते मुनिशार्दूलेत्यादिना ॥

**अपि रामे महातेजा मम माता यशस्विनी ।**
**वन्यैरुपाहरत् पूजां पूजार्हे सर्वदेहिनाम् ॥ ५ ॥**

रामे । रामविषय इति यावत् ॥ ५ ॥

**अपि रामाय कथितं [1] यद्वृत्तं तत् पुरातनम् ।**
**मम मातुर्महातेजः ! [2] देवेन [3]दुरनुष्ठितम् ॥ ६ ॥**

हे महातेजः विश्वामित्र ! मम मातुर्विषये देवेन—इन्द्रेण दुरनुष्ठितरूपं पुरातनं यद्वृत्तं—चरितमस्ति तत् यथा—यथावत् कथितमपि—कथितं किं सर्वतः ? अपिः प्रश्ने ॥ ६ ॥

**अपि कौशिक ! भद्रं ते, गुरुणा मम सङ्गता ।**
**माता मम, मुनिश्रेष्ठ ! *रामसन्दर्शनादितः ॥ ७ ॥**

गुरुणा—पित्रा । रामसन्दर्शनादित इति । गतशापेति शेषः ॥

---

* रामसन्दर्शनादित इति । तृतीयार्थे तसिः–**गो.** इतः अस्मात् रामसन्दर्शनात् मम माता मम गुरुणा—पित्रा सह संगता अपि ?–**रा.**

[1] यथावृत्तं पुरातनम्–ङ. [2] दैवेन -घ. ङ. [3] यदनुष्ठि–ङ.

अपि मे गुरुणा रामः पूजितः कुशिकात्मज!
इहागतो महातेजाः पूजां [1] प्राप्य महात्मनः ॥ ८ ॥
अपि * शान्तेन मनसा गुरुर्मे कुशिकात्मज!
इहागतेन रामेण [2]प्रयत्नेनाभिवादितः ॥ ९ ॥

इह अस्मदाश्रये समागतो महातेजा रामः पूजितोपि? महात्मनो मम गुरोस्सकाशात् पूजां प्राप्य शान्तेन मनसा उपलक्षितेनेहागतेन रामेण मम गुरुः प्रयत्नेनाभिवादितः किम्? ॥ ८–९ ॥

तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महामुनिः।
प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम् ॥ १० ॥
नातिक्रान्तं, मुनिश्रेष्ठ! यत्कर्तव्यं कृतं मया।
सङ्गता मुनिना पत्नी भार्गवेणेव रेणुका ॥ ११ ॥

यत् कर्तव्यं तन्नातिक्रान्तं––नातिपतितं, अपि तु मया कृतमेव। किं कृतमित्यतः–संगतेत्यादि। मुनिना–गौतमेन। भार्गवेणेति। भार्गवकोपहता रेणुका परशुराममाता यथा पुनर्भार्गवेण—जमदग्निना संगता तद्वदित्यर्थः॥ ११ ॥

तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः।
शतानन्दो महातेजा रामं वचनमब्रवीत् ॥ १२ ॥
स्वागतं ते नरश्रेष्ठ! दिष्ट्या प्राप्तोऽसि राघव!
विश्वामित्रं पुरस्कृत्य महर्षिमपराजितम् ॥ १३ ॥

दिष्ट्या–दैवयोगेन। विश्वामित्रपुरस्कारेणेह प्राप्तिर्दैवयोगलभ्येति विश्वामित्रस्यैव स्तुतिः। तथैवाग्रे प्रतिपाद्यते। अपराजितं––अप्रतिहतशक्तिम् ॥ १३ ॥

---

* शान्तेन मनसा उपलक्षितो गुरुः–गो. ति. [1] प्राप्तः–ङ. [2] पूजितेना–ङ. ज.

अचिन्त्यकर्मा तपसा ब्रह्मर्षिरतुलप्रभः ।
विश्वामित्रो महातेजाः, [1]*वेद्म्येनं परमां गतिम् ॥१४॥

अचिन्त्यकर्मेति । मनसाऽप्यन्येनाशक्यचिन्तनप्रतिसृष्ट्यादि कर्तारमेनं तव परां गतिं–परमहितपदं वेद्मि ॥ १४ ॥

नास्ति धन्यतरो राम ! त्वत्तोऽन्यो भुवि कश्चन ।
गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः ॥ १५ ॥

तदेव प्रतिपाद्यते–नास्ति धन्येत्यादि ॥ १५ ॥

श्रूयतामभिधास्यामि कौशिकस्य महात्मनः ।
यथा बलं यथा वृत्तं तन्मे निगदतः शृणु ॥ १६ ॥

बलं–तपोबलं यथा–यादृशं, वृत्तं–चरितश्च यथा, तथा तत्सर्वं निगदतो मत्तः शृणु ॥ १६ ॥

राजाऽभूदेष धर्मात्मा दीर्घकालमरिन्दमः ।
[2]धर्मज्ञः कृतविद्यश्च प्रजानां च हिते रतः ॥ १७ ॥
प्रजापतिसुतस्त्वासीत् कुशो नाम महीपतिः ।
कुशस्य पुत्रो बलवान् कुशनाभः सुधार्मिकः ॥ १८ ॥

राजाऽभूदित्युक्ते कस्य राज्ञः पुत्र इत्यपेक्षायामुच्यते––प्रजापतिसुत इत्यादि । गतार्थम् ॥ १८ ॥

कुशनाभसुतस्त्वासीत् गाधिरित्येव विश्रुतः ।
गाधेः पुत्रो महातेजाः विश्वामित्रो महामुनिः ॥ १९ ॥
विश्वामित्रो महातेजाः पालयामास मेदिनीम् ।
बहुवर्षसहस्राणि राजा राज्यमकारयत् ॥ २० ॥

---

*वेत्सीत्यत्र काकुः–गो. [1] वेत्स्येनं–घ. [2] सर्वज्ञः-ङ.

कदाचित्तु महातेजाः योजयित्वा वरूथिनीम् ।
अक्षौहीणीपरिवृतः परिचक्राम मेदिनीम् ॥ २१ ॥

वरूथिनीं—चतुरङ्गबलं योजयित्वा—समुपस्थाप्य । अथ अक्षौहिणीसङ्ख्यसेनापरिवृतो भूत्वा ॥ २१ ॥

नगराणि च राष्ट्राणि सरितश्च तथा गिरीन् ।
आश्रमान् क्रमशो राम ! विचरन्नाजगाम ह ॥ २२ ॥
वसिष्टस्याश्रमपदं नानावृक्षसमाकुलम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ २३ ॥
देवदानवगन्धर्वैः किन्नरैरुपशोभितम् ।
प्रशान्तहरिणाकीर्णं द्विजसङ्घनिषेवितम् ॥ २४ ॥
ब्रह्मर्षिगणसङ्कीर्णं देवर्षिगणसेवितम् ।
तपश्चरणसंसिद्धैः अग्निकल्पैर्महात्मभिः ॥ २५ ॥
सततं संकुलं श्रीमद् ब्रह्मकल्पैर्महात्मभिः ।

विद्यामात्राधिकृताः देवाः । लोकसञ्चारिणो नारदाद्या देवर्षयः । विद्याकर्मोभयाधिकृता [1]भूप्रतिष्ठा वसिष्ठाद्या ब्रह्मर्षयः । श्रीमान् यश्चतुर्मुखो भगवान् ब्रह्मा, तत्तुल्यवैभवैरित्यर्थः ॥ २५ ॥

अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा ।
फलमूलाशनैर्दान्तैः जितरोषैर्जितेन्द्रियैः ॥ २६ ॥
ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः ।
अन्यैर्वैखानसैश्चैव समन्तादुपशोभितम् ॥ २७ ॥

सहजतपोवैभवकर्ता स एव भगवान् ब्रह्मा, तद्रोमनखजवालखिल्याः वैखानसाश्च नित्यतपस्विनो भगवानिव; तज्जत्वं तु 'ये नखाः । ते वैखानसाः । ये वालाः । ते वालखिल्याः' इति श्रुतेः ॥

---

[1] भूप्रतिष्ठा प्रधाना वसिष्ठा—घ.

वसिष्ठस्याश्रमपदं ब्रह्मलोकमिवापरम्।
ददर्श जयतां श्रेष्ठो विश्वामित्रो महाबलः॥ २८॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकपञ्चाशः सर्गः

---

सर्वात्मना परमकल्याणस्वभावत्वेन ब्रह्मलोकदृष्टान्तः। उदार-(२८ १/२)मानः सर्गः॥ २८॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकपञ्चाशः सर्गः

---

### अथ द्विपञ्चाशः सर्गः

[वसिष्ठातिथ्यम्]

स दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः।
प्रणतो विनयाद्वीरो वसिष्ठं जपतां वरम्॥ १॥
स्वागतं तव चेत्युक्तो वसिष्ठेन महात्मना।
आसनं चास्य भगवान् वसिष्ठो व्यादिदेश ह॥ २॥

अथ वसिष्ठेनाश्रमगतराजर्षिसत्कारः—स दृष्ट्वेत्यादि। आश्रममिति शेषः। वसिष्ठं प्रणतः, वसिष्ठेन तव स्वागतमित्युक्तश्चेति योजना। व्यादिदेश—दापयति स्म॥ २॥

उपविष्टाय च तदा विश्वामित्राय धीमते।
यथान्यायं मुनिवरः फलमूलमुपाहरत्॥ ३॥

फलमूलमिति। 'जातिरप्राणिनाम्' इत्येकत्वम्॥ ३॥

प्रतिगृह्य च तां पूजां वसिष्ठाद्राजसत्तमः।
तपोऽग्निहोत्रशिष्येषु कुशलं पर्यपृच्छत॥ ४॥
विश्वामित्रो महातेजा वनस्पतिगणे तदा।
सर्वत्र कुशलं प्राह वसिष्ठो राजसत्तमम्॥ ५॥

विपुष्पफलवन्तो वनस्पतयः। इदं उपलक्षणं वानस्पत्यानां पुष्पपूर्वफलवतामाम्रादीनाम्। तद्विषयेऽपि कुशलं पर्यपृच्छत्। सर्वत्रेति। विश्वामित्रपृष्टसर्वविषय इत्यर्थः॥ ५॥

सुखोपविष्टं राजानं विश्वामित्रं महातपाः।
पप्रच्छ जपतां श्रेष्ठो वसिष्ठो ब्रह्मणः सुतः॥ ६॥
कच्चित्ते कुशलं राजन्! कच्चिद्धर्मेण रञ्जयन्।
प्रजाः पालयसे वीर! राजवृत्तेन धार्मिक॥ ७॥

राजवृत्तेनेति। "न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्॥" इति स्मृतेनोपलक्षितस्सन्॥

कच्चित्ते [1]सम्भृता भृत्याः कच्चित्तिष्ठन्ति शासने।
कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन!॥ ८॥
कच्चिद्धर्मेषु कोशेषु मित्रेषु च परंतप!
कुशलं ते नरव्याघ्र! पुत्रपौत्रे तवानघ!॥ ९॥

कोशः—नानाविधधनधान्यार्थनिचयः। पुत्रपौत्र इति। गवाश्वप्रभृतित्वादेकत्वम्॥ ९॥

सर्वत्र कुशलं राजा वसिष्ठं प्रत्युदाहरत्।
विश्वामित्रो महातेजा वसिष्ठं [2]विनयान्वितः॥ १०॥
कृत्वोभौ सुचिरं कालं धर्मिष्ठौ ताः कथाः शुभाः।
मुदा परमया युक्तौ प्रीयेतां तौ परस्परम्॥ ११॥

तौ उक्तविशेषणकौ विश्वामित्रवसिष्ठौ उभौ प्रीयेतामिति। अडभाव आर्षः॥ ११॥

---

[1] सुभृताः—ङ. [2] विनयान्वितम्—ङ—ज.

ततो वसिष्ठो भगवान् कथाऽन्ते रघुनन्दन !
विश्वामित्रमिदं वाक्यं उवाच * प्रहसन्निव ॥ १२ ॥

प्रहसऽन्निवेति । प्रसन्नमुख इति शेषः ॥ १२ ॥

आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल !
तव चैवाप्रमेयस्य यथार्हं संप्रतीच्छ मे ॥ १३ ॥
सत्क्रियां हि भवानेतां प्रतीच्छतु मयोद्यताम् ।
राजा त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥ १४ ॥

प्रतीच्छतु — अङ्गीकरोतु ॥ १४ ॥

एवमुक्तो वसिष्ठेन विश्वामित्रो [1]महामतिः ।
कृतमित्यब्रवीद्राजा [2]पूजावाक्येन मे त्वया ॥ १५ ॥

पूजावाक्येनेति । आतिथ्यं करिष्यामीत्येवं पूजावाक्येनैव मम पूजनं कृतमिति राजाऽब्रवीत् ॥ १५ ॥

फलमूलेन भगवन् ! विद्यते यत्तवाश्रमे ।
पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६ ॥
सर्वथा च महाप्राज्ञ ! पूजार्हेण सुपूजितः ।
गमिष्यामि, नमस्तेऽस्तु, मैत्रेणेक्षस्व चक्षुषा ॥ १७ ॥

पूजार्हेण—त्वयेति शेषः । मैत्रेण—मत्वर्थीयोऽजन्तः ॥ १७ ॥

एवं ब्रुवन्तं राजानं वसिष्ठः पुनरेव हि ।
न्यमन्त्रयत धर्मात्मा पुनःपुनरुदारधीः ॥ १८ ॥

निमन्त्रणं—भोजनाय प्रार्थनम् ॥ १८ ॥

---

* प्रहसन्निवोत्तमातिथिलाभजहर्षेण—ति, इव शब्द एवार्थे, प्रहसन् सन्नेव—शि.

[1] महामुनिः–ङ. [2] प्रियवाक्येन–ङ.

बाढमित्येव गाधेयो वसिष्ठं प्रत्युवाच ह ।
यथा प्रियं भगवतस्तथाऽस्तु मुनिसत्तम ! ॥ १९ ॥

बाढमित्यस्यैव विवरणम्—यथा प्रियमित्यादि ॥ १९ ॥

एवमुक्तो महातेजा वसिष्ठो जपतां वरः ।
आजुहाव ततः प्रीतः कल्माषीं धूतकल्मषाम् ॥ २० ॥

एवमुक्त इत्यादि । विश्वामित्रेणेति शेषः । कल्माषीं—विचित्र-वर्णां, शबलामिति शेषः, 'वर्णादनुदात्तात्तोपधात्तो नः' इत्यतो ङीष् ॥

एह्येहि शबले ! क्षिप्रं शृणु चापि वचो मम ।
सबलस्यास्य राजर्षेः कर्तुं व्यवसितोऽस्म्यहम् ॥
भोजनेन महार्हेण सत्कारं, संविधत्स्व मे ॥ २१ ॥

शबलेति संज्ञात्वतो वर्णार्थत्वाभावान्न ङीष् । महार्हेण भोजनेन सत्कारं कर्तुं व्यवसित इति योजना । तदर्थं संविधत्स्व—स्वतस्त-दुपयोगिवस्तुजातं संपादय ॥ २१ ॥

यस्य यस्य यथाकामं षड्रसेष्वभिपूजितम् ।
तत्सर्वं कामधुक् ! क्षिप्रमभिवर्ष कृते मम ॥ २२ ॥

मधुरादिषड्रसेषु यस्य यस्य यदभिपूजितं—अभीष्टं तत्सर्वं यथाकामं—तत्तत्प्रीत्यनतिक्रमेण मम कृते—मत्प्रयोजनार्थमिति मदर्थकृते इति च तादर्थ्ये निपातद्वयमीरितं, अभिवर्ष ॥ २२ ॥

रसेनान्नेन पानेन लेह्यचोष्येण संयुतम् ।
अन्नानां निचयं सर्वं सृजस्व शबले ! त्वर ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे द्विपञ्चाशः सर्गः

———

रसेन—रसायनभेदेन। लेह्यं–जिह्वाग्राह्यक्षौद्रादि। चोष्यं–अधरपुटग्राह्यमरीचिरसादिः। लेह्यचोष्यमिति। 'सर्वो द्वन्द्वो विभाषा' इत्येकत्वम्। एवमुक्तरूपाणां निचयं–राशिं कृत्स्नं सृजस्व। अगार-(२३ १/२)मानः सर्गः॥ २३॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे द्विपञ्चाशः सर्गः

---

अथ त्रिपञ्चाशः सर्गः

[कामधेनुप्राप्तयुद्यमः]

**एवमुक्ता वसिष्ठेन शबला, शत्रुसूदन!**
**विदधे कामधुक् कामान् यस्य यस्य यथेप्सितम्॥ १॥**

अथ यथानियोगानुष्ठानोपदेशः–एवमित्यादि। यस्य यस्य यथा यथा ईप्सितं तथा तथा तस्य तस्य सर्वान् कामान् विदधे॥ १॥

**इक्षून् मधूंस्तथा लाजान् मैरेयांश्च वरासवान्।**
**पानानि च महार्हाणि भक्ष्यांश्चोच्चावचांस्तथा॥ २॥**

अस्यैव प्रपञ्चः–इक्षूनित्यादि। इक्षून्–तद्विकारान्, मधून्–'मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः'; अर्धर्चादिषु दृष्टत्वात् पुंनपुंसकयोः मधुः–क्षौद्रमैरेयाख्यानासवविशेषान्। 'मैरेयमासवो धात्रीधातकीगुडवारिभिः'। कृतमिति शेषः। भक्ष्यान्–अपूपविशेषान्॥ २॥

**उष्णाढ्यस्यौदनस्यात्र राशयः पर्वतोपमाः।**
**मृष्टान्नानि च सूपाश्च दधिकुल्यास्तथैव च॥ ३॥**

पर्वतोपमा इति। आसन्निति शेषः। मृष्टान्नानि–पायसभेदाः॥

नानास्वादुरसानां च *[1]षाडवानां तथैव च।
[2]भोजनानि सुपूर्णानि गौडानि च सहस्रशः ॥४॥

षाडवानामिति। षण्णां रसानां विकारः, शैषिकोऽण्, गुणप्रधानस्फुरत्षड्रसको भक्ष्यविशेषः। औत्तरीत्याऽऽहुः। भोजनानि–भोजनपात्राणि। गौडानि–राजतानि, 'प्राणिरजतादिभ्योऽञ्' 'रजतं गुडः'॥

सर्वमासीत् सुसन्तुष्टं हृष्टपुष्टजनायुतम्।
विश्वामित्रबलं राम! वसिष्ठेनातितर्पितम् ॥५॥

हृष्टपुष्टजनैरासमन्ताद्युतं–आयुतम् ॥५॥

विश्वामित्रोऽपि राजर्षिः हृष्टः पुष्टस्तदाऽभवत्।
सान्तःपुरवरो राजा सब्राह्मणपुरोहितः ॥६॥

हर्षः–अन्तश्चित्तसन्तोषः। पुष्टिः–देहपुष्टिः ॥६॥

सामात्यो मन्त्रिसहितः सभृत्यः पूजितस्तदा।
युक्तः परमहर्षेण वसिष्ठमिदमब्रवीत् ॥७॥

अमात्यः–कर्मसचिवः। मन्त्री–मन्त्रसचिवः ॥७॥

पूजितोऽहं त्वया ब्रह्मन्! पूजार्हेण सुसत्कृतः।
श्रूयतामभिधास्यामि वाक्यं वाक्यविशारद! ॥८॥

पूजार्हेण–अस्मदादिभिरिति शेषः ॥८॥

गवां शतसहस्रेण दीयतां शबला मम ॥९॥
रत्नं हि भगवन्नेतत् रत्नहारी च पार्थिवः।
तस्मान्मे शबलां देहि ममैषा धर्मतो द्विज! ॥१०॥

---

* षाडवाः भक्ष्यविशेषाः–तेषां पूर्णानि–तैः पूर्णानीत्यर्थः ; 'पूरणगुण' इत्यादिना तृतीयार्थे षष्ठी। गौडानि–गुडविकाराः। अत्रापि आसन्निति शेषः–गो.

[1] षड्रसानां, खाण्डवानां–ङ. ज. [2] भागजनानि–ङ.

शतसहस्रेणेति । निष्क्रयभूतेनेति शेषः । धर्मतो ममैषा; योग्येति शेषः ॥ १० ॥

एवमुक्तस्तु भगवान् वसिष्ठो मुनिसत्तमः।
विश्वामित्रेण धर्मात्मा, प्रत्युवाच महीपतिम् ॥ ११ ॥
नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् ।
राजन्! दास्यामि शबलां राशिभी रजतस्य वा ॥ १२ ॥
*न परित्यागमर्हेयं मत्सकाशमरिंदम!
शाश्वती शबला मह्यं कीर्तिरात्मवतो यथा ॥ १३ ॥

कुतः परित्यागानर्हेत्यतः—शाश्वातीत्यादि । आत्मवतः—राजयोगवतो यथा विद्यादिजा कीर्तिः शाश्वती—नित्या, एवं मह्यं ब्रह्मदत्ता शबला शाश्वती—मन्त्रिनित्यसम्बद्धा ॥ १३ ॥

अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च।
आयत्तमग्निहोत्रं च बलिर्होमस्तथैव च ॥ १४ ॥

कथमस्यामेवं अत्यादर इत्यतः—अस्यां हव्यमित्यादि । प्राणयात्रा—जीवनं आयत्तं—अधीनम् । †अस्य सर्वत्रानुकर्षः । बलिः—बलिहरणं । होमः—वैश्वदेवादिः ॥ १४ ॥

स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा।
आयत्तमत्र, राजर्षे! सर्वमेतन्न संशयः ॥ १५ ॥

विविधा विद्याश्चास्यामायत्ताः । एतत्पयआदिप्रदानेन चित्तशुद्धेः, प्राणतृप्तेर्देहबलादेव साध्यत्वात्तदेकमूलशब्दविद्वियासिद्धिश्चास्यामायत्तैव ॥ १५ ॥

---

*परित्यागं प्रत्यर्हा, यद्वा परित्यागं प्राप्तुमर्हा न इत्यर्थः । † अस्य—आयत्तपदस्य.

सर्वस्वमेतत् सत्येन मम तुष्टिकरी सदा ।
कारणैर्बहुभी राजन्! न दास्ये शबलां तव ॥ १६ ॥

मम सर्वस्वमेतदेव—शबलास्वरूपमेव । कारणान्युक्तरूपाणि ॥

वसिष्ठेनैवमुक्तस्तु विश्वामित्रोऽब्रवीत्ततः ।
संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः ॥ १७ ॥

संरब्धतरं—अत्यन्ताग्रहयुक्तम् ॥ १७ ॥

हैरण्यकक्ष्याग्रैवेयान् सुवर्णाङ्कुशभूषितान् ।
ददामि कुञ्जराणां ते सहस्राणि चतुर्दश ॥ १८ ॥

हैरण्यानि—हिरण्यविकाराणि कक्ष्याग्रैवेयाणि येषां ते तथा । कक्ष्या—घण्टोपेतमध्यबन्धनशृङ्खलाविशेषः । ग्रैवेयं—ग्रीवाभूषणभूतस्वर्णशृङ्खलादिः, "ग्रीवाभ्योऽण् च" इति चात् ढञ् ॥ १८ ॥

हैरण्यानां रथानां ते *श्वेताश्वानां चतुर्युजाम् ।
ददामि ते शतान्यष्टौ किङ्किणीकविभूषितान् ॥ १९ ॥

चतुर्भिर्युक्ताः चतुर्युजः । गमकत्वात् समासः । किङ्किणीकैर्विभूषितांस्तथा ॥ १९ ॥

हयानां देशजातानां कुलजानां महौजसाम् ।
सहस्रमेकं दश च ददामि तव सुव्रत! ॥ २० ॥

देशः—बाह्लीकादिः । कुलं—उच्चैश्रवआदेः ॥ २० ॥

नानावर्णविभक्तानां वयस्थानां तथैव च ।
ददाम्येकां गवां कोटिं शबला दीयतां मम ॥ २१ ॥

वयस्थाः—तरुण्यः—"वयस्थस्तरुणो युवा" ॥ २१ ॥

---

* श्वेताश्वानां चतुर्भिः युजः ।

यावदिच्छसि रत्नं वा हिरण्यं वा द्विजोत्तम!
तावद्ददामि तत्सर्वं, शबला दीयतां मम ॥ २२ ॥
एवमुक्तस्तु भगवान् विश्वामित्रेण धीमता।
न दास्यामीति शबलां प्राह, * राजन्! कथञ्चन ॥ २३ ॥
एतदेव हि मे रत्नमेतदेव हि मे धनम्।
एतदेव हि सर्वस्वमेतदेव हि जीवितम् ॥ २४ ॥
दर्शश्च पूर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः।
एतदेव हि मे राजन्! विविधाश्च क्रियास्तथा ॥ २५ ॥
[1]अदोमूलाः क्रियाः सर्वा मम राजन्! न संशयः।
बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे त्रिपञ्चाशः सर्गः

---

अदोमूला इति। एतन्मूला इत्यर्थः। कामान् दोग्धुं शीलमस्या इति—कामदोहिनी—"सुप्यजातौ" इति णिनिः। तरु (२६) मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे त्रिपञ्चाशः सर्गः

---

अथ चतुष्पञ्चाशः सर्गः

[विश्वामित्रबलविमर्दनम्]

कामधेनुं वसिष्ठोऽपि यदा न त्यजते मुनिः।
तदाऽस्य शबलां राम! विश्वामित्रोऽन्वकर्षत ॥ १ ॥

---

* हे राजन्! कथञ्चन शबलां न दास्यामीति भगवान् प्राह—इति योजना।

[1] अतोमूलाः—च. ज.

एवं सामदानाभ्यां शबलाया अप्राप्तौ दण्डोपाये प्रवृत्तिर्विश्वामित्रस्य—कामधेनुमित्यादि । यदा न त्यजते—तद्वर्षः, न त्यजति स्म, तदा अन्वकर्षत । बलात्कारेणेति शेषः ॥ १ ॥

नीयमाना तु शबला राम ! राज्ञा महात्मना ।
दुःखिता चिन्तयामास रुदन्ती शोककर्शिता ॥ २ ॥
परित्यक्ता वसिष्ठेन किमहं सुमहात्मना ।
याऽहं [1]राजभृतैर्दीना [2]ह्रियेय भृशदुःखिता ॥ ३ ॥

राज्ञो भृताः—भ्रियन्त इति भृताः—भृतकास्सेवका इति यावत् । ह्रियेय—कर्मणि संप्रश्ने लिङ्—कथमपह्रियेयेत्यर्थः । भृशदुःखिता—भृशं दुःखिता—वृत्तिविषये मकारलोपो भृशमादिमान्ताव्ययस्येष्यते ॥

किं मयाऽपकृतं तस्य महर्षेर्भावितात्मनः ।
[3]यन्मामनागसं भक्तामिष्टां त्यजति धार्मिकः ॥ ४ ॥

किमपकृतं—किपराद्धम् ॥ ४ ॥

निर्धूय तांस्तदा भृत्यान् शतशः शत्रुसूदन !
जगामानिलवेगेन पादमूलं महात्मनः ॥ ५ ॥
शबला सा रुदन्ती च क्रोशन्ती चेदमब्रवीत् ।
वसिष्ठस्याग्रतः स्थित्वा मेघदुन्दुभिराविणी ॥ ६ ॥

शतशो भृत्याननिति । आवारकानिति शेषः । पादमूलं—पादसमीपम् ॥ ६ ॥

भगवन् ! किं परित्यक्ता त्वयाऽहं ब्रह्मणः सुत !
यस्माद्राजभृता मां हि नयन्ते त्वत्सकाशतः ॥ ७ ॥

---

[1] राजभटैः—ङ.   [2] ह्रियेयं—ङ. ज.   [3] एतदनन्तरं—इति सा चिन्तयित्वा तु विनिश्वस्य पुनःपुनः । जगाम वेगेन तदा वसिष्ठं परमौजसम् ॥—इत्यधिकं—ङ.

त्वत्सकाशतः—त्वत्समीपात् ॥ ७ ॥

एवमुक्तस्तु ब्रह्मर्षिरिदं वचनमब्रवीत् ।
शोकसन्तप्तहृदयां स्वसारमिव दुःखिताम् ॥ ८ ॥

स्वसा—भगिनी ॥ ८ ॥

न त्वां त्यजामि शबले ! नापि मेऽपकृतं त्वया ।
एष त्वां नयते राजा [1]बलोन्मत्तो महाबलः ॥ ९ ॥
*न हि तुल्यं बलं मह्यं राजा त्वद्य विशेषतः ।
बली राजा क्षत्रियश्च पृथिव्याः पतिरेव च ॥ १० ॥

बलोन्मत्तेन ह्रियत इति ; किं भवतो बलं नास्ति ? नेत्याह —न हीत्यादि ॥ १० ॥

इयमक्षौहिणी पूर्णा सवाजिरथसङ्कुला ।
हस्तिध्वजसमाकीर्णा तेनासौ बलवत्तरः ॥ ११ ॥
एवमुक्ता वसिष्ठेन प्रत्युवाच विनीतवत् ।
वचनं वचनज्ञा सा ब्रह्मर्षिमतुलप्रभम् ॥ १२ ॥

विनीतवत्—विनयोपेतं यथा तथा उवाच ॥ १२ ॥

म बलं क्षत्रियस्याहुः ब्राह्मणो बलवत्तरः ।
ब्रह्मन् ! ब्रह्मबलं दिव्यं क्षत्रात्तु बलवत्तरम् ॥ १३ ॥

बलवत्तर इति । क्षत्रियादिति शेषः । यदेवमतः—ब्रह्मन्नित्यादि ॥

---

* मह्यं—मम बलं न हि तद्बलेन तुल्यमित्यर्थः । तपोबलेन तर्हि दण्ड्यतामित्यत्राह—राजा त्विति । राजत्वात् तपोबलेन न दण्ड्य इति भावः । तद्वक्ष्यति किष्किन्धायां—' राजानो वानरश्रेष्ठ . . . . . तान्न हिंस्यात . . . . . ' इति । अद्य-कृतातिथ्यके दिने, अतिथित्वात विशेषतोऽवध्यः—ति. ॥ [1] बलान्मत्तो-ज.

***[1]अप्रमेयं बलं तुभ्यं, न [2]त्वया बलवत्तरः ।**
**विश्वामित्रो महावीर्यः, तेजस्तव दुरासदम् ॥ १४ ॥**

त्वया बलवत्तर इति न, त्वया सदृशोऽपि त्वत्तो बलवत्तर इति दूरे इत्यर्थः ॥ १४ ॥

**†नियुङ्क्ष्व मां महातेजः! त्वद्ब्रह्मबलसम्भृताम् ।**
**तस्य दर्पबलं यत्तन्नाशयामि दुरात्मनः ॥ १५ ॥**

त्वदाश्रिततया ममापि अयं न पर्याप्त इत्याह—नियुङ्क्ष्वेत्यादि ॥

**इत्युक्तस्तु तया राम! वसिष्ठस्तु महायशाः ।**
**सृजस्वेति तदोवाच बलं ‡[3]परबलारुजम् ॥ १६ ॥**
**तस्य तद्वचनं श्रुत्वा सुरभिः साऽसृजत्तदा ॥ १७ ॥**
**तस्या [4]हुम्भारवोत्सृष्टाः [5]पप्लवाः शतशो नृप!**
**नाशयन्ति बलं सर्वं विश्वामित्रस्य पश्यतः ॥ १८ ॥**

पप्लवशकयवनकाम्भोजद्वैप्यजना अवान्तरजातिविशेषाः । पश्यत इति अनादरे षष्ठी ॥ १८ ॥

**बलं भग्नं ततो दृष्ट्वा रथेनाक्रम्य कौशिकः ।**
**स राजा परमक्रुद्धः क्रोधविष्फारितेक्षणः ।**
**पप्लवान्नाशयामास शस्त्रैरुच्चावचैरपि ॥ १९ ॥**

विष्फारितं—विवृतं, स्फुरेः ण्यन्तात् निष्ठायां, 'स्फुरतिस्फुलत्योर्घञि' इत्यात्वे, 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' इति षत्वम् ॥ १९ ॥

---

* तुभ्यं—तव बलं अप्रमेयम् । महावीर्योऽपि विश्वामित्रः त्वया—त्वत्तः न बलवत्तरः ॥ † कामधेनुत्वान्नियोगापेक्षा ; परकास्यार्थसृष्टावेव तस्याः सामर्थ्यात्—**ति.** ‡ आरुजति—हिनस्तीति—आरुजं—**गो.**

[1] अप्रमेयबलं—**ङ.** [2] त्वत्तो, त्वस्य—**ङ.** [3] परबलार्दनम्—**ङ. ज.** [4] हुङ्कार—**ङ.** [5] पह्लवाः—**ङ.** पह्लवा—**ज.** पह्लवा—**झ.** [एवमुत्तरत्रापि]

विश्वामित्रार्दितान् दृष्ट्वा पह्लवान् शतशस्तदा ।
भूय एवासृजत् कोपात् शकान् यवनमिश्रितान् ॥ २० ॥

अर्दिताः—पीडिताः ॥ २० ॥

तैरासीत् संवृता भूमिः शकैर्यवनमिश्रितैः ।
प्रभावद्भिर्महावीर्यैः हेमकिञ्जल्कसन्निभैः ॥ २१ ॥

प्रभा—दुर्निरीक्षतेजः । हेम्नः किञ्जल्कस्य सन्निभास्तथा ॥ २१ ॥

दीर्घासिपट्टसधरैः हेमवर्णाम्बरावृतैः ।
निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः ॥ २२ ॥

हेमवर्णाम्बरेति । पीताम्बरेति यावत् ॥ २२ ॥

ततोऽस्त्राणि महातेजाः विश्वामित्रो मुमोच ह ।
तैस्तैर्यवनकाम्भोजाः पह्लवाश्चाकुलीकृताः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे चतुष्पञ्चाशः सर्गः

---

गर (२३) मानः सर्गः ॥ २३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे चतुष्पञ्चाशः सर्गः

---

अथ पञ्चपञ्चाशः सर्गः

[विश्वामित्रधनुर्वेदाधिगमः]

ततस्तानाकुलान् दृष्ट्वा विश्वामित्रास्त्रमोहितान् ।
वसिष्ठश्चोदयामास कामधुक्! सृज *योगतः ॥ १ ॥

---

*योगतः—योगमहिम्ना । तिरश्चोऽपि ब्रह्मप्रसादात् योगशक्तिरस्तीति ज्ञेयम्—गो.

अथ विश्वामित्रास्त्राकुलीकृतस्वबलस्य च पुनः सर्गत उपोद्घलनेन वैश्वामित्रसर्वबलनाशः—ततस्तानित्यादि। कामधुगिति सम्बुद्धिः ॥

*तस्या [1]हुंभारवाज्जाताः काम्भोजा रविसन्निभाः।
ऊधसस्त्वथ सञ्जाताः [2]पह्लवाः शस्त्रपाणयः ॥ २ ॥
योनिदेशाच्च यवनाः शकृद्देशाच्छकाः तथा।
रोमकूपेषु च म्लेच्छाः [3]हारीतास्सकिरातकाः ॥ ३ ॥

म्लेच्छकिरातयवनाः जातिविशेषाः ॥ ३ ॥

तैस्तैर्निषूदितं सर्वं विश्वामित्रस्य तत्क्षणात्।
सपदातिगजं साश्वं सरथं रघुनन्दन ! ॥ ४ ॥
दृष्ट्वा निषूदितं सैन्यं वसिष्ठेन महात्मना।
विश्वामित्रसुतानां तु शतं नानाविधायुधम् ॥ ५ ॥
अभ्यधावत् सुसंक्रुद्धं वसिष्ठं जपतां वरम्।
हुंकारेणैव तान् सर्वान् ददाह भगवान् ऋषिः ॥ ६ ॥

विश्वामित्रसुतानां शतं वसिष्ठमभ्यधावदिति। अयमेव किल धेनोर्बलम्, अतोऽयमेव संहर्तव्य इत्याशयेनेति शेषः। हुंकारेण निर्ददाहेत्यस्य बीजं—जपतां वरमिति। सघोरबीजदेवीजप एव तद्बलमिति सूचितम् ॥ ६ ॥

ते साश्वरथपादाता वसिष्ठेन महात्मना।
भस्मीकृता मुहूर्तेन विश्वामित्रसुतास्तदा ॥ ७ ॥

मुहूर्तेन विश्वामित्रसुता भस्मीकृता इति। मासेनानुवाकोऽधीत इतिवदपवर्गे तृतीया ॥ ७ ॥

---

* अत्र 'तस्या इत्यादि चत्वारः' 'दृष्ट्वेत्यादि षट्' इति गोविन्दराजीये दृश्यते. दृश्यते तु सर्वत्र तस्या इत्यादि श्लोकत्रयमेव।

[1] हुंकारवा- ङ. ज. [2] बर्बराः—ङ. ज. [3] हारीकाः—ज.

दृष्ट्वा विनाशितान् पुत्रान् बलं च सुमहायशाः ।
सव्रीडश्चिन्तयाऽऽविष्टो विश्वामित्रोऽभवत् तदा ॥ ८ ॥
*समुद्र इव निर्वेगो भग्नदंष्ट्र इवोरगः ।
उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ९ ॥

निर्वेग इति । युद्धप्रवृत्तिरहित इत्यर्थः । निर्वेगत्वे समुद्रदृष्टान्तः, [1]भग्नदंष्ट्रोरगदृष्टान्तः । निष्प्रभत्वे उपरक्तादित्यदृष्टान्तः । उपरक्तः—राहुग्रस्तः ॥ ९ ॥

हतपुत्रबलो दीनो लूनपक्ष इव द्विजः ।
हतदर्पो हतोत्साहो निर्वेदं समपद्यत ॥ १० ॥

निर्वेदः—वृथाप्रयासत्वबुद्धिजः चित्तखेदः ॥ १० ॥

स पुत्रमेकं राज्याय पालयेति नियुज्य च ।
पृथिवीं क्षात्रधर्मेण, वनमेवान्वपद्यत ॥ ११ ॥

एकमिति । अवशिष्टमिति शेषः ॥ ११ ॥

स गत्वा हिमवत्पार्श्वं किन्नरोरगसेवितम् ।
महादेवप्रसादार्थं तपस्तेपे महातपाः ॥ १२ ॥
केनचित्त्वथ कालेन देवेशो वृषभध्वजः ।
दर्शयामास वरदो विश्वामित्रं महाबलम् ॥ १३ ॥

दर्शयामासेति । विश्वामित्रं प्रति स्वात्मानमिति शेषः ॥ १३ ॥

किमर्थं तप्यसे राजन् ! ब्रूहि यत् ते विवक्षितम् ।
वरदोऽस्मि वरो यस्ते काङ्क्षितस्सोऽभिधीयताम् ॥ १४ ॥

---

* भग्नदंष्ट्र उरग इव ; निश्शक्तिरिति शेषः—**गो.** निर्वेगत्वे समुद्रोपमा, निष्प्रभत्वे इतरे उपमे —**ति.** निर्वेगः समुद्र इव भग्नदंष्ट्र उरग इव उपरक्तः—आदित्य इव सद्यो निष्प्रभतां गतः—**शि.**

[1] निष्प्रभत्वे भग्नदंष्ट्रोरगदृष्टान्तः—**ग.**

एवमुक्तस्तु देवेन विश्वामित्रो महातपाः ।
प्रणिपत्य महादेवमिदं वचनमब्रवीत् ॥ १५ ॥
यदि तुष्टो महादेव! धनुर्वेदो ममानघ!
*साङ्गोपाङ्गोपनिषदः सरहस्यः प्रदीयताम् ॥ १६ ॥

साक्षादारादुपकारकत्वलक्षणान्यङ्गोपाङ्गानि प्रधानस्य, तत्साधक-रहस्यमन्त्र उपनिषदः । तत्राङ्गोपाङ्गमन्त्रसहितस्साङ्गोपाङ्गोपनिषदः । सदेः पचाद्यचि 'सदिरप्रतेः' इति षत्वम् । रहस्यं—शास्त्राशक्य-निबन्धनमाचार्यमुखैकगम्यं विद्याजातम् ॥ १६ ॥

यानि देवेषु चास्त्राणि दानवेषु महर्षिषु ।
गन्धर्वयक्षरक्षस्सु प्रतिभान्तु ममानघ ॥ १७ ॥
तव प्रसादाद्भवतु देवदेव! ममेप्सितम् ।

तव प्रसादादिति । न तु प्रातिस्विकत्वदुपदेशमपेक्ष्येत्यर्थः ॥ १७ ॥

एवमस्त्विति देवेशो वाक्यमुक्त्वा गतस्तदा ॥ १८ ॥
प्राप्य चास्त्राणि राजर्षिर्विश्वामित्रो महाबलः ।
दर्पेण महता युक्तो दर्पपूर्णोऽभवत् तदा ॥ १९ ॥

क्षत्रियत्वादेव दर्पः सहजः, तस्य पूर्तिर्दिव्यास्त्रलाभात् ॥ १९ ॥

विवर्धमानो वीर्येण समुद्र इव पर्वणि ।
हतमेव तदा मेने वसिष्ठमृषिसत्तमम् ॥ २० ॥
ततो गत्वाऽऽश्रमपदं मुमोचास्त्राणि पार्थिवः ।
यैस्तत्तपोवनं सर्वं निर्दग्धं चास्त्रतेजसा ॥ २१ ॥

यैर्निर्दग्धं तादृशास्त्राणीति योजना ॥ २१ ॥

---

*उपनिषद इति । 'द्वन्द्वात् चुदषहान्तात् समाहारे' इति टच् । अदन्तो वा—शि.

**उदीर्यमाणमस्त्रं तत् विश्वामित्रस्य धीमतः ।**
**दृष्ट्वा विप्रद्रुता भीता मुनयः शतशो दिशः ॥ २२ ॥**

उदीर्यमाणं—विसृज्यमानमिति यावत् । विश्वामित्रेणेति शेषः ॥ २२ ॥

**वसिष्ठस्य च ये शिष्यास्तथैव मृगपक्षिणः ।**
**विद्रवन्ति भयाद्भीता * नानादिग्भ्यः सहस्रशः ॥ २३ ॥**

भयादिति । भयेहेतोरस्त्रजालादित्यर्थः ॥ २३ ॥

**वसिष्ठस्याश्रमपदं शून्यमासीन्महात्मनः ।**
**मुहूर्तमिव निश्शब्दमासीदिरिणसन्निभम् ॥ २४ ॥**

सर्वप्राणिपलायनात् शून्यं वसिष्ठस्याश्रमपदं, अत एव निश्शब्दं, अत एव मुहूर्तमिरिणसन्निभं—निर्वृक्षवृथागुल्मनिर्मानुष्ककान्तारसन्निभमासीत् ॥ २४ ॥

**† वदतो वै वसिष्ठस्य मा भैरिति मुहुर्मुहुः ।**
**नाशयाम्यद्य गाधेयं नीहारमिव भास्करः ॥ २५ ॥**

ननु कथं वसिष्ठे विद्यमाने विद्रवणमाश्रमवासिनामित्यत्रोक्तम्—वदत इत्यादि । गाधेय—'द्व्यचः' इति ढक्, गाधेयं नाशयामि, मा भैः हे प्रजाः ! इति वदतो वसिष्ठस्य अभिवादनमनादृत्य विद्रुवुरित्यन्वयः ॥ २५ ॥

**एवमुक्त्वा महातेजा वसिष्ठो जपतां वरः ।**
**विश्वामित्रं तदा वाक्यं सरोषमिदमब्रवीत् ॥ २६ ॥**

---

* नानादिग्भ्य इति द्वितीयार्थे चतुर्थी—**गो.**—**ति.** 'गत्यर्थानां द्वितीयाचतुर्थ्यौ' इत्यनुशासनविहिता चतुर्थी—**शि.** † वदतो वसिष्ठस्येत्यत्र अनादरे षष्ठी.

अथ वसिष्ठः पलायमानप्राणिजातं एवमुक्त्वा, विश्वामित्रमिदं वक्ष्यमाणं वाक्यं अब्रवीत् ॥ २६ ॥

**आश्रमं चिरसंवृद्धं यद्विनाशितवानसि ।**
**दुराचारोऽसि तन्मूढ ! तस्मात्त्वं न भविष्यसि ॥ २७ ॥**

न भविष्यसीति–नशिष्यसीति यावत् ॥ २७ ॥

**इत्युक्त्वा परमक्रुद्धो दण्डमुद्यम्य सत्वरः ।**
**[1] विधूम इव कालाग्निः यमदण्डमिवापरम् ॥ २८ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे पञ्चपञ्चाशस्सर्गः

---

विधूमः कालाग्निरिव परमक्रुद्धः वसिष्ठोऽपरं यमदण्डमिव स्थितं ब्रह्मदण्डं उद्यम्य–उद्धृत्य गृहीत्वा तस्थाविति शेषः राज (२८) मानः सर्गः ॥ २८ ॥

इति श्रीमद्रामायणामृतकतकटीयायां बालकाण्डे पञ्चपञ्चाशः सर्गः

---

## अथ षट्पञ्चाशः सर्गः

[विश्वामित्रनिग्रहः]

**एवमुक्तो वसिष्ठेन विश्वामित्रो महाबलः ।**
**[2] आग्नेयमस्त्रमुत्क्षिप्य तिष्ठ तिष्ठेति चाब्रवीत् ॥ १ ॥**

अथ वरप्राप्तसर्वास्त्रबलस्य च नाशनं—एवमित्यादि । एवमुक्त इति । न भविष्यसीत्युक्त इति यावत् ॥ १ ॥

**ब्रह्मदण्डं समुत्क्षिप्य कालदण्डमिवापरम् ।**
**वसिष्ठो भगवान् क्रोधादिदं वचनमब्रवीत् ॥ २ ॥**

---

[1] विधूममिव कालाग्नि-उ. [2] एतदनन्तरं 'प्राहिणोत्तद्वसिष्ठाय विश्वामित्रो महाबलः' इत्यधिकम्–ङ.

**क्षत्रबन्धो! स्थितोऽस्म्येषः, यद्बलं तद्विदर्शय।**
***नाशयाम्यद्य ते दर्पं शस्त्रस्य तव गाधिज!॥ ३॥**

तिष्ठ तिष्ठेति भीषयन्तं विश्वामित्रं प्रति स्वभीप्रसङ्गाभावः प्रकाश्यते—स्थितोऽस्म्येष इत्यादि। शस्त्रस्य दर्पं—शस्त्रासिहेतोरुत्पन्नमित्यर्थः॥ ३॥

**क्व च ते क्षत्रियबलं क्व च ब्रह्मबलं महत्।**
**पश्य ब्रह्मबलं दिव्यं मम †क्षत्रियपांसन!॥ ४॥**

**तस्यास्त्रं गाधिपुत्रस्य घोरमाग्नेयमुद्यतम्।**
**ब्रह्मदण्डेन तच्छान्तं अग्नेर्वेग इवाम्भसा॥ ५॥**

क्षत्रियपांसन! इत्युक्त्वा स्थितस्य वसिष्ठस्य ब्रह्मदण्डेन तस्य गाधिपुत्रस्य आग्नेयमुद्यतं तत् अस्त्रं शान्तमभवत्॥ ५॥

**वारुणं चैव रौद्रं च ऐन्द्रं पाशुपतं तथा।**
**ऐषीकं चापि चिक्षेप कुपितो गाधिनन्दनः॥ ६॥**

**मानवं मोहनं चैव गान्धर्वं स्वापनं तथा।**
**जृम्भणं मादनं चैव संतापनविलापने॥ ७॥**

**शोषणं दारणं चैव वज्रमस्त्रं सुदुर्जयम्।**
**ब्रह्मपाशं कालपाशं वारुणं पाशमेव च॥८॥**

**पैनाकास्त्रं च दयितं शुष्कार्द्रे अशनी उभे।**
**दण्डास्त्रमथ पैशाचं क्रौञ्चमस्त्रं तथैव च॥ ९॥**

---

* ते दर्पं तव शस्त्रस्य च दर्पं नाशयामि—**गो.** यत् ते बलं तत् विदर्शय तव शस्त्रस्य दर्पं—गर्वं अद्यैवाहं नाशयामि—**शि.** †क्षत्रियपांसनेत्यनन्तरं वसिष्ठोऽब्रवीदित्यनुकृष्यते—**गो.**

वायव्यं मथनं चैव अस्त्रं हयशिरस्तथा ॥ १० ॥
[धर्मचक्रं कालचक्रं विष्णुचक्रं तथैव च ।]
शक्तिद्वयं च चिक्षेप कङ्कालं मुसलं तथा ।
वैद्याधरं महास्त्रं च कालास्त्रमथ दारुणम् ॥ ११ ॥
त्रिशूलमस्त्रं घोरं च कापालमथ कङ्कणम् ।
एतान्यस्त्राणि चिक्षेप सर्वाणि रघुनन्दन! ॥ १२ ॥
*वसिष्ठे[1] जपतां श्रेष्ठे, तदद्भुतमिवाभवत् ।
तानि सर्वाणि दण्डेन ग्रसते ब्रह्मणः सुतः ॥ १३ ॥
तेषु शान्तेषु ब्रह्मास्त्रं क्षिप्तवान् गाधिनन्दनः ।

एतानि उक्तरूपाणि अस्त्राणि वसिष्ठे चिक्षेप । तानि दण्डेन ग्रसते स्मेति यत् तदिन्द्रजालमहेन्द्रजालाद्यद्भुतमिव सर्वाश्चर्यकरमभवदित्यर्थः ॥ १३ ॥

तदस्त्रमुद्यतं दृष्ट्वा देवाः †साग्निपुरोगमाः ॥ १४ ॥
देवर्षयश्च संभ्रान्ता गन्धर्वाः समहोरगाः ।
त्रैलोक्यमासीत् सन्त्रस्तं ब्रह्मास्त्रे समुदीरिते ॥ १५ ॥

ब्रह्मास्त्रे समुदीरिते त्रैलोक्यं सन्त्रस्तमिति । तस्याप्रतिक्रियामोघत्वात्, प्रतिब्रह्मास्त्रस्यैव वसिष्ठेनापि प्रयोगे उभाभ्यां सर्वलोकनाशप्रसङ्ग इति त्रासः ॥ १५ ॥

---

*जपतां श्रेष्ठ इत्यनेन जपवैभवमिदं ग्रसनमिति द्योतितम् । तत्—अस्त्रक्षेपणं अद्भुतमिवाभवत्, कार्यलेशस्याप्यदर्शनादिति भावः—**गो.**　†अग्निपुरोगमः—वायुः, तत्सहिताः ; अग्निसहितो वायुः पुरोगमः येषां ते इति वा—**ति.**

[1] जयतां श्रेष्ठे—**ङ.**

तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेण तेजसा ।
वसिष्ठो ग्रसते सर्वं *ब्रह्मदण्डेन राघव ! ॥ १६ ॥

ब्राह्मेण तेजसेति । ब्रह्मविद्यानुष्ठानवैभवजनिताधिकब्रह्मवर्चसेनेति यावत् । ब्रह्मदण्डेन । मूर्तब्रह्मविद्यामयेन करधृतेन चेत्यर्थः ॥

ब्रह्मास्त्रं ग्रसमानस्य वसिष्ठस्य महात्मनः ।
त्रैलोक्यमोहनं रौद्रं रूपमासीत् सुदारुणम् ॥ १७ ॥

ग्रसमानस्य— एवमुभयबलेन ब्रह्मास्त्रं ग्रसमानस्येति । अयमर्थः- मूलब्रह्मविद्यायास्तत्तदक्षरतत्त्वमात्राक्रियावस्थादिद्वाविंशतिविभूत्यनुसन्धानपूर्वं बहिर्भाव्यमाना मूलविद्या बहिः करगतो ब्रह्मदण्डो भवति । तथा ध्यानोपेतं स्वात्मनि यथास्थलं न्यस्यमाना स्वमूर्त्यात्मना नित्य आन्तरो ब्रह्मदण्डो भवति । ब्रह्मास्त्रं तूक्तब्रह्मविद्यामार्गबीजभेदविलासात्मा । तच्च कालप्रधानं रोचिःप्रधानं चेति द्वेधा । तत्र रोचिःप्रधानस्य बहिर्ब्रह्मदण्डे हृदा ग्रस्य क्रमान्मोक्ष इत्युपनिषदुपदिश्यमानमार्गेण ग्रसनं—ग्रासः, परस्यान्तरब्रह्मदण्डे ग्रास इति । एवं ग्रसमानस्य वसिष्ठस्य रूपं ब्रह्मविद्यामूर्तिमयं त्रैलोक्यमोहनं--भयात् त्रिलोकीचित्तमूर्च्छाकरमासीत । तत्र हेतुः--रौद्रमतिदारुणमिति । रौद्रं—भयानकं स्मरणेन च; दारुणं—दुर्दर्शं, नृसिंहवीरभद्राद्यावेशमूर्तिवदित्यर्थः ॥ १७ ॥

रोमकूपेषु सर्वेषु वसिष्ठस्य महात्मनः ।
मरीच्य इव निष्पेतु†रग्नेर्धूमाकुलार्चिषः ॥ १८ ॥

---

* अत्र ग्रासक्रियायां न दण्डस्यान्वयः पुत्रैर्गर्दभी भारं वहतीतिवत् । अतो न वक्ष्यमाणेन विरोधः—**गो.**

† ऋषेः विश्वामित्रब्रह्मास्त्राकुलत्वात् धूमाकुलार्चिष्ट्वमग्नेर्विशेषणम्—**ति.**

तावेव रौद्रदारुणार्थौ उभयोः प्रकाश्येते—रोमेत्यादि। अग्नेरिव मरीच्यः—विस्फुलिङ्गाः निष्पेतुरिति योजनार्थः ॥ १८ ॥

**प्राज्वलद्ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः।**
**[1]विधूम इव कालाग्निर्यमदण्ड इवापरः ॥ १९ ॥**

विधूमः कालाग्निरिव ब्रह्मदण्डश्च प्राज्वलत् ॥ १९ ॥

**ततोऽस्तुवन् मुनिगणा वसिष्ठं [2]जपतां वरम्।**
**अमोघं ते बलं ब्रह्मन्! तेजो धारय [3]तेजसा ॥ २० ॥**

एवं रूपं वसिष्ठमुपश्लोकयन्तो देवाः पारक्यब्रह्मास्त्रतेजोग्रसनमेव निरवशेषतः कार्यमित्याहुः। ततोऽस्तुवन्—साधुसाध्वित्युपश्लोकितवन्तो मुनिगणाः हे ब्रह्मन् ते बलं—ब्रह्मबलं अमोघं अस्तु। अरातौ अविसर्जनेन अक्षीणमस्तु। किमुक्तं भवति? प्रतिब्रह्मास्त्रं मा प्रयुङ्क्ष्वेति, पारक्यं तेजः स्वतेजसा सहजेन धारय, विलाप्यैकीकुरु ॥

**निगृहीतस्त्वया ब्रह्मन्! विश्वामित्रो महातपाः।**
**प्रसीद जपतां श्रेष्ठ! लोकाः सन्तु गतव्यथाः ॥ २१ ॥**

ननु कथमरातौ स्थिते अप्रतिप्रयोग इत्यत्राहुः—निगृहीत इत्यादि। ब्रह्मास्त्रस्य च ग्रासे सति नष्टसर्वसामर्थ्यः स्वयमेव मृतप्रायो जात इत्यर्थः ॥ २१ ॥

**एवमुक्तो महातेजाः शमं चक्रे महातपाः।**
**[4]विश्वामित्रो विनिकृतो विनिश्वस्येदमब्रवीत् ॥ २२ ॥**

शमं चक्रे इति। प्रतिप्रयोगतोऽरातिनाशनादुपरतोऽभूदित्यर्थः। विनिकृतः—तिरस्कृतसर्वशक्तिरित्यर्थः ॥ २२ ॥

---

[1] सधूम इव—ङ. [2] जयतां वरं—ङ. [3] तेजसि—ङ. [4] विश्वामित्रोऽपि निकृतः—ङ.

**धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् ।**
**एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥ २३ ॥**

धिग्बलमिति । 'धिगुपर्यादिषु' इति द्वितीया ॥ २३ ॥

**तदेतत्समवेक्ष्याहं प्रसन्नेन्द्रियमानसः ।**
**तपो महत्समास्थास्ये यद्वै ब्रह्मत्वकारणम् ॥ २४ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे षट्पञ्चाशः सर्गः

---

तदेतदिति । ब्रह्मतेजोबलमित्यर्थः । प्रसन्नेन्द्रियमानस इति । परित्यक्तक्षत्रस्वभाव इति यावत् । भार. (२४) मानः सर्गः ॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे षट्पञ्चाशः सर्गः

---

## अथ सप्तपञ्चाशः सर्गः

[त्रिशङ्कोः स्वर्गजिगमिषा]

***ततः सन्तप्तहृदयः स्मरन्निग्रहमात्मनः ।**
**विनिश्वस्य विनिश्वस्य, कृतवैरो महात्मना ॥ १ ॥**

**स दक्षिणां दिशं गत्वा महिष्या सह राघव !**
**[1] ततापं परमं घोरं विश्वामित्रो महत्तपः ॥ २ ॥**

अथ चतुर्व्यूहानामेकैकप्राधान्येन दक्षिणादिदिक्षु विश्वामित्रतपःप्रवृत्तिर्ब्रह्मत्वायोत्तरसर्गैः—तत इत्यादि । महात्मना—वसिष्ठेन कृतवैर इति । इदमेव वक्ष्यमाणतत्तपोनाशबीजम् ॥ २ ॥

---

* श्लोकद्वयमेकवाक्यम्.

[1] एतदनन्तरं— फलमूलाशनो दान्तः चकार परमं तपः ॥ इत्यधिकं–ङ.

अथास्य जज्ञिरे पुत्राः सत्यधर्मपरायणाः ।
हविष्यन्दो मधुष्यन्दो दृढनेत्रो महारथः ॥ ३ ॥
पूर्णे वर्षसहस्रे तु ब्रह्मा लोकपितामहः ।
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ॥ ४ ॥
जिता राजर्षिलोकास्ते तपसा कुशिकात्मज !
अनेन तपसा त्वां तु राजर्षिरिति विद्महे ॥ ५ ॥

पूर्णे वर्षसहस्रे तु ब्रह्माऽब्रवीदिति । ब्रह्मर्षित्वाय ब्रह्मविद्यया तदधिदैवतब्रह्मविद्योपासकत्वात् स एव भगवांस्तदुचितफलदानाय सान्निधत्ते । *विद्महे इति । 'विदो लटो वा' इति मसो मादेशः ॥ ५ ॥

एवमुक्त्वा महातेजा जगाम सह दैवतैः ।
† त्रिविष्टपं, ब्रह्मलोकं लोकानां परमेश्वरः ॥ ६ ॥

लोकानां—भूरादीनां तद्वर्तिलोकानां सर्वस्रोतसां च असङ्कोचोपचारेण परमेश्वरः—भगवान्—ब्रह्मा ब्रह्मलोकं जगाम । देवास्त्रिविष्टपं जग्मुरिति विपरिणामः ॥ ६ ॥

विश्वामित्रोऽपि तच्छ्रुत्वा ह्रिया किञ्चिदवाङ्मुखः ।
दुःखेन महताऽऽविष्टः ‡ समन्युरिदमब्रवीत् ॥ ७ ॥

समन्युरिदमब्रवीदिति । स्वं प्रत्येवेदं वचनम् ॥ ७ ॥

तपश्च सुमहत्तप्तं राजर्षिरिति मां विदुः ।
देवाः सर्षिगणाः सर्वे नास्ति मन्ये § तपःफलम् ॥ ८ ॥

---

* आर्षमात्मनेपदम्—**गो.** † अत्र 'त्रिविष्टपं जगाम' इत्युक्त्या तत्र इन्द्रं संस्थापयामासेति ध्वनितम् । तेन इन्द्रस्य विश्वामित्रतपोभीतत्वं व्यञ्जितम्—**शि.** ‡ समन्युः—सदैन्यः—'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः—**गो. ति.** § एतन्मात्रं मत्तपःफलं न भवति, ब्राह्मण्यस्यैव मदभिमतत्वादिति भावः—**गो.**

सुमहत्तपस्तप्तम् । एवमपि मां राजर्षिरित्येव विदुः—अवगच्छन्त इति बत! लटि विदेरुस् । इदं तपःफलं—अस्मदिष्टं नास्ति—न भवतीति मन्ये ॥ ८ ॥

[1]एवं निश्चित्य मनसा भूय एव महातपाः ।
तपश्चकार काकुत्स्थ! परमं परमात्मवान् ॥ ९ ॥

परमात्मवान्—ब्रह्मविद्यादैवतश्रीमदादिगुरुपरमात्मब्रह्मध्यानवान् परमधृतिमांश्च । "आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि" ॥ ९ ॥

एतस्मिन्नेव काले तु सत्यवादी जितेन्द्रियः ।
त्रिशङ्कुरिति विख्यातः इक्ष्वाकुकुलवर्धनः ॥ १० ॥
तस्य बुद्धिः समुत्पन्ना यजेयमिति राघव!
गच्छेयं [2]सशरीरेण देवानां परमां गतिम् ॥ ११ ॥

गच्छेयमिति । यज्ञबलेनेति शेषः । सशरीरेणेति । स्वात्मनेति शेषः ॥ ११ ॥

स वसिष्ठं समाहूय कथयामास चिन्तितम् ।
*अशक्यमिति चाप्युक्तो वसिष्ठेन महात्मना ॥ १२ ॥
प्रत्याख्यातो वसिष्ठेन स ययौ दक्षिणां दिशम् ।
ततस्तत्कर्मसिद्ध्यर्थं †पुत्रांस्तस्य गतो नृपः ॥ १३ ॥

तत्कर्मसिद्ध्यर्थमिति । सशरीरस्वर्गप्रापकयज्ञसिद्ध्यर्थमित्यर्थः ॥

---

*अशक्यत्वं च—न ऋषेरसामर्थ्यात्, नापि तादृशकर्मविधानाभावात्, 'सशरीर एव स्वर्गं लोकमेति' इति श्रुतेः । किन्तु, त्रिशङ्कोस्तादृशस्वर्गप्राप्तिर्नास्तीति पूर्वकल्पवृत्तज्ञानादिति मन्तव्यम्—**गो.** †तस्य—वसिष्ठस्य पुत्रान् नृपः—त्रिशङ्कुः गतः—प्राप्तः ।

[1] एतदनन्तरं 'कोपेन महताविष्टस्त्रैलोक्यं व्यथयन्निव' इत्यधिकम्—ङ

[2] स्वशरीरेण—ङ.

वासिष्ठा दीर्घतपसस्तपो यत्र हि तेपिरे।
त्रिशङ्कुः सुमहातेजाः शतं परमभास्वरम् ॥ १४ ॥
वासिष्ठान् संददर्शाथ तप्यमानान् [1] यशस्विनः।

यत्र तेपिर इति। गत्वेति शेषः। शतं वासिष्ठानिति। बह्वर्थे शतमित्येकत्वनिपातात् सामानाधिकरण्यम् ॥ १४ ॥

सोऽभिगम्य [2] महात्मानः सर्वानेव गुरोः सुतान् ॥ १५ ॥
अभिवाद्यानुपूर्व्येण ह्रिया किञ्चिदवाङ्मुखः।
अब्रवीत् [3] सुमहात्मानः सर्वानेव कृताञ्जलिः ॥ १६ ॥

ह्रियेति। वसिष्ठप्रत्याख्यानजयेति शेषः। सुमहात्मानस्सर्वानिति। छान्दसो जस् ॥ १६ ॥

शरणं वः प्रपद्येऽहं शरण्यान् [4] शरणागतः।
प्रत्याख्यातोऽस्मि, भद्रं वः, वसिष्ठेन महात्मना ॥ १७ ॥

शरणागतः—शरणं रक्षितारं रक्षितृत्रपेक्षया आगतः अहं शरण्यान्—रक्षणसमर्थान् वः—युष्मानेव शरणं प्रपद्ये ॥ १७ ॥

यष्टुकामो महायज्ञं तदनुज्ञातुमर्हथ।
गुरुपुत्रानहं सर्वान् नमस्कृत्य प्रसादये ॥ १८ ॥
शिरसा प्रणतो याचे ब्राह्मणान् तपसि स्थितान्।
ते मां भवन्तः सिद्ध्यर्थं याजयन्तु समाहिताः ॥ १९ ॥
सशरीरो यथाऽहं हि देवलोकमवाप्नुयाम्।

ब्राह्मणान्—अन्वर्थब्राह्मणान्। अत एव—तपसि स्थितान् ॥

---

[1] मनस्विनः—ङ.　[2] महातेजाः—ङ.　[3] सुमहाभागान्; सुमहातेजाः—ङ.
[4] शरणं गतः—ङ. ज.

प्रत्याख्यातो वसिष्ठेन गतिमन्यां तपोधनाः ॥ २० ॥
गुरुपुत्रानृते सर्वान् नाहं पश्यामि कां चन ।
[1] इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः ॥
तस्मादनन्तरं सर्वे भवन्तो दैवतं मम ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे सप्तपञ्चाशः सर्गः

———

तस्मात्—स्वकुलनृपतारकस्वकुलपुरोधसो वसिष्ठादनन्तरमित्यर्थः । कर(२१)मानः सर्गः ॥ २१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे सप्तपञ्चाशः सर्गः

———

अथ अष्टपञ्चाशः सर्गः

[त्रिशङ्कोश्चण्डालत्वप्राप्तिः]

ततस्त्रिशङ्कोर्वचनं श्रुत्वा क्रोधसमन्वितम् ।
ऋषिपुत्रशतं राम ! राजानमिदमब्रवीत् ॥ १ ॥

एवमनुचिताचारतोऽनर्थाप्तिप्रतिपादनम्—ततस्त्रिशङ्कोरित्यादि॥१॥

प्रत्याख्यातो हि दुर्बुद्धे ! गुरुणा सत्यवादिना ।
तं कथं समतिक्रम्य शाखान्तरमुपेयिवान् ॥ २ ॥

तं कथमिति । स्वकुलगुरुमित्यर्थः । शाखान्तरं—याजकादिना रक्षकान्तरम् ॥ २ ॥

इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमो गुरुः ।
न चातिक्रमितुं शक्यं वचनं सत्यवादिनः ॥ ३ ॥

न चातिक्रमितुं शक्यमिति । इक्ष्वाकुभिरिति शेषः ॥ ३ ॥

---

[1] एतदनन्तरं—पुरोधसस्तु विद्वांसस्तारयन्ति सदा नृपान्—इत्यधिकम्—ङ.

अशक्यमिति चोवाच वसिष्ठो भगवानृषिः ।
तं वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव ॥ ४ ॥

तं वयमिति । यमशक्यमित्युवाच, तं यज्ञमित्यर्थः ॥ ४ ॥

बालिशस्त्वं नरश्रेष्ठ ! गम्यतां स्वपुरं पुनः ।
याजने भगवान् शक्तः* त्रैलोक्यस्यापि पार्थिव ! ॥५॥

बालिशः । अज्ञ इत्यर्थः । त्रैलोक्यस्यापीति । सिद्ध्यर्थे याजन इति योजना ॥ ५ ॥

अवमानं [1] च तत्कर्तुं तस्य शक्ष्यामहे [2] कथम् ।

अवमानामिति । तदसाध्यार्थसाधनरूपमित्यर्थः ॥

तेषां तद्वचनं श्रुत्वा क्रोधपर्याकुलाक्षरम् ॥ ६ ॥
स राजा पुनरेवैतान् इदं वचनमब्रवीत् ।

एतानिति । वासिष्ठानित्यर्थः ॥ ६ ॥

प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रै[3]स्तथैव च ॥ ८ ॥
अन्यां गतिं गमिष्यामि, स्वस्ति वोऽस्तु तपोधनाः ।

अन्यां गतिमिति । याजकान्तरमित्यर्थः ॥ ८ ॥

ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ॥ ८ ॥
शेपुः परमसंक्रुद्धाः चण्डालत्वं गमिष्यसि ।

घोराभिसंहितमिति । साक्षात्कुलगुरुं ब्रह्मपुत्रं वसिष्ठं व्यतिक्रम्य पुरोधान्तराश्रयणाभिसन्धानस्य इच्छायाः कुलनाशहेतुत्वेनातिघोरत्वम् । गमिष्यसीति शेपुरिति योजना ॥ ९ ॥

---

* त्रैलोकस्यापि याजने शक्तः—शि·

[1] कथंकर्तुं—ङ. [2] वयम्—ङ. [3] विशेषतः—ङ.

[1]एवमुक्त्वा महात्मानो विविशुस्ते स्वमाश्रमम् ॥ ९ ॥
अथ रात्र्यां व्यतीतायां राजा * चण्डालतां गतः ।
नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्धजः ॥ १० ॥
चित्यमाल्यानुलेपश्च आयसाभरणोऽभवत् ।

चित्येति । चिता—श्मशानं तत्र भवं माल्यं, अनुलेपः—चिताभस्म यस्य स तथा । अयोविकारः—आयसम् ॥ १२ ॥

तं दृष्ट्वा मन्त्रिणः सर्वे त्यज्य चण्डालरूपिणम् ।
प्राद्रवन् सहिता राम ! पौरा येऽस्यानुगामिनः ॥ ११ ॥
एको हि राजा काकुत्स्थ ! जगाम परमात्मवान् ।
दह्यमानो दिवारात्रं विश्वामित्रं तपोधनम् ॥ १२ ॥

एको हीति । हि यस्मात् मन्त्रिपौरपरित्यक्तः तस्मादेकाकी अटन् दिवारात्रं दुःखेन दह्यमानोऽपि परमात्मवान्—परमधृतिमान् भूत्वा वसिष्ठवैरिणं विश्वामित्रं जगाम ॥ १४ ॥

विश्वामित्रस्तु तं दृष्ट्वा राजानं विफलीकृतम् ।
चण्डालरूपिणं राम ! मुनिः कारुण्यमागतः ॥ १३ ॥

विफलीकृतं—वासिष्ठैर्विनाशितैहिकामुष्मिकार्थतया सम्पादितं ॥

---

* अत्र चण्डालत्वं न तत्सादृश्यमात्रं, किन्तु क्षत्रियत्वप्रहाणेन चण्डालत्वजातिप्राप्तिः । ब्राह्मणत्वादिजातेः कर्ममूलत्वेन तदपाये तदपायात्—गो ।

परन्तु अनन्तरसर्गे प्रथम-चतुर्थश्लोकव्याख्यानावसरे गोविन्दराजैरेव त्रिशङ्कुयाजनोपपादनाय त्रिशङ्कोः जातिचण्डालत्वाभाव उक्त । चण्डालत्वजातिरेव द्विविधा कर्ममूला, वंशमूला चेति इत्युक्तिरपि शब्दभेदमात्रे पर्यवस्येत् । षष्टितमसर्गान्तगतं एतद्व्याख्यानं च द्रष्टव्यम् ।

चण्डालतां—चाण्डालरूपम्—शि.

[1] एतदनन्तरम्—तच्छ्रुत्वा घोरसंकाशं ऋषिपुत्रैश्च भाषितम् । प्राविशत् स्वपुरं राजा चिन्तयामास दुःखितः=इत्यधिकम्—ङ.

**कारुण्यात्स महातेजा वाक्यं परमधार्मिकः ।**
**इदं जगाद, भद्रं ते, राजानं घोररूपिणम् ॥ १४ ॥**
**किमागमनकार्यं ते राजपुत्र महाबल !**
**अयोध्याधिपते वीर ! *शापाच्चण्डालतां गतः ॥ १५ ॥**

यस्त्वं शापाच्चण्डालतां गतः, तस्य ते इह आगमनकार्यं किमिति योजना ॥ १५ ॥

**†अथ तद्वाक्य[1]माज्ञात्वा राजा चण्डालतां गतः ।**
**अब्रवीत् प्राञ्जलिर्वाक्यं वाक्यज्ञो वाक्यकोविदम् ॥ १६ ॥**

आज्ञात्वेति । श्रुत्वेति यावत् ॥ १६ ॥

**प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च ।**
**अनवाप्यैव [2]तं कामं मया प्राप्तो विपर्ययः ॥ १७ ॥**

तं काममिति । यं काममुद्दिश्य गुर्वादीनुपसन्नोऽस्मि, तमप्राप्य । न तावता समाप्तम्, अपि तु विपर्ययः—विपरीतप्रयोजनं चैवंवेषरूपं प्राप्तमित्यर्थः ॥ १७ ॥

**‡सशरीरो दिवं यायामिति मे [3]सौम्य ! दर्शनम् ।**
**मया चेष्टं क्रतुशतं, तच्च नावाप्यते फलम् ॥ १८ ॥**

कस्ते कामस्तादृश इत्यतः—सशरीर इत्यादि । दर्शनं—बुद्धिः । तच्चेति । तथापि तत्फलं—सशरीरस्वर्गप्राप्तिरूपमित्यर्थः ॥ १८ ॥

---

* चण्डालतां गतः केन हेतुनेति शेषः—**गो.** एतेन त्रिशङ्कुशापः पूर्वमेव विश्वामित्रेण श्रुत इति ध्वनितम्—**शि.** † चण्डालतां गतो राजा तद्वाक्यमाज्ञाय अब्रवीदिति योजना. ‡ हे सौम्यदर्शन ! सशरीरोऽहं दिवं यायामिति हेतोः क्रतुशतं मे इष्टं—मदिच्छाविषयीभूतं ; तत्—क्रतुशतं मया नावाप्यते—अत एव फलं—सशरीरस्वर्गगमनं च नावाप्यते—**शि.**

[1] माकर्ण्य—**ज.** [2] तत्कर्म—**ङ.** [3] सौम्यदर्शन—**ङ. ज.**

*अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन।
कृच्छ्रेष्वपि गतः, सौम्य! क्षत्रधर्मेण †ते शपे ॥ १९ ॥

क्षत्रधर्मेणेति। तत्साक्षितयेत्यर्थः ॥ १९ ॥

‡यज्ञैर्बहुविधैरिष्टं प्रजा धर्मेण पालिताः।
गुरवश्च महात्मानः शीलवृत्तेन तोषिताः ॥ २० ॥

शीलोपेतं वृत्तं शीलवृत्तं। शीलं—सद्गुणः। वृत्तं—आचारः ॥

धर्मे §प्रयतमानस्य यज्ञं चाहर्तुमिच्छतः।
परितोषं न गच्छन्ति गुरवो मुनिपुङ्गव! ॥ २१ ॥

न गच्छन्ति—न गच्छन्ति स्म ॥ २१ ॥

दैवमेव परं मन्ये पौरुषं तु निरर्थकम्।
दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः ॥ २२ ॥

यदेवमतः—दैवमेवेति। प्रारब्धफलादृष्टमित्यर्थः। परं—श्रेष्ठं। पुरुषहिताहितप्रापकमित्यर्थः। पौरुषं—इदानींतनधर्माद्यनुष्ठानं निरर्थकं—फलोन्मुखप्रारब्धोद्यदर्थानर्थतिरस्कारे दुर्बलमित्यर्थः। दैवेनेत्यादौ दैवशब्द उक्तार्थः। आक्रम्यते—अभिभूयते। हि यस्मादेवं तस्मात् दैवं परमा गतिः। साक्षादितरतिरस्कारेणैहिकसुखदुःखादिप्रद इत्यर्थः ॥ २२ ॥

---

* क्रतुशतं न कृतं त्वयेति चेत्—तत्राह—अनृतमिति। **ति.** गुरोः गुरुपुत्राणां वा अपराधान्तरं मया न कृतमिति बोधयितुमाह—अनृतमिति। मे—मया।—**शि.** वसिष्ठप्रत्याख्यानमूलं पापं मयि नास्तीत्याशयेनाह—अनृतमिति। यद्वा—'यज्ञोऽनृतेन क्षरति' इति वचनात् क्रतुनाशकत्वेनावगतं अनृतमपि मयि नास्तीत्याह—मे—मया—**गो.**

† ते—तुभ्यम्। ‡ पूर्वं सशरीरत्वसाधनक्रतुशतमुक्तम्, अत्र नित्यकर्मेति भिदा। यद्वा, पूर्वं क्रतुशतं इष्टं—यष्टुमुपक्रान्तं; तच्च—तादृशक्रत्वनुष्ठानमनोरथः नावाप्यत इत्यर्थः—**गो.**

§ प्रयतमानस्येति सप्तम्यर्थे षष्ठी ममेति शेषः—**गो.**

**तस्य मे परमार्तस्य प्रसादमभिकाङ्क्षतः ।**
**कर्तुमर्हसि, भद्रं ते, दैवोपहतकर्मणः ॥ २३ ॥**

प्रसादं—दैवानुकूल्यं । दैवेनोपहतफलं इहानुष्ठीयमानं कर्म यस्य स तथा ॥ २३ ॥

**नान्यां गतिं [1] गमिष्यामि नान्यः शरणमस्ति मे ।**
**दैवं पुरुषकारेण निवर्तयितुमर्हसि ॥ २४ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे अष्टपञ्चाशः सर्गः

---

वर (२४) मानः सर्गः ॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे अष्टपञ्चाशः सर्गः

---

## अथ एकोनषष्टितमः सर्गः

[वासिष्ठादीनां शपावाप्तिः]

**[*]उक्तवाक्यं तु राजानं कृपया कुशिकात्मजः ।**
**अब्रवीन्मधुरं वाक्यं [2] साक्षाच्चण्डालरूपिणम् ॥ १ ॥**

अथ [†] वसिष्ठवैरवशादन्योन्यनिजतपोनाशकरी प्रवृत्तिः——उक्तेत्यादि ॥ १ ॥

---

[*] जातिचण्डालस्य कदाचित् तद्भावनिवृत्तिरस्ति, न तु कर्मचण्डालस्येत्याह—उक्तवाक्यमित्यादि । साक्षाच्चण्डालरूपिणं, चण्डालचिह्नधारित्वात् न शास्त्रगम्यचण्डालभाव इत्यर्थः–गो. 'साक्षादब्रवीदित्यनेन' चण्डालः साक्षादभिभाषणानर्ह इति निषेधस्य अनर्हः स इति ध्वनितम् । तेन कर्मणा जात्या च स न चण्डाल इति व्यञ्जितम् । अत एव चाण्डालरूपिणमिति विशेषणम्–शि. [†] वासिष्ठ इति स्यात् ।

[1] प्रपद्यामि–ङ. [2] शापाच्चण्डालरूपिणम्–ङ.

**ब्राह्मणा वा महात्मानो [1]भुक्त्वा चाण्डालभोजनम् ।**
**कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः ॥ १४ ॥**

पालिता इति व्यङ्ग्योक्तिः ॥ १४ ॥

**एतद्वचननैष्ठुर्यमूचुः संरक्तलोचनाः ।**
**वासिष्ठा मुनिशार्दूल ! सर्वे ते समहोदयाः ॥ १५ ॥**

महोदयसहिताः समहोदयाः ॥ १५ ॥

**तेषां तद्वचनं श्रुत्वा सर्वेषां मुनिपुङ्गवः ।**
**क्रोधसंरक्तनयनः [2]सरोषमिदमब्रवीत् ॥ १६ ॥**
**[3]य दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम् ।**
**भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः ॥ १७ ॥**

अदुष्टं मामित्यत्र हेतुः—तप उग्रं समास्थितमिति । 'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते' इति न्यायेन चण्डालयाजनमपि मम जीर्यतीत्यविज्ञाय दूषयन्ति यतः तस्मात् भस्मीभूता इत्यादि ॥

**अद्य ते कालपाशेन नीता वैवस्वत*क्षयम् ।**
**सप्तजातिशतान्येव †मृतपाः सन्तु सर्वशः ॥ १८ ॥**

सप्तजातिशतानीति । सप्तशतजन्मानीत्यर्थः । मृतपाः—शवभक्षकाः ॥ १८ ॥

**श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः ।**
**विकृताश्च विरूपाश्च लोकाननुचरन्त्विमान् ॥ १९ ॥**

मुष्टिका नाम । मुष्टिकाख्यगणरूपाः । विकृताः—विकृतवचनगमनादिमन्तः । विरूपाः—विकटवेषाः ॥ १९ ॥

---

* क्षयं—गृहम् । † मृतपाः श्वपाकाः—**शि** । मुष्टिकाः—हीनजातिविशेषाः—**गो** । मृतपाः—शववस्त्रादिहारिणः मुष्टिकाः—तन्नामानः, **ति.**

[1] भक्त्वा चाण्डाल़—ङ. [2] इदं वचनम—**ङ.** यद्दूष—**ङ**

**महोदयश्च दुर्बुद्धिर्मामदूष्यं ह्यदूषयत् ।**
**दूषितः सर्वलोकेषु निषादत्वं गमिष्यति ॥ २० ॥**

मामदूष्यं हीति प्राग्वदभिमानात् ॥ २० ॥

**प्राणातिपातनिरतो निरनुक्रोशतां गतः ।**
**दीर्घकालं मम क्रोधात् दुर्गतिं वर्तयिष्यति ॥ २१ ॥**

प्राणातिपातः--प्राणनाशनम् । ननूग्रतपस्वित्वेऽपि ब्रह्मणा इदानीमपि राजर्षित्वानुग्रहतः क्षत्रियत्वानपायात् क्षत्रियचण्डालयाजनस्य सर्वलोकविगार्हितस्य सर्वथैवान्याय्यत्वात् 'प्रत्यगेनमभिचारस्तृणुते' इति न्यायेनान्याय्यकारिणोऽस्यैव तच्छापकृत्यया नाशने न्याय्ये कथं वासिष्ठेषु यथावादिषु शापकृत्यप्रवृत्तिः ? उच्यते — अस्य वसिष्ठवैरनिर्यातनकामनोपेततपस्वित्वात् भगवताऽपि तत्फलस्यैव प्रदातव्यत्वाद्वासिष्ठानां च तन्निमित्ततः किञ्चित्प्रारब्धस्य च भोक्तव्यत्वात् तच्छापत एव तत्तपोविनाशस्य चावश्यं भाव्यत्वात् भगवदुपासनायाश्च अमोघफलत्वात् भगवदाज्ञयैव वासिष्ठेषु शापप्रवृत्तिः । एतेन वक्ष्यमाणसृष्टिसामर्थ्यं च भगवदाज्ञयैवेति व्याकृतम् । अत एव देवैरेव तत्सर्गो निवार्यते । भगवतस्तद्ब्रह्मविद्याघोरांशमूलक्षुद्रसर्गस्य चेष्टत्वात् 'अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम्' इति न्यायेन भगवदनुमतैव तत्सृष्टिः ॥ २१ ॥

**एतावदुक्त्वा वचनं विश्वामित्रो महातपाः ।**
**विरराम महातेजा ऋषिमध्ये महामुनिः ॥ २२ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकोनषष्टितमः सर्गः

---

*गर (२३) मानः सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकोनषष्टिमः सर्गः

---

* अस्मिन् सर्गे षष्ठश्लोकानन्तरगताधिकार्धेन साकं गतसर्गगतमधिकमधमत्र परिगणितं स्यात् ॥

अथ षष्टितमः सर्गः

[त्रिशङ्कोः स्वर्गारोहणम्]

तपोबलहतान् [1]कृत्वा वासिष्ठान् समहोदयान् ।
ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत ॥ १॥

अथानपेतक्षत्रधर्मत्वादुग्रतपस्त्वाभिमानादन्याय्ययाजनप्रवृत्तिः—तपोबलेत्यादि ॥ १ ॥

अयमिक्ष्वाकुदायादः त्रिशङ्कुरिति विश्रुतः ।
धर्मिष्ठश्च वदान्यश्च मां चैव शरणं गतः ॥ २ ॥
[2]तेनानेन शरीरेण देवलोकजिगीषया ।

इक्ष्वाकुदायादः । दायमत्तीति दायादः । पचाद्यच् । पुत्रपौत्रादीक्ष्वाकुवंश्य इति यावत् । एवमादिगुणवर्णनं याज्यत्वप्रकाशनाय । वसिष्ठवासिष्ठतिरस्कृतस्य रक्षणे मद्व्यतिरिक्तस्समर्थो नास्तीति निश्चित्य मामेवानेन शरीरेण देवलोकजिगीषया शरणं गत इत्यर्थः ॥

यथाऽयं स्वशरीरेण [3]स्वर्गलोकं गमिष्यति ॥ ३ ॥
तथा प्रवर्त्यतां यज्ञो भवद्भिश्च मया सह ।

यदेवमतः—यथेत्यादि ॥ ३ ॥

विश्वामित्रवचः श्रुत्वा सर्व एव महर्षयः ॥ ४ ॥
ऊचुः समेत्य सहिता धर्मज्ञा धर्मसंहितम् ।

समेत्योचुरिति । अन्योन्यमिति शेषः ॥ ४ ॥

अयं कुशिकदायादो मुनिः परमकोपनः ॥ ५ ॥
यदाह वचनं सम्यगेतत्कार्यं न संशयः ।

---

[1] ज्ञात्वा—ङ. ज. [2] स्वेनानेन—ङ. ज. [3] देवलोकं—ङ.

**अग्निकल्पो हि भगवान् शापं दास्यति रोषितः ॥ ६ ॥**

किमूचुरित्यतः—यदित्यादि ॥ ५ ॥

**तस्मात्प्रवर्त्यतां यज्ञः सशरीरो यथा दिवम् ।**
**गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा ॥ ७ ॥**
**ततः प्रवर्त्यतां यज्ञः सर्वे समधितिष्ठत ।**

यस्मादनपेतक्षत्रत्वेन अजितकामक्रोधत्वेन शापं दास्यति तस्मादित्यर्थः यदेवमनुष्ठेयांशो निश्चितस्ततः यज्ञः प्रवर्त्यताम् । प्रवर्तिते च यज्ञे सर्वे स्वस्वार्त्विज्यादिकृत्यं समधितिष्ठत—परिगृह्य प्रवर्तयध्वमित्यर्थः ॥

**एवमुक्त्वा महर्षयः चक्रुस्तास्ताः क्रियास्तदा ॥ ८ ॥**
**याजकश्च महातेजा विश्वामित्रोऽभवत् क्रतौ ।**

तास्ताः क्रिया इति । स्वस्वार्त्विज्यकर्माणीत्यर्थः । याजकः-प्रधानार्त्विज्यकर्ता—अध्वर्युरिति यावत् । अत एवाग्रे उच्यते—'स्रुवमुद्यम्य' इति ॥ ८ ॥

**ऋत्विजश्चानुपूर्व्येण मन्त्रवन्मन्त्रकोविदाः ॥ ९ ॥**
**चक्रुः सर्वाणि कर्माणि यथाकल्पं यथाविधि ।**

यथाकल्पं—कल्पसूत्रमनतिक्रम्य । यथाविधि—यथासम्प्रदायानुष्ठानमनतिक्रम्य । कल्पसूत्रे नानात्वपक्षोपन्यासस्थले अनुष्ठेयांशे सम्प्रदाय एव शरणम् ॥ ९ ॥

**ततः कालेन महता विश्वामित्रो महातपाः ॥ १० ॥**
**चकारावाहनं तत्र भागार्थं *सर्वदेवताः ।**

---

*सर्वदेवताः प्रतीति शेषः-**गो.** भागार्थं सर्वदेवताः आवाहनं चकार-सर्वदेवता इति षष्ठ्येकवचनम् । आगमशास्त्रस्य अनित्यत्वात् याडभावः-**शि.**

**नाभ्यागमंस्तदाहूता भागार्थं सर्वदेवताः ॥ ११ ॥**

महता कालेनेति । द्विस्त्रिर्मन्त्रावृत्याऽधिककालेनाधिककालसाध्ययत्नेन च आवाहनं चकार, अथापि नाभ्यागमन् देवताः, अनधिकारिणा अन्याय्येन च कृतं अकृतमेवेति शास्त्रात् ॥ ११ ॥

**ततः क्रोधसमाविष्टो विश्वामित्रो महामुनिः ।**
**स्रुवमुद्यम्य सक्रोधस्त्रिशङ्कुमिदमब्रवीत् ॥ १२ ॥**

क्रोधविकारजं स्रुवोद्यमनं अन्यत् किञ्चित् ॥ १२ ॥

**पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर !**
**एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा ॥ १३ ॥**
**दुष्प्रापं स्वशरीरेण दिवं गच्छ नराधिप !**

तपसो वीर्यं पश्येति । यज्ञरूपं त्वन्मनीषितसाधनमास्तामिति शेषः ॥ १३ ॥

***स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलम् ॥ १४॥**
**राजन् ! त्वं तेजसा तस्य सशरीरो दिवं व्रज ।**

तस्य सशरीरस्वर्गाय निजतपोव्ययः—स्वार्जितं किञ्चिदित्यादि । तपसः फलं अस्ति यदि तदा हे राजन् ! त्वं तस्य तेजसा—वैभवेनेति योजनार्थः ॥ १४ ॥

**उक्तवाक्ये मुनौ तस्मिन् सशरीरो नरेश्वरः ॥ १५ ॥**
**दिवं जगाम काकुत्स्थ ! मुनीनां पश्यतां तदा ।**

पश्यतामिति भावलक्षणे षष्ठी—पश्यत्स्विति यावत् ॥ १५ ॥

**देवलोकगतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ॥ १६ ॥**
**सह सर्वैस्सुरगणैः इदं वचनमब्रवीत् ।**

---

* मया स्वार्जितमित्यन्वयः । स्वस्मै आर्जितं–शि. सुष्ठु आर्जितं-गो.

**त्रिशङ्को! गच्छ *भूयस्त्वं नासि स्वर्गकृतालयः ॥ १७ ॥**
**गुरुशापहतो मूढ! पत भूमिमवाक्छिराः ।**

स्वर्गे निजपुण्यकर्मणा कृतः आलयो यस्य स तथा । स्वर्गावासानर्ह एवासीत्यर्थः । कुत इत्यतः—गुरुशापेत्यादि ॥ १७ ॥

**एवमुक्तो महेन्द्रेण त्रिशङ्कुरपत[1]त्पुनः ॥ १८ ॥**
**विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् ।**
**तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ॥ १९ ॥**
**रोषमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ।**

आहारयत्—अकरोदिति यावत् ॥ १९ ॥

**ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः ॥ २० ॥**
**सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः ।**

सृजन्—हेतौ शतृप्रत्ययः, सृष्टिं कुर्वन्, तद्धेतोः दक्षिणमार्गस्थान् अपरान् सप्तर्षीन् असृजत् । यथोत्तरतो ध्रुव अचलस्तिष्ठति, एवं त्रिशङ्कुस्तिष्ठतु । तं परितो यथा सप्तर्षिमण्डलं तद्वदत्रापि भवत्वित्याशयः । तथाऽग्रेऽपि द्रष्टव्यम् ॥ २० ॥

**नक्षत्रमालामपरामसृजत् क्रोधमूर्च्छितः ॥ २१ ॥**
**दक्षिणां दिशमास्थाय मुनिमध्ये [2] महायशाः ।**

नक्षत्रमाला— सप्तविंशतिनक्षत्रमाला । दक्षिणामास्थायेति । विराजो ब्रह्मणश्शिरोभाग उत्तरा दिक् । तत्र च सप्तसर्गाधिष्ठानो मेरुः । तदुपरि ध्रुवः । येन चण्डालः स्वर्गार्हो भगवदनुमन्यमानः, तेन दक्षिणदिशि सप्तर्ष्याद्याभासः तद्वद्ध्रुवस्त्वन्तरकल्पनञ्च ॥ २१ ॥

---

* भूयः गच्छेत्यन्वयः ।

[1] त्प्लुवि—ङ. [2] महातपाः—ङ.

[1]सृष्ट्वा नक्षत्रवंशं च क्रोधेन कलुषीकृतः ॥ २२ ॥
*अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः ।
दैवतान्यपि स क्रोधात् स्रष्टुं समुपचक्रमे ॥ २३ ॥

नक्षत्रवंशः—क्षुद्रनक्षत्रगणः । अन्यमिन्द्रं । मया सृज्यमान-स्वर्गो[1]ऽनिन्द्रोऽस्तु । तत्र त्रिशङ्कुरेवेन्द्रो भवतु ; किमन्तर्गडुनाऽन्येनेत्याशयः । एवमिन्द्रस्थाने त्रिशंकुमेव प्रतिष्ठाप्य तस्यापीन्द्रवत् परिवारदैवतान्यपि स्रष्टुमुपचक्रमे ॥ २३ ॥

ततः परमसम्भ्रान्ताः सर्षिसङ्घाः[3] सुरासुराः ।
सकिन्नरमहायक्षाः सहसिद्धाः सचारणाः ॥ २४ ॥
विश्वामित्रं महात्मानमूचुः सानुनयं वचः ।

---

* अन्यमिन्द्रं अहं करिष्यामि—रचयिष्यामि वा, सति प्रबलप्रतिबन्धे लोकः—मद्रचितः स्वर्गः अनिन्द्रक —इन्द्ररहित एव स्यात्—**शि.**

अन्यमिन्द्रं करिष्यामि—विद्यमानलोकस्यान्यमिन्द्रं करिष्यामि ; अनिन्द्रको लोको वा स्यात्—इन्द्ररहितं लोकान्तरं वा करिष्यामीत्यर्थः । अत एवाहुराचार्याः—'अन्येन्द्रकं भुवनमन्यदनिन्द्रकं वा कर्तुं क्षमे कविरभूदयमन्ववाये' इति । अस्मिन्नर्थे इन्द्रं नाशयिष्यामीत्यर्थः, सोऽनुचितः । सृष्ट्यन्तरोपक्रमविरोधात् । 'दैवतान्यपि स क्रोधात् स्रष्टुं समुपचक्रमे' इत्यनन्तरविरोधाच्च—**गो.** तिलके गोविन्दराजीये च कतकरीत्यैव श्लोकोऽयं व्याख्यातः । एतदर्थान्ते इतिकरणं द्रष्टव्यम् ॥

इदमत्र बोध्यम्—कुपितस्य विश्वामित्रस्य स्वेष्टविरोधिविद्यमानेन्द्रनाशप्रतिज्ञैव युज्यते । न च तावता सृष्ट्यन्तरोपक्रमविरोधः । शिरोमणिरीत्या व्याख्याने विरोधाभावात् । अतः एवं व्याख्यानेऽपि नाचार्योक्तिविरोधः । वस्तुतस्तु विद्यमानेन्द्रनाशनं न विश्वामित्राभिमतम्, 'प्रजापतिरिवापरः सृजन् दक्षिणमार्गस्थान्' इति वचनेन प्रतिस्पर्धिस्वर्गान्तरसृष्ट्युपक्रमकथनात् । अतः स्वसृज्यमानं भुवनं अन्येन्द्रकं—स्वेष्टानुसारीन्द्रविशिष्टं, अथवा किं अतिरिक्तेन्द्रसर्गेण ? तत्र त्रिशङ्कुरेवेन्द्रस्थानापन्नो भवत्वित्यर्थ एव स्वरसः । आचार्यसूक्तावपि – 'अन्यद्भुवनं—अन्येन्द्रकं अनिन्द्रकं वा कर्तुम्' इत्यन्वयः । अतो न कश्चन विरोध इति ॥

[1] कृत्वा—ङ. [2] निरिन्द्रः—ग. [3] सचारणाः—ङ.

परमसंभ्रान्ता इति । * ज्येष्ठायाः कनिष्ठायामितिवन्मनोदुःखहेतुत्वेन स्वप्रतिसर्गाभासप्रसङ्गे पर्याकुलचित्ता इत्यर्थः ॥ २४ ॥

**अयं राजा महाभाग! गुरुशापपरिक्षतः ॥ २५ ॥**
**सशरीरो † दिवं यातुं नार्हत्येव तपोधन!**

सानुनयमित्यनुनयस्यैव प्रकारः—अयं राजेत्यादि । गुरुशापहतश्चण्डालभूतोऽयं पुण्यैककृत्रैवर्णिकैकलभ्यानाद्यनन्तब्रह्मसृष्टस्वर्गं नार्हति । कर्मणोऽवश्यनाश्यत्वात् पुण्यक्षयेऽवश्यं त्वत्सृष्टिजातं तु नश्यत्येव । अतः क्षात्रस्वभावमास्थाय दुराग्रहं मा कुरु । अतोऽयं दक्षिणामेव दिशमास्थाय अवाक्छिराः—अस्माभिस्सर्वैरेव कृतमवाक्छिरस्त्वममुञ्चन्नेव तिष्ठत्विति न्यायानुनयोपेतमूचुः ॥ २५ ॥

**तेषां तद्वचनं श्रुत्वा देवानां मुनिपुङ्गवः ॥ २६ ॥**
**अब्रवीत् सुमहद्वाक्यं कौशिकः सर्वदेवताः ।**

एवं तेषां तद्वचनं श्रुत्वा सुमहत्—[1] स्वकमहापुरुषार्थप्रयोजनकं वाक्यं अब्रवीत् ॥ २६ ॥

**सशरीरस्य, भद्रं वः, त्रिशङ्कोरस्य भूपतेः ॥ २७ ॥**
**आरोहणं प्रतिज्ञाय नानृतं कर्तुमुत्सहे ।**

किमब्रवीदित्यतः—सशरीरस्येत्यादि । 'भद्रं वः' इत्यनेनानुनयः क्रियते ॥ २७ ॥

**स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः ॥ २८ ॥**
**नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ।**

---

* ज्येष्ठपत्न्याः कनिष्ठपत्न्यामिवेत्यर्थः. † दिवं–ब्रह्मसृष्टं, त्वत्सृष्टं वा स्वर्गम्–ति.
[1] स्वमहा–ग.

स्वर्गोऽस्त्विति । एवमदृश्यान्यथनावाक्शिरोऽवस्थानस्यैवात्रैव दक्षिणस्यां दिशि स्वर्गोऽस्तु—सुखानुभवोऽस्तु । 'यन्न दुःखेन सम्भिन्नम्' इत्यादिना सुखविशेष एव स्वर्गशब्दार्थः; उपचारात्तत्साधनलोकादिश्च ॥ २८ ॥

**यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः ॥ २९ ॥**
**मत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ ।**

यावल्लोका धरिष्यन्तीति । भूरादिलोका यथास्थानं सनातनध्रुवादिज्योतिश्चक्रं यावद्धारयन्ति तावदेतान्यपि नक्षत्राणि भगवद्विग्रहे धृतानि सन्ति मत्कृतानि तिष्ठन्त्विति तदेतन्मे प्रार्थनं अनुज्ञातुमर्हथ ॥

**एवमुक्ताः सुरास्सर्वे प्रत्यूचुर्मुनिपुङ्गवम् ॥ ३० ॥**

अथ तत्प्रार्थनानुमतिः—एवमुक्ता इत्यादि ॥ ३० ॥

**एवं भवतु, भद्रं ते, तिष्ठन्त्वेतानि सर्वशः ।**
**गगने[1] तान्यनेकानि वैश्वानरपथाद्बहिः ॥ ३१ ॥**
**नक्षत्राणि, मुनिश्रेष्ठ! तेषु ज्योतिष्षु जाज्वलन् ।**
**अवाक्छिरास्त्रिशङ्कुश्च तिष्ठत्वमरसन्निभः ॥ ३२ ॥**

सर्वशः-सर्वाणि अनेकानि तानि नक्षत्राणि वैश्वानरपथात्—वैश्वानरज्योतिःप्रसिद्धाऽनादिज्योतिश्चक्रमार्गात् बहिः—तदुचितप्रदेशे तिष्ठन्तु । तेषु त्वदीयेषु ज्योतिष्षु जाज्वलन्—भृशं ज्वलन अवाक्छिरा एव अमरसन्निभः—[2]अमरतुल्यः तिष्ठतु ॥ ३२ ॥

---

[1] तानि सर्वाणि—ङ. [2] अमरकृत्यः—क.

अनुयास्यन्ति चैतानि ज्योतींषि नृपसत्तमम् ।
कृतार्थं कीर्तिमन्तं च [1]स्वर्गलोकगतं [2]यथा ॥ ३३ ॥

एतानि त्वदीयानि यथा तथा अनुयास्यन्तीति योजना ॥३३॥

विश्वामित्रस्तु धर्मात्मा सर्वदेवैरभिष्टुतः ।
[3]ऋषिभिश्च महातेजा बाढमित्याह *देवताः ॥ ३४ ॥

बाढमित्याहेति । देवतानां वाक्यानुवर्तनमेवास्माकं हितं, न दुराग्रहोऽनर्थहेतुरिति ज्ञात्वा देवतानां वचनं अन्ववर्ततेत्यर्थः ॥

ततो देवा महात्मानो मुनयश्च तपोधनाः ।
जग्मुर्यथाऽऽगतं सर्वे †यज्ञस्यान्ते नरोत्तम! ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे षष्टितमः सर्गः

---

मल्ल(३५)मानः सर्गः ॥ ३५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे षष्टितमः सर्गः

---

अथ एकषष्टितमः सर्गः

[शुनश्शेफोपाख्यानोपक्रमः]

विश्वामित्रो महात्माऽथ प्रस्थितान् प्रेक्ष्य तानृषीन् ।
अब्रवीन्नर[4]शार्दूल! सर्वांस्तान् वनवासिनः ॥ १ ॥

---

* देवता इति द्वितीयाबहुवचनान्तम् । † यज्ञस्यान्त इत्यनेन विश्वामित्रेण यजमानप्रतिनिधिं कृत्वा यज्ञः समापितः, देवैः भागश्च गृहीत इति गम्यते—गो. यज्ञस्य—विश्वामित्रसमापितयज्ञस्य अन्ते जग्मुः—शि.

[1] ब्रह्मलोक—ङ. [2] तथा—ङ, च, [3] ऋषिमध्ये—ङ. [4] शार्दूल:—ङ,

'वसिष्ठतत्पुत्रयाज्यैः निमित्तैर्घोरशक्तितः । विश्वामित्रः क्षीणतपाः पश्चिमे तप्यते तपः'। विश्वामित्रो महात्मेत्यादि । वनवासिन इति । स्वतपोवनवासिन इत्यर्थः ॥ १ ॥

*महान् विघ्नः [1]प्रवृत्तो मे दक्षिणामास्थितो दिशम् ।
दिशमन्यां प्रवत्स्यामः तत्र तप्स्यामहे तपः ॥ २ ॥

आस्थितः योऽहं, तस्य मे महान् विघ्नः प्रवृत्त इति योजना ॥

पश्चिमायां विशालायां पुष्करेषु महात्मनः!
सुखं तपश्चरिष्यामो वरं तद्धि तपोवनम् ॥ ३ ॥

विशालायां—विशालतपोवनवत्यां पश्चिमायां वर्तमानेषु पुष्करेषु—सोमसूर्याग्नितीर्थेषु—तत्तीरदेशतपोवनेष्वित्यर्थः ॥ ३ ॥

एवमुक्त्वा महातेजाः पुष्करेषु महामुनिः ।
तप उग्रं दुराधर्षं तेपे मूलफलाशनः ॥ ४ ॥
एतस्मिन्नेव काले तु अयोध्याधिपतिर्नृपः ।
अम्बरीष इति ख्यातो यष्टुं समुपचक्रमे ॥ ५ ॥
तस्य वै यजमानस्य पशुमिन्द्रो जहार ह ।
प्रणष्टे तु पशौ विप्रो राजानमिदमब्रवीत् ॥ ६ ॥

विप्र इति । याजकः पुरोहित इत्यर्थः ॥ ६ ॥

†पशुरद्या[2]ऽऽहृतो राजन्! प्रणष्टस्तव दुर्नयात् ।
अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वर! ॥ ७ ॥

---

* दक्षिणां दिशमासमन्ताद् व्याप्य स्थितः अयं महाविघ्नः प्रवृत्तः—ति. प्रवृत्तः—प्रकृष्टं वृत्तं—वृत्तान्तो यस्मिन्, सोऽयं महान् विघ्नः दक्षिणां दिशं आस्थितः—प्राप्तः—शि. † पशुः अद्य हृतः, केनचिदिति शेषः । अत एव प्रणष्टः—अदृश्यतां प्राप्तः—शि.

[1] प्रवृत्तोऽयं—ङ. ज. [2] रक्ष हृतः—ङ.

अद्याऽऽहृत इति । इदानीमस्माभिरिति शेषः । दुर्नयात्–तन्मूलपापवशात्, तावकरक्षिणां प्रमादाच्च ॥ ७ ॥

*प्रायश्चित्तं महद्ध्येतत्, नरं वा पुरुषर्षभ!
आनयस्व पशुं शीघ्रं यावत्कर्म प्रवर्तते ॥ ८ ॥

नरं वा आनयस्वेति । पशुप्रतिनिधित्वेनेति शेषः । इदं महत्प्रायश्चित्तं पशुनाश इति शेषः । अश्वमेधकर्मणः, पशुविसर्जनानन्तरं कालान्तरभावित्वात् यावत्कर्मकालः प्रवर्तेत, ततः पूर्वं नरं पशुं आनयस्वेत्यर्थः ॥ ८ ॥

उपाध्यायवचः श्रुत्वा स राजा पुरुषर्षभ!
अन्वियेष महाबुद्धिः पशुं गोभिः सहस्रशः ॥ ९ ॥

सहस्रशो गोभिः–अनेकाभिः निष्क्रयभूताभिरिति शेषः ॥ ९ ॥

देशान् जनपदांस्तांस्तान् नगराणि वनानि च ।
आश्रमाणि च पुण्यानि मार्गमाणो महीपतिः ॥ १० ॥
स पुत्रसहितं [1]नाम सभार्यं रघुनन्दन!
†भृगु[2]तुन्दे समासीनमृचीकं संददर्श ह ॥ ११ ॥

'सपुत्रेत्यत्र' स इति पदं । नामशब्दः प्रसिद्धौ । 'प्रपातस्तु तटो भृगुः' । तुन्दं –अभ्यन्तरप्रदेशः । किञ्चित्पर्वतप्रपाताभ्यन्तरप्रदेश इत्यर्थः ॥ ११ ॥

---

* एतत्—पशुनाशरूपं महत् प्रायश्चित्तं—महतः प्रायश्चित्तस्य कारणम् । प्रक्रान्तं कर्म यावत् प्रवर्तते—प्रवर्तिष्यते तावत्—ततः प्रागेव नष्टं पशुमन्विष्यानय; तत्प्रतिनिधित्वेन क्रीत्वा नरं वा पशुमानयेत्यर्थः–**नि.** । 'वा' कारेण पशुं वाऽन्विष्यानयस्वेति लभ्यते–**गो.** † भृगुतुङ्गं–पर्वतशृङ्गविशेषः–**ति.**

[1] तात–ङ, **च.** [2] पुत्रं, तुङ्गे-ङ.

तमुवाच महातेजाः प्रणम्याभिप्रसाद्य च ।
ब्रह्मर्षिं तपसा दीप्तं राजर्षिरमितप्रभः ।
पृष्ट्वा सर्वत्र कुशलमृचीकं *तमिदं वचः ॥ १२ ॥

गवां शतसहस्रेण विक्रीणीषे सुतं यदि ।
पशोरर्थे महाभाग! कृतकृत्योऽस्मि भार्गव! ॥ १३ ॥

पशोरर्थे—प्रयोजनाय सुतं विक्रीणीषे यदि, तदा कृतकृत्योऽस्मि । भार्गवेति गोत्रनाम ॥ १३ ॥

सर्वे परिसृता देशा [1]याज्ञीयं न लभे पशुम् ।
दातुमर्हसि मूल्येन सुतमेकमितो मम ॥ १४ ॥

याज्ञीयं—यज्ञाय हितं । 'तस्मै हितम्' इति [2]छः, वृद्धिरार्षी । इतः—सार्वविभक्तिकस्तसिः, एतेष्वित्यर्थः ॥ १४ ॥

एवमुक्तो महातेजा ऋचीकस्त्वब्रवीद्वचः ।
नाहं ज्येष्ठं नरश्रेष्ठ! विक्रीणीयां कथञ्चन ॥ १५ ॥

ऋचीकस्य वचः श्रुत्वा तेषां माता महात्मनाम् ।
उवाच नरशार्दूलमम्बरीषं तपस्विनी ॥ १६ ॥

अविक्रेयं सुतं ज्येष्ठं भगवानाह भार्गवः ।
ममापि दयितं विद्धि कनिष्ठं शुनकं नृप!
तस्मात् †कनीयसं पुत्रं न दास्ये तव पार्थिव! ॥ १७ ॥

शुनक इति कनिष्ठपुत्रनाम ॥ १७ ॥

---

* तमिदं वच उवाचेति पूर्वेणान्वयः । † कनीयसमित्यार्ष—एवमुत्तरत्रापि ॥

[1] यज्ञियं-ङ. ज. [2] छे-ग.

प्रायेण हि नरश्रेष्ठ! ज्येष्ठाः पितृषु वल्लभाः ।
मातॄणां च कनीयांसस्तस्माद्रक्ष्ये कनीयसं ॥ १८ ॥

तस्मात् रक्ष्य इति । स्वसमीपवर्तिनमेवेति शेषः ॥ १८ ॥

उक्तवाक्ये मुनौ तस्मिन् मुनिपत्न्यां तथैव च ।
शुनश्शेफः स्वयं राम! मध्यमो वाक्यमब्रवीत् ॥ १९ ॥

रामेति सम्बुद्धिः । मध्यमः—मध्यमपुत्रः ॥ १९ ॥

पिता ज्येष्ठमविक्रेयं, माता चाह कनीयसम् ।
विक्रीतं मध्यमं मन्ये राजन्! पुत्रं; नयस्व माम् ॥ २० ॥

विक्रीतं मध्यमं पुत्रं मन्ये । अर्थादिति शेषः । यदेवमतः हे राजन्! मां नयस्व। ननु 'दानं क्रयधर्मश्च अपत्यस्य न विद्यते' इति धर्मशास्त्रे स्थितं; कथमृषिणा अपत्याविक्रयः? उच्यते—यथा कुलावसादे धर्माय अपत्यदानं प्रसिद्धं, एवं यज्ञाय अपत्यविक्रयो नातिविगर्हितः ॥

अथ राजा महाबाहो! वाक्यान्ते ब्रह्मवादिनः ।
हिरण्यस्य सुवर्णस्य कोटिभी रत्नराशिभिः ॥ २१ ॥
गवां शतसहस्रेण शुनश्शेफं नरेश्वरः ।
गृहीत्वा परमप्रीतो जगाम रघुनन्दन! ॥ २२ ॥
अम्बरीषस्तु राजर्षी रथमारोप्य सत्वरः ।
शुनश्शेफं महातेजाः जगामाशु महायशाः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकषष्टितमः सर्गः

———

गिरि (२३) मानः सर्गः ॥ २३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकषष्टितमः सर्गः

———

## द्विषष्टितमः सर्गः

### [शुनश्शेफोपाख्यानम्]

[1]शुनश्शेफं नरश्रेष्ठ! गृहीत्वा तु महायशाः ।
व्यश्राम्यत् पुष्करे राजा मध्याह्ने रघुनन्दन! ॥ १ ॥

अथ पश्चिमायामपि तपोविघ्नः उपदिष्टयज्ञद्वारा — शुनश्शेफमित्यादि । व्यश्राम्यदिति । शमादित्वात् श्यनि दीर्घः । अह्नो मध्यं — मध्याह्नः, एकदेशिसमासः, 'राजाऽहः' इति टचि 'अह्नोऽह्नः' इत्यह्नादेशः, तस्मिन् मध्याह्ने ॥ १ ॥

*तस्य विश्रममाणस्य शुनश्शेफो महायशाः ।
पुष्करक्षेत्र[2]मागम्य विश्वामित्रं ददर्श ह ॥ २ ॥
तप्यन्तमृषिभिः सार्धं मातुलं परमातुरः ।

विश्रममाणस्येति । विश्राम्यत इति यावत्, छान्दसस्तङादिः, भावलक्षणे षष्ठी, तस्मिन् विश्राम्यति सति । आगम्येति । 'वा ल्यपि' इत्यनुनासिकलोपाभावः । मातुलमिति । ऋचीकाय कौशिकी प्रतिपादिता इत्युक्तत्वात् † ॥ २ ॥

विवर्णवदनो दीनस्तृष्णया च श्रमेण च ॥ ३ ॥
पपाताङ्के मुनेराशु वाक्यं चेदमुवाच ह ।

तृष्णा–पिपासा । श्रमः–अध्वश्रमः । पपाताङ्क इति । मातुलत्वादेवोत्सङ्गोपसर्पणम् ॥ ३ ॥

---

* अनादरे षष्ठी. † अयं वृत्तान्तः गते ३४ तमे सर्गे द्रष्टव्यः.

[1] 'शुनश्शेपः' इत्यप्यस्य नाम. [2] मागत्य-ङ. च.

***न मेऽस्ति माता न पिता, ज्ञातयो बान्धवाः कुतः ॥**
**त्रातुमर्हसि मां सौम्य! धर्मेण मुनिपुङ्गव!**
**त्राता त्वं हि मुनिश्रेष्ठ! सर्वेषां त्वं हि भावनः ॥ ५ ॥**

बान्धवाः कुत इति । दूरादेवेत्यर्थः । धर्मेण—धर्मप्रयोजनोद्देशेनेत्यर्थः । सर्वेषामिति । शरणागतानामिति शेषः । भावयतीति भावनः—सर्वसाधक इत्यर्थः ॥ ४-५ ॥

**राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः ।**
**स्वर्गलोकमुपाश्नीयां तपस्तप्त्वा ह्यनुत्तमम् ॥ ६ ॥**

यथा चेत् राजा कृतकार्यस्स्यात्, अहन्त्वव्ययः—अविनाशी दीर्घायुरनुत्तमं तपस्तप्त्वा स्वर्गलोकं—तत्रत्यभोगं उपाश्नीयां—भुञ्जे, तथा [1]कुरुष्वेति शेषः ॥ ६ ॥

**त्वं मे नाथो ह्यनाथस्य भव भव्येन चेतसा ।**
**पितेव पुत्रं धर्मात्मंस्त्रातुमर्हसि †किल्बिषात् ॥ ७ ॥**

भव्यं—कल्यं । किल्बिषात्—तन्मूलविपत्तेरित्यर्थः ॥ ७ ॥

**तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः ।**
**[2]सान्त्वयित्वा बहुविधं ‡पुत्रानिदमुवाच ह ॥ ८ ॥**
**§यत्कृते पितरः पुत्रान् जनयन्ति शुभार्थिनः ।**
**परलोकहितार्थाय तस्य कालोऽयमागतः ॥ ९ ॥**

---

* स्वारक्षकत्वेन मात्रादीनां असत्प्रायत्वादेवमुक्तिः. † किल्बिषात्—जीवविपत्तिरूपात्—ति. ‡ पुत्रान्—स्वपुत्रान्. § यस्य प्रयोजनस्य कृते पुत्रान् जनयन्ति, मम युष्माकं च परलोकहितार्थाय धर्माय तस्य वाक्यकरणस्य अयं काल आगतः, 'जीवतोर्वाक्यकरणात्' इति स्मृतेः—**गो.** हे परलोकहितार्थाः! परलोकहितं—परलोकप्राप्तिः अर्थः—प्रयोजनं येषां ते—हे परलोकप्रापकपुत्राः!—**शि.**

[1] कुरु इति—**ग.** [2] शान्तयित्वा—**ङ.**

यदित्यादि। शुभार्थिनः पितरो यत्कृते—यत्प्रयोजनाय पुत्रान् जनयन्ति, तस्य—तत्प्रयोजनसंपादनस्य कालः वः समागतः। किं प्रयोजनाय जनयन्ति? परलोकहितार्थायैव ॥ ९ ॥

**अयं मुनिसुतो बालो मत्तश्शरणमिच्छति।**
**अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः! ॥ १० ॥**

किं तादृशं प्रयोजनमिदानीमुपस्थितमित्यतः—अयमित्यादि। शरणं—रक्षणं। अस्य जीवितमात्रेण—प्राणप्रदानमात्रेण मम प्रियं युष्माकं सर्वार्थसाधनभूतं कुरुत ॥ १० ॥

**सर्वे [1] सुकृतकर्माणः सर्वे धर्मपरायणाः।**
**पशुभूता नरेन्दस्य तृप्तिमग्नेः प्रयच्छत ॥ ११ ॥**

स्वनियोगसिद्ध्यर्थमुपश्लोकः—सर्वे सुकृतेत्यादि। नन्वेतज्जीवनाय किमस्माभिः कर्तव्यमित्यतः—पशिवत्यादि। अयं पशुत्वेन राज्ञा गृहीतः। अतस्तत्प्रतिनिधित्वेन पशुभूता *नरेन्द्रस्याग्नेस्तृप्तिं प्रयच्छत ॥ ११ ॥

**नाथवांश्च शुनश्शेफो यज्ञश्चाविघ्नितो भवेत्।**
**देवतास्तर्पिताश्च स्युर्मम चापि कृतं वचः ॥ १२ ॥**

नाथवान्—मया रक्षकवान्। मम चापि—युष्मत्पितुः वचनं युष्माभिरवश्यं कर्तव्यं—कृतं भवति ॥ १२ ॥

**मुनेस्तु वचनं श्रुत्वा [2] मधुष्यन्दादयः सुताः।**
**साभिमानं नरश्रेष्ठ! सलीलमिदमब्रुवन् ॥ १३ ॥**

साभिमानं—साहङ्कारं। सलीलं—सपरिहासं ॥ १३ ॥

---

* नरेन्द्रस्य पशुभूताः-शि. नरेन्द्रसम्बन्धियज्ञीयाग्नेरित्यर्थः ॥

[1] च कृत—ङ. [2] मधुस्यन्दा, मधुच्छन्दा—ङ.

कथमात्मसुतान् [1]हित्वा त्रायसेऽन्यसुतं विभो!
अकार्यमिव पश्यामः *श्वमांसमिव भोजने ॥ १४ ॥

लोकतश्शास्त्रतश्चानुचितानुष्ठानत्वे दृष्टान्तः—श्वमांसमिवेत्यादि ॥

तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुङ्गवः।
क्रोधसंरक्तनयनो व्याहर्तुमुपचक्रमे ॥ १५ ॥
निस्साध्वसमिदं प्रोक्तं धर्मादपि विगर्हितम्।
अतिक्रम्य तु मद्वाक्यं दारुणं रोमहर्षणम् ॥ १६ ॥
श्वमांसभोजिनः सर्वे वासिष्ठा इव जातिषु।
पूर्णं वर्षसहस्रं तु पृथिव्यामनुवत्स्यथ ॥ १७ ॥

साध्वसं—भयं, पितृत्वप्रयुक्तप्रतिवचनभीतिरहितं यथा तथा, जीवतोर्वाक्यकरणादिधर्मादपि विगर्हितं—भ्रष्टं यथा तथा, एवं मद्वाक्यमप्यतिक्रम्य यतो दारुणं—निर्मुक्तपितृस्नेहतया परुषं, अत एव कोपावहत्वतो रोमहर्षणं—रोमाञ्चविकारकं वच उक्तम्, तस्मात्—श्वमांसेत्यादि। जातिषु—पापजातिविशेषोत्पत्तिविषयेषु ॥ १७ ॥

कृत्वा शापसमायुक्तान् पुत्रान् मुनिवरस्तथा।
शुनश्शेफमुवाचार्तं कृत्वा रक्षां [2]निरामयम् ॥ १८ ॥
[इदमाह मुनिश्रेष्ठो विश्वामित्रो महातपाः]

निरामयं। अनपायो यथा भवति तथा रक्षां—प्रसिद्धां भस्मसाधनां शुनश्शेफस्य कृत्वा तं शुनश्शेफमुवाच ॥ १८ ॥

पवित्रपाशै[3]रासक्तो रक्तमाल्यानुलेपनः।
वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहर ॥ १९ ॥

---

* भोजने भोज्ये प्राप्ते तत्परित्यागेन श्वमांसभक्षणमिवाकार्यमित्यर्थः—गो.

[1] हत्वा—ङ. [2] निरामयाम्—ङ. [3] राबद्धो—ङ.

पवित्रपाशैः—दर्भरशनाभिः आसक्तः—बद्धः वैष्णवं—विष्णुदेवताकं यूपं 'वैष्णवो वै देवतया यूपः' इति श्रुतेस्तथात्वम्; वाग्भिः—आग्नेयमन्त्रैः अग्निमुदाहर—स्तुहि ॥ १९ ॥

[इन्द्राविष्णू सुरश्रेष्ठौ स्तुहि त्वं मुनिपुत्रक!]
इमे तु गाथे द्वे दिव्ये गायेथा मुनिपुत्रक!
अम्बरीषस्य यज्ञेऽस्मिन् ततः सिद्धिमवाप्स्यसि ॥ २० ॥

अनन्तरं—इमे त्वित्यादि। इमे इत्यपरोक्षानुभव (वचन) सिद्धत्वात्। सिद्धिं—जीवितासिद्धिम् ॥ २० ॥

शुनश्शेफो गृहीत्वा ते द्वे गाथे सुसमाहितः।
त्वरया राजसिंहं तमम्बरीषमुवाच ह ॥ २१ ॥
[1]राजसिंह महासत्व! शीघ्रं गच्छावहे सदः।
निर्वर्तयस्व राजेन्द्र! दीक्षां च समुपाविश ॥ २२ ॥

गच्छावहे। तङार्षः। निर्वर्तयस्व। यज्ञमिति शेष ॥ २२ ॥

तद्वाक्यमृषिपुत्रस्य श्रुत्वा हर्षसमुत्सुकः।
जगाम नृपतिः शीघ्रं यज्ञवाटमतन्द्रितः ॥ २३ ॥
[2]*सदस्यानुमते राजा[3] पवित्रकृतलक्षणम्।
पशुं रक्ताम्बरं कृत्वा यूपे तं समबन्धयत् ॥ २४ ॥

पवित्रकृतलक्षणं—दर्भरशनासम्बन्धकृतपशुत्वज्ञापनं अत एव तं रक्ताम्बरत्वसंस्कारवन्तं तं पशुं कृत्वा—यज्ञपशुत्वेन सम्पाद्य यूपेऽबन्धयत्। राजेति शेषः ॥ २४ ॥

---

* सदस्यानुमते स्थित इति शेषः—गो.

[1] अम्बरीष महाभाग—ङ. [2] स तस्या—ङ. [3] पवित्रीकृत—ङ.

**स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै सुरौ।**
**इन्द्रमिन्द्रानुजं चैव यथावन्मुनिपुत्रकः ॥ २५ ॥**

इन्द्रानुजो विष्णुर्यूपदेवः। इन्द्रः पशुभोक्ता ॥ २५ ॥

**ततः प्रीतः सहस्राक्षो रहस्यस्तुतितर्पितः।**
**दीर्घमायुस्तदा प्रादात् शुनश्शेफाय राघव! ॥ २६ ॥**

रहस्यस्तुतिः वैश्वामित्री ॥ २६ ॥

**स च राजा नरश्रेष्ठ! * यज्ञस्य च समाप्तवान्।**
**फलं बहुगुणं राम! सहस्राक्षप्रसादजम् ॥ २७ ॥**

सम्यक् आप्तवान्—समाप्तवान्। 'हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस' इत्यादि † बह्वृचब्राह्मणे, हरिश्चन्द्रनरमेधे शुनःशेफस्याजीगर्तसुतस्य पशुत्वं, 'कस्य नूनं कतमस्य' इत्यादिना मन्त्रेण प्रजापत्याद्यनेकदेवतास्तुत्यादिकं च प्रतिपाद्यते। कथमिदमुच्यते—अम्बरीषयागे ऋचीकपुत्रः शुनश्शेफ इन्द्राविष्णू स्तुत्वा मुक्त इति? सत्यम्—अम्बरीष एवैक्ष्वाकः। स एव हरिरिव चन्द्र इव च इति हरिश्चन्द्रः। ऋचीकः, स एवाजीगर्तः। तत्र प्रजापतिस्तुतिरिति यदुक्तं सैवेहोच्यमानविष्णुस्तुतिः। विश्वामित्रसम्बन्धः तेनैतत्पुत्रशापादिः श्रुतावप्यविशिष्टः ‡ ॥ २७ ॥

---

* यज्ञस्य फलं सम्यक् आप्तवान् इत्यन्वयः। † एतरेयब्राह्मणे त्रयस्त्रिंशाध्याये इयमाख्यायिका पठ्यते. ‡ गोविन्दराजैरप्येवमेव विरोधः परिहरणीय इत्युक्तम्। तिलके तु, उपाख्यानद्वयं भिन्नमेव। रामायणगतशुनःशेफोपाख्यानस्य मूलभूता श्रुतिश्चान्वेष्येति बहव इत्युक्त्वा, कतकव्याख्याप्यनूदिता ॥

**विश्वामित्रोऽपि धर्मात्मा भूयस्तेपे महातपाः ।**
**पुष्करेषु नरश्रेष्ठ! दशवर्षशतानि च ॥ २८॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे द्विषष्टितमः सर्गः

---

जरा (२८) मानः सर्गः ॥ २८॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे द्विषष्टितमः सर्गः

---

अथ त्रिषष्टितमः सर्गः

[मेनकया विश्वामित्रतपोभङ्गः]

**पूर्णे वर्षसहस्रे तु [1] व्रतस्नातं महामुनिम् ।**
**अभ्यागच्छन् सुराः सर्वे तपःफल[2]चिकीर्षवः ॥ १ ॥**

अथ द्वितीयव्यूहदिशि पश्चिमायां काममोहेन तपोनाशनप्रतिपादनम्—पूर्ण इत्यादि । अम्बायास्सहस्ररश्मित्वाद्वर्षसहस्रप्रमाणेनैव विश्वामित्रस्याम्बापुरश्चरणोपक्रमसमाप्तिः सर्वदिक्षु । अत एव सहस्रावृत्तिरम्बायाश्श्रोत्रियब्राह्मणानामस्माकं । व्रतस्नातमिति । समाप्तपुरश्चरणमिति यावत् ॥ १ ॥

**अब्रवीत् सुमहातेजा ब्रह्मा [3]सुरुचिरं वचः ।**
**ऋषिस्त्वमसि, भद्रं ते, स्वार्जितैः कर्मभिः शुभैः ॥ २ ॥**

सुमहातेजा ब्रह्मेति । ब्रह्मविद्याधिदैवत्वतः तस्यैव तत्फलदातृत्वात् तदर्थं सुरुचिरं वचः भगवान् अब्रवीत । ऋषिस्त्वमसीति । एतेन राजशब्दानुपादानेन क्षत्रत्वजातिविश्लेषः कियान्वाऽभूदिति भगवताऽनुगृहीतं वेदितव्यम् ॥ २ ॥

---

[1] विश्वामित्रं–ङ. [2] चिकीर्षया–ङ. [3] सानुनयं–ङ.

तमेवमुक्त्वा देवेशास्त्रिदिवं पुनरभ्यगात्।
विश्वामित्रो महातेजा भूयस्तेपे महत्तपः ॥ ३ ॥
ततः कालेन महता मेनका परमाऽप्सराः।
पुष्करेषु नरश्रेष्ठ! स्नातुं समुपचक्रमे ॥ ४ ॥

परमा—रूपादितः सर्वोत्तमा। *अप्सरश्शब्द एकवचनान्तोऽप्यस्ति ॥ ४ ॥

तां ददर्श महातेजा मेनकां कुशिकात्मजः।
रूपेणाप्रतिमां तत्र विद्युतं जलदे यथा ॥ ५ ॥
दृष्ट्वा कन्दर्पवशगो मुनिस्तामिदमब्रवीत्।
अप्सरः! स्वागतं तेऽस्तु वस चेह ममाश्रमे ॥ ६ ॥
अनुगृह्णीष्व, भद्रं ते, मदनेन सुमोहितम्।

अनुगृह्णीष्वेति। काममोहखिन्नस्य मे अनुकूला मत्तापं शमयेति यावत् ॥ ६ ॥

इत्युक्ता सा वरारोहा तत्र वासमथाकरोत्।
तपसो हि महाविघ्नो विश्वामित्रमुपागतः ॥ ७ ॥
तस्यां वसन्त्यां वर्षाणि पञ्च पञ्च च राघव!
विश्वामित्राश्रमे राम! सुखेन व्यतिचक्रमुः ॥ ८ ॥

वरारोहा—उत्तमस्त्री। उपागत इति। तयेति शेषः। पञ्च पञ्च चेति। दशवर्षाणीति यावत्। 'षड्भ्यो लुक्' इति जसो लुक् ॥

---

* अप्सरा इत्यार्ष—ति· 'स्त्रियां बहुष्वप्सरसः' इति कोशात् अप्सरश्शब्दस्य नित्यबहुवचनान्तत्वमाशङ्क्याह—अप्सरश्शब्द इति।

**अथ काले गते तस्मिन् विश्वामित्रो महामुनिः ।**
**सव्रीड इव संवृत्तः चिन्ताशोकपरायणः ॥ ९ ॥**
**बुद्धिर्मुनेः समुत्पन्ना * सामर्षा रघुनन्दन !**
**[1]सर्वं सुराणां कर्मैतत् तपोऽपहरणं महत् ॥ १० ॥**

सामर्षेति । अस्मत्तपः पुनः [2]देवता विघ्नन्तीत्यमर्षसहिता ॥

**† अहोरात्रापदेशेन गताः संवत्सरा दश ।**
**काममोहाभिभूतस्य विघ्नोऽयं प्रत्युपस्थितः ॥ ११ ॥**

अहोरात्रापदेशेन—एकाहोरात्रतुल्यतया ॥ ११ ॥

**विनिश्वसन् मुनिवरः पश्चात्तापेन दुःखितः ।**
**भीतामप्सरसं दृष्ट्वा वेपन्तीं प्राञ्जलिं स्थिताम् ॥ १२ ॥**
**मेनकां मधुरैर्वाक्यैर्विसृज्य कुशिकात्मजः ।**
**उत्तरं पर्वतं राम ! विश्वामित्रो जगाम ह ॥ १३ ॥**

मेनकां मधुरैर्वाक्यैर्विसृज्येति । मया कामतप्तेन प्रार्थितत्वात् योषितस्ते न कश्चनापचारः । अतस्त्वं यथासुखं गच्छेत्येवमादिरूपैर्वचनैरित्यर्थः ॥ १३ ॥

**स कृत्वा ‡ नैष्ठिकीं बुद्धिं, जेतुकामो महायशाः ।**
**कौशिकीतीरमासाद्य तपस्तेपे सुदारुणम् ॥ १४ ॥**

---

* सामर्षा—देवेषु ; विघ्नस्य तत्कृतत्वज्ञानात्—ति. † अहोरात्रव्याजेन दश संवत्सरा गता इति वाऽर्थः । पश्यत एव एकैकदिनशः दश संवत्सरा गता इति तात्पर्यम् । प्रत्युपस्थित इत्यनन्तरं 'इति' इत्यध्याहार्यं ; इति बुद्धिस्समुत्पन्नेति पूर्वेणान्वयः । ‡ नैष्ठिकीं—कामस्याप्यकरणं सङ्कल्प्य अत्युत्कृष्टब्रह्मचर्यविषयाम्—ति. जेतुकामः—काममिति शेषः ।

[1] सत्यं सुराणां—ङ. [2] देवा—ग.

नैष्ठिकीं । निष्ठा—बिन्दुधारणरूपा मुख्या ब्रह्मचर्यनिष्ठा, तद्विषयिणीं बुद्धिं—दृढनिश्चयम् । कौशिकी—विश्वामित्रभगिनी नदी ॥

[1] तस्य वर्षसहस्त्रं तु घोरं तप उपासतः ।
उत्तरे पर्वते, राम ! देवतानामभूत् भयम् ॥ १५ ॥
आमन्त्रयन् समागम्य सर्वे सर्षिगणाः सुराः ।
महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः ॥ १६ ॥

* समागम्येति । भगवता ब्रह्मणेति शेषः । महर्षिशब्दं लभतामिति । † भगवान्निति शेषः ॥ १६ ॥

देवतानां वचः श्रुत्वा सर्वलोकपितामहः ।
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ॥ १७ ॥
महर्षे ! स्वागतं वत्स ! तपसोग्रेण तोषितः ।
महत्त्वमृषिमुख्यत्वं ददामि तव कौशिक ! ॥ १८ ॥

एवं देवतानां प्रार्थनया महर्षिशब्देनैव विश्वामित्रं सम्बोधयति—महर्षे इत्यादि । महत्वमित्यस्यैव विवरणं—ऋषिमुख्यत्वमिति । पूर्वं दत्तर्षिशब्दस्य ते इदानीं महत्वविशिष्टर्षिशब्दवाच्यत्वं ददामीत्यर्थः ॥

[2] ब्रह्मणस्स वचश्श्रुत्वा [3] विश्वामित्रस्तपोधनः ।

एवं प्राप्तमहर्षित्वो विश्वामित्रोऽकृतार्थ [4] इत्याह—ब्रह्मण इत्यादि ॥

प्राञ्जलिः प्रणतो भूत्वा [5] प्रत्युवाच पितामहम् ॥ १९ ॥

---

* समागम्य—समुपसृत्येत्यर्थः । † भगवन्निति ब्रह्माणं प्रति देवानां सम्बोधनम् ।

[1] तस्य वर्षसहस्राणि, तस्य वर्षसहस्रेण—ङ. ज. [2] एतदनन्तरं 'न विषण्णो न सन्तुष्टो विश्वामित्रस्तपोधनः' इत्यधिकं—ङ. झ. [3] सर्वलोकेश्वरस्य ह—ङ. झ. [4] आह—ग. [5] सर्वलोकपितामहम्—ङ. झ. एतदनन्तरं 'प्रत्युवाच ततो वाचं विश्वामित्रो महामुनिः' इत्यधिकम्—ङ. झ.

[1] **ब्रह्मर्षिशब्दमतुलं स्वार्जितैः कर्मभिः शुभैः ।**
***यदि मे [2]भगवान्नाह ततोऽहं विजितेन्द्रियः ॥ २० ॥**

यदि शब्दो हेतौ । अतुलं-सर्वोत्तमं । ब्रह्मर्षिशब्दं-ब्रह्मसमा त्रिपदा ब्रह्मविद्या, तत्सिद्धः ऋषिः ब्रह्मर्षिः, तादृशं ब्रह्मर्षिशब्दं मदभीष्टं मां प्रति मे स्वार्जितैः शुभैः कर्मभिः सिद्धं यस्मात् नाह—नानुगृह्णीषे, ततः—तस्मात् अहं ब्रह्मर्षिशब्दसिद्धये विजितेन्द्रियः अतः परमत्यन्त भविष्यामीति शेषः ॥ २० ॥

**तमुवाच ततो ब्रह्मा† न तावत् त्वं जितेन्द्रियः ।**
**[3]जयस्व मुनिशार्दूल ! इत्युक्त्वा त्रिदिवं गतः ॥ २१ ॥**

तथाऽनुतिष्ठेति भगवाननुगृह्णाति—तमित्यादि । ततः तस्य विश्वामित्रस्य 'सर्वथा विजितेन्द्रियो भविष्यामि' इत्युक्त्यनन्तरं विजितेन्द्रियत्वसिद्धिकालमनुगृह्णाति—न तावदिति । यावदहं त्वां ब्रह्मर्षिर्न ब्रवीमि, तावत् त्वं न विजितेन्द्रियः-विजितेन्द्रियत्वं ब्रह्मर्षिशब्दार्हं तव नास्ति, अतस्त्वं जयस्वेन्द्रियाणि इत्युक्त्वा परं त्रिदिवं—ब्रह्मलोकं गतः इत्यर्थः ॥ २१ ॥

[4] **विप्रस्थितेषु देवेषु विश्वामित्रो महामुनिः ।**
**ऊर्ध्वबाहुर्निरालम्बो वायुभक्षस्तपश्चरन् ॥ २२ ॥**

---

* यदि महर्षिस्त्वं भवता दत्तं, ततोऽहं विजितेन्द्रियश्चास्मीत्यर्थः-**गो.** ब्रह्मर्षिशब्दं मदभीष्टं स्वार्जितैः शुभैः कर्मभिः प्राप्यं यदि—यतः भगवान्नाह—न वदति, ततो मन्येऽहं विजितेन्द्रियः ; अत्र काकुः, न विजितेन्द्रिय इत्यर्थः-**ति.** महर्षिशब्दं मे—मह्यं यदि भगवानाह, ततः—तस्माद्धेतोः अहं विजितेन्द्रियोऽस्मीत्यर्थः । तेन तस्येन्द्रियजयजनितो गर्वो ध्वनितः-**शि.** † विकारहेतुसन्निधानेऽपि यावन्न विकरोषि तावन्तं कालं त्वं न जितेन्द्रिय इत्यर्थः-**गो.**

[1] महर्षिशब्द-ङ. **ज. च.** [2] भगवानाह-ङ. **च.** [3] यतस्व-ङ.
[4] संप्रस्थितेषु-ङ.

**घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः ।**
**शिशिरे [1] सलिलस्थायी रात्र्यहानि तपोधनः ॥ २३ ॥**

घर्मः–ग्रीष्मकालः । आकाशसंश्रयः–वर्षवारणरहितदेशस्थः । रात्रयश्चाहानि च रात्र्यहानि, कृत्स्नमपि दिनमित्यर्थः ॥ २३ ॥

**एवं वर्षसहस्रं हि तपो घोरमुपागमत् ।**
**तस्मिन् सन्तप्यमाने तु विश्वामित्रे महामुनौ ॥ २४ ॥**
**संभ्रमः सुमहानासीत् सुराणां वासवस्य च ।**
**रम्भामप्सरसं शक्रः सह सर्वैर्मरुद्गणैः ।**
**उवाचात्महितं वाक्यमहितं कौशिकस्य च ॥ २५ ॥**

आत्महितमिति । आत्मन्शब्द इन्द्रार्थः । *एवमादावस्थले सर्गोच्छेदादृष्युपदिष्टसर्गसङ्ख्यातोऽप्याधिकदर्शनं ॥ २५ ॥

**सुरकार्यमिदं रंभे कर्तव्यं सुमहत् त्वया ।**
**लोभनं कौशिकस्येह काममोहसमन्वितम् ॥ २६ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे त्रिषष्टितमः सर्गः

---

किमुवाचेत्यतः–सुरकार्यमित्यादि । तिष्ठतु वा सर्गोच्छेदः, न तेन काचन हानिरर्थसिद्धौ † ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे त्रिषष्टितमः सर्गः

---

*एवं कथयतोऽप्यस्य व्याख्यातुः अत्र सर्गविच्छेदः सम्मत एव । यत उत्तरत्र तथैव सर्गान् गणयति । पूर्वं चाह—'काण्डे किलाद्ये संस्थानं (७७) इति । सर्वेषु कोशेष्वप्येवमेव दृश्यते । अनन्तरश्लोके च 'तिष्ठतु वा सर्गोच्छेदः' इत्याह । † मातृकासु एतत्स्थले सर्गविच्छेदो लिखितः । 'सुरकार्यमिदं' इत्यादेर्व्याख्यानं तु अनन्तरसर्गे लिखितम् ।

[1] सलिले शायी–ङ. ज.

## चतुष्षष्टितमः सर्गः

### [रम्भाशापः]

**सुरकार्यमिदं रम्भे कर्तव्यं सुमहत्त्वया ।**
**लोभनं कौशिकस्येह काममोहसमन्वितम् ॥ १ ॥**

लोभनं—प्रतारणम् । काममोहेन—कामजनितचित्तवैवश्येन समन्वितम् ॥ १ ॥

**तथोक्ता साऽप्सरा राम ! सहस्राक्षेण धीमता ।**
**व्रीळिता प्राञ्जलिर्भूत्वा प्रत्युवाच सुरेश्वरम् ॥ २ ॥**

व्रीळितेति । अशक्यार्थतोऽसामर्थ्यवचननिमित्ता व्रीळा ॥ २ ॥

**अयं सुरपते ! घोरो विश्वामित्रो महामुनिः ।**
**क्रोधमुत्स्रृजते घोरं मयि देव ! न संशयः ॥ ३ ॥**
**[1]ततो हि मे भयं, देव ! प्रसादं कर्तुमर्हसि ।**

प्रसादमिति । एवमनियोगरूपमित्यर्थः ॥ ३ ॥

**तामुवाच सहस्राक्षो वेपमानां कृताञ्जलिम् ॥ ४ ॥**
**[2]*मा भैषी रम्भे ! भद्रं ते, कुरुष्व मम शासनम् ।**

माभैषी रम्भे भद्रमिति । गुरुरार्षः ॥ ४ ॥

**†कोकिलो हृदयग्राही [3]माधवे रुचिरद्रुमे ॥ ५ ॥**

---

* ‘ मा भैषि रंभे ’ इत्यत्र आर्षो ह्रस्वः–**गो.** † हृदयग्राही कोकिलः माधवे—वसन्ते रुचिरद्रुमे—स्थास्यतीति शेषः–**शि.** ‘ अहं कोकिलो भूत्वा स्थास्यामि ’ इति व्याख्याने तु ‘ माधवे रुचिरद्रुमे ’ इत्यस्यानन्वयः, ‘ तव पार्श्वतः ’ इति स्थानवचनात् । अध्याहारादिक्लेशश्च । पाठान्तरे तु—हृदयग्राही कोकिलः स्थास्यति, रुचिरद्रुमः माधवः स्थास्यति, अहं कन्दर्पसहितः स्थास्यामीत्यन्वयः.

[1] एतदनन्तरं—एवमुक्तस्तया राम ! रम्भया भीतया तदा ॥ इत्याधिकं–**ङ. ज.**
[2] मा भैषीस्त्वं वरारोहे–**झ.** [3] माधवो रुचिरद्रुमः–**ङ. झ.**

**अहं कन्दर्पसहितः स्थास्यामि तव पार्श्वतः ।**

अहं कोकिलो भूत्वा माधवे—वसन्ते, स्थिते सतीति शेषः ॥

**त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरम् ॥ ६ ॥**
**तमृषिं कौशिकं रम्भे ! भेदयस्व तपस्विनम् ।**

रूपं—सौन्दर्यं बहुभिः—[1]हावभावादिभिः गुणैरुपेतं, मत्वर्थीयोऽजन्तः । भेदयस्व—काममोहोत्पादनेन तपसश्चित्तं चालय ॥ ६ ॥

**सा श्रुत्वा वचनं तस्य कृत्वा रूपमनुत्तमम् ॥ ७ ॥**
**[2]लोभयामास ललिता विश्वामित्रं शुचिस्मिता ।**

ललिता—सुन्दरी ॥ ७ ॥

**कोकिलस्य तु शुश्राव वल्गु व्याहरतः स्वनम् ॥ ८ ॥**
**संप्रहृष्टेन मनसा तत एनामुदैक्षत ।**

विश्वामित्रसंप्रहर्षः—कोकिलस्वनानुभवजसन्तोषः । ततः—तस्मादेव हेतोः ॥ ८ ॥

**अथ तस्य च शब्देन गीतेनाप्रतिमेन च ॥ ९ ॥**
**[3]दर्शनेन च रम्भाया मुनिः सन्देहमागतः ।**

तस्य—कोकिलस्य वसन्तरूपस्य । *सन्देहमिति । इयं स्वेच्छया समागता ! आहोस्विदिन्द्रादिप्रेरिता वेत्येवं रूपम् ॥ ९ ॥

---

* पूर्वं मेनकाविषयानुभवात्, किमियं मत्तपोनाशनोद्देशेनैव समागता स्यादिति संशयः.

[1] हासभावा—क. ग. [2] एतदनन्तरं—कोकिलो रुचिरग्राही भेदयामास वै मुनिम्—इत्यधिकं—झ. [3] एतदनन्तरं—ध्यात्वा मुहूर्तं तेजस्वी दण्डाहत इवोरगः । त्रसन् क्रोधसमाविष्टो विपर्व इव भानुमान्— इत्यधिकं क्वचित्—ङ.

**सहस्राक्षस्य [1]तत्कर्म विज्ञाय मुनिपुङ्गवः ॥ १० ॥**
**रम्भां क्रोधसमाविष्टः शशाप कुशिकात्मजः ।**

तत्कर्म–तस्या लोभनादिकर्म सहस्राक्षस्य प्रेरणामूलमिति विज्ञाय–युक्त्या निश्चित्य *रम्भां शशापेति ॥ १० ॥

**यन्मां [2]लोभयसे रम्भे ! कामक्रोधजयैषिणम् ॥ ११ ॥**
**दश वर्षसहस्राणि शैली स्थास्यसि दुर्भगे !**

शैली–शिलाप्रतिमा ॥ ११ ॥

**ब्राह्मणः सुमहातेजाः तपोबलसमन्वितः ॥ १२ ॥**
**उद्धरिष्यति रम्भे ! त्वां मत्क्रोधकलुषीकृताम् ।**

ननु स्वस्वामिनियोगतः प्रवृत्तायाः रम्भायाः कोऽपराधः ? उच्यते । अत एव सोऽपि अज्ञानात् बतैवं वृथा शापः प्रवृत्त इति पश्चात्तापसहितस्तामनुगृह्णाति—ब्राह्मण इत्यादि । †ब्राह्मणः–ब्रह्मपुत्रः, वसिष्ठ इति यावत् ॥ १२ ॥

**एवमुक्त्वा महातेजा विश्वामित्रो महामुनिः ॥ १३ ॥**
**अशक्नुवन् धारयितुं [3]क्रोधं, सन्तापमागतः ।**

‡ सन्तापं–शापनिमित्तपश्चात्तापम् ॥ १३ ॥

**तस्य शापेन महता रम्भा शैली तदाऽभवत् ॥ १४ ॥**
**वचः श्रुत्वा च कन्दर्पो महर्षेः, स च निर्गतः ।**

---

* एतेन–रंभाया इन्द्रस्य प्राणप्रियात्वेन तच्छापतो इन्द्रस्यापि दु:खं सूचितमिति–**शि.** † गोविन्दराजीयानुरोधेनैवमुक्तम्. ‡ तपोव्ययजन्यदु:खेन संतापं–**ति.**

[1] तत्सर्वं–ङ. [2] क्रोधयसे–ङ. [3] कोपसंताप–ङ.

अथ कन्दर्पः तस्य महर्षेः वचनं श्रुत्वा निर्गतः, स इन्द्रश्च, महर्षेः वचनं श्रुत्वेति शेषः, निर्गतः ॥ १४ ॥

**कोपेन सुमहातेजास्तपोऽपहरणे कृते ॥ १५ ॥**
**[1]इन्द्रियैरजितै राम! न लेभे शान्तिमात्मनः।**

इन्द्रियैरजितैरिति। उक्तरीत्या *कामक्रोधाभ्यां [2]हृतत्वादेवाजितत्वं। तैर्हेतुभिरित्यर्थः। शान्ति—नीरागद्वेषनिजात्मप्रतिष्ठालक्षणां॥

**बभूवास्य [3]पुनश्चिन्ता तपोऽपहरणे कृते ॥ १६ ॥**
**[4]नैव क्रोधं गमिष्यामि न च वक्ष्ये कथश्चन।**
**अथवा नोच्छ्वसिष्यामि संवत्सरशतान्यपि ॥ १७ ॥**

†न च वक्ष्य इति। शापवचनमिति शेषः ॥ १७ ॥

**अहं विशोषयिष्यामि ह्यात्मानं विजितेन्द्रियः।**
**तावत्, यावद्धि मे प्राप्तं ब्राह्मण्यं [5]तपसाऽऽर्जितम् ॥ १८ ॥**
**अनुच्छ्वसन्नभुञ्जानः तिष्ठेयं शाश्वतीस्समाः।**

आत्मानमिति। सेन्द्रियग्रामं शरीरमित्यर्थः ॥ १८ ॥

**न हि मे तप्यमानस्य क्षयं यास्यन्ति मूर्तयः ॥ १९ ॥**

मूर्तयः—शिरःकरचरणाद्यवयवाः न क्षयं यास्यन्ति; अनुच्छ्वासाभोजनयोः तपोऽर्थत्वात् तद्बलेन स्थास्यन्त्येवेति शेषः ॥ १९ ॥

---

* मेनकाप्रसङ्गे कामः, रंभाप्रसङ्गे क्रोध इत्यर्थः। † मौनव्रतं वा विवक्षितम्। अनन्तरस्मिन् सर्गे 'मौनं वर्षसहस्रस्य' इत्यभिधानात्।

[1] इन्द्रियैः क्षुभितं—ङ. [2] हतत्वा—ग. [3] मनश्चिन्ता—ङ. [4] नैवं—ङ. ज. [5] तपसोर्जितम्—ङ. ज.

*एवं वर्षसहस्रस्य दीक्षां स मुनिपुङ्गवः ।
चकाराप्रतिमां लोके प्रतिज्ञां रघुनन्दन ! ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे चतुष्षष्टितमः सर्गः

---

एवं दीक्षामिति । अनुच्छ्वासाभोजनसङ्कल्पमुद्दिश्येति शेषः । अप्रतिमां—निस्तुलां प्रतिज्ञां सर्वथा एवं करिष्यामीत्यध्यवस्यति स्मेत्यर्थः । नख (२०) मानः सर्गः ॥ २० ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे चतुष्षष्टितमः सर्गः

---

## अथ पञ्चषष्टितमः सर्गः

[ब्रह्मर्षित्वप्राप्तिः]

अथ हैमवतीं राम ! दिशं त्यक्त्वा महामुनिः ।
पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणम् ॥ १ ॥

अथैवमुत्तरेऽपि चतुर्थव्यूहप्रधानपूर्वमुखप्राधान्येन पूर्वस्यां दिशि तप उपदिश्यते—अथेत्यादि । हैमवतीं—हिमवदुत्तरपार्श्वगां ॥ १ ॥

मौनं वर्षसहस्रस्य कृत्वा व्रतमनुत्तमम् ।
चकाराप्रतिमं राम ! तपः परमदुष्करम् ॥ २ ॥
पूर्णे वर्षसहस्रे तु काष्ठभूतं महामुनिम् ।
विघ्नैर्बहुभिराधूतं क्रोधो नान्तरमाविशत् ॥ ३ ॥
स कृत्वा निश्चयं राम ! तप आतिष्ठदव्ययम् ।

---

* वर्षसहस्रस्य—वर्षसहस्रसम्बन्धिनीं दीक्षां—गो. वर्षसहस्रस्य दीक्षां निर्वर्तयितुं अप्रतिमां प्रतिज्ञां चकार—शि. अप्रतिमां प्रतिज्ञां दीक्षां च चकार इति वाऽर्थः ।

आधूतं–कम्प्यमानम् । आन्तरं—अन्तःकरणम् । निश्चयं–क्रोधाकरणविषयकम् ॥ ३ ॥

**तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः ॥ ४ ॥**
**भोक्तुमारधवानन्नं तस्मिन् काले रघूत्तम !**
**इन्द्रो द्विजातिर्भूत्वा तं सिद्धमन्नमयाचत ॥ ५ ॥**

तस्य वर्षसहस्रस्येति । व्यधिकरणे षष्ठ्यौ । सिद्धम्–पक्वम् ॥

**तस्मै दत्त्वा तदा सिद्धं सर्वं विप्राय निश्चितः ।**
**निश्शेषितेऽन्ने भगवानभुक्त्वैव महातपाः ॥ ६ ॥**
**[1] न किंचिदवदद्विप्रं मौनव्रतमुपस्थितः ।**

निश्चित इति । तपस्सिद्ध्ये सर्वथैव दातव्यमेवेति निश्चयवान् इत्यर्थः । अन्ने निश्शेषित इति । निश्शेषतो दत्त इति यावत् । अभुक्त्वैवेति । पुनः पक्त्वाऽभुक्त्वैवेत्यर्थः ॥ ६ ॥

**अथ वर्षसहस्रं वै नोच्छ्वसन्मुनिपुङ्गवः ॥ ७ ॥**
**तस्यानुच्छ्वसमानस्य मूर्ध्नि * धूमो व्यजायत ।**
**त्रैलोक्यं † येन संभ्रान्तमा[2]दीपित इवाभवत् ॥ ८ ॥**

येनेति । धूमेनेत्यर्थः । आदीपितमिति । दीपेर्ण्यन्तान्निष्ठा । यथा आदीपितः–तापितः पुमान् सम्भ्रान्तो व्याकुलितो भवति, तद्वत्त्रैलोक्यं सम्भ्रान्तमभूदित्यर्थः ॥ ८ ॥

---

* धूम इति । धूमकेतुरित्यर्थः–अग्निरिति यावत् । अत एवाग्रे 'आतापितमिव' इति वक्ष्यति । अयं शुद्धसत्त्वप्रभवोऽग्निः इतरेषां रजस्तमःप्रधानानां–देवादीनां तापजनक इति बोध्यम्–**ति.** † येन धूमेन संभ्रान्तं–उद्वेगं प्रापितं त्रैलोक्यं आदीपितमिव–सन्तापितमेवाभवत्–**शि.**

[1] एतदनन्तरं 'तथैवासीत्पुनर्मौनमनुच्छ्वासं चकार सः' इत्यधिकं–**ङ.**
[2] दीपितमिवा–**ङ.** तापितमिवा–**ज.**

ततो [1]देवास्सगन्धर्वाः पन्नगासुरराक्षसाः ।
मोहिता[2]स्तपसा तस्य तेजसा मन्दरश्मयः ॥ ९ ॥
कश्मलोपहताः सर्वे पितामहमथाब्रुवन् ।

कश्मलोपहताः–दुःखोपहताः ॥ ९ ॥

बहुभिः कारणै[3]र्देव विश्वामित्रो महामुनिः ॥ १० ॥
लोभितः क्रोधितश्चैव तपसा चाभिवर्धते ।
न ह्यस्य वृजिनं किञ्चिद्दृश्यते सूक्ष्ममप्यथ ॥ ११ ॥

लोभितः क्रोधितश्चैवेति । अथापि निर्विघ्न इति शेषः । वृजिनं–पापं । सूक्ष्मं वृजिनं रागद्वेषरहितेन स्वतस्तत्त्वप्रतिष्ठालक्षणं सर्वभुवि साधारणं नीरागद्वेषनिजाचित्तनिजतत्त्वब्रह्मप्रतिष्ठानमेव ब्रह्मलोकाधिकारि-ब्रह्मर्षिमुख्यलक्षणं, तदस्य संपन्नं ; अतो ब्रह्मर्षितानुमतिः कर्तव्या ; अन्यथा लोकनाश इत्याहुः ॥ ११ ॥

न दीयते यदि त्वस्य तपसा यदभीप्सितम् ।
[4] विनाशयति त्रैलोक्यं तपसा सचराचरम् ॥ १२ ॥

न दीयत इत्यादि । विनाशयति त्रैलोक्यमिति वृत्तभङ्ग आर्षः ॥ १२ ॥

व्याकुलाश्च दिशस्सर्वा न च किञ्चित्प्रकाशते ।
सागराः क्षुभिताः सर्वे विशीर्यन्ते च पर्वताः ॥ १३ ॥
प्रकम्पते च पृथिवी वायुर्वाति भृशाकुलः ।
ब्रह्मन् ! न प्रतिजानिमो *नास्तिको जायते जनः ॥१४॥

---

*नास्ति कं–सुखं यस्य सः, अत्यन्तव्याकुलत्वेन सुखरहित इत्यर्थः–शि.

[1] देवर्षि गन्धर्वाः पन्नगोरग–ङ. [2] स्तेजसा तस्य तपसा–ङ. झ. [3] दैवैः–ङ.
[4] विनाशमेति–ङ.

ब्रह्मन्न प्रतिजानीम इति। प्रतिक्रियामिह न जानीम इत्यर्थः। नास्तिको जायत इति। उक्तरूपजगत्क्षोभवशान्नास्तिक इव कर्मानुष्ठानशून्यो जायत इत्यर्थः॥ १४॥

संमूढमिव त्रैलोक्यं संप्रक्षुभितमानसम्।
भास्करो निष्प्रभश्चैव महर्षेस्तस्य तेजसा॥ १५॥

उक्तार्थस्यैव अनुवादपूर्वकमनुष्ठेयांशमाह—संमूढमिवेति। संमूढमिवत्रैलोक्यमिति वृत्तभङ्गः *प्राग्वत्॥ १५॥

बुद्धिं न कुरुते यावन्नाशे देव! महामुनिः।
तावत्प्रसाद्यो [1]भगवान् अग्निरूपो महाद्युतिः॥ १६॥

हे देव! अतः परं विश्वामित्रो जगत्क्षये यावत् बुद्धिं न कुरुते तावत् प्रसाद्यः—अनुग्राह्यः॥ १६॥

कालाग्निना यथापूर्वं त्रैलोक्यं दह्यतेऽखिलम्।
†देवराज्यं चिकीर्षेत दीयतामस्य [2]यन्मतम्॥ १७॥

पूर्वमिति। युगान्तकाल इत्यर्थः। देवराज्यं चिकीर्षेतापि, हिरण्यादिवत्, तदप्यस्य मतं—अभीष्टं दीयताम्॥ १७॥

ततः सुरगणाः सर्वे पितामहपुरोगमाः।
विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन्॥ १८॥
ब्रह्मर्षे! स्वागतं तेऽस्तु तपसा स्म सुतोषिताः।

स्वागतमिति। भद्रमित्यर्थः। स्मेति। ‡सकारलोपश्छान्दसः॥

---

* आर्ष इत्यर्थः। † देवराज्यं चिकीर्षेत—देवानामाधिपत्यं कर्तुं इच्छेतापि
‡ विसर्गलोप इत्यर्थः।

[1] भगवन्—ङ. ज. [2] यन्मनः—ङ.

**ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक! ॥ १९ ॥**
**दीर्घमायुश्च ते ब्रह्मन्! ददामि *समरुद्गणः ।**
**स्वस्ति प्राप्नुहि, भद्रं ते, गच्छ सौम्य! [1] यथासुखम् ॥**

ब्राह्मण्यं प्राप्तवानसीति देवोक्त्यनन्तरमायुः प्रयच्छति भगवान्–दीर्घमायुरित्यादि । यथासुखमिति । तपस उपरत इति शेषः ॥ २० ॥

**पितामहवचः श्रुत्वा सर्वेषां च दिवौकसाम् ।**
**कृत्वा प्रणामं मुदितो व्याजहार महामुनिः ॥ २१ ॥**
**†ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायुस्तथैव च ।**
**ओङ्कारश्च वषट्कारो वेदाश्च वरयन्तु माम् ॥ २२ ॥**

ओङ्कारः–ब्रह्मविद्यासाधनम् । वषट्कारः–यज्ञरूपब्रह्मकृत्यसाधनम् । वेदास्तु पूर्वापरविभागेन ब्रह्मकृत्यज्ञानापेक्षिताङ्गोपाङ्गसमस्तपरिकरप्रतिपादकाः । ते सर्वे यथा भगवन्मुखजं वसिष्ठवामदेवादिसहजब्रह्मकुलं वरयन्ति; वृञ् श्चौ, श्चायां वृञ्, णौ वृञ् आवरणे, श्चायां वृङ् संभक्तौ, अतो वरतेः स्वार्थे णिः । वृण्वन्तु–एवं स्वप्रतिष्ठात्वेनाङ्गीकुर्वन्तु—स्वेषामुपदेशाध्यापनयाजनेऽनुमतिं कुर्वन्त्वित्यर्थः ॥

**‡क्षत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि ।**
**ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः! ॥ २३ ॥**
**यद्ययं परमः कामः कृतो यान्तु सुरर्षभाः ।**

---

* भवता एकेनैव अङ्गीकारे किं फलमित्यत्राह–समरुद्गण इति । अत एव उत्तरत्र 'देवताः' इत्युक्तिः सङ्गच्छते । † ब्राह्मणशब्दयोगार्थपौष्कल्येऽपि न हि मुख्यं ब्राह्मण्यं संभवेदित्यर्थः । ‡ ब्रह्मवेदविदां––ब्राह्मणैकवेद्यब्रह्मदण्डाभिधवेदाभिज्ञानामपि–**शि.** ब्रह्मवेदाः–ब्रह्मप्रतिपादका वेदाः वेदान्ताः । यद्वा ब्राह्मणमात्रप्रवचनार्हा वेदाः त्रयीरूपाः–**गो.**

[1] यथाऽऽगतम्–**ङ.**

[1]ब्रह्मानुग्रहेऽपि ब्राह्मणैस्स्वकुलबहिष्कारे जातिब्राह्मण्याभावात् अन्वर्थब्राह्मण्यमप्यब्राह्मण्यकल्पमित्यभिप्रेत्यानादिब्राह्मणवसिष्ठेनापि ब्राह्मणस्वकुललक्षणब्राह्मणत्वानुमतिं प्रार्थयते—क्षत्रवेदेत्यादि। विवस्वन्तमारभ्य सूर्यवंशानादिपुरोहितत्वात् क्षत्रवेदविदां—क्षत्रियाणां शान्तिपुष्टयादिप्रयोजनानां अथर्ववेदधनुर्वेदादिविदुषां—श्रेष्ठः, ब्रह्म—ब्रह्मकुलनिजनित्यज्ञान[2]कर्मापेक्षित[3]वेदसारब्राह्मणत्रयी, तद्विदामपि—श्रेष्ठः। उत्तरश्रेष्ठयबीजं—ब्रह्मपुत्र इति। एवमिति। ब्रह्मर्षिमिति यावत्। परमोऽयं काम इति। वसिष्ठमुखेन ब्रह्मर्षित्वानुवादरूप इत्यर्थः। यदि कृतः तदैव मद्विषये कृतकृत्या यान्तु; नान्यथा इत्यर्थः ॥ २३ ॥

**ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः ॥ २४ ॥**
**सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत्।**

ततः—एवं विश्वामित्रोक्त्यनन्तरमित्यर्थः। प्रसादित इति। भगवता ब्रह्मणा सर्वैरस्माभिश्च लोकहितायानुमतत्वात् भवताऽपि तद्ब्रह्मर्षित्वमनुमन्तव्यमित्यनु[4]नीत इत्यर्थः। जपतां वर इति सर्वतो वसिष्ठविशेषणं। 'छन्दोदृक्साधको मुनिः' इति रहस्यादनादितो ब्रह्मविद्यासाधकत्वलक्षणं ब्रह्मविद्याया ऋषित्वं सूचितम्। एवमुक्ताघोरशुद्धब्रह्मविद्याया वसिष्ठ एव ऋषिरद्यापि; सघोरब्रह्मविद्याया एव विश्वामित्रस्साधक इति तस्या एवेदानीं विश्वामित्र ऋषिः। अथ देवैरनुनीतो वसिष्ठः एवमस्त्वित्यब्रवीत्। सख्यं च विश्वामित्रेण चकार। ब्रह्मर्षित्वत एव पुराऽपि विद्वेषरहितः, इदानीं उपेक्षामतिं हित्वा मदीय इति पर्यग्रहीदित्यर्थः ॥ २४ ॥

---

[1] ब्राह्मा—ग.  [2] धर्माः—ग.  [3] वेदः सारब्राह्मणा त्रयी.  [4] नीतवानिति मातृकासु।

**ब्रह्मर्षिस्त्वं न सन्देहः *सर्वं सम्पत्स्यते तव ॥ २५ ॥**
**इत्युक्त्वा देवताश्चापि सर्वा जग्मुर्यथाऽऽगतम् ।**

सर्वं—ब्राह्मण्यं । जन्मसंस्कारजपध्यानसन्ताननिरन्तरोपासनजनितनिजतत्त्वानुसन्धानलक्षणैः श्रीमद्योगभानुप्रतिपादितैस्सर्वैः ब्राह्मण्यसाधनैस्सम्पन्नो भविष्यसीत्यर्थः। इत्युक्त्वेति। यथा वसिष्ठेन भगवतोक्तं, एवमेव देवताश्चोक्त्वेत्यर्थः ॥ २५ ॥

**विश्वामित्रोऽपि धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमम् ॥ २६ ॥**
**[1] ब्रह्मर्षिं पूजयामास वसिष्ठं जपतां वरम् ।**
**कृतकामो महीं सर्वां चचार तपसि स्थितः ॥ २७ ॥**

ब्रह्मर्षिं पूजयामासेति। †सपरिकरस्य मे सत्कारद्वारा ब्रह्मर्षिताप्राप्त्यनन्तरतपस्साधनौन्मुख्यसम्पादनेन कृतार्थितोऽस्मि भवतेति पूजयामासेत्यर्थः। चचारेति। विश्वामित्र इति शेषः ॥ २७ ॥

**एवं त्वनेन ब्राह्मण्यं प्राप्तं राम! महात्मना ।**
**एष राम! मुनिश्रेष्ठ एष [2] विग्रहवांस्तपः ॥ २८ ॥**
**एष धर्मपरो नित्यं वीर्यस्यैष परायणम् ।**

अथ प्रकृते शतानन्दवचनं—एवमित्यादि । एष धर्मपरो नित्यमिति । इदानीमपीति शेषः। वीर्यस्येति । तपोवीर्यस्येत्यर्थः ॥

---

*अनेन त्रिपुरुषपर्यन्तं विश्वामित्रस्य ब्राह्मण्यलाभः सूचितः । एतच्च 'अनृष्यानन्तर्ये' इतिसूत्रे महाभाष्ये स्पष्टम्—ति. (तथा हि भाष्यम्—'विश्वामित्रस्तपस्तेपे नानृषिः स्यामिति ; तत्रभवानृषिः संपन्नः, स पुनस्तपस्तेपे-नानृषेः पुत्रः स्यामिति ; तत्रभवान् गाधिरपि ऋषिः संपन्नः, स पुनस्तपस्तेपे—नानृषेः पौत्रः स्यामिति ; तत्रभवान् कुशिकोऽपि ऋषिः संपन्नः' इति). †ससैन्यस्येत्यर्थः।

[1] पूजयामास ब्रह्मर्षिर्वं—ङ. [2] निग्रहवत्तपः—ङ. ज.

एवमुक्त्वा महातेजा विरराम द्विजोत्तमः ॥ २९ ॥
शतानन्दवचः श्रुत्वा रामलक्ष्मणसन्निधौ ।
जनकः प्राञ्जलिर्वाक्यमुवाच कुशिकात्मजम् ॥ ३० ॥
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव!
यज्ञं काकुत्स्थसहितः प्राप्तवानसि धार्मिक! ॥ ३१ ॥
पावितोऽहं त्वया ब्रह्मन्! दर्शनेन महामुने!
विश्वामित्र! महाभाग! ब्रह्मर्षीणां वरोत्तम! ॥ ३२ ॥
गुणा बहुविधाः प्राप्ताः तव सन्दर्शनान्मया ।

पावितः—कृतपावनः ॥ ३२ ॥

विस्तरेण च ते ब्रह्मन्! कीर्त्यमानं महत्तपः ॥ ३३ ॥
श्रुतं मया महातेजः! रामेण च महात्मना ।
*सदस्यैः प्राप्य च सदः श्रुतास्ते बहवो गुणाः ॥ ३४ ॥

गुणाः—कर्मज्ञाननिष्ठाविशेषलक्षणाः । सदस्याः—विधिदर्शिनः । तैश्च दैवात् सदः प्राप्य ते गुणाः श्रुताः ॥ ३४ ॥

अप्रमेयं [1]तपस्तुभ्यं अप्रमेयं च ते बलम् ।
[2]अप्रमेया गुणाश्चैव नित्यं ते कुशिकात्मज! ॥ ३५ ॥

तुभ्यमिति । तवेति यावत् ॥ ३५ ॥

तृप्तिराश्चर्यभूतानां †कथानां नास्ति मे विभो!
कर्मकालः, मुनिश्रेष्ठ! लम्बते रविमण्डलम् ॥ ३६ ॥

कथानां तृप्तिरिति । श्रवण इति शेषः । कर्मकाल इति । अतिवर्तत इति शेषः ॥ ३६ ॥

---

* सदः प्राप्य स्थितैः सदस्यैश्च ते गुणाः श्रुताः—गो. ति. † 'पूरण गुण' इति तृतीयार्थे षष्ठी—गो.

[1] तव तपः—ङ. [2] एतदनन्तरं—पितामहस्य च यथा यथा चैव ह्युमापतेः । इत्यधिकं—ङ.

श्वः प्रभाते महातेजः! द्रष्टुमर्हसि मां पुनः ।
[रामेण रमणीयेन लक्ष्मणेन च सङ्गतः ।]
स्वागतं तपतां श्रेष्ठ! मामनुज्ञातुमर्हसि ॥ ३७॥
एवमुक्तो मुनिवरः प्रशस्य पुरुषर्षभम् ।
[1]विससर्जाशु जनकं प्रीतं प्रीतमनास्तदा ॥ ३८॥

स्वागतं भद्रमिति पर्यायः यथायोगं । अनुज्ञातुमर्हसीति । कर्मण इति शेषः ॥ ३८ ॥

एवमुक्त्वा मुनिश्रेष्ठं वैदेहो मिथिलाधिपः ।
प्रदक्षिणं * चकाराशु सोपाध्यायः सबान्धवः ॥ ३९ ॥
विश्वामित्रोऽपि धर्मात्मा सरामः सहलक्ष्मणः ।
[2]स्ववाटमभिचक्राम पूज्यमानो महर्षिभिः ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे पञ्चषष्टितमः सर्गः

स्ववाटं—स्वनिवेशनम् । †धन(४०)मानः सर्गः ॥ ४० ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे पञ्चषष्टितमः सर्गः

---

*आशु इत्यनेन—गृहं गत्वा कदा इमां कथां वर्णयिष्यामि——इत्यभिलाषातिशयः सूचितः—शि. परन्तु——पूर्वश्लोके 'मुनिवरः जनकं आशु विससर्ज' इत्युक्तम् । तत्र मुनिवरस्य त्वरायां हेतुः 'एवमुक्तः' इत्यनेन सूचितः । तत्पूर्वं हि 'कर्मकालः अतिवर्तते' इति जनकेनोक्तं । तच्छ्रुत्वा विश्वामित्रः तत्वरे । तद्दृष्ट्वा जनकोऽपि तत्वरे, महर्षेस्तस्य अनुष्ठानकालातिक्रमणभयात् । जनकोऽपि हि कर्मठ इति प्रसिद्धम् । अतः 'आशु' इत्यनेन कालातिक्रमभयं सूच्यत इति युक्तम् । †अत्र क-ग. मातृकाद्वये अङ्कसंख्यया ३१. इति श्लोकानां निर्देशो दृश्यते । दृश्यन्ते तु ४० श्लोकाः । घ. पुस्तके 'धनमानः' इति दृश्यते । तत्र यथा श्रुते ४० इति सङ्ख्या विवक्षणीया । परन्तु कटपयादीनां व्यत्यासेन लेखनमेव सांप्रदायिकम् ॥

[1] विससर्जाथ—ङ. ज. [2] स्ववासमभि—ज.

## अथ षट्षष्टितमः सर्गः

[शैवधनुःप्रशंसा]

*ततः प्रभाते विमले कृतकर्मा नराधिपः ।
विश्वामित्रं महात्मानं आजुहाव सराघवम् ॥ १ ॥

अथ जगत्पितुः ब्रह्मणो रामस्य जगन्मातृजानकीगायत्रीसंयोजनाय विश्वामित्रस्य प्रस्तावः—ततः प्रभात इत्यादि ॥ १ ॥

तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा ।
राघवौ च महात्मानौ तदा वाक्यमुवाच ह ॥ २ ॥

कर्मणेति । अर्घ्यपाद्यादिलक्षणेनेत्यर्थः ॥ २ ॥

भगवन्! स्वागतं तेऽस्तु [1] किं करोमि तवानघ!
भवानाज्ञापयतु मां आज्ञाप्यो भवता ह्यहम् ॥ ३ ॥

आज्ञापेर्ण्यन्तात् 'अचो यत्' इति यत्, पाक्षिकामित्वादह्रस्वः, आज्ञापयितुं योग्य इत्यर्थः । भवतेति । 'कृत्यानां कर्तरि वा' इति पाक्षिकी तृतीया ॥ ३ ॥

एवमुक्तस्तु धर्मात्मा जनकेन महात्मना ।
प्रत्युवाच मुनिर्वीरं वाक्यं वाक्यविशारदः ॥ ४ ॥

†वीरं—जनकं प्रतीति योजना । वीरं—रामं तत्प्रयोजनमुद्दिश्य ॥

---

* अथ स्वयमेव समस्तजनरक्षणावसरप्रतीक्षो भगवान् देवशरणागतिं व्याजीकृत्य रावणवधायावतीर्णः, तदवान्तरोपायभूतां वेदवत्यवतारे स्वतः कृतसङ्कल्पां लक्ष्मीं 'तुल्यशीलवयोवृत्ताभिजनेनैव कन्या वरणीया' इत्यमुमर्थविशेषं प्रवर्तयिष्यन् जनककुलेऽवतार्य तत्परिणयनाय यतत इत्याह—तत इत्यादिना-गो. † एतद्व्याख्यारीत्या मूले 'प्रत्युवाच मुनिर्वीरं वीरं वाक्यविशारदः' इति पाठेन भाव्यम् ।

[1] किङ्करोऽस्मि-ङ.

**पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ ।**
**द्रष्टुकामौ धनुः श्रेष्ठं यदेतत्त्वयि तिष्ठति ॥ ५ ॥**

एतदपि द्रष्टुकामाविति । आगताविति शेषः ॥ ५ ॥

**एतद्दर्शय, भद्रं ते, कृतकामौ नृपात्मजौ ।**
*** दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ॥ ६ ॥**

कृतकामौ—प्राप्तकामौ ॥ ६ ॥

**एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् ।**
**श्रूयतामस्य धनुषो यदर्थमिह तिष्ठति ॥ ७ ॥**

एवं धनुःप्रसङ्गे तद्वृत्तान्तं वक्तुमुपक्रमते जनकः—एवमुक्त इत्यादि । अस्य धनुष इति । यद्विवक्षितं तस्य धनुष इहागमनादि-वृत्तान्तं, इदानीं इह च यदर्थं यत्प्रयोजनाय तिष्ठति, तत्सर्वं श्रूयताम् ॥ ७ ॥

**† देवरात इति ख्यातो [1] निमेष्षष्ठो महीपतिः ।**
**‡ न्यासोऽयं तस्य भगवन्! हस्ते दत्तो [2] महात्मना ॥**

निमिः—जनककूटस्थः । तस्य हस्ते दत्तो न्यासः निक्षेपरूपः ॥

---

* अस्य दर्शनादेव कृतकामौ भूत्वा प्रतियास्यत इत्यन्वयः—**गो.** अस्य धनुषो दर्शनात् इष्टं—अभीप्सितं यथा—यथावत् प्रतियास्यतः—प्राप्स्यतः—**शि.** † निमेः—निमिवंशोद्भवस्य—सुकेतोरित्यर्थः, किञ्च निमिपुत्रस्य मिथेरेव देवरात इति नामान्तरं ; 'निमेः षष्ठः' इति पाठे तु निमिं परित्यज्य षष्ठ इत्यर्थः—**शि.** ‡ यद्वा—न्यासः—नितरां आ—समन्तात् अस्यन्ते रिपवो येन सः, शत्रुनाशक इत्यर्थः, 'युक्तश्चायमर्थः—अन्यस्वामिके वस्तुनि स्वातन्त्र्यानुपपत्तेः । अत एव तद्धनुर्भञ्जनादिविषयिणी प्रवृत्तिर्नृपतेः संगच्छते—**शि.**

[1] निमेर्ज्येष्ठो—ङ. ज.  [2] महासनः—ङ.

* दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान् ।
रुद्रस्तु त्रिदशान् रोषात् सलीलमिदमब्रवीत् ॥ ९ ॥

तर्हि कैस्तथा दत्त इत्यतः—दक्षेत्यादि । दक्षयज्ञवध इति निमित्तसप्तमी । आयम्येति नमनसज्जीकरणपूर्वकमाकृष्येत्यर्थः । सलीलमिति । अनेन वधविषयाप्रयासो द्योत्यते ॥ ९ ॥

यस्माद्भागार्थिनो भागान्नाकल्पयत मे सुराः !
वराङ्गानि महार्हाणि धनुषा [1] शातयामि वः ॥ १० ॥

भागार्थिन इति । स्विष्टकृदादियज्ञभागार्थिन इत्यर्थः । [2] वराङ्ग—शिरः ॥ १० ॥

ततो विमनसः सर्वे देवा वै मुनिपुङ्गव !
[3] प्रसादयन्त देवेशं, तेषां प्रीतोऽभवद्भवः ॥ ११ ॥
प्रीतियुक्तः स सर्वेषां ददौ तेषां महात्मनाम् ॥

विमनसः—दीनाः । भवः—रुद्रः । ददाविति । संहारगृहीतधनुरिति शेषः ॥ ११ ॥

तदेतद्देवदेवस्य धनूरत्नं महात्मनः ।
† न्यासभूतं तदा [4] न्यस्तमस्माकं [5] पूर्वके विभो ॥ १२ ॥

धनुषां रत्नं धनूरत्नं । पूर्वके इति । देवरात इत्यर्थः ॥ १२ ॥

---

* दक्षयज्ञवध इति निमित्तसप्तमी—ति. † न्यासभूतं—न्यस्तं—देवैरिति शेषः—गो.

[1] पातयामि नः—ङ. [2] वराङ्गानि-शिरांसि. [3] प्रसादयन्ति—ङ. [4] दत्तम-ङ.

[5] पू जे—ङ. च. ज.

*अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता, मया।
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥ १३ ॥

'यदर्थमिह तिष्ठति' इति यदुक्तं तत्प्रतिपादयितुं प्रस्तावः—अथ मे क्षेत्रं कृषत इति। अग्निचयनार्थमिति शेषः। 'लाङ्गलं पवीरवम्' इति, 'द्वाभ्यां षड्गवेन कृषति' इत्यादिशास्त्रात् सिद्धं कर्षणं; लाङ्गलात्—लाङ्गलपद्धतेरित्यर्थः। उत्थितेति। कन्येति शेषः। यदेवं क्षेत्रं शोधयता लाङ्गलपद्धतेः मया लब्धा ततस्तन्नाम्ना सीतेति विश्रुता भवति ॥ १३ ॥

भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा।
वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा ॥ १४ ॥
भूतलादुत्थितां तां तु वर्धमानां ममात्मजाम्।
वरयामासुरागम्य राजानो मुनिपुङ्गव! ॥ १५ ॥
तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम्।
वीर्यशुल्केति, भगवन्! न ददामि सुतामहम् ॥ १६ ॥

एवं यज्ञीयात् भूतलादुत्थिता सा तु ममात्मजा शनैरवर्धत। किं तत इत्यतः—वीर्येत्यादि। उक्तधनुस्सज्जीकरणादिक्षमं वीर्यमेव शुल्कं—मूल्यं यस्यास्सा तथा, वीर्यशुल्केति यतः केवलं न ददामि—न प्रादाम् ॥ १६ ॥

ततः सर्वे नृपतयः समेत्य मुनिपुङ्गव!
मिथिलामभ्युपागम्य [1]†वीर्यजिज्ञासवस्तदा ॥ १७ ॥

वीर्यजिज्ञासवः—धनुर्बलजिज्ञासवः। भवन्तीति शेषः ॥ १७ ॥

---

*मे कृषतः—मयि कर्षतीत्यर्थः—गो. †वीर्यशुल्केयं कन्येति कथिते 'कीदृशं तव शुल्कभूतं वीर्यम्' इति ज्ञातुमिच्छव आसन्नित्यर्थः।

[1] वीर्यं जिज्ञा-ङ. च. ज.

**तेषां जिज्ञासमानानां [1] वीर्यं * धनुरुपाहृतम् ।**
**न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा ॥ १८॥**

वीर्यं—वीर्यशुल्कसाधनभूतम् । तोलनं—भारपरीक्षार्थं हस्तेन चालनम् ॥ १८ ॥

**तेषां वीर्यवतां वीर्यमल्पं ज्ञात्वा महामुने !**
**प्रत्याख्याता नृपतयस्तन्निबोध तपोधन ! ॥ १९ ॥**

प्रत्याख्याताः—कन्या न दत्तेति यावत् । तदित्यव्ययम् । तस्मादनन्तरं यद्वृत्तान्तं तन्निबोध । बुधिरत्र निशामने (बुद्धेथ विज्ञापने बुद्धेत विज्ञापनीये बुद्धेः वेदने च बुद्धिरच अतो) (?) भौवादिकः, लोट् ॥

**ततः परमकोपेन राजानो नृपपुङ्गव !**
**[2] अरुन्धन् मिथिलां सर्वे † वीर्यसन्देहमागताः ॥ २० ॥**

अरुन्धन्—उपरोधं कृतवन्तः । वीर्यसन्देहं—धनुरारोपलक्षण—वीर्यविषये स्वेषां सामर्थ्यसन्देहं । अतो बलादेव ‡ कन्यां ग्रहीष्यामीति न्यरुन्धन्नित्यर्थः ॥ २० ॥

**आत्मानमवधूतं [3] ते विज्ञाय नृपपुङ्गवाः ।**
**रोषेण महताऽऽविष्टाः पीडयन्मिथिलां पुरीम् ॥ २१ ॥**

ते सर्वे नृपाः आत्मानं—स्वात्मानं मया अवधूतं—वीर्यशुल्ककरणेन तिरस्कृतं विज्ञाय रोषाऽऽविष्टाः पीडयन्—अपीडयन्निति यावत् ॥ २१ ॥

---

* धनुरुपाहृतं—आनीय स्थापितम्—**शि**. वीर्यं जिज्ञासमानानामित्यन्वयः-**गो.**
† वीर्यसन्देहं—धनुरारोपलक्षणवीर्यविषये अन्येषां सन्देहविषयत्वं गताः—**शि.** यद्वा शुल्कत्वेन कल्पिते धनुरारोपणरूपवीर्ये संदेहं—किमनेनास्मदवमाननार्थमेवेदं कल्पितं स्यादिति संशयमित्यर्थः । अत एवानन्तरश्लोकोऽपि संगच्छते । ‡ प्रत्येकान्वयाभिप्रायेणैकवचनम् ।

[1] शैवं-ङ. ज. ऐशं-झ. [2] न्यरुन्धन्-ङ. [3] मे-ङ.

**ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ।**
**साधनानि, मुनिश्रेष्ठ ! ततोऽहं भृशदुःखितः ॥ २२ ॥**

क्षयं यातानीति । प्राकारयुद्धवशादिति शेषः ॥ २२ ॥

**ततो देवगणान् सर्वान् तपसाऽहं प्रसादयम् ।**
**ददुश्च परमप्रीताः [1] चतुरङ्गबलास्सुराः ॥ २३ ॥**

प्रसादयमिति । प्रासादयमिति यावत् । चतुरङ्गबला इति । चतुरङ्गबलदा अभवन्नित्यर्थः ॥ २३ ॥

**ततो भग्ना नृपतयो हन्यमाना दिशो ययुः ।**
**अवीर्या * वीर्यसन्दिग्धाः सामात्याः पापकर्मणः ॥ २४ ॥**

अवीर्याः—अर्धवीर्याः । वीर्यसन्दिग्धाः —आहिताग्नित्वान्निष्ठायाः परनिपातः, संदिग्धवीर्याः बलात्कन्याजिघृक्षवस्सर्वे नानादिशो ययुः । समवायं विसृज्येति शेषः ॥ २४ ॥

**तदेतन्मुनिशार्दूल ! धनुः परमभास्वरम् ।**
**रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत ! ॥ २५ ॥**

तदेतदिति । उक्तवृत्तान्तकमित्यर्थः ॥ २५ ॥

**यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ।**
**सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥ २६ ॥**

इत्यार्षे श्रीमद्रामायणे बालकाण्डे षट्षष्टितमः सर्गः

———

अचर (२६-१/२) मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे षट्षष्टितमः सर्गः

———

* सन्दिग्धवीर्याः—अहिताग्न्यादित्वात् परनिपातः—ति. । वीर्यसन्दिग्धा इति सोपहासोक्तिर्वा.

[1] चतुरङ्गबलमिति सर्वत्र पाठः ।

## अथ सप्तषष्टितमः सर्गः

[धनुर्भङ्ग]

जनकस्य वचः श्रुत्वा विश्वामित्रो महामुनिः।
धनुर्दर्शय रामाय इति होवाच पार्थिवम् ॥ १ ॥

अथ प्रस्तावितकार्यप्रवृत्तिः—जनकस्येत्यादि। 'रामाय इति' इति असन्धिः छान्दसः ॥ १ ॥

ततः स राजा जनकः [1] सामन्तान् व्यादिदेश * ह।
धनुरादीयतां दिव्यं गन्धमाल्यविभूषितम् ॥ २ ॥

सामन्तान्—समीपे विद्यमानान्† सचिवानित्यर्थः ॥ २ ॥

जनकेन समादिष्टाः सचिवाः प्राविशन् पुरीम्।
तद्धनुः पुरतः कृत्वा निर्जग्मुः पार्थिवाज्ञया ॥ ३ ॥

पुरीं प्राविशन्निति। यज्ञवाटादिति शेषः ॥ ३ ॥

नृणां शतानि पञ्चाशद्व्यायतानां महात्मनाम्।
मञ्जूषामष्टचक्रां तां समूहुस्ते कथञ्चन ॥ ४ ॥

अथ नायकसङ्ख्याविशेष कथनपूर्वं कथंचिदानयनप्रदर्शनेन धनुषो दुर्ग्रहत्वादिवैभवः प्रकाश्यते—नृणामित्यादि। 'नृच' इति नामि न दीर्घः। पञ्चाशच्छतानीति। पञ्चसहस्राणीति यावत्। व्यायताः—दीर्घाः। महात्मानः—हृष्टपुष्टशरीराः। मञ्जूषा—आयसी पेटिका। अष्टचक्रां—अष्टायश्चक्ररक्षाबन्धवतीं। समूहुरिति। अनेकैर्दीर्घबृहद्वंशदण्डैरिति

---

* 'ह' इति हर्षद्योतकः—शि. † अनन्तरश्लोकानुसारादेवं व्याख्यातम्।

[1] सचिवान्—ङ, ज, समेतान्, संयतान्—ङ.

शेषः । *काश्चिदष्टचक्रां–अष्टचक्रशकटयुक्तामित्याह । तदा नृणां शतान्यूहुरिति न सङ्गच्छते । अपि च शकटेनानयने बलीवर्दादय एव नियोज्याः, न तु पञ्चसहस्रपुरुषाः ॥ ४ ॥

**तामादाय तु मञ्जूषां आयसीं यत्र तद्धनुः ।**
**सुरोपमं ते जनकमूचुर्नृपतिमन्त्रिणः ॥ ५ ॥**
**इदं धनुर्वरं राजन्! पूजितं सर्वराजभिः ।**
**मिथिलाधिप! राजेन्द्र! †दर्शनीयं [1]यदीच्छसि ॥ ६ ॥**

दर्शनीयं–प्रदर्शनीयं इच्छासि यदि । प्रदर्शयेति शेषः ॥ ६ ॥

**तेषां नृपो वचः श्रुत्वा कृताञ्जलिरभाषत ।**
**‡विश्वामित्रं महात्मानं, तौ चोभौ रामलक्ष्मणौ ॥ ७ ॥**

उभौ रामलक्ष्मणौ तद्विषयकधनुःप्रदर्शनमुद्दिश्य विश्वामित्रमभाषतेति योजना ॥ ७ ॥

**इदं धनुर्वरं ब्रह्मन्! §जनकैरभिपूजितम् ।**
**राजभिश्च महावीर्यैः [2]अशक्तैः पूजितं पुरा ॥ ८ ॥**

राजभिश्चेति । अन्यैरपीति शेषः । अशक्तैः–तोलनादिव्यापाराशक्तैः । पूजितं–ऐश्वरत्वादीश्वरवदेव केवलं पूजितं इत्यर्थः ॥ ८ ॥

---

* गोविन्दराजः । परन्तु तत्र–'समूहुः–आचकर्षुः' इति व्याख्यातम् । † यत् धनुः दर्शनीयमिच्छसि तदिदं धनुः आनीतमिति शेषः–**गो.** ‡ महात्मानं विश्वामित्रं तौ रामलक्ष्मणौ च अभाषत–**शि.** परन्तु उत्तरश्लोकेषु विश्वामित्रस्यैव सम्बोधनात् कतककृताऽन्यथा व्याख्यातम् । § जनकैः–तद्वंश्यैः । पूरितुमशक्तैः राजभिस्तु जनकैः–देवराततिरिक्तैः पूजितं–**ति** । राजभिः सीतार्थिभिः पूजितं–अहोमहासारमैश्वरं धनुरिति–**गो.**

[1] यदिच्छसि–**ङ.** [2] अशक्यं पूरितुं–**ङ.**

नैतत्सुरगणा[1]स्सर्वे नासुरा न च राक्षसाः।
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ ९ ॥

क्व गतिर्मानुषाणां च धनुषोऽस्य * प्रपूरणे।
आरोपणे समायोगे वेपने तोलनेऽपि वा ॥ १० ॥

तदेतद्धनुषां श्रेष्ठमानीतं मुनिपुङ्गव!
दर्शयैतन्महाभाग! अनयोः राजपुत्रयोः ॥ ११ ॥

प्रपूरणं—प्रसज्य धनुष आकर्णाकर्षणम्। इदं पूर्णबलम्। एतदधः—यत् आरोपणादि। आरोपणं—सज्यकरणं। समायोगः—शरेण संयोजनं। वेपनं—ज्यास्फालनं। तोलनं वर्णितचरम्। तोलनादिकृत्ये मानुषाणां क्व गतिः—क्व सामर्थ्यम्। अथापि त्वदाज्ञया आनीतं एतत् धनू राजपुत्रयोः [2]प्रदर्शनाय ॥ ११ ॥

विश्वामित्रः स धर्मात्मा श्रुत्वा जनकभाषितम्।
वत्स! राम! धनुः पश्य इति राघवमब्रवीत् ॥ १२ ॥
महर्षेर्वचनाद्रामो यत्र तिष्ठति तद्धनुः।
मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् ॥ १३ ॥

अपावृत्य-अपगतावरणां कृत्वा ॥ १३ ॥

इदं धनुर्वरं ब्रह्मन्! संस्पृशामीह पाणिना।
यत्नवांश्च भविष्यामि [3]तोलने पूरणेपि वा ॥ १४ ॥

---

* प्रपूरणं—आकर्णाकर्षणं, आरोपणं—सज्यीकरणं, समायोगः—शरेण योजनं, वेपनं—ज्यास्फालनं, तोलनमुक्तम्—ति. प्रपूरणे—नम्रीकरणे, आरोपणे मौर्व्याः संयोजने, समायोगे—शरेण योजने, वेपने—मौर्व्याकर्षणे—गो।

[1] इशक्ताः—ङ. [2] प्रदर्शय—ग. [3] वेपने—ङ.

हे ब्रह्मन् इदं धनुर्वरं दृष्टं। इदं पाणिना च स्पृशामि। एतावता दर्शनौत्सुक्यं निवृत्तं। अतः परमेतद्धनुषि तोलनादवपि यत्नवांश्च भविष्यामि किम्? इत्यपृच्छदिति शेषः॥ १४॥

**बाढमित्यब्रवीद्राजा मुनिश्च समभाषत।**

अथ गुर्वनुमतिः—बाढमित्यादि। राजा च समभाषत, स मुनिश्च समभाषतेति प्रत्येकं योजना॥ १४॥

***लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः॥ १५॥**
**पश्यतां नृसहस्राणां बहूनां रघुनन्दनः।**

मध्ये–मध्यप्रदेशे भारवस्तुनो मध्यप्रदेशे गृहीत्वोद्धारो महाबलसाध्यः। पश्यतां–पश्यत्स्विति यावत्। भावलक्षणा षष्ठी॥ १६॥

**आरोपयत्सधर्मात्मा सलीलमिव तद्धनुः॥ १६॥**
**आरोपयित्वा धर्मात्मा †पूरयामास तद्धनुः।**
**तद्बभञ्ज नरश्रेष्ठो धनुर्मध्ये महायशाः॥ १७॥**

इव शब्द एवार्थे। सलीलमेव—लीलाधनुर्वेदप्रयासमेवेत्यर्थः। पूरयामासेति। आकर्णमाकृष्टवानित्यर्थः। तद्धनुर्मध्ये बभञ्जेति। मध्ये गृहीत्वाऽऽकर्षणात् उभयनमनवेगेनेति शेषः॥ १७॥

**तस्य शब्दो महानासीत् निर्घातसमनिस्वनः।**
**भूमिकम्पश्च सुमहान् पर्वतस्येव दीर्यतः॥ १८॥**

---

* मध्ये–मध्यप्रदेशे—जग्राह–पादाङ्गुलेनोन्नतं कृत्वा करेण जग्राह। तदुक्तं पाद्मे-'रामोऽपि तद्धनुः कोटिं स्पृष्ट्वा पादाङ्गुलात्ततः। उन्नतं चापमारोप्य बभञ्ज मोहिता जनाः' इति–**ति.** † ननु उक्तरित्या महोन्नतस्य धनुषः कथं बालेनारोपणं संभवति? अग्रस्पर्शाभावादिति चेत्–उच्यते–आश्चर्यशक्तिकस्य रामस्य करस्पर्शादेवावानतं धनुः–**गो.** वस्तुतस्तु—धनुष उन्नतत्वेऽपि ज्याया आकर्षणेन धनुषः नमनं संभवत्येवेति॥

निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः।
वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥ १९ ॥

मुनिवरः–विश्वामित्रः । राजा–जनकः ॥ १९ ॥

प्रत्याश्वस्ते जने तस्मिन्, राजा विगतसाध्वसः।
उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुङ्गवम् ॥ २० ॥

विगतसाध्वस इति। *रामेणापि धनुषः अनारोपे अयमपि मे जामाता न सिद्ध्येदिति या भीस्स्थिता सा गतेत्यर्थः ॥ २० ॥

भगवन्! दृष्टवीर्यो मे रामो दशरथात्मजः।
अत्यद्भुतमचिन्त्यं च न तर्कितमिदं मया ॥ २१ ॥

न तर्कितमिति। एतदारोपणसंभावनमपीति शेषः ॥ २१ ॥

†जनकानां कुले कीर्तिमाहरिष्यति मे सुता।
सीता भर्तारमासाद्य रामं दशरथात्मजम् ॥ २२ ॥
‡मम सत्या प्रतिज्ञा च वीर्यशुल्केति कौशिक!
सीता प्राणैर्बहुमता देया रामाय मे सुता ॥ २३ ॥

प्राणैरिति पञ्चम्यर्थे तृतीया, प्राणेभ्य इति यावत् ॥ २३ ॥

---

* 'वर्जयित्वा राजानं' इत्युक्तत्वात् साध्वसमेवंरूपं व्याख्यातम्। प्रथमं रामदर्शन-समय एव जनकस्य 'अयं मम जामाता स्याद्वा' इत्याशाऽऽसीदिति 'समुपस्थितयौवनौ' (५०-१९) इत्यादितद्वाक्यैरेवावगम्यते। अत एव धनुर्दिदृक्षामात्रे विश्वामित्रेण कथितेऽपि जनकः—'यद्यस्य धनुषो रामः कुर्यादारोपणं' इत्याद्याहेति भावः ॥ †जनकानां—'अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन। मिथिलायां प्रदीप्तायां न मे किञ्चित्प्रदह्यते ॥' इति प्रोक्तनिरतिशयकीर्तिमतामपि कुले। भर्तारं—भरणदक्षं 'वित्तमिच्छन्ति मातरः' इत्युक्तधनवन्तं—, रामं—'रूपमिच्छन्ति कन्यकाः।' इत्युक्तरूपवन्तं, 'दशरथात्मजं' 'बान्धवाः कुलमिच्छन्ति' इत्युक्तरीत्या बन्धुकांक्षितं च–गो. ‡सीता वीर्यशुल्केति मम प्रतिज्ञा सत्या जाता ॥

भवतोऽनुमते ब्रह्मन् ! शीघ्रं गच्छन्तु मन्त्रिणः ।
मम, कौशिक ! भद्रं ते, अयोध्यां त्वरिता रथैः ॥ २४ ॥

भवतोऽनुमते — निमित्तसप्तमीयं —अनुमतकृत्यसाधननिमित्तमित्यर्थः । मन्त्रिणः अयोध्यां गच्छन्त्विति योजना ॥ २४ ॥

राजानं *प्रश्रितैर्वाक्यैरानयन्तु पुरं मम ।
प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥ २५ ॥

सर्वशश्चेति । सर्वमप्यत्रत्यवृत्तान्तमिति शेषः ॥ २५ ॥

मुनिगुप्तौ च काकुत्स्थौ कथयन्तु नृपाय वै ।
[1] †प्रीयमाणं तु राजानमानयन्तु सुशीघ्रगाः ॥ २६ ॥
कौशिकश्च तथेत्याह राजा चाभाष्य मन्त्रिणः ।
अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् ॥ २७ ॥
यथावृत्तं समाख्यातुमानेतुं च नृपं तदा ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे सप्तषष्टितमः सर्गः

---

आभाष्य—आहूयेति यावत् । कृतशासनान्—दत्तकल्याणसन्देशपत्रिकानिति यावत् । दार(२८)मानः सर्गः ॥ २८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे सप्तषष्टितमः सर्गः

---

* प्रश्रितैः—विनयसहितैः. † प्रीतियुक्तमिति क्रियाविशेषणम्—ति.

[1] प्रीतियुक्तं तु—ङ. च. ज. झ.

## अथ अष्टषष्टितमः सर्गः

### [दशरथाह्वानम्]

**जनकेन समादिष्टा दूतास्ते *क्लान्तवाहनाः।**
**[1]त्रिरात्रमुषिता मार्गे तेऽयोध्यां प्राविशन् पुरीम् ॥ १ ॥**

अथ मन्त्रिभिः राजनियोगसम्पादनम्—जनकेनेत्यादि। तिस्रश्च ता रात्रयश्च त्रिरात्रम्, सङ्ख्यादित्वात् रात्रान्तादच् समासान्तः। अत्यन्तसंयोगे द्वितीया, रात्रित्रयं मार्ग उषिताः—कृतवासाः ते दूताः—दौत्यविनियुक्तमन्त्रिण इत्यर्थः ॥ १ ॥

**ते राजवचना[2]द्दूता राजवेश्म [3]प्रवेशिताः।**
**ददृशुर्देवसङ्काशं वृद्धं दशरथं नृपम् ॥ २ ॥**

राजवचनात्—जनकोऽस्मानिह प्रेषितवानिति स्वराजसंकीर्तनात् राजदर्शनद्वारभूतात्। राजवेश्म—दशरथवेश्म ॥ २ ॥

**बद्धाञ्जलिपुटाः सर्वे दूता †विगतसाध्वसाः।**
**राजानं प्रयता वाक्यमब्रुवन्मधुराक्षरम् ॥ ३ ॥**

विगतसाध्वसा इति। महाराजनियुक्तदूतत्वेन तद्भृत्यवत्तत्सन्निधौ भयरहिताः ॥ ३ ॥

**मैथिलो जनको राजा साग्निहोत्र[4]पुरस्कृतः।**
**कुशलं चाव्ययं चैव सोपाध्यायपुरोहितम् ॥ ४ ॥**

---

* ६९तमसर्गे 'गत्वा चतुरहं मार्गे' (श्लो. ७) इत्युक्तदिशा चतुर्दिवससाध्यगमनस्य मार्गस्य दिनत्रयेण गमनात्—क्लान्तवाहना इति ॥ † 'बद्धाञ्जलिपुटाः' इति विशेषणश्रवणजन्यसंशयपरिहाराय विगतसाध्वसा इति ॥

[1] एतदनन्तरं—राज्ञो भवनमासाद्य द्वारस्थानिदमब्रुवन्। शीघ्रं निवेद्यतां राज्ञे दूतान्नो जनकस्य च ॥ इत्युक्ता द्वारपालास्ते राघवाय न्यवेदयन्। इत्यधिकम्—ङ.
[2] द्रुतवा—ङ. [3] प्रददृशुः—ङ. [4] पुरस्कृतम्—ङ.

मुहुर्मुहुर्मधुरया स्नेहसंयुक्तया गिरा ।
*जनकस्त्वां महाराजाऽऽपृच्छते सपुरस्सरम् ॥ ५ ॥

मैथिलः—मिथिलापुरीश्वरः । पुरस्कृताग्निहोत्रसहितः—साग्निहोत्र-पुरस्कृतः, आहिताग्नित्वान्निष्ठायाः परनिपातः । कुशलं—क्षेमम् । अव्ययः—अनपायः । महाराजा आपृच्छत इति पदम् । 'आङि नुपृच्छ्योरुपसङ्ख्यानम्' इत्यात्मनेपदम् । पुरस्सरन्तीति पुरस्सराः—भृत्यास्तत्सहितम् ॥ ५ ॥

पृष्ट्वा कुशल[1]मव्यग्रं वैदेहो मिथिलाधिपः ।
कौशिकानु[2]मते वाक्यं भवन्तमिदमब्रवीत् ॥ ६ ॥

अनुमते—अनुमतकृत्यसाधननिमित्तम् ॥ ६ ॥

पूर्वं प्रतिज्ञा [3]विदिता वीर्यशुल्का ममात्मजा ।
राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः ॥ ७ ॥

वीर्यशुल्केति प्रतिज्ञा पूर्वं युष्माभिर्विदितेति योजना । विमुखी-कृताः इत्यपि विदितम् ॥ ७ ॥

सेयं मम सुता राजन् ! विश्वामित्रपुरस्सरैः ।
यदृच्छयाऽऽगतैर्वीरैर्निर्जिता तव पुत्रकैः ॥ ८ ॥

तव पुत्रकैरिति । तव पुत्रेण बालेन सकलजगत्पूज्यरामेणेत्यर्थः । पूजायां बहुवचनम् । कप्रत्ययो बाल्यद्योतकः । जामातृबुध्या च बहुवचनप्रयोगः ॥ ८ ॥

---

* अत्र द्वितीयजनकशब्दः विप्रकृष्टजनकशब्दाविस्मरणार्थः—गो. जनानां कं—सुखं यस्मात्स —–प्रजासुखदातेत्यर्थः ; तादृशो जनकः—रा.

[1] मव्यग्रो—ङ. ज. [2] मतो—ङ. [3] विहिता—ङ.

तच्च राजन्! धनुर्दिव्यं मध्ये भग्नं महात्मना।
रामेण हि महाराज! महत्यां जनसंसदि ॥ ९ ॥
अस्मै देया मया सीता वीर्यशुल्का [1]महात्मने।
प्रतिज्ञां [2]कर्तुमिच्छामि तदनुज्ञातुमर्हसि ॥ १० ॥

प्रतिज्ञां–वीर्यशुल्कतया सीतादानप्रतिज्ञापूरणं इत्यर्थः ॥ १० ॥

सोपाध्यायो महाराज! पुरोहितपुरस्सरः।
शीघ्रमागच्छ, भद्रं ते, द्रष्टुमर्हसि राघवौ ॥ ११ ॥

महाराज शीघ्रमागच्छेति योजना ॥ ११ ॥

[3]प्रीतिं च मम राजेन्द्र! निर्वर्तयितुमर्हसि।
*पुत्रयोरुभयोरेव प्रीतिं त्वमपि लप्स्यसे ॥ १२ ॥

उभयोरेव पुत्रयोः, न केवलं रामस्य। प्रीतिमिति। विवाहकल्याणजप्रीतिमित्यर्थः। एवं च लक्ष्मणायोर्मिळाप्रदानमपि सूचितम्। तथाऽग्रे वक्ष्यति ॥ १२ ॥

[4]एवं विदेहाधिपतिर्मधुरं वाक्यमब्रवीत्।
विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः ॥ १३ ॥

अभ्यनुज्ञात इति। अभ्यनुज्ञातकन्याप्रदानकृत्य इत्यर्थः ॥ १३ ॥

दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः।
वसिष्ठं वामदेवं च मन्त्रिणोऽन्यांश्च सोऽब्रवीत् ॥ १४ ॥
गुप्तः कुशिकपुत्रेण कौसल्यानन्दवर्धनः।
लक्ष्मणेन सह भ्रात्रा विदेहेषु वसत्यसौ ॥ १५ ॥

---

* पुत्री च पुत्रश्च—तयोः—मत्पुत्र्यां त्वत्पुत्रे चेत्यर्थः। यद्वा स्नुषाऽपि पुत्रीत्येव गृह्यते। यद्वा लक्ष्मणायोर्मिलाप्रदानं सिद्धं कृत्वैवमुच्यते—**गो.**

[1] ममात्मजा–ङ. [2] तर्तुं–ङ. ज. [3] प्रतिज्ञां मम–ङ. ज. [4] एतदनन्तरं 'इत्युक्त्वा विरता दूताः राजगौरवशङ्किताः' इत्यधिकं–ङ.

दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना ।
सम्प्रदानं सुतायास्तु राघवे कर्तुमिच्छति ॥ १६ ॥

यदि वो रोचते [1] वृत्तं जनकस्य महात्मनः ।
पुरीं गच्छामहे शीघ्रं मा भूत् कालस्य पर्ययः ॥ १७ ॥

यदि वो रोचते इति । यौनसम्बन्धयोग्यमिति इति शेषः । पर्ययः—अतिक्रमः ॥ १७ ॥

मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः ।
सुप्रीतश्चाब्रवीद्राजा श्वो यात्रेति स मन्त्रिणः ॥ १८ ॥

श्वो यात्रेत्यब्रवीदिति । तदर्थमुद्यममध्वमिति शेषः । मन्त्रिण इति । जनकमन्त्रिण [2] इत्यर्थः ॥ १८ ॥

मन्त्रिणस्तां [3]नरेन्द्रश्च रात्रिं परमसत्कृताः ।
ऊषुः प्रमुदिताः सर्वे गुणैः सर्वैस्समन्विताः ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे अष्टषष्टितमः सर्गः

---

गुणैः—सत्कारातिशयैः । नरेन्द्रश्च प्रमुदित उवासेति विपरिणामः । धैर्य (१९) मानः ॥ १९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे अष्टषष्टितमः सर्गः

---

[1] वृत्तिः-ङ. [2] इति शेषः-ग. [3] नरेन्द्रस्य-ङ.

## अथ एकोनसप्ततितमः सर्गः

[दशरथजनकसमागमः]

ततो रात्र्यां व्यतीतायां सोपाध्यायः सबान्धवः ।
राजा दशरथो हृष्टः सुमन्त्रमिदमब्रवीत् ॥ १ ॥

अथ दूतैराहूतदशरथागमनम्—ततो रात्र्यामिति ॥ १ ॥

अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलम् ।
व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः ॥ २ ॥

धनाध्यक्षाः—कोशरक्षाधिकृताः । सुविहिताः—सुसम्पादितकल्याणोचितकर्माणः ॥ २ ॥

चतुरङ्गं बलं चापि शीघ्रं निर्यातु सर्वशः ।
ममाज्ञासमकालं च यानयुग्यमनुत्तमम् ॥ ३ ॥

यानयुग्यमिति । यानं—शिबिकान्दोळिकादि, युग्यं—अश्वादि, सेनाङ्गत्वादेकत्वम् । अनुत्तमानि यानानि युग्यानि च निर्यान्तु—वसिष्ठाद्यर्थमिति शेषः ॥ ३ ॥

वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ।
मार्कण्डेयस्सुदीर्घायुः ऋषिः कात्यायनस्तथा ॥ ४ ॥
एते द्विजाः प्रयान्त्वग्रे, स्यन्दनं योजयस्व मे ।
[1]यथा कालात्ययो न स्यात् दूता हि त्वरयन्ति माम् ॥५॥

प्रयान्त्वग्र इति । कल्याणप्रयाणत उत्तमयानयुग्यैरिति शेषः । दूताः—जनकमन्त्रिणः ॥ ५ ॥

---

[1] एतदनन्तरं 'इत्युक्त्वा स महातेजाः राजा दशरथो रथम् । आरुरोह यथा भानुः भगवान् रघुनन्दनः । इत्यधिकं–ङ.

वचनात्तु नरेन्द्रस्य सा सेना चतुरङ्गिणी ।
राजानमृषिभिः सार्धं व्रजन्तं पृष्ठतोऽन्वगात् ॥ ६ ॥
गत्वा चतुरहं मार्गं विदेहानभ्युपेयिवान् ।
राजा तु जनकः श्रीमान् श्रुत्वा पूजामकल्पयत् ॥ ७ ॥

चतुर्भिरहोभिस्साध्यगमनो मार्गस्तथा । दूतैस्त्रिदिनगतोऽध्वा चतुरङ्गबलोपेतप्रयाणत्वाच्चतुर्दिनमपेक्षते । श्रुत्वेति । दशरथागमनमिति शेषः ॥ ७ ॥

ततो राजानमासाद्य वृद्धं दशरथं नृपम् ।
जनको मुदितो राजा हर्षं च परमं ययौ ।
उवाच च नरश्रेष्ठो नरश्रेष्ठं मुदाऽन्वितः ॥ ८ ॥
स्वागतं ते, महाराज ! दिष्ट्या प्राप्तोऽसि राघव !
पुत्रयोरुभयोः प्रीतिं लप्स्यसे वीर्यनिर्जिताम् ॥ ९ ॥

पुत्रयोरुभयोः प्रीतिमिति । व्याकृतचरः । वीर्यनिर्जितामिति । रामवीर्यद्वारा सम्पादितामिति यावत् ॥ ९ ॥

दिष्ट्या प्राप्तो महातेजाः वसिष्ठो भगवानृषिः ।
*सह सर्वैर्द्विजश्रेष्ठैर्देवैरिव शतक्रतुः ॥ १० ॥

शतक्रतुदृष्टान्तो वसिष्ठस्य पूर्णधर्मत्वे ॥ १० ॥

दिष्ट्या मे निर्जिता विघ्ना दिष्ट्या मे पूजितं कुलम् ।
राघवैः सह [1]सम्बन्धो वीर्यश्रेष्ठैर्महात्मभिः ॥ ११ ॥

---

* अस्यार्धस्य 'स्वागतं ते महाराज दिष्ट्या प्राप्तोऽसि राघव' इत्यर्धानन्तर्ये संगत्यतिशयः स्फुटः । स तु सुरेन्द्रः, अयं च भूसुरेन्द्र इति ।

[1] संबन्धात्-ङ. ज.

विघ्ना इति। कन्याप्रदानप्रतिबन्धा इत्यर्थः। राघवैस्सह सम्बन्धः यतः प्राप्तस्ततः पूजितामिति योजना ॥ ११ ॥

श्वः प्रभाते [1] नरेन्द्रेन्द्र ! निर्वर्तयितुमर्हसि।
यज्ञस्यान्ते नरश्रेष्ठ ! विवाह[2]मृषिसंमतम् ॥ १२ ॥

* नरेन्द्राणामपीन्द्रो नरेन्द्रेन्द्रः। यज्ञस्यान्त इति। त्रिचतुर्दिनानन्तरभाविनीति शेषः ॥ १२ ॥

तस्य तद्वचनं श्रुत्वा ऋषिमध्ये नराधिपः।
वाक्यं वाक्यविदां श्रेष्ठः प्रत्युवाच महीपतिम् ॥ १३ ॥

प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा।
यथा वक्ष्यसि धर्मज्ञ ! तत्करिष्यामहे वयम् ॥ १४ ॥

प्रतिग्रहः—कन्यागवादीनां प्रतिग्रहः दातृवश एव—यदि ददाति—गृह्यते प्रतिग्रहीत्रेति वस्तुस्थितिः। एतत् युष्मदीयं वीर्यशुल्कं कन्याप्रदानाविषयं, पुरा पूर्वमेव श्रुतम्। अतः परं कन्याप्रदस्त्वं यथा वक्ष्यसि तद्वयं करिष्यामहे ॥ १४ ॥

धर्मिष्ठं च यशस्यं च वचनं सत्यवादिनः।
श्रुत्वा विदेहाधिपतिः परं विस्मयमागतः ॥ १५ ॥

परं विस्मयमिति। कन्याया वीर्यशुल्कत्वेन जितत्वात् तदनुमत्यनपेक्षणत्वेऽपि 'प्रतिग्रहो दातृवशः, यथा त्वं वक्ष्यसि [3] तद्वयं करिष्यामहे' इति राज्ञो लौकिकवचनचातुरीदर्शनाद्विस्मयः ॥ १५ ॥

---

* इक्ष्वाकुप्रथमवंशत्वेन नरेन्द्राणामपीन्द्रत्वम्—गो.

[1] नरेन्द्र त्वं—ङ. ज.　　[2] मृषिसत्तमैः—ङ.　　[3] तथा—ग.

ततः सर्वे मुनिगणाः परस्परसमागमे ।
[1]हर्षेण महता युक्तास्तां निशामवसन् सुखम् ॥ १६ ॥
राजा च राघवौ पुत्रौ निशम्य परिहर्षितः ।
उवास परमप्रीतो जनकेनाभिपूजितः ॥ १७ ॥

निशम्य–अवलोक्य, 'शमो दर्शने' इति दर्शने मित्वनिषेधाद्ध्रस्वः ॥ १७ ॥

जनकोऽपि महातेजाः क्रियां धर्मेण तत्त्ववित् ।
यज्ञस्य च सुताभ्यां च कृत्वा रात्रिमुवास ह ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकोनसप्ततितमः सर्गः

---

यज्ञस्य अवशिष्टाः क्रियाः, सुताभ्यां कन्यादानशेषतया यत्कर्तव्यं लौकिकालौकिकं तत्सर्वं च कृत्वोवास इति । अदय (१८ १/२) मानः सर्गः ॥ १८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकोनसप्ततितमः सर्गः

---

## अथ सप्ततितमः सर्गः

[इक्ष्वाकुवंशवर्णनम्]

ततः प्रभाते जनकः कृतकर्मा महर्षिभिः ।
उवाच वाक्यं वाक्यज्ञः शतानन्दं पुरोहितम् ॥ १ ॥

---

[1] एतदनन्तरं–अथ रामो महातेजा लक्ष्मणेन समं ययौ । विश्वामित्रं पुरस्कृत्य पितुः पादावुपस्पृशन् ॥ इत्यधिकं–ङ.

अथ स्वस्वबन्धुभावरहितयोः यौनसम्बन्धापेक्षितः परस्पर-कुलविचारः सर्गाभ्यां—ततः प्रभात इत्यादि ॥ १ ॥

**भ्राता मम महातेजा [1]यवीयानतिधार्मिकः ।**
**कुशध्वज इति ख्यातः पुरीमध्यवसच्छुभाम् ॥ २ ॥**
***[2]वार्याफलकपर्यन्तां पिबन्निक्षुमतीं नदीम् ।**
**साङ्काश्यां † पुण्यसङ्काशां विमानामिव पुष्पकम् ॥ ३ ॥**

पुरीमध्यवसदिति । पुर्यामिति यावत् । 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् । परबलं वारयितुं अर्हा–वार्या 'ऋहलोर्ण्यत्'—प्राकार इति यावत्, तस्याः फलकाः—यन्त्रफलकाः, तद्युक्तः पर्यन्तः—परिसरो यस्यास्सा तथा । एतेन स्थलदुर्गत्वं पुर्या उक्तं । अथ जलदुर्गत्वमप्युच्यते–वार्येत्यादि । आवर्तते चेदं पदं, उक्तार्थवार्याफलकपरिसरप्रवाहवतीं इक्षुमतीं नदीं–तज्जलं पिबन्, सांकाश्यां–संकाशेन निर्वृत्ता सांकाश्या, वुञ्छणादितो ण्यः । पुण्यसंकाशां–शुभदर्शनां । पुष्पकविमानं प्रसिद्धं कौबेरं ॥ ३ ॥

**तमहं द्रष्टुमिच्छामि यज्ञगोप्ता स मे मतः ।**
**[3]प्रीतिं सोऽपि महातेजा इमां भोक्ता मया सह ॥ ४ ॥**

तमिति । उक्तपुरवासिनमिति यावत् । यज्ञगोप्तेति । मिथिलायां क्रियमाणयज्ञस्य रक्षणं–साङ्काश्य एव स्थित्वाऽस्मद्यज्ञापेक्षितसर्व-

---

* वारिणि आ कीर्णाः—निखाताः फलकाः—शूलानि येषु ते वार्याफलकाः, तादृशाः पर्यन्तप्रदेशाः यस्यास्तां । 'वार्यामलक' इति पाठे वार्यामलकाः—आमलकविशेषाः । † पुण्यशब्देन तत्फलं स्वर्गः—तत्सङ्काशां–ति । पुण्यतुल्यां—स्ववासिनां पुण्यवत् स्वत एवाभीष्टप्रदां–गो.

[1] वीर्यवान्–ङ. ज. [2] वार्यामलक–ङ. ज. [3] एतदनन्तरं—एवमुक्ते तु वचने शतानन्दस्य सन्निधौ । आगताः केचिदव्यग्राः जनकस्तान् समादिशत्–इत्यधिकं–ङ.

सामग्रीसम्पादकत्वात् । इमां प्रीतीं—विवाहकल्याणसन्तोषं मया सह भोक्तुमर्हति । अतस्तदानयनं कारयत्विति शतानन्दमुवाचेति योजना ॥

शासनात्तु नरेन्द्रस्य प्रययुः शीघ्रवाजिभिः ।
[1]समानेतुं नरव्याघ्रं विष्णुमिन्द्राज्ञया यथा ॥ ५ ॥

एवं नरेन्द्रस्य—जनकस्य शासनात् शतानन्दप्रेषिताः प्रययुः । दूता इति शेषः । विष्णुः—उपेन्द्रः ॥ ५ ॥

अज्ञायाऽथ नरेन्द्रस्य आजगाम कुशध्वजः ।
स ददर्श महात्मानं जनकं धर्मवत्सलम् ॥ ६ ॥
अभिवाद्य शतानन्दं राजानं चापि धार्मिकम् ।
राजार्हं परमं दिव्यमासनं सोऽध्यरोहत ॥ ७ ॥

सोऽध्यरोहतेति । पुरोहितज्येष्ठानुमत्येति शेषः ॥ ७ ॥

उपविष्टावुभौ तौ तु भ्रातरावतितेजसौ ।
प्रेषयामासतुर्वीरौ मन्त्रिश्रेष्ठं सुदामनम् ॥ ८ ॥
गच्छ मन्त्रिपते ! शीघ्रमैक्ष्वाकममितप्रभम् ।
आत्मजैस्सह दुर्धर्षमानयस्व समन्त्रिणम् ॥ ९ ॥

सुदामनं क्क प्रेषयामासतुरित्यतः—गच्छेत्यादि ॥ ९ ॥

औपकार्यां स गत्वा तु रघूणां कुलवर्धनम् ।
ददर्श, शिरसा चैनमभिवाद्येदमब्रवीत् ॥ १० ॥

औपकार्यामिति । उपकार्याशब्दात् स्वार्थे ष्यञ् । दशरथशिबिरसन्निवेशमित्यर्थः ॥ १० ॥

---

[1] एतदनन्तरं 'सांकाश्यां ते समागत्य ददृशुश्च कुशध्वजम् । न्यवेदयन्यथावृत्तं जनकस्य च चिन्तितम् ॥ तद्वृत्तं नृपतिः श्रुत्वा दूतश्रेष्ठैर्महाबलैः ॥ इत्यधिकं—ङ ।

अयोध्याधिपते वीर ! वैदेहो मिथिलाधिपः ।
स त्वां द्रष्टुं व्यवसितः सोपाध्यायपुरोहितम् ॥ ११ ॥
मन्त्रिश्रेष्ठवचः श्रुत्वा राजा सर्षिगणस्तदा ।
सबन्धुरगमत्तत्र जनको यत्र वर्तते ॥ १२ ॥
स राजा मन्त्रिसहितः सोपाध्यायः सबान्धवः ।
वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् ॥ १३ ॥

इदं वाक्यमिति । निजकुलप्राशस्त्यप्रतिपादनप्रयोजननिज-पुरोहितनियोजनरूपवक्ष्यमाणवाक्यमित्यर्थः ॥ १३ ॥

विदितं ते, महाराज ! इक्ष्वाकुकुलदैवतम् ।
वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवानृषिः ॥ १४ ॥

ते विदितमिति । 'मतिबुद्धि' इत्यादिना वर्तमानार्थे क्ते 'क्तस्य च वर्तमाने' इति षष्ठी । त्वया विदितं इत्यर्थः । वक्तेति । कृत्याकृत्यानीति यावत् ॥ १४ ॥

*विश्वामित्राभ्यनुज्ञातः सह सर्वैर्महर्षिभिः ।
[1] एष वक्ष्यति धर्मात्मा वसिष्ठो मे यथाक्रमम् ॥ १५ ॥

वक्ष्यतीति । दशपुरुषांविरव्याताादिति न्यायेन यौनसम्बन्धा-पेक्षितवंशपारम्पर्यमिति शेषः ॥ १५ ॥

तूष्णींभूते दशरथे वसिष्ठो भगवानृषिः ।
उवाच वाक्यं वाक्यज्ञो वैदेहं सपुरोधसम् ॥ १६ ॥

---

* विश्वामित्रस्य कोपपरिहाराय—विश्वामित्राभ्यनुज्ञात इति—**गो**। परन्त्वेवं सति सर्वैर्महर्षिभिरिति कथम् ?। अतः ब्रह्मविदां सदसि तदनुज्ञां लब्ध्वेत्यर्थः। तत्र च विश्वामित्रस्य प्रकरणात्प्राधान्यकथनमिति युक्तम् ॥

[1] एतदनन्तरं 'एवमुक्त्वा नरश्रेष्ठे राज्ञां मध्ये महात्मनाम्' इत्यधिकं—ङ.

**अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।**
**तस्मान्मरीचिः संजज्ञे मरीचेः [1]कश्यपः सुतः ॥ १७ ॥**

अव्यक्तेति । सत्त्वादिशक्तिमयसांध्यभूमविग्रहात्मकमादिविष्णु-तत्त्वं अव्यक्तं । यद्यपि अतितुर्यादिरुद्रतत्त्वानामेवानुपग्रहविकल्प-चिद्गगनत्वकालकृतिमात्रोपग्रहत्वतत्कार्याविविक्तत्रिगुणमात्रोपग्रहतोऽव्य-क्तत्वं साक्षात्, अथापि सांध्यत्वादादिविष्णुतत्त्वम[2]प्यनादिब्रह्मतत्त्ववादि-हामुत्रव्यवहारार्हास्थिराव्यक्तमेव । तस्मादव्यक्तात्त्रिशक्तिमयादुत्थितै-स्त्रिरूपकालाकाशैस्त्रिवृत्पञ्चकभक्तैर्हिरण्मयभूममहाविराडण्डोपग्रहो भगवा-नादिगुरुस्त्रिमूर्तिलीलामूर्तिस्तुर्य आदिब्रह्मा स महेशस्सकलसं-सारशाश्वतसकलपुरुषार्थसाक्षात्प्रवर्तको नित्यं जाग्रन्निस्तुलाधिकभूमविधै-श्वर्यानन्दशक्तिर्नित्यं प्रतितिष्ठति । सोऽसौ हिरण्यगर्भादित्रिब्रह्मलीला-मूर्तिरपि शाश्वतत्वादिस्वभावः, स्वराजश्रीहिरण्यगर्भस्य गगनात्मकत्वादेव शाश्वतत्वं—अविकारसदैकरूपत्वं सम्राजः कालाग्निस्वभावत्वेन स्वेतरस-कलसंसारानित्यतासम्पादकस्य तस्यानित्यतासम्पादकहेत्वभावात् नित्य-विराजो यद्यपि कालविकार्यत्वेनानित्यत्वं, अथाप्यव्ययत्वं नित्यनियत-प्रवृत्तत्रिमण्डलीनित्यजाय[3]मानाशयोत्कर्षसासाम्ययोगतः प्रत्यग्वत्काल-त्रयेऽप्यवयवविनाशरहितत्वात् । सिद्धान्तविदेकसुलभोऽयमर्थः । प्रपञ्चः आकरे द्रष्टव्यः । तस्मात् विराजः प्रजापतेः दशप्रजापतिष्वेको मरीचि-र्जज्ञे । ततः काश्यप इत्यादिः ॥ १७ ॥

**विवस्वान् कश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः ।**
**मनुः प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ १८ ॥**

मनुः प्रजापतिरिति । प्रजासर्गाधिकारीति यावत् ॥ १८ ॥

---

[1] काश्यपः—ङ. [2] प्यादि—ग. [3] मानोत्कर्ष—ग.

तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ।
इक्ष्वाकोस्तु सुतः श्रीमान् कुक्षिरित्येव विश्रुतः ॥ १९ ॥
कुक्षेरथात्मजः श्रीमान् विकुक्षिरुदपद्यत ।
विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् ॥ २० ॥
बाणस्य तु महातेजा अनरण्यः प्रतापवान् ।
अनरण्यात्पृथुर्जज्ञे त्रिशङ्कुस्तु पृथोस्सुतः ॥ २१ ॥
त्रिशङ्कोरभवत्पुत्रो *धुन्धुमारो महायशाः ।
धुन्धुमारान्महातेजा युवनाश्वो महारथः ॥
युवनाश्वसुतस्त्वासीत् †मान्धाता पृथिवीपतिः ॥ २२ ॥
मान्धातुस्तु सुतः श्रीमान् सुसन्धिरुदपद्यत ।
सुसन्धेरपि पुत्रौ द्वौ ध्रुवसन्धिः प्रसेनजित् ॥ २३ ॥
यशस्वी, ध्रुवसन्धेस्तु भरतो नाम नामतः ।
भरतात्तु महातेजा असितो नाम जातवान् ॥ २४ ॥
[1]तस्यैते प्रतिराजान उदपद्यन्त शत्रवः ।
हैहयास्तालजङ्घाश्च शूराश्च शशिबिन्दवः ॥ २५ ॥
तांस्तु स प्रतियुध्यन् वै युद्धे राज्यात्प्रवासितः ।

तस्यैत इति । असितस्येत्यर्थः । प्रतिराजानः—शत्रुराजानः । राज्यात्प्रवासित इति । न तु हत इत्यर्थः ॥ २५ ॥

हिमवन्तमुपागम्य [2] भृगुप्रस्रवणेऽवसत् ॥ २६ ॥
असितोऽल्पबलो राजा [3] मन्त्रिभिस्सहितस्तदा ।

---

* अत्र गोविन्दराजीये अनन्तरमर्धं नास्ति । धुन्धुमारः—युवनाश्वापरनामधेय इति च व्याख्यातम् ॥ † अस्य कथा उत्तरकाण्डे सप्तषष्टितमे सर्गे द्रष्टव्या ।

[1] यस्य सर्वत्र—ङ. [2] भार्याभ्यां सहितोऽवसत्—ङ. [3] कालधर्ममुपेयिवान्—ङ.

द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति [1]श्रुतिः ॥ २७ ॥
एका गर्भविनाशाय सपत्न्यै [2]सगरं ददौ ।

इति श्रुतिरिति । पुरातनकथेत्यर्थः । सगरं—गरसहितं । भक्ष्यमिति शेषः ॥ २७ ॥

ततः शैलवरं रम्यं बभूवाभिरतो मुनिः ॥ २८ ॥
भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः ।

ततश्शैलवरं रम्यं हिमवन्तमुपाश्रितो भार्गवश्च्यवनो मुनिः तत्रैव हिमवति अभिरतो बभूव ॥

तत्र चैका महाभागा भार्गवं देववर्चसम् ॥ २९ ॥
ववन्दे पद्मपत्राक्षी काङ्क्षन्ती सुतमात्मनः ।

तत्र चैकेति । प्राशितगरेति यावत् ॥ २९ ॥

तमृषिं साऽभ्युपागम्य कालिन्दी चाभ्यवादयत् ॥ ३० ॥
स *तामभ्यवदद्विप्रः पुत्रेप्सुं पुत्रजन्मनि ।

कालिन्दीति तस्या नाम । अभ्यवादयच्चेति चकारेण शुश्रूषणमप्यकरोत्; पुत्रार्थमित्यर्थः । पुत्रमाप्तुमिच्छुः पुत्रेप्सुः । पुत्र-जन्मनि—पुत्रोत्पत्तिविषये ॥ ३० ॥

तव कुक्षौ महाभागे ! सुपुत्रः सुमहाबलः ॥ ३१ ॥
महावीर्यो महातेजाः अचिरात्सञ्जनिष्यति ॥
[3]गरेण सहितः श्रीमान् मा शुचः कमलेक्षणे ॥ ३२ ॥

---

*तामभि—तां प्रतीत्यर्थः ।

[1] श्रुतम्—ङ. [2] सा गरं—ङ. [3] एतदनन्तरं—एवमुक्ता महाभागा, असिते स्वर्गते सति । निधाय चेतो नृपतौ विद्युल्लेखेव सुप्रभा ॥ ३५ ॥—इत्यधिकं—ङ.

गरेण सहितस्सन् जनिष्यतीति मुनेः प्रासानुग्रहात् । तत्पुत्रकालमृतपतिकां ऋषिराश्वासयति च—माशुच इति । पतिमृतिजशोकंत्यज ; सुपुत्रेणैव सुखीभविष्यसीत्याश्वासयत् ॥ ३२ ॥

च्यवनं तु नमस्कृत्य राजपुत्री पतिव्रता ।
[1]पतिना रहिता *तस्मात् पुत्रं देवी व्यजायत ॥ ३३ ॥

अनन्तरं—च्यवनं तु नमस्कृत्य, पतिना रहितेति नाभावश्छान्दसः, तस्मात्—देशादपावृत्तेति शेषः । व्यजायत—प्रसूतवती ॥ ३३ ॥

सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ।
सह तेन गरेणैव जातः स सगरोऽभवत् ॥ ३४ ॥

जातस्स इति । यतो गरेण सह जातः ततः सगर इति योजना ॥

सगरस्यासमञ्जस्तु असमञ्जात्तथांऽशुमान् ।
दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः ॥ ३५ ॥
भगीरथात्ककुत्स्थश्च ककुत्स्थस्य रघुस्सुतः ।
रघोस्तु पुत्रस्तेजस्वी †प्रवृद्धः पुरुषादकः ॥ ३६ ॥
कल्माषपादो ह्यभवत्तस्माज्जातश्च शङ्खणः ।

रघुपुत्रः प्रवृद्धस्तु वसिष्ठशापवशात् पुरुषादकः—राक्षसस्सम भवत् । प्रतिशापायोद्धृतजलं स पत्न्यनुनयेन स्वपादयोर्विसृष्टवान् । अतः स कल्माषपाद इत्यभवत् ॥ ३६ ॥

---

* तस्मात्—च्यवनप्रसादात्—गो. ति. शि. † एतत्कथा उत्तरकाण्डे पञ्चषष्टितमसर्गे वर्तते। परं तु तत्र, भागवते च (९—९)—सुदासस्य पुत्रः वीरसहः कल्माषपादः संपन्न इत्युक्तम् । [1] पतिशोकातुरा—पत्या विरहिता—ङ.

सुदर्शनः शङ्खणस्य अग्निवर्णः सुदर्शनात् ॥ ३७ ॥
शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरुः सुतः ।
मरोः प्रशुश्रुकस्त्वासीदम्बरीषः प्रशुश्रुकात् ॥ ३८ ॥
अम्बरीषस्य पुत्रोऽभून्नहुषः पृथिवीपतिः ।
नहुषस्य ययातिश्च नाभागस्तु ययातिजः ॥ ३९ ॥
नाभागस्य बभूवाज अजाद्दशरथोऽभवत् ।
अस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ ॥ ४० ॥

नाभागस्याजः, अजाद्दशरथ इति । * एवमत्रोक्तवंशपरम्परायां पुराणादिवैषम्यं बह्वस्ति । तत्सर्वं चतुर्युगसहस्रमानभगवद्ब्रह्मदिने किञ्चित्किञ्चिद्युगभेदवशजं इति ध्येयम् ॥ ४० ॥

आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् ।
इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् ॥ ४१ ॥

आदिवंशेति । आदितः—ब्रह्माणमारभ्य वंशेन विशुद्धास्तथा ॥ ४१ ॥

रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप !
सदृशाभ्यां नरश्रेष्ठ ! [1] सदृशे दातुमर्हसि ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे सप्ततितमस्सर्गः

---

त्वत्सुते वरय इति । पुरोहितकृत्यत्वाद्वरणादेरित्याशयः । सदृशेति । 'समानान्ययोश्चेति वक्तव्यम्' इति दृशेः कञि 'टिड्ढाणञ्' इति ङीबभावश्छान्दसः । समानस्य 'ज्योतिर्जनपद' इत्यादिना विधीयमानस्य सादेशस्य प्रायिकत्वादन्यत्रापि सादेशः ॥ ४२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे सप्ततितमस्सर्गः

---

* एकस्यानेकनामकत्वाद्वा विरोधपरिहारः—ति. [1] सदृशे—ङ.

अथ एकसप्ततितमः सर्गः

[निमिवंशवर्णनम्]

एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः ।
श्रोतुमर्हसि, भद्रं ते, कुलं नः परिकीर्तितम् ॥ १ ॥

अथ दशरथापेक्षया *अप्रभावात्, कन्यादातृत्वेन च जामातृवर्गे प्रभावस्यायुक्तत्वाच्च स्वयमेव स्ववंशपरम्परामाचष्टे—एवमित्यादि । ब्रुवाणमिति । वसिष्ठमिति शेषः ॥ १ ॥

प्रदाने हि [1] नरश्रेष्ठ ! कुलं निरवशेषतः ।
वक्तव्यं कुलजातेन तन्निबोध महामुने ! ॥ २ ॥

नरश्रेष्ठानां कुलं—नरश्रेष्ठकुलं ॥ २ ॥

राजाऽभूत् त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा ।
†निमिः परमधर्मात्मा सर्वसत्त्ववतां वरः ॥ ३ ॥
तस्य पुत्रो मिथिर्नाम निर्मिता [2] मिथिला यतः ।
प्रथमो जनको नाम जनकादप्युदावसुः ॥ ४ ॥

तस्य पुत्र इति । तस्य निमेः साम्पराये सति ऋषिभिस्तदुरोमथनेन निर्मितः—उत्पादितो मिथिर्नाम जज्ञे । यतः—येन मिथिना मिथिला पुरी च निर्मिता, स जज्ञे । तथा भागवते ज्ञेयम्—"ममन्थ स निमेर्देहं कुमारस्समजायत" इति ॥ ३-४ ॥

---

* अप्रभावः—प्रभावराहित्यम् .　† अयं च निमिः इक्ष्वाकुपुत्र इति उत्तरकाण्डे ५५ सर्गे उक्तम् ॥　श्रीभागवते च (९—१३) द्रष्टव्यम् ।

[1] मुनिश्रेष्ठ—ङ. च.　[2] मिथिला येन निर्मिता—ङ. ज.

[1] उदावसोस्तु धर्मात्मा जातो वै नन्दिवर्धनः ।
[2] नन्दिवर्धनपुत्रस्तु सुकेतुर्नाम नामतः ॥ ५ ॥
सुकेतोरपि धर्मात्मा देवरातो महाबलः ।
देवरातस्य राजर्षेर्बृहद्रथ इति स्मृतः ॥ ६ ॥
बृहद्रथस्य शूरोऽभून्महा[3]वीरः प्रतापवान् ।
महा[4]वीरस्य धृतिमान् सुधृतिस्सत्यविक्रमः ॥ ७ ॥
सुधृतेरपि धर्मात्मा [5] दुष्टकेतुस्सुधार्मिकः ।
[6] दुष्टकेतोस्तु राजर्षेर्हर्यश्व इति विश्रुतः ॥ ८ ॥
हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः [7] प्रतिन्धकः ।
[8] प्रतिन्धकस्य धर्मात्मा राजा कीर्तिरथस्सुतः ॥ ९ ॥
पुत्रः कीर्तिरथस्यापि देवमीढ इति स्मृतः ।
देवमीढस्य [9] विबुधो विबुधस्य महीध्रकः ॥ १० ॥
महीध्रकसुतो राजा कीर्तिरातो महाबलः ।
कीर्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥ ११ ॥
महारोम्णस्तु धर्मात्मा स्वर्णरोमा व्यजायत ।
स्वर्णरोम्णस्तु राजर्षेर्ह्रस्वरोमा व्यजायत ॥ १२ ॥
तस्य पुत्रद्वयं जज्ञे धर्मज्ञस्य महात्मनः ।
ज्येष्ठोऽहमनुजो भ्राता मम वीरः कुशध्वजः ॥ १३ ॥

तस्येति । ह्रस्वरोम्णः इत्यर्थः ॥ १३ ॥

मां तु ज्येष्ठं पिता राज्ये सोऽभिषिच्य नराधिपः ।
कुशध्वजं समावेश्य * भारं मयि, वनं गतः ॥ १४ ॥

---

* भारं—भरणीयं-पोषणीयमित्यर्थः । मयि कुशध्वजं भारं समावेश्येत्यन्वयः ।

[1] उपावसोस्तु—ङ. [2] नन्दिवर्धसुतः शूरः—ङ. [3] वीर्यः—ङ. [4] वीर्यस्य—ङ. [5] धृष्टकेतोस्तु—ङ. [6] धृष्टकेतु—ङ. [7] प्रतीन्धकः, प्रतीन्धनः—ङ. [8] प्रतीन्धकस्य, प्रतीन्धनस्य—ङ. [9] सुविधो सुविधस्य—ङ.

कुशध्वजं राज्यभारं च मयि समावेश्येत्यर्थः। सीरध्वजाख्य इत्यर्थः। "सीता सीराग्रतो जाता तस्मात्सीरध्वजः स्मृतः" इति *पुराणम् ॥ १४ ॥

**वृद्धे पितरि स्वर्याते धर्मेण धुरमावहम्।**
**भ्रातरं देवसङ्काशं स्नेहात्पश्यन् कुशध्वजम् ॥ १५ ॥**

**कस्य चित्त्वथ कालस्य सांकाश्यादगमत्पुरात्।**
**सुधन्वा वीर्यवान् राजा मिथिलामवरोधकः ॥ १६ ॥**

†मिथिलामवरोधकः अगमदिति। अवरोद्धुमागतवानित्यर्थः। 'तुमुण्वुलौ क्रियायां क्रियार्थायाम्' इति ण्वुल्। 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति कर्माणि षष्ठीनिषेधः ॥ १६ ॥

**स च मे प्रेषयामास, शैवं धनुरनुत्तमम्।**
**सीता कन्या च पद्माक्षी मह्यं वै दीयतामिति ॥ १७ ॥**

शैवं धनुस्सीता कन्या चेति उभयं मह्यं दीयतामिति प्रेषयामास। दूतानिति शेषः ॥ १७ ॥

**तस्याप्रदानाद्ब्रह्मर्षे! युद्धमासीन्मया सह।**
**स हतोऽभिमुखो राजा सुधन्वा तु मया रणे ॥ १८ ॥**

तस्येति। उक्तोभयवस्तुन इत्यर्थः। अभिमुखः—युद्धाभिमुखः। ‡सुधन्वेति। 'वा संज्ञायां' इत्यानङ् ॥ १८ ॥

---

* भागवतं—९-१३-१०. † मिथिलामवरोधकः मिथिलामगमत्—प्राप्तवान्।
‡ वस्तुतस्त्विदं व्याख्यानं १६ तमश्लोकव्याख्यानावसरे युक्तम्।

निहत्य तं मुनिश्रेष्ठ! सुधन्वानं नराधिपम्।
साङ्काश्ये भ्रातरं वीरमभ्यषिञ्चम् कुशध्वजम्॥ १९॥
कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने!
ददामि परमप्रीतो वध्वौ ते मुनिपुङ्गव!॥ २०॥
सीतां रामाय, भद्रं ते, *ऊर्मिळां लक्ष्मणाय च॥ २१॥

ऊर्मिलामिति। योनिजां निजपुत्रीमित्यर्थः॥ २१॥

वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम्।
[1] द्वितीयामूर्मिलां चैव त्रिर्ददामि न संशयः॥ २२॥

त्रिर्ददामीति। उक्तार्थमितिशेषः। 'त्रिषत्या हि देवाः' इति न्यायादित्याशयः॥ २२॥

†रामलक्ष्मणयो राजन्! गोदानं कारयस्व ह।
पितृकार्यं च, भद्रं ते, ततो वैवाहिकं कुरु॥ २३॥

‡गोदानमिति कर्मनाम। गावो रोमाणि, दोःपन्मूलगान्यपि, यत्र दीयन्ते खण्ड्यन्ते तदेतत् गोदानम्, समावर्तनकर्मेति यावत्। वैवाहिकं--पितृकार्यं नान्दीश्राद्धम्॥ २३॥

---

* यद्यपि रामेणैव धनुर्भङ्गः कृतः, तथापि तादृशशक्तेः लक्ष्मणेऽपि दर्शनात् तद्वीर्यमेवोर्मिलाया अपि शुल्कमित्यर्थः। हे मुनिपुङ्गव–ते वध्वौ परमप्रीतो ददामीत्यन्वयः। एतदेव विवृणोति उत्तरार्धेन। † एवं वसिष्ठे प्रत्युक्त्वा ततः दशरथं प्रत्याह–रामेत्यादि। ‡ गोदानं नाम विवाहपूर्वसमनियतं किञ्चित्कर्म। गावः—केशाः दोः पादमूल रोमाणि च यत्र खण्ड्यन्ते तत् गोदानं नाम समावर्तनाख्यं कर्मेत्याहुः–गो.

[1] एतदनन्तरं 'ददामि परमप्रीतो वध्वौ ते रघुनन्दन' इत्यधिकं क्वचित्–ङ.

मघा ह्यद्य महाबाहो! *तृतीये दिवसे विभो।
फल्गुन्यामुत्तरे राजंस्तस्मिन्वैवाहिकं कुरु।
रामलक्ष्मणयो राजन्! दानं कार्यं सुखोदयम् ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे एकसप्ततितमस्सर्गः

ततो वैवाहिकं—विवाहप्रयोजनं विचित्रवस्त्राभरणाद्यलंकारादिलक्षणं; 'तदस्य प्रयोजनम्' इति ठक्। मघानक्षत्रयुक्तः कालः मघः,' चन्द्रः। अत्रार्थजस्याणस्तु 'लुबविशेषे' इति लुप्। फल्गुन्यामुत्तर इति। उत्तरस्यामिति यावत्। रामलक्ष्मणयोरर्थे—प्रजाधर्मप्रयोजनाय सुखोदयं, व्याकृतं, दानं—कन्यादानमवश्यं कार्यमिति उपसंहारः। भद्र (२४) मानः सर्गः॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे एकसप्ततितमस्सर्गः

## अथ द्विसप्ततितमः सर्गः

### [कन्यावरणम्]

तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः।
उवाच वचनं वीरं वसिष्ठसहितो नृपम् ॥ १ ॥

---

* तव मिथिलाप्रवेशात् तृतीयदिवसे, यज्ञसमाप्तेः तृतीयदिवसे वाऽद्य मघानक्षत्रम्। फल्गुन्यां—पूर्वफल्गुनीनक्षत्रे, उत्तरे—श्रेष्ठे; अत एव—भगो यत्र प्रजापतिः इत्यनेनाविरोधः। भगो हि पूर्वफल्गुनीदेवः उत्तरफल्गुन्यास्त्वर्यमेति बोध्यम्, 'मघा नक्षत्रं पितरो देवताः; फलगुनी नक्षत्रं, अर्यमा देवता; फल्गुनी लक्षत्रं, भगो देवता' इति तैत्तरीयसंहितायां 'अर्यम्णः पूर्वे फल्गुनी, भगस्योत्तरे' इति तद्ब्राह्मणे चोक्तत्वात् यथाश्रुतमेव सम्यक्-ति.। अद्य—अस्मिन् दिवसे मघा नक्षत्रमस्ति, अतः तृतीयदिवसे उत्तरे फलगुन्यां—उत्तरफलगुन्यां—शि·

रामलक्ष्मणयोः विवाहप्रसङ्गे भरतशत्रुघ्नयोरपि विवाहप्रस्तावः—तमुक्तवन्तमित्यादि ॥ १ ॥

**अचिन्त्यान्यप्रमेयानि कुलानि नरपुङ्गव !**
**इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ॥ २ ॥**

**सदृशो धर्मसम्बन्धः सदृशो रूपसंपदा ।**
**रामलक्ष्णयो राजन् ! सीता चोर्मिलया सह ॥ ३ ॥**

इक्ष्वाकूणां विदेहानां च धर्मसम्बन्धः—धर्माय सम्बन्धो यौनलक्षणस्तु सदृश एव—अनुरूप एव। अपि च या सीता ऊर्मिळया सह वर्तमाना तस्यास्तस्याश्च क्रमात् रामलक्ष्मणयोः सम्बन्धः—पतिभार्यासम्बन्धः रूपसम्पदा सदृश इति योजना ॥ ३ ॥

**वक्तव्यं च नरश्रेष्ठ ! श्रूयतां वचनं मम ॥ ४ ॥**

हे नरश्रेष्ठ—जनक ! किंचिदन्यदपि वक्तव्यं अस्ति । तदपि मे वचः श्रूयतम् ॥ ४ ॥

**भ्राता यवीयान् धर्मज्ञ ! एष राजा कुशध्वजः ।**
**अस्य धर्मात्मनो राजन् ! रूपेणाप्रतिमं भुवि ।**
**सुताद्वयं नरश्रेष्ठ ! पत्न्यर्थं वरयामहे ॥ ५ ॥**

किं तदित्यतः—भ्रातेत्यादि ॥ ५ ॥

**भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः ।**
**[1]वरयामः सुते राजंस्तयोरर्थे महात्मनोः ॥ ६ ॥**

पत्न्यर्थं वरयाम इति, कयोः पत्न्यर्थमित्यतः—भरतस्येत्यादि ॥ ६ ॥

---

[1] वरये ते सुते, वरयाम सुते—ङ. ज.

पुत्रा दशरथस्येमे रूपयौवनशालिनः ।
लोकपालोपमास्सर्वे देवतुल्यपराक्रमाः ॥ ७ ॥

दशरथपुत्रेषु न कस्मिन्नपि वरगुणन्यूनताशङ्केत्याह—पुत्रा इत्यादि ॥ ७ ॥

*उभयोरपि राजेन्द्र! सम्बन्धेनानुबध्यताम् ।
इक्ष्वाकोः कुलमव्यग्रं भवतः पुण्यकर्मणः ॥ ८ ॥

यदेवमुभयकुलवधूवरयोर्नानाप्रकारतः सम्बन्धानुरूप्यं अतः—उभयोरपीत्यादि । कुलयोरित्यर्थः । सम्बन्धः—यौनसम्बन्धः । अनुबध्यतां । सम्पाद्यतामिति यावत् । भवतः पुण्यकर्मण इति । कुलमव्यग्रमिति अनुकर्षः ॥ ८ ॥

विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा ।
जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुङ्गवौ ॥ ९ ॥

वसिष्ठस्य मत इति । वसिष्ठस्याभिमतप्रयोजननिमित्तमुक्तविश्वामित्रवचः श्रुत्वेति योजना ॥ ९ ॥

कुलं धन्यमिदं मन्ये येषां नो मुनिपुङ्गवौ ।
सदृशं कुलसम्बन्धं यदाज्ञाप[1]यथः स्वयम् ॥ १० ॥

स्वयमिति । न शिष्यादिमुखत इत्यर्थः ॥ १० ॥

---

* उभयोर्भ्रात्रोः (जनककुशध्वजयोः) सम्बन्धेन इक्ष्वाकुकुलं सम्बध्यताम् । तत्र च सम्बन्धे पुण्यकर्मणो भवतः चित्तमव्यग्रं भवतु ; कथमीदृशेन महाराजेन मया-युगपत्सम्बन्धचतुष्टयं कार्यमिति व्यग्रता मास्त्वित्यर्थः-ति. उभयोर्युवयोः सम्बन्धेन कुलद्वयमप्यनुबध्यतां—भवतः कुलमित्यनुकर्षः, अव्यग्रं—निर्दोषं, अन्योन्यसम्बन्धेनान्योन्यमुत्कर्षं प्राप्नुयादित्यर्थः-गो. [1] यतः-ङ. ज.

**एवं भवतु, भद्रं वः, कुशध्वजसुते इमे ।**
**पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥ ११ ॥**

पत्न्यौ—पत्नीत्वापन्नौ । सहितौ—अश्विनाविव, रामलक्ष्मणाविव परस्परनित्यसहचरौ । क्रमादिति शेषः ॥ ११ ॥

**एकाह्ना राजपुत्रीणां चतसॄणां महामुने !**
**पाणीन् गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ॥ १२ ॥**

एकाह्नेति । अजभाव आर्षः । सप्तम्यर्थे तृतीया । एकदिवस इति यावत् । चतसॄणामिति । 'छन्दस्युभयथा' इति पक्षे दीर्घः ॥

**उत्तरे दिवसे ब्रह्मन् ! फल्गुनीभ्यां मनीषिणः ।**
**वैवाहिकं प्रशंसन्ति *भगो यत्र प्रजापतिः ॥ १३ ॥**

उत्तर इत्यादि । फल्गुनीभ्यामुपलक्षितयोर्दिवसयोरुत्तरस्मिन्दिवसे । उत्तरफल्गुन्यामित्यर्थः । अस्य विवाहकर्मणि प्रशस्तता कुत इत्यत्र—भग इत्यादि । भगः—प्रसिद्धप्रजोत्पत्तिसाधनयोनिलिङ्गाधिष्ठाता भगवान्प्रजापतिर्यतो देवता उत्तरफल्गुन्याः, यतश्च प्रजाग्निहोत्रार्थं दारकर्म, अतः प्रजायज्ञसृक्तत्पतिभगवन्नक्षत्रत्वात् प्राशस्त्यमित्यर्थः ॥ १३ ॥

**एवमुक्त्वा वचस्सौम्यं प्रत्युत्थाय कृताञ्जलिः ।**
**उभौ मुनिवरौ राजा जनको वाक्यमब्रवीत् ॥ १४ ॥**
**परो धर्मः कृतो मह्यं शिष्योऽस्मि भवतोः सदा ॥ १५ ॥**

---

* यत्र—ययोः भगः प्रजापतिरर्यमा च स्थितः ताभ्यां फल्गुनीभ्यां पूर्वफल्गुन्युत्तरफल्गुनीभ्यां विशिष्टयोर्दिवसयोः उत्तरे—उत्तरफल्गुनीविशिष्टे दिवसे—**शि.** उत्तरे—फल्गुनीभ्यां उपलक्षितयोरुत्तरस्मिन् दिवसे— उत्तरफल्गुन्यामित्यर्थः—**गो.**

परो धर्म इति। कन्याप्रदानधर्म इत्यर्थः। अहं भवतोः शिष्योऽस्मि। दशरथश्च सुतरामिति शेषः ॥ १५ ॥

*इमान्यासनमुख्यानि [1]†आसेतां मुनिपुङ्गवौ।
‡यथा दशरथस्येयं तथाऽयोध्या पुरी मम।
प्रभुत्वे नास्ति सन्देहो [2]यथार्हं कर्तुमर्हथ ॥ १६ ॥

यदेवमतः—इमानीत्यादि। मम दशरथस्य च यानि आसनमुख्यानि—सिंहासनानि तानि युवां आसेतां—व्यत्ययात्परस्मैपदे शनि प्रार्थनायां लिङि प्रथमपुरुषद्विवचनं—अधितिष्ठतामिति यावत्। राज्यत्रयमपि युष्मदीयमित्यर्थः। ननु कथं दशरथसिंहासनं त्वया शक्यदानमित्यत्राह—यथेत्यादि। इयं मिथिला यथा दशरथस्य यथेष्टविनियोगार्हा, ऐक्यात्, एवमयोध्यापुरी च मम यथेष्टविनियोगार्हा। यदेवमतो युष्माकं §त्रिसिंहासनप्रभुत्वे तु नास्ति सन्देहः। अतो यथार्हं—यथोचितं प्रभुत्वकर्म अर्हथ, पूजार्थे बहुवचनम् ॥ १६ ॥

तथा ब्रुवति वैदेहे जनके रघुनन्दनः।
राजा दशरथो हृष्टः प्रत्युवाच महीपतिम् ॥ १७ ॥

हृष्ट इति। एवमैक्यवादेनेति शेषः ॥ १७ ॥

---

* इमानि—मत्समर्पितानि आसनमुख्यानि—गुरूचितासनानि—गुरूत्वादासनयोर्बहुत्वं, आसनबाहुल्याद्वा—चि. † आसातां—पुरुषव्यत्यय आर्षः—गो. ‡ 'आत्माऽपि चायं न मम सर्वा वा पृथिवीमम' (वि. पु.) इतीदृशज्ञानी खलु जनकः। § कुशध्वज जनक दशरथाः—त्रयः।

[1] आसातां, आस्यतां, आस्येतां—ङ. च. ज. [2] यथेष्टं—ङ.

युवामसङ्ख्येयगुणौ भ्रातरौ मिथिलेश्वरौ ।
ऋषयो राजसङ्घाश्च भवद्भ्यामभिपूजितः ॥ १८ ॥

महद्विषये समग्रसत्कारो युष्माकं कुलधर्मः इति नायमपूर्वोऽर्थ इति दशरथः स्तौति—युवामित्यादि ॥ १८ ॥

*स्वस्ति प्राप्नुहि, भद्रं ते, गमिष्यामि स्वमालयम् ।
श्राद्धकर्माणि सर्वाणि विधास्यामीति चाब्रवीत् ॥ १९ ॥
[1]तमापृच्छ्य नरपतिं राजा दशरथस्तदा ।
मुनीन्द्रौ तौ पुरस्कृत्य जगामाशु महायशाः ॥ २० ॥

आपृच्छ्य—आभाष्य ॥ २० ॥

स गत्वा निलयं राजा श्राद्धं कृत्वा विधानतः ।
प्रभाते †काल्यमुत्थाय चक्रे गोदानमुत्तमम् ॥ २१ ॥

निश्चयं—चतुर्णां विवाहनिश्चयं । काल्यं—प्रातःकालार्हं । गोदानं व्याकृतं । समावर्तनमिति यावत् ॥ २१ ॥

गवां शतसहस्राणि ब्राह्मणेभ्यो नराधिपः ।
‡एकैकशो ददौ राजा पुत्रानुद्दिश्य धर्मतः ॥ २२ ॥
[2]सुवर्णशृङ्गाः संपन्नाः सवत्साः कांस्यदोहनाः ।
गवां शतसहस्राणि चत्वारि पुरुषर्षभः ॥ २३ ॥

---

* क्षत्रियत्वेऽपि प्रतिग्रहीतृत्वात् दातरि जनके आशीः–ति. त्वं स्वस्ति प्राप्नुहि स्वसुतादानेन मङ्गलं प्रापय, अन्तर्भावितणिजर्थः–शि. † काल्यं-मङ्गलं गोदानमिति केचित्.–झ. ‡ एकैकश इत्यार्षम्–ति । एकैकशः पुत्रानुद्दिश्य—‘उक्तार्थानां’ इति न्यायाप्रवृत्तिस्तु ‘द्वौ ब्राह्मणौ’ इत्यादाविव ‘द्विर्बद्धं सुबद्धं भवति’ इति स्वीकारात् । आर्ष इत्युक्तिस्तु तदविचारमूला–शि ।

[1] तमापृष्ट्वा. [2] सुवर्णशृङ्गयः–ङ.

तदङ्गत्वेन प्रसिद्धगोदानम्—गवां शतेत्यादि। कांस्यदोहना इति बहुव्रीहिः। अधिकरणे ल्युट्। कंसीयस्य विकाराणि, 'कंसीय-परशव्ययोर्यञञौ लुक् च' इति यञ्। सन्नियोगप्राचीनप्रत्ययस्य लुक्। शतसहस्रं—लक्षम् ॥ २३ ॥

वित्तमन्यच्च सुबहु द्विजेभ्यो रघुनन्दनः।
ददौ गोदानमुद्दिश्य पुत्राणां पुत्रवत्सलः ॥ २४ ॥
स सुतैः कृतगोदानैर्वृतस्तु नृपतिस्तदा।
लोकपालैरिवाभाति वृतः* सौम्यः प्रजापतिः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे द्विसप्ततितमः सर्गः

सौम्यः—सोममण्डलाधिष्ठातृदेवता। 'सोमाट्ट्यण्'। मख (२५) मानः सर्गः ॥ २५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे द्विसप्ततितमः सर्गः

## अथ त्रिसप्ततितमः सर्गः

[सीतादीनां विवाहः]

यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम्।
तस्मिंस्तु दिवसे शूरो युधाजित्त्वभ्युपेयिवान् ॥ १ ॥

अथ संप्राप्तसर्वबन्धुकस्य दशरथस्य सुतविवाहकर्मनिर्वृत्तिः—यस्मिन्नित्यादि। अभ्युपेयिवानिति। दशरथमिति शेषः ॥ १ ॥

---

* सोम इव सोम्यः, सोम्य एव सौम्यः-ति. सौम्यः-सोमः प्रजापतिरिव-सोमशब्दः स्वार्थष्यञन्तः-शि. सौम्यः-सुप्रसन्नचित्तः-गो.

पुत्रः [1] केकयराजस्य साक्षाद्भरतमातुलः ।
दृष्ट्वा पृष्ट्वा च कुशलं राजानमिदमब्रवीत् ॥ २ ॥
केकयाधिपती राजा स्नेहात् कुशल*मब्रवीत् ।
येषां कुशलकामोऽसि तेषां संप्रत्यनामयम् ॥ ३ ॥

स्नेहात्कुशलमब्रवीदिति । युष्मान् प्रतीति शेषः । अपि च येषां—अस्माकं त्वं कुशलकामोऽसि तेषां अस्माकपि संप्रत्यनामयमिति चाब्रवीत् ॥ ३ ॥

† स्वस्रीयं मम, राजेन्द्र! द्रष्टुकामो महीपतिः ।
तदर्थमुपयातोऽहमयोध्यां रघुनन्दन! ॥ ४ ॥
श्रुत्वा त्वहमयोध्यायां विवाहार्थं तवात्मजान् ।
मिथिलामुपयातांस्तु त्वया सह महीपते!
[2] त्वरयाऽभ्युपयातोऽहं द्रष्टुकामः स्वसुः सुतम् ॥ ५ ॥

स्वसुरपत्यं ‡स्वस्रीयः । 'स्वसुश्छः' ।—त्वरयाऽभ्युपयातोऽस्मि, सोऽयमयोध्यायामदृष्ट्वेह द्रष्टुकाम उपयातोऽस्मीति योजना । उपयात इति कर्तरि निष्ठा ॥ ५ ॥

अथ राजा दशरथः प्रियातिथिमुपस्थितम् ।
दृष्ट्वा परमसत्कारैः पूजनार्हमपूजयत् ॥ ६ ॥

---

* अब्रवीत्—अपृच्छदित्यर्थः. † मम स्वस्रीयं—भरतं द्रष्टुकामः महीपतिः केकयराजो वर्तते । अतः भरतनयनायाहमुपयात इत्यर्थः । अयोध्यायां तु तवात्मजान् विवाहार्थं त्वया सह मिथिलामुपयातान् श्रुत्वा त्वरयाऽत्राभ्युपयात इत्यन्वयः ॥ ‡ भरत इत्यर्थः.

[1] कैकय—ङ. [2] एतदनन्तरं—तस्य त्वं राजशार्दूल प्रीतिं कर्तुमिहार्हसि । तस्य तद्वचनं श्रुत्वा मधुरं मधुराक्षरम । इत्यधिकं—ङ.

ततस्तामुषितो रात्रिं सह पुत्रैर्महात्मभिः ।
प्रभाते पुनरुत्थाय कृत्वा कर्माणि कर्मवित् ॥ ७ ॥
ऋषींस्तदा पुरस्कृत्य यज्ञवाटमुपागमत् ।

यज्ञवाटं—यज्ञशालां । उपागमादिति । तत्समीपं प्राप्तवानित्यर्थः । प्रवेशो जनकानुमत्याऽग्रे भविष्यति ॥ ७ ॥

युक्ते मुहूर्ते विजये सर्वाभरण[1]भूषितैः ॥ ८ ॥
भ्रातृभिस्सहितो रामः कृतकौतुकमङ्गलः ।
[2]वसिष्ठं पुरतः कृत्वा महर्षीनपरानपि ॥ ९ ॥

युक्ते—शुभलग्नादिगुणयुक्ते, विजये—*विजयप्रदे, विजया[3]ख्ये च । पुरतः कृत्वा उपागमदित्यनुकर्षः ॥ ९ ॥

वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत् ।

भगवानेत्येत्यादि । यज्ञवाटान्तर्वर्तिनमिति शेषः ॥ ९ ॥

राजा दशरथो राजन् ! कृतकौतुकमङ्गलैः ॥ १० ॥
पुत्रैर्नरवर[4] श्रेष्ठ ! दातारमभिकाङ्क्षते ।

कृतेति । कृतकौतुकसूत्रधारणरूपाणि मङ्गळानि यैस्ते तथा । दातारं, त्वामिति शेषः ॥ १० ॥

दातृप्रतिग्रहीतृभ्यां सर्वार्थाः प्रभवन्ति हि ॥ ११ ॥
स्वधर्मं प्रतिपद्यस्व कृत्वा वैवाह्यमुत्तमम् ।

---

* विजयप्रदे न तु विजयाख्ये ; तस्यापराह्णिकत्वात् ।—गो.

[1] भूषितः—ङ. [2] एतदनन्तरं 'पितुस्समीपमाश्रित्य तस्थौ भ्रातृभिरावृतः' इत्यधिकं—ङ. [3] र्थे—क. [4] श्रेष्ठैः—ङ.

दातृप्रतिग्रहीतृभ्यामिति । योग इति शेषः । सर्वार्थाः—दानधर्मादयः । हि—यस्मादेवं तस्मात् स्वसाध्यो धर्मो दानरूपः । विवाहोपयुक्तं कर्म लौकिकालौकिकं—वैवाह्यं । ष्यञ् छान्दसः ॥ ११ ॥

**इत्युक्तः परमोदारो वसिष्ठेन महात्मना ॥ १२ ॥**
**प्रत्युवाच महातेजा वाक्यं परमधर्मवित् ।**

परमोदारः—परमदाता ॥ १२ ॥

**कः स्थितः *प्रतिहारो मे कस्याज्ञा सम्प्रती[1]क्ष्यते ॥ १३ ॥**
**स्वगृहे को विचारोऽस्ति यथा राज्यमिदं तव ।**

कः स्थित इति । कः प्रतिहारः स्थितः । येन द्रागगमनं परिह्रियत इति शेषः । अपि चागत्य वा कस्याज्ञा संप्रतीक्ष्यते । कुत एवमित्यतः—स्वगृह इत्यादि । स्वगृहत्वमेव कथमित्यतः—यथेत्यादि । इमान्यासनमुख्यानि आसेतामिति यथोक्तरीत्या इदं राज्यमेव तव । स्वगृहे मम गृहमात्रस्वीयत्वे को विचार इत्यर्थः ॥ १३ ॥

**कृतकौतुकसर्वस्वा वेदिमूलमुपागताः ॥ १४ ॥**
**मम कन्या मुनिश्रेष्ठ ! दीप्ता वह्नेरिवार्चिषः ।**

अपि च कृतस्वकर्तव्येन मयैव युष्मत्प्रतीक्षा क्रियत इत्याह—कृतेत्यादि । कृतं कौतुकसर्वस्वं–वैवाहिककृत्स्नमंगळानुष्ठानं याभिस्तास्तथा । वेदिमूलं–यज्ञवेदिसमीपं ॥ १४ ॥

---

* प्रतिहारः—द्वारपालः—**गो.**

[1] क्षते—**ङ. ज.**

[1]सज्जोऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः॥ १५ ॥
[2]अविघ्नं कुरुतां राजा [3]किमर्थमवलम्बते ।

अविघ्नं—अविळम्बं यथा तथा कुरुताम्, विवाहकर्मेति शेषः । अवलम्बते–विळम्बते । द्वारावस्थानेनेति शेषः ॥ १५ ॥

तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा ॥ १६ ॥
[4]प्रवेशयामास सुतान् सर्वानृषिगणानपि ।

श्रुत्वेति । वसिष्ठमुखादिति शेषः ॥ १६ ॥

ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् ॥ १७ ॥
कारयस्व ऋषे! सर्वामृषिभिः सह धार्मिक !
[5]रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो! ॥ १८ ॥

लोका रमन्ते अस्मिन्निति लोकरामः ॥ २३ ॥

तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः ।
विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् ॥ १९ ॥

---

[1] सद्योऽहं–ङ.   [2] अविघ्नंकुरुतां ब्रह्मन्–ङ.   [3] किमर्थं हि विलम्ब्यते–ङ.
[4] एतदनन्तरं—‘ विश्वामित्रो महातेजा विदेहाधिपतेः करम् । कुशध्वजस्य हस्तं च वसिष्ठो भगवानृषिः । गृहीत्वा प्राविशच्छिष्यैः सहितौ द्विजपुङ्गवौ ॥ अथ राजा दशरथः पुत्रैः स्त्रीभिश्च संवृतः । सर्वानृषीन् पुरस्कृत्य प्रविवेश महाद्युतिः ॥ प्रवेश्यमानं राजानं वसिष्ठं गाधिनः सुतम् । सर्वान्नृपवरान् विप्रान् जनको धर्मवत्सलः ॥ वस्त्राभरणैश्चैव गन्धपुष्पैश्च साक्षतैः । पूजयामास विधिवद्यथायोग्यं यथाक्रमम् ॥ इत्यधिकं क्वचित्–ङ. [5]एतदनन्तरं—त्वया न विदितं किंचित् नास्ति ब्रह्मविदां वर ! । तस्मात्त्वमेवब्रह्मर्षे ! अशेषं कर्तुमर्हसि ॥ इत्यधिकं–ङ.

[1] प्रपामध्ये तु विधिवत् वेदिं कृत्वा महातपाः।
अलंचकार तां वेदिं गंधपुष्पैः समन्ततः॥ २० ॥

प्रपामध्ये। यज्ञशालामध्य इत्यर्थः। वेदिं-विवाहवेदिम् ॥ २० ॥

सुवर्णपालिकाभि[2]श्चा *छिद्रकुम्भैश्च साङ्कुरैः।
अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः॥ २१ ॥

सुवर्णपालिकाभिरिति। साङ्कुराभिरित्याकर्षः। तथा साङ्कुरैः अच्छिद्रकुम्भैः—अच्छिद्रमष्टापदं स्फुटनादिदोषरहितम्; स्वर्णकुम्भैरित्यर्थः॥ २१ ॥

शङ्खपात्रैः स्रुवैः स्रुग्भिः पात्रैरर्घ्यादिपूरितैः।
लाजपूर्णैश्च पात्रीभिरक्षतै[3]रभिसंस्कृतैः॥ २२ ॥

अर्घ्यादिपूरितैरिति भावे निष्ठा। अर्घ्यादिदेवपूजाप्रयोजनैरित्यर्थः। आभिसंस्कृतैरिति। हरिद्रालेपनादिसंस्कारवद्भिरित्यर्थः॥

दर्भैः समैः समास्तीर्य विधिवन्मन्त्रपूर्वकम्।
अग्निमाधाय वेद्यां तु विधिमन्त्रपुरस्कृतम्।
जुहावाग्नौ महातेजा वसिष्ठो भगवानृषिः॥ २३ ॥

समैः-समप्रमाणैः। समास्तीर्येति। प्रागुक्तविशेषणैरुपलक्षितां वेदिमिति शेषः। विधिना—कल्पोक्तक्रियाकलापेन मन्त्रैश्च पुरस्कृतं तथा। विवाहहोमादीनां वरकृत्यत्वात् तत्पुरोहितो वसिष्ठ एव जुहावेति॥

---

* छिद्रकुंभैः—करकैः-गो-ति— चित्रकुंभैः-नानावर्णयुक्तकुंभेः-ति.

[1] सभामध्ये—ङ. [2] श्च छिद्र—श्च जल—ङ. चित्र—ज. [3] रपि सं—ङ.

**[1]ततः सीतां समानीय सर्वाभरणभूषिताम् ।**
**समक्षमग्नेः संस्थाप्य [2]राघवाभिमुखे तदा ।**
**अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ॥ २४ ॥**

अग्नेस्समक्षं राघवाभिमुखे—राघवपुरःप्रदेशे । नन्दः-हर्षः ॥

**इयं सीता मम सुता सहधर्मचरी तव ।**
**प्रतीच्छ चैनां, भद्रं ते, *पाणिं गृह्णीष्व पाणिना ॥ २५ ॥**

धर्मं चरतीति धर्मचरी । 'चरेष्टः' इति टः, टित्वात् ङीप्, प्रतीच्छ—प्रतिगृहाण, तदर्थं पाणिना पाणिं गृह्णीष्व ॥ २५ ॥

**पतिव्रता महाभागा छायेवानुगता [3]सदा ।**
**[4]इत्युक्त्वा प्राक्षिपद्राजा [5]मन्त्रपूतं जलं तदा ॥ २६ ॥**

कल्पोक्तकन्यादानमन्त्रेण पूतं जलं प्राक्षिपत्, रामहस्त इति शेषः ॥ २६ ॥

**साधु साध्विति देवानां ऋषीणां वदतां तदा ।**
**देवदुन्दुभि[6]निर्घोषः पुष्पवर्षो महानभूत् ॥ २८ ॥**

वदतामिति भावलक्षणे षष्ठी, वदत्स्विति यावत् ॥ २७ ॥

**एवं दत्त्वा तदा सीतां मन्त्रोदकपुरस्कृताम् ।**
**अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ॥ २८ ॥**

---

* ब्राह्मणस्यैव पाणिग्रहणं, क्षत्रियादेः शरादिग्रहणं विहितं । अतः कथमिदं इति न शङ्कनीयम् । तस्यासवर्णविषयत्वात् । आह च मनुः—पाणिग्रहणसंस्कारः सवर्णासु प्रशस्यते । असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि । शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया । वासोदशा शूद्रया तु इति ।—**गो.**

[1] एतदनन्तरं—पद्मां पद्मवियुक्तां वै केशवाङ्कच्युतामिव । विद्युत्प्रभां विशालाक्षीं स्निग्धकुञ्चितमूर्धजाम् । हंसाङ्कितेन क्षौमेण किञ्चित्पीतेन संवृताम् । वासितेनोत्तरीयेण सुरक्तेन सुसंवृताम्' इत्यधिकं-ङ. [2] राघवाभिमुखी—ङ. [3] तव—ङ. [4] एतदनन्तरं 'प्रक्षिप्ते सलिले भूमौ गगने चोत्थिताः स्वनाः, इत्यधिकं-ङ. [5] मन्त्रपूर्वं-ङ. [6] निर्घोषैः-ङ.

मन्त्रेति। दानीयमन्त्रोदकाभ्यां पुरस्कृतां, दानशेषतयेति शेषः॥

**लक्ष्मणागच्छ, भद्रं ते, [1]ऊर्मिळामुद्यतां मया।**
**प्रतीच्छ पाणिं गृह्णीष्व, मा भूत् [2]कालस्य *पर्ययः॥२९॥**

उद्यतां–दातुं कृतोद्योगां। अत्र ज्येष्ठात् भरतात् पूर्वं लक्ष्मणपरिग्रहस्तु भिन्नोदरत्वात्। 'पितृव्यपुत्रे सापत्ने परनारीसुतेषु च। विवाहदानयज्ञादौ परिवेत्राद्यदूषणम्' इति स्मरणाददोषः। तदपि स्वसुताप्रदानम्, अनन्तरमेव कनिष्ठसुतयोः प्रदातव्यत्वात्॥२९॥

**तमेवमुक्त्वा जनको भरतं चाभ्यभाषत।**
**गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन!॥३०॥**
**शत्रुघ्नं चापि धर्मात्मा †अब्रवी[3]ज्जनकेश्वरः।**
**[4]श्रुतकीर्त्या महाबाहो! पाणिं गृह्णीष्व पाणिना॥३१॥**
**सर्वे भवन्तस्सौम्याश्च सर्वे सुचरितव्रताः।**
**पत्नीभिस्सन्तु काकुत्स्था मा भूत् [2]कालस्य पर्ययः॥३२॥**

सुचरितव्रता इति। स्वनुष्ठितब्रह्मचर्यव्रता इत्यर्थः। पत्नीभिः सहिताः सन्त्विति योजना॥३२॥

**जनकस्य वचः श्रुत्वा पाणीन् पाणिभिरस्पृशन्।**
**चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः॥३३॥**
**अग्निं प्रदक्षिणीकृत्य वेदिं राजानमेव च।**

---

* पर्ययः–विलम्बः। † असन्धिरार्षः।

[1] ऊर्मिलां च ममात्मजां—ङ. [2] कालविपर्ययः—ङ. [3] न्मिथिलेश्वरः–ङ.

[4] श्रुतकीर्तेर्महा—ङ.

ऋषींश्चैव महात्मानः सभार्या रघुसत्तमाः ।
[1]यथोक्तेन तदा चक्रुर्विवाहं विधिपूर्वकम् ॥ ३४ ॥

वेदिं—पालिकाद्युपलक्षितवेदिं । राजा—जनकः । यथोक्तेनेति । रामलक्ष्मणभरतशत्रुघ्नलक्षणक्रमेणेत्यर्थः ॥ ३४ ॥

पुष्पवृष्टिर्महत्यासीत् अन्तरिक्षात्सुभास्वरा ।
दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिस्वनैः ॥ ३५ ॥
ननृतुश्चाप्सरस्सङ्घा गन्धर्वाश्च जगुः कलम् ।
विवाहे रघुमुख्यानां तदद्भुतमदृश्यत ॥ ३६ ॥

तदद्भुतमिति । पुष्पवृष्ट्यादिकमित्यर्थः ॥ ३६ ॥

ईदृशे वर्तमाने तु तूर्योद्घुष्टनिनादिते ।
त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या महौजसः ॥ ३७ ॥

तूर्याणां घुष्टैः—घोषैः निनादितं—तथा—तादृशकाल इत्यर्थः । *अविशब्दनत्वात् 'घुषिरविशब्दने' इति नेट् । त्रिरग्निमित्यादिः उपसंहारेण वादः ॥ ३७ ॥

[2]अथोपकार्यां जग्मुस्ते सभार्या रघुनन्दनाः ।
राजाऽप्यनुययौ पश्यन् सर्षिसङ्घः सबान्धवः ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे त्रिसप्ततितमस्सर्गः

पश्यन्निति । वधूवरसंसर्गकल्याणमिति शेषः । दण्ड (३८) मानः सर्गः ॥ ३८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे त्रिसप्ततितमः सर्गः

---

*शब्देन स्वाभिप्रायप्रकाशनं विशब्दनम् ।

[1] एतदनन्तरं, काकुत्स्थैश्च गृहीतेषु ललितेषु च पाणिषु । इत्यधिकं—ङ.

[2] एतदनन्तरं 'प्रीयमाणो दशरथः पुत्रान् पुत्रवतां वरः' इत्यधिकं—ङ.

### अथ चतुस्सप्ततितमः सर्गः

[परशुरामाभियोगः]

**अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः ।**
**[1] आपृष्ट्वा तौ च राजानौ जगामोत्तरपर्वतम् ॥ १ ॥**

अथ भार्गवगतिहरणरूपश्रीरामादिव्यचरितवर्णनशेषतया भार्गवप्रादुर्भाववर्णनं प्रतिप्रयाणसमये । अथेत्यादि । आपृष्ट्वा—आपृच्छ्येति यावत् । उत्तरपर्वतं—पूर्वमेवाध्यासिसिषितकौशिकीप्रदेशीयमिति शेषः ॥१॥

**विश्वामित्रे गते राजा वैदेहं मिथिलाधिपम् ।**
**[2] आपृष्ट्वाऽथ जगामाशु राजा दशरथः पुरीम् ॥ २ ॥**
**अथ राजा विदेहानां ददौ कन्याधनं बहु ।**
**गवां शतसहस्राणि बहूनि मिथिलेश्वरः ॥ ३ ॥**
**कम्बलानां च मुख्यानां [3] क्षौमान् * कोट्यम्बराणि च ।**

कन्याधनं बहु ददावित्यस्यैव प्रपञ्चनम्—गवामित्यादि । मुख्यानां कम्बळानां—रत्नकम्बळानां बहुनीति योजना । क्षौमान् बहूनिति विपरिणामः । पुंस्यप्यस्ति क्षौमः । कोट्यम्बराणि कोटिसङ्ख्याकानि सामान्यप्रच्छदपटानि ॥ ३ ॥

**हस्त्यश्वरथपादातं दिव्यरूपं स्वलङ्कृतम् ॥ ४ ॥**
**ददौ कन्यापिता तासां दासीदासमनुत्तमम् ।**

हस्तीत्यादि । सेनाङ्गत्वादेकत्वम् । तासामिति । राजकुमारीणामित्यर्थः । कन्याशतदानं अन्तरङ्गपाकादिव्यवहाराय । दासीदासदानं जलाहरणावहननादिबाह्यव्यापाराय । गवाश्वादित्वादेकत्वम् ॥ ४ ॥

---

* कोट्यम्बराणि—उत्कृष्टवस्त्राणि वा — गो.

[1] अनुच्छयाथ च—ङ. ज. एतदनन्तरं 'आशीर्भिः पूरयित्वा च कुमारांश्च सराघवान् ।' इत्यधिकं—ङ. [2] एतदनन्तरं 'गच्छन्तं तं तु राजानमन्वगच्छन्नराधिपः' । इत्यधिकं ङ. [3] क्षौमकोट्यम्बराणि—ङ. ज.

हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च ॥ ५ ॥
ददौ परमसंहृष्टः कन्याधनमनुत्तमम् ।

हिरण्यमिति रजतं। पूर्वमेव (३०३ पुटे) तथा प्रतिपादितम् ॥५॥

दत्त्वा बहु धनं राजा समनुज्ञाप्य पार्थिवम् ॥ ६ ॥
प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः ।

पार्थिवं-दशरथं ॥ ६ ॥

राजाऽप्ययोध्याधिपतिस्सह पुत्रैर्महात्मभिः ॥ ७ ॥
[1] ऋषीन् सर्वान् पुरस्कृत्य जगाम सबलानुगः ।

बलैः-चतुरङ्गैः, अनुगैः किंकरैश्च सहितस्तथा ॥ ७ ॥

गच्छन्तं तं नरव्याघ्रं सर्षिसङ्घं सराघवम् ॥ ८ ॥
घोराः स्म पक्षिणो वाचो व्याहरन्ति ततस्ततः ।

गच्छन्तं दशरथं इति शेषः । पक्षिणः करटादयः ॥ ८ ॥

भौमाश्चैव मृगाः सर्वे गच्छन्ति स्म प्रदक्षिणम् ॥ ९ ॥

एवमान्तरिक्षं दुर्निमित्तम् । अथ भौमं मृगप्रदक्षिणगमनं सुनिमित्तम्-भौमा इत्यादि ॥ ९ ॥

तान् दृष्ट्वा राजशार्दूलो वसिष्ठं पर्यपृच्छत ।
असौम्याः पक्षिणो घोरा मृगाश्चापि प्रदक्षिणाः ॥ १० ॥
किमिदं हृदयोत्कंपि ? मनो मम विषीदति ।

तान्-शुभाशुभनिमित्तविशेषान् । हृदयं उत्कंपयितुं शीलमस्येति हृदयोत्कंपि इदं किमिति । दुःखोदर्कं सुखोदर्कं वा भविष्यतीति मे मनो विषीदति। अशक्यनिश्चयादिति शेषः ॥ १० ॥

---

[1] एतदनन्तरं 'वाहिनीं महतीं कर्षन् कीर्तिमांश्च ययौ तदा।' इत्यधिकं-ङ.

राज्ञो दशरथस्यैतच्छ्रुत्वा वाक्यं महानृषिः ॥ ११ ॥
उवाच मधुरां वाणीं श्रूयतामस्य यत्फलम् ।
उपस्थितं भयं घोरं [1] दिव्यं पक्षिमुखाच्चयुतम् ॥ १२ ॥
मृगाः प्रशमयन्त्येते सन्तापस्त्यज्यतामयम् ।

दिवि–खे भवं दिव्यं । तत्पक्षिमुखात् च्युतं वचनं घोरं भयमावेदयतीति शेषः। प्रशमयन्तीति। प्रशमं सूचयन्तीत्यर्थः॥ १२ ॥

*तेषां संवदतां तत्र वायुः प्रादुर्बभूव ह ॥ १३ ॥
कम्पयन् पृथिवीं सर्वां पातयंश्च [2] द्रुमान् शुभान् ।

संवदतां–भावलक्षणषष्ठी ॥ १३ ॥

तमसा संवृतः सूर्यः [3] सर्वा न प्रबभुर्दिशः ॥ १४ ॥
भस्मना चावृतं सर्वं संमूढमिव तद्बलम् ।

तमो भस्म चोभयमप्युत्पातजम् ॥ १४ ॥

† वसिष्ठश्चर्षयश्चान्ये राजा च ससुतस्तदा ॥ १५ ॥
[4] ससंज्ञा इव तत्रासन् सर्वमन्यद्विचेतनम् ।

ससंज्ञाः–इवेति एवार्थे । राजा चैवेति योजना ॥ १५ ॥

तस्मिंस्तमसि घोरे तु भस्मच्छन्नेव सा चमूः ॥ १६ ॥
ददर्श [5] भीमसंकाशं जटामण्डलधारिणम् ।

भस्मच्छन्नेव–छन्नैवेति यावत् । भीमसंकाशं–भयङ्करदर्शनम् ॥

---

* तेषां संवदतामित्यत्र पुर इति शेषः–सि. दशरथादिषु संवदत्सु–गो. शि.

† वसिष्ठः, अन्ये ऋषयश्च, राजा च सशङ्का इवासन्—अन्यत्सर्वं विचेतनमास–शि. ससंज्ञा इव–ईषत्संज्ञाः। अन्यत्तु बलं निरसंज्ञमेव।

[1] दिव्यपक्षि–ङ. [2] महाद्रुमान्–ङ. [3] सर्वे नावेदिषुर्दिशः–ङ. ज.
[4] सशङ्का–ज. विसंज्ञा–ङ. [5] हिमसंकाशं–ङ.

भार्गवं जामदग्न्यं तं [1]राजराजविमर्दनम् ॥ १७ ॥
कैलासमिव दुर्धर्षं कालाग्निमिव दुस्सहम् ।

कैलासमिवेति । अनेन महाकारत्वमुक्तं । दुर्धर्षं—अशक्यातिक्रमम् ॥ १७ ॥

ज्वलन्तमिव तेजोभिर्दुर्निरीक्ष्यं पृथग्जनैः ॥ १८ ॥
स्कन्धे [2]चासाद्य परशुं धनुर्विद्युद्गणोपमम् ।
प्रगृह्य [3]शरमुख्यं च त्रिपुरघ्नं यथा शिवम् ॥ १९ ॥

पृथग्जनः—पामरजनः । विद्युद्गणोपमत्वं प्रभातिशयवत्त्वे दृष्टान्तः । त्रिपुरघ्नं यथा—रुद्रमिव स्थितमित्यर्थः । 'अमनुष्यकर्तृके च' इति हन्तेष्टक् ॥ १९ ॥

[4]तं दृष्ट्वा भीमसंकाशं ज्वलन्तमिव पावकम् ।
वसिष्ठप्रमुखा विप्रा [*]जपहोमपरायणाः ॥ २० ॥

जपहोमेति । यद्यपि तत्काले न समस्ति मुख्यहोमः, अथापि 'अपाने जुह्वति प्राणम्' इत्याद्युपदिष्टो गौणः ॥ २० ॥

संगता मुनयः सर्वे संजजल्पुरथो मिथः ।
कच्चित्पितृवधामर्षी क्षत्रं नोत्सादयिष्यति ॥ २१ ॥

कच्चिदिति विमर्शः ॥ २१ ॥

---

* होमः मानसः--**गो.** जपहोमपरायणत्वमुपलक्षणम् । अतएवाग्रे संजजल्पुरिति सङ्गच्छते । अन्यथा तादृशहोमादिपरायणानां जल्पासंभवादित्याहुः—**ति.** परंतु 'संजजल्पुरथो मिथः' इत्यत्र अथशब्द स्वारस्यान्न विरोधः । प्रथमं शान्त्यर्थं जपादिकं किञ्चित्कृत्वा ततः संजजल्पुरित्यर्थः ॥

[1] राजा—**ङ. ज.** [2] चासज्य—**ङ. ज.** [3] शरमुग्रं—**ङ. ज.** [4] एतदनन्तरं 'यथा कृष्णगतिं घोरं युगान्ते प्रोद्यतं तथा ।' इत्यधिकम्—**ङ.**

पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः ।
क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ॥ २२ ॥

एवमुक्त्वाऽर्घ्यमादाय भार्गवं भीमदर्शनम् ।
ऋषयो राम रामेति वचो मधुरमब्रुवन् ॥ २३ ॥

प्रतिगृह्य तु तां पूजां ऋषिदत्तां प्रतापवान् ।
[1]रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे चतुस्सप्ततितमः सर्गः

———

घोर (२४) मानः सर्गः ॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे चतुस्सप्ततितमः सर्गः

———

अथ पञ्चसप्ततितमः सर्गः

[वैष्णवधनु:प्रशंसा]

राम ! दशरथे ! राम ! वीर्यं ते श्रूयतेऽद्भुतम् ।
धनुषो भेदनं चैव निखिलेन मया श्रुतम् ॥ १ ॥

अथ जामदग्न्यस्य रामाभियानम्—रामेत्यादि । निखिलेन—कात्स्न्र्येन ॥ १ ॥

तदद्भुतमचिन्त्यं च भेदनं धनुषस्त्वया ।
तच्छ्रुत्वाऽहमनुप्राप्तो धनुर्गृह्य परं शुभम् ॥ २ ॥

---

[1] एतदनन्तरं 'तस्मिंस्तु घोरे जमदग्निसूनुना त्वासादिते राममभि प्रकोपे ॥ दृढं नरेन्द्रस्य बलं महाबलं भयं प्रविष्टं च विषादितं च ॥ इत्यधिकं—ङ.

यत्त्वया धनुषो भेदनं कृतं तदद्भुतमाचिन्त्यं च भवत्येव। अतः—तच्छ्रुत्वेत्यादि। गृह्य—गृहीत्वा ॥ २ ॥

**तदिदं घोरसंकाशं जामदग्न्यं महद्धनुः।**
**पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥ ३ ॥**

जामदग्न्यं—जमदग्नेस्स्वपितुरागतं। आगतार्थे ष्यञ् आर्षः॥ ३ ॥

**तदहं ते बलं दृष्ट्वा धनुषोऽस्य प्रपूरणे।**
**[1]द्वन्द्वयुद्धं प्रदास्यामि वीर्य[2]श्लाघ्यमहं तव ॥ ४ ॥**

प्रपूरणं प्रागुक्तार्थं। वीर्यवद्भिः श्लाघ्यं वीर्यश्लाघ्यं॥ ४ ॥

**तस्य तद्वचनं श्रुत्वा राजा दशरथस्तदा।**
***विषण्णवदनो दीनः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ५ ॥**

तद्वचनं। द्वन्द्वयुद्धवचनमित्यर्थः ॥ ५ ॥

**क्षत्ररोषात्प्रशान्तस्त्वं ब्राह्मणश्च महायशाः।**
**बालानां मम पुत्राणां अभयं दातुमर्हसि ॥ ६ ॥**

क्षत्ररोषादिति। तज्ज[3]क्षत्रवधादित्यर्थः ॥ ६ ॥

**भार्गवाणां कुले जातः स्वाध्यायव्रतशालिनाम्।**
**सहस्राक्षे प्रतिज्ञाय † शस्त्रं निक्षिप्तवानसि ॥ ७ ॥**

---

* अदीन.—त्रैकालिकदीनताभावविशिष्टः, विषण्णवदनः—उदासीनचित्तः—**शि.**

† ब्रह्माण्डपुराणे (3.47) परशुरामः स्वपितॄणां वचनात् शस्त्रं निक्षिप्तवानिति वर्तते। महाभारते तु (वन. 117) ऋचीकनियमनादिति वर्तते। अत्र तु इन्द्रनियमनादिति। अतः स्वपितॄणां देवानां च सन्निधौ—इति विरोधः परिहरणीयः। तत्र चेन्द्रस्य प्रधान्यादत्र तस्य निर्देश इति।

[1] एतदनन्तरं 'भीतो यदि धनुस्त्यक्त्वा निर्जितोऽस्मीति वा वद' इत्यधिकं—**ङ. झ.**

[2] श्लाघ्यस्य राघवः—**ङ. ज.** [3] क्षत्रिय—**घ.**

सहस्राक्ष इति । तत्सन्निधाविर्थः । प्रतिज्ञायेति । अतः परं शस्त्रं न ग्रहीष्यामीत्येवमिति शेषः । निक्षिप्तवान् । त्यक्तवानिति यावत् ॥ ७॥

स त्वं धर्मपरो भूत्वा कश्यपाय वसुन्धराम् ।
दत्त्वा वनमुपागम्य * महेन्द्रकृतकेतनः ॥८॥

स त्वं—तथात्यक्तशस्त्रस्त्वं ॥ ८॥

मम सर्वविनाशाय संप्राप्तस्त्वं महामुने ।
[1]न चैकस्मिन् हते रामे सर्वे जीवामहे वयम् ॥९॥

मम सर्वविनाशायेति योजना । कुतस्सर्वविनाशनप्रसंग इत्यतः—न चेत्यादि ॥९॥

ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान् ।
[2]अनादृत्यैव तद्वाक्यं राममेवाभ्यभाषत ॥ १० ॥
इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिविश्रुते ।
[3]दृढे बलवती मुख्ये †सुकृते विश्वकर्मणा ॥ ११ ॥

इमे द्वे धनुषी इति । वक्ष्यमाणलक्षणे दृढे स्थिरे बलवती क्षतक्षमे इति यावत् ॥ ११ ॥

[4]‡अतिसृष्टं ! सुरैरेकं त्र्यम्बकाय युयुत्सवे ।
[5]त्रिपुरघ्नं [6]नरश्रेष्ठ ! भग्नं काकुत्स्थ ! यत्त्वया ॥ १२ ॥

---

* महेन्द्रः—महेन्द्रपर्वतः. † विश्वकर्मणा सुकृते—सुष्टु निर्मिते. ‡ अतिसृष्टं—दत्तम् । तदा—दुष्करत्रिपुरहननानन्तरकाले—**गो.**

[1] नचैतस्मिन्—ङ. [2] एतदनन्तरं 'रोषात्प्रस्फुरमाणोष्ठो रामं परमधन्विनम् ।' इत्यधिकं—ङ. [3] एतदनन्तरं 'करवीरसमे गन्धे विशाले विमले शुभे' इत्यधिकं—ङ. [4] अनुसृष्टं—ङ. ज. [5] एतदनन्तरं—इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः इत्यधिकं—ङ. ज. [6] धनुःश्रेष्ठं—ङ.

युयुत्सव इति। त्रिपुरावासिभिरिति शेषः। त्रिपुरघ्न—तद्धनन-साधन मित्यर्थः ॥ १२ ॥

**तदिदं वैष्णवं राम! धनुः परमभास्वरम्।**
**समानसारं काकुत्स्थ! रौद्रेण धनुषा त्विदम् ॥ १३ ॥**
**[1]तदा तु देवताः सर्वाः पृच्छन्ति स्म पितामहम्।**
**शितिकण्ठस्य विष्णोश्च बलाबलनिरीक्षया ॥ १४ ॥**

*तस्येदानीं असमानसारतामाह—तदा त्वित्यादि। अग्निमनीकं सोमं शल्यं विष्णुं तेजनं इति विष्णोः रुद्रसंहारपरिकरान्तर्भावश्रवणाद्विष्णोश्चान्यत्र सर्वत्र सर्वासुरसंहारकत्वेन प्राबल्ये चाविवाददर्शनात् अयं रुद्राद्दुर्बलस्समोऽधिको वेत्येवं शितिकण्ठस्य विष्णोर्बलाबल-निरीक्षया सर्वा देवताः पितामहं पृच्छन्ति स्म ॥ १४ ॥

**अभिप्रायं तु विज्ञाय देवतानां पितामहः।**
**†विरोधं जनयामास [2]तयोः सत्यवतां वरः ॥ १५ ॥**
**[3]विजये च महद्युद्धमभवद्रोमहर्षणम्।**
**शितिकण्ठस्य विष्णोश्च परस्पर[4]जिगीषिणोः ॥ १६ ॥**

स च भगवांस्तेषां अभिप्रायं उक्तरूपं विज्ञाय; ऐथकस्यैव श्रीमदादिब्रह्मणो मूर्तित्रये प्रतीच इव स्थिते मोहादुपाधिभेदाव-

---

*धनुर्द्वयस्य तौल्ये एकधनुषो भङ्गे कृते किं द्वितीयभङ्गेन? इत्याक्षेपःस्यादिति-तदपेक्षयाऽस्य वैशिष्ट्यमुच्यत इति भावः. † बहुश उपदेशेऽपि नैषां चित्तं समाधत्ते; अतः क्रिययैव बलतारतम्यं दर्शयिष्यामीत्यभिप्रेत्य विरोधं जनयामास। अहं धन्वी प्रधानः, विष्णुस्तु ममोपसर्जनम्' इति रुद्रेणोक्तमिति विष्णुं प्रत्युक्त्वा, शराग्रतयाऽवस्थानात् मयैव त्रिपुरहननं कृतम् इति विष्णुनोक्तमिति रुद्रं प्रत्युक्त्या च विरोधजननमित्यवगम्यते—**गो.**

[1] कदाचिद्देवताः—ङ. [2] तयोःसत्त्वपरीक्षया—ङ. [3] विरोधे—इत्येव सर्वकोशेषु दृश्यते. [4] जयैषिणोः—ङ. ज.

लम्बनजां इमां दुश्चिन्तां स्वयमेव भेत्स्यन्त इति विज्ञाय श्रीमच्चतुर्मुख प्रदेशमूर्त्यन्तरभूतयोः रुद्रविष्ण्वोः सत्यसङ्कल्पत्वात् सङ्कल्पशक्तिमदान्तर-प्रधानत्वाच्च स्वेच्छया वैरं सञ्जनयामास। अग्निभूतत्त्वयोर्वैरस्य सम्पादनमीषत्करं भगवतो ब्रह्मणः। सत्यवतां वरः—इत्यनेन अस्मदुक्त-सत्यसङ्कल्पत्वमुक्तम्। [1]विजय इति निमित्तसप्तमी ॥ १६ ॥

*तदा तु जृम्भितं शैवं धनुर्भीमपराक्रमम्।
हुंकारेण, महादेवः स्तम्भितोऽथ त्रिलोचनः ॥ १७ ॥

तदा—विरोधसमये। अथ तथाविरोधाद्युद्धकाले हुङ्कारेण जृम्भितमिति। उत्कटरजश्शक्त्यधिष्ठानजो हुङ्कारः, तेन तद्विषयीकृतत्वेन जृम्भितं—सोच्छ्वासमभवदित्यर्थः। 'रजस्सत्त्वं तमश्चैव तमस्सत्त्वं रजस्तथा। अभिभूय प्रभवति' इति न्यायेन उत्कटरजःप्रवृत्तौ तदितर-गुणाभिभवस्य स्वाभाविकत्वात्तत्कालमितरगुणप्राधान्यात् भगवांस्त्रिलो-चनः स्तम्भितः-स्तंभितपरिकरोऽभूत् ॥ १७ ॥

देवैस्तदा समागम्य सर्षिसङ्घैः सचारणैः।
† याचितौ प्रशमं तत्र जग्मतुस्तौ सुरोत्तमौ ॥ १८ ॥

---

* हुंकारेणैव—विष्णोरिति शेषः। जृंभितं—शैथिल्यं प्राप्तम्। अथ—धनुर्विजृम्भ-णानन्तरं त्रिलोचनो महादेवः स्तम्भितः—व्यापाररहितः आसीदिति शेषः। एतेन सत्त्वगुणस्य तदानीं प्राबल्यं सूचितम्—**शि**॥ हुंकारेण—न स्वाभिमन्त्रितबाणेन, महादेवः-महादेवशब्दो महात्रृक्षसमाख्यायित इति भावः। त्रिलोचन इत्यनेन तृतीयं लोचनमपि निरर्थकं कृतमिति भावः—**गो.** † एतावत्यर्थे दृष्टे प्राप्तनिश्चयैः देवैर्युद्धादुपरतिं याचितौ—**ति.** अनेन उभयोरपि शान्तियाचनं समर्थितम् ॥

अत्र शिवस्तंभनानन्तरं तत्प्रशान्तियाचनया तमोगुणोद्रेकसमये स्वीकृततमोगुणस्य विजयो भविष्यति, पुनः सत्त्वगुणोद्रेकसमये स्वीकृतसत्त्वगुणस्य विजयो भविष्यतीत्यनवस्था स्यादिति देवाभिप्रायः सूचितः—**शि.** किमनेन बालेन? अनुकम्प्यताम्—इति याचितः तन्निग्रहान्निवृत्तः विष्णुः; रुद्रस्तु स्वामितः पराजयो नास्माकं दोषायेति सान्त्वितः तत्तुल्यत्वाभिमानात् (पराजयनिमित्तशोकाद्वा) निवर्तित इत्यर्थः—**गो।**

[1] अजय—इति मातृकासु। परन्त्वौचित्यादेवं निवेशितम्.

एतावद्दर्शने सति प्राप्तनिश्चयैः देवैः युद्धादुपरतिं याचितौ देवतानुग्रहाय प्रशमं जग्मतुः ॥ १८ ॥

* जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ।
[1]अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा ॥ १९ ॥

---

* विष्णुं अधिकं–श्रेष्ठं सेव्यत्वेन मेनिरे। वस्तुतस्तु प्रकृतयुद्धे विष्णोराधिक्यदर्शनात् त्रिपुरवधे शिवस्याधिक्यदर्शनात् तयोः साम्यग्रहणमिति तात्पर्यम् । अधिकमित्यस्य स्वीयपूर्वज्ञानविषयस्वरूपापेक्षयाऽधिकमित्यर्थः–**ति.** विष्णुमधिकं मेनिरे–स्वीकृततत्सत्त्वगुणस्य तत्काले आधिक्यं स्वीचक्रुरित्यर्थः । अत एव त्रिपुरविजयकाले शिवबलस्याधिक्यदर्शनेऽपि नैतेषां संशयोत्पत्तिः......हरिहरयोरैक्यात् तत्तन्न्यूनाधिक्ययोर्वक्तुमशक्यत्वात्। अत एव 'एको ह वै रुद्रः' 'एको ह वै नारायणः' इति श्रुत्योर्न विरोधः.......एतेन 'तमउद्रेकेण कदाचिद्रुद्रस्य पराजयो न दोषायेति वा केनचिदुक्तं प्रत्युक्तम्' इति भूषणकारोक्तमेव प्रत्युक्तम् । त्रिपुरविजयकाले विष्णोरल्पबलवत्त्वे अस्या एव रीतेस्तैरपि वक्तव्यत्वात्–**शि** ॥

तत्–विष्ण्वधिष्ठानेन पूर्वं त्रिपुरघ्नं धनुः जृम्भितं–विष्ण्वधिष्ठानाभावेन जृम्भितं दृष्ट्वा–न त्वाप्तवाक्यात् श्रुत्वा ;......आधिक्यावबोधनं न पक्षपातमूलमित्याह सर्षिगणा इति। अतीन्द्रियार्थद्रष्टार ऋषयः, तेषां गणाः........'भूयसां स्याद्बलीयस्त्वम्' इति न्यायेन, तज्ज्ञानं न पक्षपातमूलं न वा भ्रान्तिमूलमिति भावः–एतेन तमउद्रेकेण कदाचिद्रुद्रस्य पराजयो न दोषायेति केन चिदुक्तं प्रत्युक्तम्। तमोऽभिभवस्यैवावरत्वनियामकत्वात्। इन्द्रजिता रामपराजयस्तु–'अदृश्यो न शब्दवेधेन वध्यते' इति धर्मप्रवर्तनाय। धर्मसंस्थापनार्थाय हि तदवतार इत्युक्तम्। (अत एव अनन्तरमिन्द्रजिद्वधःसंगच्छते)। अत्र तु स्वरूपत एव रुद्रस्य पराजयः। किञ्च रुद्रपराजयस्य तमःकृतत्वे देवानामधिकत्वबुद्धिर्न स्यादेव॥ अयं च धनुर्भङ्गः दक्षयज्ञान्त इति बोध्यम्। अन्यथा 'दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान्' इत्यादिना दक्षयज्ञान्ते रुद्रो देवानां धनुर्ददावित्युक्तं विरुध्येत । अत्रेदमेव धनुस्त्रिपुरघ्नं, 'त्रिपुरघ्नम्' इत्युक्तत्वात् । एतद्विरुद्धं मेरुधनुष्ट्वं पुराणान्तरोक्तमनादरणीयम्–**गो** ।

[1] एतदनन्तरं पूजयित्वा ततो विष्णुमामंत्र्य च पिनाकिनम्। ब्रह्मेन्द्रादीन् पुरस्कृत्य नाकपृष्ठं ययुस्तदा ॥' इत्यधिकं–**ङ.**

तदा कीदृशं निश्चयं प्राप्तवन्त इत्यतः—जृम्भितामित्यादि। विष्णुपराक्रमो हुंकाररूपः, तेन शैवं धनुर्जृम्भितं दृष्ट्वा तदा विष्णुं विष्णुबलं अधिकं मेनिरे। सिद्धान्तस्तु त्रिब्रह्मसु कालत्रयेऽपि 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्' इति प्रसिद्धक्षत्रधर्माणां प्रसक्त्यभावाद्विना क्षत्रधर्मं स्वसृष्टप्रजारक्षाऽसम्भवात् तत्तदर्थमग्निभूप्राधान्येन परिगृहीतचतुर्मुखप्रदेशरुद्रविष्णुमूर्त्योर्धनुर्ग्रहप्रमुखसकलक्षत्रधर्मसहजस्वभावयोर्यदा यस्मिन्नुत्कटभूमरजश्शक्त्यावेशस्स तु तदाऽधिकक्षत्रबलभानो भवति। अन्योन्यथा चलं गुणवृत्तमिति न्यायेन (परिगृहीतचतुर्मुख) गुणौत्कठ्यानौत्कठ्ये तु न व्यवस्थिते। योऽशेषवानरलक्ष्मणोपेतो रामोऽपि भगवानेकेनेन्द्रजिता सर्वात्मना जित एव। स एव पुनर्दैवतासाहाय्यादुर्ज्जीविताशेषपरिकर उत्कटरजश्शक्तिस्तमप्यजयच्च। अतश्च द्वन्द्वयुद्धे किंचित्क्षत्रबलाधिक्यभानम् विष्णोः, त्रिपुरसंहारदक्षाध्वरादौ रुद्रस्य। वस्तुतस्तु—क्षत्रधर्मप्राबल्यं रुद्रस्य, अग्नितत्त्वत्वात्। अतो ब्रह्मविद्भिः रुद्रोऽधिको विष्णुर्न्यूनस्सवाऽधिको न्यून इति दुर्मतिर्दूरे त्याज्या। एकस्यैव ब्रह्मणः प्रत्यग्वदेव गुणभेदमात्रनिबन्धनरुद्रविष्णुशब्दतो भेदाभावात्॥

यस्तु रुद्रोपाधिर्भगवानादिगुरुः स एव विष्णूपाधिरिति यश्चैवमुपाधिस्स एवोपाधिरिति वामदक्षिणोर्ध्वाधोऽवयववत् किंचित्कचित्कदाचित् गुणवत्त्वेनाधिकत्वेन न्यूनत्वेन च भाति। सर्वोऽप्ययमेकधर्म इति न वृथोल्लाळनं कर्तव्यमिति॥ १९॥

* धनू रुद्रस्तु सङ्क्रुद्धो विदेहेषु महायशाः ।
[1] देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् ॥ २० ॥

धनू रुद्र इत्यादि । एवं युद्धदशायां सङ्क्रुद्धः पश्चाद्देवप्रार्थनया प्रसन्नो देवेभ्य एव तद्धनुः ससायकं दत्त्वा तच्च वरुणद्वारा विदेहेषु वर्तमानस्य देवरातस्य राजर्षेर्हस्ते ददौ । एवं विशेषव्याख्या तु षट्षष्टितमे 'प्रीतियुक्तस्स सर्वेषां ददौ तेषां महात्मनाम्' इति प्रीत एव रुद्रो देवेभ्यो ददावित्युक्तेः । तथाऽग्रे वरुणेन दत्तमिति वक्ष्यमाणत्वाच्च ॥ २० ॥

---

* ननु पूर्वं दक्षयज्ञान्ते रुद्रो देवेभ्यो धनुर्दत्तवानित्युक्तम् । अत्र पुन: देवराताय रुद्रो दत्तवानित्युक्तम् । विश्वामित्राश्रमे मुनिभि: यज्ञे जनकाय देवा ददुरित्युक्तम् । अनसूयासमीपे सीतया जनकाय वरुणेन दत्तमित्युक्तम् । कथमिदं सङ्गच्छते ? श्रूयताम् — पूर्वं देवाः त्रिपुरवधाय विश्वकर्मणा निर्मितं धनू रुद्राय ददुः । दक्षयज्ञान्ते विरोधे विष्णुहुंकारेण जृम्भितं तद् देवैः प्रार्थितो रुद्रो देवरातस्य हस्ते दत्तवान् । ततः प्रभृति न्यासभावेन मैथिलेषु वर्तमानं तत्स्वत्वेन देवा: वरुणेन जनकायादापयन्निति क्रम: । तेन दक्षयज्ञान्ते धनुर्दानवचनं देवैर्जनकस्य यज्ञफलत्वेन दानवचनं वरुणेन दत्तत्ववचनं च समंजसं, गो । इदं तु चिन्त्यम्—दक्षयज्ञवधानन्तरं दाक्षायण्या: हिमवत्पुत्रीत्वेन जननम् । तत: स्कन्दोत्पत्ति: । ततस्तेन तारकासुरवध: । त्रिपुरासुराश्च तारकासुरपुत्रा: । एवञ्च दक्षयज्ञवधः त्रिपुरासुरवधात्पूर्वमेव स्यात् । दक्षयज्ञवधान्त एव यदि धनुर्दत्तं स्यात् तर्हि त्रिपुरवध: अन्येन धनुषा कृत: स्यात् । तथा सति 'त्रिपुरघ्नं' इति विशेषणं बाधितम् । यदि च त्रिपुरवधानन्तरमेव दत्तं स्यात् तर्हि दक्षयज्ञकाले दत्तत्ववचनं बाध्येत । अत एवमत्र वक्तव्यम्—दक्षयज्ञान्ते शिव: धनु: देवेभ्यो दत्तवान् । देवाश्च वरुणद्वारा देवराताय न्यासतया ददु: । (वैष्णवमपि धनु: राम: परशुरामात् गृहीत्वा वरुणायैव दत्तवान् इति (बाल. ७७-१) श्रूयते ।) अनंतरं तेनैव देवरातात् गृहीतेन त्रिपुरवध: कृतः । तदन्ते च विष्णुशिवयोर्युद्धं । ततः पुनर्देवराताय तद्दानमिति । एवं क्रमाङ्गीकारे न कोऽपि विरोध: ; आपातत: कुत्रचित् विरोध:प्रतीयमानोऽपि पदाक्षरपर्यालोचनायां सुपरिहर एव इति केचित् । परे तु त्रिपुराणां तारकपुत्रत्वेऽपि शङ्करसंहितादिपर्यालोचनया प्रथममेव त्रिपुरवधः, अनन्तरं च दक्षयज्ञध्वंस इति 'त्रिपुरघ्नं' इति विशेषणं युक्तमेवेऽत्याहुः ॥

[1] एतदनंतरं–तद्धनुर्देवरातोऽपि शिरसा गृह्य पूजयत् । भग्नं तन्मनुजश्रेष्ठ त्वया पैनाकमुत्तमम् । इत्यधिकं–ङ.

इदं च वैष्णवं राम! धनुः परपुरंजयम् ।
ऋचीके भार्गवे प्रादाद्विष्णुः [1]स्वन्यासमुत्तमम् ॥ २१ ॥

एतवतानूक्तं भार्गवेण तु रौद्रं धनुः शिथिलप्रायं जनकवंशे स्थितं । न तु तद्भञ्जनमात्रतस्तव वीर्याधिक्यमिति । तर्हि क मे वीर्यशुद्धिरित्यतः—इदञ्चेत्यादि । परपुरञ्जयमिति । असंज्ञायामप्यार्षः खच् । भार्गवः–भृगुपुत्रः । स्वस्य–स्वीयस्य न्यासः—सन्यासः ॥

ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः ।
पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ॥ २२ ॥

पुत्रस्येति । जमदग्नेरिति यावत् । अप्रति[2]कर्मणः–स्वघातुके कार्तवीर्ये शापादिप्रतिक्रियारहितस्तथा ॥ २२ ॥

*न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते ।
अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः ॥ २३ ॥

---

* यद्यपि महाभारते (वन. ११७) ब्रह्माण्डपुराणे (३-४५) च कार्तवीयार्जुनपुत्रैः शूरसेनादिभिर्जमदग्निर्हत इति कथ्यते—अथापि ब्रह्माण्डपुराणे कथाक्रम एवं दृश्यते । कदाचित् कार्तवीयार्जुनः मृगयार्थं वनं गतः तत्र जमदग्निना कामधेनुसहायेन ससैन्यः सत्कृतः । प्रतिनिवर्तनकाले स्वमंत्रिणं चन्द्रगुप्तं तद्धेन्वानयनार्थं प्रेषयामास । यदा च जमदग्निर्धेनुं न ददौ, तदा सः जमदग्निं कशादिभिर्मृतप्रायं कृत्वा गतः । तदैव च परशुरामो बहिर्गतः प्रत्यागच्छत् । तं दृष्ट्वा तन्माता रेणुका सोदरताडनं चुक्रोश । यावच्च रामः न्यरोधत् तावत्येव तया एकविंशतिवारमुदरमताडि । अतो रामेणापि एकविंशतिवारं निक्षत्रीकरणशपथः कृतः । अनन्तरं च भृगुमहर्षिः संजीविनीविद्यया जमदग्निं अजीवयत् । ततश्च परशुरामेण कार्तवीर्यो हतः । कालान्तरे च कार्तवीर्यपुत्राः शूरसेनादयः मृगयार्थं वनं गताः परशुरामानुपस्थितिसमये जमदग्निशिर एव छित्वा गृहीत्वा गताः । तत् ज्ञात्वा परशुरामः ‘क्षत्रियरुधिरेण स्वपितृतर्पणं कुर्यामहम्’ इति प्रतिजज्ञे । तथैव कृतवांश्चेति । एवञ्चात्र प्रथमं यत् कार्तवीर्येण स्वामात्यद्वारा जमदग्निवधः कृतः सोऽत्र विवक्षितः । महाभारते तु सङ्ग्रहत्वात् द्वितीयवारजमदग्निवध एव वर्णित इति न विरोधावकाश इति ॥ अप्रतिकर्मण इत्यस्यैव विवरणं—न्यस्तशास्त्र इति.

[1] संन्या–सर्वत्र. [2] कर्मा–इति स्यात्.

न्यस्तं विष्णुधनूरूपं शस्त्रं येन स तथा। तपोबलसमन्वितेऽपि प्राकृतां बुद्धिमास्थितः सन् अर्जुनः—कार्तवीर्यार्जुनो [1] रुद्रः मृत्युं अस्मत्पितुर्विदधे ॥ २३ ॥

[2] **वधमप्रतिरूपं तु पितुः श्रुत्वा सुदारुणम्।**

प्रतिरूपं—न्याय्यम् ॥ २४ ॥

**[3] क्षत्त्रमुत्सादयन् रोषात् * जातं जातमनेकशः ॥ २४ ॥**
**पृथिवीं [4] चाखिलां प्राप्य कश्यपाय महात्मने।**
**यज्ञस्यान्ते तदा राम दक्षिणां † [5] पुण्यकर्मणे ॥ २५ ॥**

प्राप्येति। स्वबलेनेति शेषः। पुण्यकर्मण इति। यज्ञमयपुण्यकर्मसाद्गुण्यार्थमित्यर्थः ॥ २५ ॥

**[6] दत्त्वा महेन्द्रनिलयस्तपोबलसमन्वितः।**
**श्रुतवान् धनुषो भेदं ततोऽहं द्रुतमागतः ॥ २६ ॥**

महेन्द्रः—महेन्द्रपर्वतः ॥ २६ ॥

**तदिदं वैष्णवं राम! पितृपैतामहं महत्।**
**क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ॥ २७ ॥**

---

* जातं जातं क्षत्रमुत्सादयन् अखिलां पृथिवीं प्राप्य इत्यन्वयः. † पुण्यकर्मणे महात्मने कश्यपाय—**शि.**

[1] इदं पदं—**ग.** पुस्तके नास्ति. [2] एतदनंतरं अमर्षो मे महानासीन् सर्वलोकभयप्रदः। शाम्यतोऽग्निर्हुतो विप्रैर्यथा हुतमुखे प्रभुः। अशक्नुवन् स तं क्रोधं धनुर्गृह्य परं शुभम्। इत्यधिकं—**ङ.** [3] क्षत्रमुत्सादयम्—**ङ. च. ज.** क्षत्रमुत्पाटयन्—**ङ.** [4] चाखिलां प्रादां—**ङ.** [5] पुण्यकर्मणां—**ङ.** [6] एतदनन्तरं 'स्थितोऽस्मि तस्मिंस्तप्यन्वै सुसुखं सुरसेविते। अद्य तूत्तमवीर्येण त्वया राम महाबल' इत्यधिकं—**ङ.**

पितृपैतामहमिति । पितृपितामहक्रमागतमित्यर्थः । उत्तरपदवृद्धिरार्षी । क्षत्त्रधर्मं पुरस्कृत्येति । ब्राह्मणवच्छान्तिमास्थाय नाहं शक्त इति मा ब्रूहीत्यर्थः ॥ २७ ॥

योजयस्व धनुश्श्रेष्ठे शरं परपुरञ्जयम् ।
यदि शक्नोषि, काकुत्स्थ ! द्वन्द्वं दास्यामि ते ततः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे पञ्चसप्ततितमः सर्गः

---

यदि शक्नोषि तावतापि न त्वां मुञ्चामि । अपि तु ततः अनन्तरं द्वन्द्वयुद्धं प्रदास्यामि । वीर्यपरीक्षणार्थमित्यर्थः । जरा (२८) मानः सर्गः ॥ २८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे पञ्चसप्ततितमः सर्गः

---

### अथ षट्सप्ततितमः सर्गः

[परशुरामप्रतिष्टम्भनम्]

श्रुत्वा तज्जामदग्न्यस्य वाक्यं दाशरथिस्तदा ।
गौरवाद्यन्त्रितकथः[1] पितू राममथाब्रवीत् ॥ १ ॥

अथ रामेण जामदग्न्यसंहारः—श्रुत्वेत्यादि । पितुर्गौरवादिति । पितृसन्निधिगौरवादित्यर्थः । यन्त्रिता—नियमिता *कथा—उच्चैः कथनं येन स तथा ॥ १ ॥

---

* कथा—आत्मश्लाघनं, अधिकभाषणं वा । तेन रामस्य परशुरामवैलक्षण्यमुक्तं भवति ॥

[1] जामदग्न्यमथा—ङ.

**श्रुतवानस्मि यत्कर्म कृतवानासि भार्गव !**
**[1] अनुरुध्यामहे ब्रह्मन् ! पितुरानृण्यमास्थितः ॥ २ ॥**

श्रुतेत्यादि । पितुरानृण्यं–पितृघातृक्षत्रवधेन पितृवैरशुद्धिं आस्थितस्सन् यत्कर्म–त्रिस्सप्तकृत्वः क्षत्रवधरूपं कृतवान् असि तच्छ्रुतवानस्मि । तदेनमनुरुध्यामहे— [2] अनुरुन्ध्मः—अङ्गीकुर्मः, अवश्यं शूरेण वैरशुद्धेः कर्तव्यत्वात्, * कर्तरि यगार्षः ॥ २ ॥

**वीर्यहीनमिवाशक्तं † क्षत्रधर्मेण भार्गव !**
**अवजानासि [3] मे तेजः पश्य मेऽद्य पराक्रमम् ॥ ३ ॥**

अपि तु वीर्यहीनं अत एव क्षत्रधर्मेण प्राप्ते धनुर्ग्रहयुद्धादौ अशक्तमिव मन्यमानो यन्मां अवजानासि, 'क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व' इत्यादिवचनेनावमानं कृतवानासि, तन्नानुरुध्यामहे । 'अस्मदोर्द्वयोश्च' इति चकारादेकस्मिन्नपि बहुवचनम् । यदेवमतः— तेज इत्यादि । तेजः—पराभिभवासहनं । तच्च तच्च तन्मूलं पराक्रमं स्वशक्त्या पराभिभवनरूपव्यापाररूपं च पश्य ॥ ३ ॥

**इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य शरासनम् ।**
**‡ शरं च प्रतिजग्राह हस्ताल्लघुपराक्रमः ॥ ४ ॥**

इत्युक्त्वा क्रुद्धः—प्रागुक्तरूपावमानवचनेन [4] क्रुद्धः । एवं क्रोधाविष्टत्वादेव तद्धस्तात्स्वयमेव धनुरादेर्बलात् प्रतिग्रहः । लघुः—शीघ्रः पराक्रमो यस्य स तथा ॥ ४ ॥

---

* 'अनो रुध कामे' इति धातुर्वाऽयम्. † क्षत्रधर्मेण स्थितं, अत एव अशक्तं—ब्राह्मणोद्देश्यकातिभाषणासामर्थ्यरहितं मां त्वं वीर्यहीनमिवावजानासि–शि. ‡ चाव भार्गवनिष्ठां वैष्णवीं शक्तिं ........ अग्रे वक्ष्यति 'निर्वीर्यो जामदग्न्योऽसौ' इति–ति.

[1] अनुरुन्ध्यामहे–ज. [2] अनुसरामः–ग. [3] मां राम–ङ. [4] क्रोधः–घ.

आरोप्य स धनू रामः शरं सज्यं चकार ह ।
जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवीद्वचः ॥ ५ ॥

स रामो धनुरारोप्य—ज्यारोपं कृत्वा, शरं सज्यं—ज्यासहितं चकार । सन्धानं कृतवानिति यावत् ॥ ५ ॥

ब्राह्मणोऽसीति पूज्यो मे * विश्वामित्रकृतेन च ।
तस्माच्छक्तो न ते राम! मोक्तुं प्राणहरं शरम् ॥ ६ ॥
† इमां[1] वा त्वद्गतिं राम! ‡ तपोबल[2]समार्जितान् ।
लोकानप्रतिमान् वा ते हनिष्यामि यदिच्छसि ॥ ७ ॥

ब्राह्मणोऽसीति । जमदग्निबीजत्वेन ब्राह्मण इति कृत्वा सामान्यतः पूज्योऽसि—वधानर्होऽसि । अपि च विश्वामित्रकृतेन—विश्वामित्रभागिनेयसुतत्वेन च हेतुना पूज्योऽसीति यतः तस्मात् इमां प्रत्यक्षसिद्धां त्वद्गतिं—गतिसाधनपादावित्यर्थः । लोकानिति । § लोकप्राप्तिमार्गमित्यर्थः । यदिच्छसीति । उभयोर्मध्ये तद्वदेति शेषः ॥ ७ ॥

न ह्ययं वैष्णवो दिव्यः शरः परपुरञ्जयः ।
[3] मोघः पतति वीर्येण बलदर्पविनाशनः ॥ ८ ॥

---

* विश्वामित्रकृतेन—विश्वामित्रकृतेन स्नेहेन ; विश्वामित्रभगिन्यां सत्यवत्यां ऋचीकाज्जातो जमदग्निः, तस्य पुत्रः परशुरामः इति विश्वामित्रसम्बन्धेनेत्यर्थः–**गो.** विश्वामित्रात्—अस्मद्गुरुविश्वामित्रभगिनीपुत्रात् कृतेन—जातत्वेन च हेतुना–**शि.** विश्वामित्रकृते– इत्यस्मिन्नर्थे विभक्तिप्रतिरूपकमव्ययं वेदम् . † उत्तरत्र 'यदीमां मद्गतिं' इत्यत्र संचारस्य स्पष्टं प्रतीत्या अत्रैवं व्याख्यानम् । अत एव गोविन्दराजीये 'पादगतिं' इति पाठ आदृतः । पाद्मेऽपि 'त्वत्पादकमले हन्मि' इति दृश्यते । शिरोमणिस्तु त्वद्गतिं—त्वत्कर्तृकं कामचारगमनं इति व्याचख्यौ । शिष्टं १४ तमश्लोकटिप्पण्यां द्रष्टव्यम् . ‡ 'लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया' इत्यनुपदं सत्त्वात् अयं पाठो युक्तः. § परं तु उत्तरत्र २२ तमश्लोके 'लोकान्' इति पदमन्यथा व्याख्यातम् .

[1] पादगतिं–ङ. [2] समार्जिताम्–ङ. [3] एतदनन्तरं-इति ब्रुवति काकुत्स्थे भार्गवं प्रति रोषिते । शतक्रतुमुखा देवा पुरस्कृत्य शतक्रतुम् ॥ इत्यधिकं–ङ.

कुत एवमित्यतः—न ह्ययमित्यादि। वीर्येण—स्वशक्त्या शत्रूणां बलजदर्पविनाशनः ॥ ८ ॥

वरायुधधरं रामं द्रष्टुं सर्षिगणाः सुराः।
पितामहं पुरस्कृत्य समेतास्तत्र सङ्घशः ॥ ९ ॥

वरायुधं—वैष्णवं धनुः। सर्वतो रामाभ्युदये—निजावतारत्वादेव सदेवगणपरिकरस्य भगवतो ब्रह्मणो दिदृक्षया आगमनं भवति। "अनुग्रहात्तद्दर्शानां तत्प्रेम्णाम्" इत्युपनिषद्रहस्यात्। नैवं क्वचित् कस्यचिदप्यभ्युदये भगवतो दिदृक्षाप्रवृत्तिः। एवं प्रतिसर्गभगवदनुग्रह-प्रसंगोपबृंहितत्वादेवेदं रामायणामृतं ब्रह्मकुलजीवातुः ॥ ९ ॥

गन्धर्वाप्सरसश्चैव सिद्धचारणकिन्नराः।
यक्षराक्षसनागाश्च तद्द्रष्टुं महदद्भुतम् ॥ १० ॥
*जडीकृते [1] तदाऽऽलोके रामे वरधनुर्धरे।
निर्वीर्यो जामदग्न्योऽसौ रामो राममुदैक्षत ॥ ११ ॥

एवं वरधनुर्धरे रामे—अधिकरणे, तदाऽऽलोके—तस्य भार्गवस्याऽऽलोके; सति सङ्क्रान्त इति यावत्। तथा †पुराणे—"ततः परशुरामस्य देहान्निर्गत्य वैष्णवम्। पश्यतां सर्वदेवानां तेजो राममुपागमत" इति। अत एव भार्गवे जडीकृते—निर्वीर्ये सति, योऽसौ निर्वीर्यो जामदग्न्यो रामः राममुदैक्षत। उद्धृतविष्णुतेजस्कमपश्यदित्यर्थः। तथैव जामदग्न्यो वक्ष्यति। 'त्वां मधुहन्तारं जानामि" इति ॥ ११ ॥

---

*लोके—जने जडीकृते—स्तब्धे निर्वीर्यः—निर्गतवैष्णवतेजाः—गो. †नृसिंहपुराणे.

[1] तदा लोके—ङ.

* तेजोभिर्गतवीर्यत्वाज्जामदग्न्यो जडीकृतः ।
[1] रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ॥ १२ ॥

उक्तश्लोकार्थ एव विवरणरूपेणोच्यते पुनः—तेजोभिरित्यादि । रामसङ्क्रान्तैर्हेतुभिरिति शेषः । उवाच हेति । शरगतिप्रश्नोत्तरमिति शेषः ॥

[2] कश्यपाय मया दत्ता यदा पूर्वं वसुन्धरा ।
विषये मे न वस्तव्यमिति मां कश्यपोऽब्रवीत् ॥ १३ ॥

विषय इति । मे—मह्यं दत्ते विषये—कृत्स्नवसुन्धरालक्षणे देशे त्वया न वस्तव्यमिति मां कश्यपोऽब्रवीत्, प्रजाभीत्यादि-निवृत्तिप्रयोजनाय ॥ १३ ॥

सोऽहं † गुरुवचः कुर्वन् पृथिव्यां न वसे ‡ निशाम् ।
कृता प्रतिज्ञा काकुत्स्थ ! कृता भूः कश्यपस्य हि ॥

यदेवमतः—सोहं गुरुवचः—कश्यपवचः अनुतिष्ठन् पृथिव्यां निशां न वसे, छान्दसस्तङ्, रात्रौ पृथिव्यां न वसाम्यद्यापि । अहन्यावश्यककार्यायागत्य गमनमात्रं दीक्षितपत्न्या इवादोष

* तेजोभिऽहत–ध. † ब्रह्माण्डपुराणे ३–४७ तमेऽध्याये 'तेषामनुमते कृत्वा कश्यपं गुरुमात्मनः । वाजिमेधं ततो राजन् आजहार ' इति दर्शनात् काश्यपस्य स्वगुरुत्वे-नाभिधानम् . ‡ ब्रह्माण्डपुराणादौ —" आहूय भृगुशार्दूलः सशैलवनकाननाम् । कश्यपाय ददौ सर्वामृते तं शैलमुत्तमम् । आत्मनः सन्निवासार्थं तं रामः पर्यकल्पयत् " इति दृश्यते । एतेन परशुरामः सर्वक्षत्रियविनाशपरिहाराय कश्यपेन निष्कासितः । अथापि स्वदेशे गमनागमनादिकं न प्रतिषिद्धवान् । यदाकदाचित् कार्यार्थमत्रागतोऽपि परशुरामः बहुदूरादपि प्रभाववशात् रात्रेः पूर्वं महेन्द्रं प्रति प्रतिनिवर्तमान आस । एतादृशगतिसामर्थ्यमेव ' मनोजवं गमिष्यामि ' इत्यनेन सूचितम् । एतदेव च गतिशब्दे-नास्मिन् प्रकरण उच्यत इति भाव्यम् ॥

[1] एतदनंतरं-राम राम महाबाहो श्रुणु राम मयेरितम् । राजसूये कृते पूर्वं यज्ञे दशरथात्मज ॥ इत्यधिकं–ङ. [2] कश्यपस्थाने सर्वत्र काश्यपेत्यपि पाठः.

इत्याशयः। तदेति। यदा दत्तं, यदा च न वस्तव्यमित्युक्तं तदारभ्येत्यर्थः। पृथिव्यां न वस इति सम्बन्धः। कुतः पृथिव्यां न वस इत्यतः—कृतेत्यादि। हि शब्दः प्रसिद्धौ। यतस्सर्वप्रसिद्धतया भूः कश्यपस्य स्वत्वेन कृता, न वत्स्यामीति च प्रतिज्ञा च कृता, तस्मादेवेत्यर्थः॥ १४॥

[1]यदीमां मद्गतिं वीर! हन्तुं नार्हसि राघव!
*मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम्॥ १५॥

यदेवमतो—यदीत्यादि। नार्हसि यदि—इमां मद्गतिं च त्वं हन्तुन्नार्हसि—यदि नेच्छसीति यावत्, ततो मनोजवं पादमास्थाय महेन्द्रं पर्वतोत्तमं—केरळभूरूपं गमिष्यामि। स तु समुद्रान्मयाऽऽवासाय याचितः पश्चात्॥ १५॥

लोकास्त्वप्रतिमा राम! निर्जितास्तपसा मया।
† जहि तान् शरमुख्येन मा भूत्कालस्य पर्ययः॥ १६॥

अतो ये लोका निर्जितास्ताञ्जहि॥ १६॥

‡[2]अक्षयं मधुहन्तारं जानामि त्वां [3]सुरेश्वरम्।
धनुषोऽस्य परामर्शात् स्वस्ति तेऽस्तु परंतप!॥ १७॥

त्वां तु लोकदानप्रतिबन्धस्वतन्त्रं 'उतामृतत्वस्येशानः' इति श्रुतिप्रसिद्धं विराजं ब्रह्माणमेव जानामि इत्याह—अक्षयमित्यादि।

---

* महेन्द्रं मनोजवं यथा स्यात् तथा गमिष्यामि—**शि.** † अत्र पुण्यार्जितलोकहननाभ्यनुज्ञयाऽस्य तत्त्ववित्त्वं व्यङ्ग्यम्। रामस्य लोकदानप्रतिबन्धयोः स्वातन्त्र्यदर्शनेन परेशत्वबोधनं च—**ति.** लोकहननं नाम लोकदानप्रतिबन्धः—**गो.** ‡ 'उतामृतत्वस्येशानः' इति श्रुतिप्रसिद्धं ब्रह्म त्वमित्याह—अक्षय्यमिति—**ति.**

[1] तदिमां, तामिमां त्वं गतिं—**ङ. ज.** [2] अक्षय्यं—**ङ.** [3] सुरोत्तमम्—**ङ.**

भूमविराडुपग्रहामिति यावत् । कुत एवं निश्चयः? इत्यतः—धनुष इत्यादि । अस्येति । वैराजस्येत्यर्थः । परामर्शः-ग्रहणाकर्षणादिव्यापारः ॥ १७ ॥

**एते सुरगणाः सर्वे निरीक्षन्ते समागताः ।**
**त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ १८ ॥**

आहवे अप्रतिद्वन्द्वं—अस्मद्रूपप्रतिभटरहितं सर्वदेवा निरीक्षन्ते —पश्यन्ति ॥ १८ ॥

**न चेयं मम काकुत्स्थ! व्रीडा भवितुमर्हति ।**
**त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥ १९ ॥**

इयं त्वद्विषये अशक्तिः मम व्रीळा—व्रीळावहा भवितुं नार्हति । कुत इत्यतः—त्वयेत्यादि । विराडादिपदत्रयनाथेनास्मदादेस्तथा तथा शक्तिप्रदेन ब्रह्मणा त्वया स्वयं दत्तशक्तेः पुनः स्वस्मिन्नेव संयोजनेन विमुखीकृतः—अशक्तः कृतः, कृष्णेनार्जुन इव, न तु अन्येन प्राकृतेन संसारजीवकोट्यन्तर्गतेन ; तदा किल व्रीळा । तत्तत्स्वामिना तत्तत्स्वे गृहीते तत्तन्न्यासरक्षिणां का व्रीळा इत्याशयः ॥ १९ ॥

**शरमप्रतिमं राम! मोक्तुमर्हसि सुव्रत!**
***शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ २० ॥**

अतो लोकेश्वरस्त्वं शरं मल्लोकप्रतिबन्धाय मोक्तुमर्हसि । शरमोक्षे सति दत्तशरगतिरहं [1]अप्रतिबद्धो महेन्द्रं गमिष्यामि ॥ २० ॥

---

*पापस्य तपसा दग्धत्वात्, पुण्यस्य च शरमोक्षेण फलप्रतिबन्धे जीवन्मुक्तो भूत्वा गमिष्यामीत्यर्थः-ति.

[1] अप्रतिबन्धः-ग.

तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् ।
रामो दाशरथिःश्रीमांश्चिक्षेप शरमुत्तमम् ॥ २१ ॥
स हतान् दृश्य रामेण स्वांल्लोकांस्तपसाऽऽर्जितान् ।
जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ॥ २२ ॥

सः—जामदग्न्यः शरक्षेपानंतरं तपसाऽऽर्जितान् स्वान् लोकान् रामेण तेन शरेण हतान्—रुद्धान् दृश्य—दृष्ट्वा महेन्द्रं जगाम ॥

ततो वितिमिराः सर्वा [1]दिशश्चोपदिशस्तथा ।
सुराः सर्षिगणा रामं प्रशशंसु[2]रुदायुधम् ॥ २३ ॥
रामं दाशरथिं रामो जामदग्न्यः प्रशस्य च ।
*ततः प्रदक्षिणं कृत्वा जगामात्मगतिं प्रभुः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे बालकाण्डे षट्सप्ततितमः सर्गः

---

रामं प्रदक्षिणं कृत्वेति । रामे सम्यक् समुत्पन्नब्रह्मबुद्धित्वादपेतबालक्षत्रियबुद्धित्वात्स्वयं ब्रह्मर्षिर्वृद्धोऽपि सन् प्रदक्षिणादिकमकरोत् । आत्मगतिं—आत्मत्वेन गतिरात्मगतिः—रामः मदन्तर्यामी भगवान् आदिगुरुर्ब्रह्मैवेति तत्त्वज्ञनं प्राप्तवान् । आत्मगतिं—स्वस्थानं च जगामेत्यर्थः । प्रभुरिति । ब्रह्मज्ञत्वेन सर्वलोकप्रभुत्वम् । भार (२४) मानः सर्गः ॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां बालकाण्डे षट्सप्ततितमः सर्गः

---

* अन्तर्यामित्वेन ज्ञानात् प्रदक्षिणकरणं, क्षत्रियत्वाच्च तस्य प्रणत्यकरणं कायेनेति बोध्यम्-**ति.** । प्रकृष्टा—सर्वोत्तमा दक्षिणा—आत्मसमर्पणरूपा यस्मिन् तत् कर्म कृत्वा-**शि.**

[1] दिशश्च विदिश-ङ.  [2] मुदान्विताः-ङ. ज.

## अथ सप्तसप्ततितमः सर्गः

[अयोध्यावासः]

**गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः ।**
***वरुणायाप्रमेयाय ददौ हस्ते [1] ससायकम् ॥ १ ॥**

अथ संपूर्णकामतया दशरथस्य पुरप्रवेशादिः–गते राम इत्यादि । परशुराम इति यावत्। हस्ते-स्वहस्ते स्थितं सायकं धनुश्च वरुणाय ददौ, न्यासात्मनेति शेषः । वरुणस्याप्रमेयत्वं–" भृगुर्वै वारुणिः । वरुणं पितर-मुपससार' इत्यादिना साक्षात् शुद्धब्रह्मविद्याप्रवर्तकदेशिकेन्द्रत्वादप्रमेय-वैभवत्वम् । तस्य च सत्त्वप्रधानतो ब्रह्मण आन्तरमूर्तित्वात् ब्रह्मणा रामेणाप्ते एतस्मिन् प्रदानम् । एवं वरुणादिमहामहादेवतानामपि स्वेष्ट-विनियोजकत्वेन भगवान् रामो ब्रह्मा स्वावगमः । वरुणायेत्यादौ षष्ठ्यर्थे चतुर्थ्याश्रये तु पाङ्क्तोऽर्थः ॥ १ ॥

**अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् ।**
**† पितरं [2] विह्वलं दृष्ट्वा प्रोवाच रघुनन्दनः ॥ २ ॥**

विह्वलः–परवशः ॥ २ ॥

---

*वरुणाय–देवैस्सह कौतुकदर्शनार्थमन्तरिक्षे स्थिताय–**ति**, अप्रमेयाय–अन्यैः अयं वरुण इति तस्मिन् काले प्रमातुमशक्याम–**शि.** अप्रमेयाय–अदृश्याय–**गो.** । अत्र ससायकं धनुरिति वाऽन्वयः. † विह्वलं–परवशं । अनेन परशुरामेण कृतां परत्वसूचिकां स्तुतिं वरुणाय धनुर्दानं च दशरथो न ज्ञातवानिति गम्यते–**गो.** धनुर्दानवृत्तान्तस्य मायया तिरोधानमन्यान् प्रति–**ति.** अत्र विह्वलत्वं भयकृतमिति युक्तम् । पूर्वं परशुरामाद भयाविष्करणात्, 'गतो राम इति श्रुत्वा हृष्टः' इत्यनन्तरमेवोक्तेश्च.

[1] महायशाः–ङ. ज. [2] विकलं–ङ. ज.

**जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी ।**
**[1]अयोध्याभिमुखी सेना त्वया नाथेन पालिता ॥ ३ ॥**

चतुरङ्गिणीति । 'प्रातिपदिकान्तनुम' इत्यादिना णत्वम् ॥ ३ ॥

**रामस्य वचनं श्रुत्वा राजा दशरथः सुतम् ।**
**बाहुभ्यां सम्परिष्वज्य मूर्ध्नि चाघ्राय राघवम् ॥ ४ ॥**
**गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः ।**
**पुनर्जातं तदा मेने पुत्रमात्मानमेव च ॥ ५ ॥**
**चोदयामास तां सेनां, जगामाशु ततः पुरीम् ।**

तां सेनां–प्रथमं क्षुभितां पश्चात् प्राप्ताश्वासां चेत्यर्थः । प्रतिबन्धाभावात् पुरीं चाशु जगाम ॥ ५ ॥

***पताकाध्वजिनीं रम्यां तूर्योद्घुष्टनिनादिताम् ॥ ६ ॥**
**[2]† सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ।**

अस्यैव विस्तरः–पताकेत्यादि । पताका–ध्वजपटः । ध्वजः–दण्डः । पताकान्विता ध्वजास्सान्ति अस्या इति तथा । उद्घुष्टमिति भावे निष्ठा ॥ ६ ॥

---

* यद्यप्यत्र पताका-ध्वजपटः, ध्वजः-दण्डः इति गोविन्दराजैरपि व्याख्यातम्, अथापि तैरेव अन्यत्र (अयो-६-२३) ध्वजाः-सचिह्नाः, पताकाः-चिह्नरहिताः इति व्याख्यातम् । तदेवात्रापि युक्तं ग्रहीतुमिति ॥ (ह्रस्वदीर्घध्वजभेद इत्यप्याहुः–**गो.**)

† रम्यामिति पुनरुक्तिः तत्तद्विशेषणरमणीयत्वाभिप्रायेण–**गो**. सिक्तैः राजपथैः रम्यां–**शि.** सिक्तेन राजपथेन आ–समन्तात रम्यां–**ति.**

[1] एतदनन्तरं–संदिशस्व महाराज सेनां त्वच्छासने स्थिताम् । शासनं काङ्क्षते सेना चातकालिर्जलं यथा ॥ ४ ॥ इत्यधिकं. **ङ.** [2] सिक्तराजपथैरम्यां, सिक्तराजपथारम्यां–**ज.**

राजप्रवेशसुमुखैः पौरैर्मङ्गल[1]वादिभिः ॥ ७ ॥
संपूर्णां प्राविशद्राजा जनौघैः समलङ्कृताम् ।

मङ्गलं—आशीर्वदनं वदितुं शीलमस्त्येषामिति तथा ॥ ७ ॥

पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः ॥ ८ ॥
पुत्रैरनुगतः श्रीमान् श्रीमद्भिश्च महायशाः ॥

श्रीमद्भिरिति । दारपरिग्रहादधिकलक्ष्मीवद्भिः ॥ ८ ॥

प्रविवेश गृहं राजा हिमवत्सदृशं पुनः ॥ ९ ॥
ननन्द सजनो राजा गृहे कामैः सुपूजितः ।

हिमवत्सदृशमिति । अनेन सुधालेपजधावल्यमौन्नत्यं च लक्ष्यते । सजनः—सबन्धुजनः गृहे विद्यमानः । काम्यन्त इति कामाः-विषयभोगपरिकरस्रक्चन्दनाभरणादयः तैः सुपूजितः—प्राप्तपूजः—प्राप्तानन्द इत्यर्थः ॥ ९ ॥

कौसल्या च सुमित्रा च कैकेयी च सुमध्यमा ॥ १० ॥
[2] वधूप्रतिग्रहे * युक्ता याश्चान्या राजयोषितः ।

वधूनां—स्नुषाणां प्रतिग्रहः—आरात्रयादिमङ्गलाचारपूर्वकः । राजयोषितः—दशरथपत्न्यः ताश्च वधूप्रतिग्रहे युक्ताः ॥ १० ॥

---

* युक्ताः—आसक्ता अभूवन्नित्यर्थः ।

[1] पाणिभिः—ङ. [2] एतदनन्तरं—रामं च लक्ष्मणं चैव शत्रुघ्नं भरतं तथा । आर्चयन्मङ्गलाशीर्भिर्मङ्गलैरभ्यपूजयन् । उपहारैश्च संहृष्टाः कुमारानभिपूज्य च ॥ इत्यधिकं—ङ.

ततः सीतां महाभागामूर्मिलां च यशस्विनीम् ॥ ११ ॥
कुशध्वजसुते चोभे जगृहुर्नृपपत्नयः ।
मङ्गला[1]लपनैश्चैव शोभिताः क्षौमवाससः ॥ १२ ॥
*देवतायतनान्याशु [2]सर्वास्ताः प्रत्यपूजयन् ।

मङ्गलार्थमालपनमाशीर्वादः तैरुपलक्षिता इति शेषः । देवतायतनं–पुरदैवत[3]गृहदैवतायतनवेदिः । प्रत्यपूजयन्निति । प्रणमन्ति स्म ॥

[4]अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा ॥ १३ ॥
[5]रेमिरे मुदिताः सर्वा भर्तृभिः सहिता रहः ।
कृतदाराः [6]कृतास्त्राश्च सधनाः ससुहृज्जनाः ॥ १४ ॥

अभिवादार्हाः–अभिवाद्याः । कृतास्त्राः–अनुष्ठितपितृनियोगाः । सधनाः–स्वस्वभोगोपयुक्तजीवाजीवधनसहिताः ॥ १४ ॥

[7]शुश्रूषमाणाः पितरं †वर्तयन्ति नरर्षभाः ।

शुश्रूषमाणाः–सर्वकृत्येषु पितरं संपृच्छ्यमानाः । वर्तयन्ति–पित्रुक्तमेवानुवर्तयन्ति स्म ॥ १४ ॥

[8]कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् ॥ १५ ॥

कस्यचित्कालस्येति । अत्यय इति शेषः ॥ १५ ॥

---

*देवतायतनानि–गृहदेवतानामर्चागृहाणि, प्रत्यपूजयन्—गन्धपुष्पादिभिरपूजयन् । आयतनपूजामात्रे स्त्रीणामधिकारादिति भावः–**गो.** †वर्तयन्ति–वर्तन्ते, णिजर्थोऽविवक्षितः–**शि.**

[1] लपनैर्होमैः–**ज.**, लंभनैश्चैव–**ङ.** [2] यथार्हं–**ङ.** [3] ग्राम–**ग.** [4] एतदनन्तरं 'स्वं स्वं गृहमथाऽऽसाद्य कुबेरभवनोपमम् । गोभिर्धनैश्च धान्यैश्च तर्पयित्वा द्विजोत्तमान्–**ङ.** [5] एतदनन्तरं–कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि । अधिकम्–**ङ.** [6] कृतास्त्राश्च–**ङ.** [7] एतदनन्तरं–कालेकाले तु नीतिशास्त्तोषयन्तो गुरुं गुणैः । अधिकं–**ङ.** [8] एतदनन्तरं–अभिवादयितुं प्राप्तं श्यामं कमललोचनम् । अक्लिष्टकारिणं शूरं परसैन्यविमर्दनम् । विनयं देहयोगेन संप्राप्तमिव संस्थितम् । अधिकम्–**ङ.**

भरतं कैकयीपुत्रमब्रवीद्रघुनन्दनः ।
अयं केकयराजस्य पुत्रो वसति पुत्रक ! ॥ १६ ॥
[1] त्वां नेतुमागतो वीर ! युधाजिन्मातुलस्तव ।

मातुलस्तवेति । अतो गत्वाऽऽगच्छेति शेषः ॥ १६ ॥

[2] श्रुत्वा दशरथस्यैतद्भरतः कैकयीसुतः ॥ १७ ॥
गमनायाभिचक्राम * शत्रुघ्नसहितस्तदा ।

एतदिति । वाक्यमिति शेषः ॥ १७ ॥

आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् ॥ १८ ॥
[3] मातृश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ ।

† अक्लिष्ट–कस्यापि दुःखरहितं यथा भवति तथा कर्तुं शील-मस्त्यस्येति तथा ॥ १८ ॥

गते च भरते रामो लक्ष्मणश्च महाबलः ॥ १९ ॥
पितरं देवसंकाशं पूजयामासतुस्तदा ।
पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः ॥ २० ॥

---

* १८ सर्गे रामलक्ष्मणयोरिव भरतशत्रुघ्नयोः सौभ्रात्रातिशयः प्रत्यपादि.
† 'अक्लिष्टव्रतधर्मज्ञः' इत्यादाविव विनैव क्लेशं उत्साहेनानायासतः सर्वं कर्तुं समर्थ इति वाऽर्थः.

[1] एतदनन्तरं 'प्रार्थितस्तेन धर्मज्ञ मिथिलायामहं तदा । ऋषिमध्ये तु तस्य त्वं प्रीतिं कर्तुमिहार्हसि ॥ इत्यधिकम्–ङ. [2] एतदनन्तरं–अभिवाद्य गुरुं रामं परिष्वज्य च लक्ष्मणम् । इत्यधिकम्–ङ. [3] एतदनन्तरं–युधाजित्प्राप्य भरतं सशत्रुघ्नं प्रहर्षितः । स्वपुरं प्राविशद्वीरः पिता तस्य तुतोष ह । इदमधिकम्–ङ.

**चकार रामो धर्मात्मा प्रियाणि च हितानि च।**
**मातृभ्यो मातृकार्याणि [1]कृत्वा परमयान्त्रितः॥ २१ ॥**
**गुरूणां गुरुकार्याणि काले कालेऽन्ववैक्षत।**

परमं—अत्यन्तं यन्त्रितः—श्रुतिस्मृतिमर्यादानतिलंघी। गुरुकार्याणीति। गुर्वर्चितशुश्रूषादिकार्याणीति यावत्॥ २१ ॥

**एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तथा॥ २२ ॥**
**रामस्य शील[2]वृत्तेन सर्वे विषयवासिनः।**

तथा नैगमाः—वणिजः। विषयवासिन इति। प्रीता इति विपरिणामः॥ २२ ॥

**तेषामतियशा लोके रामः सत्यपराक्रमः॥ २३ ॥**
**स्वयम्भूरिव भूतानां बभूव गुणवत्तरः।**

तेषां चतुर्णां पुत्राणां मध्ये सत्यपराक्रमः राम एव लोके गुणवत्तरः—अतिशयेनानन्तकल्याणगुणसम्मतो बभूव। यथा भगवान् स्वयम्भूः देवासुरान्तसकलसंसारिणां साधारण्येन निस्तुलाधिकजाग्रन्निर्मलनिसर्गभूमविचैश्वर्यानन्दवैभवेन सज्जनसाधारणनिरयभरणस्वर्गप्रापणपरमापवर्गान्तसकलपुरुषार्थसाक्षात्साधकत्वेन सर्वसम्मतसर्वोपसेव्यानन्तकल्याणगुणो भवति, उपादानत्वेन सर्वात्मकत्वाच्च सर्वसम्मतसच्चिदानन्दतत्त्वतत्स्वरूपत एवाविवादतस्सर्वलोकसम्मतविचैश्वर्यादिगुणो भवति तथेत्यर्थः॥ २३ ॥

**रामस्तु सीतया सार्धं विजहार बहूनृतून्॥ २४ ॥**
**मनस्वी *[3]तद्गतस्तस्या नित्यं हृदि समर्पितः।**

---

* तस्यां गतः—इति वाऽर्थः.

[1] राज्ञा—ङ. [2] वृत्ताभ्यां—ङ. [3] तद्गतमनाः—ङ.

मनस्वी-अनुकूलमनस्कः। अतः तद्गतः-तया सीतया अभिगतः-नित्यसेव्यमानः; आस्थान्यवस्थानादिना असन्निधानेऽपि तस्य हृदि तया नित्यं समर्पितः-सततोत्कण्ठितो भवति॥ २४॥

**प्रिया तु सीता रामस्य दाराः *पितृकृता [1]इति॥ २५॥**
**[2]गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभ्यवर्धत।**

सीता रामस्य पितृकृता दारा इति तु विशिष्य प्रिया भवति। उत्तमस्त्रीत्वादेव स्वतः प्राप्ता प्रीतिस्सीतायां पितृकृतत्वेन बहुमाननास्पदभूता चाभूदित्यर्थः। न केवलं पितृकृतेति प्रीतिः, अपि तु गुणात्-इष्टशिष्टहितकारित्वादिपातिव्रत्यगुणात्। रूपं-आत्मीयनिस्तुलाधिकसौन्दर्यात्मकगुणस्तथा। भूयः-अभ्यधिकं रामस्यास्यां प्रीतिरवर्धत॥ २५॥

**तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते॥ २६॥**
**अन्तर्जातमपि व्यक्तं आख्याति हृदयं हृदा।**

तस्याश्च हृदये भर्ता रामः गुणाद्रूपगुणाच्च द्विगुणं परिवर्तते स्म। उभयोः परस्परेङ्गितज्ञानं स्नेहमूलकं प्रदर्श्यते--अन्तरित्यादि। तस्य रामस्यान्तर्जातमपि हृदयं-हार्दाभिप्रायं मैथिली हृदा-स्वहृदयेन ज्ञात्वा भूयः-अभ्यधिकं व्यक्तं विशेषेणैव एवमेवेति विविच्य आख्याति स्म। एवं सोऽपि सीतायाः॥ २६॥

---

* अत्र पितृपदेन दशरथो विवक्षितः। अथवा 'इयं सीता मम सुता' इत्यादिना सीतायाः जनकेन दानात् पिताऽत्र सीतापिता विवक्षितः। सीताविवाहस्य स्वयंवरत्वव्यावृत्तये इदं विशेषणम्। यद्यपि अयोध्याकाण्डान्ते—अनसूयया सीतां प्रति तत्स्वयंवरवृत्तान्त एव पृष्टः, अथापि सीता 'मम पित्रा त्वहं दत्ता' इत्येव प्रत्यवोचत्। एवञ्च सीताविवाहः वीर्यशुल्कप्रधानः गौणः स्वयंवर इति॥

[1] इव- ङ. [2] एतदनन्तरं—तथैव रामस्सीताया प्राणेभ्योऽपि प्रियोऽभवत्। हृदयं त्वेव जानाति प्रीतियोगं परस्परम्॥ अधिकम्—ङ.

**तस्य भूयो विशेषेण मैथिली जनकात्मजा ॥ २७ ॥**
**देवताभिः समा रूपे सीता श्रीरिव रूपिणी ।**

देवताभिस्समेति । मानुषावतारेऽपीति शेषः । अत एव श्रीरिवेति उपमाऽपि श्रिया एव सत्या । अत एवोत्तरश्लोकोपमाऽप्युभयोः ॥

**तया स राजर्षिसुतोऽभिरामया**
**समेयिवानुत्तमराजकन्यया ।**
**अतीव रामः शुशुभेऽतिकामया**
**विभुः *श्रिया विष्णुरिवामरेश्वरः ॥ २८ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां बालकाण्डे सप्तसप्ततितमः सर्गः

**समाप्तश्च बालकाण्डः**

---

[1] अदुःखमानः (२८ १/२) सर्गः ॥ २८ १/२ ॥

**बालकाण्डे तु सर्गाणां कथिता सप्तसप्ततिः ।**
**श्लोकानां द्वे सहस्रे च साशीतिशतकद्वयम् ॥**

इति श्रीमद्रामायणामृतकतकटीकायां श्रीमन्माधवयोगिविरचितायां बालकाण्डे सप्तसप्ततितमः सर्गः

**बालकाण्डव्याख्या समाप्ता**

---

यस्सर्वोपनिषद्व्याख्या मङ्गलाभरणं व्यधात् ।
†ब्रह्म जिज्ञासतां तस्मै नमो माधवयोगिने ॥

---

* अमरेश्वरः—विष्णुः श्रियेव, मूर्तिभेदेनोपमानत्वम्—**गो.**

† क पुस्तके अन्ते इदं पद्यमधिकं दृश्यते—

दयानिधे राघव रामचन्द्र निरस्य पापानि ममाखिलानि ।
त्वय्येव भक्तिं सुदृढां प्रयच्छ सैव प्रसूते सकलानभीष्टान् ॥

[1] अजरमानः—**ग.**

# श्रीमद्वाल्मीकिरामायणम्

## श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(द्वितीयसंपुटः—अयोध्याकाण्डः–१)



प्राच्यविद्यासंशोधनालयः
मैसूरुविश्वविद्यानिलयः
मैसूरु
१९६४

# श्रीमद्वाल्मीकिरामायणम्

श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(द्वितीयसंपुटः—अयोध्याकाण्डः-१)



प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मैसूरु

१९६४

ORIENTAL RESEARCH INSTITUTE SANSKRIT SERIES 107

GENERAL EDITOR:

H. DEVEERAPPA, M.A.,

*Director*

# ŚRĪMADVĀLMĪKI RĀMĀYAṆA

WITH

AMṚTAKATAKA OF MĀDHAVAYOGI

(VOL. II--AYODHYĀKĀṆḌA-I)

EDITOR:

VIDWAN K. S. VARADACHARYA,

*Research Assistant*



ORIENTAL RESEARCH INSTITUTE

UNIVERSITY OF MYSORE

MYSORE

1964

प्राच्यविद्यासंशोधनालयसंस्कृतग्रन्थमाला १०७

प्रधानसम्पादकः

एच्. देवीरप्प, एम्.ए.,
डैरेक्टर

# श्रीमद्वाल्मीकिरामायणम्

## श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(द्वितीयसंपुटः—अयोध्याकाण्डः-१)

सम्पादकः
विद्वान् के. एस्. वरदाचार्यः,
रिसर्च् असिस्टेण्ट्




प्राच्यविद्यासंशोधनालयः
मैसूरुविश्वविद्यानिलयः
मैसूरु
१९६४

## PREFACE

IT is well known that there are several editions of the great epic, Vālmīki Ramāyaṇa, with or without commentary. But an authoritative edition of this great work is under preparation in one of our sister Institutes, the Oriental Institute, Baroda.

This Institute, therefore, has undertaken to bring out a critical edition of the same with the Amṛtakataka commentary of the Mādhavayogi (about 1700 A. D.). 'Amṛtakataka' is brought to light for the first time.

The Bālakāṇḍa has been already published. Now the I Part of Ayodhyākāṇḍa is coming to light. The II Part of Ayodhyākāṇḍa is in press. Other Volumes are under preparation.

Vidwan Sri K. S. Varadacharya, one of the Research Assistants of our Institute, has edited the work ably. I wish to state that it is also intended to give the critical introduction and appreciation of the same in a separate Volume after the whole work is published.

My thanks are due to the authorities of the Palace Saraswati Bhandara, Mysore, Oriental Manuscripts Library, Madras, and Sri Sachidananda Sarada Bhandagara of Sri Jagadguru Sri Koodali Sringeri Mahasamsthana, Chitradurga, Mysore State for lending their manuscript copies of the work for collation. My thanks are also due to the Deputy Director of Printing and Stationery, Government Branch Press, Mysore, for getting the work printed in time and in an efficient manner.

MYSORE,
*Dated 30-7-1963*

H. DEVEERAPPA,
*Director,*
*Oriental Research Institute*

# प्रस्तावना

'सुरम्यमासाद्य तु चित्रकूटं
नदीं च तां माल्यवतीं सुतीर्थाम् ।
ननन्द हृष्टो मृगपक्षिजुष्टां
जहौ च दुःखं पुरविप्रवासात् ॥'
(अयो. ५६. ३८)

हन्त ! सकलसहृदयहृदयहारिसन्निवेशविशिष्टं चित्रकूटं आसाद्य बन्धुजनवियोगादिकं सर्वमपि विस्मृत्य प्रियया सह विहरन्तं सानुजं श्रीरामचन्द्रमवलोक्य किञ्चिदिव समाश्वसितं इदानीं अस्माकं मनः ॥

श्रीमदादिकविना श्रीरामादिभिः सह चित्रकूटं नीता वयमपि दूरत एव पश्यामः *नभस्स्पृशानि पावनानि चित्रकूटशिखराणि । समीपमुपसर्पतामस्माकं—अदृष्टपूर्वाणां वृक्षलतादीनां विचित्राणि पुष्पाणि, नदीं माल्यवतीं आलिङ्ग्य मन्दं मन्दं वहन् वायुः, नाना-पक्षिमृगाणां मधुराणि रुतानि, बहुविधानां कुसुमानां उत्तमः आमोदः, रसमयानि द्रोणप्रमाणानि मधूनि—इतीदं सर्वं यतोऽ-पहरति करणग्रामं, तत एव इतरसर्वविस्मरणं अवश्यं भाव्येव ॥

फलपुष्पपूर्णद्रुमलताऽऽच्छादितः हरितमयः पर्वतः, पार्श्वे चलचलायमाना प्रसन्नसलिला नदी, निर्भरं इतस्ततः क्रीडन्तः वानरहरिणभल्लूकप्रभृतयो मृगाः, स्वैरं गभीरं सञ्चरन्तो मत्ता मातङ्गाः, परमधन्यानां महर्षीणां प्रशान्तानि पुण्यानि आश्रमस्थानानि—

---

* अयो. ५४ सर्गे (२८–३१ श्लोकाः) ५६ सर्गे (६–१५ श्लोकाः) च चित्रकूट-वर्णनं द्रष्टव्यम् ।

इदं सर्वं पश्यतां अस्माकमपि मनः तत्रैव वासं वाञ्छत्येव। परन्
न युक्तं उपरोधं कर्तुं विविक्तदेशं अन्विष्यागतवतः श्रीरामस्य,
वा वयं तादृशोत्तमप्रकृतयोऽपि। अतः सुखं वसन्तं श्रीराममालोक
तावतैव निर्वृताः प्रतियास्यामो वयं अयोध्यां पुत्रशोकाभिसन्त
वृद्धं दीनं दशरथमभिवीक्षितुम् * ॥

श्रीमदादिकविवाल्मीकिवदनारविन्दविनिस्सृतायामस्यां इति
हासमधुसरिति—अयोध्याकाण्डोऽयं कथादृष्ट्या, वर्णनादृष्ट्य
पात्रगुणचित्रणदृष्ट्या, सर्वैश्च प्रकारैः इतरकाण्डानतिशेत इ
रसिकजनसम्मतम् ॥

इदमेवाभिप्रेत्य मङ्खककविरपि 'त्रिभिः काण्डैः आद्यः कविरमु
मविध्यत्' † इत्याहेति वयं मन्यामहे। सर्वाङ्गसुन्दरीणेऽप्यस्मि
आदिकाव्ये अयोध्या-आरण्य-सुन्दरकाण्डाः इतरकाण्डापेक्षय
विशिष्टं स्थानं वहन्तीति स्वयं भायादेव रसिकानाम्। अधि
परस्ताद्विचारयामो विस्तरशः ॥

अयमप्यस्त्यत्र विशेषः—रामायणप्रधानपात्राणां गुणावि
परिचयः अस्मिन्नेव काण्डे उत्तुङ्गशिखरदीपायते। तद्यथा—

पश्चिमे वयसि निराशोपहते चेतसि दैवात् पुत्ररत्नानि प्रा
धन्यो दशरथः। एतादृशस्य सकलसद्गुणसागरे ज्येष्ठे रा
प्राणाधिका प्रीतिः सहजैव। इयमेव प्रीति
राजकुलमर्यादामप्युल्लङ्घ्य स्वस्मिन् जीवत्ये

दशरथः

स्वपुत्रराज्याभिषेकेच्छायां विचित्रायां पर्यवसानमवाप ‡। परन्
तद्दौर्भाग्यातिशयात् दैवचित्तस्यान्यथास्थितत्वेन न तदिच्छा पूर्णाऽ
भूत्; प्रत्युत प्राणेभ्योऽपि प्रियस्य पुत्रस्य विश्लेषे—तत्रापि दारु
वनप्रेषणे—तन्मूलतः परमदारुणे स्वजीवितान्ते च पर्यवसानमवाप
एतादृशं दौर्भाग्योपहतं वृद्धं दीनं दशरथनृपं अस्मिन् काण
पश्यामः ॥

---

* अस्मिन् संपुटे एतावानेव भागः मुद्रितो वर्तते। † श्रीकण्ठचरितं-
25-60. ‡ अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः। प्रीतिरेषा कथं रा
राजा स्यान्मयि जीवति ?॥ अयो. स. 1 श्लो. 36.

दशरथवदेव प्राणप्रियात् पुत्रात् एतावता बहुना कालेनानु-
भूतस्य सपत्नीसकाशात् प्राप्तस्य अवमाननादेः

कौसल्या

पर्यवसानं प्रतीक्षते स्म कौसल्या *। परन्तु तद्वि-
परीतं एकैकस्य पुत्रस्य विश्लेषं प्राप्य—

'यदि, पुत्र! न जायेथा मम शोकाय राघव!
न स्म दुःखमतो भूयः पश्येयमहमप्रजाः॥
एक एव हि वन्ध्यायाः शोको भवति मानसः।
अप्रजाऽस्मीति सन्तापः, न ह्यन्यः, पुत्र! विद्यते॥'†

इति—सकललोकश्रेष्ठं पुत्रं प्रसूयापि स्वपुत्रजन्मैव निन्दयन्तीं वन्ध्यात्वमेवाशंस्यतरं मन्यमानां परमदीनां मातरं कौसल्यां, पत्नीकुलादर्शभूतां च तां ‡ अस्मिन् काण्डेऽवलोकयामः॥

स्वसुतनिर्विशेषं रामे प्रीतिमतीं §, स्वस्मै रामाभिषेकवृत्तान्तं प्रथमं निवेदितवत्यै मन्थरायै आभरणं पारितोषिकं दत्तवतीमपि

कैकेयी

दैवेन स्वेष्टसाधनाय वञ्चितां, आपामरजनं ‖ आ च ब्रह्मर्षिकुलं ¶ धिक्कृतां, कृपणां, फलतः कौसल्याप्रतिकोटिभूतां कैकेयीमप्यत्रेक्षामहे॥

यादृशं पितृऋणविमोचनं स्वावश्यकर्तव्यं रामो मेने, तदेतत् एतादृशकैकेय्यभावे असंभाव्येवेति नूनं कैकेयी करुणार्हैव॥

---

* 'न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे।
अपि पुत्रे तु पश्येयं इति रामास्थितं मया॥' अयो. स. 20 श्लो. 38.
'दश सप्त च वर्षाणि तव जातस्य, राघव!
आसितानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम्॥' अयो. स. 20 श्लो. 45.

† अयो. स. 20 श्लो. 36, 37.

‡ 'यदा यदा च कौसल्या दासीवच्च सखीव च।
भार्यावत् भगिनीवच्च मातृवच्चोपतिष्ठति॥' अयो. स. 12 श्लो. 68.

§ 'रामे वा भरते वाऽहं विशेषं नोपलक्षये।' अयो. स. 7 श्लो. 35.

‖ 'यया पुत्रश्च भर्ता च त्यक्तावैश्वर्यकारणात्।
कं सा परिहरेदन्यं कैकेयी कुलपांसिनी॥' अयो. स. 48 श्लो. 22.

¶ 'अतिप्रवृत्ते दुर्मेधे कैकेयि कुलपांसिनि!
वञ्चयित्वा च राजानं न प्रमाणेऽवतिष्ठसे॥' अयो. स. 37 श्लो. 22.

वनं प्रस्थितं प्रव्रजितं सपत्नीपुत्रमपि रामं अनुगच्छन्तं स्वसुतं लक्ष्मणं अनुमतवतीं उदारां 'सूर्यस्यापि भवेत् सूर्यः ह्यग्नेरग्निः प्रभोः प्रभुः । दैवतं देवतानां च' * इति रामयाथार्थ्यवेदनवतीं विदुषीं सुमित्रां अन्वर्थाभिधानामत्र पश्यामः ॥

सुमित्रा

महाकाव्यमहानायकस्य रामस्य तदनुगुणाः कल्याणगुणाः अस्मिन् काण्डे विकसन्तः सौरभं प्रसारयन्ति सर्वशः। पितृभक्तिः, मातृप्रीतिः, आदर्शपतित्वं, सौभ्रात्रं, मित्रस्नेहः, प्रजावात्सल्यं, सत्यसङ्गरत्वं—इत्यादयो हि गुणाः मूर्तिमाहृत्य प्रकाशन्तेऽत्र ॥

रामः

किं बहुना! एतन्महाकाव्योपक्रमे उपोद्घातप्रकरणे 'बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः '† इत्युक्तगुणानां व्यक्तिसम्बन्धः एतत्काण्डोपक्रम एव पुनःपुनः ‡ प्रतिपाद्यते ॥

श्रीरामवदेव भरतेनापि जनानां हृदयेषु असाधारणं एकं स्थानं आक्रान्तमेवेति नात्युक्तिः। राज्यार्थं यत्किञ्चिदप्यकृत्यं कर्तुं सन्नद्धता सामान्यतो राजकुमाराणां सहजो गुणः। एवं सति को नाम अवशप्राप्तं राज्यं त्यजेत्? राजगृहसम्बन्धिगम्भीरसंस्कारेण साकं इदमालोचयतामेव अस्य त्यागस्य गरिष्ठता ज्ञायेत §। इदमेव जानन् रामः 'न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः' ‖ इति भरतं प्रशशंस।

भरतः

---

* अयो. स. 44 श्लो. 15, 16. † बाल. स. 1 श्लो. 7. ‡ अयो. 1-2 प्रभृतिसर्गेषु द्रष्टव्यम्।

§ 'न सर्वे भ्रातरः—' इत्यादिवाक्यात् पूर्वतनमिदं वाक्यमवधेयं—

'अस्ति सूक्ष्मतरं किञ्चित् यदत्र प्रतिभाति मे।
प्रत्यक्षं लौकिकं वाऽपि विद्यते सर्वराजसु॥ (युद्ध. स. 18 श्लो. 9)
अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः।
व्यसनेषु प्रहर्तारः तस्मादयमिहागतः॥ (युद्ध. स. 18 श्लो. 10)
अपापास्तत्कुलीनाश्च मानयन्ति स्वकान् हितान्।
एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः॥' (युद्ध. स. 18 श्लो. 11)

‖ युद्ध. स. 18 श्लो. 15.

सङ्क्षेपतस्तु भरतपात्रं सचमत्कारं परिचाययति एवं भासः—

‘सुचिरेणापि कालेन यशः किञ्चिन्मयाऽऽर्जितम्।

अचिरेणैव कालेन भरतेनाद्य सञ्चितम्॥’* इति॥

‘न च सीता त्वया हीना न चाहमपि राघव।

मुहूर्तमपि जीवावः जलान्मत्स्याविवोद्धृतौ॥’†

इति आत्मानं स्त्रिया सीतया साकं तोलयन् पुरुषसिंहोऽयं लक्ष्मणस्तु विचित्रसमस्यारूप एव सामान्यजनानाम्। स्वयं पत्नी-

लक्ष्मणः

विरहं सोढुमशक्नुवन्तं तया सह वनं प्रस्थितं रामं, स्वयं पत्नीं त्यक्त्वाऽनुजगाम, तेन चात्मानं ‘कृतार्थोऽहं भविष्यामि’ ‡ इति मन्यते स्म चेत्ययमंशः कथं न स्यात् समस्यारूपः सामान्यजनानाम्?

स्वप्राणाधिकप्रीत्या मातापितृभ्यां लालिता पालिता च दुहिता कृतविवाहा प्राप्तयौवना च, वत्सलतरौ मातापितरौ, एतावता चिरकालेन परिचितं स्वसंवृद्धिगृहं—सर्वमिदं परित्यज्य सहर्षं अचिरपरिचितेन स्वभर्त्रा सह कथं निर्गच्छति? नेदं समस्यारूपम्? आलोचयन्तु सुधियः। अधिकं पश्चात् रामायण-भूमिकायामुपपादयामः॥

परन्तु रामस्यानुजेषु त्रिषु सत्सु अयमेव रामानुजपदं स्वासाधारणं प्रापेतीदमवधेयम्॥

---

* प्रतिमानाटकं. 4-26. † अयो. स. 54 श्लो. 31.

‡ अयो. स. 31 श्लो. 24.

सीतापात्रेऽस्मिन् आदिकविः पातिव्रत्यलक्षणं सर्वं पूरयामासेति सर्वविदितं न विशिष्यात्र वक्तव्यम्। परन्तु एतेन साकं स्त्रीप्रकृतेः सहजाः गुणाः—माधुर्यं, मार्दवं, मुग्धता, झटिति उद्वेगपारवश्यं, कथञ्चित् स्वेष्टसाधनाग्रहः, इत्यादयः गुणा अपि चित्र्यन्ते* हृदयङ्गममिति अहो! महर्षेः यथार्थवदनकौशलम्!

सीता

---

* 'प्रिया तु सीता रामस्य दाराः पितृकृता इति।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभ्यवर्धत॥' (बाल. स. 77 श्लो. 28)

'स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये।
न कथञ्चन सा कार्या गृहीतधनुषा त्वया॥
बुद्धिवैरं विना हन्तुं राक्षसान् दण्डकाश्रितान्।' (अर. स. 9 श्लो 24)

'यद्यत्फलं प्रार्थयते पुष्पं वा जनकात्मजा।
तत्तत्प्रदद्या वैदेह्याः यत्रास्या रमते मनः॥' (अयो. स. 55. श्लो. 29)

'एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम्।
सीतावचनसंरब्धः आनयामास लक्ष्मणः॥' ( ,, ,, 32)

'अथात्मपरिधानार्थं सीता कौशेयवासिनी।
संप्रेक्ष्य चीरं संत्रस्ता पृषती वागुरामिव॥ (अयो. स. 37 श्लो. 9)
सा व्यपत्रपमाणेव प्रगृह्य च सुदुर्मनाः। ( ,, ,, 10)
गन्धर्वराजप्रतिमं भर्तारमिदमब्रवीत्।
कथं नु चीरं बध्नन्ति मुनयो वनवासिनः?' ( ,, ,, 12)

'किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः।
रामजामातरं प्राप्य स्त्रियं पुरुषविग्रहम्' (अयो. स. 30 श्लो. 3)

'सुदुष्टस्त्वं वने रामं एकमेकोऽनुगच्छसि।
मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा' (आर. स. 45 श्लो. 24)

'अथ मामेवमव्यग्रां वनं नैव नयिष्यसि।
विषमद्यैव पास्यामि + तदैव मरणं वरम्॥' (अयो. स. 30 श्लो. 19, 20)

इत्यादयः श्लोकाः परिशीलनीयाः। विस्तरभयान्न विव्रियन्ते।

मन्थरापात्रं तु काव्यदृष्ट्याऽत्यल्पमपि कथादृष्ट्या महत्तरं स्थानं वहति। महत्तरं कार्यं मध्ये कस्मिंश्चिद्विनाशयति 'कोऽयम्? कुतो वाऽऽगतः?' इति प्रश्नः जनानां हृदये समुन्मिषति किल? नात्र जिज्ञासा विवक्षिता, अपि तु 'पूजामध्ये भल्लूकप्रवेशवत्' तत्र तस्य प्रवेशे स्वासम्मतिः, जुगुप्सा वा सूच्यते। मन्थरायां एतादृशमेव भावं आविष्करोति 'ज्ञातिदासी यतो जाता'* इति वदन् कविवरः॥

मन्थरा

एवं मन्थरायां स्वहृदयगतेन वैरस्येन हास्यरसवर्णनाय† तां उपयुञ्जन् कविवरेण्यः मन्थरां सर्वोपहासपात्रतामपि नयति॥

एवमस्मिन् काण्डे कथापात्राणां गुणादिपरिचयवत्, रामायण-कथाया बीजभूताः विचित्राः घटनाः दैवप्राबल्यपरिचायकाः पदे-पदेऽत्र ग्रथितवानादिकविरितीदमपि एतत्काण्डवैशिष्ट्योपोद्बलकं भवति॥

यद्यत् आत्मनोऽनुकूलं भावयति नरः, तदेव तस्य प्रतिकूलं वस्तुतो भवतीत्ययमंशः काण्डेऽस्मिन् बहुधा दृश्यते। यथा —

स्वस्मिन् जीवत्येव स्वपुत्राभिषेकदर्शनानन्दमनुभवितु-मिच्छति विचित्रतया दशरथः राजकुलमर्यादामुल्लङ्घ्य॥

तत्काले—पूर्वं कैकेयीविवाहकाले स्वेन कृतां तत्पुत्रराज्याभि-षेकप्रतिज्ञां‡ स्मरति दशरथः। अथापि रामे प्रीत्यतिशयेन

---

* अयो–7–श्लो–1.

† 'प्राग्द्वारेऽभूत्तदा कुब्जा सर्वाभरणभूषिता।'
'मेखलादामभिश्चित्रैः अन्यैश्च शुभभूषणैः॥
बभासे बहुभिर्बद्धा रज्जुबद्धेव वानरी' अयो. स. 78. श्लो. 7
'तवापि कुब्जाः कुब्जायाः सर्वाभरणभूषिताः।
पादौ परिचरिष्यन्ति यथैव त्वं सदा मम॥' अयो. स. 9. श्लो. 52

‡ 'पुरा, भ्रातः! पिता नः सः मातरं ते समुद्वहन्।
मातामहे समाश्रौषीत् राज्यशुल्कमनुत्तमम्॥' अयो. स. 107. श्लो. 3

तमेवाभिषेचयितुमिच्छति सः। पूर्वप्रतिज्ञाभङ्गेन रामाभिषेकः भरतासान्निध्य एव सुकर इति स भावयति*। अत एव केकयराजानं अभिषेकोत्सवाय नाह्वयति च †॥

परन्तु स्वानुकूलत्वेनावगतं भरतासान्निध्यमेव स्वस्यात्यन्तप्रातिकूल्ये पर्यवसानमवाप। यदि नाम भरतस्तदा तत्रोपस्थितः स्यात्, तदा कैकेयीवरद्वयनिर्बन्धः, रामप्रव्राजनं, तन्मूलस्वप्राणान्तविपत्तिः, इत्यादिकं सर्वथाऽसंभव्येव ॥

एवं भरताभिषेकवरं आत्मनोऽनुकूलं ज्ञातवत्याः कैकेय्याः, स एव जटाचीरादिधारणपूर्वकं भरतस्य नन्दिग्रामे वासहेतुरभूत्॥

एवं भ्रातरं प्रत्यावर्तयितुं चित्रकूटं प्रस्थातुमुद्यतो भरतः, यदि स्वकृत्येन भविष्यन्तीं महतीं विपत्तिं जानीयात्, तदा चित्रकूटं न प्रस्थितो भवेत् ॥

ससैन्येन भरतेन स्वावासस्य परिचितत्वादेव खलु चित्रकूटं परित्याज्यान्यत्र प्रस्थितो राम इति स्पष्टं ज्ञायते ‡। स्वस्य भरद्वाजा-

---

* 'विप्रोषितश्च भरतः यावदेव पुरादितः।
तावदेवाभिषेकस्ते प्राप्तकालो मतो मम॥' अयो. स. 4 श्लो. 25

† 'नानानगरवास्तव्यान् पृथग्जानपदानपि।
समानिनाय मेदिन्याः प्रधानान् पृथिवीपतिः॥' अयो. स. 1 श्लो. 46

'न तु केकयराजानं जनकं वा नराधिपः।
त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम्॥' अयो. स. 1. श्लो 48
(अत्र अन्यथाप्रतिपत्तिवारणाय जनकस्याप्यनाह्वानमिति भाति।)

‡ 'इह मे भरतो दृष्टः मातरश्च सनागराः।
सा च मे स्मृतिरन्वेति तान्नित्यमनुशोचतः॥' अयो. स. 117. श्लो. 2
तस्मादन्यत्र गच्छामः इति सञ्चिन्त्य राघवः।
प्रातिष्ठत स वैदेह्या लक्ष्मणेन च संगतः।' अयो. स. 117. श्लो. 4

श्रमवासे यानि बाधकानि * रामेणोपन्यस्तानि, तानि भरतागमनात् चित्रकूटेऽपि प्राप्तानीति च चित्रकूटं तत्याज रामः। यदि तत्रैव वसेत् रामः तदा सीतापहरणाद्युत्तरानर्थानि न प्राप्येरन् ॥

एवञ्च भरतकृतः रामप्रतिनिवर्तनप्रयत्नः विपरीतफल एवाभवत् ॥

एवं श्रीरामः यत् सीताऽनुगमनं स्वपरमानुकूलममन्यत † तदेव पश्चात् पञ्चवट्यां महतेऽनर्थायाभूत् ॥

एतादृश्यो विचित्रघटना एव रामायणबीजभूताः। एतास्वन्यतमाया अप्यभावे रामायणमेव न स्यात् ॥

किमधिकेन! विश्वामित्रयज्ञसंरक्षणकाले सुबाहुवत् मारीचोऽपि यदि हतः स्यात्, तदा स्वर्णमृगवञ्चनसीतापहरणादिकमपि न संभव्येव ॥

'अन्यो ह्यन्यच्चिन्तयति स्वच्छन्दं विदधाम्यहम्' इत्युद्घोषयतो दैवस्य गतिं प्राबल्यं च इदं सर्वमावेदयति ॥

सङ्क्षेपतस्तु कथने—दैवं तु सर्वहितमेकं स्वयं संकल्प्य तदनुगुणमेव प्रतिपदं न्यस्यति। बाह्यतः आकस्मिकतया भासमानेषु तस्य चलनेषु, वस्तुतः नास्त्याकस्मिकता नाम लेशतोऽपि। सर्वमपि पूर्वनिर्णीतक्रममनुसृत्यैव निर्वर्तयति तत्। स्वसंकल्पनिर्वर्तने यं कमपि प्रतिरोधं न सहते, बाह्यतःकष्टकार्पण्यादिकं न गणयति च। स्वेष्टं तु सर्वथा निर्वर्तयत्येव। एतादृशस्य दैवस्य गतौ न कोऽपि विघ्नं वैपरीत्यं वा कर्तुं शक्नोत्यपि ॥

---

* 'भगवन्! इत आसन्नः पौरजानपदो जनः।' अयो. स. 54. श्लो. 24
'आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः' ,, ,, 25
'एकान्ते पश्य भगवन्! आश्रमस्थानमुत्तमम्' ,, ,, 26

† 'नेदानीं त्वदृते सीते! स्वर्गोऽपि मम रोचते' अयो. स. 30 श्लो. 42

यस्तु पुरुषः दैवस्य गतिं विज्ञाय तदनुगुणतयाऽऽत्मनोऽपि गतिं परिष्कृत्य दैवमनुवर्तते, तं तत् उत्तमां गतिं नयति। यस्तु अहङ्कारात् अज्ञानाद्वा दैवगतेः विपरीततयाऽऽत्मनो गतिं परिकल्प्य स्वैरं गन्तुमिच्छति, सः बहुविधानर्थेषु पतति, स्वेष्टात् भ्रश्यति, न दैवसम्मतां सद्गतिं च प्राप्नोति, न जन्मसाफल्यमप्यश्नुते ॥

'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टाः दैवं चैवात्र पञ्चमम् ॥

शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य योनयः ॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥'

(गीता 18, 14-16)

इति खलु केवलस्य चेतनस्य कर्तृत्वं निषेधति शास्त्रम् ।

'इदमद्य मया लब्धं इमं प्राप्स्ये मनोरथम् ।'
'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ।'
'मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥'
'अनेकचित्तविभ्रान्ताः मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥' (गी. 16) इति,
'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥'
'अथ चेत् त्वमहंकारात् न श्रोष्यसि विनङ्क्ष्यसि ।'

(गी. 18-58)

इति च अहंकारादिना दैवावज्ञया पतनं, दैवाश्रयणेन शाश्वतपदावाप्तिं च स्पष्टमुपदिशति भगवान्। अतः—

'दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ।'

इतीममेवार्थं शिक्षयन्त्यस्मान् इमा घटनाः। यद्यप्यत्रास्ति बहु विचारणीयं, सर्वं तत् रामायणभूमिकायां प्रतिपादयामः ॥

एतद्व्याख्याकारस्य माधवयोगिनः देशकालादिविषये प्रथमसंपुटप्रस्तावनायामुक्तमर्थं द्रढयत् प्रमाणजातमस्मिन् भागेऽप्युपलभ्यत एव। सर्वमाहृत्य एकत्र प्रकटीकर्तुकामाः नात्र पृथक् तमंशं प्रस्तवीमहे ॥

एतत्संपुटसंपादने बालकाण्डसंपादनोपयुक्ता एव मातृकाः आदृताः, ताभिरेव संज्ञाभिः संज्ञिताश्च ॥

कूडलिजगद्गुरुश्रीशङ्कराचार्यमठीयः नन्दीनागरलिप्यात्मकः तालपत्रकोशस्त्वेकः अनन्तरमुपलब्धः 'ट'संज्ञितः एतत्संपादने आदृतः ॥

अयोध्याकाण्डस्यातिविस्तृतत्वात् संपुटेऽस्मिन् रामचित्रकूटनिवासपर्यन्तो भागः प्राकाशि। अवशिष्टश्च भागः समनन्तरसंपुटे प्रकाशयिष्यते।

मैसूरु,
३०-७-१९६३.

नव्यमङ्गलाभिजनः,
वरदाचार्यः.

## श्रीमद्वाल्मीकिरामायणायोध्याकाण्डस्य

# विषयानुक्रमणिका

॥ श्रीः ॥

॥ श्रीरामचन्द्रपरब्रह्मणे नमः ॥

# श्रीमद्वाल्मीकिरामायणम्

श्रीमन्माधवयोगिविरचितया

## अमृतकतकाख्यव्याख्यया युतम्

## अयोध्याकाण्डः

### प्रथमः सर्गः

[रामाभिषेकचिन्तनम्]

गच्छता मातुलकुलं भरतेन [1] तदाऽनघः ।
शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥ १ ॥

अमृतकतकव्याख्या

एवं प्रथमकाण्डेन रामप्रसूतिसीतावरणान्ताक्षरार्थकमहाषोढाप्रथमपादार्थरामचरितविस्तारो वर्णितः । अथेदानीं द्वितीयकाण्डेन महाषोढाद्वितीयपादप्रथमाद्यक्षरार्थरामाभिषेकप्रतिबन्धादितद्वनवासान्तव्यापारः प्रतिपाद्यते। तत्राद्येन 'ज्येष्ठं श्रेष्ठगुणैर्युक्तं' 'यौवराज्येन संयोक्तुमैच्छत्' इति संक्षेपोपदिष्टा राजाभिषेकार्हगुणाः प्रतिपाद्यन्ते—गच्छतेत्यादि ॥

---

[1] महात्मना—झ.

मातुलकुलं—मातुलकुलीयराज्यं । नित्यशत्रवः—कामादयः, तान् हन्तीति तथा । एतेन सकलसद्गुणसंपूर्तिश्शत्रुघ्नस्योपदिष्टा । प्रीत्या—भरते नित्यनिसर्गप्रवृत्तया पुरस्कृतः । एतेन भरतादिनिर्बन्धतो गमनशङ्का वारिता ॥ १ ॥

**स तत्र न्यवसत् भ्रात्रा सह सत्कारसत्कृतः ।**
**मातुलेनाश्वपतिना* पुत्रस्नेहेन [1]लालितः ॥ २ ॥**

स तत्रेति । भरतो मातुलकुल इत्यर्थः । विशिष्टवस्त्राभरणभोजनादिरूपेण सत्कारेण सत्कृतः । पुत्रादप्यधिकस्नेहः—पुत्रस्नेहः ॥

**†तत्रापि निवसन्तौ तौ तर्प्यमाणौ च कामतः ।**
**भ्रातरौ स्मरतां वीरौ वृद्धं दशरथं नृपम् ॥ ३ ॥**

तर्प्यमाणौ—कृत्नकारत्वात् 'कृत्यचः' इति णत्वम् । कामः—प्रागुक्तविषयविशेषः । स्मरतां—अस्मरतां । दशरथमिति । 'अधीगर्थ' इति षष्ठ्यभावः शेषविवक्षाभावात् ॥ ३ ॥

**राजाऽपि तौ [2]महातेजाः सस्मार प्रोषितौ सुतौ ।**
**उभौ भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ ॥ ४ ॥**
**सर्व एव तु तस्येष्टाश्चत्वारः पुरुषर्षभाः ।**
**स्वशरीराद्विनिर्वृत्ताश्चत्वार इव बाहवः ॥ ५ ॥**

विनिर्वृत्ताः—उत्पन्नाः । चत्वार इव बाहव इति अभूतोपमा ॥

---

* पुत्रविषयस्नेहतुल्यस्नेहेन—**गो.** † तत्र —तादृशोपचारपूर्णगृहे निवसन्तावपीत्यन्वयः । कामत इति तृतीयार्थे तसिः—**गो.**

[1] पालितः—**ङ.** [2] महावीरौ—**ङ.**

तेषामपि महातेजा रामो रतिकरः पितुः ।
स्वयम्भूरिव भूतानां बभूव गुणवत्तरः ॥ ६ ॥

स्वयंभूरित्यादिः *पूर्वसर्गे व्याकृतचरः ॥ ६ ॥

स हि देवै†रुदीर्णस्य रावणस्य वधार्थिभिः ।
अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥ ७ ॥

गुणवत्तरत्वे हेतुः—स हीत्यादि । हि—यस्मात् रामः स्वयम्भूरेव सन् देवप्रार्थनया रावणवधाय मानुषे लोके तदवतारोचितनिजवैराज-विष्णूपाधिना जज्ञे—अवतीर्णः अस्मादेव सकलकल्याणगुणकार्त्स्न्यम् ॥

कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ।
[1]यथा वरेण देवानां अदितिर्वज्रपाणिना ॥ ८ ॥

स हि रूपोपपन्नश्च वीर्यवाननसूयकः ।
भूमावनुपमः सूनुर्गुणैर्दशरथोपमः ॥ ९ ॥

सूनुरिति । कौसल्याया इति शेषः ॥ ९ ॥

‡स तु नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते ।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ १० ॥

मृदुपूर्वं- मृदूक्तिपूर्वम् ॥ १० ॥

---

* बाल ७७-२३.　　† उदीर्णः=उद्धतः.　　‡ 'नित्यं प्रशान्तात्मा' इत्यस्यैव प्रपञ्चः उच्यमानोपीत्यादि । परुषमुच्यमानोऽपि उत्तरं न प्रतिपद्यते । तत्र हेतुः—नित्यं प्रशान्तात्मेति । न केवलमुत्तराप्रतिपत्तिः, किन्तु परुषवक्तारं प्रति मृदुपूर्वं भाषते—**गो.** परं त्वत्र 'उत्तरं न प्रतिपद्यते' इति सामान्यनिषेधो न युज्यते । ततोऽपि परुषमुच्यमानोऽपि परुषमुत्तरं न प्रतिपद्यते । किन्तु मृदुपूर्वमेव भाषत इति वान्वयः ।

[1] यथा च देवी देवानां—ङ.

*

* कथञ्चिदुपकारेण कृतेनैकेन तुष्यति ।
न स्मरत्यपकाराणां † शतमप्यात्मवत्तया ॥ ११ ॥
शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः ।
कथयन्नास्त वै ‡ नित्यमस्त्रयोग्यान्तरेष्वपि ॥ १२ ॥

शीलं—सुचरितं, ज्ञानं—आत्मानात्मवस्तुतत्त्वज्ञानं । अस्त्रयोग्यान्तरेषु—अस्त्रशस्त्रपरिश्रमयोग्यकालेष्वपि यदन्तरं तत्रापि तत्परिश्रममध्येष्वपि सज्जनैरेव कथयन्नास्ते । अन्यदा कैमुतिकसिद्धं सज्जनैकनित्यसम्भाषणम् ॥ १२ ॥

बुद्धिमान् मधुराभाषी § पूर्वभाषी प्रियंवदः ।
वीर्यवान्न च वीर्येण महता स्वेन विस्मितः ॥ १३ ॥

मधुरं आभाषितुं शीलमस्त्यस्येति तथा । न च विस्मितः—अप्राप्तगर्वः ॥ १३ ॥

|| नचानृतकथो विद्वान् वृद्धानां ¶ प्रतिपूजकः ।
अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनु[1]रज्यते ॥ १४ ॥

अनृतस्य कथा—कथनं यस्य स तथा । प्रजाभिरनुरक्तः प्राप्तानुरागः । प्रजाश्च स्वयमपि अनुरज्यते—अनुरञ्जते अनुरञ्जयतीति यावत् । रञ्जेश्यन्युपधालोपः ॥ १४ ॥

---

* कथञ्चित् कृतेनेत्यन्वयः । † आत्मवान् कः ? इति प्रश्नस्योत्तरमिवैतत् । ‡ अस्त्राणां योग्यः—अभ्यासः, 'योग्यो गुणनिकाभ्यासः' इति वैजयन्ती ; तस्यान्तरेषु—अवकाशेष्वपि—**गो.** § पूर्वभाषी—नीचेष्वपि स्वयमेव पूर्वं भाषमाणः । || कल्पितेतिवृत्तकासत्काव्यालापवर्जित इत्यर्थः—**गो.** ¶ प्रत्युद्गम्यपूजकः प्रतिपूजकः ।

[1] रञ्जते—**ङ.**

सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः।
दीनानुकम्पी धर्मज्ञो नित्यं प्रग्रहवान् शुचिः ॥ १५ ॥

अनुक्रोशः—दया, दुःखिप्राणिषु। ब्राह्मणप्रतिपूजक इत्यादौ याजकादित्वात् षष्ठीसमासः। प्रग्रहवान्—इन्द्रियनिग्रहवान्; 'प्रग्रहस्तु तुलासूत्रे वन्द्यां नियमने भुजे' ॥ १५ ॥

[1]कुलोचितमतिः क्षात्रं धर्मं स्वं बहुमन्यते।
*मन्यते परया [2]कीर्त्या महत्स्वर्गफलं ततः ॥ १६ ॥

कुलोचितमतिः, अत एव क्षात्रं धर्मं बहुमन्यते। न च केवलमभिमानमात्रं, अपि तु ततः पुरुषार्थसिद्धेरेवेत्याह—मन्यत इत्यादि। क्षत्रस्य मुख्यधर्मभूतया प्रजासु पितृवत् कृपया सर्वशत्रुसंहारजकीर्त्या च ततः—तस्मात् क्षात्रियधर्मात् यतो महत्स्वर्गफलं अतो बहुमन्यते। यद्यपि ब्राह्मो धर्म एवापवर्गसाक्षात्साधनत्वेन महान्; अथापि क्षत्रियस्य स्वधर्म एव बहुमन्तव्यः। 'श्रेयान् स्वधर्मो विगुणः' इत्यादेः ॥ १६ ॥

†नाश्रेयसि रतो [3]यश्च न विरुद्धकथारुचिः।
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ॥ १७ ॥

यश्च न—यः कश्चन पुमान् विरुद्धकथारुचिः—धर्मविरुद्धकथारुचिर्भवति, तस्मिन्नश्रेयसि—अश्रेयस्करे न रतो भवति। वक्तेति। वादजल्पवितण्डादिष्विति शेषः ॥ १७ ॥

---

* ततः—स्वधर्मानुष्ठानात् आनुषङ्गिकया परया कीर्त्या सह महत् स्वर्गफलं मन्यते। चकाराभावादेवं योज्यम्। † अश्रेयसि—निष्फले कर्मणि न रतः—न सक्तः, कादाचित्कलीला न दुष्यतीति भावः; द्यूतादिषु न सक्त इत्यर्थः। विरुद्धकथा—धर्मविरुद्धग्राम्यालापादि—**गो.**

[1] कुलोचितमिदं—**ङ.** [2] प्रीत्या—**च.** [3] विद्वान्. नित्यं—**ङ.**

**अरोगस्तरुणो वाग्मी वपुष्मान् देशकालवित् ।**
***लोके पुरुषसारज्ञः साधुरेको विनिर्मितः ॥ १८ ॥**

वपुष्मान् ' विपुलांसो महाबाहुः ' इत्याद्युक्तलक्षणवपुर्विशेषवान् । पुरुषाणां — ब्राह्मणादीनां सारं — स्वजातिवर्णाश्रमनित्यधर्मदृढप्रतिष्ठानरूपं जानातीति तथा । इदमवश्यापेक्षितं राज्ञो निग्रहानुग्रहाय । एवं स एक एव रामो लोके सर्वगुणैः साधुः — भद्र उपपन्नो विनिर्मितः, ब्रह्मणा स्वांशोपादानेन ॥ १८ ॥

**स तु श्रेष्ठगुणैर्युक्तः प्रजानां पार्थिवात्मजः ।**
**बहिश्चर इव प्राणो बभूव [1]गुणतः प्रियः ॥ १९ ॥**

एवमुक्तरूपैः श्रेष्ठगुणैर्युक्तत्वस्योपदेशस्सकृज्जातः । अतः परमपि तद्युक्तत्वं द्विरुपदिश्यते । एवं त्रिरुपदेशः, ' त्रिषत्या हि देवाः ' इति न्यायेन वास्तवत्वबोधनाय । अत एव पौनरुक्त्यमशङ्क्यम् ॥

**[2]सर्वविद्याव्रतस्नातो यथावत्साङ्गवेदवित् ।**
**इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥ २० ॥**

सर्वविद्येत्यादि । तत्तद्विद्यापेक्षितब्रह्मचर्यव्रतानन्तरमेव स्नातः— कृतसमावर्तनः । अत एव—यथावदित्यादि ॥ २० ॥

**कल्याणाभिजनः साधुरदीनः सत्यवागृजुः ।**
**† वृद्धैरभिविनीतश्च, द्विजैर्धर्मार्थदर्शिभिः ॥ २१ ॥**

कल्याणः— शुभः— अभिजनः— मातृपितृवंशो यस्य स तथा । दर्शिभिरिति । समेत इति शेषः ॥ २१ ॥

---

* पुरुषसारज्ञः—सकृद्दर्शनमात्रेण पुरुषहृदयसर्वस्वज्ञः । लोके एकः—अद्वितीयः साधुरिति विनिर्मितः—निश्चितः—गो. † वृद्धैः धर्मार्थदर्शिभिः द्विजैः अभिविनीतः— शिक्षित इत्येकं वाक्यं वा ।

[1] गुणवत्तरः—ङ. [2] सम्यग्विद्या-ङ.

धर्मकामार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ।
*लौकिके समयाचारे कृतकल्पो विशारदः ॥ २२ ॥

स्मृतिप्रतिभानाद्याः संक्षेपेण व्याकृतचराः । लौकिके कृतकल्पः–सम्पादितसामर्थ्यः । समयाचारः–धर्मः तत्र विशारदः ॥

निभृतः संवृताकारो [1]†गुप्तमित्रैः सहायवान् ।
अमोघक्रोधहर्षश्च त्यागसंयमकालवित् ॥ २३ ॥

निभृतः–विनीतः, 'वश्यः प्रणेयो निभृतविनीतप्रश्रिताऽस्समाः'। संवृताकारः–संवृतेङ्गितः । गुप्तैः–आपद्दशारक्षितैः मित्रैः सम्पन्नः–सहायवान् । त्यागसंयमकालविदिति । वित्तादेरिति शेषः ॥ २३ ॥

दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचाः ।
निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित् ॥ २४ ॥

दृढं यथातथा भक्तिः–भजनं गुर्वादेर्यस्य स तथा । दृढशब्दस्य ‡प्रियादित्वात् स्त्रीलिङ्गविवक्षायां पुंवद्भावाभावात् रूपं न सिध्यति । निस्तन्द्रिरिति । औणादिकेकारान्ततो स्त्रीप्रत्ययान्तत्वात् ह्रस्वः । सुश्रीसुधीशब्दादिवत् । §स्वीयानां दोषः स्वदोषः ॥ २४ ॥

शास्त्रज्ञश्च ‖कृतज्ञश्च पुरुषान्तरकोविदः ।
यः प्रग्रहानुग्रहयोः यथान्यायं विचक्षणः ॥ २५ ॥

---

* लौकिके—लोकैकप्रमाणके समयाचारे—साङ्केतिकाचारे कृतकल्पः कृतसंस्थापनः, विशारदः तदाचरणसमर्थः–गो. † गुप्तमन्त्रः–फलपर्यन्तमन्यैरविदितमन्त्रः–गो.
‡ प्रियादिगणपठितभक्तिशब्दपरकत्वादिति यावत् । § रामे दोषलेशस्याप्यभावादेवं व्याख्यानम् । ‖ कृतं–कृतान्तं सिद्धान्तं जानातीति कृतज्ञः । अतः 'कथञ्चिदुपकारेण कृतेनैकेन तुष्यति' इत्यनेन न पुनरुक्तिः–गो.

[1] गुप्तमन्त्रः–ङ.

पुरुषाणामन्तरं—तारतम्यं, तद्विवेके कोविदः। यथान्यायं यथोचितं कर्तुं विचक्षणः स तथा ॥ २५ ॥

*सत्संग्र[1]हप्रग्रहणे स्थानविन्निग्रहस्य च।
आयकर्मण्युपायज्ञः [2]†संदृष्टव्ययकर्मवित् ॥ २६ ॥

उक्तार्थस्यैव विवरणम्—सदित्यादि। सतां संग्रहपूर्वं संगमनपूर्वं प्रकर्षेण दृढतया परिग्रहणं तत्कुटुम्बयात्रानिर्वाहादिना रक्षणं, तथा निग्रहस्य च करणे विचक्षण इत्यनुकर्षः। आयकर्मणि—करग्रहणकर्मणि। सन्दृष्टधनानुरोधेन व्ययकर्मकृत्—'यदायान्नाधिको व्ययः' इति धर्मः ॥ २६ ॥

श्रैष्ठ्यं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च।
अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालसः ॥ २७ ॥

व्यामिश्रकेषु—प्राकृतसंस्कृतमिश्रितनाटकादिषु। अर्थधर्मौ च संगृह्य तदविरोधेनैव सुखतन्त्रः; 'तन्त्रं प्रधाने सिद्धान्ते'॥

वैहारिकाणां शिल्पानां [3]विज्ञाताऽर्थविभागवित्।
आरोहे विनये चैव युक्तो वारणवाजिनाम् ॥ २८ ॥

वैहारिकाणां—क्रीडाप्रयोजनानाम्, 'तदस्य प्रयोजनम्' इति ठक्। शिल्पानि—गीतवादित्रादीनि। भरतशास्त्रप्रसिद्धस्यार्थस्य पदार्थतत्त्वस्य विभागवित्तया भरतशास्त्रचतुर इति यावत्। इदं प्रागुक्तसुखतन्त्रत्वोपयुक्तविशेषणम्। विनयः—[4]शिक्षा ॥ २८ ॥

---

*सतां संग्रहे—स्वीकारे प्रग्रहणे—परिपालने च, विचक्षण इति शेषः। निग्रहस्य—असन्निग्रहस्य च स्थानवित्—अवकाशवित्। †संदृष्टव्ययकर्मवित्—'कांश्चिदायस्य चार्धेन' इत्यादिशास्त्रावगतव्ययकर्मज्ञः—गो.

[1] हानुग्रहणे—ङ. [2] सदृष्ट—ङ. [3] विज्ञाताक्ष—ङ. [4] शिक्षणं—ग.

धनुर्वेदविदां श्रेष्ठो लोकेऽतिरथ[1]संमतः ।
अभियाता प्रहर्ता च सेनानयविशारदः ।
अप्रधृष्यश्च संग्रामे क्रुद्धैरपि सुरासुरैः ॥ २९ ॥

अभियाता । परसेनाया इति शेषः । तस्याः प्रहर्ता च । सेनानयः—स्वसेनाव्यूहनादिः ॥ २९ ॥

*अनसूयो जितक्रोधो न दृप्तो न च मत्सरी ।
[2]न चावमन्ता [3]सिद्धानां †न च कालवशानुगः ॥ ३० ॥

सिद्धाः—देवभेदाः । न च कालवशानुग इति । कालनियन्तुः श्रीमदादिगुर्वंशत्वेन प्राकृतवत्कालपरतन्त्रस्वदेहजरामृतिदुःखादिधर्मरहितः—स्वायत्तस्वपरिकरसर्वयात्रः, भगवानिवेत्यर्थः ॥ ३० ॥

एवं श्रेष्ठगुणैर्युक्तः ‡प्रजानां पार्थिवात्मजः ।
संमतस्त्रिषु लोकेषु वसुधायाः क्षमागुणैः ।
बुद्ध्या बृहस्पतेस्तुल्यो वीर्येणापि शचीपतेः ॥ ३१ ॥
तथा सर्वप्रजाकान्तैः प्रीतिसंजननैः पितुः ।
गुणैर्विरुरुचे रामो[4] दीप्तः सूर्य इवांशुभिः ॥ ३२ ॥

अथ तृतीयपर्यायः—सम्मत इत्यादि । वसुधायाः क्षमादिगुणैः हेतुभिः तुल्य इति । त्रिषु लोकेषु सम्मत इति योजना ।

---

* एवं कल्याणपूर्णत्वमुक्तम् । अथ हेयप्रत्यनीकत्वमुच्यते – अनसूय इति–गो. † न च कालवशानुगः—सत्त्वरजस्तमःप्रधानकालानुगुणसत्त्वरजस्तमोगुणो न भवति, केवलसत्त्वमूर्तिरित्यर्थः–गो. अथापि लोकसंग्रहाय सिद्धानां नावमन्ता। ‡ प्रजानां मध्ये श्रेष्ठैर्गुणैर्युक्तः त्रिषु लोकेषु सम्मतः–पूजितः–गो.

[1] सत्तमः–ङ. [2] नावज्ञेयश्च–ङ. [3] भूतानां–ङ. च. [4] दीप्तैः–ङ.

तृतीयार्थपञ्चम्याश्रये पाङ्क्तोऽर्थः । युज्यते च स एव वक्ष्यमाणरीत्यनुरोधात् । कान्ताः—इष्टाः अत एव प्रीतिसञ्जननाश्च पितुः गुणाः तैरुपलक्षित इति शेषः ॥ ३१–३२ ॥

***तमेवं [1]वृत्तसंपन्नं अप्रधृष्यपराक्रमम् ।**
**लोक[2]पालोपमं नाथमकामयत मेदिनी ॥ ३३ ॥**

एवमभिषेकप्रयोजकं श्रेष्ठगुणवत्त्वमुपवर्ण्याभिषेकेच्छाप्रयत्नप्रतिपादनम्—तमेवमित्यादि । मेदिनी—भूदेवता, तद्वर्तिप्रजाजातं चेत्यर्थः ॥

**एतैस्तु बहुभिर्युक्तं गुणैरनुपमैस्सुतम् ।**
**दृष्ट्वा दशरथो राजा चक्रे चिन्तां परन्तपः ॥ ३४ ॥**
**अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः ।**
**प्रीतिरेषा †कथं रामो राजा स्यान्मयि जीवति ॥ ३५ ॥**

चिन्तां चक्र इत्यस्यैव प्रपञ्चनं—अथेत्यादि । कथं रामो राजा स्यात्? तादृशस्य तस्य दर्शनजा एषा प्रीतिः अपि मे कथं स्यादित्येवं चिन्ता बभूवेत्यर्थः ॥ ३५ ॥

**एषा ह्यस्य परा प्रीतिर्हृदि [3]संपरिवर्तते ।**
**कदा नाम सुतं द्रक्ष्याम्यभिषिक्तमहं प्रियम् ॥ ३६ ॥**

---

* वृत्तं शीलं, तदपि सद्गुणमूलकत्वात् गुण एव विश्राम्यति । 'तमेवं गुणसंपन्नं' (बाल—1–9) इत्यनेनैककण्ठ्यात् । एवं—गुणसंपन्नत्ववत् , आश्रितसंरक्षणरूपव्रतसंपन्नम्—गो. † अत्र कैकेयीवरदानकृतविघ्नशङ्काप्रतिसन्धानेन कथमित्युक्तिः—गो. परन्त्वत्र 'मयि जीवति' इति दर्शनान्नैतत्स्वरसम् । किन्तु 'वृद्धस्य' इति विशेषणात् , लोके वृद्धानां पितॄणां स्वजीवनकाले एव पुत्रविवाहदिदृक्षावत् दशरथस्यापि चिन्ता समजनि । पितरि जीवति च रामो राजत्वं न स्वीकुर्यात् इत्येवात्र चिन्ता युक्ता । ४२ श्लोकव्याख्या द्रष्टव्या ।

[1] व्रत—ङ. [2] नाथो—ङ. च. [3] संप्रति—ङ.

उक्तचिंताया अनुवादपूर्वं तदौत्कठ्यं प्रतिपाद्यते—एषेत्यादि। एतच्छब्दार्थः—कदा नामेत्यादि। कदा द्रक्ष्यामीत्येषा प्रीतिः—प्रीतिसंपत्तिविषयिणी चिन्ता परा—उत्कटा परिवर्तते स्मेति योजना ॥३६॥

वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पनः।
मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥ ३७ ॥

लोके—लोकविषये ॥ ३७ ॥

यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ।
महीधरसमो धृत्यां मत्तश्च गुणवत्तरः ॥ ३८ ॥
महीमहमिमां कृत्स्नामधितिष्ठन्तमात्मजम्।
अनेन वयसा दृष्ट्वा यथास्वर्गमवाप्नुयाम् ॥ ३९ ॥

अनेन वयसेति। वृद्धशरीरेणेति यावत्। यथा—यथावत् अधितिष्ठन्तमित्यन्वयः। यथास्वर्गं—यथाकालप्राप्तं स्वर्गं अथावाप्नुयामिति चिन्ता बभूवेत्यनुकर्षः ॥ ३९ ॥

इत्येतैर्विविधैस्तैस्तैरन्यपार्थिवदुर्लभैः।
शिष्टैरपरिमेयैश्च लोके लोकोत्तरैर्गुणैः ॥ ४० ॥
तं तु वीक्ष्य महाराजो युक्तं समुदितैः शुभैः।
निश्चित्य सचिवैः सार्धं यौवराज्यममन्यत ॥ ४१ ॥

एवं चिन्तानन्तरं कर्तव्यनिश्चयो राज्ञः—एतैरित्यादि। प्रागुक्तैरित्यर्थः। शिष्टैः—विशिष्टैः लोके अन्यपार्थिवदुर्लभैः इत्यन्वयः। लोकोत्तरैर्गुणैर्युक्तं वीक्ष्य उक्तगुणानुवादपूर्वं कर्तव्यनिश्चयः—समुदितैरित्यादि। एवं समुदितैः—समस्तैः गुणैर्युक्तं निश्चित्य सचिवैः सार्धं यौवराज्यं दातुं—अभिषेकं कर्तुं अमन्यत—विचारितवानित्यर्थः ॥

दिव्यन्तरिक्षे भूमौ च घोरमुत्पातजं भयम् ।
* संचचक्षे च मेधावी शरीरे चात्मनो जराम् ॥ ४२ ॥

† पूर्णचन्द्राननस्याथ शोकापनुदमात्मनः ।
लोके रामस्य बुबुधे संप्रियत्वं महात्मनः ॥ ४३ ॥

‡ आत्मनश्च प्रजानां च [1]श्रेयसे च प्रियेण च ।
[2]प्राप्तकालेन धर्मात्मा भक्त्या त्वरितवान्नृपः ॥ ४४ ॥

अथ भरतशत्रुघ्नौ जनकादयश्चानेतव्या इति कालविळम्बकरान् मन्त्रिणस्त्वरितवान्; अथ त्वराहेतुं च तेभ्यः संचचक्षे—उक्तवानित्युच्यते—दिवीत्यादि । दिव्युत्पातः—उल्कापातादिः । अन्तरिक्षे उत्पाता—महावातदिग्दाहादयः । भूमौ भूकम्पनपर्वतशिरस्फोटादिः, पक्षिमृगशब्दगतिविशेषश्च । एवं उत्पातजं उत्पातसूचकं घोरं रामाभिषेकविघ्नशंकाजनितं § भयं संचचक्षे—आख्यातवान् । नन्विदानीं विघ्ने, कालान्तरे भविष्यतीत्यत्रोच्यते—आत्मन इत्यादि । अहं षष्टिवर्षसहस्रं जीवनादतिजीर्णदेहः, अतः कालान्तरे मज्जीवनं सन्दिग्धम् । घोरोत्पाताः अभिषेकविघ्नसूचका दृश्यन्ते । यदेवमतः—पूर्णेत्यादि । शोकापनुदं । 'तुन्दशोकयोः' इत्यादिना कः, शोकापनुदं

---

* संचचक्षे—दृष्टवान्—गो. † अथ—उत्पातदर्शनानन्तरं पूर्णचन्द्राननस्य—महात्मनः—रामस्य लोके—विषये संप्रियत्वं, कीदृशम्? आत्मनः शोकापनुदं—उत्पातादिभयनिवर्तकं सम्यक्प्रियत्वं बुबुधे—अनुसन्दधौ—गो. ‡ प्रियेण—चतुर्थ्यर्थे तृतीया । प्राप्तकालेनोपलक्षितस्सन्—गो. § स्वतुतस्त्वत्र भयं स्वमरणस्मरणजन्यमेव युक्तम् । उत्पातदर्शनमात्रेण दृढकायस्य तव कथं मरणं संभाव्यत इति शङ्कायां—शरीरे चात्मनो जरामिति ।

[1] श्रेयसा—ङ. [2] प्राप्तकाले स धर्मात्मा—ङ.

रामस्य संप्रियत्वं—समेताभिषेकप्रीतिकत्वं कर्तव्यमिति । आत्मनः श्रेयसे प्रजानां श्रेयसे च प्रियेण प्राप्तकालेन स्वीयेन च बुबुधे—गुरुव्यत्ययात्; चिन्तयामि । एवमुक्त्वा धर्मात्मा नृपो भक्त्या—रामगतस्नेहेन मन्त्रिणः त्वरितवान् ॥ ४२–४४ ॥

नानानगरवास्तव्यान् पृथग्जानपदानपि ।
समानिनाय [1] मेदिन्याः प्रधानान् पृथिवीपतीन् ॥ ४५ ॥

त्वरयित्वा च आसन्नान् नानानगरवास्तव्यादीन् समानिनाय—आनाययामास ॥ ४५ ॥

*तान् वेश्मनानाभरणैर्यथार्हं प्रतिपूजितान् ।
ददर्शालंकृतो राजा प्रजापतिरिव प्रजाः ॥ ४६ ॥
न तु केकयराजानं जनकं वा नराधिपः ।
त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम् ॥ ४७ ॥

वेश्मनानाभरणैरिति । तद्दानैः इत्यर्थः । केकयादेरानयनाभावहेतुः—त्वरयेति ॥ ४६–४७ ॥

अथोपविष्टे नृपतौ तस्मिन् परबलार्दने ।
ततः प्रविविशुः शेषा राजानो लोकसंमताः ॥ ४८ ॥

शेषा इति । केकयजनकव्यतिरिक्ता आसन्ना इत्यर्थः ॥ ४८ ॥

अथ राजवितीर्णेषु विविधेष्वासनेषु च ।
राजानमेवाभिमुखा निषेदुर्नियता नृपाः ॥ ४९ ॥

† नियताः—नियतदेशाधिपत्याः ॥ ४९ ॥

---

* ४६, ४७ श्लोकयोः क्रमो व्यत्यस्तः—ङ । † नियमविशिष्टा इति वा ।

[1] मेदिन्यां—ङ.

स लब्धमानैर्विनयान्वितैर्नृपैः
पुरालयैर्जानपदैश्च मानवैः ।
उपोपविष्टैर्नृपतिर्वृतो बभौ
सहस्रचक्षुर्भगवानिवामरैः ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे प्रथमः सर्गः

---

उपोपविष्टैः—सभायां स्वसमीपोपविष्टैरित्यर्थः । सहस्रचक्षुः—इन्द्रः । नाम (५०) मानः सर्गः ॥ ५० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे प्रथमः सर्गः

---

## द्वितीयः सर्गः

[परिषदनुमोदनम्]

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः ।
हितमुद्धर्षणं चैवमुवाच [1]प्रथितं वचः ॥ १ ॥

अथ राज्याभिषेकस्य सकलसामन्तोपेतसर्वप्रजार्थत्वात् सर्वानुमतिं संपादयति दशरथः—तत इत्यादि । आमन्त्र्य—अभिमुखीकृत्य । हितं अत एव उद्धर्षणं उत्कटहर्षजनकम् ॥ १ ॥

दुन्दुभिस्वनकल्पेन गंभीरेणानुनादिना ।
स्वरेण महता राजा जीमूत इव नादयन् ॥ २ ॥

---

[1] प्रश्रितं—ङ.

राजलक्षणयुक्तेन कान्तेनानुपमेन च ।
उवाच रसयुक्तेन स्वरेण नृपतिर्नृपान् ॥ ३ ॥

दुन्दुभिस्वनेत्यादिकं सन्तोषातिशयमूलम् । अनुनादः प्रतिध्वनिः । नादयन्—दिश इति शेषः । राजलक्षणं—प्राभवान्मितभाषणादिः ॥ ३ ॥

विदितं भवतामेतद्यथा मे राज्यमुत्तमम् ।
पूर्वकैर्मम राजेन्द्रैः सुतवत्परिपालितम् ॥ ४ ॥

पालितमित्येतद्विदितमिति योजना ॥ ४ ॥

सोऽहमिक्ष्वाकुभिः सर्वैर्नरेन्द्रैः परिपालितम् ।
श्रेयसा योक्तुकामोऽस्मि सुखार्हमखिलं जगत् ॥ ५ ॥

श्रेयसा—राज्योचितसुतराजाभिषेकलक्षणेन ॥ ५ ॥

मयाप्याचरितं पूर्वैः पन्थानमनुगच्छता ।
प्रजा नित्य[1]मनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६ ॥

पूर्वे—मन्वादयः । यथाशक्तीत्यनेन विनयप्रदर्शनम् ॥ ६ ॥

इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् ।
पाण्डुरस्यातपत्रस्य छायायां जरितं मया ॥ ७ ॥

छायायां स्थित्वा इदं शरीरं जरितं—प्रापितजरं कृतमिति योजनार्थः । 'जनीजॄष्' इत्यादिना मितो जरयतेर्निष्ठा ॥ ७ ॥

प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः ।
जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ॥ ८ ॥

विश्रांतिः—प्रजाचिन्ताराहित्यरूपिणी ॥ ८ ॥

---

[1] मतन्द्रेण—ङ.

राजप्रभावजुष्टां हि दुर्वहामाजितेन्द्रियैः ।
परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥ ९ ॥

राजप्रभावाश्शौर्यादि*सप्तधर्माः, तद्युक्तैरेव जुष्टां—सेवार्हां । वहन्निति ; हेतौ शता ॥ ९ ॥

सोऽहं विश्रममिच्छामि पुत्रं कृत्वा प्रजाहिते ।
सन्निकृष्टानिमान् सर्वाननुमान्य द्विजर्षभान् ॥ १० ॥

अनुमान्य—कृतानुमतिकान् कृत्वा । मानयतेर्ण्यन्ताल्ल्यप् ॥१०॥

अनुजातो हि मां सर्वैर्गुणैर्ज्येष्ठो ममात्मजः ।
पुरंदरसमो वीर्ये रामः परपुरंजयः ॥ ११ ॥

राज्यार्हतां दर्शयति—अन्वित्यादि । 'अनुर्लक्षणे' इति कर्मप्रवचनीये तद्योगात् मामिति द्वितीया । मद्गुणान् सर्वाननुप्राप्य जात इत्यर्थः । तदेव प्रकाश्यते—पुरन्दरेत्यादि ॥ ११ ॥

† तं चन्द्रमिव पुष्येण युक्तं धर्मभृतां वरम् ।
[1]यौवराज्येन योक्ताऽस्मि [2]प्रीतः पुरुषपुङ्गवम् ॥ १२ ॥

चन्द्रं पुष्येणेव यौवराज्येन—तत्पदेन योक्ताऽस्मि ; लुट् ॥१२॥

अनुरूपः स [3]वै नाथो लक्ष्मीवान् लक्ष्मणाग्रजः ।
त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम् ॥ १३ ॥

---

* 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च' इत्युक्तमिति भाव: ॥

† पुष्येण युक्तं चन्द्रमिव सर्वकार्यसिद्धिदक्षम्—ति. पुष्येण युक्तं चन्द्रमिवेत्यन्वयः । यद्वा चन्द्रमिव स्थितं तं श्वः पुष्येण यौवराज्ये नियोक्तास्मीति—गो. अत्र 'श्व एव पुष्यो भविता' 'पुष्येऽभिषिञ्चस्व' इत्याद्यानुरूप्यम् ॥

[1] यौवराज्ये नियोक्ता—ङ. [2] प्रातः—ङ. [3] वो—ङ.

स वै अनुरूपो नाथः, अस्मद्राज्यस्येति शेषः ; न केवल-मेतावत्, अपि तु—त्रैलोक्यमपीत्यादि । येनेति । प्रसिद्धेनेति यावत् ॥

***अनेन श्रेयसा सद्यः [1]संयोज्यैवमिमां महीम् ।**
**गतक्लेशो भविष्यामि सुते तस्मिन्निवेश्य वै ॥ १४ ॥**

श्रेयसाऽनेन—ईयसुनि 'प्रशस्यस्य श्रः' इति श्रादेशः, प्रशस्ते-नानेन रामेणेत्यर्थः । मही संयोज्य गतक्लेशः ॥ १४ ॥

**† यदीदं मेऽनुरूपार्थं मया साधु [2]नियन्त्रितम् ।**
**[3]भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥ १५ ॥**

यदीत्यादि । मया यन्नियन्त्रितं—नियमितं मद्विषयकरूपं कार्यं तद्यदि साधु भवतां अनुरूपार्थं—अनुकूलप्रयोजनावहं च तदा भवन्तो मे इदमनुमन्यन्ताम् । कुतोऽस्मदनुमतिर्महाराजस्य तवेत्यतः—कथ-मित्यादि । ‡ अहं कथं करवाणि ? विना युष्माकमनुमतिमिति शेषः ॥

**यद्यप्येषा मम प्रीतिः, हितमन्यद्विचिन्त्यताम् ।**
**अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया ॥ १६ ॥**

ननु त्वदभ्यधिकः कः हिताहितविचारसमर्थः ? इत्यत्राह—यद्यपीत्यादि । एषा चिन्ता यद्यपि मम प्रीतिः—प्रीतिमात्रविजृम्भिता, अथापि वास्तवं अन्यत्—अन्यादृशं हितं अस्ति चेत् तत् विचिन्त्यताम् । ननु कथमभ्यधिकदर्शनशङ्केत्यतः—अन्येत्यादि । मध्यस्थाः—रागरोष-वियुक्ताः तत्त्वचिन्तकाः ; तेषां चिन्ता, अन्या तु—अन्यादृश्येव ।

---

* इमां — महीं तस्मिन् ज्येष्ठे सुते निवेश्य —अनेन तन्निवेशरूपेण श्रेयसा मही-मेवं सद्यः संयोज्य—गो. † मे अनुरूपार्थं मया साधु सुमन्त्रितं यदि—इति पाठान्तरे योजना । ‡ स्वकर्तव्यप्रकारप्रश्नो वाऽयम् ।

[1] संयोक्ष्येह—ङ. [2] सुमन्त्रितं—ङ. [3] भवन्तोऽप्यनु—ङ.

कुत इत्यतः—विमर्देति । पूर्वापरपक्षसङ्घर्षणवत्त्वेन हेतुना अभ्यधिकोदया—अधिकार्थप्रादुर्भाववती ॥ १६ ॥

इति ब्रुवन्तं मुदिताः प्रत्यनन्दन् [1] नृपा नृपम् ।
वृष्टिमन्तं महामेघं [2] नर्दन्त इव बर्हिणः ॥ १७ ॥

महामेघमिति । दृष्ट्वेति शेषः ॥ १७ ॥

* स्निग्धोऽनुनादी संजज्ञे तत्र हर्षसमीरितः ।
[3] जनोद्घुष्टेन सन्नादो मेदिनीं कम्पयन्निव ॥ १८ ॥

स्निग्धः—हर्षस्वनः सामन्तकृतो जज्ञे आस्थान्याम् । बहिस्तु जनोद्घुष्टेन सन्—सम्भवन्नादः महीं कम्पयन्निव जज्ञे ॥ १८ ॥

तस्य [4] धर्मत उत्पन्नं भावमाज्ञाय सर्वशः ।
ब्राह्मणा [5] बलमुख्याश्च पौरजानपदैः सह ॥ १९ ॥

धर्मत उत्पन्नं भावं—अभिप्रायं बलं—चतुरङ्गबलं, ब्राह्मणविशेषणत्वे बलं—तपोबलं । चकारान्नृपाश्च, तेषां प्रागुक्तरूपो बलशब्दार्थः ॥१९॥

समेत्य मन्त्रयित्वा तु † समतां गतबुद्धयः ।
ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं [6] नृपम् ॥ २० ॥

गतबुद्धय इति गमकत्वात् समासः । ज्ञात्वा—पुनःपुनः पर्यालोच्येत्यर्थः ॥ २० ॥

---

* तत्र सभायां स्निग्धः—स्नेहाभिव्यञ्जकः अनुनादी—प्रतिध्वनिकारी जनौघोद्घुष्टः—जनसमूहोत्पादितः सन्नादः—समीचीनशब्दः—संजज्ञे । न केवलं राजान एव, सर्वेऽपि जनास्तच्छ्रुत्वा सन्तुष्टा इत्यर्थः—गो. † एकाभिप्रायवन्त इति भावः ।

[1] नृपात्मजम्—ङ. [2] नृत्यन्त—ङ. [3] जनौघोद्घुष्टसन्नादः विमानं—ङ. च. [4] धर्मार्थविदुषः—ङ. [5] जनमुख्याश्च—ङ. [6] वचः—ङ.

अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव ! ।
स रामं युवराजानं अभिषिञ्चस्व पार्थिवम् ॥ २१ ॥

अनेकेत्यादिपदे बहुव्रीहिः । युवराजानमिति । अनित्यत्वान्न टच् ॥

*इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महताऽऽयान्तं रामं छत्रावृताननम् ॥ २२ ॥

इति तद्वचनं श्रुत्वा राजा तेषां मनःप्रियम् ।
अजानन्निव जिज्ञासुरिदं वचनमब्रवीत् ॥ २३ ॥

अजानन्निवेति । रामाभिषेकः सर्वसम्मत इति जानन्नेवेति शेषः ॥

श्रुत्वैव वचनं यन्मे राघवं पतिमिच्छथ ।
राजानः ! संशयोऽयं मे किमिदं ब्रूत तत्त्वतः ॥ २४ ॥

हे राजानः मे वचनं श्रुत्वा तन्निर्बन्धादेव केवलं रामं पतिमिच्छथ ? उत वस्तुतः ? इति मे संशयः । अतः किमिदमिति तत्त्वतो ब्रूत ॥ २४ ॥

†कथं नु मयि धर्मेण पृथिवीमनुशासति ।
भवन्तो द्रष्टुमिच्छन्ति युवराजं [1] ममात्मजम् ॥ २५ ॥

का ते संशयप्रवृत्तिरित्यतः—कथन्वित्यादि । प्रौढा यूयं प्रौढे धर्मवृद्धे मयि चिरपरिचितराजभावाः बालं कथं मयि जीवति राजत्वेन द्रक्ष्यथेत्यर्थः ॥ २५ ॥

---

* ननु रक्षके मयि विद्यमाने किमर्थं रामाभिषेकोऽपेक्ष्यत इत्याशङ्कायां न हि वयं रक्षणार्थं तमपेक्षामहे, किन्तु सौन्दर्यविशेषानुभवार्थमित्याहुः— इच्छाम इति । एतैरभिषेकानन्तरभाविभिर्विशेषणैः अभिषेकः कर्तव्य इति व्यञ्जनावृत्त्या प्रार्थ्यते—गो. † प्रश्नान्तरं वेदम्.

[1] महाबलम्—ङ.

ते तमूचुर्महात्मानं पौरजानपदैः सह ।
बहवो नृप ! कल्याणा गुणाः पुत्रस्य सन्ति ते ॥ २६ ॥
गुणान् गुणवतो देव ! देवकल्पस्य धीमतः ।
प्रियानानन्दनान् कृत्स्नान् प्रवक्ष्यामोऽद्य तान् शृणु ॥

देव—राजन्निति यावत् ॥ २७ ॥

दिव्यैर्गुणैः शक्रसमो रामः सत्यपराक्रमः ।
*इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशांपते ! ॥ २८ ॥
रामः सत्पुरुषो लोके सत्यधर्म[1]परायणः ।
साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥ २९ ॥

रामाद्विनिर्वृत्त इति । रामेणैव प्रतिष्ठापित इत्यर्थः ॥ २९ ॥

†प्रजासुखत्वे चन्द्रस्य वसुधायाः क्षमागुणैः ।
बुध्या बृहस्पतेस्तुल्यो वीर्ये ‡साक्षाच्छचीपतेः ॥ ३० ॥

वसुधायाः इत्याद्याः प्रथमसर्गव्याकृतचराः ॥ ३० ॥

धर्मज्ञः सत्यसन्धश्च शीलवा§ननसूयकः ।
क्षान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः ॥
मृदुश्च स्थिरचित्तश्च सदा भव्योऽनसूयकः ॥ ३२ ॥

क्षमेरूदित्वात् पक्षे नेट् । क्षान्तः इति । अक्डित्यपि दीर्घश्छान्दसः । भव्यः—कुशलः ॥ ३२ ॥

---

* इक्ष्वाकुभ्यः – इक्ष्वाकुवंश्येभ्यः सर्वेभ्यः अतिरिक्तः समधिकः, 'अतिरिक्तः समधिकः' इत्यमरः–**गो.** † रामनिष्ठगुणसमुदायस्यैकत्रासंभवात् एकैकगुणयोगेन चन्द्रादीन् दृष्टान्तयन्ति—प्रजेति–**गो.** ‡ साक्षात्—तुल्यः, 'साक्षात् प्रत्यक्षतुल्ययोः' इत्यमरः–**गो.** § न विद्यते असूया, अन्यविषयिणी, यस्य सः । उत्तरत्र न विद्यते असूया, स्वविषयिणी अन्यकृता, यस्य स तथोक्त इति न पुनरुक्तिः–**ती.**

[1] पराक्रमः–**ङ.**

प्रियवादी च भूतानां सत्यवादी च राघवः ।
बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ॥ ३३ ॥
तेनास्येहातुला कीर्तिर्यशस्तेजश्च वर्धते ।
देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः ॥ ३४ ॥
सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित् ।
गान्धर्वे च भुवि श्रेष्ठो बभूव भरताग्रजः ॥ ३५ ॥
कल्याणाभिजनः साधुरदीनात्मा महामतिः ।
द्विजै*रभिविनीतश्च श्रेष्ठैर्धर्मार्थनैपुणैः ॥ ३६ ॥
यदा व्रजति संग्रामं ग्रामार्थे नगरस्य वा ।
गत्वा सौमित्रिसहितो नाविजित्य निवर्तते ॥ ३७ ॥
सङ्ग्रामात्पुनरागम्य कुञ्जरेण रथेन वा ।
पौरान्[1] सवयसान् नित्यं कुशलं परिपृच्छति ॥ ३८ ॥

सवयसानिति । 'अच्' इति योगविभागादच् समासान्तः ॥

पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ।
निखिलेनानुपूर्व्याच्च पिता पुत्रानिवौरसान् ॥ ३९ ॥
†शुश्रूषन्ते च वः शिष्याः [2]कच्चित्कर्मसु दंशिताः ।
इति नः पुरुषव्याघ्रः सदा रामोऽभिभाषते ॥ ४० ॥

शुश्रूषन्ते च वः शिष्याः इति उपाध्यायान् प्रति प्रश्नः । कर्मसु दंशिता वः शुश्रूषन्ते इति क्षत्रवृद्धान् प्रति प्रश्नः । दंशिताः—कवचिताः भृत्या इति शेषः ॥ ४० ॥

---

* अभिविनीतः—शिक्षितः । † 'शुश्रूषन्ते च वः शिष्याः' इति ब्राह्मणान् प्रति प्रश्नः । वर्मसु दंशिताः–अवहिताः भृत्याः वः सेवन्त इति क्षत्रियान् प्रतिप्रश्नः–ति. दंशिताः–सन्नद्धाः शिष्याः कर्मसु वः शुश्रूषन्ते कच्चिदिति वाऽन्वयः । 'सन्नद्धो वर्मितः सज्जः दंशितः' इत्यमरः ।

[1] स्वजनवन्नित्यं–ङ. च. [2] कच्चिद्वर्मसु–च. कच्चिद्धर्मेषु–ङ. च.

व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ।
उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥ ४१ ॥

सत्यवादी महेष्वासो वृद्धसेवी जितेन्द्रियः ।
स्मितपूर्वाभिभाषी च धर्मं सर्वात्मना श्रितः ॥ ४२ ॥

*सम्यग्योक्ता श्रेयसां च न विगृह्य कथारुचिः ।
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ॥ ४३ ॥

विग्रहः—वृथा कलहः ॥ ४३ ॥

सुभ्रूरायत†ताम्राक्षः साक्षाद्विष्णुरिव स्वयम् ।
रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः ॥ ४४ ॥

प्रजापालनतत्त्वज्ञो न रागोपहतेन्द्रियः ।
शक्तस्त्रैलोक्यमप्येको भोक्तुं किं नु महीमिमाम् ॥ ४५ ॥

नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कदाचन ।
हन्त्येव‡ नियमाद्वध्यानवध्ये न च कुप्यति ॥ ४६ ॥

युनक्त्यर्थैः प्रहृष्टश्च तमसौ यत्र तुष्यति ।

यत्र तुष्यतीति । यस्मिन् विषये सन्तोषं तद्गुणतः प्राप्नोतीत्यर्थः ॥

शान्तैः सर्वप्रजाकान्तैः प्रीतिसंजननैर्नृणाम् ॥ ४७ ॥
गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ।
तमेवं गुणसंपन्नं रामं सत्यपराक्रमम् ॥ ४८ ॥

---

*श्रेयसां सम्यग्योक्ता—संपादकः । न विगृह्यकथारुचिः, 'न विगृह्य कथां कुर्यात्' इति निषिद्धयोर्जल्पवितण्डयोर्निवृत्तरागः गो. † अत्र पक्ष्मादिबहिर्देशविवक्षया ताम्रत्वं मन्तव्यम् । ‡ नियमात्—नियमेन गो.

लोकपालोपमं नाथमकामयत मेदिनी ।
वत्सः श्रेयसि जातस्ते दिष्ट्याऽसौ तव राघव! ॥ ४९ ॥
दिष्ट्या पुत्रगुणैर्युक्तो मारीच इव काश्यपः ।

श्रेयसि—श्रेयोनिमित्तं ते वत्सः—पुत्रः संजातः । मरीचिप्रजापतिपुत्रो मारीचः ॥ ५० ॥

बलमारोग्यमायुश्च रामस्य विदितात्मनः ॥ ५० ॥
देवासुरमनुष्येषु सगन्धर्वोरगेषु च ।
आशंसन्ते जनाः सर्वे राष्ट्रे पुरवरे तथा ॥ ५१ ॥
आभ्यन्तरश्च बाह्यश्च पौरजानपदो जनः ।

देवासुरेत्यादि । देवासुरादिलोकेषु ये देवादयः सन्ति ते च बलाद्याशंसन्त इति योजना ॥ ५२ ॥

स्त्रियो वृद्धास्तरुण्यश्च सायं प्रातः समाहिताः ॥ ५२ ॥
सर्वान् देवान् नमस्यन्ति रामस्यार्थे यशस्विनः ।

रामस्यार्थ इति । रामस्य बलारोग्यादिप्रयोजनार्थमित्यर्थः ॥

तेषामायाचितं देव! त्वत्प्रसादात्समृद्ध्यताम् ॥ ५३ ॥

आयाचितं—अभिप्रार्थितं रामाभिषेकविषयं त्वत्प्रसादात् समृद्ध्यतां—समृद्धं संपन्नं भवत्वित्यर्थः ॥ ५४ ॥

राममिन्दीवरश्यामं सर्वशत्रुनिबर्हणम् ।
पश्यामो यौवराज्यस्थं तव *राजोत्तमात्मजम् ॥ ५४ ॥

---

* राजोत्तमेति सम्बुद्धिः ।

तं *देव देवोपममात्मजं ते
सर्वस्य लोकस्य हिते निविष्टम्।
हिताय नः क्षिप्रमुदारजुष्टं
मुदाऽभिषेक्तुं वरद! त्वमर्हसि ॥ ५५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्वितीय: सर्ग:

---

तं, देवेति राज्ञः सम्बुद्धिः । उदारजुष्टं- प्रशस्तगुणैरुपाश्रितं, उदारैर्महद्भिश्च परिगृहीतम् । मर्म(५५)मानः सर्गः ॥ ५५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्वितीय: सर्ग:

---

## तृतीयः सर्गः

[दशरथेन रामानुशासनम्]

तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः।
प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः॥ १ ॥

एवं निश्चिताभिषेकस्य सम्भारसम्भरणप्रवृत्तिः—तेषामित्यादि । अञ्जलिरूपाणि पद्मानि तथा । प्रगृहीतानीति—प्रकर्षेण शिरसि बद्धानि इत्यर्थः । वीक्षणवचनप्रत्यञ्जलिभिर्यथायोगमञ्जलीनां प्रतिग्रहः इति ॥

†अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम ।
यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥ २ ॥

---

* देवदेव:—विष्णु:, तत्सदृशमिति वा—गो. † अहोऽस्मीति सन्धिरार्षः । प्रभावः—वैभवं, आनन्दानुभवसाधनम् ।

इति प्रत्यर्च्य तान् राजा ब्राह्मणानिदमब्रवीत् ।
वसिष्ठं वामदेवं च तेषामेवोपशृण्वताम् ॥ ३ ॥

प्रत्यर्चितान् नृपान् कृत्वा अथ ब्राह्मणानिदमब्रवीदिति योजना । तेषामित्यादि । ब्राह्मणेषूपशृण्वत्स्विति यावत् ॥ ३ ॥

चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः ।
यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ॥ ४ ॥
राज्ञस्तूपरते वाक्ये जनघोषो महानभूत् ।
शनैस्तस्मिन् प्रशान्ते च जनघोषे जनाधिपः ॥ ५ ॥
वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत् ॥ ६ ॥

जनघोष इति । रामाभिषेकसम्भारसम्भरणश्रवणज इति शेषः । वसिष्ठं इति । वामदेवमिति शेषः ॥ ६ ॥

अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ।
तदद्य भगवन् ! सर्वमाज्ञापयितुमर्हसि ॥ ७ ॥

परिच्छदः—परिकरः ॥ ७ ॥

तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः ।
आदिदेशाग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन् ॥८॥

युक्तान् सावधानान्, मन्त्रिण इति शेषः ॥ ८ ॥

सुवर्णादीनि रत्नानि बलीन् सर्वौषधीरपि ।
शुक्लमाल्यांश्च लाजांश्च पृथक् च मधुसर्पिषी ॥ ९ ॥

बलीन्—विघ्नशान्तिप्रयोजनबल्यर्थपदार्थान् । पृथक् – पृथक्पात्रगृहीते ॥ ९ ॥

* अहतानि च वासांसि रथं सर्वायुधान्यपि ।
चतुरङ्गबलं चैव गजं च शुभलक्षणम् ॥ १० ॥

अहतं–सदशं अधृतं नूतनम् ॥ १० ॥

चामरव्यजने श्वेते ध्वजं छत्रं च पाण्डुरम् ।
शतं च शातकुम्भानां कुम्भानामग्निवर्चसाम् ॥ ११ ॥

शातकुम्भानां—सुवर्णनिर्मितानामिति यावत् ॥ ११ ॥

† हिरण्यशृङ्गमृषभं समग्रं व्याघ्रचर्म च ।
उपस्थापयत प्रातरग्न्यगारं महीपतेः ॥ १२ ॥
यच्चान्यत्किंचिदेष्टव्यं तत्सर्वमुपकल्प्यताम् ॥ १३ ॥

यच्चान्यदिति । अनुक्तं लोकसिद्धं गन्धपुष्पादिकमवश्यमेव एष्टव्यमस्ति तदपीत्यर्थः । अग्न्यगारं–अग्निहोत्रगृहम् ॥ १२ ॥

अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च ।
चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः ॥ १४ ॥

अन्तःपुरं–राजवेश्म । घ्राणहारिभिरिति । घ्राणतर्पणैरित्यर्थः ॥

प्रशस्तमन्नं [1]गुणवद्दधिक्षीरोपसेचनम् ।
द्विजानां ‡ शत[2]साहस्रं यत्प्रकाममलं भवेत् § ॥ १५ ॥
सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम् ।
घृतं दधि च लाजाश्च दक्षिणाश्चापि पुष्कलाः ॥ १६ ॥

---

* "ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात् दैवे पित्र्ये च कर्मणि" इत्युक्तरीत्या अहतं सदशं धौतं नूतनमित्यर्थः–गो. † हिरण्यशृङ्गं—हिरण्यालङ्कृतशृङ्गम् । ‡ विषयसप्तमी–गो. § तत् संपाद्यतामिति शेषः–गो.

[1] विधिव–ङ. [2] साहस्रे–ङ.

शतसाहस्रं यदिति। अनेकं प्रति यत् प्रागुक्तं प्रशस्तमन्नं प्रकामं--यथेष्टं अलं---पर्याप्तं भवेत्, तथा तत् संपाद्य द्विजमुख्यानां 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी, द्विजमुख्येभ्यः श्वः प्रभाते सत्कृत्य दीयतां। लाजा इत्यनेन लाजपरिकल्पितलड्डुकोच्यते ॥ १६ ॥

**सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम्।**
*** ब्राह्मणाश्च निमंत्रयन्तां कल्प्यन्तामासनानि च।**
**आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम् ॥ १७ ॥**

आमन्त्रयन्तामिति। आमन्त्रयन्तामिति यावत् ॥ १७ ॥

**सर्वे च [1] तालापचरा गणिकाश्च स्वलंकृताः।**
**कक्ष्यां द्वितीयामासाद्य तिष्ठन्तु नृपवेश्मनः ॥ १८ ॥**

तालैरपचरन्तीति ताळापचराः, चरिर्भक्षणार्थः, जीवन्तीति ताळापचरा नर्तकाः। कक्ष्यां द्वितीयामिति। अन्तःकक्ष्यायामभिषेकव्यापारप्रवृत्तेस्तत्र च ब्राह्मणैकवास्तव्यत्वादित्याशयः ॥ १९ ॥

**† देवायतनचैत्येषु सान्नभक्षाः सदक्षिणाः।**
**उपस्थापयितव्याः स्युः माल्ययोग्याः पृथक्पृथक् ॥ १९ ॥**

चैत्यं--चतुष्पथं, तत्र गणपतिपूजा। अन्नैर्भक्षैश्च सहिताः सान्नभक्षाः, भक्ष्यन्त इति भक्षाः, कर्मणि घञ्। सदक्षिणाः इत्यनेन

---

* अत्र व्याख्यादृष्ट्या 'अमन्त्रयन्तां विप्राश्च' इति पाठः स्यादिति भाति। † देवायतनचैत्येषु--देवगृहेषु चतुष्पथेषु चेत्यर्थः। अन्नभक्षैस्सहवर्तन्त इति सान्नभक्षाः, अन्नमोदकहस्ता इति यावत्। माल्यप्रदानयोग्याः माल्ययोग्याः, मध्यमपदलोपिसमासः, माल्यार्थसाधनानि। पृथक् पृथगिति। देवायतनचैत्ययोरिति शेषः। ब्राह्मणैर्देवताः पूजनीया इत्यर्थः-गो. चैत्याः--रथ्यावृक्षाः-ती. ति.

[1] तालावचरा--ङ.

विष्णवादि[1]देवतालये गणपत्यालये च क्रमादन्नभक्षैर्दक्षिणोपेततया ब्राह्मण-तर्पणं कर्तव्यमित्युक्तं भवति। माल्यप्रदानयोग्या—माल्ययोग्याः, कर्मणि घञ्, अर्चनायोगसाधनगन्धाक्षताधूपादिसाधनानीत्यर्थः। पृथक्पृथगिति। देवतायतनचैत्ययोरित्यर्थः ॥ १९ ॥

*दीर्घासि[2]बद्धगोधाश्च संनद्धा मृष्टवाससः।
महाराजाङ्कणं सर्वे प्रविशन्तु महोदयम् ॥ २० ॥

दीर्घाः असयः पट्टसरूपा येषां ते तथा। बद्धं गोधा चर्म यैस्ते तथा। अयं धर्मो धन्विनां, ततो द्वंद्वः। अनेन शस्त्रास्त्रद्विप्रकारायुधवन्तो लक्ष्यन्ते। मृष्टवाससः इत्यनेनाभरणाद्यलंकारांतरमपि कल्याणीयमुपलक्षणीयम्। योधा इति विशेष्यम्। महान् उदयः—उद्भवो यस्मिन् तथा† ॥ २० ॥

एवं व्यादिश्य तौ विप्रौ क्रियास्तत्र सुनिष्ठितौ।
चक्रतुश्चैव यच्छेषं ‡पार्थिवाय निवेद्य च ॥ २१ ॥
कृतमित्येव चाब्रूतां अभिगम्य जगत्पतिम्।
यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजर्षभौ ॥ २२ ॥

विप्रौ—वसिष्ठवामदेवौ। क्रिया इति। पुरोहितकर्तव्या इति शेषः। तत्र—नृपवेश्मनि। यच्छेषमिति। दास्यादिपरिचारकान्तर-कर्तव्यक्रियाजातमित्यर्थः। तत् पार्थिवाय—पृथिव्यालेपनादिप्रयोजनाय निवेद्य अथ जगत्पतिं—राजानं अभिगम्य यथोक्तवचनं—उक्तवचन-मनतिक्रम्य सर्वं कृतमेवेति प्रीत्यादियुक्तौ सन्तौ अब्रूताम्। तत्र

---

* दीर्घासिबद्धाः—बद्धदीर्घासयः, 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति निष्ठायाः परनिपातः—**गो.** † तथा च महोदयं—रामाभिषेकमण्डपमित्यर्थः. ‡ पार्थिवाय—राज्ञे—**गो. ति. ती.**

[1] दैवा—**ग.** [2] बद्धा योधाश्च—**ङ.**

प्रीतिर्मानसी। हर्षस्तदुद्रेकमूलो मुखविकासादिः। शेषं पार्थिवाय निवेद्य*त्यन्यः। इदं तु जगत्पतिमभिगम्येत्यनेनान्वितम्। ल्यपः पूर्वकालार्थत्वात्। अभिगमात् पूर्वं निवेदनायोगात्। जगत्पति-मभिगम्य निवेद्येत्येतावतैव सिद्धेः पार्थिवायेति चानन्वितम्। अपि च राज्ञे शेषं निवेद्येत्येतावतैव सिद्धेः पुनरब्रूतामिति चासंगतम्। तारतम्योचितानुचितानभिज्ञमन्दान् प्रति किञ्चित्परीतिप्रदर्शनम्। सुधियस्तूभयं पर्यालोच्य स्वयमेव युक्तायुक्तं ज्ञास्यन्ति ॥ २२ ॥

**ततः सुमन्त्रं द्युतिमान् राजा वचनमब्रवीत्।**
**रामः कृतात्मा भवता शीघ्रमानीयतामिति ॥ २३ ॥**
**स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात्।**
**रामं तत्रानयांचक्रे रथेन रथिनां वरम् ॥ २४ ॥**

† प्रतिज्ञाय—उक्त्वा ॥ २४ ॥

**अथ तत्र [1] सहासीनाः तदा दशरथं नृपम्।**
**प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च भूमिपाः ॥२५॥**
**[2] म्लेच्छाचार्याश्च ये चान्ये वनशैलान्तवासिनः।**
**उपासांचक्रिरे सर्वे तं देवा इव वासवम् ॥ २६ ॥**

अथ तत्रेति। 'प्रासादस्थो ददर्श' इति वक्ष्यमाणत्वादिह तत्रेति प्रासाद इत्यर्थः। तथा सहासीना इति—प्रासाद एव सहासीना इत्यर्थः। प्राच्या इत्यादौ 'द्युप्राक्' इत्यादिना यदादयः शैषिक-

---

* गोविन्दराजः, तीर्थो वा। अत्र श्लोकद्वयमपि भिन्नं भिन्नं वाक्यमिति गोविन्दराजाशयः। तथोक्तम् 'पूर्वश्लोके निवेद्येत्यनेन शेषसंपादनविषयनिवेदनमुक्तम्। अब्रूतामिति तु सकलसिद्धिविषयमिति न पुनरुक्तिः'—गो. ¯ अङ्गीकृत्येति वार्थः।

[1] समासीना—ङ. [2] म्लेच्छाश्चार्याश्च—ङ. च.

भवार्थाः। म्लेच्छाचार्याः–म्लेच्छप्रभवः। अन्तश्शब्दः प्रदेशवाची। प्राच्यादिशैलान्तवासिन इत्यनेन मूलभृतकश्रेणिसुहृद्विषदाटविकमिति षड्विधबलोपास्यत्वं सार्वभौमचिह्नमुक्तम् ॥ २६ ॥

तेषां मध्ये स राजर्षिर्मरुतामिव वासवः।
प्रासादस्थो [1] रथगतं ददर्शायान्तमात्मजम् ॥ २७ ॥
गन्धर्वराजप्रतिमं लोके विख्यातपौरुषम्।
दीर्घबाहुं महासत्त्वं मत्तमातङ्गगामिनम् ॥ २८ ॥

गन्धर्वराजप्रतिमं–यथोक्तदर्शनप्रयोजकदिव्यरूपवत्त्वे ॥ २८ ॥

*चन्द्रकान्ताननं राममतीव प्रियदर्शनम्।
रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् ॥ २९ ॥

चन्द्रवत्कान्तं–कमनीयमाननं यस्य स तथा। अत एव–अतीव-प्रियदर्शनं। गुणैरिति। कर्मत इति शेषः ॥ २९ ॥

†घर्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः।
न ततर्प समायान्तं पश्यमानो नराधिपः ॥ ३० ॥

घर्माभितप्ता इति। अवृष्टिखिन्ना इति यावत् ॥ ३० ॥

‡अवतार्य सुमन्त्रस्तं राघवं स्यन्दनोत्तमात्।
पितुः समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात् ॥ ३१ ॥

---

* चन्द्राननमित्युक्तेऽपि आह्लादकत्वादिसिद्धेर्निरतिशयाह्लादकत्वं द्योतयितुं कान्तशब्दः। चन्द्रात् कान्ताननमिति विग्रहः। ........... पुंसां–कठिनचित्तानामपि, किमुत स्त्रीणामिति भावः। यद्वा पुंशब्देन स्त्रीपुंसाधारणमात्ममात्रमुच्यते–**गो.**
† द्वितीयान्तमिदं प्रजाविशेषणम्। ‡ अवतारणं हस्तप्रदानादिना-**गो.**

[1] दशरथः–ङ.

स तं कैलासशृङ्गाभं प्रासादं नरपुङ्गवः ।
आरुरोह नृपं द्रष्टुं सह सूतेन राघवः ॥ ३२ ॥

स[1]साञ्जलिरभिप्रेत्य प्रणतः पितुरन्तिके ।
नाम स्वं श्रावयन् रामो ववन्दे चरणौ पितुः ॥ ३३ ॥

साञ्जलिरेव अभिप्रेत्य प्रणतः—कृतसाष्टांगनमस्कारः पश्चात् 'उरस्समं राजन्यः' इत्याद्युपदिश्यमानविशेषवन्दनं चाकरोदित्यर्थः । स्वं नाम श्रावयन्निति । रामवर्मानामाहमस्मीत्येवमात्मना स्वं नाम श्रावयन्निति यावत् ॥ ३३ ॥

तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुटं नृपः ।
*गृह्याञ्जलौ समाकृष्य सस्वजे प्रियमात्मजम् ॥ ३४ ॥

अञ्जलौ गृह्येति । तत्प्रदेशे गृहीत्वेति यावत् ॥ ३४ ॥

तस्मै चाभ्युदितं [2]सम्यङ्मणिकाञ्चनभूषितम् ।
दिदेश राजा रुचिरं रामाय परमासनम् ॥ ३५ ॥

†अभ्युदितं—उपस्थापितं । परमं—श्रेष्ठम् ॥ ३५ ॥

तदासनवरं प्राप्य व्यदीपयत राघवः ।
स्वयैव प्रभया मेरुमुदये विमलो रविः ॥ ३६ ॥

प्राप्य तद्व्यदीपयत—द्योतयति स्मेति योजनार्थः । उदय इति । तत्स्थत्वेन प्रतिभासमान इति शेषः ॥ ३६ ॥

---

* 'सक्थिनि कर्णे वा गृहीत्वा' इति महाभाष्यकारवचनात् अञ्जलाविति कर्मणि सप्तमी—गो. च. † अभ्युदितं—उन्नतं—गो.

[1] प्राञ्जलि—ङ. [2] दिव्यं मणि—ङ.

तेन विभ्राजता तत्र सा सभाऽभिव्यरोचत ।
विमलग्रहनक्षत्रा शारदी द्यौरिवेन्दुना ॥ ३७॥

द्यौः—आकाशः ॥ ३७॥

तं पश्यमानो नृपतिः तुतोष प्रियमात्मजम् ।
अलङ्कृतमिवात्मानं आदर्शतलसंस्थितम् ॥ ३८॥

आदर्शतलसंस्थितं आत्मानमिव पश्यमान इत्यनेन रामस्य मुखनासाकरचरणादिसर्वावयवेन च पितृसमरूपत्वमावेदितम् ॥ ३८॥

स तं [1]*सस्मितमाभाष्य पुत्रं पुत्रवतां वरः ।
उवाचेदं वचो राजा देवेन्द्रमिवं [2] कश्यपः ॥ ३९॥

ज्येष्ठायामसि मे पत्न्यां सदृश्यां सदृशः सुतः ।
उत्पन्नस्त्वं गुणश्रेष्ठो मम †रामात्मजः प्रियः ॥ ४०॥

तदेव दर्शितम्—सदृशः सुत इति । गुणैः श्रेष्ठो यतः अतो मम प्रियः आत्मजोऽसि ॥ ४०॥

यतस्त्वया प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः ।
तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि ॥ ४१॥

अपि च—यतस्त्वयेत्यादि । पुष्ययोगेनेति, ' प्रकृत्यादिभ्य उपसङ्ख्यानम् ' इति तृतीया, पुष्येण चन्द्रमसो योगः पुष्ययोगः, तदुपलक्षितकाल इत्यर्थः ॥ ४१॥

---

* सस्मितमिति क्रियाविशेषणम्-गो. † आत्मजः—औरसः सुतः-गो.

[1] सुस्थित-ङ. [2] काश्यपः-ङ. झ.

**कामतस्त्वं प्रकृत्यैव [1] विनीतो गुणवानसि ।**
**गुणवत्यपि तु स्नेहात् पुत्र ! वक्ष्यामि ते हितम् ॥ ४२ ॥**

कामतः—प्रकामं, अत्यर्थमिति यावत् । गुणवति सत्यपि स्नेहात्–स्नेहादेव ॥ ४२ ॥

**भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः ।**
*** कामक्रोध[2]समुत्थानि त्यजेथा व्यसनानि च ॥ ४३ ॥**

भूय इति । विनीत एव सन् पुनश्चाभ्यधिकं विनयमास्थाय व्यसनानि त्यजेथा इति । 'स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः । अर्थस्य दूषणं चेति राज्ञां व्यसनपञ्चकं' इत्युक्तानि व्यसनानि । तत्रार्थसंदूषणं नाम पित्रादिसञ्चितार्थस्य उक्तव्यसनतो नाशनम् ॥ ४३ ॥

**परोक्षया वर्तमानो वृत्त्या प्रत्यक्षया यथा ।**
**अमात्यप्रभृतीः सर्वाः प्रकृतीश्चानुरञ्जय ॥ ४४ ॥**

परोक्षया—चारमुखतः परोक्षानुभवसिद्धया वृत्त्या—स्वपरराष्ट्रवृत्तान्तविचारेण सह वर्तमानो भव । प्रत्यक्षया—नित्यं यथाकालमास्थानीमास्थाय स्वानुभवसिद्धयथोक्तवृत्तान्तविचारेण सह वर्तमानो भव । अमात्यप्रभृतीः सर्वाः प्रकृतीरिति । अमात्यसेनानीपुरादिरक्षिपौरजानपदसर्वप्रजा इत्यर्थः ॥ ४४ ॥

**कोष्ठागारायुधागारैः कृत्वा सन्निचयान् बहून् ।**
**[3] तुष्टानुरक्तप्रकृतिः यः पालयति मेदिनीम् ॥ ४५ ॥**

---

* यद्वा 'मृगयाऽक्षो दिवास्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाध्वा च कामजो दशको गुणः ॥' इत्येतानि कामजानि, पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डयोश्च पारुष्यं क्रोधजोऽपि गुणोऽष्टकः' इत्युक्तानि क्रोधजानि च व्यसनानि—**गो.**

[1] निर्णीतः–**ङ.**　[2] समृद्धानि–**ङ.**　[3] इष्टानु–**ङ.**

तस्य नन्दन्ति मित्राणि लब्ध्वाऽमृतमिवामराः ।
तस्मात्त्वमपि चात्मानं नियम्यैवं समाचर ॥ ४६ ॥

कोष्ठागाराणि—अयुतनियुतादिसङ्ख्यधान्यराशिग्राहीणि कोष्ठरूपतया निर्मितान्यगाराणि । तथा आयुधागाराणि—समग्रनिजबलापेक्षिताष्टादशविधायुधप्रतिष्ठागाराणि च तथा । तैस्सह सन्निचयाः—निचीयन्ते अस्मिन्निति निचयाः—नवरत्नहेमरजतवस्त्राभरणादिसंपूर्णाः तत्तत्कोशाः तथा । सन्निचया इत्यत्र समित्यव्ययं पूर्तिवाचि द्रष्टव्यम् । तन्त्रेण सामितिशोभनवाचि च पूर्वपदम् । तुष्टानुरक्तप्रकृतिः—उक्तनिचयबलादिति शेषः । तस्य मित्राणीति । सामन्तराजान इति यावत्॥ ४६॥

तच्छ्रुत्वा सुहृदस्तस्य रामस्य प्रियकारिणः ।
त्वरिताः शीघ्रमभ्येत्य कौसल्यायै न्यवेदयन् ॥ ४७ ॥

तदिति । अभिषेकप्रयोजनं पित्रुपदेशमित्यर्थः ॥ ४७ ॥

सा हिरण्यं च गाश्चैव रत्नानि विविधानि च ।
व्यादिदेश प्रियाख्येभ्यः कौसल्या प्रमदोत्तमा ॥ ४८ ॥

प्रियमाख्यान्तीति प्रियाख्याः—'आतोऽनुपसर्गे कः' इति कः ॥

अथाभिवाद्य राजानं रथमारुह्य राघवः ।
ययौ स्वं द्युतिमद्वेश्म जनौघैः प्रतिपूजितः ॥ ४९ ॥

ते चापि पौरा नृपतेर्वचस्तु तत्
श्रुत्वा तदा लाभमिवेष्टमाशु ।
नरेन्द्रमामन्त्र्य गृहाणि गत्वा
देवान् समानर्चुरभिप्रहृष्टाः ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे तृतीयः सर्गः

लाभमिवेति । स्वस्वपुत्राभ्युदयमिवेति यावत् । अत एव देवान् समानर्चुरिति । स्वाभीष्टाविघ्नायेति शेषः । अमा (५०) मानः सर्गः ॥ ५० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे तृतीयः सर्गः

---

## चतुर्थः सर्गः

[रामाभिषेकनिश्चयः]

*गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः ।
मन्त्रयित्वा ततश्चक्रे निश्चयज्ञस्स निश्चयम् ॥ १ ॥
श्व एव पुष्यो भविता [1]श्वोऽभिषिच्येत मे सुतः ।
रामो राजीवताम्राक्षो यौवराज्य इति प्रभुः ॥ २ ॥

एवं निश्चिताभिषेक उपदिष्टोपदेष्टव्योऽपि वृद्धत्वाद्विस्मृताभिषेकाङ्गपुत्रकर्तव्योपदेशः तदुपदेशाय पुनराहूयोपदिशति—गतेष्वित्यादि । निश्चयश्च कः? कीदृशः? इत्यतः—अभिषिच्येतेति । कर्मणि विधिलिङ् । निश्चयमिति पूर्वेण सम्बन्धः ॥ २ ॥

अथान्तर्गृहमाविश्य राजा दशरथस्तदा ।
सूतमामन्त्रयामास रामं †पुनरिहानय ॥ ३ ॥

अन्तर्गृहमाविश्येति । मन्त्रिणामपि विसर्जनानन्तरमिति शेषः ॥

---

* सामान्यतः पुष्ययुक्तदिने रामोऽभिषेच्य इति पूर्वं निर्णीतवान् राजा । अनन्तरं विमर्शे च श्व एव पुष्ययुक्तदिवस इति ज्ञात्वा श्व एव राममभिषिषिक्षुः पुना राममाहूयादिशत्यस्मिन् सर्गे । अत एव 'तस्मात् त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि' इति तत्र, 'श्व एव पुष्यो भविता' इति अत्र चोच्यते । † आनयेत्यनन्तरं इति करणमूह्यम् ।

[1] श्वोऽभिषेच्यस्तु-ङ.

प्रतिगृह्य स तद्वाक्यं सूतः पुनरुपाययौ ।
रामस्य भवनं शीघ्रं राममानयितुं पुनः ॥ ४ ॥
द्वास्थैरावेदितं तस्य रामायागमनं पुनः ।
श्रुत्वैव चापि रामस्तं प्राप्तं शंकान्वितोऽभवत् ॥ ५ ॥

तस्य पुनरागमनमिति । सुमन्त्रस्यागनमित्यर्थः । शङ्कान्वित इति । राज्ञ आपद्वा ? आहोस्विदभिषेकाविळम्बाय वेति ॥ ५ ॥

प्रवेश्य चैनं त्वरितं रामो वचनमब्रवीत् ।
यदागमनकृत्यं ते भूयस्तद्ब्रूह्यशेषतः ॥ ६ ॥
तमुवाच ततस्सूतो राजा त्वां द्रष्टुमिच्छति ।
श्रुत्वा प्रमाणमत्र त्वं गमनायेतराय वा ॥ ७ ॥

त्वमेव प्रमाणं—निर्णायकः ; न हि किंकरः स्वामिनं कचिन्नियोक्तुमीष्टे । यदेवमतो राजानं प्रति गमनाय वा इतराय वा—अगमनाय वा मतिं विधेहि स्वेच्छया । * इतरस्यासर्वनामता ॥ ७ ॥

इति सूतवचः श्रुत्वा रामोऽथ त्वरयाऽन्वितः ।
प्रययौ राजभवनं पुनर्द्रष्टुं नरेश्वरम् ॥ ८ ॥
तं श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः ।
प्रवेशयामास गृहं विवक्षुः प्रियमुत्तमम् ॥ ९ ॥

प्रियमिति । [1]स्वयमिति शेषः ॥ ९ ॥

प्रविशन्नेव च श्रीमान् राघवो भवनं पितुः ।
ददर्श पितरं दूरात् प्रणिपत्य कृताञ्जलिः ॥ १० ॥

दूरात् प्रणिपातः । किं वदिष्यतीति भीत्या ॥ १० ॥

---

* इतरस्य— इतरशब्दस्य ।      [1] स्वयमित्यर्थः—क.

प्रणमन्तं समुत्थाप्य तं परिष्वज्य भूमिपः ।
प्रदिश्य चास्मै रुचिरमासनं पुनरब्रवीत् ॥ ११ ॥
राम! वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा मयेप्सिताः ।
अन्नवद्भिः क्रतुशतैः तथेष्टं भूरिदक्षिणैः ॥ १२ ॥

'विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते' इति गीयमानत्वादन्नवदादिविशेषणम् ॥

जातमिष्टमपत्यं मे त्वमद्यानुपमं भुवि ।
दत्तमिष्टमधीतं च मया पुरुषसत्तम! ॥ १३ ॥
अनुभूतानि चेष्टानि मया वीरसुखान्यपि ।
*देवर्षिपितृविप्राणां अनृणोऽस्मि तथाऽऽत्मनः ॥ १४ ॥

देवर्षिपितृविप्राणामात्मनश्चानृणोऽस्मीति । अत्र सेन्द्रियग्रामो जीव आत्मा । तस्य देहग्रहस्तत्तदुत्थसुखानुभवप्रयोजनः । 'अनिषिद्धसुखत्यागी पशुरेव न संशयः' इति न्यायेन तत्तदुचितसुखसंपादनं जीवात्मनामेव । यथा देवर्षिपितृणान्निजेन्द्रियवत् तदुपकारकत्वेन तदप्रत्युपकारे ऋणम्, एवं जीवस्य च साक्षात् स्वान्तःकरणज्योतिः-

---

*देवानामनृणः क्रतुशतैः, ऋषीणामनृणोऽध्ययनेन, पितृणामनृणोऽपत्योत्पादनेन, विप्राणामनृणो दत्तेन, आत्मनोऽनृणः सुखानुभवेन । यद्यपि ब्रह्मचर्यादि ऋणत्रयं श्रुतिसिद्धम्—'जायमानो वै .... पितृभ्यः' इति; तथाऽपि ऋणपञ्चकमिति मतान्तरम् । यद्वा ऋणत्रयव्यपदेशः प्राधान्यात्, इतरयोरुपलक्षणत्वाद्वा । ननु देवादीनां पञ्चानां कथमुत्तमर्णत्वम् ? अत्राहुः—देवानामिन्द्रियाधिष्ठातृणां जितेन्द्रियताकारकत्वेनोपकारकत्वात्, ऋषीणां वागुपकारकत्वात्, पितृणां तनूपकारकत्वात्, विप्राणां कर्माधीनसर्वसंस्कारसाधनेनाघनाशकत्वात्, आत्मनः शारीरेन्द्रियसङ्घातरूपस्य ज्ञानप्रकाशहेतुत्वेनोपकारकत्वाच्च तदप्रत्युपकारः पुरुषस्य ऋणमेव । अन्यत्र चोक्तं 'अनिषिद्धसुखत्यागी पशुरेव न संशयः' इति—गो.

प्रदानोपकारकत्वेन तद्प्रत्युपकारेऽपि ऋणम्। विप्रैरेव जातकर्मादिसर्व-संस्कारसाधनेनाघनाशनात् तद्प्रत्युपकारे च ऋणमस्य भवति। ऋण्यृणे विप्रर्णस्यान्तर्भावात् देवर्णे जीवर्णस्यान्तर्भावात् 'जायमानो वै ब्राह्मणः' इत्याद्यया श्रुत्या 'ऋणानि त्रीण्यपाकृत्य' इत्यादिस्मृत्या * वर्णत्रय-वादः। तत्र दत्तेन षोडशमहादानान्तदानेन विप्रर्णापाकरणम्। धर्मा-विरुद्धसुखभोगेन जीवर्णापाकरणञ्च जातमि[1]त्युक्तम्—दत्तमित्यनेन, अनुभूतानि इत्यादिना च। शेषः प्रसिद्धः॥ १३–१४॥

न किञ्चिन्मम कर्तव्यं तवान्यत्राभिषेचनात्।
अतो यत्त्वामहं ब्रूयां तन्मे त्वं कर्तुमर्हसि॥ १५॥

यद्ब्रूयां तत्कर्तुमर्हसीति। विळम्बं मा कुर्विति यावत्॥ १५॥

अद्य प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपम्।
अतस्त्वां युवराजानमभिषेक्ष्यामि पुत्रक!॥ १६॥
अपि चाद्याशुभान् राम! स्वप्ने पश्यामि दारुणान्।
सनिर्घाता[2] दिवोल्का च पततीह महास्वना॥ १७॥

इतश्चेतश्च कर्तुमर्हसीत्याह—अद्येत्याद्यपिचादिभ्याम्। दिव उल्का दिवोल्का, सन्धिश्छान्दसः। निर्घातः–अशनिरमेघः॥ १७॥

अवष्टब्धं च मे राम! नक्षत्रं दारुणैर्ग्रहैः।
आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः॥ १८॥
प्रायेण हि निमित्तानामीदृशानां समुद्भवे।
राजा हि मृत्युमाप्नोति घोरां वाऽपदमृच्छति॥ १९॥

---

*'वा ऋण' पदच्छेदः

[1] त्याह–ग. [2] महोल्काश्च पतन्तीह–ङ.

तद्यावदेव मे * चेतो न [1] विमुञ्चति राघव !।
तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः ॥ २० ॥

नक्षत्रं—जन्मनक्षत्रं। दारुणैः सूर्यादिभिः। तैः अवष्टब्धं—युगपत्पूर्णभावतयाधिष्ठितम्। आवेदयन्ति—तत्फलं चावेदयन्ति—प्रायेण चेत्यादिना। मृत्युः—आपच्च क्रमादुक्तोल्कानक्षत्रफले। मे चेतः—न विमुञ्चतीति—अभिषेकचिन्तां न विमुञ्चति—न विमुखं भवतीति यावत्, तावत्—ततः पूर्वमेव अभिषिञ्चस्व—कृताभिषेकं स्वात्मानं कुरु। कुत एवमभिषेकवैमुख्यप्रसक्तिशङ्केत्यत्राह—चलेत्यादि। सम्भावितसपत्नीवैमात्रेयादिजोपजापस्य च सम्भावितत्वादित्याशयः। अयमेवाशयः प्रकाशयिष्यते—विप्रोषितश्चेत्यादिना ॥ २० ॥

अद्य चन्द्रोऽभ्युपगतः पुष्यात्पूर्वं [2] पुनर्वसू।
† श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥ २१ ॥

पुष्ययोगं श्वो नियतमिति—शुद्धगणितनिश्चितमित्यर्थः। वक्ष्यन्त इति। कालस्तङ् च छान्दसः—वदन्तीति यावत् ॥ २१ ॥

[3] तत्र पुष्येऽभिषिञ्चस्व मनस्त्वरयतीव माम्।
श्वस्त्वाऽहमभिषेक्ष्यामि यौवराज्ये परंतप ! ॥ २२ ॥

तत्र पुष्य इति। राजाभिषेकपरिगणितनक्षत्र इत्यर्थः। त्वा—त्वां इत्यर्थः ॥ २२ ॥

---

* चेतः—त्वामभिषेक्ष्यामीति बुद्धिः-गो. † पुष्ययोगं—पुष्येण चन्द्रस्य योगं नियतं—अभिषेकनियतं, प्रशस्तमित्यर्थः-गो.

[1] विमुञ्चति-ङ. च. [2] पुनर्वसु-ङ. च. [3] ततः-ङ.

*तस्मात्त्वयाऽद्य [1]प्रभृति निशेयं नियतात्मना ।
सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥ २३ ॥

अद्यप्रभृतीति । प्रदोषकालमारभ्येति यावत् ॥ २३ ॥

सुहृदश्चाप्रमत्तास्त्वां रक्षन्त्वद्य समन्ततः ।
भवन्ति बहुविघ्नानि कार्याण्येवंविधानि हि ॥ २४ ॥

सुहृद्भिरपि रक्षणं किमर्थमपेक्ष्यमित्यत्र—भवन्तीत्यादि । बहुविघ्नानीति बहुव्रीहिः ॥ २४ ॥

† विप्रोषितश्च भरतो यावदेव पुरादितः ।
तावदेवाभिषेकस्ते प्राप्तकालो मतो मम ॥ २५ ॥

इतः पुरादिति । अस्मात्पुरादित्यर्थः । तावदेवेति । ततः पूर्वमेवेत्यर्थः ॥ २५ ॥

‡ कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः ।
ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥ २६ ॥
[2]किन्तु चित्तं मनुष्याणां अनित्यमिति मे[3] मतिः ।
§ सतां च धर्मनित्यानां कृतशोभि च राघव ! ॥ २७ ॥

---

* अद्यप्रभृति—एतदहरारभ्य निशा उपवस्तव्या । 'वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः' इति भोजननिवृत्त्यर्थस्य वसेरकर्मकत्वादत्र सकर्मकत्वमार्षम्—गो. † केकयराजाय राज्यशुल्कं दत्त्वा कैकेयीं विवाहितवान् ; तं वृत्तान्तं हृदि कृत्वाह—विप्रोषित इति । (अयं वृत्तान्तः अयो. १०७-३-श्लोके स्पष्टः) गो. ‡ कामं—यद्यपि। वृत्ते—शीले। § सामान्यप्रयुक्तदोषो विशेषे न संक्रमत इत्याह—सतां त्विति । तुशब्दः पक्षव्यावृत्त्यर्थः । धर्मनित्यानां—धर्मैकनिरतानां कृतशोभि—कृतेन परस्परोपकारेण शोभते ; न तु भेदं प्राप्नोति । अन्ये त्वेवं व्याचक्षते—'धर्मनित्यानां चित्तं कृतशोभि—कृतेन परकृतमित्रभेदादिना शोभितुं शीलमस्यास्तीति कृतशोभीति । अन्ये त्वाहुः—सतां चित्तं कृतेन कार्येण शोभते, न तु करिष्यमाणेन । कृतं कार्यमनुमोदते । न तु करिष्यमाणमिति भाव इति—गो.

[1] व्रतिना—ङ. [2] किन्नु—ङ. [3] मनः—ङ.

यद्यपि भरते त्वदभिषेकवैमत्यमसम्भाव्यं, अथापि लोकस्थितिस्त्वेवमित्याह—कामं खल्वित्यादि। ज्येष्ठस्याभिषेकसुखं न हन्तव्यमित्यनुक्रोशसहितः—घृणासहितः प्रायेण ; अथापि—किन्तु—लोकस्थितौ विशेषोऽस्ति। कथम्?—मनुष्याणां चित्तं तद्गतस्नेहादिकं अनित्यमेव ; सति विकारनिमित्ते विक्रियतैवेत्यर्थः। उक्त एवार्थः प्रदर्श्यते—सतामित्यादि। सतामपि—[1]सत्कुलप्रसूतानामपि–धर्मनित्यानामपि चित्तं कृतशोभि—येन येन निमित्तेन यद्यत्कृतं रागो द्वेषादिर्वा, तेन तेनैव शोभि सर्वथा, न तु स्वतो नियतकिञ्चित्स्वभावं। तथात्वे सुखदुःखोर्मिमालासंसाराकूपारावस्थानायोगात्। * कृतशोभीत्यत्र यद्वा भट्टो बहु जल्पति, तत्र न किञ्चिदपि संगतं पश्यामः ॥ २७ ॥

**इत्युक्तः सोऽभ्यनुज्ञातः श्वोभाविन्यभिषेचने।**
**व्रजेति रामः पितर[2]मभिवाद्याभ्ययाद्गृहम् ॥ २८ ॥**

अभिषेचनेऽभ्यनुज्ञातः ; 'इदानीं व्रज' इति चाभ्यनुज्ञातः इत्यनुकर्षः ॥ २८ ॥

**प्रविश्य चात्मनो वेश्म रा[3]ज्ञोद्दिष्टेऽ†भिषेचने।**
**[4]तत्क्षणादेव निष्क्रम्य मातुरन्तःपुरं ययौ ॥ २९ ॥**

---

* अत्र मातृकासु 'बहुशोभीत्यत्र' इत्येव पाठ उपलभ्यते। परन्तु अधस्तात् 'कृतशोभि' इत्येव व्याख्यातत्वात् एवं निवेशितम्। 'यद्वा भट्टः' इति कस्यचिन्नाम परिहासनिबन्धनम्। यः स्वव्याख्यायां 'यद्वा—यद्वा—' इति बहुकल्पान्वदति सः 'यद्वा भट्टः'—इत्युक्तः। प्रायोऽयं गोविन्दराज एव स्यात्। सप्तमसर्गप्रथमश्लोकीयव्याख्याटिप्पण्योर्दर्शने इदं युक्तं प्रतिभाति। † निमित्तसप्तमी ; राज्ञोद्दिष्टमभिषेकं कथयितुमित्यर्थः-**गो.**

[1] सत्कुले-**ग.** [2] मभिभाष्या-**ङ.** [3] राज्ञादिष्टे-**ङ.** [4] तत्क्षणेन-**च. ङ.**

राज्ञोद्दिष्टेऽभिषेचने तदपेक्षितराजोपादिष्टसभार्योपवासानुष्ठान-निवेदनाय तत्क्षणादेव मातुरन्तःपुरं ययौ ॥ २९ ॥

**तत्र तां *प्रवणामेव मातरं क्षौमवासिनीम् ।**
**वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ॥ ३० ॥**

प्रवणां—देवताप्रार्थनाञ्जलिवशात् प्रह्वाम् । ददर्शायाचतीमिति छन्दसि दीर्घः । रामाय श्रियं याचतीमिति यावत् ॥ ३० ॥

**†प्रागेव चागता तत्र सुमित्रा लक्ष्मण[1]स्तथा ।**
**सीता चानायिता श्रुत्वा प्रियं रामाभिषेचनम् ॥ ३१ ॥**

सीता चानायितेति—स्वगमनानन्तरमिति शेषः ॥ ३१ ॥

**तस्मिन् कालेऽ[2]पि कौसल्या तस्थावामीलितेक्षणा ।**
**सुमित्रयाऽन्वास्यमाना सीतया लक्ष्मणेन च ॥ ३२ ॥**
**श्रुत्वा [3]पुष्येण पुत्रस्य यौवराज्याभिषेचनम् ।**
**प्राणायामेन पुरुषं ध्यायमाना जनार्दनम् ॥ ३३ ॥**

तस्मिन् कालेऽपीति ।—रामस्य मातृसमीपगमनकालेऽपीत्यर्थः । आमीलितेक्षणा—ध्यानवशात् । पुष्येण—पुष्ये श्वोऽभिषेको मे भविता यथा—यथादिष्टं पितुश्शासनमेवमिति शेषः ॥ ३३ ॥

**तथा सनियमामेव सोऽभिगम्याभिवाद्य च ।**
**उवाच वचनं रामो हर्षयंस्तामनिन्दिताम् ॥ ३४ ॥**

---

* प्रवणां—स्वासाधारणदेवतासक्तचित्ताम् । ...... आयाचतीं—प्रार्थयन्तीं—**गो.**

† सुमित्रा प्रियं रामाभिषेचनं श्रुत्वा आगता । लक्ष्मणश्च तदा सुमित्राऽऽगमनकाले आगतः । सीता तु परतन्त्रत्वात् स्वयं नागता, किन्तु दासीभिरानायिता- **गो.**

[1] स्तदा—ङ. [2] तु, हि, च—ङ. [3] पुष्ये च पुण्येन—ङ.

अम्ब! पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि।
भविता श्वोऽभिषेकोऽयं यथा मे शासनं पितुः ॥ ३५ ॥

सीतयाऽप्युपवस्तव्या रजनीयं मया सह।
एवमृत्विगुपाध्यायैः सह मामुक्तवान् पिता ॥ ३६ ॥

एवमिति कथम्? इत्यतः—सीतयेत्यादि। न केवलं पितुरेवायं नियोगः, अपि तु सर्वनियोक्तृनियोग इत्याह—एवमृत्विगित्यादि ॥ ३६ ॥

यानि यान्यत्र योग्यानि श्वोभाविन्यभिषेचने।
तानि मे मङ्गलान्यद्य वैदेह्याश्चैव कारय ॥ ३७ ॥

मङ्गलानि—[1]मङ्गलार्हगन्धमाल्याम्बराभरणादीनि ॥ ३७ ॥

एतच्छ्रुत्वा तु कौसल्या चिरकालाभिकांक्षितम्।
हर्षबाष्प[2]कलं वाक्यं इदं राममभाषत ॥ ३८ ॥

हर्षजो बाष्पः, तेन कलं—अव्यक्तमधुरम् ॥ ३८ ॥

वत्स! राम! चिरं जीव हतास्ते परिपन्थिनः।
ज्ञातीन् मे त्वं श्रिया युक्तः सुमित्रायाश्च नन्दय ॥ ३९ ॥

हता इति। सन्त्विति शेषः। मे—मम सुमित्रायाश्च ज्ञातीन्—बन्धून् अभिनन्दय ॥ ३९ ॥

[3]कल्याणे *बत नक्षत्रे मयि जातोऽसि पुत्रक!।
येन त्वया दशरथो गुणैराराधितः पिता ॥ ४० ॥

---

* बतेति सन्तोषे। 'खेदानुकम्पासन्तोषविस्मयाऽऽमन्त्रणे बत' इत्यमरः—गो.

[1] मङ्गलार्ह—क. [2] बाष्पाकुलं—ङ. च. [3] कल्याणेऽदिति—ङ.

कल्याणे नक्षत्र इति । शुभकाल इति यावत् । जात इति । जनित इति यावत् । येनेति । बहुगुणशुभकालजन्मप्राबल्येनेति यावत् ॥ ४० ॥

**अमोघं बत मे *क्षान्तं पुरुषे पुष्करेक्षणे ।**
**येयमिक्ष्वाकुराज्यश्रीः पुत्र ! त्वां संश्रयिष्यति ॥ ४१ ॥**

पुष्करेक्षणे पुरुषे यत् क्षान्तं—क्षमाप्रधानं तपोऽनुष्ठितं, तत् अमोघं बत- सफलं जायते किल । बतेति हर्षे ॥ ४१ ॥

**इत्येवमुक्तो मात्रेदं रामो भ्रातरमब्रवीत् ।**
**प्राञ्जलिं प्रह्वमासीनं अभिवीक्ष्य स्मयन्निव ॥ ४२ ॥**

[1]रामः स्वप्रयोजनं लक्ष्मणाय साधारणीकरोति—इत्येवमुक्त इति । इवशब्द इह सर्वत्र एवार्थे ॥ ४२ ॥

**लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुन्धराम् ।**
**द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥ ४३ ॥**

प्रशाधीति । शाभावस्यासिध्या धित्वम् । अन्तरात्मा—प्राणः ॥

**सौमित्रे ! भुङ्क्ष्व भोगांस्त्वं इष्टान् राज्यफलानि च ।**
**जीवितं च हि राज्यं च त्वदर्थमभिकामये ॥ ४४ ॥**

भोगाः—विषयभोगाः, राज्यफलं—अर्थो धर्मश्च, तच्च प्राप्नुहि । त्वदर्थमिति । न स्वप्रयोजनाय ॥ ४४ ॥

---

* क्षान्तं—व्रतोपवासादिक्लेशसहनम्—**गो.**

[1] रामस्य प्रयोजनं—**क.**

**इत्युक्त्वा लक्ष्मणं रामो मातरावभिवाद्य च ।**
**अभ्यनुज्ञाप्य सीतां च जगाम स्वं निवेशनम् ॥ ४५ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुर्थः सर्गः

———

अभ्यनुज्ञाप्येति । *लक्ष्मणद्वारेति शेषः । जानातेः ज्ञपेर्वा हेतुमण्ण्यन्ताल्ल्यप् । मघा (४५) मानः सर्गः ॥ ४५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चतुर्थः सर्गः

———

## पञ्चमः सर्गः

[अभिषेकपूर्वाङ्गचर्याचरणम्]

**सन्दिश्य रामं नृपतिः श्वोभाविन्यभिषेचने ।**
**पुरोहितं समाहूय वसिष्ठमिदमब्रवीत् ॥ १ ॥**

**गच्छोपवासं काकुत्स्थं कारयाद्य तपोधन !**
**श्रेयसे राज्यलाभाय वध्वा सह यतव्रतम् ॥ २ ॥**

अथ उपवासस्य पुरोहितेन संकल्पमन्त्रादिसाध्यत्वात् तदर्थं पुरोहितनियोगः—सन्दिश्येत्यादि । उपवासं काकुत्स्थमिति । 'गति-बुद्धि' इत्याद्यनुवर्तने, 'हृक्रोरन्यतरस्याम्' इति कर्मत्वं अणौ कर्तुः ॥

---

* मातृभ्यामिति शेषः—**गो.** सीतां स्वं चाभ्यनुज्ञाप्य—सीतायै स्वस्मै च मातृभ्यामनुज्ञां दापयित्वा—**ति.**

**तथेति च स राजानं उक्त्वा वेदविदां वरः ।**
**स्वयं वसिष्ठो भगवान् ययौ रामनिवेशनम् ॥ ३ ॥**

**उपवासयितुं रामं †[1] मन्त्रवन्मन्त्रकोविदः ।**
**ब्राह्मं रथवरं युक्तमास्थाय सुधृतव्रतः ॥ ४ ॥**

स्वयमिति । *रामविषयराजशासनत्वादेव ब्राह्मं—ब्राह्मणवहनार्हम् ॥ ४ ॥

**स रामभवनं प्राप्य ‡पाण्डराभ्रघनप्रभम् ।**
**तिस्रः कक्ष्या रथेनैव विवेश मुनिसत्तमः ॥ ५ ॥**

अभ्रे—आकाशे विद्यमानो घनः—अभ्रघनः । एतेन पर्वतस्थघनव्यावृत्तिः । ततः पाण्डरशब्देन कर्मधारयः, तस्येव प्रभा यस्य तत् तथा ॥ ५ ॥

**तमागतमृषिं रामस्त्वरन्निव ससंभ्रमम् ।**
**मानयिष्यन् स मानार्हं निश्चक्राम निवेशनात् ॥ ६ ॥**

त्वरन्निव—त्वरन्नेव । मानयिष्यन्निति । प्रत्युत्थानरूपं सम्मानं करिष्यन् ॥ ६ ॥

**अभ्येत्य त्वरमाणश्च रथाभ्याशं मनीषिणः ।**
**ततोऽवतारयामास परिगृह्य रथात्स्वयम् ॥ ७ ॥**

---

* आदेष्टापि राजा, आदेष्टव्यश्च राजकुमारः, अतः स्वयं ययौ इत्यर्थः । † 'तदर्हम्' इति वतिप्रत्ययान्तमव्ययमिदम् । युक्तं—वाजिभिस्संयोजितम् । ‡ पाण्डुराभ्रमूर्तसदृशप्रभम्- गो. पाण्डुराभ्रवन्निबिडप्रभम्—ति.

[1] मन्त्रविन्मन्त्रकोविदम्—ङ. च.

स चैनं प्रश्रितं दृष्ट्वा संभाष्याभिप्रसाद्य च ।
प्रियार्हं हर्षयन् राममित्युवाच पुरोहितः ॥ ८ ॥

संभाष्याभिप्रसादनं—'सुखमुपविष्टोऽसि वत्स' इत्यादिरूपम् ॥

प्रसन्नस्ते पिता राम! यौवराज्यमवाप्स्यसि ।
उपवासं भवानद्य करोतु सह सीतया ॥ ९ ॥
प्रातस्त्वामभिषेक्ता हि यौवराज्ये नराधिपः ।
पिता दशरथः प्रीत्या ययातिं नहुषो यथा ॥ १० ॥
इत्युक्त्वा स तदा रामं उपवासं यतव्रतम् ।
[1] मन्त्रवत् कारयामास वैदेह्या सहितं मुनिः ॥ ११ ॥

रामं उपवासमिति प्राग्वत् (श्लो. २) कर्मत्वम् ॥ ११ ॥

ततो यथावद्रामेण स राज्ञो गुरुरार्चितः ।
अभ्यनुज्ञाप्य काकुत्स्थं ययौ रामनिवेशनात् ॥ १२ ॥

राज्ञः—दशरथस्य ॥ १२ ॥

सुहृद्भिस्तत्र रामोऽपि सहासीनः प्रियंवदैः ।
सभाजितो विवेशाथताननुज्ञाप्य सर्वशः ॥ १३ ॥

विवेशेति । स्वं वेश्मेति शेषः । तान्—सुहृदः ॥ १३ ॥

प्रहृष्टनरनारीकं रामवेश्म तदा बभौ ।
यथा मत्तद्विजगणं प्रफुल्लनलिनं सरः ॥ १४ ॥

---

[1] मन्त्रवित्—ङ.

**स राजभवनप्रख्यात्तस्माद्रामनिवेशनात् ।**
**निस्सृत्य ददृशे मार्गं वसिष्ठो जनसंवृतम् ॥ १५ ॥**

राजभवनं—मूलराजभवनम् ॥ १५ ॥

*** बृन्दबृन्दैरयोध्यायां राजमार्गाः समन्ततः ।**
**बभूवुरभिसंबाधाः कुतूहलजनैर्वृताः ॥ १६ ॥**

बृन्दबृन्दैः—बृन्दबृन्दतया संहितैः कुतूहलजनैः सम्बाधा बभूवुरिति योजना ॥ १६ ॥

**जनबृन्दोर्मिसंघर्षहर्षस्वनवृतस्तदा ।**
**बभूव राजमार्गस्य सागरस्येव निस्वनः ॥ १७ ॥**

जनबृन्दरूपाणामूर्मिणां संघर्षपूर्वको यो हर्षस्वनः, तद्वृत इत्यर्थः । एतेन सागरोपमासमर्थनं कृतम् ॥ १७ ॥

**सिक्तसंमृष्टरथ्या च तदहर्वनमालिनी ।**
**आसीदयोध्या नगरी समुच्छ्रितगृहध्वजा ॥ १८ ॥**

तदहः—तस्मिन्नहनि । वनमाला—तोरणमाला, व्रीह्यादित्वादिनिः ॥ १८ ॥

**तदा ह्ययोध्यानिलयः सस्त्रीबाला[1]कुलो जनः ।**
**रामाभिषेकमाकांक्षन् † [2] आकाङ्क्षन्नुदयं रवेः ॥ १९ ॥**

स्त्रीबालैः सहितः सस्त्रीबालः; स चासावाकुलश्च सन्तोषात् संभ्रान्तचित्तः तथा । रामाभिषेकमाकांक्षन्, तदर्थमिति शेषः, रवेरुदयमाकांक्षन् अभूत् ॥ १९ ॥

---

* बृन्दानुबद्धानि बृन्दानि येषां ते बृन्दबृन्दाः—**गो.** बृन्दानां बृन्दैः—**ति.**
† उदयमाकाङ्क्षत्—**गो.**

[1] बलो जनः—**ङ.** [2] आकाङ्क्षदुदयं—**ङ.**

*प्रजालङ्कारभूतं च जनस्यानन्दवर्धनम् ।
उत्सुकोऽभूज्जनो द्रष्टुं तमयोध्यामहोत्सवम् ॥ २० ॥

प्रजानामलङ्काराः भूताः—सिद्धाः यस्मिन् तत्तथा । सर्वतः समुद्भूतप्रजालङ्कारवतीत्यर्थः । द्रष्टुमुत्सुकोऽभूदिति । प्रासादेषु स्थित्वेति शेषः ॥ २० ॥

एवं तं जनसंबाधं राजमार्गं पुरोहितः ।
व्यूहन्निव जनौघं तं शनैराजकुलं ययौ ॥ २१ ॥

व्यूहन्निति । व्यूहविभाजनं कुर्वन्नित्यर्थः ॥ २१ ॥

सिताभ्रशिखरप्रख्यं प्रासादमधिरुह्य सः ।
समीयाय नरेन्द्रेण शक्रेणेव बृहस्पतिः ॥ २२ ॥
तमागतमभिप्रेक्ष्य हित्वा †राजाऽऽसनं नृपः ।
पप्रच्छ स च तस्मै तत् कृतमित्यभ्यवेदयत् ॥ २३ ॥
तेन चैव तदा तुल्यं सहासीनाः सभासदः ।
आसनेभ्यः समुत्तस्थुः पूजयन्तः पुरोहितम् ॥ २४ ॥
गुरुणा त्वभ्यनुज्ञातः मनुजौघं विसृज्य तम् ।
विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव ॥ २५ ॥
तदग्र्यवेषप्रमदाजनाकुलं
महेन्द्रवेश्मप्रतिमं निवेशनम् ।
विदीपयंश्चारु विवेश पार्थिवः
शशीव तारागणसंकुलं नभः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चमः सर्गः

---

* प्रजालङ्करणहेतुभूतं, प्रजालङ्कारप्रचुरमिति वा—गो. † राजासनं—सिंहासनं

आसनं हित्वेति। प्रत्युत्थायेति यावत्। पप्रच्छेति। अनुष्ठित-कृत्यमिति शेषः। तत् कृतमिति। यदाज्ञप्तं तत् कृतमित्यर्थः। तार (२६) मानः सर्गः॥ २६॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चमः सर्गः

---

## षष्ठः सर्गः

### [पौरोत्साहः]

गते पुरोहिते रामः स्नातो नियतमानसः।
सह पत्न्या विशालाक्ष्या *नारायण†मुपागमत्॥ १॥

अथ आदरात् पुनश्चाभिषेकसामग्रीसन्नाहवर्णनम्—गत इत्यादि। उपागमदिति। ध्यानेनेति शेषः। 'नाविष्णुः पृथिवीपतिः' इति शास्त्रात् विष्णोरेव राज्यायोपासितव्यत्वात् सर्वेषामेषां विष्णूपासना॥ १॥

प्रगृह्य शिरसा पात्रीं हविषो विधिवत्ततः।
‡महते दैवतायाज्यं जुहाव ज्वलितेऽनले॥ २॥

शिरसा पात्रीं प्रगृह्येति। नमस्कारपूर्वमिति यावत्। महते दैवतायेति। विराड्रूपाय विष्णव इत्यर्थः॥ २॥

शेषं च हविषस्तस्य §प्राश्याशास्यात्मनः प्रियम्।
ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे॥ ३॥

---

* अत्र नारायण इति श्रीरङ्गनायक उच्यते, उत्तरत्र तस्यैव विभीषणाय दानोक्तेः—गो. † उपागमत्—उपासांचक्रे—ति. ‡ महते दैवताय—नारायणाय—गो. ति.
§ आत्मनः प्रियं—राज्याभिषेकाविघ्नरूपं। वस्तुतो रावणवधफलकवनगमनरूपं—ति.

वाग्यतः सह वैदेह्या भूत्वा नियतमानसः ।
*श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥ ४ ॥

आशास्य—संप्रार्थ्य । विष्णोरायतन इति । निजभवन-वर्तिनीति शेषः ॥ ४ ॥

एकयामावशिष्टायां रात्र्यां प्रतिविबुध्य सः ।
अलंकारविधिं कृत्स्नं कारयामास वेश्मनः ॥ ५ ॥
तत्र शृण्वन् सुखा वाचः सूतमागधवन्दिनाम् ।
पूर्वां सन्ध्यामुपासीनो जजाप यतमानसः ॥ ६ ॥

सूताः—पौराणिकाः । मागधाः—वंशावलिकीर्तकाः । वन्दिनः—स्तुतिपाठकाः ॥ ६ ॥

तुष्टाव प्रणतश्चैव शिरसा मधुसूदनम् ।
†विमलक्षौमसंवीतो वाचयामास च द्विजान् ॥ ७ ॥

वाचयामासेति—पुण्याहमिति शेषः ॥ ७ ॥

तेषां पुण्याहघोषोऽथ गम्भीरमधुरस्तदा ।
अयोध्यां पूरयामास तूर्यघोषानुनादितः ॥ ८ ॥

तूर्यघोषानुनादितः—सञ्जातानुनादः ॥ ८ ॥

‡कृतोपवासं तु तदा वैदेह्या सह राघवम् ।
अयोध्यानिलयः श्रुत्वा सर्वः प्रमुदितो जनः ॥ ९ ॥

---

*स्वस्य साक्षाद्भगवदवतारत्वेऽपि श्रीरङ्गविग्रहार्चोपसर्जनभावः स्वावतारानुमत-क्षत्रियधर्मानुगुणः—गो. † अनेन नूतनवस्त्रपरिवृत्त्या प्रातर्गौणस्नानमुक्तम्—गो.
‡ राघवं कृतोपवासं श्रुत्वेत्यन्वयः ।

ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् ।
प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम् ॥ १० ॥

शोभयितुं-अलङ्कर्तुम् ॥ १० ॥

शुभ्राभ्रशिखराभेषु देवतायतनेषु च ।
चतुष्पथेषु रथ्यासु *चैत्येष्वट्टालकेषु च ॥ ११ ॥

नानापण्यसमृद्धेषु वणिजामापणेषु च ।
कुटुम्बिनां समृद्धेषु श्रीमत्सु भवनेषु च ॥ १२ ॥

चैत्यं—बुद्धालयः । अट्टालकाः—सावच्छेदानि प्राकारसरांसि ॥

सभासु चैव सर्वासु †वृक्षेष्वालक्षितेषु च ।
ध्वजाः समुच्छ्रिताः चित्राः पताकाश्चाभवंस्तदा ॥ १३ ॥

आलक्षितेषु वृक्षेष्विति । आरात्तत्तद्गृहद्वारलक्षितेषु नारिकेल-पनसादितोरणवृक्षेषु ॥ १३ ॥

नटनर्तकसंघानां गायकानां च गायताम् ।
मनःकर्णसुखा वाचः शुश्राव जनता ततः ॥ १४ ॥

नटयन्तीति नटाः—सूत्रधाराः ॥ १४ ॥

---

*चैत्येषु—बौद्धालयेषु अट्टालकेषु—प्राकारोपरि युद्धार्थपरिकल्पितचतुस्तंभमण्डपेषु-**गो.** चैत्यं-चैतन्यं-येष्वस्तीति अर्शआद्यजन्तः देवतायतनादि विशेषणम्-**शि.** परन्तु सुन्दरकाण्डे 'चैत्यप्रासादः' (4-31) इत्यत्र चैत्यपदस्य देवालयसामान्यपरत्वं सर्वव्याख्यातृसम्मतं वर्तते। 'चैत्यमायतनं तुल्ये' इत्यमरः (द्वि. पुर. 7 श्लो.) अत्र-सुधा "चीयते--'चित्याग्निचित्ये च' (पा. सू. 3-1-132) इति साधुः। चित्याया इदं--'तस्येदम्' (पा. सू. 4-3-120) इत्यण्---यज्ञस्थानस्य" इति। एवं च चैत्यं-यज्ञशाला इति स्यात्। †आलक्षितेषु-अत्युच्चेषु। समुन्नतत्वाद्दूरादप्यक्षिगोचरेष्वित्यर्थः-**गो. ति.** ध्वजाः-सचिह्नाः, पताकाः-चिह्नरहिताः-**गो.**

रामाभिष्टवयुक्ताश्च कथाश्चक्रुर्मिथो जनाः ।
रामाभिषेके संप्राप्ते चत्वरेषु गृहेषु च ॥ १५ ॥

बाला अपि क्रीडमानाः गृहद्वारेषु संघशः ।
रामाभिष्टवसंयुक्ताः चक्रुरेव मिथः कथाः ॥ १६ ॥

कृतपुष्पोपहारश्च धूपगन्धाधिवासितः ।
राजमार्गः कृतः श्रीमान् पौरै रामाभिषेचने ॥ १७ ॥

[1] प्रकाशीकरणार्थं च निशागमनशङ्कया ।
दीपवृक्षांस्तथा * चक्रुरनुरथ्यासु सर्वशः ॥ १८ ॥

अभिषेकानन्तरं गजस्कन्धाधिरूढतया अभिषेकालंकारप्रदर्शनार्थं निर्याणात्पूर्वमेव यदि कार्यवशान्निशा आयाति तदा श्रीरामालंकारप्रदर्शनार्थं दीपवृक्षान्—वृक्षवन्नानाशाखानिर्मितदीपस्तम्भविशेषानित्यर्थः ॥

अलंकारं पुरस्यैवं कृत्वा तत्पुरवासिनः ।
आकांक्षमाणा रामस्य यौवराज्याभिषेचनम् ॥ १९ ॥
समेत्य सङ्घशः सर्वे चत्वरेषु सभासु च ।
कथयन्तो मिथस्तत्र प्रशशंसुर्जनाधिपम् ॥ २० ॥

अहो महात्मा राजाऽयं इक्ष्वाकुकुलनन्दनः ।
ज्ञात्वा यो वृद्धमात्मानं रामं राज्येऽभिषेक्ष्यति ॥ २१ ॥

---

* अनुरथ्यासु—रथ्यासु रथ्यासु, विभक्तेर्लुगभाव आर्षः—गो. अनुगथ्यासु—रथ्यापार्श्वयोः—ति.

[1] प्रकाश—ङ.

सर्वे ह्यनुगृहीताः स्मो यन्नो रामो महीपतिः।
चिराय भविता गोप्ता * दृष्टलोकपरावरः॥ २२॥

दृष्टलोकपरावर इति। भावप्रधाननिर्देशः। यथावगततत्त्पुरुषप्राशस्त्याप्राशस्त्य इत्यर्थः॥ २२॥

अनुद्धतमना विद्वान् धर्मात्मा भ्रातृवत्सलः।
यथा च भ्रातृषु स्निग्धस्तथाऽस्मास्वपि राघवः॥ २३॥

चिरं जीवतु धर्मात्मा राजा दशरथोऽनघः।
यत्प्रसादेनाभिषिक्तं रामं द्रक्ष्यामहे वयम्॥ २४॥

एवंविधं कथयतां पौराणां शुश्रुवुः परे।
दिग्भ्यो विश्रुतवृत्तान्ताः प्राप्ता जानपदा जनाः॥ २५॥

श्रुतरामाभिषेकवृत्तान्ता जानपदा जना अपि दिग्भ्यः—नानादिग्भ्यः प्राप्ताः॥ २५॥

ते तु दिग्भ्यः पुरीं प्राप्ता द्रष्टुं रामाभिषेचनम्।
† रामस्य पूरयामासुः पुरीं जानपदा जनाः॥ २६॥

ते तु रामस्य पुरीं पूरयामासुरिति योजना॥ २६॥

जनौघैस्तैर्विसर्पद्भिः शुश्रुवे तत्र निस्वनः।
पर्वसूदीर्णवेगस्य सागरस्येव निस्वनः॥ २७॥

---

* दृष्टे लोके परावरे—उत्कृष्टापकृष्टवस्तुनी येन स तथोक्तः—गो. दृष्टाः लोकाः—भुवनानि—परावराः—उत्तमाधमाश्च येन सः—शि. † कविरपि रामाभिषेकस्मरणजानन्दवशात्—रामस्य पुरीमित्याह।

*ततस्तदिन्द्रक्षयसन्निभं पुरं
दिदृक्षुभिर्जानपदै[1]रुपागतैः ।
समन्ततः सस्वनमाकुलं बभौ
समुद्रयादोभिरि†वार्णवोदकम् ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षष्ठः सर्गः

---

इन्द्रक्षयः—इन्द्रनिवासः । हरि (२८) मानः सर्गः ॥ २८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे षष्ठः सर्गः

---

## सप्तमः सर्गः

[मन्थरोपजापः]

‡ज्ञातिदासी [2]यतो नित्यं कैकेय्यास्तु सहोषिता ।
प्रासादं चन्द्रसङ्काशमारुरोह यदृच्छया ॥ १ ॥

---

* अयोध्यापुरस्यामरावतीसादृश्ये वक्तव्ये तत्सारभूतेन्द्रभवनदृष्टान्तीकरणात् अयोध्याया अतिरमणीयता द्योत्यते-गो. उपाहितैः—उपागतैः । † कर्णावतंसादिवदविश्लेषप्रदर्शनाय समुद्रशब्दः-गो. ‡ ज्ञातिदासी—कैकेय्या बन्धुदासी—यतो जाता—यत्रकुत्रचिज्जाता, अविज्ञातदेशमातापितृकेत्यर्थः । अतः कैकेय्या ज्ञातिदासीत्वमपि स्वोदरप्रपूरणार्थं कृतमित्यवगन्तव्यम् ।—यद्वा यतो जाता—यतःकुतश्चिज्जाता, तादृशीनामयोध्यायां जननासंभवात् । यद्वा तन्नामजातिनिरूपणायोग्यतया तथा निर्देशः । आचार्यास्तु—देवैरेव स्वकार्यार्थे कैकेयीं भेदयितुं प्रेषितेति देवरहस्यस्य गोप्यतया तथा निर्देश इत्याहुः-गो. तिलकेऽप्ययमर्थः—'मन्थरा नाम कार्यार्थमप्सरा प्रेषिता सुरैः । दासी काचन कैकेय्यै दत्ता केकयभूभृता ' इति पाद्मवचनेन समर्थितः ।

[1] रुपाहितैः-ङ. [2] यतो जाता-ङ. च.

अथ देवकार्याय रावणनाशाय देवैरावेशितदुर्मत्याः मन्थराया रामाभिषेकविघ्ने प्रवृत्तिः । वाचः क्रमवर्तित्वात् बाल्मीकिः रामाभिषेकनिश्चितदिवसस्य प्रातः स्नानप्रभृतिवृत्तान्तमुपवर्ण्य, पूर्वरात्रिप्रवृत्तराजभवनवृत्तान्तं वर्णयितुमुपक्रमते—ज्ञातीति । यतो–यस्मात् ; मन्थरा ज्ञातिदासी—रामज्ञातेर्भरतस्य दासी यतश्च कैकेय्या सह नित्यमुषिता ; तस्मात्सा रामाभिषेकवचनं श्रुत्वा कोपेन दह्यमाना सती कैकेयीमिदं वचनमब्रवीत् *इत्यग्रेण (१३ श्लो.) सम्बन्धः । लोकस्थित्या स्वस्वीयाभ्युदयस्यैव (सर्व) इष्टत्वात्, ज्ञातिश्रैष्ठ्यासूयायाश्चानादिसिद्धत्वात्, दुःखेन तद्विघटने प्रवृत्तिः ।—"कैकेय्याः ज्ञातीनां दासी ; यतो जाता—यतः कुतश्चिज्जाता, तस्या जन्म न ज्ञायत इत्यर्थः" इत्यादिकं† यद्वा भट्टः कथयति । तत्सर्वं रामश्रद्धाजाड्यजमन्थरारोषमूलप्रलापमात्रम् । प्रासादमित्यादि—यदृच्छयाऽऽरुरोहेति । ज्ञातिदासीत्यनुकर्षः ॥ १ ॥

**सिक्तराजपथां कृत्स्नां प्रकीर्ण[1]कमलोत्पलाम् ।**
**अयोध्यां मन्थरा तस्मात् प्रासादादन्ववैक्षत ॥ २ ॥**

प्रकीर्णानि कमलान्युत्पलानि च यस्यां सा । तस्मादित्यादि । प्रासादे स्थित्वाऽन्ववैक्षतेत्यर्थः । 'अधिकरणे च ल्यब्लोप उपसंख्यानम्' इति पञ्चमी ॥ २ ॥

**पताकाभि‡र्वराहाभिः ध्वजैश्च समलंकृताम् ।**
**[2]सिक्तां §चन्दनतोयैश्च शिरस्स्नातजनैर्युताम् ॥ ३ ॥**

---

* इदं तिलकेऽनूद्य—'रामाभ्युदयस्याग्रे धात्रीमुखेन श्रवणस्य वक्ष्यमाणतया तस्यैव चामर्षहेतुत्वस्य च वक्ष्यमाणतया अत्रत्यस्य तत्रान्वयानौचित्यात्' इति दूषितम्.

† गोविन्दराजः. ‡ वराहाभिः–श्रेष्ठाभिः–गो. § छन्दपथैः–स्वच्छन्दगमनयोग्यवीथीभिः–गो.

[1] कुसुमोत्कराम्–ङ. [2] वृतां छन्दपथैश्चापि–ङ.

वरार्हाभिः—वराः—श्रेष्ठाः अर्हाः—विचित्रवस्त्रपट्टदुकूलादि कल्पत्वेन पताकार्हास्तथा। न हि श्रेष्ठश्वेतवस्त्रमात्रं पताकार्हम्। शिरसा च स्नाताः जनास्तथा। अभ्यङ्गस्नानवन्त इति यावत्। विशिष्येदं विशेषणम् स्त्रीशूद्रविषयं। त्रैवर्णिकानां शिरस्नानं नित्यसिद्धम्॥ ३॥

*माल्यमोदकहस्तैश्च द्विजेन्द्रैरभिनादिताम्।
शुक्लदेवगृहद्वारां सर्ववादित्रनिस्वनाम्॥ ४॥

माल्यमोदकेति। दानप्राप्तैरितिशेषः। शुक्लदेवगृहद्वारामिति। चन्दनोदकोपलेपनेनेति शेषः॥ ४॥

संप्रहृष्टजनाकीर्णां ब्रह्मघोषाभिनादिताम्।
प्रहृष्टवरहस्त्यश्वां संप्रणर्दितगोवृषाम्॥ ५॥
प्रहृष्टमुदितैः पौरै†रुच्छ्रितध्वजमालिनीम्।
अयोध्यां मन्थरा दृष्ट्वा परं विस्मयमागता॥ ६॥

पौरैरिति। उपलक्षितामितिशेषः॥ ६॥

सा हर्षोत्फुल्लनयनां पाण्डरक्षौमवासिनीम्।
अविदूरे स्थितां दृष्ट्वा धात्रीं पप्रच्छ मन्थरा॥ ७॥

अविदूर इति। मन्थराधिरूढहर्म्यात्यासन्नहर्म्ये इत्यर्थः। धात्रीं—रामस्येति शेषः। तस्या अपि कौसल्यातोऽभ्यधिकपुत्रस्नेहवत्त्वात् हर्षोत्फुल्लनयनामित्यादिविशेषणम्; हर्षेण विदीर्यमाणेत्यादि (श्लो. १०) विशेषणञ्च॥ ७॥

---

* दानप्राप्तमाल्यमोदकहस्तैः; रामोपायनमाल्यमोदकरूपमङ्गलद्रव्यहस्तैरितिवा—ति.
† पौरैरुच्छ्रितेत्यत्र प्रकृतोत्सवकृतध्वजसम्बन्ध उच्यते—गो.

*उत्तमेनाभिसंयुक्ता हर्षेणार्थपरा सती ।
राममाता धनं किन्नु जनेभ्यः संप्रयच्छति ॥ ८ ॥

अर्थपरा नानाविधधनधान्यपदार्थग्रहणतत्परा सती गृहीतं तद्धनं जनेभ्यः किन्नु—कस्मात् प्रयच्छति ॥ ८ ॥

अतिमात्रप्रहर्षोऽयं † किं जनस्य च शंस मे ।
कारयिष्यति किं वाऽपि संप्रहृष्टो महीपतिः ॥ ९ ॥

संप्रहृष्टो महीपतिः किं वा कारयिष्यतीति । मन्थरायाः रामाभिषेकदिवसात्पूर्वदिवससायंकाल एव कौसल्यादिव्यापारानुभवात् तदा महीपतेरपि हृष्टत्वात् हृष्टमहीपतिदर्शनं ‡ । किं वेति । देवाद्युत्सवमिति शेषः ॥ ९ ॥

[1]§ विदीर्यमाणा हर्षेण धात्री परमया मुदा ।
आचचक्षेऽथ कुब्जायै भूयसीं राघवे श्रियम् ॥ १० ॥
श्वः पुष्येण जितक्रोधं यौराज्येन [2]राघवम् ।
राजा दशरथो राम[3]मभिषेचयिताऽनघम् ॥ ११ ॥

विदीर्यमाणेति—अन्तर्गतहर्षौत्कट्यात्, देहपोषमुखविकासादिना बहिः प्रसरणाद्विदीर्यमाणेवोपलक्षिता मुदा आचचक्षे ॥ ११ ॥

---

* अर्थपरा सती—अर्थपरा सत्यपि ॥ उत्तमेन हर्षेणाभिसंयुक्ता—**गो.** अर्थपरा—स्वेष्टार्थपरा—**ति.** † किं? किम्मूलकः? ‡ संप्रहृष्ट इति विधेयविषेषणं वा । § स्वानन्दसन्दोहपरीवाहवशात् प्रतिकूलाया अपि तस्यै मुदाऽकथयदित्यर्थः ॥

[1] उदीर्यमाणा—ङ. [2] चानघम्—ङ. **च.** [3] मभिषेक्ता हि राघवम्—**ङ. च.**

धात्र्यास्तु वचनं श्रुत्वा कुब्जा क्षिप्रममर्षिता ।
कैलासशिखराकारात् प्रासादादवरोहत ॥ १२ ॥

अवरोहत । अवारुहदिति यावत् ॥ १२ ॥

सा दह्यमाना कोपेन मन्थरा पापदर्शिनी ।
शयानामेत्य कैकेयीमिदं वचनमब्रवीत् ॥ १३ ॥

पापदर्शिनीति । इनिर्वा णिनिर्वा । शयानामिति--सुखित्वात् प्रभ्वीत्वाच्च ॥ १३ ॥

उत्तिष्ठ मूढे ! किं शेषे भयं त्वामभिवर्तते ।
उपप्लुतमघौघेन किमात्मानं न बुध्यसे ॥ १४ ॥

अघौघेन—दुःखसमूहेन । 'अघं दुरितदुःखयोः' ॥ १४ ॥

*अनिष्टे सुभगाकारे सौभाग्येन विकत्थसे ।
चलं हि तव सौभाग्यं नद्याः स्रोत इवोष्णगे ॥ १५ ॥

अनिष्ट इति । सुखशयनादिलक्षणे तव सुभगाकारे इदानीमनिष्टे–अनुचिते–अनिष्टपर्यवसायिनि सति कथं सौभाग्ये तावके विकत्थसे–व्यर्थवर्णनं करोषि । का मे मत्सौभाग्यविकत्थनस्य प्रसक्तिरित्यत्राह—चलं हीति । तरणावुष्णगे–ग्रीष्मगे सति । नद्याः स्रोत इवेत्यनेन राज्ञस्त्वयीदानीं वैरं स्यात् , तेन त्वत्सौभाग्यं क्षीणप्रायमित्युक्तं भवति । 'निदाघ उष्णोपगम उष्णः' इत्यमरः ॥ १५ ॥

---

* सुभगाकारे, आकारमात्रेणैव तव सौभाग्यदे । वस्तुतः–अनिष्टे–अप्रियकर्तरि राज्ञि । (विषयसप्तमी)–ति. वस्तुतो राज्ञोऽनिष्टे सुभगाकारे—आपाततः सौभाग्यवतीव भासमाने, असुभगाकार इति वा छेदः–गो । एवञ्च पदद्वयमिदं सम्बोधनपरम् । अथवा अनिष्टेति निन्दा, सुभगाकारेति मर्मोक्तिश्च ।

*एवमुक्ता तु कैकेयी रुष्टया परुषं वचः ।
कुब्जया पापदर्शिन्या विषादमगमत्परम् ॥ १६ ॥

विषादमगमदिति । उक्तरीत्या राजवैरस्यस्फोरणात् ॥ १६ ॥

कैकेयी त्वब्रवीत् कुब्जां कच्चित्क्षेमं न मन्थरे ।
[1]विषण्णवदनां हि त्वां लक्षये भृशदुःखिताम् ॥ १७ ॥

कच्चित् क्षेमं नेति । मह्यमिति शेषः । हि—यस्मात् अस्मत्सम-सुखदुःखां त्वां अद्य भृशदुःखितां लक्षये, अतः क्षेमं न कच्चिदिति योजना ॥ १७ ॥

मन्थरा तु वचः श्रुत्वा कैकेय्या मधुराक्षरम् ।
उवाच क्रोधसंयुक्ता वाक्यं वाक्यविशारदा ॥ १८ ॥
सा विषण्णतरा भूत्वा कुब्जा तस्या हितैषिणी ।
विषादयन्ती प्रोवाच भेदयन्ती च † राघवम् ॥ १९ ॥

'तस्या हितैषिणी' इति लोकदृष्ट्या । विषादयन्ती भेदयन्तीति शतृद्वयं हेतौ । राज्यश्रियो ज्ञातिगामित्वानिष्टप्रकाशनेन विषादहेतवे सामान्यतः पुत्रत्वप्रयुक्तरामविषयकस्नेहमात्रभेदहेतवे चेत्यर्थः ॥ १९ ॥

अक्षयं सुमहद्देवि ! प्रवृत्तं ‡ त्वद्विनाशनम् ।
रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥ २० ॥

---

* कैकेयी परुषं वच उक्ता—'अप्रधाने दुहादीनां' इत्यप्रधाने कर्मकारके निष्ठा—**गो.** † राघवं प्रति पुत्रत्वप्रयुक्तस्नेहं भेदयन्तीत्यर्थः—**ति.** ‡ त्वद्विनाशनं—त्वद्विनाशः—**गो.**

[1] एतदनन्तरं—'मन्थरे तद्ब्रवीह्यद्य कुतस्ते भयमागतम् ।' इत्यधिकं—**ङ.**

**सास्म्यगाधे भये मग्ना * दुःखशोकसमन्विता ।**
**दह्यमानाऽनलेनेव त्वाद्धितार्थमिहागता ॥ २१ ॥**

अक्षयं–क्षयः—[1]प्रतीकारः । अशक्यप्रतीकारमिति यावत् । विनाशनं–त्वत्सौभाग्यविनाशकारणं प्रवृत्तमिति । किं तत् इत्यत्राह—रामामित्यादि । अभिषेक्ष्यति—अतस्तन्निमित्ते भय इति योजना ॥

**तव दुःखेन कैकेयि ! मम दुःखं महद्भवेत् ।**
**त्वद्वृद्धौ मम वृद्धिश्च भवेदत्र न संशयः ॥ २२ ॥**

ननु दास्यास्तव कुतो भयमित्यत्राह—तवेत्यादि ॥ २२ ॥

**नराधिपकुले जाता महिषी त्वं महीपतेः ।**
**उग्रत्वं राजधर्माणां कथं देवि ! न बुध्यसे ॥ २३ ॥**

अस्तु ! किमिदानीमत्याहितमित्यत्राह—नराधिपेत्यादि । उच्यमानविशेषणद्वयं [2]स्वप्राभवाप्रच्युतये यत्नस्त्वया संपाद्य इति स्फोरणाय । ननु राज्ञः शेषस्त्र्युपेक्षया मद्भोगैकसक्तत्वात्—मद्गृहैकनिलयत्वाच्च अस्मत्प्राभवस्य अस्मन्नित्यानुरक्तराजप्रसादमूलस्य कुतः प्रच्युतिशङ्केत्यत आह—उग्रत्वमित्यादि । राज्ञः—† दशरथस्य धर्माः तथा ॥ २३ ॥

**धर्मवादी ‡ शठो भर्ता श्लक्ष्णवादी च दारुणः ।**
**शुद्धभावेन जानीषे तेनैव[3]मतिसंन्धिता ॥ २४ ॥**

---

* अनभिमतरामाभिषेकश्रवणजनितव्यसनजं दुःखम् , अभिमतभरताभिषेकराहित्यजः शोकः–**गो.** यद्वा–एतादृशेऽपि समये कैकेय्या औदासीन्यात् शोकः । † सामान्यतो राजनीतयो वा विवक्षिताः । राजवंशे जनित्वा राजमहिषी सत्यपि राजनीतेः क्रौर्यं कथं न बुध्यसे ? इत्यर्थः । ‡ ' गूढविप्रियकृत् शठः ' । अतिसन्धिता–वञ्चिता.

[1] नाशः–**ग. घ.** [2] स्वप्रभावा-**ग. घ.** [3] मतिवञ्चिता–**ङ.**

तदुग्रत्वमेव प्रदर्शयति—धर्मवादीत्यादि। धर्मवादी श्लक्ष्णवादी च केवलं वाचा; अन्तस्तु शठः दारुण एव। शठः—पापानुष्ठाता। आन्तरक्रौर्यगोपनाय श्लक्ष्णवादी-सस्मितमृदुमधुरभाषी। एतादृशमपि तं; शुद्धभावेन—तथोपलक्षितत्वेन जानीषे। सर्वथा तेन एवं-प्रागुक्तरीत्या अतिसन्धिता—अतिसन्धिर्वञ्चना, तां प्राप्ता; तारकादित्वादितच्॥ २४॥

[1] * उपस्थितं प्रयुञ्जानस्त्वयि सान्त्वमनर्थकम्।
अर्थेनैवाद्य ते भर्ता कौसल्यां योजयिष्यति॥ २५॥

उपस्थितं-कौसल्याया अर्थप्रापणशेषतया [2] कर्तव्यप्राप्तकालं। त्वयि सान्त्वं-अनुसरणं अनर्थकं—स्वप्रयोजनानुपयुक्तं प्रयुञ्जानो भवति। कौसल्यां-अनिष्टत्वेन प्रकाश्यमानां अर्थेनाद्य योजयिष्यतीति॥ २५॥

† अपवाह्य स दुष्टात्मा भरतं तव बन्धुषु।
[3] ‡ काल्ये स्थापयिता रामं राज्ये निहतकण्टके॥ २६॥

त्वत्सान्त्ववत् अन्यदप्युपायान्तरं कौसल्याया अर्थप्रापणायानुष्ठितमित्याह—अपवाह्येति। उद्वास्येत्यर्थः। कालमर्हति काल्यं, तदर्हमिति यत्—उक्तरीत्या अविघ्नतो यथाप्राप्तराज्याभिषेककालम्॥ २६॥

---

* तत्कालोचितभाषितं-गो. उपस्थितः-हृदयेन कौसल्यायां अनुरक्तः, त्वत्समीपे स्थितः-ति. अनर्थकं उपस्थितं सान्त्वं प्रयुञ्जान एव कौसल्यामर्थेन योजयिष्यतीत्यन्वयः। † अतिसन्धानप्रकारमाह—अपवाह्येति-गो. ‡ काल्ये-उषसि। 'प्रत्यूषोऽहर्मुखं काल्यमुषः' इति कोशः।

[1] उपस्थितः-ङ. च. [2] कर्तव्यं-घ. [3] कार्ल्यं, कौर्ल्ये-ङ.

**शत्रुः पतिप्रवादेन मात्रेव हितकाम्यया ।**
**आशीविष [1] इवाङ्केन बाले ! [2] * परिहृतस्त्वया ॥ २७ ॥**

शत्रुरित्यादि । पतिप्रवादेन—पतिव्याजेन छन्नः शत्रुः त्वया मात्रेव हितकाम्यया—हितप्रापणेच्छया अङ्केनोपलालितः । न त्वाशीविष इव परिहृतः ॥ २७ ॥

**यथा हि कुर्यात् सर्पो वा शत्रुर्वा प्रत्युपेक्षितः ।**
**राज्ञा दशरथेनाद्य सपुत्रा त्वं तथा कृता ॥ २८ ॥**

अज्ञानादपरिहारमूलोऽनर्थश्च संप्रवृत्त इदानीमित्याह—यथेत्यादि । प्रत्युपेक्षितः—उपेक्षितपरिहारः यथाकरोति, तथा कृतेति योजना ॥

**पापेना†नृतसान्त्वेन बाले! नित्यसुखोचिते !**
**रामं स्थापयता राज्ये सानुबन्धा हता ह्यसि ॥ २९ ॥**

कथं कृतेत्यतः—पापेनेत्यादि । अनुबन्धः—पुत्रादिपरिकरः ॥

**[3] संप्राप्तकालं कैकेयि! क्षिप्रं कुरु हितं तव ।**
**त्रायस्व पुत्रमात्मानं मां च विस्मयदर्शने ! ॥ ३० ॥**

‡ संप्राप्तकालं—संप्राप्तानुष्ठानकालम् । विस्मयकरं दर्शनं यस्याः सा तथा । अवश्यकर्तव्याकरणेनोपेक्षणात् तत्स्वभावदर्शनस्य विस्मयकरत्वं। § 'विस्मयकररूपानुभावे' इत्यर्थस्तु प्रकृतानुपयोगादुपेक्ष्यः ॥

---

* परिहृतः—परिधृतः । यद्वा अङ्के—अङ्काद न परिहृतः, किन्तु धृतः—गो.
† पूर्वं 'उपस्थितं प्रयुञ्जानः—' इत्युक्तोऽर्थः अनेन सङ्गृहीतः । ‡ इदं हितविशेषणम् ।
§ गोविन्दराजीये एवमुक्तम् । तेन स्वेष्टसाधनसंपत्तिरुक्तेति भावः ।

[1] इवाङ्गेन-ङ. [2] परिधृत—च. [3] सा प्राप्तकालं, सा प्राप्तकाला—ङ.

मन्थराया वचः श्रुत्वा शयनात् सा शुभानना ।
उत्तस्थौ हर्षसंपूर्णा चन्द्रलेखेव शारदी ॥ ३१ ॥

एवं दैवहतया मन्थरया तदनर्थत्वेन प्रकाशिते सति महार्थे कैकेयी महाकुलप्रसूता महाराजमहीषीत्वतः निसर्गकल्याणगुणतः सर्वथार्थभूतं रामाभिषेकं महार्थमेव मन्यते स्मेति प्रतिपाद्यते— मन्थराया इत्यादि ।

अतीव सा तु संहृष्टा कैकेयी विस्मयान्विता ।
[1]एकमाभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥ ३२ ॥

विस्मयान्वितेति । अत्यद्भुताभ्युदयो मयाऽद्य श्रुत इति । एकमाभरणं ददाविति । कौसल्यावदेव पुत्राभ्युदयवादित्वादेव तस्याः किमप्याभरणं ददावित्यर्थः ॥ ३२ ॥

दत्त्वा त्वाभरणं तस्यै कुब्जायै प्रमदोत्तमा ।
कैकेयी मन्थरां दृष्ट्वा पुनरेवाब्रवीदिदम् ॥ ३३ ॥

इदं तु मन्थरे! मह्यं [2]आख्यासि परमं प्रियम् ।
एतन्मे प्रियमाख्यातं भूयः किं वा करोमि ते ॥ ३४ ॥

हे मन्थरे! यदिदमाख्यासि एतत् मे परमं प्रियमेव हि । यदेतन्मे प्रियमाख्यातं अत्र ते भूयो—अभ्यधिकं किं वा प्रीतिदानं करवाणि ॥ ३४ ॥

रामे वा भरते वाऽहं विशेषं नोपलक्षये ।
तस्मात्तुष्टाऽस्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥ ३५ ॥

ननु कथं ज्ञातिश्रेयःश्रुतिः प्रियं इत्यत्राह—राम इत्यादि । विशेषमिति । पुत्रत्वप्रयुक्तस्नेहे विशेषमित्यर्थः ॥ ३५ ॥

---

[1] दिव्यमा—ङ. [2] आख्यानं—ङ.

**न मे परं किञ्चि[1]दितो वरं पुनः**
**प्रियं प्रियार्हे! सुवचं वचोऽमृतम्।**
**तथा ह्यवोचस्त्वमतः प्रियोत्तरं**
**वरं परं ते प्रददामि तं वृणु ॥ ३६ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तमः सर्गः

---

न म इत्यादि। हे प्रियार्हे—प्रियदानार्हे! त्वया पुनः मे यत् प्रियं वरं वच उक्तं, इतः परं अभ्यधिकं किञ्चित्प्रियं त्वया न सुवचम्। हि—यस्मात् तथा तादृशं *प्रियोत्तरं वचोऽवोचः त्वं, अतोऽस्मादेव कारणात् परं वरं ते प्रददामि, तं वृणु। मार्ग (३५) मानः (?) सर्गः ॥ ३६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्तमः सर्गः

---

## अष्टमः सर्गः

### [मन्थरोपदेशः]

**मन्थरा [2]त्वभ्यसूयैनामुत्सृज्याभरणं हि तत्।**
**उवाचेदं ततो वाक्यं कोपदुःखसमन्विता ॥ १ ॥**

अथ—'किन्तु चित्तं मनुष्याणां' इतिन्यायेन (अयो. ४-२७) द्विस्त्रिर्लोकमर्यादावलम्बनेन मन्थरया हितवत् बोधनात् भद्रबुद्धेरपि

---

* प्रियोत्तरं—प्रीतिविषयेषु श्रेष्ठम्, 'उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः'—गो.

[1] दितस्त्वया—ङ. [2] त्वभ्यसूय्यैनां—ङ. च.

कैकेय्याश्चित्तं चलितमित्युच्यते। मन्थरेत्यादि। अभ्यसूय—कण्ड्वादेरसूयतेर्ल्यप्, यगभाव आर्षः, असूयां कृत्वेत्यर्थः। एनां प्रतीति शेषः। आङः 'सुपांसुलुक्' इत्यादिना पूर्वसवर्णाश्रयणे सति अभ्यसूयेति पाङ्क्तोऽर्थः। कोपदुःखेति। हितं न शृणोतीति कोपः, अहितमस्या जायत इति दुःखम् ॥ १ ॥

**हर्षं * किमिदमस्थाने कृतवत्यसि बालिशे!**
**शोकसागर[1]मध्यस्थं नात्मानमवबुध्यसे ॥ २ ॥**

अस्थाने—अनुचितकाले। बालिशे—अज्ञे ॥ २ ॥

**मनसा [2]प्रहसामि त्वां देवि! दुःखार्दिता सती।**
**यच्छोचितव्ये हृष्टाऽसि प्राप्य त्वं व्यसनं महत् ॥ ३ ॥**

शोचितव्ये हृष्टाऽसीति यत् अतो मनसा त्वां प्रहसामि, उन्मत्तदर्शनेनेव स्वदशापरिहासास्पदभूतासीत्यर्थः ॥ ३ ॥

**शोचामि दुर्मतित्वं ते का हि प्राज्ञा प्रहर्षयेत्।**
**अरेः सपत्नीपुत्रस्य † वृद्धिं मृत्योरिवागताम् ॥ ४ ॥**

तदेवाह—शोचामीत्यादि। ते दुर्मतित्वं शोचामि। का हि प्राज्ञा—बुद्धिमती मृत्योर्वृद्धिमिवागतां अरेः सपत्नीपुत्रस्य वृद्धिं प्रहर्षयेत्—उपलालयेत् ॥ ४ ॥

**भरतादेव रामस्य ‡ राज्यसाधारणाद्भयम्।**
**तद्विचिन्त्य विषण्णाऽस्मि भयं भीताद्धि जायते ॥ ५ ॥**

---

* किमिदमिति प्रत्येकं वाक्यम्. † वृद्धिं—दृष्ट्वेति शेषः। प्रहर्षयेत्—प्रहृष्येत्—**ति.** प्रहर्षयेत्—प्रहर्षसाधनं कुर्यात्। लालयेदिति वा—**गो.** ‡ राज्यं साधारणं यस्य; तस्माद्भरतादिति—**गो.**

[1] मध्यस्था—ङ. [2] प्रसहामि—ङ. च.

अथ महद्व्यसनामिति यदुक्तं तद्दर्शयति—भरतादित्यादिना। रामस्य भरताद्भयमस्ति। भीताद्रामाद्भरतस्य च महद्भयमावश्यकम्। यथा सर्पपुरुषव्याघ्रपुरुषादेः। ननु रामस्य भरतात्, तस्मादस्य च भयं किंनिमित्तमित्यत्रोक्तम्—राज्यसाधारणादिति। राज्यरूपं यत् साधारणभोग्यं तस्मादेव हेतोरित्यर्थः। आशाया आनन्त्यात्, 'ममैवास्तु राज्यं, ममैवास्तु राज्यं' इति परस्परजिगीषा भवति। ततोऽन्योन्यस्य भयं भवतीत्यर्थः ॥ ५ ॥

**लक्ष्मणो हि महेष्वासो रामं सर्वात्मना [1]गतः।**
**शत्रुघ्नश्चापि भरतं काकुत्स्थं लक्ष्मणो यथा ॥ ६ ॥**

ननु भरतादेवेति कथमवधारणमित्यत्राह—लक्ष्मणो हीत्यादि। रामं सर्वात्मना गत इति। मनोवाक्कायिकसर्वव्यापारे रामेणैक्यं गतः। अतो भेदाभावादेव न तयोरन्योन्य[2]भीप्रसङ्ग इत्यर्थः। तर्हि शत्रुघ्नाद्वा कुतो न भीतिरित्यत्र रामलक्ष्मणवत् शत्रुघ्नभरतयोरैक्यात् शत्रुघ्नस्य भरतशेषत्वाच्च न तत्प्रयुक्तप्रातिस्विकभीप्रसङ्ग इत्याशयेनाह—शत्रुघ्नश्चापीति ॥ ६ ॥

**प्रत्यासन्नक्रमेणापि भरतस्यैव भामिनि!**
**राज्यक्रमो विप्रकृष्टस्तयोस्तावद्यवीयसोः ॥ ७ ॥**

भरतादेवेत्यत्र हेत्वन्तरमाह—प्रत्यासन्नेति। प्रत्यासन्नः—समीपभूतो यः क्रमः—उत्पत्तिक्रमः तेनापि हेतुना भरतस्यैव रामात्प्रत्यासन्नं राज्यम्। तयोस्तु विप्रकृष्टो राज्यागमः। कुत इत्यतः—यवीयसोरिति। कनिष्ठत्वादेव तयो राज्यागमो विप्रकृष्ट इत्यर्थः। भरतो लक्ष्मणाज्ज्यायानिति—पुनर्वस्वादिचतुर्नक्षत्रेषु रामभरतलक्ष्मणशत्रुघ्नानां क्रमाज्जननस्य बालकाण्ड एवोक्तत्वाद्यथोक्तज्यैष्ठ्यकानिष्ठ्यनिश्चयः ॥ ७ ॥

---

[1] श्रितः–ङ.　[2] भीति–घ.

**विदुषः क्षत्रचारित्रे प्राज्ञस्य प्राप्तकारिणः ।**
**भयात् प्रवेपे * रामस्य चिन्तयन्ती तवात्मजम् ॥ ८ ॥**

उक्तं रामभयमुपसंहारेणाह—विदुष इत्यादि । सर्वशास्त्रवैदुष्यवतः, विशिष्य क्षत्रचारित्रे—मूलादिषड्विधबलसंपादनसन्धिविग्रहादिषट्कर्मप्रयोगरूपे प्राज्ञस्य—यथाकालं प्रयोगसमर्थस्य, उत्साहादिशक्तित्रयसमर्थत्वात् प्राप्तकारिणः—षट्कर्मणो द्रागेव करणशीलस्य रामस्य त्वदात्मजं प्रति भाव्यनर्थं चिन्तयन्ती तन्निमित्ताद्भयात् प्रवेपे ॥ ८ ॥

**† सुभगा किल कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते ।**
**यौवराज्येन महता श्वः पुष्येण द्विजोत्तमैः ॥ ९ ॥**

एवं पुत्रानर्थं प्रदर्श्य तस्या अप्यनर्थं प्रदर्शयितुं कौसल्यावृद्धिमाह—सुभगेत्यादिभिः ॥ ९ ॥

**प्राप्तां [1] वसुमतीं प्रीतिं प्रतीतां हतविद्विषाम् ।**
**उपस्थास्यसि कौसल्यां दासीव त्वं कृताञ्जलिः ॥ १० ॥**

रामाद्भरतस्येव कौसल्यातः कैकेय्या अनर्थं दर्शयति—प्राप्तामिति । वसुमतीं, वसुमतीप्राप्तिनिमित्तप्रीतिं च प्राप्तां । हताः विद्विषः—युष्मदादिसपत्नीरूपाः यया सा तथा । उपस्थास्यसि—गत्वा सेविष्यस इत्यर्थः ॥ १० ॥

**[2] एवञ्चेत् त्वं सहास्माभिस्तस्याः प्रेष्या भविष्यसि ।**
**पुत्रश्च तव रामस्य [3] प्रेष्यत्वं हि गमिष्यति ॥ ११ ॥**

---

* रामस्य भयात्—षष्ठी चात्र सम्बन्धसामान्ये—गो. † कैकेय्या असूयोत्पादनाय कौसल्यासौभाग्यं दर्शयति—सुभगेत्यादिना—गो.

[1] सुमहतीं—ङ. [2] एवञ्च—ङ. [3] प्रेष्यभावं.

एवञ्चेत्—एवमुपस्थानं तव प्राप्तं चेत् । न केवलं त्वमेका दासीत्याह—सहेत्यादि ॥ ११ ॥

*हृष्टाः खलु भविष्यन्ति रामस्य परमाः स्त्रियः ।
अप्रहृष्टा भविष्यन्ति स्नुषास्ते †भरतक्षये ॥ १२ ॥

---

* राममहिष्या एकत्वेऽपि रामस्य परमाः स्त्रिय इति बहुवचननिर्देशः परिचारिकाभिप्रायेण । नन्वत्र स्त्रीशब्दो भार्यापर एव, 'स्नुषास्ते भरतक्षये' इति स्नुषाशब्दसाहचर्यात् । अत एव सुन्दरकाण्डे सीतयोच्यते—'स्त्रीभिश्च मन्ये विपुलेक्षणाभिः त्वं रंस्यसे वीतभयः कृतार्थः' (28–14) इति । युद्धकाण्डे च—'भुजैः परमनारीणामभिमृष्टमनेकधा' (21–3) इत्युक्तम् । न हि भुजैर्भुजाभिमर्शो भार्याभ्योऽन्यत्र संभवति । उत्तरकाण्डे चाश्वमेधोपक्रमे 'मातरश्चैव सर्वा मे कुमाराः स्त्रीगणानि च' (91–24) 'मम मातृस्तथा सर्वाः कुमारान्तःपुराणि च' इत्यपि पाठः इति दर्शितम् । अतस्त्रीगणकुमारव्यपदेशः विना सीतातिरिक्तभार्यासद्भावं न संभवति । किञ्च श्रुतार्थापत्तिरपि रामस्य सीतातिरिक्तधर्मदारसद्भावे प्रमाणम् । न ह्यपत्नीकस्य यज्ञानुष्ठानं संभवति । भोगदारान्तराभावे न रामस्यैकदारव्रतत्वं भृगुशापपालनं च । सीताप्रतिकृतिकरणं तु सीतास्नेहबहुमानात्—अत्रोच्यते—रामस्यैकदारव्रतत्वं सर्वसिद्धम् तच्च पत्न्यन्तरसंभवे न सङ्गच्छते । न च यज्ञकरणानुपपत्तिः, सीताप्रतिकृतिकरणेन तदुपपत्तेः (न हि तदा रामः अपत्नीक इति भावः) । उत्तरत्र 'न सीतायाः परां भार्यां वव्रे स रघुनन्दनः' (उत्त. ९९-८) इत्युक्तेश्च । यथा हेमाद्रौ—'दूरभार्योऽननुकूलभार्यश्च दर्भपिञ्जूलैर्भार्याप्रतिनिधिं विधाय पार्वणं कुर्यात्' इति ........ पत्नीविनाशाभावान्नाग्नेर्विनाशः । ....... 'मातरश्च'—इत्यत्र मे मातरः भरतादीनां कुमाराः स्त्रियश्चेत्यर्थः । दारान्तराङ्गीकारेऽपि तेषां धर्मार्थत्वेन प्रजार्थत्वाभावात् रामस्य कुमाराभावात् तत्सहचरितस्त्रीगणाश्च भरतादीनामेवेति सुव्यक्तम् । ... अतः 'परमाः स्त्रियः' इति परिचारिकान्तर्भावेन । 'स्त्रीभिश्च मन्ये' इति स्वविनाशे स्त्र्यन्तरसंभावनया । 'परमनारीणां' इत्यस्य कविवचनत्वेन श्रीभूम्याद्यभिमर्शविषयत्वाच्चेति दिक्–**गो.**

कतककृतस्तु 'परमनारीणां—उत्तमधात्रीजनानां भुजैः अनेकधा—स्नपनालंक्रियादिकालेषु स्पृष्टम्' इति व्याख्यास्यन्ति ॥ स्त्रिय इति बहुवचनेन सीतासख्यः–**ति.**

नन्वेवमपि—'स्नुषाः' इति साहचर्यात्—' इत्याक्षेपस्य किं समाधानम्? उच्यते—परिचारिकास्वपि कैकेय्याः प्रीत्यतिशयविवक्षया तथोक्तिः । तस्य च कैकेय्युद्वेजनमेवोद्देश्यम् । सर्वत्र पूजायां वा बहुवचनम् । † भरतक्षये––भरतगृहे–**ती.**

रामस्य स्त्रिय इति । तत्पार्श्वपतिता इति शेषः । भरतस्य क्षये–प्रभावक्षये । दासभावापत्ताविति यावत् ॥ १२ ॥

**तां दृष्ट्वा [1]†परमप्रीता ब्रुवन्तीं मन्थरां ततः ।**
**रामस्यैव गुणान् देवी कैकेयी प्रशशंस ह ॥ १३ ॥**

एवं दुर्युक्तिपुरस्सरं कृतोपजापाऽपि कैकेयी निसर्गपुण्यस्वभावत्वात् न चचालेत्युच्यते–तामित्यादिना । ब्रुवन्तीमिति । तथोपजापं ब्रुवन्तीमित्यर्थः । *परमप्रीतेति । राम इति शेषः । अत एव देवीति । पुण्यस्वभावेति यावत् ॥ १३ ॥

**†धर्मज्ञो [2]गुणवान् दान्तः कृतज्ञः [3]सत्यवाक् शुचिः ।**
**रामो राज्ञः सुतो ज्येष्ठो यौवराज्यं ततोऽर्हति ॥ १४ ॥**

मन्थरोपजापयुक्तिं प्रतिक्षिपति—धर्मज्ञ इत्यादिभिः । तत इति । यतो धर्मज्ञत्वादिभिः ज्यैष्ठ्यं च तदभिषेकसामग्री तत एवेत्यर्थः ॥ १४ ॥

**भ्रातॄन् भृत्यांश्च दीर्घायुः [4] पितृवत् पालयिष्यति ।**
**संतप्यसे कथं कुब्जे ! श्रुत्वा रामाभिषेचनम् ॥ १५ ॥**

एवं रामाभिषेकस्यैव न्याय्यत्वं स्वसम्मतत्वं च प्रदर्श्य स्वपुत्राद्यनर्थप्रसक्तिशङ्कामपि परिहरति—भ्रातॄनित्यादिना । कथमिति । कस्मात् इत्यर्थः । व्यर्थमेवेति यावत् ॥ १५ ॥

---

* इदं च कैकेयीविशेषणम् ।—गोविन्दराजीये तु मंथराविशेषणम् । परं अप्रीतां इति पदविभागः † मन्थरोक्तं राज्यसाधारण्यं निवर्तयति—धर्मज्ञ इति : गुरुभिः दान्तः— शिक्षितः–गो.

[1] परमप्रीतां–ङ. च. [2] गुरुभिः–ङ. [3] सत्यवान्–ङ. [4] पुत्रवत्–ङ.

भरतश्चापि रामस्य ध्रुवं वर्षशतात्परम् ।
पितृपैतामहं राज्य[1]मवाप्ता पुरुषर्षभः ॥ १६ ॥

पितृवत् भ्रातृनविभागेन परिपालयतो रामस्य पितृवदेव वर्षशतात्परमपि यदा विबिभाजयिषा भवति तदा भरतो राज्यमवाप्ता—प्रपत्स्यत इति ध्रुवम् । अपि शब्दाल्लक्ष्मणशत्रुघ्नयोरपि राज्यप्राप्तिर्ध्रुवेत्यर्थः ॥ १६ ॥

*सा त्वमभ्युदये प्राप्ते [2]वर्तमाने च मन्थरे !
भविष्यति च कल्याणे किमर्थं परितप्यसे ॥ १७ ॥

कल्याण इति । रामाभिषेकलक्षण इत्यर्थः ॥ १७ ॥

यथा मे भरतो मान्यः तथा भूयोऽपि राघवः ।
कौसल्यातोऽतिरिक्तं च स तु शुश्रूषते हि माम् ॥ १८ ॥

† मान्य इति । प्रार्थनीयश्रेयस्क इति यावत् । अतिरिक्तं—अभ्यधिकम् ॥ १८ ॥

राज्यं च यदि रामस्य भरतस्यापि तत्तदा ।
मन्यते हि यथाऽऽत्मानं तथा भ्रातृंश्च राघवः ॥ १९ ॥
कैकेय्या वचनं श्रुत्वा मन्थरा भृशदुःखिता ।
दीर्घमुष्णं विनिश्वस्य कैकेयीमिदमब्रवीत् ॥ २० ॥

---

* प्राप्ते—उचिते अभ्युदये—रामाभिषेकरूपे—वर्तमाने च प्रत्यासन्ने सति—कल्याणे—भरताभिषेकरूपे—भविष्यति च किमर्थं परितप्यसे—**गो.** ॥ कालत्रयेऽपि कल्याणे सति किमर्थं तप्यस इति भाव: ॥ पूर्वश्लोकानुसाराच्च ॥ कल्याणे-भरताभिषेके—भविष्यति—कियता कालेन—(इदानीं किमर्थं परितप्यसे)—**ति.** † मान्य:—बहुमान्य:—**गो.**

[1] मवाप्स्यति नरर्षभ:—ङ. [2] दह्यमानेव—ङ.

एवं रामाद्भरतस्य राज्यापहारोपजापं परिहृतवतीं कैकेयीं मन्थरा तृतीयपर्यायेण सर्वथा राज्यभ्रंशो भवितेति भेदयति—कैकेय्या वचनमित्यादिना ॥ २० ॥

**अनर्थदर्शिनी मौर्ख्यात् नात्मानमवबुध्यसे ।**
***शोकव्यसनविस्तीर्णे [1]मज्जन्ती दुःखसागरे ॥ २१ ॥**

अनर्थदर्शिनी । अनर्थस्यैवार्थत्वेन दर्शनशीलेति यावत् । शोकः—इष्टवियोगानिष्टसंप्रयोगजः । व्यसनं तु—अभीष्टानाप्त्यनिष्टापरिहारजम् । शोकव्यसनजलोर्मिभ्यां विस्तीर्णे—व्याप्ते—उक्तोभयसामस्त्यात्मकदुःखसागरे मज्जन्तीमात्मानं मौर्ख्यान्नावबुध्यसे—न जानीषे ॥ २१ ॥

**भविता राघवो राजा राघवस्य च यः सुतः ।**
**राजवंशात्तु भरतः कैकेयि! †परिहास्यते ॥ २२ ॥**

कुत एवं त्रिवारं कथयसीत्यत्राह—भवितेत्यादि । परिहास्यत इति—ओ हाङ् लट् ॥ २२ ॥

**न हि ‡राजसुताः सर्वे राज्ये तिष्ठन्ति भामिनि!**
**स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥ २३ ॥**

ननु राघवसुतवत् भरततत्सुताः कुतो राज्यं न प्राप्नुयुः? इत्यत्राह—न हि राजसुतेत्यादि । कुतः सर्वे न तिष्ठन्तीत्यत्राह—स्थाप्यमान इत्यादि । §अनयः—परस्परपीडालक्षणः ॥ २३ ॥

---

* विलापहेतुः शोकः, व्यसनं विपत् । यद्वा शोकः इष्टवियोगजं दुःखं, व्यसनं स्वस्य सुखाद्भ्रंशः—**गो.** † परिहास्यते—निर्वास्यते ॥ गत्यर्थाद्धसेर्णिजन्तात्कर्मणि लट्—**गो.** ॥ हीनोभविष्यति—**ति.** ‡ 'न हि राज्ञा सुताः' इति सर्वत्र पाठ उपलभ्यते । §अनयः—न॥तविरोधः—**गो.**

[1] मज्जन्तं—**ङ.**

**तस्मात् ज्येष्ठे हि कैकेयि! *राज्यतन्त्राणि पार्थिवाः।**
**स्थापयन्त्यनवद्याङ्गि! गुणवत्स्वितरेषु च ॥ २४ ॥**

यस्मादेवं तस्मात्—राज्यतन्त्राणि—राज्याधिकारादिव्यापारापेक्षितप्राधान्यानीत्यर्थः। 'तन्त्रं प्रधाने सिद्धान्ते'। इतरेषु—कनीयस्सु ॥ २४ ॥

**असावत्यन्तनिर्भग्नः तव पुत्रो भविष्यति।**
**अनाथवत्सुखेभ्यश्च राजवंशाच्च हास्यते ॥ २५ ॥**

यदेवं अतः—असावित्यादि ॥ २५ ॥

**साऽहं त्वदर्थे संप्राप्ता, त्वं तु मां नावबुध्यसे।**
**सपत्नि[1]वृद्धौ यन्मे त्वं प्रदेयं दातुमिच्छसि ॥ २६ ॥**
**ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकम्।**
**देशान्तरं नाययिता लोकान्तरमथापि वा ॥ २७ ॥**

त्वदर्थ इति। उक्तरीत्या त्वत्पुत्रराज्यभ्रंशे प्राप्ते तत्परिहारकथनप्रयोजनार्थमित्यर्थः। नावबुध्यस इति। हितार्थमागतामिति शेषः। सपत्न्याः वृद्धिः—सपत्निवृद्धिः। 'ङ्यापोः' इति ह्रस्वः। यत्—यस्मात् प्रदेयं—पारितोषिकं दातुमिच्छसि तस्मात्—ध्रुवमित्यादि। लोकान्तरमिति। हनिष्यतीति यावत् ॥ २७ ॥

**†बाल एव हि मातुल्यं भरतो नायितस्त्वया।**
**‡सन्निकर्षाच्च सौहार्दं जायते [2]ह्यवरेष्वपि ॥ २८ ॥**

---

* राज्यतन्त्राणि—राज्यपरिपालनादिव्यापारान्। 'तन्त्रं स्वराष्ट्रव्यापारे' इति वैजयन्ती-**गो.** † अत्र 'त्वया' इत्यनेन भरते राजस्नेहप्रयोजकं सान्निध्यं त्वयैव विघटितमिति, भवतोऽपि भरते प्रीतिर्नास्त्येवेति मर्मताडनं वा। ‡ अत्र पाठान्तरे—सान्निध्यात् स्थावरेष्वप्यन्योन्यं सौहार्दं जायत इत्यर्थः, ३० श्लोकानुसारात्।

[1] वृद्धिकामे त्वं—ङ. [2] स्थावरेष्विव, स्थावरेष्वपि—ङ.

अथ---दशरथस्य रामे पक्षपातः राज्याभिषेकप्रयोजकः भरता-सन्निधानादेव। तदपि दैवात् त्वया कृतं इत्याह—बाल एवेति। मातुलस्येदं मातुल्यं---मातुलदेशमिति यावत्। बाले तस्मिन् गते, स्थिते वा किं? इत्यत्राह—सन्निकर्षादित्यादि। सन्निकर्षाद्धेतोः अवरेष्वपि सुतेषु पितॄणां स्नेहो जायत इति लोकप्रसिद्धम्। अतो भरते स्थिते रामस्येव भरतस्यापि राजा राज्यं विभज्य दास्यति। दुरदृष्टवशाद्भरत-सन्निकर्षो न संपन्न इति॥ २८॥

**भरतस्याप्यनु[1]वशः शत्रुघ्नोऽपि * समं गतः।**
**लक्ष्मणो हि यथा रामं तथाऽसौ भरतं गतः॥ २९॥**

यदि भरतैकहृदयः शत्रुघ्नोऽत्र तिष्ठेत् तदाऽपि भरतकार्यस्यानपायः; सोऽपि दैवाद्गत इत्याह—भरतस्यापीति। भरतं गत इति। एकहृदयतयेति शेषः॥ २९॥

**† श्रूयते हि द्रुमः कश्चिच्छेत्तव्यो वनजीविभिः।**
**सन्निकर्षादिषीकाभिः मोचितः परमाद्भयात्॥ ३०॥**

किञ्चित्सन्निकर्षात् किञ्चिदनर्थनिवृत्तिर्लोके दृष्टेत्याह—श्रूयत इत्यादि। वनजीविभिः—वनवृक्षच्छेदादिव्यापारजीविभिः छेत्तव्यः—प्राप्तछेदनकालः तस्मात्परमाद्भयात् इषीकाभिः---इषीककण्टकबहुगुल्मैः सान्निकर्षात्—परितः परिवारणरूपात् मोचित इति श्रूयते। हीति नित्यान्तःपुरवर्तित्वेन ‡ श्रवणानुभवकथनम्॥ ३०॥

---

* समं-भरतेन सह. † स्थावरेष्वपीत्युक्तमुपपादयति-श्रूयते हीति॥ गो.

‡ तदनुभवासंभवादिति भावः।

[1] मतः-ङ.

गोप्ता हि रामं सौमित्रिः लक्ष्मणं चापि राघवः ।
अश्विनोरिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ॥ ३१ ॥
तस्मान्न लक्ष्मणे रामः पापं किञ्चित् करिष्यति ।
रामस्तु भरते पापं कुर्यादेव न संशयः ॥ ३२ ॥

पापमिति । वधमिति यावत् ॥ ३२ ॥

*तस्माद्राजगृहादेव वनं गच्छतु ते सुतः ।
एतद्धि रोचते मह्यं भृशं चापि हितं तव ॥ ३३ ॥
†एवं [1]च ज्ञातिपक्षस्य श्रेयश्चैव भविष्यति ।

रामाभिषेकविघ्नाप्रवृत्तावन्ततो वक्तव्यमाह—तस्मादित्यादि । यस्माद्वधो रामात् प्राप्तः—तस्मात् राजगृहादेव—मातुलगृहादेव वनं गच्छतु—नात्रागत्य म्रियताम् । एतद्धि मह्यं 'अन्ततो वक्तव्यं' इति भृशं रोचते । 'जीवन् भद्राणि पश्यति'—(सुन्द.–१३–४७) इति न्यायेन तवापि पुत्रस्य जीवनानपायतो हितं । एवं च—दुरदृष्टजदुर्मतिवशा भिरुचितं, ते ज्ञातिपक्षस्य श्रेयश्च, अप्रतिहतं भविष्यतीति शेषः ॥३३॥

---

* केकयराजनगरस्य 'राजगृहम्' इति नाम । 'पुरं राजगृहं गत्वा' (अयो.—68–6) इत्युक्तेः । † भरतो राज्यं यद्यवाप्स्यति—एवञ्चेत् ते ज्ञातिपक्षस्य, बंधुवर्गस्य, श्रेयश्चापि भविष्यति–**गो. ति.** एवं—एवं सति, मातुलगृहादेव वनगमने सति ते ज्ञातिपक्षस्यास्मदादेः श्रेयश्च भविष्यत्येव, श्रेयः—जीवनरूपं कल्याणम् । ...... यदि चेदिति । यदि वेत्यर्थः । धर्मात् पितृदीयमानत्वरूपात् । तदा वा ज्ञातिपक्षस्य श्रेय इत्यर्थः । यद्वा एवमेव ते पक्षस्य श्रेयो भविष्यति । एवमेवेत्येतदुपपादयति—यदि चेदिति–**ति.**

अथवा रामानन्तरं ज्यैष्ठ्यक्रमाद्धर्मादेव पूर्वोक्तरीत्या यदि भरतो राज्यं आप्नुयाच्चेत् एवं सति ते ज्ञातिपक्षस्य—कौसल्यादेरेव श्रेयो भविष्यति । रामानन्तरं भरतराज्यप्राप्तिरसंभावितैव । यतो रामानन्तरं तत्पुत्राणामेव राज्यार्हताऽनुपदमुक्तेत्यर्थः । कतकरीत्या एवं चेत्यादि पूर्वान्वयि, यदि चेत्याद्युत्तरान्वयि । इतरव्याख्यारीत्या 'एवञ्च' 'यदि चेत्' इत्यर्धद्वयमेकं वाक्यम् ।

[1] ते–**ङ.**

**यदि चेत् भरतो धर्मात् पित्र्यं राज्यमवाप्स्यति ॥ ३४ ॥**
***स ते सुखोचितो बालो रामस्य सहजो रिपुः ।**
**समृद्धार्थस्य नष्टार्थो जीविष्यति कथं वशे ॥ ३५ ॥**

ननु भरताभिषेकसाधनेऽपि कथं रामज[1]नाशप्रसंगनिवृत्तिरित्यत्र राज्ये सति त्वत्पुत्रस्य प्राबल्यात् स्वयमेव नाशो [2] भरताद्भविष्यतीत्याह—यदीति । धर्मादिति । पितृदीयमानत्वरूपादिति यावत् । रामस्य सहजो रिपुरिति । भविष्यतीति शेषः । किं तत इत्यत्राह—समृद्धेत्यादि । समृद्धार्थस्य त्वत्पुत्रस्य वशे स्थितः नष्टार्थो रामः कथं जीविष्यति ? स्वयमेव शनैर्नङ्क्ष्यतीत्यर्थः ॥ ३५ ॥

**अभिद्रुतमिवारण्ये सिंहेन गजयूथपम् ।**
**प्रच्छाद्यमानं रामेण भरतं त्रातुमर्हसि ॥ ३६ ॥**

यदेवं अतो रामवृद्धिं निवार्य रक्षणीयस्तव पुत्र इत्याह—अभिद्रुतमिति । अरण्ये सिंहेनाभिद्रुतं गजयूथपमिव रामेण—राज्यप्राप्त्या प्रबलेन प्रच्छाद्यमानं—अभिभूयमानं भरतं तदभिषेकनिरोधेन त्रातुमर्हसि ॥ ३६ ॥

**दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया ।**
**राममाता सपत्नी ते कथं वैरं न यातयेत् ? ॥ ३७ ॥**

---

* राज्यानवाप्तावनिष्टमाह—स इति । सहजो रिपुः—सपत्नीपुत्रत्वात्सहजः शत्रुः । ते बालः—भरतः रामस्य वशे कथं जीविष्यति—**गो.**

अन्यथा दुःखमेवेत्याह—स त इति ॥ समृद्धार्थस्य रामस्य वशे नष्टार्थः कथं जीविष्यतीत्यर्थः—**ति.** पूर्वापरानुरूप्यादिदं युक्तमिव । सहजो रिपुः—सन्निहितदायादित्वात् ।

[1] नाशाप्रवृत्ति—**क.** [2] भरतादेर्भवि—**ग.**

अन्यथा सर्वथैव प्राप्तानर्थं त्वदात्मानमपि त्रातुमर्हसीत्याह—दर्पादित्यादि । कथं वैरं न यातयेदिति । * वैरयातनं—वैरशुद्धिं त्वद्दास्यताऽऽपादनेन संपादयेदेवेत्यर्थः ॥ ३७ ॥

यदा हि रामः पृथिवीमवाप्स्यति
प्रभूतरत्नाकरशैलपत्तनाम् ।
तदा गमिष्यस्यशुभं पराभवं
सहैव दीना भरतेन भामिनि ! ॥ ३८ ॥

उपसंहरति-यदा हीत्यादि । पराभवं—दास्यरूपम् ॥ ३८ ॥

† यदा हि रामः पृथिवीमवाप्स्यति
ध्रुवं प्रनष्टो भरतो भविष्यति ।
अतो हि संचिन्तय राज्यमात्मजे
परस्य चाद्यैव ‡ विवासकारणम् ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टमः सर्गः

———

यतो जोषमवस्थाने सपुत्रायास्तेऽनर्थः, अत एव यथा स्यादात्मजे राज्यं तथा चिन्तय । अपि च ' शत्रुशेषो हि न स्थाप्यः ' इति न्यायेन अद्यैव परस्य विवासकारणं च चिन्तय । धीगौ (३९) मानः सर्गः ॥ ३९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डेऽष्टमः सर्गः

———

* ' वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा ' इत्यमरः । † कैकेय्यनर्थमुक्त्वा भरतानर्थमाह—यदा हीति-गो. ‡ स्वोपजापपराकाष्ठां सूचयति—विवासेति ॥

## नवमः सर्गः

### [रामप्रवासनाध्यवसायः]

**एवमुक्ता तु कैकेयी क्रोधेन ज्वलितानना ।**
**दीर्घमुष्णं विनिश्वस्य मन्थरामिदमब्रवीत् ॥ १ ॥**

एवं तृतीयपर्याये—ज्यैष्ठ्यक्रमप्राप्तियुक्तेः भरतराज्यभ्रंशहेतोः उपदेशात्, वैरनिर्यातनरूपस्य स्वदास्यप्राप्तिहेतोश्चोपदेशात्, जन्मप्रभृति-मन्थराया अपि निजहितैषित्वाविशयात्, तादृश्या तया त्रिर्वाचा चोप-दिश्यमानत्वात्, दीक्षितपशुगृहन्यायेन पुनःपुनः श्रवणे परमस्वस्थस्या-प्यभ्यस्यमानार्थे तात्त्विकत्वबुद्धेः लोकस्वाभाव्यात्, अन्ततः स्वका-र्याय दैवैरेव चित्तक्षोभस्य संपादनाच्च मन्थरावाक्यानुष्ठानमेव हितम्मन्य-माना तन्निर्वाहोपायमनुतिष्ठति । एवमुक्ता त्वित्यादि । क्रोधेन—दास्यप्राप्तिश्रवणजेन ॥ १ ॥

**अद्य राममितः क्षिप्रं वनं प्रस्थापयाम्यहम् ।**
**यौवराज्येन भरतं [1] क्षिप्रमेवाभिषेचये ॥ २ ॥**

प्रस्थापयामि—प्रस्थापयितुमुद्युक्ताऽस्मि । तथा–‘ आभिषेचय ’ इत्यपि ॥ २ ॥

**इदं त्विदानीं संपश्य केनोपायेन [2] मन्थरे !**
**भरतः प्राप्नुयाद्राज्यं न तु रामः कथञ्चन ॥ ३ ॥**

केवलोत्साहस्याकिञ्चित्करत्वात्तन्निर्वाहोपायं पृच्छति—इदं त्वित्यादि । रामो ज्येष्ठपुत्रः राज्ञोऽतिप्रियश्च । ततस्तस्य विवासनं युष्मदस्मदुत्साहमात्रासाध्यं ; अत इहोपायं चिन्तयेत्यर्थः ॥ ३ ॥

---

[1] क्षिप्रमद्याभि–ङ. च. [2] साधये–ङ.

**एवमुक्ता तया देव्या मन्थरा पापदर्शिनी ।**
**रामार्थमुप[1]हिंसन्ती कैकेयीमिदमब्रवीत् ॥ ४ ॥**

रामार्थं—रामाभिषेकरूपप्रयोजनम् ॥ ४ ॥

**हन्तेदानीं प्रवक्ष्यामि कैकेयि! श्रूयतां च मे ।**
**यथा ते भरतो राज्यं पुत्रः प्राप्स्यति *केवलम् ॥ ५ ॥**

ते पुत्र एव केवलं प्राप्स्यति न तु राम इत्यर्थः ॥ ५ ॥

**किं न स्मरसि कैकेयि! स्मरन्ती वा निगूहसे ।**
**यदुच्यमानमात्मार्थं मत्तस्त्वं श्रोतुमिच्छसि ॥ ६ ॥**

अहं वक्ष्याम्येवोपायं ; अपि तु त्वमविज्ञाय पृच्छसि? ज्ञात्वापि मन्मुखाच्छ्रोतुं गोपयसि वा? इति पृच्छति—किं नेत्यादि । उच्यमानमात्मार्थमिति । आत्मप्रयोजनं प्रत्युपायमिति शेषः ॥ ६ ॥

**मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि!**
**श्रूयतामभिधास्यामि श्रुत्वा चापि विमृश्यताम् ॥ ७ ॥**

भवतु यथा तथा वा । मयोच्यमानं तदुपायतत्त्वं श्रोतुं छन्दः—इच्छा यदि, तदा श्रूयताम् । [2]'छन्द इच्छा वेदपद्ये' इति कोशः ॥ ७ ॥

**श्रुत्वैवं वचनं तस्या मन्थरायास्तु कैकयी ।**
**किञ्चिदुत्थाय शयनात् †स्वास्तीर्णादिदमब्रवीत् ॥ ८ ॥**

श्रवणे, श्रुतार्थानुष्ठाने चोत्साहो दर्शितः—उत्थायेत्यादिना ॥ ८ ॥

---

* केवलं राज्यं—कृत्स्नं राज्यम् । 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः'—**गो.** † उत्थानहेतुर्न शय्यादोष इत्याह—स्वास्तीर्णादिति—**गो.**

[1] हिंसन्तीं—ङ. [2] 'छन्दः पद्येऽभिलाषे च' इत्यमरः ।

कथय त्वं [1] ममोपायं केनोपायेन मन्थरे!
भरतः प्राप्नुयाद्राज्यं न तु रामः कथञ्चन ॥ ९ ॥
एवमुक्ता तु कैकेय्या मन्थरा पापदर्शिनी ।
रामार्थमुपहिंसन्ती कुब्जा वचनमब्रवीत् ॥ १० ॥
[2] पुरा * देवासुरे युद्धे सह राजर्षिभिः पतिः ।
अगच्छत् त्वामुपादाय देवराजस्य साह्यकृत् ॥ ११ ॥

देवासुर इति । * 'येषां च विरोधः' इत्येकत्वम् । तत्संबन्धिनीति यावत् । दण्डकान् प्रत्यगच्छत् ॥ ११ ॥

दिशमास्थाय कैकेयि! दक्षिणां दण्डकान् प्रति ।
वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः ॥ १२ ॥

यत्र—दण्डकेषु, वैजयन्तमिति पुरं ख्यातम् । तत्र तिमिध्वजो नामाभूत् ॥ १२ ॥

स शम्बर इति ख्यातः शतमायो महासुरः ।
ददौ शक्रस्य संग्रामं देवसंघै[3]रनिर्जितः ॥ १३ ॥

स एव लोकप्रसिद्धमायावी शम्बरश्च शक्रस्य सङ्ग्रामं ददाविति—शक्रेण प्रतियुद्धमकरोदित्यर्थः ॥ १३ ॥

---

* अत्र परत्वात् 'विभाषावृक्षमृग' (२-४-१२) इति प्राप्तं चकारेण बाध्यत इति दीक्षितः । अनेन नित्यत्वमुक्तम् । व्याख्यायां च 'देवासुराः' इत्यत्र नायमेकवद्भावः । तद्विरोधस्य कादाचित्कत्वात् । अमृतादिप्रयुक्तः खलु कादाचित्क एव हि तेषां विरोधः । अमृतमथनकाले तेषां विरोधाभावात्' इत्युक्तम् । युद्धकाण्डे च 'देवासुराणां क्रुद्धानां' (९०-२५) इति दृश्यते । अतोऽत्र 'दैवासुरे' इति पाठ एव श्रेयान् 'देवासुरे' इत्येकवद्भावाप्रसक्तेरिति । तयोर्विरोधस्य स्वाभाविकत्वे युक्त एकवद्भावः ।

[1] महोपायं—ङ. [2] पुरा दैवासुरे—ङ. [3] रनिन्दितः—ङ.

तस्मिन् महति संग्रामे पुरुषान् * क्षतविक्षतान् ।
रात्रौ प्रसुप्तान् घ्नन्ति स्म [1]तरसाऽऽसाद्य राक्षसाः ॥ १४ ॥

क्षतविक्षतशब्दौ क्रमाद्भावकर्मणोः । औक्षणु † हिंसायाम् । तस्मान्निष्ठायामिडभावः । विक्षतेः टित्वात् ' अनुदात्तोपदेश—' इत्यनुनासिकलोपः । क्षतैः—अस्त्रशस्त्रवधैः विशेषेण विद्धा इत्यर्थः । रात्रौ प्रसुप्तान्–दिवायुद्धश्रान्त्या । तरसा—बलेन ॥ १४ ॥

तत्राकरोन्महद्युद्धं राजा दशरथस्तदा ।
असुरैश्च महाबाहुः शस्त्रैश्च शकलीकृतः ॥ १५ ॥

तत्रेति । तद्रात्र्यामित्यर्थः । शकलीकृत इति । सर्वाङ्गेषु प्रहृत इत्यर्थः ॥ १५ ॥

अपवाह्य त्वया देवि ! सङ्ग्रामान्नष्टचेतनः ।
तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया ॥ १६ ॥

त्वया–सारथ्यं कुर्वाणया सङ्ग्रामादन्यतोऽपवाह्य नष्टचेतनः– मूर्छितः राजा रक्षितः । यत्र रक्ष्यते, तत्रापि पुनः शस्त्रैर्विक्षतः, ततोऽप्यपवाह्य रक्षितः ॥ १६ ॥

तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने !
स त्वयोक्तः पतिर्देवि ! यदेच्छेयं तदा वरौ ॥ १७ ॥
गृह्णीयामिति, तत्तेन तथेत्युक्तं महात्मना ।

---

* क्षताः—बाणशूलादिभिः संजातव्रणाः, विक्षताः—खड्गपरशुपट्टसादिभिर्विविधं प्रहृताः । तान् प्रसुप्तान्—इत्यभिधानात् क्षतविक्षतत्वं दिवायुद्धकृतमित्यवगम्यते—गो.

† क्षणु हिंसायाम् । ' नपुंसके भावे क्तः ' इति क्तप्रत्यये—' क्षतं ' इति रूपम् ॥

[1] तरसापास्य—ङ.

तेन—एवं द्विः प्राणरक्षणेन हेतुना तुष्टेन तेन राज्ञा इत्यर्थः। तच्चेनेति। तत्—त्वदुक्तं वचनम्। तेन—राज्ञेत्यर्थः॥ १७॥

[1] *अनभिज्ञाऽसि तद्देवि! त्वयैव [2]कथिता पुरा॥ १८॥

अनभिज्ञाऽसि—विस्मृताऽसि। चिरकालवशात्॥ १८॥

[3] तथैषा तव तु स्नेहान्मनसा धार्यते मया।
रामाभिषेकसंभारान्निगृह्य विनिवर्तय॥ १९॥

यथा कथिता, तथैषा कथेति योजना। अभिषेकसंभारात् वरबलेन निगृह्य—निरुध्य, अभिषेकं विनिवर्तय॥ १९॥

तौ च याचस्व भर्तारं भरतस्याभिषेचनम्।
†प्रव्राजनं च रामस्य वर्षाणि तु चतुर्दश॥ २०॥

निवर्तनप्रकारमाह—तौ वरावित्यादि। भर्तारं तौ वरौ याचस्व। याचिर्द्विकर्मकः। तेन दानेऽनुमते, तयोरेकेन भरतस्याभिषेचनं, अपरेण रामस्य प्रव्राजनं च वृणु इति शेषः॥ २०॥

चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम्।
‡प्रजाभावगतस्नेहः स्थिरः पुत्रो भविष्यति॥ २१॥

चतुर्दशसङ्ख्या किमर्थेत्यत्राह—चतुर्दशेत्यादि। प्रजानां भावगतः—आन्तरगतो यः स्नेहः—त्वत्पुत्रेऽनुरागः तेन हेतुना स्थिरस्तथा॥

---

* पाठान्तरे—अहं अनभिज्ञा, कथं तर्हि ज्ञातमित्यत्र—त्वयैवेति। अहं कथितेत्यन्वयः। † प्रव्राजनं चेत्येवंरूपौ तौ वरौ याचस्वेति वाऽन्वयः। ‡ प्रजाभावगतः स्नेहः—यस्य स तथोक्तः—गो. ति.

[1] अनभिज्ञा ह्यहं—ङ. च. [2] कथितं—ङ. च [3] कथैषा—ङ. च.

क्रोधागारं प्रविश्याद्य क्रुद्धेवाश्वपतेः सुते!
शेष्वानन्तर्हितायां त्वं भूमौ मलिनवासिनी ॥ २२ ॥

एवमुपायमुपदिश्य तत्प्रवर्तनोपायमप्याह—क्रोधागारमित्यादि । राज्ञा कलहे यद्गृहं स्त्रियः प्रविशन्ति—तत् क्रोधागारम् । क्रुद्धेव—क्रुद्धैव सती—क्रोधहेतुमस्मदुपदिष्टं तत्सान्त्वनेऽप्यविस्मरन्तीति यावत् । अयमेवार्थो विव्रियते—शेष्वानन्तर्हितायामित्यादिना । अनन्तर्हितायां—अनास्तृतायाम् ॥ २२ ॥

मा स्मैनं प्रत्युदीक्षेथा मा चैनमभिभाषथाः ।
रुदन्ती पार्थिवं दृष्ट्वा जगत्यां शोकलालसा ॥ २३ ॥

जगत्यां—भुवि । शेष्वेति शेषः ॥ २३ ॥

दयिता त्वं सदा भर्तुरत्र मे नास्ति संशयः ।
त्वत्कृते स महाराजो विशेदपि हुताशनम् ॥ २४ ॥

एवं सति कार्यसिद्धिर्भवत्येवेत्याह—दयितेत्यादि । त्वत्कृते—त्वत्प्रीणननिमित्तम् ॥ २४ ॥

न त्वां क्रोधयितुं शक्तो न क्रुद्धां प्रत्युदीक्षितुम् ।
तव प्रियार्थं राजा हि प्राणानपि परित्यजेत् ॥ २५ ॥
*मणिमुक्तासुवर्णानि रत्नानि विविधानि च ।
दद्याद्दशरथो राजा मा स्म तेषु मनः कृथाः ॥ २६ ॥

'वरदानव्यतिरिक्तानशेषाननुनयान् मा स्वीकुरु' इत्युपदिशति—मणीत्यादि ॥ २६ ॥

---

* इदं श्लोकं सर्वत्र 'न ह्यतिक्रमितुं' इत्यस्यानन्तरं उपलभ्यते ॥

न ह्यतिक्रमितुं शक्तस्तव वाक्यं महीपतिः ।
मन्दस्वभावे ! बुध्यस्व सौभाग्यबलमात्मनः ॥ २७ ॥

नन्वनुनयानङ्गीकारे मम धिक्कारो भविष्यतीति भयं त्याजयति—मन्देत्यादिना । स्वस्सौभाग्य[1]विस्मयं अविस्मृत्य धिक्कारभयं दूरे त्यजेत्यर्थः ॥ २७ ॥

यौ तौ *[2]दैवासुरे युद्धे वरौ दशरथो ददौ ।
तौ स्मारय महाभागे ! †सोऽर्थो न [3]त्वामतिक्रमेत् ॥

सर्वानुनये धिकृते 'किं मया कर्तव्यम्' इति राजप्रश्ने प्राप्ते कर्तव्यमुत्तरमुपदिशति—यौ तौ इत्यादि । सोऽर्थ इति—वरप्राप्तिरूपोऽर्थ इत्यर्थः । नातिक्रमेदिति । सर्वथा सिद्ध्यत्येव, राज्ञः सत्यप्रतिज्ञत्वादित्याशयः ॥ २८ ॥

यदा तु ते वरं दद्यात् ‡स्वयमुत्थाप्य राघवः ।
व्यवस्थाप्य महाराजं त्वमिमं वृणुया वरम् ॥ २९ ॥

व्यवस्थाप्य-शपथैः आवश्यकप्रदानकं कृत्वा इत्यर्थः ॥ २९ ॥

रामं प्रव्राजयारण्ये नव वर्षाणि पञ्च च ।
भरतः क्रियतां राजा पृथिव्याः §पार्थिवर्षभः ॥ ३० ॥

---

* अत्र ११ तमपद्य इव देवासुर इति कुत्रचित्पाठो दृश्यते ॥ परन्तु पूर्वोक्तरीत्या समाहारासंभवात्—युद्धकाण्डे 'देवासुराणां'–(90-25) इत्येव सर्वकोशेषु पाठोपलब्धेः–समाहारे 'देवासुराणां' इति बहुवचनासंभवात्—'देवासुरे' इति पाठे तत्पदस्य देवासुर-सम्बन्धिनि लक्षणाया वक्तव्यत्वात् च 'दैवासुरे' इत्येव पाठः स्यादिति विभावयामः । † सोऽर्थो न त्वा क्रमेदति—सोऽर्थो मा त्वामतिक्रमेत्–इति पाठान्तरे । ‡ उत्थाप्य–भूमौ शयानां त्वामिति शेषः । § पार्थिवर्षभ इत्यनन्तरं इतिशब्द ऊह्यः.

[1] वैभवं विस्मृत्य—क. [2] देवासुरे—ङ. च. [3] त्वा क्रमेदपि—ङ.

चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् ।
रूढश्च *कृतमूलश्च शेषं स्थास्यति ते सुतः ॥ ३१ ॥

†प्रव्राजनस्य चतुर्दशसंख्याविशिष्टवरणमात्रेण कार्यसिद्धिर्भवत्येव । सर्वथा प्रव्राजनन्त्वतिघोरतया, अशेषलोकविरुद्धमित्याशयेनाह—चतुर्दश हीत्यादि । यथा महावृक्षः चतुर्दशवर्षं परिपालितः प्ररूढमहाशाखः कृतमूलः, सिद्धदृढमूलावरोहश्च भवति ; एवं प्रतिष्ठिताशेषबाह्याभ्यन्तरराज्यपरिकरः ‡भवति । अतः परं, शेषं—यावज्जीवं वृक्षवदेव स्वत एवाशक्योन्मूलनश्च भवतीत्यर्थः ॥ ३१ ॥

रामप्रव्राजनं चैव देवि! याचस्व तं वरम् ।
एवं सिद्ध्यन्ति पुत्रस्य सर्वार्थास्तव भामिनि! ॥ ३२ ॥

यदेवं अतः—रामेत्यादि । चाद्भरताभिषेकः ॥ ३२ ॥

एवं प्रव्राजितश्चैव §रामोऽरामो भविष्यति ।
भरतश्च हतामित्रः ||तव राजा भविष्यति ॥ ३३ ॥

अराम इति । अप्रियो भविष्यतीत्यर्थः ॥ ३३ ॥

येन कालेन रामश्च वनात् प्रत्यागमिष्यति ।
[1]अन्तर्बहिश्च पुत्रस्ते ¶कृतमूलो भविष्यति ॥ ३४ ॥

---

* कृतमूलः—स्ववशीकृतमूलबलः—गो. † सर्वथा प्रव्राजनावरणे आशयमाह—प्रव्राजनस्येति । ‡ ते सुत इति शेषः । § "यद्वा रामो भविष्यति—एक एव भविष्यतीत्यर्थः "—गो. रमयत्यानन्दयतीति रामः—मुनीनिति शेषः—ती. वस्तुतस्तु—'पिताऽपिता भवति' इत्यादाविव—राम इति व्यपदेशार्ह एव स न भवति ॥ यतः सः वनंगतः नामरूपरहितः—क्रमेण जनानामविदितप्रायः स्यादितिभावः । || तव भरत इत्यन्वयः । ¶ कृतमूलः—रूढमूलः—गो.

[1] तेन कालेन—ङ.

सङ्गृहीतमनुष्यश्च सुहृद्भिः सार्धमात्मवान् ।

अन्तर्बहिरिति । प्रकृतीनामितिशेषः । 'स्नेहः प्रवासाश्रयः' इति न्यायेन प्रजानां तद्गतस्नेहः चिरविप्रयोगतो नश्यतीत्यर्थः । कृतमूलत्वस्यैव विवरणं—संगृहीतेत्यादि । सम्यक् परिपालनेन सङ्गृहीताः—अनुरञ्जिताः मनुष्याः—पौरा जानपदाश्च येन स तथा । तत्र हेतुः—आत्मवानित्यादिः ॥ ३४ ॥

प्राप्तकालन्तु ते मन्ये राजानं * वीतसाध्वसा ॥ ३५ ॥

रामाभिषेक[1]संभारान्निगृह्य विनिवर्तय ।

उपदिष्टमुपदेशं निगमयति—प्राप्तेत्यादि । राजानं प्रति वीतसाध्वसा सती विनिवर्तय इति । वरबलादिति शेषः ॥ ३५ ॥

अनर्थमर्थरूपेण ग्राहिता सा ततस्तया ॥ ३६ ॥

हृष्टा प्रतीता कैकेयी मन्थरामिदमब्रवीत् ।
सा हि वाक्येन कुब्जायाः किशोरीवोत्पथं गता ॥ ३७॥

कैकेयी विस्मयं प्राप्ता परं परमदर्शना ।

एवं स्थिते कविः स्वदृशाऽऽह—अनर्थमित्यादि । प्रतीता—इण् गतौ । सर्वे गत्यर्था ज्ञानार्थाः । तदुक्तं हिततया प्रतिगृहीतवतीति यावत् । परमदर्शनेत्यन्तविशेषणवती सा कैकेयी मन्थरामिदमब्रवीदिति योजना । † किशोरी—बालवडवा ॥ ३७ ॥

---

* कैकेयीविशेषणमिदं । † 'बालः किशोरः' इत्यमरः ।

[1] संकल्पा—ङ.

कुब्जे! त्वां [1]नावजानामि श्रेष्ठां श्रेष्ठाभिधायिनीम् ॥
पृथिव्यामसि कुब्जानामुत्तमा *बुद्धिनिश्चये ।

अथोपदिष्टकार्यपारप्राप्तये तामेव कुब्जां मानयति—कुब्जेत्यादिना। नावजानामीत्यत्र हेतुः—श्रेष्ठाभिधायिनीति। कुब्जानां—कुब्जत्वधर्मविशिष्टराज†भुजिष्यानां मध्ये। कुब्जत्वादिकिञ्चिद्विकृता एव राजमहिषीणां दास्य इष्टाः; सुरूपासु खलु सापत्न्यस्फूर्तिर्भवति ॥ ३८ ॥

त्वमेव तु ममार्थेषु नित्ययुक्ता हितैषिणी ॥ ३९ ॥
नाहं समवबुध्येयं कुब्जे! राज्ञश्चिकीर्षितम् ।

त्वमेवेति। न तु दास्यन्तरम्। नावबुध्येयमिति। त्वद्बोधनाभाव इति शेषः ॥ ३९ ॥

सन्ति दुस्संस्थिताः कुब्जा वक्राः [2]परमपापिकाः ॥ ४० ॥
‡त्वं पद्ममिव वातेन सन्नता प्रियदर्शना ।

त्वां कुब्जां कुब्जत्वांशव्यतिरेकेण सुस्त्रीलक्षणवतीमालक्ष्य स्तौति — सन्तीत्यादि। दुस्संस्थिताः—कुत्सितावयवसन्निवेशाः। त्वद्व्यतिरिक्ता इति शेषः। अत एव परमपापिकाः—पापदर्शनाः। कश्मलदर्शना इति यावत्। नैवं त्वमित्याह—त्वमित्यादि। वातेन पद्ममिव केवला §सन्नता; अथापि प्रियदर्शना ॥ ४० ॥

---

* अनेन कुब्जानां प्रायेण बुद्धितैक्ष्ण्यमस्तीति द्योतितम्—गो. † भुजिष्या—परिचारिका। 'नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः' इत्यमरः। ‡ वातेन—वायुना सन्नतं—सम्यक् नामितं पद्ममिव त्वं वातेन रोगेण सन्नता सती प्रियदर्शना। § सम्यक्, नता इत्यर्थः

[1] नाभिजानामि—ङ. [2] परमदारुणाः—ङ.

उरस्तेऽभिनिविष्टं वै यावत्स्कन्धं समुन्नतं ॥ ४१ ॥
अधस्ताच्चोदरं शातं सुनाभमिव लज्जितम् ।

उरः—स्तनयोर्बहिः हृदयादुपरिप्रदेशः । तत् स्थगुनाभिनिविष्टम् । अत एव यावत्स्कन्धात्समुन्नतत्वमुरसः । एतेन पुरःस्थगुमत्कुब्जत्वं प्रतिपादितम् । शातं—कृशं 'शाच्छोरन्यतरस्यां' इति पाक्षिक इत्वाभावः श्यतेः निष्ठायाम् । सुनाभं—शोभना नाभिर्यस्योदरस्य, तत्तथा । 'अच्' इति योगविभागात् अच् । लज्जितामिवेति । * स्थगोरधस्थाद्वर्तनजया लज्जया लज्जितमिव शातमिति योजना ॥

परिपूर्णं तु जघनं सुपीनौ च पयोधरौ ॥ ४२ ॥
विमलेन्दुसमं वक्त्रं अहो राजसि मन्थरे !
जघनं तव [1]† निर्मृष्टं रशनादामशोभितम् ॥ ४३ ॥
जङ्घे भृशमुपन्यस्ते पादौ चाप्यायतावुभौ ।

निर्मृष्टं—शोधितम् । रोमादिकश्मलहीनमितियावत् । ‡ उपन्यस्त इति । जान्वोरिति शेषः ॥ ४३ ॥

त्वमायताभ्यां सक्थिभ्यां मन्थरे ! क्षौमवासिनी ॥ ४४ ॥
अग्रतो मम गच्छन्ती राजहंसीव राजसे ।

सक्थिभ्यां—पृष्ठफलकाभ्याम् ॥ ४४ ॥

आसन् याः शम्बरे मायाः सहस्रमसुराधिपे ॥ ४५ ॥
सर्वास्त्वयि निविष्टास्ता भूयश्चान्याः सहस्रशः ।

---

* उरस उन्नतिं दृष्ट्वा लज्जितमिवेति—तिलके गोविन्दराजीये च । † निर्घुष्टं—रशनाक्षुद्रघण्टादिभिः शब्दायमानम्–ति. निर्मृष्टं—अमांसलं. ‡ संश्लिष्ट इति यावत् ।

[1] निर्घुष्टं–च.

एवं स्थगुव्यतिरिक्तानां स्वत एवादोषत्वमुक्त्वा स्थग्वपि सद्गुण-मूलमित्युत्प्रेक्षया स्तौति—आसन् या इत्यादि। या माया निविष्टा हृदये—तदेव ते हृदयस्थस्थग्वित्युत्तरत्र योजना। अत्र विधेयलिङ्ग-ग्रहस्तादिति सर्वनाम्ना। अन्याः मायाः—लौकिक्यः ॥ ४५ ॥

तदेव * स्थगु यद्दीर्घं रथघोणमिवायतम् ॥ ४६ ॥
मतयः क्षत्रविद्याश्च मायाश्चात्र वसन्ति ते।

रथघोणं—रथचक्रपिण्डिका, तद्वदायतं दीर्घं च—यत् स्थगु—मांसविशेषोऽस्ति, अत्र मत्यादिकं वसति ॥ ४६ ॥

अत्र ते प्रतिमोक्ष्यामि मालां कुब्जे! हिरण्मयीम् ॥ ४७ ॥
अभिषिक्ते च भरते राघवे च वनं गते।

यदेवं अतः—अत्र त इत्यादि ॥ ४७ ॥

जात्येन च सुवर्णेन सुनिष्टप्तेन सुन्दरि! ॥ ४८ ॥
लब्धार्था च प्रतीता च † लेपयिष्यामि ते स्थगु।

जात्येनेति। उत्तमस्वर्णजातौ भवं जात्यम्, दिगादित्वाद्यत्। जाम्बूनदत्वादिप्रशस्तजातिमता सुनिष्टप्तेन—सुद्रुतेन सुवर्णेन निर्मितां हिरण्मयीं मालामिति संबन्धः। अपि च ते स्थगु लेपयिष्यामि—जात्येन, चन्दनेनेति शेषः ॥ ४८ ॥

मुखे च तिलकं चित्रं जातरूपमयं शुभम् ॥ ४९ ॥
कारयिष्यामि ते कुब्जे! शुभान्याभरणानि च।
परिधाय शुभे वस्त्रे देवतेव चरिष्यसि ॥ ५० ॥

---

* स्थगु-उरोनिस्सृतोन्नतविकृतावयवविशेषः—गो. उरसः पृष्ठभागे निस्सृतेत्यर्थः।
† स्वर्णखचितं करोमीति लोकोक्त्या कथ्यते।

चन्द्रमाह्वयमानेन मुखेनाप्रतिमानना ।
*गमिष्यसि गतिं मुख्यां †[1]गर्वयन्ती [2]द्विषज्जने ॥ ५१ ॥

आह्वयमानेनेति । 'स्पर्धायामाङः' इति शानच् । द्विषज्जनविषये मुख्यां गतिं—श्रेष्ठ्यगतिमिति यावत् । गर्वयन्ती । मामकविशेषपरिग्रहजं स्थाने पातितं गर्वं कुर्वन्ती—गर्वशब्दात् तत्करोतीति ण्यन्तात् शत्रादि ॥ ५१ ॥

तवापि कुब्जाः कुब्जायाः सर्वाभरणभूषिताः ।
पादौ परिचरिष्यन्ति यथैव त्वं सदा मम ॥ ५२ ॥

कुब्जायास्तवापि कुब्जाः—दास्य इति यावत् ॥ ५२ ॥

इति प्रशस्यमाना सा कैकेयीमिदमब्रवीत् ।
शयानां शयने शुभ्रे वेद्यामग्निशिखामिव ॥ ५३ ॥

वेद्यां—उत्तरवेद्याम् ॥ ५३ ॥

गतोदके सेतुबन्धो न कल्याणि! विधीयते ।
उत्तिष्ठ कुरु कल्याणि! राजानमनुदर्शय ॥ ५४ ॥

एवं वृथाजल्पैः कालात्ययो मास्त्विति त्वरयति—गतेत्यादिना । अभिषेके श्वो निर्वृत्ते पश्चाद्वरग्रहादिरभिमतातिरिक्तविषयत्वाद्व्यर्थः । यदवं, अतः—उत्तिष्ठेत्यादि । ‡अनुदर्शयेति । क्रोधागारमिति शेषः ॥ ५४ ॥

---

* गतिं—पादविन्यासविशेषं गमिष्यसि—करिष्यसि, ओदनपाकं पचतीतिवन्निर्देशः—गो. † द्विषज्जनं—मत्सपत्नीजनं प्रति गर्वयन्ती—गो.

‡ "राजानमनुदर्शय । क्रोधागारे । आत्मानमिति शेषः" ति. "राजानमनुदर्शय । क्रोधागारमिति शेषः । यद्वा—अनुदर्शय प्रतीक्षस्वेत्यर्थः" गो.

[1] गर्हयन्ती—ङ. [2] द्विषज्जनम्—ङ.

तथा प्रोत्साहिता देवी गत्वा मन्थरया सह ।
क्रोधागारं विशालाक्षी सौभाग्यमदगर्विता ॥ ५५ ॥

अनेकशतसाहस्रं मुक्ताहारं वराङ्गना ।
अवमुच्य वरार्हाणि शुभान्याभरणानि च ॥ ५६ ॥

ततो हेमोपमा तत्र कुब्जावाक्यवशं गता ।
संविश्य भूमौ कैकेयी मन्थरामिदमब्रवीत् ॥ ५७ ॥

अनेकशतसाहस्रं—बहुमूल्यमिति यावत् । "शतमानविंशतिक—" इत्यादिना क्रीतार्थे अण् । "परिमाणान्तस्यासंज्ञाशाणयोः" इत्युत्तरपदवृद्धिः । *हेमोपमा—अकल्मषस्वर्णवर्णा ॥५७॥

इह वा मां मृतां कुब्जे ! † नृपायावेदयिष्यसि ।
वनं तु राघवे प्राप्ते भरतः प्राप्स्यति क्षितिम् ॥ ५८ ॥

कैकेयी स्वकार्यसाधनदार्ढ्यं चाञ्चल्यशङ्काभीतायै मन्थरायै प्रकटयति—इह वेत्यादिना । इह-क्रोधागार एव मदभीष्टासिद्धौ मदुपेक्षकाय नृपाय मां मृतामावेदयिष्यसि । यदि मे सान्त्वनं; तदा राघवे वनं प्राप्ते भरतः क्षितिं प्राप्स्यति । न तु पक्षान्तरमित्यर्थः ॥ ५८ ॥

न सुवर्णेन मे ह्यर्थो न रत्नैर्न च भोजनैः ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ ५९ ॥

---

* न केवलं शरीरसौन्दर्यमात्रेण तस्याः सुवर्णसादृश्यं, किन्तु सर्वांशेऽपि । विमलं हि तदीयं मनो यत्किमपि संस्थानमापादयितुं शक्यं सुवर्णवदेवेति भावः । † राज्ञः स्वतोऽनागमने तदानयनार्थं वा एवमुक्तिः । ६३ श्लोकस्वारस्यात् ।

अथो पुनस्तां महिषीं महीक्षितः
वचोभिरत्यर्थमहापराक्रमैः ।
उवाच कुब्जा भरतस्य मातरं
हितं वचो * राममुपेत्य चाहितम् ॥ ६० ॥

एवं कैकेय्या निश्चयमेव स्थिरीकरोति कुब्जा—अथो पुनरित्यादि ॥ ६० ॥

प्रपत्स्यते राज्यमिदं हि राघवः
यदि ध्रुवं त्वं ससुता च तप्यसे ।
अतो हि कल्याणि ! यतस्व तत्तथा
यथा सुतस्ते भरतोऽभिषेक्ष्यते ॥ ६१ ॥

† तथातिविद्धा महिषी तु कुब्जया
समाहता वागिषुभिर्मुहुर्मुहुः ।
निधाय हस्तौ हृदयेऽतिविस्मिता
शशंस कुब्जां कुपिता पुनः पुनः ॥ ६२ ॥

अतिविद्धा—कृतवेधा । अतिविस्मितेति । अतिसक्तो राजा कथं मदनिष्टं करोतीति विस्मयः ॥ ६२ ॥

‡ यमस्य वा मां विषयं गतामितो
निशाम्य कुब्जे ! प्रतिवेदयिष्यसि ।

---

* राममुद्दिश्येत्यर्थः–गो. † 'अतिविद्धा–अतिदुःखिता' गो. (समाहता इति पृथक् सत्वादिति आशयः) निधाय हस्तौ हृदये इति स्त्रीस्वभावोक्तिः । ‡ यमस्य विषयं—देशं गतामित्यन्वयः ।

वनं गते वा सुचिराय राघवे
समृद्धकामो भरतो भविष्यति ॥ ६३ ॥

निशाम्य—दृष्ट्वा ॥ ६३ ॥

अहं हि नैवास्तरणानि न स्रजो
न चन्दनं नाञ्जनपानभोजनम् ।
न किञ्चिदिच्छामि न चेह जीवितं
न चेदितो गच्छति राघवो वनम् ॥ ६४ ॥
अथैतदुक्त्वा वचनं सुदारुणं
निधाय सर्वाभरणानि भामिनी ।
असंवृतामास्तरणेन मेदिनीं
तदाऽधिशिश्ये पतितेव किन्नरी ॥ ६५ ॥

मेदिनीमधिशिश्य इति । "अधिशीङ्" इत्यादिना कर्मत्वम् ॥

उदीर्णसंरंभतमोवृतानना
तथावमुक्तोत्तममाल्यभूषणा ।
नरेन्द्रपत्नी विमना बभूव सा
तमोवृता द्यौरिव मग्नतारका ॥ ६६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे नवमः सर्गः

———

उदीर्णः—उत्कटः ; संरंभः—कोप एव तमः ; तेन वृतं—व्याप्तं आननं यस्याः सा तथा । तर्ष (६६) मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे नवमः सर्गः

———

## दशमः सर्गः

### [कैकेय्यनुनयः]

**विदर्शिता यदा देवी कुब्जया पापया भृशम् ।**
**तदा शेते स्म सा भूमौ *दिग्धविद्धेव किन्नरी ॥ १ ॥**

अथ उक्तक्रोधानुवादपूर्वं राज्ञः कैकेयीदर्शनतदनुनयप्रतिपादनम्—विदर्शितेत्यादि । विपरीतं बोधिता । दिग्धा—विषलिप्ता, विद्धा—कृतशस्त्रादिवेधा, दिग्धा चासौ विद्धा च दिग्धविद्धा, मयूरव्यंसकादित्वात्समासः । किन्नरी—कामभोगप्रधानदिव्यरूपदेवजातिविशेषः ॥

**निश्चित्य मनसा कृत्यं सा सम्यगिति भामिनी ।**
**मन्थरायै शनैः सर्वमाचचक्षे विचक्षणा ॥ २ ॥**

निश्चित्येत्यादि । सा मन्थरोक्तं कृत्यं सम्यगिति निश्चित्य मन्थरायै वचसा च "त्वदुक्तमेव हितम्" इत्याचचक्ष इत्यर्थः ॥ २ ॥

**सा †दीना निश्चयं कृत्वा मन्थरावाक्यमोहिता ।**
**नागकन्येव निश्वस्य दीर्घमुष्णं च भामिनी ॥ ३ ॥**
**‡मुहूर्तं चिन्तयामास मार्गमात्मसुखावहम् ।**

अस्यैव प्रपञ्चनं—सा दीनेत्यादि । मार्गं—मन्थरोक्तमार्गं आत्मसुखावहमिति मुहूर्तं मनसा चिन्तयामास । वाचा च तदोवाच । मन्थराया इति शेषः ॥ ३ ॥

---

* दिग्धविद्धा—विषदिग्धबाणविद्धा—ति. **गो.** 'विषाक्ते दिग्धलिप्तकौ' इत्यमरः । कतककारोऽपि अत्रैव २६ श्लोके एवमेव व्याचख्यौ । † दीना—दैववञ्चिता स्वानर्थमपि न जानातीति । ‡ 'सा दीना निश्चयं कृत्वा' इत्यारभ्य एतत्पर्यन्तं पादत्रयं "निश्चित्य मनसा कृत्यं ........ आचचक्षे विचक्षणा" ॥२॥ इति श्लोकात्पूर्वं निवेशनीयम् । तच्छ्लोक "आचचक्षे" इति स्थितेः । उत्तरश्लोके 'निशम्य' इति स्थितेश्च—**गो.**

सा सुहृच्चार्थकामा च तं निशम्य सुनिश्चयम् ॥ ४ ॥
बभूव परमप्रीता *सिद्धिं प्राप्येव मन्थरा ।

यदेवमुवाच, अतः सा तन्निशम्य परमप्रीता बभूव । सिद्धिः—रस[1]साधनादिसिद्धिः ॥ ४ ॥

अथ साऽमर्षिता देवी सम्यक्कृत्वा विनिश्चयम् ॥ ५ ॥
संविवेशाबला भूमौ निवेश्य भ्रुकुटीं मुखे ।

भ्रुकुटी—क्रोधजो मुखविकारविशेषः ॥ ५ ॥

ततश्चित्राणि माल्यानि दिव्यान्याभरणानि च ॥ ६ ॥
अपविद्धानि कैकेय्या तानि भूमिं प्रपेदिरे ।
तया तान्यपविद्धानि माल्यान्याभरणानि च ॥ ७ ॥
अशोभयन्त वसुधां नक्षत्राणि यथा नभः ।

कैकेय्या अपविद्धानि—उत्सृष्टानि, यान्यपविद्धानि तानीति योजना ॥ ७ ॥

क्रोधागारे निपतिता सा बभौ मलिनाम्बरा ॥ ८ ॥
एकवेणीं दृढं बध्वा गतसत्त्वेव किन्नरी ।

गतसत्त्वा—क्षीणबला ॥ ८ ॥

आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ॥ ९ ।
उपस्थानमनुज्ञाप्य प्रविवेश निवेशनम् ।

* सिद्धिं—निश्चयफलम्—गो.

[1] रसायनादिसिद्धिः—क.

एवं राज्याभिषेकदिवसात् पूर्वरात्रिप्रदोषवर्तिकैकेयीवृत्तान्तमुपवर्ण्य तत्रत्यं राजवृत्तान्तं वर्णयितुमुपक्रमते—आज्ञाप्येत्यादिना। अभिषेचनमिति। श्वोऽभिषेचनं यदाज्ञापनीयं—तत्सर्वमिति शेषः। उपस्थानमिति। [1]कृतप्रस्थापनमन्त्रिपुरोहितादेः [2]तत्कालं स्वस्वगृहं प्रत्यु*पस्थापनं गमनं—अनुज्ञाप्य स्वनिवेशनं प्रविवेश ॥ ९ ॥

**अद्य रामाभिषेको वै †प्रसिद्ध इति जज्ञिवान् ॥ १० ॥**
**[3]प्रियार्हां प्रियमाख्यातुं विवेशान्तःपुरं वशी।**

अद्येति—श्वः सन्निहितो रामाभिषेककालः परामृश्यते। अद्य एव रामाभिषेकः प्रसिद्धः—सर्वथा निश्चित इति जज्ञिवान्। अत ‡एव निश्चितप्रियार्हां—कैकेयीं प्रति तत्प्रियमाख्यातुं अन्तःपुरं प्रविवेश। §वशीति स्वस्त्रीव्यतिरिक्तविषये ॥ १० ॥

**स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ॥ ११ ॥**
**||पाण्डराभ्रमिवा[4]काशं राहुमुक्तो निशाकरः।**

---

* उपस्थानं—आस्थानं—सद इत्यर्थः—गो. ति. यद्वा पञ्चमसर्गे 'वसिष्ठेनाभ्यनुज्ञातः' इत्युक्तत्वात् वसिष्ठ एवोपस्थामशब्देनोच्यते—गो. अथवा वसिष्ठात् स्वोपस्थानमनुज्ञाप्य—स्वप्रस्थानाय वसिष्ठानुमतिं प्राप्येति यावत्। † प्रसिद्ध इति। अद्यैव रामाभिषेकः प्रसिद्धः; इतः पूर्वं कैकेय्याः श्रोतुमवकाशो नास्तीति तस्या आख्यातुं जगाम—गो. ‡ निश्चितस्य रामाभिषेकस्य कथनाय अर्हामित्यर्थः। § वशीति। वशः—इच्छा कामः—वशकान्तौ—भावे अप्—'वशिरण्योरुपसंख्यानं', स अस्यास्तीति वशी—कामी; 'सकामबलसंयुक्तः' इत्युत्तरानुसारात्। || 'पाण्डराभ्रमिवाकाशं राहुयुक्तं निशाकरः' इत्येव बहुषु पाठः। 'अत्र गृहस्य रुष्टकैकेयीयुक्ततया सुधाधवलतया च राहुयुक्तपाण्डराभ्राकाशसादृश्यं'—ति. 'स्वबाधककैकेयीयुक्तत्वाद्राहुयुक्तमित्युक्तं'—गो. राहुश्चन्द्रमसमिव कैकेयी राजानं ग्रसिष्यतीति सूच्यते॥

[1] कृताज्ञापनमन्त्रि—क. [2] तावत्कालं—ग. [3] प्रियायै—ङ. [4] काशे—ङ

आ समन्तात् काशमानं पाण्डराभ्रं-श्वेताभ्रमिव, राहुमुक्तो निशाकर इव च भासमानम् । अभ्यां सुधाधावल्याह्लादकत्वं ख्यापितम् ॥ ११ ॥

*शुकबर्हिणसङ्घुष्टं क्रौञ्चहंसरुतायुतम् ॥ १२ ॥
वादित्ररवसंघुष्टं कुब्जा[1]वामनकायुतम् ।

आयुतं-अत्यन्तसम्पृक्तम् । कुब्जाभिः वामनकैश्च आयुतं—तथा ॥ १२ ॥

लतागृहैश्चित्रगृहैः चंपकाशोकशोभितैः ॥ १३ ॥
दान्तराजतसौवर्णवेदिकाभिः समायुतम् ।
† नित्यपुष्पफलैर्वृक्षैर्वापीभिश्चोपशोभितम् ॥ १४ ॥
दान्तराजतसौवर्णैः संवृतं परमासनैः ।
विविधैरन्नपानैश्च भक्ष्यैश्च विविधैरपि ॥ १५ ॥
[2]उपपन्नं महार्हैश्च भूषणैस्त्रिदिवोपमम् ।

दन्तादिविकाराः वेदिकास्तथा । नित्यपुष्पादिमत्वं वृक्षाणां-दशरथस्य देवसाह्यकृन्महाराजत्वात्, स्वर्गादेवानीतदिव्यवृक्षत्वात् तदपि संभाव्यं, कृष्णपारिजातानयनवत् ॥ १५ ॥

---

*अथ दशरथस्य कैकेयीवचनकर्तव्यत्वाय रामाभिषेकविघ्नमियं करिष्यतीति शुद्ध्यनुत्पादाय च रतिभावोद्दीपनान्यन्तःपुरे दर्शयति—शुकेत्यादि । संघुष्टं—अनुनादितम्—**गो.** † नित्यपुष्पफलैरिति—वृक्षाणां नित्यपुष्पफलत्वं च देवराज-साहाय्यकरणेन तत्प्रसादात्—**ति.** नित्यपुष्पफलैरिति । दोहदविशेषादिति ज्ञेयम्—**गो.**

[1] वामनिका—ङ.  [2] एतदनन्तरं 'विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव' इत्यधिकं—ङ.

तत्प्रविश्य महाराजः स्वमन्तःपुरमृद्धिमत् ॥ १६ ॥
न ददर्श प्रियां भार्यां कैकेयीं शयनोत्तमे ।
*स कामबलसंयुक्तो रत्यर्थं मनुजाधिपः ॥ १७ ॥
अपश्यन् दयितां भार्यां पप्रच्छ विषसाद च ।

कामबलं—काममोहबलं तत्संयुक्तस्तथा। अत एव रत्यर्थमन्विष्य दयितां अपश्यन् पप्रच्छ, विषसाद चेति ॥ १७ ॥

†न हि तस्य पुरा देवी तां वेलामत्यवर्तत ॥ १८ ॥
न च राजा गृहं शून्यं प्रविवेश कदाचन ।

तां वेलामिति। कामवशात् स्वशयनागमनवेलामिति यावत् ॥

ततो गृहगतो राजा कैकेयीं पर्यपृच्छत ॥ १९ ॥
यथापुरमविज्ञाय स्वार्थलिप्सुम‡पण्डिताम् ।

अपण्डितां कैकेयीं स्वार्थलिप्सुमविज्ञाय, यथापुरं—अनतिक्रमेऽव्ययम्, "अव्ययीभावश्च" इति नपुंसकत्वाद्ध्रस्वत्वम्, यथापूर्वं—यथा अदर्शनकाले पृच्छति तथा प्रतीहारीं पृच्छति स्म ॥

प्रतीहारी त्वथोवाच संत्रस्ता सुकृताञ्जलिः ॥ २० ॥
देव! देवी भृशं क्रुद्धा क्रोधागारमभिद्रुता ।
प्रतीहार्या वचः श्रुत्वा राजा परमदुर्मनाः ॥ २१ ॥
विषसाद पुनर्भूयो §लुलितव्याकुलेन्द्रियः ।

---

* उद्दीपनदर्शनादुचितकालत्वाच्च कामबलसंयुक्तः–गो. † विषादहेतुमाह–न हीति। ‡ अपण्डितां कार्याकार्यविवेकरहितां–ति. स्वव्यापारस्य कीदृशं फलं स्यादिति विवेकशून्यामिति यावत् । § लुलितानि-घूर्णितानि, व्याकुलानि-स्वविषयग्रहणासमर्थानि-गो.

भूयः—अभ्यधिकं विषसादेति । अदर्शनमात्रेण प्रथमं प्राप्तविषादस्य क्रोधागारप्रवेशश्रवणाद्विषादाधिक्यम् । लुलितत्वं चक्षुरादेरिन्द्रियस्य । व्याकुलितत्वमान्तरेन्द्रियस्य । इष्टाया अदर्शनजो विषादश्चक्षुरादेः । चित्तस्य तु, किन्निमित्तजः क्रोध इति [1]शोकाकुलितत्वम् ॥ २१ ॥

तत्र तां पतितां भूमौ शयानामतथोचिताम् ॥ २२ ॥
प्रतप्त इव दुःखेन सोऽपश्यज्जगतीपतिः ।

अतथोचिताम्—तथाशयनानुचितामिति यावत् ॥ २२ ॥

*स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीम् ॥
अपापः पापसङ्कल्पां ददर्श धरणीतले ।
लतामिव विनिष्कृत्तां पतितां देवतामिव ॥ २४ ॥
किन्नरीमिव निर्धूतां च्युतामप्सरसं यथा ।

विनिष्कृत्तां—छिन्नाम्, सुडार्षः । निर्धूताम्—धूञ् कम्पने, पतितामिति यावत् ॥ २४ ॥

[2]मायामिव परिभ्रष्टां हरिणीमिव संयताम् ॥ २५ ॥
करेणुमिव दिग्धेन विद्धां †मृगयुना वने ।
‡महागज इवारण्ये स्नेहात्[3] परिममर्श ताम् ॥ २६ ॥

संयताम्—बद्धाम् । दिग्धेन—विषलिप्तबाणेन ॥ २६ ॥

---

* रामाभिषेकसंरंभे सपत्नीमातुः क्रोधरतन्निमित्त एवेत्यपि कुतो राजा न ज्ञातवानित्यत्राह—स वृद्ध इत्यादि । अकुटिलत्वात् व्यामोहाच्च न ज्ञातवानिति भावः—गो.
† मृगयुना—व्याधेन—गो. ‡ महागज इति । करेणुमित्यनुषज्यते ।

[1] शंकाकुलितत्वम्—ग. [2] वामीमिव—ङ. [3] परमदुःखिताम्—ङ.

[1]परिमृश्य च पाणिभ्यां अभिसंत्रस्तचेतनः ।
कामी कमलपत्राक्षीमुवाच वनितामिदम् ॥ २७ ॥

किं वदिष्यति ? किं करिष्यति ? इत्यभिसंत्रस्ता चेतना—धीर्यस्य स तथा ॥ २७ ॥

न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् ।
देवि ! केनाभि[2]युक्ताऽसि केन वाऽस्यवमानिता ॥ २८ ॥
यदिदं मम दुःखाय शेषे कल्याणि ! पांसुषु ।

क्रोधं—क्रोधकारणम् । आत्मनि—मयि । अभियुक्ता—कृताभियोगा । *अभियोगः—पराभवः । अवमानं—निन्दा मम दुःखसंपादनाय शेष इति यदिदमस्ति, अतः केनाभियुक्तेत्यादि योजना ॥ २८ ॥

भूमौ शेषे किमर्थं त्वं मयि[3] †कल्याणचेतसि ॥ २९ ॥
भूतोपहतचित्तेव मम चित्तप्रमाथिनी ।

कल्याणचेतसीति । 'अनपकारिणि' इति यावत् । भूतोपहतचित्तेव—ग्रहाभिविष्टेव ॥ २९ ॥

सन्ति मे कुशला वैद्यास्त्वभितुष्टाश्च सर्वशः ॥ ३० ॥
सुखितां त्वां करिष्यन्ति व्याधिमाचक्ष्व भामिनि !

---

* अभिशप्ता—परुषिता—गो. 'अभियोगः-कलहाह्वानं' इति सुधा । अभियुक्ता-कलहाय आहूता हठादित्यर्थः ॥ † 'मयि कल्याणचेतसि सति' इति सतिसप्तमी । 'मयि निरपराधे सति किमर्थं मम दुःखाय पांसुषु शेषे' इत्यर्थः ॥

[1] परिमृज्य—ङ. [2] शप्ताऽसि—ङ. [3] कल्याणि ! जीवति—ङ.

कुशलाः—सर्वव्याधिनिवारणकुशलाः । अभितुष्टाः—मदीयसत्कारैरिति शेषः । सर्वशः—सर्वप्रकारेण । व्याधिमाचक्ष्वेति । व्याधिप्रयुक्तं चेच्छयनमिति शेषः ॥ ३० ॥

*कस्य वा ते प्रियं कार्यं केन वा विप्रियं कृतम् ॥ ३१ ॥

शयनहेतुपक्षान्तरोपन्यासः—कस्य वेत्यादि ॥ ३१ ॥

कः प्रियं लभतामद्य को वा सुमहदप्रियम् ।
†मा रोदीर्मा च कार्षीस्त्वं देवि! संपरिशोषणम् ॥ ३२ ॥

पक्षद्वयनिमित्तोऽपि क्रोधो मास्त्वित्याह—कः प्रियमित्यादि । त्वत्प्रियो दरिद्र इति शेषः । तथा सुमहदप्रियं लभतां—त्वद्विप्रियकारीति शेषः । परिशोषणं—कायक्लेशम् ॥ ३२ ॥

अवध्यो वध्यतां को वा वध्यः को वा विमुच्यताम् ।
दरिद्रः को भवेदाढ्यो द्रव्यवान् वाऽप्यकिञ्चनः ॥ ३३ ॥
अहं चैव मदीयाश्च सर्वे तव वशानुगाः ।
न ते किञ्चिदभिप्रायं व्याहन्तुमहमुत्सहे ॥ ३४ ॥
आत्मनो जीवितेनापि ब्रूहि यन्मनसेच्छसि ।

आत्मनो जीवितेनापि ‡ निर्जीवनेनापि हेतुना त्वत्प्रियं व्याहन्तुं नोत्सहे ॥ ३४ ॥

---

* क्रोधपक्षे परिहारमाह—कस्य वेति । कस्येति तृतीयार्थे षष्ठी । केन वा तेऽप्रियं कृतमित्यर्थः । प्रियाप्रियकारिणोः फलमाह—कः प्रियमिति—गो. † मा रौत्सीः—आत्मनोऽभिप्रायं रुद्धं-गुप्तं मा कार्षीः—ति. ‡ इदं पदं क. पुस्तके नास्ति.

*बलमात्मनि जानन्ती न मां शङ्कितुमर्हसि ॥ ३५ ॥
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ।

आत्मनि—मयि बलं—दुष्करस्यापि सम्पादनसामर्थ्यं शङ्कितुं—न सिध्यति? वा? इति शङ्कां कर्तुम् ॥ ३५ ॥

†यावदावर्तते चक्रं तावती मे वसुन्धरा ॥ ३६ ॥
[1]प्राचीनाः सिन्धुसौवीराः सौराष्ट्रा दाक्षिणापथाः ।

तदेव सामर्थ्यं दर्शयति—यावदावर्तत इति । चक्रं—भूचक्रम् ॥ ३६ ॥

वङ्गाङ्गमागधा मत्स्याः समृद्धाः काशिकोसलाः ॥ ३७ ॥
तत्र जातं बहु द्रव्यं धनधान्यमजाविकम् ।
ततो वृणीष्व कैकेयि! यद्यत्त्वं मनसेच्छसि ॥ ३८ ॥
किमायासेन ते भीरु! उत्तिष्ठोत्तिष्ठ शोभने ।
तत्त्वं मे ब्रूहि कैकेयि! यतस्ते भयमागतम् ॥ ३९ ॥
तत्ते व्यपनयिष्यामि नीहारमिव रश्मिवान् ।
तथोक्ता सा समाश्वस्ता वक्तुकामा तदप्रियम् ॥ ४० ॥
परिपीडयितुं भूयो भर्तारमुपचक्रमे ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे दशमः सर्गः

———

* बलमिति । आत्मनि—स्वस्मिन्, बलं-मत्प्रेमरूपं जानन्ती 'अयं मदुक्तं करिष्यति न वा?' इति मां शंकितुं नार्हसि ॥ ति. आत्मनि बलं—त्वयि विद्यमानं वाल्लभ्यबलं-गो.
† चक्रं-सूर्यस्य रथचक्रं—आज्ञा वा । गो. चक्रं-सूर्यमण्डलं, आवर्तते-प्रकाशयति—ति.
[1] 'द्राविडाः सिन्धुसौवीराः' इति पाठान्तरम् । ङ. च.

समाश्वस्ता—संप्रापितस्वार्थसिद्धिविस्रंभा । भूयः पीडयितु-मिति । निजभूशयनादिना पीडितमेव पूर्वम् । नव (४०) मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे दशमः सर्गः

---

## एकादशः सर्गः

[वरद्वयनिर्बन्धः]

**तं मन्मथशरैर्विद्धं कामवेगवशानुगम् ।**
**उवाच पृथिवीपालं कैकेयी दारुणं वचः ॥ १ ॥**

**नास्मि विप्रकृता देव ! केनचि[1]न्नावमानिता ।**
**अभिप्रायस्तु मे कश्चित्तमिच्छामि त्वया कृतम् ॥ २ ॥**

अथ "व्यवस्थाप्य महाराजं त्वामिमं वृणुया वरं" इति मन्थरोप-देशानुष्ठानम् । * विप्रकृता—अभिभूता । मे कश्चिदभिप्रायः—अभिप्रार्थनीयोऽस्ति त्वदेकसंपाद्यः; तं त्वया कृतं—संपादितं कर्तुं, इच्छामि ॥ २ ॥

**प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तुमिच्छसि ।**
**अथ तद्व्याहरिष्यामि यदभिप्रार्थितं मया ॥ ३ ॥**

यदि त्वं तं कर्तुमिच्छसि, तदा प्रतिज्ञां—अवश्यकर्तव्य-विषयिणीं प्रतिजानीष्व यदि ; संप्रश्ने लोट्, अथ—अनन्तरं यन्मयाभि-प्रार्थितं तद्व्याहरिष्यामि ॥ ३ ॥

---

* विप्रकृता—रोगग्रस्ता–गो. विप्रकृता—अपकृता ॥

[1] न्न विमानिता–ङ.

तामुवाच महाराजः कैकेयीमीषदुत्स्मितः ।
कामी हस्तेन संगृह्य मूर्धजेषु भुवि स्थिताम् ॥ ४ ॥

उत्स्मित इति । अभिप्रेतकरणमीषत्कृत्यमित्याशयेनोत्स्मयः । मूर्धजेषु संगृह्योवाचेति । शिरोऽङ्के कृत्वोवाचेति यावत् ॥ ४ ॥

*अवलिप्ते ! न जानासि त्वत्तः प्रियतरो मम ।
मनुजो मनुजव्याघ्राद्रामादन्यो न विद्यते ॥ ५ ॥

अन्यो मनुजो न विद्यत इति न जानासि ? इति योजना ॥ ५ ॥

तेनाजय्येन मुख्येन राघवेण महात्मना ।
शपे ते जीवनार्हेण ब्रूहि यन्मनसेच्छसि ॥ ६ ॥

अजय्येनेति । अशक्यजयेनेत्यर्थः । 'क्षय्यजय्यौ शक्यार्थे' इति निपातः । ते–तुभ्यम् । शप इति । †'शप उपालंभे' इत्यात्मनेपदम् । ‡जीवनार्हेण–मम जीवनसाधनभूतेन । एतेन परमप्रियत्वं प्रकाशितम् ॥ ६ ॥

यं मुहूर्तमपश्यंस्तु न जीवेयमहं ध्रुवम् ।
तेन रामेण कैकेयि ! शपे ते वचनक्रियाम् ॥ ७ ॥

तदेव परमप्रियत्वं दर्शयति—यमित्यादि ॥ ७ ॥

---

*'स्त्रीणां मध्ये त्वत्तः, पुंसां मध्ये रामादन्यः' इति योज्यम् । यद्वा–त्वत्तोऽधिकः (रामादन्यः) प्रियतरो नेत्यर्थः । रामेऽस्याः द्वेषमजानत इयमुक्तिः । राम एव त्वत्तोऽधिकः प्रिय इत्याशयः–ति. अवलिप्ते—सौभाग्यगर्विते स्त्रीणां मध्ये त्वत्तः प्रियतमा नास्ति, रामादन्यो मनुजः प्रियतमो न विद्यत इति न जानासि ?–गो. †'शप आक्रोशे' इति धातोः स्वरितेतः कर्तृगामिन्येव फले आत्मनेपदं प्राप्तम् । अकर्तृगेऽपि फले अनेन वार्तिकेन आत्मनेपदं विहितम् । ‡जीवनार्हेण—जीवनादपि पूज्येन–गो.

*आत्मना वाऽऽत्मजैश्चान्यैः वृणे यं मनुजर्षभम् ।
तेन रामेण कैकेयि ! शपे ते वचनक्रियाम् ॥ ८ ॥

आत्मना—आत्मसुकृतेन आत्मजैः—तत्सुकृतपरिपाकैः अन्यैः—सर्वप्राणिसुकृतैश्च यं मनुजर्षभं अभिषेकेन भूष्णुं वृणे, तेनेत्यादि । वचनक्रियां—वचनानुष्ठानम् ॥ ८ ॥

भद्रे ! हृदयमप्येतदनुमृश्योद्धरस्व [1] मे ।
एतत्समीक्ष्य कैकेयि ! ब्रूहि यत्साधु मन्यसे ॥ ९ ॥

हे भद्रे ! यदेतन्मे हृदयं—अभिप्रायः, सर्वथा त्वद्वचनक्रियाविषयकं तत् अनुमृश्य—विचार्य, त्वदभीष्टकथनेन मामुद्धरस्व—अस्माद्दुःखादुद्धर । अपि च †एतन्मदुद्धरणमपि कर्तव्यं ? न वा ? इति च समीक्ष्य—विचार्य, अतः परं यत्साधु मन्यसे तत् ब्रूहि । न हि वैधव्ये ते किञ्चित् सुखमस्ति । अतो मद्दुःखनिवृत्तये त्वदिष्टं ब्रूहि ॥

बलमात्मनि पश्यन्ती न मां शङ्कितुमर्हसि ।
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥ १० ॥

नात्र सिद्धिशंका कर्तव्येत्याह—बलमित्यादि ॥ १० ॥

---

* आत्मना—स्वेन, अन्यैरात्मजैः पुत्रैरपि यं वृणे, असमं जाने । सर्वतोऽधिकं प्रियं जान इति यावत्–ति. आत्मना-स्वदेहेन । आत्मजैः भरतादिभिः, अन्यैश्च प्रियबंधुभिश्च, मूल्यभूतैरेतैर्यं रामं वृणे । सर्वान् परित्यज्यापि राममेव परिगृह्णामीति यावत् । गो. वस्तुतस्तु —वधार्ह इतिवत् जीवनाय–जीवनदानायापि—अर्हः—योग्यः इति जीवनार्ह इति स्यात् । न तावन्मात्रं, किन्तु सर्वस्वदानायाप्यर्ह इत्याह—आत्मनेत्यादीति । † एतत्–वाङ्मनसयोरैकरूप्यम्–गो. एतत्–रामस्य मत्प्रियतमत्वं समीक्ष्य यत्साधु मन्यसे तद्ब्रूहि- ति. अयमाशयः—'भद्रे-त्वयि रामे च विद्यमानं मत्प्रीत्यतिशयं विचिन्त्य मम दुःखमुद्धर' इति प्रार्थितापि कैकेयी न स्वस्वभावं मुमोचेति । तदेतदुच्यते—सा तदर्थमना इत्यादिना । इति ॥

[1] माम्-ङ.

**सा तदर्थमना देवी तदभिप्रायमागतम् ।**
**निर्माध्यस्थ्यात्प्रहर्षाच्च बभाषे [1]दुर्वचं वचः ॥ ११ ॥**

तदर्थमनाः—तस्मिन्–निजाभिमतेऽर्थे मनः–यस्याः सा तथा, तदभिप्रायं–स्वाभिमतार्थसंपादनाभिप्रायं आगतं--प्राप्तं ज्ञात्वा, दुर्वचमपि वचः निर्माध्यस्थ्यात्–स्वपुत्रपक्षपातात् सर्वथा राज्ञः स्ववशत्वदर्शनजात् हर्षाच्च बभाषे ॥ ११ ॥

**तेन वाक्येन संहृष्टा तमभिप्राय[2]मात्मनः ।**
**व्याजहार महाघोरं अभ्यागतमिवान्तकम् ॥ १२ ॥**

तेन वाक्येनेति । त्रिवाचा रामशपथपूर्वकस्ववचनक्रियाप्रतिज्ञा-वाक्येन संहृष्टा तं–उत्तररूपमात्मनोऽभिप्रायं ; अभ्यागतमन्तकमिव घोरं—राज्ञः प्राणहरं व्याजहार–व्याहर्तुं निश्चितवतीति यावत् ॥

**यथाक्रमेण शपसि वरं मम ददासि च ।**
**तच्छृण्वन्तु त्रयस्त्रिंशद्देवाः [3]साग्निपुरोगमाः ॥ १३ ॥**

अथ राजप्रतिज्ञायाः, तद्दुष्करघोरार्थविषयतः विपरिवृत्तिशंकया तत्प्रतिज्ञामशेषसाक्षिकरणेन स्थिरीकरोति—यथाक्रमेणेत्यादि । अति-प्रियपुत्रसुकृतादिपरिग्रहक्रमेण शपसि ; तत्पूर्वकं वरं मे ददासि च–अभीष्टं दातुं निश्चितवानसि ; नात्र संदेहः किल । तदेतत्त्वन्निश्चयं देवादयः शृण्वन्तु ॥ १३ ॥

**चन्द्रादित्यौ नभश्चैव ग्रहा रात्र्यहनी दिशः ।**
**जगच्च पृथिवी चेयं सगन्धर्वा सराक्षसा ॥ १४ ॥**

---

[1] दुस्सहं–ङ. [2] मागतं–ङ. [3] सेन्द्र–ङ.

जगत्–परोक्षस्वर्गादिभुवनं, 'विष्टपं भुवनं जगत्', पृथिवी–प्रत्यक्षभुवनदेवता ॥ १४ ॥

**निशाचराणि भूतानि गृहेषु गृहदेवताः ।**
**यानि चान्यानि भूतानि जानीयुर्भाषितं तव ॥ १५ ॥**
**सत्यसन्धो महातेजाः धर्मज्ञः सुसमाहितः ।**
**वरं मम ददात्येषः तन्मे शृण्वन्तु देवताः ॥ १६ ॥**
**इति देवी महेष्वासं परिगृह्याभिशस्य च ।**
**ततः परमुवाचेदं वरदं काममोहितम् ॥ १७ ॥**

इति–उक्तप्रकारेण देवी, महेष्वासं—राजानं, परिगृह्य–परिवर्तनात् स्थिरीकृत्य; अभिशस्य–'सत्यसंन्धः' इत्यादिना स्ववचनकृतिस्थैर्यायैवाभिशस्य च ॥ १७ ॥

**स्मर राजन्! पुरावृत्तं तस्मिन् [1]दैवासुरे रणे ।**
**तत्र [2]चाच्यावयच्छत्रुस्तव जीवितमन्तरा ॥ १८ ॥**

परमुवाचेति किमुवाचेत्यत्राह—स्मरेत्यादि । तत्र च रणे–रात्रियुद्धे, शत्रुः–शंबरः तव *जीवितमन्तरा–प्राणं विना त्वां †अच्यावयत्–प्रच्युतवीर्यमकरोत् ॥ १८ ॥

**तत्र चापि मया देव यत्त्वं समभिरक्षितः ।**
**‡जाग्रत्या यतमानायाः, ततो मे प्राददा वरौ ॥ १९ ॥**

---

* अन्तरा–मध्ये तव जीवितं अच्यावयत्–अचालयत् । मूर्छां प्रापितवानित्यर्थः–**गो.**

† अडभावः आर्ष इति तिलके । गोविन्दराजीये तु 'तत्र त्वच्यावयत्' इति पाठः.

‡ 'जाग्रत्या मया यद्यतः त्वं समभिरक्षितः ततः स्वजीवनाय यतमानाया मम'–**ति.** यतमानायाः—सारथ्ये यत्नं कुर्वाणायाः–**गो.**

[1] देवासुरे–ङ. च.　[2] त्वां च्यावयत्–ङ. च.

तत्र चापि जाग्रत्याः—त्वज्जीवनाय यतमानायाः, व्यत्यया-त्पञ्चमी, मया हे देव! त्वं समभिरक्षितोऽसीति यत्—तत एव हेतोः मे—मह्यं द्वौ वरौ प्राददाः ॥ १९ ॥

**तौ तु दत्तौ वरौ देव! *निक्षेपौ मृगयाम्यहम् ।**
**तवैव पृथिवीपाल! सकाशे सत्यसङ्गर! ॥ २० ॥**

त्वया दत्तौ तौ तु मे निक्षेपभूतौ वरौ अद्य उद्धर्तुं मृगयामि—अन्वेषयामि । हे सत्यसङ्गर! ॥ २० ॥

**तत्प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् ।**
**अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ॥ २१ ॥**

धर्मेण म वरं प्रतिश्रुत्य तद्दास्यसि न चेत् तवैव सकाशे अद्यैव जीवितं प्रहास्यामि ॥ २१ ॥

**†वाङ्मात्रेण तदा राजा कैकेय्या स्ववशे कृतः ।**
**[1]‡प्रचस्कन्द विनाशाय पाशं मृग इवात्मनः ॥ २२ ॥**

वागित्यादि । प्रचस्कन्द—स्कन्दिर् गतिशोषणयोः, इह गत्यर्थः । कैकेय्या स्वसुभगत्वनिमित्तकाममोहेन स्ववशे कृतो राजा वाङ्मात्रेण—पूर्वकालीनवरदानप्रतिवचनमात्रेणैव अप्रयासतः सिद्धं पाशं—सत्य-पाशं आत्मन इह लोके नाशाय संपन्नं मृग इव प्रचस्कन्द—प्रगतवान् । अन्तर्भावितणित्वाश्रये तु—न्यायत एवं पाशं प्रापितवान् इति पाङ्क्तोऽर्थः ॥ २२ ॥

---

* तवैव सकाशे निक्षेपभूतौ–**ति. गो.** † वाङ्मात्रेण—पूर्वदत्तवरस्मारक-वचनमात्रेण स्ववशे कृतः राजा—मृगशब्दानुकारिणा लुब्धककथितेन वाङ्मात्रेण मृग इव बद्धः–**गो.** ‡ प्रचस्कन्द—धर्मपाशं गतवान् । यद्वा वागुरां प्राप्तो मृग इव शोषणं प्राप्तः–**गो.** तत्प्रतिवचनदानरूपं पाशं गतवान्–**ति.**

[1] प्रविवेश–ङ.

ततः परमुवाचेदं वरदं काममोहितम् ।
वरौ यौ मे त्वया देव! तदा दत्तौ महीपते! ॥ २३ ॥
तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः ।

तावद्यैव वक्ष्यामि — 'मे – मम दातव्यवराविमौ' इति वक्ष्यामि । तन्मे वरवरणवचः शृणु ॥ २३ ॥

योऽभिषेकसमारंभो राघवस्योपकल्पितः ॥ २४ ॥
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम् ।

किन्तदित्यतः—योऽभिषेक इत्यादि । यः कल्पितः अनेनैवेति योजना ॥ २४ ॥

यो द्वितीयो वरो देव! दत्तः प्रीतेन मे त्वया ॥ २५ ॥
तदा [1]दैवासुरे युद्धे तस्य कालोऽयमागतः ।
नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ॥ २६ ॥
चीराजिनजटाधारी रामो भवतु तापसः ।
भरतो भजतामद्य यौवराज्य*मकण्टकम् ॥ २७ ॥

चीरं–वल्कलम् ॥ २७ ॥

एष मे परमः कामो दत्तमेव वरं वृणे ।
अद्य चैव हि पश्येयं प्रयान्तं राघवं वनम् ॥ २८ ॥

दत्तमेव वरं वृण इति । न त्वन्यायेन त्वां निर्बध्नामीदानीम् । न ह्युत्तमर्णेनाधमर्णात् (ऋण) ग्रहणं तस्य तत्काले पीडेत्येतावता न दोष इत्याशयः ॥ २८ ॥

---

* रामवनवासवरणस्य फलं सूचयति—अकण्टकमिति ॥

[1] देवासुरे–ङ. च.

स राजराजो भव सत्यसङ्गरः
कुलं च शीलं च हि रक्ष जन्म च ।
परत्र वासे हि वदन्त्यनुत्तमं
तपोधनाः सत्यवचो हितं नृणाम् ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकादशः सर्गः

---

इममेवार्थं स्पष्टमुपदिशति—स राजराज इत्यादि । राजराजः— प्रसिद्धः । स त्वं सत्यसङ्गरो भव । तेनैव हेतुना कुलादिकं रक्ष । सत्यसङ्गरत्वमेव स्वजन्मादिरक्षणसाधनमिति कुत इत्यत्राह—परत्रेत्यादि । घरा (२९) मानः सर्गः ॥ २९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकादशः सर्गः

---

## द्वादशः सर्गः

[दशरथप्रार्थना]

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः ।
* चिन्तामभिसमापेदे मुहूर्तं प्रतताप च ॥ १ ॥

अथ सत्यपाशबद्धस्य दशरथस्य घोरशोकः । तत इत्यादि । चिन्तामभिसमापेद इति । श्रुतार्थस्य वास्तवत्वासंभावनया भ्रम इत्येव निश्चित्य 'किंदोषजोऽयं भ्रमः' इति चिन्तां प्राप । मुहूर्तं-

---

* चिन्ताप्रकारः—किं न्वित्यादिना, संतापप्रकारः 'इति संचिन्त्य' इत्यादिना च विव्रियत इति—गो.

क्षणं ; प्रततापं च—भ्रमप्रतीताहिकण्टकाद्यर्थस्य तत्काले किञ्चित्कार्य-कारकत्वात्, तत्काले परितापः ॥ १ ॥

**किन्नु मे [1]यदि वा स्वप्नः ? चित्तमोहोऽपि वा मम ?**
**अनु भूतोपसर्गो वा [2]मनसो वाऽप्युपद्रवः ॥ २ ॥**

अथापि भ्रमत्वनिश्चयात् त्यक्ततापो भ्रमहेतुभेदानेव चिन्तयति—*किन्नु म इत्यादि । स्वप्नार्थस्य प्रत्यक्षार्थापेक्षया सर्वार्थासमर्थत्वात् भ्रमत्वम् । अथवा †जाग्रत्यपि दुरदृष्टजः चित्तमोहः-वैचित्यं तत्त्वज्ञानासामर्थ्यम् । अनु-पश्चात् । अथवा उपसर्गाणामनेकार्थत्वात् अथवार्थः, अथवा ‡भूतोपसर्गः—महाग्रहजचित्तवैवश्यं वा । अथवा मनस उपद्रवः आधिव्याधिजनितोपप्लवो वा । §अन्यः-अनुभूतोपसर्गः-सुषुप्तिः इत्याह । बत ! —सुषुप्तौ कुतो विचारप्रसङ्गः । एवमादौ बह्वसङ्गतं ब्रूते । तत्सर्वमस्मदुच्यमानव्याख्यानतः सुमतिसुबोधम् ॥ २ ॥

**¶इति संचिन्त्य तद्राजा नाध्यगच्छत्तदाऽसुखम् ।**
**प्रतिलभ्य [3]ततः संज्ञां कैकेयीवाक्यताडितः ॥ ३ ॥**

---

* अत्र 'किन्नु मेऽयं दिवा स्वप्नः' इति तिलके पाठः । व्याख्यायि चैवं तत्र । स्वप्नोऽपि कदाचित् संवादीत्यतो दिवेति । दिवा स्वप्नो न कदापि संवादीति भावः । अथवा—वस्तुतत्त्वज्ञानासामर्थ्यमनु-पश्चात् जातः चित्तमोहो वा । इति च.
† 'जाग्रतोऽपि' इति स्यात्—मम—इत्यनुरोधात् । मयीत्यध्याहार्यं वा.
‡ अनुभूतोपसर्गः—जन्मान्तरानुभूतानां अर्थानां—उपसर्गः—स्मरणम्—**गो.** ग्रहावेशकृत-वैक्लव्यमित्यपि कश्चित्. § अनुभूतानां पदार्थानामुपसर्गः—नाशः, सुषुप्तिरित्यर्थः—**ती.**
¶ इत्येवं संचिन्त्य राजा तदा—सुखं-शर्म-शान्तिमिति यावत्—नाध्यगच्छत्—न प्राप, भ्रमत्वानिश्चयादिति भावः । व्याख्यारीत्या तु—नाध्यगच्छदिति अस्य प्रथमं कर्मपदाध्याहारः । असुखमध्यगच्छदिति क्रियावृत्तिश्च । तिलके तु—तत्-भ्रमकारणं—इति तत्पदं कर्मवाचकमुक्तम् ॥

[1] ऽयं दिवा—ङ. **च.**  [2] मानसो—ङ.  [3] चिरात्—ङ.

व्यथितो विक्लबश्चैव व्याघ्रीं दृष्ट्वा यथा मृगः।
असंवृतायामासीनो जगत्यां दीर्घमुच्छ्वसन् ॥ ४ ॥

मण्डले पन्नगो रुद्धो मन्त्रैरिव महाविषः।
अहो धिगिति सामर्षः वाचमुक्त्वा नराधिपः ॥ ५ ॥

मोहमापेदिवान् भूयः शोकोपहतचेतनः।
चिरेण तु नृपः संज्ञां प्रतिलभ्य सुदुःखितः ॥ ६ ॥

कैकेयीमब्रवीत् क्रुद्धः निर्दहन्निव [1]चेतसा।

इति—एवंप्रकारतः तत्—श्रुतार्थं संचिन्त्य नाध्यगच्छत् *तदन्यतरत्वं। †अतस्तदा वास्तवत्वज्ञानात्, असुखं—परममूर्छाकरं—महद्दुःखं चाध्यगच्छत्। ततः संज्ञां—स्मृतिं प्रतिलभ्य कैकेयीवाक्यस्मरणताडितः उच्यमानविशेषणकः—'अहो धिक्!' इत्युक्त्वा भूयः शोकमापेदिवान्—इति योजना। विक्लबः—दीनः। मण्डल इति। विषस्तम्भनयन्त्रमण्डल इत्यर्थः। चेतसा निर्दहन्निवेत्यनेन ‡व्याघ्रीमृगवत् चक्षुरादिना कोपप्रकाशस्याशक्यता द्योत्यते ॥ ३—६ ॥

नृशंसे! दुष्टचारित्रे! कुलस्यास्य विनाशिनि! ॥ ७ ॥
किं कृतं तव रामेण पापे! पापं मयाऽपि वा।

किं पापं—अनिष्टं कृतमिति योजना ॥ ७ ॥

---

* तदन्यतमत्वं—तदन्यतमसत्त्वं—तदन्यतमतत्वं—इति वा स्यात्। † अतस्तदवास्तवत्वाज्ञानादिति स्यात्। ‡ 'व्याघ्रीं दृष्ट्वा यथा मृगः' इत्युक्तया व्याघ्र्यां मृगवदित्यर्थः।

[1] चक्षुषा—ङ.

[1] * यदा ते जननीतुल्यां वृत्तिं वहति राघवः ॥ ८ ॥
तस्यैव त्वमनर्थाय किंनिमित्तमिहोद्यता ।

यदा—यस्मात् ते—तव विषये जननीतुल्यां वृत्तिमाव-हति; [2] तस्मात् अनर्थचिन्तानर्हस्य तस्यैवानर्थाय किंनिमित्तं इह—इदानीं उद्यता ॥ ८ ॥

त्वं मयाऽऽत्मविनाशाय भवनं स्वं निवेशिता ॥ ९ ॥
† अविज्ञानान्नृपसुता व्याली तीक्ष्णविषा यथा ।

अयं स्वयंकृतानर्थमूल एवेत्याह—त्वमित्यादि । अविज्ञाना-दिति—इष्टसाधनत्वभ्रान्त्येत्यर्थः ॥ ९ ॥

‡ जीवलोको यदा सर्वो रामस्याह गुणस्तवम् ॥ १० ॥
अपराधं कमुद्दिश्य त्यक्ष्यामीष्टमहं सुतम् ।

यदा—यस्मात् । उद्दिश्य—व्याजीकृत्य । न त्वेव त्यजेयमित्य-नुकर्षः ॥ १० ॥

कौसल्यां च सुमित्रां च त्यजेयमपि वा श्रियम् ॥ ११ ॥
जीवितं वाऽऽत्मनो रामं न त्वेव पितृवत्सलम् ।
परा भवति मे प्रीतिः दृष्ट्वा तनयमग्रजम् ॥ १२ ॥
अपश्यतस्तु मे रामं नष्टा भवति चेतना ।

---

* यदैव जननीतुल्यां वृत्तिं वहति तदैव तस्यैवानर्थाय किन्निमित्तमुद्यता—गो.
† अत्र नृपसुतेत्यनन्तरमितिकरणं द्रष्टव्यमिति गोविन्दराजीयम् ॥ भवत्स्वभावमविज्ञाय नृपसुतेति मत्वा स्वं भवनं निवेशितेत्यर्थः. ‡ जीवलोकः सर्वोऽपि यदा रामं स्तौति—तदा—तस्य विवासने मम को वाधिकार इति भावः ॥ यदेत्यनेन रामगुणस्तवस्य भूतपूर्वत्वं नास्तीत्युच्यते ॥

[1] सदा—ङ. [2] यस्मात्—क.

तिष्ठेल्लोको विना सूर्यं सस्यं वा सलिलं विना ॥ १३ ॥
न तु रामं विना देहे तिष्टेत्तु मम जीवितम् ।
तदलं त्यज्यतामेष निश्चयः पापनिश्चये ॥ १४ ॥
अपि ते चरणौ मूर्ध्ना स्पृशाम्येष प्रसीद मे ।
किमिदं चिन्तितं पापे ! त्वया परमदारुणम् ॥ १५ ॥

तदलमिति । यस्मात् मद्विनाशे ते वैधव्यप्राप्तिः तस्मादित्याशयः । चरणावपीति । त्वत्प्रीत्यर्थमिति शेषः ॥ १५ ॥

*अथ जिज्ञाससे मां त्वं भरतस्य प्रियाप्रिये ।
अस्तु, यत्तत्त्वया पूर्वं व्याहृतं राघवं प्रति ॥ १६ ॥
[1]स च ज्येष्ठसुतः श्रीमान् धर्मज्येष्ठ इतीव मे ।
त्वया ते प्रियवादिन्या सेवार्थं कथितं भवेत् ॥ १७ ॥
तच्छ्रुत्वा शोकसंतप्ता संतापयसि मां भृशम् ।
आविष्टाऽसि गृहे शून्ये सा त्वं परवशं गता ॥ १८ ॥

अथेत्यादि । अथेति प्रश्ने । भरतोऽभिषिच्यतां–रामो विवास्यतामित्युक्ते, राजा भरतं प्रत्यभिषेकादिरूपं प्रियं वदिष्यति न वेति भरतविषयकप्रियाप्रियविषये मां जिज्ञाससे–परीक्षसेऽथ ? अथापि रामो विवास्यतामिति नैतद्युक्तं वक्तुम् । कुतः ? यत्–यस्मात्

---

* अथेत्यादिश्लोकत्रयमेकान्वयम्–**गो.** भरतप्रियाप्रियविषये यदि मां जिज्ञाससे, तदास्तु राघवं—भरतं प्रति यत्त्वया व्याहृतं तत्सर्वं भरतस्य, रामविवासनन्त्वयोग्यमेवेति शेषः–**ति.** त्वया पूर्वं राघवं प्रति 'स मे ज्येष्ठः सुतः' इत्यादि यत् व्याहृतं, तत् प्रियवादिन्या त्वया, सेवार्थं—मम मनोरञ्जनार्थं—रामकृतशुश्रूषार्थं वा कथितं भवेत्–**गो.** इतीव—इत्येतत्प्रकारं यत् त्वया कथितं पूर्वं तन्मच्चित्तावर्जनेन सेवार्थमेव—मया स्वसेवाकरणार्थमेव भवेत्–**ति.**

[1] स मे–**ङ. च.**

त्वया पूर्वं—पूर्वकाले श्रीमान् धर्मज्येष्ठः स च—स एव मे ज्येष्ठसुतः, अनन्तरं भरत इति यत् परमप्रियत्वमुक्तं, तस्यैवेदानीं विवासनवादे ते व्याघातप्रसङ्गः। अपि च रामविषये प्रियवादिन्या त्वया यत् ज्येष्ठसुतत्वादिकमुक्तं तत्सर्वं मच्चित्तानुवर्तनेन मम सेवार्थमेव केवलं, ते तत्कथितं—*भावे निष्ठा—कथनम् ; वस्तुतस्तु सर्वथा रामविरसैवेत्यवगम्यसे। यत्—यस्मात्, इदानीं, तत्—रामाभिषेचनं श्रुत्वा शोकसन्तप्ता सती विना वरमशक्याभिषेकनिर्वर्तनं मामपि निर्बन्धेन निवारयन्ती भृशं तापयसि, अतः केवलं मद्वञ्चनार्थस्ते राघवसाधुवाद इति इदानीं जानीम इत्यर्थः। एवं जिज्ञासया एवं वादायोगे तात्त्विकत्वे च रामाभिषेकनिवारणस्य (च) स्वस्थचित्ताया अयुक्तत्वात् प्रायेण ग्रहाविष्टैवेत्याह—†आविष्टैवेत्यादि ॥ १८ ॥

‡इक्ष्वाकूणां कुले देवि! संप्राप्तः सुमहानयम्।
अनयो नयसंपन्ने यत्र ते विकृता मतिः ॥ १९ ॥

न हि किञ्चिदयुक्तं वा विप्रियं वा पुरा मम।
अकरोस्त्वं विशालाक्षि! तेन न श्रद्दधामि ते ॥ २० ॥

---

* अत्र 'तत् त्वये'ति स्थाने—'त्वया ते' इति व्याख्यापाठः स्यात् ॥ अत एव पूर्वश्लोकगतेन 'व्याहृतं' इत्यनेन त्वयेत्यस्यान्वये अनन्तरं ते इत्यस्य कथितमित्यनेनान्वयो वाच्यः ॥ एवञ्च कथितमिति भावे क्तः. † आविष्टासीत्येव सर्वत्र पाठो दृश्यते। अत्र—आविष्टासीत्यस्योपपादकं—'यत्र ते विकृता मतिः' इत्यन्तम्। 'न श्रद्दधामी'त्यस्योपपादकं—इक्ष्वाकूणामित्यादि. ‡ यत इक्ष्वाकुकुले महानयमनयः—ज्येष्ठाभिषेकनिवृत्तिरूपः संप्राप्तः, हे नयसंपन्ने! यत्राप्नये ते तव विकृता मतिः कारणमिति शेषः। अतस्त्वं ग्रहाविष्टेति भावः ॥ ति. नयसंपन्ने—एतावत्कालं नीतिशालिनि यत्र—इक्ष्वाकुकुलमध्ये ते मतिरेवमिदानीं विकृता जाता—तत्र कुले, अयं सन्निहितः सुमहाननयः—अनर्थः संप्राप्तः—गो.

कुत आविष्टतामूल एवंवाद इत्यत्र, अस्मदुक्तरामाभिषेक-वारणहेतोरेवेत्याह—इक्ष्वाकूणामित्यादि । यत्र—यस्मिन् नयसंपन्ने रामे ते यतो विकृता मतिरुत्पन्ना । इतश्च तन्मूलो महानयमनयः—ज्येष्ठे गुणवति ज्येष्ठाभिषेकनिवृत्तिरूपोऽनयः संपाद्यते तस्मादेव ते न श्रद्दधामीति । इदानीं क्रियमाणं विप्रियादिकमपि वास्तवमिति न श्रद्दधामीति शेषः ॥ २० ॥

ननु [1]ते राघवस्तुल्यः भरतेन महात्मना ।
*बहुशो हि स्म बाले ! त्वं कथाः कथयसे मम ॥ २१ ॥

तदेव समर्थयते—नन्वित्यादि । आमन्त्रणे ननुशब्दः । कथयसे स्मेति योजना ॥ २१ ॥

तस्य धर्मात्मनो देवि ! वने वासं यशस्विनः ।
कथं रोचयसे भीरु ! नव वर्षाणि पञ्च च ॥ २२ ॥

तस्येति—तथाप्रियस्येत्यर्थः ॥ २२ ॥

अत्यन्तसुकुमारस्य तस्य धर्मे धृतात्मनः ।
कथं रोचयसे वासमरण्ये भृशदारुणे ॥ २३ ॥
रोचयस्यभिरामस्य रामस्य शुभलोचने !
तव शुश्रूषमाणस्य किमर्थं विप्रवासनम् ॥ २४ ॥
रामोऽपि भरताद्भूयः तव शुश्रूषते सदा ।
विशेषं त्वयि तस्मात्तु भरतस्य न लक्षये ॥ २५ ॥

तव शुश्रूषमाणस्येति । 'न लोक' इति षष्ठीनिषेधाभाव आर्षः । तथा 'तव शुश्रूषते' इति षष्ठ्यपि आर्षी ॥ २४–२५ ॥

---

* रामो मम भरततुल्य इति भवतैव कथितमित्याह—बहुश इति ।

[1] मे—ङ.

शुश्रूषां *गौरवं चैव प्रमाणं वचनक्रियाम्।
कस्ते भूयस्तरां कुर्यात् अन्यत्र मनुजर्षभात्॥ २६॥

प्रमाणं—प्रतिपत्तिः। वचनक्रिया—उक्तकरणम्॥ २६॥

बहूनां स्त्रीसहस्राणां बहूनां चोपजीविनाम्।
†परिवादोऽपवादो वा राघवे नोपपद्यते॥ २७॥

बहूनां स्त्रीसहस्राणां मध्ये एकयापि कृतः परिवादः, तथोपजीविनां च मध्ये एकेनापि कृतोऽपवादः—अपयशः राघवे नोपपद्यते॥

सान्त्वयन् सर्वभूतानि रामः शुद्धेन चेतसा।
गृह्णाति मनुजव्याघ्रः ‡प्रियैर्विषयवासिनः॥ २८॥

कुतो अन्यत्र नोपपद्यत इत्यत्राह—सान्त्वयन्नित्यादि॥

सत्येन लोकान् जयति दीनान् दानेन राघवः।
गुरून् शुश्रूषया §वीरो धनुषा युधि शात्रवान्॥ २९॥

दानं—पारलौकिकम्। त्यागः—प्रीत्यर्थः ऐहिकप्रयोजनः॥

सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम्।
विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे॥ ३०॥
तस्मिन्नार्जवसंपन्ने देवि! देवोपमे कथम्।
पापमाशंससे रामे महर्षिसमतेजसि॥ ३१॥

---

* गौरवं-प्रतिपत्तिः। प्रमाणं—पूजा—**गो.** † परिवादः—अपयशः, अपवादः—निन्दा—**गो.** परिवादः—समूलमयशः। अपवादः—निर्मूलमयशः—**ति.** ‡ प्रियैः, अभीष्टदानैः. § वीर इति सर्वत्र संबध्यते। दयावीरः, त्यागवीरः, विद्यावीरः, पराक्रमवीर इत्येवम्। चोलमहीपतिः कदाचित् सन्निहितं मध्यमवीथिभट्टारकं प्रति 'आत्मानं मानुषं मन्ये' इति वदन् रामः कथं जटायुषो मोक्षं दत्तवान् इति पप्रच्छ। सोऽपि 'सत्येन लोकान्' इत्युक्त्या महतीं बहुमतिं अवाप्तवानित्यैतिह्यमत्र ज्ञेयम्—**गो.**

* न स्मराम्यप्रियं वाक्यं लोकस्य प्रियवादिनः ।
स कथं त्वत्कृते रामं वक्ष्यामि † प्रियमप्रियम् ॥ ३२ ॥

अप्रियं वाक्यमिति–‡ रामकर्तृकं रामविषयकं वेति शेषः । कुत एवमित्यत आह—प्रियवादिन इति । त्वत्कृते–त्वद्वचनाक्रियासंपादनार्थम् । अप्रियं वक्ष्यामीति । निर्निमित्तामिति शेषः ॥ ३२ ॥

क्षमा यस्मिन् तपस्त्यागः सत्यं धर्मः कृतज्ञता ।
[1] अप्यहिंसा च भूतानां तमृते का गतिर्मम ॥ ३३ ॥

मम वृद्धस्य कैकेयि ! § गतान्तस्य तपस्विनः ।
दीनं लालप्यमानस्य कारुण्यं कर्तुमर्हसि ॥ ३४ ॥

गतान्तस्येति । संप्राप्तचरमकालस्येत्यर्थः । तपस्विनः–एवं शोचनीयावस्थस्य ॥ ३४ ॥

पृथिव्यां सागरान्तायां यत्किञ्चिदधिगम्यते ।
तत्सर्वं तव दास्यामि मा च [2] त्वां मन्युराविशेत् ॥ ३५ ॥

अञ्जलिं कुर्मि कैकेयि ! पादौ चापि स्पृशामि ते ।
शरणं भव रामस्य ‖ माऽधर्मो मामिह स्पृशेत् ॥ ३६ ॥

---

* लोकस्य–लोकं प्रति, प्रियवादिनः स्वस्य कं प्रत्यप्युक्तमप्रियं वाक्यं न स्मरामि–सोऽहं त्वत्कृते प्रियं राममप्रियं कथं वक्ष्यामि–**ति.** न स्मरामि–स्मर्तुमपि न शक्नोमि, सः–तादृशोऽहं–**गो.** † प्रियं राममित्यन्वयः. ‡ इदं तिलकेऽनूदितम्. § गतः–प्राप्तः निश्चितो वा अन्तः, चरमकालः यस्य सः. ‖ अधर्मः–प्रतिज्ञाभङ्गरूपः–**गो.** अधर्मः–ज्यैष्ठ्यातिक्रमकृतः, निरपराधस्य त्यागकृतश्च–**ति.**

[1] अविहिंसा–ङ. [2] त्वं मृत्युमाविशेः–ङ. त्वं मृत्युमाविश–च.

कुर्मि—करोमि, उत्वविकरणप्रत्ययलोपावार्षौ । शरणं—रक्षिका भव । इह—रामाभिषेके अधर्मो मां मा *स्पृशेत् । त्वदनुमत्येति शेषः ॥ ३६ ॥

इति दुःखाभिसन्तप्तं विलपन्तमचेतनम् ।
घूर्णमानं महाराजं शोकेन समभिप्लुतम् ॥ ३७ ॥
पारं शोकार्णवस्याशु प्रार्थयन्तं [1] पुनःपुनः ।
प्रत्युवाचाथ कैकेयी रौद्रा रौद्रतरं वचः ॥ ३८ ॥
यदि दत्त्वा वरौ राजन्! पुनः प्रत्यनुतप्यसे ।
धार्मिकत्वं कथं वीर! पृथिव्यां *कथयिष्यसि ॥ ३९ ॥

अनुतप्यस इति । निर्वर्तनाशक्त्येति शेषः ॥ ३९ ॥

यदा समेता बहवः त्वया राजर्षयः सह ।
†कथयिष्यन्ति धर्मज्ञ! तत्र किं प्रतिवक्ष्यसि ॥ ४० ॥

यदा पृथिव्यां राजर्षयस्त्वया सह समेता भवन्ति, तदा तत्समाजे त्वं त्वदीयं धार्मिकत्वं कथयिष्यसि; ते च मद्विषयवरदानादिप्रसङ्गं यदा कथयिष्यन्ति, तदा तान् प्रति किं प्रतिवक्ष्यसि? धर्मज्ञेति व्यङ्ग्योक्तिः ॥ ४० ॥

यस्याः ‡प्रसादे जीवामि या च मामभ्यपालयत् ।
तस्याः [2] कृता मया मिथ्या कैकेय्या इति वक्ष्यसि ॥४१॥

---

* कथयिष्यसि । लोकैरिति शेषः । स्वार्थण्यन्तात् हेतुमण्णौ रूपम्—ति.

† उपकारिण्याः कैकेय्याः किं प्रत्युपकृतमिति यदा कथयिष्यन्ति तदा किं प्रतिवक्ष्यसि—गो. ‡ प्रसादात्, प्रयत्ने—ङ. प्रसादमेवाह—या चेति.

[1] अचेतनम्—ङ. [2] कृतं—ङ. झ.

न किमपि प्रतिवचनं शक्यमित्याह—यस्या इत्यादि। प्रसादे—शम्बरमायानिवर्तनलक्षणानुग्रहे सति। पश्चात्—या च प्रच्यावितवीर्यं मामभ्यपालयच्च, तस्याः कैकेय्याः मया मिथ्या कृता—मिथ्याप्रतिज्ञा कृता—इति वक्ष्यसि किम्? नैवं शक्यवादं किलेति शेषः ॥ ४१ ॥

*किल्बिषत्वं †नरेन्द्राणां करिष्यसि नराधिप!
यो दत्त्वा वरमद्यैव पुनरन्यानि भाषसे ॥ ४२ ॥

किल्बिषत्वमिति। मत्वर्थीयाजन्ताद्भावप्रत्ययः, किल्बिषवत्त्वमिति यावत्। नरेन्द्राणामिति। त्वद्वंश्यानामिति शेषः। तवासत्यसंगरत्वे प्राणादिभिरपि पालितसत्यानां त्वद्वंश्यानां अपयशः त्वया संपाद्यत इति ॥ ४२ ॥

शैब्यः श्येनकपोतीये स्वमांसं पक्षिणे ददौ।
अलर्कश्चक्षुषी दत्त्वा जगाम गतिमुत्तमाम् ॥ ४३ ॥

सत्यपरिपालनशेषतया दुष्करस्यापि प्रतिश्रुतस्य परिपालनं दर्शयति—शैब्य इत्यादि। त्वद्वंश्यः शैब्यः सत्यपरिपालनशेषतया दत्ताभयकपोतरक्षणार्थं तन्मांसार्थिने श्येनाय स्वमांसमेव प्रतिनिधित्वेन ददौ; न तु कपोतमिति ‡श्येनकपोतीये आख्याने श्रूयते। तथाहि—इन्द्राग्नी श्येनकपोतरूपौ भूत्वा शैब्यौदार्यजिज्ञासया भक्षकभक्ष्यभावापन्नौ शैब्यसमीपमागतौ। तत्र कपोतोऽभयार्थी शैब्याङ्क

---

* किल्बिषत्वमिति। अत्र 'किल्बिषं त्वं' इति क्वचित्–च. पाठो दृश्यते। एतत्पाठे मत्वर्थीयाजन्तात् भावप्रत्ययाश्रयणक्लेशोऽपि नास्ति. † सजातीयेष्वेकेन कृतमपयशः सर्वानपि स्पृशति—'सर्वे राजान एवं विधा' इति–गो. ‡ इदं चाख्यानं महाभारते वनपर्वणि श्रूयते। श्येनकपोतीये–श्येनकपोतयोः विरोधे प्राप्ते इति गोविन्दराजीये ॥

प्रविवेश। तस्मै च सोऽभयं ददौ। ततः श्येनेन 'मद्भक्षणं दैवविहितं त्यज' इत्युक्ते 'नाहं त्यजेयं, अपि तु तत्प्रतिनिधिमांसमेव ददामि'-इत्युक्ते 'तर्हि त्वन्मांसमेव मे प्रयच्छ, नान्यत्' इत्युक्ते स्वमांसमपि * सर्वं दत्तवानिति कथा। तथा अलर्कश्च राजर्षिः ब्राह्मणायान्धाय वरं प्रतिश्रुत्य, तेन † राजचक्षुषा स्वचक्षुःप्रतिसन्धाने पृष्टे, स्वचक्षुषी च दत्तवान्॥ ४३॥

**सागरः समयं कृत्वा न वेलामतिवर्तते।**
**समयं माऽनृतं कार्षीः पूर्ववृत्तमनुस्मरन्॥ ४४॥**

सागरः—समुद्रः देवैः प्रार्थितो वेलानतिलङ्घनाय तत् तेभ्यः प्रतिश्रुत्य न वेलामद्याप्यतिवर्तते। अत्र सागरस्य स्ववंश्यख्यातत्वेन स्ववंश्यत्वाभिमानादुपन्यासः। यदेवं अतः—समयमित्यादि। पूर्ववृत्तं—शैब्यादिवृत्तम्॥ ४४॥

**स त्वं धर्मं परित्यज्य रामं राज्येऽभिषिच्य च।**
**सह कौसल्यया नित्यं रन्तुमिच्छसि दुर्मते!॥ ४५॥**
**‡ भवत्वधर्मो धर्मो वा सत्यं वा यदि वाऽनृतम्।**
**यत्त्वया संश्रुतं मह्यं तस्य नास्ति व्यतिक्रमः॥ ४६॥**

सिद्धान्तमाह—भवत्वित्यादि। व्यतिक्रमो नास्तीति—अकरण-मित्यर्थः॥ ४६॥

---

* प्रथमं कपोतप्रतिनिधित्वेन तत्तुल्यं स्वमांसं तुलायां निक्षिप्तवान्। तस्मिन्नपर्याप्ते च अन्ततः स्वयमेव तुलामारुरोहेति. † राजा—अलर्कः. ‡ सत्यं—समीचीनं, अनृतं—असमीचीनं—**गो**. नन्वियं रत्यर्था मिथ्यैव मे प्रतिज्ञा; तादृशकाले मिथ्यावचनस्य शास्त्रानुमतत्वादिति चेत्तत्राह—सत्यमित्यादि—**ति**.

अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः ।
पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥ ४७ ॥

विपक्षे बाधकमाह—अहं हीत्यादि ॥ ४७ ॥

एकाहमपि पश्येयं यद्यहं राममातरम् ।
अञ्जलिं प्रतिगृह्णन्तीं श्रेयो ननु मृतिर्मम ॥ ४८ ॥

अञ्जलिं प्रतिगृह्णन्तीमिति । राजमातृत्वेन सर्वलोकानामिति शेषः ॥ ४८ ॥

*भरतेनात्मना चाहं शपे ते मनुजाधिप !
यथा नान्येन तुष्येयं ऋते रामविवासनात् ॥ ४९ ॥
एतावदुक्त्वा वचनं कैकेयी विरराम ह ।
विलपन्तं च राजानं न प्रतिव्याजहार सा ॥ ५० ॥
श्रुत्वा तु राजा कैकेय्या वाक्यं †परमशोभनम् ।
रामस्य च वने वासमैश्वर्यं भरतस्य च ॥ ५१ ॥
नाभ्यभाषत कैकेयीं मुहूर्तं व्याकुलेन्द्रियः ।
प्रैक्षतानिमिषो देवीं प्रियामप्रियवादिनीम् ॥ ५२ ॥

प्रैक्षतेति । क्रोधादिति शेषः ॥ ५२ ॥

तां हि वज्रसमां वाचमाकर्ण्य हृदयच्छिदम् ।
दुःखशोकमयीं घोरां राजा न सुखितोऽभवत् ॥ ५३ ॥

---

* 'ते—तव समीपे, आत्मना—प्राणभूतेत भरतेन शपे' इति तिलके । एवं सति 'भरतेनात्मना चाहं' इति पाठः । अन्यथा चकारस्यान्यार्थकत्वं वक्तव्यम्. † परं, अशोभनमिति पदविभागः.

**स देव्या व्यवसायं च *घोरं च शपथं कृतम् ।**
**ध्यात्वा रामेति निःश्वस्य छिन्नस्तरुरिवापतत् ॥ ५४ ॥**

निःश्वस्येति । अशक्यप्रतिक्रियत्वादिति भावः ॥ ५४ ॥

**नष्टचित्तो यथोन्मत्तो विपरीतो यथाऽऽतुरः ।**
**हृततेजा यथा सर्पो बभूव जगतीपतिः ॥ ५५ ॥**

विपरीत इति । त्रिदोषजप्रकृतिवैपरीत्य इत्यर्थः । हृततेजा इति । मन्त्रेणेति शेषः ॥ ५५ ॥

**दीनयाऽऽतुरया वाचा इति होवाच कैकयीम् ।**
**अनर्थमिममर्थाभं केन त्वमुपदर्शिता ॥ ५६ ॥**
**भूतोपहतचित्तेव ब्रुवन्ती मां न लज्जसे ।**

न लज्जस इति । पत्युः समक्षमेतादृग्व्यवहारो लोकविगर्हित इति लज्जारहितेति यावत् ॥ ५६ ॥

**†शीलव्यसनमेतत्ते नाभिजानाम्यहं पुरा ॥ ५७ ॥**
**‡बालायास्तत्त्विदानीं ते लक्षये विपरीतवत् ।**

शीलस्य पतिपत्नीप्रयुक्तस्वचरित्रस्य विशेषेण असनं—निरसनम् इदानीं क्रियमाणम् पुरा नाभिजानामि—दुश्शीलेति न जानामि ; अपि तु सुशीलामेव जानामि । यदेवं पूर्वं ज्ञातं तत् इदानीमेव,

---

*घोरमिति पूर्वेणान्वेति । तिलके तु—घोरं शपथं—भरतशपथं (भरतेनात्मना वाहं इत्यत्रोक्तं) स्वकृतरामशुश्रूषणादिशपथं वेत्युक्तम्. †शील-वि-असनमिति पदच्छेदो व्याख्यातुरभिमत: । शीलव्यसनं—सद्वृत्तभ्रंशं । 'व्यसनं विपदि भ्रंशे' इत्यमरः—गो. बालाया इति पूर्वार्धेऽन्वेति. ‡इदानीं-प्रौढावस्थायामपि विपरीतवदित्यर्हार्थे वतिः, विपरीतार्हे—दुश्शीलार्हे लक्षये—ति.

अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः ।
पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥ ४७ ॥

विपक्षे बाधकमाह—अहं हीत्यादि ॥ ४७ ॥

एकाहमपि पश्येयं यद्यहं राममातरम् ।
अञ्जलिं प्रतिगृह्णन्तीं श्रेयो ननु मृतिर्मम ॥ ४८ ॥

अञ्जलिं प्रतिगृह्णन्तीमिति । राजमातृत्वेन सर्वलोकानामिति शेषः ॥ ४८ ॥

*भरतेनात्मना चाहं शपे ते मनुजाधिप!
यथा नान्येन तुष्येयं ऋते रामविवासनात् ॥ ४९ ॥

एतावदुक्त्वा वचनं कैकेयी विरराम ह ।
विलपन्तं च राजानं न प्रतिव्याजहार सा ॥ ५० ॥

श्रुत्वा तु राजा कैकेया वाक्यं †परमशोभनम् ।
रामस्य च वने वासमैश्वर्यं भरतस्य च ॥ ५१ ॥

नाभ्यभाषत कैकेयीं मुहूर्तं व्याकुलेन्द्रियः ।
प्रैक्षतानिमिषो देवीं प्रियामप्रियवादिनीम् ॥ ५२ ॥

प्रैक्षतेति । क्रोधादिति शेषः ॥ ५२ ॥

तां हि वज्रसमां वाचमाकर्ण्य हृदयच्छिदम् ।
दुःखशोकमयीं घोरां राजा न सुखितोऽभवत् ॥ ५३ ॥

---

* 'ते–तव समीपे, आत्मना–प्राणभूतेत भरतेन शपे' इति तिलके । एवं सति 'भरतेनात्मना चाहं' इति पाठः । अन्यथा चकारस्यान्यार्थकत्वं वक्तव्यम्. † परं, अशोभनमिति पदविभागः.

स देव्या व्यवसायं च *घोरं च शपथं कृतम् ।
ध्यात्वा रामेति निःश्वस्य छिन्नस्तरुरिवापतत् ॥ ५४ ॥

निःश्वस्येति । अशक्यप्रतिक्रियत्वादिति भावः ॥ ५४ ॥

नष्टचित्तो यथोन्मत्तो विपरीतो यथाऽऽतुरः ।
हृततेजा यथा सर्पो बभूव जगतीपतिः ॥ ५५ ॥

विपरीत इति । त्रिदोषजप्रकृतिवैपरीत्य इत्यर्थः । हृततेजा इति । मन्त्रेणेति शेषः ॥ ५५ ॥

दीनयाऽऽतुरया वाचा इति होवाच कैकयीम् ।
अनर्थमिममर्थाभं केन त्वमुपदर्शिता ॥ ५६ ॥
भूतोपहतचित्तेव ब्रुवन्ती मां न लज्जसे ।

न लज्जस इति । पत्युः समक्षमेतादृग्व्यवहारो लोकविगर्हित इति लज्जारहितेति यावत् ॥ ५६ ॥

†शीलव्यसनमेतत्ते नाभिजानाम्यहं पुरा ॥ ५७ ॥
‡बालायास्तत्त्विदानीं ते लक्षये विपरीतवत् ।

शीलस्य पतिपत्नीप्रयुक्तस्वचरित्रस्य विशेषेण असनं–निरसनम् इदानीं क्रियमाणम् पुरा नाभिजानामि–दुश्शीलेति न जानामि ; अपि तु सुशीलामेव जानामि । यदेवं पूर्वं ज्ञातं तत् इदानीमेव,

---

*घोरमिति पूर्वेणान्वेति । तिलके तु—घोरं शपथं–भरतशपथं (भरतेनात्मना वाहं इत्यत्रोक्तं) स्वकृतरामसुकृतादिशपथं वेत्युक्तम्. †शील-वि-असनमिति पदच्छेदो व्याख्यातुरभिमतः । शीलव्यसनं–सद्वृत्तभ्रंशं । 'व्यसनं विपदि भ्रंशे' इत्यमरः–गो. बालाया इति पूर्वार्धेऽन्वेति. ‡इदानीं-प्रौढावस्थायामपि विपरीतवदित्यर्हार्थे वतिः, विपरीतार्हे–दुश्शीलार्हे लक्षये–ति.

विपरीतवत् , स्वार्थे वतिः, बहुश इह विपरीतं लक्षये ; कार्यवशेनेति शेषः ॥ ५७ ॥

कुतो वा ते भयं जातं या त्वमेवंविधं नरम् ॥ ५८ ॥
राष्ट्रे भरतमासीनं वृणीषे राघवं वने ।

भयं जातमिति । रामादिति शेषः ॥ ५८ ॥

विरमैतेन भावेन त्वमेतेनानृतेन वा ॥ ५९ ॥
यदि भर्तुः प्रियं कार्यं लोकस्य भरतस्य च ।

एतेन—निर्धूतपतिपत्नीभावलक्षणेन भावेन उपलक्षिता त्वं अतो विरम। यदि भर्तुः, लोकस्य, भरतस्य च प्रियं कार्यं—कर्तव्यं इच्छसि । अपि वा त्वं एतेन—अशक्यार्थवरणद्वारकेण *अनृतेन—ममानृतसंपादन-कर्मणा सर्वानर्थमूलेन उपलक्षिता त्वं ततो वा विरम, यदि भर्तुः लोकस्य भरतस्य च प्रियं कार्यं—कर्तव्यमिच्छसि । अत्र यद्वा भट्टो बहु जल्पति । तत्र न किञ्चिदपि सङ्गतं पश्यामः । पतञ्जलिवत् प्रौढ-पक्षान्तरोपन्यास एव तु विपश्चित्प्रेयान् ॥ ५९ ॥

नृशंसे! पापसंकल्पे! क्षुद्रे! दुष्कृतकारिणि! ॥ ६० ।
किन्नु †दुःखमलीकं वा मयि रामे च पश्यासि?

अलीकं—अपराधः ॥ ६० ॥

न कथञ्चिदृते रामाद्भरतो राज्यमावसेत् ॥ ६१ ॥
रामादपि हि तं मन्ये ‡धर्मतो बलवत्तरम् ।

---

* अनृतेन—अनृतपदवाच्येन—गो. पतिविप्रियत्वादिति शेषः. † दुःखं—दुःख-निमित्तम् । अलीकं—अप्रियम्- गो. दुःखनिमित्तं अलीकं—अपराधम्—ति. ‡ धर्मतो बलवत्तरं-अतिशयेन धर्मवन्तम्—ति.

ऽयर्थं चेदं मत्कर्शनमित्याह—न कथञ्चिदित्यादि। ऋते रामाद्राज्यं नावसेदित्यनेन यथाभागशः चतुर्णामेव राज्यमनुमन्यस्व, यद्वा भरतस्याभिषेकं, रामस्य केवलं वृद्धस्य मम समीपेऽवस्थानं वाऽनुमन्यस्व, नान्यथा त्वत्प्रयोजनं इत्युपदेशः। नावसेदित्यत्र हेतुः—रामादित्यादि। *'ह्री' ति पदं ॥ ६१ ॥

†कथं [1]द्रक्ष्यामि रामस्य, वनं गच्छेति भाषिते ॥ ६२ ॥
मुखवर्णं विवर्णं तं यथैवेन्दुमुपप्लुतम्।

उपप्लुतः—राहुग्रस्तः ॥ ६२ ॥

तां हि मे सुकृतां बुद्धिं सुहृद्भिः सह निश्चिताम् ॥ ६३ ॥
कथं द्रक्ष्याम्यपावृत्तां परैरिव हतां चमूम्।

सुकृतां—सम्यक् प्रवर्तिताम्। तत्र हेतुः—सुहृद्भिः सह निश्चितामिति। बुद्धिं—रामाभिषेकविषयिणीम्। ‡ अपावृत्तां—पराभूताम् ॥ ६३ ॥

किं मां वक्ष्यन्ति राजानो नानादिग्भ्यः समागताः।
§ बालो बतायमैक्ष्वाकः चिरं राज्यमकारयत्।
यदा तु बहवो वृद्धाः गुणवन्तो बहुश्रुताः ॥ ६५ ॥

---

* 'अपिहितं' इत्यादिपदच्छेदभ्रान्तिनिवृत्त्यर्थमाह—ह्रीति पदमिति. † रामस्य विवर्णं मुखवर्णं कथं द्रक्ष्यामीत्यन्वयः. ‡ अपावृत्तां-अधरोत्तरीकृतां, कथं द्रक्ष्यामि अनुभविष्यामि—गो. § बाल ऐक्ष्वाकः, बत, तादृशः चिरं राज्यमकारयत्किमिति वक्ष्यन्तीत्यर्थः। वस्तुतस्तु पूर्वश्लोकः, छिद्रान्वेषिणां तुल्यकक्ष्याणां राज्ञां, परिहासगर्भितवाक्यरूपः। 'यदा तु' इति द्वितीयश्लोकस्तु स्वहितैषिणां गुणिनां वृद्धानां सानुतापप्रश्नरूपः। एवञ्च 'प्रथमदिने अभिषेकनिश्चयः, द्वितीयदिन एव प्रवासनं इति समीचीनम्! इति परिहासेन बत। अयं बालो रामः चिरं राज्यमकारयत् इत्यादिकं किं वा मां वक्ष्यन्ति इति लज्जा सूचिता। 'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति न्यायात्.

[1] वक्ष्यसि—ङ.

[1]परिप्रक्ष्यन्ति काकुत्स्थं वक्ष्यामि किमहं तदा ।

बालः बत—अज्ञः अयमैक्ष्वाकः चिरं राज्यमकारयत् इति यत् *तद्दैवगत्या घुणाक्षरन्यायेन इत्येव वदिष्यन्तीति शेषः । परिप्रक्ष्यन्ति काकुत्स्थमिति । क राम इति प्रातरिति च शेषः ॥ ६४—६५ ॥

कैकेय्या क्लिश्यमानेन [2]पुत्रः प्रव्राजितो मया ॥ ६६ ॥
यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति ।

सत्यपरिपालनवशात् प्रव्राजित इति ब्रूहीत्यत्र—लोकस्तद्वास्तवं न प्रतिगृह्णाति, किन्तु कामहतस्त्रीवचसा प्रव्राजितवानित्येव वदिष्यतीत्याह—कैकेय्येत्यादि । क्लिश्यमानेनेति । प्रव्राजनवरवरणेनेति शेषः । यदि सत्यं ब्रवीमीति । †यद्यपि सत्यमेव ब्रवीमि अथापि तदसत्यमेव भविष्यति ; लोकस्तु न श्रद्दध्यादित्यर्थः‡ ॥ ६६ ॥

किं मां वक्ष्यति कौसल्या राघवे वनमास्थिते ॥ ६७ ॥
किञ्चैनां प्रतिवक्ष्यामि कृत्वा विप्रियमीदृशम् ।

किं मामित्यादि । हे राजन्! मया मत्पुत्रेण वा किं तेऽपराद्धम्? इति यदा वक्ष्यति तदा एनां प्रति निरुत्तरमेवेत्यर्थः । किञ्च—किन्विति यावत् ॥ ६७ ॥

§यदा यदा च कौसल्या दासीवच्च सखीव च ॥ ६८ ॥
भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठति ।

---

* किमित्यधिक्षेपार्थकः । एवञ्चायमर्थः तात्पर्यवशाल्लभ्यते. † यद्यपि कैकेय्या क्लिश्यमानेन मया पुत्रः वनं प्रव्राजितः न तु स्वबुध्येति सत्यमेव ब्रवीमि तथापि तदानीं तत्—राममभिषेक्ष्यामीति वचनं असत्यं भविष्यति । तत्तु न युक्तं पूर्वमुक्तत्वात्—**गो.** ‡ किन्तु स्त्रीव्यामोहेन तथा कृतवानित्येव लोको वदेत् इति भावः. § श्लोकद्वयमेकान्वयम् । यदा यदोपतिष्ठति—तत्तदुचितकृत्येनोपास्ते, तदा तदा सत्कारार्हा त्वत्कृते न सत्कृतेत्यन्वयः—**गो.**

[1] परिपृच्छन्ति—**ङ.** [2] रामः—**ङ.**

*दासीवदिति – अभिमतान्नपानसंपादने ; सखीवदिति– क्रीडायाम् ; भार्यावदिति–अग्निहोत्रादिधर्मानुष्ठाने ; भगिनीवदिति– ज्ञानयोगानुष्ठाने ; मातृवदिति–तत्त्वकथने । उपतिष्ठते–सेवते ॥ ६८ ॥

**सततं प्रियकामा मे प्रियपुत्रा प्रियंवदा ॥ ६९ ॥**
**न मया सत्कृता देवी सत्कारार्हा कृते तव ।**

†अस्मत्प्रियः–कामः यस्याः सा तथा । प्रियः पुत्रः यस्याः सा तथा । उक्तस्वभावैः सततं विशेषसत्कारार्हापि, त्वत्कृते–तव वैमनस्यपरिहाराय न सत्कृता ॥ ६९ ॥

**इदानीं तत्तपति मां यन्मया सुकृतं त्वयि ॥ ७० ॥**
**अपथ्यव्यञ्जनोपेतं भुक्तमन्नमिवातुरम् ।**

इदानीं–रामविवासने सति । यत् मया, त्वयि सुकृतं– शोभनं कर्म, शुश्रूषालक्षणं कृतं तत् अपथ्यव्यञ्जनोपेतं सद्भुक्तं अन्नं यथा आतुरं–रुग्णं तपति–अन्तर्भावितणिः, तापयति तथा तापयतीति शेषः ॥ ७० ॥

**‡विप्रकारं च रामस्य संप्रयाणं वनस्य च ॥ ७१ ॥**

---

* तिलके एतदनूद्य एवं व्याख्यातम् । दासीव रतिव्यवहारे, सखीवद्रहस्य- कथने, भार्यावद्धर्माचरणे, भगिनीवद्धिताशंसने, मातृवद्भोजनदाने इति । गोविन्द- राजीये त्वेवं व्याख्यातम्—परिचर्याकाले दासीवत्परिचरति ; न महिषीत्वं पुरस्करोति । द्यूतक्रीडादिसमये सखीवद्व्यवहरति । धर्मानुष्ठानसमये भार्यावत्–भार्यया यथा वर्तितव्यं तथा वर्तते, न तु महिषीत्वाभिमानेन जोषमास्ते । भार्यान्तरविवाहसमये भगिनीवत्–सोदरीवोप- लालयति (न तु त्वमिवाभ्यसूयतीति भावः) । शरीरपोषणादिदशायां मातृवद्धितपरा तिष्ठतीति. † अनेन भवतीव कौसल्या न कदापि मे विप्रियमिच्छत्यपीत्युक्तम्. ‡ विप्रकारं–अभिषेक- निवृत्तिम्–**ति.** विपरीतप्रकारं–**गो.** अयं भावः—रामस्य यौवराज्याभिषेके निश्चिते तद्विपरीततया भरताभिषेचनं, न तन्मात्रं रामस्य वनवासं च प्रेक्ष्येति.

**सुमित्राऽवेक्ष्य वै भीता कथं मे विश्वसिष्यति ।**

रामस्य च विप्रकारं-विरोधं त्वन्निमित्तं, वनस्य संप्रयाणं च सुमित्रावेक्ष्य रामस्यैवैवंदशत्वे मत्पुत्रस्य का गतिः ? इति भीता सती कथं मे वचनं-'त्वं सपुत्रा सुखेन तिष्ठ' इत्यादिवचनं विश्वसिष्यति-न कथमपि ॥ ७१ ॥

**कृपणं बत ! वैदेही श्रोष्यति द्वयमप्रियम् ॥ ७२ ॥**
***मां च पञ्चत्वमापन्नं रामं च वनमाश्रितम् ।**

श्रोष्यतीति यत् तत् कृपणं-कष्टं बतेति योजना ॥ ७२ ॥

**वैदेही बत ! मे† प्राणान् शोचन्ती क्षपयिष्यति ॥ ७३ ॥**
**हीना हिमवतः पार्श्वे किन्नरेणेव किन्नरी ।**

तदेव सीताकार्पण्यं प्रदर्श्यते—वैदेहीत्यादि । मे-मम ‡राम-विवासनादिव्यापारेण शोचन्ती प्राणान् क्षपयिष्यति ॥ ७३ ॥

**न हि राममहं दृष्ट्वा [1]प्रविशन्तं महावने ॥ ७४ ॥**
**चिरं जीवितुमाशंसे रुदन्तीं चापि मैथिलीम् ।**

सीताया इव ममापि प्राणक्षपणं प्राप्तमित्याह—न हीत्यादि ॥

**[2]सा नूनं विधवा राज्यं सपुत्रा कारयिष्यसि ॥ ७५ ॥**

सा नूनमिति । सा-त्वं ; नूनं-ध्रुवमित्यर्थः ॥ ७५ ॥

---

* अप्रियद्वयमेवाह—मां चेत्यादि-ति. † मे-मदर्थम् । उपलक्षणमेतत् । रामार्थमित्यस्यापि-ति. ‡ एतच्चाध्याहार्यमिति भावः.

[1] प्रवसन्तं-ङ. च. [2] एतदनन्तरं 'न हि प्रव्राजिते रामे देवि ! जीवितु-मुत्सहे । ' इत्यधिकम्-ङ.

*सतीं त्वामहमत्यन्तं व्यवस्याम्यसतीं सतीम् ।
रूपिणीं विषसंयुक्तां पीत्वेव मदिरां नरः ॥ ७६ ॥

सतीं असतीमिति । पतिमारकत्वेन सर्वथाऽसतीम् । विषसंपन्नां रूपिणीं—दृष्टिप्रियाम् ॥ ७६ ॥

†अनृतैर्बत मां सान्त्वैः सान्त्वयन्ती [1]स्म भाषसे ।
गीतशब्देन संरुध्य लुब्धो मृगमिवावधीः ॥ ७७ ॥

सान्त्वैः—इष्टवचनैः । गीतशब्देन—गीतध्वनिना ॥ ७७ ॥

अनार्य इति मामार्याः पुत्र [2]विक्रायकं ध्रुवम् ।
[3]विकरिष्यन्ति रथ्यासु सुरापं ब्राह्मणं यथा ॥ ७८ ॥

अनार्यः—पापी इति रथ्यासु विकरिष्यन्तीति । वदिष्यन्तीति यावत् । तत्र हेतुः—पुत्रविक्रायकमिति । ण्वुलि वृद्धावायादेशः । पुत्रेण मूल्येन स्त्रीसुखं क्रीतवानित्यर्थः ॥ ७८ ॥

अहो ‡दुःखमहो कृच्छ्रं यत्र वाचः क्षमे तव ।
दुःखमेवंविधं प्राप्तं पुराकृत§मिवाशुभम् ॥ ७९ ॥

यत्र—एतादृशे विषयेऽपि तव वाचः क्षमे यतः अतः पुराकृतमशुभमेव, एवंविधदुःखं—दुःखपरिणामं सत्प्राप्तम् ॥ ७९ ॥

---

* पूर्वं सतीत्वेन ज्ञातां—इदानीमनेन व्यापारेण असतीं सतीं—असतीत्वेन स्थितां, व्यवस्यामि । कथमिव—रूपिणीं-दृष्टिप्रियां विषसंयुक्तां मदिरां पीत्वा, नरः, अनन्तरं विकारादिना यथा असतीं—दुष्टां अध्यवस्यति—गो. ति. †'नास्मि विप्रकृता देव' इत्यादिवचनानि पूर्वसर्गोक्तान्यत्र विवक्षितानि । ‡दुःखं कष्टं, कृच्छ्रं कष्टं, अहो कष्टम्! अहो कष्टम्! इति यावत्-ति. वाच इति द्वितीयाबहुवचनान्तम् । क्षमे इति लट् उत्तमैकवचनान्तम् । पुरा कृतमशुभं यथा सह्यं, तथा भवद्वाक्यश्रवणमपि मम प्राप्तम् । §इव शब्द एवार्थे । अशुभं-अशुभफलम्-ति. गो.

[1] व-ङ. [2] विक्रयिणं-ङ. [3] धिक्करिष्यन्ति-ङ.

चिरं खलु[1] मया पापे! त्वं पापेनाभिरक्षिता ।
अज्ञानादुपसंपन्ना रज्जुरुद्बन्धिनी यथा ॥ ८० ॥
रममाणस्त्वया सार्धं मृत्युं त्वां नाभिलक्षये ।
बालो रहसि हस्तेन कृष्णसर्पमिवास्पृशम् ॥ ८१ ॥

बाल इवेति योजना ॥ ८१ ॥

मया *ह्यपितृकः पुत्रः स महात्मा दुरात्मना ।
तं तु मां जीवलोकोऽयं नूनमाक्रोष्टुमर्हति ॥ ८२ ॥

मयेत्यादि । हि—यस्मात् मया दुरात्मना महात्मा पुत्रः अपितृकः—पितृप्रयुक्तराज्यरहितः कृतः, तस्मात् तं—तादृशं तु मामेवायं लोको नूनमाक्रोष्टुमर्हति । आक्रोशो—निन्दा ॥ ८२ ॥

बालिशो बत कामात्मा राजा दशरथो भृशम् ।
स्त्रीकृते यः प्रियं पुत्रं वनं प्रस्थापयिष्यति ॥ ८३ ॥

तस्या एव प्रकारः—बालिश इत्यादि । प्रस्थापयिष्यति, प्रस्थापयति, प्रातिष्ठिपदिति त्रिकाले च निन्दा द्रष्टव्या ॥ ८३ ॥

[2]व्रतैश्च ब्रह्मचर्यैश्च गुरुभिश्चोपकर्शितः ।
भोगकाले महत्कृच्छ्रं पुनरेव प्रपत्स्यते ॥ ८४ ॥

उपकर्शितः—प्रापितकार्श्यः । कृच्छ्रं—जटाद्युपेततया वने तपःक्लेशम् ॥ ८४ ॥

नालं द्वितीयं वचनं पुत्रो मां प्रतिभाषितुम् ।
[3]स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥ ८५ ॥

---

* अपितृकः—पितृकृतरक्षणादिरहितः—गो. (पित्रभावे यथा स्यात्तथा संपन्नमिति भावः ।)

[1] महापापे—ङ. [2] वेदैश्च- ङ. च. [3] इदमर्धं झ. पुस्तके नास्ति ।

नालमित्यादि। प्रव्रजेत्युक्तोऽसौ 'प्रव्रजामि' इत्येतदन्यत् द्वितीयं वचनं वक्तुं नालम्, अहमिव धर्मयन्त्रितत्वात्। अतो बाढमित्येव वक्ष्यति। न तु--* "हन्त त्वयाहमिमं यजा इति--स ह नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ" इत्यादिप्रसिद्धरोहितादिराजकुमारवत् पितृवचनलङ्घनं करिष्यतीत्यर्थः ॥ ८५ ॥

यदि मे राघवः कुर्यात् वनं गच्छेति भाषिते।
प्रतिकूलं प्रियं मे स्यात् न तु वत्सः करिष्यति ॥ ८६ ॥
राघवे हि वनं प्राप्ते सर्वलोकस्य धिक्कृतम्।
मृत्युरक्षमणीयं मां नयिष्यति यमक्षयम् ॥ ८७ ॥

ततश्च किमित्यत्राह—राघव इत्यादि। अक्षमणीयं-दुस्सहवृत्तम् ॥ ८७ ॥

---

* एतरेयब्राह्मणमिदम् (३३-२)। इयमाख्यायिका ऐतरेयब्राह्मणे त्रयस्त्रिंशाध्याये द्वितीयखण्डे दृश्यते। एवं भागवते नवमस्य सप्तमेऽध्यायेऽपि। इयञ्च साऽऽख्यायिका—ऐक्ष्वाको हरिश्चन्द्रो नाम राजा अनपत्यतया दूयमान आसीत्। नारदस्तमभ्येत्योवाच, त्वं पुत्रार्थं वरुणं प्रार्थय "मम पुत्रो यदि जायेत; तेनैव पशुना त्वां यजामीति" इति। हरिश्चन्द्रोऽप्येवं प्रार्थयामास। अथ च तस्य पुत्रोऽजनि। तस्य रोहित इति नाम कृतम्। तदवगत्य वरुणः—"सुतो जातः खलु ते, तेन मां यज त्वद्वचनरीत्या" इति पप्रच्छ। हरिश्चन्द्रस्तु पुत्रप्रेम्णा यष्टुमनिच्छन् "इदानीमेव जातः पुत्रः। दशदिनपर्यन्तमाशौचेन स अशुद्धः। तदनन्तरं यजामि" इत्यवदत्। दशदिनानन्तरं वरुणः पुनरागत्य पप्रच्छ। हरिश्चन्द्रस्तु–पुत्रस्य दन्ताः जायेरन्; तदानीमेव सर्वावयवपूर्त्या स यागयोग्यो भवेदित्यवदत्। वरुणः पुनरपि पप्रच्छ दन्तोत्पत्त्यनन्तरम्। तदापि सः इमे दन्ताः न स्थिराः, एतेषां पतनानन्तरं पुनरन्ये दृढा दन्ता जायेरन्। तदा यजामीत्यवदत्। तथैव वरुणः पुनरागच्छत्। तदानीमपि हरिश्चन्द्रः–अयं च बालः। यदायं तरुणः पूर्णवृद्धिर्भवति तदैव समीचीनो यागायेत्यब्रवीत्। सोऽपि वरुणः तथैव पुनरागच्छत्। तदानीं तु व्याजान्तरं वक्तुमसमर्थो हरिश्चन्द्रः स्वपुत्रं रोहितमाहूय सर्वं वृत्तान्तमकथयत्। स तु रोहितः पित्रे क्रुद्धः पितृवचनमुल्लङ्घ्य धनुरादायारण्यं प्रत्यगच्छदिति ॥

**मृते मयि गते रामे वनं मनुजपुङ्गवे ।**
**[1]इष्टो मम जनः शेषः * किं पापं प्रतिपत्स्यते ॥ ८८ ॥**

किं पापं—कीदृशं दुःखम् । मनोवागगोचरमिति यावत् ॥

**[2] † कौसल्या मां च रामं च पुत्रौ च यदि ‡ हास्यति ।**
**दुःखान्यसहती देवी मामेवानुमरिष्यति ॥ ८९ ॥**

तदेव दुःखं दर्शयति—कौसल्येत्यादिना । पुत्रौ चेति । लक्ष्मणशत्रुघ्नाविति यावत् । कौसल्या मां रामं च यदा हास्यति तदा दुःखान्यसहती मामेवानुमरिष्यति, देवी सुमित्रा च; लक्ष्मणस्य रामानियतसहगमनात्, इतरस्य च दैवादद्य भरतेन सह गतत्वाच्च, ताभ्यां मया च रहिता सा मामेवानुमरिष्यति ॥ ८९ ॥

**कौसल्यां च सुमित्रां च मां च पुत्रैः त्रिभिस्सह ।**
**प्रक्षिप्य § नरके सा त्वं कैकेयि! सुखिता भव ॥ ९० ॥**

एवञ्च सति—कौसल्यामित्यादि ॥ ९० ॥

---

* शेषे—अवशिष्टे ममेष्टे कौसल्यादिरूपे जने किं पापं-दुःखसाधनं प्रतिपत्स्यसे—करिष्यसि—**ति.** पापं—अन्याय प्रतिपत्स्यसे—चिन्तयसि—**गो.** † हास्यति—हीना भविष्यति । चात्सुमित्रा । यदि पुत्रौ च, चाद्रामं मां च, एतैर्यदि हीना भविष्यति तदा देवी—कौसल्या सुमित्रा च—**ति.** गोविन्दराजीये तु—कौसल्यां—इति पाठः । देवी सुमित्रा ॥ अत्र वाक्यशैलीपर्यालोचनायां ९०तमश्लोकदर्शने च त्रयाणां विवक्षा अङ्गीकरणीया । तत्र 'राघवे हि' इत्यत्र स्वदुर्गतिः, 'मृते मयि' इत्यत्र कौसल्यादुर्गतिः, 'कौसल्यां मां च' इत्यत्र सुमित्रादुर्गतिश्चोच्यत इति युक्तम् । एवञ्च 'कौसल्यां' इति पाठः स्वरस इव । एवञ्च जनः—कौसल्यारूपः विवक्षितः । अन्यथा 'पुत्रौ' इति द्विवचनान्वयार्थं वाक्यभेदाश्रयणं, 'देवी' पदस्य सुमित्रापरत्वं च शपथमात्रनिर्णेयं स्यादिति. ‡ राज्ञः शोकाविष्टत्वाद्विसंष्ठुलवाक्यप्रयोगो न दोषाय—**ति.** एवं च वाक्यद्वयात्मकमिदं श्लोकमिति भावः. § अत्र नरकशब्देन दुःखं लक्ष्यते—**गो.**

[1] इष्टे मम जने शेषे किं पापं प्रतिपत्स्यसे—**ङ. च.** [2] कौसल्यां, सुमित्रा—**ङ.**

मया रामेण च त्यक्तं शाश्वतं सत्कृतं गुणैः ।
इक्ष्वाकुकुल*मक्षोभ्यमाकुलं पालयिष्यसि ॥ ९१ ॥

मया रामेणेत्यादिः व्यङ्ग्योक्तिः ॥ ९१ ॥

प्रियं चेद्भरतस्यैतद्रामप्रव्राजनं भवेत् ।
[1]मा स्म मे भरतः कार्षीत् प्रेतकृत्यं गतायुषः ॥ ९२ ॥

रामप्रव्राजनस्य भरतानुमतौ स तु मे शत्रुरेवेत्याशयेनाह—मा कार्षीत्प्रेतकृत्यामिति ॥ ९२ ॥

मृते मयि गते रामे वनं पुरुषपुङ्गवे ।
सेदानीं विधवा राज्यं सपुत्रा कारयिष्यसि ॥ ९३ ॥
त्वं राजपुत्रि! †दैवेन ‡न्यवसेर्मम वेश्मनि ।
अकीर्तिश्चातुला लोके ध्रुवः परिभवश्च मे ।
सर्वभूतेषु चावज्ञा यथा पापकृतस्तथा ॥ ९४ ॥

राजा पुत्रो यस्याः सा राजपुत्री, तस्याः सम्बुद्धिः । 'सूतोग्रे' इत्यादिना पुत्रार्थपुत्रट्प्रातिपदिकान्तत्वेन दीर्घः । इयमपि व्यङ्ग्योक्तिः । दैवेन मामकदुरदृष्टवशात् मम वेश्मनि न्यवसेर्यदि, 'अट्' आर्षः, तदा लोके—अप्रत्यक्षोऽपयशः अकीर्तिः परिभवः—महाजनसमक्षं धिक्कारः अवज्ञा—अवमतिः—क्षुद्रत्वेन प्रतिपत्तिः । पापकृतः—महापापकृतः ॥ ९४ ॥

---

* एतावता अक्षोभ्यं—इदानीं आकुलं क्षुभितम् । एवं इतरत्रापि. † 'त्वं राजपुत्रीवादेन' इति गोविन्दराजीयपाठः ॥ अकीर्त्यादित्रयरूपा त्व राजपुत्रीव्यपदेशेन मम वेश्मनि न्यवसः—गो. ‡ अत्र 'न्यवसः' इति—तिलके—गोविन्दराजीये च पाठः । यतो न्यवसः—अतः अकीर्तिरित्याद्येतत्सर्वं भविष्यतीति शेषः—ति.

[1] एतदनन्तरं—'हन्तानार्ये ममामित्रे सकामा भव कैकयि' इत्यधिकं—ङ.

कथं रथैर्विभुर्यात्वा गजाश्वैश्च मुहुर्मुहुः ।
पद्भ्यां रामो महारण्ये वत्सो मे विचरिष्यति ॥ ९५ ॥
यस्य त्वाहारसमये सूदाः कुण्डलधारिणः ।
अहंपूर्वाः पचन्ति स्म [1]प्रशस्तं पानभोजनम् ॥ ९६ ॥

सूदाः—पाचकाः ॥ ९६ ॥

स कथं नु कषायाणि तिक्तानि कटुकानि च ।
भक्षयन्वन्यमाहारं सुतो मे वर्तयिष्यति ॥ ९७ ॥
महार्हवस्त्रसम्बद्धो भूत्वा चिरसुखोचितः ।
काषायपरिधानस्तु कथं रामो भविष्यति ॥ ९८ ॥
*कस्यैतद्दारुणं वाक्यं एवंविध[2]मचिन्तितम् ।
रामस्यारण्यगमनं भरतस्याभिषेचनम् ॥ ९९ ॥

रामस्यारण्यगमनं, भरतस्याभिषेचनमित्येवंविधमचिन्तितमेतद्दारुणं वाक्यं—वाक्यश्रवणं, कस्य—कीदृशस्य मम दुष्कर्मणः फलम् ॥ ९९ ॥

धिगस्तु योषितो नाम शठाः स्वार्थपराः सदा ।
†न ब्रवीमि स्त्रियः सर्वा भरतस्यैव मातरम् ॥ १०० ॥

धिगस्त्विति । एवंक्रूरवचना इति शेषः । तमेव विशेषमभिप्रेत्याह—न ब्रवीमीत्यादि ॥ १०० ॥

---

* कस्य-केनोपदिष्टं, यद्वा—कस्य सह्यमिति शेषः-गो. वस्तुतस्तु-एतादृशं दारुणं वाक्यं कस्य वा स्यात्—न कस्यापीत्यर्थः । दुःखातिशयादर्धोक्त एव विरामः.
† कौसल्यास्मरणेनाह—न ब्रवीमीत्यादि.

[1] प्रसन्नाः—ङ. च. [2] मपीरितं–ङ. च.

अनर्थभावेऽर्थपरे ! नृशंसे !
ममानुतापाय निविष्टभावे !
किमप्रियं पश्यसि[1] मान्निमित्तं
हितानुकारिण्यथ वापि रामे ॥ १०१ ॥

स्वपरानर्थसाधने भावो यस्याः सा तथा । निविष्टो—निवेशितो दुर्भावो यस्याः सा तथा । मानिमित्तमिति । मन्निमित्तमिति यावत् ॥ १०१ ॥

*परित्यजेयुः पितरोऽपि पुत्रान्
भार्याः पतींश्चापि [2]कृतानुरागान् ।
कृत्स्नं हि सर्वं कुपितं जगत्स्यात्
दृष्ट्वैव रामं व्यसने निमग्नम् ॥ १०२ ॥

कृतानुरागशब्दः पुत्रपतिभार्याणां त्यागानौचित्यहेतुः—यथोचितविपरिणामः पुत्रादिषु योज्यः । कृतानुरागान्—पुत्रान् त्यजेयुः किं? 'च' 'अपि' शब्दात् पतयश्च कृतानुरागा भार्यास्त्यजेयुः किं? इति योज्यम् । कृत्स्नं रामप्रवाससाधकं त्वद्व्यापारं दृष्ट्वा—रामं च तद्वशाद्व्यसने निमग्नं दृष्ट्वा सर्वं जगत् त्वां † प्रत्येव कुपितं स्यात् ॥१०२॥

अहं पुनर्देवकुमाररूपं
अलंकृतं तं सुतमाव्रजन्तम् ।
नन्दामि [3]पश्यन्नपि दर्शनेन
भवामि दृष्ट्वा च पुनर्युवेव ॥ १०३ ॥

---

* कुपितं जगत्स्यादित्यत्रोक्तकोपप्रकारमाह—परित्यजेयुरित्यादि । अनेन अनर्थसाधनभाववत्तोपपादिता—ति. † त्वां प्रतीति शेषः-गो.

[1] अत्र मन्निमित्तमित्येव प्रायः पाठः-ङ. [2] कृतानुरागाः-ङ. [3] पश्यन्निव-ङ. च.

अन्ततः स्वस्य रामं विना जीवनव्यतिरेकं दर्शयिष्यन् तदन्वये स्वजीवनान्वयं दर्शयति—अहमित्यादि। आव्रजन्तं पश्यन्नहं दर्शनेन* तस्य दूरदर्शनेनापि नन्दामि। आगतं अन्तिके दृष्ट्वा चिरवृद्धोऽहं पुनर्युवेव भवामि—युववदतिहृष्टपुष्टान्तर्बहिःपरिकरो भवामि॥ १०३॥

[1]विना †हि सूर्येण भवेत् ‡प्रवृत्तिः
अवर्षता वज्रधरेण वाऽपि।
रामं तु गच्छन्तमितः समीक्ष्य
जीवेन्न कश्चित्त्विति चेतना मे॥ १०४॥

हिशब्दो यद्यप्यर्थे। सूर्येण विना यद्यपि प्रवृत्तिः स्यात्, तथा वज्रधरेणावर्षतापि जीवनमपि यद्यपि स्यात्; अथापि राममितो गच्छन्तं वीक्ष्य न कश्चिदप्यनुभूतरामस्वभावो लोको जीवेदिति तु मे चेतना—धीः। लोकस्यैवैवंदशत्वे मद्जीवनं कैमुतिकसिद्धम्॥ १०४॥

विनाशकामामहितामभित्रां
आवासयं मृत्युमिवात्मनस्त्वाम्।
चिरं बताङ्केन भृताऽसि सर्पी
महाविषा तेन हतोऽस्मि मोहात्॥ १०५॥

---

* आव्रजन्तं मत्समीपे आगच्छन्तं श्रुत्वेति शेषः। आगच्छन्तं श्रुत्वा दर्शनेन—चक्षुषा पश्यन्निव नन्दामि—ति. आव्रजन्तं दर्शनेन—मानसज्ञानेन पश्यन्नपि नन्दामि—**गो.** 'मत्तमातङ्गगामिनं' इत्याद्युक्तरीत्या। अथवा दर्शनेन—चक्षुषा इत्यर्थः। आगच्छन्तं तं मनसा स्मरन्नपि नन्दामीति भावः. † हिशब्दो अपीत्यर्थे—**ति.** ‡ प्रवृत्तिः—संचारः, वज्रधरपक्षे—जीवनविषयप्रवृत्तिः—**गो.**

[1] विनाऽपि—**ङ. झ.**

सर्पी— जातिलक्षणो ङीष् । मोहादङ्केन भृताऽसि इति योजना । तेन अङ्कभरणेन हेतुना ॥ १०५ ॥

मया च रामेण च लक्ष्मणेन
प्रशास्तु हीनो भरतस्त्वया सह ।
पुरं च राष्ट्रं च महीं सपर्वतां
*ममाहितानां च [1] भवाभिहर्षिणी ॥ १०६ ॥

नृशंसवृत्ते ! † व्यसनप्रहारिणि !
प्रसह्य वाक्यं यदिहाद्य भाषसे ।
न नाम ते केन मुखात्पतन्त्यधः
विशीर्यमाणा [2] दशनाः सहस्रधा ॥ १०७ ॥

इह—देशे अद्य—काले प्रसह्य—पतिपत्नीभावं तिरस्कृत्य क्रूरं वाक्यं भाषसे यत्, अतोऽवश्यप्राप्तविशरणाः दन्ताः केन नाम हेतुना ते मुखाद्विशीर्यमाणा न पतन्तीति न जान इति शेषः ॥

न किञ्चिदाहाहितमप्रियं वचो
न वेत्ति रामः परुषाणि भाषितुम् ।
कथं नु रामे ह्यभिरामवादिनि
ब्रवीषि दोषान् ‡ गुणनित्यसम्मते ॥ १०८ ॥

---

* अहितानां—शत्रूणां अभिभाषणशीला भव, मदासानामभावात् । अभिहर्षिणीति पाठे· तेषां हर्षदा भव—ति. † व्यसनप्रहारिणि—वार्धक्यरूपापदि पुत्रवियोगकारिणि—ति. व्यसने—रामविरहे पुनः पुनः प्रेरणं—प्रहारः—गो. ‡ गुणैर्नित्यं सर्वेषां सम्मते.

[1] भवाभिभाषिणी—ङ. च. [2] रसना—ङ.

*प्रताम्य वा प्रज्वल वा प्रणश्य वा
सहस्रशो वा [1]स्फुटिता महीं व्रज ।
न ते करिष्यामि वचस्सुदारुणं
समाहितं केकयराजपांसने! ॥ १०९ ॥

महीं व्रज—अथापि न ते वचः करिष्यामि । आकाशखण्डनवदशक्यार्थत्वादित्याशयः ॥ १०९ ॥

क्षुरोपमां नित्य†मसत्प्रियंवदां
प्रदुष्टभावां स्वकुलोपघातिनीम् ।
न [2]जीवितुं त्वां विषहे [3]‡मनोऽरमां
दिधक्षमाणां हृदयं सबन्धनम् ॥ ११० ॥

असत्प्रियंवदां—मिथ्याप्रियवादिनीम् । तदेव प्रकटीकरोति—प्रदुष्टभावामिति । मनसस्त्वरमा—मनोऽरमा । हृदयं सबन्धनमिति । सप्राणं मन इति यावत् , 'प्राणबन्धनं हि सौम्य मनः' इति श्रुतेः, प्राणबन्धनसहितमिति भावः । त्वां जीवितुं न विषहे । एतादृशी स्त्री नश्यत्वित्येवाशास इति यावत् ॥ ११० ॥

न जीवितं मेऽस्ति कुतः पुनः सुखं
विनाऽऽत्मजेना[4]त्मवतः कुतो रतिः ।

---

* प्रताम्य—ग्लानिं भज । ताम्यतेर्लोण्मध्यमपुरुषैकवचनम् । एवं प्रज्वल—कुपिता भव । प्रणश्य—नष्टा भव । सहस्रशः स्फुटिता सती, महीं व्रज—भूगोः पत वा—गो. प्रताम्य—ग्लायस्व । प्रज्वल—अग्निप्रवेशेन । प्रणश्य—विषेण । कुद्दालप्रहारैः सहस्रशः स्फुटितां—कृतगर्तां महीं व्रज वा—ति. † एतावता यत् प्रियंवदस्त्वं आसीत् , तत् मिथ्येत्यर्थः । ‡ अमनोरमामिति पदच्छेदः—गो.

[1] स्फुटितां—ङ. च. [2] जीवतीं—ङ. [3] ऽमनोरमां—ङ. [4] त्मवता—ङ.

ममाहितं देवि! न कर्तुमर्हसि
स्पृशामि पादावपि ते प्रसीद मे ॥ १११ ॥

कुतो रतिरिति-त्वया सहेति शेषः। यदेवं अतो—ममेत्यादि ॥

स भूमिपालो विलपन्ननाथवत्
स्त्रिया गृहीतो हृदयेऽतिमात्रया।
पपात देव्याश्चरणौ प्रसारितौ
उभावसंप्राप्य, यथातुरस्तथा ॥ ११२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्वादशः सर्गः

———

स्त्रिया—स्त्रीमूलव्यथया। देव्याः प्रसारितौ चरणावित्यनेन, पत्यौ राजनि चाधमर्णदासदृष्टिरिति द्योत्यते। असंप्राप्य पपातेत्यनेन पस्पृक्षोरपि चित्तमूर्छाजनितवैवश्यं द्योतितम्। आखुकाय (११२ १/२) मानः सर्गः ॥ ११२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्वादशः सर्गः

———

## त्रयोदशः सर्गः

[दशरथविलापः]

*अतदर्हं महाराजं शयानमतथोचितम्।
ययातिमिव पुण्यान्ते देवलोकात्परिच्युतम् ॥ १ ॥

अथ सत्यपाशबद्धत्वेन 'न ते करिष्यामि वचः' इति दृढं वक्तुमशक्नुवन्, पुनरपि प्रसादयति—अतदर्हमित्यादि। अतदर्हं—स्त्रीप्रणामानर्हं। अतथोचितं—भूशयनानर्हम् ॥ १ ॥

---

* तादृशदुःखानर्हं-गो.

* अनर्थरूपाऽसिद्धार्था ह्यभीता [1] भयदर्शिनी ।
पुनराकारयामास तमेव वरमङ्गना ॥ २ ॥

अनर्थरूपेति । कुलस्येति शेषः । भयदर्शिनीति । राज्ञ इति शेषः । तमेव वरं आकारयामास—दातव्यत्वेन ग्राहयामास ॥ २ ॥

त्वं [2] † कथ्यसे महाराज! सत्यवादी दृढव्रतः ।
मम चेमं वरं कस्माद्विधारयितुमिच्छसि ॥ ३ ॥

तदेवोच्यते—कथ्यस इत्यादि । ‡ विधारयितुमिति—ऋणत्वेनेति शेषः ॥ ३ ॥

एवमुक्तस्तु कैकेय्या राजा दशरथस्तदा ।
प्रत्युवाच ततः क्रुद्धो मुहूर्तं विह्वलन्निव ॥ ४ ॥
मृते मयि गते रामे वनं मनुजपुङ्गवे ।
हन्तानार्ये! ममामित्रे! सकामा [3] सुखिनी भव ॥ ५ ॥
§ स्वर्गेऽपि खलु रामस्य कुशलं दैवतैरहम् ।
प्रत्यादेशादभिहितं धारयिष्ये कथं बत! ॥ ६ ॥

---

* अनर्थरूपा-पापरूपा-**गो.** अभीता—लोकापवादाभीता । भयदर्शिनी—दशरथस्येति शेषः । यद्वा अभयदर्शिनी—दशरथस्य (प्राण) भयमपश्यन्ती वरमुद्दिश्य आकारयामास-संबोधयामास-**गो.** भयदर्शिनी—रामाद्भरतस्येति शेषः—(**ति**).
† कथ्यसे-जनैरिति शेषः ॥ कत्थसे—इतिपाठे श्लाघसे इत्यर्थः. ‡ नाशयितुमिति वाऽर्थः. § एतद्व्याख्यारीत्या—पूर्वार्धमेकं वाक्यम् । तत्र, पृष्टः कथं प्रत्युत्तरं वदिष्ये—इति शेषः । द्वितीयार्धं तु भिन्नं वाक्यम् । गोविन्दराजीयरीत्या, सर्वमेकवाक्यं-रामस्य कुशलं प्रति पृष्टोऽहं मदुक्तात्प्रत्यादेशात्तैरभिहितनिन्दादिकं कथं धारयिष्ये—इति ।

[1] पापदर्शिनी-**ङ.** [2] कत्थसे-**ङ.** [3] सुखिता भव-**ङ.** भव कैकयि-**झ.**

इह रामप्रवासनदुःखमृतस्य मृत्वा स्वर्गेऽपि सौख्यं नास्ति। अतस्त्वदिष्टं कृत्वा मरणापेक्षया रामाभिषेचनमेव मे हितमित्याशयेनाह—स्वर्ग इत्यादि। त्वद्वचनं कृत्वा मृत्वा मयि स्वर्गं गते स्वर्गेऽपि दैवतैः रामस्य कुशलं पृष्टोऽहं 'प्रत्याख्यातवानस्मि रामं' इति कथं प्रत्युत्तरं वदिष्ये। अथ प्रत्यादेशात्—त्वदिष्टसंपादनाय रामप्रत्यादेशाद्धेतोः दैवैर्यदभिहितं भविष्यति—'किं मूढ! ज्येष्ठं श्रेष्ठगुणैर्युक्तं कथं प्रत्याख्यातवानसि' इति—तदेतदभिहितं कथं देवसभायां धारयिष्ये, बत! अतस्तदप्रत्याख्यानमेव वरमिति मन्य इत्याशयः ॥ ६ ॥

कैकेय्याः प्रियकामेन रामः प्रव्राजितो * मया।
यदि सत्यं ब्रवीम्येतत् † तदसत्यं भविष्यति ॥ ७ ॥

ननु 'सत्यवशात्प्रत्यादिष्टवान्' इत्युत्तरं ब्रूहीत्यत्राह—कैकेय्या इत्यादि। ‡ गतार्थम् ॥ ७ ॥

अपुत्रेण मया पुत्रः श्रमेण महता महान्।
रामो लब्धो महाबाहुः स कथं त्यज्यते मया ॥ ८ ॥
शूरश्च कृतविद्यश्च जितक्रोधः क्षमापरः।
कथं कमलपत्राक्षो मया रामो विवास्यते ॥ ९ ॥
कथमिन्दीवरश्यामं दीर्घबाहुं महाबलम्।
अभिराममहं रामं प्रेषयिष्यामि दण्डकान् ॥ १० ॥

---

* मयेत्यनन्तरं इतिकरणं द्रष्टव्यं—गो. † तदसत्यं भविष्यति—"श्वस्त्वाहमभिषेक्ष्यामि यौवराज्ये परन्तप" इति पूर्वोक्तमसत्यं भविष्यति—गो. प्रियकामेन—प्रियेण वरेण। असत्यं भविष्यति—असत्यं मंस्यन्त इत्यर्थः। कामुकतया प्रत्याख्यात इत्येव मंस्यन्त इत्यर्थः—ति. ‡ पूर्वस्मिन्नेव सर्गे व्याकृतत्वादित्यर्थः।

सुखानामुचितस्यैवं दुःखैरनुचितस्य च ।
दुःखं नामानुपश्येयं कथं रामस्य धीमतः ॥ ११ ॥

दुःखैरनुचितस्येति । षष्ठयर्थे तृतीया ॥ ११ ॥

यदि दुःखमकृत्वाऽद्य मम संक्रमणं भवेत् ।
*अदुःखार्हस्य रामस्य ततः सुखमवाप्नुयाम् ॥ १२ ॥

सर्वथा रामस्य दुःखाकरणमेव स्वहितमित्याह––यदीत्यादि । अदुःखार्हस्य रामस्य अद्य दुःखमकृत्वा इह सुखितस्य मम कालान्तरे स्वर्गस्य संक्रमणं भवेद्यदि तदा स्वर्गेऽपि सुखमाप्नुयाम् । तस्या वरं एतद्व्यतिरिक्ताकिञ्चिदर्थेन कृतार्थीकर्तव्यम् । अस्यादानेऽप्यशक्यार्थत्वाद्दोषो न भविष्यतीत्याशयः ॥ १२ ॥

नृशंसे! पापसंकल्पे! रामं सत्यपराक्रमम् ।
†किं विप्रियेण कैकेयि! प्रियं योजयसे मम ॥ १३ ॥
अकीर्तिरतुला लोके ध्रुवः परिभवश्च मे ।
तथा विलपतस्तस्य परिभ्रमितचेतसः ॥ १४ ॥
अस्तमभ्यागमत्सूर्यो रजनी चाभ्यवर्तत ।
‡सा त्रियामा तथाऽऽर्तस्य चन्द्रमण्डलमण्डिता ॥ १५ ॥
राज्ञो विलपमानस्य न व्यभासत शर्वरी ।

---

* अदुःखार्हस्य रामस्य दुःखमकृत्वैव यद्यद्यैव मम मरणं भवेत्––तदानीं सुखमवाप्नुयां––एवं मरणे वराप्रदानजन्यदोषोऽपि न । जीवतो हि सा प्रतिज्ञा––**ति. गो.** 'स्वर्गेऽपि खलु रामस्य' (६ श्लो.) इत्येतच्छेषभूतोऽयं श्लोकः. † किं––किमर्थं––**गो.**
‡ अत्रियामा––यामत्रयवत्वं विहायातिदीर्घा––**गो.**

अस्तमित्यादि । यदा राज्ञः स्वनिवेशप्रवेशकालात्पूर्वं सूर्योऽस्तमभ्यागमत् रजनीचाभ्यवर्तत, सा त्रियामा—रजनी विलपमानस्य राज्ञो न व्यभासत । विलापनेनैव रात्रिकालो व्यतीत इत्यर्थः । * अथ सा शर्वरी व्यभासत विभाता च इत्यावृत्त्य योजना ॥ १५ ॥

तथैवोष्णं विनिश्वस्य वृद्धो दशरथो नृपः ॥ १६ ॥
विललापार्तवद्दुःखं गगनासक्तलोचनः ।

आर्तवत्—स्वार्थे वतिरित्युक्तम् † ॥ १६ ॥

‡ न प्रभातं [1]त्वयेच्छामि निशे नक्षत्रभूषिते! ॥ १७ ॥
क्रियतां मे दया भद्रे! मयाऽयं रचितोऽञ्जलिः ।

अथ दुःखवशाद्रात्र्या अव्युष्टिं प्रार्थयते—न प्रभातमित्यादि । भावे निष्ठा । त्वया प्रभातमिति । त्वत्कर्तृकप्रभातमिति यावत् । मे—मह्यम् ॥ १७ ॥

§ अथवा गम्यतां शीघ्रं नाहमिच्छामि निर्घृणाम् ॥ १८ ॥

---

* 'न प्रभातं त्वयेच्छामि' इत्युत्तरत्र प्रार्थनानुरोधेन एवमावृत्त्य योजना कृता ॥
† द्वादशसर्गे अष्टपञ्चाशश्लोके 'विपरीतवत्' इत्यत्र स्वार्थे वतिरिति व्याख्यातम् ॥ आर्तवत्—रोगपीडित इव इत्यपि योजना कृता—ति. गो. ‡ रात्रिं प्रति प्रार्थयते—न प्रभातमिति ॥ अन्यथा 'निशे' इत्यस्यासाधुतापत्तेः । अतस्तिलकोक्तव्याख्यानं श्रेयः । तथा हि—हे निशे ('तवेच्छामि' इति पाठः) तव प्रभातं नेच्छामि । हे भद्रे निशे एवं हि तस्याः कल्याणदत्वम् । प्रभाते रामविवासनभयादिति भावः । मे—मह्यं दया क्रियताम्. § अथवा त्वया गम्यताम् । (निर्घृणायाः कैकेय्या दर्शनापेक्षया प्रभाते मम मरणमपि श्रेय इति भावः) रात्र्यपगमे हि प्रजासन्निधानेनैतद्दर्शनं न स्यात् । यद्वा—रामविवासनेन मरणे वा मम, तस्या दर्शनं न स्यादिति भावः—ति. त्वयेति पाठे—त्वया गतया जायमानं प्रभातमित्यर्थः—ति.

[1] तवेच्छामि—ङ. च.

**नृशंसां कैकयीं द्रष्टुं यत्कृते व्यसनं महत् ।**

अथवा गम्यतां शीघ्रमिति । रात्रिरिति शेषः । स्त्रीदर्शनं रात्रावेव भवति । तदत्यये प्रजा आयान्ति राज्ञः सकाशम् । अतोऽस्यास्तु दर्शनपरिहारो भविष्यतीत्याशयः ॥ १८ ॥

**एवमुक्त्वा ततो राजा कैकेयीं संयताञ्जलिः ॥ १९ ॥**
**प्रसादयामास पुनः कैकेयीं चेदमब्रवीत् ।**
**साधु[1]वृत्तस्य दीनस्य *त्वद्गतस्य गतायुषः ॥ २० ॥**
**प्रसादः क्रियतां भद्रे ! देवि ! राज्ञो विशेषतः ।**

त्वद्गतस्येति । सत्यवशात् त्वद्वशगस्येत्यर्थः ॥ २० ॥

**† शून्येन खलु सुश्रोणि ! मयेदं [2]समुदाहृतम् ॥ २१ ॥**
**कुरु साधुप्रसादं मे बाले ! सहृदया ह्यसि ।**

शून्येनेति । प्रणष्टसर्वाहंभावेनेति यावत् ॥ २१ ॥

**प्रसीद देवि ! [3]रामो मे त्वद्दत्तं राज्यमव्ययम् ॥ २२ ॥**
**लभतामसितापाङ्गे ! यशः पर[4]मवाप्स्यसि ।**

तदेव दर्शयन्नाह—त्वद्दत्तमिति । त्वया वरबलाद्गृहीतमेव राज्यं मत्प्रीत्यर्थं रामाय देहीत्यर्थः ॥ २२ ॥

---

* त्वद्गतस्य–त्वदेकशरणस्येत्यर्थः-**गो.** गतायुषः—अल्पावशेषमतीतायुषः । गतप्रायायुष इति वा. † शून्ये—निर्जनप्रदेशे "शून्यं बिन्दौ च निर्जने" इति हैमः । इदं रामाभिषेचनं रहसि न समुदाहृतम् । अपि तु सर्वजनसन्निधावित्यर्थः-**गो. ति.** यद्वा शून्येन—दीनेन मया । यद्वा—त्वद्गतस्येत्युक्तरीत्या गत्यन्तरशून्येनेत्यर्थः । यद्वा—शून्ये—दयादिगुणशून्ये न समुदाहृतम् । न ह्यरण्यरुदितं कृतं, अपि तु गुणवत्येवेत्यर्थः । तदेतदाह—सहृदया ह्यसीति ॥

[1] वृद्धस्य-ङ. [2] समुपाहृतं–ङ. [3] रामोऽपि–ङ. [4] मवाप्नुहि–ङ.

मम रामस्य लोकस्य गुरूणां भरतस्य च ॥ २३ ॥
प्रियमेतद्गुरुश्रोणि! कुरु चारुमुखेक्षणे!

गुर्वी श्रोणिः यस्याः सा तथा ॥ २३ ॥

विशुद्धभावस्य हि दुष्टभावा
*ताम्रेक्षणास्याश्रुकलस्य राज्ञः।
श्रुत्वा विचित्रं करुणं विलापं
भर्तुर्नृशंसा न चकार वाक्यम् ॥ २४ ॥

अश्रुकलः—अश्रुपूर्णः, कलिः—कामधेनुः ॥ २४ ॥

ततः स राजा [1]पुनरेव मूर्छितः
†[2]प्रियामदुष्टां प्रतिकूलभाषिणीम्।
समीक्ष्य पुत्रस्य विवासनं प्रति
क्षितौ विसंज्ञो निपपात दुःखितः ॥ २५ ॥

ततस्स इत्यादि। तद्रात्रेः प्राक् नित्यमदुष्टां—पतिव्रतां, तत्काले दैवात्प्रतिकूलभाषिणीं तां समीक्ष्य पुत्रस्य विवासनं प्रति क्रियमाणं [3]तद्वचनं च वीक्ष्य चिरपरिचितप्रेमत्वात् तां धिक्कर्तुं, अतिप्रयासलब्धसुगुण[4]पुत्रत्वात्तं च त्यक्तुमशक्नुवन् कर्तव्यमूढो मूर्छितः क्षितौ निस्संज्ञः पपात ॥ २५ ॥

---

* ताम्रेक्षणस्य। दुःखातिशयेनेति शेषः—गो. † अतुष्टां इति तिलके पाठः। एतावदुक्त्यापि अतुष्टां रामविवासने बद्धश्रद्धामिति यावत्। वस्तुतस्तु—अदुष्टामित्येव स्वरसः पाठः। तस्या धिक्करणहेत्वभावोऽनेनोक्तः। मया प्रतिज्ञातं वरं खलु याचते सा, अतः कथं सा दुष्टा, प्रत्युत तदुल्लंघने अहमेव दुष्टः स्यामिति सत्यपाशबद्धस्य राज्ञ आशयः।

[1] भयमोहमूर्छितः—ङ. [2] प्रियामतुष्टां—ङ. च. झ. [3] तद्वरं—घ.
[4] पुत्ररत्नं—घ.

इतीव राज्ञो व्यथितस्य सा निशा
जगाम घोरं श्वसतो मनस्विनः ।
विबोध्यमानः प्रतिबोधनं तदा
निवारयामास स राजसत्तमः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्रयोदशः सर्गः

श्वसत इति । दीर्घमुष्णं विनिश्वसत इति यावत् । विबोध्यमानः—सूतमागधबन्दिभिर्वादित्रोपेतैरिति शेषः । प्रतिबोधनं निवारयामासेति । तादृग्व्यवहारस्य दुःखानर्हत्वादेव । अचिर (२६१/२) मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे त्रयोदशः सर्गः

## चतुर्दशः सर्गः

[कैकेय्युपालम्भः]

पुत्रशोकार्दितं पापा विसंज्ञं पतितं भुवि ।
*विवेष्टमानमुद्वीक्ष्य [1] सैक्ष्वाकमिदमब्रवीत् ॥ १ ॥

अथैवंदशेऽपि राजनि कैकयी मन्निमित्ततो राजा वा म्रियतां, तन्निमित्ततोऽहं वा म्रिये इति सर्वथा निश्चिनोति । पुत्रेति ॥ १ ॥

* विचेष्टमानमिति कुत्रचित्पाठः । तदा विशब्दो विप्रियमित्यादाविव नञर्थः । अचेष्टमानमित्यर्थः—स.

[1] ऐक्ष्वाक—ङ. च.

पापं * कृत्वेव किमिदं मम संश्रुत्य संश्रवम् ।
शेषे क्षितितले सन्नः स्थित्यां स्थातुं त्वमर्हसि ॥ २ ॥

मम संश्रवं–वरदानप्रतिज्ञां संश्रुत्य–अङ्गीकृत्य तदकरणरूपं पापं कृत्वेव–कृत्वैव सन्नः–अवसन्नः क्षितितले शेष इति किमिदं— न किमपि प्रयोजनम् । अतः स्थित्यां–सत्यपरिपालनमर्यादायां स्थातुं त्वमर्हसि । न त्वन्यायतः सत्यपरिपालने प्राणसंशयो युक्त इति भावः ॥ २ ॥

आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः ।
सत्यं संश्रुत्य हि मया त्वं च धर्मे प्रचोदितः ॥ ३ ॥

सत्यपरिपालने प्राणसंशये जाते प्राणादपि सत्यमेव रक्षणीयमिति सदृष्टान्तमाह—सत्यं संश्रुत्येत्यादि । गतार्थम् ॥ ३ ॥

संश्रुत्य शैब्यः श्येनाय स्वां तनुं जगतीपतिः ।
प्रदाय पक्षिणे राजन् ! जगाम गतिमुत्तमाम् ॥ ४ ॥
तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे ।
[1]याचमाने स्वके नेत्रे [2]उद्धृत्याविमना ददौ ॥ ५ ॥
सरितां तु पतिः स्वल्पां मर्यादां †[3]सत्यमन्वितः ।
सत्यानुरोधात्समयं वेलां स्वां नातिवर्तते ॥ ६ ॥

सरितां पतिः सत्यमनु–सत्यमनुप्राप्य सूक्ष्मां सत्यस्य मर्यादां इतः–प्राप्तस्सन् सत्यानुरोधात्–सत्यपरिपालनहेतोरेव स्वां वेलां–तीरं ‡ स्वं समयं–प्रतिज्ञां च नातिवर्तते ॥ ६ ॥

---

* अत्र–इवशब्द एवार्थे, गोविन्दराजीये तु 'कृत्वैव' इत्येव पाठः. † सत्यमन्वितः–सत्यं प्राप्तः सत्यानुरोधात्–सत्यत्यागभयात्, स्वल्पां मर्यादां सुलङ्घ्यामपि वेलां समये चन्द्रोदयरूपे वृद्धिसमयेऽपि नातिवर्तते–ति. ‡ 'स्वां' इति पुल्लिङ्गान्ततया परिणतमाकृष्टमस्य विशेषणम् .

[1] याच्यमानः–ङ. [2] उद्धृत्य सुमना–ङ. [3] सत्यसम्मितः–ङ.

***सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः ।**
**सत्यमेवाक्षया वेदाः सत्येनैवाप्यते परम् ॥ ७ ॥**
**सत्यं समनुवर्तस्व यदि धर्मे धृता मतिः ।**
**स वरः सफलो मेऽस्तु वरदो ह्यसि सत्तम ! ॥ ८ ॥**

एकपदं—एकवाक्यत्वलक्षणं सत्यमेव ब्रह्म । सत्यमेवावलम्ब्य परं पदं प्राप्यते । यदेवं अतस्सत्यमेवानुवर्तस्व ॥ ८ ॥

**† [1]स धर्मस्याभिकामार्थं मम चैवाभिचोदनात् ।**
**प्रव्राजय सुतं रामं त्रिः खलु त्वां ब्रवीम्यहम् ॥ ९ ॥**

परमं कर्तव्यं सिद्धान्तन्यायोपेतमाह—स धर्मस्येत्यादि । स त्वं त्वल्लोकसिद्धिप्रयोजनकस्य धर्मस्यैव, अभिकामार्थं—पालनार्थं क्रियमाणान्ममाभिचोदनात्—नियोगात् सुतं रामं प्रव्राजय । एवं त्वामहं खलु त्रिर्ब्रवीमि । अतो नाहमस्मात्स्ववरग्रहात्सर्वथा निवर्तय इति शेषः ॥

**समयं च [2]ममार्येमं यदि त्वं न करिष्यसि ।**
**अग्रतस्ते परित्यक्ता परित्यक्ष्यामि जीवितम् ॥ १० ॥**

विपक्षे स्त्रीवधदोषश्चाधिकस्ते पतिष्यतीत्याह—समयं चेत्यादि । परित्यक्ता—उपेक्षिता, त्वयेति शेषः ॥ १० ॥

**एवं प्रचोदितो राजा कैकेय्या निर्विशङ्कया ।**
**नाशकत् पाशमुन्मोक्तुं ‡ बलिरिन्द्रकृतं यथा ॥ ११ ॥**

---

* एकपदं—प्रणवरूपैकपदवाच्यत्वात् प्रणवरूपं ब्रह्म—ति । एकं—मुख्यं, पदं—पद्यत इति पदं परमप्राप्यं ब्रह्म यद्वा—एकं पदं प्रणवरूपं वाचकं यस्य तत्तथा । ‘ओमित्येकाक्षरं ब्रह्म’ इत्यादिस्मृतेः—**गो.** † अभिकामार्थं प्रीत्यर्थं—धर्माभिवृध्यर्थमिति यावत्—**गो.** ‡ उपेन्द्रद्वारा इन्द्रकृतं—**गो.**

[1] धर्मस्यैवाभि, धर्मस्य हित—**ङ. च.** [2] ममार्येमं—**ङ. झ.**

एवं—न्यायोपेततयेति यावत्। पाशं—सत्यपाशबंधनम्। उन्मोक्तुं—उन्मोचयितुम्। बलिः इन्द्रकृतं—उपेन्द्रवामनकृतं पदत्रयप्रतिश्रवरूपं पाशं यथा मोक्तुं नाशकत् तद्वदित्यर्थः ॥ ११ ॥

उद्भ्रान्तहृदयश्चापि विवर्णवदनोऽभवत्।
स धुर्यो वै परिस्पन्दन् * युगचक्रान्तरं [1] यथा ॥ १२ ॥

सः—दशरथः युगचक्रान्तरं प्राप्य परिस्पन्दन्—तिर्यक्परिस्पन्दमानो धुर्यः, हेतौ शतृ, अत एवोद्भ्रान्तहृदयत्वादिधर्मको यथा भवति तद्वदित्यर्थः ॥ १२ ॥

[2] विह्वलाभ्यां च नेत्राभ्यामपश्यन्निव भूमिपः।
कृच्छ्राद्धैर्येण संस्तभ्य कैकेयीमिदमब्रवीत् ॥ १३ ॥

संस्तभ्येति। विह्वलं चित्तमिति शेषः ॥ १३ ॥

यस्ते मन्त्रकृतः पाणिरग्नौ पापे! मया धृतः।
तं त्यजामि स्वजं चैव तव पुत्रं सह त्वया ॥ १४ ॥

अथानिष्टाया अनिष्टपुत्रस्य च त्याग एव न्यायतो धर्मतश्च कर्तव्य इति मन्वान आह—यस्त इत्यादि। हे पापे! अग्नौ—अग्निसन्निधौ यस्ते पाणिः मन्त्रकृतः—"गृभ्णामि ते" इति मन्त्रकृतभरणो मया भृतश्च तं त्यजामि; स्वजं तमपि तव पुत्रं त्वया सह त्यजामि। हेतुः प्रागेवोक्तः ॥ १४ ॥

---

* युगचक्रयोरन्तरं मध्यं प्राप्य परिभ्रमन् धुर्यो यथा अनड्वानिव—ति. युगचक्रयोरन्तरं परिस्पन्दन्—गच्छन्—गो.

[1] गतः—ङ. [2] विकलाभ्यां—ङ. च. विकृताभ्यां—ङ.

प्रभाता रजनी देवि! सूर्यस्योदयनं प्रति।
*[1] अभिषेकं गुरुजनस्त्वरयिष्यति मां ध्रुवम्॥ १५॥

अथ दीर्घरज्जुभ्रमितकन्तुकवन्महता यत्नेन प्रवर्तितकार्यो मयाऽशक्यानिवारण इत्याशयेनाह—प्रभातेत्यादि। उदयनं प्रतीति—उदयं प्रतिलभ्येति यावत्॥ १५॥

† रामाभिषेकसंभारैस्तदर्थमुपकल्पितैः।
रामः कारयितव्यो मे मृतस्य सलिलक्रियाम्॥ १६॥

तदर्थे—अभिषेकार्थं उपकल्पितै रामाभिषेकसंभारै रामस्याभिषेकं प्रति गुरुजनो मां त्वरयिष्यति ध्रुवम्। ततो रामः कृताभिषेकः कारयितव्यः; कुर्वन् गुरुजनानुरोधो मया कर्तव्यः, तस्यापि न्यायप्राप्तत्वात् इत्यर्थः। एवं सति ‡ रुष्टया त्वया मत्सलिलक्रिया न कर्तव्येत्याह—मृतस्येत्यादि॥ १६॥

---

* पूर्वार्धे विद्यमानं ‘प्रति’ इति पदं देहलीदीपन्यायेन अभिषेकमित्यनेनाप्यन्वेति। अभिषेकं प्रति मां त्वरयिष्यतीत्यन्वयः. † पूर्वश्लोकादारभ्य ‘रामः कारयितव्यो मे’ इत्यन्तमेकं वाक्यमिति व्याख्यातॄणामाशयः। वस्तुतस्तु—रामाभिषेककालः सन्निहितः, देवि! त्वयाऽत्र न विघ्नः कार्य इति पूर्वश्लोकेन राजा कैकेयीं प्रार्थयामास। पुनस्तस्या दृढमध्यवसायं स्वस्य सत्यपाशबद्धतां चालोच्याह—रामाभिषेकेत्यादि। श्लोकद्वयमेकान्वयि। एवं सत्यपि, अशुभाचारे रामाभिषेचनं यदि व्याहन्तासि—वरनिर्बन्धं यदि न जहासि, तदापि न भरताभिषेचनसंभवः, यतोऽहं रामाभिषेकविघ्नमसहमानो म्रिये। रामाभिषेकार्थमुपकल्पितैः संभारैः मम सलिलक्रियैव संपद्येत। तथा च ‘अनेनैवाभिषेकेन’ (11-25) इति रीत्या न भवदिष्टसिद्धिः। तत्रापि राम एव मत्सलिलक्रियां कारयितव्यः, न तु त्वत्पुत्रेण सलिलक्रिया कार्या इत्यर्थः इति. ‡ यदि रुष्टा त्वमिति शेषः.

[1] अभिषेकाय हि जनः-ङ. झ.

सपुत्रया त्वया नैव कर्तव्या सलिलक्रिया ।
*व्याहन्तास्यशुभाचारे ! यदि रामाभिषेचनम् ॥ १७ ॥

न शक्तोऽद्यास्म्यहं द्रष्टुं दृष्ट्वा पूर्वं †तथामुखम् ।
हतहर्षं तथानन्दं ‡पुनर्जनमवाङ्मुखम् ॥ १८ ॥

व्याहन्तासीति लुण्मध्यमः । व्याहन्त्री यदि तदा त्वद्वचनमनुतिष्ठन्नहं तदा पूर्वं तथामुखं दृष्ट्वाऽद्यावाङ्मुखं तं द्रष्टुमशक्तोऽस्मि ॥ १८ ॥

तां तथा ब्रुवतस्तस्य भूमिपस्य महात्मनः ।
प्रभाता शर्वरी §पुण्या चन्द्रनक्षत्रशालिनी ॥ १९ ॥

तथा ब्रुवत इति । अशक्यानुष्ठानतया ब्रुवत इत्यर्थः ॥ १९ ॥

ततः पापसमाचारा कैकेयी पार्थिवं पुनः ।
उवाच परुषं वाक्यं वाक्यज्ञा रोषमूर्छिता ॥ २० ॥

---

* लुट्, मध्यमपुरुषैकवचनम् . † तथामुखमिति बहुव्रीहिः, तथामुखवन्तमित्यर्थः । तथासुखमिति गोविन्दराजीये पाठः । तादृशसुखयुक्तमित्यर्थः. ‡ अत्र 'जन' पददर्शनेन—पूर्वमपि १५तमे श्लोके 'अभिषेकाय हि जनस्त्वरयिष्यति मां ध्रुवम्' इति पाठः स्वरस इव । प्रजाभिप्रायविरुद्धतया नाहं किञ्चित्कर्तुं शक्नोमीति सूच्यते. § पुण्या-प्रभाता पुण्यसाधनप्रभातकालावच्छिन्ना । यद्वा निरन्तररामचिन्तासमेतत्वात्पुण्या—ति । पुण्येत्युक्तिः अनन्तरं रामदर्शनसंभवात्—गो. अथवा—पुण्या—मनोज्ञा – "पुण्यस्त्रिषु मनोज्ञे स्यात्" इति विश्वः । अथवा-परिपूता—"पुण्यं तु सुन्दरे । सुकृते पावने धर्मे" इति कोशात् । यतः सा शर्वरी पुण्या—अत एव राज्ञो नाधर्मे प्रवृत्तिरासीत् । अथापि कैकेय्या अधर्मे एव प्रवृत्तिरासीदिति "पापसमाचारा" इत्यनेनोच्यते । प्रायः प्रभाते हि सर्वप्राणिनां धर्माभिरुचिः स्वाभाविकीति भावः ॥

किमिदं भाषसे राजन्! *वाक्यमङ्ग! रुजोपमम्।
आनाययितु†माक्लिष्टं पुत्रं राममिहार्हसि ॥ २१ ॥

अथ यथाऽतिकृच्छ्रनिर्यातनीयमधमर्णं अतिनिष्ठुरपरमनिर्घृणोत्त मर्णस्तु वदति तथा बलादेव स्वमृणं निर्यात्य गच्छत्याह—किमि-त्यादि। अङ्गेत्यामन्त्रणे। रुजा—शूलः। अङ्ग राजन्—हे राजन्! मम शूलतोदनोपमं इदं—अशक्यतावाक्यं किं भाषसे—व्यर्थमेव भाषसे। अतः—आनाययितुमित्यादि ॥ २१ ॥

स्थाप्य राज्ये मम सुतं कृत्वा रामं वनेचरम्।
निस्सपत्नां च मां कृत्वा कृतकृत्यो भविष्यसि ॥ २२ ॥
स [1]तुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तमः।
राजा प्रचोदितोऽभीक्ष्णं कैकेय्या वाक्यमब्रवीत् ॥ २३ ॥
‡धर्मबन्धेन बद्धोऽस्मि नष्टा च मम चेतना।
ज्येष्ठं पुत्रं प्रियं रामं द्रष्टुमिच्छामि धार्मिकम् ॥ २४ ॥

यस्याप्यस्ति शिक्षणसमये प्रतोदः—राजाऽप्युक्तदृष्टान्तवदेव त्वया करणीयः। तत्कुर्वित्येवान्तत आह—धर्मेत्यादि। द्रष्टुमिच्छामि। गमनात्पूर्वमिति शेषः ॥ २४ ॥

ततः §प्रभातां रजनीमुदिते च दिवाकरे।
पुण्ये नक्षत्रयोगे च मुहूर्ते च [2]समागते ॥ २५ ॥

---

* वाक्यं गररुजोपममित्यपि पाठः। विषजनितव्याधिसदृशमिति भावः। सन्निपातादाविव किमिदं पूर्वापरविरुद्धं भाषस इति यावत्. † आक्लिष्टं—भावे क्तः। क्रियाविशेषणं वा। क्लेशो यथा न स्यात्तथेत्यर्थः. ‡ अनेन रामविवासनं गत्यन्तराभावान्मनागनुज्ञातमिव। स तु रामो मद्वचनं नोल्लङ्घयेदित्यभिप्रयन्नाह—धार्मिकमिति. §प्रभातां रजनीं—प्रभातायां रजन्यां—गो. प्रभाता रजनीं 'दृष्ट्वा' इति शेषः। कवेरपि वर्णनीयमयीभावेन शोकाविष्टत्वान्न्यूनपदादिकं न दोषाय—ति.

[1] नुन्न—ङ. [2] समाहिते—ङ.

वसिष्ठो गुणसंपन्नः शिष्यैः परिवृतस्तदा ।
उपगृह्याशु संभारान् प्रविवेश पुरोत्तमम् ॥ २६ ॥

पुरोत्तमं प्रविवेशेति । सरय्वां कृतप्राभातिक इति शेषः ॥२६॥

[1] सिक्तसंमार्जितपथां पताकोत्तमभूषिताम् ।
संहृष्टमनुजोपेतां समृद्ध*विपणापणाम् ॥ २७ ॥

समृद्धविपणाः—समृद्धक्रेयपदार्थवन्तः आपणाः यस्यां सा तथा ॥ २७ ॥

महोत्सवसमाकीर्णां राघवार्थे समुत्सुकाम् ।
चन्दनागरुधूपैश्च सर्वतः परिधूपिताम् ॥ २८ ॥

समुत्सुकां–समुत्सुकप्रजायुक्ताम् ॥ २८ ॥

तां पुरीं समतिक्रम्य पुरन्दरपुरोपमाम् ।
ददर्शान्तःपुरं [2] श्रीमान्नानाध्वजगणायुतम् ॥ २९ ॥
पौरजानपदाकीर्णं ब्राह्मणैरुपशोभितम् ।
† यज्ञविद्भिः सुसंपूर्णं [3] सदस्यैः परमाद्विजैः ॥ ३० ॥
तदन्तःपुरमासाद्य व्यतिचक्राम तं जनम् ।
वसिष्ठः परमप्रीतः [4] परमर्षिर्विवेश च ॥ ३१ ॥

---

* विपणः–विक्रयणक्रिया । "विपणो विक्रयः" इत्यमरः । पदार्थानां समृद्धत्वात् विक्रयणक्रियाया अपि समृद्धत्वं—समृद्धविक्रयणक्रियाविशिष्टापणशालिनीमित्यर्थः । बहुव्रीहिगर्भबहुव्रीहिः. † 'यष्टिमद्भिः' इति पाठान्तरम् । इदं ब्राह्मणविशेषणम् । 'धारयेद्वैणवीं यष्टिं' इति स्नातकधर्मप्रकरणोक्तेः । यद्वा–यष्टिभरै राजसेवकैरित्यर्थः–ति.

[1] एतदनन्तरं "विचित्रकुसुमाकीर्णां नानास्त्रग्भिर्विराजिताम्" इति अधिकं–ङ. [2] अन्तःपुरं श्रेष्ठं–ङ. [3] सदश्वैः परमाञ्चितैः, सदस्यैः परमार्चितैः–ङ. [4] परमर्षिभिरावृतः–ङ.

स त्वपश्य*द्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् ।
द्वारे तु राजसिंहस्य सचिवं प्रियदर्शनम् ॥ ३२ ॥

विनिष्क्रान्तमिति । अन्तःपुरादिति शेषः । द्वारे—अन्तःपुरद्वारे । अपश्यदिति योजना ॥ ३२ ॥

तमुवाच महातेजाः सूतपुत्रं विशारदम् ।
†वसिष्ठः क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम् ॥ ३३ ॥

इमे गङ्गोदकघटाः सागरेभ्यश्च काञ्चनाः ।
औदुम्बरं भद्रपीठं अभिषेकार्थ‡माहृतम् ॥ ३४ ॥

सागरेभ्य इति । आहृतोदकपूर्णा इति शेषः । काञ्चनाः—स्वर्णनिर्मिताः । औदुम्बरं भद्रपीठमिति । "औदुम्बर्यासन्दी, तस्यै प्रादेशमात्राः पादाः स्युः" इति राजाभिषेकबह्वृचब्राह्मणप्रसिद्धा एवमादिपदार्थाः ॥ ३४ ॥

सर्वबीजानि गन्धाश्च रत्नानि विविधानि च ।
§क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥ ३५ ॥

अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः ।
चतुरश्वो रथः श्रीमान्निस्त्रिंशो धनुरुत्तमम् ॥ ३६ ॥

निस्त्रिंशः—खड्गः ॥ ३६ ॥

---

* विनिष्क्रान्तं स्वगृहादिति शेषः । प्रियदर्शनमित्यनेनाभिषेकार्थमात्मानमलंकृत्यागत इति सूचितम्—गो. युक्तं चैतद्व्याख्यानम् 'प्रविवेश' इत्युत्तरत्र (४३) श्लो:. † वसिष्ठः तमुवाचेति पूर्वेणान्वयः. ‡ आहृतमिति वचनलिङ्गव्यत्ययेन यथायोग्यं सर्वत्रान्वेति. § क्षौद्रं—मधु 'मधुक्षौद्रं' इत्यमरः.

वाहनं नरसंयुक्तं छत्रं च शशिसन्निभम् ।
श्वेते च वालव्यजने भृङ्गारश्च हिरण्मयः ॥ ३७ ॥

नरसंयुक्तं वाहनं शिबिकादि । भृङ्गारः—कनकालुका ॥ ३७ ॥

हेमदामपिनद्धश्च ककुद्मान् पाण्डरो वृषः ।
*केसरी च चतुर्दंष्ट्रो हरिश्रेष्ठो महाबलः ॥ ३८ ॥

चतुर्दंष्ट्रत्वादेव हरिश्रेष्ठत्वम् ॥ ३८ ॥

सिंहासनं व्याघ्रतनुः [1]समिधश्च हुताशनः ।
सर्ववादित्रसंघश्च वेश्याश्चालंकृताः स्त्रियः ॥ ३९ ॥

† व्याघ्रतनुः—साङ्गव्याघ्रचर्म ॥ ३९ ॥

आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः ।
पौरजानपदश्रेष्ठा ‡ नैगमाश्च गणैः सह ॥ ४० ॥

नैगमाः—वणिजः । गणैः—स्वस्वीयैः ॥ ४० ॥

एते चान्ये च बहवः प्रीयमाणाः प्रियंवदाः ।
अभिषेकाय रामस्य सह तिष्ठन्ति पार्थिवैः ॥ ४१ ॥
त्वरयस्व महाराजं § यथा समुदितेऽहनि ।
[2]पुण्ये नक्षत्रयोगे च रामो राज्यमवाप्नुयात् ॥ ४२ ॥

यथासमुदिते—यथोचितं संप्राप्ते ॥ ४२ ॥

---

* केसरी—प्रशस्तकेसर हरिश्रेष्ठः—अश्वोत्तमः—गो. ति. † व्याघ्रचर्मेत्यर्थः—गो.
‡ 'नैगमो वणिजो वणिक्' इत्यमरः. § समुदिते—मुहूर्तगुणैरिति शेषः । यथा रामो राज्यमवाप्नुयात् तथा राजानं त्वरयस्व—ति. समुदिते—सम्यगभिव्यक्ते—गो. वस्तुतस्तु 'यथासमुदिते—यथोक्त एव' इत्यर्थः स्यात् । ('उक्तं भाषितमुदितं' इत्यमरः)—वचने सम्यक्त्व—'पुण्ये' इत्यादिनोच्यते । पूर्वनिर्दिष्ट एव सुमुहूर्त इति यावत् । मा भूच्छुभकालातिक्रम इति भावः.

[1] 'समिद्धश्च हुताशनः'—ङ. [2] पुष्ये—ङ.

इति तस्य वचः श्रुत्वा सूतपुत्रो महात्मनः ।
स्तुवन्नृपतिशार्दूलं प्रविवेश निवेशनम् ॥ ४३ ॥

तं तु पूर्वोदितं वृद्धं द्वारस्था राज[1]सम्मतम् ।
न शेकुरभिसंरोद्धुं राज्ञः प्रियचिकीर्षवः ॥ ४४ ॥

पूर्वोदितं—पूर्वमेव राज्ञा कस्मिन्नप्यवसरे अकर्तव्यनिरोधतया उदितं—कृताज्ञम् । एवमाज्ञाप्रदाने हेतुः—वृद्धमिति । वयसा तपसा मन्त्रादिना च वृद्धमित्यर्थः ॥ ४४ ॥

स समीपस्थितो राज्ञस्तामवस्थामजज्ञिवान् ।
वाग्भिः परम[2]तुष्टाभिरभिष्टोतुं प्रचक्रमे ॥ ४५ ॥

एवमनुरोधतः स्वयगारस्य समीपं गत्वा तत्समीपे स्थितः स सुमन्त्रो राज्ञस्तामवस्थां—यथोक्तरूपामतिघोरां अजज्ञिवान्—अज्ञातवान् । "वस्वेकाजात्" इति घसेरिट् । अत एव यथापूर्वं स्तोतुमुपचक्रमे ॥ ४५ ॥

ततः सूतो [3]यथापूर्वं पार्थिवस्य निवेशने ।
सुमन्त्रः प्राञ्जलिर्भूत्वा तुष्टाव जगतीपतिम् ॥ ४६ ॥
यथा नन्दति तेजस्वी सागरो भास्करोदये ।
प्रीतः प्रीतेन मनसा [4]तथाऽऽनन्दघनस्ततः ॥ ४७ ॥

सागरो यथा भास्करोदयकाले प्रत्यूर्मिप्रतिफलितसूर्यतेजसा तेजस्वीभूत्वा नन्दति—तथा प्रीतेन मनसा प्रतिफलितसूर्यस्थानीयेन प्रीतः, तत एव हेतोरानन्दघनः—आनन्दपूर्ण[5]स्सन् नन्द—नन्दय ।

---

[1] सम्मताः—ङ. [2] हृष्टाभिः—ङ. [3] यथाकालं—ङ. झ. [4] तथाऽऽनन्दयन—ङ. च. [5] स्त्वं—क.

नन्द, आनन्दघन इति च तत्राभिप्रायतः पदच्छेदः। *अन्यस्तु—'भास्करोदये-चन्द्रोदये' इत्याह—तत्तु प्रसिद्धिविरोधात् तेजस्वी इति विशेषणाच्चोपेक्ष्यम् ॥ ४७ ॥

इन्द्रमस्यां तु वेलायामभितुष्टाव मातलिः।
[1]सोऽजयद्दानवान् सर्वांस्तथा त्वां बोधयाम्यहम् ॥ ४८ ॥

अस्यां तु वेलायामिति। उदयवेलायामित्यर्थः ॥ ४८ ॥

वेदाः साङ्गाश्च विद्याश्च यथा ह्यात्मभुवं प्रभुम्।
ब्रह्माणं बोधयन्त्यद्य तथा त्वां बोधयाम्यहम् ॥ ४९ ॥

ब्रह्माणं बोधयन्तीति। "ब्रह्मा त्वं राजन् ब्रह्माऽसि सवितासि सत्यसवः" इत्यादि "सत्यराजान्" इत्यन्तैर्भगवदहरादौ सवित्रादिसृष्टये वेदादिभिः भगवत्स्तुतिः ॥ ४९ ॥

आदित्यः सह चन्द्रेण यथा †भूतधरां शुभाम्।
बोधयत्यद्य पृथिवीं तथा त्वां बोधयाम्यहम् ॥ ५० ॥

बोधयत्यद्य पृथिवीमिति। उदयास्तमयाभ्यामिति शेषः ॥ ५० ॥

---

*इदं च महेश्वरतीर्थीये गोविन्दराजीये च दृश्यते। शिरोमणिस्तु—'अभास्करोदय इति च्छेदः। भास्करसदृश इत्यर्थः। स च चन्द्र एव' इत्याह। अब्राह्मणमानयेत्यादौ ब्राह्मणसदृशमानयेति बोधस्य वैयाकरणैरभिधानादिति तदाशयः। तिलके तु भास्करोदये—तत्काले प्रत्यूर्मिप्रतिफलिततेजसा तेजस्वी सागरो यथा स्नातुकामान् नन्दति—नन्दयति (अन्तर्भावितण्यर्थः) तथा नोऽस्मान् प्रीतेन मनसा प्रीतः—अस्मद्विषयकप्रीत्याश्रयस्सन् नन्दय इत्युक्तम्। स्वरसं चेतदेव. †"भूतधरां—सर्वप्राणिधरां पृथिवीं बोधयति। विशेषणद्वारा पृथिवीबोधनं (विशेषणमत्र सर्वप्राणिवर्गः)। अद्य बोधयामीत्यन्वयः"—गो.

[1] योऽ—ङ.

उत्तिष्ठाशु महाराज! कृतकौतुकमङ्गलः ।
विराजमानो वपुषा मेरोरिव दिवाकरः ॥ ५१ ॥

कृतकौतुकमङ्गलः—कृतोत्सवार्थमङ्गलानुष्ठानः । *विचित्रवस्त्राभरणादिपरिग्रहरूपं मङ्गलानुष्ठानम्, "कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः" अत एव वपुषा विराजमानस्त्वं मेरोर्दिवाकर इव उत्तिष्ठेति योजना ॥ ५१ ॥

[1]सोमसूर्यौ च काकुत्स्थ! शिववैश्रवणावपि ।
वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते ॥ ५२ ॥

गता भगवती रात्रिः [2]कृतं कृत्यमिदं तव ।
[3]बुध्यस्व नृपशार्दूल! कुरु कार्यमनन्तरम् ॥ ५३ ॥

कृतमिति । यत्कृत्यं कर्तव्यं रामाभिषेकायास्मदादिभिः तदिदं सर्वं कृतम् ॥ ५३ ॥

[4]उदतिष्ठत रामस्य समग्रं†मभिषेचनम् ।
पौरजानपदश्चापि नैगमश्च कृताञ्जलिः ॥ ५४ ॥

तदेव दर्शयति—उदतिष्ठतेत्यादि । उदतिष्ठत—उत्थितं संपन्नमभूदित्यर्थः । नैगमः—वणिग्वर्गः ॥ ५४ ॥

[5]अयं वसिष्ठो भगवान् ब्राह्मणैः सह तिष्ठति ।
क्षिप्रमाज्ञाप्यतां राजन्! राघवस्याभिषेचनम् ॥ ५५ ॥

---

* कर्तव्यस्यातिशैघ्र्यविवक्षया कृतकौतुकेति निर्देशः. † अभिषेचनं—अभिषेकसामग्री.

[1] इदं श्लोकद्वयं कतिपयग्रन्थेषु (ङ. च.) नोपलभ्यते. [2] अहर्निशमुपस्थितं—ङ.
[3] प्रतिबुध्यस्व राजर्षे—ङ. [4] उपतिष्ठति—ङ. [5] स्वयं—ङ.

यथा ह्यपालाः पशवो यथा सेना ह्यनायका ।
यथा चन्द्रं विना रात्रिर्यथा गावो विना वृषम् ॥ ५६ ॥
एवं हि भविता राष्ट्रं * यत्र राजा न दृश्यते ।

भवितेति लुट् । अतः शीघ्रं सन्निधेहीति शेषः ॥ ५६ ॥

इति तस्य वचः श्रुत्वा सान्त्वपूर्वमिवार्थवत् ॥ ५७ ॥
अभ्यकीर्यत शोकेन भूय एव महीपतिः ।

सान्त्वपूर्वम् अर्थवदिव–अर्थवदेव च ॥ ५७ ॥

ततः स राजा तं सूतं सन्नहर्षः सुतं प्रति ॥ ५८ ॥
शोकरक्तेक्षणः श्रीमानुद्वीक्ष्योवाच धार्मिकः ।

शोकरक्तेति । शोकजरोदनरक्तेति यावत् ॥ ५८ ॥

वाक्यैस्तु खलु मर्माणि मम भूयो निकृन्तसि ॥ ५९ ॥

भूयो निकृन्तसीति । कैकेयीवाक्यैः कृत्तमर्माणं पुनरभ्यधिकं स्तुतिवाक्यैर्निकृन्तसि । अनुचितकाले प्रयुज्यमानत्वादिति शेषः ॥ ५९ ॥

सुमन्त्रः † करुणं श्रुत्वा दृष्ट्वा दीनं च पार्थिवम् ।
प्रगृहीताञ्जलिः किञ्चित्तस्माद्देशादपाक्रमत् ॥ ६० ॥

अपाक्रमादिति । भीत इति शेषः ॥ ६० ॥

---

* पूर्वं दशरथेन "अद्य प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपम्" (अयो. ४–१६) इत्यादिना स्वस्य राज्येऽभिलाषानिवृत्तिपूर्वकं रामाभिषेचनस्य प्रतिज्ञातत्वात्, इदानीमनभिषेचने अराजकत्वं स्यादित्याशयेनैवं सुमन्त्रेणोक्तम् । अथवा–"दिव्यन्तरिक्षे भूमौ च घोरमुत्पातजं भयम् । आचचक्षेऽथ मेधावी शरीरे चात्मनो जराम्" (अयो. १–४३) प्रायेण च निमित्तानामीदृशानां समुद्भवे । राजा हि मृत्युमाप्नोति (अयो. ४–१९) इत्यादिभिः, सुमन्त्रेणापि दशरथमरणस्य सन्निहितत्वेन ज्ञातत्वाद्रामानभिषेचने अराजकं राज्यं स्यादित्युक्तमिति. † करुणं–दीनवाक्यं–गो. शृण्वतां करुणाजनकमिति यावत् । क्रियाविशेषणं वेदम् ।

यदा वक्तुं स्वयं दैन्यान्न शशाक महीपतिः ।
तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥ ६१ ॥

दैन्यं—सत्यपाशबन्धजं कैकेयीविषयकम् । मन्त्रज्ञा—स्वकार्ये वक्तव्यविचारज्ञा ॥ ६१ ॥

सुमन्त्र! राजा रजनीं *[1] रामहर्षसमुत्सुकः ।
प्रजागरपरिश्रान्तो निद्राया वशमेयिवान् ॥ ६२ ॥

अत एव मिथ्यामप्याह—रामहर्षेति । रामाभिषेकहर्षेति यावत् ॥

तद्गच्छ त्वरितं सूत! राजपुत्रं यशस्विनम् ।
[2] राममानय, भद्रं ते, नात्र कार्या विचारणा ॥ ६३ ॥

स मन्यमानः कल्याणं हृदयेन ननन्द च ।
निर्जगाम च संप्रीत्या त्वरितो † राजशासनात् ॥ ६४ ॥

स मन्यमानः कल्याणमिति । 'नात्र कार्या विचारणा' इति मायाविन्या तयोक्तत्वेन विश्वासात् ॥ ६४ ॥

सुमन्त्रश्चिन्तयामास त्वरितं चोदितस्तया ।
व्यक्तं रामाभिषेकार्थमिहायास्यति धर्मवित् ॥ ६५ ॥

---

* सोपहासवाक्यमिदम् । अथवा-इष्टवियोगजन्यस्वादु:खस्य, इच्छातारतम्यानुविधायित्वाद्दु:खतारतम्यस्य च, रामाभिषेके यावत्यधिकेच्छाऽऽसीद्राज्ञ:, तद्विच्छेदेऽपि तावदेव दु:खमभूत् । एवञ्च यतो राजा रामहर्षसमुत्सुक आसीत्, तत एवेदानीं प्रजागरपरिश्रान्तो वर्तते, तद्विच्छेदादिति सोपहासं निगूढं चोच्यते कैकेय्या. † राजशासनादित्युक्ति:, अप्रतिषिद्धमनुमतमिति न्यायात् । अत एव चिन्तयामासेत्युक्तिः । कुतस्साक्षाद्राज्ञैव नोक्तमिति चिन्ता । अनन्तरसर्गे २५तमश्लोकोऽत्र द्रष्टव्यः.

[1] कामहर्ष—ङ. [2] एतदनन्तरं 'अश्रुत्वा राजवचनं कथं गच्छामि भामिनि । तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत् ॥ सुमन्त्र रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम् ।' इत्यधिकम्—ङ.

इति सूतो मतिं कृत्वा हर्षेण महता वृतः ।
निर्जगाम महाबाहू राघवस्य दिदृक्षया ॥ ६६ ॥

सागरह्रदसङ्काशात् सुमन्त्रोऽन्तःपुराच्छुभात् ।
निष्क्रम्य जनसम्बाधं ददर्श द्वारमग्रतः ॥ ६७ ॥

सागरान्तर्वर्तिह्रदस्तथा—इदं तु पुरान्तर्वर्तित्वादन्तःपुरस्य ॥

ततः पुरस्तात्सहसा विनिर्गतो
महीपतीन् द्वारगतान् विलोकयन् ।
ददर्श पौरान् विविधान् महाधनान्
उपस्थितान् द्वारमुपेत्य विष्ठितान् ॥ ६८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुर्दशः सर्गः

———

सार (६८) मानः सर्गः (?) ॥ ६८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चतुर्दशः सर्गः

———

## अथ पञ्चदशस्सर्गः

[रामाह्वानम्]

ते तु तां रजनीमुष्य ब्राह्मणा वेदपारगाः ।
*उपतस्थुरुपस्थानं सह राजपुरोहिताः ॥ १ ॥

अथ राजस्त्रिया राज्ञा च गुप्तहृदयतया प्रवर्त्यमानस्य सुमंत्रस्य यथापूर्वं वृत्तिः—ते त्वित्यादि । † उष्य–उषित्वा । ‡ उपस्थानमिति ।

* सह–युगपत् ॥ उपस्थानं—सदः–गो. † उष्य–यापयित्वेत्यर्थः. ‡ उपस्थानं–सदः–ति. गो.

"कृत्यल्युटो बहुलम्" इति अर्हार्थे ल्युट्। उपस्थानार्हं त्वां उपतस्थुरित्यर्थः ॥ १ ॥

अमात्या बलमुख्याश्च मुख्या ये * निगमस्य च ।
राघवस्याभिषेकार्थे प्रीयमाणास्तु सङ्गताः ॥ २ ॥

उदिते विमले सूर्ये पुष्ये चाभ्यागतेऽहनि ।
लग्ने कर्कटके प्राप्ते † जन्म रामस्य च स्थिते ॥ ३ ॥

अभिषेकाय रामस्य द्विजेन्द्रैरुपकल्पितम् ।
काञ्चना जलकुम्भाश्च भद्रपीठं स्वलंकृतम् ॥ ४ ॥

रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा ।
गङ्गायमुनयोः पुण्यात् सङ्गमादाहृतं जलम् ॥ ५ ॥

याश्चान्याः सरितः पुण्याः ह्रदाः कूपाः सरांसि च ।
प्राग्वाहाश्चोर्ध्ववाहाश्च [1] तिर्यग्वाहाश्च क्षीरिणः ॥ ६ ॥

‡ प्राग्वाहा इत्यादि । नद्य इति शेषः । पर्वतघट्टनोपाधिनोर्ध्वप्रवाहवत्प्रदेशवत्य ऊर्ध्ववाहाः । तिर्यग्वाहाः—दक्षिणोत्तरप्रवाहदेशवत्यः । § क्षीरिणः—क्षीरपूर्णाः ॥ ६ ॥

ताभ्यश्चैवाहृतं तोयं समुद्रेभ्यश्च सर्वशः ।
क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥ ७ ॥

---

* निगमस्य—पुरस्य—"निगमो निश्चये वेदे पुरे" इति वैजयन्ती—**गो.** † यस्मिन् लग्ने रामस्य जन्म—तस्मिन् कर्कटके स्थिते सतीति योजना. ‡ प्राग्वाहाः—पूर्वाभिमुखप्रवाहाः—गोदावर्यादयः ॥ ऊर्ध्ववाहाः-ऊर्ध्वोद्गतप्रवाहाः—नैमिशारण्यस्थब्रह्मावर्तादिसरोविशेषाः । ऊर्ध्ववाहाः—प्रत्यग्वाहा इति केचित् । ऊर्ध्वाद्वहन्तीत्यूर्ध्ववाहाः निर्झरा इति केचित्—**गो.** § क्षीरं—जलम्.

[1] तिर्यग्वाहाः समाहिताः—ङ.

[1] अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः ।
[2] सजलाः क्षीरिभिश्छन्ना घटाः काञ्चनराजताः ॥ ८ ॥
पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा ।
चन्द्रांशुविकचप्रख्यं पाण्डरं रत्नभूषितम् ॥ ९ ॥
सज्जं तिष्ठति रामस्य वालव्यजनमुत्तमम् ।
चन्द्रमण्डलसङ्काशमातपत्रं च पाण्डुरम् ॥ १० ॥
सज्जं द्युतिकरं श्रीम*दभिषेकपुरस्कृतम् ।

अभिषेकपुरस्कृतमिति । प्रक्षालितमिति यावत् ॥ १० ॥

[3] पाण्डुरश्च वृषस्सज्जः पाण्डुरोऽश्वश्च संस्थितः ॥ ११ ॥
वादित्राणि च सर्वाणि वन्दिनश्च तथाऽपरे ।
इक्ष्वाकूणां यथा राज्ये संभ्रियताभिषेचनम् ॥ १२ ॥
तथाजातीयमादाय राजपुत्राभिषेचनम् ।
ते राजवचनात्तत्र समवेता महीपतिम् ॥ १३ ॥
अपश्यन्तोऽब्रुवन्, को नु राज्ञो नः प्रतिवेदयेत् ।
न पश्यामश्च राजानमुदितश्च दिवाकरः ॥ १४ ॥
यौवराज्याभिषेकश्च सज्जो रामस्य धीमतः ।

राजपुत्राभिषेचनं–तत्साधनमादाय समवेतास्ते ब्राह्मणादयो महीपतिमपश्यन्तोऽब्रुवन् । किमब्रुवन्नित्यत्राह—को न्वित्यादि । सज्जः–सज्जपरिकर इति यावत् ॥ १४ ॥

---

* अभिषेकाय पुरस्कृतं–गो. अभिषेकसामग्रीमुख्यं–ति.

[1] इदमर्धमधिकं । किञ्चेदं कुत्रचित् 'क्षौद्रं दधि' इत्यादेः पूर्वमेव । तथा 'वेश्याश्चैव शुभाचाराः सर्वाभरणभूषिताः । लीलावत्यः सुभ्रुवश्च लोलनेत्राश्च सर्वशः ॥ इत्यधिकं च–ङ. [2] सलाजाः–ङ. [3] एतच्छलोकानन्तरं "प्रसृतश्च गजः श्रीमानौपवाह्यः प्रतीक्षते । अष्टौ च कन्या माङ्गल्याः सर्वाभरणभूषिताः ॥" इत्यधिकं–ङ.

इति तेषु ब्रुवाणेषु [1]सर्वांस्तांश्च महीपतीन् ॥ १५ ॥
अब्रवीत्तानिदं वाक्यं सुमन्त्रो राजसत्कृतः ।
*रामं राज्ञो नियोगेन त्वरया प्रस्थितो ह्यहम् ॥ १६ ॥

प्रस्थितो ह्यहमिति । आनेतुमिति शेषः ॥ १६ ॥

पूज्या राज्ञो भवन्तश्च रामस्य तु विशेषतः ।
[2]अहं पृच्छामि वचनात् सुखमायुष्मतामहम् ॥ १७ ॥
राज्ञः †संप्रति बुद्धस्य चानागमनकारणम् ।
इत्युक्त्वाऽन्तःपुरद्वारमाजगाम ‡ पुराणवित् ॥ १८ ॥

अथाप्यहं व्याघुट्य प्रविश्यायुष्मतां युष्माकं वचनाद्राज्ञः सुखं पृच्छामि । सर्वे समेत्य राज्ञः सुखं कच्चिदिति पृच्छन्तीति विज्ञापयामीत्यर्थः । व्याघुट्यापि विज्ञापनहेतुः पूज्या इत्यादि । अपि च यत्संप्रति—उदयसमये सर्वथा बुद्धस्याप्यनागमनं—बहिर्निर्गमाभावकारणं तत्पृच्छामि इत्युक्त्वान्तःपुरद्वारं जगाम । पुराणवित्—चिरकालकथाभिज्ञः—चिरवृद्ध इति यावत् ॥ १८ ॥

§सदाऽसक्तं च तद्वेश्म सुमन्त्रः प्रविवेश ह ।
तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः ॥ १९ ॥

---

*रामं, अभि प्रस्थित इत्यन्वयः । राममानेतुं प्रस्थित इति तात्पर्यम् । ग्रामं प्रस्थित इतिवत्प्रयोगः. † संप्रतिबुद्धस्येत्येकं पदं वा । ‡ पुराणविदिति साभिप्रायवचनम् । सुमंत्रस्य विदितपूर्ववृत्तान्तत्वमनेन सूच्यते । दशरथस्य पुत्रशोकान्मरणरूपशापकथा, कैकेयीविवाहकाले कैकेय्यां जातायैव राज्यदानरूपप्रतिज्ञा च सुमंत्रेण ज्ञाते एव । अत एव पूर्वं 'सुमंत्रश्चिन्तयामासे'त्युक्तिः । २८ तमश्लोकटिप्पणी द्रष्टव्या. § सद्भिः आसक्तमिति वार्थः ।

[1] सर्वान् भौमान् महीपतीन्—ङ. [2] अयं पृच्छामि—ङ.

असक्तं—अनिरोधम्। तुष्टावेति। वक्ष्यमाणरीत्येति शेषः। वेश्म प्रविश्य वंशं तुष्टावेति योजना॥ १९॥

*शयनीयं नरेन्द्रस्य तदाऽऽसाद्य व्यतिष्ठत।
सोऽत्यासाद्य तु तद्वेश्म तिरस्करणिमन्तरा॥ २०॥

शयनीयमप्यासाद्य व्यतिष्ठत। ननु कथं तल्पपर्यन्तगमनमित्यत्राह—सोऽत्यासाद्येत्यादि। †तिरस्करणिं—यवनिकामात्रं अन्तरा कृत्वा—व्यवधानं कृत्वा अत्यासाद्य—अतिसमीपमागत्य तुष्टावेति योजना। ‡पुनश्च स्तवो राजविज्ञापनस्य स्तुतिपूर्वकतयैव प्रवृत्तेः सूतनिसर्गधर्मत्वात्॥ २०॥

आशीर्भिर्गुणयुक्ताभिः अभितुष्टाव राघवम्।
सोमसूर्यौ च काकुत्स्थ! शिववैश्रवणावपि॥ २१॥
[1]वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते।
गता भगवती [2]रात्रिः कृतं कृत्यमिदं तव॥ २२॥
बुध्यस्व नरशार्दूल! कुरु कार्यमनन्तरम्।
ब्राह्मणा बलमुख्याश्च नैगमाश्चागता नृप!॥ २३॥
दर्शनं [3]प्रतिकांक्षन्ते प्रतिबुध्यस्व राघव!
स्तुवन्तं तं तदा सूतं सुमंत्रं मन्त्रकोविदम्॥ २४॥

---

*शयनीयं—शयनयोग्यं गृहम्—गो. †यवनिकापर्यन्तगमनं सूतानामनुमतमिति भावः. ‡राज्ञ आह्वानमन्तरा स्वयमन्तःपुरे राजदर्शनस्यानुचितत्वात् स्वागमनसूचनाय स्तवः। तेन च राजा स्वयमाह्वयेदिति भावः.

[1] एतदनन्तरं—यथा साङ्गाश्च वेदा वै ब्रह्माणं बोधयन्ति ते। तथा त्वां धीर बोधयामि ह्युत्तिष्ठ पुरुषर्षभ—इत्यधिकम्—ङ. [2] रात्रिः अहश्शिवमुपस्थितम्—ङ. च. [3] तेऽभिकाङ्क्षन्ते—ङ.

*प्रतिबुध्य ततो राजा इदं वचनमब्रवीत् ।

प्रतिबुध्येति । यवनिकान्तर्हितमपि स्तोत्रध्वनिनेति शेषः ॥

राममानय सूतेति यदस्याभिहितोऽ†नया ।
[1]किंकारणमिदं येन ममाज्ञा प्रतिहन्यते ॥ २५ ॥

इदमब्रवीदिति किमब्रवीदित्यत्राह—राममित्यादि । हे सूत राममानयेत्यनया कैकेय्या अभिहितोऽसीति यत् तस्यैवाप्रतिषिद्धमनुमतमिति न्यायेन मदाज्ञात्वात्, सेयं ममाज्ञा प्रतिहन्यते—नानुष्ठीयत इतीदं किंकारणं—किंकारणकमित्यर्थः ॥ २५ ॥

न चैव संप्रसुप्तोऽहमानयेहाशु राघवम् ॥ २६ ॥
इति राजा दशरथः सूतं तत्रान्वशात्पुनः ।

न च निद्रापरवशस्य राज्ञ इदमनुमतं न वेति संशयितव्यं त्वयेत्याह—न चैवेत्यादि । यदेवमतः 'आशु राघवमिहानय' इत्येवं राजा पुनश्च तत्रैव—कैकेयीविनियुक्तकार्य एव अन्वशात्—अनुशास्ति स्म । शासेः "तिप्यनस्तेः" इति सकारस्य दकारे 'हल्ङ्याब्भ्यः'—इत्यादिना सुलोपः ॥ २६ ॥

---

*प्रतिबुध्य—ज्ञात्वा । यवनिकान्तर्हितमपि तं ध्वनिना सुमंत्रं प्रत्यागतं ज्ञात्वेति यावत्. †तिलके—'अभिहितो मया' इति पाठः । 'आनयेति पाठे तु उपलक्षणं मया चेत्यस्य । पूर्वं राज्ञा स्वयमप्युक्तेः' इति चोक्तम् । एतत्परिशीलने—पूर्वसर्गे 'नात्र कार्या विचारणा' इत्यन्तकैकेय्युक्त्यनन्तरं 'अश्रुत्वा राजवचनं कथं गच्छामि भामिनि । तच्छ्रुत्वा मंत्रिणो वाक्यं राजा मंत्रिणमब्रवीत् । सुमंत्र रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम् ।' इत्यधिकः पाठः तिलकसम्मतः । इदं तु न कतकसम्मतमिति स्पष्टम् । गोविन्दराजस्याप्यसम्मतमेव । अत्र तिलके कतकव्याख्यामनूद्य, उत्तरश्लोके 'पुनः' पदास्वारस्यं दूषणमुक्तं । कैकेय्याज्ञायाः स्वेष्टत्वेन 'पुनः' इत्यपि युज्यत एव । अत एव पूर्वं 'सुमंत्रश्चिन्तयामास' इत्यपि स्वरसम् ॥

[1] किमिदं कारणं—ङ. च. झ.

**स राजवचनं श्रुत्वा शिरसा प्रतिपूज्य तम् ॥ २७ ॥**
**निर्जगाम नृपावासात् मन्यमानः प्रियं *महत् ।**

प्रियं मन्यमान इति हार्दाभिप्रायापरिज्ञानात् ॥ २७ ॥

**[1]प्रपन्नो राजमार्गं च पताकाध्वजशोभितम् ॥ २८ ॥**
**हृष्टः प्रमुदितः सूतो जगामाशु विलोकयन् ।**

राजमार्गं विलोकयन्निति सम्बन्धः ॥ २८ ॥

**स सूतस्तत्र शुश्राव रामाधिकरणाः कथाः ॥ २९ ॥**
**अभिषेचनसंयुक्तास्सर्वलोकस्य †हृष्टवत् ।**

रामाधिकरणाः—रामविषयिणीः । अभिषेचनेति । तत्प्रसङ्गेति यावत् । हृष्टवत्—हृष्टो भूत्वा ॥ २९ ॥

**ततो ददर्श रुचिरं कैलाससदृशप्रभम् ॥ ३० ॥**
**रामवेश्म सुमंत्रस्तु शक्रवेश्मसमप्रभम् ।**
**‡महाकपाटपिहितं वितर्दिशतशोभितम् ॥ ३१ ॥**

वितर्दिः—वेदिका ॥ ३१ ॥

---

* कैकेयीविवाहकाले तत्पुत्रायैव राज्याभिषेचनं यद्दशरथेन प्रतिज्ञातं—तत् ज्ञातमेव सुमन्त्रेणापि । एवञ्च कैकेय्यासम्मतिमन्तरा रामाभिषेचनमसंभवि । कैकेयी चैतावता रामविषयेऽतिहृष्टैव वर्तते । यतस्तया ‘ रामे वा भरते वापि विशेषं नोपलक्षये ’ इत्युक्तम् । एवञ्चेदानीं कैकेय्या अनुमतिप्राप्तयर्थमेव रामं राजाऽऽनयतीति मन्यते सुमंत्रः । अत उक्तं ‘ प्रियं महत् ’ इति । यद्वा—श्रीरामावतारो यदर्थः, स इदानीं संपत्स्यत इत्यभिप्रायो वा तस्य स्यात्. † स्वार्थे वतिः—गो. ‡ ‘ महाकवाटविहितं ’ इत्यपि पाठः । निर्मितमहाकवाटमित्यर्थः—गो. प्रातस्समयत्वान्महाकवाटपिहितं । महाकवाटगतस्वल्पद्वारस्यैवोद्घाटितत्वात्—ति.

[1] प्रसन्नो—ङ.

काञ्चनप्रतिमै*काग्रं मणिविद्रुमतोरणम् ।
†शारदाभ्रघनप्रख्यं दीप्तं मेरुगुहोपमम् ॥ ३२ ॥

काञ्चनप्रतिमाभिः एकाभिः—मुख्याभिः अग्रं—समग्रम् । ‡शारदाभ्रघनः व्याकृतचरः ॥ ३२ ॥

मणिभिर्वर[1]माल्यानां सुमहद्भिरलंकृतम् ।
मुक्तामणिभिराकीर्णं चन्दनागरुधूपितम् ॥ ३३ ॥
गन्धान्मनोज्ञान् विसृजद्दार्दुरं शिखरं यथा ।

वरमाल्यानां—स्वर्णपुष्पमाल्यानामन्तरालवर्तिभिः सुमहद्भिः—महादीप्तिमद्भिः मणिभिरलंकृतम् । दार्दुरं, दर्दुरो मलयसन्निकृष्टश्चन्दनगिरिः ॥ ३३ ॥

सारसैश्च मयूरैश्च विनदद्भिर्विराजितम् ॥ ३४ ॥
सुकृतेहामृगाकीर्णं सूत्कीर्णं भक्तिभिस्तदा ।

सुकृतैः-सुष्ठुनिर्मितैः ईहामृगैः—वृकैः, "कोकस्त्वीहामृगो वृकः"। भक्तयः—वर्धकिनां सूक्ष्मं चित्रशिल्पम् ॥ ३४ ॥

मनश्चक्षुश्च भूतानामादद§त्तिग्मतेजसा ॥ ३५ ॥
‖चन्द्रभास्करसंकाशं कुबेरभवनोपमम् ।
महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम् ॥ ३६ ॥

---

* एकं प्रधानं अग्र-पुरोभागः यस्य—ति. एकाग्रं—निरन्तरं । यद्वा काञ्चनप्रतिमाभिरेकानि मुख्यानि अग्राणि—शिखराणि यस्मिन्—गो. † शरत्कालिकाकाशगतमेघवदुन्नतं स्वच्छं च. ‡ पञ्चमस्य पञ्चमे श्लोके—अभ्रे विद्यमानो घनो मेघः । शारदपदेनानन्तरं कर्मधारयः इति यावत्—इत्युक्तम् । अधिकं तत्रैव द्रष्टव्यम्. § तिग्मतेजसा—अतिशयितशोभया । यद्वा प्रतिबिम्बितसूर्यकिरणैः—ति. ‖ अतितेजसा सूर्यसदृशमपि चक्षुष आवर्जनेन चन्द्रसदृशं चेति भावः.

[1] माल्यैश्च—ङ.

मेरुशृङ्गसमं सूतो रामवेश्म *ददर्श ह ।
† उपास्थितैः समाकीर्णं जनैरञ्जलिकारिभिः ॥ ३७ ॥

उपादाय समाक्रान्तैस्तथा जानपदैर्जनैः ।
‡ रामाभिषेकसुमुखैरुन्मुखैस्समलंकृतम् ॥ ३८ ॥

महामेघसमप्रख्यमुदग्रं सुविराजितम् ।
नानारत्नसमाकीर्णं §[1] कुब्जकैरपि चावृतम् ॥ ३९ ॥

उपादाय—उपदा इति शेषः । उदग्रं—प्रशस्तम् ॥ ३९ ॥

स वाजियुक्तेन रथेन सारथिः
समाकुलं [2] राजकुलं विलोकयन् ।
‖ वरूथिना [3] राजगृहाभिपातिना
[4] पुरस्य सर्वस्य मनांसि रञ्जयन् ॥ ४० ॥

राजकुलं—राजमार्गं । रथगुप्तिर्वरूथः, तद्वता ॥ ४० ॥

ततः समासाद्य महाधनं महत्
प्रहृष्टरोमा स बभूव सारथिः ।
मृगैर्मयूरैश्च समाकुलो¶ल्बणं
गृहं वरार्हस्य शचीपतेरिव ॥ ४१ ॥

महत् धनं यस्मिन् तत्—महाधनम् । समाकुलैः—इतस्ततः प्रसृतैः उल्बणं । वरार्हस्य-उत्तमवस्त्वर्हस्य ॥ ४१ ॥

---

* इदं क्रियापदं एकोनचत्वारिंशच्छलोकपर्यन्तं सम्बध्यते. † आदरात्पुनरपि रामवेश्मवर्णनम् . ‡ उन्मुखैः —उत्सुकैः- ति. गो. § 'कुब्जकैरातकावृतं' इत्यपि पाठः—गो. कैरातकः—किरातसमूहः. पराभिघातरक्षार्थावरणं वरूथः । तृतीयान्तं सर्वं रथविशेषणम् । पुरस्य — पौरस्य. ¶ उल्बणं—व्याप्तं । यद्वा बण शब्द इति धातुः । शब्देन विशिष्टं ॥ समाकुलं अत एवोल्बणमित्यर्थः । उल्बणं—अधिकशोभावत्—ति.

[1] कुब्जकैरातकावृतम्—ङ. [2] राजपथं—ङ. [3] रामगृहा—ङ. [4] जनस्य—ङ.

स तत्र कैलासनिभाः स्वलंकृताः
प्रविश्य कक्ष्याः त्रिदशालयोपमाः ।
प्रियान्नरान् राममते स्थितान् बहून्
अपोह्य शुद्धान्तमुपस्थितो रथी ॥ ४२ ॥

स तत्र शुश्राव च हर्षयुक्ताः
*रामाभिषेकार्थकृतां जनानाम् ।
नरेन्द्रसूनोरभिमङ्गलार्थाः
सर्वस्य लोकस्य गिरः प्रहृष्टाः ॥ ४३ ॥

रामाभिषेकप्रयोजनं कर्म कुर्वन्तीति रामाभिषेकार्थकृतः—तेषां गिरः शुश्रावेति योजना । अभितो मङ्गलप्रतिपादनमर्थो यासां गिरां—तास्तथा । सर्वलोकस्य च गिरः शुश्राव ॥ ४३ ॥

महेन्द्रसद्मप्रतिमं च वेश्म
रामस्य रम्यं मृगपक्षिजुष्टम् ।
ददर्श मेरोरिव शृङ्गमुच्चं
विभ्राजमानं प्रभया सुमंत्रः ॥ ४४ ॥

उपस्थितैरञ्जलिकारिभिश्च
सोपायनैर्जानपदैर्जनैश्च ।
कोटचा परार्धैश्च विमुक्तयानैः
समाकुलं द्वारपथं ददर्श ॥ ४५ ॥

कोट्या—तत्संख्यया । परार्धैः—तत्संख्यया, सर्वान्ता संख्या परार्धः, उपलक्षितैर्जनैस्समाकुलं । अनेनातिसंमर्दो दर्शितः ॥४५॥

---

*'रामाभिषेकार्थकृता:' इत्यपि पाठः-गो. रामाभिषेकार्थं प्रयुक्ताः इत्यर्थः । तत्सम्बन्धिनीरिति यावत् । इदं गिर इत्यस्य विशेषणम् ॥

ततो *महामेघमहीधराभं
†प्रभिन्नमत्यङ्कुशमप्रसह्यम् ।
रामौपवाह्यं रुचिरं ददर्श
शत्रुञ्जयं नागमुदग्रकायम् ॥ ४६ ॥

स्वलङ्कृतान् साश्वरथान् सकुञ्जरान्
अमात्यमुख्यांश्च ददर्श वल्लभान् ।
व्यपोह्य सूतान् सहितान् समन्ततः
समृद्धमन्तःपुरमाविवेश ह ॥ ४७ ॥

वल्लभान्—राज्ञ इति यावत् । सहितान्—व्याप्तान् ॥ ४७ ॥

[1] तदेन्द्रकूटाचलमेघसन्निभं
महाविमानोपमवेश्मसंयुतम् ।
अवार्यमाणः प्रविवेश सारथिः
प्रभूतरत्नं मकरो यथार्णवम् ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चदशः सर्गः

---

‡ इन्द्रकूटस्य—इन्द्रगृहस्य अचलमेघस्य–स्थिरमहामेघस्य च सन्निभं तत्तथा। महाविमानानां उत्तमवेश्मनां संघोऽस्यास्तीति तथा । "विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि"। देव (४८) मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चदशः सर्गः

---

* महामेघाधिरूढपर्वतसदृशं–ति. महामेघतुल्यं, महीधरतुल्यं चेति वार्थः। आकारे महीधरतुल्यं । न तावन्मात्रम् यतो महीधरो निश्चलः । अतो महामेघतुल्यं चेत्युक्तं । महीधरो ह्यगः, अयं तु नागः । न + अगः. † प्रभिन्न–मत्तं । 'प्रभिन्नो गर्जितो मत्तः' इत्यमरः. ‡ 'अद्रिकूटाचल' इति पाठे—अद्रिशिखरेण, अचलमेघेन च सन्निभमित्यर्थः-गो. तिलके तु–'अद्रिशृङ्गे आरूढो योऽचलो मेघः' इत्युक्तम् ।

[1] तदद्रि–ङ. ततोऽद्रि–च.

## षोडशः सर्गः

### [रामागमनम्]

स तदन्तःपुरद्वारं समतीत्य जनाकुलम् ।
*[1]प्रविविक्तां ततः कक्ष्यां आससाद पुराणवित् ॥ १ ॥

अथ रामस्य राजभवनोपस्थानम् । स तदित्यादि ॥ १ ॥

†[2]प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुण्डलैः ।
अप्रमादिभिरेकाग्रैः स्वनुरक्तैरधिष्ठिताम् ॥ २ ॥

प्रासकार्मुकानि बिभ्रतीति प्रासकार्मुकबिभ्रतः, तैस्तथा । द्विर्वचनं छान्दसम् । मृष्टकुण्डलैः—सूत्तेजितसमग्रकर्णाभरणैः ॥ २ ॥

तत्र ‡काषायिणो वृद्धान् वेत्रपाणीन् स्वलंकृतान् ।
ददर्श विष्ठितान् द्वारि §स्त्र्यध्यक्षान्सुसमाहितान् ॥ ३ ॥
ते समीक्ष्य समायान्तं रामप्रियचिकीर्षवः ।
सहसोत्पतितास्सर्वे स्वासनेभ्यस्ससंभ्रमाः ॥ ४ ॥
तानुवाच विनीतात्मा सूतपुत्रः प्रदक्षिणः ।
क्षिप्रमाख्यात रामाय सुमंत्रो द्वारि ||तिष्ठति ॥ ५ ॥

प्रकर्षेण दक्षिणः—समर्थस्तथा ॥ ५ ॥

ते राममुपसंगम्य भर्तुः प्रियचिकीर्षवः ।
सहभार्याय रामाय क्षिप्रमेवाचचक्षिरे ॥ ६ ॥

---

* प्रविविक्तां—जनसम्बाधरहिताम्. † 'प्रासकार्मुक' इत्यत्र 'सुपां सुलुक्' इति द्वि[?]यालुक्—ती. मृष्टं—शोधितं. ‡ काषायिणः—काषायवस्त्रधारिणः । रामप्रीत्यर्थमलङ्कारकञ्चुकालंकृतानित्यर्थः—गो. § स्त्र्यध्यक्षाः—अन्तःपुराध्यक्षाः—कञ्चुकिन इति यावत. || एतदनन्तरं इति करणं द्रष्टव्यम्.

[1] प्रविभक्तां—ङ. [2] प्रासकार्मुक—ङ.

प्रतिवेदितमाज्ञाय सूत[1]मभ्यन्तरं पितुः ।
तत्रैवानाययामास [2]राघवः *प्रियकाम्यया ॥ ७ ॥

प्रतिवेदितं द्वारपालैर्विज्ञापितं सूतं पितुरभ्यन्तरं—अन्तरङ्गं आज्ञाय—ज्ञात्वा । तत्रैव—सीतया सहावस्थितिस्थल एवेत्यर्थः ॥ ७ ॥

तं वैश्रवणसंकाशमुपविष्टं स्वलङ्कृतम् ।
ददर्श सूतः पर्यङ्के सौवर्णे सोत्तरच्छदे ॥ ८ ॥
वराहरुधिराभेण शुचिना च सुगन्धिना ।
अनुलिप्तं परार्ध्येन चन्दनेन परन्तपम् ॥ ९ ॥

वराहरुधिरवदतिरक्तमित्यर्थः ॥ ९ ॥

[3]स्थितया पार्श्वतश्चापि वालव्यजनहस्तया ।
उपेतं सीतया भूयः †चित्रया शशिनं यथा ॥ १० ॥
तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा ।
ववन्दे वरदं वन्दी विनयज्ञो विनीतवत् ॥ ११ ॥

विनीतवत्—विनीतस्सन् ॥ ११ ॥

प्राञ्जलिस्तु सुखं पृष्ट्वा ‡विहारशयनासने ।
राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ॥ १२ ॥

---

* प्रियकाम्ययेति । पितुरिति शेषः. † चैत्रपौर्णमास्यां चित्राख्यतारकोपेतं उदितं शशिनमिव स्थितं—गो. ‡ विहारशयनासन इति द्वंद्वैकवद्भावः—गो. विहारः—आहारादिसर्वे व्यापाराः, तेषु—तद्विषय इत्यर्थः । सुखं पृष्ट्वेत्यन्वयः.

[1] मभ्यागतं—ङ. [2] राघवप्रिय—ङ. [3] सीतया—ङ.

कौसल्यासुप्रजा राम! पिता त्वां द्रष्टुमिच्छति।
महिष्या सह कैकेय्या, गम्यतां तत्र मा चिरम्॥ १३॥

कौसल्यासुप्रजारामेति कौसल्यासुप्रजादेवेति च * गतवत्॥१३॥

एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः।
ततस्संमानयामास सीतामिदमुवाच ह॥ १४॥
देवि! देवश्च †देवी च समागम्य मदन्तरे।
मंत्रयेते ध्रुवं किञ्चि‡दभिषेचनसंहितम्॥ १५॥

देवश्च देवी च—मातापितराविति यावत्। मदन्तरे—मदर्थे, "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये", अभिषेचनसंहितं—अभिषेचनोपयुक्तं किञ्चिद्विचारोपेतं ध्रुवं मन्त्रयेते—विचारं कुर्वाते॥१५॥

लक्षयित्वा ह्यभिप्रायं प्रियकामा सुदक्षिणा।
संचोदयति राजानं [1]मदर्थमसितेक्षणा॥ १६॥

---

* गतवत्—बाल—२३ सर्गे द्वितीयश्लोकवत् इत्यर्थः. † देवी च इति कथनात् एवं वा रामस्याशयः स्यात्॥ उत्तरत्र—"पुरा भ्रातः पिता नस्स मातरं ते समुद्वहन्। मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम्॥" (अयो. १०७–३) इति हि रामो वक्ष्यति॥ न ह्येतदिदानीं विस्मृतं स्यात्। 'विप्रोषितश्च भरतो यावदेव पुरादितः। तावदेवाभिषेकस्ते प्राप्तकालो मतो मम।' इति दशरथवाक्येऽ(अयो. ४-२५) प्ययमर्थः स्पष्टः। अत एवेदानीं निगूढमुच्यते—लक्षयित्वेति॥ भरतासन्निधौ रामाभिषेचनरूपं राज्ञोऽभिप्रायं ज्ञात्वा राजानं सत्यप्रतिज्ञं कर्तुकामा—अत एव सुदक्षिणा मद्धितार्थे—ममावतारप्रयोजनसिद्धये वा राजानं समीचीनमार्गे संचोदयति इत्यर्थः। अस्य गूढोक्तिरूपत्वात् 'यौवराज्येऽभिषेक्ष्यति' इत्यनेन न विरोधः॥ यद्वा—वालिवधसमये स्वस्यभरतादेशानुवर्तित्वेन प्रकटनात्तथोक्तमिति. ‡ अभिषेचनसंहितं—अभिषेचनसम्बन्धि—गो.

[1] मदर्थं मदिरेक्षणे—ङ.

अथ महिष्या सहेत्युक्तत्वादुन्नयनार्हमर्थमुन्नयति—लक्षयित्वेत्यादि । "वृद्धेन मयाऽविलम्बेन रामाभिषेकः कार्यः" इति राज्ञोऽभिप्रायमालक्ष्य सुदक्षिणा—समर्था अत एव राज्ञः प्रियकामा सती "भरतासन्निधौ रामाभिषेकस्त्वत्सम्मतो न वा" इति प्रष्टारं पितरं सुदक्षिणात्वाद्राजानं मदर्थं प्रति——मदभिषेकं प्रति संचोदयति । भरतः अभिषेकोत्सवमनन्तरं श्रोष्यति । तत्र चिन्ता न कर्तव्या । शीघ्रमभिषेकः कार्यतामिति चोदयतीति मन्य इत्यर्थः ॥ १६ ॥

**सा प्रहृष्टा* महाराजं हितकामानुवर्तिनी ।**
**जननी चार्थकामा मे केकयाधिपतेस्सुता ॥ १७ ॥**

हितकामानुवर्तिनी—स्वस्या राजसौमुख्यादिप्रयोजनार्थतयैवानुवर्तनशीला । तथा जननी च । मे अर्थकामा—मदर्थसिद्ध्यपेक्षिणी ॥१७॥

**दिष्ट्या खलु महाराजो महिष्या प्रियया सह ।**
**सुमंत्रं प्राहिणोद्दूतमर्थकाम[1]करं मम ॥ १८ ॥**

कुत एवं निश्चय इत्यत्राह—दिष्ट्या खल्वित्यादि । ममार्थकरं सुमंत्रं प्राहिणोदिति यत् अतो मत्प्रयोजनार्थं प्राहिणोदित्यर्थः॥ १८ ॥

**यादृशी परिषत्तत्र तादृशो दूत आगतः ।**
**ध्रुवमद्यैव मां राजा यौवराज्येऽभिषेक्ष्यति ॥ १९ ॥**

---

* 'महाराजं' इति पदं तिलके पूर्वश्लोकेनान्वितम् । 'महाराजं' 'राजानं' (१६ श्लो.) इति हर्षवशात्पुनरुक्तिरदोषाय इति समर्थितं च । हितकामा—लोकस्येति शेषः । महाराजं—भर्तारं अनुवर्तिनी मे अर्थकामा भवतीति शेषः । पूर्वश्लोकादारभ्य 'यादृशी परिषत्तत्र' इति पर्यन्तश्लोकस्वारस्यपरिशीलने रामेण निगूढं किञ्चिदुच्यत एवेति स्पष्टं विमर्शकानाम् । निगूढमुक्तोर्थ एवोत्तरत्र अयो॰ १०७-३ श्लोके रामेण स्पष्टीकृत इति ॥

[1] परं—ङ.

स एव हेतुर्विव्रियते— यादृशीत्यादिना। तत्र-राजान्तःपुरे यादृशी–मदर्थैकप्रयोजना परिषत्तादृशः–मदर्थैकप्रयोजनो दूत आगत इति यतः अस्मादेव निश्चय इत्यर्थः ॥ १९ ॥

हन्त! शीघ्रमितो गत्वा द्रक्ष्यामि च महीपतिम्।
सह त्वं परिवारेण सुखमास्व रमस्व च ॥ २० ॥
*पतिसंमानिता सीता भर्तारमसितेक्षणा।
आद्वारमनुवव्राज मङ्गलान्यभिदध्युषी ॥ २१ ॥

अभिदध्युषी—ध्यायतेः क्वसौ आर्षत्वात् 'वस्वेकाच्' इति इडभावे सत्यपीटि वा 'उगितश्च' इति ङीपि भत्वात् 'वसोः संप्रसारणम्' इति संप्रसारणे निर्निमित्तटोऽपि लोपे षत्वे च रूपम्। अभिध्यातवतीति यावत् ॥ २१ ॥

†राज्यं द्विजातिभिर्जुष्टं राजसूयाभिषेचनम्।
कर्तुमर्हसि ते राजा वासवस्येव लोककृत् ॥ २२ ॥
दीक्षितं व्रतसंपन्नं वराजिनधरं शुचिम्।
कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम् ॥ २३ ॥
पूर्वां दिशं वज्रधरो दक्षिणां पातु ते यमः।
वरुणः पश्चिमामाशां धनेशस्तूत्तरां दिशम् ॥ २४ ॥

अथ सीताया मङ्गलानुष्ठानमिदानीम्। राज्यं-राज्यसिद्धिं प्रति द्विजातिभिर्जुष्टमभिषेचनं—यौवराज्याभिषेचनं कर्तुमर्हति। कालान्तरे राजसूयार्हमङ्गराज्याभिषेचनमपि करोतु, वासवस्य श्रीमदादिगुरुर्भगवानिव। ततो राजसूययागे दीक्षितत्वादिधर्मकं त्वां भजामि; भजिष्य इत्यर्थः ॥ २२–२४ ॥

* एभिर्विशेषणैः सीताया अपि वनगमनं ज्ञातमेवेति सूच्यत इति तिलके. † लोककृत्–ब्रह्मा–गो. राजसूये योऽभिषेकः तदर्हं कर्तुं इत्यर्थः। राज्यं कर्तुमित्यत्र कर्तुं–दातुमित्यर्थः.

अथ सीतामनुज्ञाप्य कृतकौतुकमङ्गलः ।
निश्चक्राम सुमन्त्रेण सह रामो निवेशनात् ॥ २५ ॥

कृतकौतुकमङ्गलः—कृतोत्सवमङ्गलानुष्ठानः ॥ २५ ॥

पर्वतादिव निष्क्रम्य सिंहो गिरिगुहाशयः ।
लक्ष्मणं द्वारि सोऽपश्यत् *प्रह्वाञ्जलिपुटं स्थितम् ॥२६॥

अथ मध्यमकक्ष्यायां समागम्य सुहृज्जनैः ।
स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य च ॥ २७ ॥

अर्थिन इति । रामदर्शनार्थिन इति यावत् ॥ २७ ॥

ततः पावकसंकाशमारुरोह रथोत्तमम् ।
वैय्याघ्रं पुरुषव्याघ्रो[1] राजतं राजनन्दनः ॥ २८ ॥

वैय्याघ्रं—व्याघ्रचर्मपरिवृतम् । 'द्वैपवैय्याघ्रादञ्' ॥ २८ ॥

मेघनाद†मसम्बाधं मणिहेमविभूषितम् ।
मुष्णन्तमिव चक्षूंषि प्रभया सूर्यवर्चसम् ॥ २९ ॥

मेघस्येव नादो यस्य रथस्य स तथा ॥ २९ ॥

करेणुशिशुकल्पैश्च युक्तं परमवाजिभिः ।
हरियुक्तं सहस्राक्षो रथमिन्द्र इवाशुगम् ॥ ३० ॥

---

* प्रह्वत्वसूचकाञ्जलिपुटवन्तं—ति. अञ्जलिपुट इति मत्वर्थीयोऽच्प्रत्ययः । प्रह्वश्चासावञ्जलिपुटश्चेति कर्मधारयः । प्रह्वं अञ्जलिपुटं यस्येति बाहुव्रीहिर्वा । राज्ञां निर्गमनसमये भृत्याः खलु स्वाञ्जलिपुटमधः प्रदर्श्य " इत इतः " इति मार्गं प्रदर्शयन्तीति राजमर्यादा । लक्ष्मणस्त्वात्मानं रामदासमेव मन्यते स्मेति प्रसिद्धम् । अत एव द्वारीत्यपि स्वरसम्. † असम्बाधं—विशालम्.

[1] राजन्तं—ङ.

प्रययौ तूर्णमास्थाय राघवो ज्वलितः श्रिया ।

करेणुशिशुकल्पैरित्यनेन हृष्टपुष्टोन्नतमहाबलवत्त्वं सूच्यते ॥३०॥

*स पर्जन्य इवाकाशे स्वनवा[1]नभिनादयन् ॥ ३१ ॥
निकेतान्निर्ययौ श्रीमान् [2]महेन्द्रादिव चन्द्रमाः ।

आकाशे स्वनवान्—नादवान् पर्जन्य इव मेघस्थानीयरथस्वनेन दिशो नादयन्निकेतनान्निर्ययौ ॥ ३१ ॥

[3]छत्रचामरपाणिस्तु लक्ष्मणो राघवानुजः ॥ ३२ ॥
†जुगोप भ्रातरं भ्राता रथमास्थाय पृष्ठतः ।
ततो हलहलाशब्दस्तुमुलस्समजायत ॥ ३३ ॥
‡तस्य निष्क्रममाणस्य जनौघस्य समन्ततः ।

हलहलेत्यनुकारः । तस्येति । तस्मिन्निष्क्रममाण इति यावत् ॥ ३३ ॥

ततो §हयवरा मुख्या नागाश्च गिरिसन्निभाः ॥ ३४ ॥
अनुजग्मुस्तथा रामं शतशोऽथ सहस्रशः ।
अग्रतश्चास्य सन्नद्धाश्चन्दनागरुभूषिताः ॥ ३५ ॥
खड्गचापधराश्शूरा जग्मुराशंसवो जनाः ।

आशंसव इति । श्रेय इति शेषः ॥ ३५ ॥

---

*आकाशे स्वनवान् पर्जन्य इव दिशोऽभिनादयन् महेन्द्राच्चन्द्रमा इव निकेतान्निर्ययाविति । रथारूढत्वादाद्यमुदाहरणम् । सौंदर्यवत्त्वे द्वितीयमुदाहरणम्. †जुगोप—आतपादिभ्य इति भावः—गो. ‡तस्य निष्क्रममाणस्य, 'पुरतः' इति शेषः । जनौघस्य हलहलाशब्द इत्यन्वयः—ति. §हयनागशब्दौ तदारूढपरौ—गो.

[1] नभिनन्दयन्—ङ. [2] महाभ्रादिव—ङ. च. [3] चित्र, चन्द्र—ङ.

ततो वादित्रशब्दाश्च स्तुतिशब्दाश्च वन्दिनाम् ॥ ३६ ॥
सिंहनादाश्च शूराणां तदा शुश्रुविरे पथि ।
हर्म्यवातायनस्थाभिर्भूषिताभिस्समन्ततः ॥ ३७ ॥
कीर्यमाणः सुपुष्पौघैर्ययौ स्त्रीभिररिन्दमः ।
रामं सर्वानवद्याङ्ग्यो रामपिप्रीषया ततः ॥ ३८ ॥
वचोभिरग्र्यैर्हर्म्यस्थाः क्षितिस्थाश्च ववन्दिरे ।

ववन्दिर इति । *वन्दिरिह स्तुत्यर्थः, आशीर्वादमकुर्वन्नित्यर्थः ॥

नूनं † नन्दति ते माता कौसल्यामातृनन्दन ! ॥ ३९ ॥
पश्यन्ती ‡सिद्धयात्रं त्वां पित्र्यं राज्य[1]मवस्थितम् ।

स एव प्रदर्श्यते--नूनमित्यादिना । नन्दति–नन्दत्विति यावत् । सिद्धयात्रं–सिद्धकार्ययात्रम् । अत एव पित्र्यं राज्यमवस्थितं–अधितिष्ठन्तम् ॥ ३९ ॥

सर्वसीमान्तिनीभ्यश्च सीतां सीमन्तनीं वराम् ॥ ४० ॥
अमन्यन्त हि ता नार्यो रामस्य हृदयप्रियाम् ।

हि ताः इति पदच्छेदः ॥ ४० ॥

तया सुचरितं देव्या पुरा नूनं महत्तपः ॥ ४१ ॥
रोहिणीव शशाङ्केन रामसंयोगमाप या ।

सुचरितं–स्वनुष्ठितम् ॥ ४१ ॥

---

* वदि अभिवादनस्तुत्योरिति धातुः. † नन्दतीति समीप्सान्निर्देशः. ‡ सिद्ध-यात्रं–सिद्धगमनं–सिद्धगमनप्रयोजनं.

[1] मुपस्थितम्–ङ. च.

इति प्रासादश‍ृङ्गेषु प्रमदाभिर्नरोत्तमः ॥ ४२ ॥

शुश्राव *राजमार्गस्थः प्रिया वाच उदाहृताः ।

† [1]आत्मसंपूजनैः श‍ृण्वन् ययौ रामो महापथम् ॥ ४३ ॥

स राघवस्तत्र कथाप्रपञ्चान्
शुश्राव लोकस्य समागतस्य ।
‡ आत्माधिकारा विविधाश्च वाचः
प्रहृष्टरूपस्य पुरे जनस्य ॥ ४४ ॥

§ एष श्रियं गच्छति राघवोऽद्य
राजप्रसादाद्विपुलां गमिष्यन् ।
एते वयं सर्वसमृद्धकामाः
येषामयं नो भविता प्रशास्ता ॥ ४५ ॥

लाभो जनस्यास्य यदेष सर्वं
प्रपत्स्यते राज्यमिदं चिराय ।
न ह्यप्रियं किञ्चन जातु कश्चित्
पश्येन्न दुःखं मनुजाधिपेऽस्मिन् ॥ ४६ ॥

स घोषवद्भिश्च हयैर्मतङ्गजैः
पुरस्सरैः स्वस्तिकसूतमागधैः ।
महीयमानः प्रवरैश्च वादकैः
अभिष्टुतो वैश्रवणो यथा ययौ ॥ ४७ ॥

---

* राजमार्गस्थः—गमनकाल इति भावः. † उपलक्षणे तृतीया । आत्मसंपूजनविशिष्टा वाच इत्यर्थः. ‡ आत्माधिकाराः—आत्मानमधिकृत्य प्रवृत्ताः. § श्रियं गमिष्यन् गच्छति—श्रियं प्राप्तुं गच्छतीति यावत्। गमिष्यन् राजगृहं, राजप्रसादाद्विपुलां श्रियं गच्छति—प्राप्नोति । राजगृहं गच्छन् श्रियं अवाप्स्यतीतिवक्तव्ये व्यत्येयेन कथनं, राजगृहगमनपर्यन्तमेव विलम्बः, राजगृहप्राप्तौ तत्क्षण एव श्रियः प्राप्तिरिति सूचनाय ।

[1] इदमर्धं—ङ. च. पुस्तकयोर्नास्ति ।

करेणुमातङ्गरथाश्वसंकुलं
महाजनौघप्रतिपूर्णचत्वरम् ।
प्रभूतरत्नं बहुपण्यसञ्चयं
ददर्श रामो रुचिरं महापथम् ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षोडशस्सर्गः

---

मनुजाधिपेऽस्मिन् सतीति शेषः । *राम(५२) मानः सर्गः ॥ ४८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे षोडशस्सर्गः

---

## सप्तदशः सर्गः

[कैकेय्यन्तःपुरप्रवेशः]

स रामो रथमास्थाय संप्रहृष्टसुहृज्जनः ।
†पताकाध्वजसंपन्नं महार्हागरुधूपितम् ॥ १ ॥
अपश्यन्नगरं श्रीमान्नानाजनसमन्वितम् ।

अथ रामस्य राजसमीपगमनम् । स राम इत्यादि ॥ १ ॥

स गृहैरभ्रसंकाशैः पाण्डुरैरुपशोभितम् ॥
राजमार्गं ययौ रामो ‡मध्येनागरुधूपितम् ॥ २ ॥

---

* मातृकास्वेवं दृश्यते । दृश्यन्ते तु सर्वत्र ४८ श्लोकाः. † अलंकारार्थाः चिह्नरहिताः—पताकाः । राजचिह्नसहितानि—ध्वजानि. ‡ मध्येन—तत्र तत्र—इति वार्थः । प्रथमश्लोके 'महार्हागरुधूपितं' इति वर्णनं नगरसामान्यस्य । द्वितीयश्लोके तु विशिष्य राजमार्गस्यातिशयविवक्षयेति न पौनरुक्त्यम्.

अभ्रसंकाशैः—पाण्डरमेघसदृशैः । मध्येन—उभयवीथीमध्यप्रदेशेन । प्रकृत्यादित्वात् तृतीया ॥ २ ॥

चन्दनानां च मुख्यानामगरूणां च संचयैः ।
उत्तमानां च गन्धानां *क्षौमकौशाम्बरस्य च ॥ ३ ॥
† [1]आविद्धाभिश्च मुक्ताभिरुत्तमैः स्फाटिकैरपि ।
शोभमान‡मसंबाधैस्तं राजपथमुत्तमम् ॥ ४ ॥

कौशाम्बरं—कौशेयम् । आविद्धाभिः—मालायै कृतरंध्राभिः । § असंबाधैः—विविच्यस्थापितैः ॥ ४ ॥

संवृतं विविधैः [2]पण्यैः भक्ष्यैरुच्चावचैरपि ।
ददर्श तं राजपथं दिवि देव[3]पथं यथा ॥ ५ ॥

पण्यादिभिः संवृतं—व्याप्तम् ॥ ५ ॥

दध्यक्षतहविर्लाजैर्धूपैरगरुचन्दनैः ।
नानामाल्योपगंधैश्च सदाभ्यर्चितसत्पथम् ॥ ६ ॥

उपगन्धः—हरिचन्दनादिः ॥ ६ ॥

अशीर्वादान् बहून् शृण्वन् सुहृद्भिस्समुदीरितान् ।
यथार्हं वाऽपि संपूज्य सर्वानेव नरान् ययौ ॥ ७ ॥

यथार्हं वा—यथार्हमेव । ईक्षणभ्रूक्षेपवचनाञ्जलिभिर्यथोचितमित्यर्थः ॥ ७ ॥

---

* कौशांबरस्य च संचयैः—शोभमानं—इत्यन्वयः. † अविद्धाभिः—अकृतरंध्राभिः—नूतनाभिरिति यावत्—गो. ‡ असम्बाधं—विस्तीर्णं—ति. § असंबाधैरित्युत्तरत्राप्यन्वेति.

[1] अविद्धाभिश्च—ङ. [2] पुष्पैः—ङ. च. [3] पतिर्यथा—ङ. च.

**पितामहैराचरितं तथैव प्रपितामहैः ।**
**अद्योपादाय तं मार्गमभिषिक्तोऽनुपालय ॥ ८ ॥**

आचरितं—अनुष्ठितम् । अभिषिक्तोऽनुपालयेति वृद्धानां वादः ॥

**[यथा स्म लालिताः पित्रा यथा पूर्वैः पितामहैः ।**
***ततस्सुखतरं सर्वे रामे वत्स्याम राजनि ॥]**
**[1] अर्थैरलं हि† भुक्तैर्नः परमार्थैरलं च नः ।**
**यथा पश्येम निर्यान्तं रामं राज्ये प्रतिष्ठितम् ॥ ९ ॥**

अर्थैरित्यादि । रामं राज्ये प्रतिष्ठितं—अभिषिक्तं राजमार्गे निर्यान्तं पश्येम यथा—साक्षात्कुर्मो यदि—एतत्सुखलाभो यदि; अर्थैर्हि प्रसिद्धैः ऐहिकविषयैर्भुक्तैः तद्भोगजसुखैर्नोऽस्माकं अलं, तथा परमैः—श्रेष्ठैः स्वर्गाद्यर्थैः तत्सुखैश्च नः—अस्माकं अलं—मा स्तु ॥ ९ ॥

**ततो हि नः प्रियतरं नान्यत्किञ्चिद्भविष्यति ।**
**‡ यथाऽभिषेको रामस्य राज्येनामिततेजसः ॥ १० ॥**

कथमेवमित्यत्र-ततो हीत्यादि । भूमानन्दब्रह्मरामसाक्षात्कारज-सुखादित्यर्थः । प्रियतरं—प्रेमातिशयास्पदं अन्यत्र किञ्चित्सुखं भविष्यति । [2] यथा ह्यमिततेजसो रामस्य राज्येन—राज्यप्राप्तिहेतवे अभिषेकः [3] तथा राज्ये प्रतिष्ठितमित्यादिपूर्वेणान्वयः ॥ १० ॥

**एताश्चान्याश्च सुहृदां § उदासीनः कथाः शुभाः ।**
**‖ आत्मसंपूजनीः शृण्वन् ययौ रामो महापथम् ॥ ११ ॥**

---

* ततः—तस्मात्—तदपेक्षया सुखतरं वत्स्याम इति भावः. † भुक्तैन—ऐहिकविषय-भोगजसुखेन । परमार्थैः—परमार्थस्वर्गसाधनैश्च—ति. परमार्थैः—परमपुरुषार्थसाधन-भूतैः-गो. मोक्षसुखमपि मास्तु—ततोऽप्यस्य रामदर्शनस्य सुखतरत्वादित्याशयः. ‡ यथाऽभिषेकं इति—ति. गो. पाठः । यथा प्रियतरः न तथान्यत्प्रियतरमस्तीति भावः. § उदासीन इति । धीरोदात्तत्वादिति भावः. ‖ आत्मसंपूजाजननीरित्यर्थः-गो.

[1] अलमद्यहि भुक्तेन—ङ. [2] यदा—क. [3] तदा—क.

उदासीनश्शृण्वन्निति । स्तुतिजातहर्षविकाररहित इति यावत् । अनुत्तमं यथातथोच्यमाना आत्मसंपूजनीर्वाचः श्रृण्वन्निति योजना ॥११॥

न हि तस्मान्मनः कश्चिच्चक्षुषी वा नरोत्तमात् ।
नरः शक्नोत्यपाक्रष्टुमतिक्रान्तेऽपि राघवे ॥ १२ ॥

अतिक्रान्तेऽपीति । दृष्टिपथमिति शेषः ॥ १२ ॥

यश्च रामं न पश्येत्तु यं च रामो न पश्यति ।
निन्दितः [1] स वसेल्लोके *स्वात्माऽप्येनं विगर्हते ॥ १३ ॥

यश्च रामं स्वदेशस्थं न पश्येत्, यं च स्वदेशस्थमत एव रामोऽपि न पश्यति सोऽसावपरोक्षब्रह्मरामानुभवादृष्टहीन इहामुत्र च लोके सर्वलोकैर्निन्दितो वसेत् । अप्रयासेन भगवदपरोक्षीकृतिमात्रेण मुक्तिसंपादनादृष्टाभावान्नास्य कदाऽपि संसारोत्तार इत्यर्थः । अत एवास्यात्मा—अन्तर्यामी भगवानादिगुरुर्ब्रह्माप्येनं विगर्हते—पापिष्ठोऽयं मन्मूर्तिमपि साक्षात्कृत्य न जन्मोद्धृतवानिति ॥ १३ ॥

सर्वेषां हि स धर्मात्मा वर्णानां कुरुते दयाम् ।
चतुर्णां हि † वयस्स्थानां तेन ते तमनुव्रताः ॥ १४ ॥

दयामिति । मुक्तिपर्यन्तानुग्रहमित्यर्थः ॥ १४ ॥

---

* स्वात्माप्येनं विगर्हते—स्वान्तःकरणमप्येनं विशेषेण गर्हते—गो. † चतुर्णां वर्णानां मध्ये सर्वेषामपि वयःस्थानां—वयः स्थानं प्रमाणं यस्याः सा—तादृशीं वयोऽनुरूपामिति यावत्—दयां कुरुते—गो. ति. वयस्थानां वृद्धानां इति वा—गो. वस्तुतस्तु वयःपदं वयस्सामान्यवाची । तत्तद्वयसि स्थितानां तत्तद्वयोऽनुगुणं पुरस्कारादिकं ददातीत्यर्थः । वृद्धानां पुत्र इव, बालानां पितेव, समानां सखेव च वर्तत इति यावत् । "बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ।" "पौरान् स्वजनवन्नित्यं कुशलं परिपृच्छति ।" "पिता पुत्रानिवौरसान्" "पितेव परितुष्यति" इति खलूक्तम् । चक्रवर्तिकुमारस्य एवं वर्तनं हि सौलभ्यसूचकं इत्यभिप्रायेण 'दयां' इत्युक्तम् ।

[1] स भवेल्लोके-सर्वलोकेषु-ङ.

चतुष्पथान् देवपथांश्चैत्यान्यायतनानि च ।
*प्रदक्षिणं परिहरन् जगाम नृपतेः सुतः ॥ १५ ॥

प्रदक्षिणं परिहरन्निति । चतुष्पथाद्यपेक्षया स्वस्य दक्षिणभाग-गमनं परिहरन्नित्यर्थः ॥ १५ ॥

स राजकुलमासाद्य मेघसंघोपमैः शुभैः ।
[प्रासादशृङ्गैर्विविधैः कैलासशिखरोपमैः ॥
आवारयद्भिर्गगनं विमानैरिव पाण्डुरैः ।]
† वर्धमानगृहैश्चापि रत्नजालपरिष्कृतैः ॥ १६ ॥

वर्धमानगृहैः — क्रीडागृहैः । परिष्कृतैरुपेतं तत्पितुर्वेश्मेति योजना ॥ १६ ॥

[तत्पृथिव्यां गृहवरं महेन्द्रभवनोपमम् ।
राजपुत्रः पितुर्वेश्म प्रविवेश श्रिया ज्वलन् ॥
स कक्ष्या धन्विभिर्गुप्तास्तिस्रोऽतिक्रम्य वाजिभिः ।
पदातिरपरे कक्ष्ये द्वे जगाम नरोत्तमः ।]
स सर्वाः समतिक्रम्य कक्ष्या दशरथात्मजः ।
[1]सन्निवर्त्य जनं सर्वं [2]शुद्धान्तं पुनरभ्यगात् ॥ १७ ॥

स सर्वा इति । उक्तपञ्चकक्ष्या इत्यर्थः ॥ १७ ॥

---

* अप्रदक्षिणं परिहरन् प्रदक्षिणं यथा तथा जगाम—**गो**. चतुष्पथाद्यपेक्षया स्वस्य दक्षिणभागगमनं परिहरन्—**ति**. वस्तुतः—प्रदक्षिणं यथा तथा चतुष्पथादीन् स्वदक्षिणभागे परिहरन्—त्यजन् जगामेत्यर्थः. † वर्धमानगृहैः—वर्धमानलक्षणाधिष्ठान-समेतगृहैः—**गो**. अत्युन्नतनिर्माणायारब्धगृहैः—**ती**. वर्धमानगृहैः—दक्षिणद्वाररहितैः। उक्तं च—'पश्चिमद्वारहीनं तु नन्द्यावर्तं प्रचक्षते । दक्षिणद्वारहीनं तु वर्धमानमुदाहृतम्' इति—**सत्य**.

[1] सन्नियम्य—**ङ**. [2] शुद्धान्तःपुर—**ङ. च**.

ततः प्रविष्टे पितुरन्तिकं तदा
जनस्स सर्वो मुदिते नृपात्मजे ।
प्रतीक्षते तस्य पुनर्विनिर्गमं
यथोदयं चन्द्रमसः सरित्पतिः ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तदशः सर्गः

———

अन्तिके प्रविष्ट इति । अन्तिकदेशे प्रविश्य स्थित इत्यर्थः ।

*दया(१८)मानः सर्गः ॥ १८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्तदशः सर्गः

———

अष्टादशः सर्गः

[वनवासनिदेशः]

†स ददर्शासने रामो [1]निषण्णं पितरं शुभे ।
कैकेयीसहितं दीनं मुखेन परिशुष्यता ॥ १ ॥

अथ प्रविष्टरामस्य पितृवैमुख्यशोकहेतुप्रश्ने कैकेय्योत्तरकथनम् । स ददर्शेत्यादि । परिशुष्यता मुखेनोपलक्षितम् ॥ १ ॥

---

* मातृकासु अस्मिन् सर्गे १८ श्लोका निर्दिष्टाः । दृश्यन्ते च सर्वत्र २२ श्लोकाः । अतश्च व्याख्यागतिपरिशीलनयाऽधिकपाठाः कुण्डलिताः. †आसने–पर्यङ्के–गो.

[1] विषण्णं–ङ.

स पितुश्चरणौ पूर्वमभिवाद्य *विनीतवत् ।
ततो ववन्दे चरणौ कैकेय्यास्सुसमाहितः ॥ २ ॥

विनीतवत्—विनीत [1] एव ॥ २ ॥

रामेत्युक्त्वा तु वचनं बाष्पपर्याकुलेक्षणः ।
शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ॥ ३ ॥

भाषितुं न शशाकेति । रामेत्यक्षरद्वयोच्चारणाभ्यधिकमिति शेषः ॥ ३ ॥

तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम् ।
रामोऽपि †भयमापन्नः पदा स्पृष्ट्वेव पन्नगम् ॥ ४ ॥

अपूर्वं—इतः प्राक् अदृष्टपूर्वम् । भयावहं—विपत्तिशङ्का-जननद्वारेणेति शेषः । पन्नगं पदा स्पृष्ट्वेव रामोऽपि स्वापराधशंकया भयमापन्नः ॥ ४ ॥

इन्द्रियैरप्रहृष्टैस्तं [2] क्लेशसंतापकर्शितम् ।
निश्वसन्तं महाराजं व्यथिताकुलचेतसम् ॥ ५ ॥
ऊर्मिमालिनमक्षोभ्यं क्षुभ्यन्तमिव सागरम् ।
उपप्लुतमिवादित्यमुक्तानृतमृषिं यथा ॥ ६ ॥

अप्रहृष्टैः—खिन्नैरिन्द्रियैरुपलक्षितं । क्लेशात्—मनःक्लेशात् । व्यथितं—खिन्नं आकुलं—संभ्रान्तं चेतो यस्य स तथा । ऊर्मिमालाऽ-स्यास्तीति तथा, व्रीह्यादित्वादिनिः । अक्षोभ्यमपि स्वतो निमित्त-

---

* विनीतवदिति । सर्वलोकोत्तमस्य रामस्य लोकशिक्षार्थमेव विनयप्रदर्शनमिति वतिना सूचितम्—सत्य. † दशरथविषादस्य स्वापराधजन्यत्वशङ्कया भयं रामस्य—ति.

[1] स्सन्—घ. [2] शोक—ङ. च.

विशेषवशात्क्षुभ्यन्तं सागरमिव स्थितम् । उपप्लुतं—केतुग्रस्तम् । उक्तं—अनृतं येन स तथा ; तद्वान्निस्तेजस्कमित्यर्थः । दृष्ट्वा भयमापन्न इत्यनुषङ्गः ॥

**अचिन्त्यकल्पं हि पितुः तं शोकमुपधारयन् ।**
**बभूव संरब्धतरः *समुद्र इव पर्वणि ॥ ७ ॥**

पितुस्तं शोकमचिन्त्यकल्पं—अत्यन्तासंभाव्यं उपधारयन्—चिन्तयन् । समुद्रः पर्वणीव संरब्धतरः—अतिशयेन क्षुभितः बभूव । यद्यपि समुद्रस्य पर्वणि चन्द्रोदये हर्षात्क्षोभ इति प्रसिद्धिः ; अथापि इह क्षोभमात्रे दृष्टान्तः ॥ ७ ॥

**चिन्तयामास च तदा रामः पितृहिते रतः ।**
**किं स्विदद्यैव नृपतिः न मां प्रत्यभिनन्दति ॥ ८ ॥**

किं स्वित्—किन्नु ॥ ८ ॥

**अन्यदा मां पिता दृष्ट्वा कुपितोऽपि प्रसीदति ।**
**तस्य मामद्य संप्रेक्ष्य [1]किमायासः प्रवर्तते ॥ ९ ॥**

अद्यैवेत्येवकारव्यवच्छेद्यमुच्यते—अन्यदेत्यादि । तस्येति । तादृशस्य मद्दर्शने नित्यप्रीतिमत इत्यर्थः ॥ ९ ॥

**स दीन इव शोकार्तो विषण्णवदनद्युतिः ।**
**कैकेयीमभिवाद्यैव रामो वचनमब्रवीत् ॥ १० ॥**

दीन इव—दीन एव । विषण्णवदनद्युतिः† किं स्विदित्यनुकर्षः ॥

---

* समुद्रस्य पर्वकाले क्षोभहेतुः—हर्ष एवेति कविभिः खलु कल्पितः । न ह्यचेतनस्य हर्षसंभवः । अपि तु पर्वकाले स्वाभाविकः संरंभः । तद्वद्रामोऽपि पितृवैमुख्यं दृष्ट्वा झटिति संरब्धतरोऽभूदिति दृष्टान्तानुरूप्यम् . † विषण्णवदनद्युतिः किन्नु ? इति प्रत्येकं प्रश्नान्तरम् । तिलके तु—उत्तरार्धगतरामविशेषणमित्युक्तम् .

[1] किमाश्वासः—ङ.

**काच्चिन्मया नापराद्धमज्ञानात्, येन मे पिता।**
**कुपितः, तन्ममाचक्ष्व, त्वमेवैनं प्रसादय ॥ ११ ॥**

प्रसादयेति। मत्कृतापराधशान्त्या इति शेषः ॥ ११ ॥

***अप्रसन्नमनाः किन्नु सदा मां प्रति वत्सलः।**
**[1]विवर्णवदनो दीनो न हि मामभिभाषते ॥ १२ ॥**

**शारीरो मानसो वाऽपि कच्चिदेनं न बाधते।**
**सन्तापो वाऽभितापो वा दुर्लभं हि सदा सुखम् ॥ १३ ॥**

शारीरः—शरीरव्याधिजः संतापः। मानसः—आधिजोऽभितापः। न बाधते कच्चित्। कुतस्तत्प्रसंग इत्यतः—दुर्लभमित्यादि। मानुषतनोः पापपुण्यारब्धत्वादित्याशयः ॥ १३ ॥

**कच्चिन्न किञ्चिद्भरते कुमारे प्रियदर्शने।**
**शत्रुघ्ने वा महासत्त्वे †मातॄणां वा ममाशुभम् ॥ १४ ॥**

**‡अतोषयन्महाराजमकुर्वन्वा पितुर्वचः।**
**मुहूर्तमपि नेच्छेयं [2]जीवितुं कुपिते नृपे ॥ १५ ॥**

मातॄणां वेति। विषय इति शेषः। अतोषयन्न कच्चिदित्यनुकर्षः ॥ १४–१५ ॥

---

* सदा मां प्रति वत्सलोऽप्यद्याप्रसन्नमनाः, मां किन्नु नाभिभाषत इत्यन्वयः. † मातॄणामिति निर्धारणे षष्ठी—**गो**. एतेषां विषये मम—मदीयं अशुभं—अपराधः न कच्चित. ‡ अतोषयन्नित्यादेरुत्तरार्धेण वान्वयः। हेतौ शतृ। कुपित इत्युक्तकोपे हेतुः. व्याख्यारीत्या तु अतोषयन्नित्यर्धं भिन्नं वाक्यम्.

[1] विषण्ण—**ङ. च.** [2] जीवितं—ङ.

*यतोमूलं नरः पश्येत् प्रादुर्भावमिहात्मनः ।
कथं तस्मिन् न वर्तेत प्रत्यक्षे सति दैवते ॥ १६ ॥

यतोमूलमिति । अलुगार्षः । यो नरः इहात्मनः प्रादुर्भावं-शरीरपरिग्रहं यन्मूलं-यत्कारणकं पश्येत्-जानीयात् सोऽसौ विवेकी उक्तहेतोरेव प्रत्यक्षे दैवते सिद्धे सति तस्मिन् पितरि आनुकूल्ये कथं न वर्तेत ॥ १६ ॥

कच्चित्ते† परुषं किञ्चिदभिमानात्पिता मम ।
उक्तो भवत्या [1]रोषेण यत्रास्य ‡लुलितं मनः ॥ १७ ॥

ते-तव रोषेण-कोपेन अभिमानात्-गर्वेण वा मम पिता परुषमुक्तो न कच्चित । यत्र-येनास्य मनो लुलितम् ॥ १७ ॥

एतदाचक्ष्व मे देवि ! तत्त्वेन परिपृच्छतः ।
किं निमित्तमपूर्वोऽयं विकारो मनुजाधिपे ॥ १८ ॥
एवमुक्ता तु कैकेयी राघवेण महात्मना ।
उवाचेदं §सुनिर्लज्जा धृष्टमात्महितं वचः ॥ १९ ॥

सुनिर्लज्जा-पत्युरेवं क्लेशकरणलज्जारहिता । धृष्टं-प्रत्यक्षतो 'वनं गच्छ' इतिस्ववचनविषय[2]कालुष्यापेतं यथा तथा । आत्महितं-स्वपुत्राभिषेकविषयकम् ॥ १९ ॥

---

* मूलं-प्रवृत्तिहेतुभूतं, आत्मनः-स्वस्य, प्रादुर्भावं-प्राकट्यं, यतः-यस्मात्-**शि.** प्रादुर्भावं-जन्म, मूलं-स्वप्रादुर्भावापादकं तपआदि च यतः-पितुस्सकाशात्पश्येत्-**सत्य.** † ते अभिमानात्-तव वाल्लभ्यात्-**गो.** ‡ लुलितं-कलुषितं. § सुनिर्लज्जा-यशः-प्रख्यापनरूपपत्युपकारार्थं-त्यक्तव्रीडा । आत्महितं-जीवानामुपकारकम् । धृष्टं प्रागल्भ्य-रहितं-**शि.**

[1] कोपेन येनास्य-**ङ.** [2] दाढर्योपेतं-**घ.**

**न राजा कुपितो राम! व्यसनं नास्य किञ्चन।**
**किञ्चिन्मनोगतं त्वस्य *त्वद्भयान्नाभिभाषते ॥ २० ॥**

मनोगतमिति । त्वदप्रियकरमिति शेषः ॥ २० ॥

**प्रियं त्वामप्रियं वक्तुं वाणी नास्य प्रवर्तते।**
**तदवश्यं त्वया कार्यं यदनेनाऽऽश्रुतं [1]मयि ॥ २१ ॥**

तदेव प्रदर्श्यते—प्रियमित्यादि । तदवश्यमिति । तदनेन मयि—मद्विषये आश्रुतं, तदप्रियमपि ते त्वयाऽवश्यं कार्यं; यदि पितृसुखसंपिपादयिषेति शेषः ॥ २१ ॥

**एष मह्यं वरं दत्त्वा पुरा मामभिपूज्य च।**
**स पश्चात्तप्यते राजा यथाऽन्यः प्राकृतस्तथा ॥ २२ ॥**

किं तदित्यपेक्षायामाह—एष इत्यादि । स पश्चादिति । प्रतिश्रुतवरदानकाल इति यावत् ॥ २२ ॥

**अतिसृज्य [2]ददानीति वरं मम विशांपतिः।**
**स निरर्थं गतजले सेतुं बन्धितुमिच्छति ॥ २३ ॥**

गतजले सेतुं बन्धितुमिच्छतीति । दानस्य पूर्वमेव वृत्तत्वात्तत्प्रयुक्तव्यवहारपरिहारचिन्ताऽस्य व्यर्थेत्यर्थः ॥ २३ ॥

**†धर्ममूलमिदं राम! विदितं च सतामपि।**
**तत्सत्यं न त्यजेद्राजा कुपितस्त्वत्कृते यथा ॥ २४ ॥**

---

* त्वदिति भिन्नं पदं वा । 'भीत्रार्थानां' इत्यपादानपञ्चमी. † मद्विवाहकाले हि त्वत्पित्रा मयि यो जायते तस्मै राज्यदानं प्रतिज्ञातम् । तादृशपूर्वप्रतिज्ञानिर्वर्तनायैव मयापीदानीं निर्बध्यत इति वा भावः । तर्हि किमर्थं देवासुरसंग्रामदत्तवरद्वयेन निर्बंधनमिति चेदत्र वक्तव्यं—विवाहकाले तथोक्तत्वात् कदाचिद्राजा धार्ष्ट्यादुत्पथं गच्छेदित्यादि उत्तरत्र व्याख्यात्रैव वक्ष्यत इति (अयो.–107, 3–श्लो.).

[1] मम—ङ. [2] दादामीति—ङ.

सतां विदितमिति । 'क्तस्य च वर्तमाने' इति षष्ठी । 'मतिबुद्धि' इत्यादिना वर्तमाने क्तः । त्वत्कृते—मन्निमित्त-त्वत्प्रयोजनान्तरायवशात् मयि कुपितो राजा कोपदोषेण तत्सत्यं यथा न त्यजेत्तथा कुर्विति भावः ॥ २४ ॥

*यदि तद्वक्ष्यते राजा शुभं वा यदि वाऽशुभम् ।
करिष्यसि ततः सर्वमाख्यास्यामि पुनस्त्वहम् ॥ २५ ॥

तदर्थं राजा शुभं वा यदि वाशुभं वक्ष्यते तत्सर्वं त्वं यदि करिष्यसि ततोऽहं सर्वं पुनः—विशिष्य आख्यास्यामीति । मत्प्रदत्त-वरनिमित्तः क्लेश इति सामान्यत उक्तमेव ॥ २५ ॥

†यदि त्वभिहितं राज्ञा त्वयि तन्न विपत्स्यते ।
ततोऽहमभिधास्यामि न ह्येष त्वयि वक्ष्यति ॥ २६ ॥

राज्ञा—राजानुमत्या मया यदभिहितं, तत् त्वयि यदि न विपत्स्यते—न व्यर्थं भविष्यति ततोऽहमेवाभिधास्यामि । वक्तुं राजैवेत्य-त्राह—न हीत्यादि । त्वदप्रियत्वात्त्वन्मुखमवलोकयेति शेषः ॥ २६ ॥

एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् ।
उवाच व्यथितो रामस्तां देवीं नृपसन्निधौ ॥ २७ ॥

---

* 'ब्रूञ् व्यक्तायां वाचि' इति धातोरुभयपदित्वात् लृटि वक्ष्यत इत्यपि रूपम् । केचित्तु वक्ष्यत इति कर्मणि रूपं, 'राजा' इति च तृतीयान्तमित्याहुः—सत्य.

† शुभं वाशुभंवा राजा यदि वक्ष्यति तर्हि करोम्येव । तर्हि किमर्थं 'आख्यास्यामि पुनस्त्वहं' इति उच्यते इति शंकां समाधत्ते यदि त्वभिहितमित्यादिना । राजा तु—साक्षान्न वक्ष्यत्येव । अतो राज्ञो विवक्षितमहमेव वक्ष्यामीत्यर्थः । राज्ञाऽभिहितं चेद्यदि करोषि, तमेवाभिप्रायमहमेव वक्ष्ये । वक्ता को वा भवतु । राज्ञस्त्वभिमतमेवेति भावः । एतदेवस्पष्टीकृतं श्रीरामेणापि 'तद्ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम्' इति ॥

एवं रामेणाप्युक्तकरणव्यवस्थायां पृष्टायां रामोऽपि *दशरथवद्वक्तव्यघोरापरिज्ञानात् 'यदि शक्यं तदा करोमि' इत्यनुक्त्वा सर्वथैव करिष्य इति प्रतिजानीते—एतात्त्वित्यादि ॥ २७ ॥

अहो धिङ्नार्हसि देवि! वक्तुं मामीदृशं वचः।
अहं हि वचनाद्राज्ञः पतेयमपि पावके ॥ २८ ॥

ईदृशमिति। 'यदि करोषि' इत्यकरणशङ्कावचनमित्यर्थः ॥

भक्षयेयं विषं तीक्ष्णं पतेयमपि चार्णवे।
नियुक्तो गुरुणा पित्रा नृपेण च हितेन च ॥ २९ ॥

गुरुणा—इहामुत्र हितोपदेष्ट्रा ॥ २९ ॥

तद्ब्रूहि वचनं देवि! राज्ञो यदभिकांक्षितम्।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥ ३० ॥

प्रतिजाने चेति। सर्वथा कृतसुकृतादिसाक्षितयेति शेषः। तदेव स्थिरीक्रियते—रामो द्विर्नाभिभाषत इति। प्रतिज्ञातार्थविषये द्विः-प्रतिज्ञाप्रयोजनं सकृदुक्तत्वात्, तस्य पश्चादनिष्टतायुपाधितो द्वितीयवारं तदभावविषयं न ब्रवीति। उक्तमुक्तमेव, न सर्वथा तद्वैपरीत्यप्रसङ्ग इत्यर्थः ॥ ३० ॥

तमार्जवसमायुक्तमनार्या सत्यवादिनम्।
उवाच रामं कैकेयी वचनं भृशदारुणम् ॥ ३१ ॥

---

* 'तमार्जवसमायुक्तं' इत्यनुपदं दर्शनात एवं व्याख्यातम्।

पुरा दैवासुरे *युद्धे पित्रा ते मम, राघव !
रक्षितेन वरौ दत्तौ [1]†विशल्येन [2]महारणे ॥ ३२ ॥

† विशल्येन—पश्चाच्छल्यापाकरणपूर्वकं रक्षितेन ॥ ३२ ॥

‡ तत्र मे याचितो राजा भरतस्याभिषेचनम् ।
गमनं दण्डकारण्ये तव चाद्यैव, राघव ! ॥ ३३ ॥

तत्र म इति । मम तयोर्वरयोः एकेनेति शेषः । अद्यैव—एतत्क्षण एवेत्यर्थः ॥ ३३ ॥

यदि सत्यप्रतिज्ञं त्वं पितरं [3]कर्तुमिच्छसि ।
आत्मानं च, नरश्रेष्ठ ! मम वाक्यमिदं शृणु ॥ ३४ ॥

आत्मानं चेति । त्वयाऽपि मदुक्तकृतेः सशपथं प्रतिज्ञातत्वादित्याशयः ॥ ३४ ॥

[4]अनुदेशे पितुस्तिष्ठ [5]यथानेन प्रतिश्रुतम् ।
त्वयारण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ॥ ३५ ॥

यथा तेन दशरथेन वरद्वयं प्रतिश्रुतं तस्मिन् पितुरनुदेशे—नियोगसंपादने तिष्ठ—व्यवस्थितो भव । अतः—त्वयेत्यादि ॥ ३५ ॥

§ भरतश्चाभिषिच्येत यदेतदभिषेचनम् ।
त्वदर्थे विहितं राज्ञा तेन सर्वेण, राघव ! ॥ ३६ ॥

---

* देवासुरयुद्धान्तर्गते महारणे—दशरथकर्तृकावान्तरशम्बरासुरयुद्ध इत्यर्थः । तेन न पौनरुक्त्यम् । महारणे सशल्येन मया रक्षितेन ते पित्रा मम वरौ दत्तौ इत्यन्वयः. † पूर्वं सशल्येनेति शेषः. ‡ तत्र वरप्रदाननिमित्तं—गो. § अभिषेचनं—अभिषेचनोपकरणं यदेतत् राज्ञा त्वदर्थे विहितं तेन सर्वेण भरतोऽभिषिच्येतेत्यन्वयः.

[1] सशल्येन—ङ. च. [2] मया रणे—ङ. [3] कर्तुमर्हसि—ङ. [4] सन्निदेशे—**सर्वत्र**. [5] यद्वनेन—ङ.

सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः ।
अभिषेकमिदं त्यक्त्वा [1]जटाचीरधरो भव ॥ ३७ ॥

भरतः कोसल[2]पतेः प्रशास्तु वसुधामिमाम् ।
नानारत्नसमाकीर्णां सवाजिरथ[3]कुञ्जराम् ॥ ३८ ॥

*एतेन त्वां नरेन्द्रोऽयं कारुण्येन समाप्लुतः ।
शोकैः संक्लिष्टवदनो न शक्नोति निरीक्षितुम् ॥ ३९ ॥

एतत्कुरु नरेन्द्रस्य वचनं रघुनन्दन !
सत्येन महता, राम ! तारयस्व नरेश्वरम् ॥ ४० ॥

सत्येन—सत्यपरिपालनेन ॥ ४० ॥

†इतीव तस्यां परुषं वदन्त्यां
न चैव रामः प्रविवेश [4]शोकम् ।
प्रविव्यथे चापि महानुभावः
राजा तु पुत्रव्यसनाभितप्तः ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टादशः सर्गः

———

इति—इत्येवं । राजा तु- राजैव । पुत्रव्यसनं—भाविवियोगव्यसनम् ।
कवि (४१) मानः सर्गः ॥ ४१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे अष्टादशः सर्गः

———

*एतेन—एतत्कारणकेन, कारुण्येन—दैन्येन. †इवशब्देन अन्यान्यपि परुषाणि बहून्युक्तानीति गम्यते—गो.

[1] जटाजिन—ङ. [2] पुरे—ङ. [3] संकुलां—ङ. च. [4] कोपम्—ङ.

## एकोनविंशः सर्गः

### [रामाभ्यनुज्ञा]

तदप्रियममित्रघ्नो वचनं मरणोपमम् ।
श्रुत्वा न विव्यथे रामः कैकेयीं चेदमब्रवीत् ॥ १ ॥

एवं वनवासनियोजितस्य भगवतो ब्रह्मणो रामस्याभिषेकाविशेषं वनवासस्य च परमसन्तोषतया प्रवृत्तिः । तदप्रियमित्यादि । मरणोपमं लोकदृशा ॥ १ ॥

एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः ।
[1]जटाचीरधरो राज्ञः प्रतिज्ञामनुपालयन् ॥ २ ॥

'द्विर्नाभिभाषते' इत्युक्तत्वात् 'एवमस्तु' इत्येव केवलमाह ॥

इदं तु ज्ञातुमिच्छामि किमर्थं मां महीपतिः ।
नाभिनन्दति दुर्धर्षो यथापूर्वमरिन्दमः ॥ ३ ॥
मन्युर्न च त्वया कार्यो देवि ! ब्रूमि तवाग्रतः ।
यास्यामि भव सुप्रीता वनं चीरजटाधरः ॥ ४ ॥

*मन्युर्न च त्वया कार्येति । यतो नाभिनन्दतीति शेषः । ब्रूमि– ब्रवीमीति यावत् ॥ ४ ॥

---

* 'मम वनवासं राजा स्वयं नादिशति खलु' इति राज्ञे भवता न मन्युः कार्येति व्याख्यातुराशयः । गोविन्दराजीये – "मनुः–दैन्यं 'मन्युर्दैन्ये' इत्यमरः" इत्युक्तम् । वस्तुतस्तु—'मत्स्वभावशीलादिकं ज्ञात्वापि राजा मां किमर्थं नाभिनन्दति । स्वयं कुतो वा नादिशति' इति रामेण निर्वेदादुक्ते 'तर्हि राज्ञः साक्षादादेशादेवायं वनं गच्छेत्किम् ? मम वचनेऽस्य विश्वासो नास्ति वा' इति कुपितां देवीमिङ्गितैर्ज्ञात्वा श्रीरामः कैकेयीं प्रसाद्य विश्वासमुत्पादयन्ननेन वाक्येनेति तु स्वरसम् ॥

[1] जटाजिन–ङ.

हितेन गुरुणा पित्रा कृतज्ञेन नृपेण च ।
नियुज्यमानो विस्रब्धः किं न कुर्यामहं प्रियम् ॥ ५ ॥

कृतज्ञेनेति । त्वत्कृतमापत्त्राणं जानातीति तथा । विस्रब्धः—निर्विशङ्कः । किं न कुर्यां—सर्वमपि कुर्यामेव ॥ ५ ॥

अलीकं मानसं त्वेकं हृदयं दहतीव मे ।
स्वयं यन्नाह मां राजा *भरतस्याभिषेचनम् ॥ ६ ॥

किन्त्विदं मानसं—मनसि वर्तमानं अलीकं—दुःखं हृदयं दहतीव । इदमिति किमित्यतः—स्वयमित्यादि ॥ ६ ॥

अहं हि †सीतां राज्यं च प्राणानिष्टान् धनानि च ।
हृष्टो भ्रात्रे स्वयं दद्यां [1] भरताय प्रचोदितः ॥ ७ ॥

कथं संकोचेनायमर्थो राज्ञा शक्यवादः? इत्यत्राह—अहं हीत्यादि । प्रचोदित इति । भरतस्नेहात्, त्वत्स्नेहेन वा ; न केवलं पित्रेति शेषः ॥

‡किं पुनर्मनुजेन्द्रेण स्वयं पित्रा प्रचोदितः ।
तव च प्रियकामार्थं प्रतिज्ञामनुपालयन् ॥ ८ ॥

---

* अनेन—मम वनवासविषये राज्ञ आदेशं नाहं प्रतीक्षे । किन्तु भरताभिषेचनरूपसन्तोषवृत्तान्तमपि न राजा वदति खलु, 'भरताभिषेचनं मम सन्तोषाय न स्यात्' इति राजा मन्यते किम्? इत्येव मम दुःखमिति सूचितम्. † सीतां—धनुर्भङ्गकाल इति भावः—गो. यद्वा—भरतायेत्येतत् राज्यं चेत्यारभ्यैवान्वेति—औचित्यात् । अथवा भरताय—भरतप्रयोजनानुवर्तनायेत्यर्थः । मम सीतापरित्यागेन यदि किञ्चित्प्रयोजनं भरतस्य स्यात् तदा सीतामपि नूनं त्यजेयमिति भावः. ‡ भरतसुखसंपत्तये भरतस्नेहादेव सर्वं त्यजेयं चेत् किमुत पित्रा नियुक्तः तवाभिमतेष्टसिद्धये इति भावः । भरतायाप्रचोदित इति पाठे—केनाप्यप्रचोदितोऽपि, स्वयमेव भरतसुखसंपत्तये सर्वं त्यजेयं चेत् पित्रा प्रचोदितः किमु । तत्रापि भवदभिमतसिद्धिः, भरतसुखसंपादनं, राजनियोगपरिपालनं चेत्यनेकफलसिद्धिर्हि एकेनैव मम कर्मणेति सन्तोषातिशयः । अतः 'स्वयमेव' इति द्विवारमुक्तम्.

[1] भरतायाप्रचोदितः—ङ.

प्रतिज्ञामनुपालयन्निति हेतौ शता। तव प्रियकामार्थं प्रतिज्ञानुपालनाद्धेतोश्च प्रचोदितकरणे किंपुनः-कुतः संकोचप्रसङ्ग इत्यर्थः ॥ ८ ॥

तदाश्वासय [1]ह्रीमन्तं किन्विदं यन्महीपतिः।
वसुधासक्तनयनो मन्दमश्रूणि मुञ्चति ॥ ९ ॥

मद्विषयकनियोगसंकोचेन जगतीपतिर्वसुधासक्तनयनो मन्दमश्रूणि मुञ्चतीति यदिदं किंनु-किमर्थम्? मा स्तु। ह्रीमन्तं-लज्जाविष्टं त्वमाश्वासय ॥ ९ ॥

गच्छन्तु चैवानयितुं दूताः शीघ्रजवैर्हयैः।
भरतं मातुलकुलादद्यैव नृपशासनात् ॥ १० ॥

कथमाश्वासयाम्यनिवृत्तस्वकार्येत्यत्राह—गच्छन्त्वित्यादि ॥ १० ॥

दण्डकारण्यमेषोऽहमितो गच्छामि सत्वरः।
*अविचार्य पितुर्वाक्यं समा वस्तुं चतुर्दश ॥ ११ ॥

अविचार्येति। उपाधिचिन्तामकृत्वैवेत्यर्थः ॥ ११ ॥

सा हृष्टा तस्य तद्वाक्यं श्रुत्वा रामस्य कैकयी।
प्रस्थानं श्रद्दधाना हि त्वरयामास राघवम् ॥ १२ ॥

प्रस्थानं-वनप्रस्थानम् ॥ १२ ॥

एवं भवतु यास्यन्ति दूताः शीघ्रजवैर्हयैः।
भरतं मातुलकुलादुपावर्तयितुं नराः ॥ १३ ॥

---

* पितुर्वाक्यमविचार्य-वनं गच्छेति पित्रा नोक्तमिति विचारमकृत्वा-गो. अथवा अविचार्य-अविगणय्य विशिष्य पित्राज्ञामप्रतीक्ष्येति यावत्।

[1] ह्रीमं तं. भीतं तं-ङ.

*तव त्वहं क्षमं मन्ये नोत्सुकस्य विलम्बनम् ।
राम! तस्मादितः शीघ्रं वनं त्वं गन्तुमर्हसि ॥ १४ ॥

तवेत्यादि । उत्सुकस्य गमनोत्सुकस्य तव गमनविलम्बमहमिदानीं न क्षमं मन्ये—अनुचितं मन्ये ॥ १४ ॥

व्रीडान्वितः स्वयं यच्च नृपस्त्वां नाभिभाषते ।
†नैतत्किञ्चिन्नरश्रेष्ठ! ‡मन्युरेषोऽपनीयताम् ॥ १५ ॥

कुत इत्यत्र हेतुमाह—व्रीडेत्यादि । यतः स्वसत्यस्य पारप्राप्त्यदर्शनजव्रीडान्वितः तस्मादेव यच्च किञ्चिदपि त्वां प्रति नाभिभाषते ; एतदनभिभाषणमुद्दिश्य नान्यत्किञ्चित्कारणं त्वया चिन्त्यम् । यदेवं—अतो हे नरश्रेष्ठ! राज्ञ एष मन्युः—दैन्यं त्वदाविलम्बगमनेनापनीयताम् ॥ १५ ॥

यावत्त्वं न वनं यातः पुरादस्मादतित्वरन् ।
पिता तावन्न ते राम! स्नास्यते भोक्ष्यतेऽपि वा ॥ १६ ॥

इतश्च न युक्तो विलम्ब इत्याह—यावदित्यादि । भोक्ष्यतेऽपि वेति । मत्प्रतिबन्धाद्दरिद्राधमर्णवदिति भावः ॥ १६ ॥

§धिक्कष्टमिति निश्वस्य राजा शोकपरिप्लुतः ।
मूर्छितो न्यपतत्तस्मिन् पर्यङ्के हेमभूषिते ॥ १७ ॥
रामोऽप्युत्थाप्य राजानं कैकेय्याभिप्रचोदितः ।
कशयेवाहतो वाजी वनं गन्तुं कृतत्वरः ॥ १८ ॥

वनं गन्तुं कृतत्वरः अभूदिति शेषः ॥ १८ ॥

---

*रामो यावद्भरतागमनं विलंबिष्यते चेत्तदा न स्वेष्टं सिध्येत, भरतस्य रामभक्तत्वादित्याशयेनाह—तवेत्यादि. †नैतत्किञ्चिदिति । सहजेयं व्रीडेति भावः. ‡मन्युः—राजा स्वयं नाभिभाषते खलु—इति कोपो वा. §धिगिति—उक्तासत्यवचनं श्रुत्वा—गो.

तदप्रियमनार्याया वचनं दारुणोदयम् ।
श्रुत्वा * गतव्यथो रामः कैकेयीं [1] चेदमब्रवीत् ॥ १९ ॥

† दारुणोदयं–क्रौर्योत्तरम् ॥ १९ ॥

‡ नाहमर्थपरो देवि ! लोकमावस्तुमुत्सहे ।
विद्धि मामृषिभिस्तुल्यं [2] केवलं धर्ममास्थितम् ॥ २० ॥

लोकमावस्तुमिति । इहलोके वस्तुं, "उपान्वध्याङ्' इत्याधारस्य कर्मत्वम् ॥ २० ॥

यदत्र भवतः किञ्चिच्छक्यं कर्तुं प्रियं मया ।
प्राणानपि परित्यज्य सर्वथा कृतमेव तत् ॥ २१ ॥

अत्रभवतः पूज्यस्य पितुः यत् किञ्चित्प्रियं तत् सर्वथा कृतमेवेति विद्धीति शेषः ॥ २१ ॥

न ह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ २२ ॥

तथा निश्चये हेतुमाह—न हीत्यादि । शुश्रूषा–पादसंवाहनादिलक्षणा । वचनक्रिया–शिष्टेष्टकरणम् ॥ २२ ॥

---

* गतव्यथः–'श्रुत्वा न विव्यथे' इति पूर्वोक्तावस्थातः ईषदप्यचलन् । यद्वा—आगतव्यथः इति वा पदम् । आत्मक्लेशे अव्यथमानः पितुः क्लेशात् प्राप्तव्यथ इत्यर्थः. † दारुणोदयं–क्रूरोपक्रमम् । आरंभप्रभृति क्रौर्यविशिष्टमिति वार्थः. ‡ अहं अर्थपरः–धनपरः न, किन्तु लोकमावस्तुं–जनं संगृहीतुं नोत्सहे इति वा–ती. लोकमावस्तुं–लोके वस्तुं नोत्सहे–ति. अथवा—अर्थपरस्सन् लोके वस्तुं नोत्सहे इत्यर्थः । 'तव त्वहं क्षमं मन्ये' इत्यादिवाक्यश्रवणजरोषादेवमुक्तिः । तत्रापि 'यावत् त्वं न वनं यातः' इत्यादिवाक्यश्रवणेन दशरथमूर्छया रोषः । अत एव 'न नूनं मयि' इत्यनुपदमेवोक्तिः.

[1] वाक्यमब्रवीत्–ङ. [2] विमलं–ङ.

अनुक्तोऽप्यत्रभवता भवत्या वचनादहम् ।
वने वत्स्यामि विजने वर्षाणीह चतुर्दश ॥ २३ ॥

अत्रभवता–पूज्येन पित्रा साक्षादनुक्तोऽपि 'अप्रतिषिद्धमनुमतम्' इति न्यायेन भवत्या वचनादेव केवलमहं वने वत्स्यामि ॥ २३ ॥

न नूनं मयि*कैकेयि ! [1] किञ्चिदाशंससे गुणम् ।
यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥ २४ ॥

नूनमिति । मम नियोगे पितुरतिप्रियमातृत्वादेवेश्वरतरा सती भरतराज्यं प्रति यत्–यस्मात् राजानमवोचस्त्वम् अतो मयि गुणं–आर्जवौदार्यादिगुणं किञ्चिदपि नाशंससे–न विचारितवती नूनम् ॥ २४ ॥

†यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् ।
अतोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥ २५ ॥

अतः–अनन्तरम् अद्यैव दिने । दण्डकानां–तदाख्यजनपदानाम्‡ ॥ २५ ॥

---

* एतावता 'देवि' इति सम्बोधयितुः, 'कैकेयि' इतीदानीं संबोधनेन रामस्य कैकेयीविषये किञ्चिदिव कोपो वा जुगुप्सा वा जातेति वक्तुं शक्यते । इदमपि 'लोकमावर्तु' इति श्लोकटिप्पण्युक्तार्थे उपोद्बलकं भवति. † अद्यैव गन्तव्यमित्युक्तं, तत्र किञ्चिद्विलंबं याचते—यावदिति–गो. ‡ दण्डो नाम राजा इक्ष्वाकुपुत्रः शुक्राचार्यपुत्रीं अरजां प्रधर्षितवान् । तेन कुपितस्य शुक्राचार्यस्य शापात् तद्राज्यमेव काननमभूदिति उत्तरकाण्डे ८०–८१ सर्गयोर्दृश्यते । दण्डकेत्यत्र कन् कुत्सायाम्.

[1] मुख्यानाशंससे गुणान्–ङ.

भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा ।
तथा भवत्या कर्तव्यं *स हि धर्मः सनातनः ॥ २६ ॥

स हीति । पितृशुश्रूषारूप इत्यर्थः ॥ २६ ॥

रामस्य तु वचः श्रुत्वा भृशं दुःखहतः पिता ।
शोकादशक्नुवन् बाष्पं प्ररुरोद †महास्वनम् ॥ २७ ॥
वन्दित्वा चरणौ रामो विसंज्ञस्य पितुस्तदा ।
कैकेय्याश्चाप्यनार्याया निष्पपात महाद्युतिः ॥ २८ ॥

अनार्याया अपीति । स्वयं तद्दोषमगणयन्निति शेषः ॥ २८ ॥

स रामः पितरं कृत्वा कैकेयीं च प्रदक्षिणम् ।
निष्क्रम्यान्तःपुरात्तस्मात् स्वं ददर्श सुहृज्जनम् ॥ २९ ॥
तं बाष्पपरिपूर्णाक्षः पृष्ठतोऽनुजगाम ह ।
‡लक्ष्मणः परमक्रुद्धः सुमित्रानन्दवर्धनः ॥ ३० ॥

बाष्पपरिपूर्णाक्ष इति समीपे स्थित्वाऽवगतसर्ववृत्तान्तत्वात् ॥

आभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् ।
§शनैर्जगाम [1]सावेक्षो दृष्टिं तत्राविचालयन् ॥ ३१ ॥

आभिषेचनिकं—अभिषेकप्रयोजनम् । भाण्डं—उपकरणजातम्, तद्युक्ताभिषेकशालामित्यर्थः । प्रदक्षिणं कृत्वेति । संभृतगङ्गादिपुण्य-

---

* पितृप्रतिज्ञानिर्वर्तनं यथा मम धर्मः तथा भरतस्यापि स धर्मः । अतः भरतः पालयेद्राज्यम् । पित्रा वरद्वये दत्ते तयोरेक एव मया निर्वर्तनीयः, अन्यश्च भरताभिषेचनरूपो यथा निर्वर्तेत तथा भवत्या कार्यम् । अहं खलु त्वद्वचनादिदानीमेव वनं गच्छामि, अतस्तवैवायं भार इति भावः. † महास्वनमिति क्रियाविशेषणम् . ‡ लक्ष्मणस्यापि रामेण सहागमनं १६ सर्ग एवोक्तम् . § शनैः—न तु ससंभ्रमम् । अनेनोद्वेगाभाव उक्तः.

[1] सापेक्षः—ङ. च.

तीर्थकत्वेन सन्निधिविशिष्टदेवताकत्वेन च तत्करणम् । तत्र—अभिषेकं-शालायां अविचालयन्—अप्रवर्तयन्, अपि तु *सावेक्षः—अवाङ्मुखेक्षण-सहितः; तल्लिप्साभावादेवंभावः ॥ ३१ ॥

न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति ।
†लोककान्तस्य कान्तत्वं शीतरश्मेरिव[1]क्षपा ॥ ३२ ॥

लक्ष्मीमिति । सहजामिति शेषः । शीतरश्मेः कान्तत्वं क्षपेवेति । क्षपा हि सर्वसौरमहातेजोविनाशिनी ॥ ३२ ॥

न वनं गन्तुकामस्य ‡[2]गच्छतश्च वसुंधराम् ।
सर्वलोकातिगस्येव दृश्यते चित्तविक्रिया ॥ ३३ ॥

वसुंधरां गच्छतः—प्राप्नुवतः । सर्वलोकातिगस्येवेति । शुद्धब्रह्म-तत्त्वजीवन्मुक्तपरमहंसस्येवेत्यर्थः ॥ ३३ ॥

प्रतिषिध्य शुभं छत्रं व्यजने च स्वलंकृते ।
विसर्जयित्वा स्वजनं रथं पौरांस्तथा जनान् ॥ ३४ ॥

छत्रादिप्रतिषेधः स्वप्रतिज्ञाविरोधात् ॥ ३४ ॥

धारयन्मनसा §दुःखमिन्द्रियाणि निगृह्य च ।
प्रविवेशात्मवान् वेश्म मातुरप्रियशंसिवान् ॥ ३५ ॥

---

*सापेक्षः-वनं प्रतीति शेषः—ति. भरताभिषेकरूपप्रार्थनासहितः—गो. अपेक्षा—उपेक्षा—सापेक्षः—उदासीनो वा. †लोककान्तस्य शीतरश्मेः—चन्द्रस्य कान्तत्वं—सौन्दर्यं यथा क्षपा नापकर्षति, प्रत्युत वर्धयति तथेत्यर्थः. ‡'त्यजतश्च वसुंधरां' इत्येव बहुषु पाठः । वनं गन्तुकामस्येत्यनेनैव राज्यत्यागस्याप्यार्थिकत्वात् 'गच्छतश्च' इति पाठो व्याख्यात्राऽऽदृतः । एवं सत्येव सुखदुःखयोः समत्वमुक्तं भवतीत्याशयः. §दुःखहेतुरुच्यते—'मातुरप्रियशंसिवान्' इति.

[1] क्षयः—ङ. [2] त्यजतश्च—ङ. च. झ.

मनसा दुःखं धारयन्निति । स्वासक्तप्राणिशोकस्मरणजदुःख-मित्यर्थः; न तु तस्य स्वीयं किञ्चिद्दुःखं । तदेव दर्शितं —आत्मवा-निति । साक्षात्कृतनित्यनिर्दुःखस्वतत्त्व इति यावत् । अप्रियशंसि-वान्—अप्रियं शंसिष्यन्, भविष्यति कमुरार्षः ॥ ३५ ॥

सर्वोऽप्यभिजनः श्रीमान् श्रीमतः सत्यवादिनः ।
नालक्षयत रामस्य *किञ्चिदाकारमानने ॥ ३६ ॥

अभिजनः—अभितो वर्तमानो जनः तथा । श्रीमानिति । इदानीं रामाभिषेकप्रसंगात् भूषालंकारशोभावान् । आकारमिति । विकृताकारमिति यावत् ॥ ३६ ॥

उचितं च महाबाहुर्न जहौ हर्षमात्मनः ।
शारदः समुदीर्णांशुश्चन्द्रस्तेज †इवात्मजम् ॥ ३७ ॥

उचितमिति । सहजसत्त्वगुणोचितमित्यर्थः । आत्मस्वरूपतया जातं—आत्मजम् ॥ ३७ ॥

वाचा मधुरया रामः सर्वं सम्मानयन् जनम् ।
मातुस्समीपं [1]धीरात्मा प्रविवेश महायशाः ॥ ३८ ॥

तं गुणैस्समतां प्राप्तो भ्राता विपुलविक्रमः ।
सौमित्रिरनुवव्राज धारयन् दुःखमात्मजम् ॥ ३९ ॥

---

* आकारः—इङ्गितम् । अन्तर्गतभावावेदकः बाह्यावयवगतचेष्टाकान्त्यादिविशेषः.

† आत्मजं—स्वभावजम् । आत्मनि—शरीरे जातं स्वाभावसिद्धं हर्षचिह्नम्—ति.

[1] धर्मात्मा—ङ.

प्रविश्य वेश्मातिभृशं [1] मुदाऽन्वितं
समीक्ष्य तां चार्थविपत्तिमागताम् ।
न चैव रामोऽत्र जगाम विक्रियां
* सुहृज्जनस्यात्मविपत्तिशङ्कया ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकोनविंशः सर्गः

---

अर्थविपत्तिं-अर्थभ्रंशं समीक्ष्य विक्रियां न जगाम। अपि तु सुहृज्जनस्य आत्मविपत्तिशङ्कया-प्राणविपत्तिशङ्कया † चिन्तां जगामेति शेषः। नव (४०) मानः सर्गः॥ ४०॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकोनविंशः सर्गः

---

## विंशः सर्गः

[कौसल्याऽऽक्रन्दनम्]

तस्मिंस्तु पुरुषव्याघ्रे निष्क्रामति कृताञ्जलौ ।
आर्तशब्दो महान् जज्ञे ‡ स्त्रीणामन्तःपुरे तदा ॥ १ ॥

अथ रामेण मातुर्वृत्तान्तनिवेदनम्। तस्मिन्नित्यादि ॥ १ ॥

---

* सुहृज्जनस्य आत्मविपत्तिशङ्कया-प्राणनाशशङ्कया विक्रियां न जगाम—स्वविक्रियास्फुरणे सुहृज्जनो नश्येदिति शङ्कया स्वविक्रियां नादर्शयत्-गो. अर्थविपत्तिं-अर्थभ्रंशं वीक्ष्यापि रामो विक्रियां न जगाम ; किन्तु सुहृज्जनस्य कौसल्यादशरथादिरूपस्य आत्मनां-प्राणानां विपत्तिशङ्कया चिन्तां जगाम-ति. आत्मविपत्तिशङ्कया-प्राणनाशशङ्कयाऽपि-ती. अत्र उत्तरसर्गस्थं 'इदं हि तव दुःखाय वैदेह्या लक्ष्मणस्य च' इति वाक्यं स्मर्तव्यम्. † अनन्तरसर्गे २७ तमश्लोकानुरोधादेवं व्याख्यातम्. ‡ कैकेय्यन्तःपुरगतस्त्रीणामित्यर्थः। पूर्वोत्तरश्लोकपरिशीलनायामिदं स्पष्टम्.

[1] मुदाऽन्वितः-ङ.

कृत्येष्वचोदितः पित्रा सर्वस्यान्तःपुरस्य च ।
*गतिर्यः शरणं चासीत्, स [1]रामोऽद्य प्रवत्स्यति ॥२॥

अचोदित इति । अचोदितोऽपि कर्तेति शेषः ॥ २ ॥

कौसल्यायां यथा युक्तो जनन्यां वर्तते सदा ।
तथैव वर्ततेऽस्मासु जन्मप्रभृति राघवः ॥ ३ ॥

न क्रुध्यत्यभिशप्तोऽपि †क्रोधनीयानि वर्जयन् ।
क्रुद्धान् प्रसादयन् सर्वान् स इतोऽद्य प्रवत्स्यति ॥ ४ ॥

अभिशप्तः–कृतवाक्पारुष्यः । क्रोधनीयानि–क्रोधार्हाणि च अनुकम्पया वर्जयन्–तद्विषयक्रोधमकुर्वन् ॥ ४ ॥

अबुद्धिर्बत ! नो राजा ‡जीवलोकं चरत्ययम् ।
यो गतिं सर्वलोकानां परित्यजति राघवम् ॥ ५ ॥

जीवलोकं चरति–सर्वप्रजाजातं भक्षयति—नाशयतीति यावत् ॥ ५ ॥

इति सर्वा §महिष्यस्ता विवत्सा इव धेनवः ।
पतिमाचुक्रुशुश्चैव सस्वनं चापि चुक्रुशुः ॥ ६ ॥

आचुक्रुशुः—निनिन्दुः । चुक्रुशुः–क्रन्दन्ति स्म ॥ ६ ॥

---

* गतिः- स्वेष्टसाधकत्वेन प्राप्यः । शरणं–रक्षकः–गो. † क्रोधनीयानि–क्रोधहेतुकर्माणि–गो. ‡ जीवलोकं–मूर्खजनं चरति–अनुगच्छति–केचित्. § 'कृताभिषेका महिषी' इति तूत्सर्गः, यतः—'महिषी नृपयोषिति' इति हेमचन्द्र आह.

[1] सुतोऽद्य–ङ.

स हि चान्तःपुरे घोरमार्तशब्दं महीपतिः ।
पुत्रशोकाभिसंतप्तः श्रुत्वा *व्यालीयतासने ॥ ७ ॥

आसन एव व्यालीयत—विलीनोऽभूत्; देहमवकुण्ठ्यावाङ्मुख उपविष्टोऽभूदित्यर्थः ॥ ७ ॥

रामस्तु भृश[1]मायस्तो [2]निस्वनन्निव कुञ्जरः ।
जगाम सहितो भ्रात्रा मातुरन्तःपुरं वशी ॥ ८ ॥

आयस्तः—स्वजनदुःखतः प्राप्तखेदः कुञ्जर इव †निस्वनन् ॥

सोऽपश्यत्पुरुषं तत्र वृद्धं परमपूजितम् ।
उपविष्टं गृहद्वारि ‡तिष्ठतश्चापरान् बहून् ॥ ९ ॥

पुरुषं—द्वाराध्यक्षम् ॥ ९ ॥

दृष्ट्वैव तु तदा रामं ते सर्वे [3]समुपस्थिताः ।
[4]जयेन जयतां श्रेष्ठं वर्धयन्ति स्म राघवम् ॥ १० ॥

जयेन—'विजयी भव' इति विजयशब्देनेत्यर्थः ॥ १० ॥

प्रविश्य प्रथमां कक्ष्यां द्वितीयायां ददर्श सः ।
ब्राह्मणान् वेदसंपन्नान् वृद्धान् राज्ञाऽभिसत्कृतान् ॥ ११ ॥

राज्ञा अभिसत्कृतास्तथा ॥ ११ ॥

---

* व्यालीयत—लज्जादुःखभरेण शय्यायां विलीनोऽभूत्—गो. † निस्वनन्—उच्चैराक्रन्दन्नित्यर्थः. ‡ 'तिष्ठतश्चापरान् बहून्' इति । तिष्ठतः—अनुपविष्टान् । अस्यैकस्यैवोपवेशने हेतुः—वृद्धं परमपूजितमिति.

[1] मायत्तो—ङ. [2] निश्वसन्—सर्वत्र. [3] सहसोत्थिताः—ङ. [4] जयेति—ङ.

प्रणम्य रामस्तान् वृद्धांस्तृतीयायां ददर्श सः ।
स्त्रियो [1]बालाश्च वृद्धाश्च *द्वाररक्षणतत्पराः ॥ १२ ॥

वर्धयित्वा प्रहृष्टास्ताः प्रविश्य च गृहं स्त्रियः ।
न्यवेदयन्त त्वरितं राममातुः †प्रियं तदा ॥ १३ ॥

वर्धयित्वेति । जयशब्देनेति शेषः ॥ १३ ॥

कौसल्याऽपि तदा देवी ‡रात्रिं स्थित्वा समाहिता ।
प्रभाते चाकरोत्पूजां विष्णोः पुत्रहितैषिणी ॥ १४ ॥

सा क्षौमवसना हृष्टा नित्यं व्रतपरायणा ।
§[2]अग्निहोत्रं जुहोति स्म मन्त्रवत्कृतमङ्गला ॥ १५ ॥

प्रविश्य च तदा रामो मातुरन्तःपुरं शुभम् ।
ददर्श मातरं तत्र हावयन्तीं हुताशनम् ॥ १६ ॥

अग्निहोत्रं जुहोति स्मेति । ज्येष्ठपत्नीत्वादृत्विङ्मुखेनेति शेषः । तदेवोक्तं—हावयन्तीमिति ॥ १६ ॥

देवकार्यनिमित्तं च तत्रापश्यत्समुद्यतम् ।
दध्यक्षतं घृतं चैव मोदकान् हविषस्तथा ॥ १७ ॥

---

* द्वाररक्षणे नियुक्ताः स्त्रियः । तासु काश्चिद्बालाः—अल्पवयस्काः । काश्चित्तु वृद्धाः इत्यर्थः । द्वाररक्षणतत्परा इति भिन्नं विशेष्यं वा. † प्रियं—रामागमनरूपम्. ‡ रात्रिं—रात्रौ—'कालाध्वनोरत्यन्तसंयोगे' इत्यत्यन्तसंयोगे द्वितीया । यावद्रात्रीत्यर्थः. § उत्तमजातिस्त्रीणां वैदिककर्मस्वधिकारो वर्तते—'आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके' इति स्मृतेः—सत्य.

[1] बालांश्च वृद्धांश्च—ङ. [2] 'अग्निं जुहोति स्म तदा' इत्येव सर्वत्र पाठो दृश्यते.

लाजान् माल्यानि शुक्लानि पायसं * कृसरं तथा ।
समिधः पूर्णकुम्भांश्च ददर्श रघुनन्दनः ॥ १८ ॥

तां शुक्लक्षौमसंवीतां व्रतयोगेन कर्शिताम् ।
तर्पयन्तीं ददर्शाद्भिर्देवतां वरवर्णिनीम् ॥ १९ ॥

सा चिरस्यात्मजं दृष्ट्वा मातृनन्दनमागतम् ।
† अभिचक्राम संहृष्टा किशोरं बडबा यथा ॥ २० ॥

किशोरः—अश्वपोतः ॥ २० ॥

[1] स मातरं‡मभिक्रान्तामभिसंगृह्य राघवः ।
परिष्वक्तश्च बाहुभ्यामुपाघ्रातश्च मूर्धनि ॥ २१ ॥

अभिसंगृह्य—नमस्कृत्य ॥ २१ ॥

तमुवाच दुराधर्षं राघवं सुतमात्मनः ।
कौसल्या पुत्रवात्सल्यादिदं प्रियहितं वचः ॥ २२ ॥

वृद्धानां धर्मशीलानां राजर्षीणां महात्मनाम् ।
प्राप्नुह्यायुश्च कीर्तिं च धर्मं § चोपहितं कुले ॥ २३ ॥

कुले—कुलविषये ॥ २३ ॥

‖ सत्यप्रतिज्ञं पितरं राजानं ¶ पश्य राघव ।
अद्यैव हि त्वां धर्मात्मा यौवराज्येऽभिषेक्ष्यति ॥ २४ ॥

---

* कृसरं—तिलौदनम्—गो. † अभिचक्राम—अभिमुखं जगाम. ‡ अभिक्रान्तां—अभिमुखमागतवतीम्. § 'चाप्युचितं कुले' इति पाठान्तरम् । कुलस्योचितमित्यर्थः. ‖ सत्यप्रतिज्ञमिति अभिषेक्ष्यतीत्यत्र हेतुः । इदानीमप्यभिषेको नारब्ध इति नाशङ्कनीयमिति भावः—गो. ¶ पश्य—जानीहि—गो. अयमेव स्वरसः । लोकोक्तिषु बहुलमुपलंभात्प्रकृतानुगुण्याच्च.

[1] एतदनन्तरं 'पर्यष्वजत धर्मात्मा मात्रा चैव परन्तपः' इत्यधिकम्—ङ.

राजानं पश्येति । गत्वेति शेषः । रामस्य राजनिवेशगमनादि-व्यापारानभिज्ञानात्कौसल्यायाः राजदर्शननियोजनादि ॥ २४ ॥

***दत्तमासनमालभ्य [1]भोजने तु निमन्त्रितः ।**
**मातरं राघवः [2]किञ्चि†द्व्रीलात् प्राञ्जलिरब्रवीत् ॥ २५ ॥**

आसनं दत्वा ‡ 'अत्रोपविश्य भुक्त्वा राजानं द्रष्टुं गच्छ' इति भोजने—तद्भुतवे निमन्त्रितो राघवः केवलमासनमालभ्य—स्पृष्ट्वैव केवलं; नोपविष्टो भूत्वा किञ्चिद्व्रीलात् किञ्चिदवाङ्मुख इति शेषः ॥२५॥

**स स्वभावविनीतश्च गौरवाच्च तदाऽऽनतः ।**
**प्रस्थितो दण्डकारण्यमाप्रष्टुमुपचक्रमे ॥ २६ ॥**

गौरवात्—मातृत्वप्रयुक्तगौरवाच्च । प्रस्थितः—निश्चितप्रस्थानः । आप्रष्टुं—अभ्यनुज्ञां कारयितुमुपचक्रमे ॥ २६ ॥

**देवि ! नूनं न जानीषे महद्भयमुपस्थितम् ।**
**इदं च तव दुःखाय वैदेह्या लक्ष्मणस्य च ॥ २७ ॥**

इदं च भयं युष्मदादीनां त्रयाणामेव विशिष्य दुःखाय; न मम दुःखलेशोऽपीत्यर्थः ॥ २७ ॥

**गमिष्ये दण्डकारण्यं किमनेनासनेन मे ।**
**विष्टरासनयोग्यो हि कालोऽयं मामुपस्थितः ॥ २८ ॥**

विष्टरः—तपस्विनामासनविशेषः । वामावर्तपञ्चविंशतिदर्भ-निर्मितः । 'पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टरः' इति स्मृतिः ॥ २८ ॥

---

* दत्तासने उपवेशनाभावेऽपि स्पर्शमात्रं कार्यमित्यागमात्-गो. † 'व्रीडः' इति घञन्तः पुल्लिङ्गोऽप्यस्ति। व्रीडादब्रवीदिति वाऽन्वयः. ‡ पूर्वश्लोकव्याख्यानानुरोधेनैवं वर्णितम् । वस्तुतस्तु यथाश्रुतमेव स्वरसम् .

[1] भोजनेन—ङ. [2] किञ्चित्प्रसार्याञ्जलिमब्रवीत्—ङ. किञ्चित्प्रसार्याञ्जलिमब्र—ङ.च.

चतुर्दश हि वर्षाणि वत्स्यामि विजने वने ।
[1] कन्दमूलफलैर्जीवन् * हित्वा मुनिवदामिषम् ॥ २९ ॥

हित्वा मुनिवदामिषमिति । एतेन—विशिष्टसंस्कारसंस्कृत-मांसोपेतभोजने निमन्त्रणं मातृकृतमपि प्रत्याख्यातम् । मुनिवदित्युक्तत्वादेव श्राद्धाय मांसग्रहो न विरुद्धः—'इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना' इति वक्ष्यमाणः ॥ २९ ॥

भरताय महाराजो यौवराज्यं प्रयच्छति ।
मां पुनर्दण्डकारण्यं विवासयति तापसम् ॥ ३० ॥

स षट् चाष्टौ च वर्षाणि वत्स्यामि विजने वने ।
आसेवमानो † वन्यानि फलमूलैश्च वर्तयन् ॥ ३१ ॥

सा निकृत्तेव सालस्य यष्टिः परशुना ‡ वने ।
पपात सहसा देवी देवतेव दिवश्च्युता ॥ ३२ ॥

यष्टिः-शाखा ॥ ३२ ॥

तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव ।
रामस्तूत्थापयामास मातरं गतचेतसम् ॥ ३३ ॥

---

* आमिषं–राजभोग्यं वस्तु–'आमिषं पुनपुंसकम् । भोग्यवस्तुनि संभोगे' इति मेदिनी-**शि.** आमिषं–संभोगं, राज्यलोभं, सुन्दररूपं वा—'आमिषं पललें लोभे संभोगोत्कोचयोरपि' इति विश्वः-**सत्य.** अत्रामिषशब्देन सूतैः संस्कृतं मांसमुच्यते । केवलमांसस्वीकारस्योत्तरत्र वक्ष्यमाणत्वात् 'इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना' (अयो. ९६-२) इति-**गो.** † वन्यानि–वानप्रस्थयोग्यानि कर्माणि–**गो.** वल्कलानि–**ति.** ‡ नगरे तथा छेदनाभावात् 'वने' इत्युक्तम्-**गो.** दुःखानर्हत्वसूचकं वेदम् । प्रष्टुरभावाद्वा तथोक्तम् .

[1] मधुमूल–ङ.

उपावृत्त्योत्थितां दीनां वडबामिव वाहिताम् ।
पांसुकुण्ठितसर्वाङ्गीं विममर्श च पाणिना ॥ ३४ ॥

बाहितां—पूर्वं प्रापितवाहनव्यापारां पश्चाच्छ्रमातिवहनहेतवे लुठनाय विसृष्टां अत एवोपावृत्त्य—लुठित्वोत्थिताम् ॥ ३४ ॥

सा राघवमुपासीन[1]मसुखार्ता सुखोचिता ।
उवाच पुरुषव्याघ्र*मुपशृण्वति लक्ष्मणे ॥ ३५ ॥

असुखेन—दुःखेन आर्ता—खिन्ना ॥ ३५ ॥

†यदि पुत्र न जायेथा मम शोकाय राघव! ।
न स्म दुःखमतो भूयः पश्येयमहमप्रजाः ॥ ३६ ॥

अप्रजाः—वन्ध्येत्येतस्मात् भूयः—अभ्यधिकं दुःखं न पश्येयमिष्टपुत्रवियोगजम् ॥ ३६ ॥

---

* अनन्तरसर्गोपक्षेपसूचनायेदमुक्तम् . † हे पुत्र त्वं यदि न जायेथाः, अतः- अजननात् भूयः—अतिशयितं दुःख-इष्टपुत्रविश्लेषजं न पश्येयम्—गो. यदि मम शोकाय न जायेथाः अतस्तर्हि अप्रजा अप्यहं भूयः—बहुतरमेवंविधं दुःखं न पश्येयम्—ती. यद्वा यदि त्वं मम शोकफलाय केवलं न जायेथाः तदा अप्रजा इत्यतो भूयः—अधिकं दुःखं न पश्येयमित्यर्थः । यद्वा पूर्वार्धमेकं वाक्यं, उत्तरार्धं चापरम् । मम शोकाय शोकफलार्थं न जायेथा यदि ! तव जन्म यदि न स्याद्वा, तदा वरमिति भावः । जन्मनो वृत्तत्वेन तत्प्रतिबन्धासंभवाद्यदीत्युक्तम् । यदि रामस्य जन्मैव न स्यात्तदा अनपत्यताप्रयुक्तः शोको तेऽस्त्येवेत्यत्राह—न स्मेति । तव जन्माभावे अप्रजा इत्यतोऽधिकं दुःखं न स्म पश्येयं—न स्म पश्येयं खलु इत्यर्थः । तदेव स्पष्टयति—एक इत्यादि । वन्ध्यायाः शोको मानस एव, स च एकः—एकरूपः । मम त्विदानीं गर्भधारणप्रसवप्रभृत्यनेकः शारीरः शोकः, मानसोऽपि । स च नैकः, अपि तु बहुविधः । अतः तवाजननमेव श्रेयः स्यादिति.

[1] मदुःखार्ता—ङ.

**एक एव हि वन्ध्यायाः शोको भवति मानसः ।**
**अप्रजाऽस्मीति संतापो न ह्यन्यः पुत्र ! विद्यते ॥ ३७ ॥**

अप्रजास्त्वदुःखमेतदपेक्षया सुसहमित्याह—एक इत्यादि । मानसशोकस्याभिनयः—अप्रजाऽस्मीति । सन्धिश्छान्दसः । अन्यः—इष्टपुत्रवियोगजः ॥ ३७ ॥

**न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे ।**
***अपि पुत्रे तु पश्येयमिति रामास्थितं मया ॥ ३८ ॥**

स्वस्याः सदा दुःखित्वमिति शोचति—न दृष्टेत्यादि । पत्युः पौरुषं—अनुरागकृतो रञ्जनविशेषः, तस्मिन् सति यत्—प्राप्यं कल्याणं—प्रशस्तवस्त्राभरणादिजसौभाग्याधिक्यं, तथा सुखं वा पतिसंभोगजं मया न दृष्टपूर्वम् । अथाऽपि पुत्रेऽपि चोत्पन्ने तदुभयं पश्येयमिति मया आस्थितम्—एवं प्रत्याशया स्थितवती ॥ ३८ ॥

**†सा बहून्यमनोज्ञानि वाक्यानि हृदयच्छिदाम् ।**
**अहं श्रोष्ये सपत्नीनां ‡अवराणां वरा सती ॥ ३९ ॥**

साऽहं अवराणां—सुमित्रादीनां सर्वासां कनिष्ठराजस्त्रीणां त्वद्बलादिदानीं वरा सती, पुनश्च त्वद्वियोगे तव मुखमपश्यन्ती, हृदयच्छिदां—हृदयविदारिकाणां सपत्नीनां बहून्यमनोज्ञानि वाक्यानि एवं जीर्णाऽपि श्रोष्ये ॥ ३९ ॥

---

* अथापि पुत्रेऽपि चोत्पन्ने पुत्रनिबन्धनं तदुभयं पतिकर्तृकं पश्येयमिति—**ती.** पुत्रे जाते तदुभयमुक्तकल्याणं पुत्रदर्शनजं सुखं च पश्येयं—ति. पुत्रे सति तद्बलात्पश्येयं—**गो.** वस्तुतस्तु लोके अपुत्राणां स्त्रीणां पतिसम्माननाभावः, पुत्रोत्पत्तौ पतिसम्माननं च प्रसिद्धमेवेति तीर्थोक्तं समीचीनम्. † भूतदुःखमुक्त्वा भविष्यद्दुःखमाह—सेति—**गो.** ‡ अवराणां सपत्नीनामिति वाऽन्वयः.

अतो दुःखतरं किन्नु प्रमदानां भविष्यति ? ।
मम शोको विलापश्च यादृशोऽयमनन्तकः ॥ ४० ॥

अतो दुःखतरं—सपत्नीधिक्कारवाक्यश्रवणजात्परं दुःखं स्त्रियो नास्ति। मम तु तादृशशोकमूलविलापो यादृशः तादृश एव वाचामगोचरोऽनन्तक एव ॥ ४० ॥

त्वयि सन्निहितेऽप्येवमहमासं * निराकृता ।
किं पुनः प्रोषिते तात! ध्रुवं मरणमेव मे ॥ ४१ ॥

एवं त्वयि सन्निहितेऽप्यहं सपत्नीभिर्निराकृता । त्वयि विप्रोषिते किं पुनः! अतो मे मरणमेव ध्रुवं—प्राप्तम् ॥ ४१ ॥

अत्यन्तं निगृहीताऽस्मि भर्तुर्नित्य† [1]मसंमता ।
परिवारेण कैकेय्याः समा वाऽप्यथवाऽवरा ॥ ४२ ॥

ध्रुवमित्यत्र हेतुमाह—अत्यन्तमित्यादि । परिवारेण—दासीजनेन समा वा—अथवा अवरा—ततोऽपि निकृष्टा वा स्याम् ॥ ४२ ॥

यो हि मां सेवते कश्चिदथवाऽप्यनुवर्तते ।
‡ कैकेय्याः पुत्रमन्वीक्ष्य [2] स जनो § नाभिभाषते ॥ ४३ ॥

---

* संप्राप्तभवदभिषेकनिरोधेनेत्यर्थः. † अतन्त्रिता—अप्रधानीकृता—गो. ‡ भरतः स्वयौवराज्यप्राप्तये स्वयमेव स्वमातरं कैकेयीं रहसि प्रतिबोध्य स्वस्य निर्दुष्टताख्यापनाय बुद्धिपूर्वकमेव स्वमातुलगृहे वर्तत इति कौसल्या मन्यते स्म—वक्ष्यति च सा ‘आगतः क्रूरकार्यायाः कैकेय्या भरतः सुतः । तमहं द्रष्टुमिच्छामि भरतं दीर्घदर्शिनम्’ (अयो. ७५-५) इति । अत्र दीर्घदर्शिनमिति पदं पूर्वोक्ताभिप्रायेणैवोक्तमिति स्पष्टम । अत एवेदानीमपि ‘कैकेय्याः पुत्रं’ इत्युक्तम् । स हि सपत्नीपुत्रः सर्वोपायैरपि मां पीडयितुमुद्यत इति कौसल्या मन्यते स्म. § अतिसन्निहितत्वाभिप्रायेण ‘नाभिभाषते’ इत्युक्तम् .

[1] मतन्त्रिता—ङ. [2] स्वजनो—ङ.

अपि च त्वयि प्रोषिते [1] भरते राजनि तं कैकेय्याः पुत्रमन्वीक्ष्य, यो हीदानीं मां सेवते कश्चित्, अथवाप्यनुवर्तते मदिष्टं, स सर्वोऽपि जनो मां नाभिभाषते—नाभिभाषेतापि, सेवादिस्तु दूरे ॥ ४३ ॥

**नित्यक्रोधतया तस्याः कथं नु [2] खरवादिनम् ।**
**कैकेय्या वदनं द्रष्टुं, पुत्र ! शक्ष्यामि दुर्गता ॥ ४४ ॥**

अपि च मद्विषये तस्या नित्यक्रोधतया खरवादिनं—'स्वमोः' इति * लुगभाव आर्षः, परुषवदनशीलं वदनं कथं नु द्रष्टुं शक्ष्यामि ? दुर्गता—दुर्दशापन्ना ॥ ४४ ॥

**† दश सप्त च वर्षाणि जातस्य तव राघव !**
**[3] अतीतानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम् ॥ ४५ ॥**

---

* 'खरवादि तत्' इति पाठे (गो.) तु नायं क्लेशः. † ननु 'ऊनषोडश-वर्षो मे रामः' (बा. २०-२) इति विश्वामित्रं प्रति दशरथवचनात्, 'उषित्वा द्वादश समाः' (अर. ४७-४) इत्युपरि सीतया वक्ष्यमाणत्वाच्च रामस्य अष्टाविंशतिवर्षाणि वर्तन्ते, अत्र तु दश सप्त च वर्षाणि' इत्युच्यते । नैष दोषः । अत्र जातस्येत्युक्तिः द्वितीयजन्मापेक्षया । 'गर्भैकादशेषु राजन्यं' इति बहुवचनेन गर्भनवममारभ्य क्षत्रियस्योपनयनकालत्वोक्तेः—गो. यद्वा तव जातस्य त्वयि जाते, उपनयनानन्तरं दश सप्त च वर्षाणि दु:खपरिक्षयं प्रकांक्षन्त्या मयाऽऽसितानि । उपनयनप्रभृति सुताः परिणमन्त इति मातॄणां मनसो निर्वृतिर्भवति ........ राजवर्यस्य रघुनाथस्य गर्भनवमे शुक्लाष्टमे वर्षे उपनयनं कृतम् । अतः उपनयनानन्तरं सप्तदशवर्षाणि जातानि—ती. जातस्य—उपनयनाख्यद्वितीयजन्मनेति शेषः । 'ऊनषोडशवर्षः' इति विश्वामित्रं प्रति दशरथोक्त्या विवाहकाले पञ्चदशवर्षत्वोक्तेः । 'तत्र द्वादशवर्षाणि राघवः सह सीतया । रमयामास' इति पाद्मोक्तेश्च । उपनयनं च गर्भैकादशे ....... । 'द्विर्दश' इति वाक्यस्यार्थे 'दश' इति वाक्यैकदेशप्रयोगोऽयम् । द्विरावृत्ता दश—विंशतिः सप्त चेत्यर्थः । ........ तादृशप्रयोगश्च कौसल्यायाः पुत्रवियोगदु:खार्ततया, वाल्मीकेश्च वर्णनीयमयीभावेन न दोषायेति बोध्यम्—ति.

[1] मृते च राजनि—ग. [2] खरवादि तत्—ङ. [3] आसितानि—ङ. ट.

जातस्येति। द्वितीयजन्मनेति शेषः। 'अतीतानि' इति पूर्वेण सम्बन्धः। अतः परं तव यथाप्राप्तेन यौवराज्येन दुःखपरिक्षयं प्रकाङ्क्षन्त्या मया तस्या वदनं कथं नु द्रष्टुं शक्यमित्यनुकर्षः ॥ ४५॥

*तदक्षयं महद्दुःखं नोत्सहे सहितुं चिरात्।
विप्रकारं सपत्नीनामेवं जीर्णाऽपि राघव! ॥ ४६ ॥

दुःखमिति। त्वद्विप्रयोगजमिति शेषः ॥ ४६ ॥

अपश्यन्ती तव मुखं परिपूर्णशशिप्रभम्।
कृपणा वर्तयिष्यामि कथं [1]कृपणजीविका ॥ ४७ ॥

कृपणजीविका—शोच्यजीवना ॥ ४७ ॥

उपवासैश्च योगैश्च बहुभिश्च परिश्रमैः।
†[2]दुःखं संवर्धितो मोघं त्वं हि दुर्गतया मया ॥ ४८ ॥

दुःखं यथातथा मोघं—व्यर्थं संवर्धितोऽसि। यदि—विप्रवत्स्यसीति शेषः ॥ ४८ ॥

स्थिरं तु हृदयं मन्ये [3]ममेदं यन्न दीर्यते।
प्रावृषीव महानद्याः स्पृष्टं कूलं नवाम्भसा ॥ ४९ ॥

न दीर्यत इति यदिति। त्वद्विप्रयोगश्रवणेऽपीति शेषः ॥ ४९ ॥

---

* दुःखं त्वद्वियोगजं, अक्षयं—तव राज्यनाशात् क्षयसंभावनारहितमपि; अपि च एवं जीर्णा सपत्नीनां विप्रकारं सहितुं नोत्सहे—ति. जीर्णाऽपि—सपत्नीदुर्वाक्यश्रवणदुःखेन जीर्णाऽपि। विप्रकारं—अपकाररूपं दुःखमित्यन्वयः—गो. एवं जीर्णाऽपि—सापत्न्यकथायोग्यवयोबलक्षयं प्राप्ताऽपि अक्षयं—निरवधिकं दुःखं सपत्नीनां विप्रकारं—निराकरणं च सहितुं चिरं नोत्सहे—ती. † मोघं यथातथा दुःखेन संवर्धितः इत्यन्वयः.

[1] कृपणजीविकाम्—ङ. [2] दुःखसंवर्धिता, दुःखं प्रवर्तते—ङ. [3] शतधा—ङ.

ममैव नूनं मरणं न विद्यते
न चावकाशोऽस्ति यमक्षयेऽपि वा ।
यदन्तकोऽद्यैव न मां जिहीर्षति
*प्रसह्य सिंहो रुदतीं मृगीमिव ॥ ५० ॥

ममैवेत्यादि । लौकिकातिवृद्धोक्तिजातिरियम् ॥ ५० ॥

स्थिरं हि नूनं हृदयं ममायसं
†न भिद्यते यद्भुवि नो विदीर्यते ।
‡अनेन दुःखेन च देहमर्पितं
ध्रुवं ह्यकाले मरणं न विद्यते ॥ ५१ ॥

अयसा निर्मितं—आयसम् । अनेन च दुःखेनार्पितमपि देहं ; 'देहः क्लीबपुंसोः'; हि यस्मात् न विदीर्यते ; अतोऽकाले—ईश्वरकल्पितकालव्यतिरिक्तकाले मरणं न विद्यते, न लभ्यते च ; लाभार्थकविदेर्यत् ; तन्त्राभिप्रायत उभयम् ॥ ५१ ॥

इदं §तु दुःखं यदनर्थकानि मे
व्रतानि दानानि च संयमाश्च हि ।
तपश्च तप्तं यदपत्य[1]कारणात्
सुनिष्फलं बीजमिवोप्तमूषरे ॥ ५२ ॥

यत् व्रतादीनि—अनर्थकानि जातानि, तदिदं तु महद्दुःखम् । आनर्थक्ये दृष्टान्तः—ऊषरे उप्तं, अत एव सुनिष्फलं बीजमिवेति ॥

---

* स्ववत्सविपत्त्यादिदर्शनेन रुदतीं मृगीं प्रसह्य सिंहो यथा हन्यादिति । स्वपुत्रक्लेशदर्शनापेक्षया मातुः मरणमेव वरमित्यर्थः. † भेदः—द्विधाभवनं, विदारणं—अनेकच्छिद्ररेखावत्त्वम्—ति. ‡ एतादृशेन दुःखेन अर्पितं—व्याप्तं देहं च न भिद्यत इति अदित्याद्यन्वयः. § तु—पूर्वदुःखेभ्यो विलक्षणम्—गो.

[1] काम्यया—ङ.

*यदि ह्यकाले मरणं स्वयेच्छया
लभेत कश्चिद्गुरुदुःखकर्शितः ।
गताऽहमद्यैव परेतसंसदं
विना त्वया धेनुरिवात्मजेन वै ॥ ५३ ॥

यदीत्यादि । गुरुदुःखकर्शितः कश्चिदपि स्वेच्छया अकाले—उत्क्रार्थः, †मरणं लभेत यदि; तदा ह्यहमद्यैव त्वया विनाभूता परेतसंसदं—यमसभां गता स्यां, तत्तु न लभ्यत इति शेषः ॥ ५३ ॥

अथापि किं जीवितमद्य मे वृथा
त्वया विना चन्द्रनिभाननप्रभ ! ।
अनुव्रजिष्यामि वनं त्वयैव गौः
सुदुर्बला वत्समिवानुकाङ्क्षया ॥ ५४ ॥

अथापि किं जीवितं—कुत्सितं जीवितं वृथा—व्यर्थम् । अतः—अनुव्रजिष्यामीत्यादि । अनुकाङ्क्षया—स्नेहेन ॥ ५४ ॥

भृशमसुखममर्षिता तदा
बहु विललाप समीक्ष्य राघवम् ।
व्यसनमुपनिशाम्य सा महत्
‡सुतामिव बद्धमवेक्ष्य किन्नरी ॥ ५५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे विंशः सर्गः

———

* 'ध्रुवं ह्यकाले मरणं न विद्यते' इत्येतत् सकार्यं दर्शयति—यदीति—गो.
† ५१ तमश्लोकव्याख्यानावसरे इति शेषः. ‡ किन्नरी बद्धं स्वसुतमवेक्ष्येवेति वान्वयः.

भृशं असुखं—दुःखं अमर्षिता—असहमाना राघवं समीक्ष्य तदा बहु विललाप। अपि च भावि महद्व्यसनं च रामावियोगमूलं सपत्न्यादिसंपादनीयमुपमिशाम्य—पर्यालोच्य च सत्यपाशबद्धं राघवं सुतमवेक्ष्य किन्नरीव—यथोक्तनिमित्तवती किन्नरीव विललाप। * अधर्ममानः (५९१/२) सर्गः ॥ ५५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे विंशः सर्गः

---

## एकविंशः सर्गः

[कौसल्यासान्त्वनम्]

तथा तु विलपन्तीं तां कौसल्यां राममातरम्।
उवाच[1] लक्ष्मणोऽदीनः † तत्कालसदृशं वचः ॥ १ ॥

एवं कौसल्याप्रलापे, लक्ष्मणेन चारातिनिरासे प्रतिज्ञातेऽपि भगवतो रामस्य सत्यस्थैर्यप्रतिपादनम्। तथा त्वित्यादि। तत्कालसदृशं—रामविप्रयोगहेतुककौसल्यादुःखप्रवृत्तिकालोचितम् ॥ १ ॥

न रोचते ममाप्येतत्, आर्ये! यद्राघवो वनम्।
त्यक्त्वा राज्यश्रियं गच्छेत् ‡ स्त्रिया वाक्यवशं गतः ॥ २ ॥

---

* अत्र सर्वेषु कोशेषु परिदृश्यमानसंख्यावैरूप्यं चिन्तनीयम्. † एतेन वक्ष्यमाणलक्ष्मणवचनं केवलं कौसल्याशोकशान्त्यर्थं, न तु सहृदयमिति गम्यते—गो. परन्त्वत्र, अस्मिन्नेव सर्गे २७ तमश्लोको द्रष्टव्यः. ‡ 'स्त्रिया वाक्यवशंवदः' इति राघवविशेषणम् इति ज्ञायते, स्त्रिया वशंगत इत्यनुक्त्वा 'स्त्रिया वाक्यवशं गतः' इति कथनात्। उत्तरश्लोके चोद्यमान इत्यत्र चोदनहेतुः—'समन्मथः' इति साभिप्रायविशेषणे ध्वनितः। तिलके तु स्त्रिया इत्यारभ्य उत्तरान्वयि इति दशरथविशेषणतया व्याख्यातम्.

[1] लक्ष्मणो दीनः, लक्ष्मणोऽदीनं—ङ.

गच्छेदिति यत् तन्ममापि न रोचते । 'आर्ये' इति कौसल्यासम्बोधनम् ॥ २ ॥

विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः ।
नृपः किमिव न ब्रूयात् चोद्यमानः समन्मथः ॥ ३ ॥

ननु राजचोदिते वनवासे [1]कथमिह स्थातुं शक्यमित्यत्राह—विपरीत इत्यादि । विपरीतः—प्राप्तप्रकृतिवैपरीत्यः । तत्र हेतुः—वृद्ध इत्यादि । चोद्यमान इति । स्त्रियेति शेषः । किमिव न ब्रूयात्—अनुचितशतमपि ब्रूयादेव । अतो न श्रद्धार्हमिति शेषः ॥ ३ ॥

नास्यापराधं पश्यामि *नापि दोषस्तथाविधः ।
येन [2]निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ४ ॥

ननु कथं राजदोषप्रयुक्तता विवासनस्य; रामदोषप्रयुक्तता वा कस्मान्न स्यादित्यत्राह—नास्येत्यादि । रामस्येत्यर्थः । अपराधं—पितृविषयकं । तथाविधो दोष इति । असमञ्जादेरिवान्यविषयको वा विवासनहेतुरपराध इत्यर्थः ॥ ४ ॥

†[3]अहं हनिष्ये पितरं वृद्धं कामवशं गतम् ।
स्त्रिया युक्तं च निर्लज्जं धर्मायुक्तं नृपं तथा ॥ ५ ॥

अहं हनिष्य इति । अन्यायेन प्रवृत्ताभिषेकविघ्नं करिष्यति चेदिति शेषः । अत्र हेतुः—धर्मायुक्तमिति ॥ ५ ॥

---

* 'नापि दोषं तथाविधम्' इति सर्वसम्मतः स्वरसः पाठः. † अयं श्लोकः बहुषु कोशेषु न दृश्यते । रामस्य अपराधाभावप्रतिपादनपरयोः 'नास्यापराधं पश्यामि' 'न तं पश्याम्यहं लोके' इति श्लोकयोर्मध्येऽस्य श्लोकस्यावसरालाभस्तु स्पष्टः.

[1] कथमिव–घ. [2] निर्यास्यते–ङ. [3] इदं पद्यं झ. पुस्तके नास्ति.

*न तं [1]पश्यामि तल्लोके परोक्षमपि यो नरः ।
†स्वमित्रोऽपि निरस्तोऽपि योऽस्य दोषमुदाहरेत् ॥ ६ ॥

अस्तु राघवस्याप्यधर्म इत्यत्राह——न तमित्यादि । तल्लोके-तत्समक्षं—राघवसमक्षं तस्य परोक्षमपि वा यो नरः—स्वमित्रः—सुतराममित्रोऽपि, महापातकादिदोषवशान्निरस्तोऽपि अस्य—रामस्य दोषं समुदाहरेत्—तं न पश्यामि ॥ ६ ॥

देवकल्पमृजुं दान्तं [2]रिपूणामपि ‡वत्सलम् ।
अवेक्षमाणः को धर्मं त्यजेत्पुत्रमकारणात् ॥ ७ ॥

यदेवं—अतः देवकल्पमित्यादि । रिपूणामपि—कैकेय्यादीनामपि विषये वत्सलं—स्निग्धं । धर्मं—§धर्मविग्रहम् ॥ ७ ॥

तादिदं वचनं राज्ञः ‖पुनर्बाल्यमुपेयुषः ।
पुत्रः को हृदये कुर्यात् ¶राजवृत्तमनुस्मरन् ॥ ८ ॥

---

* 'न तं पश्याम्यहं लोके' इति प्रायिकः पाठः । एतत्पाठे परोक्षमपीत्यत्र अपिनैव कैमुतिकन्यायेन विवक्षितार्थलाभः. † एव वास्यार्थः । लोके हि एकस्मिन् पुरुषे, दोषज्ञानमत्यन्तरञ्जनस्य स्यात्, सदा सन्निहितत्वात् । तच्छत्रूणां वा स्यात्, तद्दोषैकदत्तदृष्टित्वात् । एवमुभयथाऽपि रामे दोषज्ञानासंभवः । अत्यन्तरञ्जैर्मादृशैः, दोषैकदृष्टिभिः शत्रुभिश्च न कोऽपि दोषः शा[illegible] शक्येतेति. ‡ वत्सलं—दोषे सत्यपि तदगणनानुकूलः स्नेहो वात्सल्यम्. § एतादृशं पुत्रं धर्मस्वरूपं अवेक्षमाणः—जानन् अकारणात् कः त्यज्येदित्यन्वयः । यद्वा धर्ममवेक्षमाणः—धर्मज्ञ इत्यर्थः. ‖ पुनर्बाल्यमिति—पुनःपदस्वारस्यात् बाल्यं—कामपरवशत्वमित्यर्थः स्वरसः. ¶ राजवृत्तं—राजनीतिं—गो. अथवा वृत्तं—चारित्र्यम् । एतादृशस्य कामपरवशस्य राज्ञो यच्चारित्र्यं स्त्रीवचनानुवर्तनरूपम् । अस्मत्पितुर्हि कामपारवश्यात्सदा कैकेय्यनुवर्तनं न नूतनं—अत इदं यत्किञ्चिदित्याशयः । न हि राज्यतन्त्रे स्त्रीमन्त्रणं हितायेति च भावः.

[1] पश्याम्यहं लोके—ङ. [2] मातॄणामपि—ङ.

बाल्यं–बालभावं–अविमृश्यकारित्वं । राजवृत्तं–प्राचीनराजधर्मं । अनुस्मरन्–पर्यालोचयन् ॥ ८ ॥

**यावदेव न जानाति कश्चिदर्थमिमं नरः ।**
**तावदेव मया सार्धं आत्मस्थं कुरु *शासनम् ॥ ९ ॥**

इममर्थं–रामविवासनवृत्तान्तं । तावत्–ततःपूर्वमेव । शासनं–यथाप्राप्ताभिषेकपूर्वकं राज्यानुपालनापेक्षितराजनियोगम् । आत्मस्थं कुरु–त्वदाज्ञामेव राज्ये प्रवर्तय ॥ ९ ॥

**मया पार्श्वे सधनुषा † तव गुप्तस्य राघव! ।**
**कः [1] समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ १० ॥**

कथमेवं शक्यमित्यत्राह—मयेत्यादि । अधिकं कर्तुमिति । त्वदाज्ञामतिलङ्घ्याभ्यधिकं कर्तुमित्यर्थः ॥ १० ॥

**निर्मनुष्यामिमां सर्वामयोध्यां मनुजर्षभ! ।**
**करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ ११ ॥**

विप्रिय इति । तव विपक्षभाव इत्यर्थः ॥ ११ ॥

**भरतस्याथ पक्ष्यो वा यो वाऽस्य हितमिच्छति ।**
**सर्वानेतान् वधिष्यामि, मृदुर्हि परिभूयते ॥ १२ ॥**

मृदुर्हि परिभूयत इति । अतो मार्दवं न युक्तं तदनुचितकाल इति शेषः ॥ १२ ॥

---

* शासनं–राज्यं–गो. यद्वा शासनं–राज्यनिर्वाहमित्यर्थः । आत्मस्थं–स्वाधीनम्. † मया गुप्तस्य तवेत्यन्वयः.

[1] समर्थोऽप्रियं–ङ.

प्रोत्साहितोऽयं कैकेय्या [1]स दुष्टो यदि नः पिता ।
*अमित्रभूतो † निस्सङ्गं [2]बध्यतां वध्यतामपि ॥ १३ ॥

अशक्यार्थश्च भरताय राज्यदानं राज्ञः इत्याह—प्रोत्साहित इत्यादि ॥ १३ ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ १४ ॥
‡ बलमेष किमाश्रित्य हेतुं वा, पुरुषर्षभ! ।
दातुमिच्छति कैकेय्यै राज्यं स्थितमिदं तव ॥ १५ ॥

स्थितमिदं तवेति । ज्येष्ठत्वाद्गुणोत्तरत्वाच्चेति शेषः ॥ १५ ॥

त्वया चैव मया चैव § दत्वा वैरमनुत्तमम् ।
काऽस्य शक्तिः श्रियं दातुं भरतायारिशासन! ॥ १६ ॥

कैकेय्या प्रोत्साहितोऽप्ययं राजा आवाभ्यां वैरं कृत्वा भरताय राज्यं कथं दद्यात्? तथा राज्यश्रियमपि च दातुं काऽस्य शक्तिः? न कापि ॥ १६ ॥

अनुरक्तोऽस्मि भावेन भ्रातरं, देवि! तत्त्वतः ।
सत्येन धनुषा चैव ‖ दत्तेनेष्टेन ते शपे ॥ १७ ॥

---

* त्रेताद्वापरयोस्संधावयमवतारः । तदा च किञ्चिदधिकपादेनाधर्मप्रवेशः । तदनुसारेण लक्ष्मणस्यैवमुक्तिः, कैकेय्याश्च परोपदेशेनैवं मतिः, छलेन वालिवधे प्रवृत्तिश्च भगवत इति बोध्यम्—ति. † निस्संगं—निस्स्नेहं यथा तथा । निर्दाक्षिण्यमिति यावत्. ‡ एषः—दशरथः. § कृत्वा वैरमित्येव सर्वत्र दृश्यते। त्वया मया च सह वैरं कृत्वेत्यर्थः । चतुर्थ्यर्थे तृतीयेति भावः. ‖ दत्तेन—दानेन—गो.

[1] सन्तुष्टो—ङ. च. [2] वध्यतां बध्यतामपि—ङ.

ज्ञातित्वाविशेषात् त्वं वाऽस्मिन्विषये कथं विश्वसनीयः? इति शङ्काभासमपनयति कौसल्यायाः—अनुरक्त इत्यादि। भावः—आन्तरः अभिप्रायः ॥ १७ ॥

दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति ।
प्रविष्टं तत्र मां, देवि! त्वं पूर्वमवधारय ॥ १८ ॥

हरामि वीर्याद्दुःखं ते तमः सूर्य इवोदितः ।
देवी पश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥ १९ ॥

[1]हनिष्ये पितरं वृद्धं कैकेय्यासक्त*[2]मुन्नतम् ।
कृपणं च स्थितं बाल्ये वृद्धभावेन गर्हितम् ॥ २० ॥

कैकेय्यामासक्तः तं, अत एव हेतोरुन्नतं—बालवत्कामो-[3]न्नतचित्तम्, वस्तुतो वृद्धभावेन गर्हितम्। बाल्यादिर्व्याकृतपूर्वः ॥२०॥

एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः ।
उवाच रामं कौसल्या रुदती शोकलालसा ॥ २१ ॥

भ्रातुस्ते वदतः पुत्र! लक्ष्मणस्य श्रुतं त्वया? ।
यदत्रानन्तरं [4]तत्त्वं कुरुष्व [5]यदि रोचते ॥ २२ ॥

श्रुतमिति। अभिवदनमिति शेषः। यदत्रानन्तरमिति। कार्यमिति शेषः ॥ २२ ॥

---

* उन्नतं—उच्छ्रितं, प्रवृद्धं अमर्यादमिति यावत्।

[1] इदं पद्यं कुत्रचिन्नास्ति—ङ. झ. [2] मानसं—ङ. च. झ. [3] चितचित्तम्—ट. [4] कार्यं—ङ. [5] 'यदि रोचते' इत्यनेन स्वस्यानभिमतिः सूचिता—ति. गो.

*[1] न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् ।
विहाय शोकसंतप्तां गन्तुमर्हसि मामितः ॥ २३ ॥

अधर्म्यं सपत्न्याः—कैकेय्या वचः श्रुत्वा मां विहाय वनं गन्तुं नार्हसि ॥ २३ ॥

धर्मज्ञ ! यदि धर्मिष्ठो धर्मं चरितुमिच्छसि ।
[2] शुश्रूष मामिहस्थस्त्वं चर धर्म[3]मनुत्तमम् ॥ २४ ॥

[4] शुश्रूष—शुश्रूषणं कुरु ॥ २४ ॥

शुश्रूषुर्जननीं [5] पुत्रः स्वगृहे नियतो वसन् ।
परेण [6] महता युक्तः काश्यपस्त्रिदिवं गतः ॥ २५ ॥

महतेति । धर्मेणेति शेषः । त्रिदिवं गत इत्यनेन इह लोके पूर्वं मातृशुश्रूषाबलेन प्राजापत्यपदं प्राप्तवानित्यवगन्तव्यम् ॥ २५ ॥

यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहम् ।
त्वां नाहमनुजानामि न गन्तव्यमितो वनम् ॥ २६ ॥

गौरवेणाहमपि पूज्येति । 'पितुश्शतगुणं माता गौरवेणातिरिच्यते' इत्यादिस्मृतेरित्याशयः ॥ २६ ॥

त्वद्वियोगान्न मे कार्यं जीवितेन सुखेन वा ।
त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥ २७ ॥

---

* न हि राज्ञा साक्षादुक्तम् । सपत्नी तु यत्किञ्चिन्ममानिष्टानि वदेदेव । अतो न श्रद्धेयमित्याशयः । मम सपत्न्या भाषितं अधर्म्यं वच इत्यन्वयः ॥

[1] एतत्तु वचनं—ङ. [2] शुश्रूषुः—ट. [3] मनुस्मरन्—ङ. [4] शुश्रूषुः—शुश्रूषणं कुर्वन्—ट. [5] पुत्र !—ङ. [6] तपसा—ङ.

त्वद्वियोगात्परं मे जीवितादिना न किञ्चित्कार्यं—न किञ्चित्प्रयोजनमित्यर्थः। यदेवं अतः—त्वयेत्यादि ॥ २७ ॥

**यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम्।**
**अहं *प्रायमिहासिष्ये न हि शक्ष्यामि जीवितुम् ॥२८॥**
**ततस्त्वं प्राप्स्यसे, पुत्र! निरयं लोकविश्रुतम्।**
**† ब्रह्महत्यामिवाधर्मात् समुद्रः सरितां पतिः ॥ २९ ॥**

तत इति। मातुः प्राणान्तशोकसंपादनादित्यर्थः। सरितां पतिः समुद्रः कस्मिंश्चित्कल्पे मातृदुःखजननरूपाधर्माद्ब्रह्महत्यां—ब्राह्मणकृत्यां प्राप्य नरकादीनि प्राप्तवान् इति किञ्चित्पुराणप्रसिद्धिः ॥ २९ ॥

**विलपन्तीं तथा दीनां कौसल्यां जननीं ततः।**
**उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥ ३० ॥**

---

*प्रायं—अनशनव्रतम्। इह—अस्मिन्नेव क्षणे. † अधर्मात्—पिप्पलादविषये कृतादपकारात् ब्रह्महत्यामिव—ब्राह्मणनिमित्तका हिंसा ब्रह्महत्येति व्युत्पत्त्या पिप्पलादोत्पादितकृत्यया समुद्रस्य प्राप्तं दुःखं ब्रह्महत्येत्युच्यते। पिप्पलादेन कृत्योत्पादनं च 'पिप्पलादसमुत्पन्ने कृत्ये लोकभयंकरि। पाषाणं ते मया दत्तमाहारार्थं प्रकल्पितम्' इति प्रसिद्धम्। साक्षात्समुद्रकर्तृकब्रह्महत्याया अश्रवणादेवं व्याख्यातम्। यद्वा—शुश्रूषुरित्यत्र काश्यपः पूर्वजन्मनि मातृशुश्रूषां कृत्वा तत्फलत्वेन दिवं गत्वा प्रजापतित्वं च गतवानिति पुराणकथा। उत्तरत्र—समुद्रः किल मातृदुःखजननरूपाधर्माद्ब्रह्महत्यां—ब्रह्महत्याप्राप्यनरकविशेषान् प्राप्तवानिति पौराणिकी कथा—गो. कदाचिज्जनन्यै दुद्रोह समुद्रः। तज्जनिताधर्मात् पिप्पलादनिर्मिताभिचारिकक्रियायाः प्रतिमन्त्रगैर्न निवारणलक्षणहननात् ब्रह्महत्या समुद्रेण संपादिता। तया चानुबभूव दुःखमिति पौराणिकी कथा—सत्य.

नास्ति शक्तिः * पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥ ३१ ॥

पितुर्वाक्यं समतिक्रमितुं शक्तिर्नास्तीति । त्वद्वचनस्य च कर्तव्यत्वेऽपि पितृवचनस्य प्रथमतः प्राप्तत्वेन प्राबल्यात्, युगपदनुष्ठानासंभवाच्च प्रथमं पितृवचनं कर्तव्यम् ॥ ३१ ॥

ऋषिणा च पितुर्वाक्यं कुर्वता [1] व्रतचारिणा ।
गौर्हता जानता धर्मं कण्डुनापि † विपश्चिता ॥ ३२ ॥

अपि च पितृवाक्यगौरवेण गोवधो मातृवधोऽपि पूर्वैर्महात्मभिः कृतः । मया तु पितृवाक्यकरणतो दुःखमात्रं मातुरिति कुतः पितृवचसोऽकरणमित्याशयेनाह— [2] ऋषिणेति ॥ ३२ ॥

अस्माकं तु कुले पूर्वं सगरस्याज्ञया पितुः ।
‡ खनद्भिस्सागरैर्भूमिमवाप्तस्सुमहान् वधः ॥ ३३ ॥

वधोऽवाप्त इत्यनेन—प्राणानपि त्यक्त्वा पितृवाक्यं परिपालनीयम्; किमु कियत्कालवनवासमात्रेणेत्याशयः सूचितः ॥ ३३ ॥

§ जामदग्न्येन रामेण रेणुका जननी स्वयम् ।
कृत्ता परशुनाऽरण्ये पितुर्वचनकारिणा ॥ ३४ ॥

---

* 'अधर्म्यं वचः श्रुत्वा सपत्न्या मम' (२३) इति कौसल्यावाक्यं साभिप्रायमुत्तरयति—पितुर्वाक्यमिति. † विपश्चितापि कण्डुनेत्यन्वयः. ‡ पितुराज्ञया भूमिं खनद्भिरित्यन्वयः । इदमुपाख्यानं बालकाण्ड एव वर्णितम्. § इयमाख्यायिका भारते वनपर्वणि ११७ अध्याये, श्रीभागवते नवमस्कन्धे १६ अध्याये च द्रष्टव्या.

[1] वनचारिणा—ङ. [2] 'राजर्षेरित्यादि' इति मातृकासु.

परशुना स्वयं कृत्तेति। स्वहस्तेनैव छिन्नेत्यर्थः। अरण्ये-तपोवने। एवमादौ एवमेव पाङ्क्तं प्राचीनपाठं पश्यामः। अन्यस्तु परशुधारेणेत्याद्यशुद्धं पठित्वा तत्समर्थने प्रयतते॥ ३४॥

एतैरन्यैश्च बहुभिः, [1]देवि! देवसमैः कृतम्।
पितुर्वचनमक्लीबं करिष्यामि पितुर्हितम्॥ ३५॥

अक्लीबं-कातर्यरहितम्॥ ३५॥

न खल्वेतन्मयैकेन क्रियते पितृशासनम्।
एतैरपि कृतं, देवि! ये मया तव कीर्तिताः॥ ३६॥
* नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये।
† पूर्वैरय[2]माभिप्रेतो गतो मार्गोऽनुगम्यते॥ ३७॥

अपूर्वं-पूर्वानाचरितम्, नूतनमित्यर्थः। प्रतिकूलं-पूर्वाचारविरुद्धम्। उक्तार्थस्यैवान्वयमुखेन प्रतिपादनं—पूर्वैरित्यादि॥ ३७॥

तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा।
पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते॥ ३८॥

कार्यं-कर्तव्यत्वेन प्राप्तमेव क्रियते, नान्यथा-अकृत्यं न क्रियत इत्यर्थः। न हीयत इति। मात्रादिकिञ्चिद्दुःखोत्पादनादिति शेषः॥३८॥

---

* ते प्रतिकूलं अपूर्वं धर्मं नाहं प्रवर्तये-ति. † अभिप्रेतः-अङ्गीकृतः। सर्वसम्मत इति वार्थः। तेन चन्द्रकृततारागमनादिव्यावृत्तिः। ननु 'दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषाम्' इति मातृवधादिकं साहसत्वेन निन्दितमिति चेन्न, साहसस्य पितृनियुक्तव्यतिरिक्तविषयत्वात् व्याख्यातृभिस्तदुदाहरणमज्ञानविजृम्भितम्। 'पितुर्दशतगुणं माता गौरवेणातिरिच्यते' इति तु शुश्रूषामात्रे, न तु वचनकरणे। पितुरेव नियन्तृत्वात्-गो.

[1] देवदेव-ङ. [2] मभिप्रेत्य-ङ.

तामेवमुक्त्वा जननीं लक्ष्मणं * पुनरब्रवीत् ।
वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठस्सर्वधनुष्मताम् ॥ ३९ ॥

तव लक्ष्मण! जानामि मयि स्नेहमनुत्तमम् ।
विक्रमं चैव सत्त्वं च तेजश्च सुदुरासदम् ॥ ४० ॥

† मम मातुर्महद्दुःखमतुलं, शुभलक्षण!
‡ अभिप्रायमविज्ञाय सत्यस्य च शमस्य च ॥ ४१ ॥

मम मातुर्महद्दुःखमपि जानाम्येव । अथापि मया तु सत्यस्य शमस्य चाभिप्रायं–रहस्यं ज्ञात्वा युष्मद्दुःखहेतुत्वेऽपि सत्ये प्रवर्ते । युष्माभिस्तु सत्यादे रहस्यमविज्ञाय खिद्यत इति शेषः ॥ ४१ ॥

धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।
धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥ ४२ ॥

धर्मसंश्रितमिति । प्रतिश्रुतसत्यपरिपालनरूपं इत्यर्थः ॥ ४२ ॥

संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा ।
न कर्तव्यं वृथा, वीर! धर्ममाश्रित्य तिष्ठता ॥ ४३ ॥

वृथा न कर्तव्यं–न मोघीकर्तव्यमित्यर्थः ॥ ४३ ॥

सोऽहं न शक्ष्यामि पितुर्नियोगमतिवर्तितुम् ।
§ पितुर्हि वचनाद्वीर! कैकेय्याऽहं प्रचोदितः ॥ ४४ ॥

---

* पुनः–अनन्तरं–ति. गो.  † कौसल्याया व्यसनं त्वदपेक्षया ममैवातिदुःखकरमिति साभिप्रायमाह–ममेति.  ‡ मम मातुर्यन्महद्दुःखं तत् सत्यशमयोरभिप्रायमविज्ञाय । तत्त्वज्ञस्य तवेदृशं वाक्यमनुचितमित्यर्थ.–ति. गो.  § पितृवचनत्वाभावं परिहरति—पितुरिति–गो.

तदेनां विसृजानार्यां *क्षत्रधर्माश्रितां मतिम् ।
धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ४५ ॥

अनार्याम्—अशुभाम् । एनां मतिं—पितरमपि हत्वा राज्यं कुर्यामित्यादिलक्षणाम् ॥ ४५ ॥

तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः ।
उवाच भूयः कौसल्यां प्राञ्जलिः शिरसाऽऽनतः ॥ ४६ ॥
अनुमन्यस्व मां देवि! गमिष्यन्तमितो वनम् ।
शापिताऽसि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥ ४७ ॥

शापिताऽसि मम प्राणैरिति । गमननिरोधं मा कुर्विति शेषः ॥ ४७ ॥

†तीर्णप्रतिज्ञश्च वनात् पुनरेष्याम्यहं पुरीम् ।
‡ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ॥ ४८ ॥

हित्वेति । भूमौ पतितः पुनर्भूमिं हित्वेत्यर्थः ॥ ४८ ॥

शोकः संधार्यतां मातः! हृदये साधु, मा शुचः ।
वनवासादिहैष्यामि §पुनः कृत्वा पितुर्वचः ॥ ४९ ॥
त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया ।
पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥ ५० ॥

---

* क्षत्रधर्माश्रितां—केवलक्रूरधर्माश्रिताम् । रौद्रशाठ्यसहितक्षत्रधर्माश्रितामिति वार्थः । क्षत्रधर्मस्य तथात्वं प्रतिपादितं हि महाभारते राजधर्मे—'क्षत्रधर्मो महारौद्रः शठकृत्य इति स्मृतः' इति । लोकायतवत्केवलनीतिर्नाश्रयणीया । किन्तु धर्ममाश्रिता नीतिरित्यर्थः—गो. †प्रथमप्राप्तं पितृवचनं प्रथमं कृत्वानन्तरप्राप्तं त्वद्वचनमप्यनन्तरमेव करोमीत्याह—तीर्णेत्यादि. ‡स्वर्गाद्भ्रष्टः ययातिः यथा पुनरपि स्वर्गमवाप तथेत्यर्थः । महाभारते उद्योगपर्वणि १२१ अध्याये इयं कथा द्रष्टव्या । यद्यपि ययातेः स्वर्गभ्रंशः देवर्ष्याद्यपचारमूलकः, न तथा रामस्य राज्यभ्रंशः । तथाऽपि यावत्संभवं दृष्टान्तोऽयमिति. § पुनः इहैष्यामीत्यन्वयः ।

अम्ब ! संहृत्य *संभारान् दुःखं हृदि निगृह्य च ।
वनवासकृता बुद्धिर्मम धर्म्याऽनु[1]वर्त्यताम् ॥ ५१ ॥

संभारान्–अभिषेकसंभारान् ॥ ५१ ॥

एतद्वचस्तस्य निशम्य माता
सुधर्म्य†मव्यग्रमविक्लबं च ।
‡मृतेव संज्ञां प्रतिलभ्य देवी
समीक्ष्य रामं पुनरित्युवाच ॥ ५२ ॥

मृतेव–मृतवन्मूर्छितेति यावत् ॥ ५२ ॥

यथैव ते, पुत्र ! पिता, तथाऽहं
गुरुः §स्वधर्मेण सुहृत्तया च ।
न त्वाऽनुजानामि, न मां विहाय
सुदुःखितामर्हसि गन्तुमेवम् ॥ ५३ ॥

सुहृत्तया–तलन्तोऽयम् ॥ ५३ ॥

किं जीवितेनेह विना त्वया मे
लोकेन वा किं ‖सुधयाऽमृतेन ।
श्रेयो मुहूर्तं तव सन्निधानं
ममेह कृत्स्नादपि ¶जीवलोकात् ॥ ५४ ॥

---

* संभारान्–मच्छ्रेयःप्राप्तये त्वयानुष्ठीयमानाम् इत्यर्थः. † अव्यग्रं–अनाकुलम् । अविक्लबं–अविह्वलम्–गो. ‡ मृतेव भूत्वा पुनस्संज्ञां प्रतिलभ्य इत्यन्वयः. § स्वधर्मेण–पालनादिरूपमातृधर्मेण । सुहृत्तया–स्नेहेन–ति. ‖ स्वधयाऽमृतेनेति पाठान्तरम्–गो. स्वधया–पितृलोकप्राप्यया, अमृतेन–देवलोकेप्राप्येन इत्यर्थः. ¶ त्वद्व्यतिरिक्तनिखिलजनसन्निधानेऽपि न मे निर्वृतितिरिति भावः.

[1] गम्यताम्–ङ.

अमृतेन—अमृतत्वसाधनेन । जीवलोकादिति । नित्यसन्निहिता-दपीति शेषः ॥ ५४ ॥

* नरैरिवोल्काभिरपोह्यमानो
महागजोऽध्वा[1]नमनुप्रविष्टः ।
भूयः प्रजज्वाल विलापमेनं
निशम्य रामः करुणं जनन्याः ॥ ५५ ॥

नरैः—गजग्राहिभिः रात्रावुल्काभिरपोह्यमानो महागजः अध्वान-मभिप्रविष्टो भूत्वा भीत्या यथा बृंहितेन प्रज्वलति—प्रवर्धते एवं तस्या विलापशब्दादभ्यधिकं प्रजज्वाल ॥ ५५ ॥

स मातरं चैव विसंज्ञकल्पां
आर्तं च सौमित्रिमभिप्रतप्तम् ।
धर्मे स्थितो धर्म्यमुवाच वाक्यं
यथा स एवार्हति तत्र वक्तुम् ॥ ५६ ॥

रामस्य धर्मनिष्ठावैभवं वाल्मीकिः श्लाघते—यथेत्यादि । तत्र—तथाविधघोरदशायां स यथा धर्मं वक्ति—तथा तादृग्दशायां धर्मं वक्तुं पुनश्च स एव धर्मविग्रहोऽनन्तकल्याणगुणगणो भगवान् ब्रह्म राम एवार्हति ॥ ५६ ॥

---

* पूर्वमेव परितप्तो रामः भूयः सन्तप्तोऽभूदित्यर्थः । प्रजज्वाल—किमिदम् ? यन्मामधर्मे प्रवर्तयितुं विलपतीति क्रोधः—ति. अपोह्यमानः—निवार्यमाणोऽपि अध्वानं—मार्गं अनुप्रविष्टो महाराज इव मात्रादिवाक्येन वार्यमाणोऽपि धर्ममनुप्रविष्टो रामः भूयः प्रजज्वाल—संरब्धोऽभूत, स्वमार्ग एव स्थितोऽभूदित्यर्थः—गो.

[1] न्तमनु—ङ. च.

अहं हि ते *लक्ष्मण! नित्यमेव
जानामि भक्तिं च पराक्रमं च ।
मम त्वभिप्रायमसंनिरीक्ष्य
मात्रा सहाभ्यर्दसि मा सुदुःखम् ॥ ५७ ॥

†ब्रह्मक्षत्रभावत्वादेव भगवतः क्षत्रव्यापारो न रोचते; अत एव क्षत्राश्रितां मतिं [1]त्यजेत्युपदिशति । श्रुतविश्वामित्रकथत्वाच्च । मम त्वभिप्रायमिति । धर्मैकनित्यप्रतिष्ठत्वरूपमित्यर्थः । अभ्यर्दसि—खेदयसि । एवं [2]सुदुःखं मा कुरु ॥ ५७ ॥

धर्मार्थ[3]कामान् किल, तात! ‡लोके
[4]समीक्षितान् धर्मफलोदयेषु ।
ते तत्र सर्वे स्युरसंशयं मे
भार्येव वश्याऽभिमता [5]सुपुत्रा ॥ ५८ ॥

अथ धर्मानुष्ठाने सति सन्देहविषये निर्णयं वक्तुं सन्देहस्थलेऽनुष्ठानप्रकारं तावदाह—धर्मेत्यादि । हे! तात! लोके खलु धर्मफलोदयेषु—विद्यैश्वर्यानन्दादिलक्षणशुभफलप्रादुर्भावादिलक्षणकार्येषु यथा

---

* एवं मातुर्दुःखं लक्ष्मणेनैव प्रवर्धितमिति प्रथमं लक्ष्मणमेवाह. † तदेनां विसृजानार्यां क्षत्रधर्माश्रितामित्युक्तत्वादिति भावः. ‡ लोक इति मोक्षव्यावृत्तिः । धर्मफलोदयेषु—धर्मस्य फलभूतानां सौख्यादीनामुदयेषु—प्राप्तिषु समीक्षिताः—उपायत्वेन निश्चिताः ये धर्मार्थकामाः ते सर्वे, तत्र—धर्मे स्युः (सर्वस्यापि मूलभूतो धर्म एवेत्याशयः)—गो. (कतकव्याख्यारीत्या तु—केवलार्थकामौ त्याज्यौ—किन्तु धर्मार्थकामास्त्रय एव मिलिताः सुखहेतुरित्यर्थः) यद्वा—लोके फलसाधनत्वेन समीक्षिता धर्मादयः ते सर्वे तत्र फलोदयेषु स्युः—समर्थाः स्युः—गो.

[1] त्यजेत्याद्युपदिशति—घ. [2] सुतरां दुःखं—घ. [3] कामाः—ङ. च.
[4] समीक्षिताः—ङ. च. [5] सपुत्रा—ङ. च.

धर्मार्थकामानेव समीक्षितान्—सम्यङ्निश्चितहेतून् वदन्ति । ये चेमे त्रयश्शुभफलहेतव उक्ताः, ते सर्वे यत्र स्युः—यस्मिन् पुरुषेऽविरोधेन संभवन्ति तत्र—तस्मिन् पुरुषे सर्वाणि च स्युः—धर्मादित्रयप्राप्यसर्वशुभफलानि चासंशयं हेतुपौष्कल्यात्प्रादुर्भवेयुरिति मे निश्चयः । अथैकाश्रयतयानेकशुभप्रादुर्भावे दृष्टान्तः-भार्येत्यादि । यथैकैव भार्या पुरुषवशंवदत्वरूपवश्यत्वधर्मेणौपासनदेवपूजादिगृहस्थधर्मसाधनं भवति, अभिमतात्वेन सौख्यसंपादनसाधनं भवति, *सुपुत्रात्वेन पितृलोकसंपादनसाधनं च भवति तद्वदित्यर्थः ॥ ५८ ॥

†यस्मिंस्तु सर्वे स्युरसन्निविष्टाः
धर्मो यतः स्यात्तदुपक्रमेत ।
द्वेष्यो भवत्यर्थपरो हि लोके,
[1]कामार्थता [2]खल्वपि न प्रशस्ता ॥ ५९ ॥

भवत्वेवं ; यत्राविरोधेनोक्तहेतुत्रयप्रवृत्तिः तत्रास्तु यथायोगानुष्ठानं ; यत्र तु विरोधस्तत्र किं कर्तव्यमित्यत्राह—-यस्मिन्नित्यादि । यस्मिन्—पुरुषे सर्वे—धर्मादिशुभहेतवः असन्निविष्टाः-अशक्यानुष्ठानतोऽसन्निहिताः स हि पुरुषः यतः—येन साधनेन धर्मः स्यात् तदेव साधनमादाय धर्म-

---

*सुपुत्रा सती अर्थ-**गो.** †यस्मिन्कर्मण्याश्रीयमाणे सर्वे-अर्थादयः त्रयः असन्निविष्टाः—न प्रविशन्ति न संभवन्तीति यावत् ; तदा यतो धर्मः—धर्म एव स्यात् तदारभेत । अथवा यस्मिन् कर्मणि सर्वे—धर्मार्थकामा असन्निविष्टाः स्युः--अविद्यमाना भवेयुः—तत्कर्म नोपक्रमेत । यतः-यस्मात्कर्मणः-धर्मः स्यात्तदुपक्रमेत—**गो.** एवं वाऽर्थः—ते तत्र सर्वे स्युरिति पूर्वं एकस्यैव कर्मणः फलत्रयसाधनत्वमुक्तम् । यस्मिंस्तु कर्मणि पूर्वोक्तरीत्या धर्मादयः सर्वे न सन्निविष्टा भवन्ति—किन्त्वेकैकफलमात्रं, तदा यस्मात् धर्मः स्यात्तदेवोपक्रमेत इति.

[1] कामात्मता—**ङ. च.** [2] खल्वति—**ङ. च.**

मेवोपक्रमेत, न तु धर्मविरुद्धमर्थं कामं वा। कुत एवमित्यत्राह—द्वेष्य इत्यादि। हि—यस्मात्, अर्थपरो लोके द्वेष्यो भवति, यथा—अस्मास्वेव। इह लोके कामार्थता—कामप्रयोजनता धर्मविरुद्धा न प्रशस्ता—गर्हिता राज्ञ इव ॥ ५९ ॥

गुरुश्च राजा च पिता च वृद्धः
क्रोधात्प्रहर्षाद्यदि वाऽपि [1] कामात्।
यद्व्यादिशेत् * कार्यमवेक्ष्य धर्मं
कस्तं न कुर्यादनृशंसवृत्तिः ॥ ६० ॥

यदेवं—अतः—गुरुश्चेत्यादि। धर्ममवेक्ष्य—सत्यपरिपालनरूपं धर्ममवेक्ष्य यत् कार्यमादिशेत् ॥ ६० ॥

स वै न शक्नोमि पितुः प्रतिज्ञा-
मिमामकर्तुं सकलां यथावत्।
स ह्यावयोस्तात! † गुरुर्नियोगे
‡ देव्याश्च भर्ता [2] स गतिः स धर्मः ॥ ६१ ॥

यथावत्कृतामिमां प्रतिज्ञां सकलां—संपूर्णां कर्तुम्। नियोग इति। प्रभुरिति शेषः। अत एव स गतिः। तद्वचनक्रियैव धर्मः ॥ ६१ ॥

---

* यत् व्यादिशेत् तत् धर्ममवेक्ष्य—पितृवचनकरणं धर्मं इति ज्ञात्वा—ति.
† नियोगे गुरुः—प्रभुः—गो. ‡ देव्याश्च भर्तेत्यनेन—मातृवचनापेक्षया पितृवचनमेवावश्यं कर्तव्यम्—स हि पिता मातुरपि पूज्यः इत्यर्थः सूच्यते। उत्तरश्लोकोपक्षेपश्च.

[1] मोहाद्—ङ. [2] स गतिश्च—ङ.

*तस्मिन् पुनर्जीवति धर्मराजे
विशेषतः स्वे पथि वर्तमाने ।
देवी मया सार्धमितोऽभिगच्छेत्
कथंस्विदन्या †विधवेव नारी ॥ ६२ ॥

विशेषतः स्वे पथि—इष्टं पुत्रं परित्यज्यापि सत्यं रक्षणीयमित्येवंलक्षणे सत्यमार्गे इत्यर्थः । अन्येत्यस्यैव विवरणम्—विधवेति ॥

सा माऽनुमन्यस्व वनं व्रजन्तं
कुरुष्व ‡नः स्वस्त्ययनानि, देवि !
यथा समाप्ते पुनराव्रजेयं
यथा हि सत्येन पुनर्ययातिः ॥ ६३ ॥

मा—मामिति यावत् ॥ ६३ ॥

यशो ह्यहं केवलराज्यकारणात्
न पृष्ठतः कर्तुमलं महोदयम् ।
§अदीर्घकाले न तु, देवि ! जीविते
वृणेऽवरामद्य महीमधर्मतः ॥ ६४ ॥

---

* कौसल्यायाः स्वानुगमनं वारयति—तस्मिन्नित्यादि. † 'भर्ता रक्षति यौवने । रक्षन्ति स्थाविरे पुत्राः' इति भर्तृहीनानामेव पुत्रेण वर्तनं युक्तमित्याशयः. ‡ इतः पूर्वं वनगमनं प्रति सीताभिप्रायस्यापरिज्ञातत्वात्, 'दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति । प्रविष्टं तत्र मां देवि त्वं पूर्वमवधारय ॥' इत्युक्त्या लक्ष्मणाभिप्रायस्य ज्ञातत्वाच्च 'नः' इत्येतदावयोरित्यस्मिन्नर्थे वर्तते । . . . एवं च सति 'अनुज्ञातश्च भवता पूर्वमेव यदस्म्यहं' इति वक्ष्यमाणलक्ष्मणवचनं चोपपद्यते—गो. § निमित्तसप्तमीयं—तटिद्वच्चञ्चलजीवितनिमित्तम्—गो.

यशो ह्यहमाति । प्राप्तमपि राज्यं त्यक्त्वा पितृवाक्यपरिपालनं कृतवानित्येवं रूपम् । देवि! मानुषे जीविते अदीर्घकाले–अल्पकालतया निश्चिते सति कथं जीवनार्थं अवरां–अवरप्रयोजनभूतां महीं अधर्मतः–परमपुरुषार्थत्यागेन वृणे ॥ ६४ ॥

प्रसादयन्नरवृषभः स्वमातरं
पराक्रमाज्जिगमिषुरेव दण्डकान् ।
अथानुजं भृशमनुशास्य दर्शनं
चकार तां *हृदि जननीं प्रदक्षिणम् ॥ ६५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकविंशः सर्गः

---

दर्शनं–धर्मरहस्यज्ञानम् । तां जननीं प्रदक्षिणं कृत्वा हृदि गन्तुं मनश्चकार इत्यर्थः । गति (६३) (?) मानः सर्गः ॥ ६५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकविंशः सर्गः

---

## द्वाविंशस्सर्गः

### [लक्ष्मणप्रतिबोधनम्]

अथ तं व्यथया दीनं †सविशेषममर्षितम् ।
[1]सरोषमिव नागेन्द्रं रोषविस्फारितेक्षणम् ॥ १ ॥

---

* हृदि प्रदक्षिणं चकार–प्रदक्षिणं कर्तुं सङ्कल्पितवानित्यर्थः–गो. † सविशेषं–सातिशयं यथातथा अमर्षितं–इति वार्थः । श्लोकद्वयमेकं वाक्यम्.

[1] श्वसन्तमिव ङ.

आसाद्य रामस्सौमित्रिं सुहृदं भ्रातरं प्रियम् ।
उवाचेदं स धैर्येण धारयन् * सत्त्वमात्मवान् ॥ २ ॥

अथ भगवान् रामः सौमित्रेः कैकेयीविषयकरोषमुपशमयति—अथेत्यादि । सविशेष–रामेष्टजनान्तरापेक्षयेति शेषः । अमर्षितं–प्राप्तासहनम् । विष्फारितं–विस्तारितम् । सत्त्वं–सर्वविषयकं स्वबलं । धैर्येण धारयन्–प्रकटयन् ॥ २ ॥

निगृह्य रोषं शोकं च [1]धैर्यमाश्रित्य केवलम् ।
अवमानं निरस्येमं गृहीत्वा हर्षमुत्तमम् ॥ ३ ॥
सौमित्रे! योऽभिषेकार्थे मम संभारसंभ्रमः ।
† अभिषेकनिवृत्त्यर्थे सोऽस्तु संभारसंभ्रमः ॥ ४ ॥

किमुवाचेत्यत्राह—निगृह्येत्यादि । रोषं–पित्रादिवधहेतुभूतम् । अवमानं–वनप्रवासरूपावमानम् । निरस्येति । शत्रुभिर्निजदौर्बल्यकृतत्वाभावादित्याशयः । उत्तमं हर्षं गृहीत्वेति । सत्यपरिपालनेन पितुः पुण्यलोकसिद्धिजं हर्षमित्यर्थः । तं गृहीत्वा तत्सिद्ध्यर्थमेव हे सौमित्रे ! ममाभिषेकार्थं–तत्प्रयोजनमुद्दिश्य यः संभारसंभ्रमो वर्तते सः संभारसंभ्रमः–त्वरा अभिषेकनिवृत्त्यर्थेऽस्तु । सा त्वरा वनवासपरिकरसंपादनाय तवास्तु ॥ ४ ॥

---

* सत्त्वं–अन्तःकरणं धैर्येण धारयन्, अविकृतं यथातथा धारयन्निति वार्थः । अन्तःकरणं निगृह्येति यावत् । तत्रोपपादकं— आत्मवानिति । आत्मवान्–महामनाः । 'आत्मवान् को जितक्रोधः' (बाल. १-४) इति वाल्मीकिप्रश्नस्य 'तैर्युक्तः श्रूयतां नरः' इति खलु प्रत्युत्तरितं नारदेन । तदत्र स्पष्टीकृतम्. † ४-५ श्लोकयोः पौर्वापर्यव्यतिक्रमः–गो. ति. युक्तं च तत् । यतो 'निगृह्य' इत्यादिश्लोकः क्रियासाकाङ्क्षः । तस्य च 'हर्षं गृहीत्वा उत्तरत्र कार्यं कुरु' इत्यन्वयः स्वरसः.

[1] धर्ममा–ङ.

उपक्लृप्तं हि यत्किञ्चिदभिषेकार्थमद्य मे।
सर्वं विसर्जय क्षिप्रं कुरु कार्यं निरत्ययम् ॥ ५ ॥

यदेवं–अतः उपक्लृप्तमित्यादि। निरत्ययं–निरपायम्। सत्यपरिपालनोपयुक्तं कार्यं वल्कलाद्यानयनरूपं कुर्वित्यर्थः ॥ ५ ॥

*यस्या मदभिषेकार्थे मानसं परितप्यते।
माता मे सा यथा न स्यात् सविशङ्का तथा कुरु ॥ ६ ॥

अपि च यस्याः मदभिषेकार्थे—अर्थशब्दो निवृत्तिवचन इह, "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु", यस्या मदभिषेकनिवृत्तिनिमित्तं मानसं परितप्यते, सा मे माता यथा चेत्सशङ्का न स्यात्तथा कुरु। 'पितृवाक्यपरिपालनं रामकर्तव्यम्। अल्पकालसाध्यत्वाच्च तस्य तद्विषये त्वया न विषक्तव्यम्। अनुमन्यस्व †' इत्येवमादिवचनेनेति शेषः ॥ ६ ॥

तस्याः शङ्कामयं दुःखं मुहूर्तमपि नोत्सहे।
मनसि प्रतिसंजातं सौमित्रेऽहमुपेक्षितुम् ॥ ७ ॥

कुत एवमित्यत्राह—तस्या इत्यादि। तस्या मनसि प्रतिसंजातं शङ्कामयं दुःखं मुहूर्तमप्युपेक्षितुं नोत्सहे ॥ ७ ॥

---

* मदभिषेकार्थे–मदभिषेकविषये माता–कैकेयी–सविशंका—'लक्ष्मणेन संमन्त्र्य राज्यं रामः पुनः किं ग्रहीष्यती'ति शङ्कावती यथा न स्यात् तथा कुरु–तवोच्चावचभाषणेन हि सा तथा मन्येतापि। अहं तु सर्वथा तन्न सहे इति भावः। अनन्तरश्लोकानां स्वारस्यपर्यालोचनायामयमर्थः स्वरसः. † अहमेव वा रामस्य सहायतया वनं गत्वा रामं सुरक्षामीति च वदेति च भावः स्यात्.

न बुद्धिपूर्वं नाबुद्धं [1] समारब्धं कदाचन।
मातॄणां वा पितुर्वाऽहं [2] कृतकल्पं च विप्रियम् ॥ ८ ॥

कथमसहनमित्यत्रेतः प्रागेवं निर्णीतव्यवहारत्वादेवेत्याह—न बुद्धीत्यादि। मातॄणां, पितुर्वा बुद्धिपूर्वं विप्रियं–विप्रियकरं कर्म कदाचन–कदापि न समारब्धं–नारब्धवानस्मि। तथा अबुद्धं–अबुद्धिपूर्वकमपि तन्न समारब्धम्। अपि च तत् कृतकल्पमपीति न। एवं पाङ्क्ते पाठेऽर्थे च स्थिते 'स्मरामीह' इति [3] 'कृतमल्पं च विप्रियम्' इति च पाठं योजनाशक्त्याऽ*चीक्लृपत् परः ॥ ८ ॥

†सत्यः सत्याभिसन्धश्च नित्यं सत्यपराक्रमः।
परलोकभयाद्भीतो निर्भयोऽस्तु पिता मम ॥ ९ ॥

सत्यः–सत्यवचनस्वभाववान्। निर्भयोऽस्त्विति। मया तत्कृतसत्यपरिपालनादेव ॥ ९ ॥

‡तस्यापि हि भवेदस्मिन् कर्मण्यप्रतिसंहृते।
सत्यं नेति मनस्तापः, तस्य तापस्तपेच्च माम् ॥ १० ॥

विपक्षे बाधकमाह—तस्यापीत्यादि। हि–यस्मात्। अस्मिन्नभिषेककर्मण्यप्रतिसंहृते तस्य–पितुः सत्यं न संवृत्तमभूत् इति कृत्वा

---

* महेश्वरतीर्थः † सत्यः–सत्यवचनः, सत्याभिसन्धः–सत्यप्रतिज्ञः, सत्यपराक्रमः–अमोघपराक्रमः–गो. यथाक्रमं विशेषणत्रयेन वाचि मनसि कर्मणि च सत्यत्वं प्रतिपादितं भवतीत्याशयः. ‡ 'यस्या मदभिषेकार्थे मानसं परितप्यते' इति पूर्वमुक्तत्वात् तस्यापीत्युक्तम्। एवञ्च अभिषेचनसंभारेऽप्रतिसंहृते कैकेय्या दुःखं पूर्वमुक्तम्। न कैकेय्याः केवलं शोकः, तस्यापि राज्ञः शोकः स्यादिति भावः। शिष्टं ६ श्लोकटिप्पण्यां द्रष्टव्यम्.

[1] 'स्मरामीह'–ङ. [2] 'कृतमल्पं'–ङ. [3] कृतकल्पं–क.

मनस्तापो भवेत् । तस्य च मनस्तापो मामपि तपेत्—तापयेत्—पितृहितमकुर्वतो मम जन्म किमिति ॥ १० ॥

अभिषेकविधानं तु तस्मात्संहृत्य, लक्ष्मण !
*अन्वगेवाहमिच्छामि वनं गन्तुमितः [1]पुरः ॥ ११ ॥

यदेवमतः—अभिषेकेत्यादि । अन्वगेव—अभिषेकनिर्वर्तनानन्तरमेव । इतः पुरः—पूर्शब्दात्पञ्चमी ॥ ११ ॥

मम प्रव्राजनादद्य कृतकृत्या नृपात्मजा ।
सुतं भरतमव्यग्र[2]मभिषेचयतां ततः ॥ १२ ॥

अव्यग्रं—स्वस्थबुद्धितया अभिषेचयतां—अभिषेकं कारयताम् ॥ १२ ॥

मयि चीराजिनधरे जटामण्डलधारिणि ।
गतेऽरण्यं च कैकेय्या भविष्यति मनस्सुखम् ॥ १३ ॥

गतेऽरण्यमिति । गत एवेति यावत् ॥ १३ ॥

---

* अन्वक्—अनुपदं 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबम्' इत्यमरः—गो. भरतागमनं नाहं प्रतीक्षे । अपि त्वस्मिन्नेव क्षणे वनं गच्छाम्यहम् । अनन्तरं भरतोऽभिषिच्यतामित्यर्थः । भरतागमने हि सर्वं व्यत्यस्तं भवेत् । अपि च वरद्वये प्रथमवरनिर्वर्तनानन्तरमेव हि द्वितीयवरनिर्वर्तनं युक्तमिति भावः । अत एव 'अभिषेचयतां ततः' इत्युक्तमिति.

[1] पुनः—ङ. [2] मभिषेचयिता ततः—ङ.

*बुद्धिः [1] प्रणीता येनेयं मनश्च सुसमाहितम् ।
तं तु नार्हामि संक्लेष्टुं प्रव्राजिष्यामि मा चिरम् ॥ १४ ॥

तथा पितरमपि क्लेशयितुं नार्हामीत्याह—बुद्धिरित्यादि । येनेयं बुद्धिः—वनप्रव्रजनबुद्धिः उत्पादिता, यत्र मनश्च मामकं सुसमाहितं—सत्यपरिपालनशेषतया पूर्वप्रवृत्तत्वेन सुतरामव्याकुलतया उक्तकृतौ स्थापितश्च, तं तु संक्लेष्टुं नार्हामि । यदेवमतः—प्रव्रजिष्याम्येव । मा चिरं—विलम्बो मा स्त्वित्यर्थः ॥ १४ ॥

†कृतान्तस्त्वेव, सौमित्रे ! द्रष्टव्यो मत्प्रवासने ।
राज्यस्य च वितीर्णस्य पुनरेव निवर्तने ॥ १५ ॥

एवं प्रवासं निश्चित्य तत्र कैकेयीनिमित्तत्वशङ्कया तस्यां क्रोधनिवृत्तय आह—कृतान्त इत्यादि । प्राचीनं दुरदृष्टमेव ‡प्राप्ताप्राप्तराज्यवनाप्राप्तिप्राप्तिकारणं, नान्यदित्यर्थः । "कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु" ॥ १५ ॥

---

*येन मया इयं बुद्धिः—वनवासबुद्धिः प्रणीता—शिक्षिता मनश्च सुसमाहितं—स्थिरीकृतं तं मां संक्लेष्टुं क्लेशयितुं नार्हामि—**गो.** येन—ईश्वरेणेयं बुद्धिः कैकेय्याः प्रणीता—मन्थराद्वारा दत्ता, मनश्च तद्बुद्धिविषये सुसमाहितं—स्थिरीकृतं तं संक्लेष्टुं—मत्कृतमन्यथाजातमिति क्लेशयितुं नार्हामि । तस्य मदधिकारित्वान्मद्रूपत्वाद्वेति गूढ आशयः । (मत्संकल्पकृत एवायं इत्याशयः)—**ति.** येन—मन्थरादिजनेनेयं बुद्धिरुत्पादिता तमपि क्लेशयितुं नार्हामि-किं पुनः पितराविति भावः—**ती.** †कृतान्तः—दैवम् इन्द्रादीनां दुःखनिवर्तकादृष्टमिति यावत्—**ति. गो.** कृतः अन्तो येनेति व्युत्पत्त्या कृतान्तशब्देन काल उच्यते—**रामानुज**-अन्यथा उत्तरत्र 'दैवोऽयं कृतान्तविहितः' इत्यत्र क्लेशः स्यादिति भावः. ‡प्राप्तराज्याप्राप्ति, अप्राप्तवनप्राप्तिकारणमिति यथासंख्यमन्वयः.

[1] प्रणिहिता येन—ङ.

*कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम †पीडने ।
यदि भावो न दैवोऽयं कृतान्तविहितो भवेत् ॥ १६ ॥

कृतान्तस्त्वेवेत्यवधार्यांशमाह—कैकेय्या इत्यादि ॥ १६ ॥

जानासि हि यथा, सौम्य ! न मातृषु ममान्तरम् ।
‡भूतपूर्वो विशेषो वा तस्या मयि सुतेऽपि वा ॥ १७ ॥

हे सौम्य ! मम तु मातृषु अन्तरं न–प्रतिपत्तिभेदो न । तथा तस्याः कैकेय्या अपि तत एव सुते भरते मय्यपि वा विशेषो न भूतपूर्वः—नानुभूत इतीममर्थं च जानासि किल । अतो दैवकृतो भावभेद इति निश्चिन्विति शेषः ॥ १७ ॥

सोऽभिषेकनिवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः ।
§उग्रैर्वाक्यैरहं तस्या नान्यद्दैवात् समर्थये ॥ १८ ॥

अयमेव निश्चय इत्याह—स इत्यादि । सोऽहमभिषेकनिवृत्तिप्रयोजनैः प्रवासप्रयोजनैश्च दुर्वचैरुग्रैर्वाक्यैः तस्या एवं प्रवर्तने दैवादन्यन्न किञ्चिदपि कारणमस्ति इत्यहं समर्थये ॥ १८ ॥

कथं प्रकृतिसंपन्ना राजपुत्री तथागुणा ।
ब्रूयात् सा प्राकृतेव स्त्री ‖[1] मत्पीड्यं भर्तृसन्निधौ ॥१९॥

---

*हि–यस्मात् कैकेय्या मयि भरतादप्यधिका प्रतिपत्तिः–इष्टत्वाभ्युपगमः प्रसिद्धः तमुपचितव्यवहारानुभवादेव तादृश्यास्तस्या मयीदृशो भावः–अभिप्रायः कथं स्यात् । अथ देवो भरताभिषेकप्रापकः सद्दैवविहितः मद्वनवासप्रापककृतान्तविहितः–दुरदृष्टविहितो यदि न भवेत् । दैवकरणकमेव कैकेय्या भाववैपरीत्यं इत्यत्र सहजभावं स्मारयति—जानासीत्यादि. †पीडन इति परदृष्ट्या. ‡भूतपूर्वमिति पाठान्तरम्–गो. ति. तदा अन्तरमित्यनेनान्वयः । उत्तरात्रापि लिङ्गविपरिणामेनान्वयः. §वाक्यैरिति हेतौ तृतीया । दैवादन्यत् बुद्धिभेदकारणं न समर्थये–गो. ‖अहं पीड्यः यस्य वाक्यस्य तत् मत्पीड्यम्.

[1] मत्पीडां–ङ.

सर्वथैव दैवमेव तस्या भावभेदहेतुरित्याह—कथमित्यादि। प्रकृति-संपन्ना—परमसत्त्वप्रकृतिसंपन्ना राजपुत्री—महाकुलप्रसूता तथागुणा—एतत्क्षणात्प्रागनुभूततादृक्परमकल्याणगुणा भर्तृसन्निधौ च कथं कुर्यादिति। यदि न दैवहतेति शेषः ॥ १९ ॥

यदाचिन्त्यं तु तद्दैवं *[1] भूतेषु न विहन्यते।
व्यक्तं मयि च तस्यां च पतितो हि † विपर्ययः ॥ २० ॥

इह विषये न केवलं तस्या एव दैववशगत्वम्; ममापीत्याह—यदित्यादि। यद्दैवं प्रारब्धादृष्टरूपमस्ति तदचिन्त्यं—अचिन्त्यफलदान-समर्थम्, तत् भूतेषु—संसारिषु न क्वापि विहन्यते—अशक्यविहनन-स्वफलदानं भवति। अतो ‡ व्यक्तं-स्पष्टं मयि तस्यां च हि दैव-वशाद्विपर्ययः—यथाप्राप्तवैपरीत्यं—कनिष्ठराज्यज्येष्ठवनवासादिरूपं प्राप्तं, नान्यत इत्यर्थः ॥ २० ॥

कश्च दैवेन, सौमित्र! योद्धुमुत्सहते पुमान्।
§ न यस्य ग्रहणं किञ्चित् कर्मणोऽ[2]न्यत्र दृश्यते ॥ २१ ॥

ननु कथं दैवस्य प्राबल्यम्? किञ्च तत्सत्वे मानमित्यत्राह—कश्चेत्यादि। यदि प्राचीनं दुरदृष्टं सुज्ञानं तदा तेनापि योद्धुं शक्यम्;

---

* भूतेषु—भूताधिष्ठातृषु ब्रह्मादिष्वपि—ति. † मयि हस्तगतराज्यभ्रंशरूपः, तस्यां पूर्वावस्थितवात्सल्यापगमरूपः विपर्ययः पतितः—प्राप्तः—गो. ‡ व्यक्तमिति क्रिया-विशेषणमिति भावः। गोविन्दराजीये तु—व्यक्तं—अत्र संशयो नास्ति इत्युक्तम्. § यस्य नु ग्रहणं किञ्चित्कर्मणोऽन्यत्र दृश्यते—ति. पाठः। क्रियत इति कर्म कार्यम्। फलरूपकार्यतोऽन्यत्र यस्य ग्रहणं—ज्ञानसाधनं न दृश्यते—गो. यद्वा—अन्यत्रेति पञ्चम्यर्थे तसिल्। फलव्यतिरिक्तात्साधनात् तद्ग्रहणं न संभवतीत्यर्थः.

[1] भूतेष्वपि न हन्यते—ङ. [2] न्यत्र—ङ. च.

तन्निरासोऽपि सुकरः, तन्नास्तीत्याह—न यस्येत्यादि। यस्य—अदृष्टस्य ग्रहणं—ज्ञानमेव न समस्ति, तेन दैवेन कः पुमान् योद्धुमुत्सहते। तर्हि निष्प्रमाणत्वाद्दैवमेव नास्तीति वा किं न स्यादित्यत्राह—कर्मणोऽन्यत्रेति। अचिन्त्यहेतुसुखदुःखफलरूपकार्यवशादेव तदस्तित्वं त्वनुमेयम्। अतो न निष्प्रमाणतेत्यर्थः ॥ २१ ॥

*सुखदुःखे भयक्रोधौ लाभालाभौ †भवाभवौ।
[1]यच्च किञ्चित्तथाभूतं ननु दैवस्य कर्म तत् ॥ २२ ॥

अतो दैवमेव प्रबलं, पौरुषं तु काकतालीयमेवेत्याशयेनाह—सुखेत्यादि। भवाभवौ—बन्धमोक्षौ। यच्च किञ्चित्तथाभूतं—अचिन्त्यकारणकं कार्यमस्ति तत्सर्वं दैवस्य ननु कर्म—कार्यम् ॥ २२ ॥

ऋषयोऽप्युग्रतपसो दैवेनाभिप्रपीडिताः।
उत्सृज्य नियमांस्तीव्रान् [2]भ्रश्यन्ते ‡काममन्युभिः ॥२३॥

दैवप्राबल्यमेव द्रढयति—ऋषय इत्यादि। विश्वामित्रादय इति यावत्। मन्युः—क्रोधः। अभिभूयन्त इति शेषः ॥ २३ ॥

असंकल्पितमेवेह यदकस्मात्प्रवर्तते।
§निवर्त्या[3]रंभमारब्धं ननु दैवस्य कर्म तत् ॥ २४ ॥

---

* ननु कर्मणोऽन्यत्रेत्युक्तं, किं तत्कर्म ? तत्राह—सुखदुःख इति—गो. † भवाभवौ—उत्पत्तिविनाशौ—गो. मङ्गलामङ्गले—सत्य. ‡ काममन्युभिः भ्रश्यन्ते। कामस्य मन्योश्चानेकत्वात् बहुवचनम्. § निवर्त्यारब्धमारम्भैः—इति ति. पाठः। आरम्भैः यत्नैः आरब्धं—उपक्रान्तं कार्यं निवर्त्य यदसंकल्पितमेव—अचिन्तितमेव अकस्मात्—दृष्टहेतुं विना प्रवर्तते, तत् दैवस्य कर्म ननु—ति.

[1] यस्य—ङ. [2] गृह्यन्ते—ङ. [3] रब्धमारम्भैः—ङ. च.

इदानीं प्रारब्धस्य लक्षणमप्याह—असंकल्पितमित्यादि। अचिन्तितसुखदुःखप्रापकं प्रारब्धमित्यर्थः। लक्षणान्तरं—निवर्त्येत्यादि। येन पुरुषानभिमतारंभमारब्धं तदेव दैवस्य—प्रारब्धस्य कर्म—कृत्यम्। पुमिच्छाविघातकत्वे सति तदनिष्टावहत्वं प्रारब्धत्वमित्यर्थः ॥ २४ ॥

*एतया तत्त्वया बुद्ध्या संस्तभ्यात्मानमात्मना।
व्याहतेऽप्यभिषेके मे परितापो न विद्यते ॥ २५ ॥

उपदिष्टं बुद्धियोगं सफलमुपसंहरति—एतयेत्यादि। बुद्ध्या—बुद्धियोगेन आत्मानं—अन्तःकरणं आत्मना—आत्मीयबुद्धियोगबलात् ॥

तस्मादपरि[1]तप्यस्व त्वमप्यनुविधाय माम्।
[2]प्रतिसंहर च क्षिप्रमाभिषेचनिकीं क्रियाम् ॥ २६ ॥

अपरितप्यस्व—परितापं मा कुरु। † मयूरव्यंसकादित्वात्समासः। त्वमपि मामनुविधाय—अनुकुर्वन् आभिषेचनिकीं—तत्प्रयोजनिकां क्रियां—अलङ्कारादिकर्म क्षिप्रं प्रतिसंहर ॥ २६ ॥

एभिरेव घटैः सर्वैः अभिषेचनसंभृतैः।
मम, लक्ष्मण ! तापस्ये व्रतस्नानं भविष्यति ॥ २७ ॥

तापस्ये—तापसव्रतसंकल्पे यत् व्रतसंकल्पापेक्षितं स्नानं—व्रतस्नानमस्ति तदेभिर्भविष्यतीति योजना ॥ २७ ॥

---

* संस्तभ्य, यदि तिष्ठसीति शेषः—ति. तत्त्वया एतया बुद्ध्या आत्मनाऽऽत्मानं संस्तभ्य स्थितस्य मे अभिषेके व्याहतेऽपि परितापो न विद्यत इति वाऽन्वयः। एवं सत्येवानन्तरश्लोकानुरूप्यम्. † नञः पूर्वनिपात इत्यर्थः.

[1] तापस्सन्—ङ. च. [2] प्रतिसंहारय—ङ. च.

अथवा किं ममैतेन [1]राज्यद्रव्यमतेन तु ।
उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति ॥ २८ ॥

राज्येति । राज्याभिषेकसाधनद्रव्यत्वेन मतं—अभिक्लृप्तं तथा । स्वयं—स्वहस्तेनेति यावत् । व्रतादेशं करिष्यतीति । व्रतसंकल्पसाधकं भविष्यतीत्यर्थः ॥ २८ ॥

मा च, लक्ष्मण ! सन्तापं कार्षीर्लक्ष्म्या विपर्यये ।
राज्यं वा वनवासो वा *वनवासो महोदयः ॥ २९ ॥

राज्यं वनवासो वा ममास्तु, 'नाहमर्थपरः' इत्यादि— 'ऋषिभिस्तुल्यं केवलं धर्ममास्थितं' इत्युक्तत्वात् । राज्यं वा यथावत्पालनेन धर्मसाधनमस्तु ; वनवासो वाऽस्तु तपस्साधनम् । तयोरस्यास्ति विशेष इत्याह—वनवासो महोदय इति । प्रजाकृत्यचिन्ताविक्षेपराहित्येन सततपःप्रवृत्तिसाधनत्वात् , विशिष्य पितृवाक्यपरिपालनविशेषप्रयोजनवत्त्वाच्च महोदयः—महाभ्युदयसाधनम् ॥ २९ ॥

न लक्ष्मणास्मिन् खलु कर्मविघ्ने
माता यवीयस्यतिशङ्कनीया ।
दैवाभिपन्ना हि वदत्यनिष्टं
जानासि दैवं च तथाप्रभावम् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्वाविंशस्सर्गः

———

* महोदयः-महाफलः, राज्यव्यापारक्लेशाभावात् , अपूर्वदर्शनसौख्याच्चेति भावः—गो. पितृवाक्यपरिपालनप्रयोजनवत्वात् महाभ्युदयसाधनम्—ती. स्वावतारोद्देशः तदानीमेव सिध्येदित्याशयः । महान् उदयः—उन्नतिः यस्मात् महोन्नतिसाधनम् इत्यर्थः ।

[1] राजद्रव्य—ङ.

उपदेशपरमप्रयोजनं निगमयति—न लक्ष्मणेति। यवीयसी माता नातिशङ्कनीयेति कुत इत्यत्राह—दैवाभिपन्नेति। प्रारब्धग्रस्तेति यावत्। अनिष्टं वदन्ती दृश्यते। त्वं च दैवं तथाप्रभावं—अस्मदुपदेशेन जानासि किल। अतो नातिशङ्कनीयेति। अंग (३०) मानः सर्गः॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्वाविंशः सर्गः

———

## त्रयोविंशः सर्गः

### [लक्ष्मणाक्रोशः]

इति ब्रुवति रामे तु *[1] लक्ष्मणोऽधश्शिरा इव।
[2] ध्यात्वा मध्यं [3] जगामाशु सहसा † [4] दुःखहर्षयोः॥ १॥

एवं शुद्धसत्त्वभावतो भगवता दैवावलम्बनेन परमार्थदृशा समाहितो लक्ष्मणो रजोन्मिश्रसत्त्वप्रधानतः दैवात्पौरुषं प्रबलमिति मन्यमानः पौरुषमवलम्ब्य दैवं प्रतिक्षेपणीयमिति ब्रूते। कृष्णावतारे बलदेववत्—रामावतारे लक्ष्मणश्शब्दब्रह्मशेषावतारः। अत उक्तप्रकृतित्वं लक्ष्मणस्य। तत्र मायाशक्तिप्रधानावतारं शुद्धं ब्रह्म भगवान् कुलगुरुः कृष्णः, सुस्थिरपेशीशक्तिप्रधानावतारं ब्रह्म सुशुद्धतरं ब्रह्म भगवान्राम इति विशेषः। इतीत्यादि। अधश्शिरा इति। उक्तार्थाङ्गीकारमूलमध-

---

* 'स्वानभ्युपगमसूचनायाधश्शिरास्सन् .... इवशब्देनास्थिरत्वमुच्यते। उत्तरत्र माध्यस्थ्यत्यागस्य वक्ष्यमाणत्वात्'—गो. † रामस्य धर्मे स्थैर्यं दृष्ट्वा हर्षः, राज्यभ्रंशाद्दुःखमित्येषा मध्यगतिः। अधश्शिरस्त्वेनोक्तार्थस्यार्धाङ्गीकारध्वननम्—ति.

[1] लक्ष्मणोऽवाक्शिरा—ङ. [2] श्रुत्वा—ङ. [3] जगामेव मनसा—ङ. [4] दैन्यहर्षयोः.

शिरस्त्वम् । [1] दुःखहर्षयोः—दुःखसुखयोः मनसा मध्यं जगामेव । अति-लौकिकपौरुषनिधिनापि रामेण दैवप्राबल्यपरमसिद्धान्तावष्टंभेनोपदिष्ट-बुद्धियोगो यदा मनसा स्मृतो भवति तदा सुखं प्राप्नोति, यदा तु प्रकृतिवशतो विस्मृत्य पौरुषप्राबल्यं स्मरति तदा श्रीनिवृत्त्यादिकमसहमानः क्रोधात्मकं दुःखं प्राप्नोति । इवशब्दान्माध्यस्थ्यं अपरमार्थं, स्वप्रकृत्यनु-कूलव्यापार एव प्रबल इति प्रदर्श्यते । तथा हि गीयते—'सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि' इति ॥ १ ॥

[2] तथा तु बध्वा भ्रुकुटीं भ्रुवोर्मध्ये नरर्षभः ।
निशश्वास महासर्पो * बिलस्थ इव रोषितः ॥ २ ॥

अथ प्रकृतिप्राबल्यात्प्रकृतिप्रयुक्तव्यापारमेव प्राप्तवानिति प्रदर्श्यते—तथा त्वित्यादि । तथा भयङ्करामित्यर्थः । बिलशब्देन पातुर्बिलमेव द्रष्टव्यम् । अन्यबिलस्थस्य परमसुखित्वेन निग्रहाभावेन रोषाद्यप्रसंगात् ॥ २ ॥

तस्य दुष्प्रतिवीक्षं तद्भ्रुकुटीसहितं तदा ।
बभौ क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखम् ॥ ३ ॥

प्रतिमुखतया वीक्षितुमशक्यं—दुष्प्रतिवीक्षम् । मुखस्य सदृश-मिति । मुखस्य दुर्दर्शत्वेन सदृशमिति यावत् ॥ ३ ॥

† अग्रहस्तं विधून्वंस्तु ‡ हस्ती हस्तमिवात्मनः ।

---

* बिलमत्र परबिलं—ति. बिलस्थः—पेटिकाबिलस्थः; न तु वल्मीकस्थः, तदानीं रोषासंभवात्—गो. यद्वा स्वबिलस्थ एव रोषितः—विप्रकृतः. † अग्रहस्तं—दक्षिण-करं—शि. ‡ 'हस्तिहस्तं'—गो. हस्तिहस्तसदृशमित्यर्थः । अभीष्टासिद्धिमूल-कात्यधिककोपे सति हस्तविधूननं मनुष्याणां स्वभावः । प्रकृतव्याख्याकारस्तु लक्ष्मण-सान्त्वनाय रामेण गृहीतमग्रहस्तं लक्ष्मणो विधून्वन्—विमोचयन् इत्यभिमन्यते । तिलकेऽप्येवं व्याख्यातम् ।

[1] दैन्यहर्षयोः—घ. [2] तदा तु कृत्वा—ङ.

**तिर्यगूर्ध्वं शरीरे च पातयित्वा शिरोधराम् ॥ ४ ॥**
**अग्राक्ष्णा वीक्षमाणस्तु तिर्यग्भ्रातरमब्रवीत् ।**

अग्रं हस्तस्याग्रहस्तं, एकदेशसमासः पूर्वपरादिव्यतिरिक्त-स्थलेऽपि क्वचिद्भवति—सायमह्नस्सायाह्न—सायाहनीतिवत् । आत्मनोऽग्रहस्तं विधून्वन्नित्यनेन रामेण क्षमापणाय लक्ष्मणहस्तो गृहीत इति शेष इत्यपि वक्तुं शक्यं, तथा प्रस्तावात् । तिर्यगित्यादिनाप्यतिक्रोधमूर्छन-प्रदर्शनम् । अग्राक्ष्णा—कटाक्षेण तिर्यग्वीक्षमाणः ॥ ४ ॥

**अस्थाने संभ्रमो यस्य जातो वै सुमहानयम् ॥ ५ ॥**
***धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया ।**

अस्थान इत्यादि । धर्मदोषः—धर्मविरोधः, तत्प्रसङ्गेन—तत्परि-हारशेषतया वनवासः कार्यः । लोकस्य प्राप्तातिशङ्कापरिहारहेतवे च । रामोऽपि पितृवचो नाकार्षीत्, कः खलु लोकेऽन्यः पितृवचः प्रमाणी-करिष्यतीति लोकनाशप्रसङ्गपरिहारार्थमित्यर्थः । तथा हि जगौ— 'यद्यदाचरति' इत्यादि 'उपहन्यामिमाः प्रजाः' इत्यन्तम् । उक्तहेतोः, वै—प्रसिद्धः सुमहानयं संभ्रमः—वनगमनत्वरात्मा यस्य ते जातः सोऽय-मस्थाने अयुक्तः—भ्रान्तिमूल एवेत्यर्थः ॥ ५ ॥

**† कथं ह्येतदसं[1]भ्रान्तस्त्वद्विधो वक्तुमर्हति ॥ ६ ॥**
**यथा दैवमशौण्डीरं [2]शौण्डीरः क्षत्रियर्षभः ।**

---

* एवं वाऽर्थः—धर्महानिप्रसक्त्या लोकस्यानतिशङ्कया अनतिः—अपूजा, तद्विषय-शङ्कया—लोको मामधर्मिष्ठ इति न पूजयेदिति शङ्कयेत्यर्थः ; यस्य ते अयुक्तः सुमहान् संभ्रमो भ्रान्तिर्जाता । धर्महानिर्लोकनत्यभावो वा सर्वातिशायिनस्ते किं करिष्यतीति भावः—**गो.** † हे शौण्डीर—समर्थ, दैवमपि निराकर्तुं क्षमेत्यर्थः ; क्षत्रियर्षभ—क्षत्रियश्रेष्ठ त्वं अशौण्डीरं—अशूरं तत् दैवं यथा समर्थं वदसि एवं असंभ्रान्तस्त्वद्विधः कथं वक्तुमर्हति—न कथमपि । अशूरः संभ्रान्तः क्षत्रबन्धुरेवासमर्थं दैवमनुसर्तुमर्हतीत्यर्थः—**गो.**

[1] भ्रान्तं—**ङ.** [2] शौण्डीर क्षत्रियर्षभ—**ङ.**

तथात्वमेव प्रतिपाद्यते—कथं हीत्यादि । अशौण्डीरं—असमर्थं—अकिञ्चित्करमेव दैवमिति किञ्चिद्वस्तु प्रबलमिति यथा त्वं वदसि एवं शौण्डीरः—दैवमपि निराकर्तुं समर्थः त्वद्विधः क्षत्रियर्षभो यद्यसंभ्रान्तः स्यात्तदासौ कथमेतद्वक्तुमर्हति ? न कथमपि ॥ ६ ॥

**किन्नाम कृपणं दैवमशक्तमभिशंससि ॥ ७ ॥**

अतः कृपणं—असमर्थैकपरिग्राह्यं अतश्शोच्यं—दीनं पौरुषसन्निधौ मन्दबलं, अत एवाशक्तं—पौरुषमतिक्रम्य कार्यासमर्थप्राकृतवत्किं नामाभिशंससि—अभिष्टौषि ॥ ७ ॥

**पापयोस्ते कथं नाम तयोश्शङ्का न विद्यते ।**

एवं देवावलम्बनवादं प्रतिक्षिप्य धर्मदोषप्रसङ्गं परिहरति—पापयोरित्यादि । पापात्मनोस्तयोः—कैकेयीदशरथयोर्विषये ते कथं नाम शङ्का—पापात्मत्वशङ्का न विद्यते ॥

**सन्ति [1]धर्मोपधासक्ता धर्मात्मन् ! किं न बुध्यसे ॥ ८ ॥**
***तयोस्सुचरितं स्वार्थं शाठ्यात्परिजिहीर्षतोः ।**

ननु कथं धर्मावलम्बनव्यवहारयोस्तयोः पापशङ्काप्रवृत्तिरित्यत्राह—सन्तीत्यादि । हे धर्मात्मन् लोके धर्मोपधासक्ताः—धर्मव्याजपराः बहिः, अन्तः प्रच्छन्नपापजनास्सन्तीत्येतन्न बुध्यसे किम् ? अस्ति लोके,

---

* स्वार्थं अभिषेकरूपमस्मत्प्रयोजनं परिजिहीर्षतोः—परिहर्तुमिच्छतोः तयोः—कैकेयीदशरथयोः सुचरितं—सुष्ठु मन्त्रितं किं न बुध्यसे—गो. टी. स्वार्थं—स्वेष्टसिद्ध्यर्थमिति वा ।

[1] धर्मोपधाः श्लक्ष्णाः—ङ.

प्रकृते तथात्वं कथमित्यत्राह—तयोरित्यादि । सुचरितं त्वां त्वदर्थे च शाठ्यात्—मृषाक्लृप्तधर्मव्यवहारात् परिजिहीर्षतोः—निरासिसिष्वो-स्तयोरप्युक्तहेतोर्धर्मकञ्चुकत्वमेव ॥ ८ ॥

*यदि नैवं व्यवासितं स्याद्धि प्रागेव राघव ! ॥ ९ ॥

**तयोः प्रागेव दत्तश्च स्याद्वरः प्रकृतश्च सः ।**

एवन्त्वस्य प्रयोजकश्शाठ्यहेतुरसिद्ध एवेत्याशंक्य तमर्थापत्त्या साधयति—यदीत्यादि । हे राम ! यद्येवं न व्यवसितं—त्वदर्थप्रच्या-वनमेव येनकेनचिच्छाठ्येन चिकीर्षितं यदि न स्यात् , वरप्रसङ्गश्च यदि सत्यः स्यात्—तदा तु हि—यस्मात् प्रागेव—पूर्वकाल एव प्रकृतः—[1]प्रवृत्तप्रसङ्गः स वरः राज्ञो मनसि विपरिवर्तमानो युष्मदभिषेकप्रसङ्गा-त्प्रागेव दत्तश्च स्यात् । 'अस्यै वरद्वयं दत्तं, इदमवश्यं निर्यातनीयम् ; अन्यथा लोकचित्तस्यार्थपरस्यातिचलत्वादभिषेकविघ्न एतद्वारा भविष्यति ' इति निश्चित्य त्वदर्थविघ्नव्यतिरिक्तेनैव केनचिदर्थेन पूर्वमेव [2]निर्यातयेत् । तत्तु न कृतम् । अत उभावपि त्वदर्थप्रच्यावने हृदयशठावित्यर्थः । अत्र यद्यपि परिहारोऽस्ति—वृद्धत्वाद्राज्ञा विस्मृतो वरप्रसङ्गः । तया तु गूढहृदयत्वाद्यावत्स्वाभिमतकालं गुप्तमित्यादिकं—अथापि † रुष्टेन तत्सर्वं न परिहर्तव्यमित्युपेक्षितम् ॥ ९ ॥

---

* अयं भावः—भरतायावश्यं राज्यं देयम् । रामस्य ज्येष्ठत्वेन तद्विषयोऽभिषेक आरभ्यते । अन्यथा लोकविरोधः । तदानीं त्वया वरद्वयं प्रष्टव्यम् । तद्व्याजेन रामो विवास्यते, भरतोऽभिषिच्यत इति कैकेयीदशरथाभ्यां सङ्केतितम् । अन्यथा सा वरद्वयं किमेतावत्पर्यन्तं न याचेत । अयाचितमपि तत् नीतिज्ञो राजा वा कुतो न पूर्वमेव परिहरेदिति—**गो.**

† रुष्टेन-लक्ष्मणेन.

[1] कृतप्रसङ्गः—**घ.** [2] निर्यातयितव्यत्वात्—**घ.**

**लोकविद्विष्टमारब्धं त्वदन्यस्याभिषेचनम् ॥ १० ॥**

**नोत्सहे सहितुं, वीर! तत्र * मे क्षन्तुमर्हसि ।**

यदेवमतो—लोकेत्यादि । ज्येष्ठे श्रेष्ठगुणे जाग्रति कनिष्ठविषयत्वा-ल्लोकविद्विष्टत्वम्। प्रत्यक्षविरुद्धं शास्त्रविरुद्धं चेत्यर्थः। लोक्यत अनेन तत्त्वमिति लोकः शास्त्रं च। एवञ्च स्वपक्षे लक्ष्मणेन युक्तिरुपदिष्टा वेदितव्या। तत्र मे—तद्विषयकं मम प्रतिवचनापराधमित्यर्थः ॥ १० ॥

**येनेयमागता द्वैधं तव बुद्धिर्महामते ॥ ११ ॥**

**सोऽपि धर्मो मम द्वेष्यो [1] यत्प्रसङ्गाद्विमुह्यसि ।**

तदेव प्रतिवचनं वक्ति—येनेत्यादि। यस्य पितृवचनस्य प्रसङ्गात्—धर्मत्वप्रसङ्गान्मुह्यसि, येन च तद्धर्मत्वमोहेनेयं तव बुद्धिः द्वैधं—द्विप्रकारं राज्यग्रहतत्त्यागलक्षणद्विप्रकारं गता, "द्वित्र्योश्च धमुञ्" इति प्रकारार्थे धमुञ्, स हि धर्मो मम द्वेष्यः—[2]धर्माभासत्वादनङ्गीकार्य इत्यर्थः ॥ ११ ॥

**कथं त्वं कर्मणा शक्तः कैकेयीवशवर्तिनः ॥ १२ ॥**

**करिष्यसि पितुर्वाक्यमधर्मिष्ठं विगर्हितम् ।**

[3] आभासत्वमेव प्रतिपादयति—कथमित्यादि। कर्मणा—अचिन्त्य-वैभवस्वक्रियाशक्त्या कर्तुमकर्तुमन्यथाकर्तुं च शक्तः—समर्थस्त्वं कैकेयी-वशवर्तिनः पितुर्वाक्यमुक्तहेतोरेवाधर्मिष्ठं विगर्हितं च कथं करिष्यसि ॥

---

* मे तत्र—असहनविषये क्षन्तुमर्हसि—गो.

[1] प्रसङ्गाद्यस्य मुह्यसि—ङ. [2] धर्माभावत्वा—क. [3] अभावत्वमेव—क.

[1]यस्त्वयं किल्बिषाद्भेदः कृतोऽप्येवं न गृह्यते ॥ १३ ॥

[2]जायते तत्र मे दुःखं * धर्मसङ्गश्च गर्हितः ।

एवमधर्मे प्रस्पष्टेऽपि तव धर्मबुद्धिर्न जातेति मे दुःखमित्याह— य इत्यादि । यस्त्वयं भेदः–अभिषेक[3]विघटनात्मा उक्तरीत्या किल्बिषात्–मृषावरप्रकल्पनादेव कृतः, एवमपि सर्वथैव तत्त्वत्वेऽपि त्वयैवं न गृह्यत इति यत् तत्र–अत्र मे दुःखं जायते । एवं तत्त्वग्रहाभावादेव जायमानो गर्हितो धर्मसङ्गश्च–धर्मत्वबुद्धिश्च मम दुःखाय जायते ॥ १३ ॥

मनसाऽपि कथं कामं [4]कुर्यात्त्वां कामवृत्तयोः ॥ १४ ॥

तयोस्त्वहितयोर्नित्यं शत्र्वोः पित्रभिधानयोः ।

पुनश्च दोषस्य दोषत्वेनाग्रहमेव शोचति—मनसाऽपीत्यादि । त्वां विना, केवलदैष्टिकसाधुं विनेत्यर्थः, कामवृत्तयोस्तयोर्वचःपरिपालनं मनसाऽपि कथं कुर्यात्? मनसाऽपि नाशास्ते, अनुष्ठानं तु दूर इत्यर्थः॥

यद्यपि प्रतिपत्तिस्ते दैवी चापि तयो[5]र्मतम् ॥ १५ ॥

तथाप्युपेक्षणीयं ते न मे तदपि रोचते ।

इदानीं वरप्रसङ्गस्य वास्तवत्वमङ्गीकृत्याप्याह—यद्यपीत्यादि । तयोः पित्रोः प्रतिपत्तिः–स्वपुत्राभिषेकत्ववनवासविषयकवरग्रहगोचरा पितुश्च तदनुमतिगोचरा बुद्धिः दैवी–देवकृता इति ते मता, अथापि तदनुवर्तनं ते उपेक्षणीयं–उपेक्षार्हं, 'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु' इत्यादिस्मृतेर्मुख्योदाहरणत्वात् । एवमुपेक्षणीयमपि नोपेक्षस इति यत्तदपि मे न रोचते ॥ १५ ॥

---

* धर्मसङ्गः–धर्मासक्तिर्निन्द्या–ति.

[1] 'यद्ययं' 'यदयं'–ङ. [2] एतदनन्तरं 'तवायं धर्मसंयोगो लोकस्यास्य विगर्हितः' इत्यधिकम्–ङ. [3] विघ्नात्मा–घ. [4] कुर्यास्त्वं–ङ. [5] मैता–ङ.

*विक्लबो वीर्यहीनो यः स दैवमनुवर्तते ॥ १६ ॥

वीरास्संभावितात्मानो न दैवं पर्युपासते ।

इदानीं त्वादृशस्य दैवावलम्बनवादो न युक्त इत्याह—विक्लब इत्यादि । संभावितात्मानः—सर्वलोकोपश्लाघनीययशोवीर्यादिमन्त इति यावत् ॥ १६ ॥

न दैवेन विपन्नार्थः पुरुषस्सोऽवसीदति ।

दैवं पुरुषकारेण यस्समर्थः प्रबाधितुम् ॥ १७ ॥

विपन्नार्थः—हतप्रयोजनः ॥ १७ ॥

द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च ॥ १८ ॥

दैवमानुषयोरद्य व्यक्तिर्व्यक्ता भविष्यति ।

ननु दैवबाधकत्वं कस्यचिदपि पुरुषस्य न समस्ति, येनाहं दैष्टिकमवलम्बय इत्यत्राह—द्रक्ष्यन्तीत्यादि । दैवमानुषयोर्व्यक्तिः—प्रबलदुर्बलविवेकः व्यक्ता भविष्यति । अद्य मत्पौरुषेणैवेति शेषः ॥

अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः ॥ १९ ॥

[1]देवि ! दैवहतं तेऽद्य दृष्टं राज्याभिषेचनम् ।

तदेवाह—अद्येति । हे देवि—कौसल्ये ! यथा राज्याभिषेचनं दैवहतं दृष्टं जनैस्त एव जना अद्य दैवं च मत्पौरुषहतं द्रक्ष्यन्ति ॥

---

* विक्लबः-कातरः, तत्प्रतिद्वन्द्वी-संभावितात्मान इति-गो. विक्लबः लोकाप्रसिद्धः-ति.

[1] 'यैर्दैवादाहतं' 'यद्दैवादाहतं'-ङ.

**अत्यङ्कुशमिवोद्दामं गजं मदबलोद्धतम् ॥ २० ॥**
**प्रधावितमहं दैवं पौरुषेण निवर्तये ।**

अत्यङ्कुशं–अतिक्रमिताङ्कुशव्यापारं उद्दामं–*उत्कृष्टदामबन्धं, अत एव प्रधावितं–दुर्निवारस्वच्छन्दगमनं गजमिव दैवमपि पौरुषेण–पुरुषगतज्ञानबलादिसामर्थ्येन निवर्तये–निरोधयामि ॥ २० ॥

**लोकपालास्समस्ता ये नाद्य रामाभिषेचनम् ॥ २१ ॥**
**न च कृत्स्नास्त्रयो लोका विहन्युः किंपुनः पिता ।**

दैवनिवर्तनं स्वपौरुषस्येषत्करमित्याह—लोकेत्यादि ॥ २१ ॥

**यैर्विवासस्तवारण्ये मिथो, राजन् ! समर्थितः ॥ २२ ॥**
**अरण्ये ते विवत्स्यन्ति चतुर्दशसमास्तथा ।**

राजन्नित्यनेन स्वपौरुषेण राजत्वस्य सिद्धवत्कृत्यवादः ॥ २२ ॥

**अहं तदाशां छेत्स्यामि पितुस्तस्याश्च, या तव ॥ २३ ॥**
**अभिषेकविघातेन पुत्रराज्याय वर्तते ।**

पुत्रराज्याय–पुत्रराज्यप्रापणार्थम् ॥ २३ ॥

**[1] त्वद्बलेन विरुद्धाय न स्याद्दैवबलं तथा ॥ २४ ॥**
**प्रभविष्यति दुःखाय यथोग्रं पौरुषं मम ।**

त्वद्बलेन–त्वत्पक्षभूतेन मया विरुद्धाय–कृतविरोधाय ममोग्रं पौरुषं यथा दुःखाय प्रभविष्यति, तथा तस्य दैवबलं तन्निरासमसमर्थं न स्यात् ॥ २४ ॥

---

* उत्कृष्टः–आकृष्टः, छिन्न इत्यर्थः.

[1] 'मद्बलेन'–गो. मम बलेनेत्यर्थः.

ऊर्ध्वं वर्षसहस्रान्ते प्रजापाल्यमनन्तरम् ॥ २५ ॥
*आर्यपुत्राः करिष्यन्ति वनवासं गते त्वयि ।

अथ वनवासस्योचितं कालं स्वयमेवाह—ऊर्ध्वमित्यादि । अस्यैव विवरणं—वर्षसहस्रान्त इति । † पालनं–पाल्यं, भावे घञ्, स्वार्थे यत्, प्रजापालनानन्तरमिति यावत्, तत्कृत्वा यथाप्राप्तकालं त्वयि वनवासं गते सति ततःपरं आर्यस्य भवतः पुत्राः प्रजा[1]पाल्यं करिष्यन्ति ॥ २५ ॥

पूर्वराजर्षिवृत्त्या हि वनवासो [2]विधीयते ॥ २६ ॥
प्रजा निक्षिप्य पुत्रेषु पुत्रवत्परिपालने ।

स्वोक्तवनवासोऽशेषसम्मत इत्याह—पूर्वेत्यादि । पुत्रवत्प्रजानां परिपालननिमित्तं प्रजाः पुत्रेषु निक्षिप्य पश्चाद्धि वनवासः पूर्वराजर्षि-वृत्त्या–आचारेण [3]विधीयते ॥ २६ ॥

[4]स चेद्राजन्यनेकाग्रे राज्यविभ्रमशङ्कया ॥ २७ ॥
नैवमिच्छसि, धर्मात्मन्! ‡राज्यकामत्वमात्मनि ।
प्रतिजाने च ते, वीर! मा भूवं वीरलोकभाक् ॥ २८ ॥
राज्यं च तव रक्षेयं अहं वेलेव सागरम् ।

---

*तदानीमप्यन्येषां नावकाश इति भावः–ति. †अत्र पाल्यमित्येव व्याख्येयं पदम् । पालशब्दात् घञन्तात् स्वार्थे यत्प्रत्यये पाल्यमिति भावः. ‡ 'राज्यं राम त्वमात्मनि' पाठान्तरं—हे राम! त्वं राजनि–दशरथे एवमनेकाग्रे चलचित्ते–अव्यवस्थितचित्ते सति, राज्यविभ्रमशङ्कया–राज्यस्य विविधचलनशङ्कया आत्मनि राज्यं नेच्छसि चेत्—(तथा न शङ्कितव्यं–यतोऽहं तव राज्यं सुस्थिरं रक्षेयम् ।)–गो. 'राजन्यस्मत्प्रतिकूले सति कथं मया तत्कर्तुं शक्यम् । यदि राज्ञोऽनभिमतं कुर्यां तदा प्रजाक्षोभोऽपि स्याद्वा' इति न शङ्कनीयमिति भावः.

[1] पालनं–घ. [2] ऽभीधीयते–ङ. [3] स्तूयते–घ. [4] न चेद्राज–ङ.

अनेकाग्रे—कामवशादुक्तवानप्रस्थधर्मानुष्ठानैकाग्र्यरहिते राजनि स धर्मो ज्येष्ठराज्याभिषेकपूर्ववनवासधर्मो न चेत्, हे धर्मात्मन्! राज्यविभ्रमशङ्कयैव – कुलदूषणकरकनिष्ठराज्यकरणरूपविपर्ययप्रसङ्गादेव — तत्परिहारार्थमेव केवलं—आत्मनि राज्यकामत्वं—राज्यरूपभोग्यसम्बन्धवत्त्वमिच्छसि—अङ्गीकरोषि चेत्, तावन्मात्रमेव त्वया संपाद्यं प्रजारक्षणक्लेशो न त्वयाऽनुभवितव्यः, वेला सागरमिव तव राज्यमहं रक्षेयं; अन्यथाऽहं वीरलोकभाक् मा भूवमिति प्रतिजाने च। अत्र यद्वा भट्टः इतस्ततः कुड्येन शिरस्ताडयति। तत्र न किञ्चिदपि सङ्गतं पश्यामः॥

*मङ्गलैरभिषिञ्चस्व तत्र त्वं व्यापृतोऽभव ॥ २९ ॥

यदेवं अतः—मङ्गलैः—अभिषेकसाधनैः अभिषिञ्चस्वात्मानम्। तत्र त्वं—तत्रैवाभिषेकव्यापारे व्यापृतः—व्यापृतचित्तो भव ॥ २९ ॥

अहमेको महीपालानलं वारयितुं बलात्।

भवत्प्रतिबन्धनिरासेऽहं तिष्ठामीत्याह—अहमित्यादि। अलं—समर्थोऽस्मि॥

न शोभार्थाविमौ बाहू न धनुर्भूषणाय मे ॥ ३० ॥
†नासिराबन्धनार्थाय न शराः ‡स्तम्भहेतवः।
अमित्रमथनार्थाय सर्वमेतच्चतुष्टयम् ॥ ३१ ॥

---

* मङ्गलैः—मङ्गलद्रव्ययुक्तैर्जलैः—गो. † आबन्धनार्थाय—भूषणतया कट्यां बन्धनरूपप्रयोजनाय—गो. ‡ स्तम्भहेतवः केवलं लक्ष्यभूतस्तम्भहेतवः। तूण्यां स्थापनहेतव इति वा—गो. स्तम्भहेतवः—समूहीभूय स्तम्भनिर्मापकाः—शि.

त्वदिष्टाचरणप्रयोजनकमेव मम बाहुवीर्यादिकमित्याह—*न म इत्यादि। असिः-खड्गः। आबन्धनार्थाय-आराद्बध्यत इत्याबन्धनमलङ्कारः। स्तम्भः-काष्ठादिकिञ्चित्पदार्थस्याधःपतनस्तम्भनम्, तस्य हेतवस्तथा ॥ ३१ ॥

**न चाहं कामयेऽत्यर्थं यः स्याच्छत्रुर्मतो मम† ।**

न चेत्यादि। यश्शत्रुर्मम मतः—मद्बाहुबलानुरूपो मतः स्यात्—न च तादृशं पश्यामि। तत्प्राप्तिमहमत्यर्थं कामये ॥

**असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा ॥ ३२ ॥**

**प्रगृहीतेन [1]वै शत्रुं वज्रिणं वा न कल्पये।**

विद्युच्चलितेति। निष्ठायाः परनिपातः आहिताग्न्यादित्वात्, चलितविद्युत्समानतेजस्केनेति यावत्। प्रगृहीतेन तेनानेन खड्गेन छेदनानुरूपं वज्रिणमपि न कल्पये—न कमपि संभावयामीत्यर्थः ॥

**खड्गनिष्पेषनिष्पिष्टैर्गहना दुश्चरा च मे ॥ ३३ ॥**

**‡हस्त्यश्व[2]नरहस्तोरुशिरोभिर्भविता मही।**

हस्त्यादीनां क्रमाद्धस्तादिभिः सम्बन्धः। भवितेति लुट् ॥

---

* अन्वयक्रमाभिप्रायेणैवं प्रतीकं धृतं स्यात्. † तमहं न कामये—तस्य स्थितिं न कामये—गो. ‡ अत्रैकवद्भावाभावः आर्षः—सत्य. परन्तु हस्तादीनां प्राण्यङ्गत्वेऽपि हस्त्यश्वादीनां प्राण्यङ्गत्वाभावाद्वा नैकवद्भावः। न च तेषामपि सेनाङ्गत्वमस्तीति वाच्यम्। अथापि सेनाङ्गप्राण्यङ्गयोरेकवद्भावासंभव एव। किञ्चात्रोक्तानां हस्त्यादीनां सेनाङ्गत्वनिर्बन्धोऽपि नास्तीत्यपि द्रष्टव्यम्। व्याहृयोक्तयथासङ्ख्यान्वयस्त्वार्थिकः।

[1] कं—ङ. [2] रथि—ङ.

खड्गधाराहता मेऽद्य दीप्यमाना [1]इवाद्रयः ॥ ३४ ॥

पतिष्यन्ति [2]द्विधा भूमौ मेघा इव सविद्युतः ।

खड्गधारया हताः—छिन्नाः रक्तधारया दीप्यमानाः अत एव सविद्युतो मेघा इव स्थिताः—हस्त्यादयो भूमौ द्विधा पतिष्यन्ति । सम्यक्कृत्तत्वादित्यर्थः ॥ ३४ ॥

*बद्धगोधाङ्गुलित्राणे प्रगृहीतशरासने ॥ ३५ ॥

कथं पुरुषमानी स्यात् पुरुषाणां मयि स्थिते ।

बद्धगोधाङ्गुलित्राणादिधर्मके मयि स्थिते सति मत्पुरतः पुरुषाणां मध्ये कथं पुरुषमानी—प्रतिभटपुरुषमानी स्यात् । न कथमपि समस्ति । सर्वथैवास्मदपेक्षया [3]सर्वप्रतिभटस्य दुर्लभत्वादित्यर्थः ॥ ३५ ॥

†बहुभिश्चै[4]कमर्त्यस्य नैकेन च बहूञ्जनान् ॥ ३६ ॥

विनियोक्ष्याम्यहं बाणान् नृवाजिगजमर्मसु ।

बहुभिरित्यादि । एकमर्त्यस्य—एकमनुष्यस्य संहारो बहुभिर्बाणैर्न क्रियते ; अपि त्वेकेनैव बाणेन बहूञ्जनान् संहरामि । एवं प्रकारेण मदीयान् बाणान् नृवाजिगजमर्मसु विनियोक्ष्यामि ॥ ३६ ॥

अद्य मेऽस्त्र[5]प्रभावस्य प्रभावः [6]प्रतरिष्यति ॥ ३७ ॥

राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वं च तव प्रभो !

---

* गोधा—ज्याघातावरणं—हस्तकवचः । अङ्गुलित्राणं—ज्याकर्षणसाधनं—अङ्गुलीकवचः. †बहुभिः बाणैरेक शूरमत्यस्यन्—प्रकर्षेण क्षिपन्, एकेन बाणेन बहून् क्षुद्रानत्यस्यन्—गो.

[1] इवाम्रयः—ङ. [2] द्विपाः—ङ. [3] सर्वप्रतिबलस्य—घ. [4] कमत्यस्यन्—ङ.
[5] प्रतापस्य—ङ. [6] प्रभविष्यति—ङ.

अथ मेऽस्त्रप्रभावस्य—अस्त्रसामर्थ्यस्य प्रभावः—महिमा, हे प्रभो! तव प्रभुत्वं कर्तुं—संपादयितुं त्वदन्यस्य अप्रभुतामपि संपादयितुं राज्ञः प्रभुतां प्रतरिष्यति प्लावयिष्यति—नाशयिष्यतीति यावत् ॥ ३७ ॥

*अथ चन्दनसारस्य केयूरामोक्षणस्य च ॥ ३८ ॥
वसूनां च विमोक्षस्य सुहृदां पालनस्य च।
अनुरूपाविमौ बाहू, राम! कर्म करिष्यतः ॥ ३९ ॥
अभिषेचनविघ्नस्य कर्तॄणां ते निवारणे।

चन्दनसारस्येति। कल्याणप्रयोजनचन्दनसारानुलेपनस्येत्यर्थः। अनुरुपौ—अर्हौ। हे राम! तेऽभिषेचन(क)विघ्नस्य कर्तॄणां—निवारणविषये कर्म करिष्यतः ॥ ३९ ॥

ब्रवीहि कोऽद्यैव मया वियुज्यतां
तवासुहृत्प्राणयशस्सुहृज्जनैः।
यथा तवेयं वसुधा वशे भवेत्
तथैव मां शाधि तवास्मि किङ्करः ॥ ३९ ॥

ब्रवीहीति। 'सेर्ह्यपिच्च' 'बहुलं छन्दसि' इति पित्त्वस्य च विद्यमानत्वात् 'ब्रुव ईट्' इतीट् ॥ ३९ ॥

†[1]विसृज्य बाष्पं परिमृज्य चक्षुषी
स लक्ष्मणं राघववंश[2]वर्धनः।
उवाच [3]पित्रोर्वचने व्यवस्थितं
निबोध मामेष हि, सौम्य! सत्पथः ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्रयोविंशः सर्गः

---

* इष्टसाधनं यथा मे बाहुः तथाऽनिष्टनिवारणेऽपि क्षम एवेति भावः. † बाष्पं विसृज्य—त्यक्त्वा विसृष्टबाष्पं च चक्षुः परिमृज्य मां निबोधेत्युवाचेति वाऽन्वयः.

[1] 'विमृज्य बाष्पं परिसान्त्व्य चासकृत्'—ङ. [2] वर्धनम्—ङ. [3] पित्रये वचने—ङ.

एवं लक्ष्मणसंरम्भमुक्त्वा—भगवता 'नायमेतस्य कालः' इत्युपदिश्यत इत्याह—विसृज्येत्यादि । अन्तर्भाविताणिः । बाष्पं विसर्जयित्वा—लक्ष्मणस्य चक्षुषी परिमृज्येति यावत् । पित्रोर्वचने व्यवस्थितं—प्रतिष्ठितं मां निबोध । हे सौम्य ! एष हि सत्पथः—समीचीनः पन्थाः । 'जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता' इति न्यायादित्याशयः । नव (४०) मानः सर्गः ॥ ४० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे त्रयोविंशः सर्गः

---

## चतुर्विंशः सर्गः

### [कौसल्यासमाश्वासः]

तं समीक्ष्य व्यवसितं पितुर्निर्देशपालने ।
कौसल्या बाष्पसंरुद्धा वचो धर्मिष्ठमब्रवीत् ॥ १ ॥

एवं धर्म्यं राघवस्य निश्चयं दृष्ट्वा 'धर्मो जयति नाधर्मः' इति मत्यालम्बनेन कौसल्याया रामप्रवासानुमतिः । तं समीक्ष्येत्यादि । निर्देशः—निदेश इति यावत् ॥ १ ॥

अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः ।
मयि जातो दशरथात् कथ*मुञ्छेन वर्तयेत् ॥ २ ॥

वर्तयेत्—जीवेत् । भवानिति शेषः† ॥ २ ॥

---

*उञ्छो नाम दैवात्प्रकीर्णानां धान्यानां ग्रहणम्. †आत्मानं प्रत्येवेदं वचनं वा कौसल्यायाः.

यस्य भृत्याश्च [1]दासाश्च मृष्टान्यन्नानि भुञ्जते ।
कथं स भोक्ष्यते नाथो वने मूलफलान्ययम् ॥ ३ ॥

भृत्याः—मन्त्रिमुख्याः—भर्तुं योग्याः । दासाः—भुजिष्याः ॥

*क एतच्छ्रद्दधेच्छ्रुत्वा कस्य वा न भवेद्भयम् ।
गुणवान् दयितो [2]राज्ञा राघवो यद्विवास्यते ॥ ४ ॥

विवास्यत इति यत् तच्च कः श्रद्दधेत्—इत्यन्वयः । परमार्थतो विवासं श्रुत्वा—श्रवणं प्राप्य तु कस्य वा भयं न भवेत्—स्वस्त्रीपुत्रादिस्नेहशैथिल्यस्मृतिशङ्काजनितम् ॥ ४ ॥

नूनं तु बलवान् लोके कृतान्तस्सर्वमादिशन् ।
लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५ ॥

सर्वमादिशन्—सर्वं दुःखं प्रयच्छन् । लोके—कर्मलोके । यत्र—यस्मात् ॥ ५ ॥

अयं तु मामात्मभवः तवादर्शनमारुतः ।
[3]विलापदुःखसमिधः रुदिताश्रुहुताहुतिः ॥ ६ ॥
चिन्ताबाष्पमहाधूमस्तवा[4]गमनचिन्तजः ।
कर्शयित्वा भृशं, पुत्र! निश्वासायाससंभवः ॥ ७ ॥
त्वया विहीनामिह मां शोकाग्निरतुलो महान् ।
प्रधक्ष्यति यथा कक्षं †चित्रभानुर्हिमात्यये ॥ ८ ॥

---

*निरपराधिनः पुत्रस्यैव विवासने वयं कुत्रेति भयं वा विवक्षितम्. अत्र 'को यत्तच्छ्रद्दधेत' इति पाठः व्याख्यासम्मतः प्रतिभाति. †चित्रभानुः—वन्योऽग्निरिव—गो.

[1] दाराश्च—ङ. [2] राज्ञो—ङ. [3] विवास—ङ. [4] दर्शनचित्तजः—ङ.

शोकाग्निः प्रधक्ष्यतीति वक्ष्यति। तस्याग्निसमाधिमाह—अयं तु मामित्यादि। आत्मभवः–स्वमनसस्सम्भूतः। विलापदुःखैः समिधः–समिन्धनं यस्य स तथा, 'घञर्थे कविधानं' इति कः। रुदिताश्रूण्येव हुताः–कृतहोमाः आहुतयो यस्य स तथा। 'अन्येषामपि दृश्यते' इति दीर्घः श्रमेण। तवागमनचिन्ताजनितनिश्वासरूपेणायासेन–प्रयासेन पुनःपुनस्सन्धुक्षणरूपेण संभवः–वृद्धिर्यस्य स तथा ॥ ८ ॥

**कथं हि धेनुः स्वं वत्सं गच्छन्तं नानुगच्छति।**
**अहं त्वाऽनुगमिष्यामि, पुत्र! यत्र गमिष्यसि ॥ ९ ॥**
**यथानिगदितं मात्रा तद्वाक्यं पुरुषर्षभः।**
**श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १० ॥**

यथानिगदितं–येन प्रकारेण निगदितं तथा तद्वाक्यं श्रुत्वा–आत्मानुगमनं श्रुत्वेति यावत् ॥ १० ॥

**कैकेय्या वञ्चितो राजा, मयि चारण्यमाश्रिते।**
**भवत्या च परित्यक्तो न नूनं वर्तयिष्यति ॥ ११ ॥**

वञ्चित इति। परित्यक्त इति यावत्। न वर्तयिष्यति–न जीविष्यतीति यावत् ॥ ११ ॥

**भर्तुः किल परित्यागो नृशंसः केवलं स्त्रियाः।**
**स भवत्या न कर्तव्यो मनसाऽपि विगर्हितः ॥ १२ ॥**

*केवलं नृशंसः–क्रौर्यमात्रम्। न तेनेहामुत्र च सुखमित्यर्थः। मनसाऽपि न कर्तव्यः–न चिन्तनीय इति यावत्। तत्र हेतुः—विगर्हित इति ॥ १२ ॥

---

* तथा च नृशंसपदं भावप्रधानपरमिति भावः। यद्वा परित्यागरूपक्रियैव नृशंसेत्युच्यते.

यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः ।
शुश्रूषा क्रियतां तावत् स हि धर्मस्सनातनः ॥ १३ ॥

यदेवमतः—यावदित्यादि ॥ १३ ॥

एवमुक्ता तु रामेण कौसल्या शुभदर्शना ।
तथेत्युवाच सुप्रीता राममक्लिष्टकारिणम् ॥ १४ ॥
एवमुक्तस्तु वचनं रामो धर्मभृतां वरः ।
भूयस्तामब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १५ ॥

एवं वचनमुक्तः—भर्तृशुश्रूषाङ्गीकारवचनमुक्तः, कर्मणि निष्ठा ॥ १५ ॥

मया चैव भवत्या च कर्तव्यं वचनं पितुः ।
*राजा भर्ता गुरुः श्रेष्ठः सर्वेषामीश्वरः प्रभुः ॥ १६ ॥

उभाभ्यामवश्यकर्तव्यमित्यत्र क्रमाद्धेतुः—भर्ता गुरुरिति† ॥ १६ ॥

‡इदानीं तु महारण्ये विहृत्य नव पञ्च च ।
वर्षाणि परमप्रीतः स्थास्यामि वचने तव ॥ १७ ॥
एवमुक्ता प्रियं पुत्रं बाष्पपूर्णानना तदा ।
उवाच परमार्ता तु कौसल्या पुत्रवत्सला ॥ १८ ॥

पितृशुश्रूषणानन्तरं त्वच्छुश्रूषणमपि करोमीत्याह—इदानीमित्यादि । विहृत्येत्यनेन वनवासो मृगयावत्क्रीडैव मे इति दर्शितम् ॥

---

* 'स खलु' इत्यध्याहार्यम्. † भर्ता—भरणकर्ता । एवञ्च सर्वं सर्वस्याप्यन्वेति.
‡ इमानि—ङ. इमानीत्यस्पष्टत्वज्ञापनाय--गो.

आसां राम सपत्नीनां वस्तुं मध्ये न मे क्षमम् ।
*नय मामपि काकुत्स्थ! वनं वन्यां मृगीमिव ॥ १९ ॥
यदि ते गमने बुद्धिः कृता पितुरपेक्षया ।

अङ्गीकृतवनवासापि सपत्नीदुःखस्मरणात् पुनश्च रामानुगमनमभिलषति—आसामित्यादि । वन्यां- वने भवाम् ॥ १९ ॥

तां तथा रुदतीं रामोऽरुदन् वचनमब्रवीत् ।
जीवन्त्या हि स्त्रिया भर्ता दैवतं प्रभुरेव च ॥ २० ॥
भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ।

अरुदन्—रुदन्तीमपि तां दृष्ट्वा स्वयमरुदन्नित्यर्थः । [1]रोदने तु कातर्यप्राकट्यतो मे मातुः पुनरप्यनुगमनप्रत्याशाप्रसङ्ग इति भावः ॥

‡ न ह्यनाथा वयं राज्ञा लोकनाथेन धीमता ॥ २१ ॥

धीमतेति । सनाथा इति शेषः ॥ २१ ॥

भरतश्चापि धर्मात्मा सर्वभूतप्रियंवदः ।
भवतीमनुवर्तेत स हि धर्मरतस्सदा ॥ २२ ॥

अथ सपत्नीमध्यवासो दुष्कर इति यदुक्तं तत्र परिहारमाह—भरत इत्यादि । भवतीमनुवर्तेतेति । अतः कैकेयीकोपोऽकिञ्चित्कर इत्याशयः ॥ २२ ॥

---

* यथा वन्या मृगी वने सन्तुष्टा वर्तते—तथाहमपि वर्ते, न भवन्तं क्लेशयिष्यामीति भावः । पितुरपेक्षया—पितुरिच्छया—गो. † रुदन्—' व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ' इत्युक्तगुणविशिष्टोऽपि रामो मातृव्यसनं दृष्ट्वा पितृवचनपरिपालनरूपधर्मविघ्नभयाद्धैर्येण स्थितवान्—गो. अरुदन्—शि. ति. ‡ राज्ञा अनाथाः—राजरूपनाथरहिता इति वाऽर्थः.

[1] रोदनेन—ट.

यथा मयि तु निष्क्रान्ते पुत्रशोकेन पार्थिवः ।
श्रमं नावाप्नुयात्किञ्चिदप्रमत्ता तथा कुरु ॥ २३ ॥

[1] दारुणश्चाप्ययं शोको यथैनं न विनाशयेत् ।
राज्ञो वृद्धस्य सततं हितं चर समाहिता ॥ २४ ॥

एनं–राजानम् ॥ २४ ॥

व्रतोपवासनिरता या नारी परमोत्तमा ।
भर्तारं नानुवर्तेत सा तु पापगतिर्भवेत् ॥ २५ ॥
भर्तृशुश्रूषया नारी लभते [2] स्वर्गमुत्तमम् ।

द्विजमात्रस्य गायत्रीवत् स्त्रिया भर्तृशुश्रूषणस्यैव नित्यत्वात् * नित्याकृतिजप्रत्यवायानर्थमनित्यकृतिस्साङ्गापि परिहर्तुं न शक्नोतीत्याह–व्रतेत्यादि ॥ २५ ॥

अथ या निर्नमस्कारा निवृत्ता देवपूजनात् ॥ २६ ॥
शुश्रूषामेव कुर्वीत भर्तुः प्रियहिते रता ।
एष धर्मः † स्त्रिया नित्यो ‡ लोके वेदे श्रुतः स्मृतः ॥ २७ ॥

अथ नित्यानुष्ठाने सत्यनित्याकरणे न तु लोकक्षय इत्याह — अथ येत्यादि । निर्नमस्कारा–भर्तृव्यतिरिक्तस्य यस्य कस्यापि नमस्काराद्युपचाररहितापि–विशिष्य कुलदैवतब्रह्मादिदेवपूजारहिता च, अथापि भर्तृशुश्रूषां कुर्वीत यदि न तस्या उक्तानित्याकरणे न काचित्क्षतिः । अत एष एव स्त्रिया नित्यः श्रुतः–श्रुतिभिः, स्मृतः–स्मृतिभिश्चेत्यर्थः ॥

---

* नित्याकरणजन्येत्यर्थः. † 'पुरादृष्टः'–ङ. पुरातनलोकाचारसिद्ध इत्यर्थः–गो. ‡ वेदे श्रुतः, लोके स्मृतश्च । वेदमनधीयाना अपि जानन्तीत्यर्थः ।

[1] दारुणश्चाव्ययः–ङ. [2] गतिमुत्तमाम्–ङ.

*अग्निकार्येषु च सदा सुमनोभिश्च देवताः ।
पूज्यास्ते मत्कृते, देवि! ब्राह्मणाश्चैव सुव्रताः ॥ २८ ॥

तर्हि कर्मान्तरं न कर्तव्यम्? इत्यत्र तदपि कर्तव्यमेव, ऐहिकाभ्युदयार्थमित्याह—अग्नीत्यादि । सदा तत्परा भवेति शेषः ॥ २८ ॥

एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी ।
नियता नियताहारा भर्तृशुश्रूषणे रता ॥ २९ ॥
प्राप्स्यसे परमं कामं मयि प्रत्यागते सति ।
यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितम् ॥ ३० ॥

काममिति । ऐहिकविषयजसुखमिति यावत् । तस्य पुत्रमात्रासाध्यत्वादाह—यदीत्यादि ॥ ३० ॥

एवमुक्ता तु रामेण बाष्पपर्याकुलेक्षणा ।
कौसल्या पुत्रशोकार्ता रामं वचनमब्रवीत् ॥ ३१ ॥
गमने सुकृतां बुद्धिं न ते शक्नोमि पुत्रक!
विनिवर्तयितुं वीर! नूनं †कालो दुरत्ययः ॥ ३२ ॥

सुकृतां—सुष्ठु कृतनिश्चयाम् । कालः—कालनिमित्तकेष्टवियोगादिरित्यर्थः ॥ ३२ ॥

गच्छ, पुत्र! त्वमेकाग्रो भद्रं तेऽस्तु सदा, विभो!
पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा ॥ ३३ ॥

---

* तूष्णीमवस्थाने एनां दुःखमाक्रमिष्यतीति धिया दुःखविच्छेदनार्थं कालक्षेपसाधनं विधत्ते—अग्नीति । अग्निकार्येषु—शान्तिकपौष्टिकहोमेषु—गो. † कालः—इष्टवियोगादिजनकः—ति.

प्रत्यागते महाभागे कृतार्थे चरितव्रते ।
*पितुरानृण्यतां प्राप्ते [1]त्वयि लप्स्ये परं सुखम् ॥ ३४ ॥

कृतान्तस्य गतिः, पुत्र! दुर्विभाव्या सदा भुवि ।
यस्त्वा सञ्चोदयति मे वच आच्छिद्य, राघव! ॥ ३५ ॥

मे वच आच्छिद्य–निराकृत्य त्वा–त्वां सञ्चोदयति यत्–वनायेति शेषः, अतो दुर्विभाव्या ॥ ३५ ॥

गच्छेदानीं, महाबाहो! क्षेमेण पुनरागतः ।
नन्दयिष्यसि मां, पुत्र! साम्ना [2]शुक्लेन चारुणा ॥ ३६ ॥

शुक्लेन–निर्मलेन–नीरागदोषेण। चारुणा–मनोहरेण। साम्ना–सान्त्ववचनेन ॥ ३६ ॥

†अपीदानीं स कालः स्याद्वनात्प्रत्यागतं पुनः ।
यत्त्वां, पुत्रक! पश्येयं जटावल्कलधारिणम् ॥ ३७ ॥

तथा हि रामं वनवासनिश्चितं
समीक्ष्य देवी परमेण चेतसा ।
उवाच रामं शुभलक्षणं वचः
बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुर्विंशः सर्गः

---

* पितुर्विषय इत्यर्थः । आनृण्यतां–स्वार्थे ष्यञ् । अनृणतामित्यर्थः. †क्षण-मात्रमप्यदर्शनासहिष्णुत्वात् प्रत्यागमनकाल इदानीमेव संभवेदिति प्रार्थयते—अपीति–गो.

[1] स्वपिष्ये परमं सुखं–ङ. [2] वाक्येन–ङ., श्लक्ष्णेन–ङ. च.

स्वस्त्ययनं—मङ्गलमभिकांक्षितुं शीलमस्त्यस्या इति तथा। दल (३८) मानः सर्गः ॥ ३८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चतुर्विंशः सर्गः

---

## पञ्चविंशः सर्गः

### [ कौसल्यास्वस्त्ययनम् ]

साऽपनीय [1]समायासमुपस्पृश्य जलं [2]शुचिः।
चकार माता रामस्य मङ्गळानि मनस्विनी ॥ १ ॥

'स्वस्त्ययनाभिकाङ्क्षिणी बभूव' इत्युक्तम्। तामेव कांक्षां कौसल्या पूरयति—साऽपनीयेत्यादि। समायासः—शोकः। मङ्गलानि—मङ्गलवचनानि ॥ १ ॥

न [3]शक्यसे वारयितुं गच्छेदानीं, रघूत्तम!
शीघ्रं च विनिवर्तस्व वर्तस्व च सतां [4]क्रमे ॥ २ ॥

क्रम्यत इति क्रमः—मार्गः ॥ २ ॥

यं पालयसि धर्मं त्वं [5]प्रीत्या च नियमेन च।
स वै, राघवशार्दूल! धर्मस्त्वामभिरक्षतु ॥ ३ ॥
येभ्यः प्रणमसे, पुत्र! *[6]चैत्येष्वायतनेषु च।
ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥ ४ ॥

ते चेति। देवा इति शेषः ॥ ४ ॥

---

* चैत्येषु—चतुष्पथेषु—अग्निशालासु वा। स्थण्डिलानि—देवपूजास्थलानि—**गो.**

[1] तमायास—ङ. च. [2] शुचि—ङ. च. [3] शक्यते—ङ. च. [4] पथि—ङ. [5] धृत्या—ङ. [6] देवेष्वा—ङ. च.

यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता ।
तानि त्वामभिरक्षन्तु गुणैस्समुदितं सदा ॥ ५ ॥
पितृशुश्रूषया, पुत्र! मातृशुश्रूषया तथा ।
सत्येन च, महाबाहो! चिरं जीवाभिरक्षितः ॥ ६ ॥
समित्कुशपवित्राणि वेद्यश्चायतनानि च ।
स्थण्डिलानि [1] विचित्राणि शैला वृक्षाः क्षुपा ह्रदाः ॥ ७ ॥
पतङ्गाः पन्नगास्सिंहाः त्वां रक्षन्तु, नरोत्तम!

समित्कुशादौ तदधिष्ठात्र्यो देवता उपलक्ष्यन्ते । क्षुपाः—ह्रस्वशाखास्तरवः ॥ ७ ॥

स्वस्ति साध्याश्च *विश्वे च मरुतश्च महर्षयः ।
स्वस्ति †धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ॥ ८ ॥

स्वस्ति—कुर्वन्त्वित्यग्रेण सम्बन्धः । धाता—आधार[2]धर्मप्रधानो भगवान्विराड्विष्णुः । विधाता—स्रष्टा, स एव सर्गविधायकः प्राजापत्यात्मा । ‡पूषा भगोऽर्यमेति रेवत्यादिनक्षत्राधिष्ठातृदेवताः ॥८॥

लोकपालाश्च ते सर्वे वासवप्रमुखास्तथा ।
ऋतवश्चैव पक्षाश्च मासाः संवत्सराः क्षपाः ॥ ९ ॥
दिनानि च मुहूर्ताश्च स्वस्ति कुर्वन्तु ते सदा ।
[3]स्मृतिर्धृतिश्च धर्मश्च पातु त्वां, पुत्र! सर्वतः ॥ १० ॥

स्मृतिधृती—ध्यानसमाधिलक्षणयोगौ ॥ १० ॥

---

* विश्वे—विश्वेदेवाः. † धातेत्यादौ तु 'करोतु' इति एकवचनान्ततया विपरिणामः । साध्याः- देवताविशेषाः. ‡ पूषादिशब्दाः द्वादशसंख्याकादित्यावान्तरभेदवाचकाः—गो.

[1] च विप्राणां—ङ. [2] कर्म—घ. [3] श्रुतिः स्मृतिश्च—ङ. च.

स्कन्दश्च भगवान् देवः [1] सोमश्च सबृहस्पतिः ।
सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः ॥ ११ ॥

याश्चापि सर्वतः सिद्धाः दिशश्च सदिगीश्वराः ।
स्तुता मया वने तस्मिन् पान्तु त्वां, पुत्र ! नित्यशः ॥१२॥

शैलास्सर्वे समुद्राश्च राजा वरुण एव च ।
द्यौरन्तरिक्षं पृथिवी [2] नद्यस्सर्वास्तथैव च ॥ १३ ॥

नक्षत्राणि च सर्वाणि ग्रहाश्च [3] सहदेवताः ।
अहोरात्रे तथा सन्ध्ये पान्तु त्वां वनमाश्रितम् ॥ १४ ॥

ग्रहाः—कुजादयः । [4]सहदेवताः—तत्तदधिदेवतासहिताः ॥१४॥

* ऋतवश्चैव षट् पुण्या मासास्संवत्सरास्तथा ।
कलाश्च काष्ठाश्च तथा तव शर्म दिशन्तु ते ॥ १५ ॥

ऋतवश्चैवेत्यादौ पुनः ऋत्वाद्यधिदेवताग्रहणमिति न दोषः ॥

महावने विचरतो मुनिवेषस्य धीमतः ।
तवादित्याश्च दैत्याश्च भवन्तु सुखदास्सदा ॥ १६ ॥

राक्षसानां पिशाचानां [5] रौद्राणां क्रूरकर्मणाम् ।
† क्रव्यादानां च सर्वेषां मा भूत्, पुत्रक ! ते भयम् ॥ १७॥

सर्वेषामिति । सर्वेभ्य इति यावत् ॥ १७ ॥

---

* पुनरुक्तिरत्र पुत्रप्रेमगारवश्यान्न दोषाय—ति. † सर्वक्रव्यादसम्बन्धिभयं—संबन्धसामान्ये षष्ठी—ति., गो.

[1] सोमश्चेन्द्रो बृह—ङ. [2] वायुश्च सचराचरः—ङ. [3] ग्रहदेवताः—ङ. [4] शुभदेवताः—घ. [5] दैत्यानां—ङ.

प्लवगा वृश्चिका दंशा मशकाश्चैव कानने ।
सरीसृपाश्च कीटाश्च मा भूवन् *[1] भवने तव ॥ १८ ॥

प्लवगाः—वानराः । दंशाः—वनमक्षिकाः । तव भवने—गृहे ।
मा भूवन्—मा स्तु ॥ १८ ॥

महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः ।
महिषाः शृङ्गिणो रौद्रा न ते द्रुह्यन्तु, पुत्रक ! ॥ १९ ॥

ऋक्षाः—भल्लूकाः । न ते द्रुह्यन्तु, 'क्रुधद्रुह' इत्यादिना चतुर्थी ॥

नृमांसभोजना रौद्रा ये चान्ये † सत्त्वजातयः ।
मा च त्वां हिंसिषुः, पुत्र ! मया संपूजितास्त्विह ॥ २० ॥

‡ आगमास्ते शिवास्सन्तु सिध्यन्तु च पराक्रमाः ।
[2] सर्वसंपत्तयो, राम ! स्वस्तिमान् गच्छ, पुत्रक ! ॥ २१ ॥

गम्यन्त इति गमाः । आगमाः—सर्वे मार्गा इत्यर्थः । सर्वसम्पत्तयः—वनवासापेक्षिताः फलमूलादयः । सन्त्विति शेषः ॥ २१ ॥

स्वस्ति § ते त्वान्तरिक्षेभ्यः पार्थिवेभ्यः पुनः पुनः ।
सर्वेभ्यश्चैव देवेभ्यो ये च ते परिपन्थिनः ॥ २२ ॥

[3] गुरुस्सोमश्च सूर्यश्च धनदोऽथ यमस्तथा ।
पान्तु त्वामर्चिताः, राम ! दण्डकारण्यवासिनम् ॥ २३ ॥

---

* गहने—वने तव पीडाकरा मा भूवन्नित्यर्थः. † सत्वजातयः—क्रूरजन्तवः—गो. 'सर्वजातियाः' सर्वजातीया इत्यर्थः—ति. ‡ शीघ्रमेव पुनरावृत्तिर्भवत्वित्यभिप्रायेण वा 'आगमाः' इत्युक्तम्. § आन्तरिक्षेभ्यः—अशन्यादिभ्यः पार्थिवेभ्यः—भूकम्पादिभ्यः इति वाऽर्थः

[1] गहने वने—ङ. [2] सर्वसंपत्तये—ङ. [3] शुक्रः, शक्रः—ङ.

पृथिव्यां भवाः पार्थिवाः। देवेभ्यस्सकाशात्ते स्वस्त्यस्त्विति योजना। ये च ते परिपन्थिनः तेभ्यः सोमादयः पान्तु ॥ २३ ॥

अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षिमुखाच्च्युताः।
उपस्पर्शनकाले तु पान्तु त्वां, रघुनन्दन ! ॥ २४ ॥

ऋषिमुखाच्च्युताः–निर्गताः, त्वया गृहीताश्चेति शेषः ॥ २४ ॥

सर्वलोकप्रभुर्ब्रह्मा * भूतभर्ता तथर्षयः।
ये च शेषास्सुरास्ते त्वां रक्षन्तु वनवासिनम् ॥ २५ ॥

इति माल्यैस्सुरगणान् गन्धैश्चापि यशस्विनी।
स्तुतिभिश्चा[1]नुकूलाभिरानर्चायतलोचना ॥ २६ ॥

ज्वलनं [2]समुपादाय ब्राह्मणेन महात्मना।
हावयामास विधिना राममङ्गलकारणात् ॥ २७ ॥

घृतं श्वेतानि माल्यानि [3]समिधः श्वेतसर्षपान्।
उपसंपादयामास कौसल्या परमाङ्गना ॥ २८ ॥

उपसंपादयामासेति। होमायेति शेषः ॥ २८ ॥

उपाध्यायः स विधिना हुत्वा शान्तिमनामयम्।
हुतहव्यावशेषेण बाह्यं बलिमकल्पयत् ॥ २९ ॥

अनामयं–आरोग्यं, उद्दिश्येति शेषः। बाह्यं–होमस्थानाद्बहिर्भवम् ॥ २९ ॥

मधु दध्यक्षतघृतैः † स्वस्तिवाच्यं द्विजांस्ततः।
वाचयामास रामस्य वनेस्वस्त्ययनक्रियाम् ॥ ३० ॥

---

* भूतकर्तृ–ब्रह्म–ति. † 'स्वस्तिवाच्यं'–पुण्याहं वाचयित्वेत्यर्थः–गो.

[1] नुरूपाभि–ङ. [2] समुपाधाय–ङ. [3] समिधश्चैव–ङ.

मध्वित्यादि । स्वस्तिवाच्यं—स्वस्तिवाचनमुद्दिश्य । द्विजान् मध्वादिभिरुपलक्षितान् कृत्वा रामस्य वने स्वस्त्यस्त्वित्येवं वनेस्वस्त्ययनक्रियां वाचयामास—प्रार्थयामासेति कर्तरि लिट् ॥ ३० ॥

ततस्तस्मै द्विजेन्द्राय राममाता यशस्विनी ।
दक्षिणां प्रददौ काम्यां राघवं चेदमब्रवीत् ॥ ३१ ॥

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ३२ ॥

यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ३३ ॥

अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गलं प्रादात् तत्ते भवतु मङ्गलम् ॥ ३४ ॥

त्रीन् विक्रमान् प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गलं, राम ! तत्ते भवतु मङ्गलम् ॥ ३५ ॥

ऋतवस्सागरा द्वीपा वेदा लोका दिशश्च ते ।
मङ्गलानि, महाबाहो ! दिशन्तु *[1] शुभमङ्गलाः ॥ ३६ ॥

इति पुत्रस्य [2]शेषाश्च कृत्वा शिरसि भामिनी ।
गन्धैश्चापि समालभ्य राममायतलोचना ॥ ३७ ॥

शेषा इत्यक्षतानाम । समालभ्य—'समालम्भो विलेपनम्' ॥

[3]ओषधिं चापि सिद्धार्थां विशल्यकरणीं शुभाम् ।
चकार रक्षां कौसल्या मन्त्रैरभिजजाप च ॥ ३८ ॥

---

* मङ्गलानामपि मङ्गलाः—गो.

[1] शुभमङ्गल—ङ. [2] शेषांश्च—झ [3] ओषधीं—ओषधीः—ङ.

विशल्यकरणीं अन्वर्थनामिकां सिद्धार्थां—दृष्टप्रत्ययिकां ओषधिं—मूलिकां गुलिकीकृत्य शुभां रक्षां चकार। तां मन्त्रैरभिमन्त्र्य जजाप च ॥ ३८ ॥

*[1]उवाचाभिप्रहृष्टेव सा दुःखवशवर्तिनी।
वाङ्मात्रेण न भावेन वाचासंसज्जमानया ॥ ३९ ॥

अभिप्रहृष्टेवेति। प्रस्थानस्य कार्यवशादेव केवलमनुमन्तव्यता। हर्षापारमार्थ्यद्योती इवशब्दः। तदेव प्रदर्श्यते—वाङ्मात्रेणेत्यादि। असंसज्जमानया—आन्तरखेदगद्गदयेति यावत् ॥ ३९ ॥

†आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी।
अवदत् पुत्र[2]मिष्टार्थो गच्छ, राम! यथासुखम् ॥ ४० ॥
अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम्।
पश्यामि त्वां सुखं, वत्स! सुस्थितं राजवर्त्मनि ॥ ४१ ॥
प्रणष्टदुःखसङ्कल्पा हर्षविद्योतितानना।
द्रक्ष्यामि त्वां वनात्प्राप्तं पूर्णचन्द्रमिवोदितम् ॥ ४२ ॥
भद्रासनगतं, राम! वनवासादिहागतम्।
द्रक्ष्यामि च पुनस्त्वां तु तीर्णवन्तं पितुर्वचः ॥ ४३ ॥
मङ्गलैरुपसंपन्नो वनवासादिहागतः।
वध्वा मम च नित्यं त्वं कामान्[3]संवर्ध याहि, भो! ॥ ४४ ॥

मङ्गलैः—राजोचितवस्त्राभरणादिभिः। वध्वाः—सीतायाः। संवर्ध—वर्धयेति यावत्। याहि—गच्छ। भो इति निपातरूपमामन्त्रणार्थकम् ॥ ४४ ॥

---

* उवाचापि—मन्त्रानिति शेषः—ति. † केन प्रकारेणोवाचेत्यत्राह—आनम्येति आनम्य—आनमय्य—गो.

[1] उवाचापि—ङ. च. [2] सिद्धार्थो—ङ. [3] संवर्धय भो, संवर्धयस्व भो—ङ.

मयार्चिता [1]देवगणाः शिवादयो
　　महर्षयो भूतमहासुरोरगाः ।
अभिप्रयातस्य वनं चिराय ते
　　हितानि [2]काङ्क्षन्तु दिशश्च, राघव ! ॥ ४५ ॥

इतीव चाश्रुप्रतिपूर्णलोचना
　　समाप्य च स्वस्त्ययनं यथाविधि ।
प्रदक्षिणं चैव चकार राघवं
　　पुनःपुनश्चापि [3]निरीक्ष्य सस्वजे ॥ ४६ ॥

तथा तु देव्या स कृतप्रदक्षिणः
　　निपीड्य मातुश्चरणौ पुनः पुनः ।
जगाम सीतानिलयं महायशाः
　　स राघवः प्रज्वलितः [4]स्वया श्रिया ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चविंशः सर्गः

---

प्रदक्षिणं चकारेति । रक्षार्थमेव तत् पुत्रस्य । देव्याः—मातुश्चरणौ पुनःपुनर्निपीड्य—अभिवाद्य । तव (४६) (?) मानः सर्गः ॥ ४७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चविंशस्सर्गः

---

## षड्विंशस्सर्गः

[सीताप्रतिबोधनम्]

अभिवाद्य च कौसल्यां राम*स्संप्रास्थितो वनम् ।
कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १ ॥

---

* संप्रस्थितः—संप्रतस्थे । अथवा श्लोकद्वयमेकं वाक्यम् ।

[1] भूतगणास्सुरोरगाः—ङ.　[2] 'कुर्वन्तु '—ङ.　[3] निपीड्य—ङ.　[4] तया—ङ.

एवं मातरमनुमान्य सीतामप्यनुमानयितुं रामस्य प्रवृत्तिः। अभिवाद्येत्यादि। अतिशयेन धर्मवत् धर्मिष्ठं, विन्मतोर्लुक्—इष्ठनादौ परतः॥ १॥

विराजयन् राजसुतो राजमार्गं नरैर्वृतम्।
हृदयान्याममन्थेव जनस्य गुणवत्तया॥ २॥

आममन्थ—मन्थनं कृतवानिव॥ २॥

वैदेही चापि तत्सर्वं न शुश्राव * तपस्विनी।
तदेव हृदि तस्याश्च यौवराज्याभिषेचनम्॥ ३॥

तत्सर्वं—राजवृत्तान्तम्। तदेव यौवराज्याभिषेचनं तस्याश्च हृदि स्थितमभूदिति शेषः॥ ३॥

देवकार्यं स्वयं कृत्वा † कृतज्ञा हृष्टचेतना।
अभिज्ञा राजधर्माणां राजपुत्रं प्रतीक्षते॥ ४॥

देवकार्यं—देवपूजाम्॥ ४॥

प्रविवेशाथ रामस्तु स्वं वेश्म सुविभूषितम्।
प्रहृष्टजनसंपूर्णं ह्रिया किञ्चिदवाङ्मुखः॥ ५॥
अथ सीता समुत्पत्य वेपमाना च तं पतिम्।
अपश्यच्छोकसन्तप्तं चिन्ताव्याकुलितेन्द्रियम्॥ ६॥

---

* तपस्विनी—रामाभिषेकार्थंव्रतोपवासादिनियमविशिष्टा—**गो**। यद्वा तपस्विनी—अनुकम्पार्हा 'तपस्वी तापसे चानुकम्प्ये त्रिषु' इति मेदिनी। रामवनप्रस्थानमजानन्ती यौवराज्याभिषेकमेव चिन्तयन्ती सीता राममुखात्कथं तदुदन्तं श्रोष्यतीति कविरनुकम्पयैवमुक्तवान्. † कृतज्ञा—देवैरेवं राज्यप्रदानोपकृतत्वेन कृतज्ञतया तत्पूजा—**ति.** कृतज्ञा—अभिषिक्तभर्तृविषये पट्टमहिषीभिः गन्धपुष्पादिना पूर्वकृतपादार्चनादिसमाचारज्ञा—**गो.** संप्रदायज्ञा रामपादार्चनाय रामं प्रतीक्षते स्म—इति भावः॥

शोकसन्तप्तत्वादिधर्मकं पतिं दृष्ट्वा वेपमाना सती तं पति-मपश्यत् ॥ ६ ॥

तां दृष्ट्वा हि स धर्मात्मा न शशाक मनोगतम् ।
तं शोकं राघवस्सोढुं ततो * विवृततां गतः ॥ ७ ॥

सोढुमिति । गूढतयेति शेषः । ततः—तत एव हेतोः विवृततां—विवृताभिप्रायकतां गतः ॥ ७ ॥

† विवर्णवदनं दृष्ट्वा तं प्रस्विन्न‡ममर्षणम् ।
आह दुःखाभिसन्तप्ता किमिदानीमिदं, प्रभो ! ॥ ८ ॥

प्रस्विन्नं—प्राप्तदुःखजस्वेदम् ॥ ८ ॥

अद्य बार्हस्पतः [1] श्रीमान् युक्तः पुष्योऽनु§राघव !
॥ प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९ ॥

बार्हस्पतः—बृहस्पतिदेवताकः । दित्यदित्यादिभ्यो ण्यलुक्-छान्दसः । युक्तः—चन्द्रमसेति शेषः । युक्त इति तु प्रोच्यत इत्यन्वयः । केनेति । अद्य पुष्यः, अद्याभिषेको रामस्येति द्विजैः उक्ते दुःखं केन—सन्तोषं विहायेत्यर्थः ॥ ९ ॥

---

* विवृततां—व्यक्तदुःखताम्—गो. यद्वा वैवर्ण्यमिति यावत्—'विवर्णवदनं' इत्युत्तरश्लोकानुसारात्. † यत्तु सीताया दुःखेन कथमेषा कालं नयिष्यतीति धिया दुःखित इति विवर्णवदनत्वादिकमिति—तदनुचितं—भगवति कथमपि दुःखासम्बन्धात् तादृशधियो-ऽप्यभावाच्च 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' इत्यादावपि दुःखित इवेत्येवार्थ इति ममाभाति—ति. ‡ अमर्षणं शोकधारणाक्षमम् । अत एव प्रस्विन्नम्. § 'पुष्येण' युक्तः-चन्द्रेणेति शेषः—ति. ‖ 'बार्हस्पतः बृहस्पतिदैवत्यः । उक्तः अभिषेकार्हत्वेन विहितः । युक्त इति पाठेऽभिषेकार्हः—गो.

[1] श्रीमानुक्तः—ङ.

न ते शतशलाकेन जलफेननिभेन च ।
आवृतं वदनं * वल्गु छत्रेणापि विराजते ॥ १० ॥

शतं शलाका यस्मिन् छत्रे तत्तथा ; छत्रेणावृतं सन्न विराजते इति योजना ॥ १० ॥

व्यजनाभ्यां च मुख्याभ्यां शतपत्रनिभेक्षणम् ।
चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाननम् ॥ ११ ॥

शतपत्रं—पद्मं तत्सदृशेक्षणं तवाननम् ॥ ११ ॥

वाग्मिनो वन्दिनश्चापि प्रहृष्टास्त्वां, नरर्षभ !
स्तुवन्तो नात्र दृश्यन्ते मङ्गलैस्सूतमागधाः ॥ १२ ॥

वन्द्यादयो मुहुर्व्याकृतचराः ॥ १२ ॥

न ते † क्षौद्रं च दधि च ब्राह्मणा वेदपारगाः ।
मूर्ध्नि [1] मूर्धावसिक्तस्य ‡ दधति स्म विधानतः ॥ १३ ॥

क्षौद्रं च दधि चेति । तीर्थोदकामिश्रितमिति शेषः । मूर्धावसिक्तस्य—शिरस्स्नातस्य ॥ १३ ॥

न त्वां प्रकृतयस्सर्वाः श्रेणीमुख्याश्च [2] भूषिताः ।
अनुव्राजितुमिच्छन्ति पौरजानपदास्तथा ॥ १४ ॥

श्रेणीमुख्याः—परिषन्मुख्याः ॥ १४ ॥

चतुर्भिर्वेगसंपन्नैर्हयैः काञ्चनभूषणैः ।
मुख्यः पुष्यरथो युक्तः किं न गच्छति तेऽग्रतः ॥ १५ ॥

---

* वल्गु—सुन्दरम्. † क्षौद्रं—मधु. ‡ न दधति स्म—नाभिषिञ्चन्ति स्म ।

[1] मूर्धाभिषिक्तस्य—ङ. [2] भूषितम्—ङ.

न हस्ती चाग्रतः [1]श्रीमान् तव लक्ष्मणपूजितः ।
प्रयाणे लक्ष्यते, वीर! * कृष्णमेघगिरिप्रभः ॥ १६ ॥

पुष्यरथः-केवलं लीलागमनादिप्रयोजनः युद्धानर्हो रथः । तस्याग्रतो निर्गमनं राज्ञो निर्जिगमिषोः प्रथमं भवति । तस्मिन् सत्यामिच्छायामारोहति । नो चेत्केवलमग्रे गच्छति । तथा हस्त्यादिश्च । कृष्णमेघप्रभो गिरिप्रभश्च तथा ॥ १५-१६ ॥

न च काञ्चनचित्रं ते पश्यामि, प्रियदर्शन!
† भद्रासनं पुरस्कृत्य [2]यान्तं, वीर! [3]पुरस्सरम् ॥ १७ ॥

वीरेति सम्बुद्धिः ॥ १७ ॥

अभिषेको ‡ यदा सज्जः किमिदानीं§मिदं तव ।
अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥ १८ ॥

अभिषेको यदा-यस्मात् सज्जः तथापीदानीं तवेदं किं-उक्तलक्षणवैपरीत्यमित्यर्थः । उक्तगजान्तराजचिह्नाभावानुवादः स्ववेश्मसमीपे तेषामननुभवात् ॥ १८ ॥

---

* कृष्णमेघयुक्तगिरिप्रभः । उभयोरुपमानत्वे वैषम्यापत्तिः-गो. † भद्रासनं पुरस्कृत्य यान्तं ते पुरस्सरं-अग्रगं सेवकं न पश्यामि-ति. वीरपुरस्कृतं भद्रासनं पुरस्कृत्य ते यातं-गमनं न पश्यामि-गो. वीरपुरस्सरं यथातथा पुरस्कृत्य यातं-भद्रासनं-इति वा. पुरतो नीयमानस्य भद्रासनस्य मर्यादार्थं वीराः तत्पुरतो गच्छन्तीति प्रसिद्धमेव. ‡ यदेति—यस्मिन् काले प्रहृष्टेन भाव्यं तदा किमेवं लक्ष्यस इति वार्थः. § मयं तव-ङ. मुखवर्ण इत्यस्य विशेषणमिदम्.

[1] श्रीमान्सर्वं-ङ. [2] यातं-ङ. च. [3] पुरस्कृतम्-ङ.

इतीव * विलपन्तीं तां प्रोवाच रघुनन्दनः ।
सीते! † तत्रभवांस्तातः प्रव्राजयति मां वनम् ॥ १९ ॥

विलपन्तीं—दुःखेन भाषमाणाम् ॥ १९ ॥

‡ कुले महति संभूते! धर्मज्ञे! धर्मचारिणि!
शृणु, जानकि! § येनेदं क्रमेणाद्यागतं मम ॥ २० ॥

कुले महतीत्यादिकथनं अव्यग्रतया प्रव्राजनकारणप्रश्नोत्तरसिद्धिशेषतया । येन क्रमेणेदमिति । प्रव्राजनमिति यावत् । क्रमः-हेतुः ॥ २० ॥

राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन च ।
कैकेय्यै मम मात्रे तु पुरा दत्तौ ‖ महावरौ ॥ २१ ॥

तयाऽद्य मम सज्जेऽस्मिन् अभिषेके नृपोद्यते ।
प्रचोदितस्स समयो धर्मेण प्रतिनिर्जितः ॥ २२ ॥

नृपेणोद्यते—प्रस्ताविते, तस्मिन्नभिषेके सज्जे सति तया अद्य स समयः—प्राचीनो वरसङ्केतः प्रचोदितः—प्रवर्तितः । तेन तु राज्ञा धर्मेण-धर्ममार्गेणैव प्रतिनिर्जितः ॥ २२ ॥

चतुर्दश हि वर्षाणि वस्तव्यं दण्डके ¶ मया ।
पित्रा मे भरतश्चापि यौवराज्ये ** नियोजितः ॥ २३ ॥
सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् ।

---

* विलपन्तीं—विविधं लपन्तीं—गो. विविधं पृच्छन्तीं—शि. † तत्रभवान् पूज्यः—गो. ति. ‡ महतोऽप्रियस्य श्रवणे सीतायाः किंवा भविष्यतीति भयात् चित्तदार्ढ्यार्थं विविधगुणकीर्तनेन सम्बोधयति—कुल इत्यादि—गो. § येन क्रमेण-येन मार्गेण—गो. ‖ वरे महत्त्वं त्वनिवार्यत्वेन—शि. ¶ मया पितृचोदितेन—गो. ** नियोजितः मयेति शेषः । ज्येष्ठाज्ञां विना तस्य तल्लाभासंभवात्—ति.

अस्तु, प्रकृते किमित्यत आह—चतुर्दशेत्यादि। वरनिर्जितेन पित्रा मद्वनवासवरपरिपालनशेषतया पितृनियोगेन मया दण्डके वस्तव्यम्। भरतश्चापि द्वितीयवरपरिपालनशेषतया यौवराज्ये नियोजितः ॥ २३ ॥

*भरतस्य समीपे तु नाहं कथ्यः कदाचन ॥ २४ ॥

अथ सीताया गृहावस्थापनधिया वक्तव्यबुद्धिमुपदिशति—भरतस्येत्यादि। न कथ्यः—न श्लाघनीयः ॥ २४ ॥

[1]ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम्।
तस्मान्न ते गुणाः [2]कथ्या भरतस्याग्रतो मम ॥ २५ ॥

ते प्रसिद्धा मम गुणाः। भरतस्याग्रत इति। 'ज्येष्ठो भ्राता पितृसमः' इति न्यायेन यदा कदाचित्त्वां मातृबुध्या नमस्कर्तुमागच्छति तदेति शेषः ॥ २५ ॥

†अहं ते नानुकर्तव्यो विशेषेण कदाचन।
‡अनुकूलतया शक्यं समीपे तस्य वर्तितुम् ॥ २६ ॥

अहं—अस्मत्स्वरूपं ते—त्वया विशेषेण—विशिष्य कदाचन—कदापि नानुकर्तव्यः—नानुकरणीयः—नानुस्मरणीयः। भरतस्याग्रत

---

* सीताहृदयं ज्ञातुं बुद्ध्युपदेशेन प्रणयरोषमुत्पादयन्नाह भरतस्येति—गो.
† 'अहं ते नानुवक्तव्यः' इति कतके पाठः—ति. 'नापि त्वं तेन भर्तव्या'—इति गोविन्दराजीयपाठः। विशेषेण न भर्तव्या, किन्तु बन्धुसाधारण्येन रक्षणीयेत्यर्थः।
‡ 'मम भर्तुः राज्यमनेनापहृतं' इत्यादिप्रतिकूलाभिसन्धिस्त्याज्येति भावः।

[1] बुद्धियुक्ता—ङ. [2] श्लाघ्याः—ङ.

इत्यनुकर्षः । कुत एवमित्यत्राह—अनुकूलतयेत्यादि । अत्र 'नापि तेन तु भर्तव्या' इति सर्वात्मना पाठो नाशितः प्राचीनः परेण* ॥२६॥

तस्मै दत्तं नृपतिना यौवराज्यं सनातनम् ।
† स प्रसाद्यस्त्वया, सीते! नृपतिश्च विशेषतः ॥ २७ ॥

ननु तदनुकूलाचरणं किमर्थमित्यत्राह—तस्मा इत्यादि । नृपतिः–दशरथः ॥ २७ ॥

अहं चापि प्रतिज्ञां तां गुरोस्समनुपालयन् ।
वनमद्यैव यास्यामि स्थिरा भव मनस्विनी ॥ २८ ॥

याते च मयि, कल्याणि! वनं मुनिनिषेवितम् ।
व्रतोपवासपरया भवितव्यं, त्वयानघे! ॥ २९ ॥

याते–गते ॥ २९ ॥

काल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि ।
वन्दितव्यो दशरथः पिता मम जनेश्वरः ॥ ३० ॥

काल्यं–सर्वस्मिन्नप्युषसि । अत्यन्तसंयोगे द्वितीया ॥ ३० ॥

माता च मम कौसल्या वृद्धा सन्तापकर्शिता ।
‡ धर्ममेवाग्रतः कृत्वा त्वत्तस्सम्मानमर्हति ॥ ३१ ॥

त्वत्तस्सम्मानमर्हतीत्यत्र हेतुः—धर्ममेवाग्रतः कृत्वेति । यतः प्रवृत्ताऽस्मद्व(च)ननियोजन इति शेषः ॥ ३१ ॥

---

* गोविन्दराजेन. † सः त्वया विशेषतः प्रसाद्यः । चो हेतौ । यतो नृपतिरयं–ति.

‡ धर्ममेवाग्रतः कृत्वा, स्थितायाः इति शेषः–गो. त्वन्मातुर्वन्दने किं फलमिति चेत्तत्राह—धर्ममिति–ति.

वन्दितव्याश्च ते नित्यं याः शेषा मम मातरः।
स्नेहप्रणय*संभोगैः समा हि मम मातरः ॥ ३२ ॥

स्नेहः—मातृत्वप्रयुक्तसन्तोषः। प्रणयः—अनुनयः—सेवा। संभोगः—अन्नपानादिविशेषप्रदानम् ॥ ३२ ॥

भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः।
[1]प्रिये! भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३३ ॥

भ्रात्रा पुत्रेण च क्रमात्समानभावास्पदौ—तथा द्रष्टव्यौ। त्वयेति शेषः। 'प्रिये' इति सम्बुद्धिः ॥ ३३ ॥

विप्रियं न च कर्तव्यं भरतस्य कदाचन।
स हि राजा प्रभुश्चैव देशस्य च कुलस्य च ॥ ३४ ॥
आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः।
[2]राजानस्संप्रसीदन्ति प्रकुप्यन्ति विपर्यये ॥ ३५ ॥

विपर्यये—शीलादिविपर्यये ॥ ३५ ॥

औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः।
समर्थान् संप्रगृह्णन्ति जनानपि जनाधिपाः ॥ ३६ ॥

जनानिति—प्राकृतान् रक्तस्पर्शरहितानिति यावत् ॥ ३६ ॥

सा त्वं वसेह, कल्याणि! राज्ञस्समनुवर्तिनी।
भरतस्य, रता धर्मे सत्यव्रतपरायणा ॥ ३७ ॥

---

* संभोगः—परिपालनं—गो. भुजपालनाभ्यावहारयोरिति धातुः।

[1] त्वया—ङ. [2] एतदनन्तरं—स्पृशन्निव गजो हन्ति जिघ्रन्निव भुजङ्गमः। स्मयन्निव नृपो हन्ति मानयन्निव दुर्जनः ॥ इत्यधिकं—ङ.

अहं गमिष्यामि महावनं, प्रिये !
त्वया हि वस्तव्यमिहैव, भामिनि !
यथा *व्यलीकं कुरुषे न कस्यचित्
तथा त्वया कार्यमिदं वचो मम ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षड्विंशः सर्गः

---

यथा कस्य चिदपि मन्नियोगस्य व्यलीकं—'व्यलीकं त्वप्रियेऽनृते' न कुरुषे—तथेदमपि मे वचः अमोघं कुरु—अत्रास्वेति यावत् । दल (३८) मानः सर्गः ॥ ३८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे षड्विंशः सर्गः

---

## सप्तविंशस्सर्गः

### [सीतानुगमनप्रार्थना]

एवमुक्ता तु वैदेही † प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥ १ ॥

---

* व्यलीकत्वमिति यावत् । गोविन्दराजीये तु—व्यलीकं—अप्रियम् । यथा कस्यचिदपि जनस्य व्यलीकं न कुरुषे तथा वर्तितव्यम् । इदं मम वचश्च कार्यम् (इति भिन्नं वाक्यं)। यद्वा यथा कस्यचिदपि व्यलीकं न कुरुषे तथा इदमपि मम वचस्त्वया कार्यमित्यर्थः । सर्वेषामपि प्रियमेव कुरुषे यदि—तर्हि मत्प्रियाचरणे किमु वक्तव्यमिति भावः ।

† अप्रियवादिन्यपि प्रियार्हा—प्रियभाषणार्हा **गो.** यद्वा प्रियार्हा—प्रियभाषणार्हा । एवं प्रियभाषिणी च । 'परस्परं भावयन्तः' इति न्यायात् । यदि तस्याः समीपे प्रियमुच्येत तदुक्तं—यदा तु प्रियार्हायामपि तस्यां गृहवासनियोजनादिकमप्रियमुच्येत तदा प्रियवादिन्यपि सा किञ्चिदप्रियं ब्रूयादेवेत्याशयः ॥

एवं रामेण गृहवासे नियुक्ते वनवास एव मम च पत्यनुव्रजन-निजानित्यधर्मतो न्यायप्राप्त इति सीताऽऽह—एवमित्यादि । प्रणयादेव स्नेहबलादेव संक्रुद्धा—कथं मत्पृथक्स्थितिमादिशतीत्यमर्षवती ॥ १ ॥

किमिदं भाषसे, राम! वाक्यं *लघुतया ध्रुवम् ।
त्वया यत्परिहास्यं मे श्रुत्वा, नरवरात्मज! ॥ २ ॥

स एवामर्षः प्रदर्श्यते—किमिदमित्यादि । लघुतया—मयि च लघुभावेन त्वयि च क्षुद्रपुरुषभावावलम्बनेन च किमिदं भाषसे! हे नरवरोत्तम! त्वया यद्भाषितं तच्छ्रुत्वा मे ध्रुवं परिहास्यं—परिहासास्पदं जायते ॥ २ ॥

[1]वीराणां राजपुत्राणां शस्त्रास्त्रविदुषां, नृप!
अनर्हमयशस्यं च न श्रोतव्यं त्वयेरितम् ॥ ३ ॥

आर्यपुत्र! पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुञ्जाना स्वं स्वं भाग्यमुपासते ॥ ४ ॥

भर्तुर्भाग्यं तु भार्यैका प्राप्नोति, पुरुषर्षभ!
†अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ ५ ॥

कुत एवमित्यत्राह—आर्येत्यादि । तस्य तस्य प्राणिनः पित्रादयः स्वानि—स्वस्वानुष्ठितानि पुण्यानि भुञ्जानाः—उपभुञ्जानाः

---

*लघुतया—अत्यल्पतया । ध्रुवं—निश्चितं यथा तथा भाषसे । चतुर्दशवर्षपर्यन्त-भवत्प्रवासकाले मम गृहस्थितिर्हि नाल्पो विषयः । एकनिमेषमपि भवद्विरहासहिष्णवाः कथमयमल्पः स्यात् । त्वं तु अतिसुकरमिवाल्पतया निश्चित्य भाषसे—अतोऽपहास्य-मिदम् इति भावः । †'अर्धो वा एष आत्मनो यत्पत्नी' इत्युक्तप्रक्रियया तव वनगमनादेश एव त्वदर्धशरीरभूताया ममाप्यादेश इत्यर्थः—ती.

[1] अयं श्लोकः कुत्रचिन्न दृश्यते—ङ.

तद्वशप्राप्तं स्वं स्वं भाग्यं—पुण्यफलं सौख्यं उपासते—प्राप्नुवन्ति, इद-मपुण्यस्य चोपलक्षणम्, न तु स्वकृतपापपुण्यफलं स्वपित्रादयः। भार्या एकैव तु तस्य तस्य भर्तुर्भाग्यं—पुण्यफलमन्यच्च भर्त्रा सह प्राप्नोति। नान्यस्तस्य पित्रादिः। पित्रादेस्तेन सह कर्मसहत्वाभावात्। यदेवं कर्मतत्फलभोगसहत्वं स्त्रियास्सिद्धं शास्त्रतः, अत एवाहमपि वने वस्तव्यमिति युष्मत्पितृमातृकृतादेशेन युष्मद्विषयकेनापि अर्थादादिष्टवनवासैवेत्यर्थः ॥ ३-५ ॥

न पिता नात्मजो नात्मा न माता न सखीजनः।
इह प्रेत्य च नारीणां पतिरेको गतिस्सदा ॥ ६ ॥

यदेवं अतः—न पितेत्यादि। इह लोके प्रेत्य परलोके च नारीणां न पित्रादिर्गतिः। अपि तु पतिरेक एव सदा गतिः ॥ ६ ॥

यदि त्वं प्रस्थितो दुर्गं * वनमद्यैव, राघव!
अग्रतस्ते गमिष्यामि मृद्नन्ती † कुशकण्टकान् ॥ ७ ॥

अतः—यदि त्वमित्यादि। मृद्नन्ती—मृदक्षोदे—मर्दयन्ती। एतेन पद्भ्यामेव निस्सन्देहं गमिष्यामीत्युक्तं भवति। अतः कथमिदं वनवासदुःखं सहिष्यत इति न चिन्तनीयमिति भावः ॥ ७ ॥

‡ [1] रोषामर्षौ परित्यज्य § [2] भुक्तशेषमिवोदकम्।
नय मां, वीर! विस्रब्धः ‖ पापं मयि न विद्यते ॥ ८ ॥

---

* अद्यैव गमिष्यामीत्यन्वयः. † कुशकण्टकान्—कुशाङ्कुरानिति यावत. ‡ स्वदनुवर्तनेन चरितार्थेयं भविष्यतीत्येवंरूपा या—ईर्ष्या—गो. § भुक्तशेषं—शास्त्रनिषिद्धतयोच्छिष्टमुदकमिव ईर्ष्यारोषौ परित्यज्य—गो. ‖ पापं—अपराधः। मम त्यागे को वाऽपराधो मयि वर्तेत इत्याशयः ॥

[1] ईर्ष्यारोषौ—ङ. [2] पीतशेष—ङ.

स्त्री सती कथं 'वनं गमिष्यामि' इति ब्रूत इत्यमर्षं, तथा मद्वचनमुल्लङ्घ्य वक्तीति रोषं च त्यक्त्वा विस्रब्धः—निश्शङ्कः मां नय। तत्र हेतुगर्भं विशेषणं—वीरेति। त्यागप्रयोजकं पापं च मयि न विद्यते। नीतयापि मया सुखमेव। अत्रोभयत्र दृष्टान्तः—भुक्तशेषमुदकमिवेति। दुष्प्रापपानीयकान्तारयायिना पीतशेषं कमण्डलुनिष्ठं यथोदकं अपापं अवश्यनेयमात्मोपकार्येव केवलं तद्वदित्यर्थः ॥ ८ ॥

*[1] प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा।
सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते ॥ ९ ॥

अवर्जनीयनित्यसम्बन्धत्वादपि नाहं परित्याज्येत्याह—प्रासादेत्यादि। प्रासादाग्रैः स्थितिमता, विमानैर्यानवता, योगबलात्केवलं वैहायसगतेन—मत्वर्थीयाजन्तः—गतिमता, तथा सर्वावस्थागतेनापि भर्त्रा भर्तुः पादच्छायेव सह स्त्री सर्वावस्थागता भवतीति विशिष्यते—विधीयते श्रुतिस्मृतिभिः ॥ ९ ॥

† अनुशिष्टाऽस्मि मात्रा च पित्रा च ‡ विविधाश्रयम्।
नास्मि संप्रति वक्तव्या वर्तितव्यं यथा मया ॥ १० ॥

गुरूपदेशेनापि मेऽयमर्थस्सिद्ध इत्याह—मात्रेत्यादि। विविधाश्रयं—नानावस्थभर्तृनित्याश्रयं अनुशिष्टाऽस्मि। अतो मया यथा वर्तितव्यं भर्तरि तद्विषये संप्रति न किञ्चिद्वक्तव्या उपदेष्टव्या ॥ १० ॥

---

* प्रासादाग्रैरिति। पञ्चम्यर्थे तृतीया—गो. प्रासादाग्रे स्थित्यपेक्षयेति शेषः—ति. पुरुषो यामवस्थामाप्नोति तच्छायाऽपि तां प्राप्नोति यथेति वार्थः. † एवमेव सर्वत्र पाठो दृश्यते। परन्तु व्याख्यायां प्रतीकधारणेन तु—'मात्रा चाप्यनुशिष्टास्मि पित्रा च विविधाश्रयम्' इति व्याख्यातुः पाठः स्यादिति प्रतिभाति. ‡ विविधाश्रयं—विविधप्रकारं यथा तथा—गो. विविधाश्रयं—विविधार्थं—ती. 'विषय आश्रयः' इति कोशात् आश्रयाः—विषयाः ये अवश्यज्ञेयाः ते सर्वेऽपि उपदिष्टपूर्वा इत्यर्थः।

[1] प्रासादाग्रे—ङ. च.

अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् ।
नानामृगगणाकीर्णं शार्दूलवृकसेवितम् ॥ ११ ॥

यद्देवं अतः—अहमित्यादि । गमिष्यामीति । त्वद्गमनमन्विति शेषः ॥ ११ ॥

सुखं वने निवत्स्यामि यथैव भवने पितुः ।
अचिन्तयन्ती *त्रीन् लोकान् चिन्तयन्ती पतिव्रतम् ॥

त्रीन् लोकानचिन्तयन्तीति । तत्स्थसर्वसंसारिशुभाशुभदुश्चिन्ताप्रसङ्गरहितेति यावत् । पतिव्रतं—पतिहिताचरणलक्षणव्रतप्रयोजनकमेव व्यापारं चिन्तयन्ती ॥ १२ ॥

शुश्रूषमाणा ते नित्यं नियता †ब्रह्मचारिणी ।
सह रंस्ये त्वया, वीर! वनेषु मधुगन्धिषु ॥ १३ ॥

ब्रह्मचारिणी—वने वासादेव कामभोगासक्तिरहिता सती ॥ १३ ॥

त्वं हि कर्तुं वने शक्तः, राम! संपरिपालनम् ।
अन्यस्यापि जनस्येह किं पुनर्मम ‡मानद! ॥ १४ ॥

अन्यस्यापीति । त्वदेकशरणजनान्तरस्यापीत्यर्थः ॥ १४ ॥

सह त्वया गमिष्यामि वनमद्य न संशयः ।
नाहं शक्या, महाभाग! निवर्तयितुमुद्यता ॥ १५ ॥

निवर्तयितुं न शक्येति । न्यायप्राप्तानुगमनत्वादित्याशयः ॥

---

* त्रैलोक्यैश्वर्यमप्यगणयन्तीत्यर्थः—गो. † वने तापसवृत्तिनिष्ठस्य भवतो मया न कश्चनोऽपराधः स्यात् इत्यभिप्रायेणाह—ब्रह्मचारिणीति । भवत्समीपस्थितिमात्रमप्यलमिति भावः । ‡ मानद—'मानश्चित्तसमुन्नतिः' ; स्वशेषत्वज्ञानेन स्वाश्रितानां चित्तौन्नत्यप्रद! अथवा मानं-इयत्ता-मर्यादा । सर्ववस्तूनां मर्यादाप्रदः त्वं पत्नीमर्यादामपि मह्यं देहीत्यर्थः ।

**फलमूलाशना नित्यं भविष्यामि न संशयः ।**
**[1] न ते दुःखं करिष्यामि निवसन्ती सह त्वया ॥ १६ ॥**

न ते दुःखं करिष्यामीति । अन्नपानविशेषसंपादनेनेति शेषः ॥

**इच्छामि सरितः शैलान् पल्वलानि वनानि च ।**
**द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता ॥ १७ ॥**
**हंस*कारण्डवाकीर्णाः पद्मिनीस्साधुपुष्पिताः ।**
**इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण सङ्गता ॥ १८ ॥**

'मद्गुः कारण्डवः प्लवः' கீர்க்கோழி ॥ १८ ॥

**अभिषेकं करिष्यामि तासु [2] नित्यं यतव्रता ।**
**सह त्वया, विशालाक्ष ! रंस्ये परमनन्दिनी ॥ १९ ॥**
**† एवं वर्ष[3]सहस्राणां शतं वाऽहं त्वया सह ।**
**व्यतिक्रमं न वेत्स्यामि [4] स्वर्गोऽपि न हि मे मतः ॥२०॥**

त्वया सह वर्तमाना तस्य वर्षशतस्य व्यतिक्रमं—गमनं न वेत्स्यामि—न स्मरामि । स्वर्गोऽपि न मे मत इति । त्वाद्वियुक्ताया इति शेषः ॥ २० ॥

**स्वर्गेऽपि च विना वासो भविता यदि, राघव !**
**त्वया [5] मम, नरव्याघ्र ! नाहं तदपि रोचये ॥ २१ ॥**

तदेव विव्रियते—स्वर्गेऽपीत्यादि ॥ २१ ॥

---

* कारण्डवः—जलकुकुटः—गो. † वर्षसहस्राणां शतमपि न वेत्स्यामि—क्षणमिव [वे]त्स्यामि । किं पुनश्चतुर्दशसमा इति भावः—गो.

[1] एतदनन्तरं—अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि—इत्यधिकम्—ङ. [2] नित्यमनुव्रता—ङ. [3] सहस्राणि—ङ. [4] स्वर्गेऽपि न हि मे मतिः—ङ. [5] विना—ङ.

अहं गमिष्यामि वनं सुदुर्गमं
*मृगायुतं वानरवारणैश्च ।
वने निवत्स्यामि यथा पितुर्गृहे
तवैव पादावुपगृह्य [1]संयता ॥ २२ ॥

मृगैरायुतं तथा ॥ २२ ॥

अनन्यभावामनुरक्तचेतसं
त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां
न ते मयाऽतो गुरुता भविष्यति ॥ २३ ॥

याचनां—मामिकां वनानुगमनयाच्ञां साधु कुरुष्व—चरितार्थं संपादय । मया क्रियमाणात् अत —मदनुगमनाद्धेतोः गुरुता—भारः न भविष्यति ॥ २३ ॥

तथा ब्रुवाणामपि धर्मवत्सलो
न च स्म सीतां नृवरो निनीषति ।
उवाच चैनां बहु †सन्निवर्तने
वने निवासस्य च दुःखतां प्रति ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तविंशस्सर्गः

———

* मृगः—मारीचमृगः । वानरवारणैः—वानरश्रेष्ठैः सुग्रीवादिभिः । पुनर्वनग्रहणात् वनेऽपि—अशोकवनेऽपि वत्स्यामि । पुनस्तवैव पादावुपसंगृह्य संयता—नियता भविष्यामि—गो. † गोविन्दराजीये त्विदमेकं पदम् .

[1] सम्मता—ङ.

तथेति। न्यायावलम्बनेनेति यावत्। न निनीषति स्म। अत एव चास्या निवर्तनप्रयोजननिमित्तं वने निवासस्य दुःखतां-दुःखत्वज्ञापनं प्रति सत्-संभवत् बहुहेतुजातमुवाच। वीर (२४) मानः सर्गः ॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्तविंशः सर्गः

## अष्टाविंशस्सर्गः

[वनवासदुःखप्रतिबोधनम्]

एवं ब्रुवन्तीं सीतां तु [1] धर्मज्ञो धर्मवत्सलः।
न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १ ॥

निवर्तनाय बहुदुःखोपाधिमाहेत्युक्तं, तदेव प्रपञ्चयते—एव-मित्यादि ॥ १ ॥

सान्त्वयित्वा पुनस्तां तु बाष्पदूषितलोचनाम्।
[2] निवर्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ॥ २ ॥
सीते! महाकुलीनाऽसि धर्मे च निरता सदा।
इहाचर स्वधर्मं त्वं [3] मा * यथामनसस्सुखम् ॥ ३ ॥

महाकुलीनत्वादिवादः स्ववाक्यपरिग्रहप्रयोजनः। स्वधर्मं-स्वकुलधर्मं इहैव स्थित्वा यथा मनसः सुखं भवति-स्वशक्त्यनु-सारेणेति यावत्, मा—मदागमनमुद्दिश्याचर। यथा मनसस्सुखं माच-

---

* यथा मे मम मनसस्सुखं भवति तथाचर—ति. मनसो यथा सुखं भवति तथा मा चरेत्यर्थः—गो.

[1] धर्मज्ञा—ङ. [2] निवर्तनार्थं—ङ. [3] मे—ङ.

रेति शिक्षात्मनापि सुशकयोजनोऽयं ग्रन्थः। अथापि 'नास्मि संप्रति वक्तव्या' इति सीतयोक्तत्वाच्छिक्षार्थ उपेक्ष्यते ॥ ३ ॥

सीते! यथा त्वां वक्ष्यामि तथा कार्यं त्वयाऽबले!
वने दोषा हि बहवो *वदतस्तान्निबोध मे ॥ ४ ॥

तानिति। दोषानिति यावत् ॥ ४ ॥

सीते! विमुच्यतामेषा वनवासकृता मतिः।
बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥ ५ ॥

कान्तारं—दुर्गमं वनं हि—यस्मात् बहुदोषमित्यभिधीयते ॥ ५ ॥

हितबुध्या खलु वचो मयैतदभिधीयते।
सदा †सुखं न जानामि दुःखमेव सदा वनम् ॥ ६ ॥

हितबुध्याऽभिधीयत इति। न तु त्वद्धरणादिप्रयासोपाधिनेत्यर्थः। सदा—सर्वकालेऽपि सुखं नास्तीति जानामि—निश्चिनोमि ॥

‡गिरिनिर्झरसंभूता गिरि[1]निर्दरवासिनाम्।
सिंहानां निनदा [2]दुःखाः श्रोतुं दुःखमतो वनम् ॥ ७ ॥

[3]निर्झरशब्दो गिरिनिर्झरगिरिदरीवाचकः। गिरिनिर्दरसम्भूताः—गिरिनिर्झरसंभूताः निनदाः तथा गिरिनिर्दरवासिनां—गिरिदरीवासिनां निनदाश्च श्रोतुं दुःखं यतः अतो वनं—वनवासः दुःखमेव ॥ ७ ॥

---

*वसतः—ङ. वसतः पुरुषस्येत्यर्थः. †सुखं—सुखदं न भवति, दुःखदमेव—ति. ‡गिरिनिर्झराः—गिरिनद्यः। तन्निनदैः संभूताः—प्रभूताः गिरिनिर्दरवासिनां सिंहानां निनदाः—ति.

[1] कन्दर—ङ. [2] घोरः—ङ. [3] निर्दर—क.

* क्रीडमानाश्च विस्रब्धा मत्ताश्शून्ये महामृगाः ।
दृष्ट्वा समभिवर्तन्ते, सीते ! दुःखमतो वनम् ॥ ८ ॥

विस्रब्धाः—निश्शङ्का इति यावत् । शून्ये—निर्मानुषे । दृष्ट्वा त्वां समभिवर्तन्ते—अभिमुखमागच्छन्ति ॥ ८ ॥

सग्रहास्सरितश्चैव पङ्कवत्यश्च दुस्तराः ।
मत्तैरपि गजैर्नित्यमतो दुःखतरं वनम् ॥ ९ ॥

गजैरपि दुस्तरा इति योजना ॥ ९ ॥

लताकण्टकसङ्कीर्णाः कृकवाकूपनादिताः ।
निरपाश्च [1] सुदुःखाश्च मार्गा दुःखमतो वनम् ॥ १० ॥

कृकवाकुः—वनकुक्कुटः । निरपाः—निर्गतोदकाः, 'ऋक्पूः' इत्यादिना अप् समासान्तः ॥ १० ॥

सुप्यते पर्णशय्यासु † स्वयं भग्नासु भूतले ।
रात्रिषु श्रमखिन्नेन तस्माद्दुःखतरं वनम् ॥ ११ ॥

स्वयं भग्नासु—स्वयं पतितशीर्णपर्णकृतास्वित्यर्थः । श्रमखिन्नेन—बर्हिसमित्कुशपुष्पफलाद्याहरणश्रमखिन्नेन मया उक्तशय्यायां सुप्यते । आगते त्वयापि तत्र स्वपितव्यम् । अतः—दुःखेत्यादि ॥ ११ ॥

अहोरात्रं च सन्तोषः कर्तव्यो नियतात्मना ।
फलैर्वृक्षावपतितैः, सीते ! दुःखमतो वनम् ॥ १२ ॥

---

* शून्ये-निर्मानुषे वने विस्रब्धाः—निरुपद्रवत्वात्, अत एव क्रीडमानाः मत्ताश्च महामृगाः अदृष्टपूर्वमनुष्यदर्शनेन संभ्रान्ता अभिमुखं पतेयुरिति भावः · † स्वयं भग्नासु—न तु किसलयनिर्मितं शयनमिति भावः ।

[1] सुदुर्गाश्च—ङ.

वृक्षावपतितैः—वृक्षात्स्वयमेव पतितैः फलैरेव केवलं सन्तोषः कर्तव्यः ॥ १२ ॥

उपवासश्च कर्तव्यो यथाप्राणेन, मैथिलि !
*जटाभारश्च कर्तव्यो वल्कलाम्बर[1]धारिणा ॥ १३ ॥

यथाप्राणेन—यथाबलानुसारेण ॥ १३ ॥

†देवतानां पितॄणां च कर्तव्यं विधिपूर्वकम् ।
प्राप्तानामतिथीनां च नित्यशः प्रतिपूजनम् ॥ १४ ॥
कार्यस्त्रिरभिषेकश्च ‡काले काले च नित्यशः ।
चरतां नियमेनैव तस्माद्दुःखतरं वनम् ॥ १५ ॥

नियमेनैव चरतामिति । कालक्षेपं कुर्वतामित्यर्थः ॥ १५ ॥

§उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः ।
आर्षेण विधिना वेद्यां, बाले ! दुःखमतो वनम् ॥ १६ ॥

आर्षेण विधिनेति । न तु पौरजानपदपदार्थोपेतविधिनेत्यर्थः ॥

‖यथालब्धेन सन्तोषः कर्तव्यस्तेन, मैथिलि !
यताहारैर्वनचरैर्नित्यं दुःखमतो वनम् ॥ १७ ॥

तेनेति । वन्यपदार्थेनेति यावत् ॥ १७ ॥

---

* केशसंस्कारोपयोगितैलाद्यभावादिति भावः । † यद्यपि नगरेऽपि देवतादिकार्यं निर्वर्तनीयमेव ; परन्तु वने तावत्सामग्रीसंपादनक्लेशः अत्र विवक्षितः । ‡ काले काले—त्रिकालेष्वपि । अत्रापि नगरापेक्षया विशेषे हेतुमाह—चरतां नियमेनेति । § उपहारः—बलिः—गो. आर्षेण—वानप्रस्थोचितेन—ती. ‖ यथालब्धेन—यावल्लब्धेन—गो.

[1] धारणम्—ङ.

* अतीव वातास्तिमिरं बुभुक्षा चास्ति नित्यशः ।
भयानि च महान्त्यत्र ततो दुःखतरं वनम् ॥ १८ ॥

तिमिरमिति । रात्रिष्विति शेषः ॥ १८ ॥

सरीसृपाश्च बहवो बहुरूपाश्च, भामिनि !
चरन्ति पथि ते दर्पात्ततो दुःखतरं वनम् ॥ १९ ॥

नदीनिलयना[1]स्सर्पा नदीकुटिलगामिनः ।
तिष्ठन्त्यावृत्य पन्थानं ततो दुःखतरं वनम् ॥ २० ॥

नदीवत्कुटिलगामिनस्तथा ॥ २० ॥

पतङ्गा वृश्चिकाः कीटा दंशाश्च मशकैस्सह ।
बाधन्ते नित्यं, अबले! सर्वं दुःखमतो वनम् ॥ २१ ॥

पतङ्गाः—शलभाः ॥ २१ ॥

द्रुमाः कण्टकिनश्चैव कुशाः काशाश्च, भामिनि !
वने † व्याकुलशाखाग्राः तेन दुःखतरं वनम् ॥ २२ ॥

व्याकुलशाखाः व्याकुलाग्राश्च तथा । उभयं क्रमात् द्रुमकुश-विशेषणम् ॥ २२ ॥

कायक्लेशाश्च बहवो भयानि विविधानि च ।
अरण्यवासे वसतो दुःखमेव सदा वनम् ॥ २३ ॥

---

* तिमिरं—अतिनिबिडत्वात् मध्याह्नेऽपि । बुभुक्षा—अपरिच्छिताहारसेवया ।
† कुशकाशयोश्शाखाः कुशकाशपर्णान्येव—गो.

[1] स्सर्वे—ङ.

[1] क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः।
न भेतव्यं च भेतव्ये नित्यं दुःखमतो वनम् ॥ २४ ॥

भेतव्ये—भेतव्यविषये। प्रागुक्तसर्पादिपदार्थविषय इत्यर्थः ॥२४॥

तदलं ते वनं गत्वा क्षमं न हि वनं तव।
विमृशन्निह पश्यामि बहुदोषमतो वनम् ॥ २५ ॥

वनं मत्वाऽलमिति। 'अलं खल्वोः' इति प्रतिषेधार्थाल-मुपपदे क्त्वा। वनं न गन्तव्यमित्यर्थः ॥ २५ ॥

वनं तु नेतुं न कृता मतिर्यदा
बभूव रामेण तदा महात्मना।
न तस्य सीता वचनं चकार तत्
ततोऽब्रवीद्राममिदं सुदुःखिता ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टाविंशः सर्गः

---

तद्वचनं न चकार। वनाननुगमननियोगं नाङ्गीचकार, तत एव हेतोरिदमब्रवीत्। तरु (२६) मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे अष्टाविंशस्सर्गः

---

[1] क्रोधमोहौ—ङ.

## एकोनत्रिंशस्सर्गः

[सीतादृढाध्यवसाय.]

एतत्तु वचनं श्रुत्वा सीता रामस्य दुःखिता ।
प्रसक्ताश्रुमुखी * मन्दमिदं वचनमब्रवीत् ॥ १ ॥

इदमब्रवीदित्युक्तम् । तदेव प्रदर्श्यते—एतत्त्वित्यादि ॥ १ ॥

ये त्वया कीर्तिता दोषा वने वस्तव्यतां प्रति ।
गुणा इत्येव तान् [1] विद्धि तव स्नेह [2] पुरस्कृता ॥ २ ॥

तव स्नेहपुरस्कृता—पुरस्कृतत्वादेव—त्वदनुगृहीतत्वादेव हेतोः गुणा इत्येव विद्धीति ॥ २ ॥

मृगास्सिंहा गजाश्चैव शार्दूलाश्शरभास्तथा ।
पक्षिणः सृमराश्चैव ये चान्ये वनचारिणः ॥ ३ ॥
अदृष्टपूर्वरूपत्वात् सर्वे ते † तव, राघव !
रूपं दृष्ट्वाऽपसर्पेयुः [3] भये सर्वे हि बिभ्यति ॥ ४ ॥

एतदेव प्रदर्शयति—मृगा इत्यादि । सृमरः—गवयः—(tamil)-सृमरैः अदृष्टपूर्वं तावकं रूपं येषां ते तथा, तेषां भावस्तत्त्वं, तस्मा-दित्यर्थः । भये—भयहेतौ सति ॥ ४ ॥

त्वया च सह गन्तव्यं मया ‡ गुरुजनाज्ञया ।
त्वद्वियोगेन मे, राम ! त्यक्तव्यमिह जीवितम् ॥ ५ ॥

त्वद्वियोगेन हेतुना ॥ ५ ॥

---

* मन्दमिति । 'प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत्' (२७-१) इतिवन्न सोद्वेगमब्रवीत् । रामप्रतिषेधजभयादिति भावः । † 'ते सर्वे तव रूपं' इत्यन्वयः । ‡ 'इयं सीता मम सुता....छायेवानुगता सदा' (बा. ७३-२६) इत्युक्तत्वादितिभावः ।

[1] मन्ये—ङ. [2] पुरस्कृतान्—ङ. [3] तव—ङ.

न च मां त्वत्समीपस्थामपि [1] शक्नोति, राघव !
सुराणामीश्वर[2]श्शक्रः प्रधर्षयितुमोजसा ॥ ६ ॥

पतिहीना तु या नारी सा न शक्ष्यति जीवितुम् ।
काममेवंविधं, राम ! त्वया मम * [3]विदर्शितम् ॥ ७ ॥

पतिहीनेति । प्रबलभर्तृहीनेति यावत् । न शक्ष्यतीति । उक्तरूपवन इति शेषः । कामं विदर्शितं भवता । अथापि त्वद्भर्तृकाया न भीतिलेश इति शेषः ॥ ७ ॥

अथवाऽपि, महाप्राज्ञ ! ब्राह्मणानां [4]मुखाच्छ्रुतम् ।
पुरा पितृगृहे, [5]सत्यं वस्तव्यं किल † मे वने ॥ ८ ॥

अथवा किमनेन सुखदुःखविचारेण । मम तु वनवासप्राप्तिर्ब्रह्मलिखितेत्याह — अथवेत्यादि । पुरा पितृगृहे निवसन्त्या मया ब्राह्मणानां मुखात् 'त्वया किल वने वस्तव्यम्' इति श्रुतम् ॥ ८ ॥

[6]लक्षणिभ्यो द्विजातिभ्यः श्रुत्वाऽहं वचनं पुरा ।
वनवासकृतोत्साहा नित्यमेव, महाबल ! ॥ ९ ॥

कथमेवं निश्चयसंभव इत्यत्राह —लक्षणिभ्य इति । लक्षणज्ञानमस्त्येषामिति इनिः, सामुद्रिकलक्षणविद्भ्य इत्यर्थः ॥ ९ ॥

---

* दशमसर्गारम्भश्लोके—विदर्शिता—विपरीतं बोधितेति व्याख्यातत्वादत्रापि विदर्शितं—विपरीतमुपदिष्टमित्यर्थः स्वरसः । पतिहीनाया जीवनमेव यदाऽसंभवि, तदा तस्यै अन्यानुवर्तनोपदेशोऽत्यन्तं विपरीत एवेत्याशयः । † मे मया—गो.

[1] शक्तोऽपि—ङ. [2] इशक्तः—ङ. [3] निदर्शितम्—ङ. [4] मया श्रुतम्—ङ.
[5] नित्यं—ङ. [6] लाक्षणिभ्यः—ङ.

*आदेशो वनवासस्य प्राप्तव्यस्स मया किल ।
सा त्वया सह [1]तत्राहं यास्यामि, प्रिय ! नान्यथा ॥१०॥

सः वनवासस्यादेशः ब्राह्मणोक्तः मया प्राप्तव्यः किल । ललाटलिपिरशक्यपरिमार्जनत्वादित्याशयः । सा—तथाऽऽदेशवत्यहं । तत्र—तस्मादेव हेतोस्त्वया सह यास्यामि । नान्यथा ॥ १० ॥

कृतादेशा भविष्यामि गमिष्यामि सह त्वया ।
कालश्चायं समुत्पन्नः सत्यवाग्भवतु †द्विजः ॥ ११ ॥

एवं सति कृतादेशा—कृतब्राह्मणनियोगा भविष्यामि । अतस्त्वया सह गमिष्यामि । समुत्पन्न इति । वनवासस्येति शेषः ॥ ११ ॥

वनवासे हि जानामि दुःखानि बहुधा किल ।
प्राप्यन्ते नियतं, वीर ! पुरुषैरकृतात्मभिः ॥ १२ ॥

वनवासे हि बहुधा दुःखानि किल सन्तीति जानाम्येव । अथापि तद्दुःखमकृतात्मभिः—अजितेन्द्रियैर्विषयलोलुपैरेव प्राप्यते । न त्वादृङ्मादृग्जनेनेत्यर्थः ॥ १२ ॥

कन्यया च पितुर्गेहे वनवासः श्रुतो मया ।
‡भिक्षिण्या[2]स्साधुवृत्ताया मम मातु§रिहाग्रतः ॥ १३ ॥

---

* आदेशः—दैवादेशः विध्यपरपर्यायः ब्राह्मणमुखाच्छ्रुतः. † एकवचनेन तेषामैकमत्यं सूच्यते. ‡ ननु लक्षणज्ञानां भ्रमो भवेत, तत्राह—भिक्षिण्याः—तापस्याः । तपोयुक्तत्वेन तस्याः भ्रमो न संभवतीति भावः—ति. साधुवृत्ताया भिक्षिण्या इति पञ्चमी । § अत्र ‘इह’ इति पदमुत्तरश्लोकान्वयि—ति. इह मातुः एतज्जन्मनि जनन्या इत्यर्थः—सत्य. अथवा पितृगृहे लक्षणिभ्यः श्रुतम् । इह—पतिगृहे च मातुः—कदाचिदागताया मातुः, अथवा कौसल्यैव माता, तस्या अग्रतः भिक्षिण्या श्रुतमित्यर्थः ।

[1] भत्राहं—ङ. [2] इशमवृत्ताया—ङ. च.

न केवलं ब्राह्मणमुखाद्वनवासश्रवणं, अपि तु तापसीमुखादपी-त्याह—कन्ययेत्यादि। गेह इति। स्थितवत्येति शेषः। भिक्षिणी-श्रीब्रादित्वादिनिः, तापसीति यावत् ॥ १३ ॥

प्रसादितश्च वै पूर्वं त्वं वै बहु[1]विधं, प्रभो !
गमनं वनवासस्य काङ्क्षितं हि सह त्वया ॥ १४ ॥

वनवासस्य गमनं प्रति प्रसादित इति योजना ॥ १४ ॥

*कृतक्षणाऽहं, भद्रं ते, गमनं प्रति, राघव !
वनवासस्य शूरस्य चर्या हि मम रोचते ॥ १५ ॥

कृतक्षणा—कृतानुमतिका। वने वासो यस्य स तथा। चर्या—शुश्रूषा ॥ १५ ॥

शुद्धात्मन् ! [2]प्रेमभावाद्धि भविष्यामि विकल्मषा।
भर्तारमनुगच्छन्ती भर्ता हि [3]मम दैवतम् ॥ १६ ॥
[4]प्रेत्यभावेऽपि [5]कल्याणसङ्गमो मे सह त्वया।

अनुगच्छन्ती विकल्मषा भविष्यामीति योजना। प्रेत्यभावे—मृत्वा शरीरान्तरपरिग्रहेऽपि हि यस्मात् त्वया कल्याणसङ्गमः—दिव्यसुखहेतुस्सङ्गमास्सिद्धः—अत इह नित्यसङ्गमः कैमुतिकासिद्ध इत्यर्थः॥

---

* कृतः क्षणः—उत्सवः—उत्साहः यया सा। कृतोत्साहेत्यर्थः। अहं गमनं प्रति कृतोत्साहा। हे राम ! ते भद्रं भवतु इत्यन्वयः।

[1] तिथं—ङ. च. [2] प्रेष्य—ङ. [3] पर—ङ. च. [4] एतदनन्तरं—'पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रो रक्षन्ति वार्धक्ये न स्त्री स्वातन्त्र्यमर्हति ॥' इत्यधिकम्—ङ. [5] कल्याणः संगमः—ङ. च.

श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां यशस्विनाम् ॥ १७ ॥

इह लोके च पितृभिः या स्त्री यस्य, महामते!
*अद्भिर्दत्ता †स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ॥ १८ ॥

कुतः प्रेत्य च सङ्गमसिद्धिरित्यत्राह—श्रुतिरित्यादि। ब्राह्मणानां मुखात् पुण्या ‡किल श्रुतिः यत उक्तार्थप्रतिपादिका श्रूयते अत इत्यर्थः। का सेत्यतस्तां श्रुतिं पठति—इहेत्यादि। पद्यसिद्धये वाल्मीकिना महामत इति पदं प्रयुक्तम्। श्रुतिस्वरूपं तु तदतिरिक्तं यजुर्मन्त्ररूपम्—इह लोके च पितृभिर्यास्त्री यस्याद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेऽपि तस्य सेति ॥ १८ ॥

एवमस्मात्स्वकां नारीं सुवृत्तां हि पतिव्रताम्।
नाभिरोचयसे नेतुं त्वं मां केनेह हेतुना ॥ १९ ॥

एवमिति। श्रुतिस्मृतिन्यायतो नित्यसम्बन्धे सिद्धे सतीत्यर्थः। इह—इदानीमिति यावत् ॥ १९ ॥

भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः।
नेतुमर्हसि, काकुत्स्थ! समानसुखदुःखिनीम् ॥ २० ॥

सुखदुःखयोरिति। तत्साधनानुष्ठानयोरित्यर्थः। अत एव समानसुखदुःखिनीम् ॥ २० ॥

यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि।
विषमग्निं जलं वाऽहमास्थास्ये मृत्युकारणात् ॥ २१ ॥

---

* अद्भिस्सहेत्यर्थः. † स्वधर्मेण—पतिव्रताधर्मेण विद्यमाना सा प्रेत्यभावेऽपि तस्य पत्नी भवत्येव—ती. ‡ खिलश्रुतिः—क.

एवं बहुविधं तं सा याचते गमनं प्रति ।
नानुमेने महाबाहुस्तां नेतुं विजनं वनम् ॥ २२ ॥

नयनाननुमतौ हेतुः—विजनमिति । श्वश्रूननान्दमुखरक्षकजनरहितामिति यावत् ॥ २२ ॥

एवमुक्ता तु सा चिन्तां मैथिली समुपागता ।
स्नापयन्तीव गामुष्णैरश्रुभिर्नयनच्युतैः ॥ २३ ॥

गां—भुवम् ॥ २३ ॥

चिन्तयन्तीं तथा तां तु निवर्तयितुमात्मवान् ।
[1] ताम्रोष्ठीं स तदा सीतां काकुत्स्थो बह्वसान्त्वयत् ॥२४॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकोनत्रिंशस्सर्गः

---

वर (२४) मानः सर्गः ॥ २२–२४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकोनत्रिंशस्सर्गः

---

## त्रिंशस्सर्गः
### [सीतावनानुगमनाभ्यनुज्ञा]

सान्त्व्यमाना तु रामेण मैथिली जनकात्मजा ।
वनवास[2]निमित्तार्थं भर्तारमिदमब्रवीत् ॥ १ ॥

एवं न्यायतः प्रतिपाद्यमानानुगमनस्याननुमतिर्दौर्बल्यमूलेति मर्मोक्त्या प्रतिबुद्धानुव्रजनदार्ढ्यो भगवाननुव्रजनं अनुमन्यते सीतायाः ।

---

[1] क्रोधाविष्टां तु वैदेहीं—ङ. [2] निमित्ताय—ङ.

सान्त्व्यमानेत्यादि । वनवासानिमित्तार्थमिति । वनवासनिमित्तानुमतिसिद्ध्यर्थमित्यर्थः । *अन्यस्तु 'वनवासानिमित्ताय' इति पठति । स पाठो नास्माभिर्दृश्यते ॥ १ ॥

†सा [1]तमुत्तमसंविग्ना सीता विपुलवक्षसम् ।
‡प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥ २ ॥

उत्तमसंविग्ना—अतिभीतेति यावत् । प्रणयात्—स्नेहात् । अभिमानात्—अत्यन्तमिष्टभर्तृत्वेन रहः सुखदुःखकोपप्रीत्यादिप्रयुक्तवचनार्ह इत्यभिमानात् । परिचिक्षेप—परिक्षेपवचनं कृतवती ॥ २ ॥

§किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः ।
राम! जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ ३ ॥

किन्तदित्यतः—किन्त्वेत्यादि । हे राम! त्वा—त्वां पुरुषविग्रहं—(वेष) विग्रहमात्रेण पुरुषं, क्रियायां तु स्त्रियमेव सन्तं जामातरं प्राप्य किममन्यत—तत्त्वं न ज्ञातवानित्यर्थः । यदि जानाति मां तुभ्यं न प्रयच्छेदित्याक्षेपशेषः ॥ ३ ॥

‖अनृतं बत! लोकोऽयमज्ञानाद्यद्धि वक्ष्यति ।
तेजो नास्ति परं रामे तपतीव दिवाकरे ॥ ४ ॥

---

* गोविन्दराजः.　† उत्तमं—अत्यन्तं कंपमाना—गो.　‡ प्रणयात्—स्नेहात्, अभिमानात्—मदीयोऽयमित्यभिमानात्, कोपाद्वा, प्रणयकोपादिति संपिण्डितोऽर्थः—गो, §अथवा—'सहधर्मचरी तव' इत्युक्त्वा भवते मां ददत् मे पिता, इदानीं मम त्यागे त्वा जामातरं अमन्यत किं—मन्येत किम्? भवन्तं आत्मनो जामातृत्वेन निर्देशायापि लज्जेत मे पितेति भावः । ‖अयं लोको यत् वक्ष्यति—वदति 'रामे परं तेजोऽस्तीति' इत्यर्थसिद्धम्; तत् अज्ञानात् । अतोऽनृतं बत! तपति दिवाकर इव रामे परं तेजो नास्ति, व्यतिरेकदृष्टान्तः—गो.

[1] मुहूर्तं—ङ.

अयं लोकः अज्ञानात्—उक्तरीत्या दुर्निरूपत्वस्वरूपापरिज्ञानाद्धेतोर्यत् वक्ष्यति—वदति तध्द्यनृतं बत ! किं वदतीत्यतः—तेज इति । रामे परं—सर्वोत्तरं स्वं तेजः परिगृह्य तपति सति दिवाकरे तेजो नास्तीव—नास्त्येव । दिवाकरतेजः रामतेजस्सदृशं न भवतीति यद्वदति तदनृतमित्यर्थः ॥ ४ ॥

*किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते ।
यत्परित्यक्तुकामस्त्वं मामनन्यपरायणाम् ॥ ५ ॥

किं हि कृत्वेति । मनसि किं विचार्येत्यर्थः ॥ ५ ॥

द्युमत्सेनसुतं [1] वीर ! सत्यवन्तमनुव्रताम् ।
सावित्रीमिव मां विद्धि त्वमात्मवशवर्तिनीम् ॥ ६ ॥

द्युमत्सेन इति कश्चित् ; तस्य सुतं सत्यवान्नामकमनुव्रतां सावित्रीं—तस्य पत्नीमिव मां विद्धि । अयमर्थस्सावित्र्युपाख्यानेऽग्रे स्पष्टीभविष्यति ॥ ६ ॥

न त्वहं † मनसाऽप्यन्यं द्रष्टाऽस्मि त्वदृतेऽनघ !
त्वया, राघव ! गच्छेयं यथाऽन्या कुलपांसिनी ॥ ७ ॥

न त्वित्यादि ! यथा कुलपांसिनी अन्यं पश्यति एवमहं त्वदृतेऽन्यं न द्रष्टाऽस्मि, लुट् । अतः ते तन्निमित्तभीत्यभावात्त्वया सह गच्छेयम् ॥ ७ ॥

---

* भार्यायाः सहनयनं अकृत्यं किमिति पृच्छति—किमित्यादि. † मनसाऽपि अन्यं न द्रष्टाऽस्मीत्यन्वयः । न स्मरामीति यावत्.

[1] वीरं—ङ.

**स्वयं तु भार्यां *कौमारीं चिरमध्युषितां सतीम् ।**
**शैलूष इव मां, राम! परेभ्यो दातुमिच्छसि ॥ ८ ॥**

पुनर्मर्मवचनान्तरं—स्वयन्त्वित्यादि । कौमारीं—युवतीमिति यावत् । परेभ्यः—अन्येभ्यो दातुमिच्छसि यथा शैलूषः । तस्य हि जायाजीवित्वात्सधर्मोऽस्ति, 'शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः' इति ॥

**†यस्य पथ्यंचरामात्थ यस्य चार्थेऽवरुध्यसे ।**
**तस्य त्वं भव वश्यश्च[1] विधेयश्च सदाऽनघ! ॥ ९ ॥**

कुत एवं प्रसङ्ग इत्यत्राह—यस्येत्यादि । पथ्यञ्चरां इष्टानुवर्तिनीं मामात्थ । रात्रिंचर इतिवत्कृत्पूर्वपदमात्रस्य मुं छान्दसः । यस्य चार्थे—यत्प्रयोजननिमित्तमवरुध्यसे—अवरुद्धस्वप्रयोजनो भवसि स त्वमेव तस्य वश्यश्च भव । अत एव विधेयश्च भव । वश्यः—इष्टानुवर्ती । विधेयः—नियोज्यः । नाहं तदिष्टानुवर्तिनी तद्विधेया चेह वसामीत्यर्थः ॥

**स मामनादाय वनं न त्वं प्रस्थातुमर्हसि ।**
**तपो वा यदि वाऽरण्यं स्वर्गो वा मे सह त्वया ॥ १० ॥**

**न च मे भविता तत्र कश्चित्पथि परिश्रमः ।**
**‡पृष्ठतस्तव गच्छन्त्या विहारशयने[2]ष्विव ॥ ११ ॥**

विहारशयनेष्विव पथि परिश्रमो नेति योजना ॥ ११ ॥

---

* परेभ्यो दातुमिच्छसीत्यस्योपपादकं—कौमारीं, चिरमध्युषितामिति. † यस्य मातृजनस्य पथ्यं—हितं आत्थ यस्य चार्थे मां निवारयसे—तस्य त्वमेव वश्यो भव । यद्वा यस्य—मद्रूपस्य जनस्य पथ्यमात्थ—तस्य त्वं वश्यो भव । त्वमेव मद्वचनं शृण्वित्यर्थः । यद्वा यस्य भरतस्य पथ्यमात्थ यस्य चार्थे—अभिषेकरूपप्रयोजननिमित्ते अवरुध्यसे—निगृहीतोऽसि तस्य त्वं वश्यो भव—गो. ‡ विहारार्थमृदुशयनस्थिताया इव तव पृष्ठतो गच्छन्त्याः मम परिश्रमो न भवितेत्यर्थः ।

[1] नियोज्यश्च—ङ. [2] ष्वपि—ङ.

कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः ।
*तूलाजिनसमस्पर्शा मार्गे मम सह त्वया ॥ १२ ॥

तूलैः, †अजिनविशेषैः शीतमृदुस्पर्शवद्भिस्समास्तथा ॥ १२ ॥

महावातसमुद्भूतं यन्मा[1]मवकरिष्यति ।
रजो, रमण ! तन्मन्ये पारार्घ्यमिव चन्दनम् ॥ १३ ॥

शाद्वलेषु यदा शिश्ये वनान्तर्वनगोचरा ।
[2]कुथास्तरणयुक्तेषु किं स्यात्सुखतरं ततः ॥ १४ ॥

यदा शिश्य इति । त्वया सहेति शेषः । कुथाः—चित्रकम्बलविशेषाः । ‡आस्तरणं—कटादितल्पं मञ्चः ॥ १४ ॥

पत्रं मूलं फलं यत्त्वमल्पं वा यदि वा बहु ।
दास्यसे स्वयमाहृत्य तन्मेऽमृतरसोपमम् ॥ १५ ॥

न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः ।
आर्तवान्युपभुञ्जाना पुष्पाणि च फलानि च ॥ १६ ॥

न मातुरित्यादौ 'अधीगर्थ...' इति कर्मणि षष्ठी । आर्तवानि—तत्तदृतौ भवानि ॥ १६ ॥

न च तत्र गतः किञ्चिद्द्रष्टुमर्हसि विप्रियम् ।
§[3]मत्कृते न च ते शोको न भविष्यामि [4]दुर्भरा ॥ १७ ॥

---

*तूलः—पर्यङ्कनिर्माणोपयोगी मृदुतमः कार्पासविशेषः. †अजिनं–कन्दल्याद्यजिनं–'कदली कन्दली च नचमूरुप्रियकावपि । समूरुश्चेति हरिणा अमी अजिनयोनयः' इत्यभिधानात्–गो. ‡आस्तरणानि–कौसुंभोत्तरच्छदाः–गो. §मत्कृते विप्रियं न द्रष्टुमर्हसीति योजना । न च ते शोकः मत्कृते । नापि दुर्भरा भविष्यामि ।

[1] मपकरिष्यति–ङ. [2] कुशा–ङ. [3] त्वत्कृते–ङ. [4] दुर्मनाः–ङ.

यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ।
इति जानन् परां प्रीतिं गच्छ, राम! मया सह ॥ १८ ॥
अथ मामव*मव्यग्रां वनं नैव नयिष्यसे ।
विषमद्यैव पास्यामि [1] मा वशं द्विषतां गमम् ॥ १९ ॥

कैकेयीवन्मथितसिद्धान्तमाह—अथेत्यादि । प्रश्नेऽथशब्दः । द्विषतां वशं मा गमम् । भरतादयो द्विषन्तः ॥ १९ ॥

पश्चादपि हि दुःखेन मम नैवास्ति जीवितम् ।
उज्झितायास्त्वया, नाथ! तदैव मरणं [2] वरम् ॥ २० ॥

पश्चादपीति । किञ्चित्कालानन्तरमपीत्यर्थः । यदेवमतः—तदैव—त्वद्वियोगकाल एवेत्यर्थः ॥ २० ॥

इमं हि सहितुं शोकं मुहूर्तमपि नोत्सहे ।
किं पुनर्दशवर्षाणि त्रीणि चैकं च दुःखिता ॥ २१ ॥
इति सा शोकसन्तप्ता विलप्य करुणं बहु ।
चुक्रोश पति†मायस्ता भृशमालिङ्ग्य सस्वरम् ॥ २२ ॥

सस्वरं—सशब्दमिति यावत् ॥ २२ ॥

सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजाङ्गना ।
चिरसन्नियतं बाष्पं मुमोचाग्निमिवारणिः ॥ २३ ॥

दिग्धैः—विषलिप्तबाणैः । सन्नियतं—सम्यङ्निरुद्धम् ॥ २३ ॥

तस्याः स्फटिकसङ्काशं वारि सन्तापसंभवम् ।
नेत्राभ्यां परिसुस्राव पङ्कजाभ्यामिवोदकम् ॥ २४ ॥

---

* अव्यग्रां—वनगमने भीतिरहिताम्—गो. † आयस्ता—आयासं प्राप्ता.

[1] माविशं द्विषतां वशं—ङ. [2] ध्रुवं—ङ.

*[1] तच्चैवामलचन्द्राभं मुखमायतलोचनम् ।
पर्यशुष्यत † बाष्पेण जलोध्दृतमिवाम्बुजम् ॥ २५ ॥

जलादुध्दृतं—विलूय गृहीतमिति यावत् ॥ २५ ॥

तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखिताम् ।
उवाच वचनं रामः परिविश्वासयंस्तदा ॥ २६ ॥

परिविश्वासयन्—श्वसप्राणने, उज्जीवयन् ॥ २६ ॥

न, देवि! तव ‡ दुःखेन स्वर्गमप्यभिरोचये ।
न हि मेऽस्ति भयं किञ्चित् § स्वयंभोरिव सर्वतः ॥ २७ ॥

तव दुःखेनेति । तव वियोगदुःखेन, प्राप्यमिति शेषः । स्वयंभोर्भगवतो ब्रह्मणः सर्वतो भयाभावः स्वव्यतिरिक्ततत्त्ववस्त्वन्तराभावेन 'द्वितीयाद्वै भयम्' इति श्रुतेः । अत्र तु सर्वतो भयाभावमात्रे दृष्टान्तः । अत्र निर्भयत्वं पूर्णबलप्रयुक्तम् ॥ २७ ॥

तव सर्वमभिप्रायमविज्ञाय, शुभानने!
वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥ २८ ॥

सर्वं—समग्रं आन्तरं-अभिप्रायमविज्ञाय तत एव हेतोस्तव वनवासं न रोचये—नाङ्गीकृतवान् । इतः प्राक् इति शेषः ॥ २८ ॥

---

* सिता—पूर्णमासी । तत्सम्बन्धी अमलः राह्वाद्यनुपरक्तः यश्चन्द्रः तत्सदृशं—ति.
† बाष्पेण—सन्तापभवेनोष्णेन ; अम्बुजपक्षे ऊष्मणेत्यर्थः 'बाष्पमूष्माश्रु' इत्यमरः—गो.
‡ हेतौ वेयं तृतीया । तव दुःखसंपादनेन मम यदि स्वर्गं वा भवेत्—तदा स्वर्गं नाहं कामये इति भावः । § स्वयंभोः—नारायणस्य, न चतुर्मुखस्य ; तस्य मधुकैटभादिभ्यो भयसंभवात् । आर्षो डुप्रत्ययः । सर्वतः—सर्वजन्तुभ्यः—गो. सर्वतः—यस्मात् कस्मादपि, 'सर्वावस्थां गतः' 'सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती' इत्यादाविव प्रातिस्विकतः सर्वापेक्षया ।

[1] तत्सितामलचन्द्राभं— तच्चैवामलसंकाशं—ङ.

***यत्सृष्टाऽसि मया सार्धं वनवासाय, मैथिलि!**
**न विहातुं मया शक्या [1]कीर्तिरात्मवता यथा ॥ २९ ॥**

यत् सृष्टाऽसि–† निश्चिताऽसि। इदानीमिति शेषः ॥ २९ ॥

**धर्मस्तु, गजनासोरु! सद्भिराचरितः पुरा।**
**तं चाहमनुवर्तिष्ये यथा सूर्यं सुवर्चला ॥ ३० ॥**

सर्वात्मना सहृदयायास्ते सह नयनं धर्मश्चेत्याह—धर्म इत्यादि। तं च–पूर्वाचारितधर्ममित्यर्थः। त्वञ्च यथा सूर्यं सुवर्चलाऽन्ववर्तत तथा मामनुवर्तस्व ॥ ३० ॥

**न खल्वहं न गच्छेयं वनं, जनकनन्दिनि!**
**वचनं तन्नयति मां पितुस्सत्योपबृंहितम् ॥ ३१ ॥**

मम तु गमनं निश्चितमेवेत्याह—न खल्वित्यादि। न गच्छेयमिति न खलु; गच्छेयमेव सर्वथेत्यर्थः। कुत इत्यतः–वचनमित्यादि ॥

**एष धर्मश्च, सुश्रोणि! पितुर्मातुश्च वश्यता।**
**[2]अतश्च तं व्यतिक्रम्य नाहं जीवितुमुत्सहे ॥ ३२ ॥**

एष इत्येतच्छब्दार्थः पितुर्मातुश्च वश्यतेति। वश्यता–इष्टानुवर्तिता ॥ ३२ ॥

**‡अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते।**
**स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ॥ ३३ ॥**

अस्वाधीनमिति अप्रत्यक्षत्वादेव। प्रकारैः–भावनामात्रसाध्याराधनप्रकारैः ॥ ३३ ॥

---

* सृष्टा–दैवेनेति शेषः–गो. † 'मुक्तनिर्मितयोः प्राज्ये त्रिषु सृष्टं तु निश्चिते' इति रुद्रः। ‡ प्रत्यक्षदैवाराधनं विहायाप्रत्यक्षदैवस्याराधनं कथं युक्तं स्यादिति भावः।

[1] प्रीति–ङ. च. [2] आज्ञां चाहं–ङ.

*[1] यत्र त्रयं त्रयो लोकाः पवित्रं तत्समं भुवि ।
नान्यदस्ति, शुभापाङ्गे ! तेनेदमभिराध्यते ॥ ३४ ॥

यत्र त्रयमिति । पितृमातृगुरुरूपमिति यावत् ॥ ३४ ॥

न सत्यं दान†मानौ वा न यज्ञाश्चाप्तदक्षिणाः ।
तथा बलकराः, सीते ! ‡यथा सेवा पितुर्हिता ॥ ३५ ॥

बलकराः—परलोकबलकरा इति यावत् । हिता—हितावहा पितुस्सेवा यथा न तथेति व्यतिरेके ॥ ३५ ॥

स्वर्गो धनं वा धान्यं वा विद्याः पुत्रास्सुखानि च ।
‡गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम् ॥ ३६ ॥

गुरुवृत्तिः—गुरूचितवृत्तिः ॥ ३६ ॥

देवगन्धर्वगोलोकान् ब्रह्मलोकांस्तथा[2]ऽपरान् ।
प्राप्नुवन्ति महात्मानो मातापितृपरायणाः ॥ ३७ ॥

गवां लोकाः—गोलोकाः ॥ ३७ ॥

[3] स मा पिता यथा शास्ति सत्यधर्मपथे स्थितः ।
तथा वर्तितुमिच्छामि स हि धर्मस्सनातनः ॥ ३८ ॥

मा—मामिति यावत् ॥ ३८ ॥

---

* यत्र पित्राराधने सति त्रयं धर्मार्थकामरूपं भवति त्रयो लोकाश्च साधिता भवन्ति तत्समं पवित्रं भुवि नास्ति—ति. यत्त्रयं तत्त्रयो लोकाः यत—गुर्वादित्रयं तत त्रयो लोकाः । लोकत्रयमपि तदाराधनसाध्यमित्यर्थः—गो. † मानः—देवपूजा । आप्तदक्षिणाः—इष्टदक्षिणाः—यथेष्टदक्षिणाः—सर्वस्वदक्षिणा इति यावत । ‡ गुरौ वृत्तिः—गुरुवृत्तिः गुरुशुश्रूषेति यावव ।

[1] यत्त्रयं तत्त्रयो लोकाः—ङ. [2] नरः—ङ. [3] स मां—ङ.

* मम सन्ना मतिः, सीते! नेतुं त्वां दण्डकावनम्।
वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥ ३९ ॥

नेतुं मतिस्सन्नेति। त्वद्भावापरिज्ञानादिति शेषः। सुनिश्चिता—सुनिश्चितेति ज्ञाता। इदानीमिति शेषः ॥ ३९ ॥

सा हि † दिष्टया नवद्याङ्गि! वनाय, मदिरेक्षणे!
अनुगच्छस्व मां, भीरु! सहधर्मचरी भव ॥ ४० ॥

दिष्टया वनाय—वनं गन्तुं निश्चिता सा त्वमनुगच्छस्व ॥४०॥

सर्वथा सदृशं, सीते! मम स्वस्य कुलस्य च।
‡ व्यवसाय[1]मनुक्रान्ता, कान्ते! त्वमतिशोभनम् ॥ ४१ ॥

व्यवसायं—निश्चयं। अनुक्रान्ता—अनुप्राप्ता ॥ ४१ ॥

आरभस्व, शुभश्रोणि! § वनवासक्षमाः क्रियाः।
नेदानीं त्वदृते, सीते! स्वर्गोऽपि मम रोचते ॥ ४२ ॥

इदानीमिति। एवं दृढनिश्चये सतीत्यर्थः ॥ ४२ ॥

ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम्।
देहि चाशंसमानेभ्यः सन्त्वरस्व च मा चिरम् ॥ ४३ ॥

रत्नानि—उत्तमवस्तूनि। भिक्षुकाः—तापसादयः। भोजनमाशंसमानेभ्यः—प्रार्थयमानेभ्य इत्यर्थः ॥ ४३ ॥

---

* यतो वने वसिष्यामीति दृढनिश्चयेन त्वं मामनुयातुं सुनिश्चिता, अतस्त्वां दण्डकावनं नेतुं मम या मतिः—तद्विरुद्धाऽऽसीत—सेदानीं सन्ना—विशीर्णा—**ति.** † दिष्टा—**ङ.च.** सृष्टा—**च.** दिष्टा—अनुज्ञाता—**ति.** सृष्टा—दैवेनेति शेषः—**गो.** ‡ व्यवसायं—भर्त्रनुसरणाध्यवसायं अतिक्रान्ता—प्रकर्षेण प्राप्ता—**गो.** § वनवासक्षमाः—वनवासयोग्याः क्रियाः—दानादिक्रियाः—**गो.**

[1] मतिक्रान्ता, मनुप्राप्ता—**ङ.**

भूषणानि महार्हाणि वरवस्त्राणि यानि च ।
रमणीयाश्च ये केचित् क्रीडार्थाश्चाप्युपस्कराः ॥ ४४ ॥

* उपस्कराः—परिकराः ॥ ४४ ॥

शयनीयानि यानानि मम चान्यानि यानि च ।
देहि स्वभृत्य[1]वर्गस्य † ब्राह्मणानामनन्तरम् ॥ ४५ ॥
अनुकूलं तु सा भर्तुर्ज्ञात्वाऽऽगमनमात्मनः ।
[2]क्षिप्रं प्रमुदिता देवी दातुमेव प्रचक्रमे ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्रिंशस्सर्गः

---

आत्मनः आगमनं—अनुगमनमिति यावत् । ऋताभि (४६) मानः सर्गः॥ ४६ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे त्रिंशस्सर्गः

---

* क्रीडार्था उपस्कराः— स्वर्णमयपुत्रिकाद्युपकरणानि—ति. † ब्राह्मणानामनन्तरं स्वभृत्यवर्गस्य देहीति सम्बन्धः—गो. ब्राह्मणानां—ब्राह्मणसंप्रदानकदानानामनन्तरम्—शि. अथवा शयनादीनां रामोपभुक्तत्वेन तेषां ब्राह्मणेभ्यो दानस्यानुचितत्वात् तानि भृत्यवर्गाय देहि, ब्राह्मणानां तु अनन्तरं—समनन्तरोक्तं रत्नादि देहीति वाऽर्थः । अत एव 'पर्यङ्कमग्र्यास्तरणं—प्रतिष्ठापयितुं' इति व्यङ्ग्यमर्यादयोच्यते । न तु स्पष्टं दानम् इति केचित् ॥

[1] वर्गेभ्यः—ङ. [2] एतदनन्तरं—' ततः प्रहृष्टा प्रतिपूर्णमानसा यशस्विनी भर्तुरपेक्ष्य भाषितम् । धनानि रत्नानि च दातुमङ्गना प्रचक्रमे धर्मभृतां मनस्विनी ॥' इत्यधिकम्—ङ. झ.

## एकत्रिंशस्सर्गः

[लक्ष्मणवनानुगमनाभ्यनुज्ञा]

**एवं श्रुत्वा स संवादं लक्ष्मणः पूर्वमागतः ।**
**बाष्पपर्याकुलमुखः शोकं सोढुमशक्नुवन् ॥ १ ॥**

**स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः ।**
**सीतामुवा*चातियशां राघवं च †महाव्रतम् ॥ २ ॥**

एवं [1]दृढनिश्चितससीतरामगमनलक्ष्मणकृतानुगमनप्रार्थनेन रामेण लक्ष्मणानुगमनानुमतिः । एवमित्यादि । उक्तप्रकारं सीतारामसंवादं श्रुत्वेति—तत्र हेतुः—लक्ष्मणः पूर्वमागत इति । संवादप्रवृत्तेः पूर्वमेव रामेण सह मातृगृहमागत इत्यर्थः । अतियशां—उत्कृष्टकीर्तिमतीं । महाव्रतं–वनवासलक्षणमहाव्रतकृतनिश्चयमित्यर्थः ॥ २ ॥

**‡यदि गन्तुं कृता बुद्धिः वनं मृगगजायुतम् ।**
**अहं त्वाऽनुगमिष्यामि वनमग्रे धनुर्धरः ॥ ३ ॥**

गन्तुं बुद्धिः कृता यदीति । युवाभ्यामिति शेषः । अहन्त्वेति । हे प्रजावति ! त्वां, हे राम ! त्वां चेत्यर्थः । वनमनुगमिष्यामि–वनं गन्तारौ युवामनुगमिष्यामि । अपि च गमनकाले अग्रत एव धनुर्धरो गमिष्यामि ॥ ३ ॥

---

* अतियशाः–इति प्रसिद्धस्स्वरसश्च पाठः । लक्ष्मणविशेषणं । को वा एवं स्वभार्यामपि परित्यज्यान्येन सपत्नीकेन साकं वनं गच्छेदित्याशयः. † महाव्रतं—'अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' इत्युक्तगुरुतरव्रतयुक्तम्–**गो.** युक्तश्चैतदेव । व्रतशब्दस्वारस्यात् । चरणौ निपीड्येति—अत्रापि शरणागतेः वात. ‡ यदीत्यनेन रामवनगमने स्वानभिमतिस्सूच्यते लक्ष्मणेन ।

[1] दृष्टनिश्चित–**क.**

मया समेतोऽरण्यानि [1]रम्याणि विचरिष्यसि ।
पक्षिभिर्मृगयूथैश्च संघुष्टानि समन्ततः ॥ ४ ॥

समेतः समेतेति च परिणामः ॥ ४ ॥

*न देवलोकाक्रमणं नामरत्वमहं वृणे ।
ऐश्वर्यं वाऽपि लोकानां कामये न त्वया विना ॥ ५ ॥

आक्रमणं—आरोहः ॥ ५ ॥

एवं ब्रुवाणस्सौमित्रिर्वनवासाय निश्चितः ।
रामेण बहुभिस्सान्त्वैर्निषिद्धः पुनरब्रवीत् ॥ ६ ॥

अनुज्ञातश्च भवता पूर्वमेव यदस्म्यहम् ।
किमिदानीं पुनरिदं क्रियते मे निवारणम् ॥ ७ ॥

पूर्वमेव भवताऽनुज्ञात इति । 'तस्मादपरितापस्सन् त्वमप्यनुविधाय माम् । प्रतिसंहारय क्षिप्रमाभिषेचनकीं क्रियाम्' (अयो. २३, २६) † इत्यनुशासनादित्यर्थः ॥ ७ ॥

यदर्थं प्रतिषेधो मे क्रियते गन्तुमिच्छतः ।
एतदिच्छामि विज्ञातुं संशयो हि ममानघ! ॥ ८ ॥

एतदिच्छामीति । एतत्—मत्प्रतिषेधप्रयोजनमित्यर्थः । संशयो हीति । पूर्वं किमभिप्रायतोऽनुमतिः? इदानीं किमभिप्रायेण प्रतिषेधः? इति सन्देहो जायत इत्यर्थः ॥ ८ ॥

---

* देवलोकः—उपनिषत्सु प्रतिपन्नो मोक्षः । अमरत्वं—कैवल्यं । लोकानामैश्वर्यं—ऐहिकमामुष्मिकं च—गो. † 'भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः । त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥' इति भरतशत्रुघ्नयोरेवानुसरणीयत्वोक्तेश्च—गो.

[1] बहूनि—ङ.

ततोऽब्रवीन्महातेजा रामो लक्ष्मणमग्रतः ।
स्थितं *प्राग्गामिनं वीरं याचमानं कृताञ्जलिम् ॥ ९ ॥

अग्रतस्स्थितं—प्राग्गामिनं—निश्चितवनप्रथमगमनं—तत्रानुमतिं याचमानम् ॥ ९ ॥

स्निग्धो धर्मरतो वीरस्सततं सत्पथे स्थितः ।
प्रियः प्राणसमो वश्यो [1] भ्राता चासि सखा च मे ॥ १० ॥

वश्यविधेयौ मुहुर्व्याकृतौ ॥ १० ॥

मयाऽद्य सह, सौमित्रे! त्वयि गच्छति तद्वनम् ।
को [2] भरिष्यति कौसल्यां सुमित्रां वा यशस्विनीम् ॥११॥

को भरिष्यतीति । एवञ्च मातृपरिरक्षणार्थमेव प्रतिषिध्यसे । पूर्वन्तु आभिषेचनिकालंकारप्रतिसंहारविषये मदनुविधानं मदिष्टत्वादुक्तम् । न तु वनानुगमने मदनुविधानमनुशिष्टमित्युक्तं भवति ॥११॥

अभिवर्षति कामैर्यः पर्जन्यः पृथिवीमिव ।
स काम[3]पाशपर्यस्तो महातेजा महीपतिः ॥ १२ ॥

कामैः—इष्टान्नपानादिरूपैः। ननु भर्तैवास्ते रक्षकः इत्यत्राह—स कामपाशेत्यादि ॥ १२ ॥

सा हि राज्यमिदं प्राप्य नृपस्याश्वपतेस्सुता ।
दुःखितानां सपत्नीनां न करिष्यति शोभनम् ॥ १३ ॥
न स्मरिष्यति कौसल्यां सुमित्रां च सुदुःखिताम् ।
भरतो राज्यमासाद्य कैकेय्यां पर्यवस्थितः ॥ १४ ॥

---

* प्राग्गामिनं—प्रागेव गन्तुमुद्युक्तम्—गो. वनं प्रति प्रथमगमनाभिप्रायवन्तम्—ति.

[1] विधेयश्चासि—ङ. च. [2] भजिष्यति—ङ. च. हि रक्षति—ङ. [3] वश—ङ.

तर्हि भरतो वा पुत्रत्वाद्रक्षिष्यतीत्यत्राह—न स्मरिष्यतीत्यादि । तत्र हेतुः—राज्यमासाद्य कैकेय्यां-तन्नियोगे सपत्नीतिरस्कारविषयके पर्यवस्थितः-प्रतिष्ठितः ॥ १४ ॥

**तामार्यां स्वयमेवेह राजानुग्रहणेन वा ।**
**सौमित्रे ! भर कौसल्यां उक्तमर्थमिमं चर ॥ १५ ॥**

तर्हि मया वा रक्षणं कथं शक्यमित्यत्राह—राजानुग्रहणेनेति । दशरथानुग्रहबलादित्यर्थः ॥ १५ ॥

***एवं मयि च ते भक्तिर्भविष्यति सुदर्शिता ।**
**धर्मज्ञगुरुपूजायां धर्मश्चाप्यतुलो महान् ॥ १६ ॥**

एवं मयि चेति । मदाज्ञया मातृशुश्रूषणेनापीत्यर्थः ॥ १६ ॥

**एवं कुरुष्व, सौमित्रे ! मत्कृते, रघुनन्दन !**
**अस्माभिर्विप्रहीणाया मातु†र्नो न भवेत्सुखम् ॥ १७ ॥**

विप्रहीणा-वियुक्ता । 'उपसर्गाद्बहुलम्' इति बहुलग्रहणाण्णत्वम् । 'प्रहीणो ग्रामः' इत्यादौ प्रयोगः प्रसिद्धः ॥ १७ ॥

**एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा ।**
**प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम् ॥ १८ ॥**
**तवैव तेजसा, वीर ! भरतः पूजयिष्यति ।**
**कौसल्यां च सुमित्रां च प्रयतो नात्र संशयः ॥ १९ ॥**

अथ मातृरक्षायां भरत एवास्त इत्याह—भरतः पूजयिष्यतीति । तत्र रामोक्तानुपपत्तिं परिहरति—तवैव तेजसेति । अप्रमेयबलवैभव-

---

* एवं कृत एव मद्विषयभक्तिस्त्वया सम्यग्दर्शिता भविष्यति इत्यर्थः. † नः—अस्माकं मातुः कौसल्यासुमित्रयोः. एकत्वं लोके प्रयोगरूढ्या ।

राममातुरपेक्षायां ममानर्थो महान् भवितेति मत्वा सम्यक् पूजयिष्य-तीत्यर्थः ॥ १९ ॥

[1] यदि दुष्टो न रक्षेत भरतो राज्य* मुत्तमम् ।
प्राप्य दुर्मनसा, वीर! गर्वेण च विशेषतः ॥ २० ॥
तमहं दुर्मतिं क्रूरं वधिष्यामि न संशयः ।
तत्पक्ष्यानपि तान् सर्वांस्त्रैलोक्यमपि, [2] किन्नु सा ॥ २१ ॥
कौसल्या बिभृयादार्या सहस्रमपि मद्विधान् ।
यस्यास्सहस्रं ग्रामाणां संप्राप्त†[3] मुपजीविनाम् ॥ २२ ॥

तदेव कालान्तरीयं तस्य भयं प्रदर्शयति—यदीत्यादि । त्रैलोक्यमपीति । तत्पक्ष्यं वधिष्यामीत्यनुकर्षः । वध हिंसायामिति प्रकृत्यन्तरम् । इदानीं स्वात्मभरणे—स्वसंरक्षणे कौसल्यायाः कस्याप्यपेक्षा नास्तीति दर्शयति—किन्वित्यादि । या कौसल्या सहस्रं मद्विधानपि बिभृयात्, सा स्वात्मानं बिभृयादिति किन्नु—किमु । कुतस्तस्या एवं शक्तिरित्यत्राह—यस्या इत्यादि । यस्याः प्रसादात् ‡ उपजीविनां ग्रामाणां सहस्रं प्राप्तमभूत् ॥ २२ ॥

तदात्मभरणे चैव मम मातुस्तथैव च ।
पर्याप्ता मद्विधानां च भरणाय यशस्विनी ॥ २३ ॥

यदेवं अतः—तदित्यादि ॥ २३ ॥

---

* उत्तमं राज्यं प्राप्येत्यन्वयः.    † उपजीवनं—स्वेष्टविनियोगाय दीयमानम्.
‡ अस्य प्राप्तमित्यत्रान्वयः । सम्बन्धसामान्ये षष्ठी । उपजीविभिः प्राप्तमिति यावत् । स्वोपजीविभ्यो ग्रामसहस्रदानेऽपि यदि शक्तिर्वर्तते तर्हि स्वरक्षणे किमु वक्तव्यमित्याशयः.

[1] इदं श्लोकद्वयं कुत्रचिन्नोपलभ्यते—ङ.   [2] किन्तु सा—ङ.   [3] मुपजीवनम्—ङ.

कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते ।
कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ॥ २४ ॥

यदेवं अतो मामनुचरं कुरुष्व—स्वानुमतिं देहीति यावत् । इह—मत्सेवानुमतौ वैधर्म्यं—वैपरीत्यसाधकं न विद्यते । त्वदुक्तहेतोरन्यथासिद्धत्वस्य दर्शितत्वादित्याशयः । अर्थः प्रकल्पत इति । फलमूलाद्याहरणरूपप्रयोजनमपि स्वप्रयासं विना ते प्रसिध्यति । अहं—अहं च तेन कृतार्थो भवामि । अत उभयहितं मदनुगमनमित्यर्थः ॥ २४ ॥

धनुरादाय सशरं खनित्रपिटकाधरः ।
अग्रतस्ते गमिष्यामि पन्थानं [1] तव दर्शयन् ॥ २५ ॥

तदेव प्रयोजनं दर्शयति—धनुरादायेत्यादि । श्वापदादिरक्षाप्रयोजनो धनुर्ग्रहः ॥ २५ ॥

आहरिष्यामि ते नित्यं मूलानि च फलानि च ।
वन्यानि यानि चान्यानि *[2] स्वाहाराणि तपस्विनाम् ॥

तपस्विनां स्वाहाराणीति । स्वभूतान्याहाराणि, सुष्ठून्याहाराणि च ॥ २६ ॥

भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ।
अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥ २७ ॥

स्वपतश्च करिष्यामीत्यनेन रात्रौ निर्निद्रत्वं प्रकाश्यते ॥ २७ ॥

रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम् ।
†व्रजापृच्छस्व, सौमित्रे! सर्वमेव सुहृज्जनम् ॥ २८ ॥

---

* स्वाहार्हाणि तपस्विनाम् । स्वाहार्हाणि—होमयोग्यानीति यावत्—ति. † सर्वं सुहृज्जनमापृच्छस्व—तेभ्योऽनुमतिं गृहाण—तदर्थं व्रजेति वाऽर्थः.

[1] अनुदर्शयन्—ङ. [2] स्वहार्हाणि—ङ. च.

*ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयम् ।
जनकस्य महायज्ञे धनुषी रौद्रदर्शने ॥ २९ ॥
अभेद्यकवचे दिव्ये तूणी चाक्षयसायकौ ।
आदित्यविमलौ चोभौ खड्गौ हेमपरिष्कृतौ ॥ ३० ॥
सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि ।
स त्वमायुधमादाय क्षिप्रमाव्रज, लक्ष्मण! ॥ ३१ ॥

अनेनेति । स्वपतश्च करिष्यामीत्यन्तवाक्येनेत्यर्थः । व्रज—अनुव्रजेति यावत् । आपृच्छस्व—अनुजानीहि । ये च राज्ञ इति । सुहृज्जनं तं चापृच्छस्वेत्यनुकर्षः । अनन्तरं जनकस्य महायज्ञे महात्मा वरुणः स्वयमेवागत्य रौद्रदर्शने—भयङ्करदर्शने ये धनुषी आवयोर्ददौ; तथाऽभेद्यकवचादिकं च यत्प्रत्येकमावयोर्ददौ; तत्सर्वमाचार्यसद्मनि तत्पूजार्थमाचार्यं सत्कृत्य निहितं—निक्षिप्तम् । एवमनुवादादेव धनुरादिदानं तत्र सिद्धम् । आयुधमिति जात्या ॥ २८–३१ ॥

स सुहृज्जनमामन्त्र्य वनवासाय निश्चितः ।
इक्ष्वाकुगुरुमागम्य जग्राहायुधमुत्तमम् ॥ ३२ ॥

स इति । लक्ष्मण इति यावत् ॥ ३२ ॥

---

* तिलके—गोविन्दराजीये च—इदमुत्तरश्लोकान्विततया व्याख्यातम् । राज्ञ इति जनकविशेषणम् । ये इति द्वितीयाद्विवचनान्तं धनुषीत्यस्य विशेषणम् । एवञ्च जनकस्य राज्ञः महायज्ञे ये धनुषी वरुणो ददौ—इत्यन्वयः । परन्तु ते जनकस्य ददौ, तच्च जनकेन रामाय दत्तमित्यर्थ इति गोविन्दराजीये । बालकाण्डेऽनुक्तोऽयं वृत्तान्तोऽत्रानुवादात्सिद्धः । यथा सुन्दरकाण्डे 'मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे' इति, यथा चायोध्याकाण्डेऽनभिहितोऽपि वायसवृत्तान्तः सुन्दरकाण्डेऽनूद्यते—इति चोक्तं गोविन्दराजीये ।

तद्दिव्यं [1]रघुशार्दूलः सत्कृतं माल्यभूषितम् ।
रामाय दर्शयामास सौमित्रिस्सर्वमायुधम् ॥ ३३ ॥

तमुवाचात्मवान् रामः *प्रीत्या लक्ष्मणमागतम् ।
काले त्वमागतः, सौम्य! काङ्क्षिते मम, लक्ष्मण! ॥

अहं प्रदातुमिच्छामि यदिदं मामकं धनम् ।
ब्राह्मणेभ्यस्तपस्विभ्यस्त्वया सह, परन्तप! ॥ ३५ ॥

मम कांक्षिते–मदभीष्टप्रयोजनसंपादननिमित्तम् । काले–उचितकाले । आगतः ॥ ३४-३५ ॥

वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः ।
तेषामपि च मे भूयस्सर्वेषाञ्चोपजीविनाम् ॥ ३६ ॥

वसन्तीति । इह–मत्समीपे । गुरुषु दृढं भक्त्योपेताः । एतेन पूर्णविद्यतया दानपात्रत्वं द्योतितम् ॥ ३६ ॥

वसिष्ठपुत्रं तु सुयज्ञमार्यं
त्वमानयाशु प्रवरं द्विजानाम् ।
अभिप्रयास्यामि वनं समस्तान्
अभ्यर्च्य शिष्टानपरान् द्विजातीन् ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकत्रिंशः सर्गः

---

* प्रीत्या उवाचेत्यन्वयः.

[1] राजशार्दूलसत्कृतं–ङ.

वसिष्ठपुत्रं तु सुयज्ञमानयेत्यनेन मूलप्रभोर्दशरथस्य वसिष्ठपौरोहित्यं तत्पुत्रस्य तत्पुत्र इति न्यायेन स्वाचार्यस्य सुयज्ञस्य विशिष्यानयननियोगः । *अस्यैव गृहे आयुधस्थापनञ्च । सर्ग (३७) मानः सर्गः ॥ ३७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकत्रिंशः सर्गः

---

## द्वात्रिंशस्सर्गः

[यात्रादानम्]

ततश्शासनं†[1]माज्ञाय भ्रातुः [2]शुभकरं प्रियम् ।
गत्वा स प्रविवेशाशु सुयज्ञस्य निवेशनम् ॥ १ ॥

एवं निश्चितसभ्रातृस्त्रीकवनगमनस्य रामस्य यात्रादानम् । तत इत्यादि ॥ १ ॥

तं विप्रमग्न्यगारस्थं वन्दित्वा लक्ष्मणोऽब्रवीत् ।
सखेऽभ्यागच्छ पश्य त्वं वेश्म दुष्करकारिणः ॥ २ ॥

अग्न्यगारं—अग्निहोत्रगृहम् । हे सखे ! रामस्य वेश्माभ्यागच्छ । दुष्करकारिणो रामस्य कृत्यं च पश्य ॥ २ ॥

---

* गोविन्दराजीये तु—'इक्ष्वाकुगुरुमागम्य जग्राहायुधं' इति कथनात् 'निहितं सर्वमेतदाचार्यसद्मनि' इत्यत्राचार्यः वसिष्ठ एव, स एव खलु इक्ष्वाकुकुलगुरुः—इति वसिष्ठगृह एवायुधस्थापनमुक्तम् । † आज्ञाय-ज्ञात्वा ।

[1] आदाय, आस्थाय-ङ. [2] प्रियकरं हितं-ङ. च. प्रियतरं शुभम्-ङ.

*ततस्सन्ध्यामुपास्यांशु गत्वा सौमित्रिणा सह ।
जुष्टं तत्प्राविशल्लक्ष्म्या रम्यं रामनिवेशनम् ॥ ३ ॥
तमागतं वेदविदं प्राञ्जलिस्सीतया सह ।
सुयज्ञमभिचक्राम राघवोऽग्निमिवार्चितम् ॥ ४ ॥

अर्चितमग्निमिवेति । होमकाल इति शेषः ॥ ४ ॥

जातरूपमयैर्मुख्यैः †अङ्गदैः कुण्डलैः शुभैः ।
सहेमसूत्रैर्मणिभिः केयूरैर्वलयैरपि ॥ ५ ॥

सहेमसूत्रैर्मणिभिरिति । स्वर्णसूत्रस्यूतमुक्तादिरत्नमालाभिरित्यर्थः ॥ ५ ॥

अन्यैश्च रत्नैर्बहुभिः काकुत्स्थः प्रत्यपूजयत् ।
सुयज्ञं च तदोवाच रामस्सीताप्रचोदितः ॥ ६ ॥

सीताप्रचोदित इति । सीतया सुयज्ञपत्न्यै दिव्याभरणदानाय सखीत्वात्प्रचोदित इत्यर्थः ॥ ६ ॥

हारं च हेमसूत्रं च भार्यायै, सौम्य! ‡हारय ।
रशनां चाधुना सीता दातुमिच्छति ते, [1] सखे! ॥ ७ ॥

हेमसूत्रमप्युरोभूषणविशेषः ॥ ७ ॥

---

* सन्ध्योपासनं—माध्याह्निकम्, अथवा सन्ध्यानियताग्निहोत्रं; अग्न्यगारस्थमित्युक्तेः—गो. रामवनप्रवासानन्तरमेव सर्यास्तमनस्योत्तरत्र कथनात् एवं व्याख्यानम्। † अङ्गदैः—कूर्परोपरि धार्यैः बाहुभूषणैः । केयूरैः—भुजशिरोव्यापिफणाकारशीकरयुक्तबाहुभूषणैः । अथवा अंगदकेयूरयोः स्थूलत्वसूक्ष्मत्वाभ्यां भेदः—गो. ‡ हारय—प्रापय—ति.

[1] सखी—ङ. च.

अङ्गदानि विचित्राणि केयूराणि शुभानि च ।
प्रयच्छति, सखे! तुभ्यं भार्यायै गच्छती वनम् ॥ ८ ॥

गच्छतीति नुमभावश्छान्दसः ॥ ८ ॥

पर्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम् ।
तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि ॥ ९ ॥

त्वयीति । त्वद्गृह इत्यर्थः ॥ ९ ॥

नागः शत्रुञ्जयो नाम मातुलो यं ददौ मम ।
तं ते *[1] निष्कसहस्रेण ददामि, द्विजपुङ्गव ! ॥ १० ॥

शत्रुञ्जयो नाम प्रसिद्धं यं गजं मातुलो मम ददौ तं गजं ते ददामीति । तथा राममुद्राङ्कितानां निष्काणां सहस्रं च ददामि ॥ १० ॥

इत्युक्तः स हि रामेण सुयज्ञः [2] प्रत्यगृह्णत ।
रामलक्ष्मणसीतानां प्रयुयोजाशिषः शुभाः ॥ ११ ॥

प्रत्यगृह्णतेति । अगृह्णीतेति यावत् ॥ ११ ॥

अथ भ्रातरमव्यग्रं प्रियं रामः प्रियंवदः ।
सौमित्रिं तमुवाचेदं ब्रह्मेव त्रिदशेश्वरम् ॥ १२ ॥

ब्रह्मा त्रिदशेश्वरमिवेति । नियोक्तृनियोज्ययोः [3] परमावरप्रभुत्वे दृष्टान्तः ॥ १२ ॥

---

* निष्कं—रूप्यम् । तच्च तस्य गजस्य परिपालनार्थमिति भावः ।

[1] गजसहस्रेण—ङ. [2] प्रतिगृह्य तत—ङ. [3] परमचरम—घ.

*[1] आगस्त्यं कौशिकं चैव तावुभौ ब्राह्मणोत्तमौ ।
अर्चयाहूय, सौमित्रे ! रत्नैस्सस्यमिवाम्बुभिः ॥ १३ ॥
तर्पयस्व, महाबाहो ! गोसहस्रैश्च, मानद !
सुवर्णै रजतैश्चैव मणिभिश्च महाधनैः ॥ १४ ॥

कौशिकः—विश्वामित्रः । आहूयार्चय । अनन्तरं रत्नैस्तर्पयस्व ॥ १३—१४ ॥

कौसल्यां च य आशीर्भिः भक्तः पर्युपतिष्ठति ।
आचार्य†स्तैत्तरीयाणामभिरूपश्च वेदवित् ॥ १५ ॥
तस्य यानं च दासीश्च, सौमित्रे ! संप्रदापय ।
कौशेयानि च वस्त्राणि यावत्तुष्यति स द्विजः ॥ १६ ॥

तैत्तरीयाणामाचार्य इति । तित्तिरिमहर्षिः कौसल्यायाः प्रत्येकपुरोहितः । अभिरूपः—श्लाघनीयगुणः ॥ १५—१६ ॥

सूत‡श्चित्ररथश्चार्यः सचिवस्सुचिरोषितः ।
तोषयैनं महार्हैश्च रत्नैर्वस्त्रैर्धनैस्तथा ॥ १७ ॥
पशुकाभिश्च सर्वाभिर्गवां दशशतेन च ।

सुचिरोषितः—चिरकालवृद्धः सुमन्त्रवत् । पशुकाः—अजाव्यादयो यज्ञपशवः ॥ १७ ॥

[2]ये चेमे कठकालापा बहवो दण्डमाणवाः ॥ १८ ॥

---

* आगस्त्यं—अगस्त्यपुत्रम् । कौशिकं—विश्वामित्रपुत्रम्—गो. † तैत्तरीयशाखाध्येतॄणामाचार्यः—गो. ति. अभिरूपः—बुधः । 'प्राप्तरूपसुरूपाभिरूपा बुधमनोज्ञयोः'—इति विश्वः—गो. ‡ आर्यः चित्ररथनामा सूतः । चित्ररथाचार्य इत्यपि पाठः ।

[1] अगस्त्यं—ङ. च. [2] ये च मे—ङ. च.

नित्यस्वाध्यायशीलत्वान्नान्यत्कुर्वन्ति * किञ्चन ।
अलसाः स्वादु[1]कामाश्च महतां चापि सम्मताः ॥ १९ ॥

तेषामशीतियानानि रत्नपूर्णानि दापय ।
शालिवाहसहस्रं च द्वे च ते † भद्रकांस्तथा ॥ २० ॥

व्यञ्जनार्थं च, सौमित्रे ! गोसहस्रमुपाकुरु ।

कठेन प्रोक्तमधीते, अण्, तस्य 'कठचरकाल्लुक्' इति लुक् । कलापिना प्रोक्तं, कलापिनोऽण् । कठं कालापमधीयते–'तदधीते' इत्यण् । 'प्रोक्ताल्लुक्' इति लुक् । ये चेमे कठकालापाः–तदध्येतारो दण्डमाणवाः—दण्डप्रधाना माणवाः–उपकुर्वाणब्रह्मचारिण इति यावत् । अन्यदिति—व्रतोपवासादिकमिति यावत्—'आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः । अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम्' इति स्मृतेः । अन्यन्न कुर्वन्तीत्यत्र हेतुः—नित्यस्वाध्यायशीलत्वादिति । अत एव व्रतान्तरानुष्ठाने अलसाः । स्वादुकामाश्चेति । ब्रह्मचारिणो भिक्षार्थित्वतः स्वाद्वन्नकामाः । तर्हि कथमेवंविधा दानीया इत्यत्रोक्तं—महतां चापि सम्मता इति । 'तप एव तत्तप्यते । तपो हि स्वाध्यायः' इति श्रुतेः नित्यतपस्वित्वेन महात्मनामपि सम्मताः । रत्नपूर्णानि–धनपूर्णानि । अशीतियानानीति । अशीत्युष्ट्राणीति यावत् । शालीन् वहन्त इति शालिवाहाः–बलीवर्दाः ।

---

* किञ्चन–आहारार्थयत्नादिकम् । गोसहस्रप्रदानहेतुत्वेनाह— स्वादुकामाश्चेति.... रत्नपूर्णानि–रत्नालङ्कारपूर्णानि.... रत्नवाहानुष्ट्रानिति वा–गो. † भद्रकान्–अल्पार्थे कन् प्रत्ययः–कर्षणयोग्याननडुह इत्यर्थः । धान्यविशेषानित्यपरे । गोसहस्रं व्यञ्जनार्थं–क्षीरदधिघृतार्थं–गो.

[1] शीलाश्च–ङ,

तेषां सहस्रैः सह भद्रकान्—धान्यविशेषान्—चणकमुद्गादिरूपान् व्यञ्जनार्हान् दापयेत्यनुकर्षः । गवां सहस्रमुपाकुरु—उपसेचनार्थं कुर्वित्यर्थः ॥ २० ॥

*[1]मेखलीनां महासङ्घः कौसल्यां समुपस्थितः ॥ २१ ॥
तेषां सहस्रं, सौमित्रे! प्रत्येकं संप्रदापय ।

मेखलीनां—ब्रह्मचारिणामिति यावत् । समुपस्थित इति । विवाहार्थमिति शेषः ॥ २१ ॥

†अम्बा [2]यथा नो नन्देच्च कौसल्या मम दक्षिणा ॥
तथा द्विजातींस्तान् सर्वान् लक्ष्मणार्चय सर्वशः ।

नः—अस्माकं अम्बा यथा चेत् स्वाश्रितब्रह्मचारिवर्गस्य विवाहार्थभिक्षाप्रदानेन नन्देत् तथा दापय । दक्षिणा—समर्था ॥ २२ ॥

ततः पुरुषशार्दूलस्तद्धनं लक्ष्मणः स्वयम् ॥ २३ ॥
यथोक्तं ब्राह्मणेन्द्राणां‡ अददाद्धनदो यथा ।

तद्धनमिति । यथोक्तविभागकमित्यर्थः ॥ २३ ॥

अथाब्रवीद्§बाष्प[3]कलांस्तिष्ठतश्चोपजीविनः ॥ २४ ॥
संप्रदाय बहुद्रव्यं एकैकस्योपजीवनम् ।

बाष्प[4]कलाः—बाष्पगद्गदाः । उपजीवनं—जीवनसाधनम् ॥ २४ ॥

---

* मेखलानां—अर्श आदित्वादच्—टी. † नः अम्बा मम दक्षिणां—मया दीयमानां दक्षिणां यथा नन्देत्—इत्यन्वयः. ‡ कुबेरस्य दानशीलत्वं 'धनदेन समस्त्यागे' इत्यत्रैव संक्षेपरामायणे उक्तम्. § बाष्पं कलन्ति—मुञ्चन्तीति बाष्पकलाः—गो.

[1] मेखलानां—ङ. छ. [2] यथा च सा नन्देत, यदा नौ नन्देच्च—ङ. [3] गलां—ङ. [4] गलाः—ञ.

लक्ष्मणस्य च यद्वेश्म गृहं च यदिदं मम ॥ २५ ॥

अशून्यं कार्यमेकैकं यावदागमनं मम ।

अशून्यं कार्यमिति । यथापूर्वं युष्माभिरत्रोपविश्य रक्षणीयमित्यर्थः ॥ २५ ॥

*इत्युक्त्वा दुःखितं सर्वं जनं तमुपजीविनम् ॥ २६ ॥

उवाचेदं धनाध्यक्षं धन[1]मानीयतामिति ।

ततोऽस्य धनमाजह्रुः [2]सर्वमेवोपजीविनः ॥ २७ ॥

स राशिस्सुमहांस्तत्र दर्शनीयो ह्यदृश्यत ।

ततस्स पुरुषव्याघ्रस्तद्धनं सहलक्ष्मणः ॥ २८ ॥

द्विजेभ्यो बालवृद्धेभ्यः [3]कृपणेभ्यो ह्यदापयत् ।

कृपणेभ्यो ह्यदापयदिति । भूरिदानरूपतयेति शेषः ॥ २८ ॥

तत्रासीत् † पिङ्गलो गार्ग्यस्त्रिजटो नाम वै द्विजः ॥ २९ ॥

‡ [4]उञ्छवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली ।

तत्रेति । तस्मिन् काले देशे चेत्यर्थः । फालं—हलावयवविशेषः— । कुद्दालं—कन्दखननसाधनविशेषः— । लाङ्गलं—हलं वानप्रस्थत्वादिदं साधनं कन्दादिसंपादनार्थं । उञ्छनं—व्रीह्यर्थम् ॥ २९ ॥

---

* स्वोपजीविभ्यो विशिष्य धनदानमुक्तम् । अथेतरेभ्यो दानमुच्यते. † पिङ्गलः—पिङ्गलवर्ण इति दारिद्र्यलक्षणोक्तिः । पिङ्गलकेशो वा । .... ...आसीत्—दैवात्तदानीं समीपे संगतोऽभूदिति भावः—गो. ‡ क्षतवृत्तिः—भूखननेन जीवनवान् । उञ्छवृत्तिरिति पाठो न स्वरसः. फालकुद्दालेत्यादेरवक्तव्यत्वात्—सत्य. क्षतवृत्तिः—क्षीणवृत्तिः—ति. उञ्छवृत्तिः—शि. खलादौ परित्यक्तधान्यस्य संग्रहणं—उञ्छः ।

[1] मानीयतां मम—ङ. [2] सर्वं एवो—ङ. [3] दरिद्रेभ्यो—ङ. [4] क्षतवृत्तिः—ङ. च

तं वृद्धं तरुणी भार्या बालानादाय दारकान् ॥ ३० ॥
अब्रवीद्ब्राह्मणं वाक्यं *[1] दारिद्र्येणाभिपीडिता ।

दारकाः–पुत्राः ॥ ३० ॥

अपास्य फालं कुद्दालं कुरुष्व वचनं मम ॥ ३१ ॥
रामं दर्शय धर्मज्ञं यदि † किञ्चिदवाप्स्यसे ।

दर्शयेति । सभार्यापुत्रमात्मानमिति शेषः । 'गतिबुद्धि' इत्यादिना द्विकर्मकत्वम् । यदि दर्शयसि तदा सर्वथा किञ्चिदवाप्स्यसे ॥

स भार्यावचनं श्रुत्वा शाटीमाच्छाद्य दुश्छदाम् ॥ ३२ ॥
स प्रातिष्ठत पन्थानं यत्र रामनिवेशनम् ।

दुश्छदां–अतिजीर्णत्वाच्छादयितुमशक्यां । यत्र रामनिवेशनं–यस्मिन् पथ्याश्रिते रामनिवेशनं प्राप्यते तादृशं पन्थानमास्थाय प्रातिष्ठत ॥ ३२ ॥

‡ [2]भृग्वङ्गिरसमं दीप्त्या त्रिजटं जनसंसदि ॥ ३३ ॥
आपञ्चमायाः कक्ष्याया नैनं कश्चिदवारयत् ।

दीप्त्या–ब्रह्मवर्चसेन ॥ ३३ ॥

स राजपुत्रमासाद्य त्रिजटो वाक्यमब्रवीत् ॥ ३४ ॥
निर्धनो बहुपुत्रोऽस्मि, राजपुत्र! महायशाः!
[3]उञ्छवृत्तिर्वने नित्यं प्रत्यवेक्षस्व मामिति ॥ ३५ ॥

मां प्रत्यवेक्षस्वेति । मयि कृपां कुर्वित्यर्थः ॥ ३५ ॥

---

* 'स्त्रीणां भर्ता हि देवता' इति पाठे—न स्वातन्त्र्येण तया रामसमीपं गन्तुं युक्तम्, अतः भर्तारमब्रवीदिति भावः । † किञ्चिदिति स्वदौर्भाग्यस्मरणेन । सन्तुष्ट्या वा । ‡ अकारान्तत्वमार्षम्–गो.

[1] स्त्रीणां भर्ता हि देवता–ङ.च. [2] भृग्वङ्गिरस्समं–ङ.च. [3] क्षतवृत्ति–ङ.च.

**तमुवाच ततो रामः परिहास[1]समन्वितम् ।**

***गवां सहस्र[2]मप्येकं न च विश्राणितं मया ॥ ३६ ॥**

**परिक्षिपसि दण्डेन यावत्तावदवाप्स्यसि ।**

परिहाससमन्वितं—लीलास्मितसमन्वितं । क्रीडाप्रयोजनव्यवहार-विशेषसमन्वितं चेत्यर्थः । मया तु गवामेकं सहस्रमपि विश्राणितं न ! नञ् स्वरे । तर्हि इह स्थित्वा दण्डेन यावद्दूरं परिक्षिपसि—परिगृह्णासि तावद्देशवर्तिनीः गाः अवाप्स्यस इति । ब्राह्मणस्य गोश्रद्धाप्रवृत्तिकौतुक-दर्शनार्थं भगवद्वचनम् ॥ ३६ ॥

**† स शाटीं त्वरितः कट्यां संभ्रान्तः परिवेष्ट्य ताम् ॥ ३७ ॥**

**आविध्य दण्डं चिक्षेप सर्वप्राणेन [3]वेगतः ।**

कट्यां परिवेष्ट्य संभ्रान्तः—त्वरितस्सन् । सर्वप्राणेन — सर्व-बलेन ॥ ३७ ॥

**स तीर्त्वा सरयूपारं दण्डस्तस्य कराच्च्युतः ॥ ३८ ॥**

**गोव्रजे बहुसाहस्रे ‡ पपातो[4]क्षाणसन्निधौ ।**

स दण्डः सरयूपारं—सरयूतीरं तीर्त्वा—प्राप्य बहुसाहस्रे गोव्रजे उक्षाणसन्निधौ—वृषसन्निधाविति यावत् । आनङ् छान्दसः ॥ ३८ ॥

---

* असंख्यातानां गवां मध्ये एकमपि सहस्रं मया न विश्राणितम् ........ एकं गोसहस्रमात्रं न दत्तं, अन्यत्सर्वं दत्तमिति नार्थः ; 'बहुसाहस्रे' इत्यादिवक्ष्यमाणेन विरोधात् , अपिशब्दस्वारस्याच्च—गो. † कट्यां शाटीपरिवेष्टनं बलोत्तंभनाय—गो. अन्यथा खलु दण्डक्षेपकाले प्रतिरोधः स्यात् . ‡ उक्षणसन्निधौ—उक्षसन्निधौ—' वष्टि भागुरिः ' इत्यादिरीत्या अकारान्तत्वम्—गो

[1] समन्वितः—ङ. [2] मस्त्येकं—ङ. [3] वेगितः—ङ. [4] क्षण, क्षणां च—ङ.

तं परिष्वज्य धर्मात्मा आ तस्मात्सरयूतटात् ॥ ३९ ॥
आनयामास ता गोपैः [1]त्रिजटायाश्रमं प्रति ।

आ तस्मात्सरयूतटात्, आङ् मर्यादायां । अथवा ब्राह्मणस्वतो भवत्वि*त्यभिविधावित्येवास्तु । ताः—गाः आनयामास । †तास्त्रिजटाश्रमं प्रति नाययामासेति च शेषः ॥ ३९ ॥

उवाच च ततो रामस्तं गार्ग्यमभि[2]सान्त्वयन् ॥ ४० ॥
मन्युर्न खलु कर्तव्यः परिहासो ह्ययं मम ॥ ४१ ॥

परिहासो ह्ययमिति । दण्डपरिक्षेपवचनरूपोऽयं विनोदार्थ एवेत्यर्थः ॥ ४१ ॥

इदं हि तेजस्तव यद्दुरत्ययं
तदेव जिज्ञासितुमिच्छता मया ।
इमं भवानर्थमभि प्रचोदितः
वृणीष्व किञ्चेदपरं [3]व्यवस्यसि ॥ ४२ ॥

अयमितीदंशब्दार्थमुक्तरूपं भगवान् दर्शयति—इदं हीत्यादि । तेजः—अतिदूरपरिक्षेपणशक्तिं, वृद्धस्यापि सत इत्यर्थः, अर्थमभि—अर्थमुद्दिश्य इदं—विक्षेपणं प्रचोदितोऽसि । अपरमपि—गोभ्योऽन्यमपि वरितुं व्यवस्यसि चेद्वृणीष्व ॥ ४२ ॥

---

* अन्यथा हि सरयूतटगतानां गवां परित्यागः स्यादिति भावः. † त्रिजटाय—तदर्थं आनयामास, आश्रमं—त्रिजटाश्रमं प्रति नाययामास चेति वाक्यद्वयमिति भावः' महेश्वरतीर्थस्तु—'त्रिजटाय—त्रिजटस्य' इति व्याचख्यौ । परन्तु तदा 'आनयामास' इत्यनन्वितम् ।

[1] त्रिजटस्याश्रमं—ङ. [2] हर्षयन्—ङ. [3] व्यवस्यति—ङ.

ब्रवीमि सत्येन न तेऽस्ति यन्त्रणा
धनं [1]यदन्यन्मम विप्रकारणात् ।
भवत्सु सम्यक्प्रतिपादनेन तत्
मयार्जितं प्रीतियशस्करं भवेत् ॥ ४३ ॥

इदं वचनमुपचारमात्रमिति न मन्तव्यमित्याह—ब्रवीमीत्यादि । यन्त्रणा—इतोऽभ्यधिकवरवरणसङ्कोच इत्यर्थः । कथमेवमित्यतः—धनमित्यादि । अन्यादिति । दत्तावशिष्टजीवाजीवधनामित्यर्थः । विप्रकारणात्—विप्रप्रयोजनसंपादनार्थमित्यर्थः । कथं विप्रप्रयोजनकत्वं धनस्येत्यतः—भवत्स्वित्यादि । भवत्सु-विप्रेषु सम्यक्—यथाशास्त्रं प्रतिपादनेन हेतुना मयार्जितं तद्धनं मे प्रीतियशस्करं भवेत्, न तु किञ्चिद्भूमिनिक्षिप्तेन ॥ ४३ ॥

ततस्सभार्यस्त्रिजटो महामुनिः
गवामनीकं प्रतिगृह्य *मोदितः ।
यशोबलप्रीतिसुखोप[2]बृंहणीः
तदाशिषः प्रत्यवदन्महात्मनः ॥ ४४ ॥

तदाशिषः—तस्य रामस्याशिषः † ॥ ४४ ॥

स चापि रामः प्रतिपूर्णपौरुषः
महाधनं धर्मबलैरुपार्जितम् ।
नियोजयामास सुहृज्जने चिरात्
‡ यथार्हसंमानवचःप्रचोदितः ॥ ४५ ॥

---

* मोदित इत्यनेन गोभ्योऽन्यन्नापेक्षितवानिति गम्यते. † तदा आशिष इति वा पदच्छेदः. ‡ आहिताग्न्यादित्वान्निष्ठायाः परनिपातः, तत्तदौचित्येनाभिहितसम्मानवाक्य इत्यर्थः-गो. अत्रोत्तरश्लोकानुरूप्यञ्च ।

[1] यद्यन्मम—ङ. [2] बृंहिणीः—ङ.

चिरात् यथार्हसंमानवचोभिः सुहृज्जनैः प्रचोदितः—प्रचोदित-प्रीतिदानव्यापारः ॥ ४५ ॥

द्विजः सुहृद्भृत्यजनोऽथवा तदा
दरिद्रभिक्षाचरणश्च [1]यो भवेत् ।
न तत्र कश्चिन्न बभूव तर्पितः
यथार्हसंमाननदान*संभ्रमैः ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्वात्रिंशः सर्गः

———

भिक्षां चरतीति वा सरूपविधिना 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । दरिद्रस्सन् भिक्षाचरणस्तथा । सुप्सुपेति समासः । *चर्व (४६) मानः सर्गः ॥ ४६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्वात्रिंशस्सर्गः

———

त्रयस्त्रिंशस्सर्गः

[दशरथसमाश्वासनम्]

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु ।
जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥ १ ॥

एवं कृतयात्रादानस्य पित्रनुमतये पितृसमीपगमनं—गत्वेत्यादि ।

---

* संभ्रमः—त्वरा—गो.

[1] आदरः—ति.

**ततो गृहीते दुष्प्रेक्षे त्वशोभेतां तदायुधे ।**
**मालादामभिराबद्धे सीतया * समलङ्कृते ॥ २ ॥**

ततो गृहीत इति । यथास्वमिति शेषः । तयोरायुधे तदायुधे ॥

**ततः प्रासादहर्म्याणि विमानशिखराणि च ।**
**अधिरुह्य जनः श्रीमान् † उदासीनो व्यलोकयत् ॥ ३ ॥**

सप्तभूमिकः प्रासादो विमानम् । द्वित्रिभूमिकाः- केवलप्रासादाः । हर्म्यं—बद्धगृहोपरिप्रदेशः । अधिरुह्य जन इति । अधिरुह्य स्थितो यो जनः—तं जनं श्रीमानुदासीनो भूत्वा—अरिरक्षयिषितत्वेन नीरागद्वेषतो व्यलोकयत्—पश्यति स्म ॥ ३ ॥

**न हि रथ्याः स्म शक्यन्ते गन्तुं बहुजनाकुलाः ।**
**आरुह्य तस्मात् ‡ प्रासादाद्दीनाः पश्यन्ति राघवम् ॥ ४ ॥**

तस्मादिति । बहुजनाकुलत्वेन रथ्यायां गन्तुमशक्यत्वादेवेत्यर्थः । प्रासादमारुह्य प्रासादात्—प्रासादारोहणरूपोपायादेव पश्यति स्म । अभिषेकदर्शनाभावतो विपरीतवेषदर्शनतश्च दीनाः ॥ ४ ॥

**[1] पदातिं सानुजं दृष्ट्वा ससीतं च जनास्तदा ।**
**§ ऊचुर्बहुविधा वाचः शोकोपहतचेतसः ॥ ५ ॥**
**यं यान्तमनुयाति स्म चतुरङ्गबलं महत् ।**
**तमेकं सीतया सार्धं अनुयाति स्म लक्ष्मणः ॥ ६ ॥**

---

* सीतया सम्यक् अलंकृते—चन्दनादिभिरित्यर्थः. † उदासीनः—निरुत्सुकः—निर्विण्ण इति यावत्—**गो.** कतकदृष्ट्या तु श्रीमान्, उदासीन इति पदद्वयं रामपरम्. ‡ 'प्रसादान्'—पा—प्रासादानारुह्येत्यन्वयः—**गो.** § बहुविधाः—'इत्येवं विविधा वाचः' इति पर्यन्तम्.

[1] 'पदातिं वर्जितच्छत्रं रामं दृष्ट्वा तदा जनाः'—**झ.**

ऐश्वर्यस्य रसज्ञः सन् *[1] कामिनां चैव कामदः ।
नेच्छत्येवानृतं कर्तुं [2] वचनं धर्मगौरवात् ॥ ७ ॥

रसज्ञ इति । परिग्रहसुखज्ञ इति यावत् । वचनं–पितृवचनम् ॥

या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ।
तामद्य सीतां पश्यन्ति राजमार्गगता जनाः ॥ ८ ॥

अद्येति । प्रयाणानुमत्यर्थदर्शनसमय इत्यर्थः ॥ ८ ॥

अङ्गरागोचितां सीतां रक्तचन्दनसेविनीम् ।
वर्षमुष्णं च शीतं च नेष्यत्याशु विवर्णताम् ॥ ९ ॥

अद्य नूनं दशरथः †सत्त्वमाविश्य भाषते ।
न हि राजा प्रियं पुत्रं विवासयितुमर्हति ॥ १० ॥

निर्गुणस्यापि पुत्रस्य कथं स्याद्विप्रवासनम् ।
किं पुनर्यस्य लोकोऽयं जितो ‡वृत्तेन केवलम् ॥ ११ ॥

आनृशंस्यमनुक्रोशः श्रुतं शीलं §दमश्शमः ।
राघवं शोभयन्त्येते षड्गुणाः पुरुषर्षभम् ॥ १२ ॥

अनुक्रोशः–दया ॥ १२ ॥

---

* कामिनां–अर्थकाङ्क्षिणां कामदः–अभीष्टप्रदः–गो. † सत्त्वं–पिशाचं आविश्य–प्राप्य–गो. सत्त्वं–सत्त्वगुणं आविश्य–प्राप्य भाषते–त्वया वनं न गन्तव्यमिति राजा रामं वदिष्यतीत्यर्थः । कुतः ? न हि राजेति–ती. 'दशरथं सत्त्वमाविश्य' इत्यपि पाठः झ. पुस्तके. ‡ वृत्तेन केवलं–चरित्रमात्रेण । वृत्तेन केवलमित्युक्तिर्दानमानादौ विद्यमानेऽपि चरित्रप्राधान्यात्–गो. § दमः–इन्द्रियनिग्रहः, शमः–चित्तप्रशान्तिः—'शमश्चित्तप्रशान्तिः स्याद्दम इन्द्रियनिग्रहः' इति निर्वचनात्–गो.

[1] कामानां चाकरो महान्–च. [2] पितुर्–ङ.

तस्मात्तस्योपघातेन प्रजाः परमपीडिताः ।
औदकानीव सत्त्वानि ग्रीष्मे सलिलसंक्षयात् ॥ १३ ॥

औदकानि—उदकजीवनानि ॥ १३ ॥

पीडया पीडितं सर्वं जगदस्य जगत्पतेः ।
मूलस्येवोपघातेन वृक्षः पुष्प[1]फलोपगः ॥ १४ ॥

पुष्पफलैः उपगः—उपगमो यस्य ॥ १४ ॥

मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः ।
पुष्पं फलं च पत्रं च शाखाश्चास्येतरे जनाः ॥ १५ ॥

ते लक्ष्मण इव क्षिप्रं [2]सपत्न्यस्सहबांधवाः ।
गच्छन्तमनुगच्छामो येन गच्छति राघवः ॥ १६ ॥

सपत्न्य इति । सपत्नीका इति यावत् । येनेति । मार्गेणेति शेषः । राघवः—रघुकुलजः ॥ १६ ॥

उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च ।
[3]एकदुःखसुखा राममनुगच्छाम धार्मिकम् ॥ १७ ॥

एकदुःखसुखाः—समानसुखदुःखा इति यावत् ॥ १७ ॥

[4]समुद्धृतनिधानानि परिध्वस्ताजिराणि च ।
उपात्तधनधान्यानि [5]हृत*साराणि सर्वशः ॥ १८ ॥

समुद्धृतनिधानत्वादिधर्मकानि वेश्मानि प्रतिपद्यतामित्यन्वयः ॥

---

*साराणि—शय्यासनादीनि—गो.

[1] फलागमः—ङ. [2] सपत्नीकास्सबान्धवाः—ङ. [3] सम—ङ. [4] समुद्धत—ङ.
[5] दत्तसाराणि, हृतभाराणि—ङ.

रजसाऽभ्यवकीर्णानि परित्यक्तानि देवतैः ।
[1]मूषकैः परिधावद्भिरुद्बिलैरावृतानि च ॥ १९ ॥

उद्बिलैः—उत्सृष्टबिलैः ॥ १९ ॥

अपेतोदकधूमानि हीनसंमार्जनानि च ।
प्रणष्टबलिकर्मेज्यामन्त्रहोमजपानि च ॥ २० ॥
दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च ।
अस्मत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यताम् ॥ २१ ॥

दुष्कालः—राजिकदैविकक्षोभकालः ॥ २१ ॥

वनं नगरमेवास्तु येन गच्छति राघवः ।
अस्माभिश्च परित्यक्तं पुरं संपद्यतां वनम् ॥ २२ ॥
बिलानि दंष्ट्रिणस्सर्वे सानूनि मृगपक्षिणः ।
त्यजन्त्वस्मद्भयाद्भीता गजास्सिंहा वनान्यपि ॥ २३ ॥
[2]अस्मत्त्यक्तं प्रपद्यन्तां सेव्यमानं त्यजन्तु च ।

दंष्ट्रिणः—सर्पाः । सानूनि—पर्वतप्रस्थाः । अस्मत्त्यक्तमिति । पुरमिति शेषः । सेव्यमानं—अस्माभिराश्रियमाणं । वनमिति शेषः ॥

*तृणमांस[3]फलादानं देशं व्यालमृगद्विजम् ॥ २४ ॥
प्रपद्यतां हि कैकेयी सपुत्रा सह बान्धवैः ।
राघवेण वने सर्वे सह वत्स्याम निर्वृताः ॥ २५ ॥

---

* व्यालमृगद्विजमिति बहुव्रीहिः । व्यालमृगद्विजैर्विशिष्टं तृणमांसफलादानां देशं—काननीभूतं देशमिति यावत् । अर्थात् तृणादाः—मृगाः, मांसादाः—व्यालाः, फलादाः—पक्षिणः ।

[1] मूषिकैः—ङ. [2] अस्मद्युक्तं—ङ. [3] फलादानां—ङ.

तृणादीनामादानं येभ्यो वनदेशेभ्यस्तथा । व्यालादयश्च येषु तथा ॥ २५ ॥

इत्येवं विविधा वाचो नानाजनसमीरिताः ।
शुश्राव रामः श्रुत्वा च न विचक्रेऽस्य मानसम् ॥ २६ ॥

न विचक्रे—विकारं न प्राप ॥ २६ ॥

स तु वेश्म [1]पितुर्दूरात् कैलासशिखरप्रभम् ।
अभिचक्राम धर्मात्मा मत्तमातङ्गविक्रमः ॥ २७ ॥
विनीतवीरपुरुषं प्रविश्य तु नृपालयम् ।
ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ॥ २८ ॥

*प्रतीक्षमाणोऽपि जनं तदाऽऽर्तं
अनार्तरूपः प्रहसन्निवाथ ।
जगाम रामः पितरं दिदृक्षुः
पितुर्निदेशं विधिवच्चिकीर्षुः ॥ २९ ॥

आर्तं—खिन्नम् ॥ २९ ॥

तत्पूर्वमैक्ष्वाकसुतो महात्मा
रामो गमिष्यन् वनमार्तरूपम् ।
व्यतिष्ठत प्रेक्ष्य तदा सुमन्त्रं
पितुर्महात्मा प्रतिहारणार्थम् ॥ ३० ॥

तत्पूर्वं—तदारभ्येति यावत् । आर्तरूपं—दुःखरूपं । पितुः प्रतिहारणार्थं—निवेदनार्थं सुमन्त्रं प्रेक्ष्य तत्प्रतीक्षां कृत्वा व्यतिष्ठत ॥

---

* प्रतीक्षमाणः—पश्यन् ।

[1] पुनर्मा।दुः—ङ.

पितुर्निदेशेन तु धर्मवत्सलो
वनप्रवेशे कृतबुद्धिनिश्चयः ।
स राघवः प्रेक्ष्य सुमंत्रमब्रवीत्
निवेदयस्वागमनं नृपाय मे ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्रयस्त्रिंशः सर्गः

---

कलि (३१) मानः सर्गः ॥ ३१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे त्रयस्त्रिंशस्सर्गः

---

## चतुस्त्रिंशस्सर्गः

[ दशरथसमाश्वासनम् ]

ततः कमलपत्राक्षः श्यामो [1] निरुदरो महान् ।
उवाच रामस्तं सूतं * पितुराख्याहि मामिति ॥ १ ॥

अथ सभार्यस्य सभ्रातृकस्य रामस्य वनवासानुमतिप्रार्थनम् । तत इत्यादि । श्यामः—श्यामवर्णो युवाऽपि ॥ १ ॥

स रामप्रेषितः क्षिप्रं सन्तापकलुषे[2]न्द्रियः ।
प्रविश्य नृपतिं सूतो निश्वसन्तं ददर्श ह ॥ २ ॥
उपरक्तमिवादित्यं भस्मच्छन्नमिवानलम् ।
तटाकमिव निस्तोयमपश्यज्जगतीपतिम् ॥ ३ ॥

---

* 'निवेदयस्वागमनं नृपाय मे' इति पूर्वस्मिन् श्लोके कथितेऽपि त्वरातिशयादभ्यासः। अथवा निरुत्सुकत्वात् तूष्णीं स्थितस्य सुमन्त्रस्य पुनः प्रतिबोधनाय वाऽभ्यासः ।

[1] निरुपमो—ङ. झ. [2] न्द्रियं—ङ.

आलोक्य तु महाप्राज्ञः परमाकुलचेतसम् ।
राममेवानुशोचन्तं सूतः प्राञ्जलिरासदत् ॥ ४ ॥

राममेवानु—उद्दिश्य ॥ ४ ॥

तं वर्धयित्वा राजानं सूतः पूर्वं जयाशिषा ।
भयविक्लबया वाचा मन्दया [1] श्लक्ष्णमब्रवीत् ॥ ५ ॥

वर्धयित्वा—संपूज्य । भयविक्लबयेति । रामो वनप्रयाणोद्युक्त इतीदं परमानिष्टं कथं राज्ञे वदिष्यामीति भयेन विक्लबा—कातरा तया ॥

अयं स पुरुषव्याघ्रो द्वारि तिष्ठति ते सुतः ।
ब्राह्मणेभ्यो धनं दत्त्वा सर्वश्चैवोपजीविनाम् ॥ ६ ॥

सर्वं धनं दत्त्वेत्यनेन सर्वथैव तिष्ठासाभावो द्योत्यते ॥ ६ ॥

स त्वां पश्यतु, भद्रं ते, रामस्सत्यपराक्रमः ।
सर्वान् सुहृद आपृच्छय त्वां हीदानीं दिदृक्षते ॥ ७ ॥
[2] गमिष्यन्तं महारण्यं तं पश्य, जगतीपते !
वृतं राजगुणैस्सर्वैरादित्यमिव रश्मिभिः ॥ ८ ॥
स [3] सत्यवादी धर्मात्मा गांभीर्यात्सागरोपमः ।
आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच तम् ॥ ९ ॥

सः सत्यवादी दशरथः ॥ ९ ॥

* सुमंत्रानय मे दारान् ये केचिदिह मामकाः ।
दारैः परिवृतस्सर्वैर्द्रष्टुमिच्छामि धार्मिकम् ॥ १० ॥

---

* मे दारान्—कौसल्यां, ये केचिदन्ये मामका दारास्तांश्च । एवं व्याख्याने 'कौसल्यां परिवार्य' इत्यानुरूप्यम् ।

[1] श्लक्ष्णयाब्रवीत्—ङ. [2] गमिष्यति—ङ. [3] सत्यवाक्यो—ङ.

सुमंत्रेत्यादि । हे सुमंत्र ! इह—मद्वेश्मनि ये केचिन्मामका दाराः—स्त्रियस्सन्ति वान्सर्वान्दारानिहानय ॥ १० ॥

सोऽन्तःपुरमतीत्यैव स्त्रियस्ता वाक्यमब्रवीत् ।
[1]आर्याः ! ह्वयति *वो राजाऽऽगम्यतां तत्र मा चिरम् ॥

अतीत्य—अतिवेगेन प्राप्येत्यर्थः । आगम्यतामिति पदम् ॥

एवमुक्ताः स्त्रियस्सर्वाः सुमंत्रेण नृपाज्ञया ।
प्रचक्रमुस्तद्भवनं भर्तुराज्ञाय शासनम् ॥ १२ ॥

प्रचक्रमुः—गच्छन्ति स्म । तद्भवनं—तस्य राज्ञो भवनम् ॥ १२ ॥

अर्धसप्तशतास्तास्तु प्रमदास्ताम्रलोचनाः ।
कौसल्यां परिवार्याथ शनैर्जग्मुर्धृतव्रताः ॥ १३ ॥

अर्धं सप्तशतस्येत्येकदेशिसमासः । ताम्रलोचना इति । रामप्रयाणश्रुतिजदुःखरोदनादिति शेषः । कौसल्यां परिवार्येत्यनेन प्राग्लक्ष्मणोक्तं सर्वधारणसमर्थसर्वप्रभ्वीत्वं द्योतितम् ॥ १३ ॥

आगतेषु च दारेषु समवेक्ष्य महीपतिः ।
उवाच राजा तं सूतं सुमंत्रानय मे सुतम् ॥ १४ ॥

स सूतो राममादाय लक्ष्मणं मैथिलीं तदा ।
जगामाभिमुखस्तूर्णं सकाशं जगतीपतेः ॥ १५ ॥

स राजा पुत्रमायान्तं दृष्ट्वा दूरात्कृताञ्जलिम् ।
उत्पपातासनात्तूर्णमार्तः स्त्रीजनसंवृतः ॥ १६ ॥

उत्पपातेत्येतदालिङ्गनार्थम् ॥ १६ ॥

---

* वो राजा, अवैधव्यदत्वात्; न तु प्रजानां, तासां दुःखदत्वात्—ति.

[1] आर्यो—ङ.

सोऽभिदुद्राव वेगेन रामं दृष्ट्वा विशांपतिः ।
तमप्राप्यैव दुःखार्तः पपात भुवि मूर्छितः ॥ १७ ॥

तमप्राप्यैवेति । आलिलिङ्गिषितपुत्रमसंप्राप्य मध्येमार्गं दुःख-मूर्छितः पपात ॥ १७ ॥

तं रामोऽभ्यपतत् क्षिप्रं लक्ष्मणश्च महायशाः ।
विसंज्ञमिव दुःखेन सशोकं नृपतिं तदा ॥ १८ ॥

तं पतितं नृपतिं रामः क्षिप्रमभ्यपतत्—अभ्यागतवान् । विसंज्ञमिव—विसंज्ञमेव ॥ १८ ॥

*स्त्रीसहस्रनिनादश्च संजज्ञे राजवेश्मनि ।
हा हा रामेति सहसा भूषणध्वनिमिश्रितः ॥ १९ ॥

भूषणध्वनिमिश्रित इति । उरश्शिरस्ताडनादिप्रचलत्प्रभ्रश्य-द्भूषणध्वनिभिर्मिश्रितस्तथा ॥ १९ ॥

तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ ।
पर्यङ्के सीतया सार्धं [1]रुदन्तः समवेशयन् ॥ २० ॥

सीतया सार्धं तं बाहुभ्यां परिष्वज्य पर्यङ्के समावेशयन् ॥२०॥

अथ रामो मुहूर्तेन लब्धसंज्ञं महीपतिम् ।
उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतम् ॥ २१ ॥

---

* स्त्रीणां—दाराणां तथा इतरासां दास्यादीनां च । तेन पूर्वं सार्धत्रिशतत्वोक्तेरविरोधः—सत्य. । सहस्रपदं अनेकपरं वा । अन्यथा तावन्निष्कर्षेण वचनासंभवः, एकद्व्यादीनां न्यूनाधिक्यसंभवात् ।

[1] रुदन्तं-ङ.

आपृच्छे त्वां, महाराज! सर्वेषामीश्वरोऽसि नः ।
प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन माम् ॥ २२ ॥

कुशलेन मां पश्येति । सौम्येन चक्षुषा मामनुगृहाणेत्यर्थः ॥२२॥

लक्ष्मणं चानुजानीहि सीता [1]चान्वेति मां वनम् ।
*कारणैर्बहुभिस्तथ्यैर्वार्यमाणौ न चेच्छतः ॥ २३ ॥

ननु लक्ष्मणसीतयोः कुतो वनवासकष्टप्राप्तिः ; न ह्यसौ वरनिर्बन्धप्राप्त इत्यतः—कारणैरित्यादि । हेतुभिरित्यर्थः । तथ्यैः—परमार्थतयोपन्यस्यमानैः । नेच्छत इति । इह स्थातुमिति शेषः ॥२३॥

अनुजानीहि सर्वान्नः शोकमुत्सृज्य, मानद !
लक्ष्मणं मां च सीतां च प्रजापतिरिव प्रजाः ॥ २४ ॥

प्रतीक्षमाणमव्यग्रमनुज्ञां जगतीपतेः ।
उवाच राजा संप्रेक्ष्य वनवासाय राघवम् ॥ २५ ॥

वनवासायानुज्ञां प्रतीक्षमाणं—अनुमतिं प्रार्थयमानम् ॥ २५ ॥

अहं, राघव! कैकेय्या वरदानेन †मोहितः ।
अयोध्यायास्त्वमेवाद्य भव राजा निगृह्य माम् ॥ २६ ॥

हे राघव! अहं कैकेय्या वरदानेन हेतुना मोहितः- निरुत्तरतया शोकपरवशो जातः ; अतो राज्यव्यापारानर्हः । अतो मां निगृह्य—निरुध्य राज्यशासनं कृत्वा अयोध्यायां त्वमेव स्वभुजवैभवेन राजा भव । प्रवृत्तमभिषेकं समापयेति यावत् ॥ २६ ॥

---

* तथ्यैर्बहुभिः कारणैः मामन्वेति, अत एव वार्यमाणावपि न चेच्छतः इति वा ।

† मोहितः—वञ्चितः-गो.

[1] चान्वेतु—ङ.

एवमुक्तो नृपतिना रामो धर्मभृतां वरः ।
प्रत्युवाचाञ्जलिं कृत्वा पितरं वाक्यकोविदः ॥ २७ ॥

भवान् वर्ष[1]सहस्राय पृथिव्याः, नृपते! पतिः ।
अहं त्वरण्ये वत्स्यामि * न मे [2] कार्यं त्वयाऽनृतम् ॥ २८ ॥

वर्षसहस्राय पतिर्भव—इतः परमप्यनेककालं पतिर्भवेत्यर्थः । न मे कार्यं त्वयाऽनृतमिति । त्वया दत्तं यत् वरद्वयं तन्मे—मया अनृतं—असत्यं न कार्यं—कर्तुं न योग्यं । तव नरकपातप्रसङ्गादित्याशयः ॥

नव पञ्च च वर्षाणि वनवासे विहृत्य ते ।
पुनः पादौ ग्रहीष्यामि † प्रतिज्ञान्ते, नराधिप! ॥ २९ ॥

यदेवमतो—नवेत्यादि । हे नराधिप! पुनरागम्य ते पादौ ग्रहीष्यामीति । प्रतिज्ञान्ते सतीति योजना ॥ २९ ॥

रुदन्नार्तः प्रियं पुत्रं सत्यपाशेन संयतः ।
कैकेय्या चोद्यमानस्तु मिथो राजा तमब्रवीत् ॥ ३० ॥

चोद्यमान इति । अद्यैव गमनमनुमन्यस्वेति कैकेय्या मिथः—रहसि चोद्यमान इत्यर्थः ॥ ३० ॥

श्रेयसे वृद्धये, तात! पुनरागमनाय च ।
‡ गच्छस्वारिष्टमव्यग्रः पन्थानमकुतोभयम् ॥ ३१ ॥

---

* मे—मह्यं, मत्कृते इति यावत्, त्वया अनृतं न कार्यमित्यर्थः । न मे कार्यस्त्वमानृत इति तीर्थसम्मतपाठः । त्वं आनृतः—ईषदनृत युक्तोऽपि न कार्यः इति व्याख्यातम्. † प्रतिज्ञान्ते—चतुर्दशवर्षानन्तरं, स्वर्गादागत्य स्थितस्य ते पादौ ग्रहीष्यामीत्यभिप्रायः—**सत्य.** ‡ गच्छस्व—गच्छ । अरिष्टं—शुभं । 'अरिष्टं तु शुभाशुभे' इत्यमरः—**गो.**

[1] सहस्रायुः—ङ. [2] कार्यस्त्वमानृतः—ङ.

श्रेयसे—परलोकहिताय वृद्धये—इहलोकाभ्युदयाय च। रिष्टं—पापं—दुःखं च, अरिष्टं—स्वस्त्ययनं अस्तु ते। अव्यग्रस्सन् अकुतोभयं पन्थानं गच्छस्व ॥ ३१ ॥

न हि सत्यात्मनः, तात! धर्माभिमनसस्तव।
विनिवर्तयितुं बुद्धिः शक्यते, रघुनन्दन! ॥ ३२ ॥

सत्यात्मनः—सत्यप्रतिष्ठितस्वभावस्य। अत एव धर्माभिमनसः—धर्मसंपादनाभिगतमनस्कस्य ॥ ३२ ॥

अद्य त्विदानीं रजनीं, पुत्र! मा गच्छ सर्वथा।
एकाहदर्शनेनापि *साधु तावच्चराम्यहम् ॥ ३३ ॥

प्रातरेव कैकेय्या प्रस्थापितस्य मात्राद्यनुनययात्रादानादिना आसायं व्यापृतस्य सायं राजानुमत्यर्थमागतस्य राज्ञा प्रवृत्तरजनीसहवासः प्रार्थ्यते—अद्येत्यादि। अद्य—अस्मिन् दिवसे इदानीं संप्रवृत्तां रजनीं इह वस, सर्वथा मा गच्छ। किमर्थमित्यतः—एकाहेत्यादि। चरामि—वर्ते—भोक्ष्यामि च ॥ ३३ ॥

मातरं मां च संपश्यन् वसेमामद्य शर्वरीं।
तर्पितः सर्वकामैस्त्वं श्वः [1]काले साधयिष्यसि ॥ ३४ ॥

साधयिष्यसि—गमिष्यसि ॥ ३४ ॥

दुष्करं क्रियते, पुत्र! सर्वथा, राघव! त्वया।
मत्प्रियार्थं प्रियांस्त्यक्त्वा यद्यासि विजनं वनम् ॥ ३५ ॥

मत्प्रियार्थं—मम परलोकसौख्यार्थमित्यर्थः ॥ ३५ ॥

---

* साधु-सुखं-गो.

[1] काल्ये-ङ.

न चैतन्मे प्रियं, पुत्र! शपे सत्येन, राघव!
छन्नया चलितस्त्वस्मि स्त्रिया छन्नाग्निकल्पया ॥ ३६ ॥

तदेव दर्शयति—न चैतदित्यादि। इहेति शेषः। चलित इत्यादि। भ्रंशितत्वदभिषेकमनोरथ इत्यर्थः ॥ ३६ ॥

वञ्चना या तु लब्धा मे तां त्वं निस्तर्तुमिच्छसि।
अनया वृत्तसादिन्या कैकेय्याऽभिप्रचोदितः ॥ ३७ ॥
न चैतदाश्चर्यतमं यस्त्वं ज्येष्ठसुतो मम।
अपानृतकथं, पुत्र! पितरं कर्तुमिच्छसि ॥ ३८ ॥

या तु वञ्चना मे—मत्सकाशात् लब्धा वनप्रस्थानलक्षणा। वृत्तसादिन्या—कुलोचितचरितनाशिन्या चोदितोऽपि सन् पितरं मां अपानृतकथं—अपगतानृतकथनं कर्तुमिच्छसि—इति यत्—नैतदाश्चर्यं। यत्—यस्मात् त्वं ज्येष्ठः ज्येष्ठगुणः प्रथमस्सुतश्चासि तस्मात्तथा ॥ ३८ ॥

अथ रामस्तथा श्रुत्वा पितुरार्तस्य भाषितम्।
लक्ष्मणेन सह भ्रात्रा *दीनो वचनमब्रवीत् ॥ ३९ ॥

आर्तस्य भाषितं श्रुत्वेति। 'एकाहदर्शनेनापि' इत्याद्युक्तरूपं श्रुत्वेत्यर्थः। दीन इति। एकरात्रमपि पितृसुखाय—कैकेय्या अद्यैव गच्छेति नियोगात्—स्थातुमशक्यमभूदिति प्राप्तशोक इत्यर्थः ॥ ३९ ॥

प्राप्स्यामि यानद्य गुणान् को मे श्वस्तान् प्रदास्यति।
अपक्रमणमेवातः †सर्वकामैरहं वृणे ॥ ४० ॥

प्राप्स्यामीत्यादि। अद्य—अस्मिन्नेव दिवसे प्रयाणे सति यान् गुणान्—अद्यैव गच्छेति नियोगे अद्यैव गच्छामीत्याश्रुतपरिपालनजान्

* अदीन इति पदम्—शि. † 'तर्पितस्सर्वकामैस्त्वं, इत्यस्योत्तरं इदं। सर्वकामैरपि अपक्रमणमेव वृणे इत्युक्ते—सर्वकामानां वरणापेक्षया अपक्रमणमेव वृणे इत्यर्थः।

गुणान्—धर्मान् श्वः प्रस्थाने सति कः प्रदास्यति । *प्रत्युत केवलमसत्यदोष एवावशिष्यते । अतोऽद्यैवापक्रमणं—इतो गमनं सर्वकामैः—सर्वात्मना उत्कटप्रवृत्तजिगमिषया वृणे ॥ ४० ॥

**इयं सराष्ट्रा सजना धनधान्यसमाकुला ।**
**मया विसृष्टा वसुधा भरताय प्रदीयताम् ॥ ४१ ॥**
**वनवासकृता बुद्धिर्न च मेऽद्य [1]विलीष्यति ।**

तस्मात् मया विसृष्टा वसुधा भरताय प्रदीयतां, अद्यैव मत्सन्निधाविति शेषः । अद्य वनवासकृतेति । अद्यैव वनवासे निश्चिता मे बुद्धिः न विलीष्यति । अतः श्वो गमिष्यसीति मा ब्रूहीत्यर्थः ॥ ४१ ॥

**[2]यस्तुष्टेन वरो दत्तः कैकेय्यै, वरद! त्वया ॥ ४२ ॥**
**दीयतां निखिलेनैव सत्यस्त्वं भव, पार्थिव!**

निखिलेनैवेति । अद्यैव मद्वनप्रस्थापनेनेति शेषः । तदा किल निखिलेन—सर्वात्मना सत्यः—सत्यप्रतिज्ञः भविष्यसि । अतोऽद्यैव मां वनं प्रस्थाप्य त्वं सत्यो भव ॥ ४२ ॥

**अहं निदेशं भवतो यथोक्तमनुपालयन् ॥ ४३ ॥**
**चतुर्दशसमा वत्स्ये वने वनचरैः सह ।**
**मा विमर्शो वसुमती भरताय प्रदीयताम् ॥ ४४ ॥**
**न हि मे काङ्क्षितं राज्यं सुखमात्मनि वा प्रियम् ।**

विमर्शः—भरताय दानविचारः मा स्तु । कथमेवमित्यतः—न हीत्यादि । आत्मनि सुखं—स्वसौख्यमित्यर्थः ॥ ४४ ॥

---

* 'कैकेय्या चोद्यमानस्तु मिथः' इति पूर्वं कथनात् कैकेय्याः प्रियसंपादनरूपगुणोऽपि विवक्षितः ।

[1] चलिष्यति—ङ. [2] यस्तु युद्धे—ङ.

**यथानिदेशं कर्तुं वै तवैव, रघुनन्दन! ॥ ४५ ॥**

**अपगच्छतु ते दुःखं मा भूर्बाष्पपरिप्लुतः ।**
**न हि क्षुभ्यति दुर्धर्षः समुद्रः सरितांपतिः ॥ ४६ ॥**

**नैवाहं राज्यमिच्छामि न सुखं न च [1]मैथिलीम् ।**
**नैव सर्वानिमान् कामान् न स्वर्गं नैव जीवितम् ॥ ४७ ॥**

**त्वामहं सत्यमिच्छामि नानृतं, पुरुषर्षभ!**
**प्रत्यक्षं तव सत्येन सुकृतेन च *ते शपे ॥ ४८ ॥**

प्रत्यक्षं तवेति । तव सन्निधावित्यर्थः ॥ ४८ ॥

**न च शक्यं मया, तात! स्थातुं क्षणमपि, प्रभो!**
**[2]स शोकं धारयस्वैनं, न हि मेऽस्ति विपर्ययः ॥ ४९ ॥**

क्षणमपीति । इह पुर इति शेषः । विपर्ययः—विपरीतानुष्ठानं—इहाद्य स्थितिरूपम् ॥ ४९ ॥

**†अर्थितो ह्यस्मि कैकेय्या वनं गच्छेति, राघव!**
**मया चोक्तं व्रजामीति तत्सत्यमनुपालये ॥ ५० ॥**

वनं गच्छेति । अद्यैवेति शेषः ॥ ५० ॥

**मा चोत्कण्ठां कृथाः, देव! वने रंस्यामहे वयम् ।**
**प्रशान्तहरिणाकीर्णे नानाशकुननादिते ॥ ५१ ॥**

उत्कण्ठा—शोकातुरतया स्मरणम् । रंस्यामह इति सीता-सौमित्रिसम्बन्धात् ॥ ५१ ॥

---

* ते—तुभ्यं. † हे राघव—राम वनं गच्छ इति कैकेय्या आर्थितोऽस्मि इत्यन्वयः.
[1] मेदिनीम्—ङ. [2] न शोकं—ङ. च.

पिता हि दैवतं, तात! देवतानामपि स्मृतम्।
*तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ॥ ५२ ॥

चतुर्दशसु वर्षेषु गतेषु, नरसत्तम!
पुनर्द्रक्ष्यसि मां प्राप्तं सन्तापोऽयं विमुच्यताम् ॥ ५३ ॥

विमुच्यतामिति । इदानीमिति शेषः ॥ ५३ ॥

येन संस्तंभनीयोऽयं सर्वो बाष्पकलो जनः।
स त्वं, पुरुषशार्दूल! किमर्थं विक्रियां गतः ॥ ५४ ॥

येनेति । त्वयेत्यर्थः ॥ ५४ ॥

पुरं च राष्ट्रं च मही [1]च केवला
मया विसृष्टा भरताय दीयताम्।
अहं निदेशं भवतोऽनुपालयन्
वनं गमिष्यामि †चिराय सेवितुम् ॥ ५५ ॥

केवला—कृत्स्नेति यावत् ॥ ५५ ॥

मया विसृष्टां भरतो महीमिमां
सशैलषण्डां सपुरां सकाननाम्।
‡[2]शिवां सुसीमामनुशास्तु केवलं
त्वया यदुक्तं, नृपते! तथाऽस्तु तत् ॥ ५६ ॥

त्वया यदुक्तमिति । कैकेयीमिति यावत् ॥ ५६ ॥

---

* 'भव राजा निगृह्य माम्' इति वचनमपि पितुरेव। अथापि स्वस्य वनवासो महाक्लेशप्रद इति व्यथया राजा तथा वदतीति ज्ञात्वा रामः वनवासे स्वस्य क्लेशाभावमाह. † चतुर्दशसमा इत्यर्थः। पितृवाक्यपरिपालननिमित्तं यावज्जीवमपि वने वसेयं, किं चतुर्दशवर्षमात्रेणेति द्योतयितुं चिरायेत्युक्तिः। ‡ शिवामित्यनेन राज्यस्य दुर्भरत्वान्न त्यजामीति गम्यते—गो.

[1] सकानना—ङ. [2] शिवाम् सीमास्त्वनु—ङ.

न मे तथा, पार्थिव! [1] धीयते मनः
महत्सु कामेषु न चात्मनः प्रिये।
यथा निदेशे तव शिष्टसंमते
व्यपैतु दुःखं तव मत्कृतेऽनघ! ॥ ५७ ॥

तदद्य नैवानघ! राज्यमव्ययं
न सर्वकामान्न सुखं न मैथिलीम्।
न [2] जीवितं त्वामनृतेन योजयन्
वृणीय सत्यं व्रतमस्तु ते तथा ॥ ५८ ॥

फलानि मूलानि च भक्षयन् वने
गिरींश्च पश्यन् सरितः सरांसि च।
वनं प्रविश्यैव विचित्रपादपं
सुखीभविष्यामि तवास्तु निर्वृतिः ॥ ५९ ॥

*एवं स राजा व्यसनाभिपन्नः
† [3] शोकेन दुःखेन च ताम्यमानः।
आलिङ्ग्य पुत्रं सुविनष्टसंज्ञः
[4] मोहं गतो नैव [5] चिचेष्ट किञ्चित् ॥ ६० ॥

देव्यस्ततो संरुरुदुस्समेताः
‡ तां वर्जयित्वा नरदेवपत्नीम्।
रुदन् सुमन्त्रोऽपि जगाम मूर्छां
हाहाकृतं तत्र बभूव सर्वम् ॥ ६१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुस्त्रिंशस्सर्गः

---

* उक्तवन्तमिति शेषः। एवमुक्तवन्तं पुत्रमालिंग्येत्यन्वयः. † शोकः—स्वगदाहोत्पादकः, दुःखं—अन्तर्व्यथोत्पादकम्—गो. ‡ तां वर्जयित्वा—कैकेयीं विना।

[1] दीयते—ङ. [2] चिन्तितं—ङ. [3] तापेन—ङ. [4] भूमिं—ङ. [5] विवेद—ङ.

हाहाशब्दस्य कृतं-करणं यस्मिन् तत्तथा। कृत (६१) मानः सर्गः ॥ ६१ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे चतुस्त्रिंशस्सर्गः

---

## पञ्चत्रिंशस्सर्गः

### [कैकेयीगर्हणम्]

**ततो निर्धूय सहसा शिरो निश्वस्य चासकृत्।**
**पाणिं पाणौ विनिष्पिष्य दन्तान् कटकटाप्य च ॥ १ ॥**

एवं सपरिकरस्य राज्ञः परमशोके प्राप्ते सुमन्त्रो महदन्याय्यमिति कैकेयीं प्रत्याह—तत इत्यादि। शिरो निर्धूयेत्यादि कोपविकाराभिनयः। कटकटाप्येति। कटकटशब्दात्तत्करोतीति ण्यन्ताल्ल्यप् ॥ १ ॥

**लोचने कोपसंरक्ते *वर्णं पूर्वोचितं जहत्।**
**कोपाभिभूतस्सहसा सन्तापमशुभं गतः ॥ २ ॥**

लोचने कोपसंरक्ते कृत्वेति शेषः ॥ २ ॥

**मनस्समीक्षमाणश्च सूतो दशरथस्य सः।**
**कम्पयन्निव कैकेय्या हृदयं वाक्छरैः शितैः ॥ ३ ॥**

मनस्समीक्षमाणः-कैकेयीविषये स्नेहाभावं जानन् ॥ ३ ॥

**वाक्यवज्रैरनुपमैर्निर्भिन्दन्निव [1]चाशुगैः।**
**कैकेय्यास्सर्व[2]मर्माणि सुमन्त्रः प्रत्यभाषत ॥ ४ ॥**

---

* वर्ण-देहकान्तिं मुखकान्तिं वा जहत्-परित्यजन्।

[1] चाशुभैः-ङ. [2] कर्माणि-ङ.

यस्यास्तव पतिस्त्यक्तो राजा दशरथः स्वयम् ।
भर्ता सर्वस्य जगतः स्थावरस्य चरस्य च ॥ ५ ॥

न ह्यकार्य[1]तमं किञ्चित्तव देवीह विद्यते ।

यस्यास्तवेति । यया त्वयेत्यर्थः । अतिशयेन कर्तुमशक्यं अकार्यतमम् । इह–संसारे ॥ ५ ॥

पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चान्ततः ॥ ६ ॥
यन्महेन्द्रमिवाजय्यं दुष्प्रकम्प्यमिवाचलम् ।
महोदधिमिवाक्षोभ्यं सन्तापयसि कर्मभिः ॥ ७ ॥

अन्ततः–सर्वान्ते–स्वकृत्यसाध्यफलविचार इत्यर्थः । अचलमिव दुष्प्रकम्प्यं सन्तापयसि । राजानमिति शेषः ॥ ७ ॥

मा वमंस्था दशरथं भर्तारं [2]वरदं पतिम् ।
भर्तुरिच्छा हि नारीणां पुत्रकोट्या विशिष्यते ॥ ८ ॥
*यथावयो हि राज्यानि प्राप्नुवन्ति नृपक्षये ।
इक्ष्वाकुकुलनाथेऽस्मिंस्तं लोपयितुमिच्छसि ॥ ९ ॥

यथावय इति । वयःक्रममनतिक्रम्येति यावत् । लोपयितुमिच्छसीति । अनादिप्रवृत्तधर्मन्यायमिति शेषः ॥ ९ ॥

राजा भवतु ते पुत्रो भरतश्शास्तु मेदिनीम् ।
वयं तत्र गमिष्यामो यत्र रामो गमिष्यति ॥ १० ॥

---

* राजमरणानन्तरं वयःक्रममनुसृत्य पुत्रा राज्यं प्राप्नुवन्तीति मर्यादा । तादृशमर्यादापालके दशरथे सत्येव त्वं तां मर्यादां लोपयितुं इच्छसि । दशरथे सत्येव एवमुद्वेला भवसि चेत् अनन्तरं किं वा न कुर्या इत्याशयः ।

[1] मतः–ङ. [2] परमं–ङ.

न च ते विषये *कश्चिद्ब्राह्मणो वस्तुमर्हति ।
[1]तादृशं त्वममर्यादं अद्य कर्म चिकीर्षसि ॥ ११ ॥

तादृशमिति । ब्राह्मणवासानर्हमिति यावत् । अमर्यादं—अतिक्रमितज्येष्ठराज्यादिव्यवहारम् ॥ ११ ॥

आश्चर्यमिव पश्यामि यस्यास्ते वृत्तमीदृशम् ।
आचरन्त्या न [2]विदृता सद्यो भवति मेदिनी ॥ १२ ॥

आश्चर्यमित्यादि । यस्यास्ते ईदृशममर्यादमतिघोरं वृत्तं—चरित्रमस्ति इदमाश्चर्यमिति पश्यामि । लोक एतादृशस्याननुभूताश्रुतपूर्वत्वादत्याश्चर्यमेव पश्यामि । अपि चैवंविधं घोरमाचरन्त्या त्वया हेतुभूतया मही सद्यो न विदृता—विदीर्णेतीदमप्याश्चर्यम् । एतादृशमहाऽन्याये मह्या तथा किल भाव्यम् ॥ १२ ॥

†महाब्रह्मर्षि[3]सृष्टा वा ज्वलन्तो भीमदर्शनाः ।
[4]धिक् त्वां दण्डा न हिंसन्ति रामप्रव्राजने स्थिताम् ॥

अपि च वसिष्ठादिमहाब्रह्मर्षिसृष्टाः—निर्मिताः ज्वलन्तो भीमदर्शनाः दण्डाः—कृत्यालक्षणाः रामप्रव्राजने स्थितां—कृतनिश्चयां त्वां न हिंसन्तीति यत्, अतो धिग्ब्राह्मण्यमिति शेषः ॥ १३ ॥

---

* ब्राह्मणपदं सत्पुरुषसामान्यपरम्. † महाब्रह्मर्षिभिः वसिष्ठादिभिः जुष्टाः प्रयुक्ताः ज्वलन्तः—तीव्राः धिग्वाग्दण्डाः—धिगित्येवं रूपा वाग्दण्डा .... त्वां न हिंसन्ति?—गो. ॥ ति. ॥ इदमप्याश्चर्यमित्यनुकर्षः—ति.

[1] एतदनन्तरं—अयोध्यावासिनः पौरा ये च जानपदा जनाः । नूनं सर्वे गमिष्यामो मार्गं रामनिषेवितम् । त्यक्ताया बान्धवैस्सर्वैर्ब्राह्मणैस्साधुभिस्तदा । का प्रीती राज्यलाभेन तव देवि भविष्यति । तादृशं त्वममर्यादं कर्म कर्तुं चिकीर्षसि । इत्यधिकम्—ङ. [2] विवृता—ङ. [3] जुष्टा—ङ. [4] धिग्वाग्दण्डा—ङ.

*आम्रं छित्वा कुठारेण निम्बं [1]परिहरेत्तु [2]यः।
यश्चैनं पयसा सिञ्चेन्नैवास्य मधुरो भवेत् ॥ १४ ॥

अथान्यापदेशेन राजानमनुक्रोशति—आम्रमित्यादि। परिहरेदिति। निम्बोपरोषमिति शेषः। एनं—निम्बम्। नैवास्येति। एवं निम्बस्य दोहलं कुर्वतोऽपि पुरुषस्य प्रीतये न मधुरो भवेत्—मधुररसो भवेत्। अतो वृथा श्रमोऽयं कैकेय्यनुवर्तनं राज्ञ इत्याशयः ॥ १४ ॥

†[3]आभिजात्यं हि ते मन्ये यथा मातुस्तथैव च।
न हि निम्बात् स्रवेत् क्षौद्रं लोके निगदितं वचः ॥ १५ ॥

एवं कोपवचनान्युक्त्वा मर्मवचनमप्याह—आभिजात्यमित्यादि। ते मातुराभिजात्यं—प्रशस्तमातापितृजन्मोचितव्यवहारवत्त्वरूपं यथा, तथैव ते आभिजात्यमपीति। कारणानुसारेण हि कार्यम्। तदेव दर्शयति—न हीत्यादि। निम्बात् क्षौद्रं न स्रवेदिति वचो लोके निगदितं—लोकप्रसिद्धमेव किलेत्यर्थः ॥ १५ ॥

तव मातुरसद्ग्राहं विद्म पूर्वं यथाश्रुतम्।

ननु का मे मातुराभिजात्यक्षतिरित्यत्राह—तवेत्यादि। असद्ग्राहं—घोरपापकर्माभिनिवेशम्। पूर्वं यथा—येन प्रकारेण श्रुतं तथा तत् संप्रति विद्मः, 'विदो लटो वा' इति मादेशः ॥

पितुस्ते वरदः ‡कश्चित् ददौ वरमनुत्तमम् ॥ १६ ॥
सर्वभूतरुतं तस्मात् संजज्ञे वसुधाधिपः।
तेन तिर्यग्गतानां च भूतानां विदितं वचः ॥ १७ ॥

---

* निम्बं यः परिचरेत्—आलवालादिकरणेन संरक्षेत्-गो. † अभिजातं—अभिजननं, स्वभाव इति यावत्-गो. ‡ कश्चित्—योगी गन्धर्व इति श्रुतम्-गो.

[1] परिचरे–ङ. च. [2] कः–च. [3] अभिजातं–ङ.

वेदनं कीदृशमित्यतस्तत्प्रतिपादयति—पितुरित्यादि। वरदः—कश्चिदृषिरिति यावत्। अनुत्तमं वरं—अव्यक्तवाग[1]वर्ण्यसर्वभूतरुतपरस्परबोधनीयार्थज्ञानविषयकं। तस्मात्—उक्तलक्षणवरदानबलादेव। स वसुधाधिपः सर्वभूतरुतं—तत्प्रतिपाद्यभावजातं संजज्ञे—जानीते स्म। तिर्यग्गतानामिति। तिर्यक्स्रोतोगतपशुपक्ष्यादीनामित्यर्थः॥ १७॥

ततो *जृम्भस्य शयने विरुताद्भूरिवर्चसः।
पितुस्ते विदितो भावः स तत्र बहुधाऽहसत्॥ १८॥

ततः—तत एव हेतोः कदाचिच्छयने शयानो राजा जृम्भस्य—तदाख्यस्य पक्षिणो विरुतान् श्रुत्वा भूरिवर्चसस्ते पितुस्तस्य पक्षिणो भावः—अभिप्रायः विदितः—अवगतः। अतः तत्र—शयने शयान एव बहुधाऽहसत्—भावपरिज्ञानजसन्तोषेण द्विस्त्रिरहसत्॥ १८॥

तत्र ते जननी क्रुद्धा मृत्युपाशमभीप्सती।
[2]वरं †ते, नृपते! सौम्य! जिज्ञासामीति चाब्रवीत्॥१९॥

अथ तत्र शयने शयाना ते जननी क्रुद्धाऽभवत्—मामयं परिहसतीति। अथ राज्ञा तु, हासस्त्वद्विषयको न भवति, कश्चन वरोऽस्ति, तेन मे भूतान्तरभावज्ञानसामर्थ्यमस्ति, अतस्तज्ज्ञानादहासिषमित्युक्ते, हे नृपते! तं वरं जिज्ञासामि। कीदृशोऽसौ। केन प्रोक्तमिति जिज्ञासामीत्यब्रवीत्॥ १९॥

नृपश्चोवाच तां देवीं, देवि! शंसामि ते यदि।
ततो मे मरणं सद्यो भविष्यति न संशयः॥ २०॥

---

* जृंभस्य—पिपीलिकाविशेषस्य-गो. † ते हासं—हासकारणं-गो.

[1] वर्ण-ट. [2] हासं-ङ.

एवमुक्तो नृपश्च तां प्रत्युवाच–हे देवि! यदि ते शंसामि वरस्वरूपं तत्प्रदातारं च, ततो मे अनन्तरमेव सद्यो मरणं भविष्यति ॥

माता ते पितरं, देवि! पुनः केकयमब्रवीत् ।
शंस मे जीव वा मा वा न मामपहसिष्यसि ॥ २१ ॥

एवमुक्ते ते माताऽऽह—त्वं जीव वा म्रियस्व वा । सर्वथा शंस । तस्मिन्नवगते मां नापहसिष्यतीति ज्ञास्य इति* ॥ २१ ॥

म्रियया च तथोक्तः स केकयः पृथिवीपतिः ।
†तस्मै तं वरदायार्थं कथयामास तत्त्वतः ॥ २२ ॥

एवं तयोक्तस्ते पिता, यः स्वस्य वरदः, तस्मै महर्षये तमर्थं—तदुक्तकथननिर्बन्धं तत्त्वतः कथयामास ॥ २२ ॥

[1]ततः स वरदस्साधू राजानं प्रत्यभाषत ।
‡म्रियतां ध्वंसतां वेयं मा [2]कृथास्त्वं, महीपते! ॥ २३ ॥

ततः साधुस्स वरदः राजानं प्रत्यभाषत—म्रियतामियम् ! ध्वंसतां—प्रच्युतस्वाधिपत्या वा भवतु । तस्या वचो मा कृथा इति ॥

स तच्छ्रुत्वा वचस्तस्य प्रसन्नमनसो नृपः ।
मातरं ते निरस्याशु विजहार कुबेरवत् ॥ २४ ॥

---

* अन्यथा हि मामेवापहसितवान् भवानिति अवधारयामीत्यर्थः. † स्वस्मै येन वरो दत्तः तं प्रति स्वपत्नीनिर्बन्धं कथयामास. ‡ मरणं विषादिना, ध्वंसः विशरणं भृगुपातादिना । अथवा ध्वंसु गतावित्यपि सत्त्वात् यत्रकुत्रचिद्गच्छत्वित्यर्थः ।

[1] एतदर्धानन्तरं 'यदि त्वं शंससे राजन् मरणं ते ध्रुवं भवेत्' इत्यधिकं–ङ.
[2] शंसीस्त्वं–ङ.

अथ स तस्य वचः श्रुत्वाऽऽगतः पश्चात् वचनाय निर्बध्नन्तीं, भद्रे! त्वमितो गच्छेति ते मातरं निरस्य—परित्यज्य—[1] निर्वास्य कुबेरवद्विजहार ॥ २४ ॥

तथा त्वमपि राजानं दुर्जनाचरिते पथि ।
असद्ग्राहमिमं मोहात् कुरुषे, पापदर्शिनि! ॥ २५ ॥

प्रकृते यथोक्तमर्थमुपनयति—तथेत्यादि ॥ २५ ॥

सत्यश्चाद्य प्रवादोऽयं लौकिकः प्रतिभाति मा ।
पितॄन् समनुजायन्ते नरा मातरमङ्गनाः ॥ २६ ॥

मात्रीयासद्ग्राहस्य न्यायप्राप्तत्वमस्या दर्शयति—सत्य इत्यादि । मा—मामिति यावत् । समनुजायन्ते—पितृस्वभावं समनुकुर्वाणा जायन्त इत्यर्थः ॥ २६ ॥

[2]नैवं भव गृहाणेदं यदाह वसुधाधिपः ।
भर्तुरिच्छामुपास्वेह जनस्यास्य गतिर्भव ॥ २७ ॥

नैवं भवेति । मातृवदसद्ग्रहाभिनिवेशिनी मा भव । जनस्यास्येति । अस्मदादेरित्यर्थः । गतिर्भवेति । शरणं भवेति यावत् ॥ २७ ॥

मा त्वं प्रोत्साहिता पापैः देवराजसमप्रभम् ।
भर्तारं लोकभर्तारं *असद्धर्ममुपादधाः ॥ २८ ॥

भर्तारं प्रति असद्धर्म—मिथ्याक्लृप्तधर्ममेवोपादधाः—उपाधिं कृतवत्यसि ॥ २८ ॥

---

* असद्धर्मं—कनिष्ठाभिषेकपूर्वकज्येष्ठविवासनरूपं मोपादधाः—मा ग्राहय—गो.

[1] विवास्य—ट. [2] नेया—ङ. (विधेया इत्यर्थः).

*न हि मिथ्याप्रतिज्ञातं करिष्यति तवानघः ।
श्रीमान् दशरथो राजा, देवि! राजीवलोचनः ॥ २९ ॥

मिथ्याप्रतिज्ञातमिति । लीलयैव केवलमुक्तमित्यर्थः । अतो राजीवलोचनो राजा न करिष्यति ॥ २९ ॥

ज्येष्ठो वदान्यः कर्मण्यः स्वधर्मपरिरक्षिता ।
रक्षिता जीवलोकस्य, देवि! रामोऽभिषिच्यताम् ॥ ३० ॥

अतो ज्येष्ठत्वादिगुणको रामोऽभिषिच्यताम् । अभिषेकानुमतिस्त्वया क्रियतामित्यर्थः ॥ ३० ॥

परिवादो हि ते, देवि! महान् लोके चरिष्यति ।
यदि रामो वनं याति विहाय पितरं नृपम् ॥ ३१ ॥

विपक्षे बाधमाह—परिवाद इत्यादि । चरिष्यति । प्रचरिष्यतीति यावत् ॥ ३१ ॥

[1]स राज्यं राघवः पातु भव त्वं विगतज्वरा ।
†न हि ते राघवादन्यः क्षमः पुरवरे [2]वसन् ॥ ३२ ॥

---

* "........मम वरस्य का गतिरित्याशंक्य प्रकारान्तरेण गतिर्भविष्यतीत्याह—न हीति । प्रतिज्ञातं प्रतिश्रुतं वरद्वयं मिथ्या न करिष्यति । राज्यादप्यधिकमूल्यरत्नभूषणसम्मानादिभिः सफलं करिष्यतीत्यर्थः "—गो. वस्तुतस्तु—कनिष्ठाभिषेचनपूर्वकज्येष्ठविवासनरूपमधर्मं मा ग्राहयेत्युक्ते—यद्ययमधर्मः तर्हि कथं राजानुमेने—इत्याशङ्कायां आह—न हीति । यतोऽयमनघो राजा ततः प्रतिज्ञातं मिथ्या न करिष्यतीत्यर्थः । नायं प्रतिज्ञात्यागापेक्षयाऽधर्म इति भावः. † ते पुरवरे वसन् राघवादन्यः न क्षमो वसेत् । यद्वा 'क्षितिक्षान्त्योः क्षमा, युक्ते क्षमं, शक्ते हिते त्रिषु' इति कोशात् क्षमः—हितः इत्यर्थः । राघवादन्यः—भरतः अत्र वसन्नपि ते क्षमः—हितः न भवेत् इत्यर्थः ।

[1] स्वराज्यं—ङ. च.  [2] वसेत्—ङ.

यदेवमतः—स राघवो राज्यं पातु, त्वं च विगतज्वरा भव। राघवात्—रामादन्यः इह पुरे वसन् भवेद्यदि तदा ते न हि क्षमः—न युक्तः ॥ ३२ ॥

रामे हि यौवराज्यस्थे राजा दशरथो वनम् ।
प्रवेक्ष्यति महेष्वासः पूर्ववृत्तमनुस्मरन् ॥ ३३ ॥

यदेवमतः—राम इत्यादि । पूर्ववृत्तमिति । पुत्रं राज्ये प्रतिष्ठाप्य वनं प्रतिष्ठमानानां पूर्वराजर्षीणां वृत्तमनुस्मरन्नित्यर्थः ॥ ३३ ॥

इति सान्त्वैश्च तीक्ष्णैश्च कैकेयीं [1]राजसंसदि ।
सुमन्त्रः क्षोभयामास भूय एव कृताञ्जलिः ॥ ३४ ॥
नैव सा क्षुभ्यते देवी न च स्म परिदूयते ।
न चास्या मुखवर्णस्य विक्रिया लक्ष्यते तदा ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चत्रिंशः सर्गः

---

न परिदूयत इति । दूङ् खेदे । मार्ग (३५) मानः सर्गः ॥ ३५॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चत्रिंशस्सर्गः

---

## षट्त्रिंशः सर्गः

[सिद्धार्थवचनम्]

*ततस्सुमन्त्रमैक्ष्वाकः पीडितोऽत्र प्रतिज्ञया ।
सबाष्पमतिनिश्वस्य [2]जगादेदं पुनर्वचः ॥ १ ॥

---

* ततः—कैकेयीसम्मत्यभावानन्तरम्—गो.

[1] जनसंसदि—ङ. [2] जगादैनं—ङ.

एवं सुमन्त्रेण मिथ्याप्रतिज्ञाश्रयणेन रामाभिषेकस्यैव स्थापने राजा तु स्वकृतस्य वास्तवत्वमवगच्छन् राम[1]प्रवासं निश्चित्य रामस्य वनवास एव सुखवासोपायमादिशति—तत इत्यादि । प्रतिज्ञयेति । वास्तव्येति यावत् ॥ १ ॥

सूत! रत्नसुसंपूर्णा *[2]चतुर्विधबला चमूः ।
राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीयताम् ॥ २ ॥

चतुर्विधबला—रथादिचतुर्विधबलवती चमूः—सेना प्रतिविधीयतां—नियुज्यतामिति यावत् ॥ २ ॥

रूपाजीवाश्च [3]शालिन्यो वणिजश्च महाधनाः ।
शोभयन्तु कुमारस्य वाहिनीं सुप्रसारिताः ॥ ३ ॥

शालिन्य इति । रूपशालिन्य इत्यर्थः । सुप्रसारिताः—सम्यक् प्रवर्तिताः ॥ ३ ॥

ये †चैनमुपजीवन्ति रमते यैश्च वीर्यतः ।
तेषां बहुविधं दत्त्वा तानप्यत्र नियोजय ॥ ४ ॥
आयुधानि च मुख्यानि ‡नागराश्शकटानि च ।
अनुगच्छन्तु काकुत्स्थं व्याधाश्चारण्य[4]गोचराः ॥ ५ ॥

नागराः—नगरैकप्राप्याः पदार्थविशेषाः विचित्रवस्त्राभरणचन्दनादयः ॥ ५ ॥

---

* पदातिसमुदायादीनामपि सेनाङ्गानां सेनात्वव्यवहारसत्त्वात् चतुरङ्गबला चमूरित्युक्तिः. † एनं—रामम्. ‡ नागराः—नगरजाः श्रेष्ठिनः—गो.

[1] वनवासं—ट. [2] चतुरङ्ग—ङ. [3] वादिन्यः, नादिन्यः—ङ. च. [4] कोविदाः—ङ.

निघ्नन् मृगान् कुञ्जरांश्च पिबंश्चारण्यकं मधु ।
नदीश्च विविधाः पश्यन् न [1]राज्यस्य स्मरिष्यति ॥ ६ ॥

न राज्यस्येति । न राज्यसुखं स्मरिष्यतीत्यर्थः ॥ ६ ॥

धान्यकोशश्च यः कश्चित् धनकोशश्च मामकः ।
तौ राममनुगच्छेतां वसन्तं निर्जने वने ॥ ७ ॥

यजन् पुण्येषु देशेषु विसृजंश्चाप्तदक्षिणाः ।
ऋषिभिश्च समागम्य प्रवत्स्यति सुखं वने ॥ ८ ॥

* भरतश्च महाबाहुरयोध्यां पालयिष्यति ।
सर्वकामैस्सह श्रीमान् रामस्संसाध्यतामिति † ॥ ९ ॥

संसाध्यतां—प्रस्थाप्यतामिति यावत् ॥ ९ ॥

एवं ब्रुवति काकुत्स्थे [2]कैकेय्या भयमागतम् ।
मुखं चाप्यगमच्छोषं स्वरश्चापि न्यरुध्यत ॥ १० ॥

सा [3]विषण्णा च संत्रस्ता ‡ मुखेन परिशुष्यता ।
राजानमेवाभिमुखी कैकेयी वाक्यमब्रवीत् ॥ ११ ॥

राज्यं [4]गतधनं, साधो! पीतमण्डां सुरामिव ।
निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते ॥ १२ ॥

मण्डः—सुरान्तर्गतसारांशः ॥ १२ ॥

कैकेय्यां मुक्तलज्जायां वदन्त्यामतिदारुणम् ।
राजा दशरथो वाक्यमुवाचायतलोचनाम् ॥ १३ ॥

---

* अयोध्यां पालयिष्यतीति सोपालंभोक्तिः—गो. † 'इति जगाद' इति पूर्वेणान्वयः. ‡ मुखेन उपलक्षितेत्यर्थः ।

[1] राज्यं संस्मरिष्यति—ङ. [2] कैकेयी भयमागता—ङ. [3] विवर्णा—ङ. [4] गतजनं—ङ.

वहन्तं किं तुदसि मां नियुज्य धुरि * [1]माऽहिते !
† अनार्ये ! कृत्यमारब्धं किं न पूर्वमुपारुधः ॥ १४ ॥

वहन्तमिति । दासवत् त्वया भरताभिषेके रामविवासने च नियुज्य नियुक्तधुरञ्च वहन्तमपि मां किं तुदसि—व्यथयसि ? हे अनार्ये ! इदानीमारब्धं सर्वसौभाग्योपेततयाऽस्मत्प्रस्थापनं किमिति नोपारुधः ? पूर्वं—रामवनवासप्रार्थनकाल एव सर्वं त्यक्त्वा केवलं यास्विति किमिति न प्रार्थितम् ? अत एतन्निरोधे तव सामर्थ्यं नास्तीत्यर्थः ॥ १४ ॥

तस्यैतत्क्रोधसंयुक्तमुक्तं श्रुत्वा वराङ्गना ।
कैकेयी द्विगुणं क्रुद्धा राजानमिदमब्रवीत् ॥ १५ ॥

द्विगुणं क्रुद्धेति । प्रकारान्तरेण मत्प्रयोजनं नाशयतीति ॥

तवैव वंशे सगरो ज्येष्ठपुत्र‡मुपारुधत् ।
असमञ्ज इति ख्यातं, तथाऽयं गन्तुमर्हति ॥ १६ ॥

अवृतस्यापि दृष्टान्तावष्टम्भेनार्थसिद्धं वनप्रस्थानस्य कैवल्यमित्याशयेनाह—तवैवेत्यादि ॥ १६ ॥

एवमुक्तो धिगित्येव राजा दशरथोऽब्रवीत् ।
व्रीडितश्च जनः सर्वः सा च तं [2]नावबुध्यत ॥ १७ ॥

---

* मा—मां, धुरि नियुज्य तं वहन्तमेव मां तुदसि. † हे अनार्ये आरब्धं किं कृत्यं नोपारुधः ? सर्वमुपरुद्धवत्येव । पूर्वमभिषेककृत्यं इदानीं आनुयात्रिकप्रदानमारब्धं, तदप्युपारुध इत्यर्थः—ती. शेषं १६ श्लोकटिप्पण्यां द्रष्टव्यम्. ‡ उपारुधत—राज्यभोगेभ्य इति शेषः—ति. अत्र 'ज्येष्ठपुत्रमुपारुधत्' 'रामः किमकरोत्पापं येनैवमुपरुध्यते' (श्लो. २६) इति वाक्यद्वयपर्यालोचनायां 'अनार्ये कृत्यमारब्धं किं न पूर्वमुपारुधः' इत्यत्रापि पुरुष एवोपरोधकर्मीभूत इति युज्यते ।

[1] वाऽहिते—ङ. [2] नावबुध्यति—ङ.

एवमुक्त इति । असमञ्जवद्गमनेऽभिहित इति यावत् । स्वप्रतिश्रुतार्थातिरिक्तस्य दुराशया प्रलापतो राज्ञो धिक्कृतिः । तं—कृतधिक्कारमित्यर्थः ॥ १७ ॥

तत्र वृद्धो [1]महामात्रः सिद्धार्थो नाम नामतः ।
शुचिर्बहुमतो राज्ञः कैकेयीमिदमब्रवीत् ॥ १८ ॥

अथासमञ्जवत् प्रस्थापनं त्वद्दुराशा[2]मात्रत एव केवलम् । नात्र तदवतारप्रसङ्ग इति सिद्धार्थाख्यो मन्त्रिवृद्ध आह—तत्रेत्यादि । महामात्रः-प्रधानः ॥ १८ ॥

असमञ्जो गृहीत्वा हि क्रीडतः पथि दारकान् ।
सरय्वाः प्रक्षिपन्नप्सु *रमते तेन दुर्मतिः ॥ १९ ॥

तं दृष्ट्वा नागरास्सर्वे क्रुद्धा राजानमब्रुवन् ।
असमञ्जं वृणीष्वैकमस्मान् वा, राष्ट्रवर्धन! ॥ २० ॥

तानुवाच ततो राजा किन्निमित्तमिदं भयम् ।
ताश्चापि राज्ञा संपृष्टा वाक्यं प्रकृतयोऽब्रुवन् ॥ २१ ॥

क्रीडतस्त्वेष नः पुत्रान् बालानुद्भ्रान्त[3]चेतनः ।
सरय्वां प्रक्षिपन् मौर्ख्यादतुलां प्रीतिमश्नुते ॥ २२ ॥

स तासां वचनं श्रुत्वा प्रकृतीनां नराधिपः ।
तं तत्याजाहितं पुत्रं तासां प्रियचिकीर्षया ॥ २३ ॥

तं पुत्रं तत्याज हीति योजना ॥ २३ ॥

---

* तेन—प्रक्षेपेण रमते स्मेति शेषः । तिलके तु तेन—कारणेन दुर्मतिः इति ॥

[1] महामात्यः—ङ. [2] मात्रमेव—ट. [3] चेतसः—ङ.

तं यानं शीघ्रमारोप्य सभार्यं सपरिच्छदम् ।
यावज्जीवं विवास्योऽयमिति तानन्वशात् पिता ॥ २४ ॥

अन्वशात्–अनुशिष्टवान् ॥ २४ ॥

स *फालपिटकं गृह्य गिरि[1]दुर्गाण्यलोकयन् ।
[2]सर्वा दिशस्त्वनुचरन् [3]अतिष्ठत् पापकर्मकृत् ॥ २५ ॥
इत्येनमत्यजद्राजा सगरो वै सुधार्मिकः ।

गिरिदुर्गाण्यलोकयन्–गिरिदुर्गाणि परिभ्रममाणः कन्दादिकमलोकयन् सर्वा दिशश्च कन्दाद्यर्थमनुचरन् अतिष्ठत्–यावज्जीवं पितुराज्ञया निजापराधात् ॥ २५ ॥

रामः किमकरोत्पापं येनैवमुपरुध्यते ॥ २६ ॥

प्रकृते कुत एतत्प्रसङ्ग इत्याह—रामः किमित्यादि ॥ २६ ॥

न हि कञ्चन पश्यामो †राघवस्यागुणं वयम् ।
दुर्लभो ह्यस्य निरयः, शशाङ्कस्येव कल्मषम् ॥
अथवा, देवि ! दोषं त्वं कञ्चित्पश्यसि राघवे ।
तमद्य ब्रूहि तत्त्वेन [4]तदा रामो [5]विवास्यते ॥ २८ ॥

---

* फालं–कन्दमूलादिखननसाधनं, पिटकं–तद्धारणपात्रम्–गो. † दोषपदमुच्चरितुमप्यसहमान आह—अगुणमिति ॥ उत्तरत्र तु कैकेयीदृष्ट्या दोषपदप्रयोगः । यथा असमञ्जो निरयहेतुपापकर्मकृत्, न तथा रामः पापकृत् इत्याशयः । तादृशपापाभावेऽपि अल्पं वा यदि पापं स्यादित्याशङ्कायामाह—शशाङ्कस्येत्यादि ॥ इमं पादं पूर्वेणैवान्वीय—शशाङ्कस्येति व्यतिरेक दृष्टान्तः । (इति केचित्–सत्य.) 'शशाङ्कस्य–द्वितीयाचन्द्रस्य' इति च केचिद्व्याचख्युः–शि. कतकव्याख्यानमेव स्वरसम् ॥

[1] दुर्गाण्यलोलयत्, दुर्गाणि लोकयन्–ङ. [2] दिशस्सर्वा–ङ च. [3] स यथा–ङ. च. [4] तदा–ङ. [5] विवास्यताम्–ङ.

अगुणं—दोषम् । दुर्लभः—अप्रापणीय एव, अस्य निरयः—वनवासदुःखम् । अथवा शशाङ्कस्यापि कल्मषमिव राघवे यदि किञ्चिद्दोषं पश्यसि तदद्य ब्रूहि । तदा असमञ्जवत् त्यागो भविष्यतीति शेषः ॥ २८ ॥

[1]अदुष्टस्य हि संत्यागः सत्पथे निरतस्य च ।
निर्दहेदपि शक्रस्य द्युतिं धर्मनिरोधनात् ॥ २९ ॥

तदलं, देवि ! रामस्य श्रिया विहतया त्वया ।
लोकतोऽपि हि ते रक्ष्यः परिवादश्शुभानने ॥ ३० ॥

त्वया विहतया रामस्य श्रिया ते न किञ्चित् । तदलं वृथा श्रमेण । हि—यस्मात् लोकतः प्राप्तः परिवादश्च रक्ष्यः—परिहार्यः । ततोऽप्यलम् ॥ ३० ॥

श्रुत्वा तु सिद्धार्थवचो राजा श्रान्ततरस्वनः ।
शोकोपहतया वाचा कैकेयीमिदमब्रवीत् ॥ ३१ ॥

एतद्वचो नेच्छसि, [2]पापवृत्ते !
हितं न [3]जानासि ममात्मनो वा ।
*आस्थाय मार्गं कृपणं कुचेष्टा
चेष्टा हि ते साधुपथादपेता ॥ ३२ ॥

एतद्वच इति । सिद्धार्थवच इत्यर्थः । मम हितं न जानासि, आत्मनः—तवापि हितं न जानासि । कृपणं मार्गमास्थाय येयं कुचेष्टा कृता सेयं चेष्टा साधुपथादपेता हि ॥ ३२ ॥

---

* कुचेष्टा त्वं कृपणं मार्गमास्थाय ममात्मनो वा हितं न जानासीति वा अन्वयः । कुचेष्टात्वमेवोपपादयति—चेष्टा हीति ॥

[1] एतदनन्तरं 'अप्राप्तस्य विवासोऽयं वनेषु सुयशस्विनः'—ङ. [2] पापरूपे—ङ.
[3] जानामि—ङ.

*अनुव्रजिष्याम्यहमद्य रामं
राज्यं परित्यज्य सुखं धनं च ।
[1]सहैव राज्ञा भरतेन च त्वं
यथासुखं भुङ्क्ष्व चिराय राज्यम् ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षट्त्रिंशस्सर्गः

---

लीला (३३) मानस्सर्गः ॥ ३३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे षट्त्रिंशस्सर्गः

---

## सप्तत्रिंशस्सर्गः

[वसिष्ठाक्रोशः]

[2]महामात्रवचः श्रुत्वा रामो दशरथं तदा ।
अभ्यभाषत वाक्यं तु विनयज्ञो विनीतवत् ॥ १ ॥

एवं सह विभूत्या वनवासे मन्त्रिवृद्धेन समर्थिते रामस्तु शुद्धभावत्वात् जटावल्कलधारिणा वस्तव्यमित्युक्त्या अर्थात् भोगपरिकरत्यागो वृत एव, प्रयोजनश्च ततो मम नास्तीति मन्यमानस्सन् राजोपदिष्टभोगपरिकरं प्रत्याख्याति—महामात्रेत्यादि ॥ १ ॥

त्यक्तभोगस्य मे, राजन्! वने वन्येन जीवतः ।
किं कार्यं†मनुयात्रेण त्यक्तसङ्गस्य सर्वतः ॥ २ ॥

---

* धनधान्यादिनयने कैकेय्या प्रतिरुद्धे तत्सर्वं परित्यज्य अहमेव राममनुगमिष्यामीत्याह दशरथः. † अनुयात्रेण—अनुगतबलेन—गो. यापनोपायेन । 'यात्रा तु यापनोपाये' इति विश्वः—सत्य.

[1] सर्वे च—ङ.     [2] महामात्य—ङ.

त्यक्तभोगस्येति। जटावल्कलधारिणाऽवश्यवस्तव्यत्वेन राजभोगत्यागस्यावश्यप्राप्तत्वादित्याशयः। अनुयात्रेण—अनुयात्रावता। बलादिनेत्यर्थः ॥ २ ॥

यो हि दत्त्वा द्विपश्रेष्ठं *कक्ष्यायां कुरुते मनः।
रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम् ॥ ३ ॥

असङ्गतश्चायमनुयात्राप्रस्थापनवाद इत्याह—यो हीत्यादि। कक्ष्यायां—पर्यङ्कबन्धनरज्जौ ॥ ३ ॥

तथा मम, सतां श्रेष्ठ! किं ध्वजिन्या, जगत्पते!
सर्वाण्येवानुजानामि चीराण्येवानयन्तु मे ॥ ४ ॥

तथा ममेति। उक्तदृष्टान्तवत् राज्यमेव त्यजतः राज्यावयवेन कक्ष्याकल्पेन ध्वजिन्यादिना किम्? न किमपि प्रयोजनमित्यर्थः। यदेवं—अतस्सर्वाण्येव भरतायैवानुजानामि, मातुः प्रीतये। अतश्चीरादीन्वनोपयुक्तपदार्थानेवानयन्तु। भवन्त इति शेषः ॥ ४ ॥

खनित्रपिटके चोभे [1] समानयत गच्छत।
चतुर्दश वने वासं वर्षाणि वसतो मम ॥ ५ ॥
†अथ चीराणि कैकेयी स्वयमाहृत्य राघवम्।
उवाच परिधत्स्वेति जनौघे निरपत्रपा ॥ ६ ॥

एवमुक्ते तत्साहसेऽपि कैकेय्येव प्रावर्तत—अथेत्यादि। चीरे इति। अन्तरीयोत्तरीयरूपे ॥ ६ ॥

---

* 'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इत्यमरः. † एतत्पर्यन्तं मन्थराप्रेरितं सिद्धं कृत्वा ब्राह्मणशापप्राप्तलोकासूयाविषयत्वसंपादकं कर्म कैकेय्यारभते—अथेति। स च शापोऽध्यात्मरामायणे स्पष्टः—ति.

[1] ममानयत गच्छतः—ङ.

स चीरे पुरुषव्याघ्रः कैकेय्याः प्रतिगृह्य ते ।
सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यवस्त ह ॥ ७ ॥

अवक्षिप्य–परित्यज्य । मुनिवस्त्राणि–चीराणि । अवस्त–वस आच्छादने, अस्माल्लङ् ॥ ७ ॥

लक्ष्मणश्चापि तत्रैव विहाय वसने शुभे ।
तापसाच्छादने चैव जग्राह पितुरग्रतः ॥ ८ ॥

अथात्मपरिधानार्थं सीता कौशेयवासिनी ।
संप्रेक्ष्य चीरं संत्रस्ता पृषती वागुरामिव ॥ ९ ॥

अथ सीता आत्मनः–स्वस्या अपि परिधानार्थं प्राप्तं चीरं समीक्ष्य त्रस्ताऽभूत् । पृषती–मृगी ॥ ९ ॥

सा व्यपत्रपमाणेव प्रगृह्य च सुदुर्मनाः ।
[1]कैकेय्याः कुशचीरे ते जानकी शुभलक्षणा ॥ १० ॥
अश्रुसंपूर्णनेत्रा च धर्मज्ञा *धर्मदर्शिनी ।
गन्धर्वराजप्रतिमं भर्तारमिदमब्रवीत् ॥ ११ ॥

[2]व्यपत्रपमाणेव–लज्जमानेव कैकेय्यास्सकाशात् प्रगृह्य ॥ ११ ॥

कथं नु चीरं बध्नन्ति मुनयो वनवासिनः ।
इति ह्यकुशला सीता सा मुमोह मुहुर्मुहुः ॥ १२ ॥

इति ह्यकुशला–चीरबन्धनाऽसमर्था ; अपरिचयात् ॥ १२ ॥

---

* धर्मस्य दर्शनं परेभ्यः तदनुष्ठानमेव । स्वयं धर्मं जानन्ती, अनुष्ठात्री चेत्यर्थः ।

[1] कैकेयी–ङ. [2] व्यपत्रपमाणैव–क.

कृत्वा कण्ठे च सा चीरमेकमादाय पाणिना ।
तस्थौ ह्यकुशला तत्र व्रीडिता जनकात्मजा ॥ १३ ॥

तस्यास्तत् क्षिप्रमागम्य रामो धर्मभृतां वरः ।
चीरं बबन्ध सीतायाः कौशेयस्योपरि स्वयम् ॥ १४ ॥

कौशेयस्योपरीति । तस्याः कौशेयपरित्यागादेः प्रसक्त्यभावात् ॥

रामं प्रेक्ष्य तु सीताया बध्नन्तं चीरमुत्तमम् ।
अन्तःपुरगता नार्यो मुमुचुर्वारि नेत्रजम् ॥ १५ ॥

ऊचुश्च [1] परमायत्ता रामं ज्वलितचेतसम् ।
वत्स! [2] नैवं नियुक्तेयं वनवासे मनस्विनी ॥ १६ ॥

परमायत्ताः–परमखिन्नाः, यती प्रयत्ने णौ, 'यत्तः खेदोपस्करयोः' ॥ १६ ॥

पितुर्वाक्यानुरोधेन गतस्य विजनं वनम् ।
* [3] तावद्दर्शनमस्या नः सफलं भवतु, प्रभो! ॥ १७ ॥

अस्या नस्सफलमिति । अस्या दर्शनेन नः–अस्माकं जीवितं सफलं भवतु । अत इयमिह तिष्ठत्वित्यग्रेण सम्बन्धः ॥ १७ ॥

लक्ष्मणेन सहायेन वनं गच्छस्व, पुत्रक!
नेयमर्हति कल्याणी वस्तुं तापसवद्वने ॥ १८ ॥

---

* वनं गतस्य तव सम्बन्धिन्याः अस्यास्सीताया दर्शनं तावत्–त्वदागमनपर्यन्तं नः–अस्माकं सफलं—त्वद्दर्शनं यथाऽऽनन्दकरं तथा भवतु । अथवा—अस्या दर्शनं–दर्शनेन नः—अस्माकं जीवितं सफलं भवत्वित्यर्थः–ती. वनं गतस्य तव दर्शनं अस्यां सफलं भवतु—स्वामिवैनां द्रक्ष्याम इति भावः–गो.

[1] परमायस्ताः–ङ. [2] मैवं–ङ. [3] तव दर्शनमस्यां–ङ.

कुरु नो याचनां, पुत्र! सीता तिष्ठतु भामिनी ।
धर्मनित्यस्स्वयं स्थातुं न हीदानीं त्वमिच्छसि ॥ १९ ॥

तासामेवंविधा वाचः श्रृण्वन् दशरथात्मजः ।
बबन्धैव तदा चीरं *सीतया तुल्यशीलया ॥ २० ॥

तासामेवंविधा वाचः श्रृण्वन्नपि तुल्यशीलया सीतया अनङ्गीकृतनगरास्थितिकया प्रेरितस्सन् तदा चीरं बबन्धैव ॥ २० ॥

चीरे गृहीते तु तया [1] समीक्ष्य नृपतेर्गुरुः ।
निवार्य सीतां कैकेयीं वसिष्ठो वाक्यमब्रवीत् ॥ २१ ॥

[2] अतिवृत्ते! सुदुर्मेधे! कैकेयि! कुलपांसनि!
वञ्चयित्वा तु राजानं † [3] न प्रमाणेऽवतिष्ठसे ॥ २२ ॥

अतिवृत्ते–अतिमर्यादे । प्रमाणे–यावद्वृतं तावत्प्रमाणे नावतिष्ठसे ॥ २२ ॥

न गन्तव्यं वनं देव्या सीतया, शीलवर्जिते!
[4] अनुष्ठास्यति रामस्य सीता प्रकृतमासनम् ॥ २३ ॥

कुत इत्यतः–न गन्तव्यमित्यादि । त्वद्वरानन्तर्भावादित्याशयः । यदेवमतः–अनुष्ठास्यतीत्यादि । प्रकृतमासनं–सिंहासनं । अनुष्ठास्यति–राज्यं करिष्यति । यावद्रामागमनमित्यर्थः ॥ २३ ॥

आत्मा हि दारास्सर्वेषां दारसंग्रहवर्तिनाम् ।
आत्मेयमिति रामस्य पालयिष्यति मेदिनीम् ॥ २४ ॥

---

* षष्ठ्यर्थे तृतीया–**गो**. अथवा एतत्पदद्वयस्योत्तरश्लोकेऽन्वयः. † सप्रमाणेव—सद्वृत्तेव–**ती**.

[1] सबाष्पो–**ङ**. [2] अतिप्रवृत्ते दुर्मेधे–**ङ**. [3] सप्रमाणेव–**ङ. छ.**
[4] अधिष्ठास्यति–**ङ**.

कथं स्त्रिया राज्याधिष्ठानमित्यत:—आत्मेत्यादि । दारसंग्रहवर्तिनां—गृहस्थाश्रमनिष्ठानामित्यर्थ: । अतो रामस्येयमात्मेति कृत्वा तस्य मेदिनीं ज्यैष्ठ्यादुभयविधात् प्राप्तां पालयिष्यति । 'अर्धो वा एष आत्मनो यत् पत्नी' इति श्रुतेरात्मत्वं चाविवादम् ॥ २४ ॥

*अथ यास्यति वैदेही वनं रामेण सङ्गता ।
[1]अत्रैनमनुयास्याम: पुरं चेदं गमिष्यति ॥ २५ ॥

अथ यास्यतीति । त्वन्निर्बन्धादिति शेष: । वयमिति । अस्मदाद्या ब्राह्मणा इत्यर्थ: । अत्रेति । यत्र राम: अत्रैनमनुयास्याम इत्यर्थ: ॥ २५ ॥

†अन्तपालाश्च यास्यन्ति सदारो यत्र राघव: ।
सहोपजीव्यं राष्ट्रं च पुरं च सपरिच्छदम् ॥ २६ ॥

अन्तपाला:—शुद्धान्तरक्षका: । अभ्यन्तरभृत्यवर्गा इत्यर्थ: । सहोपजीव्यं—उपजीव्यं जीवाजीवधनं—तत्सहितं तथा । सपरिच्छदं—दासीदासशकटादिपरिकरयुक्तम् ॥ २६ ॥

‡भरतश्च सशत्रुघ्न: चीरवासा वनेचर: ।
वने वसन्तं काकुत्स्थ[2]मनुयास्यति पूर्वजम् ॥ २७ ॥

भरतश्च पूर्वजमनुयास्यतीति । तत्स्वभावस्त्वस्माभिर्ज्ञायत इति शेष: ॥ २७ ॥

---

* पत्न्या: पत्न्यर्धात्मत्वे, तर्हि रामवनवासवरणे तत्पत्न्या अपि वनवास: सिद्ध एवेति यदि कैकेयी ब्रूयादित्याह—अथेति. † अन्तपाला:—राष्ट्रान्तपरिपालका: दण्डनायका:—गो. ‡ 'पितॄन् समनुजायन्ते नरा मातरमङ्गना:' इति खलु न्याय इति भाव: ॥

[1] वयमप्यनु—ङ. वयमत्रानु—च. [2] मनुवत्स्यति—ङ.

ततः शून्यां गतजनां वसुधां *पादपैस्सह ।
त्वमेका शाधि दुर्वृत्ता प्रजानामहिते स्थिता ॥ २८ ॥

पादपैस्सहेत्यनेन अटवीभूतामिति द्योत्यते ॥ २८ ॥

न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः ।
तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ॥ २९ ॥

न †ह्यदत्तां महीं पित्रा भरतः शास्तु[1]मर्हति ।
त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३० ॥

अपि च सर्वथैव ते भरतराज्यप्रयासो व्यर्थ इत्युच्यते—न हीत्यादि । पित्रा अदत्तामिति । रामाय न्यायेन ससन्तोषं पित्रा दत्तेति सर्वेषां नः प्रत्यक्षम् । तत्तु केवलं त्वया प्रतिबद्धम् । त्वयि वा पितृनाशिकायां अतः परं पुत्रवद्वस्तुं नार्हति—इत्यनुकर्षः । कुत एवमित्यतः—यदीत्यादि । यदि महीपतेर्जातः—यद्यसतीसुतो न स्यादित्यर्थः । 'पितॄन् समनुजायन्ते नराः' इति खलु न्याय इत्याशयः । भरतस्य च देहग्रहो दशरथमहायागमूल इत्यविवादात् ॥ ३० ॥

यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यसि ।
पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति ॥ ३१ ॥

सर्वथाऽसौ पितृवंशे तत्प्राधान्येन स्थितस्सन् चरित्रज्ञः—पितृपितामहपरंपराप्राप्तस्वकुलोचिताचारज्ञस्सन् अन्यथा न करिष्यति । ज्येष्ठे जाग्रति स्वयं राज्यं न करिष्यतीत्यर्थः ॥ ३१ ॥

---

*पादपानां गमनशक्त्यभावात्त एवावशिष्येरन्निति भावः. †अदत्तां—प्रीतिपूर्वकमदत्तां—गो. ती.

[1] मिच्छति—च.

तत्त्वया पुत्रगर्धिन्या * पुत्रस्य कृतमप्रियम् ।
[1]लोको न हि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥

पुत्रगर्धिन्या—पुत्रराज्याभिलाषवत्या । यो रामं नानुव्रतः स लोकः—प्राणी दैवहतां त्वां विना न विद्येत—न संभवेत् ॥ ३२ ॥

द्रक्ष्यस्यद्यैव, कैकेयि ! पशुव्यालमृगद्विजान् ।
गच्छतस्सह रामेण † पादपांश्च तदुन्मुखान् ॥ ३३ ॥

किमिह प्रमाणमित्यत्र प्रत्यक्षमेवेत्युच्यते—द्रक्ष्यस्यद्यैवेत्यादि । पादपांश्च तदुन्मुखान्, किमु मनुष्यानिति शेषः ॥ ३३ ॥

अथोत्तमान्याभरणानि, देवि !
देहि स्नुषायै व्यपनीय चीरम् ।
‡ न चीरमस्याः प्रविधीयतेति
न्यवारयत्तद्वसनं वसिष्ठः ॥ ३४ ॥

एवं सर्वज्ञत्वाद्भगवान् वसिष्ठः भाव्यर्थजातमनुगृह्य प्रकृतानुष्ठेयमुपदिशति—अथोत्तमानीत्यादि । यथोचितानि उत्तमानि च तथा ॥

एकस्य रामस्य वने निवासः
त्वया वृतः, केकयराजपुत्रि !
विभूषितेयं प्रतिकर्मनित्या
वसत्वरण्ये सह राघवेण ॥ ३५ ॥

---

* रामविप्रवासस्य त्वत्पुत्रविप्रवासे पर्यवसानात् पुत्रस्याप्रियं कृतमिति ।

† तथोपरिष्टात् स्पष्टीभविष्यति—'अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः' इति—गो.

‡ अस्याः—जीवत्पतिकायाः सीतायाः ।

[1] लोके—ङ.

'चीरं न प्रविधीयते' इत्युक्तमेवार्थं बोधयति—एकस्येत्यादि। प्रतिकर्म—प्रसाधनव्यापारः, स नित्यो यस्यास्सा तथा। अत एव विभूषिता सतीयं रामेण सहारण्ये स्वभर्तृशुश्रूषाप्रयुक्ता सती वसतु ॥३५॥

यानैश्च मुख्यैः परिचारकैश्च
सुसंवृता गच्छतु राजपुत्री।
वस्त्रैश्च सर्वैस्सहितैर्विधानैः
नेयं वृता ते वरसंप्रदाने ॥ ३६ ॥

तस्मिंस्तथा जल्पति विप्रमुख्ये
गुरौ नृपस्याप्रतिमप्रभावे।
नैव स्म सीता विनिवृत्तभावा
प्रियस्य भर्तुः [1]प्रतिकारकामा ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तत्रिंशस्सर्गः

एवं गुरौ जल्पत्यपि प्रियस्य भर्तुः प्रतिकारकामा—प्रतिच्छन्दाकारसम्पादनकामा सती चीरपरिग्रहाद्विनिवृत्तभावा नैव स्म—नैवाऽभूत्। स्थाली (३७) मानः सर्गः ॥ ३७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्तत्रिंशस्सर्गः

———

## अष्टात्रिंशस्सर्गः

[दशरथाक्रोशः]

तस्यां चीरं वसानायां नाथवत्यां *अनाथवत्।
प्रचुक्रोश जनस्सर्वो †धिक् त्वां दशरथं त्विति ॥ १ ॥

---

* चीरपरिधानं विधवानामेव युक्तमित्यभिप्रेत्य—अनाथवदित्युक्तम्। † त्वां धिगिति दशरथं प्रचुक्रोश—इत्यन्वयः। एतत्सर्वस्यापि दशरथः खलु निदानमित्याक्रोशः।

[1] प्रियकारकामा—ङ.

एवं भर्त्रनुरोधेन चीरग्रहं सीताया गुरुवचोबलात् राजा वारयति—तस्यामित्यादि । दशरथं धिगिति जनश्चुक्रोशेति । तद्दूरानन्तर्गतानिष्टांशमपि अनिवारयन् तूष्णीं तिष्ठतीति जनाक्रोशः ॥ १ ॥

[1] तेन तत्र प्रणादेन दुःखितस्स महीपतिः ।
[2] स निःश्वस्योष्णमैक्ष्वाकः तां भार्यामिदमब्रवीत् ॥ २ ॥

सुकुमारी च बाला च सततं च सुखोचिता ।
नेयं वनस्य योग्येति सत्यमाह गुरुर्मम ॥ ३ ॥

एवं श्रुतजनाक्रोशो वारयितुमुपक्रमते—सुकुमारीत्यादि ॥ ३ ॥

इयं हि [3] कस्यापकरोति किञ्चित्
तपस्विनी राजवरस्य पुत्री ।
या चीरमासाद्य [4] जनस्य मध्ये
जाता *विसंज्ञा श्रमणीव काचित् ॥ ४ ॥

विसंज्ञा—अपरिचिताशक्यार्थानुष्ठानप्रसङ्गतः घूर्णितचित्ता । श्रमणी—भिक्षुकी—तापसी ॥ ४ ॥

चीराण्यपास्यात् जनकस्य कन्या
नेयं प्रतिज्ञा मम दत्तपूर्वा ।
यथासुखं गच्छतु राजपुत्री
वनं समग्रा सह सर्वरत्नैः ॥ ५ ॥

---

* विसंज्ञा—नामजात्यादिपरिहीना, अनाथेति यावदिति वा ।

[1] एतदनन्तरं 'चिच्छेद जीविते श्रद्धां धर्मे यशसि चात्मनः' इत्यधिकं—ङ.
[2] एतदनन्तरं 'कैकेयि कुशचीरेण न सीता गन्तुमर्हति' इत्यधिकं—ङ. [3] कस्यापि करोति—च. [4] वनस्य—च.

चीराण्यपास्यात्—त्यजतु। तत्र हेतुमाह—नेयमित्यादि। सीतापि चीरवासिनी वनं यात्विति त्वया प्रतिज्ञाते सा प्रतिज्ञा *मम—मया न दत्तपूर्वा, नानुमतपूर्वा यतः—तस्मादेव यथासुखं गच्छतु ॥५॥

अजीवनार्हेण मया नृशंसा
कृता प्रतिज्ञा [1]क्रियते न तावत्।
†त्वया हि बाल्यात् प्रतिपन्नमेतत्
[2]तन्मा दहेद्वेणुमिवात्मपुष्पम् ॥ ६ ॥

अजीवनार्हेणेति। गले पादुकान्यायेन प्राप्तप्रियपुत्रवनवासानुमतिकेन—जीवनक्षमदशारहितेन मया या नृशंसा—अतिक्रूरा राम[3]विवासविषयिणी प्रतिज्ञा कृता, सा तावत् क्रियते न? नञ् स्वरे, तावच्छब्दो वाक्यालंकारे, क्रियत एव किलेत्यर्थः। अतो यदेतदभ्यधिकं सीता चीरग्रहणमपि प्रतिपद्यसे तदेव त्वया बाल्यात्—अज्ञानादेव प्रतिपन्नम्। नात्र ते सामर्थ्यम्। तत्—तस्मात् वेणुमात्मपुष्पमिव त्वत्कृतातिप्रवृत्तिस्त्वां मा दहेत्—मा नाशयतु। असाध्यव्यापाराद्विरमेत्यर्थः ॥ ६ ॥

‡रामेण यदि ते, पापे! किञ्चित्कृतमशोभनम्।
अपकारः क इह ते वैदेह्या दर्शितोऽधमे! ॥ ७ ॥

क इहेति। चीरग्रहणपूर्वकवनवासप्रयोजनक इति शेषः। दर्शितः—सम्पादितः ॥ ७ ॥

---

* मम प्रतिज्ञेति वाऽन्वयः। †बाल्यात् बालिशत्वात् एतत् प्रतिज्ञानं त्वया प्रतिपन्नं, तत् मत्कृतप्रतिज्ञानं आत्मपुष्पं वेणुमिव मां दहेत्—गो. वेणूनां पुष्पोद्गमने सति नाश इति प्रसिद्धम्। ‡कोपे रामापराधमभ्युपेत्याह—रामेणेति—गो.

[1] नियमेन—सर्वत्रैवंपाठः। [2] तन्मां—ङ. [3] वनवास—ङ.

मृगीवोत्फुल्लनयना मृदुशीला मनस्विनी ।
अपकारं कमिव ते करोति जनकात्मजा ॥ ८ ॥

ननु पर्याप्त[1]मेतत्ते, पापे ! रामविवासनम् ।
किमेभिः कृपणैर्भूयः पातकैरपि ते कृतैः ॥ ९ ॥

भूयः पातकैरिति । अभ्यधिकं पुनरप्यनुष्ठीयमानैरित्यर्थः ॥ ९ ॥

[2]प्रतिज्ञाता मया तावत् त्वयोक्तं, देवि ! शृण्वता ।
*रामं यदभिषेकाय त्वमिहागतमब्रवीः ॥ १० ॥

प्रतिज्ञातेत्यादि । अभिषेकाय मया कृतनिश्चयं पश्चात् तत्प्रतिबन्धे सति इहागतं रामं प्रति यदब्रवीः 'जटादिधरो वनं गच्छ' इति—तावदेव त्वयोक्तं शृण्वता मया तावदेव प्रतिज्ञाता—तथाऽस्त्वित्यनुमतेत्यर्थः ॥ १० ॥

[3]न त्वेतत् समतिक्रम्य निरयं गन्तु[4]मर्हसि ।
[5]मैथिलीमपि या हि त्वमीक्षसे चीरवासिनीम् ॥ ११ ॥

एतत्समतिक्रम्य—मत्प्रदत्तरामवनवासमप्यतिक्रम्य—अधिकप्रवृत्त्या त्वं निरयं गन्तुं नार्हसि । कोऽसौ मदतिक्रम इत्यतः—मैथिलीमित्यादि । या त्वं हि—यस्मान्मैथिलीमपि चीरवासिनीमीक्षसे—चीरदानपूर्वकमपेक्षसे, अतोऽयमतिक्रमः । अतस्तन्मा कुरु । नात्र मयाऽनुमन्तव्यनिर्बन्ध इति शेषः ॥ ११ ॥

---

* पञ्चदशसर्गे—सुमन्त्रं प्रति कैकेयी रामानयनाय—'सुमन्त्र राजा रजनीं रामहर्षसमुत्सुकः' इत्याद्यभिहितवती—तदभिप्रायेणात्र अभिषेकायागतमित्युक्तम् ।

[1] मेवं ते—च. [2] प्रतिज्ञातं—ङ. च. [3] तत्त्वेतत्—इत्येव सर्वत्र । [4] मिच्छसि—ङ. च. [5] एतदनन्तरं—'इतीव राजा विलपन्महात्मा शोकस्य नान्तं स ददर्श किञ्चित् । भृशातुरत्वाच्च पपात भूमौ तेनैव पुत्रव्यसने निमग्नः ॥' इत्यधिकं—ङ.

एवं ब्रुवन्तं पितरं रामस्संप्रस्थितो वनम् ।
अवाक्छिरसमासीनं इदं वचनमब्रवीत् ॥ १२ ॥

एवं ब्रुवन्तमिति । सीता यथासुखं गच्छत्विति ब्रुवन्तम् । संप्रस्थित इति । एवंवादात् सीतया सह वनाय कृतानुमतिकः तया सह संप्रस्थितः—समुद्युक्तप्रस्थान इत्यर्थः ॥ १२ ॥

इयं, धार्मिक! कौसल्या मम माता यशस्विनी ।
वृद्धा चाक्षुद्रशीला च *न च त्वां, देव! गर्हते ॥ १३ ॥

न च गर्हत इति । पिता ते सत्यव्रतो भवत्वित्येव तदनुशासनादिति शेषः ॥ १३ ॥

मया विहीनां, वरद! प्रपन्नां शोकसागरम् ।
[1]अदृष्टपूर्वव्यसनां भूयस्सम्मन्तुमर्हसि ॥ १४ ॥

भूयस्सम्मन्तुमिति । प्रधानपत्नीत्वेन सर्वतस्तथा पुरस्क्रियमाणाऽपि अतोऽप्यधिकं सम्मानं कर्तुमर्हसि मत्प्रार्थनया ॥ १४ ॥

इमां, महेन्द्रोपम! †जातगर्धिनीं
तथा विधातुं जननीं ममार्हसि ।
यथा वनस्थे मयि शोककर्शिता
न जीवितं न्यस्य यमक्षयं व्रजेत् ॥ १५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टात्रिंशः सर्गः

---

* निजैकपुत्रप्रव्राजनेऽपीत्यभिप्रायः । †जातः—पुत्रः, तस्मिन् प्रेमवतीमिति वाऽर्थः ।

[1] एतदनन्तरं—पुत्रशोकं यथा नर्च्छेत् त्वया पूज्येन पूजिता । मां हि संचिन्तयन्तीयमपि जीवेत्तपस्विनी ॥ इत्यधिकं—ङ.

[1] मयि—मत्समीपे । जातगार्धिनी—जाता मत्पुनर्दर्शने गर्धः—अभिलाषः यस्याऽस्तीति सा तथा । न्यस्य—त्यक्त्वा । माया (१५) मानः सर्गः ॥ १५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे अष्टात्रिंशस्सर्गः

---

## एकोनचत्वारिंशस्सर्गः

[वनगमनाऽऽपृच्छा]

रामस्य तु वचः श्रुत्वा मुनिवेषधरं च तम् ।
समीक्ष्य सह भार्याभिः राजा *विगतचेतनः ॥ १ ॥

अथानुमतसभ्रातृभार्यवनगमनस्य रामस्य यावत्स्वजनपदं रथेन राज्ञा प्रस्थापनम्—रामस्येत्यादि ॥ १ ॥

नैनं दुःखेन संतप्तः प्रत्यवैक्षत राघवम् ।
न चैनमभिसंप्रेक्ष्य प्रत्यभाषत दुर्मनाः ॥ २ ॥

न प्रत्यवैक्षतेति । प्रत्यवेक्षितुं नाशक्नोत्तद्धोरमित्यर्थः ॥ २ ॥

स मुहूर्तमिवासंज्ञो दुःखितश्च महीपतिः ।
विललाप महाबाहू राममेवानुचिन्तयन् ॥ ३ ॥

मन्ये खलु मया पूर्वं विवत्सा बहवः कृताः ।
प्राणिनो हिंसिता वाऽपि [2]तस्मादिदमुपस्थितम् ॥ ४ ॥

विवत्सा इति । धेनव इति शेषः ॥ ४ ॥

---

* विगतचेतनः अभूदिति शेषः—गो.

[1] त्वयि-त्वत्समीपे-ट. [2] तन्मामिदं-च.

न त्वेवानागते काले देहात्त्यजति जीवितम्।
कैकेय्या क्लिश्यमानस्य मृत्युर्मम न विद्यते ॥ ५ ॥

कैकेय्या क्लिश्यमानस्यापि मम यतो मृत्युर्न विद्यते—तत्प्राप्तिर्न [1]विद्यते अतः काले अनागते देहाज्जीवितं नैव च्यवति ॥ ५ ॥

योऽहं पावकसङ्काशं पश्यामि पुरतःस्थितम् ।
विहाय वसने सूक्ष्मे तापसाच्छादमात्मजम् ॥ ६ ॥

आच्छाद्यते अनेनेति आच्छादः, तापसानामाच्छादो यस्य स तथा। एवंभूतमात्मजं योऽहं पश्यामि तस्य मे मृत्युर्न विद्यत इति पूर्वेणान्वयः ॥ ६ ॥

एकस्याः खलु कैकेय्याः कृतेऽयं क्लिश्यते जनः।
स्वार्थे प्रयतमानायाः संश्रित्य निकृतिं त्विमाम् ॥ ७ ॥

क्लिश्यते जन इति। कैकेयीव्यतिरिक्तस्सर्वोऽपि जन इत्यर्थः। इमां निकृतिमिति । वरलक्षणशाठ्यमित्यर्थः । 'कुसृतिर्निकृति-श्शाठ्यम्' ॥ ७ ॥

एवमुक्त्वा तु वचनं बाष्पेण [2] पिहितेन्द्रियः।
रामेति सकृदेवोक्त्वा व्याहर्तुं न शशाक सः ॥ ८ ॥
संज्ञां तु प्रतिलभ्यैव मुहूर्तात्स महीपतिः ।
*नेत्राभ्यामश्रुपूर्णाभ्यां सुमन्त्रमिदमब्रवीत् ॥ ९ ॥
औपवाह्यं रथं युक्त्वा त्वमायाहि हयोत्तमैः।
प्रापयैनं महाभागं इतो जनपदात् [3] परम् ॥ १० ॥

---

* नेत्राभ्यामुपलक्षित इत्यर्थः।

[1] दृश्यते—ट. [2] विहिते—ङ. [3] बहिः—ङ.

औपवाह्यं—उपवहनमात्रोपयुक्तं—युद्धानर्हमित्यर्थः। युक्त्वा—योजयित्वा। परमिति। दक्षिणमिति शेषः॥ १०॥

[1] एवं मन्ये गुणवतां गुणानां फलमुच्यते।
पित्रा मात्रा च यत्साधुः वीरो निर्वास्यते वनम्॥ ११॥

एवमित्यादि। साधुर्वीरो रामः पित्रा मात्रा च वनं निर्वास्यत इति यत् एवमेव—गुणवतां गुणानां फलमेवमेवोच्यते शास्त्रेणेति मन्ये इति दुःखातिशयादुक्तिः॥ ११॥

राज्ञो वचनमाज्ञाय सुमन्त्रः शीघ्रविक्रमः।
योजयित्वाऽऽययौ तत्र रथमश्वैरलङ्कृतम्॥ १२॥

योजयित्वा आययौ इति पदम्॥ १२॥

तं रथं राजपुत्राय सूतः कनकभूषितम्।
आचचक्षेऽञ्जलिं कृत्वा युक्तं परमवाजिभिः॥ १३॥

रथमाचचक्ष इति। रथ उपस्थित इत्युक्तवानित्यर्थः॥ १३॥

राजा सत्वरमाहूय व्यापृतं वित्तसञ्चये।
उवाच देश[2]कालज्ञो निश्चितं सर्वतः [3]शुचिः॥ १४॥

अस्मिन् समये राजा वित्तसञ्चये व्यापृतं—धनाध्यक्षं सत्वरमाहूय निश्चितं वच उवाच। सर्वतः शुचिरिति। इहामुत्रानृण इत्यर्थः॥ १४॥

वासांसि च [4]महार्हाणि भूषणानि महान्ति च।
*वर्षाण्येतानि संख्याय वैदेह्या क्षिप्रमानय॥ १५॥

---

* चतुर्दशवर्षपर्याप्तान्यानयेत्यर्थः—गो. एतावानेव वनवासः, नाधिक इति दार्ढ्याय—ति.

[1] पापं—ङ. [2] कालज्ञ—ङ. [3] शुचि—ङ. [4] वराहाणि—ङ.

एतानि वर्षाणीति । चतुर्दशवर्षाणीति यावत् ॥ १५ ॥

नरेन्द्रेणैवमुक्तस्तु गत्वा कोशगृहं ततः ।
प्रायच्छत्सर्वमाहृत्य सीतायै [1]क्षिप्रमेव तत् ॥ १६ ॥

प्रायच्छदिति । कोशाध्यक्ष इति शेषः ॥ १६ ॥

सा सुजाता सुजातानि वैदेही प्रस्थिता वनम् ।
भूषयामास गात्राणि तैर्विचित्रैर्विभूषणैः ॥ १७ ॥

सुजातानि गात्राणीति योजना ॥ १७ ॥

व्यराजयत वैदेही वेश्म तत्सुविभूषिता ।
उद्यतोंऽशुमतः काले खं प्रभेव विवस्वतः ॥ १८ ॥

उद्यत इति षष्ठी । काले–प्रातःकाले । प्रभेव स्थितां तामिति योजना * ॥ १८ ॥

तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचनमब्रवीत् ।
† [2]अत्याचरन्तीं कृपणं मूर्ध्न्युपाघ्राय मैथिलीम् ॥ १९ ॥

अत्याचरन्तीं–शुश्रूषमाणां । भर्तारमिति शेषः ॥ १९ ॥

असत्यः सर्वलोकेऽस्मिन् सततं सत्कृताः प्रियैः ।
भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः ॥ २० ॥

असत्यः- कुलटाः प्रियैस्सततं सत्कृता अपि विनिपातगतं–कृच्छ्रगतं तं भर्तारं शुश्रूषितुं नानुमन्यन्ते ॥ २० ॥

---

* उत्तरश्लोके इति भावः । प्रातःकाले उद्यतः किरणवतो विवस्वतः–सूर्यस्य प्रभा खं–आकाशमिव सुविभूषिता वैदेही तत् वेश्म व्यराजयत–प्रकाशयामास–इति वाऽर्थः ॥

† कृपणं–क्षुद्रं अनाचरन्तीं–अकुर्वतीं–गो. ति.

[1] सममेव–ङ. [2] अनाचरन्तीं–सर्वत्र ॥

एष स्वभावो नारीणां अनुभूय पुरा सुखम् ।
अल्पामप्यापदं प्राप्य दुष्यान्ति प्रजहत्यपि ॥ २१ ॥

एष स्वसतीनां नारीणां स्वभावः । ता इमाः पुरा—पूर्वं सुखमनुभूय पश्चादस्य भर्तुरल्पामप्यापदं—दारिद्र्यरोगादिलक्षणां प्राप्य-दृष्ट्वा तं दुष्यन्ति—दूषयन्ति इति यावत् । न केवलमेतावत्, प्रजहत्यपि, 'अदभ्यस्तात्' इति झस्य अदादेशः ॥ २१ ॥

*असत्यशीला विकृता [1]दुर्गा अहृदयास्सदा ।
[2]असत्यः पापसङ्कल्पाः क्षण[3]मात्राविरागिणः ॥ २२ ॥

असत्यशीलाः—असत्यवचनशीलाः । विकृताः—विकारोपेते-क्षणादिव्यापाराः । दुर्गाः—दुष्टाभिसरणगमनवत्यः । स्वभर्तरि सदा अहृदयाः—विरसाः । असत्यः—कुलटाः । पापे—परपुरुषनानाविध-प्रसङ्गलक्षणे सङ्कल्पः—मानसव्यापारः यासां तास्तथा, 'सङ्कल्पः कर्म मानसम्' । क्षणमात्रविरागिणः—क्षणमात्रविरागिण्यः—अल्पनिमित्ततः क्षणमात्रवैरस्याः—अविश्वसनीयस्नेहा इति यावत् ॥ २२ ॥

न कुलं न कृतं [4]विद्या न दत्तं नापि † [5]सङ्ग्रहः ।
स्त्रीणां गृह्णाति हृदयं अनित्यहृदया हि ताः ॥ २३ ॥

कुलं—प्रशस्तकुलजन्म । कृतं—उपकारः । विद्या—सद्गुरूप-दिष्टधर्मविद्या । दत्तं—वस्त्रादिदानम् । सङ्ग्रहः—संग्रहणम्, न्यायतः

---

* विकृताः—असंस्कृताः 'विकृतो रोग्यसंस्कृतः', सततविकारशीला इति वा । दुर्गाः—दुर्ज्ञेयस्वभावाः । अहृदयाः—दयादिरहिताः । असत्यः—कुलटाः । पापसंकल्पाः—दुरभिसन्धयः ॥ † संग्रहः—अग्निसाक्षिकपाणिग्रहणम्—गो. दृष्टेऽपि दोषे स्वीकारः—ति. विद्यासंग्रहादिशब्दानां द्वितीयान्तत्वे—हृदयमिति प्रथमान्तं पदं कर्तृवाचकम् ।

[1] दुर्ग्राह्यहृदयाः—ङ. [2] युवत्यः—ङ. [3] मात्रात—ङ. [4] विद्यां—ङ. [5] संग्रहम्—ङ.

स्वीकारः। सर्वमप्येतत् स्त्रीणामसतीनां हृदयं न *गृह्णाति—तत्पापप्रवृत्तिं न प्रतिबध्नाति। 'कामातुराणां न भयं न लज्जा' इति कृत्वा कुलाद्युचितकृत्यं पृष्ठे कृत्वा कुलाद्यनुचितलोकगर्हितकृत्ये मोहात् प्रवर्तन्त इत्यर्थः। कुत एवमित्यतः—अनित्यहृदया हि ता इति। अव्यवस्थितचित्ता इत्यर्थः ॥ २३ ॥

साध्वीनां [1] हि स्थितानां तु शीले सत्ये श्रुते [2] स्थिते।
स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥ २४ ॥

एवं कैकेय्यादिवन्न वर्तितव्यमित्युपदिश्य कौसल्यादिवद्वर्तितव्यमित्युपदिशति—साध्वीनामित्यादि। पतिव्रतानामिति यावत्। अत एव शीले—स्वकुलोचितचरित्रे, श्रुते—गुरुजनोपदेशे, स्थिते—भावे निष्ठा, स्वकुलोचितमर्यादावस्थाने स्थितानां स्त्रीणां परमपवित्राणां—परमपुण्यसाधनानां मध्ये परमं—परमसुकृतसाधनं पतिरेक एव। अतोऽसौ स्त्रियाः सर्वसाधनेभ्यो विशिष्यते ॥ २४ ॥

स त्वया नावमन्तव्यः पुत्रः प्रव्राजितो मम।
तव दैवतमस्त्वेषः निर्धनः सधनोऽपि वा ॥ २५ ॥

यद्देवं अतः—स इत्यादि ॥ २५ ॥

विज्ञाय वचनं सीता तस्या धर्मार्थसंहितम्।
कृताञ्जलिरुवाचेदं श्वश्रूमभि[3]मुखस्थिता ॥ २६ ॥

अभिमुखतया स्थिता—अभिमुखस्थिता ॥ २६ ॥

---

* अथवा ग्रहणं संक्रमः, विकारात्प्रतिरोधो वा।

[1] तु—ङ.  [2] शमे—ङ.  [3] मुखे स्थिताम्—ङ.

करिष्ये सर्वमेवाहं आर्या यदनुशास्ति माम् ।
अभिज्ञाऽस्मि यथा भर्तुः वर्तितव्यं श्रुतं च मे ॥ २७ ॥

यथा भर्तुरिति । विषय इति शेषः । श्रुतं च म इति । मन्मातापितृभ्यां चेति शेषः ॥ २७ ॥

न मामसज्जनेनार्या * समानयितुमर्हति ।
धर्माद्विचलितुं नाहं अलं चन्द्रादिव प्रभा ॥ २८ ॥

असज्जनेन समानयितुं–समं विचारयितुम् । नाहमलमिति । असमर्थेति यावत् ॥ २८ ॥

नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः ।
नापतिस्सुखमेधेत या स्यादपि शतात्मजा ॥ २९ ॥

अतन्त्री–तन्त्रीरहिता वीणा, 'सिरा तन्त्री'। शतात्मजेति बहुव्रीहिः ॥ २९ ॥

मितं ददाति हि पिता मितं माता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ ३० ॥

अमितस्येति । ऐहिकामुष्मिकसकलसुखप्रद इत्यर्थः ॥ ३० ॥

साऽहमेवंगता † श्रेष्ठाश्रुतधर्म[1]परा वरा ।
आर्ये! किमवमन्येऽहं, स्त्रीणां भर्ता हि दैवतम् ॥ ३१ ॥

---

* समानयितुं—समानां कर्तुं–गो. ति. † श्रेष्ठाभ्यः मात्रादिपतिव्रताभ्यः सम्यक् श्रुतसामान्यविशेषरूपधर्मोत्कर्षा–गो. श्रेष्ठा इति पृथक्पदं वा–ति. गोविन्दराजीये सर्वं एकं पदम् ।

[1] परायणा–ङ.

एवंगतेति । सर्वतस्सर्वदा सर्वलोकपरमसुखहेतुर्भर्ता परमपूज्य इति सम्यगवगतवतीत्यर्थः । श्रेष्ठाभ्यः—पूज्याभ्यः श्वश्रूमातृप्रमुखाभ्यः श्रुतः धर्मः—स्त्रीधर्मः परोऽपि यया सा तथा । किमवमन्य इति । स्वधर्मापरिज्ञाने किलावमतिप्रसङ्गः । ज्ञातस्वधर्मा कस्मादवमन्ये ; न कस्मादपीत्यर्थः ॥ ३१ ॥

सीताया वचनं श्रुत्वा कौसल्या हृदयङ्गमम् ।
शुद्धसत्त्वा मुमोचाश्रु सहसा *दुःखहर्षजम् ॥ ३२ ॥

तां प्राञ्जलिरभिप्रेक्ष्य मातृमध्ये[1]ऽतिसत्कृताम् ।
रामः परमधर्मात्मा मातरं वाक्यमब्रवीत् ॥ ३३ ॥

सत्कृतामिति । कैकेयीव्यतिरिक्तसर्वमातृभिरिति शेषः ॥ ३३ ॥

अम्ब ! मा दुःखिता [2]भूस्त्वं पश्य त्वं पितरं मम ।
क्षयो हि वनवासस्य क्षिप्रमेव भविष्यति ॥ ३४ ॥

वनवासस्येति । वनवासकालस्येत्यर्थः ॥ ३४ ॥

सुप्तायास्ते गमिष्यन्ति नव वर्षाणि पञ्च च ।
[3]सा †समग्रमिह प्राप्तं मां द्रक्ष्यसि सुहृद्वृतम् ॥ ३५ ॥

सुप्ताया इति । सुप्ताया इव नव वर्षाणि पञ्च च चतुर्दशघटिकावद्गमिष्यन्ति । चक्षुषी निमील्य स्वस्वकालदुःखमविगणय्य तिष्ठत्यर्थः । सा त्वं समग्रं—समग्रश्रेयस्कं भ्रातृभार्यासमग्रं, पुनरिव सुहृद्वृतम् ॥३५॥

---

*रामविप्रवासाद्दुःखं, सीतामनोदार्ढ्यपरिज्ञानात् हर्षः । अथवा रामविप्रवासप्रयुक्तदुःखमध्येऽपि हर्षः विवक्षितः. † समग्रं निर्वर्तितपितृवचनं संपूर्णमनोरथं वा—गो. समग्रं-सीतासहितम्—सत्य. सुहृद्वृतमित्युक्तया एवं वाऽर्थः:—इह प्राप्तं-वनवासात्प्रत्यागतं समग्रं-इदानीमुपक्रान्ताभिषेकं प्राप्तवन्तं अत एव सुहृद्वृतमिति ।

[1] व्याख्यादृष्ट्या 'तु सत्कृताम्' इति पाठः स्याद्वा. [2] भूत्वा पश्येस्त्वं—ङ. [3] सा समक्ष—ङ.

*एतावदभिनीतार्थं उक्त्वा स जननीं वचः ।
त्रयश्शतशतार्धाश्च ददर्शा†वेक्ष्य मातरः ॥ ३६ ॥

अभिनीतार्थं—निर्णीतार्थं । अवेक्ष्य ददर्शेति । प्रत्येकं विविच्यावेक्ष्य ददर्श स्नेहवशात् । मातरमिति विपरिणामः । तथा ‡ मातरश्चापि तं ददृशुरिति विपरिणामः ॥ ३६ ॥

ताश्चापि स तथैवार्ता मातॄर्दशरथात्मजः ।
धर्मयुक्तमिदं वाक्यं निजगाद कृताञ्जलिः ॥ ३७ ॥

अथ स दशरथात्मज इदं वाक्यं निजगाद । मातॄः प्रतीति शेषः ॥ ३७ ॥

§संवासात्परुषं किञ्चित् अज्ञानाद्वापि यत्कृतम् ।
तन्मे समनुजानीत सर्वाश्चामन्त्रयामि वः ॥ ३८ ॥

संवासः—सहवासः ॥ ३८ ॥

वचनं राघवस्यैतत् [1] धर्मयुक्तं ‖ समाहितम् ।
शुश्रुवुस्ताः स्त्रियस्सर्वाः शोकोपहतचेतसः ॥ ३९ ॥
जज्ञेऽथ तासां सन्नादः क्रौञ्चीनामिव निस्वनः ।
मानवेन्द्रस्य भार्याणां एवं वदति राघवे ॥ ४० ॥

---

* अभिनीतार्थं क्रोडीकृतसर्वार्थं—गो. † मातरः-मातॄः अवेक्ष्य-वक्तव्यमालोच्य—गो. ‡ अथवा श्लोकद्वयमेकान्वयम् । जननीमेतावदुक्त्वा त्रयश्शतशतार्धाश्चापि व्यावृत्त्य ददर्श । ताश्चापि मातरः रामं ददृशुः । तथा राममवेक्ष्य—प्रस्थितप्रयाणं ज्ञात्वा दुःखार्ता मातॄः स दशरथात्मजो वाक्यं जगादेत्यर्थः । § संवासात्—चिरपरिचयवशादिति यावत् । समनुजानीत-क्षान्तमित्यनुजानीतेत्यर्थः । ‖ समाहितं—समीचीनार्थयुक्तं—गो. धीरं—ति.

[1] तत्त्वयुक्तं—ङ.

* मुरजपणवमेघघोषवत्
दशरथवेश्म बभूव यत्पुरा ।
† विलपितपरिदेवनाकुलं
व्यसनगतं तदभूत्सुदुःखितम् ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकोनचत्वारिंशः सर्गः

---

मुरजपणवा एव मेघाः, तेषां घोषः-अस्त्यस्येति तथा। कवि (४१) मानः सर्गः ॥ ४१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकोनचत्वारिंशः सर्गः

---

## चत्वारिंशस्सर्गः

[वनप्रस्थानम्]

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः ।
‡ उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम् ॥ १ ॥

एवं कृतसर्वानुमतिकस्य निर्याणम्—अथेत्यादि । दीना§ इति राज्ञो दुःखदर्शनात् ॥ १ ॥

---

* यद्वा मुरजादिसहपाठात् मेघोऽपि वाद्यविशेषः-गो. † विलपितं-विविधं लपितं वाक्यं यत्र-'भाषितं लपितं वचः' इत्यमरः। रामगुणकैकेयीदुर्गुणादिपरं वाक्यमित्यर्थः। परिदेवनं विलापः। ‡ उपसंगृह्य-वन्दित्वा। § वृद्धयोर्मातापित्रोः शुश्रूषा न लब्धेति दीनाः-गो.

**तं चापि समनुज्ञाप्य धर्मज्ञः सीतया सह ।**
**राघवः शोकसम्मूढो जननीमभ्यवादयत् ॥ २ ॥**

तं चेति । उपसंग्रहपूर्वं कृतप्रदक्षिणं राजानमित्यर्थः । शोकसम्मूढत्वं प्राग्वन्मातृदुःखदर्शनादेव ॥ २ ॥

**अन्वक्षं लक्ष्मणो भ्रातुः *कौसल्यामभ्यवादयत् ।**
**अथ मातुः सुमित्राया जग्राह चरणौ पुनः ॥ ३ ॥**

अन्वक्षं–अनुगं—अनुपदम् । लक्ष्मणः रामेण कौसल्याभि[1] वादनात्पश्चात् भ्रातुर्जननीं कौसल्यां अभ्यवादयत् ॥ ३ ॥

**तं वन्दमानं रुदती माता सौमित्रिमब्रवीत् ।**
**हितकामा महाबाहुं मूर्ध्न्युपाघ्राय लक्ष्मणम् ॥ ४ ॥**
**†सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने ।**
**रामे ‡प्रमादं मा कार्षीः, पुत्र! भ्रातरि गच्छति ॥ ५ ॥**

सृष्ट इति । अत्रत्ये सुहृज्जने स्वनुरक्तोऽपि मया त्वं वनवासाय सृष्टः–अनुमतः । स त्वं रामे–रामसेवायां प्रमादं–अनवधानं मा कार्षीः ॥ ५ ॥

---

* अत्र सर्वकोशेष्वेवमेव पाठो दृश्यते । परं तु 'जननीमभ्यवादयत्' इति व्याख्यासम्मतः पाठ इति प्रतिभाति । यथाश्रुतपाठे भ्रातुरन्वक्षं–भ्रातुरनुपदमेवेत्यर्थः । भ्रातुः, जननीमिति शेष इति तिलके । † यथा कौसल्या लोकरक्षणार्थं पुत्रं प्रासूत, एवं मया सुहृज्जने रामे स्वनुरक्तस्त्वं वनवासाय सृष्टः–**गो.** । अत्रत्यसुहृज्जने स्वनुरक्तोऽपि त्वं वनवासाय सृष्टः–अनुमतः-**ती.** ‡ यद्वा–रामे प्रमादं मा कार्षीः–रामे वनं गच्छति त्वमत्रैव मा तिष्ठ–**गो.**

[1] वंदना–घ.

व्यसनी वा दरिद्रो वा गतिरेष तवाऽनघ!
एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥ ६ ॥

इदं हि वृत्तमुचितं कुलस्यास्य सनातनम्।
[1]दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु च ॥ ७ ॥

इदं हि—ज्येष्ठानुवर्तनरूपं। क्षत्रकुलोचितधर्मान्तरमप्याह—दानमित्यादि। मृधेषु—युद्धेषु ॥ ७ ॥

लक्ष्मणं त्वेवमुक्त्वा सा [2]संसिद्धिं प्रियराघवम्।
[3]सुमित्रा गच्छ गच्छेति पुनः पुनरुवाच तम् ॥ ८ ॥

संसिद्धिं—समीचीना भगवद्ब्रह्मरामसेवामयी सिद्धिर्यस्य स तथा। प्रियो राघवो यस्य स तथा। तं—लक्ष्मणम् ॥ ८ ॥

*रामं दशरथं विद्धि मां विद्धि जनकात्मजाम्।
[4]अयोध्यामटवीं विद्धि गच्छ, तात! यथासुखम् ॥ ९ ॥

ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत्।
विनीतो विनयज्ञश्च मातलिर्वासवं यथा ॥ १० ॥

---

* रामं दशरथं विद्धि—पितरमवगच्छेत्यर्थः। जनकात्मजां मां विद्धि—मातरं विद्धीत्यर्थः। अटवीमयोध्यां विद्धि—तद्वद्भोगस्थानं विद्धि। यद्वा रामं दशरथं.... दशति....इति दशः पक्षी....स गरुडः रथो यस्य तं विष्णुं विद्धीत्यर्थः। जनकात्मजां मां लक्ष्मीं विद्धि। .... यद्वा रामं दशरथं च विद्धि उभयोस्तारतम्यं पश्येत्यर्थः। मां जनकात्मजां च विद्धि गुणत आलोचय। (एवं परिशीलने—दशरथ-मत्सेवापेक्षया राम-सीतासेवैव तव ज्यायसी भवेदिति भावः) .... 'यद्वा—अयोध्यामटवीं विद्धि—निर्जनेयं भविष्यतीत्यर्थः—गो.

[1] एतदनन्तरं 'ज्येष्ठस्याप्यनुवृत्तिश्च राजवंशस्य लक्षणम्' इत्यधिकं—ङ. [2] संसिद्धम्—ङ. च. [3] एतदनन्तरं 'गम्यतामर्थलाभाय क्षेमाय विजयाय च। शत्रुपक्ष-विनाशाय पुनः संदर्शनाय च ॥' इत्यधिकं—ङ. [4] एतच्छ्लोकानन्तरमेव कुत्रचित् 'लक्ष्मणं त्वेवमुक्त्वा' इति श्लोको दृश्यते—ङ.

रथमारोह, भद्रं ते, राजपुत्र! महायशः!
*क्षिप्रं त्वां प्रापयिष्यामि यत्र मां, राम! वक्ष्यसि ॥११॥

यत्र मामिति। यद्देशप्रापणे मां वक्ष्यसि–नियोक्ष्यसि तं देशं त्वां क्षिप्रं प्रापयिष्यामि। नेह रजन्यां वस्तव्यमिति शेषः ॥ ११ ॥

चतुर्दश हि वर्षाणि वस्तव्यानि वने त्वया।
तान्युपक्रमितव्यानि यानि देव्याऽसि चोदितः ॥ १२ ॥

कुत इत्यतः—चतुर्दशेत्यादि। यानि चतुर्दशवर्षाणि त्वया वने वस्तव्यानि, तान्यद्यैवोपक्रमितव्यानीति देव्या कैकेय्या तथा चोदितोऽसि 'अद्यैव गच्छ' इति ॥ १२ ॥

तं रथं सूर्यसङ्काशं सीता हृष्टेन चेतसा।
आरुरोह वरारोहा कृत्वाऽलङ्कारमात्मनः ॥ १३ ॥
वनवासं हि संख्याय वासांस्याभरणानि च।
भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ १४ ॥
तथैवायुधजातानि †भ्रातृभ्यां कवचानि च।
रथोपस्थे प्रतिन्यस्य सचर्म कठिनं च तत् ॥ १५ ॥
अथो ज्वलनसङ्काशं चामीकरविभूषितम्।
तमारुरुहतुस्तूर्णं भ्रातरौ रामलक्ष्मणौ ॥ १६ ॥

'कृत्वाऽलंकारमात्मनः' इत्युक्तम्; तत्साधनसंपत्तिः प्रागेव प्राप्तेति स्मार्यते—वनवासं हीत्यादि। श्वशुरो यानि ददौ तानि, आयुधजातादीनि च रथोपस्थे प्रतिन्यस्य–प्रतिष्ठाप्य आरुरुहतुः ॥ १६ ॥

---

*वनवासस्य दुरतिक्रमणीयत्वे सिद्धे तस्य शीघ्रनिर्यातनाय तथा सुमन्त्रोक्तिः। †भ्रात्रोरित्यर्थः–ति.। भ्रातृभ्यां दत्तानि .... सचर्म–चर्मपिनद्धं अल्पकण्डोलं, कठिनं खनित्रं च–गो.

**सीतातृतीयानारूढान् दृष्ट्वा *[1] धृष्टमचोदयत् ।**
**सुमंत्र[2]स्सम्मतानश्वान् वायुवेगसमान् जवे ॥ १७ ॥**

सम्मतान्—सम्मतसर्वलक्षणान् ॥ १७ ॥

**प्रयाते तु महारण्यं चिररात्राय राघवे ।**
**बभूव नगरे मूर्छा बलमूर्छा जनस्य च ॥ १८ ॥**

चिररात्रायेत्यव्ययम्, 'सत् फट् कत् चिररात्राय' इति चादौ पठ्यमानत्वात्, चिरपर्यायः, चिरं†—उक्तरूपविलम्बपूर्वं राघवेऽरण्यं प्रयाते तु सति नगरे विद्यमानस्य जनस्य मूर्छा बभूव ; 'मूर्छा मोहसमुच्छ्राययोः' । रात्रौ निर्गच्छतोऽपि रामस्य निर्गमनज्ञानं बभूव । तत एव बलस्य—चतुरङ्गबलस्य च मूर्छा—सम्भ्रमो बभूव ॥ १८ ॥

**तत्समाकुलसंभ्रान्तं मत्त[3]संकुपितद्विपम् ।**
**हयशिञ्जितनिर्घोषं पुरमासीन्महास्वनम् ॥ १९ ॥**

अस्यैव प्रपञ्चः—तदित्यादि । तत्—पुरं ‡समाकुलसंभ्रान्तं—समाकुलं—इतिकर्तव्यतामूढं संभ्रान्तं—रामानुगमनत्वरायुक्तम् । मत्ताः अत एव संकुपिताः द्विपाः यस्मिन् तत्तथा । हयानां पर्याकुलप्राणिभूषणशब्दानां च निर्घोषः—ध्वनिर्यस्मिन् तत्तथा । 'भूषणानां तु शिञ्जितम्' ॥ १९ ॥

---

* धृष्टं—विना सङ्कोचं, कारणान्तरेण प्रयाणविलम्बे वनवासात्प्रतिनिवर्तनकाले विलम्बापातादित्याशयः । † चिरं मूर्छा—मोहः बभूव—गो. । चिरकालावस्थित्यर्थमित्यर्थः—ति. । अथवा मृगयाद्यर्थं रामवनगमनसमयापेक्षया वैलक्षण्यद्योतनाय चिरकालं रामे वनं प्रतिप्रयाते इत्यर्थः । ‡ समाकुलं—अन्तःकरणक्षोभयुक्तं—संभ्रान्तं बाह्येन्द्रियक्षोभयुक्तम्—गो. । अत्र पूर्वश्लोकगतमूर्छापदस्य मोहपरत्वे—रामचिरवियोगनिर्णयसमनन्तरं मूर्छा—स्तब्धता बभूव । तदनन्तरं च समाकुलमित्यादि ॥

[1] रथं—ङ. [2] स्संयतान्—ङ. [3] संकुलित—ङ.

ततस्सबालवृद्धा सा पुरी परमपीडिता ।
राममेवाभिदुद्राव [1] घर्मार्ता सलिलं यथा ॥ २० ॥

परमपीडितेति । रामवियोगदुःखेनेति शेषः ॥ २० ॥

पार्श्वतः पृष्ठतश्चापि लम्बमानास्तदुन्मुखाः ।
बाष्पपूर्णमुखास्सर्वे तमूचुर्भृशनिस्वनाः ॥ २१ ॥

तमिति । सुमन्त्रमिति यावत् ॥ २१ ॥

संयच्छ वाजिनां रश्मीन्, सूत ! याहि शनैश्शनैः ।
मुखं द्रक्ष्याम रामस्य दुर्दर्शं नो भविष्यति ॥ २२ ॥
आयसं हृदयं नूनं राममातुरसंशयम् ।
* [2] यद्देवगर्भप्रतिमे वनं याति न भिद्यते ॥ २३ ॥

देवगर्भः—देवनिधिः भगवान् हिरण्यगर्भः । तदंशत्वादेव तत्प्रतिमः, अनन्तकल्याणगुणैकतानस्वभावः ॥ २३ ॥

कृतकृत्या हि वैदेही छायेवानुगता पतिम् ।
न जहाति रता धर्मे मेरुमर्कप्रभा यथा ॥ २४ ॥

मेरुमर्कप्रभा यथेति । नित्यं तत्प्रदक्षिणसञ्चारादेव ॥ २४ ॥

अहो ! लक्ष्मण ! सिद्धार्थः सततं प्रियवादिनम् ।
भ्रातरं देवसङ्काशं यस्त्वं परिचरिष्यसि ॥ २५ ॥

यस्त्वं भ्रातरं परिचरिष्यसि, स त्वं अहो सिद्धार्थः—कृतार्थः ॥

---

* देवकुमारसदृशे—गो., ती. स्कन्दतुल्ये—ति.

[1] घर्मार्तः—ङ.  [2] यद्देवगर्भे—ङ.

महत्येषा हि ते [1] सिद्धिः एष चाभ्युदयो महान् ।
एष स्वर्गस्य मार्गश्च यदेनमनुगच्छसि ॥ २६ ॥

तदेव प्रतिपाद्यते—महतीत्यादि ॥ २६ ॥

एवं वदन्तस्ते सोढुं न शेकुर्बाष्पमागतम् ।
नरास्तमनुगच्छन्तः प्रियमिक्ष्वाकुनन्दनम् ॥ २७ ॥
अथ राजा वृतस्स्त्रीभिः दीनाभिर्दीनचेतनः ।
निर्जगाम प्रियं पुत्रं द्रक्ष्यामीति ब्रुवन् गृहात् ॥ २८ ॥
शुश्रुवे चाग्रतस्स्त्रीणां [2] रुदन्तीनां महास्वनः ।
यथा नादः करेणूनां बद्धे महति कुञ्जरे ॥ २९ ॥
पिता हि राजा काकुत्स्थः श्रीमान् सन्नस्तदाऽभवत् ।
परिपूर्णः शशी काले ग्रहणोपप्लुतो यथा ॥ ३० ॥

सन्नः—खिन्नः ॥ ३० ॥

स च श्रीमानचिन्त्यात्मा रामो दशरथात्मजः ।
सूतं संचोदयामास त्वरितं वाह्यतामिति ॥ ३१ ॥
रामो याहीति सूतं तं तिष्ठेति स जनस्तदा ।
उभयं नाशकत्सूतः कर्तुमध्वनि चोदितः ॥ ३२ ॥

सूतं तमिति । आहेति शेषः । उभयं नाशकदिति । तथा च नातिमन्दं नातिवेगं वाहयति स्मेति यावत् ॥ ३२ ॥

निर्गच्छति महाबाहौ रामे पौरजनाश्रुभिः ।
पतितै[3]रभ्यवहितं प्रशशाम महीरजः ॥ ३३ ॥

* अभ्यवहितं—अवसिक्तमिति यावत् ॥ ३३ ॥

---

* अभ्यवहितं—रथनेम्युद्धतम्—ति.

[1] बुद्धिः—ङ. [2] रुदतीनां—ङ. [3] रभ्युपहतं—ङ.

*** रुदिताश्रुपरि[1]द्यूनं हाहाकृतमचेतनम् ।**
**प्रयाणे राघवस्यासीत् पुरं परमपीडितम् ॥ ३४ ॥**

रुदिताश्रुपरिद्यूनं—†विजिगीषाशून्यं, 'दिवोऽविजिगीषायां' इति निष्ठातस्य नत्वम् ॥ ३४ ॥

**सुस्राव ‡ नयनैस्स्त्रीणां अस्रमायाससम्भवम् ।**
**मीनसंक्षोभचलितैः सलिलं पङ्कजैरिव ॥ ३५ ॥**

नयनैरिति । प्रमुक्तमिति शेषः । अस्रं—अश्रु । आयासः—खेदः । मीनानां परस्परसंक्षोभेन चलितैः—चलितेभ्यः पङ्कजेभ्यः सलिलमिवेत्यभूतोपमा । कादाचित्कवर्षवशसम्भृतोदकपद्मसम्भवात् सिद्धोपमा वा ॥ ३५ ॥

**दृष्ट्वा तु नृपतिः श्रीमान् §एकचित्तगतं पुरम् ।**
**निपपातैव दुःखेन हतमूल इव द्रुमः ॥ ३६ ॥**

एकचित्ततां गतं तथा । स्वेनेति शेषः ॥ ३६ ॥

**ततो हलहलाशब्दो जज्ञे रामस्य पृष्ठतः ।**
**नराणां प्रेक्ष्य राजानं सीदन्तं भृशदुःखितम् ॥ ३७ ॥**

---

* रुदिताश्रुपरिद्यूनं—अनुत्साहवत्—**ति.** † दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु इति धातुः । एतदर्थकधातोः क्तप्रत्यये द्यूतमिति रूपम् । परन्तु तत्र विजिगीषारूपार्थे मात्रम् । इतरथा तु द्यूनं इति भवति । उपसर्गाणामनेकार्थत्वात्-परिम्लानमिति वा प्रकृते अर्थः । ‡ नयनैः—नयनेभ्यः—**गो.** § रामैकचित्ततां गतमिति वा ।

[1] क्लिन्नं—**ङ.**

हा रामेति जनाः केचित् * राममातेति चापरे ।
† अन्तः[1]पुरसमृद्धं च क्रोशन्तः पर्यदेवयन् ॥ ३८ ॥

क्रोशन्त इति । उच्चैश्शब्देन सहेत्यर्थः ॥ ३८ ॥

अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसम् ।
‡ राजानं मातरं चैव ददर्शानुगतौ पथि ॥ ३९ ॥

स बद्ध इव पाशेन किशोरो मातरं यथा ।
धर्मपाशेन [2] संयुक्तः प्रकाशं नाभ्युदैक्षत ॥ ४० ॥

किशोरः—अश्वपोतः । प्रकाशं नाभ्युदैक्षतेति । सङ्कुचित-दर्शनव्यापारोऽभूदित्यर्थः । तत्र हेतुः — धर्मेत्यादि ॥ ४० ॥

§ पदातिनौ च यानार्हौ अदुःखार्हौ सुखोचितौ ।
दृष्ट्वा सञ्चोदयामास शीघ्रं याहीति सारथिम् ॥ ४१ ॥

न हि तत् पुरुषव्याघ्रः [3] दुःखजं दर्शनं पितुः ।
मातुश्च सहितुं शक्तः तोत्रार्दित इव द्विपः ॥ ४२ ॥

सहितुमिति । 'तीषसह—' इति पक्षे इट् । तोत्रं—प्रतोदः ॥ ४२ ॥

---

* सन्धिरार्षः—हा राममातः—इत्यर्थः—**गो.** † समृद्धमन्तःपुरं—अन्तःपुरजनः पर्यदेवयदिति विपरिणामः—**गो.** अन्तःपुरसमृद्धं—अन्तःपुरसहितम्—**ति.** ‡ राजानं मातरं उभावपि पथि अनुगतौ ददर्श इत्यन्वयः । § यानार्हौ अदुःखार्हौ सुखोचितौ मातापितरौ पदातिनौ दृष्ट्वा—इत्यन्वयः । अत्र हेतुरुत्तरश्लोके उच्यते ।

[1] पुरं—ङ. [2] संक्षिप्तः—ङ. [3] दुःखदं—ङ.

*प्रत्यगारमिवायान्ती वत्सला वत्सकारणात् ।
बद्धवत्सा यथा धेनू राममाताऽभ्यधावत ॥ ४३ ॥

प्रत्यगारं । वत्सावस्थितिमद्गृहमुद्दिश्येत्यर्थः ॥ ४३ ॥

तथा रुदन्तीं कौसल्यां रथं तमनुधावतीम् ।
क्रोशन्तीं राम रामेति हा सीते लक्ष्मणेति च ॥ ४४ ॥

रामलक्ष्मणसीतार्थं स्रवन्तीं वारि नेत्रजम् ।
असकृत् प्रैक्षत तदा नृत्यन्तीमिव मातरम् ॥ ४५ ॥

रामलक्ष्मणसीतार्थमिति । तद्वियोगशोकवशादित्यर्थः । स्रवन्तीमिति । मुञ्चन्तीमिति यावत् । नृत्यन्तीमिवेति । तद्वदितस्ततः परिभ्रमन्तीमिति यावत् ॥ ४५ ॥

तिष्ठेति राजा चुक्रोश याहि याहीति राघवः ।
सुमन्त्रस्य बभूवात्मा †चक्रयोरिव चान्तरा ॥ ४६ ॥

परस्परविरुद्धव्यापारमध्यगत्वे दृष्टान्तः—चक्रयोरित्यादि । युयुत्सुसेनयोरित्यर्थः । अन्तरा—मध्यप्रदेशः ॥ ४६ ॥

‡नाश्रौषमिति राजानमुपालब्धोऽपि वक्ष्यसि ।
चिरं दुःखस्य पापिष्ठं इति रामस्तमब्रवीत् ॥ ४७ ॥

---

* अगारं प्रत्यायान्ती—**गो.** वत्सलेत्यत्रोपपादकमिदम् । †रथपूर्वपश्चाद्भागस्थितयोः चक्रयोर्मध्ये पतितः पुरुषः यथा उपरि गन्तुं पश्चान्निवर्तितुं च न शक्नुयात् तथा सुमन्त्रमनः स्तब्धा बभूवेत्यर्थः । ‡एवं स्तब्धं सुमन्त्रं प्रति रामो वदति—नाश्रौषमित्यादि । इदानीं तिष्ठेति राज्ञाऽभिहितेऽपि त्वं उपरि गच्छ—यदि च राज्ञा अनन्तरं प्रतिनिवृत्तः भवान् 'किं मदाज्ञा न परिपालिता' इत्युपालब्धोऽपि 'तदहं नाश्रौषं' इति राजानं प्रति समाधानं वक्ष्यसि—एवं समाधानं वदेति यावत् । किमर्थमेवमित्यत्राह—चिरमित्यादि । दुःखस्य चिरं—विलम्बः पापिष्ठं—असह्यं; यतः । मातापितृदुःखदर्शनमितः परं सोढुमहं न शक्नोमि, अतः शीघ्रं गच्छ—इति रामः सुमन्त्रमब्रवीदित्यर्थः ।

उपालब्धोऽपीति । पुनर्गमनानन्तरं राज्ञा कृतोपालम्भोऽपीत्यर्थः । दुःखस्य हेतुभूतं पापं चिरं-विलम्बो मा भूत् । अत उपालब्धोऽपि नाश्रौषमित्येव वक्ष्यसि । ततः शीघ्रं गच्छेति तमब्रवीत् ॥ ४७ ॥

स रामस्य वचः [1]कुर्वन् अनुज्ञाप्य * च तं जनम् ।
व्रजतोऽपि हयान् शीघ्रं चोदयामास सारथिः ॥ ४८ ॥

तं जनमनुज्ञाप्येति । अनुव्रजत्पौरजनं रामेण कृतानुज्ञं कृत्वा स्वतो व्रजतोऽपि हयान् पुनश्च शीघ्रं-शीघ्रगमनार्थं चोदयामास ॥

न्यवर्तत जनो [2]राज्ञा रामं कृत्वा प्रदक्षिणम् ।
मनसाऽप्यश्रुवेगैश्च न न्यवर्तत मानुषम् ॥ ४९ ॥

राज्ञा । सहेति शेषः । रामं प्रदक्षिणं कृत्वेति । मनसेति शेषः । न्यवर्ततेति । देहमात्रेणेति शेषः । अपि तु मनसा अश्रुवेगैश्च न्यवर्तत । मानुषं-मानुषसमूहः, जनसमूह इत्यर्थः, 'तस्य समूहः' इति मानुषशब्दात् अण् ॥ ४९ ॥

यमिच्छेत् पुन[3]रायान्तं नैनं दूरमनुव्रजेत् ।
इत्यमात्या महाराजं ऊचुर्दशरथं वचः ॥ ५० ॥

अथ उत्कटदिदृक्षस्य च राज्ञः प्रकृतीनां हितवचनान्निवृत्तिरित्युच्यते—यमित्यादि ॥ ५० ॥

---

* तं जनं-अवरोधजनमिति वाऽर्थः । उत्तरत्र आगंगं पौरजनानामनुगमनस्य वचनात् । 'न्यवर्तत जनो राज्ञः' इत्युत्तरश्लोकपाठान्तरं अत्रानुकूलम् ।

[1] श्रुत्वा—ङ.　[2] राज्ञो—ङ.　[3] रायातं—ङ.

तेषां वचः सर्व[1]गुणोपपन्नं
प्रस्विन्नगात्रः प्रविषण्णरूपः ।
निशम्य राजा कृपणः सभार्यः
व्यवस्थितस्तं सुतमीक्षमाणः ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चत्वारिंशस्सर्गः

---

व्यवस्थितः—स्थितवानित्यर्थः ।*आशा (५०) मानः सर्गः ॥५१॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चत्वारिंशस्सर्गः

---

## एकचत्वारिंशस्सर्गः

### [पौरव्यसनम्]

तस्मिंस्तु पुरुषव्याघ्रे [2]विनिर्याते कृताञ्जलौ ।
आर्तशब्दोऽथ संजज्ञे स्त्रीणामन्तःपुरे महान् ॥ १ ॥

अथ रामवनप्रयाणनिमित्तः सर्वप्रजाशोकः । तस्मिंस्त्वित्यादि ॥

अनाथस्य जनस्यास्य दुर्बलस्य तपस्विनः ।
यो गतिश्शरणं चासीत् स नाथः क्व नु गच्छति ॥ २ ॥

तपस्विनः - शोच्यस्येति यावत् । यो गतिः—सकलसुखावाप्ति-हेतुः । शरणं—सर्वापत्त्राता ॥ २ ॥

---

* व्याख्यादृष्ट्या अस्मिन् सर्गे एकः श्लोकः अधिकः । स क इति न ज्ञायते ॥

[1] गुणोपपन्नः—ङ. [2] निष्कामति—ङ.

न क्रुध्यत्यभिशप्तोऽपि क्रोधनीयानि वर्जयन् ।
क्रुद्धान् प्रसादयन् सर्वान् समदुःखः † क्वचिद्गतः ॥ ३ ॥

क्रोधनीयानि–क्रोधकारणानि । क्वचिदिति । क्व नु गच्छतीति शेषः ॥ ३ ॥

कौसल्यायां महातेजाः यथा मातरि वर्तते ।
तथा यो वर्ततेऽस्मासु महात्मा क्व नु गच्छति ॥ ४ ॥

कैकेय्या क्लिश्यमानेन राज्ञा संचोदितो वनम् ।
परित्राता जनस्यास्य [1] जगतः क्व नु गच्छति ॥ ५ ॥

अहो निश्चेतनो राजा जीवलोकस्य ‡ [2] संप्रियम् ।
धर्म्यं सत्यव्रतं रामं वनवासे प्रवत्स्यति ॥ ६ ॥

प्रवत्स्यतीति । प्रवासयतीति यावत् ॥ ६ ॥

इति सर्वा महिष्यस्ता विवत्सा इव धेनवः ।
रुरुदुश्चैव दुःखार्ताः सस्वरं च विचुक्रुशुः ॥ ७ ॥

स तमन्तःपुरे घोरं आर्तशब्दं महीपतिः ।
पुत्रशोकाभिसंतप्तः श्रुत्वा चासीत् सुदुःखितः ॥ ८ ॥

[3] नाग्निहोत्राण्यहूयन्त सूर्यश्चान्तरधीयत ।
व्यसृजन् कबलान् नागाः गावो वत्सान्न पाययन् ॥ ९ ॥

---

* अभिशप्तः–मिथ्यादोषेण निन्दितः । † क्वचिदित्यस्य न क्रुध्यतीत्यनेन सम्बन्धः–गो. ‡ संक्षयं–आधारत्वेन गृहभूतम्–ति.

[1] स इतः–ङ. [2] संक्षयं–च. [3] नाग्निहोत्राण्यहूयन्त नापचन् गृहमेधिनः । अकुर्वन्न प्रजाः कार्यं सूर्यश्चान्तरधीयत ॥ व्यसृजन् कबलान् नागा गावो वत्सान्न पाययन् । पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत ॥ इति क्रमः–ङ.

नाग्निहोत्राण्यहूयन्त अग्निहोत्रिभिः, रामविरहदुःखादिति शेषः। सूर्यश्चान्तरधीयतेति । अकाले दुर्दिनमभूदित्यर्थः । व्यसृजन्—त्यक्तवन्तः। नागाः—गजाः। एवमादिकं सर्वं रामस्याशेषजाग्रत्प्रपञ्चोपादानश्रीहिरण्यगर्भावतारतया रामस्य सर्वात्मनामात्मभूतत्वात् तस्य दुःखे सर्वस्यापि दुःखं, सुखे सर्वस्यापि सुखं इतीह रामायणे सर्वतः प्रतिपाद्यमानं वास्तवमेवेत्यभिध्येयम्। न [1]पाययन्—ना[1]पाययन्निति यावत्॥ ९॥

*त्रिशङ्कुर्लोहिताङ्गश्च बृहस्पतिबुधावपि।
दारुणाः सोममभ्येत्य ग्रहाः सर्वे व्यवस्थिताः॥ १०॥

लोहिताङ्गः—अङ्गारकः। सोममभ्येत्येति। रात्रौ सोमासक्तिं प्राप्य दारुणा व्यवस्थिताः। क्रूरार्चिरादिना दारुणत्वम्॥ १०॥

नक्षत्राणि गतार्चींषि ग्रहाश्च गततेजसः।
विशाखाश्च सधूमाश्च नभसि प्रचकाशिरे॥ ११॥

ग्रहाश्चेति। शनिशुक्रादयः। विशाखाः—विमार्गस्थाः। सधूमाः—धूमोपेताश्च॥ ११॥

---

* त्रिशङ्कुः इक्ष्वाकुकुलकूटस्थः। लोहिताङ्गः अङ्गारकः। बृहस्पतिबुधयोर्दारुणत्वं दारुणाङ्गारकसंयोगात् क्रूरस्थानगतत्वाद्वा। त्रिशङ्कोर्ग्रहत्वाभावेऽपि छत्रिणो गच्छन्तीतिवद्व्यपदेशः। त्रिशङ्कोः सोमप्राप्तिः ऋजुदेशत्वेन ज्ञेया। ननु 'पूर्णे चतुर्दशे वर्षे पञ्चम्यां भरताग्रजः' इति वक्ष्यमाणरीत्या तत्रैव कदाचित् पुष्ययोगसंभावनया च पञ्चम्याममिषेक इति सिद्धम्। तस्मिन्नेव च निर्गतः। तथा च कर्कटकस्थे चन्द्रे कथं बुधसमागमः। तस्य सूर्यसमीपवर्तित्वात्। उच्यते—प्राप्तिरत्र नैकराशिस्थितिः। किन्तु, क्वचित् प्राप्तिः, क्वचित् दृष्टिरिति न दोषः। वक्रगत्या समागम इत्यप्याहुः—गो. त्रिषु द्वादशाष्टमजन्मस्थानेषु शङ्कुरिव शङ्कुः—शनैश्चरः—स.

[1] पालयन्—ट.

कालिकानिलवेगेन महो[1]दधिमिवोद्धतम् ।
रामे वनं प्रव्रजिते नगरं प्रचचाल तत् ॥ १२ ॥

कालिका–मेघपङ्क्तिः । अनिलवेगेनोद्धतं महोदधिं बभारेवेत्यध्याहारः ॥ १२ ॥

दिशः पर्याकुलास्सर्वाः तिमिरेणेव संवृताः ।
न ग्रहो नापि नक्षत्रं प्रचकाशे न किञ्चन ॥ १३ ॥
अकस्मान्नागरस्सर्वो जनो दैन्यमुपागमत् ।
आहारे वा विहारे वा न कश्चिदकरोन्मनः ॥ १४ ॥

अकस्मादिति । प्रसिद्धदैन्यहेतुकिञ्चित्कारणान्तराभावेऽपीत्यर्थः ॥

* शोकपर्यायसन्तप्तः सततं दीर्घमुच्छ्वसन् ।
अयोध्यायां जनस्सर्वः [2]शुशोच जगतीपतिम् ॥ १५ ॥

रामवियोगजशोकेन पर्यायतः सन्तप्तः–पुनःपुनः तप्तस्तथा ॥

बाष्पपर्याकुलमुखः राजमार्गगतो जनः ।
न हृष्टो लक्ष्यते कश्चित् सर्वः शोकपरायणः ॥ १६ ॥
न वाति पवनः शीतः न शशी सौम्यदर्शनः ।
न सूर्यस्तपते लोकं सर्वं पर्याकुलं जगत् ॥ १७ ॥
† अनर्थिनस्सुताः स्त्रीणां भर्तारो भ्रातरस्तथा ।
सर्वे सर्वं परित्यज्य राममेवा[3]नुचिन्तयन् ॥ १८ ॥

---

* शोकपरंपरासन्तप्तः–गो. † सुताः स्त्रीणामनर्थिनः, मातॄणां स्तन्यं नापेक्षन्त इत्यर्थः । भर्तारः स्त्रीणामनर्थिनः । भ्रातरः अनर्थिनः, अन्योन्यमिति शेषः–गो.

[1] दधिरिवोत्थितः, –द्धतः–ङ. [2] चुकोप–ङ. [3] न्वचिन्तयन्–ङ.

अनर्थिनः सुता इति । मातापित्रोरिति शेषः । स्त्रीणां भर्तार इति । अनर्थिन इत्यनुकर्षः । भ्रातर इति । भ्रात्रन्तरमिति शेषः । अनुचिन्तयन्—अन्वचिन्तयन्नित्यर्थः ॥ १८ ॥

ये तु रामस्य सुहृदः सर्वे ते मूढचेतसः ।
शोकभारेण चाक्रान्ताः *शयनं [1] न जहुस्तदा ॥ १९ ॥

ततस्त्वयोध्या रहिता महात्मना
पुरन्दरेणेव मही सपर्वता ।
चचाल घोरं भयशोकपीडिता
सनागयोधाश्वगणा ननाद च ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकचत्वारिंशः सर्गः

---

पुरन्दरेण रहिता सपर्वता मही चचालेति । पुरन्दरस्य त्रिलोकीपतित्वात् समेरुसर्वभूचक्राधिष्ठातृत्वं सिद्धम् । अतस्तद्राहित्ये पालकाभावात् भूमेश्चलनं सिद्धमिति दृष्टान्तत्वम् । ननादेति । दुःखाच्चक्रन्देत्यर्थः । आरि (२०) मानः सर्गः ॥ २० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकचत्वारिंशः सर्गः

---

* शयनं मूर्छाशयनं—गो. शयनं न जहुः—उत्थातुमपि न शक्ता बभूवुरित्यर्थः ।

[1] नैव भेजिरे—च.

## द्विचत्वारिंशस्सर्गः

### [दशरथाक्रन्दः]

यावत्तु निर्यतस्तस्य रजोरूपमदृश्यत।
नैवेक्ष्वाकुवरस्तावत् संजहारात्मचक्षुषी ॥ १ ॥

अथ दशरथस्य रामपथप्रतीक्षादिजदुःखवर्णनम्—यावदित्यादि। [1]निर्यतः-निर्गच्छत इति षष्ठी। रजोरूपं-[2]रथधूलीस्वरूपम् ॥ १ ॥

*यावद्राजा प्रियं पुत्रं पश्यत्यत्यन्तधार्मिकम्।
[3]तावद्व्यवर्धतेवास्य धरण्यां पुत्रदर्शने ॥ २ ॥

यावत् प्रियं पुत्रं पश्यतीति। रथधूलीदर्शनद्वारेति शेषः। तावत् पुत्रदर्शने—तन्निमित्तं धरण्यां—भुवि अस्य देहो व्यवर्धतेव—विशेषेणाभिवृद्धम्। उत्थाय स्थित एवाभूदित्यर्थः ॥ २ ॥

न पश्यति रजोऽप्यस्य यदा रामस्य भूमिपः।
तदाऽऽर्तश्च विषण्णश्च पपात धरणीतले ॥ ३ ॥

रथरजसोऽप्यदर्शने तच्छरीरं पतितमभूदित्युच्यते—न पश्यतीत्यादि ॥ ३ ॥

†तस्य दक्षिणमन्वागात् कौसल्या बाहुमङ्गना।
वामं चास्यान्वगात् पार्श्वं कैकेयी [4]भरतप्रिया ॥ ४ ॥

---

* पुत्रदर्शने—पुत्रदर्शननिमित्तं रजो व्यवर्धतेव। मन्निमित्तेन पुत्रदर्शनेन राजा कश्चित्कालमप्यव्यथितो भवेदिति मत्वेव रजः व्यवर्धत—गो., ती. अथवा अस्य देहो व्यवर्धत—पुत्रदर्शनायोत्थाय स्थितः—गो. उत्तरश्लोकदर्शने अयं पक्षः समुचितः।

† 'तस्य दक्षिणमुद्धृत्य' इति पाठः। तस्य दक्षिणं बाहुं उद्धृत्य गृहीत्वा कौसल्याऽन्वगात्। ........ कैकेयी त्वस्य वामपार्श्वमेव केवलमन्वगात् ॥ ती.

[1] निर्यतः इति षष्ठी—क. [2] रथ्याधूली—ट. [3] तावद्विवर्धते पांसुः—ङ.
[4] सा सुमध्यमा—च.

तस्येत्यादि। पतितं तमुद्धृत्य तस्य दक्षिणं बाहुं गृहीत्वा कौसल्याऽन्वगात्—स्वपुरं प्रति गम्यमानमन्वगादित्यर्थः। कैकेयी त्वस्य वामं पार्श्वमेव केवलमन्वगात्। तथात्वं तु राज्ञोऽस्यां परमवैरस्यात् तत्स्पर्शासहनादेव॥

तां नयेन च संपन्नो धर्मेण विनयेन च।
उवाच राजा कैकेयीं समीक्ष्य व्यथितेन्द्रियः॥५॥
कैकेयि! [1] मा ममाङ्गानि स्प्राक्षीस्त्वं दुष्टचारिणी।
न हि त्वां द्रष्टुमिच्छामि न भार्या न च बान्धवी॥६॥

तदेवाह—कैकेयि मा ममाङ्गानि स्प्राक्षीरिति। बान्धवीति। अणन्तत्वात् ङीप्॥६॥

ये च त्वामनुजीवन्ति नाहं तेषां न ते मम।
केवलार्थपरां हि त्वां त्यक्तधर्मां त्यजाम्यहम्॥७॥
अगृह्णां यच्च ते पाणिं अग्निं पर्यणयं च यत्।

न केवलमैहिकव्यवहारस्य त्यागः, अपि तु पारलौकिकस्यापीत्याह—अगृह्णामित्यादि। यच्च ते पाणिमगृह्णां यच्च त्वामाग्निं पर्यणयं च—अग्निहोत्रसम्बन्धमकार्षं तदप्यतः परं त्यक्ष्यामि॥७॥

अनुजानामि तत्सर्वं अस्मिन् लोके परत्र च॥८॥
भरतश्चेत् प्रतीतः स्यात् राज्यं प्राप्येदमव्ययम्।
[2] यन्मे स दद्यात् पित्रर्थं मामतद्दत्तमागमत्॥९॥

---

[1] मामकाङ्गानि मा स्प्राक्षीः पापनिश्चये—च. [2] यन्मे स दद्यात्प्रीत्यर्थं मां मा तद्दत्तमागमत्—ङ. एतदनन्तरं—'राज्यस्थो भरतो यन्मां तन्मां नाभ्युपगच्छतु' इत्यधिकं—ङ.

नन्वस्तु वा मम त्यागः; मदुपजीविनो मत्पुत्रादेः कथं त्यागः? इत्यत्र, रामवत् पित्रनुवर्तनधर्माविरोधे सति नायं त्यज्यत इत्याह—अनुजानामीत्यादि। भरतो यदा त्वया प्रापितं राज्यं प्राप्य प्रतीतः स्यात्, तदा पित्रर्थं—अनादिस्वकुलधर्मपरिपालनाय गुणवज्ज्येष्ठपुत्राभिसिसृक्षु-पितृप्रीतिसंपादनाय स मे पुनर्दद्यात्—त्यजेत्, तदा मां अतद्दत्तं—तत्कृत-दानव्यवहाररहितं सत् राज्यमागमत्—प्राप्नुयाच्चेत्—प्राप्तं चेत्—पुनश्च मम राज्यं न्यायतः प्राप्तश्चेदिति यावत्, तदा स्वकुलधर्मज्येष्ठाभिषेकधर्म-साधकत्वे सुपुत्रत्वात्तमिह लोके—ऐहिकव्यवहारे विहारशय्यासनभोज-नादिव्यवहारे परत्र च—पारलौकिके पिण्डोदकादिव्यवहारे चानुजानाम्ये-वेत्यर्थः* ॥ ९ ॥

**अथ रेणुसमुध्वस्तं [1] तमुत्थाप्य नराधिपम्।**
**न्यवर्तत तदा देवी कौसल्या शोककर्शिता ॥ १० ॥**

रेणुसमुध्वस्तम्—, आहिताग्न्यादिः, समुध्वस्तरेणुं—सम्मार्जित-पांसुम् ॥ १० ॥

---

* अत्र तिलके—“कतकस्तु ‘अनुजानामि’ इत्यादिसार्धश्लोक एकं वाक्यम्। तत्पूर्वार्धे त्यजामीत्यनुकर्षः। तत्तृतीयार्धे ‘यन्मे स दद्यात् पित्रर्थं मामतद्दत्तमागमत्’ इति पाठः। स दद्यादिति चावर्तते। भरतस्त्वया प्रापितं राज्यं प्राप्य प्रतीतो विवेकवान् सन् यत्प्राप्तं राज्यं तत् स पित्रर्थं—पितुर्मम प्रीतिसंपादनाय यदि दद्यात्—त्यजेत्, मां चातद्दत्तं न कृतं तस्मै दत्तं—दानं राज्यस्य येन तादृशं मां प्रीत्या पूर्ववदागमत्—प्राप्नुयाच्चेत्, तदा यत्स मे दद्यादस्मिन् लोके विहारशय्याभोजनादि, परत्र च—परलोके पिण्डदानादि तत्सर्व-मनुजानामि—अंगीकरोमि, अन्यथा तं त्यजाम्येवेत्यर्थः” इत्याह—इत्यनूदितम्॥

गोविन्दराजीयादिरीत्या तु—अनुजानामीत्यर्थं पूर्वेणान्वेति। ऐहिकामुष्मिकफलकः यः तव सम्बन्धः कृतः तं अनुजानामि—परिहरामि। भरतः इदं राज्यं प्राप्य प्रतीतः=हृष्टः ‘ख्याते हृष्टे प्रतीतः’ इत्यमरः, स्याच्चेत् स मे प्रीत्यर्थं यत् दद्यात् तद्दत्तं मां मा गमत्—मा प्राप्नुयात्—इत्यर्थः॥

[1] समुत्थाप्य-ङ,

हत्वेव ब्राह्मणं कामात् स्पृष्ट्वाऽग्निमिव पाणिना ।
अन्वतप्यत धर्मात्मा पुत्रं संचिन्त्य [1] तापसम् ॥ ११ ॥

[*] निवृत्त्यैव निवृत्त्यैव सीदतो रथवर्त्मसु ।
राज्ञो नातिबभौ रूपं ग्रस्तस्यांशुमतो यथा ॥ १२ ॥

रथवर्त्मसु सीदत इति । रामरथमार्गदर्शने क्लिश्यत इत्यर्थः ॥१२॥

विललाप च दुःखार्तः प्रियं पुत्रमनुस्मरन् ।
[†] नगरान्तमनुप्राप्तं बुध्वा [‡] पुत्रमथाब्रवीत् ॥ १३ ॥

आत्मानं नगरान्तं—नगरसमीपपर्यन्तं अनुप्राप्तं बुध्वा अथाब्रवीत् ॥ १३ ॥

वाहनानां च मुख्यानां वहतां तं ममात्मजम् ।
पदानि पथि दृश्यन्ते स महात्मा न दृश्यते ॥ १४ ॥

किमब्रवीदित्यतः—वाहनानामित्यादि ॥ १४ ॥

यः [2] सुखेनोपधानेषु शेते चन्दनरूषितः ।
वीज्यमानो [3] महार्हाभिः स्त्रीभिर्मम सुतोत्तमः ॥ १५ ॥
स नूनं क्वचिदेवाद्य वृक्षमूलमुपाश्रितः ।
काष्ठं वा यदि वाऽश्मानं उपधाय शयिष्यते ॥ १६ ॥

महार्हाभिः—परमालङ्कारपरमरूपवदुत्तमस्त्रीभिरित्यर्थः ॥ १६ ॥

उत्थास्यति च मेदिन्याः कृपणः पांसुकुण्ठितः ।
विनिश्वसन् प्रस्रवणात् करेणूनामिवर्षभः ॥ १७ ॥

---

* निवृत्त्यैव निवृत्त्यैव—पुनःपुनरित्यर्थः । † पुत्रं नगरान्तं—नगरबाह्यदेशं प्राप्तं मत्वेत्यर्थः—ति. ‡ पुत्रं—पुत्रमधिकृत्य ।

[1] राघवं—ङ, च. [2] सुखेषूप—ङ. [3] महाबाहुः—ङ.

प्रस्रवणात्—गिरिप्रस्थादिप्रदेशात्। करेणूनामृषभ इवेति। गजयूथप इवेति यावत् ॥ १७ ॥

द्रक्ष्यन्ति नूनं पुरुषा दीर्घबाहुं वनेचराः।
*राममुत्थाय गच्छन्तं लोकनाथमनाथवत् ॥ १८ ॥

सा नूनं जनकस्येष्टा सुता सुखसदोचिता।
कण्टका[1]क्रमणक्लान्ता वनमद्य गमिष्यति ॥ १९ ॥

सुखस्य सदोचिता तथा। कण्टकेष्वाक्रमणं—पदाविक्षेपस्तथा ॥

अनभिज्ञा वनानां सा नूनं भयमुपैष्यति।
श्वापदानर्दितं श्रुत्वा गंभीरं रोमहर्षणम् ॥ २० ॥

आनर्दितं—शब्दम् ॥ २० ॥

सकामा भव, कैकेयि! विधवा राज्यमावस।
न हि तं पुरुषव्याघ्रं विना जीवितुमुत्सहे ॥ २१ ॥

सकामा भवेति। एवं सीतादेरनपकारिप्राणिनो दुःखं कृत्वेति शेषः। विधवा राज्यमावस इति। कुत एवंवाद इत्यतः—न हीत्यादि ॥

इत्येवं विलपन् राजा जनौघेनाभिसंवृतः।
†अपस्नात इवारिष्टं प्रविवेश [2]पुरोत्तमम् ॥ २२ ॥

---

* उत्थास्यतीति पूर्वश्लोके कथनात् तदनुवादोऽत्र। अनाथवद्गच्छन्तमित्यन्वयः।

† बहुकालानन्तरं प्राप्तस्य पुत्रस्य मरणे, यथा मृतस्नातः सुदुःखार्तः सूतिकागृहं प्रविशेत् तथेति भावः। प्राप्तपुत्रोऽपि हि दशरथः न पुत्रसुखं लब्धवान्, राज्याभिषेककाल एव स्वाभीष्टहानेः। एवञ्च दशरथः पुनः रामाधीनसुखं अप्रतीक्षमाणः उत्पन्नविनष्टपुत्रमिवात्मानं मेने। दशरथमनोभावस्य तथाऽवस्थितेर्नेयमश्लीलोक्तिः ॥

[1] क्रमणाक्रान्ता—ङ. [2] गृहोत्तमम्—ङ.

'अपस्नातो मृतस्नातः'। 'अरिष्टं सूतिकागृहम्', तद्वत्कश्मलम् ॥ २२ ॥

शून्यचत्वरवेश्मान्तां *संवृतापण[1]वेदिकाम् ।
†क्लान्तदुर्बलदुःखार्तां नात्याकीर्णमहापथाम् ॥ २३ ॥

तदेव प्रदर्श्यते—शून्येत्यादि। शून्यानि—सम्मार्जनादिसंस्काररहितानि। चत्वरं—चतुष्पथम्। वेश्मनां अन्ताः—मध्यप्रदेशाः पर्यन्तप्रदेशाश्च। आपणानां वेदिकाः—आपणवेदिकाः। क्लान्ताः, दुर्बलाः, दुःखार्ताश्च यस्यां सा तथा। नात्याकीर्णः— अत्यन्तं प्राणिसम्मर्दरहितः महापथः यस्याम् ॥ २३ ॥

तामवेक्ष्य पुरीं सर्वां राममेवानुचिन्तयन् ।
विलपन् प्राविशत् राजा गृहं सूर्य इवाम्बुदम् ॥ २४ ॥

‡महाह्रदमिवाक्षोभ्यं सुपर्णेन हृतोरगम् ।
रामेण रहितं वेश्म वैदेह्या लक्ष्मणेन च ॥ २५ ॥

सुपर्णेन हृतोरगं महाह्रदमिति कुलालादिगृहवत् निर्भयप्रवेशमात्र दृष्टान्तः ॥ २५ ॥

अथ गद्गदशब्दस्तु विलपन् वसुधाधिपः ।
उवाच मृदु [2]मन्दार्तं वचनं दीनमस्वरम् ॥ २६ ॥

गद्गदः शब्दः, यस्य स तथा। मन्दं च तत् आर्तं च तथा। दीनं—शोच्यम्। अस्वरं—शुद्धकण्ठध्वनिरहितम् ॥ २६ ॥

---

* निर्व्यापारामित्यर्थः. †अनेन संचारक्षमास्सर्वे राममनुगता इति द्योत्यते—**गो.**
‡महोरगविशिष्टो महाह्रदः जन्तुभिरकलुषितोऽतिगंभीरः स्यात्। उरगाभावे च सर्वैः कलुषितः स्यादिति वा दृष्टान्तानुरूप्यम्।

[1] देवताम्—ङ. [2] मन्दार्थ—**सर्वत्र**। (मन्दार्थ—अल्पार्थ—**गो.**)

कौसल्याया गृहं शीघ्रं राममातुर्नयन्तु माम्।
न ह्यन्यत्र ममाश्वासः हृदयस्य भविष्यति ॥ २७ ॥

नयन्त्विति। शिबिकावाहका इति शेषः। अन्यत्रेति। तद्व्यतिरिक्तस्त्रीगृह इत्यर्थः। आश्वासः—चित्तखेदापगमः ॥ २७ ॥

इति ब्रुवन्तं राजानं अनयन् द्वारदर्शिनः।
कौसल्याया गृहं यत्र *न्यवेश्यत विनीतवत् ॥ २८ ॥

द्वारदर्शिनः—वेत्रिणः। विनीतवत्—विनीतास्सन्तः कौसल्याया गृहमनयन् ॥ २८ ॥

[1]ततस्तत्र निविष्टस्य कौसल्याया निवेशनम्।
अधिरुह्यापि शयनं बभूव लुलितं मनः ॥ २९ ॥

तत्र तैर्न्यवेश्य ततस्तत्र निविष्टस्य राज्ञः कौसल्याया निवेशनं, अन्ततस्तस्याश्शयनमधिरुह्यापि मनः लुलितं—कलुषितमेव बभूव ॥२९॥

पुत्रद्वयविहीनं च स्नुषयाऽपि विवर्जितम्।
अपश्यद्भवनं राजा नष्टचन्द्रमिवाम्बरम् ॥ ३० ॥

तच्च दृष्ट्वा महाराजः भुजमुद्यम्य वीर्यवान्।
उच्चैःस्वरेण चुक्रोश [2]हा हा राम! जहासि [3]माम् ॥३१॥

[4]सुखिता बत †तं कालं जीविष्यन्ति नरोत्तमाः।
परिष्वजन्तो ये रामं द्रक्ष्यन्ति पुनरागतम् ॥ ३२ ॥

---

* तैः न्यवेश्यत। राजेति शेषः—ति. † तं कालं—तस्मिन् काले, तावत्कालमिति वा—गो.

[1] ततस्तस्य—ङ. [2] हा राघव—ङ. [3] नौ—ङ. [4] सुखिनः सततं—सुखितास्सततं—ङ.

सुखिता इत्यादि। ये पुनरागतं रामं परिष्वजन्तः—परिष्वजमाना द्रक्ष्यन्ति, ये नरोत्तमाः तं कालं—तावत्कालपर्यन्तं जीविष्यन्ति ते किल सुखिता भविष्यन्ति ; नाहं जीर्णो बत ! ॥ ३२ ॥

**अथ रात्र्यां प्रपन्नायां कालरात्र्यामिवात्मनः ।**
**अर्धरात्रे दशरथः कौसल्यामिदमब्रवीत् ॥ ३३ ॥**

अथ—रामं रजन्यां प्रस्थाप्य पुनः रजन्यां स्वगृहप्रवेशानन्तरमित्यर्थः । रात्र्यां आत्मनः कालरात्र्यां—संहाररात्र्यामिव प्रपन्नायाम् ॥

**न [1]त्वा पश्यामि, कौसल्ये ! साधु [2]मा पाणिना स्पृश ।**
***रामं मेऽनुगता दृष्टिरद्यापि न निवर्तते ॥ ३४ ॥**

हे कौसल्ये त्वा—त्वां न पश्यामि—न वीक्षे । अतो मा—मां त्वदासत्तिपरिज्ञानाय पाणिना स्पृश । कुत एवमित्यतः—राममित्यादि । दृष्टेः दर्शनशक्तेः रामविषये समनस्काया विलीनत्वात्, इहत्यपदार्थो मदक्ष्णोर्न स्फुरतीत्यर्थः ॥ ३४ ॥

**तं राममेवानुविचिन्तयन्तं**
**समीक्ष्य देवी शयने नरेन्द्रम् ।**
**उपोपविश्याधिकमार्तरूपा**
**[3]विनिश्वसन्ती विललाप कृच्छ्रम् ॥ ३५ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्विचत्वारिंशस्सर्गः

———

मृग (३५) मानः सर्गः ॥ ३५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्विचत्वारिंशस्सर्गः

———

* राममातृत्वात् त्वत्स्पर्शः किञ्चिदिवाप्यायकः स्यादिति वा ।

[1] त्वां—ङ. [2] मां—ङ. [3] विनिश्वसन्तं—ङ.

## त्रिचत्वारिंशस्सर्गः

[कौसल्यापरिदेवनम्]

ततः समीक्ष्य शयने सन्नं शोकेन पार्थिवम् ।
कौसल्या पुत्रशोकार्ता तमुवाच महीपतिम् ॥ १ ॥

अथ कौसल्याया अनुक्रोशः—तत इत्यादि ॥ १ ॥

राघवे, नरशार्दूल! [1]विषमुप्त्वा *विजिह्मगा ।
विचरिष्यति कैकेयी निर्मुक्तेव हि पन्नगी ॥ २ ॥

विषं उप्त्वा-निक्षिप्य विजिह्मगा—कुटिलचरिता निर्मुक्ता—मुक्तकञ्चुकी पन्नगी—सर्पपुत्री ॥ २ ॥

विवास्य रामं सुभगा लब्धकामा समाहिता ।
त्रासयिष्यति मां भूयो दुष्टाहिरिव वेश्मनि ॥ ३ ॥
अथास्मिन्नगरे रामः चरन् भैक्षं गृहे वसेत् ।
†कामकारो वरं दातुं अपि दासं ममात्मजम् ॥ ४ ॥

भवतु भरतराज्यवरणम्; अथापि इहैव नगरे रामो भैक्षं चरन् गृहे वसन् भूयादिति यदि वृतं भवेत् तदा तद्वरं दातुं, मम च कामकार एव—इष्टाचरणमेव। यथाकथञ्चिद्भवदानृण्यस्य ममापेक्षितत्वात् । इदानीमेवंवरणेऽपि ममात्मजं प्रति न मे शोकः । तदपि न कृतम् । ममातित्रासनार्थमिति शेषः ॥ ४ ॥

---

* विजिह्मतां—कौटिल्यरूपं विषं—गो., अहिजिह्मगा—सर्पवत् कुटिलगतिः—ति.

† राज्याभावेऽपि ममात्मजं भरतस्य दासं दातुं कामकारः—इच्छा वरं—वनवासात् श्रेष्ठतमः—गो.

[1] विषमुप्त्वा विजिह्मताम्—ङ., विषं मुक्त्वाऽहिजिह्मगा—च.

**पातयित्वा तु कैकेय्या रामं [1] स्थानाद्यथेष्टतः।**
**[2] प्रविद्धो रक्षसां भागः * पर्वणीवाहिताग्निना ॥ ५ ॥**

रामं स्थानात्—स्वगृहावस्थानात् यथेष्टतः—स्वेच्छानुसारेण पातयित्वा—प्रभ्रश्य पर्वण्याहिताग्निना इष्टो रक्षसां भाग इव प्रविद्धः—निरस्तः ॥ ५ ॥

**गजराजगतिर्वीरः महाबाहुर्धनुर्धरः।**
**वनमाविशते नूनं सभार्यस्सह लक्ष्मणः ॥ ६ ॥**
**वने त्वदृष्टदुःखानां [3] कैकेय्यनुमते त्वया।**
**त्यक्तानां वनवासाय [4] काऽन्याऽवस्था भविष्यति ॥ ७ ॥**

कैकेय्यनुमते—कैकेयीवरानुमतिनिमित्तम् ॥ ७ ॥

**ते रत्नहीनास्तरुणाः फलकाले विवासिताः।**
**कथं वत्स्यन्ति कृपणाः फलमूलैः कृताशनाः ॥ ८ ॥**

रत्नहीनाः—उत्तमवस्तुहीनाः। तरुणी च तरुणौ च तरुणाः, 'पुमान् स्त्रिया' इत्येकशेषः। फलकाले—युवावस्थत्वेन राजभोगानुभवकाले ॥ ८ ॥

**अपीदानीं स कालः स्यात् मम शोकक्षयः शिवः।**
**सभार्यं यत्सह भ्रात्रा पश्येयमिह राघवम् ॥ ९ ॥**

---

* आहिताग्निना पर्वणि देवेभ्यो देयः हविर्भागः-पुरोडाशैकदेशः रक्षसामिव सर्वथाऽनुचितं त्वया कृतमिति भावः—**गो.** पर्वण्याहिताग्निना रक्षसां भागस्तुषादिरूपः विप्रविद्धः—प्रक्षिप्तः। इतःपरं तद्दर्शनमसंभावितं, रक्षोभिर्नाशादिति व्यङ्ग्यम्—**ति.** पर्वण्याहिताग्निना व्रीहिगततुषजालं यथा रक्षोभागत्वेन प्रदिष्टं तथा कैकेय्यापि रामो राक्षसभागत्वेन विनियुक्तः—**ती.**

[1] राज्यात्—ङ. [2] प्रदिष्टः—ङ. [3] कैकेय्यानुमते—ङ. [4] कान्ववस्था—ङ.

शोकस्य क्षयः यस्मिन् स काल इति योजना। यत्–यस्मात्–तादृशकालावगमात् ॥ ९ ॥

*[1] सुप्त्वेवोपस्थितौ वीरौ कदाऽयोध्यां गमिष्यतः।
यशस्विनी हृष्टजना सूच्छ्रितध्वजमालिनी ॥ १० ॥

कदा प्रेक्ष्य नरव्याघ्रौ अरण्यात् पुनरागतौ।
भविष्यति पुरी हृष्टा समुद्र इव पर्वणि ॥ ११ ॥

कदाऽयोध्यां महाबाहुः पुरीं वीरः प्रवेक्ष्यति।
पुरस्कृत्य रथे सीतां वृषभो गोवधूमिव ॥ १२ ॥

कदा प्राणिसहस्राणि राजमार्गे ममात्मजौ।
लाजैरवकिरिष्यन्ति प्रविशन्तावरिन्दमौ ॥ १३ ॥

प्रविशन्तौ कदाऽयोध्यां द्रक्ष्यामि शुभकुण्डलौ।
उदग्रायुधनिस्त्रिंशौ सशृङ्गाविव पर्वतौ ॥ १४ ॥

†कदा सुमनसः कन्याद्विजातीनां फलानि च।
[2]प्रदिशन्तः पुरीं हृष्टाः करिष्यन्ति प्रदक्षिणम् ॥ १५ ॥

कन्याश्च द्विजातयश्च ; द्वन्द्वः। तत्र कन्यानां सुमनसः–पुष्पाणि, द्विजातीनां फलानीति विवेकः। प्रदिशन्तः–प्रगृह्णन्तः हृष्टा भूत्वा पुरीं प्रदक्षिणं करिष्यन्ति, पौरजनोत्सवायेति शेषः ॥ १५ ॥

---

* 'अथ रात्र्यां प्रपन्नायां' इत्युक्तत्वात् एवं चिन्तनम्। † द्विजातीनां ब्राह्मणानां कन्याः, सुमनसः–पुष्पाणि फलानि च प्रदिशन्त्यस्सत्यः पुरीं कदा प्रदक्षिणं करिष्यन्ति। अयमौत्तराणां मङ्गलाचारः–**गो.**

[1] श्रुत्वेव—ङ., **च.**　　[2] प्रविशन्त्यः, प्रदिशन्त्यः–ङ.

कदा परिणतो बुद्ध्या वयसा * चामरप्रभः ।
अभ्युपैष्यति [1] धर्मज्ञः † [2] सुवर्ष इव लालयन् ॥ १६ ॥

बुद्ध्या वयसा च परिणत इति । अतःपरमपि चतुर्दशवर्षाणामपगमिष्यमाणत्वात् । सुवर्षः–समीचीनकालजलवर्षः । लालयन्निति । जनानिति शेषः ॥ १६ ॥

निस्संशयं मया मन्ये पुरा, वीर ! कदर्यया ।
पातुकामेषु वत्सेषु मातॄणां शातिताः स्तनाः ॥ १७ ॥

पातुं कामः येषां ते पातुकामाः, तेषु । 'लुम्पेदवश्यमः कृत्येऽन्त्यं काममनसोस्तुमः' इति मकारलोपः । वत्सला–पुत्रवत्सला ॥ १७ ॥

साऽहं गौरिव सिंहेन विवत्सा वत्सला कृता ।
कैकेय्या, पुरुषव्याघ्र ! बालवत्सेव गौर्बलात् ॥ १८ ॥

साऽहं गौः सिंहेनेव विवत्सा कृता । उक्तपातकेनेति शेषः ॥

न हि तावद्गुणैर्जुष्टं सर्वशास्त्रविशारदम् ।
एकपुत्रा विना पुत्रं अहं जीवितुमुत्सहे ॥ १९ ॥

एवं कैकेय्या बालवत्सा गौरिव बलाद्विवत्सा कृताऽहं न जीवितुमुत्सहे इति योजना ॥ १९ ॥

न हि मे जीविते किञ्चित् सामर्थ्यमिह ‡ कल्प्यते ।
अपश्यन्त्याः प्रियं पुत्रं [3] लक्ष्मणं च महाबलम् ॥ २० ॥

---

* अमरप्रभः पञ्चविंशतिवर्षः । अमरा हि सदा पञ्चविंशतिवर्षाः । † त्रिवर्ष इति पाठे—त्रिषु कालेषु वर्षः वर्षणं यस्य सः मेघः । प्रतिमासं वर्षत्रयस्य न्याय्यत्वात्तथोक्तिः । ‡ कल्प्यते दैवेनेति शेषः । कल्पत इति पाठे विद्यत इत्यर्थः–गो.

[1] धर्मात्मा–ङ. [2] त्रिवर्ष–ङ. [3] महाबाहुं महाबलम्–ङ.

अयं हि मां [1]दीपयते *समुत्थितः
तनूजशोकप्रभवो हुताशनः।
महीमिमां †[2]रश्मिभिरुत्तम प्रभो!
यथा निदाघे भगवान् दिवाकरः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्रिचत्वारिंशः सर्गः

---

उत्तम प्रभो इति द्विपदं, एकपदं वा। कारु (२१) मानःसर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे त्रिचत्वारिंशः सर्गः

---

## चतुश्चत्वारिंशस्सर्गः

[सुमित्राश्वासनम्]

विलपन्तीं तथा तां तु कौसल्यां प्रमदोत्तमाम्।
इदं [3]धर्म्ये स्थिता धर्म्यं सुमित्रा वाक्यमब्रवीत् ॥ १ ॥

अथ सीताया: त्रिजटेव, सुमित्रा कौसल्याशोकमपनयति— विलपन्तीमित्यादि ॥ १ ॥

तवार्ये! सद्गुणैर्युक्तः स पुत्रः पुरुषोत्तमः।
किं ते विलपितेनैवं कृपणं रुदितेन वा ॥ २ ॥

कृपणं यथा तथा रुदितेन वा किम्? अयुक्तमेवेत्यर्थः। तत्र हेतुः—सद्गुणैर्युक्त इति ॥ २ ॥

---

* समुत्थितः—अभिवृद्धः। † उद्धतप्रभः—इति वह्निविशेषणं—गो. प्रकृतव्याख्यानरीत्या सम्बुद्ध्यन्तम् ॥

[1] दीपयतेऽद्य वह्निः .... प्रभवो महाहितः—च. [2] रश्मिभिरुद्धतप्रभः—ङ., च.
[3] धर्मे—च.

*यस्तवार्ये! गतः पुत्रः त्यक्त्वा राज्यं महाबलः।
साधु कुर्वन् महात्मानं पितरं सत्यवादिनम् ॥ ३ ॥

सद्गुणयुक्तस्य न क्वाप्यपाय इति प्रतिपादयति—यस्तवेत्यादि। साधु—सुष्ठु ॥ ३ ॥

शिष्टैराचरिते सम्यक् † [1] शश्वत्प्राप्यफलोदये।
रामो धर्मे स्थितः श्रेष्ठः न स शोच्यः कदाचन ॥ ४ ॥

शश्वत्प्राप्यः शुभफलस्य—सुखस्य उदयः यस्मिन् स तथा ॥ ४ ॥

वर्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्मिन् सदाऽनघः।
‡ दयावान् सर्वभूतेषु लाभस्तस्य महात्मनः ॥ ५ ॥

सुसहायसंपत्तेश्च न शोच्य इत्याह—वर्तत इत्यादि। उत्तमां वृत्तिमिति। पितृतुल्यप्रतिपत्त्या शुश्रूषाव्यापारं इत्यर्थः ॥ ५ ॥

अरण्यवासे यद्दुःखं [2] जानती वै सुखोचिता।
अनुगच्छति वैदेही धर्मात्मानं तवात्मजम् ॥ ६ ॥

अरण्यवासे यद्दुःखमस्ति, तज्जानती भर्तुस्तदपनयनार्थं वैदेह्यप्यनुगच्छति। अतो न दुःखप्रसङ्ग इति शेषः ॥ ६ ॥

कीर्तिभूतां पताकां यो लोके भ्रामयति प्रभुः।
[3] दमसत्यव्रतपरः किं न प्राप्तस्तवात्मजः ॥ ७ ॥

---

* य इत्यादि श्लोकद्वयमेकान्वयम्. † प्रेत्यफलोदये—आमुष्मिकफलकारणे—**गो.**
‡ अनेन सर्वभूतदयावत्त्वेन लक्ष्मणस्य सर्वभूताधारभूधारकशेषावतारत्वं, धर्मानुगत्या जानक्याः श्रीत्वं च ध्वनितम्—**ति.**

[1] शश्वत्प्रेत्य—ङ., च. [2] जानन्त्येव—ङ. [3] धर्मसत्यव्रतपरः, धर्मःसत्यव्रतपरः, धर्मसत्यव्रतधनः, तपस्सत्यव्रतधनः—ङ.

कीर्तिभूतां—कीर्त्यात्मना सम्भूतां पताकां—ध्वजं लोके—त्रैलोक्येऽपि यः प्रभू रामः भ्रामयति—नित्यं प्रवर्तयति, दमादिपरस्सोऽसौ तवात्मजः, किं न प्राप्तः—कस्य श्रेयसे न योग्यः? अतो वनेऽपि तस्य श्रेयः-प्राप्तिरेवेति न शोचनीयता तस्य ॥ ७ ॥

*व्यक्तं रामस्य विज्ञाय [1]शौचं माहात्म्यमुत्तमम् ।
न गात्रमंशुभिः सूर्यः सन्तापयितुमर्हति ॥ ८ ॥

तदेव प्रदर्श्यते—व्यक्तमित्यादि ॥ ८ ॥

शिवः सर्वेषु कालेषु काननेभ्यो विनिस्सृतः ।
राघवं शीतयुक्तोष्णः सेविष्यति सुखोऽनिलः ॥ ९ ॥

शीतयुक्तोष्ण इति । सुखस्पर्श इति यावत् । अत एव सुखः—अदुःखकरः ॥ ९ ॥

शयानमनघं रात्रौ पितेवाभिपरिष्वजन् ।
रश्मिभिः संस्पृशन् शीतैः चन्द्रमा ह्लादयिष्यति ॥ १० ॥

चन्द्रमाः इति पदम् ॥ १० ॥

ददौ चास्त्राणि दिव्यानि यस्मै ब्रह्मा महौजसे ।
दानवेन्द्रं हतं दृष्ट्वा †तिमिध्वजसुतं रणे ॥ ११ ॥

---

*सुमित्रा जन्मान्तरीयभगवदाराधनजनितसुकृतपरिपाकेन श्रीरामं परमात्मानं मत्वा मनसि निधाय वनेष्वातपादिषु संचरतो रामस्य सूर्यादिबाधा नास्ति, अपि तु तत्सेवैव भविष्यतीति कौसल्यामाश्वासयति—व्यक्तं रामस्येत्यादिश्लोकत्रयेण—ती. †तिमिध्वजसुतः सुबाहुरिति कतककृतः .... तदयुक्तं—ताटकावधोत्तरं सुबाहुवधात् प्रागेव .... अस्त्रोपदेशस्य प्रागुक्तत्वात् । सुबाहोर्मारीचभ्रातृत्वस्य पूर्वमुक्तत्वेन शम्बरसुतत्वानौचित्याच्च—ति. कदाचिद्रामो दण्डकारण्यं गत्वा वैजयन्तं पुरं निरुध्य दशरथविरोधिभूतशम्बरसुतं हतवान् । तेन प्रीतो ब्रह्मा रामाय दिव्यास्त्राणि ददौ—गो., ती. तिमिः ध्वजे ययोस्तौ—सुन्दोपसुन्दौ—तयोस्सुतं—सुबाहुं हतं—हतप्रायं दृष्ट्वा—ज्ञात्वा—इत्यपि केचित् ॥

[1] शौर्यं—ङ.

ब्रह्मा—ब्रह्मवत् सृष्टिकर्ता विश्वामित्रः। तिमिध्वजसुतः—सुबाहुः ॥ ११ ॥

स शूरः पुरुषव्याघ्रः स्वबाहुबलमाश्रितः।
असंत्रस्तो ह्यरण्येऽसौ वेश्मनीव निवत्स्यति ॥ १२ ॥

* यस्येषुपथमासाद्य विनाशं यान्ति शत्रवः।
[1] कथने पृथिवी तस्य शासने स्थातुमर्हति ॥ १३ ॥

तस्य रामस्य कथने यः प्रवृत्तः, तस्य च शासने पृथिवी स्थातुमर्हति। तत् कुतस्तस्य कुत्रापि भीप्रसङ्ग इति शेषः ॥ १३ ॥

या श्रीः शौर्यं च रामस्य या च कल्याणसत्वता †।
निवृत्तारण्यवासः सः क्षिप्रं राज्यमवाप्स्यति ॥ १४ ॥

स यदा निवृत्तवनवासो भवति तदा श्र्यादिः पुनस्तं क्षिप्रमवाप्स्यतीति योजना ॥ १४ ॥

सूर्यस्यापि भवेत् सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः।
श्रियः श्रीश्च भवेदग्र्या कीर्तिः कीर्त्याः ‡ क्षमाक्षमा ॥

सूर्यस्यापि सूर्य इत्यादिकं तथास्वभावब्रह्मावतारत्वात् वास्तवम्। प्रभोः—इन्द्रादेश्च प्रभुः ॥ १५ ॥

---

* वने रामस्य सौख्यं भवतु, भरतस्य रूढमूलत्वात् रामस्य राज्यं न सिध्यतीत्याशंक्याह—यस्येति—गो. † एतैरसाधारणहेतुभिरिति शेषः. ‡ षष्ठीतत्पुरुषः।

[1] कथं न—सर्वत्र.

दैवतं [1] दैवतानां च भूतानां भूतसत्तमः ।
तस्य के ह्यगुणाः, देवि! राष्ट्रे वाऽप्यथवा पुरे ॥ १६ ॥

पृथिव्या सह वैदेह्या श्रिया च पुरुषर्षभः ।
क्षिप्रं तिसृभिरेताभिः सह रामोऽभिषेक्ष्यते ॥ १७ ॥

*दुःखजं विसृजन्त्यश्रु निष्क्रामन्तमुदीक्ष्य यम् ।
अयोध्यायां जनास्सर्वे शोकवेगसमाहताः ॥ १८ ॥

दुःखजमित्यादिना कालान्तरेऽपि राज्यार्हता जनानुरागप्रदर्शनेन प्रकाश्यते ॥ १८ ॥

कुशचीरधरं [2] देवं गच्छन्तमपराजितम् ।
सीतेवानुगता लक्ष्मीः तस्य किं नाम दुर्लभम् ॥ १९ ॥

सीतेवेति । सीतात्मना लक्ष्मीरेवानुगतेत्यर्थः ॥ १९ ॥

[3] धनुर्ग्रहवरो यस्य बाणखड्गास्त्रभृत्स्वयम् ।
लक्ष्मणो व्रजति ह्यग्रे तस्य किं नाम दुर्लभम् ॥ २० ॥

धनुः गृह्णन्तीति धनुर्ग्रहाः—शूराः, तेषां वरः श्रेष्ठः ॥ २० ॥

निवृत्तवनवासं तं द्रष्टाऽसि पुनरागतम् ।
जहि शोकं च मोहं च, देवि! सत्यं ब्रवीमि ते ॥ २१ ॥

द्रष्टाऽसि—इति लुट् ॥ २१ ॥

शिरसा चरणावेतौ [4] वन्दमानमनिन्दिते !
पुनर्द्रक्ष्यसि, कल्याणि! पुत्रं चन्द्रमिवोदितम् ॥ २२ ॥

---

* यतस्सर्वे जना अश्रु विसृजन्ति—रामे सुतरामासक्ता वर्तन्त इति भावः। अतः—स रामः पुनरभिषेक्ष्यत एवेति पूर्वश्लोकस्थेनान्वयः।

[1] देवतानां—च. [2] रामं—ङ., वीरं—च. [3] धनुर्धरवरो—ङ. [4] वन्दमानं दिने दिने—ङ.

पुनः प्रविष्टं दृष्ट्वा तं अभिषिक्तं महाश्रियम् ।
समुत्स्रक्ष्यसि नेत्राभ्यां क्षिप्रमानन्दजं पयः ॥ २३ ॥

मा शोकः, देवि! दुःखं वा न रामे दृश्यते [1] शिवम् ।
क्षिप्रं द्रक्ष्यसि पुत्रं [2] तं ससीतं सहलक्ष्मणम् ॥ २४ ॥

रामे—रामविषये दुःखादिकं मास्तु। कुत इत्यतः—शिवं भद्रमेव तत्र दृश्यते, वनेऽपीति शेषः ॥ २४ ॥

*[3] त्वयाऽशेषो जनश्चैव समाश्वास्यो यदाऽनघे!
किमिदानी[4]मिमं, देवि! करोषि हृदि विक्लवम् ॥ २५ ॥

हे अनघे! यदा—यस्मात् त्वया स्वामिन्या अशेषोऽयं त्वत्परिवारजनः समाश्वास्यः, सा त्वं किमिदानीं विक्लबं करोषि ॥ २५ ॥

नार्हा त्वं शोचितुं, देवि! यस्यास्ते राघवः सुतः ।
न हि [5] रामात् परो लोके विद्यते सत्पथे स्थितः ॥ २६ ॥

अभिवादयमानं तं दृष्ट्वा ससुहृदं सुतम् ।
मुदाऽश्रु मोक्ष्यसे क्षिप्रं मेघलेखेव † वार्षिकी ॥ २७ ॥

मेघस्य लेखा—रेखा तथा ॥ २७ ॥

पुत्रस्ते वरदः क्षिप्रं अयोध्यां पुनरागतः ।
पाणिभ्यां मृदुपीनाभ्यां चरणौ पीडयिष्यति ॥ २८ ॥

---

* शेषः परिवारजनः यदा त्वया समाश्वास्यो वर्तते, एवंस्थिते भवत्या विक्लबः अनुचित इति वा भावः । † वार्षिकी—वर्षाकालिकी ।

[1] ऽशुभम्—ङ. [2] त्वं—च. [3] त्वया शेषः—च. [4] मिदं—च. [5] रामाद्वरो—ङ.

अभिवाद्य नमस्यन्तं शूरंससुहृदं सुतम् ।
मुदाऽस्रैः [1] प्रोक्षसे पुत्रं मेघराजिरिवाचलम् ॥ २९ ॥

मेघराजिरिति सजलत्वांशे दृष्टान्तः ॥ २९ ॥

आश्वासयन्ती विविधैश्च वाक्यैः
वाक्योपचारे कुशलाऽनवद्या ।
रामस्य तां मातरमेवमुक्त्वा
देवी सुमित्रा विरराम रामा ॥ ३० ॥

वाक्योपचारे—वाक्यरचनायां । रामा—स्त्री ॥ ३० ॥

निशम्य तल्लक्ष्मणमातृवाक्यं
रामस्य मातुर्नरदेवपत्न्याः ।
सद्यश्शरीरे विननाश शोकः
शरद्गतो मेघ इवाल्पतोयः ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुश्चत्वारिंशः सर्गः

———

योगौ (३१) मानः सर्गः ॥ ३१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चतुश्चत्वारिंशः सर्गः

———

[1] प्रोक्षसि पुनः—ङ.

## पञ्चचत्वारिंशः सर्गः

### [पौरयाचनम्]

**[1] अनुरक्ता महात्मानं रामं सत्यपराक्रमम् ।**
**अनुजग्मुः [2] प्रयान्तं तं वनवासाय मानवाः ॥ १ ॥**

एवं निवर्तितमातापितृवृत्तान्ते स्थिते, पुरमुत्सृज्य दूरमनुगच्छत्स्निग्धपौरनिवर्तनं सर्गाभ्याम् । अन्वित्यादि । वनवासाय प्रयान्तमिति योजना ॥ १ ॥

*** निवर्तितेऽपि च बलात् [3] सुहृद्वर्गे च राजनि ।**
**नैव ते सन्न्यवर्तन्त रामस्यानुगता रथम् ॥ २ ॥**

नैव त इति । ते अनुरक्ताः—परमभक्ता इत्यर्थः ॥ २ ॥

**अयोध्यानिलयानां हि पुरुषाणां महायशाः ।**
**बभूव गुणसंपन्नः पूर्णचन्द्र इव प्रियः ॥ ३ ॥**

**स याच्यमानः काकुत्स्थः [4] स्वाभिः प्रकृतिभिस्तदा ।**
**कुर्वाणः पितरं सत्यं वनमेवान्वपद्यत ॥ ४ ॥**

याच्यमान इति । प्रतिनिवृत्तिमिति शेषः । प्रकृतिभिरिति । परमानुरक्तभक्तप्रजाभिरित्यर्थः ॥ ४ ॥

**अवेक्षमाणः सस्नेहं चक्षुषा प्रपिबन्निव ।**
**उवाच रामः [5] सस्नेहं ताः प्रजाः † स्वाः प्रजा इव ॥ ५ ॥**

---

* सुहृद्वर्गे राजनि दशरथे च बलान्निवर्तितेऽपि ते पौरा नैव सन्न्यवर्तन्त इत्यर्थः । तत्र हेतुरुत्तरश्लोकेनोच्यते ॥ सुहृद्धर्मेण 'यमिच्छेत्पुनरायान्तं नैनं दूरमनुव्रजेत्' इत्युक्तिरूपेण—**ति.** † स्वाः प्रजा इव—स्वापत्यानीव—**गो., ति.** भरताय राज्यस्य दत्तत्वात् स्वस्य राज्यस्य च सम्बन्धाभावेन वा तथोक्तिः । अनन्तरश्लोक इममर्थं द्रढयति ॥

[1] अनुरक्तं—**ङ.** [2] प्रयातं—**ङ.** [3] सुहृद्धर्मेण—**च.** [4] ताभिः—**च.** [5] स्नेहेन—**ङ.**

**या प्रीतिर्बहुमानश्च मय्ययोध्यानिवासिनाम् ।**
**मत्प्रियार्थं विशेषेण भरते सा [1] निवेश्यताम् ॥ ६ ॥**

अयोध्यानिवासिनामिति । युष्माकमिति शेषः ॥ ६ ॥

**स हि कल्याणचारित्रः कैकेय्यानन्दवर्धनः ।**
**करिष्यति यथावद्वः प्रियाणि च हितानि च ॥ ७ ॥**

प्रियाणि—इहलोकसुखानि । हितानि—परलोकहितानि वर्णाश्रमव्यवस्थापरिपालनादिलक्षणानि ॥ ७ ॥

**ज्ञानवृद्धो वयोबालः मृदुर्वीर्यगुणान्वितः ।**
**अनुरूपः स वो भर्ता भविष्यति भयापहः ॥ ८ ॥**

वयसा बालोऽपि ज्ञानादिना वृद्धः । मृदुरपि वीर्यगुणान्वितः ॥

**स हि राजगुणैर्युक्तो युवराजः समीक्षितः ।**
**अपि चापि *मया शिष्टैः कार्यं वो भर्तृशासनम् ॥ ९ ॥**

समीक्षितः—निश्चितः । अतश्च स एव युवराज इत्युच्यते । अपि चेत्यादि । अस्मादपि हेतोरित्यर्थः । मया पितृशिष्टेन, युष्माभिरपि भर्त्रनुशिष्टैः । भर्तृशासनं—राजनियोगः ॥ ९ ॥

**[2] न सन्तप्येद्यथा चासौ वनवासं गते मयि ।**
**महाराजस्तथा कार्यो मम प्रियचिकीर्षया ॥ १० ॥**

न सन्तप्येदित्यादि । तथा कार्य इति । अनुकूलाचरणेन सदा समाश्वासनीय इत्यर्थः ॥ १० ॥

---

* मया शिष्टैः—मत्तोऽधिकैरिति यावत् । ईदृशै राजगुणैर्युक्तः—ति. मया, शिष्टैः—अवशिष्टैश्च—लक्ष्मणशत्रुघ्नादिभिः सर्वैरपि—गो.

[1] विधीयताम्—ङ. [2] न च तप्येत्—ङ.

यथा यथा दाशरथिः [1]धर्ममेवास्थितो भवेत् ।
तथा तथा प्रकृतयः रामं [2]पतिमकारयन् ॥ ११ ॥

यथा यथा धर्ममेवास्थितो भवेत्—धर्ममेव परिगृह्णाति पुनःपुनरुच्यमानोऽपि, तथा तथा भरतयौवराज्यं प्रति उच्यमाना अपि राममेव चित्ते पतिमकारयन्—स्वीकृतवन्तः, चतुर्दशसमानन्तरमपि वा भवानेवास्माकं राजा भवत्विति प्रार्थितवन्त इत्यर्थः ॥ ११ ॥

बाष्पेण पिहितं दीनं रामः सौमित्रिणा सह ।
चकर्षेव [3]गुणैर्बद्धं जनं पुरनिवासिनम् ॥ १२ ॥

एवं बाष्पेण पिहितं—पिहितचक्षुषं गुणैः रज्जुभिरिव स्वगुणैर्बद्धं पुरवासिनं जनं चकर्षेव । *तथा च कथञ्चित्तेषां प्रतिनिवृत्तिरभूदित्युक्तं भवति ॥ १२ ॥

ते द्विजाः त्रिविधं वृद्धा ज्ञानेन वयसौजसा ।
वयःप्रकम्पशिरसः दूरादूचुरिदं वचः ॥ १३ ॥

अथ तपस्साधनप्रियब्राह्मणानां रामेण सह वनविवासाय प्रवृत्तिः —ते द्विजा इत्यादि । ते पौराः ब्राह्मणाः । तेषां त्रिप्रकारवृद्धत्वं प्रतिपाद्यते—ज्ञानेनेत्यादि । ओजः—तपोबलम् । वयसा—वयःपरिपाकेन—वार्धक्येन प्रकम्पं—प्रचलत्—दौर्बल्यादितस्ततो भ्रमं शिरो येषां ते तथा । एवमतिवृद्धत्वादेव आरादनुधावनाशक्तया दूरादिदमूचुः ॥

---

* इदं वाक्यं नञुपश्लिष्टं स्यादिति भाति, उत्तरश्लोकेष्वपि पौरानुवर्तनस्य द्योतनात् ॥

[1] धर्म एव स्थितोऽभवत्—ङ. [2] पतिमकामयन्—ङ. [3] गुणैर्बध्वा—ङ.

वहन्तो जवना रामं भो भो जात्यास्तुरङ्गमाः !
निवर्तध्वं न गन्तव्यं हिता भवत भर्तरि ॥ १४ ॥

किमूचुरित्यतः—वहन्त इत्यादि । रथेन प्रापयन्तः जात्याः—उत्तमजातिजाः भर्तरि—रामविषये हिता भवत, वनं न नयतेति यावत् ॥ १४ ॥

कर्णवन्ति हि भूतानि विशेषेण तुरङ्गमाः ।
यूयं तस्मान्निवर्तध्वं याचनां * प्रतिवेदिताः ॥ १५ ॥

एवं क्रोशनेऽपि तेषां वेगगमनदुःखादाहुः—कर्णवन्तीत्यादि । विशेषेण यूयं कर्णवन्त इत्यनुकर्षः । तस्मात् बधिरवन्न गन्तव्यं ; अपि तु याचनामस्मदीयां प्रतिवेदिताः—ज्ञातवन्तो निवर्तध्वम् ॥ १५ ॥

धर्मतस्स विशुद्धात्मा वीरः शुभदृढव्रतः ।
उपवाह्यस्तु [1] वो भर्ता नापवाह्यः पुराद्वनम् ॥ १६ ॥

उपवाह्यः—पुरसमीपं प्राप्यः । न तु पुरात् दूरमपवाह्यः—अपनीय प्रापणीयः ॥ १६ ॥

एवमार्तप्रलापांस्तान् वृद्धान् प्रलपतो द्विजान् ।
अवेक्ष्य सहसा रामः रथादवततार [2] ह ॥ १७ ॥

† पद्भ्यामेव [3] जगामाथ ससीतस्सहलक्ष्मणः ।
सन्निकृष्टपदन्यासः रामो वनपरायणः ॥ १८ ॥

---

* प्रतिवेदिताः—ज्ञापिताः—गो. † रथेन गमने ब्राह्मणक्लेशनेन दोषः, प्रतिनिवृत्त्य ब्राह्मणाश्वासने व्रतभङ्गो भवतीति धिया पद्भ्यां मन्दगमनोऽभूत् यावद्वृद्धसन्निधानमित्यर्थः—ति.

[1] भर्ता नो—ङ. [2] सः—ङ. [3] जनान् सर्वान् उपातिष्ठत् सलक्ष्मणः—ङ.

पद्भ्यामेव द्विजानामनुसङ्गमार्थं सन्निकृष्टपदन्यासो भूत्वा वनपरायण एव शनैश्शनैर्जगाम, न तु निवृत्तः, नापि स्थित इत्यर्थः ॥ १८ ॥

**द्विजातींस्तु पदातींस्तान् रामश्चारित्रवत्सलः ।**
**न शशाक घृणाचक्षुः परिमोक्तुं रथेन सः ॥ १९ ॥**

रथेन परिमोक्तुमिति । रथवेगावलम्बनेन निवर्तयितुमित्यर्थः ॥

**गच्छन्तमेव तं दृष्ट्वा रामं संभ्रान्तचेतसः ।**
**ऊचुः परमसन्तप्ता रामं वाक्यमिदं द्विजाः ॥ २० ॥**

गच्छन्तमेवेति । न स्थितं, न निवृत्तं वेत्यर्थः ॥ २० ॥

**ब्राह्मण्यं *[1] सर्वमेतत् त्वां ब्रह्मण्यमधिगच्छति ।**
**द्विजस्कन्धाधिरूढास्त्वां अग्नयोऽप्यनुयान्त्यमी ॥ २१ ॥**

ब्राह्मण्यं–ब्रह्मसम्बन्धिसकलतन्त्रमन्त्रज्ञानयोगानुष्ठानरूपं अस्मदीयं कर्म, ब्राह्मणादित्वात् कर्मणि ष्यञ् । [2] द्विजस्कन्धाधिरूढा इति । पात्रारणिभरणद्वारेणेति शेषः ॥ २१ ॥

**वाजपेयसमुत्थानि छत्राण्येतानि पश्य नः ।**
**पृष्ठतोऽनु[3]प्रयातानि मेघानिव जलात्यये ॥ २२ ॥**

वाजपेयसमुत्थानि नः छत्राणीति । 'तस्माद्वाजपेययाजी न कञ्चन प्रत्यवरोहति ' इति श्रुतेः वाजपेययाजिनो राजवच्छत्रादिसम्बन्धात् । जलात्यये मेघानिवेति । शरदि मेघा इव पाण्डुराणीत्यर्थः ॥ २२ ॥

---

* ब्राह्मण्यं ब्राह्मणसमूहः । ब्रह्मसु ब्राह्मणेषु साधुः ब्रह्मण्यः, तम्—**गो.** ब्राह्मण्यं ब्राह्मणसम्बन्धिसकलमंत्रतंत्रज्ञानयोगानुष्ठानरूपमस्मदीयं कर्म–ब्राह्मणसमूहो वा—**ती.**

[1] कृत्स्नमेतत् -**ङ., च.** [2] निजस्क—**क.** [3] प्रयातान् हि हंसानिव—**ङ.**

**अनवाप्तातपत्रस्य रश्मिसन्तापितस्य ते ।**
**एभिः छायां करिष्यामः [1]स्वच्छत्रैर्वाजपेयिकैः ॥ २३ ॥**

अनवाप्तातपत्रस्येति । अप्राप्तश्वेतच्छत्रस्येत्यर्थः । वाजपेययागप्राप्तानि–वाजपेयिकानि ॥ २३ ॥

**या हि नः सततं बुद्धिः वेदमन्त्रानुसारिणी ।**
**त्वत्कृता सा कृता, वत्स! वनवासानुसारिणी ॥ २४ ॥**

वेदमन्त्रानुसारिणी–तदभ्यासानुसरणशीला । त्वत्कृते मन्त्राभ्यासादि परित्यज्य वनवासोन्मुखीकृतेत्यर्थः ॥ २४ ॥

***[2]हृदयेष्ववतिष्ठन्ते वेदा ये नः परं धनम् ।**
**[3]वत्स्यन्त्यपि गृहेष्वेव दाराश्चारित्ररक्षिताः ॥ २५ ॥**

स्वेषां वनवासे अनुपपत्त्यभाव इत्याहुः—हृदयेष्वित्यादि । नः अस्माकं परं धनं ये वेदाः अस्माकं हृदय एवावतिष्ठन्ते–अनुसन्धीयमाना वर्तन्ते, चारित्रं–पातिव्रत्यं, तद्रक्षिता दाराश्च ॥ २५ ॥

**† न पुनर्निश्चयः कार्यः [4]त्वत्कृते सुकृता मतिः ।**
**त्वयि धर्मव्यपेक्षे तु किं [5]स्याद्धर्ममपेक्षितुम् ॥ २६ ॥**

---

* ज्ञानस्यैव मुख्यवेदत्वात्तथोक्तिः । दाराः तत्पातिव्रत्यरक्षिता वत्स्यन्ति, एवञ्चास्माक वनगमने न कश्चन प्रतिरोध इति भावः. † त्वद्गतौ–त्वन्निवर्तनरूपगतौ मतिः सुकृता—सुष्ठु कृता । निश्चयः –वनवासनिश्चयः पुनः न कार्यः, त्वयेति शेषः, त्वयि धर्मसापेक्षे अस्माभिरपि धर्मः अपेक्षणीयः किम् ? अथवा धार्मिके त्वय्यपि ब्राह्मणप्रार्थनारूपधर्मनिरपेक्षे किमन्यं धर्ममपेक्षितुं युक्तम्—इत्यर्थः ।

[1] स्वैः छत्रैः–ङ., च. [2] हृदयेष्वेव तिष्ठन्ति–ङ. [3] वसन्त्यपि–ङ.
[4] त्वद्गतौ–**सर्वत्र.** [5] स्याद्धर्मपथे स्थितम्–ङ., च.

एवं त्वत्कृते–त्वदनुयाननिमित्तं मतिः सुकृता–सुष्ठु निश्चिता, न पुनरतःपरमस्माभिर्निश्चयः कार्यः । अथाप्यस्माकं सर्वेषां सुखार्थं निवर्तस्वेति प्रार्थयन्ते— त्वयीत्यादि । धर्मव्यपेक्षे–धर्मे नित्यापेक्षासहिते त्वयि इदानीं धर्ममपेक्षितुं नः–अस्माकं चापेक्षितुं मतिः स्यात् किम्? अस्ति किम्? ॥ २६ ॥

[1] याचितो नो निवर्तस्व हंसशुक्लशिरोरुहैः ।
* शिरोभिः, निभृताचार! महीपतनपांसुलैः ॥ २७ ॥

तदस्माभिः हंसशुक्लशिरोरुहैः–पलितकेशैः नः शिरोभिः साष्टाङ्ग-नमस्काराय महीपतनपांसुलैः देहैश्च याचितः निवर्तस्व । निभृताचारः–निश्चलधर्मानुष्ठानः। ननु कथं ब्राह्मणैः क्षत्रियस्य रामस्य नमस्कारः?— इदानीमस्माभिर्वा कथं नमस्कारः? रामायणश्रवणतो रामे कुलदैवत-बुद्ध्या क्षत्रियमातृत्वबुद्धेर्निवृत्तत्वादिति चेत् – तर्ह्यपरोक्षानुभूयमान-ब्रह्मस्वभावसर्वप्रियत्वानवधिककल्याणगुणैकतानत्वलोकनाथभगवद्ब्रह्मैक-साध्यपुण्यलोकदानादिव्यापारैः अपरोक्षानुभूतप्राजापत्योपनीतब्रह्मतेजो-मूलपरिगृहीतलीलाविग्रहत्वतः स्ववगमब्रह्मत्वादेव ॥ २७ ॥

बहूनां वितता यज्ञा द्विजानां य इहागताः ।
† तेषां समाप्तिरायत्ता तव, वत्स! [2] निवर्तते ॥ २८ ॥

बहूनामित्यादि। ये द्विजा इहागताः तेषां बहूनां बहवो यज्ञा इह काले वितताः–प्रवृत्ताः ; तेषां समाप्तिः तवायत्ता–त्वदधीना । सा तु

---

* वृद्धब्राह्मणानां क्षत्रियकुमारप्रणामः परत्वबुद्ध्या–**गो.** भगवदवतारत्वदृष्ट्या नमस्कारेणादोषात्। यद्वा राज्ञो विष्णवंशत्वेन नतौ न दोष इत्याहुः–**ति.** † तवानिवर्तने त्वयैव सर्वे यज्ञा विघ्निताः स्युरिति भावः।

[1] याचितस्सन्निवर्तस्व–**ङ.** [2] निवर्तने–**सर्वत्र**।

त्वन्निवृत्त्यभावे निवर्तते—समाप्तिर्न भविष्यति—मध्ये विघ्नो भवति, अतो निवर्तस्वेत्यर्थः ॥ २८ ॥

**[1]भक्तिमन्ति हि भूतानि जङ्गमाजङ्गमानि च।**
***याचमानेषु, [2]राम! त्वं भक्तिं भक्तेषु दर्शय ॥ २९ ॥**

न केवलमस्मत्प्रार्थना ; अपि तु सर्वभूतप्रार्थनापीत्याहुः—भक्तिमन्तीत्यादि। जङ्गमाजङ्गमानि सर्वाण्यपि भूतानि भक्तिमन्ति। भक्तिः—स्नेहः। तथा सर्वेषां स्नेहकारणं प्रागेवोक्तम्। त्वन्निवृत्तिं याचमानेषु भक्तेषु त्वमपि भक्तिं—स्नेहं प्रदर्शय, निवृत्त्येति शेषः ॥ २९ ॥

**†अनुगन्तुमशक्तास्त्वां मूलै[3]रुन्नतवेगिनः।**
**उन्नता वायुवेगेन विक्रोशन्तीव पादपाः ॥ ३० ॥**

मूलैः—अवाक्शिरोभिः, स्थावरत्वादनुगन्तुमशक्ताः—सेवितुमशक्ताः वायुवेगेनोपाधिना उन्नतवेगिनः उन्नताः—उच्छ्रिताः पादपाः विक्रोशन्तीव—वायुवेगजशाखाचलनशब्दैरिति शेषः ॥ ३० ॥

**निश्चेष्टाहारसञ्चारा वृक्षैकस्थानविष्ठिताः।**
**पक्षिणोऽपि प्रयाचन्ते सर्वभूतानु[4]कम्पिनम् ॥ ३१ ॥**

निर्गताः चेष्टादयो येषां ते तथा। वृक्षरूपे एकस्मिन्नेव स्थाने विष्ठिताः। न तु भुवमवरोहन्ति आहारायापीत्यर्थः। प्रयाचन्त इति। निवृत्तिमिति शेषः ॥ ३१ ॥

---

* त्वं भक्तेषु विद्यमानां भक्तिं दर्शय—सफलयेत्यर्थः—**गो.** † मूलैः पादस्थानीयैः त्वामनुगन्तुमशक्ताः ...... उन्नताः ऊर्ध्वबाहव इव स्थिताः—**गो.**

[1] भक्तिमन्तीह—**ङ., च.** [2] तेषु त्वं—**च.**, भूतेषु—**ङ.** [3] उद्धत—**ङ.** [4] कम्पनम्—**च.**

*एवं विक्रोशतां तेषां द्विजातीनां निवर्तने ।
ददृशे तमसा तत्र वारयन्तीव राघवम् ॥ ३२ ॥

निवर्तने-निवर्तननिमित्तं विक्रोशतां तेषामनुग्रहाय राघवं वारयन्तीव-मार्गे तिर्यक्प्रवाहत्वाद्वारयन्तीव स्थिता तमसा ददृशे ॥ ३२ ॥

ततः सुमन्त्रोऽपि रथाद्विमुच्य
श्रान्तान् हयान् संपरिवर्त्य शीघ्रम् ।
पीतोदकांस्तोयपरिप्लुताङ्गान्
अचारयद्वै तमसाऽविदूरे ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चचत्वारिंशः सर्गः

---

श्रान्तान्—आयासं रथवहनेन । संपरिवर्त्य—† कृतश्रमानुत्पत्तिहेतुपरिवर्तनात् कृतविलुण्ठनान्विधायेत्यर्थः । तोयपरिप्लुताङ्गान्—स्नापितानिति यावत । तमसाया अविदूरे अचारयत्—भक्षितोलपानकरोत् । गंगा (३३) मानः सर्गः ॥ ३३ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे पञ्चचत्वारिंशः सर्गः

---

* द्विजातीनामिति सम्बन्धसामान्ये षष्ठी । द्विजातिभिः प्रार्थ्यमानरामनिवर्तन इत्यर्थः-गो., ती. † कृतश्रमापनुत्तिहेतु इति स्यात् ॥

## षट्चत्वारिंशः सर्गः

### [पौरमोहनम्]

**ततस्तु तमसातीरं रम्यमाश्रित्य राघवः ।**
**सीतामुद्वीक्ष्य सौमित्रिं इदं वचनमब्रवीत् ॥ १ ॥**

अथ अशक्यनिवर्तनान् एतान् अतिसन्धाय राघवस्य निर्गमः—तत इत्यादि ॥ १ ॥

***इयमद्य निशा पूर्वा, सौमित्रे ! [1] प्रहिता वनम् ।**
**वनवासस्य, भद्रं ते, स नोत्कण्ठितुमर्हसि ॥ २ ॥**

हे सौमित्रे! वनवासस्य--वनवासकालस्य सम्बन्धिनी अद्य प्रवृत्ता इयं निशा वनं–वनवासं प्रति पूर्वा प्रहिता–हि गतौ, प्राप्ता, वनवासकालः एतन्निशामारभ्य गणनीय इत्यर्थः। पूर्वनिशायाः पुरसम्बन्धस्य विद्यमानत्वात् न सा चतुर्दशसमावनवासकालेऽन्तर्भवतीत्यर्थः। स त्वं नोत्कण्ठितुं–अद्यप्रभृति पुरौत्सुक्यस्मरणं कर्तुं नार्हसि॥

**पश्य शून्यान्यरण्यानि रुदन्तीव समन्ततः ।**
**यथानिलयमायद्भिः निलीनानि मृगद्विजैः ॥ ३ ॥**

---

* वनवासस्य पूर्वा प्रथमा अद्येयं निशा इदानीमुपस्थिता रात्रिः प्रहिता–गतप्राया । अतः स त्वं नोत्कण्ठितुमर्हसि । सीतामुद्वीक्ष्य सौमित्रिमब्रवीदित्यस्य एवं वाऽभिप्रायः । अतिसुकुमारी सीता कथं पद्भ्यामेव वनं गच्छेदिति नोत्कण्ठितुमर्हसीति–**गो.** वनवासस्य–वनवाससम्बन्धिनिशानां मध्ये अद्य प्रवृत्तेयं निशा वनं–वनवासं प्रति पूर्वा प्रहिता–प्राप्ता–**ति.** वनं प्रहिता–वने प्राप्ता–**ती.** अथवा वनवासस्य विषये नोत्कण्ठितुमर्हसीति वा अन्वयः ।

[1] प्रस्थिता–**ङ.**

यथानिलयं–यथायोगं स्वस्वनिलयमायद्भिः–आगच्छद्भिः मृगद्विजैर्निलीनानि–अन्तर्निलीनतया व्याप्तानि, अत एव शून्यानि, रुदन्तीव–खिन्नानीव चारण्यानि वर्तन्ते ; तानि पश्य ॥ ३ ॥

अद्यायोध्या तु नगरी राजधानी पितुर्मम ।
सस्त्रीपुंसा गतानस्मान् शोचिष्यति न संशयः ॥ ४ ॥

स्त्रीपुंसैस्सहिता सस्त्रीपुंसा, 'अचतुर....' इत्यादिना निपातः ॥ ४ ॥

*अनुरक्ता हि मनुजा राजानं बहुभिर्गुणैः ।
त्वां च मां च, नरव्याघ्र! शत्रुघ्नभरतौ तथा ॥ ५ ॥
पितरं चानुशोचामि मातरं च यशस्विनीम् ।
† अपि [1] वान्धौ भवेतां तु रुदन्तौ तावभीक्ष्णशः ॥ ६ ॥

अभीक्ष्णशः रुदन्तौ तौ पितरौ, रोदनवशादन्धौ भविष्यतः ॥६॥

भरतः खलु धर्मात्मा पितरं मातरं च मे ।
धर्मार्थकामसहितैः वाक्यैराश्वासयिष्यति ॥ ७ ॥

अथापि तदनुशोचने काचन प्रत्याशापीत्याह—भरतः खल्वित्यादि ॥ ७ ॥

---

* कुतः शोचिष्यतीत्यत्र हेतुमाह—अनुरक्ता इत्यादि । बहुभिर्गुणैरिति, राजानं त्वां मां शत्रुघ्नभरतौ इति सर्वत्रान्वेति । मनुजाः अनेकगुणैः राजानं त्वां मां शत्रुघ्नभरतौ च प्रति यतोऽनुरक्ताः अतः शोचिष्यन्ति । स्वस्याहंकाराभावसूचनाय, स्वप्रवासस्य सर्वानिष्टे पर्यवसानसूचनाय च जनानुरागस्य अविशेषेण सर्वविषयत्वमुक्तम्. † अपि वान्धौ न भवेतां, अपि तु भवेतामेव–**ति.**

[1] नान्धौ–**च.**, चान्धौ–ङ.

भरतस्यानृशंसत्वं विचिन्त्याहं पुनः पुनः।
नानुशोचामि पितरं मातरं चापि, लक्ष्मण! ॥ ८ ॥

*त्वया कार्यं, नरव्याघ्र! मामनुव्रजता कृतम्।
अन्वेष्टव्या हि वैदेह्या रक्षणार्थे सहायता ॥ ९ ॥

मामनुव्रजता त्वया तु यत् कार्यं—कर्तव्यं तत् कृतमेव। मयि वनं प्रयाते मदनुव्रजनस्यैव त्वत्सौभ्रात्रोचितकर्तव्यत्वात्। अतः परं हि मम वैदेह्या रक्षणार्थे सहायता अन्वेष्टव्या। अतस्तस्यै एतन्निशामारभ्य सदा सुखान्नपानादिकं सम्पादयेति शेषः ॥ ९ ॥

आद्भिरेव तु, सौमित्रे! [1]वत्स्याम्यद्य निशामिमाम्।
†एतद्धि रोचते मह्यं वन्येऽपि विविधे सति ॥ १० ॥

अहन्तु अद्येमां निशामद्भिरेव कृतप्राणरक्षो वत्स्यामि; वनवासव्रतप्रथमसङ्कल्पाङ्गत्वेनेति शेषः। तमेवाभिप्रायं दर्शयति—एतद्धीत्यादि ॥ १० ॥

एवमुक्त्वा तु सौमित्रिं सुमन्त्रमपि राघवः।
‡अप्रमत्तस्त्वमश्वेषु भव सौम्येत्युवाच ह ॥ ११ ॥
सोऽश्वान् सुमन्त्रः संयम्य सूर्येऽस्तं समुपागते।
प्रभूतयवसान् कृत्वा बभूव प्रत्यनन्तरः ॥ १२ ॥

---

* त्वया यत् कर्तव्यं तत् कृतमेव। हि यतः त्वदनुव्रजनाभावे वैदेहीरक्षणार्थं सहायता—सहायसमूहः अन्वेष्टव्यः स्यात्। त्वमेको सहायसमूहस्थानीय इति भावः—ति.
† वनवासोपक्रमदिवसत्वात्, अस्य तमसातीरस्य पुण्यक्षेत्रत्वाच्च उपवासः—गो., ती.। अनुरक्तजनदुःखस्मरणाच्च तथा सीतालक्ष्मणयोस्तु स्वाभिलषितरामानुव्रजनप्राप्त्या न तावान् शोक इति भावः। ‡ झटिति समयविशेषे प्रस्थानाय तथोक्तिः।

[1] वत्स्याम्यत्र—ङ.

प्रभूतः यवसः—घासः येषां ते तथा। प्रत्यनन्तरः—प्रत्यासन्नो बभूव ॥ १२ ॥

उपास्य तु शिवां संध्यां दृष्ट्वा रात्रिमुपस्थिताम्।
रामस्य *शयनं चक्रे सूतः सौमित्रिणा सह ॥ १३ ॥

शयनं—शयनस्थलं, चक्रे—शर्करापांसूत्क्षेपणादिद्वारेण ॥ १३ ॥

तां शय्यां तमसातीरे वीक्ष्य वृक्षदलैः कृताम्।
रामः सौमित्रिणा सार्धं सभार्यः संविवेश ह ॥ १४ ॥

सभार्यं संप्रसुप्तं तं [1]भ्रातरं वीक्ष्य लक्ष्मणः।
कथयामास सूताय रामस्य विविधान् गुणान् ॥ १५ ॥

गुणान् कथयामासेति। जागरणप्रयोजनशेषतयेति शेषः ॥ १५ ॥

[2]जाग्रतो ह्येव तां रात्रिं सौमित्रेरुदितो रविः।
सूतस्य तमसातीरे रामस्य ब्रुवतो गुणान् ॥ १६ ॥

तां रात्रिमिति। अत्यन्तसंयोगे द्वितीया। उदितो रविरिति। अरुणोदयकालो जात इत्यर्थः ॥ १६ ॥

गोकुलाकुलतीरायास्तमसाया †विदूरतः।
अवसत्तत्र तां रात्रिं रामः प्रकृतिभिस्सह ॥ १७ ॥

गोकुलैराकुलं तीरं यस्यास्सा तथा। विदूर इति। द्विजगण-संवेशदेशापेक्षयाऽतिविप्रकृष्टस्थले, अतिसन्धाय गमनसौकर्यार्थमिति शेषः ॥ १७ ॥

---

* वृक्षदलास्तरणरूपं शयनं—'वृक्षदलैः कृतां' इत्युत्तरश्लोकानुसारात्।
† विदूरतः अदूरतः—गो.

[1] श्रान्तं संप्रेक्ष्य—च. [2] जाग्रतोरेव—च. जाग्रतोरेव सा रात्रिः तयोस्सौमित्रि-सूतयोः। जगाम तमसातीरे रामस्य ब्रुवतो गुणान् ॥—ङ.

उत्थाय तु महातेजाः प्रकृतीस्ता निशम्य च ।
अब्रवीत् भ्रातरं रामः लक्ष्मणं पुण्यलक्षणम् ॥ १८ ॥

निशम्य—अवलोक्य । निद्राणानिति शेषः ॥ १८ ॥

अस्मद्व्यपेक्षान्, सौमित्रे ! [1] निर्व्यपेक्षान् गृहेष्वपि ।
वृक्षमूलेषु संसुप्तान् पश्य, लक्ष्मण ! सांप्रतम् ॥ १९ ॥

अस्मद्व्यपेक्षान्—अस्मास्वेव विशेषेण अपेक्षावतः, अत एव गृहेषु निर्व्यपेक्षान् ॥ १९ ॥

* यथैते नियमं पौराः कुर्वन्त्यस्मन्निवर्तने ।
[2] अपि प्राणानसिष्यन्ति न तु त्यक्ष्यन्ति निश्चयम् ॥२०॥

यथेत्यादि । † यथा वयमानिवृत्तौ नियमं कुर्मः, तथैते अस्मन्निवर्तने नियमं कुर्वन्ति (स्म) । अत एवेमे प्राणानप्यसिष्यन्ति—त्यक्ष्यन्ति, न तु निवर्तननिश्चयं त्यक्ष्यन्ति ॥ २० ॥

यावदेव तु संसुप्तास्तावदेव वयं लघु ।
रथमारुह्य गच्छामः पन्थानमकुतोभयम् ॥ २१ ॥

यदेवं अतः—यावदित्यादि ॥ २१ ॥

---

* अस्मन्निवर्तने यथा नियमं कुर्वन्ति तथा प्राणानप्यसिप्यन्ति—गो., ति.

† एतेन—रामेण प्रतिज्ञायाः प्रथममेव कृतत्वात् तद्विरोधी नियमः उपेक्ष्य एव। अत एवोत्तरत्र पौरमोहनं युज्यते। किञ्च न हि रामवियोगे एतेषां प्राणसंशयः—येन रामवञ्चनानन्तरमप्यजीवन्नेव। इदं सर्वं पश्यन्नेव रामः पौरान् वञ्चयामास—इति सूचितम्।

[1] निरपेक्षान् गृहेष्विमान्—ङ. [2] अपि प्राणान्न रक्षन्ति—ङ.

*अतो भूयोऽपि नेदानीमिक्ष्वाकुपुरवासिनः ।
स्वपेयुरनुरक्ता मां वृक्ष[1]मूलानि संश्रिताः ॥ २२ ॥

अतो भूयोऽपि स्वपेयुरिति। पूर्वदिने अन्नपानाद्यभावात्, पूर्वरात्रे च शोक[2]वशेन जागरणाच्चेत्याशयः ॥ २२ ॥

†पौरा ह्यात्मकृताद्दुःखात् विप्रमोक्ष्या नृपात्मजैः ।
न ते खल्वात्मना योज्या दुःखेन पुरवासिनः ॥ २३ ॥

आत्मकृतात्—आत्मनिमित्तात् । आत्मनेति । आत्मनिमित्तेनेति यावत् ॥ २३ ॥

अब्रवील्लक्ष्मणो रामं साक्षाद्धर्ममिव स्थितम् ।
रोचते मे [3]तथा, प्राज्ञ! क्षिप्रमारुह्यतामिति ॥ २४ ॥

आरुह्यतामिति । रथ इति शेषः ॥ २४ ॥

अथ रामोऽब्रवीत् [4]श्रीमान् सुमन्त्रं युज्यतां रथः ।
गमिष्यामि ततोऽरण्यं गच्छ शीघ्र[5]मितः, प्रभो! ॥ २५ ॥

तत इति । रथसंयोजनानन्तरं तेन रथेनेत्यर्थः। शीघ्रं गच्छेति । रथसंयोजनायेति शेषः । प्रभो—समर्थ ॥ २५ ॥

सूतस्ततः संत्वरितः स्यन्दनं तैर्हयोत्तमैः ।
योजयित्वाऽथ रामाय प्राञ्जलिः प्रत्यवेदयत् ॥ २६ ॥

---

*मामनुरक्ता इक्ष्वाकुपुरवासिन इदानीमिव भूयः—पुनः वृक्षमूलानि संश्रिताः न स्वपेयुः, अपि तु स्वगृहं गच्छेयुः । अतो यावन्नोत्तिष्ठन्ति तावत् लघु—शीघ्रं रथमारुह्य गच्छाम इत्येव नञुपश्लिष्टतया व्याख्या सर्वत्र दृश्यते। एतद्व्याख्यारीत्या तु 'नेदानीं' इत्यत्र नञ्रहितः पाठ इति भाति. †आत्मकृतात्—स्वकृतात् । आत्मना—स्वेन—गो.

[1] मूलेषु—ङ. [2] वेगेन—ग. [3] महाप्राज्ञ—ङ. [4] धीमान्—ङ. [5] मतः—ङ.

**अयं युक्तः, महाबाहो ! रथस्ते, रथिनां वर !**
**[1]त्वमारोहस्व, भद्रं ते, ससीतस्सहलक्ष्मणः ॥ २७ ॥**

आरोहस्वेति । आरोहेति यावत् ॥ २७ ॥

**तं स्यन्दनमधिष्ठाय राघवस्सपरिच्छदः ।**
**शीघ्रगामाकुलावर्तां तमसामतरन्नदीम् ॥ २८ ॥**

परिच्छदः—धनुःकवचादिलक्षणः । आकुलाः—निबिडाः आवर्ताः यस्यास्सा तथा । अतरदिति पदम् ॥ २८ ॥

**स संतीर्य महाबाहुः श्रीमान् शिवमकण्टकम् ।**
***प्रापद्यत महामार्गमभयं भयदर्शिनाम् ॥ २९ ॥**

भयदर्शिनामप्यभयं—भीतिप्रसङ्गरहितं महामार्गमित्यर्थः ॥ २९ ॥

**†मोहनार्थं तु पौराणां सूतं रामोऽब्रवीद्वचः ।**
**उदङ्मुखः प्रयाहि त्वं [2]रथमास्थाय, सारथे ! ॥ ३० ॥**

त्वं रथमास्थायेति । त्वमेव, न तु वयम् । मोहनार्थं—जनमोहाय ॥ ३० ॥

---

* जलस्थितरथादवतीर्य पद्भ्यामेव महामार्गं प्रापदित्यर्थः । भयदर्शिनां श्वापदादीनां अभयं—तत्सम्बन्धिभयरहितं—**गो.** महामार्गं—राजमार्गं—**ति.** † वनं प्रस्थितस्य स्वस्योदङ्मुखगमने नियमभङ्गः स्यादिति मत्वा स्वयं रथादवरुह्य 'त्वं प्रयाहि' इति सुमन्त्रं प्रत्युक्तिः । इममर्थं ३४ श्लोकोऽपि द्रढयति ॥

ननु सदयस्य रामस्य स्वविरहासहिष्णूनां स्वस्मिन्निरतिशयप्रेमभाजां वञ्चनमनुचितम्—उच्यते—नेदं वञ्चनं । व्रणचिकित्सान्यायेन नागरिकाणां उन्मस्तकानन्देन सत्ता न भवेदिति सुसात्म्यानुभवप्रदानार्थं वनवासव्याजेन विश्लेषस्य संकल्पिततया हितव्यापारत्वेन वञ्चनत्वासंभवात् । यदि रामस्य तथा संकल्पो न भवेत्—तर्हि कथं निश्शेषसर्वजननिद्राकरणं? सुमन्त्रलक्ष्मणवत्तेष्वेकस्यापि निर्निद्रत्वापत्तेः—**गो.** महामायाधिष्ठातुर्भगवत इयत्या क्रियया पौरमोहनं नाश्चर्याय—**ति.** शिष्टं तु २० श्लोकटिप्पण्यां द्रष्टव्यम् ॥

[1] तमारोह सुभद्रं ते—**ङ.**, त्वरयाऽऽरोह भद्रं ते—**च.** [2] रथमारुह्य—**च.**

**मुहूर्तं त्वरितं गत्वा निवर्तय रथं पुनः ।**
**यथा न विद्युः पौरा मां तथा कुरु समाहितः ॥ ३१ ॥**

तदेवाह—मुहूर्तमित्यादि । रथं पुनरिति । इहेति शेषः । न विद्युः—न जानीयुः ॥ ३१ ॥

**रामस्य वचनं श्रुत्वा तथा चक्रे स सारथिः ।**
**प्रत्यागम्य च रामस्य स्यन्दनं प्रत्यवेदयत् ॥ ३२ ॥**

तथा चक्र इति । उदङ्मुखतया गत्वा प्रतिनिवृत्तः—मार्गान्तरेणागत इति यावत् । एवमुदङ्मुखरथमार्गदर्शने रामः पुरं प्रति निवृत्तवानिति पौराणां भ्रमः सिध्यति ॥ ३२ ॥

**तौ संप्रयुक्तं तु रथं समास्थितौ**
**तदा ससीतौ रघुवंशवर्धनौ ।**
**प्रचोदयामास ततस्तुरङ्गमान्**
**स सारथिर्येन पथा तपोवनम् ॥ ३३ ॥**

समास्थितौ—समास्थितावभूतामिति योजना । तपोवनमिति । येन पथा प्राप्यते, दाक्षिणमिति शेषः ॥ ३३ ॥

**ततः समास्थाय रथं महारथः**
**ससारथिर्दाशरथिर्वनं ययौ ।**
***उदङ्मुखं तं तु रथं चकार**
**प्रयाणमाङ्गल्यनिमित्तदर्शनात् ॥ ३४ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षट्चत्वारिंशस्सर्गः

---

* उदङ्मुखप्रयाणानुकूलनिमित्तदर्शनात् रथमुदङ्मुखं चकार । न तु ययौ—व्रतभङ्गप्रसङ्गादित्याशयः ।

सारथिसहितः ससारथिः । प्रयाणेति । प्रयाणापेक्षितशुभनिमित्तानुभवार्थं, तं रथं उदङ्मुखं—उदङ्मुखतयाऽवस्थापितं समीक्ष्य पश्चादाधिरुह्य दक्षिणाभिमुखो ययावित्यर्थः । गर्भ (३४) मानः सर्गः ॥ ३४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे षट्चत्वारिंशस्सर्गः

---

## सप्तचत्वारिंशस्सर्गः

[पौरनिवृत्तिः]

**प्रभातायां तु शर्वर्यां पौरास्ते राघवं विना ।**
**शोकोपहतनिश्चेष्टा बभूवु[1]र्हतचेतसः ॥ १ ॥**

अथ एवमतिसंहितपौरजनप्रतिनिवृत्तिः— प्रभातायामित्यादि । शोकेन उपहताः, अत एव निश्चेष्टाश्च तथा ॥ १ ॥

**शोकजाश्रुपरिद्यूनाः वीक्षमाणास्ततस्ततः ।**
***आलोकमपि रामस्य न पश्यन्ति[2] स्म दुःखिताः ॥ २ ॥**

आलोकमपीति । आलोक्यत इत्यालोकः—आलोकसाधनमपि—रामरथादि[3]दर्शनमपीत्यर्थः ॥ २ ॥

**ते [4]विषादार्तवदना रहितास्तेन धीमता ।**
**कृपणाः करुणा वाचो वदन्ति स्म [5]मनस्विनः ॥ ३ ॥**

---

* रथरेण्वादिकमपीत्यर्थः—गो., ति., ती. लोकरीत्या इयमुक्तिः ।

[1] गतचे—ङ.   [2] सुदुःखि—ङ.   [3] दर्शनरूपम—ग.   [4] विषण्णार्त—ङ.
[5] मनीषिणः—च.

धिगस्तु खलु निद्रां तां ययाऽपहृतचेतसः ।
नाद्य *पश्यामहे रामं पृथूरस्कं महाभुजम् ॥ ४ ॥

पश्यामह इति। पश्याम इति यावत् ॥ ४ ॥

कथं रामो महाबाहुः स तथाऽवितथक्रियः ।
भक्तं जनमभित्यज्य प्रवासं [1] तापसो गतः ॥ ५ ॥

तथा—प्रसिद्धा अवितथा—अमोघा क्रिया यस्य स तथा ॥ ५ ॥

यो नस्सदा पालयति पिता पुत्रानिवौरसान् ।
कथं रघूणां स [2] श्रेष्ठः त्यक्त्वा नो विपिनं गतः ॥ ६ ॥
†इहैव निधनं यामो महाप्रस्थानमेव वा ।
रामेण रहितानां [3] हि किमर्थं जीवितं [4] हि नः ॥ ७ ॥
‡सन्ति शुष्काणि काष्ठानि प्रभूतानि महान्ति च ।
तैः प्रज्वाल्य चितां सर्वे प्रविशामोऽथ पावकम् ॥ ८ ॥
§किं वक्ष्यामो महाबाहुः अनसूयः प्रियंवदः ।
नीतः स राघवोऽस्माभिः इति वक्तुं कथं क्षमम् ॥ ९ ॥

---

*तङार्षः ; हे इति सम्बोधनं वा परस्परम्—ति. †निधनं प्रायोपवेशेन । महाप्रस्थानं विना रामं न प्रतिनिवर्तितव्यमिति संकल्पपूर्वकं रामान्वेषणाय गमनम्, पुनरावृत्तिरहितप्रस्थानं वा । ‡प्रायोपवेशेन मरणे तु न झटिति प्राणवियोगः स्यात्, तावत्पर्यन्तं तु रामविरहः दुस्सहः । अतः अग्निमेव प्रविशामेत्याहुः । §रामवृत्तान्तं पृच्छन्तं जनं प्रति अस्माभिः राघवो वनं नीत इति वक्तुं कथं क्षमम् । अन्यद्वा किं वक्ष्यामः—ती. एतद्व्याख्याने अनन्तर श्लोकोऽपि स्वरसः ॥ उत्तरसर्गषष्ठश्लोकोऽप्यत्रानुकूलः ।

[1] राघवो—ङ. [2] ज्येष्ठः—ङ. [3] नः—च. [4] हितम्—च.

स राघवोऽस्मान्न नीतः—न नीतवानित्यस्माभिः कथं वक्तुं क्षमम्? न कथमपि। अस्माकं सर्वेषां निद्रानाशितचित्तत्वात् 'मा स्वपन्तं बोधयेत्' इति शास्त्रस्य च सत्वात् स तूष्णीं गतः। अतो न तस्मिन् कोऽप्यपचार इत्यर्थः ॥ ९ ॥

सा नूनं नगरी दीना दृष्ट्वाऽस्मान् राघवं विना।
भविष्यति निरानन्दा सस्त्रीबालवयोधिका ॥ १० ॥

वयोऽधिकाः—वृद्धाः ॥ १० ॥

निर्यातास्तेन वीरेण सह नित्यं [1]जितात्मना।
विहीनास्तेन च पुनः कथं पश्याम तां पुरीम् ॥ ११ ॥

इतीव बहुधा वाचः बाहुमुद्यम्य ते जनाः।
विलपन्ति स्म दुःखार्ताः विवत्सा इव धेनवः ॥ १२ ॥

ततो मार्गानुसारेण गत्वा किञ्चित् क्षणं पुनः।
*मार्गनाशाद्विषादेन महता समभिप्लुताः ॥ १३ ॥

मार्गानुसारेणेति। आतिसन्धानप्रवर्तितमार्गानुसारेणेत्यर्थः। किञ्चित् क्षणं—किञ्चित्कालम्। मार्गादर्शनादिति। वञ्चनया मार्गान्तरेण प्रवृत्त्यावृत्तत्वादेव ॥ १३ ॥

[2]रथस्य मार्गनाशेन न्यवर्तन्त मनस्विनः।
[3]किमिदं किं करिष्यामः दैवेनोपहता इति ॥ १४ ॥

---

* मार्गनाशात्—रथमार्गादर्शनात्। तच्च वीरुत्तृणपटलपिहितप्रदेशे रथचारणादिति ज्ञेयम्-**गो.**

[1] महात्मना—**च.** [2] रथमार्गानुसारेण—**च.** [3] किमिदानीं—**ङ.**

ततो यथागतेनैव मार्गेण क्लान्तचेतसः ।
अयोध्यामगमन् सर्वे पुरीं व्यथितसज्जनाम् ॥ १५ ॥

व्यथिताः सज्जनाः यस्यां सा तथा । सत्पदविशेषणेन कैकेयी-पार्श्वासज्जनव्यावृत्तिः ॥ १५ ॥

आलोक्य नगरीं तां च *क्षयव्याकुलमानसाः ।
†अवर्तयन्त तेऽश्रूणि नयनैश्शोकपीडितैः ॥ १६ ॥

क्षयः—हर्षक्षयः ॥ १६ ॥

एषा रामेण नगरी रहिता नातिशोभते ।
आपगा गरुडेनेव ह्रदादुद्धृतपन्नगा ॥ १७ ॥

आपगेत्यादि गतम् ‡ ॥ १७ ॥

चन्द्रहीनमिवाकाशं तोयहीनमिवार्णवम् ।
अपश्यन्निहतानन्दं नगरं ते विचेतसः ॥ १८ ॥

ते तानि वेश्मानि महाधनानि
दुःखेन दुःखोपहता विशन्तः ।
नैव प्रजज्ञुः स्वजनं जनं वा
निरीक्षमाणाः प्रविनष्टहर्षाः ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तचत्वारिंशस्सर्गः

---

स्वजनं जनं वेति । अन्यजनं वेत्यर्थः । धैर्य (१९) मानः सर्गः ॥ १९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्तचत्वारिंशस्सर्गः

---

* क्षयं गृहं प्रति व्याकुलं—गन्तव्यं न वेत्येवंरूपं मानसं येषां—ति.
† अवर्तयन्त—अमुञ्चन् । ‡ ४२-२५ श्लोकव्याख्यायामिति शेषः ।

## अष्टचत्वारिंशस्सर्गः

[पौरविलापः]

*तेषामेवं विषण्णानां पीडितानामतीव च ।
बाष्पविप्लुतनेत्राणां सशोकानां मुमूर्षया ॥ १ ॥

अथ प्रतिनिवृत्तपौरजनस्य पुरे स्थित्वा शोचनम्—तेषामित्यादि । मुमूर्षया—मर्तुमिच्छयोपलक्षितानाम् ॥ १ ॥

अनुगम्य निवृत्तानां रामं नगरवासिनाम् ।
उद्गतानीव सत्त्वानि बभूवु†रमनस्विनाम् ॥ २ ॥

सत्त्वानि—अन्तःकरणानि । उद्गतानि—उत्क्रान्तानीव बभूवुः, मृततुल्यतयाऽवस्थिता इत्यर्थः । अमनस्विनां—दुर्मनस्कानां—खिन्नानामिति यावत् ॥ २ ॥

स्वं स्वं निलयमागम्य पुत्रदारैस्समावृताः ।
अश्रूणि मुमुचुस्सर्वे बाष्पेण पिहिताननाः ॥ ३ ॥

न चाहृष्यन् न चामोदन् वणिजो न प्रसारयन् ।
न चाशोभन्त [1]पण्यानि नापचन् गृहमेधिनः ॥ ४ ॥

न चामोदन्निति । नामोदन्तेति यावत् । न प्रसारयन्—न प्रासारयन् इति यावत् । अत एव पण्यानि नाशोभन्त—न दृष्टानीत्यर्थः ॥ ४ ॥

‡नष्टं दृष्ट्वा नाभ्यनन्दन् विपुलं वा धनागमम् ।
पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत ॥ ५ ॥

---

* तेषामित्यादिश्लोकद्वयमेकं वाक्यम् ।        † अमनस्विनां धैर्यहीनानाम्—गो.

‡ पूर्वं नष्टं, तदा दृष्ट्वापीत्यर्थः ।

[1] पुण्यानि—ङ.

गृहे गृहे रुदन्त्यश्च भर्तारं गृहमागतम् ।
व्यगर्हयन्त दुःखार्ता वाग्भिः तोत्रैरिव द्विपान् ॥ ६ ॥

व्यगर्हयन्तेति । राममप्रतिनिवर्त्य किमर्थमागता यूयमित्येवमात्मना । तोत्रैरिति पदम् ॥ ६ ॥

*किन्नु तेषां [1]गृहे कार्यं किं दारैः किं धनेन वा ।
पुत्रैर्वा किं सुखैर्वापि ये न पश्यन्ति राघवम् ॥ ७ ॥

रामं विसृज्य आगतानां तेषां युष्माकं गृहे किं नु कार्यम्? व्यर्थमेवागतमित्यर्थः । ये न पश्यन्तीति । ये भवन्तो न पश्यन्तीत्यर्थः । एवमन्तं स्त्रीणां गर्हावचनं, विसृज्य राममागता इति कोपजम् ॥ ७ ॥

एकः सत्पुरुषो लोके लक्ष्मणः † सह सीतया ।
योऽनुगच्छति काकुत्स्थं रामं परिचरन् वने ॥ ८ ॥

अतः परं सामान्यतः शोकः—एक इत्यादि ॥ ८ ॥

आपगाः कृतपुण्यास्ताः पद्मिन्यश्च सरांसि च ।
‡ येषु [2]स्नास्यति काकुत्स्थः विगाह्य सलिलं शुचि ॥९॥
[3]शोभयिष्यन्ति काकुत्स्थं अटव्यो रम्यकाननाः ।
आपगाश्च महानूपाः सानुमन्तश्च पर्वताः ॥ १० ॥

---

* भर्तॄन् सम्बोध्य वक्तुमनिच्छन्तः सामान्यतो तेषामिति निर्दिश्य व्यगर्हयन्त । † सीतया सह रामं—सीतया सहितं राममित्यर्थः । ‡ येषु सरस्सु शुचि सलिलं विगाह्य—सलिलान्तर्निमज्य स्नास्यति । स्नानं खलु—केवलशौचानुकूलव्यापारः—ष्णा शौचे इति धातोः । तच्च स्नानं उद्धृतजलेनापि भवितुमर्हति । तद्व्यावृत्त्यर्थं विगाह्येत्युक्तम् । यद्वा स्नानं—अन्तश्शौचानुकूलव्यापारः—मन्त्रस्नानमित्यादिप्रयोगात् । अवगाहनं—बाह्यशौचानुकूलव्यापारः । यास्यतीति पाठे विगाह्य यास्यतीत्यन्वयः ॥

[1] गृहैः—ङ, च. [2] यास्यति—च. [3] लोभयिष्यन्ति—ङ. = रामं आकर्षयिष्यन्तीति भावः ।

अटव्य इति। वनप्रदेशा इत्यर्थः। अनूपः—कच्छः ॥१०॥

**काननं वाऽपि शैलं वा यं रामोऽभिगमिष्यति।**
**प्रियातिथिमिव प्राप्तं नैनं शक्ष्यन्त्यनर्चितुम् ॥ ११ ॥**

अनर्चितुं न शक्ष्यन्ति—अर्चितुं शक्ष्यन्त्येवेत्यर्थः ॥ ११ ॥

**विचित्रकुसुमापीडा बहुमञ्जरिधारिणः।**
***राघवं दर्शयिष्यन्ति नगा भ्रमरशालिनः ॥ १२ ॥**

तदेव प्रदर्श्यते—विचित्रेत्यादि। विचित्रैः कुसुमैः—विकसितपुष्पैः आपीडाः—शेखरा येषां ते तथा। बह्वीः मञ्जरीः—मुकुलितपुष्पस्तबकान् धर्तुं शीलमस्त्येषामिति, छान्दसो ह्रस्वः। नगाः—वृक्षाः। राघवं दर्शयिष्यन्तीति। तथा च पुष्पाञ्जलिरूपमर्चनं कर्तुं शक्नुवन्त्येवेत्युक्तं भवति ॥ १२ ॥

**अकाले चापि मुख्यानि पुष्पाणि च फलानि च।**
**दर्शयिष्यन्त्यनुक्रोशात् गिरयो राममागतम् ॥ १३ ॥**

पूजान्तरेऽपि सामर्थ्यं प्रदर्श्यते—अकाले चापीत्यादि। गिरयो दर्शयिष्यन्तीति। स्वकवृक्षद्वारेणेति शेषः ॥ १३ ॥

**प्रस्रविष्यन्ति तोयानि विमलानि महीधराः।**
**विदर्शयन्तो विविधान् भूयश्चित्रांश्च निर्झरान् ॥ १४ ॥**
**पादपाः पर्वताग्रेषु रमयिष्यन्ति राघवम्।**
**यत्र रामो भयं नात्र नास्ति तत्र पराभवः ॥ १५ ॥**

यत्र राम इति। वसतीति शेषः ॥ १५ ॥

---

* नगाः रामं परमात्मानं मत्वा स्वनिष्ठभ्रमरझंकाररूपमन्त्रोच्चारणपूर्वकं स्वशाखाकरोद्धृतमञ्जरीरूपपुष्पाञ्जलिभिः राघवमर्चयिष्यन्ति—ती.

स हि शूरो महाबाहुः पुत्रो दशरथस्य च ।
*पुरा भवति [1] नोऽदूरात् अनुगच्छाम राघवम् ॥ १६ ॥

राघवः नः—अस्माकं अदूराद्भवति पुरा ; 'यावत्पुरा—' इति लट् ; आसन्नो भविष्यति किम् ? आसन्नं यं राममनुगच्छाम, प्रार्थने लोट् ॥ १६ ॥

पादच्छाया [2] सुखा भर्तुः तादृशस्य महात्मनः ।
स हि नाथो जनस्यास्य † स गतिस्स परायणम् ॥ १७ ॥

महात्मनस्तस्य पादच्छाया—छायेति अनुग्रहहेतुभूता सेवा लक्ष्यते, श्रीरामचन्द्रपादसेवैव नस्सुखा—परमसुखसाधनभूता गतिः—शरणम् । परायणं—शाश्वतप्रतिष्ठा ॥ १७ ॥

वयं परिचरिष्यामः सीतां, यूयं तु राघवम् ।
इति पौरस्त्रियो भर्तॄन् दुःखार्ता[3]स्तत्तदब्रुवन् ॥ १८ ॥

वयमिति । स्त्रिय इत्यर्थः । यूयं—पुरुषाः ॥ १८ ॥

युष्माकं राघवोऽरण्ये योगक्षेमं विधास्यति ।
सीता नारीजनस्यास्य योगक्षेमं करिष्यति ॥ १९ ॥

‡ को न्वनेनाप्रतीतेन सोत्कण्ठितजनेन च ।
संप्रीयेतामनोज्ञेन वासेन हृतचेतसा ॥ २० ॥

---

* दूरात् पुरा भवति—भविष्यति, ततः पूर्वमेवानुगच्छाम इत्यर्थः—गो. अदूरात् पुरा भवति—आसन्नो भविष्यति, अतो राघवमनुगच्छाम—ति., ती. † गतिः—शरणं, परायणं—परमप्राप्यं 'पराभीष्टे परायणपदं विदुः' इति शाश्वतः । तथा च, उपायः उपेयश्चेति द्वयमपि राम एवेत्यर्थः । ‡ अप्रतीतेन अप्रशस्तेन—हर्षशून्येन वा—'ख्याते हृष्टे प्रतीतः' इत्यमरः ।

[1] नो दूरात्—ङ. [2] सुखोदर्का—ङ. [3] स्तास्तदाब्रुवन्—ङ.

अनेन वासेन को नु संप्रीयेतेति योजना। अप्रतीतेन—असुखेन। सशोकस्मरणं—उत्कण्ठा, सोत्कण्ठतया कृतः सोत्कण्ठितः, तादृशः जनः यस्मिन्नयोध्यावासे स तथा। हृतचेतसा—चित्तनाशकेन ॥ २० ॥

**कैकेय्या यदि चेत् राज्यं स्यादधर्म्यमनाथवत्।**
**न हि नो जीवितेनार्थः कुतः पुत्रैः कुतो धनैः॥ २१ ॥**

अधर्म्यं—धर्मापेतम् ॥ २१ ॥

**यया पुत्रश्च भर्ता च त्यक्तावैश्वर्यकारणात्।**
**कं सा *परिहरेदन्यं कैकेयी कुलपांसनी ॥ २२ ॥**

पुत्रश्चेति। राम इत्यर्थः। परिहरेत्—रक्षेत् ॥ २२ ॥

**कैकेय्या न वयं राज्ये [1]भृतका निवसेमहि।**
**†जीवन्त्या जातु जीवन्त्यः पुत्रैरपि शपामहे ॥ २३ ॥**

जीवन्त्याः कैकेय्या राज्ये तस्या भृतकाः—भृत्यभूताः जीवन्त्यस्सत्यः न निवसेमहि, न वसेमेति यावत्। इममर्थं प्रति पुत्रैरपि शपामहे, शप उपालंभे ॥ २३ ॥

**या पुत्रं पार्थिवेन्द्रस्य प्रवासयति निर्घृणा।**
**कस्तां प्राप्य सुखं जीवेत् अधर्म्यां दुष्टचारिणीम् ॥ २४ ॥**

तां अधर्म्यां—धर्मापेताम् ॥ २४ ॥

---

* परिहरेत्-परित्यजेत्, स्वक्रूरचिन्तात इति शेषः। † अस्मिन्नगरे कैकेय्यावयोर्मध्ये अन्यतरजीवनमेव भवति इति भावः।

[1] भृतकामा—ङ.

उपद्रुतमिदं सर्वं [1] अनालम्बमनायकम् ।
कैकेय्या हि कृते सर्वं विनाशमुपयास्यति ॥ २५ ॥

कृते—निमित्तम् ॥ २५ ॥

न हि [2] प्रव्रजिते रामे जीविष्यति महीपतिः ।
मृते दशरथे व्यक्तं [3] विलापस्तदनन्तरम् ॥ २६ ॥
ते विषं पिबतालोड्य क्षीणपुण्याः सुदुर्गताः ।
राघवं वाऽनुगच्छध्वं अश्रुतिं वापि गच्छत ॥ २७ ॥

ते यूयं पुरुषा इत्यर्थः । *सस्त्रीका इति शेषः । अश्रुतिं वापि गच्छत—यस्मिन् देशे प्राप्ते युष्मद्वृत्तान्तश्रवणमपि न भवति, तादृशं दूरदेशं वा गच्छतेत्यर्थः ॥ २७ ॥

मिथ्याप्रव्राजितो रामः [4] सभार्यः सहलक्ष्मणः ।
भरते [5] सन्निविष्टास्मः सौनिके पशवो यथा ॥ २८ ॥

मिथ्याप्रव्राजितः—मिथ्यावरकल्पनया प्रव्राजितोऽभूत् रामः । ततः कैकेयीवशगे भरते राजनि सति, सौनिके—सूना—पशुविशसनस्थानं, तत्र भवः सौनिकः, तत्समीपे पशवो यथा निश्चितप्राणपीडास्तिष्ठन्ति तद्वत्सन्निविष्टास्म, लुट्, अगुणश्छान्दसः ; स्म इति वा पदम् । विषपानादिव्यापारान्यतमाश्रयेण इहावस्थानपरिहाराभाव इति शेषः॥२८॥

---

* भर्तॄन् वीक्ष्य विषं पिबतेत्युक्तिः सतीनामसंगतेति मत्वा इदमुक्तम् । परन्तु अश्रुतिं वापि गच्छतेति कथनं कथं ? अतः विषादमूर्छितानामयमर्थस्मरणशून्यः उपालंभ इति स्वरसम् ।

[1] अनालंबं—च. (अयशं—ति). [2] प्रव्राजिते—ङ. [3] विलोपः—च.
[4] ससीतः—ङ. [5] सन्निविष्टाः स्म—ङ., सन्निबद्धाः स्मः—च.

पूर्णचन्द्राननः श्यामः गूढजत्रुररिन्दमः।
आजानुबाहुः पद्माक्षः रामो लक्ष्मणपूर्वजः ॥ २९ ॥

* पूर्वाभिभाषी [1] मधुरः सत्यवादी महाबलः।
सौम्यश्च सर्वलोकस्य चन्द्रवत् प्रियदर्शनः ॥ ३० ॥

नूनं पुरुषशार्दूलो मत्तमातङ्गविक्रमः।
शोभयिष्यत्यरण्यानि विचरन् स महारथः ॥ ३१ ॥

तास्तथा विलपन्त्यस्तु नगरे नागराः स्त्रियः।
चुक्रुशुः [2] दुःखसन्तप्ताः † मृत्योरिव [3] भयागमे ॥ ३२ ॥

इत्येवं विलपन्तीनां स्त्रीणां वेश्मसु राघवम्।
जगामास्तं दिनकरः रजनी चाभ्यवर्तत ॥ ३३ ॥

नष्टज्वलन [4] संपाता [5] शान्ताध्ययनसत्कथा।
तिमिरेणाभिलिप्तेव सा तदा नगरी बभौ ॥ ३४ ॥

नष्टः ज्वलनानां संपातः—होमाय सङ्गमः यस्यां सा तथा। शान्तानि अध्ययनानि सत्कथाः—पुण्यकथाश्च यस्यां सा तथा ॥ ३४ ॥

उपशान्तवणिक्पण्या नष्टहर्षा निराश्रया।
अयोध्या नगरी चासीत् नष्टतारमिवाम्बरम् ॥ ३५ ॥

निराश्रयेति। रामाश्रयराहित्यात् निराश्रया ॥ ३५ ॥

[6] तथा स्त्रियो रामनिमित्तमातुराः
　यथा सुते भ्रातरि वा विवासिते।

---

* स्वसौलभ्यसौशील्याद्यतिशयात् परप्रश्नादिकं न प्रतीक्षत इत्यर्थः। † मृत्योः भयागम इव—मृत्युसम्बन्धिभयप्राप्ताविवेत्यर्थः।

[1] मधुरं—ङ. [2] भृशसन्त—ङ. [3] समागमे—ङ. [4] संतापा—च. [5] प्रशान्ताध्याय—ङ. [6] तदा—च.

विलप्य दीना रुरुदुर्विचेतसः
*[1] सुतैर्हि तासामधिको हि सोऽभवत् ॥ ३६ ॥

स विलपस्तासां सुतैः-सुतवियोगहेतुकैरप्यधिकोऽभूत् ॥३६॥

प्रशान्तगीतोत्सवनृत्तवादना
विभ्रष्टहर्षा पिहितापणोदया ।
[2] तदा ह्ययोध्या नगरी बभूव सा
महार्णवः † संक्षपितोदको यथा ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टचत्वारिंश: सर्गः

---

छाग (३७) मानः सर्गः ॥ ३७ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे अष्टचत्वारिंश: सर्गः

---

## एकोनपञ्चाशः सर्गः

[जानपदाक्रोशः]

रामोऽपि रात्रिशेषेण तेनैव महदन्तरम् ।
जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ॥ १ ॥

एवं पौरव्यापारमुपवर्ण्य यथाप्राप्तरामवनप्रयाणदर्शनम् । रामोऽपीत्यादि । तेनैव रात्रिशेषेणेति । यद्रात्रिशेषे द्विजाः सुप्ताः अतिसंहिताः, तद्रात्रिशेषेणैवेत्यर्थः । महत् अन्तरं-‡ अवकाशं जगाम-अतिवाहितवानिति यावत् ॥ १ ॥

---

* सुतैः-सुतेभ्यः सः-रामः अधिकः-प्रियतरः । † संक्षपितोदकः-संशोषितोदकः । ‡ महद्दूरमित्यर्थः ।

[1] सुताद्धि-ङ. [2] तथा-ङ.

तथैव गच्छतस्तस्य व्यपायाद्रजनी शुभा ।
उपास्य स शिवां सन्ध्यां * विषयान्तं व्यगाहत ॥ २ ॥

ग्रामान् विकृष्टसीमान्तान् पुष्पितानि वनानि च ।
[1] पश्यन्नतिययौ शीघ्रं [2] शरैरिव हयोत्तमैः ॥ ३ ॥

शरैरिवेति । † शरवेगैरिवोपलक्षितैरित्यर्थः ॥ ३ ॥

[3] शृण्वन् वाचो मनुष्याणां ‡ ग्रामसंवासवासिनाम् ।
राजानं धिक् दशरथं कामस्य वशमास्थितम् ॥ ४ ॥

ग्रामरूपः संवासः—ग्रामसंवासः ॥ ४ ॥

हा नृशंसाऽद्य कैकेयी पापा पापानुबन्धिनी ।
तीक्ष्णा संभिन्नमर्यादा [4] तीक्ष्णकर्मणि वर्तते ॥ ५ ॥

या पुत्रमीदृशं राज्ञः प्रवासयति धार्मिकम् ।
[5] वनवासे महाप्राज्ञं सानुक्रोशं जितेन्द्रियम् ॥ ६ ॥

ईदृशमिति । कल्याणगुणैकतानमित्यर्थः ॥ ६ ॥

अहो दशरथो राजा निस्स्नेहः स्वसुतं प्रियम् ।
प्रजानामनघं रामं परित्यक्तुमिहेच्छति ॥ ७ ॥

एता वाचो मनुष्याणां ग्रामसंवासवासिनाम् ।
शृण्वन्नतिययौ वीरः कोसलान् कोसलेश्वरः ॥ ८ ॥

अतिययौ—अतिक्रम्यागच्छत् ॥ ८ ॥

---

* विषयान्तं—उत्तरकोसलस्य दक्षिणप्रदेशसीमानमित्यर्थः । † शनैरिति, पाठे-शनैरिव जानन्, गमनस्यातिवेगत्वेऽपि प्रवासे आसक्त्यतिशयात् तथा जानन्निति भावः । ‡ ग्रामाः—महाग्रामाः, संवासाः—अल्पग्रामाः—गो.

[1] पश्यन्नपि—ङ. [3] शनैरिव—ङ. [3] एतदनन्तरं ' विगर्हिता च कैकेयी क्रूरा क्रूरेण कर्मणा ' इत्यधिकं—ङ. [4] क्षुद्र—ङ. [5] एतदनन्तरं—कथं नाम महाभागा सीता जनकनन्दिनी । सदा सुखेष्वभिरता दुःखान्यनुभविष्यति ॥ इत्यधिकम्—ङ.

ततो वेदश्रुतिं नाम [1] शिववारिवहां नदीम् ।
उत्तीर्याभिमुखः प्रायात् अगस्त्याध्युषितां दिशम् ॥ ९ ॥

शिवानि वारीणि यस्यास्सा—शिववारिः ॥ ९ ॥

गत्वा तु सुचिरं कालं ततः शिवजलां नदीम् ।
गोमतीं गोयुतानूपां अतरत् सागरंगमाम् ॥ १० ॥

गोभिर्युताः आनूपाः—कच्छाः यस्यां सा तथा । सागरंगमामिति । 'गमेः सुप्युपसंख्यानं' इति खचि रूपम् ॥ १० ॥

गोमतीं चाप्यतिक्रम्य राघवः शीघ्रगैर्हयैः ।
मयूरहंसाभिरुतां ततार स्यन्दिकां नदीम् ॥ ११ ॥

स्यन्दिकां—स्यन्दिकाख्याम् ॥ ११ ॥

स महीं मनुना राज्ञा दत्तामिक्ष्वाकवे पुरा ।
स्फीतां राष्ट्रावृतां रामः वैदेहीमन्वदर्शयत् ॥ १२ ॥

स महीमिति । अतीतस्यन्दिकानदीकः स रामः महीं—स्यन्दिकासीमाककोसलदेशं राष्ट्रावृतां—अवान्तरजनपदावृतां, वैदेहीमन्वदर्शयत्—एतत्सीमाकोऽयं कोसलदेशो मनुना—अस्मद्वंशकूटस्थेन अस्मद्वंश्यायेक्ष्वाकवे दत्त इति स्वदेशसीमाप्रदर्शनपूर्वकं कथयामासेत्यर्थः । यद्यपीक्ष्वाकुप्रमुखाः सार्वभौमाः, तथापि तेषां स्वजन्मभूमिस्वदेशस्वराजधानीत्वाद्यभिमानास्पदत्वं अयोध्यादेशस्यैव । तर्हि सार्वभौमत्वं कथम् ? तत्तद्देशसिंहासनपीठाधिष्ठातृमकुटवर्धनमहाराजपरिपालनीयस्ववशासनत्वं, सर्वतः करग्राहित्वमेव च । न तु कालीवत् तत्तद्देशराजपीठं अबलमस्तीति कृत्वा विनाशयन्ति, अपि तु प्रतिष्ठाप-

[1] शिवतोय—ङ.

यन्त्येव । तथा ह्युक्तम्—'राजवंशान् शतगुणान् स्थापयिष्यति राघवः' इति ॥ १२ ॥

सूत! इत्येव चाभाष्य सारथिं तमभीक्ष्णशः ।
हंसमत्तस्वरः श्रीमान् उवाच पुरुषोत्तमः ॥ १३ ॥
कदाऽहं पुनरागम्य सरय्वाः पुष्पिते वने ।
मृगयां पर्यटिष्यामि मात्रा पित्रा च सम्मतः ॥ १४ ॥

पुनरागम्येति । अतिवाहितं स्वदेशमिति शेषः ॥ १४ ॥

राजर्षीणां हि लोकेऽस्मिन् रत्यर्थं मृगयां वने ।
काले वृतां तां मनुजैः धन्विनामभिकाङ्क्षिताम् ॥ १५ ॥

कदा मृगयां पर्यटिष्यामीति कथमिदं व्यसनमिच्छसीत्यत्राह—राजर्षीणामित्यादि । काले-मृगयोचितग्रीष्मादिकाले धन्विभिर्मनुजैः वृतां-तैरभिकाङ्क्षितां वने मृगयां राजर्षीणामपि अस्मिन् लोके रत्यर्थं हि स्मरन्तीति शेषः । इयमेव स्मृतिः-हिशब्देन प्रसिद्धिवाचिना द्योत्यते । तर्हि 'स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः । अर्थस्य दूषणं चेति राज्ञां व्यसनसप्तकम्' इत्युक्तलक्षणव्यसननिषेधः कथम्? तदाभीक्ष्ण्यप्रवृत्तेरेव प्रजाचिन्तादिवैमुख्यकारिण्या निषेधः, न तूक्तव्यसन मात्रस्य, 'तस्याः सभाया मध्ये देवनमुद्धृत्याबोक्ष्याक्षान्निर्वपेत्' इत्यादितो द्यूतादेश्शास्त्रेण स्वकृत्याविरोधिनोऽव्यसनस्य लीलार्थमनुमतत्वात् ॥

नात्यर्थमभिकाङ्क्षामि मृगयां सरयूवने ।
रतिर्ह्येषाऽतुला लोके राजर्षिगणसम्मता ॥ १६ ॥

तदेवाह—नात्यर्थमित्यादि । एषा-कदाचित् मृगया यथाकालप्रवृत्तिः राजर्षिगणसम्मता अतुला रतिः-क्रीडा । अस्या अप्यनुमतिः 'गजादयो न हन्तव्याः मृगयायां' इत्यादिना शास्त्रेण । सामान्यतो मृगयाऽनुमता ॥ १६ ॥

स तमध्वानमैक्ष्वाकः सूतं मधुरया गिरा ।
तं तमर्थमभिप्रेत्य ययौ वाक्यमुदीरयन् ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकोनपञ्चाशः सर्गः

---

तं तमर्थमभिप्रेत्य—विषयीकृत्य उदीरयन् तमध्वानमतिययौ । तर्क(१६)मानः सर्गः (?) ॥ १७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकोनपञ्चाशः सर्गः

---

## पञ्चाशः सर्गः

[गुहसङ्गमः]

विशालान् कोसलान् रम्यान् यात्वा लक्ष्मणपूर्वजः ।
अयोध्याभिमुखो धीमान् प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥

एवं स्वदेशातिवाहनानन्तरं जन्मभूमिप्रयुक्तस्नेहस्वपुरदेवतामापृच्छय शनैर्गङ्गाप्राप्तिपूर्वकं गुहसम्बन्धः । विशालानित्यादि । कोसलानिति । अतीत्येति शेषः ॥ १ ॥

*आपृच्छे त्वां पुरिश्रेष्ठे काकुत्स्थपरिपालिते !
दैवतानि च यानि त्वां [1] पालितानि वसन्ति च ॥ २ ॥
निवृत्तवनवासस्त्वां अनृणो जगतीपतेः ।
पुनर्द्रक्ष्यामि मात्रा च पित्रा च सह सङ्गतः ॥ ३ ॥

हे पुरिश्रेष्ठे—अयोध्याधिदेवते इति यावत् । यानि च दैवतानि त्वया पालितानि त्वयि वसन्ति शिवविष्णवादीनि, तानि त्वां च पुनर्द्रक्ष्यामीत्यन्वयः ॥ ३ ॥

---

* आपृच्छे—अनुज्ञां प्रार्थयामि ।

[1] पालयन्त्या—सर्वत्र.

ततो रुधिरताम्राक्षः भुजमुद्यम्य दक्षिणम् ।
अश्रुपूर्णमुखो दीनोऽब्रवीज्जानपदं जनम् ॥ ४ ॥

जानपदं—जनपदे भवं जानपदम्, स्वदर्शनार्थं तत्रागतमिति शेषः ॥ ४ ॥

अनुक्रोशो दया चैव यथार्हं मयि वः कृतः ।
*चिरं दुःखस्य पापीयो गम्यतामर्थसिद्धये ॥ ५ ॥

यथार्हं मयि कृतः यः अनुक्रोशः—अनुतापः दया च अतिपापीयः तदिदं सर्वं वः चिरं दुःखस्य संपन्नं बत ! किं कुर्म इदानीम् ? गम्यतामर्थसिद्धये—प्रकृतार्थसिद्धये, साधयाम इति शेषः ॥ ५ ॥

तेऽभिवाद्य महात्मानं कृत्वा चापि प्रदक्षिणम् ।
विलपन्तो नरा घोरं व्यतिष्ठन्त क्वचित् क्वचित् ॥ ६ ॥

त इति । एवं रामेण विसर्जिता इत्यर्थः ॥ ६ ॥

तथा विलपतां तेषां †अतृप्तानां च राघवः ।
अचक्षुर्विषयं प्रायात् यथाऽर्कः क्षणदामुखे ॥ ७ ॥

अतृप्तानामिति । दर्शनतृप्तिरहितानामित्यर्थः । क्षणदामुखे—सायंकाले ॥ ७ ॥

ततो धान्यधनोपेतान् दानशीलजनान् शिवान् ।
अकुताश्चिद्भयान् ‡रम्यांश्चैत्ययूपसमावृतान् ॥ ८ ॥

एवं कोसलजनपदप्रजानिवर्तनानन्तरं वैभववर्णनपूर्वकं तदतिवाहः प्रदर्श्यते—ततो धान्येत्यादि । दानशीला नरा येषु ते तथा । चैत्ये-ग्रामाद्बहिःप्रदेशे प्रतिष्ठापितैः यूपैः समावृतास्तथा ॥ ८ ॥

---

* दुःखस्य चिरं—विलम्बः—पापीयः—न युक्तमित्यर्थः । † स्वेषामनुगमनानभ्युपगमात् अतृप्तानाम् । ‡ चैत्यं—अग्निशाला ।

उद्यानाम्रवणोपेतान् संपन्नसलिलाशयान् ।
तुष्टपुष्टजनाकीर्णान् [1] गोकुलाकुलसेवितान् ॥ ९ ॥

* गोकुलैः आकुलतया—निबिडतया सेवितास्तथा ॥ ९ ॥

† [2] रक्षणीयान् नरेन्द्राणां ब्रह्मघोषानुनादितान् ।
रथेन पुरुषव्याघ्रः कोसलानत्यवर्तत ॥ १० ॥

रक्षणीयान् नरेन्द्राणामिति । 'कृत्यानां कर्तरि वा' इति षष्ठी, नरेन्द्रैरित्यर्थः ॥ १० ॥

‡ मध्येन मुदितं स्फीतं रम्योद्यानसमाकुलम् ।
राज्यं भोग्यं नरेन्द्राणां ययौ धृतिमतां वरः ॥ ११ ॥

राज्यं मध्येन ययौ—मध्यगत्यवलम्बनेन ययौ, स्वदेशस्वजनानुनयाशङ्काभावात् शनैर्देशसौभाग्यं पश्यन् अगमदित्यर्थः ॥ ११ ॥

तत्र त्रिपथगां दिव्यां [3] शिवतोयामशैवलाम् ।
ददर्श राघवो गङ्गां [4] पुण्यामृषिनिषेविताम् ॥ १२ ॥

तत्रेति । अयोध्याराज्याद्दक्षिणराज्य इत्यर्थः ॥ १२ ॥

आश्रमैरविदूरस्थैः श्रीमद्भिस्समलङ्कृताम् ।
कालेऽप्सरोभिर्हृष्टाभिः सेविताम्भोह्रदां शिवाम् ॥ १३ ॥

काले क्रीडाकाल इति यावत् । सेविताः अम्भःपूर्णह्रदा यस्यां सा तथा ॥ १३ ॥

---

* गोकुलैराकुलं यथा तथा सेविता इति विग्रहः । † नरेन्द्राणां लक्षणीयान्, एकैकशो नगरसदृशत्वेन लक्षयितुं योग्यान्—**गो.**, **ती.** । नरेन्द्राणां रक्षणीयान्, ग्रामश इति शेषः । नरेन्द्ररक्षणयोग्यैकग्रामान्, इतरनरेन्द्रराज्यतुल्यैकग्रामानिति यावत्—**ति.** । ‡ मध्येन—मार्गेण—**गो.**

[1] सदा गोकुल—**ङ.** [2] लक्षणीयान्—**ङ.** [3] शीततोया—**च.** [4] रम्या—**च.**

देवदानवगन्धर्वैः किन्नरैरुपशोभिताम् ।
[1]नागगन्धर्वपत्नीभिः सेवितां *सततं [2]शिवाम् ॥ १४ ॥

नागपत्न्यः, गन्धर्वपत्न्यश्च तथा ॥ १४ ॥

देवाक्रीड[3]शतोपेतां देवोद्यान[4]युतां नदीम् ।
देवार्थमाकाश[5]गतां विख्यातां देवपद्मिनीम् ॥ १५ ॥

देवानामाक्रीडैः—क्रीडापर्वतशतैः हिमवदादावुभयतीरवर्तिभिः उपेतां । प्राग्वदेव-देवोद्यानयुतां । देवार्थं-देवानां स्नानपानादिप्रयोजनाय तत्प्रार्थनया आकाशगतां । तत्र प्रदेशे देवपद्मिनीं—देवः—भगवान् हिरण्यगर्भः, तदीयं पद्मं—स्वर्णपद्मं, तदर्थं तद्वर्तीमित्यर्थः ॥ १५ ॥

†जलाघाताट्टहासोग्रां फेननिर्मलहासिनीम् ।
क्वचिद्वेणीकृतजलां क्वचिदावर्तशोभिताम् ॥ १६ ॥

शिलादिपतनस्थले योऽयं जलाघातः सशब्दः—तद्रूपेणाट्टहासेन उग्रां ; सशब्दः शूरादिक्रियमाणः हासः—अट्टहासः । फेनरूपः निर्मलः हासः मन्दस्मितरूपः अस्या अस्तीति तथा । एवमादिस्त्रीसमाधिवर्णनं प्रवाहरूपिण्या अपि गङ्गायाः ॥ १६ ॥

क्वचित् स्तिमितगम्भीरां क्वचिद्वेगजलाकुलाम् ।
क्वचित् गम्भीरनिर्घोषां क्वचिद्भैरवनिस्वनाम् ॥ १७ ॥

स्तिमिता—निश्चला गम्भीरा—अगाधा च तथा । गम्भीरनिर्घोषो मृदङ्गादेरिव, भैरवनिस्वनस्त्वशन्यादेरिव ॥ १७ ॥

---

* 'भुक्त्वा वा यदि वाऽभुक्त्वा रात्रौ वा यदि वा दिवा । न कालनियमः कश्चित् गङ्गां प्राप्य सरिद्वराम् । इति वचनात् सततं शुभाम् ॥' ति. † गङ्गां स्त्रीत्वेन रूपयति—जलाघातेत्यादिना—गो.

[1] नाना—ङ. [2] शुभां—ङ. [3] शताकीर्णां—ङ., च. [4] शताद्युताम्—ङ.
[5] गमां—ङ.

* देवसङ्घाप्लुतजलां निर्मलोत्पलशोभिताम् ।
† क्वचिदाभोगपुलिनां क्वचिन्निर्मलवालुकाम् ॥ १८ ॥

आभोगपुलिनां—विशालसैकताम् । वालुका—सिकता ॥ १८ ॥

हंससारससङ्घुष्टां चक्रवाकोपकूजिताम् ।
सदा मत्तैश्च विहगैः अभिपन्नामनिन्दिताम् ॥ १९ ॥

‡ क्वचित्तीररुहैर्वृक्षैः मालाभिरुपशोभिताम् ।
क्वचित् फुल्लोत्पलच्छन्नां क्वचित्पद्मवनाकुलाम् ॥ २० ॥
क्वचित् कुमुदषण्डैश्च कुड्मलैरुपशोभिताम् ।

कुड्मलैः कुमुदषण्डैरिति योजना ॥ २० ॥

नानापुष्परजोध्वस्तां समदामिव च क्वचित् ॥ २१ ॥

नानापुष्परजसां ध्वस्तः—ध्वंसः, भावे निष्ठा, यस्यां सा तथा । अतस्तादृशगुणवतीं समदां—मदसहितां प्रमदामिव स्थिताम् ॥ २१ ॥

व्यपेत[1]जलसङ्घातां मणिनिर्मलदर्शनाम् ।

व्यपेतजलसङ्घातां—उत्तीरप्रवाहरहितामिति यावत् । मणिः—मुक्तामणिः ॥

दिशागजैर्वनगजैः मत्तैश्च वरवारणैः ॥ २२ ॥
§ [2]देवौपवाह्यैश्च मुहुः सन्नादितवनान्तराम् ।

वरवारणैः—उत्तमगजैः । देवाः—राजानः तेषामौपवाह्यैः—[3]पौरगजैरिति यावत् ॥ २२ ॥

---

* आप्लवः—स्नानं 'आप्लाव आप्लवः स्नानं' इत्यमरः ; देवसङ्घैः आप्लुतं जलं यस्याः सा तथा । † 'आभोगः परिपूर्णता' इत्यमरः । ‡ मालाभिरिव स्थितैः वृक्षैरित्यन्वयः । § देवोपवाह्यैः—देवानां वाहनभूतैः—गो.

[1] मल—ङ, च. [2] देवराजोपवाह्यैः—च. [3] वर—ट.

प्रमदामिव यत्नेन भूषितां भूषणोत्तमैः ॥ २३ ॥
[1] फलमूलैः किसलयैः वृतां गुल्मैः द्विजैस्तथा ।

फलमूलैः किसलयैः—तदात्मकैरेव भूषणैः—अलङ्कारैः भूषिताम् ॥

शिंशुमारैश्च नक्रैश्च भुजङ्गैश्च निषेविताम् ॥ २४ ॥
* विष्णुपादच्युतां दिव्यां अपापां पापनाशिनीम् ।

'शिंशुमारस्त्वम्बुकपिः' ॥ २४ ॥

तां शङ्करजटाजूटात् भ्रष्टां † सागरतेजसा ॥ २५ ॥
समुद्रमहिषीं गङ्गां सारसक्रौञ्चनादिताम् ।
आससाद महाबाहुः ‡ शृङ्गबेरपुरं प्रति ॥ २६ ॥

शृङ्गबेरपुरं प्रतीति । प्रस्थितामिति शेषः ॥ २६ ॥

तामूर्मिकलिलावर्तां अन्ववेक्ष्य महारथः ।
सुमन्त्रमब्रवीत् सूतं इहैवाद्य वसामहे ॥ २७ ॥

ऊर्मिभिः कलिलाः—संपृक्ताः आवर्ताः यस्यां सा तथा ॥ २७ ॥

अविदूरादयं नद्याः बहुपुष्पप्रवालवान् ।
सुमहान् इङ्गुदीवृक्षः वसामोऽत्रैव, सारथे ! ॥ २८ ॥

नद्या अविदूराद्धेतोः बहुपुष्पप्रवालवान् । 'इङ्गुदी तापसतरुः' करुङ्कुन्नम् (?) ॥ २८ ॥

---

* विष्णुपादस्पर्शेन ब्रह्मलोकात् ब्रह्माण्डबाह्यजलदेशाच्च च्युतां, अपापां—कर्मनाशादिवत् केनापि प्रकारेण पापजनकत्वाभाववतीमिति कतकः—इति तिलके उद्धृतं वर्तते। परन्त्वस्मदुपलब्धमातृकायां अयं भागो नोपलभ्यते । † सागरः—भगीरथः, तस्य तेजसा—महिम्ना भ्रष्टामित्यन्वयः । ‡ शृङ्गबेरपुरं प्रतिगच्छन्, यद्वा शृङ्गबेरपुरसमीपे—गो.

[1] फलैः पुष्पैः—ङ.

द्रक्ष्यामः सरितां श्रेष्ठां सम्मान्यसलिलां शिवाम् ।
देवदानवगन्धर्वमृगमानुषपक्षिणाम् ॥ २९ ॥

लक्ष्मणश्च सुमन्त्रश्च बाढमित्येव राघवम् ।
उक्त्वा तमिङ्गुदीवृक्षं तत्रोपययतुर्हयैः ॥ ३० ॥

तं इङ्गुदीवृक्षं तत्र—गङ्गातीरे प्रतिष्ठितमुद्दिश्य प्रवर्तितैर्हयैः ययतुः ॥

रामोऽभीयाय तं रम्यं वृक्षमिक्ष्वाकुनन्दनः ।
रथादवातरत्तस्मात् सभार्यः सहलक्ष्मणः ॥ ३१ ॥

सुमन्त्रोऽप्यवतीर्यास्मात् मोचयित्वा हयोत्तमान् ।
वृक्षमूलगतं रामं उपतस्थे कृताञ्जलिः ॥ ३२ ॥

तत्र राजा गुहो नाम रामस्यात्मसमः सखा ।
निषादजात्यो बलवान् स्थपतिश्चेति विश्रुतः ॥ ३३ ॥

आत्मसमः—प्राणसमः । निषादजातौ भवः—निषादजात्यः, दिगादित्वात् यत् । बलवान्—प्राणीयबलवान्, चतुरङ्गबलवांश्च । तदेतदुच्यते—स्थपतिरिति । स्थपतिः—अधिपतिः—निषादबलाधिपतिः । 'स्थपतिः पुनः । स्थापत्येऽधिपतौ तक्ष्णि' इति वैजयन्ती । एवञ्चास्य महाप्रभुत्वात् मूलभृतकादिषड्विधबलसङ्ग्रहस्य च राजधर्मत्वात् अस्य गुहस्य चाटविकमहाबलवत्त्वात् एतद्दशायामेव तेनाटविकबलेन चातिप्रयोजनत्वात् सख्यं—स्नेहो युक्त एव । ततश्च 'हीनप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम्' इत्युपपातकपरिगणनं ब्राह्मणविषयम् ॥ ३३ ॥

स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतम् ।
वृद्धैः परिवृतोऽमात्यैः ज्ञातिभिश्चाप्युपागतः ॥ ३४ ॥

विषयं—स्वदेशम् ॥ ३४ ॥

ततो निषादाधिपतिं दृष्ट्वा दूरादुपस्थितम् ।
सह सौमित्रिणा रामः समागच्छत् गुहेन सः ॥ ३५ ॥

समागच्छत्—सङ्गतोऽभूत् ॥ ३५ ॥

तमार्तः संपरिष्वज्य गुहो राघवमब्रवीत् ।
यथाऽयोध्या तथेदं ते, राम! किं करवाणि ते ॥ ३६ ॥
ईदृशं हि, महाबाहो! कः प्राप्स्यत्यातिथिं प्रियम् ।

इदमिति । अस्मत्पुरमिति यावत् ॥ ३६ ॥

ततो गुणवदन्नाद्यं उपादाय पृथग्विधम् ॥ ३७ ॥
अर्घ्यं चोपानयत् क्षिप्रं वाक्यं चेदमुवाच ह ।

अन्नं च तत् आद्यं च, ऋहलोर्ण्यत् ॥ ३७ ॥

स्वागतं ते, महाबाहो! तवेयमखिला मही ॥ ३८ ॥
वयं प्रेष्या भवान् भर्ता साधु राज्यं प्रशाधि नः ।
भक्ष्यं भोज्यं च पेयं च लेह्यं चेदमुपस्थितम् ॥ ३९ ॥
शयनानि च मुख्यानि वाजिनां खादनं च ते ।

वाजिनां खादनं—अश्वघास इति यावत् ॥ ३९ ॥

गुहमेवं ब्रुवाणं तु राघवः प्रत्युवाच ह ॥ ४० ॥
अर्चिताश्चैव हृष्टाश्च भवता सर्वथा वयम् ।
पद्भ्यामभिगमाच्चैव स्नेहसन्दर्शनेन च ॥ ४१ ॥

पद्भ्यामभिगमात्—स्वपुरादारभ्य स्वावासेङ्गुदीवृक्षपर्यन्तं महाप्रभुरपि सन् यतः पद्भ्यामभिगतोऽसि, यतश्च 'तवेयमखिला मही' इत्यादिना स्नेहं च दर्शयसि, तेन हेतुना वयं सर्वथा त्वयाऽर्चिता एवेति प्रत्यभाषतेत्यन्वयः ॥ ४१ ॥

भुजाभ्यां * साधु [1]पीनाभ्यां पीडयन् वाक्यमब्रवीत् ॥

दिष्ट्या त्वां, गुह! पश्यामि ह्यरोगं सह बान्धवैः ।
अपि ते कुशलं राष्ट्रे मित्रेषु च [2]वनेषु च ॥ ४३ ॥

वनेषु च ते कुशलं इति प्रश्नः तस्याटविकत्वात् ॥ ४३ ॥

[3]यत्त्विदं भवता किञ्चित् प्रीत्या समुपकल्पितम् ।
सर्वं तदनुजानामि † न हि वर्ते प्रतिग्रहे ॥ ४४ ॥

कुशचीराजिनधरं फलमूलाशिनं च माम् ।
विद्धि प्रणिहितं धर्मे तापसं वनगोचरम् ॥ ४५ ॥

धर्मे प्रणिहितमिति । पितृवाक्यपरिपालनलक्षणे धर्मे सावधानम् ॥

अश्वानां खादनेनाहं अर्थी नान्येन केन चित् ।
एतावताऽत्रभवता भविष्यामि सुपूजितः ॥ ४६ ॥

एते हि दयिता राज्ञः पितुर्दशरथस्य मे ।
एतैस्तु[4]विहितैरश्वैः भविष्याम्यहमर्चितः ॥ ४७ ॥

एते हीति । अश्वा इति यावत् ॥ ४७ ॥

‡ अश्वानां प्रतिपानं च खादनं चैव सोऽन्वशात् ।
गुहस्तत्रैव पुरुषान् त्वरितं दीयतामिति ॥ ४८ ॥

---

* साधु पीडयन्–सम्यक् आलिङ्गन् । † प्रतिग्रहे नेदानीं ममाधिकार इति भावः । तदेव विवृणोति—कुशचीरेत्यादि । ‡ एतद्व्याख्यानरीत्या इदं पूर्वार्धमपि रामसम्बन्धि । अत एवोत्तरार्धे क्रियापदाभावात् 'आदिदेशेति शेषः' इति व्याख्यायि ।

[1] वृत्ताभ्यां–च. [2] धनेषु–ङ. [3] यद्विधं–ङ. [4] सुखितैः–ङ.

प्रतिपानमिति। कवलदानानन्तरं राजौपवाह्यजात्याश्वानां यत् क्षीरादिकं प्रतिपाय्यते तत् प्रतिपानम्। दीयतामिति। आदि- देशेति शेषः ॥ ४८॥

ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम्।
जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ॥ ४९ ॥

तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः।
सभार्यस्य ततोऽभ्येत्य तस्थौ वृक्षमुपाश्रितः ॥ ५० ॥

गुहोऽपि सह सूतेन सौमित्रिमनुभाषयन्।
अन्वजाग्रत् ततो रामं अप्रमत्तो धनुर्धरः ॥ ५१ ॥

अन्वजाग्रदिति शब्दः छान्दसः, अजाग इति यावत् ॥ ५१ ॥

तथा शयानस्य ततो[1]ऽस्य धीमतः
यशस्विनो दाशरथेर्महात्मनः।
अदृष्टदुःखस्य सुखोचितस्य सा
[2]तदा व्यतीयाय चिरेण शर्वरी ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चाशः सर्गः

---

चिरेणेति। भूशय्यावासनाभावतो निद्रानागमाच्चिरत्वप्रतिभासः। राम (५२) मानः सर्गः ॥ ५२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चाशः सर्गः

---

[1] यशस्विनः, मनस्विनः—ङ. च. [2] तदा व्यतीता सुचिरेण—च. तदा व्यतीयाय सुखेन—ङ.

## एकपञ्चाशः सर्गः

### [लक्ष्मणसन्तापः]

तं जाग्रतमदम्भेन भ्रातुरर्थाय लक्ष्मणम् ।
गुहः सन्तापसन्तप्तः राघवं वाक्यमब्रवीत् ॥ १ ॥

एवं रामे शयाने तद्रक्षायै जाग्रल्लक्ष्मणगुहसंवादः । तमित्यादि । भ्रातुरर्थाय—भ्रातृरक्षणार्थमित्यर्थः । राघवं—रघुकुलजम् ॥ १ ॥

इयं, तात! सुखा शय्या त्वदर्थमुपकल्पिता ।
प्रत्याश्वसिहि साध्वस्यां, राजपुत्र! यथासुखम् ॥ २ ॥

प्रत्याश्वसिहि, श्वसेर्हौ रुधादिभ्यः सार्वधातुक इट्—प्रत्याश्वस्तः—विश्रान्तो भवेत्यर्थः ॥ २ ॥

उचितोऽयं जनः सर्वः क्लेशानां त्वं सुखोचितः ।
गुप्त्यर्थं जागरिष्यामः काकुत्स्थस्य, वयं निशाम् ॥ ३ ॥

अयं जन इति । आटविकोऽहमित्यर्थः ॥ ३ ॥

न हि रामात् [1] प्रियतरो ममास्ति भुवि कश्चन ।
ब्रवीम्येतदहं सत्यं सत्येनैव च ते शपे ॥ ४ ॥

अस्य प्रसादादाशंसे लोकेऽस्मिन् सुमहद्यशः ।
धर्मावाप्तिं च विपुलां अर्थावाप्तिं च केवलाम् ॥ ५ ॥

आशंसे—प्रार्थये । अस्य प्रसादादेव केवलमिति योजना ॥ ५ ॥

सोऽहं प्रियतमं रामं शयानं सह सीतया ।
रक्षिष्यामि धनुष्पाणिः सर्वतो ज्ञातिभिस्सह ॥ ६ ॥

---

[1] प्रियतमः—ङ.

**न मेऽविदितं किञ्चित्[1] वनेऽस्मिन्निरतः सदा।**
**चतुरङ्गं ह्यपि बलं सुमहत् प्रसहेमहि ॥ ७॥**

निरतः—नित्यप्रतिष्ठः। प्रसहेमहीति। परकीयमिति शेषः॥

**लक्ष्मणस्तं तदोवाच रक्ष्यमाणास्त्वया[2]ऽनघ!**
**[*]नात्र भीता वयं सर्वे धर्ममेवानुपश्यता ॥ ८॥**

न वयं अत्र—देशे भीताः। अपि तु धर्ममेवानुपश्यता त्वया रक्ष्यमाणा भवामः—त्वद्धर्मपरिपालनाय त्वद्रक्षणामद्यानुजानीम इत्यर्थः॥

**कथं दाशरथौ भूमौ शयाने सह सीतया।**
**शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा॥ ९॥**

जीवितं वेति। विशिष्टभोजनादिना सुखजीवनमित्यर्थः॥ ९॥

**यो न देवासुरैस्सर्वैः शक्यः प्रसहितुं युधि।**
**तं पश्य[3] सुखसंविष्टं तृणेषु सह सीतया॥ १०॥**

प्रसहितुं। 'तिष्ठसह....' इति पाक्षिक इट्॥ १०॥

**[†]यो मन्त्रतपसा लब्धो विविधैश्च [4]परिश्रमैः।**
**एको दशरथ[5]स्येष्टः पुत्रः सदृशलक्षणः॥ ११॥**

मन्त्रतपसा—गायत्र्यादिमहामन्त्रानुष्ठानं, कृच्छ्रादिलक्षणं तपश्च तथा। एकः—मुख्यः। सदृशः लक्षणः यस्य स तथा॥ ११॥

---

* अत्र देशे वयं न भीताः; यतो धर्ममेवानुपश्यता त्वया रक्ष्यमाणा भवामः। तथाऽपि जागरणे कारणमाह—कथमिति—**ति.** † मन्त्रयुक्ततपसा . . . परिश्रमैः—यज्ञादिभिः—**गो.** श्लोकद्वयमेकं वाक्यम्।

[1] वनेऽस्मिंश्चरतः—**ङ. च. झ.** [2] न च—**ङ.** [3] सुखसंसुप्तं—**च.** [4] पराक्रमैः—**च.** [5] स्यैषः—**च.**

**अस्मिन् [1] प्रव्राजिते, राजा न चिरं वर्तयिष्यति ।**
**विधवा मेदिनी नूनं [2] क्षिप्रमेव भविष्यति ॥ १२ ॥**

धवः—पतिः ॥ १२ ॥

**विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः ।**
**निर्घोषोपरतं [3] चातो मन्ये [4] राजनिवेशनम् ॥ १३ ॥**

विनद्येत्यादि । श्रमेणोपरता भविष्यन्ति—एवं विनद्योपरतस्त्रीकं रामनिवेशनं चिरमनुभूताशनिघोषं सत् पश्चात् उपरतनिर्घोषमिव भविष्यतीति मन्ये ॥ १३ ॥

**कौसल्या चैव राजा च तथैव जननी मम ।**
**[5] नाशंसे यदि जीवन्ति सर्वे ते शर्वरीमिमाम् ॥ १४ ॥**

जीवन्तीति नाशंसे—वर्तमानसामीप्ये भविष्यति लट्, न जीविष्यन्तीत्येवावगच्छामि । यदि वा जीविष्यन्ति तदा इमामेव शर्वरीं जीविष्यन्ति ; नाभ्यधिकम्, अन्नपानाद्यस्वीकारात् परमदुःख-परितापाच्च ॥ १४ ॥

**जीवेदपि हि मे माता शत्रुघ्नस्यान्ववेक्षया ।**
**तद्दुःखं, [6] यत्तु कौसल्या वीरसूर्विनशिष्यति ॥ १५ ॥**

जीवेदपीति । एतद्राज्याः परमपीति शेषः । मे मातैव जीविष्यति शत्रुघ्नस्यान्ववेक्षया । कौसल्या विनशिष्यति पुत्रान्तरविहीन-त्वात् इति यत् तदेव मे दुःखम् ॥ १५ ॥

---

[1] प्रव्राजिते—ङ. [2] क्षिप्रमेषा—ङ. [3] तात—च. [4] रामनि—ङ.
[5] आशंसे—ङ. [6] यदि—स.

**अनुरक्तजनाकीर्णा [1]सुखा लोकप्रियावहा ।**
**राजव्यसन[2]संसृष्टा सा पुरी विनशिष्यति ॥ १६ ॥**

राजव्यसनं–राजनाशः ॥ १६ ॥

**कथं पुत्रं महात्मानं [3]ज्येष्ठं प्रियमपश्यतः ।**
**शरीरं धारयिष्यन्ति प्राणा राज्ञो महात्मनः ॥ १७ ॥**

**विनष्टे नृपतौ पश्चात् कौसल्या विनशिष्यति ।**
**अनन्तरं च माताऽपि मम नाशमुपैष्यति ॥ १८ ॥**

***अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम् ।**
**राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १९ ॥**

मनोरथं – रामराज्याभिषेकरूपं अनवाप्य अतिक्रान्तमति-क्रान्तं–नष्टं नष्टमिति क्रोशन्, 'आबाधे च' इति द्विर्वचनम्, आबाधो मनोदुःखम्, राज्ये रामं–पुनरागतमनिक्षिप्यैव मे पिता विनशिष्यति ॥ १९ ॥

**सिद्धार्थाः पितरं वृत्तं तस्मिन् कालेऽभ्युपस्थिते ।**
**प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति [4]भूमिपम् ॥ २० ॥**

सिद्धार्था इति । भाग्यवन्तस्तस्मिन् काले सर्वेषु प्रेतकार्येषु सन्निहिता भूत्वा संस्करिष्यन्ति, अस्माकं तु तदपि न लभ्यते । सिद्धार्थाः–प्राप्तराज्यप्रयोजना भरततत्पक्ष्या इत्यर्थः ॥ २० ॥

---

* . . . विनशिष्यतीति यत् तस्मात् अतिक्रान्तमतिक्रान्तं सर्वं प्रयोजन-मतीत्यगतमित्यर्थः–**गो.**, **ति.**

[1] सुखलोक–ङ. [2] सन्तप्ता–ङ. [3] सन्तं–ङ. [4] राघवं–ङ.

*रम्यचत्वरसंस्थानां सुविभक्तमहापथाम् ।
[1]हर्म्यप्रासादसंपन्नां गणिकावरशोभिताम् ॥ २१ ॥
रथाश्वगजसम्बाधां तूर्यनादविनादिताम् ।
सर्वकल्याणसंपूर्णां हृष्टपुष्टजनाकुलाम् ॥ २२ ॥
आरामोद्यानसंपन्नां समाजोत्सवशालिनीम् ।
सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २३ ॥

त एते अनन्तरं यथापूर्वं सुमङ्गलां राजधानीं विचरिष्यन्ति ॥

अपि जीवेद्दशरथो वनवासात् पुनर्वयम् ।
प्रत्यागम्य महात्मानं अपि [2]पश्येम सुव्रतम् ॥ २४ ॥
†अपि सत्यप्रतिज्ञेन सार्धं [3]कुशलिना वयम् ।
[4]निवृत्तवनवासेऽस्मिन् अयोध्यां प्रविशेमहि ॥ २५ ॥
परिदेवयमानस्य दुःखार्तस्य महात्मनः ।
‡तिष्ठतो राजपुत्रस्य शर्वरी साऽत्यवर्तत ॥ २६ ॥

तिष्ठत इति । एवं परिदेवनं कृत्वा अवस्थितस्येत्यर्थः ॥ २६ ॥

तथा तु सत्यं ब्रुवति प्रजाहिते
नरेन्द्रपुत्रे गुरुसौहृदाद्गुहः ।
मुमोच बाष्पं व्यसनाभिपीडितः
ज्वरातुरो नाग इव व्यथातुरः ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकपञ्चाशः सर्गः

---

* जनानामयं स्वभावः—यत् अतीतं महान्तमपि दुःखं कालक्रमेण विस्मरन्तीति—इत्यभिप्रेत्योच्यते—रम्येत्यादि । समाजैः—अनेकजनैः मिलित्वा क्रियमाण उत्सवः समाजोत्सवः । † अस्मिन् रामे निवृत्तवनवासे सति, अत एव सत्यप्रतिज्ञेन कुशलेन पित्रा सार्धं वयमयोध्यां अपि प्रविशेमहीत्यन्वयः । ‡ तिष्ठतः—अनासीनस्यैव ।

[1] रम्यप्रासादसंपूर्णां—ङ. [2] पश्याम—ङ. [3] कुशलिनो—ङ. [4] निवृत्ते वन—ङ.

गुरुसौहृदात्—रामविषयगुरुसौहार्दात् ; तथा सत्यं—वास्तवं ब्रुवति सति गुहोऽपि रामे गुरुसौहृदात्—महास्नेहात् व्यसनाभिपीडितो बाष्पं मुमोच । ज्वरातुरः, अत एव व्यथातुरः, नागः—गजः । सार-(२७) मानः सर्गः ॥ २७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकपञ्चाशः सर्गः

———

## द्विपञ्चाशः सर्गः

[गङ्गातरणम्]

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ।
उवाच रामः सौमित्रिं लक्ष्मणं शुभलक्षणम् ॥ १ ॥

अथ सुमन्त्रगुहविसर्जनपूर्वकं गङ्गातरणं—प्रभातायामित्यादि ॥

भास्करोदयकालोऽयं गता भगवती निशा ।
* असौ [1] तु कृष्णो विहगः कोकिलस्तात ! कूजति ॥ २ ॥

बर्हिणानां च निर्घोषः श्रूयते नदतां वने ।
[2] तराम जाह्नवीं, सौम्य ! शीघ्रगां सागरङ्गमाम् ॥ ३ ॥

विज्ञाय रामस्य वचः सौमित्रिर्मित्रनन्दनः ।
गुहमामन्त्र्य सूतं च सोऽतिष्ठद्भ्रातुरग्रतः ॥ ४ ॥

विज्ञाय—श्रुत्वेति यावत् ॥ ४ ॥

---

* सुकृष्णो विहगः—भारद्वाजः ; कोकिलश्च—गो.

[1] सुकृष्णो—ङ. [2] एतदनन्तरं 'गच्छामः सन्ध्युपासार्थं त्वरयस्व महारथ' इत्यधिकं—ङ.

**स तु रामस्य वचनं निशम्य प्रतिगृह्य च।**
**स्थपतिस्तूर्णमाहूय सचिवानिदमब्रवीत् ॥ ५ ॥**

स त्विति। लक्ष्मणेन कृतामन्त्रणो गुह इत्यर्थः। रामस्य वचनं निशम्येति। तराम जाह्नवीं इत्युक्तरूपम् ॥ ५ ॥

**अस्यवाहनसंयुक्तां कर्णग्राहवतीं शुभाम्।**
**सुप्रतारां दृढां तीर्थे शीघ्रं नावमुपाहर ॥ ६ ॥**

*अस्यवाहनेति। अस्य (जलं) निरस्य नावं वाहयति-तीरं प्रापयतीति अस्यवाहनम्, मयूरव्यंसकादित्वात् समासः, अरित्रमिति यावत्, तत्संयुक्तां तथा। कर्णग्राहः-कर्णधारः, नाविक इति यावत्। सुखेन प्रतारः-प्रतारणं यया सा तथा। दृढां-दृढसन्धिबन्धाम्। [1]तीर्थे-अवतारमार्गे ॥ ६ ॥

**तं निशम्य गुहादेशं गुहामात्यगणो महान्।**
**उपोह्य रुचिरां नावं गुहाय प्रत्यवेदयत् ॥ ७ ॥**

उपोह्य-वहेर्ल्यपि स्थानिवत्त्वात् कित्वात् संप्रसारणम्, समीपं प्रापय्येत्यर्थः ॥ ७ ॥

**ततः स प्राञ्जलिर्भूत्वा गुहो राघवमब्रवीत्।**
**उपस्थितेयं नौः, देव! भूयः किं करवाणि ते ॥ ८ ॥**
**तवामरसुतप्रख्य! तर्तुं सागरगां नदीम्।**
**नौरियं, पुरुषव्याघ्र![2] तां त्वमारोह, सुव्रत! ॥ ९ ॥**

तर्तुमिति। 'श्र्युकः किति' इति नेट् ॥ ९ ॥

---

* अस्य रामस्य, वाहन संयुक्तां-वाह्यते नीयतेऽनेनेति वाहनं-अरित्रादि---तेन संयुक्ताम्। कर्णग्राहवतीं-कर्णं अरित्रं गृह्णातीति कर्णग्राहः-कर्णधारः, तद्वतीं ........। उपाहरेत्येकवचनं सचिवगणाभिप्रायेण-**गो.**

[1] तीरे-**क.** [2] शीघ्रमारोह-**च.**

अथोवाच महातेजाः रामो गुहमिदं वचः ।
[1]कृतकामोऽस्मि भवता शीघ्रमारोप्यतामिति ॥ १० ॥

* आरोप्यतामिति । वयमिति शेषः ॥ १० ॥

ततः कलापान् सन्नह्य खड्गौ बध्वा च धन्विनौ ।
† जग्मतुर्येन तौ गङ्गां सीतया सह राघवौ ॥ ११ ॥

तत इति । एवं तस्यारोपणनियोगानन्तरम् । जग्मतुर्येन वै गङ्गामिति । येनावतारेण लोका गङ्गां तरन्ति, तेन तत्तु तत्स्थनौसमीपं ‡ खड्गादिकलापनिक्षेपणाय जग्मतुरित्यर्थः ॥ ११ ॥

राममेवं तु धर्मज्ञं उपगम्य विनीतवत् ।
किमहं करवाणीति सूतः प्राञ्जलिरब्रवीत् ॥ १२ ॥

ततोऽब्रवीद्दाशरथिः सुमन्त्रं
स्पृशन् करेणोत्तमदक्षिणेन ।
सुमन्त्र ! शीघ्रं पुनरेव याहि
राज्ञः सकाशे भव चाप्रमत्तः ॥ १३ ॥

उत्तमश्चासौ दक्षिणश्च तथा ; स्पर्शादिव्यापारे स एव किलोत्तमः, 'सन्महत्...' इत्यादिना समासः ॥ १३ ॥

निवर्तस्वेत्युवाचैनं एतावद्धि कृतं मम ।
[2]रथं विहाय पद्भ्यां तु गमिष्यामो महावनम् ॥ १४ ॥

---

* आरोप्यतामिति । खनित्रपिटकवैदेहीवस्त्राभरणादिकमिति शेषः-गो. † जग्मतुः-रथादवरुह्य पद्भ्यां जग्मतुरित्यर्थः । ‡ कलापः-तूणीरः 'कलापो भूषणे बर्हे तूणीरे' इत्यमरः ।

[1] कृतकार्योऽस्मि-ङ.          [2] मानं-ङ.

एवं निवृत्तौ प्रयोजनमुक्त्वा इह प्रयोजनाभावात् सावधारणा निवृत्तिः पुनः प्रतिपाद्यते अनुगमनप्रत्याशानिवृत्तये—निवर्तस्वेत्यादि। एतावत्पर्यन्तं हि राजाज्ञया यानेन गमनं कृतम्। अतः परं यानं विहाय पद्भ्यामेव तु गमिष्यामः, अतो ममेह त्वया प्रयोजनं नास्ति; अतः सर्वथा निवर्तस्वैवेत्युवाच ॥ १४ ॥

आत्मानं त्वभ्यनुज्ञातं अवेक्ष्यार्तः स सारथिः।
सुमन्त्रः पुरुषव्याघ्रं ऐक्ष्वाकमिदमब्रवीत् ॥ १५ ॥

अभ्यनुज्ञातमिति। प्रतिनिवृत्त्यै इति शेषः ॥ १५ ॥

*नातिक्रान्तमिदं लोके पुरुषेणेह केनचित्।
तव सभ्रातृभार्यस्य वासः प्राकृतवद्वने ॥ १६ ॥

अथ सुमन्त्रस्तु तवैव तावद्वनवासो न्यायप्राप्तः, तदा त्वयैवाहं वत्स्यामीत्याशयेनाह—नातिक्रान्तमित्यादि। सभ्रातृभार्यस्य तव प्राकृतवत्—क्षुद्रप्राणिवत् वने योऽयं वासः, तदिदं इह—लोके केनचित् पुरुषेण अस्मदादिना राजकीयेन जानपदेन वा नातिक्रान्तं—अत्यन्तं चित्ते न स्वीकृतं, सर्वासम्मतमेवेति यावत् ॥ १६ ॥

न मन्ये ब्रह्मचर्येऽस्ति [1]स्वधिते वा फलोदयः।
मार्दवार्जवयोर्वापि त्वाञ्चेद्व्यसनमागतम् ॥ १७ ॥

अपि वा—तावकयोर्मार्दवार्जवयोर्वशात् त्वाञ्चेदिदं व्यसनं—वनवासदुःखं आगतं—प्राप्तं, अथापि पुनः तत्र च यद्ब्रह्मचर्यं—अध-

---

* लोकदृष्ट्या शोकापनुदं वचनमाह—नातीति। सभ्रातृभार्यस्य तव प्राकृतवत्—क्षुद्रवत् वने वासः येन दैवेन कृतः तदिदं दैवमिह लोके केनाप्यतिक्रान्तं न—लङ्घितं न—ति.

[1] स्वधीते—ङ., च.

इशय्यादिलक्षणं, स्वधिते—शेधि धृतौ, स्वेन धते—स्वेनानुष्ठीयमानेऽस्मिन् ब्रह्मचर्ये वा वृथा क्लेशत्वात् क्लेशफलोदयो नास्तीति मन्ये। न हि किल ब्रह्मचर्यमपि वरनिर्बन्धप्राप्तम् ॥ १७ ॥

*[1]सह, राघव! वैदेह्या भ्रात्रा चैव वने वसन्।
त्वं गतिं प्राप्स्यसे, वीर! त्रीन् लोकांस्तु जयन्निव ॥१८॥

अस्तु वा सर्वज्ञस्य ते यथारुचि व्यवहारः ; नाहं त्वन्नियमनशक्तः। अपि तु, हे राघव! वैदेह्या भ्रात्रा च सहैव वने वसन् त्रीन् लोकांस्तु जयन्निव—स्वपितृसत्यपरिपालनेन जयन्नेव भूत्वा परां गतिं—परमापवर्ग-ब्रह्मलोकं च प्राप्स्यसे, नात्र सन्देहः ॥ १८ ॥

वयं खलु हताः, [2]राम! [3]ये त्वयाऽप्युपवञ्चिताः।
कैकेय्या वशमेष्यामः पापाया दुःखभागिनः ॥ १९ ॥

वयं खलु त्वया उपवञ्चिताः—त्यक्ताः हताः ॥ १९ ॥

इति ब्रुवन्नात्मसमः सुमन्त्रः सारथिस्तदा।
[4]दृष्ट्वा दूरगतं रामं दुःखार्तो रुरुदे चिरम् ॥ २० ॥

आत्मसमः—प्राणसम इति यावत्। दूरगतं दृष्ट्वेति। † दूरदेशा-वस्थानवन्तं निश्चित्य तत्समीपे दुःखार्तः चिरं रुरोद ॥ २० ॥

---

* वस्तुतस्तु—भवतो वनवासो महोदयायैव—अतिशयितकीर्त्यादिहेतुत्वात्, प्राणसमयोर्वैदेहीलक्ष्मणयोश्च पार्श्वस्थत्वान्नातीव खेदावहः। त्वदेकप्राणानामस्माकं तु त्वद्वनवासः अतीव खेदायेति सुमन्त्रो वदति—सहेत्यादि। † तदानीं रामस्य समीप एव स्थितत्वादेवं व्याख्यातम्। अदूरगतमिति वा पदच्छेदः। वस्तुतस्तु—गतमिति भावे क्तः। दूरगमनं-दूरप्रयाणकं-दृष्ट्वा रुरोदेत्यर्थः।

[1] सदा—ङ. [2] नाथा—ङ. [3] यत्त्वया—च. [4] दृष्ट्वाऽदूरगतं—च., दृष्ट्वा वनगतं—ङ.

ततस्तु विगते बाष्पे सूत *स्पृष्टोदकं शुचिम् ।
रामस्तु मधुरं वाक्यं पुनःपुनरुवाच तम् ॥ २१ ॥

स्पृष्टोदकं—आचान्तम् ॥ २१ ॥

इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये ।
यथा दशरथो राजा मां न शोचेत्तथा कुरु ॥ २२ ॥

सुहृत्—आपदि व्यसनापनोदकः । यदेवं अतः—यथेत्यादि ॥

शोकोपहतचेताश्च वृद्धश्च जगतीपतिः ।
†काममारावसन्नश्च तस्मादेतत् ब्रवीमि ते ॥ २३ ॥

काममारेण—प्रारब्धवशजेनाधर्म्येण अवसन्नस्तथा । तस्मात्—उक्तहेतोरेव । एतत्—वक्ष्यमाणम् ॥ २३ ॥

यद्यदाज्ञापयेत् किञ्चित् स महात्मा महीपतिः ।
कैकेय्याः प्रिय[1]कामार्थं कार्यं तदविकाङ्क्षया ॥ २४ ॥

कैकेय्याः प्रियकामार्थेऽपि यद्यदाज्ञापयति तदप्यविकांक्षया—सादरमविशङ्कतयाऽनुष्ठेयम् ॥ २४ ॥

एतदर्थं हि राज्यानि प्रशासति [2]नरेश्वराः ।
यदेषां सर्वकृत्येषु मनो न प्रतिहन्यते ॥ २५ ॥

एतच्छब्दार्थः—यदेषामित्यादि । प्रशासतीत्यभ्यस्तत्वाददशः । सर्वकृत्येष्विति । कामात् क्रोधात् प्रवृत्तेष्वित्यर्थः ॥ २५ ॥

---

* अश्रुमोचनस्याशुचित्वात् स्पृष्टोदकमिति. † मदभिषेकरूपकामावेशपीडित इति वा.

[1] कामार्थं—ङ., च. [2] नराधिपाः—च.

यद्यत्तु स महाराजः नालीकमधिगच्छति।
न च ताम्यति [1]दुःखेन, सुमन्त्र! कुरु तत्तथा ॥ २६ ॥

यद्यत् —अनुशिष्य अलीकं—तदनिवृत्तिदुःखम् ॥ २६ ॥

अदृष्टदुःखं राजानं वृद्धमार्यं जितेन्द्रियम्।
ब्रूयास्त्वमभिवाद्यैव मम हेतोरिदं वचः ॥ २७ ॥

मम हेतोरभिवाद्य—मत्प्रतिनिधितया मन्नमस्कारं कृत्वेत्यर्थः ॥

नैवाहमनुशोचामि लक्ष्मणो न च मैथिली।
अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति [3]च ॥ २८ ॥

इदंशब्दार्थः—नैवाहमित्यादि। अयोध्यायाः च्युता वयं इति कृत्वा वने वत्स्यामह इति चेति। छान्दसः सन्धिः ॥ २८ ॥

चतुर्दशसु वर्षेषु निवृत्तेषु पुनःपुनः।
लक्ष्मणं मां च सीतां च द्रक्ष्यसि क्षिप्रमागतान् ॥ २९ ॥

पुनःपुनः—अभीक्ष्णम् ॥ २९ ॥

*एवमुक्त्वा तु राजानं मातरं च, सुमन्त्र! मे।
अन्याश्च देवीः सहिताः कैकेयीं च पुनःपुनः ॥ ३० ॥
आरोग्यं ब्रूहि, कौसल्यां अथ पादाभिवन्दनम्।
सीताया[4] मम †चार्यस्य वचनाल्लक्ष्मणस्य च ॥ ३१ ॥

सहिता इति। मन्मात्रा इति शेषः। कैकेयीं च आरोग्यं—अनामयं ब्रूहि। नेयं व्यङ्ग्योक्तिः, अपि तु दैवहतेयं मातेत्यनुतापादेव। अथ

---

* श्लोकद्वयमेकवाक्यम्। † आर्यस्य लक्ष्मणस्येत्यन्वयः—गो.

[1] शोकेन—च. [2] न च शोचति—च. [3] वा—च. [4] भार्याया:—ङ.

'नाम्ना मातरमाचार्यदारांश्चेत्येके' इति स्मरणात् स्वमातुः पादाभिवन्दनमादिशति — कौसल्यामित्यादि । प्रतीति शेषः । आर्यस्य त्वत्पूज्यस्य मम वचनात् सीताया मम लक्ष्मणस्य च पादाभिवादनं ब्रूया इत्यन्वयः ॥ ३१ ॥

ब्रूयाश्च हि *महाराजं, भरतं क्षिप्रमानय ।
आगतश्चापि भरतः स्थाप्यो [1]नृपमते पदे ॥ ३२ ॥

महाराजं-तत्पदार्हं । नृपमते-दशरथानुमते ॥ ३२ ॥

भरतं च परिष्वज्य यौवराज्येऽभिषिच्य च ।
अस्मत्सन्तापजं दुःखं न त्वामभिभविष्यति † ॥ ३३ ॥

भरतश्चापि वक्तव्यः यथा राजनि वर्तसे ।
तथा मातृषु वर्तेथाः सर्वास्वेवाविशेषतः ॥ ३४ ॥

वक्तव्य इति । किं वक्तव्य इत्यतः—यथेत्यादि । अविशेषत इति । स्वमातृकैकेय्यविशेषत इत्यर्थः ॥ ३४ ॥

‡ यथा च तव कैकेयी सुमित्रा च विशेषतः ।
तथैव देवी कौसल्या [2]मम माता विशेषतः ॥ ३५ ॥

तदेव प्रदर्श्यते—यथेत्यादि ॥ ३५ ॥

---

* महाराजः-दशरथः. † नाभिभविष्यतीत्येतदनन्तरं इतिकरणं द्रष्टव्यम् ।
‡ अयमाशयो रामस्य—कैकेय्याः स्वजननीत्वेन, सुमित्रायाः स्वात्यन्तप्रियशत्रुघ्नजननीत्वेन च भरतस्य ते समे स्याताम् । रामस्य यथा लक्ष्मणः, तथा भरतस्य शत्रुघ्नः प्रिय आसीदिति पूर्वमेव (बा. २८ स.) उक्तम् । अपि च सुमित्रापुत्रस्य शत्रुघ्नस्य पार्श्वे एव स्थितत्वान्न तावान् क्लेशः । कौसल्या तु अनुकम्पनीयैवेति ॥

[1] नरपतेः पदे—ङ. [2] तव मान्या—ङ.

तातस्य प्रियकामेन यौवराज्य[1]मपेक्षता ।
लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुम् ॥ ३६ ॥

अपेक्षता—अङ्गीकुर्वता । नित्यदा—छान्दसो दाप्रत्ययः ॥ ३६ ॥

निवर्त्यमानो रामेण सुमन्त्रः [2]शोककर्शितः ।
तत्सर्वं वचनं श्रुत्वा स्नेहात् काकुत्स्थमब्रवीत् ॥ ३७ ॥
यदहं नोपचारेण [3]ब्रूयां स्नेहादविक्लबः ।
भक्तिमानिति तत्तावत् वाक्यं त्वं क्षन्तुमर्हसि ॥ ३८ ॥

उपचारः—स्वामिभृत्यभावोचितसत्कारः । यत् ब्रूयां त्वद्वचनात् परमपि, तत् क्षन्तुमर्हसि, प्रत्युत्तरं वदतीति न क्रोद्धव्यमित्यर्थः ॥ ३८ ॥

कथं च त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीम् ।
तव, [4]तात! वियोगेन पुत्रशोकाकुलामिव ॥ ३९ ॥

किं ब्रवीषीत्यतः—कथमित्यादि । तव वियोगेनेत्यन्वयः । * तात—स्वामिन् इति यावत् । पुत्रवियोगजः शोकः—पुत्रशोकः, तेनेवाकुलामिति । च शब्दः पूर्वान्तर्भावेण योज्यः ॥ ३९ ॥

सराममपि तावन्मे रथं दृष्ट्वा तदा † जनः ।
विना रामं रथं दृष्ट्वा विदीर्येतापि सा पुरी ॥ ४० ॥

मे रथमिति । मत्प्रवर्त्यं रथमित्यर्थः ॥ ४० ॥

दैन्यं हि नगरी गच्छेत् दृष्ट्वा शून्यामिमं रथम् ।
सूतावशेषं स्वं सैन्यं हतवीरमिवाहवे ॥ ४१ ॥

हतवीरं—हतरथिनमित्यर्थः ॥ ४१ ॥

---

* वृद्धत्वात् वत्सेति सम्बोधनं—गो. † जनः किं ? पुर्यैव विदीर्येतेति भावः ।

[1] मवेक्षता—ङ. [2] प्रतिबोधितः—च. [3] ब्रूयाः—च. [4] तावद्वियोगेन—ङ.

दूरेऽपि निवसन्तं त्वां मानसेनाग्रतः स्थितम् ।
चिन्तयन्त्योऽद्य नूनं त्वां निराहाराः कृताः प्रजाः ॥

अग्रतः—पुरतः। नूनं निराहाराः कृता इति। त्वद्वियोगदुःखेनेति शेषः ॥ ४२ ॥

दृष्टं तद्धि त्वया, राम! यादृशं त्वत्प्रवासने ।
प्रजानां सङ्कुलं वृत्तं त्वच्छोकाक्रान्तचेतसाम् ॥ ४३ ॥

आर्तनादो हि यः पौरैः मुक्तस्त्वद्विप्रवासने ।
[1]सरथं मां निशाम्यैव कुर्युः शतगुणं ततः ॥ ४४ ॥

* अहं [2]किञ्चापि वक्ष्यामि देवीं, तव सुतो मया ।
नीतोऽसौ मातुलकुलं सन्तापं मा कृथा इति ॥ ४५ ॥

असत्यमपि, नैवाहं ब्रूयां वचनमीदृशम् ।
कथमप्रियमेवाहं ब्रूयां सत्यमिदं वचः ॥ ४६ ॥

अथ वने स्थितिर्नानुशोचनीयेति यत् वनस्थितेर्निवेदनीयत्वमुक्तं तदतिघोरं मया अशक्यकरणम्। अतः प्रकारान्तरमेव असत्यमपि ब्रूयामित्याह— अहमित्यादि। किञ्च अहं देवीं—तव मातरं प्रति अहमेव-मपि वक्ष्यामि। कथम्? तवासौ सुतो मया मातुलकुलं कोसलदेशस्थं नीतः, न तु वनम्; अतो मा सन्तापं कृथा इत्यसत्यमपीदृशं वचन-

---

* तव सुतो मातुलकुलं नीत इति प्रियमपि न ब्रूयां, असत्यत्वात्। वनं नीत इति सत्यमपि न ब्रूयां अप्रियत्वात्—अतः न किमपि वक्तुं शक्नोमि—इति **तिलक-गोविन्दराजौ**। एतद्व्याख्यानरीत्या तु अहं किञ्चापीत्यतः असत्यमपि इत्यन्तमेकं वाक्यम्। शिष्टमन्यत् वाक्यम्। असत्यमपीत्यपिशब्दस्वारस्यात् एवं व्याख्यातं महेशतीर्थेनापि। यद्यपि **तिलके** इदं दूषितम्—तत्र शक्ष्यामीत्यादिना नगरगमनाभावप्रतिपादनादिति। अथापि तद्वाक्यस्यान्तिमनिर्णयरूपत्वान्न विरोधः ॥

[1] रथस्थं—ङ. [2] किञ्चाथ—ङ. [3] सन्तापस्त्यज्यतामिति—ङ.

मेवाहं ब्रूयाम् । सत्यमपीदं वननयनवचनं कथमेवाहमप्रियं ब्रूयाम्, 'सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्' इति स्मरणादित्याशयः । *अन्यस्तु—अतः किमपि वक्तुं न शक्नोमीति सिद्धं—इति महता यत्नेनायोजयदिव ॥ ४६ ॥

मम तावन्नियोगस्थाः त्वद्बन्धुजनवाहिनः ।
कथं रथं त्वया हीनं †[1]प्रवक्ष्यन्ति हयोत्तमाः ॥ ४७ ॥

त्वद्बन्धुजनेति । ‡त्वां त्वद्बन्धुजनं सीतासौमित्रिरूपं वहनशीलाः इत्यर्थः । प्रवक्ष्यन्तीति । वहेः लृटि स्ये हस्य ढत्वकत्वादिना रूपम् ॥

तन्न शक्ष्याम्यहं गन्तुं अयोध्यां [2]त्वदृतेऽनघ!
वनवासानुयानाय मामनुज्ञातुमर्हसि ॥ ४८ ॥

यदि मे याचमानस्य त्यागमेव करिष्यसि ।
सरथोऽग्निं प्रवेक्ष्यामि त्यक्तमात्र इह त्वया ॥ ४९ ॥

त्यक्तमात्रः—तत्क्षण एवेत्यर्थः ॥ ४९ ॥

भविष्यन्ति वने यानि तपोविघ्नकराणि ते ।
रथेन [3]प्रतिबाधिष्ये तानि [4]सत्त्वानि, राघव! ॥ ५० ॥

भविष्यन्ति—सम्भावितानि । रथेन प्रतिबाधिष्य इति । रथेन साधनेन अहमेव रथी भूत्वा प्रतिबाधिष्ये—निवर्तयिष्यामि । न केवलमहं सूतः, मन्त्रिप्रधानः किल ॥ ५० ॥

---

* गोविन्दराजः. † हयोत्तमाः त्वया हीनं रथं कथं वक्ष्यन्तीत्यन्वयः. ‡ त्वं च बन्धुजनश्चेति विग्रहः, अर्थात् बन्धुजनशब्दस्य त्वद्बन्धुजनरूपार्थपरत्वम् ।

[1] प्रवाक्ष्यन्ति—च. [2] त्वामृते—ङ. [3] प्रतियोधिष्ये—ङ. [4] सर्वाणि—च.

*त्वत्कृते [1] न मयाऽवाप्तं रथचर्याकृतं सुखम् ।
आशंसे त्वत्कृतेनाहं वनवासकृतं सुखम् ॥ ५१ ॥

सोऽहं त्वत्कृते—त्वन्निमित्ततया मया अद्य सारथित्वं विहाय केवलरथचर्याकृतं सूतकृत्यसाध्यं सुखमवाप्तम् । अतः परं त्वत्कृतेनैव—त्वन्निमित्तेनैव हेतुना वनवासकृतं महत् सुखं राज्यचिन्तादुःखाभावादाशंसे, सर्वोऽपि राज्यभारो ममैव किल मन्त्रिमुख्यस्य । एवमादौ † यद्वाभट्टो बहुजल्पति ; न किञ्चिदपि तत्सङ्गतं पश्यामः ॥ ५१ ॥

प्रसीदेच्छामि तेऽरण्ये भवितुं प्रत्यनन्तरः ।
प्रीत्याभिहितमिच्छामि भव मे प्रत्यनन्तरः ॥ ५२ ॥

प्रत्यनन्तरः—प्रत्यासन्नः—अनुकूलः भव, ममारण्यप्रत्यासत्ता-वित्यर्थः ॥ ५२ ॥

इमे चापि हयाः, वीर! यदि ते वनवासिनः ।
परिचर्यां करिष्यन्ति प्राप्स्यन्ति परमां गतिम् ॥ ५३ ॥

तव शुश्रूषणं मूर्ध्ना करिष्यामि वने वसन् ।
अयोध्यां देवलोकं वा सर्वथा [2] प्रजहाम्यहम् ॥ ५४ ॥

न हि शक्या प्रवेष्टुं सा मयाऽयोध्या त्वया विना ।
राजधानी महेन्द्रस्य यथा दुष्कृतकर्मणा ॥ ५५ ॥

---

* त्वत्कृते-त्वन्निमित्तं, रथचर्याकृतं सुखं मया नावाप्तं—राज्याभिषिक्तत्वद्रथचर्याकृतं सुखं मया भाग्यहीनेन न लब्धम् । तथापि त्वत्कृतेन—त्वत्साहाय्यकरणेन वनवासकृतमिति सुखमाशंसे । ............यद्वा—त्वत्कृतेन त्वया कृतेनानुग्रहेण रथचर्याकृतं सुखं मयाऽवाप्तं, एवं त्वदनुग्रहेण वनवासकृतं सुखमपि अहमाशंस इति—गो. † गोविन्दराजः ।

[1] हि, तु—ङ. [2] न व्रजाम्यहम्—ङ.

**वनवासे क्षयं प्राप्ते ममैष हि मनोरथः।**
**यदनेन रथेनैव त्वां वहेयं पुरीं पुनः ॥५६॥**

वनवासे—तत्काले। क्षयं प्राप्त इति। समाप्त इति यावत्। वहेयमिति यत्, एष मे मनोरथ इति योजना ॥ ५६ ॥

**चतुर्दश हि वर्षाणि सहितस्य त्वया वने।**
**क्षणभूतानि यास्यन्ति शतसंख्याऽन्यतोऽन्यथा ॥ ५७॥**

शतसंख्यान्यतोऽन्यथेति। अन्यतः—त्वद्वियुक्ततया अवस्थितिपक्षे यथा क्षणमात्रमेव शतसंख्यानि—तावत्प्रमाणवर्षभूतानि भवन्ति अति-दुःखोपाधेः, तद्वत् त्वत्सेवासुखोपाधेः चतुर्दशवर्षाणि क्षणमात्राणि भविष्यन्तीत्यर्थः ॥ ५७ ॥

**[1]भृत्यवत्सल! तिष्ठन्तं भर्तृपुत्रगते पथि।**
**भक्तं भृत्यं स्थितं * स्थित्यां [2] न मां त्वं हातुमर्हसि ॥ ५८ ॥**

भर्तृपुत्रगते—राजपुत्राश्रिते पथि यथा भृत्येन स्थातव्यं, तथा त्वद्विषये तिष्ठन्तं तथा। स्थित्यां स्थितमिति। मन्त्रिणा राजनि राजकार्ये च यथा स्थातव्यं तस्यामेव स्थित्यां सदा स्थितं—कदाप्यपराधरहितमिति यावत् ॥ ५८ ॥

**एवं बहुविधं दीनं याचमानं पुनःपुनः।**
**रामो भृत्यानुकम्पी तु सुमन्त्रमिदमब्रवीत् ॥ ५९ ॥**
**जानामि परमां भक्तिं मयि ते, भर्तृवत्सल!**
**शृणु चापि यदर्थं त्वां प्रेषयामि पुरीमितः ॥ ६० ॥**

---

* स्थित्यां-मर्यादायां स्थितं-अस्खलितमर्यादम्। अत एव भर्तृपुत्रगते-स्वामि-पुत्रेण त्वयाऽऽगते पथि—वनगमने तिष्ठन्तं—गो.

[1] भक्तवत्सल—ङ.　　[2] त्वं न मां—ङ.

नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी ।
कैकेयी प्रत्ययं गच्छेत् इति रामो वनं गतः ॥ ६१ ॥

रामो वनं गत इति प्रत्ययमिति योजना ॥ ६१ ॥

*परितुष्टा हि मा देवी वनवासं गते मयि ।
राजानं नातिशङ्केत मिथ्यावादीति धार्मिकम् ॥ ६२ ॥

एष मे प्रथमः कल्पः यदम्बा मे यवीयसी ।
भरतारक्षितं [1]स्फीतं पुत्रराज्यमवाप्नुयात् ॥ ६३ ॥

अतिशङ्का–अन्यथाशङ्का । यवीयसी नातिशङ्केतेति यत् एष मे प्रथमः कल्पः–मुख्यं प्रयोजनमिति यावत् । भरतेन आरक्षितं–अत्यर्थं रक्षितं, पुत्रराज्यं–तज्जसुखमवाप्नुयादितीदं चान्यत् प्रयोजनमिति शेषः ॥ ६३ ॥

मम प्रियार्थं राज्ञश्च सरथस्त्वं पुरीं व्रज ।
सन्दिष्टश्चासि यानर्थान् तांस्तान् ब्रूयास्तथा तथा ॥ ६४ ॥
इत्युक्त्वा वचनं सूतं सान्त्वयित्वा पुनः पुनः ।
गुहं वचन मक्लीबो रामो हेतुमदब्रवीत् ॥ ६५ ॥
नेदानीं, गुह! योग्योऽयं वासो मे सजने वने ।
†अवश्यं ह्याश्रमे वासः कर्तव्यस्तद्गतो विधिः ॥ ६६ ॥

---

* परितुष्टा सा देवी धार्मिकं राजानं मिथ्यावादीति नातिशङ्केतेत्यन्वय: ।
† आश्रमवास एव कर्तव्य: तापसवत् । ताद्दृशाश्रमगत:–तदनुगुण: विधि:–नियमादिश्च कर्तव्य इत्यर्थ: ।

[1] वृत्तं–ङ.   [2] मक्लीबं–ङ.

सजने वने वासो मे न योग्यः इत्युक्तया, इहैव वने वस्तव्यं इति गुहेन प्रार्थितमिति गम्यते*। आश्रम इति। जानपदजन-रहित इति शेषः। तद्गतो विधिरिति। तादृगवस्थानगतः सङ्कल्प इत्यर्थः ॥ ६६ ॥

सोऽहं गृहीत्वा नियमं तपस्विजनभूषणम्।
हितकामः पितुर्भूयः सीताया लक्ष्मणस्य च ॥ ६७ ॥
जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय।

सोऽहं–एवसङ्कल्पवानहं वन्याहाराधश्शय्यादिनियमं गृहीत्वा, तपस्विजनभूषणं जटाः, सीताया लक्ष्मणस्य चानुमत्या कृत्वा गमिष्यामि। तदर्थं न्यग्रोधक्षीरमानय। सीताया हितकाम इत्यन्यः†। किं हितं जटाधारणेन सीताया इति न विदुः। अनुमतिस्त्वपेक्षिता, यस्याः जटादर्शने सन्यासकल्पतः परमदुःखं स्यात् ॥ ६७ ॥

तत्क्षीरं राजपुत्राय गुहः क्षिप्रमुदाहरत् ॥ ६८ ॥
लक्ष्मणस्यात्मनश्चैव रामस्तेनाकरोज्जटाः।
दीर्घबाहुर्नरव्याघ्रः ‡जटिलत्वमधारयत् ॥ ६९ ॥

लक्ष्मणस्याकरोदिति। तेनापि स्ववदेवावस्थानस्य सङ्कल्पितत्वात् ॥ ६९ ॥

तौ तदा चीरवसनौ जटामण्डलधारिणौ।
अशोभेतामृषिसमौ भ्रातरौ रामलक्ष्मणौ ॥ ७० ॥

---

* 'वयं प्रेष्या भवान् भर्ता साधु राज्यं प्रशाधि नः' (५०–३९) इति पूर्वं तथा प्रार्थितमिति भाति। † महेशतीर्थः, गोविन्दराजो वा। ‡ जटिलत्वं–जटावत्त्वम्।

*ततो वैखानसं मार्गं [1] आस्थितः सहलक्ष्मणः।
व्रतमादिष्टवान् रामः [2] सहायं गुहमब्रवीत् ॥ ७१ ॥

वैखानसाः—फलमूलाशिनो वानप्रस्था ऋषयः। व्रतं आदिष्टवान्—अङ्गीकृतवान्। सहायं—उक्तरूपगङ्गातरणादिकृत्यसहायभूतम् ॥ ७१ ॥

अप्रमत्तो बले कोशे दुर्गे जनपदे तथा।
भवेथाः, गुह! राज्यं ते दुरारक्षतमं मतम् ॥ ७२ ॥

दुःखेन आरक्षा—रक्षणं यस्य तत्तथा, अतिशयेन दुरारक्षं दुरारक्षतमम् ॥ ७२ ॥

ततस्तं [3] समनुज्ञाय गुहमिक्ष्वाकुनन्दनः।
जगाम तूर्णमव्यग्रः सभार्यः सहलक्ष्मणः ॥ ७३ ॥
स तु दृष्ट्वा नदीतीरे नावमिक्ष्वाकुनन्दनः।
तितीर्षुः शीघ्रगां गङ्गां इदं [4] लक्ष्मणमब्रवीत् ॥ ७४ ॥
आरोह त्वं, नरव्याघ्र! स्थितां नावमिमां शनैः।
सीतां चारोपयान्वक्षं परिगृह्य † मनस्विनीम् ॥ ७५ ॥
स भ्रातुः शासनं श्रुत्वा सर्वमप्रतिकूलयन्।
आरोप्य मैथिलीं पूर्वं आरुरोहा‡त्मवांस्ततः ॥ ७६ ॥

---

* अत्र—ननु रामेण वानप्रस्थाश्रमस्वीकारे पुनरन्ते कथं गार्हस्थ्ये प्रतिनिवृत्तिः, यदि चेदानीं वानप्रस्थाश्रमो न स्वीकृतः तदा तद्धर्मानुष्ठानं जटाधारणादिकं गृहस्थस्य विरुद्धं स्यात्—इत्याशंक्य गोविन्दराजैः—पितृनियोगाधीनसाङ्कल्पिकव्रतविशेषस्यास्य युधिष्ठिर-सन्नयासादिवन्न दोषत्वम्। तथोक्तं मनुना 'सम्यक्संकल्पजः कामः धर्ममूलमिदं स्मृतम्' इति—इति समाहितम्. † मनस्विनीमिति निन्दायां मतुप्, भीरुमिति यावत्। पूर्वारोहणे असौ बिभीयात् इति भावः—गो. ‡ पूर्वं मनस्विनीमित्युक्तं, इदानीमात्म-वानित्युक्तम्। उभाभ्यां आरोपणे दोषशङ्काराहित्यमुक्तम्—गो.

[1] आस्थाय—ङ. [2] सखायं ङ. [3] समनुज्ञाप्य—च. [4] वचन—च.

अप्रतिकूलयन्—अनुकूलयन्निति यावत् ॥ ७६ ॥

**अथारुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः ।**
**ततो निषादाधिपतिः गुहो [*] ज्ञातीनचोदयत् ॥ ७७ ॥**

**राघवोऽपि महातेजा नावमारुह्य तां ततः ।**
**[†] ब्रह्मवत् क्षत्रवच्चैव जजाप हितमात्मनः ॥ ७८ ॥**

आरुह्येति पदम् । ब्रह्मवत् क्षत्रवदिति । ब्रह्मक्षत्रदेवताकं नावारोहमन्त्रं आत्मनो हितमुद्दिश्य जजाप । तथा मन्त्रस्तु 'अमूषु वाजिनां' इति वर्गे 'सुत्रामाणम्' इत्यादिः । तत्र हि 'एष ह वा अरिष्टनेमिः पृतनाजित्'—इत्यादिब्राह्मणे ब्रह्मक्षत्रदेवताकत्वं स्पष्टं प्रतिपाद्यते । एष इत्यपरोक्षनिर्देशात् ब्रह्ममण्डलस्थो भगवान् ब्रह्मास्पदः । पृतनाजित्पदेन तस्यैव अभिजिदात्मना क्षत्रधर्मप्रधानस्य चोपदेशः ॥ ७८ ॥

**आचम्य च यथाशास्त्रं नदीं तां सह सीतया ।**
**[1] प्राणमत् प्रीतिसंहृष्टः लक्ष्मणश्चामितप्रभः ॥ ७९ ॥**

**अनुज्ञाय सुमन्त्रं च सबलं चैव तं गुहम् ।**
**आस्थाय नावं रामस्तु चोदयामास नाविकान् ॥ ८० ॥**

**ततस्तै[2]श्चोदिता सा नौः कर्णधारसमाहिता ।**
**शुभस्फ्यवेगाभिहता [3] शीघ्रं सलिलमत्यगात् ॥ ८१ ॥**

कर्णधारेण—नाविकेन समाहिता—सज्जीकृता । स्फ्याकारत्वात् स्फ्यं—अरित्रं, तेन वेगादभिहता—प्रणुन्ना ॥ ८१ ॥

---

* नौः नीयतां पारमित्यचोदयदित्यर्थः । † ब्रह्मवत् क्षत्रवदित्यर्हार्थे वतिप्रत्ययः । ब्राह्मणार्हं क्षत्रियार्हमित्यर्थः । . . . यद्वा ब्रह्मक्षत्रशब्दयुक्तं मन्त्रं जजापेत्यर्थः । स च मन्त्रः सुत्रामाणमित्यादिः । तत्र त्वरिष्टनेमिः पृतनाजिदिति ब्रह्मक्षत्रशब्दौ श्रुतौ—**गो.**

[1] प्रणमत्—**च**.　[2] श्चालिता—**च**.　[3] गङ्गासलिल—**ङ**.

मध्यं तु समनुप्राप्य भागीरथ्यास्त्वनिन्दिता ।
वैदेही प्राञ्जलिर्भूत्वा तां नदीमिदमब्रवीत् ॥ ८२ ॥

अथ गङ्गाया महादेवतात्वात् स्त्रीदेवतात्वाच्च सीतायाः प्रार्थनम्—वैदेही प्राञ्जलिरित्यादि ॥ ८२ ॥

पुत्रो दशरथस्यायं महाराजस्य धीमतः ।
निदेशं [1]पारयित्वेमं, गङ्गे, त्वदभिरक्षितः ॥ ८३ ॥
चतुर्दश हि वर्षाणि समग्राण्युष्य कानने ।
भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति ॥ ८४ ॥
ततस्त्वां, देवि! सुभगे! क्षेमेण पुनरागता ।
यक्ष्ये प्रमुदिता, गङ्गे! सर्वकाम[2]समृद्धिनी ॥ ८५ ॥

सर्वकामसमृद्धिनीति । व्रीह्यादित्वादिनिः ॥ ८५ ॥

त्वं हि त्रिपथगा, देवि! ब्रह्मलोकं [3]समीक्षसे ।
भार्या चोदधिराजस्य लोकेऽस्मिन् संप्रदृश्यसे ॥ ८६ ॥

ब्रह्मलोकं समीक्षस इति । अक्षू व्याप्तिसङ्घातयोः, श्नौ च तङ् छान्दसम्, व्याप्ता भवसि । तत् श्रीमदादिगुरुनाथकमण्डलुनित्यप्रतिष्ठत्वेनेति व्याप्तिः । तथात्वं—"आदावादिपितामहस्य नियमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम्" * इत्यादि पाठकाः पौराणिकाश्च जानन्ति ॥ ८६ ॥

तत् त्वां, देवि! नमस्यामि प्रशंसामि च, शोभने!
प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते ॥ ८७ ॥

प्रशंसामि—स्तौमि । शिवेन—क्षेमेण सह ॥ ८७ ॥

---

* श्री शङ्कराचार्यकृतगङ्गाष्टकं—श्लो. ४.

[1] पालयित्वेमं—च. [2] प्रदायिनी, प्रसाधिनी—ङ. [3] समक्षसे—च.

गवां शतसहस्रं च वस्त्राण्यन्नं च [1]पेशलम् ।
ब्राह्मणेभ्यः प्रदास्यामि तव प्रियचिकीर्षया ॥ ८८ ॥

सुराघटसहस्रेण * मांसभूतौदनेन च ।
यक्ष्ये त्वां [2]प्रयता, देवि! पुरीं पुनरुपागता ॥ ८९ ॥

यक्ष्य इति । महाबलिप्रदानेनेति शेषः ॥ ८९ ॥

यानि त्वत्तीरवासीनि दैवतानि वसन्ति च ।
तानि सर्वाणि यक्ष्यामि तीर्थान्यायतनानि च ॥ ९० ॥

तीर्थानि—प्रयागादीनि । आयतनानि—काश्यादीनि ॥ ९० ॥

पुनरेव महाबाहुः मया भ्रात्रा च सङ्गतः ।
अयोध्यां वनवासात्तु प्रविशत्वनघोऽनघे! ॥ ९१ ॥

तथा संभाषमाणा सा सीता गङ्गामनिन्दिता ।
दक्षिणा दक्षिणं तीरं क्षिप्रमेवाभ्युपागमत् ॥ ९२ ॥

तीरं तु समनुप्राप्य नावं हित्वा नरर्षभः ।
प्रातिष्ठत सह भ्रात्रा वैदेह्या च परन्तपः ॥ ९३ ॥

अथाब्रवीत् महाबाहुः † सुमित्रानन्दवर्धनम् ।
भव संरक्षणार्थाय सजने विजनेऽपि वा ॥ ९४ ॥

भवेति । सावधान इति शेषः । संरक्षणार्थायेति । सीताया इति शेषः ॥ ९४ ॥

---

* मांसरूपेणान्नेनेत्यर्थः । † 'रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् । अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ॥' इति पूर्वोक्तसुमित्रानिदेशः लक्ष्मणेन परिपालित इति ज्ञापनाय वनप्रवेशकाले 'सुमित्रानन्दवर्धनं' इति लक्ष्मणो विशेषितः वाल्मीकिना ।

[1] शोभनम्-ङ [2] प्रीयतां—ख.

अवश्यं रक्षणं कार्यं [1] अदृष्टे विजने वने ।
* अग्रतो गच्छ, सौमित्रे ! सीता त्वामनुगच्छतु ॥९५॥

अदृष्ट इति । इतः प्राक् सीतयेति शेषः । यदेवं अतः— अग्रत इत्यादि । एवं कार्यवशात् स्त्र्यनुजयोः अग्रतो गमनमदोषः ॥

पृष्ठतोऽ[2] नुगमिष्यामि त्वाञ्च सीतां च पालयन् ।
† अन्योन्यस्येह [3] नो रक्षा कर्तव्या, पुरुषर्षभ ! ॥ ९६ ॥
न हि तावदतिक्रान्ता सुकरा काचन क्रिया ।

नः—अस्माकं अन्योन्यस्य रक्षा कर्तव्या । छत्रिन्यायेन रक्ष्याया अपि रक्षकान्तःप्रवेशः—न इति । अन्ततः सीतया च स्वपातिव्रत्यमाहिम्ना स्वेतरयो रक्षणं भवति । कथमेवमतियत्न इत्यतः— न हीत्यादि । काचन क्रिया—अपायरक्षणलक्षणा अतिक्रान्तकाला चेत् सुकरा न हि । प्रहृतं प्रहृतमेवेति किं रक्षणीयम् ॥ ९६ ॥

अद्य दुःखं तु वैदेही वनवासस्य वेत्स्यति ॥९७॥
प्रणष्टजनसम्बाधं [4] क्षेत्रारामविवर्जितम् ।
विषमं च प्रपातं च वनं ह्यद्य प्रवेक्ष्यति ॥९८॥

क्षेत्रं—शाल्यादिक्षेत्रम् । विषमं—निम्नोन्नतम् । प्रपतन्त्यस्मिन्निति प्रपातः—गर्तः ॥ ९८ ॥

---

* कनीयसोः पृष्ठतोऽवस्थापने हि रक्षा सुकरा न स्यात् । अग्रतः स्थितस्य रामस्य पृष्ठे विद्यमानयोस्तयोर्योगक्षेमनिर्वहणस्य क्लिष्टत्वात् स्वस्यैवान्ते गमनम् । † परस्पररक्षणं शस्त्रादिनैवेति नायं निर्बन्धः, स्वरूपानुगुणत्वाद्रक्षणव्यापारस्य । एवञ्च सीताया अपि शुश्रूषादिलक्षणं रक्षणं वर्तत एवेति ।

[1] मद्विधैः—च. [2] हं ग–ङ. [3] नौ—ङ. [4] क्षेत्रग्राम—ङ.

श्रुत्वा रामस्य वचनं प्रतस्थे लक्ष्मणोऽग्रतः ।
अनन्तरं च सीतायाः राघवो रघुनन्दनः ॥ ९९ ॥

गतं तु गङ्गाऽपरपारमाशु
रामं सुमन्त्रः *[1] प्रततं निरीक्ष्य ।
अध्वप्रकर्षात् विनिवृत्तदृष्टिः
मुमोच बाष्पं व्यथितस्तपस्वी ॥ १०० ॥

अध्वनः प्रकर्षः—आधिक्यं—अतिदूरमिति यावत् । विनिवृत्त-दृष्टिः—विनिवृत्तचक्षुर्व्यापारः ॥ १०० ॥

स लोकपालप्रतिम[2]प्रभाववान्
तीर्त्वा महात्मा वरदो महानदीम् ।
ततः समृद्धान् [3]शुभसस्यमालिनः
क्रमेण † वत्सान् मुदितानुपागमत् ॥ १०१ ॥

वत्सान्—वत्सदेशान् । अन्तर्वेदिदेशो वत्सदेशः ॥ १०१ ॥

‡ तौ तत्र हत्वा चतुरो महामृगान्
वराहमृश्यं पृषतं महारुरुम् ।
आदाय मेध्यं त्वरितं बुभुक्षितौ
वासाय काले ययतुर्वनस्पतिम् ॥ १०२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्विपञ्चाशः सर्गः

---

* प्रततं—अविच्छिन्नमिति यावत् । † गङ्गायमुनयोर्मध्यदेशः वत्सदेशः ।
‡ पूर्वं—'कन्दमूलफलैर्जीवन् हित्वा मुनिवदामिषम्' (अयो.—२०-२९) इत्यभिधानं तु सुसंस्कृतमांसभक्षणविषयम् । अतो न विरोधः ।

[1] सततं—च. [2] प्रभावः—च. [3] जलसस्य—ङ.

चतुर्णां परिगणनं—वराहमित्यादि। ऋश्यः—कृष्णसारः கலைமான்। पृषतः—बिन्दुयुक्तः புள்ளிமான்। रुरुः—உழைமான்। बुभुक्षितौ तेषां मेध्यं मांसं त्वरितमादायेति। बुभुक्षावशात् केवलमग्नितापमात्रं कृत्वा स्वीकृत्येत्यर्थः। उक्ताहारस्य वन्याहारान्तर्गतत्वात् ग्रहः। अत्र द्विवचनात् रामलक्ष्मणौ गृहीतौ। इदमुपलक्षणं सीताया अप्याहार-परिग्रहे। 'देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्' इति शास्त्रात् देवतादिपूजाशेषतया हत्वा निवेद्याभ्यवहृतवन्ताविति अदोषः। न ह्यनयोर्ब्राह्मणवत् मृगहननेऽतिदोषः; मृगयाधर्मकत्वादेव। काले—सायंकाल इत्यर्थः। अनय (१००) मानः सर्गः (?) ॥ १०२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्विपञ्चाशः सर्गः

---

## त्रिपञ्चाशः सर्गः

[रामसन्तापः]

स तं वृक्षं समासाद्य सन्ध्यामन्वास्य पश्चिमाम्।
रामो रमयतां श्रेष्ठः इति होवाच लक्ष्मणम् ॥ १ ॥

अथ सायमावासवृक्षस्थले ततः प्राक् जनसमक्षं धैर्यधृतशोकं तु विजने बहिः स्फोरयति रामश्चापि। स तमित्यादि। रमयतां—प्रजारमणं कुर्वताम् ॥ १ ॥

अद्येयं प्रथमा रात्रिः याताऽऽजनपदाद्बहिः।
या सुमन्त्रेण रहिता तां नोत्कण्ठितुमर्हसि ॥ २ ॥

* याता, आ, जनपदादिति पदम्। अस्मज्जनपदाद्बहिर्देशे अद्य येयं रात्रिरायाता केवलवनवासरात्रिषु प्रथमा, या चेयं सुमन्त्रेण च रहिता, तामिमां प्राप्य नोत्कण्ठितुं–शोकस्मरणं कर्तुं नार्हसि ॥ २ ॥

जागर्तव्य[1]मतन्द्रिभ्यां अद्यप्रभृतिषु रात्रिषु ।
योगक्षेमं हि सीताया वर्तते लक्ष्मणावयोः ॥ ३ ॥

न विद्यते तन्द्री ययोस्तौ अतन्द्री ताभ्याम् । आवयोर्वर्तत इति । अस्मदायत्तमित्यर्थः ॥ ३ ॥

रात्रिं कथञ्चिदेवेमां, सौमित्रे! वर्तयामहे ।
उपावर्तामहे भूमौ आस्तीर्य स्वयमार्जितैः ॥ ४ ॥

कथञ्चिदेवेमामिति । उटजादिनिर्माणाभावात् केवल[2]वनस्थले शयितव्यत्वादित्याशयः । स्वयमार्जितैरिति । णपर्णादिभिरिति शेषः ॥

स तु संविश्य मेदिन्यां महार्हशयनोचितः ।
इमां सौमित्रये रामः व्याजहार कथां शुभाम् ॥ ५ ॥

कथामिति । वार्तामिति यावत् ॥ ५ ॥

ध्रुवमद्य महाराजः दुःखं स्वपिति, लक्ष्मण!
कृतकामा तु कैकेयी तुष्टा भवितुमर्हति ॥ ६ ॥

---

* याता–आ–इत्यनयोर्विपरिणामेन आयाता इत्यन्वयः। जनपदाद्बहिरागतस्य रामस्य प्रथमा खल्वियं रात्रिः। अतः सा यातेति कथनमसंगतं स्यादिति भावेन एवं व्याख्यातम्। गोविन्दराजस्तु याता–प्राप्ता इति व्याचख्यौ।

[1] मतन्द्राभ्यां–ङ.		[2] नभस्थले–ग.

*सा हि देवी महाराजं कैकेयी राज्यकारणात् ।
अपि न च्यावयेत् प्राणान् दृष्ट्वा भरतमागतम् ॥ ७ ॥

राज्यकारणादिति । महाराज्यपदाभिषेककारणादित्यर्थः ॥ ७ ॥

अनाथश्चैव वृद्धश्च मया चैव विनाकृतः ।
किं करिष्यति कामात्मा कैकेयीवशमागतः ॥ ८ ॥
इदं व्यसनमालोक्य राज्ञश्च मतिविभ्रमम् ।
काम एवार्थधर्माभ्यां गरीयानिति मे मतिः ॥ ९ ॥
को ह्यविद्वानपि पुमान् प्रमदायाः कृते त्यजेत् ।
छन्दानुवर्तिनं पुत्रं तातो मामिव, लक्ष्मण! ॥ १० ॥

काम एव गरीयानित्ययमर्थः प्रसाध्यते—को ह्यविद्वानपीत्यादि । अत्यज्ञोऽपि कः पुमान् पिता, मम तात इव छन्दानुवर्तिनं पुत्रं प्रमदायाः कृते—प्रमदामेव निमित्तं प्राप्य त्यजेत् । इदमत्यन्तानुचितम् । सर्वज्ञोऽपि सार्वभौमोऽपि वृद्धोऽपि कामात् कृतवानिति यत् अतो धर्मार्थाभ्यां प्रबलः काम इति मन्य इत्यर्थः । कथमेवं वादः सत्यपाशबन्धात् मद्वनवासानुमतिः प्राणाधिकप्रेम्णोऽपि—इति जानतोऽपि रामस्य? उच्यते—'अयोध्यामित एव त्वं काले प्रविश लक्ष्मण' इति वदिष्यन् तन्मतमवलम्ब्य तत्प्रीतये एवं वदति †। वास्तवस्त्वाशयोऽग्रे वक्ष्यते—एको ह्यहमित्यादिना ॥ १० ॥

---

* इदानीं भरतयौवराज्याय कुमार्गे प्रवृत्ता कैकेयी, भरतस्य परोक्ष एव एवं करोति चेत्, भरतागमनानन्तरं तद्दर्शनेनोत्तम्भिताशा सती यौवराज्यापेक्षया राज्याधिकारमेव कामयन्ती, तत्प्रतिबन्धकतया स्थितं दशरथं न मारयेद्वा—मारयेदेवेति भावः । एवमादिकं 'अयोध्यामित एव त्वं काल्ये प्रविश लक्ष्मण' इति वक्ष्यमाणलक्ष्मणप्रतिनिवृत्त्युपदेशाय लक्ष्मणाभिप्रायानुगुणमुच्यत इति गोविन्दराजः. † अत एव 'न च सीता त्वया हीना न चाहमपि' इत्युत्तरत्र लक्ष्मणवाक्यमपि युज्यते ।

**सुखी बत सभार्यश्च भरतः केकयीसुतः ।**
**मुदितान् कोसलानेको यो भोक्ष्यत्यधिराजवत् ॥ ११ ॥**
**स हि सर्वस्य राज्यस्य *[1] सुखमेकं भविष्यति ।**
**ताते च वयसाऽतीते मयि चारण्यमाश्रिते ॥ १२ ॥**

एकं मुख्यं सुखम्—अनुभवितेति शेषः ॥ १२ ॥

**† अर्थधर्मौ परित्यज्य यः काममनुवर्तते ।**
**एवमापद्यते [2] क्षिप्रं राजा दशरथो यथा ॥ १३ ॥**

यथा दशरथो राजा—तथा क्षिप्रं अराजत्वमापद्यते—प्राप्नोति ॥ १३ ॥

**मन्ये दशरथान्ताय मम प्रव्राजनाय च ।**
**कैकेयी, सौम्य ! [3] संप्राप्ता राज्याय भरतस्य च ॥ १४ ॥**
**अपीदानीं न कैकेयी सौभाग्यमदमोहिता ।**
**कौसल्यां च सुमित्रां च संप्रबाधेत मत्कृते ॥ १५ ॥**

मत्कृत इति । मद्दुःखसम्पादननिमित्तमित्यर्थः ॥ १५ ॥

**[4] माताऽस्मत्कारणाद्देवी सुमित्रा दुःख[5]मावसेत् ।**
**अयोध्यामित एव त्वं [6] काले प्रविश, लक्ष्मण ! ॥ १६ ॥**

माता—त्वन्माता । काले—प्रातःकाल इत्यर्थः ॥ १६ ॥

---

* सुखमेकमिति—**गो.** पाठः । अद्वितीयं प्रधानमित्यर्थः—इति च व्याख्यातम् । सुखमेक इति तीर्थपाठः । सुखं—अनायासेन एको राजा भविष्यतीति तदानीमर्थः । † यः—भरतः काममनुवर्तते सः—यथा राजा दशरथो विपदमापन्नः एवं विपदमापद्यते—प्राप्नोतीत्यर्थः । अन्ये तु राजा—दशरथो यथा राजत्वमापन्नः तथा भरतो राजत्वमापद्यत इत्यर्थ इत्याहुः—**ति.**

[1] सुखमेको, मुखमेकं—ङ. [2] लोकः—ङ. [3] संतप्ता—ङ. [4] मा स्म मत्कारणात्—ङ. [5] माविशेत्—ङ. [6] कास्ये—ङ.

अहमेको गमिष्यामि सीतया सह दण्डकान् ।
अनाथाया हि नाथस्त्वं कौसल्याया भविष्यसि ॥ १७ ॥

नाथ इति । रक्षक इति यावत् ॥ १७ ॥

क्षुद्र[1]कर्मा हि कैकेयी [2] द्वेष्यमन्याय्यमाचरेत् ।
*[3] परिदद्याद्धि [4] धर्मज्ञ ! गरं ते मम मातरम् ॥ १८ ॥

क्षुद्रकर्मेति । 'डाबुभाभ्यां....' इति डाप् । किमन्याय्यमाचरेदित्यतः—परिदद्यादित्यादि । गरं—विषम् । ते—तव मातरं मम मातरं चोद्दिश्येति शेषः ॥ १८ ॥

नूनं जात्यन्तरे [5] कस्मिन् स्त्रियः पुत्रैर्वियोजिताः ।
जनन्या मम, सौमित्रे ! [6] तदप्येतदुपस्थितम् ॥ १९ ॥

कस्मिंश्चित् जात्यन्तरे—जन्मान्तरे स्त्रियः—मातरः पुत्रैः—तत्तत्पुत्रैर्वियोजिता नूनम् । मम जनन्येत्याकर्षः । तदप्येतदिति । पापमिति यावत् ॥ १९ ॥

मया हि चिरपुष्टेन दुःखसंवर्धितेन च ।
विप्रायुज्यत कौसल्या फलकाले धिगस्तु माम् ॥ २० ॥

फलकाले—सुखानुभवार्हकाले ॥ २० ॥

मा स्म सीमन्तिनी काचित् जनयेत् पुत्रमीदृशम् ।
सौमित्रे ! योऽहमम्बाया दद्मि शोकमनन्तकम् ॥ २१ ॥

ईदृशमिति । कीदृशमित्यतः—सौमित्रे इत्यादि ॥ २१ ॥

---

* परिदद्याः—परिदानं नाम रक्ष्यतया प्रदानम्—गो. एतद्रीत्या धर्मज्ञे भरते इति पाठः ।

[1] धर्मा—ङ. [2] द्वेष्यादन्या—च. [3] परिदद्या हि—ङ. [4] धर्मज्ञे भरते—च. ङ. [5] तात—ङ. [6] तस्मादेत—ङ.

मन्ये प्रीतिविशिष्टा सा मत्तः, लक्ष्मण! शारिका।
यस्यास्तच्छ्रूयते वाक्यं, शुक! पादमरेर्दश ॥ २२ ॥

सर्वथा मज्जननेन अम्बाया न प्रयोजनमित्याह—मन्य इत्यादि। हे लक्ष्मण! अम्बया शिक्षिता–वर्धिता–कृतवचःशिक्षा च या शारिका अस्ति, सा तु वृथा वर्धितात् मत्तः प्रीतिविशिष्टा–अम्बायाः प्रीतिजननविषये विशिष्टा—विशेषसाधनभूतेति मन्ये। कथम्? यत्–यस्मात् तस्याश्शारिकायाः सकाशात् शुकं प्रति तथोच्यमानं 'अरेः पादं–असन्मातुः कौसल्यायाः शत्रोः पादं दश–दंशनं कुरु' इति शत्रुनिग्रहविषयकं वाक्यमपि वा श्रूयते। मत्तः शत्रुनिग्रहप्रसक्तवाचोऽपि न प्राप्नोति। तत्—तस्मादेव ॥ २२ ॥

शोचन्त्याश्चाल्पभाग्याया न किञ्चिदुपकुर्वता।
पुत्रेण किमपुत्राया मया कार्यमरिंदम ॥ २३ ॥

*अपुत्राया इति। असन्निहितपुत्राया इत्यर्थः ॥ २३ ॥

अल्पभाग्या हि मे माता कौसल्या रहिता मया।
शेते परमदुःखार्ता पतिता शोकसागरे ॥ २४ ॥
एको ह्यहमयोध्यां च पृथिवीं चापि, लक्ष्मण!
तरेयमिषुभिः क्रुद्धः ननु वीर्यमकारणम् ॥ २५ ॥

नन्वसन्निहितपुत्रकता मातुः किमिति कार्या? भ्रात्रा मया सहितेनाभिषिच्यमानं अयोध्यामवस्थातुं सुशकयत्वादित्यत्र, तथाऽत्रस्थित्यङ्गीकारे त्वदपेक्षापि मे नास्ति। तत् धर्मलोपभयादशक्याङ्गीकारमित्याह—एक इत्यादि। इषुभिस्तरेयमिति। निरस्ताराति कां कर्तुं शक्नुयां इत्यर्थः। वीर्यमकारणमिति। परलोकहिते, अपि तु धर्म एवेति शेषः ॥ २५ ॥

---

* पुत्रकृतप्रयोजनरहितत्वाद्वा अपुत्राया इति निर्देशः।

अधर्मभयभीतश्च परलोकस्य चानघ !
तेन, लक्ष्मण ! नाद्याहं आत्मानमभिषेचये ॥ २६ ॥

यदेवं अतः—अधर्मेति । अधर्मात् भयम्, कैकेय्यै पितृदत्तवरपालनप्रतिज्ञाक्षतिरूपाधर्मात् भीत इत्यर्थः । परलोकस्य चेति । नाशात् भीत इति शेषः ॥ २६ ॥

एतदन्यच्च करुणं विलप्य * विजने [1] वने ।
† अश्रुपूर्णमुखो [2] रामः निशि तूष्णीमुपाविशत् ॥ २७ ॥

विजन इत्यनेन स्वविलापे लोकदुःखप्रसङ्गपरिहारनिर्बन्धाभावः आवेदितः ॥ २७ ॥

[3] विलप्योपरतं रामं गतार्चिषमिवानलम् ।
समुद्रमिव निर्वेगं आश्वासयत लक्ष्मणः ॥ २८ ॥

अश्वासयत—आश्वासयादिति यावत् ॥ २८ ॥

ध्रुवमद्य पुरी, राजन् ! अयोध्याऽऽयुधिनां वर !
निष्प्रभा त्वयि निष्क्रान्ते गतचन्द्रेव शर्वरी ॥ २९ ॥

आयुधिनां इति पदम् ॥ २९ ॥

‡ नैतदौपयिकं, राम ! यदिदं परितप्यसे ।
विषादयसि सीतां च मां चैव, पुरुषर्षभ ! ॥ ३० ॥

---

* बहुजनमध्ये मनसोऽनवधानतया न क्लेशाधिक्यप्रतीतिः, विजने तु देशे अतीव क्लेशोन्मेष इत्यनुभवात् विजन इत्युक्तम् । † स्वानुरक्तजनदुःखासहिष्णुत्वादश्रुपूर्णमुखत्वं, न तु वस्तुतः । 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' इत्युक्तः—ती. अश्रुपूर्णमुखत्वं नटवल्लोकव्यवहारानुसारेणेति बोध्यम्—ति. एतद्व्याख्यात्रा—वक्ष्यमाणदशमश्लोकव्याख्यान एवोक्तम् । ‡ 'युक्तमौपयिकं' इत्यमरः । न युक्तमित्यर्थः ।

[1] बहु—च. [2] दीनः—च. [3] विलापोपरतं—च. [4] राम अयोध्या—च.

औपयिकमिति । 'उपधाया ह्रस्वश्च' इति ठक् स्वार्थे, आकारस्य ह्रस्वश्च, उपायः—हितसाधनं न भवतीत्यर्थः । तदेव प्रदर्श्यते—विषादयसीत्यादि ॥ ३० ॥

*न [1]हि सीता त्वया हीना न चाहमपि, राघव !
मुहूर्तमपि जीवावः जलान्मत्स्याविवोद्धृतौ ॥ ३१ ॥

अथ गन्तव्यं त्वया इति यदुक्तं, तत्रोत्तरं लक्ष्मण आह—न हि सीतेत्यादि ॥ ३१ ॥

न हि तातं न शत्रुघ्नं न सुमित्रां, परंतप !
द्रष्टुमिच्छेयमद्याहं स्वर्गं वाऽपि त्वया विना ॥ ३२ ॥

अथ नोत्कण्ठितुमर्हसीत्युक्तस्योत्तरं—न हि तातमित्यादि ॥

ततस्तत्र सुखासीनौ नातिदूरे निरीक्ष्य ताम् ।
न्यग्रोधे सुकृतां शय्यां भेजाते धर्मवत्सलौ ॥ ३३ ॥

ततः—लक्ष्मणवचनानन्तरम् । तत्र—लक्ष्मणेन शय्यानिर्मितेः पूर्वं वष्टब्धवृक्षमूले सुखासीनौ सीतारामौ, न्यग्रोधे—तन्मूलतले सुकृतां—सम्यक्प्रचिताम् । वत्सला च वत्सलश्च—वत्सलौ, सर्वत्र 'पुमान् स्त्रिया' इत्येकशेषः ॥ ३३ ॥

---

* त्वया हीना सीता च न जीवति, त्वद्विहीनोऽहमपि च न जीवामि . . . अपि जीवावः—यदि जीवावः जलादुद्धृतौ मत्स्याविव मुहूर्तं स्वल्पकालं जीवावः—गो. अत्र नकारद्वयं तृतीयनकारस्याप्युपलक्षणं, त्वया हीना सीता च त्वया हीनोऽहं च एतावुभावावामपि जलादुद्धृतौ मत्स्याविव मुहूर्तमात्रमपि न जीवाव इति सम्बन्धः—ती. त्वया हीना सीता त्वया हीनोऽहं च जलादुद्धृतौ मत्स्याविव न जीवावः न जीवावः । जीवाव इत्यावृत्त्या नञ्द्वयान्वयः । जीवनाभावस्य सर्वथा सत्यत्वप्रतिपादनाय द्विरुक्तिः—ति. युक्तं च तिलकोक्तम्, अध्याहारविपरिणामादिक्लेशाभावात्, अर्थस्वारस्याच्च । यद्वा 'न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥' इत्यादाविव निर्वाहः स्वरसः । समनन्तरश्लोकोऽप्यत्रावधेयः ।

[1] च–ङ., च.

स लक्ष्मणस्योत्तमपुष्कलं वचः
निशम्य [1]चैवं *वनवासमादरात् ।
समाः समस्ता विदधे परंतपः
प्रपद्य धर्मं सुचिराय राघवः ॥ ३४ ॥

अथ स रामो लक्ष्मणस्य वनवासं प्रत्यादरादुच्यमानं—'न मे कुत्राप्युत्कण्ठा, नापि त्वद्वियोगः क्षणमपि सुसहः'—इत्येवमादरादुच्यमानं, अत एव उत्तमं पुष्कलं—'श्रेयान् श्रेष्ठः पुष्कलः स्यात्', अत्यन्तश्रेष्ठं वचो निशम्य, स्वयं सुचिराय धर्मं—वनवासधर्मं प्रपद्य—स्वीकृत्य लक्ष्मणस्य च ताः समस्ताः समाः प्रति अनुमतिं विदधे वनवासाय ॥ ३४ ॥

ततस्तु तस्मिन् विजने महावने
महाबलौ राघववंशवर्धनौ ।
न तौ भयं संभ्रममभ्युपेयतुः
यथैव सिंहौ गिरिसानुगोचरौ ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्रिपञ्चाशः सर्गः

---

भयं—तत्प्रयुक्तं संभ्रमं—इतस्ततोऽन्वीक्षादिकम् । माला (३५) मानः सर्गः ॥ ३५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे त्रिपञ्चाशः सर्गः

---

## चतुःपञ्चाशः सर्गः

[भरद्वाजदर्शनम्]

ते तु तस्मिन् महावृक्षे उषित्वा रजनीं शिवाम् ।
विमलेऽभ्युदिते सूर्ये तस्माद्देशात् प्रतस्थिरे ॥ १ ॥

अथ गङ्गाया दशाश्वमेधस्थलाददूरे उत्तीर्णगङ्गस्य गङ्गातीरमार्गेण प्रयागं प्राप्तस्य भरद्वाजाश्रमप्राप्तिः । ते त्वित्यादि ॥ १ ॥

---

* वनवासमित्यत्यन्तसंयोगे द्वितीया—गो.

[1] रामो—ङ.

[1]यत्र भागीरथीं गङ्गां यमुनाऽभिप्रवर्तते ।
जग्मुस्तं देशमुद्दिश्य विगाह्य सुमहद्वनम् ॥ २ ॥

गङ्गामभि यमुना प्रवर्तत इति योजना । तं देशमिति । प्रयागदेशमित्यर्थः ॥ २ ॥

ते भूमिभागान् विविधान् देशांश्चापि मनोरमान् ।
अदृष्टपूर्वान् पश्यन्तः तत्र तत्र यशस्विनः ॥ ३ ॥
*यथा [2]क्षेमेण [3]गच्छन्तः संपश्यन् विविधान् द्रुमान् ।

भूमिभागाः- भूमिप्रदेशाः । यथा—यथासुखं, जनानुयानशङ्काभावात् उपविश्योत्थाय च शनैः स्वेच्छानुरोधेन । क्षेमेण—'प्रकृत्यादिभ्यः' इति तृतीया, निर्दुःखं गच्छन्तस्ते संपश्यन्—समपश्यन्निति यावत् ॥ ३ ॥

[4]निवृत्तमात्रे दिवसे रामः सौमित्रिमब्रवीत् ॥ ४ ॥
प्रयागमभितः पश्य, सौमित्रे ! धूममुन्नतम् ।
अग्नेर्भगवतः केतुं मन्ये सन्निहितो मुनिः ॥ ५ ॥

निवृत्तमात्र इति । अर्धमण्डलकालमात्र इत्यर्थः । भगवतः अग्नेः केतुं—धूमं पश्य । यदेवं अतः —अत्र मुनिस्सन्निहित इति मन्ये ॥ ५ ॥

नूनं प्राप्ताः स्म संभेदं गङ्गायमुनयोर्वयम् ।
तथा हि श्रूयते शब्दः [5]वारिणो वारिघट्टितः ॥ ६ ॥
दारूणि परिभिन्नानि वनजैरुपजीविभिः ।
[6]भरद्वाजाश्रमे चैते दृश्यन्ते विविधा द्रुमाः ॥ ७ ॥

---

* यथाक्षेमेण- क्षेमानतिक्रमेण—क्षेमहेत्ववधानमनतिक्रम्येत्यर्थः—गो.

[1] यत्र भागीरथी गङ्गा यमुनामभिवर्तते—ङ. [2] क्रमेण—ङ. [3] संपश्यन् पुष्पितान् विविधान् द्रुमान्—च. [4] निवृत्त—च. [5] वारिणोवारिवर्षजः—ङ., वारिणोवारिघर्षजः—च. [6] छिन्नाश्चाप्याश्रमे—च.

धन्विनौ तौ सुखं गत्वा लम्बमाने दिवाकरे।
गङ्गायमुनयो[1]स्सन्धौ *प्रापतुर्निलयं मुनेः ॥ ८ ॥
रामस्त्वाश्रममासाद्य त्रासयन् मृगपक्षिणः।
गत्वा मुहूर्तमध्वानं भरद्वाजमुपागमत् ॥ ९ ॥

गङ्गायमुनयोस्सन्धाविति। अन्तर्वेदिप्रदेश इत्यर्थः। निलयं–आवासम्। प्राप्तुं–'तुमुन् ण्वुलौ क्रियायां क्रियार्थायां' इति तुमुन्; प्राप्स्यन्, तद्धेतोर्मुनेराश्रममासाद्य–तत्समीपवनप्रदेशमासाद्येत्यर्थः। त्रासयन्निति। धनुष्मत्त्वादिस्वरूपमात्रेण केवलं त्रासहेतुस्सन्। भरद्वाजं–भरद्वाजाश्रममित्यर्थः ॥ ९ ॥

ततस्त्वाश्रममासाद्य मुनेर्दर्शनकाङ्क्षिणौ।
सीतयाऽनुगतौ वीरौ †दूरादेवावतस्थतुः ॥ १० ॥

दूरादेवावतस्थतुः–अनुमत्यर्थमिति भावः ॥ १० ॥

[2]संप्रविश्य महात्मानं ऋषिं शिष्यगणैर्वृतम्।
‡संशितव्रतमेकाग्रं तपसा लब्धचक्षुषम् ॥ ११ ॥

संप्रविश्येति। कार्यवशनिर्गतशिष्यद्वारा विज्ञाप्यानुज्ञाताविति शेषः। तपसा लब्धचक्षुषमिति। त्रैकालिकसर्वजगद्वृत्तान्ताभिज्ञमित्यर्थः ॥

हुताग्निहोत्रं §दृष्ट्वा [3]महाभागं कृताञ्जलिः।
रामः सौमित्रिणा सार्धं सीतया चाभ्यवादयत् ॥ १२ ॥

दृष्ट्वा–ज्ञात्वैव, अवसरं विज्ञायेत्यर्थः ॥ १२ ॥

---

* सर्वत्र एवमेव पाठो दृश्यते—परन्तु एतद्व्याख्यानुसारेण—प्रापतुरिति स्थाने 'प्राप्तुं तु' इति पाठः स्यादिति भाति। श्लोकद्वयमेकान्वयं चेति। †सायंतनसमयत्वात् अग्निहोत्रावसानं प्रतीक्षमाणाववतस्थतुः इत्यर्थः–गो. विज्ञापनपूर्वकानुमतिलाभार्थमिति भावः–ति. ‡संशितव्रतं–तीक्ष्णव्रतं–ति., गो. §दृष्ट्वा–दर्शनोत्तरकालमेवेत्यर्थः–गो.

[1] मध्ये–ङ. [2] स प्रविश्य–ङ., च. [3] महाभागः–च.

न्यवेदयत चात्मानं तस्मै लक्ष्मणपूर्वजः ।
पुत्रौ दशरथस्यावां, भगवन्! रामलक्ष्मणौ ॥ १३ ॥
भार्या ममेयं वैदेही कल्याणी जनकात्मजा ।
मां चानुयाता विजनं तपोवनमनिन्दिता ॥ १४ ॥
पित्रा प्रव्राज्यमानं मां सौमित्रिरनुजः प्रियः ।
अयमन्वगमद्भ्राता वनमेव दृढव्रतः ॥ १५ ॥
पित्रा नियुक्ताः, भगवन्! प्रवेक्ष्यामस्तपोवनम् ।
[1]धर्ममेव चरिष्यामः तत्र *मूलफलाशनाः ॥ १६ ॥

धर्ममेवेति । वानप्रस्थधर्ममेव, न तु मृगयादिराजधर्मात् वनप्राप्तिरित्यर्थः । तदेव प्रदर्श्यते—वत्रेत्यादि । पितृनियोगतः प्रवेष्टव्यवन इत्यर्थः ॥ १६ ॥

तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
उपानयत धर्मात्मा गामर्घ्यमुदकं ततः ॥ १७ ॥

गामर्घ्यमिति । गां—मधुपर्कमिति यावत् । तथा हि स्मृतिः ‘गोमधुपर्कार्हौ वेदाध्यायाचार्यऋत्विक्स्नातको राजा वा धर्मयुक्तः’ इति ॥ १७ ॥

नानाविधानन्नरसान् वन्यमूलफलाश्रयान् ।
तेभ्यो ददौ तप्ततपाः वासं चैवाभ्यकल्पयत् ॥ १८ ॥

नानाविधान्—नानाप्रकारान्, अन्नरसान्—अद्यत इत्यन्नं, अन्नानि ; रसाः पानीयविशेषाः तान्—वन्यमूलफलाश्रयानेव, न तु जानपदान् ॥ १८ ॥

* मूलफलमिति असंस्कृताहारसामान्यपरम् । अतः पूर्वं मांसग्रहणं न विरुद्धम् ।

[1] धर्ममेवाचरि—च.

*मृगपक्षिभिरासीनः मुनिभिश्च समन्ततः ।
रामामागतमभ्यर्च्य [1]स्वागतेनातिथिं मुनिः ॥ १९ ॥

आसीन इति । अभ्यर्च्य आसीनोऽभवदिति योजना ॥१९॥

प्रतिगृह्य च तामर्चामुपविष्टं स राघवम् ।
भरद्वाजोऽब्रवीद्वाक्यं धर्मयुक्तमिदं तदा ॥ २० ॥
†चिरस्य खलु, काकुत्स्थ! पश्यामि त्वामिहागतम् ।
‡श्रुतं तव मया चेदं विवासनमकारणम् ॥ २१ ॥
अवकाशो विविक्तोऽयं महानद्योस्समागमे ।
पुण्यश्च रमणीयश्च वसत्विह भवान् सुखम् ॥ २२ ॥
एवमुक्तस्तु वचनं भरद्वाजेन राघवः ।
प्रत्युवाच शुभं वाक्यं रामः सर्वहिते रतः ॥ २३ ॥
भगवन्नित आसन्नः पौरजानपदो जनः ।
सुदर्शमिह मां प्रेक्ष्य मन्येऽहमिममाश्रमम् ॥ २४ ॥
आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः ।
अनेन कारणेनाहमिह वासं न रोचये ॥ २५ ॥

इत आसन्न इति । एतदाश्रमादासन्नदेशवर्ती प्रेक्ष्य आगमिष्यतीति मन्य इति योजना ॥ २४-२५ ॥

---

*मृगपक्ष्यादीनां सौहार्दाभिधानेनैवं ऋषिमाहात्म्यं प्रकटितम्. †अनेन पूर्वमपि कदाचिदागमनं ध्वनितम् । पूर्वरामावतारकालिकमागमनं मनसि निधाय वा प्रश्नोक्तिः–ति. चक्षुर्बाह्यगोचरं त्वामेव मनसि सततमनुसन्दधानोऽहं चिरकालस्य इह मम पुरतः चक्षुषा पश्यामीत्याश्चर्यम्–ती. वस्तुतस्तु—निषादसख्यादिपरिशीलनार्थं पूर्वमपि रामेण मृगयादिहेतोः अत्रागमनं सम्भावनार्हमनेन दृढीकृतम् ॥ ‡श्रुतमिति । त्वत्त इति शेषः । अकारणं तव विवासनं श्रुतं–त्वत्तः श्रुतं तव विवासनमकारणमिति वाऽन्वयः । यद्वा—अन्यमुखात् श्रुतं, किंवदन्त्याः शीघ्रव्यापनशीलत्वात् ।

[1] स्वागतेनाह तं–ङ., स्वागतेनागतं–च.

एकान्ते पश्य, भगवन्! आश्रमस्थानमुत्तमम्।
[1] रमते यत्र वैदेही सुखार्हा जनकात्मजा ॥ २६ ॥

पश्यति।   ज्ञात्वा निर्दिशेत्यर्थः ॥ २६ ॥

एतत् श्रुत्वा शुभं वाक्यं भरद्वाजो महामुनिः।
राघवस्य ततो वाक्यं अर्थग्राहकमब्रवीत् ॥ २७ ॥

* अर्थग्राहकं—राघवोक्तप्रयोजनप्रतिपादकम् ॥ २७ ॥

दशक्रोश इतः, तात! गिरिर्यस्मिन्निवत्स्यसि।
महर्षिसेवितः पुण्यः [2] सर्वतः सुखदर्शनः ॥ २८ ॥

दशक्रोश इति सप्तम्यन्तम् ॥ २८ ॥

गोलाङ्गूलानुचरितः वानरर्क्षनिषेवितः।
चित्रकूट इति ख्यातः गन्धमादनसन्निभः ॥ २९ ॥

गोलाङ्गूलः—முசுண ॥ २९ ॥

यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते।
कल्याणानि समाधत्ते न [3] पापे कुरुते मनः ॥ ३० ॥

यावत्—यदा अवेक्षते तदेति योजना। समाधत्त इति। मनसेति शेषः ॥ ३० ॥

ऋषयस्तत्र बहवः विहृत्य शरदां शतम्।
तपसा दिवमारूढाः कपालशिरसा सह ॥ ३१ ॥

---

* अर्थग्राहकं—बह्वर्थवत्—गो.

[1] रमेत—ङ.   [2] पर्वतः—च.   [3] मोहे—च.

*दुर्भिक्षमृतनृकपालवत् पलितं–शुक्लं शिरस्तथा, मध्यमपदलोपी समासः, तादृशेन शिरसा सह–एवमतिवृद्धदशायामपि तपश्चरन्तः तादृशेन पूर्णेन यावज्जीवानुष्ठितेन तपसा स्वसहजब्राह्मतन्त्रज्ञानयोगवैभवेन दिवं–परनाकं–ब्रह्मकुलसहजलोकं–ब्रह्मलोकमारूढाः–प्राप्ता इत्यर्थः। †अन्यस्तु–कपालशिरसा–देहेन सह स्वर्गं गताः इत्याह–तदानीं तथैव वक्तव्यत्वतः अयं शिरोवेष्टनप्राणायामः असङ्गतः। एतत्कायकुणपः स्वर्गस्याप्यनर्ह इति सर्वथैव त्याग आवश्यकः। दाशरथिधर्मपुत्रादयः धर्मवैभवप्रदर्शनाय कियद्दूरं प्राप्तव्यमण्डलप्राप्तेः प्रागेव तत्कुणपं निरस्य दिव्यपुण्यदेहं विद्यादेहं वा प्राप्य स्वं स्वं धाम गच्छन्ति। अतो नेदं ब्रह्मकुलस्य सशरीरनिर्याणं पुमर्थः। अतो न किञ्चित्प्राशस्त्यम् ॥ ३१ ॥

**प्रविविक्तमहं मन्ये तं वासं भवतः सुखम् ।**
**‡इह वा वनवासाय वस, राम! मया सह ॥ ३२ ॥**

वनवासाय–तद्वासनियमसिद्ध्यै मया सह इह वा वस। अद्येति शेषः ॥ ३२ ॥

---

*निरन्तरकपालासनेन प्रक्षीणत्वक्छिरोरुहतया कपालावशिष्टशिरसा सह दिवमारूढा इत्यर्थः। कपालशिरसेत्येतत् शरीरोपलक्षणम्। सशरीराः स्वर्गं गता इत्यर्थः। यद्वा कपालशिरा इति कस्यचिदृषेः संज्ञा। कपालशिरसा–कपालरूपशिरोयुक्तेनेत्यध्याहृतशरीरपदविशेषणमित्येके। कपालमात्रावशिष्टं शिरो यस्मिन्निति तपोविशेषणमित्येके–**गो.**

†अन्यस्तु इत्युच्यमानः—**गोविन्दराजः, महेशतीर्थो** वा स्यात्। अयं भागः तिलके एवमनूदितो दृश्यते—'केचित्तु कपालशिरसेति शरीरोपलक्षणं–सशरीराः स्वर्गं गता इत्याहुः। तन्न—धर्मपुत्रादीनामपि कियद्दूरमेव धर्मवैभवदर्शनाय एतच्छरीरेण गमनम्। ततस्तन्निरासपूर्वकमेव स्वर्गगमनश्रवणादिति कतकः' इति। परन्त्वयमर्थानुवादः स्यादपि। ‡एवं चित्रकूटवासनिदेशनात् स्वाश्रमे रामवासः स्वाननुमतः इति प्रतीतिनिवारणाय, लोकरीत्या च 'इहैव वा वस' इत्युक्तिः।

स रामं सर्वकामैस्तं भरद्वाजः प्रियातिथिम् ।
सभार्यं सह च भ्रात्रा * प्रतिजग्राह [1] धर्मवित् ॥ ३३ ॥

स राममिति । तद्रजन्यां तत्र वसन्तमिति शेषः ॥ ३३ ॥

तस्य प्रयागे रामस्य तं महर्षिमुपेयुषः ।
प्रपन्ना रजनी पुण्या चित्राः कथयतः कथाः ॥ ३४ ॥

प्रयागे रजनी प्रपन्ना—प्राप्ता ॥ ३४ ॥

सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः ।
भरद्वाजाश्रमे [2] रम्ये तां रात्रिमवसत् सुखम् ॥ ३५ ॥
प्रभातायां रजन्यां तु भरद्वाजमुपागमत् ।
उवाच नरशार्दूलः मुनिं ज्वलितचेतसम् ॥ ३६ ॥
शर्वरीं भगवन्नद्य, सत्यशील! तवाश्रमे ।
उषिताः [3] स्मेह वसतिं अनुजानातु नो भवान् ॥ ३७ ॥

इह—तवाश्रमे शर्वरीमुषिताः स्म । अतः परं वसतिं—त्वदुद्दिष्ट-चित्रकूटवासगमनं प्रत्यनुजानातु । भरद्वाजो रामेण तथा प्रार्थित इति शेषः ॥ ३७ ॥

रात्र्यां तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम् ।
मधुमूलफलोपेतं चित्रकूटं † व्रजेति ह ॥ ३८ ॥

व्रजेति हेति । अनुजज्ञ इति शेषः ॥ ३८ ॥

वासमौपयिकं मन्ये तव, राम! महाबल!

‡ प्राक् व्युत्पत्तिमात्रं प्रदर्शितम्, उचितमित्यर्थः ॥

---

* रामं प्रतिजग्राह—सत्कारैर्वशीकृतवानित्यर्थः । स्वागतेन स्वीकृतवानिति वा ।
† व्रजेति अब्रवीदित्यन्वयः । ‡ गतसर्गे ३० श्लोकव्याख्यायां औपयिकपदस्येति शेषः ।

[1] हर्षयन्—च. [2] पुण्ये—ङ. [3] स्मो ह—च.

[1] नानानगगणोपेतः किन्नरोरगसेवितः ।
मयूरनादाभिरुतः [2] गजराजनिषेवितः ॥ ३९ ॥
गम्यतां भवता शैलः चित्रकूटः स विश्रुतः ।
पुण्यश्च रमणीयश्च बहुमूलफलायुतः ॥ ४० ॥
तत्र कुञ्जरयूथानि मृगयूथानि चाभितः ।
विचरन्ति वनान्तेऽस्मिन् तानि द्रक्ष्यसि, राघव ! ॥ ४१ ॥
सरित्प्रस्रवणप्रस्थान् * दरीकन्दरनिर्दरान् ।
चरतः सीतया सार्धं † नन्दिष्यति मनस्तव ॥ ४२ ॥

सरित्प्रस्रवणेनोपेताः प्रस्थास्तथा । दर्यः, कन्दरादिः, निर्दराः--निर्झराश्च तथा । दरी—गिरिगुहा । कन्दराः—वृक्षमूलकोटराः ॥ ४२ ॥

प्रहृष्टकोयष्टिभकोकिलस्वनैः
विनादितं तं वसुधाधरं शिवम् ।
मृगैश्च मत्तैः बहुभिश्च कुञ्जरैः
सुरम्यमासाद्य समावसाश्रमम् ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुःपञ्चाशः सर्गः

———

कोयष्टिभः—टिट्टिभः—*ಟಿಂಟಿಭಿ* (?) । आलाव (४३ १/२) मानः सर्गः ॥ ४३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चतुःपञ्चाशः सर्गः

———

* दर्यः—पाषाणसंश्लेषस्थानानि । कन्दराः—गुहाः । निर्दराः—विदीर्णपाषाणसन्धयः—गो. † सीतया सार्धं चरतः तव मनः नन्दिष्यति—सन्तोषं प्राप्स्यति ।

[1] नानामर—ङ. [2] गजवाजि—ङ.

## पञ्चपञ्चाशः सर्गः

[यमुनातरणम्]

उषित्वा रजनीं तत्र राजपुत्रावरिन्दमौ ।
महर्षिमभिवाद्याथ जग्मतुस्तं गिरिं प्रति ॥ १ ॥

अथ भरद्वाजस्यानुज्ञया प्रस्थितस्य रामस्य मार्गोपदेशपूर्वं चित्रकूटप्रस्थानम् । उषित्वेत्यादि ॥ १ ॥

तेषां चैव स्वस्त्ययनं महर्षिः स चकार ह ।
प्रस्थितांश्चैव तान् प्रेक्ष्य पिता पुत्रानि[1]वान्वगात् ॥ २ ॥
ततः प्रचक्रमे वक्तुं वचनं स महामुनिः ।
भरद्वाजो महातेजाः रामं सत्यपराक्रमम् ॥ ३ ॥

वचनं वक्तुं प्रचक्रम इति । मार्गोपदेशार्थमिति शेषः ॥ ३ ॥

गङ्गायमुनयोस्सन्धि [2]आसाद्य, *मनुजर्षभौ !
कालिन्दीमनुगच्छेतां नदीं पश्चान्मुखाश्रिताम् ॥ ४ ॥

गङ्गायमुनयोः सन्धि—सङ्गमतीर्थं प्राप्य तदनन्तरं †पश्चान्मुखाश्रितां—‡सङ्गमात्पश्चात्प्रदेश एवाश्रितस्वप्रयुक्तव्यवहारां गङ्गां ; सङ्गमानन्तरं गङ्गाया एव व्यवहारः, न तु कालिन्द्याः । कालिन्दीं—तदुत्तरतीरं आसाद्य—प्राप्य अनुगच्छेताम् ॥ ४ ॥

अथासाद्य तु कालिन्दीं [3]शीघ्रस्रोतसमापगाम् ।
तस्यास्तीर्थं [4]प्रचरितं [5]पुराणं प्रेक्ष्य, राघवौ ! ॥ ५ ॥

---

* सम्बुध्यन्तं पदम् । † गङ्गाजलवेगाभिहत्या किञ्चित्पश्चान्मुखप्रवाहं प्राप्तां कालिन्दीं नदीम्—गो., ती. ‡ तिलकेऽयं भागः एवमनूदितः—सङ्गमात्पश्चिमप्रदेश एवाश्रितस्वप्रयुक्तव्यवहारां, संगमपूर्वभागे तु गंगाया एव व्यवहार इति भावः—इति कतकः । अन्ये तु पश्चान्मुखया गङ्गया आश्रितां कालिन्दीमनुगच्छेतां इत्यर्थः । अत एवाग्रे कालिन्दीमासाद्येत्युक्तिरित्याहुः—ति.

[1] वान्वशात्—ङ., वौरसान्—च. [2] आदाय मनुजर्षभ—च. [3] प्रतिस्रोतस्समागताम्—च. [4] सुचरितं, प्रचलितं—ङ. [5] प्रणामं—च.

तत्र यूयं प्लवं कृत्वा तरतांशुमतीं नदीम् ।
*ततो न्यग्रोधमासाद्य महान्तं हरितच्छदम् ॥ ६ ॥
विवृद्धं बहुभिर्वृक्षैः श्यामं सिद्धोपसेवितम् ।
तस्मै सीताऽञ्जलिं कृत्वा प्रयुञ्जीताशिषः शिवाः ॥ ७ ॥

आशिषः प्रयुञ्जीतेति विधिः । सीताया महावृक्षनत्यादिविधिः अक्षयमहावटवृक्षकल्परामाश्रयसिद्धिप्रयोजनः ॥ ७ ॥

समासाद्य तु तं वृक्षं वसेद्वाऽतिक्रमेत वा ।

अतिक्रमेत वेति । सीतेति शेषः ॥ ७ १/२ ॥

क्रोशमात्रं ततो गत्वा नीलं द्रक्ष्यथ काननम् ।
पलाशबदरीमिश्रं रम्यं वंशैश्च यामुनैः ॥ ८ ॥

ततः—कालिन्दीदक्षिणतीरवर्तिन्यग्रोधादित्यर्थः । यामुनैः—यमुनातीराश्रितैः ॥ ८ ॥

स पन्थाश्चित्रकूटस्य गतः सुबहुशो मया ।
रम्यो मार्दवयुक्तश्च वनदावैर्विवर्जितः ॥ ९ ॥

मार्दवयुक्त इति । वालुकोपेतमार्ग इत्यर्थः ॥ ९ ॥

इति पन्थान[1]मावेद्य महर्षिः सन्न्यवर्तत ।
अभिवाद्य तथेत्युक्त्वा रामेण विनिवर्तितः ॥ १० ॥

तथेत्युक्त्वेति । त्वदुपदिष्टमार्गेणैव गमिष्याम इत्युक्त्वेत्यर्थः ॥

उपावृत्ते मुनौ तस्मिन् रामो लक्ष्मणमब्रवीत् ।
कृतपुण्याः स्म, सौमित्रे! मुनिर्यन्नोऽनुकम्पते ॥ ११ ॥
इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ ।
सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीम् ॥ १२ ॥

---

* गंगां तीर्त्वा प्रथममागतयोः रामलक्ष्मणयोः गंगाया दक्षिणतीरानुरोधेन प्रस्थाने गंगायमुनासंगमप्राप्तौ ततः प्लवेन यमुनानदीतरणेन यमुनादक्षिणतीरप्राप्तौ तत्र वटवृक्षदर्शनमिति क्रमः । एवञ्च चतुर्थश्लोकव्याख्याने गोविन्दराजोक्तमेव समञ्जसमिति प्रतिभाति ।

[1] मादिश्य—च.

अथासाद्य तु कालिन्दीं शीघ्रस्रोतोवहां नदीम् ।
चिन्तामापेदिरे [1]सर्वे नदीजलतितीर्षवः ॥ १३ ॥
तौ *काष्ठ[2]सङ्घाटमथो चक्रतुस्सुमहाप्लवम् ।
शुष्कैः वंशैस्समास्तीर्णं उशीरैश्च समावृतम् ॥ १४ ॥

सङ्घाटः—सङ्घः । प्लवः—उडुपः—மிதப்பு ॥ १४ ॥

ततो वेतसशाखाश्च जम्बुशाखाश्च वीर्यवान् ।
चकार लक्ष्मणश्छित्वा सीतायाः सुखमासनम् ॥ १५ ॥

उशीरं—விழல் । वेतसं—நீர்வஞ்சி ॥ १५ ॥

तत्र श्रियमिवाचिन्त्यां रामो दाशरथिः प्रियाम् ।
ईषत्संलज्जमानां तां अध्यारोपयत प्लवम् ॥ १६ ॥
पार्श्वे च तत्र वैदेह्याः वसने भूषणानि च ।
प्लवे †कठिनकाजं च रामश्चक्रे [3]सहायुधैः ॥ १७ ॥

कठिनश्चासौ काजश्च कठिनकाजः—கூடைக்கொட்டு । इदमुपलक्षणं वासःपरशुदातृकाजानां 'द्वंद्वानामेकैकमादाय' इत्युपदिष्टवानप्रस्थपरिकरान्तराणाम् ॥ १७ ॥

आरोप्य प्रथमं सीतां संघाटं परिगृह्य तौ ।
ततः प्रतेरतुर्यत्तौ [4]वीरौ दशरथात्मजौ ॥ १८ ॥

संघाटं—प्लवम् ॥ १८ ॥

कालिन्दीमध्यमायाता सीता त्वेनामवन्दत ।
स्वस्ति, देवि! तरामि त्वां [5]पारयेन्मे [6]पतिव्रतम् ॥ १९ ॥

पतिविषयकं व्रतं—पतिव्रतम् । पारयेत्—समापयेत्—प्रार्थने लिङ् ॥

---

* काष्ठसङ्घातरूपं महाप्लवमित्यर्थः । † कठिनकं—कन्दमूलखननसाधनं आयसाग्रं दारु । आज—अजचर्मपिनद्धं पिटकं—**गो.** कठिनं—खनित्रं, काजं—पेटकं—**ति.**

[1] सद्यः—**च.** [2] सङ्घात—**ङ.** [3] समाहितः—**च.** [4] प्रीतौ—**च.** [5] तारयेन्मे—**ङ.** [6] पतिर्व्रतम्—**सर्वत्र.**

यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च ।
स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालिताम् ॥ २० ॥
कालिन्दीमथ सीता तु याचमाना कृताञ्जलिः ।
तीरमेवाभिसंप्राप्ता दक्षिणं [1] वरवर्णिनी ॥ २१ ॥
ततः प्लवेनांशुमतीं शीघ्रगामूर्मिमालिनीम् ।
तीरजैर्बहुभिर्वृक्षैः संतेरुर्यमुनां नदीम् ॥ २२ ॥

अंशुमतीमिति पदं, सूर्यपुत्रीमिति यावत् । वृक्षैरिति । उपलक्षितामिति शेषः ॥ २२ ॥

ते तीर्णाः प्लवमुत्सृज्य प्रस्थाय यमुनावनात् ।
श्यामं न्यग्रोधमासेदुः शीतलं हरितच्छदम् ॥ २३ ॥
न्यग्रोधं तमुपागम्य वैदेही [2] वाक्यमब्रवीत् ।
नमस्तेऽस्तु, महावृक्ष! पारयेन्मे पतिर्व्रतम् ॥ २४ ॥
कौसल्यां चैव पश्येयं सुमित्रां च यशस्विनीम् ।
इति सीताऽञ्जलिं कृत्वा पर्यगच्छद्वनस्पतिम् ॥ २५ ॥

पर्यगच्छत्—परितोऽगच्छत्—प्रदक्षिणं चकारेति यावत् ॥ २५ ॥

अवलोक्य ततः सीतामायाचन्तीमनिन्दिताम् ।
दयितां च विधेयां च रामो लक्ष्मणमब्रवीत् ॥ २६ ॥

आयाचन्तीं—प्रार्थयमानाम् ॥ २६ ॥

सीतामादाय गच्छ त्वं अग्रतः, [3] भरतानुज!
पृष्ठतोऽहं गमिष्यामि सायुधः, द्विपदां वर! ॥ २७ ॥
यद्यत्फलं प्रार्थयते पुष्पं वा जनकात्मजा ।
[4] तत्तत् प्रयच्छ वैदेह्याः यत्रास्या रमते मनः ॥ २८ ॥

---

[1] जनकात्मजा—ङ. [2] चाभ्यवन्दत—च. [3] भरताग्रज—ङ. [4] एतदनन्तरं—'गच्छतोस्तु तयोर्मध्ये बभूव जनकात्मजा । मातङ्गयोर्मध्यगता शुभा नागवधूरिव ।' इत्यधिकम्—ङ.

एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम् ।
अदृष्ट[1]पूर्वां पश्यन्ती रामं पप्रच्छ साऽबला ॥ २९ ॥

पप्रच्छेति । कोऽसौ, किन्नाम—इत्येवमात्मनोति शेषः ॥२९॥

रमणीयान् बहुविधान् पादपान् कुसुमो[2]त्कटान् ।
सीतावचन[3]संरब्धोऽप्यानयामास लक्ष्मणः ॥ ३० ॥

सीतावचनेन संरब्धः–भावे निष्ठा—संरंभः त्वरा यस्य स तथा । लक्ष्मणोऽप्यानयामासेति योजना ॥ ३० ॥

विचित्रवालुकजलां हंससारसनादिताम् ।
रेमे जनकराजस्य सुता प्रेक्ष्य तदा नदीम् ॥ ३१ ॥

नदीं—यमुनाम् ॥ ३१ ॥

क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ ।
बहून् मेध्यान् मृगान् हत्वा चेरतुर्यमुनावने ॥ ३२ ॥

चेरतुः–चरगतिभक्षणयोः–अभ्यवहृतवन्ताविति यावत् ॥ ३२ ॥

विहृत्य ते बर्हिणपूगनादिते
शुभे वने वानरवारणायुते ।
समं नदीवप्रमुपेत्य सम्मतं
निवासमाजग्मुरदीनदर्शनाः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चपञ्चाशः सर्गः

---

समं—अनिम्नोन्नतम् । वप्रं–तीरम् । गर्ग (३३) मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चपञ्चाशः सर्गः

---

[1] रूपां–च. [2] त्करान्–च. [3] संरब्ध आन–सर्वत्र.

## षट्पञ्चाशः सर्गः

[चित्रकूटनिवासः]

अथ रात्र्यां व्यतीतायां अवसुप्तमनन्तरम् ।
प्रबोधयामास शनैः लक्ष्मणं रघुनन्दनः ॥ १ ॥

अथ रामस्य चित्रकूटं प्राप्य तत्र स्थिरवासोचितव्यापारपूर्वं वासः । अथ रात्र्यामित्यादि ॥ १ ॥

सौमित्रे! शृणु वन्यानां वल्गु व्याहरतां स्वनम् ।
संप्रतिष्ठामहे कालः प्रस्थानस्य, परंतप! ॥ २ ॥

प्रसुप्तः समये भ्रात्रा लक्ष्मणः प्रतिबोधितः ।
जहौ निद्रां च तन्द्रीं च प्रसक्तं च पथि श्रमम् ॥ ३ ॥

तत उत्थाय ते सर्वे स्पृष्ट्वा नद्याः शिवं जलम् ।
पन्थान[1]मृषिणाऽऽदिष्टं चित्रकूटस्य तं ययुः ॥ ४ ॥

नद्याः—कालिन्द्याः ॥ ४ ॥

ततः संप्रस्थितः काले रामः सौमित्रिणा सह ।
सीतां कमलपत्राक्षीं इदं वचनमब्रवीत् ॥ ५ ॥

आदीप्तानिव वैदेहि! सर्वतः पुष्पितान् [2] नगान् ।
स्वैः पुष्पैः किंशुकान् पश्य मालिनः शिशिरात्यये ॥ ६ ॥

स्वैः पुष्पैर्मालिन इव—मालावन्त इव स्थितान् ॥ ६ ॥

---

[1] मृषिभिर्जुष्टं—च. [2] द्रुमान्—ङ.

पश्य भल्लातकान् [1] फुल्लान् नरैरनुपसेवितान् ।
फल[2]पुष्पैरवनतान् * नूनं शक्ष्यामि जीवितुम् ॥ ७ ॥

भल्लातकान्—अरुष्मान् செம்மரம் । नूनं जीवितुं शक्ष्यामि । एवमादिजीवनसाधनस्य विद्यमानत्वात् ॥ ७ ॥

पश्य द्रोणप्रमाणानि लम्बमानानि, लक्ष्मण !
मधूनि मधुकारीभिः संभृतानि नगेनगे ॥ ८ ॥

आढकचतुष्टयं द्रोणं—तावत्प्रमाणमधुपूर्णानीति यावत् । मधूनि—मधुपटलानि । मधुकारीभिरिति । मधु करोतीति—मधुकारी, कर्मण्यणि ङीप्—मधुमक्षिकाभिरिति यावत् । नगेनगे—वृक्षेवृक्षे ॥ ८ ॥

एष क्रोशति नत्यूहः तं शिखी प्रतिकूजति ।
रमणीये वनोद्देशे पुष्पसंस्तरसङ्कटे ॥ ९ ॥

नत्यूहः—दात्यूहः—நச்சுப்புள் । पुष्पैः कृतः संस्तरः—आच्छादनं—तेन सङ्कटे—निबिडे, 'ऋदोरप्' इत्यप् ॥ ९ ॥

मातङ्गयूथानुसृतं पक्षिसङ्घानुनादितम् ।
चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिम् ॥ १० ॥
समभूमितले रम्ये द्रुमैर्बहुभिरावृते ।
पुण्ये [3] रंस्यामहे, तात ! चित्रकूटस्य कानने ॥ ११ ॥
ततस्तौ पादचारेण गच्छन्तौ सह सीतया ।
रम्यमासेदतुः शैलं चित्रकूटं मनोरमम् ॥ १२ ॥
तं तु पर्वतमासाद्य नानापक्षिगणायुतम् ।
बहुमूलफलं रम्यं [4] संपन्नं सरसोदकम् ॥ १३ ॥

सरसोदकं—स्वादूदकसहितमिति यावत् ॥ १३ ॥

---

* वनसौन्दर्यमग्नचित्तो रामो वदति—'नूनं शक्ष्यामि जीवितुम्' इति ।

[1] बिल्वान्—च.　[2] पत्रै—ङ.　[3] रंस्यावहे—ङ.　[4] संपन्नसरसो—च.

**मनोज्ञोऽयं गिरिः, सौम्य ! नानाद्रुम[1]लतायुतः ।**
**बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे ॥ १४ ॥**

सुखेन आजीवितुं शक्यः स्वाजीवः ॥ १४ ॥

**मुनयश्च महात्मानः वसन्त्यस्मिन् शिलोच्चये ।**
**अयं वासो भवेत्तावत् अत्र, सौम्य ! रमेमहि ॥ १५ ॥**

अयं वासो भवेत्—वासयोग्यो भवेत् । तावत्—तस्मात् ॥ १५ ॥

**इति सीता च रामश्च लक्ष्मणश्च [2] कृताञ्जलिः ।**
**अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन् ॥ १६ ॥**

इति—निश्चित्येति शेषः । अभिवादयन्—अभ्यवादयन्निति यावत् । *वाल्मीकिः प्राप्तराज्ये रामे यदा काव्यं करिष्यति तदा तमसातीराश्रमे वासस्तस्य, ततः प्राक् चित्रकूटाश्रमे ॥ १६ ॥

**तान् महर्षिः प्रमुदितः पूजयामास धर्मवित् ।**
**[3]आस्यतामिति चोवाच स्वागतं [4] तं निवेद्य च ॥ १७ ॥**

स्वागतं तमिति । तं—रामं प्रति स्वागतं—तत्प्रश्नं निवेद्य—विज्ञाप्य ॥ १७ ॥

---

*ननु-उपोद्घाते बालकाण्डे तमसातीरवासित्वेन वाल्मीकेः कथनात् कथमिदमिति चेत् ? तदानीं चित्रकूटे वाल्मीकेर्वासः । भरतागमनानन्तरं ऋषिनिर्गमनकथनात् ततः प्रभृति तमसातीर इति ज्ञेयम्—गो. चित्रकूटे स्थित एव वाल्मीकी रामराज्यप्राप्तिसमये तमसातीरं गत इति न विरोध इति प्राञ्चः । प्राचेतसादयं वाल्मीकिरन्य एवेति तत्त्वम्—ति.

[1] फला—ङ. [2] महामतिः—ङ. [3] एतदनन्तरं 'राघवं प्रीतिसंयुक्त इदं वचनमब्रवीत् । ज्ञातं मया रघुश्रेष्ठ त्वदागमनकारणम् ॥ अत्र वासमृषीणां च सकाशे रोचय प्रभो । इति तेन समाश्वस्तः प्रीयमाणो महारथः ॥ तथेति प्रतिजग्राह ऋषिणोक्तं कृताञ्जलिः ।' इत्यधिकं—ङ. [4] तु—ङ.

ततोऽब्रवीन्महाबाहुः लक्ष्मणं लक्ष्मणाग्रजः ।
संनिवेद्य यथान्याय्यं आत्मानमृषये प्रभुः ॥ १८ ॥

आत्मानं निवेद्येति । अमुकस्य पुत्रः, अमुकहेतोरिहागतवानस्मि—इत्यादिकमुक्त्वेत्यर्थः ॥ १८ ॥

लक्ष्मणानय दारूणि दृढानि च वराणि च ।
कुरुष्वावसथं, सौम्य ! *वासे मेऽभिरतं मनः ॥ १९ ॥
तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान् द्रुमान् ।
आजहार ततश्चक्रे पर्णशालामरिन्दमः ॥ २० ॥
तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनाम् ।
शुश्रूषमाणमेकाग्रं इदं वचनमब्रवीत् ॥ २१ ॥

निष्ठितां—अन्तर्बहिःप्राकारभित्त्या सुप्रतिष्ठिताम् । †बद्धकटां—छान्दसो वर्णलोपः—बद्धकवाटां, पृषोदरादित्वात्, कटे वृत्तौ वर्षे—कटति वर्षवारणं करोतीति कटः—छदिः—बद्धच्छदिषमिति यावत् ॥ २१ ॥

ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् ।
कर्तव्यं वास्तुशमनं, सौमित्रे ! चिरजीविभिः ॥ २२ ॥

ऐणेयं—एणाड्ढञ् विकारे । शालां यक्ष्यामह इति । पर्णशालाधिष्ठातृदेवता इत्यर्थः । तास्तु 'शय्यादेशे कामलिङ्गेन, देहल्यामन्तरिक्षलिङ्गेन' इत्यादि बलिहरणखण्डप्रतिपाद्यमानाः । ततः पूर्वं वास्तुशमनम् । वास्तुशान्तिर्बोधायनोक्ता ॥ २२ ॥

मृगं हत्वाऽऽनय क्षिप्रं लक्ष्मणेह, शुभेक्षण !
कर्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनु[1]स्मर ॥ २३ ॥

---

* अस्मिन् देश इति शेषः. † कुड्यार्थे कल्पितास्तरणां, बद्धबाह्यावरणां वा, कटे वर्षावरणयोरिति धातुः-गो.

[1] स्मरन्-ङ.

यज्ञार्थपशुवधे दोषशङ्कां निवर्तयति–कर्तव्य इत्यादि। शास्त्रचोदितो विधिः कर्तव्य एव, तमेवं धर्मं त्वं धर्ममेवानुस्मर ; नात्र हिंसादिदोषप्रसङ्ग इत्यर्थः। तद्यज्ञार्थं द्विजप्रजानां गतिस्तद्वदिति यज्ञविनियुक्तपशूनामुत्तमलोकभागित्वेन वधस्य तेषामनुग्रहत्वात् ॥ २३ ॥

भ्रातुर्वचनमाज्ञाय लक्ष्मणः परवीरहा।
चकार स यथोक्तं च तं रामः पुनरब्रवीत् ॥ २४ ॥
ऐणेयं श्रपयस्वैतत् शालां यक्ष्यामहे वयम्।
त्वर * सौम्य! मुहूर्तोऽयं ध्रुवश्च दिवसोऽ[1]प्ययम् ॥ २५ ॥
स लक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान्।
अथ चिक्षेप सौमित्रिः समिद्धे जातवेदसि ॥ २६ ॥
तं तु पक्वं समाज्ञाय निष्टप्तं छिन्नशोणितम्।
लक्ष्मणः पुरुषव्याघ्रं अथ राघवमब्रवीत् ॥ २७ ॥
अयं [2] सर्वः समाप्ताङ्गः श्रृतः कृष्णमृगो [3] मया।
† देवताः, देवसङ्काश! यजस्व कुशलो ह्यसि ॥ २८ ॥

अयं सर्व इति। सर्वकर्मार्ह इति यावत्। समाप्ताङ्ग इति। शिरःपादादिसर्वाङ्गोपेत इति यावत्। श्रृतः–पक्वः ॥ २८ ॥

रामः स्नात्वा तु नियतः गुणवान् [4] जप्यकोविदः।
सङ्ग्रहेणाकरोत् सर्वान् मन्त्रान् सत्रावसानिकान् ॥ २९ ॥

गुणवान्–कर्मापेक्षितप्रायत्यादिगुणवान्। ‡ सत्रावसानिकान्–यागसमाप्तिप्रयोजनान् मन्त्रान् गृहीत्वा सङ्ग्रहेण वास्तुशान्त्यादिकमकरोत्। राजपीठावस्थाने पुरोहितेन कर्मप्रवृत्तिः ; वनस्थराजर्षीणां स्वेनैव ॥ २९ ॥

---

* अयं सौम्य हूर्तः–शुभमुहूर्तः इत्येकं पदं वा। † देवता इति द्वितीयाबहुवचनान्तं पदम्। ‡ सत्रं–वास्तुयागः यैर्मन्त्रैरवसीयते परिसमाप्यते ते सत्रावसानाः, सत्रावसाना एव सत्रावसानिकाः— छान्दसो वृद्ध्यभावः–गो.

[1] ह्ययम्–च. [2] कृष्णः–ङ. [3] यथा–ङ. [4] जपकोविदः–च.

इष्ट्वा देवगणान् सर्वान्[1] विवेशावसथं शुचिः ।
बभूव च मनोह्लादः रामस्यामिततेजसः ॥ ३० ॥
वैश्वदेवबलिं कृत्वा रौद्रं वैष्णवमेव च ।
वास्तुसंशमनीयानि मङ्गलानि प्रवर्तयन् ॥ ३१ ॥
जपं च न्यायतः कृत्वा * स्नात्वा नद्यां यथाविधि ।
पापसंशमनं रामश्चकार बलिमुत्तमम् ॥ ३२ ॥

पापसंशमनं–'पञ्चसूना गृहस्थस्य' इति प्रसिद्धपापसंशमनसाधनभूतं बलिं–वैश्वदेवपूर्वकं बलिहरणम् । कृत्वेत्यादिः उपसंहाररूपेण वादः ॥ ३२ ॥

वेदिस्थल[2]विधानानि † चैत्यान्यायतनानि च ।
आश्रमस्यानुरूपाणि स्थापयामास राघवः ॥ ३३ ॥

वेदिस्थलानां–बलिहरणवेदिस्थलानां अष्टदिग्वर्तिनां विधानानि तथा । चैत्यं–गणपत्यायतनम् । आयतनं–विष्ण्वादेः । अनुरूपाणीति । ‡ सूक्ष्ममार्गेणेति यावत् ॥ ३३ ॥

वन्यैर्माल्यैः फलैर्मूलैः पक्वैर्मांसैर्यथाविधि ।
अद्भिर्जपैश्च वेदोक्तैः दर्भैश्च ससमि[3]त्कुशैः ॥ ३४ ॥
तौ तर्पयित्वा भूतानि राघवौ सह सीतया ।
तदा विविशतुः शालां सुशुभां [4]शुभलक्षणौ ॥ ३५ ॥
तां वृक्षपर्णच्छदनां मनोज्ञां यथाप्रदेशं सुकृतां विवाताम् ।
वासाय सर्वे विविशुः समेताः सभां यथा देवगणाः सुधर्माम्॥

वृक्षपर्णैः कृतं छदनं–आच्छादनं यस्याः सा तथा ॥ ३६ ॥

---

* रौद्रयागकरणात् पुनः स्नानम् । रुद्रकर्मकरणे 'अप उपस्पृश्य' इति विधानात्–**गो.**

† चैत्यानि–गन्धर्वाद्यावासस्थानानि–**गो.** ‡ आश्रमस्य अल्पप्रदेशत्वादिति भावः ।

[1] विवेश वसतिं–**ङ.** [2] विमानानि–**ङ.** [3] द्रुमैः–**ङ.** [4] शुभलक्षणाम्–**झ.**

अनेकनाना[1]मृगपक्षिसङ्कुले
विचित्रपत्रस्तबकद्रुमैर्युते ।
वनोत्तमे व्यालमृगानुनादिते
तदा विजह्रुः सुसुखं * जितेन्द्रियाः ॥ ३७ ॥

सुरम्यमासाद्य तु चित्रकूटं नदीं च तां माल्यवतीं सुतीर्थाम् ।
ननन्द हृष्टो मृगपक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षट्पञ्चाशः सर्गः

---

माला (३५) मानः सर्गः (१) ॥ ३८ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे षट्पञ्चाशः सर्गः

---

* अनेन विहाराणां अग्राम्यत्वं सूच्यते ।

[1] विध–ङ.



WD 1421—GBPM—2,000—24-9-1963.

# श्रीमद्वाल्मीकि रामायणम्

(अयोध्याकाण्डः–१)

सम्पादकः

विद्वान्
के. एस्. वरदाचार्यः

विश्वविद्यानिलयः
मैसूरु
१९६४

2

# श्रीमद्वाल्मीकिरामायणम्

## श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(तृतीयसंपुटः—अयोध्याकाण्डः–२)




प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मैसूरु

१९६५

# श्रीमद्वाल्मीकिरामायणम्

## श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(तृतीयसंपुटः—अयोध्याकाण्डः–२)




प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मैसूरु

१९६५

ORIENTAL RESEARCH INSTITUTE SANSKRIT SERIES 111

GENERAL EDITOR:

H. DEVEERAPPA, M.A.,
*Director*

# ŚRĪMADVĀLMĪKI RĀMĀYAṆA

WITH

## AMṚTAKATAKA OF MĀDHAVAYOGI

(VOL. III—AYODHYĀKĀṆḌA-II)

EDITOR:

VIDWAN K. S. VARADACHARYA,
*Research Assistant*




ORIENTAL RESEARCH INSTITUTE

UNIVERSITY OF MYSORE

MYSORE

1965

प्राच्यविद्यासंशोधनालयसंस्कृतग्रन्थमाला १११

प्रधानसम्पादकः
एच्. देवीरप्प, एम्.ए,
डैरेक्टर्

# श्रीमद्वाल्मीकिरामायणम्

## श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(तृतीयः सम्पुटः—अयोध्याकाण्डः-२)

सम्पादकः
विद्वान् के. एस्. वरदाचार्यः,
रिसर्च् असिस्टेण्ट्




प्राच्यविद्यासंशोधनालयः
मैसूरुविश्वविद्यानिलयः
मैसूरु
१९६५

# प्रस्तावना

आपादचूडमनवद्येऽस्मिन् रमणीये रामायणे विशिष्यत एवायमयोध्याकाण्डः इतरकाण्डेभ्यः बहुभिः कारणैः – सर्वाङ्गीण-सुन्दरेऽपि शरीरे मुखमिव – इति पूर्वसंपुटप्रस्तावनायामेव प्रास्तावि। तदेतस्य अयोध्याकाण्डस्यातिविस्तृतस्य विषयानुगुणतो विमर्शने – रामचित्रकूटवासान्तः एको घट्टः, तदनन्तरं भरतागमनादिरपरश्च घट्टः विविक्ततयोपलभ्यत एव स्वरसतः। तत्रादिमो घट्टः पूर्वसंपुटे क्रोडीकृतः, अपरश्चास्मिन् संपुटे ॥

तत्राद्ये भागे रामायणप्रधाननायकस्य श्रीरामस्य कल्याणगुणाः यथा व्यक्तीभूयात्मानं प्रदर्शयन्ति, तथाऽस्मिन् भागे तेन सह – किमुत! ततोऽप्यतिशयेन – भरतकल्याणगुणाः व्यक्तीभवन्ति। रामोऽपि हि भरतस्यानवद्यं गुणं अभिवीक्ष्य विस्मयमग्नो भवति, * यन्मूलतया च वदिष्यति अग्रे 'न सर्वे भ्रातरस्तात! भवन्ति भरतोपमाः †' इति। एवमस्य भागस्य भरतगुणप्रकाशकस्य 'भरत काण्डः' इति कथनमपि युक्तमिव ॥

---

* अथोत्थाय जलं स्पृष्ट्वा भरतो वाक्यमब्रवीत्।
श्रृण्वन्तु मे परिषदः! मन्त्रिणः श्रेणयस्तथा ॥ अयो. 111-24.

न याचे पितरं राज्यं नानुशासामि मातरम्।
आर्यं परमधर्मज्ञं नानुजानामि राघवम् ॥ ,,–111-25.

यदि त्ववश्यं वस्तव्यं कर्तव्यं च पितुर्वचः।
अहमेव निवत्स्यामि चतुर्दश समा वने ॥ ,,–111-26.

धर्मात्मा तस्य तथ्येन भ्रातुर्वाक्येन विस्मितः।
उवाच रामः............................ ॥ ,,–111-27.

† रामा. युद्ध. 18-15.

एवं भरतस्य सद्गुणान् वीक्ष्य यथा रामो विस्मयाक्रान्तोऽभवत्, तथा रामभरतयोरुभयोरपि सद्गुणान् वीक्ष्य सर्वेऽपि विस्मयमापेदिरे इति वदत्यादिकविः, स्वयमपि विस्मयमापन्नः सन्—

'तमप्रतिमतेजोभ्यां भ्रातृभ्यां रोमहर्षणम् ।
विस्मिताः सङ्गमं प्रेक्ष्य समवेता महर्षयः '* इति ॥

राजवंशजानां स्वभावं श्रीराम एव एवं वर्णयति—

'अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः ।
व्यसनेषु प्रहर्तारः......................॥
एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः' † इति ॥

इममादिकवेराशयं वरकविः कालिदासः एवं स्पष्टयति—'दुरितैरपि कर्तुमात्मसात् प्रयतन्ते नृपसूनवो हि यत्' ‡ इति। अत्र 'यत्' शब्दस्य राज्यमर्थः। राज्यहेतोः सर्वमप्यकृत्यं बुद्धिपूर्वकमेव कर्तुं सन्नद्धता राजवंशजानां सहजा। एवं सति स्वयं प्राप्तमपि राज्यं भरतः नाङ्गीकरोति स्म। एवं भरतेन प्रत्यर्पितं निष्कण्टकमपि राज्यं रामोऽपि नाङ्गीचकार हि। प्रत्युत, परस्परं राज्यत्यागाय विचित्रा युक्तीः अन्वेषेते किल—इति विचित्रमेव राजकुलवृत्तान्तं जानताम् ॥

अथवा युक्तमेवेदं रघुकुलजानां सहजत्यागशीलानाम्। श्रीरामोऽपि 'राघवः' इति यन्नाम्नोपलाल्यते, तमिमं रघुं रामपूर्वजमधिकृत्य एतादृश एव कश्चन विचित्रप्रसङ्गः प्रस्तुतः वरकविना कालिदासेन रघुवंशे पञ्चमसर्गे§—

महामना रघुः विश्वजिद्यागे स्वीयं सर्वमप्यर्थं सत्पात्रेभ्यो वितीर्य शरीरमात्रावशेषः यदा तिष्ठति, तदा वरतन्तुमहर्षेश्शिष्यः कौत्सः गुरवे देयां चतुर्दशकोटिमितां दक्षिणां रघोः सकाशात् प्रेप्सुः तमुपसर्पति। रघुस्तु गत्यन्तराभावात् कुबेरादेव तावद्वित्तं बलादाहर्तुं

---

* रामा. अयो. 112-1. † रामा. युद्ध. 18-10, 11. ‡ रघुवंश-8-2.

§ रघुवंश-५ सर्ग-१-३० श्लो.

यदा संकल्पयति, तदैव कुबेरः रघोः कोशागारं वित्तवर्षेण पूरयामास ॥

तच्च ज्ञात्वा रघुः कौत्समाहूय 'गृह्यतामिदं सर्वं भवदीयं वित्तम्' इति वदति। कौत्सस्तु 'चतुर्दशकोट्य एव मया याचिताः। तदधिकं नाहं गृह्णीयाम्' इति वदति। रघुस्तु 'भवदर्थमागतत्वात् सर्वं भवदीयमेव। अतो भवतैव ग्राह्यम्' इति निर्बन्धयति। एवं त्यागे परस्परं स्पर्धमानौ तौ वीक्ष्य तत्रत्या जनाः विस्मिता बभूवुरिति सरसैरक्षरैरेवं रञ्जयति सहृदयान्तरङ्गाणि वरकविः—

'जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ।
गुरुप्रदेयाधिकनिस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च' *इति॥

युज्यत एव हि एतादृशस्य रघोः कुले जातयोः रामभरतयोः त्यागे परस्परस्पर्धा ॥

परन्त्वत्र सन्दर्भविशेषवशात् भरतः राममप्यतिशेत इव किञ्चित्। यदा भरतश्चित्रकूटमागत्य रामं राज्यस्वीकाराय निर्बन्धयति, तदा रामः 'तुभ्यं राज्यस्य, मह्यं वनवासस्य च पित्राऽऽदिष्टत्वात् उभाभ्यां तत्परिपालनीयमेव' इति वदति †। भरतस्तु 'सत्यं पितृवचनमप्यहं परिपालयाम्येव। तेन दत्ते मदीये राज्ये मम हि पूर्णोऽधिकारः। अहमेव बुद्धिपूर्वकं राज्यं तुभ्यं ददामि। को वाऽत्र धर्मलोपः' ‡ इति पृच्छति भ्रातरं रामम्। एवञ्च चतुरेण भरतेन पितृवाक्यमपि परिपालितम्, स्वेष्टमपि साधितम्। अतोऽस्मिन् प्रकरणे भरतो रामं जिग्य एव, यस्य च निदर्शनं रामेण राज्याय स्वपादुकाप्रदानम्। अत एव भासोऽपि भरतं एवं परिचाययत्यस्माकं—

---

* रघुवंश-5-31. † 'त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतम्। वस्तव्यं दण्डकारण्ये मया वल्कलवाससा' अयो. 104–23, 'पित्रा दत्तं यथाभागं उपभोक्तुं त्वमर्हसि।' 104–25. ‡ 'सान्त्विता मामिका माता दत्तं राज्यमिदं मम। तद्ददामि पुनस्तुभ्यं भुङ्क्ष्व राज्यमकण्टकम्' अयो. 105–4.

'सुचिरेणापि कालेन यशः किञ्चिन्मयाऽऽर्जितम् ।
अचिरेणैव कालेन भरतेनाद्य सञ्चितम्' * इति ॥

सन्त्येतादृशानि सहृदयहृदयङ्गमानि प्रकरणानि बहून्यस्मिन् काण्डे इति नूनं विशिष्यत एवायमयोध्याकाण्डः । अधिकं पश्चाद्विचारयामः ॥

एतत्संपुटसंपादनेऽपि पूर्वसंपुटप्रतिपादिता एव कोशाः आदृता इति नास्त्यधिकं वक्तव्यम् । उपरितनभागानप्यचिरेणैव कालेन प्रकटीचिकीर्षूणामस्माकं मनोरथान् पूरयतु भगवान् श्रीरामचन्द्रः ॥

मैसूरु,
9-8-1965

नव्यमङ्गलाभिजनः,
वरदाचार्यः

* प्रतिमानाटके, रामवाक्यं 4–26.

## श्रीमद्वाल्मीकिरामायणायोध्याकाण्डस्य

# विषयानुक्रमणिका

---

* गोविन्दराजादिदृष्ट्या अयं सर्गः १०४ सर्गत्वेन पठनीयः । अत्र वक्तव्यं तत्प्रकरणटीकायां (पु. ३५७–३५८) उक्तम् ॥

॥ श्रीः ॥

॥ श्रीरामचन्द्रपरब्रह्मणे नमः ॥

# श्रीमद्वाल्मीकिरामायणम्

श्रीमन्माधवयोगिविरचितया

## अमृतकतकाख्यव्याख्यया सहितम्

## अयोध्याकाण्डः

### सप्तपञ्चाशः सर्गः

[ सुमन्त्रप्रत्यागमनम् ]

**कथयित्वा तु दुःखार्तः सुमन्त्रेण चिरं सह ।**
**रामे दक्षिणकूलस्थे जगाम स्वगृहं गुहः ॥ १ ॥**

एवं रामवृत्तान्तमुक्त्वा विसृष्टसुमन्त्रव्यापारकथनम् । कथयि-त्वेत्यादि ॥ १ ॥

---

गो.—गोविन्दराजीयम्. ति.—तिलकम्. ती.— महेश्वरतीर्थीयम.

रा.—रामायणशिरोमणिः.

भरद्वाजाभिगमनं प्रयागे च [1] सभाजनम् ।
आगिरेर्गमनं तेषां * तत्रस्थैरभिलक्षितम् ॥ २ ॥

[1] सभाजनमिति । भरद्वाजेनेति शेषः । आगिरेः—चित्रकूटगिरिमभिव्याप्य संपन्नं तेषां रामादीनां गमनम् , तत्रस्थैः—शृङ्गिबेरपुरस्थैः गुहसुमन्त्रादिभिः गुहचारमुखेन अभिलक्षितं—ज्ञातम् । गङ्गोत्तरणदिवसनिशा भरद्वाजश्रमेऽभूत् । द्वितीयनिशा यमुनातीरे । तृतीया चित्रकूटे । तत्र त्वासिषतेत्यवगतवन्त इत्यर्थः ॥ २ ॥

† अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।
अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥ ३ ॥

अनुज्ञातः सुमन्त्र इति । गङ्गोत्तरणदिवसे रामेणेति शेषः ॥ ३ ॥

स वनानि सुगन्धीनि सरितश्च सरांसि च ।
[2] पश्यन् यत्तो ययौ शीघ्रं ग्रामाणि नगराणि च ॥ ४ ॥

यत्तः—सावधानः ॥ ४ ॥

---

* तत्रस्थैः-शृङ्गिबेरपुरस्थैः चारैरभिलक्षितं —निवेदितम् । सुमन्त्रेण सम्यग्विदितमित्यर्थः । गङ्गोत्तरणदिवसनिशा वनस्पतिमूले, द्वितीया भरद्वाजाश्रमे, तृतीया यमुनातीरे, चतुर्थेऽहनि चित्रकूटगमनं, पञ्चमे पुनरागम्य चारैर्निवेदनम्—**गो.** । तीर्थेऽप्येवमेव ।

**तिलके**—गङ्गोत्तरणतृतीयदिवसे भरद्वाजाश्रमात् प्रतिनिवृत्तदूतमुखात् तावत्पर्यन्तं तद्वृत्तं ज्ञात्वा तद्दिन एव शृङ्गबेरपुरात्सुमन्त्रस्य प्रतिनिवृत्तिरिति बोध्यम् । अत एव 'रामस्य निर्गमदिनात् दिने षष्ठेऽर्धरात्रके । हा हा लक्ष्मण हा सीते हा रामेति मृतो नृपः॥' इति पाद्म संगच्छते—इत्युक्तम् ।

अथवा — तत्रस्थैः—गुहसुमन्त्रादिभिः तत्सर्वमवगतम् । चित्रकूटे रामवासदिनपर्यन्तं तत्रैव स्थित्वा सर्वो वृत्तान्तः वन्यजनद्वाराऽवगतः तैः इत्यर्थः ।

† अनुज्ञातः, गुहेनेति शेषः—**गो. ति.** अथ—रामस्य चित्रकूटे प्रतिष्ठां ज्ञात्वा ।

[1] सहासनम्—**ङ. च. ट.** [2] पश्यन्नतिययौ—**ङ.**

*ततः सायाह्नसमये [1] द्वितीयेऽहनि सारथिः ।
अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह ॥ ५ ॥

सायमह्नः—एकदेशिसमासोऽन्यत्रापि, ततः 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः एकदेशात्परत्वात् । द्वितीयेऽहनीति । गुहेन दिनत्रयं स्थित्वा प्रतिनिवृत्त्यनन्तरमिति शेषः । यथा आगमनसमये अतिवेगेन रथेन दिनद्वयादागतं आगन्तं—तथा प्रतिनिवृत्तिसमयेऽपि शीघ्रं दिनद्वयेन ययावित्यर्थः ॥ ५ ॥

स शून्यामिव निश्शब्दां दृष्ट्वा परमदुर्मनाः ।
सुमन्त्रः चिन्तयामास शोकवेगसमाहतः ॥ ६ ॥

स शून्यामिव—शून्यनगरीवन्निश्शब्दाम् ॥ ६ ॥

कच्चिन्न सगजा साश्वा सजना सजनाधिपा ।
रामसन्ताप [2] दुःखेन दग्धा शोकाग्निना पुरी ॥ ७ ॥

इति चिन्तापरः सूतः वाजिभिः शीघ्र [3] यायिभिः ।
नगरद्वारमासाद्य त्वरितः प्रविवेश ह ॥ ८ ॥

सुमन्त्रमभि [4] यान्तं तं शतशोऽथ सहस्रशः ।
क्व राम इति पृच्छन्तः सूतमभ्यद्रवन्नराः ॥ ९ ॥

सूतमभ्यद्रवन्—सूतसम्मुखमाजग्मुः ॥ ९ ॥

तेषां शशंस गङ्गायां अहमापृच्छ्य राघवम् ।
अनुज्ञातो निवृत्तोऽस्मि धार्मिकेण महात्मना ॥ १० ॥

---

* तृतीयेऽहनि—शृङ्गबेरपुरान्निर्गमापेक्षया तृतीयदिवसे । यद्वा अहनि तृतीये-सायाह्नसमये—गो. ती.

[1] तृतीये—ङ. [2] शोकेन—ङ. [3] पातिभिः—ङ. [4] धावन्तं, यान्तं तु—ङ.

गङ्गायां शृङ्गिबेरपुरे राघवेणानुज्ञातः तमापृच्छ्य निवृत्तोऽस्मि । *ततः परं वृत्तान्तो मया सम्यक् न ज्ञायते तत्र बहुदिवसमवस्थितेनापीति शशंसेत्यर्थः ॥ १० ॥

ते तीर्णा इति विज्ञाय बाष्पपूर्णमुखा जनाः ।
अहो धिगिति निश्वस्य हा रामेति विचुक्रुशुः ॥ ११ ॥

ते तीर्णा इति । गङ्गामुत्तीर्य गता इति, विज्ञाय ॥ ११ ॥

शुश्राव च वचस्तेषां बृन्दं बृन्दं च तिष्ठताम् ।
हताः स्म खलु ये नेह पश्याम इति राघवम् ॥ १२ ॥
†दानयज्ञविवाहेषु [1] समाजेषु महत्सु च ।
न द्रक्ष्यामः पुनर्जातु धार्मिकं राममन्तरा ॥ १३ ॥

समाजः—महाजनसमूहः । दानयज्ञादिसन्तोषव्यवहारेषु धार्मिकं राममन्तरा——तत्तद्दानयज्ञादिव्यवहारमध्ये तस्य तस्य तत्तत्साधकं जातु पुनर्द्रक्ष्यामो न किम्? ॥ १३ ॥

‡किं समर्थं जनस्यास्य किं प्रियं किं सुखावहम् ।
इति रामेण नगरं [2] पित्रेव परिपालितम् ॥ १४ ॥

---

* यद्यपि सुमन्त्रेण तदनन्तरवृत्तान्तः चित्रकूटप्राप्तिपर्यन्तः चारमुखादवगत इति अनुपदमेवोक्तं (२ श्लोके)——अथापि स वृत्तान्तश्चारमुखात्केवलमवगतः, न साक्षादिति भावेन सुमन्त्रस्तथोक्तवान्——इति व्याख्यात्रा 'सम्यक्' पदोपादानेन व्याख्यायि। वस्तुतस्तु मूले सुमन्त्रेण वृत्तान्तः संग्रहतः प्रतिपादितः, अन्यश्च न निषिद्ध इति न दोषः॥ अथ वा रामस्थानकथने पुनरपि पौराः तत्रापि गच्छेयुरिति एवं उक्तम् । † दानादिषु अन्तरा—मध्ये (स्वयं वात्सल्यादागत्य) नायकमणिवद्वर्तमानं रामं पुनः जातु कदाचिदपि न द्रक्ष्यामः किं? इति काकुः—**गो.** ‡ अयमपि नगरजनवचोऽनुवादो वा——अस्य जनस्य किं समर्थम्? किं प्रियम्? किं सुखावहम्? इति रामेण, पित्रेवेदं नगरं परिपालितं——इत्यादि परिदेवनं शुश्रावेत्यन्वयः॥

[1] समाधिषु—**ङ.** [2] पितृवत्—**ङ.**

अतः—परस्य जनस्य किं—कृत्यं समर्थमुचितं, किं प्रियं—प्रियकरं, सुखावहं—इहामुत्रहितावहं इति रामेण परिपालितं नगरं चिन्ताकुलं बभूवेति शेषः ॥ १४ ॥

वातायनगतानां च स्त्रीणामन्वन्तरापणम् ।
राम[1]शोकाभितप्तानां शुश्राव परिदेवनम् ॥ १५ ॥

अनु—अनन्तरं वातायनगतानां स्त्रीणां परिदेवनं चान्तरापण—आपणमध्ये गच्छन् शुश्राव ॥ १५ ॥

स राजमार्गमध्येन सुमन्त्रः * पिहिताननः ।
यत्र राजा दशरथः तदेवोपययौ गृहम् ॥ १६ ॥
साऽवतीर्य रथाच्छीघ्रं राजवेश्म प्रविश्य च ।
कक्ष्याः सप्ताभिचक्राम महाजनसमाकुलाः ॥ १७ ॥
† हर्म्यैर्विमानैः प्रासादैः अवेक्ष्याथ समागतम् ।
हाहाकारकृता नार्यः रामादर्शनकर्शिताः ॥ १८ ॥

हाहाकारः कृतः—याभिस्ताः—तथा ॥ १८ ॥

आयतैर्विमलैर्नेत्रैः अश्रुवेगपरिप्लुतैः ।
अन्योन्यमभिवीक्षन्तेऽव्यक्तमार्ततराः स्त्रियः ॥ १९ ॥

अन्योन्यमभिवीक्षन्ते ‡ स्म—इतिकर्तव्यतामौढ्यादिति शेषः ॥

---

* जनदर्शनाक्षमतया—**गो**. जनानां प्रत्युत्तरदानेन विलम्बः स्यादिति वा, रामविवासनरूपकार्ये स्वस्य सम्बन्धात् लज्जया वा—पिहिताननः । † हर्म्यादिः—धनिनां वासः, प्रासादः—देवभूभुजाम, विमानं—सप्तभूमिगृहम् । एतैरुपलक्षितामयोध्यां समागतम् । एतत्स्था नार्य इति वा । ‡ भूतार्थकक्रियापदघटितवाक्यमध्यस्थत्वात् 'स्म' इत्यध्याहार्यमित्याशयः ।

[1] मेवाभि—**च**.

ततो दशरथस्त्रीणां* प्रासादेभ्यस्ततस्ततः ।
रामशोकाभितप्तानां मन्दं शुश्राव जल्पितम् ॥ २० ॥

प्रासादेभ्य इति । सुमन्त्रस्य राजवेश्मप्रविष्टत्वेन ततोऽवतीर्णानामिति शेषः । मन्दं जल्पितमिति । राजसान्निध्यात् मन्दत्वम् ॥ २० ॥

सह रामेण निर्यातो विना राममिहागतः ।
सूतः किन्नाम कौसल्यां[1] क्रोशन्तीं प्रतिवक्ष्यति ॥ २१ ॥

किन्नाम वक्ष्यतीति । अतिघोरत्वात् न किञ्चिदपि वक्तुं शक्यम् ॥

† यथा च मन्ये दुर्जीवं एवं न सुकरं ध्रुवम् ।
[2]आच्छिद्य पुत्रे निर्याते कौसल्या यत्र जीवति ॥२२॥

अथ प्रत्येकं राममातॄणां दुःखप्रलापः— यथेत्यादि । यथा—येन प्रकारेण च—यस्मात् एवं—स्वानुभवसिद्धप्रकारेण परमदुःखितं मदीयं दुर्जीवं कुत्सितप्राणं जीवन्तं मन्ये—अनुभवामि, मन ज्ञाने श्यन् ; तस्मात् तथैव कौसल्याऽपि यत्र—यस्मिन् सकललोकप्रसिद्धानवधिककल्याणगुणे पुत्रे तं यथाप्राप्तमभिषेकं आच्छिद्य—परित्यज्य निर्याते सत्यपि जीवतीति यत् , तदपि तद्वदेव ध्रुवं सुकरं न हि ; रामैकशरणायास्तस्याः मत्तः किञ्चिदभ्यधिकं दुःखम् ॥ २२ ॥

---

* प्रासादमारुह्य रुह्य शुश्राव— प्रतिप्रासादं शोकपरिदेवनं शुश्रावेत्यर्थो वा स्यात् ॥

† यत्रेति.... प्रथमार्धे.... यथा—येन प्रकारेण अस्मज्जीवितं दुर्जीवं—दुःखेन जीवनार्हं मन्ये, एवमेव कौसल्या पुत्रे निर्याते सति आच्छिद्य-प्रसह्य जीवति यत्र—जीवतीति यत् तत् न सुकरम्—**गो.** कौसल्या पुत्रे निर्याते सति आच्छिद्य—प्रसह्य जीवति यत्र—जीवतीति यत् एतत् दुर्जीवं—दुष्करजीवनं ध्रुवं—निश्चितम् । एवं—एवंविधजीवनं सुकरं न मन्ये—**ती.** यथा जीवं—जीवनं दुः—दुःखजनकं मन्ये, एवं ध्रुवं—निश्चयेन सुकरं—सुकरनाशं नेति मन्ये—**ति.** एतादृशावस्थायां जीवनं यावत् अशक्यमिति अहं जानामि एवं प्रकारमेव तत् न सुकरं, ध्रुवम् । किं तदित्यत्र उत्तरार्धम् । आच्छिद्य-सम्बन्धं त्यक्त्वा, न तु ग्रामान्तरगमनवत् ; प्रव्रज्येति यावत् ॥

[1] शोचन्तीं—ङ [2] प्रसह्य—ङ

सत्यरूपं तु तद्वाक्यं राजस्त्रीणां निशामयन् ।
प्रदीप्त इव शोकेन विवेश सहसा गृहम् ॥ २३ ॥

एवं सत्यरूपं—परमार्थभूतं राजस्त्रीणां तद्वाक्यं निशामयन्—शृण्वन् शोकेन प्रदीप्त इव सन् सहसा राजगृहं विवेश । अत्र यद्वाभट्टारका बहुप्राचीना व्याक्रिया अनुवदन्ति । तत्र किञ्चिदपि सङ्गतं पश्यामः ॥ २३ ॥

स प्रविश्याष्टमीं कक्ष्यां राजानं दीनमातुरम् ।
पुत्रशोकपरिद्यूनं अपश्यत् *पाण्डुरे गृहे ॥ २४ ॥

परिद्यूनं—क्षीणम् । 'दिवोऽविजिगीषायाम्' इति निष्ठानत्वम् । 'च्छ्वोः शूठ्....' इत्यूठ् ॥ २४ ॥

अभिगम्य तमासीनं नरेन्द्रमभिवाद्य च ।
सुमन्त्रो रामवचनं यथोक्तं प्रत्यवेदयत् ॥ २५ ॥

यथोक्तं प्रत्यवेदयदिति । तस्य च विस्तरेण प्रतिपादनमारात् भविष्यति ॥ २५ ॥

स तूष्णीमेव तच्छ्रुत्वा राजा विभ्रान्तचेतनः ।
मूर्छितो न्यपतत् भूमौ रामशोकाभिपीडितः ॥ २६ ॥
ततोऽन्तःपुरमाविद्धं मूर्छिते पृथिवीपतौ ।
[1]उद्धृत्य बाहू चुक्रोश नृपतौ पतिते क्षितौ ॥ २७ ॥

आविद्धं—दुःखाभिहतम् ॥ २७ ॥

---

* पाण्डुर इति विशेषणात् राजलक्ष्मीर्नास्तीति उच्यते—गो.

[1] उत्क्षिप्य—ङ.

इमं तस्य, महाभाग! दूतं * दुष्करकारिणः।
वनवासादनुप्राप्तं कस्मान्न प्रतिभाषसे ॥ २९ ॥

अद्येममनयं कृत्वा ह्यपत्रपसि, राघव!
उत्तिष्ठ † सुकृतं तेऽस्तु शोके न स्यात् सहायता ॥ ३० ॥

अद्येति। एवमनयं—एवं दुःखसाधनमन्याय्यं प्रथमतः कृत्वा किमद्यापत्रपसि, न प्रतिभाषसे—लज्जसे। उत्तिष्ठ शोकं विधूय। ते सुकृतं—सत्यपरिपालनरूपं पुण्यमस्तु। तव शोके सहायता—साधकता यस्याः, सेह नास्ति। अत्रस्था वयं त्वदिष्टा एवेत्यर्थः ॥ ३० ॥

देव! यस्या भयाद्रामं नानुपृच्छसि सारथिम् ‡।
नेह तिष्ठति कैकेयी विस्रब्धं प्रतिभाष्यताम् ॥ ३१ ॥

अत्रानिष्टाऽपि तिष्ठति किम्? इति शङ्कां व्यावर्तयति—देवेत्यादि। विस्रब्धं—निश्शङ्कम् ॥ ३१ ॥

सा तथोक्त्वा महाराजं कौसल्या § शोकलालसा।
धरण्यां निपपाताशु बाष्पविप्लुतभाषिणी ॥ ३२ ॥

विप्लुतभाषिणी—गद्गदभाषिणी ॥ ३२ ॥

---

* रामस्येति शेषः। † सुकृत शोभनम्। शोके विषये सहायता न स्यात्—शोकानुवर्तनं मा कृथा इत्यर्थः—गो. एवं शोके त्वया क्रियमाणे तव सहायता—सहायसमूहः परिजनः सर्वोऽपि न स्यात्। त्वच्छोकेन सर्वोऽपि नश्येदित्यर्थः—ति. पूर्वार्ध—उत्तरश्लोकशैलीपरिशीलने, सुकृतमिति नर्मोक्तिर्वा स्यात्। शोके न स्यात् सहायता—शोकेन को लाभ इति भावः। शोकेन सहायता स्यात्? इति काकुर्वा। ‡ सारथिं रामं नानुपृच्छसीति द्विकर्मकम्। § एवं नर्मोक्तिप्रयोगेणैव शोकलालसा।

विलपन्तीं तथा दृष्ट्वा कौसल्यां पतितां भुवि ।
पतिं चावेक्ष्य ताः सर्वाः समन्तात् रुरुदुः स्त्रियः ॥ ३३ ॥

ततस्तमन्तःपुरनादमुत्थितं
समीक्ष्य वृद्धास्तरुणाश्च मानवाः ।
स्त्रियश्च सर्वा रुरुदुः समन्ततः
पुरं तदाऽऽसीत् पुनरेव सङ्कुलम् ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तपञ्चाशः सर्गः

---

वर्ग(३४)मानः सर्गः ॥ ३४ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे सप्तपञ्चाशः सर्गः

---

## अष्टपञ्चाशः सर्गः

[रामसन्देशनिवेदनम्]

प्रत्याश्वस्तो यदा राजा मोहात् *[1] प्रत्यागतः पुनः ।
अथाजुहाव तं सूतं रामवृत्तान्तकारणात् ॥ १ ॥

अथ दशरथेन रामवृत्तान्तप्रश्नः । प्रत्याश्वस्त इत्यादि । प्रत्यागत इति । प्रत्यागतसंज्ञ इति यावत् ॥ १ ॥

अथ सूतो महाराजं कृताञ्जलिरुपस्थितः ।
†राममेवानुशोचन्तं दुःखशोकसमन्वितम् ॥ २ ॥

---

* प्रत्यागतः—सूतस्याभिमुखागतः—गो. † इदं सर्वं सूतमित्यस्य विशेषणम् ।

[1] प्रत्यागतस्मृतिः—च.

वृद्धं परमसन्तप्तं नवग्रहमिव द्विपम् ।
विनिश्वसन्तं ध्यायन्तं अस्वस्थमिव कुञ्जरम् ॥ ३ ॥

नवः—नूतनः ग्रहः—ग्रहणं यस्य स तथा ॥ ३ ॥

राजा तु * रजसा [1] सूतं ध्वस्ताङ्गं समुपस्थितम् ।
अश्रुपूर्णमुखं दीनं उवाच परमार्तवत् ॥ ४ ॥

रजसा ध्वस्ताङ्गमिति । मार्गरजसेत्यर्थः । ध्वस्तानि—व्याकुलानि अङ्गानि यस्य । समुपस्थितं सूतं—सुमन्त्रं । † परमार्तवत्—परमदीनः सन् ॥ ४ ॥

‡ क्व नु वत्स्यति धर्मात्मा वृक्षमूलमुपाश्रितः ।
सोऽत्यन्तसुखितः, सूत ! किमशिष्यति राघवः ॥ ५ ॥

क्व नु प्रदेशे अशिष्यति—अश्नातीति यावत् ॥ ५ ॥

दुःखस्यानुचितो [2] दुःखं ! सुखार्हशयनोचितः ।
भूमिपालात्मजो भूमौ शेते कथमनाथवत् ॥ ६ ॥
यं यान्तमनुयान्ति स्म पदातिरथकुञ्जराः ।
स वत्स्यति कथं रामः विजनं वनमाश्रितः ॥ ७ ॥
व्यालैर्मृगैराचरितं कृष्णसर्पनिषेवितम् ।
कथं कुमारौ वैदेह्याः सार्धं वन[3]मुपस्थितौ ॥ ८ ॥
सुकुमार्या तपस्विन्या, सुमन्त्र ! सह सीतया ।
राजपुत्रौ कथं पादैः अवरुह्य रथात् गतौ ॥ ९ ॥

---

* रजसा ध्वस्ताङ्गं—धूसरिताङ्गं-धूतं—कम्पितं—गो. † परमार्तवत—परमार्तार्हं वच उवाच—ति. ‡ पादद्वयं भिन्न वाक्यम् । द्वितीयं वाक्यं काकुगर्भम् । अथ वा 'क्व नु' इत्यादि देशप्रश्नः । यद्वा—सद्यः वृक्षमूलमुपाश्रितः भविष्यति काले क्व नु वत्स्यति ? वृक्षमूलमुपाश्रितः किमशिष्यतीति वा अन्वयः ।

[1] धूतं—ङ. [2] नित्यं सुमन्त्र शय—ङ. [3] मुपाश्रितौ—च.

सिद्धार्थः खलु, सूत! त्वं येन दृष्टौ ममात्मजौ ।
वनान्तं प्रविशन्तौ तौ अश्विनाविव [1] मन्दरम् ॥ १० ॥

अश्विनाविव मन्दरमिति । * मन्दरस्य कार्ष्ण्यमात्रात् वनसादृश्यम् ॥ १० ॥

किमुवाच वचो रामः किमुवाच च लक्ष्मणः ।
सुमन्त्र! वनमासाद्य किमुवाच च मैथिली ॥ ११ ॥
आसितं शयितं भुक्तं, सूत! रामस्य कीर्तय ।
जीविष्याम्यहमेतेन ययातिरिव साधुषु ॥ १२ ॥

आसितादयो भावे निष्ठाः । एतेनेति । आसनादिव्यापारश्रवणेनेत्यर्थः । ययातिरिव साधुष्विति । स्वर्गात् पतन् ययातिः 'मां साधुषु पातय' इतीन्द्रं प्रार्थयित्वा यथा साधुषु पतितः, † एवं स्वर्गतुल्यराज्यात् प्रभ्रष्टस्य साधूनामाश्रमेषु पतितस्य रामस्यासनादीनि कीर्तयेति योजना ॥ १२ ॥

---

* यद्वा—मन्दरं–मन्दमित्यर्थः । क्रियाविशेषणं चेदम् । अश्विनाविव सुन्दरौ तौ पद्भ्यां गमने अपरिचितौ मन्दं यथा तथा वनान्तं प्रविशन्तौ येन त्वया दृष्टौ-इत्यन्वयः ॥ रथात् अवरुह्य पादैः गतौ—इति पूर्वश्लोककथनात्, सुन्दरपुरुषयोः, गजगमनयोः, रामलक्ष्मणयोः गमनसौन्दर्यं मनसा पश्यन् दशरथो वदति । यद्वा—'मन्दरः सैरिभः शक्रसदनं खं दिवं नभः' इति त्रिकाण्डशेषात् अश्विनौ मन्दरं–स्वर्गमिवेत्यर्थः ॥

† अथ वा—स्वर्गात् भ्रष्टः ययातिः यथा साधुसंगमात् कथञ्चित् निर्वृतिं प्राप तथाऽहमपि रामकथाश्रवणात् जीवेयमित्यर्थः । ययातिकथा महाभारते (म. भा. आ.–82) श्रूयते—स्वसत्कर्मणा स्वर्गं प्राप्तं ययातिं इन्द्रः परीक्षार्थं—'केनासि तुल्यस्तपसा ययाते' इत्यपृच्छत् । ययातिस्तु गर्वात्—'नाहं देवमनुष्येषु गन्धर्वेषु महर्षिषु । आत्मनस्तपसा तुल्यं कञ्चित्पश्यामि वासव ॥' इत्यवदत् । एवं सर्वभूतावमाननात् 'पतितोऽस्यद्य राजन्' इतीन्द्रेणाभिहितः सः 'इच्छाम्यहं सुरलोकात् विहीनः सतां मध्ये पतितुं देवराज' इति प्रार्थयामासेन्द्रम्, तथैव साधुसहवासं प्राप च ॥

[1] सुन्दरौ–ङ.

इति सूतो नरेन्द्रेण चोदितः सज्जमानया ।
उवाच वाचा राजानं स बाष्पपरि[1]रब्धया ॥ १३ ॥

सज्जमानया—षञ्ज सङ्गे, स्खलन्त्येति यावत् । स बाष्पेत्यत्र स इति पदं, सूतो विशेष्यम् ॥ १३ ॥

अब्रवीन्मां, महाराज! धर्ममेवानुपालयन् ।
अञ्जलिं राघवः कृत्वा शिरसाऽभिप्रणम्य च ॥ १४ ॥
*सूत! मद्वचनात् तस्य तातस्य विदितात्मनः ।
शिरसा वन्दनीयस्य [2]वन्द्य पादौ [3]महात्मनः ॥१५॥
सर्वमन्तःपुरं वाच्यं, सूत! मद्वचनात् त्वया ।
आरोग्यमविशेषेण यथार्हं चाभिवादनम् ॥ १६ ॥

अब्रवीदित्यादि । हे महाराज! राघवः धर्ममेवानुपालयन् भूत्वा त्वां प्रति मया वक्तव्यं सन्देशं अब्रवीत् । किमिति—हे सूत! मे अञ्जलिं—मामकमञ्जलिं मत्प्रतिनिधित्वेन राज्ञे कृत्वा, तथैव शिरसाऽभिप्रणम्य उच्यमानधर्मकस्य राज्ञः पादौ च मद्वचनाद्वन्द्य—रामोऽभिवादयते इति मत्प्रातिनिधित्वेनाभिवाद्य, अनन्तरं सर्वमन्तःपुरं त्वया मद्वचनात्—'रामो वः सर्वा अविशेषेणारोग्यं पृच्छति' इति यथार्हमभिवादनं च वाच्यम् ॥ १६ ॥

माता च मम कौसल्या कुशलं चाभिवादनम् ।
†अप्रमादं च वक्तव्या ब्रूयाच्चैनामिदं वचः ॥ १७ ॥

---

* एतद्व्याख्यानरीत्या श्लोकद्वयमेकं वाक्यम् । वन्द्यौ इति पाठे तु भिन्नं वाक्यम् ।

† अप्रमादं—धर्मे भर्तरि च । अथ वा क्रियाविशेषणमिदम् ।

[1] बद्धया-ङ.  [2] वन्द्यौ-ङ.  [3] पुनःपुनः-ङ.

माता च विशिष्य कौसल्या कुशलादिकमभिवक्तव्या। इदं च—वक्ष्यमाणं एनां विशिष्य प्रब्रूयाः ॥ १७ ॥

**धर्मनित्या यथाकालं अग्न्यगारपरा भव।**
**देवि! देवस्य पादौ च देववत् परिपालय ॥ १८ ॥**

किं तत्! इत्यतः—धर्मेत्यादि ॥ १८ ॥

**अभिमानं च मानं च त्यक्त्वा वर्तस्व मातृषु।**
***अनु राजानमार्यां च कैकेयीमम्ब! कारय ॥ १९ ॥**

अभिमानं च मानं चेति। 'गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः'। राममातृत्वप्रधानमहिषीत्वादिप्रयुक्तोऽहङ्कारः—अभिमानः; तत्प्रयुक्तो मानः—इतरतिरस्कारकश्चित्तविकारः। राजानमनु—राज्ञः पश्चात कैकेयीं चार्यामेवाभिवादय ॥ १९ ॥

**कुमारे भरते वृत्तिः वर्तितव्या च राजवत्।**
**† [1]अर्थज्येष्ठा हि राजानः, राजधर्ममनुस्मर ॥ २० ॥**

भरते च राजवत् वृत्तिः वर्तितव्या—सम्पादनीया। कथमुभयमित्यतः—अर्थेत्यादि। हि- यस्मात् अर्थज्येष्ठाः सन्तो राजानो भवन्ति, अतः स्वपुत्रायार्थसिद्धिविषये वरबलेन देव्याः कैकेय्याः प्रवृत्तत्वात् भरतस्य च राजदत्तार्थज्यैष्ठ्याच्च तद्विषयवैमुख्यनिवृत्तये राजधर्ममनुस्मर ॥ २० ॥

---

* अनुगतो राजा यस्यास्तां कैकेयीं हे अम्ब! आर्यां श्लाघ्यां कारय—ति. अन्विति तुल्यार्थे। राजानं कैकेयीं च तुल्यमनुवर्तस्व-गो. यद्वा—राजानं आर्यां कैकेयीं च अनुकारय—अनुसरेति यावत्। † जीवत्यपि दशरथे कैकेयीवरात् भरत एव खलु राजा। अतः दशरथे पतित्वानुगुणवर्तनं, भरते राजत्वानुगुणवर्तनं चोच्यते ॥

[1] अप्यज्येष्ठा—ङ. च.

* [1] भरतः कुशलं वाच्यः वाच्यो मद्वचनेन च ।
कुमारराज्ये जीव त्वं तस्यैवा[2]ज्ञाप्रवर्तनात् ॥ २१ ॥

भरतो मद्वचनेन कुशलं वाच्यः, राजा च मद्वचनात् वाच्यः । किमिति ?—हे राजन् ! राज्यस्य भरताय दत्तत्वात् त्वया कुमारराज्ये—भरतराज्ये त्वं तस्यैवाज्ञाप्रवर्तनात्—तदनुग्रहाय तस्यैवाज्ञां प्रवर्तयन् तद्धेतोरेव जीव । एवं पाङ्क्तं पाठं पश्यामः । अत्र † श्लोकत्रयं प्रक्षिप्तं अपरो ‡ व्याकरोत् ॥ २१ ॥

अब्रवीच्चापि मां भूयः भृशमश्रूणि वर्तयन् ।
§ मातेव मम माता ते द्रष्टव्या पुत्र[3]कर्शिनी ॥ २२ ॥

अब्रवीदित्यादि । भूयः पुनश्च भृशमश्रूणि वर्तयन् अब्रवीत्, किमिति—ते द्रष्टव्येति । 'कृत्यानां कर्तरि वा' इति षष्ठी, हे राजन् ! त्वया पुत्रकर्शिनी मम माता मातेव—राज्ञो भरतस्य मातेव द्रष्टव्या राज्यहीनाऽपि । अत्र 'कुमारराज्ये जीव त्वं'

---

* भरतः कुशलं वाच्यः, त्वयेति शेषः । वाच्यो मद्वचनेन च, मयोक्तमित्यपि वाच्य इत्यर्थः । यद्वा भरतो मद्वचनेन कुशलं वाच्यः । सर्वास्वेव मातृषु यथान्यायं वर्तस्वेति च वाच्यः इति द्वितीयवाच्यपदान्वयः—गो. † अत्र श्लोकद्वयमिति स्यात् । तौ च श्लोकावधस्तात् दत्तौ । तत्र—महाबाहुः—भरतः ! त्वं यौवराज्यस्थः सन् राज्यस्थं पितरमनुपालय । वृद्धं एनं राजानं न हिंस्याः । कुमारराज्ये—यौवराज्य एव स्थित्वा दशरथस्य आज्ञामेव प्रवर्तयन् जीव—इत्यर्थः । यद्यपि कौसल्यायै भरते राजवद्वृत्तिरुपदिष्टा । परन्तु सैव वास्तवोक्तिः, इयं तु भरताय हितोपदेशः । अत एव 'वक्तव्यश्च' इति विच्छित्तिः कृता ॥ ‡ गोविन्दराजः, तीर्थो वा । § ते मातेव मम माता—इति वाऽन्वयः । सुमन्त्रं प्रतीयमुक्तिः । भरताय वा ।

[1] एतदनन्तरं 'सर्वास्वेव यथान्यायं वृत्तिं वर्तस्व मातृषु । वक्तव्यश्च महाबाहुः इक्ष्वाकुकुलनन्दनः ॥ पितरं यौवराज्यस्थः राज्यस्थमनुपालय । अतिक्रान्तवया राजा मा स्मैनं व्यवरोरुधः ॥' इत्यधिकं—ङ. [2] ज्ञां प्रवर्तयन्—ङ. च. [3] गर्धिनी—ङ. च.

इति पूर्ववाक्ये राज्ञः प्रकृतत्वात् राजानं प्रति मातृरक्षणवचनमिदं, उचितं च। अथ पूर्ववाक्येऽपि भरतस्यैव प्रस्तुततया व्याख्याने- इदमपि तं प्रत्येव वचनम्। भरतप्रस्तावतया व्याख्या तु—हे कुमार! त्वं तस्यैव—त्वद्यौवराज्यप्रदस्य राज्ञ एव राज्ये आज्ञाप्रवर्तनात् जीव, यावत्पितृशरीरमिति। अत्र तु—ते मातेव मम माता द्रष्टव्येति योजना। अर्थद्वयमप्यविरुद्धम् ॥ २२ ॥

इत्येवं मां, महाराज! ब्रुवन्नेव महायशाः।
रामो राजीवताम्राक्षः भृशमश्रूण्यवर्तयत् ॥ २३ ॥

*लक्ष्मणस्तु सुसंक्रुद्धः निश्वसन् वाक्यमब्रवीत्।
केनायमपराधेन राजपुत्रो विवासितः ॥ २४ ॥

†राज्ञा तु खलु कैकेय्या [1]लघु त्वाश्रित्य शासनम्।
कृतं कार्यमकार्यं वा वयं येनाभिपीडिताः ॥ २५ ॥

लघु शासनमिति। सुनिरासमिति यावत्। तदाश्रित्य यत् कृतं, तत् कार्यं कर्तुं योग्यं अयोग्यं वा भवतु, वयं पीडिता इत्यत्र न सन्देहः किल। ततो वयं येन पीडिताः तस्मिन् पितृत्वं नोपलक्षये इत्यग्रेण सम्बन्धः ॥ २५ ॥

---

*पूर्वं सुमन्त्रप्रतिनिवर्तने एवं लक्ष्मणवाक्याभावेऽपि अनेनैव तत् ऊह्यम्।
†येन विवासनेन वयमभिपीडिताः, तद्विवासनं अकार्यं तु—अकार्यमेव। राज्ञा तु कैकेय्याः लघु शासनमाश्रित्य कार्यं वा—कार्यमिव कृतं खलु। यद्वा लघु—तुच्छं कैकेय्याश्शासनमाश्रित्य अकार्यमेव कार्यं कृतम्—गो.

[1] सत्यमाश्रित्य—ङ.

यदि प्रव्राजितो रामः * लोभकारण[1]कारितः।
[2]वरदाननिमित्तं वा सर्वथा दुष्कृतं कृतम् ॥ २६ ॥

ननु कथमकृत्यशङ्का? राजकृतकार्यस्य सत्यपरिपालनमूलकत्वादित्याशंक्याह—यदीत्यादि। लोभकारणत्वेन कारितः—अङ्गीकृतः। वरदाननिमित्तं प्रव्राजित इति यद्युच्यते; तथाऽपि सर्वथा दुष्कृतमेव कृतम्, इदमनुचितमेव, तद्व्यतिरिक्तमेव वरयेति सुवचत्वात्। पतित्वेन भार्याशिक्षणे समग्राधिकारात्। अस्य प्रसङ्गस्य राज्यविषयकत्वेन मन्त्रिपुरोहिताद्यनुरोधेन कर्तव्यत्वान्न मयैकेनायमर्थः शक्यानुष्ठान इति सुवचत्वाच्च। अत्राप्येकमर्धं प्रक्षिप्य व्याकरोत् † ॥ २६ ॥

रामस्य तु परित्यागे न हेतुमुपलक्षये ॥ २७ ॥
असमीक्ष्य समारब्धं केवलं बुद्धिलाघवात्।
जनयिष्यति ‡ सङ्क्रोशं राघवस्य विवासनम् ॥ २८ ॥

यदेवं, अतः—रामस्य परित्यागे उक्तहेतुं च हेतुत्वेन नोपलक्षये। हेत्वाभासमेव पश्यामि। तस्मात् केवलं बुद्धिलाघवात् असमीक्ष्य—

---

* रामः प्रव्राजित इति यत्, एतत् लोभकारणकारितं वरदाननिमित्तं वा—कैकेय्याः प्रतिश्रुतवरदाननिमित्तं वा, सर्वथा दुष्कृतं कृतं; वरदानसमये वरद्वयस्य भरताभिषेकरामनिष्कासनरूपेण विनियोगाभावात्। लोभकारणनिमित्तमिति क्रियाविशेषणम्—**गो.**

† **गोविन्दराजः**। अर्धं तु अधस्ताद्दत्तम्। तच्चैवं व्याख्यातम्—रामपरित्यागहेतुं नोपलक्षये, किन्तु ईश्वरस्य कृते—स्वतन्त्रव्यापारे स्थितेन राज्ञेति शेषः, इदं रामप्रव्राजनं यथाकामं तावत्—यथेच्छमेव कृतम्। यद्वा इदं रामविवासनं ईश्वरस्य कृते—ईश्वरप्रयोजनाय यथाकामं कृतं—केवलमीश्वरप्रेरणेन शास्त्रमनवेक्ष्य कृतम्। (ईश्वरस्य कृते—ईश्वरत्वाद्धेतोः इति वा)। ‡ संक्रोशः—आक्रोशो वा।

[1] कारितम्—**सर्वत्र.** [2] एतदनन्तरं 'इदं तावद्यथाकामं ईश्वरस्य कृते (कृतौ) कृतम्' इत्यधिकम्—**ङ. च.**

उचितानुचितमनवेक्ष्य सर्वलोकविरुद्धं समारब्धं राघवस्य विवासनम्। तच्च तस्य, अस्माकं च सर्वेषां सङ्क्लेशं-दुःखं जनयिष्यति ॥ २८ ॥

अहं तावन्महाराजे पितृत्वं नोपलक्षये।
भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ॥२९॥

तस्मादहं तावन्महाराजे पितृत्वं नोपलक्षये। 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः। उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥' इति शास्त्रेणेति शेषः। 'ज्येष्ठो भ्राता पितृसमः' इति न्यायेन धार्मिके ज्येष्ठ एव पित्रादिबुद्धिरित्याह--भ्रातेत्यादि। भर्ता-स्वामी ॥ २९ ॥

सर्वलोकप्रियं त्यक्त्वा सर्वलोकहिते [1] रतम्।
* सर्वलोकोऽनुरज्येत [2] कथं त्वाऽनेन कर्मणा ॥ ३० ॥

अन्यदप्याह—सर्वलोकेत्यादि। त्यक्त्वाऽवस्थितं त्वामनेन क्रूरेण कर्मणा हेतुना सर्वलोकः कथमनुरज्येत ॥ ३० ॥

सर्वप्रजाभिरामं हि रामं प्रव्राज्य धार्मिकम्।
सर्वलोकं विरुध्येमं कथं राजा भविष्यति ॥ ३१ ॥

यदेवं सर्वलोको विरुध्येत, तत् कथं राजा भविष्यति पिता। इत्यब्रवील्लक्ष्मण इति शेषः ॥ ३१ ॥

जानकी तु, महाराज! निश्वसन्ती मनस्विनी।
भूतोपहतचित्तेव विष्ठिता †[3] विस्मिता स्थिता ॥ ३२ ॥

---

* अनेन कर्मणोपलक्षितं त्वा-गो. पूर्वं सर्वलोकहिते रते त्वयि इदानीं रामं त्यक्त्वा स्थिते सति-ति. † विस्मृता—विस्मृतसर्वप्रयोजना-ति.

[1] रते-ङ. च. [2] कथं चानेन-ङ. च. [3] विस्मृता-च.

अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी ।
तेन दुःखेन रुदती नैव मां किञ्चिदब्रवीत् ॥ ३३ ॥
उद्वीक्षमाणा भर्तारं मुखेन परिशुष्यता ।
मुमोच सहसा बाष्पं मां प्रयान्तमुदीक्ष्य सा ॥ ३४ ॥

तथैव रामोऽश्रुमुखः कृताञ्जलिः
*[1] स्थितोऽभवल्लक्ष्मणबाहुपालितः ।
तथैव सीता रुदती तपस्विनी
निरीक्षते राजरथं तथैव माम् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टपञ्चाशः सर्गः

---

राज्ञः तव रथं–राजरथम् । मृग(३५)मानः सर्गः ॥ ३५ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे अष्टपञ्चाशः सर्गः

---

## एकोनषष्टितमः सर्गः

[दशरथाक्रन्दः]

†[2] मम त्वश्वा निवृत्तस्य न प्रावर्तन्त वर्त्मनि ।
उष्णमश्रु प्रमुञ्चन्तः रामे संप्रस्थिते वनम् ॥ १ ॥

---

* अब्रवीत्—उक्तमिति शेषः–ति. † मम वर्त्मनि–गो.

[1] स्थितोऽब्रवीत्–च. [2] एतत्पूर्वं 'इति ब्रुवन्तं तं सूतं सुमन्त्रं मन्त्रिसत्तमं । ब्रूहि शेषं पुनरिति राजा वचनमब्रवीत् ॥ तस्य तद्वचनं श्रुत्वा सुमन्त्रो बाष्पविक्लबः । कथयामास भूयोऽपि रामसन्देशविस्तरम् ॥ जटाः कृत्वा महाराज चीरवल्कलधारिणौ । गङ्गामुत्तीर्य तौ वीरौ प्रयागाभिमुखौ गतौ ॥ अग्रतो लक्ष्मणो यातः पालयन् रघुनन्दनम् । अनन्तरं च सीताऽथ राघवो रघुनन्दनः ॥ तांस्तथा गच्छतो दृष्ट्वा निवृत्तोऽस्म्यवशस्तदा ।' इत्यधिकं–ङ.

एवं रामवृत्तान्तमुक्त्वा प्रत्यागतेन अनुभूयमानस्वदेशपुरवृत्तान्त-माह सुमन्त्रः— मम त्वित्यादि। न प्रावर्तन्तेति। यथापूर्वं रथवहने न उन्मुखा अभूवन् इत्यर्थः ॥ १ ॥

उभाभ्यां राजपुत्राभ्यां अथ कृत्वाऽहमञ्जलिम्।
प्रस्थितो रथमास्थाय तद्दुःखमपि धारयन् ॥ २ ॥
गुहेन सार्धं तत्रैव स्थितोऽस्मि दिवसान् बहून् *।
आशया यदि मां रामः पुनः शब्दापयेदिति ॥ ३ ॥

बहूनिति। दिनत्रयमिति यावत्। किमर्थं तत्र स्थितमित्यत्राह—आशयेत्यादि। शब्दापयेत्—तत्समीपसञ्चरद्गुहमनुष्यमुखेनाकारयेदपि वेत्याशयेत्यर्थः। शब्दशब्दाण्णौ तत्कृतापुगन्तोऽप्ययमस्ति। अतोऽज्ञापयतीत्यादिवत् सिद्धम् ॥ ३ ॥

विषये ते, महाराज! [1] रामव्यसनकर्शिताः।
अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः ॥ ४ ॥

ते विषये—तव देशे। पुष्पं—विकसितकुसुमम्। अङ्कुरः—शाखाग्रवर्तिपल्लवोद्भेदः। कोरकः—स्तबकः ॥ ४ ॥

उपतप्तोदका नद्यः पल्वलानि सरांसि च।
परिशुष्कपलाशानि वनान्युपवनानि च ॥ ५ ॥

पलाशं—पर्णम् ॥ ५ ॥

---

* वनस्पतिमूले एकदिनं, भरद्वाजाश्रमे द्वितीयं, यमुनातीरे तृतीयं, चतुर्थे चित्रकूटप्रवेशः, पञ्चमे गुहचारैस्तत्सर्वनिवेदनं, षष्ठे सूतनिर्गमः। यद्वा द्वितीयदिने भरद्वाजाश्रमे रामस्य चित्रकूटगमनव्यवसायात् तृतीयदिने चारैर्निवेदनं, चतुर्थे सूतनिर्गमः—गो.

[1] महाव्यसन-ङ. च.

न च सर्पन्ति [1] सत्त्वानि व्याला न प्रचरन्ति च।
रामशोकाभिभूतं तत् निष्कूजमभवद्वनम् ॥ ६ ॥

निष्क्रान्तः कूजः–शब्दः यस्मात् तत्तथा ॥ ६ ॥

लीनपुष्करपत्राश्च, [2] नरेन्द्र! कलुषोदकाः।
सन्तप्तपद्माः पद्मिन्यः लीनमीन*विहङ्गमाः ॥ ७ ॥

लीनं–सङ्कुचितं पुष्करपत्रं–नलिनीदलं यासां तास्तथा ॥ ७ ॥

जलजानि च पुष्पाणि † माल्यानि स्थलजानि च।
नाद्य भान्त्यल्पगन्धीनि फलानि च यथापुरम् ॥ ८ ॥

स्थलजानि माल्यानि–पुष्पाणि। अल्पगन्धीनि, मत्वर्थीय इनिः ॥ ८ ॥

‡[3] अत्रोद्यानानि शून्यानि प्रलीनविहगानि च।
न चाभिरामानारामान् पश्यामि, मनुजर्षभ! ॥ ९ ॥
प्रविशन्तमयोध्यां मां न कश्चिदभिनन्दति।
नरा राममपश्यन्तः निश्वसन्ति मुहुर्मुहुः ॥ १० ॥
देव! राजरथं दृष्ट्वा विना राममिहागतम्।
[4] दुःखादश्रुमुखः सर्वः राजमार्गगतो जनः ॥ ११ ॥

देव इति सम्बुद्धिः ॥ ११ ॥

हर्म्यैर्विमानैः प्रासादैः अवेक्ष्य रथमागतम्।
हाहाकारकृता नार्यः रामादर्शनकर्शिताः ॥ १२ ॥

---

* विहङ्गमाः हंसादयः। † 'माल्यं पुष्पे पुष्पदाम्नि' वैजयन्ती। ‡ उद्यानं–आक्रीडः। आरामः–कृत्रिमवनं–गो. स्वस्य नगरप्रवेशानन्तरवृत्तवर्णनाय व्युच्छित्ति-विशेषसूचनाय 'अत्र' इत्युक्तं स्यात्।

[1] भूतानि–ङ. [2] नद्यश्च–ङ. च. [3] पुरोद्यानानि–ङ. [4] दूरादश्रु–ङ. च.

**आयतैर्विमलैर्नेत्रैः अश्रुवेगपरिप्लुतैः ।**
**अन्योन्यमभिवीक्षन्ते व्यक्तमार्ततराः स्त्रियः ॥ १३ ॥**

*** नामित्राणां न मित्राणां उदासीनजनस्य च ।**
**अहमार्ततया किञ्चित् [1] विशेषमुपलक्षये ॥ १४ ॥**

नामित्राणामित्यादि । अस्मदाद्यपेक्षयेति शेषः । न तु अमित्रकथासम्भवो रामस्य । कैकेय्यपि रामाभिषेकश्रुतौ प्रथमं भूषणं किल ददौ । सा तु पश्चादिन्द्रादिदैवहता । अर्ततयेति । स्थिताविति शेषः ॥ १४ ॥

**अप्रहृष्टमनुष्या च दीननागतुरङ्गमा ।**
**आर्तस्वरपरिम्लाना † विनिश्वसितनिस्स्वना ॥ १५ ॥**
**निरानन्दा, महाराज! रामप्रव्राजनातुरा ।**
**कौसल्या पुत्रहीनेव अयोध्या प्रतिभाति मे ॥ १६ ॥**

पुत्रहीना—पुत्रवियुक्ता कौसल्येव ॥ १६ ॥

**सूतस्य वचनं श्रुत्वा वाचा परमदीनया ।**
**बाष्पोपहतया राजा तं सूतमिदमब्रवीत् ॥ १७ ॥**

---

* अमित्राणां, तवेति शेषः—**गो.** परन्तु ते यदि रामे नामित्राणि तर्हि आर्तत्वं युक्तमेव । किञ्च सर्वेषां रामगुणाकृष्टत्वेन तस्य शत्रुरेव नास्ति चेत्, तर्हि उदासीनो वा कश्चित् कथम्? अतो यथाश्रुतार्थ एव युक्तः । सन्त्येव सर्वत्र सर्वदा सत्यविद्वेषिणः, त्रिगुणात्मकत्वात् जगतः । तत्र मित्राणि सात्विकाः, उदासीनानि राजसाः, अमित्राणि तामसाः । अमित्रादयोऽप्यवशादेव आर्ता बभूवुरिति भावः । † विनिश्वसितनिस्स्वना । विगतं निश्वसितं यस्यामवस्थायां—मूर्छावस्थेत्यर्थः, तद्वत् निस्स्वना । मूर्छितेव निस्स्वनेति यावत् ।

[1] विशेषं नोपलक्षये—**ङ. च.**

कैकेय्या विनियुक्तेन *पापाभिजनभावया ।
मया न मन्त्रकुशलैः वृद्धैः [1]सह समर्थितम् ॥ १८ ॥

सूतवचः श्रुत्वा इदानीं स्वाज्ञानमूलोऽनर्थ इति शनैर्बुध्यते—कैकेय्येत्यादि । विशेषेण †स्वर्णापाकरणे नियोजितस्तथा । पापात्—अन्याय्यादेव अभिजने—अभिजायत इत्यभिजनः पुत्रः, तदर्थसम्पादने भावः—अभिप्रायो यस्यास्सा तथा । न समर्थितं—न विचारितम् ॥ १८ ॥

न सुहृद्भिर्न चामात्यैः मन्त्रयित्वा न नैगमैः ।
मयाऽयमर्थः सम्मोहात् स्त्रीहेतोः सहसा कृतः ॥ १९ ॥

सहसा—द्राक् ॥ १९ ॥

‡भवितव्यतया नूनं इदं वा व्यसनं महत् ।
कुलस्यास्य विनाशाय प्राप्तं, सूत! यदृच्छया ॥२०॥

भवितव्यतया—अवश्यप्रापकदुरदृष्टवशादित्यर्थः । यदृच्छया—परवशतया ॥ २० ॥

§सूत! यद्यस्ति ते किञ्चित् [2]मया तु सुकृतं कृतम् ।
त्वं प्रापयाशु मां रामं प्राणाः सन्त्वरयन्ति माम् ॥२१॥

---

* अभिजनः-अभिजात इति पर्यायः । अभिजनभावः-आभिजात्यं-तदनुगुणः भावः—अभिप्रायः यस्यास्सा । तेन च पूर्वं ३५ सर्गे य उक्तः कैकेयीमातृवृत्तान्तः सुमन्त्रेण, स स्मार्यते । † स्व-ऋण-अपाकरणे—इति पदविभागः विग्रहे । ‡ भवितव्यता नाम विधिः, अप्रतीकारा सा । यदृच्छा—शक्यप्रतीकाराऽपि बुद्धिदोषमवकाशं प्राप्य आगच्छन्ती । एवञ्च वाकारोऽपि स्वरस । § हे सूत ते—तुभ्यं मया किञ्चिदपि सुकृतं—शोभनं कर्म उपकारादिकं कृतं यद्यस्ति, यदि त्वं मत्तः किञ्चिदप्युपकारं प्राप्तवान्, तर्हि मां तत्प्रतिफलतया रामं नय इति वाऽर्थः ।

[1] सूत सुमन्त्रितम्—ङ.  [2] मयापि—ङ.

किञ्चिदिति । प्रियमिति शेषः । प्राणाः सन्त्वरयन्तीति । निष्क्रमितुमिच्छन्तीति यावत् ॥ २१ ॥

*यदि वाऽद्य ममैवाज्ञा निवर्तयतु राघवम् ।
न शक्ष्यामि विना रामं मुहूर्तमपि जीवितुम् ॥२२॥

यदि वा—अथ वा अद्य ममाज्ञा—छान्दसष्टायाः पूर्वसवर्णता, आज्ञया, भवानद्य राघवं निवर्तयतु । ॥२२॥

अथ वाऽपि महाबाहुः गतो दूरं भविष्यति ।
मामेव रथमारोप्य शीघ्रं रामाय दर्शय ॥२३॥

अथ रामनिवर्तनपक्षस्याशक्यत्वात् स्वनयनमेवाह—अथ वेत्यादि ॥२३॥

वृत्तदंष्ट्रो महेष्वासः क्वासौ लक्ष्मणपूर्वजः ।
यदि जीवामि साध्वेनं पश्येयं सीतया सह[1] ॥२४॥

यदि जीवामीति । तत्समीपगमनपर्यन्तमपि मज्जीवनस्थितौ सन्देह इत्यर्थः ॥२४॥

अतो नु किं दुःखतरं† योऽहमिक्ष्वाकुनन्दनम् ।
इमामवस्थामापन्नः नेह पश्यामि राघवम् ॥२५॥

'अतो नु' इत्यत्र अतःशब्दार्थः—इमामित्यादि ॥ २५ ॥

---

* अथ वा ममाज्ञैव रामं निवर्तयतु, राजाज्ञाया अनुल्लंघनीयत्वादित्याशयः । राजाज्ञा पर्वं वदतीत्यादिवत् प्रयोगः । † इक्ष्वाकुनन्दनं राघवमित्यन्वयः ।

[1] एतदनन्तरं 'लोहिताक्षं महाबाहुं आमुक्तमणिकुण्डलम् । रामं यदि न पश्येयं गमिष्यामि यमक्षयम् ॥' इत्यधिकं—ङ.

हा राम ! रामानुज हा !! हा वैदेहि तपस्विनि !!!
न मां जानीत दुःखेन म्रियमाणमनाथवत् ॥ २६ ॥

स राजा तेन दुःखेन * भृशमर्पितचेतनः ।
अवगाढः सुदुष्पारं शोकसागरमब्रवीत् ॥ २७ ॥

स राजा तेन दुःखेन भृशमर्पितचेतनः, अत एव गाढमग्नः सन् दुष्पारं शोकसागरं अब्रवीत्——इति कविवाक्यम् ॥ २७ ॥

रामशोकमहा[1]ऽभोगः सीताविरहपारगः ।
श्वसितोर्मिमहाऽऽवर्तः [2] बाष्पफेनजलाविलः ॥ २८ ॥

बाहुविक्षेपमीनौघः विक्रन्दितमहास्वनः ।
प्रकीर्णकेशशैवालः कैकेयीवडवामुखः ॥ २९ ॥

ममाश्रुवेगप्रभवः कुब्जावाक्यमहाग्रहः ।
† वरवेलो नृशंसायाः ‡ रामप्रव्राजनायतः ॥ ३० ॥

[3] यस्मिन् बत निमग्नोऽहं, कौसल्ये ! राघवं विना ।
दुस्तरो जीवता, देवि ! मयाऽयं शोकसागरः ॥ ३१ ॥

अथ किमब्रवीदित्यतः——रामशोकेत्यादि । शोकरूपः महान् आभोगः–वैपुल्यं यस्य स तथा । सीताविरहरूपं पारं गच्छतीति

---

* अर्पितचेतनः–गतचेतनः–ति. दुःखेन भृशं अर्पिता, व्याप्ता चेतना यस्य सः इति वा । † नृशंसाया यो वरः स एव वेला–' अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि '। ‡ रामप्रव्राजनमेव आयतं–आयामः–दैर्घ्यं यस्य स तथा–गो.

[1] वेगः–च. [2] बाष्पवेग–च. [3] तस्मिन्–ङ.

तथा ! कुब्जावाक्यमहाग्रह इत्यनेन कुब्जावाक्यादेवं प्रवृत्तिः कैकेय्या इति राज्ञाऽवगतमिति गम्यते । वरः वेला यस्य स तथा । *प्रव्राजनेति 'ण्यासश्रन्थो युच्' इति युच् ॥ ३१ ॥

†अशोभनं योऽहमिहाद्य राघवं
दिदृक्षमाणो न लभे सलक्ष्मणम् ।
इतीव राजा विलपन् महायशाः
पपात तूर्णं शयने स मूर्छितः ॥ ३२ ॥

इति विलपति पार्थिवे प्रणष्टे
करुणतरं ‡ द्विगुणं च रामहेतोः ।
वचनमनुनिशम्य तस्य देवी
भयमगमत् पुनरेव राममाता ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकोनषष्टितमः सर्गः

---

द्विगुणं भयमिति । पूर्वं— रामस्य वने किं भविष्यतीति भयं स्थितं, इदानीं भर्तुश्च काऽवस्था भविष्यतीति भयान्तरं च प्राप्तेत्यर्थः । श्लोक(३३)मानः सर्गः ॥ ३३ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे एकोनषष्टितमः सर्गः

---

*अत्र तिलके 'यतो रामप्रव्राजनसमुद्रात् कालकूटमिव जातेति कतकः' इत्यनूद्यते । परं त्विदं मातृकायां नोपलक्ष्यते । एतद्दृष्ट्या यतः रामप्रव्राजना—इति अन्वय । †सलक्ष्मणं राघवं दिदृक्षमाणोऽपि त न लभे इति यत् तदशोभनं । इवेत्येवार्थे । ‡पूर्वं २०तमसर्गे 'अत्यन्तं निगृहीताऽस्मि' (श्लो. ४२) इत्यादिना रामविवासे स्वस्या भयं प्रकटितं कौसल्यया । रामविवासे निर्णीते च दशरथमेवावलम्बनं मन्यमानायाः कौसल्यायाः तस्यापि पतनशंकया द्विगुणं भयमित्युक्तम् ।

## षष्टितमः सर्गः

### [ कौसल्यासमाश्वासनम् ]

ततो *भूतोपसृष्टेव वेपमाना पुनः पुनः ।
धरण्यां गतसत्त्वेव कौसल्या सूतमब्रवीत् ॥ १ ॥

अथ भर्तुर्दुर्दशापत्तिभीतायाः कौसल्यायाः सुमन्त्रेणाश्वासनम् । तत इत्यादि । गतसत्त्वेव–गतप्राणेव । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' ॥ १ ॥

नय मां यत्र काकुत्स्थः सीता यत्र च लक्ष्मणः ।
तान् विना क्षणमप्यत्र जीवितुं नोत्सहे ह्यहम् ॥ २ ॥
निवर्तय रथं शीघ्रं दण्डकान् नय मामपि ।
अथ तान् नानुगच्छामि गमिष्यामि यमक्षयम् † ॥ ३ ॥
बाष्पवेगोपहतया स वाचा सज्जमानया ।
इदमाश्वासयन् देवीं सूतः प्राञ्जलिरब्रवीत् ॥ ४ ॥
त्यज शोकं च मोहं च संभ्रमं दुःखजं तथा ।
व्यवधूय च सन्तापं वने [1] वसति राघवः ॥ ५ ॥
लक्ष्मणश्चापि ‡रामस्य पादौ परिचरन् वने ।
आराधयति धर्मज्ञः परलोकं जितेन्द्रियः ॥ ६ ॥

रामस्य पादौ आराधयति । किमर्थम्? परलोकमुद्दिश्य ॥ ६ ॥

---

* भूतोपसृष्टेव—भूतगृहीतेव धरण्यां पतिता कौसल्या इत्यन्वयः । † यमक्षयं गमिष्यामीति कौसल्या सूतमब्रवीत् इति पूर्वेण (श्लो. 2) अन्वयः । ‡ रामस्य पादौ परिचरन् परलोकं आराधयति–संपादयति–गो. ति.

[1] वत्स्यति–ङ.

विजनेऽपि वने सीता वासं प्राप्य गृहेष्विव ।
विस्रंभं लभतेऽभीता रामे सन्न्यस्तमानसा ॥ ७ ॥
नास्या दैन्यं कृतं किञ्चित् सुसूक्ष्ममपि [1] लक्षये ।
उचितेव प्रवासानां वैदेही प्रतिभाति [2] मे ॥ ८ ॥

कृतमिति । वनवासकृतमिति यावत् ॥ ८ ॥

नगरोपवनं गत्वा यथा स्म रमते पुरा ।
तथैव रमते सीता निर्जनेषु वनेष्वपि ॥ ९ ॥
बालेव रमते सीता * बालचन्द्रनिभानना ।
† रामा रामे [3] ह्यधीतात्मा [4] विजनेऽपि वने सती ॥ १० ॥

बालेवेति दुःखापरिज्ञाने दृष्टान्तः । न तस्या आधिजदुःखमस्ति, अप्ररूढदेहाभिमानत्वात् । राम एव आरामः—रामारामः, तस्मिन् ह्यधीतं—अधिपूर्वादिणो निष्ठा—प्रतिष्ठितः आत्मा—अन्तःकरणं यस्याः सा तथा, डाबुभाभ्यामिति डाप् । [4] विजनेऽपि वने रमत इत्यनुकर्षः ॥ १० ॥

तद्गतं हृदयं ह्यस्याः तदधीनं च जीवितम् ।
‡ अयोध्याऽपि भवेत्तस्याः रामहीना तथा वनम् ॥ ११ ॥

तथा रमणे हेतुः—तद्गतमित्यादि ॥ ११ ॥

---

* 'अबालचन्द्रनिभानना' इति च्छेदः—ति. गो. दर्शोत्तरदिनवर्तिनः कलामात्रावशिष्टस्य चन्द्रस्य मुखदृष्टान्तत्वानुपपत्तेः तथा व्याख्यातम् । वस्तुतस्तु बालचन्द्रशब्दः नात्र दर्शोत्तरदिनचन्द्रविषयः, किन्तु बालार्क इत्यादिवत् उदयकालिकचन्द्रविषयः । एवञ्च पौर्णम्यामेव आह्लादकत्वातिशयवैपुल्यादिगुणविवक्षया बालचन्द्रनिभाननेत्युक्तम् । † रामा इति पृथक्पदं—रामे—अधीनात्मा—आसक्तचित्तेत्यर्थः—गो. ‡ रामहीना अयोध्यापि तस्याः सीताया वनं भवेदित्यन्वयः ।

[1] लक्ष्यते- च. [2] मा—ङ. [3] ह्यधीनात्मा—ङ. ह्यदीनात्मा—च. [4] निर्जने—ङ.

[1] पथि पृच्छति वैदेही ग्रामांश्च नगराणि च ।
गतिं दृष्ट्वा नदीनां च पादपान् विविधानपि ॥ १२ ॥
रामं वा लक्ष्मणं वाऽपि [2] दृष्ट्वा जानाति जानकी ।
* अयोध्याक्रोशमात्रे तु विहारमिव संश्रिता ॥ १३ ॥

अयोध्यायाः क्रोशमात्रं तथा, तस्मिन् । अतीते इति शेषः ॥

† इदमेव स्मराम्यस्याः सहसैवोपजल्पितम् ।
कैकेयीसंश्रितं वाक्यं नेदानीं प्रतिभाति मा ॥ १४ ॥

---

* अयोध्याया अतिसमीपे विद्यमानमुद्यानं संश्रितेव सीता निर्भया वर्तत इति भावः । † कैकेयीनिन्दारूपं सीतयोक्तं वचनं, कौसल्यायाः प्रियं स्यादिति मत्वा तद्वक्तुमुपक्रम्य तस्यानर्थपर्यवसानं स्मरन् तस्मादुपरतोऽभूत्सुमंत्रः । ननु तादृशमत्यन्तगोपनीयं, कैकेयीनिन्दारूपमपि कौसल्यायाः दुःखकरं वाक्यं किं स्यादिति शङ्कायां—अत्र **गोविन्दराजः**—उत्तरत्र 'कच्चित् सकामा कैकेयी सुखिता सा भविष्यति । या न तुष्यति राज्येन पुत्रार्थे दीर्घदर्शिनी' 'यदभिप्रेतमस्मासु प्रियं वरवृतं च यत् । कैकेय्यास्तत्सुसंवृत्तं क्षिप्रमद्यैव लक्ष्मण' इत्यादिरामवचनस्य, 'सकामा भव कैकेयि हतोऽयं कुलनन्दनः' इत्यादिसीतावचनस्य च पर्यालोचनेन अयमर्थः प्रतीयते । भरताभिषेकवरणमात्रेणैव स्वाभीष्टसिद्धेः कैकेयी किमर्थं रामप्रवासनमवृणीत ? तथा वरयन्त्याः कैकेय्या अयमाशयः स्यात्—'भरतराज्यप्राप्तिमात्रं नालं, यतः रामगुणपरवशो लोकः क्षुभितो भवेत् । अतो रामविवासनमावश्यकम् । कतिपयवर्षानन्तरं रामस्य वनात्प्रतिनिवर्तनेऽपि भरतस्य राज्यं नश्येत् । अतः रामविवासने, सीताऽपि तं नूनमनुगच्छेत् ; तथा चारण्ये नूनं रामो विपन्नो भवेत्, एवं रामस्य पुनरावृत्तिरसंभाविनी' इति । एवं छद्मनैव कैकेय्या रामविवासनं वृतमिति रामसीतादिभिरप्यवगतमेवेति पूर्वोक्तवचनैः ज्ञायते । एतदनुगुणैव सीतावचनमपि पूर्वं स्यात् । अत एव पूर्वं 'जानकी तु महाराज' (५८-३४) इत्यादि । एवं रामप्रतिनिवृत्तिः सन्दिग्धेति गङ्गायमुनावटवृक्षादिप्रार्थनयाऽपि ऊह्यते । एतादृशभावानुवादवसीतावाक्यस्य इदानीं कौसल्यासमीपे कथनं तस्या अपि भयजनकं स्यादिति मत्वा सुमन्त्रः निह्नुतवान् इति ज्ञायते—इत्याह । अधिकं गोविन्दराजीय एव द्रष्टव्यम् ।

[1] परि—च. [2] पृष्ट्वा—ङ.

अथ सीतायाः परमदुःखकारिणीं कैकेयीं प्रति सीता किं ब्रुवाणा तिष्ठति ? कृष्णकंसादिवद्रतिवैरप्रसङ्गस्यावश्यकत्वादित्यपेक्षायामाह—इदमित्यादि । अस्याः सीतायाः सहसैव—द्रागेव यदुपजल्पितमभूत् कैकेयीविषयकं—इदं स्मराम्येव । अथापि कैकेयीसंश्रितं तद्विषयवाक्यं मां प्रति नेदानीं प्रतिभाति । पथि गच्छता पक्ष्यादिशब्दवदनादरतः निर्विकल्पकज्ञानमात्रस्यैव वृत्तत्वतः संस्कारदार्ढ्याभावात् तत्स्मृत्यभाव इत्यर्थः ॥ १४ ॥

ध्वंसयित्वा तु तद्वाक्यं प्रमादात् पर्युपस्थितम् ।
ह्लादनं वचनं सूतो देव्या मधुरमब्रवीत् ॥ १५ ॥

एवञ्च 'न ब्रूयात् सत्यमप्रियम्' इति न्यायेन 'सकामा भव कैकेयि' इत्यादिकं सीतावचनं दुःखकालीनं दुःखहेतुत्वादेव नोदाजहारेत्याह कविः—ध्वंसयित्वेत्यादि । प्रमादात्—विस्मरणात् आगतं तद्वाक्यं ध्वंसयित्वा—प्रच्याव्य देव्याः ह्लादनं मधुरं वचोऽब्रवीत् ॥ १५ ॥

अध्वना वातवेगेन संभ्रमेणातपेन च ।
न विगच्छति वैदेह्याः चन्द्रांशुसदृशी प्रभा ॥ १६ ॥
सदृशं शतपत्रस्य पूर्णचन्द्रोपमप्रभम् ।
वदनं तद्वदान्यायाः वैदेह्या न विकम्पते ॥ १७ ॥

'शतपत्रं कुशेशयम्'—पद्मम् ॥ १७ ॥

*अलक्तरसरक्ताभौ अलक्तरसवर्जितौ ।
अद्यापि चरणौ तस्याः पद्मकोशसमप्रभौ ॥ १८ ॥

अलक्तरसरक्ताभौ, पूर्वमिति शेषः ॥ १८ ॥

---

* अलक्तरसवर्जितावपि अलक्तरसवत् रक्ताभौ इति वा अर्थः ।

* नूपुरो[1]त्कृष्टहेलेव खेलं गच्छति भामिनी।
इदानीमपि वैदेही [2] तद्रागान्यस्तभूषणा ॥ १९ ॥

नूपुरेण—तद्ध्वनिना उत्कृष्टा—तिरस्कृता हेला—हंसादिलीलागमनं यया सा तथा। सखेलं—सविलासम्। तद्रागात्—भर्तृप्रीतिप्रयोजकभूषणानुरागात् अन्यस्तानि—अत्यक्तानि भूषणानि यया सा तथा॥

गजं वा वीक्ष्य सिंहं वा व्याघ्रं वा वनमाश्रिता।
नाहारयति संत्रासं बाहू रामस्य संश्रिता ॥ २० ॥

आहारयति- संप्राप्नोति। एवं सर्वत्रात्र 'कोपमाहारयत्' इत्यादौ ॥ २० ॥

न शोच्यास्ते न † [3]चात्मा ते शोच्यो नापि जनाधिपः।
इदं हि चरितं लोके प्रतिष्ठास्यति शाश्वतम् ॥ २१ ॥

यदेवं, अतः ते—रामादयो न शोच्याः। अत एव आत्मा ते—तावकोऽपि न शोच्यः। तेषां सुखश्रवणेन जनाधिपोऽपि जीविष्यतीति सोऽपि न शोच्यस्त्वया। इतश्च न शोचनीयांश इत्याह—इदं हीत्यादि। प्राप्तमपि राज्यं महाबलोऽपि परित्यज्य पितृवचनमपालयदिति, तथा स्वार्थमुद्दिश्य भर्तारमपि परित्यज्यातिघोरं कृतवती कैकेयीति कीर्त्यपकीर्तिरूपं युष्माकं चरितं लोके प्रतिष्ठास्यति। अतो युष्माकं अतः परमभ्यधिकं श्रेयश्च। अतो न शोचनीयमित्यर्थः ॥ २१ ॥

---

* तद्रागात्—नूपुरविषयस्नेहात् न्यस्तभूषणा—चरणावयवेष्वर्पितभूषणा नूपुरोत्पन्नस्वनानुकारिलीलायुक्तेव, खेलं—सलीलं गच्छति। ...... यद्वा तद्रागात्—रामेण सहागमनकौतुकात् न्यस्तभूषणा—उत्सृष्टनूपुराऽपि नूपुरोत्कृष्टहेलेव—नूपुरसञ्जितविलासेव—**गो.** तद्रागेण—भर्तृप्रीतिप्रयोजकभूषणानुरागेण अन्यस्तानि—अत्यक्तानि भूषणानि यया—**ति.**
† आत्मानः—वयं—**गो.**

[1] दृष्ट—ङ. [2] तद्रागान्नयस्त—ङ. [3] चात्मानः—ङ.

विधूय शोकं परिहृष्टमानसाः
महर्षियाते पथि सुव्यवस्थिताः ।
[1]वने रता वन्यफलाशनाः पितुः
शुभां प्रतिज्ञां [2]परिपालयन्ति ते ॥ २२ ॥

तथाऽपि सूतेन सुयुक्तवादिना
निवार्यमाणा सुतशोककर्शिता ।
न चैव देवी विरराम कूजितात्
प्रियेति पुत्रेति च राघवेति च ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षष्टितमः सर्गः

---

तथापीति । अतः सूतोक्तं युक्तमिति गृहीतवत्यपीत्यर्थः । न विररामेति । प्रत्यक्षदुःखप्राबल्यादिति शेषः । गिरि(२३)मानः सर्गः ॥ २३ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे षष्टितमः सर्गः

---

## एकषष्टितमः सर्गः

[दशरथोपालंभः]

वनं गते धर्मपरे रामे रमयतां वरे ।
कौसल्या रुदती [3]साऽऽर्ता भर्तारमिदमब्रवीत् ॥ १ ॥

अथ कौसल्या, स्वस्यां स्वपुत्रे च परमप्रेमवन्तं अथापि सत्यवशात् अचिन्तितोपस्थितत्यागं अत एव राजनि दोषाभावं च

---

[1] वनेचरा–ङ. [2] प्रतिपाल–ङ. च. [3] स्वार्ता–ङ.

अन्तर्ज्ञात्वाऽपि दुःखातिशयाल्लौकिकाश्रयेण राजानमुपालभते । वनं गत इत्यादि । सा—कौसल्या आर्ता—खिन्ना सती ॥ १ ॥

*यद्यपि त्रिषु लोकेषु प्रथितं ते महद्यशः ।
सानुक्रोशो वदान्यश्च प्रियवादी च राघवः ॥ २ ॥

इति ते महद्यशः प्रसिद्धमिति योजना ॥ २ ॥

कथं, नरवरश्रेष्ठ ! पुत्रौ तौ सह सीतया ।
दुःखितौ सुखसंवृद्धौ वने दुःखं सहिष्यतः ॥ ३ ॥

अथापि हे नरवरश्रेष्ठ ! राघवः—रघुकुलजः स त्वं सीतया सह तौ पुत्रौ कथं त्यक्तवानिति शेषः । कथं सहिष्यत इत्यनुकृष्य योजना ॥ ३ ॥

सा नूनं तरुणी श्यामा सुकुमारी सुखोचिता ।
कथमुष्णं च शीतं च मैथिली प्रसहिष्यते ॥ ४ ॥
भुक्त्वाऽशनं विशालाक्षी सूप†दंशान्वितं शुभम् ।
वन्यं नैवारमाहारं कथं सीतोप[1]भोक्ष्यते ॥ ५ ॥

सूपदंशान्वितं—शुभव्यञ्जनान्वितम् । नैवारं—नीवारसम्बन्धि ॥

---

*'प्रथितं' इत्यनेन पूर्वतनत्वं, तेन एवं कीर्तिं संपाद्यापि कथमिदानीमिदमकार्यं कृतमिति च सूचितम् । अथ वा रामप्रव्राजनस्य वृत्तत्वात्, तेन स्वसत्यप्रतिज्ञत्वस्य प्रकटितत्वाच्च । 'भवद्यशः प्रथितं, परन्तु तौ क्लेशं कथं सहिष्यतः? भवद्यशसः कृते तौ त्वया नाशितौ किल' इत्यर्थः ॥ †दंशः—उपसेचनम् ।

[1] भोक्ष्यति—ङ.

गीतवादित्रनिर्घोषं श्रुत्वा शुभ[1]मनिन्दिता ।
कथं क्रव्यादसिंह्मानां शब्दं श्रोष्यत्यशोभनम् ॥ ६ ॥

* महेन्द्रध्वजसङ्काशः क नु शेते [2]महाभुजः
भुजं परिघसङ्काशं उपधाय महाबलः ॥ ७ ॥

महेन्द्रध्वजो नाम इन्द्रधनुः, ध्वजाकारेण कदाचित् परमाभ्युदयनिमित्तत्वेन प्रतिभाति ॥ ७ ॥

पद्मवर्णं सुकेशान्तं पद्मनिश्वासमुत्तमम् ।
कदा द्रक्ष्यामि रामस्य वदनं पुष्करेक्षणम् ॥ ८ ॥

पद्मवर्णं—नलिनीदलश्यामवर्णम् ॥ ८ ॥

वज्र[3]सारमिदं नूनं हृदयं मे न संशयः ।
अपश्यन्त्या न तं यद्वै [4]फलतीदं सहस्रधा ॥ ९ ॥

वज्रसारं—वज्रवत् कठिनम् । न फलति—न विशीर्यते; ञिफला विशरणे ॥ ९ ॥

† यत् [5]त्वया करुणं कर्म व्यपोह्य मम बान्धवाः ।
निरस्ताः परिधावन्ति सुखार्हाः कृपणा वने ॥ १० ॥

त्वया व्यपोह्य—मन्त्रिवृद्धादिभिस्सहाविचार्य यत् करुणं—शोचनीयं कर्म—अनुचितवरदानरूपं कृतं; तेन हेतुना मम बान्धवाः कैकेय्या निरस्ताः वने परिधावन्ति ॥ १० ॥

---

* इन्द्रधनुर्वत् प्रियदर्शनः । † त्वया निरस्ता मम बान्धवाः रामादयः व्यपोह्य—नगरं त्यक्त्वा वने परिधावन्तीति यत् एतत् अकरुणं कर्म—करुणाराहित्येन कृतं कर्मेत्यर्थः—गो. यद्वा, करुण कर्म व्यपोह्य—वर्जयित्वा—अकृत्वेति यावत्; मम बान्धवाः यत् निरस्ताः त्वया, सुखार्हास्ते कृपणाः वने परिधावन्तीत्यन्वयः ।

[1] समन्विता—च. [2] सहानुजः—ङ. [3] सारमयं—ङ. च. [4] दलतीदं—ङ. [5] त्वयाऽकरुणं—ङ.

*यदि पञ्चदशे वर्षे राघवः पुनरेष्यति ।
जह्यात् राज्यं च कोशं च भरतेनो[1]पभोक्ष्यते ॥ ११ ॥

भवतु चतुर्दशवर्षपर्यन्तं वनवासः; पश्चाद्राज्यं भविष्यतीत्याशंक्य, पश्चादपि न तत्प्राप्तिप्रसङ्गो रामस्येत्याह—यदीत्यादिना । पञ्चदशे वर्षे मातृप्रत्याशया यद्यपि राघवः आगमिष्यतीति संभावितम्, अथापि भरतोऽपि भ्रातृस्नेहात् न्यायतो वा सलक्ष्मणात् रामात् भीत्या वा राज्यैकदेशं वा तथा कोशं च जह्याद्यदि—तत्संभावनायामपि, यतः तावत्पर्यन्तं भरतेनोपभोक्ष्यते, अतः कनीयसा भुक्तं कथं नावमंस्यते इति अग्रेण (१५ श्लो.) सम्बन्धः ॥ ११ ॥

भोजयन्ति किल श्राद्धे केचित् स्वानेव बान्धवान् ।
ततः पश्चात् [2]समीक्षन्ते कृतकार्या द्विजर्षभान् ॥ १२ ॥
तत्र ये गुणवन्तश्च विद्वांसश्च द्विजातयः ।
न पश्चात्तेऽभिमन्यन्ते सुधामपि सुरोपमाः ॥ १३ ॥

वयोगुणादिकनीयसा भुक्तशेषस्य वयोगुणादिश्रेष्ठास्वीकारे दृष्टान्तमाह—भोजयन्तीत्यादि । यथा किल केचित् द्विजातयः प्रथमं वयोगुणाधिकान् द्विजातीन् श्राद्धे निमन्त्र्य, पश्चात् स्वीयेषु वयोगुणहीनेष्वपि बान्धवेषु आगतेषु स्वानेव बान्धवान् श्राद्धे †बहुदक्षिणेन भोजयन्ति—भोजयन्तो दृश्यन्ते; ततः पश्चात् स्वीयैः श्राद्धकर्मनिर्वर्तनानन्तरं कृतकृत्याः सन्तः प्राङ्निमन्त्रितानिष्टपङ्क्तौ भोजनार्थं समीक्षन्ते—गवेषयन्ते यदा, तदा तत्र प्राङ्निमन्त्रितेषु ये गुणवन्तः–श्राद्धापेक्षित-

---

*यस्मात् इदानीं भरतेनोपभुज्यते, अतः जह्यात्। अथवा–जह्यात् राज्यं च कोशं चेत्येतत् भरते नोपलक्ष्यते–न संभाव्यते। रूढमूलः भरतः न जह्यादित्यर्थः॥

† परेभ्यः एतादृशदक्षिणादानमनिच्छन्तः लोभात् स्वीयानेव भोजयन्तीत्यर्थः ।

[1] पभुज्यते, पलक्ष्यते–ङ. [2] समीहन्ते–ङ.

गुणवन्तः धर्मशास्त्रज्ञविद्वांसः द्विजातयः पश्चात्पङ्क्तौ सुधामपि—तथा स्वाद्वन्नमपि सुरोपमास्ते ब्राह्मणा नानुमन्यन्ते ॥ १२–१३ ॥

ब्राह्मणेष्वपि [1] तृप्तेषु पश्चात् भोक्तुं द्विजर्षभाः ।
नाभ्युपैतुमलं प्राज्ञाः * शृङ्गच्छेदमिवर्षभाः ॥ १४ ॥

ननु कुतो नानुमन्यन्ते? ब्राह्मणशेषभोजने शूद्रशेषवत् दोषाभावात्, इत्यत्राह—ब्राह्मणेष्वित्यादि । † पूर्वतृप्तेषु ब्राह्मणेषु सत्स्वपि द्विजर्षभाः—वयोगुणाधिकाः द्विजश्रेष्ठाः पश्चात् भोक्तुमिच्छां अभ्युपैतुं नालं—न समर्थाः— नेच्छन्तीति यावत् । कुत इत्यतः—प्राज्ञा इत्यादि । ऋषभाः शृङ्गच्छेदमिव निजावमानं प्राज्ञाः—'प्रे दाज्ञः' इति कर्मण्यण्, अतो नानुमन्यन्ते ॥ १४ ॥

एवं कनीयसा भ्रात्रा भुक्तं राज्यं, विशांपते !
भ्राता ज्येष्ठो वरिष्ठश्च किमर्थं [2] नावमंस्यते ॥ १५ ॥

अथ दार्ष्टान्तिके योज्यते—एवमित्यादि । विशांपते—प्रजानाथ ! ज्येष्ठो वयसा, अतिशयेन गुणैरुरुः—वरिष्ठः ; 'प्रियस्थिर–' इत्यादिना उरोः वरादेशः । किमर्थं नावमंस्यते—सर्वथा अवमंस्यत एव । ततश्चागतोऽपि कृशश्रोत्रियद्विजवदेव मज्जीवनपर्यन्तमिहावस्थास्यते इत्युक्तं भवति ॥ १५ ॥

न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छति ।
एवमेव नरव्याघ्रः ‡ [3] परालीढं न मंस्यते ॥ १६ ॥

---

* यद्वा—शृङ्गं–अग्रं, शृङ्गे छेदः यस्य तत् शृङ्गच्छेदं—छिन्नाग्रं तृणम् । यथा वृषभाः वृषभान्तरजग्धाग्रं तृणं भोक्तुं नालं तद्वदित्यर्थः । शृङ्गच्छेदमिति वृषभक्षिताग्रतृणनामेत्यप्याहुः–**गो.** † पूर्वं तृप्तानां ब्राह्मणत्वेऽपीत्यर्थः । ‡ परालीढं–इतरास्वादितम् ।

[1] भुक्तेषु–ङ, वृत्तेषु भुक्तशेषं–**च.** [2] नावमन्यते–**च.** [3] परलीढं–**ङ.**

पुनरपि दृष्टान्तविशेषैः उक्त एवार्थः स्थाप्यते—न परेणेत्यादि।

* आहृतमिति। क्रोष्ट्रादिस्वादितशेषमित्यर्थः ॥ १६ ॥

हविराज्यं पुरोडाशः † कुशा यूपाश्च खादिराः।
नैतानि यातयामानि कुर्वन्ति पुनरध्वरे [1] ॥ १७ ॥

नैतानीत्यादि। एतानि हविरादीनि एकस्मिन् अध्वरे विनियोगेन यातयामानि पुनरध्वरे—अध्वरान्तरे विनियुक्तानि यथा न कुर्वन्ति, तथा ह्यन्येनाप्तमिदं राज्यं रामो नाभिमन्तुमलम्। यद्यपि 'मन्त्राः कृष्णाजिनं दर्भाः' इत्यादिस्मृत्या दर्भविशेषाणां कुशानामयातयामत्वं सामान्यतः प्राप्तम्; अथापि महाध्वरविनियुक्तानामध्वरान्तरे विनियोगो निषिद्ध एव। 'ब्रह्मयज्ञे तु ये दर्भा विनियुक्ता न तेऽन्यतः' इतिवन्निषेधोऽस्मादेव वचनात् सिद्धः कुशानामपि ॥ १७ ॥

नैवंविधमसत्कारं राघवो मर्षयिष्यति।
बलवानिव शार्दूलः ‡ वालधेरभिमर्शनम् ॥ १८ ॥

वालधिः—वालकाण्डः ॥ १८ ॥

नैतस्य सहिता लोकाः भयं कुर्युर्महामृधे।
अधर्मं त्विह धर्मात्मा लोकं [2] धर्मे तु योजयेत् ॥ १९ ॥

शार्दूलवत् बलवत्त्वमेव दर्शयति—नैतस्येत्यादि। सहिताः—देवासुरसहिता लोकाः—प्रतियोधाः। अपि च न केवलं देहबलमात्रं,

---

* अत्र मातृकायां 'इदमिति' इति प्रतीकं दृश्यते। परन्तु तादृशपाठस्य मूलेऽदर्शनात् औचित्याच्च एवं निवेशितम्। † 'मन्त्राः कृष्णाजिनं दर्भाः' इत्याद्ययातयामत्वबोधकवचनेषु दर्भादिशब्दाः कुशादिव्यतिरिक्तपराः—गो. ‡ केशविशिष्टो वालः वालधिरिति केचित्।

[1] एतदनन्तरं—'तथा ह्यात्तमिदं राज्यं हृतसारां सुरामिव। नाभिमन्तुमलं रामः नष्टसोममिवाध्वरम् ॥ न चेमां धर्षणां रामः संगच्छेदत्यमर्षणः। दारयेन्मन्दरमपि स हि क्रुद्धः शितैः शरैः ॥ त्वां तु नोत्सहते हन्तुं महात्मा पितृगौरवात्। ससोमार्कग्रहगणं नभस्ताराविचित्रितम् ॥ पातयेद्यो दिवं क्रुद्धः स त्वां न व्यतिवर्तते। प्रक्षोभयेद्दारयेद्वा महीं शैलशताचिताम् ॥' इत्यधिकं—ङ. [2] धर्मेण—ङ.

धर्मबलमपीत्याह—अधर्ममित्यादि। अधर्मं—अधर्मप्रवृत्तं लोकमपि धर्मे तु योजयेत्; किमु तस्य धर्मनिष्ठतायाम् ॥ १९ ॥

**नन्वसौ काञ्चनैर्बाणैः महावीर्यो महाभुजः।**
**युगान्त इव भूतानि सागरानपि निर्दहेत् ॥ २० ॥**

महाबलत्वञ्चानुभवसिद्धमेवास्यापीत्याह—नन्वित्यादि। काञ्चनैः—काञ्चनरुषितपुङ्खैः। युगान्तः—तत्कालः ॥ २० ॥

**स तादृशः सिंहबलः वृषभाक्षो नरर्षभः।**
**स्वयमेव हतः पित्रा जलजेनात्मजो यथा ॥ २१ ॥**

तर्हि तादृशः कथं राज्यं न गृह्णाति स्वबलादेवेत्यत्राह—स तादृश इत्यादि। त्वया स्वयं स्वपुत्रो हतः—भ्रष्टराज्यः कृतः। तेन तु धर्मप्रधानत्वात् त्वद्वचनात् बलात्कारो न क्रियते। पुत्रः पित्रा हत इत्यत्र दृष्टान्तः—जलजेनेत्यादि। जलजः—मत्स्यः, स यथा आत्मजानेव भक्षयति तद्वदित्यर्थः ॥ २१ ॥

*** द्विजातिचरितो धर्मः शास्त्रदृष्टः [1] सनातनः।**
**यदि ते धर्मनिरते त्वया पुत्रे विवासिते ॥ २२ ॥**

---

* धर्मनिरते पुत्रे त्वया विवासिते सति द्विजातिचरितः—शिष्टत्रैवर्णिकाचरितः शास्त्रदृष्टः सनातनो धर्मः ते यदि—अस्ति किमित्यर्थेऽव्ययमिदम्—**गो.** यद्वा नकारोऽध्याहर्तव्यः। तेधर्मनिरत इत्यत्र अधर्मनिरत इति च्छेदः। शास्त्रदृष्टः द्विजातिचरितः-राजर्षिभिराचरितः सनातनो धर्मः ते पुत्रे यदि न स्यात्, तर्ह्यधर्मनिरते तस्मिन् त्वया विवासिते तद्युक्तं भवेत्, न चैवमिति भावः—**ती.** अथ वा—'द्विजातिचरितो धर्मः' इति कथ्यमानः धर्मः—समनन्तरश्लोकोक्त एव विवक्षितः। एतादृशो धर्मः ते यदि, तर्हि भवतैव सोऽपि नाशित इत्यर्थः। अत्र तृतीयगतेः बन्धुजनस्य अभावः पूर्वमेव सिद्ध इत्यभिप्रायेण तदनुत्कीर्तनम्। कैकेयीबन्धुजनकेकयादिराजवत् कौसल्यापितॄणां दशरथस्य च व्यवहारसम्बन्धः तदा नासीदित्यवगम्यते। अत एव प्रथमसर्गे रामाभिषेकाय राज्ञामाह्वानप्रकरणे केकयजनकयोरेव प्रस्तावो दृश्यते (अयो. 1-48)। अथ वा कौसल्यायाः ज्येष्ठपत्नीत्वात् वृद्धात्वात् तज्जनकानां अतिक्रान्तत्वमप्यूहितुं शक्यते। एवं पत्या बन्धुभिश्च परित्यक्तायाः स्त्रियः पुत्र एव गतिरिति धर्मः अस्त्येव भवतोऽपि। भवताऽप्यङ्गीकृत इति भावः। स तु धर्मः भवतैव नाशित इति भावः ॥

[1] पुरातनैः—ङ.

गतिरेका पतिर्नार्याः द्वितीया गतिरात्मजः ।
तृतीया ज्ञातयः, राजन् ! चतुर्थी नेह विद्यते ॥ २३ ॥
[1] तत्र त्वं चैव मे * नास्ति रामश्च वनमाश्रितः ।
न वनं गन्तुमिच्छामि सर्वथा निहता त्वया ॥ २४ ॥

एवञ्च अहमेव हतेत्याह—द्विजातीत्यादि । शास्त्रदृष्टः द्विजातिभिः-त्रैवर्णिकैः चरितः सनातनो धर्मो यदि तेऽस्ति, तदा तु त्वया धार्मिकः पुत्रः न विवासनीयः । एवं धर्ममुपेक्ष्य त्वया धर्मनिरते पुत्रे विवासिते सति 'गतिरेकः पतिः' इत्यादिशास्त्रोच्यमानाः याः गतयः सन्ति, तासु गतिषु प्रथमगतिभूतस्त्वं च मम नास्त्येव ; सपत्नीवशगत्वेन त्वच्छुश्रूषाया मे दुर्लभत्वात् । रामश्च द्वितीयगतिभूतः वनमाश्रितः ; न च तत्प्राप्तये वनं गन्तुमिच्छामि, सपतिकत्वात् । हि-यस्मादेवं, तस्मात् सर्वथा त्वया हता ॥ २२–२४ ॥

हतं त्वया राज्यमिदं सराष्ट्रं
[2] हतस्तथाऽऽत्मा सह मन्त्रिभिश्च ।
हता सपुत्राऽस्मि हताश्च पौराः
† सुतश्च भार्या च तव प्रहृष्टौ ॥ २५ ॥

सुतश्च भार्या चेति । केवलं कैकेयीभरतावेव प्रहृष्टावित्यर्थः ॥

‡ इमां गिरं दारुणशब्द[3]संश्रितां
निशम्य [4] राजाऽपि मुमोह दुःखितः ।

---

* नास्ति—नासि । अथ वा विधेयप्राधान्यात् 'त्वं गतिः नास्ति' इति निर्देशः । † कैकेयीभरतयोरेव तवाभिमानसत्त्वात् तव भरत एक एव सुतः, कैकेय्येकैव भार्या —इति शोकादुक्तिः । ‡ कौसल्यायाः परुषं वाक्यं श्रुत्वा मोहमाप । कथञ्चिल्लब्धसंज्ञः स्वदुष्कृतं स्मरन् पुनः शोकं प्रविवेश ॥

[1] तत्र त्वं मम नैवासि—ङ. [2] हताः स्म सर्वाः सह—ङ. [3] संहितां—च. [4] रामेति—च.

ततः स शोकं प्रविवेश पार्थिवः
स्वदुष्कृतं चापि पुन[1]स्तदा स्मरन् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकषष्टितमः सर्गः

---

सः पार्थिवः शोकं प्रविवेश—गतवान् । स्वं दुष्कृतं—वक्ष्यमाणम् । तरु(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे एकषष्टितमः सर्गः

---

## द्विषष्टितमः सर्गः

[ कौसल्याप्रसादनम् ]

*एवं तु क्रुद्धया राजा राममात्रा सशोकया ।
श्रावितः परुषं वाक्यं चिन्तयामास दुःखितः ॥ १ ॥

एवं कौसल्या स्वक्रूरवचोभीतस्य राज्ञः अञ्जलिपर्यन्तदैन्यं दृष्ट्वा, अहमपि द्वितीया कैकेयी जाताऽस्मीति भीता राजानमनुनयति । एवन्त्वित्यादि । चिन्तयामासेति । अनयोच्यमानं सत्यं, किमिह कर्तव्यमिति चिन्तितवानित्यर्थः ॥ १ ॥

चिन्तयित्वा स च नृपः मुमोह व्याकुलेन्द्रियः ।
अथ दीर्घेण कालेन संज्ञामाप परन्तपः ॥ २ ॥
स संज्ञामुपलभ्यैव दीर्घमुष्णं च निश्वसन् ।
कौसल्यां पार्श्वतो दृष्ट्वा पुनश्चिन्तामुपागमत् ॥ ३ ॥

---

* पूर्वसर्गान्तिमश्लोकोक्तार्थ एव पञ्चभिः श्लोकैः विव्रियते ॥

[1] स्तथाऽस्मरत्-च.

तस्य चिन्तयमानस्य प्रत्यभात् कर्म दुष्कृतम् ।
यदनेन कृतं पूर्वं अज्ञानात् शब्दवेधिना ॥ ४ ॥

तस्य चिन्तयमानस्येति । एवमतिघोरदुःखसाधनं इह जन्मनि किं वा दुष्कृतं कृतमभूत् इति चिन्तयमानस्येत्यर्थः । यत्–पापं कृतमिति—मुनिकुमारवधरूपमित्यर्थः । शब्दमेव लक्ष्यं प्राप्य विध्यतीति शब्दवेधी राजा, तत्साधनं बाणं च ॥ ४ ॥

अमनास्तेन शोकेन रामशोकेन च प्रभुः ।
द्वाभ्यामपि महाराजः शोकाभ्यामन्वतप्यत ॥ ५ ॥

दह्यमानः स शोकाभ्यां कौसल्यामाह भूमिपः ।
वेपमानोऽञ्जलिं कृत्वा प्रसादार्थमवाङ्मुखः ॥ ६ ॥

अवाङ्मुख इति । स्वकृततदप्रियस्मरणलज्जया, भीत्या च ॥

प्रसादये त्वां, कौसल्ये ! रचितोऽयं मयाऽञ्जलिः ।
वत्सला चानृशंसा च त्वं हि नित्यं परेष्वपि ॥ ७ ॥

परेष्विति । शत्रुष्वपीत्यर्थः ॥ ७ ॥

भर्ता तु खलु नारीणां गुणवान्निर्गुणोऽपि वा ।
धर्मं विमृशमानानां प्रत्यक्षं, देवि ! दैवतम् ॥ ८ ॥

सा त्वं धर्मपरा नित्यं दृष्टलोकपरावरा ।
नार्हसे विप्रियं वक्तुं * दुःखिताऽपि सुदुःखितम् ॥ ९ ॥

दृष्टः लोकः परोऽवरश्च यया सा तथा ॥ ९ ॥

---

* त्वदपेक्षया सुतरां दुःखितम् । भवत्यास्तु पुत्रवियोगमात्रशोकः, मम तु तेन सह 'अहमेव तस्य कारणमभवम्' इति शोकातिशयोऽपि ॥

तद्वाक्यं करुणं राज्ञः श्रुत्वा दीनस्य भाषितम् ।
कौसल्या व्यसृजत् बाष्पं प्रणालीव * नवोदकम् ॥ १० ॥

प्रणाली–प्रासादादौ जलनिर्गमक्लृप्तदारुविशेषः–தக்கை ॥ १० ॥

सा मूर्ध्नि बध्वा रुदती राज्ञः पद्ममिवाञ्जलिम् ।
संभ्रमादब्रवीत् त्रस्ता त्वरमाणाक्षरं वचः ॥ ११ ॥

त्रस्ता–बत ! ममापि कैकेयीस्वभावः सर्वलोकनाशकः, पतिशोककारिवचनादिकं प्राप्तमिति भीतेत्यर्थः ॥ ११ ॥

प्रसीद शिरसा याचे भूमौ निपतिताऽस्मि ते ।
† याचिताऽस्मि हता, देव ! [1] हन्तव्याऽहं न हि त्वया ॥

भूमौ निपतिताऽस्मीति । साष्टाङ्गं प्रणमामीति यावत् । हे देव ! त्वया याचिता अहं हताऽस्मि । ईश्वरेणेशितव्यवैपरीत्यं परमान्याय्यं किल, अतोऽहं हताऽस्मि । अतः त्वया हन्तव्या न हि–प्रहर्तव्या न हि ? एतदपराधशान्तये मत्प्रहार एव भवता कर्तव्यः, दास्या इवेत्यर्थः ॥ १२ ॥

नैषा हि सा स्त्री भवति श्लाघनीयेन धीमता ।
‡ उभयोर्लोकयोः, वीर ! पत्या या संप्रसाद्यते ॥ १३ ॥

---

* नवोदकमिति बाष्पस्य कलुषितत्वं सूचयति । द्वित्रिवारवर्षानन्तरं तु प्रासादस्य शुद्धत्वात् न तावत्कालुष्यं स्यादिति भावः । † प्रथममेव पुत्रशोकहता, पुनरपि अञ्जलिबन्धनादिना न हन्तव्या । अथ वा प्रसादनोक्त्या पूर्वं हता, वा । ‡ सा स्त्री उभयोर्लोकयोर्न भवति–**गो.**

[1] क्षन्तव्या–**ङ.**

पत्या याच्यमानत्वसंपादकं कर्म कुलस्त्रीणां परमनिन्देत्याह—नैषा हीत्यादि। सैषा हि न स्त्री भवति—कुलस्त्री न भवति। हे वीर! उभयोर्लोकयोः श्लाघनीयेन पत्या या संप्रसाद्यते ॥ १३ ॥

जानामि धर्मं, धर्मज्ञ! त्वां जाने सत्यवादिनम्।
पुत्रशोकार्तया तत्तु मया किमपि भाषितम् ॥ १४ ॥

किमपि भाषितम्। अनुचितमेव भाषितमित्यर्थः ॥ १४ ॥

शोको नाशयते धैर्यं शोको नाशयते श्रुतम्।
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥ १५ ॥

शोकस्त्वेवमद्यानुचितव्यवहारप्रवर्तनसमर्थ इत्याह—शोक इत्यादि ॥ १५ ॥

शक्य आपतितः सोढुं प्रहारो रिपुहस्ततः।
*सोढुमापतितः शोकः सुसूक्ष्मोऽपि न शक्यते[1] ॥ १६ ॥

सुसूक्ष्मोऽपि शोकः सोढुमशक्यः, किमु मे महानिति शेषः ॥

वनवासाय रामस्य पञ्चरात्रोऽद्य गण्यते।
यः शोकहतहर्षायाः पञ्चवर्षोपमो मम ॥ १७ ॥

स्वकं महाशोकमेव दर्शयति—वनवासायेत्यादि। वनवासं कर्तुं प्रस्थितस्य वने पञ्चरात्रः वासोऽत्र गण्यते। आगङ्ग देशत्वात् गङ्गोत्तरणानन्तरं प्रयागयमुनाचित्रकूटेषु रामवृत्तान्तपरिज्ञानाय गुहेन

---

* आपतितः—हठात् प्राप्तः—गो. पूर्वार्धे 'रिपुहस्ततः' इति कथनात् सुसूक्ष्मशोकस्य अप्रतीक्षितत्ववत्, स्वजनात् प्राप्तत्वं, अविमर्शात् प्राप्तत्वं चाभिमतम्।

[1] एतदनन्तरं 'धर्मज्ञाः श्रुतिमन्तोऽपि छिन्नधर्मार्थसंशयाः। यतयो वीर मुह्यन्ति शोकसम्मूढचेतसः ॥' इत्यधिकं—ङ.

गङ्गातीरे दिनत्रयं स्थित्वा पश्चाद्दिनद्वयेन राज्ञः समीपमागतं सूतेन। कौसल्या तु गङ्गोत्तरणात् परमेव यथाप्राप्तवनवासदुःखवद्वनवासं पर्यगणयत्। पुरान्निर्गमनप्रभृतिगणने तु * सप्तरात्रवृत्तान्तः ॥ १७ ॥

तं हि चिन्तयमानायाः शोकोऽयं हृदि वर्धते।
† नदीनामिव वेगेन समुद्रसलिलं महत् ॥ १८ ॥

नदीवेगेन समुद्रसलिलवृद्धिरिति, लोके तटाकादौ तथा दृष्टत्वात् उत्प्रेक्षामात्रम्। स तु पूर्णचन्द्रेन वर्धते, वर्षासु ह्रसति च ॥

एवं हि कथयन्त्यास्तु कौसल्यायाः शुभं वचः।
मन्दरश्मिरभूत् सूर्यः रजनी चाभ्यवर्तत ॥ १९ ॥
‡ [1] तथा प्रसादितो वाक्यैः देव्या कौसल्यया नृपः।
शोकेन च समाक्रान्तः निद्राया वशमेयिवान् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्विषष्टितमः सर्गः

---

अरि(२०)मानः सर्गः ॥ २० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्विषष्टितमः सर्गः

---

* प्रथमायां रात्रौ तमसातीरे, द्वितीयायां जाह्नवीतीरे, तृतीयायां गङ्गादक्षिणतीरस्थवृक्षमूले, चतुर्थ्यां प्रयागे, पञ्चम्यां यमुनातीरे, षष्ठे दिने चित्रकूटे च वासः। तत् ज्ञात्वा तस्मिन्नेव दिवसे सूतः प्रत्यावृत्तवान्। तेन च रामेण गङ्गातरणानन्तरं दिनत्रयं सुमन्त्रेण प्रतीक्षितम्। द्वितीयेऽहनि (आहत्य सप्तमदिने) अयोध्यां प्राप। गङ्गातरणानन्तरं तत्तीरवृक्षमूले (तृतीयरात्र्यां) रामः 'अद्येयं प्रथमा रात्रिः जाता जनपदात् बहिः' इति कथयति। तदारभ्यैव गणनायां 'पञ्चरात्रोऽद्य गण्यते' इत्युक्तिः कथंचिद्वृथा युक्तेव ॥ † नदीसमुद्रयोः संगमस्थले परस्परघट्टनया जलमुपरिवृद्धं भवत्येवेति अनुभवसिद्धमेव ॥ ‡ मनसः संपूर्णकालुष्ये, संपूर्णप्रसादे वा न निद्रायाः प्रसक्तिः, आयासादिमध्यस्थदशायामेव। तदेव पूर्वोत्तरार्धाभ्यां प्रतिपाद्यते। कौसल्यावाक्यात् प्रसादः, पुत्रशोकाच्च विह्वलता, इति अवशनिद्राप्रसक्तिः।

[1] अथ प्रह्लादितो–च.

## त्रिषष्टितमः सर्गः

[ ऋषिकुमारवधाख्यानम् ]

**प्रतिबुद्धो मुहूर्तेन शोकोपहतचेतनः ।**
**अथ राजा दशरथः स चिन्तामभ्यपद्यत ॥ १ ॥**

अथ आप्तायै कौसल्यायै एतादृशकारणं मुनिशापं वदति । प्रतिबुद्ध इत्यादि ॥ १ ॥

**रामलक्ष्मणयोश्चैव विवासात् वासवोपमम् ।**
**आविवेशोपसर्गस्तं तमः सूर्यमिवासुरम् ॥ २ ॥**

उपसर्गः—उपप्लवः—शोक इति यावत् । आसुरं तमः सूर्यमिवेति । असुरः—राहुः, तदीयं आसुरं तमः—आवरणशक्तिः, सा यथा सूर्यमावृणोति काले प्राप्ते, तद्वदित्यर्थः ॥ २ ॥

**सभार्ये निर्गते रामे कौसल्यां कोसलेश्वरः ।**
**विवक्षु[1]रसितापाङ्गीं स्मृत्वा दुष्कृतमात्मनः ॥ ३ ॥**
**स राजा *रजनीं षष्ठीं रामे प्रव्राजिते वनम् ।**
**अर्धरात्रे दशरथः † [2]संस्मरन् दुष्कृतं कृतम् ॥ ४ ॥**
**स राजा पुत्रशोकार्तः स्मृत्वा दुष्कृतमात्मनः ।**
**कौसल्यां पुत्रशोकार्तामिदं वचनमब्रवीत् ॥ ५ ॥**

---

* सप्तम्यर्थे द्वितीया, प्रापेति शेषो वा—**गो.** अत्यन्तसंयोगे वा द्वितीया ।
† स्थित इति शेषः-**गो.** अथ वा पूर्वश्लोके, अत्र च 'कौसल्यां पुत्रशोकार्तां इदं वचनमब्रवीत्' इत्याकृष्यते । विन्यासभेदः वैय्याकुलीं सूचयति ।

[1] रसितापाङ्गां–ङ, [2] सोऽस्मरत्–ङ. **च.**

**यदाचरति, कल्याणि! शुभं वा यदि वाऽशुभम् ।**
**तदेव लभते, भद्रे! कर्ता कर्मजमात्मनः ॥ ६ ॥**

स्वकृतक्रूरकर्ममूलमेव ईदृशं दुःखं स्वस्येति वदिष्यन् लोकस्थितिं दर्शयति—यदित्यादि । तदेव लभते, तल्लभत एव च ॥

***गुरुलाघवमर्थानां आरंभे कर्मणां [1] फलम् ।**
**दोषं वा यो न जानाति स बाल इति होच्यते ॥ ७ ॥**

अर्थानां—ऐहिकप्रयोजनानां, कर्मणां—आमुष्मिकप्रयोजनानां च अनुष्ठीयमानानां फलं प्रति गुरुलाघवं—केनचिदल्पेन हत्यादिकर्मणा महदनिष्टफलं, क्वचित् महताऽपि यागादिना परिमितस्वर्गफलं इत्येवमादिरूपेण, तथा दोषं गुणं वा—इदं कर्म अल्पदोषं बहुगुणं इदं तु बहुदोषमल्पगुणमित्येवमादिकं यो न जानाति, स एव बाल इत्युच्यते, न स्तनन्धयः ॥ ७ ॥

**† कश्चिदाम्रवणं छित्वा पलाशांश्च निषिञ्चति ।**
**पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ ८ ॥**

आम्रवणं छित्वेति । पलाशोपरोधनिवृत्त्यर्थमिति शेषः । पुष्पं दृष्ट्वेति । प्रस्फुटस्थूलपुष्पत्वात् महत् फलमतो भविष्यतीति बुध्वेत्यर्थः ॥

---

* कर्मणामारंभे—आरंभसमये अर्थानां—फलानां गुरुलाघवं—गुरुत्वं लघुत्वं च, फलं दोषं वा फलं फलहानिं वा, यद्वा सुखरूपतां दुःखरूपतां वा, यो न जानाति—**गो.** 'सुखं' इति पाठेतु कर्मणामारंभे अर्थानां गुरुलाघवं, सुखं दोषं—दुःखं वेति स्वरसः अर्थः । फलमिति पाठेऽपि फलपदं गुणपदवत् सत्फलपरम् । † लोके कश्चित्पुरुषः पुष्पं दृष्ट्वा फले गृध्नुः—साभिलाषः सन् अधिकवर्णमहापुष्पवत्त्वात् तदनुगुणमहाफलं भविष्यतीति साभिलाषः इत्यर्थः, आम्रवणं चूतवनं अल्पनिर्वर्णपुष्पकं छित्वा पलाशोपरोधपरिहारार्थं छित्वा, पलाशांश्च—किंशुकानेव निषिञ्चति—जलसेचनादिना पोषयति सः फलागमे—फलप्राप्तिकाले सति अनुपभोग्यफलदर्शनात् शोचति—**गो.**

[1] सुखम्—ङ.

**अविज्ञाय फलं यो हि * कर्म त्वेवानुधावति ।**
**स शोचेत् फलवेलायां यथा किंशुकसेचकः ॥ ९ ॥**

किंशुकदृष्टान्तं दार्ष्टान्तिके योजयति—अविज्ञायेत्यादि । फलमिति । क्रियमाणकर्मणो भाविफलमित्यर्थः ॥ ९ ॥

**† सोऽहमाम्रवणं छित्वा पलाशांश्च न्यषेचयम् ।**
**रामं फलागमे त्यक्त्वा पश्चात् शोचामि दुर्मतिः ॥ १० ॥**

कर्मणो वा प्रागुक्तस्य तथा प्रागुक्तलौकिकार्थस्य वाऽस्तु तत प्रकृते किमायातमित्यत्राह—सोऽहमित्यादि । फलागम इति । पारलौकिककालान्तरभाविफलप्रासावाम्रवत् वर्धितमिति शेषः ॥ १० ॥

**लब्धशब्देन, कौसल्ये! कुमारेण धनुष्मता ।**
**कुमारः शब्दवेधीति मया पापमिदं कृतम् ॥ ११ ॥**

अथ 'यदाचरति' (श्लो-६) इत्याद्युक्तलोकस्थितिफलमाह—लब्धशब्देनेत्यादि । हे कौसल्ये! कुमारेण धनुष्मता, कुमारः—अजकुमारः दशरथः शब्दवेधीति लोके लब्धशब्देन—लब्धकीर्तिना मया इदं वक्ष्यमाणरूपं पापं कृतम् ॥ ११ ॥

**तदिदं मेऽनुसंप्राप्तं, देवि! दुःखं स्वयं कृतम् ।**
**[1] संमोहादिह बालेन यथा स्यात् भक्षितं विषम् ॥ १२ ॥**

ननु बाल्ये, तत्राप्यज्ञानात् कृतस्य कर्मणः कथमेवं फलं प्राप्तमित्यत्र दृष्टान्तबलेन बोधयति—सम्मोहादित्यादि । संमोहादिह—

---

* स्वकर्मानुगुणमेव धावतीत्यर्थः । † आम्रवणं छित्वेत्यनेन अभिषेकविघातपूर्वकरामविवासनं लक्ष्यते । पलाशांश्च न्यषेचयमित्यनेन कैकेयीप्रियकरणं लक्ष्यते—**गो.** वस्तुतस्तु—वक्ष्यमाणशब्दवेधमूलकमुनिकुमारवधेऽयं दृष्टान्तः । स्पष्टमिदं १३ श्लोके ।

[1] सस्नेहादिव बाल्येन—ङ.

संमोहादेव। बाल्येन हेतुना भक्षितं विषमिति। हन्त्येवेति शेषः। एवं स्वकृतदुष्कृतं दुःखं प्रापयत्येव॥ १२॥

**यथाऽन्यः पुरुषः कश्चित् * पलाशैर्मोहितो भवेत्।**
**एवं ममाप्यविज्ञातं † शब्दवेध्य[1]मिदं कृतम्॥ १३॥**

तथा स्वविचारदौर्बल्यमूलमपि जाड्यं स्वं प्राप्नोत्येवेत्याह—यथाऽन्य इत्यादि। कश्चित्–प्राकृत इति यावत्। पलाशैः–तत्पुष्पैः। मोहितो भवेत्; एवं कैकेयीमोहित इति शेषः। अथाज्ञानकृतस्यापि महापातकस्य फलं विषपानवदावश्यकमित्युक्तमर्थमुपसंहरति—एवमित्यादि। ‡ शब्दमात्रगम्यं वेध्यं–लक्ष्यं यस्य, येन वा स तथा। शब्दवेधी शब्दवेध्य इत्यनर्थान्तरम्। अत एवं शब्दवेध्यत्वरूपं सामर्थ्यं प्राप्य यत् कर्म अविज्ञातं सत्—अबुद्धिपूर्वकं कृतं, तस्य दुष्कर्मण इदं फलमित्यर्थः॥ १३॥

**देव्यनूढा त्वमभवः युवराजो भवाम्यहम्।**
**ततः प्रावृडनुप्राप्ता मदकामविवर्धिनी॥ १४॥**

अथ कदा कीदृशं तच्छब्दवेधित्वमूलप्राप्तं दुष्कर्मेत्यतः तत् प्रतिपादयति—देवीत्यादि। १४॥

**§ [2]अपास्य हि रसान् भौमान् तप्त्वा च जगदंशुभिः।**
**परेताचरितां भीमां रवि[3]राविशते दिशम्॥ १५॥**

---

* पलाशैर्मोहितः–पलाशकुसुमानि यथा सुन्दराणि तथा तत्फलमपि स्यादिति मोहविशिष्ट इत्यर्थः। प्रकृते—'कुमारः शब्दवेधी' इति ख्यात्या मोहितः। † शब्दवेध्यमयं–शब्दवेध्यविकारभूतं–तद्धेतुकमित्यर्थः–**गो.** ‡ शब्दवेध्यमिति शब्दवेधित्वमित्यर्थे आर्षम्–**ति.** § उपास्य–गृहीत्वा–**गो.**

[1] मयं–ङ. [2] उपास्य–ङ. [3] राचरते–ङ.

प्रावृडनुप्राप्तेत्युक्तं ; सैव वर्ण्यते —अपास्येत्यादि । अंशुभिः भौमान् रसान् जलादीन् अपास्य—निरस्य शोषयित्वेति यावत् । हि—तत एव हेतोः तप्त्वा—तापयित्वा, भूमिमिति शेषः । परेताचरितां भीमां दिशमिति । दक्षिणां दिशमित्यर्थः । आविशते—आविशति स्मेति यावत् ॥ १५ ॥

**उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः ।**
**ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः ॥ १६ ॥**
***क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्रिणः ।**
**वृष्टिवातावधूताग्रान् पादपानभिपेदिरे ॥ १७ ॥**

कृच्छ्रात्—कृच्छ्रादिहेतोः । स्नाता इव क्लिन्नपक्षत्वधर्मेणोत्तराः—अधिकाः, वृष्ट्याधिक्यादिति शेषः । वृष्टियुक्तो वातः तथा ॥ १७ ॥

**पतितेनाम्भसा च्छन्नः पतमानेन चासकृत् ।**
**आबभौ मत्तसारङ्गः †तोयराशिरिवाचलः ॥ १८ ॥**

पतमानेनेति । पततेति यावत् । मत्ताः सारङ्गाः—हरिणाः यस्मिन् स तथा । 'चातके हरिणे पुंसि सारङ्गः शबले त्रिषु' ॥ १८ ॥

**पाण्डुरारुणवर्णानि स्रोतांसि विमलान्यपि ।**
**सुस्रुवुर्गिरिधातुभ्यः ‡सभस्मानि भुजङ्गवत्[1] ॥ १९ ॥**

---

* क्लिन्नपक्षोत्तराः—सिक्तपक्षोपरिभागाः, अत एव स्नाता इव स्थिताः, पतत्रिणः वृष्टिवातावधूताग्रान्—वृष्टिवाताभ्यां कम्पिताग्रानपि पादपान् कृच्छ्रात्—क्लिन्नपक्षत्वेन यत्नात् अभिपेदिरे—आरूढाः—**गो.** †तोयराशिः—समुद्रः—**गो.** ‡ भस्मपदं तादृशसूक्ष्मजलकणवाचकं वा ।

[1] एतदनन्तरं 'आकुलारुणतोयानि स्रोतांसि विमलान्यपि । उन्मार्गजलवाहीनि बभूवुर्जलदागमे ॥' इत्यधिकम्—ङ.

गिरिधातुभ्यो हेतुभ्यः, विमलान्यपि स्रोतांसि क्वचित् पाण्डुरवर्णानि तथाविधधातुसम्बन्धात्, क्वचित् अरुणानि तथाविधधातुसम्बन्धात्, क्वचित् सभस्मानि दावभस्मसम्बन्धात्, भुजङ्गवत् कुटिलानि सुस्रुवुः ॥ १९ ॥

तस्मिन्नतिसुखे काले धनुष्मान् इषुमान् रथी ।
व्यायामकृतसङ्कल्पः सरयूमन्वगां नदीम् ॥ २० ॥

व्यायामः—मृगयाव्यायामः—उत्साहः, तत्र कृतसङ्कल्पः—कृतनिश्चयस्तथा ॥ २० ॥

निपाने महिषं रात्रौ गजं वाऽभ्यागतं [1]नदीम् ।
अन्यं वा श्वापदं कश्चित् जिघांसु*रजितेन्द्रियः[2] ॥ २१ ॥

निपीयते अस्मिन्निति निपानम्, नद्यवतारस्थलं इत्यर्थः । जिघांसुरिति । अस्थामिति शेषः ॥ २१ ॥

अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः ।
अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥ २२ ॥
ततोऽहं शरमुद्धृत्य दीप्तमाशीविषोपमम् ।
शब्दं प्रति गजप्रेप्सुः अभिलक्ष्य[3]मपातयम् ॥ २३ ॥

गजप्रेप्सुरिति । गजरूपं वेध्यं प्राप्तुमिच्छुस्तथा । शब्दं प्रति—शब्दावगतवेध्यं प्रति तज्जिघांसया शरमुद्धृत्य अभिलक्ष्यमपातयमिति योजना ॥ २३ ॥

---

* अनेन मृगयाचापल्यमुक्तम् । तेन तस्याः क्षत्रधर्मत्वेऽपि न विरोधः ।

[1] मृगम्—ङ. [2] एतदनन्तरं 'तस्मिंस्तत्राहमेकान्ते रात्रौ विवृतकार्मुकः । तत्राहं संवृतं वन्यं हतवान् तीरमागतम् ॥ अन्यं चापि मृगं हिंस्रं शब्दं श्रुत्वाऽभ्युपागतम् ।' अधिकं—ङ. [3] त्वपातयम्—ङ.

अमुञ्चं निशितं बाणं अहमाशीविषोपमम् ॥ २४ ॥

तत्र वागुषसि व्यक्ता प्रादुरासीद्वनौकसः ।
हा हेति पततस्तोये बाणाभिहतमर्मणः ॥ २५ ॥

वनौकसः—आरण्यकमनुष्यस्येत्यर्थः । बाणाभिहतमर्मणः तोये पततः वनौकसः हा ! हा !! इति व्यक्ता वाक् उषसि प्रादुरासीत् ॥

तस्मिन्निपतिते [1] बाणे वागभूत् तत्र मानुषी ।
कथमस्मद्विधे शस्त्रं निपतेत्तु तपस्विनि ॥ २६ ॥

एवं तस्मिन् बाणे निपतिते सति, तत्र विशिष्य मानुषी वागभूत् । कथमित्यत्र—कथमित्यादि ॥ २६ ॥

प्रविविक्तां नदीं रात्रौ उदाहारोऽहमागतः ।
इषुणाऽभिहतः केन ? कस्य [2] वा किं कृतं मया ? ॥ २७ ॥

प्रविविक्तां—निर्जनाम् । उदकमाहरतीत्युदाहारः, 'मन्थौदन...' इत्यादिना उदकस्य उदादेशः । यद्यपि हारशब्दे परतः उदादेशो विहितः, तथापि एकदेशविकृतमनन्यवदिति भविष्यति । छान्दसो वा दीर्घः । उदहार इत्येव वा । किं कृतमिति । किं अनिष्टं कृतमित्यर्थः ॥ २७ ॥

ऋषेर्हि *न्यस्तदण्डस्य वने वन्येन जीवतः ।
कथं नु शस्त्रेण वधो मद्विधस्य विधीयते ॥ २८ ॥

न्यस्तदण्डस्येति । परित्यक्तप्राणिहिंसस्येत्यर्थः ॥ २८ ॥

---

* न्यस्तदण्डस्य—उपरतवाङ्मनःकायसम्बन्धिपरहिंसस्य । 'दण्डोऽस्त्री शासने राज्ञां हिंसायां दमसैन्ययोः' इति विश्वः—गो.

[1] भूमौ—ङ. [2] वाऽपकृतं—ङ.

जटाभारधरस्यैव वल्कलाजिनवाससः ।
को वधेन ममार्थी स्यात् किं वाऽस्यापकृतं मया ॥ २९ ॥

मम वधेन–जटादिना व्यक्तर्षित्वस्य मम वधेन कः पुमान् अर्थी–किञ्चित्प्रयोजनवान् स्यात् । मानुषमांसं कस्यापि मनुष्यस्याप्रयोजनमिति व्यर्थ एव मद्वध इत्यर्थः ॥ २९ ॥

एवं निष्फलमारब्धं केवलानर्थसंहितम् ।
न [1] क्वचित् साधु मन्येत यथैव * गुरुतल्पगम् ॥ ३० ॥

केवलानर्थेन—निष्प्रयोजनसंपन्नपापेन संहितम् । क्वचिदिति । इह लोके परत्र वेत्यर्थः ॥ ३० ॥

[2] नाहं तथाऽनुशोचामि जीवितक्षयमात्मनः ।
मातरं पितरं चोभौ अनुशोचामि मद्वधे ॥ ३१ ॥
तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ।
मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति ॥ ३२ ॥
वृद्धौ च मातापितरौ अहं चैकेषुणा हतः ।
केन स्म निहताः सर्वे सुबालेनाकृतात्मना † ॥ ३३ ॥

एकेषुणा मातापितरौ हतौ, अहं च हतः इति विपरिणामः । मद्वधेन तयोर्वधस्य सिद्धत्वादित्याशयः । अकृतात्मना–अजितेन्द्रियेण ॥

तां गिरं करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः ।
‡ कराभ्यां सशरं चापं व्यथितस्यापतत् भुवि ॥ ३४ ॥

---

* गुरुतल्पगं–गुरुदारगं 'तल्पं शय्याट्टदारेषु' इत्यमरः । † इति वागभूदिति पूर्वेण (श्लो. २५) अन्वयः । ‡ सशरं चापमित्यनेन शरे मुक्तेऽपि हस्तलाघवात् शरान्तरं धनुषि संहितवानित्यवगम्यते–गो.

[1] कश्चित्–ङ.　　[2] नेमं--च.

धर्मानुकाङ्क्षिणः—धर्मप्रतीक्षाशीलस्य ॥ ३४ ॥

तस्याहं करुणं श्रुत्वा बहु लालपतो निशि ।
संभ्रान्तः शोकवेगेन भृशमासं विचेतनः ॥ ३५ ॥

लालपत इति । यङ्लुगन्तात् शतृप्रत्ययः ॥ ३५ ॥

तं देशमहमागम्य दीनसत्वः सुदुर्मनाः ।
अपश्यमिषुणा तीरे सरय्वास्तापसं हतम् ॥ ३६ ॥
अवकीर्णजटाभारं प्रविद्धकलशोदकम् ।
पांसुशोणितदिग्धाङ्गं शयानं शल्यपीडितम् ॥ ३७ ॥

प्रविद्धं—ध्वस्तम् ॥ ३७ ॥

स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थ[1]चेतसम् ।
[2]इत्युवाच [3]ततः क्रूरं दिधक्षन्निव तेजसा ॥ ३८ ॥

त्रस्तं मां नेत्राभ्यामुद्वीक्ष्य ॥ ३८ ॥

किं तवापकृतं, राजन्! वने निवसता मया ।
जिहीर्षुरंभो गुर्वर्थं यदहं ताडितस्त्वया ॥ ३९ ॥
एकेन खलु बाणेन मर्मण्यभिहते मयि ।
द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे ॥ ४० ॥
तौ [4]कथं दुर्बलावन्धौ मत्प्रतीक्षौ पिपासितौ ।
* चिर[5]माशाकृतां तृष्णां [6]कष्टां सन्धारयिष्यतः ॥ ४१ ॥

---

* आशाकृतां–पुत्रो मे जलमाहरिष्यतीत्याशासहिताम्—गो.

[1] चेतनं—च. [2] प्रत्युवाच—ङ. [3] वचः—च. [4] नूनं—च. [5] माशां—च.
[6] कथं—ङ.

आशाकृतां—आशा—आशनं—प्राशनं, आशा—तद्विषयिण्याशा, तया कृतां ; तन्त्रावृत्त्यादेरन्यतम एषितव्यः ; बुभुक्षाकृतामिति यावत् ॥

नूनं न तपसो वाऽस्ति फलयोगः श्रुतस्य वा ।
पिता यन्मां न जानाति शयानं पतितं भुवि ॥ ४२ ॥

तपसः श्रुतस्य वेति । मामकस्येति शेषः, पित्र्यस्य चेत्यप्यविरोधः॥

जानन्नपि च किं कुर्यात् अशक्ति*रपरिक्रमः ।
भिद्यमानमिवाशक्तः त्रातुमन्यो †नगो नगम् ॥ ४३ ॥

अशक्तिरपरिक्रम इति । वृद्धान्धत्वादित्याशयः । वातादिना भिद्यमानं नगं—वृक्षमित्यर्थः ॥ ४३ ॥

पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व, राघव !
न त्वामनुदहेत् क्रुद्धः वनं वह्निरिवैधितः ॥ ४४ ॥

एधितः—वर्धितः ॥ ४४ ॥

इयमेकपदी, राजन् ! यतो मे पितुराश्रमः ।
तं प्रसादय गत्वा त्वं न त्वां [1] संकुपितः शपेत् ॥ ४५ ॥

इयमित्यादि । यया एकपद्या मे पितुराश्रमः प्राप्यते, सेयमेकपदी—सूक्ष्ममार्गः, 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति च' ; तया गत्वा तं प्रसादय, यथा चेत् त्वां न संकुपितः शपेत् ॥

विशल्यं कुरु मां, राजन् ! मर्म मे निशितः शरः ।
रुणद्धि, मृदु सोत्सेधं तीरमम्बुरयो यथा ॥ ४६ ॥

---

* अपरिक्रमः—संचरणशक्तिरहित इत्यर्थः ।    † नगः—गजो वा.

[1] स कुपितः—च.

हे राजन्! मां विशल्यं कुरु। निशितस्ते शरः मर्मलग्नः सन् मे मर्म रुणद्धि—पीडयतीति यावत्। किमिव? मृदु—सिकताप्रायं सोत्सेधं—उच्छ्रायवत् तीरं—नदीतीरं अम्बुरयः—नदीपूरवेग इवेत्यर्थः ॥ ४६ ॥

सशल्यः क्लिश्यते प्राणैः *विशल्यो विनशिष्यति।
इति मामाविशत् चिन्ता तस्य शल्यापकर्षणे ॥ ४७ ॥

हे कौसल्ये! एवं तेनोक्ते मां चिन्ता आविशत्। कीदृशीत्यतः—सशल्य इत्यादि। प्राणैः अस्वस्थैः निरुद्धगमनैश्चेति शेषः ॥ ४७ ॥

दुःखितस्य च दीनस्य मम शोकातुरस्य च।
लक्षयामास हृदये चिन्तां मुनिसुतस्तदा ॥ ४८ ॥

मुनिसुतो लक्षयामासेति। इदानीमस्मदुक्तचिन्तया, अयं मदीयं शल्यं नोद्धरतीति ज्ञातवानित्यर्थः ॥ ४८ ॥

ताम्यमानः स मां कृच्छ्रात् उवाच [1]परमार्तवत्।
सीदमानो विवृत्ताङ्गः वेष्टमानो गतः क्षयम् ॥ ४९ ॥

परमार्तवत्—परमार्तः सन्। क्षयं—शक्तिक्षयम् ॥ ४९ ॥

संस्तभ्य शोकं धैर्येण स्थिरचित्तो [2]भवानघ!
ब्रह्महत्याकृतं [3]पापं हृदयादपनीयताम् ॥ ५० ॥

किमुवाचेत्यतः—संस्तभ्येति। संस्तंभ्येति यावत्। शोकं—ब्रह्महत्याप्तिजम्। कथं मे स्थिरचित्तालाभ इत्यतः—ब्रह्महत्येत्यादि ॥

* तेन च साक्षादेव ब्रह्महत्या मे भवेदिति चिन्तेत्यर्थः।

[1] परमार्थवत्—ङ. [2] भवाम्यहम्—ङ. [3] तापं—ङ.

न द्विजातिरहं, राजन्! मा भूत् ते मनसो व्यथा।
*शूद्रायामस्मि वैश्येन जातः, जनपदाधिप! ॥५१॥
इतीव वदतः कृच्छ्रात् बाणाभिहतमर्मणः।
विघूर्णतो विचेष्टस्य वेपमानस्य भूतले ॥५२॥
तस्य †[1] त्वाताम्यमानस्य तं बाणमहमुद्धरम्।
स मामुद्वीक्ष्य संत्रस्तः जहौ प्राणान् तपोधनः ॥५३॥

आताम्यमानस्य। ताम्यत इति यावत्। मामुद्वीक्ष्य संत्रस्त इति—प्राणहरत्वादेव। तपोधन इति। तपोधनकुमार इति यावत् ‡॥

जलार्द्रगात्रं तु विलप्य [2] कृच्छ्रं
मर्मव्रणं सन्ततमुच्छ्वसन्तम्।
ततः सरय्वां तमहं शयानं
समीक्ष्य [3] भद्रे! सुभृशं विषण्णः ॥५४॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्रिषष्टितमः सर्गः

---

अथ कौसल्यां प्रति मुनिकुमारासुक्षयान्तव्यापारजस्वशोकानुवादः—जलार्द्रेत्यादि। कृच्छ्रं मर्मव्रणं प्राप्य, विलप्य सन्ततमुच्छ्वसन्तं, ततः—तदनन्तरं सरय्वां—तत्तीरे मृत्वा शयानं तं वीक्ष्य, हे भद्रे! अहं सुभृशं विषण्णोऽभवम्। धर्म(५४)मानः सर्गः॥ ५४॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे त्रिषष्टितमः सर्गः

---

* 'शूद्राविशोस्तु करणः'। † आनम्यमानस्य—व्यथया सङ्कुचिताङ्गस्य—ग।
‡ स्वयं नायं तपोधन इत्यभिप्रायेण एवं व्याख्या। परन्तु अनन्तरसर्गाद्यश्लोके 'वधमप्रतिरूपं तु महर्षेः' इति वाक्यं चिन्तनीयमत्र।

[1] त्वानम्यमानस्य, नानद्यमानस्य—ङ. [2] कृच्छ्रात्—ङ. [3] भद्रेऽस्मि—ङ.

## चतुष्षष्टितमः सर्गः

### [दशरथदिष्टान्तः]

वधमप्रतिरूपं तु महर्षेस्तस्य राघवः ।
विलपन्नेव धर्मात्मा कौसल्यां [1] पुनरब्रवीत् ॥ १ ॥

अथ तत्पितृदर्शनादिशेषवृत्तान्तकथनम् । वधमित्यादि । राघवः—दशरथः । विलपन्नेव—पुत्रं प्रति विलपन्नेव कौसल्यां प्रति तस्य महर्षेः अप्रतिरूपं—* अतितरामनुचितं वधं पुनः—पाश्चात्यवृत्तान्तं च अब्रवीत् । इदं कविवचनम् ॥ १ ॥

तदज्ञानात् महत् पापं कृत्वाऽहं सङ्कुलेन्द्रियः ।
एकस्त्वचिन्तयं बुध्या कथं नु सुकृतं भवेत् ॥ २ ॥

तदेव प्रतिपाद्यते—तदित्यादि । सङ्कुलितेन्द्रियः—क्षुभितेन्द्रियः । एकः—एकाकी च अहं गत्वा 'तं प्रसादय' इत्याद्युक्तमुनिकुमारवचनानुष्ठानं कथं नु सुकृतं—सुष्ठु संपादितं भवेदिति बुध्या अचिन्तयम् ॥ २ ॥

ततस्तं घटमादाय पूर्णं परमवारिणा ।
आश्रमं तमहं प्राप्य यथाऽऽख्यातपथं गतः ॥ ३ ॥

ततस्तमित्यादि । ततः एवं चिन्तयित्वा । यथाऽऽख्यातपथं—मुनिकुमारोपदिष्टमार्गम् ॥ ३ ॥

तत्राहं दुर्बलावन्धौ वृद्धावपरिणायकौ ।
अपश्यं तस्य पितरौ लूनपक्षाविव द्विजौ ॥ ४ ॥

---

* असाधारणं वा ।

[1] इदम्—च.

अपरिणायकौ—अन्धयोस्तयोः सञ्चारयितृपुरुषान्तररहितौ ॥

तन्निमित्ताभिरासीनौ * कथाभि[1]रपरिश्रमौ ।
तामाशां मत्कृते हीनौ [2] उदासीनावनाथवत् ॥ ५ ॥

तन्निमित्ताभिः—पुत्रनिमित्ताभिः कथाभिः हेतुभिः अपरिश्रमावासीनौ—पुत्रो जलमानेष्यतीति प्रत्याशया श्रमं सोढ्वा आस्थिताविर्त्यथः । मत्कृते—मत्कृतदुष्कर्मनिमित्ततः तामाशां प्रत्यपि हीनौ, अत एव अनाथवत् उदासीनौ——अनाथाविव सन्तौ स्थितौ इत्यर्थः ॥ ५ ॥

शोकोपहतचित्तश्च भयसंत्रस्तचेतनः ।
तच्चाश्रमपदं गत्वा भूयः शोकमहं गतः ॥ ६ ॥

तौ दृष्ट्वा शोकोपहतचित्त इति योजना । भूयः—अभ्यधिकम् † ॥ ६ ॥

पदशब्दं तु मे श्रुत्वा मुनिर्वाक्यमभाषत ।
किं चिरायसि, मे पुत्र ! पानीयं क्षिप्रमानय ॥ ७ ॥

चिरायसि—' तत्करोति ' इति णिच्, किं विलम्बं करोषि ॥ ७ ॥

यन्निमित्तमिदं, तात ! सलिले क्रीडितं त्वया ।
उत्कण्ठिता ते मातेयं प्रविश क्षिप्रमाश्रमम् ॥ ८ ॥

हे तात ! यन्निमित्तं—येन हेतुना एतावत्कालं सलिले त्वया इदं क्रीडितम्—भावे निष्ठा, क्रीडनमभूत्, तेनेयं ते माता उत्कण्ठिता—सशोकस्मरणवत्यभूत् ॥ ८ ॥

---

* कथाभिः उपलक्षितौ—गो.    † तयोरसहायतादर्शनेन शोकस्याधिक्यम् ।

[1] रपरिक्रमौ—ङ.    [2] उपासीना—च.

यत् [1]व्यलीकं कृतं, पुत्र! मात्रा ते यदि वा मया।
न तन्मनसि कर्तव्यं त्वया, तात! तपस्विना ॥ ९ ॥

व्यलीकं—अप्रियम् ॥ ९ ॥

त्वं गतिस्त्वगतीनां च चक्षुस्त्वं हीनचक्षुषाम्।
समासक्ताः त्वयि प्राणाः किं त्वं नौ नाभिभाषसे ॥ १० ॥

नौ—आवां प्रति किञ्चिदपि नाभिभाषसे, तत् कस्मादिति शेषः ॥ १० ॥

मुनिमव्यक्तया वाचा तमहं *सज्जमानया।
हीनव्यञ्जनया प्रेक्ष्य [2]भीतोऽभीत इवाब्रुवम् ॥ ११ ॥

तं—पदशब्दं श्रुत्वा पुत्रधिया वदन्तम्। सज्जमानया—गद्गदया, अत एव हीनव्यञ्जनया—व्यञ्जनाक्षरव्यक्तिरहितया। †भीतोऽपि सन् अभीत इवाब्रुवम् ॥ ११ ॥

‡मनसः कर्म चेष्टाभिः अभि संस्तभ्य वाग्बलम्।
आचचक्षे त्वहं तस्मै पुत्रव्यसनजं भयम् ॥ १२ ॥

इदमेव प्रतिपाद्यते—मनस इत्यादि। मनसः कर्म—भीतिरूपम्। वाग्बलमवष्टभ्य साध्याभिः चेष्टाभिः—अभीतिसाध्यव्यवहारैः अभि—

---

*सज्जमानया—स्खलन्त्या, हीनव्यञ्जनया—अस्पष्टाक्षरया—गो. †भीतोऽपि सन् भीतः, अत्यन्तभीत इत्यर्थः—गो. ‡मनसः कर्म—ऊहापोहात्मकं, चेष्टाः—इन्द्रियनियमनरूपव्यापाराः। ताभिः वाग्बलमभिसंस्तभ्य—स्खलितां वाचं बलात् दृढीकृत्येत्यर्थः। ..........यद्वा—लज्जाभीतिप्रभृतिभिः मन्दवचनो भूत्वेत्यर्थः—गो.

[1] अलीकं—ङ. [2] भीतच्चित्त इव—च.

अभितः संस्तभ्य-भीताकारतामाच्छाद्य अभीत इवाचचक्षे-आख्यातवानस्मि। अत्रापि भट्टारका बहु वदन्ति ; न तदस्मन्मनः श्रद्दधते ॥ १२ ॥

क्षत्रियोऽहं दशरथः नाहं पुत्रो महात्मनः ।
सज्जनावमतं दुःखं इदं प्राप्तं स्वकर्मजम् ॥ १३ ॥

महात्मनस्तव पुत्रो नाहमिति योजना। सज्जनावमतं--साधुविगर्हितं मया दुःखं प्राप्तम् ॥ १३ ॥

भगवन्! चापहस्तोऽहं सरयूतीरमागतः ।
जिघांसुः श्वापदं कश्चित् निपाने वाऽऽगतं गजम् ॥ १४ ॥

किं तत्? इत्यतः—भगवन्नित्यादि। घोरं श्वापदं शार्दूलादिकं, निपाने-अवतारे गजं वा जिघांसुः ॥ १४ ॥

तत्र श्रुतो मया शब्दः जले कुम्भस्य पूर्यतः ।
*द्विपोऽयमिति मत्वाऽयं बाणेनाभिहतो मया ॥ १५ ॥

अयमिति। श्रुतशब्दहेतुपदार्थ इत्यर्थः ॥ १५ ॥

गत्वा नद्यास्ततस्तीरं अपश्यमिषुणा हृदि ।
विनिर्भिन्नं गतप्राणं शयानं भुवि तापसम् ॥ १६ ॥

गतप्राणं-गतकल्पप्राणम् ॥ १६ ॥

भगवन्! शब्दमालक्ष्य मया गजजिघांसुना ।
विसृष्टोऽम्भसि नाराचः ततस्ते निहतः सुतः ॥ १७ ॥

* अयं-शब्दहेतुः पदार्थः द्विप इति मत्वा अयं-तव सुतः मया अभिहतः--गो.

ततस्तस्यैव वचनात् उपेत्य परितप्यतः ।
स मया सहसा बाणः उद्धृतो मर्मतस्तदा ॥ १८ ॥

तस्यैवेति । त्वत्पुत्रस्यैवेत्यर्थः । वचनात् उद्धृत इत्यन्वयः ॥१८॥

स चोद्धृतेन बाणेन [1]तत्रैव स्वर्गमास्थितः ।
भवन्तौ पितरौ शोचन् [2]वृद्धाविति विलप्य च ॥ १९ ॥

बाणेन हेतुनेति शेषः । वृद्धाविति शोचन्निति । कः अतः परं रक्षिष्यति वृद्धौ—इति शोचन्नित्यर्थः ॥ १९ ॥

अज्ञानात् भवतः पुत्रः सहसाऽभिहतो मया ।
*शेषमेवं गते यत् स्यात् तत् प्रसीदतु मे मुनिः ॥ २० ॥

त्वत्पुत्रे—त्वद्रक्षके एवं गते सति—मृते सति यत् शेषं स्यात्—शेषाय रक्षणं कर्तव्यं स्यात् तदुद्दिश्य मे—मह्यं भवान् प्रसीदतु । त्वद्रक्षणे ममैवाज्ञां दत्त्वा मामनुगृह्णात्वित्यर्थः ॥ २० ॥

स तत् श्रुत्वा वचः क्रूरं मयोक्तमघशंसिना ।
†नाशकत् तीव्रमायासं [3]अकर्तुं भगवान् ऋषिः ॥ २१ ॥

एवमज्ञानकृतत्वबोधनात् शेषरक्षणमपि मयैव निर्वाह्यत इत्युक्तत्वाच्च तत्कालं मां न भस्मसादकरोदित्याह—स तत् श्रुत्वेत्यादिना । आयासं—दुःखम् ॥ २१ ॥

स बाष्पपूर्ण[4]वदनः निश्वसन् शोककर्शितः ।
मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ २२ ॥

---

*यत् शेषं कर्तव्यं स्यात् शापानुग्रहादिकं तत्प्रति मे मयि प्रसीदतु, शापो वा अनुग्रहो वा यः कर्तव्यः तं करोत्वित्यर्थः-गो. † ऋषिस्सन्नपि तीव्रमायासं अकर्तुं नाशकत्—अकरोदेवेत्यर्थः ॥

[1] सहसा—च. [2] अन्धाविति—ङ, च. [3] स कर्तुं—ङ. [4] नयनः—च.

यदेतदशुभं कर्म न त्वं मे कथयेः स्वयम् ।
फलेन्मूर्धा स्म ते, राजन् ! सद्यः शतसहस्रधा ॥ २३ ॥

स्वयमेवागत्य मे न कथयेर्यदि स्म; वाक्यालङ्कारे स्मशब्दः । फलेत्—विशीर्येत् । मच्छापेनेति शेषः ॥ २३ ॥

*क्षत्रियेण वधः, राजन् ! वानप्रस्थे विशेषतः ।
ज्ञानपूर्वं कृतः स्थानात् च्यावयेदपि वज्रिणम् ॥ २४ ॥

ज्ञानपूर्वत्वे तु सद्योऽनर्थप्राप्तिरेव तत्कर्मफलमित्याह—क्षत्रियेणत्यादि । विशेषत इति । अन्यतोऽनाथे इति शेषः । ज्ञानपूर्वं कृतो यद्ययं वधः स्यात्, तदाऽयं मत्कोपेन वज्रिणमपि स्थानात् च्यावयेत्—पातयेत्, किमु त्वादृशमित्यर्थः ॥ २४ ॥

†सप्तधा तु फलेन्मूर्धा मुनौ तपसि तिष्ठति ।
ज्ञानात् विसृजतः शस्त्रं तादृशे [1]ब्रह्मचारिणि ॥ २५ ॥

एवं स्वकोपेन तत्कालानाशमुक्त्वा पुत्रकोपेनापि तत्कालानाशः अज्ञानमूलत्वादित्याह— सप्तधेत्यादि । स्वापेक्षया तपोन्यूनत्वात् सप्तधेति । ज्ञानात् विसृष्टमिति । यदीति शेषः ॥ २५ ॥

अज्ञानाद्धि कृतं यस्मात् इदं तेनैव जीवसि ।
अपि ह्यद्य कुलं न स्यात् राघवाणां, कुतो भवान् ? ॥ २६ ॥

ते—तवेदं कृतं कर्म यस्मादज्ञानात्, तेन हि—तेनैव हेतुना जीवसे—जीवसीति यावत् । अपीति । यदि ज्ञानपूर्वमपीदं स्यात्, तदा राघवाणां कुलमेव न स्यात्, कुतो भवान् जीवेत् ॥ २६ ॥

---

* प्रजापालननिरतस्य क्षत्रियस्य अनपराधिसामान्यप्रजावध एव दोषावहः, वानप्रस्थे, तत्रापि बुद्धिपूर्वं कृतस्तु वधः—वज्रिणमपि स्थानात् च्यावयेत् । † सप्तधा—बहुधेत्यर्थः—गो ।

[1] ब्रह्मवादिनि—ङ, च.

नय नौ, नृप! तं देशं इति मां चाभ्यभाषत ।
अद्य तं द्रष्टुमिच्छावः पुत्रं *पश्चिमदर्शनम् ॥ २७ ॥

द्रष्टुं–अनुभवितुं, स्पर्शनादिनेति शेषः । पश्चिमदर्शनं–सर्वान्तदर्शनमिति यावत् ॥ २७ ॥

रुधिरेणावसिक्ताङ्गं प्रकीर्णाजिनवाससम् ।
शयानं भुवि निस्संज्ञं धर्मराजवशं गतम् ॥ २८ ॥

†अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ ।
अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया ॥ २९ ॥

तौ पुत्रमात्मनः स्पृष्ट्वा तमासाद्य तपस्विनौ ।
निपेततुः शरीरेऽस्य पिता चास्येदमब्रवीत् ॥ ३० ॥

इदमब्रवीदिति । वक्ष्यमाणरूपं लौकिकं प्रलापमित्यर्थः ॥ ३० ॥

नाभिवादयसे माऽद्य न च मामभि भाषसे ।
किं नु [1]शेषे तु भूमौ त्वं, वत्स! [2]संकुपितो ह्यसि ॥ ३१ ॥

संकुपितः–संकोपं प्राप्तः ॥ ३१ ॥

‡न त्वहं [3]तेऽप्रियः, पुत्र! मातरं पश्य, [4]धार्मिक!
किं नु नालिङ्गसे, पुत्र! सुकुमार! वचो वद ॥ ३२ ॥

अप्रिय इति पदम्, अप्रियकारी नास्मीत्यर्थः ॥ ३२ ॥

कस्य वाऽपररात्रेऽहं श्रोष्यामि हृदयङ्गमम् ।
अधीयानस्य मधुरं शास्त्रं वाऽन्यत् विशेषतः ॥ ३३ ॥

---

* 'अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमम्' अन्तिमदर्शनं तं द्रष्टुमिच्छावः ।
† अहं तौ तं देशं नीत्वा तं पुत्रं अहमस्पर्शयमित्यन्वयः ॥ ‡ अहं ते प्रियः न तु चेत्–गो.

[1] शेषेऽद्य–ङ. [2] किं कुपि–ङ. च. [3] ते प्रियः–ङ. [4] धार्मिकी–ङ.

शास्त्रं वाऽन्यद्वेति । पुराणं वेति शेषः । वैश्यात् शूद्रायां जातस्य करणजातित्वात् वेदप्रसङ्गो नोक्तः ॥ ३३ ॥

को मां सन्ध्यामुपास्यैव स्नात्वा *हुतहुताशनः ।
श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितम् ॥ ३४ ॥

सन्ध्यामुपास्येत्यादि । आगममार्गेत इति शेषः । करणस्य [1]वेदमार्गानधिकारात् । श्लाघयिष्यति-श्लाघनं-उद्वर्तनं, तत्पूर्वं कः स्नापयिष्यतीत्यर्थः । तथा प्रयोगः 'नाप्सु श्लाघमानः स्नायात्' इति ब्रह्मचारिप्रकरणे आपस्तम्बः ॥ ३४ ॥

कन्दमूलफलं हृत्वा को मां प्रियमिवातिथिम् ।
†[2]भोजयिष्यति कर्मण्यं अप्रग्रहमनायकम् ॥ ३५ ॥

कर्मसु साधुः कर्मण्यः, 'तत्र साधुः' इति यत् । अतिथिविशेषणमिदम् । अप्रग्रहं-यष्टिं गृहीत्वा पुरोमार्गप्रदर्शकरहितम् ॥

इमामन्धां च वृद्धां च मातरं ते तपस्विनीम् ।
कथं, वत्स! भरिष्यामि कृपणां पुत्रगर्धिनीम् ॥ ३६ ॥

कथं वत्स भरिष्यामीति । स्वयमप्यन्ध इति शेषः ॥ ३६ ॥

‡तिष्ठ [3]मा मा गमः, पुत्र! यमस्य सदनं प्रति ।
श्वो मया सह गन्ताऽसि जनन्या च समेधितः ॥ ३७ ॥

§मामित्याबाधे द्विरुक्तिः । समेधितः—संगत इति यावत् ॥

---

* ननु वैश्याद शूद्रायां जातो हि करणः, तस्य कथं होमाधिकार इति—मैवम्—'नमस्कारेण मन्त्रेण पञ्चयज्ञान् समापयेत्' इति चतुर्थवर्णस्यापि पञ्चमहायज्ञाधिकारः स्मर्यते, ततोऽप्यधिकस्य करणस्य स्वोचितमन्त्रैर्होमाधिकारस्य कैमुत्यन्यायसिद्धत्वात् । श्लाघयिष्यति-उपचरिष्यतीत्यर्थः-गो. † अकर्मण्यं—कर्मानुष्ठानाक्षमम्—गो., ति. ‡ तिष्ठ मां-मां प्रति तिष्ठ, मा गमः-मा गच्छ-गो. § आबाधा-पीडा ।

[1] वैदिकमा-ग. [2] भोजयिष्यत्यकर्मण्यं-ङ., च. [3] मां मा-ङ.

उभावपि च शोकार्तौ अनाथौ कृपणौ वने ।
क्षिप्रमेव गमिष्यावः [1]त्वयाऽहीनौ यमक्षयम् ॥ ३८ ॥

यमक्षयं—यमगृहम् ॥ ३८ ॥

ततो वैवस्वतं दृष्ट्वा तं प्रवक्ष्यामि भारतीम् ।
*क्षमतां धर्मराजो मे बिभृयात् पितरावयम् ॥ ३९ ॥

ऋषिः सहगमनप्रयोजनमाह—तत इत्यादि । यमक्षयं प्रति सहगमनानन्तरमित्यर्थः । भारतीं—वाक्यं प्रवक्ष्यामि । कीदृशीमित्यतः—क्षमतामित्यादि । धर्मराजः भवान्, अयं मे पुत्रः पितरौ बिभृयादिति यत्, अतोऽयं क्षमतां—शस्त्रहतत्वतो दुर्मरणमूलपापं क्षमताम् ॥ ३९ ॥

दातुमर्हति धर्मात्मा लोकपालो महायशाः ।
ईदृशस्य ममाऽक्षय्यां एकामभयदक्षिणाम् † ॥ ४० ॥

एवं मया प्रार्थितो धर्मात्मा दुर्मरणजदुर्गतिं निवर्तयित्वा ईदृशस्य याचतः मम अक्षय्यामेकामभयदक्षिणां दातुमर्हति ॥ ४० ॥

‡अपापोऽसि यथा, पुत्र ! निहतः पापकर्मणा ।
तेन सत्येन गच्छाशु [2]ये लोकाः शस्त्रयोधिनाम् ॥ ४१ ॥

अथेदानीं त्रिशङ्कुं विश्वामित्र इव, स्वमहिम्ना स्वसुतं स्वर्गं प्रापयति—अपापोऽसीत्यादि । हे पुत्र ! पापेन कर्मणा—शस्त्रवधलक्षणेन

---

* क्षमतां मत्पुत्रस्य स्वपरिसरागमनविलम्बं सहताम्—गो. पुत्रवियोगजनकं मम पूर्वकृतापराधं क्षमताम्—ति. † पुत्रपुनरुज्जीवनं वात्र विवक्षितम् । तदसंभवशंकया च उत्तरश्लोकप्रवृत्तिः । ‡ नन्वस्य तपस्विनः ब्रह्मलोकप्राप्तिरेव वक्तव्या, शस्त्रहननमात्रेण शस्त्रयोधिनां लोकं प्राप्यत्वेन वदति, एतत् कथमुपपद्यते—उच्यते—'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राट् योगयुक्तश्च रणे चाभिमुखो हतः ॥' इति शस्त्रयोधिनामुत्कृष्टलोकप्राप्तिश्रवणात् न दोषः—गो.

[1] त्वया सह—ङ., त्वया हीनौ—च. [2] ये लोकास्त्वत्र—ङ.

निहतस्त्वं यथा अपापोऽसि–निष्पापो जायसे, तेन मामकेन सत्येन–तपसा शस्त्रयोधिनां ये लोकाः पुण्याः सन्ति, तान् लोकान् आशु गच्छ ॥ ४१ ॥

[1]यान्ति शूरा गतिं यां च संग्रामेष्वनि[2]वर्तिनः ।
हतास्त्वभिमुखाः, पुत्र! गतिं तां परमां व्रज ॥ ४२ ॥

उक्तमेवार्थं विविच्य प्रतिपादयति—यान्तीत्यादि । स्वर्गगामिनां शूराणां प्रसिद्धानां गतिम् ॥ ४२ ॥

यां गतिं सगरः शैब्यः दिलीपो जनमेजयः ।
नहुषो धुन्धुमारश्च * प्राप्तास्तां गच्छ, पुत्रक! ॥ ४३ ॥
या गतिः [3]सर्वसाधूनां स्वाध्यायात् तपसश्च या ।
या भूमिदस्याहिताग्नेः एकपत्नीव्रतस्य च ॥ ४४ ॥

पुनर्विशिष्याह—यां गतिमित्यादि । एकपत्नीव्रताः–रामादयः ॥ ४३–४४ ॥

गोसहस्रप्रदातॄणां या, या गुरुभृतामपि ।
† देहन्यासकृतां या च तां गतिं गच्छ, पुत्रक! ॥ ४५ ॥

गुरून् बिभ्रतीति गुरुभृतः । देहन्यासभृतां–महाप्रस्थानप्रयाणादिनेति शेषः ॥ ४५ ॥

न हि त्वस्मिन् कुले जातः गच्छत्यकुशलां गतिम् ।
स तु यास्यति येन त्वं निहतो मम बान्धवः ॥ ४६ ॥

---

* एते सर्वे यां गतिं प्राप्ता इत्यन्वयो वक्तव्यः । † परलोकप्राप्तिसंकल्पपूर्वकं गंगायमुनासंगमादौ जले अग्नौ वा तनुं त्यजतामित्यर्थः–गो.

[1] यां हि शूरा गतिं प्राप्ताः–ङ. [2] वर्तिनां–ङ. [3] सर्वभूतानां–ङ.

अस्मिन्—मदीये कुले—नित्यतपस्विकुले जातः न हि त्वकुशलां गतिं गच्छति । मम बान्धवस्त्वं येन हतः * स तु—तादृश एव तु अकुशलां गतिं यास्यति ॥ ४६ ॥

**एवं स कृपणं तत्र पर्यदेवयतासकृत् ।**
**ततोऽस्मै कर्तुमुदकं प्रवृत्तः सह भार्यया ॥ ४७ ॥**

**ततो दिव्येन रूपेण मुनिपुत्रः स्वकर्मभिः ।**
**† स्वर्गमध्यारुहत् क्षिप्रं ‡ शक्रेण सह धर्मवित् ॥ ४८ ॥**

स्वर्गमध्यारुहदिति । 'तेन सत्येन गच्छाशु' इति मुनिवचनानुक्षणमित्यर्थः ॥ ४८ ॥

**आबभाषे च तौ वृद्धौ शक्रेण सह तापसः ।**
**आश्वास्य च मुहूर्तं तु पितरौ वाक्यमब्रवीत् ॥ ४९ ॥**

आरुह्य शक्रेण सहागत्य आबभाष इति योजना ॥ ४९ ॥

**[1] स्थानमस्मिन् महत् § प्राप्तः भवतोः परिचारणात् ।**
**भवन्तावपि च क्षिप्रं मम मूलमुपैष्यतः ॥ ५० ॥**

अस्मिन् लोके स्वर्गे वा । मूलं—समीपम् ॥ ५० ॥

---

* ननु तर्हि कथं दशरथस्य स्वर्गप्राप्तिरुत्तरत्र वर्णिता । युद्धकाण्डे च 'एष राजा दशरथः ... इन्द्रलोकं गतः ॥' (यु. 119–8) इति च कथं—इति चेत्—उच्यते—न ह्यत्र ऋषिणा दशरथाय तथा शापोऽत्र दत्तः, दशरथं प्रत्यवचनादस्य । दीयते चोत्तरत्रैव शापः 'त्वयापि च यदज्ञानात्' इत्यादिना । किन्तु वस्तुस्थितिकथनमेवेदमिति । ननु एतादृशवधकर्तुः सद्गतिर्वा कथमिति चेत्, ऋषिणा शापदानेन प्रायश्चित्तस्थानीयेन पुत्रवियोगशोकजमरणेनैव अबुद्धिपूर्वकैतद्वधजन्यपापस्य शान्त्या न कश्चिद्दोषः । † अरोहणक्रम एवोत्तरत्र वर्ण्यते इति न पौनरुक्त्यादिः । ‡ मुनिपुत्रमानेतुं आगतेन शक्रेण सहेत्यर्थः । § प्राप्तः, अहमिति शेषः ।

[1] स्थानमस्मि महत्—ङ.

एवमुक्त्वा तु दिव्येन विमानेन वपुष्मता ।
आरुरोह दिवं क्षिप्रं मुनिपुत्रो जितेन्द्रियः ॥ ५१ ॥

वपुष्मता, प्रशंसायां मतुप्, पुष्पकादिवत्–प्रशस्ताकारवता ॥

स कृत्वा तूदकं तूर्णं तापसः सह भार्यया ।
मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ ५२ ॥
अद्यैव जहि मां, राजन्! मरणे नास्ति मे व्यथा ।
यच्छरेणैकपुत्रं मां त्वमकार्षीरपुत्रकम् [1] ॥ ५३ ॥

अद्येत्यादि । हे राजन्! मामप्यद्यैव जहि–मारय । मे मरणव्यथा नास्ति । इदन्तु दुःखाद्वचनम् ॥ ५३ ॥

त्वयाऽपि च यदज्ञानात् निहतो मे स बालकः ।
*तेन त्वामपि शप्स्येऽहं सुदुःखमतिदारुणम् ॥ ५४ ॥

अज्ञानान्निहत इति यत्, तेन त्वामभिशप्स्याम्येव केवलं, न तु प्रत्यक्षतोऽद्य भस्मीकरोमि ॥ ५४ ॥

पुत्रव्यसनजं दुःखं यदेतन्मम सांप्रतम् ।
एवं त्वं पुत्रशोकेन, राजन्! कालं गमिष्यसि ॥ ५५ ॥

सांप्रतं–वृत्तम् । त्वन्निमित्तमिति शेषः ॥ ५५ ॥

अज्ञानात्तु हतो यस्मात् क्षत्रियेण त्वया मुनिः ।
तस्मात् त्वां नाविशत्याशु †ब्रह्महत्या, नराधिप! ॥ ५६ ॥

---

* अतिदारुणं त्वां सुदुःखं यथा तथा शप्स्ये इत्यन्वयः । सुदुःखमतिदारुणमित्युभयमपि क्रियाविशेषणं वा । † ब्रह्महत्या—बहुपातकमित्यर्थः । अन्यथा वैश्यात् शूद्रायां जातस्य करणाख्यसंकरजातित्वेन ब्रह्महत्याप्रसक्त्यभावात्–गो. ब्रह्महत्यासदृशकरणभवजनितपापं–रा. गौणब्रह्महत्या वा विवक्षिता ।

[1] एतदनन्तरं 'कथं तेषां कुले जातः क्षत्रियाणां महात्मनां । सर्ववेदविदर्थज्ञो धर्मे न कुरुते मनः । स्त्रीनिमित्तं न ते वैरं क्षेत्रजं वाक्यजं न ते ॥' इत्यधिकं–ङ.

*त्वामप्येतादृशो भावः क्षिप्रमेवागमिष्यति ।
जीवितान्तकरो घोरः दातारमिव दक्षिणा ॥ ५७ ॥

एवं शापं मयि न्यस्य विलप्य करुणं बहु ।
चितामारोप्य देहं तत् मिथुनं स्वर्गमभ्ययात् ॥ ५८ ॥

देहमिति । देहाविति यावत् ॥ ५८ ॥

तदेतच्चिन्तयानेन स्मृतं पापं मया स्वयम् ।
तदा बाल्यात् कृतं, देवि! शब्दवेध्यनुकर्षिणा ॥ ५९ ॥

शब्दवेधीति । प्रथमं शब्दमात्रवेधी, पश्चात् बिद्धशल्यस्यानुकर्षणमपि कृतवांस्तथा, तेनेत्यर्थः ॥ ५९ ॥

तस्यायं कर्मणः, देवि! विपाकः समुपस्थितः ।
†अपथ्यैः सह [1]संभुक्तो व्याधिमन्नरसो यथा ॥ ६० ॥

व्याधिमिति । उपस्थापयतीति शेषः ॥ ६० ॥

तस्मान्मामागतं, भद्रे! तस्योदारस्य तद्वचः ।
यदहं पुत्रशोकेन संत्यक्ष्याम्यद्य जीवितम् ॥ ६१ ॥

उदारस्य—श्रेष्ठस्येत्यर्थः । तद्वचः—तस्य शापवचःफलमित्यर्थः ॥

चक्षुर्भ्यां त्वां न पश्यामि, कौसल्ये! साधु मा स्पृश ।
[2]इत्युक्त्वा स रुदंस्त्रस्तः भार्यामाह तु भूमिपः ॥ ६२ ॥

त्रस्त इति । मरणभयादिति शेषः । अद्य जीवितं त्यक्ष्यामीति यत् अतो मुमूर्षुत्वात् न त्वां चक्षुषा पश्यामि ॥ ६२ ॥

---

* एतादृशः भावः—मनसोऽवस्थितिः त्वामपि क्षिप्रमेवागमिष्यति । † अपथ्यैरन्नरसैः सह भुक्तोऽन्नरसे व्याधिर्यथोपतिष्ठते—ति.

[1] संभुक्ते व्याधिरन्नरसे—च. [2] एतदनन्तरश्लोकानां पौर्वापर्ये भेदः—ङ. पुस्तके दृश्यते ।

यमक्षयमनुप्राप्ता द्रक्ष्यन्ति न हि मानवाः ॥ ६३ ॥

न हि द्रक्ष्यन्तीति । स्वेष्टबन्धूनिति शेषः ॥ ६३ ॥

यदि मां संस्पृशेत् रामः सकृदद्य लभेत वा ।
[1] धनं वा यौवराज्यं वा जीवेयमिति मे मतिः ॥ ६४ ॥

अद्य सकृदपि मां रामः संस्पृशेद्यदि, तदा जीवेयमतः परमिति मे मतिः । यद्वा धनं यौवराज्यं वा लभेत, तदा वा जीवेयम् । न त्रयमपि संवृत्तमिति शेषः ॥ ६४ ॥

*[2] एतन्मे सदृशं, देवि! यन्मया राघवे कृतम् ।
सदृशं तत्तु तस्यैव यदनेन कृतं मयि ॥ ६५ ॥

अनेन—रामेण मयि—पितरि यत् कृतं—त्यक्त्वाऽपि राज्यं स्ववचनपरिपालनरूपं कर्म, तत्तु तस्यैव सदृशम् ॥ ६५ ॥

दुर्वृत्तमपि कः पुत्रं त्यजेत् भुवि विचक्षणः ।
कश्च प्रव्राज्यमानो वा नासूयेत् पितरं सुतः ॥ ६६ ॥

स्वसदृशान्यायकृत् रामसदृशन्यायकृच्च लोके † नाभूत्, अस्ति, भविष्यतीत्याह—दुर्वृत्तमित्यादि ॥ ६६ ॥

चक्षुषा त्वां न पश्यामि स्मृतिर्मम विलुप्यते ।
दूता वैवस्वतस्यैते, कौसल्ये! त्वरयन्ति माम् ॥ ६७ ॥

---

* पूर्वार्धे स्वश्लाघना, उत्तरार्धे रामश्लाघना च अकारि । राघवे यन्मया कृतं तत् न मे सदृशं—ति. वस्तुतः—रामविषये मया यत् कृतं तत् मे—मादृशस्य मूर्खस्यैव सदृशं—युक्तं; एतादृशेऽपि रामेण यत् कृतं तत् तस्यैव सदृशम् । अयमेवार्थः अनन्तर-श्लोके विव्रियते । † नञः उत्तरत्रापि सम्बन्धः ।

[1] इदमर्धं कुत्रचिन्नास्ति—ङ. [2] न तन्मे—च.

अतस्तु किं दुःखतरं यदहं जीवितक्षये।
न हि पश्यामि धर्मज्ञं रामं सत्यपराक्रमम् ॥ ६८ ॥
तस्यादर्शनजः शोकः सुतस्याप्रतिकर्मणः।
उच्छोषयति मे प्राणान् वारि स्तोकमिवातपः ॥ ६९ ॥

स्तोकं वारि—अल्पोदकम् ॥ ६९ ॥

न ते मनुष्या देवास्ते ये चारुशुभकुण्डलम्।
मुखं द्रक्ष्यन्ति रामस्य वर्षे पञ्चदशे पुनः ॥ ७० ॥

ये द्रक्ष्यन्ति ते न मनुष्याः, किन्तु देवा एव—देवांशा एव। अन्यादृशस्य तद्दर्शनासंभवात् ॥ ७० ॥

पद्मपत्रेक्षणं सुभ्रु सुदंष्ट्रं चारुनासिकम्।
धन्या द्रक्ष्यन्ति रामस्य ताराधिपनिभं शुभम् ॥ ७१ ॥
सदृशं शारदस्येन्दोः फुल्लस्य कमलस्य च।
सुगन्धि मम नाथस्य धन्या द्रक्ष्यन्ति तन्मुखम् ॥ ७२ ॥
निवृत्तवनवासं तं अयोध्यां पुनरागतम्।
द्रक्ष्यन्ति सुखिनो रामं [1] शुकं मार्गगतं यथा ॥ ७३ ॥

सत्यमुक्तं दशरथेन—* शुकं मार्गगतं यथेति। हस्तात् पञ्जराद्वा ग्रहणाशक्यदेशं गतं पुनश्च मार्गं—यथावस्थानं गतं—प्राप्तं शुकं—क्रीडाशुकमिव सर्वाह्लादकं द्रक्ष्यन्तीत्यर्थः ॥ ७३ ॥

कौसल्ये! चित्तमोहेन हृदयं सीदतीव मे।
वेदये न च [2] संयुक्तः शब्दस्पर्शरसानहम् ॥ ७४ ॥

---

* अयं भागः तिलकेऽनूदितः। शुक्रं मार्गगतं—इति सर्वत्र पाठो दृश्यते। मौढ्यादिकं विहाय स्वस्थानं प्राप्तं शुक्रमिवेत्यर्थः।

[1] शुक्रं—सर्वत्र। [2] संयुक्तान्—सर्वत्र।

* संयुक्तः—इन्द्रियसंयुक्तस्सन् ॥ ७४ ॥

चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि मे ।
क्षीणस्नेहस्य दीपस्य † संसक्ता रश्मयो यथा ॥ ७५ ॥

अयमात्मभवः शोकः मामनाथमचेतनम् ।
संसादयति वेगेन यथा कूलं नदीरयः ॥ ७६ ॥

हे राघव ! महाबाहो !! हा ममायासनाशन !!!
हा पितृप्रिय ! मे नाथ !! हाऽद्य कासि गतः सुत !!! ॥७७॥

हा कौसल्ये ! नशिष्यामि हा सुमित्रे ! तपस्विनि !
हा नृशंसे ममामित्रे कैकेयि ! कुलपांसनि ! ॥ ७८ ॥

इति रामस्य मातुश्च सुमित्रायाश्च सन्निधौ ।
राजा दशरथः शोचन् जीवितान्तमुपागमत् ॥ ७९ ॥

तथा तु दीनं कथयन् नराधिपः
प्रियस्य पुत्रस्य विवासनातुरः ।
गतेऽर्धरात्रे भृशदुःखपीडितः
तदा जहौ ‡ प्राणमुदारदर्शनः ॥ ८० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुष्षष्टितमः सर्गः

---

नन्द(८०)मानः सर्गः ॥ ८० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चतुष्षष्टितमः सर्गः

---

* संयुक्तान् इन्द्रियसंयुक्तान् न वेदये—न जाने-**गो.** † संसक्ताः—सम्बन्धिनः ॥ ‡ प्राणशब्दस्य एकवचनान्तत्वमार्षम् । अथ वा 'प्राणो हृन्मारुते', 'हृदि प्राणो गुदेऽपानः' इत्यादौ वायुविशेषरूपप्राणवाचिशब्दस्य एकवचनान्तत्वदर्शनात् तदेव पदं अत्रापि विवक्षितम् ।

## पञ्चषष्टितमः सर्गः

[अन्तःपुराक्रन्दः]

**अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि ।**
**वन्दिनः पर्युपातिष्ठन् तत् पार्थिवनिवेशनम् ॥ १ ॥**

एवमर्धरात्रे उत्सृष्टप्राणतः कौसल्याद्यैरविज्ञातनिर्याणतः यथापूर्वमुषसि राजोचितव्यवहारे प्रवृत्तेऽपि राज्ञो यथोचितव्यवहारादर्शनात् शनैः राजनिर्याणं ज्ञात्वा तदुचितव्यवहारे प्रवृत्तिः । अथेत्यादि । रात्र्यां--शेषरात्र्याम् ॥ १ ॥

**सूताः * परमसंस्काराः [1] मंगलाश्चोत्तमश्रुताः ।**
**[2] गायकाः [3] श्रुतिशीलाश्च [4] निगदन्तः † पृथक्पृथक् ॥**

परमसंस्काराः—उत्तमव्याकरणसंस्कारोपेतशब्दवन्तः । मङ्गलाः—मागधाः—वंशावलिकीर्तकाः । ‡ उत्तमं श्रुतं—वंशपरंपराश्रवणं येषां ते तथा । गायकाः—वन्दिनः । श्रुतिशीलाः—तन्त्रीनादविभागशीलाः । पृथक्पृथक् निगदन्त इति । स्वस्वमार्गानुसारेणेति शेषः ॥ २ ॥

**राजानं स्तुवतां तेषां [5] उदात्ताभिहिताशिषाम् ।**
**प्रासादाभोगविस्तीर्णः स्तुतिशब्दो ह्यवर्तत ॥ ३ ॥**

उदात्ताभिहिताशिषां—उदात्ततया—उच्चैष्ट्वेन अभिहिताः आशिषः तथा । प्रासादानामाभोगेषु विस्तीर्ण इति । प्रतिध्वनिनेति शेषः ॥ ३ ॥

---

* स्नानालंकारादिसंस्कारविशिष्टाश्च अस्यार्थः । † 'सूतमागधवन्दिनः' इति तत्रतत्रोत्कीर्तनात् त्रयाणामेषां कृत्यस्य भिन्नत्वात् पृथक्पृथगित्युक्तम् । ‡ उत्तमं श्रुतं—गान्धर्वशास्त्रश्रवणं येषां ते—गो.

[1] मागधाः—च. [2] गायनाः—ङ. [3] स्तुतिशी—ङ. [4] निनदन्तः—ङ.
[5] उत्तम, उद्दार—ङ.

ततस्तु स्तुवतां तेषां सूतानां पाणिवादकाः ।
अपदानान्युदाहृत्य पाणिवादानवादयन् ॥ ४ ॥

पाणिवादकाः—तालोपेतपाणिवादनशीलाः । अपदानं—वृत्तं कर्म राजीयं, तदुदाहृत्य तदनुगतं पाणिवादानवादयन् ॥ ४ ॥

तेन शब्देन विहगाः प्रतिबुद्धाश्च सस्वनुः ।
[1] शारिकाः पञ्जरस्थाश्च ये राजकुलगोचराः ॥ ५ ॥
व्याहृताः * पुण्यशब्दाश्च वीणानां चापि निस्वनाः ।
आशीर्गेयं च गाथानां पूरयामास वेश्म तत् ॥ ६ ॥

स्वनतेः फणादित्वात् एत्वाभ्यासलोपाभावपक्षे सस्वनुरिति । † राजकुलगोचरा ये शुकादिपक्षिणः सन्ति, तैः ‡ व्याहृताः पुण्यशब्दाः—काशीगङ्गाविश्वेश्वरादिपुण्यक्षेत्रतीर्थमहादेवतागोचरा इत्यर्थः । गाथानां—केवलगाथागायकानां अशीर्गेयं—आशीर्वादप्रधानं गानम् ॥

ततः शुचिसमाचाराः § पर्युपस्थानकोविदाः ।
स्त्रीवर्ष[2]वरभूयिष्ठाः उपतस्थुर्यथापुरम् ॥ ७ ॥

स्त्रीभिः वर्षवरैश्च भूयिष्ठास्तथा, 'षण्डो वर्षवरस्तुल्यौ' ॥ ७ ॥

हरिचन्दनसंसक्तं उदकं काञ्चनैर्घटैः ।
आनिन्युः ‖ स्नान[3]शिक्षाज्ञाः यथाकालं यथाविधि ॥८॥

स्नानशिक्षाज्ञाः—अरुणोदयात् पूर्वमेव गत्वा राज्ञः उषसि स्नानार्थमानेतव्यमिति शिक्षाज्ञाः तथा ॥ ८ ॥

---

* पुण्यशब्दाः—हरिनारायणादिपुण्यशब्दाः । यद्वा पुण्यश्लोकपुरुषाणां कीर्तनानि—ती. † राजकुलगोचराः —राजकुलवासयोग्याः—ति. ‡ व्याहृताः—ब्राह्मणैरुक्ताः—गो. § पर्युपस्थानं—परिचरणम् । ‖ स्नानशिक्षाज्ञान्—स्नानपद्धतिज्ञान् ।

[1] शाखास्थाः—ङ. [2] धर—ङ. [3] शिक्षाज्ञान्—ङ.

*** मङ्गलालंभनीयानि प्राशनीयान्युपस्करान् ।**
**उपनिन्युस्तथाऽप्यन्याः कुमारीबहुलाः † स्त्रियः ॥ ९ ॥**

मङ्गलार्थं आलंभनीयानि—स्पर्शनीयानि गवादीनि, 'आलंभः स्पर्शहिंसयोः' । प्राशनीयानि—गङ्गोदकतुलसीतीर्थादीनि । उपस्कराः—दर्पणवस्त्राभरणादयः । कुमारीबहुलाः स्त्रिय इति । वारयोषित इति यावत् ॥ ९ ॥

**सर्वलक्षणसंपन्नं सर्वं विधिवदर्चितम् ।**
**सर्वं सुगुणलक्ष्मीवत् तत् बभूवाभिहारिकम् ॥ १० ॥**

आभिहारिकं—राज्ञे प्रातर्यदभिहर्तव्यं—मङ्गलार्थमानेतव्यं तत्सर्वं सर्वलक्षणसंपन्नत्वादिधर्मकं बभूव । सुगुणं च तत् लक्ष्मीवच्च—तथा ॥

**‡ तत्तु सूर्योदयं यावत् सर्वं परिसमुत्सुकम् ।**
**§ तस्थावनुपसंप्राप्तं किं स्विदित्युपशङ्कितम् ॥ ११ ॥**

तत्तु—उक्ताभिहारिकं तु । परिसमुत्सुकमिति । राजदर्शनं प्रतीति शेषः । अनुपसंप्राप्तं—अप्राप्तराजदर्शनमित्यर्थः । अत एव, किं स्वित्—इत्यभिशङ्कितञ्च ॥ ११ ॥

**अथ याः कौसलेन्द्रस्य शयनं प्रत्यनन्तराः ।**
**ताः स्त्रियस्तु समागम्य भर्तारं प्रत्यबोधयन् ॥ १२ ॥**

अनन्तराः—आसन्ना इति यावत् ॥ १२ ॥

---

* मङ्गलरूपानुलेपनानि तैलोद्वर्तनादीनि, प्राशनीयानि—दन्तधावनानन्तरं गण्डूषत्वेन प्राशनीयानि, संपिष्टतिलनारिकेलजीरकादिद्रव्याणि ओषधिविशेषानिति वाऽर्थः—**गो.** † स्त्रिय इति द्वितीया—**गो.** ‡ तत्तु—परिजनजातं—**गो.** § अनुपसंप्राप्तं—अनागतं राजानं प्रति—**ती.** एवं परिवारगणः स्वस्वसेवायै सन्नद्धः राजानं प्रतीक्षन्नासीत् । राजा तु नाजगाम यथापूर्वम् । अतः शङ्का समजनि । राजानं स्प्रष्टुं बोधयितुं तु नैषामर्हता । उत्तरश्लोके 'भर्तारं प्रत्यबोधयन्' इति कथनात् ।

**तथाऽप्युचितवृत्तास्ताः विनयेन नयेन च ॥ १३ ॥**
**न ह्यस्य शयनं स्पृष्ट्वा * किञ्चिदप्युपलेभिरे ।**
**† ताः स्त्रियः स्वप्नशीलज्ञाः [1] चेष्टा‡सञ्चलनादिषु॥ १४ ॥**

उचितवृत्ता इति । भार्यात्वादेव स्पर्शनादिव्यापारोचिताः । स्वप्नशीलज्ञाः—स्वप्नस्वभावज्ञाः ताः स्त्रियः, स्वप्नधर्मेषु चेष्टासञ्चलनाद्यङ्गपरिवर्तनप्रश्वासचलनादिषु अस्य शयनं स्पृष्ट्वापि न किञ्चिदुपलेभिरे ॥

**[2] ते दीना वेपथुयुताः राज्ञः प्राणेषु शङ्किताः ।**
**प्रतिस्रोतस्तृणाग्राणां सदृशं [3] संचकम्पिरे ॥ १५ ॥**

ते दीना वेपथुयुता इत्यादि । प्रतिस्रोतस्तृणाग्राणां—स्रोतोमुखस्थितवेतसादितृणाग्राणामित्यर्थः ॥ १५ ॥

**अथ [4] संवेपमानानां स्त्रीणां दृष्ट्वा च पार्थिवम् ।**
**यत्तदाशङ्कितं पापं तस्य जज्ञे विनिश्चयः ॥ १६ ॥**

यत्तदाऽशङ्कितं पापं—मरणं पूर्वदिवसे, राज्ञेति शेषः ॥ १६ ॥

**कौसल्या च सुमित्रा च पुत्रशोकपराजिते ।**
**प्रसुप्ते न प्रबुध्येतेऽयथाकालसमन्विते ॥ १७ ॥**

पराजिते—अभिभूते । अयथाकालसमन्विते इति पदम् । रात्रौ दुःखवशेन जागरणात् शिवरात्रिव्रतिनामिव प्रत्युषस्ययथाकाले

---

* किञ्चित्—उच्छ्वासादिकमित्यर्थः । † स्वप्नस्वरूपज्ञत्वात् नायं स्वप्न इति ज्ञात्वा चकंपिरे इत्यर्थः ॥ ‡ संचलनादिषु हृदयकरमूलनाडिषु चेष्टां नोपलेभिरे—ति.

[1] चेष्टां सचल—ङ., चेष्टां संचलनाडिषु—च. [2] ता वेपथुपरीताश्च—ङ. [3] संचकाशिरे—ङ. [4] सन्देहमा—च.

निद्रया समन्विते तथा। *कालसमन्विते मृते यथा न प्रतिबुध्येते इतीयं योजना अश्लीलत्वादुपेक्ष्या ॥ १७ ॥

†निष्प्रभा च विवर्णा च सन्ना शोकेन सन्नता।
न व्यराजत कौसल्या तारेव तिमिरावृता ॥ १८ ॥

शोकेन सन्ना–उपहता। सन्नता–सुप्तिवशसङ्कुचितकरचरणा ॥

‡कौसल्याऽनन्तरं राज्ञः सुमित्रा तदनन्तरम्।
§न स्म विभ्राजते देवी शोकाश्रुलुलिताानना ॥ १९ ॥
ते च दृष्ट्वा तथा सुप्ते उभे देव्यौ च तं नृपम्।
[1]सर्वमेवोद्गतप्राणमन्तःपुर[2]मदृश्यत ॥ २० ॥

ते चेत्यादि। ते उभे देव्यौ तथा सुप्ते–गाढसुप्ते प्रश्वासादिना दृष्ट्वा, तं नृपं सुप्तमेव सन्तं तदवस्थायामेवोद्गतप्राणं तल्लक्षणतो दृष्ट्वा सर्वमेव अन्तःपुरं उद्गतप्राणं–तत्कल्पमदृश्यत ॥ २० ॥

ततः प्रचुक्रुशुर्दीनाः सस्वरं ता वराङ्गनाः।
करेणव इवारण्ये स्थानप्रच्युतयूथपाः ॥ २१ ॥

---

* गोविन्दराजेन तीर्थेन च एवं व्याख्यातम्। विधेयविशेषणं वा। यथाकालसमन्वितत्वेन न प्रबुध्येते इत्यर्थः ॥ † निष्प्रभा–निःश्रीका, विवर्णा–पूर्ववर्णाद्विपरीतवर्णा, शोकेन सन्ना–कृशा, सन्नता–कार्श्येन नम्रा, तिमिरावृता–उत्पातकालोत्थधूमः तिमिरं, तेन आवृता तारेव–तारकेव न व्यराजत–**गो.** ‡ राज्ञः अनन्तरं कौसल्या, तदनन्तरं सुमित्रेति तेषां क्लेशतारतम्यपरीक्षणं कविना कृतम् ॥ § मृताद्दशरथाद्जीवन्त्योः कौसल्यासुमित्रयोः विशेषो नासीदित्यर्थः–**गो.** एवञ्च त्रीनपि मृतान् ज्ञात्वा सर्वमेवान्तःपुरमुद्गतप्राणमदृश्यत। अत एव तासां कौसल्याप्रबोधने न प्रवृत्तिः, किन्तु 'प्रचुक्रुशुर्दीनाः' इत्युच्यते। 'ते च दृष्ट्वा तथा सुप्ते' इति तु कवेर्दृष्ट्या।

[1] सुप्तमेवो–ङ. [2] मतप्यत–ङ.

तासामाक्रन्दशब्देन सहसोद्गतचेतने ।
कौसल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः ॥ २२ ॥

कौसल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वा च पार्थिवम् ।
हा नाथेति परिक्रुश्य पेततुर्धरणीतले ॥ २३ ॥

सा कोसलेन्द्रदुहिता वेष्टमाना महीतले ।
न बभ्राज रजोध्वस्ता तारेव गगनात् च्युता ॥ २४ ॥

नृपे शान्तगुणे जाते कौसल्यां पतितां भुवि ।
अपश्यन् ताः स्त्रियः सर्वाः हतां नागवधूमिव ॥ २५ ॥

* शान्तगुणे — उपशान्तजीवनाभिवदनादिधर्मे — मृते सतीति यावत् ॥ २५ ॥

ततः सर्वा नरेन्द्रस्य † कैकेयीप्रमुखाः स्त्रियः ।
रुदन्त्यः शोकसन्तप्ताः निपेतुर्गतचेतनाः ॥ २६ ॥

ताभिः स बलवान् नादः क्रोशन्तीभिरनुद्रुतः ।
येन [1] स्फीतिं गतो भूयः तद्गृहं समनादयत् ॥ २७ ॥

ताभिरिति । क्रोशन्तीभिस्ताभिरुत्थापितो बलवान् नादः, येन—हेतुना अनुद्रुतः—प्रतिध्वनिना गृहमनुप्राप्तः, तत एव भूयः—अभ्यधिकं स्फीतिं, क्तिनि स्फीभावः छान्दसः, वृद्धिं गतो भूत्वा तद्गृहं समनादयत् ॥ २७ ॥

---

* शान्तगुणे—शान्तदेहोष्णस्पन्दनादिगुणे—गो॰ वस्तुतः 'गुणो मौर्व्यां···· शुक्लादावपि बुध्यां च' इति मेदिनीकोशात्—शान्तप्रज्ञ इत्यर्थः—तथा च मृत इत्यर्थः ॥
† यद्यपि कैकेयी पूर्वं नासीत्, अथापि अनन्तरमागतेति ज्ञायते ।

[1] स्थिरीकृतं, स्फीतीकृतं—ङ॰

*[1] तत् परित्रस्तसंभ्रान्तं पर्युत्सुकजनाकुलम् ।
सर्वतस्तुमुला[2]क्रन्दं परितापार्तबान्धवम् ॥ २८ ॥

सद्यो निपतितानन्दं दीनविक्लबदर्शनम् ।
बभूव नरदेवस्य सद्म दिष्टान्तमीयुषः ॥ २९ ॥

† पर्युत्सुकेति । वृत्तान्तपरिज्ञानपर्युत्सुकेति यावत् । दिष्टान्तमीयुष इति । कालधर्मं प्राप्तस्येत्यर्थः ॥ २९ ॥

अतीत‡माज्ञाय तु पार्थिवर्षभं
यशस्विनं संपरिवार्य पत्नयः ।
भृशं रुदन्त्यः करुणं सुदुःखिताः
प्रगृह्य बाहू व्यलपन् अनाथवत् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चषष्टितमः सर्गः

---

नग(३०)मानः सर्गः ॥ ३० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चषष्टितमः सर्गः

---

## षट्षष्टितमः सर्गः

### [ तैलद्रोण्यधिशयनम् ]

§ तमग्निमिव संशान्तं अम्बुहीनमिवार्णवम् ।
हतप्रभमिवादित्यं स्वर्गस्थं प्रेक्ष्य पार्थिवम् ॥ १ ॥

---

* श्लोकद्वयमेकान्वयम् । † पूर्वं पर्युत्सुकजनाकुलं सद्म नरदेवस्य दिष्टान्तमीयुषः—नरदेवे मरणं प्राप्ते सति समुत्रस्तसंभ्रान्तं—इत्येवमादिविशेषणयुक्तं बभूव-**गो.**
‡ आज्ञाय -सम्यक् ज्ञात्वा । § श्लोकद्वयमेकान्वयम् ।

[1] तत्समुत्रस्त—ङ. [2] क्रान्तं—ङ.

**कौसल्या बाष्पपूर्णाक्षी [1] विधवाशोककर्शिता ।**
**उपगृह्य शिरो राज्ञः कैकेयीं प्रत्यभाषत ॥ २ ॥**

अथ भर्तृशरीरमालिङ्गय अनुमरणोद्युक्तां कौसल्यामभिवार्य मन्त्रिणो राजशरीरं संस्काराय भरतागमनपर्यन्तं तैलद्रोण्यामस्थापयन् । तमग्निमित्यादि । विधवेति । विधवात्वप्राप्तः यः शोकः, तेन कर्शिता तथा । राज्ञः शिर उपगृह्येति । अङ्क इति शेषः ॥ २ ॥

**सकामा भव, कैकेयि ! भुङ्क्ष्व राज्यमकण्टकम् ।**
**त्यक्त्वा राजान*मेकाग्रा, नृशंसे ! दुष्टचारिणि ! ॥ ३ ॥**
**विहाय मां गतो रामः भर्ता च स्वर्गतो मम ।**
**विपथे † सार्थहीनेव नाहं जीवितुमुत्सहे ॥ ४ ॥**

अकण्टकत्वमेव कैकेय्याः प्रदर्शयति—विहाय मामित्यादि । विपथे—कान्तारदुर्मार्गे, 'ऋक्पूर....' इति समासान्तः । सार्थः—परिषत् ॥ ४ ॥

**भर्तारं तं [2] परिष्वज्य का स्त्री दैवतमात्मनः ।**
**इच्छेत् जीवितुमन्यत्र कैकेय्यास्त्यक्तधर्मणः ॥ ५ ॥**

भर्तारं परिष्वज्य—तेन सह भोगान् भुक्त्वेति यावत्; तं कालान्तरे परित्यज्येति शेषः । त्यक्तः धर्मः—स्त्रीधर्मः यया सा तथा, 'धर्मादनिच् केवलात्' इत्यनिच्, 'मन—' इति ङीब्निषेधः ॥ ५ ॥

**न लुब्धो बुध्यसे दोषान् किम्पाकमिव भक्षयन् ।**
**कुब्जानिमित्तं कैकेय्या राघवाणां कुलं हतम् ॥ ६ ॥**

---

* एकाग्रा—पुत्रराज्यमात्रे हठा । † दूरदेशं गच्छन्तः परस्पररक्षणाबुद्ध्या सङ्घीभूय गच्छन्ति । अयं सङ्घः सार्थ इत्युच्यते ।

[1] विविधं—सर्वत्र. [2] परित्यज्य—ङ. च.

* किम्पाक:—काकमर्दक:- विषभेद:। तं कोपादिना भक्षयन्, यथा आत्महत्यादोषं न बुध्यते तद्वदित्यर्थ: ॥ ६ ॥

**अनियोगे नियुक्तेन राज्ञा रामं विवासितम्।**
**सभार्यं जनकः श्रुत्वा परितप्स्यत्यहं यथा ॥ ७ ॥**

† अनियोगे—अन्याय्ये; अनुचितो नियोगस्तथा, तस्मिन् वरव्याजेन कैकेय्या नियुक्तस्तथा ॥ ७ ॥

**स मामनाथां विधवां नाद्य जानाति धार्मिकः।**
**रामः कमलपत्राक्षः [1]जीवनाशमितो गतः ॥ ८ ॥**

‡ जीवनाशमिति। राज्ञ इति शेष: ॥ ८ ॥

**विदेहराजस्य सुता तथा [2]चारुतपस्विनी।**
**दुःखस्यानुचिता दुःखं वने पर्युद्विजिष्यति ॥ ९ ॥**

§ चारुतपस्विनी—सुष्ठुतपोयुक्ता, भर्त्रनुयानादित्याशय:। दु:खं वन इति। वने दु:खं प्राप्य पर्युद्विजिष्यति—भेष्यतीति यावत् ॥ ९ ॥

---

* किंपाक:—निम्ब:। कतकस्तु किंपाक: विषभेद:, त कोपादिना भक्षयन् आत्महत्या दोषं न बुध्यते तद्वदित्यर्थ: इत्याह। तत्र लुब्ध इति नात्यन्तसमञ्जसम्। धनलोभादिना परस्य विषभक्षणं कारयन् यथा हत्यादोषं न बुध्यते इति वक्तुमुचितम्—**ति.** लुब्ध:-अर्थलिप्सु:, किंपाकं—विषमिश्रपाकं, यद्वा कुत्सितपाकं—अभक्ष्यमिति यावत्—**ती.** † अनियोगे—वरप्रदानसमये वरस्य विशेषनिर्देशाभावे सति—**गो.** ‡ राज्ञो जीवनाशो यथा भवति तथा गत:—**ति.** जीवन्नेव नाशं—अदर्शनं गत:—**ती.** वस्तुतस्तु—लोके कस्मिंश्चिज्जीवत्यपि, तद्दर्शनादीनां यावज्जीवं प्रसक्तेरप्यभावे निराशया 'जीवन्नपि स मृत इव' इति निर्देशवत् पत्या पुत्रेण च परित्यक्ताया: कौसल्याया: परमशोकादेवमुक्ति: 'जीवन्नेव नशित्वा गत:' इति। § तपस्विनी—शोचनीया सीता। दु:खमिति क्रियाविशेषणम्- **गो.**

[1] जीवन् नाश—**च.** [2] सीता—**ङ.**

*नर्दतां भीमघोषाणां निशासु मृगपक्षिणाम् ।
[1]निशम्य नूनं संत्रस्ता †राघवं संश्रयिष्यति ॥ १० ॥

वृद्धश्चैवाल्पपुत्रश्च वैदेहीमनुचिन्तयन् ।
सोऽपि शोकसमाविष्टो [2]नूनं त्यक्ष्यति जीवितम् ॥ ११ ॥

‡अल्पपुत्रश्चेति । जनक इति शेषः ॥ ११ ॥

साऽहमद्यैव दिष्टान्तं गमिष्यामि पतिव्रता ।
इदं शरीरमालिङ्ग्य प्रवेक्ष्यामि हुताशनम् ॥ १२ ॥

दिष्टान्तं—प्रारब्धकर्मान्तं, मरणमिति यावत् । हुताशनं प्रवेक्ष्यामीत्यत्र हेतुः—पतिव्रतेति ॥ १२ ॥

§तां ततः संपरिष्वज्य विलपन्तीं तपस्विनीम् ।
[3]व्यपनीय सुदुःखार्तां कौसल्यां व्यावहारिकाः ॥ १३ ॥

तैलद्रोण्यामथामात्याः संवेश्य जगतीपतिम् ।
‖राज्ञः सर्वाण्यथादिष्टाः चक्रुः कर्माण्यनन्तरम् ॥ १४ ॥

व्यावहारिकाः—व्यवहार-बाह्यान्तरसकलराजकृत्ये नियुक्ताः; 'तत्र नियुक्तः' इति ठक् । अमात्याः कौसल्यां भर्त्रालिङ्गनात् व्यपनीय—विमोच्य, अन्यतोऽपनीयेत्यर्थः । अथ, तैलपूरिता द्रोणी—कटाहः तथा, तस्यां जगतीपतिं निवेश्य, अथ राज्ञोऽनन्तरकर्तव्यानि सर्वाणि कर्माणि—दुःखपरिपालनादीनि चक्रुः ॥ १३–१४ ॥

---

*मृगपक्षिणां निशम्य–नादमिति शेषः–गो. ति. †पत्या गतत्वात् खलु तस्याः भये प्राप्ते आश्रयलाभः, अतोऽहमपि पतिमनुगच्छेयमित्युक्तेः पीठिकेयम् ॥ ‡अल्पपुत्रः–कन्यामात्रपुत्रः–गो. ति. §श्लोकद्वयमेकान्वयम् । ‖आदिष्टाः राजकृत्येष्वादिष्टाः अमात्याः राज्ञः कर्माणि सर्वाणि—प्रजाशासनादीनि चक्रुः–गो.

[1] निशम्य नादं–ङ. निशाम्यमाना–च. [2] ननु–ङ. [3] व्यपनिन्युः–च.

न तु [1] सङ्कालनं राज्ञो विना पुत्रेण मन्त्रिणः ।
सर्वज्ञाः कर्तुमीषुस्ते ततो रक्षन्ति भूमिपम् ॥ १५ ॥

न तु पुत्रेण विना सङ्कालनं—प्रेतनिर्हारं चक्रुः । सर्वज्ञाः—कालदेशोचितसर्वकार्यज्ञाः ते पुत्रेणैव संकालनं कर्तुमीषुः । तत एव हेतोः तैलद्रोण्यां भूमिपं रक्षन्ति स्म ॥ १५ ॥

तैलद्रोण्यां तु सचिवैः शायितं तं नराधिपम् ।
* हा मृतोऽयमिति ज्ञात्वा स्त्रियस्ताः [2] पर्यदेवयन् ॥ १६ ॥

शायितं ज्ञात्वा अनन्तरं च हा मृतोऽयं राजेति पर्यदेवयन्निति योजना ॥ १६ ॥

बाहूनुद्यम्य कृपणाः नेत्रप्रस्रवणैर्मुखैः ।
रुदन्त्यः शोकसन्तप्ताः [3] कृपणं पर्यदेवयन् ॥ १७ ॥

नेत्राणां प्रस्रवणं—अश्रुप्रवाहः येषु मुखेषु तानि तथा ॥ १७ ॥

हा महाराज! रामेण सततं प्रियवादिना ।
[4] विहीनाः सत्यसन्धेन किमर्थं विजहासि नः ॥ १८ ॥
† कैकेय्या दुष्ट[5]भावायाः राघवेण वियोजिताः ।
कथं [6] पतिघ्नया वत्स्यामः समीपे विधवा वयम् ॥ १९ ॥

पतिघ्नयेति । 'लक्षणे जायापत्योष्टक्' इति टक् ॥ १९ ॥

स हि नाथः [7] सदाऽस्माकं तव च प्रभुरात्मवान् ।
वनं रामो गतः श्रीमान् विहाय नृपतिश्रियम् ॥ २० ॥

---

* तैलनिवेशनकाले राजदर्शनाभावात्.... भूयोपि पर्यदेवयन्–गो. तावत्पर्यन्तं अपि पुनर्जीवेदयमिति प्रत्याशा लोकवदासीदिति भावो वा ॥ † कैकेय्याः हेतोरित्यर्थः । अस्य 'कैकेय्याः समीपे' इत्युत्तरार्धेनान्वयः ।

[1] संकलनं–ङ. [2] पर्यवारयन्–ङ. [3] करुणं–ङ. [4] विहीनः–ङ. [5] भावेन–ङ. [6] सपत्न्या–ङ. [7] स चास्मा–ङ.

त्वया तेन च वीरेण विना व्यसनमोहिताः ।
कथं वयं निवत्स्यामः कैकेय्या च विदूषिताः ॥ २१ ॥

विदूषिता इति । राज्यगर्वात् तिरस्कृता इति यावत् ॥२१॥

यया तु राजा रामश्च लक्ष्मणश्च महाबलः ।
सीतया सह संत्यक्ताः सा कमन्यं न हास्यति ॥ २२ ॥
ता बाष्पेण च संवीताः शोकेन विपुलेन च ।
व्यवेष्टन्त निरानन्दाः राघवस्य वरस्त्रियः ॥ २३ ॥
निशा [1] चन्द्रविहीनेव स्त्रीव भर्तृविवर्जिता ।
पुरी नाराजतायोध्या हीना राज्ञा महात्मना ॥ २४ ॥
बाष्पपर्याकुलजना हाहाभूतकुलाङ्गना ।
शून्यचत्वरवेश्मान्ता न बभ्राज * यथापुरम् ॥ २५ ॥

शून्यचत्वरेति । सम्मार्जनालेपनबल्यादिशून्येति यावत् ॥

गते तु शोकात् त्रिदिवं नराधिपे
महीतलस्थासु नृपाङ्गनासु च ।
निवृत्तचारः सहसा † गतो रविः
‡ प्रवृत्त[2]चारा रजनी ह्युपस्थिता ॥ २६ ॥

निवृत्तचारः—निवृत्तरश्मिप्रचार इति यावत् ॥ २६ ॥

§ ऋते तु पुत्राद् दहनं महीपतेः
न रोचयन्ते सुहृदः समागताः ।

---

* यथापुरं—यथापूर्वम् । † गतः—अस्तं गतः । ‡ प्रवृत्तचारा—प्रवृत्ततमःप्रचारा—गो. § रात्रावदहने पर्युषितप्रायश्चित्तादीनां कर्तव्यतापाताद् तदानीमेव दहनं कार्यमिति कैश्चित्प्रयतितमित्यनेन ज्ञायत इति गोविन्दराजः ॥

[1] नक्षत्रही—च. [2] तारा—ङ.

इतीव तस्मिन् शयने न्यवेशयन्
[1]विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २७ ॥

गतप्रभा द्यौरिव भास्करं विना
व्यपेतनक्षत्रगणेव शर्वरी ।
पुरी बभासे रहिता महात्मना
न *चास्रकण्ठाकुलमार्गचत्वरा ॥ २८ ॥

आस्रकण्ठेति । आकण्ठं धारारूपेण प्रवहद्भिः अस्रैः उपलक्षिताः कण्ठाः येषां ते तथा, तैराकुलानि मार्गाणि चत्वराणि यस्याः सा तथा ॥ २८ ॥

नराश्च नार्यश्च समेत्य सङ्घशः
विगर्हमाणा भरतस्य मातरम् ।
तदा नगर्यां नरदेवसंक्षये
बभूवुरार्ता न च शर्म लेभिरे ॥२९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षट्षष्टितमः सर्गः

---

† अलं(३०)मानः (?) सर्गः ॥ २९ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे षट्षष्टितमः सर्गः

---

* अस्रकण्ठैः–कण्ठस्तम्भितबाष्पैः–गो. † व्याख्यात्रास्मिन् सर्गे श्लोकसंख्या ३० इति निर्दिष्टा। परन्तु सर्वत्र एकोनत्रिंशदेवोपलभ्यते। तिलकेऽपि–'एकः श्लोकः अत्र सर्गे कतकसंख्यया भ्रष्ट इति ज्ञायते' इत्युक्तम् ॥

[1] निरीक्ष्य राजानमतीतदर्शनम्–ङ.

## सप्तषष्टितमः सर्गः

### [अराजकदोषवर्णनम्]

[1]आक्रन्दितनिरानन्दा सास्रकण्ठजनाकुला ।
अयोध्यायामवतता सा व्यतीयाय शर्वरी ॥ १ ॥

अथ मन्त्रिपुरोहितादिभिः संमन्त्रणं राजाभिषेकाय । *आक्रन्दितेत्यादि । मत्वर्थीयाजन्तः, †आक्रन्दितवती ; अत एव निरानन्दा च तथा । अयोध्यायां अवतता—दीर्घा ॥ १ ॥

व्यतीतायां तु शर्वर्यां आदित्यस्योदये ततः ।
समेत्य राजकर्तारः ‡सभामीयुर्द्विजातयः ॥ २ ॥

§राजकर्तारः—राजा कर्ता—साक्षात् शिक्षणकर्ता येषां ते तथा ; राज्ञोऽशेषकार्यकर्तारश्च तथा, मन्त्रिपुरोहितादय इति यावत् ॥ २ ॥

मार्कण्डेयोऽथ मौद्गल्यः वामदेवश्च काश्यपः ।
कात्यायनो गौतमश्च जाबालिश्च महायशाः ॥ ३ ॥
एते द्विजाः सहामात्यैः पृथग्वाचमुदीरयन् ।
वसिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम् ॥ ४ ॥

पृथग्वाचमिति । भिन्नभिन्नप्रस्थानतया राजकार्यविषये अब्रुवन् । एवञ्च कार्यसिद्ध्ययोगात् वसिष्ठमेव प्रमाणीकृत्य तमेवाभिमुखा बभूवुः ॥

अतीता शर्वरी ‖ [2]दुःखं या नो वर्षशतोपमा ।
अस्मिन् पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे ॥ ५ ॥

---

*आक्रन्दितेन हेतुना निरानन्दा—**गो.** †आक्रन्दशब्दात् इतज्विवक्षणे; मत्वर्थीयाजन्तत्वाश्रयणं व्यर्थमेव ॥ ‡सभा—वसिष्ठसभा । §राजकर्तारः—राजाभिषेककार्यकर्तारः—**गो.** वस्तुतस्तु राज्यनिर्वाहकाः अमात्यमन्त्रिप्रभृतय इत्यर्थः । ‖दुःखं इति क्रियाविशेषणम् ।

[1] आक्रन्दिता—**च.** [2] दुःखा—**ङ.**

पञ्चत्वं–मरणम् ॥ ५ ॥

स्वर्गतश्च महाराजः रामश्चारण्यमाश्रितः ।
लक्ष्मणश्चापि तेजस्वी रामेणैव गतः सह ॥ ६ ॥
उभौ भरतशत्रुघ्नौ केकयेषु परन्तपौ ।
पुरे राजगृहे रम्ये मातामहनिवेशने * ॥ ७ ॥

केकयेष्विति । अवान्तरभेदापेक्षया बहुवचनम् । राजगृहे–राजगृहाख्ये ॥ ७ ॥

इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम् ।
† अराजकं हि नो राष्ट्रं न विनाशमवाप्नुयात् ॥ ८ ॥

इह–अद्य उपदिष्टानां इक्ष्वाकूणां चतुर्णां कुमाराणां मध्ये कश्चित् राजा विधीयताम् । नः–अस्माकं राष्ट्रं अराजकं सत् यथा चेन्नाशं नाप्नुयात् तथा विधीयतामित्यन्वयः ॥ ८ ॥

नाराजके जनपदे विद्युन्माली महास्वनः ।
अभिवर्षति पर्जन्यः महीं दिव्येन वारिणा ॥ ९ ॥

विद्युन्माली–व्रीह्यादित्वादिनिः ॥ ९ ॥

नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्रः भार्या वा वर्तते वशे ॥ १० ॥

बीजमुष्टिः न प्रकीर्यत इति । क्षोभात् भयात्, फलप्राप्तौ लुण्टाकशङ्कया, प्रमाणाभावाच्चेत्याशयः । पितुर्वशे पुत्रो न वर्तते इत्यादिकं, अतिक्रमे दण्डयितृभावात् ॥ १० ॥

---

* वर्तेते इति शेषः–गो. † अत्र तिलके तु–"राजकं सद्धि राष्ट्रं नो नाशं नावाप्नुयाद्यथा । ' इति कतकसम्मतः पाठः । नः–अस्माकं राष्ट्रं राजक–राजयुतं सत् नाशं नाप्नुयाद्यथा तथा कश्चिद्राजा विधीयतामित्यन्वयः । हिर्वाक्यालङ्कारे" इत्यनूदितम् ।

[1]नाराजके धनं [2]चास्ति नास्ति भार्याऽप्यराजके ।
इदमत्याहितं चान्यत् कुतः [3]सत्यमराजके ॥ ११ ॥

*धनाद्यभावश्च (स्व)परिपालकाभावादेव । इदं—उक्तरूपं अत्याहितं—महद्भयं अराजके प्रथमं प्राप्नोति । अन्यत् सत्यमिति । पितापुत्रपतिभार्यारूपप्रधानसत्यात् अन्यत् सत्यं—क्रयविक्रयादिलक्षणं कुतः ? ॥ ११ ॥

†नाराजके जनपदे [4]केऽपि यन्ति सभां नराः ।
उद्यानानि च रम्याणि हृष्टाः ‡पुण्यगृहाणि च ॥ १२ ॥

यन्ति—प्राप्नुवन्ति ; न्यायविचारायेति शेषः । उद्यानादीनि च न यन्तीति—वस्त्राद्यपहारभयादेव ॥ १२ ॥

नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥ १३ ॥

सत्रं—यत्र सर्वे दीक्षिताः, सर्वे च ऋत्विजः तदेव, तत् नान्वासते—नानुतिष्ठन्ति § ॥ १३ ॥

नाराजके जनपदे महायज्ञेषु ‖ यज्वनः ।
ब्राह्मणा वसु[5]संपूर्णाः विसृजन्त्याप्तदक्षिणाः ॥ १४ ॥

---

* धनं नास्ति चोरभयात् । भार्या नास्ति बन्धुनिग्रहादिति भावः—**गो.** विटाद्युपद्रवादिति वा हेतुः । एवं धर्ममूलानां भार्यादीनामेवाभावे अन्यत् किं वा व्यवतिष्ठेतेत्याशयः ॥ † स्वमनीषितमेव न्याय्यं मन्येरन्निति भावः । कारयन्ति इति (**गो.**) पाठे—उद्यानादीनि न कारयन्ति । ‡ पुण्यगृहं—देवतायतनम्—**गो.** मठादिर्वा—**ती.** § विघ्नभयादिति शेषः । ‖ यज्वनः—यज्वानः वसुसंपन्ना अपि आप्तदक्षिणाः—भूरिदक्षिणाः न विसृजन्ति न दिशन्ति, आढ्यत्वव्यञ्जनेन दण्डभयात्—**गो.** भूरिदक्षिणाः यज्वनः—ऋत्विजः प्रति न विसृजन्ति—**ति.**

[1] अरा—**च.** [2] नास्ति—**च.** [3] सौख्य—**ङ.** [4] कारयन्ति—**ङ. च.** [5] संपन्नाः—**ङ.**

वसुभिः संपूर्णास्तथा। आप्तदक्षिणाः—यथाप्राप्तदक्षिणाः न विसृजन्ति ॥ १४ ॥

नाराजके*जनपदे प्रभूतनटनर्तकाः।
उत्सवाश्च समाजाश्च वर्धन्ते [1]राष्ट्रवर्धनाः ॥ १५ ॥

नटनर्तकाः—सूत्रधारतत्प्रणर्त्यशैलूषाः। उत्सवाः देवानाम्। समाजः—तत्तद्राष्ट्रकार्यसिद्धिप्रयोजनः सेन समवायः, उभयं राष्ट्रवर्धनं भवति, दृष्टादृष्टदुरितशान्तिद्वारेण ॥ १५ ॥

नाराजके जनपदे सिद्धार्था व्यवहारिणः।
कथाभिरनुरज्यन्ते कथाशीलाः कथाप्रियैः ॥ १६ ॥

* व्यवहारिणः—वादिनः। कथा—पुराणादिकथा। नानुरज्यन्त इति। पौराणिकैरिति शेषः ॥ १६ ॥

नाराजके जनपदे उद्यानानि समागताः।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥ १७ ॥
नाराजके जनपदे वाहनैः शीघ्रगामिभिः।
नरा निर्यान्त्यरण्यानि † नारीभिस्सह कामिनः ॥ १८ ॥
नाराजके जनपदे धनवन्तः सुरक्षिताः।
‡ शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥ १९ ॥
नाराजके जनपदे बद्धघण्टा विषाणिनः।
अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥ २० ॥

---

* व्यवहारिणः—कमप्यर्थमुद्दिश्य अन्योन्यं विवदमानाः सिद्धार्था न भवन्ति, निरूपणनयमकर्तुरभावात् उत्कोचप्राप्त्वाच्चेति भावः। .......कथाशीलाः वावदूका .... कथाभिः नानुरज्यन्ते—न तुष्यन्ति—तत्पारितोषिकादिप्रदराजाभावात्—गो. † अरण्यानि—वनभोजनाद्यर्थम्। ‡ एतेन राजनि सति विवृतद्वारा एव शेरते स्मेति भाति ॥

[1] दुष्प्रवर्धनाः—ङ.

विषाणिनः—प्रशस्तदन्तवन्तः । षष्टिः हायनाः येषां ते—षष्टिहायनाः ॥ २० ॥

नाराजके जनपदे * शरान् सततमस्यताम् ।
श्रूयते तलनिर्घोषः इष्वस्त्राणामुपासने ॥ २१ ॥
नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छन्ति क्षेममध्वानं † बहुपण्यसमाचिताः ॥ २२ ॥
नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनाऽऽत्मानं ‡ यत्र सायंगृहो मुनिः ॥ २३ ॥

एकः असहाय एव चरतीत्येकचरः ॥ २३ ॥

नाराजके जनपदे [1] योगक्षेमं प्रवर्तते ।
न चाप्यराजके सेना शत्रून् विषहते युधि ॥ २४ ॥
नाराजके जनपदे हृष्टैः परमवाजिभिः ।
नराः संयान्ति सहसा रथैश्च प्रतिमण्डितैः ॥ २५ ॥

प्रतिमण्डितैः—अलंकृतैः रथैः ॥ २५ ॥

नाराजके जनपदे नराः शास्त्रविशारदाः ।
संवदन्तोऽवतिष्ठन्ते वनेषूपवनेषु च ॥ २६ ॥

---

* अस्यतां—क्षिपतां । उपासने—अभ्यासे 'स्यादुपासनमभ्यासः' इत्यमरः । तलनिर्घोषः—ज्याकरतलनिर्घोषः—गो. सन्तोषात् करतलघोषो वा । † बहुपण्यैः समाचिताः—समृद्धाः, यद्वा पण्यानां क्रय्यद्रव्याणां समाचिताः—दशभाराः 'आचितो दशभारः स्यात्' इत्यमरः, बहवः पण्यसमाचिताः येषां ते तथा—गो. ‡ यस्मिन् देशे सायंकालो भवति तदेव गृहं यस्य—तादृशो वशी—जितेन्द्रियो मुनिः असहायः न चरितुं प्रभवति ॥

[1] योगक्षेमः—ङ.

नाराजके जनपदे माल्यमोदकदक्षिणाः ।
देवताऽभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥ २७ ॥

कल्प्यन्ते—प्रवर्त्यन्त इति यावत् ॥ २७ ॥

नाराजके जनपदे चन्दनागरुरूषिताः ।
राजपुत्रा विराजन्ते *वसन्त इव शाखिनः ॥ २८ ॥
यथा ह्यनुदका नद्यः यथा वाऽप्यतृणं वनम् ।
अगोपाला यथा गावः तथा राष्ट्रमराजकम् ॥ २९ ॥
ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं †विभावसोः ।
तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥ ३० ॥

रथस्य प्रज्ञानं—तत्स्थितिज्ञापकं, तथा विभावसोश्च धूमो ज्ञानं—तत्स्थितिज्ञापकम् । तेषां राजकर्तॄणां नः—अस्माकं यो राजा ध्वजः—अस्मु राज्यव्यवहारप्रतिष्ठापकः, सः इतो देवत्वं गतः ॥ ३० ॥

नाराजके जनपदे स्वकं भवति कस्यचित् ।
‡मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम् ॥ ३१ ॥
§ये हि संभिन्नमर्यादा नास्तिकाः छिन्नसंशयाः ।
तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥ ३२ ॥

ये हि संभिन्नमर्यादाः—उल्लङ्घितस्वस्वजातिवर्णाश्रममर्यादाः, अत एव पूर्वं राजदण्डनिपीडिताः—नास्तिकाः सन्ति, तेऽपि च इदानीं छिन्नसंशयाः—राजदण्डाशङ्कारहितास्सन्तः भवाय—प्रभवाय कल्पन्ते—समस्त[1]दैष्टिकपीडासमर्था भवन्तीत्यर्थः ॥ ३२ ॥

---

* वसन्ते शाखिनः—वृक्षा इव । † विभावसुः—अग्निः । ‡ प्रबलैः दुर्बलनाश इत्यर्थः । § छिन्नसंशयाः—कृत्याकृत्यविचारशून्याः राजदण्डनिपीडिताः भावाय—साधुत्वाय कल्पन्ते—योग्या भवन्ति, नृपे सतीति शेषः—ती.

[1] दैविक—ग.

यथा * दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥ ३३ ॥

शरीरस्य हिते दृष्टिः यथा नित्यमेव प्रवर्तते, एवं सत्यधर्मयोः † प्रभवः नरेन्द्रोऽपि राष्ट्रस्य हिते नित्यं प्रवर्तते ॥ ३३ ॥

राजा सत्यं च धर्मश्च ‡ राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ३४ ॥

कुलवतां—क्षेत्रबीजशुद्धिमतामिति यावत् ॥ ३४ ॥

यमो वैश्रवणः शक्रः वरुणश्च महाबलः ।
विशिष्यते नरेन्द्रेण वृत्तेन महता ततः ॥ ३५ ॥

[1]यम इत्यादि । यतो महता वृत्तेन—अशेषप्रजारक्षणरूपेण महता चरित्रेण नरेन्द्रो युक्तः, तत एव हेतोः § एकैकदिग्वर्तिप्रजारक्षणेभ्यो ‖ विशिष्यते—अतिशय्यते नरेन्द्रेण, यकि गुणश्छान्दसः ॥

अहो तम इवेदं स्यात् न प्रज्ञायेत किञ्चन ।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥ ३६ ॥

अहो इत्यादि । साध्वसाधुनी लोके विभजन् राजा चेन्न स्यात्, इदं—अराजकत्वं अहो तम एव स्यात् ॥ ३६ ॥

---

* इदं हस्तपादादीनामप्युपलक्षकम् । चक्षुस्तु प्रधानम् । चक्षुरादिकं खलु शरीररक्षणे सदा स्वयमेव जागरूकं वर्तत इत्यनुभवसिद्धम् । † प्रभवः—कारणम् । ‡ वर्णसांकर्यवारक इति वा । § यमस्य दण्डमात्रं, कुबेरस्य धनदत्वमेव, इन्द्रस्य पालनमेव, वरुणस्य सदाचारनियमनमेव । एतद्गुणचतुष्टययुक्तत्वान्नरेन्द्रेण यमादयो व्यावर्त्यन्त इत्यर्थः—गो. ‖ यमादयस्तु तत्तद्दिङ्मात्ररक्षकाः, राजा तु सर्वदिक्ष्वपि रक्षक इत्यर्थः ।

[1] यत—ग.

जीवत्यपि महाराजे तवैव वचनं वयम् ।
नातिक्रमामहे सर्वे वेलां प्राप्येव [1] सागरः * ॥ ३७ ॥

स नः समीक्ष्य, द्विजवर्य ! वृत्तं
नृपं विना राज्यमरण्यभूतम् ।
कुमारमिक्ष्वाकुसुतं [2] वरेण्यं
त्वमेव राजानमिहाभिषिञ्च ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तषष्टितमः सर्गः

---

हे द्विजवर्य ! स त्वं नः—अस्माकं वृत्तं—अराजकप्रमुषितं सर्वं कृत्यं वीक्ष्य, नृपं विना राज्यमप्यरण्यभूतं स्यादिति समीक्ष्य इक्ष्वाकुसुतं—दशरथतनयं वरेण्यं—श्रेष्ठं कुमारं त्वमेव राजानं निश्चित्य अभिषिञ्च। जल(३८)मानः सर्गः ॥ ३८ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे सप्तषष्टितमः सर्गः

---

## अष्टषष्टितमः सर्गः

### [दूतप्रेषणम्]

तेषां तद्वचनं श्रुत्वा वसिष्ठः प्रत्युवाच ह ।
† मित्रामात्य[3]जनान् सर्वान् ब्राह्मणांस्तानिदं वचः ॥१॥

एवममात्यप्रार्थितवसिष्ठेन भरत एव राजेति निश्चित्य तदानयनाय दूतप्रेषणम् । तेषामित्यादि । मित्रामात्यजनाः सुमन्त्रादयः । ब्राह्मणाः मार्कण्डेयादयः प्रागुक्ताः ॥ १ ॥

---

† इदानीं तु किमु वक्तव्यमिति भावः । † मित्रभूता अमात्याः—सुमन्त्रादयोऽष्टौ, ब्राह्मणाः—मन्त्रिणः वामदेवादयः—बालकाण्डे चतुर्थसर्गे उक्ताः ॥

[1] सागराः—ङ. [2] वदान्यं—ङ, तथान्यं—च. [3] गणान्—ङ.

यदसौ मातुलकुले [1] दत्तराज्यः पुरे सुखी ।
भरतो वसति भ्राता शत्रुघ्नेन [2] समन्वितः ॥ २ ॥
तच्छीघ्रं जवना दूता गच्छन्तु त्वरितैर्हयैः ।
आनेतुं भ्रातरौ वीरौ किं समीक्षामहे वयम् ॥ ३ ॥

यत्–यस्मात् राज्ञा कैकेयीवरेण भरतो दत्तराज्यः, यतश्चेदानीमसौ राजगृहाख्ये पुरे मातुलकुले वसति, तत्–तस्मात् तमानेतुं दूताः शीघ्रं गच्छन्तु । वयं किं समीक्षामहे–किं विचारयामः । राज्ञैव भरतराज्यस्य निश्चितत्वादिति शेषः ॥ २–३ ॥

गच्छन्त्विति ततः सर्वे वसिष्ठं वाक्यमब्रुवन् ।

वसिष्ठवाक्यमनुजानन्ति मन्त्रिणः–गच्छन्त्वित्यादि ॥

तेषां तद्वचनं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् ॥ ४ ॥
*एहि, सिद्धार्थ! विजय! जयन्ताशोक[3]नन्दन!
श्रूयतामितिकर्तव्यं सर्वानेव ब्रवीमि वः ॥ ५ ॥

सिद्धार्थादयः चत्वारो दूताः । मन्त्रिव्यतिरिक्तोऽसौ सिद्धार्थः । इतिकर्तव्यमिति । गच्छद्भिर्युष्माभिरनुष्ठेयकृत्यजातमित्यर्थः ॥ ४-५ ॥

---

* मन्त्रिव्यतिरिक्तनन्दनसहपाठात् नेमे मन्त्रिणः । 'पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः' इति वक्ष्यमाणत्वाच्च–गो. परन्तु प्रथमश्लोके अमात्यान् मंत्रिणश्चोवाच इति कथनात् मन्त्रिणामेव सतां दूतत्वमपि संभाव्येत । नन्दनस्यैकस्य तदा तत्सहगामितया पृथक् प्रेषणोपपत्तेश्च । अशोकस्य नन्दनः–पुत्रः इति वाऽर्थः । मन्त्रिपुत्रस्यापि प्राप्तवयस्कस्य मन्त्रित्वात् प्रेषणम् । साक्षात् राज्ञ एव आहूतव्यत्वात् मन्त्रिणामेव कीर्त्ये प्रेषणम् ।

[1] पुरे राजगृहे–ङ. दत्तराज्यः परं–च. [2] मुदान्वितः–च. [3] नाशन–ङ.

पुरं राजगृहं गत्वा शीघ्रं शीघ्रजवैर्हयैः ।
त्यक्तशोकैरिदं वाच्यः शासनात् भरतो मम ॥ ६ ॥

मम शासनात् भरतो वाच्य इति ॥ ६ ॥

पुरोहितः त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ७ ॥

कथं वाच्य इत्यतः–पुरोहित इत्यादि । अत्ययः—कालातिपातः तं प्राप्तं आत्ययिकं–'विनयादिभ्यष्ठक्' इति ठक्, तादृशं कृत्यमस्ति ; अतः त्वरमाणो निर्याहीति वाच्यमित्यनुकर्षः ॥ ७ ॥

मा चास्मै प्रोषितं रामं मा चास्मै पितरं मृतम् ।
भवन्तः शंसिषुर्गत्वा राघवाणामिमं *क्षयम् ॥ ८ ॥

मा शंसिषुरित्यन्वयः । राघवाणां इमं क्षयं–तेजःक्षयं स्त्रीमूलतया सुपुत्रवनवासादिलक्षणम् ॥ ८ ॥

कौशेयानि च वस्त्राणि भूषणानि वराणि च ।
क्षिप्रमादाय राज्ञश्च भरतस्य च गच्छत ॥ ९ ॥
दत्तपथ्यशना दूताः जग्मुः स्वं स्वं निवेशनम् ।
†केकयांस्ते गमिष्यन्तः हयानारुह्य सम्मतान् ॥ १० ॥

दत्तं पथ्यशनं–तदपेक्षितद्रव्यं येषां ते तथा । स्वं निवेशनं जग्मुः । स्त्रीबालादेः प्रयाणकथनाद्यर्थमिति शेषः ॥ १० ॥

---

* क्षयं-विपदम् । † केकयान् गमिष्यन्तः स्वं स्वं निवेशनं जग्मुरित्यन्वयः ।

ततः प्रास्थानिकं कृत्वा कार्यशेषमनन्तरम् ।
*वसिष्ठेनाभ्यनुज्ञाताः दूताः सन्त्वरिता ययुः ॥ ११ ॥

प्रास्थानिकं—प्रस्थानप्रयोजनं कार्यशेषं विशिष्टपाथेयादिसंपादनलक्षणम् ॥ ११ ॥

न्यन्तेनापरतालस्य प्रलम्बस्योत्तरं प्रति ।
[1]निषेवमाणास्ते जग्मुः नदीं मध्येन † मालिनीम् ॥ १२ ॥

न्यन्तेनेति । अपरतालस्य—तदाख्यस्य गिरेः न्यन्तेन—पश्चिमभागेन गत्वा, अथ प्रलम्बस्य—तदाख्यस्य उत्तरं—उत्तरप्रदेशं प्रति गत्वा, अथ मालिनीं नदीं मध्येनातीत्य तामुत्तरभागतो निषेवमाणास्सन्तः जग्मुः ॥

‡ते [2]हस्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखा ययुः ।
पाञ्चालदेशमासाद्य मध्येन कुरुजाङ्गलम् ॥ १३ ॥

ते हस्तिनपुरे गङ्गामित्यादि । प्रत्यक्—उदीचीं दिशं यान्तः ते पाञ्चालदेशमासाद्य तत्र हिमवत आग्नेयदिङ्मुखप्रवाहां गङ्गां हस्तिनपुरसमीपे तीर्त्वा प्रत्यङ्मुखाः सन्तः मध्येन § कुरुजाङ्गलं—जाङ्गलं—निर्जलप्रदेशः—कुरुदेशैकदेशवर्तिजाङ्गलस्तथा—कुरुजाङ्गलस्य मध्यमार्गमाश्रित्येत्यर्थः ; ' एनपा द्वितीया ' इति द्वितीया जाङ्गलशब्दात् ॥

सरांसि च सुपूर्णानि नदीश्च विमलोदकाः ।
निरीक्षमाणास्ते जग्मुः दूताः कार्यवशात् द्रुतम् ॥ १४ ॥

---

* पुनर्वसिष्ठेनाभ्यनुज्ञानं स्वविलम्बस्याल्पत्वं द्योतयितुं—गो. † सरय्वाः उपनदीयं, यस्यास्तीरे कण्वाश्रमोऽवर्तत । ‡ श्लोकद्वयमेकान्वयम् । § कुरुजाङ्गलं—कुरुदेशस्य पश्चिमभागे विद्यमानः वनमयः प्रदेशः ।

[1] निरीक्षमाणाः—ङ. [2] हास्तिनपुरे—ङ.

ते प्रसन्नोदकां दिव्यां नानाविहगसेविताम् ।
[1]उपातिजग्मुर्वेगेन शरदण्डां जनाकुलाम् ॥ १५ ॥

शरदण्डां—तदाख्यां नदीम् । उपातिजग्मुरिति । उपगम्य अतिक्रान्ता इत्यर्थः ॥ १५ ॥

निकूलवृक्षमासाद्य दिव्यं सत्योपयाचनम् ।
[2]अभिगम्याभिवाद्यं तं * कुलिङ्गां प्राविशन् पुरीम् ॥ १६ ॥

निकूलेत्यादि । शरदण्डायाः निकूलवृक्षं—पश्चिमतीरवर्तिवृक्षं ; दिव्यं—विशिष्टदेवताधिष्ठितं ; सत्योपयाचनं—सत्योपयाचनाख्यं, सत्यं उपयाचनं यस्मात्, अन्वर्थनामकत्वादिष्टप्रदं ; अत एव अभिवाद्यं—सर्वनमस्कार्यं तं वृक्षमभिगम्याभिवाद्य च कुलिङ्गाख्यां पुरीं प्राविशन् ॥ १६ ॥

अभिकालं ततः प्राप्य [3]ते बोधिभवनात् च्युताः ।
पितृपैतामहीं पुण्यां तेरुरिक्षुमतीं नदीम् ॥ १७ ॥

अभिकालं ग्रामं प्राप्य ततो † बोधिभवनं ग्रामं प्राप्य ततः च्युताः- निर्याताः इक्ष्वाकूणां पितृपैतामहीं पुण्यां इक्षुमतीं नदीं तेरुः । तथा च बालकाण्डे विश्वामित्रजनकयज्ञयात्रायामुक्तम् ॥ १७ ॥

अवेक्ष्याञ्जलिपानांश्च ब्राह्मणान् वेदपारगान् ।
ययुर्मध्येन बाह्लीकान् सुदामानं च पर्वतम् ॥ १८ ॥

---

* केकयदेशस्य दक्षिणतः कुरुक्षेत्रस्योत्तरतः सरस्वतीतीरे विद्यमानो देशः ।
† बोधिभवनात्—तदाख्यात् पर्वतात्—नदीमूलत्वोक्तेः—गो.

[1] अतीत्य जग्मुः—च. [2] अभिवाद्याभिवाद्यं—ङ. [3] तजोऽभिभवनात् च्युताम्, ततो योधिवनच्युताः—च.

*अञ्जलिपानान्—अब्भक्षान्—इक्षुमतीतीरवर्तिन इति शेषः। मध्येनेत्यादि। प्राग्वत् ॥ १८ ॥

विष्णोः पदं प्रेक्षमाणा [1]विपाशां चापि शाल्मलीम्।
नदीर्वापीस्तटाकानि पल्वलानि सरांसि च ॥ १९ ॥

सुदामपर्वतवर्तिनं विष्णोः पदं—पादमुद्राम्। विपाशां—नदीम्। शाल्मली—शुनकशाल्मली सिद्धिप्रदा ॥ १९ ॥

पश्यन्तो विविधांश्चापि सिंहव्याघ्रमृगद्विपान्।
ययुः पथाऽतिमहता शासनं भर्तुरीप्सवः ॥ २० ॥
ते श्रान्तवाहना दूताः विकृष्टेन पथा ततः।
गिरिव्रजं पुरवरं शीघ्रमासेदुरञ्जसा ॥ २१ ॥

विकृष्टेन—विप्रकृष्टेन अतिदूरेण सता पथा, हेतुना श्रान्तवाहनाः। गिरिव्रजं—केकयपुरं राजगृहपर्यायम् ॥ २१ ॥

भर्तुः प्रियार्थं कुलरक्षणार्थं
भर्तुश्च वंशस्य परिग्रहार्थम्।
अहेडमानास्त्वरया स्म दूताः
रात्र्यां तु ते तत्पुरमेव याताः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टषष्टितमः सर्गः

---

†भर्तुरिति। नियोक्तुर्वसिष्ठस्य शीघ्रगमनेन प्रीतिसंपादनार्थं; कुलस्य—मन्त्रिपुरोहितपौरप्रमुखराजोपजीविजनस्य रक्षणार्थं; भर्तुः—

---

*अञ्जलिपानान्—अञ्जलिप्रमाणजलमात्राहारान्—गो. इदं जलप्रमाणमात्रकथनं, अञ्जलिना पानस्य निषिद्धत्वात्। †भर्तुः दशरथस्य प्रियार्थं शीघ्रानीतभरतकृतौर्ध्वदैहिकादिना दशरथस्य परलोकप्राप्तिहेतुत्वात्—गो.

[1] विशालां—ङ.

दशरथस्य वंशस्य—परंपरागतराज्यस्य परिग्रहार्थं—भरतेन द्राक् स्वीकारार्थं च; अहेडमानाः-हेडृ अनादरे—उपेक्षारहिताः—विलम्बरहिताः, अत एव त्वरया युक्ताः दूतास्तु रात्र्यामेव—अस्तमनानन्तरमपि कियत्कालं गत्वा रात्र्यामेव तत्पुरं याताः। * जय(१६)मानः सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे अष्टषष्टितमः सर्गः

---

## एकोनसप्ततितमः सर्गः

[भरतदुस्स्वप्नदर्शनम्]

† यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् ।
भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ॥ १ ॥

एवं दूतप्रवेशदिने भरतस्य दुस्स्वप्नः । यामेवेत्यादि । यामेव रात्रिं प्राप्य दूताः पुरीं प्रविशन्ति स्मेति योजना । अयमिति । वक्ष्यमाणलक्षण इत्यर्थः ॥ १ ॥

व्युष्टामेव तु तां रात्रिं दृष्ट्वा तं स्वप्नमप्रियम् ।
पुत्रो राजाधिराजस्य सुभृशं पर्यतप्यत ॥ २ ॥

---

* अत्र श्लोकसंख्या विवदति । तिलकेऽपि 'अत्र कतकोक्तसंख्यारीत्या षट् श्लोकाः त्रुटिताः' इत्युक्तम् । † यामेव—यस्यामेव । सप्तम्यर्थे द्वितीया छान्दसी । तां—तस्याम्—गो: अत्यन्तसंयोगे द्वितीया वा । नगरस्यातिविस्तीर्णत्वात् सर्वरात्र्यां प्रयाणमुचितम् । अत एव स्वप्नं दृष्ट्वा भरते तं ब्रुवति सति दूताः प्रविशन्ति स्म इत्युत्तरसर्गारंभे वक्ष्यमाणं युज्यते । एवञ्च दूतानां नगरप्रवेशारंभकालादारभ्य वृत्तो वृत्तान्तः कथ्यतेऽत्र । पुरीमिति देशसामान्योपलक्षकं वा । पूर्वसर्गान्ते उक्तं गिरिव्रजं नाम पुरवरं केकयराजदेशसीमनि विद्यमानं नगरान्तरमेव । राज्यसीमानं प्राप्ता अपि त्वरया अहेडमानाः तत्पुरं—राजगृहं प्रत्येव याता इत्युक्तिरपि गतसर्गान्ते अत एव संगच्छते । एवञ्च दूता यदा तद्राज्यं प्रविष्टाः तदा भरतदुस्स्वप्नारंभः । दूताश्च रात्र्यां सर्वस्यामपि गच्छन्तः प्रभाते भरतदुस्स्वप्नकथनावसरे भरतं प्रापुरिति गम्यते । तामित्यपि तथैवेति ॥

तप्यमानं समाज्ञाय वयस्याः प्रियवादिनः ।
आयासं हि विनेष्यन्तः सभायां चक्रिरे कथाः ॥ ३ ॥

आयासं—दुस्स्वप्नदर्शनदुःखम् । विनेष्यन्तः—अपनेष्यन्त इति यावत् ॥ ३ ॥

वादयन्ति तथा *शान्तिं [1]लोलयन्त्यपि चापरे ।
नाटकान्यपरे [2]स्माहुः हास्यानि विविधानि च ॥ ४ ॥

आयासापनयनाय वीणादिकं वादयन्ति स्म । तथा तस्य शान्तिं—तूष्णीमवस्थानं लोलयन्ति स्म—चालयन्ति स्म, श्लोकाद्यर्थप्रश्नव्याख्यानादिव्याजेन । अपरे हास्यानि—हास्यरसप्रधानानि विविधानि नाटकान्याहुः स्म ॥ ४ ॥

स तैर्महात्मा भरतः सखिभिः प्रिय[3]वादिभिः ।
गोष्ठीहास्यानि कुर्वद्भिः न प्राहृष्यत राघवः ॥ ५ ॥

गोष्ठ्युचितानि हास्यानि—नर्माणि—गोष्ठीहास्यानि ॥ ५ ॥

तमब्रवीत् †प्रियसखः भरतं सखिभिर्वृतम् ।
सुहृद्भिः पर्युपासीनः किं, सखे! नानुमोदसे ॥ ६ ॥

प्रियसखः—अतिशयेन प्रियश्चासौ सखा च प्रियसखः—'राजाहस्सखिभ्यः....' इति टच्, सखिमात्रस्य प्रियत्वाविवादात् भूयोगतिर्विज्ञायते ॥ ६ ॥

एवं ब्रुवाणं सुहृदं भरतः प्रत्युवाच ह ।
शृणु त्वं यन्निमित्तं मे दैन्यमेतदुपागतम् ॥ ७ ॥

---

* शान्तिं—शान्तिमन्त्रादिकं वा । † प्रियसखः—अन्तरङ्गसुहृत्—गो.

[1] लासय—ङ. [2] प्राहुः—ङ. [3] बोधिभिः—ङ.

*स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजम् ।
पतन्तमद्रिशिखरात् कलुषे गोमयह्रदे ॥ ८ ॥
प्लवमानश्च मे दृष्टः स तस्मिन् गोमयह्रदे ।
पिबन्नञ्जलिना तैलं [1]हसन्नपि मुहुर्मुहुः ॥ ९ ॥

प्लवमानः—भेकादिवत् ॥ ९ ॥

ततस्तिलौदनं भुक्त्वा पुनः पुनरधश्शिराः ।
तैलेनाभ्यक्तसर्वाङ्गः तैलमेवावगाहत ॥ १० ॥

तिलमिश्रं ओदनं—तिलोदनम् । पिबन्नञ्जलिनेत्यादि तैलमेवावगाहत इत्यन्तं एकः स्वप्नः ॥ १० ॥

स्वप्नेऽपि †सागरं शुष्कं चन्द्रं च पतितं भुवि ।
‡उपरुद्धां च जगतीं तमसेव समावृताम् ॥ ११ ॥

स्वप्नदर्शनान्तरमथाग्रेऽपि । उपरुद्धां, असुररक्षोभिरिति शेषः ॥

औपवाह्यस्य नागस्य विषाणं शकलीकृतम् ।
सहसाऽपि च संशान्तं ज्वलितं जातवेदसम् ॥ १२ ॥

औपवाह्यः--राजवाहनार्हो दन्ती ॥ १२ ॥

§अवतीर्णां च पृथिवीं शुष्कांश्च विविधान् द्रुमान् ।
अहं पश्यामि विध्वस्तान् सधूमांश्चापि पर्वतान् ॥ १३ ॥

---

* स्वप्ने पितरं इत्यारभ्य गोमयह्रदे इत्यन्तमेकः स्वप्नः । पिबन्नित्यारभ्य अवगाहत इत्यन्तमपरः स्वप्नः इति युक्तम् । गोमयह्रदे इत्युक्त्वा तैलमेवावगाहत इत्यस्वारस्यप्रसंगात् । स्वप्नस्यापर्यनुयोज्यत्वेन समाधौ तु न किञ्चिदपि वक्तुं शक्यमिति । †द्वितीयान्तानां सर्वेषां 'अहं पश्यामि' इत्यनेनान्वयः । ‡तमसाऽऽवृतामिव उपरुद्धां—तिरोहिताम्–**गो.** §अवतीर्णां—अधः पतिताम्–**गो.**

[1] हसन्निव–ङ.

**पीठे कार्ष्णायसे चैनं निषण्णं कृष्णवाससम् ।**
**प्रहसन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ॥ १४ ॥**

कृष्णाश्च पिङ्गलाश्च तथा ॥ १४ ॥

**त्वरमाणश्च धर्मात्मा रक्तमाल्यानुलेपनः ।**
**रथेन खरयुक्तेन प्रयातो दक्षिणामुखः ॥ १५ ॥**
**[1] प्रहसन्तीव राजानं प्रमदा रक्तवासिनी ।**
**प्रकर्षन्ती मया दृष्टा राक्षसी विकृतानना ॥ १६ ॥**

प्रहसन्ती इव इति पदम् ॥ १६ ॥

**एवमेतन्मया दृष्टं * इमां रात्रिं भयावहाम् ।**
**† अहं रामोऽथवा राजा लक्ष्मणो वा मरिष्यति ॥ १७ ॥**

इमां रात्रिमिति । अस्यां रात्र्यामित्यर्थः । अहं मरिष्यामीति विपरिणामः कार्यः ॥ १७ ॥

**नरो यानेन यः स्वप्ने खरयुक्तेन याति हि ।**
**अचिरात्तस्य धूमाग्रं चितायां संप्रदृश्यते ॥ १८ ॥**

नरो यानेनेत्येतत् स्वप्नस्य प्रत्यक्षदर्शनात् । यथा—'स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति' इत्युपक्रम्य—'खरैः वराहयुक्तैर्याति' इति श्रुतिसिद्धत्वात् एतद्बलेन प्रागुक्तपितृखरयानफलावश्यंभावं निश्चिनोति । धूमाग्रं—धूमशिखा ॥ १८ ॥

---

* इमां रात्रिमिति पूर्ववत् (१ श्लो.) बोध्यम् ॥ † यद्यपि 'स्वप्ने पितरमद्राक्षं' इत्येवोक्तम्, अथापि अनिष्टस्य इतरेषु चिन्तनापेक्षया स्वस्मिन् चिन्तनं तन्मनस औदार्यादिकं सूचयति ।

[1] प्रहरन्तीव—ङ.

*एतन्निमित्तं दीनोऽहं †[1] न वचः प्रति पिप्रिये ।
शुष्यतीव च मे कण्ठः न स्वस्थमिव मे मनः ॥ १९ ॥

एतन्निमित्तमिति । विशिष्यानन्तरोक्तमित्यर्थः । दृष्ट्वेति शेषः । दीनोऽहं युष्माकं वचः प्रति—उद्दिश्य न पिप्रिये—न भृशं प्रीतो भवामि, प्रीङो यङन्ताल्लट्, अभ्यासगुणाभावादिश्छान्दसः ॥ १९ ॥

न पश्यामि भयस्थानं भयं चैवोपधारये ।
भ्रष्टश्च स्वरयोगो मे छाया चोपहता मम ॥ २० ॥
[2]जुगुप्स इव चात्मानं न च पश्यामि कारणम् ।

भयस्थानं—भयकारणं न पश्यामि, अथ च भयमुपधारये—अवशतो बिभेमि । छाया—शोभा । आत्मानं जुगुप्स इवेति । किंजन्माऽहमस्तीत्येवमात्मनि जुगुप्सा । कारणं—जुगुप्साकारणम् ॥ २० ॥

‡इमां च दुस्स्वप्नगतिं निशाम्य तां
अनेकरूपां अवितर्कितां पुरा ।
भयं महत्तद्धृदयान्न याति मे
विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकोनसप्ततितमः सर्गः

---

* एतन्निमित्तं—उक्तस्वप्नदर्शनहेतुना—गो. अस्यां व्याख्यायां दृष्ट्वेति नाध्याहार्यम् । † वचः युष्माकं न प्रतिपूजये—ति. अत्र कतकव्याख्याप्यनूदिता तिलके । न वचः प्रतिपूजये—न किञ्चित् वक्तुं शक्नोमीति तात्पर्यः ॥ न च वः— इति पाठे तु वः—युष्मान् न पूजये—मनोवैक्ल्याकुल्यादित्यर्थः ॥ ‡ स्वप्नश्च पूर्वचिन्तापुरस्कृतो न फलति, प्रत्यूषे च फलति सद्यः । यामविलम्बात् फलविलम्बः । फलं च द्रष्टुः दृष्टस्य तत्सम्बन्धिनो वा भविष्यति—गो.

[1] न च वः प्रतिपूजये—ङ. न वचः प्रतिपूजये—च. [2] जुगुप्सन्निव—ङ.

दुस्स्वप्नगतिं निशाम्येति । स्वदुस्स्वप्नानुभवमनुभूयेति यावत् । आकर(२१)मानः सर्गः ॥ २१ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे एकोनसप्ततितमः सर्गः

---

## सप्ततितमः सर्गः

### [भरतप्रस्थानम्]

भरते ब्रुवति स्वप्नं दूतास्ते क्लान्तवाहनाः ।
प्रविश्यासह्य[1]परिखं रम्यं राजगृहं पुरम् ॥ १ ॥

अथ सभायामेव भरतस्य दूतदर्शनसन्देशश्रवणादिपूर्वं स्वपुरप्रस्थानम् । भरत इत्यादि । *असह्या–दुस्सहा परिखा–तत्प्रदेशवर्तिप्राकारयन्त्रसन्नाहः यस्याः सा तथोक्ता ॥ १ ॥

समागम्य तु राज्ञा च राजपुत्रेण चार्चिताः ।
राज्ञः पादौ गृहीत्वा तु तमूचुर्भरतं वचः ॥ २ ॥

राज्ञा–केकयेन राजपुत्रेण–युधाजिता चार्चिताः स्वीयामात्यदत्तपदार्थोपस्थापनपुरस्सरतया समागम्य–सङ्गमपूर्वकयथोचितव्यवहारं कृत्वा राज्ञः–स्वीयस्य भरतस्य पादौ गृहीत्वा–नमस्कृत्य ॥ २ ॥

पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ३ ॥

†आत्ययिकं–कालात्ययं प्राप्तं आत्ययिकं कृत्यं त्वयैव कर्तव्यमस्तीति शेषः ॥ ३ ॥

---

* असह्यपरिघं–परैरप्रधृष्यपरिघं–**गो.** † आत्ययिकं–दुष्करं–अत्ययः कृच्छ्रं–**गो.**

[1] परिघं–ङ.

इमानि च महार्हाणि वस्त्राण्याभरणानि च ।
प्रतिगृह्य, विशालाक्ष! मातुलस्य च दापय ॥ ४ ॥

मातुलस्य—युधाजितः । दापयेति । तदर्थं प्रहितमिति शेषः ॥ ४ ॥

अत्र विंशतिकोट्यस्तु नृपतेर्मातुलस्य ते ।
दशकोट्यस्तु संपूर्णाः तथैव च, नृपात्मज! ॥ ५ ॥

तर्हि कियन्मया ग्राह्यं, कियन्मातुलस्य दापनीयमित्यत आह—अत्रेत्यादि । आहृतद्रव्य इत्यर्थः ॥ ५ ॥

प्रतिगृह्य तु तत्सर्वं स्वनुरक्तः सुहृज्जने ।
दूतानुवाच भरतः कामैस्संप्रतिपूज्य तान् ॥ ६ ॥

सुहृज्जने—मातुलादिरूपे । प्रदाप्येति शेषः ॥ ६ ॥

कच्चित् स कुशली राजा पिता दशरथो मम ।
[1]कच्चिच्चारोगता रामे लक्ष्मणे च महात्मनि ॥ ७ ॥

ज्येष्ठानुक्रमेण कुशलप्रश्नः—राजेत्यादि ॥ ७ ॥

आर्या च धर्मनिरता धर्मज्ञा [2]धर्मवादिनी ।
अरोगा चापि कौसल्या माता रामस्य धीमतः ॥ ८ ॥
कच्चित् सुमित्रा धर्मज्ञा जननी लक्ष्मणस्य या ।
शत्रुघ्नस्य च वीरस्य साऽरोगा चापि मध्यमा ॥ ९ ॥
आत्मकामा सदा चण्डी क्रोधना प्राज्ञमानिनी ।
अरोगा चापि मे माता कैकेयी किमुवाच ह ॥ १० ॥

---

[1] कच्चिच्चारोग्यता—ङ. [2] धर्मदर्शिनी—ङ.

स्वमातुः स्वभावानुवादपूर्वं तस्या आरोग्यं पृच्छति—* आत्मेत्यादि। आत्मप्रयोजनैकदृष्टिः—† आत्मकामा। प्राज्ञामात्मानं मन्यत इति—प्राज्ञमानिनी, 'मनः' इति णिनिः, 'क्यङ्मानिनोश्च' इति पुंवद्भावः ॥ १० ॥

एवमुक्तास्तु ते दूताः भरतेन महात्मना।
ऊचुः [1] संप्रश्रितं वाक्यं इदं तं भरतं तदा ॥ ११ ॥

संप्रश्रितमिति। सविनय—‡ संक्षिप्तमिति यावत्। विस्तरस्तु मिथ्यात्वतोऽशक्यवादः ॥ ११ ॥

कुशलास्ते, नरव्याघ्र! येषां कुशलमिच्छसि।
श्रीश्च त्वां वृणुते पद्मा युज्यतां चापि ते रथः ॥ १२ ॥

हे नरव्याघ्र! येषां त्वं कुशलमिच्छसि, तेषां कुशलमेव। तर्हि मम त्वरयाऽऽह्वानं किन्निमित्तं इति शङ्का न कर्तव्या त्वयाऽपि। § त्वामपि श्रीश्च वृणुते, ‖ पद्मा—तल्लक्षणा, श्रीरेव त्वां वृणुते। अतस्तवाप्यागमनेन न किञ्चिदनिष्टम्। अतो निश्शङ्कतया यात्रायै रथो युज्यताम् ॥ १२ ॥

---

* दुस्स्वप्नदर्शनदूतागमनाभ्यां, स्वमातुस्स्वभावानुस्मरणेन च, कैकेय्या यत्किञ्चिदत्याचरितं भवेदिति भरतस्य शङ्का समजनीति सूचयति—आत्मकामेत्यादिना ॥ † आत्मन्येव कामः यस्याः सा तथा, स्वार्थैकपरेत्यर्थः ॥ ‡ सविनयमूचुरित्यनेनानधिकभाषणमुक्तं, विनीता हि न बहु वदेयुः, इत्यभिप्रायेणोक्तं संक्षिप्तमिति ॥ § लक्ष्मीवरणोक्तिः अमङ्गलव्यावृत्त्यर्था, न तु राज्यश्रीप्राप्तिपरा ; राजमरणादिकं न वक्तव्यमिति वसिष्ठेनोक्तत्वात्–ती. परन्तु स्वेषामनृतवदनपरिहाराय एवं अर्थद्वयगर्भं वाक्यमुक्तं स्यादिति ॥ ‖ पद्महस्तेत्यर्थः। अर्श आद्यजन्तोऽयं शब्दः। श्रीरिति विशेष्यवाचकस्य प्रत्येकं सत्वादेवं व्याख्यातम् ॥

[1] सप्रश्रयं—ङ.

भरतश्चापि तान् दूतान् * एवमुक्तोऽभ्यभाषत ।
आपृच्छेऽहं महाराजं दूतास्सन्त्वरयन्ति माम् ॥ १३ ॥

दूता मां सन्त्वरयन्ति, अतो गच्छेयमिति महाराजं आपृच्छेऽहमिति दूतान् प्रत्यभाषत ॥ १३ ॥

एवमुक्त्वा तु तान् दूतान् भरतः पार्थिवात्मजः ।
दूतैस्सञ्चोदितो वाक्यं मातामहमुवाच ह ॥ १४ ॥

दूतैस्सञ्चोदित इति । 'तर्हि शीघ्रमापृच्छ' इत्येवमात्मना प्रेरित इत्यर्थः ॥ १४ ॥

राजन्! पितुर्गमिष्यामि सकाशं दूतचोदितः ।
पुनरप्यहमेष्यामि [1] यावन्मे त्वं स्मरिष्यसि ॥ १५ ॥

यावत्–यदा मे स्मरिष्यसि–मां स्मरिष्यसीति यावत्, 'अधीगर्थ' इति षष्ठी ॥ १५ ॥

भरतेनैवमुक्तस्तु नृपो मातामहस्तदा ।
तमुवाच शुभं वाक्यं शिरस्याघ्राय राघवम् ॥ १६ ॥
गच्छ तातानुजाने त्वां कैकेयीसुप्रजास्त्वया ।
मातरं कुशलं ब्रूयाः पितरं च, परन्तप! ॥ १७ ॥

† कैकेयीसुप्रजा इत्यादि कौसल्यासुप्रजा इत्यादिवत् ॥ १७ ॥

पुरोहितं च कुशलं ये चान्ये द्विजसत्तमाः ।
तौ च, तात! महेष्वासौ भ्रातरौ रामलक्ष्मणौ ‡ ॥ १८ ॥

---

* एवमुक्त इति । दूतैरिति शेषः ॥ † कैकेयीसुप्रजा इति समस्तं पदमित्यभिप्रेत्यैवं व्याख्यातम् । व्याख्यानान्तरेषु तु, एवं व्याख्याने 'त्वया' इत्यस्यानन्वयप्रसङ्गात्, त्वया कैकेयी सुप्रजा इति व्यासः कृतः । त्वयेतिस्थाने 'किल' इत्यादिपाठः स्यादाऽस्य व्याख्यातुः । ‡ एतदनन्तरं इतिकरणं द्रष्टव्यम् ।

[1] यदा मे–ङ. च.

तस्मै हस्त्युत्तमान् चित्रान् कम्बलानजिनानि च ।
[1]अभिसत्कृत्य कैकेयो भरताय धनं ददौ ॥ १९ ॥

तस्मै भरतायेति योजना । चित्राजिनचित्रकम्बलानि तद्देशोत्तमवस्त्राणि ॥ १९ ॥

रुक्मनिष्कसहस्रे द्वे षोडशाश्वशतानि च ।
सत्कृत्य कैकयीपुत्रं केकयो धनमादिशत् ॥ २० ॥

रुक्मनिष्कसहस्रे द्वे इति । द्विपपूर्वा इति यावत् । निष्कं-फलं, 'उरोभूषणे पले, दीनारेऽपि' इति, निष्कः-धनमिति, चित्रा-जिनाद्युक्तरूपमित्यर्थः ॥ २० ॥

तथाऽमात्यानभिप्रेतान् विश्वास्यांश्च गुणान्वितान् ।
ददावश्वपतिः क्षिप्रं भरतायानु[2]यायिनः ॥ २१ ॥

*तथाऽमात्यानिति । स्वीयानिति शेषः । विश्वास्यान्-विश्वासनीयान्, ऋहलोर्ण्यत् । अश्वपतिः-केकयः, तेषां कुलनाम-धेयम्, गजपत्यादिवत् ॥ २१ ॥

ऐरावतानैन्द्रशिरान् नागान् वै प्रियदर्शनान् ।
खरान् शीघ्रान् सुसंयुक्तान् मातुलोऽस्मै धनं ददौ ॥ २२ ॥

इरावत्पर्वतभवाः †ऐरावताः, तथा इन्द्रशिरःपर्वतभवाः ऐन्द्र-शिराः नागाः । न नामनि विप्रतिपत्तिरिति इन्द्रशिरेत्यकारान्तं प्रातिपदिकम् ॥ २२ ॥

---

* अमा-सह प्राणान् त्यजन्तीत्यमात्याः, तान्-गो. अङ्गरक्षकविशेषानिति भावः । सह इत्यर्थकं 'अमा' इत्यव्ययम् ॥ † ऐरावतकुलोद्भवान् वा-ति.

[1] सत्कृत्य राजा-ङ. [2] जीविनः-ङ.

[1] अन्तःपुरेऽतिसंवृद्धान् व्याघ्रवीर्य[2]बलोपमान् ।
दंष्ट्रायुधान् महाकायान् शुनश्चोपायनं ददौ ॥ २३ ॥

अतिसंवृद्धाः—अत्यन्तं विवर्धिताः ; यद्वीर्यबलविषये व्याघ्रवीर्यबले एवोपमा येषां ते तथा ॥ २३ ॥

[3] रथान् मण्डलचक्रांश्च योजयित्वा परश्शतम् ।
उष्ट्रगोऽश्वखरैर्भृत्याः भरतं यान्तमन्वयुः ॥ २४ ॥

मण्डलाकारतया रथप्रवर्तनसाधनं चक्रं मण्डलचक्रं, चतुर्दिक्चक्रमध्यस्थं—यथाऽस्माभिः काञ्चयादावनुभूयते—तद्युक्तस्तथा ; मत्वर्थीयाजन्तः । उष्ट्रादिभिर्युक्ता भृत्या इति । मातुलप्रेरिता इति शेषः ॥२४॥

स दत्तं केकयेन्द्रेण धनं तन्नाभ्यनन्दत ।
भरतः केकयीपुत्रो गमनत्वरया तदा ॥ २५ ॥

दत्तं धनं नाभ्यनन्दतेति किमल्पमत्या ? नेत्याह——गमनत्वरयेति । दत्तोपलालनावकाशाभावादेवेत्यर्थः ॥ २५ ॥

बभूव ह्यस्य हृदये चिन्ता सुमहती तदा ।
त्वरया चापि दूतानां स्वप्नस्यापि च दर्शनात् ॥ २६ ॥
स स्ववेश्म व्यतिक्रम्य नरनागाश्वसंवृतम् ।
* प्रपेदे सुमहच्छ्रीमान् आविवेशानिवारितः ॥ २७ ॥

---

* तथा च राज्ञा मातुलेन च स्वगृह एव सत्कृतः मातामह्यादिदर्शनार्थं अन्तःपुरं गतवानिति बोध्यम् । अथ वा भरतस्य दुःस्वप्नदर्शनदूतागमनवृत्तान्तश्रवणेन केकयमातुलौ स्वगृहमेवागताविति द्रष्टव्यम् । सुमहच्छ्रीमान्-सुमहाश्रीमान्—गो.

[1] अयं श्लोकः तिलकरीत्या 'तस्मै हस्त्युत्तमान्' इत्येतदनन्तरं योज्यः । [2] बलान्वितान्—ङ. [3] अयं श्लोकः 'स मातामहमापृच्छ्य' इत्युत्तरश्लोकानन्तरमेव सर्वत्र दृश्यते ।

स इति । एवं सभायां संप्राप्तनियोगजीवाजीवधनबलोपेतः स्ववेश्म व्यतिक्रम्येति । यात्रापरिकरसन्नाहाय स्ववेश्माभिगम्य कृत-सन्नाहः स्ववेश्मनो निर्गत्य राजमार्गं प्रपेदे । 'सुमहच्छ्रीमान्' इत्येकं पदम् । पुंवद्भावानन्तरं मतुप् ॥ २७ ॥

स मातामहमापृच्छय मातुलं च युधाजितम् ।
रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ॥ २८ ॥

बलेन गुप्तो भरतो महात्मा
　* सहार्यकस्यात्मसमैरमात्यैः ।
आदाय शत्रुघ्नमपेतशत्रुः
　गृहाद्ययौ सिद्ध इवेन्द्रलोकात् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्ततितमः सर्गः

---

बलेन—स्वीयेन मातुलीयेन च । भार्यया सहितः सभार्यकः

काल(३१)मानः ? सर्गः ॥ ३० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्ततितमः सर्गः

---

## एकसप्ततितमः सर्गः

[अयोध्याप्रवेशः]

स प्राङ्मुखो राजगृहात् अभिनिर्याय राघवः ।
ततः सुदामां द्युतिमान् † संतीर्यावेक्ष्य तां नदीम् ॥ १ ॥

---

* आर्यकस्य—मातामहस्य—गो.　　† नदीमवेक्ष्य तां संतीर्य—गो.

अथ निर्यातस्य भरतस्य निश्शोभनिजपुरप्रवेशः । स इत्यादि । सुदामां नदीं तीर्त्वा । एवमादिजनपदग्रामभेदानामिहोपदेशात् दूतमार्गार्थिणां अनुपदेशाच्चेदं मार्गान्तरं चतुरङ्गबलगमनोचितम् । नेह कुरुजाङ्गलादिकष्टस्थलमस्ति । दूतास्तु ऋजुमेव केवलं दुर्गममप्याश्रित्य कान्तारमार्गं गताः द्राक् गिरिव्रजप्राप्तय इति ज्ञेयम् ॥

ह्लादिनीं दूरपारां च प्रत्यक्स्रोतस्तरङ्गिणीम् ।
शतद्रूमतरच्छ्रीमान् नदीमिक्ष्वाकुनन्दनः ॥ २ ॥

दूरे पारं—अपरं तीरं यस्याः सा तथा, तां ह्लादिनीं नदीं प्रत्यक्स्रोतस्तरङ्गिणीं—पश्चिमप्रवाहनदीं शतद्र्वाख्याम् ॥ २ ॥

*[1]ऐलाधानीं नदीं तीर्त्वा प्राप्य चापर[2]पर्पटान् ।
शिलामाकुर्वतीं तीर्त्वा आग्नेयं शल्य[3]कर्तनम् ॥ ३ ॥
सत्यसन्धः शुचिः श्रीमान् प्रेक्षमाणः शिलावहाम् ।
अत्ययात् स महाशैलान् वनं चैत्ररथं प्रति ॥ ४ ॥

---

* एलधाने—एलधानग्रामे । अपरपर्पटान्—अपरपर्पटाख्यदेशविशेषान् । शिलामाकुर्वतीं—शिलामासमन्ताद् कुर्वतीं, शिलाकर्षणस्वभावामित्यर्थः, नदीम् । आग्नेयं शल्यकर्तनमिति ग्रामद्वयम् । शिलावहां संप्रेक्षमाणः चैत्ररथं नाम वनं लक्षीकृत्य महाशैलानत्ययात्—**ती.** एलानां—एलकानां आधानं—उत्पत्तिस्थानं, तद्वत्त्वादेलाधानाख्ये नगरे नदीं—पूर्वोक्तां शतद्रूं—तीर्त्वेत्यनुवादः । अपरपर्पटान्—पर्पटानामदूरभवो ग्रामः पर्पटः, पर्पटाः—ओषधिविशेषाः.......पूर्वपर्पटा अपरपर्पटाश्चेति ग्रामद्वयमस्ति ; तत्रापरपर्पटान् विश्रान्त्यर्थं प्राप्य, शिलामाकुर्वतीं—शिलाकर्षणस्वभावां अत एव शिलावहामित्यन्वर्थसंज्ञां नदीं तीर्त्वा, तस्या आग्नेय्यां दिशि भवं आग्नेयं, शल्यकर्तनं नाम नगरं प्रेक्षमाणस्सन् अत्ययात्—**गो.**

[1] उपधाने—एलाधाने—ङ. ऐलधाने—ङ. च. [2] पर्वतान्—ङ. [3] कर्षणम्—ङ.

ऐलधानीं—तदाख्याम् । अपरपर्पटान्—जनपदविशेषान् अन्वर्थनामकान् । शिलां–शिलानदीम् । आकुर्वतीं नदीं । आकुर्वत्या आग्नेयदिग्गतं शल्यकर्तनं—तदोषध्युपेतं देशम् । शिलावहा च नदी । महाशैलानतीत्य चैत्ररथाख्यं वनं प्रति अयादिति सम्बन्धः ॥ ४ ॥

सरस्वतीं च *गङ्गां च युग्मेन प्रत्यपद्यत ।
†[1] उत्तरान् वीरमत्स्यांश्च भारुण्डं प्राविशद्वनम् ॥ ५ ॥

सरस्वतीं गङ्गां—'सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी । तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं तु शुभोदकाः' इत्युक्तः पश्चिम-गङ्गाप्रवाहात्मा सिन्धुरेव गङ्गेत्युच्यते, यत्र ते द्वे युग्मे मिलिते तत्र ते प्रतिपद्य ततो वीरमत्स्यान् देशानुत्तरान् देशान्, ततो भारुण्डाख्यं वनं प्राविशत् ॥ ५ ॥

‡वेगिनीं च कुलिङ्गाख्यां ह्रादिनीं पर्वतावृताम् ।
यमुनां प्राप्य संतीर्णः बलमाश्वासयत्तदा ॥ ६ ॥

वेगिन्यादिविशेषणा कुलिङ्गाख्या या नदी, तां सन्तीर्णः, यमुनां प्राप्य बलमाश्वासयादिति योजना ॥ ६ ॥

---

*गङ्गां–सिन्धुं युग्मेन सङ्गमेन–**ती.** गङ्गाख्यां काञ्चिन्नदीं पश्चिमसमुद्रगामिनीं, गङ्गास्रोतोभेदं वा—युग्मेन–द्वन्द्वतया पार्श्वद्वये प्रवहन्तीमिति शेषः–**गो.** युग्मेन—दिनद्वयेनेति वा । †वीरमत्स्यानां—वीरमत्स्याख्यदेशानां उत्तरं भारुण्डं–**गो.** वीरमत्स्यानां उत्तरान्–उत्तरप्रदेशान्–**ती.** (प्राप्येति शेषः) । ‡वेगिनीं—वेगयुक्तां, ह्रादिनीं—सन्तोषकारिणीं, पर्वतैरावृतां कुलिङ्गाख्यां नदीं यमुनां प्राप्य सन्तीर्णः यमुनासमीपे सन्तीर्णः इत्यर्थः ; अन्यत्रातिवेगत्वात् अन्यत्र पर्वतावृतत्वाच्चेति भावः–**गो.**

[1] उत्तरान् वीरमत्स्यानां–ङ. च. उत्तरं वीरमत्स्यानां–ङ.

शीतीकृत्य तु गात्राणि [1] समाश्वास्य च वाजिनः ।
तत्र स्नात्वा च पीत्वा च * प्रायादादाय चोदकम् ॥ ७ ॥

शीतीकृत्येति । स्नानपानादिनेति शेषः । समाश्वास्येति । छायायां घासदानेनेति शेषः । उदकमादायेति । तीर्थबुद्ध्येति शेषः ॥

राजपुत्रो महारण्यमनभीक्ष्णोपसेवितम् ।
भद्रो भद्रेण यानेन † [2] मेरुप्रख्यमथात्ययात् ॥ ८ ॥

अनभीक्ष्णोपसेवितं—मुहुरसंचरितम् । भद्रेण—प्रशस्तेन रथेनेति यावत् । मेरुप्रख्यं—देशम् ॥ ८ ॥

‡ भागीरथीं दुष्प्रतरां [3] अशुंधाने महानदीम् ।
[4] अपश्यद्राघवस्तूर्णं प्राग्वटे विश्रुते पुरे ॥ ९ ॥

अशुन्धाने ग्रामे महानदीं गङ्गामपश्यत् ॥ ९ ॥

[5] स ततः प्राग्वटे तीर्त्वा समायात् कुटिकोष्ठिकाम् ।
सबलस्तां स तीर्त्वाऽथ समायाद्धर्मवर्धनम् ॥ १० ॥

ततः प्राग्वटे पुरे गङ्गां तीर्त्वा । कुटिकोष्ठिकां नदीम् । धर्मवर्धनं ग्रामम् ॥ १० ॥

---

* उत्तरत्र गन्तव्यदेशस्य निर्जलदेशत्वात् तत्र पानार्थमुदकमादाय च प्रायात्—गो. —अत्र समाश्वास्येत्यादिना एकरात्रिवासः प्रतीयते । † 'मारुतः खमिवात्ययात्' इति पाठे, भद्रयानविशिष्टत्वेन तादृशदुर्गमारण्यमपि सुलभेनात्ययादित्यर्थे स दृष्टान्तः । ‡ अशुन्धाने नगरे दुष्प्रतरां भागीरथीं विश्रुते—तरणस्थलत्वेन प्रसिद्धे प्राग्वटे पुरे उपायात्—आगच्छत्—तत्तरणार्थमिति शेषः—गो. अंशुधाने—अंशुधानाख्यदेशे प्राग्वट-पुरे—ती.

[1] क्रान्तानाश्वास्य—ङ. [2] मारुतः खमिवात्ययात्—ङ. च. [3] अंशुधाने—ङ. च. [4] उपाया—ङ. च. [5] स गङ्गां—ङ.

तोरणं दक्षिणार्धेन जम्बूप्रस्थमुपागमत् ।
वरूथं च ययौ रम्यं ग्रामं दशरथात्मजः ॥ ११ ॥

तोरणं—तद्ग्रामस्य दक्षिणार्धेन—दक्षिणभागेन जम्बूप्रस्थं ग्राममुपागमत् । वरूथं—वरूथाख्यम् ॥ ११ ॥

[1]तत्र रम्ये वने *वासं कृत्वाऽसौ प्राङ्मुखो ययौ ।
उद्यानमुज्जिहीनायाः प्रियका यत्र पादपाः ॥ १२ ॥

उज्जिहीनाया नगर्याः । यत्र—उद्याने । प्रियकाः—असनाः ॥ १२ ॥

†[2]सालांस्तु प्रियकान् प्राप्य शीघ्रानास्थाय वाजिनः ।
‡अनुज्ञाप्याथ भरतः वाहिनीं त्वरितो ययौ ॥ १३ ॥

प्रियकान् सालान्—प्रियकवृक्षान, 'अनोकहः कुटः सालः'। शीघ्रान् वाजिनः रथे आस्थाय—संयोज्य । एवं व्याख्या तु 'रथे सारथिमब्रवीत्' इति वक्ष्यमाणत्वात् । अनुज्ञाप्य वाहिनीमिति । उज्जिहानाया अर्वाक् स्वदेशत्वान्निर्भयतः शनैरागम्यतामिति अनुज्ञाप्य स्वयं त्वरितो ययौ ॥ १३ ॥

§वासं कृत्वा सर्वतीर्थे तीर्त्वा[3] चोत्तानिकां नदीम् ।
अन्या नदीश्च विविधाः ‖ पार्वतीयैस्तुरङ्गमैः[4] ॥ १४ ॥

---

* अत्राप्येकरात्रिवासः विवक्षितः । गोविन्दराजीयेऽप्येवमेव । †सालान्—वृक्षान्, 'अनोकहः कुटः सालः' इत्यमरः, पूर्वोक्तवनस्थान् प्रियकवृक्षान् प्राप्य—गो. ‡अनन्तरसर्गस्य ९ श्लोको द्रष्टव्यः । §अत्राप्येकरात्रिवासः विवक्षितः । ‖ पर्वतदेशोत्पन्नैः,—तीर्त्वेत्यनुषङ्गः—गो. पर्वतोत्पन्नैः—ती.

[1] एतदारभ्य अर्धत्रयं नास्ति-झ. [2] स तांस्तु-ङ. च. [3] चोत्तरगां-ङ. च. [4] एतदनन्तरं—हस्तिपृष्ठकमासाद्य कुटिकामत्यवर्तत। ततार च नरव्याघ्रः लौहित्ये स कपीवतीम्—इत्यधिकं-ङ.

सर्वतीर्थे ग्रामे। अत्रैकं प्रक्षिप्तं श्लोकं *परो व्याकरोत् ॥ १४ ॥

एकसाले स्थाणुमतीं विनते गोमतीं नदीम्[1] ।
कालिङ्गनगरे चापि प्राप्य सालवनं तथा ॥ १५ ॥
[2]भरतः क्षिप्रमागच्छत् सुपरिश्रान्तवाहनः ।
†वनं च समतीत्याशु ‡शर्वर्यामरुणोदये ॥ १६ ॥
अयोध्यां मनुना राज्ञा निर्मितां संददर्श ह ।
तां पुरीं पुरुषव्याघ्रः §सप्तरात्रोषितः पथि ॥ १७ ॥
अयोध्यामग्रतो दृष्ट्वा सारथिं वाक्यमब्रवीत् ।
एषा नाति‖प्रतीता मे पुण्योद्याना यशस्विनी ॥ १८ ॥
अयोध्या दृश्यते दूरात्, सारथे! पाण्डुमृत्तिका ।

नातिप्रतीता—नातिप्रकाशा, 'सुप्सुपा' इति समासः नञापि भवति। पाण्डुमृत्तिकेति। सुधाधवलेति यावत् ॥ १८ ॥

---

* महेश्वरतीर्थः, गोविन्दराजो वा। श्लोकश्चाधस्तात् पूर्वपुटे दत्तः। 'हस्तिपृष्ठवदुन्नतत्वात् हस्तिपृष्ठकाख्यं ग्राममासाद्य कुटिकां नदीमत्यवर्तत—हस्तिपृष्ठकसमीपे कुटिकामतरदित्यर्थः। लौहित्ये—लौहितमृत्त्वात् लौहित्यनाम्नि नगरे कपीवतीं—बहुकपिमत्त्वात्तन्नाम्नीं नदीम्'—**गो.** हस्तिपृष्ठकमासाद्य—गजपृष्ठमारुह्य कुटिकामत्यवर्तत—**ती.** इतः गजेन यानमेव तीर्थेन समर्थ्यते। परन्तु उत्तरत्र सारथिं प्रति भरतवचनदर्शनात् इदं चिन्तनीयम्। † वनं—सालवनम्। ‡ अनेन इतररात्रिवत् नोषितवान्, नगरस्य सन्निहितत्वात् अविश्रम्य रात्रावपि प्रयाणं कृतवानिति गम्यते। अत एव 'सुपरिश्रान्तवाहनः' इत्युक्तम्। § दूतैः विषयनिवेदनानन्तरं सपरिवारस्य भरतस्य प्रयाणसन्नाहेन तद्दिनार्धकांशः क्षपितः स्यादेव। अतश्च 'युग्मेन' (५) इति पूर्णदिनद्वयं कथितम्। तेन च रात्रित्रयनिवृत्तिः कथिता। चतुर्थी रात्रिः ६–७ श्लोकयोः, पञ्चमी १२ श्लोके, षष्ठी १४ श्लोके, सप्तमी च रात्रिः १६ श्लोके च कथितेति भाति। ‖ प्रतीता—सन्तुष्टा—**गो.**

[1] एतदनन्तरं—व्यपायाद्राघवस्तूर्णं तीर्त्वा शोणां महानदीम्—इत्यधिकं—**ङ.**
[2] इदमर्धं नास्ति—**ङ.**

यज्वभिर्गुणसंपन्नैः ब्राह्मणैर्वेदपारगैः ॥ १९ ॥
भूयिष्ठमृद्धैराकीर्णा राजर्षिपरिपालिता ।
अयोध्यायां पुरा शब्दः श्रूयते तुमुलो महान् ॥ २० ॥
समन्तान्नरनारीणां तमद्य न शृणोम्यहम् ।
उद्यानानि हि सायाह्ने क्रीडित्वोपरतैर्नरैः ॥ २१ ॥
समन्ताद्विप्रधावद्भिः प्रकाशन्ते [1]ममान्यदा ।
तान्यद्यानुरुदन्तीव परित्यक्तानि कामिभिः ॥ २२ ॥

सायाह्न इति । *गत्वेति शेषः । क्रीडित्वेति । रात्राविति शेषः । विप्रधावद्भिः—गच्छद्भिः, प्रातरिति शेषः ॥ २१-२२ ॥

अरण्यभूतेव पुरी, सारथे! प्रतिभाति मे ।
न ह्यत्र यानैर्दृश्यन्ते न गर्जन्ति च वाजिभिः ॥ २३ ॥
निर्यान्तो वाऽभियान्तो वा नरमुख्या यथापुरम् ।

यानैः—शिबिकादिभिः । निर्यान्तः—निर्गच्छन्तः । अभियान्तः—प्रविशन्तः ॥ २३ ॥

उद्यानानि पुरा भान्ति मत्तप्रमुदितानि च ॥ २४ ॥
जनानां रतिसंयोगेष्वत्यन्तगुणवन्ति च ।

मत्तप्रमुदितानीति । मत्तप्रमुदितभृङ्गकोकिलादिपक्षिमन्ति तथा, मिथुनवन्तीत्यप्यर्थः ॥ २४ ॥

तान्येतान्यद्य पश्यामि निरानन्दानि सर्वशः ॥ २५ ॥
†स्रस्तपर्णैरनुपथं विक्रोशद्भिरिव द्रुमैः ।

---

* भरतेन अरुणोदयकाल एव नगरप्रवेशात् (१६ श्लो.) एवं व्याख्यानम् ।
† द्रुमाणां जलसेचनाद्यभावात् नगरशोधनाद्यकरणात् स्रस्तपर्णत्वम् । अथ वा 'अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः' इति रामप्रवासे वृक्षाणामपि दुःखात् स्रस्तपर्णत्वम् । पर्णानां स्रंसनेन ते रुदन्तीव चासन् ॥

[1] ममान्यथा—ङ.

नाद्यापि श्रूयते शब्दः मत्तानां मृगपक्षिणाम् ॥ २६ ॥
संरक्तां मधुरां वाणीं कलं व्याहरतां [1] बहु ।
चन्दनागरु[2] संपृक्तः धूपसंमूर्छितोऽतुलः ॥ २७ ॥
प्रवाति पवनः श्रीमान् किन्नु नाद्य यथापुरम्!

सम्मूर्छितः—व्याप्तः ॥ २७ ॥

भेरीमृदङ्गवीणानां कोणसङ्घट्टितः पुनः ॥ २८ ॥
किमद्य शब्दो विरतः *सदा [3] दीनगतिः पुरा!

कोणसङ्घट्टितः—सङ्घटित इति यावत्। भेर्यादिवादनदण्डः—कोणः। विरतः—उपरतः। अत एव—सदा दीनगतिः। पुरा—पुरस्तात्, अनुभूयत इति शेषः ॥ २८ ॥

अनिष्टानि च †पापानि पश्यामि विविधानि च ॥ २९ ॥
निमित्तान्यमनोज्ञानि तेन सीदति मे मनः।

अनिष्टानि—अनिष्टसूचकानि। पापानि—अशुभसूचकानि। अमनोज्ञानि—दर्शनमात्रेण दुःखकराणि ॥ २९ ॥

सर्वथा कुशलं, ‡सूत! दुर्लभं मम बन्धुषु ॥ ३० ॥
तथा ह्यसति सम्मोहे हृदयं सीदतीव मे।

असत्यपि सम्मोहे—तत्कारणे ॥ ३० ॥

---

*पुरा अदीनगतिः शब्दः अद्य पुनः किमर्थं विरतः—गो. †पापानि—क्रूराणि—गो. ‡एवं भरते बहु व्याहरत्यपि सूतः कुतः प्रतिवचनं न ददातीत्याशङ्कय—त्वरया गच्छता भरतेनोपर्युपरि नूतनदृश्यानामपि त्वरया कथयितव्यत्वात् मध्ये सूतप्रतिवचनस्य नावसरः—इति केचित् समादधते। परन्तु राजगृहात् मातुलीयरथेनैव भरतागमनात्, सारथिरपि मातुलदेशीयः, अत एव अपरिचितविषयः स्यादित्यपि स्मरणीयमत्र। ३३ श्लोके 'सूतमश्वपतेः' इति स्पष्टमेवोच्यते। दूतास्तु भरताह्वानायागताः, अश्वैनैवागच्छन्; न तु रथेन ॥

[1] मुहुः—ङ.  [2] संपृक्तः—ङ. च.  [3] ऽदीनगतिः—ङ.

विषण्णः श्रान्तहृदयः त्रस्तः [1]स लुलितेन्द्रियः ॥ ३१ ॥
भरतः प्रविवेशाशु पुरीमिक्ष्वाकुपालिताम् ।

विषण्णः—दीनः । श्रान्तहृदयः—खिन्नचित्तः । लुलितं—क्षुभितम् ॥ ३१ ॥

*द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः ॥ ३२ ॥
†द्वास्स्थैरुत्थाय विजयं पृष्टस्तैः सहितो ययौ ।

वैजयन्तेन—इन्द्रप्रासादतुल्यप्रासादवता द्वारेणोपलक्षिताम् । विजयं पृष्टः—कृतविजयप्रश्नः ॥ ३२ ॥

‡स त्वनेकाग्रहृदयः द्वास्स्थं प्रत्यर्च्य तं जनम् ॥ ३३ ॥
सूतमश्वपतेः क्लान्तं अब्रवीत्तत्र राघवः ।

अनेकाग्रहृदयः—अस्वस्थचित्तः । द्वास्स्थं जनं—दौवारिकं । प्रत्यर्च्य—सोपचारं निवर्त्य । अश्वपतेः—केकयस्य । तत्र—तदा ॥ ३३ ॥

किमहं त्वरयाऽऽनीतः [2]कारणानि विनाऽनघ ! ॥ ३४ ॥
अशुभाशङ्कि हृदयं शीलं च पततीव मे ।

आनीत इति । वसिष्ठप्रेरितामात्यैरिति शेषः । कारणानि विनेति । आह्वानकारणोक्तिं विनेत्यर्थः । अत एव मे हृदयं—अशुभाशङ्कि । शीलं—धैर्यादिस्वभावः । पतति—गलति ॥ ३४ ॥

---

* वैजयन्तेन—वैजयन्ताख्येन नगरपश्चिमद्वारेण—गो. राजगृहद्वाराणां प्रत्येकं नामनिर्देशः संप्रदायागतः । भरतस्य पश्चिमदिग्देशादागतत्वेन पश्चिमद्वारेणेत्युक्तम् ॥

† बहुवर्षानन्तरमागतत्वात्, संकटकाले आगतत्वात्, युवराजत्वाच्च द्वास्स्थैः एवं करणम् ॥

‡ एतेन जनसम्मर्दासहिष्णुत्वमुच्यते ।

[1] संकुलिते—ङ. [2] कारणेन—ङ.

श्रुतो नो यादृशाः पूर्वं नृपतीनां विनाशने ॥ ३५ ॥
आकारांस्तानहं सर्वान् इह पश्यामि, सारथे !

श्रुता इति। कथास्विति शेषः ॥ ३५ ॥

सम्मार्जनविहीनानि परुषाण्युपलक्षये ॥ ३६ ॥
असंयतकवाटानि श्रीविहीनानि सर्वशः।
बलिकर्मविहीनानि धूपसम्मोदनेन च ॥ ३७ ॥
* [1] अनासीनकुटुम्बानि प्रभाहीनजनानि च।
अलक्ष्मीकानि पश्यामि कुटुम्बिभवनान्यहम् ॥ ३८ ॥

सम्मार्जनविहीनानीत्यादिकं कुटुम्बिभवनविशेषणम्। असंयतकवाटानि, अनासीनकुटुम्बानीति वक्ष्यमाणत्वात् द्वारसंयन्तारो न सन्ति। धूपसम्मोदनेन—परिमलेन च विहीनानीत्यनुकर्षः। प्रभाहीनेति। शोभाहीनेति यावत्। अलक्ष्मीकानीति, विचित्रध्वजतोरणाद्यभावात् ॥

अपेतमाल्यशोभान्यप्यसम्मृष्टाजिराणि च।
देवागाराणि शून्यानि न चाभान्ति यथापुरम् ॥ ३९ ॥

अजिरं—'अङ्गणं चत्वराजिरे' ॥ ३९ ॥

देवतार्चाः [2] प्रविद्धाश्च [3] यज्ञगोष्ठ्यस्तथाविधाः।
माल्यापणेषु राजन्ते नाद्य पण्यानि वा तथा ॥ ४० ॥

---

* अनाशितकुटुम्बानि—अभोजितकुटुम्बानि—गो.

[1] अनाशित—ङ. [2] प्रतिष्ठाश्च—प्रसिद्धाश्च—प्रवृद्धाश्च—ङ. [3] यज्ञगोष्ठा—ङ.

देवतार्चाः—देवताप्रतिमाः, 'अर्चा पूजाप्रतिमयोः' इति वैजयन्ती, प्रविद्धाः—निरस्तपूजनाः। तथा यज्ञगोष्ठ्यः—देवालयवर्तितत्तद्देवतायागशालाः प्रविद्धाः। माल्यापणाः—माल्यविक्रयापणाः ॥ ४० ॥

दृश्यन्ते वणिजोऽप्यद्य न यथापूर्वमत्र वै।
*ध्यानसंविग्नहृदयाः नष्टव्यापारयन्त्रिताः[1] ॥ ४१ ॥

अत्र—आपणे। नष्टव्यापाराः, अत एव यन्त्रिताः—सङ्कुचितापणाः, यत्रि सङ्कोचे, तस्मान्निष्ठा ॥ ४१ ॥

मलिनं चाश्रुपूर्णाक्षं दीनं ध्यानतरं कृशम्।
सस्त्रीपुंसं च पश्यामि जनमुत्कण्ठितं पुरे[2] ॥ ४२ ॥

मलिनं—मलिनत्वादिगुणकं, स्त्रीपुंसविशेषणम्। स्त्रीपुंसं, अच्प्रत्ययान्तो निपातः ॥ ४२ ॥

तां शून्यशृङ्गाटकवेश्मरथ्यां
†रजोरुणद्वारकपाटयन्त्राम्।
‡दृष्ट्वा पुरीमिन्द्रपुरप्रकाशां
दुःखेन संपूर्णतरो बभूव ॥ ४३ ॥

शृङ्गाटकं—चतुष्पथम्। रजोऽरुणानि—रजोधूसराणि द्वारकवाटानि, द्वारयन्त्राणि च तथा ॥ ४३ ॥

---

* चिन्ताऽऽसक्तहृदयाः, अत एव नष्टव्यापारयन्त्रिताः। † जनानां सर्वप्रवृत्तिष्वौदासीन्यादेवम्। ‡ पूर्वं इन्द्रपुरीवत् प्रकाशां दृष्ट्वा स्थितः, इदानीं शून्यशृङ्गाटकादिविशेषणवतीं पुरीं दृष्ट्वा दुःखेन संपूर्णतरो बभूव।

[1] एतदनन्तरं—देवायतनचैत्येषु दीनाः पक्षिगणास्तथा—इत्यधिकं—ङ. झ.
[2] एतदनन्तरं—इत्येवमुक्त्वा भरतः सूतं तं दीनमानसः। तान्यरिष्टान्ययोध्यायां प्रेक्ष्य राजगृहं ययौ—इत्याधिकं—ङ. झ.

बहूनि पश्यन् मनसोऽप्रियाणि
यान्यन्यदा नास्य पुरे बभूवुः ।
अवाक्छिरा दीनमना *नहृष्टः
पितुर्महात्मा प्रविवेश वेश्म ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकसप्ततितमः सर्गः

---

यान्यन्यदेति । राजसुखजीवन इत्यर्थः । अस्य पुर इति । राज्ञः पुर इत्यर्थः । भाव(४४)मानः सर्गः ॥ ४४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकसप्ततितमः सर्गः

---

## द्विसप्ततितमः सर्गः

[ कैकेयीदर्शनम् ]

अपश्यंस्तु ततस्तत्र पितरं पितुरालये ।
जगाम भरतो द्रष्टुं मातरं मातुरालये ॥ १ ॥

अथ राजगृहप्रविष्टेन भरतेन मातृमुखात् सर्ववृत्तान्तश्रवणम् । अपश्यन्नित्यादि ॥ १ ॥

अनुप्राप्तं तु तं दृष्ट्वा कैकेयी प्रोषितं सुतम् ।
उत्पपात तदा हृष्टा त्यक्त्वा सौवर्णमासनम् ॥ २ ॥
स प्रविश्यैव धर्मात्मा स्वगृहं श्रीविवर्जितम् ।
भरतः प्रतिजग्राह जनन्याश्चरणौ शुभौ ॥ ३ ॥

स्वगृहमिति । †मातृगृहमिति यावत् ॥ ३ ॥

---

* नञ्समानार्थकमव्ययमिदम् ॥ † 'मातरं मातुरालये' इत्यनुपदमेवोक्तत्वात् । भरतस्य तत्रैव संवर्धितत्वात् स्वगृहमित्युक्तम् ।

सा तं मूर्धन्युपाघ्राय परिष्वज्य यशस्विनम् ।
अङ्के भरतमारोप्य प्रष्टुं समुपचक्रमे ॥ ४ ॥
अद्य ते कतिचिद्रात्र्यः च्युतस्यार्यकवेश्मनः ।
अपि नाध्वश्रमः शीघ्रं रथेनापततस्तव ॥ ५ ॥

आर्यकवेश्मनः—मातामहवेश्मनः प्राप्तस्वगृहस्य ते, याः कतिचित् रात्र्यस्तु च्युताः—गताः मार्गे, तामेव वक्तुमर्हसीत्यग्रेण सम्बन्धः । अथ रथेन शीघ्रमापततो योऽपि वाऽध्वश्रमः, तं मे ब्रूहि ॥

आर्यकस्ते सुकुशली युधाजिन्मातुलस्तव ?
प्रवासाच्च सुखं, पुत्र ! सर्वं मे वक्तुमर्हसि ॥ ६ ॥

आर्यकः—मातामहः कुशली वा ? न वा ? तथा तव मातुलो युधाजिच्च कुशली ? न वा ? तथा इतः प्रवासादारभ्य मातुलगृहे सुखमस्ति ? न वा ? इत्येतत्सर्वं वक्तुमर्हसि ॥ ६ ॥

एवं पृष्टस्तु कैकेय्या प्रियं पार्थिवनन्दनः ।
[1]आचष्ट भरतस्सर्वं मात्रे राजीवलोचनः ॥ ७ ॥
*अद्य मे सप्तमी रात्रिः च्युतस्यार्यकवेश्मनः ।
अम्बायाः कुशली तातः युधाजिन्मातुलश्च मे ॥ ८ ॥
यन्मे धनं च रत्नं च ददौ राजा परंतपः ।
†परिश्रान्तं पथ्यभवत् ततोऽहं पूर्वमागतः ॥ ९ ॥

---

* अद्य रात्रिः—अस्मादह्नः पूर्वरात्रिः सप्तमी ; अतः 'सप्तरात्रोषितः पथि' इत्यनेन न विरोधः—**गो.** वस्तुतस्तु—लोकरीत्या—अद्य सप्तमी रात्रिः अतीतेत्येवार्थः । 'अरुणोदये' (७१-१६) इति प्रातरेव नगरप्रवेशस्योक्तत्वात् । † परिश्रान्तं—परिश्रान्तवाहनम्—**गो.**

[1] आचष्टे—ङ.

बलं—प्रागुक्ताश्वादिरूपम् । राजा—मातामहो मातुलश्च । तत्सर्वं पथि परिश्रान्तमभवत् । अतस्तत्सर्वं शनैरागमनाय नियुज्याहं पूर्वमागतः ॥ ९ ॥

राजवाक्यहरैर्दूतैः त्वर्यमाणोऽहमागतः ।
यदहं प्रष्टुमिच्छामि तदम्बा[1] वक्तुमर्हति ॥ १० ॥
शून्योऽयं शयनीयस्ते पर्यङ्को हेमभूषितः ।
न चायमिक्ष्वाकुजनः प्रहृष्टः प्रतिभाति मा ॥ ११ ॥

शून्य इति । पितृशून्य इति यावत् ॥ ११ ॥

*राजा भवति भूयिष्ठं इहाम्बाया निवेशने ।
तमहं नाद्य पश्यामि द्रष्टुमिच्छन्निहागतः ॥ १२ ॥

द्रष्टुमिच्छन्निहागत इति, प्रायेणेह तस्यावस्थानात् ॥ १२ ॥

पितुर्ग्रहीष्ये चरणौ तं ममाख्याहि पृच्छतः ।
आहो स्वित्, अम्ब ! ज्येष्ठायाः कौसल्याया निवेशने ॥
तं प्रत्युवाच कैकेयी प्रियवद्घोरमप्रियम् ।
अजानन्तं प्रजानन्ती राज्यलोभेन मोहिता ॥ १४ ॥

अजानन्तमिति । राजवृत्तान्तमिति शेषः । प्रियवत्प्रजानन्तीति योजना । तत्र हेतुः—राज्यलोभेन मोहितेति ॥ १४ ॥

---

* दशरथस्य बहुपत्नीत्वात् 'शून्योऽयं शयनीयः' इति प्रश्नः कथमिति शङ्कायामाह—राजेति ।

[1] वक्तुमर्हसि—ङ.

*या गतिः सर्वभूतानां तां गतिं ते पिता गतः ।
राजा महात्मा तेजस्वी यायजूकः †[1] सतांगतिः ॥ १५ ॥
तच्छ्रुत्वा भरतो वाक्यं धर्माभिजनवान् शुचिः ।
पपात सहसा भूमौ पितृशोकबलार्दितः ॥ १६ ॥
हा हतोऽस्मीति [2] कृपणां दीनां वाचमुदीरयन् ।
निपपात महाबाहुः बाहू विक्षिप्य वीर्यवान् ॥ १७ ॥
ततः शोकेन [3] संवीतः पितुर्मरणदुःखितः ।
विललाप महातेजाः भ्रान्ताकुलितचेतनः ॥ १८ ॥

शोकेन संवीतः—आवृतचित्तः । भ्रान्ता—अनवस्थिता आकुलिता—खिन्ना चेतना यस्य स तथा ॥ १८ ॥

एतत्सुरुचिरं भाति पितुर्मे शयनं पुरा ।
शशिनेवामलं रात्रौ गगनं तोयदात्यये ॥ १९ ॥
तदिदं न विभात्यद्य विहीनं तेन धीमता ।
व्योमेव शशिना हीनं [4] अप्शुष्कमिव सागरम् ॥ २० ॥

विललापेत्युक्तं ; तदेव प्रदर्श्यते—एतदित्यादि । पुरा भाति स्म, तदिदमिति योजना । अप्शुष्कं—आपः शुष्का यस्मिन् कालेऽग्न्यादिना तत्तथा । सागरमिति । सागरस्वरूपमित्यर्थः ॥ २० ॥

---

* अतिबाला कैकेयी स्वस्य वैधव्यं सदा प्रतीक्षितवती यतः, यतश्च स्वपुत्रराज्याभिषेकवचनपूर्वकमेव दशरथं परिणीतवती, अतः दशरथमरणं तस्या न तावद्दुस्सहमासीत् । अतः तद्वृत्तान्तं साधारणदृष्ट्या वदति । † सतांगतिरिति बहुव्रीहिः ।

[1] सतां पतिः—ङ. [2] कृपणं—ङ. [3] संविग्नः—ङ. [4] उच्छुष्क—ङ.

[1]बाष्पमुत्सृज्य कण्ठेन *[2]स्वार्तः परमपीडितः ।
प्रच्छाद्य वदनं श्रीमत् वस्त्रेण जयतांवरः ॥ २१ ॥

बाष्पः—दुःखोष्मा । श्रीमत् वदनमाच्छाद्य—भूमौ पतित्वा विललापेति शेषः, अनुकर्षो वा ॥ २१ ॥

तमार्तं देवसङ्काशं समीक्ष्य पतितं भुवि ।
निकृत्तमिव सालस्य स्कन्धं परशुना वने ॥ २२ ॥

सालः—वृक्षः, तद्विशेषो वा ॥ २२ ॥

मत्तमातङ्गसङ्काशं चन्द्रार्कसदृशं सुतम् ।
उत्थापयित्वा शोकार्तं वचनं चेदमब्रवीत् ॥ २३ ॥
उत्तिष्ठोत्तिष्ठ किं शेषे, [3]राजन्! †अत्र महायशः!
त्वद्विधा न हि शोचन्ति सन्तः सदसि सम्मताः ॥२४॥

सदसि सम्मताः—सभ्या इति यावत् ॥ २४ ॥

‡दानयज्ञाधिकारा हि शीलश्रुति[4]मनोऽनुगा ।
बुद्धिस्ते, बुद्धिसंपन्न! §प्रभेवार्कस्य[5]मन्दिरे ॥ २५ ॥

दानयज्ञाधिकारेत्यत्र हेतुः—शीलेत्यादि । शीलं—सद्वृत्तं, श्रुतिः—श्रुतं—विद्या, तदुभयपरिशीलनविषयकं यन्मनः, तदनुगा

---

* स्वार्तः—सुतरामार्तः, अभवदिति शेषः—गो. कण्ठेन—कण्ठस्वरेण बाष्पमुत्सृजन् मुखं प्रच्छाद्य मुक्तकण्ठं—विललापेत्याकर्षः । † अत्र—भूमौ । ‡ दानयज्ञादौ अधिक्रियतेऽनयेति दानयज्ञाधिकारा—गो. दानयज्ञाद्यर्थमेव भगवता दत्तेति यावत् । § सूर्यप्रभा यथा स्वस्थाने निश्चला भवति तथा ते बुद्धिः निश्चला भातीत्यर्थः । मन्दर इति पाठे (ती.)—अत्युन्नतमन्दरपर्वते अर्कप्रभायाः पर्वतान्तरापेक्षया चिरकालावस्थानात्—गो.

[1] भरतो बाष्पमुत्सृज्य—ङ. [2] स्वात्मना परिपीडितः—ङ. [3] राजपुत्र—ङ.
[4] वचोऽनुगा, तपोऽनुगा—ङ. च. [5] मन्दरे, मण्डले—ङ.

तथा । बुद्धिः—अध्यवसायात्मिका । अर्कस्य मन्दिरे—सूर्यलोकवर्तिसूर्यगृहे । एवमादौ विपरीतपाठं *परः कल्पयति—'मन्दरे' इत्यादिरूपम् । व्याख्याति चासङ्गतमेव च । किं कुर्मः ? ॥ २५ ॥

स रुदित्वा चिरं कालं भूमौ विपरिवृत्य च ।
जननीं प्रत्युवाचेदं शोकैर्बहुभिरावृतः ॥ २६ ॥
अभिषेक्ष्यति रामं नु [1]राजा †यज्ञं नु यक्ष्यते ।
इत्यहं कृतसंकल्पः हृष्टो यात्रा[2]मयासिषम् ॥ २७ ॥
तदिदं ह्यन्यथाभूतं व्यवदीर्णं मनो मम ।
पितरं यो न पश्यामि नित्यं प्रियहिते रतम् ॥ २८ ॥

अन्यथाभूतमिति । चिन्तितं शुभं विपरीतमभूदित्यर्थः ॥

अम्ब ! केनात्यगाद्राजा व्याधिना ‡मय्यनागते ।
धन्या रामादयः सर्वे यैः पिता संस्कृतः स्वयम् ॥ २९ ॥

अथ रामेण राज्ञ और्ध्वदैहिकं कृतमिति मन्वान आह—धन्या इत्यादि ॥ २९ ॥

न नूनं मां महाराजः प्राप्तं जानाति कीर्तिमान् ।
उपजिघ्रेद्धि मां मूर्ध्नि तातः संनम्य सत्वरम् ॥ ३० ॥

प्राप्तमिति । देशान्तरात्, वृत्तत्वादिति च शेषः । संनम्येति । मूर्धानमिति शेषः § ॥ ३० ॥

---

*महेश्वरतीर्थः । व्याख्या च गोविन्दराजानूदितैव । †यज्ञं यक्ष्यते, यात्रामयासिषमित्यादि—कार्यं करोतीतिवत् व्यपदेशः । ‡मदागमनाभ्यन्तर एव कीदृशेन तीव्रेण व्याधिनाऽत्यगात् । दशरथस्य व्याधिग्रस्तत्वादेव स्वयमाहूत इति भावयन् एवं पृच्छतीति भाति । §भरतापेक्षया पितुर्दशरथस्य औन्नत्यौचित्यात् स्वयं आनम्येति वाऽर्थः ।

[1] रामो यज्ञेन यक्ष्यते–ङ.    [2] मयाचिषम्–ङ.

क्व स पाणिः सुखस्पर्शः तातस्याक्लिष्टकर्मणः ।
येन मां रजसा ध्वस्तं अभीक्ष्णं परिमार्जति ॥ ३१ ॥
यो मे [1]भ्राता पिता बन्धुः यस्य दासोऽस्मि धीमतः ।
तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः ॥ ३२ ॥

मामाख्याहीति । आगतमिति शेषः ॥ ३२ ॥

पिता हि भवति [2]ज्येष्ठो * धर्ममार्यस्य जानतः ।
तस्य पादौ गृहीष्यामि स हीदानीं गतिर्मम ॥ ३३ ॥
धर्मविद्धर्मनित्यश्च सत्यसन्धो दृढव्रतः ।
[3]आर्ये ! किमब्रवीद्राजा पिता मे सत्यविक्रमः[4] ॥ ३४ ॥

आर्ये इति सम्बुद्धिः ॥ ३४ ॥

पश्चिमं साधु सन्देशमिच्छामि श्रोतु†मात्मनः ।
इति पृष्टा यथातत्त्वं कैकेयी वाक्यमब्रवीत् ॥ ३५ ॥

पश्चिमं सन्देशमिति । चरमकालीनमिति यावत् ॥ ३५ ॥

‡रामेति राजा विलपन्, हा सीते ! लक्ष्मणेति च ।
स महात्मा परं लोकं गतो [5]गतिमतां वरः ॥ ३६ ॥

---

* आर्यस्य धर्मं जानतः, यद्वा, धर्मं जानतः आर्यस्य । † आत्मनः–मह्यमिति यावत् । ‡ एवं पृष्टवन्तं भरतं प्रति, 'त्वां राजा न स्मृतवान्, किं तु राममेव स्मरन् स्वर्गमगात्' इति पितृविषयस्नेहनिवर्तनाभिप्रायेणाह–रामेत्यादिना–गो. 'मह्यं राज्ञः सन्देशं श्रोतुमिच्छामि' इति खलु भरतः पप्रच्छ । अतश्च दशरथस्य त्वत्स्मरणमेव कुतः–इत्युपालंभगर्भेयमुक्तिरिति भावः । किञ्च पूर्वं 'शीघ्रमाख्याहि रामस्य' इति भरतोक्त्या–त्वद्दायादः स तु गत एवेति सूचनार्थं चेयमुक्तिः । अत एव 'प्रियशङ्कया' (४१) इति वक्ष्यते ।

[1] भ्राता–ङ. [2] श्रेष्ठः–ङ. [3] आर्यः–ङ. [4] एतदनन्तरं—गुरुरेकः प्रजानां तु पिता मे सत्यविक्रमः–इत्यधिकं–ङ. [5] मतिमतां–ङ.

इति विलपन् गत इति । न कं प्रति किञ्चिदपि साधुसन्देश-मवोचदित्यर्थः ॥ ३६ ॥

*[1] इमां तु पश्चिमां वाचं व्याजहार पिता तव ।
कालधर्मपरिक्षिप्तः पाशैरिव महागजः ॥ ३७ ॥

इमां तु पश्चिमां वाचमिति । प्रागुक्तविलापरूपामित्यर्थः ॥३७॥

सिद्धार्थास्ते नरा रामं आगतं सीतया सह ।
लक्ष्मणं च महाबाहुं द्रक्ष्यन्ति पुनरागतम् ॥ ३८ ॥

अन्यदपि किञ्चित् विलापवचनं चरमकाले? इत्यत्राह— सिद्धार्था इत्यादि ॥ ३८ ॥

तच्छ्रुत्वा विषसादैव † द्वितीयाप्रियशंसनात् ।
विषण्णवदनो भूत्वा भूयः पप्रच्छ मातरम् ॥ ३९ ॥
क्व चेदानीं स धर्मात्मा कौसल्यानन्दवर्धनः ।
लक्ष्मणेन सह भ्रात्रा सीतया च [2] समं गतः ॥ ४० ॥

क्व चेदानीं गत इति योजना ॥ ४० ॥

तथा पृष्टा यथातत्त्वं आख्यातुमुपचक्रमे ।
माताऽस्य ‡ युगपद्वाक्यं विप्रियं प्रियशङ्कया ॥ ४१ ॥

---

* इमामित्यादिश्लोकद्वयमेकान्वयम्—गो.　　† यद्यप्यद्य भरतेन रामप्रव्राजनं नावगतम् । 'अत एव क्व गतः' इति प्रक्ष्यति । अथापि रामानुपस्थितिरूपं, तत्रापि 'द्रक्ष्यन्ति पुनरागतम्' इत्यादिवचनात् चिरप्रोषितत्वप्रतीत्या अप्रियत्वं विवक्षितम् । ‡ युगपत्—राजमरणकथनसमकालमेव—गो. ती. ति. वस्तुतः—वक्ष्यमाणस्य विषयस्यातिदारुणत्वेन कथनकाले संकोचादिना वाच एवाप्रवृत्त्या विलम्ब्य विलम्ब्योच्चारणीयापारत्वस्य न्याय्यत्वे हठात् सर्वमेकदैव विनैव सङ्कोचं निरोधं च उक्तवतीत्यर्थः ॥

[1] इतीमां—ङ.　　[2] समागतः—च.

स हि राजसुतः, पुत्र! चीरवासा महावनम् ।
दण्डकान् सह वैदेह्या लक्ष्मणानुचरो गतः ॥ ४२ ॥
तच्छ्रुत्वा भरतस्त्रस्तो भ्रातुश्चारित्रशङ्कया ।
*स्वस्य वंशस्य माहात्म्यात् प्रष्टुं समुपचक्रमे ॥ ४३ ॥

त्रस्त इति । रामस्य पितृविवासनसाधनं किमन्याय्यमभूदिति भीतवान् ॥ ४३ ॥

†कच्चिन्न ब्राह्मणधनं हृतं रामेण कस्यचित् ।
कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥ ४४ ॥
कच्चिन्न परदारान् वा राजपुत्रोऽभिमन्यते ।
कस्मात्स दण्डकारण्ये [1]भ्रूणहेव विवासितः ॥ ४५ ॥

तदेव कारणं पृच्छति—कच्चिदित्यादि । अपापः—निरपराधः ॥

अथास्य चपला माता तत्स्वकर्म यथातथम् ।
‡तेनैव स्त्रीस्वभावेन व्याहर्तुमुपचक्रमे ॥ ४६ ॥

तेनैव स्त्रीस्वभावेनेति । धर्माधर्महिताहितोचितानुचितविवेकशून्यतालक्षणेनेत्यर्थः ॥ ४६ ॥

---

* अधर्मिष्ठपुत्रस्यापि त्यागः असमञ्जवृत्तान्तादावगतः । अतः चीरवासा इत्यादिकथनात् त्रस्तोऽभूत् । अत एव प्रक्ष्यति 'कस्मात्' (४५) इत्यादि ॥ † रामे तादृशपापप्रसक्तेरप्यभावं जानता भरतेन प्रसक्तिपुरस्सरनिषेधगर्भमिदं वचनं कथं घटत इति चेत्—कच्चित्पदं यदि किंपदसमानार्थकं, तदाऽयं आक्षेपः । कच्चिदिति इष्टप्रश्नार्थकम् । अत एव रामे तादृशदोषाणामनिष्टत्वसूचनाय नञा सह प्रश्नः । पुनरपि 'कस्मात् भ्रूणहेव विवासितः' इति प्रश्नोऽप्यत एव । अत्र कस्यचित् ब्राह्मणस्य धनमित्यन्वयः । ‡ स्वकर्मेति पूर्वार्धे उक्तत्वात्, येन स्त्रीस्वभावेन तत् कर्म चक्रे, तेनैव व्याहर्तुमप्युपक्रमे इत्यर्थः ।

[1] भ्राता रामो—ङ.

*एवमुक्ता तु कैकेयी भरतेन महात्मना ।
उवाच वचनं हृष्टा [1]मूढा पण्डितमानिनी ॥ ४७ ॥
न ब्राह्मणधनं किञ्चित् हृतं रामेण कस्यचित् ।
कश्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥ ४८ ॥
न रामः परदारांश्च चक्षुर्भ्यामपि पश्यति ।
मया तु, पुत्र! श्रुत्वैव रामस्येहाभिषेचनम् ॥ ४९ ॥
†याचितस्ते पिता राज्यं रामस्य च विवासनम् ॥ ५० ॥

इहेति । राज्य इत्यर्थः ॥ ५० ॥

स ‡स्ववृत्तिं समास्थाय पिता ते तत्तथाऽकरोत् ।
रामश्च सहसौमित्रिः [2]प्रेषितः सीतया सह ॥ ५१ ॥

स्ववृत्तिं—स्वसत्यस्थितिलक्षणांवृत्तिम् । तथाऽकरोदिति । तुभ्यं राज्यं दत्तवानित्यर्थः ॥ ५१ ॥

तमपश्यन् प्रियं पुत्रं महीपालो महायशाः ।
पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् ॥ ५२ ॥

परिद्यूनः—क्षीणः, बहुश उक्तप्रक्रियः ॥ ५२ ॥

त्वया त्विदानीं, धर्मज्ञ! राजत्वमवलम्ब्यताम् ।
त्वत्कृते हि मया सर्वं इदमेवंविधं कृतम् ॥ ५३ ॥
मा शोकं, मा च सन्तापं, धैर्यमाश्रय, पुत्रक!
त्वदधीना हि नगरी राज्यं चैतदनामयम् ॥ ५४ ॥

---

* अयं श्लोकः पूर्वानुवादार्थः—गो. † 'ते' इति—ते राज्यं, ते पिता याचित इत्युभयत्राप्यन्वेति । ‡ प्रतिज्ञोल्लङ्घनाशक्तिरूपां स्ववृत्तिम् ।

[1] वृथा—ङ. [2] प्रोषितः—ङ.

तत्, पुत्र! शीघ्रं विधिना विधिज्ञैः
वसिष्ठमुख्यैः सहितो [1]द्विजेन्द्रैः ।
[2]संकाल्य राजानमदीनसत्त्वं
आत्मानमुर्व्यामभिषेचयस्व ॥ ५५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्विसप्ततितमः सर्गः

---

संकाल्येति । प्रेतनिर्हारं कृत्वेत्यर्थः । शम(५५)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्विसप्ततितमः सर्गः

---

## त्रिसप्ततितमः सर्गः

[भरतसन्तापः]

[3]श्रुत्वा तु पितरं वृत्तं भ्रातरौ च विवासितौ ।
भरतो दुःखसन्तप्तः इदं वचनमब्रवीत् ॥ १ ॥

---

[1] मुनीन्द्रैः—ङ. [2] संस्कार्य, संकल्प्य—ङ. [3] एतत्पूर्वं—
"कैकेय्याप्येवमुक्तस्तु भरतो राघवानुजः । कर्णौ कराभ्यां प्रच्छाद्य पपात धरणीतले ॥
हा राम रामेति तदा विलप्य करुणं बहु । मुहूर्तमिव निस्संज्ञः संज्ञावानिदमब्रवीत् ॥
हतोऽसि राजा निहतः हतो लोकश्च दुर्मते । किमिदं शिक्षितं केन कस्य कार्यं त्वया कृतम् ॥
राजानं प्रेतभावस्थं कृत्वा रामं च तापसम् । राज्यमत्र फलं भोक्तुं अनुतिष्ठसि दुर्मते ॥
रामप्रस्थापितायाश्च पतिघ्नयाश्च तवोदरे । दश मासा मया नीताः हा लोके निन्दितो ह्यहम् ॥
कण्ठेऽवसज्य वा पाशं विषं पीत्वाऽथ वा शठे । त्यज प्राणांश्च दुर्मेधे जलमग्निं प्रविश्य वा ॥
त्वामद्य निहनिष्यामि नो चेद्रामस्य दुर्यशः । राघवस्यानुजो भ्राता भरतो मातृहा इति ॥
एवं परुषमुक्त्वा तु निर्दहन्निव चक्षुषा । निरीक्षमाणे भरते कैकेयी वाक्यमब्रवीत् ॥
किं मयाऽपकृतं तेऽद्य गर्हसे मां मुहुर्मुहुः । प्रसूय वर्धयित्वा त्वां पदस्थं द्रष्टुमिच्छती ॥
पिता ते स्वर्गतो राजा भ्रातरौ च विवासितौ । बहुना किं प्रलापेन कुरु राज्यं यथासुखम् ॥"
एवमधिकं—झ.

एवं सर्वानर्थमपि कैकेयीमूलमिति तन्मुखादेव निस्संशयं श्रुत्वा तामनेकप्रकारत उपलभते । श्रुत्वेत्यादि । वृत्तं—अतीतम् ॥ १ ॥

किं नु! कार्यं *हतस्येह मम राज्येन शोचतः ।
विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥ २ ॥

हतस्येति । त्वयाऽपारदुःखनाशितस्येत्यर्थः ॥ २ ॥

दुःखे मे दुःखमकरोः व्रणे †क्षारमिवादधाः ।
राजानं प्रेतभावस्थं कृत्वा रामं च तापसम् ॥ ३ ॥

मे दुःखे पुनर्दुःखमकरोः । तत्र दृष्टान्तः—व्रणे क्षारमिवेति । खरमूत्रसहितचूर्णं अदधा इव—दत्तवतीव ॥ ३ ॥

कुलस्य त्वमभावाय कालरात्रिरिवागता ।
अङ्गारमुपगूह्य स्म पिता मे नावबुद्धवान् ॥ ४ ॥

रात्रिः—संहाररात्रिः । उपगूह्य—आलिङ्ग्य । नावबुद्धवानिति । सुखमिति भ्रान्तोऽभूदित्यर्थः ॥ ४ ॥

मृत्युमापादितो राजा त्वया ‡मे, पापदर्शिनि !
सुखं परिहृतं मोहात् कुलेऽस्मिन्, कुलपांसिनि ! ॥ ५ ॥
त्वां प्राप्य हि पिता मेऽद्य सत्यसन्धो महायशाः ।
तीव्रदुःखाभिसंतप्तः [1]वृत्तो दशरथो नृपः ॥ ६ ॥

---

*स्वदौर्भाग्यावेदनाय लोकोक्तिरियं 'हतस्य' इति । शोचतो ममेत्यन्वयः ।
† क्षारं—लवणकटून्यतररसं जलादि । ‡ मे—मन्निमित्तम् ।

[1] वृद्धो—ङ.

विनाशितो महाराजः पिता मे धर्मवत्सलः ।
*कस्मात् प्रव्राजितो रामः कस्मादेव वनं गतः? ॥ ७ ॥

कस्मादिति । निर्हेतुतः, निष्प्रयोजनत एव चेत्यर्थः ॥ ७ ॥

कौसल्या च सुमित्रा च पुत्रशोकाभिपीडिते ।
दुष्करं यदि जीवेतां †प्राप्य त्वां जननीं मम ॥ ८ ॥

न केवलं पितृभ्रातृपीडा, अपि तु मात्रोरपीत्याह—कौसल्येत्यादि । मम जननीं त्वां मृत्युहेतुं प्राप्य यदि जीवेतां, तदपि दुष्करं—दुर्लभमेव । एवं च तयोः मृतिः, मुमूर्षा वेति न जान इत्यर्थः ॥ ८ ॥

ननु त्वार्योऽपि धर्मात्मा त्वयि [1] वृत्तिमनुत्तमाम् ।
वर्तते गुरुवृत्तिज्ञः ‡यथा मातरि वर्तते ॥ ९ ॥

'कस्मात् प्रव्राजितः?' इति प्रागुक्तं प्रव्राजनकारणमेव प्रतिपाद्यते—ननु त्वित्यादि । गुरुषु—मातापित्रादिषु वर्तनीयां वृत्तिं जानातीति तथा ॥ ९ ॥

[2] यथा ज्येष्ठा हि मे माता कौसल्या §दीर्घदर्शिनी ।
त्वयि धर्मं समास्थाय भगिन्यामिव वर्तते ॥ १० ॥

अथ राममात्राऽपि न कश्चिदपराधस्त्वयि कृत इत्याह—यथेत्यादि । यथा भगिन्यां तथा त्वयि वर्तते पतिचित्तानुवर्तनरूपं धर्मं समास्थाय ॥ १० ॥

---

* इयमपि लोकोक्तिः । सर्वं विफलमिति भावः । † इयमपि लोकोक्तिः । ‡ यथा मातरि-कौसल्यायां वर्तते, तथैव त्वयि उत्तमां वृत्तिं वर्तते-अनुतिष्ठति । § पतिवाल्लभ्यात् भवत्या अनर्थो भविष्यतीति तर्कयन्ती ।

[1] वृत्तमनुत्तमम्—ङ. [2] तथा—ङ.

तस्याः पुत्रं [1]कृतात्मानं चीरवल्कलवाससम् ।
प्रस्थाप्य वनवासाय कथं, पापे! न शोचसि ? ॥ ११ ॥

चीरपर्यायं वल्कलं–वासः यस्य स तथा ॥ ११ ॥

अपाप[2]दर्शनं शूरं [3]कृतात्मानं यशस्विनम् ।
*प्रव्राज्य चीरवसनं किन्नु पश्यसि कारणम् ? ॥ १२ ॥

प्रव्राज्येति । किन्नु कारणं दृष्ट्वा चीरवसनं रामं प्रव्राज्य, ततश्च किं फलं पश्यसि ? ॥ १२ ॥

†लुब्धाया विदितो मन्ये न तेऽहं राघवं [4]प्रति ।
तथा ह्यनर्थो राज्यार्थं त्वयाऽऽनीतो महानयम् ॥ १३ ॥

लुब्धायास्ते–लुब्धया त्वया अहं राघवं–रामं प्रति किंभाव इति न विदित इति मन्ये । तथा हि—तस्मादेव हि मम राज्यार्थं महानयमनर्थः–पितृनाशराज्यार्हज्येष्ठविवासनादिरूपः आनीतः–संपादितः ॥

अहं हि पुरुषव्याघ्रौ अपश्यन् रामलक्ष्मणौ ।
केन शक्तिप्रभावेन राज्यं रक्षितुमुत्सहे ॥ १४ ॥

उक्तानर्थमात्रमेव त्वद्दुश्चेष्टाफलम्, न तु त्वन्मनीषितकरणमित्याह—अहं हीत्यादि । भ्रातृसंपत्तिरेव मे शक्तिः । ततश्च तदभावे कथमहं राज्यं रक्षितुमुत्सहे ? न कथमपीत्यर्थः ॥ १४ ॥

---

* तदानीमविमर्शाद् कृतमिति चेत्, तत्प्रव्राजनानन्तरं वा प्रव्राजनकारणं कीदृशमिति किं विमृशसि—इति वा । † अहं राघवं प्रति यथा–यादृशप्रकारयुक्तः तथा लुब्धायास्ते न विदितः–गो. ती. ति.

[1] महात्मानं–ङ. [2] दर्शिनं–ङ. [3] महात्मानं–ङ. [4] यथा–ङ.

* तं हि नित्यं महाराजः बलवन्तं [1] महाबलः ।
[2] अपाश्रितोऽभूद्धर्मात्मा † मेरुर्मेरुवनं यथा ॥ १५ ॥

न केवलं ममैव रामशक्त्यपेक्षा, अपि तु पितुरपीत्याह—तं हीत्यादि । राजाऽपि महाबलः, रामोऽपि महाबलः, अथापि—मेरुवनं, कर्तृ, मेरुमिव पुरुषमेरुं रामं इहामुत्रार्थमपाश्रित इत्यर्थः ॥ १५ ॥

सोऽहं कथमिमं भारं महाधुर्य[3]समुद्यतम् ।
‡ दम्यो धुरमिवासाद्य [4] वहेयं केन [5] तेजसा ? ॥ १६ ॥

सोऽहमिति । ज्येष्ठरामैकबल इत्यर्थः । भारं—राज्यभारं अहमासाद्य महाधुर्यः—महाबलीवर्दः, धुरं वहतीति, 'धुरो यड्ढकौ' इति यत्, तेन समुद्यतं—धृतं राज्यभारं अहमासाद्य दम्यः—दमनीयः, 'पोरुपधात्' इति यत्, तरुणवत्सः धुरं—महाबलीवर्दात् धृतभारमिव केन तेजसा—बलेन वहेयम् ? न केनापि ॥ १६ ॥

अथ वा मे भवेच्छक्तिः § योगैर्बुद्धिबलेन वा ।
सकामां न करिष्यामि त्वामहं ‖ पुत्रगर्धिनीम् ॥ १७ ॥

तर्हि त्वं न राजपुत्रः षण्डकल्प इत्याशङ्कायामाह—अथ वेत्यादि । शक्तिः—राज्यभरणसामर्थ्यम् । 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु', उक्तसर्वार्थकैङ्कर्ययोगैरुत्पन्नेन बुद्धिबलेन—बुद्धियुक्तमहाप्राणत्वलक्षणबलेन शक्तिर्यद्यपि भवेत्—संभावितैव ; अथापि

---

* अयोध्याकाण्डीयप्रथमद्वितीयसर्गयोरयमंशः सूचितः । † दुर्गेण वनेनावृतत्वादेव मेरोः दुर्गत्वं इति भावः । ‡ 'दम्यवत्सतरौ समौ' इति अमरः । § योगैः—सामदानाद्युपायैः, बुद्धिबलेन—ग्रहणधारणाद्यष्टाङ्गयुक्तबुद्धिबलेन वा—गो. ती. ‖ धर्माधर्मादिकमविमृश्य केवलपुत्राभिमानवतीमिति भावः ।

[1] महौजसम्—ङ. [2] उपाश्रितो—ङ. [3] समुद्धृतम्—ङ. [4] सहेयं—ङ.
[5] वौजसा—ङ.

पुत्रगर्धिनीं—पुत्रप्रयोजनाभिलाषवतीं त्वां सकामां—संप्राप्तकामां न करिष्यामि—राज्याभिषेकं न करिष्यामि, कुलदूषणपरमकश्मलत्वादित्याशयः ॥ १७ ॥

न मे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् ।
यदि रामस्य * नावेक्षा त्वयि स्यान्मातृवत्सदा ॥ १८ ॥

अपि च 'त्यजेदेकं कुलस्यार्थे' इतिन्यायेन ते सांप्रतं विवासनमेव कार्यम्, तदपि—त्वय्यपि रामस्य भगवतो मातृप्रतिपत्त्यपरिक्षयात् मया न शक्यते, रामचित्तस्य दूरं भविष्यामीति शङ्कयेत्याह—न म इति । रामस्य त्वयि मातृवत्—कौसल्यावत् त्वयि सदाऽवेक्षा—प्रतीक्षा—प्रतिपत्तिः यदि न स्यात्, तदा पापनिश्चयां त्वां परित्यक्तुं मे विकाङ्क्षा—इच्छाभावो नैव जायेतेति योजनार्थः । १८ ॥

उत्पन्ना तु कथं बुद्धिः तवेयं, पापदर्शिनि !
साधुचारित्रविभ्रष्टे! पूर्वेषां नो विगर्हिता ॥ १९ ॥

इयं बुद्धिरिति । † कनिष्ठस्य मेऽभिषेकबुद्धिरित्यर्थः ॥ १९ ॥

अस्मिन् कुले हि [1] पूर्वेषां ज्येष्ठो राज्येऽभिषिच्यते ।
अपरे भ्रातरस्तस्मिन् ‡ प्रवर्तन्ते समाहिताः ॥ २० ॥

विगर्हितत्वमेव दर्शयति—अस्मिन्नित्यादि । अस्मिन्—अस्मदीये कुले ज्येष्ठोऽभिषिच्यते, अपरे भ्रातरस्तस्मिन्—तत्कार्ये समाहिताः

---

* अवेक्षा—भक्तिपूर्वकेक्षणं—**गो. ती.**　† ज्येष्ठविवासनपूर्वकमिति शेषः । ‡ समाहिताः प्रवर्तन्ते—पितरीव तच्चित्तानुवर्तने प्रधाना जीवन्तीत्यर्थः—**गो.** ज्येष्ठाधीना वर्तन्त इत्यर्थः—**ती.**

[1] सर्वेषां—**ङ**.

प्रवर्तन्त इति ह्येवं किल नः पूर्वेषामाचारः इति शेषः। स्मरति च मनुस्तथाऽऽचारं–'ज्येष्ठ एव तु गृह्णीयात् सकलं पैतृकं धनम्। अन्ये तमनुजीवेयुः यथैव पितरं तथा' इति ॥ २० ॥

*न हि मन्ये, नृशंसे! त्वं राजधर्ममवेक्षसे।
गतिं वा न विजानासि राजवृत्तस्य शाश्वतीम् ॥ २१ ॥

न हीत्यादि। राजधर्मं—राजधर्मस्वरूपं नावेक्षसे–न जानीषे। तथा राजवृत्तस्य–राजधर्मस्य शाश्वतीं–अव्यभिचरितां गतिं–फलमपि न हि जानासीत्येव मन्ये ॥ २१ ॥

सततं [1]राजवृत्ते हि ज्येष्ठो राज्येऽभिषिच्यते।
†राज्ञां [2]सर्वं समं तत्स्यात् ‡इक्ष्वाकूणां विशेषतः ॥

राज्ञां सर्वमिति। छान्दसी षष्ठ्यर्थे द्वितीया, सर्वेषामित्यर्थः। तत्–ज्येष्ठाभिषेचनम् ॥ २२ ॥

तेषां धर्मैकरक्षाणां कुलचारित्र[3]शोभिनाम्।
[4]अत्र §चारित्र[5]शौण्डीर्यं त्वां प्राप्य विनिवर्तितम् ॥ २३ ॥

---

* राजधर्मं जानासीति न हि मन्ये। हीति निश्चये। इदं तु सिद्धमेव धर्मस्यातिसूक्ष्मत्वात्। अथापि वंशपरंपरयाऽनुष्ठीयमानां राजकुलाचाररीतिमपि वा न जानासि? धर्मस्य दुर्ज्ञेयत्वेऽपि बाह्यः आचारोऽपि नावेक्षितः—इति वाऽर्थः॥ † एतत् राज्ञां सर्वेषां समम्। इक्ष्वाकूणां तु तत्–ज्येष्ठाभिषेचनं विशेषतः स्यात्–गो. ‡ अस्खलिताचारत्वादिति भावः–गो. § चारित्रप्रयुक्तं शौण्डीर्यं-चित्तोन्नतिः। त्वां प्राप्य–त्वत्सम्बन्धादिति भावः–लोकोक्तिरियम्।

[1] राजपुत्रेषु–ङ. [2] एतत्–ङ. [3] योगिनाम्–ङ. [4] अद्य–ङ.
[5] शौटीर्यं–च.

धर्मेणैकेनैव रक्षा—रक्षणं येषां ते तथा। कुलक्रमागतं चारित्रं तथा। चारित्रविषयकं शौण्डीर्यं—श्लाघ्यत्वं तथा ॥ २३ ॥

*तवापि, [1] सुमहाभागे! [2] जनेन्द्रकुलपूर्वके!
बुद्धेर्मोहः कथमयं संभूतस्त्वयि गर्हितः ॥ २४ ॥

त्वयि चैवंविधं दुर्बुद्धिकारणं महावंशप्रसूतायां न पश्यामीत्याह—तवापीत्यादि। हे सुमहाभागे!, तदुपपादकं विशेषणं—जनेत्यादि। जनेन्द्रः—केकयकुलकूटस्थः—तत्कुलजः पूर्वकः—कारणं—पिता यस्याः सा तथा, तस्याः सम्बुद्धिः। अतो महाकुलप्रसूतायास्तवानुचितोऽपि विगर्हितोऽयं बुद्धिमोहः त्वयि कथं संभूतः? ॥

न तु कामं करिष्यामि तवाहं, पापनिश्चये!
त्वया व्यसनमारब्धं जीवितान्तकरं मम ॥ २५ ॥

अस्तु यतः कुतश्चित्। त्वत्पापनिश्चयमहं नानुवर्तयामीत्याह—न तु काममित्यादि ॥ २५ ॥

एष त्विदानीमेवाहं अप्रियार्थे† तवानघम्।
निवर्तयिष्यामि वनात् भ्रातरं स्वजनप्रियम् ॥ २६ ॥

न केवलमिष्टाकरणम्, अनिष्टमपि तवानुष्ठास्यामीत्याह—एष त्विदानीमित्यादि। अप्रियार्थे—तत्संपादनार्थम् ॥ २६ ॥

---

* स्वकुलचरित्रक्रममभिधाय मातृकुलाचारक्रममप्याह—तवेति। जनेन्द्राः—राजानः कुलपूर्वगाः—कुलपूर्वाः—कुलज्येष्ठाः, तान् गच्छन्तीति कुलपूर्वगाः, ज्येष्ठाभिषेचनशीला इत्यर्थः—गो. ती. † तव अप्रियार्थमित्यन्वयः।

[1] सुमहाभागाः—ङ. [2] जनेन्द्राः कुलपूर्वगाः—ङ.

*निवर्तयित्वा रामं च तस्याहं दीप्ततेजसः ।
दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ॥ २७ ॥

दासभूत इति । दासत्वं प्राप्त इत्यर्थः । मम राज्यस्वामित्वमीहितवत्यास्ते अनिष्टसंपादनार्थमेवेति शेषः । न केवलं त्वत्कोपमात्रादेवमाचरणम्, अपि तु परमार्थत एवेत्याह—सुस्थितेनेति । अभिषिक्तज्येष्ठानुवर्तनमेव परमं हितमिति सुप्रतिष्ठितेन चित्तेनेत्यर्थः ॥

इत्येवमुक्त्वा भरतो महात्मा
प्रियेतरैर्वाक्यगणैस्तुदंस्ताम् ।
शोकातुरश्चापि ननाद भूयः
†सिंहो यथा [1]पर्वतकन्दरस्थः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्रिसप्ततितमः सर्गः

———

हठ(२८)मानः सर्गः ॥ २८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे त्रिसप्ततितमः सर्गः

———

## चतुस्सप्ततितमः सर्गः

[कैकेयीविगर्हणम्]

तां तथा गर्हयित्वा तु मातरं भरतस्तदा ।
रोषेण महताऽऽविष्टः पुनरेवाब्रवीद्वचः ॥ १ ॥

---

*न केवलंनिवर्तनमात्रं, अपि तु भवदिष्टविपरीतमेव वर्तयिष्यामि चेत्याह—निवर्तयित्वेति । इदं च दास्यं हार्दमित्याह—सुस्थितेनेत्यादि । †गुहास्थत्वे सन्तोषातिशयात् सिंहस्य नादातिशय इत्यभिप्रायेणेद विशेषणम्—गो. अथ वा—निरावृतप्रदेशकृतगर्जनापेक्षया गुहायां गर्जनस्य दुस्सहत्वादित:—एवं विशेषणम् ।

[1] मन्दरकन्दर—ङ.

एवं सामान्यत उपालंभं कृत्वा इदानीं महापापोद्धाटनपूर्वं महता क्रोधेनाग्निप्रवेशादिकमेव कर्तव्यम् , नेह त्वया वस्तव्यमिति ब्रूते । तां तथेत्यादि ॥ १ ॥

**राज्यात् भ्रंशस्व, कैकेयि! नृशंसे! दुष्टचारिणि!**
**परित्यक्ता च धर्मेण [1] मा मृतं रुदती भव ॥ २ ॥**

राज्यात् भ्रंशस्वेति । 'वा भ्राश' इति पक्षे श्यन्, त्वं भ्रष्टा भव, *त्वन्मातृवत् त्वमपि वनं प्रविशेत्यर्थः । भर्तारं मृतमुद्दिश्य रुदती च मा भव । रोदनादि स्त्रीकृत्यं माऽनुतिष्ठ । पतिभार्याभावस्य नष्टत्वात् त्वं तदुचिता न भवसीत्यर्थः । †परः 'मां मृतं रुदती' इति मिथ्यापाठं प्रकल्प्य मिथ्यार्थमसङ्गतमवोचत् ॥ २ ॥

**किन्नु ‡तेऽदूषयद्राजा रामो वा भृशधार्मिकः ।**
**ययोर्मृत्युर्विवासश्च त्वत्कृते तुल्यमागतौ ॥ ३ ॥**

तुल्यमिति । युगपदित्यर्थः ॥ ३ ॥

**§ [2] ब्रह्महत्यामसि प्राप्ता कुलस्यास्य विनाशनात् ।**
**कैकेयि! नरकं गच्छ मा च भर्तुः सलोकताम् ॥ ४ ॥**

---

* अयोध्याकाण्डे 35 सर्गे 25 श्लोके गतोऽयं वृत्तान्तः । † तीर्थः, गोविन्दराजो वा ॥ 'प्राणहानिकरकार्यकरणात् मा मृतं मत्वा रोदनं कुर्वित्यर्थः'–**गो.** 'त्वद्विषये मां मृतं मत्वा रुदती भव'–**ती.** भर्तारमुद्दिश्य कैकेय्या रोदनाऽकरणात् तन्निषेधो न घटत इति तयोर्भावः । गोविन्दराजेन तु कतकरीत्याऽपि व्याख्यातम् । तदा तु पतिभार्याभावविच्छेदमात्रोपलक्षकमिदं वाक्यम् ॥ ‡ ते–तव सम्बन्धि गुणचारित्रिकं–**ती. गो.** अथ वा–ते अदूषयत्–तव कीदृशमनिष्टमाचरितवन्तौ–लोकोक्तिरियमपि । § भ्रूणहत्यां—भ्रूणहत्यातुल्यपापम्–**गो.**

[1] मां–ङ.          [2] भ्रूणहत्या–ङ.

आगतौ यतः, अतोऽवश्यं—ब्रह्महत्यामित्यादि । नरकं गच्छेति प्राप्तकाले लोट्, नरक एव ते न्यायप्राप्त इत्यर्थः ॥ ४ ॥

**यत्त्वया हीदृशं पापं कृतं घोरेण कर्मणा ।**
***सर्वलोकप्रियं हित्वा ममाप्यापादितं भयम् ॥ ५ ॥**

सर्वलोकप्रियं, राममिति शेषः । हित्वा—विवास्येति यावत् । ममापि भयमापादितमिति । त्वद्दोषात् मां रामः परित्यक्ष्यतीति भयमित्यर्थः ॥ ५ ॥

**त्वत्कृते मे पिता वृत्तो रामश्चारण्यमाश्रितः ।**
**†अयशो जीवलोके च त्वयाऽहं ‡प्रतिपादितः ॥ ६ ॥**

अयशो जीवलोके चेति । पतिघ्न्याः पापायाः पुत्रो भरतः कश्मलः—इत्याद्यात्मकमयशः ॥ ६ ॥

**मातृरूपे ! ममामित्रे ! नृशंसे ! राज्यकामुके !**
**न तेऽहमभिभाष्योऽस्मि, दुर्वृत्ते ! पतिघातिनि ! ॥ ७ ॥**

राज्यकामुकेति । अमैथुनेच्छातो न ङीप् । न तेऽहमभिभाष्य इति । 'कृत्यानां कर्तरि वा' इति षष्ठी; मत्संभाषणं त्वया न कर्तव्यमित्यर्थः ॥ ७ ॥

**कौसल्या च सुमित्रा च याश्चान्या मम मातरः ।**
**दुःखेन महताऽऽविष्टाः त्वां प्राप्य कुलदूषिणीम् ॥ ८ ॥**

---

* सर्वलोकप्रियं रामं हित्वा स्थितस्य ममापि भयमापादितं—त्वत्कृतं पापं ममापि भयमजनयत्, न तु राज्यमिति भावः—गो. ममापीत्यपिशब्दात् सर्वजनस्यापीत्यर्थः—ती.

† मातृमुखेन ज्येष्ठं विवास्य राजानं नाशितवानित्येवंविधं—गो. 'अहमप्यवनिं प्राप्ते रामे सत्यपराक्रमे। कृतकृत्यो भविष्यामि विप्रवासितकल्मषः' (१४) इति वचनानुसारादेवं व्याख्या।

‡ प्रतिपादितः—प्रापितः ।

*न त्वमश्वपतेः कन्या धर्मराजस्य धीमतः।
राक्षसी तत्र जाताऽसि कुलप्रध्वंसिनी पितुः ॥ ९ ॥

अश्वपतेः कन्येति। तत्कुलोचितकन्या न भवसीति यावत्। पितुरिति। केकयस्येति यावत् ॥ ९ ॥

†यत्त्वया धार्मिको रामः नित्यं सत्यपरायणः।
वनं प्रस्थापितः, दुःखात् पिता च त्रिदिवं गतः ॥ १० ॥
[1]यत्प्रधानाऽसि तत्पापं मयि ‡पित्रा विनाकृते।
भ्रातृभ्यां च परित्यक्ते सर्वलोकस्य चाप्रिये! ॥ ११ ॥

यत्प्रधाना—यत्पापप्रधाना असि, तत्पापं पित्रादिवियुक्ते सर्वलोकाप्रियत्वं तावकं मय्यपि संक्रान्तम्—धिक पापायाः पुत्रमिति। अप्रिये इति सम्बुद्धिः ॥ ११ ॥

कौसल्यां धर्मसंयुक्तां वियुक्तां, पापनिश्चये!
कृत्वा कं प्राप्स्यसे त्वद्य लोकं, निरयगामिनि! ॥ १२ ॥

वियुक्तां—पतिपुत्रवियुक्तां कृत्वेति योजना ॥ १२ ॥

§किं नावबुध्यसे, क्रूरे! नियतं [2]बन्धुसंश्रयम्।
ज्येष्ठं पितृसमं रामं [3]कौसल्या आत्मसंभवम् ॥ १३ ॥

बन्धूनां संश्रयः—आश्रयभूतः तथा। एवमाद्युच्यमानविशेषणकं रामं कौसल्या आत्मसंभवं—याटो लोपः, सन्ध्यभावश्च छान्दसः; औरसपुत्रं नावबुध्यसे किम्? ॥ १३ ॥

---

* लोकोक्तिरियम्। † राक्षसीत्यत्र हेतुमाह—यदित्यादिश्लोकेन। ‡ संक्रान्तं कार्यं विशेषणद्वयेन दर्शितम्—गो. भवत्या कृतस्य पापस्य फलमेवेदं मम पितृवियोगः, भ्रातृविरहश्चेत्यर्थः। § कौसल्यासुतमपि रामं पितृवदेव बन्धूनामाश्रयभूतं किं नावबुध्यसे? तस्मिन् पक्षपातस्याप्रसक्त्या भवद्विप्रियमसंभव्येव खलु—इति वाऽर्थः।

[1] यत्प्रधारयसे तोषं—ङ. [2] बुद्धिसंश्रयम्—ङ. [3] कौसल्यायात्मसंभवम्—ङ.

*अङ्गप्रत्यङ्गजः पुत्रः हृदयाच्चापि जायते ।
तस्मात् † [1]प्रियतरो मातुः प्रियत्वान्न तु [2]बान्धवाः ॥

भवत्वौरसः, किं ततः ? इत्यत्र, औरसत्वादेव हेतोः परमप्रेमास्पदत्वात् तद्वियोगो दुस्सह इत्याशयेनाह—अङ्गेत्यादि । अङ्गानि—मुखकण्ठवक्षःकुक्षिवस्तिहस्तपादलक्षणानि । प्रत्यङ्गानि—नेत्रनासाङ्गुल्यादीनि । तत्तत्तेजोंऽशजस्तथा । अत्र 'अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदश्शतम्' इति मन्त्रे अङ्गादङ्गादिति वीप्सया अङ्गप्रत्यङ्गरूपसर्वाङ्गग्रह इति सूचितम्—अङ्गप्रत्यङ्ग इत्यनेन । सर्वाङ्गतेजःसंभूतत्वं च 'यदेतद्रेतः तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजस्संभूतम्' इति श्रुतेः । स्त्रियास्तु रक्तमेव रेतः । हृदयं—हृदयपुण्डरीकं प्रत्यगात्माधिष्ठानभूतम् । यदेवं जायते—तस्मात् पुत्रः मातुः प्रियतरो भवति—अतिशयेन प्रियो भवति, 'आत्मा वै पुत्रनामासि' इति श्रुतेः पुत्रस्याप्यात्मत्वात् । 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति श्रुतेः, अनुभवाच्च । निरुपधिप्रेमास्पदत्वस्य चात्मनः प्रसिद्धत्वाच्चेत्यर्थः । बान्धवाः—पितृमात्रादयः केवलं प्रिया एव, न तु प्रियतराः । एवमतिशयितप्रियत्वात् पुत्रस्य, तद्वियोगजदुःखं दुस्सहमित्यर्थः ॥ १४ ॥

[3]अन्यदा किल ‡ धर्मज्ञाः सुरभिः सुरसम्मता ।
[4]वहमानौ ददर्शोर्व्यां § पुत्रौ ‖ विगत[5]चेतसौ ॥ १५ ॥

---

* औरसपुत्रविश्लेषो मातुरसह्य इति दर्शयितुं पीठिकेयम् । † बान्धवः—भ्रात्रादिः न प्रियतमः, किन्तु प्रिय एव—**गो.** ‡ धर्मज्ञा—कर्षणकालधर्मज्ञा—**गो.** § पुत्रौ—साक्षात्पुत्रौ, किञ्चिन्निमित्तवशात् भूमिं गतौ । यद्वा स्ववंश्यत्वेन पुत्रव्यपदेश्यौ—**गो.** ‖ विगतचेतसौ—अतिश्रमेण शून्यमनस्कौ ।

[1] प्रियतमो—**ङ.** [2] बान्धवः—**ङ.** [3] एकदा—**ङ.** [4] लभमानौ—**ङ.** [5] चेतनौ—**ङ.**

पुत्रशोको मातुः दुस्सह इत्यत्र इतिहासमाह—अन्यदेत्यादि। धर्मज्ञाः—पुराविदो वृद्धाः अन्यदा—अन्यस्मिन् कस्मिंश्चित्पूर्वकाले, किलेत्यैतिह्ये; तथा वदन्ति किलेत्यर्थः। कथं वदन्ति? इत्यतः—वहमानौ—हलं शकटं वा ॥ १५ ॥

तावर्धदिवसे श्रान्तौ दृष्ट्वा पुत्रौ महीतले।
रुरोद पुत्रशोकेन बाष्पपर्याकुलेक्षणा ॥ १६ ॥

अर्धं दिवसस्य—अर्धदिवसे, एकदेशीसमासः, मध्याह्न इति यावत्। पुत्रौ—साक्षात्पुत्रौ, किञ्चिन्निमित्ततो भुवं गतौ, तथाऽग्रे वदति 'मम कायात् प्रसूतौ' इति ॥ १६ ॥

अधस्तात् व्रजतस्तस्याः सुरराज्ञो महात्मनः।
बिन्दवः पतिता गात्रे सूक्ष्माः सुरभिगन्धिनः ॥ १७ ॥

सुरराज्ञः—सुरराजस्येति यावत् ॥ १७ ॥

निरीक्षमाणस्तां शक्रः ददर्श सुरभिं स्थिताम्।
[1]आकाशे *विष्ठितां दीनां रुदतीं भृशदुःखिताम् ॥ १८ ॥
तां दृष्ट्वा शोक[2]सन्तप्तां वज्रपाणिर्यशस्विनीम्।
इन्द्रः प्राञ्जलिरुद्विग्नः सुरराजोऽब्रवीद्वचः ॥ १९ ॥
†भयं कच्चिन्न चास्मासु कुतश्चिद्विद्यते महत्।
कुतोनिमित्तः शोकस्ते ब्रूहि, [3]सर्वहितैषिणि! ॥ २० ॥

---

* विष्ठितां—निश्चलं स्थिताम्। †प्रायशस्त्वदश्रुमोचनस्य भयसूचकत्वादिति भावः—गो. अत्र तीर्थ-गोविन्दराजदृष्ट्या भयं देवसम्बन्ध्यभिमतम्। कतकदृष्ट्या तु उत्तरश्लोकव्याख्यानुसारेण देवानामन्यतमात् सुरभेरेव भयं अभिमतम्।

[1] आकाशेऽधिष्ठितां—ङ. [2] सन्तप्तः—ङ. [3] सर्व—ङ.

अस्मासु—अस्मदीयामरेष्वित्यर्थः । कुतोनिमित्त इति । आद्यादित्वात् प्रथमान्तविहितस्य तसन्तस्य कुतश्शब्दस्य निमित्तशब्देन समानाधिकरणबहुव्रीहिः, किंनिमित्तक इत्यर्थः ॥ २० ॥

एवमुक्ता तु [1]सुरभिः सुरराजेन धीमता ।
प्रत्युवाच ततो धीरा वाक्यं वाक्यविशारदा ॥ २१ ॥
*शान्तं पापं, न वः किञ्चित् कुतश्चिदमराधिप !
अहं तु †[2]मग्नौ शोचामि स्वपुत्रौ विषमे स्थितौ ॥ २२ ॥

हे अमराधिप ! वः—युष्माकममराणां सम्बन्धी मे किञ्चित् पापं—दुःखमिति यत्, तत् शान्तम्, प्रसङ्गो न कर्तव्यः । 'शान्तं पापम्', 'प्रतिहतममङ्गलम्' इत्यादिकमनुचितप्रसङ्गश्रवणदोषनिवर्तकवचनविशेषः । तत् कुतश्चिदप्यमरान्मे पापं न । किन्त्वहं मग्नौ—दुःखमग्नौ एवमुच्यमानविशेषणवन्तौ पुत्रौ दृष्ट्वा, तत एव हेतोः शोचामीत्यन्वयः ॥ २२ ॥

एतौ दृष्ट्वा कृशौ दीनौ सूर्यरश्मिप्रतापितौ ।
[3]वध्यमानौ बलीवर्दौ कर्षकेण [4]दुरात्मना ॥ २३ ॥
मम कायात् ‡प्रसूतौ हि दुःखितौ भारपीडितौ ।
यौ दृष्ट्वा परितप्येऽहं नास्ति पुत्रसमः प्रियः ॥ २४ ॥

'यौ दृष्ट्वा परितप्येऽहं नास्ति पुत्रसमः प्रियः' इति कामधेनुवचनोपसंहारः ॥ २४ ॥

---

* 'नाश्लीलं कीर्तयेत्' इति निषिद्धाचरणजं पापं शान्तम् । अथ वा अश्लीलश्रवणजं पापं शान्तम् । अथ वा उत्कीर्तितानिष्टप्रापकं पापं यदि स्यात्, तत् शान्तम् । † विषमे मग्नौ स्थितौ इति वाऽन्वयः । ‡ प्रसूतत्वं परंपरया—गो. ती.

[1] सा देवी—ङ. [2] किल—ङ. [3] अर्द्यमानौ—ङ. [4] सुराधिप—ङ.

यस्याः पुत्रसहस्रैस्तु कृत्स्नं व्याप्तमिदं जगत् ।
तां दृष्ट्वा रुदतीं शक्रो न सुतान्मन्यते परम् ॥ २५ ॥

अथेन्द्रव्यापारं कविराह—यस्या इत्यादि । पुत्रसहस्रैरिति । साक्षात्पुत्रधर्माधर्मबलीवर्दसन्तानपतितैरित्यर्थः । तां रुदतीं दृष्ट्वा शक्रोऽपि न सुतात् परं प्रियमस्तीति मन्यते स्म ॥ २५ ॥

[1] इन्द्रो ह्यश्रुनिपातं तं स्वगात्रे पुण्यगन्धिनम् ।
सुरभिं मन्यते दृष्ट्वा भूयसीं तामिहेश्वरः ॥ २६ ॥

इन्द्रः स्वगात्रे तं पुण्यगन्धिनं अश्रुनिपातं दृष्ट्वा तां सुरभिं भूयसीं मन्यते—बहुमन्यते स्म * ॥ २६ ॥

[2] समाप्रतिमवृत्तायाः लोकधारणकाम्यया ।
† श्रीमत्या [3] गुणमुख्यायाः स्वभाव[4]परिचेष्टया ॥ २७ ॥
यस्याः पुत्रसहस्राणि साऽपि शोचति कामधुक् ।
किं पुनर्या विना रामं कौसल्या [5] वर्तयिष्यति ॥ २८ ॥

अतःपरं भरतवाक्यं प्रकृतयोजनशेषतया—समाप्रतिमेत्यादि । समं—सर्वप्राणिसमानुग्राहकं अतुलं सर्वोत्तमं वृत्तं—चरित्रं यस्याः सा तथा । श्रीमत्याः—इष्टदोहनैश्वर्यशक्तिमत्याः गुणमुख्यायाः—गुणः मुख्यः सत्वात्मा यस्याः सा तथा । एवंभूतायाः तस्याः लोकधारण-काम्यया—लोकानुग्रहेच्छया प्रवृत्तायाः स्वभावपरिचेष्टया—'आहारनिद्रा-भयमैथुनं च सामान्यमेतत्पशुभिर्नराणाम्' इति सामान्यप्राप्तमिथुनी-

* तदीयवात्सल्यं दृष्ट्वेति भावः । † गुणनित्यायाः—नित्यगुणायाः यस्याः सुरभेः स्वभावपरिवेषया--स्वभावेन स्त्रीपुंस्वभावेन मैथुनेन परिवेषः—आवृत्तिः यस्याः-गो. अत्र 'लोकधारणकाम्यया श्रीमत्याः' इति यथाश्रुतमेव वाऽन्वयः ।

[1] अयं श्लोकः ङ. पुस्तके नास्ति. [2] सदा—ङ. [3] गुणनित्यायाः—ङ. [4] परिवेषया—ङ. [5] विनशिष्यति—ङ.

भावलक्षणया सन्तानपरंपराद्वारेण यस्याः पुत्रसहस्राणि—अपरिमितपुत्राः सन्ति साऽपि शोचति, औरसपुत्रपीडायां, कथं पुनर्मानुषी कौसल्या एकपुत्रा विना रामं शोकेन वर्तयिष्यति ॥ २८ ॥

एकपुत्रा च साध्वी च विवत्सेयं त्वया कृता ।
तस्मात् त्वं सततं दुःखं प्रेत्य चेह च लप्स्यसे ॥ २९ ॥

सेयं विवत्सेव त्वया कृता । यदेवं—तस्मादित्यादि ॥ २९ ॥

*अहं त्वपचितिं भ्रातुः पितुश्च सकलामिमाम् ।
[1]वर्धनं यशसश्चापि करिष्यामि न संशयः ॥ ३० ॥

अपचितिः—पूजा । इमामिति । प्रस्तुतौर्ध्वदैहिकक्रियामित्यर्थः ॥

[2]आनाय्य च महाबाहुं कोसलेन्द्रं महाबलम् ।
स्वयमेव प्रवेक्ष्यामि वनं मुनिनिषेवितम् ॥ ३१ ॥

आनाय्य—आनाययित्वा यशसश्च वर्धनं करिष्यामीत्यन्वयः । प्रवेक्ष्यामीति । आनयनार्थमिति शेषः ॥ ३१ ॥

न ह्यहं, पापसङ्कल्पे! पापे! पापं त्वया कृतम् ।
शक्तो धारयितुं †पौरैः अश्रुकण्ठैर्निरीक्षितः ॥ ३२ ॥

पापं—रामविवासनरूपम् ॥ ३२ ॥

सा त्वमग्निं प्रविश वा स्वयं वा विश दण्डकान् ।
रज्जुं [3]बध्वाऽथ वा कण्ठे न हि तेऽन्यत् परायणम् ॥ ३३ ॥

कण्ठ इति । म्रियस्वेति शेषः ॥ ३३ ॥

---

* भ्रातुः अपचितिं—राज्याभिषेकरूपां, पितुश्च सकलामिमां—उत्तरक्रियां—स्पष्टं वक्तुमनिच्छया वा एवं कथनम् । † अश्रुकण्ठेषु पौरेषु निरीक्षत्सु—इति यावत् ।

[1] वर्धिनीं—ङ. [2] आनाययित्वा तनयं कौसल्याया महाद्युतिम्—ङ. [3] बधान वा—ङ.

*अहमप्यवनीं प्राप्ते रामे सत्यपराक्रमे ।
कृतकृत्यो भविष्यामि विप्रवासितकल्मषः ॥ ३४ ॥

†इति नाग इवारण्ये तोमराङ्कुशतोदितः ।
पपात भुवि संक्रुद्धः निःश्वसन्निव पन्नगः ॥ ३५ ॥

संरक्तनेत्रः शिथिलाम्बरस्तथा
विधूतसर्वाभरणः परंतपः ।
बभूव भूमौ पतितो नृपात्मजः
शचीपतेः ‡केतुरिवोत्सवक्षये ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुस्सप्ततितमः सर्गः

---

शचीपतेः केतुः—इन्द्रध्वजः । ताल्लु(३६)मानः सर्गः ॥३६॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चतुस्सप्ततितमः सर्गः

---

## पञ्चसप्ततितमः सर्गः

[भरतशपथः]

दीर्घकालात् समुत्थाय संज्ञां लब्ध्वा स वीर्यवान् ।
नेत्राभ्यामश्रुपूर्णाभ्यां दीनामुद्वीक्ष्य मातरम् ॥ १ ॥

एवं क्रुद्धो भरतः परुषवचनैर्मातरं मर्मसु निकृत्य तत्कृतं कार्यं न निजानुमतमिति कौसल्यायै शपथैः प्रत्याययति । दीर्घेत्यादि । दीनां—स्वमनीषितभङ्गतः ॥ १ ॥

---

* वनात् राज्यं प्राप्त इति भावः । † पीडितत्वे गजः, क्रोधनिःश्वासे पन्नगश्च दृष्टान्तः । ‡ उत्सवसमाप्त्यनन्तरमवरोप्य भूमौ स्थापितः उत्सवार्थेन्द्रध्वज इव ।

* सोऽमात्यमध्ये भरतः जननीमभ्यकुत्सयत् ।
राज्यं न कामये जातु † मन्त्रये नापि मातरम् ॥ २ ॥

अमात्याः सुमन्त्रादयः ज्ञात्वा भरतागमनं प्राप्ताः । जननी-मभ्यकुत्सयदिति लोकस्येव स्वस्यापि परमानिष्टताख्यापनाय । अथ 'प्रयोजयिता, मन्ता, कर्ता' इतिस्मृतं त्रिप्रकारमपि कर्तृत्वं प्रकृतपाप-विषये नास्तीति राजकर्तॄन् प्रत्याययति भरतः—राज्यमित्यादि । मन्त्रय इति । राज्यार्थमिति शेषः ॥ २ ॥

‡ अभिषेकं न जानामि योऽभूद्राज्ञा समीक्षितः ।
विप्रकृष्टे ह्यहं देशे शत्रुघ्नसहितोऽभवम् ॥ ३ ॥

समीक्षितः—चिन्तितः । न जानामीत्यत्र हेतुमाह—विप्रकृष्ट इत्यादि । अतिदूरस्थ इत्यर्थः ॥ ३ ॥

वनवासं न जानामि रामस्याहं महात्मनः ।
विवासनं च सौमित्रेः सीतायाश्च यथाऽभवत् ॥ ४ ॥
तथैव क्रोशतस्तस्य भरतस्य § महात्मनः ।
कौसल्या शब्दमाज्ञाय सुमित्रां चेदमब्रवीत् ॥ ५ ॥
आगतः क्रूरकार्यायाः कैकेय्या भरतः सुतः ।
तमहं द्रष्टुमिच्छामि भरतं ‖ दीर्घदर्शिनम् ॥ ६ ॥

---

* एतावता मातृसकाश एव विवादात्, अमात्यादीनामिदानीमेवागतत्वेन तेषां स्वाशयावेदनाय प्रतिजानाति । † मात्रालोचनां नानुमोदामीति वाऽर्थः । ‡ मत्सम्मति-मन्तरा निर्णीतत्वात् नाहमभिषेक्ष्यामीति चार्थः । § अहो! भरतस्य भावः कौसल्यया न ज्ञातः—इति सूचयति कविः—महात्मन इति । ‖ दीर्घदर्शिनमित्यनेन रामनिर्गमनं भरतो न संमन्यत इति कौसल्याहृदयं इति सूचितम्–**गो.** वस्तुतस्तु—'इदं ते राज्यकामस्य' (११) इत्यादिपरिशीलने 'भरतः मात्रा सह मन्त्रयित्वैव सर्वमेवं कृतवान्' इति कौसल्या मन्यते स्म इति भाति । अतः तदनुगुणमेव 'दीर्घदर्शिनं' इति नर्मोक्त्या उपलभते इति स्वरसम् ॥

दीर्घदर्शिनमिति । एवं कृते एवं भविष्यतीति ऐहिकामुष्मिककर्मणः कालान्तरीयफलदर्शनक्षममुमतिमानित्यर्थः । इदं तद्दर्शनप्रवृत्तिप्रयोजकम् ॥ ६ ॥

एवमुक्त्वा सुमित्रां तां [1] विवर्णवदना कृशा ।
प्रतस्थे भरतो यत्र वेपमाना विचेतना ॥ ७ ॥
स तु [2] राजात्मजश्चापि शत्रुघ्नसहितस्तदा ।
प्रतस्थे भरतो [3] येन कौसल्याया निवेशनम् ॥ ८ ॥

येन—मार्गेणेत्यर्थः । निवेशनमिति । प्राप्यत इति शेषः ॥ ८ ॥

*ततः शत्रुघ्नभरतौ कौसल्यां प्रेक्ष्य दुःखितौ ।
पर्यष्वजेतां दुःखार्तां पतितां नष्टचेतनाम् ॥ ९ ॥

कौसल्यां—स्वगृहात् प्रस्थातुमुद्यताम् ॥ ९ ॥

रुदन्तौ †[4] रुदती दुःखात् [5] समेत्यार्या मनस्विनी ।
भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता ॥ १० ॥
इदं ते राज्यकामस्य राज्यं प्राप्तमकण्टकम् ।
संप्राप्तं, बत ! कैकेय्याः ‡ शीघ्रं क्रूरेण कर्मणा ॥ ११ ॥
प्रस्थाप्य चीरवसनं पुत्रं मे वनवासिनम् ।
कैकेयी कं गुणं तत्र पश्यति [6] क्रूरदर्शिनी ॥ १२ ॥

---

* एवमुभयोः प्रयत्नेऽपि कौसल्याया वृद्धात्वात् सप्ताष्टदिनैः बहुधा परिभूतत्वाच्च तस्याः प्रस्थानात्—अथ वा किञ्चिद्दूरप्राप्तेः पूर्वमेव भरतशत्रुघ्नौ कौसल्यागृहं प्राप्ताविति गम्यते । † 'रुदतीं' इत्यादिद्वितीयान्तपाठे तु अस्यार्धस्य पूर्वेणान्वयः । ‡ राज्ञः अकालमरणादिना भवन्निरीक्षितकालादपि शीघ्रं प्राप्तं राज्यं इति वाऽर्थः । अत एव पूर्वं 'दीर्घदर्शिनं' इति, अत्र 'कैकेय्याः क्रूरकर्मणा' इति च स्वरसतः संगच्छते ।

[1] विवर्णा मलिना—ङ. [2] रामानुज—ङ. [3] यत्र—ङ. [4] वदतीं—ङ.
[5] समेत्यार्या यशस्विनीम्—ङ. [6] क्रूरदर्शना—ङ.

राज्यं प्राप्तम्, तत् भुङ्क्ष्व ; त्वमपि मे पुत्र इति न तत्र काचन चिन्ता । अपि तु रामं त्वदागमनादपि पूर्वं शीघ्रं प्रस्थाप्य कं गुणं कैकेयी पश्यतीति न जाने । स्थिते तु स एव पितृवाक्यात् त्वामपि भीष्मादिवत् अभिषिच्य रक्षेत् । अतो व्यर्थोऽयं रामविवासन-प्रयासः कैकेय्या इत्यर्थः ॥ ११-१२ ॥

**क्षिप्रं मामपि कैकेयी प्रस्थापयितुमर्हति ।**
*** हिरण्यनाभो यत्रास्ते सुतो मे सुमहायशाः ॥ १३ ॥**

मामपि प्रस्थापयितुमर्हतीति । ममापि तस्या निष्कारणदुःख-हेतुत्वाविशेषादित्याशयः । हिरण्यनाभ इति । हिरण्मयं नाभिमण्डलं अनाद्यसाधारणस्वभावलक्षणं यस्य स तथा । भगवतो हिरण्यगर्भा-वतारत्वादेवं लक्षणं रामस्यासाधारणम् ॥ १३ ॥

**अथ वा स्वयमेवाहं सुमित्रानुचरा सुखम् ।**
**† अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये येन राघवः ॥ १४ ॥**

अग्निहोत्रं पुरस्कृत्येति । 'कैकेयीवर्त्म गच्छेत् भरतः । तेन मे प्रेतकार्यं न कार्यम्' इति राज्ञा उक्तत्वात्, त्वया च तदनु-वर्तने पित्रा त्वकर्तृकसंस्कारनिषेधात् अग्निहोत्रं पुरस्कृत्य रामसमीपं भर्तुः संस्कारार्थं गमिष्यामीत्यर्थः ॥ १४ ॥

**कामं वा स्वयमेवाद्य तत्र मां नेतुमर्हसि ।**
**यत्रासौ पुरुषव्याघ्रः [1] तप्स्यते मे सुतस्ततः ॥ १५ ॥**

---

* हिरण्यवत् स्पृहणीयनाभियुक्तः ; नाभिग्रहणं शरीरस्योपलक्षणम्-**गो. ती.**

† अग्निहोत्रस्य ज्येष्ठभार्याधीनत्वात्, दशरथेन भरतसंस्कारप्रतिषेधाच्चेति भावः । एतेन राजशरीरप्रापणमप्यर्थसिद्धम्-**गो.**

[1] पुत्रो मे तप्यते तपः-**क.**

अथवाऽद्य त्वं वा स्वयमेव कामं संस्कारादिकं अतत्पक्षश्चेत् कृत्वा पश्चादपि वा मां तत्र नेतुमर्हसि ॥ १५ ॥

इदं हि तव विस्तीर्णं धनधान्य*समाचितम् ।
हस्त्यश्वरथसंपूर्णं राज्यं निर्यातितं तया ॥ १६ ॥

समाचीयते अस्मिन्निति समाचितं—कोशः । निर्यातितं—दापितम्; 'निर्यातनं वैरशुद्धौ दाने न्यासार्पणे मतम्' इति विश्वः ॥ १६ ॥

इत्यादिबहुभिर्वाक्यैः क्रूरैः संभर्त्सितोऽनघः ।
विव्यथे भरतः तीव्रव्रणे तुद्येव सूचिना ॥ १७ ॥

संभर्त्सित इति । परपक्षधियाऽभिभाषित इत्यर्थः । व्रणे प्राचीने सूचिना तुद्येव—व्यथयित्वैव । भर्तृपितृवियोगखिन्नेन आश्वासार्थं आगतस्थलेऽपि पुनः खेदहेतुवचनश्रवणात् तथात्वम् ॥ १७ ॥

पपात † चरणौ तस्याः तदा संभ्रान्तचेतनः ।
विलप्य बहुधाऽसंज्ञः लब्धसंज्ञस्तदाऽभवत् ॥१८॥
एवं विलपमानां तां प्राञ्जलिर्भरतस्तदा ।
कौसल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ॥ १९ ॥

एवं विलपमानामिति । 'इदं ते राज्यं' इत्युक्तरीत्या परपक्षधिया भाषमाणामित्यर्थः ॥ १९ ॥

---

* समाचितं—व्याप्तमिति वा । कतकदृष्ट्या 'विस्तीर्णधनधान्यसमाचितम्' इति एकं पदं स्यादिति भाति । † चरणौ प्रतीति शेषः-गो.

आर्ये! कस्मादजानन्तं गर्हसे मामकल्मषम् ।
विपुलां च मम प्रीतिं [1]स्थिरां जानासि राघवे ॥ २० ॥

अजानन्तमिति । अत्रत्यप्रसङ्गमिति शेषः । राघवे मम विपुलां प्रीतिं जानास्येव ॥ २० ॥

*[2]कृता शास्त्रानुगा बुद्धिः मा भूत्तस्य कदाचन ।
सत्यसन्धः सतां श्रेष्ठः †यस्यार्योऽनुमते गतः ॥ २१ ॥

सत्यं; जानामि पूर्वम्. कथमिदानीम्? इत्यत्र इदानीमपि ततोऽधिकतरैव; पितुरप्यभावात् पितृबुद्धेरपि रामे उपसंहारात्—इतीममर्थं परबुद्धेरप्रत्यक्षत्वात् शपथैः प्रत्याययति—कृतेत्यादि। सत्यसन्धत्वादिगुणकः स आर्यः—रामः यस्य—मेऽनुमते मदनुगतिमदनुज्ञापूर्वककृत्यनिमित्ततः गतश्चेत् तस्य मे कदाचनापि शास्त्रानुगा कृता—श्रुतिस्मृत्यनुगता सुचिरसुस्थिरपरिचिता बुद्धिः सर्वार्थहेतुभूता मा भूत्—तिरोभूयात्। इतोऽधिकोऽनर्थो नास्त्येव पुंसः। अतोऽयं परमः शपथः। अतः परं प्रपञ्चः ॥ २१ ॥

[3]प्रैष्यं पापीयसां यातु, सूर्यं च प्रति मेहतु ।
हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥ २२ ॥

---

* अत्र शपथव्याजेन धर्मविशेषाश्च शिक्ष्यन्ते मुनिनेति बोध्यम्—गो.

† रामविवासनं यस्य सम्मतं स्यात् स एतादृशानि पापानि प्राप्नुयात्—इति शपथस्य सामान्यमुखत्वस्वारस्यादुक्तम्। यदि रामविवासनं मम सम्मतं स्यात्, तदा मम एतानि पापानि भवन्तु—इति प्रकृतपर्यवसानम्—गो.

[1] स्थितां—ङ. च. [2] कृत—ङ. च. [3] प्रेष्यं—ङ.

प्रैष्यं—स्वार्थे ष्यञ्, प्रेष्यत्वमित्यर्थः । यात्विति । यस्य मेऽनुमते गतश्चेत् तस्य मे आत्मा यात्विति योजना । तथा मे आत्मा सूर्यं च प्रति मेहतु—तत्पापं प्राप्नोतु । हन्तु—हननपापं प्राप्नोतु ॥ २२ ॥

**कारयित्वा महत् कर्म भर्ता भृत्यमनर्थकम् ।**
**अधर्मो यस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ २३ ॥**

यस्य कर्मणः भर्ता—कर्मप्रेरकः महत् दुष्करं कर्म भृत्यं कारयित्वा, 'हृक्रोरन्यतरस्याम्' इति द्विकर्मकत्वम्, तत् अनर्थकं—अर्थभूत भृतिशून्यं करोति, अस्य योऽधर्मः स मे आत्मनः अस्तु ॥ २३ ॥

***परिपालयमानस्य राज्ञो भूतानि पुत्रवत् ।**
**[1]ततस्तु द्रुह्यतां पापं यस्यार्योऽनुमते गतः ॥ २४ ॥**

ततस्त्विति । आद्यादित्वात् चतुर्थ्यर्थे तसिः, तस्मै इत्यर्थः । तस्य आत्मनोऽस्त्विति सर्वत्रान्वयः ॥ २४ ॥

**बलिषड्भाग†मुद्धृत्य नृपस्या[2]रक्षितुः प्रजाः ।**
**अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥ २५ ॥**

बलिः—करः, तद्रूपः षड्भागस्तथा । यस्य नृपस्याधर्मः सः, अस्य मे आत्मनोऽस्तु ॥ २५ ॥

**संश्रुत्य च तपस्विभ्यः सत्रे वै यज्ञदक्षिणाम् ।**
**तां [3]विप्रलपतां पापं यस्यार्योऽनुमते गतः ॥ २६ ॥**

सत्रे—यागे । तां विप्रलपतां—अपलपताम् ॥ २६ ॥

---

* राज्ञि परिपालयति सति तं प्रति द्रुह्यतां—गो.　　† उद्धृत्य—स्वीकृत्येति यावत् ।

[1] ततस्तं—ङ.　　[2] रक्षतः—ङ.　　[3] व्यपलपतां—ङ. च.

हस्त्यश्वरथसम्बाधे युद्धे शस्त्रसमाकुले ।
मा स्म कार्षीत् *सतां धर्मं यस्यार्योऽनुमते गतः ॥ २७ ॥

सतां धर्ममिति । अपराङ्मुखतया युद्धमित्यर्थः ॥ २७ ॥

उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता ।
स †नाशयतु दुष्टात्मा यस्यार्योऽनुमते गतः ॥ २८ ॥

धीमता आचार्येणेति शेषः । यस्सुदुष्टात्मा नाशयतिः तथा तस्य मे आत्मा नाशयतु-ब्रह्मोज्झसं पापं प्राप्नोत्वित्यर्थः ॥ २८ ॥

‡मा च तं व्यूढबाह्वंसं चन्द्रभास्करतेजसम् ।
द्राक्षीत् राज्यस्थमासीनं यस्यार्योऽनुमते गतः ॥ २९ ॥

व्यूढौ–विशालौ बाहू अंसौ च यस्य स तथा । राज्यस्थं–राज्यपदप्रतिष्ठितं, अत एव आसीनं–सिंहासनासीनं तं ज्येष्ठं रामं ममात्मा मा द्राक्षीत्–तज्ज्येष्ठानुवर्तनसुकृतं मा प्राप्नोतु ॥ २९ ॥

पायसं कृसरं छागं वृथा सोऽश्नातु निर्घृणः ।
गुरूंश्चाप्यवजानातु यस्यार्योऽनुमते गतः ॥ ३० ॥

कृसरं–तिलौदनम् । वृथा–श्राद्धादिनिमित्तं विना सः–मे आत्मा अश्नातु–तत्पापं प्राप्नोतु ॥ ३० ॥

---

* तादृशक्रूरयुद्धे- शरणागतरक्षणं, इत्यादियुद्धधर्मं वा । † प्राप्ताऽपि तादृशी महाविद्या विफला भवत्वित्यर्थः । ‡ तादृशरामदर्शनभाग्यरहितो भवत्वित्यर्थः–गो. ती. अथ वा–रामं विवास्य स्वाभिषेकं यः साधयितुमिच्छति, सः अङ्गप्रत्यङ्गविकलः, राजार्हतेजोभ्रष्टः अन्ततः स्वाभिमतादपि भ्रष्टः भवेदित्यर्थे – यस्यानुमतौ आर्यो गतः, तं व्यूढबाह्वंसत्वादिविशेषणकं लोकः मा द्राक्षीदित्यन्वयः ॥

*गवां स्पृशतु पादेन, गुरून् परिवदेत च ।
मित्रैर्द्रुह्येत सोऽत्यर्थं यस्यार्योऽनुमते गतः ॥ ३१ ॥

गवामिति । अङ्घ्रिमिति शेषः । परिवदेत—अपवदेत् । मित्रैर्द्रुह्येतेति । चतुर्थ्यर्थे तृतीया, मित्रद्रोहं कुर्यादिति यावत् ॥ ३१ ॥

विश्वासात् कथितं किञ्चित् परिवादं मिथः क्वचित् ।
†विवृणोतु स दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ३२ ॥

परिवादं —कस्यचित्सुरापानादिदोषम् । मिथः—रहस्ये, 'मिथोऽन्योऽन्यरहस्ययोः' इति वैजयन्ती ॥ ३२ ॥

‡अकर्ता चाकृतज्ञश्च §[1] त्यक्तश्च निरपत्रपः ।
लोके भवतु विद्विष्टो यस्यार्योऽनुमते गतः ॥ ३३ ॥

अकर्ता—प्रत्युपकाराकर्ता, अत एवाकृतज्ञः, अत एव त्यक्तः—सज्जनापरिगृहीतः, अत एव लोके विद्विष्टश्च भवतु ॥ ३३ ॥

[2] पुत्रैर्दारैश्च भृत्यैश्च स्वगृहे परिवारितः ।
स एको मृष्टमश्नातु यस्यार्योऽनुमते गतः ॥ ३४ ॥

एको मृष्टमश्नात्विति । इतरेष्वपोषितेष्विति शेषः ॥ ३४ ॥

---

* 'हन्तु पादेन' (२२) इत्यत्र हननमुक्तं, इह तु पादस्पर्शोऽपि पापहेतुरित्युच्यते-गो. † बहुजनमध्ये प्रकटं—इति शेषः । ‡ अकर्ता—प्रत्युपकारस्याकर्ता, अथापि अकृतज्ञः ; आभ्यामेकं पापमुक्तम् । त्यक्तात्मा—सद्भिः परिहृतः, अथापि निरपत्रपः—निर्लज्जः, अकृतप्रायश्चित्त इति यावत् ; इदमेकं पापम्—गो. § त्यक्तात्मा—उद्बन्धनादिना त्यक्तदेहः-ती.

[1] त्यक्तात्मा-ङ. [2] पुत्रैर्दासैश्च-ङ.

अप्राप्य सदृशान् दारान् अनपत्यः प्रमीयताम् ।
अनवाप्य [1] क्रिया धर्म्याः यस्यार्योऽनुमते गतः ॥ ३५ ॥

प्रमीयतां—म्रियताम् । धर्म्याः—अग्निहोत्रादिकाः ॥ ३५ ॥

* माऽऽत्मनः सन्ततिं द्राक्षीत् स्वेषु दारेषु [2] दुःखितः ।
आयुस्समग्रमप्राप्य यस्यार्योऽनुमते गतः ॥ ३६ ॥

अप्राप्येति । म्रियतामिति शेषः † ॥ ३६ ॥

राजस्त्रीबालवृद्धानां वधे यत्पापमुच्यते ।
भृत्यत्यागे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ ३७ ॥

राजस्त्रीत्यादौ 'यस्यार्यः' इत्यनुषङ्गो द्रष्टव्यः ॥ ३७ ॥

‡ लाक्षया मधुमांसेन लोहेन च विषेण च ।
सदैव बिभृयात् भृत्यान् यस्यार्योऽनुमते गतः ॥ ३८ ॥

लाक्षया—लाक्षादिविक्रयेणेत्यर्थः । 'लाक्षालवणमांसानि वर्जनीयानि विक्रये' इति वचनात् निषिद्धस्तद्विक्रयः । विषं वत्सनाभादि । भृत्याः—भरणीयस्त्रीपुत्रादयः ॥ ३८ ॥

[3] सङ्ग्रामे § समुपोढे च [4] शत्रुपक्षभयङ्करे ।
पलायमानो वध्येत यस्यार्योऽनुमते गतः ॥ ३९ ॥

---

* अनेन ऋणापाकरणं विना ब्रह्मचर्यादेव संन्यासः प्रतिषिध्यते । अविरक्तविषयमिदमिति चेन्न - 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्यादेः दारालाभविषयत्वात्—**गो.**
† अथ वा अल्पायुर्भूत्वा पुत्रसन्ततिमप्यप्राप्य म्रियतामित्येकमेव वाक्यम् । पूर्वार्धगतक्रियापदं परित्यज्य अध्याहारादिक्लेशात् । अत्र भिन्नवाक्यत्वे पूर्वश्लोकेऽपि तथा सुवचम् ।
‡ 'अप्यकार्यशतं कृत्वा' इत्यस्यापवादोऽयम्—**गो.** § समुपोढे—निकटे, 'उपोढे निकटोढयोः' इति वैजयन्ती—**गो.**

[1] क्रियां धर्म्यां, क्रियाधर्म—**ङ.** [2] नित्यश.—**ङ.** [3] एतदादि श्लोकद्वयं नास्ति—**ग.** [4] शतपक्ष—**ङ.**

कपालपाणिः पृथिवीं अटतां चीरसंवृतः।
भिक्षमाणो यथोन्मत्तः यस्यार्योऽनुमते गतः॥ ४०॥

चीरं मलिनं जीर्णवस्त्रम्॥ ४०॥

मद्यप्रसक्तो भवतु स्त्रीष्वक्षेषु च नित्यशः।
कामक्रोधाभिभूतश्च यस्यार्योऽनुमते गतः॥ ४१॥

मा स्म धर्मे मनो भूयात् अधर्मं स निषेवताम्।
अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः॥ ४२॥

संचितान्यस्य वित्तानि विविधानि सहस्रशः।
दस्युभिर्विप्रलुप्यन्तां यस्यार्योऽनुमते गतः॥ ४३॥

उभे सन्ध्ये शयानस्य यत्पापं परिकल्प्यते।
तच्च पापं भवेत्तस्य यस्यार्योऽनुमते गतः॥ ४४॥

उभे सन्ध्ये इति। अत्यन्तसंयोगे द्वितीया, उभयोः सन्ध्ययोरित्यर्थः॥ ४४॥

*यदग्नि[1]दायके पापं यत्पापं गुरुतल्पगे।
मित्रद्रोहे च यत् पापं तत्पापं प्रतिपद्यताम्॥ ४५॥

†देवतानां पितृणां च मातापित्रोस्तथैव च।
मा स्म कार्षीत् स शुश्रूषां यस्यार्योऽनुमते गतः॥ ४६॥

---

* अग्निदायके—गृहादिषु अग्निनिक्षेपके—गृहादिदाहक इति यावत्। † देवतानां शुश्रूषा—अग्निहोत्रादिकर्मसंभूतैः आज्यचरुपुरोडाशादिभिः प्रीणनम्। पितृणां तु उपरागादिषु मातापितृमरणतिथ्यादिषु च पूर्वोक्तैरर्घ्यैस्तिलादिमिश्रैराराधनम्। पितृशुश्रूषयैव मातापितृशुश्रूषाग्रहणसंभवात् मातापित्रोरित्यत्र जीवतोरिति विवक्षितम्—**गो.**

[1] दाहके—ङ.

देवतानामित्यादि । देवतादिशुश्रूषाकरणहीनस्य यत् पापं तत् प्रतिपद्यतामित्यर्थः ॥ ४६ ॥

सतां लोकात् सतां[1] कीर्त्याः * संजुष्टात् कर्मणस्तथा ।
भ्रश्यतु क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥ ४७ ॥

सतां कीर्त्याः—सद्भिः क्रियमाणश्लाघनात् । भ्रश्यतु, तस्य म आत्मेत्यनुषङ्गः ॥ ४७ ॥

अपास्य † मातृशुश्रूषां अनर्थे सोऽवतिष्ठताम् ।
दीर्घबाहुर्महावक्षाः यस्यार्योऽनुमते गतः ॥ ४८ ॥

अनर्थे—परस्त्रीवशगत्वाद्यधर्मे ॥ ४८ ॥

[2] बहुपुत्रो दरिद्रश्च ज्वररोगसमन्वितः ।
[3] स भूयात् सततं क्लेशी यस्यार्योऽनुमते गतः ॥ ४९ ॥
आशामाशंसमानानां दीनानामूर्ध्वचक्षुषाम् ।
अर्थिनां वितथां कुर्यात् यस्यार्योऽनुमते गतः ॥ ५० ॥

अर्थिनामाशामिति योजना । आशंसमानानां—स्तुवताम् । ऊर्ध्वचक्षुषां—दातृमुखनिरीक्षकाणाम् ॥ ५० ॥

---

* संजुष्टात्—क्रियमाणादित्यर्थः—ती. सत्सेवितात्- गो. 'जुषी प्रीतिसेवनयोः', सतां सञ्जुष्टात्—प्रीतिविषयात्, तैः सेवितात् कर्मण इति वा । † पुनर्मातृशुश्रूषाग्रहणं तत्त्यागे प्रत्यवायभूयस्तया, तन्नित्यतया च । मातृशुश्रूषा हि नित्या, यतस्तस्यां पतितायामपि शुश्रूषां विदधति स्मृतयः—गो. परन्तु 'दीर्घबाहुर्महावक्षाः' इत्यादि-परिशीलने प्रथमो हेतुरेव युक्त इति प्रतिभाति ।

[1] कीर्त्यात्—ङ. [2] बहुभृत्यो—ङ. [3] समयात्—ङ.

मायया रमतां नित्यं परुषः पिशुनोऽशुचिः ।
राज्ञो भीतस्त्वधर्मात्मा यस्यार्योऽनुमते गतः ॥ ५१ ॥

परुषत्वादिधर्मकः नित्यं मायया रमताम्—तथा रममाणपापं प्रतिपद्यताम् । परुषत्वादिधर्मकत्वादेव राजदण्डात् भीतत्वम् ॥ ५१ ॥

ऋतुस्नातां सतीं भार्यां ऋतुकालानुरोधिनीम् ।
[1] अतिवर्तेत दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ५२ ।

ऋतुकालानुरोधिनीं—ऋतुस्नानदिवसे स्वसन्निहिताम् ॥ ५२ ॥

*धर्मदारान् परित्यज्य परदारान् निषेवताम् ।
[2] त्यक्तधर्मरतिर्मूढः यस्यार्योऽनुमते गतः ॥ ५३ ॥

निषेवतां यत् पापं तत् प्रतिपद्यताम् । मूढः, भूयादिति शेषः ॥ ५३ ॥

† विप्रलुप्तप्रजातस्य दुष्कृतं ब्राह्मणस्य यत् ।
[3] तदेव प्रतिपद्येत यस्यार्योऽनुमते गतः ॥ ५४ ॥

विप्रलुप्ता—अरक्षिता प्रजाता—प्रसूतिका दृष्टादृष्टशक्त्यव लम्बनेन बलात् येन स तथा । अपप्रसवदोषात् स्त्रियं यो न रक्षतीत्यपि यत् पापद्वयं तदेक एव लभताम् ॥ ५४ ॥

पानीयदूषके पापं तथैव विषदायके ।
यत्तदेकः स लभतां यस्यार्योऽनुमते गतः ॥ ५५ ॥

---

* कृत्याकरणाकृत्यकरणयोः संग्रहार्थमुभयोरप्युक्तिः । † अन्नपानाद्यप्रदानेन प्रणष्टसन्तानस्येत्यर्थः, विच्छिन्नसन्तानस्येति वा । यद्वा विप्रलुप्ता—विवर्जिता प्रजाता—प्रसूता—जातापत्या जाया येन तस्य—ती. नष्टापत्यस्य—सन्ततिहीनस्येत्यर्थः—गो.

[1] अतिवर्तेदधर्मात्मा—ङ. [2] परित्यक्तस्वधर्मोऽसौ—ङ. [3] तदेतत्—ङ.

ब्राह्मणायोद्यतां पूजां विहन्तु कलुषेन्द्रियः ।
बालवत्सां च गां दोग्धु यस्यार्योऽनुमते गतः ॥ ५६ ॥

विहन्तु—विघ्नयतु । बालवत्सा—* अनिर्दशा ॥ ५६ ॥

तृष्णार्थे सति पानीये विप्रलंभेन योजयन् ।
लभेत तस्य यत् पापं यस्यार्योऽनुमते गतः ॥ ५७ ॥

विप्रलम्भेन—वञ्चनया । योजयन्—अप्रयच्छन्निति यावत् ॥ ५७ ॥

† भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः ।
तस्य पापेन युज्येत यस्यार्योऽनुमते गतः ॥ ५८ ॥

भक्त्या—शिवविष्ण्वादिदेवताभक्त्या तं तं स्वमार्गं-तदुपोद्बलकशैवादिशास्त्रं आश्रित्य विवदमानेषु सत्सु, 'त्वमपि त्वन्मार्गे प्रबलः, अन्योऽप्यन्यस्मिन् मार्गे । सर्वस्य च मार्गस्य तत्तदधिकार्यनुग्रहार्थमीश्वरप्रणीतत्वाविशेषात, दृष्टादृष्टफलसंवादाविशेषात् । अतो न वृथा कलहः कर्तव्यः' इति कलहशमनं कृत्वा, सत्यपि सामर्थ्ये केवलं पश्यतः कलहप्रियस्य यत् पापं, तेन पापेन युज्येत मे आत्मेत्यर्थः ॥५८॥

विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः ।
एवमाश्वासयन्नेव दुःखार्तो निपपात ह ॥ ५९ ॥

---

* प्रसूत्यनन्तरं अनतिक्रान्तदशदिनेति यावत । † विवदमानेषु—वादिप्रतिवादिषु विवादं कुर्वत्सु सत्सु भक्त्या—एकस्मिन् स्नेहेन मार्गं—जयोपायमाश्रित्य पश्यतः—तूष्णीं भवतः—जयोपायं ज्ञात्वाऽपि पक्षपातेन तूष्णीं भवत इत्यर्थः, तस्य पापेन युज्येतेति सम्बन्धः–ती. वादप्रतिवादिषु विवादं कुर्वत्सु भक्त्या—एकस्मिन् स्नेहेन जयोपायमाश्रित्य पश्यतः—भुवतः–गो. वस्तुतस्तु—कतकोक्तं युक्तम् । अथ वा—परमात्मनि भक्त्या, न तु विजिगीषया, विवदमानेषु परमात्मप्राप्तिसाधनज्ञानाभावात 'अयं वा मार्गः, अयं वा' इति विवादं कुर्वत्सु मुमुक्षुजनेषु, तन्मार्गं आश्रित्यापि तूष्णीं पश्यतः—समीचीनमार्गमनुपदिशतः, इत्यर्थः 'आश्रित्य' इत्यनेन स्वानुभवसिद्धत्वं मार्गस्योक्तम् ।

[1]तथा तु शपथैः कष्टैः शपमानमचेतनम् ।
भरतं शोक[2]सन्तप्तं कौसल्या वाक्यमब्रवीत् ॥ ६० ॥
मम दुःखमिदं, पुत्र ! भूयः समुपजायते ।
शपथैः शपमानो हि *प्राणानुपरुणत्सि मे ॥ ६१ ॥

भूयः—अभ्यधिकम् । शपथैरिति । हे मातः ! नाहं परपक्ष्यः, तत् कार्येणावधारयेत्येतावतैव सिद्धे बहुशपथैः कीर्तनमात्रतोऽपि पापावहैः शपमानोऽसि हि—यस्मात्, अतो मे प्राणानुपरुणत्सि—प्राणपीडासमं दुःखं जायते, तन्मा कुर्विति शेषः ॥ ६१ ॥

दिष्ट्या न चलितो धर्मात् आत्मा ते, †[3]शुभलक्षण !
वत्स ! सत्यप्रतिज्ञो [4]मे सतां [5]लोकमवाप्स्यसि ॥ ६२ ॥

अथ स्वीयतया सम्यक् परिगृह्यानुगृह्णाति—दिष्ट्येत्यादितः । आत्मेति । तवान्तःकरणमिति यावत् । यत् सः सत्यप्रतिज्ञः त्वमपि मे रामवदेव पुत्रोऽसि, अतो रामवदेव सतां लोकमवाप्स्यसि ॥ ६२ ॥

इत्युक्त्वा चाङ्कमानीय भरतं भ्रातृवत्सलम् ।
परिष्वज्य [6]महाबाहुं रुरोद भृशदुःखिता ॥ ६३ ॥

एवमनुगृह्य पुत्रोचितकृत्येन तमाश्वासयति—इत्युक्त्वेत्यादि ॥

एवं विलपमानस्य दुःखार्तस्य महात्मनः ।
मोहाच्च शोक[7]संरोधात् बभूव लुलितं मनः ॥ ६४ ॥

---

* उपरुणत्सि—पीडयसीत्यर्थः । यद्वा प्राणानुपरुणत्सि—रामवियोगेन मे निर्गच्छतः प्राणान् स्थापयसि—**गो.** † सहलक्षणः—शुभलक्षणः ते आत्मा—स्वभावः—**ती. ति.** सहलक्ष्मणः सत्यप्रतिज्ञोऽसि— लक्ष्मणवत् सत्यप्रतिज्ञोऽसीत्यर्थः—**गो.** रामप्रतिकूलत्वेन ज्ञातो भवान् लक्ष्मणवदेव रामानुकूलो ज्ञात इति यावत् ।

[1] तदा तं—ङ. च. [2] सन्तप्ता—ङ. [3] सहलक्षणः—ङ. च., सहलक्ष्मणः—ङ. [4] ऽसि, हि—ङ. [5] लोकान—ङ. [6] महात्मानं—ङ. [7] संरंभात्—ङ.

शोकसंरोधात्—शोकस्मरणजान्मोहात्—मूर्छया मनः लुलितं—क्षुभितं बभूव ॥ ६४ ॥

* तमेवं शोकसन्तप्तं भरतं कैकयीसुतम् ।
उवाच वदतां श्रेष्ठः वसिष्ठः श्रेष्ठवागृषिः ॥ ६५ ॥

वसिष्ठ उवाचेति । भरतागमनं श्रुत्वा तद्दुःखापनोदनार्थं आगत इति शेषः ॥ ६५ ॥

अलं शोकेन, भद्रं ते, राजपुत्र! महायशः!
प्राप्तकालं नरपतेः कुरु † संयानमुत्तमम् ॥ ६६ ॥

संयानं—प्रेतहरणम् ॥ ६६ ॥

‡ लालप्यमानस्य विचेतनस्य
प्रणष्टबुद्धेः पतितस्य भूमौ ।
मुहुर्मुहुर्निश्वसतश्च घर्मं
सा तस्य दुःखेन जगाम रात्रिः ॥ ६७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चसप्ततितमः सर्गः

घर्मं—उष्णं यथा तथा निश्वसतः । अतर्ष (६६ १।२)(!) मानः सर्गः ॥ ६७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चसप्ततितमः सर्गः

* तीर्थगोविन्दराजतिलकादिरीत्या—'तमेवं' इत्यादिश्लोकद्वयं अनन्तरसर्गारम्भे पठनीयम्, कतकदृष्ट्या तु 'लालप्यमानस्य' इत्यादिश्लोकात्पूर्वमस्मिन्नेव सर्गे—इति अनन्तरसर्गोपक्रमव्याख्यानादवगम्यते । † संयानं—सम्यग्यानं—स्वर्गप्रापकक्रियाजातमित्यर्थः-गो. ती. ‡ यद्यपि कौसल्यया समाश्वासितो भरतः; अथापि कौसल्यामुखात् तादृशमहत्तरापवादश्रवणजदुःखस्यानुवृत्त्या दशरथमरणरामविवासनशोकेन च संकटानुभवो भरतस्य ।

## षट्सप्ततितमः सर्गः

[दशरथौर्ध्वदैहिकम्]

**वसिष्ठस्य वचः श्रुत्वा भरतो *[1]धरणीं गतः ।**
**प्रेतकार्याणि सर्वाणि कारयामास धर्मवित् ॥ १ ॥**

वसिष्ठवचनात् पितुः प्रेतकार्ये भरतस्य प्रवृत्तिः । वसिष्ठस्येत्यादि । धरणीं गत इति । वसिष्ठं साष्टाङ्गं नमस्कृत्येत्यर्थः । गुरुनमस्कारश्च सर्वतः कर्मप्रवृत्त्यङ्गम् । धारणं गतः, धारणां गत इति वा पाठमचीक्लृपत्, यं कश्चनार्थमवदच्च । अपि च 'तमेवं शोक' इति सर्गादिरिति ब्रूते । 'दुःखेन जगाम रात्रिः' इत्येव सर्गविच्छेदोचितदेशः । तथैव सर्वत्रानुभवात् † ॥ १ ॥

**[2]उद्धृत ‡ तैलसंरोधात् स तु § भूमौ निवेशितम् ।**
**आपीतवर्णवदनं प्रसुप्तमिव भूपतिम् ॥ २ ॥**
**संवेश्य शयने चाग्र्ये नानारत्नपरिष्कृते ।**
**ततो दशरथं पुत्रो विललाप सुदुःखितः ॥ ३ ॥**

धर्मवित् स इत्यन्वयः । आपीतमिति । बहुदिवसतैलावस्थानोपाधिना आपीतवर्णकं वदनं यस्य स तथा । दशरथमिति । उद्दिश्येति शेषः ॥ २–३ ॥

---

* धारणां गतः—धैर्यं प्राप्तः–गो. स्थितिं प्राप्तः–ती. † उपलभ्यमानकोशेषु सर्वेषु–'जगाम रात्रिः' इत्यत्रैव सर्गविच्छेदो दृश्यते । पूर्वसर्गस्य ६५ श्लोकटिप्पणी द्रष्टव्या । ‡ तैलसंरोधात्—तैलद्रोण्याः–गो. § प्रथमं भूमौ निवेशितं, ततः तैलमार्जनादिकं कृत्वा शयने संवेश्य ।

[1] धारणां–ङ. [2] उद्धृत्य तैलसंसेकात्–ङ.

किं ते व्यवसितं? राजन्! प्रोषिते मय्यनागते ।
विवास्य रामं धर्मज्ञं लक्ष्मणं च महाबलम् ॥ ४ ॥

किं व्यवसितं—किं मनीषितम् ॥ ४ ॥

क्व यास्यसि? महाराज! हित्वेमं दुःखितं जनम् ।
हीनं पुरुषसिंहेन रामेणाक्लिष्टकर्मणा ॥ ५ ॥
योगक्षेमं तु ते, राजन्! कोऽस्मिन् कल्पयिता पुरे?
त्वयि प्रयाते स्वः, तात! रामे च वनमाश्रिते ॥ ६ ॥

ते पुरे—अयोध्यायाम् ॥ ६ ॥

विधवा पृथिवी, राजन्! त्वया हीना न राजते ।
हीनचन्द्रेव रजनी नगरी प्रतिभाति मा ॥ ७ ॥
एवं विलपमानं तं भरतं दीनमानसम् ।
अब्रवीद्वचनं भूयः वसिष्ठस्तु महामुनिः ॥ ८ ॥
प्रेतकार्याणि यान्यस्य कर्तव्यानि [1] विशांपतेः ।
तान्यव्यग्रं, महाबाहो! क्रियन्तामविचारितम् ॥ ९ ॥

अव्यग्रं—परित्यक्तदुःखपारवश्यं यथा तथा । अविचारितं—दुःखहेतुतः प्राचीनपितृवैभवादिस्मरणरहितं यथा तथा ॥ ९ ॥

तथेति भरतो वाक्यं वसिष्ठस्याभिपूज्य तत् ।
* ऋत्विक्पुरोहिताचार्यान् त्वरयामास सर्वशः ॥ १० ॥

---

* ऋत्विजः—यज्ञकर्मणि वृताः, पुरोहिताः—पुरोहितपरत्वेन शान्तिकपौष्टिकादिक्रियाप्रवर्तकाः, आचार्याः—वसिष्ठवामदेवादयः—गो.

[1] विशांपते—ङ.

ऋत्विजः—यज्ञकर्मणि वृताः। पुरोहितः–सर्वहितप्रवर्तकः, तथा ह्याहुः—'त्रय्यां च धर्मकृत्ये च शान्तिकर्मणि पौष्टिके। अध्वरे यश्च कुशलः स स्यात् राजपुरोहितः' इति। उपनीय वेदाध्यापका आचार्याः, 'उपनीय वदेद्वेदमाचार्यः स उदाहृतः' ॥ १० ॥

ये त्वग्नयो नरेन्द्रस्य चाग्न्यगारात् बहिष्कृताः।
ऋत्विग्भिर्याजकैश्चैव [1] ते ह्रियन्त यथाविधि ॥ ११ ॥

अग्न्यगारात् बहिष्कृता इति। अन्तश्शावत्वात् बहिःप्रदेशे प्रतिष्ठापिताः सन्तः ये, याजकैः–उपदेष्टृभिः ऋत्विग्भिश्च यथाविधि ह्रियन्ते स्म ॥ ११ ॥

शिबिकायामथारोप्य राजानं गतचेतनम्।
बाष्पकण्ठा विमनसः तमूहुः परिचारकाः ॥ १२ ॥

हिरण्यं च सुवर्णं च वासांसि विविधानि च।
प्रकिरन्तो जना मार्गं नृपतेरग्रतो ययुः ॥ १३ ॥

हिरण्यं–रजतं, तत्कृतपुष्पमिति यावत्। तथा सुवर्णमित्यपि ॥

चन्दनागरुनिर्यासान् * सरलं पद्मकं तथा।
देवदारूणि चाहृत्य †[2] क्षेपयन्ति तथा परे ॥ १४ ॥

निर्यासः- गुग्गुल्वादि, तज्जधूम इति यावत्। धूमः–देवदारुभेदः, चन्दनादिवत् धूपाङ्गः। पद्मकमपि धूपाङ्गं काष्ठविशेषः। देवदारुः—प्रसिद्धः। क्षेपयन्तीति। धूपार्थमग्नाविति शेषः ॥ १४ ॥

---

* सरलं—धूपसरलं–गो. अत्र व्याख्यादृष्ट्या 'धूमं पद्मकमेव च' इत्येवंरीत्या पाठः स्यादिति भाति। † चन्दानादीनि गन्धान्तानि चिताकाष्ठद्रव्याणीत्येव तु युक्तम्, तदा क्षेपयन्ति–दहनार्थं चितामकुर्वन्नित्यर्थः–गो.

[1] तेऽह्रियन्त–ङ. झ. [2] चितां चक्रुस्तथा परे–ङ. झ.

*गन्धानुच्चावचांश्चान्यान्, †तत्र गत्वाऽथ भूमिपम् ।
ततः संवेशयामासुः चितामध्ये तमृत्विजः ॥ १५ ॥

तथा ‡हुताशनं [2]दत्त्वा जेपुस्तस्य § [3]तदृत्विजः ।
जगुश्च ते यथाशास्त्रं तत्र सामानि सामगाः ॥ १६ ॥

जेपुरिति । पैतृमेधिकमन्त्रविशेषानिति शेषः । तस्येति । परमगत्यर्थमिति शेषः । तदृत्विज इति । तद्यज्ञप्रवर्तका इत्यर्थः ॥ १६ ॥

शिबिकाभिश्च यानैश्च यथार्हं तस्य योषितः ।
नगरान्निर्ययुस्तत्र वृद्धैः परिवृतास्तदा ॥ १७ ॥

यानैः—आन्दोलिकाद्यैः ॥ १७ ॥

प्रसव्यं चापि तं चक्रुः ऋत्विजो¶ऽग्निचितं नृपम् ।
स्त्रियश्च शोकसन्तप्ताः कौसल्याप्रमुखास्तदा ॥ १८ ॥

प्रसव्यं— प्रदक्षिणम् । अग्निचितं—अग्निं चितवन्तम् । 'अग्नौ चेः' इति भूते क्विप्, अश्वमेधान्तमहायज्ञकर्तारमिति यावत् ॥ १८ ॥

क्रौञ्चीनामिव नारीणां निनादस्तत्र शुश्रुवे ।
आर्तानां करुणं काले क्रोशन्तीनां सहस्रशः ॥ १९ ॥

ततो रुदन्त्यो विवशाः विलप्य च पुनः पुनः ।
‖यानेभ्यः सरयूतीरं अवतेरु[4]र्वराङ्गनाः ॥ २० ॥

---

* गन्धानुच्चावचांश्चान्यान् क्षेपयन्तीत्यन्वयः । † तत्र गत्वा—चितास्थलं गत्वा । ‡ हुताशनं दत्त्वा—भरतेन दापयित्वा-गो. § तमिति हुताशनविशेषणम्-गो. ¶ अग्निचितं—अग्निना व्याप्तमिति वा । ‖ पितृवनात् यानमारुह्य सरयूतीरमागताः यानेभ्यः अवतेरुः ॥

[1] दत्त्वा—ङ. [2] हुत्वा—ङ. [3] तमृत्विजः—ङ. [4] नृपाङ्गनाः—ङ.

कृत्वोदकं ते भरतेन सार्धं
　　नृपाङ्गना मन्त्रिपुरोहिताश्च ।
पुरं प्रविश्याश्रुपरीतनेत्राः
　　भूमौ *दशाहं [1]व्यनयन्त दुःखम् ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षट्सप्ततितमः सर्गः

---

भूमौ—भूशयनाद्युपलक्षितब्रह्मचर्येण । 'दशाहं' इत्यत्यन्तसंयोगे द्वितीया, तावत्कालक्षपणीयमाशौचमित्यर्थः । ननु 'द्वादशाहेन भूपालः क्षत्रियः षोडशेऽहनि' इति स्मृतेः कथं दशाहेनाशौचात्ययः ?—सत्यम्—'क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः' इति पराशरस्मृत्युक्तविशेषस्य स्वकर्मनिरतत्वस्य सत्वात् राजर्षेस्तस्य दशाहमात्रतो निवृत्तिराशौचस्य । कर(२१)मानः सर्गः ॥ २१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे षट्सप्ततितमः सर्गः

---

सप्तसप्ततितमः सर्गः

[भरतशत्रुघ्नविलापः]

ततो दशाहेऽतीते तु कृतशौचो नृपात्मजः ।
द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत् ॥ १ ॥

अथाशौचानन्तरं श्राद्धादिप्रवृत्तिः तस्य । तत इत्यादि । दशाह इति । दाहदिनमारभ्येति शेषः । दशाहेऽतीते तु—एकादशेऽह्नि ।

---

* अत्र स्त्रीणां प्रेतप्रदक्षिणं उदकदानं च सूत्रान्तरोक्तं ज्ञेयम्—गो.

[1] व्यचरन्त—ङ.

कृतशौच इति । अनुष्ठितप्रेतत्वविमुक्तिरैकाहश्राद्ध इति यावत् । श्राद्धकर्माणीति । *द्वितीयमासिकादिसपिण्डीकरणान्तश्राद्धानीत्यर्थः॥ १॥

[1]ब्राह्मणेभ्यो ददौ रत्नं धनमन्नं च पुष्कलम् ।
[2]बास्तिकं † बहु शुक्लं च गाश्चापि [3]बहुशस्तदा ॥ २ ॥
दासीर्दासांश्च यानानि वेश्मानि सुमहान्ति च ।
ब्राह्मणेभ्यो ददौ पुत्रः राज्ञस्तस्यौर्ध्वदैहिकम् ॥ ३ ॥

बास्तिकं—बस्तसमूहं, छान्दसष्ठक्, 'अजः प्रोक्तः ततो बस्तः छागश्छागलगच्छगाः' । शुक्लं रजतं, 'शुक्लो योगान्तरे श्वेते शुक्लं च रजते मतम्' इति विश्वः । ऊर्ध्वं देहात् ऊर्ध्वदेहः, तत्र भवं और्ध्वदैहिकं, 'ऊर्ध्वदेहाच्चेति वक्तव्यम' इति ठक् ॥ २–३ ॥

ततः प्रभातसमये दिवसे च त्रयोदशे ।
विललाप महाबाहुः भरतः शोक[4]मूर्छितः ॥ ४ ॥
शब्दापिहितकण्ठश्च शोधनार्थमुपागतः ।
चितामूले पितुर्वाक्यं इदमाह सुदुःखितः ॥ ५ ॥

विललापेति । उच्यमानविशेषणको भरतः शोधनार्थमुपागतः सन् यथाकालं दशाहाभ्यन्तरे अस्थिसञ्चयनं कृत्वा श्राद्धाद्यनन्तरं त्रयोदशदिवसे चिताभस्मोद्धारपूर्वकं स्थलशुद्धिश्च कर्तव्य इति क्षत्रियकुलाचारः । एवं वाल्मीकिवचनमत्र प्रमाणम् ‡ ।

---

* षोडशमासिकानि सपिण्डीकरणान्तानि अकारयत्—अकरोदित्यर्थः–गो.
† बहु शुक्लमिति छागविशेषणम्–गो. शुक्लं-शुद्धं, दानार्हमित्यर्थः–ती. ‡ 'सावशेषास्थिनिचये' इति वक्ष्यमाणत्वात् त्रयोदशेऽप्यस्थिसञ्चयनं सूत्रान्तरे दृश्यते–गो.

[1] एतदनन्तरं—वासांसि च महार्हाणि रत्नानि विविधानि च—इत्यधिकं–ङ. झ.
[2] हास्तिकं–ङ. [3] शतश–ङ. [4] कर्शितः–ङ.

उपागतस्सन् तत्र पितुः चितामूले विललाप । शब्देन—रोदनशब्देन अपिहितः—छन्नः व्याप्तः कण्ठः यस्य स तथा । अथ तत्रैव चितामूले इदं विलापवाक्यं चाह ॥ ४-५ ॥

तात! *यस्मिन्निसृष्टोऽहं त्वया भ्रातरि राघवे ।
तस्मिन् वनं प्रव्रजिते शून्ये त्यक्तोऽस्म्यहं त्वया ॥ ६ ॥

किमाहेत्यतः—तातेत्यादि । निसृष्टः—दत्तः । तस्मिन् प्रव्राजिते सति, छान्दसो ह्रस्वः, त्वयाऽहं शून्ये त्यक्तः—निरवलम्बतया निरस्त इत्यर्थः ॥ ६ ॥

यस्या गतिरनाथायाः [1]पुत्रः प्रव्राजितो वनम् ।
तामम्बां, तात! कौसल्यां त्यक्त्वा त्वं क्व गतः, नृप! ॥
दृष्ट्वा भस्मारुणं तच्च दग्धास्थिस्थानमण्डलम् ।
पितुः †शरीरनिर्वाणं निष्टनन् विषसाद सः ॥ ८ ॥

अतिदाहाद्युपाधिना अरुणं तद्भस्म—चिताभस्म दृष्ट्वा तच्च दग्धास्थीनां सञ्चितानां स्थानमण्डलं—स्थानोपेतं भस्ममण्डलं तथा । एवं निर्वाणं—शान्तं—नष्टं पितुश्शरीरं दृष्ट्वा निष्टनन्—नितरां रोदनशब्दं कुर्वन् विषसाद । सः—भरतः ॥ ८ ॥

स तु दृष्ट्वा रुदन् दीनः पपात धरणीतले ।
‡उत्थाप्यमानः शक्रस्य यन्त्रध्वज [2]इव च्युतः ॥ ९ ॥

---

* यस्मिन् भ्रातरीत्यन्वयः । † शरीरं निर्वाप्यते—विनाश्यते अस्मिन्निति शरीरनिर्वाणं, अधिकरणे ल्युट्—गो. ‡ उत्थाप्यमानः—रज्जुभिरुत्थाप्यमानः च्युतः—स्रस्तः शक्रस्य यन्त्रबद्धो ध्वजः—यन्त्रध्वजः, रज्जुयुक्तो ध्वज इव पपात । यथा यन्त्रपतनात् ध्वजपतनं तथा राजपतनात् भरतपतनमिति भावः—गो. ‘ शचीपतेः केतुरिवोत्सवक्षये ’ (74-36) इत्यत्र उत्सवक्षयशब्देन, उत्सवार्थमारोप्यमाणो ध्वजः—शक्रध्वजः । ध्वजस्यारोहणं च चक्रविशिष्टस्तंभाग्रवर्तियन्त्रसंलग्नरज्जुद्वारेति प्रसिद्धमेव ॥

[1] पुत्रे प्रव्राजिते—ङ. [2] इवोच्छ्रितः—ङ.

*स तु पपातेति द्वितीयतच्छब्दस्य सम्बन्धः। शक्रस्य यन्त्रध्वज इवेति। आकाशस्थशक्रध्वजस्य भूमौ पातायोगात् यन्त्रेत्यलङ्कारार्थं, ध्वजयन्त्ररूपेण निर्मितः शक्रयन्त्रध्वजः ॥ ९ ॥

अभिपेतुस्तत[1]स्सर्वे तस्यामात्याः शुचिव्रतम्।
†अन्तकाले निपतितं ययातिमृषयो यथा ॥ १० ॥
‡शत्रुघ्नश्चापि भरतं दृष्ट्वा शोकपरिप्लुतम्।
[2]विसंज्ञो न्यपतत् भूमौ भूमिपालमनुस्मरन् ॥ ११ ॥
उन्मत्त इव निश्चित्तः विललाप सुदुःखितः।
स्मृत्वा पितु§र्गुणाङ्गानि तानि तानि [3]तदा तदा ॥ १२ ॥

तदा तदा—तस्मिन् तस्मिन् उपलालनकालभेदे गुणाङ्गानि—उपलालनस्याङ्गभूतानि कर्माणि—विचित्रवस्त्राभरणादिदानाङ्कारोपणालिङ्गनादि कर्माणि स्मृत्वा विललाप ॥ १२ ॥

मन्थराप्रभवस्तीव्रः कैकेयी[4]ग्राहसंकुलः।
वरदानमयोऽक्षोभ्यः अमज्जयच्छोकसागरः ॥ १३ ॥

वरदानमयत्वादक्षोभ्यः। अमज्जयदिति। अस्मानिति शेषः॥

सुकुमारं च बालं च सततं लालितं त्वया।
क्व, तात! भरतं हित्वा विलपन्तं गतो भवान् ॥ १४ ॥

---

* पूर्वश्लोकान्तर्गत 'स' शब्दस्यास्य चाव्यवधानात् द्वितीयतच्छब्द इत्युक्तिः।
† अन्तकाले—पुण्यक्षयकाले निपतितं ययातिं ऋषयः—दौहित्रभूता इव—गो.
‡ भरतपतनावधि शत्रुघ्नस्य धैर्यं स्थितं, तत्पतनानन्तरं सोऽपि गलितधैर्योऽभूदिति भावः।
§ गुणाङ्गानि—गुणान् अङ्गानि च—गो.

[1] स्सवः—ङ. [2] निश्चित्तो—ङ, [3] तथा तथा—ङ. [4] ह्रद—ङ.

ननु! भोज्येषु पानेषु वस्त्रेष्वाभरणेषु च ।
*[1] प्रवारयति सर्वान्नः तन्नः कोऽद्य करिष्यति ॥ १५ ॥

प्रवारयतीति । बहून्याभरणादीनि दिव्यवस्तून्युपस्थाप्य 'अङ्ग बाल! इह किं तेऽपेक्षितं तद्गृहाण' इति प्रकर्षेणास्मदस्मदिष्टवरणं कारयति भवान्, तदतःपरमन्यः कः करिष्यति? ॥ १५ ॥

† अवदारणकाले तु पृथिवी नावदीर्यते ।
[2] विहीना या त्वया राज्ञा [3] धर्मज्ञेन महात्मना ॥ १६ ॥

त्वया विहीना या अवदारणकाल इति योजना ॥ १६ ॥

पितरि स्वर्गमापन्ने रामे चारण्यमाश्रिते ।
किं मे जीवितसामर्थ्यं प्रवेक्ष्यामि हुताशनम् ॥ १७ ॥
हीनो भ्रात्रा च पित्रा च शून्यामिक्ष्वाकुपालिताम् ।
अयोध्यां न प्रवेक्ष्यामि प्रवेक्ष्यामि तपोवनम् ॥ १८ ॥
तयोर्विलपितं श्रुत्वा व्यसनं चाप्यवेक्ष्य तत् ।
‡ भृशमार्त[4]तरा भूयः सर्व एवानुगामिनः ॥ १९ ॥

अनुगामिनः–अनुचराः ॥ १९ ॥

---

* प्रवारयसि—प्रकर्षेण स्वयं ग्राहयसि–ती. गो. † या पृथिवी धर्मज्ञेन त्वया विहीना नावदीर्यते—न भिद्यते, स्वयमिति शेषः, सा अवदारणकाले तु–प्रलयकालेऽपि नावदीर्येतेत्यर्थः–ती. गो. अथ वा धर्मज्ञेन त्वया विहीनत्वादेव प्राप्तेऽप्यवदारणकाले पृथ्वी नावदीर्यते—किमिदमाश्चर्यमन्याय्यं वेत्यर्थः । ‡ भृशमार्ततराः, बभूवुरिति शेषः ।

[1] प्रवारयसि, प्रचारयति–ङ. [2] या विहीना–ङ. [3] रामेण च–ङ.
[4] स्वरा–ङ.

ततो विषण्णौ श्रान्तौ च शत्रुघ्नभरतावुभौ ।
धरायां स्म व्यवेष्टेतां भग्नशृङ्गाविवर्षभौ ॥ २० ॥

व्यवेष्टेतां—व्यलुठेतामिति यावत् ॥ २० ॥

ततः प्रकृतिमान् वैद्यः पितुरेषां पुरोहितः ।
वसिष्ठो भरतं वाक्यं उत्थाप्य तमुवाच ह ॥ २१ ॥

प्रकृतिमान्—शुद्धसत्त्वप्रकृतिमान्, अत एव वैद्यः—विद्याशब्दात् 'प्रज्ञादिभ्यश्च' इत्यण्—सर्वज्ञ इति यावत्, 'सर्वज्ञभिषजौ वैद्यौ' ॥ २१ ॥

त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते, विभो !
* सावशेषास्थिनिचये किमिह त्वं विलम्बसे ? ॥ २२ ॥

वृत्तस्य—अतीतस्य । सावशेषास्थिनिचये—चिताभस्मोद्धारभूशुद्धिलक्षणावशेषसहितः अस्थिनिचयः—अस्थिसञ्चयनाख्यं कर्म, तस्मिन् कर्तव्य इति शेषः ॥ २२ ॥

† त्रीणि द्वन्द्वानि भूतेषु प्रवृत्तान्यविशेषतः ।
तेषु चापरिहार्येषु नैवं भवितुमर्हसि ॥ २३ ॥

त्रीणि द्वन्द्वानीति । अस्ति जायते, वर्धते विपरिणमते, अपक्षीयते विनश्यति इत्येतानि भूतानां—प्राणिमात्रस्याविशेषतः प्रवृत्तानि भवन्ति । तेषु चापरिहार्येषु—अवर्जयप्राप्येषु सत्सु त्वं नैवं भवितुं—अत्यज्ञवदतिशोकाक्रान्ततया भवितुं नार्हसि ॥ २३ ॥

---

* दशाहमध्ये शास्त्रविहितं प्रधानावयवास्थिसञ्चयनं कृतम् । त्रयोदशदिवसे तद्देशीयशिष्टाचारप्राप्तस्थलशोधनमात्रं कृतमिति न स्मृतिविरोध इत्यप्याहुः—गो.

† अशनायापिपासे शोकमोहौ जरामृत्यू इत्युक्तानि त्रीणि द्वन्द्वानि—गो. त्रीणिद्वन्द्वानि जन्ममरणे सुखदुःखे लाभालाभे—ती.

सुमन्त्रश्चापि शत्रुघ्नं उत्थाप्याभिप्रसाद्य च ।
श्रावयामास तत्त्वज्ञः * सर्वभूत[1]भवाभवम् ॥ २४ ॥

सर्वभूतभवाभवमिति । वसिष्ठोपदिष्टरूपमिति शेषः ॥ २४ ॥

उत्थितौ च नरव्याघ्रौ प्रकाशेते यशस्विनौ ।
वर्षातपपरिक्लिन्नौ पृथगिन्द्रध्वजाविव ॥ २५ ॥
अश्रूणि परिमृद्नन्तौ रक्ताक्षौ दीनभाषिणौ ।
अमात्यास्त्वरयन्ति स्म तनयौ चापराः क्रियाः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तसप्ततितमः सर्गः

---

परिमृद्नन्तौ—मार्जयन्ताविति यावत् । तनयौ—राजपुत्रौ । अपराः क्रिया इति । भस्मोद्धारभूसम्मार्जनक्षीरसेचनादिक्रियाः, उद्दिश्येति शेषः । तरु(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्तसप्ततितमः सर्गः

---

## अष्टसप्ततितमः सर्गः

[कुब्जापरिभवः]

† अथ यात्रां समीहन्तं शत्रुघ्नो लक्ष्मणानुजः ।
भरतं शोकसंतप्तं इदं वचनमब्रवीत् ॥ १ ॥

अथ कुब्जानिमित्तं रामविवासनमनुशोचता शत्रुघ्नेन दैवात्तत्रागतकुब्जाप्राणान्तपरिभवः । अथेत्यादि । यात्रां—रामसमीपयात्राम् । समीहन्तं—समीहमानमिति यावत् ॥ १ ॥

---

* सर्वभूतभवाभवं—सर्वप्राणिनामुत्पत्तिविनाशादियाथार्थ्यम् । † अथ—दशरथौर्ध्वदैहिकपरिसमाप्त्यनन्तरम् ।

[1] भवाभवौ—ङ.

ततो विषण्णौ श्रान्तौ च शत्रुघ्नभरतावुभौ ।
धरायां स्म व्यवेष्टेतां भग्नशृङ्गाविवर्षभौ ॥ २० ॥

व्यवेष्टेतां—व्यलुठेतामिति यावत् ॥ २० ॥

ततः प्रकृतिमान् वैद्यः पितुरेषां पुरोहितः ।
वसिष्ठो भरतं वाक्यं उत्थाप्य तमुवाच ह ॥ २१ ॥

प्रकृतिमान्—शुद्धसत्त्वप्रकृतिमान्, अत एव वैद्यः—विद्या-शब्दात् 'प्रज्ञादिभ्यश्च' इत्यण्—सर्वज्ञ इति यावत्, 'सर्वज्ञभिषजौ वैद्यौ' ॥ २१ ॥

त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते, विभो !
*सावशेषास्थिनिचये किमिह त्वं विलम्बसे ? ॥ २२ ॥

वृत्तस्य—अतीतस्य । सावशेषास्थिनिचये—चिताभस्मोद्धारभूशुद्धिलक्षणावशेषसहितः अस्थिनिचयः—अस्थिसञ्चयनाख्यं कर्म, तस्मिन् कर्तव्य इति शेषः ॥ २२ ॥

†त्रीणि द्वन्द्वानि भूतेषु प्रवृत्तान्यविशेषतः ।
तेषु चापरिहार्येषु नैवं भवितुमर्हसि ॥ २३ ॥

त्रीणि द्वन्द्वानीति । अस्ति जायते, वर्धते विपरिणमते, अपक्षीयते विनश्यति इत्येतानि भूतानां—प्राणिमात्रस्याविशेषतः प्रवृत्तानि भवन्ति । तेषु चापरिहार्येषु—अवर्ज्यप्राप्येषु सत्सु त्वं नैवं भवितुं—अत्यज्ञवदतिशोकाक्रान्ततया भवितुं नार्हसि ॥ २३ ॥

---

* दशाहमध्ये शास्त्रविहितं प्रधानावयवास्थिसञ्चयनं कृतम् । त्रयोदशदिवसे तद्देशीयशिष्टाचारप्राप्तस्थलशोधनमात्रं कृतमिति न स्मृतिविरोध इत्यप्याहुः—गो.
† अशनायापिपासे शोकमोहौ जरामृत्यू इत्युक्तानि त्रीणि द्वन्द्वानि—गो. त्रीणिद्वन्द्वानि जन्ममरणे सुखदुःखे लाभालाभे—ती.

सुमन्त्रश्चापि शत्रुघ्नं उत्थाप्याभिप्रसाद्य च ।
श्रावयामास तत्त्वज्ञः * सर्वभूत[1]भवाभवम् ॥ २४ ॥

सर्वभूतभवाभवमिति । वसिष्ठोपदिष्टरूपमिति शेषः ॥ २४ ॥

उत्थितौ च नरव्याघ्रौ प्रकाशेते यशस्विनौ ।
वर्षातपपरिक्लिन्नौ पृथगिन्द्रध्वजाविव ॥ २५ ॥
अश्रूणि परिमृद्नन्तौ रक्ताक्षौ दीनभाषिणौ ।
अमात्यास्त्वरयन्ति स्म तनयौ चापराः क्रियाः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तसप्ततितमः सर्गः

---

परिमृद्नन्तौ—मार्जयन्ताविति यावत् । तनयौ—राजपुत्रौ । अपराः क्रिया इति । भस्मोद्धारभूसम्मार्जनक्षीरसेचनादिक्रियाः, उद्दिश्येति शेषः । तरु(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्तसप्ततितमः सर्गः

---

## अष्टसप्ततितमः सर्गः

[कुब्जापरिभवः]

† अथ यात्रां समीहन्तं शत्रुघ्नो लक्ष्मणानुजः ।
भरतं शोकसंतप्तं इदं वचनमब्रवीत् ॥ १ ॥

अथ कुब्जानिमित्तं रामविवासनमनुशोचता शत्रुघ्नेन दैवात्तत्रागतकुब्जाप्राणान्तपरिभवः । अथेत्यादि । यात्रां—रामसमीपयात्राम् । समीहन्तं—समीहमानमिति यावत् ॥ १ ॥

---

* सर्वभूतभवाभवं—सर्वप्राणिनामुत्पत्तिविनाशादियाथार्थ्यम् । † अथ—दशरथौर्ध्वदैहिकपरिसमाप्त्यनन्तरम् ।

[1] भवाभवौ—ङ.

गतिर्यः सर्वभूतानां* दुःखे, किं पुनरात्मनः ।
स रामः सत्त्वसंपन्नः स्त्रिया प्रव्राजितो वनम् ॥ २ ॥

गतिः—दुःखापनोदनकर्ता । किं पुनरात्मन इति । आवयोरित्यर्थः । स राम इति । सर्वप्राणिदुःखापहर्ता ॥ २ ॥

†बलवान् वीर्यसंपन्नः लक्ष्मणो ‡नाम योऽप्यसौ ।
किं न मोचयते रामं [1]कृत्वा स पितृनिग्रहम् ॥ ३ ॥

लक्ष्मणो नाम योऽप्यस्माकं भ्राताऽस्ति, रामं स वा पितृनिग्रहं—पितृशिक्षणं कृत्वाऽपि किं न मोचयते स्म वनवासात् ॥ ३ ॥

पूर्वमेव तु निग्राह्यः समवेक्ष्य नयानयौ ।
उत्पथं यः समारूढः राजा नार्या वशं गतः ॥ ४ ॥

कथं पितृनिग्रहः शक्य इत्यत्राह—पूर्वमित्यादि । यो नो राजा नार्या वशं गतस्सन् उत्पथं समारूढो यतः, अतो लक्ष्मणेन स्वयं नयानयौ—अभिषेकविषयकनयानयौ समीक्ष्य—विचार्य, 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम्' इति शास्त्रं चानुसन्धाय रामप्रव्राजनात् पूर्वं तत्प्रसङ्गकाल एव निग्राह्यः—'नेदमुचितम्, तूष्णीमास्स्व' इति बलादेव च निवर्तनीय इत्यर्थः ॥ ४ ॥

---

*सर्वभूतानां—प्राणिमात्रस्य दुःखे सति यो गतिः, स आत्मनो दुःखे गतिरिति किं पुनः—किं वक्तव्यम् ! एवं दुःखनिस्तारक्षमो रामः सत्त्वसंपन्नोऽपि—बलसंपन्नोऽपि स्त्रिया—अत्यन्ताबलया वनं प्रव्राजितः ; इदमत्यन्तचित्रमिति भावः—गो.

† सत्त्वसंपन्नो रामोऽपि तूष्णीं अभूच्चेत् वीर्यसंपन्नो लक्ष्मणोऽपि कुतस्तूष्णीमभूदिति भावः ।

‡ नामेति कुत्सने, 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इति वैजयन्ती—गो.

[1] कृत्वाऽपि—ङ.

इति संभाषमाणे तु शत्रुघ्ने लक्ष्मणानुजे ।
* प्राग्द्वारेऽभूत् तदा कुब्जा सर्वाभरणभूषिता ॥ ५ ॥

प्राग्द्वारेऽभूत् — शत्रुघ्नाधिष्ठितप्राग्द्वारे दैवादागताऽभूत् ॥ ५ ॥

लिप्ता † चन्दनसारेण राजवस्त्राणि बिभ्रती ।
विविधं विविधैस्तैस्तैः भूषणैश्च विभूषिता ॥ ६ ॥

राजवस्त्राणि — राजार्हाणि वस्त्राणि तथा ॥ ६ ॥

मेखलादामभिः चित्रैः अन्यैश्च शुभभूषणैः ।
बभासे बहुभिर्बद्धा रज्जुबद्धेव वानरी ॥ ७ ॥

वानरीति कुरूपत्वात् ॥ ७ ॥

तां समीक्ष्य तदा [1] द्वास्स्थां सुभृशं पापकारिणीम् ।
गृहीत्वा[2]ऽकरुणं कुब्जां शत्रुघ्नाय [3] न्यवेदयन् ‡ ॥ ८ ॥

अकरुणं — निर्दयं, बलादित्यर्थः ॥ ८ ॥

यस्याः कृते वने रामः न्यस्तदेहश्च वः पिता ।
सेयं पापा नृशंसा च तस्याः कुरु यथामति ॥ ९ ॥

यथामतीति । निग्रहमिति शेषः ॥ ९ ॥

शत्रुघ्नश्च तदाज्ञाय वचनं भृशदुःखितः ।
अन्तःपुरचरान् सर्वान् इत्युवाच [4] धृतं वचः ॥ १० ॥

धृतं — अवधृतं — निश्चितम् ॥ १० ॥

---

* राजगृहस्य सर्वस्यापि कैकेय्यधीनत्वात्, स्वस्य कैकेय्याश्रयधैर्याच्च निभृतं संचरन्ती कुब्जा तत्रागच्छदिति ॥ † चन्दनसारेण — चन्दनपङ्केन — गो. उत्तमचन्दनेनेति वा । ‡ तत्रस्था द्वारपालादय इति शेषः ।

[1] द्वास्स्थाः — ङ. [2] ऽकरुणां — ङ. [3] न्यवेदयत् — ङ. च. [4] द्रुतं — ङ.

तीव्रमुत्पादितं दुःखं भ्रातॄणां मे तथा पितुः ।
यया सेयं नृशंसस्य कर्मणः फलमश्नुताम् ॥ ११ ॥

अश्नुतां—तथा कर्तव्यं मयेति शेषः ॥ ११ ॥

एवमुक्त्वा तु तेनाशु सखीजनसमावृता ।
गृहीता बलवत् कुब्जा सा तद्गृहमनादयत् ॥ १२ ॥
ततः सुभृश[1]सन्त्रस्तः तस्याः सर्वः सखीजनः ।
क्रुद्धमाज्ञाय शत्रुघ्नं विपलायत सर्वशः ॥ १३ ॥
*[2]आमन्त्रयत कृत्स्नश्च तस्याः सर्वः सखीजनः ।
यथाऽयं समुपक्रान्तः निश्शेषान्नः करिष्यति ॥ १४ ॥

समुपक्रान्तः—संप्राप्तः ॥ १४ ॥

सानुक्रोशां †वदान्यां च धर्मज्ञां च यशस्विनीम् ।
कौसल्यां शरणं याम सा हि [3]नोऽस्तु ध्रुवा गतिः ॥ १५ ॥

सा हि नः—अस्माकं ध्रुवा गतिरिति तां शरणं जग्मुरिति शेषः ॥ १५ ॥

स च रोषेण ताम्राक्षः शत्रुघ्नः शत्रु[4]तापनः ।
विचकर्ष तदा कुब्जां क्रोशन्तीं पृथिवीतले ॥ १६ ॥

पृथिवीतले, पातयित्वेति शेषः ॥ १६ ॥

---

* आमन्त्रयत—अन्योन्यमाह्वयत्—गो. † वदान्यां—वल्गुवाचं, 'वदान्यो वल्गुवागपि' इति वैजयन्ती—गो. उदारामिति वा ।

[1] सन्तप्तः—ङ. [2] अमन्त्रयत—ङ. [3] नोऽस्ति—ङ. [4] शासनः—ङ.

तस्या ह्याकृष्यमाणाया मन्थरायास्ततस्ततः ।
चित्रं बहुविधं भाण्डं पृथिव्यां तद्व्यशीर्यत ॥ १७ ॥

' भाण्डं भूषणमात्रेऽपि ' इति विश्वः ॥ १७ ॥

तेन भाण्डेन [1] संस्तीर्णं श्रीमद्राजनिवेशनम् ।
अशोभत तदा भूयः शारदं गगनं यथा ॥ १८ ॥
स बली बलवत्क्रोधात् गृहीत्वा पुरुषर्षभः ।
कैकेयीमभिनिर्भर्त्स्य बभाषे * परुषं वचः ॥ १९ ॥

कैकेयीमभिनिर्भर्त्स्येति । कुब्जाया मोचनार्थमागतामिति शेषः ॥

तैर्वाक्यैः परुषैर्दुःखैः कैकेयी भृशदुःखिता ।
शत्रुघ्नभय[2]वित्रस्ता पुत्रं शरणमागता ॥ २० ॥

परुषैः—मर्मग्राहिभिः, अत एव दुःखैः । भयवित्रस्तेति । कुब्जारक्षणार्थमागतेति कोपात् कैकेयीं च प्रहर्तुमुद्यतवान् शत्रुघ्न इति स्पष्टम् ॥ २० ॥

[3] तां प्रेक्ष्य भरतः क्रुद्धं शत्रुघ्नमिदमब्रवीत् ।
अवध्याः सर्वभूतानां प्रमदाः क्षम्यतामिति ॥ २१ ॥
हन्यामहमिमां पापां कैकेयीं दुष्टचारिणीम् ।
यदि मां धार्मिको रामः † नासूयेन्मातृघातकम् ॥ २२ ॥

---

* वाक्यानामननुवादः अत्यन्तपारुष्यादनुवादानर्हत्वतः, अशक्त्या वा स्यात् ।
† नासूयेत्—न गर्हेत—गो.

[1] संकीर्ण—ङ. [2] संत्रस्ता—ङ. [3] तं—ङ.

हन्यामहमिति। हे शत्रुघ्न! अहमेवेमां हन्याम्, यदि मातृघातकं मां प्रति नासूयेत्—न कुप्येदिति यावत् ॥ २२ ॥

इमामपि हतां कुब्जां यदि जानाति राघवः।
त्वां च मां च हि धर्मात्मा नाभिभाषिष्यते ध्रुवम्* ॥

कुब्जामपि हतां यदि जानाति, तदा स्त्रीघातिनाविति त्वां च मां चैव नाभिभाषिष्यते ॥ २३ ॥

भरतस्य वचः श्रुत्वा शत्रुघ्नो लक्ष्मणानुजः।
न्यवर्तत ततो †रोषात् तां मुमोच च मन्थराम् ॥ २४ ॥
सा पादमूले कैकेय्या मन्थरा निपपात ह।
निश्वसन्ती सुदुःखार्ता कृपणं विललाप च ॥ २५ ॥

शत्रुघ्न‡विक्षेपविमूढसंज्ञां
समीक्ष्य कुब्जां भरतस्य माता।
शनैः समाश्वासयदार्तरूपां
क्रौञ्चीं §[1]विलग्नामिव वीक्षमाणाम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टसप्ततितमः सर्गः

---

तार(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे अष्टसप्ततितमः सर्गः

---

* इति शत्रुघ्नमब्रवीदित्याकर्षः। †रोषादेव, न तु शमेनेति भावः। ‡विक्षेपः—भ्रामणं—गो. §विलग्नां—वागुरालग्नामिति भावः, विविग्नामिति पाठे कम्पवतीमित्यर्थः—गो.

[1] विविग्नामिव—ङ.

## एकोनाशीतितमः सर्गः

[रामानयनोद्यमः]

ततः प्रभातसमये दिवसे च चतुर्दशे ।
समेत्य [1]राजकर्तारः भरतं वाक्यमब्रुवन् ॥ १ ॥

अथ राजकर्तृभिरभिषेकप्रार्थितभरतेनानौचित्यतोऽभिषेकनिवर्तनपूर्वकं रामानयनायोद्युज्यते । तत इत्यादि ॥ १ ॥

गतो दशरथः स्वर्गं यो नो [2]गुरुतरो गुरुः ।
रामं प्रव्राज्य वै ज्येष्ठं लक्ष्मणं च महाबलम् ॥ २ ॥

अतिशयेन गुरुः गुरुतरः, 'राजानं प्रथमं विन्देत् ततो भार्यां ततो धनम्' इत्यादेर्मातापित्रादेरपि स्वात्मरक्षासाक्षात्साधनत्वात् राजा गुरुः । ज्येष्ठः—राज्यार्हः ॥ २ ॥

त्वमद्य भव नो राजा, राजपुत्र ! महायशः !
*सङ्गत्या नापराध्नोति राज्यमेतदनायकम् ॥ ३ ॥

---

* संगत्या—सामन्तामात्यादीनामैकमत्येन अनायकमप्येतद्राज्यं नापराध्नोति—राज्यस्थजनजातं अन्योन्यं न द्रुह्यतीत्यर्थः । यद्वा—एवं राज्यमनायकमपि संगत्या इदं तु राज्यं दैवयोगेन न नश्यति । अतस्त्वं नो राजा भवेति सम्बन्धः—ती. दैवगत्या नापरोध्नोति—न विनश्यति । सर्वमपि राज्यं नायकरहितं सन्नश्यति, 'राजानं प्रथमं विन्देत् ततो भार्यां ततो धनम्' इति मातापित्रादेरपि राज्ञ एवान्तरङ्गरक्षकत्वोपदेशात् अनायकमपि एतद्राज्यं संगत्या—दैवयोगेन नापराध्नोति—राज्यस्य जनजातमन्योन्यं न द्रुह्यतीत्यर्थः—गो. वस्तुतस्तु—संगतिः—सङ्घटना—सन्निवेशः । इदं राज्यं त्वनायकं वर्तते । भवत्प्रार्थनामन्तरैवागतं च वर्तते । एतादृशसन्निवेशविशेषे एतद्राज्यस्वीकारे भवान् नापरोध्नोति—भवतः अपराधप्रसक्तिरेव नास्ति, अतः स्वीक्रियतामित्यर्थः स्वरसः प्रतिभाति ।

[1] राज्य—ङ. [2] राजा गुरुस्तव, गुरुतरो महान्—ङ.

अपि तु तस्य वनवासं प्रति सङ्गत्या–पितुराज्ञासंगमात्, तव च राज्यं प्रति पित्राज्ञासंगमात्, पित्राज्ञाया उभाभ्यामपि कर्तव्यत्वात्, अतः पितुराज्ञामूलतो राजतायां भवान् नापराप्नोति—धर्मविरोधं ज्येष्ठविरोधं लोकविरोधं च न प्राप्नोति। अत न्यायत एव त्वयि राजनि सति एतद्राज्यं चाराजकं सत् नापराप्नोति—न नश्यति। बहुवदति सङ्गत्येत्यत्रान्यः*, न तत् किमपि सङ्गतं पश्यामः ॥ ३ ॥

**आभिषेचनिकं सर्वमिदमादाय, राघव !**
**प्रतीक्षते त्वां स्वजनः श्रेणयश्च, नृपात्मज ! ॥ ४ ॥**

आभिषेचनिकं—अभिषेकप्रयोजनं पदार्थजातं, रामाभिषेकविषयकं; 'तत्प्रयोजनम्' इति ठक्। स्वजन इति—स्वकीयमन्त्रिपुरोहितादयः। श्रेणयः—पौराः ॥ ४ ॥

**राज्यं गृहाण, भरत ! पितृपैतामहं ध्रुवम्।**
**अभिषेचय चात्मानं पाहि चास्मान्, नरर्षभ ![1] ॥ ५ ॥**
**† आभिषेचनिकं भाण्डं कृत्वा सर्वं प्रदक्षिणम्।**
**[2] भरतस्तं जनं सर्वं प्रत्युवाच [3] धृतव्रतः ॥ ६ ॥**

भाण्डं—उपकरणम् ॥ ६ ॥

---

* महेश्वरतीर्थः, गोविन्दराजो वा। † 'सर्वमिदमादाय' इत्यनुपदमुक्त्या तैस्तत्रैवानीतं सर्वमिति गम्यते।

[1] एतदनन्तरं- 'एवमुक्तः शुभं वाक्यं द्युतिमान् सत्यवाक् शुचिः' इत्यधिकं–ङ.
[2] एतदर्धस्थाने 'भरतः स्वं जनं सर्वं सरोषमभिवीक्ष्य च। क्षणं पिधाय कर्णौ सः प्रत्युवाच धृतव्रतः' इत्यर्धद्वयं दृश्यते–क. [3] दृढव्रतः–क.

ज्येष्ठस्य राजता नित्यं उचिता हि कुलस्य नः ।
नैवं भवन्तो मां वक्तुं अर्हन्ति * कुशला जनाः ॥ ७ ॥
रामः पूर्वो हि [1] नो भ्राता भविष्यति महीपतिः ।
अहं त्वरण्ये वत्स्यामि वर्षाणि नव पञ्च च ॥ ८ ॥

अहं त्वरण्ये वत्स्यामीति । 'पितृवचनं मया परिपालनीयम्' इति रामो वदति चेत् तत्प्रतिनिधित्वेनेति शेषः ॥ ८ ॥

युज्यतां महती सेना चतुरङ्गमहाबला ।
आनयिष्याम्यहं ज्येष्ठं भ्रातरं राघवं वनात् ॥ ९ ॥
आभिषेचनिकं चैव सर्वमेतत् † उपस्कृतम् ।
पुरस्कृत्य गमिष्यामि रामहेतोर्वनं प्रति ॥ १० ॥

रामहेतोरिति । रामाभिषेकार्थमित्यर्थः ॥ १० ॥

तत्रैव तं नरव्याघ्रं अभिषिच्य ‡ पुरस्कृतम् ।
[2] आनयिष्याम्यहं रामं हव्यवाहमिवाध्वरात् ॥ ११ ॥

हव्यवाहमिवाध्वरादिति । अध्वरात्---महायज्ञशालायाः स्वाग्निहोत्रगृहमिवेत्यर्थः ॥ ११ ॥

न सकामां करिष्यामि [3] स्वामिमां § पुत्रगन्धिनीम् ।
वने वत्स्याम्यहं दुर्गे रामो राजा भविष्यति ॥ १२ ॥

पुत्रगन्धिनीमिति पाङ्क्तः पाठः ॥ १२ ॥

---

* कुशलाः—स्वाधीनमतयः, न्यायपरा वा भवादृशा इत्यर्थः । † उपस्कृतं—संनद्धं, अत्रानीतं वा । ‡ पुरस्कृतं—पूजितं, 'पुरस्कृतः पूजितेरात्यभियुक्तेऽग्रतः कृते' इति वैजयन्ती । यद्वा-पुरस्कृतं-स्वजनदर्शनेनाभिमुखीकृतम्-गो. § मातृगन्धिनीं—केवलमातृव्यपदेशां, लेशमात्रमातृभावामिति वा, 'गन्धो लेशे महीगुणे' इति वैजयन्ती-गो.

[1] मे-ङ. [2] अनेष्यामि तु वै-ङ. [3] मातरं पुत्रगर्धिनीम्, स्वामिमां मातृगन्धिनीम्-ङ.

क्रियतां शिल्पिभिः पन्थाः समानि विषमाणि च ।
रक्षिणश्चानुसंयान्तु पथि दुर्ग[1]विशारदाः ॥ १३ ॥

रामो राजा भविष्यति, अतो रामसमीपं राजोचितपरिकरोपेततया गन्तव्यम्, अतः पथि शोधः क्रियतामिति नियोजयति—क्रियतामित्यादि । शिल्पिनः—खनकादयः । विषमाणि च—निम्नोन्नतान्यपि स्थलानि समानि क्रियन्ताम् । रथशकटीसुखगमनार्थमित्यर्थः । पथि वर्तमानस्य दुर्गस्य—मलिम्लुचादिना गन्तुमशक्यप्रदेशस्य रक्षणे विशारदाः ॥ १३ ॥

एवं संभाषमाणं तं * रामहेतोर्नृपात्मजम् ।
प्रत्युवाच जनः सर्वः श्रीमद्वाक्यमनुत्तमम् ॥ १४ ॥

एवं संभाषमाणं तं प्रति सर्वो जनः श्रीमत्—शुभं अनुत्तमं वाक्यमुवाच ॥ १४ ॥

एवं ते भाषमाणस्य † पद्मा श्रीरुप[2]तिष्ठताम् ।
यस्त्वं ज्येष्ठे ‡ नृपसुते पृथिवीं दातुमिच्छसि ॥ १५ ॥

किमुवाचेत्यतः—एवमित्यादि । एवं रामराज्यं भाषमाणस्य ते पद्माख्या पद्मचिह्ना च श्रीः त्वामुपतिष्ठतां रामानुग्रहादिति जनस्यायमाशीर्वादः भरतं प्रति । एवमाशीर्वादार्हधार्मिकत्वं जनो

---

* रामहेतोः संभाषमाणमित्यन्वयः । † पद्मा—पद्महस्ता—ती. पद्मालया—गो.
‡ नृपसुते—चतुर्थ्यर्थे सप्तमी—ती.

[1] विचारकाः—ङ. [2] तिष्ठताद्—ङ.

दर्शयति—यस्त्वमित्यादि । दातुमिच्छसीति यत् अतः श्रीः—इहामुत्र च त्वामुपतिष्ठतामित्यन्वयः ॥ १५ ॥

अनुत्तमं तद्वचनं [1] नृपात्मजः
प्रभाषितं * संश्रवणे निशम्य च ।
प्रहर्षजास्तं प्रति बाष्पबिन्दवः
† निपेतु[2]रार्याननेत्रसंभवाः ॥ १६ ॥

नृपात्मजः जनैः प्रभाषितमनुत्तमं तद्वचनं संश्रवणे—सम्यक् श्रवणविषये प्राप्तं निशम्य—श्रुत्वा तं प्रति तेनैव हेतुना लक्षणेन, प्रतिर्लक्षणे, कर्मप्रवचनीयत्वात् तमिति द्वितीया, आर्यस्य—पूज्यस्य— भरतस्य यदार्याननं—पूज्यं मुखं, जनाशीर्वादसन्तोषोपलक्षितत्वात् पूज्यत्वं मुखस्य प्राक् दुःखदुर्दर्शनस्य, तादृशाननवर्तिनेत्रसंभवाः—आनन्दजा इति यावत् । तदेव स्पष्टीकृतं—प्रहर्षजा इति । बाष्पबिन्दवः पेतुरिति । अत्रान्यः—श्लोकोऽयं व्यर्थः । स्थितस्य गतिश्चिन्तनीयेति किञ्चित् व्याख्यातमित्यवोचत । एवं चेत् विनाऽपि सर्वमपि रामायणं संक्षेपमात्रतः सर्वार्थस्य सिद्धत्वात् सर्वोऽपि व्यर्थः तस्य । अतस्तस्य स्थितगतिचिन्तनाऽसौ यथाकथञ्चित् । नापि च व्यर्थः ; भरतसौमुख्यस्यानुक्तस्य प्रवृत्तये अवश्यवक्तव्यत्वात् ॥ १६ ॥

---

* संश्रवणे— रामानयनप्रतिज्ञाविषये-**ती. गो.** निशम्य स्थितानामिति शेषः ।

† आर्येत्यविभक्तिकनिर्देशः, आर्याणामिति यावत्-**गो.** तं प्रति—भरतमधिकृत्येत्यर्थः ।

[1] नृपात्मजप्रभाषितं-**ङ.** [2] रुर्व्यां जननेत्रसंभवाः-**ङ.**

ऊचुस्ते वचनमिदं निशम्य हृष्टाः
सामात्याः [1] सपरिषदो वियातशोकाः ।
पन्थानं, नरवर ! * भक्तिमान् जनश्च,
व्यादिष्टास्तव वचनाच्च शिल्पिवर्गः ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकोनाशीतितमः सर्गः

इदं वचनं—रामानयनवचनम् । विशेषेण यातः—अपगतः शोकः येषां ते तथा—वियातशोकाः, राजकर्तार इति शेषः । हे नरवर! तव वचनादेव रामे त्वयि च भक्तिमान् शिल्पिवर्गः दुर्गे पथि रक्षी जनश्च पन्थानं करोत्वित्यूचुः । सेक(१७)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकोनाशीतितमः सर्गः

## अशीतितमः सर्गः

[मार्गसंस्कारः]

अथ भूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः ।
स्वकर्माभिरताः शूराः खनका यन्त्रकास्तथा ॥ १ ॥

अथ भरतनियुक्तशिल्प्यादिभिः मार्गशोधनम् । अथेत्यादि । भूमिप्रदेशं निम्नोन्नतादिप्रदेशं जानन्तीति भूमिप्रदेशज्ञाः † । सूत्रकर्मणि — निर्जलस्थलेष्वगाधवापीकूपादिजलोद्धारसूत्रकर्माणि — यन्त्र-

---

* भक्तिमान् जनः, शिल्पिवर्गश्च व्यादिष्टाः—प्रचोदिताः, तत्तत्कृत्येष्वित्यर्थः । रामानयनोत्साहवशात् 'क्रियतां शिल्पिभिः पन्थाः' इति भरतकथनमात्रेण अमात्याः दक्षाः तत्क्षण एव पार्श्वस्थसन्देशवाहकादिद्वारा मार्गसमीकरणार्थं आज्ञां प्रेषयित्वा 'व्यादिष्टाः' इत्यवदन् । कार्यनिष्पत्तिदार्ढ्याय च 'भक्तिमान्' इति पदम् ।
† यद्वा—नानादेशविदः—गो.

[1] सपरिषदोऽपि—ङ.

निर्माणे समर्थास्तथा —सूत्रकर्मविशारदाः । स्वकर्माभिरताः — अध्वपालनरूपस्वकर्माभिरताः । यन्त्रकाः— महाप्रवाहमहाकुल्यातरणाय काष्ठादिना उपरि यन्त्रप्रवर्तकाः, பாலம் ॥ १ ॥

कर्मान्तिकाः स्थपतयः पुरुषाः [1] पथिकोविदाः ।
तथा वर्धकयश्चैव मार्गिणो वृक्षतक्षकाः ॥ २ ॥

कर्मान्तिकाः—भृतिजीवकर्मकाः । *स्थपतयः — रथादिप्रवृत्तिसन्नाहकाः । पथिप्रदर्शनकोविदाः —पथिकोविदाः । वर्धकिनः— तक्षकाः । † मार्गिणः— तत्तद्वनमार्गविशेषरक्षानियुक्ताः— அப்பர் । वृक्षतक्षकाः—-वृक्षच्छेदकाः- தச்சர் ॥ २ ॥

[2] कूपकाराः सुधाकाराः वंशकर्मकृतस्तथा ।
समर्था ये च [3] द्रष्टारः पुरतस्ते प्रतस्थिरे ॥ ३ ॥

सुधाकाराः—वज्रलेपकाः । वंशकर्मकृतः—वंशदलैः कटशूर्पपिटकादिकृतः—மெதுக்காரர் । चर्मकृतः—पल्ययनादिकृतः— முச்சியர் । समर्थाः — ऋजुमार्गदर्शनसमर्थाः ‡ । द्रष्टारः— पूर्वानुभूतमार्गाः ॥ ३ ॥

स तु हर्षात् § तमुद्देशं जनौघो विपुलः प्रयान् ।
अशोभत महावेगः समुद्र इव पर्वणि ॥ ४ ॥

स त्विति । एवं मार्गसन्नाहप्रवृत्तः जनो य इत्यर्थः । प्रयान्— गच्छन् । पर्वणि सागरस्येव महावेगः— महावेगवान् ॥

---

* स्थपतयः—कारवः– गो. † मार्गिणः—मार्गसमीकरणसमर्थाः–गो.

‡ कार्यान्तरेषु समर्थाः–गो. अथ वा–समर्थाः -दक्षाः द्रष्टारः–पर्यवेक्षकाः ।

§ तमुद्देशं- रामानयनोद्देशं प्रति प्रयान्–गच्छन्–प्रवर्तमान इति यावत् ।

[1] यन्त्रकोविदाः–ङ. [2] सूपाकराः–ङ. [3] कर्तारः–ङ.

त *स्ववारं समास्थाय वर्त्मकर्मणि कोविदाः ।
करणैर्विविधोपेतैः पुरस्तात् संप्रतस्थिरे ॥ ५ ॥

ते—मार्गशोधकाः स्ववारं समास्थाय—स्वशोध्यमार्गदेशशोधने अन्योन्यपर्यायकरणं प्राप्य करणैः—साधनैः विविधोपेतैः—नानाप्रकारोपेतैः—खनित्रकुद्दालदात्रादिनानावान्तरभेदयुक्तैरित्यर्थः ॥

लतावल्लीश्च गुल्मांश्च स्थाणूनश्मन एव च ।
† [1]जवनं चक्रिरे मार्गं छिन्दन्तो विविधान् द्रुमान् ॥ ६ ॥

लताः–शाखालताः–வளார் । स्थाणून्—'स्थाणुरस्त्री ध्रुवः शङ्कुः'—கட்டை । जवनम्—जवगमनार्हं ॥ ६ ॥

‡ अवृक्षेषु च देशेषु केचिद्वृक्षानरोपयन् ।
केचित् कुठारैष्टङ्कैश्च दात्रैश्छिन्दन् क्वचित् क्वचित् ॥ ७ ॥

'टङ्कः' पाषाणभेदनः—கல்லுளி । छिन्दन्–अच्छिन्दन्निति यावत ॥ ७ ॥

§ अपरे वीरणस्तम्बान् बलिनो बलवत्तराः ।
विधमन्ति स्म दुर्गाणि स्थलानि च ततस्ततः ॥ ८ ॥

---

* स्ववारं–स्वस्वसमूहं–'वारसंघातसञ्चयाः' इत्यमरः–ती. स्वस्ववाटिकां वा ।
† वेगवाचि जवनशब्दस्यापि सत्वात त्वरितं यथा तथा चक्रिरे इति क्रियाविशेषणं वा ।
‡ छायार्थमिति भावः । § बलिनः–रूढमूलान् छेत्तुमशक्यान् वीरणस्तम्बान्–वीरणतृणकाण्डान् विधमन्ति स्म–अदहन् । दुर्गाणि–गन्तुमशक्यानि निम्नोन्नतस्थलानि स्थलानि–समानि चक्रुरिति शेषः–गो. यद्वा–वीरणस्तम्बान् अच्छिन्दन्–इति पूर्वेणान्वयः । दुर्गाणि स्थलानि विधमन्ति स्म–सुगमानि चक्रुरिति यावत ।

[1] जनास्ते चक्रिरे, जनयाञ्चक्रिरे–ङ.

'स्याद्वीरणं वीरतरुः'—வீழ்ல் । दुर्गाणि स्थलानीति । उन्नतप्रदेशानीति यावत् ॥ ८ ॥

अपरेऽपूरयन् कूपान् पांसुभिः *[1]श्वभ्रमायतम् ।
निम्नभागांस्ततः केचित् समान् चक्रुः समन्ततः ॥ ९ ॥
† बबन्धुर्बन्धनीयांश्च क्षोद्यान् सञ्चुक्षुदुस्तदा ।
बिभिदुर्भेदनीयांश्च तांस्तान् देशान्नरास्तदा ॥ १० ॥

बन्धनीयान्—सन्तरणाय बन्धनीयप्रदेशान् । क्षोद्यान्—शर्कराभूयिष्ठप्रदेशान् । जलनिर्गमार्थं भेदनीयप्रदेशाः—भेदनीयाः ॥

अचिरेणैव कालेन परिवाहान् बहूदकान् ।
चक्रुर्बहुविधाकारान् सागरप्रतिमान् बहून् ॥ ११ ॥

परिवाहाः—कुल्याः ॥ ११ ॥

निर्जलेषु च देशेषु खानयामासुरुत्तमान् ।
उदपानान् बहुविधान् वेदिकापरिमण्डितान् ॥ १२ ॥

खानयामासुरिति । अखनन्निति यावत् । उदपानान्—अधिकरणे ल्युट्, 'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा' । बहुविधानिति । वापीकूपादिनानाप्रकारान् । वेदिकाभिः परितो मण्डिताः—अलङ्कृताः; उदपानविशेषणमिदम् ॥ १२ ॥

‡ ससुधाकुट्टिमतलः प्रपुष्पितमहीरुहः ।
मत्तोद्घुष्टद्विजगणः पताकाभिरलङ्कृतः ॥ १३ ॥

---

* आयतं—विपुलमपि श्वभ्रं-गर्तं च अपूरयन् । † मार्गसञ्चलद्दलयोर्यादीनां यासां नाशः नातीवापेक्षितः तादृश्यः मार्गानिरोधाय बबन्धुरिति वा । भेदनीयाः—मार्गमध्यस्थबृहच्छिलादयो वा । ‡ श्लोकद्वयमेकान्वयम् ।

[1] धूलिशर्करैः—ङ.

चन्दनोदकसंसिक्तः * नानाकुसुमभूषितः ।
बह्वशोभत सेनायाः पन्थाः [1] सुरपथोपमः ॥ १४ ॥

ससुधाकुट्टिमतलः — तत्तन्निवासस्थलविशेषेषु ससुधातल, सकुट्टिमतलश्च, 'कुट्टिमोऽस्त्री निबद्धा भूः' கனவரிசைப்படுத்தின இடம் ॥ १३-१४ ॥

† आज्ञाप्याथ ‡ यथाऽऽज्ञप्तियुक्तास्तेऽधिकृता नराः ।
रमणीयेषु देशेषु बहुस्वादुफलेषु च ॥ १५ ॥
यो निवेशस्त्वभिप्रेतः भरतस्य महात्मनः ।
भूयस्तं [2] भूषयामासुः भूषाभि§ [3] र्भूषणोपमम् ॥ १६ ॥

यथाज्ञप्तियुक्ताः — यथाऽऽज्ञप्तं संपादितमार्गशोधनकृत्याः ते अधिकृता नराः निर्वृत्तमार्गशोधनमाज्ञाप्य भरतस्य मार्गवर्तिनं निवेशं भूयो भूषयामासुः, 'निवेशः शिबिरं षण्डे'। भूषणोपमं — मार्गालङ्कारसदृशं, निवेशविशेषणमिदम् ॥ १५-१६ ॥

नक्षत्रेषु प्रशस्तेषु मुहूर्तेषु च ‖ तद्विदः ।
निवेशान् स्थापयामासुः भरतस्य महात्मनः ॥ १७ ॥
¶ बहुपांसुचयाश्चापि परिखापरिवारिताः ।
तत्रेन्द्र [4] नीलप्रतिमाः प्रतोलीवरशोभिताः ॥ १८ ॥

---

* पूर्वं पुष्पितवृक्षाः उक्ताः, अत्र तु प्रकीर्णकुसुमानि विवक्षितानि । † श्लोकद्वयमेकान्वयम् । ‡ यथाज्ञप्ति—यथामति आज्ञाप्य—कर्तुं नियम्य । § भूषणोपमं — भूषणभूतं, स्वतोऽलङ्कृतमिति यावत्—**गो.** ‖ तद्विदः—वास्तुशास्त्रज्ञाः—**गो.** ¶ श्लोकत्रयमेकं वाक्यम् । पांसुशब्देनात्र सूक्ष्मसिकता उच्यन्ते । इन्द्रकीलप्रतिमाः— इन्द्रकीलपर्वतसदृशाः—**गो.**

[1] स्वर्गपथो—ङ. [2] शोभयामासुः—ङ. [3] स्त्रिदिवोपमम्—ङ. [4] कील—ङ.

परिखा इति । भित्त्यर्थं खाताः पर्यन्तप्रदेशा इत्यर्थः । इन्द्रनीलनिर्मिताः प्रतिमाः—चित्रप्रतिमाः येषु निवेशेषु ते तथा । 'रथ्या प्रतोली'—अमरः ॥ १८ ॥

प्रासादमालासंसक्ताः *सौधप्राकारसंवृताः ।
पताकाशोभिताः सर्वे सुनिर्मितमहापथाः ॥ १९ ॥

संसक्ताः—संयुक्ताः । 'सौधोऽस्त्री राजसदनम्' तदपेक्षित-प्राकारेण संवृताः ॥ १९ ॥

[1]वितर्दिभिरिवाकाशे विटङ्काग्रविमानकैः ।
समुच्छ्रितैर्निवेशास्ते बभुः शक्रपुरोपमाः ॥ २० ॥

आकाशे वितर्दिभिरिव—धिष्ण्यैरिव स्थितैः । विटङ्काग्राणि—'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्'—परितः अग्रदेशे विटङ्कवन्ति विमानानि—सप्तभूमिकाः प्रासादास्तथा । उपलक्षिता इति शेषः ॥ २० ॥

[2]क्वचिद्धर्षनिवेशार्थं मठा वेदविभूषिताः ।
क्वचिदापणपण्यानि पथि कृत्वाऽर्थराशयः ।
दर्शयांचक्रुरत्यर्थं जनाः केचित् पुरे तथा ॥ २१ ॥
†जाह्नवीं तु समासाद्य विविधद्रुमकाननाम् ।
शीतलामलपानीयां [3]महामीनसमाकुलाम् ॥ २२ ॥

---

* सौधाः—सुधाधवलिताः—गो. † समासाद्य—अवधीकृत्य, तत्पर्यन्तमित्यर्थः—निवेशा बभूवुरिति पूर्वेणान्वयः, उत्तरेण वा । गङ्गाविशेषणैः ततः परं निवेशकरणाशक्यत्वं सूचितं—गो.

[1] वितर्दिभिर—ङ. [2] एतदादि अर्धत्रयं कुत्रचिन्नास्ति—ङ. [3] महाजन—ङ.

स चन्द्रतारागणमण्डितं यथा
नभः क्षपायाममलं विराजते ।
नरेन्द्रमार्गः स तथा व्यराजत
क्रमेण रम्यः शुभशिल्पिनिर्मितः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अशीतितमः सर्गः

---

उच्यमानलक्षणां जाह्नवीमभिव्याप्य प्रवर्तितो नरेन्द्रमार्ग इति योजना । गोत्र(२३)मानः सर्गः ॥ २३ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे अशीतितमः सर्गः

---

## एकाशीतितमः सर्गः

[सेनासन्नाहः]

ततो *नान्दीमुखीं [1] रात्रिं भरतं सूतमागधाः ।
तुष्टुवु[2]स्सविशेषज्ञाः स्तवैर्मङ्गलसंहितैः ॥ १ ॥

अथ मन्त्रिपुरोहितैः स्वराजशासनानुरूपव्यवहारप्रवृत्तिः । तत इत्यादि । भरताभिषेकाय वसिष्ठेन कृतनान्दीमुखाद्यभ्युदयवतीं रात्रिं—रात्र्यवसानमयस्वसेवाकालं प्राप्य सूतादयस्तुष्टुवुः । अत्र नान्दीमुखशब्देन स्वमुखमितस्ततः †परोऽवादयत् । न किमपि

---

* नान्दीमुखीं–रामानयनाभ्युदयप्रारम्भयुक्तां, यद्वा भरताभिषेकाय वसिष्ठेन कृतनान्दीमुखाभ्युदययुक्तां, यद्वा शोकविगमाय कृताभ्युदयामित्यर्थः । रात्रिं–रात्रौ, अपररात्र इत्यर्थः–गो. अथ वा 'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रवर्तते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते' इति भरतवचनात् राजस्तुत्युपक्रमार्हः कालः 'नान्दीमुखीं रात्रिं' इत्यनेनोच्यते । †प्रायः गोविन्दराजः ।

[1] ज्ञात्वा–ङ. [2] र्वाग्विशेषज्ञाः–ङ.

तत्सङ्गतम् । सविशेषं—राजनि राजपुत्रे वा अपेक्षितविशेषसहितं स्तवं जानन्तीति—सविशेषज्ञाः ॥ १ ॥

सुवर्ण*कोणाभिहतः प्राणदद्यामदुन्दुभिः ।
दध्मुः शङ्खांश्च शतशः †[1]वाद्यांश्चोच्चावचस्वरान् ॥ २ ॥

यामावसानसूचको दुन्दुभिः—यामदुन्दुभिः । उच्चावचस्वरान् वाद्यान्—वाद्यविशेषान् दध्मुरिति शेषः ॥ २ ॥

स तूर्यघोषः सुमहान् दिवमापूरयन्निव ।
भरतं शोकसन्तप्तं भूयः शोकैः‡[2]ररन्धयत् ॥ ३ ॥

शोकैः—शोकोत्पादनेन हेतुना अरन्धयत्—'रध पाकहिंसयोः', 'रधिजभोः—' इति नुम्; हिनस्ति स्मेति यावत् ॥ ३ ॥

ततः प्रबुद्धो भरतः तं घोषं सन्निवर्त्य च ।
नाहं राजेति चाप्युक्त्वा शत्रुघ्नमिदमब्रवीत् ॥ ४ ॥
पश्य, शत्रुघ्न ! कैकेय्या §लोकस्यापकृतं महत् ।
विसृज्य मयि दुःखानि राजा दशरथो गतः ॥ ५ ॥

---

* वादनदण्डः—कोणः । † नादान्—नाद्यन्ते एभिरिति नादाः, काहल्यादयः, तान्—गो. यद्यपि प्रपूर्वसर्गे एव भरतेन स्वाभिषेकः प्रतिषिद्धः ; अथापि तत्र 'समेत्य राजकर्तारः' इत्येव दर्शनात्, तत्र सामान्यैः राज्यनिर्वाहकैरेव भरतः प्रार्थित इति गम्यते, न तु वसिष्ठेनापि । उत्तरत्रापि तत्सर्गे 'प्रत्युवाच जनः सर्वः' इत्येव दृश्यते । एवञ्च सर्वं जानन्नपि वसिष्ठः स्वकर्तव्यत्वेन भरताभिषेकं स्वयं निश्चित्य भरतमाहूयादिदेशेति अत्र कथ्यत इति न विरोधः । इदमेवाभिप्रेत्यास्मिन् सर्गे 'वसिष्ठो राजधर्मवित्' इत्युक्तमिति भाति ॥ ‡ अरन्धयत्—व्यदारयत्—गो. § लोकस्य—सूतमागधादेः, यद्वा जनस्य—गो.

[1] नादांश्चो—ङ. [2] ररन्धयत्, रवर्धयत्, रजृंभयत्—ङ.

कैकेय्या हेतुभूतया जायमानं लोकस्य—भूतादेः अपकृतं—अनुचितं कर्म पश्य ॥ ५ ॥

तस्यैषा धर्मराजस्य धर्ममूला महात्मनः ।
परिभ्रमति राजश्रीः नौरि*[1]वाकर्णका जले ॥ ६ ॥

किं तत्? इत्यतः—तस्येत्यादि । यो गतस्तस्येति योजना । न विद्यते कर्णकः—नाविकः यस्याः सा अकर्णका नौः, बहुपरिव्राजकवत् सुपः परत्वादित्वं न ॥ ६ ॥

यो हि नः सुमहान्नाथः सोऽपि प्रव्राजितो वनम् ।
अनया धर्ममुत्सृज्य मात्रा मे राघवः †स्वयम् ॥ ७ ॥
इत्येवं भरतं प्रेक्ष्य विलपन्तं [2]विचेतनम् ।
[3]कृपणं रुरुदुः सर्वाः [4]सस्वरं योषितस्तदा ॥ ८ ॥
‡तथा तस्मिन् विलपति वसिष्ठो राजधर्मवित् ।
सभामिक्ष्वाकुनाथस्य प्रविवेश महायशाः ॥ ९ ॥

राज्ञः पुरोहितेन कर्तव्यः धर्मः—राजधर्मः, तं वेत्तीति राजधर्मवित् । अत एव स्वकृत्यं स्वयं संपादयतीत्याह—सभामित्यादि ॥ ९ ॥

---

* अकर्णिका—कर्णः—अरित्रं, 'कर्णः श्रोत्रमरित्रं च' इति भुवनः, सोऽस्यास्तीति कर्णी । स एव कर्णिकः—कर्णधारक इति यावत्, तद्रहिता—गो. † स्वयमित्यनेन कैकेयीकार्ये स्वासम्बन्धः प्रतिपाद्यते । ‡ एवं स्वगृहे भरते विलपति, राजसभां वसिष्ठः प्रविवेश इत्यर्थः । समानकालिकत्ववत् समानदेशत्वमपि न विवक्षितम्; 'एवमत्र स्थितौ तत्रैवमासीत' इति व्यवहारवत् । शिष्टं प्रथमश्लोकव्याख्याटिप्पण्यां ज्ञेयम् ।

[1] वाकर्णिका, वाकण्टका—ङ. [2] अनेकधा—ङ. [3] कृपणाः—ङ. [4] सुस्वरं—ङ.

**शातकुम्भमयीं रम्यां मणिरत्नसमाकुलाम् ।**
**सुधर्मामिव धर्मात्मा * सगणः प्रत्यपद्यत ॥ १० ॥**

सभाविशेषणं—शातकुम्भमयीमित्यादि ॥ १० ॥

**स काञ्चनमयं पीठं सुखास्तरणसंवृतम् ।**
**अध्यास्त सर्ववेदज्ञः दूताननुशशास ह ॥ ११ ॥**

पीठमध्यास्त, अनन्तरं दूताननुशशास ह ॥ ११ ॥

**ब्राह्मणान् क्षत्रियान् वैश्यान् अमात्यान् गणवल्लभान् ।**
**क्षिप्रमानयताव्यग्राः कृत्य† मात्ययिकं हि नः ॥ १२ ॥**

हि—यस्मात् नः कृत्यं आत्ययिकं—अतीतकालिकं जायते ‡, अतः ब्राह्मणादीन् क्षिप्रमानयत ॥ १२ ॥

**§ सराज[1]भृत्यं शत्रुघ्नं भरतं च यशस्विनम् ।**
**युधाजितं सुमन्त्रं च ये च तत्र हिता जनाः ॥ १३ ॥**

---

* सगणः—सशिष्यगणः-गो. सपार्षदो वा । † आत्ययिकं, अत्ययः—कृच्छ्रं, तत्र भवं— आत्ययिकं, यत्नसाध्यमित्यर्थः-गो. ती. ‡ मार्कि दशरथमरणानन्तरं विंशतिदिनानामतीतत्वात्, राज्यं सुदीर्घं अराजकं वर्तते, अतः क्षिप्रं कश्चन राजाऽभिषेचनीयः । विलम्बस्य नायं कालः—इति भावः । § सराजभृत्यं—राजान्तरङ्गभृत्यसहितम् । युधाजिदिति विजयाख्यमन्त्रिणो नामान्तरं, सुमन्त्रशब्दसाहचर्यात् । ये च तत्र - भरते हिताः—हितपराः जनाः तानप्यानयतेति पूर्वेणान्वयः-गो. राजपुत्रैः इतरैः सहितं शत्रुघ्नं—ति. गोविन्दराजीयदृष्ट्या—शत्रुघ्नभरतौ न सामान्यरीत्या आनेयौ, किन्तु अङ्गरक्षकाद्यन्तरङ्गपरिवारविशिष्टराजानाविवानेयौ इत्यर्थे विशेषणद्वयं उभयोरप्यन्वेति । अथ वा शत्रुघ्नः राजान्तरङ्गपरिवारनायकः स्यात्, अतस्तत्परिवारविशिष्टं शत्रुघ्नं यशस्विनं भरतं चेत्यर्थः । सराजपुत्रमिति पाठे तु—दशरथस्य सार्धत्रिशतपत्नीकत्वेन तेषु जातान् पुत्रानादाय शत्रुघ्नः आगच्छतु इत्यभिप्रायेण सराजपुत्रमिति स्यात् ।

[1] पुत्रं–ङ. च.

ततो हलहलाशब्दः सुमहान् समपद्यत ।
रथैरश्वैर्गजैश्चापि जनानामुपगच्छताम् ॥ १४ ॥

हलहलेति शब्दानुकारः, जनानां हलहलाशब्द इत्यन्वयः ॥

ततो भरतमायान्तं शतक्रतुमिवामराः ।
प्रत्यनन्दन् प्रकृतयः यथा दशरथं तथा ॥ १५ ॥
*ह्रद इव तिमिनागसंवृतः
स्तिमितजलो मणिशङ्खशर्करः ।
दशरथसुतशोभिता सभा
सदशरथेव बभौ यथा पुरा ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकाशीतितमः सर्गः

---

ह्रद इति। महाह्रदः समुद्र इत्यर्थः। तथा प्रयोगः 'सरसामस्मि सागरः' इति। तथा 'किंस्वित् सूर्यसमं ज्योतिः किं समुद्रसमं सरः?' इत्यादि। तिमिः––अनेकयोजनायामविस्तारवान् मत्स्यविशेषः। नागाः––जलगजाः, सर्पाश्च। मणयः––मुक्तादयः, शङ्खाः, शर्कराः–सुवर्णखनिमृत्तिकाश्च यस्मिंस्तथा। चन्द्र इव मुखमितिवत् ह्रद इव सभेति भिन्नलिङ्गत्वेऽपि उपमानोपमेयभावः। सभायाः स्तिमितजलस्थाने वसिष्ठः, तिमिनागस्थाने भरतशत्रुघ्नौ, मण्यादिस्थाने अमात्यपौरजानपदाः। पुरा यथा सा सभा सदशरथा बभौ, तथैवेदानीं दशरथसुतशोभिता सती सदशरथेव बभाविति योजना। तर्क(१६)मानः सर्गः ॥१६॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकाशीतितमः सर्गः

---

* शर्कराशब्देनात्र स्थूलवालुका उच्यन्ते। ह्रदश्च समुद्रसमीपस्थः, तिमिशङ्खादिसाहचर्यात्-गो.

## द्व्यशीतितमः सर्गः

[सेनाप्रस्थानम्]

तामार्य[1]गणसंपूर्णां भरतः *प्रग्रहां सभाम् ।
ददर्श बुद्धिसंपन्नः [2]पूर्णचन्द्रो निशामिव ॥ १ ॥

अथ राजकर्तृभिः सभायां प्रार्थिताभिषेकः प्रत्याख्याय तं रामानुगमनाय सेनामुत्थापयति । तामित्यादि । प्रग्रहां—प्रकृष्टैर्वसिष्ठादिमहात्मभिः ग्रहः—परिग्रहः—अधिष्ठानं यस्यास्सा तथा ॥ १ ॥

†आसनानि यथान्यायं आर्याणां विशतां तदा ।
वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा ॥ २ ॥

आर्याणां—त्रैवर्णिकाणाम् ॥ २ ॥

सा विद्वज्जनसंपूर्णा सभा सुरुचिरा तदा ।
अदृश्यत घनापाये पूर्णचन्द्रेव शर्वरी ॥ ३ ॥
राज्ञस्तु प्रकृतीः सर्वाः ‡समग्राः प्रेक्ष्य धर्मवित् ।
इदं पुरोहितो वाक्यं भरतं मृदु चाब्रवीत् ॥ ४ ॥
तात! राजा दशरथः स्वर्गतो धर्ममाचरन् ।
धनधान्यवतीं स्फीतां प्रदाय पृथिवीं तव ॥ ५ ॥

धर्ममाचरन्—सत्यमनुपालयन् ॥ ५ ॥

---

*प्रग्रहां—नियमवतीं, यद्वा शुक्रबृहस्पत्यादिप्रकृष्टग्रहयुक्तां ; तदा निशाविशेषणमिदं—गो. अथ वा 'प्रग्रहस्तु तुलासूत्रे वन्द्यां नियमने भुजे । हयादिरश्मौ रश्मौ च' इति कोशात् प्रग्रहशब्दः रश्मिवाची, ततः अर्शाद्यजन्तत्वे—प्रकाशमानामित्यर्थः ।
†आसनानि विशतां—उपविशतां आर्याणां इत्यन्वयः । ‡समग्राः प्रकृतीः प्रेक्ष्य—इङ्गितैस्तेषामभिप्रायं ज्ञात्वेति यावत्; भरतं अब्रवीदित्यन्वयः ।

[1] गुण—ङ. [2] पूर्णचन्द्रां—ङ.

रामस्तथा सत्य[1]धृतिः सतां धर्ममनुस्मरन् ।
*नाजहात् पितुरादेशं शशी ज्योत्स्नामिवोदितः ॥ ६ ॥

सतां धर्ममिति । 'जीवतोर्वाक्यकरणात् प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता' इति न्यायमनुस्मरन्–पितृवाक्यकरणरूपं धर्ममनुस्मरन्नित्यर्थः ॥ ६ ॥

पित्रा भ्रात्रा च ते दत्तं राज्यं निहतकण्टकम् ।
तद्भुङ्क्ष्व †मुदितामात्यः क्षिप्रमेवाभिषेचय ॥ ७ ॥

मुदिताः अमात्याः यस्य स तथा ॥ ७ ॥

उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च ‡केवलाः ।
§[2]कोटयोऽपरान्ताः सामुद्राः रत्नान्यभिहरन्तु ते ॥ ८ ॥

उदीच्यादयस्तु 'साम्राज्यं भौज्यं स्वाराज्यं वैराज्यम्' इति राज्याभिषेकब्राह्मणोक्तपट्टाभिषेकवन्तः राजानः, चकारात् प्राच्यानां समुच्चयः । केवलाः–पट्टाभिषेकरहिताः केवलप्रभवः । अपरान्ताः–द्वैप्ययवनाश्रयद्वीपभेदाः, अपरान्तवर्तिनः अपरान्ताः । सामुद्राः–पोतवणिजः । कोटयो रत्नानीति 'शतं ब्राह्मणाः' इतिवन्नियतलिङ्गत्वात् ॥ ८ ॥

तच्छ्रुत्वा भरतो वाक्यं शोकेनाभिपरिप्लुतः ।
जगाम मनसा रामं धर्मज्ञो धर्मकाङ्क्षया ॥ ९ ॥

---

* न अजहात्–अत्यजत् । † 'अहं हि पुरुषव्याघ्रौ अपश्यन् रामलक्ष्मणौ । केन शक्तिप्रभावेण राज्यं रक्षितुमुत्सहे' इत्येवंरूपं भरताशयं जानन्नाह वसिष्ठः–मुदितामात्य इति । भवद्विषयेऽमात्यानां वैराभावात् राज्यरक्षणं सुकरं भविष्यतीति भावः । ‡ केवलाः–सिंहासनादिरहिताः–इति अपरान्तादिविशेषणम्–गो. § कोटया–कोटिसंख्यया उपलक्षितानि रत्नानि–गो.

[1] वृत्तिः–ङ. [2] कोट्या–ङ.

स बाष्पकलया वाचा कलहंसस्वरो युवा ।
विललाप सभामध्ये *जगर्हे च पुरोहितम् ॥ १० ॥

जगर्ह इति । सर्वज्ञेनापि भवता इदमनुचितमज्ञानादेवोक्त-मित्युक्तवानित्यर्थः ॥ १० ॥

चरितब्रह्मचर्यस्य विद्यास्नातस्य धीमतः ।
धर्मे प्रयतमानस्य को राज्यं मद्विधो हरेत् ॥ ११ ॥

प्रयतमानस्येति । ज्येष्ठस्य रामस्येति शेषः । मद्विध इति । चरितब्रह्मचर्यस्येत्याद्युक्तलक्षण इत्यर्थः ॥ ११ ॥

कथं दशरथात् जातः भवेद्राज्यापहारकः ।
†राज्यं चाहं च रामस्य, धर्मं वक्तुमिहार्हसि ॥ १२ ॥

रामस्येति । स्वमिति शेषः । अत एवं विज्ञाय धर्ममेव भगवन् वक्तुमिह सभायामर्हसि, न मुखेच्छयैव, नान्याय्यमित्यर्थः ॥

ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः ।
लब्धुमर्हति काकुत्स्थः राज्यं दशरथो यथा ॥ १३ ॥
अनार्यजुष्टमस्वर्ग्यं कुर्यां पापमहं यदि ।
‡इक्ष्वाकूणामहं लोके भवेयं कुलपांसनः ॥ १४ ॥

---

* सम्यक् त्वयाऽस्य कुलस्य भावि हितमवेक्षितमिति निनिन्द—**गो.** † 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इतिन्यायेन, यदाऽहं राज्यं च रामशेषभूतं, तदा कथमहं राज्यपालको भवेयम्? राजपुरुषेषु उत्तममध्यमादिभेदभिन्नेषु परस्परं नियाम्यनियामकभावदर्शनेऽपि, स अधिकारः राज्ञैव दत्तः, अतः स एव परमशेषी । तद्वदेव रामवचनात् मया राज्यपरिपालनेऽपि नाहं राजा स्याम् । तादृशराज्यपरिपालनस्य निरन्तरत्वमपि न भवितुमर्हत्येव । 'निरन्तरं भवानेव राज्यं शास्तु' इति रामादेशे किं कुर्यास्त्वमिति चेत्, इदं च मद्राजत्वे—मच्छेषित्व एव विश्रान्तमिति कथमहमङ्गीकुर्याम्? शेषभूतस्य शेषित्वं युज्यते वेति अस्मिन् विषये त्वमेव धर्मं वक्तुमर्हसीति भावः ॥ ‡ इक्ष्वाकूणां लोके—तत्सम्बन्धिनि जने—**गो.**

*[1] यद्धि मात्रा कृतं पापं नाहं तदपि रोचये ।
इहस्थो वनदुर्गस्थं नमस्यामि कृताञ्जलिः ॥ १५ ॥

ननु महता प्रयासेन राज्यं संपादितमित्यस्मदादिभिः राजा भवेत्युच्यत इत्याशङ्कां निरस्यति—यद्धीत्यादि । वनरूपं दुर्गं वनदुर्गम् ॥ १५ ॥

राममेवा[2]नुगच्छामि राजा स द्विपदां वरः ।
त्रयाणामपि लोकानां राज्यमर्हति राघवः ॥ १६ ॥

द्विपदामिति । द्वौ पादौ येषां ते तथा, ततः 'सङ्ख्या सुपूर्वस्य' इति लोपः समासान्तः द्विपादिति, ततः 'पादः पत्' इति भस्थले पदादेशः, पुरुषाणामिति यावत् ॥ १६ ॥

† तद्वाक्यं धर्मसंयुक्तं श्रुत्वा सर्वे सभासदः ।
हर्षान्मुमुचुरश्रूणि [3]रामे निहितचेतसः ॥ १७ ॥
यदि त्वार्यं न शक्ष्यामि विनिवर्तयितुं वनात् ।
वने तत्रैव वत्स्यामि यथाऽऽर्यो ‡ लक्ष्मणस्तथा ॥ १८ ॥

सर्वथैव स्वराज्यचिन्ता नास्तीति स्पष्टयति—यदि त्वित्यादि ॥

§[4] सर्वोपायं तु वर्तिष्ये विनिवर्तयितुं [5]वनात् ।
समक्षमार्यमिश्राणां साधूनां गुणवर्तिनाम् ॥ १९ ॥

---

* अनेन अप्राप्तभाषणश्रवणपापस्य प्रायश्चित्तमनुष्ठितम्—**गो.** † मध्येऽयमेकः श्लोकः कविवाक्यम् । ‡ कनिष्ठे लक्ष्मणे आर्यशब्दप्रयोगः ज्येष्ठानुवर्तनरूपधर्मनिरतत्वात्—**गो.** § सर्वोपायमिति क्रियाविशेषणम्, सर्वोपायं यत्नैः करिष्ये इत्यर्थः । आर्यमिश्राणां—सदस्यानाम्, 'आर्यमिश्राः पारिषद्राः सदस्याः सामवायिकाः' इति सज्जनाः । भवद्भिरप्यागन्तव्यमित्यर्थादुक्तं भवति—**गो.**

[1] यदि—ङ. [2] भिगच्छामि—ङ. [3] तदा विस्मितमानसाः—ङ. [4] सर्वोपायैर्यतिष्ये तं—ङ. [5] बलात्—ङ.

वर्तिष्ये—अनुष्ठास्ये । आर्यमिश्राणां–आर्याः–त्रैवर्णिकाः, ते चैते मिश्राः–पूज्याः तथा। युष्माकं समक्षमिति योजनीयम् ॥ १९॥

* विष्टिकर्मान्तिकाः सर्वे मार्गशोधक[1]रक्षकाः।
प्रस्थापिता मया पूर्वं यात्राऽपि मम रोचते ॥ २० ॥

अपि च सर्वे मार्गशोधकरक्षकाः विष्टिकर्मान्तिकाः–विशेर्विष्टिः–प्रवेशः, रामाश्रितवनपुरोयुक्ताः, कर्मान्तिकाः–कर्मकरास्तथा। ममापि यात्रेति योजना ॥ २० ॥

एवमुक्त्वा तु धर्मात्मा भरतो भ्रातृवत्सलः।
समीपस्थमुवाचेदं सुमन्त्रं [2]मन्त्रकोविदम् ॥ २१ ॥
तूर्णमुत्थाय गच्छ त्वं, सुमन्त्र! मम शासनात्।
यात्रामाज्ञापय क्षिप्रं बलं चैव समानय ॥ २२ ॥
एवमुक्तः सुमन्त्रस्तु भरतेन महात्मना।
हृष्टस्तदादिशत् सर्वं यथासन्दिष्ट†मिष्टवत् ॥ २३ ॥

इष्टवत्-भरतस्येष्टः सन् यथासन्दिष्टं आदिशत्-आज्ञापयति स्म॥

‡ताः प्रहृष्टाः प्रकृतयः बलाध्यक्षा बलस्य च।
श्रुत्वा यात्रां समाज्ञप्तां राघवस्य निवर्तने ॥ २४ ॥

निवर्तने–निवर्तननिमित्तम् ॥ २४ ॥

---

* विष्टयः—भृतिमन्तरेण जनपदेभ्यः समानीताः कर्मकराः। कर्मान्तिकाः—कर्मान्ते भृतिगृहीतारः। मार्गशोधकरक्षका इति विष्टयादिविशेषणम्। 'प्रस्थापिता मया पूर्वं' इत्यभिधानाद्व वसिष्ठः शिबिरकरणनियोगमजानन्नभिषेकप्रस्तावं कृतवानित्यवगम्यते–गो. वस्तुतस्तु—वसिष्ठेन अमन्त्रयित्वैव तेषां प्रेषणेऽपि, स्वकर्तव्यदृष्ट्या वसिष्ठेनाभिषेकप्रस्तावकरणं युज्यत एव। शिष्टं गतसर्गीयप्रथमश्लोकव्याख्याटिप्पण्यां द्रष्टव्यम् ॥ † इष्टवत—इष्टार्हं—इष्टानुरूपमिति यावत्–गो. ‡ यात्रां श्रुत्वा प्रकृत्यादयः प्रहृष्टा अभवन्नित्यन्वयः।

[1] दक्षकाः, तक्षकाः–ङ. [2] मन्त्रि–ङ.

[1] ततो योधाङ्गनाः सर्वाः भर्तॄन् सर्वान् गृहे गृहे ।
*यात्रागमन[2]माज्ञाय त्वरयन्ति स्म हर्षिताः ॥ २५ ॥

यात्रार्थं गमनं—यात्रागमनम् ॥ २५ ॥

ते हयैः गोरथैः शीघ्रैः [3] स्यन्दनैश्च महाजवैः ।
[4] सह योधैर्बलाध्यक्षाः बलं [5] सर्वमचोदयन् ॥ २६ ॥

गोरथैः—बलीवर्दयुक्तशकटैः ॥ २६ ॥

सज्जं तु तद्बलं दृष्ट्वा भरतो † गुरुसन्निधौ ।
रथं मे त्वरयस्वेति सुमन्त्रं पार्श्वतोऽब्रवीत् ॥ २७ ॥

गुरुसन्निधौ—वसिष्ठसन्निधौ ॥ २७ ॥

भरतस्य तु तस्याज्ञां प्रतिगृह्य च हर्षितः ‡ ।
रथं गृहीत्वा प्रययौ युक्तं परमवाजिभिः ॥ २८ ॥

§ स राघवः सत्यधृतिः प्रतापवान्
ब्रुवन् [6] सुयुक्तं दृढसत्यविक्रमः ।
गुरुं महारण्यगतं यशस्विनं
प्रसादयिष्यन् भरतोऽब्रवीत्तदा ॥ २९ ॥

सुयुक्तं ब्रुवन्नित्यन्वयः । गुरुं—रामम् ॥ २९ ॥

---

* यात्रागमनं—रामागमनानुकूलं—ती. यात्राऽऽगमनं—यात्राया आगमनं सन्निहितत्तामिति यावत् । † गुरुसन्निधाविति अनुज्ञाकरणार्थमुक्तम्—गो. ‡ हर्षितः—सुमन्त्रः । § उक्तमर्थं पुनः सङ्ग्रहेण दर्शयति—स इत्यादिना । सत्यधृतिः—अप्रच्युतधैर्यः । सुयुक्तं ब्रुवन् गुरुं प्रसादयिष्यन्—उचितवचनेन रामं प्रीणयिष्यन्नित्यर्थः—गो.

[1] ततोऽयोध्याङ्गना.—ङ. [2] मास्थाय—ङ. [3] स्यन्दनैश्शकटैस्तथा—ङ., स्यन्दनैश्च मनोजवैः—ङ. च. [4] सहयोषिद्बलाध्यक्षाः—च. [5] सज्ज—ङ. [6] सयुक्तं—ङ.

तूर्णं समुत्थाय, सुमन्त्र! गच्छ
बलस्य योगाय *बलप्रधानान् ।
[1]आनेतुमिच्छामि हि तं वनस्थं
प्रसाद्य रामं जगतो हिताय ॥ ३० ॥

योगाय—सम्मेलनाय । बले प्रधानान् आज्ञापयेति शेषः ॥ ३० ॥

स सूतपुत्रो भरतेन सम्यक्
आज्ञापितः संपरिपूर्णकामः ।
शशास सर्वान् प्रकृतिप्रधानान्
बलस्य मुख्यांश्च सुहृज्जनं च ॥ ३१ ॥
ततः समुत्थाय कुले कुले ते
राजन्यवैश्या [2]वृषलाश्च विप्राः ।
†अयूयुजन् [3]उष्ट्ररथान् खरांश्च
नागान् हयांश्चैव कुलप्रसूतान् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्व्यशीतितमः सर्गः

---

कुले कुले—गृहे गृहे, 'कुलं जनपदे गृहे'। कुलप्रसूतानिति । उत्तमानिति यावत् । संग(२७)मानः (?) सर्गः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्व्यशीतितमः सर्गः

---

*प्रधानशब्दः पुल्लिङ्गोऽप्यस्ति—गो. बलप्रधानान् गच्छ—उपसर्प । सेनायाः सेनान्याज्ञाधीनत्वादेवमुक्तिः । †अयूयुजन्—सज्जानकुर्वन्—गो.

[1] आज्ञातु—ङ. [2] नगरे च—ङ. [3] उष्ट्रखरान् रथांश्च—ङ.

## त्र्यशीतितमः सर्गः

### [भरतचित्रकूटयात्रा]

ततः समुत्थितः * काल्यं आस्थाय स्यन्दनोत्तमम् ।
प्रययौ भरतः शीघ्रं रामदर्शन[1]काङ्क्षया ॥ १ ॥

अथ सबलस्य भरतस्यागङ्गं प्रस्थानम् । तत इत्यादि । काल्यमास्थाय–उषस्यनुष्ठानं कृत्वा, स्यन्दनोत्तमं चास्थाय ॥ १ ॥

अग्रतः प्रययुस्तस्य सर्वे मन्त्रि[2]पुरोधसः ।
अधिरुह्य हयैर्युक्तान् रथान् सूर्यरथोपमान् ॥ २ ॥
† नवनागसहस्राणि कल्पितानि यथाविधि ।
अन्वयुर्भरतं यान्तं इक्ष्वाकुकुलनन्दनम् ॥ ३ ॥

कल्पितानि–सज्जितानि । यथाविधि–यथारुचि ॥ ३ ॥

षष्टी रथसहस्राणि धन्विनो विविधायुधाः ।
अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनम् ॥ ४ ॥
शतं सहस्राण्यश्वानां समारूढानि राघवम् ।
अन्वयुर्भरतं यान्तं सत्यसन्धं जितेन्द्रियम् ॥ ५ ॥

समारूढानि–सादिभिरिति शेषः ॥ ५ ॥

‡ कैकेयी च सुमित्रा च कौसल्या च यशस्विनी ।
रामानयनसंहृष्टाः ययुर्यानेन § भास्वता ॥ ६ ॥

---

* काल्यं–प्रातःकाले–**ती.** काल्यं—अहर्मुखं प्राप्येति शेषः–**गो.** † अत्र 'सर्वाणि' इत्यनुक्त्वा संख्याग्रहणात् नगरस्थगजेषु तावन्त एव प्रस्थिता इति ज्ञायत इति गोविन्दराजः । ‡ अत्र कैकेय्याः प्रथमग्रहणात्, पश्चात्तापातिशयात् तस्याः त्वरातिशयः सूच्यत इव । § यानेनेत्येकवचनं प्रत्येकापेक्षया । सौहार्दादेकयानेनैव तिसृणां गमनं वा–**ति.**

[1] काम्यया–**च.** [2] पुरोहिताः–**च.**

कैकेयी च ययाविति। स्वप्रवृत्तेः पुत्राहितस्य संपन्नत्वात्, 'किं कृतम्' इति खिन्ना लोकसंग्रहाय राजस्त्र्यन्तरेण सह ययौ॥ ६॥

**प्रयाताश्चार्यसङ्घाताः रामं द्रष्टुं सलक्ष्मणम्।**
**तस्यैव च कथाश्चित्राः कुर्वाणा हृष्टमानसाः॥ ७॥**

आर्याणां-त्रैवार्णिकानां सङ्घातास्तथा॥ ७॥

**मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढव्रतम्।**
**कदा द्रक्ष्यामहे रामं जगतः शोकनाशनम्॥ ८॥**
**दृष्ट एव हि नः शोकं अपनेष्यति राघवः।**
**तमः सर्वस्य लोकस्य समुद्यन्निव भास्करः॥ ९॥**
**इत्येवं कथयन्तस्ते संप्रहृष्टाः कथाः शुभाः।**
**परिष्वजानाश्चान्योन्यं ययुर्नागरिका जनाः॥ १०॥**

परिष्वजानाः—परिष्वजमाना इति यावत्। नगरे चरन्तीति-नागरिकाः, 'चरति' इति ठक्॥ १०॥

**ये च तत्रापरे सर्वे *[1] संमता ये च नैगमाः।**
**रामं प्रति ययुर्हृष्टाः सर्वाः प्रकृतयस्तथा॥ ११॥**

तत्र नगरे सम्मताः प्रसिद्धाः नैगमाः—वणिजः। प्रकृतयः—पौरश्रेणयः॥ ११॥

**मणिकाराश्च ये केचित् कुम्भकाराश्च शोभनाः।**
**सूत्रकर्मकृतश्चैव ये च शस्त्रोपजीविनः॥ १२॥**

विविच्य प्रदर्श्यन्ते—मणिकाराश्चेत्यादि। मणिकाराः—शाणायां मणिशोधनादिकर्तारः। सूत्रेण—तन्तुना पटकुटकादिकं

* संमताः, रामस्य-गो
[1] समेता, समस्ता-ङ.

कुर्वन्तीति तन्तुवायाः तन्तुजीवकाः*। शस्त्रनिर्माणेनोपजीविनः—शस्त्रोपजीविनः ॥ १२ ॥

†मायूरकाः क्राकचिकाः रोचका वेधकास्तथा ।
दन्तकाराः [1]सुधाकाराः तथा गन्धोपजीविनः ॥ १३ ॥

मायूरकाः—मयूरग्राहिणः, इदमुपलक्षणं शुकादिग्राहिणाम् । क्राकचिकाः—'क्रकचः करपत्रं स्यात्' அருவாள்; क्रकचेन जीवन्तीति तथा । रोचकाः—काचकुप्यादिकर्तारः । वेधकाः—मण्यादिवेधकाः । दन्तकाराः—दन्तेन समुद्गकादिकर्तारः । सुधाकाराः—वज्रलेपकर्तारः । गन्धोपजीविनः—गन्धद्रव्यविक्रयिकाः ॥ १३ ॥

सुवर्णकाराः प्रख्याताः तथा [2]रङ्गोपजीविनः ।
स्नापको[3]च्छेदका वैद्याः ‡धूपकाः शौण्डिकास्तथा ॥

रङ्गोपजीविनः—नटाः । स्नापकाः—उष्णोदकस्नापकाः, उच्छेदकाः—अङ्गमर्दकाः, 'उच्छेदनं समुल्लेखोद्वाहनोद्वर्तनेषु च' इति विश्वः । धूपकाः—धूपद्रव्यविक्रयिकाः । शौण्डिकाः—मद्यकराः, 'शुण्डा करिकरे मद्ये' इति वैजयन्ती ॥ १४ ॥

रजका[4]स्तुन्नवायाश्च घोषग्राममहत्तराः ।
§शैलूषाश्च सह स्त्रीभिः ययुः कैवर्तकारवः ॥ १५ ॥

---

* परन्तु—80 सर्गाद्यश्लोकव्याख्याने इदं पदं अन्यथा विवृतम् . † मायूरकाः—मयूरपिञ्छैः छत्रव्यजनादिकारिणः । रोचकाः—दन्तकुड्यवेदिकादिषु कान्त्युत्पादकाः-गो. ‡ धूपकाः—गृहादिषु धूपवासकाः-गो. § यद्यपि 'रङ्गोपजीविनः' इत्यनेनैव शैलूषा अपि गृहीताः, तथापि रङ्गोपजीविन इति शैलूषव्यतिरिक्तविषयमिति भावः । सन्त्यन्येऽपि खलु बहवो रङ्गोपजीविनः ।

[1] सूपकाराः-ङ. [2] कम्बलधावकाः-ङ. कम्बलकारकाः-च. [3] ष्णोदका-च. च्छादका-ङ. [4] स्तन्तुवायाश्च-ङ.

तुन्नवायाः—सौचिकाः। घोषः—आभीरपल्ली, ग्राममहत्तराः घोषमहत्तराश्च तथा—परिबृढाः। कैवर्तः—धीवरः—दाशः—वलधरः। कारवः—कर्मकराः—கருமான், கன்னார் ॥ १५ ॥

*समाहिता वेदविदः ब्राह्मणा [1]वृत्तसम्मताः।
गोरथैर्भरतं यान्तं अनुजग्मुः सहस्रशः ॥ १६ ॥
सुवेषाः शुद्धवसनाः ताम्रमृष्टानुलेपनाः।
सर्वे ते [2]विविधैर्यानैः †शनैर्भरतमन्वयुः ॥ १७ ॥

गोरोचनाकुङ्कुमादिवस्तुसम्बन्धतः ताम्रवर्णं मृष्टं-संपूर्णं अनुलेपनं येषां ते तथा ॥ १७ ॥

‡प्रहृष्टमुदिता सेना साऽन्वयात् कैकयीसुतम्।
भ्रातुरानयने यान्तं भरतं भ्रातृवत्सलम् ॥ १८ ॥
ते गत्वा दूरमध्वानं रथयानाश्वकुञ्जरैः।
§समासेदुस्ततो गङ्गां शृङ्गिबेरपुरं प्रति ॥ १९ ॥
यत्र रामसखो वीरः गुहो ज्ञातिगणैर्वृतः।
‖निवसत्यप्रमादेन देशं तं परिपालयन् ॥ २० ॥

शृङ्गिबेरपुरं प्रतीति। लक्षणे प्रतिः कर्मप्रवचनीयः, शृङ्गिबेरपुर इत्यर्थः। अप्रमादेन अटवीं देशं—रामाश्रितं स्वीयं देशं सावधानतया रक्षन् ॥ २० ॥

---

* समाहिताः—योगिनः—गो. † वाहनादिसम्मर्दात्—शनैरिति। ‡ प्रहर्षः—कायिको रोमाञ्चादिः, मोदः—मानसो हर्षः—गो. ती. § शृङ्गिबेरपुरं प्रति दूरमध्वानं गत्वा गङ्गां समासेदुरिति सम्बन्धः—गो. ‖ अप्रमादेन —सावधानतया, रामविरोध्यागमनवारणपर इत्यर्थः—गो. अथ वा गुहस्य निषादराजत्वात् स्वं देशं सावधानं पालयन्निवसतीति वाऽर्थः।

[1] व्रतसम्मताः—ङ. [2] विमलै—च.

उपेत्य तीरं गङ्गायाः चक्रवाकैरलङ्कृतम् ।
व्यवातिष्ठत सा सेना भरतस्यानुयायिनी ॥ २१ ॥

[1]निरीक्ष्यानुगतां * सेनां तां च गङ्गां शिवोदकाम् ।
भरतः सचिवान् सर्वान् अब्रवीद्वाक्यकोविदः ॥ २२ ॥

निवेशयत मे [2]सैन्यं † अभिप्रायेण [3]सर्वतः ।
विश्रान्ताः प्रतरिष्यामः श्व [4]इदानीमिमां नदीम् ॥ २३ ॥

अभिप्रायेण—सन्तरणाभिप्रायेण सह न्यवेशयत, गङ्गातीरे सुखमस्तीति नात्र द्वित्रदिनवासबुद्ध्या । तदेवाह—श्वः प्रतरिष्याम इति । इदानीं विश्रान्ता इत्यन्वयः ॥ २३ ॥

दातुं च तावदिच्छामि स्वर्गतस्य महीपतेः ।
और्ध्वदेहनिमित्तार्थं अवतीर्योदकं नदीम् ॥ २४ ॥

देहपातादूर्ध्वकाले प्राप्तं निमित्तं यस्य परलोकस्य सः ऊर्ध्वदेहनिमित्तः, स्वार्थिकोऽण्, ऊर्ध्वदेहनिमित्ताय—परलोकप्रयोजनाय इदं—और्ध्वदेहनिमित्तार्थम् ॥ २४ ॥

तस्यैवं ब्रुवतोऽमात्याः तथेत्युक्त्वा समाहिताः ।
न्यवेशयंस्तान् छन्देन स्वेन स्वेन पृथक् पृथक् ॥ २५ ॥

छन्दः—इच्छा ॥ २५ ॥

---

* अनुत्थितां—गमने अनुद्योगां—ति. गङ्गया निरोधादिति शेषः ।

† अभिप्रायेण— तत्तदिच्छया—गो. 'अथ विश्रान्ताः श्वः प्रतरिष्यामः' इत्यभिप्रायेण—मदभिप्रायज्ञापनेन निवेशयतेत्यर्थः-ति. 'तस्यैवं ब्रुवतः' इत्याद्यनन्तरश्लोकपरिशीलने गोविन्दराजोक्तं स्वरसमिव ।

[1] निरीक्ष्यानुत्थितां-च. [2] सर्वं—ङ. [3] सर्वशः—ङ. [4] इदानीं महानदीम्—ङ. इमां सागरंगमाम्—च.

निवेश्य गङ्गामनु तां महानदीं
चमूं विधानैः परिबर्हशोभिनीम् ।
उवास रामस्य तदा महात्मनः
[1]विचिन्तयानो भरतो निवर्तनम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्र्यशीतितमः सर्गः

---

गङ्गामनु—अनुर्लक्षणे, कर्मप्रवचनीयः । विधानैः—वास व्यवस्थाकल्पनैः । परिबर्हैः—परिच्छदः, यात्रानिवासोपकरणपट-कुटिकादिभिः शोभमानाम् । तरि(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे त्र्यशीतितमः सर्गः

---

## चतुरशीतितमः सर्गः

[भरतगुहसमागमः]

*ततो निविष्टां ध्वजिनीं गङ्गामन्वाश्रितां नदीम् ।
निषादराजो दृष्ट्वैव ज्ञातीन् [2]सन्त्वरितोऽब्रवीत् ॥ १ ॥

अथ भरतस्य गुहेन सङ्गमः । तत इत्यादि ॥ १ ॥

महतीयमितः सेना सागराभा प्रदृश्यते ।
नास्यान्तमधिगच्छामि मनसाऽपि विचिन्तयन् ॥ २ ॥

इतः—इह गङ्गातीरे । नास्यान्तमिति । आर्षः सन्धिः ॥ २ ॥

---

* स्वैः आश्रितां गङ्गानदीं अनु निविष्टां—इति वाऽर्थः । अथ वा ७ श्लोके 'गङ्गा-मन्वाश्रिताः' इति दाशविशेषणवत् अत्रापि 'गङ्गामन्वाश्रितः' इति निषादराजविशेषण-तया पाठः स्यात् ।

[1] विचिन्तमानो—च. [2] स परितो—ङ. च.

***[1] यदा तु खलु दुर्बुद्धिः भरतः स्वयमागतः ।**
**स एष हि महाकायः कोविदारध्वजो रथे ॥ ३ ॥**

यदा तु खलु—यस्माद्धेतोः । दुर्बुद्धिरिति । रामपीडार्थं प्रवृत्त इत्याशयेन अयं वादः । भरत एव स्वयमागतः, तत एव महती सेना प्रदृश्यत इत्यन्वयः । कुतो भरत आगत इति विज्ञायते? इत्यत्राह— स एष इत्यादि । महाकायः—महाप्रमाणः । कोविदार-ध्वजः—इक्ष्वाकुकुलचिह्नभूतो रथोऽस्ति ; 'कोविदारे चमरिकः'— மலையகத்தி ॥ ३ ॥

**बन्धयिष्यति वा [2] दाशान् अथ वाऽस्मान् वधिष्यति ।**
**† [3] अनु दाशरथिं रामं पित्रा राज्याद्विवासितम् ॥ ४ ॥**

आयातु वा भरतः, किमस्माकम्? इत्यत्राह—बन्धयिष्यती-त्यादि । स्वामात्यैरिति शेषः । वधिष्यतीति । वधिः प्रकृत्यन्तरम् । अनु दाशरथिं— दाशरथिसंहारानन्तरमित्यर्थः ॥ ४ ॥

**[4] संपन्नां श्रियमन्विच्छन् तस्य राज्ञः सुदुर्लभाम् ।**
**भरतः केकयीपुत्रः हन्तुं [5] समधिगच्छति ॥ ५ ॥**

ननु रामसंहारोद्योगो वा किमर्थोऽस्य? इत्यत्राह—संपन्ना-मित्यादि । संपूर्णां—कालान्तरेऽपि रामप्राप्त्या विच्छेदरहिताम् । तस्य राज्ञः—रामस्येत्यर्थः । यदि कालान्तरे आयाति तदा दायादित्वात् राज्यैकदेशं, प्राबल्यतः सर्वं राज्यं हरिष्यतीति भीत्या इदानीं तापसा-वस्थायां रामं हन्तुं समधिगच्छति—प्राप्नोतीव ॥ ५ ॥

---

* यथा तु खलु—ध्रुवमित्यर्थः—गो. † 'अथ दाशरथिं' इति पाठे—अर्धत्रयमेकं वाक्यम् । तस्य राज्ञः—रामस्य सुदुर्लभां श्रियं अन्विच्छन्—स्वायत्ती-कर्तुमिच्छन्निति भावः, दाशरथिं रामं हन्तुं समधिगच्छतीत्यन्वयः ।

[1] यथा तु खलु–ङ. [2] पाशैः–च. [3] अथ–ङ. [4] संपूर्णा–ङ. [5] समुपगच्छति–ङ.

भर्ता चैव सखा चैव रामो दाशरथिर्मम ।
तस्यार्थकामाः सन्नद्धाः *[1] गङ्गाऽनूपे प्रतिष्ठत ॥ ६ ॥

भवतु! तावता का भीतिरस्माकम्? इत्यत्राह—भर्तेत्यादि. तथा च तत्पक्ष्यत्वात् अस्माकमुक्तप्रसङ्ग इत्युक्तं भवति । अस्माभिस्तु सख्यू रामस्येष्टं कर्तव्यं, अतः नास्माभिरियं सेना तारयितव्या । अतो यूयं तस्य अर्थकामाः—तस्य रामस्य प्रयोजनाभीप्सवन्तः सन्नद्धाः अत्र गङ्गानूपे अस्मत्समीपे परिबृढास्तिष्ठत ॥ ६ ॥

तिष्ठन्तु सर्वे दाशाश्च गङ्गामन्वाश्रिता नदीम् ।
जालयुक्ता नदीरक्षाः मांसमूलफलाशनाः ॥ ७ ॥
नावां शतानां पञ्चानां कैवर्तानां शतं शतम् ।
सन्नद्धानां तथा यूनां तिष्ठन्त्वित्यभ्यचोदयत् ॥ ८ ॥

सर्वे च मामका दाशास्तु गङ्गानदीमेवान्वाश्रिता जालयुक्ता यावदेतन्निर्गमनं एतद्भीत्या तीरस्य दुरारोहतः नावारोपितमांसमूलफलाशनास्सन्तः नदीरक्षाः—नदीसन्तारमार्गं विघ्नन्तः सन्तः पञ्चशतीनौकानामेकैकं—कैवर्तानां यूनां युद्धार्हाणां सन्नद्धानां शतं शतमारुह्य तिष्ठन्त्वित्यभ्यचोदयत् ॥ ७-८ ॥

[2] यदि तुष्टस्तु भरतः रामस्येह भविष्यति ।
इयं स्वस्तिमती सेना गङ्गामद्य तरिष्यति ॥ ९ ॥

एवं सन्नद्धतयाऽवस्थाने सति पश्चादागतस्याभिप्रायानुरोधेन कार्यं कर्म कुर्मः इत्याह—यदीत्यादि । यदि तुष्टो रामविषये,

---

* गङ्गानूपे—गङ्गातीरे—गो.

[1] गङ्गाकूलेऽत्र तिष्ठत—ङ. [2] यदाऽदुष्टस्तु—ङ

तदेयं सेना स्वस्तिमती तारिष्यति। अन्यदा तु नौकासु परपारे स्थित्वा सर्वानारुरुक्षून्निघ्नन्म इत्यर्थः ॥ ९ ॥

इत्युक्त्वोपायनं गृह्य मत्स्यमांसमधूनि च।
*अभिचक्राम भरतं निषादाधिपतिर्गुहः ॥ १० ॥

अभिचक्रामेति। दर्शनार्थमिति शेषः ॥ १० ॥

तमायान्तं तु संप्रेक्ष्य सूतपुत्रः प्रतापवान्।
भरतायाचचक्षेऽथ [1]समयज्ञो विनीतवत्॥ ११ ॥
एष ज्ञातिसहस्रेण स्थपतिः परिवारितः।
कुशलो दण्डकारण्ये वृद्धो भ्रातुश्च ते सखा॥ १२ ॥

स्थपतिः—प्रभुः। दण्डकारण्ये कुशल इति। निग्रहानुग्रहसमर्थ इत्यर्थः ॥ १२ ॥

†तस्मात् पश्यतु, काकुत्स्थ! त्वां निषादाधिपो गुहः।
असंशयं विजानीते यत्र तौ रामलक्ष्मणौ ॥ १३ ॥

अपि चानेन प्रयोजनमस्तीत्याह—असंशयमित्यादि ॥ १३ ॥

एतत्तु वचनं श्रुत्वा सुमन्त्रात् भरतः शुभम्।
उवाच वचनं ‡[2]शीघ्रं गुहः पश्यतु मामिति ॥ १४ ॥
लब्ध्वाऽनुज्ञां संप्रहृष्टः ज्ञातिभिः परिवारितः।
आगम्य भरतं प्रह्वः गुहो वचनमब्रवीत् ॥ १५ ॥

ज्ञातिभिः—प्राक् गङ्गानूपस्थापितैः ॥ १५ ॥

---

* भरतभावपरिज्ञानार्थं भरताभिमुखं स्वयं जगाम। † यतोऽयं दण्डकारण्ये कुशली, ते भ्रातुश्च सखा, तस्मात्। ‡ मां शीघ्रं पश्यत्वित्यन्वयः।

[1] विनयज्ञोङ [2] श्रीमान्—ङ.

निष्कुटश्चैव देशोऽयं * वञ्चिताश्चापि ते वयम् ।
†[1] निवेदयाम ते सर्वं स्वके [2] दाशगृहे वस ॥ १६ ॥

निष्कुट इति । अयं दण्डकारण्यदेशः युष्माकं निष्कुटः—गृहारामकल्पः, नात्राटवीशङ्काप्रसङ्ग इत्यर्थः । ते वयं त्वद्दासवर्गभूताः वञ्चिताः—प्रस्थानोद्योगसमय एवाप्रेषितनियोगसन्देशा इत्यर्थः । इयमुपचारोक्तिः । सर्वं रामविषयकं वृत्तान्तं ते निवेदयाम, लोट् । वस, अद्येति शेषः ॥ १६ ॥

अस्ति मूलफलं चैतत् निषादैः ‡[3] स्वयमार्जितम् ।
आर्द्रं शुष्कं यथा मांसं वन्यं चोच्चावचं तथा ॥ १७ ॥

वन्यं—नीवारश्यामाकं प्रियङ्ग्वादिधान्यम् ॥ १७ ॥

आशंसे स्वाशिता सेना [4] वत्स्यत्येनां विभावरीम् ।
अर्चितो विविधैः कामैः श्वः ससैन्यो [5] गमिष्यसि ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुरशीतितमः सर्गः

---

आशंसे—प्रार्थयामि । स्वाशिता—सम्यक् भुक्तिमती । वत्स्यतीत्याशंस इति योजना । दया(१८)मानः सर्गः ॥ १८ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे चतुरशीतितमः सर्गः

---

*यद्यपि पूर्वं 'जाह्नवीं तु समासाद्य' (80-21) इति गङ्गापर्यन्तं मार्गसंस्कार उक्तः, परन्त्वत्र—भरतस्य तदानीमागमनं तेन न प्रतीक्षितमासीदिति एवमुक्तिः । † निवेदयामस्ते सर्वे—ते—त्वदीयाः सर्वे वयं त्वदीयेऽस्मिन् दाशगृहे वसेति निवेदयाम इति भाव इति—गो. ‡ निषादादिसङ्करजातीनां परद्रव्यापहारादेरपि संभावितत्वात्, प्रकृते द्रव्यशुद्धिसूचनाय 'स्वयमार्जितं' इत्युक्तं स्यात् ।

[1] निवेदयामस्ते सर्वे—ङ. [2] दासगृहे—ङ. [3] समुपाहृतम्, समुपार्जितम्—ङ.
[4] वत्स्यत्येनां—ङ. [5] गमिष्यति—ङ.

## पञ्चाशीतितमः सर्गः

### [भरतगुहसंवादः]

एवमुक्तस्तु भरतः निषादाधिपतिं गुहम् ।
प्रत्युवाच महाप्राज्ञः वाक्यं हेत्वर्थ[1]संयुतम् ॥ १ ॥

अथ गुहस्य भरतविस्रंभः । एवमित्यादि । हेत्वर्थाभ्यां–उपपत्तिप्रयोजनाभ्यां संयुतं तथा ॥ १ ॥

ऊर्जितः खलु ते कामः कृतः, *मम गुरोः सखे !
यो मे त्वमीदृशीं सेनां अभ्यर्चयितुमिच्छसि ॥ २ ॥

ऊर्जितः–स्थिरनिष्पादनेच्छोस्ते कामः—अस्मत्सत्काराभिलाषः, स तु मम कृत एव खलु । कथमित्यतः—यो म इत्यादि ॥ २ ॥

इत्युक्त्वा स महातेजाः गुहं वचन[2]मुत्तमम् ।
अब्रवीत् भरतः श्रीमान् †[3] निषादाधिपतिं पुनः ॥ ३ ॥
कतरेण गमिष्यामि ‡भरद्वाजाश्रमं [4]पथा ।
गहनोऽयं भृशं देशः गङ्गानूपे दुरत्ययः ॥ ४ ॥

गहनः— दुष्प्रवेशः ॥ ४ ॥

तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
अब्रवीत् प्राञ्जलिर्भूत्वा गुहो गहनगोचरः ॥ ५ ॥

गहनं–वनं गोचरः–देशः यस्य स तथा ॥ ५ ॥

---

* स्वस्य रामविषयकभक्तिं द्योतयितुं—मम गुरोः सखेत्युक्तम्–गो. † पन्थानं दर्शयन् (पा.)—गन्तव्यपथि संमुखं हस्तं कुर्वन्–ति. ‡ पूर्वमेव 57 सर्गारंभे, रामस्य भरद्वाजाश्रमगमनपूर्वकचित्रकूटप्राप्तिपर्यन्तवृत्तान्तस्य सुमन्त्रेणावगतत्वकथनात्, तन्मुखावगतवृत्तान्तः भरतोऽपि भरद्वाजाश्रममार्गं पृच्छति ।

[1] संहितम्–ङ. च. [2] मर्थवत्–ङ. [3] पन्थानं दर्शयन्–च. [4] गुह–ङ.

दाशा[1]स्त्वाऽनुगमिष्यन्ति [2]देशज्ञाः सुसमाहिताः ।
अहं [3]चानुगमिष्यामि, राजपुत्र ! [4]महाबल ! ॥ ६ ॥

अहं च त्वाऽनुगमिष्यामि । अतो गहनविषयको न कश्चन विचार इति शेषः ॥ ६ ॥

कच्चिन्न दुष्टो व्रजसि रामस्याक्लिष्टकर्मणः ।
इयं ते महती सेना शङ्कां जनयतीव* मे ॥ ७ ॥

अपि तु अक्लिष्टकर्मणो रामस्य विषये दुष्टः—दुष्टभावो भूत्वा न व्रजसि कच्चित् ? ननु का ते दोषशङ्केत्यत्राह—इयमित्यादि । रामसन्दर्शनार्थगमने तु एतावत्सन्नाहस्य व्यर्थत्वात् अयमेव सन्नाहः मे शङ्कां जनयतीव ॥ ७ ॥

तमेवमभिभाषन्तं †आकाश इव निर्मलः ।
भरतः श्लक्ष्णया वाचा गुहं वचनमब्रवीत् ॥ ८ ॥
मा भूत् स कालो यत् कष्टं, न मां शङ्कितुमर्हसि ।
राघवः स हि मे भ्राता ज्येष्ठः पितृसमो मतः ॥ ९ ॥

मा भूदिति । 'यत्' इत्यव्ययम्, यस्मिन् काले कष्टं—परस्परोपमर्दलक्षणं भ्रातृकश्मलं भवति तादृशः स कालः—तादृश-दुष्प्रवृत्तिसाधनभूतकालशङ्का मा भूत्—न कर्तव्य इत्यर्थः । कुत इत्यतः—राघव इत्यादि । पितृसम इति—तद्बुद्ध्यास्पदभूतः ॥ ९ ॥

तं निवर्तयितुं यामि काकुत्स्थं वनवासिनम् ।
बुद्धिरन्या न ते कार्या, गुह ! सत्यं ब्रवीमि ते ॥ १० ॥

---

* इवशब्दः शङ्काया ईषत्त्वं द्योतयति—गो. † 'आकाश इव निर्मलः' इत्यनेन तच्छङ्कितदोषस्य तत्र प्रसक्तिरेव नास्तीत्युच्यते—गो.

[1] स्त्वनु—ङ. [2] धन्विनः—ङ. [3] त्वाऽनु—ङ. [4] महायशः—ङ.

अतो न दुश्शङ्कावकाश इत्याह—तं निवर्तयितुमित्यादि ॥ १० ॥

स तु *संहृष्ट[1]वदनः श्रुत्वा भरतभाषितम् ।
पुनरेवाब्रवीद्वाक्यं भरतं प्रति हर्षितः ॥ ११ ॥
धन्यस्त्वं न त्वया तुल्यं पश्यामि [2]जगतीतले ।
अयत्नादागतं राज्यं यस्त्वं त्यक्तुमिहेच्छसि ॥ १२ ॥
शाश्वती खलु ते कीर्तिः लोकाननु चरिष्यति ।
यस्त्वं कृच्छ्रगतं रामं प्रत्यानयितुमिच्छसि ॥ १३ ॥

चरिष्यति—प्रचरिष्यति ॥ १३ ॥

†एवं संभाषमाणस्य गुहस्य भरतं तदा ।
बभौ नष्टप्रभः सूर्यः रजनी चाभ्यवर्तत ॥ १४ ॥

नष्टप्रभ इति । मन्दीभूतरश्मिरित्यर्थः ॥ १४ ॥

सन्निवेश्य स तां सेनां गुहेन [3]परिरक्षितः ।
शत्रुघ्नेन सह श्रीमान् शयनं ‡पुनरागमत् ॥ १५ ॥

गुहेन परिरक्षितस्सन्—परिद्रुताटविकचोरबाधस्सन् ॥ १५ ॥

§रामचिन्तामयः शोकः भरतस्य महात्मनः ।
उपस्थितो ह्यनर्हस्य धर्मप्रेक्षस्य तादृशः ॥ १६ ॥

अनर्हस्येति । दुःखानर्हस्येत्यर्थः ॥ १६ ॥

---

* संहृष्टवदनः—प्रसन्नवदन:-गो. अन्त: हृष्टत्वात् संहृष्टवदन इति । † एवं भरतं संभाषमाणस्य—प्रशंसत: गुहस्य-गुहे प्रशंसतीति यावत् । ‡ अत्र पुनश्शब्देन, गुहागमनात् पूर्वं श्रान्त: शयने स्थित इति गम्यते । समुपागमदिति वा पाठ: । पुनः परितोषित: (पा.) इति वा सम्बन्ध:-गो. §शयनं प्राप्तस्यापि निद्रा नाजगामेत्युच्यते—रामेत्यादिना ।

[1] हृदयः-ङ. [2] जगतीपते-ङ. [3] परितोषितः-च.

अन्तर्दाहेन दहनः सन्तापयति राघवम् ।
वनदाहाभिसन्तप्तं गूढोऽग्निरिव पादपम् ॥ १७ ॥

दहनः—शोकाग्निः । वनदाहकोऽग्निः—वनदाहाग्निः—दावाग्निरिति यावत्, तेन सन्तप्तं—शुष्कमिति यावत् । गूढोऽग्निः—कोटरान्तर्गतः ॥ १७ ॥

*प्रसृतः सर्वगात्रेभ्यः [1]स्वेदं शोकाग्नि[2]संभवम् ।
यथा सूर्यांशुसन्तप्तः हिमवान् प्रसृतो हिमम् ॥ १८ ॥

हिमं प्रसृत इति । कर्तरि निष्ठा, गत्यर्थत्वात् ॥ १८ ॥

† ध्याननिर्दरशैलेन विनिश्वसितधातुना ।
दैन्यपादपसङ्घेन शोकायासाधिशृङ्गिणा ॥ १९ ॥
प्रमोहानन्तसत्त्वेन सन्तापौषधिवेणुना ।
आक्रान्तो दुःखशैलेन [3]मज्जता कैकयीसुतः ॥ २० ॥

ध्यानेत्यादिना दुःखस्य पर्वतसमाधिः । रामविषयकध्यानान्येव निर्दरशैलाः—विदीर्णशिलासमूहाः यस्मिन् स तथा । धातुः गैरिकादिः ।

---

* 'हिमं प्रसृतो हिमवान्' इतिवत् 'स्वेदं प्रसृतः भरतः' इत्यन्वयः ।
† ध्याननिर्दरशैलेन । दरः—गर्तः, तस्मान्निर्गतं—निर्दरं ; शिलानां समूहः शैलम् ; रामविषयध्यानमेव निर्दरशैलं यस्मिन्, तेन । ध्यानस्य निरंतरत्वेन दरीविदीर्णशिलापङ्क्तिसाम्यम् । विविधं निश्वसितं—विनिश्वसितं, तदेव धातुः यस्मिन् ; विविधत्वसाम्यात् । दैन्यं—करणानां स्वस्वविषयप्रवृत्तिवैमुख्यं, तस्य पादपसाम्यं अबोधरूपतया । शोकायासाधिशृङ्गिणा—शोकादय एव शृङ्गिणः—कृष्णसारादयः यस्मिन् तेन । यद्वा शोकायासाधिभिः शृङ्गिणा—शृङ्गवता ; दृढत्व(दुरारोहत्व)साम्यात् । प्रमोहानन्तसत्त्वेन—प्रमोहा एव अनन्तानि सत्त्वानि जन्तवः यस्मिन्, तेन ; 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः ; प्राणभयशङ्काकरत्वात् । सन्तापौषधिवेणुना—सन्तापा एव ओषधयो वेणवश्च यस्मिन्, तेन ; ओषधिवेणुसाम्यं दुष्प्रवेशत्वात् । आक्रान्तः, अभूदिति शेषः । महता—अतिगुरुणा । 'मज्जता' इति पाठे—अवयवेषु प्रविशता—गो.

[1] स्वेदः—ङ. [2] संभवः—ङ. [3] महता—ङ.

दैन्यं—दीनता, करणानां स्वस्वविषयप्रवृत्तिवैमुख्यरूपा, सा एव पादपसङ्घः यस्मिन्। शोकजः यः आयासः—चित्तश्रान्तिः सैवाधिरूपाणि शृङ्गाणि यस्य स तथा। सत्त्वं— आटविकप्राणिजातम्। सन्तापाः—अन्तर्बहिःकरणपरितापा एव ओषधयः वेणवश्च यस्मिन्। मज्जता—अन्तर्भावितणिः, मग्नं कुर्वता, सकरणग्राममात्मानमधो नयता। एवंरूपेण दुःखशैलेनाक्रान्तोऽभूत् ॥ १९-२० ॥

विनिःश्वसन् वै [1]भृशदुर्मनास्ततः
प्रमूढसंज्ञः परमापदं गतः।
शमं न लेभे हृदयज्वरार्दितः
नरर्षभो *[2]यूथहतो यथर्षभः ॥ २१ ॥

प्रकर्षेण मूढा संज्ञा—चेतना यस्य स तथा प्रमूढसंज्ञः। यूथहतः—यूथविभ्रष्टः ॥ २१ ॥

†गुहेन सार्धं भरतः समागतः
महानुभावः सजनः समाहितः।

---

*अयूथगतः(पा.)-यूथात् भ्रष्ट इत्यर्थः। यूथहत इति पाठे—हतयूथ इत्यर्थः-गो.

† अथ गुहः समागत इत्याह—गुहेनेति। सजनः—सपरिवारः समाहितः—एकाग्रचित्तः भरतः गुहेन सार्धं—सह समागतः—संगतः। अथ गुहः सुदुर्मनाः—भरतक्लेशदर्शनेन भरतादपि भृशं दुर्मनाः सन् भरतं अग्रजं प्रति—अग्रजं लक्षीकृत्य समाश्वासयत्—गो. अग्रजं प्रति समागतः भरतः गुहेन सार्धं सुदुर्मनाः—सुदुःखितः, अभूदिति शेषः। तं भरतं गुहः—पुनः गुहस्तु समाश्वासयदिति सम्बन्धः—ती. अथवा—यत्तदोर्नित्यसम्बन्धात्, अग्रजं प्रति सुदुर्मनाः यः भरतः-इतिपर्यन्तं वृत्तानुवादः; तदा पुनः तं गुहः समाश्वासयदिति—उत्तरसर्गसङ्ग्रहः। रामे निरतिशयप्रेमवतः तदीयकथाश्रवणं परमाश्वास एव। अथवा पूर्वसर्गादारभ्य पञ्चानां सर्गाणां संग्रहरूपोऽयं निष्कृष्टः श्लोकः। अत एव 89 सर्गारंभे 'व्युष्य रात्रिं' इत्युपक्रमः। भरते गुहस्य प्रत्ययात्, गुहः रामविषयककथां सर्वां कथयामास। तेन च भरतः सुदुर्मना बभूव। तं गुहः समाश्वास्य स्वगृहं गतः। पुनः प्रातरागतवान् गुह इति प्रतीयते। 89 सर्गस्थ 4 श्लोकोऽत्रावधेयः।

[1] भृशदुःखित-ङ. [2] ऽयूथगतो-ङ.

सुदुर्मनास्तं भरतं तदा पुनः
[1] गुहः समाश्वासयदग्रजं प्रति ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चाशीतितमः सर्गः

---

अग्रजं प्रति सुदुर्मना बभूव । तादृशं तं गुहः पुनराश्वासय दिति योजना । रात्रि(२२)मानः सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चाशीतितमः सर्गः

---

## षडशीतितमः सर्गः

[लक्ष्मणश्लाघनम्]

आचचक्षेऽथ * सद्भावं लक्ष्मणस्य महात्मनः ।
भरतायाप्रमेयाय गुहो गहनगोचरः ॥ १ ॥

अथ प्राप्तविस्रंभेन गुहेन रामलक्ष्मणवृत्तान्तबोधनम् । आचचक्ष इत्यादि । सद्भावं—साधुभावम् ॥ १ ॥

† तं जाग्रतं गुणैर्युक्तं [2] शरचापासिधारिणम् ।
भ्रातृगुप्त्यर्थमत्यन्तं अहं लक्ष्मणमब्रवम् ॥ २ ॥

तत्प्रकार एव—तं जाग्रतमित्यादि । भ्रातृगुप्त्यर्थं जाग्रतं—निर्निद्रम् । गुणैः—भ्रातृस्नेहसौशील्यादिगुणैः सहजक्षत्रधर्मैश्च युक्तम् ॥

---

* अथ—भरतस्वभावज्ञानानन्तरं—गो. † भरतस्य रामविषयकस्नेहमभिवर्धयितुं लक्ष्मणस्य ज्येष्ठानुवर्तनरूपं पूर्ववृत्तान्तमाह--तं जाग्रतमित्यादिना-गो.

[1] शनैः—ङ. [2] वरचापेषु—ङ.

इयं, तात! [1] सुखा शय्या त्वदर्थमुपकल्पिता ।
प्रत्याश्वसिहि *शेष्वास्यां सुखं, राघवनन्दन! ॥ ३ ॥

अथ 'इयं तात' इत्यादिरुक्तानुवादः †। सोऽसौ प्रथमोपदेशस्थले प्रपञ्चय व्याकृतचरः ॥ ३ ॥

उचितोऽयं जनः सर्वः ‡दुःखानां, त्वं सुखोचितः ।
§[2] धर्मात्मंस्तस्य गुप्त्यर्थं जागरिष्यामहे वयम् ॥ ४ ॥

न हि रामात् प्रियतरः ममास्ति भुवि कश्चन ।
‖मोत्सुको भूः ब्रवीम्येतत् अप्यसत्यं तवाग्रतः ॥ ५ ॥

अस्य प्रसादादाशंसे लोकेऽस्मिन् सुमहद्यशः ।
धर्मावाप्तिं च विपुलां [3] अर्थावाप्तिं च केवलाम् ॥ ६ ॥
सोऽहं प्रियसखं रामं शयानं सह सीतया ।
रक्षिष्यामि धनुष्पाणिः ¶सर्वैः स्वैः ज्ञातिभिस्सह ॥ ७ ॥
[4] न हि मेऽविदितं किञ्चित् **वनेऽस्मिंश्चरतः सदा ।
चतुरङ्गं ह्यपि बलं ††प्रसहेम वयं युधि ॥ ८ ॥

---

* 51 सर्गे 'साध्वस्यां, राजपुत्र! यथासुखम्' इति पाठः । † पूर्वं 51 सर्गे वृत्तोऽयं वृत्तान्त इति भावः । प्रायः उभयोः सर्गयोः आनुपूर्वीसाम्यात् विशिष्यात्र न व्याक्रियत इति भावः । अथापि दृश्यते तत्र तत्रानुपूर्वीभेदः । ‡ 'क्लेशानां' इति 51 सर्गे पाठः । § 'गुप्त्यर्थं जागरिष्यामः काकुत्स्थस्य वयं निशाम्' इति 51 सर्गे पाठः । ‖ हे लक्ष्मण! उत्सुकः मा भूः । तवाग्रतः एतत्–एतदधिकृत्य असत्यं ब्रवीम्यपि? इति काकुः । असत्यमपि ब्रवीमि? इति वा काकुः । एतत्स्थाने 'ब्रवीम्येतदहं सत्यं सत्येनैव च ते शपे' इति 51 सर्गे पाठः । कुत्रचित्—अत्रापि तथैव पाठः–ङ. ¶ 'सर्वतः' इति 51 सर्गे पाठः । ** 'वनेऽस्मिंश्चरतः' इति 51 सर्गे पाठः । †† 51 सर्गे 'सुमहत् प्रसहेमहि' इति पाठः ।

[1] शुभा–ङ. [2] धर्मात्मंस्तव–ङ. [3] अर्थकामौ च केवलम्, अर्थावाप्तिं च पुष्कलाम्–ङ. [4] स्वभावविहितं–ङ.

*एवमस्माभिरुक्तेन लक्ष्मणेन महात्मना ।
अनुनीता वयं सर्वे धर्ममेवानुपश्यता ॥ ९ ॥

कथं दाशरथौ भूमौ शयाने सह सीतया ।
शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥ १० ॥

यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि ।
तं पश्य, गुह! संविष्टं तृणेषु सह सीतया ॥ ११ ॥

†महता तपसा लब्धः विविधैश्च परिश्रमैः ।
एको [1]दशरथस्यैषः पुत्रः सदृशलक्षणः ॥ १२ ॥

अस्मिन् प्रव्राजिते राजा न चिरं वर्तयिष्यति ।
विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १३ ॥

विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः ।
निर्घोषोपरतं [2]नूनं अद्य राजनिवेशनम् ॥ १४ ॥

कौसल्या चैव राजा च तथैव जननी मम ।
नाशंसे यदि [3]जीवेयुः सर्वे ते शर्वरीमिमाम् ॥ १५ ॥

जीवेदपि च मे माता शत्रुघ्नस्यान्ववेक्षया ।
‡दुःखिता या तु कौसल्या वीरसूर्विनशिष्यति ॥ १६ ॥

---

* एतत्स्थाने–' लक्ष्मणस्तं तदोवाच रक्ष्यमाणास्त्वयाऽनघ । नात्र भीता वयं सर्वे धर्ममेवानुपश्यता ' इति 51 सर्गे पाठः । † ' यो मन्त्रतपसा लब्धः ' इति 51 सर्गे पाठः । ‡ ' तद्दुःखं यत्तु कौसल्या ' इति 51 सर्गे पाठः । एतदर्धानन्तरं—" अनुरक्तजनाकीर्णा सुखा लोकप्रियावहा । राजव्यसनसंसृष्टा सा पुरी विनशिष्यति ॥ कथं पुत्रं महात्मानं ज्येष्ठं प्रियमपश्यतः । शरीरं धारयिष्यन्ति प्राणा राज्ञो महात्मनः ॥ विनष्टे नृपतौ पश्चात् कौसल्या विनशिष्यति । अनन्तरं च माताऽपि मम नाशमुपैष्यति ॥" इति श्लोकत्रयं 51 सर्गे अधिकम् ।

[1] दशरथस्येष्टः–ङ. [2] तात मन्ये–ङ. [3] जीवन्ति–ङ. च.

अतिक्रान्तमतिक्रान्तं अनवाप्य मनोरथम् ।
राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १७ ॥

सिद्धार्थाः पितरं वृत्तं तस्मिन् काले ह्युपस्थिते ।
प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति भूमिपम् ॥ १८ ॥

रम्यचत्वरसंस्थानां सुविभक्तमहापथाम् ।
हर्म्यप्रासादसंपन्नां *सर्वरत्नविभूषिताम् ॥ १९ ॥

गजाश्वरथसंबाधां तूर्यनादविनादिताम् ।
सर्वकल्याणसंपूर्णां हृष्टपुष्टजनाकुलाम् ॥ २० ॥

आरामोद्यान[1]संपूर्णां समाजोत्सवशालिनीम् ।
सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २१ ॥

अपि जीवेद्दशरथः वनवासात् पुनर्वयम् ।
प्रत्यागम्य महात्मानं अपि पश्येम सुव्रतम् ॥ २२ ॥

अपि सत्यप्रतिज्ञेन सार्धं कुशलिना वयम् ।
निवृत्ते समये ह्यस्मिन् सुखिताः प्रविशेमहि ॥ २३ ॥

परिदेवयमानस्य †तस्यैवं सुमहात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी साऽत्यवर्तत ॥ २४ ॥

‡प्रभाते विमले सूर्ये कारयित्वा जटा उभौ ।
अस्मिन् भागीरथीतीरे सुखं संतारितौ मया ॥ २५ ॥

---

* 'गणिकावरशोभिताम्' इति 51 सर्गे पाठः । † 'दुःखार्तस्य' इति 51 सर्गे पाठः । ‡ एतच्छ्लोकद्वयं तु 52 सर्गसङ्ग्रहरूपम् ।

[1] संपन्नां–ङ.

जटाधरौ तौ द्रुमचीरवाससौ
[1]महाबलौ कुञ्जरयूथपोपमौ ।
वरेषुचापासिधरौ परंतपौ
[2]व्यवेक्षमाणौ सह सीतया गतौ ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षडशीतितमः सर्गः

---

तरु(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे षडशीतितमः सर्गः

---

## सप्ताशीतितमः सर्गः

[रामशयनादिप्रश्नः]

गुहस्य वचनं श्रुत्वा भरतो भृशमप्रियम् ।
*ध्यानं जगाम तत्रैव यत्र तत् श्रुतमप्रियम् ॥ १ ॥

एवं भ्रात्रोर्जटाधारणश्रवणपरितप्तः कौसल्यासमाश्वासितो भरतः पुनश्च गुहमुखादशेषवृत्तान्तमवगच्छति—गुहस्येत्यादि । भृशमप्रियं—जटाधारणादिरूपम् । यत्र तत्रैवेति । यत्र क्षणे तत्र क्षण एवेत्यर्थः ॥ १ ॥

---

* यत्र तत्रैव—यत्र क्षणे अप्रियं श्रुतं, तत्रैवेत्यर्थः । यद्वा यत्र विषये अप्रियं श्रुतं, तत्रैव ध्यानं जगाम—स्वाभिलषितकार्यसङ्कटं जातमिति चिन्तापारवश्यं प्राप्त इत्यर्थः—गो. जटाधारणात् रामप्रत्यावृत्तौ संशयो जात इति भावः ।

[1] महारथौ—ङ. [2] व्यपेक्षमाणौ—ङ.

*सुकुमारो महासत्त्वः सिंहस्कन्धो महाभुजः ।
पुण्डरीकविशालाक्षः तरुणः प्रियदर्शनः ॥ २ ॥

'ध्यानं जगाम' इत्युक्तं ; तस्यैवैतदभिनयः–सुकुमार इत्यादि । प्रियदर्शनः 'कथं जटादिकं धृतवान्?' इति चिन्तां जगामेत्यन्वयः ॥२॥

प्रत्याश्वस्य मुहूर्तं तु कालं परमदुर्मनाः ।
[1]ससाद सहसा तोत्रैः [2]हृदि विद्ध इव द्विपः ॥ ३ ॥

ततो मुहूर्तकालं चिन्तया परमदुर्मनाः परमखिन्नः प्रत्याश्वस्य तु पुनश्च सहसा दुःखवेगेन ससाद–अवशोऽभूत् । तोत्रं–வார்க்கோல் । हृदि–हृदयदेशे–मर्मस्थले ॥ ३ ॥

[3]भरतं मूर्छितं दृष्ट्वा विवर्णवदनो गुहः ।
बभूव व्यथितस्तत्र भूमिकम्पे यथा द्रुमः ॥ ४ ॥
तदवस्थं तु भरतं शत्रुघ्नोऽनन्तरस्थितः ।
परिष्वज्य रुरोदोच्चैः विसंज्ञः शोककर्शितः ॥ ५ ॥

तदवस्थं–विचेतनावस्थम् । अनन्तरस्थितः–समीपस्थितः ॥ ५ ॥

ततः सर्वाः समापेतुः मातरो भरतस्य ताः ।
उपवासकृशा दीना भर्तुर्व्यसनकर्शिताः ॥ ६ ॥

---

*सुकुमार इत्यादिश्लोकद्वयमेकान्वयम् । प्रत्याश्वस्य मुहूर्तं कालं परमदुर्मनाः सन् सहसा पपात । ससादेति वा पाठः–गो. ती. सुकुमारत्वादिगुणेन जटादिकं धृतम्, अतो निवृत्तिर्दुर्लभेति चिन्तां जगाम–ति. अथ वा—'ध्यानं-रामविषयकचिन्तां जगाम' इत्यस्यैव विवरणम्—सुकुमार इत्यादि । अतिसङ्कटेन आत्मगतं वाक्यमिदं—सुकुमार इत्यादि । सङ्कटाधिक्यादेव वाक्यापरिसमाप्त्यादि । एवं सहसा मूर्छामन्तरा क्षणकालचिन्तनमपि आश्चर्यावहं इति भावेनानन्तरार्धं प्रवृत्तम् ।

[1] पपात–ङ. [2] क्षतिविद्ध–ङ. [3] अयं श्लोकः ङ. पुस्तके कुण्डलितः ।

ताश्च तं पतितं भूमौ रुदन्त्यः पर्यवारयन् ।
कौसल्या त्वनुसृत्यैनं दुर्मनाः परिषस्वजे ॥ ७ ॥

अनुसृत्य—समीपं प्राप्य ॥ ७ ॥

वत्सला स्वं यथा वत्सं *[1] उपगूह्य तपस्विनी ।
परिपप्रच्छ भरतं रुदन्ती शोकलालसा ॥ ८ ॥

स्वं वत्सं—स्वीयं पुत्रं यथा, तथा ॥ ८ ॥

† पुत्र! व्याधिर्न ते कच्चित् शरीरं [2] प्रति बाधते ।
अद्य राजकुलस्यास्य त्वदधीनं हि जीवितम् ॥ ९ ॥

हे पुत्र! ते शरीरं व्याधिः—परमपित्तप्रकोपलक्षणः न बाधते कच्चित्? अन्यथा एवं भ्रममूर्छाप्रलापनानि न स्युः ॥ ९ ॥

त्वां दृष्ट्वा, पुत्र! जीवामि रामे सभ्रातृके गते ।
वृत्ते दशरथे राज्ञि नाथ एकस्त्वमद्य नः ॥ १० ॥

‡ [3] कच्चिन्न लक्ष्मणे, पुत्र! श्रुतं ते किञ्चिदप्रियम् ।
पुत्रे वा ह्येकपुत्रायाः सहभार्ये वनं गते ॥ ११ ॥

अथ उक्तभ्रममूर्छाप्रलापानां हेत्वन्तरं पृच्छति—कच्चिन्नेत्यादि । लक्ष्मणे—तद्विषये । अप्रियं—प्राणात्ययरूपम् ॥ ११ ॥

---

* उपगूह्य—परिष्वज्य—गो. † न हि भरतस्य व्याधिश्चातुर्थिकः, अपि तु रामविरह एव (पुत्रव्याधिरित्येकं पदं) रामविरहः ते शरीरं (न) बाधते कच्चित् इत्यर्थः । अद्येति—रामो वनं गतः, चक्रवर्ती तु संस्थितः, अतस्त्वमेवेदानीं अस्माकं रक्षक इति नाथः ; किन्तु, रामः भवतो मुखवैवर्ण्यं दृष्ट्वा न पुनरागतो भवेत् । अवश्यमागमिष्यतीत्येतदवेक्ष्य वयं जीवामः । भवान्नास्तीति श्रुतं चेत् क इमां दिशमवलोकयेदित्यर्थः—गो. परन्त्वत्र उत्तरश्लोका विलोकनीयाः । ‡ ‘ततस्सर्वाः समापेतुर्मातरः’ (६) इत्यनेन भरतमूर्छाप्तिकाले कौसल्यादीनामसन्निहितत्वात्, भरतमूर्छाहेत्वपरिज्ञानात्, ‘अतिस्नेहः पापशङ्की’ इति न्यायेन रामलक्ष्मणयोर्विपत्त्यादिश्रवणादेव भरतो मूर्छित इति भावनया कौसल्या पृच्छति कच्चिदित्यादि ॥

[1] उपगूह्य मनस्विनी—ङ. [2] परिबाधते—ङ. [3] कच्चिन्नु—ङ.

**स मुहूर्तं समाश्वस्य रुदन्नेव महायशाः ।**
**कौसल्यां परिसान्त्व्येदं गुहं वचनमब्रवीत् ॥ १२ ॥**

'स मुहूर्तं समाश्वस्य' इति । मुहूर्तं विसंज्ञः पश्चात् समाश्वास्येत्यर्थः । कौसल्यां परिसान्त्व्येति । 'न मे रोगः, नापि भ्रात्रोरपायः । अपि तु तयोः जटाधारणं श्रुत्वा तद्दुःखेन मूर्छितोऽस्मि' इत्युक्त्वेत्यर्थः ॥

**भ्राता मे क्वावसद्रात्रौ क्व सीता क्व च लक्ष्मणः?**
**अस्वपच्छयने कस्मिन् किं भुक्त्वा, गुह! शंस मे ॥ १३ ॥**
**सोऽब्रवीत् भरतं हृष्टः* निषादाधिपतिर्गुहः ।**
**यद्विधं प्रतिपेदे च रामे प्रियहितेऽतिथौ ॥ १४ ॥**

हृष्ट इति । लक्ष्मणवत् परिपूर्णभ्रातृभक्तिदर्शनेन सन्तुष्टः । रामे भरतविमतिशङ्काहीनश्चेत्यर्थः । यद्विधं—यद्यत्प्रकारकं व्यवहारं रामे प्रियहितेऽतिथौ प्रतिपेदे—प्राप्तवान् तमब्रवीदित्यन्वयः ॥ १४ ॥

**अन्नमुच्चावचं [1]भक्षाः फलानि विविधानि च ।**
**रामायाभ्यवहारार्थं [2]बहु चोपहृतं मया ॥ १५ ॥**

वचनप्रकारः—अन्नमित्यादि ॥ १५ ॥

**तत्सर्वं †[3]प्रत्यनुज्ञासीत् रामः सत्यपराक्रमः ।**
**न हि तत् प्रत्यगृह्णात् सः क्षत्रधर्ममनुस्मरन् ॥ १६ ॥**

---

* हृष्टः—रामवृत्तान्तकीर्तनस्यावकाशो लब्ध इति सञ्जातहर्षः—**गो.** † प्रत्यनुज्ञासीत्—प्रत्यवज्ञासीत्—पुनर्नीयतामित्यनुज्ञातवान् । अत्र हीनजातिपरिग्रहत्वात् तत्प्रत्याख्यानं, ऋषिभ्यस्तु स्वीकरिष्यतीत्याहुः—**गो.** इदमत्रावधेयम्—अत्र 'क्षत्रधर्ममनुस्मरन्' इत्याद्युक्तिः गुहस्यैव । तत्र तु (50 सर्गे) 'स्वागतं ते महाबाहो! तवेयमखिला मही' (38) 'भक्ष्यं भोज्यं च पेयं च लेह्यं चेदमुपस्थितम् । शयनानि च मुख्यानि' (40) इत्यादिगुहकृतराजोपचारं शृण्वन् हि रामः 'सर्वं तदनुजानामि न हि वर्ते प्रतिग्रहे । कुशचीराजिनधरं फलमूलाशिनं च माम् । विद्धि प्रणिहितं धर्मे तापसं वनगोचरम्' (44) इत्येवाह ॥

[1] भक्ष्यं—ङ. [2] बहुशोद्या—ङ. [3] प्रत्यनुज्ञाप्य—ङ.

प्रत्यनुज्ञासीत्–मदनुग्रहार्थं केवलमङ्गीचकार । क्षत्रधर्मं–दानमेव क्षत्रियस्य, न त्वादानमिति स्मरन् न हि तत् प्रत्यगृह्णात्–अभ्यवहाराय न स्वीकृतवान् ॥ १६ ॥

न ह्यस्माभिः प्रतिग्राह्यं, सखे! देयं तु सर्वदा ।
इति तेन वयं, [1]राजन्! अनुनीता महात्मना ॥ १७ ॥

स एव उक्तधर्मः विव्रियते–न ह्यस्माभिरित्यादि । यद्येवं कथमृषिभ्यो भरद्वाजादिभ्यः पूजा प्रतिगृह्यते ? न्याय्यत्वादेव । गोमधुपर्कादिना राजा ब्राह्मणेन पूजनीयः । सा च पूजा राज्ञा अभ्युदयाय ग्राह्या । यथान्यायप्राप्तः षड्भागः करः स्वदेशात् । गुहस्तु निषादः, नास्मात् पूजा ग्राह्या ; यथाविधिपूजानधिकारात् । नापि करत्वेन, अस्वदेशत्वात् * ॥ १७ ॥

लक्ष्मणेन समानीतं पीत्वा वारि महायशाः ।
[2]औपवास्यं तदाऽकार्षीत् राघवः सह सीतया ॥ १८ ॥

'औपवास्यं तूपवासः', स्वार्थिकः ष्यञ् ॥ १८ ॥

ततस्तु जलशेषेण लक्ष्मणोऽप्यकरोत्तदा ।
† वाग्यतास्ते त्रयः सन्ध्यां समुपासत ‡ संहिताः ॥ १९ ॥

---

* यद्यपि गुहस्य तत्त्वज्ञत्वेन अस्त्येव भगवत्पूजाधिकारः, तथाऽपि व्रतस्थत्वात्तद-भोजनमिति तत्त्वम्–ति. † ननु पूर्वं पुरोवादे 'ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम् । जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम्' इत्युक्तम् । कथमत्रानुवादे प्रथमं जलादानं पश्चात्सन्ध्योपासनं चोच्यते—सत्यम्—तथैव क्रमः । इह तु गुहानीतान्नाङ्गीकारे 'किं भुक्तवान् रामः ?' इत्याकाङ्क्षायां लक्ष्मणेन 'यद्वार्यानीतं तत्पीतं' इति प्रसङ्गसङ्गत्या जलपानं प्रथममुक्त्वा अथ सन्ध्योपासनमुक्तमिति न दोषः–गो. ‡ संहिताः—सहिता इति वा ।

[1] सर्वे–ङ. [2] उपवासं–ङ.

अकरोदिति । पानक्रियामिति शेषः ॥ १९ ॥

सौमित्रिस्तु ततः पश्चात् अकरोत् स्वास्तरं शुभम् ।
स्वयमानीय बर्हींषि क्षिप्रं राघवकारणात् ॥ २० ॥

ततः पश्चादिति । सन्ध्यावन्दनानन्तरमित्यर्थः । बर्हींषि—दर्भान् ॥ २० ॥

तस्मिन् समाविशत् रामः स्वास्तरे सह सीतया ।
प्रक्षाल्य च तयोः पादौ व्यपाक्रामत् स लक्ष्मणः ॥

व्यपाक्रामदिति । शयनप्रदेशात् बहु दूरमिति शेषः ॥

*एतत्तदिङ्गुदीमूलं इदमेव च तत्तृणम् ।
[1]यस्मिन् रामश्च सीता च रात्रिं तां शयितावुभौ ॥

†नियम्य पृष्ठे तु तलाङ्गुलित्रवान्
शरैः सुपूर्णाविषुधी परंतपः ।
महद्धनुः सज्यमुपोह्य लक्ष्मणः
निशामतिष्ठत् [2]परितोऽस्य केवलम् ॥ २३ ॥

नियम्य—बद्ध्वा । पृष्ठे—पश्चाद्भागे । तलयोः—करतलयोः अङ्गुलित्रमस्यास्तीति तथा । उपोह्य—धृत्वा ॥ २३ ॥

---

* गुहः दूरे हस्तेन दर्शयन् वदति—एतदित्यादि । तत्समीपगमनं तु अनन्तरसर्गे कथ्यते । † पृष्ठे -पश्चाद्भागे इषुधी—तूणीरद्वयं नियम्य—बद्ध्वा । शूराणां सव्यापसव्यप्रयोगार्थं इषुधिद्वयधारणमस्ति । तलाङ्गुलित्रवान्—'तलं ज्याघातवारणम्' इत्यमरः—गो. एवञ्च करयोः ज्याघर्षणवारणं तलं, ज्याऽऽकर्षणपीडावारणं अङ्गुल्योः—अङ्गुलित्रं, तदुभयवानित्यर्थः ।

[1] अस्मिन्—ङ. [2] त्वरितो—ङ.

ततस्त्वहं चोत्तमबाणचापधृत्
स्थितोऽभवं तत्र स तत्र लक्ष्मणः ।
अतन्द्रिभिः ज्ञातिभिः आत्तकार्मुकैः
महेन्द्रकल्पं [1]परिपालयं तदा ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्ताशीतितमः सर्गः

---

परिपालयं—पर्यपालयमिति यावत् ।　　वीर(२४)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्ताशीतितमः सर्गः

---

## अष्टाशीतितमः सर्गः

[रामशय्यादिवीक्षणम् ]

तच्छ्रुत्वा *निपुणं सर्वं भरतः सह मन्त्रिभिः ।
इङ्गुदीमूलमागम्य रामशय्या[2]मवेक्ष्य ताम् ॥ १ ॥

एवं गुहात् रामशयनस्थलादिकमवगत्य ताश्च जननीभ्यः प्रदर्श्य बहु विलप्य रामकर्तव्यं व्रतं स्वयं कर्तुमध्यवस्यति । तच्छ्रुत्वेत्यादि ॥

अब्रवीज्जननीः सर्वाः, इह तेन महात्मना ।
शर्वरी शयिता भूमौ इदमस्य विमर्दितम् ॥ २ ॥

'शर्वरी शयिता' इति निष्ठयाऽधिकरणस्याभिहितत्वात् 'इदमेषामासितं' इतिवत् शर्वरीशब्दात् प्रथमा, शर्वर्यां शयनक्रियाऽभूदित्यर्थः । इदमस्य विमर्दितमित्यत्राप्यधिकरणे निष्ठा । 'क्तस्य

---

* निपुणं—सावधानमित्यर्थः—गो.

[1] परिपालयंस्तदा—ङ.　　[2] मवैक्षत—ङ.

च वर्तमाने ' इति कर्तरि षष्ठी। अस्येति। अस्मिन् एतत्कर्तृकं विमर्दनमित्यर्थः ॥ २ ॥

महाभागकुलीनेन [1] महाभागेन धीमता।
जातो *[2] दशरथेनोर्व्यां न रामः स्वप्तुमर्हति ॥ ३ ॥
अजिनोत्तरसंस्तीर्णे वरास्तरणसञ्चये।
शयित्वा पुरुषव्याघ्रः कथं शेते महीतले ? ॥ ४ ॥

अजिनरूपेण—कदलीचमूर्वादिराजार्हमृगाजिनविशेषरूपेण उत्तरेण—मञ्चोत्तरच्छदेन संस्तीर्णं तथा। एतादृशास्तरणवत् तल्पं उष्णकाले शैत्याय। तथा कालान्तरे—वरास्तरणसञ्चये बर्हिषि, बहुव्रीहिः, सः अन्यपदार्थः पर्यङ्कः। तूलकल्पकार्पासवस्त्ररत्नकम्बलादीनि वरास्तरणानि, शैत्यानुरोधेनौष्ण्यार्थं तद्बाहुल्यम्, उक्तरूपशयनविशेषेषु शयित्वाऽसौ कथं महीतले शेते ? ॥ ४ ॥

प्रासादाग्रविमानेषु वलभीषु च सर्वदा।
†हैमराजत[3]भौमेषु वरास्तरणशालिषु ॥ ५ ॥
पुष्पसञ्चयचित्रेषु चन्दनागरुगन्धिषु।
पाण्डुराभ्रप्रकाशेषु शुकसङ्घरुतेषु च ॥ ६ ॥
‡प्रासादवर[4]वर्येषु [5]शीतवत्सु सुगन्धिषु।
उषित्वा [6]मेरुकल्पेषु कृतकाञ्चनभित्तिषु ॥ ७ ॥

---

* दशरथेनेति पञ्चम्यर्थे तृतीया—गो. †हैमानि राजतानि—भौमानि—भूतलानि येषु तेषु—गो. ‡प्रासादवराणामुत्तमेषु—गो.

[1] महाराजेन—ङ. [2] दशरथादुर्व्यां—ङ. [3] वर्णेषु—ङ. [4] रम्येषु—ङ. [5] गीतवत्सु—ङ. [6] मेघकल्पेषु—ङ.

गीतवादित्रनिर्घोषैः वराभरणनिःस्वनैः ।
मृदङ्गवरशब्दैश्च सततं प्रतिबोधितः ॥ ८ ॥
वन्दिभिर्वन्दितः काले बहुभिः सूतमागधैः ।
*गाथाभिरनुरूपाभिः स्तुतिभिश्च परन्तपः ॥ ९ ॥

अथ प्रासादाग्रविमानेषु—प्रासादाग्रवर्तिशिरोगृहेषु उच्यमान-विशेषणकेषु उषित्वा कथं भूमौ शेते ? तथा गीतवादित्राद्युदेतस्तुतिभिः बोध्यमानः कथं भूमौ केवलं शेते ? इत्यन्वयः । वलभी—गृहभेदः, 'कूटागारं तु वलभी' इति वैजयन्ती । हेमादिविकारजाः—हैमराजतभौमाः, तेषु । प्रासादवराणामपि वर्याः—श्रेष्ठाः ॥ ९ ॥

अश्रद्धेयमिदं लोके न सत्यं प्रतिभाति मा ।
मुह्यते खलु मे भावः स्वप्नोऽयमिति मे मतिः ॥ १० ॥

इदं—तादृशस्य रामस्य भूशयनं लोके—अत्रत्यजने श्रुतं अश्रद्धेयमेव । तस्यैव विवरणं—न सत्यं मा—मां प्रति प्रतिभाति । अथवा—यतः मे भावः, खलु प्रसिद्धौ, मुह्यते, अतो मे मोहो वेति शेषः । अथवा अयं प्रसङ्गः स्वप्न एव भवितुमर्हतीति मे मतिः । तत्र किल असंभावितमपि संभाव्यते ॥ १० ॥

†न नूनं दैवतं किञ्चित् कालेन बलवत्तरम् ।
यत्र दाशरथी रामो [1]भूमावेव शयीत सः ॥ ११ ॥

---

* कथं भूमौ केवलायां शेते, कथं श्वापदरवैः प्रतिबोध्यते, कथमेकाकी तिष्ठतीति चोपस्कार्यम्—गो. †कालेन—कालतः बलवत्तरं किञ्चित्—किमपि दैवतं नास्तीति नूनं मन्ये—ति. सर्वं कालाधीनमेव, न तु तदपेक्षया सर्वशक्त्यमर्नशक्तत्वादिगुणकं दैवं नाम किञ्चिदस्ति नूनं—इति भावः ।

[1] भूमावेवमशेत—च.

अथ वास्तवीमुपपत्तिं परामृशति—न नूनमित्यादि । बलवत्तरं—स्वातन्त्र्यादर्थप्रापकं दैवमिति किञ्चिद्वस्तु नास्तीति नूनं—निश्चितम् ; यत्र—यस्मात् स रामोऽपि कालेन बलीयसा भूमावेव शयीत । अतो दैवस्यादृष्टपर्यायस्यापि कालस्यैव प्रवर्तकत्वात् काल एव प्रारब्धमुपस्थाप्य—भूशयनादिदुःखं प्रापयतीत्यर्थः ॥ ११ ॥

* विदेहराजस्य सुता सीता च प्रियदर्शना ।
दयिता शयिता भूमौ स्नुषा दशरथस्य च ॥ १२ ॥

इयं शय्या मम भ्रातुः इदं हि परिवर्तितम् ।
स्थण्डिले कठिने सर्वं [1] गात्रैर्विमृदितं तृणम् ॥ १३ ॥

मन्ये साभरणा सुप्ता सीताऽस्मिन् [2] शयनोत्तमे ।
तत्र तत्र हि दृश्यन्ते [3] सक्ताः † कनकबिन्दवः ॥ १४ ॥

कनकबिन्दवः—भूषणावयवकनकशकलानि (?) ॥ १४ ॥

उत्तरीयमिहासक्तं सुव्यक्तं सीतया तदा ।
तथा ह्येते प्रकाशन्ते सक्ताः [4] कौशेयतन्तवः ॥ १५ ॥

मन्ये भर्तुः सुखा शय्या येन बाला तपस्विनी ।
सुकुमारी सती दुःखं न विजानाति मैथिली ॥ १६ ॥

भर्तुः शय्या यादृशी तादृश्यपि सुखा—सुखसाधनभूतेति मन्ये । स्त्रीणामिति शेषः । कुत इत्यतः—सुकुमारीत्यादि ॥ १६ ॥

---

* शयिता—शयितवती, हन्तेति शेषः—गो. यद्वा—कालप्राबल्य एव निदर्शनान्तरं—विदेहराजस्य सुतेत्यादि । 'सीता च भूमौ शयिता, अतः—न नूनं दैवतं किञ्चिदित्यन्वयः ।

† कनकाभरणसंमर्दाधीनतच्छायापत्तिकृतो वाऽयं निर्देशः स्यात् ।

[1] गात्रं विमृदितं तृणैः—ङ. [2] शयने शुभे, शयने शुभा—ङ. [3] सिक्ताः—ङ.

[4] कनकतन्तवः—ङ.

*[1] हाहन्ताऽस्मि नृशंसोऽहं [2] यत् सभार्यः कृते मम ।
ईदृशीं राघवः शय्यां अधिशेते ह्यनाथवत् ॥ १७ ॥

मम कृत इति । कैकेयीप्रवृत्तेः स्वज्ञानस्वानुमतिराहित्येऽपि स्वमुद्दिश्यैव प्रवृत्तत्वादित्याशयः ॥ १७ ॥

सार्वभौमकुले जातः [3] सर्वलोकस्य सम्मतः ।
[4] सर्वलोकप्रियः त्यक्त्वा राज्यं [5] सुखमनुत्तमम् ॥ १८ ॥
कथमिन्दीवरश्यामः रक्ताक्षः प्रियदर्शनः ।
सुखभागी न दुःखार्हः शयितो भुवि राघवः ? ॥ १९ ॥
धन्यः खलु [6] महाभागः लक्ष्मणः शुभलक्षणः ।
भ्रातरं विषमे काले यो राममनुवर्तते ॥ २० ॥

विषमे काले—सङ्कटकाले ॥ २० ॥

सिद्धार्था खलु वैदेही पतिं याऽनुगता वनम् ।
† वयं संशयिताः सर्वे हीनास्तेन महात्मना ॥ २१ ॥

संशयिताः—संशयापन्नरामसेवकाः । कालान्तरप्रार्थनीयसेवात्वादिदानीमस्माकं सेवा अनुमन्यते न वेति संशयितसेवासिद्धिमन्त इत्यर्थः ॥ २१ ॥

---

* हाहन्तेति एकनिपातः खेदार्थः—**गो.** † तेन महात्मना हीनाः—परित्यक्ताः वयं, अत एव संशयिताः—जीवनसंशयमेवापन्नाः । एतदेवोच्यते अनन्तरश्लोके—'शून्या' इति पदेन । 'न च सीता त्वया हीना न चाहमपि राघव । मुहूर्तमपि जीवावः' इतिवदिति भावः ।

[1] हाहतोऽस्मि—**च.** [2] यः पितुः सदृशो मम—**ङ.** [3] सर्वलोकसुखावहः—**च.** [4] सर्वप्रियकरः—**च.** [5] प्रिय—**च.** [6] महाबाहुः—**ङ.**

अकर्णधारा पृथिवी शून्येव प्रतिभाति मा ।
गते दशरथे स्वर्गं रामे चारण्यमाश्रिते ॥ २२ ॥

अकर्णधारेति । नौरिवेति शेषः । शून्येव—प्रवृत्ति-शून्येवेत्यर्थः ॥ २२ ॥

*न च प्रार्थयते कश्चित् मनसाऽपि वसुन्धराम् ।
वनेऽपि वसतस्तस्य बाहुवीर्याभिरक्षिताम् ॥ २३ ॥

कश्चिदिति । मादृश इत्यर्थः ॥ २३ ॥

†शून्यसंवरणारक्षां अयन्त्रितहयद्विपाम् ।
[1]अपावृतपुरद्वारां राजधानीमरक्षिताम् ॥ २४ ॥
अप्रहृष्ट[2]बला‡मूनां विषमस्थामनावृताम् ।
शत्रवो [3]नाभिमन्यन्ते [4]भक्षान् विषकृतानिव ॥ २५ ॥

शून्या संवरणानां—प्राकाराणां आरक्षा—आ-समन्तात् रक्षणं यस्याः सा तथा । अप्रहृष्टेति बलादिना हेतुना । ऊनां—क्षीणबलां । नाभिमन्यन्ते—स्वीकर्तुं नेच्छन्ति । अतः तादृशमहिमा स एव राज्यार्हः, तमेवानेष्यामि ॥ २५ ॥

§अद्यप्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा ।
फलमूलाशनो नित्यं जटाचीराणि धारयन् ॥ २६ ॥

---

* अनायकत्वे कथं राज्यं निरुपद्रवं ? तत्राह—न चेति । कश्चित्—सामन्तः । न प्रार्थयते—आक्रमितुं नेच्छति–गो. पूर्वश्लोके 'अकर्णधारा' इत्याद्यभिधानादेवं व्याख्यानम् । †रामवीर्यं विना रक्षकान्तरशून्यत्वमाह— शून्यसंवरणेत्यादि–गो. ‡न्यूनां—साधनविहीनां–गो. § उक्तसर्वानर्थस्य आत्ममूलकतया तत्प्रायश्चित्तमाह—अद्येत्यादि । श्लोकद्वयमेकान्वयम्–गो.

[1] अनावृतपुरद्वारां–च. अनावृतगृहद्वारां–ङ. [2] बलां शून्यां–च. बलान्यूनां–ङ. [3] नानुमन्यन्ते–ङ. [4] भक्ष्यान्–च.

यदि व्रतभङ्गोपाधिं वक्ष्यति, तदाऽहं तत्प्रतिनिधिः तद्व्रतमनुष्ठास्य इत्याह—अद्यप्रभृतीत्यादि ॥ २६ ॥

*[1] तस्यार्थमुत्तरं कालं निवत्स्यामि सुखं वने ।
[2] तं प्रतिश्रवमामुच्य नास्य मिथ्या भविष्यति ॥ २७ ॥

तस्यार्थं—तस्य व्रतपरिपालनार्थं उत्तरं कालं— भाविचतुर्दश-वर्षपर्यन्तं, अत्यन्तसंयोगे द्वितीया, तं प्रतिश्रवं—तदीयव्रताभ्युपगमं आमुच्य—स्वयं गृहीत्वा वने वत्स्यामीति पूर्वेणान्वयः । एवं सति नास्य मिथ्या भविष्यति, प्रतिश्रव इति शेषः ॥ २७ ॥

वसन्तं भ्रातुरर्थाय † शत्रुघ्नो माऽनुवत्स्यति ।
लक्ष्मणेन सह त्वार्यो ह्ययोध्यां पालयिष्यति ॥ २८ ॥
अभिषेक्ष्यन्ति काकुत्स्थं अयोध्यायां द्विजातयः ।
अपि मे देवताः कुर्युः इमं सत्यं मनोरथम् ॥ २९ ॥

प्रसाद्यमानः शिरसा मया स्वयं
बहुप्रकारं यदि [3] न प्रपत्स्यते ।
‡ ततोऽनुवत्स्यामि चिराय राघवं
वने [4] वसन्नार्हति मामुपेक्षितुम् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टाशीतितमः सर्गः

---

* तस्यार्थं—रामार्थमित्यर्थः-गो. † 'भरतस्यापि शत्रुघ्नः लक्ष्मणावरजो हि सः । प्राणैः प्रियतरो नित्यं तस्य चासीत् तथा प्रियः' (बाल. 18-31) इति ह्युक्तम् । ‡ यदि राघवः मत्प्रार्थनां नाङ्गीकुर्यात्, तदा अहमपि वने वसन् चिराय राघवं अनुवत्स्यामि ; राघवानुग्रहप्राप्तिपर्यन्तमिति भावः ।

[1] तस्याह—च. [2] तत् प्रतिश्रुतमार्यस्य नैव मिथ्या—च. [3] नाभिपत्स्यते—ङ. [4] चिरं नार्हति—ङ.

न प्रपत्स्यत इति। निवृत्तिविषयकप्रसादादिति शेषः। उपेक्षितुं नार्हतीति। भक्तवत्सलत्वादित्याशयः। घरा(२९)मानः (?) सर्गः ॥ ३० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे अष्टाशीतितमः सर्गः

---

## एकोननवतितमः सर्गः

### [गङ्गासन्तरणम्]

व्युष्य रात्रिं तु *तत्रैव गङ्गाकूले स राघवः।
भरतः काल्यमुत्थाय शत्रुघ्नमिदमब्रवीत् ॥ १ ॥

अथ भरतस्य च गङ्गातरणपूर्वकं भरद्वाजाश्रमप्राप्तिः। व्युष्येति। व्युषित्वा—उषित्वा। काल्यं—'प्रत्यूषोऽहर्मुखं काल्यं', तदुचितकृत्यमित्यर्थः ॥ १ ॥

शत्रुघ्नोत्तिष्ठ किं शेषे ? निषादाधिपतिं गुहम्।
शीघ्रमानय, भद्रं ते; तारयिष्यति †वाहिनीम् ॥ २ ॥
‡जागर्मि नाहं स्वपिमि [1]तमेवार्यं विचिन्तयन्।
इत्येवमब्रवीत् [2]भ्रात्रा शत्रुघ्नोऽपि प्रचोदितः ॥ ३ ॥

कार्यं विचिन्तयन्नहं तथैव जागर्मि। यथा आवां शयनात् पूर्वं तथैव मध्ये क्षणमपि मे निद्रा नास्तीत्यर्थः। नाहं स्वपिमीति। रुधादित्वादिट्। इत्येवमब्रवीदिति। नाहमपि स्वपिमीत्युक्तवानित्यर्थः ॥ ३ ॥

---

* तत्रैव—यत्र रामोऽशयिष्ट, तत्रैव-गो. † वाहिनीं—गङ्गाम्, अस्मानित्यर्थसिद्धम्-गो. ‡ एवं भ्रात्रा प्रचोदितः शत्रुघ्नोऽपि—'तमेवार्यं विचिन्तयन्नहं जागर्मि नाहं स्वपिमि'—इत्येवमब्रवीदित्यन्वयः।

[1] तथैवार्यं–च. [2] भ्राता–च.

इति संवदतोरेवं अन्योन्यं नरसिंहयोः ।
आगम्य प्राञ्जलिः काले गुहो भरतमब्रवीत् ॥ ४ ॥

कच्चित्सुखं *नदीतीरेऽवात्सीः, काकुत्स्थ! शर्वरीम् ।
कच्चित्ते सहसैन्यस्य [1]तावत्सर्वमनामयम् ॥ ५ ॥

'अवात्सीः शर्वरीं' इति अत्यन्तसंयोगे द्वितीया ॥ ५ ॥

गुहस्य तत्तु वचनं श्रुत्वा स्नेहादुदीरितम् ।
†रामस्यानुवशो वाक्यं भरतोऽपीदमब्रवीत् ॥ ६ ॥

रामस्यानुवशः—रामाधीनः ॥ ६ ॥

सुखा नः शर्वरी, [2]राजन्! पूजिताश्चापि ते वयम् ।
गङ्गां तु नौभिः बह्वीभिः दाशाः सन्तारयन्तु नः ॥ ७ ॥

ते पूजिता इति । त्वया पूजिता इति यावत्, 'क्तस्य च वर्तमाने' इति षष्ठी ॥ ७ ॥

ततो गुहः ‡[3]संत्वरितं श्रुत्वा भरतशासनम् ।
प्रतिप्रविश्य नगरं तं ज्ञातिजनमब्रवीत् ॥ ८ ॥

प्रतिप्रविश्य—प्रतिनिवृत्त्य ॥ ८ ॥

---

* सुखं अवात्सीः कच्चिदिति क्रियाविशेषणम् ।　† 'सुखमवात्सीः कच्चित्' इति गुहेन प्रश्ने, रात्रावनुभूतसङ्कटादिनिवेदनादिना कालयापनमनिच्छन्, रामदर्शनैकचित्तः, पुनः प्रश्नप्रतिवचनादिकं यथा न स्यात् तथा प्रश्नस्योत्तरं देयमिति मत्वा उत्तरकार्यचिन्तयैव 'सुखा नः शर्वरी' इत्यवदत्त्वरतः, न तु वस्तुगत्या सुखत्वं शर्वर्याः—इति बोधयितुमाह कविः—रामस्यानुवश इति ।　‡ संत्वरितं प्रतिप्रविश्येत्यन्वयः ।

[1] तव सर्व—ङ. तत्र नित्य—च. [2] धीमन्—च. [3] संत्वरितः—च.

उत्तिष्ठत प्रबुद्धयध्वं भद्रमस्तु च वः सदा ।
नावः समनुकर्षध्वं तारयिष्याम वाहिनीम् ॥ ९ ॥

ते तथोक्ताः समुत्थाय त्वरिता राजशासनात् ।
पञ्च नावां शतान्याशु समानिन्युः समन्ततः ॥ १० ॥

नावां पञ्चशतानि समानिन्युरिति योजना ॥ १० ॥

*अन्याः स्वस्तिकविज्ञेयाः महाघण्टाधराधराः ।
शोभमानाः [1]पताकाभिः युक्त[2]वाताः [3]सुसंयताः ॥ ११ ॥

अन्याः—पञ्चशतीनौकाभ्योऽन्याः स्वस्तिकविज्ञेयाः—स्वस्तिकाख्यया प्रसिद्धाः, राजाधिष्ठानार्हनौकाभेदः स्वस्तिकाख्यः । तथात्वमेव तस्य प्रदर्श्यते—महाघण्टेत्यादि । महाघण्टां धारयन्तीति महाघण्टाधराः–घण्टालम्बनाधारतिर्यग्दण्डाः तास्तथा धारयन्तीति तथा ; छान्दसो दीर्घः । पृथक्पदमपि–महत्यः–बृहत्यः घण्टाः यासां तास्तथा । धरायां–धारणाशक्तिविषये अधराः याभ्यस्तास्तथा । शोभमानाः–

---

* अन्याः—क्षुद्राभ्यः पञ्चशतनौभ्योऽन्याः । स्वस्तिकविज्ञेयाः—'स्वस्तिकः सर्वतोभद्रः' इत्युक्तस्वस्तिकाकारावयवरचनाविशेषविशिष्टतया निर्मितत्वात् स्वस्तिका इति विज्ञेयः, ताश्च नौद्वयसंघट्टनेन संपद्यन्ते । चतुर्षु कोणेषु महाघण्टाधराः । वराः—राजार्हतया श्रेष्ठाः । शोभमानाः—कनकरूषिततया शोभमानाः । युक्तवाताः—फलककुड्यकरणेन मध्येमध्ये गवाक्षनिर्माणेन च महावातनिवारणादुचितवाताः । सुसंहताः—राजारोहणस्थानत्वेनायसकीलादिभिः दृढसन्धिबन्धाः–गो. पताकिन्यः—बद्धरित्रवत्यः—अरित्रं—नावाकर्षणदण्डः युक्तवाहाः—नौवहने नाविकवत्यः–ति. युक्तवाहाः—पर्याप्तकर्णधारयुक्ताः–ती.

[1] पताकिन्यः–च. [2] वाहाः–च. [3] सुसंहताः–ङ. च.

रुक्मादिरूषितचित्रप्रतिमादिशोभासाधनैः शोभमानाः। युक्तवाताः—उचितगतयः, गत्यर्थवातेः भावे निष्ठा। सुसंयताः—दृढसन्धिबन्धाः ॥ ११ ॥

ततः स्वस्तिकविज्ञेयां पाण्डुकम्बलसंवृताम्।
*सनन्दिघोषां कल्याणीं गुहो नावमुपाहरत् ॥ १२ ॥

पाण्डुकम्बलः—मृदुकम्बलभेदः। सनन्दिघोषां—उपरिप्रतिष्ठितमङ्गलवादकक्रियमाणमङ्गलवादित्रघोषसहिताम्। गुहो नावमुपाहरदिति। राजाधिरोहणार्थं प्रथमत इति शेषः ॥ १२ ॥

तामारुरोह भरतः शत्रुघ्नश्च [1] महाबलः।
कौसल्या च सुमित्रा च याश्चान्या राजयोषितः ॥ १३ ॥
पुरोहितश्च †तत्पूर्वं गुरवो ब्राह्मणाश्च ये।
अनन्तरं राजदाराः तथैव शकटापणाः ॥ १४ ॥

तत्पूर्वमिति। समातृकभरतारोहणात् पूर्वं नावान्तरेष्वारुरुहुरिति शेषः। अनन्तरं—भरतारोहणानन्तरम्। राजदाराः—अनुचरप्रभुस्त्रियः। शकटानि आपणाः—पण्यानि च तथा, आरोपिता इति शेषः ॥ १३-१४ ॥

‡आवासमादीपयतां तीर्थं चाप्यवगाहताम्।
भाण्डानि चाददानानां घोषस्त्रिदिवमस्पृशत् ॥ १५ ॥

---

* सनन्दिघोषां—हर्षजनककिङ्किण्यादिघोषयुक्ताम्—गो. ती. † तत्पूर्वं-तासां पूर्वं-गो. ‡ आवासं—सेनानिवेशं, आदीपयतां—अग्निना ज्वलयतां, राजभटा हि निर्गमनकाले श्रीसमागमार्थं आवासं दहन्तीति प्रसिद्धिः—गो. प्रातरेव प्रस्थानात् दीपारोहणादीनां नात्र प्रसक्तिः ॥

[1] महायशाः—ङ.

आवासं—उषितावासं आदीपयतां—अग्निसात्कुर्वताम् , अयं राजधर्मः । तीर्थः—नद्यवतारः । तदवगाहतां—अहमहमिकया प्रविशताम् । भाण्डानि—सर्वोपकरणानि ॥ १५ ॥

***पताकिन्यस्तु ता नावः [1] स्वयं दाशैरधिष्ठिताः ।**
**वहन्त्यो जनमारूढं तदा संपेतुराशुगाः ॥ १६ ॥**

आशु गच्छन्तीत्याशुगाः ॥ १६ ॥

**नारीणामभिपूर्णास्तु काश्चित् काश्चिच्च वाजिनाम् ।**
**काश्चिदत्र वहन्ति स्म यानयुग्यं † महाधनम् ॥ १७ ॥**

नारीणामभिपूर्णा इति । रसस्य पूर्णा इत्यादौ सर्वप्रसिद्धा पूर्णयोगे तृतीयार्थे षष्ठी । यानानि—रथशकटादीनि, युग्यानि—अश्वाश्वतरबलीवर्दादीनि, महाधनं—जीवाजीवरूपनानाप्रकारम् ॥ १७ ॥

**ताः स्म गत्वा परं तीरं अवरोप्य च तं जनम् ।**
**निवृत्ताः काण्डचित्राणि क्रियन्ते ‡ दाशबन्धुभिः ॥ १८ ॥**

जनमवरोप्य निवृत्ताः ता नावः समारुह्य दाशबन्धुभिः क्रीडार्थं काण्डचित्राणि, 'काण्डोऽस्त्री दण्डबाणार्वगर्वावसरवारिषु', जलेषु चित्रगमनानि लघुत्वात् क्रियन्ते स्मेत्यर्थः ॥ १८ ॥

---

* पताकिन्यः—वाय्वाकर्षणाय कृतपताकाः स्वयं संपेतुः—आशुगत्वेन दाशाधिष्ठानमात्रेणानायासेन जग्मुरित्यर्थः—गो. † महाधनं—बहुमूल्यं—'बहुमूल्यं महाधनम्' इत्यमरः—गो. ‡ दाशबन्धुभिः दाशाभासैः, दाशस्य—गुहस्य बन्धुभिरिति वा । भाराभावकृतलाघवातिशयेन निवर्तनकालिकदाशलीलोच्यते—गो. (दाशबन्धुभिः—दाशश्रेष्ठैः—ती.) दाशाश्च ते बन्धवश्च—दाशबन्धवः इति वा । प्रीत्यतिशयात्तथोक्तिः ॥

[1] स्वस्य—ङ.

*सवैजयन्तास्तु गजाः गजारोहप्रचोदिताः ।
तरन्तः स्म प्रकाशन्ते सध्वजा इव पर्वताः ॥ १९ ॥

सवैजयन्ताः—सध्वजाः, "वैजयन्ते गृहे शत्रुप्राकारध्वजयोरपि" ॥ १९ ॥

नावश्चारुरुहुश्चान्ये प्लवैस्तेरुस्तथा परे ।
अन्ये †कुम्भघटैस्तेरुः अन्ये तेरुश्च बाहुभिः ॥ २० ॥

वेणुतृणादिनिर्मिताः—प्लवाः, 'उडुपं तु प्लवः कोलः', தொப்பம் । कुम्भाः—कूपोदकोद्धारणोचितपरिमाणाः कलशभेदाः—தோண்டி । घटाः—अनेककुम्भजलग्राहिणः—தடம் । तैर्यथोचितं केचित् तेरुः ॥ २० ॥

‡सा [1] पुण्या ध्वजिनी गङ्गा दाशैः सन्तारिता स्वयम् ।
§मैत्रे मुहूर्ते प्रययौ प्रयागवनमुत्तमम् ॥ २१ ॥

मैत्रे मुहूर्त इति । 'रौद्रः सार्पः तथा मैत्रः' इत्यनुक्रान्तः उदयमारभ्य तृतीयो मुहूर्तः, 'द्वे तु नाड्यौ मुहूर्तोऽस्त्री' इति वैजयन्ती ॥ २१ ॥

---

* सवैजयन्ताः—सपताकाः, सगृहा वा ; राजानो हि गजोपरि गृहाणि निर्माय गच्छन्ति । सध्वजाः—सगमनाः, 'ध्वज गतौ' ; जङ्गमपर्वता इव प्रकाशन्त इत्यर्थः-गो. † कुम्भघटैः—कुम्भरूपघटैः, सूक्ष्मवदना घटाः—कुम्भाः, ते हि तरणसाधनानि, न पानमात्रम्-गो. ‡ पुण्या—गङ्गास्नानादिना पूता-गो. § मैत्रे मुहूर्ते—दिवसस्य पञ्चदशभागेषु घटिकाद्वयात्मके तृतीये मुहूर्ते, 'द्वे तु नाड्यौ मुहूर्तोऽस्त्री' इति वैजयन्ती... घटिकाषट्क एव गङ्गातरणमिति भावः । यद्वा मैत्रे प्रयागवनं ययावित्यन्वयः । तत्र आतिथ्येन निरवधिकभोगलाभात् मुहूर्तविशेषोक्तिः-गो.

[1] पुण्यां ध्वजिनीं गङ्गां-च.

* आश्वासयित्वा च चमूं महात्मा
निवेशयित्वा च यथोपजोषम् ।
द्रष्टुं भरद्वाजमृषिप्रवर्यं
† ऋत्विग्वृतः सन् भरतः प्रतस्थे ॥ २२ ॥

आश्वासयित्वा—विश्रम्य । यथोपजोषं—यथासुखं निवेशयित्वा च, 'तूष्णीमर्थे सुखे जोषं' इति वैजयन्ती ॥ २२ ॥

‡ स ब्राह्मणस्याश्रममभ्युपेत्य
महात्मनो देवपुरोहितस्य ।
ददर्श रम्योटजवृक्षषण्डं
महद्वनं [1] विप्रवरस्य रम्यम् ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकोननवतितमः सर्गः

स ब्राह्मणस्येति । बृहस्पतिर्ब्रह्मा, तस्यापत्यं ब्राह्मणः । अत एव देवपुरोहितस्येत्युक्तम् । 'आत्मा वै पुत्रनामाऽसि' इति श्रुतेः । भरद्वाजो ह्युचथ्यभार्यायां बृहस्पतेर्जात इति भागवते प्रसिद्धम् । गिरि(२३)मानः सर्गः ॥ २३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकोननवतितमः सर्गः

* इदं श्लोकद्वयं आगामिकथासङ्ग्रहरूपम् । † तादृशस्य ऋषेः विनीतवेषदर्शनीयत्वेन ऋत्विग्भिः—वसिष्ठादिभिः वृतस्सन् प्रतस्थे—पद्भ्यामेव जगाम—**गो.** ‡ ब्राह्मणस्य—ब्रह्म—वेदः, तदधीते—ब्राह्मणः—अधीतबहुवेदस्येत्यर्थः । 'भरद्वाजो ह त्रिभिरायुर्भिः ब्रह्मचर्यमुवास' इत्यादिना काठके तथाऽभिधानात् । ब्राह्मणस्य, ब्रह्म—परमात्मानं वेत्तीति ब्राह्मणः यद्वा 'ब्रह्म बृहस्पतिः' इति श्रुत्या ब्रह्मणः—बृहस्पतेः अपत्यं ब्राह्मणः—**गो.** बृहस्पतिः उचथ्यभार्यायां ममतायां पुत्रमुत्पादयामास । भर्तुः भिया तं पुत्रं परित्यक्तुकामां तां देवा ऊचुः, उचथ्यस्य क्षेत्रजत्वेन बृहस्पतेरौरसत्वेन भरद्वाजममुं भरेति, तस्मात् भरद्वाज इति—**ती.** एतत्कथा भागवतनवमस्कन्धे, विष्णुपुराणचतुर्थांशे च वर्तते ।

[1] प्रीतिकरं सुरम्यम्—ङ.

## नवतितमः सर्गः

[भरद्वाजसमागमः]

*भरद्वाजाश्रमं [1]दृष्ट्वा क्रोशादेव नरर्षभः ।
[2]बलं सर्वमवस्थाप्य जगाम सह मन्त्रिभिः ॥ १ ॥

अथ भरतस्य भरद्वाजदर्शनम् । भरद्वाजेत्यादि । दृष्ट्वा जगामेति सम्बन्धः । क्रोशात्—तावद्दूरात् परत इत्यर्थः । अवस्थाप्येति । आश्रमोपरोधनिवृत्त्यर्थमिति शेषः ॥ १ ॥

पद्भ्यामेव हि धर्मज्ञः न्यस्तशस्त्र†परिच्छदः ।
वसानो वाससी क्षौमे ‡पुरोधाय पुरोधसम् ॥ २ ॥

पद्भ्यामित्यादिकं विनयप्रदर्शनार्थम् ॥ २ ॥

ततः सन्दर्शने तस्य भरद्वाजस्य राघवः ।
मन्त्रिणस्तानवस्थाप्य जगामानुपुरोहितम् ॥ ३ ॥

---

* श्लोकद्वयमेकान्वयम्—**गो.** † परिच्छदः—आभरणादिकं, भृङ्गाराद्युपकरणजातं च । वसानो वाससी क्षौमे भरद्वाजसेवार्थं उष्णीषकञ्चुकादिकमपहाय परिधानमुत्तरीयं च धृत्वा गत इत्यर्थः । ननु पूर्वं 'जटाचीराणि धारयन्' (88–26) इत्युक्तम् । 'जटिलं चीरवसनं' (100–1) इति च वक्ष्यति । कथमत्र क्षौमवासस्त्वमुच्यते—नैष दोषः । पूर्वं प्रतिज्ञामात्रं कृतम् , भरद्वाजाश्रमात्परं जटाधारणमिति—**गो.** परन्तु तत्र (88–26) 'अद्य प्रभृति' इति स्पष्टमुक्तत्वात् , उत्तरत्र जटाधारणस्य अकथनाच्च पूर्वमेव जटाचीरधारणमिति प्रतिभाति । 'वसानो वाससी क्षौमे' इत्यपि न राजार्हवस्त्रधारणमाह, किन्तु आश्रमप्रवेशानुगुणधौतधारणमेवेति । शिरस्स्नानादिकरणेन जटाया अस्पष्टत्वात् , ज्ञातत्वेऽपि शङ्कितज्ञत्वाद्वा भरद्वाजेन नैतद्विषये प्रश्नः कृतः । अथवा—नन्दिग्रामवासकाल एव—जटादिधारणम् । तत्पूर्वं तु प्रतिज्ञामात्रम् । 'जटिलं' (100–1) इति केशसंस्काराभावकृतं जटिलत्वमेवाह—इत्यपि केचित् । ‡ पुरोधाय—पुरस्कृत्य ।

[1] गत्वा—**च.** [2] जन—**च.**

ततः सन्दर्शन इति। आश्रमप्रवेशनानन्तरं ऋषिसन्दर्शनावसर इत्यर्थः। अनुपुरोहितं–पश्चादर्थेऽनोरव्ययीभावः, पुरोहितस्य पश्चादित्यर्थः ॥ ३ ॥

वसिष्ठमथ दृष्ट्वैव भरद्वाजो महातपाः।
संचचालासनात्तूर्णं शिष्यानर्घ्यमिति* ब्रुवन् ॥ ४ ॥

शिष्यानर्घ्यमिति ब्रुवन्निति। शिष्यान् प्रति 'अर्घ्यमानयत' इति ब्रुवन्नित्यर्थः ॥ ४ ॥

†समागम्य वसिष्ठेन भरतेनाभिवादितः।
अबुध्यत महातेजाः सुतं दशरथस्य तम् ॥ ५ ॥

अबुध्यतेति। वसिष्ठेन सहागमनाद्धेतोरिति शेषः ॥ ५ ॥

ताभ्यामर्घ्यं च पाद्यं च दत्त्वा पश्चात् फलानि च।
आनुपूर्व्याच्च धर्मज्ञः पप्रच्छ कुशलं कुले ॥ ६ ॥
अयोध्यायां बले कोशे मित्रेष्वपि च [1]मन्त्रिषु।

ताभ्यां–भरतशत्रुघ्नाभ्याम्, वसिष्ठस्यार्घ्यादिदानानन्तरमिति शेषः। तदेव दर्शितं–आनुपूर्व्याच्चेति। आनुपूर्व्याद्दत्त्वा आनुपूर्व्यात् पप्रच्छेत्यग्रेण सम्बन्धः। कुले–गृहे ॥ ६ ॥

जानन् दशरथं वृत्तं न राजानमुदाहरत् ॥ ७ ॥

दशरथं वृत्तमिति। अतीतमिति यावत्। अत एव न राजानमुदाहरदिति। राजानं प्रति कुशलप्रश्नमिति शेषः ॥ ७ ॥

---

*त्वरातिशयात् एवं अपूर्णोक्तिः लोकेऽपि प्रसिद्धा। †समागम्येति। सवयस्कत्वान्नमस्काराभावः–गो. वसिष्ठेन समागम्य वसिष्ठेन सहागत्य भरतेन अभिवादित इति वाऽन्वयः।

[1] बन्धुषु–ङ.

[1] वसिष्ठो भरतश्चैनं पप्रच्छतुरनामयम् ।
शरीरेऽग्निषु शिष्येषु वृक्षेषु मृगपक्षिषु ॥ ८ ॥

शरीरादित्रयस्य यथायोगमन्तरङ्गबहिरङ्गतया तपस्साधनत्वात् तदनामयप्रश्नः । मृगपक्षिणामभयावस्थानदानद्वारा धर्मसाधनत्वम् , शिष्यवत् प्रियत्वाच्चानामयप्रश्नः ॥ ८ ॥

तथेति तु प्रतिज्ञाय भरद्वाजो महातपाः ।
भरतं प्रत्युवाचेदं *राघवस्नेहबन्धनात् ॥ ९ ॥

तथेति तु प्रतिज्ञायेति । अनामयमित्युक्त्वेति यावत् ॥ ९ ॥

किमिहागमने कार्यं तव राज्यं प्रशासतः ।
एतदाचक्ष्व मे सर्वं न हि मे शुध्यते मनः ॥ १० ॥

मे मनो न शुध्यत इति । न विश्वसतीति यावत् ॥ १० ॥

†सुषुवे यममित्रघ्नं कौसल्या[2]नन्दवर्धनम् ।
भ्रात्रा सह सभार्यो यः चिरं प्रव्राजितो वनम् ॥ ११ ॥

किं विषयकोऽयमविश्वासः ? इत्यतः—सुषुव इत्यादि । कौसल्या यं सुषुव इत्यन्वयः ॥ ११ ॥

---

*राघवस्नेहबन्धनात्—राघवविषये स्नेहानुबन्धनात् , न तु भरते दोषदर्शनात्-गो. महर्षिरपि सन् तत्तादृशं भरतं कथं मर्मोक्तिभिरपीडयदिति शंकायां हेतुः-राघवेत्यादि । रामे भगवति अतिशयप्रेम्णा-तदेव बन्धरूपं-पाशरूपं जातमिति—'अतिस्नेहः पापशङ्की' इत्यादिवत्, विषयान्तरचिन्तादीनामप्रसक्त्या एवं मर्मोक्तिरिति भावः । †'सुषुवे' इत्यादिश्लोकत्रयमेकान्वयम् । चिरं प्रव्राजितः-चिरकालमुद्दिश्य प्रव्राजितः—गो.

[1] वसिष्ठ इत्यादिश्लोकद्वयं कुत्रचिन्नास्ति-झ. [2] नन्दिवर्धनम्-ङ.

नियुक्तः [1]स्त्रीनियुक्तेन पित्रा योऽसौ महायशाः ।
वनवासी भवेतीह समाः किल चतुर्दश ॥ १२ ॥
कच्चिन्न तस्यापापस्य पापं कर्तुमिहेच्छसि ?
अकण्टकं भोक्तुमनाः राज्यं [2]तस्यानुजस्य च ॥ १३ ॥

'वनवासी भव' इति नियुक्तः इति योजना । इहेति । यद्वनं प्रव्राजितः इह वन इत्यर्थः । तस्य अनुजस्य—लक्ष्मणस्य च पापं कर्तुमिहेच्छसीत्यन्वयः । तत्र हेतुः—अकण्टकमिति । असपत्नमिति यावत् ॥ १२-१३ ॥

एवमुक्तो भरद्वाजं भरतः प्रत्युवाच ह ।
पर्यश्रुनयनो दुःखात् वाचा संसज्जमानया ॥ १४ ॥

संसज्जमानया—स्खलन्त्या ॥ १४ ॥

हतोऽस्मि यदि मामेवं [3]भगवानभि मन्यते ।
*मत्तो न दोषमाशङ्के [4]नैवं मामनु[5]शाधि हि ॥ १५ ॥

यदि—यस्मात् भगवान् मामभि—मां प्रति एवं मन्यते—पापप्रसक्तं मन्यते अतो हतोऽस्मि—व्यर्थजन्मास्मीत्यर्थः । कथमेवमित्यतः—मत्त इत्यादि । दोषं—वनप्रव्राजनदोषं मत्तः—मन्निमि-

---

* रामप्रव्राजनहेतुभूतं दोषं, मत्तः—मन्मूलं इति, नाशङ्के—'रामप्रव्राजनस्य त्वं न हेतुरिति भावयामि' इति मां प्रति मुनिः न वदति किल, सोऽपि मन्निमित्तमेव रामप्रव्राजनं मनुते किल । अतः हतोऽस्मि—इत्यर्थः । 'मत्तो न दोषमाशङ्के' इत्यत्र 'त्वत्तः' इति वक्तव्यत्वेऽपि, पूर्णानुवादरूपत्वाभावात्, शोकवैय्याकुल्या वा एवमुक्तिः । परन्तु—'सर्वज्ञो भरद्वाजः मां निर्दोषं जानीयादेव' इति प्रत्ययवन्तं भरतं प्रति भरद्वाजेन तथा प्रश्नात्—'भगवान् वा मां निर्दोषं जानीयात्' इति खलु अभावयम । सोऽपि यद्येवं वक्ति, ततो मरणमेव मे वरमिति भरताशयः प्रतिभाति ।

[1] स्त्रीनिमित्तेन—च. [2] तस्याग्रजस्य च—ङ. [3] भगवानपि—च. [4] मैवं—च. [5] शास्ति—ङ.

ततः नेति आशङ्के— स्वानुभवेन जानामि, अतो हि मामेवं अनुशाधि—अनुगृहाण ॥ १५ ॥

**न चैतदिष्टं माता मे यदवोचन्मदन्तरे।**
**नाहमेतेन तुष्टश्च न तद्वचनमाददे ॥ १६ ॥**

कथमनुभवापलापः क्रियते ? इत्यत्राह—न चेत्यादि। मदन्तरे—मदसन्निधौ मे माता यदवोचत् मदभिषेकरामवनवासविषयकं न चैतत् ममेष्टम्। इदमेव विव्रियते—नाहमित्यादि। एतेन—मातृकृतव्यापारेण न च तद्वचनमाददे; इदानीमिति शेषः ॥ १६ ॥

**अहं तु तं नरव्याघ्रं उपयातः * प्रसादकः।**
**प्रतिनेतुमयोध्यां च पादौ तस्याभिवन्दितुम् ॥ १७ ॥**

भवत्वेवमपारः, अथापीह प्रवृत्तिः किमर्था ? इत्यत्राह—अहं त्वित्यादि। प्रसादक इति। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति ण्वुल्, प्रीतिं कारयिष्यन्नित्यर्थः ॥ १७ ॥

**[1]त्वं मामेवंगतं मत्वा प्रसादं कर्तुमर्हसि।**
**शंस मे, [2]भगवन्! रामः क्व संप्रति † महीपतिः? ॥**

एवंगतं—एवं बुद्धिं प्राप्तवन्तम्। क्व कस्मिन् प्रदेशे ॥

**वसिष्ठादिभिर्ऋत्विग्भिः ‡ याचितो भगवांस्ततः।**
**उवाच तं भरद्वाजः प्रसादात् भरतं वचः ॥ १९ ॥**

---

* प्रसादकस्सन् उपयातः-प्रसादनार्थमागत इति यावत्। प्रसादकः, अयोध्यां प्रति नेतुं, तस्य पादावभिवन्दितुं च उपयातः। † स्वस्य राज्येऽभिलाषाभावं प्रकटयितुं—रामं 'महीपतिः' इत्याह भरतः। ‡ याचितः—भरताय प्रसन्नो भवेति प्रार्थितः-गो.

[1] तं-च. [2] भगवान्-ङ.

ऋत्विग्भिरिति । ऋत्विग्भिश्चेति शेषः । प्रसादात्—प्रीत्या ॥ १९ ॥

त्वय्येतत्, पुरुषव्याघ्र! युक्तं राघववंशजे ।
*गुरुवृत्तिर्दमश्चैव साधूनां चानुयायिता ॥ २० ॥

त्वयीत्यादि । हे पुरुषव्याघ्र! एतत्—उक्तरूपमेव वचः शंसितुं त्वयि युक्तं – तवोचितमित्यर्थः । त्वयि तु युक्तमित्येतदेव समर्थयितुमाह—गुरुवृत्तिरित्यादि । गुरुवृत्तिः — गुरुसेवा । अनुयायिता—अनुवर्तनम् ॥ २० ॥

जाने चैतन्मनस्स्थं ते दृढीकरणमस्त्विति ।
अपृच्छं त्वां [1] तवात्यर्थं कीर्तिं † समभिवर्धयन् ॥ २१ ॥

जान इति । तवास्तीति शेषः । तर्हि पापशङ्का कथं मयि भवद्भिः कृता? इत्यत्राह—एतदित्यादि । यदेतत्ते मनस्स्थं—शुभाभिप्रायजातं तस्यास्य दृढीकरणमस्त्वित्येव धिया अपृच्छम् । अस्य च फलमाह—तवेत्यादि । या तव कीर्तिः—विहाय च राज्यं धर्ममेवाशिश्रयदिति, तां अत्यर्थं समभिवर्धयन्—, हेतौ शता, कीर्त्यभिवृद्धिहेतवे अपृच्छमित्यर्थः ॥ २१ ॥

‡ जाने च रामं धर्मज्ञं ससीतं सहलक्ष्मणम् ।
[2] असौ वसति ते भ्राता चित्रकूटे महागिरौ ॥ २२ ॥

अथ 'क्व संप्रति महीपतिः?' इति भरतप्रश्नस्योत्तरमाह—जान इत्यादि ॥ २२ ॥

---

* गुरुवृत्तिः—ज्येष्ठानुवर्तनम्-गो. † लोके इतोऽपि सम्यक् प्रकटीकर्तुमिति भावः । ‡ रामं जाने—देशविशेषस्थितं रामं जान इत्यर्थः-गो.

[1] तथाऽत्यर्थं–ङ. [2] अयं–च.

श्वस्तु गन्तासि तं देशं वसाद्य सह मन्त्रिभिः ।
एतं मे कुरु, सुप्राज्ञ ! कामं, कामार्थकोविद ! ॥ २३ ॥

कामार्थकोविद—कामितार्थप्रदानसमर्थ ॥ २३ ॥

ततस्तथेत्येव*मुदारदर्शनः
†प्रतीतरूपो भरतोऽब्रवीद्वचः ।
चकार बुद्धिं च तदा तदाश्रमे
‡निशानिवासाय नराधिपात्मजः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे नवतितमः सर्गः

---

प्रतीतं—प्रसिद्धं रूपं यशः यस्य स तथा । 'रूपं यशस्याभिरूप्ये वर्णे चैव निरूपणे' । तस्याश्रमः—तदाश्रमः, तस्मिन् । वारि(२४)मानः सर्गः ॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे नवतितमः सर्गः

---

## एकनवतितमः सर्गः

[भरद्वाजातिथ्यम्]

कृतबुद्धिं निवासाय §तत्रैव स मुनिस्तदा ।
भरतं कैकयीपुत्रं आतिथ्येन न्यमन्त्रयत् ॥ १ ॥

---

* कामार्थकोविदत्वं रूपमेवाहेति वदति—उदारदर्शन इति । † प्रतीतरूपः—प्रकर्षेण हृष्टः-गो. ‡ निशानिवासाय—तद्दिननिशां तत्रैव नेतुम् । प्रात व हि भरद्वाजाश्रमप्राप्तिः पूर्वमुक्ता । § रामदर्शनेऽतीव त्वरमाणस्य भरतस्य एकरात्रि-विलम्बोऽपि अनिरीक्षितः महान् विषयः इति भावेन—'तत्रैव' इत्युक्तम् ।

अथ भरद्वाजेन भरतस्यातिथ्यकरणम् । कृतबुद्धिमित्यादि । निश्चितबुद्धिमित्यर्थः । आतिथ्येन—विशिष्टभोजनोपेतातिथिसत्कारहेतवे न्यमन्त्रयत्—प्रार्थितवान् ॥ १ ॥

अब्रवीत् भरतस्त्वेनं नन्विदं भवता कृतम् ।
पाद्यमर्घ्यं तथाऽऽतिथ्यं वने यदुपपद्यते ॥ २ ॥

वने यदुपपद्यते, तेनातिथ्यं कृतं ननु इत्युवाच ॥ २ ॥

अथोवाच भरद्वाजः भरतं *प्रहसन्निव ।
†जाने त्वां प्रीतिसंयुक्तं तुष्येस्त्वं येन केनचित् ॥ ३ ॥

प्रहसन्निवेति । इतोऽभ्यधिकातिथ्यसंपादने मम सामर्थ्यं नास्तीति किलायं मन्यत इत्याशयेन प्रहासः । जान इति । त्वं येन केनचिदपि सन्तुष्येः—तुष्टो भवेरिति, तथा कृतेन वन्यसाधनातिथ्येन प्रीतियुक्तमित्यपि जाने ॥ ३ ॥

सेनायास्तु [1]तवैतस्याः कर्तुमिच्छामि भोजनम् ।
मम प्रीतिर्यथारूपा ‡[2]तथा तां, मनुजाधिप! ॥ ४ ॥

अथापि—सेनाया इत्यादि । मम प्रीतिः — ममेच्छा यथारूपा-यादृक्प्रकारा, तथारूपां तां त्वमनुविधातुमर्हसीति शेषः ॥ ४ ॥

---

* मुनिः इतः परं किं करिष्यतीति भरताशयज्ञानेन हासः-गो. † एतेन 'नन्विदं भवता कृतम्' इति भरतवचनं, प्रीति-विनय-सङ्कोचादिप्रयुक्तमेव, न तु गर्वादिप्रयुक्तमिति सूचितम् । अत्र विश्वामित्रं प्रति वसिष्ठातिथ्यप्रार्थनाप्रकरणगतानि (बाल. ५२ सर्ग) 'कृतमित्यब्रवीद् राजा', 'एवं ब्रुवन्तं राजानं' इत्यादिवाक्यानि स्मरणीयानि ॥ ‡ 'त्वमर्हो मनुजाधिप' इति गो. ती. ति. पाठः । मम प्रीतिः यथारूपा—यादृशप्रकारा, तथा त्वमर्हः—तथा त्वं प्रीतो भवितुमर्हः-गो.

[1] तवैवास्याः-च. [2] त्वमर्हः-ङ. च. झ.

किमर्थं चापि निक्षिप्य दूरे बलमिहागतः ।
कस्मान्नेहोपयातोऽसि सबलः, पुरुषर्षभ ! ॥ ५ ॥

बलं दूरे निक्षिप्यागत इति । एकाकीति शेषः । अस्यैवार्थस्य व्यतिरेकमुखेन समर्पणं–कस्मान्नेत्यादि ॥ ५ ॥

भरतः प्रत्युवाचेदं प्राञ्जलिस्तं तपोधनम् ।
[1]ससैन्यो नोपयातोऽसि, भगवन् ! *भगवद्भयात् ॥ ६ ॥

अथ केवलागमनकारणप्रश्ने तद्धेतुमाह—भरत इत्यादि । भगवद्भयादिति । भगवदाश्रमपीडाप्रसङ्गभयादित्यर्थः ॥ ६ ॥

राज्ञा च, भगवन् ! नित्यं राजपुत्रेण वा [2]सदा ।
यत्नतः परिहर्तव्याः †विषयेषु तपस्विनः ॥ ७ ॥

भेतव्यमेव च क्षत्रियेणेत्याह–राज्ञेत्यादि । आश्रमेषु तद्वर्ति-वृक्षोदकादिबाधाप्रसङ्गनिमित्तं परिहर्तव्याः–अनुपरोध्या इत्यर्थः ॥ ७ ॥

वाजिमुख्या मनुष्याश्च मत्ताश्च वरवारणाः ।
प्रच्छाद्य, भगवन् ! भूमिं महतीमनुयान्ति माम् ॥ ८ ॥
ते वृक्षानुदकं भूमिमाश्रमेषूटजांस्तथा ।
न हिंस्युरिति तेनाहं एक एव समागतः ॥ ९ ॥
आनीयतामितः सेनेत्याज्ञप्तः परमर्षिणा ।
ततस्तु चक्रे भरतः सेनायाः समुपागमम् ॥ १० ॥

---

* भगवद्भयात्—भवान् कुप्येदिति भयात्–गो. † राज्ञा राजपुत्रेण वा विषयेषु—स्वदेशेषु तपस्विनः सदा यत्नत: परिहर्तव्या: ; तपस्विषु अपचारसंभावनाभीत्या तै: सदा जागरूकैर्भाव्यमिति भाव: ।

[1] न सैन्येनो–च.    [2] तथा–च.

परमर्षिणेति । श्रुतबलानानयनहेतुनेति शेषः । समुपागमं— समीपानयनमित्यर्थः ॥ १० ॥

*अग्निशालां प्रविश्याथ पीत्वाऽपः परिमृज्य च ।
आतिथ्यस्य क्रियाहेतोः विश्वकर्माणमाह्वयत् ॥ ११ ॥

अपः पीत्वा परिमृज्येति । 'हृदयंगमाभिरद्भिः त्रिरोष्ठौ परिमृजेत् । सकृदुपस्पृशेत्' इत्युच्यमानरीत्या यथाविधि ब्राह्मं शुद्धाचमनं कृत्वेत्यर्थः । क्रियाहेतोः—संपादननिमित्तम् । विश्वकर्मा— त्वष्टृमूर्तिभेदः ॥ ११ ॥

आह्वये †विश्वकर्माणं अहं त्वष्टारमेव च ।
आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम् ॥ १२ ॥

आह्वयदित्युक्तं, तस्यैव प्रकारः—आह्वय इत्यादि । आह्वय इत्यात्मनेपदमपि । त्वष्टारं विश्वकर्माणमेव, तक्षणादिव्यापारोपेतं विश्वकर्माणमेव, न तु 'संवत्सरो विश्वकर्मा । संवत्सरः प्रजापतिः' इति श्रुतौ, विश्वं—सर्वं जगत्कर्म यस्य स विश्वकर्मेति समग्रयोगप्रवृत्तविश्वकर्मवाच्यभगवत्प्रजापतिरित्यर्थः । तत्र मे संविधीयतां—मदपेक्षितातिथ्ये यत् त्वष्टृसाध्यं नानाविधगृहमपेक्षितं तत् तेन संविधीयताम् ॥ १२ ॥

‡आह्वये लोकपालांस्त्रीन् देवान् [1] शक्रमुखांस्तथा ।
आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम् ॥ १३ ॥

---

* अग्निशालाप्रवेशः पावनत्वार्थः, देवतासन्निधानस्थलत्वात्–गो. † विश्वकर्मा सर्वशिल्पकर्ता, त्वष्टा तु तक्षणेन गृहादिनिर्माता । यद्वा—त्वष्टारमेव चेत्यवधारणेन असुरविश्वकर्मा मयो व्यावर्त्यते–गो. ‡ वक्ष्यमाणान्नपानादिरक्षणाय लोकपालानाह्वयति—आह्वय इति । शक्रमुखान्–इन्द्रप्रधानान्, शक्रस्य पृथङ्निर्देशात् । त्रीन् लोकपालान्—यमवरुणकुबेरान् । देवानित्यग्न्यादय उच्यन्ते । संविधीयतां—पालनं क्रियताम्–गो.

[1] अभिमुखांस्तथा–ङ. शक्रपुरोगमान्–च.

अतः परं—आह्वये लोकपालानित्यर्धं प्रक्षिप्तमिति परो व्याकरोत्—तदसत्—आहूयमानविश्वकर्मादीनामिव किञ्चित्कृत्ये महर्षिणा लोकपालत्रयस्यापि नियोजनात् ॥ १३ ॥

प्राक्स्रोतसश्च या नद्यः [1] प्रत्यक्स्रोतस एव च ।
पृथिव्यामन्तरिक्षे च [2] सहायान्त्वद्य सर्वशः ॥ १४ ॥

अन्तरिक्षे नदी आकाशगङ्गा ॥ १४ ॥

अन्याः स्रवन्तु मैरेयं सुरामन्ये [3] सुनिष्ठिताम् ।
अपराश्चोदकं शीतं इक्षु[4]काण्डरसोपमम् ॥ १५ ॥

तासां कृत्यमाह—अन्याः स्रवन्त्वित्यादि । मैरेयं—मद्यभेदः, 'मैरेयं माधवे धात्री धातकी गुडवारिभिः' इति वैजयन्ती । सुरा तु 'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा' इति स्मृता । मैरेयं उक्तव्यतिरिक्तोपादानमन्यत् । सुनिष्ठितां—सुनिष्पादिताम् ॥ १५ ॥

आह्वये देवगन्धर्वान् विश्वावसुहहाहुहून् ।
तथैवाप्सरसो देवीः गन्धर्वीश्चापि सर्वशः ॥ १६ ॥

विश्वावसून्, हहाहुहूनिति छन्दोवशात् ह्रस्वः । ब्रह्माणमिति । बृहस्पतिमिति यावत् । याश्चोपतिष्ठन्तीत्यनुकर्षः ॥ १६ ॥

घृताचीमथ विश्वाचीं मिश्रकेशीमलम्बुसाम् ।
[5] नागदन्तां च हेमां च *[6] हिमामद्रिकृतस्थलाम् ॥ १७ ॥

---

* पुनश्च 'हेमां' इति पाठे पूर्वोक्तहेमापेक्षया अस्या व्यावृत्तिमाह—अद्रिकृतस्थलामिति । अद्रौ—महेन्द्रे मयेन कृतनिवासां—स्वयंप्रभाबिलस्थामित्यर्थः । हिमामिति पाठे हिमवच्छीतलाङ्गी । यद्वा हिममस्या अस्तीति हिमा । अद्रिकृतस्थला चान्या—गो.

[1] तिर्यक्स्रो—च. [2] समायान्त्वद्य—च. [3] सुनिष्ठिताः—ङ. [4] खण्ड—ङ.
[5] नागदत्तां—च. [6] हेमा—ङ. सोमा—च.

*शक्रं याश्चोपतिष्ठन्ति ब्रह्माणं याश्च[1] योषितः ।
सर्वास्तुम्बुरुणा सार्धं आह्वये सपरिच्छदाः ॥ १८ ॥

सपरिच्छदाः—नृत्तगीताद्यपेक्षितपरिकरोपेताः ॥ १८ ॥

†वनं कुरुषु यद्दिव्यं वासोभूषणपत्रवत् ।
दिव्यनारीफलं शश्वत् तत्कौबेरमिहैतु च ॥ १९ ॥

अथ चैत्ररथवनाह्वानं—वनमित्यादि । कुरुषु—उत्तरकुरुषु वनं चैत्ररथाख्यं, तच्चोत्तरकुरुदेशे वर्तते । दिव्यं—देवार्हम् । दिव्यत्वमेव तस्य दर्शयति—वास इत्यादि । यद्वृत्तिवृक्षाणां वासोभूषणान्येव पत्राणि अस्मिन् सन्तीति वासोभूषणपत्रवत् । शश्वत्—सर्वदा दिव्यनार्य एव फलानि यस्मिन् तत् तथा । तथैवंभूतं यत् कौबेरमस्ति तत् इह—वने एतु – आगच्छतु । उत्तरदिक्पालत्वेन कुबेराधिष्ठितत्वात् कौबेरमित्युक्तम् । तद्देवताधिष्ठानादिदं वनं तथा भवत्वित्यर्थः । इयं च कुबेरं प्रत्येवोक्तिः । नदीनामिव वनस्याह्वानं तदधिष्ठातृदेवताद्वारा ॥ १९ ॥

‡इह मे भगवान् सोमः विधत्तामन्नमुत्तमम् ।
§भक्ष्यं भोज्यं च[2] चोष्यं च लेह्यं च विविधं बहु ॥ २० ॥
विचित्राणि च माल्यानि ‖पादपप्रच्युतानि च ।
सुरादीनि च पेयानि मांसानि विविधानि च ॥ २१ ॥

---

* शक्रं या उपतिष्ठन्ति— रम्भोर्वशीमेनकादयः । ब्रह्माणं—चतुर्मुखं ; तल्लोकेऽप्यप्सरसः सन्ति, 'तं पञ्चशतान्यप्सरसां प्रतिधावन्ति' इति श्रुतेः—गो. † भोगोपकरणान्याहूय भोगस्थानान्याह्वयति—वनमिति—गो. ‡ एवं कुबेरं प्रत्युक्त्वा अन्नपतिं चन्द्रं प्रत्याह— इहेति—गो. § भक्ष्यं—खाद्यमपूपादि । भोज्यं—ओदनादि । चोष्यं—पायसादि । लेह्यं—रसायनादि ॥ ‖ माल्यानामपि स्वयंसिद्धत्वस्फोरणाय—पादपप्रच्युतानीति ।

[1] भामिनीः—च. [2] पेयं—ङ.

*एवं समाधिना युक्तः तेजसाऽप्रतिमेन च ।
शीक्षास्वरसमायुक्तं [1]तपसा चाब्रवीन्मुनिः ॥ २२ ॥

शीक्षेति । शिक्षाप्रतिपाद्यवर्णोच्चारणलक्षणोपेतम्, तथा व्याकरणोपदिश्यमानप्रकृतिप्रत्ययभाषास्वरोपेतं च तथा । एवं च 'एकः शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुक् भवति' इति प्रसिद्धार्थः महर्षेस्तपोबलादिहैव सिद्धः यथाप्रयुक्तवचनमात्रादित्युक्तं भवति । अब्रवीदिति । प्रागुक्तदेवताऽऽह्वानवाक्यमित्यनुकर्षः ॥२२॥

[2]मनसा ध्यायतस्तस्य प्राङ्मुखस्य कृताञ्जलेः ।
आजग्मुस्तानि सर्वाणि दैवतानि पृथक् पृथक् ॥ २३ ॥

तानीति । आहूतदैवतानीत्यर्थः ॥ २३ ॥

†मलयं दर्दुरं चैव ततः स्वेदनुदोऽनिलः ।
उप[3]स्पृश्य ववौ [4]युक्त्या सुप्रियात्मा शिवः सुखम् ॥२४॥

मलयं दर्दुरं चैव—चन्दनपर्वतौ । उपस्पृश्य—स्पृष्ट्वा । ततः—तस्मादारभ्य स्वेदनुदः, 'इगुपधे'ति कः । स्वेदस्य नुदः स्वेदनुदः । युक्त्या शैत्यसौरभ्यमान्द्यधर्मयोगेन । सुप्रियात्मा—सुप्रियस्वरूपः, अत एव शिवः—शुभः अनिलः सुखं ववौ ॥ २४ ॥

---

*समाधिना—योगेन, तपसा—ज्ञानेन, यद्वा अनशनादिकायक्लेशरूपेण । अत एव तेजसा—अनागमने दण्डनसामर्थ्येन च युक्तः मुनिः—**गो**. †मलयः—चन्दनालयः, दर्दुरः—तत्समीपस्थः चन्दनोत्पत्तिस्थानभूतो गिरिः । तदुभयमुपस्पृश्य सुप्रियात्मा सुप्रियस्वभावः, सुगन्ध इत्यर्थः, अत एव सुखः—सुखकरः, शिवः—शीतलः, युक्त्या—अङ्गस्पर्शेन—**गो**.

[1] **सुव्रतः—च.** [2] तपसा—**ङ.** [3] स्पृश्यायथौ—**ङ.** [4] **युक्तः—ङ.**

ततोऽभ्य[1]वर्तन्त घनाः दिव्याः कुसुमवृष्टयः ।
[2]दिव्यदुन्दुभिघोषश्च दिक्षु सर्वासु शुश्रुवे ॥ २५ ॥

घनाः—निबिडाः ॥ २५ ॥

प्रववुश्चोत्तमा वाताः ननृतुश्चाप्सरोगणाः ।
प्रजगुर्देवगन्धर्वाः वीणाः प्रमुमुचुः स्वरान् ॥ २६ ॥

वीणाश्चेति । वाद्यमाना इति शेषः । स्वरान्—षड्जादीन् सान्तरभेदान् ॥ २६ ॥

स शब्दो द्यां च भूमिं च प्राणिनां श्रवणानि च ।
विवेशो[3]च्चारितः श्लक्ष्णः समो लयगुणान्वितः ॥ २७ ॥

लयः—नृत्तगीतानुगततालप्रमाणः ॥ २७ ॥

[4]तस्मिन्नुपरते शब्दे दिव्ये श्रोत्रसुखे नृणाम् ।
ददर्श भारतं सैन्यं विधानं विश्वकर्मणः ॥ २८ ॥

*भरतः विश्वकर्मणो विधानं ददर्श ॥ २८ ॥

बभूव हि समा भूमिः समन्तात् पञ्चयोजना ।
शाद्वलैर्बहुभिश्छन्ना नीलवैडूर्यसन्निभैः ॥ २९ ॥

तदेव प्रकाश्यते—बभूवेत्यादि । छन्ना बभूवेति योजना । शाद्वलशब्देन कोमलतृणान्युच्यन्ते । नीलस्य—इन्द्रनीलस्य वैडूर्यस्य च सन्निभास्तथा ॥ २९ ॥

---

* अत्र यथाश्रुतव्याख्यानुरोधे, मूले ‘ददर्श भरतः सर्वं’ इत्येवंरीत्या पाठः स्यात् । अथ वा ‘भरतस्येदं—भारतं सैन्यं विश्वकर्मणो विधानं ददर्श’ इत्येव व्याख्याऽपि स्यात् ।

[1] वर्धन्त—च. [2] देव—च. [3] च्चावचः—च. [4] तस्मिन्नेवंगते—च.

तस्मिन् बिल्वाः कपित्थाश्च पनसा बीजपूरकाः ।
आमलक्यो [1] बभूवुश्च चूताश्च फल[2]भूषणाः ॥ ३० ॥

तस्मिन्—पञ्चयोजनायामप्रदेशे । बीजपूरः—मातुलुङ्गकः । फलभूषणत्वं * साधारणम् ॥ ३० ॥

उत्तरेभ्यः कुरुभ्यश्च वनं † दिव्योपभोगवत् ।
आजगाम नदी [3]सौम्या तीरजैर्बहुभिर्वृता ॥ ३१ ॥

दिव्योपभोगवत् वनमाजगामेत्यन्वयः । सौम्या नदी—जम्बूनदी ॥ ३१ ॥

चतुश्शालानि शुभ्राणि शालाश्च गजवाजिनाम् ।
हर्म्यप्रासाद[4]संबाधाः ‡ तोरणानि शुभानि च ॥ ३२ ॥
सितमेघनिभं चापि राजवेश्म सुतोरणम् ।
[5]शुक्लमाल्यकृताकारं दिव्यगन्धसमुक्षितम् ॥ ३३ ॥
चतुरश्रं असम्बाधं §शयनासनयानवत् ।
दिव्यैः सर्वरसैर्युक्तं दिव्यभोजनवस्त्रवत् ॥ ३४ ॥
उपकल्पितसर्वान्नं धौतनिर्मलभाजनम् ।
‖ क्लृप्तसर्वासनं श्रीमत् स्वास्तीर्णशयनोत्तमम् ॥ ३५ ॥

---

* इतरवृक्षाणामपि साधारणमित्यर्थः । † दिव्योपभोगवत्—दिव्योपभोगार्हं—गो. ‡ तोरणानि—बन्धनमालाः, 'बन्धी बन्धनमाला तु तोरणं परिकीर्तितम्' इति हलायुधः—गो. § असम्बाधं—विशालम् । ‖ 'क्लृप्तसर्वासनं' इत्यत्र, स्नानभोजनाद्यासनान्युच्यन्ते । 'शयनासन' इत्यत्र राजाऽऽसनं तत्साहचर्यात् शयनं च महाशयनम् । 'स्वास्तीर्णशयनोत्तमम्' इत्यत्र निद्रार्थशयनम्—गो.

[1] ऽथ जम्बूश्च बभूवुः—ङ. [2] भूषिताः—च. [3] दिव्या—ङ. [4] संयुक्त—च. [5] दिव्य—ङ.

सितमेघनिभं सुधालेपेन। शुक्लमाल्यैः कृतः आकारः—अलङ्कारः यस्य स तथा। समुक्षितं—सिक्तम्। यानं—शिबिकादि। धौतत्वात्—प्रक्षालितत्वात् निर्मलानि भाजनानि—पात्राणि यस्मिन् तत्तथा ॥३३-३५॥

प्रविवेश महाबाहुः अनुज्ञातो महर्षिणा।
वेश्म तत् रत्नसंपूर्णं भरतः केकयीसुतः ॥ ३६ ॥
अनुजग्मुश्च तं सर्वे मन्त्रिणः सपुरोहिताः।
बभूवुश्च मुदा युक्ताः दृष्ट्वा तं वेश्मसंविधिम् ॥ ३७ ॥

वेश्मनः संविधिः—विधानं तथा ॥ ३७ ॥

तत्र राजाऽऽसनं दिव्यं व्यजनं छत्रमेव च।
भरतो मन्त्रिभिः सार्धं अभ्यवर्तत *राजवत् ॥ ३८ ॥

राजाऽऽसनं—सिंहासनं राजवदभ्यवर्तत ॥ ३८ ॥

†आसनं पूजयामास रामायाभिप्रणम्य च।
वालव्यजनमादाय न्यषीदत् सचिवासने ॥ ३९ ॥

---

* राजवत्—राजार्हम्। राजार्हमासनादिकं सर्वं प्रदक्षिणं चकारेत्यर्थः—**ती.** राजासनं—राजार्हासनं अभ्यवर्तत—अभितोऽवर्तिष्ट—प्रदक्षिणं कृतवानिति यावत्। राजवत्—राजतुल्यं—राममिवेत्यर्थः—**गो.** राजवत्—राजयोग्यम्—**ती.** † आसनं पूजयामासेत्यत्र राजवदित्यनुकर्षः। रामाय—आसनोपरिस्थितत्वेन भावितायं—**गो.** एतत्प्रकरणे समापततां आशङ्कानां विषये—'व्यसृजन्त मनुष्यास्ते स्वप्नकल्पं तदद्भुतम्' (78) इति वक्ष्यमाणं वचनं विमर्शनीयम्। **तिलके** तु—आसनं पूजयामासेति। रामचन्द्रीयमेतदिति बुद्ध्या रामाय प्रणम्य, आसनोपरि प्रतिष्ठितं रामं ध्यात्वेति शेषः। अत्रेदं बोध्यम्—भरतेन वाचोक्तमपि राज्यानभिलाषं लोका न श्रद्दध्युः। अतः क्रिययाऽपि सर्वलोकप्रत्यायनाय महर्षिणा तपोव्ययेनापीदृशमातिथ्यकरणम्। किञ्च पुष्पादिभिः पूजेव इयमपि क्रिया विष्णोरंशभूतभरततुष्टये इति तत्करणम्। किञ्च भरतं प्रति 'त्वं दुष्टबुद्ध्याऽऽगतोऽसि किम्?' इति प्रश्ने तस्य ऋषेरसर्वज्ञत्वासामर्थ्यादिशङ्कावारणाय स्वसामर्थ्यदर्शनम्। अपि च भगवदेकचित्तानां स्वर्गसुखमिहापि भवतीति भगवद्रामप्रीतिमाहात्म्यं प्रदर्शयितुं तद्दर्शनेन तेषां तत्राधिकां प्रीतिमुत्पादयितुं तथाकरणं मुनेरिति दिक्—**ति.**

न तु तत्रोपविष्ट इत्याह—आसनं पूजयामासेत्यादि। रामभद्रीयमिति बुद्ध्येति शेषः। रामायाभिप्रणम्य चेति। आसनोपरि रामं प्रतिष्ठितं ध्यात्वेति शेषः। वालव्यजनं—तालवृन्तम्। रामसेवाशेषतयेति शेषः। सचिवासने—सचिवोपक्लृप्तासने सिंहासनाधस्तने॥

आनुपूर्व्यान्निषेदुश्च सर्वे मन्त्रिपुरोहिताः।
ततः सेनापतिः पश्चात् * प्रशास्ता च निषेदतुः॥ ४०॥

प्रशास्ता—पुररक्षकः—தலையாரி ॥ ४० ॥

ततस्तत्र मुहूर्तेन नद्यः पायसकर्दमाः।
उपातिष्ठन्त भरतं भरद्वाजस्य [1] शासनात्॥ ४१॥
तासामुभयतः कूलं † पाण्डुमृत्तिकलेपनाः।
रम्याश्वावसथा दिव्याः ‡ [2] ब्रह्मणस्तु प्रसादजाः॥ ४२॥
तेनैव च मुहूर्तेन दिव्याभरणभूषिताः।
आगुर्विंशतिसाहस्राः § ब्रह्मणा प्रहिताः स्त्रियः॥ ४३॥

आगुः—आगतवत्यः। ब्रह्मणा—बृहस्पतिना, पुत्रकार्यसिद्ध्यर्थम्॥ ४३॥

‖ सुवर्णमणि[3]मुक्तेन प्रवालेन च शोभिताः।
आगुर्विंशतिसाहस्राः कुबेर[4]प्रहिताः स्त्रियः॥ ४४॥

---

* प्रशास्ता—शिबिरनियन्ता—गो. † पाण्डुमृत्तिकलेपनाः—सुधालिप्ताः—गो. ‡ ब्रह्मणः—भरद्वाजस्य—गो. § ब्रह्मणा—चतुर्मुखेन—गो. ‖ सुवर्णानि—सुवर्णमयाभरणानि, मणयः—रत्नानि, मुक्ताश्च—सुवर्णमणिमुक्तं—तेन—गो.

[1] तेजसा—ङ. [2] ब्राह्मणस्य—च. [3] युक्तेन—ङ. [4] सहिताः—ङ.

* याभिर्गृहीतः पुरुषः सोन्माद इव [1] लक्ष्यते ।
आगुर्विंशतिसाहस्राः नन्दनादप्सरोगणाः ॥ ४५ ॥

सोन्माद इति । 'गन्धर्वाप्सरसो वा एतमुन्मादयन्ति, य उन्माद्यति' इति श्रुत्येति शेषः । उद्भूतो मादः—सन्तोषः—उन्मादः, मुदहर्षे, भावे घञ्, उद्भूतसन्तोषसहिता इत्यर्थः ॥ ४५ ॥

नारदस्तुम्बुरु[2]र्गोपः प्रभया सूर्यवर्चसः ।
एते गन्धर्वराजानः भरतस्याग्रतो जगुः ॥ ४६ ॥

नारदादयो गन्धर्वराजानः । प्रभया सूर्यवर्चसः—तस्य समानतेजस्काः ॥ ४६ ॥

अलम्बुसा मिश्रकेशी पुण्डरीकाऽथ वामना ।
उपानृत्यंस्तु [3] भरतं † भरद्वाजस्य शासनात् ॥ ४७ ॥
यानि माल्यानि देवेषु यानि चैत्ररथे वने ।
प्रयागे तान्यदृश्यन्त भरद्वाजस्य तेजसा ॥ ४८ ॥

प्रयागे—क्षेत्रे ॥ ४८ ॥

बिल्वा मार्दङ्गिका आसन् ‡ शम्याग्राहा विभीतकाः ।
अश्वत्था नर्तकाश्चासन् भरद्वाजस्य [4] शासनात् ॥ ४९ ॥

बिल्वाः—बिल्ववृक्षाः । मार्दङ्गिकाः—मृदङ्गवादनशिल्पमस्य, 'तदस्य शिल्पम्' इति ठक्, 'मार्दङ्गिका मौरजिकाः'—

---

* गृहीतः—आलिङ्गितः । एतदर्धस्य पूर्वेणान्वयः—**गो.** दर्शनादिनाऽऽत्मवशीकृतः—**ति.** † भरद्वाजस्य शासनादुपानृत्यन्नित्यनेन, भरतस्य रामे वृत्तिविशेषं आतिथ्यव्याजेन परीक्षितवानृषिरिति गम्यते । एवं भरतस्य रामशेषतयैवावस्थानं, न तु भोगलौल्येनेत्युक्त्वा सेनाभोगं प्रपञ्चयति—यानीत्यादिना—**गो.** ‡ शम्याग्राहाः—तालग्राहकाः—**गो.**

[1] चोद्यते—**ङ.** [2] गोप्ता—**ङ.** [3] तास्सर्वाः—**ङ.** [4] तेजसा—**च.**

கடவிளாயாடிவாசிப்பார் । विभीतकाः—தானக்கி । शम्या-ग्राहाः—'शम्या यज्ञायुधे ताले मशके च क्रियान्तरे' ॥ ४९ ॥

ततः सरलतालाश्च तिलका[1]नागमालकाः ।
प्रहृष्टाः तत्र संपेतुः *कुब्जा भूत्वाऽथ वामनाः ॥ ५० ॥

सरलः — देवदारुविशेषः । तालः प्रसिद्धः । तिलकः—மஞ்சக்காடி । नागमालकाः—நாகமரம் । कुब्जाः—स्थगुमन्तः ॥ ५० ॥

† शिंशुपाऽऽमलकी जम्बुः याश्चान्याः[2] काननेषु ताः ।
मालती मल्लिका जातिः याश्चान्याः कानने लताः ॥ ५१ ॥
प्रमदाविग्रहं कृत्वा भरद्वाजाश्रमे[3]ऽवसन् ।

शिंशुपा—இருவீடி । जम्बूरिति पृथक्पदं जातिवाचकम् । लताः मल्लिकादयः । ननु लतादिभिरेव स्त्र्यादिसाध्यव्यवहारः, किं तदावाहनेन ? लतादेः दिव्यस्त्र्यादितापत्तिसामर्थ्याय तदधिष्ठानार्थमिति वदामः । वनलतादेः स्त्र्यादिताऽपत्तिश्च ॥ ५१ ॥

‡ [4]सुराः सुरापाः पिबत पायसं च बुभुक्षिताः ।
मांसानि च सुमेध्यानि भक्ष्यन्तां यावदिच्छथ ॥ ५२ ॥
[5]उच्छाद्य स्नापयन्ति स्म नदीतीरेषु § वल्गुषु ।
अप्येकमेकं पुरुषं प्रमदाः सप्त चाष्ट च ॥ ५३ ॥

---

* विहारार्हत्वाय एवंभावः। † स्त्रीलिङ्गवृक्षाणां स्त्रीभावपरिग्रहमाह—शिंशपेत्यादि । ‡ एवमूचुरिति शेषः–ति. 'इत्यवदन्' (पूर्वश्लोके पाठान्तरम्) इति सम्बन्धः–गो. § वल्गुषु–मनोज्ञेषु ।

[1] नागमल्लिकाः–ङ. सतमालकाः–च. [2] कानने लताः–च. [3] ऽवदन्–ङ. [4] सुरां–च. [5] उच्छोष–च.

उच्छाद्य—उद्वर्तनं कृत्वा। एकमेकामिति। 'एकं बहुव्रीहिवत्' इति बहुव्रीहिवद्भावाभाव आर्षः॥ ५३॥

संवाहन्त्यः समापेतुः नार्यो [1] रुचिरलोचनाः।
* परिमृज्य [2] तथाऽन्योन्यं पाययन्ति वराङ्गनाः॥ ५४॥

संवाहन्त्य इति। संवाहयन्त्य इति यावत्। संवाहनं—पादमर्दनादि। समापेतुः—सङ्गता बभूवुः। परिमृज्य—स्नात्वा। पाययन्तीति। मद्यभेदानिति शेषः॥ ५४॥

हयान् गजान् खरानुष्ट्रान् तथैव सुरभेः सुतान्।
अभोजयन् [3] वाहनपाः तेषां भोज्यं यथाविधि॥ ५५॥

सुरभिसुताः—बलीवर्दाः॥ ५५॥

इक्षूंश्च मधुलाजांश्च भोजयन्ति स्म वाहनान्।
इक्ष्वाकुवरयोधानां चोदयन्तो महाबलाः॥ ५६॥

इक्ष्वाकुवरयोधानां वाहनान् चोदयन्तः—रक्षणाय प्रेरयन्तः सन्तः इक्ष्वादीन् भोजयन्ति स्म॥ ५६॥

† नाश्वबन्धोऽश्वमाजानात् न गजं कुञ्जरग्रहः।
मत्तप्रमत्तमुदिता सा चमूस्तत्र संबभौ॥ ५७॥

अत एव—नाश्वबन्ध इत्यादि। अश्वान् बध्नातीत्यश्वबन्धः। मत्ताः मदकरद्रव्यसेवया, प्रमत्ताः मधुपानेन, मुदिताः स्रक्चन्दनवनितादिभोगेन॥ ५७॥

---

* परिमृज्य—जलार्द्रमङ्गं वस्त्रादिना परिमृज्य, अलङ्कृत्येति वाऽर्थः—गो.
† नाजानात्—न ज्ञातवान्—गो.

[1] विपुल—च. [2] यथान्याय्यं—ङ. तदाऽन्योऽन्यं—च. [3] तदारोहाः—ङ.

तर्पिताः सर्वकामैस्ते रक्तचन्दनरूषिताः ।
अप्सरोगणसंयुक्ताः सैन्या वाचमुदीरयन् ॥ ५८ ॥

सैन्याः— सेनायां समवेताः । वाचं—क्रीडावाचं उदीरयन्— उदैरयन्निति यावत् । ताभिरप्सरोभिस्सहेति शेषः ॥ ५८ ॥

नैवायोध्यां गमिष्यामः न गमिष्याम दण्डकान् ।
कुशलं भरतस्यास्तु रामस्यास्तु तथा सुखम् ॥ ५९ ॥

कां वाचमुदीरयन्नित्यतः—नैवेत्यादि । न गमिष्यामेति । छान्दसः सकारलोपः । भरतस्य कुशलमस्तु, भूमौ स्वर्गसुखप्रदत्वादित्याशयः ॥ ५९ ॥

इति पादातियोधाश्च हस्त्यश्वारोहबन्धकाः ।
*अनाथास्तं विधिं लब्ध्वा वाचमेतामुदीरयन् ॥ ६० ॥

पादाभ्यां अदन्ति—गच्छन्ति इति पादातयः; ते चैते योधास्तथा । चकारतोऽधिकसमुच्चयः । हस्त्यश्वानामारोहाः—सादिनः, हस्त्यादिबन्धकाः तद्भृत्याश्च तथा । तं विधिं—तं सत्कारं लब्ध्वा अनाथाः अपरतन्त्रा इव—इत्येतां वाचमुदीरयन्निति सम्बन्धः ॥ ६० ॥

संप्रहृष्टा विनेदुस्ते नरास्तत्र सहस्रशः ।
भरतस्यानुयातारः स्वर्गोऽयमिति चाब्रुवन् ॥ ६१ ॥

विनादः—शूराणां प्रहृष्टानां शब्दविशेषः ॥ ६१ ॥

नृत्यन्ति स्म हसन्ति स्म गायन्ति स्म च सैनिकाः ।
समन्तात् परिधावन्ति †माल्योपेताः सहस्रशः ॥ ६२ ॥

---

* पदात्यादयः खलु ताः । अतः— एतावता कालेन एतादृशातिथ्याद्यनुभवगतिरहिताः—इत्येवं तया लोकोक्त्या अनाथा इति । तेन चातिथ्यप्रशंसनम् । † माल्योपेताः—माल्याद्यलङ्कृता इति यावत् ।

ततो भुक्तवतां तेषां तदन्नममृतोपमम् ।
दिव्यानुद्वीक्ष्य भक्ष्यांस्तान् अभवद्भक्षणे मतिः ॥६३ ॥

अभवद्भक्षणे मतिरिति । परितृप्तत्वेऽपि भक्ष्यसौष्ठवात् पुनश्चाकाङ्क्षाऽभूदित्यर्थः ॥ ६३ ॥

प्रेष्याश्चेटयश्च वध्वश्च बलस्थाश्च सहस्रशः ।
बभूवुस्ते भृशं [1]तृप्ताः सर्वे * चाहतवाससः ॥ ६४ ॥

प्रेष्याः–किङ्कराः । चेट्यः–दास्यः । बले—सेनायां तिष्ठन्तीति तथा । अहतवासस इति । नूतनवस्त्रपरिधाना इत्यर्थः ॥ ६४ ॥

कुञ्जराश्च खरोष्ट्राश्च [2]गोऽश्वाश्च मृगपक्षिणः ।
बभूवुः सुभृतास्तत्र †[3]नान्यो ह्यन्यमकल्पयत् ॥ ६५ ॥

खरोष्ट्रा इत्यादौ 'सर्वो द्वन्द्वो विभाषा' इत्येकत्वाभावः । मृगपक्षिणः क्रीडार्थाः । सुभृताः—सुपुष्टाः । तत्र–सेनायाम् । अन्यः अन्यं प्रति अन्नादिकं नाकल्पयत्, ऋषिकृतमेव सर्वमुपयुक्तवन्त इत्यर्थः ॥ ६५ ॥

नाशुक्लवासास्तत्रासीत् क्षुधितो मलिनोऽपि वा ।
रजसा ध्वस्तकेशो वा नरः कश्चिददृश्यत ॥ ६६ ॥

आजैश्चापि च वाराहैः निष्ठानवरसञ्चयैः ।
फलनिर्व्यूहसंसिद्धैः [4]सूपैर्गन्धरसान्वितैः ॥ ६७ ॥

---

* अहतवाससः—नूतनवस्त्राः । यद्वा, आहतवाससः—निर्णिक्तवाससः—गो.

† एते परस्परं उपचारादिकं नाकुर्वन्; महर्षिप्रेषितपरिचारकैरेवेष्टसंपत्त्या परस्परापेक्षा नासीदिति भावः ।

[1] दृप्ताः–ङ· प्रीताः–च· [2] गावश्च–ङ. [3] नातो–च. [4] धूपै–ङ.

आजैरित्यादि । आजादिपदार्थैः पूर्णाः । आजैः—अजमांसैः । तथा वाराहैः । 'निष्ठानं व्यञ्जनं ज्ञेयम्' इति हरिः, व्यञ्जनश्रेष्ठानां सञ्चयास्तथा । निर्व्यूहः— क्वाथरसः, 'द्वर्यापीडे क्वाथरसे निर्व्यूहो नागदन्तके'। सिद्धैः–भावे निष्ठा, सिद्धिः पाक इति यावत्, पनसाम्रादिफलक्वाथरसपाकभेदैरित्यर्थः । अपि च फलनिर्व्यूहसान्निहिततया सिद्धैः—पक्वैः सूपैरिति सूपविशेषणमपि । तादृशसूपः केरलप्रसिद्धः । गन्धरसान्वितैरिति साधारणं विशेषणम् । गन्धः—भर्जनादिसंस्कारादिजो गन्धविशेषः, तथा रसविशेषोऽपि ॥ ६७ ॥

**पुष्पध्वजवतीः पूर्णाः शुक्लस्यान्नस्य [1] चाभितः ।**
**ददृशुर्विस्मितास्तत्र नरा * लौहीस्सहस्रशः ॥ ६८ ॥**

पुष्पवत्यः ध्वजवत्यश्च तथा, इदमलङ्कारार्थं गन्धार्थं च । पूर्णयोगे षष्ठी सर्वत्र इति प्रागेवोक्तम् । लौहीः—स्वर्णरजतमयपात्रीः ददृशुरित्यन्वयः । लोहशब्दः पञ्चलोहसाधारणः ॥ ६८ ॥

**बभूवुर्वनपार्श्वेषु कूपाः पायसकर्दमाः ।**
**ताश्च कामदुघा गावः द्रुमाश्चासन् [2] मधुस्रुतः ॥ ६९ ॥**

वनपार्श्वेषु—चैत्ररथवनवत् प्रतिभातवनप्रदेशेषु पञ्चयोजनपरिमितेष्वित्यर्थः । ताश्च तद्वनवर्तिन्यो गाश्च कामदुघा आसन्, दुहः क्विप्, घश्च । वनप्रदेशेष्वेव भोगसाधनसंपादनं अपाङ्क्तेयाटविकवनानिषादादिबलाद्यर्थम् ॥ ६९ ॥

**वाप्यो मैरेयपूर्णाश्च मृष्टमांसचयैर्वृताः ।**
**† प्रतप्त [3] पैठरैश्चापि मार्गमायूरकौक्कुटैः ॥ ७० ॥**

---

* सर्वलोहेषु प्रधानत्वात् सुवर्णमत्र लोहशब्देन उच्यते –**गो.** † निषादादिबलतृप्त्यर्थं प्रतापमात्रेण संस्कार्याः–प्रतप्ताः, तथा पिठरः–कपालं, तेषु संस्कृताः—पक्वाः—पैठराः–**ति.** प्रतप्तपिठरैः—प्रतप्तपिठरसंस्कृतैः–**गो.**

[1] चोच्छ्रिताः–**ङ.**   [2] मधुच्युतः–**च.**   [3] पिठरै–**ङ.**

प्रतप्तपैठरैः—पिठरः—कपालः–ஓடு–तेषु संस्कृताः पक्वाः—पैठराः, 'संस्कृतं भक्षाः' इत्यण्, प्रतापमात्रतः संस्कार्याः—प्रतप्ताः पैठराश्च तथा। मृगादिसम्बद्धमांसाः—मार्गादयः ॥ ७० ॥

*पात्रीणां च सहस्राणि स्थालीनां नियुतानि च।
न्यर्बुदानि च पात्राणि शातकुम्भमयानि च ॥ ७१ ॥

पात्रीणां–अन्नपानीयपात्रीणां—மிடாக்கள்। स्थालीनां—व्यञ्जनस्थालीनां—சொம்புகள்। नियुतं—लक्षं। न्यर्बुदानि—शतकोट्यः। पात्राणि—भोजनपात्राणि—வட்டில் ॥ ७१ ॥

स्थाल्यः कुम्भ्यः करम्भ्यश्च दधिपूर्णाः सुसंस्कृताः।
यौवनस्थस्य गौरस्य कपित्थस्य सुगन्धिनः ॥ ७२ ॥

स्थाल्यः—தாலம்। कुम्भ्यः—தோண்டிகள்। दधिपूर्णत्वं कुम्भविशेषणम्। करम्भ्यः–दधिमन्थनस्थाल्यः। यौवनस्थस्य–न अपक्वस्य नातिपक्वस्य, मध्यमसुपरिपाकस्येत्यर्थः। गौरस्य—सुपक्वत्वादेव पीतवर्णस्य, 'पीतो गौरो हरिद्राभः'; उक्तविशेषणकपित्थस्य—விளாம்பழம்—सम्बन्धिसुगन्धवतः ॥ ७२ ॥

ह्रदाः पूर्णा रसालस्य दध्नः श्वेतस्य चापरे।
बभूवुः [1]पायसस्यान्ये †[2]शर्कराणां च सञ्चयाः ॥ ७३ ॥

रसालस्य—तक्रविशेषस्य, 'अपक्वतक्रं सव्योषं चतुर्जातं गुडार्द्रकम्। सजीरकं रसालं स्यात् मज्जिका शिखरिण्यपि' इति

---

* 'पात्रीणां' इत्यारभ्य 'सञ्चयाः' इत्यन्तमेकं वाक्यम्–गो. † 'शर्करायावसञ्चयाः' इति च पाठः, शर्करामिश्रयवविकारापूपसञ्चया इत्यर्थः–गो.

[1] पयसश्चान्ये–च. [2] शर्करायावसञ्चयाः–ङ.

वैजयन्ती । पायसस्यान्य इति । पूर्णा ह्रदा इत्यनुकर्षः । शर्कराणां सञ्चयाः—राशयश्च, पायसोपयुक्ता बभूवुरित्यनुकर्षः ॥ ७३ ॥

कल्कां*श्चूर्णकषायांश्च स्नानानि विविधानि च ।
ददृशुर्भाजनस्थानि †तीर्थेषु सरितां नराः ॥ ७४ ॥

उक्तह्रदान् कल्कादींश्च ददृशुरित्यन्वयः । कल्कान्—आमलक्यादिकल्कतैलान् चूर्णकषायांश्च—स्नानचूर्णक्वाथतकषायांश्च ददृशुरिति सम्बन्धः । तथा विविधानि स्नानानि—स्नान्त्यनेनेति स्नानानि—उष्णोदकानि ॥ ७४ ॥

शुक्लानंशुमतश्चापि दन्तधावनसञ्चयान् ।
‡शुक्लांश्चन्दनकल्कांश्च समुद्गेष्ववतिष्ठतः ॥ ७५ ॥

शुक्लान्—निर्मलान् । अंशुमतः—अग्रे कूर्चवतः, दन्तधावनायेति यावत् । चन्दनकल्कान्—घृष्टचन्दनान् । समुद्गः—संपुटः—பிம்கன் ॥ ७५ ॥

दर्पणान् §परिमृष्टांश्च वाससां चापि सञ्चयान् ।
||पादुको[1]पानहं चैव युग्मानि च सहस्रशः ॥ ७६ ॥

पादुका—மரவுரி । उपानत्—செருப்பு । पादुकापानहमिति । 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टच् समासान्तः । युग्मान्—उभयपादार्थं युग्मरूपान् ॥ ७६ ॥

---

* चूर्णानि—माषादिचूर्णानि, कषायाः क्वथितानि—गो. † सरितां तीर्थेषु—नद्या अवतारस्थलेषु । ‡ स्नानानन्तरमलङ्कारोपकरणानि दर्शयति—शुक्लानिति—गो. § परिमृष्टान्—निर्मलीकृतान्-गो. || पादुकाः—दारुनिर्मिताः, उपानहः—चर्मनिर्मिताः-गो.

[1] पानहश्चापि—ङ.

आञ्जनीः कङ्कतान् कूर्चान् [1]शस्त्राणि च धनूंषि च ।
[2]मर्मत्राणानि चित्राणि शयनान्यासनानि च ॥ ७७ ॥

आञ्जन्यः—மைக்கூண்டு । कङ्कतः—केशमार्जनम्—சீப்பு । कूर्चाः—श्मश्रुप्रसाधकाः—பாணிபண்ணுவார் । मर्मत्राणं—कवचम् ॥ ७७ ॥

प्रतिपानह्रदान् पूर्णान् खरोष्ट्र[3]गजवाजिनाम् ।
अवगाह्यसुतीर्थांश्च ह्रदान् सोत्पलपुष्करान् ॥ ७८ ॥

प्रतिपानं—भुक्तजीर्णार्थं यत् पीयते तत् प्रतिपानम्—குடிநீர் । अवगाह्यसुतीर्थानिति । अवगाहितुं योग्याः सुखावतारा-श्चेत्यर्थः । 'पुष्करं पङ्कजे व्योम्नि' इति विश्वः ॥ ७८ ॥

*आकाशवर्णप्रतिमान् स्वच्छतोयान् सुखाप्लवान् ।
नीलवैडूर्यवर्णांश्च मृदून् यवससञ्चयान् ॥ ७९ ॥
निर्वापार्थं पशूनां ते ददृशुस्तत्र सर्वशः ।

आकाशवर्णप्रतिमानिति । नीलवर्णान्, उपाधिभेदादिति शेषः । सुखेन आप्लवः—स्नानं येषां ते तथा । यवसानां सञ्चयस्तथा, 'यवसं तृणमर्जुनम्'। निर्वापार्थं—भक्षणार्थम् ॥ ७९ ॥

व्यस्मयन्त मनुष्यास्ते [4]†स्वप्नकल्पं तदद्भुतम् ।
दृष्ट्वाऽऽतिथ्यं कृतं तादृक् [5]भरतस्य महर्षिणा ॥ ८० ॥

स्वप्नकल्पमिति । द्रागुत्पन्नसुदुष्प्रापविचित्रपदार्थत्वात् ॥ ८० ॥

---

* आकाशवर्णप्रतिमान्—आकाशवन्निर्मलानित्यर्थः—**गो.** † स्वप्नकल्पत्वोक्तिः अयत्नसिद्धत्वात्, अपूर्वत्वात्, आश्चर्यकरत्वाच्च-**गो.** स्वप्नकल्पं—मर्त्यदुर्लभम्—**ति.**

[1] छत्राणि—**च.** [2] तनुत्राणि च—**ङ.** [3] रथ—**ङ.** [4] स्वर्गकल्पं—**ङ.**
[5] भरद्वाज—**च.**

[1] इत्येवं रममाणानां देवानामिव नन्दने ।
भरद्वाजाश्रमे रम्ये सा रात्रिर्व्यत्यवर्तत ॥ ८१ ॥

प्रतिजग्मुश्च ता नद्यः गन्धर्वाश्च यथाऽऽगतम् ।
* भरद्वाजमनुप्राप्य ताश्च सर्वा वराङ्गनाः ॥ ८२ ॥

तथैव मत्ता मदिरोत्कटा नराः
तथैव दिव्यागरुचन्दनोक्षिताः ।
तथैव दिव्याः विविधाः स्रगुत्तमाः
† पृथक् [2] प्रकीर्णा मनुजैः प्रमर्दिताः ॥ ८३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकनवतितमः सर्गः

---

अथ स्वप्नादिवत् ऋषिकृतमातिथ्यं किं मिथ्या? इति शङ्कां व्यावर्तयितुमाह—तथैव मत्ता इत्यादि । मत्ताः—दृप्ताः । मदिरया उत्कटाः—मदिरोत्कटाः । 'मत्ते शौण्डोत्कटक्षीबाः' । तथैवेति । यथा सार्वभौमाश्वमेधयागतृप्तजनस्य भुक्तवस्तु परिपाकपर्यन्तं सत्यं, तथैवात्रापि सत्य एव भोगोऽभूदित्यर्थः । स्रगुत्तमाः—स्रक्श्रेष्ठाः प्रकीर्णाः प्रमर्दिताश्च, उपभोगवशादिति शेषः । गज(८३)मानः सर्गः ॥ ८३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकनवतितमः सर्गः

---

* भरद्वाजात् अनुमतिं प्राप्येत्यर्थः । † पृथक्—पूर्वस्रग्भ्यो विलक्षणाः-गो.

[1] इत्येषां-ङ.　　[2] विकीर्णा-ङ.

## द्विनवतितमः सर्गः

### [भरद्वाजामन्त्रणम्]

**ततस्तां रजनीं व्युष्य भरतः सपरिच्छदः ।**
**[1]कृतातिथ्यो भरद्वाजं *कामादभिजगाम ह ॥ १ ॥**

अथ भरद्वाजाश्रमात् भरतनिर्याणम् । तत इत्यादि । व्युष्य—उषित्वा । सपरिच्छदः—सपरिवारः, 'परिवारः परिकरः परिष्कन्दः परिग्रहः' ॥ १ ॥

**तमृषिः पुरुषव्याघ्रं प्राञ्जलिं प्रेक्ष्य चागतम् ।**
**हुताग्निहोत्रो भरतं भरद्वाजोऽभ्यभाषत ॥ २ ॥**

† अत एवाश्रमादुपनिष्क्रान्तं तं ऋषिरुवाचेति ॥ २ ॥

**कच्चिदत्र सुखा रात्रिः तवास्मद्विषये गता ।**
**‡समग्रस्ते जनः कश्चित् आतिथ्ये शंस मेऽनघ! ॥ ३ ॥**

अस्मद्विषये—अस्मदाश्रमे । समग्रः—सम्यक्तृप्तिकः ॥ ३ ॥

**तमुवाचाञ्जलिं कृत्वा भरतोऽभिप्रणम्य च ।**
**§[2] आश्रमादभिनिष्क्रान्तं ऋषिमुत्तमतेजसम् ॥ ४ ॥**

---

* कामात—रामप्राप्तीच्छया—**गो.** तदाह्वानात पूर्वं स्वस्येच्छयेति वाऽर्थः । † एतद्दृष्ट्या 'आश्रमादुपनिष्क्रान्तं' इति तृतीयपादः स्यादिति भाति । 'तं' इत्यस्य विवरणरूपं वा—आश्रमादुपनिष्क्रान्तं—इति । ४ श्लोकगतपादसांकर्यं वेदम् । ‡ आतिथ्ये विषये समग्रः—संपूर्णतृप्त इति यावत । अनघेत्यनेन पूर्वं भरताशयपरीक्षणार्थमेवातिथ्यकरणमिति द्योतितम्—**गो.** § अभिनिष्क्रान्तमित्यनेन कौसल्यादिसर्वजनदर्शनार्थं भरतागमनकाल एव बहिर्निर्गतवान् ऋषिरिति व्यञ्जितम्—**गो.** जनसमूहस्य बहुत्वात सर्वेषां स्वदर्शनेन कृतकृत्यत्वायाश्रमान्निष्क्रान्तम्—**ति.** आदरसौलभ्यादिना वा निष्क्रान्तम् ॥

[1] कृतातिथ्यं—**ङ.** [2] आश्रमादुप—**च.**

सुखोषितोऽस्मि, भगवन्! समग्रबलवाहनः।
[1]तर्पितः सर्वकामैश्च सामात्यो बलवत् त्वया ॥ ५ ॥

बलवत्—अत्यन्तम् ॥ ५ ॥

अपेतक्लमसन्तापाः [2]सुभिक्षाः सुप्रतिश्रयाः।
अपि प्रेष्यानुपादाय सर्वे स्म [3]सुसुखोषिताः ॥ ६ ॥

क्लमः—ग्लानिः। सन्तापः—देहौष्ण्यम्। प्रेष्यानपि उपादाय—आरभ्य। सुभिक्षाः—समृद्धान्नपानाः। सुप्रतिश्रयाः—शोभनावासस्थाः ॥ ६ ॥

आमन्त्रयेऽहं, भगवन्! कामं त्वां, ऋषिसत्तम!
समीपं प्रस्थितं भ्रातुः *मैत्रेणेक्षस्व चक्षुषा ॥ ७ ॥

आमन्त्रये—आपृच्छे। कामं—अभ्यधिकम्। मैत्रेण चक्षुषेति। स्निग्धचक्षुषेत्यर्थः ॥ ७ ॥

†आश्रमं तस्य, धर्मज्ञ! धार्मिकस्य महात्मनः।
आचक्ष्व [4]कतमो मार्गः कियानिति च शंस मे ॥ ८ ॥

तस्येति। रामस्येत्यर्थः। कियान्—कियद्दूरपरिमाणः ॥ ८ ॥

---

* पूर्वं 'कच्चिन्न तस्यापापस्य पापं कर्तुमिहेच्छसि। अकण्टकं भोक्तुमना राज्यं तस्यानुजस्य च' (90–13) इति भरद्वाजोक्त्या वा प्रार्थयति—मैत्रेणेत्यादि ॥

† रामाश्रमप्रदेशाभिज्ञेषु गुहज्ञातिषु विद्यमानेषु मुनिं प्रति प्रश्नः तस्य पूजार्थम्—गो. अथवा—'भरद्वाजाभिगमनं प्रयागे च सभाजनम्। आगिरेर्गमनं' (57–2) इत्यनेन भरद्वाजाभिगमनादेव रामस्य चित्रकूटप्रस्थानस्य सुमन्त्रेणावगमात्, स विषयः भरद्वाजेनैव सम्यग्ज्ञातः स्यात्, मुनिकल्पस्य रामस्य वृत्तान्तादिकं हि मुनय एव सम्यग्जानीयुरिति बुद्ध्या भरद्वाजं प्रति प्रश्नः स्यात्।

[1] बलवत्तर्पितश्चाहं बलवान् भगवंस्त्वया—ङ. [2] सुभक्षाः—ङ. [3] सुसुखोषिताः—ङ. [4] कतरो—ङ.

**इति पृष्टस्तु भरतं भ्रातृदर्शनलालसम् ।**
**प्रत्युवाच महातेजाः भरद्वाजो महातपाः ॥ ९ ॥**

*** भरतार्धतृतीयेषु योजनेष्वजने वने ।**
**चित्रकूटो गिरिस्तत्र रम्यनिर्दर[1]कन्दरः ॥ १० ॥**

अर्धं तृतीयं येषां तानि अर्धतृतीयानि, तेषु; सार्धयोजनद्वितये ष्विति शेषः । निर्दराः-विदीर्णपाषाणाः, कन्दराः-गुहाः, निर्दरकन्दरा इति बहुव्रीहिः । गिरिस्तत्र रम्ये वने वर्तत इति योजना ॥ १० ॥

**उत्तरं पार्श्वमासाद्य तस्य मन्दाकिनी नदी ।**
**पुष्पितद्रुम[2]संछन्ना रम्यपुष्पितकानना ॥ ११ ॥**

मन्दाकिनी नाम काचन नदी, न तु गङ्गा । तस्य चित्रकूटस्योत्तरं पार्श्वमासाद्य-प्राप्य तिष्ठतीति शेषः ॥ ११ ॥

**अनन्तरं तत्सरितः चित्रकूटं च पर्वतम् ।**
**तयोः पर्णकुटी, तात! तत्र तौ वसतो ध्रुवम् ॥ १२ ॥**

तत्सरितः अनन्तरं समीपे चित्रकूटं च पर्वतं द्रक्ष्यसीति शेषः । तयोः चित्रकूटमन्दाकिन्योः मध्ये तयोः-रामलक्ष्मणयोः पर्णकुटी । हे तात ! तत्र तौ वसतः-पर्णकुटीर एव निवासे ध्रुवं वसत इति शेषः ॥ १२ ॥

---

* अर्धतृतीयेषु—अर्धयुक्ततृतीयेषु इत्यर्थः । सार्धयोजनद्वये वा—ती. अर्धतृतीयेषु—अर्धमेव तृतीयं यस्मिन्, सार्धद्वयमित्यर्थः । तस्यैकशेषेण कपिञ्जलाधिकरणन्यायेन सार्धसप्तेत्यर्थः—रा. पूर्वं 'दशक्रोश इतस्तात गिरिर्यस्मिन्निवत्स्यसि' (54-28) इत्युक्तथा—एकयोजनस्य चतुःक्रोशात्मकत्वप्रसिद्धिप्राचुर्यात् सार्धद्वययोजन इत्यर्थः स्वरसः ॥

[1] कानन:—च. [2] संपन्ना—ङ.

* दक्षिणेनैव मार्गेण सव्यदक्षिणमेव वा ।
गजवाजिरथाकीर्णां वाहिनीं, वाहिनीपते! ॥ १३ ॥
वाहयस्व, [1] महाभाग! ततो द्रक्ष्यसि राघवम् ।

दक्षिणेनैव मार्गेण – यमुनाया दक्षिणतीरस्थेन मार्गेणैव गत्वा कियद्दूरं गतः, पश्चात् सव्यदक्षिणमेव च – तस्य मार्गस्य शाखा-मार्गयोः सव्यभागवतो यो दक्षिणदिग्गामी मार्गोऽस्ति तमेव मार्गं वाहिनीं वाहयस्व, न त्वन्यं शाखामार्गम् ॥ १३ ॥

† प्रयाणमिति तच्छ्रुत्वा राजराजस्य योषितः ।
हित्वा यानानि यानार्हाः ‡ ब्राह्मणं पर्यवारयन् ॥ १४ ॥

ब्राह्मणं—ब्रह्मपुत्रं भरद्वाजं पर्यवारयन्, नमस्कारार्थमिति शेषः ॥ १४ ॥

वेपमाना कृशा दीना सह देव्या सुमित्रया ।
कौसल्या [2] तत्र जग्राह कराभ्यां चरणौ मुनेः ॥ १५ ॥
असमृद्धेन कामेन सर्वलोकस्य गर्हिता ।
कैकेयी [3] तस्य जग्राह चरणौ सव्यपत्रपा ॥ १६ ॥

असमृद्धेन—यथाऽभिलषितमप्राप्तेन कामेन, उपलक्षितेति शेषः ॥ १६ ॥

---

* अस्मादाश्रमात् दक्षिणेन मार्गेण किञ्चिद्दूरं गत्वा, ततः सव्यदक्षिणं नैऋत-दिग्भागो यथा भवति तथा वाहिनीं वाहयस्व । किञ्चिद्दूरं दक्षिण एको मार्गः, ततः शाखामार्गेण नैऋतदिग्भागगामिना गन्तव्यमिति भावः । कान्तारमार्गस्य सूक्ष्मत्वात् यथायोग्यं मार्गस्य वामतो दक्षिणतश्च विरलप्रदेशे वाहिनीं प्रापयस्वेत्यर्थ इत्यप्याहुः–**गो.**
† इति तव प्रयाणं श्रुत्वा—प्रस्थानं अतिसन्निहितं ज्ञात्वेत्यर्थः । ‡ ब्राह्मणं—ब्रह्मविदम्–**गो.**

[1] महाबाहो–**ङ.** [2] तस्य–**ङ.** [3] तत्र–**ङ.**

*त प्रदक्षिणमागम्य भगवन्तं महामुनिम् ।
अदूरात् भरतस्यैव तस्थौ दीनमनास्तदा ॥ १७ ॥

दीनमना इति । कैकेयीति शेषः ॥ १७ ॥

ततः पप्रच्छ भरतं भरद्वाजो †दृढव्रतः ।
विशेषं ज्ञातुमिच्छामि मातॄणां तव, राघव! ॥ १८ ॥
एवमुक्तस्तु भरतः भरद्वाजेन धार्मिकः ।
उवाच प्राञ्जलिर्भूत्वा वाक्यं वचनकोविदः ॥ १९ ॥
यामिमां, भगवन्! दीनां शोकानशनकर्शिताम् ।
पितुर्हि महिषीं देवीं देवतामिव पश्यसि ॥ २० ॥
एषा तं पुरुषव्याघ्रं [1]व्याघ्रविक्रान्तगामिनम् ।
कौसल्या सुषुवे रामं धातारमदितिर्यथा ॥ २१ ॥

शोकानशनेति । शोकः, तद्वशप्राप्तं अनशनं—यथोचितयथा-कालान्नस्वीकाराभावश्च तथा । यां पश्यसि, एषेति योजना । व्याघ्रस्य विक्रान्तः—गमनं, तद्वद्गामिनं—गमनशीलम् । धातारं—उपेन्द्रम् । धाता—प्रजापतिः, तस्यापरमूर्तित्वात् तद्वाच्य उपेन्द्रः ॥ २०-२१ ॥

‡अस्या वामभुजं श्लिष्टा यैषा तिष्ठति दुर्मनाः[2] ।
कर्णिकारस्य शाखेव शीर्णपुष्पा वनान्तरे ॥ २२ ॥

---

* लज्जावशादेव कौसल्यादिभिः सह मुनेः पुरतः स्थातुमशक्ता प्रदक्षिणव्याजेन भरतं गतेत्याह—तमित्यादिना—**गो.** † दृढव्रत इत्यनेन सर्वज्ञत्वं लक्ष्यते । सर्वज्ञोऽपि कैकेयीशिक्षार्थं पप्रच्छेत्यर्थः । विशेषं—संज्ञासंज्ञिसम्बन्धादिविशेषम्—**गो.** 'इयं का, इयं का' इत्येवंरूपं विशेषम्—**ती.** ‡ वामभुजं श्लिष्टा—कौसल्याया वेपमानाङ्गत्वात् तद्धारणार्थं तद्वामभुजमध्यस्थितेत्यर्थः—**गो.** दयाप्रीत्यादितः तां स्पृशन्तीवातिसमीपे वामभागे स्थितामिति वाऽर्थः ।

[1] सिंह—ङ. **च. झ.** [2] एतदनन्तरं—इयं सुमित्रा दुःखार्ता देवी राज्ञश्च मध्यमा—इत्यधिकं—ङ. **च.**

एतस्यास्तु सुतौ देव्याः कुमारौ * देववर्णिनौ ।
उभौ † लक्ष्मणशत्रुघ्नौ वीरौ सत्यपराक्रमौ ॥ २३ ॥

कर्णिकारः - கொங்கு । देववर्णिनौ - देवतुल्यरूपौ ॥२२-२३॥

यस्याः कृते नरव्याघ्रौ ‡ जीवनाशमितो गतौ ।
राजा पुत्रविहीनश्च स्वर्गं दशरथो गतः ॥ २४ ॥

क्रोधनामकृतप्रज्ञां दृप्तां § सुभगमानिनीम् ।
ऐश्वर्यकामां कैकेयीं अनार्यामार्यरूपिणीम् ॥ २५ ॥

ममैतां मातरं विद्धि नृशंसां पापनिश्चयाम् ।
यतो मूलं हि पश्यामि व्यसनं महदात्मनः ॥ २६ ॥

जीवनाशं—प्राणपीडान्तदुःखम् । इतः—दण्डकारण्ये । अकृतप्रज्ञां—अशिक्षितबुद्धिम् । आर्यरूपिणीं—सात्त्विकीमिव प्रतिभासमानां इदानीम् ॥ २४-२६ ॥

इत्युक्त्वा [1] नरशार्दूलः [2] बाष्पगद्गदया गिरा ।
स निशश्वास ताम्राक्षः नागः क्रुद्ध इव श्वसन् ॥ २७ ॥

---

* देववर्णिनौ—अश्विनीदेवतुल्यौ—**गो** † महर्षिणा—कौसल्यादिनाम्नां, तत्पुत्ररामादिनाम्नां रामादीनां च पूर्वमेव परिचितत्वात्, विशिष्य तादृशसंज्ञावाच्यभूतव्यक्तिपरिचयार्थमेव प्रश्नकरणेन, सुमित्रेति नामनिर्देशाभावेऽपि तत्पुत्रलक्ष्मणशत्रुघ्नद्वारैव परिचयकरणम् । ऋषिरपि 'विशेषं ज्ञातुमिच्छामि' इति खलु पप्रच्छ । ‡ राक्षसभूयिष्ठं दण्डकारण्यं प्रति विवासनात् जीवस्य जीवस्य नाशं—**गो.** 'सजीववधो जातः' इति लोके व्यवहारवत् जीवन्तावेव नाशं गतौ इति वाऽर्थः । § स्वसौन्दर्यादिमत्तां—'सौभाग्यमदगर्विता' (अयो. 9–55) इति खलूक्तम् ।

[1] नृपशार्दूलः—**ङ.** [2] बाष्पोपहतया—**ङ.**

भरद्वाजो महर्षिस्तं ब्रुवन्तं भरतं तदा ।
प्रत्युवाच * महाबुद्धिः [1] इदं वचनमर्थवत् ॥ २८ ॥

ब्रुवन्तमिति । मातरि सकोपं ब्रुवन्तमित्यर्थः ॥ २८ ॥

† न दोषेणावगन्तव्या कैकेयी, भरत ! त्वया ।
रामप्रव्राजनं ह्येतत् सुखोदर्कं भविष्यति ॥ २९ ॥

दोषेण—दुष्टकृत्ययुक्तत्वेनेत्यर्थः । कुतो नावगन्तव्येत्यतः—रामेत्यादि ॥ २९ ॥

देवानां ‡ दानवानां च ऋषीणां [2] भावितात्मनाम् ।
हितमेव भविष्याद्धि रामप्रव्राजनादिह ॥ ३० ॥

हितमेव भविष्यदिति । हि—यस्मात् इह—वने रामप्रव्राजनात् हितमेव—लोकहितमेव सर्वथा भविष्यत्—शत्रन्तम्, विजानीहीति शेषः । एवंवाद ऋषीणां नापूर्वः ॥ ३० ॥

अभिवाद्य तु संसिद्धः कृत्वा चैनं प्रदक्षिणम् ।
आमन्त्र्य भरतः सैन्यं युज्यतामित्यचोदयत् ॥ ३१ ॥

अभिवाद्य तु अत एव संसिद्धः—प्राप्ताशीर्वादानुग्रहः । युज्यतां—सन्नह्यताम्, गमनायेति शेषः ॥ ३१ ॥

ततो वाजिरथान् युक्त्वा दिव्यान् हेमपरिष्कृतान् ।
अध्यारोहत् [3] प्रयाणार्थी बहून् बहुविधो जनः ॥ ३२ ॥

---

* महाबुद्धिः—भाविज्ञः-गो. † दोषेण—दोषवत्तया, नावगन्तव्या ; तस्याः देवप्रेरितत्वात्-गो. रावणवधादिकं जानन् ऋषिरेवमवोचत् । इदं अनन्तरश्लोके स्पष्टम् । ‡ सकललोकहितत्वात् दानवानामपि हितमेव रावणवधादि ।

[1] नृशंसां पापनिश्चयाम्—ङ. [2] च महात्मनाम्—ङ. [3] प्रयाणार्थं—च.

**गजकन्या गजाश्चैव *हेमकक्ष्याः पताकिनः ।**
**जीमूता इव †घर्मान्ते सघोषाः संप्रतस्थिरे ॥ ३३ ॥**

गजकन्याः—करेणवः । सघोषा इति । घण्टाघोषसहिता इत्यर्थः ॥ ३३ ॥

**विविधान्यपि ‡यानानि महान्ति च लघूनि च ।**
**प्रययुः सुमहार्हाणि §पादैरेव पदातयः ॥ ३४ ॥**

सुमहार्हाणि यानान्यारुह्य तद्योग्याः प्रययुः । पदातयस्तु पादैरेव प्रययुः ॥ ३४ ॥

**अथ यानप्रवेकैस्तु कोसल्याप्रमुखाः स्त्रियः ।**
**रामदर्शनकाङ्क्षिण्यः प्रययुर्मुदितास्तदा ॥ ३५ ॥**

'प्रवेकानुत्तमोत्तमाः' ॥ ३५ ॥

**‖[1]चन्द्रार्कतरुणाभासां [2]नियुक्तां शिबिकां शुभाम् ।**
**आस्थाय प्रययौ श्रीमान् भरतः सपरिच्छदः ॥ ३६ ॥**

नियुक्तां, वाहकैरिति शेषः ॥ ३६ ॥

---

* हेमकक्ष्याः — हेममयबन्धनरज्जवः । सघोषाः — घण्टाघोषयुक्ताः—**गो.** † घर्मान्ते—वर्षर्तौ । ‡ यद्वा यानानीति तत्स्था लक्ष्यन्ते—**गो.** § यानैः समं ययुरिति भावः—**गो.** ‖ चन्द्रार्कतरुणाभासां— तरुणचन्द्रार्ककान्तिम् । नियुक्तां—वाहकादिभिराज्ञप्तां—**गो.** चन्द्रार्कतरुणाभासां—तरुणचन्द्रार्कसदृशीं, कचिद्भागे स्फटिकादिनिर्मितां, कचिद्भागे पद्मरागादिनिर्मितामिति यावत्—**ति.** निर्युक्तां—सज्जीकृतां—**ती.**

[1]स चार्क—ङ.　　[2]निर्युक्तां—ङ.

सा प्रयाता महासेना गजवाजि[1]रथाकुला ।
दक्षिणां दिशमावृत्त्य महामेघ इवोत्थितः ॥ ३७ ॥

* वनानि तु व्यतिक्रम्य जुष्टानि मृगपक्षिभिः ।
गङ्गायाः परवेलायां गिरिष्वपि नदीषु च ॥ ३८ ॥

गङ्गायाः परवेलायां—प्रयागे दक्षिणप्रवाहायाः पश्चिमतीरे स्थिता सा सेना वनानि व्यतिक्रम्य प्रयाता बभूवेति योजनीयम् ॥३८॥

†सा संप्रहृष्ट[2]द्विपवाजियोधा
[3]वित्रासयन्ती मृगपक्षिसङ्घान् ।
महद्वनं तत् [4]प्रतिगाहमाना
रराज सेना भरतस्य तत्र ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्विनवतितमः सर्गः

———

घरा(२९)मानः (?) सर्गः ॥ ३९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्विनवतितमः सर्गः

———

* गङ्गायाः दक्षिणवाहिन्याः परवेलायां—पश्चिमभागे, स्थितेति शेषः । महासेना वनानि व्यतिक्रम्य, गिरिषु नदीषु च विश्रम्येति शेषः, ......यद्वा—महासेना गिरिषु नदीषु च वनानि व्यतिक्रम्येति वाऽन्वयः—**गो.** गिरिष्वपि नदीषु च प्रयातेति वाऽन्वयः ।

† भरतस्य सेना संप्रहृष्टद्विजवाजियोधा रराज ।

[1] समाकुला—ङ. च. [2] द्विजवाजियोधा—ङ. द्विपवाजियूथा—च. [3] विवासयन्ती—ङ. [4] प्रविगाहमाना—च.

## त्रिनवतितमः सर्गः

[चित्रकूटागमनम्]

तया महत्या [1] यायिन्या ध्वजिन्या वनवासिनः ।
अर्दिता यूथपा मत्ताः सयूथाः संप्रदुद्रुवुः ॥ १ ॥

अथ भरतेन चित्रकूटे रामाश्रमसमीपे सेनानिवेशनम् ।
तयेत्यादि । यायिन्या—गच्छन्त्या । 'यूथनाथस्तु यूथपः' ॥ १ ॥

ऋक्षाः पृषत[2]सङ्घाश्च रुरवश्च समन्ततः ।
* दृश्यन्ते [3] वनराजीषु गिरिष्वपि नदीषु च ॥ २ ॥

पृषतः—புள்ளிமான் । रुरुः—கலைமான் ॥ २ ॥

स संप्रतस्थे धर्मात्मा प्रीतो दशरथात्मजः ।
वृतो महत्या [4] नादिन्या सेनया चतुरङ्गया ॥ ३ ॥

नादिन्या—घोषवत्या ॥ ३ ॥

सागरौघनिभा सेना भरतस्य महात्मनः ।
महीं संछादयामास प्रावृषि द्यामिवाम्बुदः ॥ ४ ॥

द्यां—आकाशम् ॥ ४ ॥

तुरङ्गौघैरवतता वारणैश्च [5] महाजवैः ।
अनालक्ष्या चिरं कालं तस्मिन् काले बभूव [6] भूः ॥ ५ ॥

अवतता—व्याप्ता ॥ ५ ॥

---

* दृश्यन्ते—अदृश्यन्त-गो.

[1] गच्छन्त्या-ङ.　[2] मुख्याश्च-च.　[3] वनवाटेषु-च.　[4] यायिन्या-ङ.

[5] महाबलैः-च.　[6] सा-च. (सा-चमूः-ति.)

स यात्वा दूरमध्वानं सुपरिश्रान्तवाहनः ।
उवाच भरतः श्रीमान् * वसिष्ठं मन्त्रिणां वरम् ॥ ६ ॥

मन्त्रिणां—मन्त्रविदां वरं—वरिष्ठम् ॥ ६ ॥

यादृशं लक्ष्यते रूपं यथा चैव श्रुतं मया ।
व्यक्तं प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ॥ ७ ॥

यादृशमित्यादि । भरद्वाजः यं देशं—चित्रकूटदेशं यादृशमब्रवीत्, मया च यथा श्रुतं तस्मात्, तथैवैतद्देशस्य रूपं—स्वरूपं लक्ष्यते—अनुभूयते । तस्मात व्यक्तं—निश्चितं देशं—चित्रकूटदेशं प्राप्ताः स्म, छान्दसः सकारलोपः ॥ ७ ॥

अयं गिरिश्चित्रकूटः इयं मन्दाकिनी नदी ।
एतत् प्रकाशतेऽदूरात् नीलमेघनिभं वनम् ॥ ८ ॥

प्राप्तिमेव विवृणोति—अयमित्यादि । अपरोक्षतयाऽनुभूयमान इत्यर्थः । अदूरादिति पदम् ॥ ८ ॥

गिरेः सानूनि रम्याणि चित्रकूटस्य संप्रति ।
वारणैरवमृद्यन्ते मामकैः पर्वतोपमैः ॥ ९ ॥

प्रथमदर्शनत्वात् अवमृद्यन्ते—पीड्यन्त इति यावत् ॥ ९ ॥

मुञ्चन्ति कुसुमान्येते नगाः पर्वतसानुषु ।
नीला इवातपापाये तोयं † तोयधरा घनाः ॥ १० ॥

---

* औचित्यात् मन्त्रशब्दः कार्यविचारे वर्तते—गो. पुरोहितोऽपि सन् वसिष्ठः मन्त्रिप्रधानोऽपीति बालकाण्डोपक्रम एवोक्तम् । † शरत्कालिकमेघस्यापि घनपदवाच्यत्वात् तद्व्यावृत्तये तोयधरा इति ।

अत एवैते नगाः—वृक्षाः पर्वतसानुषु कुसुमानि मुञ्चन्ति । आतपापाये—वर्षाकाले घना इव स्थिता नगा इत्यन्वयः ॥ १० ॥

* किन्नरा[1]चरितं देशं पश्य, शत्रुघ्न ! [2]पर्वतम् ।
[3]मृगैः समन्तादाकीर्णं मकरैरिव सागरम् ॥ ११ ॥

एते मृगगणा भान्ति शीघ्रवेगाः प्रचोदिताः ।
वायुप्रविद्धाः शरदि मेघ[4]राजिरिवाम्बरे ॥ १२ ॥

प्रचोदिता इति । सैनिकैरिति शेषः । वायुना प्रविद्धाः—क्षिप्ताः ॥ १२ ॥

† कुर्वन्ति कुसुमापीडान् [5]वाजिनः सुरभीनमी ।
मेघप्रकाशैः फलकैः दाक्षिणात्याः [6]शशिप्रभान् ॥ १३ ॥

---

* किन्नराचरितदेशरूपं पर्वतमित्यन्वयः । † दक्षिणादिग्भवा नराः मेघप्रकाशैः—ऋक्षादिनीलचर्मपिनद्धतया नीलमेघतुल्यैः फलकैः साधनभूतैः शिरस्सु कुसुमापीडान्—कुसुमसमूहान् यथा कुर्वन्ति यथा धारयन्ति, तथैव अमी वृक्षाः कुसुमापीडान्—कुसुमस्तबकान् शिरस्सु धारयन्ति । दाक्षिणात्या हि फलकान् ऋक्षादिचर्मपिनद्धान् कृत्वा तेषु पुष्पाणि विकीर्य शिरस्सु धारयन्तीति प्रसिद्धिः । यद्वा—अमी भटाः मेघप्रकाशैः फलकैरुपलक्षिताः सन्तः दाक्षिणात्या नरा इव कुसुमापीडान्—कुसुमशेखरान् शिरस्सु कुर्वन्ति—ती. अमी भटाः मेघप्रकाशैः फलकैः—केशबन्धविशेषैः वनसञ्चारार्थं कल्पितैः उपलक्षिताः सन्तः दाक्षिणात्या यथा नराः—दाक्षिणात्या नरा इव शिरस्सु कुसुमापीडान् कुर्वन्ति । दाक्षिणात्या हि केशानुद्धृत्य बध्वा कुसुमापीडैरलङ्कुर्वन्ति—गो. अत्र गोविन्दराजयोजना स्वरसा । परन्तु तत्रापि—'अमी—वृक्षाः' इति व्याख्यानं युक्तम् । भटानां तथा शेखरधारणं तु तद्देशीयानां असंभवि । अतः पुष्पितान् वृक्षान् दृष्ट्वेयमुक्तिः स्यात् । भटानां शिरस्सु पतितानि पुष्पाणि वीक्ष्य वा तथोक्तिः स्यात् ॥

[1] चरितोद्देशं—ङ. [2] पर्वते—च. [3] हयैः—च. [4] जाला इवा—च. [5] शिरस्सु सुरभीनमी—ङ. च. झ. शिरस्सु सुरभीनगाः—ङ. [6] यथा नराः—ङ. च. झ.

कुर्वन्तीत्यादि । दाक्षिणात्याः—दक्षिणदण्डकारण्यभवाः । मेघप्रकाशैः—अतिनिबिडोपाचितप्रत्यग्रपलाशभूयिष्ठतया मेघवदवभासमानैः फलकैः—महास्कन्धशाखिभिरुपलक्षिता अमी वाजिनः—वाजः—फलादि, तदस्त्येषां अस्मिन्निति वा—वृक्षा इति यावत् । वृक्षवर्णनप्रकरणाच्चायमर्थः सिद्धः । अत एते शशिप्रभान् सुरभीन् कुसुमापीडान्—स्तबकशेखरान् कुर्वन्ति—वहन्तीति यावत् । 'आपीडशेखरोत्तंसाऽवतंसाः शिरसि स्रजः' हरिः । नानाऽन्य इहाइ—तदसङ्गतम् ॥ १३ ॥

निष्कूजमिव * भूत्वेदं वनं घोरप्रदर्शनम् ।
अयोध्येव [1] जनाकीर्णा संप्रति प्रतिभाति मा ॥ १४ ॥

निष्कूजं—निश्शब्दं इव ॥ १४ ॥

[2] खुरैरुदीरितो रेणुः [3] दिवं प्रच्छाद्य तिष्ठति ।
तं वहत्यनिलः शीघ्रं † कुर्वन्निव मम प्रियम् ॥ १५ ॥

मम प्रियं कुर्वन्निवेति । चित्रकूटदेशदर्शननिरोधनिवर्तकत्वादित्याशयः ॥ १५ ॥

‡ स्यन्दनांस्तुरगोपेतान् सूतमुख्यैरधिष्ठितान् ।
एतान् संपततः शीघ्रं पश्य, शत्रुघ्न ! कानने ॥ १६ ॥

शीघ्र पतत इति । गच्छत इत्यर्थः । काननभुवः कठिनत्वादित्याशयः ॥ १६ ॥

---

* पुरा एवंभूतं संप्रति असंख्ययोधपूर्णत्वात् जनाकीर्णायोध्येव मा—मां प्रति भाति ॥
† रामाश्रमदर्शनप्रदानादिति भावः—**गो.** ‡ वक्ष्यमाणत्रासहेतुत्वेनाह—स्यन्दनानिति—**गो.**

[1] समाकीर्णा—ङ. [2] खुरैरुद्दीपितो—ङ. [3] दावं—ङ

एतान् वित्रासितान् पश्य बर्हिणः प्रियदर्शनान् ।
*[1] एतमाविशतः शीघ्रं अधिवासं [2] पतत्रिणः ॥ १७ ॥

† अतिमात्रमयं देशः मनोज्ञः प्रतिभाति [3] मा ।
तापसानां निवासोऽयं व्यक्तं स्वर्गपथो यथा ॥ १८ ॥

व्यक्तं—स्पष्टम् । स्वर्गपथः—स्वर्गप्रदेश इत्यर्थः ॥ १८ ॥

‡ मृगा मृगीभिः सहिताः बहवः पृषता वने ।
मनोज्ञरूपा लक्ष्यन्ते कुसुमैरिव चित्रिताः ॥ १९ ॥

पृषतानां सबिन्दुत्वात् कुसुमैः चित्रिता इवेति ॥ १९ ॥

§ साधु ! सैन्याः प्रतिष्ठन्तां विचिन्वन्तु च कानने ।
यथा तौ पुरुषव्याघ्रौ दृश्येते रामलक्ष्मणौ ॥ २० ॥

साधु—सम्यक्—यथोचितम्, 'साधुस्त्रिषूचिते सौम्ये' इति वैजयन्ती । प्रतिष्ठन्तां—प्रस्थापनं कुर्वन्ताम् । किमर्थमित्यतः—विचिन्वन्त्वित्यादि । चिञ् द्विकर्मकः ॥ २० ॥

भरतस्य वचः श्रुत्वा पुरुषाः शस्त्रपाणयः ।
[4] विविशुस्तद्वनं शूराः [5] धूमाग्रं ददृशुस्ततः ॥ २१ ॥

ते समालोक्य ‖ धूमाग्रं ऊचुर्भरतमागताः ।
नामनुष्ये भवत्यग्निः व्यक्तमत्रैव राघवौ ॥ २२ ॥

---

* एतं अधिवासं—वासस्थानं शीघ्रं आविशतः । † अतिमात्रं मनोज्ञः । ‡ पृषता मृगाः इत्यन्वयः । § 'साधु' इति प्रत्येकं पदं तृप्तिसूचकम् । सैन्याः प्रतिष्ठन्तां—अत्रैव प्रतिष्ठिता भवन्तु इति वा ॥ ‖ धूमाग्रमित्यनेन दावानलधूमो व्यावर्त्यते । तेन च 'नामनुष्ये भवत्यग्निः' इति समर्थनं युक्तमेव ।

[1] एवमापततः शैलं–च. [2] पतत्रिणाम्–च. [3] मे–च. [4] व्यचिन्वंस्तद्वनं–ङ. [5] धूमं च–ङ.

धूमाग्रं—धूमशिखां आलोक्य तेन अग्निं तत्साधकत्वेन सामान्यतो राघवौ चानुमाय भरतमूचुः। किमूचुरित्यतः—नामनुष्य इत्यादि। विमतो धूमः-कारणपूर्वकः-कार्यत्वात्, अनेवंत्वे एवंत्वातिपात इत्यनुमानेन अनुभूतधूमबलसिद्धः योऽयमग्निरस्ति विशिष्टः, असौ मनुष्यकारणक एव भवितुमर्हति, अग्निविशेषत्वात्। मनुष्यरूपकारणाभावे तु नायमग्निर्भवितुमर्हति। यश्च तत्कारणं मनुष्यः तौ रामलक्ष्मणावेव व्यक्तं भवितुमर्हतः॥ २२॥

[1]अथ नात्र नरव्याघ्रौ राजपुत्रौ परंतपौ।
[2]अन्ये रामोपमाः सन्ति व्यक्तमत्र तपस्विनः* ॥ २३॥

अथ पुरुषान्तरमूलकत्वस्याग्नेः संभवात्, राजनि च 'सर्वथा राघवमूलकः' इति भीत्या वक्तुमशक्नुवन्तः पक्षान्तरमुपाददते—अथेत्यादि। अत्र—अनुमिताग्निविषये राजपुत्रौ यदि कारणं न भविष्यतः, तदा अन्ये रामोपमास्तपस्विन एवात्र सन्तीति व्यक्तं—'रामस्त्वत्रैव प्रदेशे' इत्याप्तवाक्यात् सिद्धम्। स चानुमिताग्निमूलतपस्विमुखाद्वा सुबोधः आश्रमविशेषो रामस्य इत्युक्तवन्त इत्यर्थः॥ २३॥

तच्छ्रुत्वा भरतस्तेषां वचनं † साधुसम्मतम्।
सैन्यानुवाच [3]सर्वांस्तान् अमित्रबलमर्दनः॥ २४॥

साधुसम्मतमिति। न्यायवित्सम्मतं तेषां तद्वचनं श्रुत्वा तत्र प्रदेशे रामावस्थितिं निश्चित्य सर्वांस्तान् सैन्यानुवाच॥ २४॥

---

* रामस्यात्राभावेऽपि अत्रत्यतपस्विजनानां विचारणे रामावासस्थानं ज्ञास्येतैवेत्याशयः। अत एव 'रामोपमाः' इति। † 'प्रियं हितं च' इतिवत् 'साधु सम्मतं' इति प्रत्येकं पदं वा।

[1] अथवा तौ—ङ. [2] मन्ये—ङ. [3] सर्वान् स्वान्—ङ.

यत्ता भवन्तः तिष्ठन्तु नेतो गन्तव्यमग्रतः ।
अहमेव गमिष्यामि *सुमन्त्रो [1]धृतिरेव च ॥ २५ ॥

किमित्यतः—यत्ता इत्यादि । यत्ताः—सावधानाः भयभक्तियुक्ताः कोलाहलमकुर्वन्तः तिष्ठन्तु, नेतोऽग्रतो गन्तव्यमिति । धृतिरिति अशोकमन्त्रिणो नामान्तरम् ॥ २५ ॥

एवमुक्तास्तत[2]स्सर्वे तत्र तस्थुः समन्ततः ।
भरतो यत्र धूमाग्रं तत्र दृष्टिं समादधात् ॥ २६ ॥
व्यवस्थिता या भरतेन सा चमूः
निरीक्षमाणाऽपि च [3]धूममग्रतः ।
बभूव हृष्टा †नचिरेण [4]जानती
प्रियस्य रामस्य समागमं तदा ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्रिनवतितमः सर्गः

———

व्यवस्थिता—व्यवस्थापितस्थितिका । सार(२७)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे त्रिनवतितमः सर्गः

———

* अहमेव राजस्सु, मन्त्रिषु सुमन्त्र एव, ऋत्विक्षु वसिष्ठ एव । धृतिरिति पाठे सुमन्त्र एवोच्यते—गो. 99 सर्गे 'शत्रुघ्नमनुदर्शयन्' (1), 'शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ' (40) इति कथनात् शत्रुघ्नोऽपि सह गत इति गम्यते । एवं 'सुमन्त्रस्त्वपि शत्रुघ्नमदूरादन्वपद्यत' (3), 'शत्रुघ्नं चाब्रवीत् हृष्टः तानमत्यांश्च सर्वशः' (8), 'ततः सुमन्त्रेण गुहेन चैव' (41), इति दर्शनात् सुमन्त्रादयोऽपि केचन गता इति गम्यते । 'ऋषिं वसिष्ठं संदिश्य मातॄर्मे शीघ्रमानय । इति त्वरितमग्रे स जगाम' (2), 'वसिष्ठः पुरतः कृत्वा दारान् दशरथस्य च । अभिचक्राम तं देशं' (103-1) इति दर्शनात् अन्ते वसिष्ठः कौसल्यादिभिस्सहाऽऽययौ इति गम्यते । जनास्तु यथावकाशं यथाबलं आगताः इति 'रामं ददर्श सहसा जनः' (102-45) इति कथनात् गम्यते ।

† नचिरेण—शीघ्रमेव रामस्य समागमं जानती—प्रतीक्षन्ती ।

[1] गुरुरेव च—ङ. [2] स्सैन्याः—च. [3] भूमिमग्रतः—च. [4] जानकी—ङ.

## चतुर्नवतितमः सर्गः

[चित्रकूटसौन्दर्यम्]

दीर्घकालोषितस्तस्मिन् गिरौ गिरि[1]वनप्रियः ।
वैदेह्याः प्रियमाकाङ्क्षन् स्वं च चित्तं विलोभयन् ॥ १ ॥
*अथ दाशरथिश्चित्रं चित्रकूटमदर्शयत् ।
†भार्याममरसङ्काशः शचीमिव पुरन्दरः ॥ २ ॥

अथ कविः रामस्य चित्रकूटप्राप्तिमुपवर्ण्य पुनर्भरतानयनादि-चित्रकूटप्राप्तिपर्यन्तवृत्तान्तमुपवर्ण्य अथ परमप्रकृतं रामवृत्तान्तमुप-वर्णयति—दीर्घेत्यादि। दैर्घ्यस्य सापेक्षत्वात् द्विदिनापेक्षया मासोऽपि दीर्घकाल इत्युच्यते । वैदेह्याः प्रियं—सन्तोषं आकाङ्क्षन्—स्वैकालम्बनतया घोरं वनमागतवत्यास्तद्दुःखस्य नानाप्रकारत उपशमनीयत्वात् चित्रकूटरमणीयताप्रदर्शनेन तस्याश्चित्तं उपलालयन् । स्वं च चित्तं विलोभयन्निति । स्वचित्तस्यापि प्राप्ताभिषेकनिवर्तनहान्यादि-खिन्नत्वात् तदप्युपलालयन्नित्यर्थः ॥ १-२ ॥

न राज्यात् भ्रंशनं, भद्रे! न सुहृद्भिर्विनाभवः ।
मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम् ॥ ३ ॥

विनाभवः—ऋदोरप् छान्दसः, विप्रयोग इति यावत् ॥ ३ ॥

पश्येममचलं, भद्रे! नानाद्विजगणायुतम् ।
शिखरैः खमिवोद्विद्धैः धातुमद्भिर्विभूषितम् ॥ ४ ॥

खमुद्विद्धैरिति । शीलितादिवत् कर्तरि निष्ठा, वेधकैरिति यावत् , अभ्रंलिहैरित्यर्थः ॥ ४ ॥

---

*अथ—प्रातः कर्तव्यकर्मानुष्ठानानन्तरं ...... दीर्घकालोषितः—मासमात्रमुषितोऽपि—गो. † भार्यां चित्रकूटं अदर्शयत ।

[1] वरप्रियः—च.

केचिद्रजतसङ्काशाः केचित् क्षतजसन्निभाः ।
पीतमाञ्जिष्ठवर्णाश्च * केचिन्मणिवरप्रभाः ॥ ५ ॥

क्षतजं—रक्तम् । पीतवर्णा माञ्जिष्ठवर्णाश्च तथा—மஞ்சாடி விளா ॥ ५ ॥

पुष्यार्क[1]केतकाभाश्च केचिज्ज्योतीरसप्रभाः ।
विराजन्तेऽचलेन्द्रस्य देशा [2]धातुविभूषिताः ॥ ६ ॥

पुष्यः—पुष्यरागः । अर्कः—स्फटिकः 'अर्कः स्फटिकसूर्ययोः' । ज्योतिः—नक्षत्रम् । रसः—पारदः ॥ ६ ॥

† नानामृग[3]गणद्वीपितरक्ष्वृक्षगणैर्वृतः ।
अदुष्टैर्भात्ययं शैलः बहुपक्षि[4]समायुतः ॥ ७ ॥

द्वीपी—கொடிப்புலி । तरक्षुः—வேங்கைப்புலி । अदुष्टैः—हिंसादिदोषरहितैः ; तपस्विनां वैभवादिति शेषः ॥ ७ ॥

‡ आम्रजम्ब्वसनैः लोध्रैः प्रियालैः पनसैर्धवैः ।
अङ्कोलैर्भव्य[5]तिनिशैः बिल्वतिन्दुकवेणुभिः ॥ ८ ॥

'पीतसारोऽसनो मतः' வேங்கை । राजादनं प्रियालः—முறளி । 'धवोऽश्वयुधुरः' கமை । अङ्कोलः—அழிஞ்சில் । 'भव्यो न्युब्जः'—தம்மாக்கை । तिनिशः—स्यन्दनः—குமிசு ॥

काश्मर्यरिष्ट[6]वरुणैः मधूकैस्तिलकैस्तथा ।
बदर्यामलकैर्नीपैः वेत्रधन्वनबीजकैः ॥ ९ ॥

---

* मणिवरप्रभाः—इन्द्रनीलप्रभाः—गो. † नानाविधानां मृगाणां गणैः—मृगाणां बाहुल्यात् प्रत्येकमत्रापि गणपदप्रयोगः स्यात् । ‡ अस्य सर्वस्यापि 'एवमादिभिराकीर्णः' इत्युत्तरत्रान्वयः ।

[1] कनका—ङ. [2] स्वानु—ङ. [3] गणैः—च. [4] समाकुलः—च. [5] तिमिशैः—ङ. [6] वरणैः—ङ.

अरिष्टः—पिचुमन्दः—வேம்பு । वरुणः—वारुणसेतुः—பாவிலங்கை । धन्वनाः—इन्द्रवृक्षाः—மருது । बीजकाः—बीजपूराः दाडिमादयः ॥ ९ ॥

पुष्पवद्भिः फलोपेतैः छायावद्भिर्मनोरमैः ।
एवमादिभिराकीर्णः श्रियं पुष्यत्ययं गिरिः ॥ १० ॥

पुष्यति—वर्धयति ॥ १० ॥

शैलप्रस्थेषु रम्येषु पश्येमान् [1] रोमहर्षणान् ।
किन्नरान् द्वंद्वशः, भद्रे! रममाणान् मनस्विनः ॥ ११ ॥
शाखावसक्तान् * खड्गांश्च प्रवराण्यम्बराणि च ।
पश्य † विद्याधरस्त्रीणां क्रीडोद्देशान् मनोरमान् ॥ १२ ॥

खड्गानिति । किन्नराणामिति शेषः ॥ १२ ॥

जलप्रपातैरुद्भेदैः निष्यन्दैश्च [2] क्वचित् क्वचित् ।
स्रवद्भिर्भात्ययं शैलः स्रवन्मद इव द्विपः ॥ १३ ॥

जलप्रपातैः, उन्नतगिरिप्रदेशादिति शेषः । उद्भेदैः—भुवमुद्भिद्य प्रवर्तमानैः—ஊற்று । निष्यन्दैः—அருவி । स्रवद्भिः—प्रवहद्भिः, साधारणमिदम् ॥ १३ ॥

गुहासमीरणो गन्धान् नानापुष्प[3]भवान् वहन् ।
‡ घ्राणतर्पणमभ्येत्य कं नरं न प्रहर्षयेत्! ॥ १४ ॥

गुहाद्वारप्रवृत्तः समीरणः—गुहासमीरणः, गवाक्षवायुवत् । वहन्निति हेतौ शतृप्रत्ययः । अत एव हेतोः घ्राणतर्पणम् अभ्येत्य—प्राप्य स्थितं कं नरं—कं पुरुषं अयं गिरिः न प्रहर्षयेत् ॥

---

* खड्गादीनि विद्याधराणामेव—गो. † विद्याधरस्त्रीणां क्रीडोद्देशान् ।
‡ घ्राणतर्पणमिति क्रियाविशेषणम्—गो.

[1] कामहर्षणान्—ङ. च. [2] पृथक्पृथक्—ङ. [3] भरान् बहून्—ङ.

यदीह शरदोऽनेकाः त्वया सार्धं, अनिन्दिते !
लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधक्ष्यति ॥ १५ ॥
शरदः— संवत्सराः ॥ १५ ॥

बहुपुष्पफले रम्ये नानाद्विजगणायुते ।
विचित्रशिखरे ह्यस्मिन् रतवानस्मि, भामिनि ! ॥ १६ ॥
अनेन वनवासेन मया प्राप्तं फलद्वयम् ।
पितुश्चानृणता धर्मे भरतस्य प्रियं तथा ॥ १७ ॥
धर्मे—सत्यपरिपालनलक्षणे ॥ १७ ॥

वैदेहि ! रमसे कच्चित् ? चित्रकूटे मया सह ।
पश्यन्ती विविधान् * भावान् † मनोवाक्काय[1]संयता ॥
मन आदयः संयताः यस्याः सा तथा ॥ १८ ॥

‡ इदमेवामृतं प्राहुः, राज्ञि ! राजर्षयः परे ।
वनवासं भवार्थाय प्रेत्य मे प्रपितामहाः ॥ १९ ॥
भवार्थायेति । संसारक्लेशनिवृत्त्यर्थमित्यर्थः ॥ १९ ॥

---

* भावान्—विभावान् । यद्वा भावाः— किन्नरमृगादीनां चेष्टाः—**गो**. † रमणस्य केवलैन्द्रियिकत्वव्यावृत्तये— मनोवाक्कायसंयतेति । ‡ वनवासं—वनवासरूपं इदं अमृतं—अमृतवद्भोग्यं वस्तु, मे प्रपितामहाः—मत्पितृवंश्याः परे—पूर्वे राजर्षयः प्रेत्य—प्रारब्धशरीरवियोगं प्राप्य भवार्थाय—संसारविनाशायेत्यर्थः, ' तमसे दीपः ', ' मशकार्थो धूपः ' इत्यादिवन्निर्देशः, प्राहुः—प्रोचुः । यद्वा—इदमिति लिङ्गव्यत्यय आर्षः । इमं वनवासं—वानप्रस्थोचितनियमसहितं वनवासं अमृतं—मोक्षसाधनं प्राहुः—**गो.** वनवासं प्रेत्य एतच्छरीरत्यागोत्तरं भवार्थाय—भवः शिवः—हिरण्यगर्भः, तल्लोकप्राप्तिरूपायार्थाय—प्रयोजनायेत्येके—**ति**. हे राज्ञि ! भवार्थाय—लोककल्याणाय, प्रवृत्ता इति शेषः, परे उत्कृष्टाः राजर्षयः मे प्रपितामहाः— मनुप्रभृतयः प्रेत्य—विचार्य इदं सनियमं वनवासं अमृतं प्राहुः । सर्वनाम्नां उद्देश्यविधेयान्यतरलिङ्गतेति नियमात् क्लीबता—**रा**. भवः—संसारः, तस्य अर्थाय—निवृत्तये, ' अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ' इत्यप्यन्ये ॥

[1] सम्मतान्—**च**.

शिलाः शैलस्य शोभन्ते विशालाः शतशोऽभितः ।
बहुला बहुलैर्वर्णैः नीलपीतासितारुणैः ॥ २० ॥

अभित इति पदम् । अरुणैरुपलक्षिताः शैलाः शोभन्त इत्यन्वयः ॥ २० ॥

निशि भान्त्यचलेन्द्रस्य हुताशनशिखा इव ।
ओषध्यः स्वप्रभा[1]लक्ष्याः भ्राजमानाः सहस्रशः ॥ २१ ॥

ओषध्यो भान्तीत्यन्वयः ॥ २१ ॥

केचित्[2] क्षयनिभा देशाः केचिदुद्यानसन्निभाः ।
केचिदेकशिला भान्ति पर्वतस्यास्य, भामिनि ! ॥ २२ ॥

क्षयनिभाः—गृहसदृशाः, अतिनिबिडबहुपलाशवृक्षकत्वादिति शेषः । उद्यानसन्निभा इति । चम्पकपुन्नागादिवृक्षबाहुल्यात् । एकशिला—अनेकजनावस्थानक्षमसमतलैकशिलायुक्ता इत्यर्थः ॥२२॥

भित्त्वेव वसुधां भाति चित्रकूटः समुत्थितः ।
चित्रकूटस्य कूटोऽसौ दृश्यते सर्वतः[3] शुभः ॥ २३ ॥
कुष्ठपुन्नागस्थगरभूर्जपत्रोत्तरच्छदान्* ।
कामिनां स्वास्तरान् पश्य कुशेशयदलायुतान् ॥ २४ ॥

'व्याधिः कुष्ठं पारिभाव्यम्'—கொட்டி । स्थगरः—पुत्रकः—தகரம் । कुशेशयं—पद्मम् ॥ २४ ॥

मृदिताश्चापविद्धाश्च दृश्यन्ते कमलस्रजः ।
कामिभिः, वनिते ! पश्य फलानि विविधानि च ॥ २५ ॥

---

* कुष्ठादीनां पत्राणि उत्तरच्छदाः—उपर्यास्तरणानि येषां ते—तादृशान् ॥ फलानीत्यत्रापि मृदितानि, अपविद्धानि इति योज्यम्—गो.

[1] लक्ष्या—च. [2] वेश्म—ङ. [3] शिवः—ङ.

*वस्वोकसारां नलिनीं अत्येतीवोत्तरान् कुरून् ।
पर्वतश्चित्रकूटोऽसौ बहुमूलफलोदकः ॥ २६ ॥

वस्वोकसारा—अलका । नलिनी—शक्रपुरी, 'वस्वोकसारा श्रीदस्य शक्रस्य नलिनी पुरी'—हरिः ॥ २६ ॥

[1]इमं तु कालं, वनिते! विजह्रिवान्
त्वया च, सीते! सह लक्ष्मणेन ।
रतिं प्रपत्स्ये † कुलधर्मवर्धनीं
सतां पथि स्वैर्नियमैः परैः स्थितः ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुर्नवतितमः सर्गः

———

इममित्यादि । हे वनिते—सीते! परैः—श्रेष्ठैः स्वैः नियमैः सह सतां पथि स्थितः सन् इमं कालं–चतुर्दशसमासम्मितकालं त्वया लक्ष्मणेन च सह इह–चित्रकूटे विजह्रिवान्–हरतेर्लिटः क्वसुः, इडार्षः–प्राप्तविहारवानहं कुलधर्मवर्धनीं त्वां इहापि प्राप्य इह रतिं–सौख्यं प्रपत्स्ये । दारु(२८)मानः ‡ सर्गः ॥ २७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चतुर्नवतितमः सर्गः

———

* वस्वौकसारा—पूर्वदिगवस्थिता शक्रपुरी, 'वस्वौकसारा शक्रस्य पूर्वस्यां दिशि संस्थिता' इति विष्णुपुराणवचनात् । यद्वा—वस्वौकसारा—कुबेरपुरी, 'पुरी वस्वौकसारा स्यात् विमानं पुष्पकोऽस्त्रियाम्' इति यादवः । नलिनीं—मानससरसीं, सौगन्धिकाख्यसरसीं वा–**गो.** † एवं कालं—चतुर्दशवर्षावधिकालं सतां—राजर्षीणां स्वैर्नियमैः सह स्थितस्सन् त्वया लक्ष्मणेन च सह विजह्रिवान् यदि तदा कुलधर्मवर्धनीं—सत्यप्रतिपालनरूपधर्मवर्धनीं रतिं प्रीतिं प्रपत्स्ये–**ती. ति.** इह—चित्रकूटे विजह्रिवान्—विहृतवान् । पश्चात् कुलधर्मवर्धनीं—कुलधर्मः प्रजापालनं, तद्वर्धनीं रतिं—राज्यसुखं प्रपत्स्ये–**गो.** ‡ अष्टाविंशतिश्लोका अत्रेति कतकः–**ति.**

[1] एवं तु कालं–ङ.

## पञ्चनवतितमः सर्गः

### [मन्दाकिनीसौन्दर्यम्]

**अथ शैलाद्विनिष्क्रम्य मैथिलीं कोसलेश्वरः।**
**अदर्शयच्छुभजलां रम्यां मन्दाकिनीं नदीम् ॥ १ ॥**

अथ नदीप्रदर्शनेन सीताया उपलालनम्। अथेत्यादि। शैलाद्विनिष्क्रम्येति। एतावत्कालमनुभावितात् पर्वतात् निष्क्रम्य—अपसृत्य ॥ १ ॥

**अब्रवीच्च वरारोहां चारुचन्द्रनिभाननाम्।**
**विदेहराजस्य सुतां रामो राजीवलोचनः ॥ २ ॥**

वरारोहां—उत्तमस्त्रीम् । २ ॥

***विचित्रपुलिनां रम्यां हंससारससेविताम्।**
**[1]कुसुमैरुप[2]संपन्नां पश्य मन्दाकिनीं नदीम् ॥ ३ ॥**

कुसुमैः—पद्मादिकुसुमैः † ॥ ३ ॥

**नानाविधैस्तीररुहैः वृतां पुष्पफलद्रुमैः।**
**राजन्तीं राजराजस्य नलिनीमिव सर्वतः ॥ ४ ॥**

तीरे रोहन्तीति तीररुहाः, इगुपधात् कः। राजराजस्य नलिनी सौगन्धिकसरसी ॥ ४ ॥

---

* पुलिनस्य विचित्रत्वं नवोलपालङ्कृतत्वात्—गो. वस्तुतस्तु विचित्रजलप्रवाहैर्विचित्रितत्वादिति युक्तम्। † वृक्षेभ्यः पतितैश्च।

[1] कमलै—ङ. [2] संछन्नां—ङ.

मृगयूथनिपीतानि कलुषाम्भांसि सांप्रतम् ।
तीर्थानि रमणीयानि *[1] रतिं सञ्जनयन्ति मे ॥ ५ ॥

मृगयूथनिपीतानि, अत एव सांप्रतं कलुषाम्भांसि। तीर्थं—जलावतारः ॥ ५ ॥

जटाजिनधराः काले वल्कलोत्तरवाससः ।
ऋषयस्त्ववगाहन्ते नदीं मन्दाकिनीं, प्रिये ! ॥ ६ ॥
आदित्यमुपतिष्ठन्ते नियमादूर्ध्वबाहवः ।
एतेऽपरे, विशालाक्षि ! मुनयः संशितव्रताः ॥ ७ ॥

उपतिष्ठन्त इति । 'उपान्मन्त्रकरणे' इत्यात्मनेपदम् नियमात् हेतोः संशितव्रताः अपरे एते मुनयः प्रकाशन्ते, जपपरा इति शेषः ॥ ७ ॥

† मारुतोद्धूतशिखरैः प्रनृत्त इव पर्वतः ।
पादपैः पत्रपुष्पाणि सृजद्भिरभितो नदीम् ॥ ८ ॥

प्रनृत्तः—आदिकर्मणि क्तः, नृत्तं कर्तुमुपक्रान्त इवेत्यर्थः ॥

क्वचिन्मणिनिकाशोदां क्वचित्पुलिनशालिनीम् ।
क्वचित् सिद्धजनाकीर्णां पश्य मन्दाकिनीं नदीम् ॥ ९ ॥

मणिः—मुक्तादिः । ‡ उदभाव आर्षः ॥ ९ ॥

---

* रतिं—अवगाहनविषयां प्रीतिम्—गो. † मारुतैः उद्धतानि शिखराणि—अग्राणि येषां ते, तादृशैः पादपैः । ‡ मणिनिकाशोदामित्यत्र उदकशब्दस्य इति शेषः ।

[1] मैथिलि प्रतिभान्ति मे—ङ.

*निर्धूतान् वायुना पश्य विततान् पुष्पसञ्चयान् ।
पोप्लूयमानानपरान् [1]पश्येहाचलमध्यमे ! ॥ १० ॥

अम्भसि पोप्लूयमानान्—पुनःपुनः प्लवमानान् पुष्पसञ्चयान् पश्य । अचलमध्यमे—कृशत्वात् चलनाशक्तमध्यमवति ! ॥ १० ॥

† [2]तांश्चातिवल्गुवचसः रथाङ्गाह्वयना द्विजाः ।
अधिरोहन्ति, कल्याणि ! विकूजन्तः शुभा गिरः ॥ ११ ॥

आह्वयनं—नामधेयम्, आह्वयतेऽनेनेति आह्वयनं, आत्वाभाव आह्वयतेरार्षः ॥ ११ ॥

दर्शनं चित्रकूटस्य मन्दाकिन्याश्च, शोभने !
अधिकं पुरवासाच्च ‡मन्ये च तव दर्शनात् ॥ १२ ॥

तव दर्शनाच्च अधिकं—अधिकसुखावहम् ॥ १२ ॥

विधूतकलमषैः सिद्धैः तपोदमशमान्वितैः ।
नित्यविक्षोभितजलां विगाहस्व मया सह ॥ १३ ॥

---

* वायुना निर्धूतान् विततान्—तीरे व्याप्तान् पुष्पसञ्चयान् पश्य । जलमध्यगान् पोप्लूयमानान् भृशं पुनःपुनर्वा प्लवमानान् अपरान् पुष्पसंचयांश्च त्वं पश्य—**गो.**

† रथाङ्गाह्वयनाः—चक्राह्वयाः द्विजाः—चक्रवाकाः तान्—पुष्पसंचयान् अधिरोहन्ति—शयनमारोहन्तीत्यर्थः—**गो.** रथाङ्ग—चक्रं, तद्वाचकः शब्दः आह्वयने—नामनि येषामिति विग्रहः । अधिरोहन्ति, पुलिनानीति शेषः—**ति.** ‡ तव दर्शनात् अधिकं मन्ये, भवत्या असन्निधाने तु न तथेति भावः । चकारः एवकारार्थको वा, तव दर्शनादेव अधिकं मन्ये ।

[1] पश्य त्वं जलमध्यगान्—**ङ.** पश्य त्वं तनुमध्यमे !—**च.** [2] पश्यैतान्—**ङ.** पश्यतव—**च.**

*सखीव चावगाहस्व, सीते! मन्दाकिनीं नदीम् ।
कमलान्यवमज्जन्ती† पुष्कराणि च, भामिनि! ॥ १४ ॥

सखीवेति । मन्दाकिन्या इति शेषः । कमलपुष्करे—रक्तसित-पद्मे । अवमज्जन्ती—अवक्षिपन्ती सती अवगाहस्वेत्यन्वयः ॥ १४ ॥

‡त्वं पौरजनवत् व्यालान् अयोध्यामिव पर्वतम् ।
मन्यस्व, वनिते! नित्यं सरयूवदिमां नदीम् ॥ १५ ॥

पौरजनवत्—कैकेय्यादिजनवत् व्यालान्—सर्पान् मन्यस्व ॥

§लक्ष्मणश्चापि धर्मात्मा मन्निदेशे व्यवस्थितः ।
त्वं चानुकूला, वैदेहि! प्रीतिं जनयतो मम ॥ १६ ॥

जनयतः—संपादयतः ॥ १६ ॥

उपस्पृशंस्त्रिषवणं मधुमूलफलाशनः ।
नायोध्यायै न राज्याय स्पृहयेऽद्य त्वया सह‖ ॥ १७ ॥

---

* संकोचादिकं विहाय अवगाहस्व, इति तात्पर्येण वा सखीवेत्युक्तिः । † अवमज्जन्ती—अवमज्जयन्ती-गो. ‡ त्वं व्यालान् वनचरजन्तून् पौरजनवत् पश्य, पौरजनप्रीतिं व्यालेषु कुर्वित्यर्थः । एवमुत्तरत्रापि । अतः पौरजनाद्यनवलोकनक्लेशो न कार्य इति भावः-गो. § सौभ्रात्रं, अनुकूलभार्यात्वं च सौख्यरसायनमिति भावः-गो. ‖ त्वया सह त्रिषवणमुपस्पृशन्—इत्यन्वयः । अयोध्यायै न स्पृहये—अयोध्यागमनं नापेक्ष इति भावः ।

*इमां हि रम्यां [1] मृगयूथशालिनीं
निपीततोयां गजसिंहवानरैः ।
[2] सुपुष्पितैः पुष्पवनैरलङ्कृतां
न सोऽस्ति यः स्यादगतक्लमः सुखी ॥ १८ ॥

पुष्पवनैरलङ्कृतामिमां अवगाह्य यो गतक्लमः सुखी च न स्यात्, स नास्तीति योजनीयम् ॥ १८ ॥

इतीव रामो बहु † सङ्गतं वचः
प्रियासहायः सरितं प्रति ब्रुवन् ।
चचार रम्यं नयनाञ्जनप्रभं
स चित्रकूटं रघुवंशवर्धनः ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चनवतितमः सर्गः

---

बहु ब्रुवन्नित्युक्ते असङ्गताव्यावृत्त्या—सङ्गतमिति । नयनयोरञ्जनं नयनाञ्जनं, तद्वन्नीलप्रभमित्यर्थः । चित्रकूटं चचार—चित्रकूटे विहृतवानित्यर्थः । षन्य(१९)मानः सर्गः ॥ १९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चनवतितमः सर्गः

---

* अत्र 'उपस्पृशन्' इत्यनुषज्यते—गो. † संगतं—प्रसक्तानुप्रसक्तं—गो.

[1] मृगयूथलोलितां—ङ. गजयूथलोडितां—च. [2] सुपुष्पितां पुष्पफलै—ङ. सुपुष्पितां पुष्पभरै—च.

## प्रक्षिप्तः सर्गः

### [काकासुरवृत्तान्तः]

रामस्तु नलिनीं रम्यां चित्रकूटं च पर्वतम् ।
उत्तरं तु गिरेः पादे चित्रकूटस्य राघवः ॥ १ ॥
ददर्श कन्दरं रम्यं शिलाधातुसमन्वितम् ।
सुखप्रसेकैस्तरुभिः पुष्पभारावलम्बिभिः ॥ २ ॥
संवृतं च रहस्यं च मत्तद्विजगणायुतम् ।
तद्दृष्ट्वा सर्वभूतानां मनोदृष्टिहरं वनम् ॥ ३ ॥
उवाच सीतां काकुत्स्थः वनदर्शनविस्मितः ।
वैदेहि ! रमते चक्षुः तवास्मिन् गिरिकन्दरे ? ॥ ४ ॥
परिश्रमविघातार्थं साधु तावदिहास्यताम् ।
त्वदर्थमिह विन्यस्ता त्वियं श्लक्ष्णसमा शिला ॥ ५ ॥
यस्याः पार्श्वे तरुः पुष्पैः प्रविष्ट इव केसरैः ।
राघवेणैवमुक्ता सा सीता प्रकृतिदक्षिणा ॥ ६ ॥
उवाच प्रणयस्निग्धं इदं श्लक्ष्णतरं वचः ।
अवश्यकार्यं वचनं तव मे, रघुनन्दन ! ॥ ७ ॥
बहुशो भ्रमितश्चाद्य तव चैवं मनोरथः ।
एवमुक्त्वा वरारोहा शिलां तामुपसर्प ह ॥ ८ ॥
सह भर्त्राऽनवद्याङ्गी रन्तुकामा मनस्विनी ।
तामेवं ब्रुवतीं सीतां रामो वचनमब्रवीत् ॥ ९ ॥
रम्यं पश्यसि भूतार्थं वनं पुष्पितपादपम् ।
पश्य, देवि ! गिरौ रम्ये रम्यपुष्पाङ्कितानिमान् ॥ १० ॥
गजदन्तक्षतान् वृक्षान् पश्य निर्यासवर्षिणः ।
झिल्लिकाविरुतैः दीर्घैः रुदतीव समन्ततः ॥ ११ ॥
पुत्रप्रियोऽसौ शकुनिः पुत्र पुत्रेति भाषते ।
मधुरां करुणां वाचं पुरेव जननी मम ॥ १२ ॥
विहगो भृङ्गराजोऽयं सालस्कन्धसमास्थितः ।
सङ्गीतमिव कुर्वाणः कोकिलेनावकूजति ॥ १३ ॥
अयं वा बालकः शङ्के कोकिलानां विहङ्गमः ।
सुखबद्धमसम्बद्धं तथा ह्येष प्रभाषते ॥ १४ ॥

एषा कुसुमिता नूनं पुष्पभारानता लता ।
दृश्यते मामिवात्यर्थं श्रमाद् , देवि त्वमाश्रिता ॥ १५ ॥

एवमुक्ता प्रियस्याङ्के मैथिली प्रियभाषिणी ।
भूयस्तरां त्वनिन्द्याङ्गी समारोहत भामिनी ॥ १६ ॥

अङ्के तु परिवर्तन्ती सीता सुरसुतोपमा ।
हर्षयामास रामस्य मनो मनसिजार्पितम् ॥ १७ ॥

स निघृष्याङ्गुलिं रामः धौते मनश्शिलोच्चये ।
चकार तिलकं तस्याः ललाटे रुचिरं तदा ॥ १८ ॥

बालार्कसमवर्णेन तेजसा गिरिधातुना ।
चकासे विनिविष्टेन ससन्ध्येव निशा सिता ॥ १९ ॥

केसरस्य च पुष्पाणि करेणामृष राघवः ।
अलकं पूरयामास मैथिल्याः प्रीतमानसः ॥ २० ॥

अभिरम्य तदा तस्यां शिलायां रघुनन्दनः ।
अन्वीयमानो वैदेह्या देशमन्यं जगाम ह ॥ २१ ॥

विचरन्ती तदा सीता ददर्श हरियूथपम् ।
वने बहुमृगाकीर्णे वित्रस्ता राममाश्लिषत् ॥ २२ ॥

रामस्तां परिरब्धाङ्गीं परिरभ्य महाभुजः ।
सान्त्वयामास वामोरूं अवभर्त्स्यांश्च वानरम् ॥ २३ ॥

मनश्शिलायास्तिलकः सीतायाः सोऽथ वक्षसि ।
समदृश्यत संक्रान्तः रामस्य विपुलौजसः ॥ २४ ॥

प्रजहास तदा सीता गते वानरपुङ्गवे ।
दृष्ट्वा भर्तरि संक्रान्तं अपाङ्गं समनश्शिलम् ॥ २५ ॥

नातिदूरे त्वशोकानां प्रदीप्तमिव काननम् ।
ददर्श पुष्पस्तबकैः तर्जद्भिरिव वानरैः ॥ २६ ॥

वैदेही त्वब्रवीत् रामं अशोककुसुमार्थिनी ।
वयं तदभिगच्छामः वनं, इक्ष्वाकुनन्दन ! ॥ २७ ॥

तस्याः प्रिये स्थितो रामः देव्या दिव्यार्थरूपया ।
सहितस्तदशोकानां विशोकः प्रययौ वनम् ॥ २८ ॥

तदशोकवनं रामः सभार्यो व्यचरत्तदा ।
गिरिपुत्र्या पिनाकीव सह हैमवतं वनम् ॥ २९ ॥

तावन्योन्यमशोकस्य पुष्पैः पल्लवधारिभिः ।
समलंचक्रतुरुभौ कामिनौ नीललोहितौ ॥ ३० ॥
आबद्धवनमालौ तौ कृतापीडावतंसकौ ।
भार्यापती तावचलं शोभयांचक्रतुर्भृशम् ॥ ३१ ॥
एवं स विविधान् देशान् दर्शयित्वा प्रियां प्रियः ।
आजगामाश्रमपदं सुसंश्लिष्टमलङ्कृतम् ॥ ३२ ॥
प्रत्युज्जगाम तं भ्राता लक्ष्मणो गुरुवत्सलः ।
दर्शयन् विविधं धर्मं सौमित्रिः सुकृतं तदा ॥ ३३ ॥
शुद्धबाणहतांस्तत्र मेध्यान् कृष्णमृगान् दश ।
राशीकृतान् शुष्यमाणान् अन्यान् कांश्चन कांश्चन ॥ ३४ ॥
तद्दृष्ट्वा कर्म सौमित्रेः भ्राता प्रीतोऽभवत्तदा ।
क्रियन्तां बलयश्चेति रामः सीतामथान्वशात ॥ ३५ ॥
अग्रं प्रदाय भूतेभ्यः सीताऽथ वरवर्णिनी ।
तयोरुपाददत् भ्रात्रोः मधु मांसं च तत् भृशम् ॥ ३६ ॥
तयोस्तुष्टिमथोत्पाद्य वीरयोः कृतशौचयोः ।
विधिवज्जानकी पश्चात् चक्रे सा प्राणधारणम् ॥ ३७ ॥
शिष्टं मांसं निकृष्टं यत् शोषणायावकल्पितम् ।
तत् रामवचनात् सीता काकेभ्यः पर्यरक्षत ॥ ३८ ॥
तां ददर्श तदा भर्ता काकेनायासितां दृढम् ।
यस्या हारान्तरचरः कामचारी विहङ्गमः ॥ ३९ ॥
काकेनारोध्यमानां तां सा मुमोह तदातुरम् ।
सा चुकोपानवद्याङ्गी भर्तृप्रणयदर्पिता ॥ ४० ॥
इतश्चेतश्च तां काको वारयन्तीं पुनःपुनः ।
पक्षतुण्डनखाग्रैश्च कोपयामास कोपनाम् ॥ ४१ ॥
तस्याः प्रस्फुरमाणोष्ठं भ्रुकुटीपुटसूचितम् ।
मुखमालोक्य काकुत्स्थः तं काकं प्रत्यषेधयत् ॥ ४२ ॥
स धृष्टमानो विहगः रामवाक्यमचिन्तयन् ।
सीतामभिपपातैव ततश्चुक्रोध राघवः ॥ ४३ ॥
सोऽभिमन्त्र्य शरैषीकां ऐषीकास्त्रेण वीर्यवान् ।
काकं तमभिसन्धाय ससर्ज पुरुषर्षभः ॥ ४४ ॥

स तेनाभिद्रुतः काकः त्रीन् लोकान् पर्यगात् ततः ।
देवैर्दत्तवरः पक्षी शरान्तरचरो लघुः ॥ ४५ ॥
यत्र यत्रागमत् काकः तत्र तत्र ददर्श ह ।
इषीकां भूतसङ्काशां स रामं पुनरागमत् ॥ ४६ ॥
स मूर्ध्ना न्यपतत् काकः राघवस्य महात्मनः ।
सीतायास्तत्र पश्यन्त्याः मानुषीमैरयत् गिरम् ॥ ४७ ॥
प्रसादं कुरु मे, राम ! प्राणैः सामग्र्यमस्तु मे ।
अस्त्रस्यास्य प्रभावेण शरणं न लभे क्वचित् ॥ ४८ ॥
तं काकमब्रवीत् रामः पादयोः शिरसा गतम् ।
सानुक्रोशतया धीमान् इदं वचनमर्थवत् ॥ ४९ ॥
मया रोषपरीतेन सीताप्रियहितार्थिना ।
अस्त्रमेतत् समाधाय त्वद्वधायाभिमन्त्रितम् ॥ ५० ॥
यत्तु मे चरणौ मूर्ध्ना गतस्त्वं जीवितेप्सया ।
अत्रास्त्यवेक्षा त्वयि मे रक्ष्यो हि शरणागतः ॥ ५१ ॥
अमोघं क्रियतामस्त्रं एकमङ्गं परित्यज ।
किमङ्गं शातयतु ते शरैषीका ब्रवीहि मे ॥ ५२ ॥
एतावद्धि मया शक्यं तव कर्तुं प्रियं, खग !
एकाङ्गहीनं क्षेमेण जीवितं मरणाद्वरम् ॥ ५३ ॥
एवमुक्तस्तु रामेण संप्रधार्य स वायसः ।
अभ्यगच्छत् द्वयोरक्ष्णः त्यागमेकस्य पण्डितः ॥ ५४ ॥
सोऽब्रवीत् राघवं काकः नेत्रमेकं त्यजाम्यहम् ।
एकनेत्रोऽपि जीवेयं त्वत्प्रसादात्, नराधिप ! ॥ ५५ ॥
रामानुज्ञातमस्त्रं तत् काकस्य नयनेऽपतत् ।
वैदेही विस्मिता तत्र काकस्य नयने हृते ॥ ५६ ॥
निपत्य शिरसा काकः जगामाशु यथेप्सितम् ।
लक्ष्मणानुचरो रामः चकारानन्तरक्रियाः ॥ ५७ ॥

इति प्रक्षिप्तः सर्गः

## षण्णवतितमः सर्गः

[लक्ष्मणसंरम्भः]

तां तथा दर्शयित्वा तु मैथिलीं गिरिनिम्नगाम् ।
निषसाद गिरिप्रस्थे सीतां *मांसेन छन्दयन् ॥ १ ॥

एवं सीतामात्मानं च गिरिनदीदर्शनादिना वीतशोकं संपाद्यावतिष्ठमानेन रामेण कस्मिंश्चिद्दिवसे भरतसेनोपलब्धिः । तां तथेत्यादि । गिरेः निम्नगा —गिरिनिम्नगा —मन्दाकिनीति यावत् । मांसेनेति । मांसविशेषप्रदर्शनेनेत्यर्थः । छन्दयन्—सान्त्वयन्—लालयन्निति यावत् ॥ १ ॥

इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना ।
एवमास्ते स धर्मात्मा सीतया सह राघवः ॥ २ ॥

तस्यैव प्रकारः—इदमित्यादि । 'इदं अग्निना निष्टप्तं सत् तावता स्वादु भवति' इत्येवं वदन्नास्ते इति योजना ॥ २ ॥

तथा तत्राऽऽसतस्तस्य [1] भरतस्योपयायिनः ।
सैन्यरेणुश्च शब्दश्च प्रादुरास्तां नभःस्पृशौ ॥ ३ ॥

तथेत्यादि । तथा तत्र गिरिप्रस्थे आसतः—आसेः छान्दसः शतृप्रत्ययः, आसीनस्येति यावत् , तस्य रामस्य पुरस्तात् उपयायिनो भरतस्य सैन्यरेणवः सैन्यशब्दश्चेति उभावपि नभःस्पृशौ प्रादुरास्तां—प्रादुर्बभूवतुः ॥ ३ ॥

---

* मांसेन छन्दयन्-वशीकुर्वन्-गो. मांसेन—तापसोपभोग्यफलादेना—रा.

[1] भरतस्यानुयायिनः—ङ.

एतस्मिन्नन्तरे त्रस्ताः शब्देन महता *ततः ।
अर्दिता यूथपा मत्ताः [1]सयूथा दुद्रुवुर्दिशः ॥ ४ ॥

एतस्मिन्नन्तरे—सेनाशब्दप्रवृत्तिसमये ॥ ४ ॥

स तं सैन्यसमुद्भूतं शब्दं शुश्राव राघवः ।
तांश्च विप्रद्रुतान् [2]सर्वान् यूथपानन्ववैक्षत ॥ ५ ॥

स राघवः—रामश्च सैन्येन समुद्भूतं—उत्पादितम् ॥ ५ ॥

तांश्च विद्रवतो दृष्ट्वा तं च श्रुत्वा स निस्वनम् ।
उवाच रामः सौमित्रिं लक्ष्मणं दीप्ततेजसम् ॥ ६ ॥

स निस्वनमित्यत्र 'सः' इति पदम् ॥ ६ ॥

†हन्त ! लक्ष्मण ! पश्येह ‡सुमित्रा सुप्रजास्त्वया ।
[3]भीमस्तनितगंभीरः तुमुलः श्रूयते स्वनः ॥ ७ ॥

भीमं—भयङ्करं यत् स्तनितं—मेघनिर्घोषः तद्वत् गंभीरः तुमुलः—निबिडः योऽयं स्वनः श्रूयते तस्य कारणं पश्येति योजना ॥ ७ ॥

गजयूथानि वाऽरण्ये माहिषा वा महावने ।
वित्रासिता मृगाः सिंहैः सहसा प्रद्रुता दिशः ॥ ८ ॥

सिंहैः वित्रासितानि सहसा दिशो विद्रावितानि गजयूथानि वा कारणानीति विपरिणामः; तथा महिषादयो वा कारणमिति विज्ञातुमर्हसि ॥ ८ ॥

---

* ततः—तेन—गो. † हन्तेति व्यग्रतायामव्ययम्—गो. ‡ सुमित्रा सुप्रजाः त्वया—त्वया सुमित्रा सत्पुत्रेति सान्त्वोक्तिः—गो.

[1] स्वयूथात्—च. [2] भीताम्—ङ. [3] महीस्तनित—ङ.

राज्ञो वा *[1] राजमात्रो वा मृगयामटते वने ।
अन्यद्वा श्वापदं किञ्चित्, सौमित्रे! ज्ञातुमर्हसि ॥ ९ ॥

अथवा राजादिः मृगयामटते वेति ज्ञातुमर्हसि । तथाप्येवं वने शब्दो भवति किल! सिंहादि? अन्यद्वा श्वापददुष्टमृगं वा किञ्चित् वनं क्षोभयते? इति ज्ञातुमर्हसि ॥ ९ ॥

† सुदुश्चरो गिरिश्चायं पक्षिणामपि, लक्ष्मण!
सर्वमेतत् यथातत्त्वं अचिरात् ज्ञातुमर्हसि ॥ १० ॥

स लक्ष्मणः संत्वरितः सालमारुह्य पुष्पितम् ।
प्रेक्षमाणो दिशः सर्वाः पूर्वां दिशमुदैक्षत ॥ ११ ॥

सालः—वृक्षः ॥ ११ ॥

उदङ्मुखः प्रेक्षमाणः ददर्श महतीं चमूम् ।
रथाश्वगजसम्बाधां यत्तैर्युक्तां पदातिभिः ॥ १२ ॥

यत्तैः—सज्जैः ॥ १२ ॥

तामश्व[2]गजसंपूर्णां रथध्वजविभूषिताम् ।
शशंस सेनां रामाय वचनं चेदमब्रवीत् ॥ १३ ॥

सेनां शशंसेति । सेनामेव श्रुतशब्दकारणं उक्तवानित्यर्थः ॥

---

* राजमात्रः —राजतुल्यः–गो. † अयं गिरिः पक्षिणामपि सुदुश्चरो वर्तते—पक्षिसञ्चारोऽपीदानीं नास्तीत्यर्थः—गो. तावन्निबिडेऽस्मिन् गिरौ एतादृशमहाकोलाहलस्य कारणं ज्ञातुमर्हसीति वा तात्पर्यम् ।

[1] राजपुत्रो–च. [2] रथ–च.

**अग्निं संशमयत्वार्यः सीता च भजतां गुहाम् ।**
**सज्यं कुरुष्व चापं च *शरांश्च कवचं तथा ॥१४॥**

आर्यः अग्निं संशमयत्विति । क्षोभकालेऽग्निशमनव्यापारः गणकग्रामवासिभिः अस्माभिः भूयोऽनुभूतः । गुहां—अन्तर्गुहाम् । शरांश्च, गृहाणेति शेषः ॥ १४ ॥

**†अङ्गावेक्षस्व, सौमित्रे! कस्येमां मन्यसे चमूम् ।**

एवं युद्धसन्नाहवादिनं लक्ष्मणं रामो विमृश्यकारित्वादाह—अङ्गेत्यादि । यां एनां वनक्षोभहेतुभूतां चमूं मन्यसे— अवगच्छसि, इमां कस्येति वीक्षस्व ॥

**एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ।**
**‡दिधक्षन्निव तां सेनां रुषितः पावको यथा ॥ १५ ॥**

रुषित इति कर्तरि निष्ठा ॥ १५ ॥

**§संपन्नं राज्यमिच्छंस्तु व्यक्तं [1]प्राप्ताभिषेचनम् ।**
**आवां हन्तुं समायाति [2]कैकेय्या भरतः सुतः ॥ १६ ॥**

प्राप्ताभिषेचनं— प्राप्तनिजाभिषेकं राज्यं संपन्नं— संसिद्धं कर्तुमिच्छन् भरत आयाति ॥ १६ ॥

---

* यद्वा—कुरुष्वेत्यनुषङ्गः । करोतेः क्रियासामान्यवाचित्वात् औचित्येन शरान् गृहाण, कवचं धारयेत्यर्थः—**गो.** †'अङ्ग' इति सम्बोधने । ‡रुषितः सन् पावक इव दिधक्षन्नित्यन्वयः । §भरतः अभिषेचनं प्राप्य . . . . तावताऽप्यतृप्तः संपन्नं—समृद्धं, निष्कण्टकमिति यावत्, राज्यमिच्छन् सन्—**गो.**

[1] प्राप्या—**सर्वत्र.** [2] भरतः कैकयीसुतः—**ङ.**

*एष वै सुमहान् श्रीमान् [1] विटपी संप्रकाशते ।
विराज[2]त्युद्गतस्कन्धः† कोविदारध्वजो रथे [3] ॥ १७ ॥

कथमवगम्यतेऽसावित्यत्राह—एष वा इत्यादि । विटपः प्रकाशतां ! किं तावता भरतनिश्चये ? तत्राह—विराजतीत्यादि । न केवलं यः कश्चन विटपो भातीति मयोच्यते, अपि त्वस्मत्कुलचिह्नः कोविदारवान् ध्वजो रथे विराजतीत्येव मयोच्यते । अतो भरत इति निश्चीयते मयेत्यर्थः ॥ १७ ॥

भजन्ते हि यथाकामं अश्वानारुह्य शीघ्रगान् ।
एते भ्राजन्ति संहृष्टाः गजानारुह्य ‡ सादिनः ॥ १८ ॥

हि—यस्मात् शीघ्रतरानश्वान् आरुह्य यथाकामं भजन्ते—आगच्छन्ति ॥ १८ ॥

गृहीतधनुषौ चावां § गिरिं, वीर ! श्रयावहै ।
अथ वेहैव तिष्ठावः सन्नद्धावुद्यतायुधौ ॥ १९ ॥

अतः—गृहीतधनुषावित्यादि ॥ १९ ॥

---

* विटपी—ध्वजचिह्नभूतो वृक्षः प्रकाशते—स्पष्टं दृश्यते । तमेव विशिनष्टि—विराजतीति-**गो.** य एष वृक्षो महान् संप्रकाशते, तत्समीपे तं लक्षीकृत्य रथे कोविदारध्वजो विराजते-**ति.** † उद्गतस्कन्धत्वं लिखितवृक्षद्वारा-**ती. गो.** ‡ सादिनः—गजारोहाः-**गो.** अश्वारोहाः-**ती.** गृहीतसादिचिह्ना गजारोहाः-**ति.** ‘सादी तुरङ्गमातङ्गरथारोहेषु दृश्यते’ इति मेदिनी । § दुर्गे स्थित्वा युद्धार्थं गिरेः श्रयणम्-**गो.** उत्तरार्धपरिशीलने—यावच्छक्ति अपसर्पावः, गत्यन्तराभावे योत्स्यावः इति पूर्वार्धस्य, गत्यन्तराभावे कुतः, अत्रैव स्थित्वा योत्स्याव एव—इति उत्तरार्धस्य चाशयः स्यादिति भाति ।

[1] विटपीव प्रकाशते, विटपीव महाद्रुमः-**ङ.** [2] त्युज्ज्वल-**च.** [3] एतदनन्तरं—असौ हि सुमहास्कन्धः विटपी च महाद्रुमः । विराजते महासैन्ये कोविदारध्वजो रथे—इत्यधिकम्-**ङ.**

अपि मे वशमागच्छेत् कोविदारध्वजो रणे ।
अपि [1] द्रक्ष्यामि भरतं यत्कृते व्यसनं महत् ॥ २० ॥
त्वया, राघव ! संप्राप्तं सीतया च मया तथा ।

'अपि मे' इत्यादावपिः कामप्रवेदने । कोविदारध्वजो रणे मे वशं आगच्छेदपि, सादिनश्च, शैलमुपाश्रयन्नपि भरतं द्रक्ष्याम्यपि, तदाऽसौ मे भरतः वध्य एव । कुत इत्यतः—यत्कृते व्यसनमित्यादि ॥ २० ॥

यन्निमित्तं भवान् राज्यात् च्युतः, राघव ! शाश्वतात् ।
संप्राप्तोऽयमरिः, वीर ! भरतो वध्य एव मे ॥ २१ ॥
भरतस्य वधे दोषं नाहं पश्यामि, राघव !
[2] पूर्वापकारिणां * त्यागे न ह्यधर्मो विधीयते ॥ २२ ॥

पूर्वापकारिणां त्याग इति । भ्रातॄणामिति शेषः ॥ २२ ॥

पूर्वापकारी भरतः † [3] त्यक्तधर्मश्च, राघव !
एतस्मिन् निहते कृत्स्नां अनुशाधि वसुन्धराम् ॥ २३ ॥
अद्य पुत्रं हतं सङ्ख्ये कैकेयी राज्यकामुका ।
‡ मया पश्येत् सुदुःखार्ता हस्तिभग्नमिव द्रुमम् ॥ २४ ॥

सङ्ख्ये—युद्धे, 'मृधमास्कन्दनं सङ्ख्यं' ॥ २४ ॥

कैकेयीं च वधिष्यामि सानुबन्धां सबान्धवाम् ।
कलुषेणाद्य महता मेदिनी परिमुच्यताम् ॥ २५ ॥

कलुषेण—पापेन ॥ २५ ॥

---

* त्यागे—वधे—गो. ति. † अपकारश्च न प्रामादिक इत्याह—त्यक्तधर्म इति—गो. इदानीमस्मद्वधार्थागमनमेव एतन्निरूपयतीति भावः । ‡ मया हतमित्यन्वयः ।

[1] द्रक्ष्याम—ङ. [2] पूर्वापकारिणं हत्वा—च. [3] त्यागे धर्मश्च—च.

अद्येमं *संयतं क्रोधं असत्कारं च, मानद!
मोक्ष्यामि शत्रुसैन्येषु कक्षेष्विव हुताशनम् ॥ २६ ॥

असत्कारं च। कैकेयीकृतमिति शेषः ॥ २६ ॥

†अद्यैतच्चित्रकूटस्य काननं निशितैः शरैः।
[1]भिन्दन् शत्रुशरीराणि करिष्ये शोणितोक्षितम् ॥ २७ ॥
शरैर्निर्भिन्नहृदयान् कुञ्जरांस्तुरगांस्तथा।
श्वापदाः परिकर्षन्तु नरांश्च निहतान् मया ॥ २८ ॥
‡शराणां धनुषश्चाहं [2]अनृणोऽस्मि [3]महामृधे।
ससैन्यं भरतं हत्वा भविष्यामि न संशयः ॥ २९ ॥

*इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षण्णवतितमः सर्गः

---

हर(२८)मानः (?) सर्गः ॥ २९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे षण्णवतितमः सर्गः

---

*संयतं-एतावता कालेन नियमितं क्रोधं-अवमानं च। †शत्रुशरीराणि भिन्दन् काननं शोणितोक्षितं करिष्ये। ‡अहं यतः पूर्वं तत्र तत्र युद्धे शराणां धनुषश्च विषये अनृणः-ऋणरहितः, शत्रुकलेबरादानेन परिहृतऋणः, स्वयं युद्धे काप्यपराजितः शत्रुजयैकशील इत्यर्थः; अतः, अस्मीति अहमित्यर्थेऽव्ययम्; अस्मि-अहं महामृधे-भाविन्यपि युद्धे ससैन्यं भरतं हत्वा, अनृण इत्यनुकर्षः; अनृणो भविष्यामीत्यन्वयः। वनवासात् पूर्वमपि शम्बरसुतजयादिप्रतिपादनात्, तत्र लक्ष्मणस्यापि सहभावावश्यंभावात् युद्धसंभवः। अस्मीति क्रियापदं वा। तदा, अभवमित्यर्थः-गो. 'शराणां धनुषश्चाहमनृणोऽस्मि' इति स्वजीवनध्येयं सामान्यरूपेणोक्तम्। तादृशत्वादेव ससैन्यं भरतं हत्वा अनृणो भविष्यामि इत्यर्थः। 'अनृणोऽस्मिन्' इति पाठे—अस्मिन्-सन्निहिते महामृधे-महायुद्धे ससैन्यं भरतं हत्वा शराणां धनुषश्चाहं अनृणो भविष्यामि-एतावता धृतानां धनुरादीनां साथक्यं सम्पादयामीति भावः।

[1] छिन्दन्-च.    [2] अनृणोऽस्मिन्-ङ. च.    [3] महावने-च.

## सप्तनवतितमः सर्गः

### [भरतप्रशंसा]

* सुसंरब्धं तु [1]सौमित्रिं लक्ष्मणं क्रोधमूर्छितम् ।
रामस्तु परिसान्त्व्याथ वचनं चेदमब्रवीत् ॥ १ ॥

एवं कुपितो लक्ष्मणः सर्वभूतभावाभिज्ञेन भगवता रामेण भरतागमनप्रयोजनकथनेन निवृत्तरोषः क्रियते । सुसंरब्धमित्यादि । सुतरां संरम्भवन्तं–युद्धोद्योगवन्तम् ॥ १ ॥

किमत्र धनुषा कार्यं असिना वा † सचर्मणा ।
[2]महेष्वासे महाप्राज्ञे भरते स्वयमागते ॥ २ ॥

किमत्रेति । भरतविषय इत्यर्थः ॥ २ ॥

‡ पितुः सत्यं प्रतिश्रुत्य, हत्वा भरत[3]मागतम् ।
किं करिष्यामि राज्येन सापवादेन, लक्ष्मण! ॥ ३ ॥

सापवादेनेति । 'पित्रा दत्तं राज्यं भरतस्य रामो न पालितवान्' इत्येवंरूपापवादेनेत्यर्थः ॥ ३ ॥

यद्द्रव्यं बान्धवानां वा मित्राणां वा § क्षये भवेत् ।
नाहं तत् प्रतिगृह्णीयां भक्षान् विषकृतानिव ॥ ४ ॥

क्षय इति । कृत इति शेषः ॥ ४ ॥

---

* भरतं प्रति सुसंरब्धं–**ति.** पूर्वं तु सुसंरब्धं–सुतरां प्रीतं, 'संरंभः प्रणयेऽपि च'; अद्य तु तद्वैलक्षण्येन क्रोधमूर्छितम् । यद्वा क्रोधमूर्छितत्वादेव सुसंरब्धं–क्रोधकार्ययुद्धोन्मुख्यवन्तम् । तत्र हेतुः सपत्नीपुत्रत्वमित्याह–सौमित्रिमिति । यद्वा सुमित्रापुत्रत्वस्मारणपूर्वकमुक्तवानिति द्योत्यते–**गो.** अथवा–सुमित्रया 'रामं दशरथं विद्धि' इत्युक्तत्वात् रामरक्षणपरमित्यर्थः । † परप्रतिघातरक्षकं वामहस्ते धार्यमाणं चर्म । ‡ भरताय राज्यदानस्य पित्रर्थं अंगीकृतत्वात्, कथं तद्वधः–इति भावः । § क्षये सति–इति वाऽर्थः ।

[1] भरतं–**च.** [2] महाबले महोत्साहे–**च.** [3] माहवे–**च.**

धर्म*मर्थं च कामं च पृथिवीं चापि, लक्ष्मण !
इच्छामि भवतामर्थे एतत् प्रतिशृणोमि ते ॥ ५ ॥

† भ्रातॄणां संग्रहार्थं च सुखार्थं चापि, लक्ष्मण !
राज्यमप्यहमिच्छामि सत्येनायुधमालभे ॥ ६ ॥

आयुधमालभ इति । आयुधं स्पृष्ट्वा शपे । सत्यं करोमीत्यर्थः ॥ ६ ॥

[1]नेयं मम मही, सौम्य ! [2]दुर्लभा सागराम्बरा ।
न हीच्छेयमधर्मेण शक्रत्वमपि, लक्ष्मण ! ॥ ७ ॥

नेयमिति । इयं मह्येव केवलं अधर्मेण न—अपेक्षितेति न, अपि तु—न हीत्यादि ॥ ७ ॥

‡ यद्विना भरतं त्वां च शत्रुघ्नं चापि, [3]मानद !
भवेन्मम सुखं किञ्चित् भस्म तत् कुरुतां शिखी ॥ ८ ॥

§ मन्येऽहमागतोऽयोध्यां भरतो भ्रातृवत्सलः ।
मम [4]प्राणात् प्रियतरः कुलधर्ममनुस्मरन् ॥ ९ ॥

मन्येऽहमित्यादि । द्रष्टुमभ्यागत इति मन्य इति योजना । कुलधर्मं—ज्येष्ठस्य राज्यमित्येवंरूपम् ॥ ९ ॥

---

* अर्थं—पृथिवीभिन्नं रत्नादिकं–गो. † तमेवार्थं शपथेन द्रढयति—भ्रातॄणामिति । संग्रहार्थं—सम्यक् पालनार्थं, अत एव तेषां सुखार्थं च–ति. ‡ भरतादीन् विना मम किञ्चित्सुखं भवेच्चेत्, तत् शिखी नाशयतु । § श्लोकत्रयमेकं वाक्यम् । अयोध्यामागतो भरतः त्वया सीतया च सह मां प्रव्राजितं श्रुत्वा, कुलधर्ममनुस्मरन्, स्नेहेनाक्रान्तहृदयः मां द्रष्टुमभ्यागत इति मन्ये—इत्यन्वयः ।

[1] एवं–ङ. [2] सकला–ङ. [3] राघव–ङ. [4] प्राणैः–च.

श्रुत्वा प्रव्राजितं मां हि जटावल्कलधारिणम् ।
जानक्या सहितं वीर! त्वया च, [1]पुरुषर्षभ! ॥ १० ॥

स्नेहेनाक्रान्तहृदयः शोकेनाकुलितेन्द्रियः ।
द्रष्टुमभ्यागतो ह्येषः *भरतो नान्यथाऽऽगतः ॥ ११ ॥

अम्बां च कैकयीं [2]रुष्य [3]परुषं चाप्रियं वदन् ।
प्रसाद्य पितरं श्रीमान् राज्यं मे दातुमागतः ॥ १२ ॥

कैकयीं रुष्येति । रोषं कृत्वेति यावत् । पितरं प्रसाद्येति । 'त्वया सत्यपरिपालनवशात मयि प्राप्तं राज्यं मयैव रामाय दीयते, अतो न ते सत्यभ्रंशदोषः, अतो मत्कर्तृकं दानमनुमन्यस्व' इति प्रसाद्येत्यर्थः ॥

†प्राप्तकालं यदेषोऽस्मान् भरतो [4]द्रष्टुमिच्छति ।
अस्मासु मनसाऽप्येषः [5]नाप्रियं किञ्चिदाचरेत् ॥ १३ ॥

विप्रियं कृतपूर्वं ते भरतेन कदा नु किम् ?
‡ईदृशं वा भयं तेऽद्य भरतं [6]योऽत्र शङ्कसे ॥ १४ ॥

ते—तुभ्यमपि वेत्यर्थः । ईदृशमित्यादि । यस्त्वमद्य भरतं शङ्कसे, तस्य ते ईदृशं वा भयं ; कुत इति शेषः ॥ १४ ॥

§न हि ते निष्ठुरं वाच्यः [7]भरतेनाप्रियं कृतम् ।
अहं ह्यप्रियमुक्तः स्यां भरतस्याप्रिये कृते ॥ १५ ॥

---

* वाक्यस्य दीर्घत्वात लोक इव भरत इति पुनर्निर्देशः । † प्राप्तकालं—उचितम्-ति. ‡ ईदृशं भयं वा—त्वदुक्तसदृशं भयजनकवाक्यं वा कृतपूर्वं किं—उक्तपूर्वं किम् ?-गो. § ते—त्वया भरतः अप्रियं निष्ठुरं वचः न वाच्यः-गो.

[1] पुरुषोत्तम-च. [2] रोषाद-ङ. [3] भरतश्चाप्रियं-च. [4] द्रष्टुमर्हति-च. [5] नाहितं-च. [6] यद्विशङ्कसे-च. [7] भरतो नाप्रियं वचः-ङ. च.

न हि त इति । 'कृत्यानां कर्तरि वा' इति षष्ठी । त्वया अयं भरतः न निष्ठुरं वाच्यः । कुत इत्यत: —*न हि भरतेनाप्रियं कृतम् । अहं हीति । भरतस्य अतः परं अप्रिये—अप्रियवचने कृते अहं ह्यप्रियमुक्तः स्यां त्वया ॥ १५ ॥

†कथं नु पुत्राः पितरं हन्युः कस्यांचिदापदि ।
भ्राता वा भ्रातरं हन्यात्, सौमित्रे! प्राणमात्मनः ॥१६॥

आत्मनः प्राणं—प्राणसमं भ्रातरमित्यन्वयः ॥ १६ ॥

यदि राज्यस्य हेतोस्त्वं इमां वाचं प्रभाषसे ।
वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयताम् ॥ १७ ॥

इमां वाचमिति । भरतवधवाचमित्यर्थः । अस्मै प्रदीयतां—अस्मै लक्ष्मणाय प्रदीयतामिति वक्ष्यामि ॥ १७ ॥

‡उच्यमानोऽपि भरतः मया, लक्ष्मण! [1]तत्त्वतः ।
राज्यमस्मै प्रयच्छेति बाढमित्येव [2]वक्ष्यति ॥ १८ ॥

वचनमात्रेण किं प्रयोजनम्? स तु न दद्यादित्यत्राह—उच्यमान इत्यादि । प्रयच्छेत्युच्यमान इति योजना ॥ १८ ॥

---

* नञः अनुकर्ष इति भावः । † पूर्वं दशरथो वध्यतां (वध्यतां बध्यतामपि—अयो. 21-12) इत्युक्तम्, इदानीं भरतो वध्यत इति । इत उपरि तूष्णीमवस्थाने कार्यहानिः भविष्यतीति भयात् तां रौद्रीं बुद्धिं नियम्य निवर्तयति—कथं न्वित्यादिना । प्राणं—प्राणभूतम्—**गो.** ‡ उच्यमानोऽपि—अहृदयमुक्तोऽपि तत्त्वतः बाढमिति वक्ष्यत्येव—**गो.**

[1] तद्वचः—**च.**    [2] मंस्यते—**च.**

तथोक्तो धर्मशीलेन भ्रात्रा *तस्य हिते रतः ।
लक्ष्मणः प्रविवेशेव स्वानि गात्राणि लज्जया ॥ १९ ॥

तथोक्त इति । राज्यलिप्सा चेत् ते राज्यमेव दापयिष्यामि, किं ते भ्रातृवधेनेत्युक्त इत्यर्थः । तस्य हित इति । रामस्य हित इत्यर्थः । लज्जया स्वानि गात्राणि प्रविवेशेवेति । किमुक्तं धर्मैकप्रतिष्ठितभ्रात्रभिप्रायमविजानता मयेति लज्जया सङ्कुचितबहिरन्तःकरणव्यापारो बभूवेत्यर्थः ॥ १९ ॥

†तद्वाक्यं लक्ष्मणः श्रुत्वा व्रीडितः प्रत्युवाच ह ।
त्वां मन्ये द्रष्टुमायातः पिता दशरथः स्वयम् ॥ २० ॥

एवमनुचितवादव्रीडापरिहाराय उचितमेव वादमाह लक्ष्मणः-- तद्वाक्यमित्यादि । पिता दशरथ एव त्वां द्रष्टुं स्वयमायात इति मन्ये । कोविदारध्वजेन प्रियभरतप्रसङ्गस्तु त्वदाशयपरिज्ञानायैव केवलमुपन्यस्तः इत्यर्थः ॥ २० ॥

‡व्रीडितं लक्ष्मणं दृष्ट्वा [1]राघवः प्रत्युवाच ह ।
एष मन्ये महाबाहुः इहास्मान् द्रष्टुमागतः ॥ २१ ॥

एवं पितृप्रसङ्गः लक्ष्मणस्य व्रीलापरिहारमूल इति ज्ञात्वा तदेवानुकुर्वन्नाहेत्याह--व्रीलितमित्यादि । एष इति । लक्ष्मणप्रस्तावमनुयायी पितेत्यर्थः ॥ २१ ॥

---

* भरतवधं यस्य हितं मेने, तेनैव रामेण भरतमधिकृत्य एवमुक्तत्वात् लक्ष्मणोऽतीव लज्जितो बभूव । †व्रीडया प्रसङ्गान्तरं प्रस्तौति--त्वामिति । लोके स्वोक्तिभङ्गेन व्रीडितः पुरुषः प्रस्तावान्तरं हि वदति--गो. ‡भावज्ञो रामोऽपि औचित्येन लक्ष्मणकृतप्रस्तावं व्रीडाशमनाय प्रपञ्चयामासेत्याह--व्रीडितमिति--गो.

[1] भावज्ञः--ङ.

अथवा *नौ ध्रुवं मन्ये मन्यमानः सुखोचितौ ।
वनवासमनुध्याय गृहाय प्रतिनेष्यति ॥ २२ ॥

अनुध्याय—अनुचिन्त्य ॥ २२ ॥

इमां वाऽप्येष वैदेहीं †अत्यन्तसुखसेविनीम् ।
पिता [1]मे राघवः श्रीमान् वनादादाय यास्यति ॥ २३ ॥

इमां वा आदायेत्यन्वयः ॥ २३ ॥

एतौ तौ संप्रकाशेते [2]‡गात्रवन्तौ [3]मनोजवौ ।
वायुवेगसमौ, [4]वीर! जवनौ तुरगोत्तमौ ॥ २४ ॥

गात्रवन्तौ—प्रशस्तगात्रयुक्तौ । जवनौ, पामादित्वात् नः । अत एव मनोजवावित्यादि । तुरगोत्तमाविति । राजौ पवाह्याविति । राजौपवाह्यावित्यर्थः ॥

स एष सुमहाकायः कम्पते वाहिनीमुखे ।
नागः शत्रुञ्जयो नाम §वृद्धस्तातस्य धीमतः ॥ २५ ॥

पितुरागमनचिह्नान्तरमप्याह—स एष इत्यादि । कम्पते—चलति, आगच्छतीति यावत् । वृद्धः—वयसा आकारबलाभ्यां चेत्यर्थः ॥ २५ ॥

---

*नाविति द्विवचनं प्राधान्यात्-गो. नौ सुखोचितौ मन्यमानः—स्मरन् गृहाय ध्रुवं प्रतिनेष्यतीति मन्ये । †अत्यन्तेत्यनेन तन्मात्रनयने हेतुरुक्तः-गो. ‡गोत्रवन्तौ—प्रशस्तनामानौ । यद्वा प्रशस्तकुलप्रसूतौ-गो. §वृद्धः—उन्नतः । धीमतः—गजपरिपालनज्ञस्य तातस्य नागः शत्रुञ्जयः; न तु मया सुयज्ञाय दत्तः मातुलाल्लब्धः शत्रुंजय इत्यर्थः-गो.

[1] दशरथः-ङ. [2] गोत्रवन्तौ-ङ. [3] मनोरमौ-ङ. [4] वीरौ-च.

न तु पश्यामि तच्छत्रं पाण्डुरं लोकसत्कृतम् ।
पितुर्दिव्यं, [1] महाबाहो! संशयो भवतीव मे ॥ २६ ॥

इह मे संशयो भवति—छत्रस्यादर्शनात् दशरथागमविषये संशयो जायत इत्यर्थः ॥ २६ ॥

[2] इतीव रामो धर्मात्मा सौमित्रिं तमुवाच ह ।
वृक्षाग्रादवरोह त्वं कुरु, लक्ष्मण! मद्वचः * ॥ २७ ॥

इतीव—इत्येव तं–वृक्षाग्रस्थितं सौमित्रिं उवाच । अथ वृक्षाग्रादवरोहणमाज्ञापयति—वृक्षाग्रादित्यादि । मद्वचः कुर्विति । शङ्कां विहाय मदुच्यमानं सालावरोहणं कुर्वित्यर्थः ॥ २७ ॥

अवतीर्य तु सालाग्रात् तस्मात् स समितिञ्जयः ।
लक्ष्मणः प्राञ्जलिर्भूत्वा तस्थौ रामस्य †पार्श्वतः ॥ २८ ॥

स एवं प्राप्ताज्ञः लक्ष्मणः अवतीर्य रामस्य पार्श्वे तस्थौ ॥२८॥

‡ भरतेनापि सन्दिष्टा सम्मर्दो न भवेदिति ।
समन्तात्तस्य शैलस्य सेना वासमकल्पयत् ॥ २९ ॥

सम्मर्दो न भवेदिति । रामाश्रमस्येति शेषः ॥ २९ ॥

अध्यर्धमिक्ष्वाकुचमूः योजनं पर्वतस्य सा ।
पार्श्वे न्यविशदावृत्य गजवाजि[3]रथाकुला ॥ ३० ॥

अधिकं अर्धं यस्मिन् तत् अध्यर्धं, सार्धयोजनमित्यर्थः ॥

---

* न तु धनुरादिग्रहणं कुर्वित्यर्थः । † पार्श्वतः, अनातर्यस्थाने भयशङ्कयेति भावः–गो. लज्जावहं वाक्यमुक्तवत्यपि रामे सौहार्दाच्च तथा । ‡ एवं रामलक्ष्मणयोरवस्थितिमुक्त्वा भरतप्रवृत्तिमाह—भरतेनापीति ।

[1] महाभाग–च. [2] अत्र पूर्वोत्तरार्धयोः वैपरीत्यं प्रायः सर्वत्र दृश्यते । [3] नराकुला–च.

* सा चित्रकूटे[1] भरतेन सेना
धर्मं पुरस्कृत्य विधूय दर्पम् ।
प्रसादनार्थं रघुनन्दनस्य
विराजते नीतिमता प्रणीता ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तनवतितमः सर्गः

---

प्रणीता—शिक्षितेति यावत् ।   योग(३१)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्तनवतितमः सर्गः

---

## अष्टनवतितमः सर्गः

[ रामाश्रमदर्शनम् ]

निवेश्य सेनां तु विभुः पद्भ्यां पादवतां वरः ।
अभिगन्तुं स काकुत्स्थं इयेष †[2] गुरुवर्तकम् ॥ १ ॥

अथ भरतस्य रामाश्रमसमीपगमनम् । पादवतामिति । चरप्राणिनामित्यर्थः । गुरुवर्तकं—मातापित्राचार्यशुश्रूषकम् ॥ १ ॥

---

* भरतेन धर्मं पुरस्कृत्य—विनीतवेषेण राजाऽभिगन्तव्य इति धर्ममनुसृत्य दर्पं विधूय स्थितेन रघुनन्दनस्य प्रसादनार्थं प्रणीता—आनीता–गो. दर्पं विधूय धर्मं पुरस्कृत्य प्रसादनार्थं—इति वाऽन्वयः । एतेन भरतविनयातिशय उक्तो भवति । स्वयंप्राप्तराज्यः, राज्यभ्रष्टं भ्रातरं दैन्यदयादिभिर्यथोपसर्पेत, न तथा भरतः उपससर्पेति तात्पर्यम् । अत एवानन्तरसर्गे ‘भर्तारं सागरान्तायाः पृथिव्याः’ (11) इत्युक्तिरपि ।
† गुरुवर्तकं—गुरुवचनानुवर्तकम्–गो. अथवा–विभुस्सन्नपि पद्भ्यां अभिगन्तुमियेषेत्यत्र हेतुः—गुरुवर्तकमिति । वर्तकमिति कर्तरि ण्वुल्, गुरुरिव वर्तमानमिति यावत् ।

[1] भरतस्य–ङ.    [2] गुरुवर्तकः–ङ.

निविष्टमात्रे सैन्ये तु यथोद्देशं विनीतवत् ।
भरतो भ्रातरं वाक्यं शत्रुघ्नमिदमब्रवीत् ॥ २ ॥

यथोद्देशं—शिबिरसन्निवेशे अमुकस्य अमुकदिग्भाग इति स्वाम्युद्दिष्टप्रदेशमनतिक्रम्येत्यर्थः । विनीतवत्—विनीतः सन् ॥ २ ॥

क्षिप्रं वनमिदं, सौम्य ! नरसङ्घैः समन्ततः ।
लुब्धैश्च सहितैरेभिः त्वमन्वेषितुमर्हसि ॥ ३ ॥

लुब्धाः—निषादाः । एभिरिति । गुहभृत्यैः आसन्नैः सहेत्यर्थः ॥

गुहो ज्ञातिसहस्रेण शरचापासि[1]धारिणा ।
समन्वेषतु [2]काकुत्स्थौ अस्मिन् परिवृतः स्वयम् ॥ ४ ॥

ज्ञातिसहस्रेण परिवृत इत्यन्वयः ॥ ४ ॥

अमात्यैः सह पौरैश्च गुरुभिश्च द्विजातिभिः ।
वनं सर्वं चरिष्यामि पद्भ्यां परिवृतः स्वयम् ॥ ५ ॥

पौरैः–पुरप्रधानकुटुम्बिभिरित्यर्थः । चरिष्यामि, अहमपीति शेषः॥

यावन्न रामं [3]द्रक्ष्यामि लक्ष्मणं वा महाबलम् ।
वैदेहीं वा महाभागां न मे शान्तिर्भविष्यति ॥ ६ ॥
यावन्न चन्द्रसङ्काशं द्रक्ष्यामि [4]च शुभाननम् ।
भ्रातुः *[5]पद्मपलाशाक्षं न मे शान्तिर्भविष्यति ॥ ७ ॥

शुभाननमिति कर्मधारयः ॥ ७ ॥

यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ ।
शिरसा [6]धारयिष्यामि न मे शान्तिर्भविष्यति ॥ ८ ॥

---

* पद्मपलाशाक्षं—पद्मदलाक्षम्, आननविशेषणमिदम् ।

[1] पाणिना—च. [2] काकुत्स्थं—ङ. [3] पश्यामि—ङ. [4] शुभमाननम्—ङ. पद्मविशालाक्षं—च. [6] प्रग्रहीष्यामि—च

पार्थिवव्यञ्जनं—रेखाध्वजकुलिशातपत्रादि ॥ ८ ॥

यावन्न राज्यं राज्यार्हः * पितृपैतामहे स्थितः ।
[1] अभिषेकजलक्लिन्नः न मे शान्तिर्भविष्यति ॥ ९ ॥
[2] सिद्धार्थः खलु सौमित्रिः यश्चन्द्रविमलोपमम् ।
मुखं पश्यति रामस्य राजीवाक्षं महाद्युति ॥ १० ॥

चन्द्रविमलोपमं—विशेष्यपूर्वनिपात आर्षः, विमलचन्द्रोपममिति यावत् ॥ १० ॥

कृतकृत्या महाभागा वैदेही जनकात्मजा ।
भर्तारं सागरान्तायाः पृथिव्याः याऽनुगच्छति ॥ ११ ॥
[3] सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः ।
यस्मिन् वसति काकुत्स्थः कुबेर इव नन्दने ॥ १२ ॥

गिरिराजः—हिमवान् ॥ १२ ॥

कृतकार्यमिदं दुर्गं वनं व्यालनिषेवितम् ।
यदध्यास्ते [4] महातेजाः रामः शस्त्रभृतां वरः ॥ १३ ॥

कृतकार्यं—कृतार्थम् । दुर्गं—दुष्प्रवेशम् । व्यालः—सर्पः । यत्—यस्मात् ॥ १३ ॥

एवमुक्त्वा महातेजाः भरतः पुरुषर्षभः ।
पद्भ्यामेव महाबाहुः प्रविवेश महद्वनम् ॥ १४ ॥

---

* पितृपैतामहे मार्गे स्थितः, अत एव राज्यार्हः, अतश्च अभिषेकजलक्लिन्नः यावन्न राज्यं, लभत इति शेषः ।

[1] अभिषिक्तो—च.　[2] अयं श्लोकः च पुस्तके 'यावन्न चरणौ' इति श्लोकात् पूर्वं दृश्यते ।　[3] सुशुभ—च.　[4] महाराजः—च.

**स तानि द्रुमजालानि जातानि गिरिसानुषु।**
**पुष्पिताग्राणि मध्येन जगाम वदतां वरः॥ १५॥**

मध्येनेति। दिक्छब्दत्वात् एनप्, तद्योगे 'तानि' इत्यादि-द्वितीया, द्रुमजालानां मध्य इत्यर्थः॥ १५॥

**स गिरेश्चित्रकूटस्य [1] सालमासाद्य पुष्पितम्।**
***रामाश्रम[2]गतस्यान्ते ददर्श [3] ध्वजमुच्छ्रितम्॥ १६॥**

चित्रकूटस्य गिरेः सालं वृक्षमासाद्य आश्रमगतस्य तस्य सालस्य अन्ते—उपरि प्रतिष्ठापितं उच्छ्रितं ध्वजं ददर्श। एवं 'रामाश्रमगतस्यान्ते' इति पाङ्क्ते पाठे योजनाऽशक्त्या 'रामाश्रमगतस्याग्नेः' इति पठित्वा यथेष्टं योजयत्यन्यः †। धूमस्तु पूर्वमेव दृष्टः॥

**तं दृष्ट्वा भरतः श्रीमान् ‡[4] मुमोह सहबान्धवः।**
**§अत्र राम इति ज्ञात्वा गतः [5] पारमिवांहसः॥ १७॥**

---

* पवित्रस्थलसूचनार्थं तत्रत्योन्नतवृक्षेषु ध्वजारोपणं इदानीमपि कुत्रचिद्देशेषु दृश्यते। गोविन्दराजस्तु 'रामाश्रमगतस्याग्नेः ददर्श ध्वजमुच्छ्रितम्' इति पाठमादृत्य—'अग्नेः ध्वजः—धूमः। पूर्वं धूमाग्रदर्शनम्, अधुना तु समीपत्वात् तन्मूलदर्शनमिति न पुनरुक्तिः' इति व्याचख्यौ॥ † महेश्वरतीर्थः, गोविन्दराजो वा। ‡ मुमोह—मोहसदृशं पारवश्यं प्राप, मुमोदेति च पाठः-गो. § यद्यपि नाद्यापि पर्णशालादर्शनम्, तत्तु अनन्तरसर्गे एव (4) वक्ष्यते; अथापि 93 सर्गे "ते समालोक्य धूमाग्रमूचुर्भरतमागताः। नामनुष्ये भवत्यग्निः व्यक्तमत्र तपस्विनौ। अथ नात्र नरव्याघ्रौ राजपुत्रौ परंतपौ। मन्ये रामोपमाः सन्ति व्यक्तमत्र तपस्विनः" इति श्लोकयोः, अत्रत्यस्य "स गिरेः चित्रकूटस्य सालमासाद्य पुष्पितम्। रामाश्रमगतस्याग्नेः ददर्श ध्वजमुच्छ्रितम्' इति श्लोकस्य च परिशीलने—पूर्वं रामान्वेषणाय गताः भटाः दूरात् धूमाग्रं वीक्ष्य सामान्याकारेण तापससान्निध्यं ज्ञात्वाऽगत्य भरतायोक्तवन्तः, न तु भरतः धूमाग्रादिकं तदा दृष्टवान्। ततः स्वयं प्रस्थायागतो भरतः दूरात् सामान्याकारेणाश्रमं—तत्समीपे धूमं च पश्यन्—रामलक्ष्मण-स्वभावचेष्टिताद्यभिज्ञः, भरद्वाजोक्तलक्षणसंवादाच्च तं धूमं रामाश्रमगतं मेने इति ज्ञायते। अत एव अनन्तरसर्गे 'मन्ये प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत्' (9) इति च वक्ष्यति॥

[1] सालमारुह्य—च. [2] गतस्याग्नेः—ङ. च. झ. [3] ध्वजमुत्तमम्—ङ. [4] मुमोद—च. [5] पारमिवाम्भसः—ङ. च. झ.

तं दृष्ट्वेति। कुलचिह्नकोविदारध्वजं दृष्ट्वेत्यर्थः। अंहसः—पापस्य, अपराधस्य मातृकृतस्य चेत्यर्थः ॥ १७ ॥

स चित्रकूटे तु गिरौ निशम्य
रामाश्रमं पुण्यजनोपपन्नम्।
गुहेन सार्धं त्वरितो जगाम
पुनर्निवेश्यैव चमूं महात्मा ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टनवतितमः सर्गः

---

पुण्याश्च ते जनाः, तपस्विन इति यावत्। पुनश्च चमूं निवेश्येति। अन्वेषणानियोजितनिषादचमूमित्यर्थः। जय(१८)मानः सर्गः ॥ १८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे अष्टनवतितमः सर्गः

---

## एकोनशततमः सर्गः

[रामसंगमः]

निविष्टायां तु सेनायां उत्सुको भरतस्तदा।
जगाम भ्रातरं द्रष्टुं शत्रुघ्नमनुदर्शयन् ॥ १ ॥

अथ भरतस्य रामदर्शनम्। निविष्टायामित्यादि। शत्रुघ्नमनुदर्शयन्निति। 'अनुर्लक्षणे' इति अनुः कर्मप्रवचनीयः; शत्रुघ्नस्य रामाश्रमप्रत्यासत्तिचिह्नानि दर्शयन्नित्यर्थः ॥ १ ॥

ऋषिं वसिष्ठं संदिश्य मातॄर्मे शीघ्रमानय।
*इति त्वरितमग्रे सः जगाम[1]गुरुवत्सलः ॥ २ ॥

---

* अनेन 'रामावासं निश्चित्य पश्चादानेष्यामि' इति धिया महासेनानिवेशे मातॄर्निवेशितवानिति गम्यते—गो.

[1] भ्रातृवत्सलः—ङ.

आनयेति संदिश्य स्वयं त्वरितः सन् अग्रे मार्गे जगाम ; न तु मातॄः प्रतीक्ष्य स्थित इत्यर्थः ॥ २ ॥

गच्छन्नेव महाबाहुः द्युतिमान् भरतस्तदा ।
शत्रुघ्नं चाब्रवीत् हृष्टः *तानमात्यांश्च सर्वशः ॥ ३ ॥

एवं त्वरितो गच्छन्नेव शत्रुघ्नादीनब्रवीदिति । एवमेव समीचीने पाङ्क्ते क्रमे स्थिते 'सुमन्त्रस्त्वपि' इत्यादिपञ्चश्लोक्यनन्तरं 'गच्छन्नेवाथ' इत्यादिश्लोकद्वयं, अस्य पूर्वं पाठः प्रामादिक इत्यन्यः†। एवं क्रम एवासङ्गतः । 'करीषैः शीतकारणात्'-इत्यनन्तरं पुनरपि आश्रमचिह्नस्यैव 'उच्चैर्बद्धानि चीराणि' इत्यादेर्वक्तव्यत्वात् । सर्वश इति स्वार्थमात्रे शस्--सर्वानिति यावत् ॥ ३ ॥

मन्ये [1]प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ।
नातिदूरे हि मन्येऽहं नदीं मन्दाकिनीमितः ॥ ४ ॥

---

* अमात्यान्--सुमन्त्रं, बहुवचनं पूजार्थम् । यद्वा अनेनैवावगम्यते अन्येऽप्यमात्याः सुमन्त्रेण सहागता इति--गो. † गोविन्दराजः, महेश्वरतीर्थो वा । कतकरीत्या व्याख्याने इदं चिन्त्यम्--'शत्रुघ्नं चाब्रवीत्' (3) इति अत्र स्थितेः 'मन्ये प्राप्ताः स' इत्येकं श्लोकं भरतवचनम्, 'गच्छन्नेवाथ' (6) इत्यादिश्लोकचतुष्टयं तु कविवाक्यमेव । 'उच्चैर्बद्धानि' (9) इत्यादिश्लोकचतुष्टयं तु पुनः भरतवचनम् । ततः 'अथ गत्वा' इत्येकं श्लोकं कविवचनम् । ततः पुनः भरतवचनम् । एवं सति यथा अत्र 'शत्रुघ्नं चाब्रवीत्' (3) इति, तत्र 'तं जनं चेदमब्रवीत्' (14) इति च दृश्यते, न तथा 'उच्चैर्बद्धानि चीराणि' (10) इत्यस्य पूर्वं दृश्यते । तत एतद्व्याख्याने वाक्यविच्छेद एव स्यात् । अतः गोविन्दराजादिसम्मतः क्रम एव युक्तः प्रतिभाति । तत्र च 'सुमन्त्रस्त्वपि' (3) इत्यनन्तरं 'गच्छन्नेवाथ' (4) इत्यारभ्य 'करीषैः शीतकारणात्' (7) इत्यन्तं भरतदर्शनानुवादः कवेः । 'उच्चैर्बद्धानि' (10) इत्यादिकं तु साक्षात् भरतवाक्यम् । नानयोः एकवाक्यतेति 'गच्छन्नेव' (8) 'मन्ये प्राप्ताः स्म' (9) इति मध्यगतश्लोकाभ्यां न रामाश्रमवर्णनक्रमविच्छेदप्रसक्तिरिति ज्ञेयम् ॥

[1] प्राप्तोऽस्मि--ङ.

**सुमन्त्रस्त्वपि शत्रुघ्नमदूरादन्वपद्यत ।**
**[1]रामदर्शनजस्तर्षः भरतस्येव तस्य च ॥ ५ ॥**

सुमन्त्रस्त्वपि त्वरया गच्छद्भरतानुधावच्छत्रुघ्नं दूरादपरित्यज्य अन्वपद्यत—अनुधावति स्म । भरतवदस्यापि सुमन्त्रस्य रामदर्शन-हेतुः अविशिष्ट इत्याह—रामदर्शनेत्यादि ॥ ५ ॥

**गच्छन्नेवाथ भरतः तापसालयसंस्थिताम् ।**
***भ्रातुः पर्णकुटीं श्रीमान् उटजं च ददर्श ह ॥ ६ ॥**

तापसानामालयैः सह संस्थिता तथा। पर्णकुटी—पर्णप्राधान्येन निर्मिता कुटी—शाला तथा ; इयं दर्शनप्रयोजनागततपस्व्यादिसंव्यव-हारप्रयोजना उटजात् बहिः प्रतिष्ठापिता । उटजमिति । सभित्तिकवाटं सदारुबन्धगृहं सीतानिवासप्रयोजनं तत् प्रागुक्तं 'सीता गुहां भजताम्' इति ॥ ६ ॥

**शालायास्त्वग्रतस्तस्याः ददर्श भरतस्तदा ।**
**काष्ठानि चावभग्नानि [2]पुष्पाण्यपचितानि च ॥ ७ ॥**

तस्या बहिष्ठपर्णशालाया अग्रतः काष्ठानि च ददर्शेत्यन्वयः । अवभग्नानीति । होमार्थमिति शेषः ॥ ७ ॥

**सलक्ष्मणस्य रामस्य ददर्शाश्रम[3]मेयुषः † ।**
**कृतं वृक्षेष्वभिज्ञानं कुशचीरैः क्वचित् क्वचित् ॥ ८ ॥**

---

* पर्णकुटीं—अग्न्यगारभूतां पर्णशालां, उटजं—दिदृक्षया समागतैः तापसैः सह सुखावस्थानार्थमुपकल्पितां पर्णशालाम् । यद्वा—भ्रातुः पर्णकुटीं—सीतया सह शयनार्थं निर्मितां पर्णशालां, उटजं—दिवाऽवस्थानार्थं कल्पितं पर्णमण्डपम् । यद्वा – पर्णशालां—महाशालां, उटजं–तन्मध्यवर्तिसुखावस्थानास्थानम् ; तथैव वक्ष्यति—'ददर्श महतीं' (18) इत्यादिना–गो. † ईयुषः—जलाशयादाश्रमं गच्छतो रामस्य, कुशादिभिः कृतं अभिज्ञानं–चिह्नं, अन्योन्यस्य गमनागमनपरिज्ञानार्थं कृतं–गो. मार्गपरिज्ञानार्थं–ति.

[1] रामदर्शनजो हर्षः–ङ. [2] पुष्पाण्युपचितानि–ङ. [3] मीयुषः–ङ

एयुषः, आङ्पूर्वादिणः क्सुः । कुशचीरैः वृक्षेषु कृतं—अवसज्जनकृतं अभिज्ञानं ददर्श ॥ ८ ॥

**ददर्श च वने तस्मिन् महतः सञ्चयान् कृतान् ।**
**मृगाणां महिषाणां च करीषैः * शीतकारणात् ॥ ९ ॥**

मृगादीनां करीषैः कृतान् सञ्चयान् ददर्श । किमर्था इत्यतः—शीतकारणात्—शीतपरिहारहेतोरित्यर्थः ॥ ९ ॥

**उच्चैर्बद्धानि चीराणि † लक्ष्मणेन भवेदयम् ।**
**अभिज्ञानकृतः पन्था विकाले गन्तुमिच्छता ॥ १० ॥**

उच्चैरित्यादि । विकाले—मार्गस्य स्पष्टदर्शनायोग्यकाले जलाहरणादिकिञ्चित्प्रयोजनाय गन्तुमिच्छता लक्ष्मणेन अभिज्ञानकृतः—अभिज्ञानैः कृतज्ञापनः आश्रमस्य पन्था अयमेव भवेत् । यत इह पथि चीराणि उच्चैः—व्यक्ताग्रेषु बद्धानि ॥ १० ॥

**‡ इदं चोदात्तदन्तानां कुञ्जराणां तरस्विनाम् ।**
**शैलपार्श्वे परिक्रान्तं अन्योन्यमभिगर्जताम् ॥ ११ ॥**

एवं आश्रममार्गं ज्ञात्वाऽथ यत्सन्देहादाश्रममार्गस्याभिज्ञानकरणं तं वनमार्गं चापश्यदित्याह—इदं चेत्यादि । 'इदं कुञ्जराणां परिक्रान्तं' इति अधिकरणे निष्ठादिः, 'इदमेषामासितं' इत्यादिवत्; अस्मिन् वने कुञ्जराः परिक्रान्ता इत्यर्थः ॥ ११ ॥

---

* शीतकारणात्—शीतनिवृत्तिकारणात् . . . . चैत्रशुक्लदशम्यां प्रस्थानेन तत्र काले वैशाखान्तं शीतस्यापररात्रे जायमानत्वात्-ति. आगामिशीतवारणार्थमिति वा ॥ † चीराणि दृश्यन्ते-गो. ‡ अन्योऽन्यकोपातिशयेन वेगाद्दन्तादन्तिप्रहारं कुर्वतां आश्रमप्रवेशस्याशक्यत्वात् आश्रमप्रान्तगमनं आश्रमप्रदेशं सूचयतीत्यर्थः-गो. गजानामयं गमनमार्गः । तत्र गमननिवृत्त्यर्थं चेदमभिज्ञानकरणमिति भावः-ति.

*यमेवाधातुमिच्छन्ति तापसाः सततं वने ।
तस्यासौ दृश्यते धूमः संकुलः कृष्णवर्त्मनः ॥ १२ ॥

यमेव कृष्णवर्त्मानं—त्रेताग्निं वने आधातुं सततमिच्छन्ति, तस्य च धूमो दृश्यते ॥ १२ ।

अत्राहं पुरुषव्याघ्रं †गुरु[1]संस्कारकारिणम् ।
आर्यं द्रक्ष्यामि [2]संहृष्टः महर्षिमिव राघवम् ॥ १३ ॥

---

* पचनाग्नेः होमाग्नेश्च व्यावृत्तं सन्ततस्थायिगार्हपत्याग्निं दर्शयितुं संकुलशब्दः । पचने ज्वालानां होमे चाङ्गाराणामपेक्षितत्वात् न तदा धूमनिबिडतासंभव इति भावः । अनेन रामस्याग्न्याधानाभावात् श्रौताग्निरत्र नोच्यते, किन्तु धार्यः स्मार्तोऽग्निः । यदि हि तस्य त्रेताग्निः स्यात् तदा ‘रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् । अग्निहोत्रं व्रजत्वग्रे सर्पिर्ज्वलितपावकम्’ (उत्तर. 109–1) इति चरमयात्रायामग्निहोत्रपुरस्कारश्रवणात् वनयात्रायामपि तथा दृश्येत । अनुसरन्तोऽपि हि पौरवृद्धाः साग्नय एव समागता इत्युच्यन्ते । किञ्च ‘दीक्षितं व्रतसंपन्नं वराजिनधरं शुचिम् । कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम्’ (अयो. 16–23) इति सीतामनोरथश्रवणात् राज्याभिषेकात्पूर्वं न यज्ञोऽनुष्ठित इति गम्यते । ततोऽयमग्निर्गृह्याग्निरेव । न च तस्याप्यानयनं न पूर्वमुक्तमिति वाच्यम् ; तस्यात्मसमारोपणेनानेतुं शक्यत्वात् । ननु चात्मसमारोपणेऽपि सायंप्रातः होमः कार्यः, स तु नोक्तः ; प्रत्युत तमसातीरे, गङ्गाकूले, वृक्षमूले, भरद्वाजाश्रमे, यमुनातटे च सन्ध्यावन्दनमेवोक्तम् । अत्र च श्लोके तापसवनशब्दाभ्यां वने तापसानां शीतनिवारणप्रकाशकरणकन्दमूलादिपचनसाधनतया संग्राह्य एवाग्निरुच्यत इति वक्तुं शक्यते आधातुं—संग्रहीतुमित्यर्थः । अतोऽयमग्निः पचनाद्यर्थ एव, न तु धार्यः स्मार्ताग्निरिति चेत् न—‘प्रागुदक्प्रवणां वेदिं विशालां दीप्तपावकाम्’ (24) इति वक्ष्यमाणविरोधात् । यद्येवं तर्हि कथं सायंप्रातर्होमावचनमिति चेत्—न ह्येकं स्वच्छन्दगामिना मुनिना असत्यामिच्छायामसति च फले पुनःपुनर्वक्तव्यम् । वक्ष्यति तूपरिष्टात् सुतीक्ष्णाश्रमे—‘अथ तेऽग्निं सुरांश्चैव’ इति । अतः चतुर्दशसु वनवाससंवत्सरेषु सीताहरणपर्यन्तं रामस्य चित्रकूटादिपञ्चवट्यन्तप्रदेशेषु यत्र माससंवत्सरादिवासेन चिरकालावस्थानं तत्र बहिः स्मार्तनित्याग्निधारणम्, अन्यत्र आत्मनि समिधि वा समारोप्य होमकालेऽवरोप्य सायंप्रातरौपासनमिति दिक्—**गो.** † गुरुसंस्कारः– श्रेष्ठसंस्कारः मन्त्रोपदेशादिः, तत्कारिणं–**गो.**

[1] सत्कार–**च.**　　[2] संहृष्टं–**च.**

अथ गत्वा मुहूर्तं तु चित्रकूटं स राघवः ।
मन्दाकिनीमनु प्राप्तः तं जनं चेदमब्रवीत् ॥ १४ ॥

स राघवः—भरतः मन्दाकिनीमनु चित्रकूटं प्राप्त इत्यन्वयः । तं जनं—अमात्यादिजनम् ॥ १४ ॥

*जगत्यां पुरुषव्याघ्रः आस्ते वीरासने रतः ।
[1]जनेन्द्रो निर्जनं प्राप्य धिङ्मे जन्म च जीवितम् ॥

वीरासने—योगाय वीरासनावस्थाने रतः सन् जगत्यां—भूमौ आस्ते । 'एकं पादमथैकस्मिन् विन्यस्योरुणि संस्थितम् । इतरस्मिंस्तथा चोरुं वीरासनमुदाहृतम्' इति योगवासिष्ठे ॥ १५ ॥

मत्कृते व्यसनं प्राप्तः लोकनाथो महाद्युतिः ।
सर्वान् कामान् परित्यज्य वने वसति राघवः ॥ १६ ॥

'मे जन्म धिक्' इत्यत्र कारणमाह—मत्कृत इत्यादि ॥

†इति लोकसमाक्रुष्टः पादेष्वद्य प्रसादयन् ।
रामस्य निपतिष्यामि [2]सीताया ‡लक्ष्मणस्य च ॥

इति लोकसमाक्रुष्टः—निन्दितः यस्मात्, तस्मात् मे जन्म धिक् । सोऽहमेतदपयशःपरिहाराय रामं प्रसादयन्—रामप्रसादहेतवे तस्य रामस्य पादेषु, पूजायै बहुवचनं, सीताया लक्ष्मणस्य च पादयोः

---

* जनेन्द्रः सन् निर्जनं देशं प्राप्य—इत्युत्तरार्धपरिशीलने जगत्यां पुरुषव्याघ्रः सन्—सकललोकपूज्यः सन् वीरासने रत आस्ते । जगत्यां पुरुषव्याघ्रः जनेन्द्रः निर्जनं प्राप्य वीरासने रतः आस्ते—इति वाऽन्वयः । सकलजनपरिवृतः राजा एवं एकान्ते मुनिर्वर्तेत इति भावः । † इति लोकसमाक्रुष्टः—एवंप्रकारेण लोकैरपवादं प्रापितः—**गो.** ‡ लक्ष्मणस्य कनिष्ठत्वेऽपि कार्यगौरवात् पादपतनम्—**गो.**

[1] नरेन्द्रो—ङ. [2] सीतायाश्च पुनःपुनः—ङ.

पतिष्यामि । स्वापराधप्रसादने कनीयस्स्वपि सर्वथाऽनुचितवन्दनेष्वपि प्रणामः प्रसिद्धः—कैकेयीदशरथादौ । रामद्रोह एव लक्ष्मणद्रोहः । एवं व्यवस्थिते श्रद्धाजाड्यात् 'सीतायाश्च—पुनःपुनः' इति पाठ इत्याह * ॥ १७ ॥

एवं स † विलपंस्तस्मिन् वने दशरथात्मजः ।
ददर्श महतीं पुण्यां पर्णशालां मनोरमाम् ॥ १८ ॥
सालतालाश्वकर्णानां पर्णैर्बहुभिरावृताम् ।
विशालां ‡ मृदुभिस्तीर्णां कुशैर्वेदिमिवाध्वरे ॥ १९ ॥

सालाः—वटपलाशादिदृढविशालपर्णवन्तः । तालाः—प्रसिद्धाः । अश्वकर्णः—सर्जः—முள்மாமரம் ॥ १९ ॥

शक्रायुधनिभैश्चैव § कार्मुकैः [1] भारसाधनैः ।
रुक्मपृष्ठैर्महासारैः शोभितां शत्रुबाधकैः ॥ २० ॥

शक्रायुधनिभैः, अत एव भारसाधनैः—अतिगुरुरणकार्यसाधकैः । 'सारो बले स्थिरांशे च' ॥ २० ॥

अर्करश्मिप्रतीकाशैः [2] घोरैस्तूणीगतैः शरैः ।
शोभितां दीप्तवदनैः सर्पैर्भोगवतीमिव ॥ २१ ॥

भोगवती—नागलोकः ॥ २१ ॥

---

* गोविन्दराजीये एवं पाठान्तरं प्रदर्शितम् । † विलपन् सन् , गच्छन्निति शेषः । ‡ अध्वरे वेदिमिव मृदुभिः कुशैस्तीर्णां, अधस्तात् तालादिपर्णैराच्छाद्य उपरि तृणाद्यास्तरणेन उटजनिर्माणं प्रसिद्धमेव । § कार्मुकैरिति बहुवचनात् अभ्यासयोग्यं कार्मुकान्तरमस्तीति गम्यते । भारसाधनैः—गुर्ववयवैः । यद्वा अतिगुरुतररणकार्यसाधनभूतैः । यद्वा भारः—धनुःपरिमाणविशेषः । यथोक्तं धनुर्वेदे ईशानसंहितायां—'भारं पलशतं विदुः । तेन भारेण चापानां प्रमाणमुपलभ्यते' इति—गो.

[1] भारवाहनैः—ङ. [2] घोरैस्तूण—च.

*महारजतवासोभ्यां असिभ्यां च विराजिताम् ।
रुक्मबिन्दुविचित्राभ्यां चर्मभ्यां चापि शोभिताम् ॥

महारजतवासोभ्यां—स्वर्णमयकोशवद्भ्यामित्यर्थः । चर्म-- 'खेटकः फलकं चर्म ' ॥ २२ ॥

†गोधाङ्गुलित्रैरासक्तैः[1] चित्रैः काञ्चनभूषणैः ।
अरिसङ्घैरनाधृष्यां मृगैः सिंहगुहामिव ॥ २३ ॥

काञ्चनभूषणैरुपलक्षितामिति शेषः । सिंहगुहामिव पर्णशालां ददर्शेत्यन्वयः ॥ २३ ॥

प्रागुदक्प्रवणां वेदिं विशालां [2]दीप्तपावकाम् ।
ददर्श भरतस्तत्र [3]पुण्यां [4]रामनिवेशने ॥ २४ ॥

अथ अत्यासत्त्या पर्णशालान्तर्गतपदार्थदर्शनम्—प्रागुदगित्यादि । प्रागुदक्—ईशानदिक्, तत्र किञ्चिन्निम्नपर्यवसानां, 'प्रवणो दक्षिणे प्रह्व क्रमनिम्ने चतुष्पथे ' वैजयन्ती ॥ २४ ॥

‡निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् ।
उटजे राममासीनं जटामण्डलधारिणम् ॥ २५ ॥

निरीक्ष्य स मुहूर्तं त्विति । अग्निमिति शेषः । गुरुं—रामम् ॥

---

* महारजतवासोभ्यां—कुसुम्बभासोभ्याम् । † उपलक्षणे तृतीया । शोभितामित्यनुकर्षो वा—गो. गोधा—करयोः ज्याघातवारणम् । अङ्गुलत्रं—ज्याकर्षणेनाङ्गुलिघातवारणम् । ‡ निरीक्ष्येति । जटामण्डलधारित्ववैलक्षण्येन निश्चयार्थं मुहूर्तं निरीक्ष्य, तेजोविशेषेण सामान्येन स्वगुरुं ज्ञातवानित्यर्थः—गो. प्रथमदर्शनेन स्तब्धः सन् किञ्चित्कालं स्थित इति वा तात्पर्यम् । अथवा—एतादृशीं पर्णशालां निरीक्ष्य ततः तत्रोटजे आसीनं रामं ददर्श इत्यर्थः ।

[1] चित्रकाञ्चन—च. [2] दीप्ततेजसम्—ङ. [3] पुण्ये—ङ. [4] रामनिकेतने—ङ.

*तं तु कृष्णाजिनधरं चीरवल्कलवाससम् ।
दर्दश राममासीनं अभितः पावकोपमम् ॥ २६ ॥

यं रामं ददर्श, तं कृष्णाजिनेत्याद्युच्यमानविशेषणकं अभितो ददर्श—समीपे ददर्शेत्यर्थः, अव्ययान्यनेकार्थानि ॥ २६ ॥

सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणम् ।
पृथिव्याः सागरान्तायाः भर्तारं धर्मचारिणम् ॥ २७ ॥
उपविष्टं महाबाहुं ब्रह्माणमिव शाश्वतम् ।
†स्थण्डिले [1] दर्भसंस्तीर्णे सीतया लक्ष्मणेन च ॥ २८ ॥

शाश्वतं ब्रह्माणं—श्रीहिरण्यगर्भमिव स्थितं, तदवतारत्वादेवं भासमानम् ॥ २८ ॥

तं दृष्ट्वा भरतः श्रीमान् [2] दुःखशोकपरिप्लुतः ।
अभ्यधावत धर्मात्मा ‡ भरतः कैकयीसुतः ॥ २९ ॥

अभ्यधावत—अभिजगाम ॥ २९ ॥

[3] दृष्ट्वैव विललापार्तः बाष्पसन्दिग्धया गिरा § ।
‖ अशक्नुवन् [4] धारयितुं धैर्यात् वचन[5]मब्रुवन् ॥ ३० ॥

---

* विशेषतो दर्शनमाह—तं त्वित्यादिना । .... उत्तरीयतया कृष्णाजिनधरं, अधराम्बरत्वेन चीरवल्कलवाससम् .... अभितः पावकोपमं—तादृशतपोविशेषेण समन्तात्तेजः-परिवृतम् ... यद्वा दुर्दर्शमित्यर्थः । अत एव पूर्वश्लोके 'निरीक्ष्य स मुहूर्तं' इत्युक्तम्—गो. † स्थण्डिले—भूमौ—गो. ‡ द्वितीयभरतशब्दः उत्तरश्लोकेन संबध्यते—गो. भरतस्येव कवेरपि वर्णनीयमयीभावेनातिहर्षाविष्टत्वात् अत्र प्रकरणे द्विरुक्तिर्न दोषाय—ति. § गिरा, उपलक्षितः—गो. ‖ 'धनेन क्रीतुमशक्नुवन्' इत्यादौ क्रयणसाधनधनस्याभावबोधवत् धारणसाधनस्य धैर्यस्याभावात् धारयितुं अशक्नुवन्नित्यर्थलाभः ।

[1] चर्मसंस्तीर्णे—ङ. [2] दुःखमोह—च. [3] दृष्ट्वैवं—ङ. [4] वारयितुं—च. [5] मब्रवीत्—ङ.

दृष्ट्वैव—दर्शनमात्रेणैव। आर्तः—खिन्नः सन्, तां चार्तिं धैर्यात् धारयितुमशक्नुवन्, अत एव बाष्पसन्दिग्धया—शोकोष्मसन्दिग्धवर्णया गिरा—वागिन्द्रियेण वचनं अब्रुवन्*—अव्यक्तं वदन् विललाप। एवं स्थिते पाङ्के 'वचनमब्रवीत्' इति पठित्वा असङ्गमेव च व्याख्यामकरोत् ॥ ३० ॥

**यः संसदि प्रकृतिभिः भवेद्युक्त उपासितुम्।**
**वन्यैर्मृगैरुपासीनः सोऽयमास्ते ममाग्रजः ॥ ३१ ॥**

तादृशं विलापवचनं—यस्संसदीत्यादि ॥ ३१ ॥

**वासोभिः बहुसाहस्रैः यो [1]महात्मा पुरोचितः†।**
**[2]मृगाजिने सोऽयमिह प्रवस्ते धर्ममाचरन् ॥ ३२ ॥**

वासोभिरिति। वसनोचित इति शेषः। बहुसाहस्रैः—बहुसाहस्रमूल्यक्रीतैः, 'प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणं अलुकि' इतिवचनेन 'शतमानविंशतिकसहस्र' इति सूत्रेण सहस्रान्तादप्यणि 'विभाषा कार्षापण' इत्यादिना लुगभावपक्षे 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' इत्युत्तरपदवृद्धौ रूपम्। सोऽयं—पुरा तादृग्वासोवसनार्हः इह—वने, मृगाजिने—अन्तरीयोत्तरीयरूपे, प्रवस्ते। किमर्थमेवमित्यतः—धर्ममाचरन्निति। पितृवचनपरिपालनरूपः—धर्मः ॥

**[3]अधारयद्यो विविधाः चित्राः सुमनस[4]स्तदा।**
**सोऽयं जटाभारमिमं [5]वहते राघवः कथम्? ॥ ३३ ॥**

---

* गिरा वचनमब्रुवन्नित्यनेन—गीरूपवचनमब्रुवन्नित्यर्थलाभादेवं व्याख्यातम्। शोकाव किञ्चिदप्यवदन् केवलं सन्दिग्धया गिरा विललाप इत्यन्वयो वा। † उचितैः, अलंकर्तुमिति शेषः; षष्ठ्यर्थे तृतीया वा। मृगाजिने—मृगचर्मणी प्रवस्ते—आच्छादयति—गो.

[1] महार्थः—ङ. [2] मृगाजिनैः—ङ. [3] आधारयद्यो—च. [4] स्सदा—च.
[5] सहते—च.

यस्य यज्ञैः [1] यथोद्दिष्टैः युक्तो धर्मस्य सञ्चयः ।
शरीरक्लेशसंभूतं स धर्मं परिमार्गते ॥ ३४ ॥

यस्य यज्ञैः ऋत्विक्क्लेशसाध्यैः धर्मस्य सञ्चयो युक्तः, सोऽयं स्वशरीरक्लेशेन संभूतं उत्पन्नं धर्मं परिमार्गते ॥ ३४ ॥

चन्दनेन महार्हेण यस्याङ्गमुपसेवितम् ।
*मलेन तस्याङ्गमिदं कथमार्यस्य सेव्यते? ॥ ३५ ॥

मलेनेति । उद्वर्तनरहितदण्डवत्त्रिषवणाप्लवमात्रात् मलस्थितिरङ्गे ॥

†मन्निमित्तमिदं दुःखं प्राप्तो रामः सुखोचितः ।
धिक्! जीवितं नृशंसस्य मम लोकविगर्हितम् ॥ ३६ ॥
इत्येवं विलपन् दीनः प्रस्विन्नमुखपङ्कजः ।
पादावप्राप्य रामस्य पपात भरतो रुदन् ॥ ३७ ॥
दुःखाभितप्तो भरतः राजपुत्रो महाबलः ।
उक्त्वाऽऽर्येति [2] सकृद्दीनं ‡ पुनर्नोवाच किञ्चन ॥ ३८ ॥

पादावप्राप्येति दुःखातिशयवशात् । पुनर्नोवाचेत्यपि तत एव ॥ ३७-३८ ॥

§ बाष्पापिहितकण्ठश्च प्रेक्ष्य रामं यशस्विनम् ।
[3] आर्येत्येवाथ संक्रुश्य व्याहर्तुं [4] नाशकत्तदा ॥ ३९ ॥

बाष्पाभिभूतः—बाष्पाभिरुद्धः कण्ठः यस्य स तथा ॥ ३९ ॥

---

* चन्दनेनेति पूर्वार्धे निर्देशात्, वने तदभावेन मलेनेति निर्देशः। वनसञ्चारादिना तस्य सभंवश्च । † मम राज्यसंपादनेच्छया खलु कैकेय्या एवं कृतमिति भावः । ‡ दीनं उक्त्वेति क्रियाविशेषणम् । § वक्तुमशक्यत्वे हेतुमाह—बाष्पापिहितकण्ठ इत्यादिना—गो.

[1] यथामृष्टैः, यथादृष्टैः-ङ. यथादिष्टैः—च. [2] सकृद्दीनः—ङ. [3] अर्येत्येवाभि—च. [4] नाशकत्पुनः—ङ.

शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ।
तावुभौ स समालिङ्ग्य रामश्चाश्रूण्यवर्तयत् ॥ ४० ॥

ततः सुमन्त्रेण गुहेन तेन
समीयतू राजसुतावरण्ये ।
दिवाकरश्चैव निशाकरश्च
यथाऽम्बरे शुक्रबृहस्पतिभ्याम् ॥ ४१ ॥

तेन—भरतेनेत्यर्थः । राजसुतौ—रामलक्ष्मणौ ॥ ४१ ॥

तान् पार्थिवान् वारणयूथपाभान्
समागतांस्तत्र महत्यरण्ये ।
*वनौकसस्तेऽपि समीक्ष्य सर्वेऽ-
प्यश्रूण्यमुञ्चन् प्रविहाय हर्षम् ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकोनशततमः सर्गः

---

हर्षं विहायाश्रूण्यमुञ्चन्निति । तेषां राज्ञां दर्शनजः सन्तोषः प्रथमं, तेषां दुःखदर्शनात् अनन्तरं दुःखादश्रुपातश्च । रवि(४२)मानः सर्गः ॥ ४२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकोनशततमः सर्गः

---

* वनौकसः—ऋषयोऽपि एतावता कालेन रामसंवासजं स्वाभाविकं वा हर्षं प्रविहाय अश्रूण्यमुञ्चन् ।

## शततमः सर्गः

[कुशलप्रश्नः]

*जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि ।
ददर्श रामो †दुर्दर्शं युगान्ते [1]भास्करं यथा ॥ १ ॥

अथ रामेण कुशलप्रश्नः । जटिलमित्यादि । 'अद्य प्रभृति भूमौ तु शयिष्ये' 'जटाचीराणि धारयन्' इत्यष्टाशीतितमसर्गे भरतेनोक्तत्वात् जटिलत्वं भरतस्य च । युगान्ते भास्करमित्यनुकर्षः । इदं तु कवीनामुत्प्रेक्षामात्रम्, न तु सूर्यपातः कदाऽपि ॥ १ ॥

‡कथंचिदभिविज्ञाय विवर्णवदनं कृशम् ।
भ्रातरं भरतं रामः परिजग्राह [2]बाहुना ॥ २ ॥
आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च [3]राघवः ।
अङ्के भरतमारोप्य [4]पर्यपृच्छत् समाहितः ॥ ३ ॥

---

* दर्शनमात्रेण भरतो राज्यं पालयतीति कृत्वा राज्यनीतिं पृच्छति शततमे । ननु गङ्गातीरे 'अद्य प्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा । फलमूलाशनो नित्यं जटाचीराणि धारयन्' (अयो. 88-26) इति जटावल्कलधारणं प्रतिज्ञातम् । पुनर्नवतितमे भरद्वाजदर्शनसमये 'वसानो वाससी क्षौमे' (अयो. 90-2) इति क्षौमवस्त्रं धृतवानित्युच्यते । अत्र तु 'जटिलं चीरवसनं' इति सिद्धवदनूद्यते । कथमेतत्संगच्छत इति चेत्—अत्राहुः—प्रतिज्ञाया रात्रौ कृतत्वात् अपरेद्युर्भरद्वाजदर्शनानन्तरं जटावल्कले धृतवानित्यविरोध इति—**गो.** यद्यपि नवतितमे सर्गे 'वसानो वाससी क्षौमे' (2) इति भरद्वाजदर्शनवेलायां श्रूयते; तथाऽपि गुहग्रामे प्रतिज्ञातस्य भरद्वाजाश्रमनिर्गमानन्तरं धारणमिति न विरोधः—**ति.** अधिकं तत्रैव द्रष्टव्यम् । अत्र आद्यश्लोकद्वयं गतसर्गान्तिमभागानुवादरूपम् । † युगान्ते भास्करं यथा—प्रलयकालिकसूर्यमिव दुर्दर्शमिति वा । ‡ कथश्चिदभिविज्ञाने हेतुद्वयं—विवर्णवदनं कृशमिति—**गो.**

[1] भरतं—ङ. [2] पाणिना—च. [3] बाहुना—ङ, राघवम्—च. [4] पर्यपृच्छत सादरम—च.

समाहित इति। कुशलप्रश्नद्वारा धर्मबोधनसावधानचित्त इत्यर्थः ॥ ३ ॥

**क्व नु तेऽभूत् पिता, तात! यदरण्यं त्वमागतः।**
**न हि त्वं जीवतस्तस्य वनमागन्तुमर्हसि * ॥ ४ ॥**

हे तात! ते पिता क्वाभूत्? इह वा परत्र वेत्यर्थः। कुत एवं संशयप्रसङ्ग इत्यतः—न हि त्वमित्यादि। जीवतस्तस्येति। सेवां हित्वेति शेषः। नार्हसीति। पितृशुश्रूषाया नित्यकर्तव्यत्वात् मदसन्निधानसमये त्वयेत्याशयः ॥ ४ ॥

**† चिरस्य बत पश्यामि दूरात् भरतमागतम्।**
**‡ दुष्प्रतीकमरण्येऽस्मिन् किं, तात! वनमागतः ॥ ५ ॥**

दूरात्—मातुलदेशात् चिरस्यागतं भरतं पश्यामि बत! इति सन्तोषवचनं सामान्यतः, न भरतं प्रति। दुष्प्रतीकं--दुर्दशाकारणम्। भरतस्य वेदं विशेषणम्, वनस्य वा। हे तात! दुष्प्रतीकं वनं किमागतः? अस्मिन्नरण्ये तव किं प्रयोजनम्? ॥ ५ ॥

**कच्चिद्धारयते, तात! राजा यत् त्वमिहागतः।**
**[1] कच्चिन्नु दीनः सहसा राजा लोकान्तरं गतः ॥ ६ ॥**

---

* रामस्य प्रश्नान्तरसम्बन्धदर्शनेन भरतो नोत्तरमुक्तवानिति बोध्यम्—**गो.**

† बतेत्यद्भुते। दूरात्—दूरावस्थितकेकयनगरात्। ‡ दुष्प्रतीकं—वैवर्ण्यादिना दुर्ज्ञेयावयवम्—**गो.** दुष्प्रतीकमिति भरतविशेषणं, वनविशेषणं वा। आद्ये कार्श्यवैवर्ण्यादिना दुर्ज्ञेयाकारं, वनमपि भीषणतया। ........ अरण्यं गजाद्युपभोग्यं, तद्वर्ति वनं आम्रादियुतं मनुष्यभोग्यम्—**ति.** दूरात् चिरस्यागतं भरतं अरण्येऽस्मिन् दुष्प्रतीकं पश्यामि। यद्वा चिरस्य दूरादागतं दुष्प्रतीकं भरतं अरण्ये पश्यामि तव। अरण्येऽस्मिन् आगतमिति वा ॥

[1] कच्चिन्न—ङ. च.

अथ भरतस्यागमनप्रयोजनं, शासति राजनि तदाज्ञया रामानयनं वा स्यात्? अथवा राज्ञोऽप्यपाये निरालम्बतया दुःखाद्वा रामदर्शनाय वा स्यात्? तत्र प्रथमः पक्ष उपन्यस्यते--कच्चिदित्यादि। यत्--यस्मात् त्वं राजाज्ञयेहागतः, तस्मात् राजा प्राणान् धारयते कच्चित्? अथ द्वितीयप्रश्नः—अथवा दीनः सः लोकान्तरं गतः कच्चिन्नु? यत् त्वमिहागत इत्यनुकर्षः ॥ ६ ॥

कच्चित्, सौम्य! न ते राज्यं भ्रष्टं बालस्य शाश्वतम्* ।
कच्चित् शुश्रूषसे, तात! [1] पितरं सत्यविक्रमम् ॥ ७ ॥

इममेव पक्षमाश्रित्य प्रश्नः—न ते राज्यं भ्रष्टमिति। मूलप्रभोरत्ययाद्धेतोः प्राप्ता भ्रंशशङ्का। अथाजीवनपक्षस्य निश्चयाभावात् अश्लीलत्वाच्च तं पक्षं परित्यज्य राजजीवनपक्षमेवावलम्ब्य प्रश्नः--कच्चित् शुश्रूषस इत्यादि ॥ ७ ॥

कच्चिद्दशरथो राजा [2]कुशली [3]सत्यसङ्गरः ।
राजसूयाश्वमेधानां आहर्ता [4]धर्मनिश्चितः ॥ ८ ॥

धर्मान्वितं निश्चितं--निश्चयः यस्य स तथा, भावे निष्ठा ॥ ८ ॥

†स कच्चित् ब्राह्मणो विद्वान् धर्मनित्यो महाद्युतिः ।
इक्ष्वाकूणामुपाध्यायः यथावत्, तात! पूज्यते ॥ ९ ॥

इक्ष्वाकूणां उपाध्यायः—वसिष्ठः ॥ ९ ॥

---

* शाश्वतं राज्यं भ्रष्टं न कच्चित्। † वसिष्ठकौसल्यादीनामागमनं 103 सर्गे वक्ष्यते।

[1] पितुः सत्यपराक्रम—च. [2] कुलीनः—ङ. [3] विगतज्वरः—ङ. [4] धर्मनिश्चयः—ङ.

**सा, तात ! कच्चित् कौसल्या *सुमित्रा च प्रजावती ।**
**सुखिनी कच्चिदार्या च देवी नन्दति कैकयी ॥ १० ॥**

**कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः ।**
**†अनसूयुरनुद्रष्टा [1]सत्कृतस्ते पुरोहितः ॥ ११ ॥**

कुलपुत्रः--महाकुलप्रसूतः । अनुद्रष्टा- -तावकसकलहित-कृत्यस्यानुक्षणद्रष्टा । तथा ते पुरोहित इति । रामस्य वसिष्ठवत् प्रातिस्विकपुरोहित इत्यर्थः ॥ ११ ॥

**‡कच्चिदग्निषु ते युक्तः [2]विधिज्ञो मतिमानृजुः ।**
**हुतं च होष्यमाणं च काले वेदयते सदा ॥ १२ ॥**

विधिज्ञः--अग्निहोत्राद्यश्वमेधान्तसकलहोमविधिज्ञ इत्यर्थः । काले--होमकाले । वेदयते, तुभ्यमिति शेषः ॥ १२ ॥

---

* प्रजावती—सुप्रजाः सुमित्रा च सुखिनी कच्चिदित्यन्वयः । आर्येति स्वमात्रपेक्षयाऽपि बहुमानोक्तिः, कैकेयी नन्दति कच्चित्–गो. अत्र कौसल्यासुमित्रयोः 'सुखिनी' इति, कैकेय्याः 'नन्दति' इति च पदं प्रयुक्तं अवधेयम् । † अनुद्रष्टा—वसिष्ठोपदिष्टानामुपद्रष्टा । ते पुरोहित इत्यनेन रामस्य सुयज्ञ इव भरतस्यापि प्रातिस्विकः कश्चित् पुरोहितोऽस्तीति गम्यते । सुयज्ञ एवोच्यत इत्यप्याहुः-गो. ‡ 'पितृव्यपुत्रे सापत्ने परनारीसुतेषु च । विवाहदानयज्ञादौ परिवेदो न दूषणम्' इति स्मरणात् द्वैमातुरेष्वधिवेदनदोषाभावात् यज्ञोऽपि कृत इत्यारोप्य पृच्छति—कच्चिदग्निष्विति । अथवा अग्निषु—अग्निकार्येषु । युक्तः-सावधानः नियुक्तो वा । अग्निशुश्रूषणपर इत्यर्थः-गो.

[1] सम्मतस्ते–ङ. [2] दानज्ञो–ङ.

कच्चिद्देवान् पितॄन् [1]मातॄः गुरून् पितृसमानपि ।
वृद्धांश्च [2]तात *वैद्यांश्च ब्राह्मणांश्चाभिमन्यसे ॥ १३ ॥

वैद्यांश्च ब्राह्मणानिति । 'ब्राह्मणांश्च नमस्यसि' इत्यग्रे सामान्यतः प्रश्नो भविष्यति । अत्र तु धन्वन्तरिशास्त्रपरिश्रमवन्तो ब्राह्मणा एव पृच्छयन्ते । ते किल नित्यं पूज्याः, आत्मरक्षाहेतुत्वात् । ननु कथं ब्राह्मणस्य भैषज्यकर्म ? सति सामर्थ्ये तदभ्यासस्याप्यदोषत्वात् । ननु 'अपूतो ह्येषोऽमेध्यो यो भिषक्' इति श्रुत्या निन्दितत्वात् कथं ब्राह्मणो भिषक् ? तत्तु वैद्यशास्त्रार्थविज्ञानसंप्रदायक्रियायोगादिरहिततया चिकित्साप्रवृत्तस्य हत्यातत्पापसंभवात् अज्ञविषयम् । वस्तुतस्तु आवश्यकस्थले ब्राह्मणोत्तमसाध्यं भैषज्यं महते पुण्याय । श्रुतिसम्मततरमेव तस्य सुब्राह्मण्यम्, 'विप्रस्स उच्यते भिषक्' 'रक्षोहामीव चातनः' इति घण्टाघोषात् ॥ १३ ॥

†इष्वस्त्रवरसंपन्नं अर्थशास्त्रविशारदम् ।
‡सुधन्वानमुपाध्यायं कच्चित् त्वं, [3]तात ! मन्यसे ॥१४॥

---

*विद्या येषां सन्तीति वैद्याः—विद्वांसः, तान् । ब्राह्मणान्—ब्रह्मविदः यद्वा वैद्यान्—भिषजः । तेषां बहुमतिश्च धनादिना परितोषणम् । ब्राह्मणानिति जातिमात्रपरो वा । तदा विद्याशीलादिकमपरीक्ष्य ब्राह्मणत्वमात्रेण यथायोग्यं बहुमानं विवक्षितम्–**गो.** 'वैद्यांश्च ब्राह्मणांश्च' इति चकारद्वयसत्त्वादेवं व्याख्यानम् । उत्तरत्र ६१ श्लोके 'ब्राह्मणांश्च नमस्यसि' इति प्रश्नेऽपि तत्र 'सिद्धार्थान्' इति विशेषणात् गुणतोऽपि ब्राह्मण्यं विवक्षितम् । अत्र तु सामान्यतो ब्राह्मण्यमिति न पौनरुक्त्यम् ॥
†इषवः—अमन्त्रका बाणाः, अस्त्राणि—समन्त्रकाः–**गो.** ‡सुधन्वानं—सुधन्वनामकं उपाध्यायं—धनुर्वेदाचार्यम्–**गो.**

[1] भृत्यान्–**च.** [2] तत्र–**ङ.** [3] नावमन्यसे–**ङ.**

इषवः—केवलं बाणप्रयोगः, अस्त्रं—समन्त्रबाणप्रयोगः, वरशब्द उभयसम्बद्धः, तदुभयसंपन्नस्तथा । अर्थसाधकं शास्त्रं—राजनीतिशास्त्रमिति यावत् । उपाध्यायं—धनुर्वेदोपाध्यायम् ॥ १४ ॥

कच्चिदात्मसमाः* शूराः श्रुतवन्तो जितेन्द्रियाः ।
कुलीनाश्चेङ्गितज्ञाश्च[1] कृतास्ते, तात! मन्त्रिणः ॥ १५ ॥

मन्त्रो विजयमूलं हि राज्ञां भवति, राघव!
† सुसंवृतो[2] मन्त्रधरैः अमात्यैः शास्त्रकोविदैः ॥ १६ ॥

सुसंवृतो मन्त्र इत्यन्वयः ॥ १६ ॥

‡ कच्चिन्निद्रावशं नैषीः कच्चित् काले प्रबुध्यसे ।
कच्चिच्चापररात्रेषु चिन्तयस्यर्थनैपुणम् ॥ १७ ॥

अर्थनैपुणं—नैपुणं—सामर्थ्यं—उपायः—अर्थप्राप्त्युपाय इत्यर्थः ॥

§ कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिस्सह ।
कच्चित्ते[3] मन्त्रितो मन्त्रः राष्ट्रं न परिधावति ॥ १८ ॥

राष्ट्रं न परिधावति । लोकैर्न ज्ञायत इत्यर्थः ॥ १८ ॥

कच्चिदर्थं विनिश्चित्य लघुमूलं महोदयम् ।
क्षिप्रमारभसे[4] कर्तुं न दीर्घयसि, राघव! ॥ १९ ॥

---

* आत्मसमाः—विश्वसनीया इति यावत्-गो. † अमात्यैः सुसंवृतः—गुप्तं रक्षितः मन्त्रः राज्ञां विजयमूलमित्यन्वयः । ‡ निद्रावशमिति कथनात् अजितनिद्रत्वं विवक्षितम् । § 'अन्या मध्यस्थचिन्ता हि विमर्शाभ्यधिकोदया' (अयो. १-१६) इति ह्युक्तम् । एवं बहुभिर्मन्त्रणेऽपि ऐकमत्यं, मन्त्रगोपनं च दुर्लभं स्यात् । अतः परिमितैः मन्त्रणमभिमतम् ।

[1] सत्कृताः—ङ. [2] मन्त्रिधुरैः—च. [3] मन्त्रिते—ङ. [4] कर्म—च.

लघुमूलं — अल्पयत्नसाध्यम् । महोदयं — महाफलम् । न दीर्घयसि—दीर्घकालविलम्बं न करोषि ॥ १९ ॥

कच्चित्ते सुकृतान्येव * कृतरूपाणि वा पुनः ।
विदुस्ते सर्वकार्याणि न कर्तव्यानि पार्थिवाः ॥ २० ॥

कृतरूपाणि—कृतकल्पानि । सुकृतान्येव विदुः, कृतरूपाणि वा विदुः, न तु कर्तव्यानि विदुः कच्चित् ॥ २० ॥

† कच्चिन्न तर्कैर्युक्त्या वा ये चाप्यपरिकीर्तिताः ।
त्वया वा तव वाऽमात्यैः बुध्यते, तात ! मन्त्रितम् ॥२१॥

ये चापि मन्त्राः त्वया अमात्यैश्च अपरिकीर्तिता अपि युक्त्या–अर्थापत्त्या तर्कैः—अनुमानैर्वा परैर्न बुध्यते कच्चित् । परैर्मन्त्रितं तु त्वया तवामात्यैश्च युक्त्यादिभिः बुध्यते कच्चित् ॥ २१ ॥

कच्चित् ‡[1] सहस्रान्मूर्खाणामेकमिच्छसि पण्डितम् ।
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निश्श्रेयसं महत् ॥ २२ ॥

अर्थकृच्छ्रेषु—कार्यसङ्कटेषु । महन्निःश्रेयसं कुर्यादिति । अव्यभिचरितनिस्तरोपायबोधनेनेति शेषः ॥ २२ ॥

---

* सुकृतान्येव—सुनिष्पन्नान्येव...कृतरूपाणि—कृतप्रायाणि वा...मन्त्रेण कर्तव्यतया निश्चितानि करणात् पूर्वं न विदुरित्यर्थः—गो. † मन्त्रितं कार्यं त्वया वा, तवामात्यैर्वा हेतुभिः, तर्कैः—ऊहैः, युक्त्या वा—अनुमानेन वा, ये चाप्यपरिकीर्तिताः—इङ्गितादयः तैर्वा न बुध्यते कच्चित्, परैरिति शेषः । भवान् भवदीयामात्याश्च मन्त्रितार्थविषयपराभ्यूहस्थानानि सूक्ष्माण्यपि स्थगयन्ति कच्चिदित्यर्थः—गो. ‡ मूर्खाणां सहस्रात्—मूर्खसहस्रापेक्षया ।

[1] सहस्रैर्मूर्खाणां—च.

*सहस्राण्यपि मूर्खाणां यद्युपास्ते महीपतिः ।
अथवाऽप्ययुतान्येव नास्ति तेषु सहायता ॥ २३ ॥

एकोऽप्यमात्यो मेधावी शूरो दक्षो विचक्षणः ।
राजानं †[1]राजमात्रं वा प्रापयेन्महतीं श्रियम् ॥ २४ ॥

कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः ।
जघन्यास्तु जघन्येषु भृत्याः कर्मसु योजिताः ॥ २५ ॥

योजिता इति । कार्यार्थमिति शेषः ॥ २५ ॥

अमात्यानुपधातीतान्‡ पितृपैतामहान् शुचीन् ।
श्रेष्ठान् श्रेष्ठेषु कच्चित् त्वं नियोजयसि कर्मसु ॥ २६ ॥

उपधातीतान्—उपाधिप्रयुक्तसंश्रयरहितान् । सन्तानपरंपरया स्वाभाविकराजसंश्रयान् । तदेवोक्तं—पितृपैतामहानिति ॥ २६ ॥

§कच्चिन्नोग्रेण दण्डेन [2]भृशमुद्वेजितप्रजम् ।
[3]राष्ट्रं तवानुजानन्ति मन्त्रिणः, कैकयीसुत ! ॥ २७ ॥

उद्वेजितप्रजं सत् नानुजानन्ति—नानुसन्दधते कच्चित् ॥ २७ ॥

---

* अन्वयेनोक्तं व्यतिरेकेन द्रढयति—सहस्राण्यपीति। †राजमात्रं—राजतुल्यमिति यावत् । ‡ उपधातीतान्—स्वव्यतिरिक्तेष्वर्थाद्युपाधिरहितान् । यद्वा, सुपरीक्षाऽतीतान , 'उपधा सुपरीक्षा स्यात्' इति वैजयन्ती। श्लाघ्यवस्त्राभरणादिकं पुरुषमुखेन संप्रेष्य अन्तःपुरप्रेषितं, परराजप्रेषितं इति प्रलोभ्य परीक्षां कुर्वन्ति राजानः, तामतीतानित्यर्थः–**गो**. उपधा—उत्कोचः, तमतीतान्–**ति**. 'उपधा धर्माद्यैः यत् परीक्षणम्' इत्यमरः । § तव उग्रेण दण्डेन उद्वेजितप्रजं - पीडितप्रजायुक्तं, राष्ट्रं—राज्यं, मन्त्रिणः नानुजानन्ति—नानुमन्यन्ते कच्चित् । राजानं त्वां उग्रदण्डात् निवर्तयन्ति कच्चिदित्यर्थः–**गो**.

[1] राजपुत्रं–**च**. [2] भृशमुद्वेजिताः प्रजाः–**च**. [3] राष्ट्रे–**च**.

कच्चित् त्वां नावजानन्ति याजकाः पतितं यथा ।
* [1] उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ २८ ॥

नावजानन्तीति । अयाज्योऽयमिति तावत्कश्चित्पापानुसन्धानेन तु यथा साक्षात्पतितमुपेक्षन्ते, तथा त्वां नोपेक्षन्ते कच्चित् । तत्र दृष्टान्तः—उग्रेत्यादि । स्त्रियः—कुलस्त्रियः । उग्रा—उग्राख्यहीनजातिस्त्री, तत्प्रतिग्रहीतारं, तां च कामयमानं—मुगभाव आर्षः, तन्नित्यसक्तमित्यर्थः, पतिमिति शेषः ॥ २८ ॥

† उपायकुशलं वैद्यं [2] भृत्यं सन्दूषणे रतम् ।
शूरमैश्वर्यकामं च यो न हन्ति स [3] वध्यते ॥ २९ ॥

उपायकुशलं—राज्ञः सकाशादर्थग्रहणाय व्याध्युत्पादनोपायकुशलं वैद्यं—भिषजम् ; सन्दूषणे—स्वामिदूषणे रतं भृत्यं—सेवकं ; ऐश्वर्यकामं—राजानमपच्छिद्य तदैश्वर्यकामं शूरं—प्रभुं च यो न हन्ति, स राजा तैरेव भिषगादिभिर्हन्यते । लोकप्रसिद्धश्चायमर्थः ॥ २९ ॥

---

* उग्रप्रतिग्रहीतारमिति उपामानोपमेययोः साधारणविशेषणम् । उग्रेण—दण्डोपायेनादण्ड्येभ्यो धनग्रहणं कुर्वन्तं त्वां उग्रप्रतिग्रहीतारं—उग्रेण दुर्दानेन धनप्रतिग्रहीतार पतितं—यष्टुकामं पतितं याजकाः—ऋत्विज इव । उग्रेण कर्मणा—बलात्कारेण प्रतिग्रहीतारं कामयानं पुरुषं स्त्रिय इव—गो. उग्रेण कर्मणा—बलात्कारादिना प्रतिग्रहीतारं कामयानं—कामुकं स्त्रिय इव याजकाः पतितमिव च नावजानन्ति, प्रजा इति शेषः । ....परे तु—उग्रः—शिवः, तत्प्रतिग्रहीतारं—अल्पपुंस्त्वं ; तत्प्रतिग्रहीतुः ईदृशषण्डतायाः कर्मविपाकशास्त्रे उक्तेरित्याहुः—ति. प्रजातिक्रमणं उग्रकरग्रहणं च त्वयि नास्ति कच्चिदिति भावः—ती. † उपायेषु—सामाद्युपायेषु कुशलं—निपुणम् । वैद्यं—कणिकोक्तकुटिलनीतिविद्याविदम् । [चाणक्याद्युक्तकुटिलनीतिशास्त्रविदम्] । भृत्यसन्दूषणे रतं—अन्तरङ्गभृत्यानां सन्दूषणे—असद्दोषोद्घाटनेन तद्विघटने रतम् । शूरं—राजहिंसनेऽपि निर्भयं, ऐश्वर्यकामं—क्रमेण राजैश्वर्याक्रमणकामं च—गो.

[1] उग्र—ङ. च. झ. [2] भृत्यसन्दूषणे—ङ. [3] हन्यते—च.

*कच्चिद्धृष्टश्च शूरश्च मतिमान् धृतिमान् शुचिः ।
कुलीनश्चानुरक्तश्च दक्षः सेनापतिः कृतः ॥ ३० ॥

बलवन्तश्च कच्चित्ते मुख्या युद्धविशारदाः ।
†[1]दृष्टापदानविक्रान्ताः त्वया सत्कृत्य मानिताः ॥ ३१ ॥

दृष्टं—वृत्तरणानुभूतं अपदानं—शौर्यं, तज्ज विक्रान्तं—परयोधाभिभवनं येषां ते तथा ॥ ३१ ॥

कच्चित् बलस्य भक्तं च वेतनं च यथोचितम् ।
संप्राप्त[2]कालं दातव्यं ‡ददासि न विलम्बसे ॥ ३२ ॥

भक्तं—दैनन्दिनदेयान्नम् । वेतनं—प्रतिमासदेयं सेवाभृतिः ॥

कालातिक्रमणाच्चैव भक्तवेतनयोर्भृताः§ ।
[3]भर्तुः कुप्यन्ति ‖दुष्यन्ति सोऽनर्थः सुमहान् स्मृतः ॥

भृताः—कर्मणि क्तः, भृत्या इति यावत् । दुष्यन्ति—विनाशयन्ति कार्याणि । स इति । भृत्यकोप इति यावत् ॥ ३३ ॥

---

* हृष्टः—राजकृतसत्कारेण सन्तुष्टः । यद्वा—धृष्ट इति च्छेदः ; धृष्टः—व्यवहारेषु प्रगल्भः । तादृशं पूर्वसेनापतिं विहाय अतादृशमन्यं न परिगृहीतवानसि कच्चिदित्यर्थः-**गो.** † दृष्टं—साक्षात्कृतं अपदानं —पूर्ववृत्तं ('अपदानं कर्म वृत्तं' इत्यमरः) पौरुषं येषां ते तथोक्ताः—**गो.** ‡ ददासि, न विलम्बसे कच्चित्—कालातिक्रमणं विना ददासि कच्चित्-**गो.** § भृताः—भृतिजीविनः, भटा इति यावत्-**गो.** ‖ यतः कुप्यन्ति, अत एव दुष्यन्ति—'क्रुद्धो हन्यात् गुरूनपि' इति हि नीतिः ।

[1] दृष्टापदानाः—ङ. [2] काले—ङ. [3] भर्तुरप्यतिकुप्यन्ति—च.

* कच्चित् सर्वेऽनुरक्तास्त्वां † कुलपुत्राः ‡ प्रधानतः ।
कच्चित् प्राणांस्तवार्थेषु संत्यजन्ति समाहिताः ॥ ३४ ॥

कुलपुत्राः--कुलदासाः । प्रधानतः–प्राधान्येन--अन्तरङ्गतया ॥

कच्चिज्जानपदो विद्वान् दक्षिणः प्रतिभानवान् ।
§ यथोक्तवादी दूतस्ते कृतः, भरत ! पण्डितः ॥ ३५ ॥

जानपदः–स्वजनपदे भवः । विद्वान्–सर्वशास्त्रवित् । प्रतिभानवान्–प्रत्युत्पन्नमतिः । यथोक्तवादी–यथोक्तसन्देशप्रतिसन्देशवादी । पण्डितः–परिच्छेत्ता । 'दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् । इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्भवम् ॥' इति मनुः ॥ ३५ ॥

‖ कच्चिदष्टा[1]दशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैः वेत्सि तीर्थानि [2]चारकैः ॥ ३६ ॥

---

* राज्ञः अङ्गरक्षकाः वंशपरंपरयाऽऽगताः त्वां अनुरक्ताः कच्चित् । तादृशाः ते त्वदर्थं प्राणानपि त्यक्तुं समाहिता वर्तन्ते कच्चिदिति भावः । अङ्गरक्षकाणामयं धर्मः सुप्रसिद्धः । † कुलपुत्राः—ज्ञातयः–ति. क्षत्रियकुलप्रसूताः, ज्ञातय इति वा-गो. ‡ प्रधानतः—प्रधानाः सार्वविभक्तिकः तसिः--गो. § उक्तमनतिक्रम्य सन्देशप्रतिसन्देशवदनशीलः ; कार्योपयोगितया बहुमुखं व्याहरन्नपि स्वाम्युक्तमजहदेव व्यवहर्तेति यावत्–गो. ‖ अन्येषु परपक्षेषु अष्टादशतीर्थानि स्वपक्षे पञ्चदशतीर्थानि च । स्वकीयमन्त्रिपुरोहितयुवराजा न परीक्ष्याः, तेषां सदा स्वसमीपवर्तित्वेन तत्स्वभावस्य स्वेनैव ज्ञातत्वात् । तथोक्तं नीतिशास्त्रे—'चारान् विचारयेत्तीर्थेष्वात्मनश्च परस्य च । पाषण्डादीनविज्ञातानन्योन्यमितरैरपि । मन्त्रिणं युवराजं च हित्वा स्वेषु पुरोहितम्' इति । एषां तीर्थशब्दवाच्यत्वमुक्तं हलायुधे 'योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि' इति–गो. अधिकं तत्रैव द्रष्टव्यम् ॥

[1] दशान्येषु–ङ. [2] चारणैः–ङ.

कच्चिदष्टादशेत्यादि । अष्टादशाख्येषु— अष्टादशसङ्ख्या-सङ्ख्येयेषु तीर्थेषु, स्वपक्षे पञ्चदशतीर्थानि, चकारात् परपक्षे सर्व-तीर्थानि च । एकस्मिन्नेकस्मिन् विषये नियुक्तैः परस्परमविज्ञातैः त्रिभिस्त्रिभिः चारैः--अपसर्पैः वेत्सि कच्चित्? तीर्थानि तु--मन्त्रिपुरोहितसेनापतियुवराजाः, प्रतिहारी, अन्तर्वंशिकाः, कारागाराधि-कृतः, अर्थसञ्चयकृत्, कार्यनियोक्ता, प्राड्विवाकः, सेनाधिनायकः । पश्चात् कर्मान्तिकनगराध्यक्षौ धर्माधिकृच्च सभ्यश्च राष्ट्रान्तदुर्गदण्डपाला-स्तीर्थं दशाष्टौ च । तत्र प्रतिहारी--दौवारिकः, 'स्त्री द्वार्द्वारं प्रतीहारः' । अन्तर्वंशिक इति । 'अन्तःपुरे त्वधिकृतः स्यादन्त-र्वंशिको जनः' । कारागारं--बन्धनालयः । अर्थसञ्चयकृत्--धनाध्यक्षः । कार्यनियोक्ता--राजवचनस्य बहिस्सञ्चारकः । *प्राड्विवाकः--व्यवहारद्रष्टा । सेनाधिनायकः--सेनाया जीवितभृति-दानाध्यक्षः । कर्मान्तिकाः--कर्मान्ते वेतनग्राहिणः । नगराध्यक्षः--पुरपरिपालकः । धर्माध्यक्षः--धर्मासनाधिकृत् । सभ्यः--सभ्य-व्यवहारनिर्णेता । राष्ट्रान्तः--इतरराष्ट्रान्तस्वराष्ट्रान्तः--सीमान्तः । दुर्गं--जलगिरिवनस्थलदुर्गम् । दण्डस्तु दुष्टदण्डनम् । पालाः--उक्त-पालनाधिकृताः । अत्र मन्त्रिपुरोहितयुवराजव्यतिरिक्ततीर्थपञ्चदशकं स्वदेशे विचार्यम् । परराष्ट्रे मन्त्रिपुरोहितयुवराजाश्च । एभिः स्वाधिकारः न्यायतः प्रवर्तते? अन्यायतो वा? इति विचारणीयमित्यर्थः ॥ ३६ ॥

[1]कच्चिद्व्यपास्तान् अहितान् प्रतियातांश्च [2]सर्वदा ।
दुर्बलाननवज्ञाय वर्तसे, रिपुसूदन ! ॥ ३७ ॥

---

* प्राड्विवाकः—व्यवहारप्रष्टा । तल्लक्षणमुक्तं 'विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च । प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः ' इति–गो.

[1] क. च्चिद्व्यपास्तान्–ङ. [2] सर्वशः–ङ.

अपास्तान्---निष्कासितान् । प्रतियातान्---पुनः आगतान्, अवज्ञया दुर्बलोऽयमहितः किमस्माकं करिष्यति ? इति उपेक्षां न करोषि कच्चित् ? ॥ ३७ ॥

*कच्चिन्न लोकायतिकान् ब्राह्मणांस्तात ! सेवसे ।
अनर्थकुशला ह्येते बालाः पण्डितमानिनः ॥ ३८ ॥

लोकायतिकान्---लोकः---सर्वलोकसिद्धं प्रत्यक्षप्रमाणमेव अयनं---प्रतिष्ठा अस्त्येषामिति, 'अत इनि ठनौ' इति ठन्, चार्वाकशास्त्रवावदूकान् शुष्कतर्कवावदूकांश्च ब्रह्मणान् न सेवसे कच्चित् ? ब्राह्मणत्वेऽपि तदपरिग्रहहेतुः---अनर्थेत्यादि । हि---यस्मात् परलोकतत्साधनानुष्ठानाभावरूपानर्थप्रतिपादनकुशलाः । तर्हि कौशलमस्ति चेत् क्वचिदपि कथं न ते ग्राह्या इत्यतः---बाला इति । अज्ञाः परमार्थवेदवादिसन्निधाविति शेषः । अत एव पण्डितमानिनः---स्वयुक्त्यैव केवलमात्मनः पण्डितान् मन्यन्ते, नान्यत्र ॥ ३८ ॥

†धर्मशास्त्रेषु मुख्येषु [1]विद्यमानेषु दुर्बुधाः ।
बुद्धिमान्वीक्षकीं प्राप्य निरर्थं प्रवदन्ति ते ॥ ३९ ॥

---

* लोकेष्वायतं---विस्तृतं प्रत्यक्षप्रमाणं ; यद्वा लोकायतशब्दाभ्यां प्रत्यक्षमनुमानं चोच्यते । लोकायतिकाः---नास्तिका बौद्धचार्वाकादयः-**गो.** एतेषां ब्रह्मणत्वं च जन्मतः । † अनर्थकुशलत्वमेवोपपादयति---धर्मशास्त्रेष्विति । दुर्बुधाः---वेदमार्गविपरीतबुद्धयः ते मुख्येषु---तामसस्मृतिपुराणादिव्यावृत्तेषु सात्त्विकमहर्षिप्रणीतेषु सज्जनादरणीयेषु धर्मशास्त्रेषु---धर्मप्रमापकशास्त्रेषु विद्यमानेषु---तत्संप्रदायपरंपरया पठ्यमानेषु सत्सु आन्वीक्षकीं बुद्धिं प्राप्य---शुष्कतर्कविषयां बुद्धिमास्थाय निरर्थं---निष्प्रयोजनं प्रवदन्ति-**गो.** धर्मस्यातिसूक्ष्मत्वेन तर्कैः निर्णेतुमशक्यत्वेन, तर्कमवलम्ब्यैव वादकरणे अनर्थ एव पर्यवसानं स्यादिति भावः ।

[1] वाच्यमानेषु-ङ.

अथ द्वितीयं लोकायतानामपरिग्राह्यत्वे हेतुमाह—धर्मेत्यादि। मुख्यप्रमाणभूतेषु श्रुतिस्मृतिलक्षणधर्मशास्त्रेषु विद्यमानेष्वपि केचन दुर्बुधाः—दुर्विद्वांसः आन्वीक्षकीं—'आन्वीक्षकी दण्डनीतिः तर्कविद्यार्थशास्त्रयोः', शुष्कतर्कविद्याजनितां बुद्धिमवलम्ब्य निरर्थं—निष्प्रयोजनमेव—मिथ्याप्रयोजनमेव प्रवदन्तीति। न हि षोडशपदार्थज्ञानान्मोक्ष इति काचित् श्रुतिः स्मृतिर्वाऽस्ति। नापि च तत्प्रतिपाद्यजडात्मनः ईश्वरात् भिन्नस्य ज्ञानाद्वा मुक्तिरित्यस्ति। नापि चात्मा जडः, नापीशभिन्नः। नापि चेशो युज्यते तत्प्रलप्यमाननित्यज्ञानादिगुणकः जगन्निमित्तमिति। अयं प्रसङ्गः श्रीमत्पञ्चाशिकायामेवावधार्यः। एषामपि लोकायतत्वं सिद्धम्। 'प्रत्यक्षमेकं चार्वाकाः कणादः सौगतः पुनः। अनुमानं च तच्चेति'। ननु! न्यायैकदेशिभिः शब्दोऽप्यङ्गीक्रियते। तत् कथं आन्वीक्षकीबुद्धिमतां विशेषणं लोकायतत्वम्? एकदेशिभिरपि स्वदुर्मताविरुद्धधर्मादिभागः स्वीक्रियते। तद्विरुद्धचित्स्वभावात्मप्रत्यग्ब्रह्माभेदादिकं शाब्दं न स्वीक्रियत एव ॥ ३९ ॥

*वीरैरध्युषितां पूर्वं अस्माकं, तात! पूर्वकैः।
सत्यनामां दृढद्वारां हस्त्यश्वरथसङ्कुलाम् ॥ ४० ॥

वीरैरित्यादि। सत्यनामामिति। अयोध्येत्यन्वर्थनामवतीमित्यर्थः॥

ब्राह्मणैः क्षत्रियैर्वैश्यैः स्वकर्मनिरतैः सदा।
जितेन्द्रियैर्महोत्साहैः वृतामार्यैः सहस्रशः ॥ ४१ ॥

आर्यैरिति। ब्राह्मणैरित्याद्युक्तरूपैस्त्रैवर्णिकैरित्यर्थः ॥ ४१ ॥

---

* वीरैरित्यादिश्लोकत्रयमेकं वाक्यम्। पूर्वं एतादृशीं अयोध्यां समुदितां स्फीतां परिरक्षसि कच्चित्—प्राक्तनवैभवादेर्लोपो यथा न भवेत् तथा रक्षसि किम्?

प्रासादैर्विविधाकारैः वृतां [1]वैद्यजनाकुलाम् ।
कच्चित् [2]समुदितां स्फीतां अयोध्यां परिरक्षसि ॥ ४२ ॥

वैद्याः—प्राग्व्याकृताः । समुदितां—प्रसिद्धाम् । स्फीतां—समृद्धाम् ॥ ४२ ॥

*[3]कच्चिच्चित्यशतैर्जुष्टः सन्निविष्टजनाकुलः ।
देवस्थानैः प्रपाभिश्च तटाकैश्चोपशोभितः ॥ ४३ ॥

अथ जनपदकुशलप्रश्नः—कच्चिच्चित्येत्यादि । चित्यशतैः—अश्वमेधान्तमहायागानेकचयनप्रदेशैः । सन्निविष्टैः—संप्रतिष्ठितैः जनैः आकुलः—निबिडः तथा ॥ ४३ ॥

† [4]प्रभिन्ननरनारीकः समाजोत्सव[5]शोभितः ।
सुकृष्टसीमा[6]पशुमान् हिंसाभिः परिवर्जितः ॥ ४४ ॥

प्रभिन्नेति । प्रभेदः—सन्तोषः । सुकृष्टाः सीमाः—तत्तत्क्षेत्रप्रदेशाः पशवश्च यस्मिन् स तथा ॥ ४४ ॥

अदेवमातृको रम्यः श्वापदैः परिवर्जितः ।
परित्यक्तो ‡ भयैः सर्वैः खनिभिश्चोपशोभितः ॥ ४५ ॥

अदेवमातृक इति । नदीमातृक इत्यर्थः । खनिः—स्वर्णरत्नाद्याकरः ॥ ४५ ॥

---

* एतदादिश्लोकचतुष्टयमेकं वाक्यम् । एतादृशो जनपदः सुखं वसति कच्चिदित्यन्वयः । अत्र आदावन्ते च कच्चिच्छब्दप्रयोगात् प्रतिविशेषणं प्रत्येकं प्रश्नो गम्यते । आदरातिशयाच्च तथा प्रश्न इति गोविन्दराजः । † 'प्रभिन्नो गर्जितो मत्तः', मत्तनरनारीकः, अतिपुष्टहृष्टनरनारीक इति यावत् । ‡ पूर्वार्धे दुष्टमृगोपलक्षकश्वापदप्रयोगात् भयमत्र चोरादिभ्यो विवक्षितम् ।

[1] सैन्य—ङ. [2] सुमुदितां—ङ. [3] कच्चिच्चैत्य—ङ. च. [4] प्रहृष्ट—ङ. च.
[5] सेवितः—ङ. [6] शुचिमान्—ङ.

विवर्जितो नरैः पापैः मम पूर्वैः सुरक्षितः ।
कच्चिज्जनपदः स्फीतः सुखं वसति, राघव ! ॥ ४६ ॥

कच्चित्ते दयिताः सर्वे कृषिगोरक्षजीविनः ।
*वार्तायां [1]संस्थितः, तात ! [2]लोको हि सुखमेधते ॥

वार्तायां—'कृषिगोरक्ष्यवाणिज्यक्षेत्रं वार्तेत्युदाहृतम्' । लोकः–कृष्यादिजीविलोकः वार्तायां कृष्यादौ संस्थितः—प्रवृत्तः सन सुखमेधते कच्चित् ? ॥ ४७ ॥

†तेषां गुप्तिपरीहारैः कच्चित्ते भरणं कृतम् ।
रक्ष्या हि राज्ञा धर्म्येण सर्वे विषयवासिनः ॥ ४८ ॥

तेषां–कृष्यादिजीविनां गुप्तिपरिहारैः—गुप्त्यर्थनियुक्तैः राजमनुष्यैः क्रियमाणैः तस्करपीडादुर्बलपीडादुर्व्यवहाराद्यनर्थपरिहारैः हेतुभिः ते—त्वया भरणं कृतं कच्चित् ? ॥ ४८ ॥

‡कच्चित् स्त्रियः सान्त्वयसि [3]कच्चित्तास्ते सुरक्षिताः ।
कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे § ॥ ४९ ॥

तास्त इति । ताः स्त्रियः त्वयेत्यर्थः । न श्रद्दधास्यासामिति । वचनादिकं, वास्तवमिति शेषः । आसां गुह्यं न भाषस इति । अप्रकाश्यवृत्तान्तं इष्टेति मत्वा न भाषसे कच्चित् ? ॥ ४९ ॥

---

*'वार्ता तु जीवनम्'; कृषिगोरक्षादिजीवनोपायनिष्ठो हि लोकः सुखं वसेत् । †गुप्तिपरीहारैः—इष्टप्रापणानिष्टनिवारणैः–गो. ‡स्त्रियः—स्वस्त्रियः–गो. § गुह्यं न भाषसे, ताभ्य इति शेषः, स्त्रीणामतिचञ्चलमतित्वेन रहस्यभेदप्रसङ्गादिति भावः–गो.

[1] सांप्रतं–च. [2] लोकोऽयं–च. [3] कच्चित्ताश्च–ङ.

कच्चिन्नागवनं गुप्तं कच्चित्ते सन्ति *धेनुकाः ।
कच्चिन्न गणिकाश्वानां कुञ्जराणां च तृप्यसि ॥ ५० ॥

नागवनं — गजोत्पत्तिकाननम् । धेनुकाः — कामधेनवः, स्वार्थे कः । गणिकाश्वानामिति । करिण्यः—गणिकाः, 'वेश्याकरिण्योर्गणिका' वैजयन्ती, करिण्यादिसंपादनविषये तृप्तिं नाप्नोषि कच्चित्? ॥ ५० ॥

कच्चिद्दर्शयसे नित्यं मनुष्याणां † विभूषितम् ।
उत्थायोत्थाय पूर्वाह्णे, राजपुत्र! ‡ [1] महापथे ॥ ५१ ॥

दर्शयस इति । सभायां स्थित्वाऽऽत्मानमिति शेषः । उत्थायेति । अन्तःकक्ष्येभ्य इति शेषः ॥ ५१ ॥

§ कच्चिन्न सर्वे कर्मान्ताः प्रत्यक्षास्तेऽविशङ्कया ।
सर्वे वा पुनरुत्सृष्टाः मध्यमेवात्र कारणम् ॥ ५२ ॥

अविशङ्कया—निर्भयतया प्रत्यक्षाः—त्वत्सन्निधिं प्राप्ताः न कच्चित्? अथवा सर्वे कर्मान्तिकाः पुनरुत्सृष्टाः—दर्शनाप्रदानेन परित्यक्ता न? अत्र—कर्मान्तिकविषये मध्यमेव—नातिदर्शनात्यदर्शनयोर्मध्यमरीत्याश्रयणमेव कारणं—अर्थप्राप्तिकारणम् ॥ ५२ ॥

---

* धेनुकाः—करिण्यः, 'करिणी धेनुका वशा' इत्यमरः। गणिकाश्वानां—गणिकाः—करिण्यः, 'वेश्याकरिण्योर्गणिका' इति वैजयन्ती—गो. यद्यपि पूर्वार्धे अश्वा न निर्दिष्टाः, अथापि ते अपि उपलक्षिता इत्यभिप्रायेण उत्तरार्धे गज-करिणी-अश्वाः—निर्दिष्टाः । † प्रतिदिनं राजवीथ्यां विभूषितं आत्मानं प्रजानुरागाय दर्शयसे कच्चित् । ‡ महापथे—सभायामिति यावत्-गो. § कर्मकाराः सर्वे स्वातन्त्र्येण भवन्तं नोपसर्पन्ते कच्चित्, तथाऽपि भवता ते अतीवौदासीन्येन विलोकिता न कच्चित् । मध्यमरीतिरनुस्रियते वा— इति भावः ।

[1] महारथ—ङ.

कच्चित् सर्वाणि * दुर्गाणि धनधान्यायुधोदकैः ।
यन्त्रैश्च [1] परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥ ५३ ॥

आयस्ते विपुलः कच्चित् कच्चिदल्पतरो व्ययः ।
† अपात्रेषु न ते कच्चित् कोशो गच्छति, राघव! ॥ ५४ ॥

आयः—धनागमः । व्ययः—भोगबलादिरक्षायै त्यागः । अपात्रेषु—नटगायकादिषु ॥ ५४ ॥

‡ देवतार्थे च पित्रर्थे ब्राह्मणाभ्यागतेषु च ।
योधेषु मित्रवर्गेषु कच्चिद्गच्छति ते व्ययः ॥ ५५ ॥

व्यय इति । आयात् न्यून इति शेषः ॥ ५५ ॥

कच्चिदार्यो विशुद्धात्माऽऽक्षारित [2] श्चापकर्मणा § ।
[3] अपृष्टः शास्त्रकुशलैः न ‖ लोभात् वध्यते शुचिः ॥ ५६ ॥

कच्चिदार्य इत्यादि । आर्यः—साधुः विशुद्धात्माऽपि सन् अपकर्मणा — स्तेयागम्यागमनादिदोषेण आक्षारितः — अभिशस्तः शास्त्रकुशलैः—धर्मशास्त्रनिष्णातैः अपृष्टस्सन् लोभात् शुचिरपि सन् न वध्यते—न दण्ड्यते कच्चित्? ॥ ५६ ॥

---

* अत्र कामन्दकः—'औदकं पार्वतं वार्क्षं ऐरिणं धान्वनं तथा । जलान्तायुधयन्त्राढ्यं वीरयोधैरधिष्ठितम् । गुप्तिप्रधानमाचार्याः दुर्गं समनुमेनिरे' इति—गो. † अपात्रेषु—नटविटगायकेषु, तेभ्योऽपरिमितं न देयमिति भावः—गो. केवलक्रीडाव्यसनवान् मा भवेति यावत् । ‡ धनव्ययस्योचितं पात्रमाह—देवतार्थे इति । § यदृच्छया चोरकर्मणा (पाठान्तरं) आक्षारितः—अभिशस्तः—गो. अत्र विशुद्धात्मा इत्यनेनात्मशुद्धिः, शुचिः इत्यनेन प्रकृतिशुद्धिश्च कथिता, तेन न पौनरुक्त्यम् । ‖ 'लुभ विमोहने' इति धातोः—व्यामोहादित्यर्थो वा ।

[1] प्रतिपूर्णानि—च. [2] श्चोरकर्मणा—ङ. [3] अदृष्टः—च.

**गृहीतश्चैव पृष्टश्च काले दृष्टः सकारणः ।**
**कच्चिन्न मुच्यते चोरः धनलोभात्, नरर्षभ ! ॥ ५७ ॥**

गृहीत इत्यादि । सकारणः—चोरत्वेन ग्रहणकारणसहितस्सन् दृष्टः, अत एव गृहीतः पालकैः पृष्टश्चैव—किं किमचूचुर इति कृतप्रश्नश्च चोरः धनलोभात्—चोरेणैवोत्कोचतया दीयमानधनलोभात् पालकैः न मुच्यते कच्चित् ? ॥ ५७ ॥

***[1]व्यसने कच्चिदाढ्यस्य[2]दुर्गतस्य च, राघव !**
**†अर्थं विरागाः पश्यन्ति तवामात्या बहुश्रुताः ॥ ५८ ॥**

व्यसन इत्यादि । आढ्यस्य—धनिनः दुर्गतस्य वा व्यसने—क्षेत्रवित्तादिविनाशकृच्छ्रे राजकीयैकनिवर्त्ये तयोः अर्थं—कार्यं बहुश्रुताः तवामात्याः विरागाः—धनस्पृहारहितास्सन्तः धनिदरिद्राविशेषं पश्यन्ति—विचारयन्ति कच्चित् ? ॥ ५८ ॥

**‡यानि मिथ्याभिशस्तानां [3]पदन्यासानि, राघव !**
**तानि पुत्रपशून् घ्नन्ति §प्रीत्यर्थमनुशासतः ॥ ५९ ॥**

यानीत्यादि । मिथ्याभिशस्तानां—राज्ञा च विचार्यानिवर्तितमिथ्याभियोगानां—प्रजानां यानि पदन्यासानि सन्ति, छान्दसं

---

* आढ्यदरिद्रयोः परस्परं व्यवहारे प्राप्ते तव अमात्याः, आढ्यप्रभावापरवशाः, दरिद्रदुर्गतिदीना वा भूत्वा माध्यस्थ्यं अत्यजन्तः धर्ममात्रं पश्यन्ति कच्चिदिति भावः । † अर्थं—व्यवहारं, 'अर्थः स्यात् विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु' इति वैजयन्ती—गो. ‡ पूर्वापरानुरूप्यादिपरिशीलने अस्य श्लोकस्य 'कच्चिदार्यो विशुद्धात्मा' इतिश्लोकानन्तर्यं औचित्यातिशयः प्रतिभाति । § स्वेष्टसंपत्त्यर्थमिति यावत् ।

[1] व्यसनैः—ङ. [2] दुर्बलस्य—च. [3] पतन्त्यस्राणि—पतन्त्यश्रूणि—ङ.

नपुंसकं, तानि प्रीत्यर्थं—राजभोगजप्रीतिप्राप्तिमात्रप्रयोजनायानुशासतो राज्ञः पुत्रपशून् घ्नन्ति ॥ ५९ ॥

कच्चित् वृद्धांश्च बालांश्च [1]वैद्यमुख्यांश्च, राघव !
*दानेन मनसा वाचा त्रिभिरेव बुभूषसे ॥ ६० ॥

वैद्यमुख्याः—भिषक्छ्रेष्ठाः। त्रिभिरेवेति। त्रिभिः प्रत्येकमेव बुभूषसे—संभाषितुमिच्छसि ? अन्तर्भावितणिः ॥ ६० ॥

कच्चिद्गुरूंश्च वृद्धांश्च तापसान् देवताऽतिथीन्।
† [2]चैत्यांश्च सर्वान् [3]सिद्धार्थान् [4]ब्राह्मणांश्च नमस्यसि ॥

चैत्यान्—चतुष्पथान्। सिद्धार्थान्—विद्याव्रततपोभिः कृतार्थितजन्मनः ॥ ६१ ॥

कच्चिदर्थेन वा धर्मं अर्थं धर्मेण वा पुनः।
उभौ वा ‡ [5]प्रीतिलोभेन कामेन च न बाधसे ॥ ६२ ॥

अर्थेनेत्यादि। अर्थप्राप्तिरूपेण हेतुना धर्मं न बाधसे कच्चित्—धर्मं हित्वा अर्थं न गृह्णासि कच्चिदित्यर्थः। तथा धर्मेण—धर्मप्राप्ति-हेतुना कुटुम्बनिर्वाहापेक्षितमर्थं—वित्तं न बाधसे—धर्मार्थावुभावपि प्रीतिलोभेन विषयसन्तोषलोभेन च न बाधसे ? गणिकादिसक्तौ उभयमपि नश्यति ॥ ६२ ॥

---

* दानेन—अभिमतवस्तुप्रदानेन मनसा—स्नेहेन वाचा—सान्त्ववचनेन एतैस्त्रिभिः बुभूषसे—प्राप्तुमिच्छसि वशीकर्तुमिच्छसि कच्चिदिति यावत्। भू प्राप्तौ—गो.

† चैत्यान्—देवतावासभूतचतुष्पथस्थमहावृक्षान्—गो. ति. ‡ प्रीतिलोभेन—सुखाभिलाषेण हेतुना कामेन—गो. विषयसन्तोषलोभरूपेण कामेन—ति. धर्मकामार्थान् परस्पराबाधेन सेवसे कच्चिदिति यावत्।

[1] वैद्यान् मुख्यांश्च—च. [2] वैद्यांश्च—ङ. [3] सिद्धांश्च—ङ. [4] ब्राह्मणांश्चानुमन्यसे—ङ. [5] प्रीतियोगेन—ङ.

*कच्चिदर्थं च धर्मं च कामं च, जयतां वर !
विभज्य काले, कालज्ञ ! सर्वान्, [1]वरद ! सेवसे ॥ ६३ ॥

विभज्य सेवस इति। धर्मस्य नित्यदानादिधर्मसेवायाः कालः प्रातः। अर्थस्य तु तदनन्तरं आस्थान्यां राज्यविचारकालः सेवाकालः। निशि यामात्परः कामसेवाकालः ॥ ६३ ॥

कच्चित्ते [2]ब्राह्मणाः शर्म सर्वशास्त्रार्थ[3]कोविदाः ।
[4]आशंसन्ते, महाप्राज्ञ ! पौरजानपदैः सह ॥ ६४ ॥

'शर्म जोषं च शं सुखम्', शर्म आशंसन्ते—सुखं प्रार्थयन्ते इत्यर्थः ॥ ६४ ॥

नास्तिक्यमनृतं† क्रोधं प्रमादं दीर्घसूत्रताम् ।
[5]अदर्शनं ज्ञानवतां आलस्यं पञ्चवृत्तिताम् ॥ ६५ ॥
एकचिन्तनमर्थानां अनर्थज्ञैश्च मन्त्रणम् ।
निश्चितानामनारंभं मन्त्रस्यापरिरक्षणम् ॥ ६६ ॥
‡ [6]मङ्गलाद्यप्रयोगं च प्रत्युत्थानं च [7]सर्वशः ।
कच्चित् त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश ॥ ६७ ॥

---

*प्रातर्दानादिधर्मकालः, तदनन्तरं, आस्थान्यां राज्यविचारेणार्थकालः, रात्रौ कामकाल इत्येवं विभज्य सेवसे कच्चित्—गो. पूर्वश्लोके 'न बाधसे' इति, अत्र 'सर्वान् वरद सेवसे' इति च कथनात्—पूर्वश्लोके परस्परबाधाभावः, अत्र भ्रान्तिदौर्बल्यादिनाऽन्यतमस्यात्यागश्च विवक्षित इति प्रतिभाति। †क्रोधः—अस्थानकालयोः। दीर्घसूत्रता—कार्यविलम्बः, आलस्यं तु कायघातकं करणानौन्मुख्यम् ; मातापित्राचार्यब्राह्मणदुर्बलादिषु कृतापराधेष्वपि तद्विषयकं क्रोधम्—गो. ‡मङ्गलस्य—प्रातर्दर्पणादर्शनस्य अप्रयोगं—अननुष्ठानम्। मङ्गलान्यप्रयोगमिति पाठे अमङ्गलाचरणमित्यर्थः। सर्वतः प्रत्युत्थानं—नीचस्यानीचस्याप्यागमने प्रत्युत्थानमित्यर्थः। यद्वा सर्वदिगवस्थितशत्रूद्देशेन युगपद्दण्डयात्रामिति वा—गो.

[1] भरत—ङ. [2] ब्राह्मणः—च. [3] कोविदः—च. [4] आशंसते—च. [5] अमाननं च साधूनां—ङ. [6] मङ्गलस्याप्रयोगं—ङ. च., मङ्गलान्यप्रयोगं—ङ. [7] सर्वतः—ङ.

नास्तिकस्य भावः—नास्तिक्यम् । दीर्घसूत्रता—प्रक्रान्तकार्यविलम्बनम्, 'दीर्घसूत्रश्चिरक्रियः' । ज्ञानवतां—विदुषां अदर्शनम् । आलस्यं—नित्यकृत्यालस्यम् । नृत्तादिभिः चक्षुरादिपञ्चेन्द्रियवृत्तितृप्तिपरता—पञ्चवृत्तिता । अर्थानां—राज्यप्रयोजनानां एकचिन्तनं—अमन्त्रिसहायतया चिन्तनम् । निश्चितानां—मन्त्रिभिः सह संमन्त्र्य निश्चितानां अनारम्भः—अनुद्योगः । मङ्गलाद्यप्रयोगः—मङ्गलस्य आदौ—प्रातःकाले अप्रयोगः—अननुष्ठानम् । सर्वशः प्रत्युत्थानमिति । यं कञ्चन प्रत्युत्थानायोग्यं पुरुषमुद्दिश्यापि प्रभावं मत्वा चापल्यादासनाच्चलनमित्यर्थः ॥ ६५–६७ ॥

*दश पञ्च चतुर्वर्गान् सप्तवर्गं च तत्त्वतः ।
अष्टवर्गं त्रिवर्गं च विद्यास्तिस्रश्च, राघव ! ॥ ६८ ॥

दश पञ्चेत्यादि । दशवर्गादीन् बुध्वा यथावत् अनुमन्यसे—अनुजानासि इत्यग्रेण सम्बन्धः । दशवर्गस्तु †'मृगयाऽक्षौ दिवास्वप्नः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाऽटया च कामजो दशको गुणः' इति मनुः । तौर्यत्रिकं—नृत्तगीतवाद्यम् । वृथाऽट्या—यथेच्छपर्यटनम् । शेषः स्पष्टः । पञ्चवर्गस्तु—'औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा । इति दुर्गं पञ्चविधं पञ्चवर्ग उदाहृतः '‡ इरिणं—औषरं सर्वसस्यशून्यप्रदेश इत्यर्थः, तत्सम्बन्धी ऐरिणं दुर्गम् । तादृश-

* श्लोकत्रयमेकं वाक्यम् । † कामन्दकस्तु प्रकारान्तरेण—'लोभक्रोधालस्यासत्यवचनत्वप्रमादभीरुत्वास्थिरत्वमौढ्यानयावमन्तृत्वानि दशवर्गः' इत्याशयेनाह—'लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः । मूढोऽनयोऽवमन्ता च सुखच्छेद्यो रिपुर्मतः' इति–गो. ‡ यद्वा पञ्चवर्गः—पञ्चविधवैराणि । अत्रापि कामन्दकः 'सापत्नं वास्तुजं स्त्रीजं वाग्जातमपराधजम् । वैरप्रभेदनिपुणैः वैरं पञ्चविधं स्मृतम्' इति–गो.

स्थलमपि परेण गन्तुमशक्यत्वात् दुर्गम् । अयं तु उष्णकालमपेक्ष्य दुर्गो भवति । इतरद्दुर्गत्रयं सर्वप्रसिद्धम् । चतुर्वर्गस्तु 'साम दानं च भेदश्च दण्डश्चेति चतुर्गुणः' * । सप्तवर्गस्तु—'स्वाम्यमात्याश्च राष्ट्रं च दुर्गकोशौ बलं सुहृत् । परस्परोपकारीदं राज्यं सप्ताङ्गमुच्यते' † । अष्टवर्गस्तु—'पैशुन्यं साहसं द्रोहं ‡ ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डयोश्च पारुष्यं क्रोधजोऽपि गुणोऽष्टकः' § वाक्पारुष्यं परुषदण्डत्वं च द्वयम् । त्रिवर्गस्तु—'त्रिवर्गो धर्मकामार्थैः' इति । तथा उत्साहप्रभुमन्त्रशक्तित्रयोऽपि त्रिवर्गः ‖ । त्रिविद्यास्तु त्रयीवार्तादण्डनीतयः ¶ । त्रयी—वेदाः, वार्ता—कृष्यादित्रयम्, दण्डनीतिः—नीतिशास्त्रम् ॥ ६८ ॥

---

* यद्वा चतुर्विधमित्राणि वा । यथाऽऽह कामन्दकः 'औरसं तन्तुसम्बन्धं तथा वंशक्रमागतम् । रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम्' इति । यद्वा धनानां न्यायार्जनादिधर्मचतुष्टयं वा । तदपि तत्रैवोक्तम् 'न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा । सत्पात्रे प्रतिपत्तिश्च राज्यवृत्तं चतुर्विधम्' इति—**गो.** † यद्वा स्वपक्षस्थजनावान्तरभेदसप्तकं वा । यथाऽऽह 'निजोऽथ मैत्रश्च समाश्रितश्च सुबन्धुजः कायसमुद्भवश्च । भृत्यो गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति' इति । यद्वा प्रधानव्यूहाः सप्त वा सप्तवर्गः । यथा 'श्येनः सूची च वज्रश्च शकटो मकरस्तथा । दण्डाख्यः पद्मनामा च व्यूहाः सप्त प्रधानतः' इति—**गो.** ‡ ईर्ष्या—असहना—असूया—गुणेष्वपि दोषारोपः । § अष्टवर्गमाह कामन्दकः 'कृषिवाणिज्यदुर्गाणि सेतुः कुञ्जरबन्धनम् । खन्याकरकरादानं शून्यानां च निवेशनम् । अष्टवर्गमिमं साधु स्वस्थवृत्तो न लोपयेत्' इति—**गो.** ‖ यद्वा परेषां क्षयस्थानवृद्धयः 'क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्' इत्यमरः । यद्वा अशक्यसमुद्यमादिकार्यव्यसनत्रयम् । यथाऽऽह कामन्दकः 'वस्तुष्वशक्येषु समुद्यमश्च शक्येषु मोहादसमुद्यमश्च । शक्येष्वकालेषु समुद्यमश्च त्रिधैव कार्यं व्यसनं वदन्ति' इति—**गो.** ¶ 'आन्वीक्षकी त्रयी वार्ता दण्डनीतिश्च' इति विद्याश्चतुर्विधत्वेऽपि आन्वीक्षक्यास्त्रय्यामन्तर्भावः । यथाऽऽह कामन्दकः—'त्रयी वार्ता दण्डनीतिरिति विद्या हि मानवाः । त्रय्या एव विशेषोऽयमियमान्वीक्षकी मता' इति—**गो.**

इन्द्रियाणां जयं बुध्वा षाड्गुण्यं दैवमानुषम् ।
कृत्यं विंशतिवर्गं च तथा प्रकृतिमण्डलम् ॥ ६९ ॥

इन्द्रियाणां जयमिति । जयोपायमित्यर्थः । इन्द्रियजयोपायो योग एव । षड्गुणा एव षाड्गुण्यम् । तत्तु—'सन्धिर्वा विग्रहो यानमासनं द्वैधमाश्रयः' इति । द्वैधं—शत्रुवर्गाणामुपजापः । दैवमानुषव्यसने तु—'हुताशनो जलं व्याधिः दुर्भिक्षं मरकस्तथा' इति । मरकः—तन्निमित्तं मार्यादि । 'आयुक्तकेभ्यश्चोरेभ्य परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च व्यसनं मानुषं त्विदम्' । आयुक्ताः—अधिकारिणः । अथ कृत्यवर्गं तु—'अलब्धवेतनो लुब्धः मानी चाप्यवमानितः । क्रुद्धश्च कोपितोऽकस्मात् तथा भीतश्च भीषितः । भेद्याः शत्रैस्तु चत्वारः नृपकृत्यमिदं मतम्' । अथ विंशतिवर्गः*—'राज्यस्त्रीस्थानदेशानां ज्ञातीनां च धनस्य च । अपहारो मदो मानः पीडा वैषयिकी तथा ॥ ज्ञानार्थशक्तिधर्माणां विघातो दैवमेव च । मित्रार्थयोश्चापमानः तथा बन्धुविनाशनम् । भूतानुग्रहविच्छेदः तथा मण्डलदूषणम् । एकार्थाभिनिवेशित्वं विंशतिविग्रहास्पदम्' । अत्र अपहारशब्दः पूर्वैः षड्भिस्सह सम्बध्यते । विघातशब्दश्चतुर्भिः । अवमानशब्दस्य मित्रशब्देन अर्थशब्देन च

---

* यथाऽह कामन्दकीये—'बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः । भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा । विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः । दैवोपहतकश्चैव दैवचिन्तक एव च । दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः । अदेशस्थो बहुरिपुः युक्तोऽकालेन यश्च यः । सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी । एतैः सन्धि न कुर्वीत विगृह्णीयात्तु केवलम्' इति—गो. भीरवः जनाः—मन्त्रिसेनापतियोधाः यस्य सः—भीरुजनकः । दैवार्चितकः—दैवमेव सर्वं कुर्यादिति मत्वा पुरुषव्यापारमकुर्वाणः ।

सम्बन्धः । भूतानुग्रहविच्छेदः—लोकानुग्रहराहित्यम् । अथ प्रकृतयः प्रकृतिमण्डलं च तथा । प्रकृतयस्तु—'अमात्या राष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः । एताः प्रकृतयस्तज्ज्ञैः विजिगीषोरुदाहृताः' इति कामन्दकः । *मण्डलं—द्वादशराजमण्डलम् । तत्तु—'अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । मित्रारिमित्रं मित्रं च विजिगीषोः पुरस्सराः ॥ पार्ष्णिग्राहः ततः पश्चात् आक्रन्दस्तदनन्तरः । आसार-पृष्ठभागस्थौ मध्यमोदासिनाविति । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः व्यस्तयोर्निग्रहे प्रभुः । मण्डलात् बहिरेतेषां उदासीनो बलाधिकः' इति ॥ ६९ ॥

---

* मण्डलं द्वादशविधराजात्मकम् । मध्यतो विजिगीषुः । तस्य शत्रुः मित्रं शत्रोर्मित्रं मित्रमित्रं शत्रुमित्रमित्रं चेति पुरोवर्तिनः पञ्च । पार्ष्णिग्राहः आक्रन्दः पार्ष्णिग्राहासारः—आक्रन्दासारश्चेति पृष्ठभागस्थाश्चत्वारः । पार्श्वस्थो मध्यमः । तेषां बहिरवस्थित उदासीनश्चेति । तथा च कामन्दकः—'संपन्नस्तु प्रकृतिभिः महोत्साहः कृतश्रमः । जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः । अरिर्मित्रं अरेर्मित्रं मित्रमित्रमतः परम् । तथाऽरिमित्रमित्रं च विजिगीषोः पुरस्सराः । पार्ष्णिग्राहस्ततः पश्चात् आक्रन्दस्तदनन्तरः । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः । अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः व्यस्तयोर्निग्रहे प्रभुः । मण्डलाद्बहिरेतेषां उदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः' इति । अत्र शत्रुमित्रशब्देन पुरस्तादव्यवहितानन्तरराष्ट्राधिपतिं एकव्यवहितानन्तरराष्ट्राधिपतिं च क्रमेण वदतः । पार्ष्णिग्राहाक्रन्दशब्दावपि पृष्ठतस्तादृशौ क्रमेण वदतः, न तु प्रसिद्धशत्रुमित्रपरौ । आसारः—सुहृद्बलम् । 'आसारः स्यान्मित्रबले' इति रत्नमाला । मध्यमशब्देन च अरिविजिगीषोः व्यस्तयोः समस्तयोश्च निग्रहानुग्रहसमर्थः पार्श्वदेशस्थः कश्चित् उक्तेभ्योऽन्यो राजोच्यते । न तु मध्यवर्ती । उदासीनशब्देन च एतेषां सर्वेषामपि व्यस्तानां समस्तानां च निग्रहानुग्रहसमर्थः कश्चिद्विप्रकृष्टदेशस्थो राजोच्यते—गो.

यात्रादण्डविधानं च द्वियोनी सन्धिविग्रहौ ।
कच्चिदेतान् , महाप्राज्ञ ! यथावदनुमन्यसे ॥ ७० ॥

यात्रा—यानम् । तत् पञ्चविधम्— तथा कामन्दकः—'विगृह्य सन्धाय तथा संभूयाथ प्रसङ्गतः । उपेक्ष्य चेति निपुणैः यानं पञ्चविधं मतम्' इति । विगृह्य यानमित्यादिना यानशब्दस्य प्रत्येकं सम्बन्धः । बलवत्तया पार्ष्णिग्राहादिभिर्विगृह्य अन्यत्र शत्रौ यानं विगृह्य यानम् । तत्सन्धायान्यत्र यानं—सन्धाययानम् । सामन्तैस्सह यानं—संभूययानम् । अन्यं प्रति यातस्य अन्यं प्रति यदृच्छया यानं—अन्यत्रयानम् । अन्यप्रसंगं कृत्वा बलवत्तया शत्रुमुपेक्ष्य तस्य मित्रेषु यानं—उपेक्ष्ययानम् । दण्डविधानमिति । दण्डः—सेना, तस्य विधानं—व्यूहभेदविधानम् * । 'दण्डो यमे मानभेदे लगुडे मदसैन्ययोः' । 'द्वियोनी सन्धिविग्रहौ' इति † । सन्धिविग्रहयानेत्यादिना षोढा पठितषड्गुणानां मध्ये सन्धिविग्रहौ इतरेषां चतुर्णां योनी । द्वैधीभावसमाश्रयौ सन्धियोनिकौ, यानासने तु विग्रहयोनिके इत्यर्थः । यथावदनुमन्यस इति । उक्तदश-

---

* यद्वा दण्डः—शत्रुनिरसनं, तस्य विधानं—प्रकारः । यात्रा च दण्डविधानं च यात्रादण्डविधानं ; प्रकृतिमण्डलं इत्यत्रात्र च एकवद्भावः—गो. † सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः षड्गुणाः पृथक्पृथक् प्रतिपादिताः । इदानीं द्वैगुण्यमतावलम्बनेन यानादीन् सन्धिविग्रहयोरन्तर्भाव्य वदति । यानासने विग्रहस्य स्वरूपम्, द्वैधीभावसमाश्रयौ सन्धेरूपम् । तत्र विजिगीषोः अरिं प्रति यात्रा यानम् , तयोर्मिथःप्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानं आसनम् । दुर्बलस्य प्रबलयोः द्विषतोः वाचिकमात्मसमर्पणं द्वैधीभावः । तथाऽऽह—'बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः' इति । अरिणा पीड्यमानस्य बलवदाश्रयणं समाश्रय इति विवेकः । तदुक्तं कामन्दकेन—'यानासने विग्रहस्य रूपं सद्भिरिति स्मृतम् । सन्धेश्च सन्धिमार्गज्ञैः द्वैधीभावसमाश्रयौ' इति—गो.

वर्गादीनां तत्त्वं ज्ञात्वा तत्र ये हेयाः, तान् जहासि? ग्राह्यान् गृह्णासि कच्चित्? इत्यर्थः ॥ ७० ॥

मन्त्रिभिस्त्व *[1] यथोद्दिष्टं चतुर्भिस्त्रिभिरेव वा ।
कच्चित् समस्तैर्व्यस्तैर्वा मन्त्रं मन्त्रयसे [2] मिथः ॥ ७१ ॥

यथोद्दिष्टमिति । नीतिशास्त्रोक्तमन्त्रविचारमार्गमनतिक्रम्येत्यर्थः । व्यस्तैः—क्रमशःप्राप्तैः, तथा समस्तैः—संभूयप्राप्तैर्वा मिथः—रहसि मन्त्रं मन्त्रयसे कच्चित्? सर्वथा नैकाकी मन्त्रयसे? इति यावत् ॥ ७१ ॥

कच्चित्ते सफला वेदाः कच्चित्ते सफलाः क्रियाः † ।
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥ ७२ ॥

वेदाः सफला इति । अग्निहोत्रादिकर्मप्रवर्तनेनेति शेषः । ते क्रियाः—आरब्धसन्धिविग्रहादिराजकार्याणि तत्तदुद्देश्यफलयुक्तानि कच्चित्? दाराः सफला इति । धर्मरतिप्रजालक्षणप्रयोजनवन्त इति यावत् । श्रुतं—बहुश्रुतं, तस्य साफल्यं विनीतत्वम् ॥ ७२ ॥

[3] कच्चिदेष्वेव ते बुद्धिः यथोक्ता मम, राघव!
‡ आयुष्या च यशस्या च धर्मकामार्थसंहिता ॥ ७३ ॥

एष्वेवेति । यथोक्ता मम धर्मबुद्धिः येष्वेव राजधर्मेषु प्रतिष्ठिता, तेष्वेव तवापि बुद्धिः प्रतिष्ठिता कच्चित्? यथोक्ता बुद्धिश्च आयुष्या—दीर्घायुष्करी, तथा यशस्या ॥ ७३ ॥

---

* यथोद्दिष्टैः—शास्त्रोक्तमात्रिलक्षणलक्षितैः-गो. † क्रियन्ते—साध्यन्त इति क्रियाः धनानि-गो. ‡ आयुष्या यशस्या—धर्मकामार्थसंहिता उक्ता एषा बुद्धिः मम यथा, तथैव तव वर्तते कच्चित्-गो.

[1] यथोद्दिष्टैः-ङ. [2] बुध-च. [3] कच्चिदेषा च-ङ. कच्चिदेषैव-ङ. च.

*यां वृत्तिं वर्तते तातः यां च नः प्रपितामहाः ।
तां वृत्तिं वर्तसे कच्चित् या च सत्पथगा शुभा ॥ ७४ ॥

सत्पथगा—शिष्टानुष्ठानमार्गगा ॥ ७४ ॥

कच्चित् स्वादुकृतं भोज्यं एको नाश्नासि, राघव !
कच्चिदाशंसमानेभ्यः† मित्रेभ्यः संप्रयच्छसि ॥ ७५ ॥

स्वादुतया कृतं—सिद्धं—स्वादुकृतम् । आशंसमानेभ्यः—स्नेहवृद्धिमपेक्षमाणेभ्यः मित्रेभ्यः—स्निग्धेभ्यः ॥ ७५ ॥

राजा तु धर्मेण हि पालयित्वा‡
[1]महामतिर्दण्डधरः प्रजानाम् ।
अवाप्य कृत्स्नां वसुधां यथावत्
इतश्च्युतः स्वर्गमुपैति विद्वान् ॥ ७६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे शततमः सर्गः

---

इतश्च्युत इति । एतद्दे्हलोकाभ्यामित्यर्थः । तथा(७६)मानः सर्गः ॥ ७६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे शततमः सर्गः

---

* वर्तते—अवर्तिष्ट । यद्वा दशरथमरणस्याज्ञातत्वात् वर्तत इत्युक्तिः । पितामहस्य अजस्य चिरं राज्यपरिपालनाभावात् प्रपितामहा इत्युक्तम्–गो. वस्तुतस्तु—बहुवचनसत्त्वात् 'अस्मत्पूर्वे सर्वेऽपि' इत्यर्थः स्वरसः । वर्तत इत्यस्य च आकर्षः, बहुवचनान्ततया परिणामश्च । † आशंसमानेभ्यः, धनमिति शेषः–गो. ‡ पालयित्वा, महीमिति शेषः । महामतिः—उक्तनीतिधर्मज्ञः । दण्डधरः–युक्तदण्डधरः । यथावत्—पूर्वराजवत् । इतः—अस्माल्लोकात् । च्युतः—प्रारब्धकर्मावसाने मृत इत्यर्थः । विद्वान्—शरीरभिन्नात्मज्ञानवान्–गो.

[1] महीपति–च.

## एकोत्तरशततमः सर्गः

[ भरतप्रार्थना ]

*[1] तं तु रामः [2] समाज्ञाय [3] भ्रातरं गुरुवत्सलम् ।
लक्ष्मणेन सह भ्रात्रा प्रष्टुं समुपचक्रमे ॥ १ ॥

अथ रामेण भरतागमनप्रश्नः । तं त्वित्यादि । अत्राहान्यः †—

---

* एवं कच्चित्प्रश्नानन्तरं स्वस्य राजत्वाभावं सूचयितुं तदुत्तरमप्रयच्छन्तं भरतं प्रति रामेणागमनप्रयोजनप्रश्नः—तं त्वित्यादि–**ति.** † गोविन्दराजः । तथाहि—'रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह' इत्यादिरयं सर्ग एवात्र लेखनीयः । 'तं तु रामः समाश्वास्य भ्रातरं गुरुवत्सलम्' इत्यादिसर्गस्तु लेखकैः प्रमादाल्लिखितः ; तस्योक्तप्रश्नोत्तरत्वाभावात् । अत्र भरतोच्यमानपितृमरणश्रवणानन्तरं रामस्य दुःखितत्वाश्रवणात् । अत्र **महेश्वरतीर्थेन** सर्गपौर्वापर्यवैपरीत्यमनालोच्य स्वदृष्टकोशमात्रप्रामाण्येन 'तं तु रामः समाश्वास्य' इत्यादिकं सर्गमेव एकोत्तरशततमं मन्वानेन तत्सर्गव्याख्यानान्ते तत्रत्यार्थविरोधमालोच्य एवमाक्षेपपरिहारावुक्तौ—ननु 'आर्य तातः परित्यज्य कृत्वा कर्म सुदुष्करम् । गतः स्वर्गं महाराजः पुत्रशोकाभिपीडितः' (5) इति, 'इमाः प्रकृतयः सर्वाः विधवा मातरश्च याः । त्वत्सकाशमनुप्राप्ताः' (9) इति च भरतेनोक्ते रामस्तदानीमशोचन् तदुक्तस्वाभिषेकप्रत्याख्यानमेव किमिति कृतवान् ? नैष दोषः—तस्मिन् भरतवाक्यप्रबन्धे पितृमरणमानुषङ्गिकत्वेनोक्तम् ; राज्यस्वीकरणमेव प्राधान्येनोक्तम् । अतो रामस्त्वेवं मन्यते—पिता पुत्रशोकेन मृतकल्पः न पुनर्जीविष्यतीति मृत इत्युच्यते । मातरश्च विधवाकल्पा इति विधवा इत्युच्यन्ते । अनेन ममाभिषेचनमेव प्राधान्येनोच्यत इति । अतोऽशोचन्नभिषेकप्रत्याख्यानं कृतवान् । स्ववाक्ये पितृमरणानुवादस्य चायमेवार्थ इति । अत्रायं परिहारो न युज्यते—यदि च पिता मृतकल्पत्वेन मृत इत्युच्यत इति रामो गृह्णीयात्, तदा 'व्यादिश्य च महातेजाः दिवं दशरथो गतः' (24) इति नानुवदेत् । यस्तु स्वाशयं स्वयमेव एवमिति वदति तस्यान्येन गत्यन्तरे सति तद्विरुद्धाभिप्रायकल्पनं कथं कर्तुं शक्यम् ? अतोऽनेनैवानुवादेन रामेण पिता मृत इत्येव गृहीतमिति प्रतिभाति । किञ्च प्रकृतीनां मातॄणां च समागमनात्पूर्वं 'इमाः प्रकृतयः सर्वाः विधवा मातरश्च याः । त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि' (9) इत्यङ्गुल्यादिनिर्देशानुपपत्तेश्च । अतः 'तं तु रामः समाश्वास्य' इत्यादिसर्गः 'वसिष्ठं पुरतः कृत्वा' इति च्युत्तरशततमसर्गानन्तरं चतुरुत्तरशततमसर्गत्वेन लेखनीयः पठनीयश्च'–**गो. तिलकस्तु**–भरतस्याभिषेककरणप्रत्याशावारणाय कैकेय्या लोकानां चान्यथासंभावनावारणाय शोककालेऽपि धैर्यमवलम्ब्य तदनाविष्करणं "शोककालेऽप्येवं धैर्यं कर्तव्यम्" इति लोकोपदेशाय चेति मम प्रतिभाति—इत्याह ॥

[1] ङ, झ पुस्तकयोः अयं सर्गः 104 तमत्वेन पठ्यते । [2] समाश्वास्य–ङ.
[3] भरतं–ङ.

"कश्चित्सर्गानन्तरं 'तं तु रामः समाज्ञाय' इत्यादिकः सर्गो वर्तते क्वचित्—तन्न तथा—कच्चित्सर्गकृतकुशलप्रश्नोत्तरादर्शनात्। अग्रप्रतिपाद्यमानपितृमरणानन्तरं दुःखव्यापाराबन्धनात्। 'इमा मातरस्त्वत्सकाशं प्राप्ताः' इति निर्देशाच्च। तर्हि किमयं सर्ग एव नास्ति? अस्त्येव। किन्तु 'वसिष्ठः पुरतः कृत्वा दारान् दशरथस्य च' इतिसर्गानन्तरं 'तं तु रामः समाज्ञाय' इत्यस्य स्थानम्" इति —इदमप्यसङ्गतम्—'तं तु रामः' इतिसर्गान्ते 'यदब्रवीन्मां नरलोकसत्कृतः' इत्यादिना पितृवचनात् वनवास एव मे परमहितं, न तु ततः प्राक् त्वद्दीयमानराज्यस्वीकार इति परिसमाप्तत्वात् अस्य सर्गस्य, 'ततः पुरुषसिंहानां वृतानां तैस्सुहृद्गणैः' इत्याद्युत्तरसर्गासांगत्यात्। *पूर्वसर्गान्ते सुहृद्गणसमागमाप्रतिपादनात्। 'वसिष्ठः पुरतः' इत्यनेनैव च मात्रादिसर्वेष्टसमागमप्रतिपादनात्। तदनन्तरं 'ततः

---

*'तं तु रामः समाज्ञाय' इत्यादिसर्गान्ते इत्यर्थः। एतत्पूर्वतने हि 'वसिष्ठः पुरतः कृत्वा' इत्यादिसर्गे सुहृत्समागमादिरुक्त इति भावः। परन्तु—प्रपूर्वतनसर्गान्ते कथितस्यापि 'वृतानां तैः सुहृद्गणैः' इत्यनेन परामर्शः संभवत्येव। 'वसिष्ठः पुरतः कृत्वा' इति सर्गानन्तरमेव यदि 'ततः पुरुषसिंहानां' इति सर्गः स्यात् तदा वसिष्ठः पुरत इत्यादिसर्गान्तगतं 'किमेष वाक्यं भरतोऽद्य राघवं प्रणम्य सत्कृत्य च साधु वक्ष्यति। इतीव तस्यार्यजनस्य तत्त्वतः बभूव कौतूहलमुत्तमं तदा' इति श्लोकेन उक्ता रामभरतसंवादनिरीक्षा असंगता स्यात्। 'ततः पुरुषसिंहानां' इत्यत्र हि 'शोचतामेव रजनी दुःखेन व्यत्यवर्तत' इति संवादाभाव एव उच्यते। किञ्च कच्चित्सर्गानन्तरं यदि 'तं तु रामः समाज्ञाय' इति सर्गः स्यात् तदा तदनन्तरसर्गाद्यश्लोकोऽपि न घटेत। तत्र हि 'रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह। किं मे धर्मात् विहीनस्य राजधर्मः करिष्यति' इति वर्तते। अत्र राजधर्मपदेन राजधर्मोपदेशश्रवणसमनन्तरमेव इदं वाक्यं प्रवृत्तमिति स्पष्टम्। गोविन्दराजोक्तानुपपत्तयस्त्वपरिहार्या एव। अतश्च कच्चित्सर्गसमनन्तरं 'रामस्य वचनं श्रुत्वा' इत्यादिसर्ग एव युक्तः। अधिकं तु पूर्वापरश्लोकविमर्शकानां स्वयं ज्ञायेतैवेति विस्तरभयान्न लिख्यते। अतो गोविन्दराजोक्तक्रम एव स्वरसः। इह पुस्तकेऽप्ययमेव क्रम आदृतः।

पुरुषसिंहानां ' इत्यस्यैव सर्गस्य प्राप्तावसरत्वाच्च । अतः कुशलप्रश्नानन्तरं 'तं तु रामः' इति कार्यप्रश्नसर्ग एव न्यायप्राप्तः । *ननु कथं कुशलप्रश्नस्योत्तरानुक्तिः ? कुशलाभावादेव । अथापि कथं 'इमास्त्वत्सकाशं प्राप्ताः' इत्याद्युक्तिः ? उच्यते—अस्य सर्गस्य पितृवचनानुष्ठानविश्रान्तस्य त्वितः परं काण्डसमाप्तिप्रतिपाद्यार्थस्य संक्षेपार्थत्वात् *सर्वमेवोपपन्नम् । यथोपपद्यते तथा दर्शयिष्यामः । अतः कश्चित्सर्गानन्तरं कार्यप्रश्नसर्गस्य स्थितिरिति स्थितम् । समाज्ञायेति । कुशलप्रश्नव्याजेन सर्वधर्मं ज्ञापयित्वा—बोधयित्वेत्यर्थः ॥ १ ॥

किमेतदिच्छेयमहं श्रोतुं प्रव्याहृतं त्वया ।
यस्मात् त्वमागतो देशं इमं [1]चीरजटाजिनी ॥ २ ॥

किमेतदित्यादि । यस्मात् त्वमिमं देशं चीरजटाजिनी भूत्वा आगतोऽसि, तस्मात् एतत्—एतदागमनं किंकारणमिति त्वया प्र-स्पष्टं व्याहृतं श्रोतुमहमिच्छेयम् ॥ २ ॥

†[2]यन्निमित्तमिमं देशं कृष्णाजिनजटाधरः ।
हित्वा राज्यं प्रविष्टस्त्वं तत्सर्वं वक्तुमर्हसि ॥ ३ ॥

उक्तश्लोकस्यैव व्याख्या—यन्निमित्तमित्यादि ॥ ३ ॥

इत्युक्तः कैकयीपुत्रः काकुत्स्थेन महात्मना ।
‡प्रगृह्य बलवत् भूयः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ४ ॥

---

* इदं सर्वमपि अस्वरसमेव । अस्य सर्गस्य काण्डसमाप्तिप्रतिपाद्यार्थसंक्षेपरूपत्वमपि तादृशार्थस्यात्रादर्शनात् न स्वरसम् ॥ † एवमुक्तेऽपि शोकेन तूष्णीं स्थितं पुनः पृच्छति—किन्निमित्तमित्यादिश्लोकद्वयेन—गो. अत एव 'प्रगृह्य बलवद्भूयः इत्युक्तः' इत्युक्तिरित्याशयः । ‡ बलवत् प्रगृह्य—गाढं परिष्वज्य तत्सर्वं वक्तुमर्हसीति भूय उक्तः—गो. यद्वा प्रथमदर्शनदिने 'आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च' इति कथनात् भाषणोपक्रमणात् पूर्वं धैर्योपोद्बलनाय भूयः प्रगृह्य इत्येव वाऽन्वयः ।

[1] चीरजटाधरः, चीरजटाजिनः—ङ. [2] किन्निमित्त—ङ. इदमर्धं क्वचिन्नास्ति—ञ.

[1]आर्य ! तातः* परित्यज्य कृत्वा कर्म सुदुष्करम् ।
गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः ॥ ५ ॥

स्त्रिया नियुक्तः कैकेय्या मम मात्रा, परन्तप !

अथ पूर्वसर्गे 'क नु तेऽभूत् पिता' इत्यादिना प्रथमपृष्टस्यैवार्थस्य पुनः प्रश्ने तस्यैवोत्तरमाह—आर्य तात इत्यादि । परित्यज्येति । अस्मान् सर्वान् इमं च लोकमिति शेषः । सुदुष्करमिति अतिघोरत्वात् ॥ ५ ॥

चकार [2]सा महत्पापं इदमात्मयशोहरम् ॥ ६ ॥

सा चकारेति योजना ॥ ६ ॥

सा राज्यफलमप्राप्य विधवा शोककर्शिता ।
पतिष्यति महाघोरे [3]निरये जननी मम ॥ ७ ॥

तस्य मे दासभूतस्य प्रसादं कर्तुमर्हसि ।
अभिषिञ्चस्व चाद्यैव †[4]राज्येन मघवानिव ॥ ८ ॥

एवं पितृमरणे श्रुते तदुचितसर्वकृत्ये च कृते‡ ततः परं यद्वक्तव्यं तत् भरतो ब्रूते—तस्य म इत्यादि ॥ ८ ॥

इमाः प्रकृतयः सर्वाः विधवा मातरश्च याः ।
त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि ॥ ९ ॥

---

* आर्य (पाठान्तरं) त्वां परित्यज्य-विवास्य-गो. गोविन्दराजरीत्या—अयं श्लोकः उत्तरवाक्यप्रस्तावार्थानुवादरूपः । † राज्येन हेतुना-गो. ‡ परन्त्वेवं व्याख्यानेऽनन्तरसर्गादीनामसङ्गतिरेव । सङ्ग्रहविस्तररूपत्वाङ्गीकारेऽपि अवश्यवक्तव्यस्य द्वित्रसर्गेण प्रतिपाद्यमानस्यार्थस्यात्रासङ्ग्रहः न स्वरसः । अतो गोविन्दराजोक्तक्रम एव साधीयान् ।

[1] आर्य-ङ. झ. [2] सुमहत्पापं-ङ. [3] नरके-ङ. [4] राज्येऽस्मिन् मम राघव-ङ.

इमाः प्रकृतय इत्यादि । 'वसिष्ठः पुरतः कृत्वा' इत्यादि-सप्रपञ्चमारादुच्यमानवक्ष्यमाणरीत्या समागता इति शेषः ॥ ९ ॥

*[1] तदानुपूर्व्या [2] युक्तश्च युक्तं चात्मनि, मानद !
राज्यं प्राप्नुहि धर्मेण सकामान् सुहृदः कुरु ॥ १० ॥

तदिति । यस्मान्मातरः प्रकृत्यादयः सर्वे वयं त्वत्प्रसाद-नार्थमागताः, यतश्च त्वं आनुपूर्व्या—ज्येष्ठत्वलक्षणया युक्तः तस्मात्, आत्मनि—त्वयि अभिषेचनं युक्तं, तस्मात् धर्मेण राज्यं प्राप्नुहि ॥

भवत्वविधवा भूमिः समग्रा †पतिना त्वया ।
शशिना विमलेनेव शारदी ‡रजनी यथा ॥ ११ ॥

एभिश्च सचिवैः सार्धं शिरसा याचितो मया ।
§भ्रातुश्शिष्यस्य दासस्य प्रसादं कर्तुमर्हसि ॥ १२ ॥

तदिदं शाश्वतं पित्र्यं सर्वं [3] सचिवमण्डलम् ।
‖पूजितं, पुरुषव्याघ्र ! नातिक्रमितुमर्हसि ॥ १३ ॥

सचिवमण्डलं—तत्प्रार्थनामिति यावत् ॥ १३ ॥

एवमुक्त्वा महाबाहुः सबाष्पः कैकयीसुतः ।
रामस्य शिरसा पादौ जग्राह [4] विधिवत् ¶पुनः ॥ १४ ॥

---

* आनुपूर्व्या युक्तं—ज्येष्ठानुक्रमेण संगतं आत्मनि युक्तं च भरणसमर्थे त्वय्येव प्राप्तं च राज्यं—गो. †नाभाव आर्षः-गो. पत्या इति वक्तव्ये इति शेषः । ‡चन्द्रः खलु निशापतिः, 'ओषधीशो निशापतिः' इत्यमरः । §शिष्यः—अनुशासनीयः, दासः—नित्यकिङ्करः । ‖पूजितं - पूजार्हम्-गो. ¶पुनरिति । पूर्वं याचितवान्, ततः शरणागतिमकरोदित्यर्थः—गो. आगमनोपवेशनकाले प्रणामकरणात् पुनरित्युक्तं स्यात् । 'विधिवत्पुनः' इति वाक्यशैली वा ।

[1] तथा—ङ. च. [2] युक्तं च—ङ. झ. [3] प्रकृति—ङ. [4] भरतः च.

तं मत्तमिव मातङ्गं निश्वसन्तं पुनःपुनः ।
भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ॥ १५ ॥

मत्त. तथाप्यकस्मात्प्रासदु खेन निश्वसन्तं मातङ्गमिव स्थितम् ॥

कुलीनः [1] सत्त्वसंपन्नः तेजस्वी चरितव्रतः ।
राज्यहेतोः कथं * पापं आचरेत् [2] त्वद्विधो जनः ॥ १६ ॥

भरतव्यवहारमनुमोदते भगवान् रामः—कुलीन इत्यादि ॥

न दोषं [3] त्वयि पश्यामि सूक्ष्ममप्यरिसूदन !
न चापि जननीं बाल्यात् त्वं विगर्हितुमर्हसि ॥ १७ ॥

बाल्यात्—अज्ञानात् ॥ १७ ॥

* कामकारः, महाप्राज्ञ ! गुरूणां सर्वदाऽनघ !
उपपन्नेषु दारेषु पुत्रेषु च विधीयते ॥ १८ ॥

कथं कैकेयीगर्हणस्याज्ञानमूलत्वमित्यत्राह—कामकार इत्यादि । हे महाप्राज्ञ ! गुरूणां—पित्रादीनां उपपन्नेषु दारेषु पुत्रेषु च सर्वथा कामकारः—स्वेच्छया नियोजनं विधीयत एव ॥ १८ ॥

† वयमस्य यथा लोके संख्याताः, सौम्य ! साधुभिः ।
भार्याः पुत्राश्च शिष्याश्च [4] ‡ त्वमपि ज्ञातुमर्हसि ॥ १९ ॥

---

* पापं—ज्येष्ठविषयप्रातिकूल्यरूपम्-गो. एतदेव स्पष्टीक्रियते समनन्तरं 'न दोषं त्वयि पश्यामि' इति । † कामकारः—स्वच्छन्दकरणं, उपपन्नेषु—शिष्यदारादिषु-गो. ‡ वयमस्य तथा संख्याताः, यथा भार्याः पुत्राः शिष्याश्च पत्यादीनां साधुभिः सख्याताः । सामान्योऽयं धर्मः, अतः त्वमप्येतत् आलक्षितुमर्हसीति भाव । § अनुज्ञातुं (पाठान्तरं), त्वं ज्ञातुमर्हसि, अनु नैरर्थक:-गो.

[1] सत्यसंकल्पाः-ङ. [2] मद्विधो-च. [3] तव-ङ. [4] त्वमनुज्ञातु-ङ.

ततः किमित्यतः—वयमित्यादि । भार्याः पुत्राः शिष्याश्च लोके साधुभिर्यथा समाख्याताः—इच्छातिनियोगार्हतया, तथा सर्वे वयं सर्वप्रकारगुरोरस्य राज्ञ इति त्वमपि ज्ञातुमर्हसि ॥ १९ ॥

वने वा *[1]चीरवसनं, सौम्य! कृष्णाजिनाम्बरम् ।
राज्ये वाऽपि [2]महाराजः मां वासयितुमीश्वरः ॥ २० ॥

अस्तु, प्रकृते किमायातमित्यतः—वन इत्यादि । ॥ २० ॥

यावत् पितरि [3]धर्मज्ञे गौरवं †लोक[4]सत्कृतम् ।
तावत्, धर्मभृतां श्रेष्ठ! जनन्यामपि गौरवम् ॥ २१ ॥

प्रकृतजनन्याविगर्हणमुपसंहरति—यावत्पितरीत्यादि । यावत्परिमाणकमित्यर्थः ; 'यत्तदेतेभ्यः परिमाणे वतुप्' तावज्जनन्यामपि गौरवम् । अतो मां त्वां च कैकेयी च माता कामचारेण नियोक्तुं शक्ता इत्येव । अतो नास्या गर्हणमित्यर्थः ॥ २१ ॥

एताभ्यां धर्मशीलाभ्यां वनं गच्छेति, राघव!
मातापितृभ्यामुक्तोऽहं कथमन्यत् समाचरे ॥ २२ ॥

यदेवं, अतः—एताभ्यामित्यादि । समाचरे—समाचरामीति यावत् ॥ २२ ॥

त्वया राज्यमयोध्यायां प्राप्तव्यं लोक[5]सत्कृतम् ।
वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥ २३ ॥
[6]एवं कृत्वा [7]महाराजः विभागं लोकसन्निधौ ।
व्यादिश्य च [7]महातेजाः दिवं दशरथो गतः ॥ २४ ॥

लोकसन्निधाविति । मन्त्रिपुरोहितादिजनसन्निधावित्यर्थः ॥

---

* चीरं—द्रुमवल्कलं वसनं उत्तरीयं यस्य तम् । कृष्णाजिनं अम्बरं—अम्बरीयं यस्य तम्—गो. † लोकसत्कृतं—लोकसम्मतमिति यावत् ।

[1] सौम्यवसनं—ङ. [2] महाबाहो—ङ. [3] धर्मज्ञ—च. [4] सत्कृते—ङ. [5] सम्मतम्—ङ. [6] एवमुक्त्वा—च. [7] महाभागः—ङ.

स च प्रमाणं [1]धर्मात्मा राजा लोकगुरुस्तव * ।
पित्रा दत्तं यथाभागं उपभोक्तुं त्वमर्हसि[2] ॥ २५ ॥

यथाभागमुपभोक्तुं त्वमर्हसीति । न त्विदानीमस्मद्भागोऽपि पित्रा दत्तः । सौमित्र्योस्तु न दत्त एव । अपि तु तदपेक्षया ज्येष्ठत्वादभिषेकश्चानुमतः । अतश्चतुर्दशसमानन्तरमहमप्यस्मद्भागं पित्रा दत्तमुपभोक्ष्ये । मात्रा तु मे वनवासमात्रं परिमितकालप्रवृत्तम् । न तु सर्वथा स्वभागपरित्यागो वृतः, पित्रा च तावदेवानुमतः । अतः कालान्तरे तु भोक्ष्यामीत्यर्थः ॥ २५ ॥

यदब्रवीन्मां नरलोकसत्कृतः
पिता महात्मा विबुधाधिपोपमः ।
तदेव मन्ये † [3]परमात्मनो हितं
न सर्वलोकेश्वरभाव[4]मव्ययम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकोत्तरशततमः सर्गः

---

मथितसिद्धान्तस्योपसंहारः—यदब्रवीदित्यादि । अव्ययं सर्वलोकेश्वरभावमिति । अक्षरमपीत्यर्थः । पित्रननुमतमिति शेषः । चर(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकोत्तरशततमः सर्गः

---

* लोकगुरुः स राजा एव तव प्रमाणम् । अतः पित्रा दत्तमित्यादि ।

† आत्मनः परं हितमित्यन्वयः ।

[1] धमज्ञे-ङ. [2] एतदनन्तर—चतुर्दश समाः सौम्य दण्डकारण्यमाश्रितः । उपभोक्ष्ये त्वहं दत्तं भागं पित्रा महात्मना—इत्यधिकम्-ङ. झ. [3] चिरमात्मनो-ङ. [4] मप्यहम्-ङ.

## द्व्युत्तरशततमः सर्गः

[दशरथगतिनिवेदनम्]

रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह ।
किं मे *धर्माद्विहीनस्य राजधर्मः करिष्यति ॥ १ ॥

एवं संक्षिप्योपदिष्टार्थस्य विस्तरोपदेशः । स्वभावश्चायं कवेः प्रायेण । रामस्येत्यादि । पूर्वसर्गादौ 'क्व तेऽभूत् पिता' इत्यादिना पितृवृत्तान्तः पृष्टः । तदनन्तरं 'कच्चिच्छुश्रूषसे' इत्यादिना सर्गसमाप्ति-पर्यन्तं धर्मप्रश्नः कृतः । तत्र राजधर्मप्रश्नः मह्यमनवसरदुस्थ इत्याह—किं म इत्यादि । धर्माद्विहीनस्येति । 'सति कुलोचितकर्मणि' इति न्यायेन धर्म्यं राजत्वमेव मे नास्ति, तस्य मे राजधर्मः किं करिष्यति ! अनुपनीतयागवत् ॥ १ ॥

शाश्वतोऽयं सदा धर्मः स्थितोऽस्मासु, नरर्षभ !
[1]ज्येष्ठे पुत्रे स्थिते, [2]राजन् ! न कनीयान् नृपो भवेत् ॥

कुतस्ते उक्तधर्माभाव इत्यतः—शाश्वतोऽयमित्यादि । अयं धर्मः अस्मासु–अस्मद्वंश्येषु यथा–यथाशास्त्रं स्थितः–प्रतिष्ठितः । अयमिति कतम इत्यतः—ज्येष्ठ इत्यादि । अतः कनीयस्त्वान्मे न राजत्व-प्रसक्तिरिति बहिरुपसंहारः ॥ २ ॥

स समृद्धां मया सार्धं अयोध्यां गच्छ, राघव !
अभिषेचय चात्मानं कुलस्यास्य †भवाय नः ॥ ३ ॥

---

* धर्मात्—त्वत्सेवारूपमुख्यधर्मात् । यद्वा–धर्मात्–त्वदुक्तराजधर्मानुष्ठानहेतु-भूतराजभावात्–गो. वस्तुतस्तु उत्तरश्लोकपर्यालोचनायां—ज्येष्ठानुक्रमरूपसामान्य-धर्मात् विहीनस्य राजधर्मरूपविशेषधर्मस्य का प्रसक्तिरित्याशयः स्वरसः प्रतिभाति ।

† भवाय–क्षेमाय, 'भवः क्षेमेशसंसारे' इति मेदिनी ।

[1] ज्येष्ठपुत्रे–ङ. [2] राज्ञा–ङ., राजा–च.

यदेवं, अतः—स इत्यादि। सः त्वं गच्छ—आगच्छेति यावत्। भवाय—अभ्युदयाय ॥ ३ ॥

*राजानं मानुषं प्राहुः देवत्वे स मतो मम।
यस्य धर्मार्थसहितं वृत्तमाहुरमानुषम् ॥ ४ ॥

राजानं सामान्यतः सर्वेऽपि जना मानुषमेव प्राहुः। मम तु †त्वं राजा दैवत्वेन सम्मतः—'मतिबुद्धि' इति क्तः, मया त्वं दैवत्वेन संमन्यमानो भवसीत्यर्थः। तत्र हेतुमाह—यस्येत्यादि। अमानुषं—मनुष्यासंभाव्यमित्यर्थः ॥ ४ ॥

केकयस्थे च मयि तु त्वयि चारण्य[1]माश्रिते।
[2]दिवमार्यो गतो राजा यायजूकः सतां मतः ॥ ५ ॥

अथ प्रथमस्य राजवृत्तान्तप्रश्नस्योत्तरमाह—केकयस्थ इत्यादि। सतां मत इति। सद्भिः पूज्यमान इति यावत् ॥ ५ ॥

‡निष्क्रान्तमात्रे भवति सहसीते सलक्ष्मणे।
दुःखशोकाभिभूतस्तु राजा त्रिदिव[3]मभ्यगात् ॥ ६ ॥

उत्तिष्ठ, पुरुषव्याघ्र! क्रियतामुदकं पितुः।
अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ॥ ७ ॥

पूर्वमेव कृतोदकाविति। कृतसपिण्डीकरणान्तसर्वकृत्याविल्यर्थः ॥ ७ ॥

---

* न सर्वसुलभं राजत्वमित्याह—राजानमिति—गो. † वस्तुतस्तु मूलं सामान्यविषयकं स्वरसम्। यस्य वृत्तमित्यन्वयः। ‡ पूर्वश्लोके प्रतीतां दशरथमरणस्य व्याध्यादिकारणान्तरसंभावनां वारयति—निष्क्रान्तमात्र इति।

[1] माश्रिते—ङ. [2] श्रीमान् स्वर्गं—च. [3] मत्यगात्—ङ.

प्रियेण खलु दत्तं हि पितृलोकेषु, राघव!
अक्षय्यं भवतीत्याहुः भवांश्चैव पितुः प्रियः ॥ ८ ॥

तर्हि किंकृतकरणेनेत्यत्राह--प्रियेणेत्यादि ॥ ८ ॥

*त्वामेव शोचन् तव दर्शनेप्सुः
त्वय्येव सक्तामनिवर्त्य बुद्धिम् ।
त्वया विहीनस्तव †शोकरुग्णः
त्वां [1]संस्मरन्नस्तमितः पिता ते ॥ ९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्व्युत्तरशततमः सर्गः

---

धी(९)मानः सर्गः ॥ ९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्व्युत्तरशततमः सर्गः

---

## त्र्युत्तरशततमः सर्गः

### [निवापनिर्वर्तनम्]

तां श्रुत्वा करुणां‡ वाचं पितुर्मरण[2]संहिताम् ।
राघवो भरतेनोक्तां बभूव गतचेतनः ॥ १ ॥

अथ श्रुतपितृविपत्तिकेन रामेण यथाप्राप्तदुःखपरिपालनाचारः ।
तां श्रुत्वेत्यादि । करुणां-शोकावहाम् ॥ १ ॥

---

* प्रियत्वमेवोपपादयति--त्वामेवेत्यादि । † रुग्णः-पीडित इति यावत्-गो. न रोगान्तरहेतुकं तन्मरणमिति वा भावः । ‡ यद्वा अकरुणां-करुणारहितां, क्रूरामिति यावत्-गो.

[1] संस्मरन्नेव गतः-च. [2] संश्रुतां-ङ.

*तं तु वज्रमिवोत्सृष्टं आहवे दानवारिणा ।
वाग्वज्रं भरतेनोक्तं अमनोज्ञं परंतपः ॥ २ ॥

दानवारिः—इन्द्रः ॥ २ ॥

प्रगृह्य बाहू रामो वै †[1]पुष्पिताग्रो यथा द्रुमः ।
वने परशुना कृत्तः [2]तथा भुवि पपात ह ॥ ३ ॥

प्रगृह्य—प्राग्र्याकृत्येत्यर्थः ॥ ३ ॥

तथा निपतितं रामं जगत्यां जगतीपतिम् ।
‡कूलघातपरिश्रान्तं प्रसुप्तमिव कुञ्जरम् ॥ ४ ॥
भ्रातरस्ते महेष्वासं सर्वतः शोक[3]कर्शितम् ।
रुदन्तः सह वैदेह्या सिषिचुः सलिलेन वै ॥ ५ ॥

सर्वतः सिषिचुरिति । सर्वगात्राणि मोहशान्तये सिक्तवन्त इत्यर्थः ॥ ५ ॥

स तु संज्ञां §पुनर्लब्ध्वा नेत्राभ्यामस्रमुत्सृजन् ।
उपाक्रामत काकुत्स्थः कृपणं बहु भाषितुम् ॥ ६ ॥

कृपणं भाषितुमिति । विलपितुमिति यावत् ॥ ६ ॥

स रामः स्वर्गतं श्रुत्वा पितरं [4]पृथिवीपतिम् ।
उवाच भरतं वाक्यं [5]धर्मात्मा धर्मसंहितम् ॥ ७ ॥

---

* एतादृशं वाग्वज्रं श्रुत्वा गतचेतनो बभूव इति पूर्वश्लोकेन, वाग्वज्रं श्रुत्वा भुवि पपात इत्युत्तरश्लोकेन वाऽन्वयः । † भरतादिदर्शनेन हर्षात् पुष्पितांगद्रुमसादृश्यम्—ति. ‡ मदेन दन्तकण्डूा च कूलेन कूलप्रहारेण परिश्रान्तम्—गो. हृष्ट-पुष्ट-पतितगजत्वे दृष्टान्तोऽयम् । § गलितां संज्ञां पुनर्लब्ध्वेत्यर्थः ।

[1] पुष्पिताग्रो—च. [2] तदा भूमौ—ङ. [3] कर्शिताः—ङ. [4] जगती—ङ. [5] धर्मज्ञ—ङ.

किं करिष्याम्ययोध्यायां [1]ताते *दिष्टां गतिं गते ।
कस्तां † [2]राजवराद्धीनां अयोध्यां पालयिष्यति ॥ ८ ॥

दिष्टां—स्वसुकृतादिसृष्टाम् ॥ ८ ॥

किं नु तस्य मया कार्यं [3]दुर्जातेन महात्मनः ।
यो मृतो मम शोकेन मया चापि न संस्कृतः ॥ ९ ॥

दुर्जातेन-वृथाजन्मना ॥ ९ ॥

अहो! भरत! सिद्धार्थः येन राजा त्वयाऽनघ!
शत्रुघ्नेन च सर्वेषु [4]प्रेतकृत्येषु सत्कृतः ॥ १० ॥

सत्कृत इति । संस्कारादिकर्मणा पूजित इत्यर्थः ॥ १० ॥

निष्प्रधाना‡मनेकाग्रां नरेन्द्रेण विनाकृताम् ।
निवृत्तवनवासोऽपि नायोध्यां गन्तुमुत्सहे ॥ ११ ॥

निष्प्रधानां—प्रधानप्रभुरहितां, अत एव- -अनेकाग्रां—बहुनायकाम् । उक्तोभयहेतुः-नरेन्द्रेण विनाकृतामिति । गन्तुं—आगन्तुम् ॥

समाप्तवनवासं मां अयोध्यायां, परंतप!
[5]कोऽनु§शासिष्यति पुनः ताते लोकान्तरं गते ॥ १२ ॥

अनुशासिष्यति—हिताहितप्रवृत्तिनिवृत्ती कारयिष्यति ॥ १२ ॥

---

* दिष्टां—कालकल्पितां, यद्वा दैवकल्पिताम्-गो. 'दैवं दिष्टं भागधेयम्'। † राजवराद—तृतीयार्थे पञ्चमी-गो. ‡ एकाग्रा—अनाकुला, 'अनाकुलेऽपि चैकाग्रः' इत्यमरः, सा न भवतीत्यनेकाग्रा, तां, आकुलामिति यावत्-गो. § शासिष्यति—कार्येषु नियोक्ष्यतीत्यर्थः-गो.

[1] ताते च त्रिदिवं-कु. [2] राजवराधीनां-कु. [3] दुर्जनेन-कु. [4] प्रेतकार्येषु संस्कृतः-कु. [5] को नु शासिष्यति-कु.

पुरा प्रेक्ष्य * सुवृत्तं मां पिता यान्याह सान्त्वयन् ।
वाक्यानि तानि श्रोष्यामि कुतः [1] कर्णसुखान्यहम् ॥१३॥

एवमुक्त्वा स भरतं भार्यामभ्येत्य राघवः ।
उवाच शोकसन्तप्तः पूर्णचन्द्रनिभाननाम् ॥ १४ ॥

सीते! मृतस्ते श्वशुरः, पित्रा हीनोऽसि, लक्ष्मण!
† भरतो दुःखमाचष्टे [2] स्वर्गतं पृथिवीपतिम् ॥ १५ ॥

दुःखं यथा तथा आचष्टे ॥ १५ ॥

ततो बहुगुणं तेषां बाष्पं नेत्रेष्वजायत ।
तथा ब्रुवति काकुत्स्थे कुमाराणां यशस्विनाम् ॥ १६ ॥

ततस्ते भ्रातरस्सर्वे भृशमाश्वास्य [3] राघवम् ।
अब्रुवन् जगतीभर्तुः क्रियतामुदकं पितुः ‡ ॥ १७ ॥

सा सीता § श्वशुरं श्रुत्वा स्वर्गलोकगतं नृपम् ।
नेत्राभ्यामश्रुपूर्णाभ्यां अशकन्नेक्षितुं पतिम् ॥ १८ ॥

सान्त्वयित्वा तु तां रामः [4] रुदन्तीं जनकात्मजाम् ।
उवाच लक्ष्मणं तत्र दुःखितो दुःखितं वचः ॥ १९ ॥

आनयेङ्गुदिपिण्याकं ‖ चीरमाहर चोत्तरम् ।
जलक्रियार्थं तातस्य गमिष्यामि महात्मनः ॥ २० ॥

---

* सुवृत्तं— शोभनं नियोगाचरणरूपं वृत्तं यस्य तम्-गो. † दुःखमाचष्टे, स्वर्गतं पृथिवीपतिमाचष्टे—इति दुःखाभिक्याद्युक्तिर्वा । ‡ एतदनन्तरं इतिकरणमूह्यम् । § श्वशुरं नृपं स्वर्गलोकगतं श्रुत्वेत्यन्वयः । ‖ चीरं—वासः, उदकदानार्थं, उत्तरं—उत्तरीयं च-गो.

[1] श्रोत्र—ङ. [2] स्वर्गतिं पृथिवीपतेः—ख. [3] दुःखितम्—ख. [4] रुदतीं—ख.

इङ्गुद्याः पिण्याकम् । इदं वानप्रस्थपितृक्रियाप्रसिद्धम्, पवित्रं च । अनिस्सारिततैलं पिष्ट्वा चूर्णीकृतं इङ्गुदीबीजमेव पिण्याकत्वेनोपचर्यते ॥ २० ॥

सीता पुरस्तात् व्रजतु त्वमेना*मभितो व्रज ।
अहं पश्चात् गमिष्यामि गतिर्ह्येषा †सुदारुणा ॥ २१ ॥

एनामभित इति । परितो रक्षन्निति शेषः । एषा गतिरिति । पितृमरणदुःखप्राप्तिरित्यर्थः ॥ २१ ॥

ततो नित्यानुगस्तेषां विदितात्मा महामतिः ।
मृदुर्दान्तश्च ‡[1]शान्तश्च रामे च दृढभक्तिमान् ॥ २२ ॥
सुमन्त्रस्तैर्नृपसुतैः सार्धमाश्वास्य राघवम् ।
[2]अवतारयदालम्ब्य नदीं मन्दाकिनीं शिवाम् ॥ २३ ॥

नित्यानुगः—नित्यानुचरः । तेषां—कुमाराणाम् । अवतारयत्—अवातारयदिति यावत् ॥ २२–२३ ॥

ते सुतीर्थां ततः कृच्छ्रात् उपागम्य यशस्विनः ।
नदीं मन्दाकिनीं रम्यां सदापुष्पितकाननाम् ॥ २४ ॥
[3]शीघ्रस्रोतसमासाद्य तीर्थं [4]शिवमकर्दमम् ।
सिषिचुस्तूदकं राज्ञे [5]तवैतत्त्वे भवत्विति ॥ २५ ॥

अकर्दमं तीर्थं—अवतारः । एतत्तदुदकं भवत्विति सिषिचुरित्यन्वयः ॥ २५ ॥

---

* अभितः—पश्चात्-गो. † सुदारुणा—सुतरां दुस्सहा । गतिः-दुःखिनां गतिः एषा हि स्नानाद्यर्थं स्त्रीबालपुरस्सरा सलिलस्यर्थः । तथा च सूत्रं ‘ सर्वे कनिष्ठप्रथमा अनुपूर्वं इतरे स्त्रियोऽग्रे ’ इति-गो. ‡ कान्तः (पा.)—तेजस्वी-रा.

[1] कान्तश्च-च. [2] अवातारय-ङ. [3] दीर्घस्रोतस-ङ. [4] शुचि-ङ. [5] तत्रैतत्ते-ङ. तत एतत्-च.

प्रगृह्य च * महीपालः जलपूरितमञ्जलिम् ।
दिशं † याम्यामभिमुखः रुदन् वचनमब्रवीत् ॥ २६ ॥

अयमेवार्थो विव्रियते—प्रगृह्येत्यादि ॥ २६ ॥

एतत्ते, राजशार्दूल! विमलं तोयमक्षयम् ।
पितृलोकगतस्याद्य मद्दत्तमुपतिष्ठतु ॥ २७ ॥
ततो मन्दाकिनी[1]तीरं प्रत्युत्तीर्य स राघवः ।
पितुश्चकार तेजस्वी [2]निवापं ‡ भ्रातृभिस्सह ॥ २८ ॥

तीरं उत्तीर्य निवापं चकार—पिण्डं प्रददावित्यर्थः, 'निवापः पितृदानं स्यात्' ॥ २८ ॥

ऐङ्गुदं [3]बदरैर्मिश्रं पिण्याकं दर्भसंस्तरे ।
न्यस्य रामः सुदुःखार्तः रुदन् वचनमब्रवीत् ॥ २९ ॥

ऐङ्गुदं—इङ्गुदीपिण्याकपिण्डम् । बदरैः—बदरफलैः, 'तस्येदम्' इत्यण्; 'फले लुक्' इति लुक् ॥ २९ ॥

इदं भुङ्क्ष्व, महाराज! प्रीतो यदशना वयम् ।
[4]यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ ३० ॥

---

* कविवाक्यमिदम् । एवमुत्तरत्रा(32)पि 'जगतीपतिः', इत्यादि द्रष्टव्यम् ।
† यत्तु आधुनिकनिबन्धेषु सुमन्तुनाम्ना लिखितं वचनं क्षत्रियाणामुदङ्मुखजलदान-बोधकं तन्निर्मूलम्—एतदाचारविरोधात् । निकृष्टक्षत्रियपरं वा । रुदन्नित्यनेन पित्रादि-विषये रोदने न निषेध इति सूचितम्—ति. ‡ भ्रातृभिस्सह मन्दाकिनीतीरात् प्रत्युत्तीर्य .........मन्दाकिनीतीरात् समुत्तीर्येत्युदकदानदेशात् किञ्चित्प्रदेशान्तरगमनवचनात् सपिण्डीकरणमेव कृतमित्यवगम्यते । दशाहात्यये उदकदानं विना पिण्डदानस्याचोदि-तत्वात् । उदकसेचनवत् कनिष्ठेन लक्ष्मणेन पिण्डदानानुक्तेश्च—गो. न च यदाकदाचित् पितुर्मरणश्रवणे पुत्रस्य दशाहाशौचतायाः स्मृतिषूक्तत्वात् कथं कृतक्रियस्य पितुः प्रथमदिन एव पिण्डदानमिति वाच्यम्; तस्याः स्मृतेः क्षत्रियेतरविषयत्वात् कलिविषयत्वाद्वा न दोषः—ति.

[1] तीरात्—ङ. [2] निर्वापं—च. [3] बदरीमिश्रं—ङ. [4] यदन्नं पुरुषोऽश्नाति—ङ.

ततस्तेनैव मार्गेण प्रत्युत्तीर्य [1]नदीतटात् ।
आरुरोह नरव्याघ्रः रम्यसानुं महीधरम् ॥ ३१ ॥

ततः पर्णकुटीद्वारं आसाद्य जगतीपतिः ।
परिजग्राह [2]बाहुभ्यां उभौ भरतलक्ष्मणौ ॥ ३२ ॥

तेषां तु रुदतां शब्दात् [3]प्रतिशब्दोऽभवद्गिरौ ।
भ्रातॄणां सह वैदेह्या सिंहानामिव नर्दताम् ॥ ३३ ॥

प्रतिशब्दः—प्रतिध्वनिः ॥ ३३ ॥

महाबलानां रुदतां कुर्वतामुदकं पितुः ।
विज्ञाय तुमुलं शब्दं त्रस्ता भरतसैनिकाः ॥ ३४ ॥

त्रस्ताः—का वा विपत्तिः प्रादुरभूदिति भीता इत्यर्थः ॥ ३४ ॥

अब्रुवंश्चापि रामेण भरतः सङ्गतो ध्रुवम् ।
तेषामेव महान् शब्दः शोचतां पितरं मृतम् ॥ ३५ ॥

ततः निश्चित्य—अब्रुवन्निति ॥ ३५ ॥

*अथ [4]वासान् परित्यज्य तं सर्वेऽभिमुखाः स्वनम् ।
अप्येकमनसो जग्मुः यथास्थानं प्रधाविताः ॥ ३६ ॥

तं स्वनमभिमुखा इति । तमालक्ष्येत्यर्थः । यथास्थानं—यथोचितं हयादिभिः प्रधाविताः—त्वरिता गच्छन्ति स्म ॥ ३६ ॥

---

* स्वनमभिमुखाः—स्वनोत्थितदिगभिमुखा इत्यर्थः । यथास्थानं—शब्दोत्पत्तिप्रदेशमनतिक्रम्य प्रधाविताः—शीघ्रगतियुक्ताः—गो. 'अवकाशे स्थितौ स्थानं' इति कोशात्—यथास्थानं—यथावकाशमित्यर्थो वा । एतदेव विव्रियते समनन्तरश्लोकेन ।

[1] सरित्तटात्-च. [2] पाणिभ्यां-च. [3] प्रतिश्रुत्को-ङ. [4] वाहान्-घ.

हयैरन्ये गजैरन्ये रथैरन्ये स्वलङ्कृतैः ।
*सुकुमारास्तथैवान्ये पद्भिरेव नरा ययुः ॥ ३७ ॥

†अचिरप्रोषितं रामं चिरविप्रोषितं यथा ।
द्रष्टुकामो जनः सर्वः जगाम सहसाऽऽश्रमम् ॥ ३८ ॥

‡भ्रातॄणां त्वरितास्तत्र द्रष्टुकामाः समागमम् ।
ययुर्बहुविधै[1]र्यानैः खुरनेमि[2]समाकुलैः ॥ ३९ ॥

खुरसमाकुलयानानि अश्वादीनि, नेमिसमाकुलयानानि रथशकटयः ॥ ३९ ॥

सा भूमिर्बहुभिर्यानैः [3]खुरनेमिसमाहता ।
मुमोच तुमुलं शब्दं द्यौरिवाभ्रसमागमे ॥ ४० ॥

समाहता—अभिहता—आक्रान्तेति यावत् ॥ ४० ॥

तेन वित्रासिता नागाः करेणुपरिवारिताः ।
§आवासयन्तो गन्धेन जग्मुरन्यद्वनं ततः ॥ ४१ ॥

गन्धेनावासयन्त्यः—मदगन्धेन दिङ्मुखान् सुरभीकुर्वन्तः ॥

वराह[4]वृकसङ्घाश्च महिषाः [5]सृमरास्तथा ।
व्याघ्रगोकर्णगवयाः वित्रेसुः पृषतैस्सह ॥ ४२ ॥

गोकर्णः—सृमरः—வரைமுமான் । गवयः—மரை ॥ ४२ ॥

---

* सुकुमारा इति हयैरित्यादिभिरुक्तानां त्रयाणां विशेषणम् । सुकुमारत्वाभावे दुःखितं रामं प्रति पद्भ्यामेव गन्तव्यत्वात्—गो. अथवा—हयैः गजैरित्यादिना योधा अभिहिताः । तद्भिन्नाः सामान्यप्रजाः 'सुकुमारा नराः' इत्युच्यन्ते । † अचिरप्रोषितमपीति भावः । ‡ भ्रातॄणां समागममित्यन्वयः । § गन्धेन—मदगन्धेन वनमावासयन्त इत्यर्थः ।

[1] शुक्लैः—ङ. [2] स्वनाकुलैः—ङ. [3] रथ—च. [4] मृगसिंहाश्च—च.
[5] सर्पवानराः—ङ.

रथाङ्गाह्वयनत्यूहाः हंसाः कारण्डवाः प्लवाः ।
तथा पुंस्कोकिलाः क्रौञ्चाः विसंज्ञा भेजिरे दिशः ॥ ४३ ॥

रथाङ्गाह्वयः—चक्रवाकः । 'नत्यूहो जलरङ्कुः स्यात्'—நீர்க் கோழி । कारण्डवाः—महापक्षाः—காணாங்கோழி । प्लवाः—स्थूलबकविशेषाः—மரக்கால்நாரை ॥ ४३ ॥

तेन शब्देन वित्रस्तैः आकाशं पक्षिभिर्वृतम् ।
मनुष्यैरावृता भूमिः *उभयं प्रबभौ तदा ॥ ४४ ॥

ततस्तं पुरुषव्याघ्रं यशस्विन[1]मरिन्दमम् ।
आसीनं स्थण्डिले रामं ददर्श सहसा जनः ॥ ४५ ॥

विगर्हमाणः कैकेयीं †सहितो मन्थरामपि ।
अभिगम्य जनो रामं बाष्पपूर्णमुखोऽभवत् ॥ ४६ ॥

तान् नरान् बाष्पपूर्णाक्षान् समीक्ष्याथ सुदुःखितान् ।
पर्यष्वजत धर्मज्ञः पितृवत् मातृवच्च सः ॥ ४७ ॥

पर्यष्वजतेति । परिष्वङ्गयोग्यानिति शेषः ॥ ४७ ॥

स तत्र कांश्चित् परिषस्वजे नरान्
नराश्च केचित्तु तमभ्यवादयन् ।
‡चकार सर्वान् सवयस्यबान्धवान्
यथार्हमासाद्य तदा नृपात्मजः ॥ ४८ ॥

तदेवोच्यते—स तत्रेत्यादि ॥ ४८ ॥

---

* उभयमित्यस्यैव प्रपञ्चः—आकाशं भूमिरिति । आकाशं पक्षिभिर्वृतं प्रबभौ, भूमिः मनुष्यैरावृता प्रबभाविति यावत् । † सहितः—अन्योन्यसंगतः—गो. सहितः अभिगम्येत्यन्वयः । ‡ चकार—संमानमिति शेषः—गो. यथार्हं सवयस्यबान्धवान् चकारेति वा ।

[1] मकस्मयम्-ख.

स तत्र तेषां रुदतां महात्मनां
भुवं च खं चानुनिनादयन् स्वनः ।
[1]गुहा गिरीणां च दिशश्च सन्ततं
*मृदङ्गघोषप्रतिमः प्रशुश्रुवे ॥ ४९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्र्युत्तरशततमः सर्गः

---

गिरीणां गुहाः दिशश्च अनुनादयन्--प्रतिध्वनयन् । धर्म-(४९)मानः सर्गः ॥ ४९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे त्र्युत्तरशततमः सर्गः

---

## चतुरुत्तरशततमः सर्गः

[ कौसल्यादिदर्शनम् ]

†वसिष्ठः पुरतः कृत्वा दारान् दशरथस्य च ।
अभिचक्राम तं देशं रामदर्शन[2]तर्षितः ॥ १ ॥

अथ भरतेन रामाश्रमगमनसमये मातृगणानयनप्रहितवसिष्ठेन तासामानयनम् । वसिष्ठ इत्यादि । दारान् पुरतः कृत्वा ॥ १ ॥

राजपत्न्यश्च गच्छन्त्यः मन्दं मन्दाकिनीं प्रति ।
ददृशुस्तत्र तत्तीर्थं ‡रामलक्ष्मणसेवितम् ॥ २ ॥

तीर्थं--पुण्यतीर्थम् ॥ २ ॥

---

* अनुनिनादयन् सन्ततं प्रशुश्रुवे इत्यत्र दृष्टान्तः--मृदङ्गघोषप्रतिम इति । † पूर्वं 'ऋषिं वसिष्ठं संदिश्य मातॄन् मे शीघ्रमानय । इति त्वरितमग्रे स जगाम' (99–2) इत्युक्तं स्मर्तव्यमत्र । ‡ तदानीमेव रामेण पिण्डप्रदानादिकं निर्वर्त्य गतत्वात्तत्परिज्ञानेन एवं कथनम् ।

[1] महागिरीणां–ङ. [2] कर्शितः–ङ.

कौसल्या बाष्पपूर्णेन मुखेन परिशुष्यता ।
सुमित्रामब्रवी[1]द्दीना याश्चान्या *राजयोषितः ॥ ३ ॥

†इदं तेषामनाथानां क्लिष्टमक्लिष्टकर्मणाम् ।
वने [2]प्राक्कलनं तीर्थं ये ते निर्विषयीकृताः ॥ ४ ॥

इदमित्यादि । ये ते प्रसिद्धाः रामादयः, अक्लिष्टकर्मणां अनाथानां तेषां क्लिष्टं---क्लेशावहं वने---वनवासे प्राक्कलनं---बहुव्रीहिरयं, प्रथमपरिग्रहवत् तीर्थं--पुण्यतीर्थं आगङ्गायमुनं देशीयमेव तीर्थम् । एवं पाङ्क्ते पाठे 'प्राक्केवलं तीर्थं' इति पठित्वा असङ्गतान् यद्वापक्षानाहान्यः ॥ ४ ॥

इतः, सुमित्रे ! पुत्रस्ते सदा जलमतन्द्रितः ।
‡स्वयं हरति सौमित्रिः मम पुत्रस्य कारणात् ॥ ५ ॥

जघन्यमपि ते पुत्रः कृतवान् न तु गर्हितः ।
§भ्रातुर्यदर्थ[3]सहितं सर्वं ||[4]तद्विहितं गुणैः ॥ ६ ॥

---

*राजयोषित इति द्वितीयाबहुवचनान्तम् । †ते प्रसिद्धाः ये रामादयः प्राक् निर्विषयीकृताः—राज्यान्निष्कासिताः--निराश्रयीकृता वा, तेषां क्लिष्टं— उपमर्दितं तीर्थं—अवतरणस्थलमित्यर्थः, केवलं निश्चितं ... ; इदं रामादीनां स्नानादिभिर्व्यवहितस्थलं नूनमिति भावः–ती.गो. क्लिष्टं—अहो क्लिष्टमित्यर्थे भावार्थको वा । वने अनाथानामित्यत्र हेतुः—ये ते निर्विषयीकृता इति । ‡'अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते' इति वदतो लक्ष्मणस्य स्वभावं जानन्ती कौसल्या एवं वदति । §भ्रातुः—ज्येष्ठभ्रातुः अर्थसहितं—प्रयोजनसहितं यत् कर्म, तत्सर्वं गुणैर्विहितं–'ज्येष्ठभ्राता पितृसमः' इति वचनात् पितृशुश्रूषावद्गुणाय कल्पत इत्यर्थः–गो. यत्—यस्मात् भ्रातुर्गुणैः विहितं तत् सर्वं जलाहरणादि अर्थसहितं—अर्थवद्भवति । 'गुणैर्दास्यमुपागतः' (किष्कि. 4–12) 'कृतार्थोऽहं भविष्यामि' (अयो. 31–24) इत्ययं खलु लक्ष्मणस्य स्वभाव इति भावः । ||भ्रातुरर्थरहितं यत् तदेव सर्वं गुणैः—गुणवद्भिः गर्हितं–रा.

[1] हीनां–च.  [2] प्राक्केवलं–ङ.  [3] रहितं–ङ.  [4] तद्गर्हितं–ङ.

जघन्यं—हीनमपि जलाहरणादिकं ते पुत्रः कृतवान्। अथाप्यसौ न गर्हितः। कुत इत्यतः—भ्रातुरित्यादि। यत् यस्मात् अर्थसहितं—प्रयोजनसहितं भ्रातुः गुणैः—ज्येष्ठत्वसौभ्रात्रपरमधार्मिकत्वादिगुणैः हेतुभिः विहितम् ॥ ६ ॥

*[1] अद्यायमपि ते पुत्रः क्लेशानामतथोचितः।
नीचानर्थसमाचारं सज्जं कर्म प्रमुञ्चतु ॥ ७ ॥

तस्मादेव—अद्येत्यादि। क्लेशानां—अनुभूयमानानां अतथोचितः—यथानुभवमुचितो न भवतीत्यतथोचितः, तेऽयं पुत्रोऽपि नीचः—नीचार्हः—दासार्हः अनर्थः—क्लेशावहः समाचारः—अनुष्ठानं यस्मिन् भ्रातृशुश्रूषाकर्मणि तत्तथा, सज्जं—प्रस्तुतं कर्म यथोक्तरूपं प्रमुञ्चतु, भरतेन रामस्य प्रत्यावर्तयिष्यमाणत्वादिति शेषः ॥ ७ ॥

दक्षिणाग्रेषु दर्भेषु सा ददर्श महीतले।
† पितुरिङ्गुदिपिण्याकं न्यस्तमायतलोचना ॥ ८ ॥

तं भूमौ पितुरार्तेन न्यस्तं रामेण वीक्ष्य सा।
उवाच देवी कौसल्या सर्वा दशरथस्त्रियः ‡ ॥ ९ ॥

इदमिक्ष्वाकुनाथस्य राघवस्य महात्मनः।
राघवेण [2] पितुर्दत्तं पश्यतैतद्यथाविधि ॥ १० ॥

---

* क्लेशानामतथोचितः—इदानीं यादृशक्लेशानुभवः तादृशक्लेशानामनुचितः ते अयं पुत्रः नीचानर्थसमाचारं—निकृष्टदुःखप्रचुरसमाचारसहितं सज्जं—उद्युक्तं कर्म अद्य प्रमुञ्चत्वपि, अपिशब्दः संभावनायाम्। ........ भरतप्रार्थनया रामेण स्वराज्ये स्वीकृते लक्ष्मणस्य नीचकर्मप्रमोचनं संभवेद्धेति भावः—गो. पूर्वश्लोके तथा वदन्त्या अपि कौसल्याया एवं वादः लोकानुसारेण। अथवा—भ्रातृशुश्रूषाया गुणत्वेऽपि राजकुमारस्य जलाहरणादिरूपसेवा अनुचितैवेति भावः। † पितुरिति चतुर्थ्यर्थे षष्ठी—गो. रामेणेत्यस्यानन्तरश्लोकादाकर्षः। ‡ स्त्रिय इति द्वितीयाबहुवचनान्तम्।

[1] अद्यायमपि—ङ. [2] पुनर्दत्तं—ङ.

तस्य देवसमानस्य पार्थिवस्य महात्मनः ।
नैतदौपयिकं * मन्ये भुक्तभोगस्य भोजनम् ॥ ११ ॥

एतत् भोजनं औपयिकं—उचितं न भवतीति मन्ये । तत्र हेतुः—भुक्तभोगस्येति । भुक्ताः राजभोगाः येन स तथा ॥ ११ ॥

चतुरन्तां महीं भुक्त्वा महेन्द्रसदृशो [1] विभुः ।
कथमिङ्गुदिपिण्याकं स भुङ्क्ते वसुधाधिपः ॥ १२ ॥

उक्तार्थ एव विव्रियते—चतुरन्तामित्यादि । चतुस्समुद्रावसानामित्यर्थः ॥ १२ ॥

अतो दुःखतरं लोके न किञ्चित् प्रतिभाति [2] मा ।
यत्र रामः पितुर्दद्यात् इङ्गुदीक्षोदमृद्धिमान् † ॥ १३ ॥

क्षोदं—पिष्टम् ॥ १३ ॥

रामेणेङ्गुदिपिण्याकं पितुर्दत्तं समीक्ष्य मे ।
कथं दुःखेन हृदयं न स्फोटति सहस्रधा ॥ १४ ॥

स्फोटति—'स्फुटविशरणे', अन्याय्यत्वात् ॥ १४ ॥

श्रुतिस्तु खल्वियं सत्या ‡ लौकिकी प्रतिभाति [3] मा ।
यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ १५ ॥

स्फोटो वा न युक्त इत्याश्वसिति—श्रुतिस्त्वित्यादि ॥ १५ ॥

[4] एवमार्ता सपत्न्यस्ताः जग्मुराश्वास्य तां तदा ।
ददृशुश्चाश्रमे रामं स्वर्गाच्च्युतमिवामरम् ॥ १६ ॥

---

* औपयिकं—प्राप्तं 'युक्तं स्यादुचितं न्याय्यं प्राप्तमौपयिकं तथा' इति हलायुधः—गो. भुक्तभोगस्य एतत् भोजनं न औपयिकं—न युक्तं 'युक्तमौपयिकं' इत्यमरः । † राज्यैश्वर्ययोग्यतया ऋद्धिमानित्युक्तिः—गो. ‡ लौकिकी —लोकविदिता, लोकप्रसिद्धेति यावत्—गो.

[1] प्रभुः—च.　[2] मे—च, मां—ङ.　[3] मे—च.　[4] एवमार्ताः—ङ.

सर्वभोगैः परित्यक्तं रामं संप्रेक्ष्य मातरः ।
आर्ता मुमुचुरश्रूणि [1]सस्वरं शोककर्शिताः ॥ १७ ॥

तासां रामः समुत्थाय जग्राह [2]चरणान् शुभान् ।
मातॄणां मनुजव्याघ्रः सर्वासां सत्यसङ्गरः ॥ १८ ॥

ताः पाणिभिः [3]सुखस्पर्शैः मृद्वङ्गुलि[4]तलैः शुभैः ।
प्रममार्जू रजः पृष्ठात् रामस्यायतलोचनाः ॥ १९ ॥

पृष्ठात्—पृष्ठदेशात्, 'पृष्ठं तु चरमं तनोः' ॥ १९ ॥

सौमित्रिरपि ताः सर्वाः मातॄः संप्रेक्ष्य [5]दुःखितः ।
अभ्यवादयदासक्तं* शनैः रामादनन्तरम् ॥ २० ॥

आसक्तं—भावे निष्ठा, स्नेहासङ्गोपेतमिति यावत् ॥ २० ॥

यथा रामे तथा तस्मिन् सर्वा ववृतिरे स्त्रियः ।
†वृत्तिं दशरथाज्जाते लक्ष्मणे शुभलक्षणे ॥ २१ ॥

ववृतिरे—वर्तितवत्यः ॥ २१ ॥

सीताऽपि चरणांस्तासां उपसङ्गृह्य दुःखिता ।
श्वश्रूणामश्रुपूर्णाक्षी सा बभूवाग्रतः स्थिता ॥ २२ ॥

तां परिष्वज्य दुःखार्तां माता दुहितरं यथा ।
वनवास[6]कृशां दीनां कौसल्या वाक्यमब्रवीत् ॥ २३ ॥

---

* असक्तं—अविरतं 'अविरतमनवरतं स्यात् एकार्थमनारतमसक्तमपि' इति हलायुधः—गो. रामादनन्तरं, अविलम्बेनैव अभ्यवादयत—इत्यर्थ इति भावः ।

† वृत्तिं ववृतिरे—पाकं पचतीतिवत् प्रयोगः ।

[1] सुस्वरं—ङ. [2] चरणाम्बुजान्—च. [3] शुभस्पर्शैः—ङ. [4] दलैः—ङ.
[5] दुःखिताः—ङ. [6] कृतां—च.

विदेहराजस्य सुता स्नुषा दशरथस्य च ।
रामपत्नी कथं दुःखं संप्राप्ता निर्जने वने ॥ २४ ॥

पद्ममातपसन्तप्तं परिक्लिष्टमिवोत्पलम् ।
काञ्चनं रजसा ध्वस्तं क्लिष्टं चन्द्रमिवाम्बुदैः ॥ २५ ॥

परिक्लिष्टं—परिमृदितं उत्पलं—रक्तोत्पलम् । ध्वस्तं—अभिभूतम् ॥

मुखं ते प्रेक्ष्य * मां शोकः दहत्यग्निरिवा[1]शयम् † ।
भृशं मनसि, वैदेहि! व्यसनारणिसंभवः ॥ २६ ॥

मनसि संक्रान्तः व्यसनारणिसंभवः शोकः, अग्निः आशयं-गृहं, आशय्यते अस्मिन्नित्याशयः—गृहमिव मां दहति ॥ २६ ॥

ब्रुवन्त्यामेवमार्तायां जनन्यां भरताग्रजः ।
पादावासाद्य जग्राह वसिष्ठस्य च राघवः ॥ २७ ॥

पुरोहितस्याग्निसमस्य वै तदा
बृहस्पतेरिन्द्र [2]इवामराधिपः ।
प्रगृह्य पादौ सुसमृद्धतेजसः
सहैव तेनोपविवेश राघवः ॥ २८ ॥

‡ ततो [3]जघन्यः [4]सहितैः [5]समन्त्रिभिः
पुरप्रधानैश्च [6]सहैव सैनिकैः ।
जनेन धर्मज्ञतमेन धर्मवान्
§ उपोपविष्टो भरतस्तदाऽग्रजम् ॥ २९ ॥

---

* ते मुखं प्रेक्ष्य, स्थितामिति शेषः—गो. † आश्रयाश इत्यग्नेर्नामान्तरम् । ‡ ततो जघन्यं—वसिष्ठरामोपवेशादनन्तरं—गो. जघन्यं--निम्नदेशं—रा. § अग्रजमुपोपविष्टः ।

[1] श्रयम्—ङ. च. [2] इवामराग्रजः—ङ. [3] जघन्यं—ङ. च.
[4] सह तैः—ङ. [5] स्वमन्त्रिभिः—च. [6] तथैव—ख.

तत इति। वसिष्ठरामोपवेशनानन्तरं जघन्यः—जघनभागाश्रितः—पृष्ठभागाश्रितः सन् उपोपविष्टो बभूवेत्यन्वयः ॥ २९ ॥

उपोपविष्टस्तु [1]तदा स वीर्यवान्
तपस्विवेषेण समीक्ष्य राघवम्।
श्रिया ज्वलन्तं भरतः *कृताञ्जलिः
यथा महेन्द्रः प्रयतः प्रजापतिम् ॥ ३० ॥

उपोपविष्ट इत्यादिकं जनाभिप्रायानुभाषणम् ॥ ३० ॥

किमेष वाक्यं भरतोऽद्य राघवं
प्रणम्य सत्कृत्य च साधु वक्ष्यति।
इतीव तस्यार्यजनस्य [2]तत्त्वतः
बभूव कौतूहलमुत्तमं तदा ॥ ३१ ॥

तत्त्वतः किं साधु वक्ष्यतीति योजना ॥ ३१ ॥

स राघवः सत्यधृतिश्च लक्ष्मणः
महानुभावो भरतश्च धार्मिकः।
वृताः सुहृद्भिश्च विरेजुरध्वरे
यथा सदस्यैः सहितास्त्रयोऽग्नयः † ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुरुत्तरशततमः सर्गः

---

त्रयोऽग्नय इति शत्रुघ्नस्याप्राधान्येन परिहरणात्। रत्न(३२)-मानः सर्गः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चतुरुत्तरशततमः सर्गः

---

* कृताञ्जलिः, अभूदिति शेषः—गो. कृताञ्जलिः उपोपविष्टः इति वा।

† लक्ष्मणशत्रुघ्नयोरेकोदरजत्वात् वा शत्रुघ्नस्य पृथगनुक्तिः।

[1] तदातिवीर्यवान्—च. [2] सर्वतः—क.

## पञ्चोत्तरशततमः सर्गः

### [रामभरतसंवादः]

*ततः पुरुषसिंहानां वृतानां तैः सुहृद्गणैः ।
शोचतामेव रजनी दुःखेन व्यत्यवर्तत ॥ १ ॥

एवं मन्त्रिपुरोहितादिसकलराजकर्तृसमागमे किं वदिष्यतीति जने चोत्सुके सति स्वमात्रा प्रापितं राज्यं रामाय समर्प्य तत्त्वतः प्रत्यावृत्तिं प्रार्थयानमपि भरतं रामः पितृवियोगशोकादेवमयं ब्रूत इति मन्वानः शोकापनोदपूर्वं उभयोः पितृवचने स्थितिमेव स्थापयति । ततः पुरुषेत्यादि । एवञ्च प्रस्पष्टायां पूर्वापरसर्गसंगत्यां अपरः 'तं तु रामः समाज्ञाय' इति सर्गमिह प्रक्षिप्य व्याकरोत् । तदनुचितमिति प्रागेवोक्तम् । सुहृद्गणैः वृतानामिति । पूर्वसर्गान्तोक्तरीत्या शोचतां—पितृमरणदुःखेन ॥ १ ॥

रजन्यां सुप्रभातायां भ्रातरस्ते सुहृद्वृताः ।
मन्दाकिन्यां हुतं जप्यं कृत्वा †[1] द्वारमुपागमन् ॥ २ ॥

मन्दाकिन्यां—तत्तीरे । हुतं—प्रातरौपासनहोमम् । जप्यं—गायत्रीजपम् । द्वारं—उटजद्वारम् ॥ २ ॥

---

*एतत्पूर्वं 'तं तु रामः समाज्ञाय' इत्यादिकं पठनीय इति गोविन्दराजः । यद्यपि गोविन्दराजदृशा एतत्पूर्वसर्गे रामभरतसंवादस्योपक्रान्तत्वात् 'वदतामेव रजनी' इति वक्तव्ये 'शोचतामेव रजनी' इत्युक्तिरस्वरसेव—तथाऽपि कतकदृष्ट्याऽपि पूर्वसर्गान्ते शोकावर्णनात्, प्रत्युत 'किमेष वाक्यं भरतोऽद्य वक्ष्यति' इत्येव कथनात् अस्वरसाधिक्यमेव । 'सान्त्विता मामिका माता' (४) इत्यादिकमपि गोविन्दराजपक्ष एव स्वरसम् । अधिकं 357 पुटे द्रष्टव्यम् । ४ श्लोकटिप्पण्यपि द्रष्टव्या । †'द्वारं' इति पाठः, उटजद्वारमित्यर्थं इति केचित्—तन्न—उत्तरसर्गे मन्दाकिनीतीरे राममुवाचेत्युक्तेः—ति.

[1] राम—सर्वत्र.

तूष्णीं ते समुपासीनाः न कश्चित् किञ्चिदब्रवीत् ।
भरतस्तु सुहृन्मध्ये रामं वचनमब्रवीत् ॥ ३ ॥

*सान्त्विता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकम् ॥ ४ ॥

सान्त्वितेत्यादि । मामिकेति । 'केवलमामक' इति ङीपश्छन्दोविषयत्वात् तथात्वस्येहानाश्रयात् टापि 'मामकनरकयोरुपसङ्ख्यानम्' इति कात्पूर्वस्य इत्—मामिका माता प्रथमं राज्ञा राज्यदानेन सान्त्विता—सञ्जातसान्त्वा, अनन्तरं मम तया इदं राज्यं दत्तम् । एवं तद्दत्तमिदं—तदिदं अहं तवैव ददामि । अतः अकण्टकं—उक्तप्रकारेण पितृवचनस्यापि परिपालितत्वात् प्रत्यूहरहितं इदं राज्यं भुङ्क्ष्व ॥ ४ ॥

†महतेवाम्बुवेगेन [1]भिन्नः सेतुर्जलागमे ।
दुरावारं त्वदन्येन राज्यखण्डमिदं महत् ॥ ५ ॥

जलागमे—वर्षाकाले । दुरावारं—आवरीतुमशक्यं, वृत्तः खलु, अशक्यरक्षणमित्यर्थः । राज्यस्य खण्डः—भागः तथा । अत्र खण्डशब्देनाल्पत्वप्रतीतिव्यावृत्त्यै उक्तं—महदिति । महानस्मदीयो देश इत्यर्थः ॥ ५ ॥

---

* दत्तमन्यथयितुं न शक्तोऽहमिति रामो वदेदिति मत्वा तस्य परिहारानुगुणं वचनमाह—सान्त्वितेति—गो. वस्तुतस्तु गोविन्दराजरीत्या पूर्वसर्गे 'मातापितृभ्यामुक्तोऽहं' (22) इत्यादिरामदत्तपरिशानात्तदनुगुणोत्तरदानाशक्तेरेव 'शोचतामेव रजनी' इति शोकदर्शनात्, अपरेऽह्नि तदनुगुणोत्तरदानमत्र । † जलागमे महताऽम्बुवेगेन भिन्नः सेतुः पुनः जलं यथा न वारयेत्तथेत्यर्थः ।

[1] भिन्नसेतुः—ङ

*गतिं खर इवाश्वस्य तार्क्ष्यस्येव पतत्रिणः ।
अनुगन्तुं न शक्तिर्मे गतिं तव, महीपते! ॥ ६ ॥

ननु त्वयैव महावीरेण सुरक्षमेवेत्यत आह—गतिमित्यादि । तव गतिं—त्वदीयं राज्यपालनसामर्थ्यं अनुगन्तुं मे शक्तिर्नास्ति ॥ ६ ॥

†सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते ।
राम! [1]तस्य तु दुर्जीवं यः परानुपजीवति ॥ ७ ॥

अत्रैव हेतुमाह—सुजीवमित्यादि । सुखेन जीवितु शक्यं सुजीवम् । यः परैर्नित्यश उपजीव्यते तस्य—तेनेत्यर्थः ; 'न लोक' इति निषेधेऽपि कर्तरि षष्ठ्यार्षी । सुजीवं, अनपेक्षत्वात् । हे राम! यः परानुपजीवति तेन दुर्जीवं—जीवितुमशक्यम् ॥ ७ ॥

‡[2]यथा तु रोपितो वृक्षः पुरुषेण विवर्धितः ।
ह्रस्वकेन दुरारोहः रूढस्कन्धो महाद्रुमः ॥ ८ ॥

---

* खरेत्यविभक्तिकनिर्देशः, खरस्येत्यर्थः, प्रकृतिभाव आर्षः । पतत्रिणः—पक्षिमात्रस्य । अश्वस्य गतिमनुगन्तुं खरस्य यथा न शक्तिः, गरुडस्य गतिमनुगन्तुं केवलपक्षिणो यथा च शक्तिर्नास्ति, तथेत्यर्थः-**गो.** अश्वगतिमनुगन्तुं खरो यथा न शक्तः, तार्क्ष्यगत्यनुगमने यथेतरपक्षिणो न शक्ताः तथा तव गतिं—त्वदीयां राज्यपरिपालन-शक्तिमनुगन्तुं न मे शक्तिः, इवशब्दः यथाऽर्थे-**ति.** † तव स्वतः शक्तिर्नास्ति चेव शक्तपुरुषोपसर्पणादिना राज्यं कुरु—इति चेत्तत्राह - सुजीवमित्यादि । स्वयं शक्तस्य सुकरत्वाय मन्त्र्याद्यपेक्षणं किल युक्तं, अशक्तस्य नित्यपरोपजीवनं तु हेयमेवेति भावः । ‡ लोकरक्षणार्थं दशरथेनोत्पाद्य वर्धितः सकलसद्गुणसंपन्नस्त्वं यदि लोकरक्षणं न कुर्याः, तदा तस्य लोकस्य दशरथस्य त्वया न प्रयोजनमिति उपदेशमुखेन फलादर्शनवृक्षौपम्य-माह—यथा त्वित्यादिश्लोकत्रयेण-**ती.** रोपयितुः दशरथ उपमेयः, वर्धितमहावृक्षस्य भवान्, पुष्पदर्शनस्याभिषेचनौन्मुख्यं, फलाननुभवस्य भवतो राज्यापरिपालनम्-**गो.**

[1] तेन—ङ. [2] यथा त्वारोपितः—ङ.

*सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ताः मरणान्तं च जीवितम् ॥ १६ ॥

न केवलं पुरुषस्य कालवशादनित्यत्वं, अपि तु सर्वस्यापीत्याह—सर्वे इत्यादि । क्षयान्ताः-नाशपर्यवसानाः । निचयाः-सङ्ग्रहाः । समुच्छ्रयाः-विधैश्वर्यादिकृतमौन्नत्यम् । मरणान्तं च जीवितमिति । सर्वत्र कालवशादिति शेषः । अतः कालगतिं गतो राजा न शोचनीय इत्यनुकर्षः ॥ १६ ॥

†यथा फलानां पक्वानां नान्यत्र पतनात् भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणात् भयम् ॥ १७ ॥

पतनादन्यत्र न भयमिति । पतनस्यैवाशक्यपरिहारत्वात् भयम् । एवं जातस्य तत एव हेतोः अशक्यपरिहारं मरणभयमित्यर्थः ॥

यथाऽगारं दृढस्थूणं जीर्णं [1]भूत्वाऽवसीदति ।
[2]तथैव सीदन्ति नराः जरामृत्युवशं गताः ॥ १८ ॥

कालवशात् क्षये दृष्टान्तान्तरं—यथाऽगारमित्यादि ॥ १८ ॥

---

* निचयाः-धनसंचयाः सर्वे क्षयान्ताः-क्षयपर्यवसायिनः—चोरेण कामेन राज्ञा वा नश्यन्तीत्यर्थः . . . . . . अस्मिन् श्लोके पादत्रयोक्तार्थत्रयं दृष्टान्तार्थं, तुरीयपादश्च दार्ष्टान्तिकं-गो. † प्रथमश्लोके वनगमनं न मया स्वतन्त्रेण कृतं, अपि त्वीश्वरकृतमित्युक्तम् । द्वितीयश्लोके दशरथमरणं च कालकृतं, अतः तत्रापि न शोचनीयमित्युक्तम् । अथ द्वितीयश्लोकोक्तं सदृष्टान्तं प्रपञ्चयति—यथेत्यादिना-गो. यथा पक्वानां फलानां-तालादिजन्यानां पतनादन्यत्र-अन्यस्मिन् काले भयं-काकादिपक्षिभक्षणभीतिर्नास्ति, तथा जातस्य नरस्य मरणात्-मर्त्यलोकादन्यत्र भयं नास्ति । एतेन मर्त्यलोकादन्यत्र नयने यत्नः कर्तव्य इति सूचितम्-रा.

[1] भूत्वोपसीदति-च.  [2] तथाऽवसीदन्ति-च.

[1]अतीता रजनी या तु सा न प्रतिनिवर्तते ।
यात्येव यमुना [2]पूर्णा *[3]समुद्रमुदकार्णवम् ॥ १९ ॥

अतीता रजनी न प्रतिनिवर्तत इत्यत्र यमुनादृष्टान्तः । यात्येवेति । न प्रतिनिवर्तत इत्यर्थः । उदकार्णवमित्यनेन पयोदध्यादिसमुद्रव्यावृत्तिः ॥ १९ ॥

अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह ।
आयूंषि क्षपयन्त्याशु ग्रीष्मे †जल[4]मिवाशये ॥ २० ॥

'गच्छन्ति' इति शत्रन्तम् । आशये—जलाशये ॥ २० ॥

आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।
[5]आयुस्ते हीयते यस्य स्थितस्य च गतस्य च ॥ २१ ॥

यदेवं कालवर्गो दुर्वारः, अतः आत्मानं—त्वामेव प्रति त्वमनुशोच—'मृत्युर्दुर्वार आयाति, का मे गतिरिहामुत्र?' इति चिन्तय । अन्यं—राजानम् । स्वस्यैव शोचनीयत्वमस्तीत्याह—आयुस्त्वित्यादि । ‡यस्येति । यस्य कस्यापीत्यर्थः ॥ २१ ॥

§सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति ।
‖गत्वा [6]सुदीर्घमध्वानं सह मृत्युर्निवर्तते ॥ २२ ॥

---

* समुद्रस्योदकाकुलत्वविशेषणं यमुनायाः सर्वथाऽनिवर्त्यत्वाय-गो. † जलमिवांशवः (पा.)—अंशवः, सूर्यस्येति शेषः—गो. ‡ स्थितस्य गतस्य च यस्य ते इति वाऽन्वयः । § अन्तर्यामिण एव मृत्युरूपत्वात् अपरिहार्यः स इति भावः—ति. ‖ एवं मृत्योरविनाभावात् सुदूरगमनेऽपि मृत्युर्न निवर्तत इत्याशयः ।

[1] अत्येति-ङ. [2] पूर्ण—च. [3] समुद्रमुदकाकुलम्, समुद्रं लवणार्णवम्—ङ. [4] मिवांशवः—ङ. च. [5] आयुस्तु—च. [6] सुदूर—ङ.

सह व्रजति, सह निषीदति, सह मृत्युर्निवर्तत इति। न तु दूरे देशे मृत्युं स्थापयित्वा स्वेनागन्तु शक्यमित्यर्थः ॥ २२ ॥

गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः ।
जरया पुरुषो जीर्णः * किं हि कृत्वा प्रभावयेत् ॥ २३ ॥

वलयः जराकृताः। किं हि कृत्वा—किं बलं प्राप्य प्रभावयेत्—प्रभुत्वं भावयेत् ॥ २३ ॥

† नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमिते[1] रवौ ।
आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥ २४ ॥
‡ [2] हृष्यन्त्यात्ममुखं दृष्ट्वा नवं नवमिहागतम् ।
ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः ॥ २५ ॥

नवं नवमिव—प्रागप्राप्तमिव आत्ममुखं—स्वस्वाभिमुखागतं ऋतूनां परिवर्तनं दृष्ट्वा मोहात् हृष्यति, नेदं युक्तमित्याह—ऋतूनामित्यादि। परिवर्तः—पुनःपरिवृत्तिः ॥ २५ ॥

यथा काष्ठं च काष्ठं च समेयातां महार्णवे ।
समेत्य च व्यपेयातां कालमासाद्य कञ्चन ॥ २६ ॥

---

* किं हि कृत्वा—पूर्वोक्तोपद्रवपरिहारत्वेन कमुपायं कृत्वा आत्मानं प्रभुं कुर्यात् इत्यर्थः-**गो.** केन वोपायेन जरादिकं वारयेत्, न केनापीति भावः। † आदित्ये उदिते नन्दन्ति—अर्थार्जनकालोऽयमागत इति। रवौ अस्तमितेऽपि नन्दन्ति—कामोपभोगकालोऽयमागत इति-**गो.** अथवा अजामित्वादिना—'कथं क्षपयितव्यं अहः' 'कथं वेयं रजनी क्षपयितव्या' इत्यादिभावनया सूर्योदयं सूर्यास्तमयं च जनाः सानन्दं प्रतीक्षन्ते, जीवितक्षयं तु न जानन्त्यपि, अहो! इतितात्पर्यकं वचनमिदम्। ‡ हृष्यन्त्यृतुमुखं (पा.) ऋतुमुखं—ऋत्वागमं-**गो.**

[1] ऽहनि-**च.** [2] हृष्यन्त्यृतुमुखं-**ङ. च.**

एवं भार्याश्च पुत्राश्च ज्ञातयश्च [1] धनानि च ।
समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥ २७ ॥

काष्ठं च काष्ठं चेति । *पोतद्वयमित्यर्थः । कश्चन कालं—वायुम् । विनाभवः–विप्रयोग इति यावत् ॥ २७ ॥

† नात्र कश्चिद्यथाभावं प्राणी [2] समतिवर्तते ।
तेन तस्मिन्न सामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥ २८ ॥

नात्रेत्यादि । अत्र—संसारे कश्चिदपि संसारिप्राणी यथाभावं—यथाप्राप्तिस्वभावं–जनिमृति-मृतिजनिलक्षणं नातिवर्तते—न लङ्घयति, तेन–हेतुना, प्रेतस्यानुशोचतः इति षष्ठ्यार्षी, प्रेतमनुशोचतश्चापि तस्मिन्—स्वकप्रेतभावनिवर्तने सामर्थ्यं नास्त्येव ॥ २८ ॥

यथा हि ‡ सार्थं गच्छन्तं ब्रूयात् कश्चित् पथि स्थितः ।
अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥ २९ ॥
एवं पूर्वैर्गतो मार्गः [3] पितृपैतामहो ध्रुवः ।
तमापन्नः कथं शोचेत् यस्य नास्ति व्यतिक्रमः ॥ ३० ॥

---

* काष्ठं—दारुखण्डो वा । अवशपतितं दारुखण्डद्वयं कदाचित् समेति, कदाचित् विभजते च, तथैव भार्यापुत्रादिसमागमवियोगाविति भावः । † अत्र–अस्मिन् लोके कश्चिदपि प्राणी यथाभावं न समभिवर्तते—यथाभिलाषं बन्धुभिस्सह न वर्तते। तेन–कारणेन प्रेतस्य–मृतस्य हेतोः अनुशोचतः पुरुषस्य तस्मिन्–मरणनिवारणे सामर्थ्यं नास्ति। यद्वा अस्मिन् लोके कश्चिदपि जन्तुः यथाभावं–यथाभिलाषं–अप्रतिहतसंकल्पतयेत्यर्थः, न समभिवर्तते . . . तेन–एवमप्रतिहतसंकल्पत्वाभावेन प्रेतस्य–मृतस्य हेतोः–गो. अत्र–संसारे कश्चिदपि प्राणी यथाभावं–यथाप्राप्तं स्वभावं मृतिजनिलक्षणं न समतिवर्तते–न लङ्घयति। तेन हेतुना प्रेतस्य, सम्बन्धसामान्ये षष्ठी, प्रेतमनुशोचतोऽस्य तस्मिन्–स्वीयप्रेतभावनिवर्तने सामर्थ्यं नास्ति–ति. ‡ सार्थं–पथिकसमूहं–गो.

[1] वसूनि च–च. [2] समभिवर्तते–ङ. [3] पितृपैतामहैः–ङ. पैतृपितामहैः–च.

पूर्वगतिप्रमाणगतित्वे दृष्टान्तः—यथा हीत्यादि । सार्थः—वणिक्समूहः । गच्छन्तमिति । पुरतो गच्छन्तमित्यर्थः । उक्तायां लोकस्थितेः प्रकृतोपयोगदर्शनं—एवमित्यादि । पितृपैतामहैः, वृद्धिः छान्दसी, पितृपितामहैरित्यर्थः । ध्रुवः—अवश्यंभावी । तं अवश्यप्राप्यं मार्गं, यस्य—यन्मार्गगमनस्य व्यतिक्रमः—लङ्घनं कस्यापि नास्ति, स्वयमपि तन्मार्गमापन्नः—कथं पूर्वं गतं प्रति शोचेत् ? अतः पितृशोको निष्प्रयोजनः ॥ २९-३० ॥

*वयसः पतमानस्य स्रोतसो वाऽनिवर्तिनः ।
आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ॥

अनुष्ठेयं त्वेतावादित्याह—वयस इत्यादि । स्रोतसो वा—गङ्गादिप्रवाहस्येव अनिवर्तिनः—प्रत्यावृत्तिरहितस्य पतमानस्य—गच्छतः वयसः मध्ये आत्मा सुखे—तत्साधने च नियोक्तव्यः । अतः सुखभाजः—सुखतत्साधनाप्तिनिमित्तजन्मभाजः स्मृताः ॥ ३१ ॥

† धर्मात्मा स शुभैः[1] कृत्स्नैः क्रतुभिश्चाप्तदक्षिणैः ।

[2] [धूतपापो गतः स्वर्गं पिता नः पृथिवीपतिः ।
भृत्यानां भरणात् सम्यक् प्रजानां परिपालनात् ॥

---

* सप्तम्यर्थे षष्ठी । वाशब्द इवार्थः । अनिवर्तिनि स्रोतसीव वयसि पतमाने—अनिवर्तितया गच्छति सति आत्मा सुखे—सुखहेतौ धर्मे नियोक्तव्यः, परलोकचिन्तयेति शेषः । यतः प्रजाः सुखभाजः—धर्मसाध्यसुखासक्ताः स्मृताः—गो. पतमानस्य—गच्छतः वयसः, नाशं दृष्ट्वेति शेषः—ति. वयस इति अनादरे वा षष्ठी । सांसारिकं परिणामं अलक्षीकृत्य उत्तरभाविनिरतिशयसुखरूपपरमपुरुषार्थे आत्मा नियोक्तव्यः—यथा मुक्तः स्यात् तथा प्रयतितव्यम् । यतः प्रजानां जनिरेव तदर्था इति वा अर्थः ।
† धर्मात्मा स्वर्गतः स नः पिता न शोच्य इत्यन्वयः ।

[1] सर्वैः, कृत्यैः-ङ [2] कुण्डलीकृतः पाठः गोविन्दराजसम्मतः ।

अर्थाऽऽदानाच्च धर्मेण पिता नः त्रिदिवं गतः ।
कर्मभिस्तु शुभैरिष्टैः क्रतुभिश्चाप्तदक्षिणैः ॥
स्वर्गं दशरथः प्राप्तः पिता नः पृथिवीपतिः ।
इष्ट्वा बहुविधैर्यज्ञैः भोगांश्चावाप्य पुष्कलान् ॥
उत्तमं चायुरासाद्य स्वर्गतः पृथिवीपतिः ।
आयुरुत्तममासाद्य भोगानपि च राघवः ॥]
स न शोच्यः पिता तातः स्वर्गतः सत्कृतः सताम् ॥ ३२ ॥

यदेवं, अतः—धर्मात्मेत्यादि । सतां सत्कृतः—सद्भिः पूज्यमान इति यावत् ॥ ३२ ॥

स जीर्णं मानुषं देहं परित्यज्य पिता हि नः ।
*[1]दैवीमृद्धिमनुप्राप्तः ब्रह्मलोकविहारिणीम् ॥ ३३ ॥

ब्रह्मलोकविहारिणीं—ब्रह्मलोकविहारार्हां दैवीं ऋद्धिं—भूमानन्दपदाविर्भावैश्वर्यपरिकरमित्यर्थः ॥ ३३ ॥

तं तु नैवंविधः कश्चित् प्राज्ञः शोचितुमर्हति ।
†[2]तद्विधो यद्विधश्चापि श्रुतवान् बुद्धिमत्तरः ॥ ३४ ॥

श्रुतवान्—अधीतवेदवेदान्तलक्षणविद्यावान् ॥ ३४ ॥

एते बहुविधाः शोकाः ‡विलापरुदिते तथा ।
वर्जनीया हि धीरेण सर्वावस्थासु धीमता ॥ ३५ ॥

शोकः मानसः । तत्कार्ये विलापरुदिते वाक्कायस्थे ॥ ३५ ॥

---

* दैवीमृद्धिं—देवसम्बन्धिसंपदं दिव्यदेहादिलाभरूपां—गो. † श्रुतवान् बुद्धिमत्तरश्च यद्विधोऽसि तद्विध इत्यर्थः—गो. ‡ विलापरुदिते—प्रलापाश्रुमोचने—गो.

[1] दैवीं सिद्धिं, दैवीं वृत्तिं—ङ. [2] त्वद्विधो मद्विध—च.

*[1] स स्वस्थो भव मा [2]शोकः यात्वा चावस तां पुरीम् ।
तथा पित्रा नियुक्तोऽसि वशिना, [3]वदतां वर ! ॥ ३६ ॥

स स्वस्थ इति । एवं शोचन्नित्यर्थः । मा शोकः — शोको मा स्तु । तां पुरीं यात्वा — गत्वा — स्वस्थः स्वं वस । कथमेवं नियोग इत्यतः — तथेत्यादि । वशिना — सत्यवशगेन ॥ ३६ ॥

†यत्राहमपि तेनैव नियुक्तः पुण्यकर्मणा ।
तत्रैवाहं करिष्यामि पितुरार्यस्य शासनम् ॥ ३७ ॥

यत्र — यस्मिन् कृत्ये । तत्रैवाहमिति । तत्रैव प्रवृत्तः तत् करिष्यामि ॥ ३७ ॥

न मया शासनं तस्य त्यक्तुं न्याय्यं, अरिन्दम !
[4]तत् त्वयाऽपि सदा [5]मान्यं स वै बन्धुः स नः पिता ॥

तद्वचः पितुरेवाहं सम्मतं धर्म[6]चारिणः ।
कर्मणा पालयिष्यामि वनवासेन, राघव ! ॥ ३९ ॥

पितुर्वच एवाहं कर्मणा — तदुचितव्यापारेण ॥ ३९ ॥

धार्मिकेणानृशंसेन नृपेण [7]गुरुवर्तिना ।
भवितव्यं, नरव्याघ्र ! परलोकं जिगीषता ॥ ४० ॥

नृपेण — क्षत्रियेण परलोकं जिगीषता — धार्मिकत्वादिस्वभाववता भवितव्यम् ॥ ४० ॥

---

* मद्विवासनं त्वयाऽपि मान्यमित्याह — स स्वस्थ इत्यादिना — गो. † यत्र — वनरूपे स्थाने — गो.

[1] तव — ङ. [2] शोचीः — ङ. [3] ददतां — ङ. [4] स — च. [5] मान्यः — च. [6] चारिणाम् — च. [7] गुणवर्तिना — ङ.

*आत्मानमनुतिष्ठ त्वं स्वभावेन, नरर्षभ !
निशाम्य तु शुभं वृत्तं पितुर्दशरथस्य नः ॥ ४१ ॥

आत्मानमित्यादि । नः पितुः वृत्तं शुभं निशाम्य—पर्यालोच्य, पिता नः परमां गतिं गत इति च पर्यालोच्य, त्वं स्वभावेन—प्रागुक्तधार्मिकत्वादिलक्षणनृपस्वभावेन उपलक्षितः सन् तव आत्मानं अनुतिष्ठ—अनुचिन्तय—स्वस्यात्मनः परलोकहितं चिन्तयेत्यर्थः ॥ ४१ ॥

इत्येवमुक्त्वा वचनं महात्मा
　पितुर्निदेशप्रतिपालनार्थम् ।
यवीयसं भ्रातरमर्थवच्च
　प्रभुर्मुहूर्ताद्विरराम रामः ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चोत्तरशततमः सर्गः

---

रवि(४२)मानः सर्गः ॥ ४२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चोत्तरशततमः सर्गः

---

## षडुत्तरशततमः सर्गः

[भरतप्रार्थना]

†एवमुक्त्वा तु [1] विरते रामे वचनमर्थवत् ।
ततो मन्दाकिनीतीरे रामं प्रकृतिवत्सलम् ॥ १ ॥
उवाच भरतश्चित्रं ‡ धार्मिको धार्मिकं वचः ।

---

* स्वभावेनात्मानं अनुतिष्ठ—राजभावेन भवन्तं योजय—गो. आत्मानं—आत्मनः परलोकहितं अनुतिष्ठ—चिन्तय—ति. † अस्मिन् सर्गे श्लोकव्यत्यासः सर्गभेदश्च दृश्यते । तच्छुद्धये क्रमेण व्याक्रियते—गो. ‡ निरुत्तरमुक्तवन्तं रामं प्रति मुखान्तरेणोत्तरस्योच्यमानत्वात् चित्रमित्युक्तम्—गो.

[1] विरतो रामो—ङ.

अथ भरतेन पुनः क्षत्रधर्मावष्टम्भेन रामप्रत्यावृत्तिप्रार्थनम् । एवमुक्त्वेत्यादि । चित्रमिति । उक्तियुक्तिविशेषोपपन्नत्वात् विस्मयावहं लोकस्येत्यर्थः ॥ १ ॥

को हि स्यादीदृशो लोके यादृशस्त्वं, अरिन्दम ! ॥ २ ॥

को हि स्यात्—न कोऽपीत्यर्थः । यादृशः—यादृशमहिमा ॥

न त्वां प्रव्यथयेद्दुःखं प्रीतिर्वा न प्रहर्षयेत् ।
*सम्मतश्चापि वृद्धानां तांश्च पृच्छसि संशयान् ॥ ३ ॥

सम्मतश्चापि—धर्मविषये रामवदेव वर्तितव्यमिति दृष्टान्तभूतोऽपीत्यर्थः । तान्—वृद्धान् । संशयान्—संशयास्पदधर्मान् । सर्वज्ञोऽपि लोकमर्यादामनुसरन्निति शेषः ॥ ३ ॥

†यथा मृतस्तथा जीवन् यथाऽसति तथा सति ।
यस्यैष बुद्धिलाभः स्यात् परितप्येत केन सः ॥ ४ ॥

---

* ये वृद्धाः त्वां विषयज्ञं मन्यन्ते, तानपि त्वं संशयान् पृच्छसि, को हि स्यादीदृशो लोके । † पितृवियोगादिजनितदुःखेन मया कथितमिति हि भवतोक्तं, मम तादृशदुःखप्रसङ्ग एव नास्तीत्याह—यथा मृत इति । मृतः पुरुषो यथा द्वेषविषयो न भवति, जीवन्नपि तथा । यथा असति—अविद्यमाने वस्तुनि यथा रागो नास्ति, विद्यमाने वस्तुन्यपि तथा । इत्येषः बुद्धिलाभो यस्य स केन हेतुना परितप्येत—न केनापीत्यर्थः । भवदुक्तप्रकारेण मम दुःखलेशोऽपि नास्तीति भावः—गो. अस्य 'यथा जीवंस्तथा मृतः' इति वाक्यशेष आर्थिकः । यथा मृतः....त्यक्तदेहः आत्मा देहपुत्रादिभिरसंबद्धः, तथा जीवन्नपि तैरसम्बद्धः, नित्यशुचिसुखचिदात्मनः नित्याशुचिदुःखजडेन देहेन तदीयैश्चासम्बन्धात् । यथा च जीवन् स्वकर्मानुरूपं संसरति, तथा मृतोऽपि स्वकर्मानुरूपं परत्र । किञ्च यथा जीवन् सर्वैः संबद्धः, तथा मृतोऽपि, सर्वात्मत्वादस्य । किञ्च यथा असति—अविद्यमाने न रागो जायते, तथा सति विद्यमानेऽपि रागो न युक्तः । यथा वा सति—साधौ द्वेषो न युक्तः, तथा असति—असाधावपि द्वेषो न युक्तः । किञ्च यथाऽसति—प्रपञ्चेऽनुरागः, तथा सति-ब्रह्मणि युक्तः । किञ्च सति—ब्रह्मणि तन्निष्ठस्य यथा न बन्धः, मुक्तिश्च भवति, तथा लोकसंग्रहार्थमसन्निष्ठस्यापि न बन्धः, मुक्तिश्च भवति—ति. जननमरणयोः, लाभालाभयोर्वा यस्य मतिः समा वर्तते, तस्य लोके न काऽपि परितापप्रसक्तिः इति मूलस्याशयः ॥

यथा मृत इत्यादि। 'यथा मृतस्तथा जीवन्' 'यथा जीवंस्तथा मृतः' इति आर्थिको वाक्यशेषः। 'यथा सति तथा सति' इतीदं वाक्यमेकमेव पदच्छेदात् द्विवाक्यम्। एतदेवाभिप्रेत्य चित्रमित्युक्तं कविना। अयमर्थः—यथा मृतः—त्यक्तदेह आत्मा तदसम्बद्धः, नित्यशुचिसुखचिदात्मत्वादेव अनित्याशुचिदुःखजडदेहेन परमार्थतोऽसम्बद्ध एव। अथ यथैव जीवन् स्वकर्मानुरूपं संसरति, तथा मृतोऽपि स्वकर्मानुरूपं परत्र च संसरति। अथ यथा असति ज्ञाने तु न मुक्तिः, तथा सत्यप्यनन्तकाम्ये न मुक्तिः। अथ यथा सति ज्ञाने न बन्धः तथा सत्यपि लोकसङ्ग्रहार्थे नित्येऽपि न बन्धः। यस्य तु त्वादृशस्य राजयोगिनः एषः—उक्तार्थविषयको बुद्धिलाभः स्यात् संभवे स राजयोगी केन परितप्येत — न केनापि हेतुना। एतेन श्लोकेन तु 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत्' इति श्रुतिः वर्णितार्था, समग्राऽपि भगवद्गीता च। अस्माकं बहुप्रपञ्चविषयोऽयं श्लोकः, अस्मत्सहजबुद्धियोगार्थकत्वात्। मृदुमतिशिष्टार्थव्याख्याने तु तत्प्रपञ्चो न युक्त इति जोषं गम्यते ॥ ४ ॥

***परावरज्ञो यश्च स्यात् [1]तथा त्वं, मनुजाधिप!**
**स एवं व्यसनं प्राप्य न विषीदितुमर्हति ॥ ५ ॥**

परावरज्ञः—कारणकार्यसपरिकरब्रह्मप्रत्यगात्मतत्त्वज्ञः। विषीदितुमित्यार्षम्; शिद्विषये किल सदेः सीदादेशः, विषत्तुमिति यावत् ॥

---

* किमर्थं तर्हि शोकमूलवचनं त्वयोक्तमित्याशंक्य, भवद्व्यसनासहतयेत्याह—परावरज्ञ इति। यः परावरज्ञः—त्रिकालज्ञः आत्मानात्मज्ञः, परमात्मजीवात्मस्वरूपज्ञो वा, स एवं व्यसनं प्राप्यापि व्यथयितुं नार्हति, तथा त्वमपीति संबन्धः—गो.
परावरज्ञः—सप्रपञ्चात्मतत्त्वज्ञः—ति.

[1] यथा—च.

[*]अमरोपमसत्त्वस्त्वं महात्मा सत्यसङ्गरः ।
सर्वज्ञः सर्वदर्शी च बुद्धिमांश्चासि, राघव ! ॥ ६ ॥

सत्त्वं—सत्त्वोद्रिक्तसर्वप्रकृतिः ॥ ६ ॥

न त्वामेवंगुणैर्युक्तं प्रभवा[1]भवकोविदम् ।
[†]अविषह्यतमं दुःखं आसादयितुमर्हति[2] ॥ ७ ॥

प्रभवाभवकोविदं—सकलभूतप्रभवाप्ययप्रवृत्तिनिवृत्तिमार्गतत्त्वज्ञमित्यर्थः । आसादयितुं—अवसादयितुम् ॥ ७ ॥

प्रोषिते मयि यत्पापं मात्रा मत्कारणात् कृतम् ।
क्षुद्रया तदनिष्टं मे प्रसीदतु भवान् मम ॥ ८ ॥

मत्कारणात्—मत्प्रयोजननिमित्ततः । मे अनिष्टं—असम्मतमेव । अतो भवान् प्रसीदतु—मम राज्यं परिगृह्णात्विति यावत् ॥

धर्मबन्धेन बद्धोऽस्मि तेनेमां नेह मातरम् ।
हन्मि तीव्रेण दण्डेन दण्डार्हां पापकारिणीम् ॥ ९ ॥

इहेमां मातरं—इहापराधे कैकेयीमित्यर्थः ॥ ९ ॥

कथं दशरथाज्जातः [3]शुद्धाभिजनकर्मणः ।
जानन् धर्म[4]मधर्मिष्ठं कुर्यां कर्म जुगुप्सितम् ॥ १० ॥
गुरुः क्रियावान् वृद्धश्च राजा प्रेतः पितेति च ।
तातं न परिगर्हेयं दैवतं चेति संसदि ॥ ११ ॥

---

* अमरोपमेति पृथक्पदम् । सत्त्वः—सत्त्वगुणसंपन्नः—गो. † अविषह्यतममपि, अस्मदादीनामिति शेषः—गो.

[1] भाव—च. [2] एतदनन्तरं—एवमुक्त्वा तु भरतः रामं पुनरथाब्रवीत्—इत्यधिकम्—ङ. [3] शुभा—च. [4] मधर्मं च—च.

मातृवत् पित्राऽप्यन्याय्यमेवाचरितमित्याह—गुरुः क्रियावा-
नित्यादि। क्रियावान्—कर्तृश्रेष्ठ इति यावत्। राजा पितेति
यत्, तत् तातं संसदि न परिगर्हेयम्। अपि चेदानीं प्रेतस्सन्
दैवतं च—श्राद्धदैवतं च—वस्वादिस्वरूपत्वं च गत इति यत्, ततोऽपि
न गर्हेयम् ॥ ११ ॥

को हि *धर्मार्थयोर्हीनं ईदृशं कर्म किल्बिषम्।
स्त्रियाः प्रियं चिकीर्षुः सन् कुर्यात्, धर्मज्ञ! धर्मवित् ॥

किं तर्हि वस्तुतोऽस्ति गर्ह्यत्वं? अस्त्येवेत्याह—को हीत्यादि।
को हि धर्मविदिति योजना ॥ १२ ॥

अन्तकाले हि भूतानि †मुह्यन्तीति पुराश्रुतिः।
राज्ञैवं कुर्वता लोके [1]प्रत्यक्षं सा श्रुतिः कृता ॥ १३ ॥

प्रत्यक्षं—प्रत्यक्षार्थम् ॥ १३ ॥

‡साध्वर्थमभिसन्धाय क्रोधान्मोहाच्च साहसात्।
तातस्य यदतिक्रान्तं प्रत्याहरतु तद्भवान् ॥ १४ ॥

साध्वर्थं—ज्येष्ठाभिषेकलक्षणम् ॥ १४ ॥

---

* धर्मार्थयोर्हीनं—धर्मार्थाभ्यां हीनं, कामप्रधानमिति यावत्—**गो.**
† मुह्यन्ति—मोहं प्राप्नुवन्ति—विपरीतबुद्धिं प्राप्नुवन्तीति यावत्—**गो.** ‡ क्रोधात्—विषमद्यैव पास्यामीत्युक्तकैकेयीक्रोधात्। तत्क्रोधभयादिति यावत्—**ति.** मोहात्—कैकेयीविषयमोहात्। साहसात्—सहसाकरणात्—अविमृश्यकारित्वादिति यावत्। तातस्य यदतिक्रान्तं—यद्धर्मातिक्रमणं, तत् साध्वर्थमभिसन्धाय—समीचीनार्थं स्मृत्वा भवान् प्रत्याहरतु—निवर्तयतु—**गो.**

[1] प्रत्यक्षा—**च.**

पितुर्हि [1]यदतिक्रान्तं पुत्रो यः *साधु मन्यते ।
तदपत्यं मतं लोके विपरीतमतोऽन्यथा ॥ १५ ॥

अतिक्रान्तं—साध्वर्थस्याननुष्ठानं, भावे निष्ठा, साधु मन्यते—संपादयति, तत् अपत्यं—अपतनसाधकत्वात् अपत्यशब्दसम्मतमित्यर्थः ॥ १५ ॥

तदपत्यं भवानस्तु मा भवान् दुष्कृतं पितुः ।
†[2]अति यत् तत्कृतं कर्म लोके [3]धीरविगर्हितम् ॥ १६ ॥

भवान् अपत्यमेवास्तु—अन्वर्थापत्यशब्दवाच्य एवास्तु । अतो भवान् पितुः दुष्कृतं-मा, अनुमन्यतामिति शेषः । एवञ्च पितृवचसः परिपाल्यत्वाविशेषात् पितुरभिषेकवचनमेव परिपालयेत्युक्तं भवति । तत्कृतं—दशरथकृतं धीरैर्विगर्हितम् ॥ १६ ॥

कैकेयीं मां च तातं च सुहृदो बान्धवांश्च नः ।
पौरजानपदान् [4]सर्वान् ‡[5]त्रातु सर्वमिदं भवान् ॥ १७ ॥
क्व चारण्यं क्व च क्षात्रं क्व जटाः क्व च पालनम् ।
ईदृशं व्याहतं कर्म न भवान् कर्तुमर्हति ॥ १८ ॥

तथा तत्कृतवनवासस्य गर्हितत्वमेव स्पष्टयति—क्व चेत्यादिना ॥ १८ ॥

---

* साधुमन्यते—साधुकर्तुं मन्यते–गो. † माऽभिपत्ता(पा.)–प्राप्तुं नार्हसि–गो. ‡ त्रातुं इदं सर्वं–मदुक्तं भवाननुमन्यतामिति भावः–ति.

[1] समति–च. [2] अभिपत्ता कृतं–ङ. [3] वीर–ङ. [4] एतान्–ङ. [5] त्रातुं–च.

**एष हि प्रथमो धर्मः क्षत्रियस्याभिषेचनम् ।**
***येन शक्यं, महाप्राज्ञ! प्रजानां परिपालनम् ॥ १९ ॥**

ननु क्षत्रियस्याप्यस्ति वानप्रस्थाश्रमजटादिसम्बन्ध इत्याशङ्क्य, नायं प्रथमः कल्प इत्याह—एष इत्यादि । येन—अभिषेचनेन । परिपालनमिति । तद्रूपधर्मसंपादनमित्यर्थः ॥ १९ ॥

**†कश्च प्रत्यक्षमुत्सृज्य ‡संशयस्थमलक्षणम् ।**
**आयतिस्थं चरेद्धर्मं क्षत्रबन्धुरनिश्चितम् ॥ २० ॥**

ननु अस्ति वनाश्रमेणापि धर्मसंपादनमित्यत्राह—कश्चेत्यादि । प्रत्यक्षं सुखसाधनधर्मं—प्रजापरिपालनं उत्सृज्य संशयस्थं—प्रत्यक्षागम्यत्वात् 'को हि तद्वेद ? यदमुष्मिन् लोकेऽस्ति वा न वा ?' इति श्रुत्याऽभिनीयमानसन्देहास्पदसुखसाधनम् , अलक्षणं–अश्रीलक्षणं–आयतिस्थं–'उत्तरः काल आयतिः', उत्तरवयःप्राप्यं अनिश्चितं—अनित्यानुष्ठानं; न हि क्षत्रियस्य परिपालनवत् नित्यप्राप्तो वनवासः । नित्यत्वे तद्रहितदशरथादेरेव पतितत्वप्रसङ्गात् । एतादृशे धर्मकाले क्षत्रबन्धुः–बन्धुच्प्रत्ययान्तः ब्रह्मक्षत्रादिशब्दो निन्दावाची । क्षत्राणां बन्धुरिति असमस्तपदं तु क्षत्रियकुलसम्मतत्वार्थवाची । कश्चरेत्—अनुतिष्ठेत, न कोऽपि ॥ २० ॥

**§अथ क्लेशजमेव त्वं धर्मं चरितुमिच्छसि ।**
**धर्मेण चतुरो वर्णान् पालयन् क्लेशमाप्नुहि ॥ २१ ॥**

---

* अभिषेकस्य कथं धर्मत्वं? इत्यत्राह–येनेति । प्रजापालनं हि क्षत्रियस्य प्रथमो धर्मः ; स च मूर्धाभिषिक्ताधिकारक इति भावः । † 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः'—इति भावं हृदि निधायैवमुच्यते । ‡ संशयस्थं–अप्रत्यक्षं, अङ्गलोपादिसंभावनया संशयितफलसिद्धिकं, अलक्षणं–लक्षणरहितं, क्रियाशक्तिरपूर्वं वेति दुर्निरूपं–अनिश्चितं–क्षत्रियेण प्रथममिदमनुष्ठेयमिति केनापि प्रमाणेनानिश्चितम्–**गो.** § राज्याभिषेकस्य भोगरूपत्वाभिमानवतः प्रत्याह—अथेति ।

ननु स्वशरीरप्रयाससाध्य एव धर्मः अन्तरङ्गः, अतस्तदेवानुष्ठेयमिति पक्ष आह—अथेत्यादि । अथशब्दः पक्षान्तरे ॥ २१ ॥

चतुर्णामाश्रमाणां हि गार्हस्थ्यं श्रेष्ठमाश्रमम् ।
आहुः, धर्मज्ञ! धर्मज्ञाः तं कथं त्यक्तु[1]मर्हसि ॥ २२ ॥

ननु शरीरक्लेशजत्वमात्रमप्रयोजकम् । अपि तु श्रुतत्वाद्धर्मत्वं वनाश्रमस्येत्यत्राह—चतुर्णामित्यादि । श्रेष्ठमाहुरिति । 'तेषां गृहस्थो योनिः, अप्रजनत्वादितरेषाम्' इत्यादिभिः—गौतमादयो धर्मशास्त्रप्रवक्तार इति शेषः । यथावद्गार्हस्थ्यानुपपत्तौ वनाश्रमाद्यपेक्षा, न तु तदुपपत्ताविति राषेक्षेत्याशयः ॥ २२ ॥

श्रुतेन बालः *[2]स्थानेन जन्मना [3]भवतो ह्यहम् ।
स कथं पालयिष्यामि भूमिं भवति तिष्ठति ॥ २३ ॥

भवतोऽपेक्षयाऽहं श्रुतेन बालः—अवरः । तथा जन्मना संपादितेन स्थानेन—प्रथमस्थानेन च ॥ २३ ॥

†हीनबुद्धिगुणो बालः हीनः स्थानेन चाप्यहम् ।
भवता च विनाभूतः न वर्तयितुमुत्सहे ॥ २४ ॥

हीनः स्थानेन चापीति । उपलक्षित इति शेषः । वर्तयितुं—जीवितुं, 'वृत्तिर्वर्तनजीवने' ॥ २४ ॥

इदं निखिल[4]मव्यग्रं राज्यं पित्र्यमकण्टकम् ।
अनुशाधि स्वधर्मेण, धर्मज्ञ! ‡सह बान्धवैः ॥ २५ ॥

---

* स्थानेन—पदेन, प्राप्तिक्रमेणेति यावत्-गो. अत्र हेतुः 'जन्मना' इति इति भावः । † हीनबुद्धिगुणः—सद्गुणबुद्धिरहितः—गो. बुद्धया गुणादिभिश्च न्यून इति वा । ‡ सह—संभूय-गो.

[1] मिच्छसि-च. [2] ज्ञानेन-ङ. [3] भवतोऽप्यहम्-ङ. [4] मप्यग्रयं-च.

इहैव त्वाऽभिषिञ्चन्तु सर्वाः प्रकृतयः सह ।
ऋत्विजः सवसिष्ठाश्च मन्त्रवन्मन्त्रकोविदाः ॥ २६ ॥

अभिषिक्तस्त्वमस्माभिः अयोध्यां पालने व्रज ।
* विजित्य तरसा लोकान् मरुद्भिरिव वासवः ॥ २७ ॥

पालने—राज्यपालननिमित्तम् । तरसा—बलेन । लोकान् मरुद्भिरिव अस्माभिस्सहेति योजना ॥ २७ ॥

ऋणानि त्रीण्यपाकुर्वन् दुर्हृदः साधु निर्दहन् ।
सुहृदस्तर्पयन् कामैः त्वमेवात्रानुशाधि माम् ॥ २८ ॥

ऋणानि त्रीण्यपाकुर्वन्निति । ननु 'जायमानो वै ब्राह्मणस्त्रिभिः ऋणवा जायते' (तै. सं. ६-३-११) इति श्रुतौ सत्यां कथं क्षत्रियस्य ऋणसम्बन्धः ? ब्राह्मणेन यैः स्वश्रुतर्णत्रयमपाकरणीयं तेषां ब्रह्मचर्यादीनां क्षत्रियस्य विधानात् गायत्रीसम्बन्ध इवानुकल्पस्त्रयार्णसम्बन्धः क्षत्रियस्यापि । अत्रेति । अयोध्यायां स्थित्वेति शेषः ॥ २८ ॥

अद्यार्य ! मुदिताः सन्तु सुहृदस्तेऽभिषेचने ।
अद्य भीताः पलायन्तां [1]दुष्प्रदास्ते दिशो दश ॥ २९ ॥

दुष्प्रदाः—दुःखप्रदाः ॥ २९ ॥

† आक्रोशं मम मातुश्च प्रमृज्य, पुरुषर्षभ !
अद्य तत्रभवन्तं च पितरं रक्ष किल्बिषात् ॥ ३० ॥

आक्रोशं—निन्दाम् । तत्रभवन्तं—पूज्यम् ॥ ३० ॥

---

* विजित्य, स्थित इति शेषः–गो. † आक्रोशं—शापं, ' शाप आक्रोश आक्षेपः ' इति हलायुधः, जनकर्तृकमिति शेषः–गो.

[1] दुर्हृद, अरय–ङ.

शिरसा त्वाऽभियाचेऽहं कुरुष्व करुणां मयि ।
बान्धवेषु च सर्वेषु, भूतेष्विव * महेश्वरः ॥ ३१ ॥

त्वा—त्वाम् ॥ ३१ ॥

[1] अथवा पृष्ठतः कृत्वा वनमेव भवानितः † ।
गमिष्यति, गमिष्यामि भवता सार्धमप्यहम् ॥ ३२ ॥

पृष्ठतः कृत्वा—तिरस्कृत्येति यावत्, मत्प्रार्थनामिति शेषः । इतोऽपि वनमेवेति । जनसम्बाधभीत्या अस्माद्वनादपि वनान्तरमित्यर्थः ॥ ३२ ॥

तथा हि रामो भरतेन ताम्यता
प्रसाद्यमानः शिरसा महीपतिः ।
न चैव चक्रे ‡ गमनाय सत्त्ववान्
मतिं पितुस्तद्वचने [2] व्यवस्थितः ॥ ३३ ॥

ताम्यता—ग्लायता ॥ ३३ ॥

तदद्भुतं स्थैर्यमवेक्ष्य राघवे
§ समं जनो हर्षमवाप दुःखितः ।
न यात्ययोध्यामिति दुःखितोऽभवत्
स्थिरप्रतिज्ञत्वमवेक्ष्य हर्षितः ॥ ३४ ॥

तत् स्थैर्यं—पितृवचनस्थितिस्थैर्यम् । दुःखहर्षयोर्युगपत्प्रवृत्तिनिमित्तं स्वयमेव कविर्व्याकरोति—न यातीत्यादि ॥ ३४ ॥

---

* महेश्वरः—विष्णुः- गो. भूतेशत्वात्, पशुपतित्वाच्च—शिवो वा । † इतः—राज्यात् इति वा । ‡ गमनाय मतिं इत्यन्वयः । § दुःखितः जनः समं—युगपत् हर्षमवाप ।

[1] अथैतत्—ङ. झ. [2] प्रतिष्ठितः—ङ.

*तमृत्विजो नैगमयूथवल्लभाः
　तदा विसंज्ञाश्रुकलाश्च मातरः ।
तथा ब्रुवाणं भरतं प्रतुष्टुवुः
　प्रणम्य रामं च ययाचिरे सह †॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षडुत्तरशततमः सर्गः

---

निगमे—पुरे भवाः—नैगमाः—पौराः, 'निगमो निश्चये वेदे पुरे पथि वणिक्पथे' वैजयन्ती, नैगमयूथानां वल्लभास्तथा । विसंज्ञाः–विचित्ताः, अश्रुकलाः–अश्रुप्रचुराश्च तथा । मृग(३५)मानः सर्गः ॥ ३५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे षडुत्तरशततमः सर्गः

---

## सप्तोत्तरशततमः सर्गः

### [रामप्रतिवचनम्]

पुनरेवं ब्रुवाणं तं भरतं [1]लक्ष्मणाग्रजः ।
प्रत्युवाच ततः श्रीमान् ज्ञातिमध्येऽ[2]भिसत्कृतः ॥ १ ॥

अथ भरतोक्तं राजनि अधर्मं परिहरन् रामः राजनियोग एव परमो धर्म इति पुनश्च प्रतिष्ठापयति । पुनरित्यादि ॥ १ ॥

उपपन्नमिदं वाक्यं यत् त्वमेवमभाषथाः ।
‡जातः पुत्रो दशरथात् कैकेय्यां राजसत्तमात् ॥ २ ॥

उपपन्नमिति । ज्येष्ठपुत्रप्रतिपत्तिमूलं उक्तवचनजातमित्यर्थः ॥

§पुरा, भ्रातः! पिता नः सः मातरं ते समुद्वहन् ।
मातामहे समाश्रौषीत् राज्यशुल्कमनुत्तमम् ॥ ३ ॥

---

* तं भरतमित्यन्वयः ।　† सह—भरतेन सह ययाचिरे ।　‡ जातः पुत्रः त्वमित्यन्वयः ।　§ काममोहेन पित्रा कृतमिति पितरं निन्दन्तं भरतं प्रति रामः मोहहेतुप्रसक्तिरेव नास्तीति दुष्परिहरं हेत्वन्तरमाह—पुनरित्यादिना–**गो.**

[1] भरताग्रजः–ङ.　[2] तिसत्कृतः–ङ.

तर्ह्यागन्तव्यमित्यत्राह—पुरेत्यादि । हे भ्रातः ! भरत ! नः पिता मातामहे—केकये त्वन्मातृपरिग्रहाय राज्यशुल्कं अश्रौषीत्, 'पथि देये शुल्कमस्त्री जामात्रा यच्च दीयते', त्वद्दौहित्रस्य राज्यं दास्यामीति राज्यमेव शुल्कत्वेन प्रतिज्ञातवानित्यर्थः । ननु कैकेय्या वरणं किमर्थमुपात्तं राज्याय ? राज्यस्य स्वशुल्कत्वमेव कुतो न स्मारितम् ? उच्यते—'स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे । गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम्' इति स्मृतेः कौसल्यायां प्रधानमहिष्यां स्थितायां स्वविवाहस्य नर्मार्थविवाहमात्रत्वात् एतन्निमित्तवचनं राज्ञा न दीयेतापि इत्याशङ्कया, साक्षात् स्वोपकारप्रत्युपकारदत्तं वरमेव स्वप्रयोजनाय वृतवती* ॥ ३ ॥

---

* उमासंहितायां पार्वतीं प्रति शिववचनं 'पट्टाभिषेकसमये भवेयं स्मारितो ह्यहम् । त्वया वाऽन्येन भूपाल तथा चेत् करवाण्यहम् । इत्थं प्रतिज्ञामकरोत आहिताग्न्यग्रणीर्नृपः' इति कैकेयीविवाहसमये केकयदशरथसंकेतस्य विद्यमानत्वाच्चादोषः—ती. अत्रेदमवधेयम्—दशरथस्य पत्न्यः सार्धत्रिशतमिति सुविदितम् । (अयो. 34-13) । महिष्यस्तु तिस्र एव, कौसल्यासुमित्राकैकेय्यः । अत एव एताभ्य एव पायसदानम्, न सर्वाभ्यः । एतेन कैकेयीविवाहस्य नर्मविवाहत्वं न स्वरसम् । किन्तु कौसल्यायां अप्राप्तपुत्रस्य दशरथस्य पुत्रार्थमेव सुमित्राविवाहः । तस्यामपि पुत्रादर्शनात् कैकेयीविवाहः । तदा च, कैकेयीविवाहानन्तरं यदि दैवात् कौसल्यासुमित्रयोः पुत्रोत्पत्तिं शंकमानेन कैकेयीपित्रा कैकेयीपुत्राय राज्यशुल्कं प्रार्थितम् । परन्तु कैकेय्यामपि पुत्रो न जात एव । तेन च दशरथश्चिन्ताकुलो बभूव (बाल 8-1) । ततः पुत्रकामेष्ट्या देवानुग्रहबलात् सुतानवाप । एवञ्च यथामनीषितं कैकेय्यां पुत्रालाभात्, पुत्रकामेष्ट्या पुत्रप्राप्तेः महिषीत्रयसाधारण्यात्—कैकेयीविवाहकालिकी शुल्कप्रतिज्ञा स्वयं दुर्बला जातैव । अत एव कैकेयी न तत् स्मारितवतीति ज्ञायते । अत्रापि रामः अत एव—अनन्तरश्लोक एव 'दैवासुरे च संग्रामे' इति हेत्वन्तरं वदतीति प्रतीयते । किञ्च विवाहकाले भरताभिषेकमात्रस्यैव प्रतिज्ञातत्वेन, तेन रामविवासनं प्रार्थयितुमशक्यमेव । रामविवासनाभावे भरतराज्यप्रतिष्ठा न संभाविनी । अतश्च वरद्वयं अत्यावश्यकमिति जानन्ती मन्थरा न वैवाहिकप्रतिज्ञां बोधितवती, कैकेय्यपि तथैव आचरितवतीति च ज्ञायते ॥

[1]देवासुरे च संग्रामे जनन्यै तव पार्थिवः ।
संप्रहृष्टो ददौ राजा वरमाराधितः प्रभुः ॥ ४ ॥

देवासुरे—तत्सम्बन्धिनि तच्छब्द औपचारिकः ॥ ४ ॥

ततः सा संप्रतिश्राव्य तव माता यशस्विनी ।
अयाचत [2]नरश्रेष्ठं द्वौ वरौ वरवर्णिनी ॥ ५ ॥
तव राज्यं, नरव्याघ्र ! मम प्रव्राजनं तथा ।
तौ च राजा तदा तस्यै नियुक्तः प्रददौ वरौ ॥ ६ ॥

नियुक्तः—वरबलेन नियोजितः ॥ ६ ॥

तेन पित्राऽहमप्यत्र नियुक्तः, पुरुषर्षभ !
चतुर्दश वने वासं वर्षाणि वरदानिकम् ॥ ७ ॥

वरदाननिमित्तरूपं निमित्तमस्यास्तीति वरदानिकम् ॥ ७ ॥

सोऽहं वनमिदं प्राप्तः निर्जनं लक्ष्मणान्वितः ।
सीतया चाप्रतिद्वन्द्वः [3]सत्यवादे स्थितः पितुः ॥ ८ ॥

अप्रतिद्वन्द्वः—किञ्चित्प्रतिस्पर्धारहितः* ॥ ८ ॥

भवानपि तथेत्येव पितरं सत्यवादिनम् ।
कर्तुमर्हति, [4]राजेन्द्र ! क्षिप्रमेवाभिषेचनात् ॥ ९ ॥

तथेत्येवेति । तथैवेति—पितृनियुक्त एवेति कृत्वा ॥ ९ ॥

ऋणान्मोचय राजानं मत्कृते, भरत ! प्रभुम् ।
पितरं [5]चापि धर्मज्ञं मातरं चापि नन्दय ॥ १० ॥

मत्कृते—मत्प्रीत्यर्थमेवेत्यर्थः । नन्दय, न तु निन्दय ॥ १० ॥

---

* कामक्रोधादिरहित इति यावत् ।

[1] दैवासुरे–ङ.   [2] नराधीशं–ङ.   [3] तस्य वाक्ये–ङ.   [4] राजेन्द्रं–ङ.

[5] त्राहि धर्मज्ञ–च.

**श्रूयते हि पुरा, तात! श्रुतिर्गीता यशस्विना ।**
***गयेन यजमानेन गयेष्वेव पितॄन् प्रति ॥ ११ ॥**

श्रूयत इत्यादि । पितॄन् प्रति—पितृप्रीतिमुद्दिश्य अहं यक्ष्य इति संकल्प्य गयायां पितॄणां गतिं प्रति यजता यजमानेन यशस्विना गयेन पुरा गीता श्रूयते । हिः प्रसिद्धौ ॥ ११ ॥

**पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।**
**तस्मात् पुत्र इति प्रोक्तः †पितॄन् यत् पाति वा सुतः ॥**

का सा? इत्यतः—पुन्नाम्न इत्यादि । पुतः त्रायत इति पुत्रः—'सुपि स्थः' इत्यत्र 'सुपि' इति योगविभागेनाकर्मण्यपि सुपि आदन्तात् कः, सुतः । पितॄन् पातीति वा पुत्र इति । अत्र पितृशब्दस्य अदादेशः पृषोदरादित्वात् ॥ १२ ॥

**एष्टव्या बहवः पुत्राः गुणवन्तो बहुश्रुताः ।**
**‡तेषां वै समवेतानां यदि कश्चित् गयां व्रजेत् ॥ १३ ॥**

गयां व्रजेदिति । गयां—पितृमुक्तिपरमसाधनवृतगयाक्षेत्रं व्रजेत्, तदा मद्यत्नः सार्थो भवेदिति शेषः । इदं वचनं पितृत्राणं पुत्रेण कर्तव्यमित्यंशे सम्मतम् ॥ १३ ॥

**एवं राजर्षयः सर्वे प्रतीताः, [1]राजनन्दन!**
**तस्मात् त्राहि, नरश्रेष्ठ! पितरं नरकात्, प्रभो! ॥ १४ ॥**

एवं सर्व इति । पितृरक्षका इत्यर्थः ॥ १४ ॥

---

* गयेन—गयाख्येन । गयेषु—गयाख्येषु प्रदेशेषु-**गो.** † पितॄन् पाति—तदुद्देशकृतेष्टापूर्तादिना स्वर्गलोकं प्रापय्य रक्षतीत्यर्थः-**गो.** व्युत्पत्त्यन्तरमाह—पितॄनिति-**ति.** ‡ तेषां वै समवेतानां—तत्समुदायमध्य इति यावत् ।

[1] रघुनन्दन-**च.**

अयोध्यां गच्छ, भरत! प्रकृतीरनुरञ्जय।
शत्रुघ्नसहितः, वीर! सह सर्वैः द्विजातिभिः ॥ १५ ॥

प्रवेक्ष्ये दण्डकारण्यं अहमप्यविलम्बयन्।
आभ्यां तु सहितः,[1] राजन्! वैदेह्या लक्ष्मणेन च ॥ १६ ॥

त्वं राजा, भरत! भव स्वयं नराणां
वन्यानामहमपि राजराण्मृगाणाम्।
गच्छ त्वं पुरवरमद्य संप्रहृष्टः
संहृष्टस्त्वहमपि दण्डकान् प्रवेक्ष्ये ॥ १७ ॥

राजराडिति पृथक्पदम्। राडिति 'सत्सू....' इत्यादिना अनुपसर्गेऽपि क्विप्। मृगाणां राट्—दुष्टमृगाणां शिक्षक इति यावत् * ॥ १७ ॥

छायां ते † दिनकरभाः प्रबाधमानं
वर्षत्रं, भरत! करोतु मूर्ध्नि शीताम्।
एतेषामहमपि काननद्रुमाणां
छायां ‡ तामतिशयिनीं [2] सुखी श्रयिष्ये ॥ १८ ॥

शीतां छायामित्यन्वयः ॥ १८ ॥

---

* अत्र मृगशब्देन तत्तुल्या मुनयो लक्ष्यन्ते। यद्वा भाविसुग्रीवरञ्जनवालिवधादी। बीजन्यासोऽयम्—गो. † दिनकरभा इति द्वितीयाबहुवचनान्तम्। ‡ ताम शयिनीं—छत्रच्छायाऽपेक्षयापि उत्तमां द्रुमच्छायाम्।

[1] वीर—च. [2] सुखं—ङ., शनैः—घ.

शत्रुघ्नः [1]कुशलमतिस्तु ते सहायः
सौमित्रिर्मम विदितः प्रधानमित्रम् ।
चत्वारस्तनयवरा वयं नरेन्द्रं
सत्यस्थं, भरत! चराम मा [2]विपादम् ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तोत्तरशततमः सर्गः

---

नरेन्द्रं सत्यस्थं चराम, विधौ लोट्, संपादयाम । मा विषादं चराम । धैर्य(१९)मानः सर्गः ॥ १९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्तोत्तरशततमः सर्गः

---

## अष्टोत्तरशततमः सर्गः

[जाबालिवचनम्]

आश्वासयन्तं भरतं जाबालिः *ब्राह्मणोत्तमः ।
उवाच रामं धर्मज्ञं धर्मापेतमिदं वचः ॥ १ ॥

एवं उभाभ्यां पितृवचनपरिपालनं कर्तव्यमिति रामेण सिद्धान्तिते पितृवचनसत्यश्रद्धाविघातद्वारा प्रत्यावृत्तिप्रयोजनाय जाबालिर्लोकायतिकमवलम्ब्याह । आश्वासयन्तमित्यादि । धर्मात् अपेतं—धर्मापेतम्, अधर्ममार्गमित्यर्थः ॥ १ ॥

†साधु, राघव! मा भूत्ते बुद्धिरेवं निरार्थिका ।
प्राकृतस्य नरस्येव [3]ह्यार्यबुद्धस्तपास्विनः ॥ २ ॥

---

* ब्राह्मणोत्तम इत्यनेन वक्ष्यमाणं नास्तिकवचनं अहृदयमिति द्योत्यते-गो.

† 'साधु' इति वाक्योपक्रमसूचकं श्लोक इव । आर्यबुद्धेः, तपस्विनः ते एवं प्राकृतस्य नरस्येव निरर्थिका बुद्धिः मा भूत्—इत्यन्वयः ।

[1] स्वतुक—च. [2] विषीद—च. [3] महाबुद्धे—ङ.

साधु—सम्यग्युक्तिमत् इदं वच उवाचेत्यन्वयः। इदं-शब्दार्थः—राघवेत्यादि। तपस्विनः—शोच्यस्य (तु) प्राकृतस्य—पामरस्य नरस्येव निरर्थिका एवम्बुद्धिः—पितृवचनं परिपालनीय-मित्येवंरूपिणी आर्यबुद्धेः ते मा भूत् ॥ २ ॥

*कः कस्य पुरुषो बन्धुः †[1]किमाप्यं कस्य केनचित्।
[2]एको हि जायते जन्तुः एक एव विनश्यति ॥ ३ ॥

कुतो मा भूत्? इत्यत्र, पितापुत्रसम्बन्धस्यैव मिथ्यात्वा-दित्याह—कः कस्येत्यादि। कस्य च केनचिदिति सम्बन्ध इति शेषः। किं नास्तिकस्य च केनापि न सम्बन्धः? इत्यत्र नेत्येवेत्याह—एको हीत्यादि ॥ ३ ॥

तस्मान्माता पिता चेति, राम! सज्जेत यो नरः।
उन्मत्त इव स ज्ञेयः नास्ति कश्चिद्धि कस्यचित् ॥ ४ ॥

यः सज्जेत, स उन्मत्तवत् ज्ञेयः ॥ ४ ॥

यथा ग्रामान्तरं गच्छन् नरः [3]कश्चिद्बहिर्वसेत्।
उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ॥ ५ ॥
एवमेव मनुष्याणां पिता माता गृहं वसु।
‡आवासमात्रं, काकुत्स्थ! सज्जन्ते नात्र सज्जनाः ॥ ६ ॥

आवासमात्रं-पथ्यावासमात्रम्। यदेवं अतः—नात्र सज्जनाः सज्जन्ते ॥ ६ ॥

---

* 105 सर्गीयचत्वारः श्लोकाः (२६-२९) एतदादिचतुःश्लोकैः तोलनीयाः। अत्र षष्ठश्लोके सज्जनशब्दोऽप्यवधेयः। † आप्यं-प्राप्यम्। ‡ मार्गस्थसत्रशालादिकं आवासः। तेषां स्मरणस्यापि न आवश्यकता चेत्, किमु तत्प्रीत्यर्थराज्यत्यागादेरित्याशयः।

[1] किं कार्यं—ङ.　　[2] यदेको—ङ.　　[3] कश्चित्कञ्चिद्वसेत्।

पित्र्यं राज्यं परित्यज्य स नार्हति, नरोत्तम !
आस्थातुं कापथं दुःखं विषमं बहुकण्टकम् ॥ ७ ॥

हे नरोत्तम ! पित्र्यं राज्यं परित्यज्य भवान् बहुकण्टकं कापथं वनमार्गमास्थातुं नार्हति ॥ ७ ॥

समृद्धायामयोध्यायां आत्मानमभिषेचय ।
एकवेणीधरा हि त्वां नगरी संप्रतीक्षते ॥ ८ ॥

एकवेणीधरात्वं विरहिणीलक्षणं अयोध्यायाः स्त्रीसमाधिना वर्णितम् ॥ ८ ॥

राजभोगाननुभवन् महार्हान्, पार्थिवात्मज !
विहर त्वमयोध्यायां यथा शक्रस्त्रिविष्टपे ॥ ९ ॥
न ते कश्चिद्दशरथः त्वं च तस्य न कश्चन ।
अन्यो राजा [1] त्वमन्यः सः तस्मात् कुरु यदुच्यते ॥ १० ॥

उक्तं पितापुत्रासम्बन्धमुपसंहरति — न ते कश्चिदित्यादि । यदेवं अन्यो राजा, त्वमन्यः, तस्मान्मयोच्यते — मिथ्यापितृवचनाभिनिवेशं मुक्त्वा राज्यं कुर्विति — तत् कुरु ॥ १० ॥

* बीजमात्रं पिता जन्तोः [2] शुक्लं रुधिरमेव च ।
संयुक्तमृतुमन्मात्रा पुरुषस्येह जन्म तत् ॥ ११ ॥

---

* पिता जन्तोः बीजमात्रं — अल्पकारणम् । प्रधानकारणं तु ऋतुमन्मात्रा संयुक्तं-धृतं शुक्लं रुधिरमेव च-शुक्लशोणितमेव, तत् शुक्लशोणितं पुरुषस्य जन्मकारणम्-**गो.** अत्र बीजमात्रं पिता इतिवत् 'क्षेत्रमात्रं माता' इत्यप्यूह्यम् । बन्धुसामान्याभावस्यैव विवक्षितत्वात् ।

[1] त्वमप्यन्यः-**ङ.** [2] शुक्लं शोणितमेव च-**च.**

ननु यद्यप्यन्यत्वं सुखदुःखादिवैचित्र्यात् पितापुत्रयोः, अथाप्य-सम्बन्धोऽसिद्धः, विना पितरं पुत्रोत्पत्तिप्रसङ्गादित्याशङ्क्य—सत्यमस्ति सम्बन्धः, अपि तु निमित्तनिमित्तिमात्रम्; नोपादानत्वम्, यतो मृद्धट-वत् न कार्यरूपेण पुत्रेण सम्बन्धः। तर्हि किमुपादानं पुत्रस्य? इत्यत्र, मातापितृमलविशेषलवलेशमात्रमेवेत्याह—बीजमात्रमित्यादि। निमित्तमात्रवाचिमात्रचा उपादानत्वव्यावृत्तिः। ऋतुमन्मात्रेति पुंवद्भावः सामानाधिकरण्यात्। तया गर्भभावेन धृतमपीति शेषः। तद्गर्भधृतशुक्लशोणितमिह लोके पुरुषस्य--पुरुषशरीरस्य जन्म—उत्पत्त्यु-पादानम् ॥ ११ ॥

*गतः स नृपतिस्तत्र गन्तव्यं यत्र तेन वै ।
प्रवृत्तिरेषा [1]भूतानां त्वं तु मिथ्या विहन्यसे ॥ १२ ॥

उपपादितमातापितृसम्बन्धसङ्गस्य मोहमूलत्वमुपसंहरति—गत इत्यादि। यत्र गन्तव्यमिति। पथिकेन ग्रामान्तरवत् यत्र लोके गन्तव्यं तत्र गतः। उक्तरूपिणी प्रवृत्तिर्मर्त्यानां स्वभावप्राप्तेति शेषः। अतः—त्वं तु मिथ्या विहन्यसे। पुरुषार्थादिति शेषः ॥ १२ ॥

†[2]अर्थे धर्मपरा ये ये तांस्तान् शोचामि नेतरान् ।
ते हि दुःखमिह प्राप्य विनाशं [3]प्रतिपेदिरे ॥ १३ ॥

---

* तेन—नृपेण यत्र—येषु भूतेषु गन्तव्यम्, स नृपतिः तत्र गतः—पञ्चभूतेषु लयं प्राप्तः इत्यर्थः (नास्तिकस्य लोकान्तराभावात्)। पञ्चभूतमयत्वान्नरपतिशरीरस्य तदतिरिक्त-स्यात्मनोऽभावात्। मर्त्यानां—मरणशीलानां एषा प्रवृत्तिः—अयं स्वभाव इत्यर्थः। त्वं तु मिथ्या विहन्यसे—मिथ्याभूतेन सम्बन्धेन पीड्यसे—**गो.** अर्थधर्मपराः—प्रत्यक्षसौख्यं विहाय केवलार्थसंपादनपराः, धर्मपराश्च। इतरान्—केवलप्रत्यक्षसुखानु-भवपरान्। अर्थधर्मपरविषयशोकहेतुमाह—ते हीति। प्रेत्यापि विनाशं दुःखं भेजिर इति सम्बन्धः—**गो.**

[1] मर्त्यानां—ङ. [2] अर्थधर्मपरा—ङ. [3] प्रेत्य भेजिरे—ङ.

ननु अर्थपुरुषार्थविघातेऽपि धर्मपुरुषार्थो मुख्योऽस्तीत्यत्राह—अर्थे इत्यादि । अर्थे प्रत्यक्षसिद्धार्थपुरुषार्थे प्राप्त तं परित्यज्य ये धर्मपराः, तान् शोचामि । ते हि धर्मपराः इह दुःखं प्राप्य अन्ते केवलं विनाशं प्रतिपेदिरे ॥ १३ ॥

*अष्टका पितृदैवत्यं इत्ययं प्रसृतो जनः ।
अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ॥ १४ ॥

ननु धर्मात् परलोकसुखं भविष्यतीत्यत्र, नात्र किञ्चित् प्रमाणमस्तीत्याह—अष्टकेत्यादि । अष्टका नाम पितृदैवत्यं कर्मास्तीति तत्र प्रसृतः—प्रवृत्तः यो जनः तस्यान्नस्य स्वभोगसाधनस्य केवलं उपद्रवं—नाशमेव कुर्वन्ति । कुत एवम् ? इत्यतः—मृतो हि किमशिष्यतीति । पश्य स्वानुभवादेव मिथ्याव्यापारत्वम् ॥ १४ ॥

†यदि भुक्तमिहान्येन देहमन्यस्य गच्छति ।
दद्यात् [1]प्रवसतः श्राद्धं न तत् पथ्यशनं भवेत् ॥ १५ ॥

ननु तु माऽस्तु लोकान्तरगतपित्रादिना दीयमानस्यान्नस्य

---

* अयं जनः अष्टका—अष्टकाश्राद्धं पितृदैवत्यं—प्रतिसांवत्सरिकं इति यत्कर्म, कर्तुमिति शेषः, प्रसृतः—प्रवृत्तः, अत्र तत्सर्वमिति शेषः, अन्नस्य उपद्रवं—क्षयं पश्य-गो. अथाष्टका, अद्य पितृदैवत्यं इत्येवं जनः प्रसृतः—प्रवृत्तः, परन्तु अन्नस्य उपद्रव एव तदिति लोकरीत्या वाक्यप्रवृत्तिः । † यद्यपि मृतः नाशिष्यति, तथाऽपि तदुद्देशेन तत्प्रतिनिधये दत्तं तं प्राप्नुयादित्यत्र— इदमपि अन्ननाशमात्रम्, अन्योदरगतं अन्यस्य तृप्तिं कथं जनयेत् ? यद्यपि पुरोवर्तिनरस्य उदरपूरणं दृश्यते, अथापि तदपि स्वतृप्तिसाधनस्य परस्मै वृथा प्रतिपादनमात्रमिति भावः ।

[1] प्रवसतां--ङ.

प्राशनम्; अथापि तदुद्देशेन दत्तमन्नं लोकान्तरे तमुपतिष्ठति इहान्येन भुक्तमपीत्यत्र तदपि तर्कहतमित्याह—यदीत्यादिना। यद्यन्यभुक्तान्नं अन्यदेहं गच्छेत् तदा प्रवसतः—देशान्तरगतान् उद्दिश्य श्राद्धमेव दद्यात्, प्राप्तकाले लिङ्, तथा दानमेवोचितम्, न तु तत्पथ्यशनं—तस्मै दीयमानपाथेयमन्याय्यं भवेत् ॥ १५ ॥

*दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः।
यजस्व देहि दीक्षस्व तपस्तप्यस्व †संत्यज ॥ १६ ॥

अर्थरूपपित्रर्थश्राद्धान्नदानदृष्टान्तेन देवार्थप्रदानमपि मिथ्या, तर्हि तत्प्रतिपादकागमप्रामाण्यादेव तदुच्यमानफलं सत्यं भविष्यतीत्याशङ्क्य, अनुभवादेव मिथ्यात्वे सिद्धे वचनं वार्तादिना जीवनोपायाशक्तैः कैश्चिन्मेधाविभिः पामरजनप्रतारणेन जीवनोपायतया कृतं इत्याह—दानेत्यादि। संवननं—कार्मणं वशीकरणम्। धनिभिः दानार्थं वशीकरणोपाया एव हि केवलं, यजस्व—देवपूजां कुरु, देहि—अन्नदानादिदानं कुरु, दीक्षस्व—यागं कुरु, तपः तप्यस्व—संपादय, सन्त्यज—प्रव्रज इत्येवंपराः ग्रन्थाः—वेदशास्त्रलक्षणाः कैश्चिन्मेधाविभिः मेधाशब्दपरिश्रमकवित्ववञ्चनाचातुरीसाहसादिभ्यः कृताः ॥ १६ ॥

---

* एवं एकत्र वैदिककर्मणि फलव्यभिचारदर्शनात् सर्वत्रापि वैदिके न फलप्रसक्तिरित्याह—दानसंवनना इत्यादिना–गो. † संत्यज–अर्थेषणादीन् सम्यक् त्यज–गो. संत्यज–इत्येते ग्रन्था इत्यन्वयः।

स नास्ति*पर[1]मित्येव कुरु बुद्धिं, महामते !
प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥ १७ ॥

अतः—हे महामते ! स त्वं परं—अर्थपुरुषार्थात् परं—परलोकप्रयोजनं किञ्चित् प्रयोजनकं किञ्चित् धर्म इति नास्त्येवेति बुद्धिं कुरु । मथितसिद्धान्तमाह—प्रत्यक्षमित्यादि । प्रत्यक्षानुभवसिद्धं यत् सुखसाधनं तदेवानुतिष्ठ । परोक्षं—सुखसाधनकल्पितं धर्मं पृष्ठतः कुरु—त्यज ॥ १७ ॥

†सतां बुद्धिं पुरस्कृत्य सर्वलोकनिदर्शिनीम् ।
राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टोत्तरशततमः सर्गः

———

सतां—प्रत्यक्षसिद्धसत्यार्थवादिनां सर्वलोकनिदर्शिनीं—सर्वलोकसंवादयित्रीं बुद्धिं पुरस्कृत्य राज्यं प्रतिगृह्णीष्व । दया(१८)-मानः सर्गः ॥ १८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे अष्टोत्तरशततमः सर्गः

———

* परं—परलोकानुभाव्यम्—**गो.** एतत् परं नास्तीति बुद्धिं कुर्वित्यन्वयः ।
† तां बुद्धिं—प्रत्यक्षादन्यन्नास्तीति बुद्धिं—**गो.** स इति पृथक्पदं त्वमित्यनेनान्वेति ।

[1] मित्येतत्—ङ.

## नवोत्तरशततमः सर्गः

### [जाबालिवचननिराकरणम्]

जाबालेस्तु वचः श्रुत्वा रामः *[1] सत्यपराक्रमः ।
उवाच परया[2] सूक्त्या बुद्ध्या विप्रतिपन्नया ॥ १ ॥

एवं जाबालोक्तं भगवान् रामः पृष्ठीकरोति । जाबालेरित्यादि । सत्यः-सत्यमूलः सत्यप्रधानः पराक्रमः—प्रतापः यस्य स तथा । इदं साभिप्रायं विशेषणं वक्ष्यमाणार्थम् । विप्रतिपन्नया—जाबालोक्तार्थे प्रतिपत्तिरहितया बुध्या युक्तः सन् सूक्त्या—वेदशास्त्रलक्षणसुवचनावलम्बनेन उवाच ॥ १ ॥

भवान् † मे प्रियकामार्थं वचनं यदिहोक्तवान् ।
अकार्यं कार्यसङ्काशं अपथ्यं ‡ पथ्य[3]सन्निभम् ॥ २ ॥

प्रियकामार्थं—प्रीतिहेतुकामभोगसंपादनार्थमित्यर्थः । अकार्यं—परमार्थतया कर्तुमनुचितं, पामरदृशा कार्यसङ्काशं—प्रमाणाभासोपपत्तिमत्त्वात् कार्यवत् भासमानम् । तथाऽग्रेऽपि ॥ २ ॥

§ निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः ।
मानं न लभते सद्भिः ‖ भिन्नचारित्रदर्शनः ॥ ३ ॥

---

* सत्यात्मनां—सत्यबुद्धीनाम् । भक्त्या—वैदिकधर्मश्रद्धया अविपन्नया-जाबालिवचनैः सांदृष्टिकैरप्यचलितया-गो. † प्रियकामार्थं-अनुवर्तनार्थमिति भावः । अत्र उत्तरार्धे तदिति पूरणीयम् । ‡ पथ्यसम्मितं—पथ्यवदवभासमानम्-गो. § एवं वचनं दूषितं, अथ वक्तारं दूषयति —निर्मर्याद इत्यादिना-गो. ‖ दर्शनं- मतं वेदविहिताद् भिन्नाचारप्रतिपादकमतप्रवर्तक इत्यर्थः । एवंभूतः पुरुषः सत्सु मानं-पूजां न लभते-गो.

[1] सत्यात्मनां वरः-ङ. [2] भक्त्या स्वबुद्ध्या चाविपन्नया-ङ. [3] सम्मितम्-ङ.

निर्मर्यादः---वेदशास्त्रमर्यादालङ्घी । अत एव कामकारात् पापाचारसमन्वितः, अत एव भिन्नचारित्रदर्शनः---साधुसम्मत-चारित्रप्रतिपादकशास्त्रात् वेदादिलक्षणात् विपरीतव्यवहारप्रतिपादक-लोकायतशास्त्रप्रसक्तः, अत एव सद्भिः मानं न लभते । ३ ॥

**कुलीनमकुलीनं वा वीरं *पुरुषमानिनम् ।**
**चारित्रमेव व्याख्याति शुचिं वा यदि वाऽशुचिम् ॥ ४ ॥**

इदानीं स्वस्वजातिवर्णाश्रमोचिताचारलक्षणं चारित्रमेव साकल्य-वैकल्यतः पुंसां इहामुत्रसन्मानासन्मानहेतुरित्याह---कुलीनमित्यादि । चारित्रं संपन्नं सत् तद्वन्तं कुलीनं ख्यापयति, असंपन्नं सत् अकुलीनम् । तथाऽग्रेऽपि । वीरमिति पदम् । तथा पुरुषमानिनं---मिथ्यावीरपुरुषत्वाभिमानिनमपि व्याख्याति---ख्यापयति ॥ ४ ॥

**†अनार्यस्त्वार्य[1]संस्थानः ‡शौचाद्धीनस्तथा शुचिः ।**
**लक्षण्यवदलक्षण्यः दुश्शीलः शीलवानिव ॥ ५ ॥**
**अधर्मं धर्मवेषेण [2]यद्यहं लोकसंकरम् ।**
**अभिपत्स्ये शुभं हित्वा [3]क्रियां विधिविवर्जिताम् ॥ ६ ॥**

अस्त्वेवं लोकस्थितिः, किं प्रकृते ? इत्यत्र — अर्थवदनर्थं त्वद्दर्शनसम्मतं चरित्रं यद्यभिपत्स्ये, तदाऽनर्थमेव सर्वथाऽपि प्राप्ताऽ-

---

* पुरुषमानिनं—अतिधीरमित्यर्थः–**गो.** वस्तुतस्तु अत्रापि वाकारः अध्याहार्यः । वीरं पुरुषमानिनं वा —केवलं तादृशाभिमानवन्तं — अवीरमिति यावत्; एतादृशं चारित्रमेव व्याख्याति — इत्यर्थो युक्तः । † एतादृशपुरुषोपदेशश्रवणे स्वस्यानर्थं दर्शयति श्लोक-त्रयेण ..........त्वदुक्तमधर्मं धर्मवेषेण–धर्मत्वेन अभिपत्स्ये–स्वीकरिष्यामि यदि, दुर्वृत्तं मां चेतयानः—ज्ञानवान् कः पुरुषः लोके बहुमंस्यति–**गो.** ‡ आर्यसंस्थानः—तत्सदृशः–**ति.**

[1] संकाशः–**ङ.** [2] यदीमं–**ङ.** [3] क्रियाविधि–**ङ.**

स्मीत्याह—अनार्य इत्यादि। संस्थानं—विशेषः। सदा शुचिरिव—शुद्ध इव प्रविभासमानः। लक्षण्यः—लक्षणोपेतः धर्मवेषेण कञ्चुकितः अधर्ममहं यदीमं त्वदुपदिष्टं लोकसंकरकारकं मार्गमभिपत्स्ये, तदा विधिविवर्जितां—श्रुतिस्मृतिविधानरहितां क्रियां—कर्म कृत्वा तत एव हेतोः शुभं हित्वा *अशुभं प्राप्नुयाम्; 'यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गतिम्' इत्यादिस्मृतेरित्यर्थः॥ ६॥

**कश्चेतयानः पुरुषः कार्याकार्यविचक्षणः।**
**[1]बहुमन्येत मां लोके दुर्वृत्तं लोकदूषणम्॥ ७॥**

उक्ताशुभप्राप्तिरेव प्रकाश्यते—कश्चेतयान इत्यादि। विद्वानिति यावत्। लोकदूषणं—परलोकदूषणमार्गावलम्बिनम्॥ ७॥

**†कस्य [2]यास्याम्यहं [3]वृत्तं केन वा स्वर्गमाप्नुयाम्।**
**अनया वर्तमानोऽहं वृत्त्या हीनप्रतिज्ञया॥ ८॥**

कस्य यास्याम्यहं वृत्तमिति। त्वदुपदिष्टमार्गावलम्बन इति शेषः; न कस्यापि, केनापीत्यर्थः। अनया—त्वदुपदिष्टया अर्थपरयेति यावत्। हीना सत्यपरिपालनविषयिणी प्रतिज्ञा यस्यां सा तथा, अनया वृत्त्या॥ ८॥

**[4]कामवृत्तोऽन्वयं लोकः कृत्स्नः समुपवर्तते।**
**यद्वृत्ताः सन्ति राजानः तद्वृत्ताः सन्ति हि प्रजाः॥ ९॥**

---

* अशुभं प्राप्नुयामिति शेषः-ति. † न केवलं बहुमानहानिः, परलोकहानिश्चेत्याह—कस्येत्यादिना। अहं हीनप्रतिज्ञया—वनवासप्रतिज्ञारहितया अनया वृत्त्या—परोक्षं 'पृष्ठतः कुरु' इति त्वदुक्तया वृत्त्या वर्तमानः सन् वृत्तं-त्वदुक्ताचरणं कस्य धास्यामि-आधास्यामि-उपदेक्ष्यामीत्यर्थः। दास्यामीति पाठान्तरम्-गो.

[1] बहुमंस्यति-ङ. [2] धास्याम्यहं-ङ. [3] वृत्तिं-ङ. [4] कामवृत्तस्त्वयं-ङ.

प्रथमतः स्वयमहं कामवृत्तः—यथेष्टचारित्रं संपत्स्ये, अनन्तरं कृत्स्नोऽप्ययं लोकः कामवृत्तः समुपवर्तते—वर्ततेति यावत् । कुत एवं निर्बन्ध इत्यतः— यद्वृत्ता इत्यादि ॥ ९ ॥

*सत्यमेवानृशंसं च राजवृत्तं सनातनम् ।
तस्मात् सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥ १० ॥

यदेवं स्वपरनाशहेतुः त्वदुपदिष्टमार्गः, तस्मादिमं पृष्ठीकृत्य 'तस्मात् शास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि' इत्युपदेशावलम्बनेन शास्त्रीयं सत्यमेव मार्गमेवावस्थापय इत्याह—सत्यमेवेत्यादि । सनातनं—अनादिशास्त्रसिद्धम् । यस्मात् राज्ञां वृत्तं सत्यात्मकं, तस्मात् तेषां राज्यमपि सत्यात्मकं—सत्यैकप्रतिष्ठमित्यर्थः । न केवलं राज्यमात्रमेवं, अपि तु सर्वोऽपि लोकः सत्ये प्रतिष्ठितः ॥ १० ॥

ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे† ।
सत्यवादी हि लोकेऽस्मिन् [1]परमं गच्छति क्षयम् ॥ ११ ॥

सत्यमेव हि मेनिर इति । सत्यलोकान्तसकललोकविजयार्थमिति शेषः । क्षयः—निवासः । परमं क्षयं—ब्रह्मलोकमिति यावत् ॥ ११ ॥

उद्विजन्ते‡ यथा सर्पात् नरादनृतवादिनः ।
धर्मः [2]सत्यपरो लोके मूलं [3]सर्वस्य चोच्यते ॥ १२ ॥

सत्यं परं—श्रेष्ठं रूपं यस्य धर्मस्य स तथा ॥ १२ ॥

---

* अनृशंसं—भूतानुकम्पाप्रधानं–गो. † मेनिरे—उत्कृष्टमिति शेषः–गो.

‡ यथा सर्पात्–सर्पादिव ।

[1] परं गच्छति चा–ङ. [2] सत्य–ङ. [3] स्वर्गस्य–ङ.

सत्यमेवेश्वरो* लोके [1]सत्ये [2]पद्मा सदाऽऽ[3]श्रिता ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥ १३ ॥

ईश्वर इति । आश्रित इति विपरिणामः । पद्मा—राजलक्ष्मीः । पदं—शाश्वतपदप्रतिष्ठासाधनमित्यर्थः ॥ १३ ॥

दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च ।
वेदाः सत्यप्रतिष्ठानाः तस्मात् सत्यपरो भवेत् ॥ १४ ॥

सत्यं प्रतिष्ठानं——आधारः येषां ते तथा । सत्यपरः——सत्यतत्पर इत्यर्थः ॥ १४ ॥

एकः पालयते लोकं एकः पालयते कुलम् ।
मज्जत्येको हि [4]निरये एकः स्वर्गे महीयते ॥ १५ ॥

अथ न केवलमागममात्रात् सत्यपरत्वमेव, अपि तु अनुभवादपीत्याह——एक इत्यादि । एकः पुमान् कृत्स्नं लोकं पालयते । एकस्तु स्वीयं कुलमात्रं पालयते । एतेन पालनसाधनधर्मस्य इह लोके तारतम्यानुभव उक्तः । अथ परलोके तदन्वयव्यतिरेकसाध्यफलप्रदर्शनं——मज्जतीत्यादि । निरयस्वर्गौ दुःखसुखार्थाश्रयौ ॥ १५ ॥

सोऽहं पितु[5]र्निदेशं तु किमर्थं नानुपालये ।
सत्यप्रतिश्रवः सत्यं सत्येन समयी[6]कृतम् ॥ १६ ॥

†नैव लोभान्न मोहाद्वा न चाज्ञानात्तमोऽन्वितः ।
सेतुं सत्यस्य भेत्स्यामि गुरोः सत्यप्रतिश्रवः ॥ १७ ॥

---

* ईश्वरः—नियन्ता—व्यवस्थापक इति यावत्—गो. † लोभात्—राज्यलोभात् मोहात्—विप्रलंभवाक्यजनितचित्तविभ्रमात्—गो.

[1] सत्यं—ङ. [2] धर्मः—च. [3] श्रितः—ङ. [4] नरके—ङ. [5] र्नियोगं—ङ. [6] कृतः—ङ.

इहाप्युक्तफलप्रदर्शनं—सोऽहमिति । एवंविवेकवानित्यर्थः । ननु पितृनियोगस्यासत्यतः कथमनुष्ठेयत्वमित्यतः—सत्येत्यादि । स्वप्रतिज्ञातसत्यस्यैव प्रतिश्रवः—अङ्गीकारः यस्य स तथा । समर्यी—सदाचारवान्, तादृशेन राज्ञा सत्यपरिपालनेन हेतुना सत्यमेव कृतं, न तु लोभाद्युपाधिना अकार्षीत् । नापि च तमोऽन्वितः अकार्षीत् । अतः पारमार्थिकस्य गुरोः सत्यस्य सेतुं—मर्यादां सत्यप्रतिश्रवः—'वने वत्स्यामि' इति कृतसत्यप्रतिश्रववानहं न भेत्स्यामि ॥ १६-१७ ॥

असत्यसन्धस्य सतः *चलस्यास्थिरचेतसः ।
नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम् ॥ १८ ॥

एवं सत्यदृढस्थितौ हेतुमाह—असत्येत्यादि । सतः—संपन्नस्य । प्रतीच्छन्तीति । हव्यकव्यमिति शेषः ॥ १८ ॥

†प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं [1]ध्रुवम् ।
भारः सत्पुरुषा[2]चीर्णः तदर्थमभि[3]नन्द्यते ॥ १९ ॥

प्रत्यगात्मं—प्रत्यगात्मनि भवं, प्रत्यगित्यव्ययं, विभक्त्यर्थेऽव्ययीभावः, 'अनश्च' इति टच् समासान्तः, स्वप्रतिष्ठितं वनवासनियोगात्मकं धर्मं सत्यमेव पश्यामि—वास्तवमेव पश्यामि । भारः—गुरुः—महानिति यावत् । सत्पुरुषाचीर्णः, सत्यरूपधर्म इति शेषः । तदर्थं—तादृशसत्यरूपधर्मसिध्यर्थं योऽसौ अभिनन्द्यते—उपश्लोक्यते ॥ १९ ॥

---

* चलस्य—चलस्वभावस्य–गो. † प्रत्यगात्मं स्वयं पश्यामि, आत्मानं प्रत्यविनाभूतत्वेन प्रवृत्तं पश्यामि इत्यर्थः । सत्पुरुषाचीर्णः—सत्पुरुषैराचरितः—संपादित इति यावत्, भारः—जटावल्कलादिभारः तदर्थं—सत्यरूपधर्मार्थं अभिमन्यते—अभिमतो भवति–गो.

[1] स्वयं–ङ. [2] कीर्णः–क. [3] मन्यते–ङ.

*क्षात्रं धर्ममहं त्यक्ष्ये ह्यधर्मं धर्मसंहितम् ।
क्षुद्रैर्नृशंसैर्लुब्धैश्च सेवितं पापकर्मभिः ॥ २० ॥

ननु स्वधर्मः किमिति नाभिनन्द्यते राज्यपरिपालनात्मा ? इत्यत्राह—क्षात्रमित्यादि । धर्मसंहितं—धर्मयुक्तवत् प्रतिभातः वस्तुतो ह्यधर्मभूतो यः क्षात्रधर्मः, तादृशं क्षुद्रादिभिः सेवितं त्वहं त्यक्ष्ये, अपि तु शुद्धमेव क्षात्रधर्मं सेविष्य इत्यर्थः ॥ २० ॥

†कायेन कुरुते पापं मनसा [1]संप्रधार्यते ।
अनृतं जिह्वया चाह त्रिविधं कर्म पातकम् ॥ २१ ॥

इदानीं वाचिकपापप्रसङ्गात् क्षात्रधर्मो नाश्रीयते इत्याशयेन पापभेदत्रैविध्यमुपन्यस्यति—कायेनेत्यादि । कायेन हत्यादिलक्षणं क्रियापापं कुरुते । परदाराद्यभिध्यानरूपं पापं मनसा संप्रधार्यते—साध्यत इति यावत् । अनृतं जिह्वया साध्यते । उक्तरूपमिदं पातकं कर्म एवं त्रिविधं भवति ॥ २१ ॥

भूमिः ‡कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि ।
[2]सत्यं समनुवर्तन्ते सत्यमेव भजेत्ततः ॥ २२ ॥

अथ सत्यस्य सर्वार्थसाधनत्वोपदेशः—भूमिरित्यादि । प्रार्थयन्तीति । सत्यवन्तमिति शेषः । यदेवं तत् सत्यमेव भजेत् ॥ २२ ॥

---

* अधर्मप्रचुरधर्मलेशयुक्तक्षत्रियधर्मं अहं त्यक्ष्य इत्यर्थः—गो. ईदृशं क्षात्रधर्म-पित्राज्ञाभङ्गेन राज्यकरणरूपं—ति. † अस्य पापस्य शरीरसाध्यत्वेऽपि कायिकवाचिक-मानसिकसकलपापप्रसक्तिरित्याह—कायेनेति—ति. ‡ कीर्तिः—वितरणजनिता प्रथा । यशः—पौरुषनिबन्धनम् । अनुपश्यन्ति—अनुसृत्य पश्यन्ति—अनुबध्नन्तीति यावत्—गो.

[1] संप्रधार्य च–ङ. [2] स्वर्गस्थं चानुपश्यन्ति, स्वर्गस्थं चानुबध्नन्ति–ङ.

*श्रेष्ठं ह्यनार्यमेव स्यात् यत् भवानवधार्य माम् ।
आह युक्तिकरैर्वाक्यैः इदं भद्रं कुरुष्व ह ॥ २३ ॥

एतावतोक्तं जाबालवचःपृष्ठीकारमुपसंहरति—श्रेष्ठमित्यादि । यत् भवान् मामवधार्य—लक्षीकृत्य युक्तिकरैः—युक्त्यैव केवलं करणसंपादनं येषां तानि तथा, तादृशैर्वाक्यैः—वचेण्यत्, ततः कुत्ववृद्धी, वचनैः इदं भद्रं वाक्यस्वीकाररूपं कुरुष्वेति श्रेष्ठं हि—श्रेष्ठमिवाह, इदं अनार्यं—अनार्यमेव स्यात्—भवेत् ॥ २३ ॥

†कथं ह्यहं प्रतिज्ञाय वनवासमिमं [1]गुरोः ।
भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥ २४ ॥

तदेव प्रकाश्यते—कथमित्यादि । गुरोः वनवासं, गुरोर्वच इत्यन्वयः ॥ २४ ॥

‡स्थिरा मया प्रतिज्ञाता प्रतिज्ञा गुरुसन्निधौ ।
[2]नाप्रहृष्टा च सा देवी कैकेयी चाभवत्तदा ॥२५ ॥

नाप्रहृष्टा—प्रहृष्टेति यावत्, परिपालन इत्यर्थः ॥ २५ ॥

वनवासं वसन्नेव शुचिर्नियतभोजनः ।
मूलपुष्पफलैः पुण्यैः [3]पितॄन् देवांश्च तर्पयन् ॥ २६ ॥

सन्तुष्टपञ्चवर्गोऽहं लोकयात्रां प्रवाहये ।
अकुहः श्रद्दधानः सन् कार्याकार्यविचक्षणः ॥ २७ ॥

---

* श्रेष्ठमिति अवधार्य—निश्चित्य इदं भद्रं कुरुष्वेति भवान् युक्तिकरैः वाक्यैः यदाह तदनार्यमेव स्यात्—गो. अवधार्य—युक्तत्वेन निश्चित्य—ति. †गुरोः—पितुः वनवासं प्रतिज्ञाय, तस्य गुरोः वचः हित्वा भरतस्य वचः कथं करिष्यामि । ‡ मया स्थिरा—दृढा प्रतिज्ञा प्रतिज्ञाता—कृता, पाकं पचतीतिवत् ।

[1] गुरौ—ङ. [2] प्रहृष्यमाणा—ङ. [3] पितृदेवांश्च—ङ.

पञ्चवर्गः—पञ्चेन्द्रियवर्गः। लोकयात्रा—लोकसामान्यप्राप्ता यात्रा—व्यवहारः—देहरक्षेत्यर्थः। अकुहः—अकुहबुद्धिः। श्रद्धानः—आस्तिक इति यावत् ॥ २७ ॥

*कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम्।
अग्निर्वायुश्च सोमश्च कर्मणां फल[1]भागिनः ॥ २८ ॥

कर्मभूमिमिमां प्राप्य स्थितेन मया यत् शुभं कर्म, तदेव कर्तव्यम्। कर्मणां—स्वकृतपुण्यकर्मणां फलभागिनः—अग्न्यादिपदं प्राप्येति शेषः। तथात्वं—'अग्निर्वा अकामयत। अन्नादो देवानां स्याम्' इत्यादिश्रुतिप्रसिद्धम् ॥ २८ ॥

शतं क्रतूनामाहृत्य † देवराट् त्रिदिवं गतः।
तपांस्युग्राणि चास्थाय दिवं प्राप्ता महर्षयः ॥ २९ ॥

अमृष्यमाणः पुनरुग्रतेजसा
निशम्य तन्नास्तिक[2]वाक्यहेतुम्।
अथाब्रवीत्तं नृपतेस्तनूजः
‡ विगर्हमाणो वचनानि तस्य ॥ ३० ॥

नास्तिकवाक्यहेतुं—नास्ति परलोक इति वचनोपपादकं 'यदि भुक्तमिहान्येन' इत्याद्युक्तशुष्कतर्करूपमित्यर्थः, तममृष्यमाणः। तस्येति। जाबालस्येत्यर्थः ॥ ३० ॥

---

* अष्टकोदाहरणेन वैदिककर्मणां निष्फलत्वं यदुक्तं तत्र परिहारमाह—कर्मभूमिमित्यादिना। यच्छुभं कर्म तत् कर्तव्यं, जनैरिति शेषः। तत्र फलवदनुष्ठानं दर्शयति—अग्निरित्यादि। कर्मणां—कर्मभूमिकृतस्वस्वकर्मणां फलभागिनः—अग्नित्वादिफलं प्राप्तवन्तः—गो. † भाविफलविवक्षया देवराडिति निर्देशः। व्यासः वेदान् विभक्तवानितिवत्। वेदविभागकरणानन्तरं हि व्यासनामप्राप्तिः। ‡ विगर्हमाणः—मनसि विगर्हमाणः—गो.

[1] गामिनः—ङ. [2] हेतुवाक्यम्—ङ.

सत्यं च धर्मं च पराक्रमं च
भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च
पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ ३१ ॥

सन्त आहुरिति । विशिष्य क्षत्रियस्येति द्रष्टव्यम् ॥ ३१ ॥

*तेनैवमाज्ञाय यथावदर्थं
एकोदयं संप्रतिपद्य विप्राः ।
धर्मं चरन्तः सकलं यथावत्
काङ्क्षन्ति लोकागममप्रमत्ताः ॥ ३२॥

तेनेत्यादि । एवमुक्तरूपेण तेन पथैव एकोदयं—मुख्यफलं यथावदर्थं—परमार्थं मोक्षरूपं पुरुषार्थं प्राप्यं आज्ञाय—ज्ञात्वा तमेव धर्ममार्गं संप्रतिपद्य—परिगृह्य धर्मं चरन्तः अप्रमत्ता विप्राः सकलं यथावत्—परमार्थं लोकागमं—सालोक्यादिसायुज्यान्ताशेषमुक्तिप्राप्तिं काङ्क्षन्ति ॥ ३२ ॥

निन्दाम्यहं कर्म कृतं पितुस्तत्
[1]यस्त्वामगृह्णात् † [2]विषमस्थबुद्धिम् ।
बुध्याऽनयैवंविधया चरन्तं
सुनास्तिकं धर्मपथादपेतम् ॥ ३३ ॥

---

* तेन हेतुना विप्राः एवमर्थं यथावत आज्ञाय—ज्ञात्वा एकोदयं संप्रतिपद्य—ऐककण्ठ्यं प्राप्य सकलं धर्मं—स्वस्ववर्णाश्रमोचितधर्मं अप्रमत्ताः—सावधानाः यथावत चरन्तः—अनुतिष्ठन्तः लोकागमं—स्वर्गादिलोकप्राप्तिं काङ्क्षन्ति–गो. † विषमस्थबुद्धिं—अवैदिकमार्गनिष्णातबुद्धिं.... ......निन्दामि—वैदिककर्मभ्यो बहिष्करोमि–गो. वस्तुतस्तु—भवान्नात्र निन्द्यः, भवन्तं मन्त्रित्वे पुरोहितत्वे चागृह्णात् खलु दशरथः, तत्कर्मैव निन्द्यं इति नर्मोक्तिरियम् ।

[1] यस्त्वा–ङ. [2] विषय–ङ.

विषमस्थबुद्धिं–दुर्मार्गप्रतिष्ठितबुद्धिं त्वां अगृह्णात्—याजकत्वेन पर्यगृह्णादिति यत्, तत् पितुः कर्म निन्दामि, अपि चार्यः परिगृहीतवानिति शोचामीत्यर्थः। विषमस्थबुद्धित्वमेव स्पष्टीक्रियते—बुध्येत्यादि। एवंविधयाऽनया बुध्या चरन्तं लोकनाशाय सञ्चरन्तं उच्यमानविशेषणं त्वां पर्यगृह्णादिति पूर्वेण सम्बन्धः ॥ ३३ ॥

*यथा हि चोरः स तथा हि बुद्धः
तथागतं नास्तिकमत्र विद्धि।
तस्माद्धि यः शक्यतमः प्रजानां
[1]न नास्तिकेनाभिमुखो बुधः स्यात् ॥ ३४ ॥

अथ अतिकोपात् नास्तिकोऽपि बौद्धवद्दण्डार्हो राज्य इत्याह—यथा हीत्यादि। यथा हि चोरो दण्ड्यः प्रसिद्धः, बुद्धोऽपि तथा दण्ड्यः प्रसिद्धः। नास्तिकं चार्वाकमपि अत्र—वेदमार्गविषये तथागतमेव विद्धि, तेनापि वेदप्रामाण्यं न स्वीक्रियते, तथा नास्तिकेनापीति। तस्माद्धि—तत एव हेतोः प्रजानां अनुग्रहाय राज्ञा चोरवदेव दण्डयितुं शक्यतमः, द्विजोऽपीति शेषः। ततश्च 'कथाऽपि खलु पापानां अलमश्रेयसे यतः' इतिन्यायेन बुधः—विद्वान् नास्तिकेनाभिमुखो न स्यात्। एवञ्च दण्डाशक्तैर्ब्राह्मणैः नास्तिकः संभाषणीयो न भवतीत्युक्तं भवति ॥ ३४ ॥

---

*यथा हि चोरः प्रजानां बाह्यं धनं अपहरति, तथा केवलबुद्धिवादरतोऽपि जनानां उत्तमसंस्कारादिरूपं आन्तरं धनं अपहरति। अतः तादृशः बुद्धिवादरतः शून्यवादी यावच्छक्ति दूरतः परिहरणीय इत्यर्थः। अधिकं रामायणभूमिकायां स्पष्टीभविष्यति।

[1] स–ङ.

*[1] त्वत्तो जनाः पूर्वतरे [2] द्विजाश्च
शुभानि कर्माणि बहूनि चक्रुः ।
†[3] छित्त्वाऽऽसतेमं च परं च लोकं
तस्मात् द्विजाः स्वस्ति कृतं हुतं च ॥ ३५ ॥

अथ सर्वात्मना तिरस्करोति—त्वत्त इत्यादि । अन्य इत्यध्याहार्यः । त्वत्तोऽन्ये ये द्विजा जनाः पूर्वतरे—पराः श्रेष्ठाः बहूनि शुभानि कर्माणि चक्रुः, त एते इमं च परं च लोकं छित्वा आसत—आसेर्लङ्, स्थितवन्त इति यावत् । तस्मात् अद्यापि द्विजाः स्वस्ति—अहिंसासत्यादिकं, हुतं—यज्ञादिकं, कृतं—परोपकारादिलक्षणं धर्मं च कुर्वते, वेदप्रामाण्यात् ॥ ३५ ॥

धर्मे रताः सत्पुरुषैः समेताः
तेजस्विनो दान[4]गुणाः प्रधानाः ।
अहिंसका वीतमलाश्च लोके
भवन्ति पूज्या मुनयः प्रधानाः ॥ ३६ ॥

यस्मादेवं तस्मात् धर्मरतत्वादिस्वभाववन्तः प्रधानाः—श्रेष्ठा वसिष्ठाद्या मुनय एव लोके अस्मदादिभिः पूज्याः, न त्वादृशा इत्यर्थः ॥ ३६ ॥

---

* त्वत्तः पूर्वतरे—पुरातनाश्च वराश्च—ज्ञानतपःश्रेष्ठाश्च जनाः बहूनि शुभानि कर्माणि चक्रुः । ते इमं परं च लोकं जित्वा सदा वर्तन्त इति शेषः । सदा वर्तमानत्वं च ग्रहनक्षत्रादिरूपेण दृश्यमानत्वात्, 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इति श्रुतेः । तस्मात् कर्मानुष्ठानस्य ऐहिकामुष्मिकसकलफलसाधनत्वात् द्विजाः स्वस्ति—मङ्गलात्मकं कर्म हुतं—यज्ञादि कृतं च—तपोदानादिकं च कुर्वन्तीति शेषः—गो. † इमं लोकं परं च लोकं छित्वा—ऐहिकामुष्मिकफलकामनां त्यक्त्वाऽपि—ति.

[1] वृत्ताः पराः—ङ. [2] वराश्च ङ, जनाश्च—च. [3] छित्वा सदेमं—ङ, जित्वा सदेमं—झ. [4] गुण—ङ.

इति ब्रुवन्तं वचनं [1]सरोषं
रामं महात्मानमदीनसत्त्वम् ।
उवाच *[2]तथ्यं पुनरास्तिकं च
सत्यं वचः सानुनयं च विप्रः ॥ ३७ ॥

एवं धिक्कृतो जाबालिः स्वविषयं कोपं रामस्य शमयति—इति ब्रुवन्तमित्यादि । तथ्यं—परमार्थम् । विप्रः—जाबालिः ॥ ३७ ॥

†न नास्तिकानां वचनं ब्रवीम्यहं
[3]न नास्तिकोऽहं न च नास्ति किञ्चन ।
‡समीक्ष्य कालं पुनरास्तिकोऽभवं
भवेय काले पुनरेव नास्तिकः ॥ ३८ ॥

नास्तिकानां वचनमहं न ब्रवीमि, निर्निमित्तमिति शेषः । न च नास्ति किञ्चनेति । मे प्रयोजनं नास्तिकवादेनेति शेषः । कथमेवं प्रत्यक्षापलाप इत्यत्राह—समीक्ष्येत्यादि । कालं समीक्ष्येति ।

---

* तथ्यं—यथार्थं, सत्यं—सद्भ्यो हितम्-**गो.** † धर्मसंकटे प्राप्ते सर्वमतज्ञेन विदुषा यत्किञ्चिन्मतमवलम्ब्यापि तस्य परिहरणीयत्वात् महतो राज्यस्यानायकत्वरूपसंकट-परिहाराय त्वां निवर्तयितुं मया नास्तिकमुपन्यस्तं, न त्वहं वस्तुतो नास्तिक इत्याह—न नास्तिकानामित्यादिना । किञ्चन—परलोकादिकं नास्तीति न—अस्त्येव । समीक्ष्य कालं पुनरास्तिकोऽभवं—यदा वादिनाऽन्येन नास्तिकमतमवलम्ब्यते तं कालं समीक्ष्य अहं पुनरास्तिकमतावलम्ब्यभवम् । अन्यैः वादिभिः नास्तिकमतमवलम्ब्य कुतर्कोद्धाटने तदानीमहमेव त्वदुक्तरीत्या शतशस्तत्खण्डनमकार्षमित्यर्थः । तर्हीदानीं नास्तिकमतं कुतोऽवलम्बितवानसीत्यत्राह—भवेय काले पुनरेव नास्तिक इति । काले—धर्मसंकटकाले-**गो.** ‡ प्रमाणानुगुणत्वात् पुरुषव्यापारस्य तत्तत्प्रमाणप्रवृत्तिकालानुगुणं आस्तिकत्वनास्तिकत्वादिकं वर्तत एवेत्याशयः । अधिकं अन्यत्र ॥

[1] सदोषं-**च.** [2] पथ्यं-**च.** [3] न चास्तिकोऽहं-**ङ.**

पारलौकिकव्यवहारकालं समीक्ष्येत्यर्थः । काल इति । परलोका-विरोधिलौकिकव्यवहारप्रयोजनकाल इत्यर्थः ॥ ३८ ॥

स चापि कालोऽयमुपागतः शनैः
यथा मया नास्तिकवागुदीरिता ।
*निवर्तनार्थं तव, राम! कारणात्
प्रसादनार्थं च मयैतदीरितम् ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे नवोत्तरशततमः सर्गः

---

स चापि काल इति । लौकिकव्यवहारप्रयोजन इत्यर्थः । किं तल्लौकिकं प्रयोजनमित्यत्र—निवर्तनार्थमित्यादि । हे राम! तव निवर्तनप्रयोजनमुद्दिश्य तस्य कारणात् तव प्रसादनार्थं च मयैतन्नास्तिकवचनमीरितमित्यर्थः । देव(४३)मानः (?) सर्गः ॥ ३९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे नवोत्तरशततमः सर्गः

---

## दशोत्तरशततमः सर्गः

### [रामसान्त्वनम्]

क्रुद्धमाज्ञाय रामं तु वसिष्ठः प्रत्युवाच ह ।
जाबालिरपि जानीते लोकस्यास्य गतागतिम् ॥ १ ॥
[1] निवर्तयितुकामस्तु त्वामेतद्वाक्यमब्रवीत् ।

---

* निवर्तनार्थं—तव निवृत्तिज्ञापनार्थं—तव वेदमार्गादविचाल्यत्वस्य लोकानां प्रकटीकरणार्थमित्यर्थः । कारणात्—भरतकारणात् । भरतमुखोल्लासाय तव प्रसादनार्थं चेत्यर्थः—गो. निवर्तनार्थं नास्तिक्यमुक्तम् । अद्य तु प्रसादनार्थं एतत्- आस्तिक्य-मुक्तमिति वा ॥

[1] निवर्तनार्थं तव तु-ङ.

अथ वसिष्ठो भगवान् जाबालिविषयकं रामकोपमुपशमयन्, ब्रह्माणमारभ्य प्रवृत्तकुलाचारो ज्येष्ठाभिषेकः; अतस्त्वयाऽभिषेकः स्वीकार्य इति बोधनशेषतया* भगवन्तमारभ्य कुलक्रमं कथयति। क्रुद्धमित्यादि। अस्य लोकस्येति। आइन्तसंसक्तस्रोतसामित्यर्थः। गतागतिमिति। गतिपूर्विका आगतिः——गतागतिः, प्रवृत्तिनिवृत्ती इत्यर्थः † ॥ १ ॥

**इमां लोकसमुत्पत्तिं, लोकनाथ! निबोध मे ॥ २ ॥**

लोकसमुत्पत्तिं कथयिष्यन् सर्वज्ञो भगवान् वसिष्ठस्तु रामं लोकनाथावतारमेव जानानः लोकनाथेति सम्बोधयति। अज्ञास्तु तदर्थं सभावर्तिजनेश्वरमिति गृह्णन्ति ॥ २ ॥

**सर्वं सलिलमेवासीत् पृथिवी [1] यत्र निर्मिता।**
**ततः समभवत् ब्रह्मा स्वयंभूर्दैवतैः सह ॥ ३ ॥**

सर्वं सलिलमेवासीदिति। अहरादौ पूर्वाह्णान्तेऽपहृतस्रोतः-पुनस्सर्गकाले सर्वं—वैराजत्रिस्रोतोजातं सलिलमेवासीत्—सलिल-सत्त्वभूतविराड्विग्रहब्रह्मात्मकसोपादानात्मनाऽवस्थितमभूत्। यत्र—सलिले तस्यैव विराजः—प्रजापतेः—विष्ण्वाकारप्रयोजिका पृथिवी निर्मिता—प्रतिष्ठिताऽपि तादृक्सलिलप्रधानविराड्ब्रह्मस्वरूपैवाभूदित्यर्थः। 'सहस्र-युगपर्यन्तमहर्यद्ब्रह्मणो विदुः। रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः' इतिन्यायेन कालात्मकेन सम्राजस्तावद्रात्रिजालक्षपणानन्तरं चिदाकाशमयो भगवान् स्वयंभूः स्वेच्छया स्वभूमभ्युपग्रहेषु सन्निधानवान्

---

* कुलमाहात्म्यस्मारणेन मनःप्रसादनार्थं च—इत्यप्यूह्यम्। † गतं—गमनं—परलोकप्राप्तिं तत इहागतिं च—गो.

[1] तत्र—ङ.

ब्रह्मा—हिरण्यगर्भः, वयमस्मत्स्थूलदेह इव 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इति, 'वायुः प्राणो भूत्वा नासिके प्राविशत्' इत्याद्युपदिष्टभूमविराट्पुरुषाधिष्ठात्र्यग्न्यादिदैवतैस्सह विराडात्मना समभवत्—तद्रूपग्रहमनुगृह्णाति स्म ॥ ३ ॥

**स वराहस्ततो भूत्वा प्रोज्जहार वसुन्धराम् ।**
**असृजच्च जगत्सर्वं सह पुत्रैः कृतात्मभिः ॥ ४ ॥**

अथ विराड्रूपग्रहः स भगवान् ब्रह्मा वराहः—स्वपरमूर्तिपृथिवीतत्त्वप्रधानधरणीवराहविष्ण्वात्मकः सन् वसुन्धरां प्रोज्जहार—उद्धृतवान् । कृतात्मभिः पुत्रैः निजानुग्रहसंप्राप्तसृष्ट्यादिशक्तिमद्भिः सप्तर्षिदक्षादिभिः पुत्रैः सह यथायोगं सर्वं जगदसृजत् । तथा हि—'महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा । मद्भावा मानसा जाताः येषां लोक इमाः प्रजाः' इति ॥ ४ ॥

***आकाशप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।**
**तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥ ५ ॥**

अथ यो भगवान् ब्रह्मा विराड्रूपग्रहमाविश्य तत्स्थमर्त्यसर्वस्रोतांस्यसृजत् सोऽसौ स्वयंभूरपि किमात्मना सर्वादौ स्वयमेव वा भवतीत्यत्राह—आकाशप्रभव इत्यादि । स्वराडान्तरभूमविग्रहभूमहृदयहेमकोशान्तरा[1]काशात्मना शुद्धब्रह्मश्रीहिरण्यगर्भात्मना प्राभवदित्यर्थः । तथा हि 'हिरण्यगर्भः समवर्तताग्रे' इत्यादि । सोऽसौ भगवान् सर्वसंसारसाक्षात्पञ्चकृत्यप्रवर्तकत्वात् शाश्वतः—नित्यजाग्रन्निस्तुला-

---

* आकाशशब्दः परब्रह्मपरः । इत्थमेव 'अव्यक्तप्रभवो ब्रह्मा' इति बालकाण्डोक्तमपि—गो.

[1] काशशुद्ध—ट.

धिकसहजसमग्रभूमविधैश्वर्यानन्तशक्तित्वात् वैराजसकलसंहारोपादानादि-स्वभावोऽपि स्वयं शाश्वतो भवति—सततादिनैकरूपो भवति। तथा नित्यश्च भवति—सकलसंसारसाक्षादनित्यत्वसाधकभूमसम्राडात्मत्वात् स्वस्यानित्यत्वसाधकवस्त्वन्तराभावात् स्वयं नित्यः। स्वसर्गादितकाल-त्रयाननुयायिसंसारे स्वयमेक एव सर्वकालानुस्यूतः। तथा अव्ययः—विविधं विकारं षड्भावलक्षणमयमाने सर्वस्मिन्नपि संसारे स्वयमेक एवाविकारः सकलविकारोत्पत्तिज्ञप्तिसाक्षात्साधकनित्यजाग्रद्भूमलिङ्ग-ज्योतिरात्मकत्वात्। एवंस्वभावात्तस्मात् भगवतः भूमविराड्रूपब्रह्मप्रधानात् मरीचिः—सप्तर्षिलक्षणभगवत्प्रधानपुत्रेषु एकः मरीचिः। तथा हि—'सप्तर्षयो मरीच्यत्रिमुखाः' इति। मरीचिकश्यपविवस्वन्तः क्रमात् भगवतः पुत्रपौत्रप्रपौत्ररूपाः। मनुपर्यन्तास्तु मरीच्या-द्युपहितब्रह्मणः मानसपुत्राः। तथा प्रागेवोक्तं—'महर्षयः सप्त' इत्यादिश्लोकेन ॥ ५ ॥

*विवस्वान् कश्यपात् जज्ञे मनुर्वैवस्वतः [1]सुतः।
[2]स तु प्रजापतिः पूर्वं इक्ष्वाकुस्तु मनोः सुतः ॥ ६ ॥
[3]यस्येयं प्रथमं दत्ता समृद्धा मनुना मही।
तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ॥ ७ ॥

स मनुस्तु प्रजापतिः—रेतोमूलमर्त्यप्रजासर्गाधिकारी। तेन स्वरेतसा प्रजाः सृष्टाः। तस्मान्मनोः क्षत्रक्षेत्रे इक्ष्वाकुः।

---

* वैवस्वतः—विवस्वत्सम्बन्धी। तस्येक्ष्वाकुवंशकूटस्थत्वं च दर्शयति—स त्वित्यादिना। 'मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम्' (बाल. ५–६) इति तस्यायोध्यानिर्मातृत्वोक्तिः—गो.

[1] स्मृतः-ङ, स्वयम्—च. [2] एतदर्धस्थाने—स तु प्रजापतिः पूर्वं इक्ष्वाकूणां महात्मनाम्। जजनाङ्गिरसं ब्रह्मा प्रचेतसमथाङ्गिराः। मनुः प्रचेतसः पुत्रः इक्ष्वाकुस्तु मनोः सुतः—इत्यर्धत्रयम्—ङ. [3] तस्येयं—ङ.

सोऽसौ साक्षात् क्षत्रियः । अस्य चतुस्समुद्रवसना इयं मही—सर्वाऽपि भूमिरित्यर्थः । दत्ता, पित्रा मनुनेति शेषः ॥ ६-७ ॥

इक्ष्वाकोस्तु सुतः श्रीमान् कुक्षिरित्येव [1]विश्रुतः ।
कुक्षेरथात्मजो [2]वीरः विकुक्षिरुदपद्यत ॥ ८ ॥

विश्रुतः—प्रसिद्धः ॥ ८ ॥

विकुक्षेस्तु महातेजाः बाणः पुत्रः प्रतापवान् ।
बाणस्य च महाबाहुः अनरण्यो [3]महायशाः ॥ ९ ॥
[4]नानावृष्टिः बभूवास्मिन् न दुर्भिक्षं सतां वरे ।
अनरण्ये महाराजे तस्करो [5]वाऽपि कश्चन ॥ १० ॥

सतां वरे—श्रेष्ठे अनरण्ये महाराजे राज्यं कुर्वाणे सति अनावृष्टिः, दुर्भिक्षं, तन्मूलः कश्चन तस्करोऽपि न बभूव ॥ १० ॥

अनरण्यान्महा[6]बाहुः पृथू राजा बभूव ह ।
तस्मात् पृथोर्महा[7]तेजाः त्रिशङ्कुरुदपद्यत ॥ ११ ॥
स सत्यवचना[8]द्वीरः सशरीरो दिवं गतः ।
त्रिशङ्कोरभवत् सूनुः धुन्धुमारो महायशाः ॥ १२ ॥
*[9]धुन्धुमारान्महातेजाः युवनाश्वो व्यजायत ।
युवनाश्वसुतः श्रीमान् मान्धाता समपद्यत ॥ १३ ॥

---

* युवनाश्व एव महातेजःप्रभावेन महाबलधुन्धुनामकासुरमारणात् धुन्धुमारसंज्ञामलभतेत्यर्थः–**गो.** (धुन्धुमारो महातेजाः—इति पाठः) त्रिशंकुसुतो युवनाश्वः इत्यन्यत्र श्रूयमाणं कल्पान्तरविषयम् । यद्वा त्रिशंकोः सूनुरित्यत्र तत्पौत्र इत्यर्थः इति केचित् ।

[1] नः श्रुतम्–ङ. [2] वीर–**च.** [3] महातपाः–**च.** [4] न चावृष्टिः-ङ. [5] नापि–ङ. [6] तेजाः–ङ, राज–**च.** [7] राजः–ङ. [8] धीरः–ङ. [9] धुन्धुमारो महा–ङ.

सः—त्रिशङ्कुः सत्यवचनात् स्वीयात्, भगवतो विश्वामित्रस्य सत्यप्रतिज्ञानाच्चेत्यर्थः। त्रिशङ्कोः धुन्धुमारः, धुन्धुमारात् युवनाश्वः—इत्यादिकमिहोच्यमानपरंपरावैलक्षण्यम्। अन्यत्र श्रूयमाणं कल्पान्तरविषयं इति द्रष्टव्यम् ॥ १२-१३ ॥

मान्धातुस्तु [1]महातेजाः सुसन्धिरुदपद्यत।
सुसन्धेरपि पुत्रौ द्वौ [2]ध्रुवसन्धिः प्रसेनजित् ॥ १४ ॥
यशस्वी [2]ध्रुवसन्धेस्तु भरतो [3]रिपुसूदनः।

ध्रुवसन्धिः ज्येष्ठः। अतस्तत्पुत्रावलम्बनेन अयोध्याराजपरंपरोच्यते—ध्रुवसन्धेस्तु भरत इति ॥ १४ ॥

भरतात्तु [4]महाबाहोः असितो नाम जायत ॥ १५ ॥
यस्यैते *प्रतिराजानः उदपद्यन्त शत्रवः।
हैहयास्तालजङ्घाश्च शूराश्च [5]शशबिन्दवः ॥ १६ ॥

यस्य—असितस्येत्यर्थः। यस्योदपद्यन्त, सोऽभवदित्यन्वयः ॥

तांस्तु सर्वान् प्रतिव्यूह्य युद्धे राजा प्रवासितः।
स च शैलवरे रम्ये †बभूवाभिरतो मुनिः ॥ १७ ॥

तांस्त्विति। हैहयादिचतुर्विधशत्रून् युद्धे प्रतिव्यूह्य—प्रतिस्पर्धितया कृतस्वबहुव्यूहतयाऽवस्थितोऽपि असौ शत्रुप्राबल्यात् अशक्यार्थधिया प्रवासितः—सञ्जातप्रवासो बभूव। पुरं च त्यक्त्वा हिमवद्गिरिं शत्रुजयादिहेतवे तपसे जगामेत्यर्थः। शैलवरः—हिमवान् ॥

---

* प्रतिराजानः—सामन्ताः- **गो.**  † मुनिस्सन्नभिरतो बभूव। अन्यथा तस्मादपि शैलात् प्रवासयेयुरिति भावः—**गो.**

[1] सुतः श्रीमान्—ङ.  [2] दृढ—ङ.  [3] रघुनन्दन—ङ.  [4] महाबाहुः—ङ.  [5] शशि—ङ.

द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति * [1]श्रुतिः।
[2]तत्र चैका महाभाग भार्गवं देववर्चसम् ॥ १८ ॥
ववन्दे पद्मपत्राक्षी काङ्क्षिणी पुत्रमुत्तमम्।

तत्र चेत्यादिश्लोकाः बालकाण्डेन गतार्थाः ॥ १८ ॥

एका [3]गर्भविनाशाय सपत्न्यै गरलं ददौ ॥ १९ ॥
भार्गवश्चयवनो [4]नाम हिमवन्तमुपाश्रितः।
तमृषिं [5]साऽभ्युपागम्य कालिन्दी त्वभ्यवादयत् ॥ २० ॥
स तामभ्यवदत् [6]प्रीतः वरेप्सुं पुत्रजन्मनि।
पुत्रस्ते भविता, देवि! महात्मा लोकविश्रुतः ॥ २१ ॥
धार्मिकश्च [7]सुशीलश्च वंशकर्ताऽरिसूदनः।
[8]श्रुत्वा प्रदक्षिणं [9]कृत्वा मुनिं [10]तमनुमान्य च ॥ २२ ॥
पद्मपत्र[11]समानाक्षं पद्मगर्भसमप्रभम्।
ततः सा गृहमागम्य [12]पत्नी पुत्रमजायत ॥ २३ ॥
सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया।
गरेण सह तेनैव [13]जातः स सगरोऽभवत् ॥ २४ ॥
स राजा सगरो नाम यः समुद्रमखानयत्।
इष्ट्वा पर्वणि वेगेन त्रासयान इमाः प्रजाः ॥ २५ ॥

अखानयदिति। स्वपुत्रैरिति शेषः। पर्वणि इष्ट्वा—दीक्षितो भूत्वा। वेगेन—खननवेगेन। त्रासयानः—उद्वेजयन् ॥ २५ ॥

---

* इति श्रुतिरिति। इति प्रसिद्धिरित्यर्थः ॥

[1] श्रुतम्–ङ [2] अयं श्लोकः ङ. पुस्तके कुण्डलितः। [3] पुत्र–ङ. [4] राम–ङ. [5] समुपागम्य–ङ. [6] विप्रः–ङ. [7] सुभीमश्च–च. [8] कृत्वा–ङ. [9] स्तुत्वा, दृष्ट्वा–ङ. [10] तमभिवाद्य–ङ. [11] समानाक्षी, विशालाक्षी–ङ. [12] देवी–ङ. [13] तस्मात्–च.

असमञ्जस्तु पुत्रोऽभूत् सगरस्येति नः श्रुतम् ।
जीवन्नेव स पित्रा तु निरस्तः * पापकर्मकृत् ॥ २६ ॥
[1]अंशुमानपि पुत्रोऽभूत् असमञ्जस्य वीर्यवान् ।
दिलीपोंऽशुमतः पुत्रः दिलीपस्य भगीरथः ॥ २७ ॥
भगीरथात् ककुत्स्थश्च काकुत्स्था येन तु स्मृताः ।
काकुत्स्थस्य तु पुत्रोऽभूत् रघुः, येन तु राघवाः ॥ २८ ॥

येन तु स्मृता इति । येन तु कूटस्थेन सर्वे तद्वंश्याः काकुत्स्थाः स्मृताः, सोऽभूदित्यर्थः । राघवा इति । राघवशब्दवाच्या इत्यर्थः ॥ २८ ॥

† रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ।
कल्माषपादः सौदासः इत्येवं प्रथितो भुवि ॥ २९ ॥

रघोस्तु तेजस्वी प्रवृद्धादिनामवत्तया चतुष्पर्यायनामवत्तया प्रथितः पुत्रोऽभूत् ॥ २९ ॥

‡ कल्माषपादपुत्रोऽभूत् शङ्खणस्त्विति नः श्रुतिः ।
[2]यस्तु तद्वीर्यमासाद्य सहसैन्योऽप्यनीनशत् ॥ ३० ॥

कल्माषपादस्य पुत्रः शङ्खण इति नः—अस्माकं श्रुतिः—प्रसिद्धिः अस्तीत्यर्थः, तस्यापि पुरोऽतीतत्वात् । यस्तु शङ्खणः

---

* पापकर्मकृत्–एव इवार्थे–पापकर्मकृदिव–रा. † प्रवृद्धनामकः वसिष्ठशापात् पुरुषादकः–राक्षसो भूतः, वसिष्ठशापायोद्धृतजलस्य स्वभार्यानुनयनात् स्वपादे प्रक्षेपेण पादयोः दाहात् कल्माषपादः जातः । अथवा नाम्ना सौदास एव प्रवृद्धः–इत्यन्वयः । ‡ तद्वीर्यं–वसिष्ठशापात् राक्षसत्वं प्राप्तस्य कल्माषपादस्य पराक्रमं आसाद्य व्यनीनशत्–विनाशं प्राप्तवान् । राक्षसत्वात् कल्माषपादेन स्वपुत्र एव विनाशित इत्यर्थः–गो.

[1] अंशुमानस्य–ङ. [2] स तु दैवेन विधिना ससैन्योऽभ्यनशत्पुरा–ङ.

तद्वीर्य—तत्तादृशपराक्रमं युद्धे प्राप्यापि दैवाद्युद्धे सहसैन्योऽप्यनीनशत्—आर्षः स्वार्थणिः, नाशं गतोऽभूदित्यर्थः ॥ ३० ॥

शङ्खणस्य तु पुत्रोऽभूत् शूरः श्रीमान् सुदर्शनः ।
सुदर्शनस्याग्निवर्णः अग्निवर्णस्य शीघ्रगः ॥ ३१ ॥

शूरः—शौर्यगुणयुक्तः ॥ ३१ ॥

शीघ्रगस्य मरुः पुत्रः मरोः पुत्रः प्रशुश्रुवः ।
प्रशुश्रुवस्य पुत्रोऽभूत् अम्बरीषो[1] महाद्युतिः ॥ ३२ ॥
अम्बरीषस्य पुत्रोऽभूत् नहुषः सत्यविक्रमः ।
नहुषस्य च नाभागः पुत्रः परमधार्मिकः ॥ ३३ ॥
अजश्च सुव्रतश्चैव नाभागस्य सुतावुभौ ।

अजः नाभागस्य ज्येष्ठः पुत्रः ॥ ३३ ॥

अजस्य चैव धर्मात्मा राजा दशरथः[2] सुतः ॥ ३४ ॥
तस्य ज्येष्ठोऽसि *दायादः राम इत्यभिविश्रुतः ।
तद्गृहाण स्वकं राज्यं अवेक्षस्व[3] जगत्, नृप ! ॥ ३५ ॥

दायादः—पुत्रः, 'दायादौ सुतबान्धवौ'। यस्मात् ज्येष्ठः तत्—तस्मात् इत्यर्थः। स्वकं—जनम्—इक्ष्वाकुमुखस्ववंशानुष्ठानमित्यर्थः ॥ ३५ ॥

इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः ।
पूर्वजे नावरः पुत्रः ज्येष्ठो[4] राज्येऽभिषिच्यते ॥ ३६ ॥

तमेवार्थं विवृणोति—इक्ष्वाकूणामित्यादि । पूर्वजे स्थिते अवरः पुत्रो नाभिषिच्यते ॥ ३६ ॥

---

* दायादः—सुतः-गो. राज्यस्य न्यायप्राप्तत्वसूचनाय एवमुक्तिः ।

[1] महामतिः-च. [2] स्मृतः-ङ. [3] जनं नृप, गतं नृप-ङ. [4] राजा-च.

स राघवाणां कुलधर्ममात्मनः
सनातनं नाद्य[1] विहन्तुमर्हसि ।
प्रभूतरत्नामनुशाधि मेदिनीं
*प्रभूतराष्ट्रां पितृवन्महायशाः ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे दशोत्तरशततमः सर्गः

---

सः त्वं कुलक्रमागतज्येष्ठाभिषेकधर्मं विहन्तुं—विघ्नितुम् । प्रभूतराष्ट्रां—प्रभूतावान्तरदेशवतीम् । सर्ग(३७)मानः सर्गः ॥ ३७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे दशोत्तरशततमः सर्गः

---

## एकादशोत्तरशततमः सर्गः

[भरतप्रायोपवेशः]

स वसिष्ठः तदा रामं उक्त्वा राजपुरोहितः ।
अब्रवीद्धर्मसंयुक्तं पुनरेवापरं वचः ॥ १ ॥

पुनश्च वसिष्ठेन भरतेन च धर्मन्यायावलम्बनेनैव प्रवर्त्यमानप्रतिनिवर्तनोऽपि रामः स्वसत्यमेव परिगृह्णाति । स वसिष्ठ इत्यादि ॥ १ ॥

†पुरुषस्येह जातस्य भवन्ति गुरवः [2]त्रयः ।
आचार्यश्चैव, काकुत्स्थ ! पिता माता च, राघव ! ॥ २ ॥

गुरव इति । उपास्या इत्यर्थः ॥ २ ॥

---

* प्रभूतराष्ट्रां— बहुविधावान्तरजनपदयुक्ताम्–गो. † एवं कुलधर्मोपपादनेऽपि सर्वं तत् पितृनियोगव्यतिरिक्तविषयमिति मत्वा तूष्णीं स्थितस्य रामस्याशयं जानन् वसिष्ठः पुनः निवर्तनहेत्वन्तरमाह—पुरुषस्येत्यादिना–गो.

[1] विहातु–ङ.   [2] सदा–च.

*पिता ह्येनं जनयति पुरुषं, पुरुषर्षभ !
प्रज्ञां ददाति चाचार्यः तस्मात् स गुरुरुच्यते ॥ ३ ॥

प्रज्ञां ददातीति । उपनयनसंस्कारपूर्वं ब्राह्मीं विद्यां मूलविद्यासाधनां ददाति । यदेवं आचार्यः ब्राह्मीं विद्यातनुं जनयति, तस्मादाचार्य एव गुरुसमवाये गुरुरुच्यते । तथा आपस्तम्बः—'आचार्यः श्रेष्ठो गुरूणाम्' † इति । पित्रपेक्षया आचार्यस्यैव गौरवाधिक्येऽपि स एव हेतुमाह—'स हि विद्यातस्तं जनयति । तच्छ्रेष्ठं जन्म' इति । पित्रोः गौरवन्यूनतायामप्याह—'शरीरमेव मातापितरौ जनयतः' इति शीर्यत्स्वभावं सर्वयोनिसुलभं प्राकृतं मलशरीरं मलमूलकं जनयतः, न तु परमदुर्लभशाश्वतब्राह्मविद्यादेहम् ॥ ३ ॥

सोऽहं ते पितुराचार्यः तव चैव, परंतप !
मम त्वं वचनं कुर्वन् नातिवर्तेः सतां गतिम् ॥ ४ ॥

उक्ताया लोकस्थितेः प्रकृतोपयोगः प्रदर्श्यते—स इत्यादि । नातिवर्तेरिति । नातिवर्तेथा इति यावत् । सद्गतिभ्रंशो न त इत्याशयः ॥ ४ ॥

इमा हि ते परिषदः [1]ज्ञातयश्च नृपास्तथा ।
‡एषु, तात ! चरन् धर्मं नातिवर्तेः सतां गतिम् ॥ ५ ॥

---

* पितेति मातुरप्युपलक्षणम् । शरीरमेव मातापितरौ जनयतः इत्यर्थः—गो.
† 'स हि विद्यातस्तं जनयति, तच्छ्रेष्ठं जन्म । शरीरमेव मातापितरौ जनयतः शीर्यत्स्वभावं सर्वयोनिसुलभं प्राकृतं मलजं शरीरम्' इति सूत्रशेषः । ‡ एषु—एतेषां विषये ; एतदर्थं इति यावत् ।

[1] श्रेणयश्च द्विजास्तथा—ङ.

वृद्धाया धर्मशीलायाः मातुर्नार्हस्यवर्तितुम् *।
[1] तस्या हि वचनं कुर्वन् नातिवर्तेः सतां गतिम् ॥ ६ ॥
भरतस्य वचः कुर्वन् याचमानस्य, राघव !
† आत्मानं नातिवर्तेस्त्वं, सत्यधर्मपराक्रम ! ॥ ७ ॥

आत्मानं याचमानस्य—त्वां स्वराज्याधिपत्यपणपूर्वकं प्रतिनिवृत्तिं याचमानस्येत्यर्थः। अत्र 'आत्मानं नातिवर्तेथाः' इति यथापाठमेवान्वीय, यद्वाकश्मलान्यन्वभूत् परः ॥ ७ ॥

एवं ‡ मधुरमुक्तः सः गुरुणा राघवः स्वयम् ।
प्रत्युवाच समासीनं वसिष्ठं पुरुषर्षभः ॥ ८ ॥
§ यन्मातापितरौ वृत्तं तनये कुरुतः सदा ।
न सुप्रतिकरं तत्तु मात्रा पित्रा च यत् कृतम् ॥ ९ ॥

---

* अवर्तितुं—शुश्रूषामकर्तुं नार्हसि–गो. † आत्मानं—आत्मभूतं भरतं नातिवर्तेथा इत्युदारधीः। सत्यधर्मज्ञानात्स्वभावमित्यपरे। स्वासाधारणधर्मत्वादाश्रितपारतन्त्र्यं नातिवर्तेथा इत्याचार्याः–गो. वस्तुतः—न स्वमर्यादातिक्रमणं भवेदिति वा, न स्वरूपातिक्रमणं—स्वरूपनाशः भवेदिति वाऽर्थः स्वरसः। ‡ 'मधुरमुक्तः' इत्यनेन आदेशरूपत्वं वार्यते। तेन रामस्य न गुर्वाज्ञातिलङ्घनदोषः। उक्तवासिष्ठवाक्यं तु अनुज्ञारूपमेव 'एवं करणेऽपि न दोषप्रसक्तिः' इत्येवम्। दशरथवाक्यं तु आज्ञारूपं (११ श्लो.) अतो न दोष इति भावः। 'स याच्यमानो गुरुणा' (113-9) इत्युत्तरत्र वचनं चात्र स्वरसम्। § 'सति धर्मिणि धर्माश्चिन्त्यन्ते' इति न्यायेन सर्वधर्मसंपादनबीजभूतशरीरोत्पादकत्वात्, अत्यन्ताज्ञानदशायामपि सर्वप्रकारसंरक्षणेन बहुविधोपकारकत्वाच्च आचार्यवचनादपि पितृवचनं अवश्यं कर्तव्यम्। अत एव 'मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव' इति चरमपर्वण्याचार्य उपात्त इत्यभिप्रायेणाह–यन्मातेत्यादि श्लोकद्वयेन–गो.

[1] अस्यास्तु-च.

यत् वृत्तं तनये कुरुत इति। यादृशं पुत्रस्योपकारमित्यर्थः। कृतं न सुप्रतिकरमिति। खलन्तोऽयम्, अशक्यप्रत्युपकारमित्यर्थः। यत् कृतमिति। यच्छब्दः प्रसिद्धिवाची, किं कृतमिति ॥ ९ ॥

*यथाशक्तिप्रदानेन स्नापनोच्छादनेन च।
नित्यं च प्रियवादेन तथा संवर्धनेन च ॥ १० ॥

अतः—यथाशक्तीत्यादि। यथाशक्ति बालस्य जीवनार्थ-पदार्थस्वीकारशक्त्यनुरोधतः प्रदानेन — तैलक्षीरान्नादिप्रदानेन। उच्छादनं—उद्वर्तनं—लेपपिष्टादिना ॥ १० ॥

स हि राजा दशरथः †पिता जनयिता मम।
[1]आज्ञापयन्मां यत्तस्य न तन्मिथ्या भविष्यति ॥ ११ ॥

जनयिता — उत्पादकः पिता — पातिस्तृचि औणादिकमित्वम्, उक्तरीत्या रक्षिता चेत्यर्थः ॥ ११ ॥

एवमुक्तस्तु रामेण भरतः प्रत्यनन्तरम्।
उवाच [2]परमोदारः सूतं परमदुर्मनाः ॥ १२ ॥

प्रत्यनन्तरं—आसन्नम् ॥ १२ ॥

इह तु स्थण्डिले शीघ्रं कुशानास्तर, सारथे!
आर्यं ‡प्रत्युपवेक्ष्यामि यावन्मे [3]संप्रसीदति § ॥ १३ ॥

---

* यथाशक्तिप्रदानेन— स्तन्यान्नादिप्रदानेन—गो. † 'जनयिता पिता' इति गौणपितृव्यावृत्तिः—गो. ‡ प्रत्युपवेक्ष्यामि—प्रतिरोत्स्यामीत्यर्थः—गो. § एतदुत्तरं 'निराहारः' इत्यादिपद्यं प्रक्षिप्तमिति कतकः स्वरसः—ति. परन्तु सर्गान्ते श्लोकसंख्या इति कतक एवोक्तं विमृष्टव्यम्।

[1] आज्ञातं यन्मया तस्य—ङ. [2] विपुलोरस्कः—च. [3] न प्रसीदति—ङ.

निराहारो * निरालोकः धनहीनो यथा द्विजः ।
[1]शेष्ये पुरस्ताच्छालाया [2]यावन्मां प्रतियास्यति ॥ १४ ॥

आर्यं प्रत्युपवेक्ष्यामीति । आर्यमुद्दिश्य प्रत्युपवेशनकर्म करिष्य इत्यर्थः । तच्च उपरोद्धव्यस्य गृहद्वारपुरः कुशेषु यावत्कार्यसिद्धि निराहारतया एकपार्श्वेनैव पार्श्वान्तरपरिवृत्तिराहित्येन शयनम् ॥ १३-१४ ॥

स तु राममवेक्षन्तं सुमन्त्रं प्रेक्ष्य दुर्मनाः ।
† कुशोत्तरमुपस्थाप्य भूमावेवा[3]स्थित स्वयम् ॥ १५ ॥

स तु—भरत इत्यर्थः । राममवेक्षन्तमिति । रामनियोगं प्रतीक्षमाणं, तद्वशात् कुशानयने विलम्बमानमित्यर्थः । कुशोत्तरं—कुशश्रेष्ठं स्वयमेवोपस्थाप्य भूमौ आस्थित-लिङ्, 'स्थाघ्वोरिच्च' इतीत्त्वम्, प्रत्युपवेशनमनुष्ठितवानित्यर्थः ॥ १५ ॥

तमुवाच महातेजाः रामो राजर्षिसत्तमः ।
‡ किं मां, भरत! कुर्वाणं, तात! प्रत्यु[4]पवेक्ष्यसि ॥ १६ ॥

किं कुर्वाणमिति । किमन्याय्यं कुर्वाणमित्यर्थः ॥ १६ ॥

ब्राह्मणो ह्येकपार्श्वेन § नरान् रोद्धुमिहार्हति ।
न तु मूर्धा[5]भिषिक्तानां विधिः प्रत्युपवेशने ॥ १७ ॥

---

* निरालोकः—अवकुण्ठिताननः । धनहीनः—वृद्ध्यर्थं ऋणप्रदानान्निर्धनः—गो.
† कुशोत्तरं—कुशास्तरणं उपस्थाप्य—आनीय स्वयमेवास्तरत्—आस्तृणात्—शयनं कृतवानित्यर्थः—गो. ‡ किं कुर्वाणं—किमपकारं कुर्वाणम्—गो. § एकपार्श्वेन—एकपार्श्वशयनेन—गो.

[1] शये—च. [2] यावन्न—ङ. [3] स्तरत्—ङ. [4] पवेक्ष्यसे—च. [5] वसिक्तानां—ङ.

उत्तिष्ठ, नरशार्दूल! हित्वैतद्दारुणं व्रतम्।
पुरवर्यामितः क्षिप्रं अयोध्यां याहि, राघव!॥ १८॥

आसीनस्त्वेव भरतः पौरजानपदं जनम्।
उवाच सर्वतः प्रेक्ष्य *[1] किमार्यं नानुशासथ॥ १९॥

आसीनस्त्वेवेति। प्रत्युपवेशकर्मणीति शेषः। नानुशासथेति। नानुशिष्टेति यावत्॥ १९॥

ते तदोचु[2]र्महात्मानं पौरजानपदा जनाः।
† काकुत्स्थ[3]मपि जानीमः [4]सम्यग्वदति राघवः॥ २०॥
‡ एषोऽपि हि [5]महाभागः पितुर्वचसि तिष्ठति।
अत एव न शक्ताः स व्यावर्तयितुमञ्जसा § ॥ २१॥

राघवः–भरतः भवानपि काकुत्स्थं–राघवं प्रति सम्यग्वदतीति जानीमः। महाभाग एष रामश्च पितुर्वचसि तिष्ठति, तदपि सम्यगेव। यदेवं—अत एवेत्यादि॥ २०–२१॥

तेषामाज्ञाय वचनं रामो वचनमब्रवीत्।
एवं निबोध वचनं सुहृदां धर्मचक्षुषाम्॥ २२॥
[6]एतच्चैवोभयं श्रुत्वा सम्यक् [7]संपश्य, राघव!
उत्तिष्ठ त्वं [8]महाबाहो! ‖ मां च स्पृश तथोदकम्॥२३॥

---

* इदं भरतवचनं—अतः इतिकरणं द्रष्टव्यम्। † काकुत्स्थं—रामं अभिजानीमः—अभितो जानीमः, सत्यसंधं जानीम इत्यर्थः–गो. ‡ सम्यग्वदतीत्येतदुपपादयति—एष इत्यादिना–गो. § अञ्जसा—शीघ्रं–गो. तत्त्वत इति वा।
‖ क्षत्रियाविहितप्रत्युपवेशनप्रायश्चित्तार्थमित्यर्थः।

[1] किमर्थं–ङ. [2] महात्मानः–ङ. [3] मभि–ङ. [4] सत्यं वदति–ङ.
[5] महाबाहुः–ङ. [6] ततश्चैवो–ङ. [7] त्वं पश्य–ङ. [8] महाभाग–ङ.

रामो वचनमब्रवीदिति । भरतं प्रतीति शेषः । एवमित्यादि । धर्मचक्षुषां—धर्मदर्शिनां सुहृदां एवं—उक्तरूपं युष्मदस्मद्विषयकं वचनं निबोध—शृणु । एतदुभयं—त्वद्विषयकं मद्विषयकं च वचनं श्रुत्वा ततः परं कर्तव्यं सम्यक् पश्य—चिन्तय । कर्तव्यं निश्चेतुमशक्यश्चेत् उच्यते मया । उत्तिष्ठ, मां च स्पृश—मद्विषयकप्रत्युपवेशदोषविमोचनार्थं मां, अज्ञानतः कृतप्रत्युपवेशनप्रायश्चित्तं उदकं च स्पृश—शुद्धाचमनं कुर्विति यावत् ॥ २२–२३ ॥

अथोत्थाय जलं स्पृष्ट्वा भरतो वाक्यमब्रवीत् ।
शृण्वन्तु मे परिषदः मन्त्रिणः [1] श्रेणयस्तथा ॥ २४ ॥

परिषदः—सभ्याः ॥ २४ ॥

न याचे पितरं राज्यं * नानु[2]शासामि मातरम् ।
[3] आर्यं परमधर्मज्ञं †[4] नानुजानामि राघवम् ॥ २५ ॥

न याच इति । नायाचिषमित्यर्थः । अथापि तदर्थप्रवृत्तां मातरमपि नानुशासामि—सर्वत्रात्र शासिरार्षः शब्विकरणः ॥ २५ ॥

यदि त्ववश्यं वस्तव्यं कर्तव्यं च पितुर्वचः ।
‡ अहमेव निवत्स्यामि चतुर्दश वने समाः ॥ २६ ॥

---

* नानुशासामि—'एवं कुरु' इति नानुशिष्टवान्—गो. † नानुजानामि—वनवासाय नानुज्ञातवानस्मीत्यर्थः—गो. वस्तुतस्तु अनन्तरश्लोकानुसारात्—'रामवनगमनं न सहेयमेव' इत्यर्थः स्वरसः । ‡ त्वत्प्रतिनिधितयेति शेषः ।

[1] शृणुयु—च. [2] शंसामि—ङ. [3] एवं—घ. [4] सामिजानामि—ङ.

धर्मात्मा तस्य [1]सत्येन भ्रातुर्वाक्येन विस्मितः ।
उवाच रामः संप्रेक्ष्य पौरजानपदं जनम् ॥ २७ ॥

तस्य—भरतस्य ॥ २७ ॥

विक्रीतमाहितं क्रीतं यत् पित्रा जीवता मम ।
न तल्लोपयितुं शक्यं मया वा भरतेन वा ॥ २८ ॥

विक्रीतमित्यादि । जीवता मम पित्रा यत् विक्रीतं—स्वीयस्य वस्तुनः किञ्चिन्मूल्यं गृहीत्वा दानं विक्रयः । क्रयस्तु अन्यदीयवस्तुनो मूल्यं दत्त्वा आदानम् । आधिरूपेण निहितं क्षेत्रादिकं—आहितम् । तत्सर्वं मया भरतेन वा लोपयितुं न शक्यम् ॥ २८ ॥

*उपाधिर्न मया कार्यः वनवासे जुगुप्सितः ।
युक्तमुक्तं च कैकेय्या पित्रा मे सुकृतं कृतम् ॥ २९ ॥

अस्तु, किं तत इत्यतः—उपाधिरित्यादि । पित्रा अनुष्ठेय-विहिते वनवासे क्रीतादितुल्ये मया जुगुप्सित उपाधिः—स्वाशक्या-नुष्ठानेन प्रतिनिध्यनुष्ठापनं उपाधिः, मुख्ये पक्षे संभवति गौणाश्रयणतो न मया संपाद्यः । कैकेय्या च युक्तमेवोक्तम्, वररूपणापाकरणार्थ-त्वात् मत्पितुः । मया च तद्वचनमेव कार्यं, तस्याः—मातुः, तस्य—पितुश्चेत्यर्थः ॥ २९ ॥

जानामि भरतं [2]क्षान्तं गुरुसत्कारकारिणम् ।
सर्वमेवात्र कल्याणं † सत्यसन्धे महात्मनि ॥ ३० ॥

क्षान्तं—क्षमायुक्तम् । अत्र—भरते ॥ ३० ॥

---

* अल्पेन व्याजेन स्वीकृतभरात् प्रच्युतिः न युक्तेत्यर्थः । तदिदं मद्दौर्बल्यहेतुक-मेव किल स्यात् । अतः जुगुप्सितमिदम् इति भावः । † कल्याणं जानामीत्यनुकर्षः ।

[1] तथ्येन—ङ. [2] शान्तं—ङ.

*अनेन धर्मशीलेन वनात् प्रत्यागतः पुनः ।
भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ॥ ३१ ॥

वृतो राजा हि कैकेय्या मया तद्वचनं कृतम् ।
अनृतान्मोचयानेन † पितरं तं महीपतिम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे एकादशोत्तरशततमः सर्गः

---

मोचयानेनेति । मोचयमानेनेति यावत् । राग(३२)मानः सर्गः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकादशोत्तरशततमः सर्गः

---

## द्वादशोत्तरशततमः सर्गः

[ पादुकाग्रहणम् ]

तमप्रतिमतेजोभ्यां ‡ भ्रातृभ्यां रोमहर्षणम् ।
विस्मिताः सङ्गमं प्रेक्ष्य [1] समवेता महर्षयः ॥ १ ॥

अथान्तर्हितदेवगणैः ग्राहितरामवाक्यकरणनियोगेनापि भरतेन पुनश्च प्रार्थितेन रामेण पादुकयोः प्रतिनिधित्वेन प्रदानम् । तमित्यादि । तं सङ्गमं प्रेक्ष्येत्यन्वयः । तत्र स्थले समवेता वसिष्ठाद्या महर्षयो विस्मिता बभूवुः ॥ १ ॥

---

*धर्मशीलेनानेन भ्रात्रा सहेति अन्वयः । † पितरं अनेन—राज्यपरिपालनेन अनृतान्मोचयेत्यर्थः–गो. ‡ भ्रातृभ्यां अन्योन्यसौहार्देन कृतं संगमं–गो.

[1] समुपेता–ङ.

* अन्तर्हिता [1] मुनिगणाः [2] सिद्धाश्च परमर्षयः ।
तौ भ्रातरौ [3] महात्मानौ काकुत्स्थौ प्रशशंसिरे ॥ २ ॥

अन्तर्हिताः—अदृश्यरूपाः, आकाशस्थाश्चेति शेषः ॥ २ ॥

[4] स धन्यो यस्य पुत्रौ द्वौ धर्मज्ञौ † धर्म[5]विक्रमौ ।
‡ श्रुत्वा वयं हि संभाषां [6] उभाभ्यां स्पृहयामहे ॥ ३ ॥

वयं उभयोः संभाषां श्रुत्वा उभाभ्यां स्पृहयामहे—प्रीता भवाम इति यावत् ॥ ३ ॥

ततस्त्वृषिगणाः [7] सिद्धाः दशग्रीववधैषिणः ।
भरतं राजशार्दूलं इत्यूचुः § सङ्गता वचः ॥ ४ ॥

सङ्गता ऊचुरिति । एकवाक्यतया ऊचुरित्यर्थः ॥ ४ ॥

कुले जात महाप्राज्ञ [8] महावृत्त महायशः !
ग्राह्यं रामस्य वाक्यं ते‖ पितरं यद्यवेक्षसे ॥ ५ ॥

ते ग्राह्यमिति । त्वया ग्राह्यमित्यर्थः । पितरमिति । पितृसङ्गतिमित्यर्थः ॥ ५ ॥

सदाऽऽनृणमिमं रामं वयमिच्छामहे पितुः ।
अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः ॥ ६ ॥

---

* सप्तमश्लोको द्रष्टव्यः । † धर्मविक्रमौ— धर्मशूरौ–गो. ‡ वयं उभयोः संभाषां श्रुत्वा स्पृहयामहे—पुनःपुनः श्रोतुं वाञ्छामः-गो वस्तुतस्तु 'स्पृहेरीप्सितः' इति चतुर्थी। उभावपि वाञ्छामहे, इत्यर्थः. § संगताः—रहसि मिलिता इति वा । ‖ यद्यपि भवतो भावः शुद्धः ; तथाऽपि पितृसद्गतिं यदि वाञ्छसि, तदा रामवचनं कुर्विति भावः ।

[1] ऋषि–ङ. [2] स्थिताश्च–च. [3] महाभागौ–ङ. च. [4] सदाऽऽयौ राजपुत्रौ–च. [5] वत्सलौ–ङ. [6] उभयोः–ङ. [7] क्षिप्रं–च. [8] महाव्रत–ङ.

रामवचोग्राह्यत्वे हेतुमाहुः—सदाऽऽनृणमित्यादि। इमं रामं पितुस्सदाऽऽनृणं—अनृणस्य भावः—आनृणम्, सत्—समीचीनानुष्ठित—अप्रतिनिधितयाऽनुष्ठितं आनृणं—अनृणत्वं यस्य स तथा, तथैवेच्छामहे, तथाविधादेव कैकेय्या अनृणत्वात्। दशरथोऽद्य स्वर्गं गतः। आनृण्यस्य रामेणाकरणे, उपाधिकरणे च स्वर्गात् भ्रंश एवेति शेषः॥ ६॥

**एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः।**
**राजर्षयश्चैव तथा सर्वे स्वां स्वां गतिं गताः॥ ७॥**
**ह्लादितस्तेन वाक्येन [1]शुभेन शुभदर्शनः।**
**रामः संहृष्टवदनः तानृषीनभ्यपूजयत् *॥ ८॥**

तानभ्यपूजयत्—सम्यगनुगृहीतवन्तः अस्मदुपकाराय भगवन्तो देवा इत्युक्तवानित्यर्थः॥ ८॥

**†[2]त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया।**
**कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत्॥ ९॥**

त्रस्तगात्रस्त्विति। दैवतानां रामवनवासस्य पितुरानृण्यार्थं इष्टत्वे, मया मोहात् प्रत्युपवेशनान्तो रामोपरोधः कृत इति भीत्या कम्पितगात्रः, अत एव—सज्जमानयेत्यादि॥ ९॥

**‡राजधर्म[3]मथ प्रेक्ष्य [4]कालधर्मांश्च संततम्।**
**कर्तुमर्हसि, काकुत्स्थ! मम मातुश्च याचनाम्॥ १०॥**

---

* स्वपक्षसंरक्षणादिति भावः। † स्वमनोरथस्य सर्वथाऽसिद्धत्वात् शिथिलगात्रत्वं (पाठान्तरे), सज्जमानवाक्त्वं च—गो. ‡ राजधर्मं—राज्यपरिपालनधर्मं, कुल-(पाठान्तरे)धर्मानुसन्तति—ज्येष्ठाभिषेकरूपकुलधर्मस्यानुस्यूतिं—गो.

[1] शुशुभे-च. [2] त्रस्त-ङ. [3] मनु-ङ. [4] कुलधर्मानुसंततिं-ङ.

राजधर्मं—ज्येष्ठस्य राज्यमित्येवंरूपम् । अथ—अथवा । कालधर्मान् — कालधर्मकृतरक्षणशक्तितदभावलक्षणांश्च प्रेक्ष्य — विचार्य मम मातुः कौसल्यायाश्च याचनां वक्ष्यमाणलक्षणां कर्तुमर्हसि ॥ १० ॥

रक्षितुं सुमहद्राज्यं अहमेकस्तु नोत्सहे ।
पौरजानपदांश्चापि रक्तान् रञ्जयितुं तथा ॥ ११ ॥

अथकालस्वभावकृतां स्वस्य रक्षणाऽशक्तिं दर्शयति—रक्षितुमित्यादि । एकः—असहायः । तथा नोत्सह इत्यनुकर्षः ॥ ११ ॥

ज्ञातयश्चापि [1] योधाश्च मित्राणि सुहृदश्च नः ।
त्वामेव हि प्रतीक्षन्ते पर्जन्यमिव कर्षकाः ॥ १२ ॥
* इदं राज्यं, महाप्राज्ञ ! [2] स्थापय प्रतिपद्य हि ।
[3] शक्तिमानसि, काकुत्स्थ ! लोकस्य परिपालने ॥ १३ ॥

हि—यस्मात् त्वामेव प्रतीक्षन्ते, अत इदं राज्यं प्रतिपद्य—स्वीकृत्य स्वीयमेव राज्यं पश्चान्मया रक्षणीयत्वेन स्थापय । स्वीकारमात्रेण लोकस्य परिपालने शक्तिमानसि, रामस्य राज्यमित्येतावन्मात्रं लोकस्य परिपालनेऽपेक्षितम् । १२–१३ ॥

† इत्युक्त्वा न्यपतत् भ्रातुः पादयोः भरतस्तदा ।
भृशं संप्रार्थयामास [4] राममेव प्रियंवदः ॥ १४ ॥

इत्युक्त्वा—एवं प्रार्थनां कृत्वा ॥ १४ ॥

---

* अतः इदं राज्यं प्रतिपद्य—स्वीकृत्य कस्मिंश्चित्स्थापय । हि—यतः सः—त्वद्दत्तराज्यः लोकपालने शक्तिमान् भवति । 'शक्तिमानसि' इति पाठे अयं मदीय इति स्वीकारमात्रेण लोकस्य समस्तस्य पालने शक्तिमानसि-ति. † एवं स्वबुद्धिशक्त्युपन्यस्तोपायान्तरवैफल्यदर्शनेन गत्यन्तराभावात् भरतो राममेव प्रपद्यत इत्याह—इत्युक्त्वेति-गो.

[1] पौराश्च-ङ. [2] पालय-ङ. [3] शक्तिमान् स हि-च. [4] राघवेऽतिप्रियं वदन्-च.

*तमङ्के [1]भ्रातरं कृत्वा रामो वचनमब्रवीत् ।
श्यामं नलिनपत्राक्षं मत्तहंस[2]स्वरः स्वयम् ॥ १५ ॥

स्वयं अङ्के कृत्वेति योजना ॥ १५ ॥

आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या ।
भृशमुत्सहसे, तात! रक्षितुं पृथिवी[3]मपि ॥ १६ ॥

इयं बुद्धिरिति । मद्वनवासाविरुद्धा स्वीयतया स्थापनविषयिणी येयं बुद्धिरागता, इयमेव ते स्वजा—स्वाभाविकी, वैनयिकी—गुरुसेवया सिद्धा विनयमूला च । अथ या अशक्तिरुक्ता भरतेन स्वस्य, सा नास्त्येवेत्याह—भृशमित्यादि ॥ १६ ॥

†अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः ।
सर्वकार्याणि संमन्त्र्य महान्त्यपि च कारय ॥ १७ ॥

कारयेति । मदाज्ञयेति शेषः ॥ १७ ॥

लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत् ।
अतीयात् सागरो वेलां न प्रतिज्ञामहं पितुः ॥ १८ ॥

अथ मातुश्च याचनयाऽपि इदानीमागमनमशक्यमित्याह—लक्ष्मीरित्यादि ॥ १८ ॥

---

* स्वप्रपदनस्यामोघत्वात् तदानीं पूर्वकृतदेवसंघशरणागतिफलप्रदानप्रवृत्त्यनुकूलपितृवचनपरिपालनावरुद्धावसरतया तन्निर्वर्तनानन्तरं फलं प्रदित्सुः तावद्विलम्बसहनाय सान्त्वपूर्वमङ्कमारोपयति–**गो.** † अमात्यैः—प्रधानसचिवैः । मन्त्रिभिः—उपमन्त्रिभिः–**गो.** वस्तुतस्तु—अमात्याः—कर्मसचिवाः । मन्त्रिणः—धीसचिवाः ।

[1] भरतं–ङ.   [2] स्वरं–ङ.   [3] मिमाम्–ङ.

कामाद्वा, तात ! लोभाद्वा मात्रा *तुभ्यमिदं कृतम् ।
न तन्मनसि कर्तव्यं वर्तितव्यं च मातृवत् ॥ १९ ॥

कामात्—त्वद्गतस्नेहात् । लोभात्—राज्यलोभात् । तुभ्यं मात्रा—तव मात्रेति यावत् । सर्वथा इह चतुर्थ्यर्थे 'बहुलं छन्दसि' इति बहुलग्रहणात् षष्ठ्यर्थेऽपि चतुर्थी, यदिदं कृतं—त्वदनिष्टमेव कृत्यं कृतं, तन्मनसि न कर्तव्यं; दैवाधीनत्वात् । अतः मातृवदेव वर्तितव्यं, 'तस्यां शुश्रूषा नित्या पतितायामपि' इति शास्त्रात् ॥ १९ ॥

एवं ब्रुवाणं भरतः कौसल्यासुतमब्रवीत् ।
तेजसाऽऽदित्यसंकाशं †प्रतिपच्चन्द्रदर्शनम् ॥ २० ॥
‡अधिरोहार्य ! पादाभ्यां पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥ २१ ॥

हे आर्य ! हेमभूषिते पादुके अधिरोह । किं प्रयोजनमित्यपेक्षायामाह—एत इत्यादि । राजासनसन्निहिते इति शेषः ॥ २१ ॥

सोऽधिरुह्य नरव्याघ्रः पादुके [1]व्यवमुच्य च ।
प्रायच्छत् सुमहातेजाः भरताय महात्मने ॥ २२ ॥

स रामः पादुके अधिरुह्य व्यवमुच्य—अवरुह्य भरताय प्रायच्छत् । एवं भरतभद्रासनस्थापनीयपादुकयोः स्वप्रतिनिधिभूतयोः

---

* तुभ्यं—त्वदर्थम् । † पुण्यदर्शनत्वे दृष्टान्तोऽयम् । ‡ अथ मध्यस्थेन उभयोर्हितपरेण वसिष्ठेन नियुक्तो भरतः प्रार्थयते—अधिरोहेत्यादिना । अत एव भरद्वाजं प्रति भरतो वसिष्ठोक्तिमनुवदिष्यति—'एते प्रयच्छ संहृष्ट पादुके हेमभूषिते' (113-12) इति-गो. अनन्तरसर्गस्य 11-12 श्लोकौ, टिप्पणी च द्रष्टव्या ।

[1] व्यवरुह्य च-ङ.

आरोहतः राज्यानुमतेः भरतहस्ते स्थापनात् प्रतिनिधिपुरस्कारेण राज्यश्रेषवत् राज्यरक्षानियोगं च भरतस्य कृतवान् रामः। एवञ्च 'प्रतिपद्य स्थापय' इति चिरं भरतप्रार्थनं च साधितं भगवता ॥ २२ ॥

स पादुके संप्रणम्य रामं वचनमब्रवीत् ।
चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् ॥ २३ ॥
फलमूलाशनः, वीर! भवेयं, रघुनन्दन!
तवागमनमाकाङ्क्षन् वसन् वै नगराद्बहिः ॥ २४ ॥
तव पादुकयो[1]र्न्यस्य राज्यतन्त्रं, परंतप!
* चतुर्दशे हि संपूर्णे [2]वर्षेऽहनि, रघूत्तम! ॥ २५ ॥
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् † ।

राज्यतन्त्रं—राज्यव्यापारं तव पादुकयोर्न्यस्यंति । स्वबुद्ध्या विनिवेद्येति यावत् ॥ २५ ॥

तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम् ॥ २६ ॥
शत्रुघ्नं च परिष्वज्य [3]वचनं चेदमब्रवीत् ।
मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ॥ २७ ॥
मया च सीतया चैव शप्तोऽसि, [4]रघुनन्दन!
इत्युक्त्वाऽश्रुपरीताक्षः भ्रातरं विससर्ज ह ॥ २८ ॥

शप्तोऽसीति। रोषाकरणायेति शेषः ॥ २८ ॥

---

* एतदनन्तरं इतिकरणं द्रष्टव्यम्। इत्यब्रवीदित्यन्वयः। † चतुर्दशे वर्षे संपूर्णे सति अहनि— उत्तरवर्षादिमदिने-गो. अहनि—समनन्तरदिन एवेति यावत्।

[1] र्न्यस्तराज्यतन्त्रः—ङ. [2] वर्षे हि रघुनन्दन—ङ. [3] भरतं—ङ.
[4] रघुसत्तम—ङ.

स पादुके ते भरतः [1] स्वलङ्कृते
 महोज्ज्वले संपरिगृह्य [2] धर्मवित् ।
प्रदक्षिणं चैव चकार राघवं
 चकार चैवोत्तमनागमूर्धनि ॥ २९ ॥

उत्तमनागमूर्धनि—राजौपवाह्यगजमूर्धनि, तत्कालाभिषिक्तराजाधि-रोहणधिया परिषदः प्रख्यापनार्थमिति शेषः ॥ २९ ॥

अथानुपूर्व्यात् [3] प्रतिपूज्य तं जनं
 गुरूंश्च मन्त्रीन् प्रकृतीस्तथाऽनुजौ ।
व्यसर्जयद्राघववंशवर्धनः
 [4] स्थितः स्वधर्मे हिमवानिवाचलः ॥ ३० ॥

तं मातरो बाष्पगृहीतकण्ठ्यः
 दुःखेन नामन्त्रयितुं हि शेकुः ।
स चैव मातृरभिवाद्य सर्वाः
 * रुदन् कुटीं स्वां प्रविवेश रामः ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे द्वादशोत्तरशततमः सर्गः

---

पाल(३१)मानः सर्गः ॥ ३१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे द्वादशोत्तरशततमः सर्गः

---

* रुदन्—रुदन्निव—ति.

[1] प्रतापवान् —स्वलंकृते संपरिपूज्य—ङ. [2] राघवः—ङ. [3] प्रतिनन्द्य—ङ.

[4] स्थिरः—ङ.

## त्रयोदशोत्तरशततमः सर्गः

[ भरतप्रत्यागमनम् ]

ततः * शिरसि कृत्वा तु पादुके भरतस्तदा ।
आरुरोह रथं [1]हृष्टः शत्रुघ्नसहितस्तदा ॥ १ ॥

अथ पादुकादानेन कृतराज्यनियोगस्य भरतस्य अयोध्यां प्रति निवृत्तिः । तत इत्यादि ॥ १ ॥

वसिष्ठो वामदेवश्च जाबालिश्च दृढव्रतः ।
अग्रतः प्रययुः सर्वे मन्त्रिणो † मन्त्रपूजिताः ॥ २ ॥
मन्दाकिनीं नदीं रम्यां प्राङ्मुखास्ते ययुस्तदा ।
प्रदक्षिणं च कुर्वाणाः चित्रकूटं महागिरिम् ॥ ३ ॥

मन्दाकिनीं—चित्रकूटोत्तरपार्श्ववर्तिनीं, प्राप्येति शेषः । प्रदक्षिणं च कुर्वाणा इति । उत्तरपार्श्ववर्तिमन्दाकिनीं प्राप्य प्राङ्मुखतया गमनादेव सिद्धं प्रदक्षिणतया गमनम् ॥ ३ ॥

‡ पश्यन् [2]धातुसहस्राणि रम्याणि विविधानि च ।
प्रययौ तस्य पार्श्वेन ससैन्यो भरतस्तदा ॥ ४ ॥
पार्श्वेनेति । उत्तरपार्श्वेनेति यावत् ॥ ४ ॥

---

* पादुके शिरसि कृत्वा—शत्रुञ्जयमूर्ध्नि निक्षिप्ते पादुके सादरमादाय स्वमूर्ध्नावाधायेत्यर्थः । पादुके शिरसि कृत्वा हृष्टः—' यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ । शिरसा धारयिष्यामि न मे शान्तिर्भविष्यति ' इति स्वप्रथितानुगुणकिरीटधारणं कृत्वा हृष्टः–गो. यद्वा शिरसीत्यस्य गजशिरसीत्येवार्थः–ति. अत्र 115–12 श्लोको द्रष्टव्यः । † मन्त्रपूजिताः—अमोघकार्यविचारनैपुण्यात् पूजिताः–गो. ‡ अनेन आगमनकाल इव स्वराभावः सूच्यते ।

[1] शीघ्रं–ङ. [2] सानु–ङ.

*अदूराच्चित्रकूटस्य ददर्श भरतस्तदा ।
आश्रमं यत्र स मुनिः भरद्वाजः कृतालयः ॥ ५ ॥

स तमाश्रम[1]मागम्य भरद्वाजस्य [2]बुद्धिमान् ।
अवतीर्य रथात् पादौ ववन्दे [3]भरतस्तदा ॥ ६ ॥

ततो हृष्टो भरद्वाजः भरतं वाक्यमब्रवीत् ।
†अपि कृत्यं कृतं, तात! रामेण च [4]समागतम् ॥ ७ ॥

कृत्यं- कर्तव्यं कर्म कृतमपि? अपिः प्रश्ने। तदपि कृत्यमाह— रामेणेत्यादि ॥ ७ ॥

एवमुक्तः स तु [5]ततः भरद्वाजेन धीमता ।
प्रत्युवाच भरद्वाजं भरतो [6]भ्रातृवत्सलः ॥ ८ ॥

‡स याच्यमानो गुरुणा मया च दृढविक्रमः ।
राघवः परमप्रीतः वसिष्ठं वाक्यमब्रवीत् ॥ ९ ॥

परमप्रीत इति। पितुः सत्यपरिपालनविषय इति शेषः ॥ ९ ॥

पितुः प्रतिज्ञां तामेव पालयिष्यामि तत्त्वतः ।
चतुर्दश हि वर्षाणि या प्रतिज्ञा पितुर्मम ॥ १० ॥

---

* अदूरादिति। चित्रकूटसौन्दर्यदर्शनाकृष्टचित्ततया अदूरादिव भासमानम्—**गो.** यत्र —यमुनादक्षिणकूले, अत एव चित्रकूटस्यादूरादिति। अनेन यमुनादक्षिणतटेऽपि क्वचित् भरद्वाजाश्रम इति ज्ञायते। अत एवाग्रे भरद्वाजामन्त्रणोत्तरं 'ततस्ते यमुनां तीर्त्वा' इति वक्ष्यति—**ति.** उत्तरत्र 21 श्लोकटिप्पणी द्रष्टव्या। † किं रामेण समागतम्? भवदिष्टं च साधितम्? इति प्रश्नद्वयं वा। ‡ रामनिष्ठायाः न्याय्यत्वात् आज्ञातुमशक्त्या 'गुरुणा याच्यमानः' इति।

[1] मासाद्य—**ङ.** [2] वीर्यवान्—**च.** [3] कुलनन्दनः—**च.** [4] समागतः—**ङ.** [5] तदा—**ङ.** [6] धर्मवत्सलः—**च.**

एवमुक्तो महाप्राज्ञः वसिष्ठः प्रत्युवाच ह ।
वाक्यज्ञो वाक्यकुशलं राघवं वचनं महत् ॥ ११ ॥

एवमुक्त इति । रामेणेति शेषः ॥ ११ ॥

*एते प्रयच्छ संहृष्टः पादुके हेमभूषिते ।
अयोध्यायां, महाप्राज्ञ! योगक्षेम[1]करो भव ॥ १२ ॥

प्रयच्छेति । प्रतिनिधित्वेनेति शेषः । भवेति । एतत्प्रतिनिधिद्वारेति शेषः ॥ १२ ॥

एवमुक्तो वसिष्ठेन राघवः प्राङ्मुखः स्थितः ।
पादुके [2]हेमविकृते †मम राज्याय ते ददौ ॥ १३ ॥

हेम्ना विचित्रतया कृते तथा । ते इति स्त्रीलिङ्गद्वितीयाद्विवचनान्तम् । मम राज्यायेति । राज्यरक्षाशक्त्यनुग्रहार्थमित्यर्थः ॥

निवृत्तोऽहमनुज्ञातः रामेण सुमहात्मना ।
अयोध्यामेव गच्छामि गृहीत्वा पादुके शुभे ॥ १४ ॥

---

*'हेमभूषिते' इत्यनेन रामाय प्रीत्या समर्पयितुं अभिनवतया निर्माय नगराद् भरतेनानीते इति गम्यते-**गो.** वने सज्जीकृतायाः पादुकाया हेमभूषितत्वं न स्वरसमिति भावः । केचित्तु 'यदि त्वार्यं न शक्ष्यामि विनिवर्तयितुं वनाद्' (82–18) इत्याद्युक्त्या रामपुनरावृत्तिं सन्दिहानो भरतः उद्देशपूर्वकमेव हेमभूषिते पादुके सज्जीकृत्याऽऽददौ इत्यप्याहुः । परन्तु रामेण वनवासप्रस्थानकाले सहैवानीतत्वमेव स्वरसम् । 'एते प्रयच्छ' इति च तदैव स्वरसम् । 'अधिरोहार्य पादाभ्यां' इति च सभासमक्षं तादात्विकभावपूर्वकपादसंयोगप्रदर्शनाय। मुनिवृत्त्या वनं गच्छतः हेमभूषितपादुकाऽऽनयनं कथमिति चेत्, अङ्गुलीयकवद् (किष्कि. 44–12) संभवः द्रष्टव्यः । नगरादानीतत्वराजार्हत्वादिकमेव वा 'हेमभूषिते' इति सूचयति। †मम—मयि न्यासत्वेन मह्यम् ।

[1] करे तव–ङ. [2] अधिरुह्यैते–ङ.

एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ।
भरद्वाजः [1]शुभतरं मुनिर्वाक्यमुदाहरत् ॥ १५ ॥

नैतच्चित्रं, [2]नरव्याघ्र! शीलवृत्तविदां वरे ।
*यदार्यं त्वयि तिष्ठेत्तु [3]निम्ने वृष्टमिवोदकम् ॥ १६ ॥

नैतदित्येतच्छब्दार्थः—यदार्यमित्यादि । आर्यं-शोभनचरित्रम् । आर्यं त्वयि तिष्ठेदिति यत् तदेतत्तु वृष्टमुदकं निम्न इव न चित्रमित्यन्वयः ॥ १६ ॥

†[4]अनृणः स महाबाहुः पिता दशरथस्तव ।
यस्य त्वमीदृशः पुत्रः [5]धर्मात्मा धर्मवत्सलः ॥ १७ ॥

तमृषिं तु [6]महात्मानं उक्तवाक्यं कृताञ्जलिः ।
‡आमन्त्रयितुमारेभे चरणावुपगृह्य च ॥ १८ ॥

उक्तवाक्यमिति । उक्तरीत्येति शेषः । आमन्त्रयितुमारेभ इति । आमन्त्रणं कृतवानित्यर्थः ॥ १८ ॥

ततः प्रदक्षिणं कृत्वा भरद्वाजं §पुनः पुनः ।
भरतस्तु ययौ श्रीमान् अयोध्यां सह मन्त्रिभिः ॥ १९ ॥

---

* आर्यं—ज्येष्ठानुवर्तनरूपं श्रेयः-गो. † 'प्रजामनु प्रजायसे । तदु ते मर्त्यामृतम्' इति श्रुत्युक्तरीत्या सत्पुत्रलाभात् मृतोऽपि दशरथः 'अमृतः' (पाठान्तरं) इत्याह-गो. ‡ आमन्त्रयितुमारेभे—विनयेन आमन्त्रणोद्युक्त इव स्थित इत्यर्थः-गो. § अत्र पुनःपुनरित्यनेन एकं प्रदक्षिणं न कार्यमित्युक्तम् । प्रदक्षिणविशेषणेन प्रणामस्तु सकृदेवेत्युक्तं भवतीत्याचार्याः । केचित्तु एकहस्तप्रणामैकप्रदक्षिणयोरिव एकप्रणामस्यापि निषिद्धत्वात् पुनःपुनरितिविशेषणस्य अत्र आर्थिके वा पूर्वश्लोकोक्ताभिवादनबललब्धे वा प्रणामेऽप्यन्वयेन न कोऽपि विरोध इत्याहुः-गो.

[1] तु भरतं-ङ. [2] नरव्याघ्रे-च. [3] निम्ने सृष्ट-ङ. निम्नोत्सृष्ट-च.
[4] अमृत.-ङ. [5] धर्मज्ञो-ङ. [6] महाप्राज्ञं-च.

यानैश्च शकटैश्चैव हयैर्नागैश्च सा चमूः।
पुनर्निवृत्ता विस्तीर्णा भरतस्यानुयायिनी ॥ २० ॥
*ततस्ते यमुनां दिव्यां नदीं तीर्त्वोर्मिमालिनीम् ।
ददृशुस्तां पुनः सर्वे गङ्गां [1] शिवजलां नदीम् ॥ २१ ॥

यमुनां तीर्त्वा गङ्गां ददृशुरिति। यमुनां तीर्त्वा, तस्मिन्नेव दिवसे भरद्वाजं च दृष्ट्वा गङ्गां च ददृशुरित्यर्थः ॥ २१ ॥

[2] तां रम्यजलसंपूर्णां सन्तीर्य सहबान्धवः ।
शृङ्गिबेरपुरं रम्यं प्रविवेश ससैनिकः ॥ २२ ॥
शृङ्गिबेरपुरात् भूयः अयोध्यां संददर्श ह ।

भूय अयोध्यामिति छान्दसम् ॥ २२ ॥

अयोध्यां तु तदा दृष्ट्वा पित्रा भ्रात्रा विवर्जिताम् ॥ २३ ॥
भरतो दुःखसन्तप्तः सारथिं चेदमब्रवीत् ।
सारथे! पश्य विध्वस्ता अयोध्या न प्रकाशते ॥ २४ ॥
† निराकारा निरानन्दा दीना प्रतिहतस्वना ।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे त्रयोदशोत्तरशततमः सर्गः

---

विध्वस्ता—विध्वस्तशोभा। निराकारा—निरलङ्कारा। अवर-(२४ १/२)मानः सर्गः ॥ २४ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे त्रयोदशोत्तरशततमः सर्गः

---

* भरतमनुसृत्य सेनानुयानप्रकारमाह— तत इति। यमुनां तीर्त्वा गच्छन्तस्ते सर्वे गङ्गां ददृशुरिति सम्बन्धः-**गो.** यमुनां तीर्त्वा तस्मिन्नेव दिने भरद्वाजं दृष्ट्वा गङ्गां ददृशुरित्यर्थ इति कश्चित्। तत्तु पूर्वोक्तरीत्या असामञ्जस्यात् हेयम्-**ति.**
† निराकारा —निर्गतशोभनाकारा-**गो.**

[1] शुभजलां-**ङ.**　[2] रम्यां तां जल-**ङ.**

## चतुर्दशोत्तरशततमः सर्गः

### [ अयोध्याऽऽगमनम् ]

*स्निग्धगम्भीरघोषेण स्यन्दनेनोपयान् प्रभुः ।
अयोध्यां भरतः क्षिप्रं प्रविवेश महायशाः ॥ १ ॥

अथ मातृगणस्थापनार्थमयोध्याप्रवेशो भरतस्य । स्निग्धेत्यादि । उपयान्—उपगच्छन् ॥ १ ॥

[1]बिलालोलूकचरितां आलीननरवारणाम् ।
तिमिरा[2]लक्ष्यतां †कालीं अप्रकाशां निशामिव ॥ २ ॥

बिलालः–मार्जारः, डलभेदः । चरिता–सञ्चरिता । आलीननरवारणां–सन्तोषाभावत् स्वगृहनिलीनानां नराण वारणानि—कपाटाद्याच्छादनानि यस्यां सा तथा । तिमिरेण अलक्ष्यतां प्राप्तां, अत एव कालीं, अत एव अप्रकाशां—अनुज्वलां, अत एव विडालाद्युक्तपञ्चविशेषणवतीं निशामिव स्थितां अयोध्यां प्रविवेशेति पूर्वेणान्वयः अग्रिमाणामपि ॥ २ ॥

राहुशत्रोः प्रियां पत्नीं श्रिया प्रज्वलितप्रभाम् ।
‡ग्रहेणा[3]भ्युदितेनैकां रोहिणीमिव पीडिताम् ॥ ३ ॥

राहुः शत्रुः यस्य स तथा—चन्द्र इति यावत । श्रिया—दिव्यैश्वर्येण युक्ताम् । प्रज्वलिता प्रभा यस्याः सा तथा । अभ्युदितेन ग्रहेण—राहुणा पीडितां—पीडितभर्तृकाम्, अत एव एकां—असहायां रोहिणीमिव स्थिताम् ॥ ३ ॥

---

*पूर्वसर्गान्तिमश्लोकोक्तं विस्तरेण अत्र दर्शयति–गो. †कालीं—कृष्णपक्षसम्बन्धिनीम्–गो. ‡ग्रहेण पीडितां चन्द्रपत्नीं रोहिणीमिवेति यथाश्रुतो वाऽर्थः ।

[1] बिडालो–ङ. [2] ध्यावृतां–ङ. [3] भ्युत्थितेनैकां–ङ.

अल्पोष्णक्षुब्धसलिलां [1]घर्मतप्तविहङ्गमाम् ।
लिनमीनझषग्राहां कृशां गिरिनदीमिव ॥ ४ ॥

आतपवशात् अल्पोष्णं क्षुब्धं—कलुषं च सलिलं यस्याः सा तथा। मन्थनदण्डातिरिक्तेऽपि यस्मिन् कस्मिंश्चित् द्रवद्रव्यक्षोभसाधनमात्रे विवक्षितेऽपि क्षुब्ध इतीण्णिषेधनिपातनं भवत्येव। झषाः—मत्स्यविशेषाः ॥ ४ ॥

विधूमामिव हेमाभां [2]शिखामग्नेः [3]समुत्थिताम् ।
हविरभ्युक्षितां पश्चात् शिखां विप्रलयं गताम् ॥ ५ ॥

विधूमां, अत एव हेमाभां अग्नेः समुत्थितां शिखामिव पूर्वं रामस्थितिसमये जाज्वल्यमानतया स्थितां, पश्चात् रामविवासकाले हविरभ्युक्षितां—पयोहोमाभ्युक्षितां–सिक्तां, अत एव विप्रलयं गतां शिखामिव स्थिताम्। एवं पाङ्क्तः पाठः। अन्यस्तु 'अध्वराग्नेः समुत्थिताम्'* इति पठित्वा, महाध्वरान्तर्गततप्ताज्यस्थाग्नेः शिखामिव स्थितामिति व्याकरोति। तप्ताज्यस्थाग्नेस्तु शिखेति मिथ्या ॥ ५ ॥

विध्वस्तकवचां रुग्णगजवाजिरथध्वजाम् ।
हतप्रवीरामापन्नां चमूमिव महाहवे ॥ ६ ॥
[4]सफेनसस्वनां [5]भूत्वा सागरस्य समुत्थिताम् ।
†प्रशान्त[6]मरुतोद्धूतां जलोर्मिमिव निस्वनाम् ॥ ७ ॥

---

* गोविन्दराजीयेऽप्येवमेव पाठः। † प्रशान्ता च सा मारुतोद्धूता चेति विशेषणोभयपदकर्मधारयो वा। प्रशान्तामित्यत्रोपपादकं विशेषणान्तरं मारुतोद्धूतामिति।

[1] घर्मोत्तप्त–ङ. [2] अध्वराग्नेः–ङ. [3] समुच्छ्रिताम्–ङ. [4] सफेनां–ङ. झ. [5] काले–ङ. [6] मारुतोद्धूतां–ङ.

सफेनेत्यादि। प्रबलमारुतेन समुत्थितां, अत एव सफेनां सस्वनां च भूत्वा स्थितां, पश्चात् प्रशान्तमरुता उद्धूतां—ईषदल्पं कम्पितां, अत एव निस्वनां सागरस्य जलोर्मिमिव स्थिताम् ॥ ७ ॥

त्यक्तां यज्ञायुधैः सर्वैः अभिरूपैश्च याजकैः।
सुत्याकालेऽभिनिर्वृत्ते वेदिं गतरवामिव ॥ ८ ॥

'स्फ्यश्च कपालानि च' इत्यादिना उक्तानि दशयज्ञायुधानि। अभिरूपाः—प्रशस्ताः। सुत्याकालः—यागकालः, 'संज्ञायां....' इत्यादिना सुञः क्यपि तुक्, क्यबन्तस्य स्त्रियां प्रयोगः समज्यादेः। अभिनिर्वृत्ते—समाप्ते सति ॥ ८ ॥

गोष्ठमध्ये [1] स्थितां मत्तां * अचरन्तीं नवं तृणम्।
गोवृषेण परित्यक्तां गवां [2] पङ्क्तिमिवोत्सुकाम् ॥ ९ ॥

गोष्ठेत्यादि। गोष्ठमध्ये गोवृषेण—पुङ्गवेन, गोशब्दः धेनुबलीवर्दसामान्यवाची, तद्व्यावृत्त्यर्थो वृषशब्दः, तेन सह स्थितिकाले मत्तां, पश्चात् तेन परित्यक्तां, अत एव नवं तृणमपि अचरन्तीं, गवां—तरुणवत्सानां पङ्क्तिमिव स्थिताम् ॥ ९ ॥

प्रभाकराद्यैः सुस्निग्धैः प्रज्वलद्भिरिवोत्तमैः।
[3] वियुक्तां मणिभिः जात्यैः नवां मुक्तावलीमिव ॥ १० ॥

प्रभाकराद्यैः—प्रभाकरार्कादिपर्यायः स्फटिकः, स्फटिकादिभिः उच्यमानविशेषणकैः मणिभिः अन्तरालनवरत्नैः वियुक्ताम् ॥ १० ॥

---

* नवं तृणमपि अचरन्तीं—अभक्षयन्तीम्।

[1] स्थितामार्तां—ङ. झ. [2] पत्नी—ङ. [3] विमुक्तां—ङ.

*सहसा [1]चलितां स्थानात् महीं पुण्य[2]क्षयाद्गताम् ।
संहृतद्युति[3]विस्तारां तारामिव दिवश्च्युताम् ॥ ११ ॥

संहृतः द्युतिविस्तारः यस्यां सा तथा ॥ ११ ॥

†पुष्पनद्धां वसन्तान्ते मत्तभ्रमर[4]नादिताम् ।
[5]द्रुतं दावाग्निविप्लुष्टां [6]क्लान्तां वनलतामिव ॥ १२ ॥

द्रुतं–शीघ्रं ॥ १२ ॥

‡संमूढनिगमां [7]सर्वां संक्षिप्तविपणापणाम् ।
प्रच्छन्नशशिनक्षत्रां द्यामिवाम्बुधरैर्युताम् ॥ १३ ॥

संमूढाः–शोकाकुलितचित्ताः निगमाः–वणिजः यस्यां सा तथा । अत एव सङ्क्षिप्ताः विपणाः—आपणाः—पण्यवीथयः यस्यां सा तथा । सर्वां द्यामित्यन्वयः ॥ १३ ॥

क्षीणपानोत्तमै[8]र्भग्नैः शरावैरभिसंवृताम् ।
हतशौण्डा[9]मिव ध्वस्तां पानभूमिमसंस्कृताम् ॥ १४ ॥

क्षीणानि पानोत्तमानि—सुराश्रेष्ठानि येषां ते तथा, 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युडन्तः पानशब्दः । हताः शौण्डाः—मद्यपाः यस्यां सा तथा ॥ १४ ॥

---

* स्थानाच्चलितां, दिवः च्युतां, महीं गतां, संहृतद्युतिविस्तारां तारामिव, † वसन्तान्ते—ग्रीष्मे द्रुतदावाग्निविप्लुष्टां—वेगवद्दावाग्निना ईषद्दग्धां–गो. ‡ संमूढनिगमां—जनसञ्चाररहितमार्गां, 'निगमो निश्चये वेदे पुरे पथि वणिक्पथे' इति वैजयन्ती–गो.

[1] चरितां–च. [2] क्षयोद्गताम्–च. [3] विस्तीर्णां–ङ. [4] शालिनीम्–च. [5] द्रुत- च. [6] लतामिव च दुर्बलाम्–ङ. [7] स्तब्धां–ङ. [8] भिन्नैः–ङ. [9] मिवाकाशे–ङ.

* वृक्णभूमितलां निम्नां वृक्णपात्रैः समावृताम् ।
उपयुक्तोदकां [1]भग्नां प्रपां निपतितामिव ॥ १५ ॥

वृक्णेति । 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः' इति नत्वस्य सिद्धत्वात 'झलि' इति षत्वं न भवति, कुत्वं प्रसिद्धमेवेति कुत्वं भवति, ततः संप्रसारणादिना रूपम्—विध्वस्तभूतलामित्यर्थः । उपयुक्तोदकां-उच्छिष्टोदकवर्ताम् । भग्नां-भग्नस्तम्भाम् । अत एव-निपतिताम् ॥ १५ ॥

विपुलां विततां चैव †[2]मुक्तपाशां तरस्विनाम् ।
भूमौ बाणैर्विनिकृत्तां पतितां ज्यामिवायुधात् ॥ १६ ॥

विपुलां-विशालाम् । विततां—धनुष्यातताम् । मुक्तपाशां—धनुष्कोट्याः ज्याबन्धनार्थः पाशोऽस्ति, तद्रहिताम् । तरस्विनां बाणैः विनिकृत्तां-लूनामिति यावत् । अत एव आयुधात्-धनुषः पतिताम् ॥ १६ ॥

सहसा युद्धशौण्डेन हयारोहेण वाहिताम् ।
‡[3]निहतां प्रतिसैन्येन वडवामिव पातिताम्[4] ॥ १७ ॥

---

* वृक्णभूमितलां— विदीर्णभूमितलां-**गो.** † विततां—आरोपितामिति यावत् । युक्तपाशां (पाठान्तरं)—युक्तरज्जुं-**गो.** ‡ निक्षिप्तभाण्डां—अवरोपिताश्वभूषां उत्सृष्टां (पाठान्तरं) – वाहनानर्हां किशोरीं-**बालवडवाम्-गो.**

[1] भिन्नां-ङ. [2] युक्तपाशां-ङ. [3] निक्षिप्तभाण्डामुत्सृष्टां किशोरीमिव दुर्बलाम्-ङ.
[4] एतदनन्तरं—शुष्कतोयां महामत्स्यैः कूर्मैश्च बहुभिर्वृताम् । प्रभिन्नतटविस्तीर्णां वापीमिव हृतोत्पलाम् ॥ पुरुषस्याप्रहृष्टस्य प्रतिषिद्धानुलेपनाम् । सन्तप्तामिव शोकेन गात्रयष्टिमभूषणाम् ॥ प्रावृषि प्रविगाढायां प्रविष्टस्याभ्रमण्डलम् । प्रच्छन्नां नीलजीमूतैः भास्करस्य प्रभामिव ॥ इत्यधिकम्-ङ.

सहसा—बलात्कारेण वाहितां—प्रधाव्यमानामित्यन्वयः। युद्धे शौण्डः—समर्थस्तथा। प्रतिसैन्येन निहतां, अत एव पातिताम्। अत्र द्वित्राः श्लोकाः परेण प्रक्षिप्य व्याकृताः ॥ १७ ॥

भरतस्तु [1] ततस्तत्र श्रीमान् दशरथात्मजः।
वाहयन्तं रथश्रेष्ठं सारथिं वाक्यमब्रवीत् ॥ १८ ॥

ततस्तत्रेति। अयोध्यायामित्यर्थः ॥ १८ ॥

किं नु खल्वद्य गंभीरः मूर्छितो न निशाम्यते।
यथापुरमयोध्यायां गीतवादित्रनिस्वनः ॥ १९ ॥

न निशाम्यते खलु, अत्र किं कुर्म इति योजना। मूर्छितः—व्याप्तः ॥ १९ ॥

वारुणीमदगन्धश्च माल्यगन्धश्च मूर्छितः।
[2] चन्दनागरुगन्धश्च न प्रवाति समन्ततः ॥ २० ॥

मदकरः गन्धः—मदगन्धः। चन्दनागरुगन्धाः—चन्दनादिगन्धद्रव्याणीत्यर्थः ॥ २० ॥

* यानप्रवरघोषश्च सुस्निग्धहयनिस्वनः।
प्रमत्तगजनादश्च महांश्च रथनिस्वनः ॥ २१ ॥
नेदानीं श्रूयते पुर्यां अस्यां रामे विवासिते।
चन्दनागरुगन्धांश्च महार्हांश्च [3] नवस्रजः ॥ २२ ॥
गते रामे हि तरुणाः सन्तप्ता नोपभुञ्जते।
बहिर्यात्रां न गच्छन्ति चित्रमाल्यधरा जनाः ॥ २३ ॥

---

* सार्धश्लोकमेकं वाक्यम्।

[1] रथस्थः सन्—ङ. [2] धूपिता—ङ. [3] वन—च.

नोत्सवाः संप्रवर्तन्ते रामशोकार्दिते पुरे।
*[1] सह नूनं [2] मम भ्रात्रा पुरस्यास्य [3] गतैव भा ॥ २४ ॥

भा—प्रभा ॥ २४ ॥

न हि राजत्ययोध्येयं † सासारेवार्जुनी क्षपा।

सासारा—'धारा संपात आसारः', प्रवर्षधारेति यावत्। अर्जुनः—धवलः—शरत्काल इति यावत्। आर्जुनी—शारदीति यावत्। द्रमिडदेशे तस्याः सासारता प्रसिद्धा ॥ २४ ॥

कदा नु खलु मे भ्राता ‡ महोत्सव इवागतः ॥ २५ ॥
जनयिष्यत्ययोध्यायां हर्षं ग्रीष्म इवाम्बुदः।

ग्रीष्म इति। ग्रीष्मान्त इत्यर्थः ॥ २५ ॥

तरुणैश्चारुवेषैश्च नरैरुन्नतगामिभिः ॥ २६ ॥
संपतद्भिरयोध्यायां नाभिभान्ति महापथाः।

उन्नतगामिभिः—सन्तोषात् उद्धतगामिभिरित्यर्थः ॥ २६ ॥

§[4] इति ब्रुवन् सारथिना दुःखितो भरतस्तदा ॥ २७ ॥
अयोध्यां संप्रविश्यैव विवेश वसतिं पितुः।
तेन हीनां नरेन्द्रेण सिंहहीनां गुहामिव ॥ २८ ॥

---

* मम भ्रात्रा सह—इत्यन्वयः। † सासारा—वेगवद्वृष्टिसहिता। अर्जुनी—शुक्लाक्षसम्बन्धिनी-गो. ‡ महोत्सव इव, ग्रीष्मे अम्बुद इव च आगतः मे भ्राता—इत्यन्वयः। § सारथिना सह इति—एवं ब्रुवन्—इत्यन्वयः।

[1] सा हि—च. [2] सह भ्रात्रा—ङ. [3] द्युतिर्गता—ङ. [4] एवं बहुविधं जल्पन् विवेश वसतिं पितुः—इति, अर्धद्वयस्थाने एकमेवार्धं—ङ.

तदा तदन्तःपुरमुज्झितप्रभं
* सुरैरिवो[1]त्कृष्टमभास्करं दिनम् ।
निरीक्ष्य सर्वत्र † [2]विभक्तमात्मवान्
मुमोच बाष्पं भरतः सुदुःखितः ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे चतुर्दशोत्तरशततमः सर्गः

---

सुरैः उत्कृष्टं अभास्करं दिनमिति । रामादिभिस्त्यक्तायाः विनष्टराजकाया अयोध्याया अभूतोपमेयम्, न हि किल मण्डलस्य पातः समस्ति । घरा(२९)मानः सर्गः ॥ २९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे चतुर्दशोत्तरशततमः सर्गः

---

## पञ्चदशोत्तरशततमः सर्गः

[पादुकापट्टाभिषेकः]

ततो निक्षिप्य मातॄस्ताः अयोध्यायां दृढव्रतः ।
भरतः शोकसन्तप्तः गुरूनिदमथाब्रवीत् ॥ १ ॥

अथ भरतस्य तत्रैव मातृस्थापनानन्तरं नन्दिग्रामे राज्यपरिपालनम् । ततो निक्षिप्येत्यादि ॥ १ ॥

---

* सुरैः उत्सृष्टं अभास्करं दिनमिव उज्झितप्रभं अन्तःपुरं निरीक्ष्येति सम्बन्धः । विविक्तं—विजनम् । पुरा किल देवासुरयुद्धे असुरैः देवाः पराजिताः, स्वर्भानुना च भानुः पातितः । तदानीं कियान् कालो दिवारात्रिविभागरहितोऽभूत् । ततः परं ब्रह्मनियोगात् अत्रिः स्वतेजसा सप्तरात्रं सूर्याधिपत्यं चकारेति पौराणिकी कथा । अग्निः स्वतेजसेति पाठान्तरम्—**गो.** † विभक्तं—विगतसंस्कारं—**ति.**

[1] त्सृष्ट—ङ. [2] विविक्त-ङ.

नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयेऽत्र वः ।
तत्र दुःखमिदं सर्वं सहिष्ये * राघवं विना ॥ २ ॥

अत्र — अयोध्यायाम् । सर्वमिदं दुःखमिति । पितृवियोग-रामवियोगादिजदुःखमित्यर्थः ॥ २ ॥

गतश्चाहो दिवं राजा वनस्थः स गुरुर्मम ।
रामं प्रतीक्षे राज्याय स हि राजा महायशाः ॥ ३ ॥

तदेव प्रकाश्यते — गतश्चेत्यादि ॥ ३ ॥

एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः ।
अब्रुवन्मन्त्रिणः सर्वे वसिष्ठश्च पुरोहितः ॥ ४ ॥
†[1] सुभृशं श्लाघनीयं च यदुक्तं, भरत! त्वया ।
वचनं भ्रातृवात्सल्यात् अनुरूपं तवैव तत् ॥ ५ ॥
नित्यं ते बन्धुलुब्धस्य तिष्ठतो भ्रातृसौहृदे ।
मार्गमार्यं प्रपन्नस्य नानुमन्येत कः पुमान् ॥ ६ ॥

बन्धुलुब्धस्येति । बन्धुजनपरिपालनाधिकस्पृहावत इत्यर्थः । नानुमन्येतेति । त्वद्वचनमिति शेषः ॥ ६ ॥

मन्त्रिणां वचनं श्रुत्वा ‡ यथाऽभिलषितं प्रियम् ।
अब्रवीत् सारथिं वाक्यं रथो मे युज्यतामिति ॥ ७ ॥

यथाऽभिलषितं — स्वाभिलषितमनतिक्रम्य प्रवृत्तम् ॥ ७ ॥

---

*राघवं विना — रामवियोगेन यद्दुःखं तत् सहिष्य इत्यर्थः । † सदृशमिति पाठे कुलस्य सदृशमित्यर्थः — गो. ‡ यथाऽभिलषितं, अत एव प्रियम् अत एव प्रहृष्टवदनः (अनन्तरश्लोके) ।

[1] सदृशं — ङ.

प्रहृष्ट[1]वदनः सर्वाः मातॄः समभिभाष्य च ।
आरुरोह रथं [2]श्रीमान् शत्रुघ्नेन समन्वितः ॥८॥
आरुह्य तु रथं [3]क्षिप्रं शत्रुघ्नभरतावुभौ ।
ययतुः परमप्रीतौ वृतौ मन्त्रिपुरोहितैः ॥९॥
अग्रतो गुरवः सर्वे वसिष्ठप्रमुखाः द्विजाः ।
प्रययुः प्राङ्मुखाः सर्वे *[4]नन्दिग्रामो यतो भवेत् ॥१०॥

नन्दिग्रामो यतो भवेदिति । येन मार्गेण प्राप्तो भवेत् तेन प्रययुरित्यर्थः ॥ १० ॥

[5]बलं च तदनाहूतं गजाश्वरथसङ्कुलम् ।
प्रययौ भरते याते सर्वे च पुरवासिनः ॥११॥

तदनाहूतमिति । तेन भरतेनाकृताह्वानमपि स्नेहवशादिति शेषः ॥ ११ ॥

रथस्थः स तु धर्मात्मा भरतो भ्रातृवत्सलः ।
नन्दिग्रामं ययौ तूर्णं शिरस्यादाय पादुके ॥ १२ ॥
भरतस्तु ततः क्षिप्रं नन्दिग्रामं प्रविश्य सः ।
अवतीर्य रथात्तूर्णं गुरूनिदमभाषत ॥ १३ ॥
एतद्राज्यं मम भ्रात्रा दत्तं सन्न्यास[6]वत् स्वयम् ।
†योगक्षेमवहे[7] चेमे पादुके हेमभूषिते ॥ १४ ॥

---

* प्राङ्मुखगमने उद्देशमाह—नन्दिग्रामो यतो भवेदिति । † निक्षेपवत् दत्तस्य राज्यस्य रक्षणादिस्वातन्त्र्यमपि नास्तीति दर्शयति—योगक्षेमवहे चेति–गो.

[1] मनसः–ङ. [2] शीघ्रं–ङ. [3] शीघ्रं, दीप्तं–ङ. [4] नन्दिग्रामं समन्ततः–ङ. [5] तद्बलं च यथाभूतं–ङ. [6] मुत्तमम्–च. [7] तस्य–ङ.

एतदिति । एतदयोध्याराज्यं मम अत्रा स्वयं—साक्षात् सन्न्यासवत्—समीचीननिक्षेपवत् मयि दत्तं-स्थापितम् । कालान्तरे ग्रहणाय स्वविस्रम्भास्पदपुरुषे रक्षणार्थं स्थापितस्तु निक्षेपः । एवं निक्षेपभूतस्य रामराज्यस्य रक्षणमप्यचिन्त्यवैभवभगवत्पादुकाधीनमित्याह—योगेत्यादि । पादुके एव योगक्षेमवहे चेत्युवाचेति पूर्वेणान्वयः ॥ १४ ॥

**भरतः शिरसा कृत्वा[1] स न्यासं पादुके ततः ।**
**अब्रवीद्दुःखसंतप्तः सर्वं प्रकृतिमण्डलम् ॥ १५ ॥**

भरत इत्यादि । स भरतः पादुके न्यासं, वेदाः प्रमाणमितिवत्, पादुकात्मकन्यासं शिरसा कृत्वा—अङ्गीकृत्य, प्रणम्येति यावत् ॥ १५ ॥

***छत्रं धारयत क्षिप्रं आर्यपादाविमौ मतौ ।**
**आभ्यां राज्ये स्थितो धर्मः पादुकाभ्यां गुरोर्मम ॥१६॥**

इमौ आर्यपादाविति । विधेयाभिप्रायेण पादुकावाचिन इदंशब्दस्य पुल्लिङ्गनिर्देशः—'शैत्यं हि यत् सा प्रकृतिर्जलस्य' इतिवत् । पादशब्दः पूज्यवाची । आर्य इति रामः, परमपूज्यरामभावनास्पदभूते इमे पादुके इत्यर्थः । अत एवानयोरेव राज्येऽपेक्षितो धर्मः व्यवहारश्च स्थितः—प्रतिष्ठितः । अत आभ्यां पादुकाभ्यां क्षिप्रं छत्रं धारयत ॥ १६ ॥

---

* छत्रमित्येतत् चामरादीनामप्युपलक्षणम् । अत एव धारयतेति बहुवचनम् । पादुकाभ्यामिति हेतौ तृतीया- **गो.**

[1] सन्न्यासं-ङ.

[1]भ्रात्रा तु मयि सन्न्यासः निक्षिप्तः सौहृदादयम् *।
तमिमं पालयिष्यामि [2]राघवागमनं प्रति ॥ १७॥

अयमिति । देश इत्यर्थः ॥ १७ ॥

क्षिप्रं संयोजयित्वा तु राघवस्य पुनः [3]स्वयम् ।
चरणौ तौ तु रामस्य द्रक्ष्यामि सहपादुकौ ॥ १८ ॥

पुनः संयोजयित्वेति । मयि न्यासीकृतदेशमिति शेषः । पादुकाभ्यामाभ्यां सहितौ सहपादुकौ ॥ १८ ॥

ततो निक्षिप्त[4]भारोऽहं †राघवेण समागतः ।
‡निवेद्य गुरवे राज्यं भजिष्ये [5]गुरुवृत्तिताम् ॥ १९ ॥

गुरौ—पितरि कर्तव्या वृत्तिः यस्य स तथा, तस्य भावः, ताम् ॥ १९ ॥

राघवाय च सन्न्यासं दत्त्वेमे वरपादुके ।
राज्यं चेद[6]मयोध्यायां धूतपापो भवाम्यहम् ॥ २० ॥

सन्न्यासं—राज्यं, इमे पादुके चायोध्यायां दत्त्वा ॥ २० ॥

स वल्कलजटाधारी मुनिवेषधरः प्रभुः ।
नन्दिग्रामेऽ[7]वसद्वीरः ससैन्यो भरतस्तदा [8] ॥ २१ ॥

अवसत् धीरः—धीमान् ॥ २१ ॥

---

* अयं—सन्न्यासः—पादुकारूपप्रतिनिधिः-गो. अनन्तरश्लोको द्रष्टव्यः ।
† राघवेण समागतः—सङ्गतः-गो. ‡ गुरवे—रामाय राज्यं निवेद्य—प्रत्यर्प्य-गो.

[1] मम भ्राता हि ङ. [2] भ्रातुरागमनं-ङ. [3] स्वहम्-ङ. [4] पादोऽहं-ङ.
[5] गुरुवर्तिताम्-च. [6] मयोध्यां च-ङ. [7] वसद्वीरः-ङ. [8] एतदनन्तरं—रामागमनमाकाङ्क्षन् भरतो भ्रातृवत्सलः । भ्रातुर्वचनकारी च प्रतिज्ञापारगस्तथा । पादुके त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा—इत्यधिकम्-ङ.

[1] सवालव्यजनं छत्रं धारयामास स स्वयम् ।
भरतः शासनं सर्वं पादुकाभ्यां न्यवेदयत् ॥ २२ ॥
ततस्तु भरतः श्रीमान् अभिषिच्यार्यपादुके ।
तदधीनस्तदा राज्यं कारयामास सर्वदा ॥ २३ ॥
* तदा हि यत्कार्यमुपैति किञ्चित्
उपायनं चोपहृतं महार्हम् ।
स पादुकाभ्यां प्रथमं [2] निवेद्य
चकार पश्चात् भरतो यथावत् ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चदशोत्तरशततमः सर्गः

---

यथावदिति । विनियोगमिति शेषः । वीर(२४)मानः सर्गः ॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे पञ्चदशोत्तरशततमः सर्गः

---

## षोडशोत्तरशततमः सर्गः

### [रामेण खरवृत्तान्तश्रवणम्]

[3] प्रतियाते तु भरते वसन् राम[4]स्तदा वने ।
† लक्षयामास [5] चोद्वेग अथौत्सुक्यं तपस्विनाम् ॥ १ ॥

एवं भरतवृत्तान्तमुपवर्ण्य, कवि प्रकृतं रामवृत्तान्तं वर्णयति — प्रतियात इत्यादि । तपस्विनां उद्वेगं—भयं, अथ तद्वशात्

---

* तदा—पादुके पुरस्कृत्य राज्यपालनसमये—**गो.** † लक्षयामास । इङ्गिताकारादिभिरिति शेषः—**गो.**

[1] इदमर्धमधिकं—**ङ.** [2] निवेदयन्—**च.** [3] प्रतिप्रयाते—**ङ.** [4] स्तपोवने—**ङ.** [5] सोद्वेगं—**ङ.**

औत्सुक्यं—स्थानान्तरगमनौत्सुक्यं च लक्षयामास । अयं व्यापारो भरतनिवृत्त्यनन्तरमपि बहुकालात् परम् ॥ १ ॥

*ये तत्र चित्रकूटस्य पुरस्तात्तापसाश्रमे ।
राममाश्रित्य निरताः तानलक्षयदुत्सुकान् ॥ २ ॥

तदेव प्रदर्श्यते—ये तत्रेत्यादि । तापसाश्रम इति सन्धिरार्षः, पुरस्तात्—पूर्वं ये तापसाः चित्रकूटस्य सम्बन्धिनि तत्राश्रमे राममाश्रित्य निरताः—प्रतिष्ठिताः, तान् उत्सुकान् अलक्षयत्—देशान्तरगमनोत्सुकानित्यर्थः ॥ २ ॥

नयनैर्भ्रूकुटीभिश्च रामं [1]निर्दिश्य †शङ्किताः ।
अन्योन्यमुपजल्पन्तः शनैश्चक्रुर्मिथः कथाः ॥ ३ ॥

कथमलक्षयदित्यतः—नयनैरित्यादि । शनैः—उपांशु । कथाश्चक्रुरिति । अयं रामः इहाश्रमे सस्त्रीको वर्तते । राक्षसा एतत्पीडार्थमिह सञ्चरन्तः अस्मानपि बाधन्ते । अतोऽवश्यं हित्वेममाश्रमं गन्तव्यं—इत्येवमात्मिकाः कथाः ॥ ३ ॥

तेषामौत्सुक्यमालक्ष्य रामस्त्वात्मनि ‡[2]शङ्कत ।
कृताञ्जलिरुवाचेदं ऋषिं कुलपतिं ततः ॥ ४ ॥

---

* अत्रेदं बोध्यम्—चैत्रशुक्लदशम्यां पुष्ये रामवनप्रस्थानम् । ततः पूर्णिमायां अर्धरात्रे दशरथमरणम् । ततः पक्षेण भरतागमनमयोध्यायाम् । तत और्ध्वदैहिकेन पक्षो गतः । एवं वैशाखे गते ज्येष्ठे भरतस्य चित्रकूटं प्रति प्रस्थानम् । अग्रे वर्षाकाले सन्निहिते सति कार्तिक्यन्तं चित्रकूटे वासः । तदनन्तरं तापसौत्सुक्यलक्षणम् । न तु भरतनिवृत्त्यनन्तरमेवैतत्—इति **तिलके** उक्तं, प्रदर्शितश्लोकार्थे प्रमाणं पाद्मपुराणम् ॥

† शङ्किताः—रामः किं मंस्यत इति शङ्किताः—**ति.** ‡ शङ्कत—अशङ्कत—**ति.**

[1] उद्दिश्य—ङ. [2] शङ्कितः—ङ.

आत्मनि शङ्कतेति। तेषां एतदाश्रमत्यागकारणं आत्मनिष्ठो दोषः ? अन्यो वा ? इति शङ्कते स्म। अत एव कृताञ्जलिस्सन् कुलपतिं—आश्रमपतिं ऋषिं उवाच। 'कुलमन्वयसङ्घातगृहो-त्पत्त्याश्रमेषु च' ॥ ४ ॥

न कच्चित्, भगवन्! किञ्चित् पूर्ववृत्तमिदं मयि।
दृश्यते विकृतं, येन विक्रियन्ते तपस्विनः ॥ ५ ॥

न कच्चिदित्यादि। येन तपस्विनो विक्रियन्ते, तद्विकृतिसाधनं मया पूर्ववृत्तं—पूर्वमनुष्ठितं किञ्चित् विकृतं—अपराधः मयि तापसैः न दृश्यते कच्चित् ॥ ५ ॥

प्रमादाच्चरितं किञ्चित् कच्चिन्नावरजस्य मे।
[1]लक्ष्मणस्यर्षिभिर्दृष्टं * [2]नानुरूपमिवात्मनः ॥ ६ ॥

आत्मन इव—ममेव लक्ष्मणस्य च नानुरूपं -न समान्यतः अयुक्ताचरणं—ऋषिभिः न दृष्टं कच्चित् ॥ ६ ॥

कच्चिच्छुश्रूषमाणा वः शुश्रूषणपरा मयि †।
[3]प्रमदाभ्युचितां वृत्तिं सीताऽयुक्ता न वर्तते ॥ ७ ॥

वः शुश्रूषमाणा— अर्घ्यपाद्यादिना सेवमाना। न वर्तत इति। युष्मास्विति शेषः ॥ ७ ॥

---

* आत्मनः अनुरूपं-- स्वबाह्याद्यनुगुणमिति यावत्। † मयि शुश्रूषणपरेत्यादि। पतिशुश्रूषणमेव प्रमदायाः प्रथमो धर्म इति भावनया मच्छुश्रूषणात्यासक्त्या भवतां शुश्रूषणे कदाचित् किञ्चित् प्रच्युता वा सीता—इति भावः।

[1] लक्ष्मणस्यापि निर्दिष्टं—ङ. [2] नानुकूलं महात्मनः—ङ. [3] प्रमादा—ङ.

**अथर्षिर्जरयावृद्धः * तपसा च जरां गतः ।**
**वेपमान इवोवाच रामं भूतदया[1]परः ॥ ८ ॥**

तपसा चेति । वृद्ध इत्यनुकर्षः ॥ ८ ॥

**कुतः कल्याण[2]सत्त्वायाः कल्याणाभिरतेः सदा ।**
**[3]स्खलनं, तात ! वैदेह्याः तपस्विषु विशेषतः ॥ ९ ॥**
**† त्वन्निमित्तमिदं [4]तावत् तापसान् प्रतिवर्तते ।**
**रक्षोभ्यस्तेन संविग्नाः कथयन्ति मिथः कथाः ॥ १० ॥**

त्वन्निमित्तं रक्षोभ्यो भयमित्यन्वयः ॥ १० ॥

**रावणावरजः कश्चित् खरो नामेह राक्षसः ।**
**‡ उत्पाट्य तापसान् सर्वान् जनस्थाननिवासिनः ॥ ११ ॥**
**धृष्टश्च § जितकाशी च नृशंसः पुरुषादकः ।**
**अवलिप्तश्च पापश्च त्वां च, तात ! न मृष्यते ॥ १२ ॥**

किं तद्रक्षः ? कुतश्च मन्निमित्तं ततो भयम् ? इत्यतः तत् प्रतिपादयति—रावणावरज इत्यादि । जितकाशी—जितभयः । तापसान् उत्पाट्य—पीडयित्वा त्वां च न मृष्यते—पीडयितुमिच्छतीत्यर्थः ॥ ११-१२ ॥

---

* तपसा च जरां गतः—तपसाऽपि वृद्ध इति वा अर्थः । † त्वन्निमित्तं—त्वत्तो हेतोः रक्षोभ्यः समागतं इदं—वक्ष्यमाणं उपद्रवजातं तापसान् प्रति वर्तते–**गो.** ‡ उत्पाट्य—उत्खाय, निष्कास्येति यावत्–**गो.** § जितेन—जयेन काशते—प्रकाशत इति जितकाशी । यद्वा-जिताहवः, 'जितकाशी जिताहवः' इति हलायुधः–**गो.**

[1] परम्–च　[2] वृत्तायाः–ङ.　[3] चलनं–च.　[4] तात–ङ.

त्वं यदाप्रभृति ह्यस्मिन् आश्रमे, तात! वर्तसे ।
तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥ १३ ॥

विप्रकुर्वन्ति—विरोधं—अनिष्टं कुर्वन्ति । एतदाश्रमस्थानमिति शेषः ॥ १३ ॥

दर्शयन्ति हि बीभत्सैः क्रूरैर्भीषणकैरपि ।
नानारूपैः विरूपैश्च [1] रूपैरसुखदर्शनैः ॥ १४ ॥

कोऽसौ विप्रकार इत्यतः तत् प्रदर्शयति—दर्शयन्तीत्यादि । बीभत्सैः—जुगुप्सितैः वेषैः क्रूरैः—दुर्दर्शैः भीषणैः—भयंकरैः एवमादिनानारूपैः—नानाप्रकारैः विरूपैः—विपरीतवेषैः स्वात्मानो दर्शयन्तीत्यन्वयः ॥ १४ ॥

*अप्रशस्तैरशुचिभिः [2] संप्रयुज्य च तापसान् ।
प्रघ्नन्ति चापरान् क्षिप्रं [3] अनार्याः पुरतः [4] स्थितान् ॥

अप्रशस्तैः—पापावहैः अशुचिभिश्चापि तापसान् संप्रयुज्य विप्रकुर्वन्ति । अपरान्—अतिमृदून् तापसान् प्रघ्नन्ति—प्रहरन्त्यपि ॥

तेषु तेष्वाश्रमस्थानेष्व†[5]बुध्यन्नवलीय च ।
रमन्ते तापसांस्तत्र नाशयन्तो विचेतसः ॥ १६ ॥

अबुध्यन् निद्रां अवलीय—निर्भयं संश्लिष्य च नाशयन्तः, तथा विचेतसः—व्याक्षिप्तानपरांश्च तापसान् तत्र तत्र नाशयन्तः रमन्ते ॥

---

* अप्रशस्तैः—अशुभैः, अशुचिभिः—अशुचिद्रव्यैः—गो· † अबुद्धं यथा तथा निलीयेत्यर्थः (पाठान्तरे) ।

[1] रूपैर्विकृतदर्शनैः—ङ. [2] संप्रसन्ना—ङ. [3] मायया—ङ. [4] स्थिताः—ङ.
[5] बुद्धमव—ङ.

[1] अवक्षिपन्ति स्रुग्भाण्डान् अग्नीन् सिञ्चन्ति वारिणा ।
कलशांश्च प्रमृद्नन्ति हवने समुपस्थिते ॥ १७ ॥

अवक्षिपन्ति—अवस्कन्दयन्ति । स्रुग्भाण्डान्—स्रुङ्मुखयज्ञसंभारान् । कलशान्—उदकपात्राणि । हवने—यागे ॥ १७ ॥

तैर्दुरात्मभि[2]राविष्टान् आश्रमान् [3]प्रजिघांसवः ।
गमनायान्यदेशस्य चोदयन्त्यृषयो[4]ऽद्य माम् ॥ १८ ॥

प्रजिघांसव इति । हन्तिरिह गत्यर्थः—'अज्झनगमां सनि' इति दीर्घः, 'अभ्यासाच्च' इति कुत्वम्, परित्यक्तुमिच्छव इत्यर्थः । चोदयन्तीति । मामिति शेषः ॥ १८ ॥

तत्पुरा, राम! *शारीरीं उपहिंसां तपस्विषु ।
दर्शयन्ति हि दुष्टास्ते त्यक्ष्याम इममाश्रमम् ॥ १९ ॥

शारीरीं—शरीरसम्बन्धिनीं उपहिंसां तपस्विषु दर्शयन्ति पुरा, 'यावत्पुरा' इति लट्—दर्शयिष्यन्तीति यत् ; ततः—तस्मादेव इमं आश्रमं त्यक्ष्यामः ॥ १९ ॥

बहुमूलफलं चित्रं अविदूरादितो [5]वनम् ।
†[6]अश्वस्याश्रममेवाहं [7]श्रयिष्ये सगणः पुनः ॥ २० ॥

---

* एतावता विप्रकरणमात्रं, क्रमशः विनाशायापि यावन्न प्रवर्तेरन्, तावदेवान्यत्र गच्छाम इति भावः । शरीरनाशमपि अलं मन्यमान आह—उपहिंसामिति ।

† 'पुराणाश्रमं' इति पाठे—चित्रकूटे रामनिवासं ज्ञात्वाऽत्रागता एते इति ज्ञायते ।

[1] अवक्षिपन्त्यसृग्भाण्डान्–ङ. [2] रामृष्टान्–ङ. [3] प्रजिहासवः–ङ.
[4] मिथः–ङ. [5] ऽपरम्–ङ. [6] कण्वस्याश्रम, पुराणाश्रम–ङ. [7] गमिष्ये–ङ.

अश्वस्य—न विद्यते श्वः-सञ्चयः यस्य स तथा। एतेन रक्षोभयनिवारणक्षमं तपो दिव्यं—लक्ष्यते—एवं च अश्वाख्यस्य महर्षेरित्यर्थः ॥ २० ॥

खरस्त्वय्यपि चायुक्तं पुरा, [1]राम! प्रवर्तते ।
सहास्माभिरितो गच्छ यदि बुद्धिः प्रवर्तते ॥ २१ ॥

त्वय्यपीति । एतावत्कालमस्मद्रक्षकत्वापराधादिति शेषः । प्रवर्तते पुरेति—प्रवर्तयिष्यतीति यावत् ॥ २१ ॥

सकलत्रस्य *सन्देहः [2]नित्यं युक्तस्य, राघव!
समर्थस्यापि [3]सहितः वासो दुःख इहाद्य ते ॥ २२ ॥

सकलत्रस्येति । नित्यं युक्तस्य—सदा सावधानस्य रक्षोनिग्रहे समर्थस्यापि सतः तव च इहाश्रमे सन्देहः-मत्वर्थीयान्तः-रक्षःपीडासन्देहवान् वासः दुःखो हि ॥ २२ ॥

इत्युक्तवन्तं [4]रामस्तं राजपुत्रस्तपस्विनम् ।
न शशाकोत्तरैः वाक्यैः [5]अवबद्धुं [6]समुत्सुकम् ॥ २३ ॥

उत्तरैर्वाक्यैरवबद्धुमिति । मया निवार्यते रक्षः पीडा, तस्मात् स्थातव्यमिति वचनैः निवारयितुं न शशाक । दैवादपाये कस्यचिद्दोषः ब्रह्महत्यासदृशपापप्रसङ्गात् † ॥ २३ ॥

---

* संदेहः -सन्देहजनकः । यत्तस्य—सन्नद्धस्य (पाठान्तरं)-**गो.** † पूर्णमानुषभावाश्रयणाद्वा ।

[1] तात-ङ. [2] नित्यं यत्तस्य-ङ. [3] वसतः-ङ. [4] बहुधा-ङ.
[5] अवरोद्धुं-ङ. [6] समुत्सुकः-ङ.

अभिनन्द्य [1]समापृच्छय समाधाय च राघवम् ।
स जगामाश्रमं त्यक्त्वा कुलैः कुलपतिः सह ॥ २४ ॥

अभिनन्द्य–उपश्लोक्य। ऋषिगणवियोगखिन्नं राघवं समाधाय–समाश्वास्य ॥ २४ ॥

रामः संसाध्य ऋषिगणमनुगमनात्
　देशात्तस्मात् कुलपतिमभिवाद्य ऋषिम् ।
सम्यक् प्रीतैस्तै[2]रनुमत [3]उपदिष्टार्थः
　पुण्यं वासाय स्वनिलयमुपसंपेदे ॥ २५ ॥

रामः तस्मात् देशात् अपरं देशं यान्तं ऋषिगणं तु अनुगमनात्–अनुव्रजनेन संसाध्य–प्रस्थाप्य कुलपतिं ऋषिं च अभिवाद्य, ऋषिमिति 'इकोऽसवर्णे' इति प्रकृतिभावः, सम्यक्प्रीतैः तैः अनुमतः–अनुज्ञातः (तं)–उपदिष्टार्थः—उपदिष्टरक्षःपीडासन्देहवृत्तकं पुण्यं–स्वनिलयनं वासायोपसंपेदे। एवमयं श्लोकः चतुर्दशाक्षरचतुष्पादात्मकः। अतः उपसंपेद इति उपसर्गद्वयम् ॥ २५ ॥

[4]आश्रममृषिविरहितं प्रभुः
　*क्षणमपि न जहौ स राघवः ।
राघवं हि सततमनुगताः
　तापसाश्चर्षिचरिते धृतगुणाः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे षोडशोत्तरशततमः सर्गः

---

* मुनिशून्यतया तदेव त्याज्यमप्याश्रमं मुनिविषयप्रेम्णा क्षणं न त्यक्तवानित्यर्थः। आर्षचरितधृतगुणाः—रामस्य आर्षचरित्रेण संचितगुणाः हि—यस्मात् कारणात् तापसाः राममनुगताः, तस्मात्—तत्प्रेम्णा क्षणं न जहाविति। वृत्तं तु श्लोकद्वयस्यापि–चिन्त्यम्–गो. क्षणं न विजहौ–किञ्चित्कालं तत्रैव स्थितवानिति भावः।

[1] समाश्वास्य–ङ.　[2] रनुगमने–ङ.　[3] उपदिष्टार्थः–ङ.　[4] आश्रमं ऋषिगणरहितं–ङ

आश्रममित्यादि । प्रभुः—असहायतयाऽवस्थानसमर्थो राघवः ऋषिविरहितमाश्रमं तु क्षणमपि न जहौ सीतारक्षणार्थम् । ऋषिचरिते—ऋषितुल्यवृत्ते राघवे धृतगुणाः—निश्चितनिजरक्षासामर्थ्यगुणाः केचन तापसाः तं राममेव सततमनुगताः—आश्रितवन्तः, नाश्रमान्तरं जग्मुरित्यर्थः । तरु(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे षोडशोत्तरशततमः सर्गः

---

## सप्तदशोत्तरशततमः सर्गः

[ अत्र्याश्रमगमनम् ]

राघवस्त्वपयातेषु [1] सर्वेष्वनुविचिन्तयन् ।
न तत्रारोचयद्वासं कारणैर्बहुभिस्तदा ॥ १ ॥

अथ नानोपाधिविमर्शनेन परित्यक्तचित्रकूटाश्रमस्य रामस्य अत्र्याश्रमे अनसूयासमागमः । राघव इत्यादि । अनुविचिन्तयन्—वक्ष्यमाणमुपाधिमिति शेषः ॥ १ ॥

इह मे भरतो दृष्टः मातरश्च सनागराः ।
[2] तयोश्च स्मृतिरन्वेति * तान्नित्यमनुशोचतः ॥ २ ॥

तस्यैव प्रदर्शनं—इह म इत्यादि । मयेति यावत् । तयोरिति । मात्रोरिति यावत् ॥ २ ॥

† स्कन्धावारनिवेशेन तेन तस्य महात्मनः ।
हयहस्तिकरीषैश्च उपमर्दः कृतो भृशम् ॥ ३ ॥

राजधानीतो निर्गता सेना स्कन्धावारः, तस्य निवेशः तथा ॥ ३ ॥

---

* 'पुमांस्त्रिया' इति समासः । † तस्य महात्मनः—भरतस्य तेन स्कन्धावारनिवेशेनेत्यन्वयः । स्कन्धावारः—सेनासमूहः—रा.

[1] तपस्विषु—ङ. [2] सा च मे—ङ.

[1]तस्मादन्यत्र [2]गच्छामः इति संचिन्त्य राघवः ।
प्रातिष्ठत स वैदेह्या लक्ष्मणेन च [3]सङ्गतः ॥ ४ ॥
सोऽत्रेराश्रममासाद्य तं ववन्दे महायशाः ।
तं चापि भगवानत्रिः पुत्रवत् प्रत्यपद्यत ॥ ५ ॥

प्रत्यपद्यतेति । राममिति शेषः ॥ ५ ॥

स्वयमातिथ्यमादिश्य [4]सर्वमस्य सुसत्कृतम् ।
सौमित्रिं च [5]महाभागं सीतां च समसान्त्वयत् ॥ ६ ॥

स्वयमिति । वृद्धां पत्नीमकुशयन् आतिथ्यं आदिश्य–विज्ञाप्य तत्सर्वमातिथ्यं सुसत्कृतं कृत्वा असान्त्वयत्—अप्रीणयत् ॥ ६ ॥

पत्नीं च *[6]तमनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम् ।
सान्त्वयामास धर्मज्ञः सर्वभूतहिते रतः ॥ ७ ॥

तदनन्तरं अनुप्राप्तां वृद्धां वाचा सत्कृतां आमन्त्र्य – संबोध्य वैदेह्याः पुत्रीवत्परिग्रहार्थं सान्त्वयामास ॥ ७ ॥

अनसूयां महाभागां तापसीं धर्मचारिणीम् ।
प्रतिगृह्णीष्व वैदेहीं अब्रवीदृषिसत्तमः ॥ ८ ॥

अनन्तरं तां अनसूयां, उच्यमानलक्षणां वैदेहीं प्रतिगृह्णीष्वेत्यब्रवीत् ॥ ८ ॥

---

* तं—अत्रिं अनु—अनुसृत्य ।

[1] अस्मा—ङ.  [2] गच्छामि—ङ.  [3] संवृत:—ङ.  [4] सर्वमर्घ्यं—ङ.
[5] महाभागां-ङ.  [6] समनु—ङ.

रामाय चाचचक्षे तां तापसीं धर्मचारिणीम् ।
दशवर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ॥ ९ ॥
यया मूलफले सृष्टे जाह्नवी च प्रवर्तिता ।
[1]मन्त्रेण तपसा युक्ता नियमैश्चाप्यलंकृता ॥ १० ॥
दशवर्षसहस्राणि यया तप्तं महत्तपः ।
अनसूया[2]व्रतैः, तात! प्रत्यूहाश्च [3]निबर्हिताः ॥ ११ ॥
*देवकार्यनिमित्तं च यया संत्वरमाणया ।
दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ! ॥ १२ ॥
तामिमां सर्वभूतानां नमस्कार्यां [4]तपस्विनीम् ।
अभिगच्छतु वैदेही वृद्धामक्रोधनां [5]सदा ॥ १३ ॥

तामाचचक्ष इति । तद्वैभवमाख्यातवानित्यर्थः । तदेव प्रदर्श्यते—दशेत्यादि । मूलफले सृष्टे इति । ऋषीणामुपजीवनायेति शेषः । जह्नवी—गङ्गा च तेषां स्नानाद्यर्थं आवाहिता । मन्त्रेण—मन्त्रसिद्धिवैभवेन । अनसूयाया व्रतानि तथा । प्रत्यूहा इति । ऋषीणां

---

*अत्रेयं पौराणिकी कथा—अनसूयायाः काचन सखी पतिव्रताऽभूत् । सा च, काञ्चन वेश्यां दृष्ट्वा तत्सङ्गं कामयमानं स्वपतिं स्वस्कन्धे समारोप्य तद्गृहं गन्तुमारेभे । तत्समये माण्डव्यर्षिः चोरबुध्या राजभटैः शूले समारोपितः । स च मार्गे पतिव्रतायाः पत्या पदा स्पृष्टः अतीव व्यथितोऽभूत् । तं च दशाहाभ्यन्तरे सूर्योदये सति म्रियस्वेति शशाप माण्डव्यः । ततः तद्भार्या सूर्योदयानन्तरं किल मद्भर्तुः मरणं, स एव मा भूदित्यूचे । ततश्च तत्प्रभावात् सूर्येऽनुदिते यज्ञादिलोपे प्राप्ते देवा ब्रह्माणमासाद्य प्रार्थयामासुः । स चावादीत्—तत्सखीमनसूयां प्रार्थयत, सा भवत्कार्यं करोतीति । ततस्तैः प्रार्थिता सती अनसूया दशरात्रावधिकालं एकरात्रित्वेन कृत्वा सूर्योदयानन्तरं तद्भर्तुर्मरणे सति पुनरुज्जीवयिष्याम इति वरं ददतेत्युक्त्वा तैर्वरं गृहीत्वा देवकार्यं कृतवतीति—ति.

[1]उग्रेण—ङ. [2]व्रतस्नाता—ङ. [3]निवर्तिताः. [4]यशस्विनीम्—ङ. [5]सतीम्—ङ.

तप प्रत्यूहा इत्यर्थः। न केवलं ऋष्यनुग्रहः, अपि तु देवानुग्रहोऽपीत्याह—देवेत्यादि। रात्रिरिति। 'प्रातर्विधवा भव' इति माण्डव्य-ऋषिशप्तनालायिन्या 'मा प्रातर्भूयात्' इति शापतो व्युष्टि(रिष्ट)निहता रात्रिः देवप्रार्थनया नालायिनीसख्याऽनयाऽनसूयया दशरात्रं कृतं—दशरात्रमात्रं संकुचितं वैरव्यं सख्याः परिहृतम्। सप्तम्यर्थे द्वितीया। एवं महाप्रभावा इयं हे अनघ! ते—त्वया मातेव प्रतिपत्तव्या। अभिगच्छतु—मातृबुद्ध्या नतु ॥ ९–१३ ॥

एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः।
सीतामालोक्य धर्मज्ञां इदं वचनमब्रवीत् ॥ १४ ॥
राजपुत्रि! श्रुतं त्वेतत् मुनेरस्य समीरितम्।
श्रेयोऽर्थमात्मनः शीघ्रं अभिगच्छ तपस्विनीम् ॥ १५ ॥

हे राजपुत्रि! अस्य मुनेः समीरितं—वचनं च यस्मात् श्रुतं, अतः—श्रेयोऽर्थमित्यादि ॥ १५ ॥

*अनसूयेति या लोके कर्मभिः ख्यातिमागता।
[1]तां शीघ्रमभिगच्छ त्वं अभिगम्यां तपस्विनीम् ॥ १६ ॥

अनसूयेति। अन्वर्थनाम्नीति यावत् ॥ १६ ॥

सीता त्वेतद्वचः श्रुत्वा राघवस्य [2]यशस्विनी।
तामत्रिपत्नीं धर्मज्ञां अभिचक्राम मैथिली ॥ १७ ॥

राघवस्य वचः श्रुत्वेत्यन्वयः ॥ १७ ॥

---

* यद्वा—कर्मभिः पातिव्रत्यवर्धकैः अन्याभिः कर्तुमशक्यैः पतिरक्षणादिकर्मभिः अनसूया-अस्पर्धनीयमाहात्म्ययुक्तत्वात् असूयितुमशक्या—गो.

[1] इदमर्धं कुण्डलितं—ङ. [2] हितैषिणः, हितैषिणी—ङ.

शिथिलां *वलितां वृद्धां जरापाण्डरमूर्धजाम् ।
सततं वेपमानाङ्गीं प्रवाते कदलीं [1]यथा ॥ १८ ॥
[2]तां तु सीता महाभागां अनसूयां पतिव्रताम् ।
अभ्यवादयदव्यग्रा [3]स्वनाम समुदाहरत् ॥ १९ ॥

शिथिलां — शिथिलसन्धिबन्धां वलितां — सञ्जातवलीमतीं वृद्धां — इदं सर्वोपपादकं विशेषणम्; सततं वेपमानाङ्गीं, अत एव प्रवाते कदलीं यथा—इव स्थिताम् । अव्यग्रा- अव्याक्षिप्ता । स्वनाम समुदाहरदिति । अभिवादनाङ्गत्वेनेति शेषः ॥ १८-१९ ॥

अभिवाद्य च वैदेही तापसीं तां दमान्विताम् ।
बद्धाञ्जलिपुटा हृष्टा पर्यपृच्छदनामयम् ॥ २० ॥
ततः सीतां महाभागां दृष्ट्वा तां धर्मचारिणीम् ।
सान्त्वयन्त्यब्रवीत् [4]हृष्टा दिष्ट्या धर्ममवेक्षसे ॥ २१ ॥

तां सीतां धर्मचारिणीं दृष्ट्वा हृष्टा । दिष्ट्या—दैवयोगेन ॥

त्यक्त्वा ज्ञातिजनं, सीते ! मानवृद्धिं च, मानिनि !
†अवरुद्धं वन रामं दिष्ट्या त्वमनुगच्छसि ॥ २२ ॥

मानेति । राजसुता राजपत्नी चाहं तापसीवद्वनं कथं गच्छेयमिति प्रवृद्धाभिमानं हित्वेत्यर्थः ॥ २२ ॥

---

* वलिता:—वलयः वार्धक्यनिबन्धनत्वग्वैरूप्यजन्याः—सञ्जातवलयाम् । † वने अवरुद्धं—चतुर्दशवर्षाणि प्राप्तनिर्बन्धवनवासम् ।

[1] इव-च. [2] ततः सीता महाभागा दृष्ट्वा तां धर्मचारिणीम्—ङ. [3] स्वं नाम—ङ.
[4] वृद्धा—च.

नगरस्थो वनस्थो वा [1]शुभो वा यदि वाऽशुभः ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥२३॥

भर्ता प्रिय इति । लौकिकालौकिकनिमित्तविशेषतः विप्रियानास्पदभूत इत्यर्थः ॥ २३ ॥

दुःशीलः कामवृत्तो वा [2]धनैर्वा परिवर्जितः ।
स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः ॥ २४ ॥

आर्यस्वभावानां—पूज्यस्वभावानाम् ॥ २४ ॥

नातो विशिष्टं पश्यामि बान्धवं विमृशन्त्यहम् ।
*सर्वत्र योग्यं, वैदेहि! तपःकृतमिवाव्ययम् ॥ २५ ॥

अतः—भर्तुः । बान्धवं—इष्टबन्धुम् । सर्वत्र योग्यं—इहामुत्रसुखसाधनतया भजनयोग्यम् । तत्र दृष्टान्तः—तपःकृतमिति । भावे निष्ठा, तपोऽनुष्ठानमिति यावत् ॥ २५ ॥

[3]न त्वेवमनुगच्छन्ति गुणदोषमसत्स्त्रियः ।
†[4]कामवक्तव्यहृदया भर्तृनाथाश्चरन्ति याः ॥ २६ ॥

कामवक्तव्यहृदयाः—कामाधीनचित्ताः, 'गृह्याधीनौ तु वक्तव्यौ', अत एव भर्तृनाथाः—भर्त्रपेक्षावत्यः ॥ २६ ॥

---

*सर्वत्र योग्यं—सर्वावस्थासु रक्षणसमर्थम्–गो. †कामवक्तव्यहृदयाः—कामविषयवक्तव्यहृदयाः ; कामरूपार्थाभिलाषिण्य इति यावत् । यद्वा मदनविधेयहृदयाः । भर्तृनाथाः—भर्तॄणां नाथभूताः, भर्तृनियामका इत्यर्थः । यद्वा भर्तारं नाथन्ते—याचन्ते इति तथा, परपुरुषकाङ्क्षिण्य इत्यर्थः–गो.

[1] पापो–ङ. [2] धनी वा यदि वाऽधनः–ङ. [3] न त्वेनमव–ङ. [4] कामवक्तव्यहृदयाः–ङ.

प्राप्नुवन्त्ययशश्चैव धर्मभ्रंशं च, मैथिलि!
*अकार्यवशमापन्नाः स्त्रियो याः खलु तद्विधाः ॥ २७ ॥

याः तद्विधाः—उक्तासद्गुणवत्यः (ताः) खलु अयशआदिकं प्राप्नुवन्ति ॥ २७ ॥

[1]त्वद्विधास्तु गुणैर्युक्ताः दृष्टलोकपरावराः।
स्त्रियः स्वर्गे चरिष्यन्ति यथा [2]पुण्यकृतस्तथा ॥ २८ ॥

दृष्टः लोकः परः अवरश्च याभिस्ताः तथा ॥ २८ ॥

तदेवमेतं त्वमनुव्रता सती
पतिप्रधाना समयानुवर्तिनी।
†भवस्व भर्तुः सहधर्मचारिणी
यशश्च धर्मं च ततः समाप्स्यसि ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तदशोत्तरशततमः सर्गः

---

समयः—आचारः। धरा(२९)मानः सर्गः ॥ २९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे सप्तदशोत्तरशततमः सर्गः

---

* अकार्य—अकृत्यं—पापपरवशा इति यावत्। † भवस्व—भव, आर्षमात्मनेपदम्। ततः भर्तुः सहधर्मचारित्वेन यशश्च धर्मं च कालान्तरानुभाव्यसुखसाधनं अदृष्टं च समाप्स्यसि। यद्वा भर्तुः सहधर्मचारिणी, एवंभूता त्वं ततः—भर्तुः सहधर्मचारित्वहेतोः यशश्च भवस्व—प्राप्नुहीत्यर्थः। धर्मं च समाप्स्यसि। 'भूप्राप्तावात्मनेपदी' इति गणपाठात् प्राप्त्यर्थस्य भवतेरात्मनेपदम्—गो.

[1] तद्विधा—ङ. [2] धर्मकृत—ङ.

## अष्टादशोत्तरशततमः सर्गः

[सीताऽनसूयासंवादः]

सा त्वेवमुक्ता वैदेही त्वनसूयाऽनसूयया ।
प्रतिपूज्य वचो मन्दं प्रवक्तुमुपचक्रमे ॥ १ ॥

अथ अनसूयासीतासंवादः । सा त्वित्यादि । अनसूया—असूयारहिता । एवमिति । एवं धर्मबोधनमित्यर्थः ॥ १ ॥

नैतदाश्चर्य[1]मार्यायां यन्मां त्वमनुभाषसे ।
विदितं तु ममाप्येतत् यथा नार्याः पतिर्गुरुः ॥ २ ॥

नार्याः पतिः गुरुः—परमोपास्य इति यथा भवत्या उपदिष्टं, एतत् विदितं—एतद्विषयकं वेदनं—ज्ञानं ममाप्यस्ति ॥ २ ॥

यद्यप्येष भवेद्भर्ता[2] अनार्यो[3] वृत्तिवर्जितः ।
*[4] अद्वैधमत्र वर्तव्यं तथाऽप्येष मया भवेत् ॥ ३ ॥

तदेव प्रदर्श्यते—यद्यपीत्यादि । मम—अस्मदादिकायाः आर्यः—पूज्य एव भर्ता यद्यपि वृत्तिवर्जितः भवेत्—वृत्तिरहितः—जीवनरहितः—दरिद्रोऽपि वा एष भवेदपि; तथाऽपि मया—अस्मदादिकया अत्र—भर्तरि अद्वैधं—अद्वैविध्यं—प्रकारद्वयराहित्यं वर्तव्यं—वर्तितव्यमिति यावत्, प्रीतिप्रकारमेवात्र वर्तितव्यमित्यर्थः । परस्तु—एषोऽद्वैविध्यमिति योजयित्वा वृथा क्लेशमनुभवति । अस्माभिस्तु स्वरसयोजना दर्शितैव ॥ ३ ॥

---

* अद्वैधं—द्वैधीभावरहितम् । उपचर्तव्यः—गुणवत्त्वनिर्गुणत्वभेदं विहाय सम्यगुपचरणीय इत्यर्थः—गो.

[1] मार्यायाः—ङ. [2] ममार्ये—ङ. [3] वृत्त, वित्त—ङ. [4] अद्वैधमुपचर्तव्यं, अवश्यमुपचर्तव्यः—ङ.

किं पुनर्यो गुणश्लाघ्यः सानुक्रोशो जितेन्द्रियः ।
स्थिरानुरागो धर्मात्मा *[1] मातृवत् पितृवत् प्रियः ॥ ४ ॥

किं पुनरिति । विप्रकारनिमित्तप्रसङ्गरहिते अस्मद्भर्तरि नित्यप्रियैकप्रकारवृत्तौ किं पुनः । उक्तनिमित्ताभाव एव प्रपञ्च्यते—गुणश्लाघ्य इत्यादि । प्रिय इति । मयीति शेषः ॥ ४ ॥

यां वृत्तिं वर्तते रामः कौसल्यायां [2] महायशाः ।
तामेव † नृपनारीणां अन्यासामपि वर्तते ॥ ५ ॥

अन्यासामपीति । सुमित्रादीनां विषयेऽपीत्यर्थः ॥ ५ ॥

सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः ।
मातृवद्वर्तते [3]वीरः मानमुत्सृज्य धर्मवित् ॥ ६ ॥

नृपेणेति । दशरथेनेत्यर्थः । मानमुत्सृज्येति । अहं महाप्रभुरित्यभिमानमुत्सृज्येत्यर्थः ॥ ६ ॥

आगच्छन्त्याश्च विजनं वनमेवं भयावहम् ।
‡ समाहितं हि मे श्वश्र्वा हृदये [4] यत् स्थिरं मम ॥ ७ ॥

श्वश्र्वा यत् समाहितं—यया बुद्ध्या चित्तसमाधानं कृतं, तन्मम हृदये स्थिरम् ॥ ७ ॥

---

* मातृवत् प्रियः—प्रियपरत्वात् । पितृवत् प्रियः—अत्यन्तहितपरत्वात्—गो. मातृवर्ती—मातृशुश्रूषकः—ती. † नृपनारीणां—सप्तम्यर्थे षष्ठी—गो. ‡ समाहितं—उपदिष्टं—गो.

[1] मातृवर्ती पितृप्रियः—ङ. [2] महायशाः—च. [3] रामः—ङ. [4] तत् धृतं—ङ.

*पाणि[1]प्रदानकाले च यत् पुरा त्वग्निसन्निधौ ।
[2]अनुशिष्टं जनन्या मे वाक्यं तदपि मे धृतम् ॥ ८ ॥

तदपि धृतमिति । जनन्यनुशासनमपि धृतं— अवधृतं— हृद्गतमित्यर्थः ॥ ८ ॥

[3]न विस्मृतं तु [4]ते सर्वं वाक्यैः [5]स्वैः, धर्मचारिणि !
पतिशुश्रूषणान्नार्याः तपो नान्यद्विधीयते ॥ ९ ॥

पतिशुश्रूषणं नार्यास्तपः, नान्यत्तपो विधीयत इत्येवंप्रकारकैस्ते वाक्यैस्तन्न विस्मृतम् ॥ ९ ॥

सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते ।
तथावृत्तिश्च † याता त्वं पतिशुश्रूषया दिवम् ॥ १० ॥

सावित्रीति काचन पुण्यस्त्री । देव्याः सावित्र्याः मूलविद्याविग्रहायाः सकलसंसारवर्गदायाः केनचित्साधनेन न हि किञ्चिल्लोकप्राप्तिः । तथावृत्तिरिति । सावित्रीसमानवृत्तिरित्यर्थः । त्वमित्यनसूयार्थकम् । पतिशुश्रूषया दिवं मूर्त्यन्तरेण याता ; तपोऽर्थमिह वर्तमानैवेति शेषः । तथात्वं वसिष्ठारुन्धत्यादिसपत्नीकसप्तर्षीणां प्रसिद्धम् ॥ १० ॥

वरिष्ठा सर्वनारीणां एषा च दिवि देवता ।
‡रोहिणी न विना चन्द्रं मुहूर्तमपि दृश्यते ॥ ११ ॥

---

* पाणिप्रदानं—पाण्यादानं— पाणिग्रहणमिति यावत् । † याता—यास्यसीति यावत् । करगतत्वाभिप्रायेण वा लुट्प्रयोगः । ‡ रोहिणीति । पूर्वकृतपतिशुश्रूषावशादेवं पतिसाहित्यं प्राप्तमिति भावः—ति.

[1] ग्रहण—ङ. [2] अनुशिष्टा—ङ. [3] नवीकृतं च—ङ. [4] मे—च. [5] ते—ङ.

एवंविधाश्च * प्रवराः स्त्रियो भर्तृदृढव्रताः ।
देवलोके महीयन्ते पुण्येन स्वेन कर्मणा ॥ १२ ॥

ततोऽनसूया संहृष्टा श्रुत्वोक्तं सीतया वचः ।
शिरस्याघ्राय चोवाच मैथिलीं [1] हर्षयत्युत ॥१३ ॥

हर्षयत्युत—हर्षयत्यपि इत्यर्थः ; 'उताप्यर्थविकल्पयोः' ॥

नियमैर्विविधैराप्तं [2] तपो हि महदस्ति मे ।
† तत्संश्रित्य बलं, सीते ! छन्दये त्वां, [3] शुचिव्रते ! ॥

छन्दये—प्रीणये ॥ १४ ॥

उपपन्नं [4] च युक्तं च वचनं तव, मैथिलि !
प्रीता चास्म्युचितां, सीते ! करवाणि प्रियं च किम् ? ॥

तस्यास्तद्वचनं श्रुत्वा ‡ [5] विस्मिता [6] मन्दविस्मया ।
कृतमित्यब्रवीत् सीता तपोबलसमन्विताम् ॥ १६ ॥

मन्दः विस्मयः—स्मितं यस्याः सा तथा । कृतमित्यब्रवीदिति । भवत्या अनुग्रहेणैव सिद्धं, नातः परं भवत्या किञ्चित् कर्तव्यमित्युक्तमित्यर्थः ॥ १६ ॥

सा त्वेवमुक्ता धर्मज्ञा तया प्रीततराऽभवत् ।
सफलं च [7] प्रहर्षं ते हन्त, सीते ! करोम्यहम् ॥ १७ ॥

तयेति । लोभरहितवाचेत्यर्थः ॥ १७ ॥

---

* प्रवराः स्त्रियः—अरुन्धत्यादयः–ति. † तव बलं संश्रित्य—तपोबलमाश्रित्य । ‡ अविस्मिता —तदैश्वर्यविषयकविस्मयरहिता–रा.

[1] हर्षयन्त्युत–ङ. [2] तपो मेः–ङ. [3] शुचिस्मिते–ङ. [4] मनोज्ञं च–ङ. [5] ऽविस्मिता–ङ. [6] मन्दविस्मिता–च. [7] प्रकर्षं च–ङ.

इदं दिव्यं [1] वरं माल्यं वस्त्रमाभरणानि च ।
* अङ्गरागं च, वैदेहि! महार्हमनुलेपनम् ॥ १८ ॥

अङ्गरागं—अङ्गरञ्जनकरं अनुलेपनं— अनुलेपनसाधनदिव्यगन्धद्रव्यविशेषमित्यर्थः ॥ १८ ॥

मया दत्तमिदं, सीते! तव गात्राणि शोभयेत् ।
†[2] अनुरूपमसंक्लिष्टं नित्यमेव भविष्यति ॥ १९ ॥

अनुरूपं–त्वदेकोचितम् । असंक्लिष्टं–उपभोगेऽपि अशुचित्वादिदोषरहितम् । अतः नित्यमेव भविष्यतीति । धृतमाल्यादिकं सर्वं तदा तदा धृतमिव भविष्यतीत्यर्थः ॥ १९ ॥

अङ्गरागेण दिव्येन लिप्ताङ्गी, जनकात्मजे!
शोभयिष्यति भर्तारं यथा श्रीर्विष्णुमव्ययम् ॥ २० ॥
सा वस्त्रमङ्गरागं च भूषणानि स्रजस्तथा ।
मैथिली प्रतिजग्राह ‡ प्रीतिदानमनुत्तमम् ॥ २१ ॥
प्रतिगृह्य च तत् सीता प्रीतिदानं यशस्विनी ।
श्लिष्टाञ्जलिपुटा धीरा समुपास्त [3] तपोधनाम् ॥ २२ ॥

श्लिष्टेति । रचितेति यावत् ॥ २२ ॥

तथा सीतामुपासीनां अनसूया दृढव्रता ।
वचनं प्रष्टुमारेभे §[4] कथां काञ्चिदनु प्रियाम् ॥ २३ ॥

---

* अङ्गरागः—कुङ्कुमहरिचन्दनादिः । अनुलेपनं —कर्पूरागरुकस्तूरीप्रमुखपरिमलमिलितम्—**गो.** † अनुरूपं त्वद्गात्रानुरूपम् । असंक्लिष्टं–अबाधितशोभम्–**गो.** ‡ प्रीतिदानं–क्षत्रियात्वात् प्रतिग्रहानधिकारेण प्रीतिदानमित्युक्तम्–**ति.** § प्रियकथामनु – प्रियां कथामुद्दिश्य सीतां प्रष्टुं वचनमारेभे–**गो.**

[1] परं–ङ. [2] अनुरूपं तु संश्लिष्टं–ङ. [3] तपस्विनीम्–ङ. [4] काञ्चित् प्रियकथामनु–ङ.

अनु प्रियामिति । अनु—अनन्तरं प्रियां काञ्चित्कथां व्याजीकृत्य वचनं प्रस्तुतारेभे ॥ २३ ॥

स्वयंवरे किल प्राप्ता त्वमनेन [1] यशस्विना ।
राघवेणेति मे, सीते! कथा श्रुतिमुपागता ॥ २४ ॥

अनेन राघवेण । मे श्रुतिं—मम श्रोत्रपथम् ॥ २४ ॥

तां कथां श्रोतुमिच्छामि विस्तरेण च, मैथिलि!
[2] यथाभूतं च कात्स्न्येंन तन्मे त्वं वक्तुमर्हसि ॥ २५ ॥
एवमुक्ता तु सा सीता तापसीं धर्मचारिणीम् ।
श्रूयतामिति चोक्त्वा वै कथयामास तां कथाम् ॥ २६ ॥
मिथिलाधिपतिर्वीरः जनको नाम धर्मवित् ।
[3] क्षत्रधर्मे ह्यभिरतः न्यायतः शास्ति मेदिनीम् ॥ २७ ॥
तस्य लाङ्गलहस्तस्य [4] कृषतः क्षेत्रमण्डलम् ।
अहं किलोत्थिता भित्त्वा जगतीं नृपतेः सुता ॥ २८ ॥

लाङ्गलहस्तस्य क्षेत्रमण्डलं कृषत इति । 'षड्गवेन कृषति' इति श्रुतेः अग्निचयनार्थमिति शेषः; भावलक्षणे षष्ठी, कृषति सतीत्यर्थः । तस्य पुरः जगतीं—भुवम् ॥ २८ ॥

स मां दृष्ट्वा नरपतिः *मुष्टिविक्षेपतत्परः ।
पांसुकुण्ठितसर्वाङ्गीं विस्मितो जनकोऽभवत् ॥ २९ ॥

---

* मुष्टिविक्षेपतत्परः:—'या जाता ओषधयः इति चतुर्दशभिः ओषधीर्वपति' इत्युक्तप्रकारेण ओषधिमुष्टिविकिरणतत्परः:–गो.

[1] यशस्विनी–ङ. [2] यथाऽनुभूतं–ङ. [3] क्षत्रकर्मण्यभिरतः–च. [4] कर्षतः–ङ.

मुष्टिविक्षेपतत्परः स इति। कृष्टक्षेत्रसमीकरणाय उन्नत-मृत्तिकामुष्टिविक्षेपतत्परः। पांसुकुण्ठितसर्वाङ्गी—लाङ्गलपद्धतिनिम्न-प्रदेशगतत्वादेव तथात्वम् ॥ २९ ॥

*अनपत्येन च स्नेहात् अङ्कमारोप्य च स्वयम्।
[1]ममेयं तनयेत्युक्त्वा स्नेहो मयि निपातितः ॥ ३० ॥
अन्तरिक्षे च वागुक्ता †प्रतिमामानुषी किल।
एवमेतन्नरपते! धर्मेण तनया तव ॥ ३१ ॥

प्रतिमामानुषी—प्रतिमास्वरूपेण वाक्—मनुष्यवाक्तुल्या अन्तरिक्षे एवं वागुक्ता किल। एवंशब्दार्थः—एतदित्यादि। तदेतद्वचनं तु, हे नरपते! धर्मेण—न्यायेन तव तनया-तनयैवेति; त्वद्यागभुवि त्वत्कर्षणोत्थत्वात् त्वत्क्षेत्रजातेव—साक्षात् कन्यैवेत्यर्थः ॥

ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलाधिपः।
अवाप्तो मिथिलामृद्धिं मामवाप्य नराधिपः ॥ ३२ ॥

मामवाप्येति। यज्ञभूमेरिति शेषः ॥ ३२ ॥

दत्ता चास्मीष्टवद्देव्यै ज्येष्ठायै पुण्य[2]कर्मणे।
तया संभाविता चास्मि स्निग्धया मातृसौहृदात् ॥ ३३ ॥

इष्टवत्–स्वार्थे वतिः, इष्टायै इत्यर्थः। पुण्यकर्मण इति। मन इति न ङीप् ॥ ३३ ॥

---

*अनपत्येन-तेन जनकेन। †मा प्रति—मामुद्दिश्य, एवमेतन्नरपते धर्मेण तनया तवेति अन्तरिक्षे अमानुषी वागुक्ता। यद्वा, वागुक्ताप्रतिमेत्यत्र अप्रतिमेति छित्वा वाग्विशेषणतया योज्यम्-गो. अप्रतिमा—उच्चारयितृस्वरूपरहिता अमानुषी—मानुषवाक्सदृशी-रा. ‡इष्टवद्देव्यै—इच्छावत्यै देव्यै-गो. इष्टं इति भावे क्तः। इष्टं—इच्छा—सन्तानेच्छावत्यै-ति.

[1] ममैव-ङ.      [2] कर्मणा-ङ.

*[1] पतिसंयोगसुलभं वयो दृष्ट्वा तु मे पिता ।
चिन्तामभ्यगमद्दीनः † वित्तनाशादिवाधनः ॥ ३४ ॥

सुलभमिति । उचितमिति यावत् ॥ ३४ ॥

‡ सदृशाच्चापकृष्टाच्च लोके कन्यापिता जनात् ।
§ प्रधर्षणामवाप्नोति शक्रेणापि समो भुवि ॥ ३५ ॥

कन्यायाः पिता—कन्यापिता तु भुवि शक्रेण समोऽपि लोके सदृशात् जनात् अपकृष्टाच्च वरवर्गात् प्रधर्षणां—सम्मानादिविषयक्लेश-मेवावाप्नोति, किमुताधिकादिति शेषः ॥ ३५ ॥

तां धर्षणामदूरस्थां संदृश्यात्मनि पार्थिवः ।
चिन्तार्णवगतः पारं नाससादाप्लवो यथा ॥ ३६ ॥

प्लवः—पोतः ॥ ३६ ॥

अयोनिजां हि मां ज्ञात्वा नाध्यगच्छत् स चिन्तयन् ।
‖ सदृशं [2] चाभिरूपं च महीपालः [3] पतिं मम ॥ ३७ ॥
तस्य बुद्धिरियं जाता चिन्तयानस्य सन्ततम् ।
स्वयंवरं तनूजायाः करिष्यामीति [4] धीमतः ॥ ३८ ॥

---

* पतिसंयोगे सति सुलभं, अन्यथा दुर्लभमित्यर्थः । पतिसंयोगं विना स्थातुमशक्ययौवनावस्थावदित्यर्थः—गो. पतिसंयोगः सुलभः यस्मिन्—रा. † वित्तनाशात्—आर्जितवित्तनाशात् अधनः—रा. अधनः— दरिद्रः— कथंचित्प्राप्तवित्तनाशादिव, मां प्राप्य, ममानुरूपपत्यलाभात् मत्प्राप्त्यानन्दक्षयात् दीनः— इति वा । ‡ सदृशादपि, अपकृष्टादपि ; किमुत उत्कृष्टादिति भावः । § प्रधर्षणां— तिरस्क्रियां—गो. ‖ सदृशं—अभिजनवृत्तादिना तुल्यं, अनुरूपं— प्रादुर्भूतयौवनाप्रतिमरूपलावण्यादिना योग्यं—गो.

[1] भर्तृ—ङ. [2] चानुरूपं—ङ. [3] पतिः—ङ. [4] धर्मितः—च.

* महायज्ञे तदा तस्य वरुणेन महात्मना ।
दत्तं धनुर्वरं प्रीत्या तूणी चाक्षयसायकौ ॥ ३९ ॥

महायज्ञ इति । मदुत्पत्तिसमानकालीन इति शेषः । वरुणेनेति । देवैः प्रेरितेनेति शेषः । एवञ्च 'सदसि देवैः दत्तम्' इति बालकाण्डोक्तमप्यविरुद्धम् ॥ ३९ ॥

असञ्चाल्यं मनुष्यैश्च [1] यत्नेनापि च गौरवात् ।
तन्न शक्ता † नमयितुं स्वप्नेऽपि नराधिपाः ॥ ४० ॥

गौरवात्–भारात् ॥ ४० ॥

तद्धनुः प्राप्य मे पित्रा व्याहृतं [2] सत्यवादिना ।
समवाये नरेन्द्राणां पूर्वमामन्त्र्य पार्थिवान् ॥ ४१ ॥
इदं च धनुरुद्यम्य सज्यं यः कुरुते नरः ।
तस्य मे दुहिता भार्या भविष्यति न संशयः ॥ ४२ ॥
तच्च दृष्ट्वा धनुःश्रेष्ठं ‡ गौरवाद्गिरिसन्निभम् ।
§ अभिवाद्य नृपा जग्मुः अशक्तास्तस्य तोलने ॥ ४३ ॥

अभिवाद्य केवलं जग्मुः ॥ ४३ ॥

---

* महायज्ञे—दक्षयज्ञे तस्य—मत्पितृपूर्वजस्य देवरातस्य तदा शत्रुजयसमर्थधनुर्लाभाय तपःकरणकाले । दक्षयज्ञे हि शिवेन पीडिता देवाः शिवं संप्रार्थ्य धनुर्याचितवन्तः । स च देवेभ्यो दत्त्वोक्तवान् इदं देवराताय दीयतामिति । ततो देवैः वरुणद्वारा देवराताय दत्तम् । यद्वा–व्रियते सर्वैर्देवैरिति व्युत्पत्त्या वरुणः शिव एव–ति. वरुणेन दत्तं–वरुणेनातिसहकारिणा दत्तम् गो. † नमयितुं—नामयितु । ‡ गौरवात्—भारात् तस्य तोलनेऽशक्ता इत्यन्वयः । § नमोक्तिरियम् ।

[1] बलेनापि–ङ. [2] सूक्ष्मवादिना–ङ.

सुदीर्घस्य तु कालस्य राघवोऽयं महाद्युतिः ।
विश्वामित्रेण सहितः यज्ञं द्रष्टुं समागतः ॥ ४४ ॥

लक्ष्मणेन सह भ्रात्रा रामः सत्यपराक्रमः ।
विश्वामित्रस्तु धर्मात्मा मम पित्रा सुपूजितः ॥ ४५ ॥

प्रोवाच पितरं तत्र [1]राघवौ *रामलक्ष्मणौ ।
सुतौ दशरथस्येमौ धनुर्दर्शनकाङ्क्षिणौ[2] ॥ ४६ ॥

इत्युक्तस्तेन विप्रेण तद्धनुः समुपानयत् ।
[3]तद्धनुर्दर्शयामास राजपुत्राय दैविकम् ॥ ४७ ॥

दैविकं—देवनिर्मितम् ॥ ४७ ॥

निमेषान्तरमात्रेण तदानम्य [4]महाबलः ।
ज्यां समारोप्य झटिति [5]पूरयामास वीर्यवान् ॥ ४८ ॥

पूरयामासेति । सज्यं कृत्वा आकृष्टवानित्यर्थः ॥ ४८ ॥

† तेनापूरयता वेगात् मध्ये भग्नं [6]द्विधा धनुः ।
तस्य शब्दोऽभवत् भीमः पतितस्याशनेर्यथा ॥ ४९ ॥

ततोऽहं तत्र रामाय पित्रा सत्याभिसन्धिना ।
‡[7]उद्यता दातुमुद्यम्य जलभाजनमुत्तमम् ॥ ५० ॥

---

* रामलक्ष्मणावुद्दिश्य पितरं प्रोवाच । † तेन—रामेण । ‡ जलभाजनमुद्यम्य दातुमुद्यता—मां दातुं उद्युक्तवानिति यावत् ।

[1] भ्रातरौ—ङ. [2] एतदनन्तरं—धनुर्दर्शय रामाय राजपुत्राय दैविकम्—इत्यधिकं—ङ. [3] इदमर्धं कुण्डलितं—ङ. [4] स वीर्यवान्, सुवीर्यवान्, स राघवः—ङ. [5] पूरयामास वीर्यवत्, वीर्यवद्बलवद्धनुः—ङ. [6] महत्—ङ. [7] निश्चिता—ङ.

दीयमानां न तु तदा प्रतिजग्राह राघवः ।
अविज्ञाय पितुश्छन्दं अयोध्याधिपतेः प्रभोः ॥ ५१ ॥

छन्दं—अभिप्रायम् ॥ ५१ ॥

ततः श्वशुरमामन्त्र्य वृद्धं दशरथं नृपम् ।
[1]मम पित्रा त्वहं दत्ता रामाय विदितात्मने ॥ ५२ ॥
*मम चैवानुजा साध्वी ऊर्मिला [2]शुभदर्शना ।
भार्यार्थे लक्ष्मणस्यापि दत्ता पित्रा मम स्वयम् ॥ ५३ ॥
एवं दत्ताऽस्मि रामाय तथा तस्मिन् स्वयंवरे ।
अनुरक्ताऽस्मि धर्मेण पतिं वीर्यवतां वरम् ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अयोध्याकाण्डे अष्टादशोत्तरशततमः सर्ग:

---

आगम(५३ १/२)मानः सर्गः ॥ ५४ ॥

इति श्रीमद्रामायणामृतकतकटीकायामयोध्याकाण्डे अष्टादशोत्तरशततमः सर्ग:

---

## एकोनविंशत्युत्तरशततमः सर्गः

[दण्डकारण्यप्रवेशः]

अनसूया तु धर्मज्ञा श्रुत्वा तां महतीं कथाम् ।
पर्यष्वजत बाहुभ्यां शिरस्याघ्राय मैथिलीम् ॥ १ ॥

अथ अनसूयासम्मानितसीतया सह रामस्य अत्र्याश्रमे रात्रौ निविष्टस्य प्रातर्वनान्तरप्रस्थानम् । अनसूयेत्यादि ॥ १ ॥

---

* सीताप्राप्त्यनन्तरं जनकस्येयं जातेति वदन्ति ।

[1] मात्रा–ङ.   [2] प्रिय–ङ.

व्यक्ताक्षरपदं चित्रं भाषितं मधुरं त्वया।
*यथा [1]स्वयंवरं वृत्तं तत्सर्वं च श्रुतं मया ॥ २ ॥

स्वयंवरं वृत्तमिति। स्वयंवरविषयकवृत्तान्तमिति यावत् ॥

[2]रमेऽहं कथया ते तु दृढं, मधुरभाषिणि!
रविरस्तंगतः श्रीमान् †उपोह्य रजनीं [3]शिवाम् ॥ ३ ॥

उपोह्येति। अतिवाह्येति यावत् ॥ ३ ॥

दिवसं [4]परिकीर्णानां आहारार्थं पतत्रिणाम्।
सन्ध्याकाले निलीनानां ‡निद्रार्थं श्रूयते ध्वनिः ॥ ४ ॥

दिवसमिति। अत्यन्तसंयोगे द्वितीया, दिवसे आहारार्थं परितः कीर्णानां—सञ्चरताम्। निलीनानामिति। निलीयमानानामित्यर्थः ॥

एते चाप्यभिषेकार्द्राः मुनयः कलशोद्यताः।
सहिता उपवर्तन्ते सलिलाप्लुतवल्कलाः ॥ ५ ॥

कलशोद्यताः—उद्यतकलशा इति यावत्, आहिताग्न्यादिः। सहिताः—परस्परसमेताः ॥ ५ ॥

अग्निहोत्रे च ऋषिणा हुते च विधिपूर्वकम्।
§कपोताङ्गारुणो धूमः दृश्यते पवनोद्धतः ॥ ६ ॥

कपोताङ्गवत्—पारावतकवत् अरुणः—मेचकः, 'श्यामे रक्तेऽरुणेऽर्के च' ॥ ६ ॥

---

*यथा—येन प्रकारेण स्वयंवरं वृत्तं—प्रवलितम्। †उपोह्य—समीपं प्राप्य-गो. ‡निद्रार्थं निलीनानामित्यन्वयः। §धूममिश्रितज्वालकायाः तादृक्त्वं प्रत्यक्षसिद्धम्।

[1] स्वयंवरे—ङ. [2] रमेयं—ख. [3] शुभाम्—च. [4] प्रतिकीर्णानां—ङ.

*अल्पपर्णा हि तरवः घनीभूताः समन्ततः ।
[1]विप्रकृष्टेन्द्रिये देशे न प्रकाशन्ति वै दिशः ॥ ७ ॥

अल्पपर्णाः तरवोऽपि हि समन्ततः घनीभूता इव दृश्यन्ते; तमोवशादिति शेषः । अत एव विप्रकृष्टेन्द्रिये—दूरे देशेऽस्मिन् दिशो न प्रकाशन्ति—प्रकाशन्त इति यावत् ॥ ७ ॥

†रजनीचरसत्त्वानि प्रचरन्ति समन्ततः ।
‡तपोवनमृगा ह्येते §वेदितीर्थेषु शेरते ॥ ८ ॥

वेदितीर्थेषु—अग्निहोत्रवेदिसहिताश्रमप्रदेशेषु । तीर्थशब्दः पुण्यक्षेत्रसामान्यवाची, आश्रमाश्च पुण्यक्षेत्राणि ॥ ८ ॥

[2]संप्रवृद्धा निशा, सीते! नक्षत्रसमलंकृता ।
ज्योत्स्नाप्रावरणश्चन्द्रः दृश्यतेऽभ्युदितोऽम्बरे ॥ ९ ॥
गम्यतामनुजानामि रामस्यानु[3]चरा भव ।
कथयन्त्या हि मधुरं त्वयाऽहं [4]परितोषिता ॥ १० ॥
अनुचरा भव—शुश्रूषुर्भव ॥ १० ॥

---

* विप्रकृष्टेऽपि देशे अल्पपर्णाः ये तरवः, तेऽपि समन्ततः घनीभूता हि—अल्पपर्णान्तरालत्वात् सान्द्रीभूता इव । तत्र हेतुमाह—न प्रकाशन्ति वै दिश इति—गो. वस्तुतः विरलपर्णा अपि क्रमक्रमशः अन्धकारव्याप्त्या घनीभूता इव दृश्येयुः । † रजनीचरसत्त्वानि—रात्रिसंचारिव्याघ्रादीनि । ‡ अत एवेत्यादिः । § वेदितीर्थेषु—तेषववतरणप्रदेशेषु । वेदिप्रान्तेष्विति यावत् ।

[1] विप्रकृष्टेऽपि देशेऽस्मिन्—ङ. [2] संप्रवृत्ता—च. [3] चरी भव—ङ. [4] अपि—ख.

*अलङ्कुरु च तावत् त्वं प्रत्यक्षं [1]मम, मैथिलि !
प्रीतिं जनय मे, वत्से ! [2]दिव्यालङ्कारशोभिनी ॥ ११ ॥

प्रीतिं जनयेति । अलङ्कृतत्वद्दिव्यरूपानुभावनेनेति शेषः ॥

सा तदा समलङ्कृत्य सीता सुरसुतोपमा ।
प्रणम्य शिरसा [3]पादौ रामं त्वभिमुखी ययौ ॥ १२ ॥
तथा तु भूषितां सीतां ददर्श वदतांवरः ।
राघवः प्रीतिदानेन तपस्विन्याः, जहर्ष च ॥ १३ ॥
न्यवेदयत् ततः सर्वं सीता रामाय मैथिली ।
प्रीतिदानं तपस्विन्याः वसनाभरण[4]स्रजाम् ॥ १४ ॥

सर्वं न्यवेदयदित्यस्यैव प्रपञ्चनं—प्रीतिदानमित्यादि ॥ १४ ॥

प्रहृष्टस्त्वभवत् रामः लक्ष्मणश्च महारथः ।
मैथिल्याः सत्क्रियां दृष्ट्वा [5]मानुषेषु सुदुर्लभाम् ॥ १५ ॥

मानुषेषु—मनुष्यलोकेषु ॥ १५ ॥

†ततः स शर्वरीं प्रीतः पुण्यां शशिनिभा[6]ननाम् ।
अर्चितस्तापसैः [7]सर्वैः उवास रघुनन्दनः ॥ १६ ॥
तस्यां रात्र्यां [8]व्यतीतायां [9]अभिषिच्य हुताग्निकान् ।
आपृच्छेतां नरव्याघ्रौ तापसान् वनगोचरान् ॥ १७ ॥

आपृच्छेतामिति । वनान्तरगमनार्थमिति शेषः ॥ १७ ॥

---

* अलङ्कुरु—आत्मानमिति शेषः—गो. † शशिनिभाननां सीतां प्रति प्रीतः शर्वरीं उवास इत्यन्वयः ।

[1] देवि–ङ. [2] सर्वा–ङ. [3] तस्यै–ङ. [4] स्रजम्–ङ. [5] मानुषेष्वति–ङ. [6] ननः–ङ. [7] सिद्धैः–ङ. [8] प्रभातायां–ङ. [9] अभिषिक्तान्–ङ.

तावूचुस्ते वनचराः तापसा धर्मचारिणः ।
*वनस्य तस्य सञ्चारं राक्षसैः समभिप्लुतम् ॥ १८ ॥

सञ्चारं—सञ्चरन्त्यस्मिन्निति अधिकरणे 'हलश्च' इति घञ्, 'गोचरसञ्चर' इति निपातनाभावः छान्दसः, देशमिति यावत्। समभिप्लुतं—व्याप्तम् ॥ १८ ॥

रक्षांसि पुरुषादानि नानारूपाणि, राघव !
वसन्त्यस्मिन् महारण्ये †व्यालाश्च रुधिराशनाः ॥ १९ ॥

व्यालाः—श्वापदानि, 'भेद्यलिङ्गः शठो व्यालः पुंसि श्वापदसर्पयोः' ॥ १९ ॥

उच्छिष्टं वा प्रमत्तं वा तापसं [1]ब्रह्मचारिणम् ।
अदन्त्यस्मिन् महारण्ये तान् निवारय, राघव ! ॥ २० ॥

उच्छिष्टं—अशुचिं । प्रमत्तं—असावधानम् । तान्—रक्षोव्यालान् ॥ २० ॥

एष पन्था महर्षीणां ‡फलान्याहरतां वने ।
अनेन तु वनं दुर्गं गन्तुं, राघव ! ते क्षमम् ॥ २१ ॥

---

* वनस्य सञ्चारं—कन्दमूलफलाद्याहरणार्थं सञ्चारं राक्षसैः समभिप्लुतं—सम्यगुपद्रुतं ऊचुः–गो. † व्यालाः—हिंस्रपशवः–गो. ‡ फलान्याहरतां—फलाद्याहरणार्थं गच्छतां आगच्छतां चेति यावत् ।

[1] धर्मचारिणम्–ङ.

[1] इतीरितः प्राञ्जलिभिस्तपस्विभिः
द्विजैः कृतस्वस्त्ययनः परंतपः ।
वनं सभार्यः प्रविवेश राघवः
सलक्ष्मणः सूर्य इवाभ्रमण्डलम् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां अयोध्याकाण्डे एकोनविंशत्युत्तरशततमः सर्गः

समाप्तश्चायमयोध्याकाण्डः

---

इतीरित इति । एवमुपदिष्टमार्ग इत्यर्थः । रेखा(२२)मानः सर्गः ॥ २२ ॥

इति श्रीमन्माधवयोगिविरचितायां श्रीमद्रामायणामृतकतकटीकायां अयोध्याकाण्डे एकोनविंशत्युत्तरशततमः सर्गः

समाप्तश्चायमयोध्याकाण्डः

---

[1] इतीव तैः-ङ.

# श्रीमद्वाल्मीकिरामायणम्

श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(चतुर्थसम्पुटः—अरण्यकाण्डः)



प्राच्यविद्यासंशोधनालयः
मैसूरुविश्वविद्यानिलयः
मैसूरु
१९६५

# श्रीमद्वाल्मीकिरामायणम्

## श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(चतुर्थसंपुटः—अरण्यकाण्डः)




प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मैसूरु

१९६५

ORIENTAL RESEARCH INSTITUTE SANSKRIT SERIES 110

GENERAL EDITOR :

H. DEVEERAPPA, M.A.,
*Director*

# ŚRĪMADVĀLMĪKI RĀMĀYAṆA

WITH

## AMṚTAKATAKA OF MĀDHAVAYOGI

(VOL. IV—ARAṆYAKĀṆDA)

EDITOR :

VIDWAN N. S. VENKATANATHACHARYA,
*Research Assistant*




ORIENTAL RESEARCH INSTITUTE
UNIVERSITY OF MYSORE
MYSORE
1965

प्राच्यविद्यासंशोधनालयसंस्कृतग्रन्थमाला ११०

प्रधानसम्पादकः

एच्. देवीरप्प, एम्.ए.,
डैरेक्टर्

# श्रीमद्वाल्मीकिरामायणम्

## श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(चतुर्थसम्पुटः—अरण्यकाण्डः)

सम्पादकः

विद्वान् एन्. एस्. वेङ्कटनाथाचार्यः,
रिसर्च् असिस्टेण्ट्



प्राच्यविद्यासंशोधनालयः
मैसूरुविश्वविद्यानिलयः
मैसूरु
१९६५

# PREFACE

IT is indeed a matter of pleasure that we have been able to publish this volume along with its preceding one, Ayodhyākāṇḍa, Part II.

Vidwan Sri N. S. Venkatanathacharya has executed the editing work very ably, within a short time. His enthusiasm is really appreciable.

We offer our thanks to the authorities of the Mysore Palace Sarasvatī Bhaṇḍāra, the Kūḍali Śṛṅgeri Mutt, and the Government Oriental Manuscripts Library, Madras, who kindly lent their manuscripts of Kataka, for collation.

We are thankful to the Superintendent and staff of the Government Text Book Press, Mysore, who co-operated with us in our endeavour to bring out the volumes early.

We hope to publish soon the other remaining volumes, with the help of the diligent scholars on our staff.

MYSORE,
Dated 9-8-1965

H. DEVEERAPPA,
*Director,*
*Oriental Research Institute.*

ददातीवोपरितनवाक्यैः। चतुर्दशवत्सरपरिमिते वनवासकाले माकिं त्रयोदश संवत्सराः मुनीनामाश्रमेषु, पञ्चवट्यां च सुसुखं नीताः श्रीरामेण॥

'अनाकृष्टस्य विषयैः विद्यानां पारदृश्वनः।
तस्य धर्मरतेरासीत् वृद्धत्वं जरसा विना' *

इत्युक्तसहजवार्धक्यशालिनां राघवाणां 'वार्धके मुनिवृत्तीनाम्' † इत्यभिहिता मुनिवृत्तिः सुखावहैव स्यादिति युक्तमेव॥

वनवासः खलु ‡ चैत्रे मास्युपक्रान्तः। अतश्च—

'पूर्णे चतुर्दशे वर्षे पञ्चम्यां भरताग्रजः।
भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम्' §

इत्यत्रोक्ता पञ्चमी चैत्रपञ्चम्येव। पम्पासरोवरप्राप्तिश्च वसन्तर्तावेवेति || स्पष्टमवगम्यते। तथा च सुग्रीवसख्यादारभ्य भरद्वाजाश्रमप्रत्यागमनपर्यन्तकथाभागः एकसंवत्सरवृत्त इति स्पष्टम्। एवञ्चास्मिन्नरण्यकाण्डे रामवनवासस्य आरम्भकालिककतिपयमासवर्जं त्रयोदशवत्सरवृत्तकथाभागः क्रोडीकृत इत्ययमंशः अवधेयः। अरण्यकाण्डनामप्राप्तौ अयमपि कश्चित् हेतुर्भवितुमर्हति॥

नवरसभरितेऽस्मिन् हि महाकाव्ये आदिकविः नवस्वपि रसेषु अल्पैरेव वाक्यैः परां काष्ठां प्रापयत्यस्मानित्ययमप्यंशोऽवधेयोऽत्र॥

---

* रघुवंश. 1–23.

† रघुवंश. 1–8.

‡ 'चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः।
यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम्॥' अयो. 3–3

§ युद्ध. 127–1.

|| 'सुखानिलोऽयं सौमित्रे कालः प्रचुरमन्मथः।
गन्धवान् सुरभिर्मासः जातः पुष्पफलद्रुमः॥' किष्कि. 1–10

तत्र पञ्चवट्यां सीतया सह रामस्य वासं वदन् गंभीरतया *संयोगश्रृङ्गारं वर्णयन्, कविभिः उत्तमत्वेन भाव्यमानं विप्रलंभश्रृङ्गारं सीतापहरणानन्तरं विस्तरेण वर्णयन् † श्रृङ्गारस्य परां काष्ठां प्रदर्शयत्यस्माकं स आदिकविः ॥

एवं खरदूषणादिवधप्रकरणे असाधारणस्य वीरस्य ‡ ;

जटायुवध - सीतापहरणादिप्रकरणेषु हृदयविद्राविकायाः करुणायाः § ;

---

* 'कञ्चित्कालं स धर्मात्मा सीतया लक्ष्मणेन च ।
अन्वास्यमानो न्यवसत् स्वर्गलोके यथाऽमरः ॥' अर. 15–31

† 61, 62, 63, सर्गाः अरण्यकाण्डीयाः द्रष्टव्याः । सारतस्तु —
'स राजपुत्रः प्रियया विहीनः शोकेन मोहेन च पीड्यमानः ।
विषादयन् भ्रातरमार्तरूपः भूयो विषादं प्रविवेश तीव्रम्' (अर. 63-1) इत्यादिकं द्रष्टव्यम् ॥

‡ 'अर्धाधिकमुहूर्तेन रामेण निशितैश्शरैः ।
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ॥ अर. 30–34
खरदूषणमुख्यानां निहतानि महाहवे ।' अर. 30–35
'चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ।
हतान्येकेन रामेण मानुषेण पदातिना ॥' अर. 26–35

§ 'तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् ।
अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता' अर. 51–44
'त दीनं दीनया वाचा सफेनं रुधिरं वमन् ।
अभ्यभाषत पक्षी तु रामं दशरथात्मजम्' अर. 67–14
'त्राहि मामद्य काकुत्स्थ ! लक्ष्मणेति वराङ्गना ।
सुसंत्रस्ता समाक्रन्दत् श्रृण्वतां तु यथाऽन्तिके' अर. 52–7
'तां लतामिव वेष्टन्तीं आलिङ्गन्तीं महाद्रुमान् ।
मुञ्च मुञ्चेति बहुशः प्रवदन् राक्षसाधिपः ॥ अर. 52–9

शूर्पणखाप्रवेशेऽतिगंभीरस्य हास्यस्य * ;

सीतापहरणक्षुभितस्य रामस्य वर्णनायां रोमाञ्चकारिणो रौद्रस्य † ;

रौद्रकर्माणं रौद्रं रावणं पश्यतां अचेतनानामपि भयस्य प्रदर्शनेन हृदयस्तंभकस्य भयानकस्य ‡ ;

---

क्रोशन्तीं राम रामेति रामेण रहितां वने ।
जीवितान्ताय केशेषु जग्राहान्तकसन्निभः ' अर. 52–10

* ' अनुजस्त्वेष मे भ्राता शीलवान् प्रियदर्शनः ' अर. 18–3
' अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ।
एनं भज, विशालाक्षि ! भर्तारं भ्रातरं मम ' अर. 18–5
' आर्यस्य त्वं, विशालाक्षि ! भार्या भव यवीयसी । अर. 18–10
एनां (सीतां) विरूपामसतीं करालां निर्णतोदरीम् ।
भार्यां वृद्धां परित्यज्य त्वामेवैष भजिष्यति ॥ ' अर. 18–11

† ' इत्युक्त्वा रोषताम्राक्षः स्फुरमाणोष्ठसंपुटः ।
वल्कलाजिनमाबध्य जटाभारमबन्धयत् ॥ अर. 64–73
तस्य क्रुद्धस्य रामस्य तथाभूतस्य धीमतः ।
त्रिपुरं जघ्नुषः पूर्वं रुद्रस्येव बभौ तनुः ' अर. 64–74
' पुरेव मे चारुदतीमनिन्दितां दिशन्ति सीतां यदि नाद्य मैथिलीम् ।
सदेवगन्धर्वमनुष्यपन्नगं जगत्सशैलं परिवर्तयाम्यहम् ' अर. 64–78

‡ ' प्रधर्षितायां सीतायां बभूव सचराचरम् ।
जगत्सर्वममर्यादं तमसाऽन्धेन संवृतम् ॥ अर. 52–11
न वाति मारुतस्तत्र निष्प्रभोऽभूद्दिवाकरः ' अर. 52–12
' रावणस्य च तद्रूपं कर्माणि च दुरात्मनः ।
ध्यात्वा भयात्तु वैदेहीं सा नदी न शशंस ताम् ' अर. 64–9

कबन्धकलेबरदाहादौ सर्वेन्द्रियसंकोचकस्य बीभत्सस्य * ; जनस्थानसंहारे सुरमुनिविस्मयावहस्य अद्भुतस्य † ;

ऋषीणामाश्रमेषु सर्वनिर्वृतिदायकस्य शान्तस्य च ‡ रसस्य वर्णनासु अल्पैरेव वाक्यैरस्माकं तत्तद्रसस्य परां काष्ठां परिचाययत्यादिकविरिति अहो ! महर्षेः कविताचातुरी । इदं सर्वमस्माकं

* ' तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् ।
मेदसा पच्यमानस्य मन्दं दहति पावकः ' अर. 72–3

† ' अहो बत महत्कर्म ! रामस्य विदितात्मनः ।
अहो वीर्यं ! अहो दाक्ष्यं ! विष्णोरिव हि दृश्यते ' अर. 30–36

‡ ' स्निग्धपक्षा यथा वृक्षाः यथा शान्तमृगद्विजाः ।
आश्रमो नातिदूरस्थः महर्षेर्भावितात्मनः ॥ अर. 11–80

अगस्त्य इति विख्यातो लोके स्वेनैव कर्मणा ।
आश्रमो दृश्यते तस्य परिश्रान्तश्रमापहः ॥ „ 11–81

प्राज्यधूमाकुलवनः चीरमालापरिष्कृतः ।
प्रशान्तमृगयूथश्च नानाशकुनिनादितः ॥ ' „ 11–82

' पश्याश्रमपदं रम्यं दण्डकारण्यवासिनाम् ।
एषां तपस्विनां, वीर ! तपसा भावितात्मनाम् ॥ „ 8–12

सप्राज्यफलमूलानि पुष्पितानि वनानि च ।
प्रशान्तमृगयूथानि शान्तपक्षिगणानि च ॥ „ 8–13

फुल्लपङ्कजषण्डानि प्रसन्नसलिलानि च ।
कारण्डवविकीर्णानि तटाकानि सरांसि च ॥ „ 8–14

द्रक्ष्यसे दृष्टिरम्याणि गिरिप्रस्रवणानि च ।
रमणीयान्यरण्यानि मयूराभिरुतानि च ॥ ' „ 8–15

'मच्छन्दादेव ते ब्रह्मन् ! प्रवृत्तेयं सरस्वती'* इति चतुर्मुखवाक्यं स्मारयतीत्येतावदेव वक्तुं प्रभवामो वयम् ॥

तदेतस्याद्भुतस्यारण्यकाण्डस्यातिशये निदर्शनमात्रमुपपादितम्, यतोऽत्र वक्तव्यं सर्वं पश्चादवसरे विस्तरेण विचिचारयिषवो वयम् ॥

एतत्संपुटसंपादनोपयुक्तमातृकादिविषये न किञ्चिन्नूतनतया वक्तव्यमस्ति । यावच्छक्ति शीघ्रमेवावशिष्टानपि भागान् प्रकटीकृत्य सहृदयानानन्दयितुमिच्छामो वयम् । अनुगृह्णातु चास्मान् तथासंपादनेन श्रीरामचन्द्रः ॥

इति
सुधीजनविधेयः,
N. S. वेङ्कटनाथशर्मा.

मैसूरु,
9–8–1965

* बाल. 2–31

## श्रीमद्वाल्मीकिरामायणारण्यकाण्डस्य

# विषयानुक्रमणिका

# श्रीमद्वाल्मीकिरामायणम्

अमृतकतकव्याख्यासहितम्

## अरण्यकाण्डः

॥ श्रीः ॥

॥ श्रीरामचन्द्रपरब्रह्मणे नमः ॥

# श्रीमद्वाल्मीकिरामायणम्

श्रीमन्माधवयोगिविरचितया

## अमृतकतकाख्यव्याख्यया सहितम्

## अरण्यकाण्डः

### प्रथमः सर्गः

[मुनिगणशरणागतिः]

**प्रविश्य तु महारण्यं दण्डकारण्यमात्मवान् ।**
**ददर्श रामो *[1] दुर्धर्षः तापसाश्रममण्डलम् ॥ १ ॥**

अथ अत्र्याश्रमवर्त्यृषिदर्शितवर्त्मना दण्डकारण्यं प्रविश्य दण्डकारण्यऋषिसङ्गमः । प्रविश्येत्यादि । अनेन तु वनं गन्तुं क्षममिति–

* 'दुर्धर्ष' इति पाठे रक्षोयुतत्वादशक्यप्रवेशमित्यर्थः–ति. रा.

[1] दुर्धर्ष–ङ. च.

ति–तिलकम्. गो–गोविन्दराजीयम्. ती--महेश्वरतीर्थीयम्.
रा–रामायणशिरोमणिः.

तापसैरुपदर्शितमार्गेणेति शेषः। दण्डकारण्यसंज्ञकं महारण्यम्। दण्डकस्य राज्ञः महाराष्ट्रदेशः शुक्रशापवशात् अरण्यमभूत्। ततः प्रभृति स देशः दण्डकारण्यसंज्ञितः*। आत्मवान्—स्वायत्तचित्तादि-त्रिपरिकरः। अत एव दुर्धर्षः—अशक्यरक्षोऽसुराक्रमः। मण्डलं—समूहः। मण्डलवत् अविदूरैकदेशसहितबहुवस्तुत्वात् मण्डलवाच्यत्वम् ॥ १ ॥

**कुशचीरपरिक्षिप्तं [1] ब्रह्मलक्ष्म्या समावृतम्।**
**यथा प्रदीप्तं [2] दुर्धर्षं † गगने सूर्यमण्डलम् ॥ २ ॥**

आश्रममण्डलमेव वर्णयते—कुशेत्यादि। परिक्षिप्तं—व्याप्तम्। ब्रह्मविद्यानुष्ठानजा लक्ष्मीः ब्रह्मलक्ष्मीः, तया समन्वितत्वादेव गगनाधिकरणसूर्यमण्डलवत् दुर्धर्षं, व्याकृतार्थम् ॥ २ ॥

**शरण्यं सर्वभूतानां ‡ सुसंमृष्टाजिरं सदा।**
**मृगैः बहुभिराकीर्णं पक्षिसङ्घैः समावृतम् ॥ ३ ॥**

शरण्यं—आवासार्हं सर्वभयत्राणार्हं च, तदर्हतीति यत्। 'शरणं गृहरक्षित्रोः' ॥ ३ ॥

**सुपूजितं [3] चोपनृत्तं नित्यमप्सरसां गणैः।**
**विशालैरग्निशरणैः स्रुग्भाण्डैः अजिनैः कुशैः ॥ ४ ॥**

अप्सरसां गणैः उपनृत्तं—उप—समीपे नर्तनवत्। मत्वर्थीयाजन्तो बहुव्रीहिर्वा, अतिमनोरमप्रदेशत्वात्। अतः एतैः सुपूजितं—

---

* प्रायः इदानीन्तनमहाराष्ट्रदेश एव दण्डकारण्यमिति—**ति.** एतत्कथा उत्तरकाण्डे 79, 80, 81 सर्गेषु द्रष्टव्या। † गगनमध्यस्थमित्यर्थः, तद्वद्रक्षोभिरनभिभवनीयम्। उदयास्तमययोर्हि सूर्यस्य मन्देहाख्यरक्षोभिराक्रमणं, न तु मध्याह्ने—**गो.** ‡ अलङ्कृतप्राङ्गणम्—**ति.**

[1] ब्राह्मया लक्ष्म्या—**ङ. ज.** [2] दुर्दर्शं—**ङ.** [3] प्रनृत्तं च—**ङ.**

पूज्यमानमिति यावत्। तृतीया त्वार्षी। अग्निशरणैः—अग्निहोत्रगृहैः। स्रुङ्मुखादिभाण्डानि यज्ञपात्राणि। तथा अरण्ये भवाः आरण्याः ॥ ४ ॥

समिद्भिः तोयकलशैः फलमूलैश्च शोभितम्।
आरण्यैश्च महावृक्षैः[1] पुण्यैः स्वादुफलैर्वृतम् ॥ ५ ॥
बलिहोमार्चितं पुण्यं ब्रह्मघोषनिनादितम्।
पुष्पैः वन्यैः परिक्षिप्तं पद्मिन्या च सपद्मया ॥ ६ ॥

बलिहोमार्चितं—वैश्वदेवबलिहरणसुसंस्कृतमित्यर्थः। ब्रह्मघोषः—वेदघोषः, तेन नादितं—संजातनित्यघोषम्। पद्मिनी—पद्मसरसी। सपद्मया—पद्मपुष्पयुक्तया ॥ ६ ॥

फलमूलाशनैर्दान्तैः चीरकृष्णाजिनाम्बरैः।
सूर्यवैश्वानराभैश्च पुराणैर्मुनिभिर्वृतम् ॥ ७ ॥

पुराणैः—वृद्धैः ॥ ७ ॥

पुण्यैश्च नियताहारैः शोभितं परमर्षिभिः।
तद्ब्रह्मभवनप्रख्यं ब्रह्मघोषनिनादितम् ॥ ८ ॥
ब्रह्मविद्भिः महाभागैः ब्राह्मणैरुपशोभितम् ॥

ब्रह्मभवनं—ब्रह्मलोकः। तत्त्वदर्शिभिः—अनाद्यनन्तब्रह्मविभूतिमयसकलप्रपञ्चानारोपितदर्शनवद्भिः, अत एव ब्रह्मविद्भिः। कार्यस्य उपादानानन्यतः ब्रह्मविभूतिमयाशेषप्रत्ययस्य अकृतकब्रह्मानन्यत्वबोधवद्भिः उक्तलक्षणब्राह्मणैः उपशोभितत्वात् प्रागुक्तब्रह्मभवनसादृश्यत्वम् ॥ ८ ॥

---

[1] पुण्य—ङ.

[1] स दृष्ट्वा राघवः श्रीमान् तापसाश्रममण्डलम् ।
अभ्यगच्छन्महातेजाः * विज्यं कृत्वा महद्धनुः ॥ ९ ॥

विज्यं कृत्वेति । आश्रमवर्तिमृगपक्षित्रासनिवृत्त्यर्थमिति शेषः ॥

दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः ॥
[2] अभ्यगच्छंस्तथा प्रीताः वैदेहीं च यशस्विनीम् ॥ १० ॥

दिव्यज्ञानोपपन्ना इति । निजकुलदैवतश्रीमदादिगुरुब्रह्मणः स्वशक्तिशुद्ध्यर्थावतारो रामः, स त्वागमिष्यतीह, बाधिष्यति च रावणमिति त्रिकालज्ञानोपपन्नाः इत्यर्थः । यशस्विनीमिति । दृष्टवन्त इति शेषः ॥ १० ॥

[3] ते तं सोममिवोद्यन्तं दृष्ट्वा वै [4] धर्मचारिणः ।
मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् दृढव्रताः ॥ ११ ॥

उद्यन्तं सोममिव दृष्ट्वेति—तद्वत् प्रियदर्शनम् । "सोमोऽस्माकं ब्राह्मणानां राजा" इति श्रुतेः । स्वकुलरक्षकसोमराजबुद्ध्या च दृष्ट्वेत्यर्थः । अत एव वक्ष्यमाणरक्षाप्रार्थनोपपत्तिः । मङ्गलानि—आशीर्वचनानि प्रयुञ्जानाः प्रत्यगृह्णन्—कुलदेवताबुद्ध्या प्रतिगृहीतवन्तः । येन क्रमेण अस्माभिः व्याख्यायते अयमेव

---

* विनीतवेषप्रवेशत्वादाश्रमाणां—**गो.**

[1] तत—**ङ.** [2] इदमर्धं नास्ति—**झ.** [3] एतदर्धानन्तरं लक्ष्मणं चैव दृष्ट्वा तु वैदेहीं च यशस्विनीम् इत्यधिकं—**ङ. झ.** [4] धर्मचारिणम्—**ज.**

पाठक्रमः । *अन्ये तु पाङ्क्तपाठयोजनाशक्त्या पाङ्क्तपाठमेव नाशयन्ति । तत् न कदाप्यादरणीयम् ॥ ११ ॥

†रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम् ।
ददृशुः विस्मिताकाराः रामस्य वनवासिनः ॥ १२ ॥

रूपसंहननं—रूपयुक्तम् । रूप्यते अनेन आयुरादिकं इति रूपं, सामुद्रिकलक्षणं, तद्युक्तं संहननं—पादादिषु शान्तगतिसंस्थानम् । तथा लक्ष्मीं—कान्तिम् । सौकुमार्यं—वयोवस्थाकृतं सुकुमारत्वं, अतिकोमललावण्यं, परदृष्टिचित्तग्राहिकालक्षणं, सुवेषतां—अभिगमनीयसौकुमार्यत्वं, विस्मितानां अद्भुतवस्तुदर्शनवतां यः प्रसिद्ध आकारः तथाविधाकारवन्तः, विस्मितचित्ता इति यावत् ॥ १२ ॥

वैदेहीं लक्ष्मणं रामं नेत्रैरनिमिषैरिव ।
‡आश्चर्यभूतान् ददृशुः सर्वे ते वनचारिणः ॥ १३ ॥
अत्रैनं हि महाभागाः सर्वभूतहिते [1] रतम् ।
अतिथिं पर्णशालायां राघवं संन्यवेशयन् ॥ १४ ॥

---

* गोविन्दराजादयः । तैः अत्र 'लक्ष्मणं चैव दृष्ट्वा तु वैदेहीं च यशस्विनीम् ।' ध्यधिकं संयोज्य व्याकृतम् । †रूपस्य—शरीरस्य संहननं—'समः समविभक्ताङ्गः' युक्तावयवसंस्थानविशेषं, लक्ष्मीं—समुदायशोभां, सौकुमार्यं—पुष्पहासतुल्यकोमलतां, सुवेषतां—शोभनलावण्यवत्तां ; यद्वा अभूषणेऽपि भूषितवत् भासमानत्वं रूपं, तथोक्तं 'अङ्गान्यभूषितान्येव वलयाद्यैर्विभूषणैः । येन भूषितवत् भान्ति तद्रूपमिति कथ्यते' इति । संहननं—सौन्दर्यं, तदप्युक्तं 'अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितः । सुश्लिष्टसन्धिबन्धः स्यात् तत् सौन्दर्यमिहोच्यते' इति । सुवेषतां—उचितशृङ्गारसंपन्नत्वम्—गो. ‡यद्यपि पूर्वं 'दिव्यज्ञानोपपन्नाः' इति कथनात् न विस्मयस्यावकाशः, अथापि सौन्दर्यस्यैव वाङ्मनसातीतत्वात् परतत्त्वस्वरूपस्यैव तादृशत्वाच्च आश्चर्यं युज्यत एव ॥

[1] रताः—ङ.

अत्रेति। यं आश्रममण्डलं अभ्यगच्छदिति पूर्वमुक्तं, अत्रैवेत्यर्थः। अतिथिं—न्यायतः पूजार्हं, पर्णशालायां—प्रातिस्विकाया-मिति शेषः ॥ १४ ॥

ततो [1] रामस्य सत्कृत्य विधिना पावकोपमाः ।
[2] आजह्रुस्ते महाभागाः सलिलं [3] धर्मचारिणः ॥ १५ ॥

रामस्य सत्कृत्येति। 'न लोकाव्यये'ति निषेधेऽपि षष्ठ्यार्षी ॥

पुष्पं मूलं फलं वन्यं आश्रमं च महात्मनः ।
* निवेदयित्वा धर्मज्ञाः ततः प्राञ्जलयोऽब्रुवन् ॥ १६ ॥

आश्रमं चेति—आवृतसलिलादिकमाश्रमं च। न्यवेदयन् इति शेषः। प्राञ्जलय इति। अवगतनिजनित्योपास्यनिजकुलदैवतब्रह्मावतार-त्वात्। अन्यथा न हि क्षत्रियमृषयो नमन्ति ॥ १६ ॥

धर्मपालो जनस्यास्य शरण्यस्त्वं महायशाः ।
पूजनीयश्च मान्यश्च राजा दण्डधरो गुरुः ॥ १७ ॥

पूजनीयश्चेति। देवताबुद्ध्येति शेषः। मान्यश्चेति। राज-बुद्ध्या सत्कारार्हश्च। तदुभयमेवोपपादयन्ति—राजेत्यादि। दण्डधरः—दुष्टनिग्रहकर्ता राजा चासि। एवमादिवादोपपत्तिः प्रागेवोक्ता दिव्य-ज्ञानोपपन्ना इति ॥ १७ ॥

---

* निवेदयित्वा—इमानि भवदीयानि, यथेष्टं विनियुङ्क्ष्वेति निवेद्य—**गो.**

[1] रामं सु—ङ. [2] एतदनन्तरं—'मङ्गलानि प्रयुञ्जानाः मुदा परमया युताः' इत्यधिकं—ङ. [3] ब्रह्मचारिणः—ङ. ज.

*[1] इन्द्रस्यैव चतुर्भागः प्रजा रक्षति, राघव !
राजा तस्मात् वरान् भोगान् [2] भुङ्क्ते लोकनमस्कृतः ॥१८॥

अथ सर्वलोकप्रसिद्धं पूजार्हहेतुं दर्शयन्ति—इन्द्रस्येति । यो राजा प्रजाः धर्मेण रक्षति स तु इन्द्रस्य भगवतो जगदशेषयागाभिपूजनीयस्य चतुर्भागः—चतुरंशोपादानविग्रहवान् । यदेवं तस्मात्—वरानित्यादि । इन्द्रस्य—परमात्मनः श्रीहिरण्यगर्भस्य चतुर्धा विभज्यावतीर्णस्य प्रधानभूतः चतुर्भागः इत्यपि स्पष्टम् । इन्द्रस्यैवेत्येवकारेण न तु यस्य कस्यापि देवतासामान्यस्येत्यर्थः । लोकनमस्कृतः इति । भवतीति शेषः ॥ १८ ॥

ते वयं भवता रक्ष्याः भवद्विषयवासिनः ।
नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वरः ॥ १९ ॥
न्यस्तदण्डा वयं, राजन् ! जितक्रोधा जितेन्द्रियाः ।
रक्षितव्यास्त्वया शश्वत् † गर्भभूताः तपोधनाः ॥ २० ॥

ते वयमिति—ऋषयः । भवता रक्ष्या इत्यत्र हेतुः—भवद्विषयवासिनः इति—भवद्देशवासिन इत्यर्थः । यद्यपि दण्डकारण्यदेशः रामस्य विषयो न भवति, तथापि सार्वभौमत्वात्

---

* इह—भूस्वर्गे इन्द्रस्य चतुर्भागः चतुर्थांशः राजा प्रजा रक्षति, इन्द्रस्येति लोकपालान्तराणामुपलक्षणम्, अष्टाभिर्लोकपालानां मात्राभिः निर्मितो नृपः' इति वचनात्। वस्तुतस्तु इन्द्रशब्दोऽयं परमात्मपरः । इन्द्रस्य—परमात्मनः चतुर्भागः—चतुर्थांशः तदवतारभूते व्यक्तिचतुष्टये एकव्यक्तिभूतः भवान् भोगान् भुङ्क्ते—गो. चतुर्भागः—चतुर्णां अर्थधर्मकाममोक्षाणां भागः आश्रितकर्तृकसेवा यस्मात् सः—शि.
† गर्भभूताः—प्रजातुल्याः—गो. मात्रैकरक्ष्यपुत्रतुल्याः—रा.

[1] इन्द्रस्येह—झ. [2] रम्यान् भुङ्क्ते नमस्कृताः—ज.

सामान्यतः तद्देशत्वं दण्डकारण्यस्यापि । अन्तराभिप्रायस्तु भूमविराड्विग्रहाश्रितत्वात् त्वद्विषयवासित्वं नित्यमेवेति । परावरायोध्यानगरस्थो वा भूः, परावरवनस्थो वा भूः ; तद्वदेतावरण्यं च ब्रह्मलोके विन्दतीति (?) श्रुतेः परं ब्रह्मवनं चास्ति । किं बहुना ? कारणप्रधानः कार्यप्रधानो वा त्वमेवेहामुत्र सर्वेनो रक्ष इत्यान्तराशयः । महाप्रभावानां भवतां कुतो रक्षकान्तरापेक्षेत्यत्राहुः—न्यस्तेत्यादि । न्यस्तः दण्डः—भूतनिग्रहो यैस्ते तथा । जितशापतो भूतनिग्रहाभावे च हेतुः—जितक्रोधा इति । तपोनाशभिया परिहृतक्रोधाः । तत्रापि हेतुः—जितेन्द्रिया इति । इन्द्रियैकद्वारकसकलदुःखक्षमापराः इत्यर्थः । यदेवमतः—रक्षितव्या इत्यादि । गर्भभूता इति । यथा मातुः गर्भं प्राप्तो जीवः मात्रा रक्ष्यते, तद्वत् रक्ष्याः इत्यर्थः । अत्राप्यन्तराभिप्रायस्तु — भवदीयभूमविग्रहाण्डगर्भनित्यप्रतिष्ठिता इति ॥ २० ॥

**एवमुक्त्वा फलैर्मूलैः पुष्पैर्वन्यैश्च [1] राघवम् ।**
*** अन्यैश्च विविधाहारैः सलक्ष्मणमपूजयन् ॥ २१ ॥**

अन्यैरिति । नीवारादिभिरित्यर्थः ॥ २१ ॥

**तथाऽन्ये तापसाः सिद्धाः रामं वैश्वानरो[2]पमाः ।**
**न्यायवृत्ताः यथान्यायं तर्पयामासुरीश्वरम् ॥ २२ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे प्रथमः सर्गः

---

* अन्ये—संकलसिद्धाः—गो. ति.

[1] पार्थिवम्—ङ. ज. [2] पमम्—ङ.

अन्ये सिद्धा इति। भरद्वाजादिवत् सङ्कल्पसिद्धा इत्यर्थः। न्यायवृत्ताः-न्यायः-धर्मः तदेकानुरुद्धं वृत्तं-चरित्रं येषां ते तथा। यथान्यायं ईश्वरं तर्पयामासुरिति। ईश्वरार्हपदार्थोपस्थानेनेति शेषः। अराका (२२½) मानः सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे प्रथमः सर्गः

---

## द्वितीयः सर्गः

[विराधनिरोधः]

*कृतातिथ्योऽथ रामस्तु †सूर्यस्योदयनं प्रति।
आमन्त्र्य स मुनीन् सर्वान् वनमेवान्वगाहत ॥ १ ॥

अथ तद्रजन्यां तत्रोपविश्य प्रातः तत्रत्यमुनीन् आपृच्छय वनमवगाहमानस्य विराधसंसर्गः। कृतातिथ्य इत्यादि। सूर्यस्योदयनं प्रतीति। उदयकाले इत्यर्थः। 'लक्षणेत्थंभूताख्यान' इति प्रतेः कर्मप्रवचनीयत्वात् उदयनशब्दात् द्वितीया, 'कर्मप्रवचनीययुक्ते द्वितीया' इति। अथ वा 'कृत्यल्युटो बहुलम्' इति ल्युडन्तत्वात् उदयनं-उदयं प्रति-प्राप्येत्यर्थः ॥ १ ॥

नानामृगगणाकीर्णं शार्दूलवृकसेवितम्।
ध्वस्तवृक्षलतागुल्मं [1] दुर्दर्शसलिलाशयम् ॥ २ ॥
‡निष्कूजनानाशकुनिझिल्लिकागणनादितम्।
लक्ष्मणानुगतो रामः वनमध्यं ददर्श ह ॥ ३ ॥

---

* एवं ऋषिभिः प्रार्थितो रामः विराधवधोपहारेण शरभङ्गं द्रष्टुं प्रतस्थ इत्युच्यते।
† उदयनं प्रति-उदयकाले-गो. ति. शि. ‡ इदमपि विराधोपप्लवादेव। झिल्लिकास्तु [illegible]मजन्तवः।

[1] प्रसन्न-झ.

ध्वस्ता वृक्षाः लता गुल्मानि यस्मिन् तत्तथा; पर्वतोपम-विराधसंचारवशादिति शेषः। दुर्दर्शसलिलाशयामित्यपि उक्तहेतोरेव। निष्कूजाः-निश्शब्दाः नानाः शकुनयो यस्मिन् तत्तथा। नादितं वनं अन्वगाहत इति पूर्वेण सम्बन्धः ॥ ३ ॥

[1]सीतया सह काकुत्स्थः तस्मिन् घोरमृगायुते।
ददर्श गिरिशृङ्गाभं पुरुषादं महास्वनम् ॥ ४॥

घोरमृगाः—तरक्ष्वादयः। पुरुषान् अत्तीति पुरुषादाः, पचाद्यच् ॥

गम्भीराक्षं [2] महावक्त्रं विकटं विषमोदरम्।
बीभत्सं विषमं दीर्घं विकृतं घोरदर्शनम् ॥ ५॥

गम्भीराक्ष—अगाधचक्षुषं, विकटं—विशालं, विषमं—निम्नोन्नत-संस्थानं, बीभत्सं—कुत्सितं, विकृतं—उच्यमानधर्मवत्तो विपरीत-वेषम्। अत एव घोरदर्शनम् ॥ ५ ॥

वसानं चर्म वैयाघ्रं वसार्द्रं रुधिरोक्षितम्।
त्रासनं सर्वभूतानां व्यादितास्यमिवान्तकम् ॥ ६ ॥

वसा—मांसविशेषः। व्यादितं, छान्दस इट्, व्यात्तास्यमिति यावत् ॥ ६ ॥

त्रीन् सिंहांश्चतुरो व्याघ्रान् द्वौ वृकौ पृषतान् दश।
सविषाणं वसादिग्धं गजस्य च शिरो महत् ॥ ७॥
अवसज्यायसे शूले विनदन्तं महास्वनम् ॥

---

[1] वनमध्ये ङु—ङ. झ.  [2] महासत्त्वं—ङ.

पृषताः—बिन्दुमृगाः । महास्वनं यथा तथा विनदन्तं—क्ष्वेलनं कुर्वाणम् ॥ ७ ॥

स रामं लक्ष्मणं चैव सीतां दृष्ट्वा च मैथिलीम् ।
[1]अभ्यधावत् सुसंक्रुद्धः प्रजाः काल इवान्तकः ॥ ८ ॥

काले—युगान्तकाले क्रुद्धः अन्तकः प्रजाः अभि—उद्दिश्य यथा अधावत, तद्वत् अभ्यधावत ॥ ८ ॥

स कृत्वा भैरवं नादं चालयन्निव मेदिनीम् ।
अङ्केनादाय वैदेहीं अपक्रम्य ततोऽब्रवीत् ॥ ९ ॥

अङ्केनेति—कटिप्रदेशेनेति यावत् ॥ ९ ॥

युवां जटाचीरधरौ सभार्यौ क्षीणजीवितौ ।
*प्रविष्टौ दण्डकारण्यं शरचापासि[2]धारिणौ ॥ १० ॥

सभार्याविति । भार्याशब्दस्तु योषिन्मात्रवाची । कयाचन सहितौ । †अन्यस्तु छत्रिन्यायेन एकस्य सहायत्वेन उभयस्यापि सभार्यत्वमिति जल्पति । अथापि ध्वनिदोषो दुर्वारः आयाति ॥ १० ॥

कथं तापसयोर्वां च वासः प्रमदया सह ।
अधर्मचारिणौ पापौ कौ युवां मुनिदूषणौ ॥ ११ ॥
अहं वनमिदं दुर्गं विराधो नाम राक्षसः ।
चरामि सायुधो नित्यं ऋषिमांसानि भक्षयन् ॥ १२ ॥

---

* क्षीणजीवितौ प्रविष्टौ—क्षीणजीवितत्वादेव प्रविष्टौ—**गो.** † महेश्वरतीर्थः । 'द्वयोरेका भार्या' इति बुद्धिदोषात् तथोक्तमिति गोविन्दराजीयनिर्वाहः स्वरसः ।

[1] अभ्यधावत संक्रुद्धः—ङ. [2] पाणिनौ—ङ.

इयं नारी वरारोहा मम भार्या भविष्यति।
युवयोः पापयोश्चाहं पास्यामि रुधिरं मृधे ॥ १३ ॥

वां–युवयोः वासः। वां चेति चकारः प्रमदया च सहेति व्यत्यस्य योजनीयः *। अन्यथा 'न च वाहे'ति निषेधतः वामादेशाभावप्रसङ्गः। आर्ष एव च सम्बन्धप्रयोजक आदेशः। मुनिदूषणाविति–मुनिवेषविरुद्धशरचापादिधारणात्। अत एव पापयोरित्यप्याह। मृधे–युद्धे ॥ १३ ॥

तस्यैवं ब्रुवतो धृष्टं विराधस्य दुरात्मनः।
श्रुत्वा सगर्वितं वाक्यं संभ्रान्ता जनकात्मजा ॥ १४ ॥
सीता प्रावेपतोद्वेगात् प्रवाते कदली यथा ॥ १५ ॥

सगर्वितं—भावे निष्ठा, सगर्वमिति यावत्। †उद्वेगात्–भयात् ॥ १५ ॥

तां दृष्ट्वा राघवः सीतां विराधाङ्कगतां शुभाम्।
अब्रवील्लक्ष्मणं वाक्यं मुखेन परिशुष्यता ॥ १६ ॥

परिशुष्यता–शोकसङ्कुचितेन मुखेन उपलक्षितः ॥ १६ ॥

पश्य, सौम्य ! नरेन्द्रस्य जनकस्यात्मसम्भवाम्।
मम भार्यां शुभाचारां विराधाङ्के [1] प्रवेशिताम् ॥ १७ ॥
अत्यन्तसुखसंवृद्धां राजपुत्रीं [2] यशस्विनीम्।
यदभिप्रेतमस्मासु प्रियं वरवृतं च यत् ॥ १८ ॥

---

* प्रमदया सह वासश्च . . . वामादेश आर्षः–गो. † अशक्यनिरोधदुःखादिजन्यमनोवैक्लव्यं–उद्वेगः।

[1] प्रवेपिताम्–ङ. झ. [2] मनस्विनीम्–ङ.

कैकेय्यास्तु सुसंवृद्धं क्षिप्रमद्यैव, लक्ष्मण !
या न तुष्यति राज्येन पुत्रार्थे* दीर्घदर्शिनी ॥ १९ ॥
ययाहं सर्वभूतानां हितः प्रस्थापितो वनम् ।
अद्येदानीं सकामा सा या माता मम† मध्यमा ॥ २० ॥
परस्पर्शात्तु वैदेह्या न [1]दुःखतरमस्ति मे ।
[2]पितुर्वियोगात्, सौमित्रे ! स्वराज्यहरणात् तथा ॥ २१ ॥

यदित्यादि । अस्मासु विषये कैकेय्याः यद्दुःखं वने सम्पादनीयतया अभिप्रेतं, अत एव यत् वरवृतं च तत् क्षिप्रं—द्राक्—अद्यैव, संवृद्धं—सिद्धं, या तु पुत्रार्थे—पुत्रप्रयोजननिमित्तं, राज्येन—राज्याभिषेकवरणमात्रेण न तुष्यति । सर्वभूतानां हितोऽप्यहं यया दीर्घदर्शिन्या वनमपि पुत्रराज्यस्थैर्याय प्रस्थापितः, या प्रसिद्धा मम मध्यमा माता सपुत्रा दशरथपत्नी. पत्नीनां मध्यवर्तित्वात् मध्यमा कैकेयी, सुमित्रायाश्च कनीयसी कैकेयी अद्य दिवसे अस्मिन् काले सकामा जाता ॥ २१ ॥

इति ब्रुवति काकुत्स्थे बाष्पशोक[3]परिप्लुते ।
अब्रवील्लक्ष्मणः क्रुद्धः [4]रुद्धो नाग इव श्वसन् ॥ २२ ॥

बाष्पशोकाभ्यां नेत्रचित्तगताभ्यां परिप्लुतः—पीडितः । काकुत्स्थ इति । कैकेयीं प्रति विरोधं प्रत्यपीति शेषः । रुद्धो नाग इवेति—आहितुण्डिकेन मन्त्ररुद्धः पेटीरुद्धोऽपि वा सर्प इवेत्यर्थः । (निः)श्वसन्निति—रामविषाददर्शनात् ॥ २२ ॥

---

* सीतावियोगे नाहं जीवेयम्, तेन च भरतस्य राज्यं स्थिरं भवेत् । एवं मह्यं वनवासनियोगे सीताऽपि अनुगच्छेत्, वने च सीताविनाशः सुलभः—इत्याद्यालोचनावतीत्यर्थः । † मध्यमा—'स्यान्मध्यमा दृष्टरजाः'—प्रकृतेऽनिवृत्तरजा इत्यर्थः । तेन कौसल्यासुमित्रयोः वृद्धात्वं, कैकेय्याः तरुणीत्वं, तत्प्रयुक्तपतिवाल्लभ्यादिकं सूच्यते ।

[1] दुःखान्तर–ङ. [2] पितुर्विनाशात्–ङ. [3] परिप्लुतः–ङ. [4] क्रुद्धो–ङ.

*अनाथ इव [1]भूतानां नाथस्त्वं वासवोपमः ।
मया प्रेष्येण, काकुत्स्थ! किमर्थं परितप्यसे? ॥ २३ ॥

अनाथ इवेति । नाथसापेक्षः प्राणी नाथरहितः सन् यथा शोचति तद्वदित्यर्थः । अथ भूतानां नाथः—त्राता । तत्र हेतुः—वासवोपम इति । लक्ष्मणस्य तु वासवानुपचरितसर्वभूतनाथब्रह्मतत्त्वज्ञानं ऋषीणामिव नास्त्यत्र, रामस्यैव तथात्वज्ञानावरणे का कथाऽस्य? मया प्रेष्येणेति—सहित इति शेषः ॥ २३ ॥

शरेण निहतस्याद्य मया क्रुद्धेन रक्षसः ।
विराधस्य गतासोर्हि मही पास्यति शोणितम् ॥ २४ ॥

किं त्वयेह क्रियेतेत्यतः—शरेणेत्यादि ॥ २४ ॥

†राज्यकामे मम क्रोधो भरते यो बभूव ह ।
तं विराधे विमोक्ष्यामि वज्री वज्रमिवाचले ॥ २५ ॥

तं विराधे विमोक्ष्यामीति । भरतेन राज्यकामनायाः अप्रदर्शितत्वात् तत्र दुर्मोक्षमिति शेषः ॥ २५ ॥

---

* स्वयमेव सर्वशक्तस्य, शक्तपुरुषसहायकस्य च परितापः न युक्त इत्याशयः ।

† अत्र—भरते दोषाभावस्य स्पष्टं ज्ञानेऽपि कथमेवमुक्तिः? इत्याशंक्य, 'व्यसनकाले लोको वाच्यमवाच्यं च न जानातीत्यमुमर्थं व्यञ्जयितुमेवमुक्तं' इति गोविन्दराजीये समाहितम् । वस्तुतस्तु 'भरते यो बभूव' इत्येवोक्तेः, चित्रकूटं प्रति भरतागमनवेलायां लक्ष्मणेन प्रथमं 'संपन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनम् । आवां हन्तुं समभ्येति भरतः कैकयीसुतः ॥' इत्युक्तया, अनन्तरं भरतभावज्ञानानन्तरं तादृशकोपस्य संहर्तव्यतायाः प्राप्तत्वात् निरवकाशं तं कोपं सीतापहारिणि विराधे प्रमोक्ष्यामीत्युच्यत इति न कश्चिद्दोषः ॥

[1] लोकानां—ङ.

मम भुजबलवेगवेगितः
पततु शरोऽस्य महान् महोरसि ।
[1] व्यपनयतु [2] तनोऽश्व जीवितं
पततु ततस्स मह्यां विघूर्णितः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे द्वितीयः सर्गः

---

भुजबलवेगेन--धनुषः कर्षणवेगेन वेगितः--आहितवेगः, इतजन्तो वा । विघूर्णितः--सञ्जातभ्रमणः । चरु(२६)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे द्वितीयः सर्गः

---

## तृतीयः सर्गः

### [विराधकदनम्]

[3] अथोवाच * पुनर्वाक्यं विराधः पूरयन् वनम् ।
[4] आत्मानं पृच्छते ब्रूतं कौ युवां क्व गमिष्यथः ॥ १ ॥

अथ विराधेन सह युद्धविनोदः । अथोवाचेत्यादि । आत्मानं--युष्माकं स्वरूपं पृच्छते मह्यं ब्रूतम्, लोण्मध्यमद्विवचनम् । प्रश्नस्यैव प्रकारः---काविल्यादि ॥ १ ॥

तमुवाच ततो रामो [5] राक्षसं ज्वलिताननम् ।
पृच्छन्तं सुमहातेजाः इक्ष्वाकुकुलमात्मनः ॥ २ ॥

---

* एवं रामं प्रति लक्ष्मणवाक्यं श्रुत्वा पुनः वाक्यमुवाच ।

[1] व्यवसयतु--ङ. झ. [2] ततोऽस्य--ङ. [3] तावुवाच ततो भीमः--ङ. अस्य श्लोकस्य पूर्वं---इत्युक्त्वा लक्ष्मणः श्रीमान् राक्षसं प्रहसन्निव । को भवान् वनमभ्येत्य चरिष्यति यथासुखम् ॥ इत्यधिकं--ङ. [4] पृच्छतो मम हि ब्रूतं--ङ. [5] विराधं--ङ.

ज्वलिताननमिति। राक्षसत्वात् अग्निज्वालयेव ज्वलिताननत्वम्। आत्मनः इक्ष्वाकुकुलं—इक्ष्वाकुवंश्यत्वं उवाचेत्यन्वयः ॥ २ ॥

क्षत्रियौ वृत्तसम्पन्नौ विद्धि नौ वनगोचरौ।
त्वां तु वेदितुमिच्छावः कस्त्वं चरसि दण्डकान् ॥ ३ ॥

तद्वचनस्यैव प्रकारः—क्षत्रियावित्यादि। वनगोचराविति बहुव्रीहिः। किञ्चिन्निमित्तत इति शेषः ॥ ३ ॥

तमुवाच विराधस्तु रामं सत्यपराक्रमम्।
हन्त! वक्ष्यामि ते, राजन्! निबोध मम, राघव! ॥ ४ ॥

मम निबोधेति। मम वचनात् मम स्वरूपमिति शेषः ॥ ४ ॥

पुत्रः किल [1] जयस्याहं मम माता शतह्रदा।
विराध इति मामाहुः पृथिव्यां सर्वराक्षसाः ॥ ५ ॥
तपसा चापि मे प्राप्ता ब्रह्मणो हि प्रसादजा।
* शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च ॥ ६ ॥
उत्सृज्य प्रमदामेनां अनपेक्षौ यथागतम्।
त्वरमाणौ पलायेतां न वां जीवितमाददे ॥ ७ ॥

लोके तटस्थप्राणिषु येन केनापि शस्त्रेण—शस्त्रबलेन अवध्यता प्राप्ता। अपि च रज्ज्वादिवत् घटादिवद्वा अच्छेद्या-भेद्यत्वं—प्राणवियोजनाय छेद्यभेद्याशक्याशिरस्त्वं च प्राप्तमिति विपरिणामः। यदेवं, अतः—उत्सृज्येत्यादि। † अनपेक्षौ—युद्धाशारहितौ ॥ ७ ॥

---

* प्राणवियोजनफलकच्छेदनभेदनानर्हत्वं विवक्षितम्। अथवा व्रणोत्पादनद्वैधीभावयोः अशक्यत्वं वा विवक्षितम्। न केवलं अवध्यत्वं, अपि तु व्यथाजननमप्यसंभवीति भावः। † प्रमदापेक्षारहितौ वा। तत्प्राप्तिप्रत्याशारहिताविति यावत्।

[1] जवस्याहं—ज. झ.

तं रामः प्रत्युवाचेदं कोपसंरक्तलोचनः ।
राक्षसं विकृताकारं विराधं पापचेतसम् ॥ ८ ॥
क्षुद्र! धिक् त्वां तु *हीनार्थं मृत्युमन्वेषसे ध्रुवम् ।
रणे संप्राप्स्यसे तिष्ठ न मे जीवन् गमिष्यसि ॥ ९ ॥

क्षुद्र धिक् त्वामिति । एवं धिक्कारहेतुः—हीनार्थमिति । परदारस्पर्शलक्षणजुगुप्सितव्यापारवृत्तमिति यावत् । मृत्युमन्वेषसे ध्रुवमिति । उक्तदुष्कर्मवशादिति शेषः । तं च मृत्युं रणे संप्राप्स्यसे । मे पुरतः क्षणं तिष्ठ । स त्वं जीवन् भूत्वा न गमिष्यसि ॥ ९ ॥

ततः सज्यं धनुः कृत्वा रामः सुनिशितान् शरान् ।
सुशीघ्रमभिसन्धाय राक्षसं निजघान ह ॥ १० ॥
धनुषा ज्यागुणवता सप्तबाणान् मुमोच ह ।
रुक्मपुङ्खान् महावेगान् सुपर्णानिलतुल्यगान् ॥ ११ ॥

ततः सज्यमित्याद्युक्तश्लोकस्यैव विवरणं—धनुषेत्यादि । ज्यागुणः—ज्यारूपरज्जुः । सुपर्णानिलाभ्यां तुल्यं गच्छन्तीति तथा; 'डोऽन्यत्रापि' इति डः ॥ ११ ॥

ते शरीरं विराधस्य भित्त्वा बर्हिणवाससः ।
निपेतुः† शोणितादिग्धाः धरण्यां पावकोपमाः ॥ १२ ॥

बर्हिणवाससः इति । 'फलबर्हाभ्यां इनज्वक्तव्यः' इति इनच् स्वार्थे छान्दसः ‡बर्हवासस इति यावत् । शोणितेन रक्तेन आदिग्धाः इति, अतिशीघ्रादिति शेषः ॥ १२ ॥

---

* भवदभिमतं प्रयोजनं न सिद्ध्यतीति सूचनाय वा हीनार्थमिति । † आदिग्धाः-व्याप्ताः-रा. ईषल्लिप्ताः—गो. अच्छेद्यत्वाभेद्यत्ववरबलात् शस्त्राणां शोणितेन आदिग्धत्वं वा विवक्षितं स्यात् । वैदेहीपरित्यागस्तु स्वप्रवृत्तिप्रतिरोधजकोपात् रामलक्ष्मणभीषणार्थमपि स्यात् । ‡ मयूरबर्हाण्येव वासांसि—यस्येत्यर्थः ।

स विद्धो न्यस्य वैदेहीं शूलमुद्यम्य राक्षसः।
अभ्यद्रवत् सुसंक्रुद्धः तदा रामं सलक्ष्मणम्॥ १३॥

स विद्धो न्यस्य वैदेहीमिति। स तु सप्तरामबाणेषु देहं भित्त्वा विनिर्गतेष्वपि शस्त्रेणावध्यत्ववरवैभवात् अगतासुः केवलं व्यथितः, व्यथावशात् वैदेहीं हित्वा शूलमुद्यम्याभ्यद्रवत्। एवं च अच्छेद्याभेद्यत्वमिति अव्यथनीयत्वमिति यः कश्चिदाह तद्व्यर्थम्। व्यथाभावे वैदेहीत्यागस्यासंभवात्। शब्दद्वयवैयर्थ्यात्, तथा अर्थे शब्दासामर्थ्याच्च॥ १३॥

स विनद्य महानादं शूलं शक्रध्वजोपमम्।
प्रगृह्याशोभत तदा व्यात्तानन इवान्तकः॥ १४॥

महानादं विनद्येति। महानादं कृत्वेति यावत्। शक्रध्वजोपममित्यनेन शोभावत्त्वं दृष्टिप्रियत्वं च उपलभ्यते। व्यात्तं—विवृतं आननं यस्य स तथा। 'अच उपसर्गात्तः' इति तत्वं ददातेः तादौ किति॥ १४॥

अथ तौ भ्रातरौ दीप्तं शरवर्षं ववर्षतुः।
विराधे राक्षसे तस्मिन् * कालान्तकयमोपमे॥ १५॥

कालोऽन्तको यमश्चेति प्राण-तनु-मनः-संहारप्रधानं मूर्तित्रय संहाररुद्रस्य, तदुपमः तथा॥ १५॥

सप्रहस्य [1] महारौद्रः स्थित्वाऽजृम्भत राक्षसः।
जृम्भमाणस्य ते बाणाः कायान्निष्पेतुराशुगाः॥ १६॥

---

* अन्तकः—मृत्युः, कालः—तन्निमित्तं, यमः—तन्नियन्ता—**रा.** काले—संहारकाले अन्तकः—नाशकः यः यम.—**गो.**

[1] महारौद्रं—ङ.

स प्रहस्येति। किमर्थमेतौ मयि शरवर्षं कुरुतः? अहं तु शरावध्यः इत्युच्यमानावपीत्यतिहासः। ते बाणा इति। रामलक्ष्मणविसृष्टाः कायान्निष्पेतुरिति–मुखद्वारा कायं प्रविश्य भित्त्वा कायान्निष्पेतुरित्यर्थः। आशु–शीघ्रं गच्छन्तीति तथा ॥ १६ ॥

*[1] स्पर्शात्तु वरदानेन प्राणान् संरोध्य राक्षसः।
विराधः शूलमुद्यम्य [2] राघवावभ्यधावत ॥ १७ ॥

प्राणान् संरोध्य–धृत्वा। अतिदुःखं प्राप्तोऽस्मीति शेषः ॥ १७ ॥

तच्छूलं वज्रसङ्काशं गगने ज्वलनोपमम्।
द्वाभ्यां शराभ्यां चिच्छेद रामः शस्त्रभृतां वरः ॥ १८ ॥

तच्छूलमिति–करस्थदशायामेवेति शेषः ॥ १८ ॥

तद्रामविशिखच्छिन्नं शूलं तस्य कराद्भुवि।
पपाताशनिना च्छिन्नं मेरोरिव शिलातलम् ॥ १९ ॥

अशनिः–दम्भोलिः ॥ १९ ॥

तौ [3] खड्गौ क्षिप्रमुद्यम्य कृष्णसर्पोपमौ शुभौ।
तूर्णमापततस्तस्य तदा प्रहरतां बलात् ॥ २० ॥

प्रहरतां–प्राहरतामिति यावत् ॥ २० ॥

स वध्यमानः सुभृशं [4] भुजाभ्यां परिगृह्य तौ।
अप्रकम्प्यौ नरव्याघ्रौ रौद्रः प्रस्थातुमैच्छत ॥ २१ ॥

भुजाभ्यां परिगृह्येति—एकैकेन एकैकमिति यावत् ॥ २१ ॥

---

* स्पर्शात्–सम्बन्धात्–गो. ति. रा. अथ वा 'स्पृश बाधनस्पर्शनयोः' इति धातुप्रकृतिकत्वात् बाधनात: वरदानमहिम्ना प्राणान् संरोध्येत्यर्थः।

[1] बलात्तु वरदानस्य–ङ. झ. [2] राघवाय व्यसर्जयत्–ङ. [3] भुजौ–ङ. [4] बाहुभ्यां–ङ.

तस्याभिप्रायमाज्ञाय रामो लक्ष्मणमब्रवीत् ।
वहत्वयमलं तावत् पथाऽनेन तु राक्षसः ॥ २२ ॥

तस्याभिप्रायं—काननान्तर्नयनविषयकम् ॥ २२ ॥

यथा चेच्छति, सौमित्रे ! तथा वहतु राक्षसः ।
अयमेव हि नः पन्थाः येन याति निशाचरः ॥ २३ ॥

यथेच्छति तथा वहत्विति । *अनेन सुनिर्भयत्वं दर्शितम् ॥२३॥

स तु स्वबलवीर्येण समुत्क्षिप्य निशाचरः ।
बालाविव स्कन्धगतौ [1]चकारातिबलौ[2] ततः ॥ २४ ॥

स्कन्धगतौ चकारेति । स्कन्धमारोपयामासेति यावत् ॥

तावारोप्य ततः स्कन्धं राघवौ रजनीचरः ।
विराधो विनदन् घोरं जगामाभिमुखो वनम् ॥ २५ ॥

वनं महामेघनिभं प्रविष्टः
द्रुमैर्महद्भिः विविधैरुपेतम् ।
नानाविधैः पक्षिशतैः विचित्रं
शिवायुतं व्यालमृगैः विकीर्णम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे तृतीयः सर्गः

---

शिवाभिः युतं—शिवायुतं, अस्य नित्यपिशिताशनत्वात् तदुच्छिष्टपिशितापेक्षया शिवानैबिड्यम् । तरु(२६)मानः सर्गः ॥२६॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे तृतीयः सर्गः

---

*इदमेव 'अप्रकम्प्यौ' (श्लो. २१) इति विशेषणेनोक्तमिति भावः ।

[1] चचाराति–ङ. [2] बलोद्धतः–ङ. झ.

## चतुर्थः सर्गः

[ विराधखननम् ]

ह्रियमाणौ तु तौ दृष्ट्वा वैदेही रामलक्ष्मणौ ।
उच्चैः स्वरेण चुक्रोश प्रगृह्य [1] सुभुजा भुजौ * ॥ १ ॥

अथ विराधवधः । ह्रियमाणावित्यादि । प्रगृह्य—उद्यम्य, एवमर्थेऽस्य बहुशः इह प्रयोगः ॥ १ ॥

एष दाशरथी रामः सत्यवान् [2] शीलवान् शुचिः ।
रक्षसा [3] रौद्ररूपेण ह्रियते सहलक्ष्मणः ॥ २ ॥

चुक्रोशेत्युक्तक्रोशस्यैव प्रकारः—एष इत्यादि ॥ २ ॥

मां [4] वृकाः भक्षयिष्यन्ति शार्दूला द्वीपिनस्तथा ।
मां हरोत्सृज्य काकुत्स्थौ नमस्ते, राक्षसोत्तम ! ॥ ३ ॥

शार्दूलाः द्वीपिनः इति सबिन्दुबिन्दुव्याघ्रौ ॥ ३ ॥

तस्याः तद्वचनं श्रुत्वा वैदेह्या रामलक्ष्मणौ ।
वेगं प्रचक्रतुर्वीरौ वधे तस्य दुरात्मनः ॥ ४ ॥

वेगं—त्वराम् ॥ ४ ॥

तस्य रौद्रस्य सौमित्रिः बाहुं सव्यं † बभञ्ज ह ।
रामस्तु दक्षिणं बाहुं तरसा तस्य रक्षसः ॥ ५ ॥

बाहुं बभञ्जेति । नैतावता प्राणहानिरिति न वरदानविरोधः, अच्छेद्याभेद्यत्वस्य प्राणनाशक्षमावयवविश्लेषविषयतया व्याख्यातत्वाच्च ॥

---

* भुजौ प्रगृह्य—उद्यम्य । † बभञ्ज मुष्टिप्रहारेणेति शेषः । अभेद्याच्छेद्यत्ववरस्तु शस्त्रकरणकतद्विषय इत्यन्ये—ति.

[1] सुमहाभुजौ—ङ. ज. [2] बलवान्—ङ. [3] घोररूपेण—ङ.

[4] काकाः—ङ. ज.

स भग्नबाहुः संविग्नः निपपाताशु[1]राक्षसः।
धरण्यां मेघसङ्काशः वज्रभिन्न इवाचलः ॥ ६ ॥

संविग्नः—खिन्नः ॥ ६ ॥

मुष्टिभिः जानुभिः पद्भिः सूदयन्तौ तु राक्षसम्।
उद्यम्योद्यम्य चाप्येनं स्थण्डिले निष्पिपेषतुः ॥ ७ ॥

सूदयन्तौ—हिंसन्तौ ॥ ७ ॥

स विद्धो बहुभिर्बाणैः खड्गाभ्यां च परिक्षतः।
निष्पिष्टो बहुधा भूमौ न ममार स राक्षसः ॥ ८ ॥

न ममारेति। वरमहिम्नेति शेषः ॥ ८ ॥

तं प्रेक्ष्य रामः सुभृशं अवध्यमचलोपमम्।
भयेष्वभयदः श्रीमान् इदं वचनमब्रवीत् ॥ ९ ॥

भयेष्विति। भयकालेषु, भीतानामिति शेषः ॥ ९ ॥

तपसा, पुरुषव्याघ्र! राक्षसोऽयं न शक्यते।
शस्त्रेण युधि निर्जेतुं राक्षसं निखनावहे ॥ १० ॥
[2]कुञ्जरस्येव रौद्रस्य राक्षसस्यास्य, लक्ष्मण!
वनेऽस्मिन् सुमहच्छ्वभ्रं खन्यतां रौद्रवर्चसः ॥ ११ ॥
इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति।
तस्थौ विराधमाक्रम्य कण्ठे पादेन वीर्यवान् ॥ १२ ॥

निखनावहे—खनुविदारणे, उभयपदी, निखननं कुर्मः ॥१२॥

तच्छ्रुत्वा राघवेणोक्तं राक्षसः [3]प्रश्रितं वचः।
इदं प्रोवाच काकुत्स्थं विराधः पुरुषर्षभम् ॥ १३ ॥

---

[1] मूर्छितः—ङ. [2] ११-१२ श्लोकद्वयं नास्ति—ङ. [3] प्रथितं—ङ.

तदिति—स्वखननमित्यर्थः । प्रश्रितमिति—स्ववरमपि तत्प्रसाध्यप्राणवियोजनोपाये अकिञ्चित्करं मन्वानत्वात्, शापान्तकालस्य प्राप्तत्वाच्च प्रश्रयप्राप्तिः ॥ १३ ॥

*[1]हतोऽस्मि, पुरुषव्याघ्र! शक्रतुल्यबलेन वै ।
मया तु पूर्वं त्वं मोहात् न ज्ञातः, पुरुषर्षभ! ॥ १४ ॥

पूर्वमिति । प्राणान्तव्यापारप्रवृत्तेः पूर्वमित्यर्थः ॥ १४ ॥

कौसल्यासुप्रजाः, राम! तात! त्वं विदितो मया ।
वैदेही च महाभागा लक्ष्मणश्च [2]महायशाः ॥ १५ ॥

इदानीं वा कीदृशं ते ज्ञानं? इत्यतः—कौसल्येत्यादि । कौसल्यायाः सुप्रजाः—कौसल्यासुप्रजाः, बहुव्रीह्यधिकारेऽपि 'नित्यमसिच् प्रजामेधयोः' इति तत्पुरुषे च छान्दसोऽसिच् । हे राम! त्वं कौसल्यासुप्रजा इति मया अविदितः ॥ १५ ॥

†[3]अभिशापादहं घोरां प्रविष्टो राक्षसीं तनुम् ।
तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन ह ॥ १६ ॥

कथमेवं तेऽतीन्द्रियज्ञानशक्तिः? इत्यत्राह—अभिशापादित्यादि । तुम्बुरुर्नाम—प्रसिद्धो गन्धर्वः ॥ १६ ॥

प्रसाद्यमानश्च मया सोऽब्रवीन्मां महायशाः ।
यदा दाशरथी रामः त्वां वधिष्यति संयुगे ॥ १७ ॥
तदा प्रकृतिमापन्नः भवान् स्वर्गं गमिष्यति ।
अनुपस्थीयमानो मां संक्रुद्धो व्याजहार ह ॥ १८ ॥

---

* रामपादस्पर्शेन प्रत्यभिजानन्नाह—हत इत्यादि—गो. अधिकपाठे 'आक्रम्य कण्ठे पादेन' इत्युक्तत्वादेवमुक्तम् । † अपि शापादिति पाठे—अपिः गर्हायाम् ।

[1] भक्तोऽस्मि—ङ. [2] महाबलः—ङ. [3] अपि—ङ.

[1]इति वैश्रवणो राजा रम्भासक्तं पुराऽनघ !
तव प्रसादान्मुक्तोऽहं [2]अभिशापात् सुदारुणात् ॥ १९ ॥
[3]भुवनं स्वं गमिष्यामि स्वस्ति वोऽस्तु, परन्तप ! ॥

तस्य शापनिमित्तमाह—इतीत्यादि । 'स्वर्गं गमिष्यतीति स वैश्रवणो राजा अब्रवीदि'ति पूर्वेणान्वयः । 'इति संक्रुद्धो व्याजहार' इति अग्रेण चान्वयः । इतिशब्दः प्रकृतावमर्शकः । ततश्च इति व्याजहार—रक्षोयोनिं प्रविशेति क्रुद्धः शापवचनं व्याजहारेत्यर्थः । क्रोधहेतुमाह—अनुपस्थीयमान इति—यथाकालमकृतोपस्थान इत्यर्थः । तत्र च हेतुः रम्भासक्तमिति । रम्भा—प्रसिद्धाप्सराः । स्वं भुवनं—स्वलोकं, 'विष्टपं भुवनं जगत्' । "इति वैश्रवणो राजा रम्भासक्तं पुरानघ ! अनुपस्थीयमानो मां संक्रुद्धो व्याजहार ह" इति पाठं पश्यामः । अत्र पाठान्तरं पठित्वा मिथ्याक्लेशमन्वभूत् योजने चान्यः * ॥ १९ ॥

इतो वसति धर्मात्मा शरभङ्गः प्रतापवान् ॥ २० ॥
अध्यर्धयोजने, तात ! महर्षिः सूर्यसंनिभः ।

अध्यारूढमर्धं यस्मिन् तदध्यर्धं । सार्धयोजन इति यावत् ॥

तं क्षिप्रमभिगच्छ त्वं स †ते श्रेयो [4]विधास्यति ॥ २१ ॥

---

* अत्र 'अनुपस्थीयमानः' इत्यर्धानन्तरं 'इति वैश्रवणः' इत्यर्धं गो. ती. पठ्यते । 'रम्भाऽऽसक्तं पुराऽनघ !' इतिस्थाने 'रम्भासक्तमुवाच ह' इति च । संक्रुद्धः राजा—वैश्रवणो राजा राक्षसो भवेति व्याजहार, प्रसाद्यमानश्च इत्यब्रवीत्—उक्तप्रकारेण शापावसानं चोवाच —इति च व्याख्यातम् । † ते—त्वत्तः श्रेयः—ब्रह्मलोकं विधास्यति—पोषयिष्यति । यद्वा ते श्रेयः—निवासस्थानप्रवेशनादिकम्—गो.

[1] अर्धयोः पौर्वापर्ये वैपरीत्यं—ङ. [2] इह—ङ. [3] भवनं—ङ.

[4] मिऽधास्यति—ङ. ज.

अवटे चापि मां, राम! प्राक्षिप्य कुशली व्रज।
रक्षसां [1]गतसत्त्वानां एष धर्मः सनातनः ॥ २२ ॥
अवटे ये निधीयन्ते तेषां लोकाः सनातनाः।

गतसत्त्वानां—गतप्राणानां। एष धर्मः इति। अवटनिक्षेप धर्म इत्यर्थः। सनातन इति—तथा हि—यवनेषु कलियुगराक्षसेषु तद्धर्मप्रवृत्तिः सनातना। उक्तार्थस्यैव विवरणं—अवट इत्यादि। य इति—मृता राक्षसा इत्यर्थः। लोका इति निर्ऋतिलोका इति यावत् ॥ २२ ॥

एवमुक्त्वा तु काकुत्स्थं विराधः शरपीडितः ॥ २३ ॥
*बभूव स्वर्गसंप्राप्तः न्यस्तदेहो महाबलः।

न्यस्तदेह इति। अवटे निक्षिप्तदेह इत्यर्थः। तेन संस्कारेण स्वर्गं संप्राप्तः—'द्वितीयाश्रिते'ति नदन्तविध्याश्रयेण समासः छान्दसः ॥ २३ ॥

तच्छ्रुत्वा राघवो वाक्यं लक्ष्मणं व्यादिदेश ह ॥ २४ ॥
[2]कुञ्जरस्येव रौद्रस्य राक्षसस्यास्य, लक्ष्मण!
[3]वनेऽस्मिन् सुमहत् श्वभ्रं खन्यतां रौद्रकर्मणः ॥ २५ ॥

एवं बभूवेत्याद्यर्धेन संक्षिप्तस्यार्थस्य विस्तरोपदेशः—तच्छ्रुत्वेत्यादि। अवटनिक्षेपधर्मेण स्वर्गप्राप्तिवचनं श्रुत्वेत्यर्थः। कुञ्जरस्येवेति – दुर्गन्धपरिहाराय मृतकुञ्जरस्य खननार्थमिवेत्यर्थः ॥ २५ ॥

---

* स्वर्गसंप्राप्तः—संप्राप्तप्राय इत्यर्थः–गो. बभूव-भवितुमुद्यतो बभूव–ति.

[1] हत–ङ. [2] २५–२६–श्लोकद्वयं नास्ति–झ. [3] महतः–ङ.

**इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति ।**
**तस्थौ विराधमाक्रम्य कण्ठे पादेन वीर्यवान् ॥ २६ ॥**

उक्तानुवादपूर्वं व्यापारान्तरोपदेशः—इत्युक्त्वेत्यादिपादेन । कण्ठप्रदेशे आक्रम्य तस्थाविति । खन्यमानश्वभ्रात् दूरे, परिलुठनव्यावृत्त्यर्थमिति शेषः ॥ २६ ॥

**ततः खनित्रमादाय लक्ष्मणः श्वभ्रमुत्तमम् ।**
**अखनत् पार्श्वतः तस्य विराधस्य[1] महात्मनः ॥ २७ ॥**

'विराधस्य महात्मनः' इति पाङ्क्तः पाठः । "आत्मा देहे धृतौ", महाशरीरस्येत्यर्थः । गन्धर्वत्वप्रत्यापत्त्यभिप्रायेण च कविना महात्मनः इति प्रयोगः । एवं स्थिते 'विराधस्य दुरात्मनः' इति श्रद्धाजडाः केचन पाङ्क्तपाठं नाशयन्ति ॥ २७ ॥

**तं मुक्तकण्ठं[2] निष्पिष्य * शङ्कुकर्णं महास्वनम् ।**
**विराधं प्राक्षिपत् श्वभ्रे नदन्तं भैरवस्वनम् ॥ २८ ॥**

तं मुक्तकण्ठमिति—श्वभ्रप्रक्षेपणार्थं रामेण मुक्तकण्ठाक्रमणमित्यर्थः । शङ्कुकर्णं—शङ्क्वाकारौ शङ्कुवत् कठिनौ च कर्णौ यस्य सः, तथा । महास्वनमिति बहुव्रीहिः । एवंभूतं विराधं भैरवस्वनं—भयङ्करस्वनं यथा तथा नदन्तमेव सन्तं श्वभ्रे प्राक्षिपत् ॥ २८ ॥

**[3] तमाहवे निर्जितमाशुविक्रमौ**
**[4] स्थिरावुभौ संयति रामलक्ष्मणौ ।**
**मुदाऽन्वितौ चिक्षिपतुर्भयावहं**
**नदन्तमुत्क्षिप्य[5] बिले तु राक्षसम् ॥ २९ ॥**

---

* शङ्कुवत् अचलायमानौ कर्णौ यस्य—रा. शङ्कुः—कीलं, तत्सदृशकर्णं गर्दभाकारं वा । 'शङ्कुकर्णौ गर्दभोष्ट्रौ' इति बाणः—गो.

[1] दुरात्मनः—ङ. [2] उत्क्षिप्य—ङ. [3] महावने दारुण—ङ. [4] स्थिता—ङ. [5] बलेन—ङ. झ.

आशुविक्रमौ—क्षिप्रकारिणौ । स्थिरौ—दृढचित्तौ ॥ २९ ॥

अवध्यतां प्रेक्ष्य [1] महासुरस्य तौ
शितेन शस्त्रेण तदा नरर्षभौ ।
[2] समर्थ्य चात्यर्थविशारदावुभौ
[3] बिलं विराधस्य वधं प्रचक्रतुः ॥ ३० ॥

अवध्यतामित्यादि । शस्त्रेणावध्यतां प्रेक्ष्य—विचार्य, बिलं समर्थ्य—संपाद्य, तत्र बिले विराधस्य वधं प्रचक्रतुः ॥ ३० ॥

*स्वयं विराधेन हि मृत्युरात्मनः
प्रसह्य रामेण [4] यथार्थमीप्सितः ।
निवेदितः काननचारिणा स्वयं
न मे वधः शस्त्रकृतो भवेदिति ॥ ३१ ॥

उक्तार्थस्यैव तूपसंहाररूपेण वादः—स्वयमित्यादि । यथार्थमिति पाङ्कः पाठः । योग्यतायामव्ययीभावः । यथार्थं—स्वप्रयोजनोचितं, रामेण प्रसह्य स्वयं साध्यो यो मृत्युरीप्सितः, तमात्मनो मृत्युं उद्दिश्य काननचारिणा विराधेन स्वयमेव शस्त्रकृतो वधो न भवेदिति निवेदितोऽभूत् । रामः इति शेषः ॥ ३१ ॥

तदेव रामेण निशम्य भाषितं
कृता मतिस्तस्य बिलप्रवेशने ।
बिलं च रामेण बलेन रक्षसा
प्रवेश्यमानेन वनं विनादितम् ॥ ३२ ॥

---

*न केवलं स्वनिश्चयः, विराधेन चानन्तरे तथोक्तमित्याह—स्वयमिति—गो.

[1] महाबलस्य—ङ. [2] संमन्य—ङ. [3] बिले—सर्वत्र. [4] यथार्थ—ङ. झ.

तदेव भाषितमिति–विराधोक्तरूपमित्यर्थः। रामेण बलेन इति कर्तृकरणयोस्तृतीये ॥ ३२ ॥

* प्रहृष्टरूपाविव रामलक्ष्मणौ
विराधमुर्व्याः प्रदरे निहत्य तौ ।
[1] ननन्दतुर्वीतभयौ महावने
शिलाभिरन्तर्दधतुश्च राक्षसम् ॥ ३३ ॥

प्रहृष्टरूपाविव – इवशब्दः इह एवार्थे ॥ ३३ ॥

ततस्तु तौ काञ्चनचित्रकार्मुकौ
निहत्य रक्षः परिगृह्य मैथिलीम् ।
विजह्रतुस्तौ मुदितौ महावने
दिवि स्थितौ † चन्द्रदिवाकराविव ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे चतुर्थः सर्गः

---

महावने दिवि स्थितौ चन्द्रादिवाकराविव विजह्रतुः इति। आकाशवत् वनस्य च नीलत्वात् अतिविशालत्वाच्च उपमा। लीला(३३)मानः (?) सर्गः ॥ ३४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे चतुर्थः सर्गः

---

* वस्तुत: हर्षशोकौ अनयोर्न स्त:, किन्तु तन्नटनमात्रमिति इवशब्देन सूचयति–**गो.** इवशब्द एवार्थे–**रा.** † उभावपि चन्द्रवत् कलासंपन्नौ, सूर्यवत् प्रतापयुक्तौ–**ति.**

[1] अत्र 'शिलाभिरन्तर्दधतुश्च राक्षसम्' इति चतुर्थः पादः, एवं–'ततस्तु तौ काञ्चनचित्रकार्मुकौ निहत्य रक्ष: परिगृह्य मैथिलीम्। विजह्रतुस्तौ मुदितौ महावने' इति अनन्तरश्लोकाद्यपादत्रयं च क्वचित् न पठ्यते।

## पञ्चमः सर्गः

[शरभङ्गदर्शनम्]

[1] अथ हत्वा भीमबलं विराधं राक्षसं वने ।
ततः सीतां परिष्वज्य समाश्वास्य च वीर्यवान् ॥ १ ॥
अब्रवील्लक्ष्मणं रामः भ्रातरं दीप्ततेजसम् ।

अथ रामस्य शरभङ्गदर्शनम्——अथ हत्वेत्यादि ॥ १ ॥

कष्टं वनमिदं दुर्गं न च स्मो वनगोचराः ॥ २ ॥
अभिगच्छामहे शीघ्रं शरभङ्गं तपोधनम् ।
आश्रमं शरभङ्गस्य राघवोऽभिजगाम ह ॥ ३ ॥

कष्टं—"स्यात् कष्टं कृच्छ्रम्"—पीडावहमिति यावत् । च—यस्मात् वयं वनगोचरा न स्मः, अतः वनं कष्टं अस्माकमिति पूर्वेणान्वयः । गच्छामहे इति—गच्छाम इति यावत् । इत्युक्त्वेति शेषः ॥ ३ ॥

तस्य देवप्रभावस्य तपसा * भावितात्मनः ।
समीपे शरभङ्गस्य ददर्श महदद्भुतम् ॥ ४ ॥
विभ्राजमानं वपुषा † सूर्य[2]वैश्वानरोपमम् ।

भावितः—सिद्धः आत्मा यस्य स तथा । अद्भुतं ददर्शेत्युक्तं, किं तदित्यपेक्षायामुच्यते—विभ्राजमानमित्यादि । वपुषा—वपुस्त्विषा ॥ ४ ॥

---

* भावितः-शुद्धः आत्मा यस्य । † वैश्वानरः—सूर्यव्यतिरिक्ततेजांसि, सूर्यादितेजस्समुदायोपममित्यर्थः—**गो.** वस्तुतस्तु—प्रकाशे सूर्योपमत्वम्, तादृशतेजसः निगूढत्वे वैश्वानरोपमत्वम् ॥

[1] हत्वा तु तं—**सर्वत्र.** [2] वैश्वानरप्रभम्—**ङ. ञ.**

[1] अवरुह्य रथोत्सङ्गात् सकाशे विबुधानुगम् ॥ ५ ॥
* असंस्पृशन्तं वसुधां ददर्श विबुधेश्वरम् ।

रथोत्सङ्गादवरुह्यापि वसुधां अस्पृशन्तं, सकाशे—समीपे, विबुधानुगं—विबुधाः-देवाः, तद्रूपाः अनुगाः—अनुचराः यस्य स तथा, अत एव विबुधेश्वरम् ॥ ५ ॥

[2] सुप्रभाभरणं देवं विरजोम्बरधारिणम् ॥ ६ ॥
तद्विधैरेव बहुभिः पूज्यमानं [3] महात्मभिः ।

सुप्रभान्याभरणानि यस्य स तथा । विरजस्कं—निर्मलं अम्बरं धर्तुं शीलमस्येति स तथा । तद्विधैः—तद्विधाभरणादिमद्भिः ॥

† [4] हरिभिर्वाजिभिर्युक्तं अन्तरिक्षगतं रथम् ॥ ७ ॥
[5] ददर्शादूरतस्तस्य तरुणादित्यसंनिभम् ।

[6] हरिभिः—श्यामवर्णैः ॥ ७ ॥

पाण्डुराभ्रघनप्रख्यं चन्द्रमण्डलसंनिभम् ॥ ८ ॥
अपश्यद्विमलं छत्रं चित्रमाल्योपशोभितम् ।
‡ चामरव्यजने चाग्र्ये रुक्मदण्डे महाधने ॥ ९ ॥
गृहीते वरनारीभ्यां धूयमाने च मूर्धनि ।

महाधने—महामूल्ये ॥ ८ ॥

---

* अभूमिस्पर्शस्य देवस्वभावत्वात्—**गो.** † हरिभिः—श्यामैः । यद्वा वाजिभिः—वेगवद्भिः हरिभिः—अश्वैः—**गो.** ‡ चामरव्यजने च अपश्यदित्यन्वयः ।

[1] रथप्रवरमारूढमाकाशे—ङ. ज. [2] संप्रभा—ङ. ज. [3] महर्षिभिः—ङ.
[4] हरितैः—ङ. ज. [5] ददर्श दूरतः—ङ. [6] हरितैः—ट.

गन्धर्वामरसिद्धाश्च बहवः परमर्षयः ॥ १० ॥

अन्तरिक्षगतं देवं वाग्भिरग्र्याभिरीडिरे ।
सह संभाषमाणे तु शरभङ्गेण वासवे ॥ ११ ॥

दृष्ट्वा शतक्रतुं तत्र रामो लक्ष्मणमब्रवीत् ।

वासवे—उक्तलक्षणे शरभङ्गेण संभाषमाणे तु तं शतक्रतुं इति रामो दृष्ट्वा—ज्ञात्वा अब्रवीत् ॥ ११ ॥

[1] रामोऽथ रथमुद्दिश्य [2] लक्ष्मणाय प्रदर्शयन् ॥ १२ ॥

तदेव प्रपञ्चयति—रामोऽथेत्यादि। उद्दिश्य—हस्तेन अपरोक्षं निर्दिश्येत्यर्थः ॥ १२ ॥

अर्चिष्मन्तं श्रिया जुष्टं अद्भुतं पश्य, लक्ष्मण!
प्रतपन्तमिवादित्यं अन्तरिक्षगतं रथम् ॥ १३ ॥

ये हयाः *पुरुहूतस्य पुरा शक्रस्य नः श्रुताः ।
अन्तरिक्षगताः दिव्याः त इमे हरयो ध्रुवम् ॥ १४ ॥

पुरु—बहु—अनेकयजमानैः यागायाहूतः इति पुरुहूतः ॥ १४ ॥

इमे च पुरुषव्याघ्राः ये तिष्ठन्त्यभितो [3] रथम् ।
शतं शतं कुण्डलिनः युवानः खड्गपाणयः ॥ १५ ॥

शतं शतमिति । अष्टदिक्ष्वपीति शेषः । शतशब्दोऽनेकवाची । कुण्डलिनः—कर्णाभरणवन्तः ॥ १५ ॥

---

* पुरूहूतस्य—बहुयागकर्तुः—रा.

[1] इदमर्धं नास्ति—झ. एतदारभ्य अर्धत्रयं नास्ति—झ. [2] भ्रातुर्दर्शयताऽद्भुतम्—ङ. ज. [3] दिशम्—ङ. ज.

विस्तीर्णविपुलोरस्काः परिघायतबाहवः ।
[1] शोणांशुवसनाः सर्वे व्याघ्रा इव दुरासदाः ॥ १६ ॥

विस्तीर्णानि—विपुलानि—अतिशयेन विशालानि उरांसि येषां ते तथा । शोणांशूनि–शोणप्रभानि वसनानि येषां ते तथा । एवं पाङ्क्तः पाठः । शोणाश्मवसनानि च येषामित्याह * । अंशवः–परस्तु शोणाश्मवसना इत्युक्त्वा पद्मरागवसना इत्याह । अंशवः–किरणानि, तत्संबन्धो वस्त्राणां न समस्तीत्यादिदुर्मत्या पाङ्क्तपाठ-नाशनम् ॥ १६ ॥

उरोदेशेषु सर्वेषां हाराः ज्वलनसंनिभाः ।
रूपं बिभ्रति, सौमित्रे ! पञ्चविंशतिवार्षिकम् ॥ १७ ॥

हाराः ज्वलनसंनिभाः इति दीप्तिमत्त्वमात्रे तात्पर्यम् । बिभ्रति—अभ्यस्तत्वात् अदादेशः । पञ्चविंशतिः परिमाणमस्य, 'तदस्य परिमाणं' इति ठक्, 'वर्षस्याभविष्यति' इत्युत्तरपदवृद्धिः ॥

एतद्धि किल देवानां वयो भवति नित्यदा ।
यथेमे पुरुषव्याघ्राः दृश्यन्ते [2] प्रियदर्शनाः ॥ १८ ॥

एतद्धीति—पञ्चविंशतिवर्षप्रमाणकमित्यर्थः । यथेमे दृश्यन्ते एतद्धि इति पूर्वेणान्वयः । नित्यदेति बहुश इह प्रयोगः ॥ १८ ॥

इहैव सह वैदेह्या मुहूर्तं तिष्ठ, लक्ष्मण !
यावज्जानाम्यहं व्यक्तं क एष द्युतिमान् † रथे ॥ १९ ॥

---

* महेश्वरतीर्थः † 'रथे' इत्यनेन तदानीं रामं दृष्ट्वा रथमारूढ इत्यवगम्यते—गो. अत एव रामोपसर्पणात् पूर्वमेव इन्द्रस्य प्रस्थानमुच्यते समनन्तरमिति भावः ।

[1] शोणाश्मवसनाः—शोणाश्ववसनाः–ङ. [2] शुभदर्शनाः–ङ.

यावज्जानामीति । यावत्पुरेति लट् । व्यक्तं ज्ञास्ये इत्यर्थः । यद्यप्युक्तलिङ्गैः शतक्रतुरित्यनुमीयते, अथापि प्रत्यक्षतोऽवगमिष्यामी- त्यर्थः ॥ १९ ॥

तमेवमुक्त्वा सौमित्रिं इहैव स्थीयतामिति ।
अभिचक्राम काकुत्स्थः शरभङ्गाश्रमं प्रति ॥ २० ॥

उक्तानुवादपूर्वं व्यापारान्तरोपदेशः—तमेवमित्यादि ॥ २० ॥

ततः समभिगच्छन्तं प्रेक्ष्य रामं शचीपतिः ।
[1]शरभङ्गमनुप्राप्य विविक्त इदमब्रवीत् ॥ २१ ॥

इहोपयानसौ रामः यावन्मां नाभिभाषते ।
[2]निष्ठां [3]नयत तावत्तु ततो मा द्रष्टुमर्हति ॥ २२ ॥

उपयान् असौ रामः यावत् नाभिभाषते तावत्तु—ततः प्रागेव मां निष्ठां—स्थानम्, 'आतश्चोपसर्गे' इत्यङ् । स्वर्गमिति यावत्, नयत—प्रापयत । तत एव हेतोः अस्मान् मा द्रष्टुमर्हतीति विबुधानब्रवीत् । स्वस्थानगमनेन अस्माभिः एतद्दर्शनं परिहर्तव्यम् । देवैः संभाषमाणे मनुष्यभावप्रतीतिभङ्गप्रसङ्गात् । रावणवधश्च मनुष्यभावैकसाध्यः । अतो नायं तद्दर्शनकाल इत्यर्थः* ॥ २२ ॥

[4]अथ वज्री तमामन्त्र्य मानयित्वा च तापसम् ।
रथेन हरियुक्तेन ययौ दिवमरिन्दमः ॥ २३ ॥

---

* विपदि स्थितेनैवंविधवैभवस्य दर्शनमनुचितमित्यर्थः-ति.

[1] शरभङ्गमनुज्ञाप्य विबुधानिदमब्रवीत्—ङ. ज. झ. [2] एतदनन्तरं—तावद्गच्छामहे [illegible] यावन्मां नाभिभाषते । इत्यधिकं—ङ. जितवन्तं कृतार्थं च द्रष्टाऽहमचिरादिमम् । [illegible] मयानेन कर्तव्यं महदन्यैः सुदुष्करम् । निष्पादयित्वा तत्कर्म ततो मां द्रष्टुमर्हति ॥ इत्यधिकं—ङ. ज. झ. [3] नयतु—ङ. झ. [4] इति—ङ. ज.

अथ वज्रीति। वज्री तं आमन्त्र्य—वज्री देवान् इत्युक्त्वा तं–शरभङ्गं आमन्त्र्य दिवं ययौ। एवं स्थिते—"निष्ठां नयतु तावत्तु ततो मां द्रष्टुमर्हति" इत्येतं पठित्वा अनन्तरं—"जीवन्तं च कृतार्थं च द्रष्टाऽहमचिरादिमम्। कर्म ह्यनेन कर्तव्यं महदन्यैः सुदुष्करम्" इति च कंचन श्लोकं प्रक्षिप्य *कश्चिद् व्याकरोति। सर्वमेतदसङ्गतम्। उपागच्छद्रामस्य तत्कालदर्शनमात्रस्यैव तदानीं चिकीर्षितत्वात्, तावत एव कर्तव्यत्वाच्च। उपागच्छन् रामो यावन्मां नाभिभाषते तावत् निष्ठां—रावणवधकर्मनिष्पत्तिं नयतु, ततः—अनन्तरं मां द्रष्टुमर्हतीति च व्याकरोति। इदं व्याख्यानस्य प्रत्यक्षमिथ्यात्वं सुस्पष्टम् ॥ २३ ॥

**प्रयाते तु सहस्राक्षे राघवः[1] सपरिच्छदः।**
**अग्निहोत्रमुपासीनं शरभङ्गमुपागमत् ॥ २४ ॥**

सपरिच्छदः—सपरिकरः—स्त्रीभ्रातृसहित इति यावत् ॥ २४ ॥

**तस्य पादौ च संगृह्य रामः सीता च लक्ष्मणः।**
**निषेदुः समनुज्ञाताः लब्धवासा ‡ निमंत्रिताः ॥ २५ ॥**

समनुज्ञाताः—आसनावस्थानाय कृतानुमतिकाः, अत एव लब्धवासाः—लब्धस्थितयः, निमंत्रिताः—सत्कृताश्चाभवन्नित्यर्थः ॥२५॥

---

* महेश्वरतीर्थः गोविन्दराजो वा। पाठस्योभयसम्मतत्वेऽपि उत्तरत्र प्रदर्श्यमान-व्याख्यायाः परिशीलने महेश्वरतीर्थमेव कटाक्षयतीति युक्तम् ॥ 'कृतार्थं–निस्तीर्णविपदं। जितवन्तं, रावणमिति शेषः। तदा वैभवयुक्तमिमं द्रक्ष्यामीति शेषः। कतकस्त्वेतत्पद्यं प्रक्षिप्तमित्याह—तद्वृथैव, मद्रीत्या व्याख्याने सर्वसामञ्जस्यात्'–ति. जितवन्तं–कृतरावण-वधं, शीघ्रमहं द्रक्ष्यामीति शेषः। एतेन रामसंभाषणे सति रावणः कोपं कर्तेति इन्द्रस्य भीतिर्व्यञ्जिता–रा. ‡ निमन्त्रिताः–भोजनार्थं–ति.

[1] सपरिच्छदम्–ङ. सपरिच्छदे–झ.

ततः *शक्रोपयानं तु पर्यपृच्छत् स राघवः।
शरभङ्गश्च तत् सर्वं राघवाय न्यवेदयत् ॥ २६ ॥

शक्रोपयानं—शक्रोपागमनप्रयोजनमित्यर्थः ॥ २६ ॥

मामेष वरदः, राम! ब्रह्मलोकं निनीषति।
जितमुग्रेण तपसा दुष्प्राप[1]मकृतात्मभिः ॥ २७ ॥

न्यवेदयदिति कथमित्यतः—मामेष इत्यादि। एषः वरदः—देवेन्द्रः मां ब्रह्मलोकं निनीषति इति, श्रीमदादिगुरुब्रह्माज्ञयेति शेषः। कथं तथा निनीषेत्यत्राह—जितमुग्रेण तपसेति। अकृतात्मभिः दुष्प्रापं—असिद्धाकृतकभगवदनन्यतत्वात्मयोगैः प्राप्तुमशक्यं ब्रह्मलोकमिति संबन्धः ॥ २७ ॥

अहं †ज्ञात्वा, नरव्याघ्र! वर्तमानमदूरतः।
ब्रह्मलोकं न गच्छामि [2]त्वामदृष्ट्वा प्रियातिथिम् ॥ २८ ॥

ज्ञात्वेति। योगचक्षुषेति शेषः। न गच्छामीति—योगसिद्धतः स्वेच्छादेहत्यागात् ॥ २८ ॥

त्वयाऽहं, पुरुषव्याघ्र! धार्मिकेण महात्मना।
‡समागम्य गमिष्यामि त्रिदिवं [3]देवसेवितम् ॥ २९ ॥

त्रिदिवं—अवरं परं चेत्यर्थः। परं—नाकादिसंज्ञो ब्रह्मलोकः ॥ २९ ॥

---

* शक्रोपयानं—इन्द्रागमननिमित्तं—गो. † ज्ञात्वा—योगचक्षुषा—गो. ति.
‡ समागम्य—सकृद्वा दर्शनानन्दं अनुभूयेति यावत्।

[1] मजितात्मभिः—ङ. [2] त्वां दृष्ट्वा च—ङ. [3] चावरं परम्—ङ.

अक्षयाः, नरशार्दूल ! मया लोका जिताः शुभाः ।
* ब्राह्मयाश्च नाकपृष्ठयाश्च प्रतिगृह्णीष्व [1] मामकान् ॥ ३० ॥

अथ विशेषसत्कारार्थं ऋषिराह—अक्षया इत्यादि । के ते लोकाः जिताः इत्यतः—ब्राह्मया इत्यादि । उभयत्र च तौ छान्दसौ । ब्राह्माः लोकाः, नाकपृष्ठाः लोकाश्च जिताः, मामकांस्तान् प्रतिगृह्णीष्व प्रीतेन मया प्रीतिदानत्वेन दीयमानानिति शेषः ॥ ३० ॥

एवमुक्तो नरव्याघ्रः सर्वशास्त्र[2]विशारदः ।
ऋषिणा शरभङ्गेण राघवो वाक्यमब्रवीत् ॥ ३१ ॥
† अहमेवाहरिष्यामि [3] सर्वलोकान्, महामुने !
आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ ३२ ॥

प्रदिष्टमिति ! त्वयेति शेषः ॥ ३२ ॥

राघवेणैवमुक्तस्तु शक्रतुल्यबलेन वै ।
शरभङ्गो महाप्राज्ञः पुनरेवाब्रवीद्वचः ॥ ३३ ॥

---

* रामस्य राज्यभ्रंशं ज्ञात्वा वा एवमाह मुनिः । तिलके तु—‘अनेन सर्वकर्मणां भगवदर्पणमकरोदिति सूचितम्’ इत्युक्तम् । तीर्थे—गोविन्दराजीयेऽप्येयमेव । अनन्तर-श्लोकटिप्पणी द्रष्टव्या । † शरभङ्गप्रार्थनां अङ्गीचकारेत्युच्यतेऽनेन श्लोकेनेति—ती. गो. प्रभृतयः । परन्तु—सप्तमे सर्गेऽपि सुतीक्ष्णवाक्ये ‘चित्रकूटमुपादाय राज्यभ्रष्टोऽसि मे श्रुतः । इहोपयातः काकुत्स्थ ! देवराजः शतक्रतुः । उपागम्य च मां देवः महादेवः सुरेश्वरः । सर्वान् लोकान् जितानाह मम पुण्येन कर्मणा । तेषु देवर्षिजुष्टेषु जितेषु तपसा मया । मत्प्रसादात् सभार्यस्त्वं विहरस्व सलक्ष्मणः । तमुग्रतपसा युक्तं महर्षिं सत्यवादिनम् । प्रत्युवाचात्मवान् रामः ब्रह्माणमिव काश्यपः । अहमेवाहरिष्यामि स्वयं लोकान् महामुने ! आवासं त्वहमिच्छामि प्रदिष्टमिह कानने’ इति दर्शनात् रामस्य राज्यभ्रंशज्ञानादेवेदमुक्त-मिति स्पष्टमवगम्यते ॥

[1] राम तान्—ङ. [2] विदांवरः—ङ. [3] स्वयं लोकान्—ङ.

**इह, राम! [1] महातेजाः सुतीक्ष्णो नाम धार्मिकः।**
**वसत्यरण्ये [2] धर्मात्मा स ते [3] श्रेयो विधास्यति ॥ ३४ ॥**

इह अरण्ये वसतीति। अदूरे इति शेषः ॥ ३४ ॥

**[4] सुतीक्ष्णमभिगच्छ त्वं शुचौ देशे तपस्विनम्।**
**रमणीये वनोद्देशे स ते वासं विधास्यति ॥ ३५ ॥**
**इमां मन्दाकिनीं, राम! प्रतिस्रोतामनुव्रज।**
**नदीं [5] पुष्पोडुपवहां * तत्र तत्र गमिष्यसि ॥ ३६ ॥**

इमां मन्दाकिनीमिति। मन्दाकिनीशब्दः पुण्यनदीवाची। इह चित्रकूटस्थलेऽपि तथैवेति मन्यामहे †। प्रतिस्रोतां—आर्षमाबन्तत्वम्, प्रतिस्रोतसं कृत्वा अनु—प्राप्य व्रज। नद्यां पुनः पूर्ववाहिन्यां पुरुषेण पश्चिमाभिमुखतया गमने प्रतिस्रोतस्त्वं भवति। ‡ पुष्पवत् लघु उडुपानि वहतीति तथा। "उडुपं तु प्लवः" ॥३६॥

**एष पन्थाः, नरव्याघ्र! मुहूर्तं पश्य, तात! माम्।**
**[6] यावज्जहामि गात्राणि जीर्णां त्वचमिवोरगः ॥ ३७ ॥**

एष पन्था इति। उक्त इति शेषः। अथ ऋषिचिकीर्षितब्रह्ममेधप्रधानहविर्देवतात्वेन ब्रह्माग्नेरास्ये सन्निधानार्थमाह—मुहूर्तं तात मां पश्येति। अत्र तातशब्दस्य आन्तराशयः जगज्जनकेति ॥३७॥

---

* 'तत्र तत्र गमिष्यसि' इत्यनेन क्वचिन्नदीतीरे क्वचित् व्यवहिते च मार्गे ऽनुच्यते। † दृश्यते च एवमेव तत्तत्प्रान्तेषु व्यवहारः ॥ गङ्गाप्रान्तवासिजनैः इतरा नद्यपि गङ्गेति, तथा कावेरीप्रान्तवासिजनैः इतराऽपि कावेरीति हि व्यवह्रियते ॥ ‡ उडुपाकारपुष्पचयावहामित्यर्थः–**गो. रा.**

[1] महाप्राज्ञः–ङ. [2] नियतः–ङ. ज. [3] वासं–ङ. [4] अयं श्लोकः प्रक्षलितः–ज. [5] पुष्पोत्कर–ङ. [6] यावज्जुहोमि–ङ.

ततोऽग्निं सुसमाधाय हुत्वा चाज्येन [1]मन्त्रवित् ।
शरभङ्गो [2]महातेजाः प्रविवेश हुताशनम् ॥ ३८ ॥

ततोऽग्निं सुसमाधायेति । "अद्युत्कण्ठा(ऽऽत्मदेवासौ)तदावासौ ब्रह्ममेधा(नलं व्रजेत्)त जडं त्यजेत् । नाभिवक्त्रात्मगात्माग्नीन् अवरोप्य यथास्थलम् । संस्कारयेत्" इत्युपक्रम्य, "न्यासयोः सहकर्तॄणां अश्वमेधशतायुतम् ॥" इत्यन्तोपनिषदुपदिश्यमानाध्वनेति शेषः । मन्त्रविदिति । उक्तोपनिषदुपदिश्यमानब्रह्ममेधमंत्रविदित्यर्थः । प्रविवेशेति । 'ब्राह्मणत्वेति स्वजीवज्योतिश्श्रमस इत्यालभ्य परमहरुच्चैरोमिति प्रापुः' इत्युपनिषदुपदिश्यमानब्रह्मसिद्धान्तमूलमन्त्रेणेति शेषः ॥ ३८ ॥

तस्य रोमाणि केशांश्च ददाहाग्निर्महात्मनः ।
जीर्णां त्वचं तथाऽस्थीनि यच्च मांसं सशोणितम् ॥ ३९ ॥
[3]रामस्तु विस्मितो भ्रात्रा भार्यया च सहात्मवान् ।
स च पावकसङ्काशः कुमारः समपद्यत ।
उत्थायाग्नि[4]चयात् तस्मात् शरभङ्गो व्यरोचत ॥ ४० ॥

कुमारः समपद्यत उत्थायाग्निचयात् तस्मादिति । "अथ यद्ब्रां इत्यादित्ये जुहवुः तद् ब्रह्माग्निः नवब्रह्मर्षिंहदतिष्ठत् द्वे धूम भस्माभ्यां" इत्युपदिश्यमानरीत्या अग्नेर्भूमानन्दपदविद्यादेहात्मनोत्थानम् ॥ ४० ॥

स लोकानाहिताग्नीनां ऋषीणां च महात्मनाम् ।
देवानां च व्यतिक्रम्य *ब्रह्मलोकं व्यरोहत ॥ ४१ ॥

---

* ब्रह्मात्मकं लोकं–गो.

[1] मन्त्रवत्–ङ. ज. [2] महाप्राज्ञः–ङ. [3] इदमर्धं कुण्डलितम्–ज. [4] चिताग्र–ङ.

अथ 'स लोकानाहिताग्नीनां' इत्यादिना 'परममहदुच्चैरोमिति प्रापुः' इत्युपदिष्टसाक्षाद्ब्रह्मसायुज्यलक्षणपरमापवर्गपटले उपदिष्टम् । आहिताग्नीनां लोकाः 'कर्मणा पितृलोकः' इति श्रुताः चन्द्रमण्डलयात्राः । ऋषयः उपासकाः तेषां लोकाः 'विद्यया देवलोकः' इति श्रुताः सौरमण्डलयात्राः । देवाः-भगवदिन्द्रियदेवाः त्रयस्त्रिंशत् आजानदेवाः सपत्नीकपञ्चब्रह्मविष्णुरुद्रविष्णुरूपाः तेषां लोकाः ब्रह्माः ध्रुवयात्राः । तान् सर्वांश्च व्यतिक्रम्य ब्रह्मलोकं—श्रीमदादिगुरुतुरीयब्रह्मलोकं व्यरोहत—आरूढवान् ॥ ४१ ॥

स पुण्यकर्मभवने[1] द्विजर्षभः
*पितामहं सानुचरं ददर्श ह ।
पितामहश्चापि समीक्ष्य तं द्विजं
ननन्द सुस्वागतमित्युवाच ह ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे पञ्चमः सर्गः

---

पुण्यं-शुभं-जगत्पञ्चकृत्यप्रवर्तनरूपं कर्म यस्य स तथा, तस्य भवनं प्रागुक्तब्रह्मलोकः । त्रिब्रह्मणः पितरः, तेषां पितृत्वात पितामहः—श्रीमदादिगुरुः । सानुचरं—अनुचराः समहेशाः त्रयस्त्रिंशत्कोटिदेवाः । ददर्शेति । 'मुक्तोपसृप्यत्वात' इति सूत्रात् 'परात्परं पुरिशयं पुरुषमीक्षते' इति तद्विषयवाक्यतश्च मुक्तानुग्रहाय गृहीतमातृकामयदिव्यमङ्गलविग्रहत्वात् । स्व गतं—स्वस्य परात्परस्य

---

* पितामहं— ब्रह्मादित्रयसमष्टिरूपम्-ति. पितामहशब्दोऽपि सविग्रहपरमात्मपरः-गो.

[1] पुण्यकर्मा भुवने—ङ. ज.

आगतं साक्षात् प्राप्तिं स्वीकृत्य अनुमन्यते स्म इत्यर्थः । एवं ब्रह्ममेधे रामप्रतीक्षणात् भगवान् रामो ब्रह्मेति शिशोरपि स्पष्टम् । तथा अग्रेऽपि प्रदर्शयिष्यामः । रघु (४२) मानः सर्गः ॥४२॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे पञ्चमः सर्गः

---

## षष्ठः सर्गः

### [रक्षोवधप्रतिज्ञा]

**शरभङ्गे दिवं याते *मुनिसङ्घाः समागताः ।**
**अभ्यगच्छन्त काकुत्स्थं रामं ज्वलिततेजसम् ॥ १ ॥**

अथ शरभङ्गाश्रमे समागतरक्षःपीडानिवृत्तिप्रार्थकदण्डकारण्यब्रह्मर्षीणां रक्षोवधप्रतिश्रवणम् । शरभङ्ग इत्यादि । दिवं यात इति । इह च प्रयोगात् ब्रह्मलोके परदिवाख्ये सर्वतः इह काव्ये स्वर्गपर्यायाणां प्रयोगो द्रष्टव्यः । स्वर्गादिशब्दाः सुखवाचिनः । ब्रह्मलोकस्य निरतिशयानन्दत्वात् कैमुतिकसिद्धं स्वर्गादिवाच्यत्वम् । अभ्यगच्छन्तेति । स्वरक्षासमर्थमहावैभवस्य शरभङ्गस्य ब्रह्मलोकप्रस्थितत्वात् रक्षाप्रार्थनार्थमिति शेषः ॥ १ ॥

**†वैखानसाः वालखिल्याः संप्रक्षाला मरीचिपाः**
**अश्मकुट्टाश्च बहवः पत्राहाराश्च[1] धार्मिकाः ॥ २ ॥**

---

*शरभङ्गदर्शनार्थं प्राप्ता मुनिसङ्घाः-रा. †सदा शरीरं संप्रक्षालयन्तीति संप्रक्षालाः । मरीचीन्-चन्द्रसूर्यादिकिरणान् सदा पिबन्तीति मरीचिपाः, सदाऽन्तः किरणान् प्रवेशयन्तः विवृत्तास्या इत्यर्थः । अश्मभिरात्मशरीराणि कुट्टन्तीत्यश्मकुट्टाः-गो. अश्मकुट्टाः-अपक्वकुट्टितान्नभक्षकाः-ति. यद्वा प्रत्यहं जीवनसाधनं संपाद्य सर्वं तत विनियुज्य ये वर्तन्ते ते वा संप्रक्षालाः-अश्वस्तनिका इत्यर्थः-ती.

[1] तापसाः-ङ.

वैखानसा इति । 'ये नखाः । ते वैखानसाः । ये वालाः । ते वालखिल्याः ।' इति भगवतः प्रजापतेः नखलोमभूताः, तज्जा ऋषयस्तु वैखानसवालखिल्याद्याः । भगवतः श्रीपादप्रक्षालनतीर्थजाः महर्षयः—संप्रक्षालाः । मरीचिपाः—चातकवत् चन्द्रकिरणमात्र-जीवनाः, सौरकिरणमात्रजीवना वा । अश्मनः कुट्टयित्वा भक्षयन्तः अश्मकुट्टाः ॥ २ ॥

*दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे ।
[1]गात्रशय्या अशय्याश्च तथैवा[2]नवकाशिकाः ॥ ३ ॥

दन्तव्यतिरिक्तस्वजीवनवस्त्ववहननसाधनरहिताः — दन्तोलूख-लिनः । कण्ठदघ्नजले हेमन्तेषु स्थित्वा तपस्साधकाः—उन्मज्जकाः । गात्रमात्रेण शयनवन्तः नित्यमनास्तरणशायिनः—गात्रशय्याः । एकपादस्य स्थित्यवकाशप्रदानरहिताः एकपादस्थितिमन्तः—अनवकाशिकाः ॥ ३ ॥

मुनयः सलिलाहारा वायुभक्षास्तथापरे ।
आकाशनिलयाश्चैव तथा † स्थण्डिलशायिनः ॥ ४ ॥

---

* गात्रशय्याः—गात्रावयवानि व्याघ्रचर्मादीनि शय्या येषां ते । अशय्याः—आस्तरणरहितस्थितिमन्तः । अनवकाशिकाः—अहर्दिवं कर्मनिरतत्वात् अवकाशरहिताः—**रा.** गात्रशय्याः—अनास्तरणशायिनः । अशय्याः—निद्राहीनाः—**ति.** उन्मज्जकाः—शिरोमात्रमुद्धृत्य सदा जलावगाढाः । गात्रमेव शय्या येषां ते गात्रशय्याः, उरसि पृष्ठेऽसे वा शिरः कृत्वा शयानाः इत्यर्थः, अतो न 'स्थण्डिलशायिनः' इत्यनेन पुनरुक्तिः । अशय्याः—अनम्रगात्राः । अभ्रावकाशकाः—वर्षवातातपादिष्वप्यनावृतदेश एव वर्तमानाः—**गो.** गात्रशय्यास्तु केवलं स्थले गात्रैरेव शेरते ये ते । ये कदाचिदपि न शेरते ते अशय्याः—**ती.**
† स्थण्डिले-कुशाद्यावृतभूतले शेरते—**गो. ती.**

[1] गतशय्याश्च आर्याश्च—**ङ.** [2] भ्रावकाशकाः—**ङ. ज.**

सर्वदा अनावृतप्रदेशनिलयाः आकाशनिलयाः । स्थण्डिल उपलिप्तानावृतक्रोडीकृतस्थलशयनाः स्थाण्डिलशायिनः ॥ ४ ॥

[1] तथोर्ध्ववासिनो दान्ताः तथाऽऽर्द्रपटवाससः ।
[2] संजपन्तः तपोनित्याः तथा पञ्चतपोऽन्विताः ॥ ५ ॥

वृक्षशाखागिरिशिखराग्राद्यूर्ध्वप्रदेशनित्यवासशीलाः ऊर्ध्ववासिनः इति पाठः । उपवासिनः इत्यन्यः * पठति, स तु साधारणधर्म इत्युपेक्ष्यः । आर्द्रपटनित्यवसनशीलाः आर्द्रपटवाससः । संजपन्तस्तु सदाजपपराः । तपोनित्यास्तु—" य एवं विद्वान् महारात्र उषस्युदिते व्रजंस्तिष्ठन्नासीनः शयानोऽरण्ये ग्रामे वा यावत् तरसं स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्यायः " इत्युपदिष्टतपोनित्यानुष्ठान-तत्पराः तपोनित्याः । पञ्चतपोऽन्विताः—ग्रीष्मे पञ्चाग्निमध्यस्थाः ॥

सर्वे ब्राह्मया श्रिया जुष्टाः [3] दृढयोगसमाहिताः ।
शरभङ्गाश्रमे रामं अभिजग्मुश्च तापसाः ॥ ६ ॥

ब्राह्मया श्रिया—ब्रह्मविद्यानुष्ठानजनितब्रह्मवर्चसेन दृढभूतब्राह्मतंत्र-मंत्रज्ञानयोगसमाहिताः —योगैकाग्रचित्ताः ॥ ६ ॥

अभिगम्य च धर्मज्ञाः रामं धर्मभृतां वरम् ।
ऊचुः परमधर्मज्ञं ऋषिसङ्घाः समाहिताः ॥ ७ ॥
त्वमिक्ष्वाकुकुलस्यास्य पृथिव्याश्च, महारथ !
प्रधानश्चासि नाथश्च † देवानां मघवानिव ॥ ८ ॥

---

* गोविन्दराजः, तीर्थो वा । अत्र तिलके "'व्रतोपवासिनः' इति पाठस्तु चिन्त्यः, तस्य साधारणधर्मत्वादिति कतकः" इत्यनूदितम् ॥ † यथा देवेन्द्र इति शक्रस्य नाम, तथा रघुपतिरिति तव नामेत्यर्थः—गो.

[1] व्रतोपवासिनः- मासोपवासिनः—ङ. [2] सजपाश्च—ङ. [3] दृढयोगाः—ङ.

ऊचुरिति । किमूचुरित्यतः—त्वमित्यादि । इक्ष्वाकुकुलस्य प्रधानः, पृथिव्याः नाथः इति विभज्यान्वयः । देवानां मघवानिवेत्ययं यशआदिविश्रुतत्वेन ॥ ८ ॥

विश्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च ।
[1] पितृभक्तिश्च सत्यं च त्वयि धर्मश्च पुष्कलः ॥ ९ ॥
त्वमासाद्य महात्मानं धर्मज्ञं धर्मवत्सलम् ।
* अर्थित्वात्, नाथ! वक्ष्यामः तच्च नः क्षन्तुमर्हसि ॥ १० ॥

अर्थित्वात्—अर्थिभावेन, यद्वक्ष्यामः तत् क्षन्तुमर्हसीति योजना ॥

अधर्मस्तु महान्, तात! भवेत्तस्य महीपतेः ।
यो हरेत् बलिषड्भागं न च रक्षति पुत्रवत् ॥ ११ ॥
† [2] युञ्जानः स्वानिव प्राणान् प्राणैरिष्टान् सुतानिव ।
नित्ययुक्तः सदा रक्षन् सर्वान् विषयवासिनः ॥ १२ ॥

तदेवाह—अधर्मस्तु महानित्यादिना । प्रत्यवायाद्यनिष्टश्रवणपरिहाराय ‡ बलये-पूजायै दत्तः यः षड्भागः—षष्ठांशः प्रजाभिः । तथा प्राणैरिष्टानिति—प्राणेभ्योऽधिकप्रियानित्यर्थः ॥ १२ ॥

प्राप्नोति शाश्वतीं, राम! कीर्तिं स बहुवार्षिकीम् ।
ब्रह्मणः स्थानमासाद्य तत्र चापि महीयते ॥ १३ ॥

---

* अर्थिभावेन यत् क्रूरमपि वक्ष्यामः तत् क्षन्तुमर्हसि—ति. किमेते एवं पीडयन्तीति न भाव्यमिति भावः । † युञ्जानः प्रजारक्षणे यतमानः सर्वान् देशवासिनः स्वान् प्राणानिव प्राणैरिष्टान्—प्राणेभ्योऽप्यधिकप्रियान् सुतानिव—ति. स्वान् प्राणान्—सर्वेन्द्रियाणि युञ्जानः—प्रजारक्षणे नियोजयन्—रा. ‡ बलिः—करो वा, ‘भागधेयः करो बलिः’ ।

[1] पितृभक्तत्वं—ङ. ज. [2] ‘प्रजाः स्वानिव च प्राणान् स्वसुतानिव नित्यशः’—ङ.

एवं प्रजानामरक्षणे प्रत्यवायमुक्त्वा रक्षणे तु परमदुर्लभब्रह्मकुलमात्रलभ्यब्रह्मलोकावाप्तिरपीति चाहुः—नित्ययुक्ता इत्यादि। प्राप्नोतीति—इहेति शेषः। शाश्वतीं—नित्याम्। अत एव बहुवार्षिकीं—बहुवर्षव्यापिनीम्॥ १३॥

*[1] यत्करोति परं धर्मं [2] मुनिर्मूलफलाशनः।
तत्र राज्ञः चतुर्भागः प्रजा धर्मेण [3] रक्षतः॥ १४॥

ननु भवतु प्रजारक्षणं, तत् षष्ठांशग्रहात् कर्तव्यमेव। वनवासिभिरनुपकारात् कुतः तद्रक्षणं? इत्यत्राहुः—यत्करोतीत्यादि। प्रजाः इति। वानप्रस्थप्रजा इत्यर्थः॥ १४॥

सोऽयं ब्राह्मणभूयिष्ठः वानप्रस्थगणो महान्।
त्वन्नाथोऽनाथवत् राम! राक्षसैः [4] वध्यते भृशम्॥ १५॥

ब्राह्मणभूयिष्ठ इत्यनेन क्षत्रवैश्यवानप्रस्थाश्च केचिदिह सन्तीति गम्यते। त्वं नाथः—रक्षकः यस्य स तथा॥ १५॥

एहि पश्य † शरीराणि मुनीनां भावितात्मनाम्।
[5] हतानां राक्षसैर्घोरैः बहूनां बहुधा वने॥ १६॥

पम्पा[6]नदीनिवासानां अनुमन्दाकिनीमपि।
चित्रकूटालयानां च क्रियते कदनं महत्॥ १७॥

हतानां शरीराणीति। अभक्षित्वा केवलं मारयित्वा त्यक्तानीति शेषः। सकलदण्डकारण्यक्रोडीकारेण पीडामाहुः—पम्पेत्यादि।

---

* यस्तु करप्रदानासमर्थो मुनिजनः तद्रक्षणं कुत इत्यत्राह—यदिति। यत् धर्मं—करोति, तत्र धर्मे राज्ञः चतुर्भागः—चतुर्थांशो भवति—गो. † शरीरपदं कङ्कालोपलक्षकं वा।

[1] यः करोति—ङ. [2] पर्णमूल—ङ. [3] रक्षितुम्—ङ. [4] हन्यते—ज. बाध्यते—ङ.

[5] भीतानां—ङ. [6] वन—ङ.

अनुमन्दाकिनीमपीति । अनुर्लक्षणे कर्मप्रवचनीयः । मन्दाकिन्याः अत्रत्यायाः तटवनवासिनामित्यर्थः ॥ १७ ॥

[1]एवं वयं न मृष्यामः विप्रकारं तपस्विनाम् ।
क्रियमाणं वने घोरं रक्षोभिः [2]भीमकर्मभिः ॥ १८ ॥

न मृष्याम इति । सोढुमशक्ता इत्यर्थः । विप्रकारं–पीडाम् ॥

ततस्त्वां शरणार्थं च शरण्यं [3]समुपस्थिताः ।
परिपालय नः, राम! वध्यमानान् निशाचरैः ॥ १९ ॥

शरणार्थं–रक्षणार्थम् ॥ १९ ॥

परा त्वत्तो गतिः, वीर! पृथिव्यां नोपपद्यते ।
परिपालय नः सर्वान् राक्षसेभ्यः, नृपात्मज! ॥ २० ॥

गतिः–त्रातेति यावत् ॥ २० ॥

एतच्छ्रुत्वा तु काकुत्स्थः तापसानां तपस्विनाम् ।
इदं प्रोवाच धर्मात्मा सर्वानेव तपस्विनः ॥ २१ ॥

तापसानां तपस्विनामिति पाङ्क्तः पाठः । तपोबलयुक्तानामित्यर्थः ॥ २१ ॥

*नैवमर्हथ मां वक्तुं [4]आज्ञाप्योऽहं तपस्विनाम् ।
[5]केवलेनात्मकार्येण प्रवेष्टव्यं मया वनम् ॥ २२ ॥

---

* शरणागत्यैवाऽऽज्ञप्तोऽहम्, परिपालयेत्यादिकं वक्तुं नार्हथ । केवलेनात्मकार्येण–केवलात्मप्रयोजनत्वेन राक्षसैः क्रियमाणं भवतामिमं विप्रकारं अपाकर्ष्टुं–निवर्तयितुं मया वनं प्रवेष्टव्यं–प्रविष्टम्–गो.

[1] एवंविधं–ङ. [2] भीमविक्रमैः–ङ. [3] समुपागतान्–ङ. [4] आज्ञप्तो–ङ.
[5] केवलेन स्वकार्येण–ङ. ज.

**विप्रकारमपाक्रष्टुं राक्षसैः भवतामिमम् ।**

नैवमर्हथ मां वक्तुमिति । अर्थित्वात् नाथेत्यादिना यद्रक्षण-प्रार्थनारूपं वचनं, तत् वक्तुं नार्हथ । अपि तु अहं तपस्विना-माज्ञाप्यः । ज्ञप धातुः मित् ज्ञापने, ण्यन्तादस्मात् 'अचो यत्' इति यत्, ततः 'कृत्यानां कर्तरि वा' इति षष्ठी । तपस्विभिः एवं कुर्विति केवलं शिक्षणीयः, स्वपुत्रशिष्यादिवत् इत्यर्थः । केवलेन—उपाध्यन्तरप्रयुक्तिरहितेन, आत्मकार्येण—स्वकार्येण—स्वप्रयोजनेन पितुर्वचनपरिपालनात्मकेन अवश्यं मया वनं प्रवेष्टव्यमेव। अयमेव वनप्रवेशः दैवगत्या राक्षसैः क्रियमाणं भवतां इमं विप्रकारं अपाक्रष्टु-मपि संपन्नः ॥ २२ ॥

***पितुस्तु निर्देशकरः प्रविष्टोऽहमिदं वनम् ॥ २३ ॥**
**भवतामर्थसिद्ध्यर्थं आगतोऽहं यदृच्छया ।**
**तस्य मेऽयं वने वासः भविष्यति [1] महाफलः ॥ २४ ॥**
**तपस्विनां रणे शत्रून् हन्तुमिच्छामि राक्षसान् ।**
**पश्यन्तु वीर्यमृषयः सभ्रातुर्मे तपोधनाः ॥ २५ ॥**

उक्तश्लोकार्थ एव कविनापि श्लोकान्तरेण वर्ण्यते । एवमपि शैली कवेः । पितुस्त्वित्यादि । हन्तुमिच्छामीति यत् अतो मे वनवासो महाफलो भविष्यतीति स्वगतोऽयं विचारः । अथ प्रकाशमाह—पश्यन्त्वित्यादि । वीर्यमिति । रक्षोवधप्रयोजनप्रवृत्तमिति शेषः । हनिष्यामीति यावत् ॥ २५ ॥

---

* पितृवाक्यपरिपालनाय वनं प्रविष्टोऽसीति किंवदन्त्याः का गतिरित्यत्राह—पितु इति। अहं भवतामर्थसिध्यर्थं आगतोऽस्मि, यदृच्छया—दैवगत्या पितुर्निर्देशकरः वनमिदं प्रविष्टोऽस्मि—**गो.**

[1] महोदयम्—ङ.

दत्त्वा [1] वरं चापि तपोधनानां
धर्मे धृतात्मा सह लक्ष्मणेन ।
तपोधनैश्चापि * [2] सहार्यवृत्तः
सुतीक्ष्णमेवाभिजगाम वीरः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे षष्ठः सर्गः

---

दत्त्वा वरमिति । प्रागुक्तरूपवचनात्मनेति शेषः । धृतः—अवस्थितः आत्मा—चित्तं यस्य स तथा । आर्यं—पूज्यं वृत्तं यस्य स तथा । चरु (२६) मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे षष्ठः सर्गः

---

## सप्तमः सर्गः

[सुतीक्ष्णसन्दर्शनम्]

रामस्तु सहितो भ्रात्रा सीतया च परंतपः ।
सुतीक्ष्णस्याश्रमपदं जगाम सह तैः द्विजैः ॥ १ ॥

अथ सुतीक्ष्णोपसृत्यनन्तरं तदाश्रमे तद्रजनीवासः । रामस्त्वित्यादि । तैः द्विजैः सहेति । शरभङ्गस्याश्रमोपसङ्गतवानप्रस्थैस्सहेत्यर्थः ॥

† स गत्वाऽदूरमध्वानं नदीस्तीर्त्वा बहूदकाः ।
[3] ददर्श [4] विमलं [5] शैलं [6] महामेघमिवोन्नतम् ॥ २ ॥

---

* सभाज्यवृत्तः–पूज्याचारः–गो. † अदूरमिति पदच्छेदः ; पूर्वं शरभङ्गेण 'इह राम महातेजाः' इति सुतीक्ष्णाश्रमस्यादूरत्वोक्तेः–गो.

[1] ऽभयं–ङ. ज. [2] सभाज्यवृत्तः–ङ. [3] एतदनन्तरं—ततस्तदिक्ष्वाकुवरौ संततं विविधैः द्रुमैः । काननं तौ विविशतुः सीतया सह राघवौ ॥ प्रविष्टस्तु वनं घोरं बहुपुष्पफलद्रुमम् । ददर्शाश्रममेकान्ते चीरमालापरिष्कृतम् ॥ इत्यधिकं–सर्वत्र. [4] विपुलं–ङ. [5] रामः–ङ. [6] महामेरु–ङ. ज.

विमलं—पवित्रम् । महामेघमिव स्थितमिति । अयं वृक्ष-बाहुल्यमूलनैल्यांशस्थौल्ययोः दृष्टान्तः । उन्नतमिति स्वरूपवर्णनम् ॥

**तत्र तापसमासीनं [1] मलपङ्कजधारिणम् ।**
**रामः सुतीक्ष्णं विधिवत् [2] तपोवृद्धं * अभाषत ॥ ३ ॥**

तत्र—तन्महाशैलवर्तिनि आश्रमे । मलपङ्कजधारिणं—मलस्य—सर्वाघस्य शुद्धये पङ्कजं—पद्मासनं आस्थाय योगधारणशीलं । मध्यमपदलोपी समासः । अथ "रागद्वेषयोगजाघात्" प्रसिद्धस्य मलमूलकारणाघस्य क्षयाय पङ्कजे—हृदयपङ्कजे अकृतकभगवद्ध्यानान्यता योगधारणशीलम् । एवं दिव्ययोगवत्त्वमेव अग्रे वक्ष्यमाणस्य देवराजेन ब्रह्मलोकप्रस्थानप्रार्थनस्य मूलम् । एवं पाङ्क्ते स्थिते महामेघमिवोन्नतमित्यनन्तरं कंचन श्लोकद्वयं प्रक्षिप्य पठित्वा तस्य च कष्टपिष्टिक्रियाव्याख्यानन्तर, मलपङ्कजटाधरं इति पठित्वा पाठं नाशयति † पाङ्क्तपाठव्याख्यानाशक्त्या, तद्दोषं सोऽनुभवतु । विधिवदिति । उपगम्येति शेषः ॥ ३ ॥

**रामोऽहमस्मि, भगवन् ! [3] भवन्तं द्रष्टुमागतः ।**
**तन्माऽभिवद, धर्मज्ञ ! महर्षे ! सत्यविक्रम ! ॥ ४ ॥**

तन्माऽभिवदेति । प्रागुक्तदिव्ययोगधारणे नित्यप्रतिष्ठितत्वेन नमस्काराद्दिव्यवहारानभिज्ञत्वात् एवं प्रार्थना ॥ ४ ॥

---

* मीलितनयनत्वेन स्वाभिवादनापरिज्ञानात् भाषणम्—गो. † महेश्वरतीर्थः, गोविन्दराजो वा । तत्र—मलं नाम उद्वर्तनादिसंस्काराभावात् शरीरजन्यं, पङ्को नाम वनसञ्चारात् शरीरलग्नमिति भेदः—ती. नित्यनिश्चलतपोयोगेन वा वार्धकेन वा मलपङ्कजटानां धरं-गो.

[1] मलपङ्कजटाधरम्—ङ. [2] तपोधनं—ङ. [3] भद्रं त्वां—ङ.

स निरीक्ष्य ततो [1]वीरं रामं धर्मभृतां [2]वरम् ।
समाश्लिष्य च बाहुभ्यां इदं वचनमब्रवीत् ॥ ५ ॥

स निरीक्ष्येति । उक्तवचनतो योगात् उत्थाय रामं दृष्ट्वेत्यर्थः ॥

स्वागतं [3]खलु ते, वीर ! राम ! [4]धर्मभृतां वर !
*आश्रमोऽयं त्वयाऽऽक्रान्तः सनाथ इव सांप्रतम् ॥ ६ ॥

सनाथ इव—सस्वामिक इव सांप्रतमभूत् । आन्तराशयस्तु—आब्रह्मचर्याद्याश्रमव्यवहारार्होऽयं देहः त्वया—जीवात्मकत्वत्तेजसा आक्रान्तः, सोऽत्र 'आलोमभ्यः आनखेभ्यः सर्वस्य आङ्ग आप्यते' इति श्रुतेः यावत्परित्यागं नित्यव्याप्तः, अत एव त्वदेकसनाथः—प्रत्यक्तत्त्वभूतत्वदेकाधिष्ठेयः इत्याविवादात् तादृशोऽयं विशिष्य सांप्रतं सनाथः—बहिश्चक्षुषोऽपि अपरोक्षसिद्धत्वदनुभवत्वात् ; ब्रह्म-लोक एव किल बहिश्चक्षुषाप्यनुभवः भगवतः तथा प्रादर्शि ॥ ६ ॥

प्रतीक्षमाणस्त्वामेव नारोहेऽहं, महायशः !
देवलोकमितः, वीर ! देहं त्यक्त्वा [5]महीतले ॥ ७ ॥

त्वामेवेति—ब्रह्ममेधप्रधानहविर्देवतामित्यर्थः । महीतले—कर्मभूप्रतिष्ठावति † ब्रह्ममेधाग्नौ देहं त्यक्त्वा—हुत्वा इतः—देहलोकाभ्यां

---

*सनाथ इव—सनाथ एव । यद्वा सर्वदा त्वया सनाथत्वेऽपि, पामराणां सनाथत्वप्रतिभा इदानीं जातेत्यर्थः—गो. यतस्त्वयायमाश्रमः समाक्रान्तः, तस्मात् सांप्रतं—इदानीं सनाथ इवास्मीति शेषः—रा. स्वरसतस्तु सनाथपदं आश्रमविशेषणम् ।

† शरभङ्गेणाप्येवमेवोक्त्वाऽग्निप्रवेशकरणात् सुतीक्ष्णोऽप्यग्निं प्रविवेशेति मत्वा एवं व्याख्यातम् । परन्तु एकादशसर्गे 'रमतश्चानुकूल्येन ययुः संवत्सरा दश' 'सुतीक्ष्ण-स्याश्रमपदं पुनरेवाजगाम ह' (१८) 'सुतीक्ष्णः प्रत्युवाचेदं' (३६) इति च दर्शनात्, न शरभङ्गवत् सुतीक्ष्णः अग्निं विवेशेति गम्यते । अतः 'एतल्लोकं त्यक्त्वा देवलोकं न गतः' इति सामान्योक्तिरियमिति भाति ।

[1] धीरः—ङ. [2] वरः—ङ. [3] ते नरश्रेष्ठ—ङ. [4] सत्यभृतां—ङ. ज.
[5] महीतलात्—ङ.

देवलोकं—आदिदेवस्य ब्रह्मणो लोकं अहं नारोहे—नारोहामि । ब्रह्ममेधानुष्ठानार्हब्रह्मयोगित्वात् अस्यापि ऐच्छिकदेहत्यागसामर्थ्यम् ॥ ७ ॥

*चित्रकूट[1]मुपादाय राज्य[2]भ्रष्टोऽसि मे श्रुतः ।

चित्रकूटमित्यादि । यदा राज्यभ्रष्टः त्वं चित्रकूटं उपादाय—प्राप्य स्थितोऽसि तदाप्रभृति मे—मया श्रुतोऽसि । आन्तराशयस्तु—चित्रकूटं—अतिविचित्रहेतुफलमयसकलसंस्कारावासभूतं आन्तराद्युपग्रहत्रयं उपादाय—स्वीयतया परिगृह्य यतो राज्यभ्रष्टोऽसि 'ब्रह्मा त्वं राजन्' इत्यादिश्रुतिप्रसिद्धभूमानन्दब्रह्मराजभावात् प्रच्युतप्रत्यगात्मना स्थितोऽसि, अतो मया त्वदेकत्वेन अशेषवेदान्तैः मत्तत्वतया श्रुतोऽसि इति ॥ ७ ॥

†इहोपयातः, काकुत्स्थ ! देवराजः शतक्रतुः ॥ ८ ॥

उपागम्य च मां देवः महादेवः सुरेश्वरः ।
सर्वाँल्लोकान् जितानाह मम पुण्येन कर्मणा ॥ ९ ॥

तेषु देवर्षिजुष्टेषु जितेषु तपसा मया ।
मत्प्रसादात् सभार्यस्त्वं विहरस्व सलक्ष्मणः ॥ १० ॥

अथ त्वत्प्रतीक्षया अहमिह स्थित इत्यत्र हेतुमाह—इहोपयात इत्यादि । शरभङ्गाह्वानानन्तरं इहाप्युपयातः—प्राप्तवानित्यर्थः । किं ततः इत्यतः—उपगम्येत्यादि । पूजावचनेषु न पौनरुक्त्यं शङ्कनीयं

---

* राज्यभ्रष्टः सन् चित्रकूटमुपादाय असि – वर्तसे इति मे श्रुतः । यद्वा, चित्रकूटप्राप्त्यनन्तरमेव राज्यभ्रष्टः श्रुतोऽसि । † कस्मात् श्रुत इत्यत आह—इहेति–रा.

[1] मनुप्राप्त.–ङ. [2] भ्रष्टो मया श्रुतः, भ्रंशो मया श्रुत.–ङ.

इति आदावेव वेदितम्। अतः—देवः, महादेवः, सुरेश्वरः इति प्रवृत्ति-निमित्तभेदः सुस्पष्टः, मम पुण्येन कर्मणा—शुद्धयोगानुष्ठानेन ब्रह्म-लोकान्तसर्वलोकान् मे जितानाह। अत एव आरूढया इति चाह। यदेवं, अतः—तेष्वित्यादि। विहरस्वेति। विहरेति यावत् ॥ १० ॥

तमुग्र[1]तपसा युक्तं महर्षिं सत्यवादिनम्।
प्रत्युवाचात्मवान् रामः ब्रह्माणमिव [2]काश्यपः ॥ ११ ॥
अहमेवाहरिष्यामि स्वयं लोकान्, महामुने!
आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ १२ ॥

प्रदिष्टमिति। त्वयेति शेषः ॥ १२ ॥

भवान् सर्वत्र कुशलः सर्वभूतहिते रतः।
आख्यातः शरभङ्गेण गौतमेन महात्मना ॥ १३ ॥

सर्वत्रेति। सर्वपुरुषार्थसाधन इत्यर्थः। गौतमेन—गौतम-गोत्रापत्येनेति यावत् ॥ १३ ॥

एवमुक्तस्तु रामेण महर्षिः लोकविश्रुतः।
अब्रवीन्मधुरं वाक्यं हर्षेण महताऽऽप्लुतः ॥ १४ ॥
अयमेवाश्रमः, राम! गुणवान् रम्यतामिह।
ऋषिसङ्घानुचरितः सदा मूलफलान्वितः ॥ १५ ॥

अयमिति। अस्मदीय इत्यर्थः ॥ १५ ॥

इममाश्रममागम्य मृगसङ्घाः, [3]महायशः!
*[4]अहत्वा प्रतिगच्छन्ति लोभयित्वाऽकुतोभयाः ॥ १६ ॥

---

* अहत्वा—हननमकृत्वा, लोभयित्वा—रूपकान्तिगतिविशेषैः चित्तक्षोभं कृत्वा गच्छन्तीत्यर्थः। अनेन भाविमारीचवृत्तान्तः सूचितः—ति. अटित्वा—इतस्ततः परिप्लुत्य, लोभयित्वा—समाधिभङ्गं जनयित्वा—गो.

[1] तपसं दीप्तं—ङ. ज. [2] वासवः—ङ. ज. [3] महीयसः—ङ. [4] अटित्वा—ङ.

**नान्यो दोषो भवेदत्र मृगेभ्योऽन्यत्र विद्धि वै ।**

अथ गुणमुक्त्वा दोषमप्याह—इममित्यादि । अहत्वेति । हननमकृत्वेत्यर्थः । अपि तु लोभयित्वा-चित्तक्षोभं कृत्वेत्यर्थः । स्वयं अकुतोभयाः—ऋषिभिः बाधाभावात् कुतश्चनापि भयरहिताः । 'नान्यो दोषो भवेदत्र' इत्यस्यैव विवरणं—मृगेभ्योऽन्यत्र विद्धि वै इति ॥

**तच्छ्रुत्वा वचनं तस्य महर्षेः लक्ष्मणाग्रजः ॥ १७ ॥**
**उवाच वचनं धीरः * विकृष्य सशरं धनुः ।**

तच्छ्रुत्वेति । मृगभयविषयकं वचनमित्यर्थः ॥ १७ ॥

**तानहं, सुमहाभाग! मृगसङ्घान् समागतान् ॥ १८ ॥**
**हन्यां निशितधारेण शरेणा[1]शनिवर्चसा ।**

मृगसङ्घान् हन्यामिति प्राप्तकाले लिङ्, यथाप्राप्तकालं अशेषमृगसङ्घहननं कुर्याम् ॥ १८ ॥

**† [2] भवांस्तत्राभिषज्येत, किं स्यात् [3] कृच्छ्रतरं ततः ॥ १९ ॥**
**‡ [4] एतस्मिन् आश्रमे वासं चिरं तु न समर्थये ।**

---

* विकृष्य सशरं धनुरिति स्वोत्साहप्रकटनम्—गो † यत्र—यदुपद्रवे भवान् अभिषज्येत—पीड्येत, ततः कृच्छ्रतरं—क्लेशाधिक्यं किं स्यात् । एतेन मुनीनां खेदहेतवः तदाज्ञया हन्तव्या एवेति रामाभिप्रायः सूचितः—रा. ‡ मृगवधवचनश्रवणानन्तरं तूष्णींभावादिना मृगवधस्य मुनेरनभिमतत्वं विज्ञायाह—एतस्मिन्निति—रा. वस्तुतस्तु—शरभङ्गाश्रमागतमुनिभिस्साकमेव सुतीक्ष्णाश्रमागमनात् (6–26, 7–1 श्लोकौ द्रष्टव्यौ), अनुपदं 'मुनयस्त्वरयन्ति नः' (८–५) इत्युक्तेश्च ऋषिभ्यो दत्तप्रतिज्ञैवात्र हेतुरिति प्रतिभाति ॥

[1] नतपर्वणा—ङ. [2] भवान् यत्रा—ज. [3] दुःखतरं—ङ. [4] एकस्मिन्—ङ.

नैवं कृत्वा इह मया स्थातुं शक्यमित्याह—भवांस्तत्रेति। मृगसंघवध इत्यर्थः। भवान् मया अभिषज्येत अभिपूर्वात् षञ्जेः कर्मणि लिङ्, "अभिषङ्गः पराभवः", मया कृतापराधो भवेत्। ततः परं मे कृच्छ्रतरं किं स्यात्? न किमपि। यदेवं, अतः—एतस्मिन् इत्यादि। चिरं वासं तु न समर्थये-नेच्छामि। इह स्थितः मृगसङ्घपीडां सोढ्वा स्थातव्यं, इत्वाऽवस्थाने तु महर्षेरपचारः। अतः इह चिरवासो न रोचते मह्यमित्यर्थः॥ १९॥

* तमेव[1]मुक्त्वा वरदं रामः संध्यामुपागमत्॥ २०॥

संध्यामुपागमदिति। संध्यां वन्दितु उपागतवानित्यर्थः॥२०॥

अन्वास्य पश्चिमां संध्यां तत्र वासमकल्पयत्।
सुतीक्ष्णस्याश्रमे[2] रम्ये सीतया लक्ष्मणेन च॥ २१॥

ततः शुभं तापस[3]भोज्यमन्नं
स्वयं सुतीक्ष्णः पुरुषर्षभाभ्याम्।
ताभ्यां सुसत्कृत्य ददौ महात्मा
संध्यानिवृत्तौ रजनीमवेक्ष्य॥ २२॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे सप्तमः सर्गः

---

संध्यानिवृत्तौ—संध्यारागनिवृत्तौ सत्यां रजनीं अभ्यवहाराहीं समीक्ष्येत्यर्थः। रुरु(२२)मानः सर्गः॥ २२॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे सप्तमः सर्गः

---

* तमेवमुक्त्वोपरममितिपाठे-उपरमं—उपरम्य। क्वचित् उपरम्येत्येव पाठः-ति. वरदमित्यनेन मुनिरप्यर्थवानुज्ञातवानिति गम्यते-गो.

[1] मुक्त्वोपरमं-ङ. च. [2] रामः-ङ. [3] योग्यमन्नं-ङ.

## अष्टमः सर्गः

### [सुतीक्ष्णाभ्यनुज्ञा]

रामस्तु सहसौमित्रिः सुतीक्ष्णेनाभिपूजितः ।
परिणाम्य निशां तत्र प्रभाते प्रत्यबुद्ध्यत ॥ १ ॥

अथ सुतीक्ष्णानुज्ञातेन रामेण मुनिभिः सह आश्रममण्डलप्रवेशः । रामस्त्वित्यादि । परिणाम्येति । परिणामशब्दात् तत्करोतीति णिच्, अतिवाह्येति यावत् ॥ १ ॥

उत्थाय तु यथाकालं राघवः * सह सीतया ।
[1]उपास्पृशत् सुशीतेन जलेनोत्पलगन्धिना ॥ २ ॥

उत्पलस्य गन्धोऽस्यास्तीति तथा ॥ २ ॥

अथ तेऽग्निं † सुरांश्चैव वैदेही रामलक्ष्मणौ ।
काल्यं विधिवदभ्यर्च्य तपस्विशरणे वने ॥ ३ ॥

काल्यं—यथाकालप्राप्तं—उदयन्तमिति यावत् ॥ ३ ॥

‡ उदयन्तं दिनकरं दृष्ट्वा विगतकल्मषाः ।
सुतीक्ष्णमभिगम्येदं श्लक्ष्णं वचनमब्रुवन् ॥ ४ ॥
सुखोषिताः स्म, भगवन्! त्वया पूज्येन पूजिताः ।
आपृच्छामः प्रयास्यामः मुनयः त्वरयन्ति नः ॥ ५ ॥

---

* सह सीतयेत्यनेन पूर्वमेव सौमित्रिः स्नात इति व्यज्यते—गो. † सुरान्—नारायणम्, 'सह पत्न्या विशालाक्ष्या नारायणमुपागमत्' इति अयोध्याकाण्डे (स. ६, श्लो. २) उक्तेः । परिवारापेक्षया बहुवचनम्—गो. ‡ उदयन्तं—उद्यन्तम् । अनेन होमानन्तरमादित्योपस्थानोक्त्या अनुदितहोमपक्षसूचनात् कात्यायनसूत्रक्रमेण राघवाणामनुष्ठानमिति गम्यते—गो.

[1] उपस्पृश्य—ञ.

[1] त्वरामहे वयं द्रष्टुं कृत्स्नमाश्रममण्डलम् ।
ऋषीणां पुण्यशीलानां दण्डकारण्यवासिनाम् ॥ ६ ॥
[2] त्वदनुज्ञातुमिच्छामः *सहैभिः मुनिपुङ्गवैः ।
धर्मनित्यैः तपोदान्तैः † विशिखैरिव पावकैः ॥ ७ ॥

त्वदनुज्ञातुमिच्छाम: इति । भावे तुमुन्, त्वत्कर्तृकं गमनानुज्ञानं प्रार्थयाम इत्यर्थः । विशिखैः पावकैरिवेति । अङ्गारवस्थैरित्यर्थः ॥ ७ ॥

अविप्रह्यातपो यावत् सूर्यो नातिविराजते ।
अमार्गेणागतां लक्ष्मीं ‡ प्राप्येवान्वयवर्जितः ॥ ८ ॥
§ तावदिच्छामहे गन्तुं इत्युक्त्वा चरणौ मुनेः ।
ववन्दे सहसौमित्रिः सीतया सह राघवः ॥ ९ ॥

नातिविराजत इति । नात्युद्गच्छतीति यावत् । अमार्गेण—अन्यायेन आगतां लक्ष्मीं—ऐश्वर्यं प्राप्य अन्वयवर्जितः- अन्वयः—सबन्धः, सद्गुरुसाधुजनसेवारहितः दुष्प्रभुरिव यावदविषह्यप्रभावो भवेत्, ततः पूर्वं गन्तुमिच्छामहे—इच्छाम इति यावत् ॥ ९ ॥

तौ संस्पृशन्तौ चरणौ उत्थाप्य मुनिपुङ्गवः ।
गाढमालिङ्ग्य सस्नेहं इदं वचनमब्रवीत् ॥ १० ॥

---

* एवञ्च दण्डकारण्यवासिभिः ऋषिभिस्सह रामः सुतीक्ष्णाश्रमात् प्रतस्थे । अत एव 'एतां तपस्विनामाश्रमपदं पश्य' (१२) इत्यनन्तरोक्तिरपि सुसङ्गता । † विशिखैः—विगतज्वालैः—गो. ‡ अन्वयवर्जितः—पूर्वं नित्यं लक्ष्मीसम्बन्धशून्यः—रा. दुष्कुलजातः 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ'—ती. सत्संस्कारशून्य इति भावः । § 'तावदिच्छामहे गन्तुं' इत्यनेन रावणवधत्वरा व्यज्यते । अतो न हीनोपमादोषोऽपि—गो.

[1] इच्छामहे—ङ. [2] अभ्यनु, तदनु—ङ, ज.

अरिष्टं गच्छ पन्थानं, राम! सौमित्रिणा सह ।
सीतया चानया सार्धं छाययेवानुवृत्तया ॥ ११ ॥

अरिष्टं–रिषेः 'तीषसह' इति इडभावे निष्ठायां रिष्टं, न रिष्टं–अरिष्टं–अनुपद्रवमिति यावत् ॥ ११ ॥

पश्याश्रमपदं [1]रम्यं दण्डकारण्यवासिनाम् ।
एषां तपस्विनां, [2]वीर! तपसा भावितात्मनाम् ॥ १२ ॥
सुप्राज्यफलमूलानि पुष्पितानि वनानि च ।
प्रशस्तमृगयूथानि शान्तपक्षिगणानि च ॥ १३ ॥
फुल्लपङ्कजषण्डानि प्रसन्नसलिलानि च ।
[3]कारण्डवातिकीर्णानि तटाकानि सरांसि च ॥ १४ ॥
द्रक्ष्यसे दृष्टिरम्याणि गिरिप्रस्रवणानि च ।
रमणीयान्यरण्यानि मयूराभिरुतानि च ॥ १५ ॥

पुष्पितानि वनानि च द्रक्ष्यसे इति अग्रेण संबन्धः । कारण्डवैः अत्यन्तं कीर्णानि ॥ १३–१५ ॥

गम्यतां, वत्स! सौमित्रे! भवानपि च गच्छतु ।
*आगन्तव्यं च ते दृष्ट्वा पुनरेवाश्रमं मम ॥ १६ ॥

ते आगन्तव्यमिति । त्वयेति यावत् ॥ १६ ॥

एवमुक्तः तथेत्युक्त्वा काकुत्स्थः [4]सहलक्ष्मणः ।
प्रदक्षिणं मुनिं कृत्वा प्रस्थातुमुपचक्रमे ॥ १७ ॥

---

* ते आश्रमं–इति वाऽन्वयः, 'आश्रमोऽयं त्वयाऽऽक्रान्तः सनाथ इव सांप्रतम्' (८) इति पूर्वमुक्तम् ॥

[1] पुण्यं–ङ. [2] राम–ङ. [3] कारण्डववि–ङ. [4] सह सीतया–ङ.

*ततः शुभतरे तूणी धनुषी चायतेक्षणा ।
ददौ सीता तयोर्भ्रात्रोः खड्गौ च[1] विमलौ ततः ॥ १८ ॥
आबध्य च शुभे तूणी [2]चापे चादाय † सस्वने ।

खड्गौ च विमलौ ततः इति । ततः—धनुरादिदानानन्तरं, विमलौ—सुनिशातौ खड्गौ च ददावित्यन्वयः । चापे इति । चापशब्दो द्विलिङ्गः ॥ १८ ॥

निष्क्रान्तावाश्रमाद्गन्तुं उभौ तौ रामलक्ष्मणौ ॥ १९ ॥
[3]श्रीमन्तौ रूपसंपन्नौ दीप्यमानौ स्वतेजसा ।
प्रस्थितौ दृढचापौ तौ सीतया सह राघवौ ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे अष्टमः सर्गः

---

नर(२०) मानः सर्गः ॥ २० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे अष्टमः सर्गः

---

* ततः शुभतरेत्यादिनाऽयमर्थोऽवगम्यते—आश्रमप्रवेशे किमस्माकमायुधैरिति मन्यमाना सीता आयुधानि मुनिगृहे कचिन्निहितवती । अथ 'अमार्गेण' इत्यादिरामवाक्येन 'अरिष्टं गच्छ' इत्यादिमुनिवाक्येन च तयोः हृदयं विदित्वा स्वयमेवादाय पुनर्दत्तवतीति । अत एवोत्तरसर्गे स्वाशयं वक्ष्यति-**गो.** वस्तुतस्तु प्रयाणादिकाले गृहिणी-जनन्यादिकार्यमिदं सर्वानुभवसिद्धम् । † अनेन धनुषः सन्नद्धता सूच्यते ।

[1] कनकत्सरू-**ङ.** [2] चापौ चादाय सस्वनौ-**सर्वत्र.** [3] शीघ्रं तौ-**ज.**

## नवमः सर्गः

### [सीताधर्मप्रतिबोधनम्]

*सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् ।
[1]हृद्यया स्निग्धया वाचा भर्तारमिदमब्रवीत् ॥ १ ॥

अथ सीतायाः जगन्मातृस्वभावत्वात् रामादपि परमदयाक्षमायुक्तत्वात् अनिर्वैरक्षोवधं अन्याय्यमिव मन्यमाना तत्त्वबुभुत्सया कानिचिद्वचांसि सीता ब्रूते। सुतीक्ष्णेनेत्यादि । हृद्यया—उपपत्तिमत्त्वेन हृदयङ्गमया । स्निग्धया-स्नेहप्रवृत्तया ॥ १ ॥

†[2]अधर्मं तु सुसूक्ष्मेण विधिना प्राप्यते महान् ।
निवृत्तेन तु शक्योऽयं व्यसनात् कामजादिह ॥ २ ॥

इदमब्रवीदिति, किंतदित्यत आह—अधर्मं त्वित्यादि । महान्—महात्मा—महापुरुषः यद्यपि भवान्, अथापि सूक्ष्मेण विधिना-सूक्ष्म मार्गेण विचारे सति अधर्मं तु प्राप्यते, आपेः छान्दसः श्यन्, कर्तरि यक्वा छान्दसः; अधर्ममेव प्राप्नोति भवानित्यर्थः। अयं अधर्मस्तु कामजाद्व्यसनात् निवृत्तेन त्वया निवर्तितुं शक्यः ॥ २ ॥

त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत ।
मिथ्या [3]वाक्यं ‡परमकं तस्मात् गुरुतरावुभौ ॥ ३ ॥

---

* यदि त्वं सायुधो राक्षसभूयिष्ठे प्रदेशे प्रविष्टः स्याः, तर्हि तैस्साकं विरोधः स्यात्, तेनाऽवयोर्विश्लेषः स्यात् ........अतो निधायायुधं अस्माभिर्वने गन्तव्यमित्याह.... रामेण ऋषिभ्यः प्रतिज्ञाकरणं, रामप्रतिज्ञाया दुरावरत्वं च बहुशो दृष्टवत्यपि, राक्षसैर्वैरे भर्तुः स्वविरहद्वारा महान् क्लेशो भवेदिति प्रेमान्धतया तथोक्तवती—**गो.** † महानयं धर्मः—त्वयाऽनुष्ठीयमानो मुनिधर्मः सुसूक्ष्मेण विधिना—मार्गेण प्राप्यते। अयं च धर्मः व्यसनात् निवृत्तेनैव शक्यः—**गो.** ‡ सामान्यतः श्रेष्ठं पापं। एतस्मादपि अन्यौ गुरुतरौ ॥

[1] वैदेही–ङ. [2] अयं धर्मः, यस्तु धर्मः–ङ. [3] वादं–ङ.

**परदाराभिगमनं विना वैरं च रौद्रता ॥**

किं तत् कामजं व्यसनम्? कश्चायमधर्मः तन्निवृत्त्या निवर्तनीयः? इत्यपेक्षायामाह—त्रीण्येवेति। कानि त्रीणि? अतः—मिथ्यावाक्यमित्यादि। स्वदेहस्त्रीपुत्रवित्तादिरागवशात् मिथ्यावाक्यप्रवृत्तिः पुंसो भवति परमव्यसनभूतम्, स्वार्थे कः। तस्मात् व्यसनादनन्तरं उभौ व्यसनविशेषौ गुरुतरौ—अत्यन्तव्यसनरूपौ। कौ तौ? इत्यतः—परदारेत्यादि। रौद्रता—रौद्रभावावलम्बनम् ॥ ३ ॥

**मिथ्यावाक्यं न ते भूतं न भविष्यति, राघव! ॥ ४ ॥**
**[1] कुतोऽभिलषणं स्त्रीणां परेषां धर्मनाशनम्।**
**[*] तव नास्ति, मनुष्येन्द्र! न चाभूत्ते कदाचन ॥ ५ ॥**
**[2] मनस्यपि तथा, राम! न चैतद्विद्यते क्वचित्।**

एवं व्यसनत्रयं निरूप्य प्रकृते अधर्मप्राप्तिपरिहाराय परिहार्यं व्यसनं परिशेषयितुं आह—तवेत्यादि। एतत्—उक्तव्यसनेषु यदेतत् परदाराभिमर्शनात्मकं व्यसनं उक्तम्, हे मनुष्येन्द्र! तत् तव नास्ति वर्तमानकालेऽपि, ते—तव नाभूत्, इतः प्राक्; अपिच, हे राम! मनसाऽपि तथा प्रसङ्गः क्वचिदपि परस्त्रीविषये न विद्यते ॥ ५ ॥

**स्वदारनिरत[3]स्त्वं ते नित्यमेव, नृपात्मज! ॥ ६ ॥**
**धर्मिष्ठः सत्यसन्धश्च पितुर्निर्देशकारकः[4]।**
**[†] त्वयि सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ७ ॥**

---

* 'नास्ति' इति वर्तमानकाले, 'नाभूत्' इति भूतकाले 'मनस्यपि' इत्यादिना संभावना, तेन भविष्यत्काले च तन्निषिध्यते। † यतः त्वयि इदं सर्वं प्रतिष्ठितं, अतः—धर्मिष्ठ इत्यादि ॥

[1] कुतो हि धर्षणं—ङ. [2] मनसाऽपि—ङ. [3] स्त्वं च सत्यमेव—ङ.
[4] एतदनन्तरं—सत्यसन्ध महाभाग श्रीमन् लक्ष्मणपूर्वज—इत्यधिकं—ङ. ज.

हे नृपात्मज! ते नित्यमेव स्वदारनिरतत्वं च विद्यते। धर्मिष्ठः सत्यसन्धः पितुर्निर्देशकारकश्च भवसि। त्वयि धर्मः प्रतिष्ठितः। त्वयि सर्वं सत्यं प्रतिष्ठितम् ॥ ६–७ ॥

तच्च सर्वं, महाबाहो! [1]शक्यं [2]वा विजितेन्द्रियैः।
तव वश्येन्द्रियत्वं च जानामि, शुभदर्शन! ॥ ८ ॥

तच्च सर्वं—'तव नास्ति मनुष्येन्द्र' इत्युपक्रम्य उपदिष्टार्थजातं, विजितेन्द्रियैः अनुष्ठातुं शक्यं वा—शक्यमेव। तथाऽनुष्ठानसामर्थ्यरूपं तव वश्येन्द्रियत्वं च जानामि। अतो वश्येन्द्रियत्वात् मिथ्यावाक्यं च त्रैकालिकं नास्ति। वश्येन्द्रियत्वादेव सकलधर्मनाशनं परेषां स्त्रीणामभिमर्शनं, तत्सङ्गोऽपि वा कुतः? ॥ ८ ॥

*तृतीयं यदिदं रौद्रं परप्राणाभिहिंसनम्।
निर्वैरं क्रियते मोहात् तच्च ते समुपस्थितम् ॥ ९ ॥

एवं वश्येन्द्रियमात्रसुजयासत्यवाक्यपरदाराभिमर्शने वश्येन्द्रियतमे त्वयि प्रसक्तिरहिते एव। अपितु तृतीयव्यसनप्रसक्त्या प्राप्यते अधर्मः प्रथमप्रतिज्ञातः इत्याह—तृतीयमित्यादि। यदिदं परप्राणाभिहिंसनं तृतीयं रौद्रतारूपं व्यसनमस्ति, तच्च मोहात्, यतो निर्वैरं क्रियते; तच्चैतत् निर्वैररौद्रतारूपं अधर्मान्तरं ते समुपस्थितम्। एवं पाठः, व्याकृतश्च। एवं स्थिते—"अयं धर्मः सुसूक्ष्मेण विधिना- प्राप्यते महान्" इति प्रथमं पठित्वा—"निवृत्तेन तु शक्योऽयं

---

* नात्र वश्येन्द्रियत्वमुपयुज्यते, स्वतो जिघांसाऽभावेऽपि परार्थहिंसायां तस्यानुपयोगात्; किन्तु दयैवात्रापेक्ष्यत इत्याशयः। एतदेवोपोद्बलयति 'मोहात्' इति पदम्। यथा अन्यैः मोहात् क्रियते, तदेव भवतोऽपि प्राप्तम् इत्यर्थः ॥

[1] सत्यं–ज. [2] धर्तुं–ङ. वोढुं–ज.

व्यसनात् कामजादिह " इति पठतः, कुतोऽयं धर्मः इति ? प्रकृतो वक्ष्यमाणो वा—येनेदंशब्देन परामृश्यते । "निर्वैरं क्रियते मोहात् तच्च ते समुपास्थितम् ।" इत्यधर्मप्राप्त्यापादनं च उपसंहारे स्पष्टम् । एवं असंगतं च प्रलप्य, पश्चात् पाङ्क्तं पाठं योजनाशक्त्या प्रामादिकमित्यजल्पत्*। जल्पतु यथेष्टम् ॥ ९ ॥

प्रतिज्ञातस्त्वया, वीर ! दण्डकारण्यवासिनाम् ।
ऋषीणां रक्षणार्थाय वधः संयति रक्षसाम् ॥ १० ॥

ननु कुतो मे निर्वैरप्राणिपीडालक्षणतृतीयाधर्मसमुपस्थितिः ? इत्यत्राह—प्रतिज्ञात इत्यादि ॥ १० ॥

एतन्निमित्तं [1] च वनं दण्डकाः इति विश्रुतम् ।
प्रस्थितस्त्वं सह भ्रात्रा धृतबाणशरासनः ॥ ११ ॥

ननु प्रतिज्ञामात्रमेव कृतं, न त्वनुष्ठितं ; तत् कुतः संप्राप्तिः ? इत्यत्राह—एतदित्यादि । एतन्निमित्तमेव—प्रतिज्ञातरक्षोवधानुष्ठानार्थमेव त्वं दण्डका इति विश्रुतं–प्रसिद्धं इदं वनं धृतबाणशरासनः सन् भ्रात्रा सह 'मुनयः त्वरयन्ति नः' इत्युक्त्वा सुतीक्ष्णाश्रमादपि प्रस्थितश्च । प्रस्थितस्त्वं करिष्यस्येवेति प्राप्तमेव तृतीयं पापमित्यर्थः ॥ ११ ॥

ततस्त्वां प्रस्थितं दृष्ट्वा मम चिन्ताकुलं मनः ।
त्वद्वृत्तं चिन्तयन्त्या वै † भवेन्निःश्रेयसं [2] हितम् ‡ ॥१२॥

---

* महेश्वरतीर्थः । स एव गोविन्दराजस्यापि सम्मतः । कतकसम्मतपाठस्य तीर्थेनैव प्रदर्शनात् अत्र स एव विवक्षितः । व्याख्या तु द्वितीयश्लोकटिप्पण्यां द्रष्टव्या ॥

† भवेदित्यनेन—चिन्तायाः स्वतः प्राप्तत्वमुच्यते । ‡ एवं वाऽस्यार्थः—भवद्धिताचिन्तने ममापि दोषः स्यादेव, पतिक्षेमैकचिन्तात्वात् पत्न्याः । अतः त्वद्वृत्तं चिन्तयन्त्या मम हितरूपं निःश्रेयसमेव खलु भवेत् । न ह्येतच्चिन्ता मम दोषावहा—इति ॥

[1] वचनं–ञ.  [2] हि तत्–ङ.

यदेवं—तत इत्यादि । तत एव हेतोः प्रस्थितं त्वां दृष्ट्वा, त्वद्वृत्तं च-सत्यप्रतिज्ञत्वलक्षणं चरित्रं च दृष्ट्वा, त्वन्निःश्रेयसं-पारलौकिकसुखहितं च विचिन्तयन्त्याः मे मनः चिन्ताकुलं भवेत्-भवति वै ॥ १२ ॥

न हि मे रोचते, वीर! गमनं दण्डकान् प्रति ।
कारणं तत्र वक्ष्यामि वदन्त्याः श्रूयतां मम ॥ १३ ॥

यदेवं, अतः—न हि मे इत्यादि । अरुचौ हेतुमाह—कारणमिति । तत्र—दण्डकारण्यप्रवेशारुचौ । ममेति, सकाशादिति शेषः ॥ १३ ॥

त्वं हि बाणधनुष्पाणिः भ्रात्रा सह वनं गतः ।
दृष्ट्वा वनचरान् [1]सर्वान् कच्चित् कुर्याः शरव्ययम् ॥ १४ ॥

हि—यस्मात् त्वं वनं गतः सर्वान् वनचरान् उद्दिश्य शरव्ययं कुर्याः कच्चित्—कुर्यात् किल, अतः इदमेव कारणं व्यर्थहिंसालक्षणा-धर्मप्राप्तौ ॥ १४ ॥

क्षत्रियाणां च हि धनुः हुताशस्येन्धनानि च ।
*समीपतः स्थितं तेजोबलमुच्छ्रयते भृशम् ॥ १५ ॥

ननु शरमोक्षणमकृत्वैव स्थास्ये इत्यत्र, अशक्यार्थ एवायं वासनाप्राबल्यात् इति सेतिहासमाह—क्षत्रियाणां चेत्यादिना । तेजो-बलं—तेजोरूपं बलं प्राप्य समीपतः स्थितं उच्छ्रयते-व्याप्नोत्येव ॥ १५ ॥

---

* यत्समीपस्थितं, तस्य पुंसः तेजोबलं—तेजस आधिक्यं करोति, यथा वह्नेराधिक्य-मिन्धनानि—ति. तेजः—इतरप्रतापस्य बलं—आच्छादकतेज एव—रा. तेजोरूपं बलं वर्धयन्ति—ती. गो.

[1] घोरान्—ङ.

पुरा किल, महाबाहो! तपस्वी[1] सत्यवाक् शुचिः ।
कस्मिंश्चिदभवत्पुण्ये वने रतमृगद्विजे ॥ १६ ॥

रतमृगद्विजे—उपशान्तमृगपक्षिके । तपस्तेपे इति शेषः ॥ १६ ॥

तस्यैव तपसो विघ्नं कर्तुमिन्द्रः शचीपतिः ।
खड्गपाणिरथागच्छत् आश्रमं भटरूपधृत् ॥ १७ ॥

भटः—योधः ॥ १७ ॥

तस्मिंस्तदाश्रमपदे[2] निशितः खड्ग उत्तमः ।
* सन्यासविधिना दत्तः पुण्ये तपसि तिष्ठतः ॥ १८ ॥

सन्यासविधिना—कालान्तरे आदानाय रक्षणार्थस्थापनकर्मणा ॥

स तच्छस्त्रमनुप्राप्य न्यासरक्षणतत्परः ।
वनं तं[3] विचरत्येव रक्षन् † प्रत्ययमात्मनः ॥ १९ ॥

आत्मनः प्रत्ययं—विश्वस्य स्थापितं वस्तु प्रत्ययाधीनशपथज्ञान-
विश्वासहेतुषु रक्षन्नेव विचरति ॥ १९ ॥

यत्र गच्छत्युपादातुं मूलानि च फलानि च ।
न विना याति तं खड्गं न्यासरक्षणतत्परः ॥ २० ॥

तदेव प्रदर्शयति—यत्रेत्यादि ॥ २० ॥

नित्यं शस्त्रं ‡ परिवहन् क्रमेण स तपोधनः ।
चकार रौद्रीं स्वां बुद्धिं त्यक्त्वा तपसि निश्चयम् ॥ २१ ॥

---

* 'राजचोरादिकभयात् दायादानां च वञ्चनात् । स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्तितः ॥ '—गो. † आत्मनः प्रत्ययं रक्षन्—येन विश्वासेन न्यासो दत्तः तादृशप्रत्ययरक्षणभारज्ञानाधीनमेतत् । ‡ परिवहन्—परितो वहन्, स्वेन साकं सर्वत्र वहन् ।

[1] सत्यवान्—ज. [2] निहितः—ङ. [3] विहर—ङ.

परिवहन्—रक्षन् ॥ २१ ॥

ततः स रौद्रेऽभिरतः प्रमत्तो[1]ऽधर्मकर्शितः ।
तस्य शस्त्रस्य संवासात् जगाम नरकं मुनिः ॥ २२ ॥

अधर्मकर्शितः—पीडितः ॥ २२ ॥

एवमेतत् पुरावृत्तं *शस्त्रसंयोगकारणम् ।
†अग्निसंयोगवद्धेतुः शस्त्रसंयोग उच्यते ॥ २३ ॥

स्नेहाच्च बहुमानाच्च स्मारये त्वां [2]तु शिक्षये ।

बहुमानादिति । मदीयो भर्ता इत्येवंरूपः अभिमानः बहुमानः । स्मारये, पुरावृत्तमिति शेषः । अपि तु बहुमानात् त्वां तु शिक्षये ॥ २३ ॥

न कथंचन सा कार्या गृहीतधनुषा त्वया ॥ २४ ॥
बुद्धिर्वैरं विना हन्तुं राक्षसान् दण्डकाश्रितान् ।
अपराधं विना हन्तुं [3]लोकान्, वीर! न कामये ॥ २५ ॥

तदेव करोति—न कथंचनेत्यादि । एवं पाङ्क्ते, श्रद्धाजाड्यात् 'स्मारये त्वां न शिक्षये' इति पठित्वा कश्चित् व्याकरोति‡, तत्तु साक्षादुत्तरवाक्यक्रियमाणशिक्षणव्याहतम् । शिक्षणे हेतुश्च बहुमानादित्युक्तमेव । वैरं विना हन्तुं बुद्धिर्न कार्या इत्ययमेवार्थः प्रपञ्च्यते—अपराधं विनेत्यादि ॥ २५ ॥

---

* शस्त्रसंयोगकारणमिति बहुव्रीहिः—ति. † शस्त्रसंयोगः अग्निसंयोग इव कार्यकारीति भावः । ‡ महेश्वरतीर्थः, गोविन्दराजो वा। परन्तु 'सर्वं तु विदितं तुभ्यं' 'स्त्रीचापलादेतदुदाहृतं' इत्यादिवदन्त्याः सीतासदृश्याः धर्मपत्न्याः रामसदृशपतिशिक्षणे अमर्यादतामालोच्य तीर्थगोविन्दराजाभ्यां स एव प्राचीनः पाठः आदृतः । उत्तरवाक्यान्यपि स्मारणरूपाण्येव, न शिक्षणरूपाणीति लोकमर्यादयाऽपि ज्ञातुं शक्यते ।

[1] धर्मकर्शितः, धर्मदर्शने—ङ., [2] न—ङ. [3] लोको वीर न मंस्यते—ङ.

*क्षत्रियाणां तु वीराणां वनेषु[1] नियतात्मनाम् ।
धनुषा कार्यमेतावत् आर्तानामभिरक्षणम् ॥ २६ ॥

ननु आर्तमुनिजनरक्षणार्थमेव अनपराधानामपि वधोऽस्तु इति सिद्धान्तमपि उपमर्द्याह—क्षत्रियाणां त्वित्यादि । क्षत्रियाणां तु—क्षत्रधर्मार्हपदप्रतिष्ठितानामेव, अत एव वीराणां तु—राज्यरक्षणशेषतया युद्धादिप्रवृत्तिमतामेव वनेषु—अदेशवनेषु आर्तानां नियतात्मनां रक्षणमिति यत् एतावदेव धनुषा कार्यम् ॥ २६ ॥

क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च ।
†व्याविद्धमिद[2]मस्माभिः देशधर्मस्तु पूज्यताम् ॥ २७ ॥

न चास्माकं तत्प्रत्यधिकारः इत्याह—क्व च शस्त्रमित्यादि । क्षात्रं—क्षत्रपदराज्यप्रतिष्ठार्हं शस्त्रं क्व? इदानीमस्माभिराश्रियमाणं वनं च क्व? जटावल्कलादिधारणपूर्वमनुष्ठीयमानं तपश्च क्व? अतः अस्माभिः इदानीं अनुतिष्ठासितं इदं वधादिकं व्याविद्धं-परस्परव्याहतमेव । देशधर्मस्तु-देशं प्राप्तः क्षत्रियधर्मस्तु भवद्भिरपि देशं गत्वैव पूज्यताम् ॥ २७ ॥

‡[3]कदर्यकलुषा बुद्धिः जायते शस्त्रसेवनात् ।
पुनर्गत्वा त्वयोध्यायां क्षत्रधर्मं चरिष्यसि ॥ २८ ॥

---

* वनेषु निरतात्मनां आर्तानां अभिरक्षणं वीराणां क्षत्रियाणां कार्यम्-गो. नियतात्मनामित्यपि क्षत्रियविशेषणम्-रा. 'परमपावने तपोवने परहिंसा न करणीया' इति कथनशैलीपरिशीलने—नियतात्मनां-तपस्विनां वनेषु—इत्यप्यन्वयः सुवचः । एवञ्च आर्तसंरक्षणमेव कर्तव्यम्, न तु निर्वैरवध इत्याशयः । † परस्परविरुद्धमिदं अस्माभिर्न पूज्यतां; देशधर्मः-तपोवनधर्मः पूज्यताम्-गो. ‡ अत्र समासास्वारस्यं; एतदपेक्षया—'तदार्थं कलुषा' इति पाठः समीचीन इव ।

[1] निरता-ङ. [2] मस्माकं-ङ. [3] तदार्थं कलुषा-ङ.

अत्र वने तु शस्त्रसेवनात् कदर्यकलुषा—कदर्याणां—कृपणानामिव कलुषा बुद्धिः जायते धर्मानुष्ठानविरोधिनी, अतः शस्त्रसेवनं वने तु न कर्तव्यमिति शेषः । 'देशधर्मस्तु पूज्यतां' इत्यत्र यः अर्थः अस्माभिरुक्तः स एवात्र प्रदर्श्यते—पुनर्गत्वेत्यादि ॥ २८ ॥

अक्षया तु भवेत् प्रीतिः* श्वश्रूश्वशुरयोर्मम ।
यदि राज्यं[1] हि संन्यस्य भवेस्त्वं निरतो मुनिः ॥ २९ ॥

शस्त्रसेवनं न कर्तव्यमिति यदुक्तं, तदेव स्थिरीक्रियते—अक्षयेत्यादि । राज्यं हि—प्रसिद्धं संन्यस्य वर्तमानः निरतः—वननिरतः त्वं यदि मुनिः—मुनिवृत्तिः भवेः, तदा मम श्वश्रूश्वशुरयोरपि अक्षया प्रीतिर्भवेत् । श्वशुरस्य वनवासोचितधर्मानुष्ठानेन स्वर्गलाभजा प्रीतिः, श्वश्र्वास्तु युद्धादिक्लेशराहित्येन सुखवासजा प्रीतिः ॥ २९ ॥

धर्मादर्थः प्रभवति धर्मात् प्रभवते सुखम् ।
धर्मेण[2] लभते सर्वं धर्मसारमिदं जगत् ॥ ३० ॥

अथ देशकालोचितो मुनिधर्म एव अस्माभिरनुष्ठेयः, न तु हिंसालक्षणाधर्मः इत्युपसंहारेणाह—धर्मादित्यादि ॥ ३० ॥

आत्मानं नियमैस्तैस्तैः कर्शयित्वा प्रयत्नतः ।
प्राप्यते निपुणैर्धर्मः न सुखाल्लभ्यते सुखम् ॥ ३१ ॥

---

* श्वश्रूश्वशुरयोः—कैकेयीदशरथयोः—गो. अयं भावः—ताभ्यां हि तुभ्यं मुनिवृत्तिरवादिष्टा । यदि त्वं धनुर्गृहीत्वा स्वपराक्रमं प्रकटयेः, तदा तत् कथं निवर्तयेत । त्वं तु सर्वं सर्वत्र साधितुं शक्तः । भवत्पराक्रमप्रकटनेऽत्रापि नूनमपि राज्यमेव स्थापयितुमपि शक्येत । एतत्तु मम श्वश्रूश्वशुरयोरादेशविरुद्धमेव । अतः क्षत्रधर्मं परित्यज्य मुनिधर्मे तिष्ठ—इति । एतदेवानन्तरश्लोकैः विव्रियते ॥

[1] परित्यज्य—ङ. [2] लभ्यते—ङ.

अथ जगतो धर्मसारत्वात् सर्वप्रयासेनापि स एव संपाद्य इत्याह—आत्मानमित्यादि। देहत्रयमित्यर्थः। निपुणैः—समर्थैः। सुखमिति। सुखसाधनधर्म इति यावत्॥ ३१॥

नित्यं शुचिमतिः, [1]सौम्य! चर धर्मं तपोवने।
सर्वं हि विदितं तुभ्यं त्रैलोक्यमपि तत्त्वतः॥ ३२॥

उपसंहरति धर्मबोधनं—नित्यमित्यादि। त्रैलोक्यमपीति। त्रिलोकवर्तिप्रजापुमर्थापुमर्थतत्साधनकलाप इत्यर्थः॥ ३२॥

*स्त्रीचापलादेतदुदाहृतं मे
धर्मं च वक्तुं तव कः समर्थः।
विचार्य बुद्धया तु सहानुजेन
यद्रोचते तत्कुरु मा चिरेण॥ ३३॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे नवमः सर्गः

---

अथ विनयार्थवादः—स्त्रीत्यादि। चिरेणेति विभक्तिप्रतिरूपकमव्ययम्। विलम्बो मास्तु इत्यर्थः। श्लो(३३)मानः सर्गः॥ ३३॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे नवमः सर्गः

---

## दशमः सर्गः

[रक्षोवधसमर्थनम्]

वाक्यमेतत्तु वैदेह्या व्याहृतं भर्तृभक्तया।
श्रुत्वा [2]संवर्धितो रामः प्रत्युवाचाथ [3]मैथिलीम्॥ १॥

---

*'सर्वं हि तुभ्यं विदितं' इति चेत् किमर्थमुच्यत इत्यत्राह—स्त्रीचापलादिति॥

[1] सम्यक्-ङ.　[2] धर्मे स्थितो-ङ. झ.　[3] जानकीम्-ङ.

एवं धर्मधिया सीतया बोधितरक्षोवधनिवर्तनो रामः तस्य धर्म्यतां तद्वाक्याविरोधेनैव दर्शयति । वाक्यमित्यादि । संवर्धितः—संवर्धितधर्मबोधः । एवं पाङ्कः* ॥ १ ॥

हितमुक्तं त्वया, देवि ! स्निग्धया सदृशं वचः ।
†कुलं व्यपदिशन्त्या च [1]धर्मज्ञे ! जनकात्मजे ! ॥ २ ॥

कुलं व्यपदिशन्त्या चेति । 'क्षत्रियाणां हि वीराणां' इत्यादिना कुलधर्मं व्यपदिशन्त्या इत्यर्थः ॥ २ ॥

[2] किं तु वक्ष्याम्यहं, देवि ! त्वयैवोक्तमिदं वचः ।
क्षत्रियैः धार्यते चापः नार्तशब्दो भवेदिति ॥ ३ ॥

इदं वचः इति इदंशब्दः क्षत्रियैर्धार्यते इत्यादिपरः । आर्तशब्दो न भवेदिति । रक्षकाभावेन आर्तानां शब्दो मा भूत् इत्येतदर्थमेव क्षत्रियैश्चापो धार्यते इतीदं अर्थतत्त्वमुद्दिश्य त्वयोक्तम्—'धनुषा कार्यमेतावत् आर्तानामभिरक्षणम्' इति वाक्येनेति शेषः ॥ ३ ॥

ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः ।
मां, सीते ! ‡स्वयमागम्य [3]शरण्याः शरणं गताः ॥ ४ ॥

तद्वचनस्य चायमनुष्ठानकाल एवेत्याह—ते चेत्यादि । स्वयमागम्य शरणं गताः इति । एतेन न मया वीर्यगर्वादिदोषेण रक्षोवधार्थं प्रवर्त्यते इत्युक्तं भवति ॥ ४ ॥

---

* तीर्थगोविन्दराजीययोः 'धर्मे धिनः' इति पाठः । संवर्धित इति पाठेऽपि 'जातोत्साहः' इत्यर्थः स्वरसः ॥ † कुलं व्यपदिशन्त्या—स्वमहाकुलीनत्वं प्रख्यापयन्त्या–गो. व्यपदेशार्हकुलप्रसूतया–सत्कुलप्रसूतया—इति परमतात्पर्यम् । ‡ स्वयमित्यनेन—अत्र न स्वार्थः कश्चिदित्युच्यते ।

[1] जनकस्य महात्मनः–ङ. [2] किं नु वक्ष्या–ञ. [3] शरण्यं–ङ.

वसन्तः [1]कालकालेषु वने मूलफलाशनाः ।
न लभन्ते सुखं [2]भीताः राक्षसैः [3]क्रूरकर्मभिः ॥ ५ ॥

कालकालेषु—सर्वकालेष्वपीत्यर्थः ॥ ५ ॥

[4]काले काले च निरताः नियमैः विविधैर्वने ।
*भक्ष्यन्ते राक्षसैः भीमैः नरमांसोपजीविभिः ॥ ६ ॥

[5]ते भक्ष्यमाणा मुनयः दण्डकारण्यवासिनः ।
†अस्मा[6]नभ्यवपद्येति मामूचुः द्विजसत्तमाः ॥ ७ ॥

अस्मानभ्यवपद्येति पदद्वयमावर्त्य, अस्मान् अभ्यवपद्य—आभिगम्य । अभ्यवपद्येति—पद्यतेः गतौ आर्षं परस्मैपदम् । अभ्यवपत्तिः—अनुग्रहः । अस्मान् दण्डकारण्यवासिनः अनुगृहाण इत्येवं मामूचुः ॥ ७ ॥

मया तु वचनं श्रुत्वा तेषामेवं मुखाच्च्युतम् ।
कृत्वा ‡[7]वचनशुश्रूषां वाक्यमेतदुदाहृतम् ॥ ८ ॥

तेषां मुखादेव च्युतमिति । रक्षेति च्युतमित्यर्थः । वचनशुश्रूषां—वचनानुष्ठानलक्षणशुश्रूषामित्यर्थः । कृत्वा—मनसि कृत्वा । एवं प्राचीनः पाङ्क्तः पाठः । योजनाशक्त्या चरणशुश्रूषामिति पठन्ति मृदवः पौराणिकाः§। एवमेव तैः बहुशः प्राचीनपाठनाशनम् ॥ ८ ॥

---

* एवं च अत्र आर्तिः स्वभक्षणमेव । तच्च भक्षकवधमन्तरा न परिहर्तुं शक्यं इति—आर्तसंरक्षणार्थमेव रक्षोवधे प्रवृत्तिः, न तु निर्हेतुकतयेति भावः ॥ † अभ्यवपद्येति । अनुगृहाणेत्यर्थः, लोण्मध्यमपुरुषैकवचनम्, आर्षं परस्मैपदम् । अभ्यवपत्तिः—अनुग्रहः—गो. ‡ क्रियाकैङ्कर्यनिर्वर्तनोपयोगितया वाचिककैङ्कर्यं कृत्वा इदं वाक्यमुदाहृतम् । अनेन करणत्रयनिष्ठा प्रतिपादिता ॥ § गोविन्दराजीये तथैव पाठः ॥

[1] धर्मनिरताः—ङ. [2] भीरु—ङ. [3] भीमकर्मभिः—ङ. [4] सर्वकालेषु—ङ. अयं श्लोकः नास्ति—झ. [5] तैः—ङ. [6] नभ्यवपद्येते—ङ. [7] चरण—ङ. झ.

प्रसीदन्तु भवन्तो मे [1]ह्रीरेषा हि ममातुला ।
यदीदृशैः अहं विप्रैः उपस्थेयैः उपस्थितः ॥ ९ ॥

किं करोमीति च मया व्याहृतं [2]द्विजसंनिधौ ।

*ह्रीः—कीर्तिः । एषेति, किमित्यतः — यदीदृशैरित्यादि । उपस्थेयैरिति । अस्माभिरिति शेषः । उपस्थित इति । रक्षणार्थमिति शेषः । किं करोमीति, लोडर्थे लड्व्यत्ययात् । युष्मभ्यं किं करवाणीति मया व्याहृतम् ॥ ९ ॥

सर्वैरेतैः समागम्य वागियं समुदाहृता ॥ १० ॥

सर्वैरित्यादि । एवं मया व्याहृतैः एतैः सर्वैरित्यर्थः ॥ १० ॥

राक्षसैः दण्डकारण्ये बहुभिः कामरूपिभिः ।
अर्दिताः स्म दृढं, राम! भवान् नः [3]तत्र रक्षतु ॥ ११ ॥

स्म—स्मः इति यावत् । तत्र—रक्षःपीडाविषये इत्यर्थः । रक्षत्विति भवच्छब्दप्रयोगात् ॥ ११ ॥

होमकालेषु संप्राप्ताः पर्वकालेषु, चानघ !
धर्षयन्ति सुदुर्धर्षाः राक्षसाः पिशिताशनाः ॥ १२ ॥

पर्वकालेषु—दर्शपूर्णमासकालेषु । धर्षयन्ति—अभिभवन्ति ॥

राक्षसैः धर्षितानां च तापसानां तपस्विनाम् ।
गतिं मृगयमाणानां भवान् नः परमा गतिः ॥ १३ ॥

गतिं—त्रातारम् ॥ १३ ॥

---

*ह्रीः—लज्जा वा । स्वयं क्षत्रियेण विचार्यत्वे, भवद्भिर्वक्तव्यमापतितं खलु इति विलक्षतेत्यर्थः । अनन्तरार्धं अत्रैवानुकूलम् ॥

[1] श्रीरेषा—ङ. [2] मुनि—ङ. [3] त्रातुमर्हसि—ङ.

क्षमं तपःप्रभावेन शक्ताः हन्तुं निशाचरान् ।
चिरार्जितं तु नेच्छामः तपः खण्डयितुं वयम् ॥ १४ ॥
बहुविघ्नं तपो नित्यं दुश्चरं चैव, राघव !
तेन शापं न मुञ्चामः भक्ष्यमाणाश्च राक्षसैः ॥ १५ ॥

तेनेति । अतिप्रयासेन तपसस्साधितत्वेन हेतुना इत्यर्थः ॥१५॥

[1] तदर्द्यमानान् रक्षोभिः दण्डकारण्य[2]वासिभिः ।
[3] रक्ष नस्त्वं सह भ्रात्रा त्वन्नाथा हि वयं वने ॥ १६ ॥

त्वन्नाथा इति । त्वमेव नाथो येषां अस्माकं ते तथा ॥ १६ ॥

मया चैतद्वचः श्रुत्वा कात्स्न्र्येन परिपालनम् ।
ऋषीणां दण्डकारण्ये संश्रुतं, जनकात्मजे ! ॥ १७ ॥

कात्स्न्र्येन परिपालनमिति सार्वभौमतः कृत्स्नदेशस्वामित्वाभिप्रायेण । कात्स्न्र्येन—वनजनपदाविशेषेण परिपालनं संश्रुतम् । एवं च क्षत्रपदप्रतिष्ठानाभावः ममाद्याप्यसिद्धः । *न ह्यहं पित्रा राज्यपदात् सर्वथा प्रच्यावितः, अपि तु चतुर्दशसमाः वनवासमात्रकाल एव । अतः अस्त्येवाद्यापि शरणागतरक्षणे अधिकारः इत्युक्तं वेदितव्यम् । एवमाशयेनैव वालिवधोऽपि ॥ १७ ॥

संश्रुत्य च न शक्नोमि †जीवमानः प्रतिश्रवम् ।
मुनीनां अन्यथा कर्तुं सत्यमिष्टं हि मे सदा ॥ १८ ॥

जीवमान इति । जीवन्निति यावत् । न शक्नोमीत्यत्र हेतुः—सत्यमिष्टमित्यादि ॥ १८ ॥

---

* अयं भावः—यद्यपि मह्यं मुनिवत् वृत्तिरादिष्टा, न तु सन्यासाश्रमस्वीकारः, अतो मम राज्यस्थापनं राज्यभोगो वा सर्वथा नाद्यापि लषितम्, अपि तु अर्तानामार्तिपरिहारार्थमेव धनुर्गृह्णामि । अतः श्वश्रूश्वशुरयोरादेशस्य न कोऽपि विरोधः—इति ॥

† जीवमानः मुनीनां प्रतिश्रवं—मुनिसम्बन्धिप्रतिज्ञां अन्यथा कर्तुं न शक्नोमि ॥

[1] तदन्यमानान्—ङ. [2] वासिनः—ङ. [3] रक्षकस्त्वं—ङ.

*अप्यहं जीवितं जह्यां त्वां वा, सीते! सलक्ष्मणाम् ।
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥ १९ ॥

तदवश्यं मया कार्यं ऋषीणां परिपालनम् ।
अनुक्तेनापि, वैदेहि! प्रतिज्ञाय तु किं पुनः ॥ २० ॥

अनुक्तेनापीति । ऋषिभिरिति शेषः ॥ २० ॥

[1]मम स्नेहाच्च सौहार्दात् इदमुक्तं त्वयाऽनघे!
परितुष्टोऽस्म्यहं, सीते! न ह्यनिष्टोऽनुशिष्यते ॥ २१ ॥

स्नेहः—प्रीतिः । सौहार्दं—सुहृद्भावः । न ह्यनिष्टोऽनुशिष्यत इति । यस्मिन् यस्य प्रीतिः नास्ति, नासौ अनुशिष्यते हितं, उपेक्ष्यत एवेत्यर्थः ॥ २१ ॥

सदृशं [2]चानुरूपं च कुलस्य तव [3]चात्मनः ।
सधर्मचारिणी [4] मे त्वं प्राणेभ्योऽपि गरीयसी ॥ २२ ॥

इत्येवमुक्त्वा वचनं महात्मा
सीतां प्रियां मैथिलराजपुत्रीम् ।
रामो धनुष्मान् सह लक्ष्मणेन
जगाम रम्याणि तपोवनानि ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे दशमः सर्गः

---

गुरु(२३)मानः सर्गः ॥ २३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे दशमः सर्गः

---

*'आत्मानं सततं रक्षेत दारैरपि धनैरपि' इत्युक्तं जीवितमपि जह्याम् । 'भ्राता स्वा मूर्तिरात्मनः' इत्युक्तं लक्ष्मणमपि जह्याम् । किं पुनः—'अर्धो वा एष आत्मनो यत्पत्नी' इत्युक्तां त्वां--गो.

[1] मयि—ङ. [2] चानुकूलं—ङ. [3] शोभने—ज. [4] नित्यं—ङ.

## एकादशः सर्गः

[आश्रममण्डलवासः]

*अग्रतः प्रययौ रामः सीता मध्ये सुमध्यमा।
पृष्ठतस्तु धनुष्पाणिः लक्ष्मणोऽनु जगाम ह ॥ १ ॥

अथ मार्गे माण्डकर्णिकथाश्रवणपूर्वं आश्रममण्डलं प्राप्तस्य दशवर्षवासानन्तरं पुनः सुतीक्ष्णं प्राप्य तद्वचनात् अगस्त्यभ्रात्र-गस्त्याश्रमसंप्राप्तिः। अग्रत इत्यादि ॥ १ ॥

तौ पश्यमानौ विविधान् शैलप्रस्थवनानि च।
नदीश्च विविधा रम्याः जग्मतुः सह सीतया ॥ २ ॥
सारसांश्चक्रवाकांश्च नदीपुलिनचारिणः।
सरांसि च सपद्मानि युक्तानि जलजैः खगैः ॥ ३ ॥
[1]यूथबन्धांश्च पृषतां मदोन्मत्तान् विषाणिनः।
महिषांश्च वराहांश्च नागांश्च †द्रुमवैरिणः ॥ ४ ॥

जलजाः खगाः—दात्यूहादयः। यूथबन्धान्-यूथतया बन्धः संबन्धः तथा। पृषतामिति षष्ठी। विषाणिनः महिषान् इति विशेषणविशेष्यभावेनान्वयः ॥ ४ ॥

---

* यद्यप्ययोध्याकाण्डे वनप्रवेशवेलायां 'अग्रतो गच्छ सौमित्रे ! सीता त्वामनुगच्छतु। पृष्ठतोऽहं गमिष्यामि त्वां च सीतां च पालयन् ॥' (५२–९६)इत्युक्तम्। अत्र तु 'अग्रतः प्रययौ रामः....लक्ष्मणोऽनुजगाम ह' इति वैचित्र्यमस्ति—परन्तु 'अवश्य रक्षणं कार्यं अदृष्टे विजने वने' (५२–९५) इति तत्रत्यं पूर्वतनवाक्यं, 'जगाम रम्याणि तपोवनानि' (१०-२२) इति अत्रत्यं पूर्वतनवाक्यं चावधेयम्। अत्र हि शरभङ्गाश्रमप्राप्तमुनिभिराहूतः तैः सह तेषामाश्रमाणि खलु गच्छति रामः। अत एवानुपदं स्वानुयायिधर्मभृन्नामकमुनिना संवादः (श्लो. ८)। अतोऽत्र स्वस्यैव पुरतो गमनम्। अधिकं परस्तात् ॥

† द्रुमभञ्जकत्वात् तद्वैरित्वं गजानाम्।

[1] यूथबद्धांश्च पृषतान्–ङ.

ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
ददृशुः सहिता रम्यं तटाकं योजनायतम् ॥ ५ ॥

दिवाकरे लम्बमान इति—सायाह्ने इत्यर्थः । योजनायतं—चतुर्दिग्योजनप्रमाणविस्तारम् ॥ ५ ॥

*पद्मपुष्करसंबाधं गजयूथैरलङ्कृतम् ।
सारसैः हंस[1]कादम्बैः सङ्कुलं जल[2]जातिभिः ॥ ६ ॥

पद्मानां पुष्करे—जले संबाधः—नैबिड्यं यस्मिन् तत्तथा । गजयूथैरलङ्कृतमिति । तीरप्रदेश इति शेषः । हंसाः—राजहंसाः । कादम्बाः—कलहंसाः । जले जातिः-जन्म येषां ते तथा, मत्स्यादिजलजन्तवः इत्यर्थः । एवं पाङ्कः । जलचारिभिरिति पौराणिकच्छ्दा ॥६॥

प्रसन्नसलिले रम्ये तस्मिन् सरसि शुश्रुवे ।
गीतवादित्रनिर्घोषः न तु कश्चन दृश्यते ॥ ७ ॥

गीतोपेतानां वादित्राणां—चतुर्विधवाद्यानां निर्घोषः तथा । न तु कश्चन—गीतादिकर्तेत्यर्थः ॥ ७ ॥

ततः कौतूहलाद्रामः लक्ष्मणश्च [3]महाबलः ।
मुनिं † धर्मभृतं नाम प्रष्टुं समुपचक्रमे ॥ ८ ॥

धर्मेण भृतः धर्मभृतः इति अकारान्तः, क्विबन्तो वा ॥ ८ ॥

---

* पद्मानि—रक्तानि, पुष्करं—पुण्डरीकं—ति. रा. पद्मैः पुष्करैः—सर्पैः—गो.
† सहागतेषु मुनिष्वन्यतमम्—गो. शरणागतेष्वनुगायिष्वेकम्—ति.
[1] कारण्डैः—ङ. [2] चारिभिः—ङ. [3] महारथः—ङ.

इदमत्यद्भुतं श्रुत्वा सर्वेषां नः, महामुने!
[1]कौतूहलं महज्जातं किमिदं साधु कथ्यताम् ॥ ९ ॥
तेनैवमुक्तो धर्मात्मा राघवेण मुनिस्तदा ।
प्रभवं सरसः कृत्स्नं आख्यातुमुपचक्रमे ॥ १० ॥
इदं पञ्चाप्सरोनाम तटाकं सार्व[2]कालिकम् ।
निर्मितं तपसा, राम! मुनिना [3]माण्डकर्णिना ॥ ११ ॥

पञ्चाप्सरसां क्रीडासाधनत्वात् पञ्चाप्सरोनाम प्रसिद्धम् । सर्वकालोदकपूर्त्यादिगुणकं सार्वकलिकम् ॥ ११ ॥

स हि तपे तपस्तीव्रं माण्डकर्णिर्महामुनिः ।
दशवर्षसहस्राणि *वायुभक्षो [4]जलाश्रयः ॥ १२ ॥
ततः प्रव्यथिताः सर्वे देवाः साग्निपुरोगमाः ।
अब्रुवन् वचनं सर्वे परस्परसमागताः ॥ १३ ॥

अग्निरूपेण पुरोगमेन सहिताः साग्निपुरोगमाः ॥ १३ ॥

अस्माकं कस्यचित् स्थानं एष प्रार्थयते मुनिः ।
इति संविग्नमनसः सर्वे ते त्रिदिवौकसः ॥ १४ ॥

इति संविग्नमनसः, अभूवन्निति शेषः ॥ १४ ॥

---

*स्वनिर्मिततटाकजलावगाढः-**गो.** वायुभक्ष इति कथनात्—जलाश्रय इत्यत्राधारत्वं विवक्षितम् । 'जलाशये' इति पाठे तु अर्थः स्पष्टः ।

[1] एतदनन्तरं 'वक्तव्यं यदि चेद् विप्र! नातिगुह्यमपि प्रभो!' इत्यधिकं-ङ.
[2] कामिकम्-ङ. [3] माण्डकर्णिना-ङ. [4] जलाशये-ङ. झ.

तत्र कर्तुं तपोविघ्नं देवैः सर्वैः नियोजिताः।
प्रधानाप्सरसः पञ्च *[1] विद्युच्चलितवर्चसः ॥ १५ ॥

ततः उद्विग्नैः सर्वदेवैः नियोजिताः—तपोविघ्नाय नियुक्ताः। विद्युच्चलितेति आहिताग्न्यादिः, चलितविद्युद्वर्चस इत्यर्थः। प्रधानाप्सरसः पञ्च इत्यनेन तत्परिवारभूताः अन्याश्च सन्तीति गम्यते। ता आगता इति शेषः ॥ १५ ॥

अप्सरोभिस्ततस्ताभिः मुनिः दृष्टपरावरः।
नीतो मदनवश्यत्वं सुराणां कार्यसिद्धये ॥ १६ ॥

दृष्टपरावरशब्दः शतशो व्याकृतचरः ॥ १६ ॥

ताश्चैवाप्सरसः पञ्च मुनेः पत्नीत्वमागताः।
तटाके निर्मितं तासां अस्मिन् अन्तर्हितं गृहम् ॥ १७ ॥

निर्मितमिति। क्रीडार्थमिति शेषः। गृहं निर्मितमित्यनुकर्षः ॥

तथैवाप्सरसः पञ्च निवसन्त्यो यथा सुखम्।
रमयन्ति † तपोयोगात् मुनिं यौवनमास्थितम् ॥ १८ ॥
तासां संक्रीडमानानां एष वादित्रनिःस्वनः।
श्रूयते भूषणोन्मिश्रः गीतशब्दो मनोहरः ॥ १९ ॥

भूषणोन्मिश्र इति। वलयादिभूषणध्वनिमिश्र इति यावत् ॥ १९ ॥

---

* विद्युत इव तरलतेजसः—गो. † तपोरूपोपायात् यौवनमास्थितं—गो.

[1] विद्युत्सदृश—ङ.

आश्चर्यमिति तस्यैतत् वचनं भावितात्मनः ।
राघवः प्रतिजग्राह सह भ्रात्रा महायशाः ॥ २० ॥

[1] एवं कथयमानस्य ददर्शाश्रममण्डलम् ।
कुशचीरपरिक्षिप्तं ब्रह्मलक्ष्म्या समावृतम् [2] ॥ २१ ॥

ब्रह्मलक्ष्म्या—ब्रह्मविद्यानुष्ठानजा लक्ष्मीः तथा । ब्रह्मवर्चसमिति यावत् ॥ २१ ॥

तथा तस्मिन् स काकुत्स्थः श्रीमत्याश्रममण्डले ।
उषित्वा तु सुखं तत्र पूज्यमानो महर्षिभिः ॥ २२ ॥
*जगाम चाश्रमांस्तेषां पर्यायेण तपस्विनाम् ।
येषामुषितवान् पूर्वं सकाशे स महास्त्रवित् ॥ २३ ॥

आश्रममण्डले उषित्वेति । एकस्याश्रम इति शेषः । एवं पर्यायेण सर्वेषां तपस्विनां आश्रमांश्च जगाम । अपि च येषामृषीणां सकाशे पूर्वं उषितवान्, पुनरपि तेषामाश्रमान् जगाम, तद्भक्त्यतिशयवशात् । यथा सुतीक्ष्णाश्रमं प्रति पुनरागमनम् ॥ २२-२३ ॥

---

* शरभङ्गाश्रमादारभ्यैव यैः सह एतावन्तं कालमुषितवान् (यैश्चायं आहूतः इत्यर्थसिद्धम्) तेषां तपस्विनामाश्रमान् पर्यायेण-क्रमतः जगाम—इत्यर्थः । एवञ्च सर्वेषामाश्रमाणां पर्यायेण—द्वितीयपर्यायेण जगामेति न व्याख्यानक्लेशः । एवं सत्येव पूर्वं सुतीक्ष्णेन—'आगन्तव्यं च ते दृष्ट्वा पुनरेवाश्रमं मम' (8. 16) इति, 'सुतीक्ष्णस्याश्रमपदं पुनरेवाजगाम ह' इति च स्वरसतः सङ्गच्छेत । अत एवात्रापि—'येषां आश्रमे पूर्वं' इत्यनुक्त्वा, 'येषां सकाशे पूर्वं' इत्युक्तिरपि स्वरसा ॥

[1] एतदर्धस्थाने 'एवं कथयमानस्य सह भ्रात्रा महामुनेः । अग्रतो रमणीयं च ददर्शाश्रममण्डलम्' इति पाठः—ङ. [2] एतदनन्तरं 'प्रविश्य सह वैदेह्या लक्ष्मणेन च राघवः । उवास सुखिभिः सर्वैः पूज्यमानो महायशाः ॥' इत्यधिकं—ङ. झ.

*क्वचित् परिदशान् मासान् एकं संवत्सरं क्वचित्।
क्वचिच्च चतुरो मासान् पञ्च षट् चापरान् क्वचित् ॥ २४॥
अपरत्राधिकं मासादप्यर्धमधिकं क्वचित्।
त्रीन् मासान् अष्ट मासांश्च राघवो न्यवसत् सुखम् ॥ २५॥

एवं एकत्र वासाभावादेव क्वचित्परिदशानित्यादि। 'संख्ययाव्ययासन्ने'ति समासः। 'बहुव्रीहौ संख्येये' इति डच् समासान्तः।

---

*'राघवः—रामः क्वचिदाश्रमे परिदशान्—परिगताः दश येषां ते परिदशाः—त्रयोदशमासानित्यर्थः —क्वचिदाश्रमे चतुरो मासान्, क्वचित् पञ्च मासान्, क्वचित् षण्मासान्, क्वचिदपरान्—षड्भ्योऽन्यान् सप्तमासान् सुखं न्यवसत्। 'पञ्च षट् च तथा क्वचित्' इति पाठे—तथा पुनः क्वचित् षण्मासानित्यर्थः। परिदशानित्यत्र चतुर्दशमासानित्यर्थः। अपरत्राश्रमे मासादधिकं सुखं न्यवसत्। अधिकशब्देनात्र मासचतुर्थांशो विवक्षितः, एकमासं मासपादं चेत्यर्थः। 'अपरत्राधिकं मासं' इति पाठे मासं अधिकं तत्पादं चेत्यर्थः। अपिशब्दः सर्वत्र मासानुकर्षणार्थः। क्वचिदाश्रमे अर्धमधिकं च न्यवसत्, पादोनमासमित्यर्थः। तथा चैतदव्यवहितपूर्वाश्रमवासदिनैर्द्वौ मासौ संवृत्तौ। एकत्र—सपादमासः, अपरत्र पादोनमास इत्याहत्य मासद्वयसंभवात्। 'अध्यर्धमधिकं क्वचित्' इति पाठे अध्यर्धं—अर्धाधिकं—अर्धमासाधिकमित्यर्थः। अधिकं—पूर्वोक्तपादमासत्मकाधिकं, तथा च त्रिपादमासमित्यर्थः। क्वचित् त्रीन् मासान् न्यवसत्, क्वचिदष्टमासान् न्यवसत्, एवं षष्टिः मासाः सिद्धाः। केचिदाहुः—परिदशान्—दशाधिकानिति वक्ष्यमाणेष्वष्टसु स्थानेषु अन्वेति। तथा चायमर्थः—एवं संवत्सरं क्वचिदित्यत्र द्वाविंशतिमासानित्यर्थः। क्वचिच्च चतुरो मासानित्यत्र चतुर्दशमासानित्यर्थः। पञ्च षट् चापरान् क्वचिदित्यत्र क्वचित् पञ्चदशमासान्, क्वचित् षोडशमासानित्यर्थः। अपरानधिकं—मासादप्यर्धमधिकं क्वचिदित्यत्र प्रथमाधिकशब्दः अर्धमासरूपाधिकांशपरः। तथा च अपरान् परिदशान् अधिकं चेत्यन्वये अर्धाधिकदशमासानित्यर्थः। मासादप्यर्धमित्यादेः अयमर्थः—क्वचित् परिदशान् मासान्, तदुपरि मासादधिकमर्धमपि चेति, तथा चार्धाधिकैकादशमासानित्यर्थः। त्रीन् मासानष्टमासांश्चेत्यत्र त्रयोदशमासान् अष्टादशमासांश्चेत्यर्थः। तथा च विंशत्युत्तरशतमासा लब्धाः—इति। तस्मिन् पक्षे प्राथमिकक्वचित्पदमासपदानर्थक्यं, पूर्वग्रन्थविरोध इत्यादि द्रष्टव्यम्—गो. वस्तुतस्तु, 'यथासौकर्यं अत्र कतिपयमासान्, तत्र कतिपयमासान् उवास' इति लोकोक्तिरीत्यनुसरणे न कस्यापि क्लेशस्यावकाश इति भाति॥

परिगताः दश—परिदशाः, दशसंख्याकान् मासान् इत्यर्थः । अधिकं मासमिति, वत्सरादिति शेषः ॥ २४-२५ ॥

तथा संवसतः तस्य मुनीनामाश्रमेषु वै ।
रमतश्चानुकूल्येन ययुः संवत्सरा दश ॥ २६ ॥

रमतः—रममाणस्येति यावत् ॥ २६ ॥

[1]प्रतिश्रुत्य च धर्मज्ञः राघवः सह सीतया ।
सुतीक्ष्णस्याश्रमपदं पुनरेवाजगाम ह ॥ २७ ॥

प्रतिश्रुत्य चेति । यस्मात् 'आगन्तव्यं पुनः' * इत्युक्तवन्तं सुतीक्ष्णं प्रति 'तथास्तु' इति प्रतिश्रुत्य गतः, तस्मादेव सुतीक्ष्णस्याश्रमपदं पुनरेवाजगाम । प्रतिश्रुत्येति प्राचीनः पाठः ॥ २७ ॥

स तमाश्रममासाद्य मुनिभिः प्रतिपूजितः ।
तत्रापि न्यवसद्रामः किंचित् कालमरिन्दमः ॥ २८ ॥
अथाश्रमस्थो विनयात् कदाचित् तं महामुनिम् ।
उपासीनः स काकुत्स्थः सुतीक्ष्णमिदमब्रवीत् ॥ २९ ॥
अस्मिन् अरण्ये [2]भगवान् अगस्त्यो मुनिसत्तमः ।
वसतीति मया नित्यं कथाः †कथयतां श्रुतम् ॥ ३० ॥

कथयतां श्रुतमिति । सकाशादिति शेषः ॥ ३० ॥

न तु जानामि तं देशं वनस्यास्य महत्तया ।
कुत्राश्रममिदं पुण्यं महर्षेः तस्य धीमतः ॥ ३१ ॥

---

* पूर्वं ८-२६ श्लोको द्रष्टव्यः । † कथयत्सु-गो. कथयद्भयः-रा.

[1] परिवृत्य-ङ. परिसृत्य-ङ, झ. [2] भगवन्-ङ.

[1]प्रसादात् तत्रभवतः सानुजः सह सीतया ।
अगस्त्यमभिगच्छेयं अभिवादयितुं मुनिम् ॥ ३२ ॥

तत्रभवतः—पूज्यस्य ॥ ३२ ॥

मनोरथो महानेषः हृदि मे परिवर्तते ।
यद्यहं तं मुनिवरं शुश्रूषेयमपि स्वयम् ॥ ३३ ॥

मनोरथस्याभिनयः—यद्यहमित्यादि ॥ ३३ ॥

इति रामस्य स मुनिः श्रुत्वा धर्मात्मनो वचः ।
सुतीक्ष्णः प्रत्युवाचेदं प्रीतो दशरथात्मजम् ॥ ३४ ॥
अहमप्येतदेव त्वां वक्तुकामः सलक्ष्मणम् ।
अगस्त्यमभिगच्छेति सीतया सह, राघव ! ॥ ३५ ॥

एतदेवेत्येतच्छब्दार्थः—अगस्त्यमित्यादि ॥ ३५ ॥

दिष्ट्या त्विदानीमर्थेऽस्मिन् स्वयमेव ब्रवीषि माम् ।
अहमाख्यामि ते, [2]वत्स ! यत्रागस्त्यो महामुनिः ॥ ३६ ॥

अस्मिन्नर्थे इति । मदुपदिदिक्षितार्थे इत्यर्थः ॥ ३६ ॥

योजनादाश्रमादस्मात् अभि चत्वारि वै ततः ।
दक्षिणेन महान् श्रीमान् अगस्त्यभ्रातुराश्रमः ॥ ३७ ॥

'योजनादाश्रमादस्मात् अभि चत्वारि वै ततः' इति पाठः* । अस्मादाश्रमात् योजनादभि—अधिकं चत्वारि वै योजनानि—पश्च

---

* 'योजनान्याश्रमादस्मात् तथा (अभि) (याहि) चत्वारि वै ततः' इति—ती. गो.
'अस्मादाश्रमात् दक्षिणेन तथेति हस्तेन निर्देशः । चत्वारि योजनानि अभियाहीति शेषः'—गो.

[1] प्रसादार्थं—ङ. झ.   [2] राम—ङ, ञ.

योजनानीति यावत्। दक्षिणेन गन्तव्यानीति शेषः। ततः महान् श्रीमान् अगस्त्यभ्रातुः आश्रमो भवति ॥ ३७ ॥

*स्थलीप्राये वनोद्देशे पिप्पलीवनशोभिते।
बहुपुष्पफले रम्ये नानाशकुनिनादिते ॥ ३८ ॥

स्थलीप्रायवनोद्देशत्वादि च तस्याश्रमस्य चिह्नत्वेनोपदेशः ॥३८॥

पद्मिन्यो विविधास्तत्र प्रसन्न[1]सलिलाः शिवाः।
हंसकारण्डवाकीर्णाः चक्रवाकोपशोभिताः ॥ ३९ ॥

तत्रेति। आश्रमप्रदेशे इत्यर्थः ॥ ३९ ॥

†तत्रैकां रजनीं व्युष्य प्रभाते, राम! गम्यताम्।
दक्षिणां दिशमास्थाय वनषण्डस्य पार्श्वतः ॥ ४० ॥
तत्रागस्त्याश्रमपदं गत्वा योजनमन्तरम्।
रमणीये वनोद्देशे बहुपादपसङ्कुले ॥ ४१ ॥

दक्षिणां दिशमास्थाय योजनमन्तरं–योजनावकाशं गत्वा तत्र अगस्त्याश्रमपदं द्रक्ष्यसीति शेषः ॥ ४०-४१ ॥

रंस्यते तत्र वैदेही लक्ष्मणश्च त्वया सह।
स हि रम्यो वनोद्देशः बहुपादपसङ्कुलः ॥ ४२ ॥

---

* निबिडारण्यवर्जिते इति, समस्थलप्राय इति वाऽर्थः। † तत्र–अगस्त्यभ्रात्राश्रमे। इध्मवाहेत्यस्य नाम। 'अगस्त्यः प्राक् दुहितरं उपयेमे धृतव्रताम्। यस्यां दृढव्रतो जातः इध्मवाहात्मजो मुनिः' इति भागवतं तु 'देवराच्च सुतोत्पत्तिः' इति न्यायेनेत्येके–ति.

[1] सलिलाशयाः–ङ. ज.

यदि बुद्धिः कृता द्रष्टुं अगस्त्यं तं महामुनिम् ।
*अद्यैव गमने बुद्धिं रोचयस्व, महायशः! ॥ ४३ ॥

इति रामो मुनेः श्रुत्वा सह भ्रात्राभिवाद्य च ।
प्रतस्थेऽगस्त्यमुद्दिश्य सानुजः सीतया सह ॥ ४४ ॥

मुनेः श्रुत्वा इति । वचनमिति शेषः ॥ ४४ ॥

पश्यन् वनानि रम्याणि पर्वतांश्चाभ्रसंनिभान् ।
सरांसि सरितश्चैव पथि मार्गवशानुगान् ॥ ४५ ॥

अगस्त्यमुद्दिश्य—अगस्त्याश्रममुद्दिश्येति यावत् ॥ ४५ ॥

सुतीक्ष्णेनोपदिष्टेन गत्वा तेन पथा सुखम् ।
इदं परमसंहृष्टो वाक्यं लक्ष्मणमब्रवीत् ॥ ४६ ॥

एतदेवाश्रमपदं नूनं तस्य महात्मनः ।
अगस्त्यस्य मुनेः भ्रातुः दृश्यते पुण्यकर्मणः ॥ ४७ ॥

यथा हि मे वनस्यास्य ज्ञाताः पथि सहस्रशः ।
सन्नताः †फलभारेण पुष्पभारेण च द्रुमाः ॥ ४८ ॥

नूनमेतदेवेत्यत्र हेतुमाह—यथा हीत्यादि । यथा हि मे पथि चिह्नतया वनं श्रुतं, तथैवास्य वनस्य फलभारेण पुष्पभारेण च सन्नताः सहस्रशो द्रुमाः ज्ञाताः ज्ञायमानाः वर्तन्ते ॥ ४८ ।

---

* राक्षसवधाय अगस्त्यसकाशात् वैष्णवधनुःप्रभृतीनां (१२-३२) गृहीतव्यत्वात्, तज्जानन् सुतीक्ष्णः स्वयमेव राममगस्त्याश्रमं गन्तु विवक्षुरासीत इति 'अहमप्येतदेव त्वां वक्तुकामः' इत्यत्र सूचितम् । परन्तु प्रियातिथिं प्रति स्वयं प्रस्थानं वक्तुमनिच्छन्नासीत्, यदा च रामेणैव पृष्टं, तदा स एव त्वरयति—अद्यैवेति ॥ †'बहुपुष्पफले' (३०) इति ह्युक्तं पूर्वम् ।

पिप्पलीनां च पक्वानां वनादस्मादुपागतः।
गन्धोऽयं पवनोत्क्षिप्तः सहसा कटुकोदयः ॥ ४९ ॥

अथ साधारणोपदिष्टलिङ्गं चानुभूयते इत्याह—पिप्पलीनामित्यादि। पक्वानां पिप्पलीनामिति। तत्फलानामित्यर्थः। कटुकोदयः—कटुकरसस्य उदयः-अभिव्यक्तिः आनुमानिकी येन स तथा तादृशो गन्धः समुपागतः ॥ ४९ ॥

*तत्र तत्र च दृश्यन्ते संक्षिप्ताः काष्ठसञ्चयाः।
लूनाश्च पथि दृश्यन्ते दर्भा वैडूर्यवर्चसः ॥ ५० ॥
एतच्च वनमध्यस्थं कृष्णाभ्रशिखरोपमम्।
पावकस्याश्रमस्थस्य धूमाग्रं संप्रदृश्यते ॥ ५१ ॥

कृष्णाभ्रं-नीलाभ्रं शिखरं—पर्वतशिखरं च उपमा यस्य स तथा ॥ ५१ ॥

†विविक्तेषु च [1]तीर्थेषु कृतस्नाना द्विजातयः।
[2]पुष्पोपहारं कुर्वन्ति कुसुमैः ‡स्वयमार्जितैः ॥ ५२ ॥

विविक्तेषु—एकान्तेषु—निर्मलेषु चेत्यर्थः। स्वयमार्जितैरिति। देवं पूजयितुमिति शेषः ॥ ५२ ॥

तत् सुतीक्ष्णस्य वचनं यथा, सौम्य! मया श्रुतम्।
अगस्त्यस्याश्रमो भ्रातुः नूनमेष भविष्यति ॥ ५३ ॥

यथाश्रुतं तथैव तदुक्तलिङ्गानां अनुभवादिति शेषः ॥ ५३ ॥

---

* इदं मुनीनां समीपवासं सूचयति। † विविक्तेषु— पूतेषु, 'विविक्तौ पूतविजनौ' इत्यमरः:-गो. ‡ 'समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरत्' इति स्मरणात्-गो.

[1] तीरेषु—ङ. [2] पुण्योपहारं—ङ.

निगृह्य [1] तरसा मृत्युं लोकानां हितकाम्यया ।
यस्य भ्रात्रा कृतेयं दिक् * शरण्या पुण्यकर्मणा ॥ ५४ ॥

मृत्युं निगृह्य शरण्या कृता—शरणं—आवासः, तद्योग्या संपादितेत्यर्थः ॥ ५४ ॥

इहैकदा किल क्रूरः वातापिरपि चेल्वलः ।
भ्रातरौ सहितावास्तां ब्राह्मणघ्नौ महासुरौ ॥ ५५ ॥

कोऽसौ मृत्युः अगस्त्येन निगृहीतो लोकानुग्रहार्थेत्यतः सा आख्यायिकोच्यते—इहेत्यादि । वने इत्यर्थः । एकदेति—कस्मिंश्चित् पूर्वस्मिन् काले इत्यर्थः । ब्राह्मणघ्नौ इति । 'अमनुष्यकर्तृके चेति' ठक् ॥ ५५ ॥

धारयन् ब्राह्मणं रूपं इल्वलः संस्कृतं वदन् ।
आमन्त्रयति विप्रान् स्म [2]श्राद्धमुद्दिश्य निर्घृणः ॥ ५६ ॥

रूपं—वेषं, ब्राह्मणमिव—ब्राह्मणरूपमिव धारयन्—परिगृह्णन् । संस्कृतं वदन्, ब्राह्मणवदिति शेषः । उभयं विश्वासार्थम् ॥ ५६ ॥

भ्रातरं संस्कृतं [3] कृत्वा ततस्तं मेषरूपिणम् ।
तान् द्विजान् भोजयामास श्राद्धदृष्टेन कर्मणा ॥ ५७ ॥

संस्कृतं—श्राद्धोचितपाकसंस्कारसंस्कृतं कृत्वेत्यर्थः ॥ ५७ ॥

ततो भुक्तवतां तेषां विप्राणामिल्वलोऽब्रवीत् ।
वातापे! निष्क्रमस्वेति स्वरेण महता वदन् ॥ ५८ ॥

---

* शरण्या—संश्रयितुं योग्या—गो.

[1] सपसाङ. [2] श्राद्धकर्मणि—ङ. [3] भ्राता—ङ.

ततो भ्रातुर्वचः श्रुत्वा वातापिर्मेषवन्नदन्।
भित्त्वा भित्त्वा शरीराणि ब्राह्मणानां विनिष्पतत् ॥५९॥

ब्राह्मणानां सहस्राणि *तैरेवं कामरूपिभिः।
विनाशितानि [1]संहत्य नित्यशः पिशिताशनैः ॥ ६० ॥

मेषवत् नदन् इति। मृतसंजीविनीवैभवात् उदरान्तरिति शेषः। विनिष्पतत् इति। अडभावः आर्षः। विनिर्गतवानिति यावत्। संहृत्य-समेत्य ॥ ६० ॥

अगस्त्येन तदा देवैः प्रार्थितेन महर्षिणा।
अनुभूय किल श्राद्धे भक्षितः स महासुरः ॥ ६१ ॥

देवैः प्रार्थितेन-प्रार्थितासुरद्वयसंहारेण महर्षिणा अगस्त्येन, श्राद्धे-श्राद्धव्यापारमनुभूय भक्षितः, सः महासुरः-वातापिः ॥ ६१ ॥

तदा संपन्नमित्युक्त्वा दत्त्वा [2]हस्तोदकं ततः।
भ्रातरं निष्क्रमस्वेति चेल्वलः सोऽभ्यभाषत ॥ ६२ ॥

तदा-श्राद्धान्ते, संपन्नमित्युक्त्वा ततः हस्तोदकं च दत्त्वा भ्रातरं निष्क्रमस्वेत्यभाषत ॥ ६२ ॥

स तं तथा भाषमाणं भ्रातरं विप्रघातिनम्।
अब्रवीत् प्रहसन् धीमान् अगस्त्यो मुनिसत्तमः ॥ ६३ ॥

तमिति-इल्वलमित्यर्थः ॥ ६३ ॥

---

* तैरिति बहुवचनं परिवाराभिप्रायं-गो.

[1] संहृत्य-ङ. ज. [2] हस्तावसेचनम्-ङ. हस्तेऽवनेजनम्-ङ. ज.

कुतो निष्क्रमितुं शक्तिः मया जीर्णस्य रक्षसः ।
भ्रातुस्ते मेषरूपस्य गतस्य यमसादनम् ॥ ६४ ॥

मया जीर्णस्येति । भुक्त्वेति शेषः ॥ ६४ ॥

अथ तस्य वचः श्रुत्वा भ्रातुः* निधन[1]संश्रयम् ।
प्रधर्षयितुमारेभे मुनिं क्रोधात् निशाचरः ॥ ६५ ॥

प्रधर्षयितुं—हिंसितुम् ॥ ६५ ॥

[2] सोऽभिद्रवन्मुनिश्रेष्ठं, मुनिना दीप्ततेजसा ।
चक्षुष ऽनलकल्पेन निर्दग्धो निधनं गतः ॥ ६६ ॥

चक्षुषा—चक्षुर्वीक्षणेन । अनलकल्पेन । कल्पप् प्रत्ययः । ६६ ॥

तस्यायमाश्रमो भ्रातुः तटाकवनशोभितः ।
विप्रानुकम्पया येन कर्मेदं दुष्करं कृतम् ॥ ६७ ॥

तटाकोपेतं वनम् ॥ ६७ ॥

एवं कथयमानस्य तस्य सौमित्रिणा सह ।
रामस्यास्तं गतः सूर्यः संध्याकालोऽभ्यवर्तत ॥ ६८ ॥

तथा कथयमानस्येति । 'णिचश्च' इत्यात्मनेपदम् ॥ ६८ ॥

उपास्य पश्चिमां सन्ध्यां सह भ्रात्रा यथाविधि ।
प्रविवेशाश्रमपदं तमृषिं सोऽभ्यवादयत् ॥ ६९ ॥
सम्यक् प्रतिगृहीतश्च मुनिना तेन राघवः ।
न्यवसत् तां निशामेकां प्राश्य मूलफलानि च ॥ ७० ॥

---

* निधनसंश्रयं वचः श्रुत्वा ।

[1] संश्रितम्—ङ. ज. [2] सोऽभ्यद्रव—ङ. ज.

तस्यां रात्र्यां व्यतीतायां विमले सूर्यमण्डले ।
भ्रातरं तमगस्त्यस्य ह्यामन्त्रयत राघवः ॥ ७१ ॥

अभिवादये त्वा, भगवन्! सुखमध्युषितो निशाम् ।
आमन्त्रये त्वां गच्छामि गुरुं ते द्रष्टुमग्रजम् ॥ ७२ ॥

अभिवादये त्वां भगवन्निति। अभिवादये त्वा इति पदयोः अन्यथा प्रयोगासंभवात् अक्षराधिक्य पादस्य ॥ ७२ ॥

गम्यतामिति तेनोक्तः जगाम रघुनन्दनः ।
यथोद्दिष्टेन मार्गेण वनं तच्चावलोकयन् ॥ ७३ ॥

नीवारान् पनसांस्तालान् वञ्जुलान् तिमिशान् धवान् ।
[1] चिरिबिल्वान् मधूकांश्च [2] बिल्वानपि च तिन्दुकान् ॥७४॥

नीवारः—जलकदम्बकः। निचुलः—वञ्जुलः अशोकः। तिमिशः—धवलः अर्जुनः। चिरिबिल्वः—नक्तमालः। तिन्दुकाः—स्फूर्जकाः॥

पुष्पितान् पुष्पिताग्राभिः लताभिरनुवेष्टितान् ।
ददर्श रामः शतशः तत्र कान्तारपादपान् ॥ ७५ ॥

हस्तिहस्तैः विमृदितान् वानरैरुपशोभितान् ।
मत्तैः शकुनिसङ्घैश्च [3] शतशश्च प्रणादितान् ॥ ७६ ॥

विमृदितान्, मृदेः निष्ठा ॥ ७६ ॥

ततोऽब्रवीत् समीपस्थं रामो राजीवलोचनः ।
पृष्ठतोऽनुगतं वीरं लक्ष्मणं लक्ष्मिवर्धनम् ॥ ७७ ॥

---

[1] चीरबिल्वान्—ङ. [2] प्रकीर्णानपि किंशुकान्—ङ. [3] शतशः प्रतिनादितान् ङ.

*स्निग्धपत्रा यथा वृक्षाः यथा शान्तमृगद्विजाः ।
आश्रमो नातिदूरस्थः महर्षेः भावितात्मनः ॥ ७८ ॥

यथा श्रुताः, तथा स्निग्धपत्राः वृक्षाः दृश्यन्ते इति शेषः । तथा अग्रेऽपि योजना ॥ ७८ ॥

अगस्त्य इति विख्यातः लोके स्वेनैव कर्मणा ।
आश्रमो दृश्यते तस्य परिश्रान्तश्रमापहः ॥ ७९ ॥
[1]प्राज्यधूमाकुलवनः चीरमालापरिष्कृतः ।
प्रशान्तमृगयूथश्च नानाशकुनिनादितः ॥ ८० ॥

स्वेनैव कर्मणा अगस्त्य इति विख्यातः । अगं–विन्ध्यं स्तंभयतीति, पृषोदरादित्वेन स्तंभशब्दस्य स्त्यादेशे अगस्त्य इति प्रसिद्ध इत्यर्थः । परिश्रान्तानां श्रमं अपहन्तीति तथा, 'अपे क्लेशतमसोः' इति क्लेशपर्यायेऽपि डः । प्राज्यैः–भूरिभिः धूमैः–यज्ञपाकयज्ञधूमैः आकुलं वनं यस्मिन् स तथा ॥ ८० ॥

[2]निगृह्य तरसा मृत्युं लोकानां हितकाम्यया ।
दक्षिणा दिक् कृता येन शरण्या पुण्यकर्मणा ॥ ८१ ॥

† निगृह्येत्यादिः गतार्थः ॥ ८१ ॥

---

* मनुष्यसञ्चारात् भीतैर्वन्यमृगैरविमृदितत्वात् स्निग्धपत्राः । † ५४ श्लोकेनेति यावत् ।

[1] आज्य–ङ. [2] इदमर्धं कुण्डलितम्–ञ.

**तस्येदमाश्रमपदं प्रभावाद्यस्य राक्षसैः ।**
*** दिगियं दक्षिणा त्रासात्[1] दूरतो नोप[2]भुज्यते ॥ ८२ ॥**

दक्षिणा दिगिति । अगस्त्याश्रमप्रदेशवर्तिनीति शेषः । तथा अग्रेऽपि । केवलं दूरतः त्रासात्—महर्षिनिमित्तभीत्या । नोपभुज्यते—न स्वदेशत्वेन परिगृह्य अनुभूयते इत्यर्थः ॥ ८२ ॥

**यदाप्रभृति चाक्रान्ता दिगियं पुण्यकर्मणा ।**
**† तदाप्रभृति निर्वैराः प्रशान्ताः रजनीचराः ॥ ८३ ॥**

निर्वैराः इति । गजसिंहमृगव्याघ्रादयः इति शेषः । प्रशान्ताः—क्रूरकृत्यरहिताः ॥ ८३ ॥

**‡ नाम्ना चेयं भगवतो दक्षिणा दिक् प्रदक्षिणा ।**
**प्रथिता त्रिषु लोकेषु दुर्धर्षा क्रूरकर्मभिः ॥ ८४ ॥**

एवं भगवतो महिम्ना दक्षिणा—निर्वैरत्वादिसंपादनसमर्था इयं दिक्—एतद्दिग्वर्त्याश्रमः इति यावत्, अत एव नाम्ना प्रदक्षिणा इति त्रिषु लोकेषु प्रथिता ॥ ८४ ॥

---

* त्रासाद दृश्यते, न तु प्राचीनकाल इवोपभुज्यते—**गो.** दृश्यते केवलं, त्रासाद महर्षिभीत्या नोपभुज्यते—**ति.** राक्षसैर्दृश्यते, भुज्यते तु न—**रा.** अस्य प्रभावात् राक्षसैः न दृश्यते, अस्य त्रासात् नोपभुज्यते—**ती.** † निर्वैराः—वैरप्रवर्तनाशक्ताः—**गो.** निर्वैराः प्राणिषु—**ति.** 'दक्षिणा दिक् दुर्धर्षा क्रूरकर्मभिः' इत्यनन्तरश्लोकोक्तेः, 'त्रासाद' इति पूर्वश्लोकोक्तेश्च गोविन्दराजीयोक्तं सम्यगेव। ननु तर्हि रामेण साध्यं किमस्ति? इति चेद, अगस्त्याश्रितदिग्भिन्नदिश्यपि रक्षःपीडापरिहारस्य, तन्निर्मूलनस्य च रामैकसाध्यत्वान्न दोषः ॥ ‡ नाम्ना—भगवतोऽगस्त्यस्य दिक् इति प्रसिद्धा—**गो. ति.** प्रदक्षिणा—सज्जनाभिगम्या—**ती.** अतिकुशलवती—**रा.**

[1] दृश्यते—**सर्वत्र.** [2] युज्यते—**ङ.**

मार्गं निरोद्धुं निरतो भास्करस्याचलोत्तमः ।
निदेशं पालयन् यस्य विन्ध्यः शैलो न वर्धते ॥ ८५ ॥

भास्करस्य मार्गं निरोद्धुं इति । किंचित् स्पर्धतः । महामेरुस्पर्धयेति शेषः । न वर्धते इति । अद्यापीति शेषः ॥ ८५ ॥

अयं दीर्घायुषस्तस्य लोके विश्रुतकर्मणः ।
अगस्त्यस्याश्रमः श्रीमान् विनीतजनसेवितः ॥ ८६ ॥
एष लोकार्चितः साधुः हिते नित्यरतः सताम् ।
अस्मानभिगतानेषः * श्रेयसा योजयिष्यति ॥ ८७ ॥
आराधयिष्याम्यत्राहं अगस्त्यं तं महामुनिम् ।
शेषं च वनवासस्य, सौम्य ! वत्स्याम्यहं, [1] प्रभो ! ॥८८॥

प्रभो इति सर्वकोशेषु संबुध्यन्ततया पाठः † । हे समर्थ ! शुश्रूषणचतुरेति यावत् ॥ ८८ ॥

अत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
अगस्त्यं [2] नियताहारं सततं पर्युपासते ॥ ८९ ॥
नात्र जीवेन्मृषावादी क्रूरो वा यदि वा शठः ।
नृशंसः [3] कामवृत्तो वा मुनिरेष ‡ तथाविधः ॥ ९० ॥

तथाविध इति । दुर्वृत्तासहिष्णुरिति यावत् ॥ ९० ॥

---

* वैष्णवधनुःप्रदानादिश्रेयसा योजयिष्यति । † महेश्वरतीर्थस्य 'प्रभोः' इति पाठः । प्रभोः–अगस्त्यस्य वाक्यात् वनवासस्य शेषं–अवशिष्टकालं वत्स्यामि–स्थास्यामि–ती. प्रभो इत्युक्तिः लक्ष्मणस्यापि राजपुत्रत्वात् । प्रभोरिति पाठे प्रभोः–अगस्त्यस्य नियोगादिति शेषः–गो. ‡ तथाविधः–तादृशप्रभावविशिष्टः, यः स्वाश्रितान् सर्वानपि स्वानिव करोतीत्यर्थः ।

[1] प्रभोः–ङ. [2] नियताहाराः–ङ. [3] पापवृत्तो–ङ.

अत्र देवाश्च यक्षाश्च नागाश्च *पतगैः सह ।
वसन्ति नियताहाराः धर्ममाराधयिष्णवः ॥ ९१ ॥

पतगाः–गरुडजातयः । †धर्मं–स्वाश्रमधर्मम् ॥ ९१ ॥

अत्र सिद्धाः महात्मानः विमानैः सूर्यसन्निभैः ।
[1]त्यक्तदेहाः नवैर्देहैः स्वर्याताः परमर्षयः ॥ ९२ ॥

नवैः देहैः–दिव्यदेहैरित्यर्थः ॥ ९२ ॥

यक्षत्वममरत्वं च राज्यानि विविधानि च ।
अत्र देवाः प्रयच्छन्ति भूतैः आराधिताः ‡[2]शुभैः ॥ ९३ ॥

अत्र आराधिताः देवाः–इन्द्रादयः प्रयच्छन्तीति । आश्रमवैभवात् अल्पकालेनेति शेषः ॥ ९३ ॥

आगताः स्माश्रमपदं, सौमित्रे ! प्रविशाग्रतः ।
§निवेदयेह मां प्राप्तं ऋषये सीतया सह ॥ ९४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकादशः सर्गः

---

वन(९४)मानः सर्गः ॥ ९४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकादशः सर्गः

---

* पतगैः–गरुडजातिभिः–गो. †धर्मं–स्वर्गादिजनकं–ति. स्वस्वधर्मं वा । ‡शुभैः–सत्कर्मनिरतैः–गो. सत्कर्मभिः–ति. §अग्रतः प्रवेशादेशे हेतुः–निवेदयेति ।

[1] त्यक्त्वा देहान्–ङ. [2] शुभाः–ङ.

## द्वादशः सर्गः

### [अगस्त्यसन्दर्शनम्]

स प्रविश्याश्रमपदं लक्ष्मणो राघवानुजः ।
अगस्त्यशिष्यमासाद्य वाक्यमेतदुवाच ह ॥ १ ॥

अथ अगस्त्यमुपसंपन्नस्य सत्कारपूर्वं धनुरादिप्राप्तिः । स प्रविश्येत्यादि ॥ १ ॥

राजा दशरथो नाम ज्येष्ठः तस्य सुतो * बली ।
रामः प्राप्तो मुनिं द्रष्टुं भार्यया सह सीतया ॥ २ ॥
लक्ष्मणो नाम तस्याहं भ्राता त्ववरजो हितः ।
[1] अनुकूलश्च भक्तश्च यदि ते श्रोत्रमागतः ॥ ३ ॥

यदि ते श्रोत्रमागतः इति । यदिशब्दः संभावनायाम् । अस्माभिरिह दण्डकारण्ये ऋषिभिः सह बहुकालं वासात् ऋषिमुखेन त्वयाऽपि रामः अहं च श्रुतौ भवेः, श्रुतवान् इत्यर्थः ॥ ३ ॥

ते वयं [2] वनमत्युग्रं प्रविष्टाः पितृशासनात् ।
द्रष्टुमिच्छामहे सर्वे भगवन्तं निवेद्यताम् ॥ ४ ॥

द्रष्टुमिच्छामहे भगवन्तं; अतो दर्शनार्थं आगताः इति निवेद्यतामित्यर्थः ॥ ४ ॥

तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य तपोधनः ।
तथेत्युक्त्वाऽग्निशरणं प्रविवेश निवेदितुम् ॥ ५ ॥

अग्निशरणं—अग्निहोत्रगृहम् ॥ ५ ॥

---

* अनेन वनवासस्य स्वेच्छाङ्गीकृतत्वमुच्यते ।

[1] अनुरक्तश्च—ङ. [2] वनमत्युग्रं—ङ.

स प्रविश्य मुनिश्रेष्ठं तपसा [1] दुष्प्रधर्षणम् ।
कृताञ्जलिरुवाचेदं [2] रामागमनमञ्जसा ।
यथोक्तं लक्ष्मणेनैव शिष्योऽगस्त्यस्य संमतः ॥ ६ ॥

संमतः—इष्टः ॥ ६ ॥

[3] पुत्रौ दशरथस्येमौ रामो लक्ष्मण एव च ।
प्रविष्टावाश्रमपदं सीतया सह * भार्यया ॥ ७ ॥
द्रष्टुं भवन्त[4]मायातौ शुश्रूषार्थ[5]मरिन्दमौ ।
यदत्रानन्तरं † तत्त्वं आज्ञापयितुमर्हसि ॥ ८ ॥

द्रष्टुं, दर्शनानन्तरं कियत् कालं शुश्रूषार्थं—सेवार्थं च आयातौ । अनन्तरं तत्त्वं—इतिकर्तव्यतत्त्वमित्यर्थः ॥ ८ ॥

ततः शिष्यादुपश्रुत्य प्राप्तं रामं सलक्ष्मणम् ।
वैदेहीं च महाभागां इदं वचनमब्रवीत् ॥ ९ ॥
दिष्ट्या रामः चिरस्याद्य द्रष्टुं मां समुपागतः ।
मनसा कांक्षितं ह्यस्य [6] मयाऽभ्यागमनं प्रति ॥ १० ॥

अस्याभ्यागमनं प्रति—उद्दिश्य ॥ १० ॥

गम्यतां सत्कृतो रामः सभार्यः सहलक्ष्मणः ।
प्रवेश्यतां समीपं मे ‡ किं चासौ न प्रवेशितः ॥ ११ ॥

---

* भार्ययेति औचित्यात् राम एवान्वेति । प्रथमान्तपाठे तु न क्लेशः ॥ † तत्त्वं—तस्य भावं—प्रकारम्—**गो.** तत् त्वं इति वा पदम् ॥ ‡ प्रीत्यतिशयजन्यत्वरयाऽऽह—किञ्चेत्यादि । रामस्य निर्निरोधत्वाच्च ।

[1] द्योतितप्रभम्—**ङ.** [2] वचनं व्यक्तया गिरा—**ङ.** [3] पुत्रो दशरथस्यासौ रामो नाम महायशाः । सह भ्रात्राऽऽश्रमपदं—**ङ.** [4] मायातः—**ङ.** [5] मरिन्दमः—**ङ.** [6] मयाऽभ्यागमनं—**ङ.**

सत्कृत इति। आचारोपचारव्यवहारैः इति शेषः। किं चासौ न प्रवेशितः इति। कस्माद्धेतोः विलम्बः कृतः इत्यर्थः॥ ११॥

एवमुक्तस्तु मुनिना धर्मज्ञेन महात्मना।
*अभिवाद्याब्रवीत् शिष्यः तथेति नियताञ्जलिः॥ १२॥

अभिवाद्येति। गमननियोगप्रयुक्तं पुनश्चाभिवादनं कृत्वेत्यर्थः॥

ततो निष्क्रम्य संभ्रान्तः शिष्यो लक्ष्मणमब्रवीत्।
क्वासौ रामो मुनिं द्रष्टुं एतु प्रविशतु स्वयम्॥ १३॥

स्वयं प्रविशत्विति। नास्य शिष्यमुखापेक्षा, भगवता अवगतरामवृत्तत्वादिति शेषः॥ १३॥

ततो गत्वाऽऽश्रमद्वारं शिष्येण सह लक्ष्मणः।
दर्शयामास काकुत्स्थं सीतां च जनकात्मजाम्॥ १४॥

काकुत्स्थं दर्शयामास। आश्रममिति शेषः। 'गतिबुद्धि' इत्यादिना द्विकर्मकत्वम्॥ १४॥

तं शिष्यः प्रश्रितो वाक्यं अगस्त्यवचनं ब्रुवन्।
प्रावेशयद्यथान्याय्यं सत्कारार्हं सुसत्कृतम्॥ १५॥

उच्यते इति वचनं, अगस्त्यवचनं—अगस्त्योक्तं वाक्यं ब्रुवन्॥

प्रविवेश ततो रामः सीतया सहलक्ष्मणः।
प्रशान्तहरिणाकीर्णं आश्रमं ह्यवलोकयन्॥ १६॥

---

*'किञ्चासौ न प्रवेशितः' इति ऋषिणाऽधिक्षिप्तत्वादभिवादनादिकम्। अत एव उत्तरत्र 'संभ्रान्तः' 'प्रविशतु स्वयम्' इत्याद्युक्तिः॥

*स तत्र ब्रह्मणः स्थानं अग्नेः स्थानं तथैव च ।
विष्णोः स्थानं [1] महेन्द्रस्य स्थानं चैव विवस्वतः ॥ १७ ॥
सोमस्थानं[2] भगस्थानं स्थानं कौबेरमेव च ।
धातुः विधातुः स्थाने च वायोः स्थानं तथैव च ॥ १८ ॥
नागराजस्य च स्थानं [3] अनन्तस्य महात्मनः ।
स्थानं तथैव गायत्र्याः वसूनां स्थानमेव च ॥ १९ ॥
स्थानं च पाशहस्तस्य वरुणस्य महात्मनः ।
कार्तिकेयस्य च स्थानं धर्मस्थानं च पश्यति ॥ २० ॥

स तत्र ब्रह्मणः स्थानमिति । तत्र–आश्रमे प्रथमं ब्रह्मणः स्थानं, श्रीहिरण्यगर्भब्रह्मणः कुलदैवतस्यालयं व्यलोकयत् इत्यनुषङ्गः । अथ अग्नेः स्थानं— चतुर्मुखरुद्रस्य स्थानम् । अथ विष्णोः–श्रीप्रदेशविष्णोः । अथ यथोक्तत्रिब्रह्माङ्गदेवतानां आलयोपदेशः । महेन्द्रस्य विवस्वतः । भगः–मण्डस्थूलमंनिवेशाभिमानी । धाता–कार्यप्रजापतिः । विधाता–विश्वकर्मा ।

---

* ब्रह्मणः–चतुर्मुखस्य, अग्नेः–पावकस्य, भगः देवताविशेषः । पाशहस्तस्येत्यादिविशेषणानि तत्र मुनेर्भक्तिविशेषद्योतनार्थम् । इमे ब्रह्मादयः पूर्वसर्गे फलप्रदत्वेनोक्ताः । एते ब्रह्माग्निविष्णुमहेन्द्रविवस्वत्सोमभगकुबेरधातृविधातृवाय्वनन्तगायत्रीवसुवरुणकार्तिकेयधर्माख्याः सप्तदश देवाः 'यो वै सप्तदशं' इत्यनुवाकोक्तसप्तदशाक्षरदेवताः याज्ञूकेन मुनिना पूजार्थं प्रतिष्ठिता इति बोध्यम् । अत्र पूज्यदैवतेषु रुद्रस्यानुपादानात् अपूज्यत्वमुक्तम् । अधुना कैश्चिज्जनैः पूज्यमानता तु तामसशास्त्रानुरोधेनेति बोध्यम् । ननु 'विष्णोः स्थानं महेशस्य' इति पाठात् स्थानानुक्त्यसंभव इति चेत्, तदा पूर्वं रामेण 'अगस्त्यं नियताहारं सततं पर्युपासते' इत्युक्तावपि स्थाननिर्देशे उपास्योपासकयोरनयोरपि निर्देशो न विरुध्यते । यद्वा उपासनं–समीपावस्थानम्, न त्वाराधनम्, 'धर्ममाराधयिष्णवः' इत्युक्तेः । धर्मस्याराधनं परिपालनमेव–गो.

[1] महेशस्य–ङ.　　[2] शिवस्थानं–ङ.　　[3] गरुडस्य तथैव च–ङ.

गायत्रीत्युपलक्षणं सरस्वतीसावित्र्योरपि । एवं इह ब्रह्मादिधर्मान्त-सप्तदशदेवानां 'यो वै सप्तदशं प्रजापतिं' इत्यनुवाकोपदिष्टयज्ञयज्ञेश्वर-यजमानश्रीमद्यक्षमूर्तिभगवत्प्रजापतिमूलमंत्रसप्तदशाक्षरीदेवानां इहोप-दिष्टानां 'अगस्त्यो विश्वाध्वरेश्वर' इति कान्तिपूर्तिः, विद्यान्तर्गतानामशेष-यज्ञविद्यासाधकमहार्षित्वात् स्वयज्ञदेवतानां स्वाश्रमे प्रतिष्ठापूर्वकं नित्य-विशेषसमाराधनं अगस्त्यस्य भगवतः । एवं च ब्रह्मादिब्रह्मकुलकुलदेव-तानां सर्वेषां स्वस्वगृहे अर्चायां अर्चनीयत्वं सुस्पष्टम् । अन्ततः आद्यन्त-मध्यदेवतात्रयस्य श्रीहिरण्यगर्भगायत्रीधर्मलक्षणस्य च ब्रह्मकुल-मात्रस्याचार्यामर्चनं आवश्यकम् । श्रीमद्यज्ञविद्योपासकस्य तु तच्चक्रे अग्न्यादितद्विद्याक्षरदेवताभिः सहोपदिश्यमानाः तदक्षराधिदेवताश्च अर्चनीयाः ॥ २० ॥

ततः शिष्यैः परिवृतः मुनिरप्यभिनिष्पतत् ।
तं ददर्शाग्रतो रामः मुनीनां दीप्ततेजसाम् ॥ २१ ॥

मुनिरप्यभिनिष्पतदिति । अडभावः आर्षः । अभ्युत्थानं कृतवानिति यावत् । मुनीनामग्रतः स्थितं * तं ददर्श ॥ २१ ॥

अब्रवीद्वचनं [1] वीरः लक्ष्मणं लक्ष्मिवर्धनम् ।
एषः, लक्ष्मण! निष्क्रामति अगस्त्यो भगवानृषिः ।
† औदार्येणावगच्छामि [2] निधानं तपसामिमम् ॥ २२ ॥

औदार्येण—औन्नत्येन—तेजोविशेषजनितेन ॥ २२ ॥

---

* अभिनिष्पतदित्युक्तत्वात स्वपुरत एवागतमिति वाऽर्थः । अत एव 'एषः' इति प्रदर्शनं अनन्तरश्लोके । † औदार्य—सरलता वा ; महान्त एव किल सरला भवितुं अर्हन्ति ।

[1] रामः—ङ. [2] निदानं—ङ.

एवमुक्त्वा महाबाहुः अगस्त्यं सूर्यवर्चसम् ।
[1]जग्राह परमप्रीतः तस्य पादौ परंतपः ॥ २३ ॥

अभिवाद्य तु धर्मात्मा तस्थौ *रामः कृताञ्जलिः ।
सीतया सह वैदेह्या †तदा रामः सलक्ष्मणः ॥ २४ ॥

[2]प्रतिजग्राह काकुत्स्थं अर्चयित्वाऽऽसनोदकैः ।
कुशलप्रश्नमुक्त्वा च ह्यास्यतामिति चाब्रवीत् ॥ २५ ॥

अर्चयित्वा प्रतिजग्राहेति, स्वीयतयेति शेषः ॥ २५ ॥

अग्निं हुत्वा प्रदायार्घ्यं अतिथीन् प्रतिपूज्य च ।
वानप्रस्थेन धर्मेण स तेषां भोजनं ददौ ॥ २६ ॥

अर्चयित्वेत्याद्युक्तार्थस्यैव विस्तरेणोपदेशः—अग्निं हुत्वेत्यादि ।
अतिथीन्–रामादीन् ॥ २६ ॥

प्रथमं चोपविश्याथ धर्मज्ञो मुनिपुङ्गवः ।
उवाच राममासीनं प्राञ्जलिं धर्मकोविदम् ॥ २७ ॥

आसीनमिति । पश्चादासीनमित्यर्थः ॥ २७ ॥

[3]अग्निं हुत्वा प्रदायार्घ्यं अतिथिं प्रतिपूजयेत् ।

---

* रामः अभिवाद्य तस्थावित्यन्वयः–गो. † आरामः–सर्वाभिरामदाता रामः–रा.
योगरूढिभ्यां रामशब्दद्वयापौनरुक्त्यम्–ति. ती.

[1] जग्राहापततस्तस्य–ङ. [2] प्रतिगृह्य च–ङ. [3] इदमर्धं
नास्ति–ङ. ज.

*अन्यथा खलु, काकुत्स्थ! तपस्वी समुदाचरन् ।
दुःसाक्षीव परे लोके स्वानि मांसानि भक्षयेत् ॥ २८ ॥

किमुवाचेत्यतः, धर्ममूलत्वात् जगतः प्रकृतं धर्ममेव कर्तव्यमुपदिशतीत्याह—अग्निं हुत्वेत्यादि । वैश्वदेवहोमं कृत्वेत्यर्थः । अन्यथा समुदाचरन् इति । वैश्वदेवपूजनं अतिथिपूजनं च अकुर्वन् इत्यर्थः । दुःसाक्षी—कूटसाक्षी ॥ २८ ॥

राजा सर्वस्य लोकस्य धर्मचारी महारथः ।
पूजनीयश्च मान्यश्च भवान् प्राप्तः प्रियातिथिः ॥ २९ ॥

एवं उपदेशः, बालोऽपि राजा सन् धार्मिकोऽपि अतिथित्वेन प्राप्ततः पूजनीयोऽद्य, अतः परं त्वयैव आराधनीयोऽपीत्येतदर्थः ॥ २९ ॥

एवमुक्त्वा फलैर्मूलैः पुष्पैरन्यैश्च [1]राघवम् ।
पूजयित्वा यथाकामं पुनरेव ततोऽब्रवीत् ॥ ३० ॥
इदं दिव्यं महच्चापं हेम[2]वज्रविभूषितम् ।
वैष्णवं, पुरुषव्याघ्र! निर्मितं विश्वकर्मणा ॥ ३१ ॥

हेम्ना वज्रेण—रत्नेन च विभूषितं तथा । वैष्णवं धनुरिति । परशुरामात् गृहीत्वा वरुणहस्ते दत्तं यत् रामेण तदेव वरुणादादाय महेन्द्रः अगस्त्ये निक्षिप्तवानित्यवगन्तव्यम्, न तु विश्वकर्मनिर्मितं

---

* एवं क्षत्रियपूजाऽनुचितेत्याशङ्क्यां समाधित्सुः प्रकृतं धर्ममुवाचेत्याह—अन्यथेति—ति. अयं रामव्याजेन सीतां प्रत्युपदेशः । धर्मकोविदमित्युक्तस्य रामस्य हि नेदं वक्तव्यम् । अत एव सीता रावणं सत्करिष्यति—गो.

[1] पार्थिवम्—ङ. [2] रत्न—ङ.

वैष्णवं धनुर्द्वयमस्ति । शार्ङ्गं तु मूरुमूर्त्त्यैवास्ते । नापि तद्विश्वकर्मनिर्मितम् ॥ ३१ ॥

अमोघः सूर्यसङ्काशः * ब्रह्मदत्तः शरोत्तमः ।
[1] दत्तौ मम † महेन्द्रेण तूणी चाक्षयसायकौ ॥ ३२ ॥
संपूर्णौ निशितैः बाणैः ज्वलद्भिरिव पावकैः ।
महारजतकोशोऽयं असिः हेमविभूषितः ॥ ३३ ॥

ब्रह्मणा दत्तः–ब्रह्मदत्तः, अत एव तदाख्यश्च । तूणी चेत्यनेन धनुश्शरयोरपि इन्द्रदत्तत्वं गम्यते । महारजतं–सुवर्णम् ॥ ३३ ॥

अनेन ‡ धनुषा, राम ! हत्वा संख्ये महासुरान् ।
आजहार श्रियं दीप्तां पुरा विष्णुः दिवौकसम् ॥ ३४ ॥
तद्धनुः तौ च तूणीरौ § शरं खड्गं च, मानद !
[2] जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ॥ ३५ ॥

वज्रं वज्रधरो यथा इत्यनेन तावकं वस्तु त्वयैव विराजा ब्रह्मणा स्वीक्रियत इति द्योत्यते ॥ ३५ ॥

---

* बालरामायणे ऐन्द्रं शरासनमिति इन्द्रदत्तत्वोक्तिस्तु छत्रिन्यायात्-गो. 'दत्तो मम महेन्द्रेण' इति पाठे ब्रह्मदत्तनामकः महेन्द्रेण दत्तः इति, आदौ विष्णवे ब्रह्मणा दत्तः, मह्यं महेन्द्रेण दत्त इति वाऽर्थः । 'विष्णोर्दत्तं सुरोत्तमैः' (75-13) इति त्रिलोक्त बालकाण्डे । † योगेन महेन्द्रपदेन वरुण एवेत्यन्ये-ति. ‡ धनुषा—धनुरादिना-गो. § शरं खड्गं च, वैष्णवाविति शेषः । वज्रं वज्रधरो यथेत्यनेन तावकं त्वमेव गृहाणेत्युक्तम्-गो.

[1] दत्तो-ङ. च. [2] एतदनन्तरं—इदं च ते तनुत्राणमभेद्यं मघवा ददौ । कवचं चानुपमं वीर ! प्रतिगृह्णीष्व मानद ! जये च संशयं प्राप्य चिन्तयिष्यसि विह्वलन् । हरियुग्मं रथं दिव्यमुपनेष्यति मातलिः—इत्यधिकम्-झ.

**एवमुक्त्वा महातेजाः समस्तं तद्वरायुधम् ।**
**[1]दत्त्वा रामाय भगवान् अगस्त्यः पुनरब्रवीत् ॥ ३६ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे द्वादशः सर्गः

---

**वरायुधं—वरस्य विष्णोः आयुधं, उत्तमायुधमित्यपि ॥ ३६ ॥**

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे द्वादशः सर्गः

---

[1] एतदनन्तरं—ङ. झ. पुस्तकयोरेवमधिकपाठो दृश्यते :—

(ततो रामं महाबाहुं महर्षिरिदमब्रवीत्—झ.) सुखं स्वप महाबाहो! ससीतः सहलक्ष्मणः । रविरस्तंगतः सौम्य ! सन्ध्याकालोऽप्युपागमत् ॥ एते निशाचरा राम! निलीना मृगपक्षिणः । नगाग्रेषु भृशं लीनाः दृश्यन्ते सुसमाहिताः ॥ नैशेन तमसा व्याप्तमप्रकाशं नभःस्थलम् । एवमुक्तो महाबाहुरगस्त्येन महात्मना ॥ उपास्य पश्चिमां सन्ध्यां रामः सौमित्रिणा सह । अभिवाद्य महात्मानं अगस्त्यमृषिसत्तमम् ॥ सुष्वाप रजनीमेकां पूजितः परमर्षिणा । सुखोषितस्तदा रामः सन्ध्यामन्वास्य सानुजः ॥ कृतपूर्वाह्णिकस्तस्थौ स्नात्वा हुतहुताशनः । लक्ष्मणेन सह भ्रात्रा सीतया च परंतपः ॥ उपागच्छदमेयात्मा अगस्त्यं सूर्यवर्चसम् । स दृष्ट्वा राघवं श्रीमान् अगस्त्यः संयताञ्जलिम् ॥ प्रतिपूज्य यथान्यायमिदं वचनमब्रवीत् । कच्चित्सुखा निशा राम ! व्यतीता रघुनन्दन ॥ तव सभ्रातृभार्यस्य ममाश्रमपदे शुभे । अगस्त्येनैवमुक्तस्तु काकुत्स्थो वाक्यमब्रवीत् ॥ मानिताश्च यथान्यायं त्वया पूज्येन पूजिताः । शयनासनदानेन भोजनाच्छादनैः शुभैः ॥ राज्ञो दशरथस्यैव पुरस्यान्तःपुरे यथा । सुखोषिताः स्म भगवन् ! सर्वकामैरुपस्थिताः ॥ (उपविश्याप्यगस्त्यस्तु निषीदध्वमुवाच ह । सर्वानेवाभ्यनुज्ञाप्य ये तत्रासन् समागताः । झ.) सुखोपविष्टे रामे तु सहसीते सलक्ष्मणे । स तेन ऋषिसङ्घेन अगस्त्यो वाक्यमब्रवीत् ॥ कालोऽयं गतभूयिष्ठः यः कालस्तव राघव ! समयो यो नरेन्द्रेण कृतो दशरथेन ते ॥ तीर्णप्रतिज्ञः काकुत्स्थ ! सुखं राम ! निवत्स्यसि । धन्यस्ते जनको राम ! स राजा रघुनन्दन ! यस्त्वया ज्येष्ठपुत्रेण ययातिरिव तारितः। एवमुक्तस्ततो रामः प्रत्युवाच कृताञ्जलिः ॥ प्रीतः प्रीततरं वाक्यं प्रत्युवाच महायशाः । धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गवः ॥ प्रीयमाणस्य सुप्रीतः नास्ति धन्यतरो मम । मया न तारितो राजा स्वगुणैरेव तारितः॥ स्वर्गं दशरथः प्राप्तः स्वकृतैः पुण्यकर्मभिः । अयं तु देशो निखिलः सर्व एव महातपः॥

## त्रयोदशः सर्गः

[पञ्चवटीगमनम्]

***राम! प्रीतोऽस्मि, भद्रं ते, परितुष्टोऽस्मि, लक्ष्मण!**
**अभिवादयितुं यन्मां प्राप्तौ स्थः सह सीतया॥ १॥**

---

* एतादृशस्थले सर्गविच्छित्तिर्नास्तीति प्रतीयते, कथाया अपर्यवसानात्—**गो.**

अशरण्यः शरण्योऽभूत् यथैव विनिवेशितः। तथाऽऽख्याह्यर्थतत्त्वेन परं कौतूहलं मम॥
श्रुत्वा तु वचनं तस्य रामस्य मधुराक्षरम्। प्रत्युवाच ततो राममगस्त्यो भगवानृषिः॥
शृणु राघव! तत्त्वेन देशस्यास्य यथातथम्। दण्डकेन परित्यक्तो ह्ययं देशो महात्मना॥
भार्गवस्य च शापेन निर्मानुष्यमृगोऽभवत्। वृक्षगुल्मलताहीनं तापसैरपि वर्जितम्॥
कान्तारमभवत् तात! घोरं परमदारुणम्। योजनार्धसहस्रं तु विन्ध्यपादस्तु दक्षिणः॥
नानुवर्षति पर्जन्यः नानुवाति सुखोऽनिलः। रक्षः(रूक्षं) प्रतिभयं घोरमासीत्परमदारुणम्॥
बहून्यब्दसहस्राणि ह्येतदासीदमानुषम्। गन्धर्वैः ऋषिसङ्घैश्च देवैश्च परिवर्जितम्॥
कस्यचित्त्वथ कालस्य दैवयोगादहं नृप! हिमवच्छिखरात् श्वेतात् इह प्राप्तोऽस्मि मानद!
ततो मया समाहूतः पर्जन्यो जलदैः सह। स्वच्छन्दवर्षश्च कृतः कञ्चित्कालमरिन्दम!
यमस्य चैव चारास्तु बहून्यब्दशतानि वै। तेजसा मृत्युदूताश्च व्याधयश्च निराकृताः॥
हिमवत्पादजा वृक्षाः चिन्तिता मनसाऽऽगताः। प्रवृत्ताश्च पुनर्नद्यः फुल्लपङ्कजमण्डिताः॥
तटाकानि च रम्याणि सरितश्च सरांसि च। (नीरजस्कं सुगन्धं च सुखशीतजलानिलम्—**झ.**)
प्रवृद्धवनषण्डं तु स्फीतसस्यवनाकुलम्॥ अचिरेणाभवद्रम्यं सर्षिसङ्घानुसेवितम्॥
केवलं त्वमिशापेन तस्यैव रघुनन्दन! सोपद्रुतमिवाप्येतत् राक्षसैरुग्रकर्मभिः॥
यदाप्रभृति चापि त्वं चित्रकूटमुपागतः। तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान्॥
ऋषीणामभयं वीर! दातुमर्हसि मानद! अस्माद्धि कारणाद्राम! दण्डकारण्यवासिनाम्॥
त्राणार्थमिह संप्राप्तः त्रातुमर्हति नो भवान्। समर्थो ह्यसि काकुत्स्थ! त्रैलोक्यस्यापि रक्षणे॥
किं पुनर्वीर! रक्षांसि द्विज(तव)मन्युहतानि वै। अयमिक्ष्वाकुपुत्रेणदण्डकेन महाबल!
देशो निराकृतो राजन्! शापदोषेण राघव! दण्डकारण्यमखिलं दर्शनादेव राघव!
शापस्यान्ताय काकुत्स्थ! प्राप्तस्त्वमरिमर्दन! स त्वमद्य पुरावृत्तैः पितृभिः सन्निराकृतम्।
(यस्य दोषादिदं राम! दण्डकारण्यमुच्यते—**झ.**) आश्चर्यमिदमाख्यानं देशस्यास्य यथातथम्॥

अथ अगस्त्यनियोगेन पञ्चवट्याश्रमप्राप्तिः । गमेत्यादि । लक्ष्मण! तुभ्यं च परितुष्टाऽस्मीत्यन्वयः । स्थः इति अस्तेर्लटि मध्यमद्विवचनम् ॥ १ ॥

*अध्वश्रमेण वां खेदः बाधते प्रचुरश्रमः ।
व्यक्तमुत्कण्ठते चापि मैथिली जनकात्मजा ॥ २ ॥

खेदः—दुःखं अध्वश्रमेण वां दुःखं वर्तते, प्रचुरश्रमः अध्वश्रमः, बाधते, मैथिलीमिति शेषः । अत एव इयं व्यक्तं उत्कण्ठते चापि, क्वचित् विश्रान्तिमिति शेषः ॥ २ ॥

एषा हि सुकुमारी च दुःखैश्च न विमानिता ।
प्राज्यदोषं वनं प्राप्ता भर्तृस्नेहप्रचोदिता ॥ ३ ॥

न विमानितेति—न पीडितेति यावत् । प्राज्यः दोषः अस्मिन् तत् तथा । "प्रभूतं प्रचुरं प्राज्यं" ॥ ३ ॥

यथैषा रमते, राम! इह सीता तथा कुरु ।
दुष्करं कृतवत्येषा वने त्वामनुगच्छती ॥ ४ ॥
एषा हि प्रकृतिः स्त्रीणां आसृष्टेः, रघुनन्दन!
समस्थ[1]मनुरज्यन्ति विषमस्थं त्यजन्ति च ॥ ५ ॥
शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा ।
गरुडानिलयोः शैघ्र्यं अनुगच्छन्ति योषितः ॥ ६ ॥

---

* अध्वश्रमेण—मार्गायासेन प्रचुरः श्रमः—श्रमजलं येन सः प्रचुरश्रमः खेदः वां बाधते—गो. अध्वश्रमेण खेदः वां बाधते किमिति शेषः। प्रचुरश्रमः, मैथिलीमिति शेषः—तीं. वस्तुतस्तु लोकरीत्या आदरात् 'अध्वश्रमेण वां खेदः!', 'प्रचुरश्रमः वां बाधते' इति वाक्यद्वयमिति युक्तम् ॥

[1] मनुरञ्जन्ति—ङ.

एषा दुष्करं कृतवतीत्येतत्प्रतिपादनशेषतया लोकव्यवहारोक्तिः—एषेत्यादि। आसृष्टेः सृष्टिमारभ्य। 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी। समस्थं—धनधान्यादिमत्तया सम्यगवस्थितमित्यर्थः। विषमस्थः—दरिद्र इति यावत्। शतह्रदानामित्यादिवचनं कैकेय्यभिप्रायेण * ॥ ५-६ ॥

†इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता।
श्लाघ्या च व्यपदेश्या च यथा [1]देवी ह्यरुन्धती ॥ ७ ॥

व्यपदेश्या—सद्भिः कीर्तनीया ॥ ७ ॥

‡अलङ्कृतोऽयं देशश्च यत्र सौमित्रिणा सह।
वैदेह्या चानया, राम! वत्स्यसि त्वमरिन्दम ॥ ८ ॥

यत्रेति। यत्रास्मिन् देशे इत्यर्थः। वत्स्यसि-वासं करिष्यसि ॥ ८ ॥

एवमुक्तः स मुनिना राघवः संयताञ्जलिः।
उवाच प्रश्रितं वाक्यं ऋषिं दीप्तमिवानलम् ॥ ९ ॥
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गवः।
गुणैः सभ्रातृभार्यस्य [2]वरदः परितुष्यति ॥ १० ॥

---

* वस्तुतस्तु—उत्सर्गोऽयम्। अत एवानन्तरश्लोके अपवादः प्रदर्श्यते। † एवं सीतायाः प्रशंसनं वक्ष्यमाणदेवबन्दीमोचनोत्साहनाय—गो. ‡ अयं देशः—आश्रमप्रवेशः—गो. अयं देशः—मदाश्रमरूपः आगमनमात्रेणालङ्कृतः—यत्र देशे इतः परं वत्स्यसि सोऽप्यलङ्कृतो भविष्यतीति किं वक्तव्यमित्यर्थः—ति. यत्र वैदेह्या सह निवत्स्यसि सोऽयं देशः अलङ्कृतो भविष्यतीति शेषः—रा. वस्तुतस्तु—'अध्वश्रमेण वा खेदः' (२) 'किं तु व्यादिश मे देशं' (११) 'ध्यात्वा मुहूर्तं धर्मात्मा' (१२) इत्यादि पूर्वापरपरामर्शे, अगस्त्यः स्वाश्रमे रामनिवासाभिप्रायेणैवेदमुक्तवानिति स्वरसम्।

[1] देवेष्वरुन्धती, देवीष्वरुन्धती—ङ. ज. [2] गुरुर्नः—ङ. ज.

किं तु व्यादिश मे देशं सोदकं * बहुकाननम् ।
यत्राश्रमपदं कृत्वा वसेयं निरतः सुखम् ॥ ११ ॥

किं तु व्यादिशेति । अस्मिन् त्वदधिष्ठितदेशे वत्स्यामीत्येव, अथापि उदकादिसौकर्ययुतदेशं मे व्यादिश ॥ ११ ॥

ततोऽब्रवीन्मुनिश्रेष्ठः श्रुत्वा रामस्य तद्वचः ।
ध्यात्वा मुहूर्तं धर्मात्मा [1]धीरो धीरतरं वचः ॥ १२ ॥

ध्यात्वेति—वासोचितदेशमित्यर्थः ॥ १२ ॥

इतो द्वियोजने, तात! बहुमूलफलोदकः ।
देशो बहुमृगः श्रीमान् पञ्चवट्यभिविश्रुतः ॥ १३ ॥
[2]तत्र गत्वाऽऽश्रमपदं कृत्वा सौमित्रिणा सह ।
[3]रंस्यसे त्वं, पितुर्वाक्यं यथोक्तमनुपालयन् ॥ १४ ॥

पञ्चानां वटानां समाहारः पञ्चवटी, तदुपलक्षितत्वात् पञ्चवटीत्यभिविश्रुतः तथा ॥ १४ ॥

---

* अगस्त्याश्रमात् बहुदूरदेशः अपेक्ष्यते । अगस्त्याश्रमः खलु स्थलीप्रायवनोद्देशे आसीत् (11-38)। रक्षसां निर्मूलनस्य चिकीर्षितत्वेन, अगस्त्याश्रमप्रान्ते भयात् राक्षसैरनागमनेन, मनुष्यसञ्चाररहितं स्थानं विवक्षितम् । अत एव अगस्त्योऽपि 'ध्यात्वा मुहूर्तं' 'तपसश्च प्रभावेन' इत्यादि वदति ॥

[1] ततोवाच वचश्शुभम्—ङ. [2] एतदनन्तरं—'वैदेह्या चानया राम वत्स्यसि त्वमरिंदम' इत्यधिकं—ङ. [3] एतदनन्तरं—कालोऽयं गतभूयिष्ठः यः कालस्तत्र, राघव! समयो यो नरेन्द्रेण कृतो दशरथेन ते । तीर्णप्रतिज्ञः, काकुत्स्थ ! सुखं राज्ये निवत्स्यसि । धन्यस्ते जनको, राम ! स राजा, रघुनन्दन ! यस्त्वया ज्येष्ठपुत्रेण ययातिरिव तारितः ॥ इत्यधिकं—ङ. ञ. झ.

**विदितो ह्येष वृत्तान्तः मम सर्वः तवानघ !**
**तपसश्च प्रभावेन *स्नेहात्, दशरथस्य च ॥ १५ ॥**

एष वृत्तान्तः इति । पितुर्वचनपरिपालनाय वनवासवृत्तान्त इत्यर्थः । स्नेहादिति । स्नेहात् विचिचारयिषितो वृत्तान्तश्च तपसः प्रभावेन विदितः इत्यन्वयः । दशरथस्य चेति । वरदानादिमरणान्तो वृत्तान्तश्च विदितः इत्यनुकर्षः ॥ १५ ॥

**†हृदयस्थश्च ते छन्दः विज्ञातस्तपसा मया ।**
**[1]इह वासं प्रतिज्ञाय मया सह तपोवने ॥ १६ ॥**
**अतश्च त्वामहं ब्रूमि गच्छ पञ्चवटीमिति ।**

ते हृदयस्थः छन्दोऽपि मया विज्ञातः इति ऋषेः अनपराधेन अग्निकल्पस्यास्य अपराधपरिहाराय आसन्नदेश एव स्थातव्यमित्येवंरूपं अभिप्रायं जानामि । अत एव इह मया सहवासं प्रतिज्ञाय–अलङ्कृतश्च देशोऽयमित्यादि वचनेन अनुज्ञाय स्थितेनापि मया त्वदाशयानुरोधेन अद्य पञ्चवटीं गच्छेत्यपि ब्रूमि, ईडभावः आगमानित्यत्वात् ॥ १६ ॥

**स हि रम्यो वनोद्देशः मैथिली तत्र रंस्यते ॥ १७ ॥**
**स देशः श्लाघनीयश्च नातिदूरे च, राघव !**
**गोदावर्याः समीपे च मैथिली तत्र रंस्यते ॥ १८ ॥**

---

* तपःप्रभावेण पर्यालोचनकरणे निमित्तमाह—स्नेहादिति–गो. † अलङ्कृतोऽयं देशश्च' इति मयेह वासे प्रस्तुते 'किं तु व्यादिश मे देशं' इति त्वदुक्तया चेत्यर्थः । अभिप्रायवेदनकार्यमाह–इहेति । यस्मात् त्वदभिप्रायो मया विदितः, अतो हेतोः इह तपोवने मया सह वासं प्रतिज्ञाय–अनुज्ञाय, तदनन्तरमेव त्वां 'पञ्चवटीं गच्छ' इति ब्रूमि–गो.

[1] एतदनन्तरं–वसन्तं त्वां जनास्सर्वे ज्ञास्यन्ति रघुनन्दन–इत्यधिकम्–ङ.

प्राज्यमूलफलश्चैत्र नानाद्विजगणायुतः ।
विविक्तश्च, महाबाहो ! पुण्यो रम्यस्तथैव च ॥ १९ ॥

भवानपि *[1]सदाचारः शक्तश्च परिरक्षणे ।
अपि चात्र वसन्, राम ! तापसान् पालयिष्यसि ॥ २० ॥

परिरक्षण इति । तापसानामिति शेषः । भवानपीत्यपिशब्देन स्वीयं तापसरक्षणसामर्थ्यं आवेदितम् । अपि चात्रेति । पञ्चवट्याश्रमे इत्यर्थः ॥ २० ॥

एतदालक्ष्यते, वीर ! मधूकानां महद्वनम् ।
उत्तरेणास्य गन्तव्यं न्यग्रोधमभि गच्छता † ॥ २१ ॥

ततः ‡ स्थलमुपारुह्य पर्वतस्याविदूरतः ।
ख्यातः पञ्चवटीत्येव नित्यपुष्पितकाननः ॥ २२ ॥

अस्योत्तरेण गन्तव्यमिति । अस्येति । मधुकवनस्येत्यर्थः । न्यग्रोधं अभि—उद्दिश्य गच्छता त्वया स्थलमुपारुह्य—निर्वणं देशं प्राप्य ततः पश्चात् कस्यचित् पर्वतस्य अविदूरतः पञ्चवटीत्येवान्वर्थनामतया ख्यातः नित्यपुष्पितकाननोद्देशो भवतीति शेषः ॥ २२ ॥

अगस्त्येनैवमुक्तस्तु रामः सौमित्रिणा सह ।
सत्कृत्यामन्त्रयामास तमृषिं सत्यवादिनम् ॥ २३ ॥

सत्कृत्य—प्रदक्षिणनमस्कारादिलक्षणं सत्कारं कृत्वा ॥ २३ ॥

---

* सदारश्चेति पाठे—सदारोऽपि परिरक्षणे शक्तः इत्यर्थः । † अत्र न्यग्रोधमिति पञ्चवटी वा विवक्षिता । 'न्यग्रोधो बहुपाद्वटः' इत्यमरः । पञ्चवटीमुद्दिश्य गच्छता एतन्मधूकवनस्योत्तरेण गन्तव्यमित्यर्थः । ‡ स्थलं—समभूमिं—रा.

[1] सदारश्च—ङ. ज.

तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवन्दनौ ।
[1] तदाश्रमात् पञ्चवटीं जग्मतुः सह सीतया ॥ २४ ॥

गृहीतचापौ तु नराधिपात्मजौ
*[2] विषक्ततूणी समरेष्वकातरौ ।
यथोपदिष्टेन पथा महर्षिणा
प्रजग्मतुः पञ्चवटीं समाहितौ ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे त्रयोदशः सर्गः

---

विषक्ते तूणी ययोः तौ विषक्ततूणी । अत्र पूर्वपदस्य पुंवद्भावः, उत्तरपदस्य 'गोस्त्रियोः' इति ह्रस्वे द्विवचने सति, 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घः ॥ २५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे त्रयोदशः सर्गः

---

## चतुर्दशः सर्गः

[जटायुस्सङ्गमः]

अथ पञ्चवटीं गच्छन् अन्तरा रघुनन्दनः ।
आससाद महाकायं गृध्रं भीमपराक्रमम् ॥ १ ॥

अथ पञ्चवटीं प्रयातस्य मध्येमार्गं जटायुस्सङ्गमः । अथ पञ्चवटीमित्यादि । अन्तरा—मध्ये ॥ १ ॥

---

* विषक्ततूणौ—अकारान्तोऽपि तूणशब्दः—गो.

[1] तमाश्रमं—ङ. ज.  [2] विषक्ततूणौ—ङ.

तं दृष्ट्वा तौ महाभागौ [1]वटस्थं रामलक्ष्मणौ ।
*मेनाते राक्षसं पक्षिं ब्रुवाणौ को भवानिति ॥ २ ॥

तं पक्षिं–पक्षिणमिति यावत् । राक्षसं मेनाते–विज्ञातवन्तौ । अथ तं पक्षिं राक्षसं ब्रुवाणौ तौ, को भवान्? इति पप्रच्छतुरिति शेषः ॥ २ ॥

स तौ मधुरया वाचा [2]सौम्यया प्रीणयन्निव ।
उवाच, वत्स! मां विद्धि वयस्यं पितुरात्मनः ॥ ३ ॥

आत्मनः पितुरिति–रामस्य तव पितुरित्यर्थः ॥ ३ ॥

स तं पितृसखं [3]बुद्ध्वा पूजयामास राघवः ।
स तस्य कुलमव्यग्रं †अथ पप्रच्छ नाम च ॥ ४ ॥

अथ तस्येति–पक्षिण इत्यर्थः ॥ ४ ॥

रामस्य वचनं श्रुत्वा ‡[4]सर्वभूतसमुद्भवम् ।
आचचक्षे द्विजस्तस्मै [5]कुलमात्मानमेव च ॥ ५ ॥

रामस्य वचनं श्रुत्वेति–वंशनामप्रश्नविषयकं वचनमित्यर्थः । आत्मानं–आत्मनाम चेत्यर्थः । सर्वभूतसमुद्भवं आचचक्षे इति प्रसङ्गादिति शेषः । आत्मानं–आत्मना वेत्यर्थः ॥ ५ ॥

---

* को भवानिति ब्रुवाणौ–पृच्छन्तौ तौ तं पक्षिं राक्षसं मेनाते–इति वाऽन्वयः । प्रश्नभावनयोः समकालत्वात्, राक्षसत्वसंशयस्य पाश्चात्यत्वाद्वा एवमुक्तिः ।
† अपितृसखत्वज्ञानात् अव्यग्रं–अनाकुलं यथा तथा पप्रच्छ । ‡ सर्वभूतसमुद्भवं–सृष्टिप्रकारमिति यावत् ।

[1] वनस्थं–ङ. ज. [2] स्निग्धया–ङ. [3] मत्वा–ङ. ज. [4–5] पादयोर्विपरिणामः–ङ. झ.

पूर्वकाले, महाबाहो! ये प्रजापतयोऽभवन् ।
तान्मे निगदतः सर्वान् आदितः शृणु, राघव! ॥ ६ ॥

पूर्वकाल इति । भगवतो विराजो ब्रह्मणः अहरादिसर्गकाले इत्यर्थः । तानिति—प्रजापतीनित्यर्थः ॥ ६ ॥

*कर्दमः प्रथमस्तेषां [1] विक्रीतस्तदनन्तरः ।
शेषश्च [2] संश्रयश्चैव बहुपुत्रश्च वीर्यवान् ॥ ७ ॥
स्थाणुर्मरीचिरत्रिश्च क्रतुश्चैव महाबलः ।
पुलस्त्यश्चाङ्गिरश्चैवं प्रचेताः पुलहस्तथा ॥ ८ ॥
दक्षो विवस्वानपरोऽरिष्टनेमिश्च, राघव ।
काश्यपश्च महातेजाः तेषामासीच्च पश्चिमः ॥ ९ ॥

विराजः कारणप्रजापतेः यज्ञाख्यमूलविद्यायाः एकैकाक्षर-प्राधान्यजाः सप्तदश प्रजापतयः कर्दमाद्याः ॥ ७-९ ॥

प्रजापतेस्तु दक्षस्य बभूवुरिति [3] विश्रुतम् ।
षष्टिर्दुहितरो राम! यशस्विन्यः, महायशः! ॥ १० ॥

षष्टिः दुहितरः बभूवुरित्यन्वयः । महायशः इति रामसंबुद्धिः ॥

[4] काश्यपः प्रतिजग्राह तासामष्टौ † सुमध्यमाः [5] ।
अदितिं च दितिं चैव [6] दनुमप्यथ कालिकाम् ॥ ११ ॥

---

* कर्दमाद्याः सप्तदश प्रजापतयः—ति. सप्तदशः पश्चिमः—पश्चाज्जातः कश्यप आसीत्—रा. अरिष्टनेमिरिति कश्यपविशेषणम्—गो. † अष्टावित्युपलक्षणम्, 'कश्यपाय त्रयोदश' इत्यन्यत्रोक्तेः, वक्ष्यमाणसन्तानोपयोगिन्योऽष्टाविति वा—ति. यद्यपि 'कश्यपाय त्रयोदश' इति भागवतेनेदं विलुप्यते, तथापि वक्ष्यमाणवंशोपयोगिनीत्वेन अष्टावेवात्र विवक्षिता इति न तद्विरोधः—रा.

[1] विश्रुत—विक्रुत—ङ. ज. [2] संश्रित—ङ. [3] विश्रुतः, नः श्रुतः—ङ. [4] कश्यपः—ज. [5] एतदनन्तरं—'अङ्गिरास्त्वपरा राम कन्याः प्रत्यग्रहीत्तदा' इत्यधिकम्—ग. [6] दनूमपि च—ङ.

ताम्रां क्रोधवशां चैव मनुं चाप्यनलामपि ।

दक्षकन्यानां काश्यपपत्नीनां अष्टानां नामानि अदितिमित्यादि ॥

तास्तु कन्याः ततः प्रीतः [1] काश्यपः पुनरब्रवीत् ॥ १२ ॥
पुत्रान् त्रैलोक्यभर्तॄन् वै जनयिष्यथ मत्समान् ।
*अदितिस्तन्मनाः, राम ! दितिश्च, [2] मनुजर्षभ ! ॥
कालिका च, महाबाहो ! शेषास्त्वमनसोऽभवन् !

तन्मनौ इति । तत्सदृशोर्ध्वस्रोतःपुत्रोत्पादनाभिलाषवतीत्यर्थः ॥

†अदित्यां जज्ञिरे देवाः त्रयस्त्रिंशदरिन्दम ! ॥ १४ ॥
आदित्या वसवो रुद्रा ह्यश्विनौ च, परन्तप ।

अश्विनौ चेति । आहत्य त्रयस्त्रिंशत् ॥ १४ ॥

दितिस्त्वजनयत् पुत्रान् दैत्यांस्तात ! यशस्विनः ॥
तेषामियं वसुमती पुराऽऽसीत् सवनार्णवा ।

तेषामिति । दितिपुत्राणामित्यर्थः । वनैः अर्णवैश्च सहिता सवनार्णवा ॥ १५ ॥

दनुस्त्वजनयत् पुत्रं अश्वग्रीवमरिन्दम ! ॥ १६ ॥

---

*तन्मनाः – तद्वचनदत्तावधाना–**गो.** तन्मनाः – कश्यपोक्तिविषयकप्रीतिमती अभवत् । शेषास्तु अमनसः – तदुक्तिविषयकप्रीत्यभाववत्यः अभवन् । एतेन तासां पुत्रेषु न प्रीतिरिति ध्वनितम्, अत एवासां कन्यैव वंशो वक्ष्यते–**रा.** †भर्तृवचनादरानादरफले दर्शयति—अदित्यामित्यादिना–**गो.**

[1] कश्यपः–**ङ. ज.** [2] मनुरेव च–**ङ.** दनुरेव च–**ज.**

नरकं [1] कालकं चैव [2] कालिकाऽपि व्यजायत ।
क्रौञ्चीं [3] भासीं तथा श्येनीं धृतराष्ट्रीं तथा शुकीम् ॥ १७ ॥
[4] ताम्राऽपि सुषुवे कन्याः पञ्चैता लोकविश्रुताः ।

ताम्रापुत्रीणां क्रौञ्च्यादीनां सन्तानोपदेशः—क्रौञ्चीमित्यादि ॥

उलूकान् जनयत् क्रौञ्ची भासी भासान् व्यजायत ॥ १८ ॥
श्येनी श्येनांश्च गृध्रांश्च व्यजायत सुतेजसः ।
धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ॥ १९ ॥
चक्रवाकांश्च, *भद्रं ते, विजज्ञे सापि भामिनी ।
शुकी नतां विजज्ञे तु नताया विनता सुता ॥ २० ॥

चक्रवाकांश्च भद्रं ते इति । संबोधनायाश्च मध्ये 'भद्रं ते' इति प्रयोगः कवेः शैली सर्वत्र । हे राम! ते भद्रमस्तु, शृणु इति शेषः । शुकी—पञ्चमी ताम्रापुत्री नताख्यां विजज्ञे । अन्तर्भावितणिः । जनयति स्म ॥ २० ॥

[5] दश क्रोधवशा, राम! विजज्ञे ह्यात्मसंभवाः ।
मृगीं च मृगमन्दां च हरिं भद्रमदामपि ॥ २१ ॥
[6] मातङ्गीमपि शार्दूलीं श्वेतां च सुरभिं तथा ।
सर्वलक्षणसंपन्नां सुरसां कद्रुकामपि ॥ २२ ॥

क्रोधवशा तु काश्यपषष्ठपत्नी । तस्याः दशापत्यान्याह—मृगीं चेत्यादि ॥ २२ ॥

---

* अप्रसक्तवृत्तान्तानादरप्रतिषेधाय मध्ये 'भद्रं ते' इत्युक्तिः—गो.

[1] कालिकं—ङ. [2] कालका—ङ. ज. [3] हंसीं—ङ. [4] नाम्ना तु—ङ.
[5] ततः क्रोशवशा—ङ. [6] मातङ्गा—ङ.

अपत्यं तु मृगाः सर्वे मृग्याः, नरवरोत्तम !
ऋक्षाश्च मृगमन्दायाः सृमराः चमरास्तथा ॥ २३ ॥
हर्याश्च हरयोऽपत्यं वानराश्च[1] तरस्विनः ।

सृमराः–(செவரிமான்) । चमराः–(சாமரமான்) हरयः–सिंहाः ॥ २३ ॥

ततस्त्विरावतीं नाम जज्ञे भद्रमदा सुताम् ॥ २४ ॥
तस्यास्त्वैरावतः पुत्रः लोकनाथो महागजः ।
मातङ्गास्त्वथ मातङ्ग्याः अपत्यं मनुजर्षभ ! ॥ २५ ॥
गोलाङ्गूलांश्च शार्दूली व्याघ्रांश्चाजनयत् सुतान् ।
दिशागजांश्च, काकुत्स्थ ! श्वेताप्यजनयत् सुतान् ॥

गोलाङ्गूलः–(முசுறு) ॥ २६ ॥

ततो दुहितरौ, राम ! सुरभिः द्वे व्यजायन ।
रोहिणीं नाम, भद्रं ते, गन्धर्वीं च यशस्विनीम् ॥ २७ ॥
रोहिण्यजनयत्[2] गा वै गन्धर्वी वाजिनः सुतान् ।
सुरसाजनयन्नागान्*, राम ! कद्रूस्तु पन्नगान् ॥ २८ ॥

रोहिणी गाः अजनयत् । नागाः–निर्विषोरगविशेषाः । पन्नगाः–सर्पाः वासुक्यादयः ॥ २८ ॥

मनुर्मनुष्यान् जनयत्,[3] राम ! पुत्रान् यशस्विनः ।
ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्च, मनुजर्षभ ! ॥ २९ ॥

---

* नागाः–बहुफणाः सर्पाः, पन्नगाः–केवलसर्पाः–गो. ती.

[1] तपस्विनः–ज. [2] गावः–ङ. ज. [3] काश्यपस्य महात्मनः–ङ.

[1]मुखतो ब्राह्मणा जाताः *[2]उरसः क्षत्रियास्तथा ।
[3]ऊरुभ्यां जज्ञिरे वैश्याः पद्भ्यां शूद्रा [4]इति श्रुतिः ॥ ३० ॥
सर्वान् †[5]पुण्यफलान् वृक्षान् अनलाऽपि व्यजायत[6] ।

मनुष्यान् जनयदिति । अजनयदिति यावत् । वृक्षान् अनलाऽपि व्यजायतेत्यन्तेन दक्षसुतानां अष्टानां काश्यपपत्नीनां सन्तानानि [illegible]कानि ॥ ३० ॥

विनता च शुकीपौत्री कद्रूश्च सुरसा स्वसा ।
‡[7]कद्रूर्नागं सहस्रास्यं विजज्ञे धरणीधरम् ॥ ३१ ॥
द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च ।
तस्माज्जातोऽहमरुणात् संपातिस्तु ममाग्रजः ॥ ३२ ॥
जटायुरिति मां विद्धि श्येनीपुत्रं, अरिन्दम !

अथ स्ववंशप्रदर्शनायाह—विनता चेत्यादि । शुकीपौत्रीति । शुकी नतापुत्री, तस्याश्च विनता पुत्रीत्युक्तत्वात् । कद्रूश्च सुरसा-स्वसेति, उभे अपि ताम्रायाः इति शेषः । कद्रूः नागमिति । पन्नग-

---

* उरसः—बाहुमध्यात् । कचित्तु ‘ बाहुभ्यां ’ इति पाठः—ति. † पुण्यफलान्—[illegible]फलान् । ‘पिण्डफलान्’ इति पाठे पिण्डाकारफलानित्यर्थः—गो. ‡ [illegible] कद्र्वा उपादानं स्वप्रतिपक्षकुलत्वेनेति केचित् । वस्तुतस्तु धरणीधरशेष-[illegible] स्वकुलतुल्यत्वं वक्तुं ‘कद्रूर्नागं सहस्रास्यं विजज्ञे धरणीधरम्’ इत्युक्तम् । [illegible]पुत्रमिति । इयं च श्येनी पूर्वोक्ताया अन्या । यद्वा काश्यपसुता श्येनीमाता, [illegible] पञ्चमोऽरुणः, पिता काश्यपप्रजापतिः कूटस्थ इति स्वीयवंशप्रभावो निवेदितः । [illegible]योः तिर्यक्स्वभावात् न मातृपुत्रयोः एकवंश्यत्वादिदोषः । अयं च सृष्टिक्रमः [illegible]मन्वन्तरप्रकारः, अतो न पुराणान्तरविरोधः—गो.

[1] अयं श्लोकः कुण्डलितः—ङ. [2] शिरसः—ङ. [3] बाहुभ्यां—ङ. [4] इति स्मृतिः—ङ. [5] पिण्डफलान्—ङ. [6] एतदनन्तरं—‘ जज्ञे, राम ! महाबाहो ! [illegible] सर्वान् महीरुहान्’—इत्यधिकं—ङ. [7] कद्रूर्नागसहस्रं च—ङ.

मिति यावत्। कद्रूस्तु पन्नगानिति विशिष्योक्तत्वात्। श्येनीपुत्रं, श्येनी तु ताम्राया: काश्यपपञ्चमपत्न्या: पुत्री। ननु श्येनी शुक्यौ तु ताम्रापुत्र्यौ भगिन्यौ, शुकीपौत्र्यास्तु सुत: अरुण:, तस्य कथं श्येनी भार्या? उच्यते—श्येनीसन्तानपरम्परापतिता काचन श्येनी भविष्यतीत्यदोषः। विधिनिषेधयोः मनुष्याधिकारत्वाच्च अदोषः ॥ ३२ ॥

सोऽहं [1] वाससहायस्ते भविष्यामि यदीच्छसि ॥ ३३ ॥
इदं दुर्गं हि कान्तारं मृगराक्षससेवितम्।
सीतां च, तात! रक्षिष्ये * त्वयि याते सलक्ष्मणे ॥ ३४ ॥

वाससहाय इति। वासस्थले सीतायाः रक्षणे सहायभूतः इति यावत्। यदीच्छसीति। उक्तार्थमिति शेषः। सीतारक्षणे स्वस्याप्युपकारमाह—इदं दुर्गमित्यादि। त्वयि यात इति। श्राद्धाय मृगयादिप्रयोजनाय आश्रमादिति शेषः ॥ ३४ ॥

जटायुषं तं प्रतिपूज्य राघवः
मुदा परिष्वज्य च सन्नतोऽभवत्।
पितुर्हि शुश्राव सखित्वमात्मवान्
जटायुषा संकथितं पुनः पुनः ॥ ३५ ॥
† स तत्र [2] सीतां परिदाय मैथिलीं
सहैव तेनातिबलेन पक्षिणा।

---

* सलक्ष्मणे त्वयि याते—कन्दमूलाद्यर्थं क्वचिद्गते सति सीतां रक्षिष्ये इत्यर्थः। अनेन जटायुषः त्रिकालज्ञत्वं सूचितम्—रा. † सः—राघवः मैथिलीं सीतां परिदाय—जटायुषः परिपाल्यत्वेन स्वीकृत्य—रा. परिधाय—परिवार्य—ती. तत्र परिदाय—तदानीमेव न्यासीकृत्येति भावः। पितृसखत्वात् स्नुषायाः श्वशुर इव तस्मिन् न्यासीकृत्येति यावत्।

[1] राम—ङ. [2] रामः परिदाय मैथिलीं, सीतां परिधाय मैथिलीं, सीतासहितो रघूत्तमः—ङ.

जगाम तां पञ्चवटीं सलक्ष्मणः
रिपून् दिधक्षन् [1]शलभानिवानलः ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे चतुर्दशः सर्गः

---

सीतां परिदास्यति । रक्षणार्थमिति शेषः । ताल(३६)मानः सर्गः ॥ ३६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे चतुर्दशः सर्गः

---

## पञ्चदशः सर्गः

### [पञ्चवटीनिवासः]

ततः पञ्चवटीं गत्वा नानाव्यालमृगायुताम् ।
उवाच भ्रातरं रामः सौमित्रिं *दीप्ततेजसम् ॥ १ ॥

अथ पञ्चवट्यां आश्रमनिर्माणपूर्वं वासः । ततः पञ्चवटीमित्यादि । "व्यालः श्वापदसर्पयोः" । मृगाः—हरिणादयः ॥ १ ॥

आगताः स्म यथोद्दिष्टं [2]यं देशं मुनिरब्रवीत् ।
अयं पञ्चवटीदेशः सौम्यः पुष्पित[3]पादपः ॥ २ ॥

यं देशममुं मुनिरब्रवीत् यथोद्दिष्टं तं देशमिति योजना ॥ २ ॥

सर्वतः चार्यतां दृष्टिः कानने, निपुणो ह्यसि ।

दृष्टिः चार्यतामिति—प्रेक्ष्यतामिति यावत् । निपुणः इति । आश्रमोचितस्थलपरिज्ञान इति शेषः ॥ २ १/२ ॥

---

* दीप्ततेजसं सौमित्रिं प्रति 'रामं दशरथं विद्धि' इति सुमित्रानियोगेन रामकैङ्कर्योद्युक्तम्, कैङ्कर्योचितदेशलाभेन सन्तुष्टमित्यर्थः—गो.

[1] सवनानि पालयन्—ङ., च. [2] अमुं देशं महर्षिणा—ङ. [3] काननः—ङ

आश्रमः कतरस्मिन् नः देशे भवति संमतः ॥ ३ ॥
रमते यत्र वैदेही त्वमहं चैव, लक्ष्मण !
तादृशो दृश्यतां देशः संनिकृष्टजलाशयः ॥ ४ ॥
*वनरामण्यकं यत्र स्थलरामण्यकं तथा ।
संनिकृष्टं च यत्र स्यात् समित्पुष्प[1]कुशोदकम् ॥ ५ ॥

वनस्य रामण्यकं रमणीयता तथा ॥ ५ ॥

एवमुक्तस्तु रामेण लक्ष्मणः संयताञ्जलिः ।
†सीतासमक्षं काकुत्स्थं इदं वचनमब्रवीत् ॥ ६ ॥

संयताञ्जलिरिति–बद्धाञ्जलिपुटः इति यावत् ॥ ६ ॥

परवानस्मि, काकुत्स्थ ! ‡त्वयि वर्षशतं स्थिते ।
स्वयं तु रुचिरे देशे क्रियतामिति मां वद ॥ ७ ॥

त्वयि वर्षशतं स्थित इति । चिरकालं भूष्णौ सतीत्यर्थः ॥ ७ ॥

सुप्रीतः तेन वाक्येन लक्ष्मणस्य [2]महात्मनः ।
[3]विमृशन् रोचयामास देशं सर्वगुणान्वितम् ॥ ८ ॥

---

* वनरामण्यकं कुसुमाभिलाषिण्याः सीताया रतिहेतुः । स्थलरामण्यकं सुखशयनादिकाङ्क्षिणो रामस्य । सन्निकृष्टसमिदादिमत्त्वं शुश्रूषमाणस्य सौमित्रेः–गो. † 'न च सीता त्वया हीना न चाहमपि, राघव! मुहूर्तमपि जीवावः जलान्मत्स्याविवोद्धृतौ ।' इति आत्मनः सीतावत् पूर्णशेषत्वानुसन्धानसूचनायेदम् । ‡ त्वयि वर्षशतं स्थित इति शतशब्द आनन्त्यवचनः, सार्वकालिकं मम पारतन्त्र्यमिति भावः । एवं पारतन्त्र्यस्यैव मत्स्वरूपत्वेन तदनुकूलतया त्वया आज्ञापनं कर्तव्यमित्याह—स्वयमिति–गो. त्वयि स्थिते सत्यहं परवानस्मि । अतः स्वयमेव रुचिरे देशे 'क्रियतां पर्णशाला' इति शेषः । इति वर्षशतमनेकखण्डविस्तारकं मां वद–रा.

[1] जलोदकं–ङ. [2] महाद्युतिः–ङ. [3] सदृशं–ङ.

इदं वचनं चिरकालं स्वस्य शुश्रूषासिद्धिप्रार्थनहेतुत्वेन विमृशन्—पर्यालोचयन् ॥ ८ ॥

**स तं रुचिरमाक्रम्य* देशमाश्रमकर्मणि ।**
**[1]हस्ते गृहीत्वा हस्तेन रामः सौमित्रिमब्रवीत् ॥ ९ ॥**

हस्तेन—स्वहस्तेन, हस्ते—लक्ष्मणस्य हस्तप्रदेशे इत्यर्थः । अयं भावः स्नेहस्यान्तरङ्गस्य स्वामिभावस्य च प्रदर्शकः ॥ ९ ॥

**अयं देशः समः श्रीमान् पुष्पितैः तरुभिः वृतः ।**
**इहाश्रमपदं, [2]सौम्य! यथावत् कर्तुमर्हसि ॥ १० ॥**
**†इयमादित्यसङ्काशैः पद्मैः सुरभिगन्धिभिः ।**
**अदूरे दृश्यते [3]रम्या पद्मिनी पद्म[4]शोभिता ॥ ११ ॥**

आदित्यसङ्काशैः—तद्वत् ज्वलनैः । पद्मशोभिता पद्मया—श्रिया शोभिता—विराजमाना ॥ ११ ॥

**यथाख्यातमगस्त्येन मुनिना भावितात्मना ।**
**इयं गोदावरी रम्या पुष्पितैः तरुभिर्वृता ॥ १२ ॥**

---

* आक्रम्य—स्वीयत्वेनाभिमन्य—**गो.** परिक्रम्येति वा । † आदित्यसंकाशैः—सूर्यसदृशैः, रक्तैरित्यर्थः । पद्मशोभिता—नीलकमलादिभिः शोभिता—**रा.** आदित्यसंकाशैः—आदित्यविकसितैः, तद्वदुज्वलैर्वा, ‘ तुलसीकाननं यत्र यत्र पद्मवनानि च । वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरिः ’ इत्युक्तरीत्या नित्यसन्निहितहरिभिरिति वा, पद्मया शोभिता—पद्मशोभिता, ‘ ङ्यापोः संज्ञाछन्दसोः ’ इति ह्रस्वः, हरिसान्निध्येन तन्नित्यानपायिन्या श्रिया च युक्तेत्यर्थः—**गो.** पद्मैः—रक्तपद्मैः, पद्मसेविता—श्वेतपद्मयुक्ता—**ती.** पद्मशोभिता पद्मिनी आदित्यसंकाशैः सुरभिगन्धिभिः पद्मैः रम्या अदूरे दृश्यते इति वा । आदौ पद्मशोभितेति सामान्यतो गृहीता पद्मिनी—विशिष्यानिरूपणेन रूपसौगन्ध्यादिभिः रम्या दृश्यत इति—वाच: प्रवृत्तिः स्यात् ।

[1] हस्तौ—**ङ.** [2] रम्यं—**ङ.** पुण्या—**ज.** [4] सेविता—**ङ.**

हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता ।
*नातिदूरे न चासन्ने मृगयूथनिपीडिता ॥ १३ ॥

यथा आख्यातं तथा इयं गोदावरी दृश्यते इति अविपरिणामेनान्वयः । मृगयूथनिपीडितेति । निबिडेति यावत् । पानार्थमागतैरिति शेषः ॥ १३ ॥

मयूरनादिता रम्याः प्रांशवो बहुकन्दराः ।
दृश्यन्ते गिरयः, [1]सौम्य ! [2]फुल्लैः तरुभिरावृताः ॥ १४ ॥

प्रांशवः—उन्नताः । फुल्लैः. 'अनुपसर्गात् फुल्ल' इति निपातितः ॥

†सौवर्णैः राजतैः ताम्रैः देशे देशे च धातुभिः ।
गवाक्षिता इवाभान्ति गजाः परमभक्तिभिः ॥ १५ ॥

सौवर्णैरिति । सुवर्णाभैरिति यावत् । गवाक्षिता इति । (चिता इति ?) भक्तिभिः गवाक्षिता गजा इवेत्यन्वयः । भक्तयः—अलङ्कारविशेषाः ॥ १५ ॥

‡सालैः तालैः तमालैश्च खर्जूरपनसाम्रकैः ।
नीवारैः [3]तिमिशैश्चैव पुन्नागैश्चोपशोभिताः ॥ १६ ॥
चूतैरशोकैः तिलकैः चम्पकैः केतकैरपि ।
पुष्पगुल्मलतोपेतैः तैस्तैः तरुभिरावृताः ॥ १७ ॥

---

* अस्याः गोदावर्यां गिरिभिश्चान्वयः काकाक्षिन्यायात् । मृगेत्यादि गिरिविशेषणम्—गो. तीर्थदृष्ट्यापि नातिदूरेत्यादिपादत्रयमेकं वाक्यम् । † सुवर्णादिसदृशैः धातुभिः उपलक्षिताः गजाः गवाक्षिता इवाभान्ति । गजानां हि गवाक्षाकाराः भक्तीः कुर्वन्ति—गो. सौवर्णादिधातुभिरुपलक्षिताः गिरयः परमभक्तिभिः—नीलपीतादिवर्णरचनाभिः गवाक्षिताः—चित्रिताः, अलङ्कृता इति यावत्, गजा इवाभान्ति—ती. ‡ सालादिभिरुपलक्षिता गिरयो दृश्यन्त इत्यन्वयः ।

[1] सौम्याः—ङ. ज. [2] पुष्पितैस्तरुभिर्वृताः—ङ. [3] तिनिशैः—ङ. ज.

चन्दनैः स्पन्दनैः नीपैः [1] पर्णासैः लिकुचैरपि ।
धवाश्वकर्णखदिरैः शमीकिंशुकपाटलैः ॥ १८ ॥

खर्जूरः–(பேரசசை), नीवारः–(கடட்பை), पुन्नागः–(புன்னை), स्पन्दनः–तिमिशभेदः । नीपः–(கடம்பை), पर्णासः–पिणिज्जकः । लिकुचः–" लकुचो लिकुचो डहुः " । धवः–(நமை), अश्वकर्णः–सर्जः–(முள்முருக்கு) ॥ १८ ॥

इदं पुण्यं इदं [2] मेध्यं इदं बहुमृगद्विजम् ।
इह वस्त्यामि, सौमित्रे ! सार्धमेतेन पक्षिणा ॥ १९ ॥

एतेन पक्षिणेति–जटायुषेति यावत् ॥ १९ ॥

एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ।
* अचिरेणाश्रमं भ्रातुः चकार सुमहाबलः ॥ २० ॥
† पर्णशालां सुविपुलां तत्र [3] सङ्घातमृत्तिकाम् ।
सुस्तम्भां मस्करैः दीर्घैः कृतवंशां सुशोभनाम् ॥ २१ ॥
शमीशाखाभिरास्तीर्य दृढपाशावपाशिताम् ।
कुशकाशशरैः पर्णैः सुपरिच्छादितां तथा ॥ २२ ॥
समीकृत[4]तलां रम्यां चकार लघुविक्रमः [5] ।
निवासं राघवस्यार्थे [6] प्रेक्षणीयमनुत्तमम् ॥ २३ ॥

सङ्घातमृत्तिकाः– भित्त्यात्मना सङ्घाता मृत्तिका यस्यां सा तथा । मस्कराः–वेणवः । कृतवंशां कृतवंशपरिक्षेपवतीम् । शमीशाखाभि-

* आश्रमं–अङ्गणादि विस्तारवदाश्रमप्रदेशम्–गो. † तत्र–आश्रमप्रदेशे पर्णशालां–लक्षणां–पर्णशालारूपं निवासं चकारेत्यन्वयः–गो. आश्रमकरणप्रकारमाह– पर्णशालामित्यादिभिः । पर्णशालां, तत्र राघवस्यार्थे–राघवस्थित्यर्थं–निवासं च चकार–रा.

[1] पनसैः–ङ. ज. [2] रम्यं–ज. [3] संखात–ङ. [4] वर्णा–झ. [5] शमीशाखेत्यादिश्लोकत्रयं झ पुस्तके नास्ति. [6] चकार लघुविक्रमः–झ.

रास्तीर्येति । तिर्यग्वंशपरिक्षेपोपरीति शेषः । तदान्तरैः दृढपाशैरव-पाशिताम्—संजातपाशबन्धां कृत्वेत्यर्थः । काशः—(நாணல்), शरः—(கொற்கை) ॥ २३ ॥

स गत्वा लक्ष्मणः श्रीमान् नदीं गोदावरीं तदा ।
स्नात्वा पद्मानि चादाय *[1] सफलः पुनरागतः ॥ २४ ॥

स गत्वेति । एवं संपादनानन्तरमिति शेषः ॥ २४ ॥

ततः †[2] पुष्पबलिं कृत्वा शान्तिं च स यथाविधि ।
दर्शयामास रामाय तदाश्रमपदं कृतम् ॥ २५ ॥

यथाविधीति । स्वयमेव कृत्वेत्यनुकर्षः ॥ २५ ॥

स तं दृष्ट्वा कृतं सौम्यं आश्रमं सह सीतया ।
राघवः पर्णशालायां हर्षमाहारयत् [3] भृशम् ॥ २६ ॥
सुसंहृष्टः परिष्वज्य बाहुभ्यां लक्ष्मणं तदा ।
‡ अतिस्निग्धं च गाढं च वचनं चेदमब्रवीत् ॥ २७ ॥

आहारयत्—प्राप्तवान् ॥ २७ ॥

प्रीतोऽस्मि ते महत्कर्म त्वया कृतमिदं, प्रभो! ।
प्रदेयो यन्निमित्तं ते परिष्वङ्गो मया कृतः ॥ २८ ॥

प्रभो—समर्थ ! यन्निमित्तं—यदाश्रमनिर्माणनिमित्तं प्रदेयः पारितोषिकोऽस्ति, तन्निमित्तं परिष्वङ्ग एवाद्य मया कृतः । अन्यस्य कस्यचित् इह दातव्यवस्तुनोऽभावात् ॥ २८ ॥

---

* पूजार्थं आहारार्थं वा आनीतैः फलैः सहितः । † पुष्पबलिं—वास्तुपूजां—गो.
‡ परिष्वङ्गक्रियाविशेषणमिदं द्वयम् ।

[1] सजलः—ङ. [2] पुष्पाञ्जलिं—ङ. [3] परम्—ङ. ज.

**भावज्ञेन कृतज्ञेन धर्मज्ञेन च, लक्ष्मण !**
**त्वया *[1] पुत्रेण धर्मात्मा † न संवृत्तः पिता मम ॥ २९ ॥**

न संवृत्तः इति । न संस्कृत इति यावत् ॥ २९ ॥

**एवं लक्ष्मणमुक्त्वा तु राघवो लक्ष्मिवर्धनः ।**
**तस्मिन् देशे बहुफले न्यवसत् सुसुखं वशी ॥ ३० ॥**
**कंचित् कालं स धर्मात्मा सीतया लक्ष्मणेन च ।**
**अन्वास्यमानो न्यवसत् स्वर्गलोके यथाऽमरः ॥ ३१ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे पञ्चदशः सर्गः

---

लय(३१)मानः सर्गः ॥ ३१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे पञ्चदशः सर्गः

---

## षोडशः सर्गः

[ हेमन्तवर्णनम् ]

**[2] वसतः तस्य तु सुखं राघवस्य महात्मनः ।**
**शरद्व्यपाये हेमन्तः ऋतुरिष्टः ‡ प्रवर्तते ॥ १ ॥**

---

* नाथेन–पालकेन–**ती.** † न संवृत्तः–न मृतः, किन्तु जीवत्येव ; पितृवदेव त्वया त्वन्मुखेन पित्रा मम सर्वाभिलषितपूरणात् मम पिता न संवृत्तः–**गो.** पिता न संवृत्तः—परिपालनादिति भावः–**ति.** किञ्चित्कार्यार्थं स्मृतः । एतेन सकलं कार्यं त्वया साधितमिति सूचितम्–**रा.** ‡ इष्टः—कामिनीनां, कामिनाम्–**ती.** तपस्विनां तपस्साधनायेष्टः, रामस्य तु खरादिराक्षसविजयमूलशूर्पणखागमनहेतुतयेष्टः–**गो.** परन्तु 'प्रियो यस्ते' (४) इत्यनुपदं वक्ष्यमाणं अवधेयमत्र ।

[1] नाथेन–**ङ.** [2] अत्रादौ—स सीतया लक्ष्मणेन पक्षिराजा जटायुषा । न्यवसत् पञ्चवट्यां वै पूज्यमानो महर्षिभिः—इत्यधिकं–**झ.**

अथ भाविशूर्पणखादर्शनानर्थकालप्रदर्शनशेषतया हेमन्तर्तुवर्णनं कवेः। वसतस्तस्येत्यादि। इष्ट इति। तपस्साधनेष्टः, रामस्य चेष्ट इत्यर्थः ॥ १ ॥

स कदाचित् *प्रभातायां शर्वर्यां रघुनन्दनः।
प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २ ॥
प्रह्वः कलशहस्तस्तं सीतया सह वीर्यवान्।
पृष्ठतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥ ३ ॥

तं अनुव्रजन् इत्यन्वयः ॥ ३ ॥

अयं स कालः संप्राप्तः प्रियो यस्ते, प्रियंवद!
†अलङ्कृत इवाभाति येन संवत्सरः शुभः ॥ ४ ॥

येन—हेमन्तकालेनेत्यर्थः ॥ ४ ॥

नीहारपरुषो ‡लोकः पृथिवी सस्य[1]शालिनी।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥

नीहारपरुषः इति। नीहारेण परुषत्ववान् इत्यर्थः। सुभगः इति। इष्ट इत्यर्थः ॥ ५ ॥

§नवाग्रयणपूजाभिः अभ्यर्च्य पितृदेवताः।
कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६ ॥

---

* प्रभातायां विरामोन्मुखायां—गो. † येन हेमन्तेन सुपक्वसस्यादिसंपन्नेन शुभस्सन्नयं संवत्सरः अलङ्कृतो यद्यपि, तथाऽपि तव अतिसुकुमारस्य प्रिय इवाभाति किमिति योजना। यः हेमन्तकालः ते प्रियः, येन हेमन्तेन संवत्सरः शुभस्सन् अलंकृत इवाभाति अयं कालः संप्राप्त इति योजना—ती. ‡ लोकः-जनः नीहारेण—हिमेन परुषः—परुषत्वक्—गो. §आग्रयणं नाम कश्चित् हविर्यज्ञः नूतनधान्यभोजनस्यादावनुष्ठेयः—आग्रयणरूपपूजाभिः पितृदेवता अभ्यर्च्य कृताग्रयणकाः, न तु कृताग्रयणप्रतिनिधयः- गो. कृतानिपूर्वकालेषु संपादितानि आग्रयणानि यैस्ते—रा.

[1] मालिनी—ङ.

नवेत्यादि । काले—आग्रयणकर्मानुष्ठानकाले कृताग्रयणकाः—कृताग्रयणकर्माणः—'आग्रयणकाले नवानां सवनीयानां निर्वपेयुः' इति आश्वलायनोपदिष्टं नवान्नप्राशनाय कर्तव्यं कर्म, एवं नवान्नप्राशनार्थं यदाग्रयणं तज्जाः पूजाः तथा, ताभिः पितृदेवताः अभ्यर्च्य सन्तः—साधवः विगतकल्मषाः भवन्त्यद्य ॥ ६ ॥

*प्राज्यकामाः जनपदाः संपन्नतरगोरसाः ।
विचरन्ति महीपालाः [1]यात्रास्था विजिगीषवः ॥ ७ ॥

प्राज्यं—भूरि संपन्नः अन्नप्राप्तिकामः येषां ते तथा ॥ ७ ॥

सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ८ ॥
प्रकृत्या हिमकोशाढ्यः दूरसूर्यश्च सांप्रतम् ।
यथार्थनामा † सुव्यक्तं हिमवान् हिमवान् गिरिः ॥ ९ ॥

प्रकृत्या स्वभावेन । हिमकोशैः—घनीभूतहिमसमूहैः आढ्यः । दूरे—दूरदेशे सूर्यः यस्य स तथा ॥ ९ ॥

अत्यन्तसुखसञ्चाराः मध्याह्ने [2]स्पर्शतः सुखाः ।
दिवसाः सुभगादित्याः ‡ छायासलिलदुर्भगाः ॥ १० ॥

मध्याह्ने सुखसञ्चाराः मध्याह्ने स्पर्शतः सुखाः । छायाः सलिलानि च दुर्भगानि अनिष्टानि येषु ते तथा ॥ १० ॥

---

* प्राज्यकामाः—समृद्धभोगाः, समृद्धभोगसाधना वा । गोरसः—दधिक्षीरादि । † यथार्थनामा—भवेदिति शेषः, न हि चित्रकूटस्थस्य तद्दर्शनसंभवः । ‡ छायाः सलिलानि च दुर्भगानि—असेव्यानि—ति. रा. दुर्भगच्छायासलिला', आहिताग्न्यादित्वात् परनिपातः- गो.

[1] यात्रार्थे—ङ. ञ. झ. [2] पश्यतः—ङ.

मृदुसूर्याः[1] सनीहाराः पटुशीताः[2] समारुताः ।
*शून्यारण्याः हिमध्वस्ताः दिवसा भान्ति सांप्रतम् ॥

शून्यारण्याः—हिमवशबर्बरपर्णतः निःशोभाः इत्यर्थः । हिमध्वस्ताः—हिमनाशितपङ्कजादिमन्तः ॥ ११ ॥

निवृत्ताकाशशयनाः †पुष्यनीता हिमारुणाः ।
शीतवृद्धतरायामाः त्रियामा यान्ति सांप्रतम् ॥ १२ ॥

निवृत्तं आकाशे—अनावृतप्रदेशे शयनं यासु त्रियामासु ताः तथा । पुष्ययुक्तपौर्णमासीं नीताः—गताः, हिमारुणाः—हिमधूसराः, अरुणशब्दः सर्वतः इह कपोतकवर्णे प्रयुज्यते । शीतं वृद्धतरं यासु ताः तथा शीतवृद्धतराः आयामाः—दीर्घाश्च तथा ॥ १२ ॥

‡रविसंक्रान्तसौभाग्यः तुषारारुणमण्डलः ।
निःश्वासान्ध इवादर्शः चन्द्रमाः न प्रकाशते ॥ १३ ॥

रवौ संक्रान्तं सौभाग्यं—उपभोग्यत्वं यस्य स तथा । तुषारेण अरुणः—धूसरः मण्डलः यस्य स तथा । अत एव निःश्वासेन अन्धः—मलिनः आदर्शः—मुकुर इव न प्रकाशते ॥ १३ ॥

---

* आरण्याः—वनचराः, तैः शून्याः ; आवरणरहितत्वेन शीतपीडिताः न बहिः सञ्चरन्तीत्यर्थः । हिमध्वस्ताः हिमध्वस्तजनवन्तः, शैत्येन पिण्डीभूतशरीरजना इत्यर्थः—गो. † पुष्यनीताः—पुष्यनक्षत्रबोधितरात्रिकालपरिमाणाः—ति. रा. पुष्ययुक्ता पौर्णमासी पुष्यं—तत्प्रधाना इत्यर्थः । यद्वा पुष्यं—पुष्यमासः, तेन नीताः—पुष्यमाससन्निहिता इत्यर्थः—गो. ‡ इतरकाले यथा चन्द्रः सर्वसेव्यः, तथा हेमन्ते सूर्य एव सर्वसेव्यः तथा च जनैः असेव्यमान इति भावः ।

[1] सुनीहाराः—ङ. ज. [2] समाहिताः—ङ. ज.

**ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।**
**[*] सीतेव चातपश्यामा लक्ष्यते न तु शोभते ॥ १४ ॥**

ज्योत्स्नेति भिन्नं पदम् । आतपेन श्यामा—श्यामीभूतवर्णा तथा । यथा तथा लक्ष्यते केवलं सत्तामात्रेणेत्यर्थः ॥ १४ ॥

**[†] प्रकृत्या शीतलस्पर्शः हिमविद्धश्च सांप्रतम् ।**
**प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५ ॥**

प्रकृत्या शीतलस्पर्श इति । अनुष्णाशीतस्पर्शत्वात् शीतलस्पर्श इत्युपचर्यते । पश्चिमो वायुरिति पश्चिमयामवायुरित्यर्थः । काले—प्रातःकाले ॥ १५ ॥

**[1] बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।**
**शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६ ॥**

बाष्पच्छन्नानि—बाष्पः—ऊष्मा, यथा हिमकाले प्रातः कूपोदकेष्वनुभूयते शुभा ॥ १६ ॥

**खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।**
**शोभन्ते किञ्चि[2]दानम्राः शालयः कनकप्रभाः[3] ॥ १७ ॥**

---

* सीतेव लक्ष्यते, किन्तु सीतावन्न शोभते । व्यतिरेकालङ्कारः-**गो.**

† वायौ शीतस्पर्श एव स्वभावः उष्णस्पर्शस्त्वागन्तुक इति हृदयम्-**गो.** यद्वा—सांप्रतं—हेमन्ते प्रकृत्या—स्वत एव शीतलस्पर्शो वायुः काले—प्रातःकाले द्विगुणशीतलः प्रवातीत्यर्थः । शैत्यस्य ऋतुधर्मत्वात् तदा वायुः प्रकृत्यैव शीत इति कथने न हि विरोधः । अथ वा शीतलस्पर्शः—अनुष्णस्पर्शः । तेन मध्यस्थत्वं उच्यते । एवञ्च—स्वभावं प्रकृत्या मध्यस्पर्शः, सांप्रतं—हेमन्ते हिमविद्धः काले—प्रातः द्विगुणशीतल इत्यर्थः ॥

[1] शष्प—ङ. [2] दालम्बाः—ङ. **ञ.** [3] एतदनन्तरं—निमग्नाः कर्णिकारेषु पुष्पैः कनकपिङ्गलैः । गन्धान् केदारपद्मानां जिघ्रन्ति वनशालयः—इत्यधिकं—**झ.**

खर्जूरपुष्पाकृतिभिरिति । पीतवर्णैरित्यर्थः । कनकप्रभा इति । परिणतनालपत्रत्वात् ॥ १७ ॥

मयूखैरुपसर्पद्भिः * हिमनीहारसंवृतैः ।
दूर[1]मभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १८ ॥

हिमातिशयात्मको नीहारः वृक्षपर्वताद्यदर्शनसंपादनक्षमः ॥

† [2] अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
[3] संरक्तः किञ्चिदापाण्डुः आतपः शोभते क्षितौ ॥ १९ ॥

अवश्यायनिपातेन किञ्चित् प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिः निविष्टतरुणातपा ॥ २० ॥

अवश्यायः—हिमम् ॥ २० ॥

‡ स्पृशंस्तु विपुलं शीतं उदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१ ॥

प्रतिसंहरत इति । स्पर्शशैत्यवशादिति शेषः ॥ २१ ॥

एते हि § समुपासीनाः विहगा जलचारिणः ।
नावगाहन्ति सलिलं अप्रगल्भा इवाहवम् ॥ २२ ॥

---

* हिमनीहारैः—शीतलनीहारैः—गो. हिमैर्नीहारैश्च—रा. हिमबिन्दुभिः—ती.

† आग्राह्यवीर्यः—ईषद्ग्राह्योष्णः—ति. अग्राह्यवीर्यः—अग्राह्यौष्ण्यः ; सुखमुद्दिश्य स्पृशन्नपि—रा. ईषदर्थे वा नञ्, अनुदरा कन्येतिवत्—गो. ‡ विपुलं—भृशं शीतलं उदकं स्पृशन् वन्यो द्विरदः करं सुखं प्रतिसंहरते। तृषाशमनापेक्षयाऽपि करप्रतिसंहार एव वरमिति भावनया—'सुखं' इत्युक्तिः। § समुपासीनाः, जलसमीपदेशमिति शेषः—ति.

[1] मप्यु—ङ. ज. [2] आग्राह्य—ङ. ज. [3] संसक्तः—ङ. ज.

समुपासीना इति । जलमिति शेषः । अवगाहन्ति—अवगाहन्ते इति यावत् । आहवं—युद्धम् ॥ २२ ॥

* अवश्यायतमोनद्धाः नीहारतमसावृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पाः वनराजयः ॥ २३ ॥

अवश्यायतमोभ्यां नद्धाः तथा । रात्र्यामिति शेषः । नीहारतमसावृताः इति । प्रत्यूष इति शेषः ॥ २३ ॥

बाष्पसंछन्नसलिलाः † रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकैः तीरैः सरितो [1] भान्ति सांप्रतम् ॥ २४ ॥

बाष्पः व्याकृतः ॥ २४ ॥

तुषारपतनाच्चैव मृदुत्वात् भास्करस्य च ।
शैत्या[2]दगाग्रस्थमपि प्रायेण ‡ रसवज्जलम् ॥ २५ ॥

अगाग्रस्थं—पर्वतप्रस्थम् ॥ २५ ॥

जरा[3]जर्झरितैः पद्मैः शीर्णकेसर[4]कर्णिकैः ।
नालशेषैः हिमध्वस्तैः न भान्ति कमलाकराः ॥ २६ ॥

जरया कालकृतया, जर्झरितानि पर्णानि येषां ते तथा ॥ २६ ॥

---

* अवश्यायः हिमसलिलं, स एव तमः—नीहारः—अजलवर्षिमहाहिमम्—**गो.** अवश्यायतमोभ्यां नद्धा रात्रौ, नीहारतमसाऽऽवृताः प्रत्यूषे—**रा. ति.** † क्रमक्रमशः कतिपयपक्षिणां सलिलेऽवतीर्णत्वसंभवात् २२ तमश्लोकेन न विरोधः। सारसव्यतिरिक्त-जलचरा वा विवक्षितास्तत्र । ‡ रसवत्—विषवत्, 'रसो रागे विषे द्रव्ये शृङ्गारादौ पराक्रमे' इति बाणः—**गो.** रसवत्—स्वादुविशिष्टमित्यर्थः। प्रायेणेत्यनेन विषवृक्षादि-समभिव्याहृतस्य तदभाववत्त्वं ध्वनितम्—**रा.**

[1] यान्ति—ङ.   [2] दगार, दगाध—ङ.   [3] कर्करितैः, मर्मरितैः—ङ.
[4] पाण्डुभिः—ङ.

अस्मिंस्तु पुरुषव्याघ्रः काले दुःखसमन्वितः ।
तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ॥ २७ ॥

त्यक्त्वा राज्यं च * मानं च भोगांश्च विविधान् बहून् ।
तपस्वी नियताहारः शेते शीते महीतले ॥ २८ ॥

सोऽपि वेलामिमां नूनं अभिषेकार्थमुद्यतः ।
वृतः प्रकृतिभिः नित्यं प्रयाति सरयूं नदीम् ॥ २९ ॥

अत्यन्तसुखसंवृद्धः सुकुमारः [1] सुखोचितः ।
कथं न्वपररात्रेषु सरयूमवगाहते ॥ ३० ॥

पद्मपत्रेक्षणो वीरः श्यामो निरुदरो महान् ।
धर्मज्ञः सत्यवादी च † ह्रीनिषेधः जितेन्द्रियः ॥ ३१ ॥

प्रियाभिभाषी मधुरः दीर्घबाहुररिन्दमः ।
संत्यज्य विविधान् भोगान् आर्यं सर्वात्मना श्रितः ॥३२॥

निरुदर इति । अतुन्दिल इत्यर्थः । ह्रीनिषेधः—ह्रिया—लज्जया अन्यस्त्र्यादिविषये निषेधः—चक्षुरादीन्द्रियनिवर्तनं यस्य स तथा । तत्रैव हेतुः—जितेन्द्रिय इति । आर्यं—पूज्यम्, ज्येष्ठं त्वामित्यर्थः ॥ ३२ ॥

जितः स्वर्गः तव भ्रात्रा भरतेन महात्मना ।
‡ वनस्थमपि तापस्ये यस्त्वामनु[2]विधीयते ॥ ३३ ॥

जित इति पृथक् पदम् । उच्यमानविशेषणकेन भरतेन स्वर्गो निर्जित एव । कुतः इत्यतः—वनस्थमित्यादि । यो भरतः

---

* मानं—राजाऽहमित्यभिमानम् । † अनेन प्रकृतेरेव अधर्मवैमुख्यमुक्तम् ।

‡ अत्यन्तपरोक्षे वने, तत्रापि तापस्ये विद्यमानं त्वां समग्रभोगसाधने नगरे वर्तमान एव यतोऽनुकरोति, अतो जितः स्वर्गो भरतेनेति ।

[1] हिमार्दितः—ङ. [2] विधास्यते—ङ.

वनस्थमपि त्वां तापस्ये—तापसकृत्ये स्थित्वा अनुविधीयते अनुकरोति—सेवते इत्यर्थः ॥ ३३ ॥

*न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति ।
ख्यातो लोकप्रवादोऽयं भरतेनान्यथा कृतः ॥ ३४ ॥

पित्र्यं—पितृस्वभावम् । द्वे पदे येषां ते द्विपदाः—ऊर्ध्वस्रोतसः पित्र्यं नानुवर्तन्ते, अपि तु मातृकं—मातृस्वभावमेव अनुवर्तन्ते इति ख्यातो लोकप्रवादः भरतेन अन्यथा कृतः, न मातुः इत्यर्थः ॥

भर्ता दशरथो यस्याः साधुश्च भरतः सुतः ।
कथं नु साऽम्बा कैकेयी तादृशी क्रूर[1]दर्शिनी ॥ ३५ ॥

एवं भरतमुपश्लाघ्य कैकेयीं परिवदति—भर्तेत्यादि ॥ ३५ ॥

इत्येवं लक्ष्मणे वाक्ये †स्नेहात् ब्रुवति धार्मिके ।
परिवादं जनन्यास्तं असहन् राघवोऽब्रवीत् ॥ ३६ ॥

स्नेहादिति । भरतस्नेहादित्यर्थः ॥ असहन्निति । असहमान इति यावत् ॥ ३६ ॥

---

* यद्यपि पूर्वं 'सत्यश्चाद्य प्रवादोऽयं लौकिकी प्रतिभाति मा । पितॄन् समनुजायन्ते नरा मातरमङ्गनाः' (अयो. 35–27) इत्युक्तम्, अथापि तत्र 'जायन्ते' इति कथनात् जन्मना साकमागतधर्मविषयकं तत्; अत्र तु 'अनुवर्तन्ते' इति कथनात् लालनपोषणादीनां मात्रधीनत्वेन तस्याः प्रभावः पुत्रे स्यात्, एवं मातरि पक्षपातश्च स्यादित्येतद्विषयकमिदमिति न विरोधः । अधिकमन्यत्र । † स्नेहात्--रामे स्नेहात् । अत एव खलु रामानुकूलं भरतं प्रशंसति, रामप्रतिकूलां कैकेयीं निन्दति ।

[1] शीलिनी—ङ. च.

न तेऽम्बा * मध्यमा [1]तात! गर्हितव्या [2]कथंचन ।
तामेवेक्ष्वाकुनाथस्य † भरतस्य कथां कुरु ॥ ३७ ॥

मध्यमेति । व्याकृतचरः ॥ ३७ ॥

[3]निश्चिताऽपि हि मे बुद्धिः वनवासे दृढव्रता ।
भरतस्नेहसंतप्ता ‡ बालिशीक्रियते पुनः ॥ ३८ ॥

निश्चिता—निश्चितस्वभावा—कदापि कुत्रापि संशयरहिता । बालिशीक्रियते—च्व्यन्तः, अबालिशस्वभावाऽपि तत्स्वभावा संपाद्यते ; स्नेहेनेति शेषः ॥ ३८ ॥

संस्मराम्यस्य वाक्यानि प्रियाणि मधुराणि च ।
हृद्यान्यमृतकल्पानि मनःप्रह्लादनानि च ॥ ३९ ॥
कदा न्वहं समेष्यामि भरतेन महात्मना ।
शत्रुघ्नेन च वीरेण § त्वया च, रघुनन्दन! ॥ ४० ॥

तमेव स्नेहं प्रकाशयति—संस्मरामीत्यादि ॥ ३९-४० ॥

इत्येवं ‖ विलपंस्तत्र प्राप्य गोदावरीं नदीम् ।
चक्रेऽभिषेकं काकुत्स्थः सानुजः सह सीतया ॥ ४१ ॥

---

*मध्यमा—सर्वदशरथपत्न्यपेक्षया, कथञ्चन प्रासङ्गिककथायामपि मध्यमाम्बेति स्वाभिमानद्योतनाय—**गो.** शिष्टं अन्यत्र द्रष्टव्यम् । † इक्ष्वाकुनाथस्य—राजनि स्वर्गं गते, अस्मासु च वनं गतेषु पूर्वतरासत्कुलमर्यादास्थापकस्य—**गो.** ‡ दुर्बलीक्रियते-प्रतिज्ञातरणात् पूर्वमेव भरतदर्शनेऽतीवोत्कण्ठा जायते ममेति भावः । § इदानीं केवलं त्वया समेतोऽहं, त्वया तैश्च कदा समेष्यामीति भावः । ‖ विलपन्—विविधं कथयन्—**रा.**

[1] वत्स—**ङ.** [2] कदाचन—**ङ. ज.** [3] सुनिश्चिताऽपि—**ङ.**

तर्पयित्वाऽथ सलिलैः ते पितॄन् दैवतानि च ।
*स्तुवन्ति स्मोदितं सूर्यं देवताश्च [1] समाहिताः ॥ ४२ ॥

कृताभिषेकः स रराज रामः
सीताद्वितीयः सह लक्ष्मणेन ।
[2] कृताभिषेको गिरिराजपुत्र्या
† रुद्रः [3] सनन्दी भगवानिवेशः ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे षोडशः सर्गः

---

वेग(४३)मानः सर्गः ॥ ४३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे षोडशः सर्गः

---

## सप्तदशः सर्गः

[शूर्पणखाऽऽगमः]

‡ कृताभिषेको रामस्तु सीता सौमित्रिरेव च ।
तस्मात् गोदावरीतीरात् ततो जग्मुः स्वमाश्रमम् ॥ १ ॥

---

* स्तुवन्ति स्म -- उपतस्थिरे, 'मित्रस्य' इत्यादिमन्त्रैः, सीता तु अमन्त्रेण—**गो.**
† रुद्रः सनन्दीत्युपमया दुष्प्रधर्षणत्वमुच्यते । 'रुद्रः सविष्णुर्भगवानिवेशः' इति न कचिदपि कोशे दृश्यते। कश्चित्तु दृश्यत इत्याह। तदा अभूतोपमेति युक्तम्—**गो.** रुद्रोपमया संहाराविष्टचित्तत्वं दर्शयति—**ति.** ‡ एवं रामतपोविशेषद्योतनाय हेमन्तं प्रथमप्रवृत्तमुपवर्ण्य ततस्त्रिषु संवत्सरेष्वतीतेषु कदाचित् चैत्रमासे प्रसक्तं भाविसकलराक्षसवधनिदानत्वेन शूर्पणखावृत्तान्तमुपक्षिपति—**गो.** 'एवं संवसतस्तस्य मुनीनामाश्रमेषु वै । रमतश्चानुकूल्येन ययुः संवत्सरा दश' (अर. 11-28) इति कथितत्वात्, सीतापहरणकाले वनवासस्य एकवत्सरमात्रपरिशेषावगमाच्च 'ततः त्रिषु संवत्सरेष्वतीतेषु' इत्युक्तम् ।

[1] तथाऽनघाः—**ङ. ज.** [2] कृताभिषेकस्त्वगराज—**ङ. ज.** [3] सविष्णुः—**ज. झ.**

अथ शूर्पणखासमागमः । कृताभिषेक इत्यादि । ततः—अनन्तरम् ॥ १ ॥

आश्रमं तमुपागम्य राघवः सहलक्ष्मणः ।
कृत्वा पौर्वाह्णिकं [1]कर्म पर्णशालामुपागमत् ॥ २ ॥
उवास [2]सुखितः तत्र पूज्यमानो महर्षिभिः ।
[3]लक्ष्मणेन सह भ्रात्रा *चकार विविधाः कथाः ॥ ३ ॥
स रामः पर्णशालायां आसीनः सह सीतया ।
विरराज महाबाहुः चित्रया चन्द्रमा इव ॥ ४ ॥

चित्रया-चित्रानक्षत्रेण ॥ ४ ॥

[4]तथाऽऽसीनस्य रामस्य कथासंसक्तचेतसः ।
तं देशं राक्षसी [5]काचित् आजगाम यदृच्छया ॥ ५ ॥
सा तु शूर्पणखा नाम दशग्रीवस्य रक्षसः ।
†भगिनी राममासाद्य ददर्श त्रिदशोपमम् ॥ ६ ॥

शूर्पणखेति । 'नखमुखात् संज्ञायाम्' इति ङीब्निषेधः ॥ ६ ॥

[6]सिंहोरस्कं महाबाहुं पद्मपत्रनिभेक्षणम् ।
आजानुबाहुं दीप्तास्यं अतीव प्रियदर्शनम् ॥ ७ ॥

दीप्तास्यमिति । कान्तिमन्मुखमित्यर्थः ॥ ७ ॥

---

*चकार — उवाचेत्यर्थः-गो. †राममासाद्य ददर्श—रामं दृष्ट्वाऽऽससादेत्यर्थः-गो. अथ वा रामसमीपमागत्य ददर्शेत्यर्थः ; तेन रामसौन्दर्यानुभवसंभवः कथितो भवति ॥

[1] सर्व-ङ. [2] सहितः-ङ. [3] इदमर्धं कुत्रचित् 'विरराज' (४) इत्याद्यर्धानन्तरं दृश्यते-ङ. ज. [4] तदा-ङ. ज. [5] कामात्-ङ. [6] अयं श्लोकः-ज पुस्तके कुण्डलितः । एतदर्धद्वयस्थाने 'दीप्तास्यं च महाबाहुं पद्मपत्रायतेक्षणम्' इति च पाठः-ज.

गजविक्रान्तगमनं जटामण्डलधारिणम् ।
सुकुमारं महासत्त्वं पार्थिवव्यञ्जनान्वितम् ॥ ८ ॥
राममिन्दीवरश्यामं कन्दर्प[1]सदृशप्रभम् ।
बभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता ॥ ९ ॥

गजस्येव विक्रान्तेन—पादविक्षेपेण गमनं यस्य स तथा । व्यञ्जनं—लक्षणं, प्रीतिरूपसन्तोषकरस्वरूपमित्यर्थः ॥ ९ ॥

सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी ।
विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा ॥ १० ॥
*[2]प्रीतिरूपं विरूपा सा सुस्वरं भैरवस्वरा ।
तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी ॥ ११ ॥
न्यायवृत्तं सुदुर्वृत्ता प्रियमप्रियदर्शना ।
शरीरजसमाविष्टा राक्षसी [3]वाक्यमब्रवीत् ॥ १२ ॥

तरुणं वृद्धा, दारुणा घृणावन्तमिति शेषः । दक्षिणं—सुभाषितसमर्थम् । वामभाषिणी—कटुभाषणशीला । शरीरजः—कामः ॥

†जटी तापस[4]रूपेण सभार्यः शरचापधृत् ।
आगतस्त्वमिमं देशं कथं राक्षससेवितम् ॥ १३ ॥
किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि ।

तत्त्वं यथा तथेत्यर्थः ॥ १३ ॥

एवमुक्तस्तु राक्षस्या ‡शूर्पनख्या परन्तपः ॥ १४ ॥

---

* प्रीतिरूपं—प्रीयत इति प्रीतिः, प्रियरूपम्—गो. † मुनिवेषस्य शरचापाधारणानुरूपत्वमभिमतम् । ‡ यौगिकार्थविवक्षाभिप्रायेण एवमुक्तिः । अन्यथा हि णत्वेन भाव्यम् ।

[1] सदृशं प्रभुम्—ङ. [2] प्रियरूपं—ङ. ज. [3] राम—ङ. ज. [4] वेषेण—क. ख.

ऋजुबुद्धितया सर्वं आख्यातुमुपचक्रमे ।
[1] अनृतं न हि रामस्य कदाचिदपि संमतम् ॥ १५ ॥
विशेषेणाश्रमस्थस्य समीपे स्त्रीजनस्य च ।
आसीद्दशरथो नाम राजा त्रिदशविक्रमः ॥ १६ ॥
तस्याहमग्रजः पुत्रः रामो नाम जनैः श्रुतः ।
भ्राताऽयं लक्ष्मणो नाम यवीयान् मामनुव्रतः ॥ १७ ॥
इयं भार्या च वैदेही मम सीतेति विश्रुता ।
नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च यन्त्रितः ॥ १८ ॥
* धर्मार्थं धर्मकांक्षी च वनं वस्तुमिहागतः ।

यन्त्रितः—नियमितः ॥ १८ ॥

त्वां तु वेदितुमिच्छामि [2] कथ्यतां काऽसि † कस्य वा ॥
‡ [3] त्वं हि तावन्मनोज्ञाङ्गी राक्षसी प्रतिभासि मे ।
इह वा किं निमित्तं त्वं आगता ब्रूहि तत्त्वतः ॥ २० ॥

मनोज्ञाङ्गीति कामरूपवत्त्वादेव । रामदर्शनकाले तथात्वम् ॥

---

* धर्मकाङ्क्षी—पितृवाक्यनिर्वहणरूपधर्माभिलाषी, धर्मार्थं—तस्यैव धर्मस्य परिपालनाय—**ती.** पितृवाक्यपरिपालनरूपधर्मकाङ्क्षी, धर्मार्थं—तपोरूपधर्मसिद्ध्यर्थम्—**गो.** नरेन्द्रस्य पितुः, मातुश्च धर्मार्थं नियोगात्—आज्ञातः—धर्मकाङ्क्षी—**रा.** अथ वा—वनवासस्य धर्मार्थत्वं, तस्य स्वेच्छासंपादितत्वं च पदद्वयेन कथ्यते । † कस्य वा—कस्य वा सम्बन्धिनी-पुत्री ? भार्या वा ? इत्यर्थः। ‡ मनोज्ञाङ्गत्वस्य कामरूपत्वं विनाऽसंभवात् , कामरूपत्वं च राक्षसीत्वं विना नेति भावः—**ति.** मनोज्ञाङ्गी—राक्षसानां मनोहारिणी—**रा.** तावत्—कार्त्स्न्येन मनोज्ञाङ्गी न भवसि, मां प्रति राक्षसी प्रतिभासि। यद्वा 'राक्षससेविते' इति तद्वचनात् राक्षसीत्वमित्याशंक्य परिहरति—'मनोज्ञाङ्गी त्वं राक्षसीति न प्रतिभासि' इति । रामदर्शनकाले तथा रूपं कृतवती, कामरूपत्वात् । दुर्मुखीत्यादिकं वास्तवाभिप्रायेण मुनिनोक्तमिति ज्ञेयम्—**गो.** वस्तुतस्तु पूर्वापरपरामर्शे 'मनोज्ञाङ्गी, अत एव, राक्षसी न प्रतिभासि' इति नर्मोक्तिरिति युक्तम् ।

[1] अयं श्लोकः—**अ.** पुस्तके कुण्डलितः । [2] कस्य त्वं—**ज.** [3] न हि—**ङ. ज.**

साऽब्रवीत् वचनं श्रुत्वा राक्षसी मदनार्दिता ।
श्रूयतां, राम! वक्ष्यामि तत्त्वार्थं वचनं मम ॥ २१ ॥
अहं शूर्पणखा नाम राक्षसी *कामरूपिणी ।
अरण्यं विचरामीदं एका सर्वभयङ्करा ॥२२॥
†रावणो नाम मे भ्राता [1] बलीयान् राक्षसेश्वरः ।
[2] वीरो विश्रवसः पुत्रः यदि ते श्रोत्रमागतः ॥ २३ ॥

यदि ते श्रोत्रमागतः इति । प्रायेण तं श्रुतवान् भवेः इत्यर्थः ॥

प्रसिद्धनिद्रश्च सदा कुम्भकर्णो महाबलः ।
‡विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः ।
प्रख्यातवीर्यौ च रणे भ्रातरौ खरदूषणौ ॥ २४ ॥

सदा प्रसिद्धनिद्रः । भ्रातरौ खरदूषणाविति । त्रिशिरसः उपेक्षणं विभीषणवत् अराक्षसस्वभावत्वात् ॥ २४ ॥

तानहं समतिक्रान्ता, राम! त्वा पूर्वदर्शनात् ।
समुपेताऽस्मि §भावेन भर्तारं पुरुषोत्तमम् ॥ २५ ॥
अहं ‖प्रभावसंपन्ना स्वच्छन्दबलगामिनी ।
¶चिराय भव मे भर्ता सीतया किं करिष्यसि ॥ २६ ॥

प्रायेण तान् रावणादीन् भ्रातॄन् समतिक्रान्ता, त्वदभिसरणे तन्निमित्तभयरहितेत्यर्थः । अत्रैव वाक्ये तत्रापि हेतुः—तानहं समतिक्रान्ता—वीर्यादिना तेभ्योऽधिकेत्यर्थः । हे राम! त्वा—त्वां

* सर्वभयंकरेति वक्ष्यमाणरतिप्रतिबन्धकनिवारणक्षमता उक्ता—गो. † काऽसीति प्रश्नस्योत्तरमुक्त्वा कस्येत्यस्य प्रश्नस्योत्तरमाह—रावण इत्यादिना—गो. ‡ इदमर्धं क्वचित् त्यक्तमपि गोविन्दराजीयरामायणशिरोमणिसम्मतम् । § भावेन—हृदयेन, रत्याख्यभावेन वा । ‖ प्रभावसंपन्ना—प्रकृष्टेन भावेन—शृङ्गारेण संपन्ना—ति. ¶ चिराय—बहुकालपर्यन्तम् ।

[1] यदि ते श्रोत्रमागतः—ज. [2] सोऽयं—ङ. ज.

पूर्वदर्शनात्–प्रथमदर्शनक्षणमारभ्य । अपूर्वदर्शनात् इत्यपि पदम् । अपूर्वदर्शनात्–देवदानवमर्त्येषु इतः प्राक् अदृष्टदिव्यस्वरूपदर्शनाद्धेतोः । भर्तृभावेन समुपेताऽस्मि । स्वच्छन्दबलगामिनी–स्वच्छन्दतया–स्वेच्छयैव बलेन स्वबलेन भ्रातृबलेन च सर्वलोकगमनशीला । यदेवं अतः—चिरायेत्यादि ॥ २६ ॥

विकृता च विरूपा च न चेयं सदृशी तव ।
अहमेवानुरूपा ते * भार्या रूपेण पश्य माम् ॥ २७ ॥

विकृतेत्यादिना सीतायाः दूषणं, स्वस्याः देवयोनिभेदत्वेन अभिमतरूपग्रहणसामर्थ्यात् ॥ २७ ॥

† इमां विरूपामसतीं करालां निर्णतोदरीम् ।
अनेन ते सह भ्रात्रा भक्षयिष्यामि मानुषीम् ॥ २८ ॥
ततः पर्वतशृङ्गाणि वनानि विविधानि च ।
पश्यन् सह मया, कान्त ! दण्डकान् विचरिष्यसि ॥२९॥

निर्णतं–निरतिशयनिम्नं उदरं यस्याः सा तथा ॥ २९ ॥

इत्येवमुक्तः काकुत्स्थः प्रहस्य मदिरेक्षणाम् ।
इदं वचनमारेभे वक्तुं वाक्यविशारदः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे सप्तदशः सर्गः

---

नष्ट(३०)मानः सर्गः ॥ ३० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे सप्तदशः सर्गः

---

* भार्यारूपेण—स्वभार्यात्वेन–रा. रूपेण अहमेव ते अनुरूपा भार्या इति स्वरसोऽन्वयः। † कुरूपाणामपि मनुष्याणां मनः, स्वस्मिन्नेव सुरूपं, इतरेषु कुरूपम्, परेषु विद्यमानगुणानपि दोषत्वेन च मनुत इति लोकसाधारणमिदं, आसुरप्रकृतीनां तु कैमुतिकसिद्धम् । एवञ्च 'निर्णतोदरीं' इत्यपि 'निर्णतोदरी' (18–13) इति शूर्पणखाविषयकपदसमानार्थकमेव भवितुमर्हति ।

## अष्टादशः सर्गः

[शूर्पणखाविरूपणम्]

**ततः शूर्पणखां रामः कामपाशावपाशिताम् ।**
**स्वच्छया श्लक्ष्णया वाचा स्मितपूर्वमथाब्रवीत् ॥ १ ॥**

अथ कामपरवशायाः शूर्पणखायाः विरूपकरणम् । तत इत्यादि । कामपाशेन अवपाशितां—संजातपाशबन्धाम् ॥ १ ॥

**कृतदारोऽस्मि, भवति! भार्येयं दयिता मम ।**
**त्वद्विधानां तु नारीणां सुदुःखा *ससपत्नता ॥ २ ॥**

भवतीति संबुद्धिः । ससपत्नतेति । सपत्नीसहिता ससपत्नी, तस्या भावः ससपत्नता, 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावः । ननु शुक्लाया भावः शुक्लता इतिवत् अविवादगुणवचनत्वाभावात् कथं पुंस्त्वम्? उच्यते गुणशब्देन कर्त्र्या भावः कर्त्रीत्वमित्यादिद्रव्य-व्यावृत्तिः । अत्र च सपत्नीसाहित्यलक्षणधर्मप्रधानोऽयं शब्दः । अत एवमादौ भवति ॥ २ ॥

**अनुजस्त्वेष मे भ्राता शीलवान् प्रियदर्शनः ।**
**श्रीमान् †अकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥ ३ ॥**
**[1]अपूर्वी भार्यया चार्थी तरुणः प्रियदर्शनः ।**
**अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ॥ ४ ॥**

---

* ससपत्नता—सशत्रुता, आर्षः पुंवद्भावः—ति. † अकृतदारः—असहकृतदार इत्यर्थः । 'न वितथा परिहासकथास्वपि' इत्युक्तेः, 'अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन' इत्युक्तेश्च अकृतदार इति नार्थः—गो. न कृताः—वने स्वीकृताः दाराः येन—रा. परिहासादौ मिथ्याभाषणे न दोषः—ति. अत एव उत्तरत्र 'विशालाक्षि', 'वरारोहे' इत्यादिकमपि स्वरसतः संगच्छते ।

[1] अपूर्वभार्यया चार्थी, अपूर्वभावो भार्यार्थी—ङ.

अकृतदारश्चेत्यत्र अकृतपरदारपरिग्रहः इत्यान्तराशयः। न हि रामो मिथ्या भाषते। अपूर्वीति। पूर्वं भार्यासुखं ज्ञातमनेनेति पूर्वी, 'पूर्वादिनिः' इति इनिः, न पूर्वी अपूर्वी। अत एव भार्यया अर्थी—प्रयोजनवांश्च। इदमपि वचनद्वयं स्वभार्याविषयकाऽऽन्तराशयेन प्रयुक्तम्। 'अनुरूपश्च ते भर्ता' इत्यत्रापि अभर्तेति पदच्छेदेनाऽऽन्तराशयः। एवंविधो विवादः स्वस्मिन् काममोहतः प्राप्तायाः स्त्रियः द्राक् विकारेण ं मा भूदिति घृणया ॥ ३-४ ॥

एनं भज, *विशालाक्षि! भर्तारं भ्रातरं मम।
असपत्ना, वरारोहे! मेरुं अर्कप्रभा यथा ॥ ५ ॥

अर्कप्रभाः यथा भजन्ति तथेति योजना ॥ ५ ॥

इति रामेण सा प्रोक्ता राक्षसी काममोहिता।
विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत् ॥ ६ ॥
अस्य रूपस्य ते युक्ता भार्याऽहं वरवर्णिनी।
मया सह सुखं सर्वान् दण्डकान् विचरिष्यसि ॥ ७ ॥
एवमुक्तस्तु सौमित्रिः राक्षस्या वाक्यकोविदः।
ततः [1] शूर्पनखीं स्मित्वा लक्ष्मणो [2] युक्तमब्रवीत् ॥ ८ ॥

शूर्पनखीं स्मित्वेति। अत्र शूर्प इव नखः यस्याः सा इति, संज्ञाविवक्षणाभावात् 'स्वाङ्गाच्चोपसर्जनात्' इति ङीप्। असंज्ञात्वादेव 'पूर्वपदात् संज्ञायामगः' इति णत्वाभावश्च ॥ ८ ॥

---

* वर्तुलतया विशालाक्षीत्वं—गो.

[1] शूर्पणखां—ङ. [2] वाक्य—ङ.

कथं दासस्य मे दासी भार्या भवितुमिच्छसि ?
सोऽहमार्येण परवान् भ्रात्रा, *कमलवर्णिनि ! ॥ ९ ॥

दासस्य मे भार्या भूत्वा कथं दासी भवितुमिच्छसीति योजना ॥ ९ ॥

समृद्धार्थस्य सिद्धार्था †मुदिता[1]ऽमलवर्णिनी ।
आर्यस्य त्वं विशालाक्षि ! भार्या भव यवीयसी ॥ १० ॥

अमलवर्णिनी—शुभरूपवती ॥ १० ॥

एनां विरूपामसतीं करालां निर्णतोदरीम् ।
भार्यां वृद्धां परित्यज्य त्वामेवैष भजिष्यति ॥ ११ ॥

एनां विरूपामित्यादिलक्ष्मणवचनस्य आन्तराशयः व्यङ्ग्योक्त्या ॥

को हि रूपमिदं श्रेष्ठं सन्त्यज्य, वरवर्णिनि !
मानुषीषु, वरारोहे ! [2]कुर्याद्भावं विचक्षणः ॥ १२ ॥
इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी ।
मन्यते तद्वचः [3]तथ्यं परिहासाविचक्षणा ॥ १३ ॥

परिहासाविचक्षणा—परिहासत्वज्ञानरहिता ॥ १३ ॥

सा रामं पर्णशालायां उपविष्टं परंतपम् ।
सीतया सह दुर्धर्षं अब्रवीत् काममोहिता ॥ १४ ॥

---

* अकमलवर्णिनीत्यपि पदच्छेदः—गो. † मुदिता सती त्वं भव—रा. [illegible]मुदिता—गो.

[1] वरवर्णिनि—ङ. [2] रतिं कुर्यात—ङ. [3] पथ्यं—ङ.

एनां विरूपामसतीं करालां निर्णतोदरीम् ।
वृद्धां भार्यामवष्टभ्य मां न त्वं बहुमन्यसे ॥ १५ ॥

अद्येमां भक्षयिष्यामि पश्यतस्तव मानुषीम् ।
त्वया सह चरिष्यामि *[1] निःसपत्ना यथासुखम् ॥ १६ ॥

पश्यतस्तव इति अनादरे षष्ठी ॥ १६ ॥

इत्युक्त्वा मृगशावाक्षीं अलातसदृशेक्षणा ।
अभ्यधावत् सुसंक्रुद्धा महोल्का रोहिणीमिव ॥ १७ ॥

तां मृत्युपाशप्रतिमां आपतन्तीं महाबलः ।
†[2] निगृह्य रामः कुपितः ततो लक्ष्मणमब्रवीत् ॥ १८ ॥

निगृह्येति । वाचेति शेषः ॥ १८ ॥

क्रूरैः अनार्यैः, सौमित्रे! परिहासः कथञ्चन ।
न कार्यः, पश्य वैदेहीं कथंचित्, सौम्य! जीवतीम्

इमां विरूपामसतीं अतिमत्तां महोदरीम् ।
राक्षसीं, पुरुषव्याघ्र! विरूपयितुमर्हसि ॥ २० ॥

अनार्यैः परिहासो न कार्यः इत्यत्र अनुभवमेव प्रमाणयति—पश्य वैदेहीमिति । भक्षयितुमुद्युक्तां, अस्मत्कृतपरिहासदोषादिति शेषः वस्तुतस्तु—रामस्य इदमेव मूलाविद्यायां मायाबीजावेशपरिहासानृतवच सर्वानर्थमूलमिति सुस्पष्टम् । कथंचिदित्यादि । हे सौम्य! कथंचि जीवतीमेव सतीं स्वतो विरूपामिमां इतोऽपि विरूपयितुमर्हसि ॥ २०

* 'त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता' (२) इति पूर्वोक्तं स्मरन्त्याह—निःसपत्नेति । † निगृह्य—हुंकारेण प्रतिषिध्य—गो.

1 निःसपत्नी–ङ. 2 प्रगृह्य–ङ.

इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो * रामस्य [1] पार्श्वतः।
उद्धृत्य खड्गं चिच्छेद [2] कर्णनासे महाबलः †॥ २१॥

पार्श्वत इति। स्थितमिति शेषः। कर्णनासे इति सर्वतः पाठः। कर्णश्च नासा च कर्णनासे। 'सर्वो द्वन्द्वो विभाषैकवत्' इति वार्तिके सर्वशब्दस्य 'द्वन्द्वश्च प्राणि' इत्यादिना नित्यविहितैकवद्भावद्वन्द्व-स्थलेऽपि पाक्षिकत्वप्रापणप्रयोजनत्वात् एकवद्भावाभावः॥ २१॥

निकृत्तकर्णनासा तु विस्वरं सा विनद्य च।
यथाऽऽगतं प्रदुद्राव घोरा शूर्पणखा वनम्॥ २२॥
सा विरूपा महाघोरा राक्षसी शोणितोक्षिता।
ननाद विविधान् नादान् यथा प्रावृषि तोयदः॥ २३॥
सा विक्षरन्ती रुधिरं बहुधा घोरदर्शना।
प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनम्॥ २४॥

प्रगृह्येति। इह सर्वत्र उद्यमार्थः प्रग्रहशब्दः। उद्यम्य॥ २४॥

ततस्तु सा राक्षससंघसंवृतं
खरं जनस्थानगतं विरूपिता।
उपेत्य तं भ्रातरमुग्र [3] दर्शनं
पपात भूमौ गगनाद्यथाऽशनिः॥ २५॥

यथा अशनिः—अशनिरिव गगनात् भूमौ पपात॥ २५॥

---

* रामस्य पश्यतः चिच्छेद—रा. † रामे बद्धभावाया अपि शूर्पणखायाः तदीयापचारेण हानिर्जातेत्यनुसन्धेयम्—गो. वस्तुतस्तु 'शरीरजसमाविष्टा' (17-12) इति पूर्वं कथनात् शूर्पणखायाः भावः केवलभौतिकः आसुर एवेति च तस्याः रामाप्राप्तिः, वधप्राप्तिश्च।

[1] पश्यतः—ङ. ज. [2] कर्णनासं—ङ. [3] तेजसं—ङ. ज.

ततः सभार्यं भयमोहमूर्च्छिता
सलक्ष्मणं राघवमागतं वनम् ।
विरूपणं चात्मनि शोणितोक्षिता
शशंस सर्वं भगिनी खरस्य सा* ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे अष्टादशः सर्गः

---

अथास्याः वृत्तान्तकथनं कविः संक्षिप्याह—तत इत्यादि । भयजो मोहः–विसंज्ञता, तया मूर्च्छिता–व्याप्ता तथा । उच्यमान-विशेषणं रामं वनमागतं शशंस, आत्मविरूपणं च शशंस ; कृतमिति शेषः । चार(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे अष्टादशः सर्गः

---

## एकोनविंशः सर्गः

### [खराक्रोशः]

तां तथा पतितां दृष्ट्वा विरूपां शोणितोक्षिताम् ।
भगिनीं क्रोधसंतप्तः खरः पप्रच्छ राक्षसः ॥ १ ॥

अथ पूर्वसर्गान्तसंक्षिप्तकथितार्थस्यैव प्रपञ्चः—तां तथेत्यादि ॥

---

* अत्रेदं बोध्यम्—दशवर्षगमनोत्तरं पुनः सुतीक्ष्णाश्रमगमनं रामस्य । तत्र च वर्षाकालापगमपर्यन्तं स्थित्वा किञ्चिच्छिष्टे एकादशेऽगस्त्याश्रमगमनम् । ततो वर्षाकालारम्भे पञ्चवट्यां वासः, 'मयूरनादिता रम्या' इति तत्रोक्तेः । एवं वसतस्तस्य शरद्व्यपाये हेमन्तर्तुः प्रविष्ट इत्युक्तेः अत्र द्वादशवर्षपूर्तिः । 'पञ्चमे पञ्चमे वर्षे द्वौ द्वावधिकमासकौ' इत्युक्तेः मार्गशुक्लैकादश्यां त्रयोदशारम्भः । अन्ये तु त्रयोदशे किञ्चिदवशिष्टे शूर्पणखाऽऽगमनम् । ततो माघे सीतापहरणमित्याहुः–ति.

**उत्तिष्ठ तावदाख्याहि प्रमोहं जहि संभ्रमम् ।**
**व्यक्तमाख्याहि, केन त्वं [1] एवंरूपा विरूपिता ॥ २ ॥**

प्रमोहः—विसंज्ञता । संभ्रमः—चित्ताप्रतिष्ठा, तत्सहितं कर्म च तथा । एवंरूपा त्वं एवं केन विरूपिता इति योजना ॥ २ ॥

**कः कृष्णसर्पमासीनं आशीविषमनागसम् ।**
**तुदत्यभिसमापन्नं अङ्गुल्यग्रेण लीलया ॥ ३ ॥**

आशिषि—दंष्ट्रायां विषं यस्य स तथा, पृषोदरादित्वात् साधुः । "आशीरुरगदंष्ट्रायां प्रियवाक्याभिषङ्गयोः" ॥ ३ ॥

**कः कालपाशमासज्य कण्ठे मोहान्न बुद्ध्यते ।**
**यस्त्वामद्य समासाद्य पीतवान् विषमुत्तमम् ॥ ४ ॥**

उत्तमं विषमिति । त्वद्विरूपणतालक्षणमिति शेषः ॥ ४ ॥

**बलविक्रमसंपन्ना कामगा कामरूपिणी ।**
**इमामवस्थां नीता त्वं केनान्तकसमा [2] गता * ॥ ५ ॥**

इमामवस्थामित्यादि । अन्तकसमा त्वं गता—कस्य समीपं गता, केन इमामवस्थां नीता ॥ ५ ॥

**देवगन्धर्वभूतानां ऋषीणां च महात्मनाम् ।**
**कोऽयमेवं विरूपां त्वां महावीर्यः चकार ह ॥ ६ ॥**

महात्मनामिति । मध्य इति शेषः ॥ ६ ॥

---

* इतो गता त्वं केनेमामवस्थां नीतेत्यन्वयः—**गो.** अन्तकसमागता—कालसमत्वं प्राप्ता त्वं इमामवस्थां केन नीता—**रा.** अन्तकसमा त्वं कस्य समीपं गता, येनेमामवस्थां गता । अन्तकसमा त्वं केनेमामवस्थां नीता अत्रागतेति वा—**ति.** अन्तकसमा त्वं केनेमामवस्थां नीता— प्रापिता सती आगता, अत्रेति शेषः—**ती.**

[1] एवंरूपविरूपिता—**ङ.** [2] मता—**ङ.**

*न हि पश्याम्यहं लोके यः कुर्यात् मम विप्रियम् ।
[1]अन्तरेण सहस्राक्षं महेन्द्रं पाकशासनम् ॥ ७ ॥

अथ संभावितमरिं स्वयमेव निश्चित्याह—न हीत्यादिना ॥ ७ ॥

अद्याहं मार्गणैः प्राणान् आदास्ये जीवितान्तकैः ।
सलिले क्षीरमासक्तं निष्पिबन्निव सारसः ॥ ८ ॥

तृषया निष्पिबन् सारसो हंसः सलिले आसक्तं संबद्धं क्षीरमिव प्राणानादास्ये इत्यन्वयः ॥ ८ ॥

निहतस्य मया संख्ये शरसंकृत्तमर्मणः ।
सफेनं रुधिरं रक्तं मेदिनी कस्य पास्यति ॥ ९ ॥

शरेण संकृत्तानि मर्माणि यस्य स तथा । सफेनमिति—प्राणवियोगकालप्रवृत्तफेनसहितं, अपि च कर्णकर्तनक्षणे दीर्घधारं रक्तं सफेनं सोष्णं च भवति । रक्तं—'रञ्ज रागे' निष्ठा । 'अनिदितां' इति नलोपः । भुवि सक्तं इत्यर्थः ॥ ९ ॥

कस्य †पत्ररथाः कायात् मांसमुत्कृत्य सङ्गताः ।
प्रहृष्टा भक्षयिष्यन्ति निहतस्य मया रणे ॥ १० ॥

सङ्गताः—परस्परसमेताः ॥ १० ॥

तं न देवा न गन्धर्वा न पिशाचाः न राक्षसाः ।
‡मयाऽपकृष्टं कृपणं शक्तास्त्रातुमिहाहवे ॥ ११ ॥

---

*अत्र तमित्यध्याहार्यम् । तस्य गर्वविशेषद्योतनाय इन्द्रस्य विशेषणद्वयम्—गो.

† पत्ररथाः—पक्षिणः गृध्रादयः । ‡ इह अद्यैव आहवे अपकृष्टं—आकृष्टम् ।

[1] अमरेषु—ङ. ज.

*उपलभ्य शनैः संज्ञां तं मे शंसितुमर्हसि ।
येन त्वं दुर्विनीतेन वने [1]विक्रम्य निर्जिता ॥ १२ ॥

विक्रम्य–शौर्यं कृत्वा ॥ १२ ॥

इति भ्रातुः वचः श्रुत्वा क्रुद्धस्य च विशेषतः ।
ततः शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ॥ १३ ॥
†तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ १४ ॥
फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ ।
पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ [2] ॥ १५ ॥
गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ ।
‡देवौ वा [3]मानुषौ वा तौ न तर्कयितुमुत्सहे ॥ १६ ॥

देवौ वा इति । यद्यपि दशरथस्य सुताविति ताभ्यां श्रुतं, अथापि तौ मानुषौ देवौ वेति तर्कयितुं नोत्सहे ॥ १६ ॥

§तरुणी रूपसंपन्ना सर्वाभरणभूषिता ।
दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १७ ॥

---

*'भयमोहमूर्छितां' (18-26) इति पूर्वं कथितत्वात् तदीयदुरवस्थां विलोक्य खर: एवं वदति । †एतादृशदुस्थितावपि रामसौन्दर्यपरवशा वदति–तरुणाविप्यादि । ‡'पुत्रौ दशरथस्यास्तां' इति रामवाक्यस्मरणात् । स्वबुद्ध्या तु–देवौ वेत्यादि । §पूर्वं असूयादिना सीतासौन्दर्याप्रकटनेऽपि, अत्र रामस्य पुरतोऽभावात्, सीतासौन्दर्याकृष्टत्वात् अवशत: सीतां वर्णयति । अथापि 'तस्या: स्थितत्वादेव किल रामो मां तिरश्चकार' इति कोपात्–तस्याश्चानृजुवृत्ताया इति अनुपदं निन्दति । एवं खरस्य सीतायां चापल्योत्पादनायापि तद्वर्णनं स्यात्। अत एव 'तौ हत्वा च तां दुर्वृत्तां अपावर्तितुमर्हथ' इति खरवचनमपि ।

[1] निष्क्रम्य–ङ. [2] एतदनन्तरं–'शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम्' इत्यधिकम्–झ. [3] दानवौ–ङ.

ताभ्यामुभाभ्यां संभूय * प्रमदामधिकृत्य ताम् ।
इमामवस्थां नीताऽहं यथाऽनाथाऽसती यथा ॥ १८ ॥

ताभ्यामित्यादि । तां प्रमदां अधिकृत्य—निमित्तीकृत्य, ताभ्यां उभाभ्यां संभूय—एकनियुक्तया एकेन, इमां अवस्थां यथा अनाथा असती—कुलटा नीता भवति तथा अहं नीता ॥ १८ ॥

तस्याश्चानृजुवृत्तायाः तयोश्च हतयोरहम् ।
सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ १९ ॥
एष मे प्रथमः कामः कृतः, स्तात! त्वया भवेत् ।
तस्याः तयोश्च रुधिरं पिबेयमहमाहवे ॥ २० ॥

तस्याश्चेति । हताया इति विपरिणामः । उक्तार्थस्यैव उत्कण्ठाद्योतनाय पुनर्वचनं—एष म इत्यादि ॥ २० ॥

इति तस्यां ब्रुवाणायां चतुर्दश महाबलान् ।
व्यादिदेश खरः क्रुद्धः राक्षसान् अन्तकोपमान् ॥ २१ ॥
मानुषौ शस्त्र संपन्नौ चीरकृष्णाजिनाम्बरौ ।
प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह[1] ॥ २२ ॥
तौ हत्वा तां च दुर्वृत्तां †[2] उपावर्तितुमर्हथ ।
इयं च रुधिरं तेषां भगिनी मम पास्यति ॥ २३ ॥

इयं च भगिनीत्यन्वयः ॥ २३ ॥

---

* स्वेन तस्या अपहरणादेव विरूपकरणात् तां निमित्तीकृत्येत्युक्तिः । अथ वा 'स्वापेक्षया सीतायाः सुन्दरीत्वात् किल तस्या हरणे प्रवृत्ताऽहं विरूपिता' इति भावो वा । एवं सति सीतासौन्दर्यवर्णनमपि प्रकृतं युज्यते । † अपवर्तितुं—आनेतुम् । आनयनप्रयोजनमाह—इयं चेति—गो. उपावर्तितुं—हन्तुं—रा. मत्समीपं प्रापयितुं वा । अनृजुवृत्ताया इति शूर्पणखया उक्तत्वात्—दुर्वृत्तामिति ।

[1] एतदनन्तरं—'युष्माभिस्तौ निहन्तव्यौ सहसा तापसाविमौ'—इत्यधिकम्—ङ.
[2] अपावर्तितुं—ङ.

*मनोरथोऽयमिष्टोऽस्याः भगिन्या मम, राक्षसाः!
शीघ्रं संपाद्यतां तौ च प्रमथ्य स्वेन तेजसा[1] ॥ २४ ॥
इति प्रतिसमादिष्टाः राक्षसास्ते चतुर्दश ।
तत्र जग्मुः तया सार्धं घना वातेरिता यथा ॥ २५ ॥
† [2]ततस्तु ते तं समुदग्रतेजसं
[3]तथाऽपि तीक्ष्णप्रदराः निशाचराः ।
न शेकुरेनं सहसा प्रमर्दितुं
वनद्विपा दीप्तमिवाग्निमुत्थितम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकोनविंशः सर्गः

---

तीर्ण(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकोनविंशः सर्गः

---

## विंशः सर्गः

[चतुर्दशरक्षोवधः]

ततः शूर्पणखा घोरा राघवाश्रममागता ।
रक्षसामाचचक्षे तौ भ्रातरौ ‡ सह सीतया ॥ १ ॥

---

* अस्या अयं मनोरथः मम च इष्टः—संमत इत्यर्थः—गो. हे राक्षसाः! मम भगिन्याः इष्टोऽयं मनोरथः शीघ्रं संपाद्यताम्—रा. † प्रदराः—बाणाः 'प्रदरा भङ्गनारीरुग्बाणाः' इत्यमरः । तथा तीक्ष्णप्रदरा अपीति योज्यम् । तमेनमित्यन्वयः । उत्थितं—राक्षसान् दृष्ट्वा अभिमुखमुद्गतमिति रामविशेषणम् । उत्तरसर्गसंग्रहोऽयं श्लोकः—गो. अस्य श्लोकस्य अनन्तरसर्गाद्यश्लोकविरुद्धत्वात् उत्तरसर्गसंग्रहोऽयं श्लोक इत्युक्तम् । दृश्यते च बहुषु सर्गेष्वेवम् । ‡ तौ भ्रातरौ सीतां च तेभ्यो दर्शयामासेति तात्पर्यम् ।

[1] एतदनन्तरं-'युष्माभिर्निहतौ दृष्ट्वा तावुभौ भ्रातरौ रणे । इयं प्रहृष्टा मुदिता रुधिरं युधि पास्यति ॥' इत्यधिकम्—ङ. ज. झ. [2] अयं श्लोकः झ. पुस्तके नास्ति. [3] तथा सुतीक्ष्ण—ङ.

अथ खरेण प्रभुत्वात् रामे मानुषबुद्धित्वाच्च प्रेषितानां चतुर्दश-प्रधानानां सेनानीनां संहारः। ततः शूर्पणखेत्यादि ॥ १ ॥

ते रामं पर्णशालायां उपविष्टं महाबलम् ।
ददृशुः सीतया सार्धं *[1]वैदेह्या लक्ष्मणेन च ॥ २ ॥
[2]तान् दृष्ट्वा राघवः श्रीमान् [3]आगतां तां च राक्षसीम् ।
अब्रवीत् भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥ ३ ॥
मुहूर्तं भव, सौमित्रे! सीतायाः प्रत्यनन्तरः ।
इमा†नस्याः वधिष्यामि पदवीमागतानिह ॥ ४ ॥

प्रत्यनन्तरः-प्रत्यासन्नः-रक्षक इति यावत् ॥ ४ ॥

वाक्यमेतत् ततः श्रुत्वा रामस्य विदितात्मनः ।
तथेति लक्ष्मणो वाक्यं रामस्य प्रत्यपूजयत् ॥ ५ ॥
राघवोऽपि महच्चापं चामीकरविभूषितम् ।
चकार सज्यं धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥ ६ ॥
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ ।
प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम् ॥ ७ ॥
फलमूलाशनौ दान्तौ तापसौ [4]धर्मचारिणौ ।
वसन्तौ दण्डकारण्ये किमर्थमुपहिंसथ ‡ ॥ ८ ॥

किमर्थमुपहिंसथेति । हिंसिः श्ने, वा णौ च । णिजभावपक्षे यथाप्राप्तश्नेव, न तदपवादः श्नः । णौ इति शेषः ॥ ८ ॥

---

* वैदेह्या इति सीताविशेषणम् । † अस्याः पदवीमागतानित्यन्वयः। शूर्पणखे[illegible] अस्मान् बाधितुमागतानिति भावः। अनयाऽऽनीतानिति वाऽर्थः। ‡ अनपराधिहिंस[illegible] अधर्म इति भावः। यद्यपि शूर्पणखाविरूपणप्रतीकारकरणार्थमेते आगताः; तथाऽ[illegible] राक्षससमुदायोद्देशेनेयमुक्तिः। शूर्पणखा हि अकारणमेव रामादीन् पीडयामास ॥

[1] लक्ष्मणेनापि सेवितम्-ज. [2] 'तां दृष्ट्वा राघवः श्रीमान् आगतांस्तां[illegible] राक्षसान्'-ज. [3] आगतान्-ङ. [4] ब्रह्मचारिणौ-ज.

*युष्मान् पापात्मकान् हन्तुं विप्रकारान् महाहवे।
ऋषीणां तु नियोगेन प्राप्तोऽहं सशरायुधः ॥ ९ ॥

†तिष्ठतैवात्र [1]संतुष्टा [2]नोपावर्तितुमर्हथ।
यदि प्राणैरिहार्थो [3]वा निवर्तध्वं, निशाचराः! ॥ १० ॥

अनपकारास्मदुपहिंसनार्थं युष्मत्प्रवर्तितोऽस्मदपेक्षितः युष्मद्विषयकवधः संपन्ननिमित्तोऽद्य संवृत्तः इत्याह—युष्मानित्यादि। विप्रकारान्—मत्वर्थीयाजन्तः, अस्मासु अस्मदीयेषु ऋषिषु च वृथा वैरवतः युष्मान्। ऋषीणां तु नियोगेन युष्मान् हन्तुमेव सशरायुधः संप्राप्तोऽहमद्य प्राप्तनिमित्तः। अतस्तु संतुष्टाः, अन्तर्भावितणिः, मे प्रापितयुद्धसंतोषाः यूयं अत्रैव तिष्ठतैव, नोपावर्तितुमर्हथ। इहार्थः—इह लोके देहे चेत्यर्थः ॥ १० ॥

तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश।
ऊचुर्वाचं सुसंक्रुद्धाः ब्रह्मघ्नाः शूलपाणयः[4] ॥ ११ ॥

ब्रह्मघ्ना इति। बहुलं छन्दसीति क्विबभावे, 'अमनुष्यकर्तृके च' इति टक् ॥ ११ ॥

---

* अनपकारिणामस्माकं हिंसया ऋषिवचनाङ्गीकरणनिर्वर्तनमपि सुशकमभूदिति—'अपराधं विना हन्तुं लोकान् वीर! न कामये' (9–25) इति सीतावाक्यं स्मरन्नेवमाह। † अत्र—संग्रामे यदि सन्तुष्टाः यूयं, तर्हि तिष्ठत। उपावर्तितुं—पलायितुं नार्हथ। यदि च इह—लोके वः—युष्माकं प्राणैः अर्थः—प्रयोजनं तर्हि निवर्तध्वम्—रा. अत्रैव सन्तुष्टाः—अभीता इति यावत्, तिष्ठत। नोपावर्तितुमर्हथ मा पलायध्वमित्यर्थः। यदि वा प्राणैः अर्थः—प्रयोजनं—प्राणापेक्षाऽस्ति चेन्निवर्तध्वमित्यर्थः—गो. उपसर्पितुमिति पाठे—दूरे तिष्ठत, अत्र निर्भयं मा गम्यतामित्यर्थः।

[1] संदुष्टाः—ङ [2] नोपसर्पितु, नोपासर्पितु—ङ. [3] वः—ज. [4] एतदनन्तरं—'संरक्तनयना घोराः रामं संरक्तलोचनम्। परुषं मधुराभाषं हृष्टा दृष्टपराक्रमम्'—अधिकम्—ङ. ज.

क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः।
त्वमेव हास्यसे प्राणान् अद्यास्माभिर्हतो युधि ॥ १२ ॥
का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि।
अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥ १३ ॥

स्थातुमपि का हि ते शक्तिरिति योजना ॥ १३ ॥

एहि बाहुप्रयुक्तैर्नः परिघैः शूल[1]पट्टिशैः।
प्राणांस्त्यक्ष्यसि वीर्यं च धनुश्च करपीडितम् ॥ १४ ॥
इत्येवमुक्त्वा[2] संक्रुद्धाः राक्षसास्ते चतुर्दश[3]।
चिक्षिपुस्तानि शूलानि राघवं प्रति दुर्जयम् ॥ १५ ॥
तानि शूलानि काकुत्स्थः *समस्तानि चतुर्दश।
तावद्भिरेव चिच्छेद शरैः काञ्चनभूषणैः ॥ १६ ॥

तावद्भिरेवेति। युगपत् चतुर्दशरक्षोविमुक्तचतुर्दशशूलसंख्याकैरित्यर्थः ॥ १६ ॥

ततः पश्चान्महातेजाः †नाराचान् सूर्यसंनिभान्।
जग्राह परमक्रुद्धः चतुर्दश शिलाशितान् ॥ १७ ॥

शिलाशितान्–शाणोपलसुनिघृष्टानित्यर्थः ॥ १७ ॥

गृहीत्वा धनुरायम्य लक्ष्यानुद्दिश्य राक्षसान्।
मुमोच राघवो बाणान् वज्रानिव शतक्रतुः ॥ १८ ॥

---

* समस्तानि–युगपदागतानि–रा. एतेन रामहस्तलाघवं वर्णितं भवति।
† नाराचान्–अफलकान् बाणान्, शिलाशितान्–शिलास्वपि शितान्–शिलानिर्भेदक्षमानित्यर्थः–गो.

[1] पट्टसैः–ङ. [2] संरब्धाः–ङ. [3] एतदनन्तरं–उद्यतायुधनिस्त्रिंशाः राममेवाभिदुद्रुवुः–इत्यधिकम्–ङ. ज.

रुक्मपुङ्खाश्च विशिखाः दीप्ताः हेमविभूषिताः[1] ।
ते भित्त्वा रक्षसां वेगात् वक्षांसि रुधिराप्लुताः ॥ १९ ॥
विनिष्पेतुः तदा भूमौ न्यमज्जन्ताशनिस्वनाः ।

विनिष्पेतुः—निष्पत्य भूमौ च वेगवशात् न्यमज्जन्त ॥ १९ ॥

[2]ते भिन्नहृदयाः भूमौ छिन्नमूला इव द्रुमाः ॥ २० ॥
निपेतुः शोणितार्द्राङ्गाः विकृताः विगतासवः ।
[3]तान् दृष्ट्वा पतितान् भूमौ राक्षसी क्रोधमूर्छिता ॥ २१ ॥
[4]परित्रस्ता पुनस्तत्र व्यसृजत् भैरवस्वनान् ।
सा नदन्ती पुनर्नादं जवात् शूर्पणखा पुनः ॥ २२ ॥
उपगम्य खरं सा तु किंचित् संशुष्कशोणिता ।
पपात पुनरेवार्ता सनिर्यासेव सल्लकी ॥ २३ ॥

सनिर्यासेवेति । किञ्चित् संशुष्कशोणितत्वात् उपमा ॥ २३ ॥

भ्रातुः समीपे शोकार्ता [5]ससर्ज निनदं मुहुः[6] ।
*सस्वरं मुमुचे बाष्पं [7]विवर्णवदना तदा ॥ २४ ॥
†निपातितान् [8]दृश्य रणे तु राक्षसान्
प्रधाविता शूर्पणखा [9]पुनस्ततः ।
वधं च तेषां निखिलेन रक्षसां
शशंस सर्वं भगिनी खरस्य सा ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे विंशः सर्गः

---

* सस्वरं—सविलापमिति यावत् । † पुनः सर्गार्थं संक्षेपेणाह—निपातितानिति—गो.

[1] एतदनन्तरं 'अन्तरिक्षे महोल्कानां बभूवुस्तुल्यदर्शनाः' इति अधिकम्—झ. [2] तेभिन्नहृदयाः—ङ. ज. [3] अयं श्लोकः झ पुस्तके नास्ति । [4] अयं श्लोकः ज पुस्तके कुण्डलितः । [5] नष्टसंज्ञाऽभवन्मुहुः—झ. [6] एतदनन्तरं—'भूमौ शयाना दुःखार्ता नष्टसंज्ञाऽभवत्पुनः'—इत्यधिकं—झ. [7] विषण्ण—ङ. [8] प्रेक्ष्य—ङ. [9] पुनःपुनः—ङ.

* अत्रापि वृत्तान्तस्य संक्षेपतः कवेः कथनं—निपातितानि-त्यादि। दृश्य-दृष्ट्वा। शर(२५)मानः सर्गः ॥ २५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे विंशः सर्गः

---

### एकविंशः सर्गः

[खरसन्धुक्षणम्]

स पुनः पतितां दृष्ट्वा क्रोधात् शूर्पणखां [1] खरः ।
उवाच व्यक्तया वाचा तामनर्थार्थमागताम् ॥ १ ॥

अथ वृत्तान्तकथनपूर्वं शूर्पणखया खरप्रोत्साहनम् । स पुनरित्यादि । अनर्थार्थमिति । स्वकुलस्येति शेषः ॥ १ ॥

[2] मया त्विदानीं शूरास्ते राक्षसाः रुधिराशनाः ।
त्वत्प्रियार्थं विनिर्दिष्टाः किमर्थं रुद्यते पुनः ॥ २ ॥
भक्ताश्चैवानुरक्ताश्च [3] हिताश्च मम नित्यशः ।
† [4] घ्नन्तोऽपि न निहन्तव्याः न न कुर्युः वचो मम ॥ ३ ॥

न कुर्युरिति न ॥ ३ ॥

किमेतत् श्रोतुमिच्छामि कारणं यत्कृते पुनः ।
हा नाथेति विनिर्दन्ती सर्पवल्लुठसि क्षितौ ॥ ४ ॥

---

* अत्रापीत्यनेन पूर्वसर्गान्तिमश्लोकोऽप्येतद्व्याख्यातृसम्मत इति स्पष्टम् । † परैर्हन्य-माना अपि ये न हन्यन्ते—न हन्तुं शक्यन्ते—ति. एतेन तत्कर्मकवधशङ्का नास्तीति सूचितम्—रा. एतद्व्याख्ययोः 'हन्यमाना न हन्यन्ते' इति पाठः सम्मतः । यथाश्रुतपाठे—परान् घ्नन्तोऽपि तैः हन्तुं न शक्या इत्यर्थः ।

[1] पुनः—ज. [2] गतास्त्विदानीं—ङ. [3] मीताश्च—ङ. [4] हन्यमाना न हन्यन्ते—ज.

अनाथवद्विलपसि नाथे तु मयि संस्थिते ।
उत्तिष्ठोत्तिष्ठ मा भैषीः वैक्लब्यं त्यज्यतामिह ॥ ५ ॥

इत्येवमुक्ता दुर्धर्षा खरेण परिसान्त्विता ।
[1]विमृज्य नयने [2]सास्रे खरं भ्रातरमब्रवीत् ॥ ६ ॥

*अस्मीदानीमहं प्राप्ता हृतश्रवणनासिका ।
शोणितौघपरिक्लिन्ना त्वया च परिसान्त्विता ॥ ७ ॥

अस्मीत्यादि । हृतश्रवणनासिका शोणितौघपरिक्लिन्ना अहमिदानीं पुनश्च त्वत्समीपं प्राप्ताऽस्मि, त्वया परिसांत्विता चास्मि, अतो वृत्तान्तं वक्ष्यामीति शेषः ॥ ७ ॥

प्रेषिताश्च त्वया, वीर! राक्षसास्ते चतुर्दश ।
निहन्तुं राघवं [3]क्रोधात् मत्प्रियार्थं सलक्ष्मणम् ॥ ८ ॥

ते तु रामेण सामर्षाः शूलपट्टसपाणयः ।
समरे निहताः सर्वे सायकैः मर्मभेदिभिः ॥ ९ ॥

तान् दृष्ट्वा पतितान् भूमौ †क्षणेनैव महाबलान् ।
रामस्य च महत्कर्म महांस्त्रासोऽभवन्मम ॥ १० ॥

क्षणेनैवेति । न तु चिरकालयुद्धक्लेशपूर्वमित्यर्थः ॥ १० ॥

[4]अहमस्मि समुद्विग्ना विषण्णा च, निशाचर!
शरणं त्वां पुनः प्राप्ता ‡सर्वतो भयदर्शिनी ॥ ११ ॥

सर्वतो भयदर्शिनीति । सर्वतो रामप्रतिभासनादिति शेषः ॥

---

* अहं प्राप्ताऽस्मीत्यन्वयः । अस्मि-जीवामि इति अतिनिर्वेदसूचनं वा । एवञ्च 'हृतश्रवणनासिका' इत्याद्युत्कीर्तनमपि सरसम् । † गतसर्ग २६ श्लोकटिप्पण्युक्तदिशा रामहस्तलाघवादिकमत्र विवक्षितम् । ‡ रामनिमित्तं भयमत्र विवक्षितं वा ।

[1] विमृत्य—ङ. [2] साऽऽस्ये—ङ. [3] घोरं—ञ. [4] साऽस्मि भीता—ञ.

विषादनक्राध्युषिते परित्रासोर्मिमालिनि ।
* किं मां न त्रायसे मग्नां विपुले शोकसागरे ॥ १२ ॥
एते च निहता † भूमौ रामेण निशितैः शरैः ।
येऽपि मे पदवीं प्राप्ताः राक्षसाः पिशिताशनाः ॥ १३ ॥

ये च मे पदवीं प्राप्ताः त एते राक्षसाः भूमौ स्थितेन पदातिना रामेण निहताः ॥ १३ ॥

मयि ते यद्यनुक्रोशः ‡ यदि रक्षःसु तेषु च ।
[1] रामेण यदि ते § शक्तिः तेजो वाऽस्ति, निशाचर! ॥
दण्डकारण्यनिलयं जहि राक्षसकण्टकम् ।

रामेण यदि ते शक्तिरिति । योद्धुमिति शेषः ॥ १४ ॥

यदि रामं [2] ममामित्रं न त्वमद्य वधिष्यसि ॥ १५ ॥
तव चैवाग्रतः प्राणान् त्यक्ष्यामि ‖ निरपत्रपा ।

निरपत्रपेति । छिन्ननासिकत्वादित्याशयः ॥ १५ ॥

बुद्ध्याऽह[3]मनुपश्यामि न त्वं रामस्य संयुगे ॥ १६ ॥
स्थातुं प्रतिमुखे शक्तः [4] सबलश्च महात्मनः ।

---

* एतेन—खरः तेषां रक्षसां क्षणेनैव वधं श्रुत्वा भयविह्वलोऽभूदिति सूच्यते । अत एव शूर्पणखा खरं परुषाक्षरं वदति । अनन्तरसर्गारंभे च 'एवमाधर्षितः' इत्यप्यवलोकनीयम् । अथ वा क्रोधमूर्छितः खरः क्षणं तूष्णीमास । शूर्पणखा तु तं त्रस्तं जानन्ती उद्वेजयामासेति वा ज्ञेयम् । † भूमौ निहता इति—मृताः सन्तो भूमौ पतिता इत्यर्थकं भयसंरंभमूलकं वचनं वा। अनुपदमेव हि 'तान् दृष्ट्वा पतितान् भूमौ' इत्युक्तम् । ‡ अनुक्रोशः—दया । § शक्तिरिति । तुल्येति शेषः—गो. ‖ निरपत्रपा—वैरानिर्यातनात् ।

[1] रामे वा—ङ. [2] अमित्रघ्नं—ञ. [3] मनुशोचामि—ङ. [4] सचापस्य—ङ.

अथ खरस्य क्रोधोत्पत्त्यर्थं आह—बुद्ध्येत्यादि । सबलः—बलोपेतोऽपीत्यर्थः ॥ १६ ॥

**शूरमानी न शूरस्त्वं मिथ्याऽऽरोपितविक्रमः ॥ १७ ॥**
**मानुषौ यौ न शक्रोषि हन्तुं तौ रामलक्ष्मणौ ।**

मिथ्या—मृषैव स्वस्मिन् आरोपितो विक्रमः येन स तथा । तत्र हेतुमाह—मानुषावित्यादि ॥ १७ ॥

**रामेण यदि ते शक्तिः तेजो वाऽस्ति, निशाचर! ॥ १८ ॥**
***दण्डकारण्यनिलयं [1] जहि त्वं, कुलपांसन!**
**निःसत्त्वस्याल्पवीर्यस्य वासस्ते कीदृशस्त्विह ॥ १९ ॥**
**अपयाहि जनस्थानात् त्वरितः सहबान्धवः ।**

जहि त्वमिति । राममिति शेषः । अन्यथा तु हे कुलपांसन! त्वं सहबान्धवः जनस्थानात् अपयाहि । निर्वीर्यत्वादिगुणकस्य ते इह कीदृशो वासः? अतिजुगुप्सित एवेत्यर्थः । कुलपांसनेत्येव पाठः । दुर्योजनत्वात् पौराणिकानां इह यथेष्टाः पाठाः ॥

**रामतेजोऽभिभूतो हि त्वं क्षिप्रं विनशिष्यसि ॥ २० ॥**
**स हि तेजःसमायुक्तः रामो दशरथात्मजः ।**
**भ्राता चास्य महावीर्यः येन चासि विरूपिता ॥ २१ ॥**

अपयाहीत्यत्र हेतुमाह—रामतेज इत्यादि ॥ २०–२१ ॥

---

* व्याख्यादृष्ट्या-'जहि त्वं समरे मूढाऽन्यथा तु कुलपांसन!'–इति पाठः स्यादिति भाति ॥

[1] जहि तं–ङ.

एवं विलप्य बहुशः राक्षसी विततोदरी[1] ।
कराभ्यामुदरं हत्वा रुरोद भृशदुःखिता ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकविंशः सर्गः

---

खर(२२)मानः सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतटीकायां अरण्यकाण्डे एकविंशःसर्गः

---

## द्वाविंशः सर्गः

### [खराभिषेणनम्]

एवमाधर्षितः शूरः शूर्पनख्या खरस्तदा ।
उवाच रक्षसां मध्ये खरः खरतरं वचः ॥ १ ॥

अथ शूर्पणखाप्रोत्साहितस्य युद्धसंनाहः । एवमाधर्षितः इत्यादि । आधर्षितः—कोपादवमानितः इत्यर्थः । खरतरं—क्रूरतरम् ॥

तवा*वमानप्रभवः क्रोधोऽयमतुलो मम ।
न शक्यते धारयितुं †लवणाम्भ[2] इवोत्थितम् ॥ २ ॥

लवणाम्भ इति । लवणसमुद्राम्भः इत्यर्थः ॥ २ ॥

न रामं गणये वीर्यात् मानुषं[3] क्षीणजीवितम् ।
‡आत्मदुश्चरितैः प्राणान् हतो योऽद्य विमोक्ष्यति ॥ ३ ॥

---

* अवमानं — विरूपणरूपम् । † लवणाम्भ इवोल्बणं — व्रण इति शेषः । व्रणे निक्षिप्तं लवणयुक्तमंभ इव धारयितुं न शक्यते—ती. उत्थितं—पर्वणि उल्बणम्—गो·
‡ आत्मनः दुश्चरितैः—त्वद्विरूपणादिभिः ।

[1] एतदनन्तरं—'भ्रातुः समीपे शोकार्ता नष्टसंज्ञा बभूव ह'—इत्यधिकं—ङ. ञ.
[2] इवोल्बणम्—ञ. [3] क्षणजीवितम्—ङ.

आत्मदुश्चरितैः स्वयं हतो योऽद्य प्राणान् विमोक्ष्यते, तं रामं न गणये इत्यन्वयः ॥ ३ ॥

बाष्पः संह्रियतामेषः संभ्रमश्च विमुच्यताम् ।
अहं रामं सह भ्रात्रा नयामि यमसादनम् ॥ ४ ॥
परश्वधहतस्याद्य मन्दप्राणस्य [1] संयुगे ।
रामस्य रुधिरं रक्तं उष्णं पास्यसि, [2] राक्षसि ! ॥ ५ ॥

परश्वधहतस्येति । तस्य परश्वधं मुख्यं आयुधम् ॥ ५ ॥

सा प्रहृष्टा वचः श्रुत्वा खरस्य वदनात् च्युतम् ।
प्रशशंस पुनर्मौर्ख्यात् * भ्रातरं रक्षसां वरम् ॥ ६ ॥

मौर्ख्यात्–अव्यवस्थचित्ततालक्षणात् । पुनः प्रशशंस च–त्वत्समो वीरो नास्तीत्यादिना ॥ ६ ॥

तया परुषितः पूर्वं पुनरेव प्रशंसितः ।
अब्रवीत् दूषणं नाम खरः सेनापतिं तदा ॥ ७ ॥

अयमेवार्थः विव्रियते—-तयेत्यादि ॥ ७ ॥

चतुर्दश सहस्राणि मम चित्तानुवर्तिनाम् ।
रक्षसां भीमवेगानां समरेष्वनिवर्तिनाम् ॥ ८ ॥
[3] नीलजीमूतवर्णानां घोराणां [4] क्रूरकर्मणाम् ।
लोकहिंसाविहाराणां बलिनामुग्रतेजसाम् ॥ ९ ॥

---

* मौर्ख्यात्–स्वाज्ञानात्–रा.

[1] भूतले–ज. [2] कांक्षितम्–ङ. [3] एतदर्धद्वयस्थाने ‘नीलजीमूतवर्णानां लोकहिंसाविहारिणाम्’ इतिमात्रम्–ङ. [4] कामरूपिणाम्–ङ.

[1]तेषां शार्दूलदर्पाणां महास्यानां महौजसाम् ।
सर्वोद्योगमुदीर्णानां रक्षसां, सौम्य ! कारय ॥ १० ॥

लोकस्य—त्रैलोक्यस्य प्राणिनः पीडारूपो विहारः यैरेवासाधारण्येन, ते तथा। सर्वोद्योगमिति। सर्वप्रकारेण चतुरङ्गबलोपेततया सर्वायुधसामग्रीसमेततया च यः उद्योगः तादृशं उद्योगं कारय ॥ १० ॥

उपस्थापय मे क्षिप्रं रथं, सौम्य! धनूंषि च ।
[2]शरांश्चित्रांश्च खड्गांश्च शक्तीश्च विविधाः शिताः ॥ ११ ॥

*अग्रे निर्यातुमिच्छामि पौलस्त्यानां महात्मनाम् ।
वधार्थं दुर्विनीतस्य रामस्य [3]रणकोविदः ॥ १२ ॥

पौलस्त्यानां—राक्षसानां अग्रे रामस्य वधार्थं निर्यातुमिच्छामीति योजना ॥ १२ ॥

इति तस्य ब्रुवाणस्य सूर्यवर्णं महारथम् ।
सदश्वैः [4]शबलैः युक्तं आचचक्षेऽथ दूषणः ॥ १३ ॥

शबलैः—चित्रवर्णैः । आचचक्ष इति । उपस्थितमिति शेषः ॥ १३ ॥

तं मेरुशिखराकारं तप्तकाञ्चनभूषणम् ।
हेमचक्रमसंबाधं वैडूर्यमयकूबरम् ॥ १४ ॥
मत्स्यैः पुष्पैः द्रुमैः शैलैः चन्द्रसूर्यैश्च काञ्चनैः ।
[5]मङ्गल्यैः पक्षिसङ्घैश्च ताराभिरभिसंवृतम् ॥ १५ ॥

---

* शूर्पणखयाऽवमानितत्वात्—अहमेव प्रथमं गच्छामीत्याह ।

[1] इदमर्धं क्वचित् कुण्डलितम्—ङ. [2] रथांश्चित्रांश्च—ङ. [3] रणमूर्धनि—ङ.
[4] सबलैः—ङ. [5] मंगलैः—ङ.

ध्वजनिस्त्रिंशसंपन्नं किङ्किणीकविराजितम् ।
सदश्वयुक्तं सोऽमर्षात् आरुरोह खरो रथम् ॥ १६ ॥

वैडूर्यमयौ कूबरौ यस्य स तथा। "कूबरस्तु युगन्धरः"। मङ्गल्यैः—मङ्गलप्रयोजनैः अलङ्कारप्रयोजनैः, काञ्चनैः—स्वर्णनिर्मितैः। उक्तविशेषणद्वयं मत्स्यादौ सर्वत्र योज्यम्। "किङ्किणी क्षुद्रघण्टिका ॥ १४-१६ ॥

[1]निशाम्य तु रथस्थं तं राक्षसाः भीमविक्रमाः ।
तस्थुः संपरिवार्यैनं दूषणं च महाबलम् ॥ १७ ॥

*[2]खरस्तु तन्महत् सैन्यं रथवर्मायुधध्वजम् ।
निर्यातेत्यब्रवीत् प्रेक्ष्य दूषणः सर्वराक्षसान् ॥ १८ ॥

'खरस्तु तन्महत् सैन्यं रथवर्मायुधध्वजम्। निर्यातेत्यब्रवीत् प्रेक्ष्य दूषणः सर्वराक्षसान्' इति पाङ्क्तः पाठः ॥ १८ ॥

ततस्तद्राक्षसं सैन्यं घोरवर्मायुधध्वजम् ।
निर्जगाम जनस्थानात् महानादं महाजवम् ॥ १९ ॥

ततस्तादिति। उभयनियोगानन्तरमित्यर्थः। रक्षसामिदं राक्षसम् ॥ १९ ॥

मुद्गरैः पट्टसैः शूलैः सुतीक्ष्णैश्च परश्वधैः ।
खड्गैः चक्रैश्च हस्तस्थैः भ्राजमानैश्च तोमरैः ॥ २० ॥

---

* तन्महत्सैन्यं प्रेक्ष्य तत् प्रतिनिर्यातेत्यब्रवीत्। दूषणः—दूषणश्चेत्यर्थः—ति. खरो दूषणश्च रथादिविशिष्टं सैन्यं सर्वराक्षसांश्च प्रेक्ष्य निर्यातेत्यब्रवीत्—रा.

[1] अयं श्लोकः ज पुस्तके कुण्डलितः। [2] खरस्तु तान् महेष्वासान् घोरवर्मायुधध्वजान्। निर्यातेत्यब्रवीद्दृष्टः रथस्थः सर्वराक्षसान्—ङ. झ.

शक्तिभिः परिघैः घोरैः अतिमात्रैश्च कार्मुकैः ।
गदाऽसिमुसलैः वज्रैः गृहीतैः भीमदर्शनैः ॥ २१ ॥
राक्षसानां सुघोराणां सहस्राणि चतुर्दश ।
निर्यातानि जनस्थानात् खरचित्तानुवर्तिनाम् ॥ २२ ॥

मुद्गरः–लोहमयी गदा । पट्टसः–பட்டயம் । तोमरः–வளயம் । शक्तिः–ஈட்டி । परिघः–உழல்தடி । वज्रं–वज्रमित्यष्टाश्रमायुधम् ॥ २०–२२ ॥

[1] तांस्त्वभिद्रवतो दृष्ट्वा राक्षसान् भीमविक्रमान् ।
खरस्यापि रथः * किञ्चित् जगाम तदनन्तरम् ॥ २३ ॥

खरस्य रथोऽपि सेनाप्रस्थानात् किञ्चिदनन्तरं–सर्वसेनानिर्याणं किञ्चित् प्रतीक्ष्य–अनन्तरं जगामेत्यर्थः ॥ २३ ॥

ततः तान् शबलान् अश्वान् तप्तकाञ्चनभूषितान् ।
खरस्य [2] मतमास्थाय सारथिः समचोदयत् † ॥ २४ ॥

मतमास्थायेति । अभीष्टं ज्ञात्वेत्यर्थः ॥ २४ ॥

स चोदितो रथः ‡ शीघ्रं खरस्य रिपुघातिनः ।
शब्देनापूरयामास दिशश्च प्रदिशस्तदा ॥ २५ ॥

---

* किञ्चित्तदनन्तरमित्यन्वयः । † किञ्चिद्विलम्ब्य प्रस्थितत्वात्–पुरतः प्रस्थितं सैन्यं प्राप्तुं अश्वान् समचोदयदित्यर्थः । ‡ शीघ्रं चोदित इत्यन्वयः ।

[1] तांस्तु निर्धावतः–ज्ञ. [2] मतिमास्थाय–ज्ञ.

प्रवृद्धमन्युस्तु खरः खरस्वनः
रिपोर्वधार्थं त्वरितः यथाऽन्तकः ।
अचूचुदत् सारथिमुन्नदन् घनं
*महाबलो मेघ इवाश्मवर्षवान् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे द्वाविंशः सर्गः

---

† सर(२७)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे द्वाविंशः सर्गः

---

## त्रयोविंशः सर्गः

[ उत्पातदर्शनम् ]

‡ [1] तस्मिन् याते जनस्थानात् अशिवं शोणितोदकम् ।
§ अभ्यवर्षन्महा [2] मेघाः तुमुलाः गर्दभारुणाः ॥ १ ॥

अथ युद्धाय प्रस्थितस्य खरस्य महोत्पाताः वर्ण्यन्ते—तस्मिन्नित्यादि । अभ्यवर्षन्निति पदम् । गर्दभारुणाः—धूसरवर्णाः ॥ १ ॥

---

* महाबलः—झञ्झामारुतः 'झञ्झावातो महाबलः' इति निघण्टुः, तद्वान्; अर्श आद्यच् । झञ्झामारुतप्रेरित इत्यर्थः । महानिल इत्यपि पाठः । अश्मवर्षवान्—अश्मवर्षोयुक्त इत्यर्थः । घनं—उपरितनमेघम्-गो. अन्तकश्च अश्मवर्षवान्—उपलवर्षणशीलः, उन्नदन् मेघ इव च सारथिं पुनः अचूचुदत्-रा. अश्मवर्षः—वर्षोपलवर्षणं वा-घनं यथा तथा वर्षोपलवर्षणशीलो मेघ इवेति वाऽर्थः ॥ 'उन्नदन् पुनः' इति पाठे, पुनः अचूचुददित्यन्वयः । † व्याख्यादृष्ट्या एकः श्लोको न दृश्यते । ‡ 'तत्प्रयातं बलं घोरं' इति (ति) पाठे—प्रयातं बलं मेघाः शोणितोदकं अभ्यवर्षन्—इत्यन्वयः । § 'अभ्यवर्षन्महाघोरः तुमुलो गर्दभारुणः' इति (ति) पाठे— मेघ इति शेषः ।

[1] तत्प्रयातं बलं घोरं—च. ज. [2] घोराः—च. ज.

*निपेतुः तुरगास्तस्य रथयुक्ताः महाजवाः ।
समे †बाष्पचिते देशे राजमार्गे यदृच्छया ॥ २ ॥

रथयुक्ताः—रथे युक्ताः । बाष्पैः चितः—निबिडः तथा ॥ २ ॥

श्यामं रुधिरपर्यन्तं बभूव परिवेषणम् ।
अलातचक्रप्रतिमं ‡ [1] परिगृह्य दिवाकरम् ॥ ३ ॥

रुधिरः-रक्तवर्णः पर्यन्तः यस्य तत् तथा । अलातचक्रप्रतिमं इति वृत्तज्वालत्वोपमानम् ॥ ३ ॥

---

ततो ध्वजमुपागम्य हेमदण्डं समुच्छ्रितम् ।
समाक्रम्य महाकायः तस्थौ गृध्रः सुदारुणः ॥ ४ ॥
जनस्थानसमीपे तु [2] समागम्य खरस्वनाः ।
विस्वरान् विविधांश्चक्रुः मांसादाः मृगपक्षिणः ॥ ५ ॥

खरस्वनाः—परुषशब्दाः ॥ ५ ॥

[3] व्याजह्रुश्च § प्रदीप्तायां दिशि वै भैरवस्वनम् ।
‖ अशुभं यातुधानानां शिवा घोरा महास्वनाः ॥ ६ ॥

प्रदीप्तायां दिशीति । उत्पातवशात् जाज्वल्यमानायामित्यर्थः । यातुधानानां अशुभं व्याजह्रुः इत्यन्वयः ॥ ६ ॥

---

* निपेतुः—स्खलनादिना भूम्यां पतिता अभवन् । † पुष्पचिते—पुष्पयुते, अनेन पातनिमित्तराहित्यमुक्तम्-**ति.** 'बाष्पचिते' इति पाठे—बाष्पः—ऊष्मा । पूर्वं 'बाष्पच्छन्नान्यरण्यानि' (16.16) इत्युक्तं स्मरणीयमत्र । ‡ परिगृह्य—परितो व्याप्य-**गो.** § प्रदीप्तायां दिशि—सूर्यसन्निहितदिशीत्यर्थः-**गो.** ‖ राक्षससैन्यस्य पुरत एवोत्पातदर्शनात्-यातुधानानामशुभमित्युक्तम् ।

[1] प्रतिगृह्य-**च. ञ.** [2] समाक्रम्य-**ञ.** [3] व्याजह्रुरभिदीप्तायां-**च.**

*प्रभिन्न[1]गजसंकाशाः तोयशोणितधारिणः ।
आकाशं † तदनाकाशं चक्रुः भीमा बलाहकाः ॥ ७ ॥

प्रभिन्नाः—मत्ताः । तोयमिव शोणितमेव धरन्तीति तथा । 'सुप्सुपा' इति समासः । 'उक्तानामप्रयोगः' इति इवैवशब्दयोः निवृत्तिः । काशनं काशः प्रकाशः, अनाकाशं—अप्रकाशं—छन्नं चक्रुरित्यर्थः ॥ ७ ॥

बभूव तिमिरं घोरं ‡ उद्धतं रोमहर्षणम् ।
दिशो वा विदिशो वाऽपि न च व्यक्तं चकाशिरे ॥ ८ ॥
क्षतजार्द्रसवर्णाभा संध्या § कालं विना बभौ ।

क्षतजेन—रक्तेन आर्द्रस्य पटादिवस्तुनः सवर्णाभा—समानवर्णा, संध्या कालं विनैव बभौ । मेघेष्विति शेषः ॥ ८ ॥

‖ खरस्याभिमुखा नेदुः तदा घोरमृगाः खगाः ॥ ९ ॥
कङ्कगोमायुगृध्राश्च चुक्रुशुः भयशंसिनः[2] ।

कंकः–(கழுகு), गोमायुः–(நரி), गृध्रः–(பருந்து) ॥ ९ ॥

[3]नित्याशिवकरा युद्धे शिवाः ¶ घोरनिदर्शनाः ॥ १० ॥
नेदुर्बलस्याभिमुखं ज्वालोद्गारिभिराननैः ।

युद्धे नित्यमेवाशिवकराः—अशुभशंसिनः ॥ १० ॥

---

* 'प्रभिन्नगिरिसंकाशाः' इति **गो.** पाठः । प्रभिन्नाः–इन्द्रच्छिन्नपक्षाः । † अनाकाशं—अवकाशरहितं, प्रकाशरहितं वा–**रा.** ‡ उद्धतं—सान्द्रं–**गो.** अप्रधृष्यं वा । § कालं विना—स्वकालं विना–**गो.** ‖ पूर्वं सूर्याधिष्ठितदिशि शिवारुतमुक्तं, अधुना खरस्याभिमुखमुच्यते–**गो.** ¶ घोरनिदर्शनाः—भयंकरदर्शनाः ।

[1] गिरि–**ङ.** [2] एतदनन्तरं—"चक्रिरे विस्वरान् घोरान् मांसादा वनगोचराः"—इत्यधिकम्–**ङ.** [3] नित्याशुभ–**ङ.**

*कबन्धः परिघाभासः दृश्यते भास्करान्तिके ॥ ११ ॥
जग्राह सूर्यं स्वर्भानुः अपर्वणि †महाग्रहः ।
‡प्रवाति मारुतः शीघ्रं निष्प्रभोऽभूद्दिवाकरः ॥ १२ ॥
उत्पेतुश्च विना रात्रिं ताराः खद्योत[1]सप्रभाः ।

उत्पेतुः—उद्गता बभूवुः । खद्योतसमप्रभाः इत्यनेन निस्तेजस्त्वं तारल्यं च लक्ष्यते ॥ १२ ॥

संलीनमीनविहगाः नलिन्यः शुष्कपङ्कजाः ॥ १३ ॥
तस्मिन् क्षणे बभूवुश्च §विना पुष्पफलैः द्रुमाः ।
उद्धूतश्च विना वातं रेणुः ‖जलधरारुणः ॥ १४ ॥
वीचीकूचीति वाश्यन्तः बभूवुः तत्र शारिकाः ।

उद्धूतः—उत्क्षिप्तः । जलधरारुणः—मेघधूसरः । वीचीकूचीति शब्दानुकारः । वीचीकूचीति वाश्यन्तः; न तु शिक्षितं सवर्णसुशब्दमित्यर्थः ॥ १४ ॥

¶उल्काश्चापि [2]सनिर्घाताः निपेतुः घोरदर्शनाः ॥ १५ ॥

---

*परिघवत्—परिघायुधवत् आभासत इति परिघाभासः, कबन्धः—शिरश्शून्यमनुष्यकायः भास्करान्तिके—सूर्यस्य समीपे दृश्यते—अदृश्यत । तथोक्तं कामन्दकीये—'सूर्यदृष्टकबन्धादिरकस्मान्मूढवाहनः'—इति । कबन्धाकारमेघखण्ड इति यावत्–**गो.** †महान् आग्रहः यस्य, सः महाग्रहः स्वर्भानुः राहुः । अपर्वणि–प्रतिपद्दर्शसन्धिः पर्व, तस्मादन्यस्मिन्नपि काले सूर्यं जग्राह । तदाह वराहमिहिरः—'अपर्वणि तथा राहुग्रहणं चन्द्रसूर्ययोः'—इति–**गो.** ‡प्रवाति—प्रतिकूलो वाति–**गो.** §पुष्पफलैर्विना बभूवुः–गलितपुष्पादिका बभूवुरित्यर्थः–**गो.** ‖जलधरारुणः—मेघवद्धूसरः–**गो. रा.** ¶उल्कानिर्घातौ—ज्योतिर्वायुविशेषौ । अत्र वराहमिहिरः—"उल्का शिरसि विशाला निपतन्ती वर्धते तनुप्रभया । पवनाभिहता गगनादवनौ च यदा समापतति । भवति तदा निर्घातः स च पापो दीर्घखगविरुतः ॥" इति–**गो.**

[1] सन्निभाः–ङ. [2] सनिर्घोषाः–ज.

प्रचचाल मही सर्वा सशैलवनकानना ।
खरस्य च रथस्थस्य नर्दमानस्य धीमतः ॥ १६ ॥

प्राकम्पत भुजः सव्यः स्वरश्चास्यावसज्जत ।
सास्रा संपद्यते दृष्टिः पश्यमानस्य सर्वतः ॥ १७ ॥

ललाटे च *रुजा जाता न च मोहात् न्यवर्तत ।
तान् समीक्ष्य महोत्पातान् [1] उत्थितान् †रोमहर्षणान् ॥

अब्रवीत् राक्षसान् सर्वान् ‡प्रहसन् [2] स खरस्तदा ।

तान् उत्थितान् महोत्पातान् समीक्ष्यापि मोहात्—अज्ञानात् न न्यवर्तत । युद्धयात्राया इति शेषः ॥ १८ ॥

महोत्पातानिमान् सर्वान् [1] उत्थितान् घोरदर्शनान् ॥१९॥

न चिन्तयाम्यहं वीर्यात् बलवान् §दुर्बलानिव ।
तारा अपि शरैः तीक्ष्णैः पातयामि नभःस्थलात् ॥ २०॥

मृत्युं मरणधर्मेण संक्रुद्धो योजयाम्यहम् ।
राघवं तं बलोत्सिक्तं भ्रातरं चास्य लक्ष्मणम् ॥ २१ ॥

अहत्वा सायकैः तीक्ष्णैः नोपावर्तितुमुत्सहे ।
सकामा भगिनी मेऽस्तु पीत्वा तु रुधिरं तयोः ॥ २२ ॥

---

* रुजा—पीडा-**गो. रा.** †रोमहर्षणान्-रोमाञ्चकरान्— भयजनकानित्यर्थः । तदुक्तं साहित्यचिन्तामणौ- “ उल्कानिपातनिर्घातव्यालव्याघ्रादिदर्शनैः । उत्पन्नः सहसा चित्तविक्षोभस्त्रास इष्यते । नेत्रसंमीलनोत्कम्पगात्रसङ्कोचगद्गदैः । वैवर्ण्यस्वेदरोमाञ्चस्तम्भाद्यैरनुभूयते ”—इति-**गो.** ‡प्रहसन्नित्यनेन गर्वः सूच्यते । अग्रे तत्कार्यप्रतिज्ञानाद्— महोत्पातानिति । तथोक्तं चिन्तामणौ—“ कुलरूपवयोविद्याबलैश्वर्यधनादिभिः । या भवेदात्मनः श्लाघा स गर्व इति कथ्यते । उद्ग्रीवावेक्षणावज्ञाप्रतिज्ञातिर्भवेदिह ”—इति-**गो.** §यथा बलवान् पुरुषः दुर्बलान् स्वप्रतिपक्षभूतान् न गणयेत् तथेत्यर्थः ।

[1] उदितान्-**ङ.** [2] वाहिनीपतिः-**ङ.** [3] उदितान्-**ङ.**

यन्निमित्तस्तु रामस्य लक्ष्मणस्य विपर्ययः ।
न क्वचित् प्राप्तपूर्वो मे [1]संयुगेषु पराजयः ॥ २३ ॥
युष्माकमेतत प्रत्यक्षं नानृतं कथयाम्यहम् ।
देवराजमपि क्रुद्धः मत्तैरावत[2]यायिनम् ॥ २४ ॥
वज्रहस्तं रणे हन्यां किं पुनस्तौ कुमानुषौ ।
सा तस्य गर्जितं श्रुत्वा राक्षसस्य महाचमूः ॥ २५ ॥
प्रहर्षमतुलं लेभे मृत्यु[3]पाशावपाशिता ।
समीयुश्च महात्मानः युद्धदर्शनकांक्षिणः ॥ २६ ॥
ऋषयो देवगन्धर्वाः सिद्धाश्च सह चारणैः ।
समेत्य चोचुः सहिताः तेऽन्योन्यं पुण्यकर्मणः ॥ २७ ॥
स्वस्ति गोब्राह्मणेभ्योऽस्तु *लोकानां [4]येऽपि संमताः ।
जयतां राघवः संख्ये [5]पौलस्त्यान् रजनीचरान् ॥ २८ ॥
चक्रहस्तो यथा युद्धे सर्वान् असुरपुङ्गवान् ।
एतच्चान्यच्च बहुशः ब्रुवाणाः परमर्षयः ॥ २९ ॥
जातकौतूहलास्तत्र विमानस्थाश्च देवताः ।
ददृशुः वाहिनीं तेषां राक्षसानां †गतायुषाम् ॥ ३० ॥

एतदिति । न मे पराजयोऽभूत् इत्युक्तार्थतत्त्वमित्यर्थः ॥३०॥

‡रथेन तु खरो वेगात् [6]सैन्यस्याग्रात् विनिःसृतः ।
[7]तं दृष्ट्वा [8]राक्षसं भूयः राक्षसाश्च विनिःसृताः ॥ ३१ ॥

---

* ये लोकानां संमताः—गोब्राह्मणव्यतिरिक्ताः तेभ्यश्च स्वस्तीत्यर्थः—ति. ये लोकसमताः—लोकेप्सिताः, तेभ्यः गोब्राह्मणेभ्यः स्वस्त्यस्तु--रा. † अल्पायुष इतिवत् गतायुष इति निन्दावाक्यम् । ‡ पूर्वं सैन्यसम्बद्ध एव तदग्रभागे स्थितः, इदानीं तु सेनां बहुदूरे पृष्ठतः त्यक्त्वा स्वयमेवाग्रे गत इत्यर्थः—ति.

[1] संग्रामेषु—ङ. [2] गामिनम्—ज. [3] पाशवशं गता—ङ. [4] येऽभिसंमताः—ङ. [5] सर्वानसुरसत्तमान्—ङ. [6] उग्रसैन्यात्—ङ. [7] इदमर्धं नास्ति—ज. [8] निस्सृतं—ङ.

श्येनगामी [1]पृथुग्रीवः यज्ञशत्रुः [2]विहङ्गमः ।
दुर्जयः [3]करवीराक्षः परुषः कालकार्मुकः ॥ ३२ ॥
[4]मेघमाली [5]महामाली सर्पास्यो रुधिराशनः ।
द्वादशैते महावीर्याः प्रतस्थुः अभितः खरम् ॥ ३३ ॥
महाकपालः स्थूलाक्षः प्रमाथी त्रिशिरास्तथा ।
चत्वार एते सेनान्यः दूषणं पृष्ठतो ययुः ॥ ३४ ॥

श्येनगाम्यादयः द्वादश खरस्यामात्याः ॥ ३४ ॥

सा भीमवेगा समराभि[6]कामा
[7]महाबला राक्षसवीरसेना ।
तौ राजपुत्रौ सहसाभ्युपेता
माला ग्रहाणामिव चन्द्रसूर्यौ ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे त्रयोविंशः सर्गः

---

तौ राजपुत्रौ सा सेना सहसाऽभ्युपेतेत्यन्वयः । मल(३५)मानः सर्गः ॥ ३५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे त्रयोविंशः सर्गः

---

## चतुर्विंशः सर्गः

### [रामसमुद्यमः]

आश्रमं प्रतियाते तु खरे खरपराक्रमे ।
*तानेवौत्पातिकान् रामः सह भ्रात्रा ददर्श ह ॥ १ ॥

---

* तानेवेत्यनेन तादृशोत्पातदर्शनेन न स्वस्वीयेषु अनिष्टापत्तिः शङ्किताऽभूदिति सूच्यते। अत एव च वक्ष्यति 'समुत्थितान् महोत्पातान् संहर्तुं सर्वराक्षसान्'। (३) इति।

[1] पृथुश्यामः—ङ. [2] महाविषः—ङ. [3] परवीराक्षः—ङ. [4] हेममाली—ज. [5] महाबाहुः—ज. [6] काङ्क्षिणी—ज. [7] सुदारुणा—ज.

अथ रामस्य सीतारक्षणाय लक्ष्मणनियोगपूर्वं युद्धसंनाहः । आश्रममित्यादि । तानेवेति । ये पूर्वसर्गवर्णिताः तानेवेत्यर्थः । औत्पातिकान्, स्वार्थे ठक् ॥ १ ॥

*तानुत्पातान् महाघोरान् [1]उत्थितान् रोमहर्षणान् ।
†प्रजानामहितान् [2]दृष्ट्वा[3]ऽमर्षणो वाक्यमब्रवीत् ॥ २ ॥

अमर्षणः—अस्वस्थचित्तः ॥ २ ॥

इमान् पश्य, महाबाहो! ‡सर्वभूतापहारिणः ।
समुत्थितान् महोत्पातान् संहर्तुं सर्वराक्षसान् ॥ ३ ॥

सर्वभूतापहारिण इति । तत्सूचकानिति यावत् । प्रकृते सर्वराक्षसान् संहर्तुं तत्सूचनं कर्तुं समुत्थितान् ॥ ३ ॥

§अमी रुधिरधारास्तु [4]विसृजन्तः खरस्वनान् ।
व्योम्नि मेघा [5]विवर्तन्ते परुषाः गर्दभारुणाः ॥ ४ ॥

---

* अत्र 'तानुत्पातान् महाघोरान् रामो दृष्ट्वाऽत्यमर्षणः' इति **ति.** पाठः । अत्यमर्षणः—मुनिखेदासहिष्णुः उत्पातान् दृष्ट्वा—अवलोक्य, दृष्ट्वा—विचार्य—**रा.** † यद्यपि राक्षसानामेवाहितं भविष्यति, तथाऽपि तेषामपि प्रजात्वतः, युद्धसम्बन्धिफलपरंपराणां सर्वोपरि पतनसंभवाच्च सामान्यतः, 'प्रजानामहितान्' इत्युक्तं स्यात् । 'सर्वभूतापहारिणः' इत्यप्येवमेव । अधिकं तत्रैव । ‡ सर्वभूतापहारिणः राक्षसान् संहर्तुं समुत्थितान्—**रा.** 'सर्वभूतापहारिणः' इति उत्पातविशेषणम् । तादृशोत्पाताः सकललोकानर्थावहा इति तेषां स्वरूपदृष्ट्या । प्रकृतफलदृष्ट्या च 'सर्वराक्षसान् संहर्तुं' इति । § अत्र खरस्वनाः इति पाठान्तरम् । रुधिरधाराः विसृजन्तः मेघाः—**रा.** रुधिरमय्यः धाराः येषां ते—रुधिरधाराः । खरस्वनान्—घोरस्तनितानि विसृजन्तः विवर्तन्ते—सञ्चरन्ति—**गो.**

[1] रामो दृष्ट्वाऽत्यमर्षणः—**ज.** [2] घोरान्—**ङ.** [3] लक्ष्मणं—**ङ. ज.**
[4] विसृजन्ते—**ञ.** [5] निवर्तन्ते—**ङ.**

*सधूमाश्च शराः सर्वे मम युद्धाभिनन्दिनः ।
रुक्मपृष्ठानि † चापानि [1] विचेष्टन्ते च, लक्ष्मण ! ॥ ५ ॥

सधूमाः—उत्पातवशतः धूमसंबद्धाः विचेष्टन्ते–तूणीरे चलन्ति ॥ ५ ॥

यादृशा इह [2] कूजन्ति पक्षिणो वनचारिणः ।
‡ अग्रतो नो भयं प्राप्तं संशयो जीवितस्य च ॥ ६ ॥
संप्रहारस्तु सुमहान् भविष्यति न संशयः ।

अग्रतः—पुरस्तात्–आसन्नकाले इत्यर्थः ॥ ६ ॥

अयमाख्याति मे बाहुः स्फुरमाणो मुहुर्मुहुः ॥ ७ ॥
संनिकर्षे तु नः, शूर ! जयं, शत्रोः पराजयम् ।

एवं भयेष्वपि स्वस्याभयसूचकस्वानिमित्तसत्त्वमाह— अयमित्यादि । स्फुरमाणः–स्फुरन् इति यावत् । दक्षिण इति शेषः । सन्निकर्षे – आसन्नकाले ॥ ७ ॥

§ [3] सुप्रभं च प्रसन्नं च तव वक्त्रं हि लक्ष्यते ॥ ८ ॥

---

*सधूमा इति । प्रतापानलोद्युक्ता इति भावः-**गो.** लोके एकस्य कार्यस्य तीव्रतया बहिः स्फोटनात् पूर्वं 'इदानीं आयत्तीक्रियते, भविष्यत्यचिरात् स्पष्टं' इत्यर्थे एवं 'सधूमः' इति प्रयोगः अनुभवसिद्ध एव । † आत्मनश्चापद्वयं, लक्ष्मणस्यैकमिति बहुवचनम्–**गो.** ‡ नः अभयं प्राप्तं, जीवितस्य–राक्षसानां जीवनस्य संशयश्च प्राप्तः–**रा. ती.** 'अव्यवस्थौ हि विद्येते युद्धे जयपराजयौ' इति सामान्यलोकोक्त्या एवमुक्तिः । अत एव समनन्तरश्लोके स्वस्य जयः कथ्यते । § स्वमुखप्रसादादेः स्वयं द्रष्टुमशक्यत्वेन स्वसमानसुखे लक्ष्मणे निदर्शयति–सप्रभमिति–**गो.** अयं भावः–रामस्य मुखं यदि निष्प्रभं स्यात् तदा तव पश्यतो लक्ष्मणस्यापि मुखं निष्प्रभमेव स्यात् । लक्ष्मणमुखं यदा सप्रभं तदा स्वमुखे न काचित् विक्रिया स्यादिति रामाशय इति ।

[1] विवेष्टन्ते–ङ. [2] गर्जन्ति–ङ. [3] सप्रभं–ङ.

उद्यतानां हि युद्धार्थं येषां भवति, लक्ष्मण !
निष्प्रभं वदनं तेषां भवत्यायुःपरिक्षयः ॥ ९ ॥

न केवलं ममैवं लक्षणोपेतत्वं, अपि तु तवापीत्याह– सुप्रभमित्यादि । येषां आयुःपरिक्षयो भवति तेषां वदनं निष्प्रभं भवति । नैवमस्माकमिति शेषः ॥ ८-९ ॥

रक्षसां नर्दतां घोरः श्रूयते च महाध्वनिः ।
आहतानां च भेरीणां राक्षसैः क्रूरकर्मभिः ॥ १० ॥
अनागतविधानं तु कर्तव्यं [1] शुभमिच्छता ।
* [2] आपदं शङ्कमानेन पुरुषेण विपश्चिता ॥ ११ ॥

अनागतस्य, अपि तु आजिगमिषितस्य अनिष्टस्य विधानं— प्रतिविधानं–परिहारः तथा । उक्तवाक्यस्यैव विवरणं–आपदमित्यादि ॥

तस्माद्गृहीत्वा वैदेहीं † शरपाणिः धनुर्धरः ।
गुहामाश्रय शैलस्य दुर्गां पादपसंकुलाम् ॥ १२ ॥

शैलस्य गुहामिति । आश्रमं हित्वेति शेषः ॥ १२ ॥

प्रतिकूलितुमिच्छामि न हि वाक्यमिदं त्वया ।
‡ शापितो मम पादाभ्यां गम्यतां, [3] वत्स ! मा चिरम् ॥

* आपदं शङ्कमानेन शुभमिच्छता विपश्चिता पुरुषेण अनागतविधानं तु कर्तव्यम्– इति एकमेव वाक्यं युक्तम् । † 'तत्रापि त्वया जागरूकेणैव भाव्य'मित्याशयेनाह— शरपाणिर्धनुर्धर इति । ‡ 'मया शापितोऽसि' इति वक्तव्ये 'मम पादाभ्यां' इत्युक्तिः लक्ष्मणव्यवहारानुसारेण–गो. स्वयं युद्धे प्रोत्साहवतः लक्ष्मणस्याशयं ज्ञात्वाऽह एवम् । अत एव समनन्तरश्लोकोऽपि स्वरसः ।

[1] जय–ङ. [2] आपदा–ज. [3] तत्र–ङ.

इदानीं मया उच्यमानं इदं वाक्यं त्वया प्रतिकूलितुं—त्वत्कर्तृक-प्रातिकूल्यवर्तनं नेच्छामि, आर्षः तुमुन् अभिन्नकर्तृके, उक्तमेव कुरु इत्यर्थः । भगवान् कार्यगौरवं विज्ञाय लक्ष्मणस्य * तत्र प्रविवक्षां वारयति आज्ञापुरःसरं अविलम्बाय—शापित इत्यादि ॥ १३ ॥

† त्वं हि शूरश्च बलवान् हन्या ह्येतान् न संशयः ।
[1] स्वयं तु हन्तुमिच्छामि सर्वानेव निशाचरान् ॥ १४ ॥
एवमुक्तस्तु रामेण लक्ष्मणः सह सीतया ।
शरानादाय चापं च गुहां दुर्गां समाश्रयत् ॥ १५ ॥

दुर्गां गुहामिति । इतरैः गन्तुमशक्यां गिरिगुहामित्यर्थः ॥

तस्मिन् प्रविष्टे तु गुहां लक्ष्मणे सह सीतया ।
‡ हन्त ! [2] निर्युक्तमित्युक्त्वा रामः कवच[3]माविशत् ॥ १६ ॥

हन्त हर्षे । निर्युक्तं हन्त—शीघ्रं अस्मदुक्तं निगूढं संपादित-मित्युक्त्वा रामः कवचं आविशत्—प्रतिमुक्तवान् इति यावत् ॥ १६ ॥

स तेनाग्निनिकाशेन कवचेन विभूषितः ।
बभूव रामः § तिमिरे [4] विधूमोऽग्निरिवोत्थितः ॥ १७ ॥

---

* तत्र—युद्धे इत्यर्थः । † त्वन्निवर्तनं न त्वदशक्तया, किन्तु मुनिभ्यः प्रतिज्ञाना-नमयैव तद्वधः कर्तव्य इत्याशयेनाह—त्वं हीति—**गो.** यद्यपि इन्द्रजिद्वधः लक्ष्मणेनैव, तथापि दण्डकारण्यस्थमुनिभ्यः तत्रत्यराक्षसवधस्यैव प्रतिज्ञानात् एवमुक्तिरिति तस्य आशयः ॥ ‡ हन्तेति हर्षे । निर्युक्तं—निश्चयेन उपायश्चिन्तित इत्यर्थः—**गो.** 'निश्चिन्तं' इति वाऽर्थः । § तिमिरेऽग्निरिवेत्यन्वयः । तेन प्रकाशाधिक्यं, तिमिरवत् रामेण रक्षसां नाशश्च कथ्यते ।

[1] अहं तु—ङ. [2] निर्यामि चेत्युक्त्वा—ङ. [3] मादधत्—ङ. [4] महानग्नि—ञ.

स चापमुद्यम्य महत् शरानादाय वीर्यवान् ।
बभूवावस्थितस्तत्र ज्यास्वनैः पूरयन् दिशः ॥ १८॥
ततो देवाः सगन्धर्वाः सिद्धाश्च सह चारणैः ।
समेयुश्च महात्मानः युद्धदर्शनकांक्षिणः ॥ १९॥
ऋषयश्च महात्मानः *लोके ब्रह्मर्षिसत्तमाः ।
समेत्य चोचुः सहिताः अन्योन्यं पुण्यकर्मणः ॥२०॥

लोके ब्रह्मर्षिसत्तमाः – त्रैलोक्येऽपि ब्रह्मर्षित्वेन प्रसिद्धाः ऋषयः भृग्वादय इत्यर्थः ॥ २०॥

स्वस्ति गोब्राह्मणानां तु †लोकानां येऽभिसङ्गताः ।
जयतां राघवो युद्धे पौलस्त्यान् रजनीचरान् ॥ २१॥
‡चक्रहस्तो यथा युद्धे सर्वान् असुरपुङ्गवान्[1] ।
एवमुक्त्वा पुनः प्रोचुः आलोक्य च परस्परम् ॥२२॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ? ॥ २३ ॥

गोब्राह्मणानामित्यादौ संबन्धसामान्ये षष्ठी आर्षी ॥२३॥

§इति ||राजर्षयः सिद्धाः सगणाश्च द्विजर्षभाः ।
जातकौतूहलाः तस्थुः विमानस्थाश्च देवताः ॥ २४॥

सगणाः–विद्याधरादिदशदेवयोनिगणसहिताः ॥२४॥

---

*'लोके' इति इतरत्राप्यन्वेति । †ये लोकानां अभिसङ्गताः—अनुकूलाः, तेभ्योऽपि स्वस्त्यस्तु–गो. ‡चक्रहस्तः— इत्यत्र विष्णुरिति विशेष्यम् । तैः रामस्वरूपपरिज्ञानात् देवरहस्यस्य गोपनीयत्वात् नाधिकं किञ्चिदुक्तं विशेष्यादिकम् । §इतिप्रोचुरित्यन्वयः । ||राजर्षयः—देवत्वं प्राप्ताः । यद्वा—वानप्रस्थीभूताः–गो.

[1] एतदनन्तरं–"एतच्चान्यच्च बहवः ब्रुवाणाः परमर्षयः" इत्यधिकं–ङ.

आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् ।
दृष्ट्वा सर्वाणि भूतानि भयात् विव्यथिरे तदा ॥ २५ ॥

आविष्टं तेजसेति । वैराजेन वैष्णवेन क्षात्रेण तेजसा इति यावत् । एतेन सहजस्वभावः भगवतः ब्राह्म एव, क्षात्रस्तु स्वेच्छया कार्याय भगवता स्वीक्रियते इति स्पष्टम् । अत एव भूतानि भयात् विव्यथिरे इति ॥ २५ ॥

रूपमप्रतिमं तस्य *रामस्याक्लिष्टकर्मणः ।
बभूव रूपं क्रुद्धस्य रुद्रस्येव [1]पिनाकिनः ॥ २६ ॥
इति संभाष्यमाणे तु देवगन्धर्वचारणैः ।
ततो गम्भीरनिर्ह्रादं घोर[2]वर्मायुधध्वजम् ॥ २७ ॥
अनीकं यातुधानानां समन्तात् [3]प्रत्यदृश्यत ।
[4]सिंहनादं विसृजतां अन्योन्यमभिगर्जताम् ॥ २८ ॥
चापानि विष्फारयतां जृम्भतां च पुनः पुनः ।
†विप्रघुष्टस्वनानां च दुन्दुभींश्चापि निघ्नताम् ॥ २९ ॥
तेषां [5]सुतुमुलः शब्दः पूरयामास तद्वनम् ।

जृम्भतां च पुनः पुनरिति । देहचिन्ताराहित्येन युद्धप्रवृत्तये मदकरद्रव्यस्वीकारजं जृम्भणम् । विप्रघुष्टेति । अविशब्दनार्थत्वात् अनिट् ॥ २९ ॥

---

* न क्लिष्टं—कस्मैचित् खेदप्रदं कर्म—व्यापारः यस्य—रा. अनायासेनैव महदपि कर्म साधयत इति वाऽर्थः । न क्लिष्टं कर्म यस्येति विग्रहः ॥ † घोषः—गुञ्जनाख्यध्वनिविशेषः 'घोषो गुञ्जनमञ्जने' इति वैजयन्ती—गो.

[1] महात्मनः—ज.    [2] चर्म—च. ज.    [3] प्रत्यपद्यत—च. ज.
[4] भीराशापम्—च. ज.    [5] सुविपुलः—च. ज.

तेन शब्देन वित्रस्ताः श्वापदा वनचारिणः ॥ ३० ॥
*दुद्रुवुर्यत्र निःशब्दं पृष्ठतो नावलोकयन् ।

पृष्ठतो नावलोकयन् इति । पृष्ठभागानवलोकनं भीतिवशात्, †प्रद्रवन्तः श्वापदाः इत्यनुकर्षः ॥ ३० ॥

[1]तच्चनीकं महावेगं रामं समुपसर्पत ॥ ३१ ॥

धृतनानाप्रहरणं गम्भीरं सागरोपमम् ।
रामोऽपि चारयन् चक्षुः ‡सर्वतो रणपण्डितः ॥ ३२ ॥
ददर्श खरसैन्यं तत् युद्धाभिमुखमुत्थितम् ।
§[2]वितत्य च धनुर्भीमं तूण्योश्चोद्धृत्य सायकान् ॥ ३३ ॥
क्रोधमाहारयत् तीव्रं ||वधार्थं सर्वरक्षसाम् ।

क्रोधं आहारयत्—प्राप्तवानित्यर्थः । तथाऽत्र सर्वत्र ॥ ३३ ॥

दुष्प्रेक्षः सोऽभवत् क्रुद्धः युगान्ताग्निरिव ज्वलन् ॥ ३४ ॥
तं दृष्ट्वा तेजसाऽऽविष्टं प्राव्यथन् वनदेवताः ।

प्राव्यथन्—प्राव्यथन्तेति यावत् ॥ ३४ ॥

तस्य [3]क्रुद्धस्य रूपं तु रामस्य ददृशे तदा ॥ ३५ ॥

---

* यत्र निश्शब्दं—शब्दाभावः—तं देशं दुद्रुवुरित्यन्वयः—**गो. रा.** यत्र वने क्षणे वा, वनचारिणः निश्शब्दं—भीत्या शब्दमप्यकुर्वन्तः दुद्रुवुः—इति क्रियाविशेषणं वा । † प्रद्रवन्त इत्यर्थानुकर्षणम् । ‡ चक्षुः सर्वतश्चारयन्नित्यन्वयः । § वितत्य—किञ्चिद्बाण-विसर्पणं कृत्वेत्यर्थः, 'विततं संहितस्येषोः किञ्चिदेव विसर्पणम्' इति वैजयन्ती—**गो.** || सर्वरक्षसां वधार्थं—सर्वरक्षोवधद्वारत्वादस्य युद्धस्येति भावः—**ति.**

[1] **गत्वानीकं—ङ.** [2] विनम्य च, सज्यं **कृत्वा—ङ.** [3] **क्षुब्धस्य—च. अ.**

*दक्षस्येव क्रतुं हन्तुं उद्यतस्य पिनाकिनः ।
आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् ॥ ३६ ॥
दृष्ट्वा सर्वाणि भूतानि भयार्तानि प्रदुद्रुवुः ॥

तत्कार्मुकैः आभरणैः ध्वजैश्च
तैः वर्मभिश्चाग्निसमानवर्णैः ।
बभूव सैन्यं पिशिताशनानां
सूर्योदये †नीलमिवाभ्र[1]वृन्दम् ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे चतुर्विंशः सर्गः

---

नीलाभ्रवृन्दस्थानीयाः राक्षसाः, सूर्योदयः सूर्यकिरणसंबन्धः, तत्स्थानीयः कार्मुकादिसंबन्धः । साल(३७)मानः सर्गः ॥ ३७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे चतुर्विंशः सर्गः

---

## पञ्चविंशः सर्गः

[खरसैन्यविध्वंसनम्]

‡अवष्टब्धधनुं रामं क्रुद्धं च रिपुघातिनम् ।
ददर्शाश्रममागम्य खरः सह पुरःसरैः ॥ १ ॥

अथ राक्षसैः रामस्य तुमुलं युद्धम् । अवष्टब्धधनुमित्यादि । उकारान्तोऽप्यस्ति धनुश्शब्द इति आदावेवोक्तम् ॥ १ ॥

---

* दक्षस्येति क्रोधातिशयमात्रे दृष्टान्तः–गो. † नीलाभ्राणां रक्षसां च कार्मुकवत्त्वं ध्वजवत्त्वं च तुल्यम् ; मेघे उत्पातध्वजसंभवात्–गो. ‡ अवष्टब्धधनुं–संपूर्णस्वाधीनधनुष्मन्तमिति भावः ।

[1] आढ्यम्–ख. ज.

तं दृष्ट्वा [1]सशरं चापं उद्यम्य * खर निःस्वनम् ।
रामस्याभिमुखं सूतं † [3]चोद्यतामित्यचोदयत् ॥ २ ॥

स खरस्याज्ञया सूतः तुरगान् समचोदयत् ।
यत्र रामो महाबाहुः एको धून्वन् स्थितो धनुः ॥ ३ ॥

तं तु निष्पतितं दृष्ट्वा सर्वे ते रजनीचराः ।
[4]नर्दमाना महानादं [5]सचिवाः पर्यवारयन् ॥ ४ ॥

सचिवाः पर्यवारयन्निति । श्येनगाम्यादयः प्रागुक्ताः सचिवाः ॥

स तेषां यातुधानानां मध्ये रथगतः खरः ।
बभूव मध्ये ताराणां लोहिताङ्ग [6]इवोदितः ॥ ५ ॥

लोहिताङ्गः—भौमः ॥ ५ ॥

ततः शरसहस्रेण राममप्रतिमौजसम् ।
अर्दयित्वा महानादं ननाद समरे खरः ॥ ६ ॥

ततस्तं ‡ भीमधन्वानं क्रुद्धाः सर्वे निशाचराः ।
रामं नानाविधैः शस्त्रैः अभ्यवर्षन्त दुर्जयम् ॥ ७ ॥

मुद्गरैः [7]पट्टिसैः शूलैः प्रासैः खड्गैः परश्वधैः ।
राक्षसाः समरे रामं निजघ्नू §रोषतत्पराः ॥ ८ ॥

---

* खरनिस्वनमिति चापविशेषणम् । † चोद्यतामिति । रथः इति शेषः । 'तुरगान् समचोदयत्' इत्युक्तया तुरगानिति वा शेषः । ‡ भीमधन्वानं तं राममित्यन्वयः । § रोषतत्पराः—क्रोधपरवशाः—गो. रोषेण रामहननपरा इति वा ।

[1] सगुणं—च. [2] निस्वनः—ङ. [3] चोदयामास राक्षसम्—च. [4] मुञ्चमाना—च. ज. [5] सचापाः—ङ. [6] इवोद्धतः—च. ज. [7] आयसैः—च. ज.

ते * बलाहकसङ्काशाः [1] महानादाः महौजसः ।
अभ्यधावन्त काकुत्स्थं रथैः वाजिभिरेव च ॥ ९ ॥

गजैः पर्वतकूटाभैः रामं युद्धे जिघांसवः ।
ते रामे शरवर्षाणि व्यसृजन् रक्षसां गणाः ॥ १० ॥

शैलेन्द्रमिव धाराभिः वर्षमाणा [2] बलाहकाः ।
स तैः परिवृतो घोरैः राघवो रक्षसां गणैः ॥ ११ ॥

†[3] तिथिष्विव महादेवः वृतः पारिषदां गणैः ।
तानि मुक्तानि शस्त्राणि यातुधानैः स राघवः ॥ १२ ॥

‡ प्रतिजग्राह विशिखैः नद्योघानिव सागरः ।
स तैः प्रहरणैः घोरैः भिन्नगात्रो न विव्यथे ॥ १३ ॥

[4] रामः प्रदीप्तैः बहुभिः वज्रैरिव [5] महाचलः ।
स विद्धः क्षतजादिग्धः सर्वगात्रेषु राघवः ॥ १४ ॥

बभूव रामः संध्याभ्रैः दिवाकर इवावृतः ।

'वज्रैरिव महाचलः' इत्यनेन किञ्चिद्व्रणितत्वं गम्यते । अत एव 'स विद्धः § क्षतजादिग्धः' इत्यादि । आदिग्धः–आलिप्तः ॥ १४ ॥

विषेदुः देवगन्धर्वाः सिद्धाश्च परमर्षयः ॥ १५ ॥

---

* बलाहकसंकाशाः–मेघसदृशाः ते रथैः वाजिभिः गजैश्च रामं अभ्यधावन्त–इति सार्धश्लोकमेकं वाक्यम् ।　　† तिथिषु–प्रदोषरात्रिषु–रा. रामस्य, राक्षसानां च अत्युग्रत्वमात्रेऽयं दृष्टान्तः ।　　‡ प्रतिजग्राह –प्रतिरुरोध–गो. तेषां स्पर्धां स्वीचकार—उत्तरमदादिति यावत् ।　　§ क्षतजं—रक्तम् ।

[1] महाकाया महाबलाः–च. ज. [2] महाघनाः–च. ज. [3] इदमर्धं कुत्रचिन्नास्ति । [4] इदमर्धं कुत्रचिन्नास्ति–ज. [5] महाबलः–ङ.

एकं सहस्रैः बहुभिः तदा दृष्ट्वा समावृतम् ।
ततो रामः सुसंक्रुद्धः *मण्डलीकृतकार्मुकः ॥ १६ ॥
ससर्ज †[1] विशिखान् बाणान् शतशोऽथ सहस्रशः ।
दुरावारान् दुर्विषहान् कालदण्डोपमान् रणे ॥ १७ ॥
मुमोच लीलया रामः कङ्कपत्रान् अजिह्मगान् ।

दुरावारान्—अशक्यनिवारणान् । दुर्विषहान्–प्राणविमोकं विना केनापि सोढुमशक्यान् ॥ १७ ॥

ते शराः शत्रुसैन्येषु मुक्ता रामेण लीलया ॥ १८ ॥
आददू रक्षसां प्राणान् पाशाः ‡ कालकृता इव ।

लीलयेति । सकलप्रपञ्चसंहारब्रह्मस्वभावत्वात् भगवतो रामस्य इयं लीलेत्यविस्मयः । तेजसाऽऽविष्टशब्दवत् लीलयेत्यस्य च अभ्यासः तदर्थतात्पर्यप्रकाशनाय कवेः ॥ १८ ॥

[2] भित्त्वा राक्षसदेहांस्तान् ते शरा रुधिराप्लुताः ॥ १९ ॥
अन्तरिक्षगताः रेजुः दीप्ताग्निसमतेजसः ।

रुधिरैराप्लुताः—सिक्ताः । अत एव दीप्ताग्निसमतेजसः ॥१९॥

असंख्येयास्तु रामस्य सायकाः चापमण्डलात् ॥ २० ॥
विनिष्पेतुरतीवोग्राः रक्षःप्राणापहारिणः ।

चापमण्डलादिति । मण्डलाकारतयैव संधानमोक्षणादिशैघ्र्यवतो दीर्घशाटीभ्रमितकन्दुकास्पन्दनवत् अनुभूयमानात् इत्यर्थः ॥ २० ॥

---

* मण्डलीकृतकार्मुकः—आकर्षणाकर्षणेन मण्डलाकारीकृतधनुः–गो. बाणेऽत्यन्तवेगाधानाय सम्यगाकर्षणेन मण्डलीकृतं धनुः येनेति वा । † विशिखान् बाणान्–अर्धचन्द्राग्रबाणान्–गो. ‡ कालः—यमः ।

[1] निशितान्–ङ. च. [2] हत्वा–ङ.

तैर्धनूंषि ध्वजाग्राणि [1] चर्माणि च शिरांसि च ॥ २१ ॥

बाहून् सहस्ताभरणान् ऊरून् करिकरोपमान् ।
[2] चिच्छेद रामः समरे शतशोऽथ सहस्रशः ॥ २२ ॥

हयान् काञ्चनसंनाहान् रथयुक्तान् ससारथीन् ।
गजांश्च सगजारोहान् सहयान् सादिनस्तथा ॥ २३ ॥

[3] चिच्छिदुः बिभिदुश्चापि रामबाणा * गुणच्युताः ।
पदातीन् समरे हत्वा ह्यनयत् यमसादनम् ॥ २४ ॥

सहस्ताभरणान् साङ्गदान्। बाहूनित्यनेन अङ्गदार्हो हस्तप्रदेशः, भुजशब्देन च तदन्यः। चर्माणि-फलकानि। छेदनभेदनयोः द्वैधीभावविदारणे अर्थः। बाहून् सहस्ताभरणानित्यत्र हस्तसामान्यार्थो बाहुशब्दः ॥ २४ ॥

ततो † नालीकनाराचैः तीक्ष्णाग्रैश्च विकर्णिभिः ।
भीममार्तस्वरं चक्रुः भिद्यमाना निशाचराः ॥ २५ ॥

नालीकाः—मुखमात्रायस्संसृष्टाः बाणाः। नाराचाः—सर्वतोऽयोरूपाः। विकर्णिनः—अग्राङ्कुशाः उद्धारे च प्राणहराः ॥ २५ ॥

तत् सैन्यं [4] निशितैर्बाणैः अर्दितं मर्मभेदिभिः ।
रामेण न ‡ सुखं लेभे शुष्कं वनमिवाग्निना ॥ २६ ॥

---

* गुणः—धनुर्ज्या । † नालीकाः—नालमात्रशराः, नाराचाः आयसशराः, विकर्णिनः—कर्णशराः—गो. ‡ सुखं—दुःखनिवृत्तिम्—गो.

[1] वर्माणि—ङ. चर्माणि कवचानि च—ञ. [2] बिभेद—ङ. [3] इदमर्धं—ङ. पुस्तके कुण्डलितम् । [4] विविधै—च. ञ.

केचित् भीमबलाः [1]शूराः शूलान् खड्गान् परश्वथान् ।
[2]रामस्याभिमुखं गत्वा चिक्षिपुः * परमायुधान् ॥ २७ ॥
तानि बाणैः महाबाहुः † शस्त्राण्यावार्य [3]राघवः ।
जहार समरे प्राणान् चिच्छेद च शिरोधरान् ॥ २८ ॥

आवार्य–वारणं कृत्वा ॥ २८ ॥

ते छिन्नशिरसः पेतुः छिन्न[4]वर्मशरासनाः ।
सुपर्णवातनिक्षिप्ताः जगत्यां पादपा यथा ॥ २९ ॥

सुपर्णवातेति । जगत्यां–भूम्यां, सुपर्णस्य–महागरुडस्य, वातेन–पक्षवातेन, अमृताहरणयुद्धकाले विक्षिप्ताः–भग्नाः पादपाः–कल्पवृक्षाः यथा तद्वदित्यर्थः । समग्रालङ्कारतो रक्षस्तनूनां कल्पपादपसाम्यम् ॥

अवशिष्टाश्च ये तत्र विषण्णाश्च निशाचराः ।
खरमेवाभ्यधावन्त शरणार्थं शरार्दिताः ॥ ३० ॥

अवशिष्टाः—हतावशिष्टाः ॥ ३० ॥

तान् सर्वान् [5]पुनरादाय समाश्वास्य च ‡ दूषणः ।
§ अभ्यधावत काकुत्स्थं [6]क्रुद्धो रुद्रमिवान्तकः ॥ ३१ ॥

तान् सर्वानिति । खरशरणार्थिनः इत्यर्थः ॥ ३१ ॥

---

* 'परमायुधान्' इति शूलादिविशेषणम् । तेन शूलादेः शस्त्ररूपत्वमुक्तं भवति । अत एव 'शस्त्राण्यावार्य' इत्यनुपदमुच्यते । † शस्त्राण्यावार्य शिरोधरान् चिच्छेद, प्राणान् जहार च—इत्यन्वयः ‡ दूषणः—खरस्य प्रधानसेनापतिः–(22–7) § क्रुद्धः अन्तक इव स्थितः दूषणः रुद्रमिव स्थितं रामं अभ्यधावत इत्यन्वयः । रुद्रस्य मृत्युञ्जयत्वात्– दूषणवधः एतेन सूचितः ।

[1] प्रासान्–ङ. [2] चिक्षिपुः परमक्रुद्धाः रामाय रजनीचराः–च. ज. [3] वीर्यवान्–ज. [4] चर्म–च. ज. [5] धनु–च. ज. [6] क्रुद्धं क्रुद्ध इवान्तकः–ज. रुद्रं क्रूर इवान्तकः– ङ.

निवृत्तास्तु पुनः सर्वे दूषणाश्रय[1]निर्भयाः ।
राममेवाभ्यधावन्त *सालतालशिलायुधाः ॥ ३२ ॥

दूषणाश्रयबलेन निर्भयाः—भयरहिताः ॥ ३२ ॥

शूलमुद्गरहस्ताश्च चापहस्ता महाबलाः ।
सृजन्तः शरवर्षाणि शस्त्रवर्षाणि संयुगे ॥ ३३ ॥

द्रुमवर्षाणि मुञ्चन्तः शिलावर्षाणि राक्षसाः ।
तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् ॥ ३४ ॥

रामस्य च महाघोरं पुनस्तेषां च रक्षसाम् ।
ते समन्तादभिक्रुद्धाः राघवं [2]पुनरभ्ययुः ॥ ३५ ॥

तैश्च सर्वा दिशो दृष्ट्वा प्रदिशश्च समावृताः ।
राक्षसैः उद्यतप्रासैः शरवर्षाभिवर्षिभिः ॥ ३६ ॥

स कृत्वा भैरवं नादं अस्त्रं परमभास्वरम् ।
संयोजयत गान्धर्वं राक्षसेषु महाबलः ॥ ३७ ॥

सर्वाः दिशः प्रदिशश्च समावृताः दृष्ट्वा, स रामः भैरवं नादं कृत्वा, सर्वतो रक्षोभिः शरवर्षाभिवर्षिभिः आवृतत्वात् कालोचितं परमभास्वरं गान्धर्वमस्त्रं राक्षसेषु विषये संयोजयत—समयोजयत् धनुषीत्यर्थः॥

ततः शरसहस्राणि निर्ययुः चापमण्डलात् ।
सर्वा दश दिशो बाणैः [3]आवार्यन्त समागतैः ॥ ३८ ॥

---

* सालतालौ—वृक्षविशेषौ ।

[1] दुर्जयाः-ङ.　[2] पुनरार्दयन्–ज.　[3] आपूर्यन्त–च. ज.

*नाददानं शरान् घोरान्[1] न मुञ्चन्तं[2] शिलीमुखान् ।
[3]विकर्षमाणं पश्यन्ति राक्षसास्ते शरार्दिताः †[4] ॥ ३९ ॥

नाददानमित्यादि । घोरान् शरान् आददानमपि न पश्यन्ति, तान् शिलीमुखान् मुञ्चन्तमपि न पश्यन्ति ; अपि तु शरार्दिताः राक्षसाः विकर्षमाणमेव केवलं पश्यन्ति । निरतिशयशैघ्र्यवशात् चक्रीभूतमेव केवलं धनुः पश्यन्ति ॥ ३९ ॥

‡शरान्धकारमाकाशं आवृणोत् सदिवाकरम् ।
बभूवावस्थितो §रामः [5]प्रवमन्निव तान् शरान् ॥ ४० ॥

'अन्धकारोऽस्त्रियाम्', शरजं अन्धकारं तत् सदिवाकरं आकाशमावृणोत् । एवमपि तान् शरान् प्रवमन्निव, इवशब्दः एवार्थे, प्रवमन्नेव—भूयो विक्षिपन्नेव अवस्थितोऽभूत् ॥ ४० ॥

---

* राक्षसाः रामस्य शरादानकर्षणमोचनानि नापश्यन्, किन्तु स्वहिंसनमेवापश्यन्निति क्रियाप्रधानो निर्देशः—गो. आत्मानं विकर्षमाणं परं पश्यन्तीति योजना स्यात् । अथ वा—'शरादानकर्षणमोचनानि' इत्युक्त्या 'न कर्षमाणं पश्यन्ति' इति पाठः गो. सम्मतः स्यात्। 'स्वहिंसनमेवापश्यन्' इति च शरार्दिताः—इत्यस्य विवरणम् ॥ † यद्यपि गान्धर्वास्त्रप्रयोगे विचित्रबाणनिर्गमोऽस्ति, तदस्मिन् श्लोके नोच्यते ; किन्तु तदनन्तरभाविकेवलशरमोक्ष इति ज्ञेयम्—गो. उत्तरत्र ३१ सर्गे अकम्पनवाक्यं (१९–२०) अत्रावधेयम् । ‡ शरान्धकारमिति । अन्धकारमिति क्लीबत्वमार्षं—गो. § 'नाददानं शरान् घोरान्' इत्याद्युक्त्या रामव्यापाराबदर्शनात्—आहत्य राम एव तान् प्रवमन्निवासीदित्युक्तिः ।

[1] नामुञ्चन्तं—ङ. विमुञ्चन्तं—च.ज. [2] शरोत्तमान्—ज. [3] 'न कर्षमाणं—च. न कार्मुकं विकर्षन्तं रामं पश्यन्ति संयुगे'—ङ. [4] एतदनन्तरं—" शरा रामेण तूत्सृष्टाः रुक्मपुङ्खाः पतत्रिणः । सर्पाः पञ्चानना भूत्वा भक्षयन्ति स्म राक्षसान् "—इत्यधिकं—ङ. [5] प्रक्षिपन्निव—ज.

युगपत् पतमानैश्च युगपच्च हतैर्भृशम् ।
युगप[1]त्पतितैश्चैव [2]विकीर्णा वसुधाऽभवत् ॥ ४१ ॥

पतमानैः—गच्छद्भिरिति यावत् । पतितैरिति । लक्ष्येष्विति शेषः । विकीर्णा विशेषणाच्छादिता ॥ ४१ ॥

*निहताः पतिताः क्षीणाः छिन्ना [3]भिन्ना विदारिताः ।
तत्र तत्र स्म दृश्यन्ते राक्षसास्ते सहस्रशः ॥ ४२ ॥

निहताः—सद्योहताः । पतिताः—पातानन्तरं मृताः । क्षीणाः—कण्ठगतप्राणाः । छिन्नभिन्नौ प्रागुक्तार्थौ ॥ ४२ ॥

सोष्णीषैरुत्तमाङ्गैश्च साङ्गदैः बाहुभिस्तथा ।
ऊरुभिः [4]जानुभिः छिन्नैः नानारूपविभूषणैः ॥ ४३ ॥
हयैश्च द्विपमुख्यैश्च रथैर्भिन्नैरनेकशः ।
चामरैः व्यजनैः छत्रैः ध्वजैः नानाविधैरपि ॥ ४४ ॥
रामस्य बाणाभिहतैः [5]विचित्रैः शूलपाट्टिशैः[6] ।
विच्छिन्नैः समरे भूमिः विकीर्णाऽभूत् भयङ्करा ॥ ४५ ॥

विभूषणैरिति । उपलक्षिताः राक्षसाः इत्यन्वयः । विच्छिन्नैः—विशेषेण छिन्नैः ॥ ४५ ॥

---

* निहताः—केवलं प्रहताः । पतिताः—अशनिपात इव भयेन भूमौ पतिताः । क्षीणाः—कण्ठगतप्राणाः । छिन्नाः—द्विधाकृताः । भिन्नाः—खण्डितावयवाः । विदारिताः—नृसिंहेन हिरण्यवत् आनाभिकण्ठं उद्भिन्नशरीराः—गो.

[1] त्प्रहितै—ङ. [2] विस्तीर्णा—ङ. [3] भग्ना निवारिता.—ङ. [4] बाहुभिः—च. [5] विच्छिन्नैः । [6] एतदनन्तरं—“खड्गैः खण्डीकृतैः प्रासैः विकीर्णैश्च परश्वधैः । चूर्णिताभिः शिलाभिश्च शरैश्चित्रैरनेकशः ॥”—इत्यधिकं—ङ. ज.

*तान् दृष्ट्वा निहतान् सर्वे राक्षसाः परमातुराः ।
न तत्र चलितुं शक्ता: रामं परपुरञ्जयम्[1] ।। ४६ ।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे पञ्चविंशः सर्गः

तीव्र(४६)मानः सर्गः ।। ४६ ।।

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे पञ्चविंशः सर्गः

षड्विंशः सर्गः

[दूषणादिवधः]

दूषणस्तु † स्वकं सैन्यं हन्यमानं निरीक्ष्य सः ।
संदिदेश महाबाहुः भीमवेगान् दुरासदान् ।। १ ।।
राक्षसान् ‡ पञ्चसाहस्रान् समरेष्वानिवर्तिनः ।

अथ दूषणवधः । दूषणस्त्वित्यादि । पञ्चसाहस्रानित्यनेन अर्थात् नवसाहस्री हतेत्यवगम्यते ।। १ ।।

ते शूलैः पट्टिशैः खड्गैः शिलावर्षैः द्रुमैरपि ।। २ ।।
शरवर्षैरविच्छिन्नं ववृषुस्तं समन्ततः ।
स द्रुमाणां शिलानां च वर्षं प्राणहरं महत् ।। ३ ।।

---

* तिलककतकयोः प्रायस्तुल्यपाठत्वात् तिलकानुरोधेनायं श्लोकोऽत्र योजितः । ‘रामं चलितुं—रामं प्रति संमुखं गन्तुम्’ इति च-ति. व्याख्यातम् । चलितुं—चालयितुं—कम्पयितुं इति वाऽर्थः ।। † दूषणस्य सेनापतित्वेन ‘स्वकं सैन्यं’ इत्युक्तिः । ‡ पञ्चसाहस्रानित्यनेन पञ्चसाहस्री पूर्वं हतेति व्यज्यते-गो.

[1] एतदनन्तरं—“बलावशेषं तु निरस्तमाहवे खराधिकं राक्षसदुर्बलं बलम् । जघान रामं स्थिरधर्मपौरुषः धनुर्बलैरप्रतिवारणैः शरैः ।।”—इत्यधिकम्—ङ.

प्रतिजग्राह धर्मात्मा राघवः तीक्ष्णसायकैः ।
प्रतिगृह्य च तद्वर्षं *निमीलित इवर्षभः ॥ ४ ॥
रामः क्रोधं परं [1] भेजे वधार्थं सर्वरक्षसाम् ।

निमीलित इति । वर्षधारानिमीलित इत्यर्थः ॥ ४ ॥

ततः क्रोधसमाविष्टः प्रदीप्त इव तेजसा ॥ ५ ॥
[2] शरैरवाकिरत् सैन्यं सर्वतः सहदूषणम् ।
ततः सेनापतिः क्रुद्धः दूषणः शत्रुदूषणः ॥ ६ ॥
शरैरशनिकल्पैस्तं राघवं [3] समवाकिरत् ।
ततो रामः सुसंक्रुद्धः क्षुरेणास्य महद्धनुः ॥ ७ ॥
चिच्छेद समरे वीरः चतुर्भिः चतुरो हयान् ।

क्षुरेण–क्षुरधारेण क्षुरपाख्यबाणेनेत्यर्थः ॥ ७ ॥

हत्वा चाश्वान् शरैः तीक्ष्णैः अर्धचन्द्रेण सारथेः ॥ ८ ॥
†शिरो [4] जहार तद्रक्षः त्रिभिः विव्याध वक्षसि ।
स च्छिन्नधन्वा विरथः हताश्वो हतसारथिः ॥ ९ ॥
जग्राह गिरि[5]शृङ्गाभं परिघं रोमहर्षणम् ।
वेष्टितं काञ्चनैः पट्टैः देवसैन्यप्रमर्दनम् ॥ १० ॥

---

* निमीलितः–निमीलितनयनः ऋषभः–सर्वश्रेष्ठः रामः रक्षसां वधार्थं परं क्रोधमिव लेभे । इवेन तस्य राक्षसदुष्टत्वनिवर्तकत्वात् कृपालुत्वं सूचितम्–**रा.** 'निमीलित इवर्षभः' इत्यनेन शरवर्षेऽपि निर्व्यथत्वमनायासत्वं च द्योत्यते–**गो.**

† सारथेः शिरः जहार । तद्रक्षः— दूषणं च त्रिभिः शरैः वक्षसि विव्याध ।

[1] लेभे–**च.** [2] शरैरभ्यहनत्–**ङ.** [3] समवारयत्–**च. ज.** [4] जघान–**ङ.** [5] संकाशं–**ङ.**

**आयसैः शङ्कुभिः तीक्ष्णैः कीर्णं * परवसोक्षितम् ।**
**वज्राशनिसमस्पर्शं †[1] परगोपुरदारणम् [2] ॥ ११ ॥**

परेषां—शत्रूणां, वसा—मांसविशेषः, तेनोक्षितम् । तथा परेषां—शत्रूणां गोपुरस्य—गावः—चक्षुरादीन्द्रियाणि, तेषां पुरं—शिरः, तस्य दारणं—विदारणम्—विदारकम् ॥ ११ ॥

**तं महोरगसंकाशं प्रगृह्य परिघं रणे ।**
**दूषणोऽभ्यद्रवद्रामं क्रूरकर्मा निशाचरः ॥ १२ ॥**
**तस्याभिपतमानस्य दूषणस्य स राघवः ।**
**द्वाभ्यां शराभ्यां चिच्छेद सहस्ताभरणौ भुजौ ॥ १३ ॥**
**‡ भ्रष्टस्तस्य महाकायः पपात रणमूर्धनि ।**
**परिघः छिन्नहस्तस्य शक्रध्वज [3] इवाग्रतः ॥ १४ ॥**

परिघः पपातेत्यन्वयः ॥ १४ ॥

**§ स कराभ्यां विकीर्णाभ्यां पपात भुवि दूषणः ।**
**विषाणाभ्यां विशीर्णाभ्यां मनस्वीव महागजः ॥ १५ ॥**

विकीर्णाभ्यां—विक्षिप्ताभ्यां—छिन्नाभ्यां उपलक्षितः इति शेषः । पपातेति । विगतासुरिति शेषः ॥ १५ ॥

---

* परवसया–शत्रुमेदसा उक्षितं–सिक्तम्–**रा.** परवसोक्षितं–शत्रुमेदस्सिक्तम्–'हृन्मेदस्तु वपा वसा' इत्यमरः–**गो.** † परेषां–शत्रूणां यत् गोपुरं–पुरद्वारं, तस्य दारणं–भेदकम्–**गो.** ‡ भ्रष्टः–आघूर्णनेन स्खलितः तस्य महाकायः रणमूर्धनि–संग्राममध्ये पपात । छिन्नहस्तस्य परिघस्तु शक्रध्वज इव अग्रतः पपात–**रा.** रणमूर्धनि छिन्नहस्तस्य तस्य दूषणस्य भ्रष्टः–हस्ताच्च्युतः महाकायः–महाप्रमाणः परिघः शक्रध्वज इव अग्रतः पपात–**गो.** § पतनमेव भङ्ग्यन्तरेणाह—कराभ्यामिति–**रा.** कराभ्यां उपलक्षित इति शेषः ।

[1] पुरु–**ङ.** [2] एतदनन्तरं—'त्रासनं सर्वभूतानां काञ्चनाङ्गदभूषणम्'–इत्यधिकं–**झ.** [3] इवोच्छ्रितः–**ङ.**

तं दृष्ट्वा पतितं भूमौ दूषणं निहतं रणे ।
साधु साध्विति काकुत्स्थं सर्वभूतान्यपूजयन् ॥ १६ ॥
*एतस्मिन्नन्तरे क्रुद्धाः त्रयः सेनाग्रयायिनः ।
†[1] संहत्याभ्यद्रवन् रामं मृत्युपाशावपाशिताः ॥ १७ ॥
महाकपालः स्थूलाक्षः प्रमाथी च महाबलः ।
महाकपालो विपुलं शूलमुद्यम्य राक्षसः ॥ १८ ॥
स्थूलाक्षः पट्टिशं गृह्य प्रमाथी च परश्वथम् ‡ ।
दृष्ट्वैवापततस्तूर्णं राघवः सायकैः शितैः ॥ १९ ॥
तीक्ष्णाग्रैः प्रतिजग्राह §संप्राप्तानतिथीनिव ।
महाकपालस्य शिरः चिच्छेद [2] परमेषुभिः ॥ २० ॥
असंख्येयैस्तु बाणौघैः प्रममाथ प्रमाथिनम् ।
स पपात हतो भूमौ विटपीव महाद्रुमः ॥ २१ ॥
स्थूलाक्षस्याक्षिणी [3] तीक्ष्णैः पूरयामास सायकैः ।
दूषणस्यानुगान् पञ्च साहस्रान् कुपितः क्षणात् ॥ २२ ॥
[4] बाणौघैः पञ्चसाहस्रैः अनयद्यमसादनम् ।

पञ्चसाहस्रान् पञ्चसाहस्रैः बाणैः इत्यनेन सर्वलोकप्रसिद्धं रामबाणस्यामोघत्वं स्थापितम् ॥ २२ ॥

दूषणं निहतं [5] दृष्ट्वा तस्य चैव [6] पदानुगान् ॥ २३ ॥
व्यादिदेश खरः क्रुद्धः सेनाध्यक्षान् महाबलान् ।
अयं विनिहतः [7] संख्ये दूषणः सपदानुगः ॥ २४ ॥

---

* एतस्मिन्नित्याद्यर्धत्रयमेकं वाक्यम् । † संहत्य—मिलित्वा । ‡ परश्वथं गृह्य, अभ्यद्रवन्—इत्यनुकर्षः । § 'संप्राप्तानतिथीनिव' इति लोकरीत्या नर्मोक्तिः ।

[1] संगम्या—ङ. [2] रघुनन्दनः—च. परमेषुणा—ङ. [3] स्थूले—च. [4] दृष्ट्वा तु—च. [5] श्रुत्वा—च. [6] वशानुगान्—ङ. [7] शेते—ङ.

महत्या सेनया सार्धं युद्ध्वा रामं कुमानुषम् ।
शस्त्रैः नानाविधाकारैः हनध्वं सर्वराक्षसाः ॥ २५ ॥
* एवमुक्त्वा खरः क्रुद्धः राममेवाभिदुद्रुवे ।

हनध्वामिति । छान्दसौ शप्तङौ । घ्नत इति यावत् । संहरतेत्यर्थः ॥ २५ ॥

श्येनगामी पृथुग्रीवः यज्ञशत्रुः विहङ्गमः ॥ २६ ॥
दुर्जयः करवीराक्षः परुषः कालकार्मुकः ।
[1] मेघमाली महामाली सर्पास्यो रुधिराशनः ॥ २७ ॥
द्वादशैते महावीर्याः बलाध्यक्षाः ससैनिकाः ।
राममेवाभ्यवर्तन्त विसृजन्तः शरोत्तमान् ॥ २८ ॥
ततः पावकसङ्काशैः हेम†वज्रविभूषितैः ।
जघान [2] शेषं तेजस्वी तस्य सैन्यस्य सायकैः ॥ २९ ॥

तस्य सैन्यस्य शेषमित्यन्वयः ॥ २९ ॥

ते रुक्मपुङ्खाः विशिखाः सधूमा इव पावकाः ।
निजघ्नुः तानि रक्षांसि [3] वज्रा इव [4] महाद्रुमान् ॥ ३० ॥
रक्षसां तु शतं रामः [5] शतेनैकेन ‡ कर्णिना ।
सहस्रं च सहस्रेण जघान रणमूर्धनि ॥ ३१ ॥

शतं एकेन शतेन तावन्मात्रसंख्याकेन कर्णिना–बाणविशेषेण प्राग्वर्णितेन जघान ॥ ३१ ॥

---

* तानेवमुक्त्वा खरः स्वयमपि रामं अभिदुद्रुवे । † वज्र—मणिविशेषः ।
‡ कर्णिना—कर्णाकारशरेण–गो.
[1] हेममाली–च. ज. [2] शेषान्–ङ. [3] वज्राणीव–ङ. [4] महासुरान्–ङ.
[5] शरेणैकेन–ङ.

तैर्भिन्नवर्माभरणाः छिन्नभिन्नशरासनाः ।
निपेतुः शोणितादिग्धाः धरण्यां रजनीचराः ॥ ३२ ॥

शोणितेनादिग्धाः-आलिप्ताः तथा ॥ ३२ ॥

तैर्मुक्तकेशैः समरे पतितैः शोणितोक्षितैः ।
आस्तीर्णा वसुधा कृत्स्ना महावेदिः कुशैरिव ॥ ३३ ॥

महावेदिः-महायागवेदिः ॥ ३३ ॥

क्षणेन तु महाघोरं वनं निहतराक्षसम् ।
बभूव निरयप्रख्यं मांसशोणितकर्दमम् ॥ ३४ ॥
चतुर्दशसहस्राणि रक्षसां [1]भीमकर्मणाम् ।
हतान्येकेन रामेण * मानुषेण पदातिना ॥ ३५ ॥
† तस्य सैन्यस्य सर्वस्य खरः शेषो महारथः ।
राक्षसः त्रिशिराश्चैव रामश्च रिपुसूदनः ॥ ३६ ॥
शेषा हता ‡ महासत्वाः राक्षसाः [2] रणमूर्धनि ।
घोरा दुर्विषहाः सर्वे लक्ष्मणस्याग्रजेन ते ॥ ३७ ॥

---

* मानुषेण—मानुषवेषेणापि—ति. † तत्रावशिष्टान् निष्कृष्य कथयति—तस्येति । तत्सैन्यसम्बन्धिनौ वध्यौ खरत्रिशिरसौ, रिपुघाती रामश्चेति त्रय एवावशिष्टा बभूवुः । गोविन्दराजस्तु—सैन्यस्य—युद्धप्रवृत्तस्य, अतः रामस्यापि तत्रान्तर्भावः—इत्याह । ‡ 'महासत्वाः' इत्यादिविशेषणैः—महारथा एव हताः, क्षुद्राः केचन भीरवो न हता इति गम्यते । अत एवोत्तरसर्गे हतशेषा इति वक्ष्यति-गो.

[1] क्रूरकर्मणाम्—ङ. [2] रणनिर्भयाः, रणदुर्जयाः—ङ.

ततस्तु तद्भीमबलं महाहवे
समीक्ष्य *[1] रामेण हतं बलीयसा ।
रथेन रामं महता खरस्तदा
समाससादेन्द्र इवोद्यताशनिः ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे षड्विंशः सर्गः

---

उद्यताशनिः—उद्यतवज्रः ॥ ३८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे षड्विंशः सर्गः

---

सप्तविंशः सर्गः

[त्रिशिरोवधः]

खरं तु रामाभिमुखं प्रयान्तं †[2] वाहिनीपतिः ।
राक्षसः त्रिशिरा नाम [3] सन्निपत्येदमब्रवीत् ॥ १ ॥

अथ त्रिशिरोवधः । खरं तु इत्यादि ॥ १ ॥

मां नियोजय, [4] विक्रान्त ! सन्निवर्तस्व ‡ साहसात् ।
पश्य रामं महाबाहुं संयुगे विनिपातितम् ॥ २ ॥

विनिपातितमिति । मयेति शेषः ॥ २ ॥

---

* धर्मेण—रामेण—रा. † दूषणानन्तरः सेनापतिः इत्यर्थः । ‡ साहसात्—सहसा कृतात् निर्धाराव ।

[1] धर्मेण—च. ञ. [2] वाहिनीपतिम्—ङ. [3] सन्निवर्त्ये—ङ.

[4] विक्रान्तं—च. ञ.

प्रतिजानामि ते [1] सत्यं * आयुधं चाहमालभे ।
यथा रामं वधिष्यामि [2] वधार्हं सर्वरक्षसाम् ॥ ३ ॥

यथा वधिष्यामि तथा प्रयतिष्ये इति शेषः । सर्वरक्षसामिति । सर्वरक्षोभिरित्यर्थः ॥ ३ ॥

अहं वाऽस्य रणे मृत्युः एष वा समरे मम † ।
विनिवृत्य रणोत्साहात् मुहूर्तं प्राश्निको भव ॥ ४ ॥

प्राश्निकः—मध्यस्थः—उभययुद्धसाक्षीत्यर्थः ॥ ४ ॥

‡ [3] प्रहृष्टो वा हते रामे जनस्थानं प्रयास्यसि ।
मयि वा निहते रामं संयुगायोपयास्यसि ॥ ५ ॥

संयुगाय–संयुगं कर्तुम् । क्रियार्थोपपदस्येति चतुर्थी ॥ ५ ॥

खरः त्रिशिरसा तेन § मृत्युलोभात् प्रसादितः ।
गच्छ [4] युध्येत्यनुज्ञातः राघवाभिमुखो ययौ ॥ ६ ॥

मृत्युना कृतो लोभः—युद्धलोभः तथा । अनुज्ञात इति । करेणेति शेषः ॥ ६ ॥

---

* वीराणां प्रतिज्ञायां आयुधानि साक्षीक्रियन्त इति प्रसिद्धमेव । † मम, मृत्युरित्यनुकर्षः । ‡ प्रहृष्टे–गर्विष्ठे–च. § मृत्युलोभात् —मृत्युकृतयुद्धलोभात् । मृत्युसमये रक्षःप्रकृतिविपर्ययात् तस्य भगवत्तत्त्वं ज्ञात्वा तद्धस्तमृत्युलोभादित्यर्थश्च–ति. मृत्युलोभात्—मृत्युनिवृत्तिविषयकोत्कटेच्छातः । किञ्च मृत्युलोभात्—मृत्युविषयकाविवेकात्, अस्य मृत्युर्न भविष्यतीति भ्रमादित्यर्थः–रा. मृत्युना कृतः लोभः—युद्धलोभः, तस्मात्–गो. मृत्युर्वञ्चित इति वा भावः ।

[1] सर्वे–ङ. [2] हितार्थे–ङ. [3] प्रहृष्टे–ङ. [4] युद्धेऽभ्यनुज्ञातः–ङ.

त्रिशिराश्च रथेनैव वाजियुक्तेन भास्वता ।
अभ्यद्रवद्रणे रामं त्रिशृङ्ग इव पर्वतः ॥ ७ ॥
शरधारासमूहान् सः महामेघ इवोत्सृजन् ।
व्यसृजत् [1] सदृशं नादं * जलार्द्रस्येव दुन्दुभेः ॥ ८ ॥

जलार्द्रस्येति । मद्दलस्य मार्जनवत् दुन्दुभेः ध्वन्याधिक्यप्रयोजनकं औषधविशेषसंस्कृतं यत् जलं तेन आर्द्रस्य—सिक्तस्येत्यर्थः ॥

आगच्छन्तं त्रिशिरसं राक्षसं प्रेक्ष्य राघवः ।
† धनुषा प्रतिजग्राह विधून्वन् सायकान् शितान् ॥ ९ ॥
स संप्रहारस्तुमुलः रामत्रिशिरसोर्महान् ।
बभूवातीव बलिनोः सिंहकुञ्जरयोरिव ॥ १० ॥
ततः त्रिशिरसा बाणैः ललाटे ताडितः त्रिभिः ।
अमर्षी कुपितो रामः ‡ [2] संरब्धमिदमब्रवीत् ॥ ११ ॥
अहो! विक्रमशूरस्य राक्षसस्येदृशं बलम् ।
पुष्पैरिव शरैर्यस्य ललाटेऽस्मि परिक्षतः ॥ १२ ॥
ममापि प्रतिगृह्णीष्व शरांश्चापगुणच्युतान् ।

अहो विक्रमशूरस्येत्यादि व्यङ्ग्योक्तिः । विक्रमः—पराभिभवः, तत्र शूरः—समर्थः तथा । पुष्पैरिव परिक्षतः इत्यनेन न त्वगपि विद्धेत्यर्थः ॥ १२ ॥

---

* अनेन नादवैपरीत्येन मृत्युसान्निध्यं सूचितम्–ति. जलार्द्रस्येत्यनेनास्य हीनस्वरत्वमुक्तम्–गो. † सायकान् विधून्वन् राक्षसं प्रतिजग्राह । ‡ संरब्धः—राक्षसकोपोत्पादकः, अन्तर्भावितणिजर्थः, कर्तरि निष्ठा तु कर्माविवक्षयाऽकर्मकत्वात्–रा संरब्धं—सकोपमित्यर्थः–गो.

[1] भैरवं–ङ. [2] संरब्ध इद–च. ज.

एवमुक्त्वा तु संरब्धः शरानाशीविषोपमान् ॥ १३ ॥
त्रिशिरोवक्षसि क्रुद्धः [1] निजघान चतुर्दश ।
चतुर्भिस्तुरगानस्य शरैः * संनतपर्वभिः ।
न्यपातयत तेजस्वी चतुरस्तस्य वाजिनः ॥ १४ ॥

वाजिनः तुरगानिति । वाजः—जवः । वेगवतोऽश्वानित्यर्थः ॥

अष्टभिः सायकैः सूतं [2]रथोपस्थात् न्यपातयत् ।
रामः चिच्छेद बाणेन ध्वजं चास्य समुच्छ्रितम् ॥ १५ ॥
ततो हतरथात् तस्मात् उत्पतन्तं निशाचरम् ।
[3]बिभेद रामः तं बाणैः हृदये सोऽभवज्जडः ॥ १६ ॥

हतरथादिति । हतहयसारथिकोऽपि रथः हतरथः । उत्पतन्तमिति । तदवस्थमेवेत्यर्थः । सोऽभवज्जड इति । आयुधान्तरग्रह इति शेषः ॥ १६ ॥

सायकैश्चाप्रमेयात्मा सामर्षः तस्य रक्षसः ।
शिरांस्यपातयत् [4] रामः वेगवद्भिः त्रिभिः [5] शितैः ॥१७॥
[6]स भूमौ रुधिरोद्गारी रामबाणाभिपीडितः ।
† न्यपतत् पतितैः पूर्वं [7]स्वशिरोभिः निशाचरः ॥ १८ ॥

---

* संनतपर्वभिः—ऋजुपर्वभिः-गो. सम्यक् तक्षणादिना श्लक्ष्णपर्वभिरित्यर्थः ।
† पूर्वं पतितैः स्वशिरोभिरुपलक्षितः निशाचरः न्यपतदित्यन्वयः । पूर्वं शिरांसि पतितानि, पश्चात् निशाचरः पतित इति भावः ।

[1] निचखान-ङ. [2] रथोपस्थे-च. ज. [3] चिच्छेद-च. ज. [4] त्रीणि-च. ज. [5] शरैः-च. ज. [6] सधूमश्शोणितोद्गारी-ज [7] समरस्थः-च.

हतशेषास्ततो भग्नाः राक्षसाः खरसंश्रयाः ।
द्रवन्ति स्म न तिष्ठन्ति व्याघ्रत्रस्ताः मृगा इव ॥ १९ ॥

हतावशिष्टाः इति । शतं पञ्चाशद्वा अत्यल्पावशिष्टमित्यर्थः * ॥

तान् खरो द्रवतो दृष्ट्वा निवर्त्य रुषितः [1] स्वयम् ।
राममेवाभिदुद्राव राहुश्चन्द्रमसं यथा ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे सप्तविंशः सर्गः

---

अनाक(२०)मानः सर्गः ॥ २० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे सप्तविंशः सर्गः

---

अष्टाविंशः सर्गः

(रामखरसंग्रामः)

निहतं दूषणं दृष्ट्वा रणे † त्रिशिरसा सह ।
खरस्याप्यभवत् त्रासः दृष्ट्वा रामस्य विक्रमम् ॥ १ ॥

अथ खररामसंग्रामः । निहतमित्यादि ॥ १ ॥

स दृष्ट्वा राक्षसं सैन्यं अविषह्यं [2]महाबलः ।
हतमेकेन रामेण त्रिशिरोदूषणावपि ॥ २ ॥

रक्षसामिदं राक्षसम् । हतं दृष्ट्वेत्यन्वयः ॥ २ ॥

---

* अनन्तरसर्गे 'तद्बलं हतभूयिष्ठं' (३) इति वक्ष्यमाणत्वादेवं व्याख्यातम् ।

† त्रिशिरसा सह निहतं दूषणं इत्यन्वयः । उभावपि हतौ दृष्ट्वा—इत्यर्थे सहशब्दप्रयोगः ।

[1] त्वरन्—च. [2] महाबलम्—ङ.

तद्बलं हतभूयिष्ठं विमनाः प्रेक्ष्य राक्षसः ।
आससाद खरो रामं *नमुचिर्वासवं यथा ॥ ३ ॥

हतं च तत् भूयिष्ठं च हतभूयिष्ठम् ॥ ३ ॥

विकृष्य बलवच्चापं नाराचान् रक्तभोजनान् ।
खरः चिक्षेप रामाय क्रुद्धानाशीविषानिव ॥ ४ ॥
ज्यां विधून्वन् सुबहुशः †शिक्षयाऽस्त्राणि दर्शयन् ।
[1]चकार समरे मार्गान् शरैः रथगतः खरः ॥ ५ ॥

समरे मार्गांश्चकार—प्रकारभेदान् दर्शयामासेत्यर्थः ॥ ५ ॥

स सर्वाश्च दिशो बाणैः प्रदिशश्च महारथः ।
पूरयामास तं दृष्ट्वा रामोऽपि सुमहद्धनुः ॥ ६ ॥
‡स सायकैः दुर्विषहैः सस्फुलिङ्गैरिवाग्निभिः ।
[2]नभश्चकाराविवरं पर्जन्य इव वृष्टिभिः ॥ ७ ॥

नभः—आकाशं अविवरं—अरन्ध्रं चकार ॥ ७ ॥

तद्बभूव शितैर्बाणैः खररामविसर्जितैः ।
§पर्याकाशमनाकाशं सर्वतः शरसङ्कुलम् ॥ ८ ॥

---

*कश्यपस्य पत्न्याः दनोः पुत्रः । †शिक्षया—धनुर्वेदशिक्षापाटवेन ज्यां विधून्वन् । अस्त्राणि दर्शयन्—अस्त्रप्रयोगपाटवं दर्शयन् समरे शरैः मार्गान्—नानाप्रकारांश्चकार–**गो.** शिक्षया—धनुर्विद्याभ्यासेन मार्गान्—शरसन्धानक्षेपणादिप्रकारभेदान् दर्शयन् रथस्थः खरः समरे चचार—अनेकविधरथसंचरणैः–**ति.** ‡स राम इत्यन्वयः । §परि-परितः अनाकाशं-निरवकाशम् । तत्र हेतुः–सर्वतः शरसङ्कुलमिति भावः ॥

[1] चचार–**च.** [2] रामश्चकाराविरतं–**ङ.**

पर्याकाशं—परितो वर्तमानं आकाशं, अनाकाशं—निरवकाशं अभवदित्यर्थः ॥ ८॥

शरजालावृतः सूर्यः न तदा स्म प्रकाशते ।
अन्योन्यवधसंरम्भात् उभयोः संप्रयुध्यतोः ॥ ९॥
ततो नालीकनाराचैः तीक्ष्णाग्रैश्च विकर्णिभिः ।
आजघान [1] खरो रामं तोत्रैरिव महाद्विपम् ॥ १० ॥
तं रथस्थं धनुष्पाणिं राक्षसं पर्यवस्थितम् ।
ददृशुः सर्वभूतानि पाशहस्तमिवान्तकम् ॥ ११ ॥
* हन्तारं सर्वसैन्यस्य पौरुषे पर्यवस्थितम् ।
परिश्रान्तं महासत्त्वं मेने रामं खरस्तदा ॥ १२ ॥

सर्वसैन्यस्य हन्तारं रामं खरः परिश्रान्तं मेने इत्यन्वयः। एतेन अयं प्रहारावसरः सर्वयत्नेनापीति खरः बुद्धवान् इत्युक्तं भवति। अत एव आरात् तस्य रामधनुश्छेदलाभः ॥ १२ ॥

तं सिंहमिव विक्रान्तं सिंहविक्रान्तगामिनम् ।
दृष्ट्वा नोद्विजते रामः सिंहः क्षुद्रमृगं यथा ॥ १३ ॥
ततः सूर्यनिकाशेन रथेन महता खरः ।
आससाद रणे रामं † पतङ्ग इव पावकम् ॥ १४ ॥

---

* खरः सर्वसैन्यहननपरिश्रान्तमपि रामं पौरुषे पर्यवस्थितं महासत्त्वं मेने। यद्वा उक्तविशेषणं रामं परिश्रान्तं मेने—**गो.** † पतङ्ग इत्यनेन अमृत्वा अनिवृत्तिरुच्यते—**गो.**

[1] रणे—**च. ज.**

ततोऽस्य सशरं चापं * मुष्टिदेशे महात्मनः ।
खरः चिच्छेद रामस्य दर्शयन् [1] पाणिलाघवम् ॥ १५ ॥

मुष्टिदेश इति । धनुर्ग्रहणप्रदेशोपरिस्थले इत्यर्थः ॥ १५ ॥

स पुनस्त्वपरान् सप्त शरानादाय [2] वर्माणि ।
[3] निजघान खरः क्रुद्धः शक्राशनिसम[4]प्रभान् ॥ १६ ॥

वर्माणि—कवचसंधिबन्धे इत्यर्थः ॥ १६ ॥

ततः [5] तत्प्रहतं बाणैः खरमुक्तैः [6] सुपर्वभिः ।
पपात कवचं भूमौ रामस्यादित्य[7]वर्चसः ॥ १७ ॥

ततः तत्प्रहतं कवचमित्यन्वयः । एवं पाङ्क्तः ॥ १७ ॥

ततः शरसहस्रेण राममप्रतिमौजसम् ।
[8] अर्दयित्वा महानादं ननाद समरे खरः ॥ १८ ॥

शरसहस्रेण अर्दयित्वेति । सक्षतं कृत्वेति यावत् ॥ १८ ॥

स † शरै[9]रर्पितः क्रुद्धः सर्वगात्रेषु राघवः ।
रराज समरे रामः विधूमोऽग्निरिव ज्वलन् ॥ १९ ।
‡ ततः गम्भीरनिर्ह्रादं रामः शत्रुनिबर्हणः ।
चकारान्ताय स रिपोः सज्यमन्यन्महद्धनुः ॥ २० ॥

---

* मुष्टिदेशे—मुष्टिबन्धनसमीपदेशे—गो. अनेन करात् चापः च्युत इति प्रतीयते । अत एवोत्तरत्र ‘सज्यमन्यन्महद्धनुः’ (२०) इति वक्ष्यते । † शरैः अर्पितः—संक्षतः कृतः-ति. अर्पितः संयुक्तः-गो. ‡ गम्भीरनिर्ह्रादं-गम्भीरध्वनिकं धनुः रिपोरन्ताय-नाशाय सज्यं चकारेत्यन्वयः-गो.

[1] हस्त—च. ज. [2] मर्मणि—च. ज. [3] निचखान—ङ. [4] स्वनान्—ङ [5] तत्प्रहितं—ङ. [6] सपर्वभिः—ङ. [7] वर्चसम्—ङ. ज. [8] अर्पयित्वा—ङ. [9] रर्दितः-ज

*सुमहद्वैष्णवं यत्तत् अतिसृष्टं महर्षिणा ।
वरं तद्धनुरुद्यम्य खरं समभिधावत ॥ २१ ॥

महर्षिणेति अगस्त्येनेति यावत् ॥ २१ ॥

ततः कनकपुङ्खैस्तु शरैः संनतपर्वभिः ।
[1]बिभेद रामः संक्रुद्धः खरस्य समरे ध्वजम् ॥ २२ ॥

स दर्शनीयो बहुधा [2]विकीर्णः काञ्चनध्वजः ।
जगाम धरणीं सूर्यः देवतानामिवाज्ञया † ॥ २३ ॥

सूर्यो धरणीं जगामेति अभूतोपमा सर्वत्रात्र ॥ २३ ॥

तं चतुर्भिः खरः क्रुद्धः रामं गात्रेषु मार्गणैः ।
विव्याध [3]युधि मर्मज्ञः मातङ्गमिव तोमरैः ॥ २४ ॥

स रामो बहुभिर्बाणैः खरकार्मुकनिस्सृतैः ।
विद्धो रुधिरसिक्ताङ्गः बभूव रुषितो भृशम् ॥ २५ ॥

स धनुर्धन्विनां श्रेष्ठः प्रगृह्य परमाहवे ।
मुमोच परमेष्वासः षट् शरानभिलक्षितान् ॥ २६ ॥

षट् शरानभिलक्षितान् इति । अभिलक्षितविषयानित्यर्थः ॥

शिरस्येकेन बाणेन द्वाभ्यां बाह्वो[4]रथार्दयत् ।
त्रिभिः चन्द्रार्धवक्त्रैश्च वक्षस्यभिजघान ह ॥ २७ ॥

तानेव लक्षितषट्शरविषयान् दर्शयति—शिरस्येकेनेत्यादि ॥

---

* 'महद्धनुः' इत्यत्रोक्तं महत्त्वमेव विवृणोति—सुमहदित्यादिना । † आज्ञया—शापेन, उत्प्रेक्षेयम्-गो.

[1] चिच्छेद-ज. [2] विच्छिन्नः-ज. [3] हृदि-ज. [4] रथार्पयत्-ज.

ततः पश्चान्महातेजाः नाराचान् भास्करोपमान् ।
[1] जिघांसू राक्षसं क्रुद्धः त्रयोदश [2] समाददे ॥ २८ ॥
[3] ततोऽस्य * युगमेकेन चतुर्भिः [4] चतुरो हयान् ।
षष्ठेन तु † शिरः संख्ये [5] खरस्य रथसारथेः ॥ २९ ॥
त्रिभिः त्रिवेणुं बलवान् द्वाभ्यां अक्षं महाबलः ।
द्वादशेन तु बाणेन खरस्य [6] सशरं धनुः ॥ ३० ॥
छित्त्वा वज्रनिकाशेन राघवः प्रहसन्निव ।
त्रयोदशेनेन्द्रसमः बिभेद समरे खरम् ॥ ३१ ॥

उपात्तत्रयोदशानां विनियोगः—ततोऽस्य युगमित्यादि । त्रिवेणुर्नाम रथमुखस्थः युगाधारदण्डः । अक्षः चक्राधारदण्डः । प्रहसन्निव—लीलयैवेत्यर्थः । बिभेद खरमिति । हृदयदेशमिति शेषः ॥

प्रभग्नधन्वा विरथः हताश्वो हतसारथिः ।
गदापाणिरवप्लुत्य तस्थौ भूमौ खरस्तदा ॥ ३२ ॥
तत् कर्म रामस्य महारथस्य
समेत्य देवाश्च महर्षयश्च ।
‡ अपूजयन् प्राञ्जलयः प्रहृष्टाः
तदा विमानाग्रगताः समेताः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे अष्टाविंशः सर्गः

---

महारथस्येति । महारथपरिगणनीयस्येत्यर्थः ॥ ३३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे अष्टाविंशः सर्गः

---

* युगं—रथस्य युगम् । † खरस्य रथसारथेः शिर इत्यन्वयः । ‡ रामस्य कर्म अपूजयन्—प्राशंसन् ।

[1] जघान–ज. [2] समादिशत्–ङ. शिलाशितान्–ज. [3] रथस्य–ज. [4] शबलान्–ज. [5] चिच्छेद खरसारथेः–ज. [6] सकरं–ज.

## एकोनत्रिंशः सर्गः

[खरगदाभेदनम्]

**खरं तु विरथं रामः गदापाणिमवस्थितम् ।**
***मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत् ॥ १ ॥**

अथ पदातिरामखरयुद्धम् । खरं त्वित्यादि । मृदुपूर्वमिति । न्यायावलम्बनतो मृदूक्तिपूर्वं परुषं—पारुष्यार्थकं वाक्यमित्यर्थः ॥ १ ॥

**†गजाश्वरथसंबाधे बले महति तिष्ठता ।**
**कृतं सुदारुणं कर्म सर्वलोकजुगुप्सितम् ॥ २ ॥**

त्वत्कृतान्यायवशात् त्वं अद्य विनंक्ष्यसीति प्रतिपादनशेषतया सामान्यतो लोकस्थितिमाह—गजाश्वेत्यादि । बले तिष्ठतेति । बलविषये स्वामित्वेन तिष्ठतेत्यर्थः ॥ २ ॥

**उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् ।**
**त्रयाणामपि ‡लोकानां ईश्वरोऽपि न तिष्ठति ॥ ३ ॥**

एवंरूपेण पुरुषेण यत् सुदारुणं कर्म कृतं भवति, तत् सर्वं लोकजुगुप्सितं निन्द्यं भवति । नाप्यसौ सुखमिह लोकेऽपि प्राप्नोतीत्याह—उद्वेजनीय इत्यादि । उद्वेजनीयत्वादिगुणकोऽसौ न तिष्ठति—न चिरस्थितिं प्राप्नोति ॥ ३ ॥

**कर्म लोकविरुद्धं तु कुर्वाणं, क्षणदाचर !**
**तीक्ष्णं §सर्वजनो हन्ति सर्पं दुष्टमिवागतम् ॥ ४ ॥**

तदेव दर्शयति — कर्मेत्यादि । क्षणदाचरेति संबुद्धिः ॥ ४ ॥

---

* शब्दस्वरदृष्ट्या मृदुत्वं, अर्थदृष्ट्या तु परुषत्वम् । † स्वयं तु एक एव रथादिरहितः—इत्यभिप्रायेण तद्विपरीततया सहायसंपत्तिमत्त्वं उपहसत्येवम् । ‡लोकानामीश्वरोऽपि—तावच्छक्तः सन्नपीत्यर्थः । §सर्वजनो हन्ति—अकृतापकारोऽपि हन्ति—ति, सर्वजन इति । दयालुरपीति भावः—गो.

लोभात् पापानि कुर्वाणः कामाद्वा यो न बुध्यते ।
*[1] भ्रष्टः पश्यति तस्यान्तं ब्राह्मणी करकादिव ॥ ५ ॥

लोभादित्यादि । लोभात् भयाद्वा पापानि कुर्वाणः यः पुमान् करकात् ब्राह्मणीव । "वर्षोपलास्तु करकाः", तान् अत्तीति करकात्, 'ब्राह्मणी रक्तपुच्छिका', (अग्रैव्य) श्रेयो न बुध्यते, स्वानर्थं स्वभोजनं दुष्कर्ममूलं तस्य पापिष्ठस्य तद्दुष्कर्मवशप्राप्तं अन्तर्नाशं लोकाः दृष्टाः पश्यन्ति ॥ ५ ॥

† वसतो दण्डकारण्ये तापसान् धर्मचारिणः ।
किं नु हत्वा महाभागान् ‡ फलं प्राप्स्यसि, राक्षस ! ॥६॥

किं ततः? इत्यतः—वसत इत्यादि ॥ ६ ॥

न § चिरं पापकर्माणः [2] क्रूराः लोकजुगुप्सिताः ।
ऐश्वर्यं प्राप्य तिष्ठन्ति ‖ शीर्णमूला इव द्रुमाः ॥ ७ ॥
अवश्यं लभते [3] जन्तुः फलं पापस्य कर्मणः ।
घोरं पर्यागते काले द्रुमाः पुष्पमिवार्तवम् ॥ ८ ॥

घोरं कर्मणः फलमित्यन्वयः ॥ ८ ॥

---

* भ्रष्टः—ऐश्वर्यात् भ्रष्टः, तस्य कर्मणः अन्तं—फलं पश्यति—अनुभवति । कथमिव—करकात् ब्राह्मणीव...यथा ब्राह्मणी स्वमारकं कर्म स्वयमेव करोति, तथा स्वमपीत्यर्थः—गो. करकात्—वर्षोपलात्—तद्भक्षणादिवेत्यर्थः ; वर्षोपलं रक्तपुच्छिकाया विषमिति प्रसिद्धम्—रा.
† किं पापं मयाकृतमित्यत्राह—वसत इति—गो. ‡ तेषां हननेन तव को लाभ इति भावः । § चिरं न तिष्ठन्तीत्यन्वयः । अथ वा चिरं पापकर्माणः, चिरं क्रूराः, चिरं लोकजुगुप्सिताः इति सर्वत्रान्वयः । तेन अकृत्यकरणस्य कादाचित्कत्वाकस्मिकत्वादिव्यावृत्तिः ।
‖ वृक्षाणां मूलवत्, नराणां धर्मः खलु आधारः । तस्य लोपे नरस्यापि पतनमवश्यं भावीत्याशयः ।

[1] नष्टः—ङ. दृष्टः—ज. [2] पापाः—ङ. [3] कर्ता—ज.

*नचिरात् प्राप्यते लोके पापानां कर्मणां फलम् ।
सविषाणामिवान्नानां भुक्तानां क्षणदाचर ! ॥ ९ ॥

पापमाचरतां घोरं लोकस्याप्रियमिच्छताम् ।
† अहमासादितो [1] राजा प्राणान् हन्तुं, निशाचर ! ॥ १० ॥

राजेत्यनेन दुष्टनिग्रहाधिकारः स्वस्य द्योत्यते । आसादित इति । ऋषिभिरिति शेषः । इममर्थं आराद्दषयो वक्ष्यन्ति ॥ १० ॥

[2] अद्य भित्वा मया मुक्ताः शराः काञ्चनभूषणाः ।
विदार्य निपतिष्यन्ति वल्मीकमिव पन्नगाः ॥ ११ ॥

अद्येत्यादि । भित्वा—त्वद्वपुरिति शेषः । विदार्येति । भूमिमिति शेषः ॥ ११ ॥

ये त्वया दण्डकारण्ये भक्षिताः धर्मचारिणः ।
‡ तानद्य निहतः संख्ये ससैन्योऽनुगमिष्यसि ॥ १२ ॥

अद्य त्वां [3] निहतं बाणैः पश्यन्तु परमर्षयः ।
§ निरयस्थं विमानस्थाः ‖ ये त्वया [4] हिंसिताः पुरा ॥ १३ ॥

---

* नचिरात्—अचिरादित्यर्थः । † राज्ञा—पित्रा अहं आसादितः—व[ने] प्रापितः । राजेति पाठेऽपि क्विबन्तत्वेन स एवार्थः—रा. आसादितोऽस्मि प्राप्तोऽस्मि—गो. ‡ तान् अनुगमिष्यसीत्यन्वयः । पापिनामपि समरे हतानां स्वर्गसंभवादिति भावः—गो. [...] प्राणत्यागमात्राभिप्रायेण वा अनुगमनोक्तिः ॥ § ननु भगवता हतस्य मृतिसमये भगव[द्]दर्शनवतः कथं निरयस्थत्वमिति चेन्न । अत्युग्रस्य ब्रह्मवधकर्मणः फलस्य अवश्यंभोक्तव्यत्वे[न] आदौ भगवदिच्छयैव निरयभोगपूर्वं उत्तमपदप्राप्तेः सत्त्वेन अदोषात्—ति. निर्ग[तः] अयः—पुनरिह लोके पुत्रपौत्रादिदर्शनार्थं गमनं यस्मात्, तल्लोकविशेषस्थं—रा. नरकसदृशं दुःखमनुभवन्तं—गो. ‖ ये त्वया पुरा हिंसिताः परमर्षयः ते अद्य विमानस्थ[ाः] निहतं—ततः निरयस्थं च पश्यन्तु इत्यन्वयः ।

[1] राज्ञा—च. ज. [2] अद्य हि त्वां—ङ. [3] पतितं—ङ. [4] निहताः—ज.

प्रहर त्वं यथाकामं कुरु यत्नं, कुलाधम !
अद्य ते पातयिष्यामि शिरः तालफलं यथा ॥ १४ ॥

कुलाधम–कुलेन अधम ॥ १४ ॥

एवमुक्तस्तु रामेण क्रुद्धः संरक्तलोचनः ।
प्रत्युवाच [1] खरो रामं प्रहसन् क्रोधमूर्छितः ॥ १५ ॥
प्राकृतान् राक्षसान् हत्वा युद्धे, दशरथात्मज !
आत्मना कथमात्मानं अप्रशस्यं प्रशंससि ॥ १६ ॥
विक्रान्ताः बलवन्तो वा ये भवन्ति नरर्षभाः ।
कथयन्ति न ते किञ्चित् तेजसा स्वेन गर्विताः ॥ १७ ॥

गर्विताः न कथयन्तीत्यन्वयः ॥ १७ ॥

[2] प्राकृतास्त्वकृतात्मानः लोके क्षत्रियपांसनाः ।
निरर्थकं विकत्थन्ते यथा, राम ! विकत्थसे ॥ १८ ॥
* कुलं व्यपदिशन् वीरः समरे [3] कोऽभियास्यति ।
मृत्युकाले हि संप्राप्ते स्वयमप्रस्तवे कथम् ॥ १९ ॥

को वीरः कुलं व्यपदिशन् भूत्वा समरेऽभियास्यति–अभियानं कुर्यात् । न कोऽपि । इदं च वचनं 'अहमासादितो राजा' इति रामेणोक्तत्वात् उक्तवान् । अप्रस्तवे इति । 'प्रेद्रुस्तुस्रुवः' इति घञभावः आर्षः । अप्रस्तावे इति यावत् ॥ १९ ॥

---

* कुलं व्यपदिशन्–कुलीनत्वं प्रकटयन् मृत्युकाले–तत्तुल्यकाले संप्राप्ते अप्रस्तवे–अप्रस्तावे .... स्तवरूपं वचनं कोऽभिधास्यति ; न कोऽपीत्यर्थः । 'अहमासादितो राजा' इति रामोक्तेरिदमुक्तवान्–ति. कुलं व्यपदिशन्–आत्मनो महाकुलप्रसूतत्वं प्रकटयन् को वीरः मृत्युकाले संप्राप्ते अप्रस्तवे–अनवसरे स्वयं स्तवमभिधास्यति–गो.

[1] ततो–ज. [2] प्राकृता विकृता–ङ. [3] कोऽभिधास्यति–ङ. ज. कोऽभिधास्यति–ङ.

सर्वथैव लघुत्वं ते कत्थनेन विदर्शितम् ।
* सुवर्णप्रतिरूपेण [1] तप्तेनेव कुशाग्निना ॥ २० ॥

सर्वथेत्यादि । विकत्थनेन—अद्य त्वां निहतमित्याद्युक्तवृथा-जल्पनेन । लघुत्वमेव जल्पत्वमेव दर्शितम् । अनुचिताप्रयोजन-व्यवहारेण जल्पताप्राप्तौ दृष्टान्तः—सुवर्णेत्यादि । कुशाग्निः—स्वर्णकार-पात्रस्थतुषाग्निः । तेन तप्तेन सुवर्णप्रतिरूपेण सुवर्णतुल्याकारेण आरकूटेन । आरकूटः—(சரகுபித்தலை) लघुत्वं दर्शितं भवति । सामान्यदृशा सुवर्णवत् व्यापारार्हत्वं प्राक् तापात् स्थितं गौरवं यथा अनुचितेन कुशाग्निना तापेन कार्ष्ण्यावहेन विनाश्य आरकूटस्वरूपं लाघवं दर्शितं—प्रकाशितं भवति तद्वदित्यर्थः ॥ २० ॥

---

* सुवर्णतुल्यरूपेण पित्तलेन कुशाग्निना—स्वर्णादिशोधाग्निना तप्तेन स्वस्य कृष्णवर्णत्वरूपं लाघवं दर्शितं भवति, तापात्पूर्वं हि स्वर्णताबुद्धिः, सा तापे यथा नश्यति, तथा त्वया स्वस्मिन् स्थिता प्राक् शूरत्वबुद्धिः कत्थनेनापहृता—**ति.** यथा तापात् पूर्वं सूक्ष्मविचारमन्तरा पित्तले स्वर्णबुद्धिरुत्पद्यते, तापेन तु विनश्यति ; तथा स्वश्लाघावचनो-च्चारणात्पूर्वं त्वच्छूरत्वविषयिणी बुद्धिर्ममोत्पन्ना त्वत्कर्तृकस्वश्लाघाकत्थनेन तु सा विनष्टे-त्यर्थः—**रा.** तप्तेन अत एव सुवर्णसदृशेन कुशाग्निना—कुशं—दर्भं आश्रितेन अग्निना लघुत्वं विदर्श्यते तद्वत् । यथा तृणाग्निः सुवर्णतुल्यतया भासमानोऽपि—ज्वलन्नपि उत्तरकाले दाहकार्यकरो न भवति, तथा कत्थनेन वीरवद्भासमानोऽपि पुरुषः उत्तरकाले लघुरेव भविष्यतीत्यर्थः—**गो.** सुवर्णप्रतिरूपेण—सुवर्णसदृशेन अग्निना—अग्निवर्णेन, अश्मना—पाषाणेन, न तप्यते वस्त्विति शेषः । सुवर्णवर्णमश्मानं दृष्ट्वा अयमङ्गार इति स्तुत्या व्यपदिशन्ति, तथाऽपि तेनाग्निना वस्तु न तप्यते, किन्तु मुख्येनैवाग्निनेत्यर्थः । एतदुक्तं भवति—अग्निबुद्ध्याऽग्निवर्णमश्मानं स्पृशते पुरुषायाऽनुपलभ्यमानोष्णस्पर्शेनात्मनाऽत्मनोऽ-नग्नित्वं नाम लघुत्वं यथा विदर्शितं भवति, तथा ते—त्वया त्वां वीरं मन्वानाय मह्यं कत्थनेन—आत्मप्रशंसया अवीरत्वं नामात्मनो लघुत्वं विदर्शितं—इत्यपेक्षितपदाध्याहारेण योजना—**ती.** वस्तुतस्तु—बहिः सुवर्णत्वेन भासमानः आरकूटः, शोधनां प्राप्तः यथा स्वस्वरूपं भजते, तथा बहिः शूरमानी पुरुषः युद्धे प्राप्ते आत्मश्लाघाकरणेन स्वेनावीरत्वमेव प्रकटितं भवेदिति भावः स्वरसः ॥

[1] तप्तेनेवाश्मनाग्निना, तप्तेनेव तुषाग्निना—**ङ.**

न तु मामिह तिष्ठन्तं पश्यसि त्वं गदाधरम् * ।
धराधरमिवाकम्प्यं पर्वतं [1] धातुभिश्चितम् ॥ २१ ॥

अथैवं विकत्थने हेतुः अयमेव ते इत्याह—न तु मामित्यादि । उच्यमानविशेषणकं मां न पश्यसि सारतो नावगच्छसीति यत् अत एव एवं विकत्थसे इत्यन्वयः ॥ २१ ॥

पर्याप्तोऽहं गदापाणिः हन्तुं प्राणान् रणे तव ।
† त्रयाणामपि लोकानां पाशहस्त इवान्तकः ॥ २२ ॥

स्वकं सारं दर्शयति—पर्याप्त इत्यादि । गदापाणिरिति । अमोघगदाहस्तः इत्यर्थः ॥ २२ ॥

कामं बह्वपि वक्तव्यं ‡ त्वयि वक्ष्यामि न त्वहम् ।
§ अस्तं [2] गच्छेद्धि सविता युद्धविघ्नः ततो भवेत् [3] ॥ २३ ॥
चतुर्दश सहस्राणि राक्षसानां हतानि ते ।
त्वद्विनाशात् [4] करोम्येषः तेषामास्रप्रमार्जनम् [5] ॥ २४ ॥

हतानीति । ते—त्वयेति यावत् । यानि हतानि तेषां स्त्रीपुत्रादिबन्धूनां अश्रुप्रमार्जनं—अश्रुधारापरिमार्जनं करिष्यामि ॥ २४ ॥

---

* अत एव एवं विकत्थस इति भावः—गो. † तव, त्रयाणां लोकानां च प्राणान् हन्तुं इत्यन्वयः । त्रयाणामपि लोकानां प्राणान् हन्तुं पर्याप्तः, किं पुनस्तवेति भावः । ‡ त्वयि— एवं आत्मानं श्लाघयितुः तव विषये । § यद्यपि स्वस्य रात्रिर्बलायैव, तथाऽपि राज्यशक्तमनुष्यवधे स्वस्य न काऽपि कीर्तिरिति खरहृदयम्—गो.

[1] धातुमण्डितम्—ङ. [2] प्राप्नोति—ज. [3] एतदनन्तरं—“ अग्रतः संस्थितं दृष्ट्वा त्वां मनो रुष्यते मम । रणे यस्य तु रुष्यामि मुहूर्तं न स जीवति ॥ मम कल्वाऽप्रियं राम दुर्लभं तव जीवितम् । तोयवर्षमिवावर्षे तोयदस्य विनर्दतः ॥ ” इत्यधिकम्—ङ. [4] करोम्यद्य—ज. [5] एतदनन्तरं—“ ततो रुधिरधाराभिः त्वच्छरीरविमर्दनात् । करिष्यामि बलिं भूमौ त्वां हत्वा सर्वरक्षसाम् ॥ ”—इत्यधिकम्—ङ.

इत्युक्त्वा परमक्रुद्धः तां गदां *[1] परमाङ्गदाम् ।
खरः चिक्षेप रामाय प्रदीप्तामशनिं यथा ॥ २५ ॥

'तां गदां परमाङ्गदां' इति पाठः । परमोऽङ्गदः—कनकवलयः यस्याः सा तथा ॥ २५ ॥

खरबाहुप्रमुक्ता सा प्रदीप्ता महती गदा ।
भस्म वृक्षांश्च गुल्मांश्च कृत्वाऽऽगात् तत्समीपतः ॥ २६ ॥

वृक्षान् गुल्मांश्च भस्म कृत्वा । स्वज्वालयेति शेषः ॥ २६ ॥

तामापतन्तीं [2] ज्वलितां मृत्युपाशोपमां गदाम् ।
अन्तरिक्षगतां रामः चिच्छेद बहुधा शरैः ॥ २७ ॥

तदेवोक्तं तामापतन्तीं ज्वलितामिति ॥ २७ ॥

सा [3] विकीर्णा शरैर्भग्ना पपात धरणीतले ।
गदा मन्त्रौषधबलैः † व्यालीव विनिपातिता ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकोनत्रिंशः सर्गः

जीर्ण(२८)मानः सर्गः ॥ २८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकोनत्रिंशः सर्गः

---

* परमाङ्गदः—गदाप्रहारसामर्थ्यबिरुदयुक्त इत्यर्थः—गो. † गदाशब्दस्य स्त्रीलिङ्गत्वात् व्यालीवेत्युक्तम् । सर्पस्त्रियः विषाधिक्यमपि लोके प्रसिद्धम् ॥

[1] परमाङ्गदः—ङ. [2] महतीं—ज. सहसा—ङ. [3] विशीर्णा—ज.

## त्रिंशः सर्गः

[खरसंहारः]

[1]भित्त्वा तु तां गदां बाणैः राघवो *[2]धर्मवत्सलः ।
स्मयमानः खरं वाक्यं संरब्धमिदमब्रवीत् ॥ १ ॥

अथ खरवधः । भित्त्वेत्यादि ॥ १ ॥

एतत्ते बलसर्वस्वं दर्शितं, राक्षसाधम !
शक्तिहीनतरो † मत्तः वृथा त्वमवगर्जसि ॥ २ ॥

अथ प्राप्तकालत्वात् त्वयैव विकत्थनं कृतमिति ब्रूते रामः—एतत्ते इत्यादि ॥ २ ॥

एषा बाणविनिर्भिन्ना गदा भूमितलं गता ।
‡ अभिधानप्रगल्भस्य तव §[3] प्रत्ययघातिनी ॥ ३ ॥

अभिधाने केवलं प्रगल्भः तथा । प्रत्ययः-शत्रुवधो येन सर्वथा भवति सर्वान्तकोऽयं इति योऽयं ते विश्वासः, तस्य स्वनाशतो घातिनी-प्रत्ययघातिनी ॥ ३ ॥

यत् त्वयोक्तं विनष्टानां अहमास्रप्रमार्जनम् ।
राक्षसानां करोमीति मिथ्या तदपि ते वचः ॥ ४ ॥

---

* धर्मवत्सल इत्यनेन निरायुधवधोऽनुचित इति श्रीरामोऽमन्यतेति गम्यते—गो. स्मयमान इति कथनात्—संरब्धं खरमित्यन्वयः । 'तमेवमभिसंरब्धं ब्रुवाणं' (१३) इति कथनात् स्मयसंरंभयोरविरोधात् क्रियाविशेषणं वा । अथ वा तत्रापि अभिसंरब्धं तं—खरमित्यन्वयः । † मत्तः—मदपेक्षया । यद्वा मत्तः—मत्कारणात्, पूर्वमेव—गदाग्रहण-कालेऽपि शक्तिहीन एव, इदानीं तु शक्तिहीनतरः इत्यर्थः । ‡ अभिधाने—वाङ्मात्रे । § प्रत्यरिघातिनीति । वीप्सायां प्रतिः, अरीनरीन् प्रति घातिनी गदा—गो.

[1] स हत्वा—ङ. [2] रघुनन्दनः—ङ. [3] प्रत्यरिघातिनी—ङ.

* नीचस्य क्षुद्रशीलस्य मिथ्यावृत्तस्य[1] रक्षसः ।
प्राणानपहरिष्यामि गरुत्मान् अमृतं यथा ॥ ५ ॥

अद्य ते छिन्नकण्ठस्य फेनबुद्बुद[2]भूषितम् ।
विदारितस्य मद्बाणैः मही पास्यति शोणितम् ॥ ६ ॥

पांसुरूषितसर्वाङ्गः स्रस्तन्यस्तभुजद्वयः ।
स्वप्स्यसे गां † समालिङ्ग्य दुर्लभां प्रमदामिव ॥ ७ ॥

गां भुवम् ॥ ७ ॥

‡[3] प्रबद्धनिद्रे शयिते त्वयि राक्षसपांसने ।
भविष्यन्त्यशरण्यानां शरण्या दण्डका इमे ॥ ८ ॥

प्रबद्धनिद्र इति । प्रबद्धदीर्घनिद्र इत्यर्थः । शरण्याः—सुखावासभूताः ॥ ८ ॥

जनस्थाने हतस्थाने तव, राक्षस ! मच्छरैः ।
निर्भयाः विचरिष्यन्ति सर्वतो मुनयो वने ॥ ९ ॥

हतस्थाने—हतावासे इत्यर्थः ॥ ९ ॥

अद्य विप्रसरिष्यन्ति राक्षस्यो हतबान्धवाः ।
बाष्पार्द्र[4]वदनाः दीनाः भयादन्यभयावहाः ॥ १० ॥

भयात् विप्रसरिष्यन्तीत्यन्वयः ॥ १० ॥

---

* नीचस्य, तवेति शेषः । † समालिङ्ग्येत्यनेन अवाग्भूतत्वमुच्यते—गो. दुर्लभां प्रमदामिवेत्यनेन, आलिङ्गने गाढत्वं, तेन त्यक्तुमनिच्छा, तेन च मरणं लक्ष्यते ।
‡ 'प्र' इत्युपसर्गेण दीर्घनिद्रां प्राप्ते—इत्यर्थलाभः ।

[1] राक्षस—ङ. [2] दूषितम्, रूषितम्—ङ. [3] प्रवृद्ध—ज. [4] नयनाः—ङ.

अद्य शोकरसज्ञास्ताः भविष्यन्ति *[1] निरर्थकाः ।
अनुरूपकुलाः पत्न्यः यासां त्वं पतिरीदृशः ॥ ११ ॥

निरर्थकाः—निर्गतः अर्थकः-अर्थाभासः—कामपुरुषार्थो यासां ताः तथा । अनुरूपं-त्वत्सदृशं कुलं यासां ताः तथा । कुलमिति दुर्वृत्तस्याप्युपलक्षणम् । पत्न्यः इति । त्वत्स्त्रियः इत्यर्थः ॥ ११ ॥

नृशंस! नीच! क्षुद्रात्मन्! नित्यं ब्राह्मणकण्टक!
† यत्कृते शङ्कितैरग्नौ मुनिभिः पात्यते हविः ॥ १२ ॥

ईदृशः इत्यस्यैव विवरणं—नृशंसेत्यादि । शङ्कितैरिति । त्वद्भट-भीतैः इत्यर्थः ॥ १२ ॥

तमेवमभिसंरब्धं ब्रुवाणं राघवं [2] रणे ।
खरो निर्भर्त्सयामास रोषात् खरतरस्वनः ॥ १३ ॥
दृढं खल्ववलिप्तोऽसि भयेष्वपि च निर्भयः ।
वाच्यावाच्यं ततो हि त्वं मृत्युवश्यो न बुध्यसे ॥ १४ ॥

ततो हीति । अवलिप्तत्वादेवेत्यर्थः ॥ १४ ॥

[3] कालपाशपरिक्षिप्ताः भवन्ति पुरुषा हि ये ।
[4] कार्याकार्यं न जानन्ति ते ‡ निरस्तषडिन्द्रियाः ॥ १५ ॥

निरस्तषडिन्द्रिया इति । आहिताग्न्यादिरयम् । सान्तःकरण-चक्षुरादिपञ्चेन्द्रियैः निरस्ताः—विनाशितात्मस्वातन्त्र्याः इत्यर्थः ॥

---

* निरर्थकाः—व्यर्थजीवनाः—विधवा इति वा । † 'त्वया कदाऽस्य धर्मस्य विघ्नो भवेत्' इति सदा शङ्कितैरेव मुनिभिः होमादिराचरितः खल्विति भावः । ‡ 'मनःषष्ठानीन्द्रियाणि' (गीता–15-7) इत्याद्यनुसारात् षडित्युक्तम् ।

[1] निशाचर--ङ. [2] वने-च. ज. [3] ध्रुवं कालपरिक्षिप्ताः-ङ. [4] वाच्यावाच्यं-ङ.

एवमुक्त्वा ततो रामं संबध्य भ्रुकुटीं ततः ॥ १६ ॥
स ददर्श महासालं अविदूरे निशाचरः ।
रणे प्रहरणस्यार्थे सर्वतो ह्यवलोकयन् ॥ १७ ॥

भ्रुकुटीं संबध्येति । मुखे संनिबध्येत्यर्थः । प्रहरणस्य—आयुधस्य ॥ १६-१७ ॥

स तमुत्पाटयामास *संदश्य दशनच्छदम् ।
तं समुत्क्षिप्य बाहुभ्यां विनद्य च [1]महाबलः ॥ १८ ॥

दशनच्छदं—अधरम् ॥ १८ ॥

राममुद्दिश्य चिक्षेप हतस्त्वमिति चाब्रवीत् ।
तमापतन्तं बाणौघैः छित्वा रामः प्रतापवान् ॥ १९ ॥
रोषमाहारयत् तीव्रं निहन्तुं समरे खरम् ।
जातस्वेदः ततो रामः †रोषात् रक्तान्तलोचनः ॥ २० ॥
निर्बिभेद सहस्रेण बाणानां समरे खरम् ।

रोषात् जातस्वेदः, न तु श्रमात् इत्यर्थः । रक्तं—रक्तवर्णं अन्तं लोचनं अपाङ्गं यस्य सः तथा । सहस्रेणेति । अनेकेनेति यावत् ॥ २० ॥

तस्य बाणान्तराद्रक्तं बहु सुस्राव फेनिलम् ॥ २१ ॥
गिरेः ‡[2]प्रस्रवणस्येव तोयधारापरिस्रवः ।

बाणान्तरात्—विदीर्य निस्सृतबाणमार्गात् इत्यर्थः ॥ २१ ॥

---

* अनेन सालस्य दुर्ग्रहत्वमुक्तं—गो. † जातस्वेदः, रक्तान्तलोचनः—इत्युभयत्रापि 'रोषात्' इत्येतदन्वेति । ‡ प्रस्रवणस्य—प्रस्रवणाख्यस्य—गो. ति. रा.

[1] महाबलम्—ङ. [2] प्रस्रवतो यद्वत्—ङ.

[1] विह्वलः स कृतो बाणैः खरो रामेण संयुगे ॥ २२ ॥
मत्तो * रुधिरगन्धेन तमेवाभ्यद्रवद्द्रुतम् ।

विह्वलः कृतः इति । परवशः कृतः न मृतः । तदेव प्रदर्श्यते—मत्त इत्यादि । तमेव—राममेव ॥ २२ ॥

तमापतन्तं [2] संरब्धं [3] कृतास्त्रो रुधिराप्लुतम् ॥ २३ ॥
† अपासर्पत् [4] प्रतिपदं किंचित् त्वरितविक्रमः ।

अपासर्पत् प्रतिपदं किञ्चिदिति । अत्यासक्तौ धनुर्व्यापारायोग्यत्वात्, तेन च परवशतया आधावनात् तदभिमुखं वर्तमान एव धनुर्व्यापारयोग्यतायै द्वित्राणि पदानि पृष्ठतोऽपासर्पदित्यर्थः । एतेन च रावणतुल्यबलत्वं खरस्य प्रख्यापितम् । न हि सेन्द्रैर्देवैरपि रामधनुश्छेदः, रामसहस्रबाणसहनं, रामचालनं च सुशकम् । एवं बलमपि । तन्मूलत्वं मूलमुभयोः खररावणयोः ॥ २३ ॥

---

* रुधिरगन्धेन उपलक्षितः-**गो.** राक्षसत्वेन रुधिरगन्धाघ्राणनेन मत्तः—जातमद इति वा । † तं खरं प्रतिपदं—तत्स्थानं प्रति किञ्चिदपासर्पत्—बाणप्रहारयोग्यान्तराललाभाय अपासर्पयत्, अन्तर्भावितणिजर्थः । अन्यथा तमिति द्वितीया न स्यात्, पञ्चम्यापत्तिश्च ; दृष्ट्वेत्यध्याहारे तु गौरवम् । तं—तस्मात्-**गो.** तं, दृष्ट्वा-**ति. रा.** अपसर्पणनिमित्तमाह—कृतास्त्र इति । सहितास्त्रत्वात् अस्त्रमोचनावकाशलाभाय अपासर्पदिति भावः । निमित्तान्तरमाह—रुधिराप्लुतमिति । तत्स्पर्शबीभत्सेनापसर्पणमित्यर्थः । यद्यपि रणे किञ्चिदपसर्पणं शूरस्यायुक्तं ; तथाऽपि 'सर्वतो बलवती ह्यन्यथाऽनुपपत्तिः' इति न्यायेन अपसर्पणं विना तत्संहारहेत्वलाभादपसर्पणं न दोष इति हृदयम्-**गो.** वस्तुतस्तु—भयात् अपसर्पणमेव दोषः । शूराः खलु रणे विचित्रगतिभेदं प्रदर्शयन्त्येव परेषां प्रहरणाय । अतः अत्रापि, इतोऽप्यतिशयेन युद्धसन्नाहरूपत्वादस्यापसर्पणस्य नायं दोषः । एतत्सूचनायैव अनुपदमेव 'त्वरितविक्रमः' इति कथ्यते ॥

[1] विकलः-**ञ.** [2] संक्रुद्धं-**ञ.** संप्रेक्ष्य-**ङ.** [3] रुधिरौघपरिप्लुतम्-**ङ.** [4] द्वित्रपदं-**च.**

ततः पावकसङ्काशं वधाय समरे शरम् ॥ २४ ॥
*खरस्य रामो जग्राह †ब्रह्मदण्ड[1]मिवापरम् ।

एवं इदानीं अतिसङ्कटकाले सहजशक्तिपरिग्रहादेव निर्वाहं
दर्शयति—तत इत्यादि ॥ २४ ॥

‡स तं दत्तं मघवता सुरराजेन धीमता ॥ २५ ॥
संदधे चापि धर्मात्मा मुमोच च खरं प्रति ।

सः—रामः । मघवता दत्तं—अगस्त्यद्वारा प्रदानाय दत्तं
अन्वर्थब्रह्मदत्तं ब्रह्मास्त्रवदमोघं शरं संदधे—मुमोच च ॥ २५ ॥

स हि मुक्तो महाबाणः निर्घातसमनिःस्वनः ॥ २६ ॥
रामेण धनुरायम्य खरस्योपरि चापतत् ।

धनुरायम्य मुक्तः इत्यन्वयः । खरस्योपरि चापतत् इति पाङ्कः ।

स पपात खरो भूमौ दह्यमानः शराग्निना ॥ २७ ॥
§रुद्रेणेव विनिर्दग्धः श्वेतारण्ये [2]यथाऽन्धकः ।

---

* खरस्य वधायेत्यन्वयः । † ब्रह्मदण्डं—ब्रह्मशापम्—**गो.** ‡ दत्तं, अगस्त्य
मुखेनेति शेषः—**गो.** § रुद्रेण—रुद्रनेत्राग्निना दग्धः अन्तक इव, श्वेतारण्ये यथा
श्वेतारण्ये इव भूमौ पपात—**गो.** श्वेतारण्ये यथाऽन्धकः । अन्धकासुरः श्वेतार
रुद्रेण हत इति (हरिवंशादि) पुराणप्रसिद्धम् । रुद्रेणेवेति—इवशब्दो वाक्यालङ्कारे
श्वेतारण्ये यथान्तक इति प्रचुरः पाठः । तत्र कावेरीतीरवर्तिनि श्वेताख्ये मार्कण्डेयचिर
जीवित्वाय अन्तकसंहारो रुद्रेण कृत इति तन्माहात्म्ये प्रसिद्धिः । कौर्मे तूत्तरखण्डे श्वेत
राजर्षेः परमशैवस्य कालञ्जरे पर्वते तपस्यभिरतस्य मारणायागतस्यान्तकस्य शिवे
वामपादप्रहारेण संहारः कृत इति षटात्रिंशेऽध्याये उक्तम्—**ति.**

[1] मिवोद्यतम्—**ङ.** [2] यथाऽन्तकः—**ङ.**

शराग्निना दह्यमानः इति । तस्य ब्रह्मतेजोरूपत्वात् । एवं इह खरदूषणत्रिशिरःपरिणतवैराजसूक्ष्मत्रिमलस्य च सर्वान्तसंहारे ब्रह्मणो रामस्य रावणादिस्थूलत्रिमलसंहारे ब्रह्मास्त्रवत् ब्रह्मदत्ताख्य-स्वशक्तिरेव परमसाधनं न त्वाविष्टवैराजक्षात्रशक्तिरिति सुस्पष्टं ब्रह्मत्वं रामस्य । श्वेतारण्ये यथाऽन्धकः इति पाङ्कः । श्वेतारण्ये अन्धका-ख्योऽसुरः रुद्रेण प्रहृतः इति पुराणसिद्धम् ॥ २७ ॥

*स वृत्र इव वज्रेण फेनेन नमुचिर्यथा ॥ २८ ॥
[1]बलो वेन्द्राशनिहतः निपपात हतः खरः ।

वृत्रः वज्रेणेव, नमुचिः फेनेनेव च हतः इति । "न मा शुष्केण नार्द्रेण हनः" इत्यारभ्य "अपां फेनेन शिर उदवर्तयत्" इत्यन्तश्रुत्या प्रसिद्धोऽयमर्थः । तथा वज्राशनिहतो बलो वेति । इदं च पुराणप्रसिद्धम् । एवं रुद्रेन्द्रसाध्यसंहारान्धकादिचतुर्दृष्टान्त-कथनेन कविना कथमपि रामब्रह्मातिरिक्तेन केनापि दुःसंहारराक्षसत्वं खरस्य प्रकाशितम् ॥ २८ ॥

†ततो राजर्षयः सर्वे [2]सङ्गताः परमर्षयः ॥ २९ ॥
[3]सभाज्य मुदिता रामं [4]इदं वचनमब्रुवन् ।

राजर्षयः—नहुषाद्याः । परमर्षयः—भृग्वाद्याः ब्रह्मर्षयः । रामं सभाज्य—संपूज्य ; "वरिवस्या सपर्या च पूजनं च सभाजनम् ॥"

---

* अमोघबाणहतत्वज्ञापनाय प्रथमो दृष्टान्तः, लीलया हतत्वज्ञापनाय द्वितीयः, ममाधिष्ठितत्वज्ञापनाय तृतीयः । आर्द्रात् शुष्काच्चावध्यत्वं नमुचेर्लब्धम्, तदर्थं फेनेन हतः । बलो वेति । वाशब्दः इवार्थकः–गो. † एतदारभ्य दशश्लोकानां पौर्वापर्यं भिन्नं ज. पुस्तके दृश्यते ।

[1] बलो यथाऽशनिहतः–ङ. [2] संगताश्च महर्षयः–ङ. [3] समेत्य–ङ.
[4] सागस्त्या इदमब्रुवन्–ङ.

*एतदर्थं महातेजाः महेन्द्रः पाकशासनः ॥ ३० ॥
शरभङ्गाश्रमं पुण्यं आजगाम पुरन्दरः ।

एतदर्थमिति । एतद्रक्षोवधाय एतद्देशप्रस्थापननियोजनार्थमित्यर्थः । क्षणं स्थित्वा रामं प्रस्थाप्य भवद्भिः ब्रह्मलोकाय प्रस्थातव्यमिति मघवतोक्त्वाऽऽगतमित्यर्थः ॥ ३० ॥

आनीतस्त्वामिमं देशं †उपायेन महर्षिभिः ॥ ३१ ॥
एषां वधार्थं [1]क्रूराणां रक्षसां [2]पापकर्मणाम् ।
तदिदं नः कृतं कार्यं त्वया, दशरथात्मज ! ॥ ३२ ॥
सुखं धर्मं चरिष्यन्ति दण्डकेषु महर्षयः ।
एतस्मिन्नन्तरे देवाः चारणैस्सह सङ्गताः ॥ ३३ ॥
दुन्दुभींश्चाभिनिघ्नन्तः पुष्पवर्षं समन्ततः ।
रामस्योपरि संहृष्टाः ववृषुः विस्मितास्तदा ॥ ३४ ॥

एतस्मिन्नन्तर इति । ऋषिभिः वृत्तान्तकथनावसरे इत्यर्थः ॥

अर्धाधिकमुहूर्तेन रामेण निशितैः शरैः ।
चतुर्दश सहस्राणि रक्षसां [3]भीमकर्मणाम् ॥ ३५ ॥
खरदूषणमुख्यानां निहतानि महाहवे ।

---

* 'क्षणं स्थित्वा रामं प्रस्थाप्य भवद्भिः ब्रह्मलोकाय प्रस्थातव्यं इति इन्द्रः शरभङ्गं प्रति उक्त्वा गत इत्याशयः–ति. शरभङ्गेण हि सुतीक्ष्णाभिगमनं (5, 36) उपदिष्टम् । सुतीक्ष्णेन च अगस्त्याभिगमनं (11, 36–37) उक्तम् । अगस्त्येन च ऐन्द्रशरासनादिदानपूर्वकं पञ्चवटीनिवासः उपदिष्टः साभिप्रायमेव (13, 12–18)। एवञ्च राक्षसवधायैव रामः देवैः ऋषिभिश्च उपायेनानीतः पञ्चवटीमिति गम्यते। एतदेव 'ततो राजर्षयः'—इत्यारभ्य चतुर्भिः श्लोकैः कथ्यते। † उपायेन–तत्तदाश्रमदर्शनव्याजेन–**गो.**

[1] शूराणां–ङ. शत्रूणां–ञ. [2] क्रूरकर्मणाम्–ङ. [3] कामरूपिणाम्–**च. ञ.**

अर्धाधिकमुहूर्तेनेति । मुहूर्तः--घटिकाद्वयम् । मुहूर्तस्य अर्धमधिकं यस्मिन् स तथा । घटिकात्रयेणेत्यर्थः ॥ ३५ ॥

अहो बत ! महत्कर्म रामस्य विदितात्मनः ॥ ३६ ॥
अहो ! वीर्यं अहो ! दाक्ष्यं विष्णोरिव हि दृश्यते !
इत्येवमुक्त्वा ते सर्वे ययुर्देवाः [1] यथाऽऽगतम् ॥ ३७ ॥

दाक्ष्यं—सामर्थ्यं, युद्धविषयकम् ॥ ३७ ॥

*एतस्मिन्नन्तरे वीरः लक्ष्मणः सह सीतया ।
गिरिदुर्गाद्विनिष्क्रम्य संविवेशाश्रमं [2] सुखी ॥ ३८ ॥

एतस्मिन्नन्तर इति । देवगणनिर्गमनसमये इत्यर्थः ॥ ३८ ॥

ततो रामस्तु विजयी पूज्यमानो महर्षिभिः ।
प्रविवेशाश्रमं वीरः लक्ष्मणेनाभि[3]पूजितः ॥ ३९ ॥
†तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ।
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥ ४० ॥
‡मुदा परमया युक्ता दृष्ट्वा रक्षोगणान् हतान् ।
रामं [4]चैवाव्यथं दृष्ट्वा तुतोष जनकात्मजा ॥ ४१ ॥

---

* युद्धपरिसमाप्तिं, रामविजयं च ज्ञात्वेति भावः । आगतानां महर्षीणां प्रत्यागमनकालिकहर्षादिभिः स वृत्तान्तः लक्ष्मणेन अवगतः स्यात् । अयमंशः 'सुखी' इत्यनेन सूच्यते । इतरथा हि लक्ष्मणस्य सुखमसंभावितमेव । † चतुर्दशसहस्रक्षोभिः अयमेकाकी किं करिष्यतीति उद्विग्ना सीता रामेण जिते, वीरतारतम्याभिज्ञकुलप्रसूततया बहुमानं परिषस्वज इत्याह—तं दृष्ट्वा इति । रामं विना गुहागता सीता ततो निर्गत्य निरस्तसमस्तशत्रुं रामं परिषस्वजे—इत्यनेन—हृदयगुहागतो जीवः परतन्त्रः आचार्यमुखेन परमशेषिणं दृष्ट्वा, तेन सकलविरोधिवर्गे निवर्तिते, ततो निर्गत्य नित्यसूरिपरिषदासीनं शेषिणमासाद्य तद्भोगपरीवाहमनुबभूवेति ध्वन्यते—**गो.** ‡ उक्तमेवार्थं विशदं दर्शयति श्लोकाभ्यां—मुदेत्यादि—**गो.**

[1] यथासुखम्–ङ. [2] सुखम्–ङ. [3] वादितः–ङ. [4] चैवाव्ययं–च. ज.

ततस्तु तं राक्षससङ्घमर्दनं
[1]सभाज्यमानं मुदितैः [2]महर्षिभिः ।
पुनः परिष्वज्य [3]शशिप्रभानना
बभूव हृष्टा जनकात्मजा तदा ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे त्रिंशः सर्गः

---

स्तुतिसन्तोषादौ पौनःपुन्यमलङ्कारः इति आदावेवोक्तम् । अतः—ततस्तु तमित्यादि । रवि(४२)मानः सर्गः ॥ ४२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे त्रिंशः सर्गः

---

## एकत्रिंशः सर्गः

[रावणाकम्पनसंवादः]

*त्वरमाणस्ततो गत्वा †जनस्थानादकम्पनः ।
प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ॥ १ ॥

अथ दैवात् खरसंग्रामसङ्गतेन कथंचित् पलायितेन अकम्पनेन विज्ञापितजनस्थानवृत्तान्तस्य तेनैव विनिवर्तितसङ्ग्रामस्य तेनैव बोधित-सीतापहारोपायस्य तदर्थं मारीचसङ्गतस्य मारीचोपदेशनिवृत्तसीतापहार-

---

* त्वरमाण इत्यनेन—शूर्पणखातः पूर्वमेव लङ्कागमनमुक्तम् । † संपूर्णं दण्डकारण्यं जनस्थानपदवाच्यम् । अतो गोदावरीतीरात् गतोऽपि जनस्थानात् गत इत्युक्तम्—ति. अथवा अकम्पनस्य जनस्थानवासित्वात्, युद्धाय केवलं पञ्चवटीगमनाच्च तथोक्तम् । अथवा अकम्पनोऽयं युद्धाय न गतः अत एव रामेण न हतश्च ; किन्तु जनस्थानपर्यवेक्षणाद्यधिकृतः स्यात् । गोविन्दराजस्तु अकम्पनः रावणचार इत्याह । अनन्तरश्लोकगतं ' कथञ्चिदहमागतः ' इति वाक्यं द्रष्टव्यमत्र ।

[1] संपूज्यमानं—ङ. [2] महात्मभिः—ज. [3] मुदाऽन्विताननाः—ज.

दुर्मतेः रावणस्य पुनः स्वपुर्यागमनम् । त्वरमाण इत्यादि । शूर्पणखाऽऽगमनात् पूर्वमेवेति शेषः । सर्वमपि दण्डकारण्यं जनस्थानदेशवाच्यं सामान्यतः, अतो गोदावरीतीरात् गतोऽपि जनस्थानात् गतः इत्युक्तम् ॥ १ ॥

**जनस्थानस्थिताः, राजन् ! राक्षसाः ह वो हताः ।**
**खरश्च निहतः संख्ये *कथंचिदहमागतः ॥ २ ॥**

कथंचिदहमागतः इति । मया कार्यवशात् सङ्गतेन केवलं प्रेक्षकतयाऽवस्थितत्वात् रामशराविषयीकृतः इत्यर्थः ॥ २ ॥

**एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः ।**
**अकम्पनमुवाचेदं निर्दहन्निव [1]चक्षुषा ॥ ३ ॥**
**[2]केन [3]भीमजनस्थानं हतं मम परासुना ।**
**[4]को हि सर्वेषु लोकेषु †गतिं [5]चाधिगमिष्यति ॥ ४ ॥**

भीमजनस्थानमिति पाठः । भीमं–भयङ्करं जनस्थानं तथा । परासुनेति कोपात् । गतिं–स्थितिम् ॥ ४ ॥

**न हि मे विप्रियं कृत्वा शक्यं मघवता ‡सुखम् ।**
**प्राप्तुं वैश्रवणेनापि न यमेन न विष्णुना ॥ ५ ॥**
**कालस्य चाप्यहं कालः दहेयमपि पावकम् ।**
**मृत्युं मरणधर्मेण संयोजयितुमुत्सहे ॥ ६ ॥**

---

* कथञ्चिदिति । स्त्रीवेषधारणेनेति भावः । अत एव शूर्पणखा वक्ष्यति–"एका कथञ्चिन्मुक्ताऽहं परिभूय महात्मना । स्त्रीवधं शङ्कमानेन रामेण विदितात्मना ॥" इति–**गो.**

† गतिं–गम्यत इति गतिः–स्थानम्–**गो.** ‡ सुखं प्राप्तुं न शक्यमित्यन्वयः ।

[1] तेजसा–**ज.** [2] तेन–**ज.** [3] रम्यं–**ङ.** भीमं–**ज.** [4] कोऽद्य–**ङ.** [5] नाधिगमिष्यति–**ज.**

दहेयमपि संक्रुद्धः तेजसाऽऽदित्यपावकौ *।
वातस्य तरसा वेगं निहन्तुमहमुत्सहे ॥ ७ ॥

निहन्तुमिति । भङ्क्तुमित्यर्थः । आदित्यपावकाविति । उभावपि युगपदिति शेषः ॥ ७ ॥

तथा क्रुद्धं दशग्रीवं कृताञ्जलिरकम्पनः ।
भयात् † संदिग्धया वाचा रावणं याचतेऽभयम् ॥ ८ ॥

संदिग्धया—संदिग्धार्थया ॥ ८ ॥

‡ दशग्रीवोऽभयं तस्मै प्रददौ रक्षसां वरः ।
स विश्रब्धोऽब्रवीद्वाक्यं असंदिग्धमकम्पनः ॥ ९ ॥
पुत्रो दशरथस्यास्ति सिंहसंहननो युवा ।
रामो नाम [1] वृषस्कन्धः वृत्तायतमहाभुजः ॥ १० ॥
[2] वीरः पृथुयशाः श्रीमान् अतुल्यबलविक्रमः ।
[3] हतं तेन जनस्थानं, खरश्च सहदूषणः § ॥ ११ ॥

अतुल्यं—केनाऽपि तुलनानर्हं बलं विक्रमश्च यस्य स तथा ॥ ११ ॥

अकम्पनवचः श्रुत्वा रावणो राक्षसाधिपः ।
[4] नागेन्द्र इव निःश्वस्य वचनं चेदमब्रवीत् ॥ १२ ॥

नागेन्द्रः—सर्पश्रेष्ठः ॥ १२ ॥

---

* आदित्यपावकौ, परस्परसाहाय्येन संयुक्तावपीत्यर्थः, अतो (दहेयमपि पावकम् इत्यनेन) न पौनरुक्तिः—गो. † सन्दिग्धया—सन्दिग्धाक्षरया—गो. ‡ शत्रुपराक्रमस्य रावणपुरतः प्रशंसनस्य रावणापमानने विश्रान्त्या तेन किं वा भवेदिति भीताय अकम्पनाय अभयं ददौ रावणः । अत एव धैर्येण रामपराक्रमं वर्णयति अकम्पनः । § सहदूषणः खरश्च हत इति विपरिणामः । प्राधान्यात् पृथग्व्यपदेशः ।

[1] महास्कन्धः—ज. [2] श्यामः—ज. [3] हतस्तेन जनस्थाने—ज. [4] मृगेन्द्र—ङ.

स सुरेन्द्रेण संयुक्तः रामः सर्वामरैः सह ।
*उपयातो जनस्थानं ब्रूहि कच्चित्, अकम्पन! ॥ १३ ॥

स सुरेन्द्रेणेत्यत्र स इति पदम् ॥ १३ ॥

रावणस्य पुनर्वाक्यं निशम्य तदकम्पनः ।
आचचक्षे बलं तस्य विक्रमं च महात्मनः ॥ १४ ॥

रामो नाम महातेजाः श्रेष्ठः सर्वधनुष्मताम् ।
दिव्यास्त्रगुणसंपन्नः [1] पुरन्दरसमो युधि ॥ १५ ॥

तस्यानुरूपो बलवान् [2] रक्ताक्षो दुन्दुभिस्वनः ।
कनीयान् लक्ष्मणो [3] नाम भ्राता शशिनिभाननः ॥ १६ ॥

†स तेन सह संयुक्तः पावकेनानिलो यथा ।
श्रीमान् राजवरस्तेन जनस्थानं निपातितम् ॥ १७ ॥

‡नैव देवा महात्मानः नात्र कार्या विचारणा ।
शरा रामेण तूत्सृष्टाः रुक्मपुङ्खाः पतत्रिणः ॥ १८ ॥

सर्पाः पञ्चानना भूत्वा भक्षयन्ति स्म राक्षसान् ।

रामेण त्विति । न च लक्ष्मणेनापीत्यर्थः ॥ १८ ॥

§येन येन च गच्छन्ति राक्षसाः [4] भयकर्शिताः ॥ १९ ॥

---

* उपयातः कच्चित्—इत्यन्वयः । एकेन, नरेण तादृशकर्मणः कर्तुमशक्यत्वादिति भावः । † एक एव राक्षससंहारायालं, किमुत लक्ष्मणसाहाय्ये इति भावः । ‡ नैव देवा इति । साहाय्यार्थमागता इति शेषः—गो. रामस्यापि देवत्वं मन्यमानं प्रति उत्तरदानात् रामलक्ष्मणादीन् सर्वान् मिलित्वा वा तथा वचनम् । § २५ सर्गे ३७ श्लोकोक्तगान्धर्वास्त्रप्रभावोऽयम् ।

[1] परं धर्मं गतो—ज. परंधामयुतो—ङ. [2] रक्तास्यो—ङ. [3] भ्राता राकाशशि—ज. [4] भयशङ्किताः—ङ.

तेन तेन स्म पश्यन्ति राममेवाग्रतः स्थितम् ।
इत्थं विनाशितं तेन जनस्थानं तवानघ! ॥ २० ॥

राममेवाग्रतः स्थितं पश्यन्तीति । भयादिति शेषः । वयं तु तत्त्वतश्च तथात्वं समस्तीति मन्यामहे । तत्कालं भूमतेजः-समावेशस्योक्तत्वात् तद्वशेन सहजब्रह्मताऽऽवरणनिवारणात् अनन्ताकारतया प्रतिभासमानस्य ईषत्करत्वात् ॥ २० ॥

अकम्पनवचः श्रुत्वा रावणो वाक्यमब्रवीत् ।
जनस्थानं गमिष्यामि हन्तुं रामं सलक्ष्मणम् ॥ २१ ॥
अथैवमुक्ते वचने प्रोवाचेदमकम्पनः ।
शृणु, राजन्! यथावृत्तं रामस्य * बलपौरुषम् ॥ २२ ॥
†[1] असाध्यः कुपितो रामः विक्रमेण महायशाः ।
आपगायाः सुपूर्णाया वेगं परिहरेच्छरैः ॥ २३ ॥
सतारग्रहनक्षत्रं नभश्चाप्यवसादयेत् ।

नभश्चाप्यवसादयेदिति । तारादिरहितं कुर्यादित्यर्थः । अत्रत्यलिङः सर्वे शक्यार्थे ॥ २३ ॥

असौ रामस्तु [2] मज्जन्तीं श्रीमान् अभ्युद्धरेन्महीम् ॥ २४ ॥
भित्त्वा वेलां समुद्रस्य लोकान् आप्लावये[3]द्विभुः ।

वेला—मर्यादा ॥ २४ ॥

---

* बलं-पराभिभवसामर्थ्यं, पौरुषं—महापुरुषकर्म-ति. बलं महत्स्वपि कर्मसु आयासाभावः—'अक्लिष्टकर्मा' इति तत्र तत्र इदमेवोच्यते । पौरुषं तु—वीर्यतेजःपराक्रमादिसर्वोन्नलक्षणम् । † रामः विक्रमेण असाध्यः—न स्वायत्तीकर्तुं शक्यः, न जेतुं शक्य इति यावत् । 'न हि रामः, दशग्रीव ! शक्यो जेतुं त्वया युधि' इति च स्पष्टं वक्ष्यति ।

[1] अवध्यः-ङ. [2] सीदन्तीं-ज. [3] दिमान्-ङ.

वेगं वापि समुद्रस्य वायुं वा विधमेच्छरैः ॥ २५ ॥
*संहृत्य वा पुनर्लोकान् विक्रमेण महायशाः ।
शक्तः स पुरुषव्याघ्रः स्रष्टुं पुनरपि प्रजाः ॥ २६ ॥

अतीतं च संहृत्य स्रष्टुं शक्तः इत्यादिकं वास्तवमेव दैवात् सत्यात् प्रवृत्तम् ॥ २६ ॥

न हि रामः, दशग्रीव! शक्यो जेतुं त्वया युधि ।
रक्षसां वाऽपि लोकेन, स्वर्गः पापजनैरिव ॥ २७ ॥
लोकेन-समूहेन । सहितेनापीति शेषः ॥ २७ ॥

न तं वध्यमहं मन्ये सर्वैः देवासुरैरपि ।
†अयं तस्य वधोपायः तं ममैकमनाः शृणु ॥ २८ ॥
भार्या तस्योत्तमा लोके सीता नाम सुमध्यमा ।
श्यामा समविभक्ताङ्गी स्त्रीरत्नं ‡रत्नभूषिता ॥ २९ ॥
नैव देवी न गन्धर्वी नाप्सरा [1]नापि दानवी ।
तुल्या सीमन्तिनी तस्याः [2]मानुषी तु कुतो भवेत् ॥३०॥
श्यामा—यौवनमध्यस्था । कुतो भवेत् इति । तुल्येत्यनुकर्षः ॥

तस्यापहर भार्यां त्वं §प्रमथ्य तु महावने ।
[3]स तया रहितः कामी रामो हास्यति जीवितम् ॥ ३१ ॥

---

* जगत इदानीमुपलंभात—संहृत्य स्रष्टुं शक्त इत्युक्तम् । † "एवं द्वित्रवारं रामस्य विक्रमेण अजय्यत्वोपपादनाभिप्रायमाविष्करोति—अयं तस्य वधोपाय इति । ‡ सीतायाः सर्वाभरणभूषिताया एव वनप्रस्थानं, रावणेन लङ्काप्रापणकाले मार्गे ऋश्यमूकपर्वते तेषां पातनं, तेषां सुग्रीवेणोपालंभः, रामाय दर्शनं—इत्यादिकं प्रसिद्धमेव । § प्रमथ्य—कथञ्चिदनवधानीकृत्य-रा.

[1] न च पन्नगी-ज. [2] मानुषीषु-ङ. [3] सीतया-ङ.

प्रमथ्येति । रामं केनचिदुपायेन प्रमथ्य–विलोड्य—उच्चाट्य तस्य भार्यां प्रमथ्य–बलात्कारेण हर ॥ ३१ ॥

अरोचयत तद्वाक्यं रावणो [1]राक्षसाधिपः ।
चिन्तयित्वा महाबाहुः अकम्पनमुवाच ह ॥ ३२ ॥

अरोचयत–इष्टं मन्यते स्म । चिन्तयित्वेति । रामवनोच्चाटनोपायमिति शेषः ॥ ३२ ॥

बाढं [2]काल्यं गमिष्यामि ह्येकः सारथिना सह ।
आनयिष्यामि वैदेहीं इमां *हृष्टो महापुरीम् ॥ ३३ ॥

काल्यं-प्रातः । काल्यमित्यप्यस्ति ॥ ३३ ॥

अथैवमुक्त्वा प्रययौ खरयुक्तेन रावणः ।
रथेनादित्यवर्णेन दिशः सर्वाः प्रकाशयन् ॥ ३४ ॥

---

* हृष्ट इति । अकम्पनवाक्यं श्रुत्वा, त्रेतायुगे श्रीरामोऽवतारेष्यतीति स्मरणात् हृष्टः । तदेतदुत्तररामायणे स्पष्टम् । तत्र हि सनत्कुमारं प्रति विष्णुहस्तमृतानां का गतिरिति रावणेन पृष्टे, तेन हतानां तल्लोकप्राप्तिरिति सनत्कुमारवचः श्रुत्वा 'एवं श्रुत्वा महाबाहू राक्षसेन्द्रः प्रतापवान् । त्वया सह विरोधेप्सुः चिन्तयामास राघव ॥ एतदर्थं महाबाहो रावणेन दुरात्मना । सुता जनकराजस्य हृता राम! महावने ॥' इत्युक्तमिति तीर्थः । उत्तमस्त्रीलाभो भविष्यतीति हृष्ट इत्यर्थ उचितः । श्रुतस्यापि तस्यार्थस्य तामसत्वेन विस्मरणात् । ते पद्ये तु न यथाश्रुतार्थे, वक्ष्यमाणविष्णुपुराणविरोधात् । किन्तु श्रीरामस्य स्वभृत्योरवतारं श्रुत्वा त्वया सह मृत्युविघातकविरोधेच्छुः तां हृतवान् । तद्वियोगे तव मरणमित्याशयेनेति तयोरर्थ इत्यन्ये । वस्तुतस्तु एतेषां श्लोकानां तद्गतां सर्गाणां च प्रक्षिप्तत्वान्न ते प्रमाणभूताः । अत एव ते सर्गाः कतकादिभिः तीर्थेन च न व्याख्याताः । एतेन—'एतदर्थं महाबाहो रावणेन दुरात्मना । विज्ञायापहृता सीता त्वत्तो मरणकाङ्क्षया ।' इति तत्र पाठो दृश्यते । तत्र च त्वदुक्तार्थासंभवः—इत्यपास्तम्–ति.

[1] लोकरावणः; कालचोदितः–ङ. [2] कल्यं–ज.

स रथो राक्षसेन्द्रस्य नक्षत्रपथगो महान् ।
[1]चञ्चूर्यमाणः शुशुभे जलदे चन्द्रमा इव ॥ ३५ ॥

चञ्चूर्यमाणः—सञ्चरन् । चरेर्यङन्तात् शानच् । 'चरफलोश्च । उत्परस्यातः ।' इति नुगुत्वे । जलदस्थानं गगनं, चन्द्रस्थानं रथः ॥

[2]स मारीचाश्रमं प्राप्य ताटकेयमुपागमत् ।
मारीचेनार्चितो राजा भक्ष्यभोज्यैरमानुषैः* ॥ ३६ ॥

मारीचाश्रममित्यनेन सः तदानीं तपस्तेपे पूर्वं रामनिरस्तः तद्दुःखादिति गम्यते । ताटकेयम् । 'स्त्रीभ्यो ढक्' ॥ ३६

तं स्वयं पूजयित्वा तु आसनेनोदकेन च ।
†अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥ ३७ ॥
‡कच्चित् सुकुशलं, राजन्! लोकानां, राक्षसेश्वर! ।
आशङ्के [3]नाधिजाने त्वं, यतस्तूर्णमिहागतः ॥ ३८ ॥

लोकानां—राक्षसलोकानाम् । 'आशङ्के नाथ जाने त्वं' इति पाङ्क्तः पाठः । भयं आशङ्के, अथ क्षेमं न जाने—नावगच्छामीत्यर्थः । कुतः इत्यतः—यत इत्यादि । एकाकीति शेषः ॥ ३८ ॥

एवमुक्तो महातेजाः मारीचेन स रावणः ।
ततः पश्चादिदं वाक्यं अब्रवीत् वाक्यकोविदः ॥ ३९ ॥
§आरक्षो मे हतस्तात! रामेणाक्लिष्टकर्मणा ।
जनस्थानमवध्यं तत् सर्वं युधि निपातितम् ॥ ४० ॥
तस्य मे कुरु साचिव्यं तस्य भार्यापहारणे ।

आरक्षः—समाजस्थानभूतं जनस्थानम् ॥ ४० ॥

---

* अमानुषैः—मनुष्यलोकदुर्लभैः—गो. † अर्थोपहितया—अर्थविशेषगर्भितयेति यावत् । ‡ लोकानां—राक्षसलोकानां; राक्षसेश्वरेति समभिव्याहारादयमर्थो लभ्यते—गो. § आरक्षः—अन्तपालः—गो. सर्वतो रक्षणकर्ता खरादिः—रा.

[1] संचार्यमाणः—ङ. [2] स दूरे चाश्रमं गत्वा—ज. [3] नाथ जाने—ङ. ज.

राक्षसेन्द्रवचः श्रुत्वा मारीचो वाक्यमब्रवीत् ॥ ४१ ॥
आख्याता केन *[1] सीतेति मित्ररूपेण शत्रुणा ।
त्वया, राक्षसशार्दूल! को न नन्दति निन्दितः ॥ ४२ ॥
सीतामिहानयस्वेति को ब्रवीति ब्रवीहि मे ।

सीतेति केनाख्याता--उपायत्वेनेति शेषः । त्वयेत्यादि । हे राक्षसशार्दूल! त्वया निन्दितः कः त्वां न नन्दति न संतुष्यति--क्रुध्यति शत्रुर्भवतीति यावत् । कस्ते अभिहितः सीतामिहानयस्वेति ब्रवीति तं मे ब्रवीहि । इट् छान्दसः ॥ ४२ ॥

रक्षोलोकस्य सर्वस्य कः † शृङ्गं छेत्तु[2]मिच्छति ॥ ४३ ॥
प्रोत्साहयति [3]कश्च त्वां स हि [4]शत्रुरसंशयम् ।

शृङ्गः-औन्नत्यम् ॥ ४३ ॥

आशीविषमुखात् दंष्ट्रां उद्धर्तुं चेच्छति त्वया ॥ ४४ ॥
कर्मणा तेन केनासि कापथं प्रतिपादितः ।
सुखसुप्तस्य ते, राजन्! प्रहृतं केन मूर्धनि ॥ ४५ ॥

स हि शत्रुरसंशयं इत्यत्र हेतुमाह--आशीविषेत्यादि । यस्मात् त्वया प्रयोज्येन आशीविषमुखात् दंष्ट्रां उद्धर्तुं--उद्धारयितुं इच्छति, तस्मादेव । कर्मणा तेनेति । पापकर्मणेति यावत् । केनेति । शत्रुणेति यावत् । कापथं-कुमार्गं ।; का पथ्यक्षयोः इति कोः कादेशः । ते मूर्ध्नि प्रहृतमिति । वृथैव दुःखमुत्पादितमित्यर्थः ‡ ॥ ४४-४५ ॥

---

* सीता केन आख्याता-हर्तव्यत्वेन कथिता-**ति.** यः सीताया आख्याता स मित्ररूपः शत्रुः-**गो.** † शृङ्गं-प्राधान्यम्-**गो.** मुख्यं त्वां-**रा.** शृङ्गं-रक्षणसाधनं रक्षोलोकरक्षणरहितं कः चिकीर्षतीत्याशयः । ‡ वस्तुतस्तु त्वयि अजागरूके केन वा त्वं मारितः-सीतापहारे तव मृतिः सिद्धैवेत्याशयः ।

[1] सीता सा-**ङ.** वा सीता-**ज.** [2] मर्हति-**ङ.** [3] यश्च त्वां-**ङ.**
[4] शत्रुर्न संशयः-**ङ.**

* विशुद्धवंशाभिजनाग्रहस्तः
तेजोमदः संस्थितदोर्विषाणः ।
उदीक्षितुं, रावण ! नेह युक्तः
स संयुगे राघवगन्धहस्ती ॥ ४६ ॥

राघवरूपो गन्धहस्ती---यस्य गन्धं समाघ्राय अन्ये गजाः पलायन्ते सः गन्धहस्ती--मत्तगजः उदीक्षितुमपीह--देशे काले च न युक्तः। तस्य हस्तिसमाधिः---विशुद्धेत्यादि । विशुद्धवंशे अभि-जनः--अभिजननमेव अग्रहस्तः--शुण्डाग्रं यस्य तेजः--प्रताप एव मदो यस्य स तथा । संस्थितौ--समीचीनावस्थानौ दोषौ--बाहू एव विषाणे---दन्तौ यस्य स तथा ॥ ४६ ॥

असौ [1]रणान्तःस्थितिसन्धिवालः †
विदग्धरक्षोमृगहा नृसिंहः ।
सुप्तस्त्वया बोधयितुं न [2]शक्यः
शराङ्गपूर्णो निशितासिदंष्ट्रः ॥ ४७ ॥

सिंहसमाधी रामस्य-असावित्यादि । रणान्तःस्थितिरूपाः-रणमध्यावस्थानरूपाः संधयो वालाश्च यस्य स तथा । शररूपैः अङ्गैः पूर्णः ॥ ४७ ॥

---

* हे रावण ! विशुद्धवंशाभिजनः–विशुद्धवंशोत्पन्नः त्व, अग्रः–श्रेष्ठः हस्तः–शुण्डादण्डः यस्य सः राघवगन्धहस्ती उदीक्षितुं–अपराद्धुमित्यर्थः, न युक्तः–रा.

† संदधतीति सन्धिः । सन्धिभूतः–लोमसंघभूतः इत्यर्थः । यद्वा सन्धिः-मध्यः, तद्गतः वालः–लाङ्गूलं यस्य स तथा । सिंहस्य लाङ्गूलं क्रोधदशायां मध्योपरिप्रदेशे वर्तेत इति प्रसिद्धिः–गो. रणान्तः–रणमध्ये स्थितये संधिः-संधानं–उत्सुकत्वं यत्र वालो यस्य–रा. सिंहादीनां वालचालनं उत्साहादिपोषकं यथा भवति तथा रणान्तःस्थितिः रामोत्साहपोषक इत्यर्थः ।

[1] रणाग्र–ङ. [2] युक्तः–ङ. ज.

*चापावहारे भुजवेग[1]पङ्के
शरोर्मि[2]माले सुमहाहवौघे ।
न रामपातालमुखेऽतिघोरे
प्रस्कन्दितुं, राक्षसराज! युक्तम् ॥ ४८ ॥

† अथ समुद्रसमाधिः—चापेत्यादि । चापरूपः अवहारः—ग्राहः यस्मिन् स तथा । भुजयोः शरग्रहणसंधानमोक्षविषयकः वेग एव पङ्कः यस्मिन् । सुमहान् आहव एव ओघः यस्य स तथा । राम एव पातालं—पातालप्रविष्टमहार्णव इति यावत्, तस्य मुखं—बडबामुखं । प्रस्कन्दितुं—पतितुम् ॥ ४८ ॥

प्रसीद लङ्केश्वर! राक्षसेन्द्र!
लङ्कां [3]प्रसन्नो भव साधु गच्छ ।
त्वं स्वेषु दारेषु रमस्व नित्यं
रामः सभार्यो रमतां वनेषु ॥ ४९ ॥

[4]एवमुक्तो दशग्रीवः मारीचेन स रावणः ।
न्यवर्तत पुरीं लङ्कां विवेश च गृहोत्तमम् ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकत्रिंशः सर्गः

---

मान(५०)मानः सर्गः ॥ ५० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकत्रिंशः सर्गः

---

* चाप एव अवहारः—हिंसकजन्तुः यस्मिन्-रा. † समुद्रस्य जलपूर्णमहागर्तरूपत्वात् अत्र समुद्रसमाधिरुच्यत इत्याशयः ।

[1] नागे-ङ. [2] जाले-ङ. [3] प्रपन्नो-ङ. [4] अयं श्लोकः कुत्रचित् अनन्तरसर्गारम्भे दृश्यते-ङ.

## द्वात्रिंशः सर्गः

### [शूर्पणखालङ्कागमनम्]

* ततः [1]शूर्पनखी दृष्ट्वा सहस्राणि चतुर्दश ।
हतान्येकेन रामेण रक्षसां [2]भीमकर्मणाम् ॥ १ ॥

अथ शूर्पणखायाः रावणदर्शनम् । ततः शूर्पनखीत्यादि ॥१॥

दूषणं च खरं चैव [3]हतं [4]त्रिशिरसा सह ।
दृष्ट्वा पुनर्महा[5]नादं † ननाद [6]जलदो यथा ॥ २ ॥

महानादं ननादेति । इष्टवियोगजः लोकप्रसिद्धोऽयं नादः ॥ २ ॥

सा दृष्ट्वा कर्म रामस्य कृतमन्यैः सुदुष्करम् ।
जगाम परमोद्विग्ना लङ्कां रावणपालिताम् ॥ ३ ॥
सा ददर्श ‡ विमानाग्रे रावणं दीप्ततेजसम् ।
[7]उपोपविष्टं सचिवैः मरुद्भिरिव वासवम् ॥ ४ ॥
आसीनं सूर्यसङ्काशे काञ्चने परमासने ।
रुक्मवेदि[8]गतं [9]प्राज्यं ज्वलन्तमिव पावकम् ॥ ५ ॥

रुक्मवेदिगतं- हिरण्येष्टकाचितवेदिं प्राप्तम् । तदुक्तं कल्पसूत्रे— 'सावित्रं स्वर्गकामश्चिन्वीत पञ्चाशीतिशतं हिरण्येष्टकाः ' इति । प्राज्यं- भूरिप्रकृष्टाज्यहोमवत् इत्यपीह । अत एव ज्वलन्तम् ॥ ५ ॥

---

* पूर्वं अकम्पनवाक्यात् सीतापहारे प्रवृत्तस्य रावणस्य मारीचेन निरोधेऽपि पुनः शूर्पणखावाक्यात्तत्र प्रवृत्तिः । † महानादमिति क्रियाविशेषणम्–गो. अथवा पाकं पचतीतिवत् 'महानादं ननाद' इत्युक्तिः । ‡ विमानाग्रे–पुष्पकविमानाग्रे–गो.

[1] शूर्पणखा–ज. [2] क्रूरकर्मणाम्–ङ. [3] हतौ–ङ. [4] त्रिशिरसं रणे–ज. [5] नादान्–ज. [6] जलदोपमा-ङ. [7] उपोपविष्टः–ङ. [8] कृतं–ङ. [9] पूज्यं–ङ.

देवगन्धर्वभूतानां ऋषीणां च महात्मनाम् ।
अजेयं समरे [1]शूरं [2]व्यात्तानननमिवान्तकम् ॥ ६ ॥

देवासुरविमर्देषु वज्राशनिकृतव्रणम् ।
ऐरावतविषाणाग्रैः [3]उद्घृष्टकिणवक्षसम् ॥ ७ ॥

विमर्दः-युद्धम् । वज्राशनिकृतव्रणामित्यनेन तदवध्यत्वं दर्शितम् । उद्घृष्टकिणवक्षसं-उद्घृष्टेन-विलेखेन जातो यः किणः, तदङ्कितवक्षसमित्यर्थः ॥ ७ ॥

विंशद्भुजं दशग्रीवं दर्शनीयपरिच्छदम् ।
विशालवक्षसं वीरं राजलक्षण[4]शोभितम् ॥ ८ ॥

परिच्छदः-अलङ्कारः ॥ ८ ॥

[5]स्निग्धवैडूर्यसङ्काशं तप्तकाञ्चन[6]कुण्डलम् ।
सुभुजं [7]शुक्लदशनं महास्यं पर्वतोपमम् ॥ ९ ॥

वैडूर्यं-श्यामरत्नम् ॥ ९ ॥

विष्णुचक्रनिपातैश्च शतशो देवसंयुगे ।
अन्यैः शस्त्रप्रहारैश्च महायुद्धेषु ताडितम् ॥ १० ॥
[8]आहताङ्गं [9]समस्तैश्च देवप्रहरणैस्तथा ।
अक्षोभ्याणां समुद्राणां [10]क्षोभणं क्षिप्रकारिणम् ॥ ११ ॥

क्षोभणं-"कर्तरि ल्युट्"-क्षोभकर्तारम् ॥ ११ ॥

---

[1] घोरं-ज. [2] व्यक्तानन-ङ. [3] उत्कृत्त-ङ. उत्कृष्ट-ज. [4] लक्षितम्-ज. [5] नद्ध-ज. [6] भूषणम्-ङ. [7] श्लक्ष्ण-ङ. [8] आहताङ्गैः-ज. [9] समर्थैश्च-ङ. समस्तैस्त-ज. [10] क्षोभकं-ङ.

क्षेप्तारं [1]पर्वतेन्द्राणां [2]सुराणां च प्रमर्दनम् ।
उच्छेत्तारं च धर्माणां परदाराभि[3]मर्शकम् ॥ १२ ॥
सर्वदिव्यास्त्रयोक्तारं यज्ञविघ्नकरं सदा ।
पुरीं भोगवतीं प्राप्य पराजित्य च वासुकिम् ॥ १३ ॥
तक्षकस्य प्रियां भार्यां पराजित्य जहार यः ।
कैलासपर्वतं गत्वा विजित्य नरवाहनम् ॥ १४ ॥
विमानं पुष्पकं तस्य कामगं वै जहार यः ।

परदाराभिमर्शकमितीममंशं दर्शयति—तक्षकस्येत्यादि ॥ १४ ॥

वनं चैत्ररथं दिव्यं *नलिनीं नन्दनं वनम् ॥ १५ ॥
विनाशयति यः क्रोधात् देवोद्यानानि वीर्यवान् ।
चन्द्रसूर्यौ [4]महाभागौ उत्तिष्ठन्तौ परन्तपौ ॥ १६ ॥
निवारयति बाहुभ्यां यः शैलशिखरोपमः ।
दशवर्षसहस्राणि तपः तप्त्वा महावने ॥ १७ ॥
पुरा स्वयंभुवे [5]धीरः शिरांस्युपजहार यः ।

उपजहारेति । उपहारत्वेन कृतवानित्यर्थः ॥ १७ ॥

देवदानवगन्धर्व[6]पिशाचपतगोरगैः ॥ १८ ॥
अभयं [7]यस्य संग्रामे मृत्युतो मानुषादृते ।

मृत्युतः अभयमिति । मरणभयं नास्तीत्यर्थः ॥ १८ ॥

मन्त्रैः अभिषुतं पुण्यं अध्वरेषु द्विजातिभिः ॥ १९ ॥

---

* नलिनीं—कुबेरस्य पुष्करिणीम् । नन्दनं वनं--इन्द्रोद्यानम् । देवोद्यानानि—नन्दनवनादन्यानि—**गो.**

[1] पर्वताग्राणां—ज. [2] परेषां च—ङ. [3] मर्शनम्—ङ. ज. [4] महावेगौ—ङ.
[5] वीरः—ङ. [6] देवर्षि—ङ. [7] सर्वभूतेभ्यः—ङ.

मन्त्रैः—प्रातरनुवाकग्रावस्तोत्रादिभिः अभिष्टुतं सोमं हविर्धानेषु—सोमाभिषवशालासु उपहन्ति—नाशयति ॥ १९ ॥

*हविर्धानेषु यः सोमं उपहन्ति महाबलः ।
[1]आप्तयज्ञहरं क्रूरं ब्रह्मघ्नं [2]दुष्टचारिणम् ॥ २० ॥

आप्तान्—दक्षिणादानकाले प्राप्तान् यज्ञान् हरतीति ॥ २० ॥

† कर्कशं निरनुक्रोशं प्रजानामहिते रतम् ।
‡ रावणं [3]सर्वभूतानां [4]सर्वलोकभयावहम् ॥ २१ ॥
राक्षसी [5]भ्रातरं [6]शूरं सा ददर्श महाबलम् ।

सा—राक्षसी शूर्पणखा ॥ २१ ॥

तं दिव्यवस्त्राभरणं दिव्यमाल्योपशोभितम् ॥ २२ ॥
आसने सूपविष्टं च § [7]काले कालमिवोद्यतम् ।

काले—युगान्तकाले ॥ २२ ॥

राक्षसेन्द्रं महाभागं पौलस्त्यकुलनन्दनम् ॥ २३ ॥
रावणं शत्रुहन्तारं मन्त्रिभिः परिवारितम् ।
[8]अभिगम्याब्रवीद्वाक्यं राक्षसी भयविह्वला ॥ २४ ॥

पौलस्त्यानां कुलं नन्दयतीति तथा ॥ २४ ॥

---

* हविर्धानेषु—सोमसवनकर्मविशिष्टेषु अध्वरेषु यज्ञेषु द्विजातिभिः—कर्तृभिः मन्त्रैरभिष्टुतं सोमं—चन्द्रमसं—रा. अभिष्टुतं—क्षरितं—गो. † कर्कशं—निर्दाक्षिण्यं, निरनुक्रोशं—निर्दयम्—गो. ‡ रावणं—रावकम्—गो. § कालकालं—मृत्योरपि मृत्युम्—गो.

[1] प्राप्तसर्व—ङ. [2] क्रूरकारिणम्—ज. [3] सर्वलोकानां—ङ. [4] सर्वभूतभयंकरम्—ङ. [5] राक्षसं—ङ. [6] क्रूरं—ज. [7] कालकाल—ङ. [8] इदमर्धं ज पुस्तके 'रावणं शत्रुहन्तारं' इत्यतः पूर्वं पठितम् ।

तमब्रवीत् दीप्तविशाललोचनं
प्रदर्शयित्वा भय[1]मोह[2]मूर्छिता ।
सुदारुणं वाक्यं अभीतचारिणी
महात्मना शूर्पणखा विरूपिता ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे द्वात्रिंशः सर्गः

---

अभिगम्याब्रवीदित्यस्यैव विवरणभूतोत्तरसर्गसंक्षेपः—तमब्रवीदि-त्यादि । प्रदर्शयित्वेति । स्वकं वैरूप्यमिति शेषः । अभीततया सर्वपुरुषेषु सर्वलोकेषु च चारः यस्याः सा तथा । शर(२५)मानः सर्गः ॥ २५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे द्वात्रिंशः सर्गः

---

## त्रयस्त्रिंशः सर्गः

[रावणोपालम्भः]

ततः शूर्पणखा *[3]दीना रावणं लोकरावणम् ।
अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥ १ ॥

अथ शूर्पणखायाः रावणे पारुष्यम् । तत इत्यादि ॥ १ ॥

प्रमत्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः ।
समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे ॥ २ ॥

---

* दीना, रामपरिभूतत्वात् । स्वपरिभवदर्शनेऽपि भ्रातुर्निश्चलतया संक्रुद्धा—गो.

[1] शोक—ङ. लोभ—ज. [2] मोहिता—ङ. ज. [3] दीप्ता—ङ.

निरङ्कुशः सन् बोद्धव्यं नावबुध्यसे इत्यन्वयः। "त्वं तु रावण! दुर्बुद्धिः गुणैरेतैः विवर्जितः"* इति हि वक्ष्यन्ति ॥ २ ॥

**सक्तं [1]ग्राम्योपभोगेषु कामवृत्तं महीपतिम् ।**
**लुब्धं न बहुमन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ३ ॥**

हेयोपादेयराजगुणान् सामान्येनाह—सक्तमित्यादि। ग्राम्योपभोगः—स्त्र्यादिभोगः। तदेव दर्शितं—कामवृत्तमिति। कामचेष्टापरम्। लुब्धं—भोगलोलुपम् ॥ ३ ॥

**स्वयं कार्याणि यः काले नानुतिष्ठति पार्थिवः ।**
**स तु वै सह राज्येन तैश्च कार्यैः विनश्यति ॥ ४ ॥**

तैश्च कार्यैरिति। अननुष्ठानविनश्यद्भिरित्यर्थः ॥ ४ ॥

**अयुक्तचारं दुर्दर्शं अस्वाधीनं नराधिपम् ।**
**वर्जयन्ति नराः दूरात् नदीपङ्कमिव द्विपाः ॥ ५ ॥**

अयुक्तचारमिति। अनियोजितापसर्पं†, दुर्दर्शं उचितकाले सभायां प्रजादर्शनप्रदानरहितम्। अस्वाधीनं स्त्र्यादिपरतन्त्रम् ॥ ५ ॥

**ये न रक्षन्ति विषयं [2]अस्वाधीनाः नराधिपाः ।**
**त न [3]वृद्ध्या प्रकाशन्ते गिरयः सागरे यथा ॥ ६ ॥**

विषयं—प्रदेशं। वृद्ध्या—उदयेन न प्रकाशन्ते ॥ ६ ॥

---

* अस्मिन्नेव सर्गे २२ श्लोके। † अपसर्पः—चारः।

[1] ग्राम्येषु—ङ. ज. [2] अस्वाधीनं—ज. [3] बुध्या—ङ.

* आत्मविद्भिः विगृह्य त्वं देवगन्धर्वदानवैः ।
अयुक्तचारः चपलः कथं राजा भविष्यसि ॥ ७॥

आत्मविद्भिः— विवशीकृतबहिरन्तःकरणैः अयुक्तचारः । अव्याकृतचरः ॥ ७ ॥

त्वं तु बालस्वभावश्च बुद्धिहीनश्च, राक्षस !
ज्ञातव्यं तु न जानीषे कथं राजा भविष्यसि ॥ ८ ॥
येषां चाराश्च कोशश्च नयश्च, जयतां वर !
अस्वाधीनाः नरेन्द्राणां प्राकृतैस्ते जनैस्समाः ॥ ९ ॥

प्राकृतैर्जनैरिति । राज्यव्यवहारानर्हदासदासीजनैः इत्यर्थः ॥

यस्मात् पश्यन्ति दूरस्थान् सर्वानर्थान् नराधिपाः ।
चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः ॥ १० ॥

यस्मात्तस्माच्छब्दौ हेतू ॥ १० ॥

अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्वृतम् ।
† स्वजनं तु [1] जनस्थानं हतं यो नावबुध्यसे ॥ ११ ॥
चतुर्दशसहस्राणि रक्षसां [2] क्रूरकर्मणाम् ।
हतान्येकेन रामेण खरश्च सहदूषणः ॥ १२ ॥
ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः ।
धर्षितं च जनस्थानं रामेणाक्लिष्ट[3]कर्मणा ॥ १३ ॥

---

* बलवद्भिः सह विरोधं संपादितवता हि सदा जागरूकेन भवितव्यमित्याशयः ।
† स्वजनं—स्वस्य जनाः यस्मिंस्तत्--ति.

[1] जनस्थाने—ङ. यतः स्थानं—ज. [2] भीम—ज. [3] कारिणा—ज.

त्वं तु लुब्धः प्रमत्तश्च पराधीनश्च, [1] रावण !
विषये स्वे समुत्पन्नं भयं यो नावबुध्यसे ॥ १४ ॥

विषये स्वे—स्वीयदेशे ॥ १४ ॥

तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम्‌ ।
व्यसने सर्वभूतानि नाभिधावन्ति पार्थिवम्‌ ॥ १५ ॥

तीक्ष्णादिधर्मकः स्वामात्यभृत्यादिविषये यः तं पार्थिवं, तस्य व्यसनकाले सर्वभूतानि भृत्यामात्यादिसर्वप्रजा नाभिधावन्ति—तद्रक्षणाय न प्रवर्तन्ते ॥ १५ ॥

[2] अतिमानिनं * अग्राह्यं आत्मसंभावितं नरम्‌ ।
[3] क्रोधनं व्यसने हन्ति स्वजनोऽपि [4] महीपतिम्‌ ॥ १६ ॥

अग्राह्यं—स्वकैः अनुपसर्प्यम्‌ ॥ १६ ॥

नानुतिष्ठति कार्याणि भयेषु न बिभेति च ।
क्षिप्रं राज्याच्च्युतो दीनः तृणैः तुल्यो [5] भविष्यति ॥ १७ ॥

नानुतिष्ठन्तीति । अमात्यादिस्वजनोऽपीत्यनुकर्षः ॥ १७ ॥

† [6] शुष्कैः काष्ठैः भवेत्‌ कार्यं लोष्टैरपि च पांसुभिः ।
न तु स्थानात्‌ परिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥ १८ ॥

---

* अग्राह्यं—सद्भिरिति शेषः—गो. † स्थानात्‌ भ्रष्टमेव खलु शुष्ककाष्ठादिव्यपदेश्यं भवति । तैरपि कदाचित्‌ किञ्चित्‌ कार्यं निर्वर्तेत । स्थानभ्रष्टेन पार्थिवेन तु न किञ्चिदपि ।

[1] राक्षस—ज. [2] अभिमानिनं—ङ. [3] क्रोधिनं—ङ. [4] नराधिपम्‌—ज.
[5] भवेदिह—ज. [6] शुष्क—ङ.

*[1] उपभुक्तं यथा वासः स्रजो वा मृदिताः यथा ।
एवं राज्यात् परिभ्रष्टः समर्थोऽपि निरर्थकः ॥ १९ ॥
अप्रमत्तश्च यो राजा सर्वज्ञो विजितेन्द्रियः ।
कृतज्ञो धर्मशीलश्च स राजा तिष्ठते चिरम् ॥ २० ॥

सर्वज्ञः इति । स्वपरसर्ववृत्तान्तज्ञः इत्यर्थः । तिष्ठते चिरमिति । "अकर्मकाच्च" इति आत्मनेपदम् ॥ २० ॥

नयनाभ्यां प्रसुप्तोऽपि जागर्ति नयचक्षुषा ।
† व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः ॥ २१ ॥
‡ त्वं तु, रावण! दुर्बुद्धिः गुणैरेतैः विवर्जितः ।
यस्य तेऽविदितश्चारैः रक्षसां सुमहान् वधः ॥ २२ ॥

यस्य ते अविदितः इति । 'गतिबुद्धि' इत्यादिना वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी । येन त्वया न ज्ञायते इत्यर्थः ॥ २२ ॥

परावमन्ता विषयेषु [2]सङ्गतः
　न देशकालप्रविभागतत्त्ववित् ।
अयुक्तबुद्धिः गुणदोषनिश्चये
　विपन्नराज्यो न चिराद्विपत्स्यसे ॥ २३ ॥

परावमन्ता—शत्रुषूदासीनः ॥ २३ ॥

---

* अम्लाना सुगन्धिन्यपि परोपभुक्ता भ्रष्टा स्रक् यथा न कार्यान्तरोपयोगिनी, तथा समर्थोऽपि राजा राज्याद्भ्रष्टः निरर्थक एवेत्यर्थः । † क्रोधप्रसादयोः व्यक्तत्वं दण्डदानादिना । ‡ यद्यप्यकम्पनमुखात् विदित एव वृत्तान्तः ; तथाऽपि तदजानन्ती शूर्पणखा एवं वदति । तादृशो महान् वधः यदि ज्ञातः स्यात्, तदा हि राज्ञः औदासीन्यादिकं सर्वथा न संभवीति भावनयाऽपि तथा वदति ।

[1] उपयुक्तं—ङ.　　[2] सङ्गवान्—ङ.

इति स्वदोषान् परिकीर्तितांस्तया
समीक्ष्य बुद्ध्या क्षणदाचरेश्वरः ।
धनेन दर्पेण बलेन चान्वितः
* विचिन्तयामास चिरं स रावणः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे त्रयस्त्रिंशः सर्गः

---

धनेन—अक्षयकोशसंपत्त्या दर्पेण—राजत्वाहङ्कारेण बलेन—प्राणबलेन चतुरङ्गबलेन च । चिरं चिन्तयामासेति । मारीचः मा स्म कलहप्रवृत्तो भूरिति ब्रूते, इयं तु कलहार्थमेव प्रोत्साहयति । किमत्र कर्तव्यमिति चिन्तयामासेत्यर्थः । भार(२४)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे त्रयस्त्रिंशः सर्गः

---

## चतुस्त्रिंशः सर्गः

### [सीतापहरणोपदेशः]

ततः [1] शूर्पनखीं [2] क्रुद्धां ब्रुवन्तीं परुषं वचः ।
† अमात्यमध्ये संक्रुद्धः परिपप्रच्छ [3] रावणः ॥ १ ॥

अथ रावणः कार्यनिश्चयाय वृत्तान्तमेव सम्यगवगच्छति । ततः शूर्पनखीमित्यादि ॥ १ ॥

---

* विचिन्तने हेतुरुक्तः—स्वदोषान् परिकीर्तितानिति । तदुक्तदोषाणां स्वस्मिन् भानादेव चिन्ता । † अमात्यमध्ये परुषं ब्रुवन्तीमिति चान्वयः । अत एव संक्रुद्ध इत्यपि ।

[1] शूर्पणखां—ज. [2] दृष्ट्वा—ज. [3] राक्षसः—ङ.

कश्च रामः? कथंवीर्यः? किंरूपः? किंपराक्रमः? ।
किमर्थं दण्डकारण्यं प्रविष्टः स दुरासदम्? ॥ २ ॥

आयुधं किं च रामस्य निहताः येन राक्षसाः ।
खरश्च निहतः संख्ये दूषणः त्रिशिरास्तथा? ॥ ३ ॥

[1] तत्त्वं ब्रूहि, मनोज्ञाङ्गि! केन त्वं च विरूपिता ।
इत्युक्ता राक्षसेन्द्रेण राक्षसी क्रोधमूर्च्छिता ॥ ४ ॥

ततो रामं [2] यथातत्त्वं आख्यातुमुपचक्रमे ।
*दीर्घबाहुः विशालाक्षः [3] चीरकृष्णाजिनाम्बरः ॥ ५ ॥
कन्दर्पसमरूपश्च रामो दशरथात्मजः ।

किंरूपः इत्यस्योत्तरं--दीर्घबाहुरित्यादि । कश्च रामः इत्यस्योत्तरं--दशरथात्मजः इति । अन्ये स्पष्टाः ॥ ५ ॥

शक्रचापनिभं चापं विकृष्य [4] कनकाङ्गदम् ॥ ६ ॥
दीप्तान् क्षिपति नाराचान् सर्पानिव महाविषान् ।

कनकाङ्गदं--कनकवलयभूषितम् ॥ ६ ॥

नाददानं शरान् घोरान् [5] न मुञ्चन्तं शिलीमुखान् ॥ ७ ॥
न कार्मुकं विकर्षन्तं रामं पश्यामि संयुगे ।
[6] हन्यमानं तु तत् सैन्यं पश्यामि शरवृष्टिभिः ॥ ८ ॥

---

* रामानुजपरवशहृदयाऽपि तदग्रजकृतमहोन्मादहेतुभूतं रामलावण्यं संग्रहेणाभिधत्ते-दीर्घबाहुरित्यादिना-गो.

[1] इदमर्धं नास्ति-ङ. [2] यथान्यायं-ज. [3] श्रीमान् शत्रुनिबर्हणः-ङ.
[4] कनकाङ्कितम्-ङ. [5] विमुञ्चन्तं-ज. [6] दह्यमानं-ङ.

इन्द्रेणेवोत्तमं सस्यं आहतं [1]त्वश्मवृष्टिभिः * ।
रक्षसां [2]भीमरूपाणां सहस्राणि चतुर्दश ॥ ९ ॥
निहतानि शरैः तीक्ष्णैः [3]तेनैकेन पदातिना ।
अर्धाधिकमुहूर्तेन खरश्च सहदूषणः ॥ १० ॥
ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः ।

किमर्थं दण्डकारण्यं प्रविष्टः इत्यस्योत्तरं—ऋषीणामित्यादि ॥

एका कथंचिन्मुक्ताऽहं [4]परिभूय महात्मना ॥ ११ ॥
स्त्रीवधं शङ्कमानेन रामेण विदितात्मना ।
भ्राता चास्य महातेजाः [5]गुणतः तुल्यविक्रमः ॥ १२ ॥
अनुरक्तश्च भक्तश्च लक्ष्मणो नाम वीर्यवान् ।
† अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान् बली ॥ १३ ॥
रामस्य दक्षिणो बाहुः नित्यं प्राणो बहिश्चरः ।
रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना ॥ १४ ॥
धर्मपत्नी प्रिया भर्तुः नित्यं प्रियहिते रता ।
सा सुकेशी सुनासोरुः सुरूपा च यशस्विनी ॥ १५ ॥
देवतेव वनस्यास्य राजते श्रीरिवापरा ।
[6]तप्तकाञ्चनवर्णाभा रक्ततुङ्गनखी शुभा ॥ १६ ॥
सीता नाम वरारोहा वैदेही तनुमध्यमा ।
नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ॥ १७ ॥

---

* अश्मवृष्टिभिः—करकामयवर्षैः—गो. † अमर्षी— रामापराधासहनशीलः—रा.

[1] स्वतिवृष्टिभिः—ङ. [2] भीमवीर्याणां—ज. [3] रामेणाक्लिष्टकर्मणा—ङ.

[4] परिभूता—ङ. [5] गुणात् तत्तुल्य—ङ. [6] काञ्चनोज्ज्वलवर्णाभा—ङ.

[1]नैवंरूपा मया नारी दृष्टपूर्वा महीतले ।
*यस्य सीता भवेत् भार्या यं च दृष्ट्वा परिष्वजेत् ॥१८॥
[2]अतिजीवेत् स सर्वेषु [3]लोकेष्वपि पुरन्दरात् ।

यं च दृष्ट्वा परिष्वजेत् स एव सर्वेष्वपि कालेषु पुरन्दर इव अतिजीवेत्—अत्यधिकं जीवेत् अत्यधिकसुखी भवेत् ॥ १८ ॥

[4]सा सुशीला †वपुःश्लाघ्या रूपेणाप्रतिमा भुवि ॥ १९ ॥

तवानुरूपा भार्या स्यात् त्वं च तस्याः तथा पतिः ।
तां तु विस्तीर्णजघनां [5]पीनश्रोणिपयोधराम् ॥ २० ॥
[6]भार्यात्वे च तवानेतुं [7]उद्यताऽहं वराननाम् ।
विरूपिताऽस्मि क्रूरेण लक्ष्मणेन, महाभुज! ॥ २१ ॥

'भार्यात्वे च तवाऽऽनेतुमुद्यता' इति मृषा ब्रूते रावणप्रियार्थम् ॥ २१ ॥

तां तु दृष्ट्वाऽद्य वैदेहीं पूर्णचन्द्रनिभाननाम् ।
मन्मथस्य शराणां वै त्वं विधेयो भविष्यसि ॥ २२ ॥

---

*परिष्वङ्गं विना भार्यात्वेन स्थिता चेत्, सः सर्वेषु लोकेषु सर्वानपि लोकान् अतिजीवेत्–अतीत्य जीवेत्, सर्वलोकोत्तीर्णपरमसुखमयजीवन इत्यर्थः । परिष्वङ्गाभावेऽपि सदा सन्निधानादिसौख्यादिति भावः । भार्यात्वं विनाऽपि यं सकृत् परिष्वजेत्, सः पुरन्दरादपि पुरन्दरमपि अतिजीवेत्–अतिशय्य जीवेत्–गो. पुरन्दरादप्यधिकं अभिजीवेत्–रा. †वपुषा श्लाघ्या, सर्वानवद्याङ्गीत्यर्थः–गो.

[1] तथारूपा–ज. [2] अभिजीवेत्–ज. [3] देवेष्विव पुरन्दरः–ङ. [4] साधुशीला–ङ. [5] पीनोत्तुङ्गं–ज. [6] भार्यार्थे, भार्यार्थं–ङ. [7] उद्युक्ता–ङ.

यदि तस्यामभिप्रायः भार्यार्थे तव जायते ।
[1] शीघ्रमुद्ध्रियतां पादः जयार्थमिह दक्षिणः ॥ २३ ॥
क्रियतां निर्विशङ्केन वचनं मम रावण! ॥ २४ ॥
[2] विज्ञायैषामशक्तिं च क्रियतां च, महाबल !
सीता [3] तवानवद्याङ्गी [4] भार्यात्वे, राक्षसेश्वर! ॥ २५ ॥

"विज्ञायैषामशक्तिं च क्रियतां च महाबल । सीता तवानवद्याङ्गी भार्यात्वे राक्षसेश्वर।" इति पाङ्कः। एषां—रामादीनां अशक्तिं, चकारात् तव शक्तिं च विज्ञाय सीता तव भार्यात्वे क्रियताम् । राज्याद्यभावात् रामस्य अशक्तिरिति मूढायाः तात्पर्यम् * ॥ २५ ॥

निशम्य रामेण शरैरजिह्मगैः
हतान् जनस्थानगतान् निशाचरान् ।
खरं च [5] बुध्द्वा निहतं च दूषणं
[6] त्वमद्य कृत्यं प्रतिपत्तुमर्हसि ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे चतुस्त्रिंशः सर्गः

---

उपसंहरति—निशम्य रामेणेति । अद्य कृत्यमिति । एतत्कालोचितं यत् कर्तुं योग्यं तत् प्रतिपत्तुं—निश्चित्य ज्ञात्वा प्रवर्तितुमर्हसीत्यर्थः । चोर(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे चतुस्त्रिंशः सर्गः

---

* अथवा—तयोः पौरुषं साक्षाद्दृष्टवती शूर्पणखा वीर्यात् सीता रावणेन नापहर्तुं शक्येति जानन्ती—रामलक्ष्मणयोर्दौर्बल्यं ज्ञात्वा तदुपयोगेन सीतामपहरेति वदति । रावणोऽपि तथैव सीतायाश्चापल्यं, रामस्य सीतावचनानुपेक्षकत्वं— इत्यादिकं छिद्रं विज्ञाय उपायेन सीतां जहार। तदेतदुच्यते— एषामशक्तिमिति । 'विज्ञायेहात्मशक्तिं' इति—**गो.** पाठः ॥

[1] एतदनन्तरं, "कुरु प्रियं तथा तेषां रक्षसां राक्षसेश्वर! वधात तस्य नृशंसस्य रामस्याश्रमवासिनः ॥ त शरैः निशितैः हत्वा लक्ष्मणं च महारथम् । हतनाथां सुखं सीतां यथावदुपभोक्ष्यसि ॥ रोचते यदि ते वाक्यं ममैतद्राक्षसेश्वर!" इत्यधिकं- **ङ.ज.झ.** [2] विज्ञायेहात्मशक्तिं च ह्रियतामबला बलात्—**ङ.** [3] सर्वा—ङ. [4] भार्यार्थे—**ङ.** [5] दृष्ट्वा—**ङ.** [6] त्वमत्र—ङ.

## पञ्चत्रिंशः सर्गः

[मारीचाश्रमपुनर्गमनम्]

ततः शूर्पणखावाक्यं तच्छ्रुत्वा *[1] रोमहर्षणम् ।
सचिवानभ्यनुज्ञाय [2] कार्यं बुद्ध्वा जगाम सः ॥ १ ॥

अथ रावणः अकम्पनादिव शूर्पणख्याश्च सकाशात् सीताहरणं कृत्यं श्रुत्वा तदेव कर्तव्यं, युद्धं चानुचितमिति निश्चित्य तत्साहाय्याय परममायामारीचं रहः पुनरुपगच्छति । ततः शूर्पणखावाक्यमित्यादि । रोमहर्षणमिति । भयोत्पादकतया कामविरहोत्पादकतया च रोमाञ्चकरत्वं शूर्पणखावाक्यस्य । कार्यं बुद्ध्वा जगाम सः । मारीचाश्रममिति शेषः । अस्यैव प्रपञ्चः आसर्गसमाप्ति ॥ १ ॥

तत्कार्यमनुगम्याथ यथावदुपलभ्य च ।
†दोषाणां च गुणानां च संप्रधार्य बलाबलम् ॥ २ ॥
इतिकर्तव्यमित्येव कृत्वा निश्चयमात्मनः ।
स्थिरबुद्धिस्ततो रम्यां यानशालां जगाम ह ॥ ३ ॥

तत्कार्यमित्यादि । सीताऽपहारमित्यर्थः । अनुगम्य—उद्दिश्य । दोषाणां च गुणानां च स्वरूपं यथावदुपलभ्य बलाबलं च यथावत् संप्रधार्य इत्येव कर्तव्यमिति आत्मनः—स्वस्य निश्चयं कृत्वा यानशालां जगाम ॥ २-३ ॥

---

* रोमहर्षणं—भयोत्पादकत्वेन रोमाञ्चकरम्—गो. अस्य कविवाक्यरूपत्वात् एवं व्याख्यानम् । तथा च—परभार्यापहारस्य—विशिष्य सीतापहारस्य अतिक्रूरत्वात्—श्रवणमात्रमेव रोमाञ्चकारीति भावः । † स्वेन चिकीर्षितं सीतापहरणलक्षणं कार्यं किं पौरुषेण सुकरम् ? आहोस्विच्चौर्येण कर्तव्यमिति विचार्य—गो.

[1] राक्षसाधिपः—ङ. [2] कार्यबुध्या—ङ.

यानशालां ततो गत्वा * [1] प्रच्छन्नं राक्षसाधिपः ।
सूतं संचोदयामास रथः संयोज्यतामिति ॥ ४ ॥

प्रच्छन्नमिति दुष्प्रवृत्तितो दृष्टश्रुतिनिरोधशङ्कया ॥ ४ ॥

एवमुक्तः क्षणेनैव सारथिर्लघुविक्रमः ।
रथं [2] संयोजयामास तस्याभिमतमुत्तमम् ॥ ५ ॥
काञ्चनं रथमास्थाय कामगं रत्नभूषितम् ।
पिशाचवदनैर्युक्तं खरैः काञ्चनभूषणैः ॥ ६ ॥

पिशाचवदनैरिति । देवयोनिभेदाः पिशाचाः । वदनभागे तत्सदृशैरित्यर्थः ॥ ६ ॥

† मेघप्रतिमनादेन स तेन धनदानुजः ।
राक्षसाधिपतिः श्रीमान् ययौ ‡ नदनदीपतिम् ॥ ७ ॥

नदानां नदीनां च पतिः समुद्रः ॥ ७ ॥

स श्वेतवालव्यजनः श्वेतच्छत्रो दशाननः ।
स्निग्धवैडूर्यसङ्काशः तप्तकाञ्चन[3]कुण्डलः ॥ ८ ॥
विंशद्भुजो दशग्रीवः दर्शनीयपरिच्छदः ।
त्रिदशारिर्मुनीन्द्रघ्नः [4] दशशीर्ष इवाद्रिराट् ॥ ९ ॥

---

* प्रच्छन्न इति । प्रकाशश्चेद्वृद्धा मन्दोदर्यादयश्च वारयिष्यन्तीति भावः । यद्वा पौरुषं विहाय चौर्यमार्गाश्रयणं लज्जावहमिति प्रच्छन्नमार्गाश्रयणम् । यद्वा—ततः—सचिवान् तदानीं सभास्थितान् विसृज्य च स्वयं कार्यं बुद्ध्वेत्यर्थः । अत एव सचिवैः पर्यालोचनाभावात् प्रच्छन्न इत्युक्तम् । अत एव कुम्भकर्णादिभिरुच्यते सचिवैरमन्त्रयित्वा कृतस्य कथमिदानीं प्रतीकार इति—**गो**. † मेघप्रतिमवचनेनोपलक्षितः—**रा**. विमानविशेषणं वा. ‡ नदनदीपतिं तीर्त्वा ययौ—**ति**.

[1] प्रच्छन्नः—**ङ**. [2] संचोदयामास—**ङ**. [3] भूषणः—**ज**. [4] दशशृङ्ग—**ङ**.

कामगं रथमास्थाय शुशुभे राक्षसेश्वरः।
विद्युन्मण्डलवान् मेघः *सबलाक इवाम्बरे ॥ १० ॥

विद्युन्मण्डलवान् इति। विद्युत्स्थाने आभरणानि, मेघस्थाने रावणः, बलाकास्थाने अलङ्कृतरथः ॥ १० ॥

[1] सशैलसागरानूपं वीर्यवानवलोकयन्।
नानापुष्पफलैर्वृक्षैः अनुकीर्णं सहस्रशः ॥ ११ ॥

शैलैः सहितः सागरस्यानूपः तथा। तस्यैव वर्णनं—नानापुष्पफलैरित्यादि ॥ ११ ॥

शीतमङ्गलतोयाभिः पद्मिनीभिः समन्ततः।
विशालैराश्रमपदैः वेदिमद्भिः समावृतम् ॥ १२ ॥

[2] कदल्यटविसंबाधं नालिकेरोपशोभितम्।
सालैस्तालैस्तमालैश्च पुष्पितैस्तरुभिर्वृतम् ॥ १३ ॥

कदल्यटवी—कदलीवनम् ॥ १३ ॥

अत्यन्तनियताहारैः शोभितं परमर्षिभिः।
नागैः सुपर्णैः गन्धर्वैः किन्नरैश्च सहस्रशः ॥ १४ ॥

अत्यन्तं—अतिशयेन पर्णवातादिना नियतः आहारः यैस्तथा ॥

आजैर्वैखानसैर्माषैः वालखिल्यैर्मरीचिपैः †।
जितकामैश्च सिद्धैश्च चारणैरुपशोभितम् ॥ १५ ॥

आजैः—ब्रह्मपुत्रैः अयोनिजैः वैखानसैः। तथा प्रसिद्धास्ते। "ये नखाः, ते वैखानसाः" ॥ १५ ॥

* सबलाकः—बकपङ्क्तिसहितः—रा. † मरीचिपैः—रविकिरणपानव्रतनिष्ठैः—गो.
[1] सशैलं—ङ. [2] कदल्याढकि—ङ.

दिव्याभरणमाल्याभिः दिव्यरूपाभिरावृतम् ।
क्रीड[1]रतिविधिज्ञाभिः अप्सरोभिः सहस्रशः ॥ १६ ॥

सेवितं देवपत्नीभिः श्रीमतीभिः[2] श्रिया वृतम् ।
देवदानवसंघैश्च चरितं *त्वमृताशिभिः ॥ १७ ॥

अमृतमशितुं शीलमस्त्येषामिति अमृताशिनः तैः ॥ १७ ॥

हंसक्रौञ्चप्लवाकीर्णं सारसैः[3] संप्रणादितम् ।
वैडूर्यप्रस्तरं[4] रम्यं स्निग्धं सागरतेजसा † ॥ १८ ॥

प्लवाः – मण्डूकाः ‡ । वैडूर्याभाः श्यामाः प्रस्तराः यस्मिन् अनूपे स तथा । सागरतेजसा-सागरोर्मिभवेन । स्निग्धं-सान्द्रम्— शीतलम् ॥ १८ ॥

पाण्डराणि विशालानि दिव्यमाल्ययुतानि च ।
तूर्यगीताभिजुष्टानि विमानानि समन्ततः ॥ १९ ॥

तपसा जितलोकानां कामगान्यभिसंपतन् ।
गन्धर्वाप्सरसश्चैव ददर्श धनदानुजः ॥ २० ॥

उच्यमानविशेषणकानि विमानान्यपि संपतन्—गच्छन् मार्गवशात् ददर्शेत्यग्रेण संबन्धः ॥ २० ॥

निर्यासरसमूलानां चन्दनानां सहस्रशः ।
वनानि पश्यन् सौम्यानि घ्राणतृप्तिकराणि च ॥ २१ ॥

---

* अमृताशिभिः दैवैश्चेति शेषः । यद्वा ऋतामृताभ्यां जीवेतेत्युक्तायाचितलब्धाशिभिः । 'ऋतमुञ्छशिलं प्रोक्तं अमृतं स्यादयाचितम्' इति मनुः—गो. † एतादृशं सागरानूपमवलोकयन् विमानानि ददर्शेत्यन्वयः । ‡ प्लवाः—जलकाका वा ।

[1] रस—ङ. रीति—ज. [2] उपासितम्—ज. [3] संप्रसादितम्—ज.
[4] दिव्यं—ङ.

[1]अगरूणां च मुख्यानां वनान्युपवनानि च ।
तक्कोलानां च जात्यानां [2]फलिनां च सुगन्धिनाम् ॥
पुष्पाणि च तमालस्य गुल्मानि मरिचस्य च ।
मुक्तानां च समूहानि शुष्यमाणानि तीरतः ॥ २३

निर्यासरूपो रसः—निर्यासरसः, तस्य मूलानि—उपादानभूतानि गुग्गुलादिवृक्षाः, तेषां चन्दनानां च वनानि सहस्रशः पश्यन् । जात्यानां उत्तमतक्कोलवृक्षभवानां फलिनां-प्रशस्तफलवतां ॥ २३ ॥

* [3]शङ्खानां प्रस्तरं चैव प्रवालनिचयं तथा ।
काञ्चनानि च [4]शैलानि राजतानि च सर्वशः ॥ २४ ॥

शैलानीति समूहार्थे । शिलावृन्दानीत्यर्थः ॥ २४ ॥

प्रस्रवाणि मनोज्ञानि प्रसन्नानि [5]ह्रदानि च ।
धनधान्योपपन्नानि स्त्रीरत्नैः शोभितानि च ॥ २५ ॥
हस्त्यश्वरथगाढानि नगराण्यवलोकयन् ।

प्रस्रवाणि—निर्झराः ॥ २५ ॥

तं समं सर्वतः स्निग्धं मृदुसंस्पर्शमारुतम् ॥ २६ ॥
† [6]अनूपं सिन्धुराजस्य ददर्श त्रिदिवोपमम् ।

समं—समभूतलम् ॥ २६ ॥

तत्रापश्यत् स मेघाभं न्यग्रोधमृषिभिर्वृतम् ॥ २७ ॥

---

* शैलानीति नपुंसकत्वमार्षम् । † एवं बहुधा सागरानूरवर्णनं पुनः बहुदूरमार्गगमनप्रयासेन मारीचोपदेशानिवर्त्याध्यवसायविशेषं व्यञ्जयितुम्—गो.

[1] अंकोलानां च—ङ. ज. [2] फलानां—ज. पलाशानां—ङ. [3] शैलानि भवरांश्चैव—ज. [4] शृङ्गाणि—ज. [5] अद्भुतानि च—ज. [6] अनूपे—ज.

समन्ताद्यस्य ताः शाखाः शतयोजनमायताः ।
यस्य हस्तिनमादाय महाकायं च कच्छपम् ॥ २८ ॥

तत्र·—समुद्रदिव्यद्वीपानूपे । यस्य–दिव्यसिद्धवटस्येत्यर्थः ॥

भक्षार्थं गरुडः शाखां आजगाम महाबलः ।
तस्य तां सहसा शाखां भारेण पतगोत्तमः ॥ २९ ॥

सुपर्णः पर्णबहुलां बभञ्ज च महाबलः ।
तत्र वैखानसा माषाः वालखिल्या मरीचिपाः ॥ ३० ॥

[1]अजा बभूवुर्धूम्राश्च संगताः परमर्षयः ।
तेषां दयार्थं गरुडः तां शाखां शतयोजनाम् । ३१ ॥

[2]जगामादाय वेगेन तौ चोभौ गजकच्छपौ ।
एकपादेन धर्मात्मा भक्षयित्वा तदामिषम् ॥ ३२ ॥

निषादविषयं हत्वा शाखया [3]पतगोत्तमः ।
* प्रहर्षमतुलं लेभे †मोक्षयित्वा महामुनीन्[4] ॥ ३३ ॥

प्रसङ्गात् अस्य माहात्म्यं कविर्वर्णयति—यस्येत्यादि । गरुडः अमृताहरणकाले भक्षणार्थं महाकायं हस्तिनं महाकायं कच्छपं चादाय क्वचित् स्थित्वा भक्षणाय यस्य शाखां जगाम, गत्वा च यस्य शाखां भारेण हेतुना पतगोत्तमो बभञ्ज च, तस्य भग्नशाखायाः अधः वैखानसाद्याः अनेके ऋषयः सङ्गता बभूवुः तपसे । तेषां दयार्थं—शाखापातेन तेषां नाशो मा भूदिति अनुग्रहार्थं तां शाखां

---

* शिष्टपालनात् दुष्टनिग्रहाच्चातुलं प्रहर्षं लेभे–गो. † तेषामुपरि पतनोन्मुखशाखाया धारणपूर्वकमन्यत्र नीत्वा पातनेन मुनीन् मृत्युतः मोक्षयित्वा ।

[1] आजाः–ज. [2] भग्नामादाय–ज. [3] पतगाधिपः–ङ. [4] एतदनन्तरं–" शाखानिपातभीतांश्च शाखां चोत्सृज्य सर्ववित्"–इत्यधिकम्–ङ.

तौ गजकच्छपौ च महाबलत्वादादाय अन्यत्र जगाम । तदा गच्छन्नेव तौ शाखां च एकपादेन धृत्वा अन्तरिक्ष एव तदामिषं गजकच्छपरूपं भक्ष्यं भक्षयित्वा, अ : तया शाखया प्रक्षिप्यमाणया निषादविषयं—निषाददेशं हत्वा मुनींश्च वधा-न्मोक्षयित्वा अतुलं प्रहर्षं लेभे ॥ २९-३३ ॥

स तेनैव प्रहर्षेण द्विगुणीकृतविक्रमः ।
अमृतानयनार्थं वै चकार [1]मतिमान् मतिम् ॥ ३४ ॥

सः तेनैव प्रहर्षेण—आमिषभक्षणनिषादनाशनमुनिजनरक्षण-संतोषेणेत्यर्थः ॥ ३४ ॥

अयोजालानि निर्मथ्य भित्त्वा [2]रत्नमयं गृहम् ।
महेन्द्रभवनाद्गुप्तं आजहारामृतं ततः ॥ ३५ ॥

अयोजालानीति । अयश्शृङ्खलानिर्मितानि जालानि—आनाय्य रत्नमयगेहोपरि पक्षिजालप्रवेशपरिहाराय बद्धानि बला-न्निर्मथ्य, छित्वा—रत्नमयं गेहं च भित्त्वा गुप्तममृतं महेन्द्रभवना-दाजहार ॥ ३५ ॥

तं महर्षिगणैर्जुष्टं सुपर्णकृतलक्षणम् ।
नाम्ना सुभद्रं न्यग्रोधं ददर्श धनदानुजः ॥ ३६ ॥

सुपर्णकृतलक्षणं—सुपर्णेन कृतं भग्नैकमहाशाखारूपं लक्षणं-चिह्नं यस्य स तथा ॥ ३६ ॥

तं तु गत्वा परं पारं समुद्रस्य नदीपतेः ।
ददर्शाश्रममेकान्ते रम्ये पुण्ये वनान्तरे ॥ ३७ ॥

---

[1] गमने—ङ　[2] रत्नगृहं वरम्—ज.

*तत्र कृष्णाजिनधरं जटा[1]वल्कलधारिणम् ।
ददर्श नियताहारं मारीचं नाम राक्षसम् ॥ ३८ ॥

स रावणः समागम्य विधिवत्तेन रक्षसा ।
मारीचेनार्चितो राजा सर्वकामैरमानुषैः ॥ ३९ ॥

सर्वकामैः—अभिलषितसर्वभोग्यवस्तुभिः अर्चितो बभूवेति शेषः ॥ ३९ ॥

तं स्वयं पूजयित्वा तु [2]भोजनेनोदकेन च ।
अर्थोपहितया [3]वाचा मारीचो वाक्यमब्रवीत् ॥ ४० ॥

अनुष्ठितपूजानुवादपूर्वं मारीचकर्तृकं कुशलप्रश्नं दर्शयति—तं स्वयमित्यादि ॥ ४० ॥

कच्चित् सुकुशलं, राजन्! लङ्कायां राक्षसेश्वर!
केनार्थेन पुनस्त्वं वै तूर्णमेवमिहागतः ॥ ४१ ॥

एवमुक्तो महातेजाः मारीचेन स रावणः ।
तं तु पश्चादिदं †वाक्यं अब्रवीद्वाक्यकोविदः ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे पञ्चत्रिंशः सर्गः

---

इदमिति । अग्रिमसर्गवक्ष्यमाणम् । घोर(४२)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे पञ्चत्रिंशः सर्गः

---

* कृष्णाजिनेत्यादिना रामभक्ततया जनितवैराग्यचिह्नोक्तिः—गो. † इदं—उत्तरसर्गे वक्ष्यमाणम्-गो.

[1] मण्डल—ज. [2] भाजनेनासनेन च—ङ. [3] बुद्ध्या—ङ.

## षट्त्रिंशः सर्गः

[मारीचसहायप्रार्थना]

मारीच ! श्रूयतां, [1]तात ! वचनं मम भाषतः ।
आर्तोऽस्मि मम चार्तस्य भवान् हि परमा गतिः ॥ १ ॥

अथ रावणेन स्वागमनकार्यनिवेदनम् । मारीचेत्यादि । तातेत्युपलालने ॥ १ ॥

जानीषे त्वं [2]जनस्थाने यथा भ्राता खरो मम ।
दूषणश्च [3]महाबाहुः स्वसा शूर्पणखा च मे ॥ २ ॥
त्रिशिराश्च महातेजाः राक्षसः पिशिताशनः ।
अन्ये च बहवः शूराः *लब्धलक्षा [4]निशाचराः ॥ ३ ॥
वसन्ति मन्नियोगेन [5]† अधिवासं च राक्षसाः ।
बाधमाना महारण्ये मुनीन् वै धर्मचारिणः ॥ ४ ॥

कर्तव्यं वदिष्यन् पूर्ववृत्तान्तं स्मारयति—जानीष इत्यादि । भ्रात्रादयो मन्नियोगात् जनस्थानं प्राप्य वसन्तीति त्वं जानीषे किलेत्यन्वयः । अथ तत्र स्थित्वा क्रियमाणं वृत्तान्तं जानीषे इत्याह—अधिवासं चेत्यादि । मुनीन् बाधमानाः, हेतौ शानच्, बाधहेतवे अधिवासं च कुर्वन्ति, मन्नियोगेनेति शेषः ॥ २–४ ॥

चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
शूराणां लब्धलक्षाणां खरचित्तानुवर्तिनाम् ॥ ५ ॥

---

* लब्धलक्षाः—लब्धयुद्धोत्साहाः–ति. रा. † अधिवासः—उपद्रव इति कतकः । 'रतिवासं' इति पाठे रत्या–प्रीत्या वासः यस्मिन् कर्मणि तथा–ति. अधिवासं–निरन्तरवासं वसन्ति—कुर्वन्ति–रा.

[1] वत्स–ङ. [2] जनस्थानं–ज. [3] महातेजाः–ङ. [4] महाबलाः–ङ.
[5] नित्यवासं, तन्निवासं, रतिवासं, रतिवासाश्च–ङ.

ते त्विदानीं जनस्थाने [1]वसमाना महाबलाः ।

किं ततः ? इत्यतः चतुर्दशेत्यादि । यानि सन्ति ते त्विदानी-मित्यन्वयः । वसमानाः—वसन्तः इति यावत् ॥ ५ ॥

*[2]सङ्गताः परमायत्ताः रामेण सह संयुगे ॥ ६ ॥
नानाप्रहरणोपेताः खरप्रमुखराक्षसाः ।
तेन संजातरोषेण रामेण रणमूर्धनि ॥ ७ ॥
†अनुक्त्वा परुषं किंचित् शरैर्व्यापारितं धनुः ।
चतुर्दश सहस्राणि रक्षसामुग्रतेजसाम् ॥ ८ ॥
निहतानि [3]शरैस्तीक्ष्णैः मानुषेण पदातिना ।
खरश्च निहतः संख्ये दूषणश्च निपातितः ॥ ९ ॥
[4]हतश्च त्रिशिराश्चापि निर्भया दण्डकाः कृताः ।

किंचिदपि परुषमनुक्त्वा धनुः शरैः—शरमोक्षणव्यापारैः व्यापारितं संजातव्यापारं कृतम् ॥ ९ ॥

पित्रा निरस्तः क्रुद्धेन सभार्यः क्षीणजीवितः ॥ १० ॥
स हन्ता तस्य सैन्यस्य रामः क्षत्रियपांसनः ।
[5]दुश्शीलः कर्कशः तीक्ष्णः मूर्खो लुब्धोऽजितेन्द्रियः ॥ ११ ॥
[6]त्यक्तधर्मो ह्यधर्मात्मा भूतानामहिते रतः ।
‡येन वैरं विनाऽरण्ये सत्त्व[7]माश्रित्य केवलम् ॥ १२ ॥

---

* संयुगे रामेण सह संगताः इत्यन्वयः । † अनेन रामगाम्भीर्यं, स्वपक्षीयाणां अवमानाधिक्यं च सूच्यते । ‡ यद्यपि शूर्पणखया 'भार्यात्वे च तवानेतुमुद्यताऽहं वराननाम् । विरूपिताऽस्मि' (३४–२१) इत्युक्तम् । परन्तु तया स्वस्वार्थनिगूहनात्, रावणार्थमेव स्वप्रवृत्तिरिति कथनाच्च रावणः एवं वदति ।

[1] वर्तमाना–ङ. [2] संयताः–ङ. [3] शरैर्दीप्तैः–ज. [4] हत्वा त्रिशिरसं चापि–ज. [5] अशीलः–ज. [6] त्यक्त्वा धर्ममधर्मात्मा–ङ. [7] मास्थाय–ज.

कर्णनासाऽपहरणात् भगिनी मे विरूपिता ।

अथ भगिनीवैरूप्यं निष्कारणमकृतेति मन्यमानः क्रोधाद्दूषयति—पित्रा निरस्तः इत्यादि । अजितेन्द्रियः इति पदम् । सत्त्वं-बलमेव केवलं आश्रितः, न तु धर्ममित्यर्थः ॥ १२ ॥

तस्य भार्यां जनस्थानात् सीतां सुरसुतोपमाम् ॥ १३ ॥
*आनयिष्यामि विक्रम्य सहायस्तत्र मे भव ।
त्वया ह्यहं सहायेन पार्श्वस्थेन, महाबल ! ॥ १४ ॥
† भ्रातृभिश्च सुरान् युद्धे समग्रान् नाभिचिन्तये ।

भ्रातृभिः—कुम्भकर्णादिभिः । नाभिचिन्तये—न गणयामि इति अकुलाभिमाने ॥ १४ ॥

तत् सहायो भव त्वं मे समर्थो ह्यसि, राक्षस ! ॥ १५ ॥
वीर्ये दर्पे च युद्धे च न ह्यस्ति सदृशस्तव ।
[1] उपायज्ञो महान् शूरः [2] सर्वमायाविशारदः ॥ १६ ॥
एतदर्थमहं प्राप्तः त्वत्समीपं, निशाचर ! ।
शृणु तत् कर्म साहाय्ये यत् कार्यं वचनान्मम ॥ १७ ॥

शृण्वित्यादि । मम साहाय्यार्थे यच्च कर्म त्वया कर्तव्यं तच्च कर्म शृणु ॥ १७ ॥

सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ।
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ १८ ॥

---

* बलादानेष्यामीत्यर्थः । † भ्रातृभिश्च—सहायैरिति विपरिणामः ।

[1] उपायतो—ज. [2] महामाया—ज.

त्वां तु निःसंशयं सीता दृष्ट्वा तु मृगरूपिणम् ।
गृह्यतामिति भर्तारं लक्ष्मणं चाभिधास्यति ॥ १९ ॥

ततस्तयोरपाये तु शून्ये सीतां यथासुखम् ।
[1] निराबाधो हरिष्यामि राहुश्चन्द्रप्रभामिव ॥ २० ॥

ततः पश्चात् सुखं रामे भार्याहरणकर्शिते ।
[2] विश्रब्धः प्रहरिष्यामि कृतार्थेनान्तरात्मना ॥ २१ ॥

[3] तस्य रामकथां श्रुत्वा मारीचस्य महात्मनः ।
शुष्कं समभवद्वक्त्रं परित्रस्तो बभूव ह ॥ २२ ॥

ओष्ठौ परिलिहन् शुष्कौ नेत्रैरनिमिषैरिव ।
मृतभूत इवार्तस्तु रावणं समुदैक्षत ॥ २३ ॥

महात्मनः रामस्य कथां—प्रसङ्गमित्यर्थः । नेत्रैरनिमिषैरिव । एवं चिन्तावशात् उपलक्षित इति शेषः । मृतभूत इति—मृतप्राय इत्यर्थः ॥ २३ ॥

* स [4] रावणं त्रस्तविषण्णचेताः
† महावने रामपराक्रमज्ञः ।
कृताञ्जलिस्तत्त्वमुवाच वाक्यं
हितं च तस्मै हितमात्मनश्च ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे षट्त्रिंशः सर्गः

---

घर्म(२४)मानः सर्गः ॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे षट्त्रिंशः सर्गः

---

* उत्तरसर्गार्थं संगृह्णाति—स इति—गो. † महावने—विश्वामित्रतपोवने ।
[1] निराबाधं, निरायासो, निरपायो—ङ. [2] विस्रब्धं—ज. [3] तस्मात्—ङ.
[4] राक्षसः—ङ.

## सप्तत्रिंशः सर्गः

[मारीचहितोपदेशः]

तच्छ्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारदः ।
प्रत्युवाच [1]महाप्राज्ञः मारीचो राक्षसेश्वरम् ॥ १ ॥

अथ मारीचः स्वराज्ञे तत्त्वकथनाय रावणोक्तदूषणं किमपि तत्र नास्तीति दर्शयित्वा सीताऽपहारबुद्धिः सर्वथा सर्वरक्षःकुलनाशाय इत्याह । तच्छ्रुत्वेत्यादि ॥ १ ॥

सुलभाः पुरुषाः, राजन्! सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता [2]श्रोता च दुर्लभः ॥ २ ॥

सततं प्रियवादिन इति । स्वामिहिताहितविमर्शमुपेक्ष्य केवलं स्वप्रयोजनाय तन्मुखेच्छावादशीलाः पुरुषाः सुलभाः राज्ञः; अपि तु अप्रियस्यापि—तत्कालमप्रियतया प्रतीयमानस्यापि कालान्तरे पथ्यस्य वचनस्य श्रोता, अपथ्यभक्षणवत् प्रतीयमानमपि इदं पथ्यमेवेति गृहीता च राजा विवेकी दुर्लभ एव । अतो मयोच्यमानं अप्रियमिव स्थितमपि परमहितमित्येव गृहाणेति शेषः ॥ २ ॥

न नूनं बुध्यसे रामं महावीर्यं [3]गुणान्वितम् ।
*अयुक्तचारश्चपलः महेन्द्रवरुणोपमम् ॥ ३ ॥

एवं पीठिकां कृत्वा हितं ब्रूते—न नूनमित्यादि । महावीर्यं गुणान्वितं च न बुध्यसे । एतेन त्वदुक्तः सर्वोऽपि रामदोषः

---

*राजानो हि चारचक्षुषः, तत्र भवता न सम्यगुपयोजितमित्यर्थः । एवं मनोदौर्बल्यरूपं चापल्यमपि रामपराक्रमापरिज्ञाने हेतुः ।

[1] महातेजाः-ज.  [2] भोक्ता-ज.  [3] गुणोन्नतम्-ङ. ज.

अवास्तव इत्युक्तम् । अस्यैव विस्तारः आरादुच्यमानः । अबोधे हेतुमाह—अयुक्तचार इति ॥ ३ ॥

*अपि स्वस्ति भवेत्, तात! सर्वेषां भुवि रक्षसाम् ।
अपि रामो न संक्रुद्धः कुर्याल्लोकमराक्षसम् ॥ ४ ॥

रक्षसां स्वस्ति भवेदपि—क्षेमं संपद्येत किम् । तव दुर्बुद्धिविनिवृत्त्येति शेषः । तथा संक्रुद्धो रामः लोकं अराक्षसं न कुर्यादपि । तथा अग्रेऽपि ॥ ४ ॥

अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा ।
अपि सीतानिमित्तं[1] च न भवेद्व्यसनं[2] मम ॥ ५ ॥
अपि त्वामीश्वरं प्राप्य कामवृत्तं निरङ्कुशम् ।
न विनश्येत् पुरी लङ्का त्वया सह सराक्षसा ॥ ६ ॥
†त्वद्विधः कामवृत्तो हि दुःशीलः पाप[3]मंत्रितः ।
आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः ॥ ७ ॥

पापमंत्रितः इति । पापैः सह कृतकार्यविचार इत्यर्थः ॥ ७ ॥

‡न च पित्रा परित्यक्तः नामर्यादः कथञ्चन ।
न लुब्धो न च दुश्शीलः न च क्षत्रियपांसनः ॥ ८ ॥

---

* अद्यैव निर्गत्य पुनरागमनात् नूनं न मे वचनं श्रोष्यतीति निश्चित्य रावणचापलेन संभावितानर्थानाह— अपीत्यादिना । अपिः संभावनायां, काकुस्वरो द्रष्टव्यः—गो. † अत्र य इत्यध्याहार्यम् । ‡ रामोपरि रावणारोपितान् दोषान् प्रतिवक्ति—न चेत्यादि ।

[1] ते—ङ. [2] महत्—ज. [3] यंत्रितः—ङ.

न च धर्मगुणैर्हीनः* कौसल्या[1]ऽऽनन्दिवर्धनः ।
न तीक्ष्णो न च भूतानां सर्वेषामहिते रतः ॥ ९ ॥
वञ्चितं पितरं दृष्ट्वा कैकेय्या सत्यवादिनम् ।
करिष्यामीति धर्मात्मा, तात! [2]प्रव्राजितो वनम् ॥१०॥
†कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च ।
हित्वा राज्यं च भोगांश्च प्रविष्टो दण्डकावनम् ॥ ११ ॥

एवं कामप्रवेदनव्याजेन महावीर्यत्वं प्रतिपाद्य, अथ—न च पित्रेत्यादिना गुणान्वितत्वस्य प्रपञ्चः कृतः । सत्यवादिनं करिष्यामीति वनं प्रव्राजितः, न तु किञ्चित्पापात् पित्रा विवासित इत्यर्थः ॥८–११॥

न रामः कर्कशः, तात! नाविद्वान् नाजितेन्द्रियः ।
‡अनृतं [3]न श्रुतं चैव [4]नैवं त्वं वक्तुमर्हसि ॥ १२ ॥

अनृतं न श्रुतं चैव—अनृतप्रसङ्गमपि न जानाति, तेन तत्कथनं दूरापास्तमित्यर्थः । एवं वक्तुमिति । दुर्गुणवन्तमित्यर्थः ॥ १२ ॥

रामो विग्रहवान् धर्मः [5]साधुः सत्यपराक्रमः ।
राजा सर्वस्य लोकस्य देवानां मघवानिव ॥ १३ ॥
कथं त्वं तस्य वैदेहीं रक्षितां स्वेन तेजसा ।
इच्छसि प्रसभं हर्तुं प्रभामिव विवस्वतः ॥ १४ ॥

---

* आनन्दिः—आनन्दः, 'सर्वधातुभ्य इन्'—गो. † वनगमने हेत्वन्तरमाह—कैकेय्या इति—गो. ‡ अनृतं—असत्यं दुःश्रुतं—वैपरीत्येन श्रुतं च त्वं वक्तुं नार्हसि—गो.

[1] नन्द—ज. [2] प्रव्रजितो—ज. [3] दुःश्रुतं—ङ. [4] नैव—ङ. [5] रणे—ङ.

अथ सीतापहारस्याशक्यत्वं शक्यत्वे सर्वानर्थं च प्रतिपादयति—स्वेन तेजसा रक्षितामिति। पातिव्रत्यवैभवेनेत्यर्थः। तस्य स्वेन तेजसेति। रामस्य सहजप्रतापेनेत्यप्यर्थः ॥ १४ ॥

* शरार्चिषमनाधृष्यं चाप[1]खड्गेन्धनं रणे।
रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ॥ १५ ॥

धनुर्व्यादितदीप्तास्यं [2]शरार्चिषममर्षणम्।
[3]चापपाशधरं वीरं शत्रु[4]सैन्यप्रहारिणम् ॥ १६ ॥

राज्यं सुखं च संत्यज्य जीवितं चेष्टमात्मनः।
नात्यासादयितुं, [5]तात! रामान्तकमिहार्हसि ॥ १७ ॥

अन्तकसमाविर्धनुरित्यादि। धनुरेव व्यादितं व्यात्तमिति यावत्, आस्यं यस्य रामरूपाहिकस्य स तथा। अत्यासादयितुं—अत्यन्तं प्राप्तुं। व्यर्थमिममुद्यमं कृत्वा ते न किमपि हितमित्यर्थः ॥ १६–१७ ॥

अप्रमेयं हि तत्तेजो † यस्य सा जनकात्मजा।
न त्वं समर्थः तां हर्तुं राम[6]चापाश्रयां वने ॥ १८ ॥

तस्य सा नरसिंहस्य सिंहोरस्कस्य भामिनी।
प्राणेभ्योऽपि प्रियतरा भार्या नित्यमनुव्रता ॥ १९ ॥

न सा धर्षयितुं शक्या मैथिल्योजस्विनः प्रिया।
दीप्तस्येव हुताशस्य शिखा सीता सुमध्यमा ॥ २० ॥

---

* शरार्चिषमिति शरपदं खड्गधाराया अप्युपलक्षणम्। चापखड्गेन्धनमिति रूपणात्—गो. † जनकात्मजा यस्य—यत्सम्बन्धिनी—गो.

[1] खड्गधरं—ङ. [2] शरजिह्व—ङ. [3] चापबाण, खड्गचाप, खड्गपाश—ङ. [4] सैन्यापहारिणम्—ङ. च. [5] सं तु—ङ. [6] पादा—ङ.

*किमुद्यममिमं व्यर्थं कृत्वा ते, राक्षसाधिप !
दृष्टश्चेत्त्वं रणे तेन तदन्तं तव जीवितम् ॥ २१ ॥

तेन रणे दृष्टश्चेत् तव जीवितं तदन्तं—तद्दर्शनावसानमित्यर्थः ॥

जीवितं च सुखं चैव राज्यं चैव †सुदुर्लभम्[1] ।

यदेवं अतः—जीवितमित्यादि ॥ २२ ॥

स सर्वैः सचिवैस्सार्धं विभीषणपुरोगमैः । २२ ।
मन्त्रयित्वा तु [2]धर्मिष्ठैः कृत्वा [3]निश्चयमात्मनः ।
दोषाणां च गुणानां च संप्रधार्य बलाबलम् ॥ २३ ॥
आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्त्वतः ।
[4]हिताहितं विनिश्चित्य क्षमं त्वं कर्तुमर्हसि ॥ २४ ॥

उक्तं प्रयोजनमुद्दिश्य स त्वं विभीषणपुरोगमैः उच्यमानलक्षणैः मंत्रयित्वा, अनन्तरं निश्चयं कृत्वा, तथा आत्मनः रामस्य च दोषगुण-बलाबलादिकं ज्ञात्वा—विचार्य निश्चित्य पश्चात् यत् क्षमं तत् कर्तु-मर्हसि, न हठात् प्रवर्तितुमर्हसीत्यर्थः ॥ २२–२४ ॥

---

* व्यर्थमिममुद्योगं कृत्वा ते किं—किं फलं प्राप्तव्यमित्यर्थः–गो. † अधिकपाठे सुतरां दुर्लभं राज्यं च चिरं भोक्तुमित्यन्वयः । यथाश्रुते तु जीवितादिकं तव सुतरां दुर्लभं नश्यत्येवेत्यर्थः ।

[1] एतदनन्तरं—यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम्—इत्यधिकं–ङ. ज.
[2] धर्मिष्ठं–ङ. [3] कार्यविनिश्चयम्–ङ. [4] हितं हि तव निश्चित्य–ज.

अहं तु मन्ये तव न क्षमं रणे
समागमं कोसलराजसूनुना ।
इदं हि भूयः शृणु वाक्यमुत्तमं
क्षमं च युक्तं च, निशाचरेश्वर ! ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे सप्तत्रिंशः सर्गः

---

अथ मत्सचिवान्तर्गतस्य तवैव निश्चयः कीदृशः ? इत्यपेक्षायामाह—अहं त्वित्यादि । इदमिति वक्ष्यमाणम् । शठ (२५) मानः सर्गः ॥ २५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे सप्तत्रिंशः सर्गः

---

## अष्टात्रिंशः सर्गः

### [रामपराक्रमकथनम्]

*कदाचिदप्यहं वीर्यात् पर्यटन् पृथिवीमिमाम् ।
बलं नागसहस्रस्य धारयन् पर्वतोपमः ॥ १ ॥
†नीलजीमूतसङ्काशः तप्तकाञ्चनकुण्डलः ।
भयं लोकस्य जनयन् किरीटी परिघायुधः ॥ २ ॥
व्यचरं [1] दण्डकारण्ये ऋषिमांसानि भक्षयन् ।

अथ स्वानुभवसिद्धं रामबलं रावणं प्रति निवृत्तीच्छया मारीचः आह—कदाचिदित्यादि ॥ १–२ ॥

---

* तद्गुणजातं न युक्त्या कल्पयित्वोच्यते, किं त्वनुभवसिद्धमित्याह —कदाचिदित्यादिना—**गो.** † भयजनने हेतुमाह —नीलेत्यादिना—**गो.**

[1] दण्डकारण्यं—**ज.**

**विश्वामित्रोऽथ धर्मात्मा * मद्वित्रस्तो महामुनिः ॥ ३ ॥**
**स्वयं गत्वा दशरथं नरेन्द्रमिदमब्रवीत् ।**

मद्वित्रस्त इति । मन्निमित्तं वित्रस्त इत्यर्थः ॥ ३ ॥

**[1] अय रक्षतु मां रामः † पर्वकाले समाहितः ॥ ४ ॥**
**मारीचान्मे भयं घोरं समुत्पन्नं, नरेश्वर !**

पर्वकाले—यागकाले ॥ ४ ॥

**इत्येवमुक्तो धर्मात्मा राजा दशरथस्तदा ॥ ५ ॥**
**प्रत्युवाच महाभागं विश्वामित्रं महाबलम् ।**
**‡ [2] बालो द्वादशवर्षोऽयं अकृतास्त्रश्च राघवः ॥ ६ ॥**

---

* मद्वित्रस्तः—मत्तो वित्रस्तः—विशेषेण भीतः। † पर्वकाले—यज्ञसुत्याकाले—**गो.**
‡ द्वादशवर्षः—द्वादशवर्षवयस्कः। केचित्तु—इदं रावणबिभीषयोक्तम् ; वस्तुतस्तु ऊनषोडशवर्ष इत्येव इत्यूचुः—**गो.** पञ्चदशवर्षोऽपि, तथा दशरथेनानूदितोऽप्यत्यन्तबाल्यद्योतनाय, 'अतिबालेनापीदृशं कृतं, किमधुना वाच्यम्' इति रावणस्यात्यन्तभयोत्पादनधिया मारीचेन तथा दशरथेनोक्तमित्यनूद्यते—'ऊनद्वादशवर्षोऽयं' इति पाठान्तरम्—**ति.** अय राघवः ऊनद्वादशवर्षः—किञ्चिन्मासोनषोडशवार्षिक इत्यर्थः । अयमर्थः—द्वौ च द्वौ च द्वौ चेत्येकशेषेण लब्धः । अत्र बीजं तु बालकाण्डघटकीभूते 'ऊनषोडशवर्षो मे' इति पद्ये निरूपितम्—**रा.** **गोविन्दराजस्तु**—विश्वामित्रनयनकाले रामः द्वादशवर्ष एवेत्याह—तथा हि (बाल. २०-२)—दशरथेन पित्रा 'ऊनषोडशवर्षः' (बा. २०-२) इत्युक्तम् । ऊनत्वं च मासेन मासत्रयेण षण्मासैर्वा स्यात्, न त्वेकद्विवर्षादिभिः । तस्मिन्नेव वर्षे सीताविवाहः । तदनु द्वादशवर्षाण्ययोध्यावासः, 'समा द्वादश तत्राहं राघवस्य निवेशने । भुञ्जानाऽमानुषान् भोगान् सर्वकामसमृद्धिनी ॥'

[1] अथं—**ज.** [2] ऊनद्वादश—**ज.**

(अर. ४७-४) इति सीतया वक्ष्यमाणत्वात्। तथा च वनप्रवेशकाले रामस्याष्टाविंशतिवर्षाणीति प्रतिभाति—तदनुपपन्नम्—'मम भर्ता महातेजाः वयसा पञ्चविंशकः। अष्टादश हि वर्षाणि मम जन्मनि गण्यते॥' (अर. ४७-१०) इति सीतावचनात्। कौसल्यया च वनप्रवेशसमये प्रोच्यते—'दश सप्त च वर्षाणि जातस्य तव पुत्रक। आसितानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम्॥' (अयो॰ २०-४५) इति। तस्मात् अष्टाविंशतेः, पञ्चविंशतेः, सप्तदशानां च कथमविरोधः? इति चेत्—अत्र **केचित्**-कौसल्यावाक्ये जातस्येति द्वितीयं जन्मोच्यते। क्षत्रियस्यापि द्विजत्वात्। द्वितीयं जन्म च उपनयनम्। तच्च वृद्धेन दशरथेन काम्यपक्षमाश्रित्य गर्भाष्टम एव कृतम्। तथा च द्वितीयजन्मापेक्षया सप्तदशत्वम्। उपनयनात्पूर्वं सप्तवर्षाणीति 'वयसा पञ्चविंशकः' इति सीतावचनमप्युपपन्नम्। ऊनषोडशवर्ष इति पादोनत्वम्, 'द्वादशवर्षः' इत्यन्यत्रोक्तत्वात् (वस्तुतस्तु षोडशवर्षे एव क्षत्रियः कवचधारणार्हत्वात् युद्धार्हः इति—षोडशवर्षाः नैव पूर्णाः इति भावेन 'ऊनषोडशवर्षः' इत्युक्तिः। न्यूनत्वं यथाप्रमाणं ग्राह्यम्)। अतः सर्वथा वनप्रवेशकाले पञ्चविंशतिवर्ष एव राम इत्याहुः। **अन्ये** बहुक्लेशं सहमाना एवं व्याचख्युः—अष्टाविंशतिवर्ष एव वनप्रवेशे रामः। 'ऊनषोडशवर्षः' इति यत्किञ्चिन्मासोनषोडशवर्षवयस्क इत्यर्थः। 'बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम्' इति दशरथवचने बाल्ययौवनसन्धौ बाल इति व्यवहर्तुं शक्यत्वात्, 'बाल आषोडशाद्वर्षात् पौगण्डश्चेति कीर्त्यते' इति वचनात्। 'बालो द्वादशवर्षोऽयमकृतास्त्रश्च राघवः। अजातव्यञ्जनः श्रीमान् पद्मपत्रनिभेक्षणः॥' (अर. ३८-६) इति मारीचवचनं तु युद्धभीरुतया भ्रान्तिकृतम्, रावणविभीषिकयोक्तं वा। अत एव स्वयं वायव्यास्त्रभग्नोऽपि अकृतास्त्र इत्याह (परन्तु इयमुक्तिः रामप्रथमदर्शने इत्यवधेयम्)। अजातव्यञ्जनत्वं च निरुदरा कन्येतिवदल्पश्मश्रुत्वम्। 'वयसा पञ्चविंशकः' इति तु पञ्चविंशतुल्यत्वमाह, इवार्थे कनो विधानात्। तेन नित्ययौवनत्वं ज्ञापयति। देवा हि सदा पञ्चविंशतिवार्षिका इत्युच्यन्ते। कौसल्यावाक्यमपि 'गर्भैकादशेषु राजन्यम्' इतिविहितोपनयनापेक्षया। तस्मान्न किञ्चिदनुपपन्नमिति। **वस्तुतः**—'वयसा पञ्चविंशकः' इति सीतायाः शापभीतायाः सन्यासिनं प्रति (वास्तविकं सन्यासिनमेव सीता प्रथमं मन्यते स्म) वचनमेव यथार्थम्—इति॥

कामं तु मम यत्सैन्यं मया सह गमिष्यति ।
बलेन चतुरङ्गेण स्वयमेत्य [1]निशाचरान् ॥ ७ ॥
वधिष्यामि, मुनिश्रेष्ठ! शत्रूंस्ते मनसेप्सितान् ।
इत्येवमुक्तः स मुनिः राजानमिदमब्रवीत् ॥ ८ ॥
रामान्नान्यद्बलं लोके पर्याप्तं तस्य रक्षसः ।
देवतानामपि भवान् समरेष्वभिपालकः ॥ ९ ॥
आसीत्तव कृतं कर्म त्रिलोके विदितं, नृप!
काममस्तु [2]महत् सैन्यं तिष्ठत्विह, परंतप! ॥ १० ॥

आसीत्तवेति । त्वया कृतं तव कर्म त्रिषु लोकेषु विदितं यद्यपि, ते कामं महत् सैन्यमस्ति, सर्वमपि तदिहैव तिष्ठतु ॥ १० ॥

[3]बालोऽप्येष महातेजाः समर्थस्तस्य निग्रहे ।
गमिष्ये राममादाय स्वस्ति तेऽस्तु, परंतप! ॥ ११ ॥
एवमुक्त्वा तु स मुनिः तमादाय नृपात्मजम् ।
जगाम परमप्रीतः विश्वामित्रः स्वमाश्रमम् ॥ १२ ॥
तं तदा दण्डकारण्ये यज्ञमुद्दिश्य [4]दीक्षितम् ।
[5]बभूवोपस्थितो रामः [6]चित्रं विष्फारयन् धनुः ॥ १३ ॥
अजातव्यञ्जनः श्रीमान् [7]पद्मपत्रनिभेक्षणः ।
*एकवस्त्रधरो धन्वी शिखी कनकमालया ॥ १४ ॥

---

* एकवस्त्रधरः-- ब्रह्मचर्यव्रते स्थित इत्यर्थः-**गो.**

[1] निशाचरम्-**ज.** [2] मम श्रीमान् पद्मपत्रनिभेक्षणः-**ङ.** [3] रामो ह्येष-**ङ.** [4] रक्षितुम्-**ङ.** [5] बभूवावस्थितो-**ङ.** [6] सज्यं-**ङ.** [7] बालः श्यामः शुभेक्षणः-**ज.**

शोभयन् दण्डकारण्यं दीप्तेन स्वेन तेजसा ।
अदृश्यत [1] ततो रामः बालचन्द्र इवोदितः ॥ १५ ॥

अजातव्यञ्जनः इति । श्मश्र्वादिपुंस्त्वचिह्नप्रादुर्भावरहितः इत्यर्थः । एकवस्त्रधर इति । कच्छबन्धवस्त्रमात्रधर इत्यर्थः । १४-१५॥

ततोऽहं मेघसङ्काशः तप्तकाञ्चन[2]कुण्डलः ।
बली दत्तवरो दर्पात् * [3]आजगाम तदाश्रमम् ॥ १६ ॥

दत्तवर इति । ब्रह्मदत्तदेवासुरावध्यत्ववर इत्यर्थः ॥ १६ ॥

† तेन दृष्टः प्रविष्टोऽहं सहसैवोद्यतायुधः ।
मां तु दृष्ट्वा धनुः सज्यं असंभ्रान्तश्चकार सः ॥ १७ ॥
[4] अवजानन्नहं मोहात् बालोऽयमिति राघवम् ।
विश्वामित्रस्य तां वेदिं अभ्यधावं कृतत्वरः ॥ १८ ॥
तेन मुक्त[5]स्ततो बाणः शितः शत्रुनिबर्हणः ।
तेनाहं [6]त्वाहतः क्षिप्तः समुद्रे शतयोजने ॥ १९ ॥
‡ नेच्छता, तात! मां हन्तुं तदा वीरेण रक्षितः ।
रामस्य शरवेगेन निरस्तो[7]ऽहमचेतनः ॥ २० ॥
पातितोऽहं तदा तेन गम्भीरे सागराम्भसि ।
प्राप्य संज्ञां चिरात्, तात! लङ्कां प्रतिगतः पुरीम् ॥ २१ ॥

---

* आजगामेत्युत्तमः पुरुषः । अत्र लिट्प्रयोगः दीर्घकालिकत्वेन परोक्षत्वारोपात्—रा.

† तदाश्रमं प्रविष्टः अहं तेन दृष्ट इत्यन्वयः ।

‡ एतच्च रक्षणं केवलं कृपाजन्यमिति मारीचाशयः । भाविकार्यार्थमिति वस्तुतत्त्वम्—ति. अनिच्छाहेतुर्न ज्ञायते, स्वयं तु हन्तुं समर्थ एवेति भावः । अचेतनः—निश्चेष्टः मूर्छितो वा—गो.

[1] तदा—ज. [2] भूषणः—ङ. [3] आगतोऽस्मि—ङ. [4] अवज्ञानादहं—ङ. [5] सदा—ङ. [6] ताडितः—ज. [7] भ्रान्तचेतनः—ज.

एवमस्मि तदा मुक्तः, सहायास्तु निपातिताः ।
अकृतास्त्रेण बालेन रामेणाक्लिष्टकर्मणा ॥ २२ ॥

तन्मया वार्यमाणस्त्वं यदि रामेण विग्रहम् ।
करिष्यस्यापदं घोरां क्षिप्रं [1]प्राप्स्यसि, रावण! ॥ २३ ॥

*क्रीडा[2]रतिविधिज्ञानां समाजोत्सव[3]शालिनाम् ।
रक्षसां चैव सन्तापं अनर्थं चाहरिष्यसि ॥ २४ ॥

हर्म्यप्रासादसंबाधां नानारत्नविभूषिताम् ।
द्रक्ष्यसि त्वं पुरीं लङ्कां विनष्टां मैथिलीकृते ॥ २५ ॥

अकुर्वन्तोऽपि पापानि शुचयः पापसंश्रयात् ।
परपापैर्विनश्यन्ति मत्स्या नागह्रदे यथा ॥ २६ ॥

अथ त्वद्दोषात् रक्षःकुलमात्रस्य नाशः प्राप्नोतीत्याह—अकुर्वन्त इत्यादि । मत्स्या नागह्रदे यथेति । सर्पाधिष्ठिते ह्रदे स्नानार्थप्रविष्टनृपादिना सर्पनाशाय प्रेरितखगादिना सर्पनाशप्रसङ्गे मत्स्याश्च यथा नाश्यन्ते तद्वदित्यर्थः ॥ २६ ॥

दिव्यचन्दन[4]दिग्धाङ्गान् दिव्याभरणभूषितान् ।
द्रक्ष्यस्यभिहतान् भूमौ तव दोषात्तु [5]राक्षसान् ॥ २७ ॥

† [6]हृतदारान् सदारांश्च दश विद्रवतो दिशः ।
हतशेषान् [7]अशरणान् द्रक्ष्यसि त्वं निशाचरान् ॥ २८ ॥

हृतदारान्—परिहृतदारान्, त्यक्तदारानित्यर्थः ॥ २८ ॥

---

* क्रीडारत्योः—लीलाभोगयोः विधिं क्रमं जानन्ति, तेषां—रा. † पूर्वं सदारान्, ततः हृतदारान्, दश दिशः विद्रवतः ।

[1] प्राप्य नशिष्यसि—ज. [2] विधिरस—ङ. [3] दर्शिनाम्—ङ. [4] लिप्ता—ङ. [5] रावण—ङ. [6] हत—ङ. [7] अशेषांश्च—ङ.

शरजालपरिक्षिप्तां अग्निज्वालासमावृताम् ।
प्रदग्धभवनां लङ्कां द्रक्ष्यसि त्वं न संशयः ॥ २९ ॥

परदाराभिमर्शात्तु नान्यत् पापतरं महत् ।
प्रमदानां सहस्राणि तव, राजन्! *[1] परिग्रहः ॥ ३० ॥

भव स्वदारनिरतः स्वकुलं रक्ष, [2] राक्षस!
मानमृद्धिं च राज्यं च जीवितं चेष्टमात्मनः[3] ॥ ३१ ॥

कलत्राणि च सौम्यानि मित्रवर्गं तथैव च ।
यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् ॥ ३२ ॥

निवार्यमाणः सुहृदा मया भृशं
प्रसह्य सीतां यदि धर्षयिष्यसि ।
गमिष्यसि क्षीणबलः सबान्धवः
यमक्षयं राम[4]शरात्तजीवितः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे अष्टात्रिंशः सर्गः

---

श्लो(३३)मानः सर्गः ॥ ३३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे अष्टात्रिंशः सर्गः

---

* 'परिग्रहः कलत्रे स्यात्' इति शाश्वतः-गो. परिग्रहे—अन्तःपुरे सन्तीति शेषः-ति. रा.

[1] परिग्रहे-ज. [2] रावण-ङ. [3] एतदनन्तरं—"सीताहेतोः समग्राणि विद्रविष्यन्ति भीतवत् । आत्मनश्च दशग्रीव! पुरस्यान्तःपुरस्य च । रक्षसां च विनाशाय मैथिलीमानयिष्यसि । मा नाशय त्वं राज्यं च जीवितं चेष्टमात्मनः"—इत्यधिकं-ङ. [4] शरार्त-ङ. शरास्त-ज.

## एकोनचत्वारिंशः सर्गः

[साहाय्यकानभ्युपगमः]

**एवमस्मि तदा मुक्तः कथंचित् तेन संयुगे।**
**इदानीमपि यद्वृत्तं तच्छृणुष्व *[1] यदुत्तरम् ॥ १ ॥**

पुनश्च स्वानुभवसिद्धं रामवीर्यं महद्वृत्तानुवादपूर्वं आह—एवमित्यादि। 'इदानीमपि यद्वृत्तं तच्छृणुष्व यदुत्तरम्' इति पाठः। इदानीं प्रौढावस्थायामपि यद्वृत्तं मद्विषयमभूत्, यच्चेदमप्युत्तरं—सर्वलोकोत्तरं तदतिरिक्तासाध्यं तच्छृणुष्व—शृणिवति यावत् ॥ १ ॥

**राक्षसाभ्यामहं † द्वाभ्यां ‡ अनिर्विण्णस्तथा कृतः।**
**सहितो मृगरूपाभ्यां प्रविष्टो दण्डकावनम् ॥ २ ॥**

अनिर्विण्णस्तथा कृतः इति। पूर्वं प्राणसंकटं प्रापितोऽपि अहं अनिर्विण्णः—अप्राप्ततद्विषयप्रवृत्तिवैराग्यः ॥ २ ॥

**दीप्तजिह्वो [2] महाकायः तीक्ष्णदंष्ट्रो महाबलः।**
**व्यचरं [3] दण्डकारण्यं [4] मांसभक्षो महामृगः ॥ ३ ॥**
**अग्निहोत्रेषु तीर्थेषु § चैत्यवृक्षेषु, रावण!**
**अत्यन्तघोरो व्यचरं तापसान् संप्रधर्षयन् ॥ ४ ॥**

---

* निरुत्तरं शृणुष्व—मध्ये वाक्यविच्छेदाकरणेन शृण्वित्यर्थः। यदुत्तरमितिपाठे, यत् सर्वान्तोत्तरं तदतिरिक्तासाध्यं तदपि शृण्वित्यर्थः—गो. † अहं—मृगरूपधर इति शेषः, उत्तरश्लोके हि तथोक्तम्। ‡ अनिर्विण्णः—निर्वेदरहितः, 'निर्वेदो निष्फलत्वधीः', अप्राप्ततद्विषयप्रवृत्तिवैराग्यः—गो. § चैत्यवृक्षाः — देवालयस्थानापन्नाः पूज्यवृक्षाः, अश्वत्थादिवत्।

[1] निरुत्तरम्—ङ. [2] महादंष्ट्रः तीक्ष्णशृंगो—ज. [3] दण्डकारण्ये—ङ. [4] ऋषिमांसानि भक्षयन्—ङ.

निहत्य दण्डकारण्ये तापसान् धर्मचारिणः ।
रुधिराणि पिबंस्तेषां [1]तथा मांसानि भक्षयन् ॥ ५ ॥

*ऋषिमांसाशनः क्रूरः त्रासयन् वनगोचरान् ।
[2]तथा रुधिरमत्तोऽहं विचरन् धर्मदूषकः ॥ ६ ॥

आसादयं तदा रामं तापसं धर्म[3]चारिणम् ।
वैदेहीं च महाभागां लक्ष्मणं च [4]महारथम् ॥ ७ ॥

तापसं नियताहारं सर्वभूतहिते रतम् ।
सोऽहं वनगतं रामं परिभूय महाबलम् ॥ ८ ॥

†तापसोऽयमिति ज्ञात्वा पूर्ववैरमनुस्मरन् ।
अभ्यधावं हि संक्रुद्धः तीक्ष्णशृङ्गो मृगाकृतिः ॥ ९ ॥

जिघांसुरकृतप्रज्ञः तं प्रहारमनुस्मरन् ।
तेन [5]मुक्ताः त्रयो बाणाः शिताः शत्रुनिबर्हणाः ॥ १० ॥

विकृष्य [6]बलवच्चापं सुपर्णानिल[7]निःस्वनाः[8] ।
ते बाणाः वज्रसङ्काशाः [9]सुमुक्ता रक्तभोजनाः ॥ ११ ॥

---

* उक्तानुवादः, अतो न पौनरुक्त्यम् । † रामपराक्रमं जानन्नपि कथं तत्परिभवायोद्युक्तः इत्यत्राह—तापसोऽयमिति । तापसत्वादहिंसापरेण भवितव्यमिति विश्वस्येत्यर्थः—गो. राज्यात् भ्रष्टः, अत एव कालक्रमतः निर्वीर्यो जातः तापसः—दीनः—निर्गतिकः इति मत्वा—इति वा । निरायुध इति वा ॥

[1] तन्मांसानि च—ज. [2] एतदर्धस्थाने— "तदा रुधिरमत्तोऽहं व्यचरं दण्डकावनम् । तदाऽहं दण्डकारण्ये विचरन् धर्मदूषकः" इति—ज. [3] माश्रितं—ङ. [4] महाबलम्—ङ. [5] त्यक्ताः—ज. [6] सुमह—ज. [7] तुल्यगाः—ज. [8] एतदनन्तरं—"तैर्बाणैर्दण्डकारण्ये मत्तैराशीविषोपमैः । कृतं वितिमिरं सर्वं रामेणाक्लिष्टकर्मणा"—इत्यधिकं—ङ. [9] सुघोरा—ज.

आजग्मुः सहिताः सर्वे त्रयः संनतपर्वणः ।
पराक्रमज्ञो रामस्य *[1]शठो दृष्टभयः पुरा ॥ १२ ॥
[2]समुद्भ्रान्तस्ततो मुक्तः तावुभौ राक्षसौ हतौ ।
शरेण मुक्तो रामस्य कथंचित्प्राप्य जीवितम् ॥ १३ ॥
इह प्रव्राजितो †युक्तः तापसोऽहं समाहितः ।

शठः—गूढविप्रियकृत् । समुद्भ्रान्तः—पलायमानः । प्रव्राजितः—कृतसकलदुर्वृत्तपरित्यागः । तापसः—तपोनिष्ठः ॥ १२-१३ ॥

वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम् ॥ १४ ॥
गृहीतधनुषं रामं पाशहस्तमिवान्तकम् ।
‡अपि रामसहस्राणि भीतः पश्यामि, रावण ! ॥ १५ ॥
रामभूतमिदं सर्वं अरण्यं प्रतिभाति मे ।
§राममेव हि पश्यामि रहिते, राक्षसाधिप ! ॥ १६ ॥
दृष्ट्वा स्वप्नगतं रामं उद्भ्रमामि विचेतनः ।

रहिते—रामरहितेऽपि वने ॥ १६ ॥

रकारादीनि नामानि रामत्रस्तस्य, रावण ! ॥ १७ ॥
रत्नानि च रथाश्चैव त्रासं संजनयन्ति मे ।

रकारादीनीति । रेफादीनीति यावत् ॥ १७ ॥

अहं तस्य प्रभावज्ञः न युद्धं तेन ते क्षमम् ॥ १८ ॥

---

* शरः पुरा दृष्टभयः—गो. † युक्तः—उचिताचरणः—गो. योगाभ्यासरतः—ति. रा. ‡ एकस्यैव रामस्य प्रतिवृक्षं गत्वा गत्वा दृश्यमानत्वमुच्यत इति भ्रमं वारयति—अपीति—गो § नेदं रामस्य मायाकृतमित्याह—राममेवेति । रहिते—रामरहिते प्रदेशे—गो.

[1] शरो—ङ. [2] समुत्क्रान्त—ज.

**बलिं वा नमुचिं वापि हन्याद्धि रघुनन्दनः ।**
*** रणे रामेण युध्यस्व [1]क्षमां वा कुरु, [2]राक्षस ! ॥ १९ ॥**
**न ते रामकथा कार्या [3]यदि मां द्रष्टुमिच्छसि ।**

त्वं रामेण रणे युद्धं वा कुरु, क्षमां वा कुरु । अपि तु मां यदि जीवितं द्रष्टुमिच्छसि तदा मम पुरस्तात् रामकथा—रामप्रसङ्गः न कार्यः ॥ १९ ॥

**बहवः † साधवो लोके युक्ता धर्ममनुष्ठिताः ॥ २० ॥**
**परेषामपराधेन विनष्टाः सपरिच्छदाः ।**

साधव इति । अकृतापचारा इत्यर्थः । धर्ममनुष्ठिता इति । 'गत्यर्थाकर्मकश्लिषशीङ्स्थे'ति कर्तरि निष्ठा ॥ २० ॥

**सोऽहं [4]तवापराधेन [5]विनश्येयं, निशाचर ! ॥ २१ ॥**
**[6]कुरु यत्ते क्षमं तं त्वां अहं नानुनयामि ह ।**

'कुरु यत्त क्षमं तं त्वां अहं नानुनयामि ह' इति पाङ्कः । यत्ते क्षमं रणः क्षमा वा तत् त्वमेव कुरु । अहं तु त्वां नानुयामि । त्वद्बुद्धिं नानुगच्छामि ॥ २१ ॥

**रामश्च हि [7]महातेजाः महासत्त्वो महाबलः ॥ २२ ॥**
**अपि राक्षसलोकस्य न भवेदन्तकोऽपि सः ।**

तत्र हेतुमाह—रामश्चेत्यादि । स हि प्रसिद्धपराक्रमो रामः राक्षसकुलस्य अन्तकरो भवेत् यदि तदा त्वामनुनयाम्यपि, नैतदस्ति, अतो नानुनयामीति पूर्वेण संबन्धः ॥ २२ ॥

---

* यदि अस्ति दर्पः त्वं रणे रामेण युध्यस्व, सर्वानर्थमूलसीतापहारं मा कुरु, मां तु मुञ्चेत्यर्थः । † साधवः—स्वयं निरपराधाः ।

[1] न क्षमं तव–ङ. [2] रावण–ज. [3] न चैनं द्रष्टुमर्हसि–ङ. [4] परा–ज. [5] न नश्येयं–ङ. [6] 'कुरु यत्ते क्षमं तत् त्वं अहं त्वा नानुयामि ह'–ङ. [7] महावीर्यः–ङ.

यदि *शूर्पणखाहेतोः जनस्थानगतः खरः ॥ २३ ॥
अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ।
अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः ? ॥ २४ ॥

अथ खरादिनाशस्य च तत्कृतान्यायमूलत्वात् तत्र च क्षमैव युक्तेत्याशयेनाह—यदीत्यादि । शूर्पनखीहेतोः जनस्थानगतः खरः पूर्वं-प्रथमं अतिवृत्तो जातः—तूष्णीमेव स्थितं रामं स्वयं गत्वा अतिमर्यादं तत्पीडाकरं युद्धप्रवृत्तिं कृतवान् पश्चात् तेन रामेण हतः, अत्र रामस्य को व्यतिक्रमः—अन्यायः ? त्वमेव ब्रूहि ॥ २३-२४ ॥

इदं वचो बन्धुहितार्थिना मया
　　यथोच्यमानं यदि नाभिपत्स्यसे ।
सबान्धवः त्यक्ष्यसि जीवितं रणे
　　हतोऽद्य † रामेण शरैरजिह्मगैः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकोनचत्वारिंशः सर्गः

---

अथ मथितसिद्धान्तमाह—इदमिति । यथोच्यमानं-परमार्थतः उच्यमानं, यदि नाभिपत्स्यसे-नाङ्गीकरिष्यसि, तदा रणे हतः जीवितं त्यक्ष्यसीति, मया अद्यैव निश्चीयत इति शेषः । शर(२५)मानः सर्गः ॥ २५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकोनचत्वारिंशः सर्गः

---

* सीताहनने प्रवृत्तशूर्पणखाहेतोरित्यर्थः । तेन च शूर्पणखाविरूपणप्रतीकारेच्छापि न न्याय्येति भावः । खरहननस्य प्राधान्येन रावणेनोत्कीर्तनात् अत्रैवमुक्तिः ।
† रामापराधे त्वद्वधस्य निश्चितत्वात्सन्निहितत्वाद्वा अद्येत्युक्तिः ।

## चत्वारिंशः सर्गः

[मारीचभर्त्सनम्]

[1] मारीचेन तु तद्वाक्यं [2] क्षमं युक्तं निशाचरः ।
उक्तो न प्रतिजग्राह * मर्तुकाम इवौषधम् ॥ १ ॥

एवं मारीचोपदिष्ट अप्रतिगृह्णाने रावणे बलात् स्वाभिमतदुष्कृत्ये नियुज्यते । मारीचेनेत्यादि । मारीचेन तत्—पूर्वोक्तप्रकारकं क्षमं—सदृशं युक्तं—कालोचितमेव वाक्यमुक्तम् , एवं उचित एवोक्तः—उपदिष्टः निशाचरो रावणः, मुमूर्षुः औषधमिव तदुक्तं न प्रतिजग्राह ॥ १ ॥

तं † पथ्यहितवक्तारं मारीचं राक्षसाधिपः ।
अब्रवीत् परुषं वाक्यं अयुक्तं कालचोदितः ॥ २ ॥

[3] यत् किलैतदयुक्तार्थं, मारीच! मयि कथ्यते ।
वाक्यं निष्फलमत्यर्थं उप्तं बीजमिवोषरे ॥ ३ ॥

अयुक्तार्थमिति । राजचित्तप्रतिकूलत्वात् अनुचितार्थकम् ॥

त्वद्वाक्यैर्न तु मां शक्यं भेत्तुं रामस्य संयुगे ‡ ।
पापशीलस्य मूर्खस्य मानुषस्य विशेषतः ॥ ४ ॥

यस्त्यक्त्वा सुहृदो राज्यं मातरं पितरं तथा ।
स्त्रीवाक्यं प्राकृतं श्रुत्वा वनमेकपदे गतः ॥ ५ ॥

---

* मर्तुकामः — मुमूर्षुः—सन्निहितमरणः । † पथ्यं—अनपायं हितं — सुखावहम्—गो ‡ रामस्य संयुगे विषये मां भेत्तुं—सीताहरणोपायात् युद्धे मां प्रवर्तयितुं त्वद्वाक्यैर्न शक्यम्—गो. रामस्य संयुगे उद्यतं मां—रा. संयुगे पापशीलत्वादिगुणकस्य रामस्य भार्याहरणविषये स्थितं मां—ति.

[1] मारीचस्य—ज. [2] क्षेमंयुक्तं—ङ. [3] दुष्कुलैत—ज.

'त्वद्वाक्यैर्न तु मां शक्यं' इति पाठः। पापशीलत्वादि-विशेषकस्य रामस्य संयुगे युद्धविषये व्यवस्थितं मां भेत्तुं त्वद्वाक्यैः त्वया न शक्यमिति योजना। प्राकृतं स्त्रीवाक्यं श्रुत्वेति। असारं कैकेयीवाक्यमित्यर्थः। एकपदे—द्राक् ॥ ५ ॥

अवश्यं तु मया तस्य * संयुगे खरघातिनः।
प्राणैः प्रियतरा सीता हर्तव्या † तव सन्निधौ ॥ ६ ॥
एवं मे निश्चिता बुद्धिः हृदि, मारीच! वर्तते।
न व्यावर्तयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ७ ॥
दोषं गुणं वा संपृष्टः त्वमेवं वक्तुमर्हसि।
‡ अपायं वाप्युपायं वा कार्यस्यास्य विनिश्चये ॥ ८ ॥

अपि च अपृष्टोत्तरप्रलापः तवासङ्गत इत्याह—दोषमित्यादि। कस्यचित् संदिग्धस्य कार्यस्य निश्चये—निश्चयसिद्ध्यर्थं 'अस्मिन्ननुष्ठिते को गुणः? को दोषः? कः उपायः? को वाऽपायः?' इति यदि पृष्टं स्यात्, तथा पृष्टे सत्येव गुणदोषादिकं वक्तुमर्हसि, मया तु निश्चिते कार्ये केवलं साहाय्ये नियुज्यते, अतो न ते जल्पः सङ्गतः इत्यर्थः ॥ ८ ॥

संपृष्टेन तु वक्तव्यं सचिवेन विपश्चिता।
उद्यताञ्जलिना [1]राज्ञे य इच्छे[2]द्भूतिमात्मनः ॥ ९ ॥

अथ सचिवकृत्यं तु राजनि पृष्टोत्तरमेव, तच्च सोपचारं वक्तव्य-मिति राजनीतिरित्याह—संपृष्टेनेत्यादि ॥ ९ ॥

---

* संयुगे खरघातिन इत्यन्वयः।　　† तव सन्निधौ—त्वत्साहाय्ये इति यावत्
‡ कार्यस्य विनिश्चये उपायं, अपायं, दोषं, गुणं वा संपृष्ट इत्यन्वयः।

[1] राज्ञः—ज.　　[2] द्युति—ङ.

*वाक्यमप्रतिकूलं तु मृदुपूर्वं हितं शुभम् ।
उपचारेण युक्तं च वक्तव्यो वसुधाधिपः ॥ १० ॥

तस्यैव विवरणं वाक्यमित्यादि ॥ १० ॥

[1]सावमर्दं तु [2]यद्वाक्यं, मारीच! हितमुच्यते ।
नाभिनन्दति तद्राजा [3]मानार्हो मान[4]वर्जितम् ॥ ११ ॥

ननु प्रतिकूलमपि हितं राज्ञे वक्तव्यं इत्याशङ्क्याह—सावमर्दमित्यादि । राजपृष्टावमर्दसहितमित्यर्थः ॥ ११ ॥

पञ्चरूपाणि राजानः धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य वरुणस्य यमस्य च ॥ १२ ॥
†औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम् ।
धारयन्ति महात्मानः राजानः, क्षणदाचर ॥ १३ ॥
तस्मात् सर्वास्ववस्थासु मान्याः पूज्याश्च [5]पार्थिवाः ।

पञ्चानां रूपाणि पञ्चरूपाणि । के ते इत्यतः अग्नेरित्यादि । कस्य किं रूपं धारयन्तीत्यतः—औष्ण्यमित्यादि ॥ १२-१३ ॥

त्वं तु धर्ममविज्ञाय केवलं मोहमास्थितः ॥ १४ ॥
‡अभ्यागतं मां दौरात्म्यात् परुषं [6]वक्तुमिच्छसि ।

अभ्यागतमित्यनेन विशिष्य पूजनीयत्वसूचनम् ॥ १४ ॥

---

* एवं वक्तृगुणा उक्ताः, अथ वचनप्रकारमाह—वाक्यमिति—गो. † औष्ण्यं—तीक्ष्णत्वं, विक्रमः—बलातिशयः, सौम्यं—कृपालुता, दण्डः—दुष्टनिग्रहः, प्रसन्नता—प्रसादः रा. ‡ राजानं, विशिष्येदानीं अभ्यागतं—इति भावः ।

[1] सोपमर्दं, सावमानं—ङ. [2] यद्वाक्यमथवा हितं—ञ. यद्वाक्यं मानहारीद—ङ. [3] मानार्थी—ञ. [4] वर्जितः—ङ. [5] नित्यदा—ञ. [6] वदसीदृशम्—ञ.

गुणदोषौ न पृच्छामि क्षमं चात्मनि, राक्षस! ॥ १५ ॥
*मयोक्तं तव चैतावत् संप्रत्यमितविक्रम!

क्षमं चात्मनीति। युक्तमित्यर्थः। मयेत्यादि। संप्रति मया तवोक्तं—त्वया कर्तव्यतया उक्तं एतावत् ॥ १५ ॥

अस्मिंस्तु [1]स भवान् कृत्ये साहाय्यं कर्तुमर्हति ॥ १६ ॥
शृणु तत्कर्म साहाय्ये यत् कार्यं †[2]वचनान्मम।

एतच्छब्दार्थ एव अस्मिन्नित्यादि। निश्चिते सीतापहारकृत्ये स भवान् मया नियुक्तः साहाय्यं कर्तुमर्हतीत्यर्थः। मत्कर्तव्यसाहाय्यं कीदृशं ते? इत्यपेक्षायामाह——शृण्वित्यादि ॥ १६ ॥

सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ॥ १७ ॥
आश्रमे तस्य रामस्य सीतायाः ‡प्रमुखे चर।
प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि ॥ १८ ॥
त्वां तु मायामृगं §दृष्ट्वा काञ्चनं जातविस्मया।
आनयैनमिति क्षिप्रं रामं वक्ष्यति [3]मैथिली ॥ १९ ॥
अपक्रान्ते तु काकुत्स्थे दूरं यात्वा व्युदाहर।
हा सीते लक्ष्मणेत्येवं रामवाक्यानुरूपकम् ॥ २० ॥

रामवाक्यानुरूपकमिति। रामकण्ठध्वनिसदृशध्वनियुक्तमित्यर्थः॥

तच्छ्रुत्वा रामपदवीं सीतया च प्रचोदितः।
अनुगच्छति संभ्रान्तः सौमित्रिरपि सौहृदात् ॥ २१ ॥

---

* संप्रति एतावदेव मया तव—तुभ्यमुक्तम्। तदेव अनन्तरश्लोके विक्रियते।
† कार्यं-इदानीं कर्तव्यम्। ‡ प्रमुखे—पुरतः। § काञ्चनं मायामृगरूपं त्वां इत्यर्थः।
[1] त्वं महाकृत्ये—ङ. [2] वचनं मम—ङ. [3] जानकी—ङ..

अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखं ।
[1]आनयिष्यामि वैदेहीं *सहस्राक्षः शचीमिव ॥ २२ ॥
एवं कृत्वा त्विदं कार्यं यथेष्टं गच्छ, राक्षस!
राज्यस्यार्धं [2]प्रयच्छामि, मारीच! तव, सुव्रत! ॥ २३ ॥
गच्छ, सौम्य! †शिवं मार्गं कार्यस्यास्य विवृद्धये ।
अहं त्वाऽनुगमिष्यामि सरथो दण्डकावनम् ॥ २४ ॥

शिवं मार्गं गच्छेति । सौम्यभावमास्थाय प्रस्थितो भवेत्यर्थः ॥२४॥

प्राप्य सीतामयुद्धेन वञ्चयित्वा च [3]राघवम् ।
लङ्कां प्रतिगमिष्यामि कृतकार्यः सह त्वया ॥ २५ ॥
न चेत् करोषि, मारीच! हन्मि त्वामहमद्य वै ।
एतत् कार्यमवश्यं मे बलादपि करिष्यसि ।
राज्ञो हि प्रतिकूलस्थः न जातु सुखमेधते ॥ २६ ॥

अथ रावणो राजत्वात् अकरणे दण्डमाह—न चेदित्यादि ॥ २६ ॥

‡आसाद्य तं जीवितसंशयस्ते
मृत्युर्ध्रुवो ह्यद्य मया विरुध्य ।
एतद्यथावत् [4]प्रतिगृह्य बुद्ध्या
[5]यदत्र पथ्यं कुरु तत् तथा त्वम् ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे चत्वारिंशः सर्गः

---

* सहस्राक्षः शचीमिवेति स्वबुद्धया । † मार्गं—मृगसम्बन्धिरूपं शिवं—मनोहरं गच्छ—गो. यद्वा 'न चेत्करोषि' (२६) इति वक्ष्यमाणत्वात् तव निरपायं मार्गं गच्छेत्यर्थः । ‡ रामसम्मुखगमने वारद्वयवत् अद्यापि जीवितसंशय एव, मद्विरोधे तु अद्यैव मृत्युस्तव निश्चितः ; अनयोः कः श्रेष्ठः इत्यालोचयेति भावः ॥

[1] आहरिष्यामि—ज. [2] प्रदास्यामि--ज. [3] राघवौ—ङ. [4] प्रतिगम्य—ङ. परिगण्य--ञ. [5] यद्रोचते तत्कुरु मा चिरेण—ङ.

प्रत्यक्षवधपरिहाराय मद्वचस्यनुष्ठिते जीवतस्ते मत्तो बहुसम्मान-प्राप्तिः। न च रामो मां हनिष्यतीति शङ्क्यम्। वारद्वयवत् तृतीय-पर्यायेऽपि जीवितस्य संभावितत्वेन मृत्युनिश्चयाभावः, अतो विमृश्य यदिष्टं तत् कुरु इत्याह—आसाद्य तमिति। राममित्यर्थः। जीवित-संशय इति। प्राणस्य नाशस्थित्योः संशयः तथा, न तु निश्चय इत्यर्थः। एतदिति। मदुक्तवचनमित्यर्थः। सर्प(२७)मानः सर्गः ॥ २७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे चत्वारिंशः सर्गः

———

## एकचत्वारिंशः सर्गः

### [रावणप्रतिबोधनम्]

*आज्ञप्तो [1]रावणेनेत्थं प्रतिकूलं [2]च राजवत्।
अब्रवीत् [3]परुषं वाक्यं [4]निःशङ्को राक्षसाधिपम् ॥ १ ॥

अथ मारीचस्तु उभयथाऽपि निश्चितमरणः लोकवदेव निश्शङ्को मृत्योः रावणस्य पारुष्यं करोति—आज्ञप्त इत्यादि। राजवदिति। प्रकृतार्थे वतिः, तदन्तमव्ययं चेह सर्वत्र इति बहुधा दर्शितम्। राज्ञा रावणेन आज्ञप्तः—कृतप्रत्यवायनियोगः परुषं—अत एव प्रतिकूलं च वाक्यमब्रवीत् ॥ १ ॥

---

* अराजवत्—(आज्ञप्तोऽराजवद्वाक्यं प्रतिकूलं निशाचरः—इति गो. पाठः) यद्वा रामप्रातिकूल्ये प्रवृत्तः तदैव राजत्वं गतमिति मुनेराशयः। (राजार्हविवेकराहित्याद्वा अराजवदिति कथनम्)। यद्वा राजवत्—राजार्हम्; 'तदर्हम्' इत्यर्हार्थे वतिः। यद्वा राजवदिति पूर्वसर्गोक्तं औद्धत्यं लक्ष्यते—गो. राजवत्—राजयोग्यम्—ति. निश्शङ्कः मारीचः राजवत् परुषं वाक्यं राक्षसाधिपमब्रवीत्—रा.

[1] ऽराजवद्वाक्यं—ङ. [2] निशाचरः—ङ. [3] सरुषं—ङ. [4] मारीचो—ङ.

केनायमुपदिष्टस्ते * विनाशः पापकर्मणा ।
[1] सपुत्रस्य सराष्ट्रस्य सामात्यस्य, निशाचर! ॥ २ ॥

विनाशः—अपाय इत्यर्थः ॥ २ ॥

† कस्त्वया सुखिना, राजन्! नाभिनन्दति [2] पापकृत् ।
केनेदमुपदिष्टं ते मृत्युद्वार[3]मुपायतः ॥ ३ ॥

सुखिना त्वयेति । अवस्थानमिति शेषः । उपायत इति । उपायव्याजेनेत्यर्थः ॥ ३ ॥

‡ शत्रवस्तव सुव्यक्तं हीनवीर्या [4] निशाचराः ।
इच्छन्ति त्वां विनश्यन्तं उपरुद्धं बलीयसा ॥ ४ ॥
केनेदमुपदिष्टं ते क्षुद्रेणाहित[5]वादिना ।
यस्त्वामिच्छति नश्यन्तं स्वकृतेन, निशाचर! ॥ ५ ॥

स्वकृतेनेति । स्वरचितविनाशोपायेनेत्यर्थः ॥ ५ ॥

वध्याः खलु न [6] हन्यन्ते सचिवास्तव, रावण!
ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्वशः ॥ ६ ॥

न निगृह्णन्तीति । न निवारयन्तीत्यर्थः ॥ ६ ॥

अमात्यैः कामवृत्तो हि राजा कापथमाश्रितः ।
निग्राह्यः सर्वथा सद्भिः [7] न § निग्राह्यो निगृह्यसे ॥ ७ ॥

---

* विनाशः—विनाशोपायः-गो. ति. † अभिनन्दने हेतुः त्वया सुखिनेति । सुखिनं त्वां न सहत इति यावत् । ‡ हीनवीर्याः, अत एव स्वयं त्वामुपरोद्धुमशक्ता निशाचराः बलीयसा रामेण त्वां विनश्यन्तमिच्छन्ति । § निग्राह्यः, त्वमिति शेषः ।

[1] सपुरस्य—ङ. [2] निन्दितः-ङ. [3] मपावृतम्—ङ. [4] निशाचर—ज.
[5] बुद्धिना-ज. [6] वध्यन्ते—ज. [7] स निग्राह्यो न गृह्यते-ज.

धर्ममर्थं च कामं च यशश्च, जयतां वर!
*स्वामिप्रसादात् सचिवाः प्राप्नुवन्ति, निशाचर! ॥ ८ ॥
विपर्यये तु तत्सर्वं व्यर्थं भवति, रावण!
†व्यसनं स्वामिवैगुण्यात् प्राप्नुवन्तीतरे जनाः ॥ ९ ॥

स्वामिवैगुण्यं- -उत्पथवृत्तिः ॥ ९ ॥

राजमूलो हि धर्मश्च [1]जयश्च, जयतां वर!
तस्मात् सर्वास्ववस्थासु रक्षितव्या नराधिपाः ॥ १० ॥
राज्यं पालयितुं शक्यं न तीक्ष्णेन, निशाचर!
न [2]चापि प्रतिकूलेन ‡नाविनीतेन, राक्षस! ॥ ११ ॥

तीक्ष्णेनेति । क्रूरदण्डेनेति यावत्। प्रतिकूलेनेति । स्वप्रकृतीनामिति शेषः ॥ ११ ॥

ये तीक्ष्णमन्त्राः सचिवाः भज्यन्ते सह तेन वै ।
[3]विषमे तुरगाः शीघ्राः मन्दसारथयो यथा ॥ १२ ॥

तीक्ष्णमन्त्राः—तीक्ष्णोपायप्रयोक्तारः । तेनेति । स्वमन्त्रग्राहिराज्ञेत्यर्थः । मन्दः—मन्दबुद्धिः अकुशलः सारथिः येषां ते मन्दसारथयः यथा तेन सारथिना सह नश्यन्ति तद्वत् ॥ १२ ॥

बहवः साधवो लोके [4]युक्ता धर्ममनुष्ठिताः ।
परेषामपराधेन विनष्टाः सपरिच्छदाः ॥ १३ ॥
स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन, रावण!
रक्ष्यमाणाः न वर्धन्ते [5]मेषा गोमायुना यथा ॥ १४ ॥

---

* स्वामिनः—यजमानस्य स्वास्थ्ये सर्वं इष्टं प्राप्येत, स्वामिन एवापाये विपर्ययः सिद्ध एवेत्याशयः । † स्वामिवैगुण्यात न केवलममात्या एव नश्यन्ति, किन्तु तदितरेऽपि जना इत्याह—व्यसनमिति—गो. ‡ अविनीतेन—इन्द्रियजयरहितेन, 'विनयो हीन्द्रियजयः' इति कामन्दकः—गो.

[1] यशश्च—ज. [2] चाति—ज. [3] विषमेषु रथाः—ज. [4] युक्तधर्मे—ज. [5] मृगा—ज.

अवश्यं विनशिष्यन्ति सर्वे, रावण ! राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ १५ ॥

कर्कश इति । क्रूरबुद्धिः कठिनश्चेत्यर्थः ॥ १५ ॥

*तदिदं काकतालीयं घोरमासादितं मया ।
अत्रैव शोचनीयस्त्वं ससैन्यो विनशिष्यसि ॥ १६ ॥
मां निहत्य तु [1]रामोऽसावचिरात् त्वां वधिष्यति ।

इदानीं स्वनाशं प्रति न शोचामि, किन्तु कुलनाशं प्रत्येव शोचामीत्याह—तदिदमित्यादि । येन मया यदिदं घोरं काकतालीयं—अचिन्त्यमरणं प्राप्तं, तेन मया तदिदं प्रति न शोकः क्रियते, 'जातस्य हि ध्रुवो मृत्युः' इति धिया ; अपि तु त्वं ससैन्यो विनशिष्यसीति यत् , अत्रैवार्थे त्वं मया शोचनीयोऽसि । रामस्तु मां निहत्य पश्चात् त्वामपि सबान्धवं अचिरादेव वधिष्यतीति ॥ १६ ॥

†अनेन कृतकृत्योऽस्मि म्रिये यदरिणा हतः ॥ १७ ॥

---

* काकतालीयं—यादृच्छिकं घोरं— भयंकरं इदं कृत्यं मयाऽऽसादितम् , ततः नाहं शोच्यः । न हि प्रमादविपन्नः शोच्य इति भावः । ससैन्यस्त्वं विनशिष्यसीत्यत्रैव कृत्ये त्वं मे शोचनीयः । बुद्धिपूर्वकारी त्वमेव हि शोच्य इति भावः । यद्वा ससैन्यो विनशिष्यसीति यत् तदिदं काकतालीयं घोरं त्वयाऽऽसादितम, अत्रैव मया त्वं शोचनीयः—**गो.** स्वस्य स्वत एव मरणं सन्निहितं जानन् मारीचः, अत्र त्वं काकतालीयतया हेतुरभूः किल ; तत्फलत्वेन ससैन्यो विनशिष्यसि किल, अत्रैव शोचनीयस्त्वमिति वाऽर्थः । अनिरीक्षितत्वमात्राद्वा काकतालीयत्वोक्तिः । † तव अरिणा रामेण हतो म्रिय इति यत् , अनेन हेतुना कृतकृत्योऽस्मि । विश्वामित्रयागसंरक्षणप्रभृति खरादिवधान्तातिमानुषचारित्रानुस्मृतिकृतासाधारणमहिमस्फूर्त्या राघवं परमपुरुषं निश्चितवतः मम तत्करप्रापितमरणस्य परमपुरुषार्थत्वादिति भावः । तथोक्तं नृसिंहपुराणे—'रामादपि हि मर्तव्यं मर्तव्यं रावणादपि । उभयोरपि मर्तव्ये वरं रामान्न रावणात्' इति । यद्वा स्वतो निरुपाधिकवधात् शत्रुहस्ताद्वधः निःश्रेयसकर इति भावः—**गो.**

[1] रामश्च न चिरात्—ङ.

दर्शनादेव रामस्य हतं [1] मामुपधारय ।
आत्मानं च हतं विद्धि हृत्वा सीतां सबान्धवम् ॥ १८ ॥

उक्त एवार्थः प्रपञ्च्यते—अनेनेत्यादि । यत्—यदा अरिणा—रामेण हतः सन् म्रिये, तदा अनेन मन्मरणेनैव कृतकृत्योऽस्मि, हा सीते हा लक्ष्मणेत्यनेन शब्देन, न प्रकारान्तरेण । अतो मद्वधः प्रथमं निश्चितः । ननु वधं विनाऽपि मत्कृत्यं सुकरं इत्याशङ्क्य नेत्याह—दर्शनादेवेत्यादि । अत्र केचन श्रद्धाजडाः * "अनेन कृतकृत्योऽस्मि" इत्यत्र "रामात् वधेन अहं कृतार्थः स्वर्गे भविष्यामि इत्याह" इति व्याकुर्वन् । केन प्रमाणेन 'रामः परमात्मा, तन्मूलवधः ममानुग्रहः' इति जानीयात्? यदि जानीयात् कथं च विरुणद्ध्यात्मानम्? इति । आत्मशब्दः रावणार्थः, सबान्धवं आत्मानमित्यन्वयः ॥ १७–१८ ॥

आनयिष्यसि चेत् सीतां आश्रमात् † सहितो मया ।
नैव [2] त्वमसि नाहं च नैव लङ्का न राक्षसाः ॥ १९ ॥

आनयिष्यसीति । मम मरणं निश्चितं, दैवात् जीवता मया वा सीतां आश्रमात् आनयिष्यसि चेत् पश्चादपि नाहमस्मि ॥ १९ ॥

निवार्यमाणस्तु मया हितैषिणा
न मृष्यसे वाक्यमिदं, निशाचर !
‡ परेतकल्पा हि गतायुषो नराः
हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकचत्वारिंशः सर्गः

---

* महेश्वरतीर्थगोविन्दराजादयः । † मया सहितः—कृतसहाय इति भावः ।
‡ मृत्योरतिसन्निहितत्वे हितं न शृणुयुरिति भावः ।

[1] मां विद्धि रावण—ङ. [2] त्वमपि—ज.

न मृष्यसे—प्रातिकूलबुद्ध्या न परिगृह्णासीत्यर्थः। परेतकल्पाः—मृतप्रायाः। नीर(२०)मानः सर्गः ॥ २० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकचत्वारिंशः सर्गः

---

## द्विचत्वारिंशः सर्गः

[सौवर्णमृगदर्शनम्]

एवमुक्त्वा तु [1]वचनं मारीचो रावणं [2]ततः।
गच्छावेत्यब्रवीद्दीनः भयाद्रात्रिंचरप्रभोः ॥ १ ॥

अथ बलात् निर्गतस्य कनकमृगभूतमारीचस्य सीताया दर्शनम्। एवमुक्त्वेत्यादि। गच्छावेति संप्रश्ने लोट् ॥ १ ॥

*दृष्टश्चाहं पुनस्तेन शरचापासिधारिणा।
मद्वधोद्यतशस्त्रेण [3]विनष्टं जीवितं च मे ॥ २ ॥

गच्छन् निजं दुःखं चाह—दृष्टश्चाहमित्यादि। पुनश्चाहं यदाऽद्य दृष्टो भविष्यामि, तदा उच्यमानविशेषेण रामेण मे जीवितं विनष्टमेव; चकारात् तव जीवितं चेत्यन्वाचीयते ॥ २ ॥

न हि रामं पराक्रम्य जीवन् प्रतिनिवर्तते।
†वर्तते प्रतिरूपोऽसौ यमदण्डहतस्य ते ॥ ३ ॥

---

* दीन इत्युक्तं दौरथ्यमुपपादयति—दृष्ट इत्यादिभिः। यद्यहं तेन दृष्टः तदा मे जीवितं विनष्टमित्यन्वयः—गो. † यमदण्डहतस्य ते प्रतिरूपः—सदृशः असौ जनः वर्तते; त्वमिवाहमपि यमदण्डहत इत्यर्थः—गो. रावणवधाङ्गतया स्ववधं पश्यन् मारीच एवमाह।

[1] परुषं—ज. [2] तदा—ङ. [3] निहतं—ज.

चकारेणोक्तार्थमेव व्यक्तीकरोति—न हीत्यादि। रामं प्रति पराक्रम्य इदानीं लोकान्तरे वा भवान् जीवन् भूत्वा न हि प्रतिनिवर्तते। कुत इत्यत आह—वर्तत इत्यादि। यमदण्डहतस्य ते—तव असौ रामः प्रतिरूपः—यमदण्डप्रतिरूपः यतो वर्तते तस्मादेव ॥ ३ ॥

*[1] किं तु शक्यं मया कर्तुं एवं त्वयि दुरात्मनि।
एष गच्छाम्यहं, तात! स्वस्ति तेऽस्तु, निशाचर! ॥ ४ ॥

अथ अशक्यपरिहारं निजानर्थं शोचति—किं त्वित्यादि ॥ ४ ॥

प्रहृष्टस्त्वभवत्तेन वचनेन स [2] रावणः।
परिष्वज्य सुसंश्लिष्टं इदं वचनमब्रवीत् ॥ ५ ॥

तेन वचनेनेति। गच्छामीति वचनेनेत्यर्थः ॥ ५ ॥

† एतत्, [3] शौण्डीर्य! युक्तं ते मच्छन्दवशवर्तिनः।
इदानीमसि मारीचः पूर्वमन्यो निशाचरः ॥ ६ ॥

"एतच्छौण्डीर्य! युक्तं ते मच्छन्दवशवर्तिनः" इति प्राचीनः पाङ्क्तः पाठः। शौण्डीर्यं—वीर्यम्। मत्वर्थीयाजाश्रयतः तद्युक्तोऽपि तथेत्युच्यते। हे शूरेति यावत्। मच्छन्दवशवर्तिनः—मदभिप्रायवशवर्तिनः ते एतदेव—मद्वचनानुकरणमेव युक्तं—योग्यम्। इदानीं मारीचोऽसि इति। स्वप्रकृतिं प्राप्नोषीत्यर्थः। पूर्वं अन्य इति। आविष्टोन्मत्तादिवदिति शेषः ॥ ६ ॥

---

* उभयोः वधः सन्निहितः। तु—किन्तु त्वयि दुरात्मनि मया किं कर्तुं शक्यमित्यन्वयः। किन्नु शक्यमिति पाठे अन्वयः स्वरस एव। † 'एतच्छौण्डीर्ययुक्तं ते मच्छन्दादिव भाषितम्' इति **गो.** पाठः। शौण्डीर्ययुक्तमेतत्ते भाषितं मच्छन्दादिव—मदभिप्रायादिव। मद्भाषितसदृशं भाषितमित्यर्थः:—**गो.** मच्छन्दात्—मद्दृष्ट्येति यावत्। मद्दृष्ट्या एतदेव ते भाषितं शौण्डीर्ययुक्तमिव—इति वा ॥

[1] किं नु—ङ. [2] राक्षसः—ज. [3] शौण्डीर्ययुक्तं ते मच्छन्दादिव भाषितम्—ङ.

आरुह्यतामयं शीघ्रं [1] रथो रत्नविभूषितः ।
मया सह [2] तथा युक्तः पिशाचवदनैः खरैः ॥ ७ ॥

प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि ।
तां शून्ये प्रसभं सीतां आनयिष्यामि मैथिलीम् [3] ॥ ८ ॥

ततो रावणमारीचौ * विमानमिव तं रथम् ।
[4] आरुह्य ययतुः शीघ्रं तस्मात् आश्रममण्डलात् ॥ ९ ॥

तस्मादाश्रममण्डलात् इति । मारीचाश्रममण्डलादित्यर्थः ॥ ९ ॥

तथैव तत्र पश्यन्तौ † पत्तनानि वनानि च ।
गिरींश्च सरितः सर्वाः राष्ट्राणि † [5] नगराणि च ॥ १० ॥

समेत्य दण्डकारण्यं राघवस्याश्रमं ततः ।
ददर्श सहमारीचः रावणो राक्षसाधिपः ॥ ११ ॥

पत्तननगरयोः अराजधानीराजधानीत्वेन भेदः ॥ १०-११ ॥

---

* विमानमिव स्थितं तं रथं, विमानं-आकाशगमिति वा । † नगरपत्तनादिलक्षणमुक्तं वास्तुशास्त्रे—"ग्रामश्च नगरं चैव पत्तनं खर्वटं पुरम् । खेटकं कुसुमं चैव शिबिरं राजवासिकम् । सेनामुखमिति त्वेवं दशधा कीर्तितं बुधैः । विप्राणां च सभृत्यानां वासो **ग्राम** इतीरितः । स एव विप्रैराकीर्णस्त्वग्र**हार** इति स्मृतः । कुटुम्बिभेदैरेकोनत्रिंशद्भिश्च समन्वितः । अनेकनारीसम्बद्धं नानाशिल्पिजनैर्वृतम् । क्रयविक्रयकैः कीर्णं सर्वदेवैः समन्वितम् । **नगरं** त्विति विख्यातं **पत्तनं** शृणु सांप्रतम् । द्वीपान्तरागतद्रव्यक्रयविक्रयकैर्युतम् । **पत्तनं** त्वब्धितीरे स्यात् तयोर्मिश्रं तु **खर्वटम्** । क्रयविक्रयकैर्युक्तं नानाजातिसमन्वितम । तन्तुवायसमायुक्तं **तत्पुरं** त्विति कथ्यते । एतैरधिष्ठितं यत्तत् **खेटकं** परिकीर्तितम् । तेषामेकान्तरेष्वेव वासः **कुसुम**मुच्यते" इत्यादिना—गो.

[1] खगो—ज. [2] रथो—ज. [3] एतदनन्तरं—'ततस्तथेत्युवाचैनं रावणं ताटकासुतः' इत्यधिकं—ज. [4] आरुह्यायतुः—ज. [5] विविधानि च—ङ.

अवतीर्य रथात् तस्मात् [1] ततः काञ्चनभूषणात् ।
हस्ते गृहीत्वा मारीचं रावणो वाक्यमब्रवीत् ॥ १२ ॥

[2] एतद्रामाश्रमपदं दृश्यते कदलीवृतम् ।
क्रियतां तत्, सखे! शीघ्रं यदर्थं वयमागताः ॥ १३ ॥

स रावणवचः श्रुत्वा मारीचो राक्षसस्तदा ।
मृगो भूत्वाऽऽश्रमद्वारि रामस्य विचचार ह ॥ १४ ॥

* स तु रूपं समास्थाय महदद्भुतदर्शनम् ।
मणिप्रवरशृङ्गाग्रः सितासितमुखाकृतिः ॥ १५ ॥

[3] रक्तपद्मोत्पलमुखः [4] इन्द्रनीलोत्पलश्रवाः ।
किञ्चिद[5]भ्युन्नतग्रीवः इन्द्रनील[6]दलाधरः ॥ १६ ॥

† [7] कुन्देन्दुवज्रसङ्काशं उदरं चास्य भास्वरम् ।
[8] मधूकनिभपार्श्वश्च [9] कञ्जकिञ्जल्कसंनिभः ॥ १७ ॥

वैडूर्यसङ्काशखुरः तनुजङ्घः सुसंहतः ।
इन्द्रायुधसवर्णेन पुच्छेनोर्ध्वं [10] विराजता ॥ १८ ॥

मनोहरः स्निग्धवर्णः रत्नैः नानाविधैर्वृतः ।
क्षणेन राक्षसो जातः मृगः परमशोभनः ॥ १९ ॥

---

* संग्रहेणोक्तं विवृणोति—स त्वित्यादिना–**गो.** स तु राक्षसः महदद्भुतदर्शनं रूपं समास्थाय मणिप्रवरशृङ्गाग्रः परमशोभनो मृगः क्षणेन जात इत्यन्वयः॥
† अस्य मृगरूपस्य कुन्देन्दुसंकाशं उदरमासीत्। तादृशोदर इति विपरिणतव्यम्, अन्यथा पूर्वापरविरोधः–**गो.**

[1] तप्तकाञ्चन–ङ. [2] एतत्तदाश्रम–ङ. [3] रत्ननीलोत्पल–ङ. [4] इन्द्रनीलोपम–ङ. [5] त्युन्नत–ज. [6] तलोदरः–ङ. निभोदरः–ज. [7] इदमर्धं पुष्पलिसं–ज. [8] मधूर–ङ. [9] पद्म–ङ. [10] विराजितः–ज.

मणिप्रवराकारं—इन्द्रनीलरत्नाकारं शृङ्गं यस्य स तथा। मणिशब्दः केवल इन्द्रनीले कविसमयप्रयोगः। क्वचित् सिता क्वचित् असिता च मुखाकृतिः—मुखशोभा यस्य स तथा। मधूकपुष्पनिभे पार्श्वे यस्य स तथा। कञ्जं–पद्मं तस्य किञ्जल्कः–केसरः तत्संनिभः तथा॥ १५-१९॥

वनं प्रज्वलयन् रम्यं रामाश्रमपदं च तत्।
मनोहरं दर्शनीयं रूपं कृत्वा स राक्षसः॥ २०॥
प्रलोभनार्थं वैदेह्याः नानाधातुविचित्रितम्।
[1]विचरन् गच्छते तस्मात् शाद्वलानि समन्ततः॥ २१॥

प्रज्वलयन्—दीपयन्॥ २०–२१॥

रूप्यैः बिन्दुशतैश्चित्रः भूत्वा स प्रियदर्शनः।
विटपीनां किसलयान् [2]भक्त्वाऽदन् विचचार ह॥ २२॥

भक्त्वेति। 'जान्तनशां विभाषा' इत्यनुनासिकलोपः॥ २२॥

*कदलीगृहकं गत्वा कर्णिकारान् इतस्ततः।
समाश्रयन् [3]मन्दगतिः †सीतासन्दर्शनं तथा॥ २३॥
राजीवचित्रपृष्ठः सः विरराज [4]महामृगः।
रामाश्रमपदाभ्याशे विचचार यथासुखम्॥ २४॥

कदलीगृहं कदलीवनान्तर्गतसूक्ष्मगृहम्। सीतासंदर्शनमपेक्ष्य इतस्ततो मन्दगतिं समाश्रयन्॥ २३–२४॥

पुनर्गत्वा निवृत्तश्च विचचार मृगोत्तमः।
गत्वा मुहूर्तं त्वरया पुनः प्रतिनिवर्तते॥ २५॥

---

* कदलीगृहकं—कृत्रिमकदलीमयगृहं–गो. † सीता संदृश्यतेऽस्मिन्निति सीतासन्दर्शनं, अधिकरणे ल्युट्, सीतासन्दर्शनयोग्यस्थानं समाश्रयन्–गो.

[1] विचरंश्च वनं सर्वं–ङ. [2] भङ्क्त्वा–ङ. [3] मन्दगतिं–ज. [4] मृगोत्तमः–ज.

विक्रीडंश्च क्वचिद्भूमौ पुनरेव निषीदति ।
आश्रमद्वारमागम्य मृगयूथानि गच्छति ॥ २६ ॥

मृगयूथैरनुगतः पुनरेव निवर्तते ।
सीतादर्शनमाकांक्षन् राक्षसो मृगतां गतः ॥ २७ ॥

परिभ्रमति चित्राणि मण्डलान्यभिनिष्पतन्[1] ॥ २८ ॥

अभिनिष्पतन्—वल्गमान इति यावत् ॥ २८ ॥

समुद्वीक्ष्य च तं सर्वे मृगा ह्यन्ये वनेचराः ।
उपागम्य *समाघ्राय विद्रवन्ति दिशो दश ॥ २९ ॥

समाघ्राय विद्रवन्ति इति । अमृगत्वनिश्चयादिति शेषः ॥ २९ ॥

राक्षसः सोऽपि तान् वन्यान् मृगान् मृगवधे रतः ।
प्रच्छादनार्थं †भावस्य न भक्षयति संस्पृशन् ॥ ३० ॥

भावस्य प्रच्छादनार्थमिति । तत्प्रयोजनमुद्दिश्यैव संस्पृशन्नपि मृगान् न भक्षयति ॥ ३० ॥

तस्मिन्नेव ततः काले वैदेही शुभलोचना ।
कुसुमापचयव्यग्रा पादपानभ्यवर्तत ॥ ३१ ॥

‡कर्णिकारानशोकांश्च चूतांश्च मदिरेक्षणा ।
कुसुमान्यपचिन्वन्ती चचार रुचिरानना ॥ ३२ ॥

---

* 'गावो घ्राणेन पश्यन्ति' । † भावस्य—स्वकौर्यभावस्य । ‡ अत्र अशोकचूतकुसुमानामपचयोक्त्या शिशिरान्तकालोऽयम् । 'गन्धवान् सुरभिर्मासः जातपुष्पफलद्रुमः' इति, 'सन्तापयति सौमित्रे क्रूरश्चैत्रवनानिलः' इति च पम्पातीरे रामोक्तेश्च । किञ्चाग्रे द्वादशमासोत्तरं यद्येषा मां नाङ्गीकरोति तदैनां हन्मीति रावणप्रतिज्ञा । ततो हनूमद्दर्शनकाले च तं प्रति सीतावाक्यम्—'वर्तते दशमो मासः द्वौ तु शेषौ प्लवङ्गम' इति सङ्गच्छते । माघशुक्लाष्टम्यां हरणे हि मार्गशुक्लाष्टम्यां, ततोऽर्वागेव वा दशमसमाप्त्या तस्य वर्तमानत्वोक्तिरसङ्गतैव स्यात्, तच्छुक्लपक्षान्ते हनुमतस्तद्दर्शनात्-ति.

[1] एतदनन्तरं—समीपे मृगयूथस्य विस्मितानि विशेषतः—इत्यधिकं-ङ

अनर्हाऽरण्यवासस्य सा तं रत्नमयं मृगम् ।
मुक्तामणिविचित्राङ्गं ददर्श परमाङ्गना ॥ ३३ ॥

सा तं रुचिर[1]दन्तोष्ठी रूप्यधातुतनूरुहम् ।
विस्मयोत्फुल्लनयना सस्नेहं समुदैक्षत ॥ ३४ ॥

स च तां रामदयितां पश्यन् मायामयो मृगः ।
विचचार पुनश्चित्रं दीपयन्निव तद्वनम् ॥ ३५ ॥

अदृष्टपूर्वं तं दृष्ट्वा नानारत्नमयं मृगम् ।
विस्मयं परमं सीता जगाम जनकात्मजा ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे द्विचत्वारिंशः सर्गः

---

षण्ड(३६)मानः सर्गः ॥ ३६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे द्विचत्वारिंशः सर्गः

---

## त्रिचत्वारिंशः सर्गः

### [लक्ष्मणशङ्का]

सा तं संप्रेक्ष्य सुश्रोणी कुसुमान्यपचिन्वती ।
हैमराजतवर्णाभ्यां पार्श्वाभ्यामुपशोभितम् ॥ १ ॥

प्रहृष्टा चानवद्याङ्गी मृष्टहाटकवर्णिनी ।
भर्तारमभिचक्रन्द लक्ष्मणं चापि * सायुधम्[2] ॥ २ ॥

---

* सायुधमित्यनेन आयुधेन सहागन्तव्यमित्याहूतवतीति गम्यते–गो. सदा रामसीतारक्षणतत्परत्वं वा गम्यते।

[1] दन्तोष्ठं–ज. [2] एतदनन्तरं—आहूयाहूय च पुनः तं मृगं साधु वीक्षते । आगच्छागच्छ शीघ्रं वै आर्यपुत्र सहानुजः—इत्यधिकं–ङ. ज.

अथ सीतया प्रदर्शितं मायामृगं मायामृगत्वेन निश्चित्यैव ग्रहो वा वधो वा भविष्यतीति सीताचित्तानुवर्तनाय रामः प्रवर्तते । सा तमित्यादि । चक्रन्द—'कदि-क्रदि-क्लदि आह्वाने रोदने च', आहूतवती ॥ १-२ ॥

तावाहूतौ नरव्याघ्रौ वैदेह्या रामलक्ष्मणौ ।
वीक्षमाणौ तु तं देशं तदा ददृशतुर्मृगम् ॥ ३ ॥

तावाहूताविति । तया सीतयेत्यनुषङ्गः ॥ ३ ॥

शङ्कमानस्तु तं दृष्ट्वा लक्ष्मणो राममब्रवीत् ।
तमेवैनमहं मन्ये मारीचं राक्षसं मृगम् ॥ ४ ॥
चरन्तो मृगयां हृष्टाः पापेनोपाधिना वने ।
अनेन निहताः, [1]राजन्! राजानः [2]कामरूपिणा ॥ ५ ॥

मृगयां चरन्तः इति । मृगयार्थं पर्यटन्त इत्यर्थः । उपाधिनेति । मृगरूपोपाधिनेत्यर्थः ॥ ५ ॥

[3]अस्य [4]मायाविदो मायामृगरूपमिदं कृतम् ।
[5]भानुमत्, पुरुषव्याघ्र! *गन्धर्वपुरसंनिभम् ॥ ६ ॥

मायाविदः इति षष्ठी । भानुमत्—ज्योतिष्मत् ॥ ६ ॥

मृगो ह्येवंविधो रत्नविचित्रो नास्ति, राघव!
जगत्यां, जगतीनाथ! मायैषा हि न संशयः ॥ ७ ॥

नास्तीति । एवमुपादानकमृगासंभवादिति भावः ॥ ७ ॥

---

* गन्धर्वपुरवदापातरमणीयं—ति. गन्धर्वपुरं—नानाविधविस्मयनीयाकारसंस्थानं क्षणभङ्गुरमभ्रं ; तत्सन्निभं —तद्वद्विस्मयनीयं—गो.

[1] राम—ज. [2] पापरूपिणा—ङ. [3] मन्ये—ङ. [4] मायाविनो—ङ. [5] सुमते—ङ.

एवं ब्रुवाणं [1] काकुत्स्थं प्रतिवार्य शुचिस्मिता ।
उवाच सीता संहृष्टा * [2] छद्मना [3] हृतचेतना ॥ ८ ॥

प्रतिवार्येति । अयं न राक्षसः, अपि तु चित्रमृग एव, अतो नैतद्ग्रहणविघ्नः त्वया कार्यः इत्युक्त्वेत्यर्थः । छद्मना—वञ्चनेन ॥ ८ ॥

आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः ।
आनयैनं, महाबाहो! क्रीडार्थं नो भविष्यति ॥ ९ ॥

नः—अस्माकम् ॥ ९ ॥

इहाश्रमपदेऽस्माकं बहवः पुण्यदर्शनाः ।
मृगाश्चरन्ति सहिताः सृमराश्चमरास्तथा ॥ १० ॥

सृमरचमरौ कृष्णशुक्लपुच्छचमरमृगौ ॥ १० ॥

ऋक्षाः पृषतसंघाश्च वानराः किन्नरास्तथा ।
[4] विचरन्ति, महाबाहो! रूपश्रेष्ठाः [5] मनोहराः ॥ ११ ॥

न चास्य सदृशः, राजन्! दृष्टपूर्वो मृगः पुरा ।
तेजसा† क्षमया दीप्त्या यथाऽयं मृगसत्तमः ॥ १२ ॥

तेजसा—विचित्रगतिसामर्थ्येन । क्षमया—सौम्यभावेन । दीप्त्या—देहप्रभया ॥ १२ ॥

---

* अत्र हेतुः—चर्मणेति—गो. तादृशविचित्राजिनेनेति यावत् । परन्त्वत्र 'क्रीडार्थं नो भविष्यति' इत्यनुपदोक्तिः विरुद्धा । अथवा चर्मणा—इत्यनेन वैचित्र्य-मात्रमुक्तं, न तु चर्मापेक्षा । † इतरमृगवत् नास्य अत्यन्तसंभ्रमो दृश्यत इति भावः ।

[1] सौमित्रिं—ङ. [2] चर्मणा, मृगेण—ङ. [3] हृतलोचना—ङ. [4] विहरन्ति—ज. [5] महाबलाः—ज. [6] न चान्यः—ज.

नानावर्णविचित्राङ्गः [1]रत्नबिन्दुसमाचितः ।
द्योतयन् वन[2]मव्यग्रं शोभते शशिसंनिभः ॥ १३ ॥

शशिसन्निभः इत्यनेन आह्लादकत्वम् ॥ १३ ॥

अहो ! रूपं अहो ! लक्ष्मीः स्वरसंपच्च शोभना ।
मृगोऽद्भुतो विचित्राङ्गः हृदयं हरतीव मे ॥ १४ ॥

स्वरसंपत्—ध्वनिसमृद्धिः ॥ १४ ॥

यदि ग्रहणमभ्येति जीवन्नेव मृगस्तव ।
आश्चर्यभूतं भवति विस्मयं जनयिष्यति ॥ १५ ॥

तव ग्रहणं—त्वत्कर्तृकग्रहणमित्यर्थः ॥ १५ ॥

समाप्तवनवासानां राज्यस्थानां च नः पुनः ।
अन्तःपुरविभूषार्थः मृग एष भविष्यति ॥ १६ ॥
भरतस्यार्यपुत्रस्य श्वश्रूणां मम च, प्रभो !
मृगरूपमिदं [3]व्यक्तं विस्मयं जनयिष्यति ॥ १७ ॥
जीवन्न यदि तेऽभ्येति ग्रहणं मृगसत्तमः ।
अजिनं, नरशार्दूल ! रुचिरं मे भविष्यति ॥ १८ ॥

जीवन् ग्रहणं नाभ्येतीति हतोऽपि वा यदि ग्रहणं प्राप्नोति, तदाऽपि मे प्रयोजनमस्तीत्याह—अजिनमित्यादि ॥ १८ ॥

निहतस्यास्य सत्त्वस्य जाम्बूनदमयत्वचि ।
*शष्पबृस्यां विनीतायां इच्छाम्यहमुपासितुम् ॥ १९ ॥

---

* शष्पबृस्यां—बालतृणैः कृतायां बृस्यां—गो.

[1] रत्नभूतो ममाग्रतः—ज. [2] मव्यग्रः—ङ. [3] दिव्यं—ज.

शष्पोपरि प्रतिष्ठापिता बृसी—तापसासनं—பீடிகை ; तस्या-मित्यर्थः । विनीतायां—प्रसारितायाम् । उपासितुं—त्वत्समीपे अवस्थातु-मित्यर्थः ॥ १९ ॥

*कामवृत्तमिदं रौद्रं स्त्रीणामसदृशं मतम् ।
वपुषा त्वस्य सत्त्वस्य विस्मयो जनितो मम ॥ २० ॥

कामवृत्तमिति । कैकेय्यादिवत् स्वकामप्रयोजनाय तन्नियोजन-रूपमिदं कृत्यं घोरं स्त्रीणां असदृशं—अनुचितमिति यद्यपि मतं—ज्ञातम् ; अथापि अस्य स्वप्नविस्मयः मम जनित इति कौतुकनिवृत्त्यर्थं अनुचितमपि करोमीत्यर्थः ॥ २० ॥

†तेन काञ्चनरोम्णा तु मणिप्रवरशृङ्गिणा ।
तरुणादित्यवर्णेन ‡नक्षत्रपथवर्चसा ॥ २१ ॥
§बभूव राघवस्यापि मनो विस्मयमागतम् ।

नक्षत्रपथवर्चसेति । नक्षत्रसदृशनानाबिन्दूपलक्षितत्वात् । नक्षत्रपथः—छायापथः । राघवस्यापीति । संभावितासंभावितवस्तु-तत्त्वनिरूपणकुशलबुद्धेरपीत्यर्थः । मनो विस्मयमागतमिति । भवितव्य-तायाः प्राबल्यादिति शेषः ॥ २१ ॥

---

* आनयेति वक्तुमप्ययुक्तम् । अतः तवापि कुतूहलमस्ति चेत् तथा क्रियतामिति भावः । अनेन पूर्वं आनयेति प्रमादादुक्तस्य क्षमापणं कृतम्—गो. अथवा स्त्रीणां कार्यसाधनाय प्रकटीक्रियमाणः विनयः अत्र प्रदर्शितः । † न केवलं स्त्रीपारवश्येन कृतवान् ; किन्तु स्वविस्मयेनापीत्याह—तेनेत्यादिना—गो. ‡ नक्षत्रसदृशबिन्दूप-लक्षितत्वात् तत्तुल्यवर्चसा—गो. § मनः विस्मयं आगतं—प्राप्तं बभूव ।

एवं सीतावचः श्रुत्वा तं दृष्ट्वा मृगमद्भुतम् ॥ २२ ॥
लोभितस्तेन रूपेण सीतया च प्रचोदितः ।
उवाच राघवो हृष्टः भ्रातरं लक्ष्मणं वचः ॥ २३ ॥

तदेव दर्शितं लोभित इति ॥ २३ ॥

पश्य, लक्ष्मण! वैदेह्याः स्पृहां [1]मृगगतामिमाम् ।
रूपश्रेष्ठतया ह्येषः मृगोऽद्य *न भविष्यति ॥ २४ ॥

रूपश्रेष्ठतया—रूपेण—अलौकिकविचित्रस्वरूपेण श्रेष्ठः—सर्वश्रेष्ठः तेनैव हेतुना । अद्य अनुभूयमान एष तु मृगो न भविष्यति । प्रायेण मृगत्वमत्र न संभावितमित्यर्थः ॥ २४ ॥

न वने नन्दनोद्देशे न चैत्ररथसंश्रये ।
कुतः पृथिव्यां, सौमित्रे! योऽस्य कश्चित् समो मृगः ॥

तदेव दर्शयति—न वन इत्यादि । नन्दन इत्युद्देशः कीर्तनं यस्य स तथा । चैत्ररथसंश्रये—तदाख्यवनेऽपि न । पृथिव्यामेव तत्सदृशमृगो न समस्तीति ॥ २५ ॥

†प्रतिलोमानुलोमाश्च रुचिराः रोमराजयः ।
शोभन्ते मृगमाश्रित्य चित्राः कनकबिन्दुभिः ॥ २६ ॥

उक्त एवार्थः प्रपञ्चयते—प्रतिलोमेत्यादि । कनकबिन्दुभिः चित्राः रोमराजयः इत्यन्वयः ॥ २६ ॥

---

* न भविष्यति--न जीविष्यति—ति. न भविष्यति—न सेत्स्यति, दुर्लभ [इत्य]र्थः-गो. † प्रतिलोमाः-तिर्यग्भूताः, अनुलोमाः-अनुकूलाः-गो.

[1] उल्लसिता—ज.

पश्यास्य जृम्भमाणस्य दीप्तामग्निशिखोपमाम् ।
जिह्वां मुखान्निःसरन्तीं मेघादिव शतह्रदाम् ॥ २७ ॥

निःसरन्तीं—प्रवर्तमानाम् । शतह्रदां—विद्युतम् ॥ २७ ॥

* [1] मसारगल्लर्कमुखः शङ्खमुक्तानिभोदरः ।
कस्य [2] नामाभिरूपोऽसौ न मनो लोभयेन्मृगः ? ॥ २८ ॥

कस्य रूपमिदं दृष्ट्वा जाम्बूनद[3]मयं, प्रभो !
नानारत्नमयं [4] दिव्यं न मनो विस्मयं व्रजेत् ? ॥ २९ ॥

[5] किं पुनर्मैथिली सीता बाला नारी न विस्मयेत् ? ।
† मांसहेतोरपि मृगान् विहारार्थं च धन्विनः ।
घ्नन्ति, लक्ष्मण ! राजानः मृगयायां महावने ॥ ३० ॥

अथ रामोऽपि मृगत्वसंभावनयैवाह —मांसहेतोरित्यादि । धन्विनो राजानः मृगयायां मांसहेतोरपि मृगान् घ्नन्ति, विहारार्थं च ॥ ३० ॥

धनानि व्यवसायेन विचीयन्ते महावने ।
धातवो विविधाश्चापि मणिरत्नसुवर्णिनः ॥ ३१ ॥

अपि च राजभिः धनानि व्यवसायेन मृगययोद्योगेन विचीयन्ते—संगृह्यन्ते । ननु कुतो वने धनसंग्रहप्रसक्तिः इत्यत्राह—धातव इत्यादि ॥

---

* मसारः—इन्द्रनील. । गल्लर्कः—चषकः, 'गल्लर्कश्चानुतर्षश्च तर्षकश्चषकः स्मृतः' इति हलायुधः ; इन्द्रनीलनिर्मितचषकाकारमुखसंपुटः—**गो.** † मांसहेतोरपि विनोदार्थं च राजानो मृगान् घ्नन्ति, किं पुनरेवंविधविचित्रवस्तुलाभहेतोरिति भावः—**गो.**

[1] बालार्काभमुखः शंखमुक्तामणिमनोहरः—**ङ.** [2] नामानुरूप्यो—**ञ.**
[3] मयप्रभम् **ञ.** [4] रम्य—**ङ.** [5] इदमर्धं कुण्डलितं—**ङ.**

*तत्सारमखिलं नृणां धनं निचयवर्धनम् ।
मनसा चिन्तितं सर्वं यथा [1]शुक्रमतं तथा ! ॥ ३२ ॥

नृणां—राजादिधनिनां निचयवर्धनं—कोशवर्धनं धनं तत्सारं भवति । जानपदधनादपि वन्यधनं सारं भवति—अतिप्रशस्तं भवतीत्यर्थः । अत्रांशे दृष्टान्तः—मनसेत्यादि । शुक्रं-ब्रह्म । "सपर्यगात् शुक्रं अकायं" इत्याद्युपनिषदतिप्रसिद्धश्चायमर्थः । शुक्रमतं – ब्रह्मलोकाभिमतं, मनसा चिन्तितं-संकल्पमात्रसिद्धम् । सर्वं वस्तु भोग्यवस्तुमात्रं यथा सर्वस्मात् सारतरं तद्वदित्यर्थः । 'स यदि .. यं यं कामं कामयते संकल्पादेवास्य समुत्तिष्ठन्ति' इति सुप्रसिद्धं संकल्पमात्रसुलभत्वं मुक्तभोग्यवस्तुनः ॥ ३२ ॥

†अर्थी येनार्थकृत्येन संव्रजत्यविचारयन् ।
तमर्थमर्थशास्त्रज्ञाः प्राहुरर्थ्याश्च, लक्ष्मण ! ॥ ३३ ॥

एवं अर्थार्थामपि प्रवृत्तिं राज्ञामुपवर्ण्य अर्थपुरुषार्थस्य लक्षणं प्रकृते अर्थधिया प्रवृत्तिशेषतया उपदिशति—अर्थी येनेत्यादि । अर्थापेक्षी पुमान् येन अर्थकृत्येन अर्थनिमित्तेन कर्मणा अविचारयन् तत्सौन्दर्यात् बलादिव संव्रजति तादृशमर्थं—वस्त्वेव अर्थशास्त्रज्ञाः अर्थं—अर्थपदार्थं प्राहुः ॥ ३३ ॥

---

*अखिलं धनं नृणां निचयवर्धनं—कोशवर्धनं भवेत् । किमिव—शुक्रस्य मनसा चिन्तितं—संकलितं वस्तुजातं तथैवाविमृश्य निचयवधन यथा, तद्वदित्यर्थः । यद्वा नृणां मनसा चिन्तितं—वृथामनोरथकलितं सर्वं धनं यथा शुक्रस्य कोशं पूरयति तथेत्यर्थः । तदुक्तमुद्योगपर्वणि 'मनुष्येभ्यः समादत्ते शुक्रश्चिन्तार्जितं धनम्' इति-**गो.** शुक्रस्य—दैत्याचार्यस्येव त्यक्तप्राक्तनबन्धस्य-**रा.** इदं नीतिशास्त्रविदः शुक्रस्य मतमित्यपि केचित् । †अस्त्विदं, अथापि विचार्य कार्यमिति चेत् तत्राह—अर्थीति-**गो.**

[1] शुक्रस्य लक्ष्मण-ङ. ज.

एतस्य मृगरत्नस्य परार्ध्ये काञ्चनत्वचि ।
उपवेक्ष्यति वैदेही मया सह सुमध्यमा ॥ ३४ ॥

यदेवमतः प्रकृते अर्थक्रियाप्रवृत्तिर्भविष्यतीत्याह—एतस्ये-त्यादि ॥ ३४ ॥

न *कादली न प्रियकी न प्रवेणी न चाविकी ।
भवेदेतस्य सदृशी [1]स्पर्शनेनेति मे मतिः ॥ ३५ ॥

एतन्मृगत्वचः परार्ध्यत्वमेव दर्शयति—न कादलीत्यादि । मृदूच्चकबुरनीलरोमा मृगविशेषः कदली—வாழை மான் । कदल्याः त्वक् कादली । प्रियकी—மயிர் மான் । ' प्रियकी रोमभिर्युक्ता मृदूच्चमसृणैर्घनैः ।" प्रवेणी अजविशेषः । आविकी—ऊर्णायुः—अविः । तस्याः त्वक् आविकी—प्रवेणिशब्दतश्च तत्त्वक् । एतस्य मृगस्य त्वचः कादली न सदृशी, तथा प्रियकी, प्रवेणी, आविकी च न सदृशीति मे मतिरिति योजना ॥ ३५ ॥

एष चैव मृगः श्रीमान् यश्च दिव्यो नभश्चरः ।
उभावेतौ मृगौ दिव्यौ तारामृगमहीमृगौ ॥ ३६ ॥

यश्च दिव्यो नभश्चर इति । खचरः अप्राकृतो मृगः इत्यर्थः । कौ तौ मृगौ दिव्यौ कथितौ इत्यतः—तारामृगमहीमृगाविति । तारारूपो मृगशिराः, महीमृगस्त्वसौ ॥ ३६ ॥

यदि वाऽयं तथा यन्मां [2]भवेद्वदसि, लक्ष्मण !
मायैषा राक्षसस्येति कर्तव्योऽस्य वधो मया ॥ ३७ ॥

---

* 'कदली तु बिले शेते मृदुसूक्ष्मोच्चकर्बुरैः । नीलाग्रैर्लोमभिर्युक्ता सा विंशत्यङ्गुलायता । प्रियकी लोमभिर्युक्ता मृदुश्च मसृणैर्घनैः'—गो.

[1] स्पर्शोऽनेनेति—ञ. [2] भवान् वदति—ङ.

अथ लक्ष्मणमतमङ्गीकृत्यापि प्रवृत्तिमाह— यदि वेत्यादि । हे लक्ष्मण ! राक्षसस्य मायैवैषा, न मृगः इति यन्मां प्रति वदसि, यदि वा अयं तथा भवेत्— त्वदुच्यमानप्रकारो भवेत्, अथापि अस्य वधो मया कर्तव्य इति प्रवृत्तिः उभयथाऽपि प्राप्तैवेत्यर्थः ॥ ३७ ॥

एतेन हि नृशंसेन [1] मारीचेनाकृतात्मना ।
वने विचरता पूर्वं हिंसिता मुनिपुङ्गवाः ॥ ३८ ॥
* उत्थाय [2] बहवो येन मृगयायां जनाधिपाः ।
निहताः परमेष्वासाः तस्माद्वध्यस्त्वयं मृगः ॥ ३९ ॥

उत्थाय— उत्प्लुत्य ॥ ३९ ॥

पुरस्तादिह वातापिः परिभूय तपस्विनः ।
उदरस्थो द्विजान् हन्ति † स्वगर्भोऽश्वतरीमिव ॥ ४० ॥

स्वगर्भोऽश्वतरीमिवेति । अश्वतरी स्वगर्भेण म्रियत इति प्रसिद्धिः । ययाऽश्वो न जीवति सा अश्वतरीति । यया कयाचन व्युत्पत्त्या वृश्चिकोऽप्युच्यते ॥ ४० ॥

‡ स कदाचित् [3] चिराल्लोभात् आससाद महामुनिम् ।
अगस्त्यं तेजसा युक्तं भक्ष्यस्तस्य बभूव ह ॥ ४१ ॥

---

* उत्थाय— वञ्चनया हठात् प्राप्येति यावत् । † अश्वतरो नाम गर्दभादश्वायामुत्पन्न इति वृत्तिकारः—गो. अश्वतरी गर्दभादश्वायामुत्पन्नेति तीर्थः । कर्कटीति परे । वृश्चिक इति कतकः । अत्र आद्यव्याख्यैव ज्यायसी; तस्या गर्भस्य उदरपाटनं विना न निःसरणमिति सर्वजनप्रसिद्धेः—ति. अत्र तिलकोक्तिरेव यथार्था । ‡ अस्मिन्नेव काण्डे ११ सर्गे वर्णितेयं कथा ॥

[1] मारीचेन दुरात्मना—ङ. [2] बहवोऽनेन—ङ. [3] चिराल्लोके—ज.

समुत्थाने च तद्रूपं कर्तुकामं समीक्ष्य तं ।
उत्स्मयित्वा तु भगवान् वातापिमिदमब्रवीत् ॥ ४२ ॥

समुत्थाने–श्राद्धान्ते । तद्रूपं–राक्षसं रूपं । उत्स्मयित्वा–ईषत् स्मित्वा ॥ ४२ ॥

त्वयाऽविगण्य, वातापे! परिभूताः [1] स्वतेजसा ।
जीवलोके द्विजश्रेष्ठाः तस्मादसि * जरां गतः ॥ ४३ ॥

अविगण्य–अविचार्य, पापमिति शेषः । स्वतेजसा–स्वबलेन । तस्मादिति । द्विजपरिभवजपापेनेत्यर्थः ॥ ४३ ॥

[2] तद्रक्षोऽपि भवेदेव वातापिरिव, लक्ष्मण !
मद्विधं योऽतिमन्येत धर्मनित्यं जितेन्द्रियम् ॥ ४४ ॥
भवेद्धतोऽयं वातापिः अगस्त्येनेव मा गतः ।

तद्रक्षोऽपीति । मारीचाख्यरक्षोऽपीत्यर्थः । मद्विधं य इति । मारीच इत्यर्थः । अगस्त्येनेव मा गत इति । मा–मां गतः अयं मारीचोऽपि, वातापिः अगस्त्येनेव मया हतो भविष्यतीत्यर्थः । ४४ ॥

इह त्वं भव संनद्धः यन्त्रितो रक्ष मैथिलीम् ॥ ४५ ॥
† अस्यामायत्तमस्माकं यत्कृत्यं, रघुनन्दन !

सन्नद्धः–धनुःकवचादिसंनाहयुक्तः । यन्त्रितः–व्याक्षेपान्तररहितः । अस्माकं यत् कृत्यं–कर्तव्यं आवश्यकं तदस्यामायत्तं, तदस्यां एतद्रक्षणविषये आयत्तं–स्थितम् ॥ ४५ ॥

---

* जरां गतोऽसि जीर्णोऽसि । † अस्माकं यत् कृत्यमावश्यकं, तत्सर्वमस्यां आयत्तं– एतद्रक्षणप्रधानमित्यर्थः । एतन्मूलतया रावणवधादिकं कर्तव्यम् ; इयं हि पूर्वं वेदवतीभावे तथा संकल्पितवतीत्यपि सूचयति–गो. अस्या अपाये अनन्तरमस्माकं कर्तव्यमेव न किञ्चिदस्ति तां विना मम जीवनमेव असंभवीति यावत् ॥

[1] च देवताः–ङ. [2] तदेतन्न भवेद्रक्षः–ङ. तद्रक्षो न भवेदेव–ञ.

अहमेनं वधिष्यामि ग्रहीष्याम्यपि वा मृगम् ॥ ४६ ॥
यावद्गच्छामि, सौमित्रे ! मृग[1]मानयितुं द्रुतम् ।

यावद्गच्छामीति । 'यावत्पुरे'ति लट्, गमिष्यामीति यावत् । आनयितुमिति । आनेतुमिति यावत् ॥ ४६ ॥

पश्य, लक्ष्मण ! [2]वैदेहीं मृगत्वचि *[3]गतस्पृहाम् ॥४७॥
त्वचा प्रधानया ह्येषः मृगोऽद्य न भविष्यति ।
अप्रमत्तेन ते भाव्यं आश्रमस्थेन † सीतया ॥ ४८ ॥

गमनावश्यकबीजं दर्शयति — पश्येत्यादि । त्वचा प्रधानयेति । प्रधानप्रयोजनभूतयेत्यर्थः । ततश्च नायं जीवग्राह्यं सुशक्यग्रहः इत्युक्तं भवति । ते भाव्यमिति । त्वया भवितव्यमित्यर्थः ॥ ४७–४८ ॥

यावत्पृषतमेकेन सायकेन निहन्म्यहम् ।
हत्वैतच्चर्म चादाय शीघ्रमेष्यामि, लक्ष्मण ॥ ४९ ॥
प्रदक्षिणेनातिबलेन पक्षिणा
‡ जटायुषा बुद्धिमता च, लक्ष्मण ।
भवाप्रमत्तः [4]परिगृह्य मैथिलीं
प्रतिक्षणं सर्वत एव शङ्कितः ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे त्रिचत्वारिंशः सर्गः

---

प्रदक्षिणेन—समर्थेन । सर्वत एवेति । सर्वदिग्वर्तिरक्षोऽसुरादिभ्य इत्यर्थः । नर्म(५०)मानः सर्गः ॥ ५० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे त्रिचत्वारिंशः सर्गः

---

* गतस्पृहां—प्राप्तस्पृहां—गो. एवमस्मद्वधादेन निराशामिति वा । † सीतया सह आश्रमस्थेनेत्यन्वयः । ‡ जटायुषा च सहित इत्यर्थः ।

[1] मानेतुमुद्यतम्—ङ. [2] वैदेह्याः—ज. [3] गतां—ज. [4] प्रतिगृह्य—ङ.

## चतुश्चत्वारिंशः सर्गः

### [मायामृगवधः]

तथा तु तं समादिश्य भ्रातरं रघुनन्दनः ।
[1]बबन्धासिं महातेजाः जाम्बूनदमयत्सरुम् ॥ १ ॥

अथ मायामृगानुगतरामेण तद्वधः । तथेति । त्सरुः—खड्गमुष्टिः ॥ १ ॥

ततः [2]त्रिविनतं चापं *आदायात्मविभूषणम् ।
आबध्य च कलापौ द्वौ जगामोदग्रविक्रमः ॥ २ ॥

त्रिविनतं—† मध्ये त्रिस्थले विनतं त्रिविनतं, तादृशं चापं शार्ङ्गं आदायेत्यर्थः । एतस्य अहस्त्वल्पकार्यत्वात् । तदभिप्रायेणोक्तं—आत्मविभूषणमिति । आत्मालङ्कारभूतमित्यर्थः । कलापौ द्वाविति । द्वे तूणीरे इत्यर्थः ॥ २ ॥

तं [3]वन्यराजो राजेन्द्रं आपतन्तं निरीक्ष्य वै ।
बभूवान्तर्हितस्त्रासात् पुनः सन्दर्शनेऽभवत् ॥ ३ ॥
बद्धासिर्धनुरादाय प्रदुद्राव यतो मृगः ।

तं वन्यराज इति पाठः । वन्याः—मृगाः तेषां राजा श्रेष्ठः, विचित्रमृगत्वात् । संदर्शने—दृष्टिविषय इत्यर्थः ॥ ३ ॥

‡ तं स्म पश्यति रूपेण [4]द्योतमानमिवाग्रतः ॥ ४ ॥
अवेक्ष्यावेक्ष्य धावन्तं धनुष्पाणिं महावने ।

रूपेण—स्वरूपेण । अग्रे द्योतमानमिव च स्थितम् ॥ ४ ॥

---

* आत्मविभूषणमित्यनेन तत् अगस्त्यदत्तं वैष्णवमिति सूचितम्-ति.
† आबन्तयोः मध्ये वा विनतम् । ‡ तमित्यादिश्लोकत्रयमेकं वाक्यम्-गो.

[1] दधारासिं-ज. [2] श्यवनतं-ङ. [3] वञ्चयानो-ङ. [4] द्योतयन्त-ज.

अतिवृत्त[1]मिषोः पातात् लोभयानं [2]कदाचन ॥ ५ ॥
*शङ्कितं तु समुद्भ्रान्तं उत्पतन्तमिवाम्बरे ।

अतिवृत्तं—अतिक्रान्तं । कदाचन इषुपातात् शङ्कितम् ॥ ५ ॥

दृश्यमानमदृश्यं च वनोद्देशेषु केषुचित् ॥ ६ ॥
छिन्नाभ्रैरिव संवीतं शारदं चन्द्रमण्डलम् ।

वनोद्देशे दृश्यमानत्वात् छिन्नाभ्रदृश्यमानचन्द्रदृष्टान्तः ॥ ६ ॥

†मुहूर्तादेव ददृशे मुहुर्दूरात् प्रकाशते ॥ ७ ॥

दर्शनादर्शनादेवं सोऽपाकर्षत राघवम् ।
सुदूरमाश्रमस्यास्य मारीचो ‡मृगतां गतः ॥ ८ ॥

दर्शनं चादर्शनं चेति द्वन्द्वैकवद्भावः ॥ ८ ॥

आसीत् क्रुद्धस्तु काकुत्स्थः विवशस्तेन मोहितः ।
अथावतस्थे [3]सुश्रान्तः छायामाश्रित्य शाद्वले ॥ ९ ॥

तेनेति । दर्शनादर्शनाभ्यां विलोभ्य मोहयता मारीचेनेत्यर्थः ॥

स तमुन्मादयामास मृगरूपो निशाचरः ।
मृगैः परिवृतो वन्यैः अदूरात् प्रत्यदृश्यत ॥ १० ॥

उन्मादयामासेति । 'उन्मादश्चित्तविभ्रमः' । बहुदूरविधावनेन चित्तमोहं चाकरोदित्यर्थः ॥ १० ॥

---

* शङ्कितं—रामबाणपातसंभावनया प्राप्तशङ्कं, अत एव समुद्भ्रान्तं—भीतं, अत एव अम्बरं—आकाशं उत्पतन्तं—उल्लङ्घयन्तमिव—रा. † समीपे मुहूर्तात्—मुहूर्तं ददृशे, दूरात्—दूरे मुहुः प्रकाशते—गो. ‡ मृगतां गतः मारीच इत्यन्वयः ।

[1] मिवोत्पातात्-ज. [2] कथञ्चन-ङ. [3] संभ्रान्तः-ङ.

ग्रहीतुकामं दृष्ट्वैनं पुनरेवाभ्यधावत ।
तत्क्षणादेव संत्रासात् पुनरन्तर्हितोऽभवत् ॥ ११ ॥

पुनरेव ततो दूरात् वृक्षषण्डा[1]द्विनिस्सृतम् ।
दृष्ट्वा रामो महातेजाः तं हन्तुं कृतनिश्चयः ॥ १२ ॥

*भूयस्तु शरमुद्धृत्य कुपितस्तत्र राघवः ।
सूर्यरश्मिप्रतीकाशं ज्वलन्तमरि[2]मर्दनः ॥ १३ ॥

संधाय सुदृढे चापे विकृष्य † बलवद्बली ।
तमेव मृगमुद्दिश्य [3]श्वसन्तमिव पन्नगम् ॥ १४ ॥

मुमोच ज्वलितं दीप्तं अस्त्रं ब्रह्मविनिर्मितम् ।

ब्रह्मविनिर्मितमस्त्रमिति । ब्रह्मदत्तबाणमित्यर्थः । स एव हि परमापदि शरणम् ॥ १४ ॥

‡ [4]शरीरं मृगरूपस्य विनिर्भिद्य शरोत्तमः ॥ १५ ॥
मारीचस्यैव हृदयं विभेदाशनिसंनिभः ।

मारीचस्यैव हृदयमिति । न तु तत्कृतमायामृगाकारस्येत्यर्थः ॥

तालमात्रमथोत्प्लुत्य न्यपतत् स शरातुरः ॥ १६ ॥
विनदन् भैरवं नादं धरण्यामल्पजीवितः § ।

तालमात्रमुत्प्लुत्येति । शरवेधवेगादिति शेषः ॥ १६ ॥

---

*भूयः—अत्यर्थं कुपितः-**गो.** अथवा पूर्वं 'आसीत् क्रुद्धस्तु '(९) इति कथनात्, भूयः—पुनः कुपित इत्यर्थः । † बलवद्विकृष्येत्यन्वयः । ‡ विशिष्टस्त्रप्रयोगस्य फलमपि विचित्रं दर्शयति—शरीरमिति । § अल्पजीवितः —अल्पावशिष्टजीवितः ।

[1] द्विनिस्सृतः-**ज.** [2] मर्दनम्-**ज.** [3] ज्वलन्त-**ज.** [4] स भृशं-**ज.**

[1]म्रियमाणस्तु मारीचः जहौ तां कृत्रिमां तनुम् ॥ १७ ॥
स्मृत्वा [2]तद्वचनं रक्षः दध्यौ केन तु लक्ष्मणम् ।
इह प्रस्थापयेत् सीता *शून्ये तां रावणो हरेत् ॥ १८ ॥

तद्वचनमिति । रावणवचनमित्यर्थः । दध्यौ—ध्यानं कृतवान् । केन—केनोपायेन मया कृतेन सीता लक्ष्मणं इह प्रस्थापयेत्, तां च कथं शून्ये रावणो हरेत्, इति दध्यौ इत्यन्वयः ॥ १८ ॥

स प्राप्तकालमाज्ञाय चकार च ततः स्वरम् ।
सदृशं राघवस्यैव, हा सीते! लक्ष्मणेति च ॥ १९ ॥
तेन मर्मणि निर्विद्धः शरेणानुपमेन हि ।
मृगरूपं तु तत् त्यक्त्वा राक्षसं रूप[3]मात्मनः ॥ २० ॥
चक्रे स सुमहा[4]कायो मारीचो जीवितं त्यजन् ।

मर्मणि—सहजरूपप्राणस्थाने इत्यर्थः । तत्र हेतुः—शरेणानुपमेन हीति । रक्षस्संबन्धि—राक्षसम् ॥ २० ॥

[ततो विचित्रकेयूरः सर्वाभरणभूषितः ।
हेममाली महादंष्ट्रः राक्षसोऽभूच्छराहतः ॥]
तं दृष्ट्वा पतितं भूमौ राक्षसं घोरदर्शनम् ॥ २१ ॥

---

* यद्यपि रावणेनैव पूर्वमत्रोपायः उपदिष्टः—'आक्रान्ते तु काकुत्स्थे दूरं यात्वा व्युदाहर । हा सीते लक्ष्मणेत्येवं रामवाक्यानुरूपकम्' (४०–२०) इति । परन्तु तस्यैव प्रकारचिन्तनमिदम् । अथवा—केन तु लक्ष्मणं सीता इह प्रस्थापयेत्, तां च शून्ये रावणो हरेत् इति दध्यौ । ततः—रावणवचनं तद्वचनं स्मृत्वा सः तत् प्राप्तकालमाज्ञाय राघवस्य सदृशं स्वनं चकार—इत्यन्वयः । पाठान्तरे तु न कश्चन क्लेशः ।

[1] एतदर्धद्वयस्थाने—'म्रियमाणस्तु मारीचः दध्यौ केन तु लक्ष्मणं'–झ. [2] तु तां मतिं–ङ. [3] मास्थितः–ज. [4] कायं–ङ.

रामो रुधिरसिक्ताङ्गं [1] वेष्टमानं महीतले ।
जगाम मनसा सीतां लक्ष्मणस्य वचः स्मरन् ॥ २२ ॥

मारीचस्यैव मायैषा * पूर्वोक्तं लक्ष्मणेन तु ।
तत् तथा ह्यभवच्चाद्य मारीचोऽयं मया हतः ॥ २३ ॥

लक्ष्मणस्य वचः स्मरन्नित्येतदेव प्रकाशयति—मारीचस्येत्यादि ॥

हा सीते ! लक्ष्मणेत्येवं आक्रुश्य च [2] महास्वनम् ।
ममार राक्षसः सोऽयं † श्रुत्वा सीता कथं भवेत् ? ॥२४॥

सीता कथं भवेत्—मद्धलं ज्ञात्वा धीरा भवेत् ? उत अन्यथा ज्ञात्वा दुरवस्थां गच्छेद्वेत्यर्थः ॥ २४ ॥

लक्ष्मणश्च महाबाहुः कामवस्थां गमिष्यति ?
इति संचिन्त्य धर्मात्मा रामो हृष्टतनूरुहः ॥ २५ ॥
तत्र रामं भयं तीव्रं आविवेश विषादजम् ॥

हृष्टतनूरुह इति । सीतानिमित्तभयविकारादिति शेषः । तदेव दर्शयति—तत्र रामं भयमित्यादि ॥ २५ ॥

राक्षसं मृगरूपं तं हत्वा श्रुत्वा च तत् स्वरम् ॥ २६ ॥

---

* मायैषेत्यत्र इतिकरणं बोध्यम्–गो. अथवा 'मारीचस्यैव मायैषा' इति स्वगतं वचनं वा । † सीता कथं भवेत्—किमधैर्यं नाटयित्वा लक्ष्मणं प्रेषयेत्, उत धीरा भवेदित्यर्थः–ति. वस्तुतस्तु सीतालक्ष्मणयोः स्वविरहासहिष्णुत्वस्य—'न च सीता त्वया हीना न चाहमपि राघव । मुहूर्तमपि जीवावः जलान्मत्स्याविवोद्धृतौ' इत्यादाववगतत्वेन, एवं मदीयार्तस्वरश्रवणमात्रेण तयोर्जीवितविपत्तिर्न भवेद्वेत्येवातिशङ्काऽत्र रामस्य स्यात् । अत एव 'हृष्टतनूरुहः' इत्युच्यते । तयोर्जीवितविपत्तिस्मरणमात्रेण रामः अतीव व्यथां प्राप । हृष्टत्वं नाम तनूरुहाणां पुलकितत्वम् । समनन्तरश्लोके 'तत्र रामं भयं तीव्रमाविवेश' इत्युक्तं अवधेयमत्र ।

[1] चेष्टमानं–ज. [2] नम स्वरम्–ङ.

*निहत्य पृषतं चान्यं मांसमादाय राघवः ।
त्वरमाणो जनस्थानं ससारा[1]भिमुखं तदा ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे चतुश्चत्वारिंशः सर्गः

---

पृषतं—मृगम् । जनस्थानं अभिमुखं—जनस्थानवर्तिनिजाश्रम-मुद्दिश्येत्यर्थः । सार(२७)मानः सर्गः ॥ २७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे चतुश्चत्वारिंशः सर्गः

---

## पञ्चचत्वारिंशः सर्गः

[लक्ष्मणापसरणम्]

आर्तस्वरं तु तं †भर्तुः विज्ञाय सदृशं[2] वने ।
उवाच लक्ष्मणं सीता, गच्छ जानीहि राघवम् ॥ १ ॥

अथ सीतया आसन्ननिजानर्थनिदानातिघोरानुचितदुर्वचन-शितशरैः मर्माणि लक्ष्मणं विद्ध्वा आश्रमादुद्वासनम् । आर्तस्वर-मित्यादि । भर्तुः स्वरेण सदृशं तं आर्तस्वरं भर्तुः स्वरमेवेति विज्ञायेत्यर्थः ॥ १ ॥

न हि मे हृदयं स्थाने जीवितं वाऽवतिष्ठति ।
क्रोशतः परमार्तस्य श्रुतः शब्दो मया भृशम् ॥ २ ॥
आक्रन्दमानं तु वने भ्रातरं [3]त्रातुमर्हसि ।
तं क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम् ॥ ३ ॥

---

* लक्ष्मणस्य सीतारक्षार्थमेव नियुक्तत्वेन स्वयमेवाहारमप्यादायागच्छदिति भावः।

† भर्तुः सदृशमित्युक्तया नेदं रामवच इति सीतया ज्ञातमिति सूचितम्–रा. परन्तु भर्तुः सदृशमिति कविवचनम् । इदं समनन्तरश्लोकेऽपि स्पष्टम् ।

[1] भिमुखः–ङ्क. [2] वचः–ङ्. [3] शातु–ङ्क.

रक्षसां वशमापन्नं सिंहानामिव गोवृषम् ।
न जगाम तथोक्तस्तु भ्रातुराज्ञाय शासनम् ॥ ४ ॥

भ्रातुः शासनमाज्ञायेति । "अप्रमत्तेन ते भाव्यं आश्रमस्थेन सीतया" इत्युक्तं शासनमनुचिन्त्येत्यर्थः ॥ ४ ॥

तमुवाच ततस्तत्र [1] कुपिता जनकात्मजा ।
सौमित्रे! मित्ररूपेण भ्रातुस्त्वमसि शत्रुवत् ।
यस्त्वमस्यामवस्थायां भ्रातरं नाभिपत्स्यसे ॥ ५ ॥

शत्रुवत् । शत्रुरेवेत्यर्थः । तत्र हेतुः यदित्यादि ॥ ५ ॥

इच्छसि त्वं विनश्यन्तं रामं, लक्ष्मण! मत्कृते ।
लोभान्मम कृते नूनं नानुगच्छसि राघवम् ॥ ६ ॥

मत्कृते इति । मत्परिग्रहार्थमित्यर्थः । एवंविधमपि घोरवचनं तस्याः बलात् अन्यस्पर्शानर्थप्राप्तिमासन्नां सूचयत् अवशात् प्रवृत्तम्, भवितव्यतावशात् ॥ ६ ॥

व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते ।
तेन तिष्ठसि [2] विस्रब्धः तमपश्यन्महाद्युतिम् ॥ ७ ॥
* किं हि संशयमापन्ने तस्मिन्निह मया भवेत् ।
कर्तव्यमिह तिष्ठन्त्या यत्प्रधानस्त्वमागतः ॥ ८ ॥

किं हीत्यादि । तस्मिन् रामे संशयमापन्ने तद्रहिते इह - आश्रमे तिष्ठन्त्या मया इह-इदानीं त्वं यत्प्रधानः आगतः-मत्परिग्रहरूपयत्कार्यप्रधानः त्वं आगतः, अत्र विषये मया किं कर्तव्यमिति योजनार्थः ॥

* त्वद्रक्षणं विहाय कथं गमिष्यामीत्याह-किं हीति। यः रामः प्रधानं यस्य सः यत्प्रधानः त्वमिहागतः, तस्मिन् रामे संशयं-प्राणसंशयमापन्ने सति इह-आश्रमपदे तिष्ठन्त्या मया किं कर्तव्यं, न किमपीत्यर्थः-गो.

[1] क्षुभिता-ज. [2] विस्रब्धं-ज.

इति ब्रुवाणां वैदेहीं बाष्पशोकपरिप्लुताम् ।
अब्रवील्लक्ष्मणः *त्रस्तां सीतां मृगवधूमिव ॥ ९ ॥
पन्नगासुरगन्धर्वदेवमानुषराक्षसैः ।
अशक्यस्तव, वैदेहि ! भर्ता जेतुं न संशयः ॥ १० ॥
†देवि ! देवमनुष्येषु गन्धर्वेषु पतत्रिषु ।
राक्षसेषु पिशाचेषु किन्नरेषु मृगेषु च ॥ ११ ॥
दानवेषु च घोरेषु न स विद्येत, शोभने !
यो रामं प्रतियुध्येत समरे वासवोपमम् ॥ १२ ॥

न स विद्येतेति । क इत्यतः—यो राममित्यादि ॥ १२ ॥

अवध्यः समरे रामः नैवं त्वं वक्तुमर्हसि ।
न त्वामस्मिन् वने हातुं उत्सहे राघवं विना ॥ १३ ॥
अनिवार्यं बलं तस्य बलैर्बलवतामपि ।
त्रिभिर्लोकैः समुद्युक्तैः सेश्वरैरपि सामरैः ॥ १४ ॥

बलवतां इन्द्रादीनामपि बलैः तस्य बलं अनिवार्यं—अनाधृष्यमित्यर्थः ॥ १४ ॥

हृदयं निर्वृतं तेऽस्तु संतापस्त्यज्यतामयम् ।
आगमिष्यति ते भर्ता शीघ्रं हत्वा मृगोत्तमम् ॥ १५ ॥
न स तस्य स्वरो ‡व्यक्तं [1] न कश्चिदपि दैवतः ।
गन्धर्वनगरप्रख्या माया सा तस्य रक्षसः ॥ १६ ॥

---

* त्रस्तां मृगवधूमिव स्थितां सीताम् । † तदेव भङ्ग्यन्तरेणाह—देवीति—रा.
‡ कश्चिद्दैवतः रामं जिगीषुरपि न व्यक्तं—स्पष्टमेतदस्मासु—रा. केनचित् कृता मायैव इयम् । वस्तुतस्तु मारीचस्यैवेयं मायेत्याह— गन्धर्वेति—गो.

[1] मायया केनचित्त कृतः—ङ.

न स तस्येत्यादि । व्यक्तं—स्पष्टं सः स्वरः तस्य—रामस्य स्वरो न भवति इति । "न कश्चिदपि दैवतः" इति पाठः । दैवतः—अशरीरदेवतासंबन्धीव कश्चित् स्वरः इत्यपि न; अपि तु गन्धर्वनगरप्रख्या—तद्वत् मिथ्या, रक्षसो मायैव—वञ्चनार्थप्रवर्तित एवायं स्वर इत्यर्थः ॥ १६ ॥

न्यासभूताऽसि, वैदेहि! न्यस्ता मयि महात्मना ।
रामेण त्वं, वरारोहे! न त्वां त्यक्तुमिहोत्सहे ॥ १७ ॥

न्यासरूपतया मयि निक्षिप्तां त्वां त्यक्तुं अहं नोत्सहे ॥ १७ ॥

*कृतवैराश्च, वैदेहि! वयमेतैर्निशाचरैः ।
खरस्य निधनादेव जनस्थानवधं प्रति ॥ १८ ॥

इतश्च मया त्यक्तुं न शक्यते इत्याह—कृतवैरा इत्यादि । जनस्थानवधं प्रति—जनस्थानवर्तिस्वपरिकररक्षोवधमुपलक्ष्य प्रवृत्तस्य खरस्य निधनादेव हेतोः वयं एतैः निशाचरैश्च यस्मात् कृतवैराः अतः त्वां त्यक्तुं नोत्सहे इति संबन्धः ॥ १८ ॥

राक्षसाः विविधा वाचो [1] विसृजन्ति महावने ।
हिंसाविहाराः, वैदेहि! न चिन्तयितुमर्हसि ॥ १९ ॥

विविधा वाचो विसृजन्तीति । अस्मद्व्यामोहनार्थमिति शेषः । हिंसैव—साधुजनपीडैव विहारो येषां ते तथा ॥ १९ ॥

---

* खरस्य स्वामिनः निधनात् जनस्थाने वधो यः तं प्रति वयं एतैः निशाचरैः कृतवैराः- गो. एवं कृतवैराः राक्षसाः विविधा वाचो विसृजन्ति अस्मद्व्यामोहनाये-त्युत्तरत्रान्वयः ॥

[1] व्याहरन्ति—ज.

लक्ष्मणेनैवमुक्ता सा क्रुद्धा संरक्तलोचना ।
अब्रवीत् परुषं वाक्यं लक्ष्मणं सत्यवादिनम् ॥ २० ॥
*[1] अनार्यकरुणारम्भ! नृशंस! कुलपांसन!
अहं तव प्रियं मन्ये रामस्य व्यसनं महत् ॥ २१ ॥
रामस्य व्यसनं दृष्ट्वा तेनैतानि प्रभाषसे ।

अनार्यकरुणारम्भेति पाङ्क्तः । विपरीतार्थाभिसंधितस्त्वं अनार्यया—कुत्सितया करुणया भ्रातृविषयया आरम्भः—सेवाप्रवृत्तिः यस्य स तथा । तेनेति । रामव्यसनस्य प्रियत्वेन हेतुनेत्यर्थः ॥२१॥

नैतच्चित्रं सपत्नेषु पापं, लक्ष्मण! यद्भवेत् ॥ २२ ॥
त्वद्विधेषु नृशंसेषु नित्यं प्रच्छन्नचारिषु ।

सपत्नेष्विति । ज्ञातिष्वित्यर्थः ॥ २२ ॥

† सुदुष्टस्त्वं वने रामं एकमेकोऽनुगच्छसि ॥ २३ ॥
मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ।
तन्न सिद्ध्यति, सौमित्रे! तव वा भरतस्य वा ॥ २४ ॥

तन्न सिद्ध्यतीति । मत्परिग्रह इत्यर्थः ॥ २४ ॥

कथमिन्दीवरश्यामं पद्मपत्रनिभेक्षणम् ।
उपसंश्रित्य भर्तारं [2] कामयेयं ‡ पृथग्जनम् ॥ २५ ॥
समक्षं तव, सौमित्रे! प्राणांस्त्यक्ष्ये न संशयः ।
रामं विना क्षणमपि न हि जीवामि भूतले ॥ २६ ॥

---

* अनार्य-दुश्शील, अकरुणारम्भ—दयाप्रसक्तिरहित-गो. रामस्य प्राप्तं महद् व्यसनं तव प्रियमेव स्यादित्यहं मन्ये इत्यन्वयः । † 'प्रच्छन्नचारिषु' इति पूर्वश्लोकोक्तं विवृणोति—सुदुष्ट इति । ‡ पृथग्जनं-क्षुद्रपुरुषं-गो.

[1] अनार्याकरुणा-ङ. [2] कामये पामरं जनम्-ङ.

इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् ।
अब्रवील्लक्ष्मणः सीतां प्राञ्जलिर्विजितेन्द्रियः * ॥ २७ ॥
उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ।
वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु, मैथिलि! ॥ २८ ॥

अप्रतिरूपम् । अत्यन्तानुचितमित्यर्थः ॥ २८ ॥

स्वभावस्त्वेष नारीणां एवं लोकेषु दृश्यते ।
विमुक्तधर्माश्चपलाः तीक्ष्णाः भेदकराः स्त्रियः ॥ २९ ॥

भेदकराः इति । सुतात् पितृमात्रादेरिति शेषः ॥ २९ ॥

न सहे हीदृशं वाक्यं वैदेहि, जनकात्मजे !
श्रोत्रयोरुभयोर्मेऽद्य तप्तनाराचसंनिभम् ॥ ३० ॥
उपशृण्वन्तु मे सर्वे साक्षिभूताः वनेचराः ।
न्यायवादी [1] यथाऽन्यायमुक्तोऽहं परुषं त्वया ॥ ३१ ॥

वनेचराः इति । देवा इति शेषः । तमुपश्रृण्वन्त्विति योजना ॥ ३१ ॥

धिक्! त्वां अद्य [2] विनश्यन्तीं यन्मामेवं विशङ्कसे ।
[3] स्त्रीत्वात् दुष्टस्वभावेन गुरुवाक्ये व्यवस्थितम् ॥ ३२ ॥

धिगिति । यस्मात् मामपि एवं वाचामगोचरदुर्भाववन्तं विशङ्कसे, तत एव दोषात् अद्य विनश्यन्ती—विनशिष्यन्तीं आसन्नानर्थां त्वां धिक् । अतः परं "स्त्रीत्वात् दुष्टस्वभावेन गुरुवाक्ये व्यवस्थितम् । गमिष्ये यत्र काकुत्स्थः" इति पाठः ।

---

* सीतयाऽऽपादितदोषाभावं वदति—विजितेन्द्रिय इति ।

[1] यथावाक्यं—ज. [2] प्रणश्य त्वं—ङ. [3] स्त्रीत्वं दुष्टं—ङ.

अत्र स्त्रीत्वादित्यर्धं त्यक्त्वा गच्छन्ति केचित् । योजनं तु—स्त्रीत्वात् दुष्टस्वभावेन कार्येणोपलक्षिता सती त्वं गुरुवाक्ये—ज्येष्ठनियोगे त्वद्रक्षणविषयके व्यवस्थितं मामप्येवं शङ्कसे इति पूर्वान्वयेन ॥ ३२ ॥

गमिष्ये यत्र काकुत्स्थः स्वस्ति तेऽस्तु, वरानने !
रक्षन्तु त्वां, विशालाक्षि ! समग्राः वनदेवताः ॥ ३३ ॥
निमित्तानि हि घोराणि यानि प्रादुर्भवन्ति मे ।
अपि त्वां सह रामेण पश्येयं पुनरागतः[1] ॥ ३४ ॥

घोराणि यानि निमित्तानि मे प्रादुर्भवन्ति, तैः त्वदुपप्लवं शङ्कमानोऽहं रामेण सह पुनरागतः त्वां पश्येयमपि, तदपि संभवेत् किं ? ॥ ३४ ॥

लक्ष्मणेनैवमुक्ता सा रुदन्ती जनकात्मजा ।
प्रत्युवाच ततो वाक्यं तीव्रं बाष्पपरिप्लुता ॥ ३५ ॥

अथ प्रतिष्ठासुना लक्ष्मणेन अन्यपुरुषसङ्गप्रसङ्गः शङ्क्यते इति मन्यमानया स्वधीदार्ढ्यं प्रकाश्यते—लक्ष्मणेनेत्यादि * ॥ ३५ ॥

गोदावरीं प्रवेक्ष्यामि [2]विना रामेण, लक्ष्मण !
आबन्धिष्येऽथ वा त्यक्ष्ये विषमे देहमात्मनः ॥ ३६ ॥

आबन्धिष्ये इति । रज्जुमिति शेषः । विषमे इति । भृग्वादि-विषमस्थले पातेनेति शेषः ॥ ३६ ॥

---

* वस्तुतस्तु—'निमित्तानि च घोराणि' इत्यादिलक्ष्मणवचनदर्शनेन, लक्ष्मणस्य सीतां त्यक्त्वा गमने नोत्साह आसीदिति गम्यते । ३९ श्लोके 'आश्वासयामास' इति पदं इदं द्रढयति च । एवं लक्ष्मणस्य विलम्बं पश्यन्ती सीता पुनरपि परुषं वाक्यमुवाचेति युक्तं प्रतिभाति ।

[1] एतदनन्तरं—"न वेत्स्येतन्न जानामि वैदेहि ! जनकात्मजे !"—इत्यधिकं—ङ.
[2] हीना—ञ.

पिबाम्यहं विषं तीक्ष्णं * प्रवेक्ष्यामि हुताशनम् ।
न त्वहं राघवादन्यं [1] पदाऽपि पुरुषं स्पृशे ॥ ३७ ॥
इति लक्ष्मणमाक्रुश्य सीता [2] दुःखसमन्विता ।
पाणिभ्यां रुदती दुःखात् उदरं प्रजघान ह ॥ ३८ ॥

दुःखं—सकलकरणपरितापः, शोकस्तु मानसं दैन्यम् ॥ ३८ ॥

तामार्तरूपां विमना रुदन्तीं
सौमित्रिरालोक्य विशालनेत्राम् ।
आश्वासयामास न चैव भर्तुः
तं भ्रातरं किंचिदुवाच सीता ॥ ३९ ॥

भर्तुः भ्रातरं न किञ्चिदुवाचेति । आश्वासनव्याजेन गमनविलम्बं करोतीति कोपेनेति शेषः ॥ ३९ ॥

† ततस्तु सीतामभिवाद्य लक्ष्मणः
कृताञ्जलिः किञ्चिदभिप्रणम्य च ।
अन्वीक्षमाणो बहुशश्च मैथिलीं
जगाम रामस्य समीपमात्मवान् ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे पञ्चचत्वारिंशः सर्गः

---

मौन(४०)मानः सर्गः ॥ ४० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे पञ्चचत्वारिंशः सर्गः

---

* अत्र वाशब्दानुक्त्या, साक्षाद्रावणगृहं न गमिष्यामि, किन्त्वहं स्वरूपेणाग्नौ स्थित्वा माययैव तद्धस्तं गमिष्यामि—इति ध्वनितम् । तदुक्तं कूर्मपुराणे "इति वह्न्यष्टकं जप्त्वा रामपत्नी यशस्विनी । ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा । अथावसथ्याद् भगवान् हव्यवाहो महेश्वरः । आविरासीत् सुदीप्तात्मा तेजसा निर्दहन्निव । सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया । सीतामादाय रामेष्टां पावकोऽन्तरधीयत ॥" इति—ति.

† ततः—एवं उदरताडनपूर्वकरोदनादिदर्शनात् सीताया अनाश्वासनीयत्वनिश्चयानन्तरम् ।

[1] कदाऽपि—ज. [2] शोक—ज.

## षट्चत्वारिंशः सर्गः

[रावणप्रवेशः]

*तया परुषमुक्तस्तु कुपितो राघवानुजः ।
स †विकांक्षन् भृशं रामं प्रतस्थे न चिरादिव ॥ १ ॥

एवं लक्ष्मणे निष्क्रान्ते निःशङ्कं आश्रमं प्रविष्टस्य रावणस्य सीतया सह संभाषणम् । तथेत्यादि । न चिरादिव—शीघ्रमेवेत्यर्थः । विकांक्षन्—विशेषेण कांक्षमाण इति यावत् ॥ १ ॥

तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः‡ ।
अभिचक्राम वैदेहीं परिव्राजकरूपधृत् ॥ २ ॥

अन्तरं—अवकाशम् ॥ २ ॥

§श्लक्ष्णकाषायसंवीतः शिखी छत्री उपानही ।
वामे चांसेऽवसज्याथ शुभे [1]यष्टिकमण्डलू ।
परिव्राजकरूपेण वैदेहीं समुपागमत् ॥ ३ ॥

शिखी उपानहीति व्रीह्यादित्वादिनिः । यष्टिः—त्रिदण्डः ॥ ३ ॥

तामाससादातिबलः भ्रातृभ्यां रहितां वने ।
रहितां चन्द्रसूर्याभ्यां सन्ध्यामिव ‖महत्तमः ॥ ४ ॥

भ्रातृभ्यां—परस्परभ्रातृभ्यां रामलक्ष्मणाभ्याम् ॥ ४ ॥

---

*अथ सीतायाः लक्ष्मणविषयकपरुषभाषणफलं दर्शयत्येकादशभिः सर्गैः—गो. †विकाङ्क्षन्—अनिच्छन्नेव—गो. ‡आस्थितः—अवकाशं प्रतीक्षमाणः स्थितः दशग्रीवः तदेव अन्तरं—अवकाशं आसाद्य—गो. §पूर्वश्लोकस्यैव विवरणमिदम् । ‖महत्तम इत्यभूतोपमा, सन्ध्यायां महतस्तमसोऽसंभवात्—गो.

[1] दण्ड—ङ.

तामपश्यत् ततो बाला [1]रामपत्नीं यशस्विनीम् ।
*रोहिणीं शशिना हीनां ग्रहवत् भृशदारुणः ॥ ५ ॥

ग्रहवत्—हन्तुकामब्रह्मजोमुखभूतविशेषवत् ॥ ५ ॥

[2]तमुग्रं पापकर्माणं जनस्थानरुहा द्रुमाः ।
समीक्ष्य न प्रकम्पन्ते न प्रवाति च मारुतः ॥ ६ ॥
शीघ्रस्रोताश्च तं दृष्ट्वा वीक्षन्तं रक्तलोचनम् ।
[3]स्तिमितं गन्तुमारेभे भयाद्गोदावरी नदी ॥ ७ ॥

शीघ्रस्रोताः-शीघ्रप्रवाहाः । वीक्षन्तं—वीक्षमाणम् । भयादिति । तत्सन्निधानेनेति शेषः ॥ ७ ॥

रामस्य त्वन्तरप्रेप्सुः [4]दशग्रीवस्तदन्तरे ।
उपतस्थे च वैदेहीं भिक्षुरूपेण रावणः ॥ ८ ॥

अन्तरं—अपकारयोग्यं छिद्रम् । तदन्तरे—उभयविरहितदेशकाले ॥ ८ ॥

अभव्यो भव्यरूपेण भर्तारमनुशोचतीम् ।
अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः ॥ ९ ॥

चित्रां-चित्रानक्षत्रम् । अभव्यः-अक्षेमरूपः ॥ ९ ॥

[5]स पापो भव्यरूपेण तृणैः कूप इवावृतः ।
†अतिष्ठत् प्रेक्ष्य वैदेहीं रामपत्नीं यशस्विनीम्[6] ॥ १० ॥

---

* ग्रहः—अङ्गारकः शनैश्चरो वा । रोहिण्याः क्रूरग्रहवीक्षणं लोकानर्थकरम्—गो.
† अतिष्ठत् —तत्सन्निधावुपाविशत्-रा. परन्तु 'अभ्यगच्छत' इति पुरतो दर्शनात् क्रमक्रमश उपसर्पणं एभिः क्रियापदैर्वर्ण्यत इति प्रतिभाति ।

[1] राजपुत्रीं—ज. [2] तमुग्रतेजःकर्माणं—ङ. [3] स्तिमिता—ङ. [4] दशग्रीवो महाबलः-ङ. [5] सहसा—ज. [6] एतदनन्तरं "तिष्ठन् संप्रेक्ष्य च तदा पत्नीं रामस्य रावणः ॥" इत्यधिकं-ङ. ज.

शुभां रुचिरदन्तोष्ठीं पूर्णचन्द्रनिभाननाम् ।
आसीनां पर्णशालायां बाष्पशोकाभिपीडिताम् ॥ ११ ॥
स तां पद्मपलाशाक्षीं पीतकौशेयवासिनीम् ।
अभ्यगच्छत वैदेहीं दुष्टचेता निशाचरः ॥ १२ ॥

पीतकौशेयवासिनीं इति । णिन्यन्तत्वात् ङीप् ॥ १२ ॥

[1]स मन्मथशराविष्टः *ब्रह्मघोषमुदीरयन् ।
अब्रवीत् प्रश्रितं वाक्यं रहिते राक्षसाधिपः ॥ १३ ॥

ब्रह्मघोषं–वेदघोषं ब्राह्मणत्वप्रत्यभिज्ञानार्थं उदीरयन् ॥ १३ ॥

तामुत्तमां [2]स्त्रियं लोके †पद्महीनामिव श्रियम् ।
विभ्राजमानां वपुषा रावणः प्रशशंस ह ॥ १४ ॥
[3]एतावुपचितौ वृत्तौ संहतौ [4]संप्रगल्भितौ ।
पीनोन्नतमुखौ कान्तौ स्निग्धौ तालफलोपमौ ॥ १५ ॥
मणिप्रवेकाभरणौ रुचिरौ तौ पयोधरौ ।

प्रशशंस हेत्यस्यैव प्रपञ्चः—एतावित्यादि । संप्रगल्भितौ–संजातप्रागल्भ्यौ । मणिप्रवेकः–मणिश्रेष्ठः ॥ १५ ॥

चारुस्मिते! चारुदति! चारुनेत्रे! विलासिनि! ॥ १६ ॥
मनो हरसि मे, [5]कान्ते! नदी कूलमिवाम्भसा ।

नदी कर्त्री, कूलं–स्वकूलम् ॥ १६ ॥

---

* ब्रह्मघोषं — 'उपनिषदमावर्तयेत्' इत्युक्तपरिव्राजकोचितवेदघोषं–**गो.**

† पद्मालयत्वपद्माकरत्वादीनां लक्ष्मीचिह्नत्वात्, तत् परित्यज्य आगतां श्रियमिव ॥

[1] दृष्ट्वा कामशराविद्धः–ज. [2] त्रिलोकानां–ज. [3] एतदारभ्यार्धपञ्चकं ङ. ज. पुस्तकयोः 'ऊरू करिकरोपमौ'–इत्येतदनन्तरं दृश्यते । [4] संप्रवल्गितौ–ङ. [5] रामे-ज.

[1] का त्वं ? काञ्चनवर्णाभे ! पीतकौशेयवासिनि ! ॥ १७ ॥

कमलानां शुभां मालां पद्मिनीव हि बिभ्रती ।
ह्रीः कीर्तिः श्रीः शुभा लक्ष्मीः अप्सरा वा, [2] शुभानने ! ॥

[3] भूतिर्वा त्वं, वरारोहे ! रतिर्वा * स्वैरचारिणी ।

ह्रीः–गौरी । श्रीः–ऐश्वर्यप्रधाना भगवच्छक्तिः । लक्ष्मीः–सौभाग्यप्रधाना । भूतिः–अणिमादिसिद्धिः परमेश्वरशक्तिः । रतिः–कामपत्नी ॥ १८ ॥

समाः शिखरिणः † स्निग्धाः पाण्डुराः दशनास्तव ॥ १९ ॥

विशाले विमले नेत्रे रक्तान्ते कृष्णतारके ।
विशालं जघनं पीनं ऊरू करिकरोपमौ ॥ २० ॥

करान्तमितमध्याऽसि सुकेशी संहतस्तनी ।

समाः–समसंस्थानाः शिखरिणः शिखरं–अग्रम् । कुन्दकुट्मलवत् प्रशस्ताग्रा इति यावत् । करान्तेन करतलाङ्गुष्ठप्रदेशिनीचक्रप्रमाणेन मितं मध्यं यस्याः सा तथा ॥ २० ॥

नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ॥ २१ ॥

नैवंरूपा मया नारी दृष्टपूर्वा महीतले ।
[4] रूपमग्र्यं च लोकेषु सौकुमार्यं वयश्च ते ॥ २२ ॥

इह वासश्च कान्तारे चित्तमुन्मादयन्ति मे ।

उन्मादयन्ति–विकृतं कुर्वन्तीति यावत् ॥ २२ ॥

---

* स्वैरचारिणीति इतरत्राप्यन्वेति ॥ † स्निग्धाः–अविरलाः – अच्छिद्रा इति यावत् ।

[1] रौप्यकाञ्चन–ज. [2] वरानने–ङ. [3] भूमि–ङ. [4] रूपमप्रतिमं लोके–ङ

सा प्रतिक्राम, भद्रं ते, न त्वं वस्तुमिहार्हसि ॥ २३ ॥
राक्षसानामयं वासः घोराणां कामरूपिणाम् ।

सा त्वं प्रतिक्राम—निर्याहि ॥ २३ ॥

प्रासादाग्राणि रम्याणि नगरोपवनानि च ॥ २४ ॥
संपन्नानि सुगन्धीनि युक्तान्याचरितुं त्वया ।
*वरं माल्यं वरं [1]भोज्यं वरं वस्त्रं च, शोभने! ॥ २५ ॥
भर्तारं च वरं मन्ये त्वद्युक्तं, असितेक्षणे!
का त्वं भवसि रुद्राणां मरुतां वा? [2]वरानने! ॥ २६ ॥
वसूनां वा, वरारोहे! देवता प्रतिभासि मे ।
[3]नेहागच्छन्ति गन्धर्वाः न देवाः न च किन्नराः ॥ २७ ॥
राक्षसानामयं वासः कथं नु त्वमिहागता?
इह शाखामृगाः सिंहाः द्वीपिव्याघ्रमृगास्तथा ॥ २८ ॥
ऋक्षाः तरक्षवः कङ्काः कथं तेभ्यो न बिभ्यासि?

द्वीपिव्याघ्रौ सबिन्दुनिर्बिन्दू शार्दूलौ । செட்டிப்புலி, வேங்கப்புலி—'तरक्षुस्तु मृगादनः' வரிவேங்கை ॥ २८ ॥

मदान्वितानां घोराणां †कुञ्जराणां तरस्विनाम् ॥ २९ ॥
कथमेका महारण्ये न बिभेषि? वरानने!
काऽसि? कस्य? कुतश्चित्त्वं? किंनिमित्तं च दण्डकान् ॥

---

* वरं—श्रेष्ठं माल्यादि त्वद्युक्तं—तव योग्यं मन्ये, न तु यादृशतादृशं, यद्वा माल्यादिकं त्वद्युक्तं- त्वत्सम्बद्धं सत् वरं—प्रशस्तं भवतीति मन्ये—**गो.** † कुञ्जराणां एका त्वं कथं न बिभेषि, सम्बन्धसामान्यविवक्षया षष्ठी—**रा.** कुञ्जराणां महारण्ये इति वाऽन्वयः ।

[1] गन्धं—**ज.** [2] शुचिस्मिते—**ज.** [3] नेह गच्छन्ति—**ज.**

एका चरसि, कल्याणि! घोरान् राक्षससेवितान् ?
इति प्रशस्ता वैदेही रावणेन [1]दुरात्मना ॥ ३१ ॥

*द्विजातिवेषेण हि तं दृष्ट्वा रावणमागतम् ।
सर्वैरतिथिसत्कारैः पूजयामास मैथिली ॥ ३२ ॥

प्रशस्ता—कृतप्रशंसा ; प्रशंसितेति यावत् ॥ ३२ ॥

[2]उपानीयासनं पूर्वं पाद्येनाभिनिमन्त्र्य च ।
अब्रवीत् सिद्धमित्येव तदा तं सौम्यदर्शनम् ॥ ३३ ॥

---

*द्विजातिवेषेण आगतं तं रावणं—**रा. ति.** हितं—सहितम—**गो.** अथवा आगतं रावणं द्विजातिवेषेण हितं—स्वहितपरं दृष्ट्वा ; 'ब्राह्मणा हि सर्वभूतहितैषिणः' अतोऽयं 'कथं न बिभेषि' इति पृच्छतीति मन्यमाना । ननु 'मनो हरसि मे कान्ते' 'चित्तमुन्मादयन्ति मे' इत्यादिवाक्यं वदन्तं रावणं कथं सीता तन्मनोदोषं न शङ्कितवती ? कथं वा पूजयामासेति चेत्—'यथावस्थितसौन्दर्यवर्णनरूपमिदं सर्वं स्यात' इति भावनया रावणस्य हृदयदोषं नाभ्यूहितवती सीता । अथवा 'आसीनां पर्णशालायां बाष्पशोकाभिपीडिताम्' (११) इति आदौ कथनात् विक्षिप्तचित्तया नावहितं स्यात् रावणवाक्यम् । समीपमागतं द्विजातिवेषं च दृष्ट्वा तावतैव पूजितवतीति गम्यते । गोविन्दराजेन तु (अनन्तरश्लोकव्याख्यायां) मैथिली जनककुलजाततया तद्व्यवहारपरिपाटीविज्ञातकपटवेषाऽपि संन्यासिवेषधारणमात्रेण उद्वेष्टुं—द्वेषं कर्तुं अशक्यं तं न्यमन्त्रयत् । 'काषायदण्डमात्रेण यतिः पूज्यो न संशयः' इति वचनादिति भावः—इत्युक्तम् । अथवा जानन्त्यपि जानकी एतेन विरोधे अपायः स्यादिति बुद्ध्या स्वयं अजानन्तीव नटयित्वा तं संपूज्य सामवाचा उपायेन च प्रेषितुमनाः, यावद्रामाद्यागमनं कालं कथंचित् क्षपयितुमना वा एवं पूजां चकारेति स्यात् । एतत्पक्षे समनन्तरश्लोकानां स्वारस्यं च स्पष्टम् । ननु सीता यदि तं कपटिनं जानाति, तदा 'ब्राह्मणश्चातिथिश्चैष अनुक्तो हि शपेत माम्' (२) इत्यनन्तरसर्गे कथं सीतोक्तिरिति चेत्—सीता पुरतः स्थितं रावणं यद्यपि न जानाति ; किन्तु तस्य हृदयदोषं परं जानाति । अतश्च तस्य दुर्हृदयत्वेऽपि, ब्राह्मणत्वात् मां शपेद्वा इति चिन्तयैव तथोक्तिः युज्यत एव । एवञ्च सीता तं रावणमजानन्ती, ब्राह्मण एव कश्चित् बुद्धिदोषादेवं वदतीति मनुते स्मेति भाति । अधिकमन्यत्र ॥

[1] महात्मना—**ञ.** [2] उपनीय—**ञ.**

पाद्येनाभिनिमन्त्र्येति । सत्कृत्येत्यर्थः । तदा–पाद्यप्रदानानन्तरकाले सौम्यदर्शनं तं सिद्धमित्येवाब्रवीत्–सर्वं पक्वमित्येवाब्रवीत् ॥ ३३ ॥

द्विजातिवेषेण समीक्ष्य मैथिली
समागतं पात्रकुसुम्भधारिणम् ।
अशक्यं उद्द्वेष्टुं [1]उपायदर्शनात्
न्यमन्त्रयत् ब्राह्मणवत् [2]तथागतम् ॥ ३४ ॥

पात्रं–यतिपात्रम् । कुसुम्भं–कुसुम्भवस्त्रं च धरतीति तथा । "अशक्यं उद्द्वेष्टुं उपायदर्शनात् न्यमन्त्रयत् ब्राह्मणवत्तथागतं" इति पाठः । उपायानां–ब्राह्मणत्वप्रतिपत्त्यै रावणेन रचितानां काषायदण्डब्रह्मघोषादीनां दर्शनात् उद्द्वेष्टुं–द्वेषं कर्तुं, उच्छब्दात् उपेक्षितुमशक्यं अनुचितं तथागतं–तथावेषं प्राप्तवन्तं ब्राह्मणवदेव न्यमन्त्रयत्–सीता सत्कृतवती ॥

इयं बृसी, ब्राह्मण! काममास्यतां
इदं च पाद्यं प्रतिगृह्यतामिति ।
इदं च सिद्धं वनजातमुत्तमं
*त्वदर्थं अव्यग्रमिहोपभुज्यताम् ॥ ३५ ॥

तस्यैव प्रकारः—इयं बृसीत्यादि । सिद्धं वनजातमिति । पक्व वन्यपदार्थजातमित्यर्थः ॥ ३५ ॥

निमन्त्र्यमाणः प्रतिपूर्णभाषिणीं
नरेन्द्रपत्नीं प्रसमीक्ष्य मैथिलीम् ।
प्रसह्य तस्या हरणे †[3]धृतं मनः
[4]समर्पयामास वधाय रावणः ॥ ३६ ॥

---

* त्वदर्थं सिद्धं–ति. गो. † धृतं—धीरं यथा तथा, मनोविशेषणं वा–गो. सीताया दर्शनात् पूर्वमेव तस्याः हरणे निश्चितं मनः, इदानीं सीताया दर्शनेन यथाकथञ्चित् हरणे सुदृढं निश्चितमभूदिति वा ॥

[1] अपायदर्शनं–ङ. [2] तदाऽङ्गना–ङ. [3] दृढं–ज. [4] समार्पयत्स्वात्मवधाय–ङ.

प्रसह्येत्यादि । रावणः वधाय–स्वनाशसंपादनाय तस्याः प्रसह्य हरणे मनः धृतं–निश्चितं समर्पयामास–सम्यक् कृतवान् इत्यर्थः ॥

ततः सुवेषं मृगयागतं पतिं
* प्रतीक्षमाणा सहलक्ष्मणं तदा ।
[1] विवीक्षमाणा हरितं ददर्श तत्
महद्वनं नैव तु रामलक्ष्मणौ ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे षट्चत्वारिंशः सर्गः

---

सुवेषं–शोभनाकारम् । मृगयां प्रति गतः मृगयागतः । हरितं–श्यामम् । छल(३७)मानः सर्गः ॥ ३७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे षट्चत्वारिंशः सर्गः

---

## सप्तचत्वारिंशः सर्गः

### [रावणप्रलोभनम्]

रावणेन तु वैदेही तथा पृष्टा [2] जिहीर्षता ।
† परिव्राजक[3]लिङ्गेन शशंसात्मान[4]मात्मना ॥ १ ॥

अथ सीता सत्कृत्य, का? कस्य? इत्यादिप्रश्नस्य उत्तरमुक्त्वा, तस्मिंश्च पृष्टे, तेन च स्वतत्त्वे स्वागमनप्रयोजने चाभिहिते, सीता रोषात् पारुष्यमकरोत् । रावणेनेत्यादि । आत्मानं जिहीर्षता रावणेन तथा पृष्टा–पूर्वसर्गोक्तरीत्या पृष्टा वैदेही आत्मना स्वयमेव आत्मानं शशंस ॥ १ ॥

---

* प्रतीक्षमाणा—प्रतिपालयन्ती । विवीक्षमाणा—तां दिशं विविधं पश्यन्ती–गो.

† परिव्राजकलिङ्गेन रावणेनेत्यन्वयः ।

[1] निरीक्षमाणा–ज. [2] जिहीर्षुणा–ज. [3] रूपेण–ज. [4] मञ्जना–ङ.

*ब्राह्मणश्चातिथिश्चैषः अनुक्तो हि शपेत माम् ।
इति ध्यात्वा मुहूर्तं तु सीता वचनमब्रवीत् ॥ २ ॥

ननु सत्कारमात्रं कर्तव्यं, किं प्रतिवचनेन ? इत्यत्राह—ब्राह्मणश्चेत्यादि । एष अनुक्तः इति छान्दसः असन्धिः । अनुक्तप्रतिवचन इत्यर्थः ॥ २ ॥

दुहिता जनकस्याहं मैथिलस्य महात्मनः ।
सीता नाम्नाऽस्मि, भद्रं ते [1] रामभार्या, द्विजोत्तम ! ॥ ३ ॥

उषित्वा द्वादशसमाः इक्ष्वाकूणां निवेशने ।
†भुञ्जाना मानुषान् भोगान् सर्वकाम[2]समृद्धिनि ॥ ४ ॥

सर्वकामसमृद्धिनि निवेशने इत्यन्वयः ॥ ४ ॥

ततः त्रयोदशे वर्षे राजाऽमन्त्रयत प्रभुः ।
अभिषेचयितुं रामं [3] समेतो राजमन्त्रिभिः ॥ ५ ॥

राज्यकर्तारो मन्त्रिणः—राजमन्त्रिणः, तैः ॥ ५ ॥

तस्मिन् संभ्रियमाणे तु [4] राघवस्याभिषेचने ।
कैकेयी नाम भर्तारं ‡ [5] आर्या सा याचते वरम् ॥ ६ ॥

संभ्रियमाणे—संभ्रियमाणसंभारे । भर्तारं—दशरथं आर्या—मम पूज्या वरं याचते इति द्विकर्मकत्वात् ॥ ६ ॥

प्रतिगृह्य तु कैकेयी श्वशुरं सुकृतेन मे ।
मम प्रव्राजनं भर्तुः भरतस्याभिषेचनम् ॥ ७ ॥

---

* यतिवेषं प्रत्यात्मवंशं सा किमर्थमुक्तवतीत्यत्राह—ब्राह्मणश्चेति—गो. अत्र वक्तव्यं गतसर्गीय ३२ श्लोकटिप्पण्यां द्रष्टव्यम् । † अत्र अमानुषान् भोगान् भुञ्जाना इत्यपि संभवति । ‡ आर्या—पूज्या, मम श्वश्रूरित्यर्थः—गो. अनार्या इत्यपि पाठः—ति.

[1] रामस्य महिषी प्रिया—ञ. [2] समृद्धिनी—ग. [3] सर्वेषां मतमास्थितः—ङ. [4] मध्यमा महिषी विभोः—ङ. [5] अनार्या—ङ.

द्वावयाचत भर्तारं सत्यसन्धं नृपोत्तमम् ।

मे श्वशुरं सुकृतेन वररूपेण–मम भर्तुः प्रव्राजनं, भरतस्याभिषेचनं इति द्वौ वरौ अयाचत ॥ ७ ॥

नाद्य भोक्ष्ये न च स्वप्स्ये न च पास्ये[1] कथंचन ॥ ८ ॥
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ।
इति ब्रुवाणां कैकेयीं श्वशुरो मे स मानदः ॥ ९ ॥
अयाचतार्थैः *अन्वर्थैः न च याच्ञां चकार सा ।

अन्वर्थैः–अनुगतार्थैः, अर्थैः–प्रयोजनकरैः, वाक्यैरिति शेषः, अयाचत । एवं याच्यमानाऽपि सा याच्ञां न चकार–नाङ्गीकृतवतीत्यर्थः॥

†मम भर्ता महातेजाः [2]पञ्चविंशतिवर्षकः ॥ १० ॥

---

* अन्वर्थैः–अर्थानुगतैः, सप्रयोजनैरिति यावत्, उपभोगक्षमैरित्यर्थः, अर्थैः–सुवर्णरत्नादिभिः कैकेयीमयाचत, वरद्वयप्रतिनिधित्वेनैतानर्थान् प्रतिगृहाणेति प्रार्थयामासेत्यर्थः–गो. अन्वर्थैः–' अर्थी येनार्थकृत्येन संव्रजत्यविचारयन् । तमर्थमर्थशास्त्रज्ञाः प्राहुः ' (अर. 43-34) इत्युक्तार्थानुगतैः इत्यर्थः । † नन्विदमयुक्तं, ' ऊनषोडशवर्षोऽयं ' इति विश्वामित्रं प्रति दशरथोक्तेः ; ' उषित्वा द्वादश समाः ' इत्यत्रोक्तेश्चेति चेत्—न—अल्पान्तरत्वात् । अतितरुणावस्थायामपि राज्यं त्यक्तवानित्यर्थे तात्पर्येणाऽस्थया तथोक्तेः । यद्वा अतिक्रान्तपञ्चविंशक इत्यर्थः–ति. पञ्चविंशकः–पञ्चविंशेन युक्ताः काः–त्रयः यस्य सः, अष्टाविंशतिवार्षिक इत्यर्थः । अत एव ' ऊनषोडशवर्षो मे रामो राजीवलोचनः ' इति विश्वामित्रं प्रति दशरथोक्त्या ' उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने ' इति रावणं प्रति सीतोक्त्या च सिद्धस्य वनप्रवेशसमये अष्टाविंशतिवार्षिकत्वस्य नापलापः । निरूपितं चैतद्विस्तरशः ' ऊनषोडशवर्षो मे ' इत्यत्र व्याख्याने–रा. रामस्य जन्मारभ्य द्वादशे वर्षे विश्वामित्रागमनम् । तदनन्तरं वैदेह्या सह नगरे द्वादशवर्षाणि वासं कृतवान् । ततः परं त्रयोदशे यौवराज्याभिषेकारंभः । ततश्च वनप्रवेशसमये रामः पञ्चविंशतिवर्षोर्ध्वः । ततो मुनीनामाश्रमेषु दश वत्सराः । पञ्चवट्यां त्रयः । वनवासस्य चतुर्दशे वर्षे सीतापहरणम्–गो.

[1] कदाचन–ज. [2] वयसा पञ्चविंशकः–ग.

अष्टादश हि वर्षाणि मम जन्मनि गण्यते ।

मम जन्मनीति । जन्मारभ्येति यावत् । अत्र काचित् काकदन्त-परीक्षा रामविषयिण्यस्ति । सा तु उपेक्ष्यते । यद्वा लिखामः—

द्वादशे तु मुनेः सङ्गः सीतया चानया सह ।
पुरे च वत्सरं वासः पञ्चविंशे वनागमः ॥
मुन्याश्रमेष्वथ दश पञ्चवट्यां ततस्त्रयः ।
अथोनचत्वारिंशे स्यात् सीतापहरणं त्विति ॥

ततश्च पञ्चविंशतिवर्षक इत्यस्य वनानिर्गमकाले इति शेषः ॥ १० ॥

रामेति प्रथितो लोके [1]गुणवान् सत्यवान् शुचिः ॥ ११ ॥
विशालाक्षो महाबाहुः सर्वभूतहिते रतः ।
*[2]कामार्तस्तु [3]महातेजाः पिता दशरथः स्वयम् ॥ १२ ॥
कैकेय्याः प्रियकामार्थं तं रामं नाभ्यषेचयत् ।
अभिषेकाय तु पितुः समीपं राममागतम् ॥ १३ ॥
कैकेयी मम भर्तारं इत्युवाच [4]धृतं वचः ।
तव पित्रा समाज्ञप्तं ममेदं शृणु, राघव ! ॥ १४ ॥
भरताय प्रदातव्यं इदं राज्यमकण्टकम् ।
त्वया हि खलु वस्तव्यं नव वर्षाणि पञ्च च ॥ १५ ॥
वने प्रव्रज, काकुत्स्थ ! पितरं मोचयानृतात् ।

पितरं अनृतान्मोचयेति । तत्प्रवर्तितवरानुपालनेनेति शेषः ॥

---

* कामार्त इति । कामार्ततया प्रथमं 'तव यत् प्रियं तत्करिष्यामि' इति प्रतिज्ञाय, पश्चाद्रामप्रव्राजने वृत्ते प्रतिज्ञाभङ्गं कर्तुमक्षमः नाभ्यषेचयदित्यर्थः–गो.

[1] सत्यवान् शीलवान्–ज. [2] कामार्थश्च–ङ. [3] महाराजः–ज.

[4] धृष्ट–ङ. द्रुतं–ज.

तथेत्युक्त्वा च तां रामः कैकेयीमकुतोभयः ॥ १६ ॥

चकार तद्वचः तस्याः मम भर्ता दृढव्रतः ।
दद्यान्न प्रतिगृह्णीयात् सत्यं ब्रूयान्न चानृतम् ॥ १७ ॥

एतद् ब्राह्मण! रामस्य [1]ध्रुवं व्रतमनुत्तमम् ।
तस्य भ्राता तु *[2]वैमात्रः लक्ष्मणो नाम वीर्यवान् ॥
रामस्य पुरुषव्याघ्रः सहायः समरेऽरिहा ।

वैमात्र इति । विभिन्नायाः मातुरपत्यं वैमात्रः । मातृशब्दस्य स्वस्रादित्वेन स्त्रीप्रत्ययाभावात् न ठक् । असंख्यादिपूर्वत्वात् नापि "मातुरुत्" इत्युत् । अतः केवलं आपत्योऽण् । भिन्नोदरभ्रातेत्यर्थः ॥ १८ ॥

स भ्राता लक्ष्मणो नाम [3]धर्मचारी दृढव्रतः ॥ १९ ॥

अन्वगच्छत् धनुष्पाणिः प्रव्रजन्तं †मया सह ।
जटी तापसरूपेण मया सह सहानुजः ॥ २० ॥

प्रविष्टो दण्डकारण्यं धर्मनित्यो [4]जितेन्द्रियः ।
ते वयं प्रच्युता राज्यात् कैकेय्यास्तु कृते त्रयः ॥ २१ ॥

विचराम, द्विजश्रेष्ठ! वनं गम्भीरमोजसा ‡ ।
समाश्वस मुहूर्तं तु शक्यं वस्तुमिह त्वया ॥ २२ ॥
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् [5] ।

मुहूर्तं तु समाश्वसेति । विश्रान्तिं कुर्वित्यर्थः ॥ २२ ॥

---

* द्वयोर्मात्रोरपत्यं पुमान् द्वैमात्रः—गो. सापत्नीकमातुः पुत्र इत्यर्थः—ती.

† मयासह अन्वगच्छदित्यन्वयः—गो. ‡ ओजसा—स्ववीर्येण—रा.

[1] व्रतं धृ?—ज. [2] द्वैमात्रः—ङ. [3] ब्रह्मचारी—ज. [4] दृढव्रतः—ज.

[5] एतदनन्तरं "रुरून् गोधान् वराहांश्च हत्वाऽऽदायामिषं बहु ।" इत्यधिकं—ज.

*स त्वं नाम च गोत्रं च कुलं चाचक्ष्व तत्त्वतः ॥ २३ ॥
एकश्च दण्डकारण्ये किमर्थं चरसि, द्विज!
एवं ब्रुवन्त्यां सीतायां रामपत्न्यां महाबलः ॥ २४ ॥
प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ।
†येन वित्रासिता लोकाः सदेवासुर[1]पन्नगाः ॥ २५ ॥
अहं स रावणो नाम, सीते! रक्षोगणेश्वरः ।
त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् ॥ २६ ॥
रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते !

दृष्ट्वेति । पूर्वं श्रुत्वा, अद्य दृष्ट्वा चेत्यर्थः ॥ २६ ॥

बह्वीनामुत्तमस्त्रीणां आहृतानामितस्ततः ॥ २७ ॥
सर्वासामेव, भद्रं ते, ममाग्रमहिषी भव ।
लङ्का नाम समुद्रस्य मध्ये मम महापुरी ॥ २८ ॥
सागरेण परिक्षिप्ता निविष्टा [2]नगमूर्धनि ।
तत्र, सीते! मया सार्धं वनेषु [3]विहरिष्यसि ॥ २९ ॥

---

*ननु सन्यासिनं प्रति कुलगोत्रप्रश्नोऽनुपपन्नः । एकाकितया अरण्ये सञ्चारश्च यतेर्धर्म एव । अतोऽसङ्गत इव प्रतिभातीति चेत्, उच्यते—पूर्वाश्रमनामगोत्रप्रश्नोऽयम् । 'भिक्षार्थं ग्रामं प्रविशेत्' इति श्रुत्या भिक्षुभिर्ग्रामसमीपारण्ये वस्तव्यम्, न तु ग्राम-प्रसङ्गरहितेऽरण्ये इति, 'कथं भवान् भिक्षाप्रदजनरहिते चरति?' इति प्रश्न उपपद्यते—**गो.** परन्तु सीता रावणं 'ब्राह्मण!' 'द्विजश्रेष्ठ!' 'द्विज!' इत्येव संबुध्यतीत्यवधेयमत्र ।
†यद्यपि परिव्राजकरूपेणागतवतः रावणस्य हठात् एवंवादः न चातुर्यावहः, परन्तु 'स मन्मथशराविष्टः' (46-13) इत्यादिना तस्य कामोपहतचित्तत्वप्रतीत्या, कामपर-वशानां स्वप्रलोभनीयनारीपुरतः विकत्थनस्यावश्यत्वात् हठात् स्वप्रभावमेव वर्णयितुमुपक्रमति रावणः । अत एव पूर्वश्लोके 'प्रत्युवाचोत्तरं तीव्रं' इति दृश्यते । तीव्रं—त्वरितं—अवशत इति यावत् ॥

[1] मानुषाः—ज. [2] गिरि—ज. [3] विचरिष्यसि—ज.

न चास्यारण्यवासस्य स्पृहयिष्यसि, भामिनि !

तत्र—लङ्कायाम् । वनेष्विति उपवनेष्वित्यर्थः ॥ २९ ॥

*पञ्च [1]दास्यः सहस्राणि सर्वाभरणभूषिताः ॥ ३० ॥

सीते ! परिचरिष्यन्ति भार्या भवसि मे यदि ।
रावणेनैवमुक्ता तु कुपिता जनकात्मजा ॥ ३१ ॥

प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ।
महागिरिमिवाकम्प्यं महेन्द्र[2]सदृशं पतिम् ॥ ३२ ॥

महोदधिमिवाक्षोभ्यं अहं राममनुव्रता ।
सर्वलक्षणसम्पन्नं †न्यग्रोधपरिमण्डलम् ॥ ३३ ॥

---

* रक्षोयोनौ तमोगुणप्रधानायां जातत्वात् उद्रिक्ततमसा भगवन्मायया ज्ञानाच्छादनादेवमुक्तिः । सर्वथा तत्त्वज्ञो रावणः कथमेवं वदेदिति तु श्रद्धाजाड्यमेव, तत्त्वज्ञचिह्नानुपलम्भात् । सीतारामौ सर्वेश्वरावित्येतावन्मात्रज्ञानं रावणस्यास्त्येवेत्यपि श्रद्धाजाड्यमेव । विष्णुपुराणादिविरोधात् ! एवञ्चेदृशोक्तीनां यद्वातद्वाप्रकारेणान्यथायोजनप्रयासः तीर्थादीनां विफल एवेति. **महेश्वरतीर्थः**—त्वां तु काञ्चनवर्णाङ्गीमित्यादिश्लोकस्य प्रातीतिकार्थः स्पष्टः । वस्तुतस्तु—त्वां—ममेष्टदेवतामित्यर्थः । दृष्ट्वा स्वकेषु पुत्रमित्रादिषु दारेषु च रतिं—इच्छां नाधिगच्छामि । ममेष्टदेवतायास्तव दर्शनेनानन्दपूर्णोऽहं सर्वतो निवृत्तोऽस्मीति भावः । बह्वीनामिति । इतस्ततः आहृतानां उत्तमस्त्रीणां सर्वासां मम मे या अग्रमहिषी तस्याश्च मम च भव, ईश्वरीति शेषः । लङ्केति । तत्र—लङ्कायां वनेषु विहरिष्यसि यदि, तदाऽरण्यवासं न स्पृहयिष्यसि । पञ्चेति । पञ्चसहस्राणि दास्यः मे—मया सार्धं परिचरिष्यन्ति, यदि तवेति शेषः—तदा भार्या—भया—कान्त्या आर्या—पूज्याऽसीति सम्बन्धः । रावणेनेति । पुत्रसदृशेनेति शेषः । एवं प्रार्थनारूपेणोक्ताऽपि अतितामसभक्तो रावणः श्रीरामवियोगं संपादयतीति कुपिता जनकात्मजा प्रत्युवाचेति सम्बन्धः ॥ † यद्वा 'कूपोदकं वटच्छाया युवतीनां स्तनद्वयम् । शीतकाले भवेदुष्णं उष्णकाले च शीतलम्' इत्युक्तरीत्या सर्वकालेऽपि सर्वजनानुकूलम्—गो.

[1] दासी—ङ. [2] सदृशद्युतिम्—ङ.

सत्यसन्धं [1]महाभागं अहं राममनुव्रता ।

न्यग्रोधपरिमण्डलं—न्यग्रोधवत् बहुशाखबन्धुस्तोमं, तद्वत् सर्वाश्रयणीयं च ॥ ३३ ॥

महाबाहुं महोरस्कं *सिंहविक्रान्तगामिनम् ॥ ३४ ॥

नृसिंहं सिंहसंकाशं अहं राममनुव्रता ।

सिंहस्य विक्रान्तः—पदविक्षेपः तथा । पदविक्षेपवत् गमनशीलमित्यर्थः ॥ ३४ ॥

पूर्णचन्द्राननं रामं [2]राजवत्सं जितेन्द्रियम् ॥ ३५ ॥

पृथुकीर्तिं महात्मानं अहं राममनुव्रता ।

राजवत्सं—दशरथपुत्रम् । राजा चासौ वत्सश्रेष्ठः तरुणश्चेत्यपि ॥

त्वं पुनः जम्बुकः सिंहीं मामिच्छसि सुदुर्लभाम् ॥ ३६ ॥

नाहं शक्या त्वया स्प्रष्टुं आदित्यस्य प्रभा यथा ।

पादपान् काञ्चनान् नूनं बहून् पश्यसि मन्दभाक् ॥ ३७ ॥

राघवस्य प्रियां भार्यां यस्त्वमिच्छसि [3]रावण !

काञ्चनपादपदर्शनं मुमूर्षुलक्षणम् । मन्दं—क्षीणं आयुरादिकं भजतीति मन्दभाक् ॥ ३७ ॥

क्षुधितस्य हि सिंहस्य मृगशत्रोः तरस्विनः[4] ॥ ३८ ॥

---

* सिंहवत् सगर्वगमनशीलम्-ति. गो.

[1] महाबाहु–ङ. [2] राजीवाक्षं–ङ. [3] राक्षस–ज. [4] एतदनन्तरं—"आस्यं प्रविश्य तरसा जिह्वामाहर्तुमिच्छसि । वल्मीकान्ताद्विनिरसृत्य प्रत्याशां वीक्षितस्य च ॥"—प्रक्षिप्तं–ङ.

आशीविषस्य [1] वदनात् दंष्ट्रामादातुमिच्छसि ।
मन्दरं पर्वतश्रेष्ठं [2] पाणिना हर्तुमिच्छसि ॥ ३९ ॥

कालकूटं विषं पीत्वा स्वस्तिमान् गन्तुमिच्छसि ।
अक्षि सूच्या प्रमृजसि जिह्वया लेक्षि च क्षुरम् ॥ ४० ॥
राघवस्य प्रियां भार्यां योऽधिगन्तुं त्वमिच्छसि ।

अक्षि इति पृथक् पदम् ॥ ४० ॥

*अवसज्य शिलां कण्ठे समुद्रं तर्तुमिच्छसि ॥ ४१ ॥
सूर्याचन्द्रमसौ चोभौ पाणिभ्यां हर्तुमिच्छसि ।
यो रामस्य प्रियां भार्यां प्रधर्षयितुमिच्छसि ॥ ४२ ॥

अग्निं प्रज्वलितं [3] दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि ।
† कल्याणवृत्तां रामस्य यो भार्यां हर्तुमिच्छसि ॥ ४३ ॥

अयोमुखानां शूलानां ‡ [4] अग्रे चरितुमिच्छसि ।
रामस्य सदृशीं भार्यां [5] योऽधिगन्तुं त्वमिच्छसि ॥ ४४ ॥

यदन्तरं सिंहसृगालयोर्वने
यदन्तरं स्यन्दिनिकासमुद्रयोः ।
§ सुराग्र्यसौवीरकयोर्यदन्तरं
तदन्तरं [6] वै तव राघवस्य च ॥ ४५ ॥

---

* अवसज्य—बध्वा–गो. † कल्याणवृत्तां—शुभाचाराम्–गो. ‡ अग्रे—तादृशशूलाग्रेषु पादं निक्षिप्येत्यर्थः । § सुराग्र्यं—श्रेष्ठमद्यं–गो. सुरा अग्रया–पूर्वमुत्पन्ना यस्मात्, अमृतमित्यर्थः–रा.

[1] तु मुखात्–ङ. [2] पाणिभ्यां–ङ. [3] दीप्तं, स्पृष्ट्वा–ङ. [4] मध्ये–ज. [5] योऽभिगन्तुं–ङ. [6] दाशरथेस्तवैव च–ज.

स्यन्दिनिका—क्षुद्रनदी. स्यन्दनधर्मवान् कूपवाप्यादिश्च ।
सुराग्र्यस्य—सोमराजस्य अमृतमयस्य सौवीरस्य—काञ्जिकस्य चेत्यर्थः ॥

यदन्तरं काञ्चनसीसलोहयोः
यदन्तरं चन्दनवारिपङ्कयोः ।
यदन्तरं हस्तिबिडालयोर्वने
तदन्तरं दाशरथेस्तवैव च ॥ ४६ ॥

हस्तिबिडालयोः—गजमार्जारयोः ॥ ४६ ॥

यदन्तरं वायसवैनतेययोः
यदन्तरं मद्गुमयूरयोरपि ।
यदन्तरं [1]सारसगृध्रयोर्वने ।
तदन्तरं दाशरथेः तवैव च ॥ ४७ ॥

मद्गुः—जलवायसः ॥ ४७ ॥

तस्मिन् सहस्राक्षसमप्रभावे
रामे स्थिते कार्मुकबाणपाणौ ।
*हृताऽपि तेऽहं न जरां गमिष्ये
[2]वज्रं यथा मक्षिकयाऽवगीर्णम् ॥ ४८ ॥

---

* मक्षिकया अवगीर्णं—ग्रस्तं वज्रं—हीररत्नं, मक्षिकया तण्डुलखण्डभ्रान्त्या ग्रस्तं हीररत्नमित्यर्थः ; यथा न जीर्णं भवति । यद्वा—मक्षिकया सहावगीर्णं—भुक्तं वज्रं—आज्यं, 'वज्रो वा आज्यम्' इति श्रुतेः, यथा न जीर्णं भवतीत्यर्थः—गो. ते—त्वया हृताऽपि अहं न जरां गमिष्ये—अचिरादेव मां रामः मोचयेदेवेति तात्पर्यम् । अथवा मदपहरणं जीर्णीकर्तुं त्वया सर्वथाऽशक्यमित्यर्थः । भवदभिमतं सर्वथा न सिध्येदिति यावत् ।

[1] हंसक—ङ. [2] आज्यं—ञ.

जरां—जीर्णावस्थाम् । सुखोदर्कतामिति यावत् । वज्रं—आज्यम् । "वज्रो वा आज्यम् ।" मक्षिकया सह अवगीर्णं भुक्तमित्यर्थः ॥

इतीव तद्वाक्यमदुष्टभावा
[1]सुधृष्टमुक्त्वा रजनीचरं तम् ।
गात्रप्रकम्पव्यथिता बभूव
*वातोद्धता सा कदलीव तन्वी ॥ ४९ ॥

इतीव—इत्येव । तत्—उक्तरूपम् । वातोद्धता—आहिताग्न्यादिः, उद्धतवाता—महावातप्रकम्प्यमानेति यावत् ॥ ४९ ॥

तां वेपमानामुपलक्ष्य सीतां
स रावणो मृत्युसमप्रभावः ।
कुलं बलं नाम च कर्म च स्वं
समाचचक्षे †भयकारणार्थम् ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे सप्तचत्वारिंशः सर्गः

भयकारणार्थं—भयोत्पादनार्थमित्यर्थः । मीन(५०)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायामरण्यकाण्डे सप्तचत्वारिंशः सर्गः

## अष्टचत्वारिंशः सर्गः

[सीताधिक्कारः]

‡एवं ब्रुवन्त्यां सीतायां संरब्धः परुषं वचः ।
ललाटे भ्रुकुटीं कृत्वा रावणः प्रत्युवाच ह ॥ १ ॥

---

* वातोद्धता—वाताहता—गो. † भूयोऽपि भयोत्पादनायेत्यर्थः । ‡ एवं परुषं वचः ब्रुवन्त्यां संरब्धः—इत्यन्वयः ॥

[1] सुदुःख—ङ. सुदुष्ट—ज.

अथ कुलादिकमाचचक्षे इति यत् पूर्वसर्गान्ते उक्तं तस्यैव प्रपञ्चः । एवं ब्रुवन्त्यामित्यादि ॥ १ ॥

साक्षात् वैश्रवणस्याहं [1] सापत्नः, वरवर्णिनि !
रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥ २ ॥

अहं वैश्रवणस्य सापत्नः—ज्ञातित्वे साक्षात् भवामि इति शेषः । एतेन कुलप्राशस्त्यमुक्तम् । सपत्नीशब्दः इह सर्वत्र ज्ञातिवाची ॥

यस्य देवाः सगन्धर्वाः पिशाचपतगोरगाः ।
विद्रवन्ति [2] भयाद्भीताः मृत्योरिव सदा प्रजाः ॥ ३ ॥

येन वैश्रवणो [3] राजा [4] द्वैमात्रः कारणान्तरे ।
* द्वन्द्वमासादितः क्रोधात् रणे विक्रम्य निर्जितः ॥ ४ ॥

द्वैमात्र इति । द्वितीया माता द्विमाता । तस्याः अपत्यं द्वैमात्रः । "मातुरुत्संख्यासंभद्रपूर्वायाः" इत्युत्वं न भवति । द्विशब्दस्येह संख्याप्राधान्याविवक्षणात् । कारणान्तर इति । निमित्तान्तर इत्यर्थः । द्वन्द्वं—द्वन्द्वयुद्धम् ॥ ४ ॥

[5] यद्भयार्तः परित्यज्य † स्वमधिष्ठानमृद्धिमत् ।
कैलासं पर्वतश्रेष्ठं अध्यास्ते नरवाहनः ॥ ५ ॥

स्वमधिष्ठानम्—स्वां पुरीं—अलकापुरीमिति यावत् । कैलासमध्यास्त इति । 'अधिशीङि'ति कर्मत्वं । प्रबलाश्रयहेतवे इति शेषः ॥

---

* द्वंद्वमासादितः वैश्रवणः विक्रम्य निर्जित इत्यन्वयः । † स्वं अधिष्ठानं—लङ्कां—रा. ति. इयं कथा उत्तरकाण्डे 11 सर्गे द्रष्टव्या ॥

[1] सापत्न्यः—ङ. [2] सदा भीताः—ज. [3] भ्राता—ज. [4] वैमात्रः—ज.
[5] मद्भयार्तः—ज.

*यस्य तत् पुष्पकं नाम विमानं कामगं शुभम् ।
वीर्यादेवार्जितं, भद्रे! येन यामि विहायसम् ॥ ६ ॥

येन—पुष्पकेण ॥ ६ ॥

मम संजातरोषस्य मुखं दृष्ट्वैव, मैथिलि!
विद्रवन्ति परित्रस्ताः सुराः शक्रपुरोगमाः ॥ ७ ॥

यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः ।
तीव्रांशुः [1]अमृतांशुश्च भयात् संपद्यते [2]रविः ॥ ८ ॥

रविः तीव्रांशुरपि भयात्—मद्भयात् अमृतांशुश्च संपद्यते ॥

निष्कम्पपत्राः तरवः नद्यश्च स्तिमितोदकाः ।
भवन्ति यत्र यत्राहं तिष्ठामि विचरामि च ॥ ९ ॥

†मम पारे समुद्रस्य लङ्का नाम पुरी शुभा ।
संपूर्णा राक्षसैर्घोरैः यथेन्द्रस्यामरावती ॥ १० ॥

पारे समुद्रस्येति । "पारे मध्ये षष्ठ्या वा" इति विभाषाधिकारात् अव्ययीभावाभावः ॥ १० ॥

प्राकारेण परिक्षिप्ता पाण्डरेण विराजता ।
हेमकक्ष्या पुरी रम्या वैडूर्यमयतोरणा ॥ ११ ॥

पाण्डरेणेति । सुधालेपवशादिति शेषः । हेमकक्ष्या—हेममय्यः कक्ष्याः—अवच्छेदाः यस्याः सा तथा ॥ ११ ॥

---

* उत्तरकाण्डे 15 सर्गे इयं कथा द्रष्टव्या । † मम पुरीत्यन्वयः ।

[1] शिशिरांशुश्च—ङ. ञ. [2] दाव—ञ.

हस्त्यश्वरथसंबाधा तूर्यनादविनादिता[1] ।
[2] सर्वकालफलैर्वृक्षैः * संकुलोद्यानशोभिता ॥ १२ ॥
तत्र त्वं वसती, सीते! राजपुत्रि! मया सह ।
न स्मरिष्यसि नारीणां मानुषीणां, मनस्विनी ॥ १३ ॥

नारीणां न स्मरिष्यसीति । 'अधीगर्थे'ति षष्ठी ॥ १३ ॥

भुञ्जाना मानुषान् भोगान् दिव्यांश्च, वरवर्णिनि!
न स्मरिष्यसि रामस्य मानुषस्य † गतायुषः ॥ १४ ॥
‡ स्थापयित्वा प्रियं पुत्रं राज्ये दशरथेन यः ।
मन्दवीर्यः सुतो ज्येष्ठः ततः [3] प्रस्थापितो ह्ययम् ॥ १५ ॥
तेन किं भ्रष्टराज्येन रामेण § गतचेतसा ।
करिष्यसि, विशालाक्षि! तापसेन तपस्विना ॥ १६ ॥

तापसेन—शोच्येन । तपस्विना—अशूरेण ॥ १६ ॥

[4] सर्वराक्षसभर्तारं [5] कामात् स्वयमिहागतम् ।
न मन्मथशराविद्धं प्रत्याख्यातुं त्वमर्हसि ॥ १७ ॥
प्रत्याख्याय हि मां, भीरु! [6] परितापं गमिष्यसि ।
चरणेनाभिहत्येव ‖ पुरूरवसमुर्वशी ॥ १८ ॥

पुरूरवसं राजानं चरणेनाभिहत्य उर्वशीव तापं—पश्चात्तापं गमिष्यसीति । यथा श्रुतौ पुराणे च प्रसिद्धम् ॥ १८ ॥

---

* संकुलेति पृथक्पदम् । सर्वकालफलैर्वृक्षैः संकुला—व्याप्ता । † गतायुषः—गतप्रायायुषः, अल्पायुष इत्यर्थः—गो. ‡ प्रियं पुत्रं—भरतम् । § गतचेतसा—कर्तव्याकर्तव्यविमूढमनसा—गो. ‖ ऊर्वशी किल स्वयमेव प्रार्थयन्तं पुरूरवसं प्रथमं निरस्य, पश्चात्तापेन पुनस्तमागतेति पौराणिकी कथा—गो. इयं कथा पद्मपुराणे दृश्यते ।

[1] एतदनन्तरं "शतयोजनविस्तीर्णा त्रिंशद्योजनमायता" इत्यधिकं—ङ. [2] सर्वकाम—ञ. [3] प्रव्राजितो वनम्—ङ. [4] यक्ष—ङ. रक्ष—ञ. [5] कामय स्वयमागतम्—ञ. [6] पश्चात्तापं—ञ.

अङ्गुल्या न समो रामः मम युद्धे स मानुषः ।
तव भाग्येन * संप्राप्तं भजस्व, वरवर्णिनि ! ॥ १९ ॥

अङ्गुल्या न समः इति । अङ्गुलिबलेनापि तुल्यबलो न भवतीत्यर्थः ॥ १९ ॥

एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना ।
अब्रवीत् परुषं वाक्यं रहिते राक्षसाधिपम् ॥ २० ॥

रहिते—रामरहिते आश्रमे स्थितं इति शेषः ॥ २० ॥

कथं वैश्रवणं देवं सर्व[1]भूतनमस्कृतम् ।
भ्रातरं व्यपदिश्य त्वं अशुभं कर्तु[2]मिच्छसि ॥ २१ ॥
अवश्यं विनशिष्यन्ति सर्वे, रावण ! राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ २२ ॥
अपहृत्य शचीं भार्यां शक्यमिन्द्रस्य जीवितुम् ।
न च रामस्य भार्यां मां [3]अपनीयास्ति जीवितम् ॥ २३ ॥
जीवेच्चिरं वज्रधरस्य [4]हस्तात्
शचीं प्रधृष्याप्रतिरूपरूपाम् ।
न मादृशीं, राक्षस ! [5]दूषयित्वा
पीतामृतस्यापि तवास्ति मोक्षः ॥ २४ ॥

† इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे अष्टचत्वारिंशः सर्गः

---

* संप्राप्तं—मामिति शेषः । † अत्र सर्गे रावणोक्तौ—" सप्तसप्तकवेत्ताऽहं अष्टाष्टकविभूषितः । पञ्चपञ्चकतत्त्वज्ञः रावणोऽहं भजस्व माम् ॥ "—इति श्लोकः क्वचित्पठ्यते । स कतकाद्यव्याख्यातत्वात् प्रक्षिप्त इति ज्ञायते । तदर्थस्तु—सप्तसप्तकं—षडंगसहितवेदोपवेदसहितचतुर्दशविद्यारूपं तद्वेत्ता । अष्टाष्टकविभूषितः—षष्टिकलाभूषितः । पञ्चपञ्चकतत्त्वज्ञः—पञ्चविंशतितत्त्वस्वरूपवेत्ता इति—ति.

[1] देव—ज. [2] मर्हसि—ङ. [3] आनीय स्वस्तिमान् भवेव—ज. [4] पश्चात्—ज.
[5] धर्षयित्वा—ज.

अप्रतिरूपं—अनुपमं रूपं यस्याः सा तथा। पीतं अमृतं येन स तथा। वीर(२४)मानः सर्गः ॥ २४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे अष्टचत्वारिंशः सर्गः

## एकोनपञ्चाशः सर्गः

[सीतापहरणम्]

सीतायाः वचनं श्रुत्वा दशग्रीवः प्रतापवान्।
हस्ते हस्तं [1]समाहन्य चकार सुमहद्वपुः ॥ १ ॥

क्रुद्धेन गृहीतनिजरूपेण रावणेन यस्मै आगतं तत् कर्म कृतम्। सीतायाः इत्यादि। हस्ते हस्तं समाहन्येति। समाहत्येति यावत्। मान्तानुदात्तोपदेशानामिव 'वा ल्यपि' इति अनुनासिकलोपे विकल्पः। अमान्तस्य तु नित्य एव सः। *भुजेन भुजास्फालनं शूराणां संनाहविशेषः ॥ १ ॥

†स मैथिलीं पुनर्वाक्यं बभाषे [2]च ततो भृशम्।
नोन्मत्तया श्रुतौ मन्ये मम वीर्यपराक्रमौ ॥ २ ॥

न श्रुतौ मन्ये इति। प्रागुक्ताविति शेषः। २ ॥

उद्वहेयं भुजाभ्यां तु मेदिनीमम्बरे स्थितः।
आपिबेयं समुद्रं च हन्यां मृत्युं रणे स्थितः ॥ ३ ॥

---

* हस्ततलयोरेव घट्टनं वा विवक्षितम्। भुजास्फालनं तु समयोर्घर्षणायामेव प्रसिद्धम्। † 'चकार सुमहद्वपुः' इत्यस्यैव प्रपञ्चो वा दशमश्लोकपर्यन्तम्।

[1] समा हत्य—ङ. [2] वाक्यकोविदः—अ.

अर्कं [1]रुन्ध्यां शरैस्तीक्ष्णैः विभिन्द्यां हि महीतलम् ।
*[2]कामरूपिणमुन्मत्त ! पश्य मां कामदं पतिम् ॥ ४ ॥

एवमुक्तवतस्तस्य [3]सूर्यकल्पे शिखिप्रभे ।
क्रुद्धस्य †हरिपर्यन्ते रक्ते नेत्रे बभूवतुः ॥ ५ ॥

हरिपर्यन्ते—श्यामपर्यन्तप्रदेशे ॥ ५ ॥

सद्यः सौम्यं परित्यज्य [4]भिक्षुरूपं स रावणः ।
[5]स्वं रूपं कालरूपाभं भेजे वैश्रवणानुजः ॥ ६ ॥

संरक्तनयनः श्रीमान् तप्तकाञ्चन[6]कुण्डलः ।
क्रोधेन महताऽऽविष्टः नीलजीमूतसंनिभः ॥ ७ ॥

दशास्यः [7]कार्मुकी बाणी बभूव क्षणदाचरः ।
स परिव्राजकच्छद्म महाकायो विहाय तत् ॥ ८ ॥

परिव्राजकच्छद्मेति । परिव्राजकात्मतया रूपमित्यर्थः ॥ ८ ॥

[8]प्रतिपद्य स्वकं रूपं रावणो राक्षसाधिपः ।
[9]संरक्तनयनः क्रोधात् जीमूतनिचयप्रभः ॥ ९ ॥
रक्ताम्बरधरस्तस्थौ स्त्रीरत्नं [10]प्रेक्ष्य मैथिलीम् ॥ १० ॥

[11]स तामसितकेशान्तां ‡ भास्करस्य प्रभामिव ।
वसनाभरणोपेतां मैथिलीं रावणोऽब्रवीत् ॥ ११ ॥

---

* कामरूपेण (पा.)—स्वेच्छाचारेण उपलक्षिते, अत एव—हे उन्मत्ते—रा.

† हरिपर्यन्ते—पिङ्गलवर्णपर्यन्ते—गो. ‡ असितकेशान्तां—नीलकेशाग्रां—केशाग्रे पैङ्गलं दुर्लक्षणम्—गो.

[1] रुध्यां ज. [2] कामरूपेण उन्मत्ते पश्य मां कामरूपिणम्—ज. [3] रावणस्य—ज. [4] तीक्ष्णरूप—ज. [5] स्वरूपं कालसंकाशं ङ. [6] भूषणः—ज. [7] विंशतिभुजः—ज. [8] प्रतिपेदे—ज. [9] इदमर्धं कुण्डलितं—ज. [10] प्रेक्ष्य—ङ. [11] सीता—ङ.

*त्रिषु लोकेषु विख्यातं यदि भर्तारमिच्छसि ।
मामाश्रय, वरारोहे ! तवाहं सदृशः पतिः ॥ १२ ॥
मां भजस्व चिराय त्वं अहं श्लाघ्यः [1]प्रियस्तव ।
नैव चाहं क्वचित्, भद्रे ! करिष्ये तव विप्रियम् ॥ १३ ॥
त्यज्यतां †मानुषो भावः मयि भावः प्रणीयताम् ।
राज्यात् च्युतमसिद्धार्थं रामं ‡परिमितायुषम् ॥ १४ ॥

मानुषः—मनुष्यरामविषयकः भावः—स्नेहबन्धः ॥ १४ ॥

कैर्गुणैरनुरक्ताऽसि, मूढे ! पण्डितमानिनि !
यः स्त्रिया वचनाद्राज्यं विहाय ससुहृज्जनम् ॥ १५ ॥
अस्मिन् व्यालानुचरिते वने वसति दुर्मतिः ।
इत्युक्त्वा मैथिलीं वाक्यं प्रियार्हां §प्रियवादिनीम् ॥
अभिगम्य सुदुष्टात्मा [2]राक्षसः काममोहितः ।
जग्राह रावणः सीतां ‖बुधः खे रोहिणीमिव ॥ १७ ॥

प्रियार्हां प्रियवादिनीं । रावणादन्यत्र इति शेषः । काम-मोहितः जग्राह इत्यत्र अत्यन्तानौचित्ये दृष्टान्तः—बुधः खे रोहिणी-मिवेति । अभूतोपमेयम् । रौहिणेयो बुधः रोहिणीं स्वमातरं यदि

---

* यदि तादृशं भर्तारमिच्छसि, तर्हि मामाश्रय, अहमेव किल तादृश इत्याशयः ।
† मानुषो भावः—अल्पमनस्कता वा । ‡ चिराय मां भजस्वेत्येतत्प्रतिकोटितयाऽऽह—परिमितायुषमिति । § प्रियवादिनीं—प्रियवदनशीलां—वाचाऽप्यनपराध्यन्तीमिति भावः ।
‖ 'बुधः खे रोहिणीमिव' इत्यभूतोपमेयम् । बुधः स्वपितृपत्नीत्वेन मातरं खे—आकाशे सुखेन सञ्चरन्तीं यदि गृह्णीयात्—तत्तुल्यमिदं पापमित्यर्थः—गो.

[1] पतिस्तव—ञ.   [2] रावणः कालचोदितः—ङ.

कामात् गृह्णीयात् तत्सदृशमिदं घोरमित्यर्थः । ननु कथं सीता न शापतो रावणं नाशयति ? उच्यते—

अयुक्तयोक्तव्यनिजघोरोत्थत्वेन रक्षसः ।
पतिनिग्राह्यतां ज्ञात्वा सर्वज्ञा जोषमास्थिता ॥

अयमेवाशयः कविना रोहिणीदृष्टान्तेन सूचितः । श्लोकार्थः योगिजनगम्यः, न प्रश्नार्हः । अन्यदपि—

प्राग्वेदवत्यात्मकृतप्रतिज्ञास्मृतितो विभोः ।
सोढ़ा स्थितं, सा प्रतिज्ञा * तत्समूलविनाशने ॥

वेदवतीति त्रयीप्रधाना श्रीमहामातुर्मूर्तिः । सीता तु तत्सारत्रिपदाप्रधाना शुद्धचै । तपश्चरन्त्या रावणधर्षितया तु प्रतिज्ञां कृत्वा देहः उत्सृष्टः । सा तु प्रतिज्ञा—

"यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने ।
तस्मात् तव वधार्थं वै उत्पत्स्येऽहं महीतलात् ॥" (उत्तर. १७-३१)

इति । सा च प्रतिज्ञा भगवदाज्ञया स्मृता इति ॥ १७ ॥

**वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः ।**
**ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ॥ १८ ॥**

**तं दृष्ट्वा मृत्युसङ्काशं तीक्ष्णदंष्ट्रं महाभुजम् ।**
**प्राद्रवन् गिरिसङ्काशं भयार्ता वनदेवताः ॥ १९ ॥**

**स च मायामयो दिव्यः खरयुक्तः खरस्वनः ।**
**प्रत्यदृश्यत † हेमाङ्गः रावणस्य महारथः ॥ २० ॥**

---

* रावणमात्रभस्मीकारे राक्षसकुलनाशो न स्यादित्याशयः । † हेमाङ्गः—स्वर्णमयचक्रः, चक्रं हि रथाङ्गमित्युच्यते.—गो.

ततस्तां *परुषैर्वाक्यैः भर्त्सयन् स महास्वनः ।
†अङ्केनादाय वैदेहीं रथमारोपयत्तदा ॥ २१ ॥

अङ्केनादायेति । अङ्कशब्दः इह सर्वत्र कटिप्रदेशवाची । हस्तान्तरैरिति शेषः ॥ २१ ॥

सा गृहीता विचुक्रोश रावणेन यशस्विनी ।
रामेति सीता दुःखार्ता ‡रामं दूरगतं वने ॥ २२ ॥

[1]तामकामां स कामार्तः पन्नगेन्द्रवधूमिव ।
§[2]विवेष्टमानामादाय उत्पपाताथ रावणः ॥ २३ ॥

अकामां—विरागिणीम् ॥ २३ ॥

ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ।
भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथाऽऽतुरा ॥ २४ ॥

विहायसा—आकाशमार्गेण । मत्ता—पैत्त्यवशात् उन्मत्तेवेत्यर्थः ॥

हा लक्ष्मण ! महाबाहो ! गुरुचित्तप्रसादक !
ह्रियमाणां न जानीषे रक्षसा [3]मामम र्षिणा ॥ २५ ॥

जीवितं सुखमर्थांश्च धर्महेतोः परित्यजन् ‖ ।
ह्रियमाणां अधर्मेण मां, राघव ! न पश्यसि ॥ २६ ॥

---

*रावणादात्मानं मोचयितुं यतन्तीं परुषोक्तिभिः भर्त्सयन् । †अङ्केन—हस्तान्तरैरित्यर्थः-ति. अङ्केन-ऊरुभागेन-गो. ‡दूरगतं रामं रामेति विचुक्रोश—उच्चैराक्रन्दनेनाहूतवती । §विवेष्टमानां-रथोपरिस्थले लुठन्तीं-गो. विचेष्टमानां तत आत्मानं मोचयितुं-ति. ‖राघवविशेषणमिदम् ।

[1] रामकामां-ङ. [2] विचेष्टमानां-ज. [3] कामरूपिणा-ज.

ननु नामाविनीतानां विनेताऽसि, परंतप !
कथमेवंविधं पापं न त्वं शाधि हि रावणम् ? ॥ २७ ॥

ननु नामेति प्रसिद्धौ । शाधि हीति पदद्वयम् । कथं एवंविधं हि पापं न शाधि इति ॥ २७ ॥

न तु सद्योऽविनीतस्य दृश्यते कर्मणः फलम् ।
कालोऽप्यङ्गीभवत्यत्र सस्यानामिव पक्तये ॥ २८ ॥

तत्र स्वयमेव हेतुमुन्नयति—न त्वित्यादि । अविनीतस्य पुरुषस्य अविनयकर्मणः फलं तु सद्यो न दृश्यत एव । कुत इत्यतः—कालोऽपीत्यादि । अङ्गीभवतीति । सहकारिकारणं भवतीत्यर्थः । पक्तिः—पाकः ॥ २८ ॥

[2] स कर्म कृतवानेतत् कालोपहतचेतनः ।
जीवितान्तकरं घोरं रामात् व्यसनमाप्नुहि ॥ २९ ॥

अथ यः आशयः श्लोकेनास्माभिः वर्णितः * स एव स्पष्टीक्रियते मात्रा—स कर्मेत्यादि—रामात् व्यसनमाप्नुहीति ॥ २९ ॥

† हन्तेदानीं सकामाऽस्तु कैकेयी सह बान्धवैः ।
[3] ह्रियेयं धर्मकामस्य धर्मपत्नी यशस्विनः ॥ ३० ॥

ह्रियेयमिति यतः अतः सकामाऽस्तु इति योजना ॥ ३० ॥

---

* 'पतिनिग्राह्यतां ज्ञात्वा सर्वज्ञा जोषमास्थिता' इति 17 श्लोकव्याख्यायामुक्तः अर्थः—अत्र 'रामात् व्यसनमाप्नुहि' इत्यत्र स्पष्ट इति भावः ॥ † वने राक्षसादिभिर्हृता भवेदिति मां कैकेयी वनं प्रेषितवतीति वैदेह्या हृदये सर्वदा स्थितं, तदिदानीं सुप्तप्रमत्त-कुपितानां भावज्ञानं दृष्टमिति न्यायेनोद्घाटयति— हन्तेति—गो.

[1] शाधि—ङ. [2] त्वं—ञ. [3] ह्रिये यद्धर्म—ङ.

*आमन्त्रये जनस्थाने कर्णिकारान् सुपुष्पितान् ।
क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥ ३१ ॥

हरतीति शंसध्वमिति योजना ॥ ३१ ॥

†[माल्यवन्तं शिखरिणं वन्दे प्रस्रवणं गिरिम् ।
क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः ॥

हंसकारण्डवाकीर्णां वन्दे गोदावरीं नदीम् ।
क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः ॥]

माल्यवन्तमित्यादिश्लोकद्वयं प्रक्षिपन्ति केचित् । न तत् प्राचीनपाठेऽस्ति ॥

दैवतानि च यान्यस्मिन् वने विविधपादपे ।
नमस्करोम्यहं तेभ्यः भर्तुः शंसत मां हृताम् ॥ ३२ ॥

यानि कानिचिदप्यत्र सत्त्वानि [1] निवसन्त्युत ।
सर्वाणि शरणं यामि मृगपक्षिगणानपि ॥ ३३ ॥

ह्रियमाणां प्रियां भर्तुः प्राणेभ्योऽपि गरीयसीम् ।
विवशाऽपहृता सीता रावणेनेति शंसत ॥ ३४ ॥

विदित्वा मां महाबाहुः ‡अमुत्रापि महाबलः ।
आनेष्यति पराक्रम्य वैवस्वतहृतामपि ॥ ३५ ॥

अमुत्र–परलोके । वैवस्वतहृतां वाऽपि मां शनैर्विदित्वा पराक्रम्य–पराक्रमं कृत्वा आनेष्यत्येव, अतो यूयं शंसतेति शेषः ॥

---

*आमन्त्रये— प्रार्थये–रा. संबोधयामि–गो. †इदं श्लोकद्वयं महेश्वरतीर्थ-गोविन्दराजादिसम्मतम् । ‡अमुत्र-- स्वर्गलोके गतामपि, वैवस्वतहृतामपि मां–गो.

[1] विविधानि च–ज.

सा तदा करुणा वाचः विलपन्ती सुदुःखिता ।
वनस्पतिगतं गृध्रं ददर्शायतलोचना ॥ ३६ ॥

सा तमुद्वीक्ष्य सुश्रोणी रावणस्य [1] वशं गता ।
समाक्रन्दत् भयपरा [2] दुःखोपहतया गिरा ॥ ३७ ॥

जटायो ! पश्य मामार्य ! ह्रियमाणामनाथवत् ।
अनेन राक्षसेन्द्रेण * करुणं पापकर्मणा ॥ ३८ ॥

नैष वारयितुं शक्यः † [3] तव क्रूरो निशाचरः ।
सत्त्ववान् ‡ जितकाशी च सायुधश्चैव दुर्मतिः ॥ ३९ ॥

वारयितुं न शक्यते इत्यत्र हेतुः—सत्त्ववानित्यादि । जितकाशी—जितभयः ॥ ३९ ॥

रामाय तु यथातत्त्वं, जटायो ! हरणं मम ।
लक्ष्मणाय च तत् सर्वं [4] आख्यातव्यमशेषतः ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकोनपञ्चाशः सर्गः

---

नाभि(४०)मानः सर्गः ॥ ४० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकोनपञ्चाशः सर्गः

---

* करुणं यथा तथा ह्रियमाणां–गो. अकरुणं यथा भवति तथा अनाथवत् ह्रियमाणां–रा. † तव–त्वया। भवता वारयितुमशक्यत्वात् रामाय वृत्तं कथयेत्यर्थः । ‡ जितकाशी—जयावहः–गो.

[1] वशानुगा–ङ. [2] दुःखोपहितया–ज. [3] त्वया–ज. [4] आख्यातव्यं विशेषतः–ङ.

## पञ्चाशः सर्गः

[जटायुरभियोगः]

तं शब्द*मवसुप्तस्तु जटायुरथ शुश्रुवे ।
[1]निरीक्ष्य रावणं क्षिप्रं वैदेहीं च [2]ददर्श सः ॥ १ ॥

अथ सीतानिवेदितापहारेण जटायुना न्यायोक्तिपूर्वं रावणनिरोधः । तं शब्दमित्यादि । अपहारावेदनशब्दमित्यर्थः । अवगाह्य सुप्तः—अवसुप्तः ॥ १ ॥

ततः पर्वतकूटाभः तीक्ष्णतुण्डः [3]खगोत्तमः ।
वनस्पतिगतः श्रीमान् व्याजहार शुभां गिरम् ॥ २ ॥

दशग्रीव ! स्थितो धर्मे पुराणे †सत्य[4]संश्रवः [5]।
जटायुर्नाम नाम्नाऽहं गृध्रराजो महाबलः ॥ ३ ॥

दशग्रीवेति संबुद्धिः । सत्यसंश्रवः—सत्यप्रतिज्ञः । सीतासंरक्षणे अहं सहायः इत्युक्तत्वात् इत्याशयः । अहं उच्यमाननामादिकः ॥ ३ ॥

राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
लोकानां च हिते युक्तः रामो दशरथात्मजः ॥ ४ ॥

किं ततः ? इत्यत आह—राजेत्यादि ॥ ४ ॥

तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी ।
सीता नाम वरारोहा यां त्वं हर्तुमिहेच्छसि ॥ ५ ॥

---

* अवसुप्तः—ईषत्सुप्तः–गो. भोजनोत्तरं दिवैव गाढसुप्तोऽपि–ति. वार्धक्यादीषत्सुप्त इव स्थितः । † सत्यसंश्रयः—सत्यं–'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युक्तः परमात्मा संश्रयः—आलम्बनं यस्य सः–गो.

[1]निरैक्षत ज. [2]यशस्विनीम्–ङ. [3]खगेश्वरः–ङ. [4]संश्रयः–ङ.
[5]एतदनन्तरं—"भ्रातस्त्वं निन्दितं कर्म कर्तुं नार्हसि सांप्रतम्" इत्यधिकं–ङ.

*कथं राजा स्थितो धर्मे परदारान् परामृशेत् ।
रक्षणीया विशेषेण राजदाराः, महाबल ! ॥ ६ ॥

राजा, भवानिति शेषः ॥ ६ ॥

निवर्तय मतिं नीचां परदाराभिमर्शनात् ।
न तत् समाचरेद्धीरः †यत् परोऽस्य विगर्हयेत् ॥ ७ ॥
‡यथाऽऽत्मनः तथाऽन्येषां दाराः रक्ष्याः [1] विपश्चिता ।

यत्परोऽस्येति । अस्य—पुरुषस्य परः—स्वेतरः प्राणी यत कर्म विगर्हयेत्—निन्दति, न तत् कर्म समाचरेत् । स्वदारवत् परदाराश्च परस्पर्शात् रक्षणीया इति ॥ ७ ॥

§पापस्वभावः चपलः कथं त्वं, रक्षसां वर ! ॥ ८ ॥
ऐश्वर्य[2]मभि संप्राप्तः ‖विमानमिव दुष्कृतिः ।
¶[3]कामस्वभावो यो यस्य न शक्यः तं प्रमार्जितुम् ॥
न हि दुष्टात्मना[4]मार्ये आवसत्यालये चिरम् ।

---

* रामस्य सर्वलोकनाथत्वानभ्युपगमेऽपि, भवानिव रामोऽपि कश्चन राजैव । एवं सति परस्परराजमर्यादातिलङ्घनं युक्तं वेत्याशयः । † परः अस्य यत विगर्हयेत्, न तत् समाचरेदित्यन्वयः । ‡ स्वदाराणां परैरपहरणादौ यो भावो भवेत्, सः स्वेन परदारापहरणादावपि विवेकिना स्मरणीय इति तात्पर्यम् । § 'पापस्वभावः' इत्यादि-श्लोकद्वयं 'राजमूलं प्रवर्तते' (श्लो. 11½) इत्येतदनन्तरं गोविन्दराजीयादिषु पठ्यते । ‖ त्वं दुष्कृतिः—निषिद्धकर्मा विमानमिव ऐश्वर्यं कथं संप्राप्तः—रा. त्वं दुष्कृतिः विमानं—देवार्हं विमानमिव ऐश्वर्यमभि-ऐश्वर्यं प्रति कथं संप्राप्तः—योग्यः । एवं विषयचपलश्चेत् ऐश्वर्यात् भ्रष्टो भविष्यसीति भावः—गो. ¶ यो यस्य स्वभावः—औत्पत्तिकः, स धर्मः कामं—अत्यन्तं परिमार्जितुं न शक्यः—उपदेशेन निवर्तयितुं न शक्य इत्यर्थः । तथाहि—आर्यं—सदुपदेशरूपं कर्म दुष्टात्मनां आलये—हृदये चिरं नावसति—न तिष्ठति—गो. काममित्यभ्युपगमार्थकमव्ययं वा ॥

[1] विमर्शता—ङ. विमर्शनात्—ञ. [2] मिह—ङ. [3] कामं—ङ.
[4] मार्या ह्यावसन्त्यालये—ङ.

अयं धर्मः पापेषु न तिष्ठतीत्याह—कामेति । यः पुमान् कामस्वभावो भवति, सोऽसौ तं तं स्वभावं प्रमार्जितुं न शक्यः । कुतः इत्यत आह—न हीत्यादि । हि—यस्मात् दुष्टात्मनां आलये—चित्ते आर्यं—पूज्यं—पुण्यं चिरं—चिरायापि नावसति । तस्मादेव "धर्मेण पापमपनुदति" इति श्रुतेः धर्म एव कामादि-पापस्य निवृत्तिसाधनं, पापिषु तदभावात् पापस्वभावः अशक्य-मार्जनः केनापीति भावः ॥ ९ ॥

[1]अर्थं वा यदि वा कामं शिष्टाः शास्त्रेष्वनागतम् ॥ १० ॥
व्यवस्यन्ति [2]न राजानः धर्मं, पौलस्त्यनन्दन ! ।

शास्त्रेष्वनागतमिति । अप्रतिपादितमित्यर्थः । न व्यव-स्यन्तीति । नेच्छन्तीत्यर्थः ॥ १० ॥

राजा *धर्मश्च कामश्च द्रव्याणां चोत्तमो निधिः ॥ ११ ॥
धर्मः शुभं वा [3]पापं वा राजमूलं प्रवर्तते ।

राजेत्यादि । द्रव्याणां—उत्तमवस्तूनां निधिः राजैव । कामश्चेति । प्रजानामिति शेषः । कुतः इत्यतः—धर्मः शुभं वेत्यादि । शुभं—शुभाचारः यतो राजमूलं प्रवर्तते ततः इति योजना ॥ ११ ॥

विषये वा पुरे वा ते यदा रामो महाबलः ॥ १२ ॥
नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ।

यदा राम इति । यस्मादित्यर्थः ॥ १२ ॥

यदि शूर्पणखाहेतोः जनस्थानगतः खरः ॥ १३ ॥
अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ।

---

* धर्मादिशब्दाः धर्मादिप्रवर्तकपराः—गो.

[1] धर्ममर्थं च कामं च—ङ.   [2] अनुराजानं—ज.   [3] कामो वा—ङ

अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः ॥ १४ ॥
यस्य त्वं लोकनाथस्य भार्यां हृत्वा गमिष्यसि ।

अनपराधोऽसिद्धः इत्याशङ्क्य परिहरति—यदीत्यादि । अनपराधे हेतुः—पूर्वमतिवृत्त इति । उचितमतिक्रम्य जायमानं वृत्तं यस्य स तथा ॥ १३-१४ ॥

क्षिप्रं विसृज वैदेहीं मा त्वा घोरेण चक्षुषा ॥ १५ ॥
दहेत् [1] दहनभूतेन वृत्रमिन्द्राशनिर्यथा ।

मा त्वा । त्वामिति यावत् । घोरेण चक्षुषा मा दहेत् । राम इति शेषः । इन्द्रस्य अशनिः—इन्द्राशनिः ॥ १५ ॥

सर्पमाशीविषं बद्ध्वा वस्त्रान्ते नावबुध्यसे ॥ १६ ॥
ग्रीवायां [2] प्रतिमुक्तं च कालपाशं न पश्यसि ।

स भारः, सौम्य ! भर्तव्यः यो नरं नावसादयेत् ॥ १७ ॥
तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् * ।

स भार इति । भारद्रव्यमित्यर्थः । अनामयं—रोगानुत्पादकम् ॥

यत् कृत्वा न भवेत् धर्मः न † कीर्तिः न यशो [3] भुवि ॥
शरीरस्य भवेत् खेदः [4] कस्तत् कर्म समाचरेत् ।

यत् कृत्वेत्यादि । कीर्तिः—पारलौकिकी पुण्यातिशयजा । बलैश्वर्यातिशयजं-यशः । यस्मात् धर्मादिः नास्ति, अपि तु शरीरस्य खेद एव केवलं भवति, तत् कर्म कः समाचरेत् । न कोऽपि विपश्चिदित्यर्थः ॥

---

* अनामयं सत्—रोगानुत्पादकं सत् जीर्यति । अनामयमिति क्रियाविशेषणं वा। सीताऽपहरणं त्वया जीर्णयितुं न शक्यमिति भाव: ॥ † कीर्तिः—ऐश्वर्यादिजनिता प्रथा। यशः—भोगित्वकृतप्रथा–गो. यश:—प्रभावख्याति:, तत्फलं—कीर्ति:—इति वा ।

[1] दहनकल्पेन–ङ. [2] प्रतिसक्तं–ङ. [3] भुवम्–ज. [4] न तत्–ङ.

षष्टिर्वर्षसहस्राणि मम जातस्य, रावण ॥ १९ ॥
पितृपैतामहं राज्यं यथावदनुतिष्ठतः ।

राज्यमिति । पक्षिगणाधिपत्यमित्यर्थः ॥ १९ ॥

वृद्धोऽहं त्वं युवा धन्वी सशरः कवची रथी ॥ २० ॥
तथाऽप्यादाय वैदेहीं कुशली न गमिष्यसि ।

न शक्तः त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः ॥ २१ ॥
*हेतुभिः न्यायसंसिद्धैः ध्रुवां वेदश्रुतीमिव ।

मम पश्यतः इत्यनादरे षष्ठी । हेतुभिरित्यादि । न्यायसंसिद्धैः—पूर्वापरमीमांसासूत्रसम्यक्समर्थितैः हेतुभिः—स्ववाक्यश्रुतोपपत्तिभिः ध्रुवां—सुप्रतिष्ठितधर्मब्रह्मलक्षणार्थां वेदश्रुतीं. छान्दसो दीर्घः, उक्तधर्मब्रह्मतत्त्ववेदनसाधनभूतां श्रुतिं-त्रयीं असुर इव हर्तुं न शक्तोऽसीति योजना ॥ २१ ॥

†युद्धयस्व यदि शूरोऽसि मुहूर्तं तिष्ठ, रावण ! ॥ २२ ॥
शयिष्यसे हतो भूमौ यथा पूर्वं खरस्तथा ।

शयिष्यस इति शीङः सेट्त्वात् ॥ २२ ॥

---

* न्यायसंयुक्तैः—वैशेषिकाद्युक्ततर्काभासयुक्तैः हेतुभिः—हेत्वाभासैः ध्रुवां—सनातनीं धर्मब्रह्मपरां वेदश्रुतिम्—तच्छास्त्राध्येता यथा पूर्वापरमीमांसान्यायविदोऽग्रे हर्तुं—अन्यथाकर्तुं न शक्नोति, तद्वदित्यर्थः—**ति.** न्यायसंसिद्धैः—न्यायशास्त्रसंसिद्धैः हेतुभिः—अनुमानैः ध्रुवां—निश्चलां, अविचाल्यप्रामाण्यामिति यावत्, वेदश्रुतीमिव—वेदयतीति वेदः, स्वतः प्रमाणभूतां श्रुतिमित्यर्थः । यथा वेदविदग्रेसरे पश्यति सति हेतुकैः न्यायसिद्धैर्हेतुभिः श्रुतिः अन्यथा—अन्यपरा नेतुं न शक्यते, तद्वदिति भावः—**गो.** तर्कः किल सर्वत्राप्यनुकूलः सुलभ एव—इत्याशयः । † पूर्वं रामेण हतः खर इव युद्धे मया हतः त्वं भूमौ शयिष्यसि । यद्वा—यदि शूरोऽसि तदा मया युध्यस्व । अथवा रामागमनपर्यन्तं मुहूर्तं तिष्ठ, तेन हतः शयिष्यसे इति—**गो.** वृद्धस्य जटायुषः स्वाशक्तिं, कालस्यानतिक्रमणीयतां च पश्यतः डोलायमानमनस्त्वात् विचित्रा वाक्प्रवृत्तिरिति भाति । अनन्तरसर्गस्य २९ तमश्लोकोऽप्यत्र द्रष्टव्यः ॥

असकृत् संयुगे येन निहताः [1]दैत्यदानवाः ॥ २३ ॥
न चिराच्चीरवासास्त्वां रामो युधि वधिष्यति ।

संयुगे, रामेणेति शेषः ॥ २३ ॥

*किं नु शक्यं मया कर्तुं ? गतौ दूरं नृपात्मजौ ॥ २४ ॥
क्षिप्रं त्वं नश्यसे, नीच ! † तयो र्भीतो न संशयः ।

नश्यसे इति न संशयः इत्यन्वयः ॥ २४ ॥

न हि मे जीवमानस्य नयिष्यसि शुभामिमाम् ॥ २५ ॥
सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियाम् ।

जीवमानस्य-जीवतः इति यावत् । नयिष्यसि-नेष्यसीति यावत् ॥

अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः ॥ २६ ॥
जीवितेनापि रामस्य तथा दशरथस्य च ।

तिष्ठ तिष्ठ, दशग्रीव ! मुहूर्तं पश्य, रावण ! ॥ २७ ॥
युद्धातिथ्यं प्रदास्यामि [2]यथाप्राणं, निशाचर ! ।
वृन्तादिव फलं [3]त्वां तु पातयेयं रथोत्तमात् ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे पञ्चाशः सर्गः

---

यथाप्राणं—यथाबलम् । (चारु)जर(२८)मानः सर्गः ॥ २८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे पञ्चाशः सर्गः

---

* एवमुक्तेऽपि पलायमानं प्रत्याह— किं न्विति । किं नु शक्यं— किं वा शक्यम् । नश्यसे—अदर्शनं प्राप्नोषि । तयोः—ताभ्याम्—गो. † रामलक्ष्मणयोः भयात् किल त्वं परोक्षे सीतां हरसीत्यर्थः ।

[1] देव—ङ. [2] यावत्प्राणं—ङ. [3] पक्वं—ङ

## एकपञ्चाशः सर्गः

[जटायुश्शातनम्]

[1]इत्युक्तः क्रोधताम्राक्षः तप्तकाञ्चन[2]कुण्डलः ।
राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥ १ ॥

अथ रावणजटायुर्युद्धम् । इत्युक्त इत्यादि ॥ १ ॥

ससंप्रहारस्तुमुलः तयोस्तस्मिन् [3]महावने ।
बभूव [4]वातोद्धुतयोः मेघयोर्गगने यथा ॥ २ ॥

वातोद्धुतयोः—वातेन उद्धुतयोः—प्रवर्तितयोः ॥ २ ॥

तद् बभूवाद्भुतं युद्धं गृध्रराक्षसयोर्यथा ।
सपक्षयोः *माल्यवतोः महापर्वतयोरिव ॥ ३ ॥

सपक्षयोः—पक्षसहितयोः । माल्यवतोः—माल्यवदाख्ययोः, "हिमवान् निषधो विन्ध्यो माल्यवान्" इति कुलाचलः । स एवासौ महागिरिः । दण्डकारण्येऽप्येको माल्यवान् गिरिरस्तीति प्रसिद्धिमात्रम् । वस्तुतस्तु अभूतोपमा ॥ ३ ॥

ततो †नालीकनाराचैः तीक्ष्णाग्रैश्च विकर्णिभिः ।
अभ्यवर्षत् महाघोरैः गृध्रराजं [5]महाबलः ॥ ४ ॥

नालीकनाराचाः शतशो व्याकृताः ॥ ४ ॥

---

* माल्यवान्नामानौ द्वौ पर्वतौ । एको दण्डकारण्ये पूर्वं (49 सर्गेऽधिकपाठे) उक्तः । अन्यः किष्किन्धासमीपे (किष्किन्धाकाण्डे 28-1) वक्ष्यति–गो. † नालीकैः—नालमात्रशरैः । नाराचैः—आयसशरैः । विकर्णिभिः—अङ्कुशाग्रशरै –गो.

[1] संरक्तनयन: कोपात्–ङ. एतच्छ्लोकात् पूर्वं—"इत्युक्तस्य यथान्यायं रावणस्य जटायुषा । क्रुद्धस्याग्निनिभाः सर्वाः रेजुर्विंशतिदृष्टयः ॥"—इत्यधिकम्–ङ.
[2] भूषणः–ङ. [3] महामृधे–ज. [4] वातोद्धतयोः–ङ. [5] महाबलम्–ज.

स तानि शरजालानि गृध्रः पत्त्ररथेश्वरः ।
जटायुः प्रतिजग्राह *[1]रावणास्त्राणि संयुगे ॥ ५ ॥

रावणास्त्राणि । रावणविसृष्टानीत्यर्थः । शरजालस्य विशेषणमिदम् । औणादिकः त्रन् ॥ ५ ॥

तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां विपोथयन् ।
चकार बहुधा गात्रे व्रणान् पतगसत्तमः ॥ ६ ॥

पुथ संक्लेशे, विपोथयन्—पीडयन् । तस्य गात्रे इत्यन्वयः ॥

अथ [2]क्रोधात् दशग्रीवः जग्राह दश मार्गणान् ।
मृत्युदण्डनिभान् घोरान् [3]शत्रुमर्दनकांक्षया ॥ ७ ॥

स तैर्बाणैर्महावीर्यः पूर्णमुक्तैरजिह्मगैः ।
बिभेद निशितैस्तीक्ष्णैः गृध्रं घोरैः †शिलीमुखैः ॥ ८ ॥

स [4]राक्षसरथे पश्यन् ‡जानकीं बाष्पलोचनाम् ।
अचिन्तयित्वा तान् बाणान् राक्षसं समभिद्रवत् ॥ ९ ॥

ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् ।
चरणाभ्यां महातेजाः बभञ्ज [5]पतगेश्वरः ॥ १० ॥

ततोऽन्यद्धनुरादाय रावण क्रोधमूर्छितः ।
ववर्ष शरवर्षाणि शतशोऽथ सहस्रशः ॥ ११ ॥

---

* रावणास्त्राणि—रावणक्षिप्तानीति शरजालविशेषणम् । अस्यतेरौणादिकस्त्रन् । 'रावणास्त्रानि' इति पाठस्तु सुगम एव-ति. † शिलीमुखैः—शिली—शल्यं मुखे येषां तैः बाणैः-गो. ‡ जानकीव्यथादर्शनेन स्वसंकटाचिन्तनम् ।

[1] रावणास्त्रानि-ङ. [2] क्रुद्धः-ङ. [3] शत्रोर्निधन-ज. [4] रावणरथे-ङ. [5] पतगोत्तमः-ज.

शरैरावारितस्तस्य* संयुगे पतगेश्वरः ।
कुलायमुपसंप्राप्तः पक्षीव प्रबभौ तदा ॥ १२ ॥

आवारितः—आसमन्ताद्व्याप्तः ॥ १२ ॥

स तानि शरवर्षाणि †पक्षाभ्यां च विधूय च ।
चरणाभ्यां महातेजाः बभञ्जास्य महद्धनुः ॥ १३ ॥

‡तच्चाग्निसदृशं दीप्तं रावणस्य [1]शरासनम् ।
पक्षाभ्यां स [2]महावीर्यः व्याधुनोत् पतगेश्वरः ॥ १४ ॥

तच्चेति । द्वितीयमपि धनुः इत्यर्थः । व्याधुनोत्—कम्पयति स्म । रावणमिति शेषः ॥ १४ ॥

§काञ्चनोरश्छदान् दिव्यान् पिशाचवदनान् खरान् ।
तांश्चास्य जवसंपन्नान् जघान समरे बली ॥ १५ ॥

जघान—हतवान् ॥ १५ ॥

[3]वरं त्रिवेणुसंपन्नं कामगं पावकार्चिषम् ।
[4]मणिहेमविचित्राङ्गं बभञ्ज च महारथम् ॥ १६ ॥

त्रिवेणुः—युगन्धरः ॥ १६ ॥

पूर्णचन्द्रप्रतीकाशं छत्रं च व्यजनैः सह ।
पातयामास वेगेन ग्राहिभी राक्षसैः सह ॥ १७ ॥

---

* तस्य शरैरित्यन्वयः । † तानि च शरवर्षाणि पक्षाभ्यां विधूय चरणाभ्यां महद्धनुः (द्वितीयं धनुः) बभञ्ज—गो. ‡ तत् प्रसिद्धं शरावरं—कवचं व्याधुनोत्—पातयामास । शरासनमिति पाठे, तच्च द्वितीयं धनुः बभञ्जेत्यर्थः—ति. शरावरं—कवचं—गो. रा. § काञ्चनोरश्छदान्—स्वर्णमयकवचयुक्तान् तांश्च खरान् जघान ।

[1] शरावरम्—ङ. ज. [2] महातेजाः—ज. [3] अथ—ज. [4] मणिसोपानचित्राङ्गं—ज.

सारथेश्चास्य वेगेन तुण्डेनैव महच्छिरः ।
पुनः व्यपाहरत् श्रीमान् पक्षिराजो महाबलः ॥ १८ ॥

स भग्नधन्वा विरथः हताश्वः हतसारथिः ।
अङ्केनादाय वैदेहीं पपात भुवि रावणः ॥ १९ ॥

दृष्ट्वा निपतितं भूमौ रावणं भग्नवाहनम् ।
साधु साध्विति भूतानि गृध्रराजमपूजयन् ॥ २० ॥

परिश्रान्तं तु तं दृष्ट्वा जरया पक्षियूथपम् ।
उत्पपात पुनर्हृष्टः मैथिलीं गृह्य रावणः ॥ २१ ॥

तं प्रहृष्टं निधायाङ्के गच्छन्तं जनकात्मजाम्[1] ॥

गृध्रराजः समुत्पत्य समभिद्रुत्य रावणम् ।
[2]समावार्य महातेजाः जटायुरिदमब्रवीत् ॥ २२ ॥

समावार्येति । संनिरुध्येत्यर्थः ॥ २२ ॥

*वज्रसंस्पर्शबाणस्य भार्यां रामस्य, रावण !
अल्पबुद्धे ! हरस्येनां वधाय खलु रक्षसाम् ॥ २३ ॥

समित्रबन्धुः सामात्यः सबलः सपरिच्छदः ।
विषपानं पिबस्येतत् †पिपासित इवोदकम् ॥ २४ ॥

सबलः—चतुरङ्गबलसहितः । परिच्छदः—दासदासीजनः । न शिष्यसीत्यध्याहार्यम् ॥ २४ ॥

---

* वज्रसंस्पर्शाः—वज्रसमस्पर्शाः बाणाः यस्य—गो. † बुद्धिपूर्वकप्रवृत्तौ दृष्टान्तः—पिपासित इत्यादि ।

[1] एतदनन्तरं—"गच्छन्तं खड्गशेषं च प्रणष्टहतसाधनम्"—इत्यधिकं—ज.

[2] समावार्य—ङ.

*अनुबन्धमजानन्तः कर्मणामविचक्षणाः ।
शीघ्रमेव विनश्यन्ति यथा त्वं विनशिष्यसि ॥ २५ ॥

अनुबन्धं—अनु बध्यते इत्यनुबन्धः–कर्मफलम् ॥ २५ ॥

बद्धस्त्वं कालपाशेन क्व गतः †तस्य मोक्ष्यसे ।
वधाय बडिशं गृह्य सामिषं जलजो यथा ॥ २६ ॥

क्व गतस्तस्य मोक्ष्यसे इति व्यत्ययात् षष्ठी । क्व गत्वा तं कालपाशं मोक्ष्यसे । न क्वापि ते तन्मोक्षः इत्यर्थः । 'बडिशं मत्स्यवेधनम्'। जलजः–मत्स्यः यथा नश्यति, तथा नशिष्यसीति शेषः ॥

न हि जातु दुराधर्षौ काकुत्स्थौ तव, रावण !
धर्षणं चाश्रमस्यास्य क्षमिष्येते तु राघवौ ॥ २७ ॥

अस्याश्रमस्य तव धर्षणं—अभिभवं न क्षमिष्येते ॥ २७ ॥

यथा त्वया कृतं कर्म भीरुणा लोकगर्हितम् ।
तस्कराचरितो मार्गः नैष वीरनिषेवितः ॥ २८ ॥

यथा त्वया कृतं कर्म, एष तस्कराचरितो मार्गः न वीरनिषेवितः, पापस्पर्श इवेत्यर्थः ॥ २८ ॥

युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ, रावण !
शयिष्यसे हतो भूमौ यथा भ्राता खरस्तथा ॥ २९ ॥

‡परेतकाले पुरुषः यत्कर्म प्रतिपद्यते ।
विनाशायात्मनोऽधर्म्यं प्रतिपन्नोऽसि कर्म तत् ॥ ३० ॥

---

* अनुबन्धः—परिणामः । † तस्य—तस्मात् रामादिति वा । ‡ मृत्यौ संनिहित एव एतादृशी प्रवृत्तिः स्यादित्याशयः ।

*पापानुबन्धो वै यस्य कर्मणः कर्म को नु तत् ।
कुर्वीत लोकाधिपतिः स्वयंभू[1]र्भगवानपि ॥ ३१ ॥

पापानुबन्ध इत्यादि । यस्य कर्मणः कर्तुः पापानुबन्धः—पापफलसंबन्धः आवश्यकः शास्त्रदृष्टः को नु प्राणी तत् कर्म कुर्वीत ? माऽस्तु प्राणिभिस्तत् कर्मकरणं, तत् फलवारणासामर्थ्यात्, ईश्वरास्तु कुर्वन्त्येव इत्यत्राह—लोकाधिपतिरिति । इन्द्रोऽपि महेश्वरोऽपि पापफलकं कर्म न कुर्यादेव । स्वयंभूर्भगवान् पापपुण्यतदधिकारितत्फलस्रष्टा भगवानपि कर्तुमकर्तुं अन्यथाकर्तुं शक्तोऽपि न पापकर्म कुर्यात् ईश्वरोऽपि मर्यादापरिपालनाय । तस्मादैश्वर्यमत्तेन त्वया क्रियमाणं दुष्कर्म दुर्वारभोगस्वफलं अचिरादेव भविष्यति इति तात्पर्यम् ॥ ३१ ॥

एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः ।
निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ॥ ३२ ॥

पृष्ठे—पश्चाद्भागे । "पृष्ठं तु चरमं तनोः" ॥ ३२ ॥

तं गृहीत्वा नखैस्तीक्ष्णैः [2]विरराद समन्ततः ।
†अधिरूढो गजारोहः यथा स्यात् दुष्टवारणम् ॥ ३३ ॥

[2]विरराद ‡नखैरस्य तुण्डं पृष्ठे समर्पयन् ।
केशांश्चोत्पाटयामास नखपक्षमुखायुधः ॥ ३४ ॥

---

* यस्य कर्मणः पापानुबन्धः—पापोत्तरत्वं स्पष्टं, तादृशं कर्म लोकाधिपतिरपि सन् को नु कुर्वीत—बुद्धिपूर्वकपापाचरणे शक्तस्यापि न प्रवृत्तिर्भवेत इत्यर्थः । † दुष्टवारणमधिरूढो गजारोहः यथा स्यात्—तमलक्षीकृत्य पलायमानं गजं अङ्कुशादिना यथा निरुन्ध्यात्, तथा निरुद्धवान् रावणमिति भावः । ‡ अस्य—रावणस्य पृष्ठे नखैः सह तुण्डं समर्पयन्—व्यापारयन् सन् विददार केशांश्चोत्पाटयामास—गो.

[1] भगवानिव—ङ. [2] विददार—ज.

विरराद—विकीर्णवान्। अधिरूढः गजारोहः—हस्तिपकः दुष्टवारणं—दुष्टगजं प्रति यथा स्यात्—यथाऽव्यापारो भवति तथा-व्यापारोऽभूदित्यर्थः। स एव प्रकाश्यते—विररादेत्यादि। अस्य पृष्ठे इत्यन्वयः॥ ३३-३४॥

स तथा गृध्रराजेन क्लिश्यमानो मुहुर्मुहुः।
अमर्षस्फुरितोष्ठः सन् प्राकम्पत स [1]रावणः॥ ३५॥
स परिष्वज्य वैदेहीं वामेनाङ्केन रावणः।
तलेनाभि[2]जघानाशु जटायुं क्रोधमूर्छितः॥ ३६॥
जटायुस्त*[3]मभिक्रम्य तुण्डेनास्य खगाधिपः।
वामबाहून् दश तदा व्यपाहरदरिन्दमः॥ ३७॥
संछिन्नबाहोः सद्यो वै बाहवः सहसाऽभवन्।
† विषज्वालावलीयुक्ताः वल्मीकादिव पन्नगाः॥ ३८॥

वल्मीकात् पन्नगा इव सद्यो वै बाहवः समभवन् इत्यन्वयः॥

ततः क्रोधात् दशग्रीवः सीतामुत्सृज्य [4]रावणः।
मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत्॥ ३९॥
ततो मुहूर्तं संग्रामः बभूवातुलवीर्ययोः।
राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च॥ ४०॥
तस्य व्यायच्छमानस्य रामस्यार्थे स रावणः।
पक्षौ पार्श्वौ च पादौ च खड्ग[5]मुद्धृत्य सोऽच्छिनत्॥

---

* अभिक्रम्य—अभितो गत्वा—**गो.** † विषज्वालेत्युपमानविशेषणात् बाहूनां सायुधत्वं गम्यते—**गो.**

[1] राक्षसः—**ज.** [2] जघानार्तः—**ज.** [3] मतिक्रम्य—**ज.** [4] वीर्यवान्—**ज.**
[5] मुद्यम्य—**ङ.**

व्यायच्छमानस्य – व्यायामं—पराक्रमं कुर्वाणस्य । " आक्रो यमहनः " इति शानच् ॥ ४१ ॥

स छिन्नपक्षः सहसा रक्षसा [1]रौद्रकर्मणा ।
निपपात [2] हतो गृध्रः धरण्यामल्पजीवितः ॥ ४२ ॥

अल्पजीवितः—द्वित्रिघटिकाऽवस्थानोचितप्राणः इत्यर्थः ॥ ४२ ॥

तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् ।
अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥ ४३ ॥

तं नीलजीमूतनिकाशकल्पं
सपाण्डुरोरस्कमुदारवीर्यम् ।
ददर्श लङ्काधिपतिः पृथिव्यां
जटायुषं *शान्तमिवाग्निदावम् ॥ ४४ ॥

अग्निदावमिति । विशेषणस्य पूर्वनिपातः आर्षः । दावाग्नि-मिति यावत् ॥ ४४ ॥

ततस्तु तं पत्ररथं महीतले
निपातितं रावणवेगमर्दितम् ।
†पुनः परिष्वज्य शशिप्रभानना
रुरोद सीता जनकात्मजा तदा ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकपञ्चाशः सर्गः

---

अत्रैव(४५ १/२)मानः सर्गः ॥ ४५ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकपञ्चाशः सर्गः

---

* अनेन, रावणः जटायुषं मृतमेव मेने इति गम्यते । † पुनः—भृशमिति वा । रावणेन सकृत् दृष्टाऽपीति वा ।

[1] घोरकर्मणा—ङ. [2] महागृध्रः—ज.

## द्विपञ्चाशः सर्गः

[सीतानूपुरादिभ्रंशः]

*[1]सा तु ताराधिपमुखी रावणेन निरीक्ष्य तम् ।
गृध्रराजं विनिहतं विललाप सुदुःखिता ॥ १ ॥

अथ पातितगृध्रेण रावणेन अप्रत्यूहतः सीताहरणम् । सा त्वित्यादि । रावणेन विनिहतमित्यन्वयः ॥ १ ॥

†[2]आलिङ्ग्य गृध्रं निहतं रावणेन बलीयसा ।
विललाप सुदुःखार्ता सीता शशिनिभानना ॥ २ ॥
निमित्तं [3]लक्षणं स्वप्नं शकुनिस्वरदर्शनम् ।
अवश्यं सुखदुःखेषु नराणां [4]प्रतिदृश्यते ॥ ३ ॥

निमित्तमित्यादि । नराणां सुखदुःखेषु भाविषु तत्सूचकं—निमित्तम्—वामदक्षिणाक्षिदोःस्पन्दादिरूपं लक्षणं—चिह्नम् । "अथाप्यादर्शे वोदके वा जिह्मशिरसं वा अशिरसं वा आत्मानं पश्येत् जिह्मो न वा दृश्येयातां तदाप्येवमेव विद्यात्" इत्याद्युपनिषदुपदिश्यमानप्रत्यक्षदर्शनानि, "अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति" इत्यादितः उपदिश्यमानं स्वप्नज्ञानम्, शकुनीनां वामदक्षिणगमनविशेषदर्शनम्, काकगोमायुगौल्यादिस्वराणां शब्दानां च दर्शनं—अनुभवः तथा—एतत्सर्वं यथायोगं प्रतिदृश्यते सर्वेण ॥ ३ ॥

---

* पूर्वसर्गान्तिमश्लोकस्यैव विस्तरः अत्र षट् श्लोकाः । † विशेषान्तरं वक्तुं पुनरनुवदति—आलिङ्ग्येति-**गो.**

[1] एतत्पूर्वं—"तमल्पजीवितं गृध्रं स्फुरन्तं राक्षसाधिपः । ददर्श भूमौ पतितं समीपे राघवाश्रमात् ॥" इत्यधिकम्—**ङ. ज.** [2] अयं श्लोकः कुण्डलितः—**ज.** [3] कक्षणज्ञानं—**ङ.** [4] संप्रदृश्यते—**ङ.**

नूनं राम ! * न जानासि महद्व्यसनमात्मनः ।
धावन्ति नूनं [1] काकुत्स्थं मदर्थं मृगपक्षिणः ॥ ४ ॥

किं ततः इत्याह—नूनमित्यादि । मदर्थं—मदपहारसूचनप्रयोजनमुद्दिश्य ? काकुत्स्थमिति । नूनं मृगपक्षिणः अशुभसूचनमार्गेण धावन्त्येव । तत्सूचितं आत्मनः महद्व्यसनं हे राम ! नूनं त्वं न जानासि । जानासि चेत् नोपेक्षेथाः इति शेषः ॥ ४ ॥

अयं हि † [2] पापचारेण मां त्रातुमभिसङ्गतः ।
शेते विनिहतो भूमौ ममाभाग्याद्विहङ्गमः [3] ॥ ५ ॥
त्राहि मामद्य, काकुत्स्थ ! लक्ष्मणेति वराङ्गना ।
सुसंत्रस्ता समाक्रन्दत् ‡ श‍ृण्वतां तु यथाऽन्तिके ॥ ६ ॥

यथाऽन्तिके इति । श्रवणं भवेदिति शेषः ॥ ६ ॥

---

* न जानासि किमिति काकुः । काकुत्स्थं त्वां—गो. † मां त्रातुं पापाचारेण रावणेन सह सङ्गतः—युद्धायं प्राप्तः—रा. अयं विहङ्गमः पापाचारेण रावणेन विनिहतः शेते—गो. ‡ यथा अन्तिके—निकटस्थितानां श‍ृण्वतां श्रवणं भवेत्, तथा समाक्रन्दत; न तूच्चैः, शीघ्रं रामागमनं मा भूदिति तात्पर्येण—ति. श‍ृण्वतामन्तिके यथा—श‍ृण्वतां समीप इव दूरस्थितं रामं लक्ष्मणं च रामेति लक्ष्मणेति च संबोध्य आक्रन्दत—गो. हन्त ! पार्श्वे एव तौ तिष्ठन्ताविव सीता समाक्रन्दत, परन्तु को वा श‍ृणुयादिति भावः ।

[1] काकुत्स्थ—ज. [2] कृपया राम—ज. [3] एतदनन्तरं—"रावणेन हृतां मां हि कथयित्वा विहङ्गम ! राघवाभ्यां यथातत्त्वं अथो हास्यसि जीवितम् ॥ आदेहपातं पक्षीश ! युध्यता रावणेन यत् । त्वया विदर्शितस्नेहौ श्वशुरे मम राघवौ ॥ जटायो हरणं यावत् मम रामाय वक्ष्यसि । तावच्छरीरे ते प्राणाः सञ्चरिष्यन्ति धीरपि ॥ इति पक्षिं समालिङ्ग्य स्मृत्वा श्वशुरमेव च । उच्चैः स्वरेण चुक्रोश हा राघव न पश्यसि ॥"—इत्यधिकं—ङ.

तां क्लिष्टमाल्याभरणां विलपन्तीमनाथवत् ।
अभ्यधावत वैदेहीं *रावणो राक्षसाधिपः ॥ ७ ॥
†तां लतामिव वेष्टन्तीं आलिङ्गन्तीं महाद्रुमान् ।
मुञ्च मुञ्चेति बहुशः [1]प्रवदन् राक्षसाधिपः ॥ ८ ॥
क्रोशन्तीं राम रामेति रामेण रहितां वने ।
जीवितान्ताय केशेषु जग्राहान्तकसंनिभः ॥ ९ ॥
प्रधर्षितायां सीतायां बभूव सचराचरम् ।
जगत्सर्वममर्यादं तमसाऽन्धेन संवृतम् ॥ १० ॥
न वाति मारुतस्तत्र निष्प्रभोऽभूद्दिवाकरः ।

अमर्यादं-भिन्नस्वस्वप्रकृतिकमित्यर्थः । अन्धेन तमसा-बाह्येन आभ्यन्तरेण चेत्यर्थः ॥ १० ॥

‡दृष्ट्वा सीतां परामृष्टां [2]दीनां दिव्येन चक्षुषा ॥ ११ ॥
§कृतं कार्यमिति श्रीमान् व्याजहार पितामहः ।

श्रीमान्—निस्तुलाधिकभूमविधैश्वर्यवान् भगवान् पितामहः—श्रीमदादिगुरुः ब्रह्मा ब्रह्मलोकस्थः दिव्येन चक्षुषा सीतां—

---

* क्षणं विश्रान्तः रावणः—गो. अभ्यधावत विश्रान्तः इति पाठः एतत्सम्मतः स्याद्वा । † वेष्टन्तीं लतामिव वृक्षानालिङ्गन्तीं—ति. महाद्रुमान् आलिङ्गन्तीं, अत एव लतामिव वेष्टन्तीं—रा. लतामिव भूतले वेष्टन्तीं—गो. ‡ यद्यपि 49 सर्ग एव 'जग्राह रावणः सीतां' (16) इत्यत्रैव अस्य श्लोकस्यास्त्यवसरः, तथाऽपि मध्ये जटायुषा प्रतिरोधसंभावनया, इदानीमेव सीतापहारस्य निश्चयादत्र प्रवृत्तोऽयं श्लोकः ॥ § कार्यं—बालकाण्डे विष्णुना प्रतिज्ञातं कृतमिति व्याजहार—प्रीत्यतिशयेन पुरुषान्तरासन्निधानेऽप्युदाहरत्—गो. यदर्थं अवतीर्णः देवानां तत् कार्यं कृतं—सिद्धमित्यब्रवीत्—ति.

[1] प्राप तां—अ.　[2] देवो—अ.

त्रिपदात्मिकां स्वशक्तिं मृगतां रक्षसा परामृष्टां दृष्ट्वा, कार्यं कृतमिति-यत् कार्यं—भूमैराजसकललोकशोधनलक्षणमुद्दिश्य वैराज-पुरुषद्वारा यः स्वांशोऽवतारितः तेन तत् कार्यं कृतमित्येव—सिद्ध-कल्पमित्येव व्याजहार। तूलतृणकाष्ठादिनिचयस्य अग्निज्वाला-संयोगवत् स्वशक्तित्रिपादब्रह्माग्निसीतास्पर्शननिमित्तस्य सिद्धत्वादित्या-शयः। एवं ब्रह्मप्रीत्या च ब्रह्मावतारितो ब्रह्मांशः रामः इति सुस्पष्टम् ॥ ११ ॥

प्रहृष्टाः व्यथिताश्चासन् सर्वे ते परमर्षयः ॥ १२ ॥
दृष्ट्वा सीतां परामृष्टां दण्डकारण्यवासिनः।
रावणस्य विनाशं च प्राप्तं [1]बुद्ध्वा यदृच्छया ॥ १३ ॥

प्रहृष्टाः व्यथिताः इति उभयहेतुप्रदर्शनं व्युत्क्रमतः—दृष्ट्वा इत्यादि ॥ १२–१३ ॥

स तु तां राम रामेति रुदन्तीं लक्ष्मणेति च।
जगामादाय चाकाशं रावणो राक्षसेश्वरः ॥ १४ ॥
* तप्ताभरण[2]वर्णाङ्गी पीतकौशेयवासिनी।
रराज राजपुत्री तु विद्युत् सौदामिनी यथा ॥ १५ ॥

तप्ताभरणवर्णाङ्गी इति प्राचीनः पाठः। तप्तकाञ्चनाभरणजा-लङ्कारोपेताङ्गयुक्तेत्यर्थः। विद्युत्—भ्राजादिक्विप्, विशेषेण द्योतवन्ती। सौदामिनीति। 'तेनैकदिक्' इत्यणि ङीप्, तटिदित्यर्थः ॥ १५ ॥

---

* तप्ताभरणसर्वाङ्गी—तप्ताभरणं—तप्तकाञ्चनाभरणं, तत्तुल्यवर्णाङ्गी—गो. तप्ता-भरणानि सर्वेष्वङ्गेषु यस्या इति वा।

[1] दृष्ट्वा—ङ. [2] सर्वाङ्गी—ङ.

*उद्धूतेन च वस्त्रेण तस्याः पीतेन रावणः ।
अधिकं [1]प्रतिबभ्राज गिरिर्दीप्त इवाग्निना ॥ १६ ॥

प्राप्यनाश्यत्वभावाभ्यां स्वशुभाशुभकर्मतः । सङ्गोऽतः रक्षसा सङ्गमपि वर्णयते कविः—उद्धूतेन चेत्यादि ॥ १६ ॥

तस्याः परमकल्याण्याः ताम्राणि सुरभीणि च ।
पद्मपत्राणि वैदेह्याः अभ्यकीर्यन्त रावणम् ॥ १७ ॥

रावणं अभ्यकीर्यन्त–रावणाङ्गेषु पतितान्यभूवन्नित्यर्थः । १७ ॥

तस्याः कौशेयमुद्धूतं आकाशे कनकप्रभम् ।
बभौ चादित्यरागेण ताम्रमभ्रमिवातपे † ॥ १८ ॥

आदित्यरागेण–रागयुक्तादित्यकिरणेन । अत एव—आतपे इति । अनेन ईषत्ताप उच्यते । आतपः–संध्याकालः ॥ १८ ॥

तस्याः तत् [2]सुनसं वक्त्रं आकाशे रावणाङ्कगम् ।
न रराज विना रामं विनालमिव पङ्कजम् ॥ १९ ॥

सुनसमिति । 'उपसर्गाच्च' इति नसादेशः ॥ १९ ॥

बभूव जलदं नीलं भित्त्वा चन्द्र इवोदितः ।
सुललाटं सुकेशान्तं ‡पद्मगर्भाभमव्रणम् ॥ २० ॥

---

* असङ्गाया अपि चिच्छेकैः तस्या रावणविनाशसान्निध्यद्योतनाय कविः रावणेन तस्या आसक्तिं वर्णयति–**ति.** † आतपे–ईषत्तापे सन्ध्याकाले–**ति. रा.** आतपे–मध्याह्ने आदित्यरागेण ताम्रं–अरुणं अभ्रमिव बभौ । अनेन रावणविनाशपिशुनोत्पातः सूचितः–**गो.** ‡ पद्मगर्भाभं—विकसितपद्माभम् । अव्रणं–निर्दोषम्–**गो.**

[1] परिबभ्राज–**ज.** [2] विमलं–**ज.**

पद्मस्य गर्भः—गर्भप्रदेशः । नीलं जलदं भित्त्वेति । तन्मध्य इति शेषः ॥ २० ॥

*शुक्लैः सुविमलैर्दन्तैः प्रभावद्भिरलङ्कृतम् ।
तस्याः [1]तद्विमलं वक्त्रं आकाशे रावणाङ्कगम् ॥ २१ ॥
रुदितं व्यपमृष्टास्रं चन्द्रवत् प्रियदर्शनम् ।
[2]सुनासं [3]चारु ताम्रोष्ठं आकाशे हाटकप्रभम् ॥ २२ ॥

रुदितं, मत्वर्थीयाजन्तः—रोदनवत् । व्यपमृष्टास्रं—अप्रमार्जिताश्रुकम् ॥ २२ ॥

†[4]राक्षसेन समाधूतं तस्याः तद्वदनं शुभम् ।
शुशुभे न विना रामं दिवा चन्द्र इवोदितः ॥ २३ ॥

दिवोदितचन्द्रवत् अपगतशोभमित्यर्थः ॥ २३ ॥

सा हेमवर्णा [5]नीलाङ्गं मैथिली राक्षसाधिपम् ।
शुशुभे काञ्चनी काञ्ची नीलं ‡[6]मणिमिवाश्रिता ॥ २४ ॥

काञ्चनी—स्वर्णमयी ॥ २४ ॥

सा ‖[7]पद्मगौरी हेमाभा रावणं जनकात्मजा ।
विद्युद्घनमिवाविश्य शुशुभे तप्तभूषणा ॥ २५ ॥

---

* 'शुक्लैः' इत्यादिश्लोकत्रयं प्रत्येकं प्रत्येकं वाच्यम् । 'न शुशुभे' इति क्रियापदं श्लोकत्रयसाधारणम् । श्लोकत्रयस्य एकवाक्यत्वे तु पदानां पौनरुक्त्यादिप्रसङ्गः ॥
† राक्षसेन निमित्तेन समाधूतं—भयकम्पितम्—गो. राक्षसेन्द्रसमाधूतं—राक्षसेन्द्रात् प्राप्तकम्पं—रा. ‡ नीलं गजमाश्रिता काञ्चीव काञ्चनी शुशुभे—ति. ‖ पद्मगौरी—पद्मकेसरवत् गौरदेहा—रा.

[1] स्वत्सुनसं—ङ. सुनयनं—ज. [2] सुनेत्रं—ङ. [3] चारुदन्तोष्ठं—ङ. [4] राक्षसेन्द्रसमाधूतं—ज. [5] नीलाभं—ङ. [6] गज—ज. [7] पद्मपीता—ज.

पद्मवत् गौरी—पीतदेहा । अत एव—हेमाभा पीतप्रभावती, घनमाविश्य विद्युदिव शुशुभे ॥ २५ ॥

*तरुप्रवालरक्ता सा नीलाङ्गं राक्षसेश्वरम् ।
प्राशोभयत वैदेही गजं कक्ष्येव काञ्चनी ॥ २६ ॥

तरुप्रवाळेति । पीतप्रवाळवदित्यर्थः । रक्ता, रागः—वर्णः, पीतकिसलयवद्वर्णेति यावत् ॥ २६ ॥

तस्या भूषणघोषेण वैदेह्या राक्षसाधिपः ।
[1]बभौ सचपलो नीलः सघोष इव तोयदः ॥ २७ ॥

सचपलः—चपलया विद्युता सहितः ॥ २७ ॥

उत्तमाङ्गात् च्युता तस्याः पुष्पवृष्टिः समन्ततः ।
सीतायाः ह्रियमाणायाः पपात धरणीतले ॥ २८ ॥
सा तु रावणवेगेन पुष्पवृष्टिः समन्ततः ।
†समाधूता दशग्रीवं पुनरेवा[2]भ्यवर्तत ॥ २९ ॥

सा त्विति । धरणीतले पतन्तीत्यर्थः । तत्काल इति शेषः ॥

अभ्यवर्तत पुष्पाणां धारा वैश्रवणानुजम् ।
नक्षत्रमाला विमला [3]मेरुं नगमिवोन्नतम् ॥ ३० ॥

अभ्यावृत्तपुष्पवृष्टिः कविनोत्प्रेक्ष्यते—अभ्यवर्ततेत्यादि । मेरुमिवाभ्यवर्तत—अभितोऽवर्तिष्ट तां सीतामित्यन्वयः ॥ ३० ॥

---

* ञ पुस्तके अयं श्लोकः 'विद्युन्मण्डलसंकाशं' (श्लो. 31) इत्येतदनन्तरं दृश्यते ।
† रावणगमनवेगजनितवायुना समाधूताऽपि पुनर्दशग्रीवमेव अभ्यवर्तत—अभितोऽवर्तिष्ट ; अनवरतं जायमानत्वात्—त्ति. अतिवेगेन शकटादौ गच्छति, लघूनां वस्तूनां कियद्दूरं शकटादिभिः साकं अनुगमनं लोके दृष्टं, तद्वाऽत्र विवक्षितम् ॥

[1] बभूव विमलः—ञ. [2] भ्यधावत, भ्यवर्षत—ङ. [3] मेरुश्रृङ्गमिवोत्तमम्—ङ.

* चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम् ।
विद्युन्मण्डलसङ्काशं पपात[1] मधुरस्वनम् ॥ ३१ ॥

तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा ।
जहाराकाशमाविश्य सीतां वैश्रवणानुजः ॥ ३२ ॥

तस्याः तान्यग्निवर्णानि † भूषणानि महीतले ।
सघोषाण्य[2]वकीर्यन्त क्षीणास्तारा इवाम्बरात् ॥ ३३ ॥

क्षीणाः—क्षीणपुण्याः ताराः—तारारूपावस्थिताः, पुण्यकृत इत्यर्थः ॥ ३३ ॥

तस्याः स्तनान्तरात् भ्रष्टः हारः ताराधिपद्युतिः ।
वैदेह्या निपतन् ‡ भाति गङ्गेव गगनाच्च्युता ॥ ३४ ॥

---

* चरणात्—वामचरणात्—गो. एकवचनदर्शनात्, रावणेन वामहस्तेन केशेषु ग्रहणात्, ऋश्यमूकपर्वतोपरि सुग्रीवादिभ्यः प्रक्षिप्तभूषणेषु नूपुरान्तरदर्शनाच्च—वामचरणात्—इत्युक्तमिति – भाति । परन्तु 'नूपुरे त्वभिजानामि' (किष्कि-6-22) इति द्विवचनदर्शनात् सुग्रीवेण नूपुरद्वयमेव प्रदर्शितमिति गम्यते । अत्रेदं विमर्शनीयम्—अत्र प्रतिपादितानां पुष्पवृष्टिनूपुरभ्रंशादीनां क्रियाणां देशतः कालतश्च अत्यन्ताव्यवहितत्वं न विवक्षितम् । आहत्य रावणेन आकाशमार्गतः सीताया अपहरणकाले जातानां संभवानां वर्णना क्रोडीकृत्यात्राकारि । अतश्च पुष्पवृष्ट्यादिः वृक्षादिकं परिष्वजन्त्याः सीतायाः रावणेन धर्षणकालिकः । तदानीं च भूषणानां लेशा अपि अंशतश्च्युता इति उत्तर(64-39)श्लोकादवगम्यते । अथवा रामेण दृष्टा पुष्पवृष्टिः, अत्रोच्यमाना च विभिन्नैव स्यात् । परन्तु नूपुरादिभ्रंशः प्रायः पंपासरस्समीपगमनकाल एव स्यात् । अत एवात्र रामेण तेषामनुपलंभः, सुग्रीवेणोपलंभश्च । वैदेह्या भूषणादीनां मोक्षणकथनावसरे 'स च पंपामतिक्रम्य' (54-5) इति दर्शनात्, तत्र तत्र भ्रष्टं आभरणं पंपोपवनसञ्चारिभिः सुग्रीवादिभिः संगृहीतमिति गम्यते । अतः न पूर्वापरश्लोकानां विरोधः ॥ † भूषणानि—उपात्तनूपुरादिभिन्नानि—गो. परन्तु ३१ श्लोकटिप्पण्यनुसारेण इदं सामान्यवर्णनरूपमिति युक्तम् । ‡ भाति—भाति स्म-गो. वर्णनीयमयीभावाद्वा लट् ।

[1] धरणीतले—ज. [2] वशीर्यन्त—ज.

*[1] उत्पातवाताभिहताः नानाद्विजगणायुताः ।
मा भैरिति विधूताग्राः व्याजह्रुरिव पादपाः ॥ ३५ ॥
नलिन्यो ध्वस्तकमलाः त्रस्तमीनजलेचराः ।
सखीमिव [2] गतोच्छ्वासाः अन्वशोचन्त मैथिलीम् ॥ ३६ ॥

त्रस्ताः मीनाः जलेचराश्च यासां तास्तथा । अलुक् छान्दसः । गतोच्छ्वासाः–गतप्राणाः ॥ ३६ ॥

समन्तादभिसंपत्य सिंहव्याघ्रमृग[3]द्विजाः ।
अन्वधावंस्तदा रोषात् सीतां छायानुगामिनः ॥ ३७ ॥
जलप्रपातास्रमुखाः शृङ्गैः उच्छ्रित[4]बाहवः ।
सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥ ३८ ॥

जलप्रपातरूपाणि अस्राणि मुखे येषां ते तथा ॥ ३८ ॥

ह्रियमाणां तु वैदेहीं दृष्ट्वा दीनो दिवाकरः ।
[5] प्रतिध्वस्तप्रभः श्रीमान् आसीत् पाण्डरमण्डलः ॥ ३९ ॥
† नास्ति धर्मः, कुतः सत्यं ? नार्जवं, नानृशंसता ।
[6] यत्र रामस्य वैदेहीं [7] भार्यां हरति रावणः ।
इति सर्वाणि भूतानि गणशः पर्यदेवयन् ॥ ४० ॥

यत्र–यस्मात् । गणशः—"बह्वल्पार्थात्" इति शस्, सङ्घशः इत्यर्थः ॥ ४० ॥

---

* उत्पातकालिकः वातः—उत्पातवातः । 'उत्पन्नवात' इति पाठे (गो.) रावणवेगोत्पन्नेत्यर्थः । † सर्वधारकः धर्मः, तस्यैवाभावे तदधीनानामितरेषां कावकाशः ? इत्यर्थः ।

[1] उत्पन्न–ङ. [2] गतोच्छ्वासा—गतोत्साहा–ञ. [3] द्विपाः–ङ. [4] बाहुभिः–ञ. [5] प्रविध्वस्त–ञ [6] प्रियां–ङ. [7] सीतां–ञ.

[1] वित्रस्तकाः दीनमुखाः रुरुदुः मृगपोतकाः ।
उद्वीक्ष्योद्वीक्ष्य नयनैः [2] आसपातात्विलेक्षणाः ॥ ४१ ॥

वित्रस्तकाः, स्वार्थे कन् । मृगपोतकाः—बालमृगाः ॥ ४१ ॥

सुप्रवेपितगात्राश्च बभूवुः वनदेवताः ।
विक्रोशन्तीं दृढं सीतां दृष्ट्वा [3] दुःखं तथा गताम् ॥ ४२ ॥
* तां तु, लक्ष्मण ! रामेति क्रोशन्तीं [4] मधुरस्वरम् ।
† अवेक्षमाणां बहुशः वैदेहीं धरणीतलम् ॥ ४३ ॥
[5] स तामाकुलकेशान्तां विप्रमृष्टविशेषकाम् ।
जहारात्मविनाशाय [6] दशग्रीवो मनस्विनीम् ॥ ४४ ॥

विप्रमृष्टः—विलुलितः विशेषकः—तिलकः यस्याः सा तथा ॥

ततस्तु [7] सा चारुदती शुचिस्मिता
विनाकृता बन्धुजनेन मैथिली ।
अपश्यती राघवलक्ष्मणावुभौ
विवर्णवक्त्रा भयभारपीडिता ‡ ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे द्विपञ्चाशः सर्गः

---

चारुदती । 'वयसि दन्तस्य' इति दत्रादेशः । अशेव-(४५ १/२)मानः सर्गः ॥ ४५ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे द्विपञ्चाशः सर्गः

---

* सुप्रवेपितेति श्लोकद्वयमेकान्वयं-गो. तामित्याद्यर्धचतुष्टयमेकान्वयि-रा. परन्तु—अनन्तरश्लोकेऽपि 'तां' इति सत्वात् श्लोकत्रयमपि भिन्नं वाक्यं वा । द्वितीयश्लोके—स जहारेति क्रियापदं आकृष्टव्यम् । † धरणीतलं बहुशः अवेक्षमाणां, रामलक्ष्मणप्रत्याशयेति भावः-गो. ‡ बभूवेति शेषः-गो. रा.

[1] वित्रस्ताक्षाः-ङ. [2] भयादिव विलक्षणैः-ज. [3] दुःखसमाहताम्-ङ. [4] मधुरस्वराम्-ज. [5] सीता-ङ. [6] दशग्रीवस्तपस्विनीम्-ङ. [7] सीता वदती-ङ.

## त्रिपञ्चाशः सर्गः

[रावणगर्हणम्]

*खमुत्पतन्तं तं दृष्ट्वा मैथिली जनकात्मजा ।
दुःखिता †परमोद्विग्ना भये महति वर्तिनी ॥ १ ॥

अथ सीतया क्रियमाणपारुष्य एव तां हरति स्म रावणः । खमित्यादि । वर्तिनीति । असुप्यपि णिनिरार्षः ॥ १ ॥

रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपम् ।
रुदन्ती करुणं सीता ह्रियमाणेदमब्रवीत् ॥ २ ॥

रोषरोदनाभ्यां हेतुभ्यां ताम्राक्षी ॥ २ ॥

न व्यपत्रपसे, नीच ! कर्मणाऽनेन, रावण !
[1]ज्ञात्वा विरहितां यन्मां चोरयित्वा पलायसे ॥ ३ ॥

विरहितां इति । रामलक्ष्मणाभ्यामिति शेषः ॥ ३ ॥

त्वयैव नूनं, दुष्टात्मन् ! भीरुणा हर्तुमिच्छता ।
ममापवाहितो भर्ता मृगरूपेण मायया ॥ ४ ॥
यो हि मां उद्यतः त्रातुं सोऽप्ययं विनिपातितः ।
गृध्रराजः पुराणोऽसौ श्वशुरस्य सखा मम ॥ ५ ॥

पुराणः—वृद्धः ॥ ५ ॥

---

* नात्र वर्ण्यमानवृत्तानां अत्यन्ताव्यवधानं विवक्षितमिति गतसर्गे ३१ श्लोकटिप्पण्यामेवोक्तम् । आहत्य वृत्तानां वृत्तान्तानां कथनमिदम् । अत एवात्र 'खमुत्पतन्तं' इत्युक्तेर्न विरोधः । तत्कालवृत्तान्तत्वादस्य ॥ †परमोद्विग्ना—कम्पिता—गो.

[1]भर्त्रा —ङ.

परमं खलु ते वीर्यं दृश्यते, राक्षसाधम !
विश्राव्य नामधेयं हि [1]युद्धेनास्मि जिता त्वया ॥ ६ ॥

परमं खल्वित्यादिस्तु व्यङ्ग्योक्तिः ॥ ६ ॥

ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे ।
स्त्रियाश्च हरणं, नीच ! *रहिते तु परस्य च ॥ ७ ॥

परस्य स्त्रियाः इत्यन्वयः ॥ ७ ॥

कथयिष्यन्ति लोकेषु पुरुषाः कर्म कुत्सितम् ।
सुनृशंसमधर्मिष्ठं तव शौण्डीर्यमानिनः ॥ ८ ॥

शौण्डीर्यमानिनः—शूरमानिनः ॥ ८ ॥

धिक् ! ते [2]शौर्यं च सत्त्वं च यत् [3]त्वं कथितवांस्तदा ।
कुलाक्रोशकरं लोके धिक् ते चारित्रमीदृशम् ॥ ९ ॥

तदेति । अपहरणात् पूर्वकाले इत्यर्थः । कुलाक्रोशकरं—कुलनिन्दाकरम् ॥ ९ ॥

†किं कर्तुं शक्यमेवं हि यज्जवेनैव धावसि[4] ।
मुहूर्त[5]मपि तिष्ठ त्वं न जीवन् प्रतियास्यसि ॥ १० ॥

मुहूर्तमपि तिष्ठ त्वं, यदि शूरः इति शेषः ॥ १० ॥

---

* स्त्रिया हरणमेव लज्जावहं, तत्रापि परस्य, तत्रापि असहायावस्थायामिति भावः ॥

† एवं जवेन पलायनमन्तरा किमन्यत् भवता कर्तुं शक्यम् । यदि शक्यं तिष्ठ मुहूर्तं—इत्यर्थः ।

[1] युद्धेनापहृता—ङ. [2] वीर्यं च शौर्यं च—ङ. [3] त्वया कथितं तदा—ज.
[4] एतदनन्तरं—"त्वयैव नूनं दुष्टात्मन् यद्वीर्यं कथितं मम"—इत्यधिकं—ङ.
[5] मुपतिष्ठ—ङ.

न हि चक्षुष्पथं प्राप्य तयोः पार्थिवपुत्रयोः ।
ससैन्योऽपि समर्थस्त्वं मुहूर्तमपि जीवितुम् ॥ ११ ॥

न त्वं तयोः शरस्पर्शं सोढुं शक्तः कथंचन ।
वने प्रज्वलितस्येव स्पर्शमग्नेर्विहङ्गमः ॥ १२ ॥

*साधु कृत्वाऽऽत्मनः पथ्यं साधु मां मुञ्च, रावण !
मत्प्रधर्षण[1]रुष्टो हि भ्रात्रा सह पतिर्मम ।
विधास्यति †विनाशाय त्वं मां यदि न मुञ्चसि ॥ १३ ॥

विनाशाय विधास्यतीति । यत्नमिति शेषः ॥ १३ ॥

येन त्वं व्यवसायेन बलान्मां हर्तुमिच्छसि ।
व्यवसायः स ते, नीच ! भविष्यति निरर्थकः ॥ १४ ॥

येन व्यवसायेन—स्त्रीभोगव्यवसायेन ॥ १४ ॥

न ह्यहं तमपश्यन्ती भर्तारं [2]विबुधोपमम् ।
उत्सहे शत्रुवशगा प्राणान् धारयितुं ‡चिरम् ॥ १५ ॥

तन्नैरर्थक्यमेव दर्शयति—न ह्यहमित्यादि ॥ १५ ॥

न नूनं चात्मनः श्रेयः पथ्यं वा समवेक्षसे ।
मृत्युकाले यथा मर्त्यः विपरीतानि सेवते ॥ १६ ॥

§वा इति पदम् । यथा सेवते तथा त्वमपीति शेषः ॥ १६ ॥

---

* आत्मनः पथ्यं साधु—सम्यक् कृत्वा—आलोच्य, भवतः साधु यथा भवेत् तथा मां मुञ्च । † विनाशाय—त्वद्विनाशाय । ‡ इदानीं कथं धारयसीत्यत्र परिहारः—चिरमिति—गो. रामो मां मोचयेदचिरादिति प्रत्याशया जीवामि । यदा च तादृशप्रत्याशा हता भवति तदैव प्राणान् हास्यामि इति भावः । § 'वासं' इति पदच्छेदभ्रान्तिवारणायेदमुक्तम् ।

[1] संक्रुद्धः—ज.　　[2] वासवोपमम्—क.

मुमूर्षूणां हि सर्वेषां यत् पथ्यं तन्न रोचते ।
पश्याम्यद्य हि कण्ठे त्वां कालपाशावपाशितम् ॥ १७ ॥

यथा चास्मिन् भयस्थाने न बिभेषि, [1]दशानन !
*व्यक्तं हिरण्मयान् हि त्वं संपश्यसि महीरुहान् ॥

नदीं वैतरणीं घोरां रुधिरौघनिवाहिनीम् ।
[2]असिपत्रवनं चैव भीमं पश्यसि, रावण ! ॥ १९ ॥

तप्तकाञ्चन[3]पुष्पां च वैडूर्यप्रवरच्छदाम् ।
द्रक्ष्यसे शाल्मलीं [4]तीक्ष्णां आयसैः कण्टकैश्चिताम् ॥

शाल्मली—यातनावृक्षः ॥ २० ॥

न हि त्वमीदृशं कृत्वा तस्यालीकं महात्मनः ।
[5]धरितुं शक्ष्यसि चिरं विषं पीत्वेव, †निर्घृण ! ॥ २१ ॥

धरितुं—धर्तुमिति यावत् । जीवितमिति शेषः ॥ २१ ॥

बद्धस्त्वं कालपाशेन दुर्निवारेण, रावण !
क्व गतो लप्स्यसे शर्म ‡भर्तुर्मम महात्मनः ॥ २२ ॥

भर्तुः इति । अपराद्ध इति शेषः ॥ २२ ॥

---

* पूर्वमपि (47-38) एवमुक्तम् । 68-11 श्लोकोऽपि द्रष्टव्यः ।
† 'निर्घृणः' इति पाठे निर्घृणस्त्वमित्यन्वयः । ‡ भर्तुरिति हेतौ पञ्चमी । तस्मात् हेतोः क्व गतस्सन् शर्म लप्स्यसे—गो.

[1] निशाचर—ञ. [2] खड्गपत्र—ञ. [3] चित्रां—ङ. [4] तीक्ष्णैः—ञ. [5] धारितुं—ञ.

* निमेषान्तरमात्रेण विना [1]भ्रात्रा महावने ।
राक्षसा निहता येन सहस्राणि चतुर्दश ॥ २३ ॥

विना भ्रात्रेति । एकाकिनेति यावत् ॥ २३ ॥

स कथं राघवो वीरः सर्वास्त्रकुशलो बली ।
न त्वां हन्यात् शरैस्तीक्ष्णैः [2]इष्टभार्यापहारिणम् ॥ २४ ॥

एतच्चान्यच्च † परुषं वैदेही रावणाङ्कगा ।
भयशोकसमाविष्टा करुणं विललाप ह ॥ २५ ॥

[3]तथा भृशार्तां [4]बहु चैव भाषिणीं
‡ विलापपूर्वं करुणं च भामिनीम् ।
जहार पापः [5]करुणं [6]विवेष्टतीं
नृपात्मजां आगतगात्र[7]वेपथुम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे त्रिपञ्चाशः सर्गः

---

विलापः—परिदेवनम् । अचारु(२६ १-२)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे त्रिपञ्चाशः सर्गः

---

* निमेषान्तरमात्रेण—निमेषावकाशमात्रेण—गो. † परुषं करुणं च विललाप । परुषं उक्त्वा करुणं विललापेति वा । ‡ विलापपूर्वं करुणं च यथा तथा भाषिणीं, करुणं यथा तथा विवेष्टतीं—गो.

[1] भ्रातरमाहवे—ञ. [2] दृष्ट्वा भार्या—ङ. [3] तदा—ञ. [4] बहुरूप—ङ. [5] करुणीं—ञ. [6] विचेष्टतीं—ञ. [7] वेपथुः—ञ.

## चतुःपञ्चाशः सर्गः

[ लङ्काप्रापणम् ]

ह्रियमाणा तु वैदेही कंचिन्नाथमपश्यती ।
ददर्श गिरिशृङ्गस्थान् पञ्च वानरपुङ्गवान् ॥ १ ॥

अथ रावणः सीतां लङ्कां नीत्वा राक्षसीभ्यो रक्षार्थे प्रदाय जनस्थानरक्षणार्थं अष्टौ राक्षसान् प्राहिणोत् । ह्रियमाणा त्वित्यादि । अपश्यती— अपश्यन्तीति यावत् ॥ १ ॥

तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् ।
*उत्तरीयं वरारोहा शुभान्याभरणानि च ॥ २ ॥
मुमोच यदि रामाय शंसेयुरिति [1]मैथिली ।

यदि रामाय शंसेयुरितीति । दैवगत्या दृष्टाय रामाय शंसेयुरिति प्रत्याशयेत्यर्थः ॥ २ ॥

†वस्त्रमुत्सृज्य तन्मध्ये निक्षिप्तं सहभूषणम् ॥ ३ ॥
संभ्रमात्तु दशग्रीवः तत् कर्म न स बुद्धवान् ।

उत्तरीयं वस्त्रमुत्सृज्य तन्मध्ये सहभूषणं निक्षिप्तं—बद्धं पश्चादुत्सृष्टं च तत्कर्म—भूषणोत्सर्जनरूपं कर्म दशग्रीवः सम्भ्रमात्—सभयं अपहरणजाचित्तक्षोभात् न च बुद्धवान् । यदि बुध्येत गृह्णीयादेव प्रत्यावृत्त्येत्याशयः ॥ ३ ॥

पिङ्गाक्षाः तां विशालाक्षीं नेत्रैरनिमिषैरिव ॥ ४ ॥

---

* आभरणानि कौशेये बद्ध्वा मुमोचेत्यर्थः—गो. † तन्मध्ये—वानरमध्ये सहभूषणं—भूषणसहितं निक्षिप्तम् । तयेति शेषः—ति. एतद्रीत्या पूर्वार्धं प्रत्येकं वाक्यम् । पूर्वश्लोकोक्तमोचनप्रकार एव स्पष्टीक्रियते अत्र ।

[1] भामिनी—ङ.

विक्रोशन्तीं तथा सीतां ददृशुः वानरर्षभाः ।
*स च पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम् ॥ ५ ॥
जगाम रुदतीं गृह्य [1]वैदेहीं राक्षसेश्वरः ।
तां जहार सुसंहृष्टः रावणो मृत्युमात्मनः ॥ ६ ॥
उत्सङ्गेनेव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् ।
वनानि सरितः शैलान् सरांसि च विहायसा ॥ ७ ॥
स क्षिप्रं समतीयाय शरश्चापादिव च्युतः ।

विहायसा—आकाशमार्गेण ॥ ७ ॥

तिमिनक्रनिकेतं तु वरुणालयमक्षयम् ॥ ८ ॥
सरितां शरणं [2]गत्वा समतीयाय सागरम् ।

तिमिः—मत्स्यविशेषः ॥ ८ ॥

संभ्रमात् †परिवृत्तोर्मिः रुद्धमीनमहोरगः ॥ ९ ॥
वैदेह्यां ह्रियमाणायां बभूव वरुणालयः ।

संभ्रमात्—सीतापहारदर्शनजक्षोभात् । परिवृत्तोर्मिः—स्वभावप्राप्तोर्मिप्रवृत्तिरहितः । रुद्धाः—रुद्धप्रचाराः मीनादयो यस्य स तथा ॥

अन्तरिक्षगता वाचः ससृजुः चारणास्तदा ॥ १० ॥

---

* पम्पां—पम्पोपर्याकाशम् । लङ्कामभिमुखः इत्यनेन एतावत्पर्यन्तं रामाश्रमदृष्टिर्गतः ; ततः स्वच्छन्दं गतवानिति गम्यते । अत एव सुसंहृष्ट इति वक्ष्यते—गो. अथवा—उत्तरत्र सीतान्वेषणप्रकरणे दक्षिणां दिशं हनुमदादीनां प्रेषणोपयोगितया सुग्रीवेण रावणगमनदिक्प्रदेशावधानसूचनाय वा लङ्कामभिमुख इत्युक्तिः स्यात् ।
† परिवृत्तोर्मिः—उल्लोलकल्लोलः क्षुभितोर्मिरिति वा ।

[1] मैथिलीं—ङ. [2] रम्यं—ङ.

* एतदन्तो दशग्रीवः इति सिद्धास्तदाऽब्रुवन् ।
चारणाः—देवजातिभेदाः ॥ १० ॥

स तु सीतां [1]विवेष्टन्तीं अङ्कनादाय रावणः ॥ ११ ॥
प्रविवेश पुरीं लङ्कां रूपिणीं मृत्युमात्मनः ।
सोऽभिगम्य पुरीं लङ्कां सुविभक्तमहापथाम् ॥ १२ ॥
संरूढकक्ष्याबहुलं स्वमन्तःपुरमाविशत् ।
संरूढं—प्रतिष्ठितम् ॥ १२ ॥

तत्र [2]तामसितापाङ्गां शोकमोह[3]परायणाम् ॥ १३ ॥
निदधे रावणः सीतां † मयो [4]मायामिव स्त्रियम् ।
तत्र—अन्तःपुरे ॥ १३ ॥

अब्रवीच्च दशग्रीवः पिशाचीर्घोरदर्शनाः ॥ १४ ॥
यथा नेमां पुमान् स्त्री वा सीतां पश्यत्यसंमतः ।
यथेत्यादि । इमां सीतां असंमतः—अस्मदननुज्ञातः पुमान् स्त्री वा अननुज्ञाता यथा चेत् न पश्यति, तथा रक्षतेति शेषः ॥ १४ ॥

मुक्तामणिसुवर्णानि वस्त्राण्याभरणानि च ॥ १५ ॥
यद्यदेच्छेत् तदा चास्या देयं ‡ मच्छन्दतो यथा ।

---

* एषः—सीतापहारः अन्तः—अवसानकालः यस्य । रावणस्य मृत्युस्सन्निहित इति यावत् । † मयः—त्रिपुराधिपतिः मायां—मायामयीं, आश्चर्यशक्तियुक्तामित्यर्थः । स्त्रियं—स्वयंप्रभां बिले यथा निदधे, तथेत्यर्थः—**गो.** ‡ मच्छन्दतः—मदाज्ञातः यथा—यथावत् देयम्—**गो.** मच्छन्दानुवर्तनं यथा भवद्भिः क्रियते, तथा सीताया अपि भूषणादीच्छा तदैव भवद्भिः पूरणीयेत्यर्थः ॥

[1] विचेष्टन्तीं—ज. [2] तामसितापाङ्गीं—ज. [3] समन्विताम्—ज.
[4] मायामिवासुरीम्—ज.

"यद्यदेच्छेत् तदा चास्या देयं मच्छन्दतो यथा" इति पाङ्क्तः पाठः। यद्यद्वस्तु यदा इच्छेत् तदैव च यथाऽस्या इष्टं भवति, तथैव तत् सर्वं देयं, मच्छन्दतः—मद्वशप्राप्तिसिद्ध्यर्थमेव॥ १५॥

या च वक्ष्यति वैदेहीं वचनं किंचिदप्रियम्॥ १६॥
अज्ञानाद्यदि वा ज्ञानात् *न तस्या जीवितं प्रियम्।

तां प्रति अनिष्टवचनमपि न कयाऽपि कर्तव्यमित्यनुशास्ति—या चेत्यादि। या च वक्ष्यति तस्याः स्वीयं जीवितं न प्रियम्। तां मारयामीत्यर्थः॥ १६॥

तथोक्त्वा राक्षसीस्तास्तु राक्षसेन्द्रः प्रतापवान्॥ १७॥
निष्क्रम्यान्तःपुरात् तस्मात् †किंकृत्यमिति चिन्तयन्।
ददर्शाष्टौ महावीर्यान् राक्षसान् पिशिताशनान्॥ १८॥
स तान् दृष्ट्वा महावीर्यः ‡वरदानेन मोहितः।
उवाचैतानिदं वाक्यं प्रशस्य बलवीर्यतः॥ १९॥

वरदानेन पैतामहेन मोहितः—"रामशतादपि नास्माकं काचित् भीतिः" इति चिन्तयमानः इत्यर्थः। बलवीर्यतः इति। तद्वशेनेत्यर्थः॥ १९॥

नानाप्रहरणाः क्षिप्रं इतो गच्छत [1]सत्वराः।
जनस्थानं हतस्थानं §भूतपूर्वं खरालयम्॥ २०॥

---

*यदि भर्त्रा जीवनेच्छा स्यात्, तर्हि अप्रियं न वक्तव्यम् इत्यभिप्रायः। †कृत्यं—कर्तव्यं, इदानीं अवशिष्टं कर्तव्यं किमस्ति? इति चिन्तयामास। तदा तत्र सन्निहितान्, आहूतान् वा राक्षसान् ददर्श। ‡वरं—मानुषादन्यत्रावध्यत्वरूपम्। तादृशस्य मे रामः किं कुर्यादिति मोहितः। §पूर्वं खराश्रयभूतं, अद्य हतस्थानं जनस्थानं गच्छतेत्यन्वयः।

[1] राक्षसाः—ङ.

खरालयं—भूतपूर्वम् । पूर्वं खरालयत्वं भूतः—प्राप्तः । 'भूतपूर्वे चरट्' इत्यादिनिर्देशात् समासः ॥ २० ॥

[1] तत्रोष्यतां जनस्थाने शून्ये निहतराक्षसे ।
पौरुषं बलमाश्रित्य त्रासमुत्सृज्य दूरतः ॥ २१ ॥

[2] बलं हि सुमहद्यन्मे जनस्थाने निवेशितम् ।
सदूषणखरं युद्धे हतं रामेण सायकैः ॥ २२ ॥

* तत्र क्रोधो [3] ममामर्षात् धैर्यस्योपरि [4] वर्तते ।
वैरं च सुमहज्जातं रामं प्रति सुदारुणम् ॥ २३ ॥

तत्र—वधनिमित्तम् । धैर्यस्योपरि क्रोधः इति । न तु भीत्या, नापि वृथा क्रोध इत्यर्थः ॥ २३ ॥

† निर्यातयितुमिच्छामि तच्च [5] वैरमहं रिपोः ।
न हि लप्स्याम्यहं निद्रां अहत्वा संयुगे रिपुम् ॥ २४ ॥

निर्यातयितुं—अपनेतुम् ॥ २४ ॥

तं त्विदानीमहं हत्वा खरदूषणघातिनम् ।
रामं शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ॥ २५ ॥

‡ जनस्थाने वसद्भिस्तु भवद्भी राममाश्रिता ।
प्रवृत्तिरुपनेतव्या किं करोतीति तत्त्वतः ॥ २६ ॥

---

* तत्र—तन्निमित्तं जातात् अमर्षात्—असहनात्: धैर्यस्योपरि क्रोधः वर्तते, न तु अशक्यप्रतीकारात् क्रोध इति भावः । † 'वैरशुद्धिः प्रतीकारः वैरनिर्यातनं च सा' इत्यमरः । ‡ रामवधोपयोगितया तस्य गत्यागत्यादिकं भवद्भिः ज्ञेयमिति भावः ।

[1] तत्रास्यतां—ज. [2] बहु सैन्यं महावीर्यं—ज. [3] ममापूर्वो—ज. [4] वर्धते—ज. [5] वैरं महारिपोः—ज.

अप्रमादाच्च गन्तव्यं सर्वैरपि निशाचरैः ।
कर्तव्यश्च सदा यत्नः राघवस्य वधं प्रति ॥ २७ ॥

युष्माकं च बलज्ञोऽहं बहुशो रणमूर्धनि ।
अतश्चास्मिन् जनस्थाने मया यूयं [1]नियोजिताः ॥ २८ ॥

ततः प्रियं वाक्यमुपेत्य राक्षसाः
महार्थमष्टावभिवाद्य रावणम् ।
विहाय लङ्कां सहिताः प्रतस्थिरे
*यतो जनस्थानमलक्ष्यदर्शनाः ॥ २९ ॥

महान् अर्थः—अभिधेयः यस्य तत् तथा ॥ २९ ॥

ततस्तु सीतामुपलभ्य [2]रावणः
सुसंप्रहृष्टः †परिगृह्य [3]मैथिलीम् ।
प्रसज्य रामेण च वैरमुत्तमं
बभूव मोहात् मुदितः स [4]राक्षसः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे चतुःपञ्चाशः सर्गः

---

उपलभ्य—प्राप्य । परिगृह्य—परिग्रहत्वेन विभाव्य चेत्यर्थः । तथा उत्तरसर्गान्तेऽपि 'ममेयमिति मन्यते' इति । प्रसज्य-संपाद्य । नाग(३०)मानः सर्गः ॥ ३० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे चतुःपञ्चाशः सर्गः

---

* यतः—यद्दिशि जनस्थानं तद्दिशीत्यर्थः । अलक्ष्यदर्शनाः, अन्तर्धानविद्य (कामरूपा हि ते इति भाव )-नि. अलक्ष्यदर्शनाः—वेगातिशयेन दुष्प्रेक्षस्वरूपाः-गो.
† एवं मैथिलीप्राप्त्या, तस्यां मोहात् रामेण जातं स्वप्राणान्तकरं वैरमपि नावगतवान् रावण इति भावः ।

[1] निवेशिताः-ज. [2] मैथिली-ज. [3] रावणः-ज. [4] रावणः-ङ.

## पञ्चपञ्चाशः सर्गः

[सीताप्रलोभनप्रयत्नः]

*संदिश्य राक्षसान् घोरान् रावणोऽष्टौ महाबलान् ।
आत्मानं बुद्धिवैक्लब्यात् कृतकृत्यममन्यत ॥ १ ॥

अथ रावणस्य स्वैश्वर्यप्रदर्शनपूर्वं स्त्रीभावप्रार्थनम् । संदिश्येत्यादि ॥ १ ॥

स चिन्तयानो वैदेहीं [1] कामबाणसमर्पितः ।
प्रविवेश गृहं रम्यं सीतां द्रष्टुमभित्वरन् ॥ २ ॥
स प्रविश्य तु तद्वेश्म रावणो राक्षसाधिपः ।
अपश्यद्राक्षसीमध्ये सीतां शोकपरायणाम् ॥ ३ ॥
† अश्रुपूर्णमुखीं दीनां शोकभाराभिपीडिताम् ।
वायुवेगैरिवाक्रान्तां मज्जन्तीं नावमर्णवे ॥ ४ ॥
मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृताम् ।
अधोमुखमुखीं [2] सीतां ‡ अभ्येत्य च निशाचरः ॥ ५ ॥

अधोमुखं मुखं यस्याः सा तथा ॥ ५ ॥

तां तु [3] शोकपरां दीनां अवशां राक्षसाधिपः ।
[4] स बलात् दर्शयामास गृहं देवगृहोपमम् ॥ ६ ॥

---

* पूर्वं स्वप्रभावकथनमुखेन प्रलोभनं कृतवान् । अथ भोगोपकरणप्रदर्शनमुखेन प्रलोभयति पञ्चपञ्चाशे—गो. † अश्रुत्यादिश्लोकत्रयमेकं वाक्यम—गो. वस्तुतस्तु स प्रविश्येत्यारभ्य श्लोकत्रयमेकं वाक्यम् । गृहं प्रविश्य, सीतामभ्येत्य उक्तविशेषणां सीतामपश्यदिति योजना । अथवा — स प्रविश्येत्यादिश्लोकस्यैव विस्तरः- अश्रुत्यादिश्लोकद्वयम् । अतः अपश्यदित्यस्यैवाकर्षः । ‡ अभ्येत्य—तत्समीपं प्राप्य, अतिष्ठदिति शेषः—रा.

[1] कामबाणैः प्रपीडितः—ज. [2] दीनां तामभ्येत्य—ङ. [3] शोकवशाद—ज. [4] विविधं, स्वबलं—ङ.

*हर्म्यप्रासादसंबाधं स्त्रीसहस्रनिषेवितम् ।
नानापक्षिगणैर्जुष्टं नानारत्न[1]समन्वितम् ॥ ७ ॥

[2]काञ्चनैस्तापनीयैश्च स्फाटिकैः राजतैरपि ।
वज्रवैडूर्यचित्रैश्च † स्तम्भैः [3]दृष्टिमनोहरैः ॥ ८ ॥

‡ दिव्यदुन्दुभि[4]निर्ह्रादं तप्तकाञ्चन[5]तोरणम् ।
सोपानं काञ्चनं चित्रं आरुरोह तया सह ॥ ९ ॥

तया सह आरुरोह—सीतया सहेत्यर्थः ॥ ९ ॥

दान्तका राजताश्चैव गवाक्षाः प्रियदर्शनाः ।
हेमजालावृताश्चासन् तत्र प्रासादपङ्क्तयः ॥ १० ॥

हेममयाः जालाः—गवाक्षाणि तथा ॥ १० ॥

सुधामणि[6]विचित्राणि भूमि[7]भागानि सर्वशः ।
दशग्रीवः स्वभवने प्रादर्शयत मैथिलीम् ॥ ११ ॥

सुधया—वज्रलेपेन मणिभिः—रत्नैश्च विचित्राणि तथा । भूमिभागानीत्यार्षं नपुंसकम् ॥ ११ ॥

दीर्घिकाः पुष्करिण्यश्च § नाना[8]वृक्षसमन्विताः ।
रावणो दर्शयामास सीतां शोकपरायणाम् ॥ १२ ॥

---

* हर्म्यप्रासादेत्यादि गृहविशेषणम् । † स्तम्भैः च जुष्टं गृहं दर्शयामास । श्लोकत्रयमेकं वाक्यम् । ‡ पूर्वार्धमपि गृहविशेषणं, तादृशं गृहं दर्शयितुं सोपानमारुरोह इति केचित् । वस्तुतः—तोरणं—पुरद्वारम् । तत्र च भेर्यादिवादनं राजगृहप्रसिद्धम् । अतः दिव्येत्यादि तोरणस्यैव विशेषणम् । सोपानं—सोपानवदित्यर्थः । अथवा तादृशं तोरणमारोढुं सोपानमारुरोह । § नानावृक्षसमन्विताः, आभत इति ऊह्यम् ।

[1] विभूषितम्–ङ. [2] दान्तकै–ज. [3] जुष्टं मनो–ङ. [4] निर्घोषं–ज. [5] भूषणम्–ज. [6] विचित्रांश्च–ङ. [7] भागान् सहस्रशः–ङ. [8] पुष्प–ज.

दर्शयित्वा तु वैदेह्याः कृत्स्नं तद् भवनोत्तमम् ।
उवाच वाक्यं पापात्मा [1]सीतां लोभितुमिच्छया ॥ १३ ॥

लोभितुं—प्रलोभायितुम् ॥ १३ ॥

दश राक्षसकोट्यश्च द्वाविंशतिरथापराः ।
[2]तेषां प्रभुरहं, सीते! सर्वेषां भीमकर्मणाम् ॥ १४ ॥

दशेत्यादि । द्वात्रिंशत्कोटिसंख्याः इत्यर्थः ॥ १४ ॥

* वर्जयित्वा [3]जरावृद्धान् बालांश्च रजनीचरान् ।
सहस्रं जनमेकस्य मम कार्यपुरःसरम् ॥ १५ ॥

सहस्रं—अनेकम् । जनमिति आर्षं नपुंसकत्वम् । एकस्य मम कार्यपुरःसरं—कार्ये—प्रयोजने साधकतया पुरः सरतीति तथा । अस्तीति शेषः ॥ १५ ॥

† यदिदं [4]राजतन्त्रं मे त्वयि सर्वं प्रतिष्ठितम् ।
जीवितं च, विशालाक्षि! त्वं मे प्राणैर्गरीयसी ॥ १६ ॥

यदिदं—उक्तरूपं राजतन्त्रं—राजपरिकरम् । तत् सर्वं त्वयि प्रतिष्ठितम् ॥ १६ ॥

---

* इदमर्धं ञ पुस्तके 'तेषां प्रभुरहं' इत्यतः पूर्वं दृश्यते । तदानीं तु अन्वयः स्वरसः । यथापाठेऽपि अन्वयस्तु पूर्वेणैव युक्तः । गोविन्दराजस्तु बालवृद्धान् वर्जयित्वा सहस्रं परिचारकजातमस्तीति व्याचख्यौ ॥ † राजतन्त्रं—राजशासनं सर्वमिति वा । राज्यतन्त्रमिति पाठे न क्लेशः ।

[1] रावणो जनकात्मजाम्—ङ. [2] येषां—ङ. [3] जनान् वृद्धान्—ञ.
[4] राज्यतन्त्रं—ञ.

*[1] बहूनां स्त्रीसहस्राणां मम योऽसौ परिग्रहः ।
तासां [2] त्वमीश्वरा, सीते! मम भार्या भव, प्रिये! ॥१७॥

ईश्वरा भवेति । पुंयोगाभावात् टाबेव । पाक्षः पाठश्च टाबन्तः साधुः ॥ १७ ॥

† साधु, किं तेऽन्यथाबुद्ध्या, रोचयस्व वचो मम ।
[3] भजस्व माऽभितप्तस्य प्रसादं कर्तुमर्हसि ॥ १८ ॥

मम वचः इत्यन्वयः । मा—माम् । अभितप्तस्येति । कामाभितप्तस्येत्यर्थः ॥ १८ ॥

परिक्षिप्ता ‡[4] समुद्रेण लङ्केयं शतयोजना ।
नेयं धर्षयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ १९ ॥

शतयोजनेति । भूमेरिति शेषः ॥ १९ ॥

न देवेषु न यक्षेषु न [5] गन्धर्वेषु § पक्षिषु ।
अहं पश्यामि लोकेषु यो मे वीर्यसमो भवेत् ॥ २० ॥
राज्यभ्रष्टेन दीनेन तापसेन [6] गतायुषा ।
किं करिष्यसि रामेण मानुषेणाल्प[7]तेजसा ॥ २१ ॥
भजस्व, सीते! मामेव भर्ताहं सदृशस्तव ।
यौवनं ह्यध्रुवं, भीरु! रमस्वेह मया सह ॥ २२ ॥

---

* बहूनां स्त्रीसहस्राणां मध्ये मम योऽसौ परिग्रहः—पत्नी समुदायः अस्ति तादृशपत्नीनामपि त्वं ईश्वरा भव । † 'साधु' इति लोकव्यवहारशैली । ‡ सहस्रेण—अनेकराक्षसैः परिक्षिप्ता—परिवृता—गो. § जटायुषः स्मरणात् पक्षिष्विति स्यात् ।

[1] बह्वीनामुत्तमस्त्रीणां—ज. [2] त्वमीश्वरी—ङ. [3] भज कामाभि—ङ. [4] सहस्रेण—ङ. [5] गन्धर्वेषूरगेषु च—ङ. गन्धर्वेषु नर्षिषु—ज. [6] पदातिना—ज. [7] चेतसा—ङ.

*दर्शने मा कृथा बुद्धिं राघवस्य, वरानने ।
काऽस्य शक्तिरिहागन्तुमपि, सीते! †मनोरथैः ॥ २३ ॥

न शक्यो वायुराकाशे पाशैर्बद्धुं[1] महाजवः ।
दीप्यमानस्य वाप्यग्नेः ग्रहीतुं [2] विमलां शिखाम् ॥ २४ ॥

अशक्यार्थे दृष्टान्तः—न शक्य इत्यादि ॥ २४ ॥

त्रयाणामपि लोकानां न तं पश्यामि, शोभने ।
विक्रमेण नयेद्यस्त्वां मद्बाहु[3]परिपालिताम् ॥ २५ ॥

[4]लङ्कायां सुमहद्राज्यं इदं त्वमनुपालय ।
त्वत्प्रेष्या मद्विधाश्चैव देवाश्चापि [5]चराचराः ॥ २६ ॥

'त्वत्प्रेष्या मद्विधाश्चैव देवाश्चापि चराचराः' इतीदमेकं घुणाक्षरन्यायेन सम्यगागतं रावणमुखात् ॥ २६ ॥

अभिषेकोदकक्लिन्ना तुष्टा च रमयस्व माम् ।
‡दुष्कृतं यत् पुराकर्म वनवासेन तत् गतम् ।
[6]यश्च ते सुकृतो धर्मः तस्येह फलमाप्नुहि ॥ २७ ॥

अभिषेकोदकक्लिन्नेति । अभिषेकः—भोगाय स्नानम् । तदुदकेनार्द्रा तथा । वनवासेन तद्गतमिति । वनवासदुःखानुभवेन क्षपितमित्यर्थः ॥ २७ ॥

---

* राघवस्य दर्शने बुद्धिमित्यन्वयः । †मनोरथैरप्यागन्तुं—अत्रागमनचिन्तां कर्तुमपि न शक्तिरित्यर्थः । ‡भवत्या पुरा यत् पापं कृतं, तत् वनवासेन—वनवासक्लेशानुभवेन गतः—क्षपितम् । इतः परं तु पुण्यफलस्यैवानुभवकाल इत्यर्थः ।

[1] मनोजवः–ङ. [2] विमला शिखा–ज. [3] बल–ङ. [4] लङ्कायाः–ज. [5] चराचरम्–ज. [6] यश्च ते सुकृतं कर्म–ज.

इह माल्यानि सर्वाणि दिव्यगन्धानि, मैथिलि ।
भूषणानि च मुख्यानि सेवस्व च मया सह ॥ २८ ॥

पुष्पकं नाम, सुश्रोणि ! भ्रातुर्वैश्रवणस्य मे ।
विमानं सूर्यसङ्काशं तरसा [1] निर्जितं मया ॥ २९ ॥

विशालं रमणीयं च [2] तद्विमानमनुत्तमम् ।
तत्र, सीते ! मया सार्धं विहरस्व यथासुखम् ॥ ३० ॥

वदनं पद्मसङ्काशं विमलं चारुदर्शनम् ।
शोकार्तं तु, वरारोहे ! न भ्राजति, वरानने ! ॥ ३१ ॥

एवं वदति तस्मिन् सा वस्त्रान्तेन वराङ्गना
पिधायेन्दुनिभं सीता [3] मुखमश्रूण्यवर्तयत् ॥ ३२ ॥

ध्यायन्तीं तामिवास्वस्थां [4] दीनां चिन्ताहतप्रभाम् ।
उवाच वचनं [5] पापः रावणो [6] राक्षसेश्वरः ॥ ३३ ॥

अस्वस्थामिवेति । भूताविष्टामिवेत्यर्थः ॥ ३३ ॥

* अलं व्रीडेन, वैदेहि ! धर्म[7]लोपकृतेन च ।

---

* व्रीडेन अलं, धर्मलोपकृते च न—न शोचनीयं —इति केचित् । अथवा व्रीडेन—स्त्रीसहजलज्जया अलम् । धर्मलोपकृतेन व्रीडेन च अलम् । चकारस्वारस्यात् एवं व्याख्या स्वरसा ॥

[1] चार्जितं रणे—ङ. [2] तद्विमानं मनोजवम्—ज. [3] मन्द—ज. [4] सीतां—ज.
[5] वीर्यां—ङ. वीरः—ज. [6] रजनीचरः—ज. [7] लोपेन तेन ते—ङ.

*आर्षोऽयं [1]देवि! निष्यन्दः यस्त्वामभि[2]भविष्यति ॥

तूष्णीमवस्थानात् व्रीळया जोषमवस्थितिं मन्यमानः आह— अलं व्रीडनेत्यादि। धर्मलोपः—स्वभर्तृपरित्यागपरप्राप्तिलक्षणः, तत्कृतेन व्रीडन—लज्जया अलं—मास्तु इत्यर्थः। कुतः? इत्यतः—आर्षोऽय-मित्यादि। 'देवि निष्यन्दः' इति पाठः। देवि! त्वां अभि—उद्दिश्य मया क्रियमाणः यो निष्यन्दः—स्नेहसंबन्धः, सोऽयं आर्षो भविष्यति—ऋषिदृष्ट एव ब्राह्मो विवाहः भविष्यति। "आहूय" इत्यादिना प्रतिपाद्यमानविवाहभेदेषु "बलात्कारेण राक्षसः" इति स्वकुलोचितविवाहतया धर्म एव तत्सम्बन्धवचः, तव च परतन्त्रस्त्री-स्वभाववत्याः इत्यर्थः! स्वामिनि एवमपि किं धर्मः? न—कन्याया एव बलात्कारग्रहः आर्षस्तु राक्षसविवाह इत्यर्थः ॥ २४ ॥

---

* यो दैवनिष्यन्दः—दैवकृतसम्बन्धः त्वामभिगमिष्यति, अयं—सम्बन्धः आर्षः—ऋषिप्रोक्तः, न त्वधर्म इत्यर्थः। अत्र नारदः—'परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ताः स्वयंभुवा। पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा। कन्या वाऽक्षतयोनिर्वा पाणि-ग्रहणदूषिता। पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा॥ देशधर्मानपेक्ष्य स्त्री गुरुभिर्या प्रदीयते। उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्तिता॥ मृते भर्तरि तु प्राप्ता देवरादीनपास्य या। उपगच्छेत् परं कामात् सा तृतीया प्रकीर्तिता॥ प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या। तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता' इति—गो. लोके स्वैराचारा अपि शास्त्रैकदेशवचनादिकं स्वकृत्ये प्रमाणत्वेन नयन्तः स्वकृत्यस्य धर्मत्वं यथा वा प्रकटयन्ति, तथा राक्षसविवाहस्य ऋषिभिः विवाहविशेषत्वकथनमात्रेण तस्यार्षत्वमभि-मत्याह रावणः कामान्धः इति केचित्। अपरे तु—य इति परोक्षेणात्मनो निर्देशः। यो रावणः त्वामभिगमिष्यति—त्वल्लाभमेव पुरुषार्थं मन्यमान आस्ते, नासौ प्राकृतवत् विज्ञेयः, किं तर्हि, दैवनिष्यन्दः—देवस्य चतुर्मुखस्य वंशजः, आर्षः—ऋषेर्विश्रवसः पुत्रः। न खल्वेवंभूतः जातुचित् लोकविरुद्धं धर्मविरुद्धं वाऽऽचरेत्। तस्मात् नास्मिन् विषये तव लज्जा, धर्मलोपशङ्का वा युक्ता—इति व्याचख्युः॥

[1] दैवनिष्यन्दः—ङ. [2] गमिष्यति—ङ.

एतौ पादौ *[1] मया † स्निग्धौ शिरोभिः परिपीडितौ ।
प्रसादं कुरु मे क्षिप्रं वश्यो दासोऽहमस्मि ते ॥ ३५ ॥

इमाः ‡[2]शून्याः मया वाचः शुष्यमाणेन भाषिताः ।
न चापि रावणः कांचित् मूर्ध्ना स्त्रीं प्रणमेत ह ॥ ३६ ॥

इमाः शून्याः—शून्यचित्तप्रवृत्ताः ; कामैकवृत्त्या हताशेष-वृत्तित्वात् शून्यत्वं चित्तस्य, ताः इमाः वाचः शुष्यमाणेन—काम-परितप्यमानेन मया भाषिताः । एवं दासोऽहमित्यन्ताभाषणं त्वदन्यत्र न क्वापि रावणस्याभूदित्याह—न चापीति ॥ ३६ ॥

एवमुक्त्वा दशग्रीवः मैथिलीं जनकात्मजाम् ।
कृतान्तवशमापन्नः ममेयमिति मन्यते ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे पञ्चपञ्चाशः सर्गः

---

मन्यते—अमंस्त । असंग(३७ १/२)मानः सर्गः ॥ ३७ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे पञ्चपञ्चाशः सर्गः

---

* मया कर्त्रा ; शिरोभिः, करणैः परिपीडितौ इत्यन्वयः । † स्निग्धौ—परस्परानुरूपाविति यावत् । ‡ शुष्यमाणेन—अनङ्गेन तप्यमानेन मया इमाः शून्याः—नीचाः वाचः भाषिताः, कुतः ? यस्मात् रावणः स्त्रीं न प्रणमेत—प्रणमेत् । अदृष्टपूर्वत्वात् नीचोक्तिः स्वस्यापि विस्मयावहा जातेति भावः-गो. शून्या इति काकुर्वा । इमा वाचः निरर्था वा इति ॥

[1] महास्निग्धौ—ङ.　　[2] शून्यमयाः—ञ.

## षट्पञ्चाशः सर्गः

### [वत्सरावधिकरणम्]

**सा तथोक्ता तु वैदेही निर्भया शोककर्शिता ।**
**तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत ॥ १ ॥**

तथोक्तया सीतया पारुष्यप्रत्युत्तरो रावणः आनुकूल्यप्रतीक्षी द्वादशमासावधिकां प्रतिज्ञाय अथ अन्तःपुरात् अशोकवनिकायां स्थापयामास । ननु बलात् संस्पृष्ट्वा गृहीत्वा स्वान्तःपुरं नीतवतः बलादुपभोगे ईषत्करे किमिति कालप्रतीक्षा ? अन्ततोऽपि प्रातराशार्थमेव अवधिकल्पनम् । न तु बलादुपभोगाय । उच्यते—स्त्रियो बलादुपभोगे मूर्धा ते विपतिष्यतीति दिव्याप्सरश्शापवशात्* तदशक्यं तेन । अतः आनुकूल्यप्रतीक्षा । पाण्डुवत् मरणमप्यनादृत्य काममोहतो भोगाप्रवृत्तिः अन्तर्यामितद्भगवदाज्ञया† । एवं अक्षतत्वादेव सर्वदैवतैस्तथोक्त्या च अन्ते पुनः प्रतिग्राहिता । तस्मात् अशङ्क्यदोषा माता वैदेही । त्रिपदप्राथिमवतां योगिनां अयमर्थः अम्बया सुस्पष्टीकृतः । सा तथोक्तेत्यादि । निर्भयेति । बलादुपभोगे देहं योगतः त्यक्ष्यामीति परमदार्ढ्येबलात् इति शेषः । तृणमन्तरतः कृत्वेति । साक्षात् पापात्मकपरपुरुषसंभाषणदोषपरिहारार्थेति शेषः ॥ १ ॥

---

* नलकूबरमभिसरन्तीं रंभां धर्षितवते रावणाय तथा नलकूबरेण शापो दत्तः—इति उत्तरकाण्डे २६ सर्गे वर्ण्यते । † वस्तुतः—अद्य, श्वो वा, परश्वो वा सीता स्ववशे भविष्यत्येवेति प्रत्याशया तथा चिरभोगानुभवं प्रतीक्षतो रावणस्य, सकृद्भोगेन मरणसंपादने न प्रवृत्तिरभूदिति ज्ञायते । 'प्रातराशार्थं वधिष्यन्ति' इत्यादिकमपि भीषणायैव । अथवा रत्युपक्रममात्रेणैव मरणं भवेत् शापवशात् । अतश्च भोगोऽपि न सिद्ध्येदिति भीतिः हेतुः स्यात् ॥

राजा दशरथो नाम * धर्मसेतुरिवाचलः ।
सत्यसन्धः परिज्ञातः यस्य पुत्रः स राघवः ॥ २ ॥

धर्मसेतुरिवेत्येकं पदम् . 'इवेन विभक्त्यलोपः समासश्च' इति । सेतुः—मर्यादया अवस्थितिहेतुः । धर्मस्य सेतुरिव मर्यादाप्रतिष्ठापकः इत्यर्थः । परिज्ञातः—प्रसिद्धः ॥ २ ॥

रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः ।
दीर्घबाहुः विशालाक्षः दैवतं हि पतिर्मम ॥ ३ ॥
इक्ष्वाकूणां कुले जातः सिंहस्कन्धो महाद्युतिः ।
लक्ष्मणेन सह भ्रात्रा यस्ते प्राणान्[1] हरिष्यति ॥ ४ ॥
प्रत्यक्षं यद्यहं तस्य त्वया स्यां धर्षिता बलात् ।
शयिता त्वं हतः संख्ये जनस्थाने यथा खरः ॥ ५ ॥
य एते राक्षसाः † प्रोक्ताः घोररूपा महाबलाः ।
राघवे निर्विषाः सर्वे सुपर्णे पन्नगा यथा ॥ ६ ॥

य एते प्रोक्ता इति । त्वया मत्पुरतः इति शेषः ॥ ६ ॥

तस्य ज्याविप्रमुक्तास्ते शराः काञ्चनभूषणाः ।
शरीरं विधमिष्यन्ति गङ्गाकूलमिवोर्मयः ॥ ७ ॥
‡ असुरैर्वा सुरैर्वा त्वं यद्यवध्योऽसि, रावण !
§ उत्पाद्य सुमहद्वैरं जीवंस्तस्य न मोक्ष्यसे ॥ ८ ॥

---

* धर्मेति पृथक्पदं लुप्तषष्ठीकम् । धर्मस्य अचलः सेतुरिव मर्यादाप्रतिष्ठापकः–ति. धर्मसेतुः–धर्मस्य सेतुरिव मर्यादास्थापकः इत्यर्थः । अचलः–स्थिरः–गो. † प्रोक्ताः—गमनाय प्रेरिताः–रा. रामवधार्थमिति शेषः । ‡ रामः सुरासुरानपि अतिशेत इत्यर्थः । § त्वद्विषये तस्य वैरमुत्पाद्य—तादृशं कर्म कृत्वेत्यर्थः ।

[1] वधिष्यति–ज.

तस्य वैरं—तस्य रामस्य क्रोधमित्यर्थः । जीवन् न मोक्ष्यसे । तत्सन्निधिं प्राप्तस्तेनेति शेषः ॥ ८ ॥

स ते जीवितशेषस्य राघवोऽन्तकरो बली ।
पशोर्यूपगतस्येव जीवितं तव दुर्लभम् ॥ ९ ॥

तदेव प्रपञ्चयते—स त इत्यादि ॥ ९ ॥

यदि पश्येत् स रामस्त्वां रोषदीप्तेन चक्षुषा ।
रक्षस्त्वमद्य निर्दग्धः [1] गच्छेः सद्यः पराभवम् ॥ १० ॥
यश्चन्द्रं नभसो भूमौ पातयेन्नाशयेत वा ।
सागरं शोषयेद्वाऽपि * स सीतां मोचयेदिह ॥ ११ ॥

पातयेदित्यादि लिङ् शक्यार्थे । सागरं वाऽपि शोषयेदिति । सागरं विशोषयितुं शक्तः । स तु इहस्थितां सीतां मोचयिष्यति ॥

†[2] गतायुस्त्वं गतश्रीकः गतसत्त्वो गतेन्द्रियः ।
लङ्का वैधव्यसंयुक्ता ‡ त्वत्कृतेन भविष्यति ॥ १२ ॥

त्वत्कृतेनेति । त्वन्नाशनिमित्तेनेत्यर्थः ॥ १२ ॥

[3] न ते पापमिदं कर्म [4] सुखोदर्कं भविष्यति ।
याऽहं नीता विनाभावं पतिपार्श्वात्त्वया [5] वने ॥ १३ ॥

विनाभावं—वियोगम् ॥ १३ ॥

---

* 'न सीतां' इति पाठे काकुरूपं वाक्यम् । † त्वत्कृतेन परदाराभिमर्शनरूपपापेन त्वं आयुरादिहीनो भविष्यसि, लङ्का च वैधव्यसंयुक्ता भविष्यति ; 'आयुर्बलं यशो लक्ष्मीः परदाराभिमर्शनात् । सद्य एव विनश्यन्ति' इति स्मृतेः—गो. पूर्वार्धं प्रत्येकं वाक्यं वा ॥ ‡ त्वत्कृते लङ्काऽपि न भविष्यति । अस्य विवरणरूपं विशेषणं वैधव्यसंयुक्तेति—इति केचित् ।

[1] यथा रुद्रेण मन्मथः—ङ. [2] गतायुस्त्वं—ज. [3] तेन—ङ. [4] दुःखोदर्कं—ङ.
[5] बलात्—ज.

स हि * [1]देवरसंयुक्तः मम भर्ता महाद्युतिः ।
निर्भयो वीर्यमाश्रित्य शून्ये वसति दण्डके ॥ १४ ॥

देवरः—स्वदेवरः—लक्ष्मण इत्यर्थः ॥ १४ ॥

स ते दर्पं बलं वीर्यं उत्सेकं च तथाविधम् ।
अपनेष्यति गात्रेभ्यः शरवर्षेण संयुगे ॥ १५ ॥

यदा विनाशो भूतानां दृश्यते कालचोदितः ।
तदा कार्ये प्रमाद्यन्ति नराः कालवशं गताः ॥ १६ ॥

कार्ये प्रमाद्यन्तीति । उचितकर्तव्यवैपरीत्यं प्राप्नुवन्तीत्यर्थः ॥ १६ ॥

मां प्रधृष्य स ते कालः प्राप्तोऽयं राक्षसाधम !
आत्मनो राक्षसानां च वधाया†न्तःपुरस्य च ॥ १७ ॥

स ते काल इति । कालकृतो विनाशकालः इत्यर्थः ॥ १७ ॥

न शक्या यज्ञमध्यस्था वेदिः स्रुग्भाण्डमण्डिता ।
द्विजातिमन्त्रपूता च चण्डालेना[2]वमर्दितुम् ॥ १८ ॥

---

* दैवतसंयुक्तः—दैवबलसंयुक्तः । दीनः तापसः रामः किं करिष्यतीति पूर्वं रावणेनोक्तस्योत्तरमिदम्—गो. † स्वमरणेन वैधव्यमेव अन्तःपुरवधः—नि. स्त्रीवधस्य रामेण असंभवात् एवं व्याख्यानम् । परन्तु 'राक्षसानां' इत्यत्र सर्वराक्षसानां विवक्षा आवश्यकी । 'अवश्यं न भविष्यन्ति सर्वे रावण राक्षसाः' (48-22) इति च निर्देशः स्पष्टः । अतः विशिष्य प्रातिस्विकतया स्त्रीवधस्यासंभवेऽपि, लङ्काराज्यस्यैव निर्मूलने प्राप्ते तदन्तर्गतानां सर्वेषामपि नाशोऽवश्यंभाव्येव । अतः सामान्योक्तिरेवायम् । 'अन्तःपुरस्य च' इति विशिष्यकथनं तु वृद्धीच्छया मूलक्षय इव 'मयि स्त्रीलौल्यात् विद्यमानभोगस्यापि क्षयः सिद्धः स्त्रीलोलस्य तव' इति प्रतिपादनाय ॥

[1] दैवत—ज.　　[2] विमर्शितुम्—ङ.

यज्ञमध्यस्था—यज्ञशालामध्यगता । स्रुग्भाण्डमण्डिता—स्रुगादि-यज्ञोपकरणमण्डिता वेदिः चण्डालेन यथा अभिमर्शितुं न शक्या, तथेति योजना ॥ १८ ॥

तथाऽहं *धर्मनित्यस्य धर्मपत्नी [1] पतिव्रता ।
त्वया स्प्रष्टुं न शक्याऽस्मि, राक्षसाधम ! पापिना ॥१९॥

क्रीडन्ती राजहंसेन पद्मषण्डेषु [2] नित्यदा ।
हंसी सा तृणषण्डस्थं कथं द्रक्ष्येत मद्गुकम् ? ॥ २० ॥

तृणषण्डस्थं—जलजनीरथ्यादितृणमध्यस्थमित्यर्थः । द्रक्ष्येतेति । पश्येदिति यावत् । कुत्सितो मद्गुः—मद्गुकः, जलवायसः इत्यर्थः ॥२०॥

इदं शरीरं † निःसंज्ञं बन्ध वा खादयस्व वा ।
नेदं शरीरं रक्ष्यं मे जीवितं वाऽपि, राक्षस ! ॥ २१ ॥
न तु शक्ष्या[3]म्युपक्रोशं पृथिव्यां दातुमात्मनः ।

एवं निर्भयोक्तिधैर्यकारणं आदावस्मदुक्तं प्रदर्श्यते—इदं शरीरमित्यादि । निःसंज्ञमिति । निर्गतदेहाभिमानमित्यर्थः । आत्मनः उपक्रोशमिति । सीता असती जातेति निन्दामित्यर्थः ॥ २१ ॥

एवमुक्त्वा तु वैदेही क्रोधात् सुपरुषं वचः ॥ २२ ॥
रावणं ‡ मैथिली तत्र पुनर्नोवाच किंचन ।
सीताया वचनं श्रुत्वा परुषं रोमहर्षणम् ॥ २३ ॥

---

* धर्मः नित्यं यस्य—धर्मैकरतस्येत्यर्थः । † तावत्येव मम प्राणानामुत्क्रान्त्या निस्संज्ञम् । ‡ क्रियाभेदात् पुनः मैथिलीशब्दप्रयोग.—गो.

[1] यशस्विनी—ङ. दृढव्रता—ज. [2] नित्यशः—ज. [3] म्यप—ङ.

[1]प्रत्युवाच ततः सीतां भयसन्दर्शनं वचः ।

भयसन्दर्शनं—भयप्रकाशकम्* ॥ २३ ॥

शृणु, मैथिलि ! मद्वाक्यं मासान् द्वादश, भामिनि !
कालेनानेन नाभ्येषि यदि मां, चारुहासिनि !
ततस्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः ॥ २५ ॥

द्वादश भामिनीति । प्रतीक्ष इति शेषः । नाभ्येषि यदीति । स्वारस्येनेति शेषः ॥ २४–२५ ॥

इत्युक्त्वा परुषं वाक्यं रावणः शत्रुरावणः ।
राक्षसीश्च ततः क्रुद्धः इदं वचनमब्रवीत् ॥ २६ ॥

शत्रून् रावयति—क्रोशयतीति शत्रुरावणः ॥ २६ ॥

शीघ्रमेव हि राक्षस्यः [2]विकृता घोरदर्शनाः ।
दर्पमस्यापनेष्यन्तु मांसशोणितभोजनाः ॥ २७ ॥

अस्यापनेष्यन्त्विति । अस्या अपनयन्त्विति यावत् ॥ २७ ॥

वचनादेव तास्तस्य [3]सुघोरा [4]राक्षसीगणाः ।
† कृतप्राञ्जलयो भूत्वा मैथिलीं पर्यवारयन् ॥ २८ ॥
स ताः प्रोवाच राजा तु रावणो घोरदर्शनः ।
‡ प्रचाल्य चरणोत्कर्षैः दारयन्निव मेदिनीम् ॥ २९ ॥

---

* भयोत्पादकमिति यावत् । † रावणाय कृतप्राञ्जलय इत्यर्थः । ‡ प्रचाल्य—द्वित्राणि पदानि चलित्वा–ति. प्रचाल्य—गत्वा, उत्थाय वा–गो. वस्तुतस्तु, क्रोधात् भूमौ पादाहतिकरणं उग्राणां स्वभावः । तादृशपादाहतिं कृत्वेति तात्पर्यम् । मेदिनीं दारयन्निव चरणोत्कर्षैः–पादप्रक्षेपैः मेदिनीं प्रचाल्य-चालयित्वा ॥

[1] एतत्स्थाने—रावणः परमक्रुद्धः इदं वचनमब्रवीत्—इति–ङ. [2] विरूपाः–ञ. [3] विकृताः–ङ. [4] घोरदर्शनाः–ञ.

चरणोत्कर्षैः—पादोत्क्षेपैः मेदिनीं दारयन्निव प्रचाल्य—उत्थाय ॥ २९ ॥

*अशोकवनिकामध्ये मैथिली नीयतामियम् ।
तत्रेयं रक्ष्यतां गूढं युष्माभिः परिवारिता ॥ ३० ॥

तत्रैनां तर्जनैः घोरैः पुनः सान्त्वैश्च मैथिलीम् ।
आनयध्वं वशं सर्वाः वन्यां गजवधूमिव ॥ ३१ ॥

इति प्रतिसमादिष्टाः राक्षस्यो रावणेन ताः ।
अशोकवनिकां जग्मुः मैथिलीं प्रतिगृह्य तु ॥ ३२ ॥

†[1]सर्वकामफलैः वृक्षैः नानापुष्पफलैर्वृताम् ।
[2]सर्वकालमदैश्चापि द्विजैः समुपसेविताम् ॥ ३३ ॥

सर्वकामफलैरिति । काम्यन्त इति कामाः वस्त्राभरणस्रगादिलक्षणाः, तद्रूपं फलं येभ्यः ते तथा । तादृशैः वृक्षैः—कल्पवृक्षैरिति यावत् । मदः—सन्तोषः । द्विजाः—पक्षिणः ॥ ३३ ॥

सा तु शोकपरीताङ्गी मैथिली जनकात्मजा ।
‡राक्षसीवशमापन्ना [3]व्याघ्रीणां हरिणी यथा ॥ ३४ ॥

शोकेन महता [4]ग्रस्ता मैथिली जनकात्मजा ।
न शर्म लभते भीरुः पाशबद्धा मृगी यथा ॥ ३५ ॥

---

*तर्जनभीषणाद्यनुकूलतया विविक्ताशोकवनिकाप्रापणम् । †सर्वस्मिन्नपि काले (पा.) फलानि येषां ते । एवमुत्तरत्रापि—गो ‡राक्षसीत्यविभक्तिकनिर्देशः, राक्षसीनामित्यर्थः—गो. 'वशमापन्ना' इत्यस्य हरिण्यामप्यन्वयसौकर्याय एवं व्याख्यानम् । श्लोकद्वयं भिन्नं वाक्यम् ॥

[1] सर्वकाल—ङ. [2] सर्वकामप्रदै—ङ. [3] व्याघ्राणां—ज. [4] त्रस्ता—ज.

न विन्दते तत्र तु शर्म मैथिली
　विरूपनेत्राभिरतीव तर्जिता।
पतिं स्मरन्ती दयितं च [1]दैवतं
　विचेतनाऽभूत् भयशोकपीडिता *॥ ३६॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे षट्पञ्चाशः सर्गः

---

विचेतनेति। पतिज्ञानेन विकल्पज्ञानरहितेति, यावत्। अचल(३६)मानः सर्गः॥ ३६॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे षट्पञ्चाशः सर्गः

---

* ननु सीता लक्ष्म्या अवतार इति सिद्धम्। वक्ष्यति हि—'सीता लक्ष्मीः भवान् विष्णुः' (युद्ध. 120-28) इति। विष्णुपुराणे चोक्तम्—'राघवत्वेऽभवत् सीता' इति। एवंभूतां सीतां समरसीमनि जनितमूर्छां लक्षणं लक्ष्मणमप्युद्धर्तुमसमर्थो रावणः कथं बलात्करोति स्म। वक्ष्यति हि—'हिमवान् मन्दरो मेरुः त्रैलोक्यं वा सहामरैः। शक्यं भुजाभ्यामुद्धर्तुं न संख्ये भरतानुजः' (　　) इति—उच्यते—वेदवतीरूपपूर्वजन्मनि देवी तथा सङ्कल्पितवती। उक्तं ह्युत्तरकाण्डे—'यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने। तस्मात् तव वधार्थं वै उत्पत्स्येऽहं महीतले' (उत्त. 17-31) इति। देवकार्यनिर्वाहाय स्वयमेव स्वधर्षणमङ्गीचकार। प्रजायां कूपपतितायां यथा माता स्वयं तदुपरि पतति वात्सल्यातिशयेन, तथा रावणबन्दीकृतदेवस्त्रीरक्षणाय स्वयं तत्र स्वगमनमनुमतवती। वक्ष्यति सुन्दरकाण्डे-'नापहर्तुमहं शक्या तस्य रामस्य धीमतः। विधिस्तव वधार्थाय विहितो नात्र संशयः' (सुन्द. 22-21) इति। तर्हि सीता प्रलापादिकं किमर्थं कृतवतीति चेत्— शृणु—पतिविरहे पतिव्रतया एवं वर्तितव्यमिति लोकहितप्रवर्तनाय प्रलापादिकमकरोदिति—नो परन्तु—पुत्रप्राप्तीच्छया प्रसववेदनां महतीमपि सहर्षं सोढुं स्वयं सन्नद्धानां स्त्रीणां प्रसववेदनानुभवकालिकः प्रलापः केवलं अभिनय एव स्यादिति कथने कः समाधिरिति चिन्त्यम्। अधिकमन्यत्र। उत्तरत्र 64-56 श्लोके कतकव्याख्याऽपि द्रष्टव्या॥

[1] देवरं—ज.

## [प्रक्षिप्तः सर्गः]

प्रवेशितायां सीतायां लङ्कां प्रति पितामहः ।
तदा प्रोवाच देवेन्द्रं परितुष्टं शतक्रतुम् ॥ १ ॥

त्रैलोक्यस्य हितार्थाय रक्षसामहिताय च ।
लङ्कां प्रवेशिता सीता रावणेन दुरात्मना ॥ २ ॥

पतिव्रता महाभागा नित्यं चैव सुखैधिता ।
अपश्यन्ती च भर्तारं पश्यन्ती राक्षसीजनम् ॥ ३ ॥

राक्षसीभिः परिवृता भर्तृदर्शनलालसा ।
निविष्टा हि पुरी लङ्का तीरे नदनदीपतेः ॥ ४ ॥

कथं ज्ञास्यति तां राम तत्रस्थां तामनिन्दिताम् ।
दुःखं सञ्चिन्तयन्ती सा बहुशः परिदुर्लभा ॥ ५ ॥

प्राणयात्रामकुर्वाणा प्राणांस्त्यक्ष्यत्यसंशयम् ।
स भूयः संशयो जातः सीतायाः प्राणसंक्षये ॥ ६ ॥

स त्वं शीघ्रमितो गत्वा सीतां पश्य शुभाननाम् ।
प्रविश्य नगरीं लङ्कां प्रयच्छ हविरुत्तमम् ॥ ७ ॥

एवमुक्तोऽथ देवेन्द्रः पुरीं रावणपालिताम् ।
आगच्छन्निद्रया सार्धं भगवान् पाकशासनः ॥ ८ ॥

निद्रां चोवाच गच्छ त्वं राक्षसान् संप्रमोहय ।
सा तथोक्ता मघवता देवी परमहर्षिता ॥ ९ ॥

देवकार्यार्थसिद्ध्यर्थं प्रामोहयत राक्षसान् ।
एतस्मिन्नन्तरे देवः सहस्राक्ष शचीपतिः ॥ १० ॥

आससाद वनस्थां तां वचनं चेदमब्रवीत् ।
देवराजोऽस्मि भद्रं ते इह चास्मि, शुचिस्मिते ! ॥ ११ ॥

अहं त्वां कार्यसिद्ध्यर्थं राघवस्य महात्मनः ।
साहाय्यं कल्पयिष्यामि मा शुचो जनकात्मजे ॥ १२ ॥

मत्प्रसादात् समुद्रं सः तरिष्यति बलैः सह ।
मयैवेह च राक्षस्यः मायया मोहिताः शुभे ! ॥ १३ ॥

तस्मादन्नमिदं, सीते ! हविष्यान्नमहं स्वकम् ।
त्वां संगृह्य, वैदेहि ! आगतः सह निद्रया ॥ १४ ॥

एतदत्स्यसि मद्धस्तात् न त्वां बाधिष्यते, शुभे !
क्षुधा तृषा च, रम्भोरु ! वर्षाणामयुतैरपि ॥ १५ ॥

एवमुक्ता तु देवेन्द्रं उवाच परिशङ्किता ।
कथं जानामि देवेन्द्रं त्वामिहस्थं शचीपतिम् ॥ १६ ॥

देवलिङ्गानि दृष्टानि रामलक्ष्मण संनिधौ ।
तानि दर्शय, देवेन्द्र ! यदि त्वं देवराट् स्वयम् ॥ १७ ॥

सीतायाः वचनं श्रुत्वा तथा चक्रे शचीपतिः ।
पृथिवीं नास्पृशत् पद्भ्यां अनिमेषेक्षणानि च ॥ १८ ॥

अरजोऽम्बरधारी च न म्लानकुसुमस्तथा ।
तं ज्ञात्वा लक्षणैः सीता वासवं परिहर्षिता ॥ १९ ॥

उवाच वाक्यं रुदती भगवद्राघवं प्रति ।
सह भ्रात्रा महाबाहुः दिष्ट्या मे श्रुतिमागतः ॥ २० ॥

यथा मे श्वशुरो राजा यथा च मिथिलाधिपः ।
तथा त्वामद्य पश्यामि सनाथो मे पतिस्त्वया ॥ २१ ॥

तवाज्ञया च, देवेन्द्र ! पयोभूतमिदं हविः ।
अशिष्यामि त्वया दत्तं रघूणां कुलवर्धनम् ॥ २२ ॥

इन्द्रहस्तात् गृहीत्वा तत् पायसं सा शुचिस्मिता ।
न्यवेदयत भर्त्रे सा लक्ष्मणाय च मैथिली ॥ २३ ॥

यदि जीवति मे भर्ता सह भ्रात्रा महाबलः ।
इदमस्तु तयोर्भक्त्या तदाश्नात् पायसं स्वयम् ॥ २४ ॥

इतीव तत् प्राश्य हविर्वरानना
जहौ क्षुधादुःखसमुद्भवं च तम् ।
इन्द्रात् प्रवृत्तिमुपलभ्य जानकी
काकुत्स्थयोः प्रीतमना बभूव ॥ २५ ॥

स चापि शक्रः त्रिदिवालयं तदा
प्रीतो ययौ राघवकार्यसिद्धये ।
आमन्त्र्य सीतां स ततो महात्मा
जगाम निद्रासहितः स्वमालयम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे प्रक्षिप्तः सर्गः

## सप्तपञ्चाशः सर्गः

[रामप्रत्यागमनम्]

राक्षसं मृगरूपेण * चरन्तं कामरूपिणम् ।
निहत्य रामो मारीचं तूर्णं पथि [1] निवर्तते ॥ १ ॥

एवं कविः सीतावृत्तान्तं अशोकवनिकाऽवस्थित्यन्तमुपवर्ण्य, वाचः क्रमिकत्वतः, पश्चात् रामवृत्तान्तमुपवर्णयति । राक्षसमित्यादि । तत्र राक्षसं मृगरूपेणेत्यादिना दुर्निमित्तशतशङ्क्यमानसीताविपत्तिकस्य रामस्य प्रत्यावृत्तिः ॥ १ ॥

तस्य संत्वरमाणस्य द्रष्टुकामस्य मैथिलीम् ।
क्रूरस्वनोऽथ गोमायुः विननादास्य † पृष्ठतः ॥ २ ॥

यदा‡ पथि निवर्तते, तदा तस्य पृष्ठतः गोमायुः विननादेत्यन्वयः ॥ २ ॥

§ स तस्य स्वरमाज्ञाय दारुणं रोमहर्षणम् ।
[2] चिन्तयामास गोमायोः स्वरेण परिशङ्कितः ॥ ३ ॥
अशुभं बत मन्येऽहं गोमायु[3]र्वाश्यते यथा ।
स्वस्ति स्यादपि वैदेह्याः ‖ राक्षसैर्भक्षणं विना ॥ ४ ॥

---

* चरन्तं, निवर्तत इति च वर्तमानप्रयोगः तादात्विकानुभवकृतः स्यात् । † एकस्य गोमायोः पृष्ठतः क्रूरस्वरकरणं दुर्निमित्तमिति भावः—गो. गोमायुदर्शनस्य शुभनिमित्तत्वात् तदभावसूचनाय 'पृष्ठतः' इत्युक्तिः स्यात् । ‡ 'यदा पथि निवर्तते तदा' इत्येतत् वृत्तानुवादः, 'तस्य' इति तच्छब्दपरामृष्टः । § पूर्वमेव स्वरेण—मारीचस्वरेण परिशङ्कितः—सञ्जातशङ्कः सः रामः, तस्य—गोमायोः स्वरं आज्ञाय—श्रुत्वा चिन्तयामास—गो. आज्ञाय—निश्चित्य-रा. ‖ राक्षसैः भक्षणाभावरूपं स्वस्ति अपि स्यात्—ति.

[1] न्यवर्तत—ञ. [2] रामः प्रोवाच—ङ. शङ्कयामास—ञ. [3] र्वाशते—ञ.

गोमायुर्वाश्यते यथेति । यथा स्पष्टा भवति अशुभाऽऽयतिः, तथा क्रोशतीत्यर्थः । तथाऽग्रेऽपि । वैदेह्याः स्वस्तीति । “चतुर्थ्यर्थे बहुलं छन्दसि” इति षष्ठी । अपिः कामप्रवेदने ॥ ४ ॥

मारीचेन तु * विज्ञाय स्वर[1]मालम्ब्य मामकम् ।
विक्रुष्टं मृगरूपेण लक्ष्मणः शृणुयाद्यदि ॥ ५ ॥
स सौमित्रिः स्वरं श्रुत्वा तां च हित्वा च मैथिलीम् ।
तयैव प्रहितः क्षिप्रं मत्सकाशमिहैष्यति ॥ ६ ॥

स्वरं श्रुत्वेति । मदीयत्वभ्रान्त्येति शेषः ॥ ६ ॥

राक्षसैः † सहितैर्नूनं सीताया ईप्सितो वधः ।
काञ्चनश्च मृगो भूत्वा व्यपनीयाश्रमात्तु माम् ॥ ७ ॥

सहितैः ईप्सित इति । कर्तव्यमीप्सितः इत्यर्थः ॥ ७ ॥

‡ दूरं नीत्वा तु मारीचः राक्षसोऽभूच्छराहतः ।
हा लक्ष्मण ! हतोऽस्मीति यद्वाक्यं व्याजहार च ॥ ८ ॥

राक्षसोऽभूदिति । न तु चर्मप्रयोजनमृगोऽभूदित्यर्थः । हतोऽस्मीति व्याजहार यत्, तस्मात् क्षिप्रमेष्यतीति पूर्वेणान्वयः ॥ ८ ॥

---

* मामकं स्वरं विज्ञाय तमालम्ब्य विक्रुष्टं स्वरं लक्ष्मणः शृणुयाद्यदि तदा स सौमित्रिः तं स्वरं श्रुत्वा—श्लोकद्वयमेकं वाक्यम् । † एकपार्श्वे मदपनयनं, वञ्चनया लक्ष्मणस्यापनयनं, पार्श्वान्तरे सीतावधः इत्यादिकं संभूय मिलित्वा आलोच्य राक्षसैः वैरनिर्यातनं कृतमिति ‘सहितैः’ इत्यनेन उच्यते । ‡ कथमिदमवगम्यत इत्यत्राह—दूरमित्यादि । यत्—यस्मात् दूरं नीत्वैव शराहतोऽभूत्, न तु समीप एव तस्यावकाशं ददौ, यस्माच्च हा लक्ष्मणेत्यादिकं व्याजहार च, अतः—राक्षसैः सहितैरेवेदं कृतमित्यर्थः ।

[1] मालक्ष्य- ञ.

अपि स्वस्ति भवेत् *[1]ताभ्यां [2]रहिताभ्यां [3]महावने ।
जनस्थाननिमित्तं हि कृतवैरोऽस्मि राक्षसैः ॥ ९ ॥

निमित्तानि च घोराणि दृश्यन्तेऽद्य बहूनि च ।
इत्येवं चिन्तयन् रामः श्रुत्वा गोमायुनिःस्वनम् ॥ १० ॥
†आत्मनश्चा[4]पनयनं मृगरूपेण रक्षसा ।
आजगाम जनस्थानं राघवः परिशङ्कितः ॥ ११ ॥
तं [5]दीनमानसं दीनं आसेदुः मृगपक्षिणः ।
‡सव्यं कृत्वा महात्मानं घोरांश्च ससृजुः स्वरान् ॥ १२ ॥

दीनमानसमिति । उपलक्षिताः इति शेषः ॥ १२ ॥

तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः ।
न्यवर्तताथ त्वरितः जवेनाश्रममात्मनः ॥ १३ ॥
स तु §सीतां वरारोहां लक्ष्मणं च महाबलम् ।
आजगाम जनस्थानं चिन्तयन्नेव राघवः ॥ १४ ॥

जनस्थानमाजगामेति । जनस्थानदेशवर्ति स्वाश्रममित्यर्थः ॥

ततो लक्ष्मणमायान्तं ददर्श विगतप्रभम् ।
‖ततोऽविदूरे रामेण समीयाय स लक्ष्मणः ॥ १५ ॥

---

* 'न च सीता त्वया हीना न चाहमपि राघव ! मुहूर्तमपि जीवावः जलान्मत्स्याविवोद्धृतौ' (अयो. 53-31) इति लक्ष्मणस्वरूपज्ञः रामः स्वविपत्तिशङ्कया विमूढयोरुभयोरपि विपत्तिं शङ्कते । † रक्षसा आत्मनश्चापनयनं चिन्तयन्, तत एव परिशङ्कितः । ‡ सव्यं कृत्वा —अप्रदक्षिणं कृत्वा–**गो.** § सीतां लक्ष्मणं च चिन्तयन् । ‖ गतौ त्वरां सूचयति—'अविदूरे' इति ।

[1] द्वाभ्यां–ज. [2] राक्षसानां ङ. [3] मया वने–ज. [4] पनयनात्–ङ.
[5] दीनमनसः–ङ. दीनमनसं–ज

विषण्णः सुविषण्णेन दुःखितो दुःखभागिना ।

अविदूरे—समीपे । समीयाय—संगतोऽभूत् ॥ १५ ॥

स जगर्हेऽथ तं भ्राता [1]दृष्ट्वा लक्ष्मणमागतम् ॥ १६ ॥
विहाय सीतां विजने वने राक्षससेविते ।
*गृहीत्वा च करं [2]सव्यं लक्ष्मणं रघुनन्दनः ॥ १७ ॥

स जगर्हे इत्यादि । सः रघुनन्दनः सीतां विहायागतं लक्ष्मणं दृष्ट्वा तस्य करं गृहीत्वा जगर्हे इत्यन्वयः ॥ १६–१७ ॥

उवाच †मधुरोदर्कं इदं परुष[3]मार्तवत् ‡ ।
अहो, लक्ष्मण ! गर्ह्यं ते §कृतं यस्त्वं विहाय ताम् ॥
सीतामिहागतः, सौम्य ! कच्चित् स्वस्ति भवेदिह ।

उवाचेत्यादि । मधुरोदर्कं—शब्दतः माधुर्योत्तरं अर्थतः परुषं इमं वक्ष्यमाणलक्षणं आर्तवत्—आर्तः सन् उवाच । ते कृतमिति । त्वया कृतमिति यावत् ॥ १८ ॥

न मेऽस्ति संशयः वीर ! सर्वथा जनकात्मजा ॥ १९ ॥
विनष्टा भक्षिता वाऽपि राक्षसैर्वनचारिभिः ।
अशुभान्येव भूयिष्ठं यथा प्रादुर्भवन्ति मे ॥ २० ॥

---

*प्रीत्यतिशयात् करग्रहणम् । पुरतः स्थितस्य, स्वदक्षिणकरेण सव्यकरग्रहणं सहजप्राप्तम् । † मधुरोदर्कं—हितमिति यावत् । परुषं—अप्रियमिति यावत् । अप्रियमपि हितं उवाचेति भावः । ‡ आर्तिमत्—आर्तियुक्तं, सर्वमिदं क्रियाविशेषणम् —**गो.**
§ कृतं—भावे क्तः, तत्र कर्म गर्ह्यं इति वा ।

[1] ज्येष्ठः—ङ. [2] तस्य—ङ. [3] मार्तिवत्—ङ.

अथ, लक्ष्मण! सीतायाः *[1] सामग्र्यं प्राप्नुयावहे।
जीवन्त्याः, पुरुषव्याघ्र! सुताया जनकस्य वै ॥ २१ ॥

प्राप्नुयावहै अथ। अथेति प्रश्ने। प्राप्नुयावेति यावत् ॥ २१ ॥

यथा वै मृगसङ्घाश्च गोमायुश्चैव भैरवम्।
[2] वाश्यन्ते शकुनाश्चापि † प्रदीप्तामभितो दिशम्।
अपि स्वस्ति भवेत् तस्याः राजपुत्र्याः, महाबल! ॥ २२ ॥

प्रदीप्तां दिशमिति। उत्पातवशादिति शेषः ॥ २२ ॥

इदं हि रक्षो मृगसन्निकाशं
प्रलोभ्य मां दूरमनु[3]प्रयातम्।
‡ हतं कथंचिन्महता श्रमेण
स राक्षसोऽभून्म्रियमाण एव ॥ २३ ॥

मृगसंनिकाशं—मृगवत् प्रतिभासमानम्। म्रियमाण एव—तदवस्थापन्न एव, न तु ततः पूर्वमित्यर्थः ॥ २३ ॥

---

* सामग्र्यं—क्षेमं अनपहरणरूपं—**ति.** अविच्छिन्नावयवत्वं—**रा.** अक्षतत्व—**गो** लोके कस्यचिदपाये प्राप्ते, तत्रापि राक्षसीभिः भक्षणादिरूपे प्राप्ते 'पूर्णं तत् पश्येयं वा' इत्येवमाकारा व्यथा अनुभवसिद्धैव। † प्रदीप्तां—सूर्याधिष्ठितां—**ति**. सूर्याक्रान्तत्वेन प्रकाशितां दिशं, सूर्याभिमुखमित्यर्थः—**रा.** सूर्याधिष्ठिता, तत्पार्श्वद्वयदिशो च प्रदीप्ता, तमभिमुखं वाश्यन्ते—नदन्ति। तेन वायसादिपक्षिणां शृगालकृष्णसारादिमृगाणां च सूर्याधिष्ठितदिशि कूजनं दुःखसूचकमित्युक्तम्—**गो.** ‡ महता श्रमेण उपलक्षितं मां प्रलोभ्य कथञ्चित् हतम्। कथञ्चिदित्यनेन चिरं लक्ष्यवधाप्राप्तिर्द्योत्यते—**गो.** 'कथञ्चित्' 'महता श्रमेण' इत्यनयोः समानार्थकत्वमभिमत्य एवं व्याख्यातं प्रतिभाति। परन्तु लोकव्यवहारदृशा—'महता श्रमेण कथञ्चित् हतम्' इत्यन्वय एव स्वरसः। 69–26 श्लोकटिप्पणी द्रष्टव्या ॥

[1] सकाशं—**ङ.** [2] वाशन्ते—**ज.** [3] प्रयान्तम्—**ङ.**

मनश्च मे दीनमिहाप्रहृष्टं
चक्षुश्च सव्यं कुरुते विकारम् ।
असंशयं, लक्ष्मण! नास्ति सीता
हृता मृता वा * पथि वर्तते वा ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे सप्तपञ्चाशः सर्गः

---

हृता—निर्वृत्तहरणा । पथि वर्तते वा । ह्रियमाणा वेत्यर्थः ।
अवर(२४ २-२)मानः सर्गः ॥ २४ २-२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे सप्तपञ्चाशः सर्गः

---

## अष्टपञ्चाशः सर्गः

[ लक्ष्मणदर्शनम् ]

स दृष्ट्वा लक्ष्मणं [1] दीनं †[2] शून्यं दशरथात्मजः ।
पर्यपृच्छत धर्मात्मा ‡ वैदेहीमागतं विना ॥ १ ॥

अथ सीतां संपृच्छ्यमानस्य रामस्य स्वाश्रमगमनम् । स दृष्ट्वेत्यादि । शून्यं—सन्तोषादिशून्यचित्तम् । वैदेहीं विना आगतमिति । विसृज्यागतमित्यर्थः ॥ १ ॥

---

* पथि वर्तते वा—त्वां प्रेषयित्वाऽपि निर्वृतेरप्राप्त्या साऽपि मां द्रष्टुं आश्रमं विहाय प्रस्थिता वा । एतादृशे महावने तादृशसुकुमार्याः आश्रमं विहाय विना रक्षकं बहिर्निर्गमने हि अपायः सिद्ध एव । अतश्च पथि वर्तते वा इत्यस्य—निश्चितसन्निहितापहरणा, निश्चितसन्निहितमरणा वा इत्यर्थः हृदयंगमः ॥ † शून्ये (पा.) वने वैदेहीं विनाऽऽगतं–**गो.** ‡ वैदेहीं विनाऽऽगतमित्यनेन, यदि नाम तवात्रागमनं अत्यन्तावश्यकं स्यात्, तदा वैदेह्या अपि सहैवानयनमेव युक्तमिति रामस्याशयः स्यादिति प्रतिभाति । अनन्तरसर्गे ४ श्लोकोऽपि द्रष्टव्यः ।

[1] दीनः–ङ. [2] शून्ये–ङ.

प्रस्थितं दण्डकारण्यं या मामनुजगाम ह ।
क्व सा, लक्ष्मण! वैदेही यां हित्वा त्वमिहागतः ॥

राज्यभ्रष्टस्य दीनस्य दण्डकान् परिधावतः ।
क्व सा दुःखसहाया मे वैदेही तनुमध्यमा ॥ ३ ॥

यां विना नोत्सहे, वीर! मुहूर्तमपि जीवितुम् ।
क्व सा प्राणसहाया मे सीता सुरसुतोपमा ॥ ४ ॥

पतित्वममराणां वा पृथिव्याश्चापि, लक्ष्मण!
तां विना [1] तपनीयाभां नेच्छेयं जनकात्मजाम् ॥ ५ ॥

अमराणां पतित्वमिति । इन्द्रत्वमिति यावत् ॥ ५ ॥

कच्चिज्जीवति वैदेही प्राणैः प्रियतरा मम ।
*कच्चित् प्रव्राजनं, [2] सौम्य! न मे मिथ्या भविष्यति ॥

मे प्रव्राजनं—चतुर्दशसमाः वनप्रव्राजनप्रतिज्ञा तु सीताजीवनेन मज्जीवनात् न मिथ्या भविष्यति कच्चित् ॥ ६ ॥

सीतानिमित्तं, सौमित्रे! मृते मयि †गते त्वयि ।
कच्चित् सकामा सुखिता कैकेयी सा भविष्यति ॥ ७ ॥

अथ विपरीतशङ्का, मनसो निरर्गलत्वात्—सीतानिमित्तमित्यादि । सीताविनाशनिमित्तमित्यर्थः । त्वयि गते इति । अयोध्यामिति शेषः ॥

---

* चतुर्दशवर्षसमाप्तावेव सीतावियोगजं जीववियोगं किं प्राप्स्यामीत्यर्थः-गो.

† सीतानिमित्तं मयि त्वयि च मृते—राक्षसमृतत्वे गते—प्रापिते सति-रा. वस्तुतस्तु गतिशब्दस्यैव मरणार्थकत्वं प्रसिद्धमेव । मयि मृते, तेन च त्वय्यपि गते—मृते इत्येवार्थः । लक्ष्मणस्य रामपक्षपातस्य कैकेय्या विदिततया, लक्ष्मणेऽपि मृते—इत्येवार्थः युक्तः ॥

[1] तपनीयाङ्गीं-ङ. [2] वीर-ज.

सपुत्रराज्यां सिद्धार्थां मृतपुत्रा तपस्विनी।
उपस्थास्यति कौसल्या कच्चित् *[1]सौम्येन कैकयीम्॥

सौम्येनेति। निरस्तप्राभवा दासीभावेनेत्यर्थः॥ ८॥

यदि जीवति वैदेही गमिष्याम्याश्रमं [2]पुनः।
†[3]सुवृत्ता यदि वृत्ता सा प्राणांस्त्यक्ष्यामि, लक्ष्मण!॥

यदि वृत्तेति। अपहृता मृता वेत्यर्थः॥ ९॥

‡यदि मामाश्रमगतं वैदेही नाभिभाषते।
[4]पुनः प्रहसिता सीता, विनशिष्यामि, लक्ष्मण!॥

प्रहसिता—हसितमुखीति यावत्॥ १०॥

ब्रूहि, लक्ष्मण! वैदेही यदि जीवति वा न वा।
§त्वयि ‖प्रमत्ते रक्षोभिः भक्षिता वा तपस्विनी॥

त्वयि प्रमत्त इति। अनुचितकारिणीत्यर्थः॥ ११॥

सुकुमारी च बाला च नित्यं [5]चादुःख[6]दर्शिनी।
¶मद्वियोगेन वैदेही व्यक्तं शोचति [7]दुर्मनाः॥ १२॥
सर्वथा रक्षसा तेन जिह्मेन सुदुरात्मना।
वदता लक्ष्मणेत्युच्चैः तवापि जनितं भयम्॥ १३॥

तवापीति। सुज्ञातमद्बलवीर्यादिमतोऽपीत्यर्थः॥ १३॥

---

* सौम्येन—विनयेन—**ति.** † सुवृत्ता—सद्वृत्ता। संवृत्तेत्यपि तथैव॥ ‡ यदि पुनः इत्यन्वयः। § न वेत्यस्य विवरणं—त्वयीत्यादि—**गो.** ‖ प्रमत्तः—प्रमादः—अनवधान, अनवहितः। ¶ शोचति—अशोचत—**गो.** मद्वियोगेनेति—तां परित्यज्य मम निर्गमनमेव न सांप्रतमिति भावः। अपहरणपक्षे वा इयमुक्तिः॥

[1] सौम्य न—**ङ.** [2] प्रति—**ङ.** [3] संवृत्ता—**ज.** [4] पुरः—**ज.** [5] सा दुःख—**ङ.** [6] भागिनी—**ज.** [7] दुःखिता—**ङ.**

*श्रुतस्तु [1] शङ्के वैदेह्या स स्वरः सदृशो मम ।
त्रस्तया प्रेषितः त्वं च [2] द्रष्टुं मां शीघ्रमागतः ॥ १४ ॥

सदृशो ममेति । स्वरेणेति शेषः । यस्मात् आगतः तस्मात् सः स्वरस्तु वैदेह्या श्रुतः इति शङ्के इत्यन्वयः ॥ १४ ॥

सर्वथा तु कृतं कष्टं सीतामुत्सृजता वने ।
प्रतिकर्तुं नृशंसानां रक्षसां दत्तमन्तरम् ॥ १५ ॥

प्रतिकर्तुं—मत्कृतापकारस्य प्रत्यपकारं कर्तुं । अन्तरमपेक्षिणामिति शेषः । अन्तरं—अवकाशः दत्तम् ॥ १५ ॥

दुःखिताः खरघातेन राक्षसाः पिशिताशनाः ।
तैः सीता निहता घोरैः भविष्यति न संशयः ॥ १६ ॥
[3] अहोऽस्मिन् व्यसने मग्नः सर्वथा, शत्रुसूदन !
किं न्विदानीं करिष्यामि ? शङ्के प्राप्तव्यमीदृशम् ॥ १७ ॥

अन्ततो धैर्यावलम्बनं—शङ्के प्राप्तव्यमीदृशमिति । प्रारब्धवशतः ईदृशदुःखमनुभवितव्यमेवेत्येव मन्ये इति भावः ॥ १७ ॥

इति सीतां वरारोहां चिन्तयन्नेव राघवः ।
आजगाम † जनस्थानं त्वरया सहलक्ष्मणः ॥ १८ ॥

---

* स्वरः श्रुतः, त्रस्तया त्वं प्रेषितश्च —इति यथाश्रुतान्वयो वा । † जनस्थानं—तद्वर्तिस्वाश्रमम्—ति.

[1] मन्ये—ज. [2] त्रातुं—ङ. [3] अहोऽस्मि—ज.

* विगर्हमाणोऽनुजमार्तरूपं †
‡ क्षुधा [1] श्रमाच्चैव पिपासया च ।
विनिःश्वसन् शुष्कमुखो [2] विवर्णः
प्रतिश्रयं प्राप्य समीक्ष्य शून्यम् ॥ १९ ॥
स्वमाश्रमं संप्रविगाह्य [3] वीरः
विहारदेशाननुसृत्य कांश्चित्
एतत्तदित्येव निवासभूमौ
§ प्रहृष्टरोमा व्यथितो बभूव ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे अष्टपञ्चाशः सर्गः

---

श्रमात्–बहुदूरधावनजात् । प्रतिश्रयं प्राप्येत्यादि वक्ष्यमाणानेक(५९–६३)सर्गार्थसंक्षेपः । प्रतिश्रयं–स्वाश्रयसमीपदेशं समीक्ष्य शून्यमिति । सीताशून्यमित्यर्थः । तं प्रतिश्रयमित्यनुकर्षः । अनन्तरं स्वं आश्रमं संप्रविगाह्य, तमपि शून्यं समीक्ष्य, ततः सीतायाः कांश्चित् विहारदेशान् अनुसृत्य–विचित्य तत्रत्यनिवासभूमौ क्रीडास्थाने । एतत्तदिति—तादृशमेतादृशमिति विहारविशेषं स्मृत्वा हृष्टरोमाः शोकेन प्रव्यथितो बभूव । नारी(२०)मानः सर्गः ॥ १९–२० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे अष्टपञ्चाशः सर्गः

---

* श्लोकद्वयमेकान्वयं, वक्ष्यमाणानेक (५८–६३) सर्गार्थसंग्रहरूपम्–गो. † स्वकर्तव्यभ्रंशपरिज्ञानात् आर्तरूपं लक्ष्मणम् । ‡ क्षुत्पिपासयोः बहुदूरधावनादिश्रमजन्यत्वात् श्रमशब्दस्य मध्ये प्रयोगः पञ्चम्यन्तता च । § प्रहृष्टरोमा सन् व्यथितो बभूव–गो.

[1] श्रमेणैव–ज. [2] विषण्णः–ज. [3] धीरः–ङ.

## एकोनषष्टितमः सर्गः

[लक्ष्मणगर्हणम्]

**अथाश्रमादुपावृत्तं अन्तरा रघुनन्दनः ।**
**परिपप्रच्छ सौमित्रिं रामो [1]दुःखार्दितं पुनः ॥ १ ॥**

पूर्वं आश्रमप्राप्त्यादिकं संक्षिप्योक्तम् । तत्र स्वप्रतिश्रय-प्रतिनिवर्तनसमये मध्येमार्गं लक्ष्मणः आपृच्छ्यमानवृत्तान्तः सर्वं यथातत्त्वं वदति । अथेत्यादि । आश्रमात् उपावृत्तं—सीता-वचनात् स्वसमीप प्राप्तम् , अन्तरा—मध्येमार्गम् ॥ १ ॥

**तमुवाच किमर्थं त्वं आगतोऽपास्य मैथिलीम् ।**
***यदा सा तव विश्वासात् वने विरहिता मया ॥ २ ॥**

यदा—यस्मात् तव विश्वासात् सा वने मया विरहिता—'रह त्यागे', त्यक्ता, तस्मात् ॥ २ ॥

**दृष्ट्वैवाभ्यागतं त्वां मे मैथिलीं त्यज्य, लक्ष्मण !**
**शङ्कमानं महत्पापं यत् †सत्यं व्यथितं मनः ॥ ३ ॥**

त्वां मैथिलीं त्यक्त्वा अभ्यागतं दृष्ट्वैव—दर्शनमात्रेणैव महत्पापं—अपहारलक्षणं शङ्कमानं मे मनः यत् सत्यं—सत्यपर्यायं ध्रुवं व्यथितं—खिन्नम् ॥ ३ ॥

**स्फुरते नयनं सव्यं बाहुश्च हृदयं च मे ।**
**दृष्ट्वा, लक्ष्मण ! दूरे ‡त्वां सीताविरहितं पथि ॥ ४ ॥**

---

* यदा इत्यस्य कालवाचकत्वेऽपि, लोके एतादृशव्यवहारस्य स्वरसत्वात् न विरोधः । † मे मनः व्यथितमिति यत् , तत् सत्यम्—गो. ‡ यदि चात्रागमनं तव अनिवार्यं, तदा तयैव सह खल्वागन्तव्यं, न तु तामेकान्ते परित्यज्येत्याशयः । गतसर्गे १ श्लोकोऽप्यत्र स्मर्तव्यः ॥

[1] दुःखादिदं—ज.

ननु मदागममात्रतः कुतः पापशङ्का? तत्राह—स्फुरत इति । स्फुरतीति यावत् ॥ ४ ॥

एवमुक्तस्तु सौमित्रिः लक्ष्मणः शुभलक्षणः ।
*भूयो दुःखसमाविष्टः दुःखितं राममब्रवीत् ॥ ५ ॥

भूयो दुःखसमाविष्ट इति । पूर्वं सीतावचनतो दुःखाक्रान्तः इदानीं रामेण च 'त्वयाऽकृत्यं कृतं' इत्युच्यमानत्वात् भूयो दुःखसमाविष्टत्वम् ॥ ५ ॥

न स्वयं [1]कामकारेण तां त्यक्त्वाऽहमिहागतः ।
प्रचोदित[2]स्तयैवोग्रैः त्वत्सकाशमिहागतः ॥ ६ ॥

कामकारेण—स्वेच्छया । उग्रैः—दुःश्रवैः । वचोभिरिति शेषः ॥ ६ ॥

[3]आर्येण हि परिक्रुष्टं लक्ष्मणेति सुविस्वरम् ।
परित्राहीति यद्वाक्यं मैथिल्याः तच्छ्रुतिं गतम् ॥ ७ ॥

आर्येणेत्यादि । "आर्येण हि परिक्रुष्टं लक्ष्मणेति सुविस्वरम् । परित्राहीति यद्वाक्यं मैथिल्याः तच्छ्रुतिं गतम्" इति प्राङ्कः पाठः । लक्ष्मणेति परित्राहीति च सुविस्वरं—सुशब्दं विस्वरं च यद्धि वाक्यं आर्येण—आर्यस्वरसदृशस्वरेण परिक्रुष्टं तत्तु मैथिल्याः श्रुतिं गतम् ॥ ७ ॥

---

*स्वहृदयशुद्धिं अजानन्त्या सीतया परुषकथनात् पूर्वं दुःखितः, इदानीं तादृशकारणमपृष्ट्वैव रामेण गर्हणात् भूयः दुःखसमाविष्टः । स एवायं वेगः 'न स्वयं कामकारेण' इत्याद्यनन्तरश्लोकेऽपि स्फुरति ।

[1] कामचारेण—ङ.  [2] स्तयैवाहं—ङ.  [3] आर्येणेव पराक्रुष्टं हा सीते लक्ष्मणेति च—ङ.

सा तमार्तस्वरं श्रुत्वा तव स्नेहेन मैथिली ।
गच्छ गच्छेति मामाह रुदन्ती भयविह्वला ॥ ८ ॥

*प्रचोद्यमानेन मया गच्छेति बहुशस्तया ।
प्रत्युक्ता मैथिली वाक्यं इदं †[1]तत्प्रत्ययान्वितम् ॥ ९ ॥

तत्प्रत्ययान्वितं—तस्या अपि प्रत्ययेन—विश्वसनीयत्वेनान्वितं तत्त्वेन योग्यमिदं वक्ष्यमाणं वाक्यं मैथिली प्रत्युक्ता—प्रतिवचनत्वेनोक्ता ॥ ९ ॥

न तत् पश्याम्यहं रक्षः यदस्य भय[2]मावहेत् ।
निर्वृता भव ‡[3]नास्यैतत् केनाप्येवमुदाहृतम् ॥ १० ॥

किं तदित्यतः—न तादित्यादि । एतत्–दुर्वचनम् । स्वात्मनः अन्यत्राणार्थकत्वात् ॥ १० ॥

विगर्हितं च नीचं च कथमार्योऽभिधास्यति ।
§त्राहीति वचनं, सीते! यः त्रायेत् त्रिदशानपि ॥ ११ ॥
‖किंनिमित्तं तु केनापि भ्रातुरालम्ब्य मे स्वरम् ।
[4]राक्षसेनेरितं वाक्यं [5]त्राहि त्राहीति, शोभने! ॥ १२ ॥

---

* गच्छेति बहुशः प्रचोद्यमानेनेत्यन्वयः । † त्वत्प्रत्ययान्वितं—त्वयि प्रत्ययः—दुराधर्षत्वदैन्यराहित्यविषयो विश्वासः, तेनान्वितम्–गो. ‡ 'नास्त्येतत्' इति पाठे, एतत्—कातरवचनं रामस्य नास्ति, अन्येन केनापि एवं उदाहृतं, इत्यर्थः । § यः त्रिदशानपि त्रायेत्, स कथं 'सीते त्राहि' इति वचनमभिधास्यति–गो. ‖ किंनिमित्तं—किमपि प्रयोजनमुद्दिश्य केनापि राक्षसेन, मे भ्रातुः स्वरमालम्ब्य–गो.

[1] त्वत्प्रत्यया–ङ. [2] मानयेत्–ङ. [3] नास्त्येतत्–ङ. [4] इदमर्धं 'विस्वरं इत्याद्यनन्तरं पठनीयं–ज्ञ. [5] त्रासात्–ज्ञ.

विगर्हितं—निन्दितं क्षत्रियस्य नीचं—कुत्सितं च त्राहीतिवचनं यः त्रिदशानपि त्रायेत्, स तु किंनिमित्तं त्राहीति वचनं उक्तविशेषणं अभिधास्यतीत्यन्वयः। यदेवं अतः—'केनापी'त्यादि ॥ १२ ॥

*विस्वरं व्याहृतं वाक्यं, लक्ष्मण! त्राहि मामिति।
न भवत्या व्यथा कार्या कुनारीजनसेविता ॥ १३ ॥
अलं[1] वैक्लब्यमालम्ब्य स्वस्था भव †निरुत्सुका।

वैक्लब्यमालम्ब्य अलं—मास्तु ॥ १४ ॥

न सोऽस्ति त्रिषु लोकेषु पुमान् वै राघवं रणे ॥ १४ ॥
जातो वा जायमानो वा संयुगे यः पराजयेत्।
‡[2]न जय्यो राघवो युद्धे देवैः शक्रपुरोगमैः ॥ १५ ॥
एवमुक्ता तु वैदेही परिमोहितचेतना।
उवाचाश्रूणि मुञ्चन्ती दारुणं मामिदं वचः ॥ १६ ॥
भावो मयि तवात्यर्थं [3]पाप एव निवेशितः।
विनष्टे भ्रातरि प्राप्तुं न च त्वं मामवाप्स्यसि ॥ १७ ॥

भावो मयीत्याद्याः उक्तानुवादाः §गतार्थाः ॥ १७ ॥

सङ्केतात् भरतेन त्वं रामं समनुगच्छसि।
क्रोशन्तं हि [4]यथाऽत्यर्थं नैवमभ्यवपद्यसे ॥ १८ ॥

---

* स्वरप्रकारविशेषशोधनेऽपि नायं रामस्वरः इत्यर्थः—**गो.** अत्र शिरोमण्यादिदृष्ट्या 'राक्षसेनेरितं' इत्यर्धं 'विस्वरं व्याहृतं' इत्येतदनन्तरं पठनीयम्। † निरुत्सुका—मत्प्रास्थापनोद्योगरहिता—**गो.** निरुत्कण्ठा वा। ‡ पूर्वं एकैकेन अजय्यत्वमुक्तं, संप्रति मिलितैरिति विशेषः—**गो.** § अर्थानुवादो विवक्षितः।

[1] विक्लबतां गन्तुं—**ज.** [2] अजय्यो—**ङ.** अजेयो—**ज.** [3] पापाचारनिवेशितः—**ङ.** [4] यदत्यर्थं—**ङ.**

रिपुः प्रच्छन्नचारी त्वं मदर्थमनुगच्छसि ।
राघवस्यान्तरप्रेप्सुः * तथैनं नाभिपद्यसे ॥ १९ ॥

एवमुक्तो हि वैदेह्या संरब्धो रक्तलोचनः ।
क्रोधात् प्रस्फुरमाणोष्ठः आश्रमादभिनिर्गतः ॥ २० ॥

एवं ब्रुवाणं सौमित्रिं रामः संतापमोहितः ।
अब्रवीत् दुष्कृतं, सौम्य! तां विना यत् त्वमागतः ॥२१॥

दुष्कृतमिति । अकृत्यमित्यर्थः । कृतमिति शेषः ॥ २१ ॥

जानन्नपि समर्थं मां रक्षसां विनिवारणे ।
अनेन क्रोधवाक्येन मैथिल्या [1]निःसृतो भवान् ॥ २२ ॥

कथमेवमित्यतः—जानन्नपीत्यादि ॥ २२ ॥

न हि ते परितुष्यामि † त्यक्त्वा [2] यदसि मैथिलीम् ।
क्रुद्धायाः परुषं श्रुत्वा [3] स्त्रियाश्च त्वमिहागतः ॥ २३ ॥

इहागतोऽसीति योजना ॥ २३ ॥

सर्वथा ‡ [4]त्वपनीतं ते सीतया यत् प्रचोदितः ।
क्रोधस्य वश[5]मापन्नः नाकरोः शासनं मम ॥ २४ ॥

§ असौ हि राक्षसः शेते शरेणाभिहतो मया ।
मृगरूपेण येनाहं आश्रमादपवाहितः ॥ २५ ॥

---

* तथा—तेनैव प्रकारेण, तस्मादेव हेतोरिति यावत् । † अत्रापि ४ श्लोकभावः स्फुरति । ‡ अपनीतं—अपनयः, भावप्रत्ययः । § अपनीतिमेवोपपादयितुं स्वरान्यथाभावं दर्शयति—असावित्यादिश्लोकत्रयेण—गो.

[1] गर्हितो—ङ., निर्गतो—ज. [2] यद्यासि—ङ. [3] विहाय—ङ. [4] विनिन्दन्ते ते, त्वविनीतं ते—ङ. [5] वशमागम्य—ज.

एवं लक्ष्मणवृत्तान्तं श्रुत्वा स्ववृत्तान्तं लक्ष्मणस्याह—असौ हीत्यादि। असाविति धीसन्निहितत्वान्निर्देशः ॥ २५ ॥

विकृष्य चापं [1]परिधाय सायकं
*[2]सलीलबाणेन च ताडितो मया।
मार्गीं तनुं त्यज्य स विक्लबस्वरः
बभूव केयूरधरः स राक्षसः ॥ २६ ॥

परिधाय। संधायेति यावत्। सलीलबाणेनेति। नातिविकृष्य मुक्तेनेत्यर्थः ॥ २६ ॥

शराहतेनैव तदार्तया गिरा
स्वरं ममालम्ब्य सुदूर[3]संश्रवम्।
उदाहृतं तद्वचनं सुदारुणं
त्वमागतो येन विहाय मैथिलीम् ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकोनषष्टितमः सर्गः

---

सुदूरसंश्रवं—सुदूरेऽपि संश्रवः—सुश्रवणं यस्य स तथा, तम्। सार(२७)मानः सर्गः ॥ २७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकोनषष्टितमः सर्गः

---

* यद्यपि 'हतं कथञ्चिन्महता श्रमेण' इति (57–23) रामेणैव पूर्वमुक्तं, अथापि, तत्र तावद्दूरपरिभ्रमणादिजन्यश्रमः, तस्य मृगस्य सजीवग्रहणप्रयत्नप्रयुक्तश्रमश्च विवक्षितः, न तु तस्य वधे श्रम इत्यवगन्तव्यम् ॥

[1] प्रणिधाय–ङ. [2] स एष बाणेन–ङ. [3] सुश्रवम्–ञ.

## षष्टितमः सर्गः

### [शून्याश्रमदर्शनम्]

[1]भृशमाव्रजमानस्य *तस्याधोवामलोचनम् ।
प्रास्फुरच्चास्खलद्रामः वेपथु[2]श्चा।प्यजायत ॥ १ ॥

अथ आश्रमं प्राप्य अदृष्ट्वा च सीतां तस्यान्वेषणं सप्रलापम् । भृशमाव्रजमानस्येत्यादि । व्रज गतौ । आगच्छतः इत्यर्थः । भृशं प्रास्फुरत् इत्यन्वयः ॥ १ ॥

उपालक्ष्य निमित्तानि सोऽशुभानि मुहुर्मुहुः ।
अपि क्षेमं नु सीतायाः? इति वै व्याजहार च ॥ २ ॥

त्वरमाणो जगामाथ सीतादर्शनलालसः ।
शून्यमावसथं दृष्ट्वा बभूवोद्विग्नमानसः ॥ ३ ॥

† उद्भ्रमन्निव वेगेन ‡विक्षिपन् रघुनन्दनः ।
[3]तत्र तत्रोटजस्थानं अभिवीक्ष्य समन्ततः ॥ ४ ॥

ददर्श पर्णशालां च रहितां सीतया तदा ।
श्रिया विरहितां ध्वस्तां [4]हेमन्ते पद्मिनीमिव ॥ ५ ॥

---

* अधोवामलोचनं— वामलोचनस्याधः पक्ष्म । ‘अधो वामदृशः स्फूर्तौ बहुनिष्टो भवेत् पुमान्’ इति लक्षणम् । स्वयमस्खलत् —‘प्रयाणकाले स्खलनं करोतीष्टस्य भञ्जनम्’-गो. † श्लोकद्वयमेकान्वयम् ॥ ‡ विक्षिपन्—हस्तादीनितस्ततः क्षिपन्-गो.

[1] व्रजमानस्य तस्याधोवामलोचनमस्फुरत् । प्रास्खलच्चासकृत्पादे वेपथुश्चास्य जायत-ङ. [2] श्चास्य जायते-ज. [3] तत्र तत्र जनस्थानं-ङ. [4] हिमान्ते-ङ.

उद्भ्रमन्निव—उद्गच्छन्निव विशेषेण इतस्ततो भ्रमन्निव च ॥४-५॥

*रुदन्तमिव वृक्षैश्च म्लानपुष्पमृगद्विजम् ।
श्रिया विहीनं विध्वस्तं [1]संत्यक्तवनदेवतम् ॥ ६ ॥

† विप्रकीर्णाजिनकुशं [2]विप्रविद्धबृसीकटम् ।
दृष्ट्वा [3]शून्यं निजस्थानं विललाप [4]पुनः पुनः ॥ ७ ॥

वृक्षैः रुदन्तमिव स्थितं । वृक्षाणां निश्शोभत्वात् तैरपि रुदद्भिरिव स्थितं निजस्थानमित्यन्वयः ॥ ६-७ ॥

हृता मृता वा ‡ नष्टा वा भक्षिता वा भविष्यति ।
निलीनाऽप्यथवा भीरुः अथवा § वनमाश्रिता ॥ ८ ॥

नष्टा—अदर्शनं गता ॥ ८ ॥

गता विचेतुं पुष्पाणि फलान्यपि च वा पुनः ।
अथवा पद्मिनीं याता जलार्थं वा नदीं गता ॥ ९ ॥

---

* श्लोकद्वयमेकान्वयम् । † रावणागमनकालिकमेतत् । 'इयं बृसी' (46-35) इत्यादिश्लोकोऽत्रानुसन्धेयः ॥ ‡ नष्टा—यादृच्छिकमदर्शनं गता । निलीना—विनोदाय व्यवहिता—**गो.** 'पथि वर्तते वा' (57-24) इत्युक्तरीत्या (तत्रत्यटिप्पणी द्रष्टव्या) आश्रमं विहाय प्रस्थिता मार्गभ्रंशादिना अबुद्धिपूर्वकं अदर्शनं प्राप्ता—नष्टा । बुद्धिपूर्वकमेवान्तरिता—निलीना ॥ § निर्जनतया, भीरुः सती गूढं वनं आश्रिता—आगता—**गो.** अत्र मार्गभ्रंशाभावेऽपि, वने मामन्वेष्टुं गता इत्यर्थः । यद्वा उत्तरश्लोकदर्शने—अभीरुः—वनभयमजानन्ती विनोदात् वनं प्रविष्टा वा इत्यर्थः । तादृशस्थितौ कथं विनोद इति तु अनन्तरश्लोकस्यापि समानम् ॥

[1] संत्यक्तं-**ज.**　[2] विप्रकीर्ण-**ङ.**　[3] शून्योटजस्थानं-**ज.**　[4] सुदुःखितः-**ङ.**

यत्नात् मृगयमाणस्तु नाससाद वने प्रियाम् ।
शोकरक्तेक्षणः [1]शोकात् *उन्मत्त इव लक्ष्यते ॥ १० ॥

वृक्षात् वृक्षं प्रधावन् सः गिरेश्चाद्रिं नदान्नदीम् ।
[2]बभूव विलपन् रामः शोकपङ्कार्णवाप्लुतः ॥ ११ ॥

अपि कच्चित् त्वया दृष्टा सा [3]कदम्बप्रिया प्रिया ?
कदम्ब ! यदि जानीषे शंस सीतां शुभाननाम् ॥ १२ ॥

---

* एतत्सर्वं लोकव्यवहारनटन, भगवतश्चित्स्वरूपस्य, लोके भार्या सर्वतो प्रियतमेति बोधयितुम् । अत एव मातापितृवियोगो नैतावच्छोककारणम्–ति. इवशब्देन—वस्तुतस्तु न तादृशः श्रीराम इत्यर्थः । अत एव सीतादीन् प्रति विलापादिकं, सीतान्वेषणसमये सीतामुद्दिश्य वृक्षमृगादीन् प्रति प्रश्नादिकं सर्वं श्रीरामेण लोकशिक्षार्थं नटनं कृतमिति प्रदर्शयितुमेव सर्वज्ञेन भगवता श्रीवाल्मीकिना 'उद्भ्रमन्निव' 'उन्मत्त इव' इत्यादौ इवशब्दः प्रयुक्तः । किञ्च बहुविधदुःखप्रलापस्य देहादावात्म-बुद्धिपूर्वकत्वात्, तद्बुद्धेरज्ञानमूलकत्वात् स्वकृतलीलाश्रवणद्वारा सर्वलोकानां मुक्तिप्रदानाय। नृपरूपेणावतीर्णस्य सच्चिदानन्दघनविग्रहस्य परमात्मनः श्रीरामस्य मायाधिष्ठातुः परमेश्वरस्य भृगुशापादिनाप्यज्ञानगन्धोऽप्यस्तीति वक्तुमशक्यत्वात् एतद्विधं विलापादिकं सर्वं श्रीरामेण लोकशिक्षार्थमेव कृतं वेदितव्यम्–ती. परन्तु—एतादृशे संकटे समापतितेऽपि रामः धैर्यमालम्ब्य वर्तेत चेत्, तेन लोकशिक्षणं कृतं भवेत्। तत् परित्यज्य अत्यन्तपामरवत् विलापेन लोकः कथं शिक्षणीयः ? इति चिन्त्यम् । किञ्च रामः सर्वथा परमात्मैव, रावणस्तु तत्त्वं न ज्ञातवान्—इति कथने—रावणेन तथाऽज्ञानेऽपि, तस्मै वरं दत्तवता चतुर्मुखेन वा ज्ञातत्वावश्यं भावेन—मानुषादन्येनावध्यत्ववरस्य तेन दत्तस्य का गतिरित्यपि चिन्त्यम् । 'अनृतं नोक्तपूर्वं मे' इति वदता रामेण 'आत्मानं मानुषं मन्ये' (युद्ध. 120–11) इत्युक्तिर्वा कथम् इत्यपि चिन्त्यम् । अपि चैवं सर्वेषां केवलनटनमात्रत्वे अवतारोऽपि नटनमात्रमेव खलु स्यादिति मूलोच्छेद एव न स्याद्वेत्यपि चिन्तनीयम् । अतः उपरितनेषु विषयेषु यथार्थमुत्तरमन्वेषणीयम् , न तु केवलोहा-पोहाभिः विषयाननुगुणम् । उत्तरत्र 64–56 श्लोककतकव्याख्याऽपि द्रष्टव्या । अत्र वक्तव्यं सर्वं अन्यत्र विचारयामः ॥

[1] श्रीमान्–ज्ञ. [2] बभ्राम–ज्ञ. [3] कदम्बवनप्रिया–ङ.

स्निग्धपल्लव[1]संकाशा पीतकौशेय[2]वासिनी ।
शंसस्व [3]यदि वा दृष्टा बिल्व! बिल्वोपमस्तनी ॥ १३ ॥

अथवाऽर्जुन! शंस त्वं प्रियां तामर्जुनप्रियाम् ।
जनकस्य सुता [4]भीरुः यदि जीवति वा न वा? ॥१४॥

अर्जुनः—करवीरः। 'करवीरः करालश्च करवीरी तथाऽर्जुनः' इति ओषधिनिघण्टुः ॥ १४ ॥

*ककुभः [5]ककुभोरुं तां व्यक्तं जानाति मैथिलीम् ।
[6]यथा पल्लवपुष्पाढ्यः भाति ह्येष वनस्पतिः ॥ १५ ॥

ककुभः—मरुचकः। ककुभस्य बहिस्त्वचोऽपि श्लक्ष्णत्वात् ककुभोरुः—श्लक्ष्णोरुः। एवं पाङ्कः। यथा—अपरोक्षतया अनुभूयमानः इत्यर्थः। एवमग्रेऽपि। अपुष्पः सफलः—वनस्पतिः। व्यक्तं जानातीत्यनुकर्षः ॥ १५ ॥

भ्रमरैरुपगीतश्च यथा द्रुमवरो ह्ययम् ।
एष व्यक्तं विजानाति तिलकः तिलकप्रियाम् ॥ १६ ॥

उपगीतः—उप–समीपे क्रियमाणझोङ्कार इत्यर्थः ॥ १६ ॥

अशोक! शोकापनुद! शोकोपहत[7]चेतसम् ।
त्वन्नामानं कुरु क्षिप्रं प्रियासंदर्शनेन माम् ॥ १७ ॥

त्वन्नामानं कुरु—अशोकं मां कुर्वित्यर्थः ॥ १७ ॥

---

* केचित् करभोरुमिति वदन्ति, तत् प्रकृतशैलीविरुद्धम्—**गो.**

[1] संकाशां–**ज.** [2] वासिनीम्–**ज.** [3] यदि सा–**ज.** [4] तन्वी–**ज** [5] करभोरुं–**ङ.** [6] लता–**ज.** [7] चेतनम्–**ज.**

यदि, ताल! त्वया दृष्टा पक्वतालफलस्तनी ।
कथयस्व वरारोहां कारुण्यं यदि ते मयि ॥ १८ ॥

यदि दृष्टा त्वया सीता, [1]जम्बु! *जम्बुफलोपमाम् ।
प्रियां यदि विजानीषे निःशङ्कः कथयस्व मे ॥ १९ ॥

अहो त्वं [2]कर्णिकाराद्य [3]सुपुष्पैः शोभसे भृशम् ।
कर्णिकार[4]प्रिया साध्वी शंस, दृष्टा प्रिया यदि ॥ २० ॥

†चूतनीपमहासालान् पनसान् कुरवान् धवान् ।
दाडिमानसनान् गत्वा दृष्ट्वा रामो महायशाः ॥ २१ ॥

[5]मल्लिकामाधवीश्चैव चम्पकान् केतकीस्तथा ।
[6]पृच्छन् रामो वने भ्रान्तः ‡उन्मत्त इव लक्ष्यते ॥ २२ ॥

§अथवा मृगशाबाक्षीं, मृग! जानासि मैथिलीम्?
मृगविप्रेक्षणी कान्ता मृगीभिः सहिता भवेत् ॥ २३ ॥

मृगीभिः सहिता भवेत् इत्यादौ संभावनायां लिङ्। एवं तत्र तत्र संभावनाबीजं तत्तत् किञ्चिद्धर्मसंबन्धः। मृगविप्रेक्षणीत्वमत्र ॥

---

* स्निग्धताऽऽकारेण जम्बूफलौपम्यम्--गो. प्रेमाह्वानसूचकपदेषु जम्बूफलवाचकमपि कैश्चित् ग्रामीणैः देशभाषात्मकं पदं प्रयुज्यत इत्यप्यवधेयम् ॥ † श्लोकद्वयमेकान्वयम्--गो. ‡ उन्मत्त इव--वस्तुतः नोन्मत्त इत्यर्थः--ति. परन्तु लोकेऽप्येतादृशस्थले 'किमयं उन्मत्तवत् प्रलपति' इति स्वरसः प्रयोगो दृश्यत इत्यवधेयमेतत्। § इति वृक्षान् पृष्ट्वा मृगान् पृच्छति--अथेति--मृगवत् विविधं प्रेक्षत इति--मृगविप्रेक्षणी--गो. मृगशाबाक्षीमित्यनेन अवयवसाम्यं, मृगविप्रेक्षणीत्यनेन इन्द्रियव्यापारसाम्यञ्चोच्यत इति भावः ॥

[1] जाम्बूनदसमप्रभा--ञ. [2] कर्णिकाराङ्ग--ङ. [3] पुष्पितः--ञ. [4] प्रियां साध्वीं--ञ. [5] वकुलानथ पुन्नागान् चन्दनान् केतकांस्तथा--ञ. [6] गच्छन्--ङ.

**गज ! सा *गजनासोरूः यदि दृष्टा त्वया भवेत् ।**
**तां मन्ये विदितां तुभ्यं आख्याहि, वरवारण ! ॥ २४ ॥**

**शार्दूल ! यदि सा दृष्टा प्रिया चन्द्रनिभानना ।**
**मैथिली मम विस्रब्धं कथयस्व न ते भयम् ॥ २५ ॥**

शार्दूले बलगत्यादिकिञ्चिद्धर्मसंबन्धः । न ते भयमिति । तथा कथनेऽपि प्रीतात् मत्तः तव न भयमित्यर्थः ॥ २५ ॥

**† किं धावसि, प्रिये ! दूरं दृष्टाऽसि, कमलेक्षणे !**
**वृक्षैराच्छाद्य चात्मानं किं मां न प्रतिभाषसे ? ॥ २६ ॥**

**तिष्ठ तिष्ठ वरारोहे ! न तेऽस्ति करुणा मयि ।**
**‡ नात्यर्थं हास्यशीलाऽसि किमर्थं मामुपेक्षसे ? ॥ २७ ॥**

अत्यर्थं हासशीला—परिहासशीला ॥ २७ ॥

**पीतकौशेयकेनासि सूचिता, वरवर्णिनि !**
**धावन्त्यपि मया दृष्टा तिष्ठ, यद्यस्ति सौहृदम् ॥ २८ ॥**

कौशेयकेन सूचितासीति । मोहात् तत्प्रतिभासः ॥ २८ ॥

**§ नैव सा नूनमथवा[1]ऽहिंसिता चारु[2]हासिनी ।**
**कृच्छ्रं प्राप्तं न मां नूनं यथोपेक्षितुमर्हति ॥ २९ ॥**

---

* गजनासः—गजकरः । † मोहपारवश्यात् सीताया दर्शनं अकाण्ड एव । ‡ ‘ नात्यर्थं हास्यशीलासि ’ इति तस्याः स्वभावानुवादः । § अथवा साऽत्र नैव विद्यते, किन्तु हिंसिता । अत्र हेतुमाह—कृच्छ्रमिति—**गो.** एतादृगवस्थमपि मां सा यतो नोपयाति, अतः सा अत्र नास्ति किं तु हिंसिता इति किञ्चिन्निवृत्तमोहस्य उक्तिः । कतकदृष्ट्या—नैव सा नूनम् । अथवा सती अपि मदवस्थया न पीडिता, एतादृशं मां दृष्ट्वाऽपि तस्या मनः न सानुकम्पं जातमिति भावः ॥

[1] ह्रिंसिता—**ङ, ञ.** [2] वर्णिनी-**ङ.**

नैव सेत्यादि । अहिंसितेति पदम् । चारुहासिनी सा अथवा नूनं अहिंसिता न हिंसितैव । अतः यथा—एवंप्रकारेण कृच्छ्रप्राप्तं मां नूनं उपेक्षितुं नार्हति ॥ २९ ॥

*व्यक्तं सा भक्षिता बाला राक्षसैः पिशिताशनैः ।
[1]विभज्याङ्गानि सर्वाणि मया विरहिता प्रिया ॥ ३० ॥

† उक्त एवार्थः स्पष्टीक्रियते—व्यक्तमित्यादि ॥ ३० ॥

नूनं तत् शुभदन्तोष्ठं सुनासं [2]चारुकुण्डलम् ।
पूर्णचन्द्र[3]मिव ग्रस्तं मुखं निष्प्रभतां गतम् ॥ ३१ ॥

निष्प्रभतां गतं इति । मारणादिति शेषः ॥ ३१ ॥

सा हि चम्पकवर्णाभा ग्रीवा ग्रैवेयशोभिता ।
कोमला विलपन्त्यास्तु कान्ताया भक्षिता [4]शुभा ॥ ३२ ॥

उच्यमानविशेषणा सा हि ग्रीवा भक्षितेत्यन्वयः ॥ ३२ ॥

नूनं विक्षिप्यमाणौ तौ बाहू पल्लवकोमलौ ।
भक्षितौ वेपमानाग्रौ सहस्ताभरणाङ्गदौ ॥ ३३ ॥

मया विरहिता बाला रक्षसां भक्षणाय वै ।
‡[5]सार्थेनेव [6]परित्यक्ता भक्षिता बहुबान्धवा ॥ ३४ ॥

---

* हिंसितेत्यस्यैव विवरणं—व्यक्तमित्यादि ॥ † उक्त एवार्थः – नैव सा नूनं इत्यनेनोक्तः अर्थः ॥ ‡ सार्थेन —पथिकसमुदायेन–**गो.** वने पथिकसमुदायेन परित्यक्ता या काचित् यथा दुष्टमृगादिभिः भक्षिताभवेत्, तथा बहुबान्धवाऽपि मया विरहिता रक्षसां भक्षणाय परित्यक्ता ॥

[1] विभिन्द्याङ्गानि–ङ. [2] शुभ–ज. [3] निभं–ज. [4] बलात्–ङ.
[5] सा वनेऽस्मिन्–ङ. [6] परिभ्रष्टा–ङ.

हा लक्ष्मण ! महाबाहो ! पश्यसि त्वं प्रियां क्वचित् ?
हा प्रिये ! क्व गता ? भद्रे ! हा सीतेति पुनः पुनः ॥३५॥

इत्येवं विलपन् रामः [1]परिधावन् वनाद्वनम् ।
क्वचिदुद्भ्रमते [2]वेगात् क्वचिद्विभ्रमते बलात् ॥ ३६ ॥

*उद्भ्रमविभ्रमौ प्रागुक्तार्थौ ॥ ३६ ॥

†क्वचिन्मत्त इवाभाति कान्तान्वेषणतत्परः ।
‡स वनानि नदीः शैलान् गिरिप्रस्रवणानि च ।
काननानि च वेगेन [3]भ्रमत्यपरिसंस्थितः ॥ ३७ ॥

अपरिसंस्थितः—अप्रतिष्ठितः भ्रमति स ॥ ३७ ॥

तथा स गत्वा विपुलं महद्वनं
परीत्य सर्वं त्वथ § मैथिलीं प्रति ।
[4]अनिष्ठिताशः स चकार मार्गणे
पुनः प्रियायाः परमं परिश्रमम् ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे षष्टितमः सर्गः

---

अनिष्ठिताशः—अनिवृत्ताशः । मार्गणे—अन्वेषणे । पुनः पुनः परिश्रमं चकार । अदुर्ग(३८ १/२)मानः सर्गः ॥ ३८ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे षष्टितमः सर्गः

---

* चतुर्थश्लोकटिप्पणी द्रष्टव्येत्यर्थः । † मत्त इवाभाति, मत्तवत् परिभ्रमति चेत्यर्थः–गो. ‡ सुगमानि वनानि दुर्गमाणि—काननानि–गो. § मैथिलीं प्रति—मैथिलीलाभं प्रति–गो.

[1] पर्यधावत्–ङ. [2] योगात्–ज. [3] भ्रमन् विपरि–ङ. [4] अधिष्ठिताशः–ङ.

## एकषष्टितमः सर्गः

### [सीताऽन्वेषणम्]

*दृष्ट्वाऽऽश्रमपदं शून्यं रामो दशरथात्मजः ।
रहितां पर्णशालां च विध्वस्तान्यासनानि च ॥ १ ॥
अदृष्ट्वा तत्र वैदेहीं संनिरीक्ष्य च सर्वशः ।
उवाच †रामः प्राक्रुश्य प्रगृह्य रुचिरौ भुजौ ॥ २ ॥

पुनश्चान्वेषणप्रलापौ 'अर्धो वा एष आत्मनः यत्पत्नी' इति श्रुतेः सर्वाकारसम्पत्तिमत्स्त्रीवियोगे गतकल्पात्मार्धत्वात् यथानिमित्तप्राप्त-तमसा आवृतसत्त्वरजःशक्तित्वाच्च स्वभावप्राप्तौ तौ । न हि केवलसत्त्व-मात्रात् सत्त्वरजोमात्राद्वा क्वचिदपि देहः कश्चिदपि भवति । तथाहि गीयते—

"न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥"

इति । दृष्ट्वाऽऽश्रमपदमित्यादि । प्रगृह्य–उत्क्षिप्य ॥ १–२ ॥

क्व नु, लक्ष्मण! वैदेही [1]कं वा देशमितो गता?
केनाहृता ‡ वा? सौमित्रे! भक्षिता केन वा प्रिया?
वृक्षेणा[2]च्छाद्य यदि मां, सीते! हसितुमिच्छसि ।
अलं ते हसितेनाद्य मां भजस्व सुदुःखितम् ॥ ४ ॥

वृक्षेणेत्यादिः प्रलापः ॥ ४ ॥

---

* दृष्ट्वा अत्युद्विग्नोऽभवदिति शेषः–**रा.** श्लोकद्वयमेकान्वयम्–**गो.** † पुनरपि रामग्रहणं क्रियाभेदात्–**गो.** सीतारहितां पर्णशालां, अत एव मृगपक्ष्यादिभिरपि शून्यं आश्रमपदं दृष्ट्वा, तत्र सर्वशः वैदेहीं सन्निरीक्ष्य—अन्विष्य, तां अदृष्ट्वा उवाचे-त्यन्वयः–**गो.** ‡ आहृता—अपहृता ।

[1] क्व वा दिश–**ङ.** [2] वार्य–**ञ.**

यैः सह क्रीडसे, सीते ! विश्वस्तैः मृगपोतकैः ।
एते हीनाः त्वया सौम्ये ! * ध्यायन्त्यास्राविलेक्षणाः ॥५॥

ध्यायन्तीति । त्वामिति शेषः ॥ ५ ॥

सीतया रहितोऽहं वै न हि जीवामि, लक्ष्मण !
[1] मृतं शोकेन महता सीताहरणजेन माम् ॥ ६ ॥
परलोके महाराजः नूनं द्रक्ष्यति मे पिता ।
† कथं प्रतिज्ञां संश्रुत्य यया त्वमभि[2]योजितः ॥ ७ ॥
अपूरयित्वा तं कालं मत्सकाश[3]मिहागतः ।

परलोकेऽपि मम धिक्कारः एव मरणेऽपि प्राप्नोतीत्याह--कथं प्रतिज्ञामिति । अभियोजितः । नियुक्त इत्यर्थः ॥ ७ ॥

‡ कामवृत्तमनार्यं मां मृषावादिनमेव च ॥ ८ ॥
धिक् त्वामिति परे लोके व्यक्तं वक्ष्यति मे पिता ।
विवशं शोकसंतप्तं दीनं भग्नमनोरथम् ॥ ९ ॥
मामिहोत्सृज्य करुणं § कीर्तिर्नरमिवानृजुम् ।
क्व गच्छसि ? वरारोहे ! मां नोत्सृज, सुमध्यमे ! ॥१०॥
त्वया विरहितश्चाहं [4] मोक्ष्ये जीवितमात्मनः ।

मामिहोत्सृज्य क्व गच्छसि इत्यन्वयः ॥ ८-१० ॥

---

* किमपि ध्यायन्ति-गो. चिन्तामग्ना इति यावत् । † कथं मत्सकाशं इह आगत इत्यन्वयः । ‡ कामवृत्तं—स्वैरम् । § अनृजुं नरं कीर्तिरिव करुणं मामुत्सृज्य क्व गच्छसि ।

[1] वृतं-ज. [2] चोदितः-ङ. [3] मितो गतः-ङ. [4] त्यक्ष्ये-ज.

[1]इतीव विलपन् रामः सीतादर्शनलालसः ॥ ११ ॥
न ददर्श सुदुःखार्तः राघवो जनकात्मजाम् ।
अनासादयमानं तं सीतां [2] दशरथात्मजम् ॥ १२ ॥
पङ्कमासाद्य विपुलं सीदन्तमिव कुञ्जरम् ।
लक्ष्मणो राममत्यर्थं उवाच हितकाम्यया ॥ १३ ॥
मा [3]विषादं [4] महाबाहो ! कुरु यत्नं मया सह ।

कुरु यत्नमिति । अन्वेषण इति शेषः ॥ १३ ॥

इदं च हि वनं, शूर ! बहु कन्दरशोभितम् ॥ १४ ॥
प्रियकाननसंचारा * वनोन्मत्ता च मैथिली ।
सा वनं वा प्रविष्टा स्यात् , नलिनीं वा सुपुष्पिताम् ॥
सरितं वाऽपि संप्राप्ता मीनवञ्जुलसेविताम् ।
[5] स्नातुकामा निलीना स्यात् असकामा वने क्वचित् ॥

प्रियः काननसंचारः यस्याः सा तथा । वनोन्मत्ता—वनसंचारवशादुन्मादवती । अत एव सा वनादिकं प्राणापायनिमित्तभूतं प्रविष्टा स्यात् । संभावने लिङ् । वञ्जुलः—निचुलः நீர்வஞ்சி ॥

[6] वित्रासयितुकामा वा लीना स्यात् कानने क्वचित् ।
† जिज्ञासमाना वैदेही त्वां मां च, पुरुषर्षभ ! ॥ १७ ॥
तस्या ह्यन्वेषणे, श्रीमन् ! क्षिप्रमेव यतावहे ।

---

* वनं—जलं, 'जीवनं भुवनं वनम्' इत्यमरः ; वनेन—वनदर्शनेन उन्मादवती—अतिप्रियसलिलेत्यर्थः । यथाक्रमं तत्कार्यमाह - सेति-**गो**. † जिज्ञासमाना—स्वस्मिन् आवयोः प्रीतिं परीक्षितुकामा इति वा ।

[1] इत्येवं-**ङ**. [2] शोकपरायणम्-**ञ**. [3] विषीद-**ङ**. [4] महाबुद्धे-**ञ**.
[5] इदं कुत्रचिदधिकं-**ङ**, **ञ**. [6] इदं कुत्रचिन्न-**ञ**.

त्वां मां च जिज्ञासमानेति । युष्मदस्मदन्वेषणादिसामर्थ्य-
मित्यर्थः । यतावहे—यत्नं कुर्वः ॥ १७ ॥

**वनं सर्वं विचिनुवः यत्र सा जनकात्मजा ॥ १८ ॥**
**मन्यसे यदि, काकुत्स्थ ! मा स्म शोके मनः कृथाः ।**
**एवमुक्तस्तु *सौहार्दात् लक्ष्मणेन समाहितः ॥ १९ ॥**
**सह सौमित्रिणा रामः विचेतुमुपचक्रमे ।**

विचेतुं—अन्वेष्टुम् ॥ १९ ॥

**तौ वनानि गिरींश्चैव सरितश्च सरांसि च ॥ २० ॥**
**निखिलेन [1]विचिन्वानौ सीतां दशरथात्मजौ † ।**
**तस्य शैलस्य सानूनि गुहाश्च शिखराणि च ॥ २१ ॥**
**निखिलेन [1]विचिन्वानौ नैव तामभिजग्मतुः ।**
**विचित्य सर्वतः शैलं रामो लक्ष्मणमब्रवीत् ॥ २२ ॥**
**नेह पश्यामि, सौमित्रे ! वैदेहीं पर्वते शुभाम् ।**
**‡ततो दुःखाभिसंतप्तः लक्ष्मणो वाक्यमब्रवीत् ॥ २३ ॥**
**विचरन् दण्डकारण्यं भ्रातरं दीप्ततेजसम् ।**

---

* सौहार्दात् एवमुक्तः, अत एव समाहितः । † 'नैव तामभिजग्मतुः' इत्युत्तर-श्लोकादाकर्षः । ‡ 'प्रियकाननसञ्चारा' 'वनं सर्वं विचिनुमः' इत्यादिना सीतायाः समीप एव यत्र कचित् सद्भावः संभावितोऽभूत् । 'विचरन् दण्डकारण्यं' इत्यनेन सा संभावना गलिता । अत एव 'नेह पश्यामि वैदेहीं' इति रामवचनमङ्गी-कर्तव्यमापतितं । तत एव दुःखाभिसन्तप्तः 'नेहास्ति मैथिली' इतीममेवार्थं—'प्राप्स्यसि त्वं मैथिलीं' इति पर्यायेण अंगीचकार इति भावः । 'प्राप्स्यसि त्वं' इत्यनेन हि तदानीं निराशत्वं प्रकटीकृतम् । अतः 'दुःखाभिसन्तप्तः' इत्युक्तिः युक्ता । अत्र सर्गान्तिमश्लोकः द्रष्टव्यः ।

[1] विचिन्वन्तौ—ञ.

'नेह पश्यामि, सौमित्रे वैदेहीं ! पर्वते शुभां' इत्युक्तोऽपि पुनर्विलापपरिहाराय लक्ष्मणो ब्रूते—ततो दुःखाभिसंतप्तः इत्यादि । दीप्ततेजसं भ्रातरं लक्ष्मणो वाक्यं अब्रवीत् ॥ २३ ॥

प्राप्स्यसि त्वं, महाप्राज्ञ ! मैथिलीं जनकात्मजाम् ॥२४॥
यथा विष्णुः महाबाहुः बलिं बद्ध्वा महीमिमाम् ।

किमिति ? दण्डकारण्यं विचरन् त्वं सीतां प्राप्स्यसीति । तत्र दृष्टान्तः—यथा विष्णुरित्यादि ॥ २४ ॥

एवमुक्तस्तु [1]सौहार्दात् लक्ष्मणेन स राघवः ॥ २५ ॥
उवाच दीनया वाचा दुःखाभिहतचेतनः ।
वनं सर्वं सुविचितं पद्मिन्यः फुल्लपङ्कजाः ॥ २६ ॥
गिरिश्चायं, महाप्राज्ञ ! बहुकन्दरनिर्झरः ।
नेह पश्यामि वैदेहीं प्राणेभ्योऽपि गरीयसीम् ॥ २७ ॥

एवं लक्ष्मणास्तु कृतं, करणेन किमित्याह—वनं सर्वमित्यादि । अत्र 'नेह पश्यामी'त्यादिसार्धश्लोकत्रयं प्राचीनपाठे पाङ्क्तम् । तत्तु कैश्चित् पुनरुक्तदुर्बुद्ध्या त्यक्तम् ॥ २७ ॥

एवं स विलपन् रामः सीताहरणकर्शितः ।
दीनः शोकसमाविष्टः मुहूर्तं विह्वलोऽभवत् ॥ २८ ॥

विह्वलः—परवशः ॥ २८ ॥

---

[1] वीरेण—ञ.

*[1] संतप्तो ह्यवसन्नाङ्गो गतबुद्धिः विचेतनः ।
[2] विषसादातुरो दीनः [3] निःश्वस्याशीतमायतम् ॥ २९ ॥

अशीतं—उष्णम् । आयतं–दीर्घम् ॥ २९ ॥

बहुलं स तु निःश्वस्य रामो राजीवलोचनः ।
हा प्रियेति विचुक्रोश बहुशो बाष्पगद्गदः ॥ ३० ॥
तं ततः सान्त्वयामास लक्ष्मणः प्रिय[4]बान्धवः ।
बहुप्रकारं [5] धर्मज्ञः [6] प्रश्रितं प्रश्रिताञ्जलिः ॥ ३१ ॥

प्रश्रितं–विनयोपेतं यथा तथा बद्धाञ्जलिः–प्रश्रिताञ्जलिः ॥

अनादृत्य तु तद्वाक्यं † लक्ष्मणोष्ठपुटाच्च्युतम् ।
अपश्यंस्तां प्रियां सीतां प्राक्रोशत् स पुनः पुनः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकषष्टितमः सर्गः

---

रङ्ग(३२)मानः सर्गः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकषष्टितमः सर्गः

---

* अवसन्नाङ्गः—कृशाङ्गः । गतबुद्धिः—निस्संज्ञः । विचेतनः—निश्चेष्टः–गो.
† यतः लक्ष्मणोष्ठपुटात् च्युतं, न तु हृदयात्, अतः तद्वाक्यं अनादृत्य । २३ श्लोकटिप्पणी द्रष्टव्या ।

[1] स विह्वलितसर्वाङ्गः–ज. [2] निषसादा–ङ. [3] निश्वसंश्च मुहुर्मुहुः–ङ.
[4] बान्धवम्–ज. [5] शोकार्तः–ङ. [6] प्रश्रितः–ङ, ज.

## द्विषष्टितमः सर्गः

[रामविलापः]

सीतामपश्यन् *धर्मात्मा [1]कामोपहतचेतनः ।
विललाप महाबाहुः रामः कमललोचनः ॥ १ ॥

"यो हि बीजफलं भुङ्क्ते संसारी सकलोऽपि च"(?) अतः पुनश्चविलापः—सीतामपश्यन्नित्यादि ॥ १ ॥

†पश्यन्निव स तां सीतां अपश्यन् मदनार्दितः ।
उवाच राघवो वाक्यं [2]विलापाश्रयदुर्वचम् ॥ २ ॥

पश्यन्निवोवाचेति । मोहजतया प्रतिभासवशादिति शेषः ॥ २ ॥

त्वमशोकस्य शाखाभिः पुष्पप्रियतया, प्रिये ।
‡आवृणोषि शरीरं ते मम शोकविवर्धनी ॥ ३ ॥
कदली[3]काण्डसदृशौ कदल्या संवृतावुभौ ।
ऊरू पश्यामि ते, देवि! नासि शक्ता निगूहितुम् ॥ ४ ॥
कर्णिकारवनं, भद्रे! हसन्ती, देवि! सेवसे ।
अलं ते परिहासेन मम बाधावहेन वै ॥ ५ ॥
[4]परिहासेन किं, सीते! परिश्रान्तस्य मे, प्रिये!
अयं स परिहासोऽपि साधु, देवि! न रोचते ॥ ६ ॥

---

* धर्मात्मा, कामोपहतचेतन इत्याभ्यां धर्माविरुद्धकामस्यानिन्द्यत्वमुक्तं—**गो.** † पुरोवर्तित्वाभावेन सीतामपश्यन्नपि मदनार्दितः—मदनपरवशः तां पश्यन्निव संबोध्योवाच। तद्वाक्यं विलापाश्रयत्वेन दुर्वचं, गद्गदकण्ठत्वादिति भावः। यद्वा विलापसम्बन्धात् अस्माभिः वक्तुमशक्यम्, अनुवदितुमशक्यमित्यर्थः—**गो.** ‡ आवृणोषि—किं तेनावरणेन? मया दृष्टत्वादिति भावः—**गो.**

[1] शोको—**ज.** [2] विरहा—**ङ.** [3] स्कन्ध—**ङ.** [4] अयं श्लोकः कुण्डलितः—**ज.**

विशेषेणाश्रमस्थाने हासोऽयं न प्रशस्यते ।
अवगच्छामि ते शीलं परिहासप्रियं, प्रिये ! ॥ ७ ॥
आगच्छ त्वं, विशालाक्षि ! शून्योऽयमुटजस्तव ।
*सुव्यक्तं राक्षसैः सीता भक्षिता वा हृतापि वा ॥ ८ ॥
न हि सा विलपन्तं मां उपसंप्रैति, लक्ष्मण ।

विवेकपूर्ववचनं सुव्यक्तं राक्षसैरित्यादि । उपसंप्रैति—उपसंप्राप्नोति । उपेक्षतेऽपि चे(उपेक्षितेऽपि वे)त्यर्थः ॥ ८ ॥

एतानि मृगयूथानि साश्रुनेत्राणि, लक्ष्मण ॥ ९ ॥
शंसन्तीव हि वैदेहीं भक्षितां रजनीचरैः ।
हा ममार्ये ! क्व यातासि ? हा साध्वि ! वरवर्णिनि ! ॥ १० ॥
†हा सकामा त्वया, देवि ! कैकेयी सा भविष्यति ।
सीतया सह निर्यातः विना सीतामुपागतः ॥ ११ ॥
कथं नाम प्रवेक्ष्यामि शून्यमन्तःपुरं [1]पुनः ? ।
निर्वीर्य इति लोको मां निर्दयश्चेति वक्ष्यति ॥ १२ ॥
‡कातरत्वं प्रकाशं हि सीतापनयनेन मे ।

सकामा त्वयेति, भक्षितयेति शेषः । कातरत्वं—अधीरत्वं, सीतापनयनेन—सीताविनाशनेनेत्यर्थः ॥ १२ ॥

---

*लक्ष्मणं प्रत्याह—सुव्यक्तमित्यादि । †त्वां विना यतोऽहं म्रियेय—अतः कैकेयी सकामा भविष्यतीत्यर्थः । कथञ्चित् जीवनेऽपि कथं अयोध्यां गच्छेयं इत्याह—सीतयेत्यादि । ‡कातरत्वं—अधीरत्वं, जीवितधारणाशक्तेरिति भावः—गो. वस्तुतस्तु—भार्यायामपहृतायामपि, केवलस्वरक्षणदृष्ट्या पलाय्यागतं मां जानीयुरिति भावः ।

[1] मम—ञ.

निवृत्तवनवासश्च जनकं मिथिलाधिपम् ॥ १३ ॥
कुशलं परिपृच्छन्तं कथं शक्ष्ये निरीक्षितुम् ।
विदेहराजो नूनं मां दृष्ट्वा विरहितं [1]तया ॥ १४ ॥
[2]सुतास्नेहेन संतप्तः मोहस्य वशमेष्यति ।

तया—सीतया विरहितं—वियुक्तम् ॥ १४ ॥

*[3] तात एव कृतार्थः स तत्रैव वसताद्गतः ॥ १५ ॥

"तात एव कृतार्थः सः तत्रैव वसताद्गतः" इति प्राचीनं पाङ्क्तमेकमर्धं दृश्यते। इदं पौराणिकाः दुर्योजतः त्यजन्ति, न लिखन्ति, कुण्डलयन्ति वा। तातो दशरथ एव कृतार्थः सीताविरहितं आगतं मां दृष्ट्वा यतः स्वर्गगतः तत्त्वतो दुःखं न प्राप्स्यतीति यत् तस्मात् स तातः तत्रैव स्वर्ग एव वसतात्। अभीष्टे लोट्। अथ लडर्थे लोटं व्यत्ययादङ्गीकृत्य तु योजनं—तातः तत्रैव स्वर्ग एव वसतीति यत् अतः स एव कृतार्थः, न तु जीवन्ती कौसल्येत्यर्थः॥

अथवा न गमिष्यामि पुरीं भरतपालिताम् ।
स्वर्गोऽपि सीतया हीनः शून्य एव मतो मम ॥ १६ ॥

उक्तदोषपरिहाराय पक्षान्तरमादत्ते—अथवेत्यादि ॥ १६ ॥

[4]मामिहोत्सृज्य हि वने गच्छायोध्यां पुरीं शुभाम् ।
न त्वहं तां विना सीतां जीवेयं हि कथंचन ॥ १७ ॥

---

* 'तात एव कृतार्थः स तत्रैव वसताद्गतः' इत्यर्धमधिकं कतकपाठे। तातो दशरथ एव कृतार्थः वसतात्, लोट् व्यत्ययेन। यतः स तत्रैव–स्वर्ग एव वसति, न तु जीवन्ती कौसल्येत्यर्थः–ति.

[1] त्वया–ङ. [2] सुताविनाश–ज. [3] इदमर्धं कुण्डलितं–ङ. [4] ता–ङ.

गाढमाश्लिष्य भरतो वाच्यो मद्वचनात् त्वया ।
अनुज्ञातोऽसि रामेण पालयेति वसुन्धराम् ॥ १८ ॥

अम्बा च मम कैकेयी सुमित्रा च त्वया, विभो ।
कौसल्या च यथान्यायमभिवाद्या ममाज्ञया ॥ १९ ॥

रक्षणीया प्रयत्नेन भवता [1]सोक्तकारिणा ।

सेति । कौसल्येति यावत् ॥ १९ ॥

सीतायाश्च विनाशोऽयं * मम चामित्र[2]कर्शन !
विस्तरेण जनन्या मे विनिवेद्यस्त्वया भवेत् ॥ २० ॥

इति विलपति राघवे सुदीने
वनमुपगम्य † तया विना सुकेश्या ।
भयविकलमुखस्तु लक्ष्मणोऽपि
व्यथितमना भृशमातुरो बभूव ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे द्विषष्टितमः सर्गः

---

अकर(२१ १/२)मानः सर्गः ॥ २१ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे द्विषष्टितमः सर्गः

---

* मम च विनाशः—इत्यन्वयः । 'न ह्यहं तां विना सीतां जीवेयं' इत्यनुपदं ह्युक्तम् । † तया विनाकृतं वनमुपगम्येत्यर्थः—गो. वनमुपगम्य, तया विना विलपतीत्यन्वयः स्वरसः ।

[1] युक्त-ङ, सूक्त-ञ. [2] सूदन-ञ.

## त्रिषष्टितमः सर्गः

### [शोकानुचिन्तनम्]

स राजपुत्रः प्रियया विहीनः
*[1]शोकेन मोहेन च पीड्यमानः ।
विषादयन् भ्रातरमार्तरूपः
भूयो विषादं प्रविवेश तीव्रम् ॥ १ ॥

अथ रामस्य दुःखप्रसङ्गात् सकलस्वकदुःखानुस्मृतिः । स राजपुत्र इत्यादि । शोकः—इष्टवियोगजः चित्तपरितापः, मोहः—कामजचित्तवैवश्यम् ॥ १ ॥

स लक्ष्मणं शोकवशाभिपन्नं
शोके निमग्नो [2]विपुलेऽति रामः ।
उवाच वाक्यं व्यसनानुरूपं
उष्णं विनिःश्वस्य रुदन् [3]सशोकम् ॥ २ ॥

अति रामः इति । अतिशोके इत्यन्वयः । व्यसनानुरूपमिति । लोकवद्दुःखप्रसङ्गोचितमित्यर्थः ॥ २ ॥

न मद्विधो दुष्कृत[4]कर्मकारी
मन्ये द्वितीयोऽस्ति वसुन्धरायाम् ।
†[5]शोकानुशोको हि परम्परायाः
मामेति भिन्दन् हृदयं मनश्च ॥ ३ ॥

---

* ('कामेन शोकेन' इति पाठः) कामेन—प्रियास्मरणजेन, शोकेन—प्रियाविरहजन्येन—**गो.** † परंपरायाः—परंपरारूपेणागतः शोकेन शोकः (पा.) शोकाच्छोकः हृदयं मनश्च भिन्दन् मामेति । मनोऽधिष्ठानं हृदयम्—**गो.** परंपरायाः—परंपरया—**रा.**

[1] कामेन शोकेन च—**ङ.** [2] विपुले तु—**ङ, ज.** [3] सशोकः—**ङ.**
[4] कामकारी—**ङ.** [5] शोकेन शोको—**ङ.**

एकं शोकमनु—अनुक्षणं प्रवृत्तः शोकानुशोकः। परम्परायाः—अविच्छेदेन प्राप्तेर्हेतोः। हृदयं—तदधिष्ठानमात्मानं मनश्च भिन्दन् एति ॥ ३ ॥

पूर्वं मया नूनमभीप्सितानि *
पापानि [1] कर्माण्यसकृत् कृतानि ।
तत्रायमद्यापतितो विपाकः
† दुःखेन दुःखं यदहं विशामि ॥ ४ ॥

उक्त एव प्रकाश्यते—पूर्वमित्यादि। अभीप्सितानि चिकीर्षाविषयं प्राप्तानि इत्यर्थः। विपाकः—परिणामः ॥ ४ ॥

राज्यप्रणाशः स्वजनैर्वियोगः
पितुर्विनाशो जननीवियोगः ।
सर्वाणि मे, लक्ष्मण! शोकवेगं
आपूरयन्ति प्रविचिन्तितानि ॥ ५ ॥

अथ शोकानुशोकः प्रदर्श्यते—राज्येत्यादि। शोकवेगमापूरयन्तीति। इदानीन्तनमिति शेषः ॥ ५ ॥

सर्वं तु दुःखं मम लक्ष्मणेदं
‡ शान्तं शरीरे वनमेत्य [2] शून्यम् ।
सीतावियोगात् पुनरप्युदीर्णं
काष्ठैरिवाग्निः सहसा प्रदीप्तः ॥ ६ ॥

शरीरे शान्तमिति। शरीरक्लेशे विस्मृतमित्यर्थः ॥ ६ ॥

---

* बुद्धिपूर्वकमिति भावः। † दुःखेन दुःखं—दुःखपरंपरामित्यर्थः—ति.
‡ वनं एत्य—प्राप्य शरीरे क्लेशमनुभूयापि सीतासन्निधानात् सर्वं शान्तम्। अथ सीतावियोगात् पुनरुदीर्णं—वृद्धिं प्राप्तम्—ति. शून्यं—निर्जनं वनमेत्य स्थितस्य मम शरीरे शान्तं—शरीरक्लेशेन विस्मृतम्—गो.

[1] सर्वा—ङ. [2] क्लेशम्—ज.

**सा नूनमार्या मम राक्षसेन**

**[1]बलाद्धृता खं समुपेत्य भीरुः ।**

*** [2]अपस्वरं [3]सस्वरविप्रलापा**

**भयेन विक्रन्दितवत्यभीक्ष्णम् ॥ ७ ॥**

खं समुपेत्य नूनं विक्रन्दितवतीत्यन्वयः ॥ ७ ॥

**तौ लोहितस्य प्रियदर्शनस्य**

**सदोचितौ उत्तमचन्दनस्य ।**

**वृत्तौ स्तनौ शोणितपङ्कदिग्धौ**

**नूनं प्रियाया मम †[4] नाभिपातः ॥ ८ ॥**

लोहितस्य—कुङ्कुमादिना रक्तवर्णस्य । स्तनौ‡ शोणितपङ्कदिग्धौ, भक्षणाय राक्षसैः विशसनादिति शेषः । मम नाभिपातः—मम देहाभिपातो न जायते इत्यर्थः ॥ ८ ॥

**तच्छ्लक्ष्णसुव्यक्तमृदुप्रलापं ‡**

**तस्या मुखं कुञ्चितकेशभारम् ।**

**रक्षोवशं नूनमुपागताया**

**न भ्राजते राहुमुखे यथेन्दुः ॥ ९ ॥**

---

* अप्यस्वरं—अपगतनिजस्वरं यथा तथा–**गो.** † नाभिभातः (पा.)—न प्रकाशेते । नाभिपात इति पाठान्तरे— एवमपि मम देहपातो न जायत इत्यर्थः–**गो.** ‡ प्रलापः—संलापः ।

[1] ह्यभ्याहृता दुःखमुपेत्य–ङ. [2] अप्यस्वरं–ज. [3] सुस्वर–ङ. [4] नाभिभातः–ङ.

तं हारपाशस्य सदोचिताया
  *ग्रीवां प्रियाया मम सुव्रतायाः ।
रक्षांसि नूनं[1] परिपीतवन्ति
  विभिद्य शून्ये रुधिराशनानि ॥ १० ॥

मया विहीना विजने वने या
  रक्षोभि[2]राहृत्य विकृष्यमाणा ।
नूनं †विनादं कुररीव दीना
  सा मुक्तवत्यायतकान्तनेत्रा ॥ ११ ॥

हारपाशस्य—हारमालायाः । परिपीतवन्ति—पानकर्मवन्ति । भविष्यन्तीति शेषः ॥ ११ ॥

अस्मिन् मया सार्धमुदारशीला
  शिलातले पूर्व[3]मुपोपविष्टा ।
कान्तस्मिता, लक्ष्मण ! जातहासा
  [4]त्वामाह सीता बहुवाक्यजातम् ॥ १२ ॥

उपोपविष्टा—समीपावस्थितेत्यर्थः ॥ १२ ॥

गोदावरीयं सरितां वरिष्ठा
  प्रिया प्रियाया मम नित्यकालम् ।
अप्यत्र गच्छेदिति चिन्तयामि
  नैकाकिनी याति हि सा कदाचित् ॥ १३ ॥

अत्रेति । गोदावर्यामित्यर्थः ॥ १३ ॥

---

* ग्रीवां शून्ये – एकान्ते विभिद्य – रुधिररूपाणि अशनानि—पानानि परिपीतवन्ति नूनम्–गो. रुधिराशनानीति रक्षांसि इत्यस्य विशेषणं वा। रक्षांसि परिपीतवन्ति नूनमित्यन्वयः। † विनादं मुक्तवतीत्यन्वयः।

[1] रुधिरं पिबन्ति–ङ. [2] रात्र्यल–ञ. [3] मिहो–ङ. [4] मा–ङ.

पद्मानना पद्म[1]विशालनेत्रा

पद्मानि वाऽऽनेतुमभिप्रयाता ।

तदप्ययुक्तं न हि सा कदाचित्

मया विना गच्छति * पङ्कजानि ॥ १४ ॥

कामं त्विदं पुष्पितवृक्षषण्डं

नानाविधैः पक्षिगणैरुपेतम् ।

वनं प्रयाता नु तदप्ययुक्तं

एकाकिनी साऽतिबिभेति भीरुः ॥ १५ ॥

अतिबिभेति—अत्यन्तं भीता भवति ॥ १५ ॥

आदित्य ! भो लोककृताकृतज्ञ !

लोकस्य सत्यानृतकर्मसाक्षिन् † ।

मम प्रिया सा क्व गता ? हृता वा ?

शंसस्व मे शोक[2]वशस्य नित्यम् ॥ १६ ॥

लोकेषु सर्वेषु [3] च नास्ति किञ्चित्

यत्ते न नित्यं विदितं भवेत्तत् ।

शंसस्व, वायो ! कुल[4]शालिनीं तां

हृता मृता वा ‡ पथि वर्तते वा ॥ १७ ॥

---

* पङ्कजानीत्यत्राप्यानेतुमित्यनुषज्यते—**गो.** † आदित्य चन्द्रावनिलोऽनलश्च द्यौर्भूमि रापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् " ॥ ‡ यत्र कुत्रचिद्गता इदानीमत्र ागच्छन्ती वर्तते वा—इत्यर्थः ।

[1] पलाश—**ज.** [2] हतस्य सर्वम्—**ज.** [3] न नास्ति—**ज.** [4] पालिनीं—**ज.**

[1]इतीव तं शोकविधेयदेहं*
  रामं विसंज्ञं विलपन्त[2]मेवम् ।
उवाच सौमित्रिरदीनसत्त्वः
  न्याये स्थितः काल[3]युतं च वाक्यम् ॥ १८ ॥

इतीवातीवशब्दौ प्रायशः इह पर्यायौ । कालयुतं—कालोचित-मित्यर्थः ॥ १८ ॥

शोकं [4]विमुञ्चार्य ! धृतिं भजस्व
  सोत्साहता चास्तु विमार्गणेऽस्याः ।
उत्साहवन्तो हि नरा न लोके
  सीदन्ति [5]कर्मस्वतिदुष्करेषु ॥ १९ ॥

इतीव सौमित्रिमुदग्रपौरुषं
  ब्रुवन्त[6]मार्तो रघुवंशवर्धनः ।
†न चिन्तयामास धृतिं विमुक्तवान्
  पुनश्च दुःखं महदभ्युपागमत् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे त्रिषष्टितमः सर्गः

---

नारी(२०)मानः सर्गः ॥ २० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे त्रिषष्टितमः सर्गः

---

* शोकविधेयः —शोकपरवशः- गो.        † सौमित्रिं न चिन्तयामास—न गणयामास । तदुक्तिं न श्रद्दधावित्यर्थः ।

[1] अतीव—ङ. [2] मेव—ज. [3] हितं—ङ. [4] विसृज्याथ—ज. [5] कर्मस्वपि—ङ. [6] मार्त—ज.

## चतुष्षष्टितमः सर्गः

[रामरौद्रावेशः]

*[1] स दीनो दीनया वाचा लक्ष्मणं वाक्यमब्रवीत् ।
शीघ्रं, लक्ष्मण ! जानीहि गत्वा गोदावरीं नदीम् ॥ २ ॥
अपि गोदावरीं सीता पद्मान्यानयितुं गता ?

अथ अन्वेषयन् लिङ्गदर्शनैः हृतां विज्ञाय अथ देवा आपदि तां न दत्तवन्तः इति देवेभ्योऽभिचुक्रोध । स दीन इत्यादि ॥ २ ॥

एवमुक्तस्तु रामेण लक्ष्मणः [2]परवीरहा ॥ २ ॥
नदीं गोदावरीं रम्यां जगाम †लघुविक्रमः ।
तां लक्ष्मणः तीर्थवतीं विचित्वा राममब्रवीत् ॥ ३ ॥
नैनां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे ‡ ।

तीर्थवतीं—अवतारवतीं, पुण्योदकवतीं च ।

---

* एवं शोककरणं–चारद्वारा श्रवणेन रावणस्य मनुष्यत्वबुद्धिदार्ढ्यपूर्वकं स्ववध्यत्वसंपादनायेति बोध्यम्–**ति.** † लघुविक्रमः —त्वरितपदविन्यासः–**गो.**
‡ उच्चस्वरेण आह्वानेऽपि नोत्तरं लब्धमिति भावः ।

[1] एतदर्धस्थाने—स दीनो दीनया वाचा संशुष्कवदनो भृशम् ।
अभिराममिदं रामः विललापाकुलेन्द्रियः ।
त्रिलोकाधिपतिं देवं शक्रं त्वां वेदयाम्यहम् ।
पुरन्दर विहारार्हप्रिया भार्या जहाति माम् ।
यस्मिन् काले स्त्रियं कामी लब्ध्वा भूयोऽभिनन्दति ।
तस्मिन् सुखोदये काले प्रिया भार्या जहाति माम् ।
निर्वीर्य इव मातङ्गः परिवृत्त इवोत्सवः ।
प्रतिभात्ययमावासः गतध्वज इवाहवः ।
रतिं नैव च विन्दामि तां विना पद्मलोचनाम् ।
नाशयत्येव सर्वस्वं अनुशोचामि भामिनीम् ।
इति शोकसमाविष्टः लक्ष्मणं वाक्यमब्रवीत्–**ङ.** [2] पुनरेव हि–**ज.**

कं नु सा देशमापन्ना वैदेही क्लेशनाशिनी ? ॥ ४ ॥
न ह्यहं वेद तं देशं यत्र सा जनकात्मजा ।

क्लेशनाशिनीति । सति दर्शने इति शेषः ॥ ४ ॥

लक्ष्मणस्य वचः श्रुत्वा दीनः सन्ताप[1]मोहितः ॥ ५ ॥
रामः समभिचक्राम स्वयं गोदावरीं नदीम् ।
स तामुपस्थितो रामः क्व सीतेत्येवमब्रवीत् ॥ ६ ॥

तां—गोदावरीम् ॥ ६ ॥

*भूतानि राक्षसेन्द्रेण वधार्हेण हृतामपि ।
न तां शशंसू रामाय तथा गोदावरी नदी ॥ ७ ॥

भूतानीत्यादि । भूतानि पूर्वोक्तरूपेण पृच्छ्यमानान्यपि राक्षसेन्द्रेण हृतां ज्ञात्वाऽपि तद्भयात् रामाय सीतां न शशंसुः । तथा गोदावरी च न शशंसेति विपरिणामः ॥ ७ ॥

ततः प्रचोदिता भूतैः शंसास्मै तां प्रियामिति ।
न तु साऽभ्यवदत् सीतां पृष्टा रामेण शोचता ॥ ८ ॥

अपि च भूतैः 'अस्मै सीतां शंसे' ति प्रचोदितापि गोदावरी तां सीतां पृष्टाऽपि नाभ्यवदत् ।

रावणस्य च तद्रूपं कर्माणि च दुरात्मनः ।
ध्यात्वा भयात्तु वैदेहीं सा नदी न शशंस ताम् ॥ ९ ॥

कुतः इत्यतः—रावणस्येत्यादि ॥ ९ ॥

---

* भूतानि—वन्यानि सत्त्वानि, दृष्टान्तार्थम्—गो.

[1] कर्शितः—ङ.

*निराशस्तु तया नद्या सीताया दर्शने कृतः ।
उवाच रामः सौमित्रिं सीताऽदर्शनकर्शितः ॥ १० ॥

तया नद्या सीतामशंसन्त्या तु रामः सीताया दर्शने निराशः कृतः; इयं गोदावरी दिव्यदेवता न ब्रूते, अतः कथं मया द्रष्टुं शक्या? इति निराशोऽभूदित्यर्थः। तदेवोच्यते उवाचेत्यादि ॥ १० ॥

एषा गोदावरी, सौम्य! किंचिन्न प्रतिभाषते ।
किं नु, लक्ष्मण! वक्ष्यामि समेत्य जनकं वचः? ॥११॥
मातरं चैव वैदेह्या विना तामहमप्रियम् † ।
या मे राज्यविहीनस्य वने वन्येन जीवतः ॥ १२ ॥
सर्वं [1]व्यपनयेच्छोकं वैदेही क्व नु सा गता?
‡ [2]ज्ञातिपक्षविहीनस्य [3]राजपुत्रीमपश्यतः ॥ १३ ॥
मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ।
मन्दाकिनीं जनस्थानं इमं प्रस्रवणं गिरिम् ॥ १४ ॥
§ [4]सर्वाण्यनुचरिष्यामि यदि सीता हि [5]दृश्यते ।

अथ समीपदेशान्वेषणप्रवृत्तिः—मन्दाकिनीमित्यादि । सा तु काचिन्नदी, प्रस्रवणं तदाख्यम् ॥ १४ ॥

---

* सीतादर्शनविषये निराशः कृत इत्यन्वयः । तस्या अलब्धोत्तर इति यावत् । † तां विना जनकं समेत्य किं नु अप्रियं वचः वक्ष्ये इत्यन्वयः । ‡ ज्ञातिभिः, सहायकैर्वा विहीनस्य । दीर्घाः—यापयितुमशक्याः । अहनि तदन्वेषणादिना कथञ्चिद्यापनेऽपि रात्रिरेवातिक्लेशकरीत्यर्थः । § यदि सीता लभ्येत, तदा सर्वमप्येतादृशं क्लेशं सहिष्ये इति भावः ।

[1] व्यपानये–ञ. [2] ज्ञातिवर्ग–ञ. [3] वैदेहीमप्यपश्यतः–ञ. [4] संहृष्टो विचरिष्यामि–ङ. [5] लभ्यते–ञ.

एते [1]मृगा महावीर्याः मामीक्षन्ते [2]मुहुर्मुहुः ॥ १५ ॥
वक्तुकामा [3]इव हि मे इङ्गितान्युपलक्षये ।
तांस्तु दृष्ट्वा नरव्याघ्रः राघवः प्रत्युवाच ह ॥ १६ ॥
क्व सीतेति निरीक्षन् वै बाष्प[4]संरुद्धया [5]दृशा ।

तांस्त्विति । इङ्गितैः वक्तुकामानवस्थितान् मृगानित्यर्थः ॥

एवमुक्ता नरेन्द्रेण ते मृगाः सहसोत्थिताः ॥ १७ ॥
दक्षिणाभिमुखाः सर्वे दर्शयन्तो नभःस्थलम् * ।

एवमुक्ताः—एवं पृष्टाः इत्यर्थः । दर्शयन्तो नभःस्थलमिति । उन्मुखतया आकाशावलोकनेङ्गितेनेति शेषः ॥ १७ ॥

मैथिली ह्रियमाणा सा दिशं यामन्वपद्यत ॥ १८ ॥
तेन मार्गेण [6]धावन्तो निरीक्षन्ते नराधिपम् † ।

यां दिशं अन्वपद्यत तेन मार्गेणेति । तद्दिङ्मार्गेणेत्यर्थः ॥

येन मार्गं च भूमिं च निरीक्षन्ते स ते मृगाः ॥ १९ ॥
‡ [7]पुनश्च मार्गमिच्छन्ति लक्ष्मणेनोपलक्षिताः ।
तेषां वचनसर्वस्वं लक्षयामास चेङ्गितम् ॥ २० ॥

---

* आकाशमार्गेण दक्षिणदिग्गतं रावणं सूचयितुमेवं क्रिया मृगाणाम् । एतदेवानन्तरश्लोके स्पष्टीक्रियते । † स्वेङ्गितं स पश्यति वेति जिज्ञासया नराधिपं रामं ईक्षन्ते । ‡ पुनः पुनः एवं मार्गं सूचयितुं ते मृगा इच्छन्ति । ते च लक्ष्मणेनोपलक्षिताः । तेषां सारं अभिप्रायं च लक्ष्मणो ज्ञातवानित्यर्थः । वचनसाररूपं इङ्गितमित्यर्थः ।

[1] महामृगा वीराः—ज. [2] पुनः पुनः—ज. [3] इह—ज. [4] संदिग्धया—ङ. [5] गिरा—ज. [6] गच्छन्तः—ज. [7] पुनर्नदन्तो गच्छन्ति—ज.

एवमिङ्गितं लक्ष्मणोऽपश्यदित्याह—येन मार्गमित्यादि । येन हेतुना, मार्गं च—आकाशमार्गं च पुनः भूमौ गमनाय मार्गमिच्छन्तो भूमिं च ते मृगाः निरीक्षन्ते स्म । एवमिङ्गितास्ते मृगाः लक्ष्मणेनोपलक्षिताः—तेषां वचनसर्वस्वं तत्कल्पितमिङ्गितं च लक्ष्मणो लक्षयामास ॥ १९-२० ॥

उवाच लक्ष्मणो ज्येष्ठं धीमान् भ्रातरमार्तवत् * ।
क्व सीतेति त्वया पृष्टा [1] यथेमे सहसोत्थिताः ॥ २१ ॥

अथ वक्तीत्याह—उवाचेत्यादि । आर्तवत्—आर्तः सन् यथा—स्वानुभवसिद्धतया ॥ २१ ॥

दर्शयन्ति क्षितिं चैव दक्षिणां च दिशं मृगाः ।
साधु गच्छावहे, देव! दिशमेतां हि नैर्ऋतीम् ॥ २२ ॥
यदि [2] तस्यागमः † कश्चित् आर्या वा साऽथ लक्ष्यते ।

नैर्ऋतीमेतां दिशमिति । निर्ऋतिदिक्प्राधान्येन एतां दक्षिणां दिशमित्यर्थः । तस्यागम इति सन्धिः छान्दसः । आगमः—ज्ञापक इत्यर्थः ॥ २२ ॥

बाढमित्येव काकुत्स्थः प्रस्थितो दक्षिणां दिशम् ॥ २३ ॥
लक्ष्मणानुगतः श्रीमान् वीक्षमाणो वसुन्धराम् ।
एवं संभाषमाणौ तौ अन्योन्यं भ्रातरावुभौ ॥ २४ ॥
वसुन्धरायां पतितं पुष्पमार्गमपश्यताम् ।

पुष्पमार्गं—पुष्पोपेतमार्गमित्यर्थः ॥ २४ ॥

---

* आर्तवत् । आर्तमिति क्रियाविशेषणं, क्तवतुप्रत्ययः—गो. † आगमः—सीतादर्शनोपायः—गो. 'स्यादागमः' इति—गो. पाठः ।

[1] यदिमे—ज, [2] स्यादागमः—ङ,

तां पुष्पवृष्टिं पतितां दृष्ट्वा रामो महीतले ॥ २५ ॥

उवाच लक्ष्मणं वीरः दुःखितो दुःखितं वचः ।
अभिजानामि पुष्पाणि तानीमानीह, लक्ष्मण ॥ २६ ॥

[1] अपिनद्धानि वैदेह्या मया दत्तानि कानने ।

अभिजानामीति । तानीमानि प्रत्यभिजानामीत्यर्थः । तामेव स्वप्रत्यभिज्ञां विशदयति—अपिनद्धानीत्यादि । बद्धानीत्यर्थः ॥ २६ ॥

*मन्ये सूर्यश्च वायुश्च मेदिनी च यशस्विनी ॥ २७ ॥

अभिरक्षन्ति पुष्पाणि प्रकुर्वन्तो मम प्रियम् ।

अभिरक्षन्तीति । अम्लानतया, अनन्यापहारतः, स्थापनेन चेति शेषः ॥ २७ ॥

एवमुक्त्वा [2] महाबाहुं लक्ष्मणं [3] पुरुषर्षभः ॥ २८ ॥

उवाच रामो धर्मात्मा गिरिं [4]प्रस्रवणाकुलम् ।
कच्चित् क्षितिभृतां नाथ! दृष्टा सर्वाङ्गसुन्दरी ? ॥ २९ ॥

[5]रामा रम्ये वनोद्देशे मया विरहिता † त्वया ।
‡ क्रुद्धोऽब्रवीत् गिरिं तत्र सिंहः क्षुद्रमृगं यथा ॥ ३० ॥

---

* अम्लानीकरणात् सूर्यः, अनुत्क्षेपणात् वायुः, धारणात् भूमिश्च रक्षन्तीति भावः–गो.　† त्वया दृष्टा कच्चिदित्यन्वयः ।　‡ गिरिणा प्रत्युत्तरादानात् क्रुद्धः पुनः गिरिमब्रवीत् ।

[1] पिनद्धानीह–ङ.　[2] महाबाहुः–ज.　[3] पुरुषर्षभम्–ज.
[4] प्रस्रवणाभिधम्–ङ.　[5]सीता–ङ.

**तां * हेमवर्णां [1] हेमाभां सीतां दर्शय, पर्वत!**
**यावत् सानूनि सर्वाणि न ते विध्वंसयाम्यहम् ॥ ३१ ॥**

गिरिं क्रुद्धोऽब्रवीदिति । तदधिष्ठानदेवतोद्देशेन एवं वादः ॥ ३१ ॥

**एवमुक्तस्तु रामेण पर्वतो मैथिलीं प्रति ।**
**† [2] शंसन्निव ततः सीतां नादर्शयत राघवे ॥ ३२ ॥**

शंसन्निवेति । स्वदेशवर्तिवक्ष्यमाणलिङ्गद्वारेति शेषः । अर्वाक्त्वात् स्थूलाकारस्य । नादर्शयत, साक्षादित्यर्थः । राघवे तद्विषये ॥ ३२ ॥

**ततो दाशरथी रामः उवाच च शिलोच्चयम् ।**
**मम [3] बाणाग्निनिर्दग्धः भस्मीभूतो भविष्यसि ॥ ३३ ॥**

**‡ असेव्यः [4] सततं चैव निस्तृणद्रुमपल्लवः ।**
**इमां वा सरितं चाद्य शोषयिष्यामि, लक्ष्मण! ॥ ३४ ॥**

**यदि नाख्याति मे सीतां [5] आर्यां चंद्रनिभाननाम् ।**
**एवं स रुषितो रामः दिधक्षन्निव चक्षुषा ॥ ३५ ॥**

---

* हेमवर्णां—हेमप्रतिमासदृशीं, हेमाभां—स्वर्णतुल्यकान्ति—**गो.** हेमवर्णां—सुवर्णवर्णसदृशवर्णविशिष्टां, अत एव—हेमाङ्गीं—हेममयाङ्गीत्वेन प्रतीयमानां—**रा.** हेमाभामित्यनेन लावण्यनिर्देशः । हरिद्रादौ हेमवर्णसद्भावेऽपि लावण्याभावादुभयनिर्देशः । † दर्शयन्—जानन्नपि राघवे राघवसमीपे नादर्शयत्—**रा.** नादर्शयत—वागिन्द्रियराहित्येन साक्षादिति शेषः—**ति.** शंसन्निव—प्रतिध्वनिना कथयन्निव—स्वपृष्टस्यैवानुवादेन अनादरोक्ति रामोऽमन्यतेति भावः—**गो.** ‡ निस्तृणद्रुमपल्लवत्वात् केनापि सेवितुमनर्हः ॥

[1] सुमुखां—**ङ,** हेमाङ्गीं—**ज.** [2] दर्शयन्निवतां—**ज.** [3] बाणास्त्र—**ङ.** [4] पर्वतश्चैव—**ङ.** [5] अद्य—**ञ.**

ददर्श भूमौ * निष्क्रान्तं राक्षसस्य पदं महत् ।

निष्क्रान्तं, क्रमु पादविक्षेपे —प्रवृत्तपादविक्षेपम् ॥ ३५ ॥

त्रस्तायाः रामकांक्षिण्याः प्रधावन्त्या इतस्ततः ॥ ३६ ॥

राक्षसेना[1]नुसृप्तायाः मैथिल्याश्च पदान्यथ † ।

अनुसृप्तायाः—अनुधाव्यमानायाः । जटायुयुद्धसमये सीता रावणेन भूमौ विसृज्य गृहीतत्वात् पाददर्शनम् ॥ ३७ ॥

‡ स समीक्ष्य परिक्रान्तं सीतायाः राक्षसस्य च ॥ ३७ ॥

भग्नं धनुश्च तूणीं च विकीर्णं बहुधा रथम् ।
संभ्रान्तहृदयो रामः शशंस भ्रातरं प्रियम् ॥ ३८ ॥

पश्य, लक्ष्मण ! वैदेह्याः [2]शीर्णाः कनकबिन्दवः ।
भूषणानां हि, सौमित्रे ! माल्यानि विविधानि च ॥३९॥

कनकबिन्दवः —भूषणावयवभूतस्वर्णशकलानि ॥ ३९ ॥

---

* निष्क्रान्तं—प्रादुर्भूतं, इतः पूर्वमदर्शनादेवमुक्तम्–गो. वस्तुतस्तु—निष्क्रान्तं पदं—आश्रमप्रदेशात् बहिर्निर्गमनसूचकं पदविक्षेपमिति स्वरसम् । रावणो हि आश्रमप्रवेशकाले परिव्राजकरूपधृत (अर. 46-2) 'उपानही' (46-3) चागतः । निर्गमनकाले तु 'सद्यः सौम्यं परित्यज्य भिक्षुरूपं स रावणः । स्वं रूपं कालरूपाभं भेजे वैश्रवणानुजः' (49-6) 'स परिव्राजकच्छद्म महाकायो विहाय तत् । प्रतिपेदे स्वकं रूपं रावणो राक्षसाधिपः' (49-9) इति राक्षसरूपं स्वीचकार । अतश्च तत्र सीतामादाय गच्छतो रावणस्य पदानि निष्क्रमणसूचकान्येव स्युः । मध्ये मध्ये रावणादात्मानं मोचयितुं प्रयतितवत्याः सीताया अपि पदानि तत्र स्युः । एवं पदविक्षेपदर्शनात् रामः पुनः किञ्चित्परिक्रम्य भग्नधनुरादिकं ददर्शेति ज्ञायते । अत एव 'स समीक्ष्य परिक्रान्तं' इति विच्छित्तिपूर्वकमुपक्रम इति भाति । † भूमौ ददर्शेत्यनुकर्षः । ‡ सीताया राक्षसस्य च परिक्रान्तं समीक्ष्य, ततः भग्नं धनुरादिकं च समीक्ष्य भ्रातरं शशंसेत्यन्वयः ।

[1] नुवृत्तायाः, भितप्तायाः–ङ. [2] कीर्णाः–ज.

*तप्तबिन्दुनिकाशैश्च चित्रैः क्षतजबिन्दुभिः ।
आवृतं पश्य, सौमित्रे! सर्वतो धरणीतलम् ॥ ४० ॥

मन्ये, लक्ष्मण! वैदेही राक्षसैः कामरूपिभिः ।
भित्त्वा भित्त्वा [1]विभक्ता वा भक्षिता वा भविष्यति ॥४१॥

†तस्या निमित्तं [2]वैदेह्याः द्वयोर्विवदमानयोः ।
बभूव युद्धं, सौमित्रे! घोरं राक्षसयोरिह ॥ ४२ ॥

तस्या निमित्तमिति । सुन्दोपसुन्दवत् तत्परिग्रहार्थमित्यर्थः ॥

मुक्तामणि[3]चितं चेदं [4]तपनीय[5]विभूषितम् ।
धरण्यां पतितं, सौम्य! कस्य भग्नं महद्धनुः? ॥ ४३ ॥

[6]राक्षसानामिदं, वत्स! सुराणामथवाऽपि वा ।
तरुणादित्यसङ्काशं ‡वैडूर्यगुलिकाचितम् ॥ ४४ ॥
विशीर्णं पतितं भूमौ कवचं कस्य काञ्चनम्?

गुलिकाः—बन्धगुलिकाः ॥ ४४ ॥

छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ॥ ४५ ॥
भग्नदण्डमिदं [7]कस्य भूमौ [8]सम्यङ्निपातितम्?
§काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः ॥ ४६ ॥
भीमरूपा महाकायाः कस्य वा निहता रणे?

---

* तप्तं–स्वर्णं–गो. † सीताया वा इमे रुधिरबिन्दवः, सीतानिमित्तं सुन्दोपसुन्दवत् युध्यमानयोः रक्षसोर्वेति विकल्पः श्लोकद्वयेनोक्तः–ति. ‡ वैडूर्यगुलिकाचितं—वैडूर्यमणिखचितम्–गो. § काञ्चनमयकवचविशिष्टाः पिशाचवदनाः खराः—'पिशाचवदनैर्युक्तं खरैः' (अर. 35-6) इति ह्युक्तम् ।

[1] विभक्ताङ्गं–ङ. [2] सीतायाः–ज. [3] मयं–ङ. [4] रमणीयं–ज. [5] विभूषणम्–ङ. [6] इदमर्धं कुण्डलितं–ङ. [7] सौम्य–ज. [8] सौम्य–ङ, कस्य नि–ज.

काञ्चनं उरश्छदं तनुत्राणि येषां ते तथा ॥ ४६ ॥

*दीप्तपावकसंकाशः द्युतिमान् समरध्वजः ॥ ४७ ॥
अपविद्धश्च भग्नश्च कस्य साङ्ग्रामिको रथः ?

समरे नाथप्रकाशको ध्वजः-समरध्वजः ॥ ४७ ॥

† रथाक्षमात्रा विशिखाः तपनीय[1]विभूषणाः ॥ ४८ ॥
कस्येमे[2]ऽभिहता बाणाः प्रकीर्णा [3]घोरकर्मणः ?

रथाक्षमात्राः—रथचक्रस्याक्षः आधारदण्डं तद्वत् दीर्घप्रमाणा इत्यर्थः । ‡ विशिखाः—विगतफलभागाः हताः—भग्नाः ॥ ४८ ॥

शरावरौ शरैः पूर्णौ विध्वस्तौ पश्य, लक्ष्मण ॥ ४९ ॥
प्रतोदाभीषुहस्तो वै कस्यायं सारथिर्हतः ?

शरान् आवृणोति स्वान्तः इति शरावरः—निषङ्गः । प्रतोदः—तोत्रम् , अभीषवः—प्रग्रहाः हस्ते यस्य स तथा ॥ ४९ ॥

[4]सारथिं हतवान् को वा महाबलपराक्रमः ? ॥ ५० ॥
[5]कस्येमौ, पुरुषव्याघ्र ! शयाते निहतौ युधि ।
चामरग्राहिणौ, सौम्य ! सोष्णीषमणिकुण्डलौ ? ॥५१॥

---

* समरध्वज. अपविद्धः, रथश्च भग्नः इति संबन्धः—गो. समरे स्वामिप्रकाशको ध्वजः यत्र सः समरध्वज इति रथविशेषणम् तादृशो रथः अपविद्धः—परित्यज्य पातितः, भग्नश्चेत्युत्तरेणान्वयः—ति. † रथाक्षमात्राः—चतुश्शताङ्गुलदीर्घाः—ति. रा. ‡ विशिख इति बाणपर्यायः—' पृषत्कबाणविशिखाः ' इत्यमरः ।

[1] विभूषिताः—ङ. [2] विहताः—ङ, निहताः—ज. [3] भीम—ङ. [4] इदमर्धं कुण्डलितं—ङ. [5] अयं श्लोकः कुण्डलितः—ज.

पदवी पुरुषस्यैषा व्यक्तं कस्यापि रक्षसः ।
वैरं शतगुणं[1] पश्य *ममेदं जीवितान्तकम् ॥ ५२ ॥

मम राक्षसैः सह इदं वैरं एतन्निमित्तजं शतगुणं सत्, तेषां जीवितान्तकं अन्तं करोतीत्यन्तकं–संपन्नं पश्य ॥ ५२ ॥

[2]सुघोरहृदयैः, सौम्य ! राक्षसैः कामरूपिभिः ।
हृता †मृता वा [3]सीता सा भक्षिता वा तपस्विनी ॥५३॥
न धर्मस्त्रायते सीतां ह्रियमाणां महावने ।

अथ रक्षोभिः सीताविपत्तिं निश्चित्य तस्यां धर्मेण त्राणादर्शनात् एतावत्कालं धर्मापेक्षया विहृष्टप्राधान्यं पौरुषमेव ग्राह्यम्, प्राधान्येनेत्याशयेनाह—न धर्म इत्यादि । महावने ह्रियमाणां सीतां धर्मः न त्रायते स्म ॥ ५३ ॥

‡भक्षितायां हि [4]वैदेह्यां हृतायामपि, लक्ष्मण ! ॥ ५४ ॥
के हि [5]लोकेऽप्रियं कर्तुं शक्ताः, सौम्य ! ममेश्वराः ?

तथा भक्षितायां सीतायां, अपि वा अपहृतायां सत्यां के हि लोकेश्वराः इन्द्रादयः मम अप्रियं कर्तुं शक्ताः ? न केऽपि । §धर्मासाध्यार्थे ते अकिञ्चित्करा इत्यर्थः ॥ ५४ ॥

---

* मम जीवितान्तकं–जीवितान्तकरं इति वा । उत्तरश्लोकोऽप्यत्रानुकूलः । सीतामरणे, स्वमरणस्य पूर्वमेव स्पष्टीकृतत्वात् । † मृता–मारिता–गो. ‡ यदि नाम सीता भक्षिता स्यात्, तदा यत्किञ्चिदपि कर्तुं समर्थस्य मम प्रवृत्तिं को वा निरोद्धुं शक्त इत्यर्थः । इदानीं वा कथमप्रियं कृतमित्यत्रोक्तं—कर्तारमित्यादि 'प्रियं' इति पदविभागे तु, सीतां नाशयित्वा किं वा प्रियं कर्तुं शक्यते ? मूलस्यैव छेदे वृक्षस्य जलसेचनवदित्याशयः । § धर्म एव न रक्षति चेत्, किं देवाः रक्षितुं शक्ताः ? इति भावः ।

[1] पापैः–ङ. [2] सा घोर–ङ. [3] वैदेही–ज. [4] सीतायां–ङ. [5] लोके प्रियं–ज.

*कर्तारमपि लोकानां शूरं करुणवेदिनम् ॥ ५५ ॥
अज्ञानादवमन्येरन् सर्वभूतानि, लक्ष्मण !

अथ पौरुषमेवावलम्ब्यमित्युक्तिशेषतया लोकस्थितिः काचित् प्रदर्श्यते—कर्तारमपीत्यादि । सर्वेषामपि लोकानां साक्षात् संहारकर्तारं शूरं — श्रुतिस्मृतिप्रसिद्धत्रिपुरसंहारादिविषयकनिरतिशयशौर्यं महेश्वरमपि करुणवेदिनं—करुणं यथा तथा वेदितुं शीलमस्त्यस्येति तथा, दयादृष्ट्या तूष्णीं अवस्थितं महेश्वरमपि अज्ञानात् तद्वैभवापरिज्ञानात् अवमन्येरन् । किमयं करिष्यति कुपितोऽपीति न गणयन्तीत्यर्थः ॥ ५५ ॥

मृदुं लोकहिते युक्तं दान्तं करुण[1]वेदिनम् ॥ ५६ ॥
निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ।

यदेवं अतः—मृदुमित्यादि । लोकहिते—प्राणिसौख्यसंपादने युक्तं—युक्तचित्तं, अत एव मृदुं—मुदुस्वभावावलम्बिनं, इदं तु लोकानामभिगमनीयत्वाय, दान्तं—नानाप्रकारपरस्वहरणप्रवृत्तिरहितेन्द्रियवर्गम् ; करुणवेदिनं मां नूनं त्रिदशेश्वराः—इन्द्रादयः निर्वीर्यं मन्यन्ते । यतः स्वावगतहरणामपि मदीयामुपेक्षन्ते । ननु मनुष्येण कथं निजोपास्यत्रिदशेश्वरस्पर्धा शक्या ? मनुष्यत्वबुद्ध्यभावादेव । तर्हि देवताबुद्धौ सार्वज्ञ्यतः सीतागतिपरिज्ञानतः प्रलापाद्ययोगात्—उच्यते—स्वानुभवेनैव खरादिसंहारे स्वबलनिस्तुलाधिकत्वज्ञानस्य सिद्धत्वात् ।

---

*अत्र कर्तारमपीत्यादि सामान्योक्तिः । मृदुमित्यादि च स्वविषयोक्तिः । एवञ्च स्वस्य जगत्कर्तृत्वादिकं स्वेनैव प्रकटितमित्याद्युक्तेः, तन्मूलविवादादेश्च नावसरः ॥

[1] वादिनम्—ङ.

'यद्यद्विभूतिमत् सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥'

इतिन्यायेन स्वस्य जगत्कारणश्रीमदादिब्रह्मणः तेजोंऽशत्वस्यानुमानतः स्वावसायात्, अपरोक्षमनुष्योपाधितो मनुष्यभावानपायाच्च सर्वात्मना वास्तवस्वकब्रह्मत्वमतौ रावणस्य देवावध्यतः स्वावताराप्रयोजनप्रसङ्गात्, तमश्शक्त्या ब्रह्मत्वतत्प्रयुक्तसार्वज्ञ्यादिकं कार्यार्थं भगवदिच्छया आवृतमेवेति सर्वमुक्तं वक्ष्यमाणं च सूपपन्नम् ॥ ५६ ॥

**मां प्राप्य हि गुणो दोषः संवृत्तः पश्य, लक्ष्मण ॥५७॥**
**अद्यैव सर्वभूतानां रक्षसामभवाय च ।**
***संहृत्यैव शशिज्योत्स्नां महान् सूर्य इवोदितः ॥ ५८ ॥**
**संहृत्यैव गुणान् सर्वान् मम तेजः प्रकाशते ।**

अथ निस्तुलाधिकं निजपौरुषमेवावलम्बनीयमित्याह—मां प्राप्येत्यादि । गुणः—लोकप्रसिद्धो गुणः धर्मावलम्बनमृदुत्वादिः मां प्राप्य दोषः संवृत्तः—अनिष्टसाधनत्वेन संवृत्तः । अतः इमं हित्वा मामकं पौरुषावलम्बनवैभवं पश्येत्याह—पश्य लक्ष्मणेत्यादि †। अद्य मम तेज एव प्रकाशत इत्यन्वयः । किमर्थमित्यतः—सर्वभूतानामभवायेत्यादि । भवः—उत्पत्तिः, अभवः—नाशः । शशिज्योत्स्नां—तत्तुल्यां, मामकमृदुत्वादिगुणान् संहृत्यैव युगान्तकाले उदितः सूर्य इव मम तेज एवाद्य प्रकाशते ॥ ५८ ॥

---

* यथा उदितः सूर्यः शशिज्योत्स्नां—शीतलचन्द्रिकां संहृत्यैव प्रकाशते, तथा मम तेजः गुणान्—मृदुत्वादीन् संहृत्यैव—निरस्यैव प्रकाशते—**गो.** † अथवा लोकवत्—एवं खलु संवृत्तः, पश्य—इत्येकं वाक्यम् ।

**नैव यक्षा न गन्धर्वाः न पिशाचा न राक्षसाः ॥ ५९ ॥**
**किन्नरा वा मनुष्या वा सुखं प्राप्स्यन्ति, लक्ष्मण !**

नैव प्रतिज्ञा प्रपञ्च्यते आसर्गान्तेन—नैव यक्षा इत्यादि । अयं क्रूरभावः निस्तुलाधिकसाम्राज्यभूमरजःशक्त्यावेशात् । तत्तु खरसंग्रामे एतादृशक्रूरभावकाले आविष्टतेजा इति द्विस्त्रिरुक्त्या दर्शितं कविना ॥ ५९ ॥

***ममास्त्रबाणसंपूर्णं आकाशं पश्य, लक्ष्मण ॥ ६० ॥**
**[1]निःसम्पातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् ।**

पश्येति । अचिरादिति शेषः । त्रैलोक्यचारिणां निःसम्पातं बाणप्रचारतः अशक्यसंचारतः परस्परसङ्गमराहित्यमित्यर्थः ॥ ६० ॥

**संनिरुद्धग्रहगणं आवारितनिशाकरम् ॥ ६१ ॥**
**†विप्रनष्टानलमरुद्भास्करद्युति[2]संवृतम् ।**
**विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् ॥ ६२ ॥**
**ध्वस्तद्रुमलतागुल्मं विप्रणाशितसागरम् ।**
**त्रैलोक्यं तु करिष्यामि संयुक्तं ‡काल[3]धर्मणा ॥ ६३ ॥**

सन्निरुद्धाः—निरुद्धचाराः ग्रहगणाः यस्मिन् त्रैलोक्ये तत्तथा । विप्रनष्टानिलमरुद्भास्करद्युतित एव संवृतं—तिमिरसंवृतं । कालधर्मणेति । कालसाध्यो धर्मः—नाशः कालधर्मः । अनिच् तत्पुरुषे आर्षः ॥६२-६३॥

---

* अस्त्राणि समन्त्राणि, अमन्त्राः बाणाः । तैः संपूर्णत्वात् आकाशं त्रैलोक्यचारिणां सञ्चारानर्हं करिष्यामीत्यर्थः । † विप्रणष्टानलमरुत्—नष्टाग्निवातं । भास्करद्युतिसंवृतं—संवृतभास्करद्युति, आहिताग्न्यादिः-**गो.** ‡ कालकर्मणा—कालसाध्यं कर्म नाशः, तेन-**ति.**

[1] असंपातं-**ज.**　[2] वर्जितम्-**ङ.**　[3] कर्मणा-**ज.**

*न तां कुशलिनीं सीतां प्रदास्यन्ति[1] ममेश्वराः ।
अस्मिन् मुहूर्ते, सौमित्रे! मम द्रक्ष्यन्ति विक्रमम् ॥६४॥
नाकाशमुत्पतिष्यन्ति सर्वभूतानि, लक्ष्मण! ।

नाकाशमिति । आकाशमित्यर्थः ॥ ६४ ॥

[2]मम [3]चापगुणोन्मुक्तैः बाणजालैर्निरन्तरम् ॥ ६५ ॥
[4]अर्दितं मम नाराचैः ध्वस्तभ्रान्तमृगद्विजम् ।
समाकुलममर्यादं जगत् [5]पश्यार्य लक्ष्मण! ॥ ६६ ॥

अमर्यादं त्यक्तस्वस्वप्रकृत्यवस्थानम् ॥ ६६ ॥

आकर्णपूर्णैः इषुभिः जीव[6]लोकं †दुरावरैः ।
करिष्ये मैथिलीहेतोः अपिशाचमराक्षसम् ॥ ६७ ॥

दुरावरशब्दः स्खलन्तः ॥ ६७ ॥

मम ‡रोष[7]प्रयुक्तानां [8]सायकानां बलं सुराः ।
[9]द्रक्ष्यन्त्यद्य विमुक्तानां [10]अतिदूरातिगामिनाम् ॥६८॥
नैव देवा न [11]दैतेयाः न पिशाचा न राक्षसाः ।
भविष्यन्ति मम क्रोधात् त्रैलोक्ये विप्रणाशिते ॥ ६९ ॥

---

* यदीति पूरयितव्यम् । सिद्धवदुक्तिर्वा । † दुरावैरः – दुर्वारैः–गो.
‡ रोषप्रयुक्तानां–रोषसंप्रयुक्तानां । अतिदूरातिगामिनां–अतिदूरातिपातिनाम्–गो.

[1] यदीश्वराः–ङ. [2] अयं श्लोकः कुण्डलितः–ज. [3] चापमुखा–ङ.
[4] मर्दितं–ङ. [5] पश्यात्र–ज. [6] लोक–ज [7] प्रमुक्तानां–ङ. [8] विशिखानां–ज.
[9] द्रक्ष्यन्ति ज्या–ङ. [10] अमर्षाद्दूर–ज. [11] गन्धर्वाः–ङ.

देवदानवयक्षाणां लोका ये रक्षसामपि ।
*बहुधा [1] न भविष्यन्ति बाणौघैः शकलीकृताः ॥ ७० ॥

निर्मर्यादान् [2] इमान् लोकान् करिष्याम्यद्य सायकैः ।
हृतां मृतां वा, सौमित्रे न दास्यन्ति [3] ममेश्वराः ॥ ७१ ॥
हृतां मृतां वा न दास्यन्तीति । यथापूर्वस्वभावामिति शेषः ॥ ७० ॥

[4] तथारूपां हि वैदेहीं न दास्यन्ति यदि प्रियाम् ।
नाशयामि जगत्सर्वं त्रैलोक्यं सचराचरम् ॥ ७२ ॥
तदेवोक्तं—तथारूपामिति ॥ ७२ ॥

इत्युक्त्वा रोषताम्राक्षः रामो † निष्पीडच कार्मुकम् ।
शरमादाय संदीप्तं घोरमाशीविषोपमम् ॥ ७३ ॥

[5] सन्धाय धनुषि श्रीमान् रामः परपुरञ्जयः ।
युगान्ताग्निरिव क्रुद्धः इदं वचनमब्रवीत् ॥ ७४ ॥

यथा जरा यथा मृत्युः यथा कालो यथा विधिः ।
नित्यं न प्रतिहन्यन्ते सर्वभूतेषु, लक्ष्मण ॥ ७५ ॥

तथाऽहं क्रोधसंयुक्तः न निवार्योऽ[6]स्मि सर्वथा ।
विधिः—स्वसुकृतदुष्कृतकर्म, नित्यं—नियमेन ॥ ७५ ॥

---

*बहुधा शकलीकृता इत्यन्वयः ।    † निष्पीड्य—दृढमुष्टिबलेन गृहीत्वा—गो.

[1] निपतिष्यन्ति—ज. [2] अहं लोकान्—ङ. [3] यदीश्वराः—ङ. [4] यथारूपां—ङ.
[5] सन्दधे—ज. [6] स्म्यसंशयम्—ज.

*पुरेव मे चारुदतीमनिन्दितां
दिशन्ति सीतां यदि नाद्य मैथिलीम् ।
सदेवगन्धर्वमनुष्यपन्नगं
जगत् सशैलं †परिवर्तयाम्यहम् ॥ ७६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे चतुष्षष्टितमः सर्गः

---

परिवर्तयामि इति । नाशयामीत्यर्थः‡। ननु 'नैव यक्षाः' इत्यादि 'परिवर्तयामी'त्यन्तवादः 'मृत्युं मरणधर्मेण योजयामी'-त्यादिरावणवचनवत् क्रोधजल्पमात्रम्, ? उत संभाव्यम् ? उच्यते—अस्मदुक्तरीत्या साम्राज्यभूमरजश्शक्त्यावेशे तु संभाव्यमेव, तया तथा सम्पादनस्येषत्करत्वात् । अन्यथा तु जल्पमात्रं, अशक्यार्थत्वात् एवं ब्रह्मसृष्टसंहारस्य ब्रह्मातिरिक्तेन मनसाऽपि दुःस्मरत्वात् स्वस्यैव निराश्रयतो नाशप्रसङ्गात् सुस्पष्टं अखिलाश्रयाखिलजगत्प्रपञ्चकृत्य-

---

* ननु एवं क्रोधः कथमस्य ? किमर्थं च ? इति चेत्— शृणु। मनुष्यदेहधारणेन तद्व्यवहारनटनमेवैतत् । किञ्च ईदृशदुःखकालेऽप्यस्य क्रोधाभावे रावणो मनुष्यबुद्धिं कुर्यात् ; तथा च तद्वधः शक्यः स्यादित्येतदर्थं च । 'मृत्युं मरणधर्मेण योजयामि' (अर—31-6) इत्यादिवचोऽपि रावणवचोवदेव आरोपितक्रोधमूलकत्वात् । अत एव शरैर्विधमिष्यामीत्युक्तिः । लक्ष्मणस्तु तत्त्वज्ञोऽपि तद्देवातत्त्वज्ञ इव, तन्मायामोहितो वा, प्रलयकालिकरौद्रशक्त्यावेशं संभाव्यानुनयति स्म । किञ्चास्य क्रोधस्यारोपितत्वाभावे अद्य सीताया अलाभे सर्वजगत्परिवर्तनं प्रतिज्ञाय, कथं लक्ष्मणप्रार्थनयाऽपि तामन्यथयेत् । अन्यथा कैकेय्यग्रे कृतां वनवासप्रतिज्ञां कथं कौसल्यावचसा न त्यक्तवान् । तस्मात् सा यथार्था ; इयं तु आरोपितेत्येव सारम् । अनेन व्यवहारेण क्रोधादिकाले कृताया अयुक्ताया अपि प्रतिज्ञाया अपालनेऽत्यन्तदोषाभाव इत्यपि सूचितम्—ति. † वक्ष्यते हि—'यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् । अस्या हेतोर्विशालाक्ष्या युक्तमित्येव मे मतिः' (सुन्द—16-13) इति—गो. ‡ अधरोत्तरं करिष्यामीति वा ।

प्रवर्तकब्रह्मावतारो रामः इति। स्थूलोपाधिस्तु—विराड्विष्णुप्रधानः बलतनुः सम्राट्प्रधाना सूक्ष्मा सर्वकारणमान्तरं ब्रह्मप्रधानमेव तत्-प्राधान्यमेव रामस्य भूतपत्यादिब्रह्मलोकानिर्याणान्तनिसर्गासिद्धम् ॥ ७६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे चतुष्षष्टितमः सर्गः

---

## पञ्चषष्टितमः सर्गः

### [लक्ष्मणप्रार्थना]

तप्यमानं तथा रामं सीताहरणकर्शितम् ।
लोकाना[1]मभवे युक्तं [2]सांवर्तकमिवानलम् ॥ १ ॥
वीक्षमाणं धनुः सज्यं निःश्वसन्तं [3]पुनः पुनः ।
[4]दग्धुकामं जगत् सर्वं युगान्ते तु यथा हरम् ॥ २ ॥
अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं तु लक्ष्मणः ।
अब्रवीत् प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥ ३ ॥

अथ रामस्य लोकनाशनप्रवृत्तिं लक्ष्मणो वारयति। तप्यमान-मित्यादि। युक्त—उद्युक्तम्। हर—कालाग्निं चतुर्मुखं रुद्रमित्यर्थः। अदृष्टपूर्व—पूर्वमेवं कदाप्यदृष्टभूमरजः संहाररुद्रशक्त्यावेशम् ॥ १-३ ॥

पुरा भूत्वा मृदुः दान्तः सर्वभूतहिते रतः ।
न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ॥ ४ ॥

प्रकृतिमिति। सर्वभूतसदाहितावहां ब्राह्मीं धार्मिकीं च प्रकृतिमित्यर्थः ॥ ४ ॥

---

[1] महिते—ङ. [2] संवर्तक—ञ. [3] मुहुर्मुहुः—ङ. [4] हन्तुकाम पशुं रुद्र क्रुद्ध दक्षक्रतौ यथा—ङ.

*चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा ।
एतच्च नियतं [1]सर्वं त्वयि चानुत्तमं यशः ॥ ५ ॥
एकस्य नापराधेन लोकान् हन्तुं त्वमर्हसि ।

एतदिति । उक्तचतुष्टयमपीत्यर्थः ॥ ५ ॥

†ननु जानामि कस्यायं भग्नः साङ्ग्रामिको रथः ॥ ६ ॥
‡केन वा कस्य वा हेतोः [2]सायुधः सपरिच्छदः ?
[3]खुरनेमिक्षतश्चायं सिक्तो रुधिरबिन्दुभिः ॥ ७ ॥
देशो निर्वृत्तसङ्ग्रामः सुघोरः, पार्थिवात्मज ! ।
एकस्य तु विमर्दोऽयं न द्वयोः, वदतां वर ! ॥ ८ ॥
न हि वृत्तं हि पश्यामि बलस्य महतः पदम् ।
नैकस्य तु कृते लोकान् विनाशयितुमर्हसि ॥ ९ ॥

ननु एकस्यापराधः इति कथं ज्ञायते ? इत्यत्राह—नन्वित्यादि । जानामि ननु—जानाम्येवैक एवापराद्धेत्यर्थः । कुतो निश्चिनोषीत्यतः—कस्यायं भग्न इत्यादि । कस्यचिदेव न तु केषांचिदित्यर्थः । सपरिच्छदः—सपरिकरो भग्न इत्यन्वयः । खुरनेमिक्षतत्वादिविशेषणकोऽयं देशश्च निर्वृत्तसङ्ग्रामो दृश्यते इति शेषः । उक्तहेतुभिः—एकस्येत्यादि । विमर्दः—संग्रामः । वृत्तं—सिद्धम् । यदेवमतः—नैकस्येत्यादि ॥ ६-९ ॥

---

* लक्ष्म्यादिकं एकैकस्य प्रतिनियतं, त्वयि तु एतत्सर्वं च यशश्च प्रतिनियतमित्यर्थः—**गो.** † तर्हि को वाऽपराधीत्यत्राह—न त्विति (पा.) । केन प्रतिपक्षिणा, कस्य प्रयोजनस्य हेतोः, 'षष्ठी हेतुप्रयोगे' इति षष्ठी, प्रकृतात् अन्यस्माद्वा निमित्तादिति न जानामि, तच्चिन्तनीयमित्यर्थः—**गो.** ‡ केन भग्नः केन हेतुनेत्येतत्तु न जानामीति शेषः—**ति.**

[1] नित्यं—**ज.** [2] सयुगः—**ज.** [3] रथ—**ङ.**

युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः ।
सदा त्वं सर्वभूतानां शरण्यः परमा गतिः ॥ १० ॥

को नु दारप्रणाशं ते साधु मन्येत ? राघव !

अद्य त्वद्दारप्रणाशनं लोककर्तृकं लोकानुमतं वा यदि स्यात्, तदा लोकनाशनप्रवृत्तिः युज्यते । न तदस्तीत्याह—को न्वित्यादि ॥

सरितः सागराः शैलाः देवगन्धर्वदानवाः ॥ ११ ॥

नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ।
येन, राजन् ! हृता सीता तमन्वेषितुमर्हसि ॥ १२ ॥

मद्द्वितीयो धनुष्पाणिः सहायैः *परमर्षिभिः ।
समुद्रं च विचेष्यामः पर्वतांश्च वनानि च ॥ १३ ॥

गुहाश्च विविधा घोराः [1]नदीः पद्मवनानि च ।
देवगन्धर्वलोकांश्च विचेष्यामः समाहिताः ॥ १४ ॥

यावन्नाधिगमिष्यामः तव भार्यापहारिणम् ।
न चेत् साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वराः ॥१५॥

कोसलेन्द्र ! ततः पश्चात् †[2]प्राप्तकालं करिष्यसि ।

नालं—न स्पृहावन्त इत्यर्थः । तत्र दृष्टान्तः—दीक्षितस्येत्यादि । साधवः—ऋत्विगादय इत्यर्थः । अहं द्वितीयः सहायः यस्य सः

---

* परमर्षिभिः, पतद्वनस्थैः—गो.　　† प्राप्तः चतुर्थोपायकालः यस्मिन् कर्मणि, तत्तथा—गो.

[1] पद्मिन्यो विविधास्तथा—ङ.　　[2] बाणमोक्षं विधास्यसि—ङ.

मद्द्वितीयः। समुद्रादिविचयनार्थं परमर्षिभिः सहायैरित्युक्तम् ॥ १४ ॥ न चेत् साम्ना प्रदास्यन्तीति। जीवन्त्या मृताया वाऽपि त्रैलोक्ये क्वचित् अवर्ज्यावस्थानस्य प्राप्तत्वात् लोकेश्वरैः तद्दानं प्राप्तम्। तद्यदि अस्मदन्वेषणाशक्यत्वे तु न कृतं स्यात् साम्ना, ततः पश्चादेव तद्विषयकोपः प्राप्तकाल इत्यर्थः ॥ १५॥

[1]शीलेन साम्ना विनयेन सीतां
नयेन न प्राप्स्यसि चेन्नरेन्द्र!
ततः *[2]समुत्सादय हेमपुङ्खैः
महेन्द्रवज्रप्रतिमैः शरौघैः ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे पञ्चषष्टितमः सर्गः

---

उक्तार्थस्योपसंहारः—शीलेनेत्यादि। शीलं—सुचरित्रम्। साम—साधुवादः। विनयः—प्रश्रयः। नयः—नीतिः। अतर्क्यं मानः सर्गः ॥ १६ १२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे पञ्चषष्टितमः सर्गः

---

* समुत्पादय—विवक्षितकार्यमिति शेषः। समुत्सादयेति पाठे लोकानिति शेषः। एवं लक्ष्मणप्रसादेन रामकोपशान्तिप्रपञ्चनात् रावणाराधिततत्पक्षपातिरुद्रसङ्कल्पात् रामकोपो भग्न इति वदन् मूर्ख इत्यवगन्तव्यः—गो. एवं हि सति अग्रे रावणवधोऽपि असङ्गतः स्यादितितदाशयः।

[1] शिवेन—ङ. [2] समुत्पादय, समुत्पाटय—ङ.

## षट्षष्टितमः सर्गः

### [लक्ष्मणहितवचनम्]

**तं तथा शोकसंतप्तं विलपन्तमनाथवत् ।**
**मोहेन महताऽऽविष्टं * परिद्यून[1]मचेतसम् ॥ १ ॥**

**ततः सौमित्रिराश्वास्य मुहूर्तादिव लक्ष्मणः ।**
**रामं † संबोधयामास चरणौ चाभिपीडयन् ॥ २ ॥**

एवं लक्ष्मणः रजोऽभिभवप्रवृत्तं क्रोधमुपशमय्य सहजतत्त्व-प्रकृत्यापत्तये बोधनं करोति । तं तथेत्यादि । परिद्यूनं—क्षीणम् । अचेतसं— अस्वस्थचित्तम् ॥

मुहूर्तादिव—मुहूर्तादेव ॥ १–२ ॥

**महता तपसा, राम! महता चापि कर्मणा ।**
**राज्ञा दशरथेनासि लब्धोऽमृतमिवामरैः ॥ ३ ॥**

संबोधनप्रकारः—महतेत्यादि । कर्मणा—ऋष्यशृङ्गानयनादिपूर्वोक्तमहायागैरित्यर्थः ॥ ३ ॥

**‡ तव चैव गुणैर्बद्धः त्वद्वियोगान्महीपतिः ।**
**राजा देवत्वमापन्नः § भरतस्य यथा श्रुतम् ॥ ४ ॥**

भरतस्य यथा श्रुतमिति । मुखादिति शेषः । यथा—अनुभवमनतिक्रम्य श्रुतं तथा ॥ ४ ॥

---

* परिद्यूनं—परिदेवनं प्राप्तम्–**गो.** † संबोधयामास—ज्ञापयामास–**गो.** ‡ एवकारेण इतरपुत्रव्यावृत्तिः । तवैव गुणैर्बद्धः–त्वद्गुणैकपरवशः–**गो.** § भरतस्य—भरतात्–**गो. रा.**

[1] मचेतनम्–**ङ.**

यदि [1] दुःखमिदं प्राप्तं, काकुत्स्थ! न सहिष्यसे ।
प्राकृतश्चाल्पसत्त्वश्च इतरः कः सहिष्यति ॥ ५ ॥

[2] दुःखितो हि भवान् लोकान् तेजसा यदि धक्ष्यते ।
आर्ताः प्रजाः, नरव्याघ्र! * क्व नु यास्यन्ति निर्वृतिम् ? ।

[3] आश्वसिहि, नरश्रेष्ठ! प्राणिनः कस्य नापदः?
संस्पृशन्त्यग्निवद्राजन्! क्षणेन व्यपयान्ति च ॥

लोकस्वभाव एवैषः † ययातिर्नहुषात्मजः ।
गतः [4] शक्रेण सालोक्यं [5] अनयस्तं समस्पृशत् ॥ ७ ॥

"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति श्रुतेः महतामपि संसारदशायां अवर्ज्यदुःखं कर्मवशतः प्राप्यते, अतो भवादृशैः

---

* आर्ताः—एवं पीडिताः प्रजाः—सामान्य (दुर्बला) जनाः भार्यापहारे लोकनाशनमेव प्रतीकारश्चेत् लोके सम्भवतां दुर्बलपुरुषभार्यापहारणां कः प्रतीकार इति वा भावः । क-कीदृशे प्रतीकारे आचरिते निर्वृतिं प्राप्नुयुः । † ययातिर्हि स्वर्गगतोऽपि इन्द्रेणासूयाकलुषेण 'भवद्राज्ये को वा श्रेष्ठः' इति पृष्टः सत्यवादितयाऽहमेवेत्युक्तान्, इन्द्रेणात्मश्लाघी त्वं न स्वर्गार्ह इति पातित इति पुराणप्रसिद्धिः । नहुषात्मज इत्यनेन नहुषानीतिरपि व्यज्यते । स च सप्तर्षीन् स्ववाहकान् शचीस्मरणेन सर्प सर्पेत्युक्तान्, सर्पो भवेत्यगस्त्यशप्तः चिरं तथाभूतस्तथौ—**गो.** ययातिकथा अयोध्याकाण्डटिप्पण्यां (11 पुटे) एवं वर्णिता—'महाभारते (आदि 82) श्रूयते । स्वसत्कर्मणा स्वर्गं प्राप्तं ययातिं इन्द्रः परिक्षार्थं 'केनासि तुल्यस्तपसा ययाते' इत्यपृच्छत् । ययातिस्तु गर्वात् 'नाहं देवमनुष्येषु गन्धर्वेषु महर्षिषु । आत्मनस्तपसातुल्यं कश्चित् पश्यामि वासव' इत्यवदत् । एवं सर्वभूतावमाननात् 'पतितोऽस्यद्यराजन्' इतीन्द्रेणाभिहितः सः 'इच्छाम्यहं सुरलोकात् विहीनः सतां मध्ये पतितुं देवराज?' इति प्रार्थयामासेन्द्रम् । तथैव साधुसहवासं च प्राप ।

[1] दुःखमिव—**ङ.** [2] अयं श्लोकः कुण्डलितः—**ज.** [3] अयंश्लोकः कुण्डलितः—**ङ. ज.** पुस्तके अयंश्लोकः 'यदिदुःखं' इत्यतः परतो दृश्यते । [4] शक्रस्य—**ङ.** [5] अपतत् स तमःस्पृशन्—**ङ.**

तत्रैव न चलितव्यं इत्याशयेन यथोक्तलोकस्वभावं महापुरुषविषये दर्शयति—लोकेत्यादि। लोकस्य—संसारिणः स्वभावप्राप्तः एषः औपाधिकदुःखसंबन्ध इत्यर्थः। तदेव प्रदर्शयति—ययातिरित्यादि। अनयः—अनयमूलं दुःखमित्यर्थः। स तु महर्षिभिः स्वर्गं नीयमानः स्वानयेन स्वर्गात् भ्रष्टः सर्पत्वरूपं दुःखं प्राप्तः ॥ ७ ॥

महर्षिर्यो वसिष्ठस्तु यः पितुः नः *पुरोहितः।
†अह्ना पुत्रशतं जज्ञे तथैवास्यपुनर्हतम् ॥ ८ ॥

तथैवास्यपुनर्हतमिति। एकाहेन पुनः अस्य वसिष्ठस्य पुत्रशतमपि हत—तद्दुःखं प्राप्तम्। विश्वामित्रकोपात ॥ ८ ॥

या चेयं जगतां माता [1]देवी लोकनमस्कृता।
अस्याश्च चलनं भूमेः दृश्यते, सत्य[2]संश्रव! ॥ ९ ॥

भूमेश्चलनमिति। कदाचित् चलनदुःखमित्यर्थः ॥ ९ ॥

यौ धर्मौ जगतां नेत्रौ ‡यत्र सर्वं प्रतिष्ठितम्।
आदित्यचन्द्रौ ग्रहणमभ्युपेतौ महाबलौ ॥ १० ॥

यौ धर्मौ—विद्याधर्ममयपरावरधर्मप्रवर्तकौ, अत एव जगतां नेत्रौ—जनिमृतिचक्रसंसरत्सर्वस्रोतसां सर्वस्य प्रपञ्चकृत्यस्य नेतारौ, औणादिकः तुन्, नयतेः कर्तरि। यत्र सर्वं भूमविग्रहशोभादि त्रियोगकृत्यं च साक्षात् प्रतिष्ठितं तौ च ग्रहणं—राहुग्रासदुःखं अभ्युपेतौ ॥ १० ॥

---

* नः पितुरित्यन्वयः ॥　† अह्ना पुत्रशतं हतं—विश्वामित्रकोपेन युगपत् पुत्रशतनाशदुःखमनुभूतमिति भावः—गो.　(बाल–59 सर्गे अयं वृत्तान्तो द्रष्टव्यः)।
‡ सूर्यस्य वर्षहेतुत्वात् चन्द्रस्य ओषधिहेतुत्वाच्च—गो.

[1] सर्व—ज.　[2] संश्रय—ङ.

**सुमहान्त्यपि भूतानि देवाश्च, पुरुषर्षभ !**
**न दैवस्य प्रमुञ्चन्ति *सर्वभूतादिदेहिनः ॥ ११ ॥**

दैवस्य प्रमुञ्चन्तीति । कर्मणो वशं न मुञ्चन्तीत्यर्थः ॥ ११ ॥

**शक्रादिष्वपि देवेषु वर्तमानौ नयानयौ ।**
**श्रूयेते, नरशार्दूल ! न त्वं [1]शोचितुमर्हसि ॥ १२ ॥**

नयानयौ––तन्मूलसुखदुःखे इत्यर्थः ॥ १२ ॥

**[2]नष्टायामपि वैदेह्यां [3]हृतायामपि चानघ !**
**शोचितुं नार्हसे, वीर ! यथाऽन्यः प्राकृतस्तथा ॥ १३ ॥**
**त्वद्विधा न हि शोचन्ति सततं [4]सत्यदर्शिनः ।**
**सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शनाः ॥ १४ ॥**

अनिर्विण्णदर्शनाः––निर्वाणो नाशः, अनिर्विण्णं—**अविनष्टं** दर्शनं––कृत्याकृत्यतत्त्वज्ञानं येषां ते तथा ॥ १४ ॥

**तत्त्वतो हि, नरश्रेष्ठ ! बुद्ध्या समनुचिन्तय ।**
**बुद्ध्या युक्ता महाप्राज्ञाः विजानन्ति शुभाशुभे ॥ १५ ॥**

तत्त्वतः चिन्तयेति । युक्तायुक्तकृत्याकृत्यमिति शेषः ॥

---

* सुमहान्ति भूतानि—मान्धातृनलप्रभृतिमहाजना अपि सर्वभूतादिदेहिनः—सर्वभूतानि आदिदेहोऽस्यास्तीति तथा, सर्वभूतान्तर्यामिण इत्यर्थः, दैवस्य – परमात्मनः पञ्चम्यर्थे षष्ठी, न प्रमुञ्चन्ति—सर्वेऽपि तत्संकल्पं नातिक्रामन्तीत्यर्थः–**गो.** किं पुनर्वक्तव्यं देहिनः सर्वभूतानि—देहवन्ति सर्वभूतानि न मुञ्चन्तीति । देहिन इति पुंस्त्वमार्षम् ।–**ति.** सुमहान्ति भूतानि—पृथिव्यादीनि देहिनः—अतिप्रवृद्धाः, देवाश्च दैवस्य नित्यप्रमोदविशिष्टस्य सर्वभूतस्य —सर्वाणि भूतानि यस्मात्, तस्य ब्रह्मणः न प्रमुञ्चन्ति—तदाज्ञापितं न जहति–**रा.**

[1] व्यथितु–**ज.** [2] मृतायां–**ज.** [3] नष्टायामपि राघव–**ज.** [4] समदर्शनाः–**ङ.** सर्वदर्शनाः–**ज.**

**अदृष्टगुणदोषाणां [1] अधृतानां च कर्मणाम् ।**
**[*] नान्तरेण क्रियां तेषां फलमिष्टं प्रवर्तते ॥ १६ ॥**

अथ निर्हेतुककार्यायोगात् एवं दुःखमूलं प्राचीनं दुरदृष्टं बुद्धया अनुचिन्त्य सोढ्वा स्थातव्यमित्याह—अदृष्टेत्यादि । शास्त्रैकसमधिगम्यतया प्रत्यक्षतो द्रष्टुमशक्यगुणत्वदोषत्वानां शुभाशुभत्वानां च अधृतानां—पुरा एवमेवं कर्म कृतमिति निश्चेतुमशक्यानां कर्मणां निष्पत्तिः क्रियामन्तरेण—तत्तत्पुरुषव्यापारमन्तरेण न भवति । तथाहि

"अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टाः दैवं चैवात्र पञ्चमम् ।
शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः । इति ।

अथ स्वसम्पादितानां तेषां कर्मणां इष्टं फलं, चात् अनिष्टंच सर्वथा प्रवर्तते—प्रवर्ततैव, अतः सोढव्यमिति शेषः ॥ १६ ॥

**[2] मामेवं हि पुरा [3] राम ! [4] त्वमेव बहुशोक्तवान् ।**
**अनुशिष्याद्धि को नु त्वां अपि साक्षात् बृहस्पतिः ? ॥**

इयं च बुद्धिः त्वद्दत्तैव मे, अतो न मया त्वदनवगतार्थं उपदिश्यते इत्याह—मामेवमित्यादि । क्रोधवशमापन्नमिति शेषः ।

---

* कर्मणां इष्टं फलं क्रियां—अनुष्ठानमन्तरेण न प्रवर्तते—पूर्वकर्मानुष्ठानं विना इदानीं फलं नोत्पद्यते—**गो.** अथवा तेषां कर्मणां क्रियां स्वफलकरणमन्तरेण इष्टं—सम्मतं फलं अन्यत् फलं न प्रवर्तते । अस्य कर्मणः इदं फलमिति शास्त्रसम्मत फलकरणमन्तरेण अन्यत् फलं नहि भवितुं शक्यमिति भावः । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति भावः ।

[1] अश्रुतानां—**ङ.** अश्रुवाणां—**ज.** [2] वीर—**ज.** [3] त्वमेव—**ङ.** [4] मामेवं—**ङ.**

बहुशोक्तवान् इति सन्निरार्षः। अनुशिष्यादित्यादि। साक्षाद् बृहस्पतिरपि त्वा-त्वां अनुशिष्याद्धि—अनुशासितुं शक्तः किम्? हिशब्दस्वारस्येन न शक्त एवेत्यर्थः। अतो मादृशः को नु त्वा अनुशिष्यात्? ॥ १७ ॥

बुद्धिश्च ते, महाप्राज्ञ! [1]देवैरपि *दुरन्वया।
शोकेनाभिप्रसुप्तं ते ज्ञानं संबोधयाम्यहम् ॥ १८ ॥

दुरन्वया—अन्वेतुं गन्तुमशक्या ॥ १८ ॥

†दिव्यं च मानुषं [2]च त्वं आत्मनश्च पराक्रमम्।
इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे ॥ १९ ॥

दिव्यं—देवोचितम्। मानुषं मनुष्योचितम्। देवोचितपराक्रमः परशुरामादिविषयः, अन्यः रक्षोविषयः ॥ १९ ॥

किं ते सर्वविनाशेन कृतेन, पुरुषर्षभ!
तमेव त्वं रिपुं पापं विज्ञायो‡द्धर्तुमर्हसि ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे षट्षष्टितमः सर्गः

सर्वेषां विनाशः—सर्वविनाशः। कृतेन-अनुष्ठितेन। नारी (२०)मानः सर्गः ॥ २० ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे षट्षष्टितमः सर्गः

---

* दुरन्वया—ज्ञातुमशक्या-गो. † दिव्यं—दिविभवं प्राणिजातं देवगन्धर्वादिकं, तच्च सात्त्विकं वधानर्हं; मानुषं—मनुष्यलोकोद्भवं ब्राह्मणादिकं, तदपि वधानर्हं; सर्वलोकसंहारसमर्थं आत्मनः पराक्रमं च अवेक्ष्य—विचार्य द्विषतामेव वधे यतस्व—गो. इक्ष्वाकुवृषभ इति सम्बुद्धिः। ‡ उद्धर्तुं—नाशितुं—गो.

[1] लोकैरपि—ङ. [2] रूपं—ङ.

## सप्तषष्टितमः सर्गः

### [जटायुर्दर्शनम्]

पूर्वजोऽप्युक्त[1]मात्रस्तु लक्ष्मणेन सुभाषितम् ।
सारग्राही महासारं प्रतिजग्राह राघवः ॥ १ ॥

अथ लक्ष्मणवचनात् पुनश्च जनस्थान एव विचिन्वतो गृध्रराजस्य दर्शनं । पूर्वजोऽपीत्यादि । सुभाषितं—सुभाषितार्थम् ॥१॥

[2]संनिगृह्य महाबाहुः [3]प्रवृत्तं कोपमात्मनः ।
अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् ॥ २ ॥

किं करिष्यावहे? वत्स! क्व वा गच्छाव? लक्ष्मण!
केनोपायेन पश्येयं [4]सीतामिति विचिन्तय ॥ ३ ॥

तं तथा परितापार्तं लक्ष्मणो [5]राममब्रवीत् ।
इदमेव जनस्थानं त्वमन्वेषितुमर्हसि ॥ ४ ॥

राक्षसैः बहुभिः कीर्णं नानाद्रुमलतायुतम् ।
सन्तीह गिरिदुर्गाणि निर्दराः कन्दराणि च ॥ ५ ॥

गुहाश्च विविधा घोराः नानामृगगणाकुलाः ।
आवासाः किन्नराणां च गन्धर्वभवनानि च ॥ ६ ॥

तानि युक्तो मया सार्धं त्वमन्वेषितुमर्हसि ।

इह गिरिदुर्गाणीति । इह जनस्थाने गिरिगतानि दुर्गाणि—गन्तुमशक्यप्रदेशा इत्यर्थः । निर्दराः—विदीर्णपाषाणाः ॥ ६ ॥

---

[1] वाक्यस्तु—ज. [2] स निगृह्य—ज. [3] प्रवृद्धं रोष—ज. [4] सीतां सुरसुतोपमाम्—ङ. [5] वाक्य—ज.

त्वद्विधा बुद्धिसम्पन्नाः महात्मानः [1] नरर्षभ !
* आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः ॥ ७ ॥

इत्युक्तः तद्वनं [2] सर्वं विचचार सलक्ष्मणः ॥ ८ ॥

क्रुद्धो रामः शरं घोरं सन्धाय धनुषि † क्षुरम् ।

क्षुरं—क्षुरप्रख्यं शरविशेषं धनुषि सन्धाय सर्वं वनं संचचार ॥

ततः पर्वतकूटाभं [3] महाभागं ‡ द्विजोत्तमम् ॥ ९ ॥

ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् ।
तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मणमब्रवीत् ॥ १० ॥

अनेन [4] सीता वैदेही भक्षिता नात्र संशयः ।
गृध्ररूपमिदं रक्षः व्यक्तं [5] भवति कानने ॥ ११ ॥

भक्षयित्वा विशालाक्षीं आस्ते सीतां यथासुखम् ।
एनं वधिष्ये [6] दीप्तास्यैः घोरैः बाणैः अजिह्मगैः ॥ १२ ॥

इत्युक्त्वाऽभ्यपतत् [7] गृध्रं सन्धाय धनुषि क्षुरम् ।
क्रुद्धो रामः [8] समुद्भ्रान्तां [9] कम्पयन्निव मेदिनीम् ॥ १३ ॥

तं [10] दीनं दीनया वाचा सफेनं रुधिरं वमन् ।
अभ्यभाषत पक्षी तु रामं दशरथात्मजम् ॥ १४ ॥

सफेनं—फेनसहितम् ॥ १४ ॥

---

* आपत्सु—आपत्स्वपि । † क्षुरं—तद्वन्निशितं—ति. ‡ द्विजोत्तमं—पक्षिश्रेष्ठम् ।

[1] नरर्षभाः—ज. [2] घोरं—ङ. [3] महाकायं—ङ. [4] किल—ङ. [5] भ्रमति—ज. [6] दीप्ताग्रैः—ज. [7] द्रष्टुं—ज. [8] सुसंभ्रान्तः—ङ. [9] चालयन्निव—ज. [10] दीनो—ङ. दीनदीनया—ज.

*यामोषधिमिवायुष्मन्! अन्वेषसि महावने ।
सा देवी मम च प्राणाः रावणेनोभयं हृतम् ॥ १५ ॥

अन्वेषसि । एषृ गतौ । व्यत्ययात् परस्मैपदम् ॥ १५ ॥

त्वया विरहिता देवी लक्ष्मणेन च, राघव!
ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥ १६ ॥
†सीतामभ्यवपन्नोऽहं रावणश्च रणे [1] मया ।
विध्वंसितरथ[2]च्छत्रः पातितो धरणीतले ॥ १७ ॥

सीतामभ्यवपन्नः—सीतापरित्राणमुद्दिश्य अभ्यवपन्नः—अभिगतवानस्मि । अत एव मया रणे रावणश्च विध्वसितरथच्छत्रः धरणीतले पातितश्च ॥ १७ ॥

एतदस्य धनुर्भग्नं [3] एतदस्य शरावरम् ।
अयमस्य [4] रथः, राम! भग्नः साङ्ग्रामिको [5] मया ॥ १८ ॥
अयं तु सारथिस्तस्य मत्पक्षनिहतो युधि ।
परिश्रान्तस्य मे पक्षौ छित्त्वा [6] खड्गेन रावणः ॥ १९ ॥
सीतामादाय वैदेहीं उत्पपात विहायसम् ।
रक्षसा निहतं पूर्वं न मां हन्तुं त्वमर्हसि ॥ २० ॥

---

* मृतसंजीविन्यादिरूपं ओषधिं यथा महत्या श्रद्धयाऽन्विष्येत तथा यां अन्वेषसे—इत्यर्थः ॥ † अभ्यवपन्नः—अभिमुख्येन गतः, ह्रियमाणां सीतामवलोक्य तदभिमुखमागतः–गो.

[1] प्रभो–ज. [2] श्चात्र-ङ. [3] एते चास्य शरास्तथा–ज. [4] रणे–ज.
[5] रथः–ज. [6] स्वस्थः स–ङ.

रामस्तस्य * तु विज्ञाय [1](बाष्पपूर्णमुखस्तदा ।
द्विगुणीकृततापार्तः) सीतासक्तां प्रियां कथाम् [2] ।
गृध्रराजं परिष्वज्य परित्यज्य महद्धनुः ॥ २१ ॥
[3] निपपातावशो भूमौ रुरोद सहलक्ष्मणः ।
† द्विगुणीकृततापार्तः रामो धीरतरोऽपि सन् ॥ २२ ॥

तस्य तु विज्ञायेति । स्वरूपमिति शेषः ॥ २१-२२ ॥

‡ एकमेकायने कृच्छ्रे निःश्वसन्तं कथञ्चन ।
समीक्ष्य दुःखिततरः रामः सौमित्रिमब्रवीत् ॥ २३ ॥

एकं—असहायम् । एकायने—एकस्मिन् ऊर्ध्वतालक्षणे अयने—श्वासमार्गे कृच्छ्रे मुहुर्मुहुः निःश्वसन्तम् ॥ २३ ॥

§ [4] राज्याद् भ्रंशो वने वासः सीता नष्टा द्विजो [5] हतः ।
ईदृशीयं ममालक्ष्मीः निर्दहेदपि पावकम् ॥ २४ ॥

ममालक्ष्मीः—मद्दुष्कर्मवशसंबंधा अलक्ष्मीः—अश्रीः पावकमपि निर्दहेत्, किमुत मच्छ्रियं दहेदिति ॥ २४ ॥

‖ संपूर्णमपि [6] चेदद्य प्रतरेयं महोदधिम् ।
सोऽपि नूनं ममालक्ष्म्या विशुष्येत् सरितांपतिः ॥ २५ ॥

---

* तस्य—गृध्रस्य सम्बन्धिनीं—गो. तस्य—तस्मादिति यावत् । † सीताऽपहारतः, जटायुवधाच्च द्विगुणीकृतः तापः । अथवा—आत्मार्थं प्राणानेव दत्तवति जटायुषि अन्यथाभावनया 'एनं वधिष्ये' (12) इति प्रवृत्त्या द्विगुणीकृतः तापः । ‡ एकायने—एकपद्यां, एकं—असहायं—गो. § यद्यपि 'न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति' 'वनवासो महोदयः' इत्यभिमततमतया प्रोक्तौ राज्यनाशवनवासौ ; तथाऽपि संप्रति सीताविश्लेषकारित्वात् जटायुवियोगफलकत्वाच्च तावेवानर्थकरौ जातौ इत्याह—गो. ‖ 'समुद्रोऽपि जानुदघ्नः पापिनः' इति लोकोक्तिमनुसृत्येदमुच्यते ।

[1] अयं भागः कुण्डलितः—ज. [2] एतदनन्तरं—"श्रुत्वा जटायुषो वाक्यं रामः सौमित्रिणा सह"—इत्यधिकं—ङ. [3] इदमर्धं कुण्डलितं—ङ. [4] राज्यं भ्रष्टं—ज. [5] मृतः—ज. [6] पाथोभिः—ङ.

संपूर्णं महोदधिं दुःखपरितापशान्तये प्रतरेयं—प्लवेयं यद्यपि, तदा सोऽपि सरितां पतिः मम अलक्ष्म्या नूनं विशुष्येत्, मत्तापशान्त्यभावसंपादनायेति शेषः ॥ २५ ॥

नास्त्यभाग्यतरो लोके मत्तोऽस्मिन् सचराचरे ।
येनेयं महती प्राप्ता मया व्यसनवागुरा ॥ २६ ॥

अयं पितृवयस्यो मे गृध्रराजो [1] जरान्वितः ।
शेते विनिहतो भूमौ मम भाग्यविपर्ययात् ॥ २७ ॥

पितुः वयस्यः—सखा ॥ २७ ॥

इत्येवमुक्त्वा बहुशः राघवः सहलक्ष्मणः ।
जटायुषं च पस्पर्श पितृस्नेहं [2] विदर्शयन् ॥ २८ ॥

तथा पितरीव स्नेहः पितृस्नेहः ॥ २८ ॥

निकृत्तपक्षं रुधिरावसक्तं
स गृध्रराजं [3] परिरभ्य रामः ।
क्व मैथिली प्राणसमा [4] ममेति
* विमुच्य [5] वाचं निपपात भूमौ ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे सप्तषष्टितमः सर्गः

———

शेष(२९)मानः सर्गः ॥ २९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे सप्तषष्टितमः सर्गः

———

* विमुच्य—अवशादुच्चार्य ।

[1] महाबलः–ज. [2] निदर्शयन्–ज. [3] परिगृह्य–ज. [4] गतेति–ज.
[5] बाष्पं–ङ.

## अष्टषष्टितमः सर्गः

### [सीतावृत्तान्तपरिज्ञानम्]

रामः संप्रेक्ष्य तं गृध्रं भुवि *रौद्रेण पातितम् ।
सौमित्रिं मित्रसम्पन्नं इदं वचनमब्रवीत् ॥ १ ॥

अथ जटायुमुखात् विशिष्यावगतसीतावृत्तान्तेन रामेण जटायोः संस्क्रियापूर्वं पुण्यलोकप्रदानं, राम इत्यादि । मित्रसंपन्नं—मित्रत्वेन–सर्वजनमैत्र्या सम्पन्नः तथा ॥ १ ॥

†ममायं नूनमर्थेषु यतमानो विहङ्गमः ।
राक्षसेन हतः संख्ये प्राणां[1]स्त्यजति [2]दुस्त्यजान् ॥ २ ॥

[3]अयमस्य शरीरेऽस्मिन् प्राणः, लक्ष्मण ! [4]विद्यते ।
तथा हि स्वरहीनोऽयं विक्लवः ‡समुदीक्षते ॥ ३ ॥

जटायो ! यदि शक्नोषि वाक्यं व्याहरितुं पुनः ।
सीतामाख्याहि, भद्रं ते, वधमाख्याहि चात्मनः ॥ ४ ॥

व्याहरितुमिति । व्याहर्तुमिति यावत् । वधं—वधप्रकारम् ॥

§किन्निमित्तोऽहरत् सीतां रावणस्तस्य किं मया ।
[5]अपराद्धं तु, यं दृष्ट्वा रावणेन हृता प्रिया ॥ ५ ॥

---

* रौद्रेण—रावणेन । मित्रसंपन्नं—सर्वजनमित्रमित्यर्थः । यद्वा परनिपातः, संपन्नमित्रं–**गो.** मित्रसंपन्नं—मित्रत्वं प्राप्तं –**रा.** रौद्रेणेति अतिदारुणं कर्म विवक्षितम् । 'स च्छिन्नपक्षः....रौद्रकर्मणा निपपात' (51–43) इतिपदान्यत्र प्रत्यभिज्ञाप्यन्ते । अथवा 'रौद्रेण रक्षसा' (28) इति निर्देशात् रावण एवार्थः । † मम अर्थेषु—इत्यन्वयः । ‡ समुदीक्षते, अस्मानिति शेषः । § किंनिमित्तः—किं निमित्तं यस्य असौ किन्निमित्तः, केन हेतुनाऽहरदित्यर्थः । किं भोगार्थं ? उत अपकारप्रतीकारार्थमित्यर्थः । चरमपक्षे तत्स्वरूपं पृच्छति—तस्येति–**गो.**

[1] स्त्यक्ष्यति–**ङ.** [2] मत्कृते–**ञ.** [3] अतिखिन्नः–**ञ.** [4] दृश्यते–**ङ.** [5] अपराधं–**झ.**

यं दृष्ट्वेति। यमपराधं दृष्ट्वेत्यर्थः ॥ ५ ॥

*कथं तत् चन्द्रसङ्काशं मुखमासीन्मनोहरम्?
सीतया कानि चोक्तानि? तस्मिन् काले, द्विजोत्तम!॥
कथंवीर्यः? कथंरूपः? किंकर्मा स च राक्षसः?
क्व चास्य भवनं? तात! ब्रूहि मे परिपृच्छतः ॥ ७ ॥
तमुद्वीक्ष्याथ [1]दीनात्मा विलपन्त[2]मनन्तरम्।
वाचाऽतिसन्नया रामं जटायुरिदमब्रवीत् ॥ ८ ॥
हृता सा राक्षसेन्द्रेण रावणेन [3]विहायसा।
मायामास्थाय विपुलां †वातदुर्दिनसङ्कुलाम् ॥ ९ ॥
परि[4]श्रान्तस्य मे, तात! पक्षौ छित्वा स राक्षसः।
सीतामादाय वैदेहीं प्रयातो [5]दक्षिणां दिशम् ॥ १० ॥

किं कर्मेत्यस्य उत्तरं—मायामास्थायेति। वातेन दुर्दिनेन च सङ्कुला तथा ॥ १० ॥

उपरुध्यन्ति मे प्राणाः दृष्टिर्भ्रमति, राघव![6]
पश्यामि वृक्षान् सौवर्णान् उशीरकृतमूर्धजान् ॥ ११ ॥

क्व चास्य भवनमिति प्रश्नस्य उत्तरदानात् पूर्वं प्राणोपरोधमाह—उपरुध्यन्तीति। मरणवेदनया उपरुद्धा भवन्तीत्यर्थः। उशीरेण—लामज्जकेन कृताः—सम्पादिताः मूर्धजाः—केशाः येषां ते तथा ॥ ११ ॥

---

* मनोहरं मुखं कथमासीत्—कीदृशं विकारमापन्नम्। † अन्यैः अपरिज्ञानार्थं एवं माया कृता।

[1] धर्मात्मा—ज. [2] मनाथवत्—ज. [3] दुरात्मना—ज. [4] क्लान्तस्य—ज. [5] दक्षिणामुखः—ज. [6] एतदनन्तरं—'सर्वक्लेशविमुक्तं मां बाहुभ्यां संपरिष्वज'—इति क्वचिदधिकं—ज्ञ.

**येन यातो मुहूर्तेन सीतामादाय रावणः ।**
**विप्रणष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १२ ॥**

***विन्दो नाम मुहूर्तोऽयं स च, काकुत्स्थ! नाबुधत् ।**

अथ परमं सिद्धान्तं कालज्ञानबलादावेदयति—येनेत्यादि । येन मुहूर्तेन निमित्तभूतेन सीतामादाय रावणो याति, तन्मुहूर्तबलात् तद्विप्रणष्टं धनं जीवाजीवरूपं, तत्स्वामी—ह्रियमाणधनस्वामी । क्षिप्रं प्रतिपद्यते—पुनः प्राप्नोति ॥ १२ ॥

**[[1] त्वत्प्रियां जानकीं हृत्वा रावणो राक्षसेश्वरः ।]**
**झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति ॥ १३ ॥**

कोऽसौ मुहूर्तः? इत्यत आह—विन्द इति । स च नाबुधदिति । बुध्यतेः शविकरणः व्यत्ययात् । स रावणः तं मुहूर्तं निजकर्माननुकूलं नावबुद्धवान् । अतः बडिशं गृह्य गृहीत्वा झषवत् क्षिप्रमेव विनश्यति ॥

**न च त्वया व्यथा कार्या जनकस्य सुतां प्रति ।**
**[2] वैदेह्या [3] रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे ॥ १४ ॥**

यदेवमतः—न च त्वयेत्यादि ॥ १४ ॥

**† असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः ।**
**आस्यात् सुस्राव रुधिरं म्रियमाणस्य सामिषम् ॥ १५ ॥**

असंमूढस्येति । एतावत्पर्यन्तमिति शेषः ॥ १५ ॥

---

* नष्टं धनं विन्दति—लभतेऽस्मिन्निति विन्दः—**गो.** † जटायुषो वक्ष्यमाणसद्गतिप्राप्त्यानुकूल्यसूचनाय वा असंमूढस्येति । अथवा रामं प्रति भाषणकाले बुद्धिभ्रंशाभावः कथ्यते ।

[1] इदमर्धं कुण्डलितं—**ज.** [2] वैदेह्यां—**ज.** [3] योक्ष्यसे—**ङ.**

*पुत्रो विश्रवसः साक्षात् भ्राता वैश्रवणस्य च ।
इत्युक्त्वा दुर्लभान् प्राणान् मुमोच पतगेश्वरः ॥ १६ ॥

इत्युक्त्वेति । एतावन्मात्रमुक्त्वा उपरि तद्वीर्यतद्धन-तद्भवनादिकथनात् पूर्वमिति शेषः ॥ १६ ॥

ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः ।
त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसम् ॥ १७ ॥

स निक्षिप्य शिरो भूमौ प्रसार्य चरणौ तदा ।
विक्षिप्य च शरीरं स्वं †पपात धरणीतले ॥ १८ ॥

तं गृध्रं प्रेक्ष्य ‡ताम्राक्षं गतासुमचलोपमम् ।
रामः सुबहुभिर्दुःखैः दीनः सौमित्रिमब्रवीत् ॥ १९ ॥

§बहूनि रक्षसां वासे वर्षाणि वसता सुखम् ।
[1][पक्षिराजेन मित्रेण तातमित्रेण नः सुखम् ।]
अनेन दण्डकारण्ये विशीर्णमिह पक्षिणा ॥ २० ॥

रक्षसां वासे अस्मिन् दण्डकारण्ये, बहूनि वर्षाणि सुखं वसता अनेन पक्षिणा इहैव दण्डकारण्ये विशीर्णं—देहविशरणं प्राप्तम् ॥

---

* अस्योत्तरार्धं 'अध्यास्ते नगरीं लङ्कां रावणो राक्षसेश्वरः' इति बोध्यम् । उत्तरत्र (किष्कि. 58–19) संपातिवचने इदमेव पूर्वार्धमुपादाय अस्योत्तरार्धस्य कथनादिति लोकाचार्यैरुक्तम्–**गो.** † पपातेत्युक्तिरौपचारिकी–**गो.** पूर्वमेव खलु स पतित इत्याशयः । परन्तु यावत्प्राणं कन्धराद्यवयवधारणं, प्राणापगमक्षण एव अवयवानां पतनं इत्यनुभवसिद्धमेव । यदा धरणविगमः तदा पतनमिति सहजम् । ‡ ताम्राक्ष—अधश्शिरस्कतया पतनजक्षोभात्–**गो.** 'सनिक्षिप्य शिरो भूमौ' इत्युक्तेरेवं व्याख्यातं भाति । वस्तुतस्तु रुधिराक्षत्वात् ताम्राक्षं इति स्यात् । § निरन्तरापायवति देशे एतावता कालेन वसताऽपि इह—अद्यैव विशीर्णम्—विशरणं प्राप्तम् । मदर्थमेवैतावता जीवितमिवेत्याशयः ॥

[1] इदमर्धं नास्ति–**ञ, झ.**

अनेकवार्षिको [1]यस्तु चिरकाल[2]समुत्थितः ।
सोऽयमद्य हतः शेते कालो हि दुरतिक्रमः ॥ २१ ॥

अनेकवार्षिक इत्यस्यैव विवरणं—चिरकालसमुत्थितः इति ॥

पश्य, लक्ष्मण! गृध्रोऽयं उपकारी हतश्च मे ।
*सीतामभ्यवपन्नो वै रावणेन बलीयसा ॥ २२ ॥

गृध्रराज्यं परित्यज्य पितृपैतामहं महत् ।
मम हेतोरयं प्राणान् मुमोच पतगेश्वरः ॥ २३ ॥

सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ।
शूराः शरण्याः, सौमित्रे! तिर्यग्योनिगतेष्वपि ॥ २४ ॥

सर्वत्रेति । सर्वजातिष्वपीत्यर्थः ॥ २४ ॥

†सीताहरणजं दुःखं न मे, सौम्य! तथाऽऽगतम् ।
यथा ‡विनाशो गृध्रस्य मत्कृते च, परन्तप ॥ २५ ॥

राजा दशरथः श्रीमान् यथा मम महायशाः ।
पूजनीयश्च मान्यश्च तथाऽयं पतगेश्वरः ॥ २६ ॥

सौमित्रे! हर काष्ठानि निर्मथिष्यामि पावकम् ।
गृध्रराजं दिधक्ष्यामि मत्कृते निधनं गतम् ॥ २७ ॥

---

*सीतामभ्यवपन्नः—सीतां मोचयितुं प्रवृत्तः—ति अभ्यासादनं—प्रहारादिनानिश्शक्तीकरणम् । षद्ऌ पद्धात्वोः गत्यर्थकत्वात्, सीतां प्रति रावणेन अभ्यवपन्नः—मर्मसु प्रहृतः निश्शक्तीकृत इत्यर्थः । †मदर्थं अनेन प्राणा एव त्यक्ताः । अतः एतज्जन्यदुःखं यथाऽऽगतं, न तथा सीताहरणजं दुःखं आगतं—प्राप्तम् । ‡विनाशशब्देन तज्जं दुःखमुच्यते-गो.

[1] वीरः-ङ. [2] समृद्धिमान्-ङ.

दिधक्ष्यामीति श्यन् छान्दसः। दग्धुमिच्छामीत्यर्थः। धक्ष्यामीति। दहेः स्ये घत्वमष्भावादिः। सद्गतिसिद्धये इति शेषः॥

[1] नाथं पतगलोकस्य चिता[2]मारोप्य, राघव।
इमं धक्ष्यामि, सौमित्रे! हतं रौद्रेण रक्षसा[3] ॥ २८ ॥
* या गतिर्यज्ञशीलानां आहिताग्नेश्च या गतिः।
अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥ २९ ॥

---

* अनेन संकल्पमात्रात् कर्मानधिकृततिरश्चः साधनहीनस्यापि तल्लोकदानेन भगवान् रामः स्वस्वरूपांशे माययाऽऽवृतज्ञान इति प्रलपतां मुखं ध्वस्तम्। शोकादि तु नटनमित्युक्तमेवासकृत्-ति. गम्यत इति गतिः—लोकः। यज्ञशीलानां—यज्ञाः शीलं—वृत्तं येषां ते तथा, सदा यज्ञानुष्ठानपराणां, गृहस्थानामित्यर्थः। आहिताः—परितः स्थापिताः अग्नयः—पञ्चाग्नयः यस्य स तथा, सर्वदा तपश्शीलस्य, वानप्रस्थस्येत्यर्थः। अग्न्याधानस्य पूर्वेणैव सिद्धत्वात् पृथक्फलाभावाच्च। अपरावर्तिनां—'अरण्यमियात्ततो न पुनरेयात्' इत्युक्तानां सन्न्यासिनामित्यर्थः। रणादपलायितानामित्यर्थवर्णने, जटायोस्तादृशत्वेन तत्फलस्य स्वतस्सिद्धत्वेन अनुज्ञातव्यत्वाभावात्। मुक्तानां धर्मप्रकरणे उत्कर्षसंभवात् भूमिप्रदायिनां—भूमिभोगत्यागिनां, नैष्ठिकानामित्यर्थः। ता गतीरिति यत्तदोर्नित्यसम्बन्धात् सिद्धम्। ता गतीः 'प्राजापत्यं गृहस्थानां ब्राह्मं संन्यासिनां स्मृतम्' इत्याद्युक्तस्थानानि, यद्वा यज्ञदानतपस्संन्यासिनामित्यर्थः। तेषां या या गतिः शास्त्रविहिता तां मया सत्कृतः व्रज। मया समनुज्ञातस्तु अनुत्तमान्—सर्वश्रेष्ठान् लोकान् 'अथ यदतःपरो + अनुत्तमेषूत्तमेषु' इत्यादिश्रुतिप्रसिद्धान् विष्णुलोकान् गच्छ; अवयव-

[1] देहं पतगराजस्य—ङ. [2] मारोपयाम्यहम्—ञ. [3] एतदनन्तरं—

गोदावर्यास्तटे शुभ्रे चितां कुरु महाभुज।
एवमुक्त्वा तु सौमित्रिं समालिङ्ग्य जटायुषम्॥
समुद्धृत्य गतः श्रीमान् गोदावर्यास्तटं प्रति।
ततो गत्वा समालिङ्ग्य शुभ्रे कुशसमन्विते॥
अवतीर्य विनिक्षिप्य मथित्वाऽग्निं महायशाः।
लक्ष्मणेनाहृतैः काष्ठैः चितां कृत्वा महाभुजः॥

—इत्यधिकम्—ञ.

**मया त्वं समनुज्ञातः गच्छ लोकाननुत्तमान् ।**
**गृध्रराज! महासत्त्व! संस्कृतश्च मया [1] व्रज ॥ ३० ॥**

---

बहुत्वात् बहुवचनम् । अन्यथा गतिशब्देन पौनरुक्त्यं, अनन्वयश्च, समनुज्ञातः संस्कृतश्च इति पदद्वयानर्थक्यं च । ननु मानुषभावं भावयतः श्रीरामस्य कथं मुक्तिप्रदानं? तस्य परत्वासाधारणचिह्नत्वादिति चेत्—'सत्येन लोकान् जयति' इत्युक्तरीत्या स्वार्जितधर्मविशेषेण स्वाधीनसर्वलोकत्वाविरोधात् ।

केचित्तु—मया संस्कृतः ततोऽनुज्ञातस्त्वं यज्ञशीलादीनां या गतयः तान् लोकान् गच्छ, सर्वान्ते मां व्रज । न च निर्हेतुकमुक्तिदानेऽतिप्रसङ्गः, स्वकार्यमुद्दिश्य प्राणत्यागस्यैव हेतुत्वात्—इत्याहुः–**गो.** गम्यत इति गतिः—लोकः । यज्ञशीलादीनां लोकमार्गेण अपरावर्तिनां पुनरावृत्तिरहितानां मुक्तानां लोकान्, पूजायां बहुवचनम्, वैकुण्ठाख्यं लोकं व्रज–**ति.** ननु भगवता रामेण तिरश्चो गतायुषः संस्कारकरणं कथमिति चेत्—'न शूद्रा भगवद्भक्ताः' इत्यत्र शूद्रशब्दस्योपलक्षणार्थत्वात् भगवद्भक्तानां सर्वप्राणिनां मोक्षाधिकारस्य गम्यमानत्वात् । नन्वेवं सति जटायुषो मोक्षप्रदत्वात् रामस्य परमात्मत्वं प्रतीयते—एवं समस्तकल्याणगुणाकरस्य श्रीमन्नारायणस्य सीतामुद्दिश्य कथं विलाप इति चेत्—'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः'—इत्यनेन प्रकारेण सर्वेश्वरस्याप्याश्रित वत्सलत्वात् तेषां दुःखेन स्वयमपि दुःखित इव भाति—**तनिश्लोकी.** अधिकं तत्रैव द्रष्टव्यम् । अत्र प्रथमपादेन इष्टयागादिफलं, चतुर्थपादेन पूर्तखातादिफलं द्वितीयपादेन नित्यकर्मफलं तृतीयपादेन ब्रह्मोपासनफलं, वीरप्राप्यफलं वा स्वरसतो भाति । अत्र 'स्वार्जितं किञ्चिदप्यस्ति मया हि तपसः फलं । राजन् स्वतेजसा तस्य सशरीरो दिवं व्रज' (बाल–60-14) 'या गतिः सर्वसाधूनां स्वाध्यायात्तपसश्च या । देहन्यासभृतां या च तां गतिं गच्छ पुत्रक' (अयो. 64-44) अक्षया नरशार्दूल मया लोकाः जिताः शुभाः—प्रतिगृह्णीष्व मामकान्' (अर. 5-31) 'राघवो वाक्यमब्रवीत् । अहमेवाहरिष्यामि सर्वलोकान् महामुने' (अर. 5-33) 'सर्वान् लोकान् जितानाह मम पुण्येन कर्मणा । तेषु देवर्षिजुष्टेषु जितेषु तपसा मया । मत्प्रसादात्सभार्यस्त्वं विहरस्व सलक्ष्मणः' (अर. 7-12) 'अहमेवाहरिष्यामि स्वयं लोकान् महामुने' (अर. 7-14) इत्यादीनि वचनानि' 'आत्मानं मानुषं मन्ये रामं दशरथात्मजम् । योऽहं यस्य यतश्चाहं भगवांस्तद्ब्रवीतु मे' (युद्ध. 120-11) 'अनृतं नोक्तपूर्वं मे न च वक्ष्ये-कदाचन' (किष्कि. 14-14) 'कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे' (युद्ध. 120-7) इत्यादीनि वचनानि च विमर्शनीयानि ॥

[1] द्विज–ङ.

अपरावर्तिनामिति। रणे इति शेषः। यज्ञशीलादिभिः क्रमात् प्राप्यान् सावर्तसर्वपुण्यलोकान् प्राप्य, अथ मया ब्रह्मात्मकेन समनुज्ञातः सन् अनुमतमल्लोकगतिकः सन् अनुत्तमान् येभ्यः परे उत्तमा न सन्ति तान् सर्वोत्तमान् "अथ यदतः परो दिवो ज्योतिः दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषु उत्तमेषु" इत्यादि। श्रुतिप्रसिद्धान् ब्रह्मलोकान् गच्छ। एवं ब्रह्मलोकप्रदानकाले सहजभूमसत्त्वस्य रजस्तमोऽभिभवनेनोन्मेषः। एवं कार्यवशात् कदाचित् सहजस्वब्रह्मत्वस्य प्रत्यभिज्ञानं अन्यदा हनुमत इव स्ववैभवाच्छादनं कार्याय मनुष्यभावादनपायाः। अतः शिशोरपि राम ब्रह्मावतारत्वं सुस्पष्टम्। अत्र य इह रामो विष्णुः शङ्कर इति महान्तं यत्नं कुर्वन्ति † न तेनास्माकं विरोधः। स्थूलमूर्तौ विष्णुप्राधान्यस्य सर्वतोऽस्माभिः स्थाप्यमानत्वात्। स्थूलमात्रदर्शिनस्ते तावता समाप्ताः। वयमत्र किं कुर्मः तेषामभ्यधिकज्ञानाभावे? ॥ ३० ॥

**एवमुक्त्वा चितां दीप्तां आरोप्य पतगेश्वरम्।**
**ददाह रामो धर्मात्मा *स्वबन्धुमिव दुःखितः ॥ ३१ ॥**
**रामोऽथ सहसौमित्रिः वनं गत्वा स वीर्यवान्।**
**स्थूलान् हत्वा महारोहीन् अनु तस्तार तं द्विजम् ॥ ३२ ॥**

अथ स्थूलान् महारोहीन्—महामृगान्। इकारान्तोऽप्यस्ति मृगवाची रोहिशब्दः। तदेव व्यज्यते—रोहिमांसानि चेति प्रयोगेण च। योजना तु स्थूलान् महारोहीन् हत्वा—पिण्डप्रदानार्थमादायागत्य अनु—अनन्तरं तद्विजं पक्षिणमुद्दिश्य पिण्डदानाय शाद्वलतृणं (कुशान्) तस्तार ॥ ३२ ॥

---

* कृष्णपादादयः तनिश्लोक्यादौ तथा वर्णयन्ति। † स्वबन्धुमिवेत्यनेन मन्त्रपूर्वकत्वं दाहस्योच्यते—**गो.**

रोहिमांसानि चोत्कृत्य पेशीकृत्य महायशाः ।
[1]शकुनाय ददौ रामः रम्ये हरितशाद्वले ॥ ३३ ॥

तत्र रम्ये हरितशाद्वले रोहिमांसानि चोत्कृत्य पेशीकृत्य—पिण्डीकृत्य तस्मै शकुनाय ददौ ।

यत्तत्प्रेतस्य [2]मर्त्यस्य कथयन्ति द्विजातयः ।
तत् *स्वर्गगमनं [3]तस्य [4]पित्र्यं रामो जजाप ह ॥ ३४ ॥

यत्तु मंत्रजातं मर्त्यस्य प्रेतस्य स्वर्गादिगमनमुद्दिश्य कथयन्ति, तन्मन्त्रं जजाप । "ब्रह्मविदाप्नोति परम्" इत्यादिकः सः ॥ ३४ ॥

†ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ।
उदकं ‡चक्रतुः तस्मै गृध्रराजाय तावुभौ ॥ ३५ ॥
§शास्त्रदृष्टेन विधिना जले गृध्राय राघवौ ।
स्नात्वा तौ गृध्रराजाय उदकं चक्रतुस्तदा ॥ ३६ ॥

---

*स्वर्गो गम्यतेऽनेनेति स्वर्गगमनं—स्वर्गप्रापकं पित्र्यं—पितृदेवताकं तत् जजाप—याम्यसूक्तादिकं जजापेत्यर्थः—**गो.** †ततः—दाहानन्तरं, एतदर्थलाभस्तु पाठक्रमादर्थक्रमोबलीयानिति न्यायेन—**रा.** मध्ये पिण्डदानस्य कथनात् एवं व्याख्यातम् । ‡चक्रतुरिति लक्ष्मणस्य कर्तृत्वं सहकारितया—**गो.** §ननु वैदिकोत्तमो रामः कथं हीनजातिं तिर्यञ्चं वैदिकेन कर्मणा संस्कृतवान्—मैवम्—तस्यात्यन्तभक्तत्वेन जातेरपगमात् । 'न शूद्रा भगवद्भक्ताः विप्रा भागवताःस्मृताः । सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने' इत्युक्तेः । न चेदं बचनं 'अपशवो वा अन्ये गो अश्वेभ्यः' इतिवत् प्रशंसापरमिति वक्तुं शक्यम् ; बाधकाभावात् । ब्राह्मणत्वादिजातिर्हि शास्त्रैकसमधिगम्या, न तु गोत्वादिवदाकृतिगम्या, येन तत्तुल्यत्वमाशंक्येत । अत एव विश्वामित्रस्यापि क्षत्रियत्वजातिरपनीता, उपनीता च ब्राह्मणत्वजातिरित्युपपादितं बालकाण्डे, उपपादयिष्यते च श्रमणीवृत्तान्ते । इदं च द्रौपदीविवाहादिवत् ऐतिहासिकविलक्षणव्यक्तिविशेषनियतमिति च नातिप्रसंगावकाशः—**गो.**

[1]शकुनीनां—**ङ.** [2]मन्त्रं च—**ङ.** [3]क्षिप्रं—**ज.** [4]याम्यसूक्तं—**ङ.**

स गृध्रराजः कृतवान् यशस्करं
सुदुष्करं कर्म रणे निपातितः ।
महर्षिकल्पेन च संस्कृतस्तदा
जगाम पुण्यां गतिमात्मनः शुभाम् ॥ ३७ ॥

पुण्यां——पुण्यैकलभ्यां, अत एव——शुभां——सुखैकस्वभावाम् ॥

कृतोदकौ तावपि पक्षिसत्तमे
स्थिरां च बुद्धिं प्रणिधाय जग्मतुः ।
प्रवेश्य सीताधिगमे ततो मनः
वनं *सुरेन्द्राविव विष्णुवासवौ ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे अष्टषष्टितमः सर्गः ॥

---

पक्षिसत्तम इति । तद्वचसीत्यर्थः । सीताधिगमे मनः प्रवेश्य विधाय वनं जग्मतुः इत्यन्वयः ॥ दुर्ग (३७) मानः ॥ ३८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे अष्टषष्टितमः सर्गः ॥

---

## एकोनसप्ततितमः सर्गः

### [कबन्धग्रहणम्]

कृत्वैवमुदकं तस्मै प्रस्थितौ रामलक्ष्मणौ ।
[1]अवेक्षन्तौ वने सीतां *पश्चिमां जग्मतुर्दिशम् ॥ १ ॥

---

* विष्णुवासवाविव इत्यनेन सीतान्वेषणं भावनामात्रमिति सूच्यते—गो. सुरेन्द्रौ देवश्रेष्ठौ विष्णुवासवाविव उपेन्द्र-इन्द्रतुल्यौ तावित्यन्वयः ॥ † पश्चिमां—— दक्षिणपश्चिमामित्यर्थः । दक्षिणां दिशमिति । दक्षिणपश्चिम ह्युभयथा व्यवहर्तुं शक्या——गो. पश्चिमां—— प्रतीपां, एतावता उषितदेशस्य प्रतीपभूता दिक् दक्षिणा उत्तरदेशत आगतयोः स्वदेशापेक्षया प्रतीपता दक्षिणेति वा ॥

[1] अन्वेषन्तौ-ङ.

[1]तौ दिशं दक्षिणां गत्वा शरचापासिधारिणौ ।
अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिपेदतुः ॥ २ ॥

अथ अधोमुखी विमुखीकरणपूर्वकं कबन्धदर्शनम् । कृत्वैव-मित्यादि । *दक्षिणां पश्चिमामिति नैरृतीं दिशं जग्मतुरित्यर्थः । अविप्रहतं—खिलम् ॥ १–२ ॥

गुल्मैर्वृक्षैश्च बहुभिः लताभिश्च प्रवेष्टितम् ।
आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥ ३ ॥

व्यतिक्रम्य तु वेगेन [2]व्यालसिंहनिषेवितम् ।
सुभीमं तन्महारण्यं [3]व्यतियातौ महाबलौ ॥ ४ ॥

व्यतियातौ—व्यतिक्रम्य गतौ ॥ ४ ॥

ततः परं [4]जनस्थानात् त्रिक्रोशं गम्य राघवौ ।
क्रौञ्चारण्यं विविशतुः गहनं तौ [5]महोजसौ ॥ ५ ॥

क्रौञ्चारण्यं—तदाख्यं, गहनं—वनम् ।

नानामेघघनप्रख्यं प्रहृष्टमिव सर्वतः ।
[6]नानापक्षिगणैः जुष्टं नानाव्यालमृगैर्युतम् ॥ ६ ॥

दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिक्यतुः ।
तत्र तत्रावतिष्ठन्तौ सीताहरण[7]कर्शितौ ॥ ७ ॥

---

* इदं श्लोकद्वयगतपदद्वयम् ॥

[1] पश्चिमां दक्षिणां—ङ. तौ दिशं पश्चिमां—ङ. [2] गृहीत्वा दक्षिणां दिशं—**ज.झ.**
[3] व्यालसिंहनिषेवितम्—**ज.** [4] जनस्थानं हित्वा वेगेन—**ङ.** [5] महाजवौ—ङ.
[6] नानावर्णैः शुभैः पुष्पैः मृगपक्षिगणैर्युतम्—**ज.** [7] दुःखितौ—**ज.**

ततः पूर्वेण तौ गत्वा त्रिक्रोशं भ्रातरौ तदा ।
*क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रम[1]मन्तरे ॥ ८ ॥

दृष्ट्वा तु तद्वनं घोरं बहुभीममृगद्विजम् ।
नाना[2]सत्त्वसमाकीर्णं सर्वं गहनपादपम् ॥ ९ ॥

ददृशाते [3]तु तौ तत्र दरीं दशरथात्मजौ ।
पातालसमगम्भीरां तमसा नित्यसंवृताम् ॥ १० ॥

ततः पूर्वेणेति, क्रौञ्चारण्यात् पूर्वदिगाश्रयेणेत्यर्थः । क्रौञ्चारण्यमतिक्रम्य गच्छन्तौ अन्तरे—मध्येमार्गं मतङ्गाश्रमं दृष्ट्वा, अथ घोरं अन्यद्वनं ददृशाते । सर्वं—कृत्स्नं । तद्वने उच्यमानविशेषणां दरीं च ददृशाते ॥ १० ॥

आसाद्य तौ नरव्याघ्रौ दर्यास्तस्याविदूरतः ।
ददृशाते महारूपां राक्षसीं [4]विकृताननाम् ॥ ११ ॥

अथ तौ दरीमासाद्य, तस्याविदूरतः इति संधिः छान्दसः तस्याः दर्याः समीपे इत्यर्थः ॥ ११ ॥

भयदामल्पसत्त्वानां †बीभत्सां रौद्रदर्शनाम् ।
लम्बोदरीं तीक्ष्णदंष्ट्रां करालां परुषत्वचम् ॥ १२ ॥
भक्षयन्तीं मृगान् भीमान् विकटां मुक्तमूर्धजाम् ।
प्रेक्षेतां तौ ततस्तत्र भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥

---

* क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रमं पूर्वेण—मतङ्गाश्रमपूर्वदिग्भागे, 'एनपा द्वितीया' इति द्वितीया ; त्रिक्रोशं गत्वा अन्तरे—मतङ्गाश्रमक्रौञ्चारण्ययोर्मध्ये तद्वनं —मतङ्गाश्रमसम्बन्धिकिञ्चिद्वनं दृष्ट्वा—**गो.** श्लोकत्रयमेकान्वयम् । † अल्पसत्त्वानां—दुर्बलानाम् ।

[1] मन्तरा-**ङ.** [2] वृक्षमृगाकीर्णं-**ङ.** [3] गिरौ-**ज.** [4] विकृतेक्षणाम्-**ङ.**

बीभत्सां—जुगुप्सिताम्। परुषा–कर्कशा त्वक् अस्या सा तथा ॥ २२–२३ ॥

सा समासाद्य तौ वीरौ *व्रजन्तं भ्रातुरग्रतः ।
एहि रंस्यावहेत्युक्त्वा समालम्बत लक्ष्मणम् ॥ १४ ॥
उवाच चैनं [1]वचनं सौमित्रिमुपगुह्य सा ।

भ्रातुरग्रतः इति। रामस्याग्रत इत्यर्थः। रंस्यावहेत्युक्त्वेति संधिः छान्दसः। समालम्बत–गृहीतवती। उपगुह्य–आश्लिष्य ॥१४॥

अहं त्वयोमुखी [2]नाम लाभस्ते त्वमसि प्रियः ॥ १५ ॥
नाथ! [3]पर्वतकूटेषु नदीनां पुलिनेषु च ।
[4]आयुःशेषमिमं, वीर! त्वं मया सह रंस्यसे ॥ १६ ॥

अयोमुखीत्यन्वर्थनामा अहं ते लाभः, निध्यादिवत् लाभरूपा प्राप्ताऽस्मि, त्वं मे प्रियभर्तासि ॥ २६ ॥

एवमुक्तस्तु कुपितः खड्गमुद्धृत्य लक्ष्मणः ।
[5]कर्णनासौ स्तनौ चास्याः निचकर्तारिसूदनः ॥ १७ ॥
कर्णनासे निकृत्ते तु विस्वरं सा विनद्य च ।
यथाऽऽगतं प्रदुद्राव राक्षसी[6] भीमदर्शना ॥ १८ ॥

कर्णश्च नासा च कर्णनासे, निकृत्ते त्वित्यत्र द्वन्द्वैकवद्भावे सप्तमी ॥ १८ ॥

---

* लक्ष्मणस्य ग्रहणे हेतुः—भ्रातुरग्रतः व्रजन्तमिति ।

[1] सौमित्रिमुपगृह्य महौजसम्-ङ. [2] नाम्ना–ङ. [3] पर्वतदुर्गेषु–ज.
[4] आयुश्शिरमिदं–ज. [5] कर्णनासे स्तनौ–ङ. कर्णनासस्तनं–ज. [6] घोर–ज.

तस्यां गतायां गहनं [1]व्रजन्तौ वनमोजसा ।
आसेदतुरमित्रघ्नौ भ्रातरौ रामलक्ष्मणौ ॥ १९ ॥

तस्यां गतायां पश्चात् व्रजन्तौ तौ गहनं—दुष्प्रवेशं अन्यद्वनं ओजसा आसेदतुः ॥ १९ ॥

लक्ष्मणस्तु महातेजाः [2]सत्त्ववान् शीलवान् शुचिः ।
अब्रवीत् * प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ॥ २० ॥
स्पन्दते मे दृढं बाहुः उद्विग्नमिव मे मनः ।
प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ २१ ॥

बाहुः स्पन्दत इति । वाम इति शेषः । अनिष्टानि—तत्सूचकानीत्यर्थः ॥ २१ ॥

तस्मात् सज्जीभवार्य ! त्वं कुरुष्व वचनं [3]हितम् ।
ममैव हि निमित्तानि [4]सद्यः शंसन्ति [5]संभ्रमम् ॥ २२ ॥
संभ्रमं—भयमित्यर्थः ॥ २२ ॥

† एष वञ्जुलको [6]नाम पक्षी परमदारुणः ।
आवयोऽर्विजयं युद्धे शंसन्निव विनर्दति ॥ २३ ॥

वञ्जुलकः —"वञ्जुलः कर्णवालः स्यात्" ॥ २३ ॥

---

* सीताया अलाभात् तदानीमपि रामस्योग्रत्वाद्वा, मायामृगप्रकरणे स्ववचनातिलङ्घनेनैव महानर्थप्राप्तया तद्वन्मा भवत्विदानीमपि इति भावेन वा अञ्जलिकरणम् । अत एव 'त्वं कुरुष्व वचनं हितम्' 'ममैव हि निमित्तानि' इत्याद्युक्तिरुत्तरत्र । † ननु यदि दुर्निमित्तानि पश्यसि, तर्ह्यनिष्टं अनिवार्यमेव । किं सज्जीभवनेनेत्यत आह—एष इति—रा.

[1] विशन्ते—ङ. [2] सत्यवान्—ङ. [3] मम—ज. [4] सदा—ङ. [5] विभ्रमम्—ङ. [6] राम—ङ.

तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा ।
संजज्ञे विपुलः शब्दः प्रभञ्जन्निव तद्वनम् ॥ २४ ॥
संवेष्टितमिवात्यर्थं [1]गगनं मातरिश्वना ।
*[2]वनस्य तस्य शब्दोऽभूत् [3]दिवमापूरयन्निव ॥ २५ ॥

संवेष्टितं—व्याप्तम् ॥ २५ ॥

†तं शब्दं कांक्षमाणस्तु रामः [4]कक्षे सहानुजः ।
ददर्श सुमहाकायं राक्षसं विपुलो[5]रसम् ॥ २६ ॥

शब्दं कांक्षमाण इति । तदुत्पत्तिनिमित्तमित्यर्थः ॥ २६ ॥

‡[6]आसेदतुस्ततस्तत्र तावुभौ प्रमुखे स्थितम् ।
विवृद्धमशिरोग्रीवं कबन्धमुदरे मुखम् ॥ २७ ॥
रोमभिः निचितैस्तीक्ष्णैः महागिरिमिवोच्छ्रितम् ।
[7]नीलमेघनिभं रौद्रं मेघस्तनितनिःस्वनम् ॥ २८ ॥
अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता ।
महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ॥ २९ ॥

---

* वनस्य मध्ये शब्दोऽभूत्-**ति.** वनस्य सम्बन्धिनीं दिवं—आकाशं-**गो.** †तं शब्दं काङ्क्षमाणः—किमस्योत्पत्तिमूलमिति ज्ञातुमिच्छन्, गत्वेति शेषः, कक्षे—गुल्मे ददर्श, दूरादिति शेषः-**गो.** अयं श्लोकः आहत्यवादरूपः । अस्यैव प्रपञ्चः उत्तरश्लोकैः अष्टभिः । ‡ददर्शेति पूर्वश्लोकोक्ताहत्यवादस्य प्रपञ्चः—आसेदतुरित्यादि । 'सहानुजो ददर्श' इति कथनात् अत्र उत्तरत्र च द्विवचनम् ।

[1] गहनं-**ञ.** [2] गंभीरस्तस्य-**ङ.** [3] वन-**ञ.** [4] खड्गी-**ञ.** [5] दरम्-**ङ.** [6] आजग्मतु-**ङ.** [7] भीममेघ-**ङ.**

एकेनोरसि* घोरेण नयनेनाऽऽशुदर्शिना ।
महादंष्ट्रोपपन्नं तं लेलिहानं† महामुखम् ॥ ३० ॥

भक्षयन्तं महाघोरान् ऋक्षसिंहमृगद्विपान् ।
‡घोरौ भुजौ विकुर्वाणं उभौ योजनमायतौ ॥ ३१ ॥

कराभ्यां विविधान् गृह्य ऋक्षान् पक्षिगणान् मृगान् ।
आकर्षन्तं विकर्षन्तं अनेकान् मृगयूथपान् ॥ ३२ ॥

स्थितमावृत्त्य पन्थानं तयोः भ्रात्रोः प्रपन्नयोः ।

विवृद्धं—विवृद्धाकारं । अशिरोग्रीवं—अदृश्यमानशिराग्रीवं, अत एव कबन्धं—अन्वर्थतन्नामकं । उदरे मुखं । अमूर्धमस्तकादित्यलुक् । तीक्ष्णैः । उपलक्षितमिति शेषः । ललाटस्थेन उच्यमानविशेषणकेन उरःप्रदेशान्तर्गतशिरस्त्वेन उरसि—उरःप्रदेशे अन्तरुपलभ्यमानेन एकेनैव नयनेन उपलक्षितम् । अत्र महापक्ष्मेणेति अदन्तत्वमार्षम् । विकुर्वाणं — विक्षिपन्तम् । ऋक्षान्—भल्लूकान् । प्रपन्नयोरिति । §पन्थानमिति शेषः ॥ २७–३२ ॥

अथ तत् समभिक्रम्य क्रोशमात्रे ‖ ददर्शतुः ॥ ३३ ॥

---

* पूर्वं 'उदरे मुखं' इति कथनात् उरस्स्थाने ललाटस्य नयनस्य चावस्थितिः । अतो 'ललाटस्थेन' इत्यनेन न विरोधः । † महामुखं—विपुलास्यरन्ध्रम्–गो. ‡ 'भक्षयन्तं' इत्यस्य विवरणरूपं—'घोरौ भुजौ' इत्यादि । § पन्थानमावृत्त्य स्थितं—इति वक्तव्यत्वात्, 'कं प्रपन्नयोः' इति प्रश्ने पन्थानमिति शेष इत्युक्तं भाति । पन्थानमित्यस्यावृत्तिर्वा । गोविन्दराजेन तु प्रपन्नयोः—समीपं प्राप्तयोः तयोः पन्थानमावृत्त्य स्थितं—इति व्याख्यातम् । ‖ सहानुजो ददर्शेत्यस्योपसंहारः—क्रोशमात्रे ददर्शतुरिति ।

महान्तं दारुणं[1]भीमं कबन्धं भुजसंवृतम् ।
कबन्धमिव संस्थानात् अतिघोरप्रदर्शनम् ॥ ३४ ॥

अथेत्यादि । अथ तत् भुजवेष्टनं समभिक्रम्य दूरे स्थितौ तं क्रोशमात्रे ददर्शतुः । भुजाभ्यामेव मृगादीनां संवृतं—संवरणं यस्य स तथा । संस्थानात्—देहस्थित्या । कबन्धमिव—सर्वथा अशिरस्कत्वलक्षणकबन्धवत् स्थितम् ॥ ३३–३४ ॥

स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ ।
जग्राह सहितावेव राघवौ पीडयन् बलात् ॥ ३५ ॥

सहिताविति । नैकमपि मुक्त्वेत्यर्थः ॥ ३५ ॥

खड्गिनौ दृढधन्वानौ [2]तिग्मतेजो[3]वपुर्धरौ ।
भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ ॥ ३६ ॥

तिग्मं—खरं तेजः यस्य तत् तथा, तादृशवपुर्धरौ—वेषधरावित्यर्थः । विवशं प्राप्ताविति । बलात्कारेण कर्षणं प्राप्तावित्यर्थः ॥

तत्र धैर्येण शूरस्तु राघवो नैव विव्यथे ।
*बाल्यादनाश्रयाच्चैव लक्ष्मणस्त्वतिविव्यथे ॥ ३७ ॥

तत्र—तस्यामवस्थायाम् । बाल्यात्—बालबुद्धित्वात । अनाश्रयात्—धैर्यानालम्बनात् । अतिविव्यथे—अत्यन्तं व्यथितः—खिन्नो बभूव ॥ ३७ ॥

---

* बाल्यात्—रामवदप्रौढबुद्धित्वात्–गो. अनाश्रयत्वादिति पाठे—आश्रयभूतस्य रामस्यापि कबन्धावृतत्वादिति भावः–ति. अनाश्रयात्—रामरूपाश्रयराहित्यात्, रामस्यास्वस्थत्वेन परितप्यमानत्वात्–रा.

[1] भूतं–ङ. [2] तिग्मतेजौ–ज. [3] धनुर्धरौ–ङ. महाभुजौ–ज.

उवाच च विषण्णः सन् राघवं राघवानुजः ।
पश्य मां, वीर! *विवशं राक्षसस्य वशं गतम् ॥ ३८ ॥

मयैकेन विनिर्युक्तः परिमुञ्चस्व, राघव ।
मां हि भूतबलिं दत्त्वा पलायस्व यथासुखम् ॥ ३९ ॥

तमेव दर्शयति वचनेन—उवाचेत्यादि । मया एकेन—अवशेन, विनिर्युक्तः—नियोजितरक्षोबलिः सन् त्वं किंचित् स्ववशं त्वदात्मानं परिमुञ्चयस्व । पलायनेनेति शेषः । उक्तार्थस्यैव विवरणं उत्तरार्धं—मां हीत्यादि । भूतबलिं । महाभूताकाररक्षोभक्षणमित्यर्थः ॥

अधिगन्ताऽसि वैदेहीं अचिरेणेति मे मतिः ।
प्रतिलभ्य च, काकुत्स्थ! पितृपैतामहीं महीम् ॥ ४० ॥

तत्र मां, राम! †राज्यस्थः स्मर्तुमर्हसि सर्वदा ।
[1]लक्ष्मणेनैवमुक्तस्तु रामः सौमित्रिमब्रवीत् ॥ ४१ ॥

---

* विवशमित्यत्र हेतुः—राक्षसस्य वशंगतमिति । † 'स्मरणीयाः समये वयम्' इति लोकन्यायानुसारेणाह—राज्यस्थ इति ।

[1] एतच्छ्लोकद्वयस्थाने ङ. पुस्तके—एवं अधिकः पाठः प्रदर्शितः—
न हि मे त्वत्समो बन्धुः कश्चनानघ! विद्यते । न मातुश्च ममाख्येयः विनाशश्च कथञ्चन ॥
विषीदत्यतिमात्रं हि प्रियपुत्रा हि सा भृशम् । तं तु संपन्नया वाचा परितापार्तमातुरम् ॥
आश्वासहेतोर्वचनमिदमाह परंतपः । पुत्रो दशरथस्यासि द्वितीयो मम चानुजः ॥
स प्राकृत इवोदारः कथं नाम विषीदसि । मांसराशिमयः पापः रूपमात्रं हि भीषणम् ॥
मा संत्रासं कृथा वीर! न हि त्वादृग्विषीदति । ततः सत्त्वानि तद्रक्षः क्षुधया चाग्रसत्तदा ॥
खड्गिनौ दृढधन्वानौ तिग्मबाणौ धनुर्धरौ । भ्रातरावरणीं प्राप्य कृष्यमाणौ ददर्शतुः ॥
महाजगरसंकाशौ खड्गरोमभिरावृतौ । तीक्ष्णरोमनखौ बाहू पञ्चास्याविव पन्नगौ ॥
ताभ्यां तु कृष्यमाणौ तौ बाणपातमिवागतौ । कृच्छ्रेण दूरतस्तस्य तत्र दृष्ट्वा व्यवस्थितौ ॥
ततः पिपासाविक्षिप्तः क्षुधया निभृतस्तदा । विनिक्षिप्तांसबाहुभ्यां मृगैस्सह महावने ॥
भ्रातरौ निकटं प्राप्य कृष्यमाणौ ददर्श ह । तावुवाच महाबाहुः कबन्धो दानवोत्तमः ॥ इति ॥

मा स्म त्रासं कृथाः, वीर ! न हि त्वादृग्विषीदति ।
एतस्मिन्नन्तरे क्रूरो भ्रातरौ रामलक्ष्मणौ ॥ ४२ ॥

पप्रच्छ घननिर्घोषः कबन्धो *दानवोत्तमः ।

एतस्मिन्नन्तर इति । लक्ष्मणविषादरामाश्वासनसमय इत्यर्थः ॥

कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ ॥ ४३ ॥
घोरं देशमिमं प्राप्तौ [1]दैवेन मम चाक्षुषौ ।

दैवेन—दैवगत्या, मम चाक्षुषौ—चक्षुर्गोचरौ ॥ ४३ ॥

वदतं कार्यमिह वां किमर्थं चागतौ युवाम् ॥ ४४ ॥
इमं देशमनुप्राप्तौ क्षुधार्तस्येह तिष्ठतः ।

अथ राक्षसः कार्यादिकं पृष्ट्वा, तदुपेक्ष्य, केवलं स्वप्रयोजनमेव संपन्नमित्याह— इमं देशमित्यादि । अनुप्राप्तौ इह तिष्ठतः— क्षुधार्तस्य मम आस्यमप्यनुसंप्राप्तौ स्थः ॥ ४४ ॥

सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ ॥ ४५ ॥
[2]ममास्यमनुसंप्राप्तौ दुर्लभं जीवितं [3]पुनः ।

किं ततः ? इत्यतः—दुर्लभमित्यादि ॥ ४५ ॥

तस्य तद्वचनं श्रुत्वा कबन्धस्य [4]दुरात्मनः ॥ ४६ ॥

---

*दानवोत्तम इत्युक्त्या दनुवंशोद्भवत्वेऽपि कर्मणा राक्षसत्वात् अन्यत्र राक्षसत्वोक्तिर्न विरुध्यते-रा.

[1] मम भक्षावुपस्थितौ-ङ. [2] मां तूर्णमनु-ज. [3] हि वाम्-ज.
[4] महात्मनः-ङ.

**उवाच लक्ष्मणं रामः *मुखेन परिशुष्यता ।**

परिशुष्यता मुखेन उपलक्षितं लक्ष्मणं इत्यन्वयः ॥ ४६ ॥

**कृच्छ्रात् कृच्छ्रतरं प्राप्य दारुणं, सत्यविक्रम ! ॥ ४७ ॥**

**व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम् ।**

कृच्छ्रादित्यादि । हे सत्यविक्रम ! दारुणं कृच्छ्रात् कृच्छ्रतरं—राज्यभ्रंशपूर्वकवनवासदुःखं प्रियापहारान्तं प्राप्यापि स्थितयोः पुनश्च तां प्रियां अप्राप्यैव व्यवस्थितयोः जीवितान्ताय च व्यसनं—दुःखं प्राप्तम् ॥ ४७ ॥

**कालस्य सुमहद्वीर्यं सर्वभूतेषु, लक्ष्मण ! ॥ ४८ ॥**
**त्वां च मां च, नरव्याघ्र ! व्यसनैः पश्य मोहितौ ।**

यदेवमतः—कालस्येत्यादि । लक्ष्मण ! सर्वेष्वपि भूतेषु कालस्य वीर्यं सुमहत्—निरर्गलप्रचारम् । कुतः ? यतः—त्वां चेत्यादि । महाबलपराक्रमावपीत्यर्थः । मोहिताविति । करोतीति शेषः ॥ ४८ ॥

**†[1]न हि भारोऽस्ति दैवस्य सर्वभूतेषु, लक्ष्मण ! ॥ ४९ ॥**

**शूराश्च बलवन्तश्च कृतास्त्राश्च [2]रणाजिरे ।**
**[3]कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ ५० ॥**

उक्तार्थस्यैव प्रपञ्चनं—न हीत्यादि ॥ ४९-५० ॥

---

*परिशुष्यता मुखेनोपलक्षितः राम उवाच-**रा.** उत्तरवाक्यानुसारादेवं व्याख्यातम् । †तत्तत्कर्मपरिपाककाले तत्तत्फलमवश्यमनुभाव्यमेव । एतद्विषये दैवं अधिकभारं न वहत्येवेति भावः ॥

[1] नातिभारो-**ङ.** [2] महारणे-**ङ.** [3] कालावपन्नाः-**ङ.**

इति ब्रुवाणो दृढसत्यविक्रमः
[1] महायशा दाशरथिः प्रतापवान् ।
अवेक्ष्य सौमित्रिमुदग्र[2]पौरुषः *
स्थिरां तदा स्वां मतिमात्मनाऽकरोत् ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकोनसप्ततितमः सर्गः

---

उदग्रपौरुषो रामः सौमित्रिमवेक्ष्य दीनमवेक्ष्य स्वां मतिं तु आत्मना—आत्मवैभवेन तदा स्थिरामकरोत् । न तु रक्षोनिमित्त-भयलेशं विषादलेशमपि प्राप्तवान् इत्यर्थः । कर्म(५१)मानः सर्गः ॥ ५१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकोनसप्ततितमः सर्गः

---

## सप्ततितमः सर्गः

[कबन्धनिग्रहः]

तौ तु तत्र [3] स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १ ॥

अथ कबन्धभुजच्छेदः, तदनन्तरं तस्य प्रत्यभिज्ञाप्राप्तिश्च । तौ तु तत्रेत्यादि । परिक्षिप्तौ—पाशप्रकारेण परिवृतौ व्याप्तौ ॥ १ ॥

---

* उदग्रपौरुषमिति पाठे तादृशलक्ष्मणदर्शनेन उत्तम्भितवीर्यः स्वयं प्रतिष्ठितोऽभू-दित्यर्थः । परस्परावष्टंभेन परस्परप्रत्यवस्थानं सहजमेव । अनन्तरसर्गस्थलक्ष्मणवाक्य-मप्यत्र द्रष्टव्यम् ॥

[1] महारथः–ङ. [2] पौरुषं, विक्रमं–ङ, विक्रमः–ज. [3] स्थितो–ङ.

तिष्ठतः किं नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ ।
आहारार्थं तु संदिष्टौ दैवेन [1] गतचेतसौ ॥ २ ॥

तिष्ठत इत्यादि । क्षुधार्तं मां दृष्ट्वा भीतौ किं नु तिष्ठतः? व्यर्थमेव, न तु जीवनपरिहार इत्यर्थः । यतो गतचेतसौ युवां मे दैवेन आहारार्थं संदिष्टौ ॥ २ ॥

तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा ।
उवाचार्तिं समापन्नः विक्रमे कृत[2]लक्षणः ॥ ३ ॥

त्वां च मां च पुरा तूर्णं आदत्ते राक्षसाधमः ।
तस्मादसिभ्यामस्याशु बाहू छिन्दावहै गुरू ॥ ४ ॥

आदत्ते पुरा—आदास्यतीत्यर्थः ॥ ४ ॥

भीषणोऽयं [3] महाकायः राक्षसो * भुजविक्रमः ।
लोकं †[4] ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति ॥ ५ ॥

भुजमात्रेण विक्रमो यस्य स तथा । लोकं-प्राणिजातम् ॥

‡ निश्चेष्टानां वधो, राजन्! कुत्सितो [5] जगतीपतेः ।
[6] क्रतुमध्योपनीतानां पशूनामिव, राघव! ॥ ६ ॥

---

* 'बाहू छिन्दावहै' इत्यत्र हेतुः—भुजविक्रम इति । यतोऽस्य पराक्रमः भुजयोरेव, अतस्तयोश्छेदनेऽयं हत एवेति भावः । † अतिजितं—अत्यंतजितम्-**गो.** एवं सर्वजयाद्दर्पितोऽयमिति भावः । ‡ भुजच्छेदनमात्रं कर्तव्यं, न तु मारणमित्याह—निश्चेष्टानामिति । निश्चेष्टानां प्रतीकाराशक्तानाम् । जगतीपतेः—क्षत्रियस्य क्षत्रियकर्तृक इति यावत् । क्रतुमध्योपनीतानामिति निश्चेष्टानामित्यस्मिन्नर्थे प्रयुक्तम् । यद्वा 'पर्यग्निकृतानारण्यानुत्सृजन्त्यहिंसायै' इत्युक्तरीत्या अश्वमेधक्रतौ उपनीतानामारण्यपशूनां वधः कुत्सित एव-**गो.** क्रतुमध्यापनीतानां—क्रतुमध्यादन्यत्र नीतानाम् । क्रत्वनङ्गभूतानामिति

[1] हतचेतसौ-**ङ.** हतचेतनौ-**ज.** [2] निश्चयः-**ज.** [3] महाबाहुः-**ङ.**
[4] ह्यपजितं-**ङ.** [5] जगतीपते-**ङ.** क्रतुमध्याप-**ज.**

बाहुच्छेदमात्रमेव कर्तव्यं, न तु प्राणवियोजनं युक्तमित्याह—निश्चेष्टानामिति । प्रतिप्रहाररहितानां इत्यर्थः । जगतीपतेः—क्षत्रियस्य । क्रतुमध्यपशुदृष्टान्तः निश्चेष्टत्वे ॥ ६ ॥

**एतत् संजल्पितं श्रुत्वा तयोः क्रुद्धस्तु राक्षसः ।**
**विदार्यास्यं तदा रौद्रः तौ भक्षयितुमारभत् ॥ ७ ॥**

तयोः संजल्पितमित्यन्वयः । भक्षयितुमारभादिति । हस्ताभ्यामाकृष्टवानित्यर्थः ॥ ७ ॥

**ततस्तौ *देशकालज्ञौ खड्गाभ्यामेव राघवौ ।**
**अच्छिन्दतां सुसंहृष्टौ बाहू तस्यांसदेशतः ॥ ८ ॥**

---

यावत्-ती· वस्तुतस्तु—यथाश्रुतपाठे, क्रतुमध्योपनीतानां निश्चेष्टानां पशूनामिव जगतीपते:-क्षत्रियस्य वधः कुत्सितः । एकस्य क्षत्रियस्य अन्येन हनने प्रसक्ते, यज्ञपशुमिरिव तूष्णीं स्थित्वा स्वहननावकाशदानं अतिजुगुप्सितम् । यावत्प्राणं योद्धव्यमेव क्षत्रियेणेत्यर्थः । अथवा—निश्चेष्टानां वध: भवेदेवेति सामान्यन्यायपरं पृथग्वाक्यम् । स च जगतीपते:—क्षत्रियस्य कुत्सित इत्यपरं वाक्यम् । जगतीपते इति पाठे तु— हे राजन् , जगतीपते, राघव, इति पदत्रयं योद्धव्यताया आवश्यकत्वसूचकम् । पूर्वपाठेऽपि संबुध्यन्तपदद्वयस्य सार्थक्यं एवमेव किल वक्तव्यम् । हे राघव क्रतुमध्योपनीतानां पशूनामिव निश्चेष्टानामस्माकं वधः कुत्सित:— गर्हित:, अत: प्रतीकारः कर्तव्य एवेत्यर्थ: । एवं तर्हि कुतो बाहुच्छेदमात्रं वदति लक्ष्मण इति चेत्— तत्र मूलं उक्तं–भुजविक्रम इति । कबन्धस्यास्य भुजावेव परमसाधनौ । अतस्तयोश्छेद एव एतद्वधोपाय इति भावः । एवं व्याख्यां परित्यज्य, स्वभक्षणोद्यतं कबन्धमुद्दिश्य—अयं निश्चेष्टः, अतो न हन्तव्य इति कथनपरं व्याख्यानं न स्वरसम् । अथवा निश्चेष्टानां हि वधः कुत्सितः, स्वस्य तेनानपकारात् । अयं तु न निश्चेष्टः, किन्तु अस्मद्धननोद्यत एव । अतोऽस्य वधः युक्त एव । पशुदृष्टान्तस्तु निश्चेष्टत्वमात्रे ग्राह्यः ॥

*तस्य भुजयोः छेदनानुकूलदेशकालौ जानन्तौ, तदनुगुणदेशकाललाभात् सुसंहृष्टौ, खड्गाभ्यामेवाच्छिन्दताम् । धनुषोऽप्यपेक्षा नासीदिति भाव: । एवमतिदुर्जयत्वेन पूर्वं गृहीतस्य तद्रक्षसः सुखतया तद्बाहुच्छेदानुगुणदेशकाललाभादेव—अत्यन्तसंहृष्टाविति । अत एव ‘ असक्तं ’ इत्युक्तिरनन्तरश्लोकेऽपि ।

सुसंहृष्टाविति । कदलीदण्डवत् सुखच्छेदनलाभात् ॥

दक्षिणो दक्षिणं बाहुं *असक्तमसिना ततः ।
चिच्छेद रामो वेगेन सव्यं [1]वीरस्तु लक्ष्मणः ॥ ९ ॥

दक्षिणः—समर्थः । अथवा दक्षिणपार्श्वस्थः ॥ ९ ॥

स पपात महाबाहुः छिन्नबाहुर्महास्वनः ।
खं च गां च दिशश्चैव नादयन् जलदो यथा ॥ १० ॥

गां—भुवम् ॥ १० ॥

†स निकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः ।
दीनः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ॥ ११ ॥

कौ युवामिति पप्रच्छेति । पूर्वं अप्राप्तोत्तरत्वात् पुनः प्रश्नः ॥

इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः ।
[2]शशंस राघवं तस्य कबन्धस्य महात्मनः ॥ १२ ॥

अयं‡मिक्ष्वाकुदायादो रामो नाम जनैः श्रुतः ।
अस्यैवावरजं विद्धि भ्रातरं मां च लक्ष्मणम् ॥ १३ ॥

इक्ष्वाकुदायाद इति । दशरथपुत्र इत्यर्थः ॥ १३ ॥

[3]मात्रा प्रतिहृते राज्ये रामः प्रव्राजितो वनम् ।
मया सह चरत्येष भार्यया च महद्वनम् ॥ १४ ॥

---

* असक्तं—आस्थारहितं यथा तथा—रा. आयासं विनेति यावत् । † एतावता केनाप्यकृतस्य महासाहसस्य करणात् स्तब्धः सः, स्वशापं च स्मरन्—कौ युवामिति पृच्छति । ‡ इक्ष्वाकुवंशप्राप्तदायरूपराज्यार्हः—अनेनेक्ष्वाकुवंशप्रभवत्वं, ज्येष्ठत्वं च सूचितम् ।

[1] धीरस्तु—ङ. [2] 'शशंस तस्य काकुत्स्थं कबन्धस्य महाबलः '—ञ. [3] अयं श्लोकः कुण्डलितः—ङ.

अस्य देवप्रभावस्य वसतो विजने वने ।
रक्षसाऽपहृता [1]पत्नी यामिच्छन्ताविहागतौ ॥ १५ ॥

यामिच्छन्ताविति । अन्वेषयन्तावित्यर्थः ॥ १५ ॥

त्वं तु को वा किमर्थं वा कबन्धसदृशो वने ।
आस्येनोरसि दीप्तेन भग्नजङ्घो [2]विवेष्टसे ॥ १६ ॥

विवेष्टस इति । लुठसीति यावत् ॥ १६ ॥

एवमुक्तः कबन्धस्तु लक्ष्मणेनो[3]त्तरं वचः ।
उवाच परमप्रीतः तदिन्द्रवचनं स्मरन् ॥ १७ ॥

शापमोक्षकालप्रत्यभिज्ञानात्—तदिन्द्रवचनमिति । उत्तरसर्गप्रतिपाद्यमानम् ॥ १७ ॥

स्वागतं वां नरव्याघ्रौ दिष्ट्या पश्यामि चाप्यहम् ।
दिष्ट्या चेमौ निकृत्तौ मे युवाभ्यां * बाहुबन्धनौ ॥ १८ ॥

बाह्वोः बन्धनं ययोः अंसदेशयोः, तौ बाहुबन्धनौ ॥ १८ ॥

विरूपं यच्च मे रूपं प्राप्तं ह्यविनयाद्यथा ।
तन्मे शृणु, नरव्याघ्र! तत्त्वतः शंसतस्तव ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे सप्ततितमः सर्गः

---

यथा येन कारणेन प्राप्तं तत् कारणं तत्त्वतः तव शंसतो मे सकाशात् शृणु ॥ १९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे सप्ततितमः सर्गः

---

* बाहुरूपबन्धनौ — उत्तरसर्गे 'यदा रामः तव बाहू छेत्स्यते, तदा स्वर्गं गमिष्यसि' इति शापमोचनदानात्, बाहू एव मम बन्धरूपौ जातौ इत्यर्थः इति वा ।

[1] भार्या–ज. [2] विचेष्टसे–ज. [3] त्तमं–ङ.

## एकसप्ततितमः सर्गः

[कबन्धवृत्तान्तः]

पुरा, राम! महाबाहो! महाबल[1]पराक्रमम् ।
रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् ।
यथा सोमस्य शक्रस्य सूर्यस्य च यथा वपुः ॥ १ ॥

अथ कबन्धः स्ववृत्तान्तोपदेशपूर्वं मनसा चास्योपकारं चिकीर्षुः शरीरस्य दाहं नियुनक्ति । पुरा रामेत्यादि । अचिन्त्यं—अचिन्त्यवैभवम् । तदेवे प्रदर्श्यते—यथा सोमस्येत्यादि ॥ १ ॥

सोऽहं * रूपमिदं कृत्वा लोकवित्रासनं महत् ।
ऋषीन् वनगतान्, राम! त्रासयामि ततस्ततः ॥ २ ॥

लोकवित्रासनं कृत्वेति । तेजोबलवैभवमहिम्नेति शेषः । त्रासयामि इति । अत्रासयमिति यावत् ॥ २ ॥

ततः स्थूलशिरा नाम महर्षिः कोपितो मया ।
सञ्चिन्वन् विविधं वन्यं रूपेणानेन धर्षितः ॥ ३ ॥

तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभिधायिना ।
'एतदेव नृशंसं ते रूपमस्तु विगर्हितम्' ॥ ४ ॥

एवमुक्तः इत्येवंशब्दार्थः—एतदेवेत्यादि । एतत्—दिव्यं रूपम् । नृशंसं—क्रूरम्, विगर्हितं चैवास्त्वित्यवदत् ॥ ४ ॥

---

* इदं रूपं—रक्षोरूपं वैभवेन कृत्वा—ति. लोकानां भयजनकमिदं रूपं बुद्धिपूर्वकमेव दर्पाल्लीलया गृहीत्वा ऋषीन् अत्रासयम् ।

[1] पराक्रम—ङ.

स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति ।
*अभिशापकृतस्येति तेनेदं भाषितं वचः ॥ ५ ॥
यदा छित्त्वा भुजौ रामः त्वां दहेत् विजने वने ।
तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् ॥ ६ ॥

श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि, लक्ष्मण।

अभिशापकृतस्येति । मत्कर्तृकप्रधर्षणेन त्वत्कृतस्यास्य शापस्य अन्तः कदा मम भवेत्? इति याचितः । तेन मयैवं याचितेनेत्यर्थः । स्वं रूपं कीदृशम्? इत्यतः—विपुलमित्यादि विशेषणत्रयम् ॥ ५–६ ॥

इन्द्र[1]शापादिदं रूपं प्राप्तमेवं रणाजिरे ॥ ७ ॥

एवंवृत्तं मां साक्षात् दनोः पुत्रं विद्धि । ननु शक्रादितुल्यरूपस्य शापवशात् कुत्सिताकारापत्तावपि कुतः कबन्धरूपापत्तिः? इत्यतस्तदाह—इन्द्रशापादिति । तेन इन्द्रेण सह रणाजिरे—युद्धाङ्गणे ॥ ७ ॥

अहं हि तपसोग्रेण पितामहमतोषयम् ।
दीर्घमायुः स मे प्रादात् [2]ततो मां †विभ्रमोऽस्पृशत् ॥

---

* अभिशापशब्देन तन्निमित्तं धर्षणं लक्ष्यते—**गो.** अभिशापः—मिथ्यानिन्दा । मत्कृतमिथ्यानिन्दाफलस्य शापस्येति वा । अनन्तरश्लोकगतं 'श्रिया विराजितं' इत्येतदत्रान्वेतीति भावः । गोविन्दराजेन तु—तर्हि कबन्धरूपप्राप्तिः केन हेतुनेत्यत्राह—श्रियेति—इति व्याख्यातम् । अथवा पूर्वं श्रिया विराजितं दनोः पुत्रं मां विद्धीत्यर्थः ।
† विभ्रमः—अवध्यत्वेऽपि तदधिकक्लेशप्राप्त्यवकाशज्ञानाभावकृतः । अयमर्थः ११ श्लोके व्यक्तः । इयञ्चासुराणां प्रकृतिरेव ।

[1] कोपा—ङ. [2] मानो मां च तदाऽस्पृशत्—ङ.

कथं ते इन्द्रेण युद्धे सामर्थ्यम्? कुपितेन भगवता मारणमकृत्वा कुत एतद्रूपसम्पादनं? इत्यत्राह—अहं हीत्यादि। अभिशापतो घोराकारप्राप्त्यनन्तरं उग्रेण तपसा पितामहमतोषयम्। स्वकुलनित्यारातिविष्णिवन्द्रादिजिगीषयेति शेषः। विभ्रमः—गर्वः ॥ ८ ॥

दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति?
इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् ॥ ९ ॥

तस्य बाहुप्रमुक्तेन वज्रेण [1]शतपर्वणा।
सक्थिनी [2]चैव मूर्धा च शरीरे संप्रवेशितम् ॥ १० ॥

शतपर्वणा—शतधारेण। सक्थिनी—पृष्ठास्थिफलके। शरीरे मध्यदेहे उदरभागे सक्थ्नोः प्रवेशनं, उरोभागे शिरसः प्रवेशनम् ॥१०॥

*स मया याच्यमानः सन् नानयद्यमसादनम्।
पितामहवचः सत्यं तदस्त्विति ममाब्रवीत् ॥ ११ ॥

अथ ऊर्ध्वाधरव्यवहाररहितोऽहं मरणमयाचिषं, तन्न श्रुतवानित्याह—स मयेति। किमर्थं नानयदित्यत्राह—पितामहेत्यादि। मम विषये तत् पितामहवचः सत्यमस्तु। न त्वां मारयामीत्यब्रवीदित्यर्थः ॥ ११ ॥

अनाहारः कथं शक्तः भग्न[3]सक्थिशिरोधरः।
वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुम् ॥ १२ ॥

---

* एतादृशावस्थापेक्षया मरणमेव वरमिति भावनया मरणं याच्यमानः इन्द्रः, तदशक्यमित्याहेति भावः।

[1] नतपर्वणा-ङ. [2] च शिरश्चैव-ज. [3] स्कन्धशिरोधरः-ङ, स्कन्धशिरोमुखः-ज.

एवमुक्तस्तु मे शक्रः बाहू योजनमायतौ ।
*प्रादादास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् ॥ १३ ॥

भग्ने सक्थिनी शिरोधरा च यस्य स तथा । कुक्षाविति । तत्स्थमुख इत्यर्थः ॥ १२-१३ ॥

सोऽहं भुजाभ्यां दीर्घाभ्यां [1]विकृष्यास्मिन् वने चरान् ।
सिंह[2]द्विपमृगव्याघ्रान् भक्षयामि समन्ततः ॥ १४ ॥

चरान्—संचारवतः ॥ १४ ॥

स तु मामब्रवीदिन्द्रो यदा रामः सलक्ष्मणः ।
छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि ॥ १५ ॥
अनेन वपुषा, [3]राम ! वनेऽस्मिन्, [4]राजसत्तम !
यद्यत् पश्यामि [5]सर्वस्य ग्रहणं साधु रोचये ॥ १६ ॥

सर्वस्य ग्रहणं साधु रोचये—न किञ्चिदपि भक्ष्याभक्ष्यबुद्ध्या त्यजेयमित्यर्थः ॥ १६ ॥

†अवश्यं ग्रहणं रामो मन्येऽहं समुपैष्यति ।
‡इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः ॥ १७ ॥
स त्वं रामोऽसि, भद्रं ते, नाहमन्येन, राघव ।
शक्यो हन्तुं यथातत्त्वं एवमुक्तो महर्षिणा ॥ १८ ॥

---

*इदं उरसि चक्षुषोऽप्युपलक्षणम् । पूर्वसर्गे हि १९ श्लोके तथोक्तम् ।
† सर्वस्य ग्रहणे हेतुः—अवश्यमिति—**रा.** एवं सर्वस्यापि प्राप्तस्य ग्रहणाभावे, कतिपयपरित्यागे च, अकस्मात् रामोऽपि न गृहीतः स्यात्, अतश्च तेन बाहुच्छेदोऽपि न स्यादिति भावः । ‡ इमां बुद्धिं पुरस्कृत्य देहन्यासे कृतश्रमो भवामि—विकृतदेहत्यागे कृतोद्योगो भवामि—**गो.** देहन्यासाय सर्वान् पीडयन् जागरूको वर्ते, तदा हि रामेण बाहुच्छेदः स्यादिति भावः । कतकदृष्ट्या तु इमामित्यादि उत्तरान्वयि ।

[1] समाकृष्य—ङ, संक्षिप्यास्मिन्—**ज.** [2] द्वीपि—**ज.** [3] तात—**ज.** [4] रघुसत्तम—**ङ.**
[5] सर्वत्र—**ङ.**

अपि च इन्द्रवाक्यविश्वासात् ऋषिवाक्यविश्वासाच्च अवश्यं रामो मम हस्ते ग्रहणमुपैष्यतीति मन्ये—जानामि। यदेवमतः—इमामित्यादि। त्वदेकसाध्या मद्गतिः इत्युक्तरूपिणीमिमां बुद्धिं पुरस्कृत्य स त्वं राम! मम देहन्यासे—देहपरित्यागे कृतश्रमः—कृतयत्नः भव, ते भद्रमस्तु। अपि च त्वयैव उक्तयत्नः कर्तव्यः। कथं? हे राघव! अहं अन्येन—त्वद्व्यतिरिक्तेन केनापि न हन्तुं शक्यः इति यथातत्त्वं परमार्थतत्त्वमेव महर्षिणा उक्तोऽस्मि ॥१७-१८॥

**अहं हि *मतिसाचिव्यं करिष्यामि, नरर्षभ!**
**मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना ॥ १९ ॥**

ननु किमर्थः त्वद्देहत्यागयत्नो ममेत्यत्राह—अहं हीति। साचिव्यं—बुद्धिसाहाय्यं करिष्यामि, अपि च तद्विषयं मित्रं चोपदेक्ष्यामि, अपि तु युवाभ्यां वह्निना संस्कृतोऽपि भवेयम् ॥ १९ ॥

**एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः।**
**इदं जगाद वचनं [1]लक्ष्मणस्योपशृण्वतः ॥ २० ॥**

एवं मतिसाचिव्यमुक्तो रामस्तु, दहनमपि करिष्ये, मम साचिव्यं कुरु, दग्धेन †त्वया अशक्यवादादित्याशयेनाह—एवमुक्तः इत्यादि। दनुना—दनुसुतेनेत्यर्थः ॥ २० ॥

**रावणेन हृता भार्या मम सीता यशस्विनी।**
**निष्क्रान्तस्य जनस्थानात् सह भ्रात्रा ‡यथासुखम् ॥ २१ ॥**

यथासुखं हृतेत्यन्वयः ॥ २१ ॥

---

* स्वस्य गमनशक्तेरभावादाह—मतिसाचिव्यमिति। † 'युवाभ्यां संस्कृतः मतिसाचिव्यादिकं करोमि' इति तेनोक्ते, दाहानन्तरं कथमयं ब्रूयादिति मन्वानो रामः दाहात्पूर्वमेव तत् पृच्छतीत्यर्थः। सोऽप्युचितं उत्तरं दास्यति—उत्तरत्र २७-२८ श्लोकयोः। ‡ यथासुखं निष्क्रान्तस्य-गो.

[1] लक्ष्मणस्य च पश्यतः-ज.

**नाममात्रं तु जानामि न रूपं तस्य रक्षसः ।**
**निवासं वा प्रभावं वा वयं तस्य *न विद्महे ॥ २२ ॥**

नाममात्रमिति । †आप्तवाक्यादिति शेषः ॥ २२ ॥

**शोकार्तानामनाथानां एवं विपरिधावताम् ।**
**कारुण्यं सदृशं कर्तुं ‡[1]उपकारेण वर्तताम् ॥ २३ ॥**

उपकारेण वर्तताम् वर्तमानानां अस्माकं सदृशं—उचितं कारुण्यं—अनुग्रहं कर्तुमर्हसि ॥ २३ ॥

**काष्ठान्यादाय शुष्काणि काले भग्नानि कुञ्जरैः ।**
**धक्ष्यामस्त्वां वयं, वीर! श्वभ्रे महति कल्पिते ॥ २४ ॥**

दाहसिद्धिविषये त्वया चिन्ता न कार्येत्याह—काष्ठानीति । कल्पिते—सज्जे ॥ २४ ॥

**स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ।**
**कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः ॥ २५ ॥**

कल्याणं—तत्त्वाख्यानरूपमित्यर्थः ॥ १५ ॥

**एवमुक्तस्तु रामेण वाक्यं दनुरनुत्तमम् ।**
**प्रोवाच कुशलो वक्तुं §वक्तारमपि राघवम् ॥ २६ ॥**

---

* न विद्महे, अहं मत्परिजनाश्चेत्यर्थः—गो. वस्तुतः लोकोक्त्या बहुवचनम् । अत एवोत्तरश्लोकेष्वपि बहुवचनम् । † जटायुवचनादिति यावत् । ‡ उपकारेण—तव निजरूपप्राप्त्यर्थेन । § वक्तारमपि राघवं वक्तुं कुशलः—गो. एवं इत्यस्यावृत्त्या एवं वक्तारमपि राघवं उवाच । राघववचसः साक्षादुत्तरदानेऽशक्त्या मध्ये स्वयमेवैवमाहेति वा ।

[1] उपकारे च—ङ.

एवं पृष्टः दाहमेव मे दिव्यज्ञानसाधनं, तत् कुरुत, ततः परं सर्वं वक्ष्यामीत्याह—एवमुक्त इत्यादि ॥ २६ ॥

दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम् ।
यस्तां [1] ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः ॥ २७ ॥

यस्तामिति । सखेति शेषः ॥ २७ ॥

[2] योऽभिजानाति तद्रक्षः तं वक्ष्ये, राम ! तत्परम् ।
अदग्धस्य तु विज्ञातुं शक्तिरस्ति न मे, प्रभो ! ॥ २८ ॥
*राक्षसं तं महावीर्यं सीता येन हृता तव ।
विज्ञानं हि [3] मम भ्रष्टं शापदोषेण, राघव ! ॥ २९ ॥
स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् ।

विज्ञानं—अतीन्द्रियविषयकम् । स्वकृतेनेत्यादि । अनुचितेनेति शेषः ॥ २९ ॥

किन्तु यावन्न यात्यस्तं सविता श्रान्तवाहनः ॥ ३० ॥
तावन्मामवटे क्षिप्त्वा दह, राम ! यथाविधि ।
दग्धस्त्वयाऽहमवटे न्यायेन, रघुनन्दन ! ॥ ३१ ॥
वक्ष्यामि [4] तमहं, वीर ! यस्तं ज्ञास्यति राक्षसम् ।
† तेन सख्यं च कर्तव्यं न्यायवृत्तेन, राघव !
कल्पयिष्यति ते [5] प्रीतः साहाय्यं लघु [6] विक्रमः ॥ ३२ ॥

---

* तं विज्ञातुमिति पूर्वेणान्वयः । † त्वया एवं कथनेऽपि सः मह्यं साहाय्यं कुर्यादित्यत्र कः समाश्वासः ? इत्यत्राह—तेनेत्यादि । तदनुगुणतया त्वया वर्तितव्यमिति भावः ।

[1] वक्ष्यति—ज. [2] इदं कुण्डलितं—ङ. [3] परिभ्रष्टं—ङ, महत् भ्रष्टं—ज.
[4] तं महावीर—ज. [5] वीर—ज. [6] विक्रम—ज.

यः तं राक्षसं ज्ञास्यति, तेन सहायेनेत्यर्थः । न्यायवृत्तेन—सच्चरित्रेण ॥ ३१–३२ ॥

**न हि तस्यास्त्यविज्ञातं त्रिषु लोकेषु, राघव !**
**सर्वान् [1] परिसृतो लोकान् पुराऽसौ * कारणान्तरे ॥ ३३ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे एकसप्ततितमः सर्गः

---

असौ—मया वक्ष्यमाणः । कारणान्तरे—किञ्चिन्निमित्तान्तरे । अलिङ्ग(३३ १/२)मानः सर्गः ॥ ३३ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे एकसप्ततितमः सर्गः

---

* कारणान्तरे—अत्र किष्कि. 10-27 श्लोको द्रष्टव्यः । अत्र गोविन्दराजः—अयं कबन्धः रावणमेव न जानाति, सुग्रीवं तु जानाति । किन्तु तन्नाम न कथितवान् । दाहात्पूर्वं कथने कुत्सितशरीरदहने रामो वैमनस्यं कुर्यादिति—इत्याह । 'न हि तस्यास्त्यविदितं' 'सर्वान् परिवृतो लोकान्' इत्यादिसुग्रीवस्वरूपं जानतः तन्नामापि ज्ञातमेव स्यात् । अतः तदकथने रामोपेक्षाभयमेव हेतुः स्यादिति भावनया तेन तथा व्याख्यातं भाति । वस्तुतस्तु—रामेण सीतापहर्तुः रावणस्यैव स्थानादिकं पृष्टम् (श्लो. २३) । तच्च तेन न ज्ञातम् । यदि च दिव्यज्ञानेन ज्ञात्वा वक्तव्यं, तर्हि दहनमावश्यकम् । अदग्धस्य तं विज्ञातुं शक्तिर्नास्त्येव । 'दाहानन्तरं यदि दिव्यचक्षुषा ज्ञास्यामि, तर्हि वदेयं' इति कबन्धाशयः । ननु तर्हि 'यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं देहमाश्रितः' इत्युक्तिः कथम् ? इति चेत्—नात्रानयोर्हेतुहेतुमद्भावः विवक्षितः । किन्तु वस्तुस्थितिकथनमात्रम् । सूर्यास्तमनस्यातिसन्निहितत्वात् ततः पूर्वमेव दाहस्य कर्तव्यत्वेन, बहुवाक्यप्रतिपादनीयत्वात् विवक्षितांशस्य, अस्तमयात्पूर्वं प्रथमं दहनं कुरु, ततः तन्मित्रं वक्ष्यामीति यथावस्थितकथनमिदं, न तु सुग्रीववृत्तान्तोऽपि दिव्यज्ञानेनैव वक्तव्यमित्यभिप्रायः । दहनात् पूर्वमेव किल बहु वक्ष्यति सुग्रीवमधिकृत्यैव । अतः विलम्बासहत्वत एव 'दग्धः स्वं रूपमास्थितः' इत्युक्तिः । दाहानन्तरं रावणविषयकवृत्तान्ताकथनं तु, तदानीमप्यज्ञानात्, मित्रद्वारैव कार्यस्य साधनीयत्वनियमज्ञानाद्वा स्यादिति न कोऽपि विरोधः ॥

[1] परिसृतो—ङ.

## द्विसप्ततितमः सर्गः

[सीताप्राप्त्युपायकथनम्]

एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ ।
[1]गिरि[2]प्रदरमासाद्य * पावकं विससर्जतुः ॥ १ ॥

अथ संस्कृतेन स्वरूपं प्रत्यापन्नेन रामस्य मित्रोपदेशः । एवमुक्ताविस्यादि । प्रदरं—श्वभ्रम् । आसाद्य—प्राप्य । कबन्धमिति शेषः ॥१॥

लक्ष्मणस्तु महोल्काभिः ज्वलिताभिः समन्ततः ।
चितामादीपयामास स प्रजज्वाल सर्वतः[2] ॥ २ ॥

तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् ।
मेदसा [3]पच्यमानस्य मन्दं दहति पावकः ॥ ३ ॥

स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः ।
विरजे वाससी बिभ्रत् मालां दिव्यां महाबलः ॥ ४ ॥

विरजे—विरजस्के इति यावत् ॥ ४ ॥

ततश्चिताया वेगेन भास्वरो [4]विमलाम्बरः ।
उत्पपाताशु संहृष्टः सर्वप्रत्यङ्गभूषणः ॥ ५ ॥

चिताया उत्पपातेति अन्वयः । सर्वेषु प्रत्यङ्गेषु करचरणादिषु भूषणं यस्य स तथा ॥ ५ ॥

---

* आसाद्य-प्राप्य, तत्र चितां निर्मायेति, कबन्धशरीरं संस्थाप्य चेति शेषः-रा.

[1] झ पुस्तके एतत्स्थाने—"न्यायेन कृत्वा महतीं चितां गिरिगुहोपमाम् । ततः कबन्धमारोप्य चितां ज्वलितचेतसौ । बाहू च सुमहाबाहू योजनायतविभ्रमौ ॥" इति दृश्यते । [2] एतदनन्तरं झ पुस्तके—अधिकं—"तां प्रेक्ष्य सर्वतो दीप्तां चितां दृढधनुर्धरः । उत्स्मयान इदं वाक्यं राघवं लक्ष्मणोऽब्रवीत् ॥ दग्धो जटायुः पूर्वं तु सीतामन्वेषता त्वया । अयं द्वितीयो निर्दग्धः तृतीयं किं नु धक्ष्यसि ॥ महाभ्रशिखरप्रख्यं कबन्धमनलो महान् । अन्तरिक्षं महोल्काभिः आवृणोत् स सहस्रशः ॥" इति दृश्यते । [3] दह्यमानस्य—ङ. [4] विरजाम्बरः-ज.

विमाने भास्वरे तिष्ठन् हंसयुक्ते यशस्करे ।
प्रभया च महातेजाः दिशो दश विराजयन् ॥ ६ ॥
सोऽन्तरिक्षगतो रामं कबन्धो वाक्यमब्रवीत् ।

हंसयुक्ते विमाने इत्यनेन ब्रह्मात्मना रामेण साक्षात् संस्कृतत्वात् जटायुवदस्यापि ब्रह्मलोकावाप्तिः सूचिता ॥ ६ ॥

शृणु, राघव ! तत्त्वेन यथा सीतामवाप्स्यसि ॥ ७ ॥
राम ! षड्युक्तयो लोके याभिः सर्वं विमृश्यते ।

तत्त्वेन—परमार्थतः । उच्यमानामिति शेषः । अथ यत् प्राक् प्रत्यायि, उपायं तद्विषयं मित्रं चोपदेक्ष्यामीति, तन्निर्वर्तयति—षडित्यादि । युक्तिदशोपायाः पर्यायाः । हे राम ! लोके कार्यसिद्धये राज्ञां प्रसिद्धाः षड्युक्तयः—षडुपायाः सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः सन्ति । याभिर्युक्तिभिः सर्वं राज्ञां कृत्यं विमृश्यते—विमृश्य प्राप्यते ॥ ७ ॥

[1] परिभ्रष्टो *दशान्तेन दशाभागेन सेव्यते ॥ ८ ॥

---

*दशा नाम दौरथ्यरूपावस्था, तस्या अन्तः—परिपाकः, तेन परिमृष्टः—संस्पृष्टः पुरुषः दशाभागेन—दशायाः भागः—परिपाकरूपः अंशः यस्य तेन सेव्यते । अस्तु, प्रकृते किमायातं ? तत्राह—दशाभागगत इति । हे राम सलक्ष्मणस्त्वं दशाभागगतः—दुर्दशापन्नः अत एव हीनश्च । कुतः ? यत्कृते—येन कारणेन दारप्रधर्षणं नाम व्यसनं प्राप्तं ; तेन त्वं दशाभागगतः । ततोऽपि किमित्यत्राह—तदिति । दशाभागगतेन त्वया सः—तादृशः—दशाभागगतः कश्चित् सुहृत् कार्यः—गो. यद्वा—षड्युक्तयः—प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावप्रमाणानि ; पार्थसारथिमिश्रैः शास्त्रदीपिकायां युक्तिशब्दस्य प्रमाणपरतया व्याख्यातत्वात् । हे राम लोके षड्युक्तयः—षट्प्रमाणानि सन्ति ; याभिः प्रत्यक्षादिभिः सर्वं वस्तु विमृश्यते—ज्ञाप्यते । सर्वप्रमाणैः क्षीणः पुरुषः क्षीणेन पुरुषेण सेव्यत इत्यर्थः—ती.

[1] परिमृष्टो—ङ, ज.

दशाभागगतो हीनः त्वं हि रामः सलक्ष्मणः।
यत्कृते व्यसनं प्राप्तं त्वया दार[1]प्रधर्षणात् ॥ ९ ॥

ताः सन्ति, किं ततः? इत्यतः—परिभ्रष्ट इति। परिभ्रष्टः—अर्थात् भ्रष्टः राजा दशान्तेन दशानां—उपायानां षण्णां अन्तः तथा तेन—अन्तिमोपायरूपेण दशाभागेन—उपायभागेन मित्रसमाश्रयलक्षणेनैव सेव्यते। प्रकृते त्वं दशाभागगतोऽपि—अन्तिमोपायाश्रययोग्यतां गतोऽपि तेनान्तिमोपायेन, हे राम! सहलक्ष्मणस्त्वं हीनः, यत्कृते यदाश्रयाभावापराधादेव दारप्रधर्षणात् व्यसनं प्राप्तम् ॥

तदवश्यं त्वया कार्यः स सुहृत्, सुहृदां वर!
अकृत्वा हि न ते सिद्धिं अहं पश्यामि चिन्तयन् ॥१०॥

यदेवमतः—तत्—तस्मात् अवश्यं त्वया सुहृत्समाश्रयणं कार्यम्। अवश्यमित्यत्र हेतुमाह—अकृत्वेत्यादि ॥ १० ॥

श्रूयतां, राम! वक्ष्यामि सुग्रीवो नाम वानरः।
भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥ ११ ॥
ऋष्यमूके गिरिवरे पम्पापर्यन्तशोभिते।
*निवसत्यात्मवान् वीरः चतुर्भिस्सह वानरैः ॥ १२ ॥

एवं समाश्रयणोपायं अद्य भ्रष्टदशोचितमुपदिश्य तद्विषयं चोपदिशति—श्रूयतामिति। पम्पायाः पर्यन्ते शोभितः तथा। चतुर्भिरिति। मन्त्रिभिरिति शेषः ॥ ११-१२ ॥

वानरेन्द्रो महावीर्यः [2]तेजोवान् अमितप्रभः।

---

* श्लोकद्वयमेकान्वयि—रा.

[1] प्रधर्षणम्—ङ, ञ.   [2] तेजसा च रविप्रभः—ङ.

सत्यसन्धो विनीतश्च धृतिमान् मतिमान् महान् ॥ १३ ॥

तेजोवानिति । तेजस्वीति यावत् ॥ १३ ॥

दक्षः प्रगल्भः द्युतिमान् महाबलपराक्रमः ।
भ्रात्रा विवासितः, [1]राम ! राज्यहेतो[2]र्महाबलः ॥ १४ ॥
स ते सहायो मित्रं च सीतायाः परिमार्गणे ।
भविष्यति हि ते, राम ! मा च शोके मनः कृथाः ॥१५॥

हि ते इति पदद्वयम् ॥ १५ ॥

भवितव्यं हि यच्चापि न तच्छक्यमिहान्यथा ।
कर्तुं, इक्ष्वाकुशार्दूल ! कालो हि दुरतिक्रमः ॥ १६ ॥

यच्चापि भवितव्यमिति । राज्यभ्रंशवनवासदारापहारादि दुःखं तन्न शक्यमिह संसारे केनापि अन्यथा कर्तुं, *अतः शोके मनः मा कृथाः ॥ १६ ॥

गच्छ शीघ्रमितः, राम ! सुग्रीवं तं महाबलम् ।
वयस्यं तं कुरु क्षिप्रं इतो गत्वाऽथ, राघव ! ॥ १७ ॥
अद्रोहाय समागम्य दीप्यमाने विभावसौ ।

अद्रोहाय—परस्परद्रोहपरिहारार्थमित्यर्थः । दीप्यमाने विभावसौ—तत्सन्निधौ तत्साक्षिकतया तं वयस्यं कुर्विति समसंधिः ॥ १७ ॥

स च ते नावमन्तव्यः सुग्रीवो वानराधिपः ॥ १८ ॥
कृतज्ञः कामरूपी च सहायार्थी च वीर्यवान् ।

---

* अतः शोके मनः मा कृथाः इति शेषः—ति. पूर्वस्थितस्यैवावृत्तिर्वा ॥

[1] वीर—ज. [2] महात्मना—ज.

न तेऽवमन्तव्य इति । अयं तिर्यक् किमनेनेति न त्वया तस्यावमतिः कार्येत्यर्थः । मित्रापेक्षा तस्याप्यस्तीत्याह—सहायार्थीति ॥

*शक्तौ ह्यद्य युवां कर्तुं कार्यं तस्य चिकीर्षितम् ॥ १९ ॥
† कृतार्थो वाऽकृतार्थो वा तव कृत्यं करिष्यति ।

कृतार्थो वेति । त्वया कृतस्वप्रयोजनः, करिष्यमाणस्वप्रयोजनोऽपीत्यर्थः ॥ १९ ॥

‡ स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः ॥ २० ॥
भास्करस्यौरसः पुत्रः वालिना § कृतकिल्बिषः ।

ऋक्षरजसः पुत्र इति । सुग्रीवपिता ऋक्षरजाः । पम्पामटति-तत्तीरे पर्यटति । शङ्कित इति । वालिनमिति शेषः । § कृतकिल्बिषः-कृतवैरः ॥ २० ॥

‖ सन्निधायायुधं क्षिप्रं ऋष्यमूकालयं कपिम् ॥ २१ ॥
कुरु, राघव ! सत्येन वयस्यं वनचारिणम् ।

---

* ननु आवाभ्यामशक्ताभ्यां कस्तस्य सहाय इत्यत्राह—शक्तौ हीति-**ति.** † कृतार्थः—कृतप्रयोजनो वा, अकृतार्थो वा तव कृत्यं—कार्यं करिष्यति। एतेन सुग्रीवस्य सत्यप्रतिज्ञत्वं सूचितम्-**रा.** भवता यावच्छक्ति अद्रोहेण तस्य च्चिकीर्षितं संपादनीयम् । तत्र फलप्राप्तावप्राप्तौ वा तव साहाय्यं तु सोऽपि अद्रोहेण कुर्यादिति भावः । भवदिष्टप्राप्तिस्तु तद्द्वारा भविष्यतीत्यत्र न संशय इति यावत् । ‡ ऋक्षरजसः क्षेत्रज इत्यर्थः-**ति.** भास्करस्य—सूर्यस्यौरसः, ऋक्षरजसः—तदभिधस्य पुत्रः—क्षेत्रजः-**रा.** ऋक्षरजास्तन्मातेत्याहुः-**गो.** 'सुग्रीवं जनयामास तपनस्तपतां वरः' (बाल. 17-10) इति श्लोकोऽत्र स्मर्तव्यः। उत्तरकाण्डीय-प्रक्षिप्तसर्गेषु सुग्रीवाद्युत्पत्तिर्वर्णिता द्रष्टव्या । 75-26 श्लोकश्चात्र द्रष्टव्यः । § कृतकिल्बिषः-कृतव्यथः इति वा । ‖ सख्यं च न केवलमग्निसाक्षिकम् ; आयुधं च सन्निधाप्य कर्तव्य-मित्याह—सन्निधायेति-**गो.** अथवा 'वालिना कृतकिल्बिषः' इति अत्र कथनात्,

अपि च आयुधमपि अग्निसन्निधौ निधाय—निक्षिप्य तेनापि सत्येन च तं वयस्यं कुरु ॥ २१ ॥

स हि स्थानानि सर्वाणि कात्स्न्र्येन कपिकुञ्जरः ॥ २२ ॥
नरमांसाशिनां लोके नैपुण्यादधिगच्छति ।

नरमांसाशिनामिति राक्षसानामित्यर्थः ॥ २२ ॥

न तस्याविदितं लोके किञ्चिदस्ति हि, राघव ! ॥ २३ ॥
*यावत् सूर्यः प्रतपति सहस्रांशुररिन्दम !
स नदीन् विपुलान् शैलान् गिरिदुर्गाणि कन्दरान् ॥२४॥
[1]अन्वीक्ष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति ।

अधिगमिष्यति— ज्ञास्यति ॥ २४ ॥

---

'वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत्' (किष्कि. 2–1) 'ततस्तं भयसंविग्नं वालिकिल्बिषशङ्कितम्' (13) इति वक्ष्यमाणत्वाच्च, भवतां आयुधदर्शनमात्रेण सुग्रीवः भीतः दूरतोऽपसर्पेत्। अतः आयुधौ यत्र कुत्रचित्सन्निधाय—निक्षिप्य गम्यताम्—इति स्याद्वा । तर्हि कथं तौ सायुधावेव गतौ इति चेत्—आयुधदर्शनेन सुग्रीवस्य यद्योद्वेगो न स्यात् तथा गमनस्यैवाभिप्रेतत्वेन, तथैव गमनात् । 'इत्युक्तस्तद्वचः सर्वं विचचार सलक्ष्मणः । क्रुद्धो रामः शरं घोरं संधाय धनुषि क्षुरम्' (अर. 67–8) इति सदा सज्यधनुष्ट्वेनैव रामसञ्चारप्रतीत्या तादृशभयानकाकारपरित्यागेन गमनस्यैवाभिप्रेतत्वात् । सुग्रीवस्तु तादृशमपि रामं दृष्ट्वा हृदयदौर्बल्यात् भीतो बभूव। अत एव हनुमानपि—'न क्रूरदर्शनं क्रूरं नेह पश्यामि वालिनम्' (किष्कि. 2–15) 'अहो शाखामृगत्वं ते व्यक्तमेव प्लवङ्गम' (17) इत्युपहसति । सुग्रीवसख्यं च अग्निसाक्षिकं केवलं कृतवानित्यप्यत्रावधेयम्। सुग्रीवः तादृशभयाक्रान्तो वर्तते इति सूचनं परमोऽत्र भूमिति सारम् ॥ * अत एव उत्तरत्र वानरसंप्रेषणसमये—'अभास्करममर्यादं न जानीमस्ततः परम्' इति सुग्रीवो वदति ॥

[1] अन्विष्य—ञ.

वानरांश्च [1] महाकायान् प्रेषयिष्यति, राघव ! ॥ २५ ॥
* दिशो विचेतुं तां सीतां त्वद्वियोगेन शोचतीम् ।
† [2] स यास्यति वरारोहां [3] निर्मलां रावणालये ॥ २६ ॥

रावणालये शोचतीमित्यन्वयः ॥ २६ ॥

स मेरुशृङ्गाग्रगतामनिन्दितां
प्रविश्य पातालतलेऽपि वाऽऽश्रिताम् ।
प्लवङ्गमानां [4] प्रवरस्तव प्रियां
निहत्य रक्षांसि पुनः प्रदास्यति ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे द्विसप्ततितमः सर्गः

---

अनिन्दितां - निर्मलां इति वचनं रामस्य सीताशुद्धत्वप्रत्यभिज्ञानार्थम् । सार्ध(२८)मानः सर्गः ॥ २७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे द्विसप्ततितमः सर्गः

---

* अनेन ज्ञायते—सर्वदिक्षु रावणालयास्सन्ति । तत्र किंदिक्स्थरावणालये इति ज्ञातुं सर्वदिग्विचयनम्- ति. रा. चौर्येण सीताया आनीतत्वात्, यथा लोके चोरितं वस्तु चोरः न स्वगृहे स्थापयेत्, किन्त्वन्यत्रैव, तथा रावणेन दक्षिणाभिमुखगमनेऽपि कुत्र सीतां निक्षिप्तवानित्यज्ञानात् सर्वदिगन्वेषणम् । † वानरैरन्विष्य रावणालये स्थितां वरारोहां प्रति सः—सुग्रीवः स्वयं यास्यति । स्वयमेव त्वया सह तां मोचयितुं सहकरिष्यतीति भावः । 'निर्मलां' इत्यनेन सीतापरिशुद्धये चिन्तयतो रामस्य समाधानमुच्यते । अस्यैव विवरणं अनन्तरश्लोकः ॥

[1] महाभागान्-ङ. [2] अन्वेष्यति-ज [3] मैथिलीं-ज. [4] ऋषभ-ज.

## त्रिसप्ततितमः सर्गः

### [ऋष्यमूकमार्गकथनम्]

निदर्शयित्वा रामाय सीतायाः [1]परिमार्गणे ।
वाक्यमन्वर्थमर्थज्ञः कबन्धः पुनरब्रवीत् ॥ १ ॥

अथ मार्गोपदेशपूर्वं सुग्रीवावस्थानदेशमुक्त्वा कबन्धस्य निर्याणम् । निदर्शयित्वेत्यादि । परिमार्गण इति । उपायमिति शेषः ॥ १ ॥

एषः, राम! [2]शिवः पन्थाः यत्रैते पुष्पिता द्रुमाः ।
प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोरमाः ॥ २ ॥
जम्बूप्रियालपनसप्लक्षन्यग्रोधतिन्दुकाः ।
अश्वत्थाः कर्णिकाराश्च चूताश्चान्ये च पादपाः ॥ ३ ॥
धन्वना नागवृक्षाश्च तिलका नक्तमालकाः ।
नीलाशोकाः कदम्बाश्च करवीराश्च पुष्पिताः ॥ ४ ॥
*[3]अग्निमुख्या अशोकाश्च सुरक्ताः पारिभद्रकाः ।

धन्वनाः—धवाः । नागवृक्षाः—नागकेसराः । अग्निमुख्याः—अरुष्कराः । सुरक्ताः—रक्तचन्दनाः । पारिभद्रकाः—मन्दाराः ॥ ३-४ ॥

†तानारुह्याथ वा भूमौ पातयित्वा च तान् बलात् ॥ ५ ॥

---

* अग्निमुख्याः—भल्लातकीवृक्षाः । पारिभद्रकाः—निम्बाः-गो. † पातयित्वा—नमयित्वा-गो. उत्तरार्धोच्यमानफलग्रहणशेषतया तानारुह्येत्याद्युच्यत इति प्रतिभाति । उत्तरत्रा(९)प्येवमेव दृश्यते ।

[1] प्रतिपादने-ङ. [2] गिरेः-ङ. [3] अशोकास्त्वतिमुक्ताश्च सुभद्राः पारिभद्रकाः-ङ.

फलान्यमृतकल्पानि भक्षयन्तौ गमिष्यथः ।
तदतिक्रम्य, काकुत्स्थ! वनं पुष्पितपादपम् ॥ ६ ॥

नन्दनप्रतिमं चान्यत् कुरवो ह्युत्तरा इव ।
[1]सर्वकामफला वृक्षाः पादपास्तु मधुस्रवाः ॥ ७ ॥

सर्वे च ऋतवस्तत्र वने चैत्ररथे यथा ।
फलभारानतास्तत्र महाविटपधारिणः ॥ ८ ॥

शोभन्ते [2]सर्वतस्तत्र [3]मेघपर्वतसन्निभाः ।
तानारुह्याथवा भूमौ पातयित्वा यथासुखम् ॥ ९ ॥

फलान्यमृतकल्पानि लक्ष्मणस्ते प्रदास्यति ।
चङ्क्रमन्तौ वरान् देशान् शैलाच्छैलं वनाद्वनम् ॥ १० ॥

ततः पुष्करिणीं वीरौ पम्पां नाम गमिष्यथः ।
*अशर्करामविभ्रंशां समतीर्थामशैवलाम् ॥ ११ ॥

राम! सञ्जातवालूकां कमलोत्पल[4]शालिनीम् ।

(समे—समभूमौ?) चङ्क्रमन्तौ—चङ्क्रममाणाविति यावत् । पुष्करिणीं—नदीमित्यर्थः । अविभ्रंशां—शैवालाद्यश्लेषतः पादादिभ्रंशाहेतुभूताम् । समतीर्थां—समावताराम् । सञ्जातवालूकामिति दीर्घः छान्दसः ॥ १०–११ ॥

---

*अविभ्रंशां—शैवालासम्बन्धेन पादभ्रंशाहेतुम्—**ति.** न विभ्रंशः—अधः पतनकारकः कर्दमः तीरे यस्य ताम्-**रा.** अविभ्रंशां—अशिथिलतटाम् । समतीर्थां—अवतारस्थले अतिनिम्नत्वात्यगाधत्वरहितां—**गो.**

[1]सर्वकालफला यत्र—**ज.** [2]तरव—**ङ.** [3]महापर्वत—**ङ.** [4]मालिनीम्—**ङ,** शोभिताम्—**ज.**

तत्र हंसाः *प्लवाः क्रौञ्चाः कुरराश्चैव, राघव! ॥ १२ ॥
वल्गुस्वना निकूजन्ति पम्पासलिल[1]गोचराः ।

प्लवाः—मण्डूकाः ॥ १२ ॥

नोद्विजन्ते नरान् दृष्ट्वा [2]वधस्याकोविदाः [3]शुभाः ॥१३॥
घृतपिण्डोपमान् स्थूलान् तान् द्विजान् भक्षयिष्यथः ।

वधस्य अकोविदाः—वधमजानाना इत्यर्थः । द्विजान्—पक्षिणः ॥ १३ ॥

रोहितान् [4]चक्रतुण्डांश्च [5]नडमीनांश्च, राघव! ॥ १४ ॥
पम्पायामिषुभिर्मत्स्यान् तत्र, राम! वरान् हतान् ।
निस्त्वक्पक्षा न् †अयस्तप्तान् ‡[6]अकृशानेककण्टकान् ॥
तव भक्त्या समायुक्तो लक्ष्मणः संप्रदास्यति ।

रोहितः—पितृप्रियः मत्स्यभेदः । चक्रतुण्डाः—चक्राङ्गाः मत्स्याः । 'नळमीनः चिलिचिमः चक्राङ्गः' । वरान्—श्रेष्ठान् । अयस्तप्तान्—अयश्शूलाग्रप्रोततया तप्तान्-पक्वानित्यर्थः । कृशाः अनेककण्टकाश्च येषां न विद्यन्ते ते, अकृशानेककण्टकाः ॥ १४-१५ ।

---

*प्लवाः—मण्डूकाः, हंसभेदा वा-गो. †अयस्तप्तान्—अयमा वह्नौ तप्तान्—परिपक्वान् यान् भक्ष्यान् मूलफलसमूहान् तव भक्त्या प्रदास्यति, तान् द्विजान् पक्षिणः न रोहितादींश्च भक्षयिष्यथः भोजयिष्यथः-रा. ‡अकृशानेककण्टकान् कृशाः—कुशवत्तीक्ष्णाः अनेककण्टकाः येषां न विद्यन्ते ते तथोक्ताः-ती.

[1] वासिनः-ङ. [2] भयस्या-ङ. [3] पुरा-ज. [4] वक्र-ङ. [5] नल-ज. [6] अकुशा-ङ.

*भृशं ते खादतो मत्स्यान् पम्पायाः पुष्प[1]सञ्चये ॥१६॥
पद्मगन्धि शिवं वारि [2]सुखशीतमनामयम् ।
उद्धृत्य [3]स तदाऽक्लिष्टं रौप्यस्फटिकसन्निभम् ॥ १७ ॥
असौ पुष्करपर्णेन लक्ष्मणः पाययिष्यति ।

पुष्पसंचय——पद्मादिपुष्पसमूहमध्ये वर्तमानं, अत एव सुगन्धि, आक्लिष्टं—मलादिकश्मलरहितम् । पुष्करपर्णेनेति । पद्मपत्रेण गृहीत्वेति शेषः ॥ १६-१७ ॥

स्थूलान् गिरिगुहाशय्यान् [4]वराहान् वनचारिणः ॥१८॥
[5]सायाह्ने विचरन् राम ! दर्शयिष्यति लक्ष्मणः ।
अपां लोभादुपावृत्तान् [6]वृषभानिव नर्दतः ॥ १९ ॥
[7]रूपान्वितांश्च पम्पायां द्रक्ष्यसि त्वं नरोत्तम !

गिरिगुहायां शय्या-शयनं येषां ते तथा ॥ १८-१९ ॥

सायाह्ने विचरन्, राम ! [8]विटपी माल्यधारिणः ॥ २० ॥
[9]पद्मषण्डयुतं स्वादु कूजत्पक्षिगणैर्युतम् ।
[10]शीतोदकं च पम्पायाः दृष्ट्वा शोकं विहास्यसि ॥ २१ ॥

विटपी । व्यत्ययात् प्रथमैकवचनम् ; विटपिन इति यावत् । माल्यानि—पुष्पाणि साधु धरन्तीति तथा । दृष्ट्वेत्युत्तरेण सम्बन्धः ॥

---

* पुष्पसञ्चये—कमलपुष्पसमूहसमीपे । मत्स्यान्—मत्स्यत्वेन प्रतीयमानान्, फलादीनित्यर्थः, भृशं खादते पक्ष्यादये पाययिष्यति—रा.

[1] संयुतम—ङ. [2] स्वादु-ङ. [3] सततक्लिष्टं—ङ. [4] वानरान्-ज. [5] इदमर्धं न—ङ. [6] वृषभान् महिषांस्तथा—ङ. [7] स्थूलान् पीतांश्च—ज. [8] विटपीन्—ङ. [9] इदमर्धं न—ङ. [10] शिवोदकं—ज.

[1]सुमनोभिश्चितांस्तत्र तिलकान् नक्तमालकान् ।
उत्पलानि च फुल्लानि पङ्कजानि च, राघव ! ॥ २२ ॥
न तानि कश्चिन्माल्यानि [2] तत्रारोपयिता* नरः ।
न च वै [3]म्लानतां यान्ति न च शीर्यन्ति, राघव ! ॥

तत्र कश्चिदपि नरः तानि माल्यानि नारोपयिता—गृहीत्वा ग्रथिता न । महावनत्वात् पुष्पबाहुल्याच्च ॥ २३ ॥

मतङ्गशिष्याः तत्रासन् ऋषयः सुसमाहिताः ।
तेषां भाराभितप्तानां वन्यमाहरतां गुरोः ॥ २४ ॥
ये प्रपेतु[4]र्महीं तूर्णं शरीरात् स्वेदबिन्दवः ।
† तानि जातानि माल्यानि मुनीनां तपसा तदा ॥ २५ ॥
स्वेदबिन्दुसमुत्थानि न [5]विनश्यन्ति, राघव !

अम्लानाशीर्णकारणं—मतङ्गशिष्या इत्यादि । भाराभितप्तानां—गुर्वर्थमाह्रियमाणवन्यपदार्थभारेण श्रान्तानामित्यर्थः । तानि माल्यानीति विधेयापेक्षया नपुंसकत्वम् ॥ २४–२५ ॥

[6]तेषामद्यापि तत्रैव दृश्यते परिचारिणी ॥ २६ ॥
‡ श्रमणी शबरी नाम, काकुत्स्थ ! चिरजीविनी ।
§ त्वां तु धर्मे स्थिता नित्यं [7]सर्वभूतनमस्कृतम् ॥ २७ ॥

---

* मतङ्गशिष्यप्रभावाद्वा अनारोपणम् गो. † स्वेदबिन्दवः वायुना वृक्षोपरि नीताः माल्यानि जातानीत्याशयः--गो. 'न विशीर्यन्ति' इति अविशरणस्योक्तत्वादेवं व्याख्यातं स्यात् । ‡ मतङ्गस्य, तच्छिष्याणां वृत्तत्वेऽपि शबर्या अवस्थाने बीजं—चिरजीविनीति । बहुवृद्धेति यावत् । तस्याः सन्यासेऽनधिकारात् श्रमणीत्वम् । § या दृश्यते, सा त्वां दृष्ट्वा—इत्यन्वयः । श्लोकद्वयमेकान्वयम् ।

[1] सुमनोभिश्चितास्तत्र तिलका नक्तमालकाः-ञ. [2] तत्र गोपयिता-ङ. [3] ग्लानतां-ञ. [4] महीरेणौ-ङ. [5] विशीर्यन्ति-ङ. [6] तेषां गतानामद्यापि-ङ. [7] सर्वलोक-ङ.

दृष्ट्वा देवोपमं, राम! [1]देवलोकं गमिष्यति।

शबरीत्याख्या श्रमणी—तापसीति विशेषणम्। नामशब्दः प्रसिद्धौ। त्वां दृष्ट्वा देवलोकं गमिष्यति—योगसिद्धत्वतः त्वां त्वदायतिं चावगत्य त्वत्सूचनानन्तरं त्वदनुग्रहादहमिव आदिदेवब्रह्मलोकं जिगमिषतीत्यर्थः ॥ २६–२७ ॥

[2]ततस्तद्राम! पम्पायास्तीरमाश्रित्य पश्चिमम् ॥ २८ ॥
आश्रमस्थानमतुलं गुह्यं, काकुत्स्थ! पश्यसि।

आश्रमस्थानं—आश्रमप्रदेशम्। गुह्यं–गुप्तम् ॥ २८ ॥

न तत्राक्रमितुं नागाः शक्नुवन्ति तमाश्रमम् ॥ २९ ॥
[3]विविधास्तत्र वै नागाः वने तस्मिंश्च पर्वते।
ऋषेस्तस्य मतङ्गस्य *[4]विधानात्तच्च काननम् ॥ ३० ॥
[5]मतङ्गवनमित्येव विश्रुतं, रघुनन्दन!।
तस्मिन् नन्दनसङ्काशे देवारण्योपमे वने ॥ ३१ ॥
नानाविहगसङ्कीर्णे रंस्यसे, राम! निर्वृतः।

नागाः–गजाः। देवारण्यम्–चैत्ररथादिरूपं नानाप्रकारम् ॥

---

*मतङ्गस्य विधानात्—प्रभावात् नागाः न संचरन्तीत्यर्थः–**ति.** मतङ्गस्य ऋषेः विधानात्–निर्माणात्–**गो.**, **रा.** तन्निर्मितत्वात्—मतङ्गवनमिति विश्रुतमित्यर्थः।

[1] स्वर्गलोकं–**ङ.** [2] ततस्त्वं राम–**ङ.** [3] इदमर्धं कुण्डलितं–**ज.** [4] प्रभावा–**ङ.**
[5] इदमर्धं कुण्डलितं–**ङ.**

*ऋष्यमूकश्च पम्पायाः पुरस्तात् पुष्पितद्रुमः ॥ ३२ ॥
सुदुःखा[1]रोहणो † नाम ‡ शिशुनागाभिरक्षितः[2] ॥
उदारो ब्रह्मणा चैव पूर्वकाले विनिर्मितः ॥ ३३ ॥

पम्पाया इति । पम्पातीरवर्तिमतङ्गाश्रमादित्यर्थः । सुदुःखेनारोहणं यस्य स तथा । शिशुभिः नागैः—सर्पैः अभिरक्षितः तथा । अयमेव दुरारोहत्वे हेतुः । एनं ऋष्यमूकं पापकर्मा नाधिरोहतीत्यत्र हेतुः—उदारः इत्यादि । प्रशस्त इत्यर्थः । तत्र हेतुः—ब्रह्मणेत्यादि । पूर्वकाले सर्गादिकाले इत्यर्थः । सर्वस्य च ब्रह्मनिर्मितत्वेऽपि भूयोगतिर्विज्ञस्यते विशेषणेन । विधैश्वर्यतपःप्राधान्येन सृष्ट इत्यर्थः । अतः तन्मूलाऽतिशयः प्रदर्श्यते ॥ ३३ ॥

शयानः पुरुषः, राम! तस्य शैलस्य मूर्धनि ।
यत् स्वप्ने लभते वित्तं [3]प्रबुद्धोऽप्यधिगच्छति ॥ ३४ ॥

शयान इत्यादि । प्रबुद्धोऽप्यधिगच्छतीति । स्वप्ने लब्धं जाग्रत्यपि लब्धमेवावतिष्ठत इत्यर्थः ॥ ३४ ॥

[4]न त्वेनं विषमाचारः पापकर्माधिरोहति ।
यस्तु तं विषमाचारः पापकर्माधिरोहति ॥ ३५ ॥
तत्रैव प्रहरन्त्येनं सुप्तमादाय राक्षसाः ।

तत्रैव—पर्वतमूर्धन्येवेत्यर्थः ॥ ३५ ॥

---

* ऋष्याः – मृगविशेषाः मूकाः— निश्शब्दा भवन्ति यस्मिन् स ऋष्यमूक -गो.
† नामशब्दः प्रसिद्धिवाची । ‡ शिशुनागः—बालसर्पैः, बालगजैश्च रा. अत्र नागाः गजा एव–गो. शिशुनागाः—देवयोनिविशेषा इति केचित् ।

[1] रोहणश्चैव–ज. [2] एतदनन्तरं—महात्मभिर्महायज्ञैः स्तोत्रमन्त्रैर्द्विजातिभिः—इत्यधिकं–ङ. [3] तत्प्रबुद्धोऽधि–ङ. [4] इदं अर्धं कुण्डलितं-ज.

तत्रापि शिशुनागानां आक्रन्दः श्रूयते महान् ॥ ३६ ॥
क्रीडतां, राम! पम्पायां [1] मतङ्गारण्यवासिनाम् ।

[2] सक्ता रुधिरधाराभिः *[3] संहत्य परमद्विपाः ॥ ३७ ॥
प्रचरन्ति पृथक् कीर्णाः मेघवर्णाः तरस्विनः ।

शिशुनागाः—बालगजाः । शिशुनागानां बालगजानां रुधिरधाराभिः—ईषद्रक्तमदधाराभिः सक्ताः—संबद्धाः । सक्ता रुधिरधाराभिरिति पाङ्क्तः पाठः । संहत्य—संभूय चरन्ति । पृथक्—प्रकीर्णाः चरन्ति ॥ ३६-३७ ॥

ते तत्र पीत्वा पानीयं विमलं [4] शीतमव्ययम् ॥ ३८ ॥

[5] अत्यन्तसुखसंस्पर्शं सर्वगन्धसमन्वितम् ।
निर्वृताः संविगाहन्ते वनानि वनगोचराः ॥ ३९ ॥

ऋक्षांश्च द्वीपिनश्चैव नीलकोमलकप्रभान् ।
†[6] रुरूनपेतापजयान् दृष्ट्वा शोकं [7] जयिष्यसि ॥ ४० ॥

---

*संहृत्य—अन्योन्यं प्रहृत्य रुधिरधाराभिः सिक्ताः, अत एव पृथक्कीर्णाश्चरन्ति–गो. पृथक्कीर्णाः—विजातीयेभ्यो भिन्नाः–रा.   † अपेतापजयान्—जयशीलान्–गो. अपेतान्—मनुष्यं दृष्ट्वा पलायितान्। अजयान्—प्राणिजयहीनान्, अनेनाक्रूरतोक्ता–ति. उपेतान्—वधशङ्काया अभावेन समीपं प्राप्तान्, अजयान्—मनुष्यजयरहितान्–रा.

[1] मतङ्गाश्रम–ज.   [2] सिक्ता–ङ.   [3] संहृत्य–ङ.   [4] चारु शोभनम्–ज.
[5] इदं अर्धं कुण्डलितं–ङ. [6] रुरून् गतभयांश्चैव, रुरूनपेतानजयान्, रुरूनुपेतानजयान्–ङ.
[7] प्रहास्यसि–ज.

राम! तस्य तु शैलस्य [1] महती शोभते गुहा।
* शिलापिधाना, काकुत्स्थ! दुःखं चास्याः प्रवेशनम्॥

ऋष्यमूकस्यासाधारणचिह्नोपदेशः—राम तस्य त्वित्यादि॥

[2] तस्या गुहायाः प्राग्द्वारो महान् शीतोदको ह्रदः।
फलमूलान्वितो रम्यः † नाना[3] मृगसमावृतः॥ ४२॥
तस्यां वसति [4] सुग्रीवः चतुर्भिः सह वानरैः।
‡ कदाचिच्छिखरे तस्य पर्वतस्या[5]पि तिष्ठति॥ ४३॥

कदाचित् तस्य शिखरे तिष्ठति। अपिशब्दात् अधश्च तिष्ठति॥

कबन्धस्त्वनुशास्यैवं तावुभौ रामलक्ष्मणौ।
स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्यवान्॥ ४४॥
तं तु खस्थं [6] महाभागं [7] कबन्धं रामलक्ष्मणौ।
§ [8] प्रस्थितौ त्वं व्रजस्वेति वाक्यमूचतुरन्तिके॥ ४५॥

---

* शिलापिधानेति गुहानामेति ज्ञातव्यम्—ती. शिला पिधानं—आच्छादनं यस्याः सा—रा., गो. गुहाद्वारे महती शिला आवृत्य वर्तत इति भावः। एतेन गुहायाः सावधानान्वेषणीयत्वं बोध्यते। † नानानगेति पाठे—नगाः—वृक्षाः। ‡ कदाचित् गुहायां तिष्ठति, कदाचित् पर्वतस्य शिखरेऽपि तिष्ठति—रा. कदाचित् भूमाविति सिद्धम्—गो. 'वालिना कृतकिल्बिषः' इति कथनेन भयात् सदा गुहायामेव स्यादिति मत्वा तत्रान्विष्य तत्रादर्शनमात्रेण न तूष्णीं स्थातव्यं, गुहा तु वासस्थानं, बहिरपि अन्वेषणीयः त्वया—इति भावेन गुहायां वसति, शिखरेऽपि कदाचित्तिष्ठतीत्युच्यते। § प्रस्थितौ सन्तौ—गो. अथवा लोक इव 'वयं प्रस्थितौ, त्वमपि व्रज' इत्यर्थः।

[1] महतः शोभना—ङ. [2] तस्यां गुहायां वृद्धायां—ङ. [3] नग—ज. [4] धर्मात्मा सुग्रीवः—ज. [5] वतिष्ठते—झ. [6] महाबाहुं—ङ. [7] तावुभौ—ज. [8] प्रस्थितः—ङ.

प्रस्थितौ त्वं व्रजस्वेति। त्वद्वचनावलम्बनेन आवां सुग्रीवं गच्छावः। त्वं च पुण्यलोकं व्रजस्व—व्रज इति अन्तिके समीपे वर्तमानं देवभूतमूचतुः ॥ ४५ ॥

गम्यतां कार्यसिद्ध्यर्थं इति तावब्रवीत् स च।
सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थितः तदा ॥ ४६ ॥

स चेति। ताभ्यां कृतानुमतिकः स देवोऽपीत्यर्थः ॥ ४६ ॥

स तत् कबन्धः प्रतिपद्य रूपं
वृतः श्रिया [1] भास्करतुल्यदेहः।
* निदर्शयन् [2] राममवेक्ष्य खस्थः
सख्यं कुरुष्वेति तदाऽभ्युवाच ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे त्रिसप्ततितमः सर्गः

———

उक्तार्थस्योपसंहारेण वादः—स तदित्यादि। अगर्व(४३ १/२ ?)-मानः सर्गः ॥ ४७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे त्रिसप्ततितमः सर्गः

———

## चतुःसप्ततितमः सर्गः

[ ऋष्यमूकप्रस्थानं शबरीदर्शनं च ]

तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने।
[3] प्रतस्थतुर्दिशं गृह्य प्रतीचीं नृवरात्मजौ ॥ १ ॥

---

* वि.छिद्दूरं गत्वा पुनः राममवेक्ष्य सख्यं कुरुष्वेत्युवाच—ति. वस्तुतस्त्वयं श्लोकः आहत्यवादरूपः सुस्पष्टः ॥

[1] भास्वरसर्वदेहः—ज. [2] राममुदारवीर्य—ङ. [3] आतस्थतु—ज.

अथ शबरीसंदर्शनपूर्वं तस्याः ब्रह्मलोकप्रदानम् । तौ कबन्धे-नेत्यादि । यः कथितः, तं कथितं मार्गमिति योजना ॥ १ ॥

तौ शैलेष्वा[1]चितान् वृक्षान् * क्षौद्रकल्प[2]फलान् बहून् ।
वीक्षन्तौ जग्मतुः द्रष्टुं सुग्रीवं रामलक्ष्मणौ ॥ २ ॥

आचितान्—आहृतान् ॥ २ ॥

कृत्वा च शैलपृष्ठेषु तौ वासं रघुनन्दनौ ।
पम्पायाः पश्चिमं [3]तीरं राघवावुपतस्थतुः ॥ ३ ॥

तौ पुष्करिण्याः पम्पायाः तीरमासाद्य पश्चिमम् ।
अपश्यतां ततस्तत्र [4]शबर्याः रम्यमाश्रमम् ॥ ४ ॥

तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतम् ।
सुरम्यमभिवीक्षन्तौ शबरीमभ्युपेयतुः ॥ ५ ॥

तौ तमाश्रमं—शबर्याश्रममित्यर्थः ॥ ५ ॥

तौ च दृष्ट्वा तदा सिद्धा समुत्थाय कृताञ्जलिः ।
रामस्य पादौ जग्राह लक्ष्मणस्य च धीमतः ॥ ६ ॥

---

* क्षौद्रं—मधु, तत्तुल्यरसफलवत इत्यर्थः ॥

[1] चितानेकान्–ङ. [2] फलद्रुमान्–ङ. [3] देशं–ङ. [4] शबरीमाश्रमस्थिताम्–ङ.

पाद्यमाचमनीयं च सर्वं प्राादाद्यथाविधि ।

सिद्धा — सिद्धयोगा ॥ ६ ॥

तामुवाच ततो रामः श्रमणीं *[1] शंसितव्रताम् ॥ ७ ॥

कच्चित्ते निर्जिता विघ्नाः ? कच्चित्ते वर्धते तपः ?
कच्चित्ते [2] नियतः कोपः आहारश्च, तपोधने ! ॥ ८ ॥

कच्चित्ते नियमाः प्राप्ताः ? कच्चित्ते मनसः सुखम् ?
कच्चित्ते गुरुशुश्रूषा सफला ? चारुभाषिणि ! ॥ ९ ॥

विघ्नाः- तपोविघ्नाः कामादयः । कोपः नियतः — निगृहीतः । कच्चित् आहारश्चेति । नियत इत्यनुकर्षः ॥ ८–९ ॥

रामेण तापसी पृष्टा सा सिद्धा सिद्धसंमता ।
शशंस शबरी वृद्धा रामाय [3]प्रत्युपस्थिता ॥ १० ॥
अद्य प्राप्ता तपस्सिद्धिः तव सन्दर्शनान्मया ।

अद्य प्राप्ता तपस्सिद्धिरिति उपचारवत् शबर्याः परमार्थ-दृशा वादः । तथा अग्रेऽपि ॥ १० ॥

अद्य मे सफलं [4] जन्म गुरवश्च सुपूजिताः ॥ ११ ॥

---

* शंसितव्रतां—तीक्ष्णव्रताम् । स्वव्रतपरिपालनेऽतिजागरूकामिति यावत् ।

[1] धर्मसंस्थिताम्–ज. [2] निर्जितः–ङ. [3] प्रत्यवस्थिता–ज. [4] तप्तं–ङ.

अद्य मे सफलं [1] तप्तं *[2] स्वर्गश्चेह भविष्यति ।
त्वयि देववरे, राम! पूजिते, पुरुषर्षभ! ॥ १२ ॥

स्वर्गः—परमः । देववरे—देवरत्ने ब्रह्मणीत्यर्थः ॥ १२ ॥

[3] चक्षुषा तव सौम्येन पूताऽस्मि, रघुनन्दन!
गमिष्याम्यक्षयान् लोकान् त्वत्प्रसादादरिन्दम! ॥ १३ ॥

त्वत्प्रसादात् अक्षयान् लोकान् गमिष्यामीति—ब्रह्मणः तवानुमत्या सर्वाविवादोऽक्षयत्वादिस्वभावान् ब्रह्मलोकान् गमिष्यामीत्यर्थः ॥ १३ ॥

चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः ।
इतस्ते दिवमारूढाः यानहं पर्यचारिषम् ॥ १४ ॥

चित्रकूटं त्वयि प्राप्ते इति । त्वदासक्तिवैभवमात्रादेवेत्यर्थः । इतस्त इति । अस्मादाश्रमादित्यर्थः । त इति के? इत्यतः यानित्यादि ॥ १४ ॥

तैश्चाहमुक्ता धर्मज्ञैः महाभागै[4]र्महर्षिभिः ।
आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ॥ १५ ॥
स ते प्रतिगृहीतव्यः सौमित्रिसहितोऽतिथिः ।
तं च दृष्ट्वा वरान् लोकान् अक्षयांस्त्वं गमिष्यसि ॥ १६

---

* स्वर्ग:—ब्रह्मलोक:–ति.

[1] जन्म–ङ. [2] स्वर्गश्चैव–ङ. [3] तवाहं चक्षुषा राम पूता सौम्येन मानद–ङ, ज. [4] महात्मभि:–ङ.

आगमिष्यति ते इति। अनुग्रहायेति शेषः। स त इति। त्वयेति यावत्। तं च दृष्ट्वेति। अस्माकं शुश्रूषाजनितादृष्टमिव रामरूप-ब्रह्मापरोक्षसाक्षात्कारजमदृष्टमपि सम्पाद्येत्यर्थः। वरान् अक्षयान् लोकान् इति विशेषणाभ्यां इह 'लोक' इति ब्रह्मलोकः सुस्पष्टः, अन्यत्र तद्विशेषणयोर्मनसाऽप्यशंक्यत्वात् ॥ १५-१६ ॥

[1] एवमुक्ता महाभागैः तदाऽहं पुरुषर्षभ।
*मया तु विविधं वन्यं संचितं, पुरुषर्षभ ॥ १७ ॥

तवार्थे, पुरुषव्याघ्र! पम्पायास्तीरसंभवम्।
एवमुक्तः स धर्मात्मा शबर्या शबरीमिदम् ॥ १८ ॥

राघवः प्राह †विज्ञाने तां नित्यमबहिष्कृताम्।

---

* संचितं—सम्यक् परीक्ष्य माधुर्ययुतं संचितमित्यर्थः। तदुक्तं पाद्मे 'फलानि च सुपक्वानि मूलानि मधुराणि च। स्वयमास्वाद्य माधुर्यं परीक्ष्य च परीक्ष्य च ॥ पश्चान्निवेदयामास राघवाभ्यां दृढव्रता। फलान्यास्वाद्य काकुत्स्थः तस्यै मुक्तिं परां ददौ' इति-ति. तत्तत्फलजातीयमाधुर्यं परीक्ष्य स्थापितमिति संप्रदायः-गो.

† जात्या हीनामपि आचार्यप्रसादलब्धब्रह्मज्ञानाम्-गो. विज्ञाने—आगतानागत-ज्ञाने-ती. विशिष्टं ज्ञानं येषां, तेषां सम्बन्धः यस्याः तत्सम्बोधनं—हे विज्ञाने। तां नित्यमबहिष्कृतां—भोजनादिव्यवहारादिति शेषः। तद्दत्तमाहाराद्यङ्गीकृत्य चेति शेषः इत्यन्ये-ति.

[1] इदं अर्धं नास्ति-ङ.

नित्यं विज्ञाने अबहिष्कृतां इति । वाचक्नवीमैत्रेय्यादिवत् विरक्तजकुलस्त्रीत्वात् ब्रह्मविद्यायामप्यधिकारस्य अविवादात् । तच्च श्रीबृहदारण्यमङ्गलाचरणे श्रीहंसभाष्ये च प्रतिपादितम् ॥ १८ ॥

* दनोः सकाशात् तत्त्वेन प्रभावं ते [1] महात्मनाम् ॥१९॥

श्रुतं प्रत्यक्षमिच्छामि संद्रष्टुं यदि मन्यसे ।

महात्मनामिति । त्वदाचार्याणामिति शेषः । प्रत्यक्षमिच्छामीति । कर्तुमिति शेषः । संद्रष्टुं यदि मन्यसे इति । संदर्शयितुं यदि योग्यं मन्यसे इत्यर्थः ॥ १९ ॥

एतत्तु वचनं श्रुत्वा रामवक्त्राद्विनिःसृतम् ॥ २० ॥

शबरी दर्शयामास तावुभौ तद्वनं महत् ।

पश्य † मेघघनप्रख्यं मृगपक्षिसमाकुलम् ॥ २१ ॥

मतङ्गवनमित्येव विश्रुतं, रघुनन्दन !

मेघघनप्रख्यं—मिह सेचने, उणादिः, बाहुलकात् घत्वम्, वर्षुकघनवत् नीलाभमित्यर्थः । मतङ्गवनमिति तत् स्वभूतं तत्तपोमहिम-नित्यरक्षितं चेत्यर्थः ॥ २१ ॥

---

* दनोः सकाशात्—दनोः पुत्रस्य मुखतः श्रुत महात्मनां प्रभावं प्रत्यक्षं संद्रष्टुमिच्छामि । यदि मन्यसे—यदीच्छसीति यावत् । † मेघघनप्रख्यं—निबिड-मेघसदृशं—रा. घनमेघसदृशं—गो.

[1] महात्मनः—ङ.

इह ते भावितात्मानः गुरवो मे, [1]महाद्युते ! ॥ २२ ॥
जुहवांचक्रिरे †[2]नीडं मन्त्रवन्मन्त्रपूजितम् ।

इह ते इति । प्रसिद्धाः इत्यर्थः । मन्त्रपूजितम् । श्रीमद्ब्रह्ममहामात्रकपालपञ्जरादिमहान्यासमन्त्रैः श्रीमद्ब्रह्मरसेशानदेवगुह्यहृदयतारान्तपञ्चब्रह्मविद्याभिश्च नित्यन्यासपूजनं न्यासस्यैव साक्षात् स्थूलोपब्रह्मब्रह्मपूजात्वं दर्शयति—

"अक्षतद्रोलकं विंशत्कुक्ष्युरोव्यञ्जनं दश ।
सन्ध्याष्षडङ्गं मरुतः स्वरा आत्माक्षरे चयताम् "

इति । अस्यार्थः सत्संप्रकाशभाष्यादवगन्तव्यः । मन्त्रपूजितं नीडं मन्त्रवदेव यथावत् साधितब्रह्ममेधाग्नौ—

'वाचे पुरुषं, प्रजापतये पुरुषम्'

इत्याद्युपनिषदुपदिश्यमानब्रह्ममयप्रधानाहुतिमन्त्रतः इह वने जुहवाञ्चक्रिरे ॥ २२ ॥

*इयं प्रत्यक्स्थली वेदिः यत्र ते [3]मे सुसत्कृताः ॥ २३ ॥
पुष्पोपहारं कुर्वन्ति श्रमादुद्वेपिभिः करैः ।

---

* प्रत्यक्स्थली—प्रत्यक्प्रदेशे स्थलीभूता प्राक्प्रदेशे पश्चिमाभिमुखविष्णुस्थानत्वेन प्रत्यङ्निम्नेत्यर्थः । वेदिः—देवपूजास्थानं इयं, अवलोक्यतामिति शेषः । वेदिरिति जात्येकवचनम्, उत्तरश्लोके बहुवचनप्रयोगात्, बहूनां बहुवेदिसंभवाच्च—गो.

[1] महामते—ङ.    [2] तीर्थं—ङ.    [3] पुरुषर्षभाः—ङ.

इयं इत्यादि।

"उद्धृत्यापां त्वेमनाद्यै रक्षाः अप्सु विलापयेत्।

चतुर्मृदापूर्य कुण्डान् अग्रे स्थाप्याद्वदेवताः"

काशीयमष्टदिक्कोशा" इति श्रुतिरहस्योपदिष्टरीत्या भस्मोद्धारादिदेवतास्थापनान्तशिष्यकृत्यसंपादनाय स्वाचार्यैः स्थापिततया, मया यत्र ते मद्गुरवः यथोक्तभस्मोद्धारादिदेवतास्थापनान्तोत्तरकृत्यसाधनेन सुपत्कृता अभवन्, यत्र च महाश्मशानप्रसिद्धसाक्षात्काशीश्रुतेः उद्वेपिभिः—उद्वेपवाद्भिः करैः उपचितं पुष्पराशिभिः पुष्पोपहारं कुर्वन्ति, ब्रह्मविद्यासिद्धिकामाः सर्वे योगिनः प्रत्यक्स्थरूप्यारूप्या प्रत्यगात्मनः साक्ष द्दहरन्यासपूर्वकसाक्षात्सायुज्यसिद्धिस्थलीत्वात् प्रत्यक्स्थरूप्यारूप्या ब्रह्ममेघवेदिरियं भवति ॥ २३ ॥

तेषां तपःप्रभावेन पश्याद्यापि, [1]रघूद्वह! ॥ २४ ॥
[2]द्योतयन्ती दिशः सर्वाः श्रिया [3]वेद्यतुलप्रभा।

तेषामित्यादि। तेषां—अस्मदाचार्याणां, तप प्रभावेन इयं वेदी ब्रह्ममेघकुल इव अद्यापि श्रिया सर्वा दिशः द्योतयन्ती अतुलप्रभा दृश्यते, पश्य ॥ २४ ॥

अशक्नुवद्भिस्तैर्गन्तुं उपवासश्रमालसैः ॥ २५ ॥
[4]चिन्तितैरागतान् पश्य सहितान् सप्त सागरान्।

---

[1] रघूत्तम-ज. [2] द्योतयन्ति-ङ. [3] वेद्योऽतुलप्रभाः-ङ. [4] चिन्तितेऽभ्यागतान्-ङ. चिन्तितेनागतान्-ज.

आश्चर्यान्तरं दर्शयति--अशक्नुवद्भिरित्यादि । सागरादि तीर्थं गन्तुमशक्नुवद्भिः इत्यर्थः । तत्र हेतुः—उपवासश्रमालसैः इति । उपवासैः "तप इति तपो नानशनात् परम्" इति श्रुतेः कृच्छ्र-चान्द्रायणादिशास्त्रीयोपवासैः जातो यः श्रमः, तेनालसाः—दुर्बला इत्यर्थः । एवंविधैः तैस्तु स्नानाय—

"सप्त चक्रे तीर्थराज जुषस्थं सागरैः स्मरन्"

इति शास्त्रोपदिष्टमार्गतः ध्याने सति आगतान् सप्तसागरान् सहितान् तदभिषेकतीर्थे समेतान् पश्य ॥ २५ ॥

कृताभिषेकैस्तैर्न्यस्ताः वल्कलाः पादपेष्विह ॥ २६ ॥
अद्यापि नावशुष्यन्ति प्रदेशे, रघुनन्दन !

कथं तत्समवायोऽनुभूयत इत्यतः तत्प्रदर्शयति—कृताभिषेकै-रित्यादि । यथोक्तसप्तसागरतीर्थे कृताभिषेकैः तैराचार्यैः इह पादपेषु न्यस्ताः वल्कलाः *तत्तीर्थवैभवात् अद्यापि नावशुष्यन्ति ॥ २६ ॥

देवकार्याणि कुर्वद्भिः †यानीमानि कृतानि वै ॥ २७ ॥
पुष्पैः [1]कुवलयैः सार्धं म्लानत्वं नोपयान्ति वै ।

आश्चर्यान्तरप्रदर्शनं—अपि च ‡हे रघुनन्दन! इह प्रदेशे देवकार्यं देवपूजां विशेषेण कुर्वद्भिः यानीमानि पुण्यार्जनार्थं कृतानि—विनियुक्तानि, तैः पुष्पैः अतिमृदुभिः कुवलयैः सार्धं अन्यान्यपि तदर्चनपुष्पाणि म्लानत्वं नोपयान्ति, वै प्रसिद्धम् ॥ २७ ॥

---

* तदङ्गसंपर्कवैभवात्—गो. तीर्थवैभवात्, तपोवैभवाच्च—ति. † यानीमानि कृतानि माल्यानि—गो., रा. ‡ हे रघुनन्दनेति पूर्वश्लोकादाकृष्टम्।

[1] किसलयैः—ङ.

कृत्स्नं वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया ॥ २८ ॥
तदिच्छाम्यभ्यनुज्ञाता त्यक्तुमेतत् कलेबरम् ।

उपसंहरति—कृत्स्नमित्यादि । अभ्यनुज्ञातेति । ब्रह्मणा त्वया इति शेषः ॥ २८ ॥

तेषामिच्छाम्यहं गन्तुं समीपं भावितात्मनाम् ॥ २९ ॥
मुनीना[1]माश्रमो येषां अहं च परिचारिणी ।

मुनीनां भावितात्मनां—येषां ऋषीणां अयमाश्रमः, येषां चाहं परिचारिणी, तेषां भावितात्मनां—स्वतत्त्वतया सादरसततानुसंहितपरमात्मनां मुनीनां—ब्रह्मलोकगतानां समीपं गन्तुमिच्छामि इति च अब्रवीत् ॥ २९ ॥

[2]धर्मिष्ठं तु वचः श्रुत्वा राघवः सहलक्ष्मणः ॥ ३० ॥
प्रहर्षमतुलं लेभे * आश्चर्यमिति [3]तत्त्वतः ।

इति—श्रुतार्थमुद्दिश्येति शेषः ॥ ३० ॥

तामुवाच ततो रामः [4]श्रमणीं संशितव्रताम् ॥ ३१ ॥
अर्चितोऽहं त्वया [5]भक्त्या गच्छ कामं [6]यथासुखम् ।
इत्युक्ता जटिला वृद्धा चीरकृष्णाजिनाम्बरा ॥ ३२ ॥

---

* आश्चर्यमित्यब्रवीच्च-रा. तत्त्वतः—वस्तुतः आश्चर्यमिति अतुलं प्रहर्षं लेभे ॥

[1] माश्रमे-ङ. [2] धर्मिष्ठाया-ङ. [3] चाब्रवीत्-ञ. [4] शबरीं-ञ.
[5] भद्रे-ञ. [6] तपोधने-ङ.

[1]तस्मिन् मुहूर्ते शबरी देहं जीर्णं जिहासती ।
अनुज्ञाता तु रामेण हुत्वाऽऽत्मानं हुताशने ॥ ३३ ॥
ज्वलत्पावकसङ्काशा *स्वर्गमेव जगाम सा ।

आत्मानं हुताशने हुत्वेति । स्वाचार्योपदिष्टमार्गतः ब्रह्ममेधाग्नौ निजाचार्यवदेव हुत्वेत्यर्थः । स्वर्गं परमेव जगामेत्यन्वयः ॥ ३३ ॥

दिव्याभरणसंयुक्ता दिव्यमाल्यानुलेपना ॥ ३४ ॥
दिव्याम्बरधरा तत्र बभूव प्रियदर्शना ।
विराजयन्ती तं देशं विद्युत् सौदामिनी यथा ॥ ३५ ॥
[2]प्रणम्य शिरसा रामं स्वर्गता सुप्रभानना ।
यत्र ते सुकृतात्मानो विहरन्ति महर्षयः ।
तत् पुण्यं शबरी स्थानं जगामात्मसमाधिना ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये अरण्यकाण्डे चतुःसप्ततितमः सर्गः

---

तत्—स्पष्टम्, †'यत्र ते सुकृतात्मानः' इत्याद्युत्तरवाक्यात् । सुकृतात्मानः—सुसाधितब्रह्मात्मैक्ययोगाः यत्र महर्षयः—यत्र ब्रह्मलोकस्थाने विहरन्ति, तत् नित्यपुण्यं स्थानं शबरी च आत्मसमाधिना—

---

* स्वर्गं—ब्रह्मलोकं—ति. 'तेषां समीपं' इति पूर्वोक्तस्य विवरणरूपमिदं ; अतो न विरोधः । †व्याख्यादृष्ट्या 'यत्र ते सुकृतात्मानः' इत्याद्यर्धमेव 'तत्पुण्य' इत्याद्यनन्तरं स्यादिति भाति ।

[1] इदमर्धं कुण्डलितं—ज. [2] इदमर्धं नास्ति—ज.

समिद्धब्रह्ममेधतः जडत्यागार्हेण ब्रह्मसमाधिनेत्यर्थः, जगाम । तुला(३६)मानः सर्गः ॥ ३६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां अरण्यकाण्डे चतुःसप्ततितमः सर्गः

---

## पञ्चसप्ततितमः सर्गः

[पम्पादर्शनम्]

दिवं तु तस्यां यातायां शबर्यां *स्वेन [1]तेजसा ।
लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥ १ ॥

अथ पम्पाभिगमनम् । दिवं तु तस्यामित्यादि ॥ १ ॥

†स चिन्तयित्वा धर्मात्मा प्रभावं तं महात्मनाम् ।
हितकारिणमेकाग्रं लक्ष्मणं राघवोऽब्रवीत् ॥ २ ॥

महात्मनां प्रभावमिति । शबर्युक्तरूपमित्यर्थः ॥ २ ॥

दृष्टोऽयमाश्रमः, सौम्य ! बह्वाश्चर्यः ‡[2]कृतात्मनाम् ।
विश्वस्तमृगशार्दूलः नानाविहग[3]सेवितः ॥ ३ ॥

कृतात्मनां–कृतः–व्याकृतः आत्मा यैः, तेषां–ऋषीणाम् ॥३॥

---

* स्वेन तेजसा उपलक्षितायामिति शेषः–गो. स्वीयप्रभावेणेति वा । † चिन्तयामासेति पूर्वश्लोकोक्तचिन्ताया: विषयः अत्रोक्तः । ‡ पूर्वसर्गान्ते 'सुकृतात्मानः' इत्यनेन समानार्थकमिदं पदं भाति ।

[1] कर्मणा–ङ. [2] महात्मनाम्–ङ. [3] शोभितः–ङ.

सप्तानां च समुद्राणां एषु तीर्थेषु, लक्ष्मण!
उपस्पृष्टं च विधिवत् पितरश्चापि तर्पिताः ॥ ४ ॥

सप्तसमुद्रतीर्थेष्विति । वाप्यादिरूपेण लोकोपकाराय स्थापितेष्विति शेषः । उपस्पृष्टमिति । स्नातमिति यावत् ॥ ४ ॥

प्रनष्टमशुभं तत्तत् कल्याणं समुपस्थितम् ।
[1]तेन तत्त्वेन हृष्टं मे मनः, लक्ष्मण! सम्प्रति ॥ ५ ॥

तेनेति । कल्याणोपस्थानेनेत्यर्थः ॥ ५ ॥

[2]हृदये हि, नरव्याघ्र! शुभ[3]माविर्भविष्यति ।
तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम् ॥ ६ ॥

शुभं शुभस्मरणमित्यर्थः ॥ ६ ॥

ऋष्यमूको गिरिर्यत्र नातिदूरे प्रकाशते ।
यस्मिन् वसति धर्मात्मा सुग्रीवोंऽशुमतः सुतः ॥ ७ ॥
नित्यं वालिभयात् त्रस्तः चतुर्भिः सह वानरैः ।

अंशुमतः—सूर्यस्य ॥ ७ ॥

[4]अहं त्वरे च तं द्रष्टुं सुग्रीवं वानरर्षभम् ॥ ८ ॥
तदधीनं हि मे, [5]सौम्य! सीतायाः परिमार्गणम् ।

त्वरे—त्वरामीति यावत् ॥ ८ ॥

---

[1] तेन त्वेतत्प्रहृष्टं–ज. [2] निश्चितं हि–ङ. [3] माशु भविष्यति–ङ. [4] अभित्वरे–ङ. [5] वार्य–ज.

एवं ब्रुवाणं तं [1]धीरं रामं सौमित्रिरब्रवीत् ॥ ९ ॥
गच्छावः त्वरितं तत्र ममापि [2]त्वरते मनः ।

तत्र ममापीति । पम्पादर्शन इत्यर्थः ॥ ९ ॥

आश्रमात्तु ततस्तस्मात् निर्गत्य तु विशांपतिः ॥ १० ॥
*आजगाम ततः पम्पां लक्ष्मणेन [3]सह प्रभुः ।
†स ददर्श ततः पुण्यां उदार[4]जनसेविताम् ॥ ११ ॥
नानाद्रुमलताकीर्णां पम्पां पानीयवाहिनीम् ।
पद्मैः सौगन्धिकैः ताम्रां शुक्लां कुमुदमण्डलैः ॥ १२ ॥
नीलां [5]कुवलयोद्घाटैः बहुवर्णां कुथामिव ।

पानीयवाहिनीं—पानार्हातिमधुरसुशीतलनिर्मलवाहिनीमित्यर्थः । कुवलयानां उद्घाटः—समूहः । कुथा—गजास्तरणचित्रकम्बलः ॥१२॥

स तामासाद्य ‡ वै रामः [6]दूरादुदकवाहिनीम् ॥ १३ ॥
§ मतङ्गसरसं नाम ह्रदं समवगाहत[7] ।

---

* 'आजगाम ततः पम्पां' इत्यस्यैव विस्तरः 'स ददर्श' इत्यारभ्य 'जगाम परमं ह्रदम्' (१८) इत्यन्तम् । † 'स ददर्श' इत्युक्तः दूरात् पम्पादर्शनाभिप्रायेण । अत एव 'दूरादुदकवाहिनीम्' इत्यनन्तरोक्तिः । सरसः निम्नप्रदेश एव सत्त्वप्रसक्त्या उन्नतप्रदेशात् आहत्यदर्शनं विवक्षितं 'स ददर्श' इत्यत्र । अत एव 'उदारजनसेवितां' 'बहुवर्णां कुथामिव' इत्याद्यपि दूराद्दृश्यमानाकारवर्णनरूपं स्वरसं संगच्छते ॥ ‡ तां पम्पां दूरादासाद्य—दूरतः प्राप्य । अत एव उत्तरत्र पंपाप्राप्तिवचनेन न पौनरुक्त्यम् ॥ § पम्पाप्राप्तेः पूर्वमेव केचन ह्रदाः सन्तीति ज्ञायते, 'सरांसि विविधानि च' (18) इति हि वक्ष्यति । अस्य ह्रदस्य मतङ्गाश्रमसीमास्थत्वात् तन्नाम । एवं सन्त्यन्येऽपि ह्रदाः मध्येमार्गम् ॥

[1] वीरं-**ज.** [2] त्वरितं-**ङ.** [3] सहाभिभूः-**ङ.** [4] जल-**झ.**
[5] कुवलयैर्जातैः-**ङ.** [6] दूरात्पानीय-**ङ.** [7] 'अरविन्दोत्पलवतीं' इत्यादिसार्धश्लोकत्रयं ङपुस्तके एतदनन्तरं दृश्यते ॥

मतङ्गसरसमित्यकारान्तः । 'अनोश्मायः सरसां जातिसंज्ञयोः' इति अच् समासान्तः । अयं पम्पायामेव प्रदेशभेदः, गङ्गायां मणिकर्णिकेव ॥

अत्र 'निर्गत्य तु विशांपतिः' इत्यनन्तरं "आजगाम ततः पम्पां लक्ष्मणेन सह प्रभुः' इति, अथ 'स ददर्श' इत्यादि श्लोकद्वयम्, अनन्तरं 'स तामासाद्य वै रामो दूरादुदकवाहिनीम्' इति, अनन्तरं 'मतङ्गसरसं नाम ह्रदं समवगाहत' इति पङ्क्तः पाठः । 'गमिष्यावः पम्पां' इति प्रतिज्ञातत्वात् 'आजगाम ततः पम्पां' इत्येव न्याय्यम् । एवं स्थिते प्राचीनपाठनाशकः कश्चित् 'आजगाम' इत्यादि सार्धश्लोकद्वयं परित्यज्य अन्यदेव श्लोकत्रयं प्रक्षिप्य मृषापाठमेव केवलं पठति व्याख्यातुमागतः ॥ १३ ॥

*[1] समीक्षमाणौ [2] पुष्पाढ्यं सर्वतो विपुलद्रुमम् ॥ १४ ॥
कोयष्टिकैश्चार्जुनकैः शतपत्रैश्च [3] कीरकैः ।
एतैश्चान्यैश्च [4] विहगैः नादितं तु वनं महत् ॥ १५ ॥

'मतङ्गसरसं नाम ह्रदं समवगाहत' इति संक्षिप्तोक्तस्य सप्रपञ्चप्रतिपादनं—'समीक्षमाणौ' इत्यादि 'जगाम परमं ह्रदम्' इत्यन्तम् ॥ १४-१५ ॥

---

* मतङ्गह्रदे स्नात्वा ततः तद् महद् वनं समीक्षमाणौ, जग्मतुः इति शेषः । अस्यैवानुवादः, 'ततो जग्मतुः' इति श्लोकः । अथवा समीक्षमाणौ इत्यादि सार्धश्लोकद्वयमेकं वाक्यम् । द्विवचनान्तपदस्वारस्यात् । 'तद्वनं पश्यन्तौ महद् वनं जग्मतुः' इत्यन्वयः । दीर्घवाक्यत्वात् लोकवत् 'वन'पदावृत्तिः । वस्तुतः—'जगाम परमं ह्रदम्' इत्यत्र पम्पैव विवक्षिता । एतत्प्रकरणटिप्पणी सर्वा विलोकनीया ॥

[1] समीक्षमाणः-ज. [2] पुष्पाढ्यां फलपुष्पसमाकुलाम्-ङ. [3] किंशुकैः-ङ, कीचकैः-ज. [4] विविधैः-ङ, बहुभिः-ज.

ततो जग्मतुरव्यग्रौ राघवौ सुसमाहितौ ।
तद्वनं चैव सरसः पश्यन्तौ शकुनैर्युतम् ॥ १६ ॥
*प्रविवेश ततः पम्पां शीतवारि[1]निधिं शुभाम् ।

प्रविवेश ततः पम्पामिति । मतङ्गसरःप्रदेशवर्तिनीमित्यर्थः ॥

प्रहृष्टनानाशकुनां पादपैरुपशोभिताम् ॥ १७ ॥
तिलकाशोकपुन्नागवकुलोद्दालकाशिनीम् ।
†स रामो विविधान् वृक्षान् सरांसि विविधानि च ॥
पश्यन् कामाभिसंतप्तः जगाम परमं ह्रदम् ।
पुष्पितोपवनोपेतां सालचम्पकशोभिताम् ॥ १९ ॥
षट्पदौघसमाविष्टां श्रीमतीमतुलप्रभाम् ।
स्फटिकोपमतोयाढ्यां श्लक्ष्णवालुकसंतताम् ॥ २० ॥

श्लक्ष्णाभिः–मृदुस्पर्शाभिः वालुकाभिः संततां–युक्ताम् ॥ २० ॥

---

*ततः—मतङ्गाश्रमात् पम्पासरःपर्यन्तमध्यदेशवर्तिवनं अतीत्य तत्र तत्रस्थवृक्षान् विविधानि सरांसि च पश्यन् स रामः पम्पां जगाम । 'प्रविवेश ततः पम्पां' इत्यस्यैव विस्तरः—उत्तरसपादश्लोकद्वयम् । अथवा 'प्रविवेश' इति प्रयोगात् पम्पाशब्देन तत्प्रदेशो लक्ष्यते । प्रहृष्टेत्यादिवर्णनायाः कविवाक्यरूपत्वात्, 'पुष्पितोपवनोपेतां' इत्यादिवर्णनायाश्च रामदृष्टपम्पावर्णनारूपत्वाच्च न पौनरुक्त्यम् । अत एव तिलकादिपदानामावृत्तावपि न दोषः। †'आजगाम ततः पम्पां' (११) इत्युपक्रान्तस्योपसंहारः—स राम इत्यादि । अत्र 'विविधान् वृक्षान्' 'सरांसि विविधानि च' इति वाक्यद्वयसत्त्वात् अयं श्लोकः सर्वोपसंहाररूप इति स्पष्टम्। अस्मिन् प्रकरणे, सरः, पुष्करिणी, ह्रदः—इत्यादिशब्दाः पर्यायतया प्रयुक्ताः। अतः अत्र ह्रदशब्दः पम्पावाची, न तु मतङ्गह्रदवाची। 'मतङ्गसरसं नाम ह्रदं' इत्यत्रापि ह्रदशब्दः सरस्सामान्यपर एव । किञ्चात्र 'परमं ह्रदम्' इति कथनात् परमह्रदः पम्पैव । ह्रदशब्दस्य नियतलिङ्गत्वात्, पूर्वत्र परत्र च पम्पापदप्रयोगेऽपि न दोषः। 'जगाम परमं ह्रदम्' इत्यत्र मतङ्गसरोविवक्षा तु अत्यन्तानुचितैव। एवमत्र व्याख्यानस्य स्वरसत्वात्, कतकोद्धृतश्लोकक्रमः सर्वापेक्षया ज्यायान् ॥

[1] धरां–ङ.

[1]अरविन्दोत्पलवतीं पद्मसौगन्धिकैर्युताम् ।
पुष्पिताम्रवणोपेतां बर्हिणोद्घुष्टनादिताम् ॥ २१ ॥

अरविन्दपद्मयोः रक्तश्वेतविषयत्वेन भेदः ॥ २१ ॥

तिलकैः बीजपूरैश्च धवैः शुक्लद्रुमैस्तथा ।
पुष्पितैः करवीरैश्च पुन्नागैश्च सुपुष्पितैः ॥ २२ ॥

शुक्लद्रुमः—लोध्रः ॥ २२ ॥

मालतीकुन्दगुल्मैश्च भण्डीरैर्निचुलैस्तथा ।
अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः ॥ २३ ॥

भण्डीरः—वटः । निचुलः—वकुलः । अतिमुक्तकैः—माधवीलताभिः ॥ २३ ॥

अन्यैश्च विविधैः वृक्षैः प्रमदामिव भूषिताम् ।
स तां दृष्ट्वा पुनः पम्पां पद्मसौगन्धिकैर्युताम् ॥ २४ ॥
इत्युवाच तदा वाक्यं लक्ष्मणं [2]सत्यविक्रमः ।

इत्युवाचेति । वक्ष्यमाणलक्षणम् ॥ २४ ॥

अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः ॥ २५ ॥
ऋष्यमूक इति ख्यातः [3]पुण्यः पुष्पितपादपः ।

पूर्वोक्त इति । कबन्धेनेति शेषः ॥ २५ ॥

---

[1] एतदादि सार्धश्लोकत्रयं 13 श्लोकानन्तरं दृश्यते–ङ. [2] सत्यविक्रमम्–ङ.
[3] चित्रः–ङ.

*[1] हरिः ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः ॥ २६ ॥
अध्यास्ते तं महावीर्यः सुग्रीव इति विश्रुतः ।
† सुग्रीव[2]मभिगच्छ त्वं वानरेन्द्रं, नरर्षभ ! ॥ २७ ॥

हरिः-वानरः। ऋक्षरजोनाम्नः—तन्नामिकाया(?) इत्यर्थः ॥

[3]इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमम् ।
राज्यभ्रष्टेन [4]दीनेन तस्यामासक्तचेतसा ।
कथं मया विना शक्यं सीतां, लक्ष्मण ! जीवितुम् ॥२८॥

इत्युवाचेति। अन्तरान्तरा सीताशोकं उवाचेत्यर्थः ॥ २८ ॥

इत्येवमुक्त्वा मदनाभिपीडितः
स लक्ष्मणं वाक्यं [5]अनन्यचेतसम् ।
‡ विवेश पम्पां नलिनीं [6]मनोरमां
रघूत्तमः शोकविषादयन्त्रितः ॥ २९ ॥

इत्येवमुक्त्वयादिः उपसंहारेण वादः। नलिनीभिः मनोरमा। तथाकृतः ॥ २९ ॥

---

* अत्र 72-21 श्लोकव्याख्या, टिप्पणी च द्रष्टव्या । † सुग्रीवमभिगच्छेत्यनन्तरं इत्युक्त्वेति शेषः। इत्युक्त्वा पुनः लक्ष्मणं इति—वक्ष्यमाणप्रकारं उवाचेत्यन्वयः–गो. किष्किन्धकाण्डेऽपि, रामः आदौ लक्ष्मणद्वारैव व्यवहरतीति द्रष्टव्यम् । ‡ विवेश, स्नानायेति शेषः–गो. अस्य श्लोकस्य उपसंहारवाक्यत्वात् 'जगाम' इत्यर्थो वाऽत्र विवक्षितः। अथवा—'प्रविवेश ततः पम्पां' इतिवन्नेयम्।

[1] हरेः-ङ. [2] मभिगच्छावः-ङ. [3] इत्युक्त्वा च-ङ. [4] हीनेन-ङ.
[5] अदीनचेतसम्, अदीनसत्त्वः-ङ. [6] मनोहरां-ङ.

ततो * महद्वर्त्म च दूरसङ्क्रमः
क्रमेण गत्वा †[1] प्रविलोकयन् वनम् ।
ददर्श पम्पां शुभदर्शकाननां
अनेक[2]नानाविधपक्षिजालकाम्[3] ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
अरण्यकाण्डे पञ्चसप्ततितमः सर्गः

**समाप्तश्चायमरण्यकाण्डः**

---

* दूरसङ्क्रमः—बहुदूरं संचरन् महद्वर्त्म क्रमेण गत्वेत्यन्वयः । † प्रतिकूलधन्वनं (पा.) पथिकजनप्रतिकूलभूतमरुकान्तारं कबन्धवनमित्यर्थः- **गो.**

[1] प्रतिकूलधन्वनम्—ङ. [2] नानामृग—ङ. [3] अस्मिन् सर्गे ङ. पुस्तकरीत्या श्लोकक्रमः नातिव्यत्यस्तः । 13 श्लोकानन्तरं किञ्चिदिव दृश्यते । स च तत्रैव अधस्तात् सूचितः । च. ज. पुस्तकदृष्ट्या तु क्रमः एवं विभाव्यः—

आजगाम ततः पम्पां—श्लो. ११ (एतत्पूर्वं न क्रमभेदः । अत्र श्लोकसंख्यास्तु एतत्कोशदृष्ट्या दत्ताः ।)

समीक्षमाणौ पुष्पाढ्यं— (१४)
कोयष्टिकैश्चार्जुनकैः (१४)
एतैश्चान्यैश्च बहुभिः (१५)
[समाजग्मतुरव्यग्रौ राघवौ सुसमाहितौ] (ज)
स रामो विविधान् वृक्षान् (१८)
पश्यन् कामाभिसंतप्तः (१८)
स तामासाद्य वै रामः (१३)
मतङ्गसरसं नाम (१३)
ततो जग्मतुरव्यग्रौ (१६)
स तु शोकसमाविष्टः रामो दशरथात्मजः ।
विवेश नलिनीं रम्यां पङ्कजैश्च समावृताम् ।
तिलकाशोकपुन्नागवकुलोद्दालकाशिनीम् ।
रम्योपवनसंबाधां रम्यसंपीडितोदकाम् ।
स्फटिकोपमतोयां तां श्लक्ष्णवालुकसन्तताम् ।

दूरदेशे सङ्क्रमो गमनं येन स तथा। ततः पम्पां शुभदर्श-काननत्वविशेषणवतीं ददर्शेत्यन्वयः। सर्वत इति शेषः॥ ३०॥

इति श्रीमन्माधवयोगिविरचितायां श्रीमद्रामायणामृतकतकटीकायां
अरण्यकाण्डे पञ्चसप्ततितमः सर्गः
समाप्तश्चायमरण्यकाण्डः

---

मत्स्यकच्छपसम्बाधां तीरस्थद्रुमशोभिताम्।
सखीभिरिव संयुक्तां लताभिरनुवेष्टिताम्।
किंनरोरगगन्धर्वयक्षराक्षससेविताम्।
नानाद्रुमलताकीर्णां शीतवारिनिधिं शुभाम्।
पद्मैः सौगन्धिकैस्ताम्रां (१२)
नीलां कुवलयोद्घाटैः (१२)
अरविन्दोत्पलवतीं (२१)
पुष्पिताम्रवणोपेतां (२१)
स तां दृष्ट्वा ततः पम्पां रामः सौमित्रिणा सह।
विललाप च तेजस्वी रामो दशरथात्मजः।
तिलकैर्बीजपूरैश्च (२२)
पुष्पितैः करवीरैश्च (२२)
मालतीकुन्दगुल्मैश्च (२३)
अशोकैः सप्तपर्णैश्च (२३)
अन्यैश्च विविधैर्वृक्षैः (२४)

[स तामासाद्य पम्पां च विषसाद महामनाः]–ञ.

अस्यास्तीरे तु पूर्वोक्तः (२५) —(एतदनन्तरं तु न क्रमभेदः)
'तत्र मद्वचनं' इत्यादिश्लोकस्थाने—च. ञ. पुस्तकयोः—
"क्रमेण गत्वा प्रविलोकयन् वनं ददर्श पम्पां शुभदर्शकाननाम्।
अनेकनानाविधपक्षिसंकुलां विवेश रामः सह लक्ष्मणेन॥" इति वर्तते॥

# श्रीमद्वाल्मीकिरामायणम्

श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(पञ्चमसंपुटः—किष्किन्धाकाण्डः)



प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मैसूरु

१९७५

# श्रीमद्वाल्मीकिरामायणम्

श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(पञ्चमसंपुटः—किष्किन्धाकाण्डः)




प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मै सू रु

१९७५

प्राच्यविद्यासंशोधनालयग्रन्थमाला ११९

प्रधानसंपादकः

डा० जि. मरुलसिद्दय्यः, एम्.ए., पिएच्.डि.,

डैरेक्टर्

# श्रीमद्वाल्मीकिरामायणम्

श्रीमाधवयोगीयामृतकतकव्याख्यायुतम्

(पञ्चमसंपुटः—किष्किन्धाकाण्डः)

संपादकः

विद्वान् के. एस्. वरदाचार्यः

रिसर्च् असिस्टेण्ट्




प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मै सू रु

१९७५

आरक्षितास्सर्वेऽधिकाराः

मूल्यम् रू. १७–००

मैसूरुराजकीयपठ्यपुस्तकमुद्रणालये तदधिकारिभिर्मुद्रितम्
१९७५

ORIENTAL RESEARCH INSTITUTE SANSKRIT SERIES 119

GENERAL EDITOR :
DR. G. MARULASIDDAIAH, M.A., Ph.D
*Director*

# ŚRĪMADVĀLMĪKIRĀMĀYAṆA
WITH
## AMRTAKATAKA OF MĀDHAVAYOGI
(VOL. V—KIṢKINDHĀKĀṆḌA)

EDITOR :
VIDWAN K. S. VARADACHARYA,
*Research Assistant*




ORIENTAL RESEARCH INSTITUTE
UNIVERSITY OF MYSORE
MYSORE
1975

Price: Rs. 17-00

PRINTED BY THE JOINT DIRECTOR AT THE
GOVERNMENT TEXT BOOK PRESS, MYSORE-9

1973

# PREFACE

We are very glad to bring out the Volume-V of "Rāmāyaṇa" with "Amṛta-kataka" commentary containing "Kiṣkindhā-kāṇḍa."

No doubt, it was delayed but we are happy as we could bring it out at least now. We hope that we may be able to bring out the remaining volumes of this series (Sundara-kāṇḍa, Yuddha-kāṇḍa and Uttara-kāṇḍa) early.

The most important commentaries of the "Rāmāyaṇa available at present are: (1) Maheśwara teerthīya, (2) Govindarājīya, (3) Amṛta-kataka, (4) Tilaka and (5) Śiromaṇi. Among them, Amṛta-kataka of Mādhavayogi is most dependable in our view.

Neither philosophical nor religious prejudices have played their usual roll here as Mādhavayogi emphasis only clarifications on literary points. He is an independent thinker and is understood to be a real "Yogi" in the proper sense of the term. Endowed with realisation of "Tatvānubhava", he has introduced all balanced and non-controversial interpretations of the Text along with its other implications also.

Hence, this commentary is "Taṭastha" or impartial of any type of preoccupations.

He hails from "Kālahasti, Kānchīpura." Belongs to the 16th C. A.D. This commentary is older than "Tilaka" and "Śiromaṇi."

"Tilaka" commentator refers to "Amṛta-kataka" commentary. It is also correct that "Tilaka" commentator 'Rāmavarma' wrote his commentary with the full knowledge of "Amṛta-kataka" commentary. A close comparison of these two commentaries will bear evidence on this point. So, "Kataka" commentary also should have been more popular and we do our utmost to bring out all the remaining volumes early.

This V-volume of "Kiṣkindhā-kāṇḍa" is edited well by one of our Senior Research Assistants, Panditaratnam Vidwan K. S. Varadacharya. He has spared no pains in offering necessary footnotes, readings and also meanings at appropriate places to make the original and commentary more and more intelligible in the best interest of Readers. The Editor has proved his eminence in other publications of our Institute. The title of every narrative is given on the top of the every righthand page in the form of "Sloka." In fact, it may be called "Kiṣkindhā-kāṇḍa Saṅgraha".

We thank heartily the Curator of Oriental Manuscripts Library, Madras for having helped us by lending the second manuscript of "Kataka" commentary for collation purpose. Our thanks



are also due to the authorities of Government Text-Book Press, Mysore, for fine get up of this Volume.

The great epic has played its roll in the past and will continue to enlighten the posterity with its rich and evergreen enchanting cultural contents. Our Institution is happy in publishing this as the Publication of such classical works is our primary duty.

So, we are very glad to submit this to the public and also to our readers.

Dr. G. MARULASIDDAIAH,
*Professor and Head of the Department of Sanskrit and Director,*
*Oriental Research Institute,*
*University of Mysore,*
*Mysore-9*

Mysore

# प्रस्तावना

' वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत् साक्षात् रामायणात्मना ॥ '

क्रमप्राप्तोऽयमद्य उपायनीक्रियते उदारचरितेभ्यः सहृदयेभ्यः श्रीमद्वाल्मीकिरामायणस्य पञ्चमः संपुटः किष्किन्धाकाण्डात्मकः ॥

## [किष्किन्धाकाण्डः]

किष्किन्धापरिसरप्रवृत्तकथाप्रधानत्वादयं भागः किष्किन्धाकाण्ड इति प्रथत इति सर्वविदितमेव ॥

कबन्धसूचनानुसारेण रामस्य सुग्रीवान्वेषणं, रामसुग्रीवसख्यं, वालिवधः, सीतान्वेषणाय कपीनां प्रेषणं, हनुमदादिभिः संपातिमुखात् सीतावृत्तान्तश्रवणं, हनुमतः सागरलङ्घनोद्यमः इत्येते विषया काण्डेऽस्मिन् वर्ण्यन्ते ॥

## [वालिवधः]

विचारशीलानां तु संख्यावतां अत्रत्यः वालिवधः महते कुतूहलाय वादविवादेभ्यश्च बहुधा विषयो भवति । न केवलमेतत्काण्डे कृत्स्नेऽपि रामायणे अप्रतिसमाधेयः, सर्वथा समर्थयितुमशक्य एवायं वालिवधः इत्येव प्रायः सर्वेऽपि मन्यन्ते । निश्चिन्वन्ति च बहव, " रामोऽपि कश्चिन्मनुज एव खलु । वाल्मीकिरपि तं ' महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् '[1], ' मुने ! वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः '[2] इति रामं नरशब्देनैव निर्दिशति । रामोऽप्यात्मान

[1] रामायणं 1-1-5 [2] रामायणं 1-1-7

मानुषमेव 'आत्मानं मानुषं मन्ये रामं दशरथात्मजम्'[1] इति प्रकटयति । अतश्च वालिवधः मानवसहजस्य प्रमादस्य, दौर्बल्यस्य वा निदर्शनम्" इति ॥

इमं विषयमधिकृत्य किञ्चिदिव विमृशामः ॥

## [आक्षेपः]

आदर्शपुरुषः, 'रामो विग्रहवान् धर्मः'[2] इति शत्रुणापि मारीचेन प्रशंस्यमानः रामः अन्येन युध्यन्तं वालिनं प्रच्छन्नः सन् कथं जघान ? वाल्यपि हि 'क्षमं चेद्भवता प्राप्तमुत्तरं साधु चिन्त्यताम्'[3] इति शपथयति ॥

## [समाधानम्]

अस्य च उत्तरं रामस्त्रेधाऽभिधत्ते—

१. भ्रातृभार्यापहारिणः तव वधः क्षत्रियस्य मम कर्तव्यो धर्मः ।

२. मन्मित्रस्य सुग्रीवस्य कृते तथा प्रतिज्ञातत्वात् प्रतिज्ञा-संरक्षणाय त्वद्वधः मम कर्तव्यो धर्मः ।

३. मृगाणां भवादृशानां प्रच्छन्नवधो वा, अन्येन युध्यतां वधो वा मृगयाधिकृतानां क्षत्रियाणां नैव दोषावहः ॥

मानवबुद्धिदृष्टचा इदं समाधानत्रयमपि न क्षोदक्षममिति तीक्ष्णमतयः सर्वेऽपि अभिप्रयन्ति । तद्विस्तरस्तु महानित्यद्योदास्यते ॥

## [सांप्रदायिकाः]

सांप्रदायिकास्तु—प्रथमं राममेवमधिक्षिपन् वाल्येव स्ववधस्य धर्म्यत्वं अनन्तरं पश्यन् 'प्रसादितस्त्वं क्षम मे नरेश्वर[4] !' इति रामं

---

[1] रामा.युद्ध. 120-11 [2] रामा.अरण्य. 37-12 [3] रामा.किष्कि. 17-51 [4] रामा. किष्कि. 18-67.



क्षमामयाचदिति चेत् मध्येऽस्माकं किं वर्तते वृथाजल्पनाय । यं शत्रुरपि मारीचः 'विग्रहवान् धर्मः' इति प्रशंसति तत्कृत्ये अधर्मत्वसंभावना वा कथम्? अतः एतच्चर्चा न केवलं वृथा, प्रत्युत पापायापि भवेत् इति वदन्ति ॥

समीचीनसमाधानकथनेन इतरमुखपिधानाशक्तानां श्रद्धाजडानां भीषणमात्रमिदमिति अन्तर्मन्यन्ते विमर्शकाः ॥

## [धर्मः नीतिश्च]

लोके कस्यचित् कार्यस्य निर्दुष्टत्वे उपादेयत्वे वा प्रयोजकः हेतुः धर्मः न्यायश्च। यद्यपि कार्यस्य स्वतो धर्मत्वं न्यायत्वं च न संभवति, अथापि धर्मादनपेतत्वात्=धर्म्यत्वात्, न्यायादनपेतत्वात्=न्याय्यत्वात् तस्य धर्मत्वन्यायत्वव्यवहारः ॥

धर्मन्यायशब्दौ च न समानार्थकौ । 'भवतां एवमाचरणं धर्मो वा, न्यायो वा' इत्येव पृच्छन्ति लोके । पर्यायत्वे पदद्वयप्रयोगः कथम्? किमधिकोक्त्या? धर्मशास्त्रमन्यत्, नीतिशास्त्रं चान्यत् इति सर्वविदितम् । न्यायः नीतिरिति चात्र समानौ शब्दौ । ततश्च धर्मन्यायशब्दौ भिन्नार्थकौ ॥

## [धर्मनीत्योर्वैलक्षण्यम्]

तर्हि धर्मः कः ? न्यायः कः ?

धर्मः आन्तरः—न्यायः=नीतिः बाह्या । धर्मः पुरुषसंबन्धी—नीतिः बुद्धिसंबन्धिनी । धर्मः आत्मनिष्ठः—नीतिः प्रकृतिनिष्ठा । धर्मस्य स्थानं हृदयं—नीतेः स्थानं मस्तिष्कम् । धर्मः हृदयग्राह्यः—नीतिः बुद्धिग्राह्या । धर्मः आत्मा—नीतिः देहः । अत एव धर्मः सूक्ष्मः—नीतिः स्थूला ॥

## [' धर्मः दुर्ज्ञेयः ']

अत एव किल धर्मः परमदुर्ज्ञेय इत्युच्यते। नीतिस्तु न तथा दुर्ज्ञेयेत्युच्यते। वालिवधः नीतिविरुद्ध इति सामान्यतः सर्वैरुच्यते। यदि नीतिरेव धर्मः तर्हि तस्येदानीं सर्वजनविदितत्वेन ' सूक्ष्मः परमदुर्ज्ञेयः '[1] इत्युक्तिर्वा कथं घटेत ? ' धर्मस्य तत्त्वं निहितं गुहायाम् '[2] इत्यादि च कथम् ? अतश्च वालिवधे मूलत इदमवधेयं, धर्मः अन्यः, नीतिश्चान्या इति। वालिवधः धर्मो वा ? इति प्रश्नः अन्यः, स न्यायो वा इति प्रश्नश्चान्यः ॥

तर्हि वालिवधः धर्मो वाऽधर्मो वा भवतु। नीतिविरुद्धस्तु स इत्यवश्यमभ्युपगन्तव्यं किल इति प्रश्नः समुन्मिषति। एतदपि विमृशामः ॥

## [नीतेः स्वरूपम् ]

धर्मः आत्मस्थानापन्नः, नीतिः देहस्थानापन्नेत्यनुपदमुक्तम्। देहस्य, तत्साध्यस्य कृत्यस्य वा मौल्यं आत्माधीनमेव। न तु स्वतः तस्य मौल्यं किञ्चिदस्ति। घातुकोऽपि यं कञ्चित् शस्त्रेण कृन्तति, चिकित्सकोऽपि (Surgeon) कंचित् शस्त्रेण कृन्तति। क्रिया तु बाह्यतः समानैव। अथापि तयोः क्रिययोः मौल्यं नैकरूपम्। कामुकोऽपि लौल्यात् तरुणीं स्पृशति, चिकित्सकोऽपि तां परीक्षार्थं स्पृशति। क्रिया तु समाना, अन्तरं तु कियद्वर्तते ! एतेन वाह्यक्रियाया मौल्यं आन्तरभावानुगुणं, न तु स्वतस्तस्या मौल्यमस्तीति स्पष्टम् ॥

## [भावस्य प्राधान्यम् ]

' न कञ्चन शस्त्रेण कृन्तेत् ', ' न परस्त्रियं स्पृशेत् ' इति न्यायः चिकित्सकव्यतिरिक्तविषय एव वक्तव्यः। क्रियापेक्षया भावस्य स्थानं तावन्महत्तरं वर्तते ॥

---

[1] रामा.किष्कि. 18-15. [2] महा.भा.वन. 314-119.



इतोऽपि सुसूक्ष्मं चिन्तने ' न कंचन शस्त्रेण कृन्तेत् ', ' न परस्त्रिय स्पृशेत् ' इत्यादौ श्रूयमाणं कृन्तनं स्पर्शनं च भावाशुद्धिपूर्वकमेव तत् अभिप्रैतीति चिकित्सककृन्तनस्पर्शनयोः न तत्रावसर इति उक्तन्यायस्य संकोचकल्पनस्यापि नावसर इत्येव तत्त्वम् ॥

## [' धर्मं परमं वदन्ति ']

भावक्षेत्र एव एवं वैचित्र्यं चेत् ततोऽपि सूक्ष्मे धर्मक्षेत्रे किं वक्तव्यम्। ' धर्मो विश्वस्य जगतः प्रतिष्ठा '[1], ' तस्मात् धर्मं परमं वदन्ति '[2]। अतः बाह्यतः स्थूलदृष्ट्या अनीतित्वेन भासमाना क्रिया धर्मानुगुणा चेत् नानीतिः। तथैव नीतित्वेन भासमाना क्रिया धर्मविरुद्धा चेदनीतिरेव ॥

## [धर्मे प्रमाणम् ]

धर्मानुगुणत्वं अननुगुणत्वं वा कथं ज्ञेयमिति चेत् धर्मस्वरूपज्ञानेनैव तत् सुशकम्। धर्मश्च आत्मसंवेद्यः, न बुद्धिसंवेद्यः। 'हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभम् '[3], ' विद्वद्भिः सेवितः सद्भिः नित्यमद्वेषरागिभिः। हृदयेनाभ्यनुज्ञातः यो धर्मस्तं निबोधत ॥ '[4] इति धर्मस्य रागद्वेषरहितज्ञानिगम्यत्वमुच्यते ॥

नीतिरपि न सर्वेषामपि बुद्धिग्राह्या, किन्तु स्वार्थवासनारहितया सूक्ष्मया बुद्ध्यैव सा ग्राह्या। बाह्याया नीतेरपि सर्वैरपि निर्णेतुमशक्यत्वे आन्तरस्य बुद्ध्यतीतस्य धर्मस्य कथं सुज्ञत्वम् ? ततश्च वालिवधस्य धर्मत्वात् अनीतित्वशङ्काऽपि न तत्रावतरतीत्येव धर्मसूक्ष्ममवगन्तव्यम् ॥

---

[1], [2] तै. महा. नारायण. 22. [3] रामा. किष्कि. 18·15.

[4] मनुस्मृति 2·1.

## [धर्मः प्रश्नातीतः]

श्रीरामोऽपि वस्तुत इममेवान्तिमं समाधानमभिधत्ते—

'दुर्लभस्य च धर्मस्य जीवितस्य सुखस्य च ।
राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥

तान्न हिंस्येन्न चाक्रोशेत् नाक्षिपेन्नाप्रियं वदेत् ।
देवा मनुष्यरूपेण विचरन्ति महीतले ॥'[1]

इत्यादि द्रष्टव्यम् । एतद्विषये मनुवाक्यान्यपि संवादीनि द्रष्टव्यानि—

'इन्द्रानिलयमार्काणां अग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥

यस्मादेषां सुरेन्द्राणां मात्राभिर्निर्मितो नृपः ।'[2]
'बालोऽपि नावमन्तव्यः मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥'[3]

'तस्माद्धर्म यमिष्टेषु स व्यवस्येन्नराधिपः ।
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥'[4]

## [मानवदौर्बल्यानि]

मनुजस्य सहजमेकं दौर्बल्यं वर्तते । तत् प्रायः संपूर्णतया हातुं न शक्यते । येन केनापि प्रकारेण वासनारूपतो वा स्वार्थः मानव स्ववशे करोत्येव ॥

---

[1] रामा. किष्कि. 18–42, 43. [2] मनुस्मृति 7–3, 4.
[3] मनुस्मृति 7–5. [4] मनुस्मृति 7–13.



अन्यच्च दौर्बल्यं तस्य, यत् कश्चित् विषयः स्वेन ज्ञातुं न शक्यते चेत्, परकीयेऽनुभवेऽपि तन्मनः विप्रतिपद्यते । इदं च अहंकारस्य फलम् ॥

एवमपरं च दौर्बल्यं तस्य, यत् प्रायः स्थूलमेव विषयं साक्षीकृत्य निर्णेतुं स प्रवर्तते, न तु तात्त्विकदृष्टचा व्यापृणोति तस्य मनः ॥

अतः स्वार्थं, अहंकारं, उत्तानप्रज्ञतां च विहायैतत् परिशीलनीयम् , नो चेन्न धियमधिरोहेदिति नाधिकं वदामोऽत्र ॥

## [वालिनो धर्मप्रज्ञा]

वाली तु प्रथमं राममधिक्षिपन्नपि दैवात् उक्तत्रिविधदौर्बल्यैः परित्यक्तः समाहितमना बभूव । इन्द्रांशसंभूतः किल सः । न केवलं समाहितमना बभूव ; अज्ञानात्कृताय रामाधिक्षेपायान्वशोचदपि स दैवीसंपद्विशिष्टः । आदिकविर्ह्येवं वदति—

'एवमुक्तस्तु रामेण वाली प्रव्यथितो भृशम् ।
न दोषं राघवे दध्यौ धर्मेऽधिगतनिश्चयः ॥'[1] इति ॥

अत्र 'धर्मेऽधिगतनिश्चयः', 'भृशं प्रव्यथितः' इति विशेषणद्वयं सम्यगवधेयम् । एतादृशसत्परिणामस्यैव फलं 'प्रभो'[2] इति संबोध्य 'प्रसादितस्त्वं क्षम मे नरेश्वर'[3] इति क्षमायाचनमपि । लेशतो वा धर्मवीर्यपरिचयवतामेव इदं सर्वं लेशतो वाऽवगन्तुं शक्यमिति दिङ्मात्रं प्रदर्श्य पुनःपुनर्लेखनीं न व्यापारयामः ॥

## [रामायणं धर्मग्रन्थोऽपि]

रामायणमिदं न केवलं काव्यम्, महान् धर्मग्रन्थ इति न कदापि विस्मर्तव्यम् । धर्मग्रन्थविमर्शोऽपि धर्ममूलक एव कार्यः ।

---

[1] रामा.किष्कि. 18–45 [2], [3] रामा.किष्कि. 18–67

संगीतशास्त्रस्य विमर्शः न्यायशास्त्रमवलम्ब्य कर्तुं शक्यो वा ? युक्तो वा ? अतोऽत्रैव विरमामः ॥

एतद्भागसंपादनदृष्टचा नाधिकं किञ्चिदस्त्यत्र वक्तव्यं पूर्व-संपुटाभिहितात् । व्याख्यासंशोधने परं (१) एतद्ग्रन्थभण्डारगता एका, (२) मद्रास् ओरियण्टल् मानेस्क्रिप्ट्लैब्ररीतः-प्राप्ता अपरा इति मातृकाद्वयमादृतम् । मातृकाद्वयस्याप्यत्यन्ताशुद्धत्वात् विशिष्य तयोः संज्ञा दातुमशक्याऽभूत् । एतद्रामायणग्रन्थमालाया अवशिष्टानपि भागान् यावच्छक्ति अचिरेण कालेन प्रकटीचिकीर्षवो वयम् ॥

मैसूरु
28–5–73

नव्यमङ्गलाभिजनः,
वरदाचार्यः

श्रीमद्वाल्मीकिरामायणकिष्किन्धाकाण्डस्य

# विषयानुक्रमणिका

| श्लोकसंख्या | सर्गावान्तरविषयाः | |
|---|---|---|
| | **५२** | |
| | तथोक्तो हनुमान् सर्वं वृत्तमूचे तदाऽऽत्मनाम् ॥ ... | ४४५ |
| | **५३** | |
| ११२ | स तु मार्गं च पप्रच्छ गन्तुं तस्मात् बिलाद्बहिः । ... | ४४७ |
| | अथ स्वतेजसा सा तु तान् निनाय बहिः क्षणात् ॥ ... | ४४९ |
| | **५४** | |
| ११३ | प्राप्तास्ते तूदधेस्तीरं चिन्तामापेदिरे ततः । ... | ४५१ |
| | कालात्ययं च ते ज्ञात्वा बिभ्युः प्राणभयात्तदा ॥ ... | ४५३ |
| ११४ | अङ्गदस्तु तदा प्राह वानरान् भयपीडितान् । .... | ४५५ |
| | किष्किन्धां नैव गच्छामः वत्स्यामोऽत्रैव ते वयम् ॥ ... | ४५७ |
| | **५५** | |
| ११५ | तच्छ्रुत्वा हनुमान् प्राह नीतियुक्तं तदा कपीन् । ... | ४५९ |
| | नीलल्ङ्घ्यं शासनं राज्ञः सुग्रीवस्य बलीयसः ॥ ... | ४६१ |
| ११६ | तद्गत्वा शरणं यामः सुग्रीवं वानरेश्वरम् । ... | ४६३ |
| | **५६** | |
| | नाङ्गीचकार तद्वाक्यं सुग्रीवे शङ्कितोऽङ्गदः ॥ ... | ४६५ |
| ११७ | किञ्च प्रायोपवेशेन मर्तुमैच्छत्तदाऽङ्गदः । ... | ४६७ |
| | तद्दृष्ट्वा वानरास्सर्वे तमेवान्वयुस्तदा ॥ ... | ४६९ |





| श्लोकसंख्या | सर्गावान्तरविषयाः | |
|---|---|---|
| | **५७** | |
| ११८ | तदा तत्रायया गृध्रः संपातिर्भीषणाकृतिः । ... | ४७१ |
| | तं दृष्ट्वा भृशमुद्विग्नाः विलेपुर्वानरास्तदा ॥ ... | ४७३ |
| ११९ | स तान् पप्रच्छ संपातिः तत्रागमनकारणम् । ... | ४७५ |
| | **५८** | |
| | ते सर्वमादितः प्राहुर्वधं चापि जटायुषः ॥ ... | ४७७ |
| १२० | रावणेन हृतं ज्ञात्वा भ्रातरं तु शुशोच सः । ... | ४७९ |
| | **५९** | |
| | तत्प्रतीकारबुद्ध्या चावदत् गृध्रः स वानरान् ॥ ... | ४८१ |
| १२१ | अहं जानामि सीताया हर्तारं रावणं शठम् । ... | ४८३ |
| | मध्येसमद्रं लंकायां स आस्ते राक्षसाधमः ॥ ... | ४८५ |
| १२२ | इहस्थ एव पश्यामि रावणं जानकीमपि । ... | ४८७ |
| | **६०** | |
| | सुपार्श्वो मम पुत्रोऽपि जानाति निखिलं त्विदम् ॥ ... | ४८९ |
| १२३ | ह्रियमाणा रावणेन सीताऽऽबाभ्यां विलोकिता । ... | ४९१ |
| | त्वर्यतां, बानराः ! कार्ये जयो वो भवति ध्रुवम् ॥ ... | ४९३ |

॥ श्रीः ॥

॥ श्रीरामचन्द्रपरब्रह्मणे नमः ॥

# श्रीमद्वाल्मीकिरामायणम्

श्रीमन्माधवयोगिविरचितया

अमृतकतकव्याख्यया समलङ्कृतम्

## किष्किन्धाकाण्डः

### प्रथमः सर्गः

[रामविलापः]

स तां पुष्करिणीं गत्वा *पद्मोत्पलझषाकुलाम् ।
रामः सौमित्रिसहितः विललापाकुलेन्द्रियः ॥ १ ॥

एवं महाषोढायाः धीस्वयम्भूप्रधानपूर्वार्धप्राधान्येन काण्डत्रयं सिद्धम् । अथ उत्तरकाण्डत्रयं शचीन्द्रप्रधानोत्तरार्धप्राधान्येन प्रवर्तते । तत्र आद्येन रामस्य पम्पादर्शनोद्रिक्तः कामः, तस्य सौमित्रिणा कृतोपरोधश्च प्रकाश्यते । स तामित्यादि । पुष्करिणी--नदीम् ॥ १ ॥

* कमलेन्दीवरमत्स्यैः मुखनयनकटाक्षवत्याः कान्तायाः स्मारकत्वेन व्याकुलेन्द्रियः--गो.

[1] तस्य दृष्ट्वैव तां *हर्षात् इन्द्रियाणि चकम्पिरे ।
स कामवशमापन्नः सौमित्रिमिदमब्रवीत् ॥ २ ॥

तस्येत्यादि । तां पम्पां दृष्ट्वा तस्य इन्द्रियाणि पम्पानुभवजात हर्षात् चकम्पिरे—उद्रिक्तविकाराण्यभवन् इत्यर्थः ॥ २ ॥

सौमित्रे ! शोभते पम्पा वैडूर्यविमलोदका ।
फुल्लपद्मोत्पलवती शोभिता विविधैः द्रुमैः ॥ ३ ॥

वैडूर्यवत्—तत्प्रभावत् विमलं उदकं यस्याः सा तथा । वैडूर्यप्रभा तु श्यामा । तथा प्रतिभासः औपाधिकः उदकस्य । अतः तमेवोपाधिं दर्शयति—फुल्लेत्यादि ॥ ३ ॥

सौमित्रे ! पश्य पम्पायाः काननं शुभदर्शनम् ।
यत्र भ्राजन्ति †[2]शैला वा द्रुमाः सशिखरा इव ॥ ४ ॥

यत्र वने वा द्रुमाः सशिखराः शैला इव भ्राजन्ति । शैला वा इति पाठः । वाशब्दो वाक्यालङ्कारे ॥ ४ ॥

मां तु शोकाभिसंतप्तं ‡[3] आधयः पीडयन्ति वै ।
§भरतस्य च [4]दुःखेन वैदेह्या हरणेन च ॥ ५ ॥

आधयः पीडयन्ति वै इति पाठः । आधीनेव दर्शयति—भरतस्येत्यादि । दुःखेन । जटावल्कलधारणादिदुःखस्मरणेनेत्यर्थः ॥

---

* पंपासौन्दर्यदर्शनेन हर्षेऽपि, स एव हर्षः शोकायाभूदिति भावः । † शैला वा—शैला इव—ति. सशिखरा इव—सशृङ्गा इव स्थिताः अत एव शैलाभाः—गो. ‡ मां माधवः (पा)—वसन्तस्तु विशेषेण पीडयन्निव भवतीत्यर्थः वस्तुतः पीडाभावात् इवशब्दः—गो. § भरतस्य दुःखेन—मद्वियोगजनितभरतक्लेशस्मरणेन—रा.

[1] तस्य दृष्टवतो—ङ. तत्र दृष्ट्वैव तां—च. [2] शैलाभाः—ङ, झ. [3] व्याधयः पीडयन्ति वै—माधवः पीडयन्निव—ङ. [4] शोकेन—ङ.



*शोकार्तस्यापि मे पम्पा शोभते चित्रकानना ।
व्यवकीर्णा बहुविधैः पुष्पैः शीतोदका शिवा ॥ ६ ॥

शोभते । सुखावहा वर्तते इत्यर्थः ॥ ६ ॥

नलिनैरपि [1]संछन्ना ह्यत्यर्थं शुभदर्शना ।
सर्पव्यालानुचरिता मृगद्विजसमाकुला ॥ ७ ॥

व्यालः— श्वापदः ॥ ७ ॥

अधिकं प्रतिभात्येतत् †नीलपीतं तु शाद्वलम् ।
द्रुमाणां [2]उच्छ्रितैः पुष्पैः परिस्तोमैरिवार्पितम्[3] ॥ ८ ॥

नीलानुबद्धं पीतं नीलपीतम् । शाद्वलं—शादहरितप्रदेशः । शाद्वल एव वर्ण्यते— द्रुमाणामित्यादि । अर्पितं—युक्तं—व्याप्तमिति यावत् । उच्छ्रितैः—अधिकैः पुष्पैः परिस्तोमैः—कुथाभिरिव व्याप्तम् । "परिस्तोमः कुथो द्वयोः" अपि वा उच्छ्रितैः—उच्छ्रितगन्धैः परिस्तोमैः—परितः स्तोमभूतैः—राशीभूतैः इव स्थितैः पुष्पैः उपगूढमित्यर्थः ॥ ८ ॥

[4]नानापुष्पसमृद्धानि ‡शिखराणि समन्ततः ।
लताभिः पुष्पिताग्राभिः उपगूढानि सर्वतः ॥ ९ ॥

सुखानिलोऽयं, सौमित्रे ! कालः प्रचुरमन्मथः ।
गन्धवान् सुरभिर्मासः जातपुष्पफलद्रुमः ॥ १० ॥

---

* शोकार्तस्यापि मे—मयि शोकार्तेऽपि शोभते ; व्यर्थेयं शोभेति भावः—गो. वस्तुतः बाह्येन्द्रियेण सौन्दर्यानुभवः, तस्य अन्तश्शोके पर्यवसानं चोच्यते ॥ † नीलपीतमिति मयूरकण्ठवर्ण उच्यते—गो. ‡ शिखराणि—वृक्षाग्राणि—गो. ति.

[1] संकीर्णा—ङ. [2] विविधैः—ङ, झ. [3] एतदनन्तरं—नानाप्रख्यातकुसुमैः पम्पाशुभाति लक्ष्मण-इत्यधिकं—झ. [4] पुष्पभार—ङ, ञ, झ.

उक्तार्थस्यैव विवरणम्—नानेत्यादि। उपगूढानि—व्याप्तानि।
सुरभिर्मास:—मधुमास: ॥ ९ ॥

पश्य रूपाणि, सौमित्रे! वनानां पुष्पशालिनाम्।
*सृजतां पुष्पवर्षाणि [1] तोयं तोयमुचामिव ॥ ११ ॥

†प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः।
वायुवेगप्रचलिताः पुष्पैरवकिरन्ति गाम् ॥ १२ ॥

प्रस्तरेषु—समतलपाषाणेषु ॥ १२ ॥

पतितैः पतमानैश्च पादपस्थैश्च मारुतः।
कुसुमैः पश्य, सौमित्रे! क्रीडन्निव समन्ततः ॥ १३ ॥

‡विक्षिपन् विविधाः शाखाः [2] नगानां कुसुमोत्कचाः।
मारुतः चलितस्थानैः षट्पदैरनुगीयते ॥ १४ ॥

कुसुमरूपा: उद्भूता: कचा:—केशा: तथा। चलितस्थानै: इति आहिताग्न्यादि:। तत्तत् कुसुमस्थानत: चलितैरित्यर्थ:। एवं भूतै: षट्पदै: अनुगीयते—पुष्पं हरन् मारुत: अनुसृत्य गीयते इत्यर्थ: ॥ १४ ॥

§मत्तकोकिलसंनादैः नर्तयन्निव पादपान्।
शैलकन्दरनिष्क्रान्तः [3] प्रगीत इव चानिलः ॥ १५ ॥

---

* तोयं सृजतां—त्यजतां तोयमुचां रूपाणीवेति पूर्णोपमा—**गो.** तोयं सृजतां तोयमुचामिव स्थितानां पुष्पवर्णाणि सृजतां पुष्पशालिनां वनानां रूपाणि—सौन्दर्याणि पश्य ॥ † गां—भुवं रम्येषु प्रस्तरेषु—शिलाप्रदेशेषु पुष्पैरवकिरन्ति। कृष्णवर्णानां शिलानामुपरि पुष्पवर्षेण शोभातिशय: प्रतिपादित: ॥ ‡ नगानां—वृक्षाणां शाखा: विक्षिपन् मारुत इत्यन्वय: ॥ § पादपान् नर्तयन्—नर्तयितुमिव, 'लक्षणहेत्वो:' इति शतृप्रत्यय:, मत्तकोकिलसन्नादै: प्रगीत:—प्रकृष्टगीत इव—**गो.**

[1] वर्षे—ङ. [2] द्रुमाणां—ङ. [3] प्रगीयत इवानिल:—ङ.



प्रगीत:—प्रगीतवानिव। तत्रोपाधि:—शैलकन्दरनिष्क्रान्त: इति ॥ १५ ॥

तेन विक्षिपताऽत्यर्थं पवनेन समन्ततः।
अमी संसक्तशाखाग्राः ग्रथिताः इव पादपाः ॥ १६ ॥

ग्रथिता:—कृतग्रथना इव ॥ १६ ॥

[1] स एष सुखसंस्पर्शः वाति चन्दनशीतलः।
गन्धमभ्यावहन् पुण्यं श्रमापनयनोऽनिलः ॥ १७ ॥

गन्धं अभ्यावहन् वातीत्यन्वय: ॥ १७ ॥

अमी पवनविक्षिप्ताः [2] विनदन्तीव पादपाः।
[3] षट्पदैरनुकूजन्तः वनेषु मधुगन्धिषु ॥ १८ ॥

गिरिप्रस्थेषु [4] रम्येषु पुष्पवद्भिर्मनोरमैः।
*संसक्तशिखराः शैलाः विराजन्ते महाद्रुमैः ॥ १९ ॥

संसक्तशिखरा:। संपन्नशेखरा इवेत्यर्थ: ॥ १९ ॥

†पुष्पसंछन्नशिखराः मारुतोत्क्षेपचञ्चलाः।
अमी मधुकरोत्तंसाः प्रगीता इव पादपाः ॥ २० ॥

मधुकररूप: उत्तंस:—चूडा येषां ते तथा। प्रगीता इव। प्रकृष्टं तत्र गीतवन्त: इवेत्यर्थ: ॥ २० ॥

---

* संसक्तशिखरा:—परस्परसंश्लिष्टाग्रा: शैला भान्ति—**गो.** पूर्वं 'ग्रथिता इव पादपा:' इति वर्णितत्वात्, अत्र 'महाद्रुमै:' इति दर्शनाच्च एवं व्याख्यानं युक्तं भाति ॥ † मधुकरा एव उत्तंसा:—शिखराणि येषां ते। पुष्पावृतशिखरोपरि नीलोष्णीषधारिण: सगीतिकं नृत्यन्त इव भान्तीत्यर्थ:—**गो.** मधुकरा एव उत्तंसा:—कर्णपूरा:—**रा.**

[1] स एव—ङ. [2] विचरन्तीव—ङ. [3] षट्पदैरनुकूजद्भि:—ङ. झ. [4] संरूढै:—ङ.

पुष्पिताग्रांस्तु पश्येमान् कर्णिकारान् समन्ततः ।
हाटकप्रतिसंछन्नान् नरान् पीताम्बरानिव ॥ २१ ॥

अयं वसन्तः, सौमित्रे! नानाविहगनादितः ।
सीतया विप्रहीणस्य शोकसन्दीपनो मम ॥ २२ ॥

मां हि शोकसमाक्रान्तं संतापयति मन्मथः ।
[1]हृष्टं *[2]प्रवदमानश्च[3]मामाह्वयति कोकिलः ॥ २३ ॥

हृष्टं यथा तथा प्रवदमानः—प्रवदन्-कूजन् इत्यर्थः । मां आह्वयति—स्पर्धां करोतीव ॥ २३ ॥

एष [4]नत्यूहको हृष्टः रम्ये मा वननिर्झरे ।
प्रणदन् मन्मथाविष्टं शोचयिष्यति, लक्ष्मण! ॥ २४ ॥

नत्यूहकः—वञ्जुलकः-கக்கப்புள் । मा—मामित्यर्थः । वने विद्यमानो निर्झरः तथा ॥ २४ ॥

श्रुत्वैतस्य पुरा शब्दं आश्रमस्था मम प्रिया ।
मामाहूय प्रमुदिता परमं प्रत्यनन्दत ॥ २५ ॥

मामाहूयेति । प्रदर्शनार्थमिति शेषः ॥ २५ ॥

एवं विचित्राः [5]पतगाः नानारावविराविणः ।
वृक्षगुल्मलताः पश्य संपतन्ति ततस्ततः ॥ २६ ॥

पतगाः वृक्षगुल्मलताः संपतन्ति ; पश्येत्यन्वयः ॥ २६ ॥

विमिश्राः[6] विहगाः पुम्भिः † आत्मव्यूहाभिनन्दिताः[7] ॥

---

* प्रवदमानः—विजयघोषं कुर्वन् सन्-गो. † आत्मव्यूहाभिनन्दिताः—अनुरूपेण कान्तेन सहितास्सीत्येवं सजातीयैः श्लाघिताः, भृङ्गराजप्रमुदिताः—भृङ्गराजझङ्कारश्रवणसंतुष्टाः-गो

[1] हृष्टः-ङ. [2] प्रयतमानश्च-ङ. [3] समाह्वयति-ङ. [4] दात्यूहको-ज. झ. [5] विहगाः-ङ. [6] विहगैः-ङ. [7] एतदनन्तरं—विचित्राविहगा ह्यत्र प्रवदन्ति मनस्सुखं—इत्यधिकं-ङ.



भृङ्गराजप्रमुदिताः, सौमित्रे! मधुरस्वराः[1] ।
[2]अस्याः कूले प्रमुदिताः सङ्घशः शकुनास्त्विह ॥

पुम्भिः—पुंविहगैः विमिश्राः—संबद्धाः । आत्मव्यूहः—स्वस्वजातिसमूहः । भृङ्गराजप्रमुदिताः—कर्मधारयोऽयम्, प्रमुदितभृङ्गराजाः; आहिताग्न्यादिः । मधुरस्वराः सन्तः अस्याः कूले तिष्ठन्तीति शेषः । तथा प्रमुदितमधुरस्वराः भृङ्गाः भृङ्गयश्च अत्र तिष्ठन्ति । अथ अस्याः इह कूले शकुनाश्च प्रमुदिताः तिष्ठन्ति ॥ २७ ॥

[3]नत्यूहरुतविक्रन्दैः पुंस्कोकिलरुतैरपि ।
स्वनन्ति पादपाश्चेमे ममानङ्गप्रदीपनाः ॥ २८ ॥

अशोकस्तबकाङ्गारः षट्पदस्वननिस्वनः ।
मां हि पल्लवताम्रार्चिः वसन्ताग्निः प्रधक्ष्यति ॥ २९ ॥

अशोकस्तबकरूपः अङ्गारः यस्य स तथा । अग्नेरपि सशब्दत्वात् तदर्थमाह—षट्पदेत्यादि । पल्लवरूपाः ताम्राः अर्चिषो यस्य स तथा ॥ २९ ॥

न हि तां सूक्ष्मपक्ष्माक्षीं सुकेशीं मृदुभाषिणीम् ।
अपश्यतो मे, सौमित्रे! जीवितेऽस्ति प्रयोजनम् ॥ ३० ॥

* अयं हि [4]दयितः तस्याः कालो रुचिरकाननः ।
कोकिलाकुलसीमान्तः दयिताया ममानघ! ॥ ३१ ॥

अयं कालः—वसन्तकालः । कोकिलैः आकुलः—निबिडः । सीम्नां—वनसीम्नां अन्तः-मध्यप्रदेशः यस्य स तथा ॥ ३१ ॥

---

* अयं हि कालः दयिताया दयितः—इष्टः ।

[1] एतदनन्तरं—अस्याः कूले प्रमुदिताः संघशः शकुनास्त्विह—इत्यधिकं-ङ. [2] इदमर्धं कुण्डलितं-ङ. [3] दात्यूह-ङ. झ. [4] रुचिरः-ङ च. ज.

मन्मथायाससंभूतः वसन्तगुणवर्धितः ।
अयं मां धक्ष्यति क्षिप्रं शोकाग्निः नचिरादिव ॥ ३२ ॥

मन्मथायासेन संभूतः—उत्पन्नः । वसन्तगुणैः—मन्दानिलपुष्पितकाननत्वादिलक्षणैः वर्धितः—प्रज्वलितः ॥ ३२ ॥

अपश्यतः तां [1]दयितां पश्यतो रुचिरद्रुमान् ।
ममायमात्मप्रभवः भूयस्त्वमुपयास्यति ॥ ३३ ॥

आत्मप्रभवः—कामः । भूयस्त्वं—बहुत्वम् ॥ ३३ ॥

अदृश्यमाना वैदेही शोकं वर्धयते मम ।
दृश्यमानो वसन्तश्च * स्वेदसंसर्गदूषकः ॥ ३४ ॥

स्वेदसंसर्गः—कामविकारजः, तेन दूषयति मलिनीकरोतीति तथा ॥ ३४ ॥

मां ह्यद्य मृगशावाक्षी †चिन्ताशोकबलात्कृतम् ।
सन्तापयति, सौमित्रे ! क्रूरश्चैत्रो वनानिलः ‡ ॥ ३५ ॥

बलात्कृतं—बलात्कारेण पीडितम् ॥ ३५ ॥

अमी मयूराः शोभन्ते प्रनृत्यन्तस्ततस्ततः ।
स्वैः पक्षैः पवनोद्धूतैः § गवाक्षैः स्फाटिकैरिव ॥ ३६ ॥

---

* स्वेदसंसर्गदूषकः—मलयमारुतद्वारा स्वेदसम्बन्धनिवर्तकः—**गो**. † चिन्ताशोकबलात्कृतं—चिन्ताशोकाभ्यां बलात् कृतपीडं—**ति**. सन्ततस्मरणात् दुःखपरवशं—**ती**. चिन्ताशोकबलहेतुकविविधकृतिमन्तम्—**रा**. ‡ वनानिलः—अत्र चकारो द्रष्टव्यः—**गो**. वस्तुतस्तु मृगशावाक्षीचिन्ताशोकबलात्कृतमिति समस्तं पदं, सीतावियोगपीडितमिति भावः । § स्पष्टदृष्टशुभ्रनालजालत्वात् स्फाटिकैर्गवाक्षैरिव स्थितैः यद्वा स्फाटिकैः—स्फाटिकप्रधानैः, चन्द्रार्कपरंपरायास्तत्तुल्यत्वादिति भावः—**गो**. अत्र मयूराः—श्वेतमयूरा विवक्षिता वा । अतः पक्षाणां स्फटिकतुल्यत्वम् ॥

[1] वनितां—ङ. **च. ज.**



शिखिनीभिः परिवृताः त एते मदमूर्छिताः ।
[1]मन्मथाभिपरीतस्य मम मन्मथवर्धनाः ॥ ३७ ॥

शिखिनीभिः—मयूरीभिः ॥ ३७ ॥

पश्य, लक्ष्मण ! नृत्यन्तं मयूरमुपनृत्यति ।
शिखिनी मन्मथार्तैषा भर्तारं गिरिसानुषु ॥ ३८ ॥

तामेव [2]मनसा रामां मयूरोऽप्युपधावति ।
वितत्य रुचिरौ पक्षौ रुतैरुपहसन्निव * ॥ ३९ ॥

वितत्य—विस्तार्य । उपहसन्निवेति । मामिति शेषः ॥ ३८-३९ ॥

मयूरस्य वने नूनं रक्षसा न हृता प्रिया ।
तस्मात् नृत्यति रम्येषु वनेषु सह कान्तया ॥ ४० ॥
मम त्वयं विना वासः पुष्पमासे सुदुःसहः ॥ ४१ ॥

मयूरस्य प्रिया यतो नूनं न हृता तस्मादित्यन्वयः । मम त्वयं विना वासः इति । विना सीतां अयं वासः—वसन्तकालस्थितिः इत्यर्थः ॥ ४०–४१ ॥

पश्य, लक्ष्मण ! [3] संरागं तिर्यग्योनिगतेष्वपि ।
[4]यदेषा शिखिनी कामात् भर्तारं रमतेऽन्तिके ॥ ४२ ॥

संरागः—समीचीनो रागः ॥ ४२ ॥

[5]मामप्येवं विशालाक्षी जानकी जातसंभ्रमा ।
मदनेनाभिवर्तेत यदि नापहृता भवेत् ॥ ४३ ॥

---

* तां मयूरीं उपहसन्निव—इति वा ॥

[1] मन्मथाग्नि—**ङ**. [2] तरसा—**ज**. [3] संरागः—**च. ज**. [4] अधुना शिखिनी कामात् भर्तारमभिवर्तते—**च. ज**. [5] ममाप्येवं—**ज**.

पश्य, लक्ष्मण ! पुष्पाणि निष्फलानि भवन्ति मे ।
पुष्पभारसमृद्धानां वनानां शिशिरात्यये ॥ ४४ ॥

वनानां पुष्पाणि निष्फलानि इति । सीतायाः अभावात् भोगसाधनानि न भवन्तीत्यर्थः ॥ ४४ ॥

*रुचिराण्यपि पुष्पाणि पादपानामतिश्रिया ।
निष्फलानि महीं यान्ति समं मधुकरोत्करैः ॥ ४५ ॥

उक्तस्यैव विवरणं-रुचिराणीत्यादि । उत्करः—समूहः ॥ ४५ ॥

[1]वदन्ति [2]रावं मुदिताः शकुनाः [3]सङ्घशः कलम् ।
आह्वयन्त इवान्योन्यं कामोन्मादकरा मम ॥ ४६ ॥

आह्वयन्त इव वदन्तीत्यन्वयः । ममेति । तत् जायते इति शेषः ॥ ४६ ॥

वसन्तो यदि तत्रापि यत्र मे वसति प्रिया ।
नूनं परवशा सीता साऽपि शोचत्यहं यथा ॥ ४७ ॥

साऽपि शोचतीति । उभयोः सामरस्यादित्याशयः ॥ ४७ ॥

†नूनं ननु वसन्तोऽयं देशं स्पृशति यत्र सा ।
कथं ह्यसितपद्माक्षी वर्तयेत् सा मया विना ॥ ४८ ॥

वसन्तोऽपि तत्रास्ति नैसर्ग्यात् । अतः साऽपि शोचत्येवेत्याह—नूनमित्यादि । स्पृशति ननु—स्पृशत्येवेत्यर्थः ॥ ४८ ॥

---

* ग्राहकान्तराणामप्यभावात् पुष्पाणां वैयर्थ्यमेवेति बोधयन्नाह—रुचिराणीति—रा.
† गूढदेशप्रापणेन तद्देशे वसन्तप्रसङ्गाभावात् न तस्याः शोकप्रसक्तिरित्याशंक्य, वसन्ताभावेऽपि मां विना जीवितं न धारयिष्यतीत्याह—नूनमिति—गो. यद्यपि तत्र वसन्तो न भवेत् कदाचित्; तथापि मया विना सा कथं वर्तयेत्—जीवेत्। मद्विरह एव तन्नाशे पर्याप्त इति भावः—ति.

[1] नदन्ति—च. [2] कामं—ज. [3] सर्वशः—ङ.



*अथ वा वर्तते तत्र वसन्तो यत्र मे प्रिया ।
किं करिष्यति सुश्रोणी सा तु निर्भर्त्सिता परैः ॥ ४९ ॥

अथ तत्र वसन्तप्रवृत्तिः अकिञ्चित्करी, परकृतपीडया कामप्रसङ्गस्य अनवकाशात् इत्याह—अथ वेत्यादि । किं करिष्यतीति । वसन्त इति शेषः ॥ ४९ ॥

†श्यामा पद्म[1]पलाशाक्षी मृदुपूर्वाभिभाषिणी ।
नूनं वसन्तमासाद्य परित्यक्ष्यति जीवितम् ॥ ५० ॥

परनिर्बन्धात् आत्मीयवियोगाच्च जीवितत्याग एव तस्याः प्राप्तः इत्याह—श्यामेत्यादि ॥ ५० ॥

दृढं हि हृदये बुद्धिः मम [2]संप्रति वर्तते ।
नालं वर्तयितुं सीता साध्वी मद्विरहं गता ॥ ५१ ॥

परित्यक्ष्यतीत्यस्यैव विवरणं—दृढमित्यादि ॥ ५१ ॥

मयि भावस्तु वैदेह्याः तत्त्वतो विनिवेशितः ।
ममापि भावः सीतायां सर्वथा विनिवेशितः ॥ ५२ ॥

मयि भाव इत्यादिना च उभयोरपि सामरस्यं दर्शितम् ॥

एष पुष्पवहो वायुः सुखस्पर्शो हिमावहः ।
तां विचिन्तयतः कान्तां पावकप्रतिमो मम ॥ ५३ ॥

---

* वसन्तप्राप्तिमङ्गीकृत्याह—अथ वेति—गो. वसन्तः किं करिष्यति? परकृतपीडाकरे कामपीडाऽनवकाशादिति प्राञ्चः । परे तु, तत्र वसन्तो नास्त्येव । तत्सत्त्वे मया विना सा कथं तत्र तिष्ठेत्? आगतैव स्यादित्यर्थः । तदेव सूचयन्नाह—अथ वेति । परनिर्भर्त्सनवशात् नायातीत्याशय इत्याहुः—ति. † यतः परैः निर्भर्त्सिताऽऽगन्तुं न शक्नोति, अतः—श्यामेत्यादि ॥

[1] विशालाक्षी—ङ. [2] संपरिवर्तते—च.

अतः—एष पुष्पवह इत्यादि । हिमावहोऽपि पावकप्रतिमः तां चिन्तयतो मम जायते ॥ ५३ ॥

*सदा सुखमहं मन्मे यं पुरा सह सीतया ।
मारुतः स विना सीतां शोकं वर्धयते मम ॥ ५४ ॥
†तां विना स विहङ्गो यः पक्षी प्रणदितस्तथा ।

तां विनेत्यादि । 'प्रणदितस्तथा' इति, 'विहगः प्रीतिकारकः' इति च प्राचीनः पाङ्कः । यः पक्षी तस्याः संयोगकाले तथा प्रणदितः—अतिसुखं प्रणदितवान्, स एवासौ विहङ्गमः पक्षी तां विना अन्यथा च दुःखप्रणादवानपि जायते इत्यर्थः ॥ ५४ ॥

वायसः पादपगतः प्रहृष्टमभि[1]कूजति ॥ ५५ ॥
एष वै तत्र वैदेह्याः विहगः प्रीतिकारकः ।
[2]पक्षी मां तु विशालाक्ष्याः समीपमुपनेष्यति ॥ ५६ ॥

यथा अस्य पक्षिणः स्वयं एकरूपो विनादः तत्संयोगवियोगोपाधिभ्यां सुखदुःखाभ्यां जायते मे, तस्या अप्येवमेव एतत् पक्षि-

---

* यं मारुतं सुखं—सुखावहं मन्ये, स मारुत इत्यन्वयः । † मध्ये यत्किञ्चिदाश्वासनं दृष्टमनुवदति द्वाभ्यां—तामिति । तदा—प्रथमदर्शनकाले, सीताया वियोगपूर्वकाले वा वायसः—पक्षी विहङ्गः—आकाशगतस्सन् यः प्रणदितः—परुषं वाशितवान्, स इदानीं तां विना—तद्विरहावस्थायां पादपगतस्सन् प्रहृष्टं यथा तथा अभिनर्दति । पूर्वं आकाशगतस्सन् परुषनादेन तद्विश्लेषं सूचितवान्, इदानीं पादपगतस्सन् प्रहृष्टनादेन अस्याः संश्लेषं सूचयतीत्यर्थः । प्रतिहारकः—नियोजकः—**गो.** अत्र आकाशगतस्य वायसस्य परुषं वाशितं इत्येकमनिष्टसूचकम् । वृक्षगतस्य तस्यैव सहर्षनर्दनमित्यपरं शुभसूचकं च कीर्तितम् । तदेतद्द्वयमपि उत्तरपद्येन यथाक्रमं पूर्वोत्तरार्धाभ्यां विव्रियत इति द्रष्टव्यम् । प्रतिहारकः विश्लेषसूचक इत्यर्थः । उपनेष्यति—भाविनं संयोगं सूचयतीति भावः—इति केचित् ।

[1] नर्दति—ङ. [2] पति—ङ.



नादो भविष्यतीति संभावयति—वायस इत्यादि । त्रयं एकं वाक्यम् । राक्षसादिवत् वायसशब्दः स्वार्थाणन्तः प्रसिद्धः । यः एषः पादपगतः वायसः पक्षी तत्र प्रहृष्टं अभिकूजति, मद्वियोगे वैदेह्याः प्रियकरः सोऽसौ तत्र च एतस्याः समीपेऽपि कूजिष्यति । अतश्चायं पक्षी मां विशालाक्ष्याः समीपं उपनेष्यति । साऽपि एतच्छब्दश्रवणे मां स्मृत्वा दुःखिता वत्स्यतीत्यर्थः । *अनामा तु 'प्रणदितस्तदा' इति 'विहगः प्रतिहा(का)रकः' इति च प्रकल्प्य कयाचन कष्टपिष्टया योजयति । तदसाङ्गत्यं स्पष्टमेव । तत्पृष्ठभाविनः सर्वेऽपि तथैव मदेनोद्धताः स्खलन्तीति विभावनीयम् ॥ ५६ ॥

[1]पश्य, लक्ष्मण ! संनादं वने मदविवर्धनम् ।
पुष्पिताग्रेषु वृक्षेषु द्विजानां उपकूजताम् ॥ ५७ ॥

विक्षिप्तां पवनेनैतां असौ तिलकमञ्जरीम् ।
षट्पदः सहसाऽभ्येति मदोद्धूतामिव प्रियाम् ॥ ५८ ॥

कामिनामयमत्यन्तं अशोकः शोकवर्धनः ।
स्तबकैः पवनोत्क्षिप्तैः तर्जयन्निव मां स्थितः ॥ ५९ ॥

अमी, लक्ष्मण ! दृश्यन्ते चूताः कुसुमशालिनः ।
†विभ्रमोत्सिक्तमनसः [2]साङ्गरागा नरा इव ॥ ६० ॥

विभ्रमोत्सिक्तमनसः—शृङ्गारोद्रिक्तचित्ताः ॥ ६० ॥

सौमित्रे ! पश्य पम्पायाः चित्रासु वनराजिषु ।
किंनराः, नरशार्दूल ! विचरन्ति [3]ततस्ततः ॥ ६१ ॥

---

* अनामा—अनामधेय इति निन्दायाम् । महेश्वरतीर्थः स्यात् । † विभ्रमोत्सिक्तमनसः—विलासगर्वितमनसः—**गो.**

[1] शृणु—झ. [2] साङ्गरागाङ्गना इव—ङ. [3] समन्ततः—ङ.

इमानि शुभगन्धीनि पश्य, लक्ष्मण ! सर्वशः ।
नलिनानि प्रकाशन्ते *जले तरुणसूर्यवत् ॥ ६२ ॥

†एषा प्रसन्नसलिला पद्मनीलोत्पलायुता ।
हंसकारण्डवाकीर्णा पम्पा सौगन्धिकान्विता ॥ ६३ ॥

जले तरुणसूर्याभैः षट्पदाहतकेसरैः ।
पङ्कजैः शोभते पम्पा समन्तादभिसंवृता ॥ ६४ ॥

जले षट्पदाहतकेसरैः—जले भ्रमरपातितपुष्पधूलिभिः ‡ अभिसंवृता—व्याप्ता शोभते ॥ ६४ ॥

चक्रवाकयुता नित्यं चित्र[1]प्रस्थवनान्तरा[2] ।
मातङ्गमृगयूथैश्च शोभते सलिलार्थिभिः ॥ ६५ ॥

चित्रप्रस्थानि वनान्तराणि यस्याः सा तथा । प्रस्थः इह प्रदेशवाची ॥ ६५ ॥

[3]पवनाहतवेगाभिः ऊर्मिभिः विमलेऽम्भसि ।
पङ्कजानि विराजन्ते §ताड्यमानानि, लक्ष्मण ! ॥ ६६ ॥

अम्भसि पङ्कजानि विराजन्ते इत्यन्वयः ॥ ६६ ॥

पद्मपत्रविशालाक्षीं सततं [4]पङ्कजप्रियाम् ।
अपश्यतो मे वैदेहीं जीवितं नाभिरोचते ॥ ६७ ॥

नाभिरोचत इति । ‖मह्यमिति शेषः ॥ ६७ ॥

---

* जले तरुणसूर्यवत्—प्रतितरङ्गं प्रतिफलितबालसूर्यवत्—गो. अभूतोपमैषा—रा.
† एषेत्यादि । शोभत इति शेषः—गो. ‡ एतद्रीत्या, पङ्कजैः इत्यस्य तत्सम्बन्धिभिरित्यर्थः । अथ वा 'पद्मजैः' इति पाठः स्यात् । § ताड्यमानानि—चलन्तीति यावत् ।
‖ अथ वा मे—मह्यं जीवनं नाभिरोचत इत्यन्वयः ।

[1] स्थल—ङ. [2] एतदनन्तरं—क्रौञ्चसारससंघुष्टा विचित्रकुसुमोत्करा—इत्यधिकं—झ.
[3] पवनाहित—ङ. झ. [4] प्रियदर्शनाम्—ङ.



अहो ! कामस्य वामत्वं यो गतामपि दुर्लभाम् ।
स्मारयिष्यति कल्याणीं कल्याणतरवादिनीम् ॥ ६८ ॥

कामस्य वामत्वं—कुटिलत्वम् । स्मारयिष्यतीति । स्मारयतीति यावत् ॥ ६८ ॥

*शक्यो धारयितुं कामः भवेदद्यागतो मया ।
यदि भूयो वसन्तो मां न हन्यात् पुष्पितद्रुमः ॥ ६९ ॥

कामः—कामतापः । अद्यागतो वसन्तः भूयः—अत्यधिकं मां न हन्याचेत् इत्यर्थः ॥ ६९ ॥

यानि स्म रमणीयानि तया सह भवन्ति मे ।
तान्येवारमणीयानि जायन्ते मे तया विना ॥ ७० ॥

पद्मकोशपलाशानि [1]दृष्ट्वा दृष्टिर्हि मन्यते ।
सीताया नेत्रकोशाभ्यां सदृशानीति, लक्ष्मण ! ॥ ७१ ॥

पद्मकोशस्य पलाशानि दलानि तथा । नेत्रकोशाभ्यां—नेत्रपुटाभ्याम् ॥ ७१ ॥

पद्मकेसरसंसृष्टः वृक्षान्तरविनिःसृतः ।
निश्वास इव सीतायाः वाति वायुः मनोहरः ॥ ७२ ॥

पद्मकेसरेत्यादिविशेषणाभ्यां कविसमयीयशैत्यसौरभ्यमान्द्यगुणप्रदर्शनम् ॥ ७२ ॥

सौमित्रे ! पश्य पम्पायाः दक्षिणे गिरिसानुनि ।
पुष्पितां कर्णिकारस्य यष्टिं परमशोभनाम् ॥ ७३ ॥

---

* वसन्तः मां न हन्याचेत्, कामः कथञ्चित् मया धारयितुं शक्यः । सदा स्थित एव हि कामः । परन्तु वसन्त एव उद्दीपको जात इत्यर्थः ।

[1] द्रष्टुं—च. झ.

आधिकं शैलराजोऽयं धातुभिः सुविभूषितः ।
विचित्रं सृजते रेणुं वायुवेगविघट्टितम् ॥ ७४ ॥
*गिरिप्रस्थास्तु, सौमित्रे ! सर्वतः संप्रपुष्पितैः ।
निष्पत्रैः सर्वतो रम्यैः प्रदीप्ता इव किंशुकैः ॥ ७५ ॥
पम्पातीररुहाश्चेमे [1]संसिक्ताः मधुगन्धिनः ।
†मालतीमल्लिकाषण्डाः करवीराश्च पुष्पिताः ॥ ७६ ॥

अत्र द्वित्राः प्रक्षिप्ताः क्वचित् दृश्यन्ते‡ । ते तु उपेक्ष्यन्ते । पम्पातीरे रुहन्तीति तथा । इगुपधलक्षणः कः । संसिक्ताः—सेकेन वर्धिताः । मालती—जातिः ॥ ७६ ॥

केतक्यः सिन्धुवाराश्च वासन्त्यश्च सुपुष्पिताः ।
[2]माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च सर्वशः ॥ ७७ ॥

वासन्ती—हेमपुष्पिका—சம்முல்லை । माधवी—कुसुम्भिका—குருக்கி । कुन्दगुल्माः—गुल्मरूपकुन्दाः ॥ ७७ ॥

चिरिबिल्वाः मधूकाश्च वञ्जुलाः वकुलास्तथा ।
चम्पकास्तिलकाश्चैव नागवृक्षाः सुपुष्पिताः ॥ ७८ ॥

चिरिबिल्वाः—नक्तमालाः—குயில் । वकुलाः प्रसिद्धाः—மகிழ் ॥ ७८ ॥

नीपाश्च वरणाश्चैव खर्जूराश्च सुपुष्पिताः ।
पद्मकाश्चोपशोभन्ते नीलाशोकाश्च पुष्पिताः ॥ ७९ ॥

पद्मकाः—गन्धवृक्षविशेषाः ॥ ७९ ॥

---

* गिरिप्रस्थाः प्रदीप्ता इव—ज्वलन्त इव भान्तीत्यर्थः ॥ † अत्र सर्वत्र 'दृश्यन्ते' (श्लो. 81) इत्यस्याकर्षः ॥ ‡ सौमित्रे पश्य, अधिकं शैलराजोऽयं—इति श्लोकद्वयं स्यात्, यतः तिलकेनापि तत्र व्याख्यातम् ॥

[1] संसक्ताः-ङ. [2] मातुलिङ्गाश्च पूर्णाश्च-ङ.



लोध्राश्च गिरिपृष्ठेषु सिंहकेसरपिञ्जराः ।
अङ्कोलाश्च कुरण्टाश्च [1]पूर्णकाः पारिभद्रकाः ॥ ८० ॥

पूर्णकाः—शाल्मलिभेदाः । पारिभद्रकः—मन्दारः—கல்யா-முருக்கு ॥ ८० ॥

चूताः पाटलयश्चैव कोविदाराश्च पुष्पिताः ।
मुचुलिन्दार्जुनाश्चैव दृश्यन्ते गिरिसानुषु ॥ ८१ ॥

'मुचुलिन्दस्तु निम्बः'—எலும்பிச்சை ॥ ८१ ॥

*केतकोद्दालकाश्चैव शिरीषाः शिंशुपाः धवाः ।
शाल्मल्यः किंशुकाश्चैव रक्ताः कुरवकास्तथा ।
[2]तिमिशाः नक्तमालाश्च चन्दनाः [3]स्पन्दनास्तथा[4] ॥८२॥

उद्दालकः—सेलुः—நறுவிலி । कुरवकाः—सैरेयकाः—குறன் । स्पन्दनाः—तिमिशभेदाः ॥ ८२ ॥

पुष्पितान् पुष्पिताग्राभिः लताभिः परिवेष्टितान् ।
द्रुमान् पश्येह, सौमित्रे ! पम्पाया रुचिरान् बहून् ॥८३॥

वातविक्षिप्तविटपान् यथाऽऽसन्नान् द्रुमानिमान् ।
[5]लताः समनुवर्तन्ते मत्ता इव [6]वरस्त्रियः ॥ ८४ ॥

पादपात् पादपं गच्छन् शैलात् शैलं वनाद्वनम् ।
[7]वाति नैकरसास्वादः †संमोदित इवानिलः ॥ ८५ ॥

---

* अत्र 'दृश्यन्ते' इत्यस्यानुकर्षः. † संमोदित इव—जातानन्द इव-रा.

[1] चूर्णकाः-च. ज. [2] तिनिशाः-ङ. [3] स्यन्दना-ङ. [4] एतदनन्तरं—छिन्ताकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः—इत्यधिकं-ङ. झ. [5] वृताः-ङ. [6] पतिस्त्रियः-ङ. [7] याति-ङ.

केचित् पर्यासकुसुमाः पादपा मधुगन्धिनः ।
[1]केचिन्मुकुलसंवीताः श्यामवर्णा इवाबभुः ॥ ८६ ॥

इदं मृष्टमिदं स्वादु प्रफुल्लमिदमित्यपि ।
[2]रागमत्तो मधुकरः कुसुमेष्ववलीयते ॥ ८७ ॥

[3]निलीय पुनरुत्पत्य सहसाऽन्यत्र गच्छति ।
मधुलुब्धो मधुकरः पम्पातीरद्रुमेष्वसौ ॥ ८८ ॥

इयं कुसुमसङ्घातैः उपस्तीर्णा सुखाकृता ।
स्वयं निपतितैः भूमिः शयनप्रस्तरैरिव ॥ ८९ ॥

इयमित्यादि । स्वयं निपतितैः कुसुमसमूहैः उपस्तीर्णा इयं भूमिः शयनप्रस्तरैः — शयनार्थतल्पप्रसारणैरिव सुखाकृता — सुखकरी, 'सुखप्रियादानुलोम्ये' इति डच् ॥ ८९ ॥

विविधा विविधैः पुष्पैः तैरेव नगसानुषु ।
[4]विशीर्णाः पीतरक्ताभाः, सौमित्रे ! प्रस्तराः कृताः ॥

विविधा इत्यादि । नगसानुषु विशीर्णाः पीतरक्ताभाश्च तथा । तैः नानाविधैरेव पुष्पैः नानाविधाः प्रस्तराः — शय्याः कृताः इत्युत्प्रेक्षा ॥ ९० ॥

*हिमान्ते पश्य, सौमित्रे ! वृक्षाणां पुष्प[5]संभवम् ।
पुष्पमासे हि तरवः † संघर्षादिव पुष्पिताः ॥ ९१ ॥

---

* हिमान्ते - वसन्ते । विचित्रं पुष्पाणां संभवं पश्येत्यन्वयः ॥ † संघर्षादिव — परस्परस्पर्धयेव । स्पर्धासूचनमेव — षट्पदनादिताः अन्योन्यं आह्वयन्तः 'यूयमिव वयमपि पुष्पिताः' इत्यादिकलहाह्वानं कुर्वन्त इवेति ॥

[1] केचित्कुसुम–ङ. [2] रागयुक्तो–च. [3] निपीय–ङ. [4] विस्तीर्णाः–ङ. विशीर्णैः–झ. [5] संचयम्–ङ.



आह्वयन्त इवान्योन्यं नगाः षट्पदनादिताः ।
कुसुमोत्तंसविटपाः शोभन्ते [1]बहु, लक्ष्मण ! ॥ ९२ ॥

कुसुममयोत्तंसयुक्ताः विटपिनस्तथा ॥ ९१–९२ ॥

एष कारण्डवः पक्षी विगाह्य सलिलं शुभम् ।
रमते कान्तया सार्धं काममुद्दीपयन् मम ॥ ९३ ॥

*मन्दाकिन्यास्तु यदिदं रूपमेवं मनोहरम् ।
स्थाने जगति विख्याताः गुणास्तस्या मनोरमाः ॥ ९४ ॥

मन्दाकिन्याः — पम्पानद्याः यदेवं मनोहरं रूपमस्ति, तस्मात् तस्याः ये गुणाः जगति विख्याताः तत् सर्वं स्थाने — युक्तम् ॥ ९४ ।

यदि दृश्येत सा साध्वी यदि चेह [2]वसेमहि ।
स्पृहयेयं न शक्राय नायोध्यायै, रघूत्तम ! ॥ ९५ ॥

वसेमहीति । इहेति शेषः । शक्रायेति । तत्पदप्राप्तये इत्यर्थः ॥ ९५ ॥

न ह्येवं रमणीयेषु शाद्वलेषु तया सह ।
रमतो मे भवेच्चिन्ता न स्पृहाऽन्येषु वा भवेत् ॥ ९६ ॥

उक्त एवार्थः स्पष्टीक्रियते — न ह्येवमित्यादि । चिन्ता न भवेदिति । राज्यभ्रंशादिचिन्ता न भवेत् इत्यर्थः । अन्येषु — सुखान्तरेष्वपि न स्पृहा भवेत् ॥ ९६ ॥

अमी हि विविधैः पुष्पैः तरवो [3]रुचिरच्छदाः ।
काननेऽस्मिन् विना कान्तां [4]चित्तमुन्मादयन्ति मे ॥

---

* यदिदं पंपाया रूपं, एवं मन्दाकिन्याश्च मनोहरं रूपम् । कथमेतत्सादृश्यं तस्या इत्यत्र — स्थान इति–गो.

[1] भुवि–ङ. [2] वसेन्मम–ङ. [3] विविध–च. ज. [4] चिन्तामुत्पादयन्ति मे–च.

पश्य शीतजलां चेमां, सौमित्रे ! पुष्करायुताम् ।
चक्रवाकानुचरितां कारण्डवनिषेविताम् ॥ ९८ ॥
प्लवैः क्रौञ्चैश्च [1] संपूर्णां [2] वराहमृगसेविताम् ।

प्लवः—शकटलीलः—மரக்கால்நாரை ॥ ९८ ॥

अधिकं शोभते पम्पा विकूजद्भिः विहङ्गमैः ।
दीपयन्तीव मे कामं विविधा मुदिताः द्विजाः ॥ ९९ ॥
श्यामां चन्द्रमुखीं *स्मृत्वा [3] प्रियां [4] पद्मनिभेक्षणाम् ॥१००॥

स्मृत्वा—स्मारयित्वा । मे † मनः दीपयन्तीव इत्यन्वयः ॥१००॥

पश्य सानुषु चित्रेषु मृगीभिः सहितान् मृगान् ।
मां पुनः मृगशावाक्ष्या वैदेह्या विरहीकृतम् ॥ १०१ ॥
व्यथयन्तीव मे चित्तं सञ्चरन्तः ततस्ततः ।

ततस्ततः सञ्चरन्तः इति । मृगाः इति शेषः ॥ १०१ ॥

अस्मिन् सानुनि रम्ये हि मत्तद्विजगणायुते ॥ १०२ ॥
पश्येयं यदि तां कान्तां ततः स्वस्ति भवेन्मम ॥
जीवेयं खलु, सौमित्रे ! मया सह सुमध्यमा ।
[5] सेवते यदि वैदेही पम्पायाः पवनं [6] सुखम् ॥ १०३ ॥
पद्मसौगन्धिकवहं शिवं शोकविनाशनम् ।

---

* स्मृत्वा वर्तमानस्येति शेषः—गो. † अत्र मूले 'मनो मे दीपयन्तीव' इति पाठः स्यात् । अथवा मन इत्यध्याहारो वा ।

[1] संकीर्णां—ङ. [2] महामृगनिषे—च. [3] मन्मथो वर्धते हि मे—ङ. [4] चन्द्रनिभे—ङ [5] सेवेत—च. [6] शुभम्—च.



'मम स्वस्ति भवेत्' इत्यस्यैव प्रपञ्चनं—जीवेयमित्यादि । उच्यमानविशेषणत्रयविशिष्टं पम्पायाः पानीयं मया सह सेवते यदि, तदा जीवेयमित्यन्वयः ॥ १०३ ॥

*धन्याः, लक्ष्मण ! सेवन्ते पम्पोपवनमारुतम् ॥ १०४ ॥

धन्याः इति । सस्त्रीकाः इति शेषः ॥ १०४ ॥

श्यामा पद्मपलाशाक्षी प्रिया विरहिता मया ।
कथं धारयति प्राणान् †विवशा जनकात्मजा ॥ १०५ ॥

विवशा इति शत्रुवशगत्वादेव ॥ १०५ ॥

किं नु वक्ष्यामि राजानं धर्मज्ञं सत्यवादिनम् ।
[1] जनकं पृष्टसीतं तं कुशलं ‡जनसंसदि ॥ १०६ ॥

पृष्टा सीता येन सः पृष्टसीतः । किं नु कुशलं वक्ष्यामि ? न किमपि ॥ १०६ ॥

या मामनुगता §मन्दं पित्रा [2] प्रव्राजितं वनम् ।
सीता [3] सत्पथमास्थाय क्व नु सा वर्तते प्रिया ॥१०७॥

मन्दं—मन्दभाग्यम् ॥ १०७ ॥

तया विहीनः कृपणः कथं, लक्ष्मण ! धारये ।
यामामनुगता राज्यात् भ्रष्टं [4] विगतचेतसम् ॥ १०८ ॥

कथं धारय इति । प्राणानिति शेषः ॥

---

* पद्मसौगन्धिकेत्यार्धमत्रैवान्वितं भवेत् । गोविन्दराजोपि तथैवाह । † विवशा—प्राणत्यागेऽपि न स्वतन्त्रा—गो. ‡ चतुर्णां पुरतः किं वक्ष्यामीति लोकोक्तिः । § मन्दं—शनैः—रा.

[1] सीतायाः जनकं पृष्टः—ङ. झ. [2] प्रस्थापितं—ङ. च. [3] धर्मं समास्थाय—च. [4] विहतचेतनम्—ङ.

तं *चार्वञ्चित[1]पद्माक्षं सुगन्धि शुभमव्रणम् ।
अपश्यतो मुखं तस्याः †सीदतीव[2]मनो मम ॥ १०९ ॥

अञ्चिते-पूजिते पद्मतुल्ये अक्षिणी यस्य स तथा ॥ १०९ ॥

‡[3]सितहास्यान्तरयुतं गुणवन्मधुरं हितम् ।
वैदेह्या वाक्यमतुलं कदा श्रोष्यामि, लक्ष्मण ! ॥ ११० ॥

सितेन हास्येन—विनोदवचनेन च अन्तरे-गर्भे युतम् । गुणवत्-प्रसादवत् ॥ ११० ॥

[4]प्राप्य दुःखं वने श्यामा सा मां मन्मथकर्शितम् ।
नष्टदुःखेव हृष्टेव साध्वी साध्वभ्यभाषत ॥ १११ ॥

वने दुःखं प्राप्यापि नष्टदुःखेव साध्वी साधु अभ्यभाषत ॥

किं नु वक्ष्यामि कौसल्यां अयोध्यायां, नृपात्मज !
§क्व सा स्नुषेति पृच्छन्तीं कथं चातिमनस्विनीम् ॥

गच्छ, लक्ष्मण ! पश्य त्वं भरतं भ्रातृवत्सलम् ।
न ह्यहं जीवितुं शक्तः तामृते जनकात्मजाम्[5] ॥ ११३ ॥

इति रामं महात्मानं विलपन्तं अनाथवत् ।
उवाच लक्ष्मणो भ्राता वचनं [6]युक्तमव्ययम् ॥ ११४ ॥

अव्ययम्—अनपायार्थम् ॥ ११४ ॥

---

* अञ्चितानि—पूजितानि, स्निग्धानीति यावत् , पक्ष्माणि ययोस्ते—अञ्चितपक्ष्मणी अक्षिणी यस्य तत्-गो. † सीदतीव—विशीर्यत इव । ‡ सितहास्यान्तरयुतं—'कान्तस्मिता लक्ष्मण जातहासा' इत्युक्तरीत्या स्मितेन— नैसर्गिकस्मितेन, हास्यान्तरेण—आगन्तुकहास्येन च युक्तं-गो. § क्व सा स्नुषा ? कथं च सा वर्तत इति पृच्छन्तीमित्यर्थः ।

[1] पक्ष्माक्षं-ङ. झ. [2] मतिः-ङ. [3] मित-ङ. [4] प्राप्त-ङ. [5] एतदनन्तरं—इति रामस्तु विलपन् हतनौरिव सागरे । न ददर्श तदा पारं शोकस्य पुरुषर्षभः—इत्यधिकं-ङ. [6] व्यक्त-ङ.



*संस्तम्भ, राम ! भद्रं ते, मा शुचः, पुरुषोत्तम !
†नेदृशानां मतिर्मन्दा भवत्यकलुषात्मनाम् ॥ ११५ ॥

संस्तम्भ-निरुन्धि, शोकमिति शेषः । नेदृशानामिति । स्वतः अकलुषात्मनामपि ईदृशानां—एवं शोकोपलालनं कुर्वतां मतिः मन्दा—मन्दप्रज्ञा भवति ॥ ११५ ॥

‡स्मृत्वा वियोगजं दुःखं त्यज स्नेहं प्रिये जने ।
अतिस्नेहपरिष्वङ्गात् वर्तिरार्द्राऽपि दह्यते ॥ ११६ ॥

यदेवं, अतः—स्मृत्वेत्यादि । 'संयोगाः विप्रयोगान्ताः' इति न्यायेन प्रियजनविषये अवश्यंभाविवियोगजदुःखं स्मृत्वा तद्गतं स्नेहं अतिस्नेहसङ्गं त्यज । विपक्षे बाधकमाह-अतिस्नेहेत्यादि । आर्द्रा-जलसिक्ताऽपि वर्तिः अतिस्नेहपरिष्वङ्गेन दह्यत एव । एवं शान्तमपि चित्तं अतिस्नेहपरिष्वङ्गे तद्वियोगमूलशोकाग्निना सर्वथा तप्येतैवेत्यर्थः ॥

यदि गच्छति पातालं ततोऽप्यधिकमेव वा ।
सर्वथा [1]रावणस्तावत् न भविष्यति, राघव ! ॥ ११७ ॥

ततोऽप्यधिकमिति । पातालादप्यधिकं गुप्तप्रदेशमिति यावत् । न भविष्यतीति । नशिष्यत्येवेत्यर्थः ॥ ११७ ॥

प्रवृत्तिर्लभ्यतां तावत् तस्य पापस्य रक्षसः ।
ततो §हास्यति वा सीतां निधनं वा गमिष्यति ॥

प्रवृत्तिः—वृत्तान्तः । तावत्-प्रथमम् ॥ ११८ ॥

---

* संस्तंभ—धैर्यमवलम्बस्वेत्यर्थः-गो. संस्तंभ, आत्मानमिति शेषः । † अकलुषात्मनामपीदृशानां शोकमनसां मतिर्मन्दा नेति न, अपितु मन्दैव-ति. ‡ स्मृत्वा-एतावताऽनुभूतं, अनुभूयमानं च चिन्तयित्वेत्यर्थः ॥ § हास्यतीत्यादौ रावण इत्यध्याहार्यम् । हास्यति—दास्यतीति यावत् ।

[1] रावणस्तात-ङ.

*यदि [1] याति दितेर्गर्भं रावणः सह सीतया ।
तत्राप्येनं हनिष्यामि न चेत् [2] दास्यति मैथिलीम् ॥

दितेः—असुरमातुः ॥ ११९ ॥

स्वास्थ्यं भद्रं भजस्वार्य ! त्यज्यतां कृपणा मतिः ।
अर्थो हि [3] नष्टकार्यार्थैः [4] अयत्ने नाधिगम्यते ॥ १२० ॥

स्वास्थ्यं—स्वस्वभावप्रतिष्ठाम् । नष्टकार्यार्थैः अर्थः—प्रयोजनं अयत्ने—यत्नाभावे नाधिगम्यते ॥ १२० ॥

उत्साहो बलवान्, आर्य ! नास्त्युत्साहात् परं बलम् ।
सोत्साहस्यास्ति लोकेऽस्मिन् न किंचिदपि दुर्लभम् ॥

अतः उत्साह एव कार्यः इत्याह—उत्साह इत्यादि । बलवानिति । कार्यसाधनसमर्थः इत्यर्थः ॥ १२१ ॥

उत्साहवन्तः पुरुषाः नावसीदन्ति कर्मसु ।
उत्साहमात्रमाश्रित्य सीतां प्रतिलभेमहि ॥ १२२ ॥

उत्साहमात्रमाश्रित्येति । शत्रुसंहारकाले पौरुषं अतः परं न संपाद्यं, अपि तु तत्प्रवृत्त्यन्तरायहर्तृ उत्साहमात्रं संपाद्यमित्यर्थः ॥१२२॥

त्यज्यतां † [5] कामवृत्तत्वं शोकं [6] संन्यस्य पृष्ठतः ।
‡ महात्मानं कृतात्मानं आत्मानं [7] नावबुध्यसे ॥१२३॥

* अदितेर्गर्भमिति पाठे (गो) अदितेः—इन्द्रस्य मातुः—गो. तावत्सुरक्षितस्थानगमनेऽपीति भावः । † कामवृत्तत्वं—यथा प्रतिभाति तथा वर्तनं ; असंयम इति यावत् ॥ ‡ महात्मानं—महाधैर्यं, कृतात्मानं—शिक्षितमनस्कम्—गो. अत्र 'कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे' इति वाक्यं (युद्ध. 120-7) स्मर्तव्यम् ।

[1] यात्यदितेः—ङ. [2] दास्यति जानकीम्—ङ. [3] नष्टधैर्यार्थैः—ङ. [4] नायत्नेना—ङ. [5] कामवृत्तित्वं—ङ. [6] संत्यज्य—ङ. [7] किं न बुध्यसे—ङ.



कामवृत्तत्वम् । कामपरतन्त्रत्वमित्यर्थः । त्यज्यतामित्युक्तं त्यागं सकारणमाह—शोकमित्यादि । कामजशोकोपलालने तु कामो वर्धते । अतः तदुपलालनं पृष्ठीकार्यमित्यर्थः । महात्मा—महानुभावः । त्वं कृतात्मानं—गुरुभिः श्रुतिस्मृतिषु शिक्षितबुद्धिं आत्मानं—सदेवर्षिपूज्यनिरतिशयशौर्यवीर्यादिसकलकल्याणगुणस्वभावं त्वां किं न बुध्यसे ॥

एवं संबोधित [1] स्तत्र शोकोपहतचेतनः ।
[2] न्यस्य शोकं च मोहं च [3] ततो धैर्यमुपागमत् ॥ १२४ ॥

एवं द्वित्रवचनमात्रेण सत्त्वप्रकृतिकः आगन्तुकं तामसभावं विधूय स्वां प्रकृतिं प्राप्तवानित्याह—एवमित्यादि । मोहं—काममोहं, तज्जं शोकं च ॥ १२४ ॥

सोऽभ्यतिक्रामदव्यग्रः तामचिन्त्यपराक्रमः ।
रामः पम्पां सुरुचिरां रम्यपारिप्लवद्रुमाम् ॥ १२५ ॥

तां पम्पां अभ्यतिक्रामत् । अत्यक्रामदिति यावत् । पारिप्लवाः—वायुचञ्चलाः तीरद्रुमाः यस्याः सा तथा ॥ १२५ ॥

*निरीक्षमाणः सहसा महात्मा
सर्वं वनं [4] निर्झरकन्दरांश्च ।
उद्विग्नचेताः सह लक्ष्मणेन
विचार्य दुःखोपहतः प्रतस्थे ॥ १२६ ॥

विचार्य—अन्विष्य । अलाभादिति शेषः ॥ १२६ ॥

* सर्गार्थं पुनः संग्रहेण दर्शयति द्वाभ्यां—निरीक्षमाण इति—गो.

[1] स्तेन—च. [2] त्यक्त्य—च. [3] रामो—च, ज. [4] निर्दर—ङ.

तं मत्तमातङ्गविलास[1]गामी
गच्छन्तमव्यग्रमना महात्मा ।
स लक्ष्मणो राघव[2]मप्रमत्तः*
ररक्ष धर्मेण बलेन चैव ॥ १२७ ॥

धर्मेण—तद्बोधनेन । तत्तु 'संस्तम्भ राम' इत्युपदिष्टरूपम् ।
बलं—तद्बोधनम् । तत्तु 'यदि गच्छति पातालं' इत्याद्युक्तरूपम् ॥

तावृश्यमूकस्य समीपचारी
चरन् ददर्शाद्भुतदर्शनीयौ ।
† शाखामृगाणां अधिपः तरस्वी
[3]वितत्रसे नैव चिचेष्ट किञ्चित् ॥ १२८ ॥

एवं वृत्तमनूद्य वर्तिष्यमाणं संक्षिप्य दर्शयति—तावृश्येत्यादि ।
वितत्रसे इति । वितत्रासेति यावत् । वाल्यानीतत्वशङ्कया त्रासः ।
नैव चिचेष्टति । चेष्टां नैव चकारेत्यर्थः । भीत्येति शेषः ॥ १२८ ॥

स तौ महात्मा गजमन्दगामी
शाखामृगः तत्र [4]चिरं चरन्तौ ।
दृष्ट्वा ‡विषादं परमं जगाम
चिन्तापरीतो भयभारमग्नः ॥ १२९ ॥

उक्तार्थ एव विव्रियते—स तावित्यादि ॥ १२९ ॥

---

* अप्रमत्तः—'रामे प्रमादं मा कार्षीः पुत्र ! भ्रातरि गच्छति' इति सुमित्रया संदिष्टः-गो. † शाखामृगाणामधिपः—सुग्रीवः । ‡ विषादचिन्ताभयहेतवः उत्तरसर्गे व्यक्तीभविष्यन्ति-गो.

[1] गामिनम्-ङ. [2] मिष्टचेष्टः-च. [3] विश्रान्तिमत् तस्य बभूव चित्तम् -ङ.

[4] चरन्-च.



तमाश्रमं पुण्यसुखं शरण्यं
सदैव शाखामृगसेवितान्तम् ।
त्रस्ताश्च दृष्टाः हरयोऽभिजग्मुः
महौजसौ राघवलक्ष्मणौ तौ ॥ १३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे प्रथमः सर्गः

---

तमाश्रमं—मतङ्गशापात् वालिदुष्प्रवेशं मतङ्गाश्रमं अभयस्थानमपीत्यर्थः । सेवितः अन्तः—मध्यमः, परिसरो वा यस्य स तथा । अश्मक (१५८ १/२) मानः(?) सर्गः ॥ १३० ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे प्रथमः सर्गः

---

## द्वितीयः सर्गः

### [सुग्रीवमंत्रः]

तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ ।
वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत् ॥ १ ॥

अथ रामात् शङ्कितेन सुग्रीवेण रामाभिप्रायपरिज्ञानाय हनूमत्प्रेषणम् । तावित्यादि ॥ १ ॥

उद्विग्नहृदयः सर्वाः दिशः समवलोकयन् ।
न व्यतिष्ठत कस्मिंश्चित् देशे वानरपुङ्गवः ॥ २ ॥

न व्यतिष्ठत—न व्यवस्थितोऽभूत् ॥ २ ॥

नैव चक्रे मनः [1]स्थाने वीक्षमाणो महाबलौ ।
कपेः परमभीतस्य चित्तं व्यवससाद ह ॥ ३ ॥

---

[1] स्थातुं-च.

नैव चक्रे इति । मनः स्थाने प्रतिष्ठितं नैव अकरोत् इत्यर्थः । व्यवससाद—विषण्णं अभूत् ॥ ३ ॥

*चिन्तयित्वा स धर्मात्मा विमृश्य गुरुलाघवम् ।
सुग्रीवः परमोद्विग्नः [1]सर्वैरनुचरैः सह ॥ ४ ॥
†ततः स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः ।
शशंस परमोद्विग्नः पश्यंस्तौ रामलक्ष्मणौ ॥ ५ ॥

गुरुलाघवं—अवस्थाने सौख्यस्य गुरुलाघवं, अन्यतो गमने च तदुभयं च अनुचरैः—सचिवैः सह विमृश्य सचिवेभ्यः प्रतिष्ठासया भयहेतुं शशंस ॥ ४-५ ॥

एतौ वनमिदं दुर्गं वालिप्रणिहितौ ध्रुवम् ।
छद्मना चीरवसनौ प्रचरन्ताविहागतौ ॥ ६ ॥

तदेवोच्यते—एतावित्यादि । छद्मनेति । ऋषिवेषतो विश्वाससम्पादनार्थमित्यर्थः । अतः ज्ञात्वा प्रस्थातव्यमिह यथापूर्वं, न तु साहसात् प्रस्थातव्यमिति शशंसेति शेषः‡ ॥ ६ ॥

ततः सुग्रीवसचिवाः दृष्ट्वा परमधन्विनौ ।
जग्मुः गिरितटात् तस्मात् अन्यं शिखरमुत्तमम् ॥ ७ ॥

ततः—एवं सुग्रीवोक्त्यनन्तरं सुग्रीवसचिवाश्च परमधन्विनौ, अत एव शङ्काऽऽस्पदभूतौ दृष्ट्वा तस्मात् पूर्वस्थितात् गिरितटात् अन्यं

* अनुचरैः—मंत्रिभिस्सह चिन्तयित्वा—गुरुलाघवं विमृश्य-स्थाने पलायने वा गुरुलाघवं विमृश्य परमोद्विग्नोऽभूत-गो. † ततः—विचारानन्तरं प्रस्थानेच्छया सचिवेभ्यः शशंस, भयहेतुमिति शेषः-ति. रामलक्ष्मणौ शशंसेति वा । ‡ वस्तुतस्तु हनुमद्वचनानन्तरमेव रामलक्ष्मणस्वरूपज्ञानार्थं प्रवृत्तिरिति उत्तरत्र स्पष्टमवगम्यते । अतो ऽत्र स्वरक्षार्थप्रवृत्तिरेव विवक्षिता ॥

[1] सर्वैस्तैर्वानरैस्सह—च. ज.



उत्तमं तस्यैव गिरेः शिखरं जग्मुः । सुग्रीवेण सहेति शेषः । लिङ्गमशिष्यमितिन्यायेन प्रयोगतः पुल्लिङ्गोऽपि शिखरशब्दः ॥ ७ ॥

ते क्षिप्रमभिगम्याथ यूथपाः यूथपर्षभम् ।
हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे ॥ ८ ॥

ते क्षिप्रं गिरिशिखरं अभिगम्य—प्राप्य वानरश्रेष्ठं सुग्रीवं परिवार्य उपतस्थिरे ॥ ८ ॥

*[1]एवमेकायनगताः प्लवमाना गिरेर्गिरिम् ।
प्रकम्पयन्तो वेगेन गिरीणां शिखराण्यपि ॥ ९ ॥
ततः शाखामृगाः सर्वे प्लवमानाः महाबलाः ।
बभञ्जुश्च नगांस्तत्र पुष्पितान् दुर्गसंश्रितान् ॥ १० ॥
आप्लवन्तो हरिवराः सर्वतस्तं महागिरिम् ।
मृगमार्जारशार्दूलान् त्रासयन्तो ययुस्तदा ॥ ११ ॥

उक्तार्थस्यैव विवरणं—एवमित्यादि 'सर्वतस्तं महागिरिम्' इत्यन्तम् । एवं—उक्तरीत्या एकायनगताः—स्थितौ गतौ भये अभये सुखे दुःखे च एकायनं—एकमार्गं—समानयोगक्षेमत्वं गताः ते गिरेः—प्रागवस्थितगिरितटात् गिरिं—तस्य शिखरान्तरं मृगादींस्त्रासयन्तः ययुः—गतवन्तः ॥ ९-११ ॥

ततः सुग्रीवसचिवाः [2]पर्वतेन्द्रं समाश्रिताः ।
संगम्य कपिमुख्येन सर्वे प्राञ्जलयः स्थिताः ॥ १२ ॥

* एकायनगताः—एकस्थानगताः एकं—एकाकिनं सुग्रीवं उपतस्थिर इत्यनुषङ्गः-गो.

[1] एक—ङ. [2] पर्वतेन्द्रे समाहिताः—ङ.

ततस्तु [1]भयसंविग्नं* वालिकिल्बिषशङ्कितम् ।
उवाच हनुमान् वाक्यं सुग्रीवं [2]वाक्यकोविदः ॥ १३ ॥

वालिकिल्बिषशङ्कितं—वालिप्रवर्तितेन किल्बिषेण—वधेन शङ्कितः भीतः तथा ॥ १३ ॥

संभ्रमः त्यज्यतामेषः सर्वैः [3]वालिकृते महान् ।
† मलयोऽयं गिरिवरः भयं नेहास्ति वालिनः ॥ १४ ॥

संभ्रमः—चित्तक्षोभः । सर्वैः अस्माभिः । वालिकृते—वालिनिमित्तं । मलयः—मलयपर्याय ऋष्य(श्य)मूकः ॥ १४ ॥

यस्मात् उद्विग्नचेतास्त्वं प्रद्रुतः, हरिपुङ्गव !
तं क्रूरदर्शनं क्रूरं नेह पश्यामि वालिनम् ‡ ॥ १५ ॥

यस्मात्—वालिभयात् ‡ ॥ १५ ॥

यस्मात् तव भयं, सौम्य ! पूर्वजात् § पापकर्मणः ।
स नेह वाली दुष्टात्मा न ते पश्याम्यहं भयम् ॥ १६ ॥

यस्मादुद्विग्नेत्याद्युक्तार्थस्यैव विवरण—यस्मात्तवेत्यादि । तस्मात् हेतोः भयं न पश्यामि इत्यन्वयः ॥ १६ ॥

---

* वालिकिल्बिषेण—वालिकपटेन शङ्कितम्—गो. † मलय इति पर्वतमात्रस्य नाम । अयं मलयः—अयं पर्वतः गिरिवरः—ऋश्यमूक इत्यर्थः—गो. दृश्यते च कचित् नदीसामान्यस्य गङ्गापदेन, कावेरीपदेन वा व्यवहारः लोके इति भावः । अत्र-5 सर्गस्याद्यः श्लोकः द्रष्टव्यः ॥ ‡ यद्यपि 'वालिप्रणिहितौ' (श्लो-6) इत्येव सुग्रीवेणोक्तम्, तथापि, वालिनोऽन्यत्र सुग्रीवस्य भयाप्रसक्त्या सुग्रीवभयं वालिहेतुकं मन्यमानेन हनुमता एवमुक्तम् । 'वालिप्रणिहितौ' (श्लो-6) इति कथनवेलायां प्रायः हनुमान् अनुपस्थितोऽभूदिति भावयितुमस्त्यवकाशः । अत एव हनूमता उपहसितः सुग्रीवः पुनः 'वालिप्रणिहितावेतौ' (श्लो-21) इत्यादि वदतीति प्रतिभाति ॥ § पापकर्मणः—अनुजभार्यापहारिणः—गो.

[1] भयसंत्रस्तं—च. [2] वाक्यकोविदम्—ङ. [3] वालिकृतो—ङ.



अहो शाखामृगत्वं ते व्यक्तमेव, प्लवङ्गम !
लघुचित्ततयाऽऽत्मानं न स्थापयसि [1]यो *मतौ ॥ १७ ॥

शाखामृगत्वमिति । बहुचेष्टचपलचित्तमर्कटस्वभावमित्यर्थः । तदेव विवृणोति—लघ्वित्यादि । लघु—चपलम् ॥ १७ ॥

† बुद्धिविज्ञानसम्पन्नः इङ्गितैः सर्वमाचर ।
न ह्यबुद्धिं गतो राजा सर्वभूतानि शास्ति हि ॥ १८ ॥

ननु अस्तु वालिभयाभावः इह । अपि तु तत्प्रेरितपुरुषात् किल बिभेमि इत्यत्राह—बुद्धीत्यादि । बुद्धिः—निश्चयात्मिका । इङ्गितैः आन्तराभिज्ञाव्यवहारगमकैः अभिवेदनार्थक्रियाव्यवहारविशेषैः बुद्धिविज्ञानेन पारक्याशयनिश्चयज्ञानेन संपन्नः सन् पश्चात् तदुचितं सर्वं आचर । सर्वभूतानीति । निजशासनीयप्रजाजातमित्यर्थः ॥ १८ ॥

सुग्रीवस्तु ‡शुभं वाक्यं श्रुत्वा सर्वं हनूमतः ।
ततः §शुभतरं वाक्यं हनूमन्तमुवाच ह ॥ १९ ॥

§ दीर्घबाहू विशालाक्षौ शरचापासिधारिणौ ।
कस्य न स्यात् भयं दृष्ट्वा ह्येतौ सुरसुतोपमौ ॥ २० ॥

---

* मतौ—सम्यग्विचारे—गो. † बुद्धिः—सामान्यतो ज्ञानं, विशेषोज्ञानं—विज्ञानम्—गो. ‡ हनुमतः वाक्यं शुभं, अथापि शुभतरं वाक्यं सुग्रीव उवाच ॥ § शुभतरं वाक्यं किमित्यत्र—दीर्घबाहू इत्यादि । "मद्भाव एव हनुमता न ज्ञातः । नाहं वाली समागत इति बिभेमि । किन्तु वालिप्रणिहितावेतौ इत्येव बिभेमि" ॥ ननु वालिनोऽन्यत्र कथं ते भयमिति चेत्; सत्यम्; परन्तु परमगंभीरमनयो रूपं दृष्ट्वा कस्य भयं न स्यात् । अतः अस्ति मम भयस्यावकाशः—इति सुग्रीवाशयः ॥

[1] मे—ङ.

हनुमदुक्तिमङ्गीकृत्य अनादिवासनावशजं मृत्युभयं तच्छंकास्पदेषु सर्वतोऽपि द्राक् सर्वस्य भवति ; अतः न मच्चापल्यमूलं इत्याह—दीर्घबाहू इत्यादि ॥ २० ॥

वालिप्रणिहितावेतौ शङ्केऽहं पुरुषोत्तमौ ।
राजानो बहुमित्राश्च विश्वासो नात्र हि क्षमः ॥ २१ ॥

ननु वनचारिणा वानरेण वालिना कुतः अनयोः जनपदवर्तिनोः नरयोः प्रवर्तना इत्यत्राह—राजान इत्यादि । बहुमित्रा इति । बहुषु जात्यन्तरेषु च मित्रवन्तो भवन्ति। यथा गृध्रराजस्य दशरथेन, तस्य च अनेन । एवं वालिनश्चापि नरमैत्र्याः संभवात् विश्वासः न अनयोः क्षमः ॥ २१ ॥

अरयश्च *मनुष्येण विज्ञेयाः [1]छन्नचारिणः ।
विश्वस्तानां अविश्वस्ताः [2]रन्ध्रेषु प्रहरन्ति हि ॥ २२ ॥

नन्वथापि तापसाभ्यां कुतो भीतिः ? इत्यत्राह—अरयश्चेत्यादि । किमर्थं छन्नचारिणा विज्ञेयाः इत्यत्राह —विश्वस्तानामिति । वञ्चनया प्राप्तविश्वासानामित्यर्थः ॥ २२ ॥

कृत्येषु वाली मेधावी राजानो [3]बहुदर्शनाः ।
भवन्ति परहन्तारः ते ज्ञेयाः प्राकृतैर्नरैः ॥ २३ ॥

उक्तां लोकस्थितिं प्रकृत उपनीयते—कृत्येष्वित्यादि । परहन्तारः राजानः बहुदर्शनाः—बहुप्रकारवञ्चनोपायज्ञानवन्तः भवन्ति । त एते प्राकृतैः—प्राकृतवेषैः—चारैरिति यावत्, ज्ञेयाः—ज्ञातव्यान्तराशयप्रयोजनाः इत्यर्थः ॥ २३ ॥

---

* 'मनुष्येण' इति कथनं, सामान्यनीत्यनुवादरूपत्वात् घटते ।

[1] छन्न-च. [2] छिद्रेषु–ङ. [3] बहुदर्शिनः–च.



तौ त्वया *[1]प्राकृतेनैव गत्वा ज्ञेयौ, प्लवङ्गम !
इङ्गितानां प्रकारैश्च रूपव्याभाषणेन च ॥ २४ ॥

यद्येवं, अतः—तावित्यादि । इङ्गितानां—इङ्गितज्ञानसाधनानां प्रकारैः अर्थक्रियारूपैः, रूपव्याभाषणेन—तत्तत्प्रसङ्गसम्पाद्यमानतत्तदुचितसौम्यासौम्यहर्षविषादादिरूपेण तत्तत्प्रसङ्गक्रियमाणतत्तत्प्रत्युत्तरेण च इत्यर्थः ॥ २४ ॥

[2]लक्षयस्व तयोर्भावं †प्रहृष्टमनसौ यदि ।
विश्वासयन् प्रशंसाभिः इङ्गितैश्च पुनः पुनः ॥ २५ ॥
ममैवाभिमुखं स्थित्वा [3]पृच्छ त्वं, हरिपुङ्गव !
प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ ॥ २६ ॥

तयोर्भावं लक्षयस्व । अथ तौ आराद्वर्तिनि त्वयि प्रहृष्टमनसौ —उत्तरप्रत्युत्तरसन्तोषवन्तौ यदि, तदा तयोः अभिमुखं स्थित्वा ममैव प्रशंसादिभिः इङ्गितैः मामिकाभिप्रायबोधनैश्च तौ मां प्रति पुनः पुनः विश्वासयन् पश्चात् ‡मां पृच्छ । किं प्रष्टव्यमित्यतः—प्रयोजनमित्यादि । धनुर्धरौ तौ पृच्छेत्यन्वयः ॥ २६ ॥

शुद्धात्मानौ यदि त्वेतौ जानीहि त्वं, प्लवङ्गम !
व्याभाषितैर्वा [4]रूपैर्वा विज्ञेया§दुष्टता तयोः ॥ २७ ॥

---

* प्राकृतः-पामरः-दीन इत्यर्थः । † प्रहृष्टमनसौ यदि—यदि शुद्धभावौ, तदा प्रशंसाभिः, तदनुकूलेङ्गितैश्च पुनःपुनः विश्वासयन् ममैव अभिमुखं-अनुकूलं यथा भवति तथा स्थित्वा-स्थापयित्वा-गो. प्रशंसादिभिः मम विषये तेषां यथा प्रीतिः स्यात् तथा त्वया वर्तितव्यमित्याशयेन वा 'ममैवाभिमुखं स्थित्वा' इत्युक्तिः ॥ ‡ मां-मामभिकृत्य च पृच्छ ॥ § अदुष्टतेति पदच्छेदः-गो.

[1] प्राकृतेनेव–ङ. [2] लक्षयंश्च–ङ. [3] विद्धि–ङ. [4] विज्ञेया स्याद्दुष्टादुष्टता तयोः–ङ.

प्रश्नावसरं दर्शयति—शुद्धात्मानाविति । 'अस्मासु द्वेषरहिता-वित्यर्थः । यदि जानीहि तदैव प्रयोजनं तदभिमतं पृच्छ । उक्तार्थं उपसंहरति—व्याभाषितैरित्यादि । दुष्टता अदुष्टता चेति उभयथाऽपि तत्रतः पदच्छेदः ॥ २७ ॥

इत्येवं कपिराजेन संदिष्टो मारुतात्मजः ।
चकार गमने बुद्धिं यत्र तौ रामलक्ष्मणौ ॥ २८ ॥

तथेति संपूज्य वचस्तु तस्य तत्
[1]कपेः *[2]सुभीमस्य दुरासदस्य च ।
महानुभावो हनुमान् ययौ तदा
स यत्र रामोऽतिबलश्च लक्ष्मणः ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे द्वितीयः सर्गः

वीर(२९)मानः सर्गः ॥ २९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे द्वितीयः सर्गः

## तृतीयः सर्गः

[हनुमद्रामसङ्गमः]

वचो विज्ञाय हनुमान् सुग्रीवस्य महात्मनः ।
पर्वतादृश्यमूकात्तु पुप्लुवे यत्र राघवौ ॥ १ ॥

अथ हनुमतो रामलक्ष्मणोपसत्तिपूर्वकं तदाशयपरिज्ञानम् । वच इत्यादि । विज्ञायेति । श्रुत्वेति यावत् ॥ १ ॥

---

* सुभीमस्य दुरासदस्येत्याभ्यां सुनीतित्वं सूचितम्—गो.

[1] कपिः—च. [2] सुभीतस्य—च.





कपिरूपं परित्यज्य हनुमान् मारुतात्मजः ।
[1]भिक्षुरूपं ततो भेजे *शठबुद्धितया कपिः ॥ २ ॥

भिक्षुरूपं—प्राकृतभिक्षुतापसवेषं, न तु संन्यासिवेषम् । तौ प्रणिपत्येति वचनात् । शठबुद्धितया—रामलक्ष्मणस्वरूपाविश्वास-बुद्धितया ॥ २ ॥

ततः स हनुमान् वाचा श्लक्ष्णया सुमनोज्ञया ।
विनीतवदुपागम्य राघवौ †प्रणिपत्य च ॥ ३ ॥

---

* शठबुद्धितया—वञ्चकबुद्धितया—गो. अशठबुद्धितया—वानरत्वसूचितशठ-बुद्धित्वाभावेन—रा. शठबुद्धितयेत्यत्र वालिन इति शेषो वा । † अत्र भिक्षुरूपस्य हनुमतः प्रणामात् अन्यत्रापि भिक्षोः गृहस्थादिविषये प्रणामः कर्तव्य एवेति विज्ञायते । सन्यासिनः गृहस्थादिप्रणामनिषेधवचनानि अज्ञविषयाणीति मन्तव्यानि । यदि ज्ञानाधिकं दृष्ट्वा कर्ममात्रेणाधिको यतिः न प्रणमेत्, तर्हि 'विप्राणां ज्ञानतो ज्यैष्ठ्यम्' इति मनुवचनं विरुध्येत । न हि तत्प्रणामनिषेधकं मनुवचनं किञ्चित् दृश्यते । किं त्वनारभ्याधीतं अदृष्टाकरं यत्किञ्चिद्यतिप्रणामनिषेधवचनं किंवदन्तीसिद्धं, तस्य च विषयः अज्ञगृहस्थादिरूपः । यत्तु कैश्चिदुक्तं अत्यद्भुतराम-लक्ष्मणरूपदर्शनसंजाताति विस्मयः सन् अङ्गीकृतं भिक्षुरूपं विस्मृत्य 'अवशाः प्रतिपेदिरे' इतिवत् प्रणनामेति न विरोध इति—तन्न—उपक्रमविरोधात् । इङ्गितवचनादिभिः परहृदयज्ञानार्थं हि प्रेषितोऽयम् । न हि तथा नियुक्तः सुनिपुणमतिः सचिवधुरंधरः स्वकार्यविरोधकरं परिगृहीताकारविरुद्धं अविरुद्धमविस्रम्भहेतुत्वेन परेङ्गितानाविष्कारहेतुभूतं कार्यं कुर्यात् । यदप्युक्तं 'रूपमेवास्यैतन्महिमानं व्याचष्टे' इतिन्यायेन दर्शनमात्रेणैतौ सुग्रीवविरोधिनिरसनदक्षाविति निश्चित्य परिगृहीतवेषान्तरस्य स्वस्य वानरत्वं प्रकटयितुं नमस्कारं कृतवानिति न दोष इति (तीर्थः)—तदपि न—तथा सति 'सुग्रीवो नाम' इत्यादि वक्ष्यमाणमेव प्रथमं कथयेत् । केचित्तु—भिक्षुः ब्रह्मचारी, अतो न दोष इत्याहुः—तन्न—तादृशभिक्षुत्वस्य पूर्वमेव सिद्धत्वेन इदानीमपरिग्राह्यत्वात् । अपरे तु सर्वथा 'कपिरूपं परित्यज्य' इत्युपक्रमात्, उपरिष्टात् प्रच्छन्नत्वोक्त्या च मानुष-रूपाङ्गीकारावश्यंभावात् तद्रूपविशिष्टं ब्रह्मचर्यमेवात्र भिक्षुशब्देनोच्यत इति न विरोध इत्यूचिरे । तत्पक्षे तु पूर्वोक्तया दिशा दूषणं चिन्त्यम्—गो. भिक्षुरूपं—प्राकृततापस-रूपम्—ति. 'किं देशोऽयं' इत्यादिविचिकित्सानुदयार्थं तदनुगुणविरक्तरूपं न तु परम-हंससन्यासिरूपं तत् इति तिलकाशयः ॥

[1] भिक्षुवद्ब्रह्मचारी च रामदर्शनकाङ्क्षया:—ङ.

आबभाषे तदा वीरौ यथावत् प्रशशंस च ।

विनीतवत्—विनीतः सन् यथावत् प्रशशंसेत्यर्थः । न तु वृथा स्तुतिः ॥ ३ ॥

संपूज्य [1]विधिवद्वीरः हनुमान् [2]मारुतात्मजः ॥ ४ ॥
उवाच कामतो वाक्यं मृदु सत्यपराक्रमौ ।

कामतः—तापसवेषच्छन्नत्वतः स्वेच्छया मृदु उवाच ॥ ४ ॥

राजर्षिदेवप्रतिमौ तापसौ संशितव्रतौ ॥ ५ ॥
*देशं कथमिमं प्राप्तौ भवन्तौ †वरवर्णिनौ ।
त्रासयन्तौ मृगगणान् अन्यांश्च वनचारिणः ॥ ६ ॥
पम्पातीररुहान् वृक्षान् वीक्षमाणौ समन्ततः ।

अन्यांश्च—रक्षोऽसुरादीन् । समन्ततः वीक्षमाणौ इति । किंचिद्वस्तु अन्वेषमाणौ इत्यर्थः ॥ ६ ॥

‡इमां नदीं शुभजलां शोभयन्तौ [3]तपस्विनौ ॥ ७ ॥
धैर्यवन्तौ §सुवर्णाभौ कौ युवां चीरवाससौ ।

सु—शोभनः वर्णः—आभा—कान्तिश्च ययोस्तौ तथा ॥ ७ ॥

निःश्वसन्तौ वरभुजौ पीडयन्ताविमाः प्रजाः ॥ ८ ॥
¶सिंहविप्रेक्षितौ वीरौ [4]सिंहातिबलविक्रमौ ।

---

* इमं दुर्गमं देशं कथं प्राप्तौ–गो. † वरवर्णिनौ—स्निग्धरूपवन्तौ–गो. ब्रह्मचारिश्रेष्ठौ–ति. ‡ इमां नदीमिति । विस्तृतत्वेन सरस्यपि नदीत्वोपचार इति केचित् । नद्येवेत्यन्ये–ति. पम्पायाः सरस्त्वेपि स्वल्पतया पूर्वापरप्रवाहवत्त्वेन नदीत्वमविरुद्धम्–गो. § सुवर्णाभौ—सुवर्णसदृशशरीरौ–रा. रामस्य श्यामत्वेऽपि लक्ष्मणस्य पीतवर्णत्वात् छत्रिन्यायात् सुवर्णकान्तित्वम्–गो. परन्तु 'सर्व एव सुवर्णः' 'हिरण्मयः पुरुषः' इत्यादिश्रुतयः चिन्तनीया अत्र ॥ ¶ सिंहविप्रेक्षितौ—सिंहस्येव विप्रेक्षितं—वीक्षणं ययोस्तौ–गो.

[1] विधिवद्वीरौ–च. ज. [2] वानरोत्तमः–च. [3] तरस्विनौ–च. [4] महाबलपराक्रमौ–ङ.



निःश्वसन्ताविति । किंचिद्दुःखवशेनेति शेषः । पीडयन्ताविति । त्रासयन्तौ स्वरूपमात्रेण इति यावत् ॥ ८ ॥

शक्रचापनिभे चापे गृहीत्वा [1]शत्रुसूदनौ ॥ ९ ॥
श्रीमन्तौ रूपसंपन्नौ वृषभश्रेष्ठविक्रमौ ।
हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ * ॥ १० ॥
प्रभया पर्वतेन्द्रोऽयं युवयोरवभासितः ।
† राज्यार्हावमरप्रख्यौ कथं देशमिहागतौ ॥ ११ ॥
पद्मपत्रेक्षणौ वीरौ जटामण्डलधारिणौ ।

कथं देशमिहागताविति । देशं हित्वा इह आगतावित्यर्थः । आकारतो महाराजत्वनिश्चयात् एवंवादः ॥ ११ ॥

अन्योन्यसदृशौ वीरौ देवलोकादिवागतौ ॥ १२ ॥
यदृच्छयेव संप्राप्तौ चन्द्रसूर्यौ वसुन्धराम् ।
विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ ॥ १३ ॥
सिंहस्कन्धौ [2]महोत्साहौ समदाविव गोवृषौ ।

समदौ—हृष्टौ गोवृषौ, वृषुसेचने, वृषौ—सेकक्षमौ । तरुणवृषभाविति यावत् ॥ १३ ॥

‡ आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः ॥ १४ ॥
सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः ।
उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम् ॥ १५ ॥
ससागरवनां कृत्स्नां विन्ध्यमेरुविभूषिताम् ।

---

* नरर्षभाविति—एतादृशौ युवां कौ इत्यन्वयः । † राज्येत्यादित्रयः श्लोका एकान्वयाः । कथं—किमर्थम्–गो. ‡ द्वयोर्बाहुचतुष्टयवत्त्वात् बहुवचनम्–गो.

[1] शत्रुनाशने–ङ. [2] महासत्त्वौ–ङ.

इमे च धनुषी चित्रे श्लक्ष्णे चित्रानुलेपने ॥ १६ ॥
प्रकाशेते यथेन्द्रस्य वज्रे हेमविभूषिते ।

चित्रं अनुलेपनं—स्वर्णभूषणं ययोः ते तथा ॥ १६ ॥

संपूर्णा निशितैर्बाणैः तूणाश्च शुभदर्शनाः ॥ १७ ॥
जीवितान्तकरैर्घोरैः [1] श्वसद्भिरिव [2] पन्नगैः ।
महाप्रमाणौ [3] विस्तीर्णौ तप्तहाटकभूषितौ ॥ १८ ॥
खड्गावेतौ विराजेते निर्मुक्ताविव पन्नगौ ।
एवं मां परिभाषन्तं कस्माद्वै नाभिभाषथः ॥ १९ ॥

"निर्मुक्तो मुक्तकञ्चुकः" । कस्माद्वै—कस्मात् हेतोः नाभिभाषथः—प्रत्युत्तरं न वदतः ॥ १७–१९ ॥

* सुग्रीवो नाम धर्मात्मा कश्चिद्वानर[4]यूथपः ।
वीरो विनिकृतो भ्रात्रा जगत् भ्रमति दुःखितः ॥ २० ॥

ननु तापसेन अकिञ्चित्करेण राज्ञा आभाषणानर्हेण किं प्रतिवचनमित्याशङ्क्य प्रत्युत्तरप्राप्तिहेतुभूतं सुग्रीवोपादिष्टं 'ममैव प्रशंसाभिः' इत्याद्युक्तमवलम्ब्य अक्षुद्रत्वबोधनायाह—सुग्रीवो नामेत्यादि । विनिकृतः—निरस्तः ॥ २० ॥

प्राप्तोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना ।
राज्ञा वानरमुख्यानां हनूमान् [5] नाम वानरः ॥ २१ ॥
युवाभ्यां [6] सह धर्मात्मा सुग्रीवः सख्यमिच्छति ।
तस्य मां सचिवं [7] वित्तं वानरं पवनात्मजम् ॥ २२ ॥

* एवं स्ववाक्सौष्ठवेन तूष्णींभूतौ दृष्ट्वा स्वकार्यमावेदयति—सुग्रीव इत्यादिना—गो.

[1] ज्वलद्भिरिव—च. [2] पावकैः—ङ. [3] विवृतौ—ङ. [4] पुङ्गवः—च.
[5] मारुतात्मजः—ङ. [6] स हि—च. [7] विद्धि—ङ.



ननु त्वदीयेन राज्ञा अस्मदन्तिकप्रेषणं किंनिमित्तं? इत्यत्राह—युवाभ्यामित्यादि ॥ २२ ॥

भिक्षुरूपप्रतिच्छन्नं सुग्रीवप्रिय[1]काम्यया ।
ऋश्यमूकादिह प्राप्तं कामगं [2] कामरूपिणम् ॥ २३ ॥

वानरसचिवस्य तव एवं मानुषं रूपं कुतः? इत्यत्राह—भिक्षुरूपेत्यादि । तत्रापि हेतुमाह—कामगं कामरूपिणमिति । वित्तमिति पूर्वेणान्वयः ॥ २३ ॥

एवमुक्त्वा तु हनुमान् तौ वीरौ रामलक्ष्मणौ ।
[3] वाक्यज्ञौ [4] वाक्यकुशलः पुनः नोवाच किंचन ॥ २४ ॥
एतच्छ्रुत्वा वचस्तस्य रामो * लक्ष्मणमब्रवीत् ।
प्रहृष्टवदनः श्रीमान् भ्रातरं पार्श्वतः स्थितम् ॥ २५ ॥
सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ।
तमेव कांक्षमाणस्य ममान्तिकमुपागतः ॥ २६ ॥

तमेव—सुग्रीवमेव ॥ २६ ॥

तमभ्यभाष, सौमित्रे ! सुग्रीवसाचिवं कपिम् ।
वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तं, [5]अरिन्दम ! ॥ २७ ॥

तमभ्यभाषेति । अभिभाषस्वेति यावत् ॥ २७ ॥

नानृग्वेदविनीतस्य नायजुर्वेदधारिणः ।
नासामवेदविदुषः शक्यमेवं प्रभाषितुम् ॥ २८ ॥

नानृग्वेदेत्यादि । ऋग्वेदे हि विनयः—संहितापदक्रमाणां प्रत्येकं बहुस्वतंत्रत्वात् उपसंहितप्रादुर्भावबाहुल्यात् तदपेक्षितप्रातिशाख्यपारिषदावित्यादिविनयपूर्वकः—शिक्षापूर्वकोऽभ्यासः अपेक्ष्यते ।

* मन्त्रिणा स्वामिनो वचनं न नीतिरिति सौमित्रिं नियोजयति—गो.

[1] कारणात—च, ज. [2] कामचारिणम्—ङ. [3] वाक्यज्ञो—ङ
[4] वाक्यकुशलौ—ङ. [5] अरिन्दमम्—ङ.

तत्पाठशूरत्वे उक्तविनयपूर्वकत्वं सेत्स्यति । यजुर्वेदस्य बहुसंचारत्वात् विवेचनपूर्वकं धारणं दुष्करं, तदुभयपूर्वम् । सामवेदस्य स्वरूपमेव सहस्रवर्त्मत्वात् तथा । ऊहादेश्च दुर्बोधत्वात् तस्य तत्त्वबोधनमेव च दुष्करम् । विनयादियुक्ततया यस्य वेदत्रयधारणाध्यापनशक्तिः अस्ति, तेनैव एवं प्रभाषितुं शक्यम् ; नान्येनेत्यर्थः । वेदविद्यानिष्णातत्वं सत्यस्तुतिप्रदर्शनार्थम् ॥ २८ ॥

नूनं व्याकरणं कृत्स्नं अनेन बहुधा श्रुतम् ।
बहु व्याहरताऽनेन न किञ्चिदपशब्दितम् ॥ २९ ॥

व्याकरणं बहुधा श्रुतमित्यत्र हेतुमाह—बह्वित्यादि ॥ २९ ॥

*न मुखे नेत्रयोर्वाऽपि ललाटे च भ्रुवोस्तथा ।
अन्येष्वपि च [1]गात्रेषु दोषः संविद्यते क्वचित् ॥ ३० ॥

दोषो न संविद्यते इति । व्यवहारसमय इति शेषः ॥ ३० ॥

†[2]अविस्तरमसंदिग्धं अविलम्बितम[3]व्यथम् ।
उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे ॥ ३१ ॥

---

*इङ्गितैरप्यसौ विश्वासयोग्य इत्याह—न मुखे इति—ति. शिक्षा चानेन श्रुतेत्याह चतुर्भिः—न मुख इत्यादिभिः । लोके केषाञ्चित् व्यवहारदशायां मुखादिषु सर्वत्र, यत्र कुत्रापि वा विकारो दृश्यते । न तथाऽत्रेति भावः । तदुक्तं शिक्षायां—गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ न शिरः कम्पयेत् गात्रं भ्रुवौ चाप्यक्षिणी तथा । तैलपूर्णमिवात्मानं तत्तद्वर्णं प्रयोजयेत् ’ इति—गो. † उरःस्थं—मन्द्रं कण्ठगं—मध्यमम् । तादृशं वाक्यं मध्यमे स्वरे वर्तते । न मन्द्रं, न मध्यमं ; न द्रुतं, न विलम्बितं चेत्यर्थः । इदं चतुर्दशदोषाभावानामुपलक्षणम् । तथाऽह शिक्षाकारः—शङ्कितं भीतमुद्घुष्टं अव्यक्तमनुनासिकम् । काकुस्वरं शीर्षगतं तथा स्थानविवर्जितम् । विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् । व्याकुलं तालुभिन्नं च पाठदोषाश्चतुर्दश’ इति । अन्यत्राप्युक्तं—‘उपांशुदुष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् । निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम् ’ । इति—गो. उरःस्थं मध्यमारूपेण, कण्ठगं वैखरीरूपेण—ति. रा.

[1] सर्वेषु—च. [2] अविस्वर—ङ. [3] मद्रुतम्—क.



एवं व्यवहारापेक्षितान्तरस्थूलसौष्ठवे उक्त्वा वागिन्द्रियसौष्ठवमाह—अविस्तरमित्यादि । अव्यथं—असङ्कलितम् । उरःस्थं—उरःस्थाक्षरविषये । कण्ठगं—कण्ठादितत्तत्स्थानगतम् । शेषवर्णविषये सर्वतो मध्यमे स्वरे—नादे वर्तते, न तु मन्द्रतारयोः ॥ ३१ ॥

*संस्कारक्रमसंपन्नां [1]अद्रुतामविलम्बिताम् ।
उच्चारयति कल्याणीं वाचं हृदयहारिणीम् ॥ ३२ ॥

संस्कारक्रमः—प्रथमं धातुप्रातिपदिकप्रकृतिः । ततः तिङादि । ततः आन्तराङ्गिकाङ्गप्रत्ययादेशाः । ततः तेषां सन्धिः—इत्येवमात्मकः क्रमः । मध्यमस्वरेति विशेषणव्यावर्त्यांशः—अद्रुतामविलम्बितामिति ॥ ३२ ॥

†अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया ।
कस्य नाराध्यते चित्तं उद्यतासेररेरपि ॥ ३३ ॥

त्रिस्थानव्यञ्जनस्थयेति । उरःकण्ठमुखलक्षणत्रिस्थानजनिमद्व्यञ्जनोपेतयेत्यर्थः ॥ ३३ ॥

एवंविधो यस्य दूतः न भवेत् पार्थिवस्य तु ।
सिध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ! ॥ ३४ ॥

---

*संस्कारः—व्याकरणकृता शब्दशुद्धिः, व्यक्तपदत्वमिति यावत् । क्रमः—वर्णानां क्रमिकता, व्यक्ताक्षरत्वमिति यावत् । कल्याणीं—इतरगुणवतीं, हृदयहारिणीं—मधुरां वाणीम् । तदिदमुक्तं शिक्षायां—‘ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तथाऽक्षरा । धैर्यं लयसमत्वं च षडेते पाठका गुणाः ’ इति—गो. † त्रिस्थानानि—उरःकण्ठशिरांसि, व्यज्यन्ते एषु वर्णा इति व्यञ्जनानि । त्रिस्थानरूपव्यञ्जनेषु तिष्ठतीति तथा । तथात्वं च न तदुपपन्नत्वम् । शिरस्यतत्स्थ निषिद्धत्वात् ‘शीर्षगतं तथा’ इति ह्युदाहृतम् ; किन्तु उदात्तानुदात्तस्वरितत्वम् । तथोक्तं शिक्षायां—‘ अनुदात्तो हृदि ज्ञेयः मूर्ध्न्युदात्त उदाहृतः । स्वरितः कण्ठमूलीयः पार्श्वास्ये प्रचयस्य तु ’ इति—गो.

[1] अन्यूनाधिकविस्तराम्—ङ.

*एवं गुणगणै[1]र्युक्ताः यस्य स्युः कार्यसाधकाः ।
तस्य सिध्यन्ति सर्वार्थाः [2]दूतवाक्यप्रचोदिताः ॥ ३५ ॥

एवमुक्तस्तु सौमित्रिः सुग्रीवसचिवं कपिम् ।
अभ्यभाषत वाक्यज्ञः वाक्यज्ञं पवनात्मजम् ॥ ३६ ॥

विदिता नौ गुणाः, विद्वन्! सुग्रीवस्य महात्मनः ।
तमेव चावां मार्गावः सुग्रीवं प्लवगेश्वरम् ॥ ३७ ॥

नौ—आवयोः । मार्गावः—मार्गयावः इति यावत् ॥ ३७ ॥

यथा ब्रवीषि, हनुमन्! सुग्रीववचनादिह ।
तत्तथा हि करिष्यावः वचनात् तव, सत्तम! ॥ ३८ ॥

यथा ब्रवीषीति । सख्यमिच्छतीति यदवादीः, तत्तथैव करिष्यावः इत्यर्थः ॥ ३८ ॥

तत् तस्य वाक्यं [3]निपुणं निशम्य
प्रहृष्टरूपः पवनात्मजः कपिः ।
मनः समाधाय †जयोपपत्तौ
सख्यं तदा कर्तुमियेष ताभ्याम् ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे तृतीयः सर्गः

जयोपपत्ताविति । सुग्रीवस्येति शेषः । बीगौ(३९)मानः सर्गः ॥ ३९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे तृतीयः सर्गः

* व्यतिरेकेण उक्तस्यैव अन्वयमुखेन कथनं—एवं गुणगुणैरिति ॥ † जयोपपत्तौ—वालिजयोपपत्तिनिमित्तम्—गो. सुग्रीवविजयसिद्धौ—रा.

[1] युक्तः यस्य स्यात्कार्यसाधकः—ङ. [2] हितवाक्य—ङ. [3] मधुरं—ङ.



## चतुर्थः सर्गः

[ रामऋश्यमूकगमनम् ]

ततः प्रहृष्टो हनुमान् कृत्यवानिति तद्वचः ।
श्रुत्वा [1]मधुरभावं च सुग्रीवं मनसा गतः ॥ १ ॥

अथ अवगतसर्ववृत्तान्तेन हनुमता रामलक्ष्मणयोः सुग्रीवसमीपप्रापणम् । ततः प्रहृष्ट इत्यादि । तद्वचः—तस्य रामस्य वचः—"सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः । तमेव कांक्षमाणस्य ममान्तिकमुपागतः" इत्येवंरूपं श्रुत्वा, तत्र एतद्वचसा 'कपीन्द्रस्य महात्मनः' इति सोपचारप्रयोगतः मधुरभावं—सुग्रीवविषये सौम्यभावं; 'तमेव कांक्षमाणः' इत्यनेन सुग्रीवे किञ्चित् कृत्यवान् इति विज्ञाय प्रहृष्टो हनुमान् सुग्रीवं—सुग्रीवाभिमतसिद्धिं मनसा गतः—मनसा दृष्टवान् ॥ १ ॥

*[2]भव्यो राज्यागमस्तस्य सुग्रीवस्य महात्मनः ।
[3]यदयं कृत्यवान् प्राप्तः कृत्यं चैतदुपागतम् ॥ २ ॥

तदेव विव्रियते—भव्य इत्यादि । सुग्रीवस्य राज्यागमः भव्यः—अवश्यंभावी । कुतः इत्यतः—यदयमित्यादि । यदयं महापुरुषः किञ्चित् प्रयोजनापेक्षी प्राप्तः—आगतः । तत्प्रयोजनं चैतत् उपागतं एनं सुग्रीवमाश्रितम्, अतः इत्यर्थः ॥ २ ॥

* यत् अयं कृत्यवान्—सुग्रीवद्वारा यत्साधयितुं अपेक्षावान् रामः प्राप्तः तच्च कृत्यं उपागतं—प्राप्तकालं च, तस्मात् सुग्रीवस्य राज्यागमः भव्यः—कुशलः—दृढ इत्यर्थः ॥

[1] मधुरसंभाषं—ङ. [2] भाव्यो—च. [3] यद्रामः—ङ.

ततः परमसंहृष्टः हनुमान् प्लवगर्षभः।
प्रत्युवाच ततो वाक्यं रामं वाक्य[1]विशारदः ॥ ३ ॥

किमर्थं त्वं वनं घोरं पम्पाकाननमण्डितम्।
आगतः *सानुजो दुर्गं नानाव्यालमृगायुतम् ॥ ४ ॥

सौमुख्यावगत्यनन्तरं वनप्रवेशस्य प्रयोजनं पृच्छेति स्वस्वाम्युक्तमनुतिष्ठति—किमर्थं चेत्यादि। पम्पाकाननेन मण्डितं—अलङ्कृतम्। अन्यतो घोररूपम् ॥ ४ ॥

तस्य तद्वचनं श्रुत्वा लक्ष्मणो रामचोदितः।
आचचक्षे महात्मानं रामं दशरथात्मजम् ॥ ५ ॥

रामचोदित इति। महाप्रभुत्वादेव तथा चोदनं रामेण ॥ ५ ॥

राजा दशरथो नाम द्युतिमान् धर्मवत्सलः।
चातुर्वर्ण्यं स्वधर्मेण नित्यमेवाभ्यपालयत् ॥ ६ ॥

न द्वेष्टा विद्यते तस्य न च स द्वेष्टि कंचन।
स च सर्वेषु [2]भूतेषु पितामह इवापरः ॥ ७ ॥
अग्निष्टोमादिभिः यज्ञैः इष्टवान् आप्तदक्षिणैः[3]।

सर्वसेव्यत्वे सर्वानुग्राहकत्वे च पितामहदृष्टान्तः। देवासुरयोरशेषयोः अविशेषेण औरसपुत्रत्वात्, इन्द्ररावणादेः अविशेषेण स्वपितृपितामहप्रेम्णा सादरसदोपास्यत्वात्, तदुपासनानुरूपेण भगवदेकानुग्रहे रावणादेश्च अविवादात् ॥ ७ ॥

---

* अनुजत्वं आकारसाम्यात्, 'तमभ्यभाष' इति नियोजनाच्च-गो.

[1] विशारदम्-च. [2] लोकेषु-ङ. [3] एतदनन्तरं—अयोध्याधिपतिर्वीरः इक्ष्वाकूणां महारथः—इत्यधिकं-झ.



तस्यायं पूर्वजः पुत्रः रामो नाम जनैः श्रुतः ॥ ८ ॥
शरण्यः सर्वभूतानां पितुर्निर्देशपारगः।

निर्देशः—नियोगः, तत्पारं गच्छतीति तथा। समासकल्पत्वात् एवंवादः ॥ ८ ॥

[1]वीरो दशरथस्यायं पुत्राणां गुणवत्तमः ॥ ९ ॥
राजलक्षणसंपन्नः संयुक्तो राजसंपदा।

संयुक्तः इति। संयुज्यमान इति यावत् * ॥ ९ ॥

राज्याद्भ्रष्टो वने वस्तुं † मया सार्धमिहागतः ॥ १० ॥
भार्यया च [2]महातेजाः सीतयाऽनुगतो वशी।
‡ दिनक्षये महातेजाः प्रभयेव दिवाकरः ॥ ११ ॥

राज्याद्भ्रष्ट इति किंचिन्निमित्तवशात् ॥ १०-११ ॥

अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः।
कृतज्ञस्य बहुज्ञस्य लक्ष्मणो नाम नामतः ॥ १२ ॥

भ्रातृशब्दस्य सामान्यवाचित्वात् अवरः इति ॥ १२ ॥

सुखार्हस्य महार्हस्य सर्वभूतहितात्मनः।
ऐश्वर्येण च हीनस्य [3]वनवासाश्रितस्य च ॥ १३ ॥
रक्षसाऽपहृता भार्या रहिते कामरूपिणा।
तच्च न ज्ञायते रक्षः पत्नी येनास्य सा हृता ॥ १४ ॥

---

* सहजतः राजसंपदा संयुक्त इति वा। † स्वस्याप्राधान्यद्योतनाय मया सार्धमित्युक्तिः। ‡ राज्यक्षयेऽपि सीताऽनुगमनेऽयं दृष्टान्तः।

[1] ज्येष्ठो-च. [2] महाभाग-च. ज. [3] वनवासे रतस्य च-च.

रहिते इति । आवाभ्यां रहितकाले इत्यर्थः । न ज्ञायत इति । विशिष्येति शेषः ॥ १४ ॥

दनुर्नाम [1]दितेः पुत्रः शापात् राक्षसतां गतः ।
आख्यातस्तेन सुग्रीवः [2]समर्थो [3]वानरर्षभः ॥ १५ ॥

दनुः—कबन्धः ॥ १५ ॥

स ज्ञास्यति महावीर्यः तव भार्यापहारिणम् ।
एवमुक्त्वा दनुः स्वर्गं भ्राजमानो [4]गतः सुखम् ॥ १६ ॥
एतत्ते सर्वमाख्यातं याथातथ्येन पृच्छतः ।
अहं चैव हि रामश्च सुग्रीवं शरणं गतौ ॥ १७ ॥
एष दत्त्वा च वित्तानि प्राप्य चानुत्तमं यशः ।
लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति ॥ १८ ॥

नाथमिच्छति—रक्षकं अपक्षते । दैवगत्या इति शेषः * ॥

[5]पिता यस्य पुरा ह्यासीत् शरण्यो धर्मवत्सलः ।
तस्य पुत्रः [6]शरण्यश्च सुग्रीवं शरणं गतः ॥ १९ ॥
सर्वलोकस्य धर्मात्मा शरण्यः शरणं पुरा ।
गुरुर्मे राघवः सोऽयं सुग्रीवं शरणं गतः [7] ॥ २० ॥
यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः ।
स रामो वानरेन्द्रस्य प्रसादमभिकाङ्क्षते ॥ २१ ॥

---

* सुग्रीवद्वारैव सीतावाप्तेः कबन्धसूचितत्वादेवमुक्तिः ॥

[1] श्रियः—ङ. [2] सामात्यो—ङ. [3] वानराधिपः—ङ, च. [4] दिवं गतः—च. [5] सीता यस्य स्नुषा—च. ज. [6] शरण्यस्य—ङ. [7] एतदनन्तरं—इक्ष्वाकूणां कुले जातः रामो दशरथात्मजः । धर्मे निगदितश्चैव पितृनिर्देशपालकः । तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः । रावणेन हृता भार्या सुग्रीवं शरणं गतः—इत्यधिकं—ङ.



येन सर्वगुणोपेताः पृथिव्यां सर्वपार्थिवाः ।
मानिताः सततं [1]राज्ञा सदा दशरथेन वै ॥ २२ ॥
तस्यायं पूर्वजः पुत्रः त्रिषु लोकेषु विश्रुतः ।
सुग्रीवं वानरेन्द्रं तु रामः शरणमागतः ॥ २३ ॥

सर्वगुणोपेताः मानिता इति । मूर्धाभिषिक्ता इति यावत् ॥

*शोकाभिभूते रामे तु शोकार्ते शरणं गते ।
कर्तुमर्हति सुग्रीवः प्रसादं [2]हरियूथपः ॥ २४ ॥
एवं ब्रुवाणं सौमित्रिं करुणं †साश्रुपातनम् ।
हनुमान् प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ २५

साश्रुपातनमिति । अस्माकमपि किञ्चिच्छरणप्रार्थना आगता किलेति दुःखवशात् ॥ २५ ॥

ईदृशाः बुद्धिसम्पन्नाः जितक्रोधा जितेन्द्रियाः ।
द्रष्टव्या वानरेन्द्रेण दिष्ट्या दर्शनमागताः ॥ २६ ॥

द्रष्टव्याः—द्रष्टुं योग्याः ॥ २६ ॥

स हि राज्यात् परिभ्रष्टः कृतवैरश्च वालिना ।
हृतदारो वने [3]त्यक्तः भ्रात्रा विनिकृतो भृशम् ॥ २७ ॥

एवं मित्रभावापन्नत्वात् द्रष्टव्या इति प्रागुक्तार्थे हेतुमाह—स हीत्यादि । सर्वात्मना त्वत्समानयोगक्षेमः इत्यर्थः ॥ २७ ॥

---

* शोकाभिभूते—शोकपरतन्त्रे, शोकार्ते—शोकपीडिते—गो. शोकाभिभूते—शोकाविष्टे—ति. † साश्रुपातनमिति रामदुःखदर्शनाद्दुःखितत्वमुच्यते—गो.

[1] प्राज्ञाः—ङ. [2] हरियूथपैः—ङ., सह यूथपैः—च. [3] त्रस्तः—च.

करिष्यति स साहाय्यं युवयोः भास्करात्मजः।
सुग्रीवः सह चास्माभिः सीतायाः परिमार्गणे ॥ २८ ॥

यदेवं, अतः—करिष्यतीत्यादि ॥ २८ ॥

इत्येवमुक्त्वा हनुमान् श्लक्ष्णं मधुरया गिरा ।
बभाषे[1] सोऽभिगच्छेम सुग्रीवमिति राघवम् ॥ २९ ॥

स हनुमानित्यन्वयः ॥ २९ ॥

एवं ब्रुवाणं धर्मात्मा हनुमन्तं स लक्ष्मणः ।
प्रतिपूज्य यथान्यायं इदं प्रोवाच राघवम् ॥ ३० ॥
कपिः कथयते हृष्टः यथावत् *मारुतात्मजः ।
कृत्यवान् सोऽपि संप्राप्तः कृतकृत्योऽसि, राघव! ॥३१॥

कपिरित्यादि । संप्राप्तः सोऽपि कृत्यवान् इति यतः कथयते, अतः—कृतकृत्योऽसि ॥ ३१ ॥

प्रसन्नमुखवर्णश्च व्यक्तं [2]हृष्टश्च भाषते ।
नानृतं वक्ष्यते वीरः हनूमान् मारुतात्मजः ॥ ३२ ॥

यथावत् कथयते इत्युक्तं अर्थं समर्थयति—प्रसन्नेत्यादि । मुखवर्णः—मुखशोभा ॥ ३२ ॥

[3]ततः स तु महाप्राज्ञः हनूमान् मारुतात्मजः[4] ।
भिक्षुरूपं परित्यज्य वानरं रूपमास्थितः ॥ ३३ ॥

---

*पूर्वमेव हनूमता 'पवनात्मजम्' (3–22) इत्युक्तम् ॥

[1] सौम्य गच्छामः–ङ., साधु गच्छामः–च. ज [2] हृष्टं स–ङ. [3] इदं पद्यं अधिकं–झ. [4] एतदनन्तरं 'जगामादाय' इत्याद्यर्धं–ङ. झ.



पृष्ठमारोप्य तौ वीरौ जगाम कपिकुञ्जरः ।
[1]जगामादाय तौ वीरौ हरिराजाय राघवौ ॥ ३४ ॥

वानरस्येदं वानरम्, आर्षः अण् । जगाम कपिकुञ्जरः इत्युक्तम् । क जगामेत्यतः—जगामादायेत्यादि । एवं पाठक्रमः*। कपिराजाय दर्शयितुं तत्समीपमिति शेषः ॥ ३३–३४ ॥

स हि विपुलयशाः कपिप्रवीरः
पवनसुतः [2]कृतकृत्यवत् प्रहृष्टः ।
गिरिवरमुरुविक्रमः प्रयातः
सुशुभ[3]मतिः सह रामलक्ष्मणाभ्याम् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे चतुर्थः सर्गः

---

उक्तार्थसङ्ग्रहः—स हीत्यादि । कृतकृत्यवत्—कृतकृत्यः सन् । आगतकार्यस्य सिद्धत्वात् तथात्वम् । गिरिवरं—ऋश्यमूकम् । रामलक्ष्मणाभ्यां सह प्रयातः । माला(३५)मानः सर्गः ॥ ३५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे चतुर्थः सर्गः

---

* अत्र 'ततस्स तु' इत्यनन्तरमेव 'जगामादाय' इत्यर्धं गोविन्दराजस्य सम्मतम् । अत एवमत्र कथनम् ।

[1] इदमर्धमधिकं–झ. [2] कृतकृत्यवान्–ङ. [3] सुखः–ङ.

## पञ्चमः सर्गः

### [सुग्रीवसख्यम्]

*ऋश्यमूकात्तु हनुमान् गत्वा तु मलयं गिरिम् ।
आचचक्षे तदा वीरौ कपिराजाय राघवौ ॥ १ ॥

अथ राममुग्रीवयोः अग्निसाक्षिकसख्यसंपत्तिः । ऋश्यमूकात्तु इत्यादि । ऋश्यमूके सुग्रीवस्य यथापूर्वमावासस्थाने रामलक्ष्मणौ स्थापयित्वा तस्मात् सुग्रीवानयनार्थं मलयं गिरिं गत्वेत्यर्थः । उक्त एव अर्थः तुशब्दद्योतितः । अग्रे 'आख्याता वायुपुत्रेण' इत्युक्त्या, तथा निवेदनपूर्वकमेव प्रापणीयत्वाच्च ॥ १ ॥

†अयं रामो महाप्राज्ञः संप्राप्तो दृढविक्रमः ।
लक्ष्मणेन सह भ्रात्रा [1] रामोऽयं सत्यविक्रमः ॥ २ ॥

अयं रामः इति मलयस्थसुग्रीवदृष्टिपर्यावर्ती, स्वपार्श्वसंनिहितश्च निर्दिश्यते ॥ २ ॥

इक्ष्वाकूणां कुले जातः रामो दशरथात्मजः ।
धर्मे ‡ निगदितश्चैव पितुर्निर्देश [2] पारगः ॥ ३ ॥

सत्यविक्रमः इत्यस्यानन्तरं इक्ष्वाकूणां कुले जातः इत्यादिना स्वरूपकथनम् । धर्मे निगदितः इति । सत्यपरिपालनरूपधर्मसिद्धिनिमित्तं पित्रा निगदितः इत्यर्थः । अत एव तस्य पितुर्निर्देशकारकः, तत्पारगश्चायम् ॥ ३ ॥

* ऋश्यमूके सुग्रीववासस्थाने राघवौ स्थापयित्वा, ततः सुग्रीवानयनार्थं ऋश्यमूकैकदेशं मलयाख्यं गिरिं गत्वेत्यन्वयः—रा. रामलक्ष्मणदर्शनभीतः सुग्रीवः ऋश्यमूकादुत्प्लुत्य गहनं मलयाख्यमृश्यमूकपर्यन्तपर्वतं गतः । हनूमान् रामलक्ष्मणौ तत्र प्रतिष्ठाप्य सुग्रीवं तत्रानीतवानिति बोध्यम्—गो. † सकृद्दर्शनेऽपि रामे जातप्रीतिर्हनुमान् भक्त्यतिशयादेवमाह । अत एव रामपदावृत्तिरपि । ‡ निगदितः—प्रसिद्धः—गो. धर्मे—स्वसत्यपरिपालनरूपधर्मनिमित्तं निगदितः—प्रेरितः, पित्रेति शेषः—ति.

[1] शूरोऽयं—ङ. [2] कारकः—च.



[1] तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः ।
* [2] रावणेन हृता भार्या स त्वां शरणमागतः ॥ ४ ॥

राजसूयाश्वमेधैश्च वह्निर्येनाभितर्पितः ।
दक्षिणाश्च तथोत्सृष्टाः गावः शतसहस्रशः ॥ ५ ॥
तपसा सत्यवाक्येन वसुधा येन पालिता ।
स्त्रीहेतोः तस्य पुत्रोऽयं रामस्त्वां शरणं गतः ॥ ६ ॥

धर्मे निगदित इत्युक्तमर्थं स्पष्टयति—राजसूयेत्यादि । स्त्रीहेतोः इति । स्त्रीदत्तवरपरिपालनहेतोरित्यर्थः ॥ ५–६ ॥

भवता सख्यकामौ तौ भ्रातरौ रामलक्ष्मणौ ।
प्रतिगृह्यार्चयस्वैतौ पूजनीयतमावुभौ ॥ ७ ॥

प्रतिगृह्य—दर्शनाकांक्षिणोः दर्शनं दत्त्वा इत्यर्थः ॥ ७ ॥

श्रुत्वा हनुमतो वाक्यं सुग्रीवो [3] हृष्टमानसः ।
[4] भयं च राघवाद्घोरं प्रजहौ विगतज्वरः ॥ ८ ॥
स कृत्वा [5] मानुषं रूपं सुग्रीवः [6] प्लवगर्षभः ।
दर्शनीयतमो भूत्वा प्रीत्या प्रोवाच राघवम् ॥ ९ ॥

* यद्यपि पूर्वं 'रक्षसाऽपहृता भार्या' 'तच्च न ज्ञायते रक्षः' (4–14) इत्येतावदेव दृश्यते, अथापि अत्र रावणपददर्शनात् सर्वमपि तदा प्रोक्तमित्येव वक्तव्यम् । 'तच्च न ज्ञायते' इत्यस्य च तादृशराक्षसवासस्थानाद्यज्ञानमेवोच्यते, न तु नाम्नोपीति मन्तव्यम् । उत्तरवाक्यान्यप्येतत् द्रढयन्ति ।

[1] अयं श्लोकः कुत्रचित् ६ श्लोकानन्तरं पठ्यते—ङ. [2] रक्षसाप—ङ. [3] वानराधिपः—ङ. [4] एतदाद्यर्धद्वयं कुण्डलितम्—ज. [5] मानसं—च. [6] प्लवगाधिपः—ङ.

दर्शनीयतमो भूत्वा । *अभ्युपेत्येति शेषः ॥ ९ ॥

भवान् धर्मविनीतश्च [1]विक्रान्तः [2]सर्ववत्सलः ।
आख्याताः वायुपुत्रेण तत्त्वतो मे भवद्गुणाः ॥ १० ॥

धर्मे विनीतः—शिक्षितः तथा ॥ १० ॥

तन्ममैवैष सत्कारः लाभश्चैवोत्तमः, प्रभो !
यत्त्वमिच्छसि सौहार्दं वानरेण मया सह ॥ ११ ॥

एषः मम सत्कारः उत्तमो लाभश्च । एष इति कः इत्यपेक्षायामाह—यत् त्वमित्यादि । वानरेण मया—तिर्यग्योनिं गतेनापीत्यर्थः ॥ ११ ॥

रोचते [3]यदि वा सख्यं बाहुरेष प्रसारितः ।
गृह्यतां पाणिना पाणिः मर्यादा बध्यतां [4]ध्रुवा ॥ १२ ॥

यदि वेति । कार्यवशादिति शेषः । प्रसारितः इति । विश्वासाय केवलं दक्षिणो हस्तो दीयते इत्यर्थः । ध्रुवा—स्थिरा । मर्यादा—अनुल्लङ्घनीयोऽन्योन्यकार्यसम्पादनाविषयकनिश्चयश्च बध्यतां—प्रतिज्ञायतामित्यर्थः ॥ १२ ॥

एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम् ।
स प्रहृष्टमना [5]हस्तं पीडयामास पाणिना ॥
[6]हृद्यं सौहृदमालम्ब्य पर्यष्वजत पीडितम् ॥ १३ ॥

हस्तं पीडयामासेति । दक्षिणहस्तं गृहीतवानिति यावत् । पीडितं पर्यष्वजतेति । गाढमालिङ्गितवानित्यर्थः ॥ १३ ॥

---

* भक्त्या रामसमीपमभ्युपेत्येत्यर्थः ।

[1] श्रुतपाः—ङ. [2] सत्यविक्रमः—ञ. [3] यदि मे—च. [4] ध्रुवम्—ङ.
[5] पाणिं—ङ. [6] हृष्टः—च. ञ.



ततो हनूमान् संत्यज्य *भिक्षुरूपमरिन्दमः ।
काष्ठयोः †स्वेन रूपेण जनयामास पावकम् ॥ १४ ॥

अथ प्राप्तसौहार्दस्य स्थैर्याय ; दनूरदेशाच्च अग्निसाक्षिकत्वसिद्धये रामप्रेरितहनुमत्प्रवृत्तिः—तत इत्यादि । पूर्वमेव भिक्षुरूपं परित्यज्य स्थितः अरिन्दमः हनूमान् स्वेनरूपेण—स्वीयेन बलेन काष्ठयोः—अरण्योः मथनेन पावकं जनयामास ॥ १४ ॥

दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य ‡[1]सत्कृतम् ।
तयोर्मध्येऽथ सुप्रीतः निदधे सुसमाहितः ॥ १५ ॥

ततः दीप्यमानं—ज्वलन्तं वह्निं तयोः मध्ये निदधे—निहितवान् । निहितं च तं पुष्पैः अभ्यर्च्य परिस्तरणादिसत्कृतं—संस्कृतं च अकरोत् ॥ १५ ॥

ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ।
सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ§ ॥ १६ ॥

प्रदक्षिणं चक्रतुरिति । 'एकमिषे' इत्यादिमन्त्रैरिति शेषः ॥

ततः सुप्रीतमनसौ तावुभौ हरिराघवौ ।
अन्योन्यमभिवीक्षन्तौ न तृप्तिमुपजग्मतुः ॥ १७ ॥
त्वं वयस्योऽसि मे हृद्यः ह्येकं दुःखं समं च नौ ।
[2]सुग्रीवो राघवं वाक्यं इत्युवाच प्रहृष्टवत् ॥ १८ ॥

---

* 'तौ त्वया प्राकृतेनेव गत्वा ज्ञेयौ प्लवङ्गम' (2-24) इति सुग्रीवेणोक्तत्वात्, तत्समीपागमनसमये तद्विश्वासार्थं पुनः हनुमता भिक्षुरूपं गृहीतमिति—रा. ति. गो. गतसर्गान्ते 'भिक्षुरूपं परित्यज्य' इत्यादेः प्रक्षिप्तत्वपक्षे न क्लेशः । कतककारस्य तु 'भिक्षुरूपं सन्त्यज्य' इत्येतत् अनुवादरूपं मतम् । † स्वेनरूपेण—वानररूपेण—गो. ‡ सत्कृतमिति अभ्यर्च्येत्यस्यानुवादः—गो. § उपागतौ, अग्निसाक्षिकमिति शेषः—गो.

[1] पूजितम्—ङ. [2] सुग्रीवं राघवो—ङ. सुग्रीवो राघवश्चैवमूचतुस्तौ प्रहृष्टवत्—ङ.

हृद्यः—हृदयङ्गमः। तदेव दर्शयति—एकं दुःखमित्यादि। समानं दुःखमित्यर्थः। प्रहृष्टवत्—प्रहृष्टः सन्॥ १८॥

ततः स पर्णबहुलां छित्त्वा शाखां सुपुष्पिताम्।
सालस्यास्तीर्य सुग्रीवः निषसाद *सराघवः॥ १९॥

सालस्य वृक्षस्य। आस्तीर्येति। राघवायेति शेषः। सराघवः—राघवसहितः॥ १९॥

† लक्ष्मणायाथ संहृष्टः हनूमान् [1] प्लवगर्षभः।
शाखां चन्दनवृक्षस्य ददौ परमपुष्पिताम्॥ २०॥
ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा।
प्रत्युवाच तदा रामं हर्षव्याकुललोचनः॥ २१॥

अथ प्रागुक्तकार्यमर्यादाबन्धनाय प्रवृत्तिः—ततः प्रहृष्ट इत्यादि॥

अहं विनिकृतः, [2] राम! चरामीह भयार्दितः।
हृतभार्यो वने ‡ त्रस्तः दुर्गमेतदुपाश्रितः॥ २२॥

इह वने इत्यन्वयः॥ २२॥

सोऽहं त्रस्तो वने भीतः वसाम्युद्भ्रान्तचेतनः।
वालिना निकृतो भ्रात्रा कृतवैरश्च, राघव!॥ २३॥
वालिनो मे, महाभाग! भयार्तस्याभयं कुरु।
कर्तुमर्हसि, काकुत्स्थ! भयं मे न भवेद्यथा॥ २४॥

अभयं कुरु—अभयदानप्रतिज्ञां कुरु इत्यर्थः॥ २४॥

---

* सराघव इत्यनेन एकासनत्वमुक्तम्—गो. † लक्ष्मणाय विषादपरिहारार्थं चन्दनशाखाऽऽस्तरणदानम्—ति. ‡ अत्रस्त इति वा—गो. वालिनः दुर्गमत्वात् अत्रस्त इत्याशयः।

[1] मारुतात्मजः—च. [2] भ्रात्रा—ङ.



एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः।
प्रत्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव॥ २५॥

लीलाविसृष्टैकेषुमात्रसाध्यत्वात्—प्रहसन्निवेति॥ २५॥

उपकारफलं मित्रं विदितं मे, महाकपे!
वालिनं तं वधिष्यामि तव भार्यापहारिणम्॥ २६॥

उपकारः फलं यस्य तत् तथा॥ २६॥

* अमोघाः सूर्यसङ्काशाः ममैते निशिताः शराः।
तस्मिन् वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः॥ २७॥
† कङ्कपत्र [1] प्रतिच्छन्नाः महेन्द्राशनिसंनिभाः।
तीक्ष्णाग्राः ऋजुपर्वाणः सरोषा [2] भुजगा इव॥ २८॥
तमद्य वालिनं पश्य [3] क्रूरैः आशीविषोपमैः।
शरैर्विनिहितं भूमौ विकीर्णमिव पर्वतम्॥ २९॥
स तु तद्वचनं श्रुत्वा [4] राघवस्यात्मनो हितम्।
सुग्रीवः परमप्रीतः [5] सुमहद्वाक्यमब्रवीत्॥ ३०॥
तव प्रसादेन, नृसिंह! राघव!
प्रियां च राज्यं च समाप्नुयामहम्।
तथा कुरु त्वं, नरदेव! वैरिणं ‡
यथा [6] निहंस्यद्य रिपुं ममाग्रजम्॥ ३१॥

---

* अमोघा इत्यादिश्लोकद्वयमेकान्वयम्। † कङ्कः— गृध्रविशेषः, तस्य पत्रैः प्रतिच्छन्नाः—मूलभागे आवृताः। बाणानां शीघ्रगमनार्थं तथा करणम्॥ ‡ वैरिणं रिपुमिति द्विरुक्त्या वैरकृतं शात्रवं, न तु जात्येत्युक्तम्—गो.

[1] परिच्छन्नाः—ङ. [2] इव पन्नगाः—ङ. [3] तीक्ष्णैः—च.ज. [4] राघवस्य मनोहितम्—ङ. [5] परमं वाक्य—च. [6] न हिंस्यात्स पुनर्ममाग्रजम्—ज. निहंस्यद्य पुं ममाग्रजम्—झ.

वैरिणं तथा कुरु इत्यन्वयः। कथमित्यतः—यथेत्यादि ॥ ३१ ॥

सीताकपीन्द्रक्षणदाचराणां
राजीव*हेमज्वलनोपमानि।
सुग्रीवरामप्रणयप्रसङ्गे
वामानि नेत्राणि समं स्फुरन्ति ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे पञ्चमः सर्गः

---

सीतादिभिः राजीवेत्यादेः क्रमादन्वयः। कपीन्द्रः—वाली। त्रयाणां वामनेत्रस्पन्दः शुभशंसी†। लेख(३२) मानः सर्गः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे पञ्चमः सर्गः

---

## षष्ठः सर्गः

### [रामेण सीताभूषणविलोकनम्]

पुनरेवाब्रवीत् प्रीतः राघवं रघुनन्दनम्।
अयमाख्याति मे,[1] राम! सचिवो मंत्रिसत्तमः।
हनूमान् यन्निमित्तं त्वं निर्जनं वनमागतः ॥ १ ॥

अथ सुग्रीवेण सीताहरणस्वदर्शनोक्तिपूर्वं प्रत्यभिज्ञानार्थं सीताऽऽभरणप्रदानम्। पुनरित्यादि।‡ आख्याति—आख्यातवान्।

---

* वालिनः पिङ्गाक्षत्वात् वालिनेत्रं हेमोपमम्। † पुरुषाणां तु अशुभशंसीति शेषः। ‡ अतिसमीपकालवृत्तत्वात् लोके इव आख्यातीति वर्तमानतया कथनम्।

[1] वीर—च.



वर्तमानसामीप्ये लट्। किमाख्यातवानित्यतः—यन्निमित्तमित्यादि। यन्निमित्तं वनमागतः, तत् पितृवचनरूपं निमित्तं आख्यातवान् इत्यर्थः ॥ १ ॥

लक्ष्मणेन सह भ्रात्रा वसतश्च वने तव।
रक्षसाऽपहृता भार्या मैथिली जनकात्मजा ॥ २ ॥

अथ रक्षसा ते भार्याऽपहारः *स्वानुभवसिद्ध एवेत्याह—रक्षसेत्यादि। अपहृता—दृष्टापहारेत्यर्थः ॥ २ ॥

त्वया वियुक्ता [1]रुदती लक्ष्मणेन च धीमता।
अन्तरप्रेप्सुना तेन हत्वा गृध्रं जटायुषम्[2] ॥ ३ ॥

अन्तरप्रेप्सुनेत्याद्यनुवादः हनुमद्वचनादेव अवगतत्वात् ॥ ३ ॥

भार्यावियोगजं दुःखं नचिरात् त्वं विमोक्ष्यसे।
अहं तामानयिष्यामि नष्टां †[3]देवश्रुतीमिव ॥ ४ ॥

अथ स्वकार्यसाधनं प्रतिज्ञातवते रामाय स्वयमपि रामकार्यसाधनं प्रतिजानीते—भार्येत्यादि। नचिरात्—अचिरादिति यावत्। नष्टां—मधुकैटभहृताम्‡। देवस्य—धर्मब्रह्मतत्त्वज्ञानस्य सप्रपञ्चं साक्षात् साधनभूता श्रुतिः—त्रयी तथा। श्रुतीमिति दीर्घः छान्दसः ॥ ४ ॥

---

* अनन्तरश्लोकादिदर्शनेन अयमपि श्लोकः हनुमद्वचनानुवादरूप इति स्वरसम्। † वेदश्रुतीं—वेदरूपश्रुतिं-गो, रा. ‡ मधुकैटभाभ्यां वेदेष्वपहृतेषु हयग्रीवरूपी भगवान् पुनः तान् आनयामासेति महाभारते मोक्षधर्मपर्वणि श्रूयते।

[1] वैदेही—ङ. [2] एतदनन्तरं—भार्यावियोगजं दुःखं प्रापितस्तेन रक्षसा—इत्यधिकं—ङ. [3] वेदश्रुतीमिव—ङ. वेदश्रुतिं यथा—झ.

रसातले वा वर्तन्तीं वर्तन्तीं वा नभःस्थले।
अहमानीय दास्यामि तव भार्यामरिन्दम! ॥ ५ ॥

वर्तन्तीमिति—वर्तमानामिति यावत् ॥ ५ ॥

इदं तथ्यं मम वचः त्वमवेहि च, राघव!
न शक्या सा *जरयितुं अपि सेन्द्रैः सुरासुरैः ॥ ६ ॥
तव भार्या, महाबाहो! भक्ष्यं विषकृतं यथा।

तथ्यं—तथ्यमेवेत्यर्थः। जरयितुं न शक्येति। आवयोः बलादिति शेषः। विषकृतं—विषमिश्रितम्। मुक्तमिति शेषः ॥ ६ ॥

त्यज शोकं, महाबाहो! तां कान्तामानयामि ते ॥ ७ ॥
अनुमानात्तु जानामि मैथिली सा न संशयः।

अथ प्रत्यक्षतो दृष्टहरणायाः त्वद्भार्यात्वं रामेत्याक्रोशलिङ्गात् निश्चिनोमित्याह—अनुमानादित्यादि। या दृष्टा सेत्यर्थः ॥ ७ ॥

ह्रियमाणा मया दृष्टा रक्षसा [1]क्रूरकर्मणा ॥ ८ ॥
क्रोशन्ती राम रामेति लक्ष्मणेति च विस्वरम्।
स्फुरन्ती रावणस्याङ्के पन्नगेन्द्रवधूर्यथा ॥ ९ ॥

क्रोशन्तीति शतृप्रत्ययो हेतौ। यतः आक्रोशन्त्यभूत्, ततः इत्यर्थः ॥ ८-९ ॥

†आत्मना पञ्चमं मां हि दृष्ट्वा [2]शैलतटे स्थितम्।
उत्तरीयं तया त्यक्तं शुभान्याभरणानि च ॥ १० ॥

* जरयितुं—गोपयितुं—रा. आत्मसात्कर्तुं—गो. † अरण्यकाण्डे ८५ सर्गे आद्यश्लोक: द्रष्टव्यः।

[1] रौद्रकर्मणा—च, ज. [2] शलतले—च.



दृष्टेत्यत्र प्रमाणं प्रत्यभिज्ञानप्रदर्शनेन सम्पादयति—उत्तरीयमित्यादि। आत्मना पञ्चममिति। चतुर्मन्त्रिसहितस्य स्वस्य पञ्चसंख्यापूरकत्वात् ॥ १० ॥

तान्यस्माभिः गृहीतानि निहितानि च, राघव!
आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हसि ॥ ११ ॥

आनयिष्यामि—आनेष्यामि ॥ ११ ॥

तमब्रवीत् ततो रामः सुग्रीवं [1]प्रियवादिनम्।
आनयस्व, सखे! शीघ्रं किमर्थं प्रविलम्बसे ॥ १२ ॥
एवमुक्तस्तु सुग्रीवः शैलस्य गहनां गुहाम्।
प्रविवेश ततः शीघ्रं [2]राघवप्रियकाम्यया ॥ १३ ॥

गहनां—दुष्प्रवेशाम् ॥ १३ ॥

उत्तरीयं गृहीत्वा तु शुभान्याभरणानि च।
इदं पश्येति रामाय दर्शयामास वानरः ॥ १४ ॥
ततो गृहीत्वा तद्वासः शुभान्याभरणानि च।
अभवद्बाष्पसंरुद्धः नीहारेणेव चन्द्रमाः ॥ १५ ॥
सीतास्नेहप्रवृत्तेन स तु बाष्पेण दूषितः।
हा प्रियेति रुदन् धैर्यं उत्सृज्य न्यपतत् क्षितौ ॥ १६ ॥
हृदि कृत्वा तु बहुशः तमलङ्कारमुत्तमम्।
निशश्वास भृशं सर्पः बिलस्थ इव रोषितः* ॥ १७ ॥

* रोषित: सर्प इव निशश्वासेति निश्वासमात्रे दृष्टान्तः।

[1] प्रियदर्शनम्—क. [2] राघवप्रति—छ.

अविच्छिन्नाश्रुवेगस्तु सौमित्रिं वीक्ष्य पार्श्वतः ।
परिदेवयितुं दीनं रामः समुपचक्रमे ॥ १८ ॥

पश्य, लक्ष्मण ! वैदेह्या संत्यक्तं ह्रियमाणया ।
उत्तरीयमिदं भूमौ शरीराद्भूषणानि च ॥ १९ ॥

शाद्वलिन्यां ध्रुवं भूम्यां सीतया ह्रियमाणया ।
उत्सृष्टं भूषणमिदं तथारूपं तु दृश्यते ॥ २० ॥

शाद्वलिन्यां—शाद्वलवत्यां भूम्यां उत्सृष्टमिति । अम्लत्वलिङ्गमाह—तथारूपं तु दृश्यते इति । अभग्नतया यथापूर्वं दृश्यते इत्यर्थः । २० ॥

एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ।
*नाहं जानामि केयूरे नाहं जानामि कुण्डले ॥ २१ ॥

नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् ।
ततः स राघवो [1]दीनः सुग्रीवमिदमब्रवीत् ॥ २२ ॥

ब्रूहि, सुग्रीव ! कं देशं ह्रियन्ती लक्षिता त्वया ।
रक्षसा रौद्ररूपेण मम [2]प्राणैः प्रिया प्रिया ॥ २३ ॥

प्राणैः प्रियेति । प्राणेभ्योऽपीष्टेत्यर्थः ॥ २३ ॥

क्व वा वसति तद्रक्षः महद्व्यसनदं मम ।
†यन्निमित्तं [3]अहं सर्वान् नाशयिष्यामि राक्षसान् ॥

यन्निमित्तं—यस्याः अपहारनिमित्तेनेत्यर्थः ॥ २४ ॥

---

* ऊर्ध्वदृष्टया सीतायाः करादप्यदर्शनादिति भावः—ति. † यन्निमित्तं—प्रियापहारितन्निमित्तम्—ति.

[1] वाक्यं—ङ. [2]प्राणप्रिया—च. [3] इमान्—ङ.



हरता मैथिलीं येन मां च रोषयता [1]भृशम् ।
आत्मनो जीवितान्ताय मृत्युद्वारमपावृतम् * ॥ २५ ॥

मम [2]दयिततरा हृता वनान्तात्
रजनिचरेण †विमथ्य येन सा ।
कथय मम रिपुं त्वमद्य वै
प्लवगपते ! [3]यमसादनं नयामि ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे षष्ठः सर्गः

---

विमथ्य—वञ्चयित्वेति यावत् । चार (२६) मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे षष्ठः सर्गः

---

## सप्तमः सर्गः

[ सुग्रीवेण रामसमाश्वासनम् ]

स एवमुक्तः सुग्रीवः रामेणार्तेन वानरः ।
अब्रवीत् प्राञ्जलिः वाक्यं ‡सबाष्पं [4]बाष्पगद्गदः ॥ १ ॥

अथ सुग्रीवः राममाश्वास्य तेन स्वकार्यसाधने शपथपूर्वं प्रतिज्ञाते सिद्धं स्वकार्यं मन्यते । स एवमुक्तः इत्यादि ॥ १ ॥

---

* अपावृतं—उद्घाटितम् । स्वयं मृत्यवे स्वागतं दत्तमिति भावः । † विमथ्य—वञ्चनया अस्मान् पराभूय—रा. बलात्कृत्येति युक्तम् । ‡ 'एकं दुःखं सुखं च नौ' (5-17) इत्यस्य प्रथमोदाहरणमिदम्—गो.

[1] भृशम्—च. [2] दयिततमा—ज. [3] यमसन्निधिं—झ. [4] बाष्पगद्गदम्—ङ.

*न जाने निलयं तस्य सर्वथा पापरक्षसः ।
सामर्थ्यं विक्रमं वाऽपि दौष्कुलेयस्य वा कुलम् ॥ २ ॥

दौष्कुलेयस्य तस्य कुलं सामर्थ्यादिकं सर्वथा जाने—जानाम्येव ॥ २ ॥

सत्यं ते प्रतिजानामि त्यज शोकमरिन्दम ।
करिष्यामि तथा यत्नं यथा प्राप्स्यसि मैथिलीम् ॥ ३ ॥

किं तदुपवर्णनेन शत्रोः ? अपि तु एतावदवबुध्यतामित्याह—सत्यं त्वित्यादि । अत्र दौष्कुलेयस्येति पदप्रयोगादेव रक्षःकुलजत्वं अवगतम् । अस्य निन्दात्वेन प्रयोगाश्रयेऽपि

---

*नन्विदं वक्ष्यमाणेन विरुध्यते । वक्ष्यति वानरप्रेषणावसरे 'द्वीपस्तस्यापरे पारे शतयोजनमायतः । अगम्यो मानुषैर्देवैः तं मार्गध्वं समन्ततः । स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः' इति । तत्र हि रावणस्य निलयसामर्थ्यपराक्रमाः सुग्रीवेण स्पष्टमवगता इति गम्यते—सत्यम्—तथापि स्वकार्ये प्रथमं प्रवर्तयितुमेवमुक्तवान् सुग्रीवः । अत एव—'ब्रूहि सुग्रीव कं देशं ह्रियन्ती लक्षिता त्वया' इत्यस्यापि प्रतिवचनं नोक्तवान् । कथं गमनदेशमपि न जानीयात्, य एवमाह 'ह्रियमाणा मया दृष्टा' इति । न चैवमादावेव मित्रद्रोहः कृतः स्यादिति वाच्यम्, दूरदर्शिना सुग्रीवेणैवं मनसि कृतम्—यदि मया रावणवृत्तान्तो ज्ञात इत्युक्तः स्यात् तदाऽतिव्यसनी रामोऽयं सीतान्वेषणे मां प्रथमं प्रवर्तयेत् । तच्चायुक्तं, वानराणां वालिवशंवदत्वेनास्मदधीनत्वाभावात् । कथञ्चित्केषाञ्चिद्वशीकरणेऽपि रावणेन कृतसख्यो वाली चास्मन्मनोरथानुरूपां प्रवृत्तिं कथं सहेत ? तथा चोभयकार्यभङ्ग इत्यभिनीतवान् सुमतिः सुग्रीवः । ननु इदानीं परमार्थतो न जानाति सुग्रीवः, पश्चात्तारया (35 सर्गे) ज्ञातवानिति किं न विकल्प्यत इति चेन्न—कामपरवशेन सुग्रीवेण रामकार्यपर्यालोचनाप्रसक्तेः–**गो.** (अधिकं तत्रैव द्रष्टव्यम्)। सर्वथा न जाने—सर्वप्रकारेण न जाने, किञ्चिज्जानामीत्यर्थः–**ती.** वस्तुतस्तु—सुग्रीवेण चतुर्दिक्ष्वपि सीतान्वेषणाय वानरप्रेषणदर्शनात्, सामान्यतो रावणविषयपरिज्ञानेऽपि रावणवधोद्योगपर्याप्तविषयपरिज्ञानाभावादेवमुक्तिरिति प्रतिभाति ॥



सीतान्वेषणाय हनुमदादिप्रेषणावसरे लङ्काद्वीपं निर्दिश्याह—'स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः' इत्येतद्वचनेन स्पष्टं आवाससामर्थ्यादिज्ञानम् ॥ ३ ॥

*रावणं सगणं हत्वा परितोष्यात्मपौरुषम् ।
तथाऽस्मि कर्ता नचिरात् यथा प्रीतो भविष्यसि ॥ ४ ॥

परितोष्यं—भवता परितोषणार्हं आत्मनः—सपरिवारस्य मम पौरुषं बलं अवलम्ब्येति शेषः । सगणं रावणं हत्वा तथा कर्ताऽस्मि नचिरात्, यथा प्रीतो भविष्यसीत्यन्वयः ॥ ४ ॥

अलं वैक्लब्यमालम्ब्य धैर्यमात्मगतं स्मर ।
[1]त्वद्विधानामसदृशं ईदृशं[2] विद्धि लाघवम् ॥ ५ ॥

असदृशं—अयुक्तम् ॥ ५ ॥

मयाऽपि व्यसनं प्राप्तं [3]भार्याहरणजं महत् ।
न चाहमेवं शोचामि न च धैर्यं परित्यजे ॥ ६ ॥
नाहं तामनुशोचामि प्राकृतो वानरोऽपि सन् ।
महात्मा च † विनीतश्च किं पुनः धृतिमान्[4] भवान् ॥

---

*सगणं—सपरिवारं रावणं हत्वा भवन्तं परितोष्य आत्मपौरुषं तथा कृतोऽस्मि, यथा प्रीतो भविष्यसीत्यन्वयः–**गो.** आत्मपौरुषं—सेनां परितोष्य–संतोष्य–**रा.** आत्मपौरुषं परितोष्य—सगणरावणवधे कृत एव मत्पौरुषस्य तृप्तिः इत्यर्थो वा । मम मनसः तृप्तिः—इत्यादिवद्व्यवहारः । † विनीतः—वृद्धैः सुशिक्षितः–**गो.**

[1] त्वद्विधानां न सदृशं–**च.** [2] बुद्धि–**च.** [3] भार्याविरहजं–**ज.** [4] महान्–**ख.**

बाष्पमापतितं धैर्यात् निग्रहीतुं त्वमर्हसि ।
मर्यादां * सत्त्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ॥ ८ ॥

सत्त्वयुक्तानां—सत्त्वगुणयुक्तानाम् ॥ ८ ॥

व्यसने वाऽर्थकृच्छ्रे वा भये वा जीवितान्तके ।
विमृशन् वै स्वया बुद्ध्या धृतिमान् नावसीदति ॥ ९ ॥

व्यसनं—इष्टवियोगजम् । अर्थकृच्छ्रं—धननाशः । भयं—चोरव्याघ्रादिजम् । जीवितस्य अन्तं करोतीति जीवितान्तकरम् । विमृशन्—पारब्धवेगमिति शेषः † ॥ ९ ॥

बालिशस्तु नरो नित्यं वैक्लव्यं [1]योऽनुवर्तते ।
स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले ॥ १० ॥

भारेति । अतिभारेत्यर्थः ॥ १० ॥

एषोऽञ्जलिर्मया बद्धः प्रणयात् त्वां प्रसादये ।
पौरुषं श्रय, शोकस्य नान्तरं [2]दातुमर्हसि ॥ ११ ॥
ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम् ।
तेजश्च क्षीयते तेषां न त्वं शोचितुमर्हसि ॥ १२ ॥
शोकेनाभिप्रपन्नस्य जीविते चापि संशयः ।
स शोकं त्यज, राजेन्द्र ! धैर्यमाश्रय केवलम् ॥ १३ ॥

---

* सत्त्वयुक्तानां—व्यवसायवतां, 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु'—गो

† तन्निवर्तनोपायं विमृशन्निति वा । अन्यथा 'सत्त्ववतां' इत्यस्वरसम् ॥

[1] योऽनुगच्छति—ङ. [2] गन्तु—ङ.



हितं वयस्यभावेन ब्रूमि नोपदिशामि ते ।
*वयस्यतां पूजयन्मे न त्वं शोचितुमर्हसि ॥ १४ ॥

ब्रूमि—ब्रवीमीति यावत् ॥ १४ ॥

मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः ।
मुखमश्रु परिक्लिन्नं वस्त्रान्तेन प्रमार्जयत् ॥ १५ ॥

प्रमार्जयत्—प्रामार्जयदिति यावत् ॥ १५ ॥

प्रकृतिस्थस्तु काकुत्स्थः सुग्रीववचनात् प्रभुः ।
संपरिष्वज्य सुग्रीवं इदं वचनमब्रवीत् ॥ १६ ॥
यत् कर्तव्यं वयस्येन स्निग्धेन च हितेन च ।
अनुरूपं च युक्तं च कृतं, सुग्रीव ! [1]तत् त्वया ॥ १७ ॥

यत्कर्तव्यमिति । शोकापनोदनार्थं इत्यर्थः ॥ १७ ॥

एष च प्रकृतिस्थोऽहं अनुनीतः त्वया, सखे !
दुर्लभो हीदृशो बन्धुः अस्मिन् काले विशेषतः ॥ १८ ॥

अस्मिन् काल इति । व्यसनकाले इति यावत् ॥ १८ ॥

किं तु यत्नः त्वया कार्यः मैथिल्याः परिमार्गणे ।
राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः † ॥ १९ ॥

दुरात्मनः इति । संहारे चेति शेषः ॥ १९ ॥

---

* मे वयस्यतां—सख्यं पूजयन्—मानयन्नित्यर्थः । † रावणस्य वशंगताया इति शेषः । राक्षसस्येत्यपि परिमार्गणेऽन्वेति—रा.

[1] मे त्वया—ङ.

मया च यदनुष्ठेयं विस्रब्धेन तदुच्यताम् ।
वर्षास्विव च सुक्षेत्रे सर्वं संपद्यते [1]मयि ॥ २० ॥

मया च यदनुष्ठेयमिति । तवेति शेषः । वर्षास्विव च सुक्षेत्र इति । उप्तं बीजमिति शेषः । संपद्यत इति । फलितं भविष्यतीत्यर्थः ॥

मया च यदिदं वाक्यं *अभिमानात् समीरितम् ।
तत् त्वया, हरिशार्दूल ! तत्त्वमित्युपधार्यताम् ॥ २१ ॥

अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
एतत्ते प्रतिजानामि सत्येनैव च † ते शपे ॥ २२ ॥

एतदिति । अनृतवचनाभावमित्यर्थः । सत्येनेति । तत्साक्षितयेत्यर्थः ॥ २२ ॥

ततः प्रहृष्टः सुग्रीवः वानरैः सचिवैः सह ।
राघवस्य वचः श्रुत्वा ‡प्रतिज्ञातं विशेषतः ॥ २३ ॥

एवमेकान्तसंपृक्तौ ततस्तौ [2]नरवानरौ ।
उभावन्योन्य[3]सदृशं [4]सुखं दुःखं प्रभाषताम् ॥ २४ ॥

संपृक्तौ—कृतसख्यसम्पन्नौ । प्रभाषतां—प्राभाषतामिति यावत् ॥ २४ ॥

---

* अभिमानात्—शौर्याभिमानात्, त्वय्यभिमानाद्वा—गो. † ते—तुभ्यम् ।

‡ विशेषतः प्रतिज्ञातं वचः श्रुत्वा—रा. राघवस्य वचः—' कर्तव्यं यद्वयस्येन ' इत्यादि श्रुत्वा, विशेषतः प्रतिज्ञातं च श्रुत्वेति वा ।

[1] तव—च. [2] हरिवानरौ—ङ. [3] सदृशौ —ङ. [4] ससुखं प्रत्यभाषताम्—ङ.



महानुभावस्य वचो निशम्य
[1]हरिर्नराणामृषभस्य तस्य ।
कृतं स मेने हरिवीरमुख्यः
तदा स्वकार्यं हृदयेन विद्वान् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे सप्तमः सर्गः

---

विद्वान् सन् स्वकार्यं कृतमित्येव हृदयेन मने । शाखा(२५)मानः सर्गः ॥ २५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे सप्तमः सर्गः

---

## अष्टमः सर्गः

### [वालिवधप्रतिज्ञा]

परितुष्टस्तु सुग्रीवः तेन वाक्येन [2]वानरः ।
[3]लक्ष्मणस्याग्रतो रामं इदं वचनमब्रवीत् ॥ १ ॥

अथ सुग्रीवेण वालिभये वैरमूले अभिहिते अभयदानपूर्वं रामेण वैरकारणप्रश्नः । परितुष्टः इत्यादि । तेन वाक्येनेति । ' अनृतं नोक्तपूर्वं ' इत्याद्युक्तवाक्येनेत्यर्थः ॥ १ ॥

सर्वथाऽहं *अनुग्राह्यः देवतानामसंशयः ।
[4]उपपन्नः गुणोपेतः सख्यौ यस्य भवान् मम ॥ २ ॥

सख्यौ—सखित्वे उपपन्नः—संपन्नः ॥ २ ॥

शक्यं खलु भवेत्, राम ! सहायेन त्वयाऽनघ !
सुरराज्यमपि प्राप्तुं स्वराज्यं किं पुनः, प्रभो ! ॥ ३ ॥

---

* देवानुग्रहविषयोऽहं, अन्यथा त्वत्सख्यं कथं मम लभ्यं स्यादित्यर्थः ।

[1] हरिर्नृपाणामधिपस्य—च. [2] हर्षितः—च. [3] लक्ष्मणस्याग्रजं शूरं—ज.
[4] उपपन्नगुणो—ङ.

सोऽहं सभाज्यो बन्धूनां सुहृदां चैव, राघव!
यस्याग्निसाक्षिकं मित्रं लब्धं राघववंशजम् ॥ ४ ॥

सभाज्यः—पूज्यः ॥ ४ ॥

अहमप्यनुरूपस्ते वयस्यः ज्ञास्यसे शनैः ।
न तु वक्तुं समर्थोऽहं [1]स्वयमात्मगतान् गुणान् ॥ ५ ॥

अनुरूपः—सदृशः । ज्ञास्यस इति । आनुरूप्यमिति शेषः । न तु समर्थ इति । 'आत्मप्रशंसा मरणम्' इति न्यायेनेत्याशयः ॥

महात्मनां तु भूयिष्ठं त्वद्विधानां कृतात्मनाम् ।
निश्चला भवति प्रीतिः धैर्य[2]मात्मवतामिव ॥ ६ ॥

भूयिष्ठं—अत्यधिकं प्रीतिः निश्चला भवति ॥ ६ ॥

*रजतं वा सुवर्णं वा [3]वस्त्राण्याभरणानि च ।
अविभक्तानि †साधूनां अवगच्छन्ति साधवः ॥ ७ ॥

साधूनां—वयस्यानामिति शेषः ॥ ७ ॥

आढ्यो वाऽपि दरिद्रो वा दुःखितः सुखितोऽपि वा ।
निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ॥ ८ ॥

वयस्यः परमा गतिः, वयस्यस्येति शेषः ॥ ८ ॥

धनत्यागः सुखत्यागः देहत्यागोऽपि वा पुनः ।
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ‡ ॥ ९ ॥

तथाविधमिति । सुखधनादित्यागप्रवर्तकमित्यर्थः ॥ ९ ॥

---

*वयस्यभावप्राशस्त्यमाह—रजतं वेत्यादित्रिभिः ॥ †साधूनां मित्राणां साधवो मित्राणि—गो. ‡अनया सुग्रीववचनभङ्ग्या आवाभ्यामेवं वर्तितव्यमिति व्यवस्था द्योत्यते—गो.

[1] त्वयि आत्मगतान्—ङ. [2] मात्मवतां वरा—ङ. [3] शुभान्याभरणानि—च.



तत्तथेत्यब्रवीद्रामः सुग्रीवं [1]प्रियवादिनम् ।
लक्ष्मणस्याग्रतो *लक्ष्म्या वासवस्येव धीमतः ॥ १० ॥

तत्तथेति । यदुक्तं वयस्ययोः धनाविभागादिकं तत् ममापि संमततरमित्यब्रवीत् इत्यर्थः । वासवस्येव लक्ष्म्या—वीरलक्ष्म्या—महदैश्वर्येण युतः रामः धीमतः लक्ष्मणस्य अग्रतः सुग्रीवमब्रवीत् इत्यन्वयः ॥ १० ॥

†ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलम् ।
सुग्रीवः सर्वतः चक्षुः वने लोलं अपातयत् ॥ ११ ॥

स्थितं दृष्ट्वेति । केवलभूमाविति शेषः ॥ ११ ॥

स ददर्श ततः सालं अविदूरे हरीश्वरः ।
‡सुपुष्पमीषत् पत्राढ्यं भ्रमरैरुपशोभितम् ॥ १२ ॥

ईषत् सुपुष्पं पत्राढ्यं—पत्रबहुलम् ॥ १२ ॥

तस्यैकां पर्णबहुलां भङ्क्त्वा शाखां [2]सुपुष्पिताम् ।
[3]सालस्यास्तीर्य सुग्रीवः निषसाद सराघवः ॥ १३ ॥

सराघवः सुग्रीवः निषसादेति । पूर्वदिवस इव द्वितीयदिवसेऽपीति शेषः ॥ १३ ॥

तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम् ।
सालशाखां समुत्पाट्य §विनीतमुपवेशयत् ॥ १४ ॥

---

*लक्ष्म्या—कान्त्या वासवस्येव स्थितस्य लक्ष्मणस्याग्रतः—गो. लक्ष्म्या—स्वतःसिद्धसंपत्त्या उपलक्षितः रामः वासवस्येव लक्ष्मणस्याग्रतः—रा. †ततः—तद्दिनापगमोत्तरं द्वितीयदिन इत्यर्थः—ति. स्थितं—भूषणग्रहण कालात्प्रभृति तिष्ठन्तमित्यर्थः । लोलं चक्षुरपातयदिति । समीचीनशाखालाभार्थं सर्वत्रान्वेषयामासेत्यर्थः—गो. ‡ईषत्पत्राढ्यं—ईषत्पत्रैः—ह्रस्वपर्णैः संपन्नं—रा. पल्लवप्रचुरं—गो. §विनीतं—एकासने स्थितिमनङ्गीकुर्वन्तं—गो.

[1] प्रियदर्शनम्—च. [2] सुशोभनाम्—ङ. [3] रामस्या—च.

*सुखोपविष्टं रामं तु प्रसन्नमुदधिं यथा ।
[1]फलपुष्पसमाकीर्णे तस्मिन् गिरिवरोत्तमे ॥ १५ ॥

सुखोपविष्टं रामं तु । दृष्ट्वेति शेषः ॥ १५ ॥

ततः प्रहृष्टः सुग्रीवः [2]श्लक्ष्णं मधुरया गिरा ।
उवाच प्रणयात् रामं हर्षव्याकुलिताक्षरम् ॥ १६ ॥
अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः ।
ऋश्यमूकं गिरिवरं हृतभार्यः सुदुःखितः ॥ १७ ॥

अहं विनिकृतः इत्यादि पूर्वदिवसोक्तार्थस्यैव स्मारणम् † ॥१७॥

सोऽहं त्रस्तो भये मग्नः [3]वसाम्युद्भ्रान्तचेतनः ।
वालिना निकृतो भ्रात्रा कृतवैरश्च, राघव! ॥ १८ ॥
वालिनो मे भयार्तस्य, सर्वलोकाभयङ्कर! ।
ममापि त्वं अनाथस्य प्रसादं कर्तुमर्हसि ॥ १९ ॥
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ।
प्रत्युवाच स काकुत्स्थः सुग्रीवं [4]प्रहसन्निव ॥ २० ॥

स एवार्थोऽनुष्ठेयः शतवारोक्तयाऽपीत्याह—एवमुक्त इति ॥२०॥

उपकारफलं मित्रं अपकारोऽरिलक्षणम् ।
‡अद्यैव तं [5]हनिष्यामि तव भार्यापहारिणम् ॥ २१ ॥

---

* सुखोपविष्टमित्यादि श्लोकद्वयमेकान्वयम् । द्वितीयरामपदमभिरामार्थकम् । प्रसन्नमुदधिं यथा—तद्वत्प्रसन्नगंभीरमित्यर्थः–गो. सुखोपविष्टं रामं ददर्शेति शेषः–रा.
† पञ्चमसर्गे (२१–२५) एतदादिश्लोकचतुष्टयपाठात् एवं व्याख्यानम् । ‡ पञ्चमसर्गे 'वालिनं तं वधिष्यामि' (२६) इति सामान्यत उक्तं, अत्र तु 'अद्यैव तं हनिष्यामि' इति विशेषः ।

[1] सालपुष्प–च. [2] श्लक्ष्णया शुभया–च. [3] वने संभ्रान्त–ज. [4] वानरोत्तमम्–ङ. [5] वधिष्यामि–च.



इमे हि मे [1]महावेगाः पत्रिणः तिग्मतेजसः ।
*कार्तिकेयवनोद्भूताः शरा हेमविभूषिताः ॥ २२ ॥
कङ्कपत्रप्रतिच्छन्नाः महेन्द्राशनिसंनिभाः ।
सुपर्वाणः सुतीक्ष्णाग्राः सरोषाः [2]भुजगा इव ॥ २३ ॥

कार्तिकेयस्य—स्कन्दस्य उत्पत्तिहेतुभूतं वनं—शरवणं तथा । शोभनानि पर्वाणि येषां ते सुपर्वाणः ॥ २२-२३ ॥

[3]भ्रातृसंज्ञं अमित्रं ते [4]वालिनं कृतकिल्बिषम् ।
शरैर्विनिहतं पश्य विकीर्णमिव पर्वतम् ॥ २४ ॥

शरैर्विनिहतं पश्येति । निश्चिन्वित्यर्थः ॥ २४ ॥

राघवस्य वचः श्रुत्वा सुग्रीवो †[5]वाहिनीपतिः ।
प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ॥ २५ ॥
राम! [6]शोकाभिभूतोऽहं शोकार्तानां भवान् गतिः ।
‡वयस्य इति कृत्वा हि त्वय्यहं परिदेवये ॥ २६ ॥

दुःखातिशयवशात् पुनराह—रामेत्यादि । त्वयि—त्वत्संनिधौ ॥

त्वं हि पाणिप्रदानेन वयस्यो मेऽग्नि[7]साक्षिकम् ।
कृतः प्राणैः [8]बहुमतः सत्येनापि शपामि ते ॥ २७ ॥

---

* एतेन तेषाममेध्यत्वं बोधितम् । तदुद्भूतशराणां अमेध्यत्वेन प्रसिद्धत्वात्–रा.
† वाहिनी—वानरसेना । भाविदृष्ट्या व्यपदेशः । ‡ वयस्य इति चेत्यर्थः–गो. शोकार्तानां वयस्यः खलु गतिः । अतः वयस्यो भवानिति कृत्वा त्वदग्रतः परिदेवय इति वा ॥

[1] महाभाग–ज. [2] इव पन्नगाः–ङ. [3] वालिसंज्ञं–च. [4] भ्रातरं–च. [5] वानराधिपः–ङ. [6] शोकाभितप्तो–ङ. [7] साक्षिकः–ङ. [8] प्रियतमः–ङ.

अग्निसाक्षिकं — अग्निसाक्षिपूर्वं संपादितः वयस्यः कृतः इति यतः, अतः—प्राणैरित्यादि ॥ २७ ॥

वयस्य इति कृत्वा च *[1] विस्रब्धं प्रवदाम्यहम् ।
दुःखमन्तर्गतं यन्मे मनो [2] हरति नित्यशः ॥ २८ ॥

प्रवदामीति । प्रकर्षेण पुनः पुनः वदामीत्यर्थः ॥ २८ ॥

† एतावदुक्त्वा वचनं बाष्पदूषितलोचनः ।
[3] बाष्पोपहतया वाचा [4] नोच्चैः शक्नोति भाषितुम् ॥२९॥

बाष्पवेगं तु सहसा नदीवेगमिवागतम् ।
धारयामास धैर्येण सुग्रीवो रामसंनिधौ ॥ ३० ॥
संनिगृह्य तु तं बाष्पं प्रमृज्य नयने शुभे ।
विनिःश्वस्य च तेजस्वी राघवं वाक्यमब्रवीत् ॥ ३१ ॥
पुराऽहं वालिना, राम! राज्यात् स्वादवरोपितः ।
परुषाणि च संश्राव्य ‡ निर्धूतोऽस्मि बलीयसा ॥ ३२ ॥

अथ वालिना विनिकृतः इत्युक्त एवार्थः किञ्चिद्विव्रियते—पुराऽहमित्यादि । स्वात् राज्यात्—स्वीयात् मामकात् वानरराज्यपदात् इत्यर्थः । अवरोपितः—निवर्तितः—अपहृतराज्य इति यावत् । निर्धूतः—भर्त्सितः ॥ ३२ ॥

---

* अवक्तव्यमपि वयस्य इति कृत्वा विस्रब्धः—विश्वस्तः वदामि—ति. † एवं सामान्यतः स्वसंकटे कथिते, विशिष्य भार्यापहारादिकं विवक्षुः, तत्स्मरणात् उच्चैर्वक्तुं नाशकदिति भावः । ‡ निर्धूतः—निस्सारितः—रा. स्वात् राज्यात्— यौवराज्यात् निर्धूतः-निरस्तः—गो.

[1] विस्रब्धः—च. [2] दहति—ङ. [3] बाष्पदूषितया—ज. [4] न च शक्तोऽभि—ङ.



हृता भार्या च मे तेन प्राणेभ्योऽपि गरीयसी ।
सुहृदश्च मदीया ये संयता बन्धनेषु ते ॥ ३३ ॥

संयताः—बद्धाः । बन्धनेषु — अधिकरणे ल्युट्, कारागृहेषु इत्यर्थः ॥ ३३ ॥

* यत्नवांश्च सुदुष्टात्मा मद्विनाशाय, राघव !
[1] बहुशः तत्प्रयुक्ताश्च वानरा निहता मया ॥ ३४ ॥
शङ्कया त्वेतया चेह दृष्ट्वा त्वामपि, राघव !
नोपसर्पाम्यहं भीतः भये सर्वे हि बिभ्यति ॥ ३५ ॥

एतया शङ्कयेति । वालिना मद्वधाय प्रेरितत्वशङ्कयेत्यर्थः । नोपसर्पामीति । वर्तमानसामीप्ये भूते लट्, नोपासर्पमित्यर्थः । भये—भयस्थाने † ॥ ३५ ॥

केवलं हि सहाया मे हनुमत्प्रमुखास्त्विमे ।
अतोऽहं धारयाम्यद्य प्राणान् कृच्छ्रगतोऽपि सन् ॥ ३६ ॥
एते हि कपयः स्निग्धाः मां रक्षन्ति [2] समन्ततः ।
सह गच्छन्ति गन्तव्ये नित्यं तिष्ठन्ति च स्थिते ॥ ३७ ॥
‡ संक्षेपस्त्वेष [3] मे, राम! किमुक्त्वा [4] विस्तरं हि ते ।
स मे ज्येष्ठो रिपुर्भ्राता वाली विश्रुतपौरुषः ॥ ३८ ॥

संक्षेपस्त्वेष मे इत्येतच्छब्दार्थः—स मे ज्येष्ठः इत्यादि ॥ ३८ ॥

---

* यत्नवानिति । सदा मद्वधाय यतमान एवास्त इत्यर्थः । † भयहेताविति यावत् । ‡ संक्षेप इत्यादि द्वयमेकान्वयम्—गो. रा.

[1] बहवः—ङ. [2] सदोद्यताः—ङ. [3] ते राम—ङ. [4] बहुविस्तरैः—ङ.

तद्विनाशाद्धि मे दुःखं प्रणष्टं[1] स्यादनन्तरम् ।
सुखं मे जीवितं चैव तद्विनाशनिबन्धनम् ॥ ३९ ॥

अनन्तरं—दुःखनिवृत्त्यनन्तरम् ॥ ३९ ॥

एष मे, राम! *[2]शोकान्तः शोकार्तेन निवेदितः ।
[3]दुःखितः सुखितो वाऽपि सख्युर्नित्यं सखा गतिः ॥४०॥

एष मे इति । उक्तरूप इत्यर्थः ॥ ४० ॥

श्रुत्वैतद्वचनं रामः सुग्रीवमिदमब्रवीत् ।
किंनिमित्तमभूद्वैरं श्रोतुमिच्छामि तत्त्वतः ॥ ४१ ॥
†सुखं हि कारणं श्रुत्वा वैरस्य तव, वानर!
[4]आनन्तर्यात् विधास्यामि संप्रधार्य बलाबलम् ॥ ४२ ॥

सुखमित्यादि । हे वानर! तव वालिनश्च वैरकारणं श्रुत्वा तेन त्वन्निराकृतिसाधनं युवयोः बलाबलं च श्रुत्वा आनन्तर्यात्—अनन्तरोत्पन्नेन विमर्शेन संप्रधार्य—निश्चित्य त्वद्दुःसंपादं तव सुखं हि—प्रसिद्धप्रतिज्ञं विधास्यामीत्यर्थः ॥ ४२ ॥

---

* शोकान्तः—शोकविध्वंसोपायः—रा. शोकावसानकः वृत्तान्त इति वाऽर्थः । † तव सुखं विधास्यामि । स्वल्पापराधे प्रबलवैरं तेन कृतं चेत् तमद्यैव हत्वा तव सुखं विधास्यामि । अनल्पापराधे स्वल्पवैरं चेत् समाधानमुखेन सुखं विधास्यामीति भावः—गो. अथवा वैरकारणे श्रुते तदनन्तरं बलाबलं निश्चित्य अनन्तरकर्तव्यं सुखं—सुलभतया विधास्यामि निर्णेष्यामीति भावः । 11-3 श्लोकोऽत्र द्रष्टव्यः ॥

[1] स्यादनन्तकम्—ङ. [2] शोकाग्निः—ङ. [3] दुःखितोऽदुःखितो—ङ.
[4] आनन्तर्यं—ङ.



बलवान् हि ममामर्षः श्रुत्वा त्वामवमानितम् ।
[1]वर्धते हृदयोत्कम्पी *प्रावृड्वेग इवाम्भसः ॥४३ ॥

प्रावृडिति लुप्तसप्तमीकम्—प्रावृषि अम्भसो वेग इवेत्यर्थः ॥४३॥

हृष्टः कथय विस्रब्धः यावदापूर्यते धनुः ।
†[2]सृष्टश्च हि मया बाणः निरस्तश्च रिपुस्तव ॥ ४४ ॥

धनुरापूर्यते यावदिति । 'यावत्पुरा' इति लट्, आपूरयिष्यामि । अथ मया हि बाणः सृष्टः—विसृष्टश्चेत् तव रिपुश्च तत्क्षणे निरस्त एव, भविष्यतीति शेषः ॥ ४४ ॥

एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना ।
प्रहर्षमतुलं लेभे ‡चतुर्भिः सह वानरैः ॥ ४५ ॥
ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे ।
वैरस्य कारणं तत्त्वं आख्यातुमुपचक्रमे ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे अष्टमः सर्गः

---

तत्त्वं—तात्त्विकं वैरस्य कारणं आख्यातुं उपचक्रमे । चण्ड (४६) मानः सर्गः ॥ ४६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे अष्टमः सर्गः

---

* प्रावृषि वेगः—प्रावृड्वेगः—गो. † सर्वं सिद्धप्रायमेवेति भावः । ‡ सर्वेऽपि प्रहर्षं लेभुरिति भावः ।

[1] वर्तते—ङ. [2] सहश्चेद्धि—ङ.

## नवमः सर्गः

### [ वालिवैरानुकथनम् ]

[1]वाली नाम मम भ्राता ज्येष्ठः [2]शत्रुनिषूदनः ।
पितुर्बहुमतो नित्यं ममापि च तथा पुरा ॥ १ ॥

अथ उपचक्रम इति कृतप्रस्तावोऽर्थः प्रतिपाद्यते । वाली नामेत्यादि । पितुर्बहुमतः इति । पाण्डोः भीमधर्मादिवत् एकक्षेत्रजत्वेन * पितृभेदेऽपि भ्रातृत्वं, पाण्डुवत् क्षेत्रियः पिता उभयोः, अतः पितुर्बहुमतः इत्यादिवादः ॥ १ ॥

पितर्युपरतेऽस्माकं ज्येष्ठोऽयमिति मंत्रिभिः ।
कपीनामीश्वरो राज्ये कृतः परम[3]संमतः ॥ २ ॥

कपीनां राज्ये इत्यन्वयः ॥ २ ॥

राज्यं प्रशासतस्तस्य † पितृपैतामहं महत् ।
अहं सर्वेषु कालेषु प्रणतः प्रेष्यवत् स्थितः ॥ ३ ॥

पितृपतामहं—पितृपितामहपरम्परागतम् । उत्तरपदवृद्धिः छान्दसी॥

‡ मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः ।
तेन तस्य महद्वैरं स्त्रीकृतं विश्रुतं पुरा ॥ ४ ॥

---

* बालकाण्डे 17 सर्गे वालिनः इन्द्रपुत्रत्वेन, सुग्रीवस्य सूर्यपुत्रत्वेन च कथनादेवं व्याख्यातम् । वालिसुग्रीवयोरुत्पत्तिकथा तु उत्तरकाण्डे प्रक्षिप्तसर्गे दृश्यते । † पितृपैतामहं—स्वपितुः ऋक्षरजसः पित्रा ब्रह्मणा दत्तत्वात्—**गो.** ‡ मायावीति । दुन्दुभेः पूर्वजः—अग्रजः, सुतः मयस्येति शेषः । वक्ष्यत्युत्तर काण्डे मयः 'मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरः' (उत्त. 12-13) इति—**गो.**

[1] एतत्पूर्वं—श्रूयतां राम यद्वृत्तं आदितः प्रभृति त्वया । यथा वैरं समुद्भूतं यथा चाहं निराकृतः—इत्यधिकं—ङ. [2] शक्र—ङ. [3] सत्तमः—ङ.



तेनेति । अन्वर्थमायावीनामकासुरेणेत्यर्थः । तस्येति । वालिनः इत्यर्थः । स्त्रीकृतं—स्त्रीनिमित्तम् ॥ ४ ॥

स तु [1]सुप्तजने रात्रौ किष्किन्धाद्वारमागतः ।
नर्दति स्म सुसंरब्धः वालिनं चाह्वयद्रणे ॥ ५ ॥

रात्रौ चतुर्यामायां सुप्तजने काले—अर्धरात्रे इत्यर्थः । आह्वयत्—आह्वयतेति यावत् । रणे—रणनिमित्तम् ॥ ५ ॥

प्रसुप्तस्तु मम भ्राता [2]नर्दितं भैरवस्वनम् ।
श्रुत्वा न ममृषे वाली निष्पपात जवात् तदा ॥ ६ ॥

स तु वै [3]निःसृतः क्रोधात् तं हन्तुमसुरोत्तमम् ।
वार्यमाणः ततः स्त्रीभिः मया च प्रणतात्मना ॥ ७ ॥

स तु निर्धूय सर्वान् नः निर्जगाम महाबलः ।
ततोऽहमपि सौहार्दात् निःसृतो वालिना सह ॥ ८ ॥

स तु मे भ्रातरं दृष्ट्वा * मां च दूरादवस्थितम् ।
असुरो जातसंत्रासः प्रदुद्राव ततो भृशम् ॥ ९ ॥

तस्मिन् द्रवति संत्रस्ते ह्यावां द्रुततरं गतौ ।
प्रकाशश्च कृतो मार्गः चन्द्रेणोद्गच्छता† तदा ॥ १० ॥

स तृणैरावृतं दुर्गं धरण्या विवरं महत् ।
प्रविवेशासुरो वेगात् आवामासाद्य [4]विष्ठितौ ॥ ११ ॥

---

* 'स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः । प्राद्रवद् भयसंत्रस्तः' (10-15) इति भविष्यति स्पष्टम् ॥ † उद्गच्छता—उदयमानेन—**गो.**

[1] सुप्ते जने—च. [2] नर्दतो—च. [3] निर्गतः—ङ. [4] तिष्ठतौ—ङ.

आवृतं–छन्नम् । विवर–बिलम् । आसाद्येति । बिलद्वारमिति शेषः ॥ ११ ॥

तं प्रविष्टं रिपुं दृष्ट्वा बिलं रोषवशं गतः ।
मामुवाच तदा वाली वचनं क्षुभितेन्द्रियः ॥ १२ ॥
इह त्वं तिष्ठ, सुग्रीव ! बिलद्वारि समाहितः ।
[1]यावत् तत्र प्रविश्याहं निहन्मि [2]सहसा रिपुम् ॥ १३ ॥

सहसा–बलेन, वेगेन च ॥ १३ ॥

मया त्वेतद्वचः श्रुत्वा * याचितः स परंतपः ।
शापयित्वा तु मां पद्भ्यां प्रविवेश बिलं महत् ॥ १४ ॥

एतद्वच इति । रिपुवधाय बिलप्रवेशवचनमित्यर्थः । पद्भ्यामिति । स्वपादाभ्यां शापयित्वेति योजना । बिलद्वारं मुक्त्वा यावन्मदागमनं अन्यत्र न गच्छामीति मत्पादौ स्पृशेति पादौ स्पर्शयित्वेत्यर्थः ॥ १४ ॥

तस्य प्रविष्टस्य बिलं साग्रः संवत्सरो गतः ।
स्थितस्य [3]मम च द्वारि स कालोऽप्यत्यवर्तत ॥ १५ ॥

साग्रः–संवत्सरादप्यधिकं किञ्चित्कालयुक्तः । स कालोऽपि–साग्रः संवत्सरकालोऽपि द्वारे स्थितस्यैव सतः अत्यवर्तत ॥ १५ ॥

अहं तु नष्टं ज्ञात्वा तं स्नेहादागतसंभ्रमः ।
भ्रातरं न च पश्यामि पापाशङ्कि च मे मनः ॥ १६ ॥

---

* याचितः, सह प्रवेशनमिति शेषः–गो.

[1] यावदत्र–च. [2] समरे–ज. [3] च बिलद्वारि–च.



आगतसंभ्रमः–आगतक्षोभः । न पश्यामि यदा तदेति योजना ॥ १६ ॥

अथ दीर्घस्य कालस्य बिलात् तस्मात् विनिःसृतम् ।
सफेनं रुधिरं * [1]रक्तं अहं दृष्ट्वा सुदुःखितः ॥ १७ ॥
नर्दतामसुराणां च ध्वनिर्मे श्रोत्रमागतः ।
† [2]निरस्तस्य च संग्रामे क्रोशतो निःस्वनो गुरोः ॥
अहं त्ववगतो बुद्ध्या चिह्नैस्तैर्भ्रातरं [3]हतम् ।
पिधाय च बिलद्वारं शिलया गिरिमात्रया ॥ १९ ॥
शोकार्तश्चोदकं कृत्वा किष्किन्धामागतः, सखे !

चिह्नैरिति । बिलद्वाररुधिरसंग्रामक्रोशादिभिः इत्यर्थः ॥ १९ ॥

‡ गूहमानस्य मे तत्त्वं यत्नतो मन्त्रिभिः श्रुतम् ॥ २० ॥
ततोऽहं तैः समागम्य [4]संमतैरभिषेचितः ।

तत्त्वं–वालिवृत्तान्तविषयकं मन्त्रिभिः यत्नतः श्रुतम् ॥

राज्यं प्रशासतस्तस्य [5]न्यायतो मम, राघव ! ॥ २१ ॥
[6]आजगाम रिपुं हत्वा [7]वाली तमसुरोत्तमम् ।
अभिषिक्तं तु मां दृष्ट्वा [8]वाली संरक्तलोचनः ॥ २२ ॥

---

* रक्तं–रक्तवर्णं–गो. † संग्रामे रतस्य क्रोशतोऽपि गुरोः–वालिनः स्वनः न श्रोत्रमागतः–रा. ‡ स्वस्य स्वतः राज्यापेक्षा नासीदिति प्रकटनायेयमुक्तिः ।

[1] दृष्ट्वा ततोऽहं भृशदुःखितः–ज. [2] न रतस्य–ङ. [3] गतम्–ङ. [4] समेतैः–च. [5] न्यायेन–ङ. [6] एतदादिश्लोकद्वयं अधिकं–झ. [7] दानवं स तु वानरः–च. [8] क्रोधात्–च.

मदीयान् मंत्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् ।

मदीयान् मंत्रिणो बद्ध्वेति । अभिषेककर्तृनिति शेषः ॥

* निग्रहेऽपि [1] समर्थस्य तं पापं प्रति, राघव ! ॥ २३ ॥
न प्रावर्तत मे बुद्धिः भ्रातृगौरवयंत्रिता ।

निग्रह इत्यादि । पापस्य तस्य निग्रहे समर्थस्यापि मे बुद्धिः भ्रातृगौरवयंत्रिता — संकुचिता सती तं पापं प्रति निग्रहाय न प्रावर्तत ॥ २३ ॥

हत्वा शत्रुं स मे भ्राता † प्रविवेश पुरं तदा ॥ २४ ॥
मानयंस्तं महात्मानं यथावच्चाभ्यवादयम् ।
उक्ताश्च नाशिषस्तेन संतुष्टेनान्तरात्मना ॥ २५ ॥

उक्तानुवादपूर्वं अवशिष्टव्यापारकथनं — हत्वा शत्रुमित्यादि ॥

नत्वा पादावहं तस्य मुकुटेनास्पृशं, प्रभो ! [2]
‡ अपि वाली मम क्रोधात् न प्रसादं चकार सः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे नवमः सर्गः

प्रभो इति रामसंबुद्धिः । मम प्रसादं इत्यन्वयः । चोर (२६) मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे नवमः सर्गः

* अन्ततः बद्धनामार्गेण वा निग्रहे समर्थस्येति भावः । अथवा केवलवीरवादो वाऽयम् । 10–27 श्लोकोऽत्र द्रष्टव्यः ॥ † 'प्रविवेश पुरं' इत्युक्त्या मन्त्रिबन्धनादिकं पुराद्बहिरिति ज्ञेयम्–गो. ‡ अपि–तथापि–ति.

[1] समर्थं च–ङ. [2] एतदनन्तरं–कृताञ्जलिरुपागम्य स्थितोऽहं तस्य पार्श्वतः– इत्यधिकं–झ.



## दशमः सर्गः

[सुग्रीवेण स्वराज्यभ्रंशकथनम्]

ततः क्रोधसमाविष्टं संरब्धं तमुपागतम् ।
अहं प्रसादयांचक्रे भ्रातरं [1] हितकाम्यया ॥ १ ॥

अथ कथाशेषपूरणम् । ततः क्रोधेत्यादि । समाविष्ट अत एव संरब्ध — क्षुभितचित्तम् । हितकाम्यया — आत्महितेच्छया ॥

दिष्ट्याऽसि [2] कुशली प्राप्तः निहतश्च त्वया रिपुः ।
अनाथस्य हि मे नाथः त्वमेको मित्रनन्दनः ॥ २ ॥

मित्रनन्दनः — मित्रं नन्दयतीति तथा ॥ २ ॥

इदं बहुशलाकं ते पूर्णचन्द्रमिवोदितम् ।
छत्रं सवालव्यजनं प्रतीच्छस्व [3] मयोद्यतम् ॥ ३ ॥
आर्तश्चाथ बिलद्वारि स्थितः * संवत्सरं, नृप !
दृष्ट्वाऽहं शोणितं द्वारि बिलाच्चापि समुत्थितम् ॥ ४ ॥
[4] शोकसंविग्नहृदयः भृशं व्याकुलितेन्द्रियः ।
† [5] अपिधाय बिलद्वारं शैलशृङ्गेण तत्तथा ॥ ५ ॥
तस्माद्देशादपाक्रम्य किष्किन्धां प्राविशं पुनः ।
विषादात्त्विह मां दृष्ट्वा पौरैर्मन्त्रिभिरेव च ॥ ६ ॥

* संवत्सरमिति भयात् न्यूनोक्तिः, 'साग्रः संवत्सरो गतः' इति ह्युक्तम् ।
† अपिधाय–आच्छाद्य–गो. पिधानापिधानपदे पर्यायौ ।

[1] प्रियकाम्यया–ङ. [2] कुशलं–ङ. [3] मया धृतम्–च. [4] शोकसंरक्तनयनः–ङ. [5] पिधाय च–ङ.

अभिषिक्तो न *कामेन तन्मे त्वं क्षन्तुमर्हसि ।

विषादात् प्राविशम् । न कामेनेति । स्वकराज्यलिप्सया नाभिषिक्तः इत्यर्थः । तत्—तस्मात् । मे इति । दैवादागतं अपराधमिति शेषः ॥ ६ ॥

त्वमेव राजा मानार्हः सदा चाहं यथापुरम् ॥ ७ ॥
†[1]राजभावनियोगोऽयं [2]मया त्वद्विरहात् कृतः ।

राजभावेन नियोगः—स्वराज्यशिक्षणं तथा ॥ ७ ॥

सामात्यपौरनगरं स्थितं निहतकण्टकम् ॥ ८ ॥
न्यासभूतमिदं राज्यं तव निर्यातयाम्यहम् ।
मा च रोषं कृथाः, सौम्य ! मयि, शत्रुनिबर्हण ! ॥९॥
याचे त्वां शिरसा, राजन् ! मया बद्धोऽयमञ्जलिः ।

निर्यातयामि—समर्पयामि, अतः मा रोषं कृथाः इत्यन्वयः ॥९॥

बलादस्मि समागम्य मंत्रिभिः पुरवासिभिः ॥ १० ॥
राजभावे नियुक्तोऽहं ‡शून्यदेशजिगीषया ।

शून्यस्य—राजशून्यस्य देशस्य जिगीषया—राजमूलसर्वव्यवहारप्रवर्तनेच्छया ॥ १० ॥

---

* कामेन—स्वेच्छया नाभिषिक्तः—**रा.** † राजभावनियोगः—राजत्वेन राज्यशासनम्—**गो.** राजभावे नियोगः अमात्यैः कृत इत्यर्थः । ‡ शून्यदेशस्य—राजहीनदेशस्य या परेषां जिगीषा, तया—तन्निवृत्तिहेतुना । 'मशकार्थो धूमः' इतिवदयं प्रयोगः—**ति.** शून्यदेशजिगीषया—राजशून्यदेशवशीकरणेच्छया—**गो.**

[1] राजभावे—**च.** [2] मम—**ङ.**



स्निग्धमेवं ब्रुवाणं मां स तु निर्भर्त्स्य वानरः ॥ ११ ॥
धिक् त्वामिति च मामुक्त्वा बहु *तत्तदुवाच ह ।

बहु तत्तदिति । अवाच्यवचनजातमित्यर्थः ॥ ११ ॥

प्रकृतीश्च समानीय मंत्रिणश्चैव संमतान् ॥ १२ ॥
मामाह सुहृदां मध्ये वाक्यं परमगर्हितम् ।

प्रकृतीः—स्वीयप्रजाः । मां प्रति परमं विगर्हितमाह ॥ १२ ॥

विदितं वो यथा रात्रौ मायावी स महासुरः ॥ १३ ॥
मां समाह्वयत [1]क्रूरः युद्धकांक्षी सुदुर्मतिः ।

तथा विगर्हहेतुं च सभासदामाहेत्याह—विदितं वः इत्यादि । यथा—युष्मदनुभवेनैव विदितं—स मां समाह्वयतेति वो विदितमित्यन्वयः ॥ १३ ॥

तस्य तद्वचनं श्रुत्वा निःसृतोऽहं नृपालयात् ॥ १४ ॥
अनुयातश्च मां तूर्णं अयं भ्राता सुदारुणः ।

किं तत इत्यतः तस्येत्यादि ॥ १४ ॥

[2]स तु दृष्ट्वैव मां रात्रौ सद्वितीयं [3]महाबलः ॥ १५ ॥
प्राद्रवत् भयसंत्रस्तः वीक्ष्यावां [4]तमनुद्रुतौ ।
[5]अनुद्रुतश्च वेगेन प्रविवेश महाबिलम् ॥ १६ ॥

सद्वितीयं—द्वितीयेन भ्रात्रा सहितम् ॥ १५–१६ ॥

---

* लोकरीत्या एवमुक्तिः ।

[1] क्रुद्धः—**ङ.** [2] इदमर्धं अधिकं—**झ.** [3] महाबलम्—**झ.** [4] समुपागतौ—**च.** [5] अभिद्रुतश्च—**च.**

तं प्रविष्टं विदित्वा तु सुघोरं सुमहद्बिलम् ।
अयमुक्तोऽथ मे भ्राता मया तु क्रूरदर्शनः ॥ १७ ॥

अहत्वा नास्ति मे * शक्तिः प्रतिगन्तुमितः पुरीम् ।
बिलद्वारि प्रतीक्ष त्वं यावदेनं निहन्म्यहम् ॥ १८ ॥

शक्तिः—इच्छाशक्तिः । प्रतीक्ष–प्रतीक्षस्वेति यावत् ॥ १८ ॥

स्थितोऽयमिति मत्वा तु प्रविष्टोऽहं दुरासदम् ।
तं च मे मार्गमाणस्य गतः संवत्सरस्तदा ॥ १९ ॥

स्थितोऽयमितीति । बिलद्वारीति शेषः ॥ १९ ॥

स तु दृष्टो मया शत्रुः † अनिर्वेदात् भयावहः ।
निहतश्च मया तत्र सोऽसुरो बन्धुभिः सह ॥ २० ॥

अनिर्वेदात्—निर्वेदः–ज्ञानम्, संवत्सरान्वेषणेऽपि दर्शनाभावात् भयावहः—दुःखावहः स तु मया कथंचित् दृष्टो निहतश्च ॥ २० ॥

तस्यास्यात्तु प्रवृत्तेन रुधिरौघेण तद्बिलम् ।
‡ पूर्णमासीत् दुराक्रामं स्तनतः तस्य भूतले ॥ २१ ॥

दुराक्रामामिति । दुराक्रममिति यावत् । भूतले–भुवः रसायाः तलं—पातालमित्यर्थः ॥ २१ ॥

* ‘तूष्णीं स्थातुं न शक्नोमि’ इत्यादिवत् अत्रार्थः ज्ञेयः । † अनिर्वेदात्—संवत्सरान्वेषणेऽपि दर्शनाभावात् भयावहः–ति. अनिर्वेदात्—अक्लेशात्–गो. संवत्सरकालान्वेषणेऽपि अदर्शनेन यो निर्वेदः, तदभावसंपादनहेतोः दैवात् स दृष्ट इति वा । ‡ दुराक्रामं तद्बिलं रुधिरौघेण पूर्णमासीत्; तद्बिलं रुधिरौघेन पूर्णं, दुराक्राममासीदिति वा ।



सूदयित्वा तु तं शत्रुं [1] विक्रान्तं [2] तमहं सुखम् ।
निष्क्रामन्नेव पश्यामि बिलस्य पिहितं मुखम् ॥ २२ ॥

विक्रान्तं—शूरम् । सुखं यथा तथा निष्क्रामन्नेव—तत्काल एव ॥ २२ ॥

विक्रोशमानस्य तु मे सुग्रीवेति पुनःपुनः ।
यदा प्रतिवचो नास्ति ततोऽहं भृशदुःखितः ॥ २३ ॥

पादप्रहारैस्तु मया [3] बहुभिः तद्विदारितम् ।
ततोऽहं तेन निष्क्रम्य [4] पथा पुरमुपागतः ॥ २४ ॥

तेन पथा । बिलमार्गेणेत्यर्थः ॥ २४ ॥

तत्रानेनास्मि संरुद्धः राज्यं [5] मृगयताऽऽत्मनः ।
सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदम् ॥ २५ ॥

आत्मनः राज्यं मृगयता—मार्गयता अनेन तत्र बिलद्वारे अहं संरुद्धः—निरुद्धगतिकः कृतः ॥ २५ ॥

एवमुक्त्वा तु मां तत्र वस्त्रेणैकेन वानरः ।
निर्वासयामास तदा वाली विगतसाध्वसः ॥ २६ ॥

वस्त्रेणैकेनेति । अन्यत् सर्वमपहृत्येत्यर्थः ॥ २६ ॥

तेनाहमपविद्धश्च * हृतदारश्च, राघव !
तद्भयाच्च [6] मही कृत्स्ना क्रान्तेयं सवनार्णवा ॥ २७ ॥

अपविद्धः—निरस्तः ॥ २७ ॥

* अपविद्धः–ताडितः –गो.

[1] बलिनं दुन्दुभेस्सुतम्–ङ. [2] तं महासुरम्–झ. [3] बहुशः–ङ. [4] यथापुरमिहा–ङ. [5] प्रार्थयता–ङ. [6] महीं कृत्स्नां क्रान्तवान् सवनार्णवाम्–च.

ऋश्यमूकं गिरिवरं भार्याहरणदुःखितः ।
प्रविष्टोऽस्मि * दुराधर्षं [1] वालिनः कारणान्तरे ॥ २८ ॥

ऋश्यमूकं प्रविष्टोऽस्मीति । अन्यत्र कुत्रापि भूचक्रे निर्भयस्थितिं अलभमानः इति शेषः । अत्र च कथं निर्भयस्थितिः? इत्यत आह—दुराधर्षमित्यादि । कारणान्तरे—दुराधर्षत्वकारणविशेषमतङ्गशापलक्षणे सति । तत एव वालिनः ऋश्यमूकः दुराधर्षः ॥ २८ ॥

एतत्ते सर्वमाख्यातं वैरानुकथनं महत् ।
अनागसा मया प्राप्तं व्यसनं पश्य, राघव ! ॥ २९ ॥

† वालिनस्तु भयार्तस्य, [2] सर्वलोकाभयङ्कर !
कर्तुमर्हसि मे, वीर ! प्रसादं तस्य निग्रहात् ॥ ३० ॥

एवमुक्तस्तु तेजस्वी धर्मज्ञो [3] धर्मसंहितम् ।
वचनं वक्तुमारेभे सुग्रीवं प्रहसन्निव ॥ ३१ ॥

अमोघाः सूर्यसंकाशाः ममैते निशिताः शराः ।
तस्मिन् वालिनि दुर्वृत्ते [4] पतिष्यन्ति रुषान्विताः ॥ ३२ ॥

रुषान्विताः—कुपितेन मया विसृष्टाः इत्यर्थः । निमित्तनिमित्तिनोः अभेदोपचारात् ताच्छब्द्यम् ॥ ३२ ॥

यावत् तं नाभिपश्यामि तव भार्यापहारिणम् ।
तावत् स जीवेत् पापात्मा वाली चारित्रदूषकः ॥ ३३ ॥

चारित्रदूषक इति भ्रातृदारग्राहित्वात् ॥ ३३ ॥

---

* अनन्तरसर्गे ५२ इत्यादिश्लोकाः द्रष्टव्याः । † वालिन इति पञ्चमी ।

[1] वालिना—ङ. [2] सर्वभूतभयापह—ङ. [3] धर्मवत्सलः—ङ. [4] निपतिष्यन्ति वेगिताः—ङ.



* आत्मानुमानात् पश्यामि [1] मग्नं त्वां शोकसागरे ।
त्वामहं तारयिष्यामि [2] कामं प्राप्स्यसि पुष्कलम् ॥३४॥

आत्मानुमानादिति । विमतोऽयं शोकमग्नो भवितुमर्हति, रिपुहृतदारत्वात्, आत्मवत्, इत्यनुमानादित्यर्थः ॥ ३४ ॥

तस्य तद्वचनं श्रुत्वा [3] राघवस्यात्मनो हितम् ।
सुग्रीवः परमप्रीतः सुमहत् वाक्यमब्रवीत् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे दशमः सर्गः

---

मार्ग (३५) मानः सर्गः ॥ ३५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे दशमः सर्गः

---

## एकादशः सर्गः

[वालिबलवर्णनम्]

रामस्य वचनं श्रुत्वा हर्षपौरुषवर्धनम् ।
सुग्रीवः पूजयांचक्रे राघवं प्रशशंस च ॥ १ ॥

एवं सुग्रीवः वैरकारणमुक्त्वा, अथ 'बलाबलं संप्रधार्य त सुखं विधास्यामि' इति राघवेणोक्तत्वात् वालिनो बलं, तत्प्रसङ्गे ऋष्यमूकाधर्षणकारणं प्राक् सूचितं चाह । रामस्येत्यादि । वचनं—वालिवधविषयकं वचनं पूजयांचक्रे इत्यन्वयः ॥ १ ॥

---

* आत्मानुमानात्—मदनुभववशादिति भावः ।

[1] मग्नस्त्वं—च. [2] बाढं—च. सुखं—ङ. [3] हर्षपौरुषवर्धनम्—च. राघवस्य मनोहितम्—ङ.

असंशयं प्रज्वालितैः तीक्ष्णैः *मर्मातिगैः शरैः ।
त्वं दहेः कुपितो लोकान् युगान्त इव भास्करः ॥ २ ॥

राघवं प्रशशंसेत्येतावदेव प्रदर्श्यते—असंशयमित्यादि ॥ २ ॥

वालिनः पौरुषं यत्तत् यच्च वीर्यं धृतिश्च या ।
तन्ममैकमनाः श्रुत्वा विधत्स्व यदनन्तरम् ॥ ३ ॥

पौरुषं—बुद्धिबलवैभवसामर्थ्यम् । वीर्यं—परसंहारशक्तिः । धृतिः—रणधैर्यम् ॥ ३ ॥

† समुद्रात् पश्चिमात् [1] पूर्वं दक्षिणादपि [2] चोत्तरम् ।
क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः ॥ ४ ॥

समुद्रादित्यादिना बलादिवैभवं दर्शयति । तथा वक्ष्यते उत्तरकाण्डे—'चतुर्भ्योऽपि समुद्रेभ्यः संध्यामन्वास्य रावण ! इमं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकम् ' इति । अनुदिते सूर्ये क्रामति । ब्राह्मे मुहूर्ते उत्थायेति शेषः ॥ ४ ॥

अग्राण्यारुह्य शैलानां शिखराणि महान्त्यपि ।
ऊर्ध्वं [3] मुत्क्षिप्य तरसा प्रतिगृह्णाति वीर्यवान् ॥ ५ ॥

शिखराणि महान्त्यपीति । उत्पाट्येति शेषः ॥ ५ ॥

---

* मर्मातिगैः——मर्मभेदिभिरिति यावत् । † इदं व्यक्तमुत्तरकाण्डे (उत्त. 34-28-29) । ननु कथं चतुर्ष्वप्येकसंध्याकरणम्—उच्यते—एकस्मिन् तडाके पार्श्वभेद इव स्नानाचमनार्घ्यप्रदानजपानां कर्तुं शक्यत्वात् । अनुदिते सूर्ये इत्युत्तरावधिः अभिहितः । पूर्वावधिस्तु ब्राह्मे मुहूर्ते उत्थायेत्यनुष्ठानाङ्गत्वेन विहितः कालः । चतुस्समुद्रपरिक्रमस्यानुष्ठानार्थत्वं 'चतुर्भ्योऽपि समुद्रेभ्यः सन्ध्यामन्वास्य रावण । इमं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकं' (उत्त. 34-6) इत्युत्तररामायणतारावचनादवगम्यते-गो.

[1] पूर्वात्—ङ. [2] चोत्तरात्—ङ [3] मुत्पाट्य—ज.



बहवः सारवन्तश्च वनेषु विविधा द्रुमाः ।
वालिना तरसा भग्नाः बलं [1] प्रथयताऽऽत्मनः [2] ॥ ६ ॥

* [3] महिषो दुन्दुभिर्नाम [4] कैलासशिखरप्रभः [5] ।
बलं नागसहस्रस्य धारयामास वीर्यवान् ॥ ७ ॥

वीर्योत्सेकेन दुष्टात्मा वरदानाच्च मोहितः ।
जगाम सुमहाकायः समुद्रं सरितां पतिम् ॥ ८ ॥

ऊर्मिमन्तमतिक्रम्य सागरं रत्नसंचयम् ।
[6] मह्यं युद्धं प्रयच्छेति तमुवाच महार्णवम् ॥ ९ ॥

ऊर्मिमन्तं—ऊर्मिमत्त्वाद्याकारवन्तं समुद्रं अतिक्रम्य—अविगणय्य तं तदधिष्ठातृमहादेवताकारं महार्णवं उवाच ॥ ९ ॥

ततः समुद्रो धर्मात्मा समुत्थाय महाबलः ।
अब्रवीद्वचनं, राजन् ! असुरं कालचोदितम् ॥ १० ॥

समर्थो नास्मि ते दातुं युद्धं, युद्धविशारद !
श्रूयतां चाभिधास्यामि यस्ते युद्धं प्रदास्यति ॥ ११ ॥

शैलराजो महारण्ये तपस्विशरणं परम् ।
शङ्करश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥ १२ ॥

---

* महिषः—तद्रूपधरः -गो. ति. रा. उत्तरत्र 25-27 श्लोका द्रष्टव्याः । पूर्वमेव (9-4) अस्य दुन्दुभेः प्रस्तावः कृतः ।

[1] दर्शयता—ङ. [2] एतदनन्तरं—शृणु चापि रघुश्रेष्ठ विस्तरेण कथामिमाम्—इत्यधिकं—ङ. [3] माहिषो—ङ. [4] वीर्यवान् सुमहाबलः—ङ. [5] एतदनन्तरं—यथा सन्निहितः पापो वालिना क्रूरकर्मणा । आसीन्महासुरः कश्चित् दुन्दुभिर्नाम नामतः—इत्यधिकं—ङ. [6] मम—च.

[1] गुहाप्रस्रवणोपेतः बहुकन्दर*निर्दरः ।
स समर्थः तव प्रीतिं अतुलां [2] कर्तुमाहवे ॥ १३ ॥

तं भीत इति विज्ञाय समुद्रमसुरोत्तमः ।
हिमवद्वनमागच्छत् शरश्चापादिव च्युतः ॥ १४ ॥

ततः तस्य गिरेः श्वेताः गजेन्द्रविपुलाः शिलाः ।
चिक्षेप बहुधा भूमौ दुन्दुभिः विननाद च ॥ १५ ॥

गजेन्द्रः—ऐरावतः ॥ १५ ॥

ततः श्वेताम्बुदाकारः सौम्यः प्रीतिकराकृतिः ।
हिमवान् अब्रवीद्वाक्यं स्व एव शिखरे स्थितः ॥ १६ ॥

स्वे—स्वीये ॥ १६ ॥

क्लेष्टुमर्हसि मां न त्वं, दुन्दुभे धर्मवत्सल !
रणकर्मस्वकुशलः [3] तपस्विशरणं ह्यहम् ॥ १७ ॥

तस्य तद्वचनं श्रुत्वा गिरिराजस्य धीमतः ।
उवाच दुन्दुभिर्वाक्यं रोषात् संरक्तलोचनः ॥ १८ ॥

यदि युद्धेऽसमर्थस्त्वं †मद्भयाद्वा निरुद्यमः ।
तमाचक्ष्व प्रदद्यान्मे योऽद्य युद्धं युयुत्सतः ॥ १९ ॥

युद्धे असमर्थ इति पदम् ॥ १९ ॥

---

* निर्दराः—विदीर्णपाषाणरन्ध्राणि-गो. † सामान्यतः समर्थोऽपि मद्भयात् निरुद्यमः—इत्यर्थः ।

[1] महा-ज. [2] दातु-ङ. [3] तपस्वी शरणोऽस्म्यहम्-ङ.



हिमवानब्रवीद्वाक्यं श्रुत्वा वाक्यविशारदः ।
*अनुक्तपूर्वं धर्मात्मा [1] क्रोधात् तमसुरोत्तमम् ॥ २० ॥

अनुक्तपूर्वं—इतः पूर्वं अनुक्तः युद्धप्रदाता यस्य असुरस्य स तथा । अप्राप्तद्वन्द्वयुद्धोचितोपदेष्टारमित्यर्थः ॥ २० ॥

वाली नाम महाप्राज्ञः [2] शक्रतुल्यपराक्रमः ।
अध्यास्ते वानरः श्रीमान् किष्किन्धा[3]मतुलप्रभाम् ॥२१॥

स समर्थो महाप्राज्ञः †तव युद्धविशारदः ।
द्वन्द्वयुद्धं महद्दातुं नमुचेरिव वासवः ॥ २२ ॥

तं शीघ्रमभिगच्छ त्वं यदि युद्ध‡मिहेच्छसि ।
स हि [4] दुर्धर्षणो नित्यं शूरः समरकर्मणि ॥ २३ ॥

श्रुत्वा हिमवतो वाक्यं क्रोधाविष्टः स दुन्दुभिः ।
जगाम तां पुरीं तस्य किष्किन्धां वालिनस्तदा ॥ २४ ॥

धारयन् माहिषं [5] रूपं तीक्ष्णशृङ्गो भयावहः ।
प्रावृषीव महामेघः तोयपूर्णो नभस्तले ॥ २५ ॥

ततः तद्द्वारमागम्य किष्किन्धाया महाबलः ।
ननर्द कंपयन् भूमिं दुन्दुभिः दुन्दुभिर्यथा ॥ २६ ॥

समीपस्थान् द्रुमान् भञ्जन् वसुधां दारयन् खुरैः ।
विषाणेनोल्लिखन् दर्पात् तद्द्वारं द्विरदो यथा ॥ २७ ॥

---

* अनुक्तपूर्वं—इतः पूर्वं केनाप्यनुक्तं वाक्यं, अत एव क्रोधात्-गो. †तव द्वन्द्वयुद्धमित्यन्वयः । ‡इह—अत्र ।

[1] रोषात्-ङ. [2] शक्रपुत्रः प्रतापवान्-च. [3] मतुलप्रभः-ङ. [4] दुर्मर्षणो-च. [5] वेषं-च.

अन्तःपुरगतो वाली श्रुत्वा शब्दममर्षणः ।
निष्पपात सह स्त्रीभिः ताराभिरिव चन्द्रमाः ॥ २८ ॥

मितं व्यक्ताक्षरपदं तमुवाचाथ दुन्दुभिम् ।
*हरीणामीश्वरो वाली सर्वेषां वनचारिणाम् ॥ २९ ॥

हरीणामीश्वरः इति । अहमस्मीति शेषः ॥ २९ ॥

किमर्थं नगरद्वारं इदं रुद्ध्वा विनर्दसि ।
दुन्दुभे! विदितो मेऽसि रक्ष प्राणान्, महाबल! ॥ ३० ॥

मे विदितोऽसि, 'क्तस्य च वर्तमाने' इति षष्ठी, मया ज्ञायमानबलवानेवासि त्वं, ते बलं मयि न प्रभवति, अतः प्राणान् रक्ष ॥ ३० ॥

तस्य तद्वचनं श्रुत्वा वानरेन्द्रस्य धीमतः ।
उवाच दुन्दुभिर्वाक्यं रोषात् संरक्तलोचनः ॥ ३१ ॥

[1]न त्वं स्त्रीसंनिधौ, वीर! वचनं वक्तु[2]मर्हसि ।
मम युद्धं प्रयच्छाद्य ततो ज्ञास्यामि ते बलम् ॥ ३२ ॥

†अथ वा धारयिष्यामि क्रोधमद्य निशामिमाम् ।
गृह्यतामुदयः‡ स्वैरं कामभोगेषु, वानर! ॥ ३३ ॥

---

* हरीणां—वानराणां सर्वेषां वनचारिणां च ईश्वरो वाली तं दुन्दुभिमुवाच—रा.

† 'विदितो मेऽसि' इत्युपहसितः दुन्दुभिः प्रत्युपहासं करोति—अथ वेति ।

‡ उदयः—आसक्तिः स्वैरं गृह्यताम्—रा. उदयः—सूर्योदयः, गृह्यतां—अवधित्वेन गृह्यताम्—गो.

[1] किं त्वं—ङ. [2] मिच्छसि—ङ.



स्त्रीगोष्ठीगतः युद्धाय नाह्वयितव्यः इति पक्षान्तरमाह—अथ वेत्यादि । स्वैरं कामभोगेषु उदयः मया प्रोक्तः मयि गृह्यताम् । उदयपर्यन्तं प्रतीक्ष इत्यर्थः । तत्र हेतुं 'यो हि मत्तं' इत्यादिना वक्ष्यति ॥ ३३ ॥

दीयतां संप्रदानं च परिष्वज्य च वानरान् ।
सर्वशाखामृगेन्द्रस्त्वं *[1]संसाधय सुहृज्जनान् ॥ ३४ ॥

संप्रदानं—प्रीतिदानं, वानरान् संपरिष्वज्य तेभ्यः इति शेषः । संसाधय । मंत्रयस्वेति यावत् ॥ ३४ ॥

[2]सुदृष्टां कुरु किष्किन्धां कुरुष्वात्मसमं पुरे ।
क्रीडस्व च सह स्त्रीभिः अहं ते दर्पनाशनः ॥ ३५ ॥

सुदृष्टां—सम्यगनुभूताम् । पुरे आत्मसमं पुत्रादिकं रक्षायै कुरु, क्रीडस्व च आ उदयं इति शेषः ॥ ३५ ॥

यो हि मत्तं प्रमत्तं वा [3]सुप्तं वा †रहितं भृशम् ।
हन्यात् स भ्रूणहा लोके त्वद्विधं मदमोहितम् ॥ ३६ ॥

मदेन—मदकरवस्तुभेदेन स्त्र्यादिलक्षणेन मोहितः तथा ॥ ३६ ॥

स प्रहस्याब्रवीन्मन्दं क्रोधात् तमसुरोत्तमम् ।
विसृज्य ताः स्त्रियः सर्वाः ताराप्रभृतिकास्तदा ॥ ३७ ॥

---

* संसादय—कञ्चित्कालं संगच्छस्व—गो. † मत्तं मधुपानादिना, प्रमत्तं—अनवहितं, रहितं—आयुधादिशून्यं मदमोहितं—मदनमोहितम्—गो.

[1] संसादय—ङ. [2] सुदृष्टां—ङ. [3] भग्नं—ङ.

मत्तोऽयं इति मा मंस्थाः यद्यभीतोऽसि संयुगे ।
*मदोऽयं संप्रहारेऽस्मिन् वीरपाणं समर्थ्यताम् ॥ ३८ ॥

मदोऽयमिति । स्त्रीगोष्ठीजनितः इत्यर्थः । वीरपाणमिति । 'वा भावकरणयोः' इति णत्वम्, वीरैः रणे मनस्समुद्धरणार्थं क्रियमाणः पानविशेषः वीरपाणम् । समर्थ्यताम्—ज्ञायतामित्यर्थः ॥ ३८ ॥

तमेवमुक्त्वा संक्रुद्धः †मालामुत्क्षिप्य काञ्चनीम् ।
पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत ॥ ३९ ॥

उत्क्षिप्य—प्रतिमुच्येति यावत् । काञ्चनीं मालां—दिव्यां सङ्ग्रामविजयदामित्यर्थः ॥ ३९ ॥

विषाणयोर्गृहीत्वा तं दुन्दुभिं गिरिसंनिभम् ।
आविध्यत तदा वाली विनदन् कपिकुञ्जरः ॥ ४० ॥

आविध्यत—क्षिप्तवानित्यर्थः ॥ ४० ॥

वाली ‡ [1] व्यापादयाञ्चक्रे ननर्द च महास्वनम् ।
श्रोत्राभ्यामथ रक्तं तु [2] तस्य सुस्राव §पात्यतः ॥ ४१ ॥

व्यापादयाञ्चक्रे—संहारं कृतवान् ॥ ४१ ॥

---

* स्त्रीसंगजनितोऽयं मद एव अस्मिन् युद्धे वीरपाणत्वेन गृह्यतामित्यर्थः । 'वीरपाणं तु यत् पानं वृत्ते भाविनि वा रणे' इत्यमरः । † एतत्काञ्चनमालाधारणकाले यः पुरो युद्धायागच्छति तस्य बलं सर्वं तवैव भविष्यतीति महेन्द्रेण दत्तामित्यर्थः:-गो. इयं कथा उत्तरकाण्डीयप्रक्षिप्तसर्गे दृश्यते । ‡ व्यापातयाञ्चक्रे भूमौ पातयामास-गो. § पात्यत:-पात्यमानस्य-गो. रा. ति.

[1] व्यापातयाञ्चक्रे-ङ. [2] बहु-ङ.



तयोस्तु क्रोधसंरम्भात् परस्परजयैषिणोः ।
युद्धं समभवद्घोरं दुन्दुभेः वानरस्य च ॥ ४२ ॥

अस्यैव प्रपञ्चः—तयोस्त्वित्यादि ॥ ४२ ॥

[1] अयुध्यत तदा वाली शक्रतुल्यपराक्रमः ।
मुष्टिभिः जानुभिश्चैव शिलाभिः पादपैस्तथा ॥ ४३ ॥

परस्परं घ्नतोस्तत्र वानरासुरयोस्तदा [2] ।
[3] आसीत् हीनोऽसुरो युद्धे शक्रसूनुः व्यवर्धत ॥ ४४ ॥

हीनः—हीनबल इत्यर्थः ॥ ४४ ॥

[4] व्यापारवीर्यधैर्यैश्च परिक्षीणं पराक्रमैः ।
तं तु दुन्दुभिं* [5] मुत्पाट्य धरण्यामभ्यपातयत् ॥ ४५ ॥

व्यापारः—युद्धप्रवृत्तिः । व्यापारादिभिः संपाद्यैः पराक्रमैः क्षीणं उत्पाट्य—उत्पाटितविषाणं कृत्वा इत्यर्थः ॥ ४५ ॥

युद्धे प्राणहरे तस्मिन् निष्पिष्टो दुन्दुभिस्तदा ।
[6] स्रोतोभ्यो बहु रक्तं तु तस्य सुस्राव पात्यतः ॥ ४६ ॥
पपात च [7] महाकायः क्षितौ पञ्चत्वमागतः [8] ।

स्रोतोभ्यः—नासादिद्वारेभ्यः । पात्यतः—पात्यमानस्येति यावत् ॥

---

* उत्पाट्य -बलात् भूमेरूर्ध्वं गृहीत्वा ।

[1] आविध्यत-ङ. [2] एतदनन्तरं-स्रोतोभ्यो बहु रक्तं तु—इत्यर्धं पठितं-झ. [3] आसीददसुरो-ङ. आसीद्धीनोऽसुरो-च. [4] इदमर्धमधिकं-झ. [5] मुद्यम्य-ङ. [6] इदमर्धं कुण्डलितं-ङ. [7] महाबाहुः-ङ. [8] एतदनन्तरं —तस्मिन् पञ्चत्वमापन्ने वाली क्रोधेन चान्वितः । तत्कायं लोष्टवत् क्षेप्तुं आरब्धो वीर्यवांस्तदा-इत्यधिकं-ङ.

तं तोलयित्वा बाहुभ्यां गतसत्त्व[1]मचेतनम् ॥ ४७ ॥
चिक्षेप[2] बलवान् वाली वेगेनैकेन *योजनम् ।

तोलयित्वा—चालयित्वा ॥ ४७ ॥

तस्य वेगप्रविद्धस्य[3] वक्त्रात् क्षतजबिन्दवः ॥ ४८ ॥
प्रपेतुः मारुतोत्क्षिप्ताः मतङ्गस्याश्रमं प्रति ।
तान् दृष्ट्वा पतितांस्तस्य मुनिः शोणितविप्रुषः[4] ॥ ४९ ॥
क्रुद्धस्तत्र महाभागः चिन्तयामास †को न्वयम् ।

तस्येति । विप्रुष इत्यर्थः । कर्तारमिति शेषः ॥ ४९ ॥

[5]येनाहं सहसा स्पृष्टः शोणितेन दुरात्मना ॥ ५० ॥
कोऽयं दुरात्मा दुर्बुद्धिः अकृतात्मा च बालिशः ।

को न्वयमिति चिन्तयामासेत्युक्तायाः चिन्ताया एवाभिनयः—येनेत्यादि । सहसा—बलात्कारेण ॥ ५० ॥

इत्युक्त्वाऽथ विनिष्क्रम्य ददर्श मुनिपुङ्गवः ॥ ५१ ॥
महिषं पर्वताकारं गतासुं पतितं भुवि ।
स तु विज्ञाय तपसा[6] वानरेण कृतं हि तत् ॥ ५२ ॥
उत्ससर्ज महाशापं क्षेप्तारं[7] वालिनं प्रति ।
इह तेनाप्रवेष्टव्यं प्रविष्टस्य वधो भवेत् ॥ ५३ ॥

---

* एकेन वेगेन—अल्पेन वेगेन—रा. एकप्रयत्नेन—गो. † 'को न्वयं' इति लोकवत् कथनम् ।

[1] मचेतसम्—ङ. [2] वेगवान्—ज. [3] मुखात्—ङ. [4] एतदनन्तरं—मतङ्गश्च महाप्राज्ञः क्रुद्धः कस्येति चाब्रवीत्—इत्यधिकं—ङ. [5] येनायमाश्रमः—ङ. [6] वानरेन्द्र—ङ. [7] वानरं—च.



वनं[1] मत्संश्रयं येन दूषितं रुधिरस्रवैः ।
संभग्नाः पादपाश्चेमे क्षिपतेहासुरीं तनुम् ॥ ५४ ॥

क्षिपता—विसृष्टवता ॥ ५४ ॥

समन्ताद्योजनं पूर्णं आश्रमं मामकं यदि ।
[2]आगमिष्यति दुर्बुद्धिः व्यक्तं स न भविष्यति ॥ ५५ ॥

न भविष्यति—नशिष्यतीत्यर्थः ॥ ५५ ॥

ये चापि[3] सचिवास्तस्य संश्रिता मामकं वनम् ।
न च तैरिह वस्तव्यं श्रुत्वा यान्तु यथासुखम् ॥ ५६ ॥

तैरिति । वालिसचिवैः इत्यर्थः । श्रुत्वेति । मद्वचः इति शेषः ॥ ५६ ॥

यदि तेऽपीह तिष्ठन्ति शपिष्ये तानपि ध्रुवम् ।
वनेऽस्मिन् मामके नित्यं पुत्रवत् परिरक्षिते ॥ ५७ ॥
*पत्राङ्कुरविनाशाय फलमूलाभवाय च ।

शपिष्ये इति प्रतिज्ञां हेतून्यासपूर्वकं संपादयति—वनेऽस्मिन् इत्यादि । फलमूलानां अभवः—विनाशः तस्मै जायन्ते यतः, अतः शपिष्ये ॥ ५७ ॥

[4]दिवसश्चास्य मर्यादा यं द्रष्टा श्वोऽस्मि† वानरम् ॥ ५८ ॥
बहुवर्षसहस्राणि स वै शैलो भविष्यति ।

---

* वानराः खलु पत्राङ्कुरादिकमपि समये भक्षन्ति । † अस्मीति अहमित्यर्थे विभक्तिप्रतिरूपकम् । यं वानरं अहं श्वो द्रष्टा स शैलो भविष्यतीत्यन्वय इति केचित् ।

[1] मत्संश्रितं—ङ. [2] आक्रमिष्यति—च. [3] सचिवाः केचित्—ङ.
[4] दिवसश्चाथ- च.

अस्य—वक्ष्यमाणशापस्य प्रवृत्तेः मर्यादा च अयं दिवस एव। अयमेवार्थो विव्रियते—यं द्रष्टेत्यादि। श्वः य वानरं द्रष्टा—दृष्टवानस्मि ॥ ५८ ॥

ततस्ते वानराः श्रुत्वा गिरं मुनिसमीरिताम् ॥ ५९ ॥

निश्चक्रमुः वनात् तस्मात् तान् दृष्ट्वा वालिरब्रवीत्।
किं भवन्तः समस्ताश्च मतङ्गवनवासिनः ॥ ६० ॥

मत्समीपमनुप्राप्ताः अपि स्वस्ति वनौकसाम्।
ततस्ते कारणं सर्वं तथा शापं च वालिनः ॥ ६१ ॥

शशंसुर्वानराः सर्वे वालिने हेममालिने।
एतत् श्रुत्वा तदा वाली वचनं वानरेरितम् ॥ ६२ ॥

स महर्षिं तदाऽऽसाद्य याचते स्म कृताञ्जलिः।

याचते स्म। शापविमोक्षमिति शेषः ॥ ६२ ॥

महर्षिस्तमनादृत्य प्रविवेशाश्रमं तदा।
शाप[1]धारणभीतस्तु वाली विह्वलतां गतः ॥ ६३ ॥

शापधारणेन—शापदोषधारणेन भीतः तथा ॥ ६३ ॥

ततः शापभयाद्भीतः ऋश्यमूकं महागिरिम्।
प्रवेष्टुं नेच्छति हरिः द्रष्टुं वाऽपि, नरेश्वर! ॥ ६४ ॥
तस्याप्रवेशं ज्ञात्वाऽहं [2]इदं, राम! महावनम्।
विचरामि सहामात्यः *विषादेन विवर्जितः ॥ ६५ ॥

---

* विषादेन विवर्जितः—निर्वृत इत्यर्थः।

[1] कारण—ङ. [2] इमं राम महागिरिम्—ङ.



*एषोऽस्थिनिचयस्तस्य दुन्दुभेः संप्रकाशते।
वीर्योत्सेकान्निरस्तस्य [1]गिरिकूटोपमो महान् ॥ ६६ ॥

इमे च विपुलाः सालाः सप्त †शाखावलम्बिनः।
यत्रैकं घटते वाली ‡निष्पत्रयितुमोजसा ॥ ६७ ॥

विपुलाः—विशालमूलस्कन्धाः। शाखावलम्बिनः—प्रशस्तबहुशाखावन्तः इत्यर्थः। निष्पत्रयितुं—अतिव्यथयितुम्। यत्र येषु सप्तसालेषु एकं ओजसा निष्पत्रयितु घटते त इमे सालाः इत्यन्वयः। 'सपत्रानिष्पत्रादातिव्यथने' इति प्रसिद्धः अतिव्यथनार्थः। ननु अहो केनातिव्यथिनं? बाणेन। कथं कपेर्बाणः? अप्राकृतकपित्वात्। स्वबलप्रकाशनार्थं बाणव्यापारस्य संभवात्। तथा तोमरादिना च ॥ ६७ ॥

एतदस्यासमं वीर्यं मया, राम! [2]प्रकीर्तितम्।
कथं तं वालिनं हन्तुं समरे शक्ष्यसे, नृप! ॥ ६८ ॥

उक्तं वालिवीर्यमुपसंहरति—एतदित्यादि ॥ ६८ ॥

तथा ब्रुवाणं सुग्रीवं प्रहसन् लक्ष्मणोऽब्रवीत्।
कस्मिन् कर्मणि निर्वृत्ते श्रद्दध्या वालिनो [3]वधम् ॥ ६९ ॥

---

* सुग्रीवावस्थितदेशस्य मतङ्गाश्रमान्तर्गतत्वात् 'एषः' इति निर्देशः। † शाखावलम्बिनः—लम्बितशाखाः—गो. ‡ यत्र—येषु तरुषु एकं तरुं निष्पत्रयितुं—पत्रविहीनं कर्तुं ओजसा—ओजोहेतुकमूलग्रहणपूर्वककम्पनेन वाली घटते—शक्नोति—रा. यत्र सालेषु एकं सालं ओजसा, न तु धनुषा, निष्पत्रयितुं निर्गतशरपत्रं कर्तुं घटते—शक्नोति। एकं सालं भित्त्वा शरो निष्पत्रं यथा तथा वृक्षान्तरासक्तमूलं गच्छति, तथा वेद्धुं समर्थ इत्यर्थः। धनुर्विना केवलबाणेन एकं सालं विध्यतीत्यर्थः। स्वजातिविरुद्धत्वेन युद्धे धनुर्ग्रहणाभावेऽपि लीलार्थं धनुरस्तीति ध्येयम्—गो.

[1] गिरिकूटनिभो—च. [2] प्रकाशितम्—ज. [3] वधे—ङ.

प्रहसन्निति । भगवद्वीर्यवैभवापरिज्ञानादेवं वादः इत्याशयात् प्रहसन् इत्यर्थः । बधमिति । रामेणेति शेषः ॥ ६९ ॥

तमुवाचाथ सुग्रीवः सप्तसालानिमान् पुरा ।
एवमेकैकशो वाली विव्याधाथ स चासकृत् ॥ ७० ॥

एकैकशः विव्याध । सप्त अपीति शेषः । अथ च अनन्तरमपि काकतालीयत्वव्युदासाय असकृच्च विव्याध ॥ ७० ॥

रामोऽपि दारयेदेषां बाणेनैकेन चेत् द्रुमम् ।
वालिनं निहतं मन्ये दृष्ट्वा रामस्य विक्रमम् ॥ ७१ ॥
हतस्य महिषस्यास्थि पादेनैकेन, लक्ष्मण !
[1] उत्क्षिप्याथ प्रक्षिपेचेत् तरसा* द्वे धनुश्शते ॥ ७२ ॥

पादेन उत्क्षिप्येति †हस्तस्पर्शायोग्यत्वात् । तरसा—बलेन । प्रक्षिपेचेत् तदा च रामस्य विक्रमं दृष्ट्वा वालिनं निहतं मन्ये इत्यन्वयः ॥ ७२ ॥

‡ एवमुक्त्वा तु सुग्रीवः रामं रक्तान्त[2] लोचनम् ।
ध्यात्वा मुहूर्तं काकुत्स्थं पुनरेव वचोऽब्रवीत् ॥ ७३ ॥

ध्यात्वा मुहूर्तमिति । समरे रामवीर्यस्य अप्रत्यक्षत्वात् रामेण वालिवधः शक्योऽशक्यो वेति सञ्चिन्त्य मित्रं प्रति वस्तुतत्त्वं आख्यातव्यं इत्याशयेन पुनरेवाब्रवीत् ॥ ७३ ॥

---

* द्वे धनुश्शते—धनुश्शतद्वयदूरम् । धनुर्नाम चतुर्हस्तमानम् । 'किष्कुः-स्यादवटो हस्तः चतुर्विंशतिरङ्गुलः । चतुर्हस्तो धनुर्दण्डः धनुर्धन्वन्तरं युगम्' इति वैजयन्ती—**गो.** † वस्तुतस्तु 'तं तोलयित्वा बाहुभ्यां' इति वालिना हस्तद्वयेन कृतं कर्म रामेणानायासेन कर्तव्यमिति प्रदर्शनार्थमेवं कथनम् । ‡ एवमविश्वासकरणे सुहृद दुर्मनायेतेत्यालोच्य यथा रामः सन्तुष्यति तथा वदति—एवमुक्त्वेत्यादिना—**गो.**

[1] उद्यमाथ—ङ. [2] लोचनः—ङ.



शूरश्च [1] शूरघाती च प्रख्यातबलपौरुषः ।
बलवान् वानरो वाली संयुगेष्वपराजितः ॥ ७४ ॥

किमब्रवीत ; इत्यतः—शूरश्चेत्यादि ॥ ७४ ॥

दृश्यन्ते चास्य कर्माणि दुष्कराणि सुरैरपि ।
यानि संचिन्त्य भीतोऽहं ऋश्यमूकं समाश्रितः ॥ ७५ ॥

यानि—तदीयकर्माणि संचिन्त्य भीतः ॥ ७५ ॥

तमजय्यमधृष्यं च वानरेन्द्रममर्षणम् ।
विचिन्त्य यं न मुञ्चामि ऋश्यमूकमहं [2] त्विमम् ॥ ७६ ॥

उक्तार्थस्यैव विवरणं—तमजय्यमित्यादि । यमिति पदम् । यं विचिन्त्येत्यन्वयः ॥ ७६ ॥

उद्विग्नः शङ्कितश्चापि विचरामि महावने ।
अनुरक्तैः सहामात्यैः हनुमत्प्रमुखैर्वरैः ॥ ७७ ॥
उपलब्धं च मे श्लाघ्यं संमित्रं, मित्रवत्सल !
त्वामहं, पुरुषव्याघ्र ! *हिमवन्तमिवाश्रितः ॥ ७८ ॥

समीचीनं मित्रं संमित्रं । त्वामिति । मित्रभूतमित्यर्थः ॥ ७८ ॥

किन्तु तस्य बलज्ञोऽहं दुर्भ्रातुर्बलशालिनः ।
अप्रत्यक्षं तु मे वीर्यं समरे तव, राघव ! ॥ ७९ ॥

---

* पर्वता हि अचलाः । हिमवांश्च अचलश्रेष्ठः । अतस्तदाश्रित्य तिष्ठतः न चलनावकाश इति भावः ।

[1] शूरमानी च—ङ. [2] गिरिम्—ङ.

यदि हिमवन्तमिव मामाश्रितः, तर्हि त्यज वालिभयं इत्यत आह—किं त्वित्यादि। तद्बलं ज्ञातं, त्वद्बलं च न ज्ञातं, अतो मे भयमित्यर्थः ॥ ७९ ॥

**न खल्वहं त्वां * तुलये नावमन्ये न भीषये।**
**कर्मभिस्तस्य भीमैस्तु कातर्यं जनितं मम ॥ ८० ॥**

त्वां न तुलये—नोपमीये। † शत्रुणो निरवधिकं बलमिति शेषः। अत एव नावमन्ये न भीषये च, एवं व्यापारस्य मित्रे अनुचितत्वात्। तर्हि पुनः पुनः कथनं किमर्थं? इत्यत आह—कर्मभिरिति ॥ ८० ॥

**कामं, राघव! ते ‡ वाणी प्रमाणं धैर्यमाकृतिः।**
**सूचयन्ति परं तेजः भस्मच्छन्नमिवानलम्[1] ॥ ८१ ॥**

ते वाणी, वालिवधविषयेत्यर्थः। प्रमाणं—विश्वसनीयेत्यर्थः। तत्र हेतुमाह—धैर्यमित्यादि। अकातर्येण तृणीकृत्यवादः धैर्यम्। आकृतिः—स्वानुभवसिद्धदिव्यमङ्गलविग्रहः। एतदुभयं ते परं तेजः—सकलजगदाधारादिसंहारसामर्थ्यं सूचयति। भस्मच्छन्नमिवानलमिति गुप्तावस्थितमहाशक्तिमत्त्वे दृष्टान्तः ॥ ८१ ॥

---

* तुलनं नाम उभयोर्मध्ये कतरः श्रेष्ठः इति परीक्षणम्। एवं परीक्षणं हि वीराणामपमानकरम्। † अल्पवीर्येणेति विशेषः। ‡ तव वचनमेकमेव पर्याप्तं प्रमाणम्। धैर्यादिकं च भवतः परं तेजः तदनुगुणमेव सूचयन्तीति भावः।

[1] एतदनन्तरं—स्निग्धानां प्रीतियुक्तानां सुहृदां सुहृदं प्रति। कातरं हृदयं, राम! प्रत्ययं नाधिगच्छति। यदि बाणेन भेत्ता त्वं सालान् सप्ताथ, राघव! वालिनं समरे हन्तुं समर्थः स्यात्ततो भवान्—इत्यधिकं—ङ.



**तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मनः।**
**स्मितपूर्वमथो रामः प्रत्युवाच हरिं प्रभुः ॥ ८२ ॥**

स्मितप्रयोगः उक्तभावः*। हरिं—सुग्रीवं, प्रभुः—रामः ॥ ८२ ॥

**यदि न प्रत्ययोऽस्मासु विक्रमे तव, वानर!**
**प्रत्ययं [1]समरे श्लाघ्यं अहमुत्पादयामि ते ॥ ८३ ॥**
**एवमुक्त्वा तु सुग्रीवं †[2] सान्त्वं लक्ष्मणपूर्वजः।**
**राघवो दुन्दुभेः कायं ‡ पादाङ्गुष्ठेन [3]लीलया ॥ ८४ ॥**
**[4]तोलयित्वा महाबाहुः चिक्षेप दशयोजनम् ॥ ८५ ॥**

भूयः अभ्यधिकं धृत्वा चालनं—तोलनम् ॥ ८५ ॥

**[5]असुरस्य तनुं [6]शुष्कं पादाङ्गुष्ठेन वीर्यवान्।**
**क्षिप्तं दृष्ट्वा ततः कायं सुग्रीवः पुनरर्थवत् ॥ ८६ ॥**
**[7]लक्ष्मणस्याग्रतो रामं तपन्तमिव भास्करम्।**
**हरीणामग्रतो वीरं इदं वचनमब्रवीत् ॥ ८७ ॥**

अर्थवत्—उपपत्तिमत्। इदं वचनमब्रवीदिति। अनुत्पन्नप्रत्यय इति शेषः ॥ ८६–८७ ॥

---

* 5–25 श्लोकव्याख्यायां हासस्य भावः उक्तपूर्व इत्यर्थः। † सान्त्वमित्यनेन प्रत्ययप्रश्नेन सुग्रीवस्य दुःखितत्वं द्योत्यते—गो. वस्तुतस्तु ‘मत्पौरुषं शङ्कते किल’ इति न रामस्य कोपो जातः इति सूच्यते। ‡ सुग्रीवेण ‘पादेनैकेन लक्ष्मण। उद्यम्य प्रक्षिपेच्चापि तरसा द्वे धनुश्शते’ (72 श्लो) इति कथिते रामः पादाङ्गुष्ठेन दशयोजनं क्षिप्तवान् ॥

[1] समरश्लाघ्यं—ङ. [2] सान्त्वयन् लक्ष्मणाग्रजः—च. [3] तोलयन्—ङ. [4] पुनश्च लीलया रामः—ङ. [5] इदमर्धमधिकं—ङ. [6] शुष्कां—झ. [7] एतदर्धद्वयस्थाने—लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत्—ङ.

आर्द्रः समांसः प्रत्यग्रः क्षिप्तः कायः पुरा, सखे!
लघुः संप्रति निर्मांसः तृणभूतश्च, राघव! ॥ ८८ ॥

तदेव दर्शयति—आर्द्र इत्यादि । प्रत्यग्रः—नूतनः ॥८८॥

*परिश्रान्तेन मत्तेन भ्रात्रा मे वालिना तदा ।
क्षिप्तमेवं प्रहर्षेण भवता, रघुनन्दन!
नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाऽधिकम् ॥ ८९ ॥

मत्तेनेति । युद्धश्रान्तिपरवशकरणग्रामेणेत्यर्थः । प्रहर्षेण वेति योजना । असमोपलक्षितेनेत्यर्थः ॥ ८९ ॥

†आर्द्रं शुष्कमिति ह्येतत् सुमहत् राघवान्तरम् ।
स एव संशयः, तात! तव तस्य च [1]यद्बले ॥ ९० ॥
सालमेकं तु निर्भिन्द्या [2]भवेद्व्यक्तिर्बलाबले ॥ ९१ ॥

बलाधिक्यनिर्णायकमाह—आर्द्रमित्यादि । यद्बल इति । यदित्यव्ययम् । तव तस्य च बलविषये यः संशयः अस्थिक्षेपात् पूर्वं स्थितः, स एवाद्यापि वर्तते, न तु कर्मणा निवृत्त इत्यर्थः । तर्हि किं प्रत्यायिकं कर्तव्यं ? इत्यत आह—सालमित्यादि ॥ ९०-९१ ॥

कृत्वेदं कार्मुकं सज्यं हस्तिहस्त[3]मिवाततम् ।
आकर्णपूर्णमायम्य विसृजस्व महाशरम् ॥ ९१ ॥

आततं—दीर्घं ॥ ९१ ॥

---

* कर्मतारतम्यमुक्त्वा कर्तृतारतम्यमप्याह—परिश्रान्तेनेत्यादि । † 'अहमपि वनपर्यटनादिना सुश्रान्त एव' इति यदि रामो ब्रूयादिति मत्वा, कर्तृवैलक्षण्याभावेऽपि कर्मवैलक्षण्यं तु दुरपह्नवमेवेत्येतदर्थं तमंशं पुनरनुवदति—आर्द्रमित्यादि ।

[1] यद्बलम्—च. [2] भवेद्द्वयके बलाबले—ङ. [3] मिवापरम्—ज.



*इमं हि सालं [1]संहितस्त्वया शरः
न संशयोऽत्रास्ति विदारयिष्यति ।
अलं विमर्शेन †[2]मम प्रियं ध्रुवं
कुरुष्व, [3]राजात्मज! शापितो मया ॥ ९२ ॥

सालभेदने त्वया विमर्शो न कर्तव्यः, भेदनसामर्थ्यं समग्रमस्त्येव ते । अपि तु अपरोक्षदर्शनजसंतोषार्थं सख्या मया शापितो नियुक्तः कुर्विति नियुङ्क्ते सखित्वात्—इमं हीत्यादि ॥ ९२ ॥

यथा हि तेजस्सु वरः सदा रविः
यथा हि शैलो हिमवान् महाद्रिषु ।
यथा चतुष्पात्सु च केसरी वरः
तथा नराणामसि विक्रमे वरः ॥ ९३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकादशः सर्गः

---

विक्रमे वर इति । श्रेष्ठत्वेन मे अभिमतो भवसीत्यर्थः । सालभेदने सतीति शेषः । बाधामानः (९३) सर्गः ॥ ९३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकादशः सर्गः

---

* पुनर्निर्बन्धेन कुपितो भवेदिति सान्त्वयति—इममिति । सहितः—संहितः 'समो वा हिततयोः' इति मलोपः—गो. † मम प्रियं, न तु त्वत्परीक्षार्थम्—गो.

[1] प्रहित—च. [2] तव—ङ. [3] राजन् प्रतिशापितो—च. राजंस्त्वयि शापितो—ङ.

## द्वादशः सर्गः

### [ सुग्रीवप्रत्ययोत्पादनम् ]

**एतच्च वचनं श्रुत्वा सुग्रीवेण *सुभाषितम् ।**
**प्रत्ययार्थं महातेजाः रामो जग्राह कार्मुकम् ॥ १ ॥**

अथ सप्तसालभेदनप्रत्ययितविक्रमस्य वालिरणप्रेषितस्य ततो वालिप्रहरणप्रहतस्य खिन्नस्य समाश्वासपूर्वं साभिज्ञानं पुनः रामेण वालिरणप्रेरणम् । एतच्चेत्यादि ॥ १ ॥

**स गृहीत्वा धनुर्घोरं शरमेकं च मानदः ।**
**†सालमुद्दिश्य चिक्षेप ज्यास्वनैः पूरयन् दिशः ॥ २ ॥**
**स विसृष्टो बलवता बाणः स्वर्णपरिष्कृतः ।**
**भित्त्वा सालान्[1] गिरिप्रस्थे सप्त भूमिं विवेश ह ॥ ३ ॥**

भित्त्वेत्यादि । सप्त सालान्, ततः तत्पृष्ठवर्तिनं गिरिमेकं च भित्त्वा, ततः पश्चात्तनीं भूमिं च भित्त्वा विवेश । ह—सर्वानुभवप्रसिद्धमित्यर्थः ॥ ३ ॥

**[2]प्रविष्टश्च मुहूर्तेन [3]रसां भित्त्वा [4]महाजवः ।**
**[5]निष्पत्य च पुनस्तूर्णं स्वतूणीं प्रविवेश ह‡ ॥ ४ ॥**

रसां—भूमिम् । निष्पत्य चेति । भूमेरिति शेषः । स्वतूणीं—स्वनिलयभूतां पुनः आविशत् । ननु कथं अचेतनस्य पुनः तूणीर-

---

* प्रत्यक्षतोऽनुभूतवालिबलस्य, अप्रत्यक्षीकृतरामबलस्य एवंकथनं युक्तमेवेति भावनया—'सुभाषितं' इत्युक्तम् । † सालमित्येकवचनेन एकसालोद्देशेन प्रयुक्त एव शरः तावत्कार्यमकरोदिति सूच्यते । ‡ मन्त्रप्रभावेनाचेतनस्यापि पुनरागमनम्—**गो.**

[1] गिरिप्रस्थं—**झ.** [2] सायकस्तु—**च.** [3] सालान्—**च.** धरां—**ङ.** [4] महाशरः—**ङ.** [5] निपत्य—**ङ.**



प्राप्तिः ? रुद्रबाणवत् रामबाणानां परमशक्तिमत्परचेतनदेवताधिष्ठानत्वात् ताभिरेव पुनः प्रापणमपि । तत एव अक्षयबाणेषुधित्वं च रामस्य ॥ ५ ॥

**तान् दृष्ट्वा *सप्त निर्भिन्नान् सालान् वानरपुङ्गवः ।**
**रामस्य शरवेगेन विस्मयं परमं गतः[1] ॥ ५ ॥**
**†स मूर्ध्ना न्यपतत् भूमौ प्रलम्बीकृतभूषणः ।**
**सुग्रीवः परमप्रीतः राघवाय कृताञ्जलिः ॥ ६ ॥**

साष्टाङ्गप्रणामवशात् प्रलम्बितभूषणः — लम्बमानावस्थासंपन्नानि उरःकण्ठवर्तिहारादिभूषणानि यस्य स तथा । कृताञ्जलिरिति । उत्थानानन्तरमिति शेषः ॥ ६ ॥

**इदं चोवाच धर्मज्ञं कर्मणा तेन [2]हर्षितः ।**
**रामं सर्वास्त्रविदुषां श्रेष्ठं शूरमवस्थितम् ॥ ७ ॥**
**सेन्द्रानपि सुरान् सर्वान् त्वं बाणैः, पुरुषर्षभ !**
**समर्थः समरे हन्तुं किं पुनर्वालिनं, प्रभो ! ॥ ८ ॥**
**येन सप्त महासालाः गिरिर्भूमिश्च दारिताः ।**
**बाणेनैकेन, काकुत्स्थ ! स्थाता ते को रणाग्रतः ॥ ९ ॥**

---

* तान् दृष्ट्वेत्यनेन अत्राज्ञत्वात्सुग्रीवः सालानेव भिन्नान् ददर्श, सप्तभूमिप्रवेशं त्वहमेव (वाल्मीकिरेव) धर्मवीर्येण पश्यामीति भावः—**गो.** परन्तु ९ श्लोको द्रष्टव्यः । † रामशक्त्यतिशयदर्शनेन, तस्य परीक्षणार्थं प्रवृत्ति स्मरतोऽवशात्प्रणामः कृतः ।

[1] एतदनन्तरं—अहो शरनिपातोऽयं रामस्याक्लिष्टकर्मणः । यमदण्डोपमो ह्येतव मृत्युपाशसमन्वितः ॥ विस्मयन्तश्च ते सर्वे हनूमत्प्रमुखास्तदा । गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ शोभनं शोभनं राम ! कृतं कर्म सुदुष्करम् । यस्य ते शरवेगेन त्रयो लोकाः प्रकम्पिताः—इत्यधिकं—**झ.** [2] तोषितः—**ङ.**

अद्य मे विगतः शोकः प्रीतिरद्य परा मम।
सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमम् ॥ १० ॥
तमद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणम्।
वालिनं जहि, काकुत्स्थ! मया बद्धोऽयमञ्जलिः ॥११॥
ततो रामः परिष्वज्य सुग्रीवं प्रियदर्शनम्।
अस्माद्गच्छेम किष्किन्धां क्षिप्रं गच्छ त्वमग्रतः।
गत्वा चाह्वय, सुग्रीव! वालिनं भ्रातृगन्धिनम् ॥ १२ ॥

अस्माद् गच्छामेति। ऋष्यमूकादित्यर्थः। भ्रातृगन्धिनमिति। अनर्थकभ्रातृव्यपदेशमित्यर्थः ॥ १२ ॥

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम्।
वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने ॥ १३ ॥
प्रत्युवाच महाप्राज्ञः *[1]लक्ष्मणानुमतं वचः[2] ॥ १४ ॥

आत्मानं – स्वदेहम् ॥ १४ ॥

---

* लक्ष्मणानुमतमिति क्रियाविशेषणम् गो. लक्ष्मणानुगतं– तत्सममित्यर्थः। यद्वा लक्ष्मणवत्प्रियत्वेनानुगतं—स्वीकृतं सुग्रीवं –ति. † भ्रातृगन्धिनं—भ्रातृहिंसकं, 'गन्धनावक्षेपण' इत्यत्र तथाप्रयोगात्—गो. गन्ध अर्दने इति धातुः।

[1] लक्ष्मणानुगतं—च. [2] एतदनन्तरं—स रामो वृक्षसंछन्ने वनोद्देशे वनप्रियः। आवृतः स च सौमित्रिमिदं वचनमब्रवीत् ॥ पश्य लक्ष्मण सौमित्रे! भ्रातॄणां राज्यकारणात् ॥ व्यसनं घोरमुत्पन्नं गर्हितं प्रतिभाति मे ॥ राज्यं नाम महाव्याधिः अचिकित्स्यो विनाशनः। भ्रातरं वा सुतं वाऽपि त्यजन्ति खलु भूमिपाः ॥ एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत्। ईदृशो राज्यवृत्तान्तः राज्यहेतोर्न संशयः ॥ भ्रातॄन् पुत्रांश्च दारांश्च त्यजन्ते राज्यकारणात्। लुब्धास्त्वेवं प्रकुर्वन्ति लोभमोहवशंगताः ॥ पूर्वमासीन्महाराजा(जो) लोष्टको नाम भूमिपः। राज्यार्थं तेन पुत्राश्च भ्राता वैरनिराकृतः ॥ अन्यैरपि च दुर्वृत्तैः कृतमेव न संशयः। राज्यहेतोर्विशालाक्ष वैरसंग्रहणाय च। मा विषादं कृथा वीर! नैतत् क्षत्रिय चेष्टितम्। न विनन्दन्ति राजानः दृष्ट्वाऽत्मानं तथाविधम् ॥—इत्यधिकं—झ.



सुग्रीवो व्यनदद्घोरं वालिनो ह्वानकारणात्।
गाढं परिहितो वेगात् नादैर्भिन्दन्निवाम्बरम्[1] ॥ १५ ॥

ह्वानकारणात्—आह्वाननिमित्तमित्यर्थः। गाढं परिहितः—वस्त्रेण कृतपरिधानः। वस्त्रेण कटिं दृढं बद्ध्वा इत्यर्थः। वेगात् नादैरिति। नादकारणप्राणवेगवशात्, उत्पन्नैरिति शेषः ॥ १५ ॥

तं श्रुत्वा निनदं भ्रातुः क्रुद्धो वाली महाबलः।
निश्चक्राम सुसंरब्धः *[2] भास्करोऽस्ततटादिव ॥ १६ ॥

अस्ततटादिवेति। अस्तशब्देन तत्प्रतिसंबन्धी उदयपर्वतो लक्ष्यते। निष्पपातेत्युक्तिसामर्थ्यात् ॥ १६ ॥

ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत्।
गगने ग्रहयोर्घोरं वज्रगोकर्णयोरिव[3] ॥ १७ ॥

दृष्टान्तान्तरं—वज्रगोकर्णयोर्यथेति। बुधाङ्गारकयेरिवेति पाठे 'कयो'रित्यत्र गुरुव्यत्यासः आर्षः। वज्रगोकर्णौ—तदाख्यपर्वतौ। यथा एवमित्यन्वयः। †महेन्द्रारिष्टौ च पर्वतौ ॥ १७ ॥

---

* भास्करः अस्ततटादतिदूरमप्युदयपर्वतं अत्यल्पेन कालेन याति। एवमदृश्यस्थानतया तत्तुल्यगुहातः क्षणेन बहिरागत इत्यर्थः यत्तु अस्तपदेनोदयगिरिलक्षणं (कतक) यदपि मेरूत्तरवासिन ऽधिकृत्येयमुक्तिरिति व्याख्यान–(ती). तत् क्लिष्टमसंगतं चेति स्पष्टं सुधियाम्–ति. यथा सूर्यः अस्ततटादवतरन् अदृष्टरश्मिर्भवति, तथेदानीं किष्किन्धानिर्गमनं वालिनोऽत्यल्पकालेन नाशहेतुरिति द्योतनार्थं अस्ततटादित्युक्तम्। अस्मद्देशोदयगिरिप्रदेशान्तरापेक्षया अस्तगिरिरित्यप्याहुः–गो. † अत्र 'हिमवद्विन्ध्ययोश्चैव महेन्द्रारिष्टयोर्यथा' इति अधिकः पाठः व्याख्यासम्मतः प्रतिभाति।

[1] एतदनन्तरं—ननाद सुमहानादं पूरयन् वै नभःस्थलम्—इत्यधिकं–झ. [2] भास्करोद्रितटादिव–झ. [3] एतदनन्तरं—अग्न्यर्कयोर्यथाऽऽकाशे मेरुमन्दरयोरिव। हिमवद्विन्ध्ययोश्चैव मैनाकक्रौञ्चयोरिव। वज्रगोकर्णयोरेव महेन्द्रारिष्टयोरिव—इत्यधिकं–झ.

तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः ।
जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्छितौ ॥ १८ ॥

अशनिः—दम्भोलिः । वज्रं—वज्रायुधम् ॥ १८ ॥

ततो रामो धनुष्पाणिः तावुभौ समुदीक्ष्य तु ।
अन्योन्यसदृशौ वीरौ उभौ देवाविवाश्विनौ ॥ १९ ॥
[1] यन्नावगच्छत् सुग्रीवं वालिनं नाऽपि राघवः ।
ततो न कृतवान् बुद्धिं मोक्तुमन्तकरं शरम् ॥ २० ॥

यत्—यस्मात् । नावगच्छदिति । विविच्येति शेषः ॥ २० ॥

एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन वालिना ।
अपश्यन् राघवं नाथं ऋश्यमूकं प्रदुद्रुवे ॥ २१ ॥

नाथं अपश्यन्—रक्षकं अनुपलभमानः ॥ २१ ॥

क्लान्तो रुधिरसिक्ताङ्गः प्रहारैः जर्जरीकृतः ।
वालिनाभिद्रुतः क्रोधात् प्रविवेश महावनम् ॥ २२ ॥
तं प्रविष्टं वनं दृष्ट्वा वाली शापभयार्दितः ।
मुक्तो ह्यसि त्वमित्युक्त्वा [2] संनिवृत्तो महाद्युतिः[3] ॥ २३ ॥

वनं प्रविष्टमिति । ऋष्यमूकस्य वनं इत्यर्थः ॥ २३ ॥

राघवोऽपि सह भ्रात्रा [4] सह चैव हनूमता ।
तदेव वनमागच्छत् सुग्रीवो यत्र वानरः ॥ २४ ॥

---

[1] यन्नाध्यगच्छत्–ङ. [2] स निवृत्तो महाबलः—ङ. [3] एतदनन्तरं—निवृत्तः स्वपुरीं प्राप क्रोधाविष्टो महाबलः—इत्यधिकं–ङ. [4] सचिवैश्च–ङ.



तं समीक्ष्यागतं रामं सुग्रीवः सहलक्ष्मणम् ।
*ह्रीमान् दीनमुवाचेदं वसुधामवलोकयन् ॥ २५ ॥

ह्रीमान् । काले अकृतरक्षणस्य मुखं कथं पश्यमीति लज्जावानित्यर्थः ॥ २५ ॥

आह्वयस्वेति मामुक्त्वा † दर्शयित्वा च विक्रमम् ।
वैरिणा घातयित्वा च किमिदानीं त्वया कृतम् ॥ २६ ॥

विक्रमं दर्शयित्वेति । सालभेदनादिनेति शेषः । घातयित्वेति । युद्धप्रेरणद्वारेति शेषः । किं कृतमिति । अनुचितमेव कृतमित्यर्थः ॥ २६ ॥

‡ तामेव वेलां वक्तव्यं त्वया, राघव! तत्त्वतः ।
वालिनं न निहन्मीति ततो नाहमितो व्रजे[1] ॥ २७ ॥

तामेव वेलामिति । सप्तम्यर्थे द्वितीया । वालिना युद्धप्रेरणवेलायामित्यर्थः । ततः—तदेत्यर्थः । इतः—ऋष्यमूकात् वनात् ॥ २७ ॥

तस्य चैवं ब्रुवाणस्य सुग्रीवस्य महात्मनः ।
करुणं § दीनया वाचा राघवः पुनरब्रवीत् ॥ २८ ॥
सुग्रीव! श्रूयतां, तात! क्रोधश्च व्यपनीयताम् ।
कारणं येन बाणोऽयं न मया स विसर्जितः ॥ २९ ॥

सः बाणः इति । अरातिसंहारप्रयोजनकः इत्यर्थः ॥ २९ ॥

---

*ह्रीमान्—सम्मानितमित्रस्य पुरतः परिभूतत्वात् लज्जावान् । † 'दर्शयित्वा च विक्रमम्' इति व्यतिरेकोक्तिः । त्वया किं कृतं, किं चिन्तितमित्यर्थः—गो. ‡ तामेव वेलां—तदानीमेवेत्यर्थः । § स्वस्मिन्नपराधाङ्गीकारसूचनाय दीनयेति ।

[1] एतदनन्तरं–किन्तु तत्कारणं येन शक्तेनापि न गण्यते–इत्यधिकं–ङ. झ.

*अलङ्कारेण वेषेण प्रमाणेन गतेन च ।
त्वं च, सुग्रीव! वाली च सदृशौ स्थः परस्परम् ॥ ३० ॥

तदेव कारणमाह—अलङ्कारेणेत्यादि ॥ ३० ॥

विक्रमेण च वाक्यैश्च व्यक्तिं वां नोपलक्षये ।
स्वरेण[1] वर्चसा चैव प्रेक्षितेन च, वानर! ॥ ३१ ॥

वर्चसा—शरीरकान्त्या । वां व्यक्तिमिति । युवयोः भेदमित्यर्थः । यद्यपि ऋश्यमूकं प्रति पलायनसमये व्यक्तिरस्ति । अथापि विमृश्यकारितया, तत्कालं वालिदुरदृष्टापरिपाकाद्वा इति समाधेयम् ॥ ३१ ॥

ततोऽहं रूपसादृश्यात् मोहितः, वानरोत्तम !
नोत्सृजामि महावेगं शरं शत्रुनिबर्हणम् ॥ ३२ ॥
जीवितान्तकरं घोरं सादृश्यात्तु विशङ्कितः ।
मूलघातो न नौ स्याद्धि द्वयोरपि कृतो मया ॥ ३३ ॥

* ननु काञ्चनमालारूपो वालिनो विशेषोऽस्ति—सत्यम्—तस्मिन् दिने तन्न धृत्वाऽऽगतवानिति ज्ञेयम् (द्वितीयवारागमनवेलायामेव 'शालिनं हेममालिनं' (16–18) इति दर्शनादिति भावः)। यद्यप्यत्र मत्तत्वभोगचिह्नाश्रान्तत्वपुरनिर्गतत्वादिकं वाल्यसाधारणमस्ति । समीपस्था हनुमदादयश्च प्रष्टुं शक्याः । स्वयं च सूक्ष्मज्ञः, 'प्रेक्षितज्ञास्तु कोसलाः' इत्युक्तेः—तथापि 'त्वया मया च कुन्त्या च' इति न्यायेनासाधारण्यं परिहर्तुं दृष्टहेतून् कांश्चिदुक्तवान् राम इति ज्ञेयम्—**गो.** नन्विदमनुचितं यत् भगवतो मोहः, अमोहे मोह इत्यनृतकथनं च । किञ्च पलायनसमये ऋश्यमूकाभिमुखधावनेन व्यक्तिरस्त्येवेति चेन्न—वालिन आयुर्दायासमाप्त्या तथाकरणेऽपि सुग्रीवसन्तोषाय स्वस्मिन् मानुष्यबुध्युत्पादनाय च आत्मनि मोहोत्प्रेक्षया समाधानादक्षतेः । मोहित इत्यस्य इवेति शेषः । ईदृशे विषये एवं विधानृतवचनं न दोषायेत्यप्यनेन ध्वनितम्—**ति.**

[1] वचसा—**च.**



नोत्सृजामीति । नोदसृजमिति यावत् । विशङ्कितः—कर्तरि निष्ठा, शङ्कावानहमित्यर्थः । नौ—आवयोः । द्वयोरपि मूलघातः न स्यात्—मा भूत् इत्येवमर्थं मया कृतः, शरानुत्सर्ग इति शेषः ॥ ३२-३३ ॥

त्वयि वीरे विपन्ने हि अज्ञानाल्लाघवान्मया ।
मौढ्यं च मम बाल्यं च ख्यापितं स्यात्, [1]हरीश्वर !
दत्ताभयवधो नाम पातकं [2]महदुच्यते ॥ ३४ ॥

अविमृश्य प्रवृत्तौ मूलघातप्रसङ्गमेव दर्शयति—त्वयीत्यादि । अज्ञानात्—अनिश्चयप्रवृत्त्या, लाघवात्—चापल्यात् । दत्तं अभयं यस्मै सः दत्ताभयः, तस्य वधः तथा । नामशब्दः महापातकत्वप्रसिद्धौ ॥ ३४ ॥

अहं च लक्ष्मणश्चैव सीता च वरवर्णिनी ।
त्वदधीना वयं सर्वे वनेऽस्मिन् शरणं भवान् ॥ ३५ ॥
तस्मात् युध्यस्व भूयस्त्वं *[3]मा मा शङ्कीश्च, वानर !
एतन्मुहूर्ते, सुग्रीव! पश्य वालिनमाहवे ॥ ३६ ॥
निरस्तमिषुणैकेन वेष्टमानं महीतले ॥ ३७ ॥

मा मा इति आबाधे द्विर्वचनम् ॥ ३६-३७ ॥

अभिज्ञानं कुरुष्व त्वं आत्मना [4]वानरेश्वर !
येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतम् ॥ ३८ ॥
गजपुष्पीमिमां फुल्लां उत्पाट्य शुभलक्षणाम् ।
कुरु, लक्ष्मण! कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥ ३९ ॥

* मा मा शंकीरिति । मा—मां प्रति मा शंकीः—शंकां मा कुरु—**गो.**

[1] कपीश्वर—**ङ.** [2] महदद्भुतम्—**ङ.** [3] मा शंकां गन्तुमर्हसि—**ङ.**, निश्शंको वानरेश्वर—**झ.** [4] वानरोत्तम—**ङ.**

गजपुष्पी—नागपुष्पी—कुन्दलतेति यावत्—कुरुक्कत्ति । शुभं सम्यक् लक्षयतीति शुभलक्षणा ॥ ३९ ॥

ततो गिरितटे जातां [1]उत्पाट्य कुसुमाकुलाम् ।
लक्ष्मणो *गजपुष्पीं तां तस्य कण्ठे [2]व्यसर्जयत् ॥ ४० ॥

व्यसर्जयत् – निसृष्टवान् । समर्पितवानित्यर्थः † ॥ ४० ॥

स तया शुशुभे श्रीमान् [3]लतया कण्ठसक्तया ।
‡[4]विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥ ४१ ॥

स तयेति । शुक्लपुष्पकुन्दलतयेत्यर्थः ॥ ४१ ॥

मालयेव बलाकानां [5]ससंध्य इव तोयदः ।
विभ्राजमानो वपुषा रामवाक्यसमाहितः ॥ ४२ ॥
जगाम सह रामेण किष्किन्धां [6]वालिपालिताम् ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे द्वादशः सर्गः

———

ससन्ध्यः–संध्यारागसहितः तोयद इव स्थितः । बलाकानां मालया इव तया लतया शुशुभे इत्यन्वयः । रामवाक्ये—तत्कारणे समाहितः – युक्तः इत्यर्थः । ग्रीवा(४३)मानः सर्गः ॥ ४३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे द्वादशः सर्गः

———

* गजपुष्पीं—नागपुष्पीं नाम लताम्–गो. † बबन्धेत्यर्थः । ‡ विपरीत इवेत्यादि उपरि (१४-९) विव्रियते–गो.

[1] समुत्पाट्य सुपुष्पिताम्–ङ. [2] न्यवेशयत्–ङ. [3] मालया–ङ.
[4] इदमर्धमधिकं–झ. [5] सन्ध्याताम्रो वलाहकः–ङ. [6] पुनराप सः–ङ.



## त्रयोदशः सर्गः

[सप्तजनाश्रमवर्णनम्]

ऋश्यमूकात् स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः ।
[1]जगाम सहसुग्रीवः वालिविक्रमपालिताम् ॥ १ ॥

अथ किष्किन्धागमने प्रसङ्गात् सप्तजनाश्रमवर्णनम् । ऋश्यमूकादित्यादि ॥ १ ॥

समुद्यम्य महच्चापं रामः काञ्चनभूषितम् ।
शरांश्चादित्यसंकाशान् गृहीत्वा रणसाधकान् ॥ २ ॥
अग्रतस्तु ययौ तस्य राघवस्य महात्मनः ।
सुग्रीवः *संहतग्रीवः [2]लक्ष्मणश्च महाबलः ॥ ३ ॥
पृष्ठतो हनुमान् वीरः नलो नीलश्च [3]वानरः ।
तारश्चैव महातेजाः हरियूथपयूथपः ॥ ४ ॥

हरियूथपानामपि यूथं पातीति तथा ॥ ४ ॥

ते वीक्षमाणा वृक्षांश्च पुष्पभारावलम्बिनः ।
प्रसन्नाम्बुवहाश्चैव सरितः सागरङ्गमाः ॥ ५ ॥

सागरङ्गमाः इति । ‘गमेः सुप्युपसंख्यानम्’ इति खजादि ॥

———

*संहतग्रीवः—दृढबन्धबद्धग्रीवः–ति. निबिडकण्ठ इत्यर्थः, इदं स्वरूपकीर्तनम् । गजपुष्पी बन्धनेन वा–गो.

[1] जगाम सहसुग्रीवः लक्ष्मणश्च महाबलः–झ. [2] लक्ष्मणस्य–ज. [3] वीर्यवान्–च.ज.

*कन्दराणि च शैलांश्च निर्दराणि गुहास्तथा ।
शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः ॥ ६ ॥

कन्दराणि—शिलामन्दिराणि निर्दराणि—स्फुटितशिलाविवराणि । गुहाः—देवखातगिरिबिलानि । दर्यः—गह्वराणि ॥ ६ ॥

वैडूर्यविमलैः [1]पर्णैः पद्मैश्चाकोशकुड्मलैः† ।
शोभितान् सजलान् मार्गे तटाकांश्च व्यलोकयन् ॥ ७ ॥

अकोशाः कुड्मलाश्च तथा । विकसिताः अविकसिताश्चेत्यर्थः ॥ ७ ॥

कारण्डैः ‡सारसैर्हंसैः वञ्जुलैर्जलकुक्कुटैः ।
चक्रवाकैस्तथा चान्यैः शकुनैरुपनादितान् ॥ ८ ॥

कारण्डैः— कारण्डवैरिति यावत् । वञ्जुलः— நச்சுப்புள் ॥

मृदुशष्पाङ्कुराहारान् निर्भयान् वन[2]गोचरान् ।
[3]चरतः [4]सर्वतोऽपश्यन् स्थलीषु हरिणान् स्थितान् ॥ ९ ॥

मृदूनां शष्पाङ्कुराणां—बालतृणाङ्कुराणां आहारः येषु ते तथा । वनगोचरान्—वनप्रचारान् । अपश्यन् इति पदम् ॥ ९ ॥

---

* कन्दराणि—गृहाकारगुहाविशेषान् । दरीः— गुहाविशेषान्–गो. गुहाः—देवनिलयीभूतगिरिविवराणि । दर्यः—भयंकरगुहाः-रा. † आकोशं—अग्रभागपर्यन्तं कुड्मलैः मुकुलरूपैः—ईषद्विकसितैः–ति. ईषद्विकसितमुकुलैः–गो. ‡ सारसैः—सरोनिवासैः शकुनैः— गो.

[1] तोयैः–झ. [2] चारिणः–ङ. [3] चारिणाम्–ज. [4] पर्वते–ङ.



तटाकवैरिणश्चापि शुक्लदन्तविभूषितान् ।
घोरानेकचरान् वन्यान् द्विरदान् *कूलघातिनः ॥ १० ॥

तटाकवैरिणः इति । तटाकसेतुघातकान् इत्यर्थः ॥ १० ॥

मत्तान् †गिरितटोत्कृष्टान् पर्वतानिव जङ्गमान् ।
[1]वारणान् वारिदप्रख्यान् महीरेणुसमुक्षितान् ॥ ११ ॥

वने वनचरांश्चान्यान् खेचरांश्च विहङ्गमान् ।
पश्यन्तस्त्वरिता जग्मुः सुग्रीववशवर्तिनः ॥ १२ ॥

तेषां तु गच्छतां तत्र त्वरितं रघुनन्दनः ।
द्रुमषण्डं वनं दृष्ट्वा रामः सुग्रीवमब्रवीत् ॥ १३ ॥

द्रुमाणां षण्डः—समूहः यस्मिन् तत् तथा ॥ १३ ।

एष मेघ इवाकाशे वृक्षषण्डः प्रकाशते ।
‡मेघसंघात[2]विपुलः पर्यन्तकदली[3]वृतः ॥ १४ ॥

किमेतद् ज्ञातुमिच्छामि, सखे ! कौतूहलं हि मे ।
कौतूहलापनयनं कर्तुमिच्छाम्यहं त्वया ॥ १५ ॥

कौतूहलस्य—औत्सुक्यस्य अपनयनं—निवर्तनं त्वया कृतं भवतु इति इच्छामीति योजना ॥ १५ ॥

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तन्महद्वनम् ॥ १६ ॥

---

* कूलघातित्वादेव तटाकवैरित्वम्–ति. तटाकवैरिणः—कलुषीकरणात्–गो. † गिरितटोत्कृष्टान्—उल्लिखितगिरितटान्–गो. ‡ ‘मेघसंघातविपुलं’ इत्यादिपाठे, तादृशं एतत् किं — इत्यन्वयः ॥

[1] वानरान् द्विरदप्रख्यान्–ज. [2] विपुलं–ज. [3] वृतम्–ज.

एतत्, राघव ! विस्तीर्णं आश्रमं श्रमनाशनम् ।
*उद्यानवनसंकीर्णं स्वादुमूलफलोदकम् ॥ १७ ॥

उद्यानैः—उपवनैः केवलवनैश्च संकीर्णं तथा ॥ १७ ॥

अत्र सप्तजना नाम मुनयः संशितव्रताः ।
सप्तैवासन्नधःशीर्षाः [1] नियतं जलशायिनः ॥ १८ ॥

सप्तजना नामेति । प्रसिद्धाः इत्यर्थः । अधःशीर्षाः—तपोऽर्थं भूप्रतिष्ठापितशिरसः इत्यर्थः ॥ १८ ॥

† [2] सप्तरात्रकृताहाराः [3] वायुना, वनवासिनः ।
दिवं वर्षशतैर्याताः सप्तभिः सकलेबराः ॥ १९ ॥

सप्तेति । वायुनैव केवलं सप्तरात्रात् परमेव च कृतः आहारः यैः ते तथा । सप्तभिः वर्षशतैः सकलेबराः सन्तः दिवं याताः ॥

तेषा[4]मेवंप्रभावानां ‡ द्रुमप्राकारसंवृतम् ।
आश्रमं सुदुराधर्षं अपि सेन्द्रैः सुरासुरैः ॥ २० ॥
पक्षिणो § वर्जयन्त्येतत् तथाऽन्ये वनचारिणः ।
विशन्ति मोहाद्ये तत्र निवर्तन्ते न ते पुनः ॥ २१ ॥

वर्जयन्ति—न प्रविशन्तीत्यर्थः । पुनः न निवर्तन्त इति । अत्रैव म्रियन्ते इत्यर्थः ॥ २१ ॥

---

* उद्यानवनैर्निबिडम्—रा. † सप्तरात्रकृताहाराः वायुना—सप्तरात्रस्य एकवारं कृताहाराः—गो. सप्तरात्रे (पा.), व्यतीते सतीति शेषः—रा. ‡ द्रुमप्राकारसंवृतं—द्रुमरूपप्राकारप्रावृतम्—रा. § वर्जयन्ति, अतितेजोदर्शनजनितभिया न गच्छन्तीत्यर्थः—रा.

[1] नियताः—ङ. [2] सप्तरात्रे—ज. [3] वायुनाऽचलवासिनः—ज. [4] मेतत्प्रभावेण—च. ज.



* विभूषणरवाश्चात्र श्रूयन्ते सकलाक्षराः ।
तूर्यगीत[1]स्वनाश्चात्र गन्धो दिव्यश्च, राघव ! ॥ २२ ॥

विभूषणरवाश्चात्र अद्य श्रूयन्ते इति । दिव्याप्सरसामिति शेषः । सकलाक्षराः—मधुरवर्णसहिताः, वाचश्चेति शेषः । अत्र गन्धो दिव्यश्च, राघव ! अनुभूयते । अप्सरसामिति शेषः ॥ २२ ॥

त्रेताग्नयोऽपि दीप्यन्ते धूमो ह्यत्र प्रकाशते ।
वेष्टयन्निव वृक्षाग्रान् कपोताङ्गारुणो घनः ॥ २३ ॥

न केवलं भोगभूमिः, अपि तु कर्मभूमिश्चेत्याह—त्रेतेत्यादि । वेष्टयन्निव—प्रथयन्निव । अरुणः—धूसरः ॥ २३ ॥

एते वृक्षाः प्रकाशन्ते मधुसंसक्तमस्तकाः ।
मेघजालप्रतिच्छन्नाः वैडूर्यगिरयो यथा ॥ २४ ॥

वैडूर्यवत् श्यामाः गिरयः—वैडूर्यगिरयः ॥ २४ ॥

कुरु प्रणामं, धर्मात्मन् ! [2]तान् † समुद्दिश्य, राघव !
लक्ष्मणेन सह भ्रात्रा प्रयतः [3] संयताञ्जलिः ॥ २५ ॥

तानिति । सप्तजनाख्यमुनीन् उद्दिश्येत्यर्थः ॥ २५ ॥

---

* दिवं गताः शरीरान्तरेण पुनरत्रागत्याप्सरोभिः क्रीडन्तीत्याशयेनाह—विभूषणेत्यादिना । सकलाक्षरा इति गीतस्वनविशेषणम्—गो. † समुद्दिश्य—किञ्चित्फलमुद्दिश्य, तेषां प्रणामं कुरु—गो. तेषां—सप्तजनानां, प्रीतिमिति शेषः—रा.

[1] स्वरा—ङ. [2] तेषामुद्दिश्य—च. ज. [3] संहताञ्जलिः—ज.

प्रणमन्ति हि ये *तेषां [1] मुनीनां भावितात्मनाम् ।
न तेषामशुभं† किञ्चित् शरीरे, राम ! [2]दृश्यते ॥ २६ ॥

ये तेषां प्रणमन्तीति । तान् प्रणमन्तीति यावत् ॥ २६ ॥

ततो रामः सह भ्रात्रा लक्ष्मणेन कृताञ्जलिः ।
समुद्दिश्य ‡ महात्मानः तान् ऋषीनभ्यवादयत् ॥ २७ ॥
अभिवाद्य तु धर्मात्मा रामो भ्राता च लक्ष्मणः ।
सुग्रीवो वानराश्चैव जग्मुः संहृष्टमानसाः ॥ २८ ॥

वानराः—हनुमदादयः चत्वारः ॥ २८ ॥

ते गत्वा दूरमध्वानं तस्मात् सप्तजनाश्रमात् ।
ददृशुस्तां दुराधर्षां किष्किन्धां वालिपालिताम् ॥ २९ ॥
ततस्तु रामानुजरामवानराः
प्रगृह्य § शस्त्राण्यु[3]दितोग्रतेजसः ।
पुरीं सुरेशात्मजवीर्यपालितां
वधाय शत्रोः पुनरागताः सह ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे त्रयोदशः सर्गः

नग(३०)मानः सर्गः ॥ ३० ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे त्रयोदशः सर्गः

---

* सम्बन्धसामान्यविवक्षया षष्ठी—रा. † अशुभं—व्याध्यादिकं—गो. शोकादिकं—रा. ‡ महात्मानः—महात्मनः—गो. ति. रा. § शस्त्राणि—वानराणां शस्त्रं शिलादि—ति.

[1] ऋषीणां—ज. [2] विद्यते—ज. [3] दिताग्रय—ङ.



## चतुर्दशः सर्गः

### [सुग्रीवगर्जनम्]

*सर्वे ते त्वरितं गत्वा किष्किन्धां [1] वालिपालिताम् ।
† वृक्षैरात्मान[2]मावृत्य व्यतिष्ठन् गहने वने ॥ १ ॥

अथ रामप्रेरितसुग्रीवेण पुनः वाल्याह्वानम् । सर्वे त इत्यादि । गहने—निबिडे निष्प्रवेशे चेत्यर्थः ॥ १ ॥

[3]विचार्य सर्वतो दृष्टिं कानने काननप्रियः ।
सुग्रीवो विपुलग्रीवः क्रोधमाहारयन् भृशम् ॥ २ ॥

ततः स निनदं घोरं कृत्वा युद्धाय चाह्वयत् ।
परिवारैः परिवृतः नादैर्भिन्दन्निवाम्बरम् ।
गर्जन्निव महामेघः वायुवेगपुरस्सरः ॥ ३ ॥

आह्वयत्—आह्वयतेति यावत् । वायोः वेगः पुरःसरः यस्य मेघस्य स तथा ॥ ३ ॥

अथ बालार्कसदृशः दृप्तसिंहगतिस्तदा ।
दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् ॥ ४ ॥

बालार्कसदृश इति । वर्णेन प्रतापेन चेति शेषः ॥ ४ ॥

---

*अथ वाल्याह्वानभीतं सुग्रीवं निश्वासयति रामः—सर्वे इत्यादि—गो.
† वृक्षैरात्मानमाच्छाद्य—घर्मनिवारणार्थं वृक्षाधः स्थित्वा—रा.

[1] वालिनः पुरीम्—च. ज. [2] माच्छाद्य—ज. [3] विसार्य—च. ज.

*हरिवागुरया व्याप्तां तप्तकाञ्चन[1]तोरणाम् ।
[2]प्राप्ताः [3]प्राकारयन्त्राढ्यां किष्किन्धां [4]वालिनः पुरीम् ॥

हरिवागुरा—हरीणां–शत्रुवानराणां प्राकारोपरि प्लवननिरोधिनी प्राकाराग्रप्रतिष्ठापिता वागुरा तथा, तया व्याप्तप्राकारपरिक्षेपाम् । प्राकारयुद्धापेक्षितानि यंत्राणि–प्राकारयंत्राणि, तैः आढ्या तथा ॥ ५ ॥

प्रतिज्ञा या त्वया, वीर! कृता वालिवधे पुरा ।
सफलां तां कुरु क्षिप्रं †लतां काल इवागतः ॥ ६ ॥

आगतः कालः–ऋतुविशेषलक्षणः, सः यथा लतां प्राक् सपुष्पां सफलां करोति, तथा त्वत्कृतप्रतिज्ञां त्वमपि सफलां कुरु इत्यर्थः ॥ ६ ॥

एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः ।
तमथोवाच सुग्रीवं वचनं शत्रुसूदनः ॥ ७ ॥

कृताभिज्ञानचिह्नस्त्वं अनया ‡ [5]नागसाह्वया ।
लक्ष्मणेन समुत्पाट्य यैषा कण्ठे कृता तव ॥ ८ ॥

कृतं अभिज्ञानसाधकं चिह्नं यस्य स तथा । नागेन–गजेन समाना आह्वा—संज्ञा यस्याः सा तथा, तया नागसाह्वया । "आख्याह्वे अभिधानं च" । कण्ठे कृतेति । कल्पितेति यावत् ॥ ८ ॥

---

*हरिवागुरया व्याप्तां—वागुराकारतया स्थितहरिकां–**ति.** हरय एव वागुरा— मृगग्रहणपाशः, तया व्याप्तां, इतरदुष्प्रवेशामित्यर्थः । यद्वा हरिवागुरया—हरिग्रहैः, जात्येकवचनम्–**गो.** † लतां पुष्पितवल्लरीं–**रा.** फलशब्दस्य प्रयोजन-सामान्यवाचित्वात्, लतां कालः यथा कुसुमितां करोति तथेति वा । ‡ गजपुष्प्यामेव गजसा शब्दः । यद्वा गजेन समा आह्वा यस्याः–**गो.**

[1] भूषणाम्–**च. ज.** [2] पश्य प्राकारयंत्राढ्यां–**झ.** [3] स्म ध्वजयंत्राढ्यां–**ङ. ज.** [4] वालिपालिताम्–**ङ.** [5] गजसाह्वया–**ङ.**



शोभसे ह्यधिकं, वीर ! लतया कण्ठसक्तया ।
*विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥ ९ ॥

† तरुणार्कवर्णस्य कण्ठे शुक्लपुष्पलतया संवेष्टितस्य सुग्रीवस्य उपमा उच्यते—"विपरीत इवाकाशे सूर्यो नक्षत्रमालया" इति । अभूतोपमेयम् । सूर्यः नक्षत्रमालया सप्तविंशतिनक्षत्रचक्रेण आकाशे विपरीतः—विशेषेण परीतः—वेष्टितः यदि भवति तद्वदित्यर्थः । अत्र ‡ यद्वाभट्टाः असंगतं यत्किञ्चित् प्रलपंति—तदुपेक्ष्यम् ॥ ९ ॥

[1] अद्य वालिसमुत्थं ते भयं वैरं च, वानर !
एकेनाहं § प्रमोक्ष्यामि बाणमोक्षेण संयुगे ॥ १० ॥

एकेनेति । न द्वितीयेनेति महाबलत्वात् प्रतिजानीते ॥ १० ॥

मम दर्शय, सुग्रीव ! वैरिणं भ्रातृरूपिणम् ।
[2]वाली विनिहतो यावत् वने पांसुषु [3]वेष्टते ॥ ११ ॥

---

*विपरीते—रात्रौ । सूर्यः—पूर्णचन्द्रः, 'परीतं तु दिवा प्रोक्तं विपरीतं तु शर्वरी । राकामध्यगतश्चन्द्रः सूर्य इत्यभिधीयते' इति वचनात् । यद्वा नक्षत्रमालया विपरीतः—विशेषेण परिवृतः सूर्य इव—चन्द्र इव । अन्यशब्देनान्यस्याभिधानं कथमिति चेत्, 'नवो नवो भवति' इति श्रुतौ अह्नां केतुः—सूर्यः चन्द्राप्यायकत्वात् चन्द्रमा इत्युच्यते । तद्वत् चन्द्रोऽपि सूर्यकिरणानुप्रवेशायत्तप्रकाशविशेषवत्त्वात् सूर्य-शब्देनाभिधीयत इति । यद्वा विशेषेण परीतः—विपरीतः—नक्षत्रावृतः सूर्य इवे-त्यभूतोपमा । विपरीत इत्यनेन तात्कालिकतेजोवत्त्वमुच्यते । यद्वा विपरीते—विपरीतकाले सूर्यो नक्षत्रमालयेवानया लतया शोभसे । उत्पातकाले हि मध्याह्ने नक्षत्राणि दृश्यन्त इत्युच्यते ज्योतिश्शास्त्रे—'रात्राविन्द्रधनुर्दर्शे दिवा नक्षत्रदर्शने । तद्राष्ट्रनाथनाशः स्यात् इति गर्गस्य भाषितम्' इति–**गो.** † 'सुग्रीवो हेमपिङ्गलः' (किष्कि. 14–19) इत्यादि अत्र स्मर्तव्यम् । ‡ गोविन्दराजः । § प्रमोक्ष्यामि—प्रमोचयिष्यामि–**ति.**

[1] अद्येत्यार्धं नास्ति–**झ.** [2] क्षिप्रं–**ङ.** [3] चेष्टते–**ज.**

विनिहतः पांसुषु वेष्टते यावत्—विलुठिष्यतीत्यर्थः। मद्दर्शनानन्तरमेवेति शेषः ॥ ११ ॥

यदि दृष्टिपथं प्राप्तः जीवन् स विनिवर्तते ।
*ततो दोषेण [1]मा गच्छेत् सद्यो गर्हेच्च मा भवान् ॥१२॥

उक्त एवार्थः स्पष्टीक्रियते—यदीत्यादि। यदि जीवन् भूत्वा निवर्तते ततः—तदा भवान् मा—मां दोषेण—मिथ्याप्रतिज्ञत्वदोषेण उपलक्षितं गच्छेत्—अवगच्छेत्, तत एव मा—मां गर्हेच्च ॥ १२ ॥

†प्रत्यक्षं सप्त ते सालाः मया बाणेन दारिताः ।
तेनावेहि बलेनाद्य वालिनं निहतं [2]मया ॥ १३ ॥

नेदानीं त्वया किमपि वक्तव्यं, अपि तु मद्बलस्य दृष्टत्वात् वालिनं निहतमेवावेहीत्याह—प्रत्यक्षमित्यादि ॥ १३ ॥

अनृतं नोक्तपूर्वं मे, [3]वीर! कृच्छ्रेऽपि तिष्ठता ।
धर्मलोभपरीतेन न च वक्ष्ये कथं च न ॥ १४ ॥

कृच्छ्रेऽपि—प्राणसंकटेऽपि तिष्ठता मे इति। मयेत्यर्थः। धर्मलोभेन—धर्मप्रेप्सया परीतेन—व्याप्तचित्तेन अनृतं नोक्तपूर्वं इति पूर्वेणान्वयः ॥ १४ ॥

सफलां च करिष्यामि प्रतिज्ञां, जहि संभ्रमम् ।
‡[4]प्रसूतं कलमं क्षेत्रे वर्षेणेव शतक्रतुः ॥ १५ ॥

---

*यदि पुनः अहं तूष्णीं भवेयं, तर्ह्यागच्छ मां यथेच्छं निन्द—इति कोकवदुक्तिः। †ते प्रत्यक्षमित्यन्वयः। ‡'त्वतां काल इवागतः' इति सुग्रीवेण प्रार्थने, ततोऽपि विशिष्टं फलं संपादयामीत्याशयेनाह—प्रसूतमित्यादि। कलमं—व्रीहिसस्यम्।

[1] मां—ज. [2] रणे—ज. [3] कृच्छ्रे महति—ङ. चिरं कृच्छ्रेऽपि-ज.
[4] प्रभूतकलमं क्षेत्रं—ङ. प्रसूतं कलमं क्षेत्रं—च. ज.



सफलां करिष्यामीत्यत्र दृष्टान्तः—प्रसूतमित्यादि। अङ्कुरितमिति यावत् ॥ १५ ॥

तदाह्वाननिमित्तं त्वं वालिनो हेममालिनः ।
सुग्रीव! कुरु तं शब्दं निष्पतेद्येन वानरः ॥ १६ ॥
*[1]जितकाशी बलश्लाघी त्वया चाधर्षितः [2]पुरा ।
निष्पतिष्यत्यसङ्गेन वाली स प्रियसंयुगः ॥ १७ ॥

जितकाशी—जितभयः। त्वया आधर्षितश्च सन् पुरा येन निष्पतेत्, तं शब्दं कुरु इत्यन्वयः। असङ्गेन—स्त्र्यादिसङ्गपरित्यागेन। प्रियं संयुगं यस्य स तथा ॥ १७ ॥

रिपूणां [3]धर्षणं शूराः मर्षयन्ति न संयुगे ।
जानन्तस्तु स्वकं [4]वीर्यं †स्त्रीसमक्षं विशेषतः ॥ १८ ॥

संयुगे—संयुगविषये। विशेषत इति। न मर्षयन्तीत्यनुषङ्गः ॥ १८ ॥

स तु रामवचः श्रुत्वा सुग्रीवो हेमपिङ्गलः ।
ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् ॥ १९ ॥

---

* जितेन—जयेन काशते—प्रकाशत इति जितकाशी असङ्गेन—अविलम्बेन—गो. असङ्गेन—सर्वान्यपरित्यागेन। अत्र वाली नूनं पुनरागच्छेदित्यत्र हेतुः—त्वया चाधर्षित इति। यतः त्वया पूर्वं न पराजितः, अतः विना भयमागच्छेदिति वा। †स्त्रीसमक्षमित्यनेन तदानीं सायंकाल इत्यवगम्यते, 'प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया। सायं कामेन पीड्यन्ते जन्तवो निशि निद्रया' इति वचनात्—गो.

[1] जयश्लाघी—ङ. [2] पुरात्—ङ. ज. [3] धर्षितं—च. ज. [4] धैर्यं—ङ.

तस्य शब्देन वित्रस्ताः * गावो यान्ति [1] हतप्रभाः ।
† राजदोषपरामृष्टाः कुलस्त्रिय इवाकुलाः ॥ २० ॥

गावः—धेनवः बलीवर्दाश्च, हतप्रभाः—हतशक्तयः। राज्ञो दोषेण—रागदोषेण परामृष्टाः स्पृष्टाः। अपि च राज्ञः प्रजारक्षणाभावदोषेण परैः—अन्यपुरुषैः आमृष्टाः तथा ॥ २० ॥

द्रवन्ति च मृगाः शीघ्रं भग्ना इव रणे हयाः ।
पतन्ति च खगा भूमौ क्षीणपुण्या इव ग्रहाः ॥ २१ ॥

ग्रहाः—देवाः इत्यर्थः ॥ २१ ॥

ततः स जीमूत [2] गणप्रणादः
नादं ह्यमुञ्चत् त्वरया प्रतीतः ।
सूर्यात्मजः शौर्यविवृद्धतेजाः
‡ सरित्पतिर्वाऽनिलचञ्चलोर्मिः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे चतुर्दशः सर्गः

शौर्ये पराक्रमकरणे विवृद्धं तेजः यस्य स तथा। सरित्पतिर्वा—समुद्र इवेत्यर्थः। खर(२२)मानः सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे चतुर्दशः सर्गः

---

* गावः इत्यनेन गवां पुरप्रवेशकालसूचनात् तत्कृतस्य सायंतनत्वं गम्यते—गो.
† राजदोषेण—अराजकत्वरूपदोषेण परैः—परपुरुषैः आमृष्टाः—केशेषु गृहीताः—गो.
‡ सरित्पतिर्वा—समुद्र इव—ति.

[1] गत—ङ. [2] कृत—च. ज.



## पञ्चदशः सर्गः

[ताराहितवचनम्]

अथ तस्य निनादं तु सुग्रीवस्य * महात्मनः ।
शुश्रावान्तःपुरगतः वाली भ्रातुरमर्षणः ॥ १ ॥

अथ युद्धाय विनिष्क्रान्तं वालिनं नानान्यायतो वारयति तारा। अथ तस्येत्यादि ॥ १ ॥

श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् ।
† मदश्चैकपदे नष्टः क्रोध [1] श्चापादितो महान् ॥ २ ॥

एकपदे—तत्क्षणे। आपादितः—संपादितः ॥ २ ॥

स तु रोषपरीताङ्गः वाली [2] संध्यातपप्रभः ।
उपरक्त इवादित्यः सद्यो ‡ निष्प्रभतां गतः ॥ ३ ॥

स त्वित्यादि। स्वतः कनकप्रभस्य क्रोधवशात् आरुण्ये सति सहजप्रभायाः नष्टत्वतः उपरक्तादित्यदृष्टान्तः ॥ ३ ॥

§ वाली दंष्ट्राकरालस्तु क्रोधात् दीप्ताग्नि [3] संनिभः ।
भात्युत्पतितपद्माभः समृणाल इव ह्रदः ॥ ४ ॥

उत्पतितानि—उत्पाटितानि पद्मानि यस्य सः उत्पतितपद्मः। अयं शब्दः आवर्तते। उत्पतितपद्मत्वात् उत्पातिता—नष्टा पद्माभा—

---

* महात्मनः—महाधैर्यस्य—गो. † एकपदे—तस्मिन्नेव क्षणे मदः—मत्तः सर्वेऽपि बिभ्यतीति गर्वः—रा. अन्तःपुरगतत्वात् तदधीनबुद्ध्यपारवश्यं वा मदः। ‡ अनेन प्रथमवारसुग्रीवगर्जनापेक्षया वैलक्षण्यं सूचितम्। § दंष्ट्राणां मृणालतुल्यत्वं कोपसंरक्तमुखस्य पद्मत्वं च बोध्यम्।

[1] श्चापतितो—ङ. [2] स कनकप्रभः—च. ज. [3] लोचनः—ज. झ.

पद्मजनितशोभा यस्य स तथा। समृणाल इति वालिनोऽपि शुक्ल-दंष्ट्राकरालत्वात् उपमानम् ॥ ४ ॥

शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः।
वेगेन चरणन्यासैः दारयन्निव मेदिनीम् ॥ ५ ॥

दुर्मर्षणं—मर्षितुमशक्यम्। वेगेन—वेगोपेततया ॥ ५ ॥

तं तु तारा परिष्वज्य स्नेहाद्दर्शितसौहृदा।
उवाच त्रस्तसंभ्रान्ता हितोदर्कमिदं वचः ॥ ६ ॥

दर्शितसौहृदा—दर्शितमैत्री। त्रस्तसंभ्रान्ता इति *पुंवद्भावः। त्रस्ता-भीता, संभ्रान्ता-क्षुभितचित्ता। हितं उदर्कं-उत्तरकालफलं यस्मिन् तत् तथा ॥ ६ ॥

साधु क्रोधमिमं, वीर! नदीवेगमिवागतम्।
शयनादुत्थितः काल्यं त्यज भुक्तामिव स्रजम् ॥ ७ ॥

साधु त्यज—सम्यक् परित्यज। तत्र दृष्टान्तः—काल्यं शयनादुत्थितः भुक्तां स्रजमिवेति। काल्यं-प्रातःकाले ॥ ७ ॥

काल्यमेतेन संग्रामं करिष्यसि च, वानर!
†वीर! ते शत्रुबाहुल्यं [1]लघुता वा न विद्यते ॥ ८ ॥
सहसा तव निष्क्रामः मम तावन्न रोचते।
श्रूयतां चाभिधास्यामि यन्निमित्तं [2]निवार्यसे ॥ ९ ॥

---

* पुंवद्भाव इति। कर्मधारयसमास इति शेषः। † ते—तव शत्रोः बाहुल्यं आधिक्यं, त्वत्त इति शेषः। तव शत्रुः यद्यपि न त्वत्तोऽपि प्रबलः, न वा त्वं तदपेक्षया दुर्बलः।

[1] फल्गुता—ङ. [2] निवार्यते—ञ.



तथा काल्यं—प्रातःकाल एव एतेन सह संग्रामं करिष्यसि, नेदानीं रात्रौ। हे वीर! यद्यपि ते संग्रामे शत्रुबाहुल्यं—शत्रोः भूयस्त्वं वा, तव लघुता—अल्पता वा न विद्यते, अथापि सहसा—हठात् तावत्—अद्य निष्क्रामः—निष्क्रमणं मम न रोचते। कुतः इत्यत आह—श्रूयतामित्यादि ॥ ८-९ ॥

*पूर्वमापतितः क्रोधात् स त्वामाह्वयते युधि।
निष्पत्य च [1]निरस्तस्ते हन्यमानो दिशो गतः ॥ १० ॥

पूर्वं क्रोधादापतितः सुग्रीवः यदा त्वां युधि—युद्धे—युद्धनिमित्तं आह्वयते स्म, तदा त्वया च निष्पत्य निरस्तः, ते—त्वया हन्यमानः दिशः गतः—गतवान् ॥ १० ॥

त्वया तस्य निरस्तस्य पीडितस्य विशेषतः।
इहैत्य पुनराह्वानं शङ्कां जनयतीव मे ॥ ११ ॥

किं ततः? इत्यत आह—त्वयेत्यादि। त्वया निरस्तस्य—पूर्वमेव निराकृतस्य विशेषतः इदानीं पीडितस्य च सतः पुनश्च इदानीं एत्य—आगत्य आह्वानं मे शङ्कां जनयतीव—जनयत्येव ॥ ११ ॥

दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः।
[2]निनादस्यापि संरम्भः, †नैतदल्पं हि कारणम् ॥ १२ ॥

---

* श्लोकद्वयमेकान्वयम्। पूर्वमापतितः ते—त्वया क्रोधान्निष्पत्य यो युधि निरस्तः, हन्यमानो दिशो गतश्च, स त्वामाह्वयते—**गो.** † एतत्—एतस्य—**ति. रा.** अस्य एतत्कारणं—**गो.**

[1] निरस्यस्ते—ङ. [2] निनादश्चापि—ङ.

कुतः इत्यत आह—दर्प इत्यादि। नर्दतः तस्य दर्पश्च—गर्वश्च पुनरपि युद्धे व्यवसायश्च यादृशः अनुभूयते, ईदृशदर्पाद्यनुमापकस्य तस्य निनादस्य संरंभः—प्रवृद्धिः हि—यस्मात् वर्तते, तस्मात् एतदुपपादककारणं अल्पं न॥ १२॥

**नासहायमहं मन्ये सुग्रीवं तमिहागतम्।**
***अवष्टब्धसहायश्च यमाश्रित्यैष गर्जति॥ १३॥**

विमतः संरंभः कारणविशेषपूर्वकः भवितुं अर्हति, कार्यविशेषत्वात् इति सामान्यानुमितं कारणविशेषं निष्कृष्य दर्शयति—नासहायमित्यादि। अवष्टब्धः—परिगृहीतः सहायो येन स तथा। चः अवधारणे। अवष्टब्धसहाय एव—सर्वथा सहायावष्टंभमूल एवायं संरंभः इत्यर्थः। यं—सहायावष्टंभम्॥ १३॥

**प्रकृत्या निपुणश्चैव बुद्धिमांश्चैव वानरः।**
**[1]नापरीक्षितवीर्येण सुग्रीवः [2]सख्यमेष्यति॥ १४॥**

तस्य सुसहायसंपादनादौ सामर्थ्यं च सम्भावितमेवेत्याशयेनाह—प्रकृत्येत्यादि। निपुणः—उचितकृत्यनिष्पादनसमर्थः, तत्प्रवर्तनक्षमबुद्धिमांश्च। नन्वस्तु सहायः कश्चित्, तस्यापि एकोऽङ्गुलिर्भविष्यतीति का मे भीतिः? इति मन्यमानं प्रत्याह—नापरीक्षितेति। अपरीक्षितशत्रुसंहारवीर्यवता पुरुषेण सह सुग्रीवः सख्यं नैति, अतः शङ्कनीय एव तत्सहायभूतः पुमान्॥ १४॥

**पूर्वमेव [3]मया, वीर! श्रुतं कथयतो वचः।**
**अङ्गदस्य कुमारस्य वक्ष्यामि त्वा †हितं वचः॥ १५॥**

---

* अवष्टब्धसहायः—आश्रितसहायः। † हितं—सुग्रीवस्य सखायं कथयतः—**रा.**

[1] अपरीक्षित—**ङ. झ.** [2] सह नैष्यति—**ङ. झ.** [3] महावीर—**ङ.**



न केवलं मया अनुमितं तत्सहायप्राबल्यं, अपि तु शब्दप्रमाणमपीत्याह—पूर्वमेवेत्यादि। कथां कथयतः अङ्गदस्य कुमारस्य यद्वचो मया श्रुतं, तव हितं तद्वचः त्वां प्रति वक्ष्यामि॥ १५॥

**अङ्गदस्तु कुमारोऽयं *वनान्तमुपनिर्गतः।**
**प्रवृत्तिस्तेन कथिता चारै[1]राप्तैर्निवेदिता॥ १६॥**

प्रतिज्ञातं प्रतिपादयति—अङ्गदस्त्वित्यादि। वनान्तं—वनमध्यम्। प्रवृत्तिः—सुग्रीववृत्तान्तः॥ १६॥

**अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ।**
**इक्ष्वाकूणां कुले जातौ [2]प्रथितौ रामलक्ष्मणौ॥**
**सुग्रीवप्रियकामार्थं प्राप्तौ तत्र दुरासदौ॥ १७॥**

तत्र—तयोर्मध्ये॥ १७॥

**†तव भ्रातुर्हि विख्यातः सहायो रण[3]कर्कशः।**
**रामः परबलामर्दी युगान्ताग्निरिवोत्थितः॥ १८॥**
**‡निवासवृक्षः साधूनां आपन्नानां परा गतिः।**
**आर्तानां संश्रयश्चैव यशसश्चैकभाजनम्॥ १९॥**

---

* वनान्तं—वनसमीपं गत्वेति शेषः—**रा.** † एकस्य स्वरूपकथनेनान्यस्यापि स्वरूपमर्थादुक्तं भवतीति मत्वा प्रधानभूतरामस्वरूपमाह—तवेति—**गो.** ‡ यथा वृक्षः प्रथमं तापमपहृत्य पुष्पफलादिना सर्वेन्द्रियतर्पणः तथाऽयमित्यर्थः। अत्र 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन! आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' (गी. ७-१६) इत्युक्ताश्चतुर्विधाधिकारिण उच्यन्ते। साधूनां—जिज्ञासूनां, आपन्नानां—अपूर्वैश्वर्यकामानां, आर्तानां—भ्रष्टैश्वर्यकामानां, यशसः—'ज्ञानी त्वात्मैव मे मतम्' इत्युक्तयशोयुक्तस्य—**गो.**

[1] राप्तैर्निवेदिता—**ज.** [2] प्रस्थितौ—**च. ज.** [3] कर्मणि—**च. ज.**

निवासवृक्षः—अचलाश्रयभूतः । साधूनां—सात्त्विकानाम् । विशिष्य आपन्नानां—शरणागतानां परा गतिः—प्रतिष्ठा । आर्तानां—शत्रुपीडितानां तद्विनाशाय संश्रयः—संश्रयणार्हः ॥ १९ ॥

*ज्ञानविज्ञानसंपन्नः निदेशे निरतः पितुः ।
धातूनामिव शैलेन्द्रः गुणानामाकरो महान् ॥ २० ॥

ज्ञानविज्ञाने ब्रह्मधर्मविषये ॥ २० ॥

तत् †[1]क्षमं न विरोधस्ते सह तेन महात्मना ।
दुर्जयेनाप्रमेयेन रामेण रणकर्मसु ॥ २१ ॥

तत्-तस्मात् तेन-उच्यमानगुणकेन रामेण सह विरोधः ते-तव न क्षमं-अयुक्तम् , अव्ययमिदम् ॥ २१ ॥

शूर! वक्ष्यामि ते किञ्चित् ‡ न चेच्छाम्यभ्यसूयितुम् ।
श्रूयतां क्रियतां चैव तव वक्ष्यामि यद्धितम् ॥ २२ ॥

किञ्चिदिति वक्ष्यमाणलक्षणम् । त्वया अभ्यसूयितुं नेच्छामि, "देवदत्तं भोक्तुमिच्छामि" इत्यादिवत् क्वचित् असमानकर्तृकेषु तुमुन् । कथं इयं मां प्रति वक्ति? इति अभ्यसूया न कर्तव्येत्यर्थः ॥

---

*ज्ञानं—ब्रह्मज्ञानं, विज्ञानं—धर्मविषयं, शिल्पनैपुणं वा—ति. ज्ञानेन—सकलशास्त्रविषयज्ञबोधेन, विज्ञानेन—वेदवर्णितसकलवस्तूनां साक्षादनुभवेन च संपन्नः—रा. ज्ञानं लौकिकज्ञानं, विज्ञानं—शास्त्रजन्यज्ञानम्—गो. † न क्षमं—न शक्यं इति वा। ‡ त्वया अभ्यसूयितुं नेच्छामि—कथमियं मां प्रति वदतीति मय्यसूया न कर्तव्येत्यर्थः—ति. त्वद्विषये अभ्यसूयितुं—दोषाविष्करणं कर्तुं कदाचिदपि नेच्छामीत्यर्थः । यद्वा मया वक्ष्यमाणे हिते त्वयाऽभ्यसूया न कार्येत्यर्थः—गो. अथवा अभ्यसूयितुमिति अन्तर्भावितणिः । असूयामुत्पादयितुं रामगुणा न वर्णिताः, किन्तु वस्तुस्थितिरुक्तेत्यर्थः ॥

[1] क्षमो—च. ज.



यौव[1]राज्येन सुग्रीवं तूर्णं साध्वभिषेचय ।
[2]विग्रहं मा कृथाः, वीर! भ्रात्रा, राजन्! [3]*बलीयसा ॥

अस्तु, किं तत्? इत्यपेक्षायामाह—यौवराज्येनेत्यादि । *बलीयसा रामेणेत्यन्वयः ॥ २३ ॥

अहं हि ते क्षमं मन्ये तेन रामेण सौहृदम् ।
सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः ॥ २४ ॥

लालनीयो हि ते भ्राता यवीयानेष वानरः ।
तत्र वा सन्निहस्थो वा सर्वथा बन्धुरेव ते ॥ २५ ॥

तत्र—तस्मिन् देशे वा सन्—विद्यमानः, इह—त्वत्समीपे वा ॥

न हि तेन समं बन्धुं भुवि पश्यामि कञ्चन ।
दानमानादिसत्कारैः कुरुष्व †प्रत्यनन्तरम् ॥ २६ ॥

प्रत्यनन्तरं—समीपस्थं ॥ २६ ॥

वैरमेतत् समुत्सृज्य तव पार्श्वे स तिष्ठतु ।
सुग्रीवो विपुलग्रीवः [4]तव बन्धुः सदा मतः ॥ २७ ॥
‡ भ्रातुः सौहृद[5]मालम्ब्य नान्या गतिरिहास्ति ते ॥ २८ ॥

इह—अस्मिन् तत्सहायसंपत्तिकाले ॥ २८ ॥

---

* उत्तरश्लोकस्थरामपदेनेत्यर्थः । प्रबलरामाश्रितत्वात् बलीयसा भ्रात्रा—इति वा । † प्रत्यनन्तरं—त्वदनन्तरं समीपवर्तिनं—गो. प्रत्यनन्तरं—स्वाधीन—ति. ‡ भ्रातुः सौहृदमालम्ब्यैव तव गतिः, नान्या गतिरस्ति—ति. भ्रातुः सौहृदमालम्ब्य वर्तमानस्य तव—रा. आलम्ब(पा.)—आलम्बस्व—गो.

[1] राज्ये तु—ङ. [2] विरोधं—ङ. [3] यवीयसा—च. ज [4] महान् बन्धुर्मतस्तव—च. ज. [5] मालम्ब—ङ.

यदि *ते मत्प्रियं कार्यं यदि चावैषि मां हिताम् ।
याच्यमानः [1]प्रयत्नेन साधु वाक्यं कुरुष्व मे ॥ २९ ॥

यदि ते इति । त्वयेत्यर्थः ॥ २९ ॥

प्रसीद पथ्यं शृणु जल्पितं हि मे
न रोषमेवानुविधातुमर्हति ।
क्षमो हि ते कोसलराजसूनुना
न विग्रहः †शक्रसमानतेजसा ॥ ३० ॥

तदा हि तारा हितमेव वाक्यं
तं वालिनं पथ्यमिदं बभाषे ।
न रोचते तद्वचनं हि तस्य
कालाभिपन्नस्य विनाशकाले ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे पञ्चदशः सर्गः

---

तदा हीत्यादि कविवाक्यम् । काल(३१)मानः सर्गः ॥ ३१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे पञ्चदशः सर्गः

---

* ते—तव—**रा.** ते हितां मां इत्यप्यन्वयः । † अनेन बालिनो रामस्याभिक्रयमुक्तम्—**गो.** वाली हि शक्रपुत्रः ।

[1] प्रियत्वेन—**च. ज.**



## षोडशः सर्गः

[वालिसंहारः]

तामेवं ब्रुवतीं तारां ताराधिपनिभाननाम् ।
वाली निर्भर्त्सयामास वचनं चेदमब्रवीत् ॥ १ ॥

अथ वालिवधः । तामेवमित्यादि ॥ १ ॥

गर्जतोऽस्य [1]च *संरब्धं भ्रातुः शत्रोर्विशेषतः ।
मर्षयिष्याम्यहं केन कारणेन, वरानने ! ॥ २ ॥

संरब्धमिति भावे निष्ठा । केनेति । न केनापि कारणेन त्वदुक्तेनेत्यर्थः ॥ २ ॥

अधर्षितानां शूराणां [2]समरेष्वनिवर्तिनाम् ।
धर्षणामर्षणं, भीरु ! मरणादतिरिच्यते ॥ ३ ॥

धर्षणायाः मर्षणं तथा । 'न्यासश्रन्थ' इति स्त्रीत्वात युच् ॥ ३ ॥

सोढुं न च समर्थोऽहं युद्धकामस्य संयुगे ।
सुग्रीवस्य च संरम्भं †हीनग्रीवस्य [3]गर्जतः ॥ ४ ॥

संयुगे संरम्भमित्यन्वयः ॥ ४ ॥

न च कार्यो विषादस्ते राघवं प्रति मत्कृते ।
धर्मज्ञश्च कृतज्ञश्च कथं ‡पापं करिष्यति ॥ ५ ॥

---

* सुसंरब्धं (**पा.**)— गर्वं—**रा.** † हिशब्द एवार्थे । इनग्रीवस्य— इना—श्रेष्ठा—विपुला ग्रीवा यस्य तस्य—**रा.** हीनग्रीवस्येति परुषोक्तिः—**गो.** सुग्रीवपदप्रतिकोटितया लोकवत् आक्रोशादेवमुक्तिः । ‡ पापं—निरपराधवधं—**गो.**

[1] सुसंरम्भं—**ङ.** [2] संयुगेष्व—**ङ.** [3] गर्जितम्—**च. ज.**

राघवं प्रतीति । राघवनिमित्तभयमालक्ष्य मत्कृते ते—त्वया विषाद: न कार्य: । कुत एवं? इत्यत:—धर्मज्ञ इत्यादि ॥ ५ ॥

निवर्तस्व सह स्त्रीभि: कथं [1] भूयोऽनुगच्छसि? ।
सौहृदं दर्शितं तारे! मयि भक्ति: कृता त्वया ॥ ६ ॥

कथं भूयोऽनुगच्छसीति । निवर्तस्वेत्युच्यमानेऽपीति शेष: । भक्ति:—अनुराग: ॥ ६ ॥

प्रतियोत्स्याम्यहं गत्वा सुग्रीवं, जहि संभ्रमम् ।
[2] दर्पं चास्य विनेष्यामि *न च प्राणै: [3] विमोक्ष्यते ॥ ७ ॥

दर्पं च—दर्पमेव । न विमोक्ष्यते—न विमोचयिष्यते । सोदरत्वात्, अलस(क्ष्य)त्वात्, स्वसुखानपहारकत्वात् तदसमर्थत्वाच्चेत्याशय: ॥ ७ ॥

अहं ह्याजिस्थितस्यास्य करिष्यामि †[4] यथेप्सितम् ।
वृक्षैर्मुष्टिप्रहारैश्च पीडित: प्रतियास्यति ॥ ८ ॥

उक्तमेवार्थं विवृणोति—अहं हीत्यादि । यथेप्सितमिति । यथा कर्तुमभीप्सितं तथा करिष्यामि । दर्पमेव मोचयिष्यामीत्यर्थ: । तदेव दर्शयति—वृक्षैरित्यादि । वृक्षप्रहारैरित्यर्थ: ॥ ८ ॥

---

* 'सर्वथा बन्धुरेव स:' इति तारोक्तेरुत्तरमाह—न चेत्यादि । † यत्त्वया ईप्सितं (पा.)—अस्य वधो न भवेदिति वाञ्छितं, तदहं करिष्यामि—**रा.** यथेप्सितं—ईप्सितं तत्प्राणरक्षणमनतिक्रम्य—**गो.**

[1] मामनु—**ङ.** [2] दर्पमात्रं—**ङ.** [3] वियोक्ष्यते—**ङ.**, वियोक्ष्यते—**च. ज.** [4] यदीप्सितम्—**च. ज.**



[1] न मे *गर्वितमायस्तं [2] सहिष्यति दुरात्मवान् ।
कृतं, तारे! सहायत्वं सौहृदं दर्शितं मयि ॥ ९ ॥
शापिताऽसि मम प्राणै: निवर्तस्व [3] जनेन च ।
†अलं जित्वा निवर्तिष्ये तमहं भ्रातरं रणे ॥ १० ॥

गर्वितं—दर्पप्रवृत्तं, आयस्तं, भावे निष्ठा, दृढयत्नम् । सहायत्वमिति । बुद्धिसाचिव्यमित्यर्थ: । निवर्तस्व जनेन—स्वपरिवारजनेन सहेत्यर्थ: । अलं जित्वा—जयित्वा ॥ ९–१० ॥

तं तु तारा परिष्वज्य वालिनं प्रियवादिनी ।
चकार रुदती मन्दं दक्षिणा सा प्रदक्षिणम् ॥ ११ ॥
तत: स्वस्त्ययनं कृत्वा ‡[4] मंत्रविद्विजयैषिणी ।
अन्त:पुरं सह स्त्रीभि: प्रविष्टा शोकमोहिता ॥ १२ ॥

मंत्रवित्—स्वस्त्ययनमंत्रविदित्यर्थ: । दैवतांशत्वादेव तथाऽवगति: ॥ १२ ॥

प्रविष्टायां तु तारायां सह स्त्रीभि: स्वमालयम् ।
नगरान्निर्ययौ क्रुद्धो महासर्प इव श्वसन् ॥ १३ ॥
[5] स नि:श्वस्य [6] महातेजा: वाली [7] परमरोषण: ।
सर्वतश्चारयन्§ दृष्टिं शत्रुदर्शनकांक्षया ॥ १४ ॥

---

* गर्वितं—गर्वविशिष्टं मे आयस्तं—प्रवृत्ति—**रा.** गर्वितं—गर्वं— आयस्तं—आयासं, प्रयत्नमिति यावत्—**गो.** † अलं जित्वा—जयमात्रं कृत्वा निवर्तिष्ये, न तु तद्वधाभिस्यर्थ: । 'अहं जित्वा' इति पाठ(**गो.**)स्त्वसांप्रदायिक:—**ति.** अलमिति पूर्वार्धान्वयि वा । ‡ मंत्रवत् (पा.) – स्वस्त्ययनमंत्रवत् । मंत्रश्च वैदिकादन्य इति ज्ञेय:—**गो.** § चारयन्, प्रस्थित इति शेष:—**गो.** चारयन् सुग्रीवं ददर्शेति वा ।

[1] नाहं—**ङ.** [2] सहिष्यामि दुरात्मन:—**ङ.** [3] जयेन च—**ङ. च.** [4] मंत्रवत्—**ङ.** [5] समुत्पत्य—**ङ.** [6] महारोष:—**च.**, महावेग:—**ङ.** [7] परमवेगवान्—**च.**

स ददर्श ततः श्रीमान् सुग्रीवं हेमपिङ्गलम् ।
सुसंवीतमवष्टब्धं* दीप्यमानमिवानलम् ॥ १५ ॥

सुसंवीतं--बद्धकक्ष्यम् । अवष्टब्धं--सन्नद्धम् ॥ १५ ॥

स तं दृष्ट्वा [1] महावीर्यं सुग्रीवं [2] पर्यवस्थितम् ।
गाढं परिदधे वासः वाली [3] परमरोषणः ॥ १६ ॥
स वाली गाढसंवीतः मुष्टिमुद्यम्य [4] वीर्यवान् ।
सुग्रीवमेवाभिमुखः ययौ योद्धुं कृतक्षणः[5] ॥ १७ ॥

गाढसंवीतः--दृढबद्धकक्ष्यः । कृतक्षणः--कृतोत्साहः ॥ १७ ॥

[6] श्लिष्टमुष्टिं समुद्यम्य संरब्धतरमागतः ।
सुग्रीवोऽपि तमुद्दिश्य वालिनं हेममालिनम् ॥ १८ ॥

सुग्रीवोऽपि वालिनं समुद्दिश्य श्लिष्टमुष्टिं समुद्यम्य संरब्धतरं स्थितः इत्यनुकर्षः ॥ १८ ॥

तं वाली क्रोध[7] ताम्राक्षः सुग्रीवं रणपण्डितम् ।
आपतन्तं महावेगं इदं वचनमब्रवीत् ॥ १९ ॥
एष मुष्टि[8] र्मया बद्धः गाढः संनिहिताङ्गुलिः ।
मया वेगविमुक्तस्ते प्राणानादाय यास्यति ॥ २० ॥

वेगविमुक्त इति । त्वदुपरीति शेषः ॥ २० ॥

---

* अवष्टब्धं—युयुत्सया भूमिमाक्रम्य स्थितम्–गो.

[1] महाबाहुं–ङ., महाबाहुः–च. [2] समुपस्थितम्–ङ. [3] समरदुर्मदः–ङ. [4] दाक्षणम्–ङ. [5] एतदनन्तरं—सुग्रीवो गाढसंवीतो मुष्टिमुद्यम्य वीर्यवान् । इन्द्रपुत्रं समाहूय ययौ योद्धुं कृतक्षणः ॥–इत्यधिकं ज. झ. [6] क्लिष्टमुष्टिं–ङ. [7] ताम्राक्षं–च. [8] मेहान्–च.



एवमुक्तस्तु सुग्रीवः क्रुद्धो वालिनमब्रवीत् ।
तवैव चाहरन् प्राणान् मुष्टिः पततु मूर्धनि ॥ २१ ॥

एवमुक्त इति । वालिनेति शेषः । आहरन्—अत्यर्थं हरन् तवैव मूर्ध्नि मुष्टिः पततु । मामकी इति शेषः । पततु इत्यब्रवीदित्यन्वयः ॥ २१ ॥

ताडितस्तेन संक्रुद्धः [1] समभिक्रम्य [2] वेगतः ।
अभवच्छोणितोद्गारी [3] सोत्पीड इव पर्वतः ॥ २२ ॥

ताडित इत्यादि । अथ तं सुग्रीवमभिक्रम्य स्थितेन तेन वालिना वेगतः ताडितः, अत एव संक्रुद्धः वालिप्रहारात् शोणितोद्गारी चासौ सोत्पीडः—सनिर्झरोद्गारः पर्वत इवाभवत् ॥ २२ ॥

सुग्रीवेण तु *[4] निःसङ्गं सालमुत्पाट्य तेजसा ।
गात्रेष्वभिहतो वाली वज्रेणेव महागिरिः ॥ २३ ॥

अथैवंभूतेन सुग्रीवेण तु निःसङ्गं—शोणितोद्गारजदुःखबन्धरहितं यथा तथा वाली अभिहतः अभूत् ॥ २३ ॥

स तु [5] वाली प्रचलितः सालताडनविह्वलः ।
गुरुभार[6] समाक्रान्ता नौः ससार्थेव सागरे ॥ २४ ॥

सागरे नौरिव विह्वलः—परवशः अभवत् ॥ २४ ॥

---

* निस्सङ्गं—बन्धुस्नेहरहितं यथा तथा अभिहत इति वा ।

[1] समतिक्रम्य–ङ. [2] वेगितः–ङ. [3] सापीड–च. [4] निश्शङ्कं–च. [5] वृक्षेण निर्भग्नः–च. [6] समाक्रान्तः नौसार्थ इव–ङ.

तौ भीमबलविक्रान्तौ [1]सुपर्णसमवेगितौ ।
[2]प्रयुद्धौ घोरवपुषौ चन्द्रसूर्याविवाम्बरे ॥
परस्परममित्रघ्नौ छिद्रान्वेषणतत्परौ ॥ २५ ॥

सुपर्णेन समं वेगितं—वेगः ययोस्तौ तथा। प्रकृष्टं युद्धं ययोस्तौ तथा। चन्द्रः—पूर्णचन्द्रः। अमृतोपमा ॥ २५ ॥

ततोऽवर्धत वाली तु बलवीर्यसमन्वितः ।
सूर्यपुत्रो महावीर्यः सुग्रीवः [3]परिहीयते ॥ २६ ॥
वालिना भग्नदर्पस्तु सुग्रीवो मन्दविक्रमः ।
वालिनं प्रति सामर्षः दर्शयामास *[4]लाघवम् ॥ २७ ॥
†वृक्षैः सशाखैः सशिखैः वज्रकोटिनिभैर्नखैः ।
मुष्टिभिर्जानुभिः पद्भिः बाहुभिश्च पुनःपुनः ॥ २८ ॥
तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ।
तौ [5]शोणिताक्तौ युध्येतां वानरौ वनचारिणौ ॥ २९ ॥
मेघाविव महाशब्दैः तर्जयानौ परस्परम् ॥ ३० ॥

युध्येतां—अयुध्येतामिति यावत् ॥ ३० ॥

हीयमानमथोऽपश्यत् सुग्रीवं वानरेश्वरम् ।
वीक्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः ॥ ३१ ॥

*राघवं (पा.) दर्शयामास—स्वहानिं बोधयामास—ति. रा. † सिंहावलोकनन्यायेन तयोर्युद्धमेव वर्णयति—वृक्षैरिति—रा.

[1] सुपर्णानिल—ङ. [2] प्रवृद्धौ—ङ. [3] परिहीयत—च. [4] राघवम्—च. झ. [5] शोणिताक्षौ—ङ.



ततो रामो महातेजाः आर्तं दृष्ट्वा हरीश्वरम् ।
*[1]स शरं वीक्षते वीरः वालिनो वध[2]कारणात् ॥ ३२ ॥

स रामः शरं वीक्षते स्म ॥ ३२ ॥

ततो धनुषि संधाय शरमाशीविषोपमम् ।
पूरयामास तच्चापं †कालचक्रमिवान्तकः ॥ ३३ ॥
तस्य ज्यातलघोषेण त्रस्ताः पत्ररथेश्वराः ।
प्रदुद्रुवुर्मृगाश्चैव युगान्त इव मोहिताः ॥ ३४ ॥
मुक्तस्तु वज्रनिर्घोषः प्रदीप्ता[3]शनिसंनिभः ।
राघवेण महाबाणः वालिवक्षसि पातितः ॥ ३५ ॥

मुक्तो बाणः पातित इति । पतित इति यावत् ॥ ३५ ॥

ततस्तेन महातेजाः [4]वीर्योत्सिक्तः कपीश्वरः ।
वेगेनाभिहतो वाली निपपात महीतले ॥ ३६ ॥
इन्द्रध्वज इवोद्धूतः पौर्णमास्यां महीतले ।
‡आश्वयुक्समये मासि [5]गतश्रीको विचेतनः [6] ॥ ३७ ॥

* हरीश्वरं दृष्ट्वा शरं वीक्षते—इति संरंभकाले लोकस्वभावोक्तिः। † कालचक्रं—यमस्यायुधविशेषः—गो. ‡ आश्विनमासे उत्क्षिप्तः इन्द्रध्वजः यथा भूमौ पतेत्, तथा वाली ग्रीष्मान्ते पतित इत्यर्थः। अत एव सुग्रीवाभिषेकसमये श्रावणो मासोऽधुना वर्तेत इति वचनेन (२६–१४) न विरोधः—रा. गौडदेशे कस्मिंश्चिदुत्सवे आश्विनपूर्णिमायामिन्द्रमुद्दिश्य ध्वजं संस्थाप्य उत्सवोत्तरं प्रक्षिपन्तीति प्रसिद्धम्—रा.

[1] सज्यं चक्रे धनुः, शरं च वीक्षते—ङ. [2] काङ्क्षया च. [3] नल—ङ. [4] वीर्ययुक्तः—च. ज. [5] गतसत्त्वः—च. ज. [6] एतदनन्तरं—बाष्पसंरुद्धकण्ठस्तु वाली चार्तस्वरः शनैः— इत्यधिकम्—ङ. च. ज.

उद्धूत —उत्क्षिप्तः इन्द्रध्वजो महीतल इव वाली महीतले पपात । पातकालो लक्ष्यते, रामस्य वनवाससमाप्तिवर्षे अतीतकालपरिज्ञानाय— पौर्णमास्यामित्यादि । आश्वयुजा—आश्वयुज्या पौर्णमास्याः समयः—सङ्गमः यस्य मासस्य सोऽयं आश्वयुक्समयः, एवंविशेषणके मासि—आश्वयुजमास इत्यर्थः । तत्रापि मासे पौर्णमास्यां गतश्रीकः विचेतनः—विसंज्ञः पपात । एवं योजना सुग्रीवाभिषेकानुमतिसमये श्रावणो मासः वर्तते इति वचनात् । उक्तलक्षणे काले इन्द्रध्वज इवेति च योजनीयम् ॥ ३७ ॥

*नरोत्तमः [1]कालयुगान्तकोपमं
शरोत्तमं काञ्चन[2]रूप्यभूषितम् ।
ससर्ज दीप्तं तममित्र[3]मर्दनं
सधूममग्निं मुखतो यथा हरः ॥ ३८॥

उक्तार्थोपसंहारः—नरोत्तम इत्यादि । मुखतः इत्यादि । मुखस्थललाटनेत्रेणेत्यर्थः ॥ ३८ ॥

अथोक्षितः शोणिततोयविस्रवैः
सुपुष्पिताशोक [4]इवानिलोद्धतः ।

---

* नन्वत्र एकवचनात् एकेन बाणेन वाली हत इत्युक्तम् । इदं उत्तरत्र तारावचनेन 'रामेण प्रहितै रौद्रैर्मार्गणैर्दूरपातिभिः' इत्यनेन (19-9) विरुध्यते—मैवम्—व्याकुलवचनत्वात्तस्य-**गो.** तारा हि वालिनं हतं श्रुत्वैव इदं वचनं वदति, न तु दृष्ट्वेतीत्यवधेयम् ॥ अत्र—प्रतिज्ञानिर्वाहाय छद्मनाऽपि वालिवधः कृतः-**गो.**

[1] काल इवा-**ङ.** [2] रूपभासितम्-**ङ.**, रूपभूषितम्-**च.** [3] कर्शनं-**ङ.**
[4] इवाचलोद्धतः, इवातिलोहितः-**ङ.**



विचेतनो वासवसूनुराहवे
विभ्रंशितेन्द्रध्वजवत् क्षितिं गतः ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे षोडशः सर्गः

---

शोणितस्य तोयस्य विस्रवाः—स्रुतयः तथा । धीगौ(३९)-मानः सर्गः ॥ ३९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे षोडशः सर्गः

---

## सप्तदशः सर्गः

[ रामाधिक्षेपः ]

ततः शरेणाभिहतः रामेण रणकर्कशः ।
*पपात सहसा वाली निकृत्त इव पादपः ॥ १ ॥

अथ वालिना रामगर्हणम् । ततः शरेणेत्यादि ॥ १ ॥

स भूमौ न्यस्तसर्वाङ्गः तप्तकाञ्चनभूषणः ।
अपतद्देवराजस्य मुक्तरश्मिरिव ध्वजः ॥ २ ॥

मुक्तरश्मिः—मुक्तरथरज्जुबन्धनः, मुक्तप्रभश्चेत्यपि ॥ २ ॥

तस्मिन् निपतिते भूमौ [1]वानराणां गणेश्वरे ।
नष्टचन्द्रमिव व्योम न व्यराजत मेदिनी ॥ ३ ॥

मेदिनी—तद्देशभूमिरित्यर्थः ॥ ३ ॥

---

* उक्तार्थानुवादोऽयमुत्तरवक्तव्याय ।

[1] हर्यृक्षाणां-**च ज.**

भूमौ निपतितस्यापि तस्य देहं महात्मनः ।
न श्रीर्जहाति न प्राणा न तेजो न पराक्रमः ॥ ४ ॥

शक्रदत्ता वरा माला काञ्चनी [1] वज्रभूषिता ।
दधार हरि[2]मुख्यस्य प्राणान् तेजः श्रियं च सा ॥ ५ ॥

श्रियाद्यप्रहाणे कारणमाह—शक्रेत्यादि ॥ ५ ॥

स तया मालया वीरः हैमया हरियूथपः ।
[3]संध्यानुरागपर्यन्तः पयोधर इवाभवत् ॥ ६ ॥

हेमयेति । हैम्येति यावत् । संध्यानुरागः पर्यन्ते यस्य स तथा । हेममालासंबन्धमात्रे अयं दृष्टान्तः । स च पयोधरस्य श्यामत्वात् वालिदेहस्य पीतत्वात् तदंशे ॥ ६ ॥

तस्य माला च देहश्च मर्मघाती च यः शरः ।
त्रिधेव रचिता लक्ष्मीः पतितस्यापि शोभते ॥ ७ ॥

त्रिधा रचितेवेति । त्रिधा विभक्तेवेत्यर्थः ॥ ७ ॥

तदस्त्रं तस्य वीरस्य स्वर्गमार्ग*प्रभावनम् ।
रामबाणासनक्षिप्तं आवहत् परमां गतिम् ॥ ८ ॥

स्वर्गमार्गस्य प्रभावनं—प्रकाशकं सत् । परमां गतिं—ब्रह्मलोकगतिमित्यर्थः । आवहत—प्रापयति स्म । बाणः अस्यते अनेनेति बाणासनं—धनुः ॥ ८ ॥

---

* प्रभावनं—प्रापकं, भूप्राप्तौ—गो.

[1] रत्न—च. ज. [2] राजस्य—ङ. [3] सन्ध्यानुरक्त—ङ.



तं [1]तदा पतितं संख्ये गतार्चिषमिवानलम् ।
बहुमान्य च तं वीरं *वीक्षमाणं शनैरिव ॥ ९ ॥

तं तदा शनैरिव—शनैरेव वीक्षमाणम् ॥ ९ ॥

ययातिमिव पुण्यान्ते देवलोकात् परिच्युतम् ।
आदित्यमिव कालेन युगान्ते भुवि पातितम् ॥ १० ॥

† महेन्द्रमिव दुर्धर्षं [2]महेन्द्रमिव दुःसहम् ।
महेन्द्रपुत्रं पतितं वालिनं हेममालिनम् ॥ ११ ॥

[3]सिंहोरस्कं महाबाहुं दीप्तास्यं हरिलोचनम् ।
[4]लक्ष्मणानुगतो रामः ददर्शोपससर्प च[5] ॥ १२ ॥

हरिलोचनं—पीतनेत्र, 'हरिद्राभः पालाशो हरितो हरित्' ॥

तं दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् ।
अब्रवीत् प्रश्रितं वाक्यं परुषं ‡ धर्मसंहितम्[6] ॥ १३ ॥

स भूमावल्पतेजोऽसुः निहतो गतचेतनः ।
अर्थसंहितया वाचा गर्वितं [7]रणगर्वितम्[8] ॥ १४ ॥

---

* शनैः—वेदनातिशयात् मन्दं वीक्षमाणं—गो. वीक्ष्यमाणं (पा.)—दृष्टिपथं प्राप्तं तं वालिनं भ्रातरौ रामलक्ष्मणौ शनैरुपगातौ—रा. † महेन्द्रं—उपेन्द्रस्यैव वृत्रवधोत्तरमिदं नामेत्येके । महेन्द्रः आजानदेवः, उपेन्द्रः कर्मदेव इत्यन्ये—ति. महेन्द्रमिव दुर्धर्षं, उपेन्द्र—वामनमिव दुस्सहं—रा. ‡ धर्मसंहितं—उत्सर्गधर्मयुक्तम् ।

[1] तथा—च. [2] उपेन्द्र—च. ज. [3] व्यूढोरस्कं—च. [4] लक्ष्मणानुचरो—च. [5] एतदनन्तरं—तं तथा पतितं वीरं गतार्चिषमिवानलम् । बहुमान्य च तं वीरं वीक्षमाणं शनैरिव ॥ उपयातौ महावीर्यौ भ्रातरौ रामलक्ष्मणौ—इत्यधिकं—ङ. [6] एतदनन्तरं—बाष्पसंरुद्धकण्ठस्तु वाली सार्तस्वरं शनैः ।—इत्यधिकं—ङ. [7] रणगर्वितः—ङ. [8] एतदनन्तरं—उवाच रामं संप्रेक्ष्य पङ्कलग्न इव द्विपः ।—इत्यधिकं—ङ.

अल्पं तेजः असुश्च यस्य स तथा। गतचेतनः—गतचेष्टः। गर्वितं—गर्वोपेतं यथा तथा अब्रवीत् इत्यन्वयः ॥ १४ ॥

त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः।
कुलीनः सत्त्वसंपन्नः तेजस्वी चरितव्रतः ॥ १५ ॥
*पराङ्मुखवधं कृत्वा को नु प्राप्तस्त्वया गुणः?
यदहं युद्धसंरब्धः [1]शरेणोरसि ताडितः।
रामः †करुणवेदी च प्रजानां च हिते रतः ॥ १६ ॥

पराङ्मुखवधमिति। युयुत्सया स्वानभिमुखवधमित्यर्थः। तदेव दर्शयति—यदहमित्यादि। युद्धाय अन्यस्मै संरब्धः—क्रुद्धः तथा ॥ १६ ॥

सानुक्रोशो [2]जितोत्साहः ‡समयज्ञो दृढव्रतः।
इति ते सर्वभूतानि कथयन्ति यशो भुवि ॥ १७ ॥
§दमः शमः क्षमा धर्मः धृतिः [3]सत्यं पराक्रमः।
पार्थिवानां गुणाः, राजन्! दण्डश्चा[4]प्यपराधिषु ॥ १८ ॥

शमदमौ बहिरन्तरिन्द्रियनिग्रहार्थौ। क्षमा—शक्यप्रतिक्रियापकारसहिष्णुता ॥ १८ ॥

तान् गुणान् संप्रधार्याहं अग्र्यं चाभिजनं तव।
तारया प्रतिषिद्धोऽपि सुग्रीवेण समागतः ॥ १९ ॥

आभिजनं—महाकुलप्रसूतत्वम् ॥ १९ ॥

---

* पराङ्मुखवधं—परयुद्धासक्तवधम्। युद्धसंरब्धः—अन्ययुद्धपराङ्मुख इत्यर्थः-गो. † करुणवेदी—करुणं—दयावन्तं वेत्ति स्वकीयत्वेन जानाति, तच्छील:-रा. कारुण्यज्ञः-गो. ‡ समयज्ञः-उचितानुचितकालज्ञः-ति. आचारज्ञः-गो. § 'शमश्चित्तप्रशान्तिः स्यादम इन्द्रियनिग्रहः'-गो.

[1] त्वत्कृते निधनं गतः-च. ज. [2] महोत्साहः-च. ज. [3] सत्त्वं-च. ज. [4] व्यपकारिषु-च.



न मामन्येन [1]संयुक्तं *प्रमत्तं [2]योद्धुमर्हसि।
इति [3]मे बुद्धिरुत्पन्ना बभूवादर्शने तव † ॥ २० ॥

अन्येन संयुक्तं, अत एव त्वयि प्रमत्तं—असावधानम्। नार्हसीति मे बुद्धिरुत्पन्ना। तारया प्रतिषिध्यमानस्य मे इति शेषः ॥

न त्वां ‡विनिहतात्मानं धर्मध्वजमधार्मिकम्।
जाने पापसमाचारं तृणैः कूपमिवावृतम् ॥ २१ ॥

विनिहतात्मानं—नष्टात्मानम् ॥ २१ ॥

सतां वेषधरं पापं प्रच्छन्नमिव पावकम्।
नाहं त्वामभिजानामि धर्मच्छद्माभिसंवृतम् ॥ २२ ॥

प्रच्छन्नमिति। भस्मनेति शेषः। छद्म—व्याजः ॥ २२ ॥

विषये वा पुरे वा ते §यदा [4]नापकरोम्यहम्।
न च [5]त्वामवजाने च कस्मात् मां हंस्यकिल्बिषम् ॥ २३ ॥

यदा—यस्मात् ॥ २३ ॥

‖फलमूलाशनं नित्यं [6]वानरं वनगोचरम्।
मामिहाप्रतियुध्यन्तं अन्येन च समागतम् ॥ २४ ॥

---

* प्रमत्तं युद्धपरवशं-गो. † तव अदर्शने—इदानीं त्वद्दर्शनात्पूर्वं एवं ज्ञातवानहं, अद्य तु विपरीतमभूदिति भावः। ‡ विनिहतात्मानं—अधर्माचरणाभ्रष्टात्मानं-ति. विशेषेण निहतबुद्धिं-गो. § लोक इव 'यदा' इत्युक्तिः। ‖ फलेत्यस्य श्लोकस्य 'मां' इति पूर्वेण सम्बन्धः-गो.

[1] संरब्धं-ङ. [2] वेद्धु-च. ज. [3] ते-ङ. [4] पापं-च. [5] त्वां प्रतियुध्येऽहं-ङ. [6] राजानं च वनौकसाम्-ङ.

लिङ्गमप्यस्ति ते, राजन्! दृश्यते *धर्मसंहितम्।
कः क्षत्रियकुले जातः श्रुतवान् †नष्टसंशयः ॥ २५ ॥
धर्मलिङ्गप्रतिच्छन्नः क्रूरं कर्म समाचरेत् ॥ २६ ॥

लिङ्गमप्यस्तीति। अधर्माच्छादनभूतमिति शेषः। अस्तीत्यत्र किं प्रमाणमित्यत्रानुभव एवेत्याह—दृश्यते धर्मसंहितमिति। जटावल्कलधरत्वादिकं लिङ्गमिति शेषः ॥ २६ ॥

[1]राम! राजकुले जातः धर्मवानिति विश्रुतः।
‡अभव्यो भव्यरूपेण किमर्थं परिधावसि? ॥ २७ ॥

अभव्यः—अशुभाचारः ॥ २७ ॥

साम दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ।
पार्थिवानां गुणाः, राजन्! दण्डश्चाप्यप[2]राधिषु ॥ २८ ।

वयं वनचराः, राम! मृगा मूलफलाशनाः।
एषा प्रकृतिरस्माकं पुरुषस्त्वं नरेश्वरः ॥ २९ ॥

प्रकृतिः—स्वभावः ॥ २९ ॥

भूमिर्हिरण्यं [3]रूप्यं च विग्रहे कारणानि च।
अत्र कस्ते वने [4]लोभः मदीयेषु फलेषु वा? ॥ ३० ॥

---

* अधर्मसंहितं—अधर्मयुक्तं लिङ्गमपि ते अस्ति, दृश्यते च—स्पष्टमवगम्यते चेत्यर्थः। कुत इत्यत्राह—क इति—गो. † यतः श्रुतवान्, तत एव नष्टसंशयः—धर्माधर्मविषयकनिर्णयवान्। ‡ अभव्यः—क्रूरः भव्यरूपेण—सौम्यरूपेण—गो.

[1] त्वं राघवकुले—ङ. [2] कारिषु—च. [3] रूपं—ङ. [4] लाभः—ङ.



कारणानि चेति। आहुरिति शेषः। तत्र तथाऽस्तीत्यर्थः। ते—राज्ञस्तव वने विद्यमानेषु मदीयेषु मूलेषु फलेषु वा को लोभः—अपेक्षा। न कोऽपीत्यर्थः। भूम्यादावेव किल राज्ञोऽपेक्षेत्यर्थः ॥

*नयश्च विनयश्चोभौ निग्रहानुग्रहावपि।
राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः ॥ ३१ ॥

नयः—नीतिः। विनयः—प्रश्रयः। असङ्कीर्णेति। निग्रहानुग्रहादिविषये विपरीतप्रवृत्तिरहितेत्यर्थः ॥ ३१ ॥

त्वं तु कामप्रधानश्च कोपनश्चानवस्थितः।
[1]राजवृत्तैश्च संकीर्णः †शरासनपरायणः ॥ ३२ ॥

संकीर्णः—क्षिप्तः, रहित इत्यर्थः। शराणां असनं—यत्र कुत्रापि मोक्षणं, तत्परायणस्तथा ॥ ३२ ॥

न तेऽस्त्यपचितिर्धर्मे नार्थे बुद्धिरवस्थिता।
इन्द्रियैः कामवृत्तः सन् कृष्यसे, मनुजेश्वर! ॥ ३३ ॥

अपचितिः—पूजा ॥ ३३ ॥

हत्वा बाणेन, काकुत्स्थ! मामिहानपराधिनम्।
किं वक्ष्यसि सतां मध्ये कर्म कृत्वा [2]जुगुप्सितम् ॥ ३४ ॥

---

* ननु स्वतन्त्रत्वात् यथेच्छं मम क्रियेत्यत्राह—नय इति—रा. नयः अनुग्रहश्च सद्राजधर्मौ। विनयः—विपरीतनयः निग्रहश्च कुराजधर्मौ। इत्येषा राजवृत्तिः असंकीर्णा ग्राह्या—गो. † शरासनपरायणः—आयुधपर इति लोकवदुक्तिः।

[1] राजवृत्तेस्समुत्तीर्णः—ङ. राजवृत्तेषु संकीर्णः—च. [2] सुदुष्करम्—ङ.

*राजहा ब्रह्महा गोघ्नः चोरः प्राणिवधे रतः ।
नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥ ३५ ॥

परिवेत्ता—ज्येष्ठे अकृतदारे कृतदारोऽनुजः ॥ ३५ ॥

†सूचकश्च कदर्यश्च मित्रघ्नो गुरुतल्पगः ।
लोकं[1] पापात्मनामेते गच्छन्ते नात्र संशयः ॥ ३६ ॥

गच्छन्ते—गच्छन्तीति यावत् ॥ ३६ ॥

अधार्यं चर्म मे सद्भिः रोमाण्यस्थि च ‡वर्जितम् ।
अभक्ष्याणि च मांसानि त्वद्विधैर्धर्मचारिभिः ॥ ३७ ॥

यद्यपि क्षत्रियस्य मृगहननमस्ति ; अथापि मद्विषयकमिद-मप्रयोजनमित्याह—अधार्यमित्यादि ॥ ३७ ॥

पञ्च पञ्चनखा भक्ष्याः ब्रह्मक्षत्रेण, राघव !
§शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः ॥ ३८ ॥

अभक्ष्याणीत्यत्र प्रमाणमाह—पञ्चेत्यादि । ब्रह्मक्षत्रेणेत्येक-वद्भावः । नियमविधिनियतान् भक्ष्यान् पञ्च पञ्चनखान् परिगण-यति—शल्यक इत्यादि । शल्यकः—शल्यं अस्थिकीलं सूक्ष्मास्थि-कीलावृतत्वग्वान् प्राणिविशेषः । श्वाविधः—कण्टकाकार-दीर्घरोमभिः श्वानं विध्यतीति श्वाविधः । 'नहिवृति' इत्यादिना दीर्घः । पृषोदरादित्वात साधुः ॥ ३८ ॥

---

* तेषु प्रकृते राजहत्वं दोषो बोध्यः—ति. † सूचकः—पिशुनः, कदर्यः—लुब्धः—गो. ‡ वर्जितं—अस्पृश्यं—गो. रा. ति. § शल्यकः—खड्गी । शुक्तिकाकारशल्यावृतसर्वाङ्गः जन्तुविशेष इत्यन्ये—ति. ब्रह्मक्षत्रेणेत्युपलक्षणं, त्रैवर्णिकेनेत्यर्थः । शल्यकश्वाविधौ वराहविशेषौ—गो.

[1] लोके—च.



चर्म चास्थि च मे, [1]राजन् ! न स्पृशन्ति मनीषिणः ।
अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः ॥ ३९ ॥

सोऽहं पञ्चनखो हतः इति । अभक्ष्यपञ्चनखोऽहं निष्प्रयोजनं हत इत्यर्थः ॥ ३९ ॥

तारया वाक्यमुक्तोऽहं सत्यं सर्वज्ञया हितम् ।
तदतिक्रम्य मोहेन कालस्य वशमागतः ॥ ४० ॥

त्वया नाथेन, काकुत्स्थ ! न सनाथा वसुन्धरा ।
प्रमदा शील[2]संपन्ना धूर्तेन पतिना यथा ॥ ४१ ॥

त्वं तु राज्यार्हो न भवसीत्याह—त्वयेत्यादि ॥ ४१ ॥

*शठो नैकृतिकः क्षुद्रः मिथ्याप्रश्रितमानसः ।
कथं दशरथेन त्वं जातः पापो महात्मना ॥ ४२ ॥

शठः—गूढविप्रियकृत । मिथ्यैव प्रश्रितमानसः—जितान्तः-करणः ॥ ४२ ॥

†छिन्नचारित्रकक्ष्येण सतां धर्मातिवर्तिना ।
त्यक्तधर्माङ्कुशेनाहं निहतो रामहस्तिना ॥ ४३ ॥

छिन्ना चारित्रस्य कक्ष्या—मर्यादा येन स तथा ॥ ४३ ॥

अशुभं चाप्ययुक्तं च सतां चैव विगर्हितम् ।
‡वक्ष्यसे चेदृशं कृत्वा सद्भिः सह समागतः ॥ ४४ ॥

वक्ष्यसे इति । किं वक्ष्यसे इति योजनीयम् ॥ ४४ ॥

---

* शठः—मूर्खः नैकृतिकः—अनृजुरिति वा । † छिन्नं चारित्रमेव कक्ष्यं—इभबन्धनं येन स तथा । धर्मातिवर्तिना—अतिक्रान्तमर्यादेन—गो. ‡ चकश्चकारः किमर्थं—रा. वक्ष्यसे—निन्द्यसे इति वा ।

[1] राम—च. [2] संपूर्णा पत्येव च विधर्मणा—च.

उदासीनेषु योऽस्मासु विक्रमस्ते प्रकाशितः।
अपकारिषु [1]तं, राजन्! न हि पश्यामि विक्रमम् ॥४५॥

अपकारिष्विति। दारापहारिष्वित्यर्थः ॥ ४५ ॥

दृश्यमानस्तु युध्येथाः मया [2]यदि, नृपात्मज!
अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया ॥ ४६ ॥

त्वयाऽदृश्येन तु रणे निहतोऽहं दुरासदः।
प्रसुप्तः पन्नगेनेव नरः [3]पानवशं गतः ॥ ४७ ॥

त्वयेत्यादि। मया रणे अदृश्येन—अप्राप्तदर्शनेन तु त्वया उच्यमानदृष्टान्तवन्निहतः ॥ ४७ ॥

मामेव यदि पूर्वं त्वं एतदर्थमचोदयः।
*मैथिलीमहमेकाह्ना [4]तव चानीतवान् भवेत् ॥ ४८ ॥

एतदर्थं—सीतायाः आहरणरूपप्रयोजनमुद्दिश्य मामेव पूर्वं प्राप्य यद्यचोदयः, तर्हि तव मैथिलीमहं एकाह्ना आनीतवान् भवेत्—भवेयमिति यावत् ॥ ४८ ॥

[5]राक्षसं च दुरात्मानं तव भार्यापहारिणम् [6]।
सुग्रीवप्रियकामेन [7]यत्कृतेऽस्मि हतस्त्वया ॥ ४९ ॥
कण्ठे बद्ध्वा [8]प्रदद्यां तेऽनिहतं रावणं रणे ॥ ५० ॥

---

* सुग्रीवसख्यनिमित्तभूतं मैथिल्यानयनं च तारया पूर्वं निवेदितमिति ज्ञेयम्—**गो.**

[1] ते राम—**च.** [2] युधि—**च. ज.** [3] पाप—ङ. [4] त्वानयिष्याम्यसंशयम्—ङ. [5] इदमर्धं कुण्डलितं—ङ. [6] एतदनन्तरं—ग्रीवायां तु दशग्रीवं बध्वा संप्रददे तव—इत्यधिकं—**झ.** [7] यदहं निहत—ङ. [8] दशग्रीवं दद्यां ते—ङ.



राक्षसं चेति। आनीतवान् भवेयमित्यनुकर्षः। उक्त एवार्थो विव्रियते—सुग्रीवेत्यादि। यदिति। यत्संहारप्रयोजनमुद्दिश्येत्यर्थः। तं रावणं अनिहतमेव जीवग्राहं गृहीत्वा कण्ठे बद्ध्वा प्रदद्याम्। यदि मां पूर्वं अचोदयः इत्यनुषज्यम् ॥ ४९-५० ॥

न्यस्तां सागरतोये वा पाताले वाऽपि मैथिलीम्।
आनयेयं तवादेशात् श्वेतामश्वतरीमिव ॥ ५१ ॥

सागरतोय इति। तन्मध्यवर्तिद्वीप इति यावत्। श्वेतामश्वतरीमिव—श्वेताश्वतररूपिणीं श्रुतिं मधुकैटभाभ्यां पातालनिगृहीतां यथा हयग्रीवो भुवमानयति स, तद्वदित्यर्थः ॥ ५१ ॥

†युक्तं यत् प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि।
अयुक्तं यदधर्मेण त्वयाऽहं निहतो ‡रणे ॥ ५२ ॥
काममेवं[1]विधो लोकः कालेन विनियुज्यते।
§क्षमं चेत् भवता प्राप्तं उत्तरं साधु चिन्त्यताम् ॥ ५३ ॥

काममित्यादि। कालेन—कालधर्मेण मृत्युना लोकः प्राणिमात्रं विनियुज्यते—विशेषेण संयुज्यते इति यतः, एवंविधस्वभावः काममस्तु ममापि। भवता राज्यं प्राप्तं चेत्, तदा मद्वधकारणप्रश्ने क्षमं युक्तं उत्तरं साधु—सम्यक् विचिन्त्यताम् ॥ ५३ ॥

---

* 'सागरतोये वा' इति लोकवदुक्तिः। † राज्यार्थं सुग्रीवो मां हतवानित्येतद्युक्तं, ज्ञातीनामेवंविधकृत्यस्य स्वाभाविकत्वात्। त्वं तु मां हतवानित्येतत्त्वयुक्तं—**गो.** ‡ अरणे इति वा। त्वया रणाभावेऽपीत्यर्थः ॥ § भवता प्राप्तं—अदृश्यतया प्रहरणं प्रति, क्षमं चेत् साधूत्तरं चिन्त्यताम्—**गो.**

[1] विधे—ङ.

*इत्येवमुक्त्वा परिशुष्कवक्त्रः
शराभिघातात् व्यथितो महात्मा ।
समीक्ष्य रामं रविसंनिकाशं
तूष्णीं बभूवामरराजसूनुः[1] ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे सप्तदशः सर्गः

---

उपसंहारेण वादः—इत्येवमित्यादि । वाम(५४)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे सप्तदशः सर्गः

---

## अष्टादशः सर्गः

[वालिवधसमर्थनम्]

इत्युक्तः प्रश्रितं वाक्यं † धर्मार्थसहितं हितम् ।
परुषं वालिना रामः निहतेन विचेतसा ॥ १ ॥

अथ रामेण न्यायावगमितनिजवध्यत्वेन वालिना स्वकृतगर्हण-क्षमापणपूर्वं पुत्रस्य रक्षार्थं रामाय प्रदानम् । इत्युक्त इत्यादि ।

---

* अस्य सर्गस्य तीर्तेन रामस्तुतिपरतया यद्योजनं, तत्र कविनिबद्धस्य वक्तुर्वालिनः तात्पर्यविषयभूतम् । 'यद्युक्तं मया पूर्वं प्रमादाद्वाक्यमप्रियम् । तत्रापि खलु मे दोषं कर्तुं नार्हसि राघव' (१८–४६) इत्यग्रे वाल्युक्तेः—ति. † अत्र 'धर्मार्थसहितं' इति विशेषणं रामवाक्यस्य 'धर्मार्थगुणसंपन्नं' इति विशेषणं च द्रष्टव्यम् । धर्मस्योत्सर्गापवाद-जटिलत्वेन दुर्ज्ञेयत्वमनेन सूच्यते । रामवाक्यस्य 'अनुत्तमं' इत्यपि विशेषणात् तस्यैव परमधर्मत्वमुच्यते । अतो न कोऽपि विरोधः ॥

[1] एतदनन्तरं—तमुक्तवन्तं प्रवरं हरीणां अथोत्तरं वाक्यमुवाच रामः । हितं च तत्त्वं वचनं प्रसक्तं ससाम धर्मार्थसमाहितं च ॥ —इत्यधिकं—ङ. झ.



प्रश्रितं—प्रश्रयाभासोपेतम् । धर्मार्थसहितत्वं हितत्वं च आभा-सरूपम् । तत्र 'मामेव पूर्वं' इत्यादि हिताभासः, अर्थाभासश्च । धर्माभासस्तु 'राजहा' इत्यादि । 'विषये वा पुरे वा ते' इत्यादिः प्रश्रयाभासः । परुषत्वं मुख्यमेव । निहतेन—विद्धेन । अत एव—विचेतसा वालिना इति । परुषं उक्तोऽभूदित्यनुवादेनान्वयः ॥

तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदम् ।
उक्तवाक्यं हरिश्रेष्ठं उपशान्तमिवानलम् ॥ २ ॥
धर्मार्थगुणसम्पन्नं हरीश्वरमनुत्तमम् ।
अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत् ॥ ३ ॥

धर्मार्थगुणसम्पन्नमित्यादिकं वास्तवम् । अधिक्षिप्तः—परुषितः ॥ ३ ॥

धर्ममर्थं च कामं च *समयं चापि लौकिकम् ।
अविज्ञाय कथं बाल्यात् [1]मामिहाद्य विगर्हसे ॥ ४ ॥

लौकिकं समयं—लौकिकव्यवहारम् ॥ ४ ॥

अपृष्ट्वा बुद्धिसम्पन्नान् [2]वृद्धानाचार्यसम्मतान् † ।
सौम्य ! वानरचापल्यात् किं मां वक्तुमिहेच्छसि ॥ ५ ॥

अविज्ञायेत्यत्र कारणमाह—अपृष्ट्वेत्यादि । आचार्यसंमता-निति । स्वकुलाचार्यपरिगृहीतानित्यर्थः । वानरत्वादेतदभावः स्पष्टः । वानरत्वप्रयुक्तं चापल्यं तथा ॥ ५ ॥

---

* लौकिकं समयं—शिष्टाचारं—रा. † आचार्यसम्मतान्—स्वकुलाचारशिक्ष-कान्—ति. आचार्यानुकूलान्—रा. आचार्यत्वेन सम्मतानिति आचार्यसदृशानिति वा ।

[1] मां धर्षयितुमिच्छसि—ङ. [2] आचार्यान् धर्मसंहितान्—वृद्धानाचारसंमतान्—ङ.

**इक्ष्वाकूणामियं भूमिः सशैलवनकानना ।**
**मृगपक्षिमनुष्याणां *[1]निग्रहप्रग्रहेष्वपि ॥ ६ ॥**

अविज्ञाय चापस्यादुक्तमिति प्रतिज्ञैव समर्थ्यते—इक्ष्वाकूणामित्यादि । इयं भूमिरिति । मनुना प्रजापतिना अस्माकं कूटस्थेन दत्तेति शेषः । अपि च अत्रत्यानां मृगपक्षिमनुष्याणां निग्रहप्रग्रहेषु—निग्रहानुग्रहेष्वपि अधिकारो दत्त इति शेषः ॥ ६ ॥

**तां पालयति धर्मात्मा भरतः सत्यवागृजुः ।**
**धर्मकामार्थतत्त्वज्ञः निग्रहानुग्रहे रतः ॥ ७ ॥**

अस्तु, किं ततः ? इत्यतः—तां पालयतीत्यादि । पितृपितामहक्रमागतां भुवमित्यर्थः । निग्रहानुग्रह इति । दुष्टशिष्टप्रजयोरिति शेषः ॥ ७ ॥

**नयश्च विनयश्चोभौ यस्मिन् सत्यं च सुस्थितम् ।**
**विक्रमश्च †यथादृष्टः स राजा देशकालवित् ॥ ८ ॥**

यथादृष्टः—अपरोक्षानुभवसिद्धः । स राजेति । एतस्मिन् काल इति शेषः ॥ ८ ॥

**‡तस्य धर्मकृतादेशाः वयमन्ये च पार्थिवाः ।**
**चरामो वसुधां कृत्स्नां धर्म[2]सन्तानमिच्छवः ॥ ९ ॥**

* मृगादिनिग्रहानुग्रहावपि इक्ष्वाकूणामेव, कृतमिति शेषः—**गो.** भूमिः, निग्रहानुग्रहावपि इक्ष्वाकूणामेवेति लोकवदुक्तिः । † यथादृष्टः—शास्त्रविहितः विक्रमश्च, एतत्सर्वं यस्मिन् सुस्थितं—**गो.** ‡ यद्यपि भरतेन नादेशः कृतः, तथापि नेदमसत्यम् । भरतेन राज्यभरणस्य स्वीकृतत्वात्, तदन्येषां तत्कुलीनानां तदादिष्टत्वं सिद्धमिति हृदयम्—**गो.**

[1] निग्रहानुग्रहेष्वपि—**च.** [2] संस्थान—**ङ.**



अस्तु, किं ततः ? इत्यतः—तस्येत्यादि । धर्माय कृतः—सम्पादितः आदेशः—नियोगस्तथा । धर्मसन्तानं—धर्मवृद्धिम् ॥ ९ ॥

**तस्मिन् नृपतिशार्दूले भरते धर्मवत्सले ।**
**पालयत्यखिलां भूमिं कश्चरेत् धर्म[2]निग्रहम् ॥ १० ॥**

धर्मनिग्रहं—धर्मपीडां कश्चरेत्—शक्यार्थे लिङ्, कः आचरितुं शक्नुयात् ? न कोऽपीत्यर्थः ॥ १० ॥

**[3]ते वयं धर्मविभ्रष्टं स्वधर्मे परमे स्थिताः ।**
**भरताज्ञां पुरस्कृत्य [4]निगृह्णीमो यथाविधि ॥ ११ ॥**

ते वयं इदानीं तन्मूलप्रभुनिदेशवर्तिनः धर्मविभ्रष्टं भरताज्ञां पुरस्कृत्य निगृह्णीमः ॥ ११ ॥

**त्वं तु *[5]संक्लिष्टधर्मा च कर्मणा च विगर्हितः ।**
**कामतंत्रप्रधानश्च न स्थितो राजवर्त्मनि ॥ १२ ॥**

अस्तु, प्रकृते किमायातम् ? इत्यत्राह—त्वं त्वित्यादि । च—यस्मात् कर्मणा—चरित्रेण विगर्हितः—लोकनिन्दितः, तस्मात् त्वं संक्लिष्टधर्मा—संक्लिष्टः-पीडितः धर्मः येन स तथा, 'धर्मादनिच्' इत्यनिच् । कामतन्त्रः—कामपुरुषार्थः ॥ १२ ॥

**ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति ।**
**त्रयस्ते पितरो ज्ञेयाः धर्मे पथि हि वर्तिनः ॥ १३ ॥**

* संक्लिष्टधर्मा—धर्मविलोपकृत । कर्मणा च विगर्हितः—अकृत्यकारी—**गो.** वक्ष्यमाणरीत्या भ्रातरि पुत्रवद्वर्तनरूपकृत्यमपि न कृतं, स्नुषागमनरूपपापमपि कृतमित्यर्थः ॥

[1] सत्यविक्रमे—**ङ.** [2] विप्रियं—**च.** [3] न वयं मार्गविभ्रष्टाः—**ङ.**, ते वयं मार्गविभ्रष्टं—**च. ज.** [4] चिन्तयामो—**च. ज.** [5] संकीर्णधर्मश्च—**ङ.**

क्लिष्टधर्मत्वमेव दर्शयितुं लोकस्थितिमाह —ज्येष्ठ इत्यादि । विद्यां–त्रिपदां ब्रह्मविद्याम्। वर्तः–वर्तनं अस्यास्तीति वर्ती, तस्य ॥१३॥

[1] यवीयानात्मनः पुत्रः शिष्यश्चापि [2] गुणोदितः ।
पुत्रवत्ते त्रयश्चिन्त्याः [3] धर्मश्चेदत्र* कारणम् ॥ १४ ॥

ते त्रयश्चिन्त्या इति । ज्येष्ठादिभिः क्रमात् कनीयःप्रमुखाः इत्यर्थः । धर्मइत्यादि । अत्र अस्मिन् पुरुषे धर्मः कारणं —प्रमाणं चेत् ॥

सूक्ष्मः †[4] परमविज्ञेयः सतां धर्मः, प्लवङ्गम !
हृदिस्थः सर्वभूतानां आत्मा वेद [5] शुभाशुभम् ॥ १५ ॥

धर्मत्वप्रमाणज्ञानं च न सर्वसुलभमित्युच्यते—सूक्ष्म इत्यादि । सतां–सात्त्विकानां सूक्ष्मो धर्मः–तन्त्रमन्त्रज्ञानरहस्यरूपः परमविज्ञेयः—परमात्मश्रीमदादिगुरुकृपया परमाचार्यैः श्रीमद्भिः व्यासजैमिन्यादिभिरेव विज्ञेयः, इतरैस्तु परं–अत्यर्थं अविज्ञेय एव। साक्षात् धर्मतत्त्वज्ञानं तु श्रीमदादिब्रह्मण एवेत्युच्यते—हृदिस्थ इत्यादि । सर्वभूतानां–सपरिकरसर्वस्रोतसां असंकोचोपचारेणोपादानत्वतः आत्मा तत्तत्प्रत्यक्तत्त्वभूतः, अत एव हृदिस्थः सन् सर्वं शुभाशुभं पापं पुण्यं च वेद, ज्ञानमात्रस्य तदेकायत्तत्वात् । अतः सदाचार्यवरिवस्यासिद्धा एव राजादीनां धर्मं विदुः ॥ १५ ॥

चपलश्चपलैस्सार्धं वानरैरकृतात्मभिः ।
जात्यन्ध इव जात्यन्धैः मंत्रयन् ‡[6] रक्षसे नु किम् ॥

* अत्र—अस्मिन् विषये इति वा ॥ † परा —सद्गुरूपदेशजा मा—शोभा येषां, तैरेव विज्ञेयः–**ति.** परमदुर्ज्ञेयः(पा.) —ज्ञातुमत्यन्तमशक्यः–**रा. गो.** ‡ किं नु द्रक्ष्यसे–न किमपि द्रक्ष्यसीत्यर्थः–**गो.** द्रष्टुं शक्नोषि किमित्यर्थः ॥

[1] यवीयान् सोदरः–ङ. [2] गुणान्वितः–ङ. [3] धर्मश्चैवात्र–च. ज
[4] परमदुर्ज्ञेयः–ङ. [5] शुभाशुभे–ङ. [6] द्रक्ष्यसे–ङ., प्रेक्षसे–ज.



त्वं तु धर्मज्ञानप्रसक्तिरहित एवेत्युच्यते–चपल इत्यादि । जात्यन्धो जात्यन्धैरिव चपलैः अकृतात्मभिः —आचार्याशिक्षितैः सह अकृतात्मा चपलः त्वं किं मंत्रयन्–किंनु राजधर्मं मंत्रयन्–निश्चिन्वन् किं नु स्वरक्षणीयप्रजाजातं रक्षसे ? न किमपि। अतो धर्मविभ्रष्टः राजदण्ड्यः त्वं इति अर्थादुक्तं भवति ॥ १६ ॥

अहं तु व्यक्ततामस्य वचनस्य ब्रवीमि ते ।
न हि मां केवलं रोषात् त्वं विगर्हितुमर्हसि ॥ १७ ॥

अत्र प्रागुक्तन्यायेन सूक्ष्मज्ञानासामर्थ्यात् धर्मभ्रष्टत्वमस्य व्यक्तमेव वक्तव्यमिति, तत् प्रतिज्ञापूर्वं प्रतिपाद्यते—अहं तु व्यक्ततामित्यादि । अस्य वचनस्येति । चपलश्चपलैरित्युक्तवचनस्येत्यर्थः । व्यक्तता–व्यक्तार्थता, तत्सिद्ध्यर्थं ते ब्रवीमि ॥ १७ ॥

तदेतत् कारणं पश्य यदर्थं त्वं मया हतः ।
भ्रातुर्वर्तसि भार्यायां [1] त्यक्त्वा धर्मं सनातनम् ॥ १८ ॥

पश्येति । मया प्रतिपाद्यमानं त्वद्वधकारणं स्वानुभवेनैव तत्त्वमतत्त्वं वेति चिन्तयेत्यर्थः । भ्रातुः भार्यायां वर्तसीति । वर्तसे इति यावत् ॥

†अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः ।
रुमायां वर्तसे [2] कामात् स्नुषायां पापकर्मकृत् ॥ १९ ॥

उक्त एवार्थः स्पष्टीक्रियते—अस्य त्वमित्यादि । अस्य तु सुग्रीवस्य धरमाणस्य—प्राणान् धारयतः एव—जीवत एव पत्न्यां—

* अस्य वचनस्य—'यवीयानात्मनः' इति पूर्वोक्तवचनस्य–**गो.** एवं सामान्याकारेणोत्तरदानमस्तु ! विशिष्य प्रकृतानुगुणं सुस्पष्टमेव वदामि, वृथा म निन्दितुं नार्हसीति लोकवदेवोक्तिः । †ननु 'भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतीं महिषीं प्रियाम् । धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥' **किष्कि–५५–३)** इत्यग्रे [अनन्तरपुटे-

[1] दण्डोऽयं प्रतिपादितः–ङ. [2] कामं–ङ.

तव स्नुषाभूतायामेव रुमायां यतो वर्तसे, अतः त्वं स्पष्टं पापकर्मकृत् । सुग्रीवस्तु त्वन्मृतिबुद्ध्या तारायां त्वत्स्त्रियां प्रागवर्तिष्ट, त्वं तु तस्मिन् जीवत्येव तत्स्त्रियां वर्तसे इति पापकर्मकृत् इति विशेषः वरमाणस्येति पदेन सूचितः । त्रैवर्णिकेष्वपि देवरन्यायेन च यथाकथंचित् मृतभ्रातृस्त्रियां वृत्तिदर्शनात् तिर्यग्योनिषु मृतभ्रातृस्त्री-ग्रहणे न दोषः इति भगवदाशयः । यद्यपि शास्त्रस्य मनुष्याधिकार-कत्वं, अथापि मनुष्यवदेव तिर्यग्योनेरपि राजादिव्यवहारदर्शनात् राजोचितधर्मानुष्ठानं आवश्यकं इत्याशयः ॥ १९ ॥

तद्व्यतीतस्य ते धर्मात् कामवृत्तस्य, वानर !
[1]भ्रातृभार्याविमर्शेऽस्मिन् दण्डोऽयं प्रतिपादितः ॥ २० ॥

उक्तार्थस्योपसंहारः—तदित्यादि । तस्मात्—धर्मात् व्यतीतस्य—धर्मभ्रष्टस्येत्यर्थः ॥ २० ॥

*न हि [2]धर्मविरुद्धस्य लोकवृत्तादपेयुषः ।
दण्डा[3]दन्यत्र पश्यामि निग्रहं, हरियूथप !
[4]न हि ते मर्षये पापं क्षत्रियोऽहं [5]कुलोद्भवः ॥ २१ ॥

---

प्रायोपवेशसमयेऽङ्गदोक्तेः सुग्रीवस्यापि ज्येष्ठभ्रातुः पितृसमस्य भार्याविमर्शनं तुल्यमित्यत आह—अस्य त्वमिति । निश्चीयमानजीवनस्यैव पत्न्यां तव स्नुषाभूतायां रुमायां यतो वर्तसे, अतस्त्वं पापकर्मकृत् । सुग्रीवस्तु तव जीवननिश्चयाभावात् त्वत्पत्न्यां तारायां प्रागवर्तिष्ट, वत्स्यति च । ........ न च मनुष्याधिकारस्य निषेधादिशास्त्रस्य कथं तिर्यक्षु प्रवृत्तिरिति वाच्यम्, तिर्यग्योनेरपि मनुष्यवद्राजादिव्यवहारदर्शनेन मनुष्यतुल्यज्ञानवत्त्वादस्त्येवायं दोष इत्याशयात्–ति. अनेन जीवतो भ्रातुर्भार्या भ्रात्रा न ग्राह्या, मृतस्य तु ग्राह्येति तत्कुलधर्म इति प्रतीयते–गो.

*तर्हि शिक्षैव कर्तव्या । किमर्थमवधीरित्यत्राह—न हीति–गो.

[1] भ्रातुर्भार्या–ङ. [2] लोक–च. [3] दन्यद्विपश्यामि–ङ. [4] न चेदमर्षये–ङ.
[5] कुलोद्गतः–च.



लोकवृत्तात्—लोकसंमतव्यवहारमर्यादायाः अपेयुषः—अपगतवतः । क्षत्रियोऽहमिति । पापनिग्रहाधिकारीत्यर्थः ॥ २१ ॥

*औरसीं भगिनीं वाऽपि भार्यां वाऽप्यनुजस्य यः ।
प्रचरेत नरः कामात् तस्य दण्डो वधः स्मृतः ॥ २२ ॥

दण्डादन्यत्र निग्रहं न पश्यामीत्युक्तार्थे स्मृतिं प्रमाणयति—औरसीमित्यादि । 'कामात् प्रचरेत' इत्यनेन कुलतन्तुविषयदेवरन्यायः परिहृतः ॥ २२ ॥

भरतस्तु महीपालः वयं त्वादेशवर्तिनः ।
[1]त्वं तु धर्मादतिक्रान्तः कथं [2]शक्य उपेक्षितुम् ॥ २३ ॥
†[3]गुरुधर्मव्यतिक्रान्तं प्राज्ञो धर्मेण पालयन् ।
भरतः [4]कामवृत्तानां निग्रहे पर्यवस्थितः ॥ २४ ॥

गुरुधर्मेति । गुरुः—जगदाधारभूतः महान् यो धर्मः तद्व्यतिक्रान्तं—तत्प्रच्युतं, निगृह्णन्निति शेषः । प्राज्ञः—विद्वान् । धर्मेण पालयन्निति ; धर्मेण युक्तमिति शेषः ॥ २४ ॥

वयं तु [5]भरतादेशं विधिं कृत्वा, हरीश्वर !
त्वद्विधान् भिन्नमर्यादान् [6]नियन्तुं पर्यवस्थिताः ॥२५॥

विधिं कृत्वेति । प्रमाणं कृत्वेत्यर्थः । ननु कथं मृषाऽऽह रामः भरतादेशमिति ? न मृषा । राज्ये तत्कालवर्तिमूलप्रभौ स्थिते सर्ववर्णानां

---

*औरसीं—पुत्रीं प्रचरेत—गच्छेत्–गो. †धर्मव्यतिक्रान्तं—धर्मव्यतिक्रमाणं पालयन्—परामृशन् गुरुः भरतश्च निग्रहे पर्यवस्थितः–गो.

[1] त्वां च धर्मादतिक्रान्तं–च. [2] शक्यं–च. ञ. [3] गुरुधर्मव्यतिक्रान्तं—गुरुवृत्तानतिक्रान्तः–ङ. [4] कामयुक्तानां–च. ञ. [5] भरतादेशावधिं–ङ. च. ञ.
[6] निग्रहीतुं व्यवस्थिताः–ङ.

स्वे स्वे कृत्ये तदाज्ञा अनुक्तसिद्धा जागर्ति। राजाकृत्ये दण्डः पतिष्यतीति प्रवृत्तेः सर्वाविवादात्। रामश्च क्षत्रियः। यावत् स्वराज्याभिषेकं अस्यापि भरतादेशतः स्वकृत्ये दुष्टनिग्रहे मूलप्रभुकार्ये प्रवृत्तेः अनुक्तसिद्धत्वात् ॥ २५ ॥

*सुग्रीवेण च मे सख्यं लक्ष्मणेन [1]यथा तथा।
दारराज्यनिमित्तं च [2]निःश्रेयसि रतः स मे ॥ २६ ॥

अथ कारणान्तरमपि वालिनो वधे दर्शयति—सुग्रीवेणेत्यादि। लक्ष्मणेन यथा, तथा सुग्रीवेण च मे सख्यमस्ति च। यस्मादेवं, तस्मात् सखित्वादेव सुग्रीवः स्वस्य दारराज्यनिमित्तं—तत्तत्प्राप्त्यर्थं मम निःश्रेयसि रतः—निःश्रेयसि निरत इति। यावत्कार्यसिद्धि प्रवृत्तः इत्यर्थः ॥ २६ ॥

प्रतिज्ञा च मया दत्ता तदा [3]वानरसंनिधौ।
प्रतिज्ञा च कथं शक्या [4]मद्विधेनानवेक्षितुम् ॥ २७ ॥

यस्मादेवं, तस्मात् मया च तदभिमतसाधनविषयिणी प्रतिज्ञा दत्ता—कृतेत्यर्थः। कृता सा प्रतिज्ञा मद्विधेन कथं अनवेक्षितुं—असमापयितुं शक्यम्? इदमुक्तं भवति—सख्योः एकप्रयोजनत्वनैसर्ग्यात् स्वसखिप्रयोजनमेव मत्प्रयोजनं इति त्वद्वधः अवश्यं कर्तव्यः कथमपि मयेति ॥ २७ ॥

तदेभिः कारणैः सर्वैः महद्भिर्धर्म[5]संहितैः।
शासनं तव यद्युक्तं तद्भवाननुमन्यताम् † ॥ २८ ॥

---

* एवं निरपराधवधशङ्कायाः परिहारमुक्त्वा, 'मामेव यदि पूर्वमचोदयः' (17-49) इत्युक्तस्य परिहारमाह—सुग्रीवेणेति—गो. † अनुमन्यतां—अङ्गीक्रियतामिति वा।

[1] यथा पुरा—ङ. [2] निःश्रेयस रः—ङ. [3] पावक—ङ. [4] मद्वि धाना मुपेक्षितुम्—ङ. [5] संश्रितः—च. ज.



तदित्यादि। एभिः कारणैः कृते तव शासने यत् युक्तं—उचितं तत्त्वं, तत् भवानपि अनुमन्यताम्—अनुचिन्तयत्विति यावत् ॥ २८ ॥

*सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः।
[1]वयस्यस्य तु कर्तव्यं धर्ममेवानु[2]पश्यतः ॥ २९ ॥
शक्यं त्वयाऽपि [3]तत् कार्यं धर्ममेवानुपश्यता ॥ ३० ॥

युक्तत्वमेव दृढीकरोति—सर्वथेत्यादि। धर्ममेवानुपश्यतः पुरुषस्य तु—वयस्यस्य तु यत् कर्तव्यं, तदपि सर्वथा कर्तव्यमेवेति योजना। अतः परं त्वदनुष्ठेयमेतावदित्युपदिश्यते— शक्यमित्यादि। धर्ममेव अनुपश्यता—अनुवर्तयता त्वयाऽपि तत्—वक्ष्यमाणार्थग्रहणमेव शक्यं कार्यं—एतद्दशायां अनुष्ठातुं योग्यं कृत्यमित्यर्थः ॥ २९-३० ॥

श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ।
गृहीतौ धर्मकुशलैः [4]तत्तथाऽऽचरितं [5]मया ॥ ३१ ॥

किं तदित्यपेक्षायामाह—श्रूयत इत्यादि। चारित्रवत्सलौ—सुचरित्रप्रतिपादनतत्परौ धर्मकुशलैः गृहीतौ च भवतः मयाऽपि तदेव—तदर्थतत्त्वमेव अद्य आचरितं, त्वयाऽपि तदर्थतत्त्वमेव ग्राह्यमित्यर्थः ॥

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ३२ ॥

---

* पुनर्हेत्वन्तराणि वक्तुं पीठिकामारचयति—सर्वथेति। धर्ममेवानुपश्यतः वयस्यस्यापि स्वमित्रशत्रुनिरसनं कर्तव्यम्। धर्ममेवानुपश्यता त्वयाऽपि तत्कार्यं—आत्मनिग्रहरूपं शक्यं—प्रायश्चित्तत्वेनानुमन्तुं—योग्यं—गो. मत्स्थाने त्वं तिष्ठेश्चेद त्वयाऽपि एवमेव कर्तुं शक्यमिति वा।

[1] वयस्यस्योप—च. ज. [2] पश्यता—ङ. [3] कर्तव्यं—ङ. [4] तथा तच्चरितं—च. [5] हरे—विभो—ङ.

शासनाद्वा विमोक्षाद्वा स्तेनः [1]स्तेयाद्विमुच्यते ।
राजा [2]त्वशासन् पापस्य तदवाप्नोति किल्बिषम् ॥ ३३ ॥

कौ तौ श्लोकौ ? इत्यतः तौ पठ्येते–राजभिरित्यादि । शासनात्—निग्रहात्, विमोक्षात्—दयया विसर्जनात्, उभयथापि स्तेनः–चोरः स्तेयात्—स्तेयपापात् विमुच्यते । पापस्य अशासन्निति । पापं अनिगृह्णन्नित्यर्थः, आर्षी षष्ठी । तथाहि आपस्तम्बः—'स्तेनः प्रकीर्णकेशः अंसे मुसलमादाय राजानं गत्वा कर्माचक्षीत, तेनैनं हन्यात्, वधे मोक्षः, अनुज्ञाते अनुज्ञातारमेव स्पृशति' इति ॥

आर्येण मम मान्धात्रा व्यसनं घोरमीप्सितम् * ।
† श्रमणेन कृते पापे, यथा पापं कृतं त्वया ॥ ३४ ॥

एवं स्वानुष्ठितार्थस्य धर्मत्वे स्मृतिं प्रमाणयित्वा, शिष्टाचारमपि तत्र प्रमाणयति—आर्येणत्यादि । मम मांधात्रेति । मम कूटस्थेनेति शेषः । त्वया यथा—यत्प्रकारं पापं कृतं, तथा केनचित् श्रमणेन—आर्हतेन पापे कृते सति, तत्र कर्तुमीप्सितं घोरं व्यसनं–दण्डरूपं मान्धात्रा कृतम् ॥ ३४ ॥

‡ अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः ।
प्रायश्चित्तं च कुर्वन्ति तेन तत् शाम्यते रजः ॥ ३५ ॥

* ईप्सितं—प्रयुक्तमिति यावत्–गो. † श्रमणः—अत्रैवर्णिकः विरक्तः काषायधारी । ‡ ननु प्रजाभिः पापकरणे राजा दण्डयति चेत्, राजैव यद्यपराध्यति, तदा तेषां दण्डकः कः ? इत्यपेक्षायामाह—अन्यैरिति । अन्यैः—मत्पूर्वीकादन्यैः कैश्चित्प्रमत्तैर्वसुधाधिपादिभिः कदाचित् पापं कृतं ; अथापि तैः प्रायश्चित्तमनुष्ठितं, त्वया तु तदपि न कृतम् । एतादृशस्य वध एव दण्ड इत्यर्थो वा ॥

[1] पापा–च. [2] त्वशासनात् पापं–ङ.



अन्यैरित्यादि । प्रमत्तैः कृतं पापं प्रति अन्यैरपि वसुधाधिपैः पापशुद्धये दण्डनं कृतमित्यनुकर्षः । न च केवलं राजदण्डनमेव प्रायश्चित्तं पापस्येत्याह—प्रायश्चित्तं चेत्यादि । तेन—यथाशास्त्रप्रायश्चित्तेन तत्तत्कर्त्रनुष्ठितेनेत्यर्थः ॥ ३५ ॥

तदलं परितापेन धर्मतः परिकल्पितः ।
वधः, वानरशार्दूल ! न वयं स्ववशे स्थिताः ॥ ३६ ॥

न वयं स्ववशे स्थिताः इति । दुष्टनिग्रहविषये मूलप्रभुनियोगवशे स्थिताः इत्यर्थः ॥ ३६ ॥

*शृणु चाप्यपरं भूयः कारणं, हरिपुङ्गव !
[1]यत् श्रुत्वा हेतुमत्, वीर ! न मन्युं कर्तुमर्हसि ॥ ३७ ॥

अथ छन्नेन त्वया अप्रतियुध्यतो मे वधः पापायेति यत् दूषितं, तदपि त्वदज्ञानविलपितमेवेत्याह—शृण्वित्यादि । अपरमप्युद्दिश्य—छन्नेन च अनभिमुखस्य निःशङ्कवधमुद्दिश्य कारणं शृणु इत्यर्थः ॥ ३७ ॥

न मे † तत्र मनस्तापः न मन्युः, हरियूथप !
वागुराभिश्च पाशैश्च कूटैश्च [2]विविधैर्नराः ॥ ३८ ॥
प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून् मृगान् ।
[3]प्रधावितान् वा वित्रस्तान् विस्रब्धांश्चातिविष्ठितान् ॥

* एवं सन्ध्योपासनराज्यपालनादिकं नियमेनानुतिष्ठतो वालिनः शास्त्रवश्यत्वमवलम्ब्योक्तम् । अथ शाखामृगत्वमवलम्ब्याह—शृण्विति–गो. † तत्र—भवदुक्तनिन्दायामिति वा ।

[1] तत्–ङ. च. [2] विविधा नराः–ङ. [3] विस्रब्धांश्चाप्यविस्रब्धान् विनिघ्नन्ति तथैव च–ङ.

प्रमत्तानप्रमत्तान् वा नरा *[1] मांसार्थिनो भृशम् ।
विध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते ॥ ४० ॥

न मे तत्रेति । यथोक्तरूपवध इत्यर्थः । मनस्ताप इति । कथमेवं कृतवानस्मि इति पश्चात्तापः । मन्युः—शोकः । कुतो नेत्यत्र, यथाप्राप्तानुष्ठानत्वादेवेत्याह—वागुराभिरित्यादि । कूटैः—छन्नश्वभ्रसंपादनोपशयस्नानादिनानाविधकृत्रिमोपायैः स्वयं प्रतिच्छन्ना वा भवन्ति, दृश्या वा भवन्ति । गृह्यमाणमृगैः अतिविष्ठितान्—सुप्रतिष्ठितान् ॥ ३८–४० ॥

यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः ।
तस्मात् त्वं निहतो †युद्धे मया बाणेन, वानर ।
अयुध्यन् प्रतियुध्यन् वा यस्मात् शाखामृगो ह्यसि[2] ॥४१॥

कुतो न दोषः ? इत्यत्र शिष्टाचारत्वादेवेत्याह—यान्तीत्यादि । मृगयां—प्रागुक्तरूपनानाप्रकारमृगवधयुक्तां उद्दिश्य राजर्षयः धर्मकोविदा एव यान्ति । प्रतियुध्यन्—अन्यं प्रति युध्यन् इत्यर्थः ॥ ४१ ॥

‡दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च ।
राजानः, वानरश्रेष्ठ ! प्रदातारो न संशयः ॥
तान् न हिंस्यान्न चाक्रोशेत् §नाक्षिपेत् नाप्रियं वदेत् ॥

---

*यद्यप्यत्र न मांसार्थिता, तथापि पराङ्मुखवधान्न दोष इति तात्पर्यम्-गो. †युद्धे—अन्येन साकं इति शेषः । अयुद्धे इति वा पदम् । मया साकं युद्धाभावेऽपि—इति वार्थः । मृगयायामिति वा ॥ ‡परपीडाकरो राज्ञां व्यापारः कुत इत्यत्र, व्रणचिकित्सान्यायेन सः श्रेयस्कर इत्याह—दुर्लभस्येति-गो. §नाक्षिपेत्—लोक्तिखण्डनं कुर्यात्-गो.

[1] मांसाशिनो-ङ. [2] एतदनन्तरं—तस्मात्त्वं निहतः पाप शरेण नतपर्वणा । गमिष्यसि च तान् लोकान् शक्रसूनो मनोरमान्—इत्यधिकं-झ.



शुभस्य—ऐहिकैश्वर्याभ्युदयस्येत्यर्थः । तान् न हिंस्यादिति । रणव्यतिरिक्तदेशकालयोरित्यर्थः । आक्रोशः—निन्दा । आक्षेपः—अवमाननम् । अप्रियवादः—प्रतिकूलवचनम् ॥ ४२ ॥

देवा [1] मनुष्यरूपेण चरन्त्येते* महीतले ।
त्वं तु धर्ममविज्ञाय केवलं रोषमास्थितः ॥ ४३ ॥
†[2] विदूषयसि मां धर्मे पितृपैतामहे स्थितम् ।
एवमुक्तस्तु रामेण वाली [3] प्रव्यथितो भृशम् ॥ ४४ ॥
‡ न दोषं राघवे दध्यौ [4] धर्मेऽधिगतनिश्चयः ॥ ४५ ॥

भृशं प्रव्यथितः—कारणं—न दोषं राघवे वेदेति । दध्याविति रामोपदिष्टं धर्ममेवेति शेषः । धर्मेऽधिगतनिश्चयः इति । भगवद्वचनादेवेति शेषः ॥ ४४–४५ ॥

---

*एते—पूर्वोक्ता राजानः-गो. †नन्वेवमपि कथञ्चित्परिहार्यं 'वरतनुहतिं, वालिद्रोहं, मनागपसर्पणं' इत्याद्यपवादकरं छन्नवेधनं समर्थोऽपि किमर्थं कृतवान्—तदवहितमनाः शृणु—'यदि रामः वालिनः पुरतस्तिष्ठेत्, तदा विदिततदीयप्रभावतया वाली प्रह्वो भवेत् । तदा तद्वधो न युक्तः । प्रतिज्ञा च व्याहन्येत । तद्द्वारा तन्मित्रं रावणोऽपि शरणं व्रजेत् । देवकार्यं च लुप्येत' । अतः प्रच्छन्नो वालिनमवधीत्-गो. 'मालामुत्सृज्य काञ्चनीम् । पित्रा दत्तां महेन्द्रेण' (11–39), 'इमां च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीम्' (22–16) इति श्लोकाभ्यां उत्तरकाण्डीयप्रक्षिप्तसर्गकथासूचनात्—वालिनाऽभिमुखयुद्धकरणे राम एव क्षीणो भवेत् । रावणवधस्तु वालिनि जीवति न संभवेत् । अतः रावणवधरूपमहाधर्मसिद्ध्यर्थं प्रच्छन्नवधः कर्तव्य आसीदिति केचित् ॥ ‡'देवा मनुष्यरूपेण' इत्यादिवाक्यश्रवणसमनन्तरं दैवानुग्रहवशात् वालिनः 'सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः' इत्युक्तः धर्मः परिचितोऽभूदिति ज्ञायते । अत एवात्रापि 'धर्मेऽधिगतनिश्चयः' इत्युच्यते । एवं सूक्ष्मधर्मपरिचयवतामेव वालिवधस्य धर्मत्वं ज्ञातुं शक्यमिति संप्रदायः । अयमर्थः 'वालिनं व्यक्तदर्शनम्' (६० श्लो.) इत्यनेनापि स्पष्टः ॥

[1] मानुष-च. ञ. [2] प्रदूष-ङ. [3] प्रमथितो-च. [4] धर्मार्थकृत-ङ.

प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वरः ।
यत् त्वमात्थ, नरश्रेष्ठ! [1]तदेवं नात्र संशयः ॥ ४६ ॥
प्रतिवक्तुं प्रकृष्टे हि नाप्रकृष्टस्तु शक्नुयात् ॥ ४७ ॥

प्रकृष्टे—प्रकृष्टधर्मज्ञानैश्वर्ये । न शक्नुयादिति । मादृश इति शेषः ॥ ४७ ॥

[2]तदयुक्तं मया पूर्वं प्रमादादुक्तमप्रियम् ।
तत्रापि खलु मे [3]दोषं कर्तुं नार्हसि, राघव! ॥ ४८ ॥

यदप्रियमुक्तं, तदयुक्तमेवेत्यन्वयः । तत्रापि—अज्ञानजाप्रियोक्तौ । दोषं कर्तुं—अधिकर्तुं—भावयितुमित्यर्थः ॥ ४८ ॥

त्वं हि दृष्टार्थतत्त्वज्ञः प्रजानां च हिते रतः ।
*कार्यकारण[4]सिद्धौ ते प्रसन्ना बुद्धिरव्यया ॥ ४९ ॥

तत्र हेतुः—त्वं हीत्यादि । दृष्टेन—अपरोक्षानुभवेनैव आत्मानात्मसर्वार्थतत्त्वं जानासीति तथा । सिद्धिः—निश्चयः । कार्यं—स्वर्निरयादिः । कारणं—पुण्यपापादिः ॥ ४९ ॥

†[5]मामप्यवगतं धर्मात् व्यतिक्रान्तपुरस्कृतम् ।
धर्मसंहितया वाचा, धर्मज्ञ! परिपालय[6] ॥ ५० ॥

* कार्यं—दण्डनं, कारणं—तद्धेतुभूतं पापं—गो. † अवगतं—त्वां प्राप्तं—रा. अगतधर्माणं (पा.)—कृत्याकरणवन्तं, व्यतिक्रान्तपुरस्कृतं—पुरस्कृतव्यतिक्रमं—अकृत्यकारिणं—गो.

[1] तत्तथैव न—ख. [2] यद—च. [3] रोषं—ङ. [4] शुद्धौ—च. ङ. [5] मामप्यगतधर्माणं—ङ. [6] एतदनन्तरं—बाष्पसंरुद्धकण्ठस्तु वाली सार्तस्वरं शनैः । उवाच रामं संप्रेक्ष्य पङ्कलग्न इव द्विपः—इत्यधिकं—ङ.



मामित्यादि । धर्मात् व्यतिक्रान्तानां पुरस्कृतं—अग्रेसरं, अलुक् छान्दसः । तथा अवगतं मामपि—परमपापिनमपि धर्मसंहितया वाचा परिपालय—अनुगृहाण ॥ ५० ॥

न त्वात्मानमहं शोचे न तारां न च बान्धवान् ।
यथा पुत्रं [1]गुणश्रेष्ठं अङ्गदं कनकाङ्गदम् ॥ ५१ ॥
स ममादर्शनाद्दीनः बाल्यात्प्रभृति लालितः ।
तटाक इव *पीताम्बुः [2]उपशोषं गमिष्यति ॥ ५२ ॥

पीताम्बुः तटाकः इति । 'तस्मादद्यमानाः पीयमाना आपो न क्षीयन्ते' इति श्रुतेः यद्यपि पानमात्रादुपशोषो न समस्ति, अथापि तस्याशुरयोजितमेव पीत(त्व)शब्देन विवक्ष्यत इत्यदोषः ॥ ५२ ॥

बालश्चाकृतबुद्धिश्च एकपुत्रश्च मे प्रियः ।
तारेयः, राम! भवता रक्षणीयो [3]महाबलः ॥ ५३ ॥

तारेयः, 'स्त्रीभ्यो ढक्' ॥ ५३ ॥

†सुग्रीवे चाङ्गदे चैव विधत्स्व मतिमुत्तमाम् ।
त्वं हि शास्ता च गोप्ता च कार्याकार्यविधौ स्थितः ॥५४॥

उत्तमां मतिमिति । 'मरणान्तानि वैराणि' इति न्यायेन सुग्रीवेऽपि भ्रातृप्रेमाप्त्या सुग्रीवेऽपि अनुग्रहबुद्धिप्रकाशनम् ॥ ५४ ॥

या ते, नरपते! वृत्तिः भरते लक्ष्मणे च या ।
सुग्रीवे चाङ्गदे, राजन्! तां [4]त्वमाधातुमर्हसि ॥ ५५ ॥

या ते इति पदम् ॥ ५५ ॥

* पीताम्बुः—सूर्यकिरणशोषितजलः—रा. † सुग्रीवमदेव सोऽपि मन्तव्यस्त्वयेति भावः ।

[1] गुणज्येष्ठं—ख. [2] ह्रदशोषं—ङ. [3] महाबल—ङ. [4] विन्दयितु—च. ज.

* मद्दोषकृतदोषां तां यथा तारां तपस्विनीम् ।
सुग्रीवो [1]नावमन्येत तथाऽवस्थातुमर्हसि ॥
त्वया ह्यनुगृहीतेन राज्यं शक्यमुपासितुम् ॥ ५६ ॥

मद्दोषकृतदोषां—मत्कृतसुग्रीवापकारदोषानुसरणमात्रेण कृतदोषां, न तु स्वतोऽपकारसहितामित्यर्थः । तपस्विनीं—शोच्याम् । अवस्थातुं—अवस्थापयितुम् ॥ ५६ ॥

त्वद्वशे वर्तमानेन तव चित्तानुवर्तिना ।
शक्यं दिवं चार्जयितुं वसुधां चापि [2]शासितुम् ॥ ५७ ॥

राज्यमिति । वानरराज्यमित्यर्थः । शक्यं दिवमिति । तेन द्यौश्चाप्यार्जयितु शक्येति यावत् । तथाऽग्रेऽपि ॥ ५७ ॥

† त्वत्तोऽहं वधमाकांक्षन् वार्यमाणोऽपि तारया ।
सुग्रीवेण सह भ्रात्रा द्वन्द्वयुद्धमुपागतः ॥ ५८ ॥
इत्युक्त्वा [3]सन्नतो रामं विरराम हरीश्वरः ॥ ५९ ॥

अहं त्वत्तः वधमाकांक्षन्निति । इदानीं त्वदुपदेशतः पापक्षयाय त्वत्तो वधमेवापेक्षमाणः, तत्सिद्धये तारया वार्यमाणोऽपि दैवगत्या भ्रात्रा द्वन्द्वयुद्धमुपागतः—प्राप्तवान् । अतो दैवगत्या कृतार्थोऽस्मीति मथितार्थोपसंहारः ॥ ५९ ॥

---

* मद्दोषकृत एव दोषः यस्याः—रा. † आकांक्षन्—आकांक्षमाण इव—गो. 'त्वत्तोऽहं वधमाकांक्षन्' इति, स्वभाग्यस्य सूचनमुच्यते प्रकृतधर्मपरिचयदृष्ट्या । अथवा एतदर्थमेवाहमुपागतः —इति लोकवत् काकुः इति केचित् ।

[1] नाभिमन्येत—ङ. [2] शाश्वतीम्—ङ. [3] वानरो—च.



स तमाश्वासयद्रामः वालिनं व्यक्त[1]दर्शनम् ।
[2]सामसंपन्नया वाचा धर्म[3]तत्त्वार्थयुक्तया ॥
न संतापस्त्वया कार्यः एतदर्थं, प्लवङ्गम ! ॥ ६० ॥

व्यक्तदर्शनं—उद्बुद्धबोधम् ॥ ६० ॥

न वयं भवता चिन्त्याः [4]नाप्यात्मा, हरिसत्तम !
वयं *भवद्विशेषेण धर्मतः कृतनिश्चयाः ॥ ६१ ॥

वयं न चिन्त्याः, अन्यायकारित्वेनेति शेषः । नाप्यात्मा—त्वदात्माऽपि हतार्थतया न चिन्त्य इत्यनुकर्षः । तत्र हेतुमाह—वयमित्यादि । धर्मतः—धर्ममार्गेणैव कृतनिश्चयाः—कृते—वृत्ते—वध्यघातकत्वरूपे व्यापारे निश्चयः येषामस्माकं, ते वयं तथा ॥ ६१ ॥

दण्ड्ये यः पातयेत् दण्डं दण्ड्यो यश्चापि दण्ड्यते ।
† कार्यकारणसिद्धार्थौ उभौ तौ नावसीदतः ॥ ६२ ॥

उक्त एवार्थः स्मृत्युपन्यासेन स्थिरीक्रियते—दण्ड्ये—इत्यादि । कार्यत्वेन–कृतिविषयत्वेन, कारणत्वेन–प्रकृतिप्रवर्तकत्वेन सिद्धोऽर्थः–परलोकप्रयोजनं ययोः तौ तथा ॥ ६२ ॥

---

* भवद्विशेषेण—भवद्विषयकप्रीत्यतिशयेन—रा. त्वदपेक्षया विशेषेण—विशेषत्वेन—ति. भवतः कृत्यविशेषेण हेतुना—गो. भवदविषयकस्नेहेन क्रियन्तं वालिनं सान्त्वयति । एतद्विषये वयं न चिन्त्याः—शंक्याः, नापि त्वं, यतः वयं भवद्विशेषेण—भवतोऽप्यतिशयेन धर्मे कृतनिश्चयाः । अतः कुत्रापि विषये तव चिन्ता माऽस्तु—इति केचित् । † कार्यकारणसिद्धार्थौ—दण्ड्यदण्डयितृत्वाभ्यां निष्पन्नप्रयोजनौ—गो.

[1] विक्रमम्, दर्शनः—ङ. [2] साधुसम्मतया—च. [3] हेत्वर्थं—ङ. [4] नापि त्वं—ङ.

तद्भवान् दण्डसंयोगात् अस्माद्विगत[1]कल्मषः ।
गतः स्वां प्रकृतिं धर्म्यां [2]धर्मदृष्टेन वर्त्मना ॥ ६३ ॥

यदेवं, तत्—तस्मात्—भवानित्यादि ॥ ६३ ॥

त्यज *शोकं च मोहं च [3]भयं च हृदये स्थितम् ।
त्वया †विधानं, हर्यग्र्य! न शक्यमतिवर्तितुम् ॥ ६४ ॥

हृदये स्थितं भयमिति । अस्मद्दूषणनिमित्तं परलोकभयमित्यर्थः । विधानं—प्राग्भवीयकर्म ॥ ६४ ॥

यथा त्वय्यङ्गदो नित्यं वर्तते, वानरेश्वर !
तथा वर्तेत सुग्रीवे मयि चापि न संशयः ॥ ६५ ॥

‡स तस्य वाक्यं मधुरं महात्मनः
समाहितं धर्मपथानु[4]वर्तिनः ।
निशम्य रामस्य रणावमर्दिनः
वचः [5]सुयुक्तं निजगाद वानरः ॥ ६६ ॥

तस्य वाक्यमिति । पुत्रपालनप्रतिपादकमित्यर्थः ॥ ६६ ॥

शराभितप्तेन विचेतसा मया
[6]प्रदूषितस्त्वं यदजानता, [7]प्रभो!

* शोकभयादि ताराऽङ्गदविषयकमपि । † विधानं—विधिः, प्रारब्धं कर्मेति यावत्—गो. ‡ उक्तमर्थं सर्गान्ते श्लोकाभ्यां संगृह्णाति—स तस्येति—गो.

[1] किल्बिषः—ङ. [2] दण्डदिष्टेन—च. [3] मन्युं—ङ. [4] वर्तिनम्. [5] सुयुक्तं—ङ. [6] प्रबाधित—च. [7] विभो—च.



इदं महेन्द्रोपम [1]भीमविक्रम !
प्रसादितस्त्वं क्षम मे, [2]नरेश्वर ! ॥ ६७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे अष्टादशः सर्गः

इदमिति । आग इत्यर्थः । छन्नतया वधे दोषाभावस्य भगवतैव समर्थितत्वात् कार्यसौकर्याच्च तथा वधः इत्यपि ध्येयम् । सप्त(६७)मानः सर्गः ॥ ६७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे अष्टादशः सर्गः

## एकोनविंशः सर्गः

[ताराऽऽगमनम्]

*स [3]वानरमहाराजः शयानः शर[4]विक्षतः ।
प्रत्युक्तो हेतुमिर्वाक्यैः नोत्तरं [5]प्रत्यपद्यत ॥ १ ॥

अथ श्रुतवृत्तान्तायाः तारायाः वालिसमीपागमनम् । स वानर इत्यादि । अनेन वृत्तानुवादः । हेतुभिः—हेतूपन्यासोपेतैः वाक्यैः प्रत्युक्तः—उक्तप्रत्युत्तरः ॥ १ ॥

†अश्मभिः प्रविभिन्नाङ्गः पादपैराहतो भृशम् ।
रामबाणेन चाक्रान्तः जीवितान्ते मुमोह सः ॥ २ ॥

मुमोह—विसंज्ञोऽभूत् ॥ २ ॥

* वृत्तवृत्तान्तानुवादः—स वानरेत्यादि । नोत्तरं प्रत्यपद्यत—रामोक्तार्थमङ्गीकृतवानित्यर्थः । † अश्मभिः—सुग्रीवप्रक्षिप्तैरिति शेषः । एवं पादपैरित्यत्रापि ।

[1] वीर्यविक्रम—ङ. [2] महीश्वर—ङ., महेश्वर—च. [3] वानरो महातेजाः—ङ. [4] पीडितः—च. ञ. [5] प्रतिपद्यते—च.

तं भार्या बाणमोक्षेण [1]रामदत्तेन संयुगे ।
हतं प्लवगशार्दूलं तारा शुश्राव वालिनम् ॥ ३ ॥
सा सपुत्राऽप्रियं श्रुत्वा वधं भर्तुः सुदारुणम् ।
निष्पपात भृशं [2]त्रस्ता *विविधाद् गिरिगह्वरात् ॥ ४ ॥

अप्रियमिति पदम् । सपुत्रा—अङ्गदसहिता । गिरिगह्वरात्—किष्किन्धाख्यात् पुरान्तर्वर्तिनः ॥ ४ ॥

ये त्वङ्गदपरीवाराः वानरा भीमविक्रमाः ।
ते सकार्मुकमालोक्य रामं त्रस्ताः प्रदुद्रुवुः ॥ ५ ॥
सा ददर्श ततस्त्रस्तान् हरीनापततो [3]भृशम् ।
यूथादिव परिभ्रष्टान् मृगान् निहतयूथपान् ॥ ६ ॥

सा—तारा । आपतत इति । आसमन्तात् पलायमानान् इत्यर्थः ॥ ६ ॥

तानुवाच समासाद्य दुःखितान् दुःखिता सती ।
†रामवित्रासितान् सर्वान् अनुबद्धानिवेषुभिः ॥ ७ ॥

दुःखितान् वानरान् इषुभिः अनुबद्धान्—अनुसृतानिव रामवित्रासितान्—स्वार्थे णिः, रामाद्वित्रस्तान् उवाच ॥ ७ ॥

वानराः! राजसिंहस्य यस्य यूयं पुरस्सराः ।
तं विहाय सुसंत्रस्ताः ‡कस्मात् द्रवथ दुर्गताः ॥ ८ ॥

---

* विविधात्—नानाकक्ष्यात्–गो. † रामेण स्वरूपत एव प्रापितभयानिति वा । ‡ दुर्गताः—अगतिकाः–गो. वस्त्रादिकमपश्यन्तः–ति. 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः । कस्मात् द्रवथ—सुग्रीवसेवयैव भवतां जीवनसंभवादिति केचित् । दायादिनोस्तयोः राज्यनिमित्तवैरेणान्यतरः निहतश्चेत्, भवतां हननस्य का प्रसक्तिरिति वा ॥

[1] रामहस्तेन–ङ. [2] तस्मादुद्विग्ना गिरिकन्दरात्–च. [3] द्रुतम्–च.



राज्यहेतोः स चेत् भ्राता भ्रात्रा [1]रौद्रेण पातितः ।
रामेण प्रहितै [2]रौद्रैः मार्गणैर्दूरपातिभिः ॥ ९ ॥

किमुवाचेत्यतः—वानरा इत्यादि । यस्येति वालिन इत्यर्थः । दुर्गताः—दुर्बुद्धिं गताः कस्मात् द्रवथ? पलायनस्य दुर्बुद्धिमूलत्वमेव दर्शयति—राज्यहेतोरित्यादि । रामेण दूरात् स्थित्वा प्रेषितैः—विसृष्टैः दूरपातिभिः—अतिदूरस्थितलक्ष्यमपि पातयद्भिः, ण्यन्तात् णिनिः, मार्गणैः भ्रात्रा राज्यहेतोः स च भ्राता पातितश्चेत्, युष्माभिः किं पलाय्यते ॥ ९ ॥

कपिपत्न्या वचः श्रुत्वा कपयः कामरूपिणः ।
प्राप्तकाल[3]मविक्लिष्टं ऊचुर्वचनमङ्गनाम् ॥ १० ॥

प्राप्तकालं—कालोचितम् । अविक्लिष्टं—व्यक्तम् ॥ १० ॥

*जीवपुत्रे! निवर्तस्व पुत्रं रक्षस्व चाङ्गदम् ।
अन्तको रामरूपेण हत्वा नयति वालिनम् ॥ ११ ॥

पुत्रं रक्षस्वेति । रामादिति शेषः । कुतः पुत्रस्य भयम्? इत्यत आह—अन्तक इति । नयतीति । यममिति शेषः ॥ ११ ॥

क्षिप्तान् वृक्षान् समाविध्य विपुलाश्च शिलास्तथा ।
वाली वज्रसमैर्बाणैः [4]रामेण विनिपातितः ॥ १२ ॥

वृक्षान् क्षिप्त्वा विपुलाश्च शिलाः समाविध्य, वालिप्रहितानिति शेषः, वाली वज्रसमैः बाणैः वज्रेणेव निपातितो रामेण । अत्र—पुरान्तः वालिवधं श्रुतवत्याः तारायाः तद्वार्तिवानराणां च,

---

* अपुत्रायाः खलु मृतभर्त्रनुगमनमिति भावः–गो.

[1] क्रूरेण–ङ. [2] दूरात्–ङ. [3] मविक्लिष्टं–च. [4] इन्द्रेणेव निपातितः–ङ.

वालिरामयोः युद्धं, तत्र पादपप्रक्षेपादिकं, तदर्थं रामेण बहुबाणमोक्षणं च केवलं उत्नीयवादः ॥ १२ ॥

*[1] अभिद्रुतमिदं सर्वं विद्रुतं [2] वानरं बलम् ।
अस्मिन् प्लवगशार्दूले हते शक्रसमप्रभे ॥ १३ ॥

वानराणामिदं—वानरम् ॥ १३ ॥

रक्ष्यतां [3] नगरद्वारं अङ्गदश्चाभिषिच्यताम् ।
पदस्थं वालिनः पुत्रं भजिष्यन्ति प्लवङ्गमाः ॥ १४ ॥

पदस्थं—वानरपदस्थं वालिनः पुत्रं—अङ्गदं भजिष्यन्ति । अन्यथाऽराजकेऽत्रास्माभिः अवस्थातुं अशक्यमिति भावः ॥ १४ ॥

† अथवा [4] रुचितं स्थानं इह ते, रुचिरानने !
आविशन्ति हि दुर्गाणि क्षिप्र[5]मन्यानि वानराः ॥ १५ ॥

[6] अभार्याश्च ‡ सभार्याश्च सन्त्यत्र वनचारिणः ।
§ लुब्धेभ्यो [7] विप्रलब्धेभ्यः तेभ्यो [8] नस्तुमुलं भयम् ॥१६॥

---

* विद्रुतं—पूर्वं किष्किन्धातो निर्गतं इदं बलं प्रसृतं—प्रकीर्णं सत् अभिद्रुतं—किष्किन्धाभिमुख्येन द्रुतम्-गो. प्रथमतः रामदर्शनमात्रेणैव विद्रुतं, वालिनो वधे अभितो द्रुतं इति वा । अत एवानन्तरश्लोकाञ्जस्यमपि । † ते इह—किष्किन्धायां स्थानं-अवस्थानं अरुचितं—अनभिमतं—अत्र स्थातुं अस्माकं न रोचत इत्यर्थः-गो. अरुचितं-अनर्हमिति वा । यद्वा भवत्यापि बहिर्न गन्तव्यम् । इह—एतस्मिन् सुरक्षितस्थाने स्थानं—अवस्थितिः रुचितं—समीचीनम् । यतः अभिद्रुताः वानराः दुर्गाणि सुरक्षितस्थानानि स्वयमेव क्षिप्रमाविशन्ति । अतः भवत्याः एतेषां प्रत्यवस्थानाय 'रुमामाद्रुवथ दुर्गताः' इत्येवंरीत्या भ्रमो माऽस्तु इत्यर्थः । समनन्तरश्लोका द्रष्टव्याः ॥ ‡ सभार्याः—समानभार्याः, साधारणभार्या इत्यर्थः-गो. § लुब्धेभ्यः – साधारणभार्यान्तराभिलाषिभ्यः-गो. राज्यलुब्धेभ्यः-ति. अस्मद्वधाकांक्षिभ्यः-रा.

[1] अभिभूत-च. ज. [2] प्रसृतं-ङ. [3] नगरं शूरैः-ङ. [4] ऽरुचितं-ङ. [5] मद्यैव-ङ. च. [6] अभार्यास्सहभार्याश्च-च.ज. [7] विप्रयुक्तेभ्यः-ङ. [8] नस्सुमहद-च.



अथ अभिषिक्तेनाप्यङ्गदेन इह किष्किन्धायां अस्माकं परिपालनं अशक्यं, सरामे सुग्रीवे किष्किन्धां आगच्छतीत्याहुः—अथवेत्यादि । अथवा, अङ्गदावलम्बनेन इहावस्थानमपि अयुक्तमेवेति शेषः । कुत इत्यतः—रुचितमित्यादि । हे रुचिरानने! ते रुचितं—'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी; तवाभीष्टमिदं स्थानं, इह विद्यमानानि दुर्गाणि च अद्यैव क्षिप्रं वानराः—सुग्रीवहनुमदादयः आगमिष्यन्ति । तेषु आगतेषु अत्र ये अभार्याः सभार्याश्च वनचारिणः सन्ति प्रागस्माभिः कृतवैराः, ते च क्षिप्रं आविशन्ति । वर्तमानसामीप्ये लट् । ततश्च लुब्धेभ्यः—रन्ध्रान्वेषिभ्यः, अस्माभिः पूर्वं विप्रलब्धेभ्यः—वञ्चितेभ्यः स्वेभ्यः—स्वीयेभ्य एव सुग्रीवादिभ्यः नः सर्वेषां भवत्याश्च सपुत्रायाः तुमुलं—निबिडं महत् भयं अस्त्येव । अत्र * यद्वातद्वाभट्टाः अरुचितमिति पदं छित्वा द्विरर्थाय अक्लिन्दन्; तदरुचितमेव । अत्र विप्रलब्धेभ्यः इति पाङ्कः पाठः ॥ १६ ॥

†[1] अवान्तरगतानां तु श्रुत्वा वचनमङ्गना ।
आत्मनः प्रतिरूपं सा बभाषे चारुहासिनी ॥ १७ ॥

अथ पत्यौ हते तत्कालोचितमेव वचनं तारा ब्रूत इत्याह—अवान्तरेत्यादि । अवान्तरगतानां—मध्येमार्गं आगतानां तेषां वानराणां वचनं श्रुत्वा आत्मनः प्रतिरूपं—स्वस्याः तत्कालोचितम् ॥

पुत्रेण मम किं कार्यं किं राज्येन किमात्मना ।
कपिसिंहे महाभागे तस्मिन् भर्तरि नश्यति ॥ १८ ॥

---

* गोविन्दराजः । † अवान्तरगतानां—नातिदूरवर्तिनाम्-ति. संभाषणाय कियन्मात्रमवकाशं प्राप्तानाम् । यद्वा आन्तरं—बुद्धिः, अल्पबुद्धीनां-गो.

[1] अल्पान्तर-ङ.

पादमूलं गमिष्यामि तस्यैवाहं महात्मनः ।
योऽसौ रामप्रयुक्तेन शरेण विनिपातितः ॥ १९ ॥

एवमुक्त्वा प्रदुद्राव रुदन्ती शोक[1]कर्शिता ।
शिरश्चोरश्च बाहुभ्यां दुःखेन समभिघ्नती ॥ २० ॥

[2]आव्रजन्ती ददर्शाथ पतिं निपतितं भुवि ।
हन्तारं दानवेन्द्राणां समरेष्वनिवर्तिनाम् ॥ २१ ॥

क्षेप्तारं पर्वतेन्द्राणां वज्राणामिव वासवम् ।
[3]महाबलसमाविष्टं महामेघौघनिःस्वनम् ॥ २२ ॥

क्षेप्तारं पर्वतेन्द्राणामिति । रणेष्विति शेषः । तत्र दृष्टान्तः—वज्राणामिव वासवमिति । रणभेदापेक्षया वज्राणामिति प्रयोगः । महता— वातेन बलेन समाविष्टं—आक्रान्तम् ॥ २२ ॥

शक्रतुल्यपराक्रान्तं वृष्ट्वेवोपरतं घनम् ।
नर्दन्तं नर्दतां भीमं शूरं शूरेण पातितम् ॥
*शार्दूलेनामिषस्यार्थे मृगराजं यथा हतम् ॥ २३ ॥

पराक्रान्तः—पराक्रमः । वृष्ट्वा—जलमुत्सृज्य । रणे नर्दतामपि भीमं नर्दन्तम् । मृगराजं—मृगश्रेष्ठं, प्रभूतमांसरुधिरत्वेन श्रेष्ठम् । अत एवाह—आमिषस्यार्थे इति । अत्र शार्दूलः तरक्षुरेव । †अन्यस्तु सिंह इत्युक्त्वा मृगराजशब्देन पौनरुक्त्यं मोहात् प्रालपत् ॥ २३ ॥

---

* शार्दूलेन—सिंहेन, 'सिंहो मृगेन्द्रः पञ्चास्यः हर्यक्षः श्वेतपिङ्गलः । व्यादीर्णास्यो महानादः शार्दूलोऽतुलविक्रमः ' इति वैजयन्ती । यद्वा असंभावितत्वद्योतनाय शार्दूलहिंसितमिवेत्यभूतोपमा—ती. गो. मृगराजं—विपुलमांसवत्तया मृगश्रेष्ठं गजं—रा. † गोविन्दराजः ॥

[1] मूर्छिता—च. [2] आविशन्ती—ङ. [3] महावात—ङ.



*अर्चितं सर्वलोकस्य सपताकं सवेदिकम् ।
नागहेतोः सुपर्णेन चैत्यमुन्माथितं यथा ॥ २४ ॥

अर्चितमित्यादि । सर्वलोकस्य—सर्वलोकेन अर्चितं, उच्यमानविशेषणं चैत्यं—चतुष्पथवर्तिवल्मीकं नागहेतोः सुपर्णेन यथा उन्माथितं भवति, तद्वत् सुग्रीवप्रयोजनहेतोः रामेण उन्माथितमित्यर्थः । अत्र सुपर्णेन नागेभ्यः चैत्यदत्तबलिभोजनार्थं चैत्योन्माथः इति परः† । अयं तु 'बलिहेतोः सुपर्णेन' इति यदि पाठः स्यात् तदा युज्येत । नैतदस्ति ॥ २४ ॥

अवष्टभ्य च तिष्ठन्तं ददर्श धनुरुत्तमम् ।
रामं रामानुजं चैव भर्तुश्चैवानुजं शुभा ॥ २५ ॥

‡तानतीत्य समासाद्य भर्तारं निहतं रणे ।
समीक्ष्य व्यथिता भूमौ संभ्रान्ता निपपात ह ॥ २६ ॥

तानतीत्य समासाद्येत्यनेन ते मार्गस्थिता इति गम्यते ॥ २६ ॥

सुप्तेव पुनरुत्थाय आर्यपुत्रेति [1]क्रोशती ।
रुरोद [2]सा पतिं दृष्ट्वा [3]सन्दितं मृत्युदामभिः ॥ २७ ॥

सन्दितं—बद्धम् ॥ २७ ॥

---

* अत्र भागवताद्युक्तकालियनागप्रहरणवेलायां बलिस्थानं चैत्यमपि उन्मथितमित्यवगन्तव्यमित्याहुः(ती.)—गो. † गोविन्दराजः, तीर्थो वा । ‡ अतीत्येति नातिक्रम उच्यते, सर्वेषां समीपस्थत्वात् । किन्तु तत्र दोषबुद्धिमकृत्वेत्यर्थः—गो.

[1] शोचती—ङ. वादिनी—च. [2] पतितं—ङ. [3] स्यन्दितं—ङ.

तामवेक्ष्य तु सुग्रीवः क्रोशन्तीं कुररीमिव ।
विषादमगमत् कष्टं दृष्ट्वा चाङ्गदमागतम् ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकोनविंशः सर्गः

———

अमर(२८ १/२)मानः सर्गः ॥ २८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकोनविंशः सर्गः

———

## विंशः सर्गः

[ताराविलापः]

रामचापविसृष्टेन शरेणान्तकरेण तम् ।
दृष्ट्वा विनिहतं भूमौ तारा [1]ताराधिपानना ॥ १ ॥

अथ ताराप्रलापः । रामेत्यादि ॥ १ ॥

सा समासाद्य भर्तारं पर्यष्वजत भामिनी ।
इषुणाऽभिहतं दृष्ट्वा वालिनं कुञ्जरोपमम् ।
[2]वानरेन्द्रं [3]महेन्द्राभं शोक[4]संतप्तमानसा ॥ २ ॥
तारा तरुमिवोन्मूलं पर्यदेवयदातुरा ॥ ३ ॥

उन्मूलं—उत्पाटितम् ॥ ३ ॥

---

[1] तारतरस्वना—ङ. [2] वानरं पर्वतेन्द्राभं—च. [3] महाभागं—ङ. [4] संविग्नमानसा—संतापकर्शिता—ङ.



रणे दारुण विक्रान्त प्रवीर प्लवतां वर !
*किं दीना[1]मपुरोभागां अद्य त्वं नाभिभाषसे ॥ ४ ॥

प्लवतां—वानराणाम् । अपुरोभागाम् ; 'दोषैकदृक् पुरोभागी', त्वाद्विषये अपराधरहितामित्यर्थः ॥ ४ ॥

उत्तिष्ठ, हरिशार्दूल ! भजस्व शयनोत्तमम् ।
नैवंविधाः शेरते हि भूमौ नृपतिसत्तमाः ॥ ५ ॥
अतीव खलु ते कान्ता वसुधा, वसुधाधिप !
गतासुरपि यां गात्रैः मां विहाय निषेवसे ॥ ६ ॥
†व्यक्तमन्या त्वया, वीर ! धर्मतः [2]संप्रवर्तिता ।
किष्किन्धेव पुरी रम्या स्वर्गमार्गे विनिर्मिता ॥ ७ ॥

व्यक्तमित्यादि । हे वीर ! त्वया धर्मतः संप्रवर्तिता—परिरक्षिता किष्किन्धेव अन्याऽपि नगरी स्वर्गमार्गेऽपि व्यक्तं निर्मिता । नो चेत् कथं किष्किन्धां उपेक्षसे इति शेषः ॥ ७ ॥

यान्यस्माभिस्त्वया [3]सार्धं वनेषु मधुगन्धिषु ।
विहृतानि त्वया काले तेषामुपरमः कृतः ॥ ८ ॥

तेषामुपरमः इति । तेषां विहाराणां समाप्तिरित्यर्थः ॥ ८ ॥

---

*इदानीं पुरोभागां—एतस्मिन् काले कृतापराधां मत्वाऽद्य नाभिभाषसे किमित्यन्वयः—ति. पुरोभागां—अग्रे स्थितां—रा. अपुरोभागां—दोषदर्शनरहितां—गो.
†अत्र निर्मिता किष्किन्धेव अन्या पुरी स्वर्गमार्गे त्वया धर्मतः प्रवर्तिता । अतः खल्विमां त्यक्त्वा गन्तुमुद्यतोऽसीति भावः—गो. धर्मतः संप्रवर्तता—धर्मेण युद्धमाचरता त्वयाऽद्य स्वर्गमार्गे—स्वर्गसाधनरणभूमौ किष्किन्धेवान्या रम्या पुरी निर्मिता—ति. अत्र तिलके कतकोऽनूदितः ॥

[1] मनुरक्तां मां—ङ. मां पुरोभागां—झ. [2] संप्रवर्तता—ङ. च. [3] वीर—ङ.

*निरानन्दा निराशाऽहं निमग्ना शोकसागरे ।
त्वयि पञ्चत्वमापन्ने महायूथपयूथपे ॥ ९ ॥

हृदयं सुस्थिरं †मह्यं दृष्ट्वा विनिहतं पतिम् ।
यन्न शोकाभिसंतप्तं स्फुटतेऽद्य सहस्रधा ॥ १० ॥

विनिहतमिति । त्वामिति शेषः ॥ १० ॥

सुग्रीवस्य प्रिया भार्या हृता स च विवासितः ।
[1]यत्तु तस्य त्वया ‡व्युष्टिः प्राप्तेयं, प्लवगाधिप ! ॥११॥

विवासित इति यत्, तस्य कर्मणः इयं व्युष्टिः—परिपाकः प्राप्तः इत्यर्थः ॥ ११ ॥

निःश्रेयसपरा मोहात् त्वया चाहं विगर्हिता ।
यैषाऽब्रुवं हितं वाक्यं, वानरेन्द्र ! हितैषिणी ॥ १२ ॥

या एषा अब्रुवं, सा अहं त्वया मोहात् विगर्हिता । अस्वीकृतवचना कृतेति यावत् ॥ १२ ॥

रूपयौवनदृप्तानां §दक्षिणानां च, मानद !
नूनमप्सरसामार्य ! चित्तानि प्रमथिष्यसि ॥ १३ ॥

दक्षिणानां—समर्थानां चित्तानि प्रमथिष्यसीति, प्राप्तदिव्यदेहः अप्सरसां काममोहजननेनेति शेषः ॥ १३ ॥

कालो निःसंशयं नूनं जीवितान्तकरस्तव ।
बलाद्येनावपन्नोऽसि सुग्रीवस्यावशो [2]वशम् ॥ १४ ॥

---

*अत्र निरानन्दा, निराशा—कालान्तरे आनन्दो भविष्यतीत्याशारहिता–**गो.** †मह्यं–मम–**गो. ति. रा.** ‡व्युष्टिः—फलं, 'व्युष्टिः फले समृद्धौ च' इत्यमरः–**गो.** §दक्षिणानां—अनङ्गतन्त्रे कुशलानां–**गो.**

[1] यत्तस्य च–ङ. [2] वशी–ङ.



*[1]अस्थाने वालिनं हत्वा युध्यमानं परेण च ।
न संतप्यति काकुत्स्थः कृत्वा कर्म सुगर्हितम् ॥ १५ ॥

काल इति । प्राप्त इति शेषः । अवपन्नः—प्राप्तः ॥१४-१५॥

†वैधव्यं शोकसन्तापं [2]कृपणाऽकृपणा सती ।
अदुःखोपचिता पूर्वं वर्तयिष्याम्यनाथवत् ॥ १६ ॥

ललितश्चाङ्गदो वीरः सुकुमारः सुखोचितः ।
वत्स्यते कामवस्थां मे पितृव्ये क्रोधमूर्च्छिते ॥ १७ ॥

‡कुरुष्व पितरं, पुत्र ! सुदृष्टं धर्मवत्सलम् ।
दुर्लभं दर्शनं, वत्स ! तव तस्य भविष्यति ॥ १८ ॥

पितरं सुदृष्टं कुरुष्वेत्यन्वयः ॥ १८ ॥

समाश्वासय पुत्रं त्वं सन्देशं सन्दिशस्व च ।
मूर्ध्नि चैनं समाघ्राय प्रवासं प्रस्थितो ह्यसि ॥ १९ ॥

सन्देशं—कर्तव्योपदेशम् ॥ १९ ॥

रामेण हि महत्कर्म कृतं त्वामभिनिघ्नता ।
आनृण्यं च गतं तस्य सुग्रीवस्य प्रतिश्रवे § ॥ २० ॥

---

*तिलकेऽस्य व्याख्यातत्वात् प्रायः कतकस्याप्ययं संमतः स्यात् ॥ †अहं पूर्वं अदुःखोपचिता अकृपणा च सती संप्रति कृपणा भूत्वा वैधव्यंशोककृतसंतापं च वर्तयिष्यामि–धारयिष्यामि–**गो.** कृपणाकृपणा–अतिशयेन कृपणा, आबाधायां वा द्वित्वम्–**ति.** ‡अनेन तदानीमङ्गदः समागत इति द्योत्यते–**गो.** §प्रतिश्रवे–प्रतिज्ञाविषये । अनेन वालिवधविषयदोषाभावो ध्वनितः–**ति.** 'महत्कर्म' इति कथनात्—रामेण स्वप्रतिज्ञा दैवात् निर्वर्तिता—इत्याशयस्ताराया व्यज्यते ॥

[1] अयं श्लोकः कुण्डलितः–ङ. [2] कृपणं–ङ. [3] मे–च.

सकामो भव, सुग्रीव! रुमां त्वं प्रतिपत्स्यसे।
भुंक्ष्व राज्यमनुद्विग्नः [1] शस्तो भ्राता रिपुस्तव।
किं मामेवं विलपतीं [2] प्रेम्णा त्वं नाभिभाषसे ॥ २१॥

शस्तः—हिंसितः ॥ २१॥

* इमाः पश्य वरा [3] बह्वीः भार्यास्ते, वानरेश्वर!
तस्या विलपितं श्रुत्वा [4] वानर्यः सर्वतश्च ताः ॥ २२॥
परिगृह्याङ्गदं [5] दीनं दुःखार्ताः परिचुक्रुशुः ॥ २३॥

तस्याः विलपितं—तारायाः प्रलापम् ॥ २३॥

† किमङ्गदं साङ्गद वीरबाहो!
विहाय [6] यास्यद्य चिरप्रवासम्।
न युक्तमेवं गुणसंनिकृष्टं
विहाय पुत्रं [7] प्रियचारुवेषम् ॥ २४॥

किमङ्गदं साङ्गदेत्यादि। एवमेव संनिवेशक्रमः। सर्वतश्च अस्मद्व्याख्यानक्रमेणैव पाठसंनिवेशक्रमः सुस्पष्टः। वीरबाहो—वीरलालनीयबाहुः वीरबाहुः, मध्यमपदलोपी समासः। गुणैः सन्निकृष्टः—संयुक्तः इत्यर्थः। गुणैः तव प्रत्यासन्नः इति चार्थः। प्रियः चारुः वेषः यस्य स तथा। तं पुत्रमित्यन्वयः ॥ २४॥

---

* बह्वयः इमास्ते भार्याः पश्य, वाक्यस्य कर्मतयाऽन्वयान्न द्वितीया—रा.
† साङ्गदवीरबाहो—साङ्गदौ, वीरौ वीर्यवन्तौ बाहू यस्य—गो. साङ्गद—इति भिन्नं पदं वा।

[1] मृतो—ङ. [2] प्रियां त्वं—च. [3] बह्वयः—च. [4] वानर्याः—ङ.
[5] दीनाः—च. [6] यातोऽसि—ङ. [7] प्रियपुत्र गन्तुं—ङ.



[1] [किमप्रियं ते प्रियचारुवेष!
मया कृतं, नाथ! सुतेन वा ते!
सहाङ्गदां मां स विहाय, वीर!
यत् प्रस्थितो दीर्घमितः प्रवासम् ॥]

यद्यप्रियं किंचिदसंप्रधार्य
कृतं मया स्यात् तव, दीर्घबाहो!
क्षमस्व मे तत् हरिवंशनाथ!
व्रजामि मूर्ध्ना तव, वीर! पादौ ॥ २५॥

असंप्रधार्य—अविचार्य। हरिवंशानां—वानरसमूहानां नाथः तथा ॥ २५॥

तथा तु तारा करुणं रुदन्ती
भर्तुः समीपे सह वानरीभिः।
व्यवस्यत *[2] प्रायमुपोपवेष्टुं
अनिन्द्यवर्णा भुवि यत्र वाली † ॥ २६॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे विंशः सर्गः

---

ततः—तथा तु तारा इत्यादि। तरु(२६)मानः सर्गः ॥२६॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे विंशः सर्गः

---

* भुवि प्रायमुपोपवेष्टुं—प्रायोपवेशं कर्तुम्। † अत्र सर्गे श्लोकव्यत्यासो लेखककृतः—गो.

[1] च पुस्तके नास्ति। [2] प्रायमनिन्द्यवर्णा उपोपवेष्टुं—च.

## एकविंशः सर्गः

[ तारासमाश्वासनम् ]

ततो निपतितां तारां च्युतां तारामिवाम्बरात् ।
शनैराश्वासयामास हनुमान् हरियूथपः ॥ १ ॥

अथ हनुमता तारायाः आश्वासनम् । ततो निपतितामित्यादि ॥

*गुणदोषकृतं जन्तुः स्वकर्मफलहेतुकम् ।
अव्यग्रस्तदवाप्नोति [1] सर्वं प्रेत्य शुभाशुभम् ॥ २ ॥

गुणदोषेत्यादि । जन्तुः फलहेतुकं—स्वर्गादिफलसाधकं गुणदोषकृतं—शमादिगुणेन रागादिदोषेण वा कृतं यत् स्वकर्मास्ति, तस्य स्वं स्वं शुभाशुभं—शुभाशुभरूपं फलं प्रेत्य अव्यग्रः—अनाकुलः प्राप्नोति ॥ २ ॥

शोच्या शोचसि कं शोच्यं दीनं दीनाऽनुकम्पसे ।
कस्य को वाऽनुशोच्योऽस्ति देहेऽस्मिन् बुद्बुदोपमे † ॥ ३ ॥

शोच्येत्यादि । पापपुण्यकर्मपाशवशगत्वेन शोचनीया त्वं कमन्यं शोचसि ! कर्मवशगं भर्त्रादिकं कर्मफलवशतो दीना त्वं कमन्यं पुत्रादिकं अनुकम्पसे ? बुद्बुदोपमे अस्मिन् देहे अतीते कस्य कश्च अनुशोच्योऽस्ति ? कस्यापि विदुषः न कोऽपि शोकः इत्यर्थः ॥ ३ ॥

---

* जन्तुः गुणदोषकृतं—ज्ञानाज्ञानाभ्यां कृतं, स्वकर्मफलं—स्वकर्मवासना हेतुः यस्य तत्तथोक्तं, यत्कर्मास्ति । सुग्रीवेणायं मारित इति न मन्तव्यं, किन्तु स्वकर्मणैव हतः, निमित्तमात्रं सुग्रीव इति भावः—गो. † जलबुद्बुदवदस्थिरे देहे, निमित्तसप्तमी—गो.

[1] स्वयं—ङ.



अङ्गदस्तु कुमारोऽयं द्रष्टव्यो जीवपुत्रया ।
*[1] आयत्यां च विधेयानि † समर्थान्यस्य चिन्तय ॥ ४ ॥

अथ मृतशोकमुत्सृज्य जीवत्पुत्रमवलम्ब्य सुखीभवेत्याह—अङ्गदस्त्वित्यादि । द्रष्टव्य इति । शोकनिवृत्त्यर्थमिति शेषः । अतः परं मृतस्य उत्तरकाले यानि विधेयानि कार्याणि समर्थानि—उचितानि, त्वं तानि विचिन्तय ॥ ४ ॥

जानास्यनियतामेवं भूतानामागतिं गतिम् ।
तस्मात् शुभं हि कर्तव्यं [2] पण्डितेनेह लौकिकम् ‡ ॥ ५ ॥

जानासीति अभिज्ञावचने लट् । अनियतां—अव्यवस्थिताम् । हि—यस्मात् यदेवं, तस्मात् शुभं—परलोकसुखावहम्, सत्कर्मेत्यर्थः, 'पण्डितेनेह लौकिकं' इतिपाठः, इह—पतिपुत्रादिवियोगकाले लौकिकमपि शुभमेव कर्तव्यम् ॥ ५ ॥

यस्मिन् हरिसहस्राणि [3] प्रयुतान्यर्बुदानि च ।
वर्तयन्ति §[4] कृतांशानि सोऽयं दिष्टान्तमागतः ॥ ६ ॥

यस्मिन् इत्यादि । जीवतीति शेषः । कृतांशानीति । कृतभोग्यविभागानि भूत्वा वर्तयन्ति—जीवन्ति स्म, सोऽयं दिष्टान्तं—कल्पित‖कालान्तम् ॥ ६ ॥

---

* 'उत्तरः काल आयतिः' इत्यमरः ॥ † समर्थानि—हितानि—गो. ‡ शुभं—और्ध्वदैहिकम् । ऐहलौकिकं—रोदनादिकम्—गो. लौकिकं रोदनादिकमिव शुभं पारलौकिकमपि कर्तव्यम्—रा. इह—पतिपुत्रादिवियोगकाले न लौकिकं बहु रोदनादि कर्तव्यम् । प्रीतिमात्रबोधकतया मृतेष्टासाधनत्वेन च तस्य लौकिकत्वम्—ति. § कृतांशानि—कृतभोग्यांशानि—ति. ‖ 'कालो दिष्टोऽप्यनेहापि' इत्यमरः ॥

[1] आयत्या—च. [2] पण्डितेनैह—ङ. [3] प्रयुक्तान्य—च. [4] कृतांशानि—च.छ.

यदयं न्यायदृष्टार्थः सामदानक्षमापरः ।
गतो [1] धर्मजितां भूमिं नैनं शोचितुमर्हसि ॥ ७ ॥

यत्—यस्मात् न्यायेन—नीतिशास्त्रेण, दृष्टः अर्थः—राजकार्यं येन स तथा । सामदानक्षमापरः, मित्रेष्विति शेषः । तस्मात् अयं धर्मजितां—धर्मेण भूमिं जितवतां राज्ञां भूमिं—स्थानं गतः । अतो नैनं शोचितुमर्हसि ॥ ७ ॥

सर्वे हि हरिशार्दूलाः पुत्रश्चायं तवाङ्गदः ।
इदं हर्यृक्षराज्यं च त्वत्सनाथमनिन्दिते ॥ ८ ॥

इतश्च तव शोकार्हता नास्तीत्याह—सर्वे इत्यादि । त्वयैवैकया सनाथः-त्वत्सनाथः तथा ; यथार्हं विपरिणामः ॥ ८ ॥

ताविमौ [2] शोकसन्तप्तौ शनैः * प्रेरय, भामिनि ।
त्वया परिगृहीतोऽयं अङ्गदः शास्तु मेदिनीम् ॥ ९ ॥

ताविमाविति । सुग्रीवाङ्गदावित्यर्थः । शनैः प्रेरयेति । उत्तरकृत्यकरणायेति शेषः ॥ ९ ॥

संततिश्च † यथादृष्टा कृत्यं यच्चापि सांप्रतम् ।
राज्ञस्तत् क्रियतां [3] तावत् एष कालस्य निश्चयः ॥ १० ॥

यथादृष्टा सन्ततिश्चेति । अङ्गद इत्यर्थः । तेन यत् राज्ञः सांप्रतं सत्परलोकसाधुकृत्यमस्ति, तत् सर्वं क्रियताम् । एषः कालस्य निश्चयः—इदानींतनकालस्य उचितानुष्ठाननिश्चयः इत्यर्थः ॥ १० ॥

---

* प्रेरय-निवर्तस्व-गो. रा. † यथा—यथावत् दृष्टा—त्वया प्राप्ता—रा.
[1] धर्मकृतां-ङ. [2] शोकसन्तापौ-ङ [3] सर्वं -ज.



संस्कार्यो * हरिराजश्च अङ्गदश्चाभिषिच्यताम् ।
सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यसि ॥ ११ ॥

एषः इति कः ? इत्यपेक्षायामाह—संस्कार्य इत्यादि ॥ ११ ॥

सा तस्य वचनं श्रुत्वा भर्तृव्यसनपीडिता ।
अब्रवीदुत्तरं तारा हनुमन्तमवस्थितम् ॥ १२ ॥

अङ्गदप्रतिरूपाणां पुत्राणामेकतः शतम् ।
हतस्याप्यस्य वीरस्य गात्रसंश्लेषणं वरम् ॥ १३ ॥

अथ पुत्रेण सुखिनी भवेति यदुक्तं, तत् प्रत्याख्याति तारा—अङ्गदप्रतिरूपाणामित्यादि । तत्तुल्यानामित्यर्थः । पुत्राणां शतमेकतः इति । एकस्मिन् सुखसाधनकोटौ, अथ मृतस्याप्यस्य वीरस्य गात्रसंश्लेषणं परस्मिन् कोटौ, एवं सति तयोर्मध्ये हतस्यास्य गात्रसंश्लेषणं वरं सुखसाधनमित्यर्थः । परलोकपरमानन्दहेतुत्वादित्याशयः ॥ १३ ॥

न चाहं † [1] हरिराजस्य प्रभवाम्यङ्गदस्य वा ।
पितृव्यस्तस्य सुग्रीवः सर्वकार्येष्वनन्तरः ॥ १४ ॥

अथ राज्यं त्वदधीनमिति यदुक्तं तत् प्रत्याख्याति—न प्रभवामीति । योग्या न भवामि, स्त्रीत्वादित्याशयः । अङ्गदस्य च न प्रभवामि । राज्यप्रदान इति शेषः । कुतो नेत्यतः—पितृव्यस्तस्येत्यादि । अनन्तरः—प्रत्यासन्नः ॥ १४ ॥

---

* संस्कार्य इति । रामबाणस्यामोघान्मरणनिश्चयेनैवमुक्तिः-ति. अनन्तरसर्गस्थश्लोकटिप्पणी द्रष्टव्या ॥ † हरिराजस्य, संस्कारायेति शेषः-रा. गो.

[1] राजसिंहस्य-ज.

न ह्येषा बुद्धिरास्थेया, हनुमन्! अङ्गदं प्रति ।
पिता हि बन्धुः पुत्रस्य न माता, हरिसत्तम! ॥ १५ ॥

एषा बुद्धिरिति । अङ्गदस्याभिषेकबुद्धिरित्यर्थः । कुतः इत्यतः—पिता हीत्यादि ॥ १५ ॥

न हि मम हरिराजसंश्रयात्
क्षमतरमस्ति परत्र चेह वा ।
अभिमुखहरिवीरसेवितं
शयनमिदं मम सेवितुं क्षमम् ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकविंशः सर्गः

अभिमुखं—अपरोक्षं हरिवीरेण सेवितं तथा । चीय(१६)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकविंशः सर्गः

## द्वाविंशः सर्गः

[वाल्यनुशासनम्]

*वीक्षमाणस्तु मन्दासुः सर्वतो मन्दमुच्छ्वसन् ।
[1]आदावेव तु सुग्रीवं ददर्श [2]त्वात्मजाग्रतः ॥ १ ॥

अथ वालिना अनुजात्मजयोः हितोपदेशः । वीक्षमाण इत्यादि । सर्वतो वीक्षमाणः सः आत्मजस्याग्रतः स्थितं सुग्रीवमेवादौ ददर्श ॥१॥

* एतममोघरामशराभिघातेन मोहसमाविष्टं वालिनं मृतं निश्चित्य संस्कारादि-करणाय त्वरमाणे हनूमति दैवात् किञ्चित्समाश्वस्तो वाली कर्तव्यभागं नियच्छति द्वाविंशे—**गो.**

[1] आरादेव—ङ. [2] त्वात्मजं ततः—झ.



तं प्राप्तविजयं वाली सुग्रीवं [1]प्लवगेश्वरः ।
आभाष्य [2]व्यक्तया वाचा सस्नेहमिदमब्रवीत् ॥ २ ॥

आभाष्य । सुग्रीवेति संबोध्येत्यर्थः ॥ २ ॥

*सुग्रीव! दोषेण न मां गन्तुमर्हसि किल्बिषात् ।
कृष्यमाणं भविष्येण बुद्धिमोहेन मां बलात् ॥ ३ ॥

हे सुग्रीव! मां दोषेण—त्वदपकारदोषदुष्टत्वेन मां गन्तुं—अवगन्तुं नार्हसि । कथमित्यतः—किल्बिषादिति । प्राग्भवीयदुष्कृतवशात् । भविष्येण—भविष्यता इति यावत् । 'बुद्धिः कर्मानुसारिणी' इति न्यायेन भाविफलानुरोधेन अवश्यंभाविना बुद्धिमोहेन—भ्रातृवैरस्यादिदुर्बुद्ध्या बलादाकृष्यमाणं मां दोषेण गन्तुं–अवगन्तुं नार्हसि । हेतौ शानच् । यस्मादाकृष्यमाणोऽस्मि तस्मादित्यर्थः ॥ ३ ॥

युगपद्विहितं, तात! न मन्ये सुखमावयोः ।
सौहार्दं भ्रातृयुक्तं हि †तदिदं, [3]तात! नान्यथा ॥ ४ ॥

तदेव कर्मप्राबल्यं कार्यानुमितं दर्शयति—युगपदित्यादि । हे तात! आवयोः सुखं–राज्यसौख्यं भ्रातृयुक्तं–सोदरभ्रात्रोः युक्तमुचितं सौहार्दं च युगपत् न विहितं आवयोः कर्मणेति मन्ये । तत्–तस्मात् इदं युगपत् सौख्यं सौहार्दं च अन्यथा जातम् । विघटितमित्यर्थः ॥ ४ ॥

* किल्बिषात्–राज्यविवासनदारहरणरूपकिल्बिषाद्धेतोः मां दोषेण गन्तुं–दोषसहितं ज्ञातुं नार्हसि—**गो.** विधिवशादन्तिमदशायां विद्यमानोऽहं पूर्ववृत्तस्मरणेन सवैरं भवता नोपसर्पणीयः, किन्तु सर्वं विस्मृत्य भ्रातृस्नेहेनैवोपसर्पणीय इति भावः ।
† तदिदं दैवकृतं युगपदविधानं अन्यथा न हि—अन्यप्रकारं न हि भवति—**गो.**

[1] प्लवगेश्वरम्—ङ. [2] अव्यक्तया—ङ. [3] जातमन्यथा—च. झ.

*प्रतिपद्य त्वमद्यैव राज्यमेषां वनौकसाम् ।
मामप्यद्यैव गच्छन्तं विद्धि वैवस्वतक्षयम् ॥ ५ ॥

अथ रामशरक्षीणपापत्वतः प्राप्तदिव्यदेवप्रकृतित्वात् स्वयमेव सुग्रीवाय स्वानन्तरप्राप्तं राज्यं ददाति–प्रतिपद्येत्यादि । प्रतिपद्यस्वेति यावत् । वैवस्वतक्षयं—यमनिवासम् ॥ ५ ॥

जीवितं च हि राज्यं च श्रियं च विपुलामिमाम् ।
प्रजहाम्येष वै तूर्णं महच्चागर्हितं यशः ॥ ६ ॥

अगर्हितं—प्रशस्तं यशश्च—'वाली केनाप्यशक्यवधः' इत्येवंरूपं, तच्च प्रजहामि, एकेनैव शरेण रामेण हतत्वात् † ॥ ६ ॥

‡अस्यां त्वहमवस्थायां, वीर! वक्ष्यामि यद्वचः ।
यद्यप्यसुकरं, राजन्! कर्तुमेव तदर्हसि ॥ ७ ॥

अस्यामवस्थायां इति । चरमदशायामित्यर्थः । यद्वचः—अवश्यवक्तव्यमिति शेषः । यद्यप्यसुकरमिति । मया ते अत्यन्तमपकृतत्वादित्याशयः । अर्हस्येवेति योजना । सात्त्विकत्वात् सात्त्विकसमाश्रयाच्चेत्याशयः ॥ ७ ॥

सुखार्हं सुखसंवृद्धं [1]बालमेनमबालिशम् ।
बाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदम् ॥
मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसम् ॥ ८ ॥

---

* प्रतिपद्य—प्राप्नुहि–रा. पालयेति शेषः, प्राप्नुहीति वा–गो. † एवं सति 'अगर्हितं यशः' इत्युक्तिर्न सरसा । अतः छन्नेनैव रामेण हतत्वात् अकलङ्कां कीर्तिमपि अत्र भूतले प्रतिष्ठाप्य गमिष्यामीति युक्तम् ॥ ‡ अस्यामवस्थायामित्यादि अवश्यकर्तव्यत्वे हेतुतयोक्तिः लोकवत् ॥

[1] बालमत्यन्तबालिशम्–ङ.



किं तदित्यतः—सुखार्हमित्यादि । अबालिशं—समर्थं मम पुत्रं तवौरसं पुत्रमिव ॥ ८ ॥

मया हीनमहीनार्थं सर्वतः परिपालय ।
[1]त्वमप्यस्य हि *दाता च परित्राता च सर्वशः ॥ ९ ॥
भयेष्वभयदश्चैव यथाऽहं, प्लवगेश्वर! ॥ १० ॥

अहीनार्थं—अक्षीणैहिकसकलप्रयोजनं यथा तथा, सर्वतः—सर्वस्मिन् देशे काले च पालय । पालनप्रकारस्यैव प्रदर्शनं—त्वमपीत्यादि । अभयदश्चेति, भवेति शेषः ॥ ९–१० ॥

एष तारात्मजः श्रीमान् त्वया तुल्यपराक्रमः ।
रक्षसां तु वधे तेषां अग्रतस्ते भविष्यति ॥ ११ ॥

प्रागुक्तं पुत्रस्याबालिशत्वं रक्षणीयत्वप्रयोजकं दर्शयति—एष इत्यादि । रक्षसां तु वध इति । रामप्रत्युपकारप्रसङ्गे प्राप्ते इत्यर्थः ॥

अनुरूपाणि कर्माणि विक्रम्य बलवान् रणे ।
करिष्यत्येष तारेयः [2]तरस्वी तरुणोऽङ्गदः ॥ १२ ॥
†सुषेणदुहिता चेयं अर्थसूक्ष्मविनिश्चये ।
औत्पातिके च विविधे सर्वतः परिनिष्ठिता ॥ १३ ॥

---

* दाता, वस्त्राभरणादीनां–गो. † सुषेणदुहितेति । ननु समुद्रसंजातायास्तारायाः सुषेणदुहितृत्वं कथमिति चेत्—तत्र क्षीराब्धिमथनसमयोत्पन्नां तारां दृष्ट्वा सुषेणो वामं करमग्रहीत् । वाली तु दक्षिणं करमगृह्णात् । तदाऽन्योन्यं विवादे सति देवैः तारायाः सुषेणदुहितृत्वं, वालिनो जायात्वं च निश्चितम् । तदुक्तं स्कान्दे—'देवैस्सुषेणकलहे पुत्रीति प्रतिपादिता । सुषेणो दुहितुस्तस्याः स्वयंवरमकारयत् ॥ इत्थमूढा कपीन्द्रेण तारा सर्वाङ्गसुन्दरी । सुग्रीवमेकदा रात्रौ रूपसादृश्यमोहिता ॥ प्रार्थयामास कामार्ता रन्तुं रतिमती प्रभुम् । न ममायोनिजाताया गमनं लोकगर्हितम्' इति–ती.

[1] त्वमप्यमित्र, त्वमहस्य हित–ङ. [2] तेजस्वी–च., ज.

अथ मंत्रसाचिव्यपरिकररहस्यमुपदिशति—सुषेणदुहितेत्यादि। तारेति यावत्। अर्थस्य इष्टप्रापकत्वनुष्ठेयकार्यस्य सूक्ष्मविनिश्चये—परमसिद्धान्तज्ञाने, तथा औत्पातिके—उत्पातसूच्यमाने नानाविधे आपत्काले च अनुष्ठेयानिश्चये, तथा ऐहिकामुष्मिकार्थनिश्चये च परिनिष्ठिता—निष्णाता—अतिसमर्थेत्यर्थः ॥ १३ ॥

यदेषा साध्विति ब्रूयात् कार्यं तन्मुक्तसंशयम्।
*न हि तारामतं किञ्चित् अन्यथा परिवर्तते ॥ १४ ॥

किं ततः? इत्यतः—यदेषेत्यादि। तत् कार्यं तदेव अनुष्ठेयमित्यर्थः। तदेव द्रढयति—न हीत्यादि। अन्यथा न परिवर्तते इत्यर्थः। स्वानुभवसिद्धत्वादेवेत्याशयः। एवं वदता स्वानन्तरं तारास्वीकारोऽपि तिर्यग्योनित्वाददोष इति मन्यमानेनानुमन्यते इति गम्यते। अत एव तस्याः परिग्रहोऽग्रे ॥ १४ ॥

राघवस्य च ते कार्यं कर्तव्यमविशङ्कया।
स्यादधर्मो ह्यकरणे त्वां च हिंस्या[1]द्विमानितः † ॥ १५ ॥

एवं स्त्रीपुत्रविषये वक्तव्यमुक्त्वा भ्रात्रे वक्तव्यं उपदेशमाह—राघवस्येत्यादि। अकरणे अधर्मः स्यादिति। मिथ्याप्रतिज्ञत्वप्रसङ्गादित्याशयः। न केवलं पारलौकिकानर्थः अकरणे, किं तु प्रत्यक्षानर्थोऽपीत्याह—त्वां चेत्यादि। मामिव धर्मभ्रष्टत्वादिति शेषः ॥ १५ ॥

---

* अनेन त्रैवर्णिकेतरत्वेन तरुणीत्वेनावश्यं कर्तव्यपुरुषान्तरस्वीकारायास्ताराया देवरत्वात् सुग्रीवस्य स्वीकारोऽभ्यनुमत इति गम्यते—ति. † विमानितः— अवमानितः, रोषित इति वा। राघव इति विपरिणामः ॥

[1] दमानितः-च. ज.





इमां च मालामाधत्स्व दिव्यां, सुग्रीव! काञ्चनीम्।
उदारा श्रीः स्थिता ह्यस्यां संप्रजह्यान्मृते मयि ॥ १६ ॥

अथ सर्वात्मना भ्रातरि सौमनस्यं अर्थक्रियया दर्शयति—इमां चेत्यादि। उदारा—प्रशस्ता श्रीः—विजयलक्ष्मीः अस्यां स्थिता, नित्यं महेन्द्रानुग्रहात्। हि—यस्मात् सा माला मृते मयि स्थिता चेत्, तां शवस्पृष्टां श्रीः संप्रजह्यात्, तस्मात् इदानीमेव इमां मालां आधत्स्व। 'संप्रजह्यान्मृते मयि' इति पाठः ॥ १६ ॥

इत्येवमुक्तः सुग्रीवः वालिना भ्रातृसौहृदात्।
हर्षं त्यक्त्वा पुनर्दीनः ग्रहग्रस्त इवोडुराट् ॥ १७ ॥

हर्षं त्यक्त्वा पुनर्दीन इति। मरणात्पूर्वं दैवात् स्वस्मिन् भ्रातृसौमनस्यस्य नष्टत्वात् तद्वधः सुखप्रतीतितः हर्षावहो जातः। पुनस्तस्य यथापूर्वं सौमनस्यं दृष्ट्वा मरणे विषण्णोऽभूदित्यर्थः। ग्रहग्रस्तः—राहुग्रस्तः ॥ १७ ॥

तद्वालिवचनात् शान्तः कुर्वन् *युक्तमतन्द्रितः।
जग्राह सोऽभ्यनुज्ञातः मालां तां चैव काञ्चनीम् ॥ १८ ॥

तद्वालिवचनात्—तादृशेन वालिवचनेन, शान्तः—शान्तवैरः युक्तं—भ्रातृस्नेहोचितं अतन्द्रितः कुर्वन् भूत्वा। अभ्यनुज्ञातः मालाग्रहे च वालिनेति शेषः ॥ १८ ॥

तां मालां काञ्चनीं दत्त्वा वाली दृष्ट्वाऽऽत्मजं स्थितम्।
†संसिद्धः प्रेत्यभावाय स्नेहादङ्गदमब्रवीत् ॥ १९ ॥

प्रेत्यभावाय संसिद्ध इति। कल्पित इत्यर्थः ॥ १९ ॥

---

* युक्तं—भ्रातृस्नेहोचितदर्शनादिव्यवहारम्-ति. युक्तं—योग्यं तत्र—लोके प्रसिद्धं विलापादि—रा. पूर्वद्वेषादिकं विस्मरन्निति तात्पर्यम्। † प्रेत्यभावाय संसिद्धः इति, प्रयाणाय सन्नद्ध इति यावत् ॥

देशकालौ भजस्वाद्य *क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगो भव ॥ २० ॥

अद्य देशकालौ तत्कर्मोचितौ भजस्व—जानीहीति यावत् । प्रियाप्रिये—इष्टानिष्टयोगजे । काले—यथोचितसेवाकाले । सुग्रीववशगः—तत्सेवापरः भव ॥ २० ॥

यथा हि त्वं, महाबाहो ! लालितः सततं मया ।
न तथा वर्तमानं त्वां सुग्रीवो बहु[1]मन्यते ॥ २१ ॥

विपक्षे बाधकमाह—यथा हीति । बालतया मया केवलं लालितः सन् यथा कालोचितराजसेवारहितोऽवर्तिष्ट, तथा इदानीं तारुण्येऽपि सेवाराहित्येन वर्तमानं त्वां सुग्रीवः न बहुमन्यते—न मन्येत, अतः सेवां कुरु इत्युपदेशः ॥ २१ ॥

†माऽस्यामित्रैः गतं गच्छेः मा शत्रुभिररिन्दम !
भर्तुरर्थपरो दान्तः सुग्रीववशगो भव ॥ २२ ॥

अपि च, अस्य सुग्रीवस्य अमित्रैः—अनुपकारकैः, तथा अस्य शत्रुभिश्च गतं—सङ्गतं मा गच्छेः । भर्तुः सुग्रीवस्य अर्थपरः प्रयोजनसाधनपरः ॥ २२ ॥

---

* प्रियाप्रिये क्षममाणः—सहमानः । साधनदृष्ट्येदम् । फलदृष्ट्या—सुखदुःखसह इति ॥ † अस्य सुग्रीवस्य अमित्रैः गतं—प्राप्तं पुरुषं मा गच्छेः । अस्य शत्रोर्मित्रं न भजेरित्यर्थः । शत्रुभिस्सह च मा गच्छेः—गो.

[1] मंस्यते—ङ.



*न चातिप्रणयः कार्यः कर्तव्योऽप्रणयश्च ते ।
उभयं हि [1]महान् दोषः तस्मादन्तरदृग्भव ॥ २३ ॥

न च अतिप्रणयः कार्य इति । पुत्रत्वात्, बाल्यवदिति शेषः । अप्रणयश्च कर्तव्यः इति । स्वयादिसक्तया इति शेषः । अन्तरदृक् भव—'अत्यासत्तिर्विनाशाय त्वतिदूरं तु निष्फलम् । सेवा मध्यमभावेन राजवह्निगुरुस्त्रियाम् †' इति न्यायेन मध्यमं मार्गमवगच्छेत्यर्थः ॥ २३ ॥

इत्युक्त्वाऽथ विवृत्ताक्षः शरसंपीडितो भृशम् ।
विवृतैर्दशनैर्भीमैः बभूवोत्क्रान्तजीवितः ॥ २४ ॥

ततो विचुक्रुशुस्तत्र वानरा [2]हतयूथपाः ।
परिदेवयमानास्ते सर्वे प्लवगपुङ्गवाः ॥ २५ ॥

हतः यूथपः येषां ते तथा । परिदेवयमानाः विचुक्रुशुः इत्यन्वयः ॥ २५ ॥

किष्किन्धा ह्यद्य शून्याऽऽसीत् स्वर्गते वानराधिपे ।
उद्यानानि च शून्यानि पर्वताः काननानि च ॥
हते प्लवगशार्दूले निष्प्रभा वानराः कृताः ॥ २६ ॥

तस्यैव प्रपञ्चः—किष्किन्धेत्यादि ॥ २६ ॥

‡[3]यस्य वेगेन महता काननानि वनानि च ।

---

* पितृव्यत्वात् अतिप्रीतिः प्रसक्ता, प्रभुत्वात् दूरस्थितिः प्रसक्ता । अतो मध्यस्थो भवेत्युच्यते ॥ † एकवचनमार्षम् । ‡ वेगेन—पराक्रमेण काननानि—अरण्यानि वनानि—जलानि, सरांसीत्यर्थः, पुष्पौघेणानुबध्यन्ते । यद्वा वनानि—क्षुद्रारण्यानि । यस्मिन् बालिनि गच्छति सति तद्दूरवेगेनाविशेषेण सर्वाणि वनानि पुष्पैस्सहानुगच्छन्तीत्यर्थः—गो.

[1] महादोषं—च. ज. [2] हरियूथपाः—ङ. [3] ज पुस्तकेऽयं श्लोकः कुण्डलितः ।

पुष्पौघेणानुबध्यन्ते करिष्यति तदद्य कः ।
येन दत्तं महद्युद्धं गन्धर्वस्य महात्मनः ॥ २७ ॥

गोलभस्य महाबाहोः दशवर्षाणि पञ्च च ।
नैव रात्रौ न दिवसे तद्युद्धमुपशाम्यति ॥ २८ ॥

महत् युद्धं—पञ्चदशवर्षावधिकाविश्रांताहोरात्रगोलभगन्धर्वयुद्धं बस्य नोपशाम्यति स्म ॥ २७ ॥

ततस्तु षोडशे वर्षे गोलभो विनिपातितः ।
तं हत्वा दुर्विनीतं तु वाली *दंष्ट्राकरालवान् ॥ २९ ॥
सर्वाभयङ्करोऽस्माकं कथमेष निपातितः ॥ ३० ॥

तं हत्वा यो वाली दंष्ट्राकरालवान्, स्वार्थे मतुप्, दंष्ट्राकरालः इत्यर्थः । अस्माकं सर्वाभयङ्करः—सर्वस्मादप्यभयङ्करः अभूत्, स एषः एकवीरः कथं निपातितः ॥ ३० ॥

हते तु वीरे प्लवगाधिपे तदा
[1]प्लवङ्गमास्तत्र न शर्म लेभिरे ।
†वनेचराः ‡सिंहयुते महावने
यथा हि गावो निहते गवां पतौ ॥ ३१ ॥

वनेचराः प्लवङ्गमाः इत्यन्वयः ॥ ३१ ॥

---

*दंष्ट्राकरालवान्—करालदंष्ट्रवान्, परनिपातः-गो. आर्षः स्वार्थे मतुप्, दंष्ट्राकराल इत्यर्थः-ति. भावप्रधानो निर्देशः, दंष्ट्राकरालत्ववान्-रा. †अपरं 'वनेचराः' इति गवां विशेषणम्-ति. पूर्वार्धे पाठान्तरं द्रष्टव्यम्. ‡सिंह-स्थानीयो रामः-गो.

[1]वनेचरा-च. ज.



ततस्तु तारा व्यसनार्णवप्लुता
मृतस्य [1]भर्तुर्वदनं [2]समीक्ष्य सा ।
जगाम भूमिं परिरभ्य वालिनं
महाद्रुमं छिन्नमिवाश्रिता लता ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे द्वाविंशः सर्गः

---

'समीक्ष्य सा' इति पाठः । रोग(३२)मानः सर्गः ॥ ३२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे द्वाविंशः सर्गः

---

## त्रयोविंशः सर्गः

### [वालिनिर्याणम्]

ततः समुपजिघ्रन्ती कपिराजस्य तन्मुखम् ।
पतिं [3]लोकश्रुतं तारा मृतं वचनमब्रवीत् ॥ १ ॥

अथ पूर्वं मुमूर्षुं दृष्ट्वा प्रलपितवती तारा, मृतं दृष्ट्वा पुनः प्रलपति । ततः समुपजिघ्रन्तीत्यादि । लोकश्रुतः—लोकप्रसिद्धः ॥

शेषे त्वं विषमे *दुःखं अकृत्वा वचनं मम ।
उपलोपचिते, वीर! सुदुःखे वसुधातले ॥ २ ॥

उपलैः—पाषाणैः उपचिते—व्याप्ते ॥ २ ॥

---

*दुःखमिति क्रियाविशेषणम्-गो. दुःखमिति खेदाभिनयो वा ॥

[1]भर्तुर्व्यसनं-ङ. [2]समाश्रिता-ङ. ज. [3]लोकश्रुता-च. ज., लोकाश्रुतं-झ.

मत्तः प्रियतरा [1]नूनं, वानरेन्द्र! मही तव ।
शेषे हि तां परिष्वज्य मां च न प्रतिभाषसे ॥ ३ ॥

सुग्रीवस्य वशं प्राप्तः विधिरेष, भवत्यहो!
*सुग्रीव एव विक्रान्तः, वीर! साहसिकप्रिय! ॥ ४ ॥

वशमिति । उपायवशमित्यर्थः । विक्रान्त इति, भवितेति शेषः* ॥

ऋक्षवानरमुख्यास्त्वां [2]बलिनः †पर्युपासते ।
एषां विलपितं कृच्छ्रं अङ्गदस्य च शोचतः ।
मम चेमां गिरं श्रुत्वा किं त्वं न प्रतिबुध्यसे ? ॥ ५ ॥

पर्युपासत इति । उपासिष्यत इति यावत् ॥ ५ ॥

इदं तत् [3]शूरशयनं यत्र शेषे हतो युधि ।
शायिता निहता यत्र त्वयैव रिपवः पुरा ॥ ६ ॥

शूराणां शयनं शूरशयनम् । यत्र त्वया रिपवः शायिताः तदिदं शूरशयनं त्वमपि शेषे ॥ ६ ॥

विशुद्धसत्त्वाभिजन! प्रिययुद्ध! मम प्रिय!
मामनाथां विहायैकां गतस्त्वमसि, मानद! ॥ ७ ॥

शूराय न प्रदातव्या कन्या खलु विपश्चिता ।
शूरभार्यां हतां पश्य सद्यो मां विधवां कृताम् ॥ ८ ॥

शूरस्य तव भार्या शूरभार्या, तां माम् ॥ ८ ॥

---

* विक्रान्तो भवितेति शेषः-ति. यः सुग्रीवः विक्रान्तः—त्वया बहुवारं पराजितः, तस्य सुग्रीवस्य वशं त्वं प्राप्तः । एषः विधिः, अहो-रा. सुग्रीव एव विक्रान्त इत्येषः विधिः दैवव्यापारः-गो. 'सुग्रीव एव जितवान्' इति लोकवदुक्तिर्वा । भिन्नं वाक्यम् ॥ † पर्युपासते—पर्युपासन्ते-ति. एते सर्वे तव परितो वर्तन्त इति लोकवदेवोक्तिर्वा ॥

[1] नित्यं-ङ. [2] बलिनं-ञ. [3] वीर-ङ.



अद्य भग्नश्च मे मानः भग्ना मे शाश्वती *गतिः ।
अगाधे च निमग्नाऽस्मि विपुले शोकसागरे ॥ ९ ॥

मानः—राजपत्नीत्वाभिमानः । शाश्वती स्थिरा गतिः—सुखप्राप्तिः ॥ ९ ॥

अश्मसारमयं नूनं इदं मे हृदयं दृढम् ।
भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा [1]गतम् ॥ १० ॥

सुहृच्चैव हि भर्ता च प्रकृत्या मम च प्रियः ।
[2]आहवे च पराक्रान्तः शूरः पञ्चत्वमागतः ॥ ११ ॥

प्रकृत्येति । अनुपाधित इत्यर्थः । परेण आक्रान्तः—अभिभूतः पञ्चत्वमागतः । तं दृष्ट्वाऽपि हृदयं न भिन्नम् । अतो दृढं इति पूर्वेणान्वयः ॥ ११ ॥

पतिहीना तु या नारी कामं भवतु पुत्रिणी ।
धनधान्यैः सुपूर्णाऽपि विधवेत्युच्यते जनैः ॥ १२ ॥

ननु सपुत्रायाः ते कः शोकः इत्यत्राह—पतिहीनेत्यादि ॥

स्वगात्रप्रभवे, वीर! शेषे रुधिरमण्डले ।
†कृमिरागपरिस्तोमे [3]त्वमात्मशयने ‡यथा ॥ १३ ॥

कृमेः—इन्द्रगोपस्य राग इव रागो यस्य स तथा । कृमिरागः परिस्तोमः—आस्तरणं यस्मिन् तत् तथा ॥ १३ ॥

---

* गतिः—पतिशुश्रूषा-गो. † कृमिरागः—लाक्षारागः । कृमिरागं वदन्त्यार्याः लाक्षिकं प्रियदर्शनम्' इत्युत्पलमाला-ति. ‡ आत्मशयने—स्वीयशयने ॥

[1] क्रमम्-ञ. [2] प्रहारे-ङ. ञ. [3] स्वकीये शयने-ञ.

रेणुशोणितसंवीतं गात्रं तव समन्ततः ।
परिरब्धुं न शक्नोमि भुजाभ्यां, प्लवगर्षभ ! ॥ १४ ॥

परिरब्धुं—आलिङ्गितुं । न शक्नोमीति । शोकेन भुजयोः सन्नबलत्वादिति शेषः ॥ १४ ॥

कृतकृत्योऽद्य सुग्रीवः वैरेऽस्मिन्नतिदारुणे ।
यस्य रामवियुक्तेन हृतमेकेषुणा भयम् ॥ १५ ॥

यस्य भयं हृतं सः, सुग्रीवः अतिदारुणेऽस्मिन् वैरे विषये कृतकृत्यः—संपादितानुष्ठेयानुष्ठान इत्यर्थः ॥ १५ ॥

शरेण हृदि लग्नेन गात्रसंस्पर्शने तव ।
*[1]वार्यामि त्वां निरीक्षन्ती त्वयि पञ्चत्वमागते ॥ १६ ॥

शरेण तव गात्रसंस्पर्शने वार्यामि—निवार्य इति यावत् ॥१६॥

उद्बबर्ह शरं नीलः तस्य गात्रगतं तदा ।
गिरिगह्वरसंलीनं दीप्तमाशीविषं यथा ॥ १७ ॥

एवं तस्याः वचः श्रुत्वा नीलः शरं उद्बबर्ह—बृहू उद्यमने उद्धृतवानित्यर्थः ॥ १७ ॥

तस्य निष्कृष्यमाणस्य बाणस्य च बभौ द्युतिः ।
अस्तमस्तक[2]संरुद्धः †रश्मिर्दिनकरादिव ॥ १८ ॥

तस्य निष्कृष्यमाणस्य, चशब्दात् लोहितरक्तस्य बाणस्य द्युतिः अस्तमस्तकसंरुद्धः—अस्तगिरिशिखरसंलग्नः, दिनकरात्, व्यत्ययात् पञ्चमी, दिनकरस्य रश्मिरिव बभौ ॥ १८ ॥

*वार्यामि—वारिताऽस्मि-गो. †दिनकरादुद्गच्छन् रश्मिरिव-गो.

[1] वारिताऽस्मि-झ. [2] सन्नद्धरश्मिर्दिनकरादिव-ज.



पेतुः क्षतजधारास्तु व्रणेभ्यस्तस्य सर्वशः, ।
ताम्रगैरिकसंपृक्ता धारा इव धराधरात् ॥ १९ ॥
अवकीर्णं विमार्जन्ती भर्तारं रणरेणुना, ।
अस्रैर्नयनजैः शूरं सिषेचास्त्रसमाहतम् ॥ २० ॥
रुधिरोक्षितसर्वाङ्गं दृष्ट्वा विनिहतं पतिम्, ।
उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना ॥ २१ ॥
अवस्थां पश्चिमां पश्य पितुः, पुत्र ! सुदारुणाम् ।
संप्रसक्तस्य वैरस्य *गतोऽन्तः पापकर्मणा ॥ २२ ॥

पापकर्मणा—प्राचीनपापवशतः संप्रसक्तस्य—प्राप्तस्य वैरस्य भ्रातृवैरस्य अन्तः, गतः—अवसानं वृत्तम् ॥ २२ ॥

बालसूर्यो[1]दयतनुं प्रयान्तं यमसादनम् ।
अभिवादय राजानं पितरं, पुत्र ! मानदम् ॥ २३ ॥
एवमुक्तः समुत्थाय जग्राह चरणौ पितुः ।
भुजाभ्यां पीनवृत्ताभ्यां अङ्गदोऽहमिति ब्रुवन् ॥ २४ ॥
अभिवादयमानं त्वां अङ्गदं त्वं यथापुरा ।
दीर्घायुर्भव पुत्रेति किमर्थं नाभिभाषसे ॥ २५ ॥
अहं पुत्रसहाया त्वां उपासे गत[2]चेतनम् ।
सिंहेन [3]निहतं सद्यः गौः सवत्सेव गोवृषम् ॥ २६ ॥
इष्ट्वा संग्रामयज्ञेन [4]रामप्रहरणाम्भसि ।
अस्मिन्नवभृथे स्नातः कथं पत्न्या मया विना ॥ २७ ॥

रामस्य प्रहरणं—बाण एव अम्भः यस्मिन् स तथा ॥ २७ ॥

* गतः–प्राप्तवान्–ति. अन्तः गतः–प्राप्तः । वैरकथा समाप्तेति यावत् ॥

[1] वरु–ज. [2] चेतसम्–च. ज. [3] पातितं–च. [4] रामबाणमहांभसि–ङ., रामप्रहरणाम्भसा–च.

या दत्ता देवराजेन तव तुष्टेन संयुगे।
शातकुम्भमयीं मालां तां ते पश्यामि नेह किम् ?*॥२८॥

या दत्ता, तां इह इदानीं किं न पश्यामि। एवं वदन्त्या तया सुग्रीवाय मालाप्रदानं अदृष्टम्। दृष्टमपि पुनः दुःखात् विस्मृतं वेति ध्येयम् ॥ २८॥

[1]राजश्रीः न जहाति त्वां गतासुमपि, मानद !
†सूर्यस्याऽऽवर्तमानस्य शैलराजमिव प्रभा ॥ २९॥

आवर्तमानस्येति। अस्तमयमानस्येत्यर्थः ॥ २९॥

न मे वचः पथ्यमिदं त्वया कृतं
न चास्मि शक्ता विनिवारणे तव।
हता सपुत्राऽस्मि हतेन संयुगे
सह त्वया श्रीर्विजहाति मामिह ॥ ३०॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे त्रयोविंशः सर्गः

---

पथ्यमिदं वचः इति श्रुतिसंनिहितस्य प्रागुपदिष्टस्य परामर्शः। अनङ्ग(२० १/२)मानः सर्गः ॥ २०॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे त्रयोविंशः सर्गः

---

*सुग्रीवाय किमर्थं दत्तेत्यर्थः-रा. 'क्व गतस्त्वम्' इतिवत् शोकवशाद्वा एवमुक्तिः॥ †आवर्तमानस्य– परिभ्रमतः –रा. शैलराजं मेरुं आवर्तमानस्य, अस्तं गच्छत इत्यर्थः—गो. मेरौ सदा सूर्यरश्मिसम्बन्धाद्वा तथोक्तिः॥

[1]राज्यश्रीः —च. ज.



## चतुर्विंशः सर्गः

[ सुग्रीवादिशोकः ]

*[1]तां चाश्रुवेगेन दुरासदेन
त्वभिप्लुतां शोकमहार्णवेन।
पश्यंस्तदा वाल्यनुजस्तरस्वी
भ्रातुर्वधेनाप्रतिमेन तेपे ॥ १॥

अथ सुग्रीवानुतापपरीतापौ। तां चेत्यादि। अश्रुवेगेन शोकमहार्णवेन च अभिप्लुतां—खिन्नाम्। अप्रतिमेन—असदृशेन ॥ १॥

स बाष्पपूर्णेन †मुखेन [2]वीक्ष्य
क्षणेन निर्विण्णमना मनस्वी।
जगाम रामस्य शनैः समीपं
भृत्यैर्वृतः संपरि[3]दूयमानः ॥ २॥

निर्विण्णमनाः—खिन्नमनाः। संपरिदूयमानः—सम्यक् उपतप्यमानः ॥ २॥

स तं समासाद्य गृहीतचापं
उदात्तमाशीविषतुल्यबाणम्।
यशस्विनं लक्षणलक्षिताङ्गं
अवस्थितं राघवमित्युवाच ॥ ३॥

---

*आशुवेगेन (पा.) शोकमहार्णवेन–ति. अश्रूणां वेगः यस्मात्, तादृशेन शोकमहार्णवेन–रा. †मुखेनोपलक्षितः सः वीक्ष्य, तारामिति शेषः—गो. (५ श्लोको द्रष्टव्यः) ॥ क्षणेन पश्यन् (पा.) विचारयन्।

[1]तामाशुवेगेन—च. [2]पश्यन्–च. [3]दृश्यमानः—ङ.

उदात्तं--धीरोदात्तस्वभावम् । लक्षणैः--राजलाञ्छनैः सामुद्रिक-लक्षणैः लक्षितं अङ्गं यस्य स तथा । लक्ष्मणेन नित्यसेवया लक्षितं—उपलक्षितं अङ्गं--विग्रहः--यस्य स तथेति च ॥ ३ ॥

यथाप्रतिज्ञातमिदं, नरेन्द्र !
कृतं त्वया *दृष्टफलं च कर्म ।
ममाद्य भोगेषु, नरेन्द्रपुत्र !
मनो निवृत्तं [1]हतजीवितेन ॥ ४ ॥

दृष्टं राजभोगलक्षणं फलं यस्मिन् तत् तथा । हतजीवितेन—कुत्सितजीवितेन साध्येषु भोगेष्वित्यन्वयः ॥ ४ ॥

अस्यां महिष्यां तु भृशं रुदन्त्यां
†पुरेऽतिविक्रोशति दुःखतप्ते ।
[2]हतेऽग्रजे संशयितेऽङ्गदे च
न राम ! राज्ये रमते मनो मे ॥ ५ ॥

अतिविक्रोशति--अत्यन्तं रुदति । संशयिते इति । पितृवियोगदुःखात् संशयितजीविते इत्यर्थः ॥ ५ ॥

‡क्रोधादमर्षादधिविप्रधर्षात्
भ्रातुर्वधो मेऽनुमतः पुरस्तात् ।

* दृष्टफलं--दृष्टवालिवधरूपफलकमिति वा । 'वालिनं तं हनिष्यामि' इति प्रतिज्ञानुगुणं भवता कर्म कृतम् । तत्फलं च दृष्टमेवेत्याशयः ॥ † पुरे—पौरजन इति यावत् । ‡ क्रोधात्—निर्निमित्तवनवासकृतात् । अमर्षात्—परुषभाषणाक्षमतया अतिविप्रधर्षात्—अत्यन्तमाक्रमणाच्च—गो. अमर्षात्--दुस्सहात् अतिविप्रधर्षात्—भ्रातृकर्तृकातिपराभवात् जातात् क्रोधात्—रा.

[1] सह जीवितेन—ङ. झ. [2] हते नृपे—च.



हते त्विदानीं [1]हरियूथपेऽस्मिन्
सुतीव्रं, इक्ष्वाकुकुमार ! तप्स्ये ॥ ६ ॥

अधिविप्रधर्षात्–भ्रातृकृतात् अधिकाभिभवात् हेतोः ममोत्पन्नात् क्रोधात्, अमर्षात् असहिष्णुतया च तप्स्ये--तप्स्यामीति यावत् ॥

श्रेयोऽद्य मन्ये मम शैलमुख्ये
तस्मिन् निवासश्चिरमृश्यमूके ।
यथातथा वर्तयतः *स्ववृत्त्या
नेमं निहत्य त्रिदिवस्य लाभः ॥ ७ ॥

यथातथा--येनकेनापि प्रकारेणेत्यर्थः । वर्तयतः--जीवतः । त्रिदिवस्य लाभोऽपि न श्रेय इति मन्ये इत्यन्वयः ॥ ७ ॥

न त्वां जिघांसामि, चरेति यन्मां
अयं महात्मा मतिमानुवाच ।
तस्यैव तत्, राम ! वचोऽनुरूपं
इदं [2]पुनः कर्म च मेऽनुरूपम् ॥ ८ ॥

तस्यैव तद्वचोऽनुरूपमिति । ईषत्करघातेऽपि मयि तदकृत्वा आन्तरभ्रातृस्नेहपाशबद्धतया त्वां न जिघांसामि कदाचिदपि, चर—गच्छ इति यद्वच अवोचत् तद्वचः इत्यर्थः । इदं मे कर्म--भ्रातृघातनरूपम् ॥ ८ ॥

* स्ववृत्त्या—वानरजात्युचितवृत्त्या—गो.

[1] हरिपुङ्गवे—ङ. [2] वचः—च. ज.

भ्राता कथं नाम महागुणस्य
भ्रातुर्वधं, राघव! रोचयेत।
राज्यस्य दुःखस्य च, वीर! सारं
*[1]विचिन्तयन् काम[2]पुरस्कृतः सन् ॥९॥

राज्यस्य दुःखस्य च सारं—तारतम्योत्कर्षं, विचिन्तयन्निति पाठः, विगणयन् अविचारयन् इत्यर्थः ॥९॥

†वधो हि मे मतो नासीत् स्व[3]माहात्म्यव्यतिक्रमात्।
ममासीत् बुद्धिदौरात्म्यात् प्राणहारी व्यतिक्रमः ॥१०॥

उक्तार्थ एव विव्रियते—वधो हि मे इत्यादि। मां हन्तुं तस्य मतिर्नासीदित्यर्थः। तत्र हेतुः—स्वमाहात्म्यव्यतिक्रमात् इति। अनुचितकृत्यतः अपयशःप्रसङ्गभयादित्यर्थः। प्राणहारीति। भ्रातुरिति शेषः ॥१०॥

द्रुमशाखावभग्नोऽहं मुहूर्तं परिनिष्टनन्।
सान्त्वयित्वा ह्यनेनोक्तः न पुनः कर्तुमर्हसि ‡ ॥११॥
भ्रातृत्वमार्यभावश्च [4]धर्मश्चानेन रक्षितः।
मया क्रोधश्च कामश्च कपित्वं च प्रदर्शितम् ॥१२॥

द्रुमशाखावभग्नः—द्रुमशाखया अवभग्नः तेन प्रहृतः। अत एव मुहूर्तं परिनिष्टनन्—क्रोशन् यदा अभवं, तदा तु अनेन भ्रात्रा

---

*विचिन्तयन्—विचारयन्–ति. †महात्मेत्युक्तं विशदयति—वध इति। अस्य वालिनः स्वमाहात्म्याव्यतिक्रमात्—स्वमहत्त्वस्य अव्यतिक्रमात्—अनतिक्रमात् मे वधः मतः नासीत्–गो. 'न त्वां जिघांसामि' इत्यादि ज्येष्ठस्य तस्य स्वरूपानुगुण्यात् स्वानतिक्रमः संरक्षितः, मया तु व्यतिक्रम एव प्रदर्शित इत्यर्थः ॥ ‡न पुनः कर्तुमर्हसि, युद्धमिति शेषः। अत्रेतिकरणं द्रष्टव्यम्–गो.

[1] न चिन्तयन्–ङ. झ. [2] पुरस्कृतोऽपि–च. ज. [3] माहात्म्याव्यति–ङ. झ. [4] धर्मांश्चानेन रक्षिताः–ङ.



सान्त्वयित्वा तु, पुनरेवं दुश्चेष्टां मा कुरु इत्येवोक्तवानस्मि। कोपभावेन मां न हतवानित्यर्थः। अत एव–भ्रातृत्वमित्यादि ॥११–१२॥

अचिन्तनीयं परिवर्जनीयं
अनीप्सनीयं *स्वनवेक्षणीयम्।
प्राप्तोऽस्मि पाप्मान[1]मिमं, नरेन्द्र!
भ्रातुर्वधात् त्वाष्ट्रवधादिवेन्द्रः ॥१३॥

सद्भिः अचिन्तनीयत्वादिस्वभावमिदं पाप्मानं प्राप्तवानस्मि। अचिन्तनीयं—चिन्तयितुमयोग्यम्। अत एव, नित्यं परिवर्जनीयम्। यत्किञ्चिदुपाधिनाऽपि अनीप्सनीयम्। अन्यकर्तृकमपि अनवेक्षणीयम्—दर्शनानर्हम्। त्वाष्ट्रः—विश्वरूपः ॥१३॥

†पाप्मानमिन्द्रस्य मही जलं च
वृक्षाश्च कामं जगृहुः स्त्रियश्च।
को नाम पाप्मानमिमं [2]क्षमेत
शाखामृगस्य [3]प्रतिपत्तु[4]मिच्छन् ॥१४॥

इन्द्रस्य पाप्मानं जगृहुरिति। तथा हि 'विश्वरूपो वै त्वाष्ट्रः' इत्यनुवाकप्रसिद्धः। प्रतिपत्तुं—प्राप्तुम् ॥१४॥

---

*स्वनवेक्षणीयं—विचारायोग्यम्–रा. †इन्द्रस्य परमैश्वर्यसंपन्नस्य पाप्मानं मह्यादयः ऊषरफेननिर्यासऋतुरूपेण जगृहुः खातपूरणादिवरप्रदत्वात्। मम तु शाखामृगस्य कस्याप्यनुपकारकस्य पाप्मानं प्रतिपत्तुं–किञ्चिद्वरं प्राप्तुमिच्छन् को नाम क्षमेत? ग्रहीतुमिति शेषः। यद्यपि विश्वरूपाख्यायिकायां त्वाष्ट्रशिरस्त्रयच्छेदकृतब्रह्महत्यात्रितयं पृथिवीवनस्पतिस्त्रिय एव जगृहुरित्युक्तं, तथापि शाखान्तरानुरोधेन जलेनापि कश्चिदंशो गृहीत इत्यवगन्तव्यम्–गो. प्रतिहर्तुं (पा.)—परिहर्तुं–ती.

[1] मिदं वयस्य–ज. [2] सहेत–ज. [3] प्रतिहर्तुं–छ. [4] मिच्छेत्–च. ज.

नार्हामि संमानमिमं प्रजानां
*न यौवराज्यं कुत एव राज्यम् ।
अधर्मयुक्तं कुलनाशयुक्तं
एवंविधं, राघव! कर्म कृत्वा ॥ १५ ॥

नार्हामीति । पापग्रस्तत्वादिति शेषः । न यौवराज्यमिति । ज्येष्ठस्थाने तत्पुत्रं कृत्वा, मम च यथाप्राप्तं यौवराज्यमित्यर्थः । अथ वालिना मुख्यराज्यस्य प्रदत्तत्वादाह—कुत एव राज्यमिति । कर्म कृत्वा नार्हामीति पूर्वेणान्वयः ॥ १५ ॥

पापस्य कर्ताऽस्मि विगर्हितस्य
क्षुद्रस्य †[1] लोकापकृतस्य [2] चैव ।
शोको महान् मामभिवर्ततेऽयं
वृष्टेर्यथा निम्नमिवाम्बुवेगः ॥ १६ ॥

क्षुद्रस्य— क्षुद्रप्राणिकृत्यस्य, लोकापकृतस्य परलोकपरमानर्थकर्मभूतस्य । वृष्टेः वेगः यथा, तथा शोकः भिन्नं-निम्नप्रदेशमिव मां प्राप्नोति ॥ १६ ॥

‡सोदर्यघातापरगात्रवालः
संतापहस्ताक्षिशिरोविषाणः ।
एनो मयो मामभिहन्ति हस्ती
दृप्तो नदीकूलमिव प्रवृद्धः ॥ १७॥

सोदर्यघातक्रौर्यरूपः अपरगात्रभागः, वालश्च यस्य स तथा ॥

* इयं लोकवदुक्तिः । यौवराज्यार्हतैव नास्ति चेत् कुतो राज्यार्हतेति ॥ † लोकापकृतस्य—राजापकृतिद्वारा सर्वजनापकारकस्य-रा. लोकापकृतस्य—सर्वलोकैस्त्यक्तस्य-गो. ‡ सोदर्यस्य—भ्रातुः घात एवापरगात्रवालौ—अपरकायपुच्छौ यस्य स तथा । सन्ताप एव हस्तादीनि यस्य स तथा । वधादपि सन्तापस्य प्राधान्यात् ऊर्ध्वकायत्वरूपणम्-गो.

[1] लोकाबमतस्य चैव, लोके परिनिन्दितस्य-ङ. [2] लोके-च.



*अंहो बतेदं नृवरा[1]विषह्यं
निवर्तते मे हृदि साधु वृत्तम् ।
विवर्णमग्नौ परितप्यमानं
किट्टं यथा, राघव! जातरूपम् ॥ १८ ॥

अंहो बतेदं नृवराविषह्यं इति पाठः । हे नृवर! मे ईदृक् अविषह्यं—सोढुमशक्यं अंहः—पापं प्राप्य, मे हृदि स्थितं साधु वृत्तं—प्रागनुष्ठितपुण्यकर्म च एकायनत्वात् प्रबलेनांहसा निवर्तते ; बतेति खेदे । तत्र दृष्टान्तः—विवर्णमित्यादि । विवर्णं, अत एव अग्नौ परितप्यमानं प्रबलं जातरूपं प्राप्य किट्टं—मलं यथा निवर्तते, तथैवेत्यर्थः । †परस्तु अविषह्येति ल्यबन्तमङ्गीकृत्य व्याकरोदिव ॥१८॥

महाबलानां हरियूथपानां
इदं कुलं, राघव! ‡मन्निमित्तम् ।
अस्याङ्गदस्यापि च शोकतापात्
अर्धस्थितप्राणमितीव मन्ये ॥ १९ ॥

*मे हृदि इदं साधुवृत्तं अंहः—स्वेन सह वर्तमानं पापं अविषह्य—असोढ्वा निवर्तते-निर्गच्छति । कथमिव? विवर्णं जातरूपं अग्नौ परितप्यमानं सत् किट्टं यथा ऋजीषांशमविषह्य निवर्तते—किट्टाद्वियुज्यते—गो. अथवा-सुवर्णस्य विपरीतं विवर्णं जातरूपं कूटसुवर्णमिति यावत् । तत् अग्नौ परितप्यमानं सत् किट्टं यथा किट्टं भवतीव, मे हृदि साधुवृत्तं अविषह्यं एनः—स्वार्थमूलकभ्रातृवधं प्राप्य निवर्तते—हृदयाद्गच्छति । अग्निर्यथा सुवर्णपरीक्षकः, तथा स्वार्थ एव साधुवृत्तपरीक्षक इत्यर्थः ॥ † गोविन्दराजः, महेश्वरतीर्थो वा ॥ ‡ मन्निमित्तं—मन्निमित्तात् अङ्गदशोकतापात्-गो. रा.

[1] विषह्य-ङ. [2] शोकभावात्-ङ.

सुतः सुलभ्यः सुजनः [1] सुवश्यः
कुतः सुपुत्रः सदृशोऽङ्गदेन ।
न चापि विद्येत स, वीर! देशः
यस्मिन् भवेत् सोदरसंनिकर्षः ॥ २० ॥

सुतः सुलभ्यः इति । सुलभः इति यावत् । वाऽसरूपविधिना 'पोरदुपधात्' इति यत् वा ॥ २० ॥

*[2] यद्यङ्गदः, [3] वीर! वरार्ह! जीवेत्
जीवेच्च माता परिपालनार्थम् ।
विना तु पुत्रं परितापदीना
तारा न जीवेदिति निश्चितं मे ॥ २१ ॥

† सोऽहं प्रवेक्ष्याम्यतिदीप्तमग्निं
भ्रात्रा च पुत्रेण च सख्यमिच्छन् ।
इमे विचेष्यन्ति हरिप्रवीराः
सीतां निदेशे [4] तव वर्तमानाः ॥ २२ ॥

कृत्स्नं तु ते सेत्स्यति कार्यमेतत्
‡ मय्यप्रतीते, मनुजेन्द्रपुत्र!
कुलस्य हन्तारमजीवनार्हं
रामानुजानीहि कृतागसं माम् ॥ २३ ॥

अनुजानीहीति । अग्निप्रवेशायेति शेषः ॥ २३ ॥

---

* यद्यङ्गदो जीवेत्, तदा माता ताराऽपि पुत्रपालनार्थं जीवेत्–ति.
† अङ्गदमरणं निश्चित्याह—सोऽहमिति–गो. ‡ मयि अप्रतीते—अप्रकाशे, मृत इति यावत्–गो.

[1] सुवंश्यः–ङ. [2] अथाङ्गदः–च. [3] वीरवराय, वीरवरो न–झ.
[4] परि–ङ. ञ.



इत्येवमार्तस्य रघुप्रवीरः
श्रुत्वा वचो वाल्यनुजस्य तस्य ।
सञ्जातबाष्पः परवीरहन्ता
रामो मुहूर्तं विमना बभूव ॥ २४ ॥

संजातबाष्पः इति । दुःखिप्राणिघृणायाः महतां स्वभावात् । विमनाः–खिन्नचित्त इति यावत् ॥ २४ ॥

तस्मिन् क्षणेऽभीक्ष्ण[1]मवेक्षमाणः *
क्षितिक्षमावान् भुवनस्य गोप्ता ।
रामो रुदन्तीं व्यसने निमग्नां
समुत्सुकः सोऽथ ददर्श ताराम् ॥ २५ ॥

तस्मिन् क्षण इति । प्रकृतिमापन्न इति शेषः । क्षितेरिव क्षमा अस्यास्तीति तथा ॥ २५ ॥

† तां चारुनेत्रां ‡ कपिसिंह[2]नाथं
पतिं समाश्लिष्य तदा शयानाम् ।
उत्थापयामासुरदीनसत्त्वां
मन्त्रिप्रधानाः [3] कपिवीरपत्नीम् ॥ २६ ॥

कपिसिंहानां नाथः तथा ॥ २६ ॥

---

* तारां अभीक्ष्णं—वारं वारं अवेक्षमाणः—जीवन्तीमिच्छन्–ति. अवेक्ष्यमाणः तारयेति शेषः–गो. सर्वमेतदवेक्षमाणः तारां साभिप्रायं ददर्शेत्यर्थो वा ॥
† रामागमनमालोक्य मन्त्रिणस्तामुत्थापयामासुरित्याह—तामिति–गो. ‡ कपिसिंहनाथां (पा.)—कपिसिंहानां स्वामिनीं–ति. कपिसिंहः—वाली, नाथः यस्यास्तां–रा.

[1] मवेक्ष्यमाणः–ङ. [2] नाथां–च. ञ. [3] कपिराज–ञ.

सा विस्फुरन्ती परिरभ्यमाणा
भर्तुः सकाशादपनीयमाना ।
ददर्श रामं शरचापपाणिं
स्वतेजसा सूर्यमिव ज्वलन्तम् ॥ २७ ॥

सुसंवृतं पार्थिवलक्षणैश्च
तं चारुनेत्रं मृगशावनेत्रा ।
अदृष्टपूर्वं पुरुषप्रधानं
अयं *स काकुत्स्थ इति प्रजज्ञे ॥ २८ ॥

पुरुषप्रधानं—पुरुषश्रेष्ठम् ॥ २८ ॥

तस्येन्द्रकल्पस्य दुरासदस्य
महानुभावस्य समीपमार्या ।
आर्ताऽतितूर्णं व्यसनाभिपन्ना
जगाम तारा परिविह्वलन्ती ॥ २९ ॥

परिविह्वलन्ती, ह्वलचलने, शतरि नुम्—परवशेत्यर्थः ॥ २९ ॥

सा तं समासाद्य विशुद्ध[1]सत्त्वा
शोकेन †संभ्रान्तशरीरभावा ।
मनस्विनी वाक्यमुवाच तारा
रामं रणोत्कर्षणलब्ध[2]लक्षम् ॥ ३० ॥

---

* सः—भङ्गदोक्तः—ति. सुग्रीवमित्रभूतः—रा. † संभ्रान्तः—अयथाभूतः शरीरभावः—शरीरकृतभावः यस्याः सा, कुपितेत्यर्थः । मनस्विनी—मत्प्रियहन्तारं यावच्छक्ति परुषाणि वदेयमिति कृताध्यवसाया—गो. परन्तु विशुद्धसत्त्वेति बिशेषणं, अनन्तरश्लोकाश्चात्र द्रष्टव्याः ।

[1] सत्त्वं—ज. [2] लक्ष्यम्—ज.



संभ्रान्तः—विस्मृतः शरीरभावः—राजस्त्रीत्वाभिमानादिः यस्याः सा तथा । रणेषु उत्कर्षणेन—अनन्यसामान्योत्कर्षेण—अमोघबाणत्वादिलक्षणेन लब्धं लक्षं—वेध्यं येन स तथा—'रामः शस्त्रभृतामहम्' इति प्रसिद्धानन्यसामान्यरणोत्कर्षम् ॥ ३० ॥

त्वमप्रमेयश्च दुरासदश्च
जितेन्द्रियश्चोत्तम[1]धार्मिकश्च ।
अक्षय्यकीर्तिश्च विचक्षणश्च
क्षितिक्षमावान् *क्षतजोपमाक्षः ॥ ३१ ॥

क्षतजोपमाक्षः । रक्ताक्षइत्यर्थः ॥ ३१ ॥

त्वमात्तबाणासनबाणपाणिः
महाबलः संहननोपपन्नः ।
†मनुष्यदेहाभ्युदयं विहाय
दिव्येन देहाभ्युदयेन युक्तः ॥ ३२ ॥

संहननोपपन्नः इति । सिंहवत् संहननोपपन्नः इत्यर्थः । संहननं—दृढगात्रता । मनुष्यदेहाभ्युदयं—मनुष्यलोकवर्तिदेहप्राप्यं—अभ्युदयं—सौख्यम्, विहाय दिव्येन बाणेन त्वया हतः सन् वाली दिव्येन देहाभ्युदयेन युक्तः अभूत् ॥ ३२ ॥

[2]येनैकबाणेन हतः प्रियो मे
तेनैव मां त्वं जहि सायकेन ।
हता गमिष्यामि समीपमस्य
[3]न मामृते, राम! रमेत वाली ॥ ३३ ॥

---

* रक्तान्तनेत्रः 'रामो रक्तान्तलोचनः' इति ह्युक्तिः—गो. † मानुषशरीरपरिग्रहं विहाय—गो. रामं प्रतीयमुक्तिः ॥

[1] धर्मकश्च—च. ज. [2] येनैव—ज. [3] न मां विना वीर—ज.

स्वर्गेऽपि पद्मामलपत्र[1]नेत्रः
समेत्य संप्रेक्ष्य च मामपश्यन् ।
न ह्येष उच्चावचताम्रचूडाः
विचित्रवेषाप्सरसोऽभजिष्यत् ॥ ३४ ॥

पद्मस्य यदमलं पत्रं—दलं तत्समं नेत्रं यस्य तत्संबुद्धिः । मामपश्यन् न रमेतेत्यन्वयः । उच्चेति । नानाप्रकाररक्तपुष्पकृतशेखराः । रक्तपुष्पवर्णनं वशीकृतिप्रयोजनत्वात् तासाम् ॥ ३४ ॥

स्वर्गेऽपि शोकं च विवर्णतां च
मया विना प्राप्स्यति, वीर ! वाली ।
रम्ये * नगेन्द्रस्य तटावकाशे
विदेहकन्यारहितो यथा त्वम् ॥ ३५ ॥

तटावकाश इति । अस्मिन् इति शेषः ॥ ३५ ॥

त्वं वेत्थ [2]यावद्वनिताविहीनः
प्राप्नोति दुःखं पुरुषः † कुमारः ।
तत् त्वं प्रजानन् जहि मां न वाली
दुःखं ममादर्शनजं भजेत ॥ ३६ ॥

कुमारः—सुन्दरः पुरुष इत्यर्थः ॥ ३६ ॥

---

* नगेन्द्रस्य—ऋश्यमूकस्य–गो. † कुमारः—युवा–गो. नित्यं कुमारत्वेन प्रतीयमानस्त्वं वेत्थ–रा.

[1] नेत्र–ज. [2] तावद्–च. ज.



यच्चापि मन्येत भवान् महात्मा
स्त्रीघातदोषो * न भवेत्तु मह्यम् ।
आत्मेयमस्येति च मां जहि त्वं
न स्त्रीवधः स्यात्, मनुजेन्द्रपुत्र ! ॥ ३७ ॥

स्त्रीघातदोषश्च मह्यं भवेदिति यत्तु भवान् मन्येत, तदपि नेत्यर्थः । कुत इत्यतः—आत्मेयमित्यादि । इयं अस्य बालिनः आत्मा—प्राण एव, न केवलं तद्व्यतिरिक्ता काचित् स्त्री इति मत्वा जहि । एवं च न स्त्रीवधदोषः तव स्यात् । पुंस एव हन्यमानत्वादित्यर्थः ॥ ३७ ॥

† शास्त्रप्रयोगात् विविधाच्च वेदात्
[1]आत्मा ह्यनन्यः पुरुषस्य दाराः ।
दारप्रदानात् न हि दानमन्यत्
प्रदृश्यते ज्ञानवतां हि लोके ॥ ३८ ॥

तारा परमसुबुद्धितः पुरुषाभेदं साधयति—शास्त्रेत्यादि । शास्त्रीये—यागाद्यनुष्ठाने सहैव पुंसा प्रयोगानुष्ठानात्, "अर्धो वा एष आत्मनः, यत्पत्नी" इति श्रुतेश्च दाराः पुरुषस्य अनन्यः आत्मा । न केवलं दोषाभावमात्रम्, अपि तु कन्यादानफलमपि ते इत्याह—दारप्रदानादित्यादि । दारप्रदानात् अधिकं प्रदानं न दृश्यते इत्यर्थः ॥ ३८ ॥

---

* न भवेदिति काकुः, न भवेत्किम्—इत्यर्थः । एवं भवान् यद्यपि मन्येत, परन्तु तस्याश्चिन्ताया नावसर इत्यर्थः । † विविधात् वेदात्—वेदरूपात् शास्त्रप्रयोगात् । यद्वा वेदात्, धर्मशास्त्रप्रयोगाच्च–गो.

[1] अनन्यरूपाः–च. ज.

त्वं चापि मां तस्य मम प्रियस्य
प्रदास्यसे धर्ममवेक्ष्य, वीर !
अनेन दानेन न लप्स्यसे त्वं
अधर्मयोगं *मम, वीर ! घातात् ॥ ३९ ॥

अनेन दानेनेति । एवं ज्ञानयोगसाधितदिव्यकन्यादानेनेत्यर्थः ॥ ३९ ॥

आर्तामनाथामपनीयमानां †
[1]एवंविधामर्हसि मां निहन्तुम् ।
अहं हि मातङ्गविलासगामिना
प्लवङ्गमानामृषभेण धीमता ॥ ४० ॥
विना वरार्होत्तमहेममालिना
चिरं न शक्ष्यामि, नरेन्द्र ! जीवितुम् ।
इत्येवमुक्तस्तु विभुर्महात्मा
तारां समाश्वास्य हितं बभाषे ॥ ४१ ॥

अपनीयमानां—भर्तुः सकाशात् अन्यत इति शेषः । विहन्तुं—विशेषेण हन्तुम् । वरार्हः—इन्द्रार्हः । अत एव तद्दत्तमालया उत्तमहेममाली च तथा ॥ ४०–४१ ॥

---

*मम वीरस्य पत्युः छलेन घातात् प्राप्तमधर्मसंयोगं न लप्स्यसे । किञ्च तत एव मच्छापतः प्राप्तमधर्मयोगं—अधर्मफलयोगं स्त्रीवियोगरूपं न लप्स्यसे । ममावधे तु लप्स्यस एव । अत एव क्वचित्पठ्यते—'अचिरेणैव कालेन त्वया वीर्यबलाऽऽहृता । सा सीता मम शापेन न चिरात्त्वयि वत्स्यति' इति—ति. वीरघातादित्येतत् सुग्रीवदुःखदुःखितरामहृदयानुसारेणोक्तं, 'त्वमुत्तमधार्मिकश्च' इति पूर्वमुक्तत्वात्—गो.
† अपनीयमानां—वालिना वञ्चिताम्—गो.

[1] एवं गतां नार्हसि मामहन्तुम्—च. ज.



मा, वीरभार्ये ! विमतिं कुरुष्व
लोको हि सर्वो विहितो विधात्रा ।
तं चैव सर्वं सुखदुःखयोगं
*लोकोऽब्रवीत् तेन कृतं विधात्रा ॥ ४२ ॥

लोको हि सर्वो विहित इति । अहरादौ सृष्टः इत्यर्थः । तेन विधात्रा कृतं, तं च सर्वं लोकं सुखदुःखयोगं—अवर्ज्यसुखदुःखसंबन्धम् । लोक्यते इति लोकः—वेदः अब्रवीत्—'न ह वै सशरीरस्य सतः प्रियाप्रिययोः अपहतिरस्ति' इति । तथा मन्वादिस्मर्तृलोकश्च अब्रवीत् ॥ ४२ ॥

[1]त्रयो हि लोका विहितं [2]विधानं
नातिक्रमन्ते वशगा हि तस्य ।
†प्रीतिं परां प्राप्स्यसि तां तथैव
पुत्रस्तु ते प्राप्स्यति यौवराज्यम् ॥
धात्रा विधानं विहितं तथैव
न शूरपत्न्यः परिदेवयन्ति ॥ ४३ ॥

विहितं विधानमिति । निर्मितं सुखदुःखस्वभावं नातिक्रमन्ते—अतिक्रमितुं न शक्नुवन्ति । कुतः इत्यतः—वशगा हि तस्येति । सर्वे लोकाः लोकिनश्चेत्यर्थः । तत्सृष्टत्वस्य, तदण्डस्थितत्वस्य

---

*लोकः—पण्डितः पामरश्च—गो. † वाली परां प्रीतिं त्वत्सम्बन्धजां प्राप्स्यति (पा.) मत्संकल्पात् । भवत्यपि वालिसम्बन्धजां प्रीतिं सुग्रीवसम्बन्धात् प्राप्स्यति—ति. तां—वालिसंभोगसदृशभोगं—गो.

[1] प्रायो—ङ. [2] विधातुः—ङ.

स्वाण्डान्तः तत्प्रवर्त्यमानस्वर्गादिपुरुषार्थस्य जीवविश्रमायाहरन्ते सर्वसंहारस्य च सर्वाविवादात् सर्वस्य तद्वशगत्वं प्रसिद्धमिति हिशब्देन द्योत्यते ॥ ४३ ॥

आश्वासिता तेन [1] तु राघवेण
प्रभावयुक्तेन परंतपेन ।
सा वीरपत्नी ध्वनता मुखेन*
[2] सुवेषरूपा विरराम तारा ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे चतुर्विंशः सर्गः

ध्वनता मुखेन विररामेति । त्यक्तपरिदेवनाऽभूत् इत्यर्थः । अविभु(४४ १/२)मानः सर्गः ॥ ४४ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे चतुर्विंशः सर्गः

## पञ्चविंशः सर्गः

[सुग्रीवाद्याश्वासनम्, वालिसंस्कारश्च]

सुग्रीवं चापि तारां च साङ्गदं सहलक्ष्मणः ।
समानशोकः काकुत्स्थः सांत्वयन्निदमब्रवीत् ॥ १ ॥

अथ वालिनः संस्कारः । सुग्रीवं चापीत्यादि । समानशोकः इति । सुग्रीवादिभिरिति शेषः ॥ १ ॥

* ध्वनता मुखेनोपलक्षिता–गो. रा. ति.

[1] महात्मना तु–च. ज. [2] सुरूपचेष्टा–ङ.



न शोकपरितापेन श्रेयसा युज्यते मृतः ।
यदत्रानन्तरं कार्यं तत् समाधातुमर्हथ ॥ २ ॥

चित्तशोकोपेतः करणग्रामपरितापः तथा । समाधातुं—अनुष्ठातुम् ॥ २ ॥

लोकवृत्तमनुष्ठेयं *कृतं वो बाष्पमोक्षणम् ।
† न कालादुत्तरं किंचित् [1] कर्म शक्यमुपासितुम् ॥ ३ ॥

लोकवृत्तं—लोकाचारोऽपि अनुष्ठेय एव । तच्च बाष्पमोक्षणरूपं कृतम् । अतः परं यदनन्तरं संस्कारलक्षणं तदेव समाधातुमर्हथ । कृतं बाष्पमोक्षेणेति तृतीया न दृश्यते । अलं कृतं इत्यादियोगे सर्वतो दृश्यते हि तृतीया । अतः कृतं—पर्याप्तमित्यर्थो न वर्णितः । अथ कालक्षेपो न कर्तव्यः इत्याह—न कालादुत्तरमित्यादि । तत्तत्कर्मविहितकालात्परं तत्तत्कर्म किञ्चिदपि उपासितुं न शक्यम्† । कालस्यैव कर्मकारणत्वात् । न हि विहाय पर्वणि शक्या इष्टिः अनुष्ठातुम् ॥ ३ ॥

‡ नियतिः कारणं लोके नियतिः कर्मसाधनम् ।
नियतिः सर्वभूतानां § नियोगेष्विह कारणम् ॥ ४ ॥

* कृतं—पर्याप्तम् । बाष्पमोक्षणमिति द्वितीया तृतीयार्थे—ति. कृतं—अलम्–ती. † अकाले कृतस्याकृतप्रायत्वादिति भावः–ति. बाष्पमोक्षणातिरिक्तं किमपि न युष्माभिः कर्तुं शक्यमित्याह—न कालादिति। कालादुत्तरं—कालं विनेत्यर्थः। किञ्चित् कर्म उपासितुं—कर्तुं न शक्यम्। दैवाशामुल्लंघ्य स्वातन्त्र्येण किञ्चिदपि कर्म कर्तुं न शक्यमित्यर्थः–गो. ‡ नियतिः—नियम्यतेऽनयेति नियतिः कालः–ती. रा. ईश्वरः–गो. § नियोगेषु–नियमनेषु–ती. प्रेरणेषु–गो. ज्योतिष्टोमादिषु–ति. तत्तज्जातिविषयकाग्रहेषु–रा.

[1] परं कर्म उपा–ङ.

कालस्यैव चोदितार्थानुष्ठानसाधनत्वमाह—नियतिरित्यादि । नियतिः—कालकृता व्यवस्था लोके—लोकसृष्ट्यादिव्यापारे, तथा सृष्टस्य तस्य कर्मसाधनं—लौकिकालौकिकप्रवृत्तिकारणमपि नियतिरेव । न हि उदयास्तमयदिनमासादिकालनियतिं विना प्रवृत्तिमात्रं समस्ति । सर्वभूतानां नियोगाधिकृतप्राणिमात्रस्य तत्तत्कर्मनियोगेऽपि नियतिरेव कारणम् ॥ ४ ॥

*न कर्ता कस्य चित् कश्चित् नियोगे चापि नेश्वरः ।
स्वभावे वर्तते लोकः तस्य कालः परायणम् ॥ ५ ॥

---

*किमनया कालादृष्टकल्पनया ? प्राणिन एवान्योन्यं कर्तारः कारयितारश्च भवन्तीत्यत आह—न कर्तेति–ती. एवमन्वयमुखेनेश्वराधीनत्वमुक्त्वा व्यतिरेकमुखेन दर्शयति—न कर्तेति । कश्चित्पुरुषः कस्यचित्कर्मणः न कर्ता—न स्वातन्त्र्येण कर्ता । नियोगे—कस्यचित्प्रेरणे च नेश्वरः—न स्वतन्त्रः । किन्तु स्वभावे वर्तते—स्वभावाधीनो वर्तते लोकः । तत्र हेतुमाह—तस्येति । कालः तस्य परायणं—गतिः । अत्र स्वभावनियतिकालादिशब्दैः ईश्वर एवाभिधीयते । अन्यथाऽनेकराजत्वापत्तेः । श्वेताश्वतरश्रुतिश्च 'स्वभावमेके कवयो वदन्ति ' इत्यादिकैवमाह–गो. कालातिरिक्तं न साक्षात्प्रवर्तकमित्याह—न कर्तेत्यादि । कस्यचित् कृष्यादेः कश्चित्कर्ता न—नियतिनिरपेक्षः कर्ता न । तथा नियोगे—नियोगानुष्ठानेऽपि नियतिनिरपेक्षः कश्चिदीश्वरो न—नियतिनैरपेक्ष्येण समर्थो न । यतः लोकः—लोकव्यवहारः स्वभावे—ईश्वरसहिते प्राक्कृतस्वकर्मणि वर्तते—तदधीनो वर्तते । तस्य च स्वभावस्य कालः परायणं—सहकारीत्यर्थः । तदुक्तं सूतसंहितायां शिववाक्येन 'स्वभावादेव संभूतं समस्तमिति केचन । तन्न सिध्यति विप्रेन्द्राः देशकालाद्यपेक्षणात् । मत्तः कर्मानुरूपेण जगज्जन्मादि जायते । एष स्वभावो विप्रेन्द्राः इति वेदार्थनिर्णयः । न मया केवलेनापि न च केवलकर्मणा । प्राणिनां कर्मपाकेन मया च मुनिसत्तमाः । जगतः संभवो नाशः स्थितिश्च भवति द्विजाः ' इति–ति. यो लोकः—जनः स्वभावे वर्तते—स्वभावाधीनतया वर्तते, तस्य लोकस्य परायणं—परमप्रवर्तकः कालः । अत एव कस्यचित्कर्मणः कश्चित् स्वभावादिः कर्ता न—कालमनपेक्ष्य कारको न । अत एव नियोगे—जात्यादिविषयकाग्रहेऽपि ईश्वरः—समर्थो न—रा.



ननु लौकिकालौकिकनियोगयोः कारणान्तरं दृश्यते इत्याशङ्क्य, साक्षात् प्रवर्तकत्वं अन्यस्य कस्यापि नास्तीत्याह—न कर्तेत्यादि । कस्यचित् कृष्यादिलौकिकनियोगस्यापि कश्चिदप्यविभूः कर्ता न समस्ति, तथा अलौकिके नियोगे ईश्वरस्सृष्टावपि न केवलं कर्ता । यदेवं अतः-स्वभावे—यथोक्तनियतावेव लोकः परावरसकललोकव्यवहारः वर्तते । तस्य—नियतिपर्यायस्वभावस्य च काल एव परायणम् । कालेनैव विनाड्यादिपरार्धान्तनियतीनां कल्पितत्वात् ॥ ५ ॥

*न कालः कालमत्येति न कालः परिहीयते ।
†स्वभावं च समासाद्य न कश्चिदतिवर्तते ॥ ६ ॥

कालात्मकस्य भगवतः सम्राजो ब्रह्मणः अपक्षपातेन तत्तत्कर्मानुरूपनित्यनियतपञ्चकृत्यप्रवृत्तिकारणत्वं दर्शयति त्रिश्लोक्या । त्रिश्लोकीयं पाठ्या योगिभिः । न काल इत्यादि । कालो भगवान् कालाग्निः चतुर्मुख रुद्रः काल स्वकृतिकालनियतिं नात्येति—नातिक्रामति । "षड्भिः प्राणैः विनाडी स्यात्" इत्यादिज्योतिस्सिद्धान्तसिद्धां नियतिं एकरूपामेव सदा प्रवर्तयति । सोऽसौ भगवान् कालः न परिहीयते । स्वस्यैव स्वेतरसर्वजगत्परिहाणिकरत्वतः स्वपरिहाणिहेत्वभावात् । अनाद्यन्तजगत्कारणस्य तस्य भगवतः आज्ञा श्रीमदादिगुरुभिः हिरण्यगर्भातिरिक्तपरापरसकलात्मभिरपि अशक्यलङ्घनेत्याह—स्वभावं चेत्यादि ।

---

*कालः—महाकालः कालं—प्राणिनां सुखदुःखप्रापकत्वेन दिवसपक्षमासर्त्वयनादिरूपं औपाधिकं कालं नातिवर्तते–ती. कालः—ईश्वरः कालं—आत्मानं–गो. कालः—भगवानीश्वरः कालं—स्वकृतां कालव्यवस्थां–ति. †स्वभावं—कालं–ती. स्वस्मिन् भवतीति—स्वभावः ईश्वरः ... । निरङ्कुशस्वतन्त्रः स्वकृतां व्यवस्थां स्वयमपि नातिवर्तते, तत्परतन्त्रोऽनीश्वरः किमुतेति भावः–गो.

उक्तार्थः स्वभावशब्दः । तं समासाद्य संसरत् कश्चिदपि किंचिदपि तन्नातिवर्तते । सर्वथैव उत्पत्त्यादौ पारतंत्र्यस्य अविवादात् ॥ ६ ॥

*न कालस्यास्ति बन्धुत्वं †न हेतुर्न पराक्रमः ।
न मित्रज्ञातिसंबन्धः कारणं नात्मनो‡ वशः ॥ ७ ॥

तस्य भगवतः अपक्षपातप्रवृत्तिपरं स्वातंत्र्यदर्शनम्—न कालस्येत्यादि । प्राप्तकालं वस्तु निर्घृणं सर्वथा संहरत्येव । न किंचिदपि प्राप्तकालं पक्षपातात् परित्यजतीत्यर्थः । प्राप्तकालस्य कालकृतसंहारनिर्वर्तने कश्चिदपि हेतुः न समास्ति । अस्यैव प्रपञ्चनं—न पराक्रम इति । परमशूरः वालिरावणादिः प्राप्तकाले निहन्यत एव तृणवत् कालेन । बहुमित्रसंबन्धः बहुज्ञातिसंबन्धो वा यथा लौकिकानर्थपरिहारकारणं, एवं अयं कालकटाक्षितसंहारपरिहारे न कारणम् । सोऽसौ भगवान् न आत्मनः प्रत्यग्वर्गस्य वशः । तदिच्छानुवर्ती न भवति ॥ ७ ॥

किन्तु §कालपरिणामः द्रष्टव्यः साधु पश्यता ।
धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥ ८ ॥

किन्तु—परं स्वतन्त्रेण भगवता कालेन क्रियमाणस्वस्वकर्मपरिपाक एव साधु पश्यता—सम्यक् भगवद्भवदर्शनवता द्रष्टव्यः । "स्वकृतस्य सुकृतस्य दुष्कृतस्य वा फलं दत्तं भगवता" इत्येतावदेव

---

*कालस्य पुरुषेण सह वशीकरणहेतुभूतं बन्धुत्वं नास्ति–ती. †हेतुं किञ्चिन्नापेक्षते । पराक्रमादिकं च न गणयति चेति वा । ‡आत्मनः पुरुषस्य–ती. जीवस्य–गो., ति. आत्मनः—परमात्मनः वशो यः कालः, तस्य–रा. §कालपरीणामः—कालस्य ईश्वरस्य परिणामः । अत्र नियतिकालस्वभावपदैः व्यामिश्रतयोक्तिः तदानीं रहस्यस्य वक्तुमनर्हत्वात्–गो.



द्रष्टव्यम् । न हर्षविषादौ, न वा स्वसामर्थ्यासामर्थ्यदुर्मतिश्च कर्तव्येत्यर्थः । यदेवं अतः—धर्मश्चेत्यादि । चकारैः अधर्मादयः । कालक्रमेण—कालप्रवृत्तिक्रमेण—तत्तत्क्लेशकर्मविपाकाशयचक्रानुरूपेण समाहिताः—सम्पादिताः भवन्ति ॥ ८ ॥

*इतः स्वां प्रकृतिं वाली गतः प्राप्तः क्रियाफलम् ।
†[1]सामदानार्थसंयोगैः पवित्रं प्लवगेश्वरः ॥ ९ ॥

उक्तां लोकस्थितिं प्रकृते योजयति—इत इत्यादि । इतः—अस्मात् लोकात् देहाच्च गतः—अपगतः स्वां प्रकृतिं—स्वनियतिं तत्प्रकृतिं स्वक्रियाफलं च प्राप्तः । क्रियाफलं च अशोच्यमेवेत्याह—सामेत्यादि । सामदानाभ्यां—सौम्योपायाभ्यां अर्जितैः अर्थैः—ऐश्वर्यैः इह पवित्रं—शुभं भोगं प्राप्तवान् ॥ ९ ॥

स्वधर्मस्य च संयोगात् जितस्तेन महात्मना ।
‡स्वर्गः [2]परिगृहीतश्च प्राणानपरिरक्षता ॥ १० ॥

स्वधर्मस्य—राजधर्मस्य च संयोगात् महात्मना तेन जितः स्वर्गश्च, प्राणान् अपरिरक्षता—युद्धे त्यक्तवता यथाकालं परिगृहीतश्च ॥

---

*क्रियाफलं—भोगं इह लोके प्राप्तवान् वाली । इतो लोकात्—देहाच्च गतः—अपगतः स्वां प्रकृतिं गतः—प्राप्तः । कार्याणां कारणे लयात् । एवं चेन्द्रलोकं गतो वालीति सूचितम्–ति. क्रियाफलं—स्वर्गं–ती., गो. †धर्मकामार्थसंयोगैः—विहितकालानुष्ठितधर्मार्थकामसम्बन्धैः । सामदानार्थसंयोगैः इति पाठे नीतिशास्त्रानुष्ठानैरित्यर्थः–गो. ‡उभाभ्यां (स्वधर्मानुष्ठानात् प्राणपरित्यागाच्च) जितः—पूर्वं वशीकृतः स्वर्गः इदानीं परिगृहीतश्च–गो. स्वधर्मस्य संयोगात् तेन महात्मना वालिना पूर्वं स्वर्गो जितः—अर्जितः । युद्धे प्राणानपरिरक्षता इदानीं परिगृहीतः—प्राप्तश्च–ति.

[1] दानमानार्थ–ङ., धर्मकामार्थ–ङ., झ. [2] प्रतिगृहीतश्च–ङ.

एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः ।
तदलं परितापेन प्राप्तकालमुपास्यताम् ॥ ११ ॥

एषा नियतिः—कालकर्मपरिपाकप्राप्तिरित्यर्थः । प्राप्तकालं, कर्मेति शेषः ॥ ११ ॥

[1] वचनान्ते तु रामस्य लक्ष्मणः परवीरहा ।
अवदत् प्रश्रितं वाक्यं सुग्रीवं * गतचेतसम् ॥
कुरु त्वमस्य, सुग्रीव ! प्रेतकार्यमनन्तरम् ॥ १२ ॥

अस्य प्रेतकार्यं कुरु इत्यन्वयः ॥ १२ ॥

ताराङ्गदाभ्यां सहितः वालिनो दहनं प्रति ।
समाज्ञापय काष्ठानि शुष्काणि च बहूनि च ॥ १३ ॥
चन्दनादीनि दिव्यानि वालिसंस्कारकारणात् ॥ १४ ॥

तत्र किं कर्तव्यमित्यत्राह—ताराङ्गदाभ्यामित्यादि ॥ १३–१४ ॥

समाश्वासय चैनं त्वं अङ्गदं दीनचेतसम् ।
मा भूः बालिशबुद्धिस्त्वं त्वदधीनमिदं पुरम् ॥ १५ ॥
अङ्गदस्त्वानयेन्माल्यं वस्त्राणि विविधानि च ।
घृतं तैलमथो गन्धान् यच्चात्र समनन्तरम् ॥ १६ ॥

कः कुत्राज्ञापनीयः इत्यत्राह— अङ्गदस्त्वित्यादि ॥ १६ ॥

त्वं, तार ! शिबिकां शीघ्रं आदायागच्छ संभ्रमात् ।
त्वरा गुणवती युक्ता ह्यस्मिन् काले विशेषतः ॥ १७ ॥

त्वं तारेति । तारः—सुग्रीवसचिवः ॥ १७ ॥

---

* गतचेतसं—दुःखितमिति यावत्–गो.

[1] वचनादेव–ङ.



सज्जीभवन्तु प्लवगाः शिबिका[1]वाहनोचिताः ।
समर्थाः [2] वालिनश्चैव निर्हरिष्यन्ति वालिनम् ॥ १८ ॥

वालिनः शिबिकावाहनोचिताः । औचित्यं सापिण्ड्य-सोदकत्वप्रयुक्तम् । समर्थाः—वहनसमर्थाः, बलवन्तः इति यावत् । * निर्हारः—प्रेतदहनम् ॥ १८ ॥

एवमुक्त्वा तु सुग्रीवं सुमित्रानन्दवर्धनः ।
तस्थौ भ्रातृसमीपस्थः लक्ष्मणः परवीरहा ॥ १९ ॥
लक्ष्मणस्य वचः श्रुत्वा तारः संभ्रान्तमानसः ।
प्रविवेश †गुहां शीघ्रं शिबिकासक्तमानसः ॥ २० ॥
आदाय शिबिकां [3]तारः स तु पर्यापतत् पुनः ।
वानरैरुह्यमानां तां शूरैरुद्वहनो[4]चितैः ॥
दिव्यां भद्रासनयुतां शिबिकां स्यन्दनोपमाम् ॥ २१ ॥

भद्रासनयुतां—मध्यप्रदेशे राजोचितमहार्हासनवतीम् ॥ २१ ॥

पक्षिकर्मभिराचित्रां द्रुमकर्मविभूषिताम् ।
[5] आस्थितां ‡चित्र[6]पत्तीभिः सुनिविष्टां समन्ततः ॥२२॥

पक्षिकर्मभिः—पक्षिप्रकृतिभिः आसमन्तात् चित्राम्—चित्रवतीम् । द्रुमकर्मभिः—कल्पकादिद्रुमप्रकृतिभिः विभूषिताम् । चित्रपत्तीभिः—चित्रपदातिभिः आस्थिताम् । सुनिविष्टाम्—सुसंनिवेशाम् ॥ २२ ॥

---

* निर्हारः—दहनदेशनयनं–ति. निर्हारः–शववहनं–गो. † गुहां—किष्किन्धां–गो. ‡ चित्रपत्तीभिः–चित्रलेखाभिः, आर्षो दीर्घः–गो.

[1] वहनो–ङ. [2] बलिन–ङ. ज. झ. [3] शीघ्रं तारः–ङ. [4] चिताम्–ङ. [5] आचितां–ङ. झ. [6] पक्षीभिः–ङ.

विमानमिव सिद्धानां *जालवातायनान्विताम् ।
सुनियुक्तां विशालां च † सुकृतां [1]शिल्पिभिः कृताम् ॥

जालोपेतानि वातायनानि तथा । गवाक्षान्तर्गततिर्यगूर्ध्वफलकरचन––जालः । सुनियुक्तां––सुश्लिष्टाम् । ‡ विशालां कृताम् । शिल्पिभिः––चतुरतक्षभि उक्तरीत्या सुकृतां––सुनिर्मिताम् ॥

दारुपर्वतकोपेतां चारुकर्मपरिष्कृताम् ।
वराभरणहारैश्च चित्रमाल्योपशोभिताम् ॥ २४ ॥

दारुनिर्मितैः पर्वतकैः– सूक्ष्मपर्वतैः । चारुकर्मभि — परिष्क्रियाकर्मभिः परिष्कृताम् अस्यैव प्रपञ्चः– वराभरणेत्यादि ॥

§ गुहागहनसंछन्नां रक्तचन्दनरूषिताम् ।
[2]पुष्पौघैः समभिच्छन्नां पद्ममालाभिरेव च ॥ २५ ॥

शिबिकोपरि वातवर्षातपत्राणाय प्रसार्यमाणं पञ्जरं गुहागहनमुच्यते, तेन संछन्नाम् । २५ ॥

तरुणादित्यवर्णाभिः [3]भ्राजमानाभिरावृताम् ।
‖ ईदृशीं शिबिकां दृष्ट्वा रामो लक्ष्मणमब्रवीत् ॥ २६ ॥
क्षिप्रं विनीयतां वाली प्रेतकार्यं विधीयताम् ॥ २७ ॥

---

* सूक्ष्मरन्ध्रसमूहो जाल, गोनयनाकृतिरन्ध्रसमूहो गवाक्षं–वातायनं–गो. जालवन्निर्मितवातमार्गयुतां–रा. ति कुड्योपरि तिर्यगवस्थितफलकनिर्मितविविधसन्निवेशरंध्राणि जालानि । वातायनानि वायुप्रवेशार्थगवाक्षाकाररन्ध्राणि–ती. † शिल्पिभिर्विशालां कृतां, एवमुक्तत्वात्या सुकृतां–ति. ‡ विशालं यथा तथा कृतामित्यर्थः । § कृत्रिमैः गुहागहनैः— गुहाभिः काननैश्च संछन्नाम–गो ‖ ईदृशीं शिबिकामिति पुनरुक्तिः व्यवहितानुस्मरणार्था–गो.

[1] विश्वकर्मणा -ङ. [2] पुष्पाढ्यैः–ज. [3] लम्बमानाभि–ङ.



*ततो वालिनमुद्यम्य सुग्रीवः शिबिकां तदा ।
आरोपयत विक्रोशन् अङ्गदेन महैव तु ॥ २८ ॥
आरोप्य शिबिकां चैव वालिनं गतजीवितम् ।
अलङ्कारैश्च विविधैः माल्यैर्वस्त्रैश्च भूषितम् ॥ २९ ॥
आज्ञापयत् तदा राजा सुग्रीवः प्लवगेश्वरः ।
और्ध्वदेहिकमार्यस्य क्रियता[1]मनुरूपतः † ॥ ३० ॥

आज्ञापयदित्यस्यैव प्रकारः––और्ध्वदेहिकमित्यादि ॥ ३० ॥

विश्राणयन्तो रत्नानि विविधानि बहून्यपि ।
अग्रतः प्लवगा यान्तु शिबिकासमनन्तरम् ॥ ३१ ॥
‡ [2]राज्ञामृद्धिविशेषा हि दृश्यन्ते भुवि यादृशाः [3] ।
[4]तादृशं वालिनः क्षिप्रं § [5]प्राकुर्वन् और्ध्वदेहिकम् ॥ ३२ ॥

ऋद्धिविशेषाः––ऐश्वर्यविशेषाः ॥ ३२ ॥

अङ्गदं [6]परिगृह्याशु [7]तारप्रभृतयस्तदा ।
क्रोशन्तः प्रययुस्सर्वे वानराः ‖ हतबान्धवाः ॥ ३३ ॥

---

* ततः—लक्ष्मण प्रति रामोक्तिश्रवणानन्तरम् । यद्वा लक्ष्मण प्रत्युक्तिः स्वमुद्दिश्यैवेति ज्ञात्वेत्यर्थः–गो. वस्तुतस्तु राज्ञां धाटीयम् ॥ † अनुकूलतः (पा.) नदीकूलसमीपे शास्त्रानुसारतो वा । अत्र इतिकरणं द्रष्टव्यम्–ति. ‡ राज्ञां भुवि—चिताभूमिसमीपे यादृशा ऋद्धिविशेषा दृश्यन्त—अदृश्यन्त, तादृशैः ऋद्धिविशेषैः, हे वानराः! भर्तृसत्क्रियां–समीचीनप्रमीतक्रियां भवन्तः कुर्वन्तु (पा.)–रा. ऋद्धिविशेषाः—ऋद्धिविशेषानुरूपाः यादृशाः—और्ध्वदैहिकक्रियाप्रकाराः दृश्यन्ते, तादृशमौर्ध्वदैहिकं क्षिप्रं प्राकुर्वन् गो. ऋद्धिविशेषा यादृशा तादृशं तदनुरूपमिति वा ॥ § प्राकुर्वन–कर्तुमारभन्त–रा. ‖ हताः राजवधातेन निहतप्राया बान्धवाः येषां–रा. हतः बान्धवः—राजा येषामिति वा । राजा हि प्रथमो बन्धुः प्रजानाम् ॥

[1] मनुकूलतः–च. [2] राज्ञामृद्धिविशिष्टा हि दृश्यते भुवि यादृशी-ङ. [3] एतदनन्तरं—तादृशामिह कुर्वन्तु वानरा भर्तृसत्क्रियाम् इत्यधिकं–ङ. ज. [4] तादृशा–ङ. [5] प्राक्कुर्वन्–झ. [6] परिरभ्या–ज. [7] तारा–ङ.

ततः [1]प्रणिहिताः सर्वाः [2]वानर्योऽस्य वशानुगाः*।
चुक्रुशुर्वीरवीरेति भूयः क्रोशन्ति ताः [3]स्त्रियः ॥ ३४ ॥

प्रणिहिताः—समेताः ॥ ३४ ॥

[[4]ताराप्रभृतयः सर्वाः वानर्यो [5]हतयूथपाः।
अनुजग्मुर्हि भर्तारं क्रोशन्त्यः करुणस्वनाः ॥]
तासां [6]रुदितशब्देन वानरीणां वनान्तरे।
वनानि गिरयः [7]सर्वे विक्रोशन्तीव सर्वतः ॥ ३५ ॥

विक्रोशन्तीवेति। प्रतिध्वनिनेति शेषः ॥ ३५ ॥

पुलिने गिरिनद्यास्तु *विविक्ते जलसंवृते।
चितां चक्रुः सुबहवः वानराः [8]शोककर्शिताः ॥ ३६ ॥

गिरिवर्तिनी नदी—गिरिनदी ॥ ३६ ॥

अवरोप्य ततः स्कन्धात् शिबिकां † [9]वहनोचिताः।
तस्थुरेकान्तमाश्रित्य सर्वे शोक[10]समन्विताः ॥ ३७ ॥
ततस्तारा पतिं दृष्ट्वा शिबिकातलशायिनम्।
आरोप्याङ्के शिरस्तस्य विललाप सुदुःखिता ॥ ३८ ॥
हा वानर[11]महाराज! हा नाथ! मम वत्सल!
हा महार्ह! महाबाहो! हा मम प्रिय! पश्य माम् ॥३९॥

---

* विविक्ते—पूते, 'विविक्तौ पूतविजनौ' इत्यमरः–ती. † वहनोचिताः—वाहकाः–गो.

[1] प्रणादिताः–ङ. [2] वानरस्य–ङ. [3] प्रियम्–ज. [4] सर्गान्तदृश्यमान-संख्यादृष्ट्या अयं श्लोकः कतककर्तुरधिको वा। [5] हतबान्धवाः–ज. [6] क्रन्दित–ङ. [7] वृक्षाः–ङ. [8] वनचारिणः–ज. [9] वानरोत्तमाः–ज. [10] परायणाः–ज. [11] महावीर–ङ.



जनं न पश्यसीमं त्वं कस्मात् शोकाभिपीडितम्।
प्रहृष्टमिव ते वक्त्रं गतासोरपि, मानद! ॥ ४० ॥
अस्तार्कसमवर्णं च [1]लक्ष्यते जीवतो यथा ॥
एष त्वां रामरूपेण कालः कर्षति, वानर!
येन स्म विधवाः सर्वाः कृता एकेषुणा [2]रणे ॥ ४१ ॥

एकेषुणा रण इति। रणे—सुग्रीवरणे ॥ ४१ ॥

इमास्तास्तव, राजेन्द्र! वानर्यो *[3]वल्लभाः सदा।
पादैर्विकृष्टमध्वानं आगताः किं न बुध्यसे? ॥४२॥
तवेष्टा ननु नामैताः भार्याश्चन्द्रनिभाननाः ॥ ४३ ॥

विकृष्टं—दूरम् ॥ ४३ ॥

इदानीं नेक्षसे कस्मात् [4]सुग्रीवं [5]प्लवगेश्वरम्।
एते हि सचिवाः, राजन्! तारप्रभृतयस्तव ॥ ४४ ॥
पुरवासी जनश्चायं [6]परिवार्यासतेऽनघ!
विसर्जयैतान् [7]प्लवगान् [8]यथोचितमरिन्दम!
ततः क्रीडामहे सर्वाः वनेषु †मदनोत्कटाः ॥ ४५ ॥
एवं विलपतीं तारां पतिशोक[9]परिप्लुताम्।
उत्थापयन्ति स्म तदा वानर्यः शोककर्शिताः ॥ ४६ ॥
सुग्रीवेण ततः सार्धं अङ्गदः पितरं रुदन्।
चितामारोपयामास शोकेनाभि[10]हतेन्द्रियः ॥ ४७ ॥

---

* अप्लवगाः (पा.) प्लुतगतिमजानन्त्यः (शोकादिति शेषः)–ति. तव वानर्यः तव प्लवगाश्च (पा.)–रा. † त्वया सहेति, विललापेति च शेषः–ति.

[1] दृश्यते–ज. [2] वने–ङ. [3] ऽप्लवगास्तथा–झ., प्लवगास्तथा–ङ. ज., त्यक्तवल्लभाः–झ. [4] अनाथाः–ङ. [5] प्लवगेश्वर–झ. [6] परिवार्य विषीदति–ज. [7] सचिवान्–ज. [8] यथापुर–ज. [9] परीवृताम्–ज. [10] प्लुतेन्द्रियः–ज.

ततोऽग्निं विधिवत् दत्त्वा *सोऽपसव्यं चकार ह।
पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः ॥ ४८॥

अपसव्यं—अपसव्यपरिक्रमणम्। इममग्निमिति शेषः॥ ४८॥

संस्कृत्य वालिनं ते तु [1]विधिपूर्वं प्लवङ्गमाः।
आजग्मुरुदकं कर्तुं नदीं शीतजलां [2]शिवाम् ॥४९॥

विधिपूर्वं संस्कृत्येति। देवांशत्वेन सुग्रीवहनुमदादेः स्वयंप्रतिभातसर्ववेदवेदार्थत्वात् वालिनश्च महाराजचरित्रत्वात् विचित्रसंध्यावन्दनाद्यनुष्ठानादिमत्त्वेन श्रौतसंस्काराहत्वाच्च ॥ ४९॥

ततस्ते सहिता[3]स्तत्र ह्यङ्गदं स्थाप्य चाग्रतः।
सुग्रीव†तारासहिताः सिषिचुर्वालिने जलम् ॥५०॥
सुग्रीवेणैव दीनेन दीनो भूत्वा महाबलः।
समानशोकः काकुत्स्थः प्रेतकार्याण्यकारयत् ॥५१॥
‡ततस्तु तं वालिनमग्र्यपौरुषं
प्रकाशमिक्ष्वाकुवरेषुणा हतम्।
प्रदीप्य दीप्ताग्निसमौजसं तदा
सलक्ष्मणं राममुपेयिवान् हरिः ॥५२॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे पञ्चविंशः सर्गः

---

राम(५२)मानः सर्गः ॥५२॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे पञ्चविंशः सर्गः

---

*अपसव्यं चकार—प्रदक्षिणेन परिक्रमणं चक्रे–रा. 'अपसव्यं तु दक्षिणं' इत्यमरः॥ †तारायाऽप्युदकदानं कुलाचारः–गो. ‡प्रकाशं—प्रसिद्धम्। यद्यपि तिर्यगधिकरणरीत्या तिरश्चां न शास्त्रविहितसंस्काराधिकारः, तथापि देवांशसंभूतानां तिर्यगवस्थामात्रभाजां वेदाध्ययनसंयोगात् देवक्षत्रजातत्वात् संस्काराहताऽस्तीति बोध्यम्–गो.

[1] विधिवत् प्लवगर्षभाः–ज. [2] शुभाम्–ङ. [3] स्तरवः–ङ.



## षड्विंशः सर्गः

[सुग्रीवाभिषेकः]

ततः शोकाभिसंतप्तं सुग्रीवं *क्लिन्न[1]वाससम्।
शाखामृगमहामात्राः परिवार्योपतस्थिरे॥ १॥

अथ रामानुमत्या सुग्रीवाङ्गदयोः राजयुवराजपट्टाभिषेकः। तत इत्यादि। क्लिन्नवाससं--आर्द्रवस्त्रपरिधानम्। शाखामृगमहामात्राः-वानरबलप्रधानाः इत्यर्थः॥ १॥

†[2]अभिगम्य महाबाहुं राममक्लिष्टकारिणम्।
स्थिताः प्राञ्जलयः सर्वे पितामहमिवर्षयः॥ २॥

ततः काञ्चनशैलाभः तरुणार्कनिभाननः।
अब्रवीत् प्राञ्जलिर्वाक्यं हनूमान् मारुतात्मजः॥ ३॥

भवत्प्रसादात् [3]सुग्रीवः पितृपैतामहं महत्।
वानराणां सुदंष्ट्राणां संपन्नबलशालिनाम्॥ ४॥

[4]महात्मनां सुदुष्प्रापं प्राप्तो राज्यमिदं, प्रभो!
भवता समनुज्ञातः प्रविश्य नगरं शुभम्॥
संविधास्यति कार्याणि सर्वाणि ससुहृज्जनः॥ ५॥

कार्याणि—राजकार्याणि ॥ ५॥

---

*क्लिन्नवाससं—आर्द्रवस्त्रं, सद्यः स्नानात्–गो. †अभिगम्य, पूर्वश्लोकोक्ताः सर्वे ससुग्रीवा वानराः रामसमीपमागम्य।

[1] मानसम्–ङ. [2] अभिवाद्य–ङ. [3] काकुत्स्थ–ज. [4] एतदर्धद्वयस्थाने—वानराणां सुदुष्प्रापं प्राप्तं राज्यमिदं प्रभो—इति–ङ. झ.

*स्नातोऽयं विविधैर्गन्धैः औषधैश्च यथाविधि ।
अर्चयिष्यति रत्नैश्च माल्यैश्च त्वां विशेषतः ॥ ६ ॥

यथाविधि स्नात इति । राजाभिषेकाभिषिक्तः इत्यर्थः ॥ ६ ॥

इमां †गिरिगुहां रम्यां अभिगन्तुमितोऽर्हसि ।
कुरुष्व स्वामिसंबन्धं वानरान् संप्रहर्षयन् ॥ ७ ॥

स्वामिसंबन्धं—स्वामित्वसंबन्धम् । कुरुष्वेति । वानरराज्याभिषेकेणेति शेषः ॥ ७ ॥

एवमुक्तो हनुमता राघवः परवीरहा ।
प्रत्युवाच हनूमन्तं बुद्धिमान् वाक्यकोविदः ॥ ८ ॥

चतुर्दशसमाः, सौम्य! ग्रामं वा यदि वा पुरम् ।
न प्रवेक्ष्यामि, हनुमन्! पितुर्निर्देश[1]पालकः ॥ ९ ॥

सुसमृद्धां गुहां [2]रम्यां सुग्रीवो वानरर्षभः ।
प्रविष्टो विधिवद्वीरः क्षिप्रं राज्येऽभिषिच्यताम् ॥ १० ॥

अभिषिच्यतामिति । त्वयेति शेषः ॥ १० ॥

एवमुक्त्वा हनूमन्तं रामः सुग्रीवमब्रवीत् ।
वृत्तज्ञो वृत्तसम्पन्नं उदारबलविक्रमम् ॥ ११ ॥

इममप्यङ्गदं, [3]वीर! यौवराज्येऽभिषेचय ।
ज्येष्ठस्य हि सुतो ज्येष्ठः सदृशो विक्रमेण [4]ते ॥ १२ ॥
अङ्गदोऽयमदीनात्मा यौवराज्यस्य भाजनम् ॥ १३ ॥

---

*गन्धैरौषधैश्च स्नातोऽयं सुग्रीवः माल्यैः रत्नैश्च त्वां विशेषतोऽर्चयिष्यति—रा.

†गिरिगुहां—किष्किन्धाम् ॥

[1] पारगः–ज. [2] दिव्यां–ज. [3] वीरं–ज. [4] च–ज.



हि—यस्मात् ज्येष्ठस्य ज्येष्ठः सुतः विक्रमेण ज्येष्ठस्य सदृशश्च, तस्मात्—अङ्गदोऽयमित्यादि ॥ १३ ॥

*पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः ।
प्रवृत्ताः, सौम्य! चत्वारः मासा वार्षिकसंज्ञकाः ॥ १४ ॥

ये प्रवृत्ताः चत्वारो मासाः, तेषां अयं पूर्वो मासः इति योजना ॥ १४ ॥

नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम् ।
अस्मिन् वत्स्याम्यहं, सौम्य! पर्वते सहलक्ष्मणः ॥ १५ ॥

इयं गिरिगुहा रम्या विशाला युक्तमारुता ।
प्रभूतसलिला, सौम्य! प्रभूतकमलोत्पला ॥ १६ ॥

युक्तमारुता—उचितवातवती ॥ १६ ॥

†कार्तिके समनुप्राप्ते त्वं रावणवधे यत ।

---

*सीतान्वेषणोद्योगं सुग्रीवस्यालक्ष्याह—पूर्वोऽयमिति—**ति.** श्रावणभाद्रपदौ वर्षर्तुः । तदेकदेशत्वात् श्रावणो वार्षिक इत्युच्यते । वार्षिकसंज्ञकाश्चत्वारो मासा इति । आश्वयुजाषाढाभ्यां चतुष्टमिति ज्ञेयम्, छत्रिन्यायात् । वर्षमुखत्वात् वर्षानन्तरकालत्वाच्च चत्वारोऽपि युद्धयोग्या न भवन्ति । कश्चित्तु—'पक्षा वै मासाः' इति श्रुतिपक्षमाश्रित्य चत्वारो वार्षिका मासा इत्युक्तम् । 'श्रावणः प्रथमो मासः' इत्यत्रापि प्रथमः पक्ष इत्यर्थः । 'चत्वारो वार्षिका मासा गता वर्षशतोपमाः' इत्युपसंहारादित्याह—**गो.**

†कार्तिके मासि समनुप्राप्ते—समीपं प्राप्ते आश्वयुजान्त इत्यर्थः । एष नः समयः—संकेतः (पुनर्न मया बोधनीय इति भावः) । यत—यतस्व—सेनासन्नहनं कुरु । कार्तिकशब्दस्य आश्वयुजान्तपरत्वं स्वयमेव वक्ष्यति—'वयमाश्वयुजे मासि पिङ्गाक्षप्रतिबोधिताः' (किष्कि. 53, 22–24) इति । प्रचोदनं सन्नहनं, न तु निर्गमः । निर्गमस्तु मार्गशीर्षे । स्वसंकेतितकार्तिकातिक्रमादेव रामस्य सुग्रीवे कोपः, लक्ष्मणप्रेषणं च । स्वयंप्रभाबिलनिर्गमनानन्तरं 'द्रुमान् वासन्तिकान् दृष्ट्वा' (किष्कि. 53-17) [अनन्तरपुटे—

एष नः समयः, सौम्य! प्रविश त्वं स्वमालयम्॥
[1]अभिषिक्तः स्वराज्ये च सुहृदः [2]संप्रहर्षय ॥ १७ ॥

यत–प्रयतस्व । एष नः समय इति । 'कार्तिक्यां वयं संभूय प्रयतिष्यामहे' इत्येवंरूपः इत्यर्थः ॥ १७ ॥

इति रामाभ्यनुज्ञातः सुग्रीवो वानराधिपः ।
प्रविवेश पुरीं रम्यां किष्किन्धां वालिपालिताम् ॥१८॥
तं वानरसहस्राणि प्रविष्टं वानरेश्वरम् ।
[3]अभिवाद्य प्रविष्टानि सर्वतः [4]पर्यवारयन् ॥ १९ ॥
ततः प्रकृतयः सर्वाः दृष्ट्वा हरिगणेश्वरम् ।
*प्रणम्य मूर्ध्ना पतिताः वसुधायां समाहिताः ॥ २० ॥

---

इत्येतत् वसन्तपुष्पोद्गमोपक्रमभूतपत्रविगलनहेतुफाल्गुनापेक्षया । पक्षान्तरे फाल्गुन-चैत्रयोः वसन्तवत्त्वोक्तेर्वा । अयमत्र क्रमोऽनुसन्धेयः—'उत्तरस्यादिना पूर्वस्यावधिं जानीयात्' इति न्यायेन उत्तरस्योत्तरस्य ग्रहणात् पूर्वपूर्वकालसंख्याज्ञापनं वाल्मीकेः शैली । तथा च चैत्रे रामस्य साकेतान्निर्गमः । अगस्त्यागमनात्पूर्वं दशसंवत्सरा गता इत्युक्तम् । अथ पञ्चवट्यां वर्षत्रयानन्तरं चैत्रे प्राप्ते शूर्पणखानासिकाच्छेदनखरवधादिकं कृतमित्यवगम्यते । रावणेन च मारीचवचनादिना किञ्चिद्विलम्ब्य तस्मिन्नेव चैत्रे सीता हृता । सीताविरहेण दूयमानस्य रामस्य वसन्तवर्णने 'चैत्रो वनानिलः' (किष्कि. 1-36) इत्युक्तेः । लङ्कायां सीतायाः संवत्सरवासोक्तेश्च । पुनः फाल्गुने हि रावणवधः । आषाढे वालिवधः । शरदि सेनासन्नहनम् । मार्गशीर्षे वानरप्रस्थानम् । स्वयंप्रभाबिले बहुकालयापनम्, 'कालश्च नो महान् यातः' (किष्कि. 49-4) इत्युक्तेः । बहिर्निर्गमनानन्तरं फाल्गुनशुद्ध-त्रयोदश्यां हनुमतः समुद्रतरणम् । चतुर्दश्यां पुनरागमनम् । पौर्णमास्यां दण्डयात्रेत्यादि । अन्यत् युद्धकाण्डे वक्ष्यते–गो. *वसुधायां समाहिताः—संस्थिताः–रा. मूर्ध्ना प्रणम्य–नम्रीभूय वसुधायां दण्डवत् पतिताः–ति. मूर्ध्ना प्रणम्य वसुधायां पतिताः । समाहिताः—अनन्यमनस्काः–गो.

[1] अभिषिञ्चस्व–ज. झ. [2] संप्रचोदय–ङ. [3] अभिवार्य प्रहृष्टानि–ज.
[4] प्लवगेश्वरम्–ज.



सुग्रीवः प्रकृतीः सर्वाः संभाष्योत्थाप्य वीर्यवान् ।
*भ्रातुरन्तःपुरं सौम्यं प्रविवेश महाबलः ॥ २१ ॥

उत्थाप्यति । वसुधायां प्रणतानिति शेषः ॥ २१ ॥

[1]प्रविश्य त्वभिनिष्क्रान्तं सुग्रीवं [2]प्लवगेश्वरम् ।
अभ्यषिञ्चन्त सुहृदः सहस्राक्षमिवामराः ॥ २२ ॥

प्रविश्य त्वभिनिष्क्रान्तमिति । अन्तःपुरं कोशादिकं प्रविश्य स्त्रियश्च दृष्ट्वा अभिषेकाय पुनः प्रतिनिवृत्तं इत्यर्थः ॥ २२ ॥

तस्य पाण्डुरमाजह्रुः छत्रं हेमपरिष्कृतम् ।
शुक्ले च वालव्यजने हेमदण्डे यशस्करे ॥ २३ ॥
तथा सर्वाणि रत्नानि सर्वबीजौषधैरपि ।
सक्षीराणां च वृक्षाणां †प्ररोहान् कुसुमानि च ॥२४॥

सक्षीराणां वृक्षाणां प्ररोहानिति । न्यग्रोधादिशृङ्गानित्यर्थः ॥

शुक्लानि चैव वस्त्राणि श्वेतं चैवानुलेपनम् ।
सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च ॥ २५ ॥
चन्दनानि च दिव्यानि गन्धांश्च विविधान् बहून् ।
अक्षतं जातरूपं च प्रियङ्गुमधुसर्पिषी ॥
दधि चर्म च वैयाघ्रं ‡[3]वाराही चाप्युपानहौ ॥ २६ ॥

गन्धान्—गन्धद्रव्याणि ॥ २६ ॥

---

*भ्रातुरन्तःपुरं प्रविवेशेति । तारां संमान्य स्ववशीकरणार्थमिति शेषः–गो. †प्ररोहाः—अधोजटाः–ति. रा. पल्लवाः–गो. ‡वाराही–वराहचर्मविकृती–गो.

[1] प्रविष्टं भीमविक्रान्तं–ज. [2] वानरर्षभम्–ज. [3] वराहौ–ङ. पराध्यौं–च.ज.

समालम्भनमादाय *[1] रोचनां समनःशिलाम् ।
आजग्मुस्तत्र मुदिताः वराः कन्यास्तु षोडश ॥ २७ ॥

समालम्भनं—उपलेपनद्रव्यम् ॥ २७ ॥

ततस्ते वानरश्रेष्ठं [2]यथाकालं यथाविधि ।
रत्नैर्वस्त्रैश्च भक्ष्यैश्च तोषयित्वा †द्विजर्षभान् ॥२८॥

‡ततः कुशपरिस्तीर्णं समिद्धं जातवेदसम् ।
मंत्रपूतेन हविषा हुत्वा मंत्रविदो जनाः ॥२९॥

ततो हैमप्रतिष्ठाने वरास्तरणसंवृते ।
प्रासादशिखरे रम्ये चित्रमाल्योपशोभिते ॥३०॥

प्राङ्मुखं विविधैर्मन्त्रैः स्थापयित्वा वरासने ।
नदीनदेभ्यः संहृत्य तीर्थेभ्यश्च समन्ततः ॥३१॥

मन्त्रैः स्थापयित्वेति । 'वसवस्त्वा गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्ना रोहकृतानन्नानारोह साम्राज्याय' इत्यादिमन्त्रैः इत्यर्थः ॥३१॥

आहृत्य च समुद्रेभ्यः सर्वेभ्यो वानरर्षभाः ।
अपः कनककुम्भेषु निधाय [3]विमलाः शुभाः ॥३२॥

---

* रोचनां–गोरोचनाम् । समनःशिलां—शैलधातुविशेषसहितं तिलकसाधनं मनःशिला–**गो.** † द्विजर्षभान्—वानरजातीयद्विजर्षभान्–**ती.** ‡ ततः कुशेति । अनेनाग्निसाध्यकर्माधिकारं तेषां दर्शयति। मनुष्यसदृशसर्वव्यवहारात्, वेदज्ञत्वाच्च–**ति.**

[1] गोरोचनां मन–**च.**, गोरोचनमन–**ङ.** [2] अभिषेक्तुं–**च. ञ.** [3] विमलं जलम्–**ञ.**



*[1] शुभैर्वृषभशृङ्गैश्च [2] कलशैश्चापि काञ्चनैः ।
शास्त्रदृष्टेन विधिना †महर्षिविहितेन च ॥ ३३ ॥

वृषभशृङ्गैः-तन्निर्मितपात्रैरित्यर्थः । महर्षिविहितेन । बोधायनविहितेनेत्यर्थः ॥ ३३ ॥

गजो गवाक्षो गवयः शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव हनुमान् जाम्बवान् नलः ॥३४॥
अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना ।
सलिलेन सहस्राक्षं वसवो वासवं यथा ॥३५॥
अभिषिक्ते तु सुग्रीवे सर्वे वानरपुङ्गवाः ।
[3] प्रचुक्रुशुर्महात्मानः हृष्टास्तत्र सहस्रशः ॥३६॥

हृष्टाः प्रचुक्रुशुरिति । किलकिलाशब्दमकुर्वन् इत्यर्थः ॥ ३६ ॥

रामस्य तु वचः कुर्वन् सुग्रीवो [4] हरिपुङ्गवः ।
अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥३७॥
अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः ।
साधु साध्विति सुग्रीवं महात्मानोऽभ्यपूजयन् ॥३८॥
रामं चैव महात्मानं लक्ष्मणं च पुनःपुनः ।
प्रीताश्च तुष्टुवुः सर्वे तादृशे तत्र ‡[5] वर्तिनि ॥३९॥

तादृशे तत्र वर्तिनीति । अभिषिक्ते सुग्रीवे किष्किन्धायां वर्तमाने सतीत्यर्थः ॥ ३९ ॥

---

* वृषभशृङ्गादिभिरुद्धृत्य–**गो.** † महर्षिविहितेन– बौधायनादिविहितेन–**ति.** महर्षयः—मन्वादयः–**ती.** ‡ वर्तति (**पा.**)—वर्तमाने सति–**गो.**—

[1] शुभैर्हिरण्य–**ङ.** [2] सुकुशै–**ङ.** [3] प्रतुष्टुवु–**ङ.** [4] वानरेश्वरः–**ञ.** [5] वर्तति–**ङ.**

हृष्टपुष्टजनाकीर्णा पताकाध्वजशोभिता ।
बभूव नगरी रम्या किष्किन्धा *गिरिगह्वरे ॥४०॥

निवेद्य रामाय तदा महात्मने
महाभिषेकं कपिवाहिनीपतिः ।
रुमां च भार्यां प्रतिलभ्य वीर्यवान्
अवाप राज्यं त्रिदशाधिपो यथा ॥४१॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे षड्विंशः सर्गः

---

अपभी(४१ १/२)मानः सर्गः ॥ ४१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे षड्विंशः सर्गः

---

## सप्तविंशः सर्गः

[माल्यवत्पर्वतनिवासः]

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् ।
आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥१॥

अथ सुग्रीवं प्रस्थाप्य राघवस्य माल्यवद्गिरौ वासः । अभिषिक्ते त्वित्यादि । गुहां—किष्किन्धाम् ॥ १ ॥

* गिरिगह्वरे विद्यमाना किष्किन्धा—रा.



शार्दूलमृगसंघुष्टं सिंहैः भीमरवैर्वृतम् ।
[1] नानागुल्मलतागूढं बहुपादपसङ्कुलम् ॥ २ ॥

प्रस्रवणगिरिवर्णनम् — शार्दूलेत्यादि । गुल्मानि लताश्च गुल्मलताः ॥ २ ॥

ऋक्षवानरगोपुच्छैः मार्जारैश्च निषेवितम् ।
मेघराशिनिभं शैलं नित्यं [2] शुचिजलाश्रयम् ॥ ३ ॥

मार्जारैः—वनमार्जारैः ॥ ३ ॥

तस्य शैलस्य शिखरे महतीमायतां गुहाम् ।
प्रत्यगृह्णत वासार्थं रामः सौमित्रिणा सह ॥ ४ ॥

कृत्वा च समयं [3] सौम्यः सुग्रीवेण सहानघः ।
कालयुक्तं महद्वाक्यं उवाच रघुनन्दनः ॥
विनीतं भ्रातरं भ्राता लक्ष्मणं लक्ष्मिवर्धनम् ॥ ५ ॥

समयं—सीतान्वेषणकालप्रतिज्ञाम् । कालयुक्तं—तत्कालोचितम् ॥

इयं गिरिगुहा रम्या विशाला युक्तमारुता ।
अस्यां * [4] वसाव, सौमित्रे ! वर्षरात्रमरिन्दम ! ॥ ६ ॥

युक्तमारुता—उचितवातवती । वर्षरात्रमिति जात्येकवचनम् ॥६॥

गिरिशृङ्गमिदं रम्यं [5] उन्नतं, पार्थिवात्मज !
श्वेताभिः कृष्णताम्राभिः शिलाभिरुपशोभितम् ॥ ७ ॥

---

* वसाव—लोडुत्तमपुरुषद्विवचनम् ।

[1] नानाद्रुम—ङ. [2] शुचिकरं शिवम्—च., ज. [3] रामः—ज. [4] वत्स्याम—च., ज. [5] उत्तमं—च., ज.

नानाधातुसमाकीर्णं [1] दरीनिर्झरशोभितम् ।
विविधैर्वृक्षषण्डैश्च [2] चारु चित्रलतावृतम् ॥ ८ ॥

वृक्षषण्डैः चारु–सुन्दरम् ॥ ८ ॥

नानाविहगसंघुष्टं मयूररवनादितम् ।
मालतीकुन्दगुल्मैश्च [3] सिन्धुवारकुरण्टकैः ॥ ९ ॥
कदम्बार्जुन[4]सर्जैश्च पुष्पितैरुपशोभितम् ।
इयं च मालिनी रम्या फुल्लपङ्कजमण्डिता ॥ १० ॥
*नातिदूरे गुहाया नौ भविष्यति, नृपात्मज !
†प्रागुदक्प्रवणे देशे गुहा साधु भविष्यति ॥ ११ ॥
पश्चाच्चैवोन्नता, सौम्य ! निवातेयं भविष्यति ॥ १२ ॥

प्रागुदक्प्रवणे–ईशानदिङ्निम्नवति देशे वर्तमाना गुहा साधु–सम्यक् भविष्यतीति । सुखसाधनमिति शेषः ॥ ११–१२ ॥

‡गुहाद्वारे च, सौमित्रे ! शिला समतला शुभा ।
[5]श्लक्ष्णा चैवायता चैव भिन्नाञ्जनचयोपमा ॥ १३ ॥
गिरिशृङ्गमिदं, तात ! पश्य चोत्तरतः शुभम् ।
भिन्नाञ्जनचयाकारं [6]स्थितं श्वेतमिवाम्बरम् ॥ १४ ॥

---

* नातिदूर इति । वर्षाकालस्य प्रवृत्तत्वात् भाविजलसमृध्द्या समीपवर्तिनी भविष्यतीत्यर्थः–गो. † प्रागुदक्प्रवणे देशे वर्तमानत्वाभिधानात् गुहाया नैरृत्याभिमुखत्वमुक्तम् । अत एव पौरस्त्यवर्षप्रवेशाभावेन साधुत्वमुक्तं भवति—गो., ती. ‡ तेन बहिःप्रवेशनसौकर्यम्—ति.

[1] नदीदर्दुरसंयुतम्–ज. [2] द्वारि–ङ. [3] सिन्धुवारैः शिरीषकैः–ज. [4] वंशैश्च–ङ. [5] कृष्णा–ज. [6] अंभोधरमिवोत्थितम्–ङ.



उत्तरतः—उत्तरदिग्भागे । 'भिन्नाञ्जनचयाकारं स्थितं श्वेतमिवाम्बरम्' इति पाठः । शुक्लवस्त्रमिव स्थितं इत्यर्थः ॥ १४ ॥

दक्षिणस्यामपि दिशि स्थितं *श्वेतमिवा[1]परम् ।
कैलासशिखरप्रख्यं नानाधातुविभूषितम् ॥ १५ ॥
प्राचीनवाहिनीं चैव नदीं भृशमकर्दमाम् ।
गुहायाः [2]पूर्वतः पश्य त्रिकूटे †जाह्नवीमिव ॥ १६ ॥

त्रिकूटे–पूर्वकालोषितत्रिकूटपर्वते ॥ १६ ॥

[3]चम्पकैस्तिलकैस्तालैः तमालैरतिमुक्तकैः ।
पद्मकैः सरलैश्चैव [4]अशोकैश्चैव शोभिताम् ॥ १७ ॥

'अतिमुक्तः पुण्ड्रकः स्यात्'—குருக்கத்தி । पद्मकः—चन्दनभेदः । सरलः—पीतद्रुमः ॥ १७ ॥

[5]वानीरैस्तिमिशैश्चैव [6]वकुलैः केतकैर्धवैः ।
हिन्तालै[7]स्तिरिटैर्नीपैः [8]वेत्रकैः कृतमालकैः ॥ १८ ॥

'हिन्तालः तृणराजश्च'—தாளிப்பனை ॥ १८ ॥

तीरजैः शोभिता भाति नानारूपैस्ततः ।
वसनाभरणोपेता प्रमदेवाभ्यलङ्कृता ॥ १९ ॥

प्रमदेवाभ्यलङ्कृता, इयं नदी इत्यनुकर्षः ॥ १९ ॥

---

* श्वेतमिव—रूप्यमिव–गो. † जाह्नवी—जाह्नवीसदृशी मन्दाकिन्याख्या नदी–ति.

[1] म्बुदम्–ङ. म्बरम्–च., ज. [2] पुरतः–ज. [3] चन्दनै–ज. [4] अंकोलै–ङ. [5] नीवारैस्तिनिशै–ङ., वानीरैस्तिमिदै–ज. [6] वञ्जुलैः–ङ. [7] स्तिनिशै–ङ. [8] वेतसैः–ज.

शतशः पक्षिसङ्घैश्च नानानादैर्विनादिता ।
एकैकमनुरक्तैश्च चक्रवाकैरलङ्कृता ॥ २० ॥
पुलिनैरतिरम्यैश्च हंससारस[1]सेवितैः ।
प्रहसन्तीव भात्येषा [2]नारी सर्वविभूषिता ॥ २१ ॥
क्वचिन्नीलोत्पलच्छन्ना भाति रक्तोत्पलैः क्वचित् ।
क्वचिदाभाति शुक्लैश्च दिव्यैः कुमुदकुड्मलैः ॥ २२ ॥
पारिप्लवशतैर्जुष्टा बर्हिणक्रौञ्चनादिता ।
रमणीया नदी, सौम्य! [3]मुनिसङ्घैर्निषेविता ॥ २३ ॥

पारिप्लवः—शकटलीलः—மடல்நாரை ॥ २३ ॥

पश्य चन्दनवृक्षाणां पंक्तीः *[4]सुरुचिरा इव ।
ककुभानां च दृश्यन्ते मनसेवोदिताः समम् ॥ २४ ॥

सुरुचिरा इव—इवशब्दः अप्यर्थे । शोभमानाः चन्दनवृक्षपङ्क्तीरपीति योजनार्थः ॥ २४ ॥

अहो सुरमणीयोऽयं देशः, शत्रुनिषूदन !
[5]दृढं रंस्याव, सौमित्रे! साध्वत्र निवसावहै ॥ २५ ॥
†इतश्च नातिदूरे सा किष्किन्धा चित्रकानना ।
सुग्रीवस्य पुरी रम्या भविष्यति, नृपात्मज! ॥ २६ ॥
गीतवादित्रनिर्घोषः श्रूयते, जयतां वर !
नर्दतां वानराणां च मृदङ्गाडम्बरैः सह ॥ २७ ॥

---

* सुरञ्चिता इव (पा.)—मालारूपेण ग्रथिता इव-गो. † अत्र वासे किष्किन्धाऽपि समीपवर्तिनी भविष्यतीत्याह—इतश्चेति-गो.

[1] सेविता-ज. [2] नानारत्नसमन्विता-ज. [3] ऋषिसंघै-ङ. [4] सुरञ्चिता-ङ. [5] इह-ङ.



नातिदूरे इत्यत्र गमकं—गीतवादित्रेत्यादि । मृदङ्गानां आडम्बराः—शब्दाः ॥ २७ ॥

लब्ध्वा भार्यां कपिवरः प्राप्य राज्यं सुहृद्वृतः ।
ध्रुवं नन्दति सुग्रीवः संप्राप्य महतीं श्रियम् ॥ २८ ॥
[1]इत्युक्त्वा न्यवसत् तत्र राघवः सहलक्ष्मणः ।
बहुदृश्यदरीकुञ्जे तस्मिन् प्रस्रवणे गिरौ ॥ २९ ॥
सुसुखेऽपि *बहुद्रव्ये तस्मिन् [2]हि धरणीधरे ।
वसतस्तस्य रामस्य रतिरल्पाऽपि नाभवत् ॥ ३० ॥

बहुद्रव्ये—सुखसाधनबहुद्रव्यवति । रतिः—सुखम् ॥ ३० ॥

हृतां हि भार्यां स्मरतः प्राणेभ्योऽपि गरीयसीम् ।
[3]उदयाभ्युदितं दृष्ट्वा शशाङ्कं च विशेषतः ॥
आविवेश न तं निद्रा निशासु शयनं गतम् ॥ ३१ ॥

उदयपर्वते अभ्युदितः—उदयाभ्युदितः । †न तं इति-पदभ्रमः ॥ ३१ ॥

तत्समुत्थेन शोकेन बाष्पोपहत[4]चेतसम् ।
तं शोचमानं काकुत्स्थं नित्यं शोकपरायणम् ॥ ३२ ॥
तुल्यदुःखोऽब्रवीत् भ्राता लक्ष्मणोऽ‡[5]नुनयन् वचः ।
अलं, वीर! व्यथां गत्वा न त्वं शोचितुमर्हसि ॥ ३३ ॥

---

* बहुद्रव्ये—बहुपुष्पफलादिधने-गो. † नतं इति पदैकत्वभ्रमः स्यात्, पदद्वयमिति भावः । ‡ अनुनयं-पा.—अनुनयवत्-ति. विनीतं-रा.

[1] इत्युक्त्वेत्याद्यर्धस्थाने—एवमुक्त्वा महातेजा लक्ष्मणं शुभलक्षणम् । न्यवसत्तत्र धर्मात्मा राघवः सहलक्ष्मणः—इत्यर्धद्वयं-ङ. [2] प्रस्रवणे गिरौ-ङ. [3] उदयाभ्युदयं-ङ. [4] चेतनम्-ङ. [5] नुनयं-ज.

[1]शोचतो व्यवसीदन्ति [2]सर्वार्थाः, विदितं हि ते ॥ ३४ ॥

व्यथां गत्वा अलं—व्यथा मास्तु इत्यर्थः । विदितं हि ते इति । त्वयेति यावत् ॥ ३४ ॥

भवान् क्रियापरो लोके भवान् [3]दैवपरायणः ।
आस्तिको धर्मशीलश्च व्यवसायी च, राघव ! ॥ ३५ ॥

क्रियापरः——नित्यकर्मानुष्ठाता ॥ ३५ ॥

न ह्यव्यवसितः शत्रुं राक्षसं तं विशेषतः ।
समर्थस्त्वं रणे हन्तुं [4]विक्रमे जिह्मकारिणम् ॥ ३६ ॥

अव्यवसितः स त्वं शत्रुं हन्तुं न समर्थः इत्यन्वयः । विक्रमे——तत्प्रकाशनावसरभूते रणे——युद्धे । यदि शोकावसन्न इति शेषः ॥ ३६ ॥

समुन्मूलय शोकं त्वं व्यवसायं [5]स्थिरं कुरु ।
ततः सपरिवारं तं [6]निर्मूलं कुरु राक्षसम् ॥ ३७ ॥

यदेवं, अतः—शोकं समुन्मूलय । व्यवसायं शत्रुसंहारोद्योगम् ॥ ३७ ॥

पृथिवीमपि, काकुत्स्थ ! ससागरवनाचलाम् ।
परिवर्तयितुं शक्तः [7]किमङ्ग ! *पुनरावणम् ॥ ३८ ॥
शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः ।
ततः सराष्ट्रं सगणं रावणं त्वं वधिष्यसि ॥ ३९ ॥

---

*पुनः (पा.) इत्यत्र दीर्घाभावः आर्षः–गो.

[1] शोचन्तो–ङ., च. [2] सर्वथा–ङ. [3] देव–ज. [4] विक्रमैर्जिह्मकारिणम्, विक्रमो जयकारणम्–ङ. [5] स्थिरीकुरु–ज. [6] राक्षसं हन्तुमर्हसि–ज. [7] किं पुनस्तं हि–ज.



अहं तु खलु ते वीर्यं प्रसुप्तं प्रतिबोधये ।
*दीप्तै[1]राहुतिभिः काले भस्मच्छन्नमिवानलम् ॥ ४० ॥

काल इति । होमकाल इत्यर्थः ॥ ४० ॥

लक्ष्मणस्य तु तद्वाक्यं प्रतिपूज्य हितं शुभम् ।
राघवः सुहृदं स्निग्धं इदं वचनमब्रवीत् ॥ ४१ ॥
†वाच्यं यदनुरक्तेन स्निग्धेन च हितेन च ।
सत्यविक्रमयुक्तेन तदुक्तं, लक्ष्मण ! त्वया ॥ ४२ ॥
एष शोकः परित्यक्तः सर्वकार्यावसादकः ।
विक्रमेष्वप्रतिहतं तेजः प्रोत्साहयाम्यहम् ॥ ४३ ॥

विक्रमेषु——विक्रमकालेषु । तेजः, सहजमिति शेषः । प्रोत्साहयामि——वर्धयामि ॥ ४३ ॥

शरत्कालं प्रतीक्षिष्ये स्थितोऽस्मि वचने तव ।
सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ४४ ॥

सुग्रीवस्य प्रसादं–चित्तसौमनस्यम् । नदीनां प्रसादं——शरद्वशात् अपङ्किलोदकत्वम् ॥ ४४ ॥

‡उपकारेण वीरस्तु प्रतिकारेण युज्यते ।
अकृतज्ञोऽप्रतिकृतः हन्ति सत्त्ववतां मनः ॥ ४५ ॥

उपकारेणेति । अस्मत्कृतेन, युक्त इति शेषः । प्रतिकारेणेति । प्रत्युपकारेणेत्यर्थः । कुत एवं निश्चयः इत्यत्राह——अकृतज्ञ इत्यादि ।

---

*दीप्तैः—दीपकैः–ति. †अनुरक्तेन—अनुरागयुक्तेन, स्निग्धेन—तत्कालोचितप्रियपरेण–गो., ति. अनुरक्तेन—अनुरागयुक्तेन जनेन यद्वाच्यं, तत् स्निग्धेन—स्नेहयुक्तेन अत एव हितेन त्वया–रा. अनुरागः मानसिकः । आत्मगुणस्तु स्नेह इति वा ॥ ‡सज्जनापवादभीतः सुग्रीवोऽस्माकं प्रत्युपकारं करोत्येवेति भावः–गो.

[1] राहुतिसंघातः–ङ.

अकृतज्ञो भूत्वा यद्यप्रतिकृतः——अकृतप्रत्युपक्रियः भवति, तदा सत्त्ववतामस्माकं मनो हन्ति । मैत्रीं नाशयेत् । अतः मित्रत्वात् अवश्यं प्रत्युपकरोत्येव ॥ ४५ ॥

अथैवमुक्तः *प्रणिधाय लक्ष्मणः
कृताञ्जलिस्तत् प्रतिपूज्य भाषितम् ।
उवाच रामं स्वभिरामदर्शनं
प्रदर्शयन् दर्शनमात्मनः शुभम् ॥ ४६ ॥

आत्मनः शुभं दर्शनं——शुभबुद्धिं दर्शयन् उवाचेत्यन्वयः ॥ ४६ ॥

यथोक्तमेतत् तव सर्वमीप्सितं
नरेन्द्र! कर्ता न चिरात् [1]हरीश्वरः ।
शरत्प्रतीक्षः क्षमतामिमं भवान्
जलप्रपातं रिपुनिग्रहे धृतः ॥ ४७ ॥

जलप्रपातं——वर्षमित्यर्थः । धृतः——स्थिरनिश्चयः ॥ ४७ ॥

नियम्य [2]कोपं [3]प्रतिपाल्यतां शरत्
क्षमस्व मासान् चतुरो मया सह ।
वसाचलेऽस्मिन् मृगराजसेविते
[4]संवर्तयन् शत्रुवधे [5]समुद्यमम् ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे सप्तविंशः सर्गः

———

अस्मिन् अचले कालं संवर्तयन्–क्षपयन् वस । शिव(४८)-मानः(?)सर्गः ॥ ४८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे सप्तविंशः सर्गः

———

* प्रणिधाय——भाविकार्यमालोच्य । दर्शनं–मतम्–**गो.**

[1] तु वानरः–**ज.** [2] शोकं–**ङ.** [3] परिपाल्यतां–**ज.** [4] संवर्धयन्–**ङ.** [5] समर्थः–**ङ.**



## अष्टाविंशः सर्गः

[ वर्षर्तुवर्णनम् ]

स [1]तदा वालिनं हत्वा सुग्रीवमभिषिच्य च ।
वसन् *माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥ १ ॥

अथ वर्षर्तुवर्णनम् । स तदा वालिनमित्यादि ॥ १ ॥

†अयं स कालः संप्राप्तः समयोऽद्य जलागमः ।
संपश्य त्वं नभो मेघैः संवृतं गिरिसंनिभैः ॥ २ ॥

अयं स कालः संप्राप्त इति कोऽयमित्यतः——समयोऽद्य जलागमः इति । मेघैः संवृतं नभः आकाशम् ॥ २ ॥

‡नवमासधृतं गर्भं भास्करस्य गभस्तिभिः ।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥ ३ ॥

नवेत्यादि । द्यौः समुद्राणां रसं भास्करस्य गभस्तिभिः पीत्वा कार्तिक्यादिनवमासधृतं गर्भं–गर्भपरिपिकं जलं लोकस्य रसायनं——

———

*माल्यवतः——पूर्वं प्रस्रवणाख्ययोक्तस्य–**गो.** † समयः–सुग्रीवस्य स्थानावधित्वेन संकेतितः सोऽयं जलागमः कालः–वर्षाकालः अद्य संप्राप्तः–**गो.**, **ती.** जलागमः–वृष्टिप्रापकः, अत एव कालः–सर्वस्थित्युपदेशकः सः प्रसिद्धोऽयं समयः संप्राप्तः–**रा.** वस्तुतस्तु 'अयं स कालः संप्राप्तः' इति लोकवत् प्रत्यक्षनिर्देशः । 'समयोऽद्य जलागमः' इत्यपि लोकवदेव विवरणम् ॥ ‡ रसायनं–षड्रसानां कारणं गर्भं जलं प्रसूते–**ती.**, **गो.** रसायनं–सर्वरसानां मूलं समुद्राणां रसं पीत्वा–**रा.**

[1] तथा–**ङ.**, **झ.**

जीवातुं प्रसूते। गर्भवशात् सामुद्रस्याप्युदकस्य स्वादुता। उत्प्रेक्षामात्रमिदम्। वस्तुतस्तु "याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति" इत्येव ॥ ३ ॥

*शक्यमम्बरमारुह्य मेघसोपान पंक्तिभिः ।
कुटजार्जुनमालाभिः अलंकर्तुं [1]दिवाकरः ॥ ४ ॥

दिवाकरः अलंकर्तुं शक्यम्। †सर्वत्रात्रेदमव्ययम्। सुकरः इत्यर्थः ॥ ४ ॥

‡संध्या[2]रागोत्थितैस्ताम्रैः [3]अन्तेष्वधिकपाण्डरैः ।
स्निग्धैरभ्रपटच्छेदैः बद्धव्रणमिवाम्बरम् ॥ ५ ॥

संध्यारागस्य मेघपटलेषु उत्थितैः--उत्थानैः हेतुभिः ताम्रैः अन्तेषु—पर्यन्तभागेषु अधिकपाण्डरैः, तथाऽवस्थानस्यापि संभवात् वादः, स्निग्धैः श्लक्ष्णैः अभ्ररूपैः पटच्छेदैः छिन्नपटैः अम्बरं बद्धव्रणमिव—बद्धव्रणकपुरुषादिशरीरप्रदेश इव भातीत्यर्थः ॥ ५ ॥

मन्दमारुतनिःश्वासं संध्याचन्दनरञ्जितम् ।
आपाण्डुजलदं भाति कामातुरमिवाम्बरम् ॥ ६ ॥

---

*मेघसोपानपंक्तिभिः अम्बरमारुह्य कुटजार्जुनमालाभिः दिवाकरं अलंकर्तुं शक्यम्–गो. कुटजार्जुनमालाभिः, कर्तृभिः, मेघसोपानपङ्क्तिभिरम्बरमारुह्य दिवाकरः अलंकर्तुं शक्यम्–रा. †एतादृशस्थलेषु सर्वत्र उत्तरत्र ८ श्लोकादौ—'शक्यं' इत्यव्ययं बोध्यमित्यर्थः। ‡सन्ध्यारागोत्थितैः—उत्थितसन्ध्यारागैः, आहिताग्न्यादित्वात परनिपातः–गो.

[1] दिवाकरम्–ङ. [2] कालो–ङ. [3] अन्तेष्वपि च पाण्डुभिः–ज.



वर्षर्तुप्रारंभकालवर्णनम्--मन्दमारुतेत्यादि। सन्ध्यारूपेण चन्दनेन—हरिचन्दनेन रञ्जितम् तथा ॥ ६ ॥

एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता ।
सीतेव शोकसंतप्ता मही बाष्पं विमुञ्चति ॥ ७ ॥

बाष्पं--ऊष्माणम् ॥ ७ ॥

मेघोदरविनिर्मुक्ताः [1]कल्हारसुखशीतलाः ।
*शक्यमञ्जलिभिः पातुं वाताः [2]केतकिगन्धिनः ॥ ८ ॥

कल्हाराणां सुखावहाः शीतलाश्च तथा। अनेन वातस्य मान्द्यधर्मो दर्शितः। केतकिगन्धिनः इति स्पष्टो गन्धधर्मः। जलवत् श्रान्तिहरत्वादिसाम्यात् अञ्जलिभिः पातुं शक्यं इति वादः ॥

एष फुल्लार्जुनः शैलः केतकैरधिवासितः ।
सुग्रीव इव शान्तारिः धाराभिरभिषिच्यते ॥ ९ ॥

फुल्लाः—पुष्पिताः अर्जुनाः--इन्द्रद्रुमाः यस्मिन् स तथा। धाराः—वर्षधाराः ॥ ९ ॥

मेघकृष्णाजिनधराः धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ १० ॥

'मारुतापूरितगुहाः' इत्यनेन ध्वनिसंबन्धप्रदर्शनम्। प्राधीताः। 'आदिकर्मणि क्तः कर्तरि च', अध्येतुमुपक्रान्ताः वटवः इवेत्यर्थः ॥ १० ॥

---

*अञ्जलिभिः पातुमिति आदरातिशयादुक्तिः–ति.

[1] कर्पूरदल–ज. [2] केतक–ङ.

कशाभिरिव हैमीभिः विद्युद्भिरिव *ताडितम् ।
अन्तःस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ ११ ॥

अन्तर्गतस्तनितरूपो निर्घोषः कशाप्रहृतक्रियमाणशब्दः यस्य स तथा ॥ ११ ॥

नीलमेघाश्रिता विद्युत् स्फुरन्ती प्रतिभाति [1]मा ।
स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ॥ १२ ॥
†इमास्ताः मन्मथवतां हिताः प्रति हता दिशः ।
अनुलिप्ता इव घनैः नष्टग्रहनिशाकराः ॥ १३ ॥

इमा इत्यादि । घनैः अनुलिप्ताः—संप्राप्ताः, अत एव नष्टाः – अदृष्टाः ग्रहादयः यासु ताः तथा । ताः इमाः दिशः मन्मथवतां—सस्त्रीकाणामेव हिताः, अन्यान् प्रति हता एव—कष्टा एव ॥ १३ ॥

क्वचित् बाष्पाभि[2]संरुद्धान् वर्षागमसमुत्सुकान् ।
कुटजान् पश्य, सौमित्रे! पुष्पितान् गिरिसानुषु ॥
मम शोकाभिभूतस्य कामसंदीपनान् स्थितान् ॥ १४ ॥

बाष्पाभिसंरुद्धान् —– नवजलसेकजभौमबाष्पसंबन्धरूपपुष्पोदयनिमित्तवतः इत्यर्थः । तत एव पुष्पितान् सानुषु स्थितान् इत्यन्वयः ॥

---

* ताडितमिवेत्यन्वयः । † घनैरनुलिप्ता इवास्थिताः, नष्टग्रहनिशाकराः, अत एव प्रतिहताः—प्रतिहतिं प्राप्ताः—अपरिज्ञातप्राच्योदीच्यादिविभागाः इत्यर्थः । ता इमा दिशः मन्मथवतां—मन्मथोत्सववतां, सस्त्रीकाणामिति यावत्, हिताः—सुखकराः; विरहिणां तु दुःखकरा इति भावः—ती. मन्मथवतां—सस्त्रीकाणां, यद्वा आभिसारिकजनानाम्—गो. मन्मथोत्सवसाधनप्रियासहितानाम्—ति.

[1] मे—ङ. [2] सम्बद्धान्—ङ.



रजः प्रशान्तं सहिमोऽद्य वायुः
निदाघदोषप्रसराः प्रशान्ताः ।
स्थिता हि यात्रा वसुधाधिपानां
प्रवासिनो यान्ति नराः स्वदेशान् ॥ १५ ॥

सहिमः—सशैत्य इत्यर्थः । निदाघस्य ग्रीष्मस्य दोषप्रसराः—तापादयः । स्थिताः—स्तब्धाः । प्रवासिनः—विरहिणः ॥ १५ ॥

* संप्रस्थिता मानसवासलुब्धाः
प्रियान्विताः संप्रति चक्रवाकाः ।
अभीक्ष्णवर्षोदकविक्षतेषु
यानानि मार्गेषु न संपतन्ति ॥ १६ ॥

मानसवासः—मानससरोवासः । वर्षोदकविक्षतेषु—क्लिष्टगमनेष्वित्यर्थः । यानानि—रथशकटादीनि न सम्पतन्ति—न गच्छन्ति ॥ १६ ॥

क्वचित्प्रकाशं क्वचिदप्रकाशं
नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित् क्वचित् †पर्वतसंनिरुद्धं
रूपं यथा शान्तमहार्णवस्य ॥ १७ ॥

शान्तमहार्णवस्य—शान्तकालवर्तिमहासमुद्रस्य । निस्तरङ्गप्रलयकालसमुद्रस्येत्यर्थः ॥ १७ ॥

व्यामिश्रितं सर्जकदम्बपुष्पैः
नवं जलं पर्वतधातुताम्रम् ।

---

* मानसवासलुब्धाः—हंसाः संप्रस्थिताः । चक्रवाकाः कामोद्रेकेण प्रियान्विता भवन्ति—गो. † पर्वतसन्निरुद्धं शान्तमहार्णवस्य रूपं - स्वरूपं—ति.

मयूरकेकाभि[1]रनुप्रयातं
शैलापगाः शीघ्रतरं वहन्ति ॥ १८ ॥

सज्जानि—संनद्धानि कदम्बपुष्पाणि तथा। तैः व्यामिश्रितं नवं जलं पर्वतधातुताम्रमिव भातीति शेषः। मयूरकेकाभिरिति। केकाशब्दोपेतमयूरैरित्यर्थः। अनुप्रयातं—अनुसृतम्। जलमिति शेषः। १८॥

रसाकुलं षट्पदसंनिकर्षं
प्रभुज्यते जम्बुफलं [2]प्रकामम्।
अनेकवर्णं पवनावधूतं
भूमौ पतत्याम्रफलं विपक्वम् ॥ १९ ॥

रसाकुलं—रसनिबिडम्। षट्पदानां संनिकर्षः—प्रत्यासत्तिः यस्मिन् तत्। संभुज्यते, जनैरिति शेषः। विपक्वं श्रावणमासत्वात् अतिशयेन पक्वं आम्रफलम्। अत एव भूमौ स्वयमेव पतति ॥ १९ ॥

विद्युत्पताकाः सबलाकमालाः
शैलेन्द्रकूटाकृतिसंनिकाशाः।
गर्जन्ति मेघाः समुदीर्णनादाः
मत्ता गजेन्द्रा इव संयुगस्थाः ॥ २० ॥

गजमेघसमाधिः—विद्युत्पताका इत्यादि। बलाकमालया—पंक्त्या सहिताः सबलाकमालाः। कूटः—शिखरम् ॥ २० ॥

वर्षोदकाप्यायितशाद्वलानि
प्रवृत्तनृत्तोत्सवबर्हिणानि।
वनानि निर्वृष्टबलाहकानि
पश्यापराह्णेष्वधिकं विभान्ति ॥ २१ ॥

निर्वृष्टाः—नितरां वृष्टाः बलाहकाः येषु तानि तथा ॥ २१ ॥

---

[1] रुतानुयातं—ङ. [2] विपक्वम्—ङ.



समुद्वहन्तः सलिलातिभारं
*बलाकिनो वारिधरा नदन्तः।
महत्सु शृङ्गेषु महीधराणां
[1]विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ २२ ॥

बलाकिनः इति व्रीह्यादित्वादिनिः ॥ २२ ॥

†मेघाभिकामा परिसंपतन्ती
संमोदिता भाति बलाकपङ्क्तिः।
वातावधूता वरपौण्डरीकी
लम्बेव माला [2]रचिताम्बरस्य ॥ २३ ॥

मेघेष्वभिकामः गर्भार्थः यस्याः सा तथा। बलाकपङ्क्तिरिति। छान्दसो ह्रस्वः। बलाकापङ्क्तेरुत्प्रेक्षा—वातेत्यादि। वरा—श्रेष्ठा पौण्डरीकी—श्वेतपद्मविकारभूता अम्बरस्य रचिता लम्बा मालेव भाति ॥

बालेन्द्रगोपान्तरचित्रितेन
विभाति भूमिर्नवशाद्वलेन।
[3]गात्रानुपक्तेन ‡शुकप्रभेण
नारीव लाक्षोक्षितकम्बलेन ॥ २४ ॥

बालेन्द्रगोपैः अन्तरे—मध्येमध्ये चित्रितं तथा। गात्रानुपक्तेन—गात्रसंबन्धेन शुकप्रभेण। कम्बलस्य स्वतः शुकप्रभत्वम्। लाक्षया शोभार्थं मध्ये मध्ये उक्षितः तथा ॥ २४ ॥

---

* बलाकिनः—बकपंक्तियुक्ताः—रा. † मेघाभिकामा—गर्भधारणार्थं मेघमभिकामयन्त इति तथा—ती., गो., रा. ‡ शुकप्रभेण—हरितवर्णेन—रा.

[1] विमृश्य—ङ. [2] रुचिरा—ज. [3] गात्रानुषक्तेन—ङ., गात्रानुपक्तेन—ज.

*निद्रा शनैः केशवमभ्युपैति
द्रुतं नदी सागरमभ्युपैति ।
हृष्टा बलाका घनमभ्युपैति
कान्ता सकामा प्रियमभ्युपैति ॥ २५ ॥

केशवं निद्रा अभ्युपैतीति । प्रथमैकादश्यां निद्रोपक्रमः, उत्थानद्वादश्यां उत्थानं विष्णोः ॥ २५ ॥

जाता वनान्ताः †शिखिसंप्रनृत्ताः
जाताः कदम्बाः सकदम्बशाखाः ।
जाता वृषा गोषु समानकामाः
जाता मही [1]सस्यवनाभिरामा ॥ २६ ॥

शिखिसंप्रनृत्ता इति मत्वर्थीयाजन्तः । सकदम्बाः—कदम्बपुष्पसहिताः शाखाः येषां ते तथा । सस्यैः वनैश्चाभिरामा तथा ॥ २६ ॥

वहन्ति वर्षन्ति नदन्ति भान्ति
ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः
प्रियाविहीनाः शिखिनः[2] प्लवङ्गाः ‡ ॥ २७ ॥

वहन्तीत्यादीनां नद्यादिभिः क्रमात् संबन्धः ॥ २७ ॥

---

* आषाढे स्वापारंभः, श्रावणे निद्राऽऽसक्तिरुच्यते—गो. †शिखिनां सुष्ठु प्रनृत्तं येषु ते—गो. ‡ प्लवङ्गाः समाश्वसन्ति—सुग्रीवराज्यलाभात्—ति. एकत्रैव बहुभक्ष्यलाभेन अचलचित्ता भवन्ति—गो.

[1] सस्यवरा—ङ.  [2] प्लवङ्गमाः—ज.



प्रहर्षिताः केतकपुष्पगन्धं
आघ्राय [1]हृष्टा वननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्राः
सार्धं मयूरैः समदा नदन्ति ॥ २८ ॥

प्रहर्षिताः—संजातप्रहर्षाः । वननिर्झरेषु हृष्टा इति । क्रीडयेति शेषः । प्रपातशब्देति । प्रपातनिर्झरशब्देति यावत् ॥ २८ ॥

धारानिपातैरभिहन्यमानाः
कदम्बशाखासु [2]विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं
शनैर्मदं षट्चरणास्त्यजन्ति ॥ २९ ॥

पुष्परसः—पुष्परसास्वादैः अवगाढं—प्रवृद्धम् ॥ २९ ॥

अङ्गारचूर्णोत्करसन्निकाशैः
फलैः सुपर्याप्तरसैः समृद्धैः ।
जम्बूद्रुमाणां प्रविभान्ति शाखाः
[3]निलीयमाना इव षट्पदौघैः ॥ ३० ॥

अङ्गारः—शान्ताग्निः इङ्गालः— कली ॥ ३० ॥

तटित्पताकाभिरलङ्कृतानां
उदीर्णगम्भीरमहारवाणाम् ।
विभान्ति रूपाणि बलाहकानां
[4]रणोद्यतानामिव [5]वानराणाम्* ॥३१॥

---

*'विद्युत्पताकाः' इति (२०) श्लोकोक्तमेवार्थं आदराविशयेन भङ्ग्यन्तरेणोक्तवान्—गो. वस्तुतस्तु—तत्र 'संयुगरथाः' इति, अत्र 'रणोत्सुकानां' (रणोद्यतानां—पा.) इति च पदयोः दर्शनेन 'वानराणां' इति पाठः समञ्जसतरो वा ॥

[1] मत्ताः—ज.  [2] विलीयमानाः—ङ.  [3] निपीयमानाः—च., ज.
[4] रणोत्सुकाना—ज.  [5] वारणानाम्—ङ.

*मार्गानुगः शैलवनानुसारी
संप्रस्थितो मेघरवं निशम्य ।
[1]युद्धाभिकामः [2]प्रतिनागशङ्की
मत्तो गजेन्द्रः प्रतिसंनिवृत्तः ॥ ३२ ॥

निशम्य—अवलोक्य ॥ ३२ ॥

[3]क्वचित् प्रगीता इव षट्पदौघैः
क्वचित् प्रनृत्ता इव नीलकण्ठैः ।
क्वचित् प्रमत्ता इव वारणेन्द्रैः
विभान्त्यनेकाश्रयिणो वनान्ताः ॥ ३३ ॥

अनेकाश्रयिणः इति । अनेकभावाश्रयिण इत्यर्थः ॥ ३३ ॥

कदम्बसर्जार्जुनकन्दलाढ्या
वनान्तभूमि[4]र्नववारिपूर्णा ।
मयूरमत्ताभिरुतप्रनृत्तैः
आपानभूमिप्रतिमा विभाति ॥ ३४ ॥

कन्दलं—स्थलोत्पलम्—கொடலப்பூ । आपानभूमिः—मद्यपानभूमिः ॥ ३४ ॥

* स्वनिवासभूमिशैलवनानुसारी (तदनुगुण) मार्गानुगमने संप्रस्थितः पृष्ठतो मेघरवं निशम्य प्रतिनिवृत्तः—ती. स्वमार्गे गच्छन् गजः मेघरवं निशम्य पार्श्वे यत्र कुत्रचित् गजान्तरास्थितिं मन्वानः स्वमार्गं संत्यज्य मार्गान्तरमाश्रित इति यावत् ॥

[1] युद्धाभिरामः—ङ. [2] प्रतिनादशङ्की—ज. [3] क्वचिच्च मत्ताः—ङ.
[4] र्मेघवारि—ज.





[1]मुक्तासकाशं सलिलं पतद्वै
सुनिर्मलं पत्रपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहङ्गाः*
सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ ३५ ॥

विवर्णच्छदनाः—जलसेकतो विवर्णपक्षाः ॥ ३५ ॥

षट्पादतन्त्री[2]मधुराभिधानं
प्लवङ्गमोदीरितकण्ठतालम् ।
आविष्कृतं मेघमृदङ्गनादैः
वनेषु सङ्गीतमिव प्रवृत्तम् ॥ ३६ ॥

षट्पादः—भ्रमरः, तद्ध्वनिरूपः तन्त्रीणां मधुराभिधानं गीतं—गाथा यस्मिन् तत् तथा। †प्लवङ्गमाः—भेकाः, तदुदीरितरूपः कण्ठतालः यस्मिन् तत् तथा ॥ ३६ ॥

क्वचित्[3]प्रवृत्तैः [4]क्वचिदुन्नदद्भिः
क्वचिच्च वृक्षाग्रनिषण्णकायैः ।
[5]व्यालम्बबर्हाभरणैर्मयूरैः
वनेषु सङ्गीतमिव प्रवृत्तम् ॥ ३७ ॥

प्रवृत्तैः—प्रवृत्तपक्षप्रचारैः । सङ्गीतमित्यनेन तदुपलक्षितनृत्ताभिनयः ॥ ३७ ॥

* विवर्णच्छदनाः—विविधवर्णपक्षाः—गो., ती. विहङ्गाः—चातकाः—गो., रा. सुरेन्द्रदत्तमिति—भूमावपतितं जलमुच्यते ॥ † उत्प्लुत्य गच्छन्तीति—प्लवङ्गमाः—भेकाः ॥

[1] मुक्तासमाभं—ज. [2] मधुराभिनादं—ङ. [3] प्रनृत्तैः—ङ., ज.
[4] क्वचिदुन्नमद्भिः—ज. [5] व्यालम्बि—ज.

स्वनैर्घनानां *[1]प्लवगाः प्रबुद्धाः
विहाय निद्रां चिरसंनिरुद्धाम् ।
अनेकरूपाकृतिवर्णनादाः
नवाम्बुधाराभिहता नदन्ति ॥ ३८ ॥

चिरसंनिरुद्धां—चिरसम्पादिताम् । शुष्कमृत्तिकास्विति शेषः । अनेकरूपा आकृतिः—संस्थानं, वर्णः—शुक्लनीलादिवर्णाश्च येषां ते तथा ॥ ३८ ॥

नद्यः [2]समुद्वाहितचक्रवाकाः
तटानि [3]शीर्णान्यपवाहयित्वा ।
दृप्ता [4]नवप्रावृतपूर्णभोगा-
द्रुताः स्वभर्तारमुपोपयान्ति ॥ ३९ ॥

स्वभर्तृगामिस्त्रीसमाधिः नदीनाम्—नद्य इत्यादि । समुद्वाहिताः—धृताः स्तनस्थानीयाः चक्रवाकाः याभिः ताः तथा । शीर्णानि तटानि निरोधकजरतीस्थानीयानि, अपवाहयित्वा—निरस्येति यावत् । नवप्रावृतपूर्वं-नूतनपुष्पफलाद्युपहारपूर्वं पूर्णभोगायाहृतः स्वीकृतः याभिस्तथा । उपोपयान्ति । 'प्रसमुपोदः पादपूरणे' इति द्वित्वम् ॥ ३९ ॥

[5]नीलेषु नीलाः प्रविभान्ति [6]सक्ताः
मेघेषु मेघा नववारिपूर्णाः ।
दवाग्निदग्धेषु दवाग्निदग्धाः
शैलेषु शैला इव बद्धमूलाः ॥ ४० ॥

* प्लवगाः—मण्डूकाः—गो., रा., ति.

[1] विहगाः—ङ. [2] समुत्थापित—ङ. [3] शीर्णान्यवहापयित्वा—ङ. [4] नवप्राभृत—ङ.
[5] नीलेषु नीला नववारिपूर्णा मेघेषु मेघाः प्रतिभान्ति सक्ताः—ङ. [6] शक्ताः—ञ.



नीलेत्यादि । नीलेषु मेघेषु सक्ताः नववारिपूर्णाः नीलाः प्रविभान्ति । कथम्? दवाग्निदग्धेषु शैलेषु दवाग्निदग्धाः बद्धमूलाः—संसक्तमूलाः शैलाः इव । अभूतोपमेयम् ॥ ४० ॥

[1]प्रहृष्टसन्नादितबर्हिणानि
सशक्रगोपाकुलशाद्वलानि ।
चरन्ति नीपार्जुनवासितानि
गजाः सुरम्याणि वनान्तराणि ॥ ४१ ॥
नवाम्बुधाराहतकेसराणि
[2]द्रुतं परित्यज्य सरोरुहाणि ।
कदम्बपुष्पाणि सकेसराणि
*[3]नवानि हृष्टा भ्रमराः [4]पतन्ति ॥ ४२ ॥
मत्ता गजेन्द्रा मुदिता [5]गवेन्द्राः
वनेषु [6]विश्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा निभृता नरेन्द्राः
† प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥ ४३ ॥

गवेन्द्राः—वृषभाः । निभृताः—निरुद्धोद्योगाः । सुरेन्द्रः—देवेन्द्रः ॥

मेघाः [7]समुद्भूतसमुद्रनादाः
महाजलौघैर्गगनावलम्बाः ।
नदीस्तटाकानि सरांसि वापीः
महीं च कृत्स्नाम्[8]अपवाहयन्ति ॥ ४४ ॥

* कदम्बकेसराणामहृतत्वे हेतुः—नवानीति—गो. † प्रक्रीडित इति कर्तरि निष्ठा—ती., गो.

[1] प्रमत्त—ञ. [2] ध्रुवं—ञ. [3] वनानि—ङ. [4] पिबन्ति—ञ. [5] वृषेन्द्राः—ङ.
[6] विक्रान्ततराः—ञ. [7] समुद्भूत—ङ. [8] अभिपूरयन्ति—ङ., अभितर्पयन्ति—ङ., झ.

समुद्धूनः--निरुद्धः समुद्रनादः यैः ते तथा। अपवाहयन्ति--संपरिवाहान् कुर्वन्तीत्यर्थः ॥ ४४ ॥

[1] वर्षप्रवेगा विपुलाः पतन्ति
प्रवान्ति वाताः समुदीर्ण[2]घोषाः।
प्रणष्टकूलाः प्रवहन्ति शीघ्रं
नद्यो [3] जलैर्विप्रतिपन्नमार्गाः ॥ ४५ ॥

विप्रतिपन्नः--खिलीकृतः जन्तूणां मार्गः याभिः ताः तथा ॥४५॥

नरैर्नरेन्द्रा इव पर्वतेन्द्राः
सुरेन्द्र[4]दत्तैः पवनोपनीतैः।
घनाम्बुकुम्भैरभिषिच्यमानाः
* रूपं श्रियं स्वामिव दर्शयन्ति ॥ ४६ ॥

घनोपगूढं गगनं [5] सतारं
न भास्करो दर्शनमभ्युपैति।
नवैर्जलौघैर्धरणी [6] वितृप्ता
तमोविलिप्ता न दिशः प्रकाशाः ॥ ४७ ॥

वितृप्ता--जामितां प्राप्ता ॥ ४७ ॥

महान्ति कूटानि महीधराणां
धाराभिधौतान्यधिकं विभान्ति।
महाप्रमाणैर्विपुलैः प्रपातैः
मुक्ताकलापैरिव लम्बमानैः ॥ ४८ ॥

महाप्रमाणैः--दीर्घाकारैरित्यर्थः। प्रपतन्तीति प्रपाताः--निर्झराः॥

* नरेन्द्राः स्वां श्रियमिव, पर्वताः स्वरूपं दर्शयन्ति--ती., गो.

[1] वर्षप्रयागाः--ङ. [2] वेगाः--ज. [3] जलं विप्रति. [4] नीतैः--ज. [5] न ताराः--ज.

[6] विसृप्ता--ङ.



शैलोपलप्रस्खलमानवेगाः
शैलोत्तमानां विपुलाः प्रपाताः।
गुहासु संनादितबर्हिणासु
हारा [1] विकीर्यन्त इवाभिभान्ति ॥ ४९ ॥

समीपवर्तिगुहाः पतितबिन्दुकाः इति शेषः ॥ ४९ ॥

शीघ्रप्रवेगा विपुलाः प्रपाताः
निर्धौतशृङ्गोपतला गिरीणाम्।
मुक्ताकलापप्रतिमाः पतन्तः
महागुहोत्सङ्ग[2]तलैर्ध्रियन्ते ॥ ५० ॥

निर्धौत--क्षालितं शृङ्गाणां उपतलं यैः ते तथा ॥ ५० ॥

सुरतामर्दविच्छिन्नाः स्वर्गस्त्रीहारमौक्तिकाः।
[3] पतन्तीवाकुला दिक्षु तोयधाराः समन्ततः ॥ ५१ ॥
निलीयमानैर्विहगैः निमीलद्भिश्च पङ्कजैः।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥ ५२ ॥

विहगादिभिः अस्तं गतः रविः ज्ञायते--अनुमीयते। न तु कदाऽपि प्रत्यक्षतः इत्यर्थः ॥ ५२ ॥

* वृत्ता यात्रा नरेन्द्राणां सेना [4] पथ्येव वर्तते।
वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥५३॥

* वृत्ता--निवृत्ता-ती., गो., ति., रा.

[1] विशीर्यन्ते--ङ. [2] वने--ङ. [3] पतन्ति चातुका--ज. [4] प्रतिनिवर्तते--ङ.

वृत्ता—प्रसक्तयात्रा निर्वृत्तेत्यर्थः। प्रस्थिताऽपि सेना पथ्येव वर्तते ॥ ५३ ॥

*मासि [1]प्रोष्ठपदे ब्रह्म ब्राह्मणानामधीयताम्।
अयमध्यायसमयः सामगानामुपस्थितः ॥ ५४ ॥

ब्रह्म अधीयतां—वेदाध्ययनं कुर्वतां सामगानां अयं अध्यायसमयः—उपाकरणकालः उपस्थितः ॥ ५४ ॥

निवृत्तकर्मायतनः नूनं संचितसंचयः।
आषाढीमभ्युपगतः भरतः कोसलाधिपः ॥ ५५ ॥

निवृत्तकर्म—वर्षवशात् निरुद्धप्रवृत्तिनिवृत्तिकं आयतनं—राजधानी यस्य स तथा। संचिताः—चातुर्मास्ये गजतुरगादिरक्षणापेक्षिताः संचयाः—जीवनसाधनानि येन स तथा ॥ ५५ ॥

नूनमापूर्यमाणायाः सरय्वा वर्धते रयः।
†मां समीक्ष्य समायान्तं अयोध्याया इव स्वनः ॥ ५६ ॥

मां समीक्ष्य समायान्तमिति। अयोध्यायां पूर्वस्थितिकाले इति शेषः ॥ ५६ ॥

इमाः स्फीतगुणा वर्षाः सुग्रीवः सुखमश्नुते।
विजितारिः सदारश्च राज्ये महति च स्थितः ॥ ५७ ॥

वर्षा इति। प्राप्येति शेषः ॥ ५७ ॥

---

* अनेन भाद्रपदो मासः संप्रवृत्त इति सूचयति—गो. † प्रजानां स्वस्मिन्ननुरागस्य, तासु स्वानुरागमूलकत्वात्, स्वस्य प्रजानां च परस्परानुरागकथनमिदम्। लोकेऽपि हि 'मयि तस्य प्राणाः' इत्युक्तिः बहुलं दृश्यते ॥

[1] भाद्रपदे—ङ.



अहं तु हृतदारश्च राज्याच्च महतश्च्युतः।
* नदीकूलमिव क्लिन्नं अवसीदामि, लक्ष्मण! ॥ ५८ ॥

नदीकूलमिति कर्तृ ॥ ५८ ॥

शोकश्च मम विस्तीर्णः [1]वर्षाश्च भृशदुर्गमाः।
रावणश्च महान् शत्रुः [2]अपारः प्रतिभाति मे ॥ ५९ ॥

वर्षाश्चेति। विस्तीर्णा इत्यनुकर्षः। अपारः—दुष्प्रापवैरनिर्यातनपार इत्यर्थः ॥ ५९ ॥

अयात्रां चैव दृष्ट्वेमां मार्गांश्च भृशदुर्गमान्।
प्रणते चैव सुग्रीवे न मया किंचिदीरितम् ॥ ६० ॥

अयात्रां—यात्रानर्हां इमां वर्षां इत्यर्थः। सुग्रीवे च कार्योन्मुखे प्रणतेऽपि मया किञ्चिदपि सीतान्वेषणादिकमुद्दिश्य नेरितम् ॥ ६० ॥

अपि चातिपरिक्लिष्टं चिराद्दारैः समागतम्।
† आत्मकार्यगरीयस्त्वात् वक्तुं नेच्छामि वानरम् ॥ ६१ ॥

अपि च तदानीं अयं गरीयसे आत्मकार्याय वक्तुमनुचितश्चेत्याह—अपि चेत्यादि। नेच्छामि—नैच्छम् ॥ ६१ ॥

[3]स्वयमेव हि विश्रम्य ज्ञात्वा कालमुपागतम्।
उपकारं च सुग्रीवः वेत्स्यते नात्र संशयः ॥ ६२ ॥

---

* क्लिन्नं नदीकूलं क्रमशः यथा अपचिनोति तथेति भावः। † आत्मकार्यगरीयस्त्वपदीतिभियेति वा। सर्वोऽपि स्वार्थं बहुमन्यते, न तथा मया मन्तुं शक्यमिति भावः ॥

[1] मार्गाश्च—ङ. [2] अपारं—ङ. [3] अयमेव हि—ङ.

तस्मात् कालप्रतीक्षोऽहं स्थितोऽस्मि, शुभलक्षण !
सुग्रीवस्य नदीनां च प्रसाद[1]मनुपालयन् ॥ ६३ ॥

*उपकारेण [2]वीरो हि [3]प्रतिकारेण युज्यते ।
अकृतज्ञोऽप्रतिकृतः हन्ति सत्त्ववतां मनः ॥ ६४ ॥

उपकारेणेति । अस्मत्कृतेन युक्त इति शेषः । अकृतज्ञो हि सत्त्ववतां मनः हन्ति, नायं तथेति शेषः ॥ ६४ ॥

तमेवमुक्तः प्रणिधाय लक्ष्मणः
कृताञ्जलिस्तत्प्रतिपूज्य भाषितम् ।
उवाच रामं स्वभिरामदर्शनं
प्रदर्शयन् दर्शनमात्मनः शुभम् ॥ ६५ ॥

आत्मनः शुभं दर्शनं प्रदर्शयन् उवाच ॥ ६५ ॥

यथोक्तमेतत् तव सर्वमीप्सितं
नरेन्द्र ! कर्ता नचिराद्धरीश्वरः ।
शरत्प्रतीक्षः क्षमतामिमं भवान्
जलप्रपातं रिपुनिग्रहे धृतः ॥ ६६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे अष्टाविंशः सर्गः

---

अतोष (६६ १/२) मानः सर्गः ॥ ६६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे अष्टाविंशः सर्गः

---

* एतच्छ्लोकत्रयं गतसर्गान्तेऽपि समानम् ॥

[1] मभिकाङ्क्षन्-ज. [2] युक्तो हि-ङ. [3] प्रतीकारेण-ज.



## एकोनत्रिंशः सर्गः

[ सुग्रीवप्रतिबोधनम् ]

समीक्ष्य विमलं व्योम गतविद्युद्बलाहकम् ।
[1]सारसारवसंघुष्टं रम्यज्योत्स्नानुलेपनम् ॥ १ ॥

अथ हनुमद्वचनात् सुग्रीवेण सर्वतः स्वसेनाऽऽनयनाय दूतप्रेषणम् । समीक्ष्येत्यादि । विमलं व्योम समीक्ष्य, 'हरीश्वरमुपागम्य हनूमान् वाक्यमब्रवीत्' इत्यनेन सम्बन्धः । शरच्च वीक्ष्य, सुग्रीवं च कामवृत्तमवस्थितं वीक्ष्येत्यन्वयः ॥ १ ॥

समृद्धार्थं च सुग्रीवं *मन्दधर्मार्थसंग्रहम् ।
†[2]अत्यर्थमसतां मार्गं एकान्तगतमानसम् ॥ २ ॥

मन्दः धर्मार्थयोः संग्रहः यस्य स तथा । असतां मार्गं—कामप्रवृत्तिलक्षणं, एकान्तं नित्यमेव, गतं—प्राप्तं, मानसं यस्य स तथा ॥

[3]निर्वृत्तकार्यं सिद्धार्थं प्रमदाभिरतं सदा ।
प्राप्तवन्तमभिप्रेतान् सर्वानेव मनोरथान् ॥ ३ ॥

निर्वृत्तकार्यं—समाप्तस्वकार्यं, अत एव सिद्धार्थं अभीप्सितार्थं, प्राप्तवन्तमित्यनुकर्षः ॥ ३ ॥

‡स्वां च पत्नीमभिप्रेतां तारां चापि समीप्सिताम् ।
विहरन्तमहोरात्रं कृतार्थं विगतज्वरम् ॥ ४ ॥

---

*मोक्षप्रसक्तेरभावात्, त्रैवर्गिके द्वयोर्मन्दत्वे 'कामवृत्तं' इत्युक्तार्थसिद्धिः ॥
† असतां मार्गं अत्यर्थं आश्रयन्तमिति शेषः—ति. 'एकान्तगतमानसं' इत्यनेन 'कामोपभोगपरमाः एतावदिति निश्चिताः' इत्युक्तासुरी संपत् सूच्यते ॥ ‡ स्वां पत्नीं—रुमां—ति.

[1] सारसाकुल-ज. [2] अत्यर्थं चासतां-ज. [3] निवृत्त-ज.

क्रीडन्तमिव देवेशं [1] नन्दनेऽप्सरसां गणैः ।
मन्त्रिषु न्यस्तकार्यं च [2] मन्त्रिणामनवेक्षकम् ॥ ५ ॥
[3] उत्सन्नराज्य[4]सन्देशं कामवृत्त[5]मवस्थितम् ।
निश्चितार्थोऽर्थतत्त्वज्ञः कालधर्मविशेषवित् ॥ ६ ॥

निश्चितार्थः—निश्चितसर्वशास्त्रार्थः । अत एव कृत्याकृत्य-सकलार्थतत्त्वज्ञः । कालोचितं धर्मविशेषं अनुष्ठेयकृत्यं वेत्तीति स तथा ॥

[6] प्रसादवाक्यै[7]र्मधुरैः हेतुमद्भि[8]र्मनोरमैः ।
वाक्यवित् वाक्य[9]तत्त्वज्ञं हरीशं मारुतात्मजः ॥ ७ ॥

प्रसादप्रयोजनानि वाक्यानि तथा ॥ ७ ॥

हितं [10] तत्त्वं च *पथ्यं च सामधर्मार्थनीतिमत् ।
† प्रणयप्रीतिसंयुक्तं ‡ विश्वासकृतनिश्चयम् ॥
हरीश्वरमुपागम्य हनुमान् वाक्यमब्रवीत् ॥ ८ ॥

हितं—तत्कालहितम् । पथ्यं—कालान्तरहितं च । सामादि-चतुष्कं अस्मिन् अस्तीति तथा । विश्वासे—स्ववचनप्रामाण्ये कृत-निश्चयम् ॥ ८ ॥

राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्धिता ।
मित्राणां संग्रहः शेषः तं भवान् कर्तुमर्हति ॥ ९ ॥

कौली—कुलक्रमागता । शेषः—अवशिष्टकर्तव्यः ॥ ९ ॥

---

* पथ्यं—नीतिमार्गादनपेतम्—ती., गो. † प्रणयः—प्रार्थना, प्रीतिः—स्नेह-विशेषः—ती. प्रणयः—समानविषयः स्नेहः, प्रीतिः—न्यूनविषयः—गो. प्रणयः—नम्रता—रा. ‡ विश्वासकृतानां शास्त्रोक्तौ विश्वासयुक्तानां निश्चयः, यस्मिन् तत्—रा. आप्तवाक्यत्व-विश्वासे—विषये—कृतनिश्चयं—गो. आप्तवाक्यत्वविश्वासेन कृतनिश्चयम्—ती.

[1] गन्धर्वा—ङ. [2] मन्त्राणा—ज. [3] उच्छिन्न—ङ. [4] सन्देहं—ज. [5] मिव—झ. [6] प्रसाद—ङ., झ. [7] र्विविधैः. [8] र्मनोऽनुगैः—ङ. [9] तत्त्वज्ञः—ङ. [10] तथ्यं—ज.



यो हि मित्रेषु कालज्ञः सततं साधु वर्तते ।
तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते ॥ १० ॥

साधु वर्तते—साध्वनुष्ठानवान् वर्तते ॥ १० ॥

यस्य कोशश्च दण्डश्च मित्राण्यात्मा च, भूमिप !
*[1] समवेतानि सर्वाणि स राज्यं महदश्नुते ॥ ११ ॥

आत्मा—सकरणग्रामः । समवेतानि—स्ववशप्राप्तानि ॥ ११ ॥

तद्भवान् वृत्तसंपन्नः स्थितः पथि निरत्यये ।
† मित्रार्थमभिनीतार्थं यथावत् कर्तुमर्हति ॥ १२ ॥

निरत्यये—निरपाये । अभिनीतार्थं—प्रतिज्ञातार्थम् ॥ १२ ॥

संत्यज्य ‡ सर्वकर्माणि मित्रार्थे [2] योऽनुवर्तते ।
[3] संभ्रमाद्धि कृतोत्साहः [4] सोऽनर्थैर्नावरुध्यते ॥ १३ ॥

संभ्रमात्—त्वरया ॥ १३ ॥

यस्तु कालव्यतीतेषु [5] मित्रकार्येषु वर्तते ।
स कृत्वा महतोऽप्यर्थान् न मित्रार्थेन युज्यते ॥ १४ ॥

उचितकालाकृतं कृतमपि अकृतप्रायमित्याह—यस्त्वित्यादि ॥

यदिदं, वीर ! कार्यं नो मित्रकार्यं, अरिन्दम !
क्रियतां राघवस्यैतत् वैदेह्याः परिमार्गणम् ॥ १५ ॥

---

* समानि (पा.)—स्ववशत्वेन समत्वं—ति. समवेतानि—समुदितानि—गो. † अभिनीतार्थं—प्रापितप्रयोजनं यथा भवति, तथा—गो. ‡ सर्वकर्माणि—स्वभोगसाधनानि—गो. संभ्रमात्—आदरात्—गो.

[1] समान्येतानि—ज. [2] यो न वर्तते—ज. [3] संभ्रमाद्धिकृतो—ज. [4] सोऽयं नैवाव—ङ., सोऽनर्थैर्नाव—ज. [5] मित्रार्थं योऽनु.

[1] तदिदं वीर! कार्यं ते कालातीतं, अरिन्दम!
यदिदं कार्यमिति। मित्रकार्यमित्यर्थः ॥ १५ ॥

न च कालमतीतं ते निवेदयति कालवित्।
*त्वरमाणोऽपि [2] सन् प्राज्ञः तव, राजन्! वशानुगः ॥ १६ ॥

ननु कालात्ययो यदि स्यात् स्वयमेव कार्यार्थं निवेदयिष्यतीत्यत्राह—न चेत्यादि। अनिवेदने कारणमाह—प्राज्ञः तव वशानुगः इति। प्राज्ञत्वात् तव अभिप्रायमेव केवलं अनुगच्छन् तूष्णीं तिष्ठतीत्यर्थः ॥ १६ ॥

† कुलस्य [3] हेतुः स्फीतस्य [4] दीर्घबन्धुश्च राघवः।
‡ अप्रमेय[5]प्रभावश्च स्वयं चाप्रतिमो गुणैः ॥ १७ ॥

स्फीतस्य कुलस्य त्वदीयस्य हेतुः वृद्धिहेतुः। इदानीं कालान्तरेऽपि दीर्घबन्धुः—यावज्जीवसुहृत्। स्वयं चेति। चकारात् लक्ष्मणश्चेत्यर्थः ॥ १७ ॥

तस्य त्वं कुरु वै कार्यं पूर्वं तेन कृतं तव।
हरीश्वर! हरिश्रेष्ठान् आज्ञापयितुमर्हसि ॥ १८ ॥

कृतं तवेति। कार्यमिति शेषः। आज्ञापयितुमर्हसीति। पुरा रामनियोगादिति शेषः ॥ १८ ॥

---

* रामः कालविदपि, त्वरमाणोऽपि तव वशानुगः—त्वदभिप्रायं प्रतीक्षन्, वशी वा, गांभीर्यात् स्वयमागत्य न ज्ञापयेदिति भावः ॥ † स्फीतस्य कुलस्य हेतुः—महतो राजवंशस्याङ्कुररूपः इति वा ॥ ‡ अप्रमेयस्वभावः कुलस्य बन्धुः, स्वयं गुणैरप्रतिमश्च—ती. स्वयं चेति—स्वमप्यप्रतिमो गुणैरित्यर्थः—गो. अप्रमेयस्वभावः (पा.) इति स्वरूपतः महत्त्वं, गुणैरप्रतिम इति गुणतो महत्त्वं चोच्यते—इति वा॥

[1] यदिदं मित्रकार्यं ते वीरकार्यं—ङ. [2] स प्राज्ञः—ङ., ञ. [3] हेतुभूतः सन्, केतुभूतस्सन्, केतुः स्फीतस्य—ङ. [4] दीर्घबाहुश्च—ङ. [5] स्वभावश्च—ङ.



न हि तावत् भवेत् कालः व्यतीतश्चोदनादृते।
चोदितस्य हि कार्यस्य भवेत् कालव्यतिक्रमः ॥ १९ ॥

चोदनादृते—रामचोदनमनपेक्ष्य। त्वयैव प्रवृत्तौ तावत्कालो हि न व्यतीतो भवेत्। चोदितस्य हि कार्यस्य यदि करणं तदा कालव्यतिक्रमो भवेदेव ॥ १९ ॥

अकर्तुरपि कार्यस्य भवान् कर्ता, हरीश्वर!
किं पुनः प्रतिकर्तुस्ते *राज्येन च [1]धनेन च ॥ २० ॥

अकर्तुरपि—अनिष्पादितत्वत्कार्यस्यापि भवन् कर्ता, अर्हे कृत्यतृचश्च, कर्तुमर्हः। किं पुनः प्रतिकर्तुरिति। उपकर्तुरित्यर्थः ॥२०॥

शक्तिमानपि विक्रान्तः, वानरर्क्षगणेश्वर!
कर्तुं दाशरथेः प्रीतिं †आज्ञायां [2] किं नु सज्जसे? ॥ २१ ॥

आज्ञायां किं नु सज्जसे। रामनियोगेन कर्तुं किमर्थमिच्छसीत्यर्थः ॥

कामं खलु शरैः शक्तः सुरासुरमहोरगान्।
वशे दाशरथिः कर्तुं त्वत्प्रतिज्ञां तु कांक्षते ॥ २२ ॥

वस्तुतस्तु रामस्य स्वार्थे त्वयि नास्त्यपेक्षेत्याह—कामं खल्वित्यादि। त्वत्प्रतिज्ञां-सपरिवारोऽहं सीतान्वेषणादौ सहकारी भविष्यामीत्येवंरूपिणीं त्वत्प्रतिज्ञामित्यर्थः ॥ २२ ॥

‡ [3] प्राणत्यागाविशङ्केन कृतं तेन [4] तव प्रियम्।
तस्य मार्गाम वैदेहीं पृथिव्यामपि चाम्बरे ॥ २३ ॥

---

* राज्येन च धनेन च प्रतिकर्तुः—इत्यन्वयः ॥ † प्रीतिं कर्तुं आज्ञायां—आज्ञापनेऽपि न सज्जसे—नोद्योगं करोषि—गो. ‡ प्राणत्यागाविशङ्केनेत्यनेन उपकारमहत्त्वं द्योतितम्—गो. 'स्वप्राणानप्यविगणय्य त्वत्प्रियं तेन साधितं किल' इति लोकवदुक्तिरित्याशयः ॥

[1] वधेन च—ङ. [2] किं न—ङ. [3] प्राणत्यागप्रसक्तेन—ङ. [4] महत्—ञ.

प्राणत्यागाविशङ्कनेति। त्यजेः ण्यन्तात् घञ्, त्याजनं—त्यागः। स्वानपकारिवालिप्राणसंहारेऽपि मित्रकृत्यं स्वकृत्यं, मित्रारातिरेव मदरातिः इति बुद्ध्या निश्शङ्कसम्पादितहारः इत्यर्थः। मार्गाम इति लोट् ॥ २३ ॥

[1]न देवा न च गन्धर्वा नासुरा न मरुद्गणाः।
न च यक्षा भयं तस्य कुर्युः [2]किमुत राक्षसाः ॥ २४ ॥

भयं इति। रणे इति शेषः ॥ २४ ॥

*तदेवं शक्तियुक्तस्य पूर्वं [3]प्रियकृतस्तव।
रामस्यार्हसि, पिङ्गेश! कर्तुं सर्वात्मना प्रियम् ॥ २५ ॥

पिङ्गेशः—हरिराजः ॥ २५ ॥

†नाधस्तादवनौ नाप्सु गतिर्नोपरि चाम्बरे।
कस्यचित् [4]सज्जतेऽस्माकं, कपीश्वर! तवाज्ञया ॥ २६ ॥

इदानीं सुग्रीवस्य आज्ञावैभवं दर्शयति—नाधस्तादित्यादि। हे कपीश्वर! तव आज्ञया आकारणे सति अस्माकं हरीणां मध्ये यः कश्चिदपि सज्जते विलम्बते, तस्य कस्यचिदपि बलिनः दुर्बलस्यापि अधस्तात् पाताले गत्वापि गतिर्नास्ति—जीवनं नास्ति। तथा अवन्यादावपि ॥ २६ ॥

---

* तादृशशक्तियुक्तस्यास्माभिः किं कार्यमिति न शंकनीयम्, अस्माकमुपकृतवतः तस्य कार्यमस्माभिर्निर्वर्तनीयमिति लोकनीतिः पालनीयेत्याह—तदेवमिति।

† तवाज्ञयाऽस्मासु मध्ये कस्यचिदपि वानरादेः गतिः—गमनं अधस्तादादौ न सज्जते—न शिथिलीभवति—एतेन दुर्गमदेशे स्थापिता चेत्सीता, कथमन्वेषणीयमिति संशयो न कार्यं इति ध्वनितम्—रा. न सज्जते—न मन्दीभवति—गो.

[1] देवदानवगन्धर्वाः असुरास्समरुद्गणाः—च., ज. [2] किमिव—ज. [3] प्रतिकृत—ज. [4] सज्जतेऽस्मासु—ङ.



*तदाज्ञापय [1]कः किं ते [2]कुतो वाऽपि व्यवस्यतु।
हरयो ह्यप्रधृष्यास्ते सन्ति [3]कोट्यग्रतोऽनघाः ॥ २७ ॥

यदेवं अतः—'तत् आज्ञापय, कः किं ते कुतो वाऽपि व्यवस्यतु' इति पाठः। सार्वविभक्तिकः तसिल्। हरयः कुत्रापि तिष्ठन्तु, किंनामकः किं ते नियोगं व्यवस्यतु—उद्युक्तः अनुतिष्ठतु आज्ञापय। आज्ञापनीया वा सेना कियत्यस्तीत्यत्राह—हरय इत्यादि। कोट्यग्रतः—कोट्याः न्यर्बुदस्य चाग्रतः—उपरि समुद्रादुपसङ्ख्य-संख्येयास्ते सन्ति ॥ २७ ॥

तस्य तद्वचनं श्रुत्वा काले साधु [4]निवेदितम्।
सुग्रीवः [5]सत्त्वसम्पन्नः चकार मतिमुत्तमाम् ॥ २८ ॥

मतिं चकारेति। तदनुष्ठानविषयिणीमिति शेषः ॥ २८ ॥

[6]स संदिदेशाभिमतं नीलं नित्यकृतोद्यमम्।
दिक्षु सर्वासु सर्वेषां सैन्यानामुपसंग्रहे ॥ २९ ॥
यथा सेना समग्रा मे यूथपालाश्च सर्वशः।
[7]समागच्छन्त्यसङ्गेन [8]सेनाग्र्येण तथा कुरु ॥ ३० ॥

समग्रं यथा समागच्छन्ति तथा कुरु इत्यन्वयः। असंगेन—अविलम्बेन। सेनाग्र्येण—सेनाधिनाथेन, सहेति शेषः ॥ ३० ॥

---

* कोट्यग्रतः—कोट्यधिकाः हरयस्ते सन्ति। तेषां मध्ये कः ते कुतः—त्वदर्थं किं करोत्विति शेषः। कुत्र कार्ये व्यवस्यतु-व्यवसायं करोतु—गो. कः कुत्र किं व्यवस्यतु—इति वा ॥

[1] नः—ङ. [2] कुते कुत्र—ङ., झ. [3] कोट्यग्रशो—ङ. [4] निरूपितम्. [5] सत्त्व—ङ. [6] सन्दिदेशातिमतिमान्—ज., स संन्दिदेशातिबलं—झ. [7] समागच्छन्ति वेगेन—ङ. [8] सेनाग्राणि—ङ., झ.

*ये त्वन्तपालाः [1]प्लवगाः शीघ्रगा व्यवसायिनः ।
समानयन्तु ते [2]सैन्यं त्वरिताः शासनान्मम ॥ ३१ ॥
[3]स्वयं चानन्तरं सैन्यं † भवानेवानुपश्यतु ॥ ३२ ॥

ये त्वन्तपालाः—दिगन्तवर्तिसेनाधिपतयः । इह संनिहिताः इति शेषः । आनयनानन्तरं भवानेव सैन्यमनुपश्यतु—परिगणय्य अन्वीक्षताम् । चकारात् न्यूनतायां निग्रहं च कुरु इत्यर्थः ॥ ३२ ॥

त्रिपञ्चरात्रादूर्ध्वं यः [4]प्राप्नुयान्नेह वानरः ।
तस्य प्राणान्तिको दण्डः नात्र कार्या विचारणा ॥ ३३ ॥

निग्रहकालं निर्दिशति—त्रिपञ्चेत्यादि । पञ्चदशदिनादूर्ध्वम् ॥

हरींश्च ‡[5]वृद्धानुपयातु साङ्गदः
भवान् ममाज्ञामधिकृत्य [6]निश्चिताम् ।
इति व्यवस्थां हरिपुङ्गवेश्वरः
विधाय वेश्म प्रविवेश वीर्यवान् ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकोनत्रिंशः सर्गः

---

वृद्धान् हरीन् साङ्गदो भवानुपयात्विति । सम्मानार्थमिति शेषः । वर्ग(३४)मानः सर्गः ॥ ३४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकोनत्रिंशः सर्गः

---

* अन्तपालाः—सेनापर्यन्तपालकाः—गो. † 'मन्त्रिषु न्यस्तकार्यं च मन्त्रिणमनवेक्ष्य च' (श्लो. ५) इत्युक्तं स्मर्तव्यमत्र ॥ ‡ वृद्धान्—जाम्बवत्प्रभृतीन्—गो.

[1] सबलाः—ङ. [2] शीघ्र—ज. [3] तेषां चानन्तरं कार्यं—ङ. [4] प्राप्नुयादिह—ज. [5] सर्वा—ङ. [6] निश्चयम्—ज.



## त्रिंशः सर्गः

[शरद्वर्णनम्]

[1]गुहां प्रविष्टे सुग्रीवे विमुक्ते गगने घनैः ।
[2]वर्षरात्रोषितो रामः कामशोकाभिपीडितः ॥ १ ॥

पाण्डुरं गगनं दृष्ट्वा विमलं चन्द्रमण्डलम् ।
शारदीं रजनीं चैव दृष्ट्वा ज्योत्स्नानुलेपनाम् ॥ २ ॥

कामवृत्तं च सुग्रीवं नष्टां च जनकात्मजाम् ।
[3]बुद्ध्वा कालमतीतं च *मुमोह परमातुरः ॥ ३ ॥

अथ शरदं दृष्ट्वा रामेण सुग्रीवप्रोत्साहनाय लक्ष्मणप्रेरणम् । गुहामित्यादि । मुमोहेति । व्याकुलचित्तो बभूवेत्यर्थः ॥ १-३ ॥

स तु संज्ञामुपागम्य मुहूर्तान्मतिमान् पुनः ।
†मनःस्थामपि वैदेहीं चिन्तयामास राघवः ॥ ४ ॥

स तु संज्ञामिति । चित्तस्वास्थ्यमित्यर्थः । मनःस्थां—मनःसंनिहिताम् । वैदेहीमपि चिन्तयामासेति । कथं वर्तते ? जीवति ? मृता वा ? कथमिमां प्रत्यानेष्यामीति चिन्तयामासेत्यर्थः ॥४॥

---

* एतावत्पर्यन्तं कस्यचिदवधेर्विद्यमानत्वात् कथञ्चिद् धृतवान् । संप्रति तदभावान्मुमोहेत्यर्थः—गो. † 'मनस्स्थामपि चिन्तयामास' इति निरवधिकप्रीतिद्योतकः कविसमयः । समनन्तरश्लोक इदं स्पष्टं 'पर्वतस्याग्रे आसीनस्सन्नेव लङ्कास्थितां प्रियां मनसा जगाम' इत्यत्र ।

[1] गूढं—ङ. [2] वर्षरात्रे स्थितः—ङ. [3] दृष्ट्वा—च., ज.

[1]आसीनः पर्वतस्याग्रे हेमधातुविभूषिते ।
शारदं गगनं दृष्ट्वा जगाम मनसा प्रियाम् ॥ ५ ॥

हेमवर्णाः धातवः हेमधातवः ॥ ५ ॥

दृष्ट्वा च विमलं व्योम गतविद्युद्बलाहकम् ।
सारसारवसंघुष्टं विललापार्तया गिरा ॥ ६ ॥
[2]सारसारवसंनादैः सारसारवनादिनी ।
याऽऽश्रमे रमते बाला साऽद्य मे रमते कथम् ॥ ७ ॥

सारसानां आरवेण—अन्योन्यव्यवहारेण जातो नादः तथा । आश्रम इति पदम् ॥ ७ ॥

पुष्पितांश्चासनान् दृष्ट्वा काञ्चनानिव निर्मलान् ।
कथं सा रमते बाला *पश्यन्ती मामपश्यती ॥ ८ ॥

पुष्पितान् असनान् दृष्ट्वा काञ्चनान्—काञ्चनपुष्पानिव निर्मलान् तान् पुनः पुनः सौन्दर्यातिशयात् पश्यन्ती मामपश्यती च कथं वर्तते ॥

या पुरा कलहंसानां [3]स्वरेण कलभाषिणी ।
बुध्यते चारुसर्वाङ्गी साऽद्य मे [4]बुध्यते कथम् ॥ ९ ॥
निःस्वनं चक्रवाकानां निशम्य सहचारिणाम् ।
पुण्डरीक[5]विशालाक्षी कथमेषा भविष्यति ॥ १० ॥
सरांसि सरितो वापीः काननानि वनानि च ।
तां विना मृगशावाक्षीं [6]चरन्नाद्य सुखं लभे ॥ ११ ॥

काननवनयोः कान्तारोपवनात्मना भेदः ॥ ११ ॥

---

* पश्यन्ती—मद्दिदृक्षया इतस्ततो दृष्टिं विक्षिपन्ती—गो.

[1] अयं श्लोकः कुत्र चन्नाहित—ङ. [2] पादादे अर्धत्रयं अधिकं कचित्—झ.
[3] कलेन—च., ज. [4] रमते—ङ. [5] पद्माशाली—ङ. [6] चिरं नाथ-ङ.



अपि तां मद्वियोगाच्च सौकुमार्याच्च भामिनीम् ।
[1]सुदूरं पीडयेत् कामः शरद्गुणनिरन्तरः ॥ १२ ॥

अपि तामित्यादि । शरद्गुणैः निरन्तरः—निरन्तरप्रवृत्तः कामः तामपि मद्वियोगात् सौकुमार्याच्चेति हेतुभ्यां सुदूरं—चिरं पीडयेदेव ॥

एवमादि नरश्रेष्ठः विललाप नृपात्मजः ।
विहङ्ग इव *सारङ्गः सलिलं त्रिदशेश्वरात् ॥ १३ ॥

सारङ्गरूपो विहङ्गः—चातकपक्षी तृषितः त्रिदशेश्वरात् जलमिव सीतामपि काङ्क्षमाणः एवमादि विललाप ॥ १३ ॥

†[2]ततश्चञ्चूर्य रम्येषु फलार्थी गिरिसानुषु ।
ददर्श पर्युपावृत्तः लक्ष्मीवान् लक्ष्मणोऽग्रजम् ॥ १४ ॥

ततः तस्यामवस्थायां रम्येषु गिरिसानुषु फलार्थी चञ्चूर्य—चरित्वा, चरेर्यङ्, लुगन्तात् आपः अनमाने ल्यप् । चरफलोरित्यादिना अभ्यासधात्वकारयोः नुगुत्वे, हलि चेति दीर्घश्च, अपावृत्तः लक्ष्मणः अग्रजं रामं ददर्श ॥ १४ ॥

तं चिन्तया दुस्सहया परीतं
विसंज्ञमेकं विजने तपस्वी ।
भ्रातुर्विषादात् [3]परितापदीनः
समीक्ष्य सौमित्रिरुवाच [4]रामम् ॥ १५ ॥

विषादात्—विषाददर्शनात् हेतोः ॥ १५ ॥

---

*सारङ्गः—चातकः—गो. 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे' मेदिनी ॥
† चञ्चूर्य—कुटिलं चरित्वा (इतस्ततश्चरित्वा)—'नित्यं कौटिल्ये गतौ' इति यङ्—गो.
[1] न दूरं-ङ. [2] ततस्संचार्य—ङ. [3] त्वरितोऽतिदीनः—च., ज.
[4] दीनम्—च., ज.

किं आर्य! कामस्य वशंगतेन
*किमात्मपौरुष्यपराभवेन।
†[1]अयं ह्रिया संह्रियते समाधिः
किमत्र योगेन [2]निवर्तते न॥ १६॥

अथ लक्ष्मणः कर्मयोगज्ञानयोगावेव पौरुषवृद्धये दुःखशान्तये च आतिष्ठेत्युपदिशति–किमार्येत्यादि। कर्मयोगे तु ईश्वरानुग्रहात् पौरुषवृद्धिः, ज्ञानयोगे तत्त्वज्ञस्य निर्दुःखत्वं च सर्वाविवादसिद्धम्। अतः तदुभयानुष्ठानबोधनम्। हे आर्य, कामस्य वशं गतेन त्वया किं कर्म कृतं स्यात्? अपि चैवं कामवशतः आत्मपौरुष्यस्य, स्वार्थे ष्यञ्, सहजपौरुषस्य, पराभवेन—अभिभवेन किं प्रयोजनं साधितं स्यात्? अतः कामशोकं त्यक्त्वा कर्मयोगमातिष्ठ। यथाकालं शौचस्नानादिकर्मयोगानुष्ठानानन्तरं नित्यया ब्रह्मविद्यया यथाप्राप्तोऽयं समाधिः—ब्रह्मानुसंधानं च ह्रिया किमर्थं संह्रियते? 'अयं ह्रिया' इति पांक्तः। हरतीति ह्रीः, तया, सर्वनाशककामशोकेनेत्यर्थः। 'किमत्र योगेन निवर्तते न' इति पांक्तः। अत्र अस्मिन् योगे समाधौ सति सर्वमपि दुःखं निवर्तते न? ननु स्वैर, निवर्तत एव किलेत्यर्थः। अत्र पांक्तपाठयोजनाशक्तया पाठान्तरं प्रकल्प्य यत्किञ्चिदसंगतं ‡यद्वाभट्टो ब्रूते॥ १६॥

---

* भवत्पौरुषस्य भवतैव परिभवः क्रियत इति लोकवदुक्तिः। † आर्य, यदा—यस्मिन् काले समाधिः—चित्तसमाधानं संपादनीयम्, अत्र–अस्मिन् काले अयं किं संह्रियते?- ती. यदा—यस्मिन् काले अयं समाधिः—चित्तसमाधानं संह्रियते—संपाद्यते, अत्र—अस्मिन् काले निवर्तितेन योगेन—सन्नहनेन—उत्साहेन किम्?–गो. अयं समाधिः–त्वयि एतावता दृष्टं मनस्समाधानं, यदा संह्रियते, भवता, अत्र—एतद्विषये एतावता कालेन निवर्तितेन—परित्यक्तेन योगेन किम्? एतावता साधितं सर्वं व्यर्थमेव स्यात् खलु—इति वा. ‡ गोविन्दराजः.

[1] अयं सदा–ङ. [2] निवर्तितेन–ङ.



*क्रियाभियोगं मनसः प्रसादं
समाधियोगानुगतं च कालम्।
सहायसामर्थ्यं, [1]अदीनसत्त्वः
स्वकर्महेतुं च कुरुष्व [2]हेतुम्॥ १७॥

अथ उक्तश्लोकार्थ एव विव्रियते—क्रियाभियोगं इत्यादि। क्रियाणां – शौचस्नानसंध्यादिरूपाणां योगाङ्गक्रियाणां, अभितः–कार्त्स्न्येन योगं–अनुष्ठानम्। तथा मनःप्रसादं च आस्थाय, कालम् अत्यन्तसंयोगे द्वितीया, सर्वमपि कालं समाधियोगानुगतमेव अकृतकब्रह्मानन्यतालक्षणस्वतत्त्वसमाधियोगानुगतमेव कुरुष्व। तथा अदीनसत्त्वः–अभीक्ष्णसत्त्वगुणः सन् स्वकर्मयोगं–नित्यस्वधर्मभावनादिलक्षणं हेतु–पौरुषवृद्धिसाधनं, तथा तत्साधनं मानुषसहायसामर्थ्यं तद्घटनरूपं च कुरुष्व॥ १७॥

न जानकी, मानववंशनाथ!
त्वया सनाथा सुलभा परेण।
न चाग्निचूडां ज्वलितामुपेत्य
न दह्यते, वीर! वरार्ह! कश्चित्॥ १८॥

हे मानववंशनाथ! त्वया सनाथा जानकी परेण न सुलभा—न सुग्रहा। कश्चिदपि ज्वलितां अग्निचूडां—अग्निशिखां उपेत्य—स्पृष्ट्वा न न दह्यते कश्चित्—दह्यत एव किलेत्यर्थः॥ १८॥

---

* क्रियाभियोगं—कार्ययोगं, मनसः प्रसादं, समाधियोगानुगतं—धैर्योपायाभ्यामनुगतं कालं च, सुग्रीवादिसहायसामर्थ्यं, स्वकर्महेतुं च—स्वकर्म–दैवतोपासनात्मकं, तं च हेतुं कुरुष्व–ती., गो.

[1] अदीनसत्त्व, अहीनसत्त्व–ङ. [2] योगम्–ङ., ज्ञात–झ.

* स लक्षणं लक्ष्मणमप्रधृष्यं
  स्वभावजं वाक्यमुवाच रामः ।
हितं च पथ्यं च [1] नयप्रसक्तं
  ससाम [2] धर्मार्थसमाहितं च ॥ १९ ॥
निस्संशयं कार्यमवेक्षितव्यं
  क्रिया[3] विशेषो ह्यनुवर्तितव्यः ।
† [4] न तु प्रवृद्धस्य दुरासदस्य
  कुमार! [5] वीर्यस्य [6] फलं च चिन्त्यम् ॥ २० ॥

स इत्यादि । सः रामः अप्रधृष्यं—न्यायोपेतत्वात् अविचाल्यस्वाभावजं तत्त्वार्थकं वाक्यं उक्तवन्तं लक्ष्मणं उवाच । किमुवाचेत्यतः—हितमित्यादि । अवेक्षितव्यं—स्वतत्त्वसमाधियोगः अनुष्ठातव्यः । क्रियाविशेषश्च अनुवर्तितव्यः—कर्मयोगोऽप्यनुष्ठेयः इति त्वदुक्तं वचनं हि—यस्मात् हितं—तत्कालसुखं, पथ्यं—कालान्तरहितं च, तथा नयप्रसक्तं—राजनीत्युक्तं, साम्ना सहितं—ससाम, धर्मार्थाभ्यां समाहितं—संगतं च, तस्मात् तत् निस्संशयं कार्यं अनुष्ठेयमेव । न तु केवलं राक्षसवत् कर्मज्ञानयोगौ हित्वा प्रवृद्धस्य—अभिवृद्धस्य अत एव दुरासदस्य वीर्यस्य फलं—विजयफलं अपेक्षणीयम् ॥ १९-२० ॥

---

* अप्रधृष्य लक्ष्मणं, स्वभावजं, हितं, पथ्यमित्यादिविशेषणविशिष्टं वाक्यमुवाच—इत्येकं वाक्यं वा ॥ † प्रवृत्तस्य दुरासदस्य कार्यस्य (पा). फलं—सीताप्राप्तिरूपं न चिन्त्य ननु—चिन्त्यमेव-गो. प्रवृत्तस्य दुरासदस्य कार्यस्य फलं—सीताप्राप्तिरूपं न चिन्त्यमिति न-ती.

[1] वचःप्रयुक्तं-ङ. [2] धर्मसमाहितार्थम्-ङ. [3] विशेषोऽप्यनु-ङ. [4] ननु प्रवृत्तस्य-ङ., झ. [5] कार्यस्य-ङ. [6] फलं न-ङ.



पद्मपत्रपलाशाक्षीं मैथिलीमनुचिन्तयन् ।
उवाच लक्ष्मणं रामः मुखेन परिशुष्यता ॥ २१ ॥

एवं लक्ष्मणवचः परिगृह्य स्थितस्य रामस्य तत्कालं सुखितस्य कालान्तरे पुनः विचिन्त्य विद्यमानस्य शरदनुभववर्णनम्—पद्मपत्रेत्यादि । परिशुष्यतेत्यनेन खेदः प्रदर्शितः ॥ २१ ॥

तर्पयित्वा सहस्राक्षः सलिलेन वसुन्धराम् ।
निर्वर्तयित्वा सस्यानि कृतकर्मा व्यवस्थितः * ॥ २२ ॥

निर्वर्तयित्वा—संपाद्य ॥ २२ ॥

स्निग्धगंभीरनिर्घोषाः † शैलद्रुमपुरो गमाः ।
विसृज्य सलिलं मेघाः [1] परिश्रान्ताः, नृपात्मज! ॥ २३ ॥

शैलाश्च द्रुमाश्च पुरश्च शैलद्रुमपुरः, एकान्तः शब्दः । गच्छन्तीति गमाः, पचाद्यच्, गमाः भूत्वा सलिलं विसृज्यति योजना ॥ २३ ॥

नीलोत्पलदलश्यामाः श्यामीकृत्वा दिशो दश ।
विमदा इव मातङ्गाः शान्तवेगाः पयोधराः ॥ २४ ॥

नीलोत्पलदलश्यामाः इति पयोधरविशेषणम् ॥ २४ ॥

जलगर्भा महावेगाः कुटजार्जुनगन्धिनः ।
चरित्वा विरताः, सौम्य! वृष्टिवाताः समुद्यताः ॥ २५ ॥

वृष्टिसहिताः वाताः—वृष्टिवाताः ॥ २५ ॥

---

* वृष्टिः उपरतेति यावत् ॥ † शैलद्रुमाणां अग्रे गच्छन्तः-गो.

[1] परिशान्ताः-ङ.

घनानां वारणानां च मयूराणां च, लक्ष्मण!
नादः प्रस्रवणानां च प्रशान्तः सहसानघ! ॥ २६ ॥

अभिवृष्टा महामेघैः निर्मलाश्चित्रसानवः ।
अनुलिप्ता इवाभान्ति [1]गिरयश्चित्रदीप्तिभिः ॥ २७ ॥

[2]दर्शयन्ति शरन्नद्यः पुलिनानि शनैश्शनैः ।
नवसंगमसंव्रीडा जघनानीव योषितः ॥ २८ ॥

दर्शयन्ति शरन्नद्यः इति । शरत्कालवर्तिन्यो नद्यः तथा ॥

शाखासु सप्तच्छदपादपानां
प्रभासु तारार्कनिशाकराणाम् ।
[3]लीलासु चैवोत्तमवारणानां
श्रियं विभज्याद्य शरत् प्रवृत्ता ॥ २९ ॥

श्रियं विभज्येति । शाखाप्रभालीलास्थले त्रिधा विभक्तां कृत्वेत्यर्थः ॥ २९ ॥

संप्रत्यनेकाश्रयचित्रशोभा
लक्ष्मीः शरत्काल[4]गुणोपनीता ।
[5]सूर्याग्रहस्तप्रतिबोधितेषु
पद्माकरेष्वभ्यधिकं विभाति ॥ ३० ॥

अनेकपदार्थाश्रयाः चित्राः शोभाः यस्याः सा तथा । अग्रहस्ताः—प्रातःकालकिरणाः ॥ ३० ॥

---

[1] गिरयश्चन्द्ररश्मिभिः—च., ज. [2] अयं श्लोकः 'चञ्चच्चन्द्रकरस्पर्श' इत्यादेः पूर्वं ४६ तमत्वेन पठनीयः—ङ., झ. [3] क्रीडासु—ङ. [4] गुणोपपन्ना—च., ज. [5] सूर्याग्रपाद—ङ.



सप्तच्छदानां कुसुमोपगन्धी
षट्पादवृन्दैरनुगीयमानः ।
*मत्तद्विपानां [1]पवनानुसारी
दर्पं [2]वनेष्वभ्यधिकं करोति ॥ ३१ ॥

मत्तद्विपानां पवनमनुसर्तुं शीलमस्त्यस्येति तथा । दर्पं करोतीति । शरत्काल इति शेषः ॥ ३१ ॥

†अभ्यागतैश्चारुविशालपक्षैः
[3]स्मरप्रियैः पद्मरजोऽवकीर्णैः ।
महानदीनां पुलिनोपयातैः‡
क्रीडन्ति हंसास्सह चक्रवाकैः ॥ ३२ ॥

अभ्यागतैः चक्रवाकैरिति योजना । अभ्यागतैः, मानससरसः इति शेषः ॥ ३२ ॥

[4]मदप्रगल्भेषु च वारणेषु
गवां समूहेषु च दर्पितेषु ।
प्रसन्नतोयासु च निम्नगासु
विभाति लक्ष्मीर्बहुधा विभक्ता ॥ ३३ ॥

नभस्समीक्ष्याम्बुधरैर्विमुक्तं
विमुक्तबर्हाभरणा वनेषु ।
[5]प्रियास्वरक्ता विनिवृत्तशोभाः
§गतोत्सवा ध्यानपरा मयूराः ॥ ३४ ॥

---

* अनुसारी—अनुसृत्य वर्तमानः, अविच्छेदेनैव प्रवर्तमान इत्यर्थः । मत्तद्विपानां दर्पं करोति—गो. † मिथुनतया आभिमुख्येन संगतैः—गो. ‡ पुलिनं प्राप्तैरित्यर्थः ॥ § मयूराणां हि वर्षकाल इष्टः ॥

[1] पवनोऽनुसारी—ङ. [2] वनेष्वत्यधिकं विभाति—ङ. [3] सरःप्रियैः—ङ. [4] मत्तेषु वनेषु—ङ. [5] प्रियास्वसक्ता—ज.

विमुक्तं—गलितं बर्हरूपं आभरणं येषां ते तथा । अरक्ताः—रागरहिताः ॥ ३४ ॥

मनोज्ञगन्धैः प्रियकैरनल्पैः
पुष्पातिभारावनताग्रशाखैः ।
सुवर्णगौरैर्नयनाभिरामैः
उद्योतितानीव वनान्तराणि ॥ ३५ ॥

प्रियकैः—असनैः ॥ ३५ ॥

प्रियाऽन्वितानां नलिनीप्रियाणां
[1] वने रतानां *[2] कुसुमोद्धतानाम् ।
मदोत्कटानां मदलालसानां
गजोत्तमानां गतयोऽद्य मन्दाः ॥ ३६ ॥

कुसुमोद्धतानां – कुसुमाघ्राणदृप्तानाम् । कुसुमोद्धतानामिति पाठः । मदोत्कटाः— मदाधिकाः, अत एव मदलालसाः—परवशाः ॥ ३६ ॥

[3] व्यभ्रं नभः शस्त्रविधौतवर्णं
कृशप्रवाहाणि नदीजलानि ।
कल्हारशीताः पवनाः प्रवान्ति
तमोविमुक्ताश्च दिशः प्रकाशाः ॥ ३७ ॥

शस्त्रवत्—उत्तेजितासिवत् विधौतः—विमलः वर्णः—नैर्मल्यं यस्य तत् तथा ॥ ३७ ॥

* कुसुमोद्धतानां—सप्तच्छदकुसुमाघ्राणनेन मत्तानां, मदोत्कटानां— मदेनोद्भिन्नकटानां—गो.

[1] वनेचराणां–ङ., वनप्रियाणां–च. [2] कुसुमोद्धतानाम्–ङ. [3] व्यर्क–च.



सूर्यातपक्रामणनष्टपङ्का
[1] भूमिश्चिरोद्घाटितसान्द्ररेणुः ।
*[2] अन्योन्यवैरामरुषायुतानां
उद्योगकालोऽद्य नराधिपानाम् ॥ ३८ ॥

आतपस्य क्रमणं—संक्रमः । चिरेण उद्घाटितः—प्रकाशितः सान्द्रः रेणुः यया सा तथा । अमरुषेति छन्दोभङ्गपरिहाराय पाठः ॥

शरद्गुणाप्यायित†रूपशोभाः
प्रहर्षिताः पांसुसमुत्क्षिताङ्गाः ।
मदोत्कटाः संप्रति युद्धलुब्धाः
वृषा गवां मध्यगता नदन्ति ॥ ३९ ॥

आप्यायिता रूपस्य शोभा—सौन्दर्यं येषां ते तथा ॥ ३९ ॥

[3] समन्मथास्तीव्रतरानुरागाः
कुलान्विता [4] मन्दगतिं करेणूः ।
मदान्वितं संपरिवार्य [5] यान्तं
वनेषु भर्तारमनुप्रयान्ति ॥ ४० ॥

करेणूः—समन्मथत्वादिविशेषणचतुष्टयं करेणवः, करेणवः उच्यमानविशेषणाः संपरिवार्य यान्ति । करेणूरिति ऊकारान्तत्वं छान्दसम् ॥ ४० ॥

* वैरं – विरोधः, अमर्षः–असहिष्णुता–गो. † रूपशोभाः—शरीरशोभाः–गो.

[1] भूमेस्समुत्पादित–ङ. [2] अन्योन्यवैरेण समायुतानां–ङ. [3] समन्मथं तीव्रगतानुरागाः–ङ. [4] मन्दगताः करिण्यः, मन्दगतिं करिण्यः–ङ. [5] कान्तं–ङ.

त्यक्त्वा वराण्यात्मविभूषणानि
  बर्हाणि तीरोपगता नदीनाम् ।
निर्भर्त्स्यमाना इव *सारसौघैः
  प्रयान्ति दीना †[1] विमदा मयूराः ॥ ४१ ॥

वित्रास्य कारण्डवचक्रवाकान्
  महारवैर्भिन्नकटा गजेन्द्राः ।
सरस्सु बद्धाम्बुजभूषणेषु
  विक्षोभ्य विक्षोभ्य जलं [2] पिबन्ति ॥ ४२ ॥

बद्धाम्बुजं—विकसितकमलम् ॥ ४२ ॥

व्यपेतपङ्कासु सुवालुकासु
  प्रसन्नतोयासु सगोकुलासु ।
ससारसारावविनादितासु
  नदीषु हृष्टा निपतन्ति हंसाः ॥ ४३ ॥

सारसानां आरावजनितविनादितसहिताः—ससारसारावविनादिताः ॥ ४३ ॥

‡[3] नदीघनप्रस्रवणोदकानां
  अतिप्रवृद्धानिलबर्हिणानाम् ।
प्लवङ्गमानां च गतोत्सवानां
  [4] द्रुतं रवाः संप्रति संप्रणष्टाः ॥ ४४ ॥

* सारसौघैः—हंसमयूरैः—ती, गो. †(पा.) मनःपर्यायो मनशब्दः अकारान्तोऽपि, द्विरूपकोशात्—ति. ‡ गतोत्सवानां नद्यादित्रयाणां (नदी, घनः—मेघः, प्रस्रवणं च)—शि.

[1] विमनाः—च. [2] क्षिपन्ति—ङ. [3] नदीजल—ङ. [4] ध्रुवं—च.



नद्यः, घनाः, प्रस्रवणानि च तथा, तेषां उदकादि तथा। प्लवङ्गमाः—भेकाः ॥ ४४ ॥

अनेकवर्णाः *सुविनष्टकायाः
  [1] नवोदितेष्वम्बुधरेषु †नष्टाः ।
क्षुधार्दिता घोरविषा बिलेभ्यः
  चिरोषिता विप्रसरन्ति सर्पाः ॥ ४५ ॥

अनेके वर्णाः येषां सर्पाणां ते तथा । अम्बुधरेषु नवोदितेषु सुविनष्टकायाः—सुतरां विनष्टदेहयात्राः, अत एव नष्टाः—मृतिबहुलाः, विद्युद्भीत्या अदृष्टाश्च ॥ ४५ ॥

[2] चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका ।
अहो रागवती ‡सन्ध्या जहाति स्वयमम्बरम् ॥ ४६ ॥

चञ्चतां—उद्गच्छतां चन्द्रकराणां स्पर्शेन यो हर्षः, तेन उन्मीलिताः—ईषदुद्गताः तारकाः—नक्षत्राणि यस्याः सा तथा। तत्समये रागवती सन्ध्या स्वयमपि अम्बरं जहाति—आकाशं त्यजति, अहो ! कान्तकरस्पर्शसुखात् अर्धोन्मीलितचक्षुः कामुकी यथा स्वयमेव कामवशात् विगलितवसना भवति तथा इति ध्वनिः ॥ ४६ ॥

रात्रिः शशाङ्कोदितसौम्यवक्त्रा
  तारागणोन्मीलितचारुनेत्रा ।
ज्योत्स्नांशुकप्रावरणा विभाति
  नारीव शुक्लांशुकसंवृताङ्गी ॥ ४७ ॥

* सुविनष्टकायाः—अत्यन्तकृशशरीराः—गो. † नष्टाः—नष्टप्रायाः—शि.
‡ सन्ध्यायाः अम्बरत्यागो नाम, रात्र्यां प्राप्तायां संध्याया अपसरणमेव ।

[1] नवोदकेष्व—ङ. [2] एतत्पूर्वं—२८ तमः श्लोकः क्वचित्—ङ., झ.

शशाङ्कोदितेति । उदितशशङ्केति यावत् । तारागणरूपाणि उन्मीलितानि चारूणि नेत्राणि यस्याः सा तथा ॥ ४७ ॥

विपक्वशालिप्रसवानि *भुक्त्वा
प्रहर्षिता सारसचारुपङ्क्तिः ।
नभः समाक्रामति शीघ्रवेगा
वातावधूता ग्रथितेव माला ॥ ४८ ॥

शालिप्रसवानि—व्रीहीन् । मालेव सारसचारुपङ्क्तिः नभः समाक्रामतीत्यन्वयः ॥ ४८ ॥

†सुप्तैकहंसं [1]कुमुदैरुपेतं
महाह्रदस्थं सलिलं विभाति ।
घनैर्विमुक्तं निशि पूर्णचन्द्रं
तारागणाकीर्णमिवान्तरिक्षम् ॥ ४९ ॥

सुप्तैकहंसमिति संभावनया चन्द्रस्थाने प्रयोगः ॥ ४९ ॥

प्रकीर्णहंसाकुलमेखलानां
प्रबुद्धपद्मोत्पलमालिनीनाम् ।
वाप्युत्तमानामधिकाऽद्य लक्ष्मीः
वराङ्गनानामिव भूषितानाम् ॥ ५० ॥

प्रकीर्णहंसा एव आकुला मेखला यासां ताः तथा ॥ ५० ॥

---

* भुक्त्वा—मुखाग्रे गृहीत्वा-गो. † सुप्तैकहंसमिति चन्द्रप्रतिबिम्बवत्-ति.

[1] कुसुमै-ङ.



[1]वेणुस्वरव्यञ्जिततूर्यमिश्रः
प्रत्यूषकालेऽनिल[2]संप्रवृद्धः ।
संमूर्छितो *[3]गह्वरगोवृषाणां
अन्योन्यमापूरयतीव शब्दः ॥ ५१ ॥

वेणुस्वररूपेण व्यञ्जितेन—व्यक्तेन तूर्येण—वाद्यघोषेण मिश्रः । प्रत्यूषकाले—प्रातःकाले अनिलेन संप्रवृद्धः । संमूर्छितः—व्याप्तः । गह्वराणां—गिरिगह्वराणां गोवृषाणां, वनवर्तिनामिति शेषः, गावो वृषाश्च तथा, तेषां शब्दः अन्योन्यं आपूरयंति—वर्धयतीव । कीचकध्वन्युपेतगह्वरशब्दः गोशब्दोपेतवृषशब्दश्च अन्योन्यं वर्धयतीव । साजात्यादित्यर्थः । गह्वरगोवृषाणां इति पाठः ॥ ५१ ॥

नवैर्नदीनां कुसुमप्रहासैः
व्याधूयमानैर्मृदुमारुतेन ।
धौतामलक्षौमपटप्रकाशैः
कूलानि काशैरुपशोभितानि ॥ ५२ ॥

नवैर्नदीनामित्यादि । मृदुमारुतेन व्याधूयमानैः कुसुमप्रहासैः—कुसुमरूपस्मितैः नदीनां † वनानि—जलानि शोभितानि—'जीवनं भुवनं वनम्'। कूलानि कुसुमादिविशेषणकैः काशैः उपशोभितानि ॥ ५२ ॥

---

* गगरगोवृषाणां (पा) — गगराणां—दधिमथनभाण्डानां, गवां, वृषाणां च-गो., ती. † 'वनानि' इति पदघटितपाठः मूले नोपलब्धः । 'वनानि च क्षौमपट' इत्येवं पाठः स्याद्वा ॥

[1] वेणुस्वन-ङ. [2] संप्रवृत्तः-ङ. [3] गगर-ङ.

वनप्रचण्डा मधुपानशौण्डाः
प्रियान्विताः षट्चरणाः प्रहृष्टाः ।
वनेषु मत्ताः पवनानुयात्रां
कुर्वन्ति पद्मासनरेणुगौराः ॥ ५३ ॥

प्रचण्डाः--प्रगल्भाः । शौण्डाः—समर्थाः । पद्मपुष्पाणां, असनपुष्पाणां च रेणुभिः गौराः । पवनानुयात्रां कुर्वन्तीति । गन्धलाभादिति शेषः ॥ ५३ ॥

जलं प्रसन्नं [1]कुमुदप्रभासं
[2]क्रौञ्चस्वनः शालिवनं विपक्वम् ।
मृदुश्च वायुर्विमलश्च चन्द्रः
शंसन्ति * वर्षव्यपनीतकालम् ॥ ५४ ॥

कुमुदरूपः प्रभासः यस्य जलस्य तत् तथा । शालिवनं—शालिसमूहः । वर्षाणां व्यपनीतः—व्यपनयः यस्मिन्, स चासौ कालः तथा ॥ ५४ ॥

मीनोपसंदर्शितमेखलानां
नदीवधूनां गतयोऽद्य मन्दाः ।
कान्तोपभुक्तालसगामिनीनां
प्रभातकालेष्विव कामिनीनाम् ॥ ५५ ॥

सचक्रवाकानि सशैवलानि
काशैर्दुकूलैरिव संवृतानि ।
सपत्रलेखानि सरोचनानि
वधूमुखानीव [3]नदीमुखानि ॥ ५६ ॥

चक्रवाकशैवलकाशाः रोचनापत्रलेखाऽवकुण्ठनक्षौमस्थानीयाः ॥

* व्यपनीतकालं—गतसमयं वर्षं—शि.

[1] कुमुदं प्रहासं—ङ. [2] क्रौञ्चस्वनं—ङ. [3] सरोमुखानि—ङ.



प्रफुल्लबाणासनचित्रितेषु
प्रहृष्टषट्पादनिकूजितेषु ।
* गृहीतचापोद्यत[1]दण्डचण्डः
[2]प्रचण्डचारोऽद्य वनेषु कामः ॥ ५७ ॥

बाणः—अर्तिगल—மழை வண்ணக்குறுஞ்சி गृहीतचापश्च उद्यते विरहिविषयके दण्डे चण्डः—प्रगल्भश्च तथा ॥ ५७ ॥

लोकं सुवृष्ट्या परितोषयित्वा
नदीस्तटाकानि च पूरयित्वा ।
निष्पन्नसस्यां वसुधां च कृत्वा
त्यक्त्वा नभस्तोयधराः [3]प्रणष्टाः ॥ ५८ ॥

प्रसन्नसलिलाः, सौम्य ! † कुररीभिर्विनादिताः ।
चक्रवाकगणाकीर्णाः विभान्ति सलिलाशयाः ॥ ५९ ॥

असनास्सप्तपर्णाश्च कोविदाराश्च पुष्पिताः ।
दृश्यन्ते बन्धुजीवाश्च श्यामाश्च गिरिसानुषु ॥ ६० ॥

श्यामाः--तमालाः ॥ ६० ॥

हंससारसचक्राह्वैः कुररैश्च समन्ततः ।
पुलिनान्यवकीर्णानि नदीनां पश्य, लक्ष्मण ! ॥ ६१ ॥

* गृहीतचापेन उद्यतः—प्रयुक्तः चण्डदण्डः—तीक्ष्णदण्डनं येन सः—गो.
† कुररीभिः—क्रौञ्चीभिः—गो.

[1] चण्डदण्डः—ङ. [2] प्रचण्डचापोऽद्य च. [3] प्रयाताः—ङ.

[1]अन्योन्यं बद्धवैराणां जिगीषूणां, नृपात्मज!
उद्योगसमयः, सौम्य! पार्थिवानामुपस्थितः ॥ ६२ ॥
इयं सा प्रथमा यात्रा पार्थिवानां, नृपात्मज!
न च पश्यामि सुग्रीवं उद्योगं वा तथाविधम् ॥ ६३ ॥

इयं सेति। शरदिति यावत्। यात्रेति। यात्राकाल इत्यर्थः। तथाविधमिति। यात्रास्फोरकमित्यर्थः ॥ ६३ ॥

*चत्वारो वार्षिका मासाः गता वर्षशतोपमाः।
[2]मम शोकाभिभूतस्य, सौम्य! सीतामपश्यतः ॥ ६४ ॥
चक्रवाकीव भर्तारं पृष्ठतोऽनुगता वनम्।
विषमं दण्डकारण्यं उद्यानमिव [3]याऽङ्गना ॥ ६५ ॥
प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते।
†कृपां न कुरुते राजा सुग्रीवो, मयि, लक्ष्मण! ॥ ६६ ॥
अनाथो हृतराज्योऽयं रावणेन च धर्षितः।
दीनो ‡दूरग्रहः कामी मां चैव शरणं गतः ॥ ६७ ॥
इत्येतैः कारणैः, सौम्य! सुग्रीवस्य दुरात्मनः।
अहं वानरराजस्य परिभूतः, परंतप! ॥ ६८ ॥

* यद्यपि चतुर्थो मासो विद्यत एव, तथापि तत्रोद्योगाभावेन तस्यापि गतप्रायत्वात् गता इत्युक्तिः- ती. चत्वारः-आषाढाद्याः। केचिदाहुः श्रावणाद्या इति। 'पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः' इत्युपक्रमोक्तेः। आश्वयुजकार्तिकयोर्वर्षानुवृत्त्या वार्षिकत्वम्। 'कार्तिके समनुप्राप्ते त्वं रावणवधे यत' इति पूर्वोक्तवचने तु, समनुप्राप्ते—समाप्त इत्यर्थं इत्याहुः-गो. † कृपां न कुरुत इत्यादिकं सुग्रीवाभिमानमनुसृत्योक्तम्-गो. वस्तुतस्तु—मानवभावसहजमिदं वाक्यम् ॥ ‡ दूरगृह इति पाठे—गृहं त्यक्त्वा सुदूरमागत इत्यर्थः ॥

[1] एतदादि श्लोकद्वयमधिकं-ङ. [2] मम शोकाभितप्तस्य तथा-च. [3] याऽऽगता-क.



कृपां न कुरुते इत्यत्र कारणमुन्नयति—अनाथ इत्यादि। दूरग्रहः—दूरवर्तिस्त्रीविषयग्रहः—अभिनिवेशः यस्य स तथा। वानरराजस्य परिभूतः इति। मतिबुद्धीत्यत्र अनुक्तसमुच्चयार्थेन चकारेण वर्तमानत्वे, 'क्तस्य च वर्तमाने' इति षष्ठी ॥ ६७–६८ ॥

स कालं परिसंख्याय सीतायाः परिमार्गणे।
कृतार्थः समयं कृत्वा दुर्मतिर्नैव बुध्यते ॥ ६९ ॥

परिसंख्याय—गणयित्वा, समयं च कृत्वाऽपि दुर्मतिः नैव बुध्यते। समयमिति शेषः ॥ ६९ ॥

स किष्किन्धां प्रविश्य त्वं ब्रूहि वानरपुङ्गवम्।
मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं वचनान्मम ॥ ७० ॥
*अर्थिनामुपपन्नानां पूर्वं चाप्युपकारिणाम्।
आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ॥ ७१ ॥

उपपन्नानां, बलवीर्यादिनेति शेषः। आशां—अभिमतार्थसम्पादनाशाम् ॥ ७१ ॥

†शुभं वा यदि वा पापं [1]यो हि वाक्यमुदीरितम्।
सत्येन परिगृह्णाति [2]स वीरः पुरुषोत्तमः ॥ ७२ ॥

सत्येन—अनाधतया ॥ ७२ ॥

‡कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये।
तान् मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ७३ ॥

* वचनप्रकारमाह—अर्थिनामिति-शि. परन्तु नायं सुग्रीवाय वक्तव्यस्यानुवादः, किन्तु लक्ष्मणं प्रत्येवोक्तिरियम् ॥ † शुभं वेत्यादि लोकवदुक्तिः। ‡ अस्य श्लोकस्यान्ते इतिकरणं द्रष्टव्यम्। इति सुग्रीवं ब्रूहीति पूर्वेण संबन्धः-गो. परन्तु स्वाशयकथनं लक्ष्मणसमीप इति स्वरसम् ॥

[1] येन-ङ. [2] स लोके-ङ.

न भवन्तीति। कार्यायेति शेषः। क्रव्यादाः— श्वगोमायवादयः, पचाद्यच् ॥ ७३ ॥

नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे।
[1]द्रष्टुमिच्छति चापस्य रूपं विद्युद्गणोपमम् ॥ ७४ ॥

चापस्य रूपं— ज्यास्वरूपम्। विद्युद्गणः गुणः—उपमा यस्य तत् तथा ॥ ७४ ॥

घोरं ज्यातलनिर्घोषं क्रुद्धस्य मम संयुगे।
निर्घोषमिव वज्रस्य पुनः *संश्रोतुमिच्छति ॥ ७५ ॥
†काममेवंगतेऽप्यस्य परिज्ञाते पराक्रमे।
त्वत्सहायस्य मे, वीर! न चिन्ता स्यात्, नृपात्मज! ॥

काममेवंगतेऽपि—एतदवस्थायामपीत्यर्थः ॥ ७६ ॥

यदर्थमयमारंभः कृतः, परपुरंजय!
समयं नाभिजानाति कृतार्थः प्लवगेश्वरः ॥७७॥

---

*संश्रोतुमिच्छसि—इत्युत्तरं इति सुग्रीवं ब्रूहीति संबन्धः—ति †त्वत्सहायस्य मे एवंगते—वालिनिरसनादिषु इत्थमपातहते पराक्रमे—कामं परिज्ञाते सत्यपि अस्य सुग्रीवस्य चिन्ता न स्यात्—समयव्यतिक्रमे मामपि हनिष्यतीति विचारः नाभूत्—ती. वस्तुतस्तु 'वीर' 'नृपात्मज' इति संबुद्धिस्वारस्यात् इयमपि लक्ष्मण प्रत्येवोक्तिः (६१ श्लोकेऽपि 'नृपात्मज' इति द्रष्टव्यम्)। अस्य सुग्रीवस्य पराक्रमे परिज्ञाते इति नर्मोक्तिः। समये अनेन नास्माकमुपयोग इति परिस्थितौ जातायामपि हे लक्ष्मण त्वत्सहायस्त्वात् न मम चिन्ता, सर्वं ह साधयेयम्। किन्तु—यादृशं दैवनियोगं प्रमाणीकृत्यास्माभिरयं सीताप्राप्त्यर्थमारम्भः कृतः, तदनुगुणं प्लवगेश्वरः प्रतिबोधनीय इत्याहस्य तात्पर्यं स्वरसम्। त्वत्साहाय्यात् सर्वमहं साधयेयम्, किंतु सुग्रीवद्वारैव कार्यस्य साधनीयत्वात् तं प्रतिबोधयेत्याशयः। अत एवोत्तरवाक्ये 'नास्मासु सुग्रीवः कुरुते दयाम्' इत्यपि स्वरसम् ॥

[1] द्रष्टुमिच्छसि—च., ज. [2] मिच्छसि—च., ज.



यदर्थं—यत्सीतान्वेषणादिप्रयोजनम्। आरंभः—उद्योगः। कृतार्थः—कृतस्वप्रयोजनः ॥ ७७ ॥

[1]वर्षाः समयकालं तु प्रतिज्ञाय हरीश्वरः।
व्यतीतांश्चतुरो मासान् विहरन्नावबुध्यते ॥ ७८ ॥

व्यतीतान् नावबुध्यते इत्यन्वयः ॥ ७८ ॥

सामात्यपरिषत् क्रीडन् पानमेवोपसेवते।
शोकदीनेषु नास्मासु सुग्रीवः कुरुते दयाम् ॥ ७९ ॥
उच्यतां गच्छ सुग्रीवः त्वया, [2]वत्स! महाबल!
*मम रोषस्य यद्रूपं ब्रूयाश्चैनमिदं वचः ॥ ८० ॥

यद्रूपं उचितम् ॥ ८० ॥

न च संकुचितः पन्थाः येन वाली हतो गतः।
†समये तिष्ठ, सुग्रीव! मा वालिपथमन्वगाः ॥ ८१ ॥
एक एव रणे वाली शरेण निहतो मया।
त्वां तु सत्यादतिक्रान्तं [3]हनिष्यामि सबान्धवम् ॥ ८२ ॥
[4]तदेवं विहिते कार्ये,[5]यद्धितं, पुरुषर्षभ!
तत्तद्ब्रूहि, नरश्रेष्ठ! ‡त्वर कालव्यतिक्रमः ॥ ८३ ॥

---

*मम रोषस्य यत् रूपं, तद्ब्रूयाः, इदं वचश्च ब्रूयाः इत्यन्वयः ॥ †समये—प्रतिज्ञायामिति यावत्। ‡लक्ष्मणं प्रति इयमुक्तिः लोकवत्। त्वर, मास्तु कालव्यतिक्रम इति।

[1] वर्षासमय—ङ. [2] वीर—च., ज. [3] वधिष्यामि—ङ. [4] यदेवं—ज. [5] चिन्तितं—ङ.

तदित्यादि। तत्—तस्मात् एवं विहिते कार्ये—अकरणे प्रत्यवायतया प्राप्ते, यद्यत् हितं तत्तद् ब्रूहीत्यर्थः। करोमि, न करोमीति वा निश्चित्य ब्रूहीति पृच्छेत्यर्थः। क्रतिपक्षे तु कालव्यतिक्रमो जायते॥ ८३॥

कुरुष्व सत्यं [1]मयि, वानरेश्वर!
प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतम्।
मा वालिनं [2]प्रेतगतो [3]यमक्षयम्
त्वमद्य [4]पश्येर्मम [5]चोदितैश्शरैः॥ ८४॥

अथ उपदेशसंक्षेपः—कुरुष्वेत्यादि। प्रेतगतः—प्रेतत्वं प्राप्तः। चोदितः—प्रेरितः। इति वचनात् ब्रूहीत्यनुकर्षः॥ ८४॥

स पूर्वजं तीव्रविवृद्धकोपं
लालप्यमानं प्रसमीक्ष्य दीनम्।
चकार तीव्रां मतिमुग्रतेजाः
हरीश्वरे मानववंश[6]वर्धनः॥ ८५॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे त्रिंशः सर्गः

---

मानववंशवर्धनः इति। लक्ष्मणं इत्यर्थः। अराज (८२ १/२)-मानः (?) सर्गः॥ ८५॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे त्रिंशः सर्गः

---

[1] मम—ज. [2] प्रेत्य गतो—ङ. [3] यमक्षये—ङ. [4] पश्ये मम—ङ.
[5] चोदितश्शरैः—ज. [6] नाथः—ङ.



## एकत्रिंशः सर्गः

[लक्ष्मणाक्रोशः]

स [1]कामिनं *दीनमदीनसत्त्वं
शोकाभिपन्नं समुदीर्ण[2]कोपम्।
नरेन्द्रसूनुर्नरदेवपुत्रं
रामानुजः पूर्वजमित्युवाच॥ १॥

अथ लक्ष्मणस्य रामाज्ञया किष्किन्धाद्वारगमनम्। स कामिनमित्यादि। सः—लक्ष्मणः॥ १॥

न वानरः स्थास्यति साधुवृत्ते
न [3]मंस्यते कर्मफलानुषङ्गान्।
न भोक्ष्यते वानरराज्यलक्ष्मीं
तथाहि †[4]नातिक्रमतेऽस्य बुद्धिः॥ २॥

साधुवृत्ते—साधूनां वृत्ते स्थिरस्नेहतालक्षणे। कर्मणा—सख्यकर्मणा जनितान् फलानुषङ्गान्—अकण्टकराज्यभोगसंबन्धान् सख्यमूलान् न मंस्यते—न भोक्ष्यते। अत एव वानरराज्यलक्ष्मीं न भोक्ष्यते। हि—यस्मात् तत् तथा—तथाप्रकारा तस्य बुद्धिः अति—अत्यन्तं, न क्रमते प्रेमपरिपालने। नातिक्रमते इति पाठः॥ २॥

[5]मतिक्षयात् ग्राम्यसुखेषु सक्तः
तव [6]प्रसादात् प्रतिकारबुद्धिः।
हतोऽग्रजं पश्यतु, वीर! [7]तस्य
न राज्यमेवं विगुणस्य देयम्॥ ३॥

---

* दीनं, तथाप्यदीनसत्त्वं; एतेन वस्तुतः अदीनसत्त्वोऽपि दैन्यं भावयतीति गम्यते—गो. † नाभिक्रमते—(पा.) अस्मत्प्रयोजनाभिमुख्येन वर्तते—गो.

[1] राघवं—झ. [2] कामम्—ज. [3] मन्यते—ज. [4] नाभिक्रमते—झ.
[5] मतिभ्रमात्—ङ. [6] प्रसादाप्रतिकार—ङ. [7] वालिनं—ज.

न क्षमे इत्यत्र हेतुमाह—मतिक्षयादित्यादि। तत्रापि हेतुः—तव प्रसादात् संप्राप्तेषु ग्राम्यसुखेषु सक्तः इति। यदेवं अतः, प्रतिकारबुद्धिः—प्रत्युपकारबुद्धिः, न वर्तते इति शेषः। एवं पांक्तपाठस्य योजनशक्त्या 'तव प्रसादाप्रतिकारबुद्धि' इति पठित्वा आगमकसमासं अंगीकृत्य अक्लिश्यत् परः*। न देयमिति। दत्तं नानुपालनीयमित्यर्थः ॥ ३ ॥

न धारये कोपमुदीर्णवेगं
निहन्मि सुग्रीवमसत्यमद्य।
हरिप्रवीरैः सह वालिपुत्रः
[1]नरेन्द्रपत्न्या विचयं करोतु ॥ ४ ॥

न धारये इति। हृदि न निरुणध्मीत्यर्थः। असत्यं—असत्यप्रतिज्ञम्। वालिपुत्रः—अङ्गदः विचयं करोतु, सुग्रीवं हत्वा तस्मा एव राज्यसमर्पणादिति शेषः ॥ ४ ॥

† तमात्तबाणासनमुत्पतन्तं
निवेदितार्थं रणचण्डकोपम्।
उवाच रामः परवीरहन्ता
[2]स्ववेक्षितं सानुनयं च वाक्यम् ॥ ५ ॥

निवेदितार्थमिति। विज्ञातसुग्रीववचनप्रवृत्तिमित्यर्थः। स्ववेक्षितम्—सम्यक् पर्यालोचितम् ॥ ५ ॥

* महेश्वरतीर्थः, गोविन्दराजो वा ॥ ' तव प्रसादस्य—राज्यप्रदानादिरूपस्य प्रत्युपकारबुद्धिरहितः ' इति ताभ्यां व्याख्यातम् ॥ † उद्देश्यस्य कोपस्य संहारविनाशकारणत्वात् रामः सौमित्रिं सान्त्वयति ॥

[1] नरेन्द्रपुत्र्या—ज. [2] स्ववीक्षितं—ज.



न हि वै त्वद्विधो लोके पापमेवं समाचरेत्।
[1]पापमार्येण यो हन्ति स वीरः पुरुषोत्तमः ॥ ६ ॥

त्वद्विध इति। धर्मज्ञः इत्यर्थः। एवं पापमिति। मित्रघातरूपमित्यर्थः। पापं—पापबुद्धिम्। आर्येण—स्वचारित्रेण* ॥ ६ ॥

नेदमद्य त्वया [2]ग्राह्यं साधुवृत्तेन, लक्ष्मण!
तां प्रीतिमनुवर्तस्व पूर्ववृत्तं च संगतम् ॥ ७ ॥

इदमिति। मित्रघातचिन्तेत्यर्थः। अनुवर्तस्वेति। सुग्रीवे इति शेषः। तत्र हेतुः—पूर्ववृत्तं सङ्गतं—सख्यं च, अनुस्मरेति शेषः ॥ ७ ॥

सामोपहितया वाचा रूक्षाणि परिवर्जयन्।
वक्तुमर्हसि सुग्रीवं व्यतीतं [3]कालपर्यये ॥ ८ ॥

कालपर्यये—कालपरिवृत्तौ विषये व्यतीतं, भावे निष्ठा, व्यत्ययं—अतिक्रममेव केवलं वक्तुमर्हसि ॥ ८ ॥

सोऽग्रजेनानुशिष्टार्थः यथावत् पुरुषर्षभः।
प्रविवेश पुरीं वीरः लक्ष्मणः परवीरहा ॥ ९ ॥
ततः शुभमतिः प्राज्ञः भ्रातुः प्रियहिते रतः।
लक्ष्मणः † प्रतिसंरब्धः जगाम भवनं कपेः ॥ १० ॥

भवनं प्रति, संरब्धः—कालातिक्रमजकोपवान् भूत्वा जगाम ॥ १० ॥

* आर्येण—सम्यग्विवेकेन—गो. † प्रतिसंरब्धः—प्रतिनिवृत्तहननाध्यवसायः—ती., गो.

[1] कोपमार्येण—ज. [2] कार्यं—क. [3] कालपर्ययम्—ङ.

*शक्रबाणासनप्रख्यं धनुः [1]कालान्तकोपमम् ।
प्रगृह्य गिरिशृङ्गाभं †मन्दरः सानुमानिव ॥ ११ ॥

कालान्तकोपमम्—तद्वत् भयङ्करम् ॥ ११ ॥

यथोक्तकारी वचनं ‡उत्तरं चैव सोत्तरम् ।
बृहस्पतिसमो बुद्ध्या मत्वा रामानुजस्तदा ॥ १२ ॥

उत्तरं च बुद्ध्या मत्वेत्यर्थः । सोत्तरमिति । उत्तरादुत्तरमपि वक्तव्योत्तरसहितमित्यर्थः ॥ १२ ॥

कामक्रोध[2]समुत्थेन भ्रातुः [3]कोपाग्निना वृतः ।
प्रभञ्जन [4]इवाप्रीतः प्रययौ लक्ष्मणस्तदा ॥ १३ ॥

भ्रातुः—रामस्य कामस्य—स्वाभीष्टकार्यप्रवर्तनस्य अभावेन यः क्रोधः, तत्समुत्थेन कोपाग्निना स्वीयक्रोधाग्निना वृतः प्रभञ्जन इव प्रययौ इत्यन्वयः ॥ १३ ॥

सालतालाश्वकर्णांश्च तरसा पातयन् [5]बहून् ।
पर्यस्यन् गिरि[6]कूटानि द्रुमानन्यांश्च [7]वेगितः ॥ १४ ॥

तरसा—वेगेन । वेगितः—संजातवेगः ॥ १४ ॥

शिलाश्च शकलीकुर्वन् पद्भ्यां गज इवाशुगः ।
§दूरमेकपदं त्यक्त्वा ययौ कार्यवशात् द्रुतम् ॥ १५ ॥

---

* 'क्रोडग्रजेन' इत्यादिश्लोकद्वयोक्तं विस्तरेणाह—शक्रेत्यादिना—गो. † मन्दरः—मन्दराख्यः सानुमान्—पर्वतः—ती. धनुषः स्थाने सानोर्निर्देशो वा ॥ ‡ उत्तरं—स्ववचनस्य संभावितं सुग्रीवोत्तरं, तस्य पुनः स्वोत्तरं यत्, तत्सहितम् । अहमेवं वदेयं, तस्योत्तरं स एवं वदेत्, तस्योत्तरं मया एवं वक्तव्यमितिरीत्या मत्वेत्यर्थः ॥ § एकपदं—पौरस्त्यपदं दूरं त्यक्त्वा—दूरे क्षिप्त्वा—गो.

[1] कालान्तकोपमः—ङ. [2] समृद्धेन—ङ. [3] क्रोधाग्निना—ज. [4] इवाविष्टः—ङ. [5] बलात्—ज. [6] शृङ्गाणि—ङ. [7] वेगतः—ङ.



दूरमेकपदं त्यक्त्वेति । एकैकपदं पूर्वपदापेक्षया यथा चेत् दूरं भवति, तथान्तरालं त्यक्त्वा विन्यस्य कार्यवशात् द्रुतं ययौ ॥ १५ ॥

तामपश्यद्बलाकीर्णां हरिराजमहापुरीम् ।
दुर्गामिक्ष्वाकुशार्दूलः किष्किन्धां *[1]गिरिसङ्कटे ॥ १६ ॥

बलाकीर्णां—वानरबलेन व्याप्ताम् ॥ १६ ॥

रोषात् प्रस्फुरमाणोष्ठः सुग्रीवं प्रति लक्ष्मणः ।
ददर्श वानरान् भीमान् [2]किष्किन्धाया बहिश्चरान् ॥१७॥
तं दृष्ट्वा वानराः सर्वे लक्ष्मणं पुरुषर्षभम् ।
शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ॥
जगृहुः कुञ्जरप्रख्याः वानराः पर्वतान्तरे ॥ १८ ॥

तं क्रुद्धं लक्ष्मणं दृष्ट्वा तदा वानराणां शैलशृङ्गादिग्रहः भीत्या आपाततः स्वस्वरक्षणार्थम् ॥ १८ ॥

तान् गृहीतप्रहरणान् [3]हरीन् दृष्ट्वा तु लक्ष्मणः ।
बभूव [4]द्विगुणं क्रुद्धः बह्विन्धन इवानलः ॥ १९ ॥

द्विगुणं क्रुद्धः इति । मां दृष्ट्वा सुग्रीवभृत्याश्च त्यक्तस्नेहाः प्रणामं मुक्त्वा बत प्रहरणं गृह्णन्तीति कोपद्वैगुण्यम् ॥ १९ ॥

तं ते भयपरीताङ्गाः [5]क्रुद्धं दृष्ट्वा प्लवङ्गमाः ।
[6]कालमृत्युयुगान्ताभं शतशो विद्रुता दिशः ॥ २० ॥

---

* गिरिसंकटे—निबिडगिरिमध्ये—गो.

[1] गिरिगह्वरे—ङ. [2] किष्किन्धायां—ज. [3] सर्वान्—ज. [4] परम—ङ. [5] क्षुब्धं—ज. [6] कालमृत्युमिवायान्तं—ङ.

ततः सुग्रीवभवनं प्रविश्य हरिपुङ्गवाः ।
*क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन् ॥ २१ ॥

तारया सहितः कामी सक्तः [1]कपिवृषो रहः ।
न तेषां [2]कपिवीराणां [3]शुश्राव वचनं तदा ॥ २२ ॥

तेषां—सामान्यभृत्यानामित्यर्थः ॥ २२ ॥

ततः [4]†सचिवसंदिष्टाः हरयो रोमहर्षणाः ।
गिरिकुञ्जरमेघाभाः नगर्या निर्ययुस्तदा ॥ २३ ॥

ततः सचिवसंदिष्टा इति । सुग्रीवं बोधयित्वा तदनुमत्या लक्ष्मणोऽस्माभिः प्रवेश्यते, तावत्पर्यन्तं लक्ष्मणस्य हठात् प्रवेशं निरुन्धानाः तिष्ठतेति सचिवैः—हनूमदादिभिः सन्दिष्टा हरयः—† अङ्गदादयः नगरात् निर्ययुः ॥ २३ ॥

नखदंष्ट्रायुधा [5]घोराः सर्वे विकृतदर्शनाः ।
सर्वे शार्दूल[6]दर्पाश्च सर्वे च [7]विकृताननाः ॥ २४ ॥

विकृतदर्शनाः—भीमदर्शनाः ॥ २४ ॥

दशनागबलाः केचित् केचिद्दशगुणोत्तराः ।

---

* प्रथमं स्वैरनुभूतं लक्ष्मणक्रोधं प्राथम्येनोचुर्वानराः । लक्ष्मणस्य क्रोधं, आगमनं चेत्यन्वयः ॥ † परन्तु प्रकरणपरिशीलने—अत्र उक्ताः सचिवाः अन्य एव स्युः । लक्ष्मणपराक्रमापरिज्ञानात् लक्ष्मणनिरोधाय वानराः प्रदिष्टाः कैश्चित् । अथवा 'सुग्रीवसंदिष्टाः' इति पाठो युक्तः । कृत्याकृत्यविवेकशून्यः सुग्रीवः कपीन् लक्ष्मणनिरोधे न्ययूयुजत् । अङ्गदप्रमुखास्तु चातुर्येण सर्वं समीकृतवन्तः इति स्वरसम् ॥

[1] कपिवरस्तदा—ङ. [2] कपिसिंहानां—ज. [3] जग्रह—ङ. [4] सुग्रीव—ङ. [5] वीराः—ङ. [6] दंष्ट्राश्च—ङ., ज. [7] विवृताननाः—ङ.



केचिन्नागसहस्रस्य बभूवुस्तुल्य[1]विक्रमाः[2] ॥ २५ ॥

दशगुणोत्तराः इति । दशगुणाधिकदशनागबलाः । शतनागबलाः इत्यर्थः ॥ २५ ॥

कृत्स्नां हि कपिभिर्व्याप्तां द्रुमहस्तैर्महाबलैः ।
अपश्यल्लक्ष्मणः क्रुद्धः किष्किन्धां तां दुरासदाम् ॥ २६ ॥

दुरासदामपश्यदित्यन्वयः ॥ २६ ॥

ततस्ते हरयस्सर्वे प्राकारपरिघान्तरात् ।
निष्क्रम्योदग्रसत्त्वास्तु तस्थु*[3]राविष्कृतं तदा ॥ २७ ॥

प्राकारः तद्बहिर्वर्तिनी परिघा च, तदनन्तरात् तदवधेरपि बहिर्निष्क्रम्य आविष्कृतं—आविष्कृतनिरोधनं यथा तथा तदा तस्थुः ॥ २७ ॥

सुग्रीवस्य प्रमादं च † [4]पूर्वजस्यार्थमात्मवान् ।
[5]बुद्ध्वा कोपवशं वीरः ‡ पुनरेव जगाम सः ॥ २८ ॥

प्रमादं चेति । चकारात् वानरप्रतिरोधं चेत्यर्थः ॥ २८ ॥

---

* आविष्कृतं—प्रकाशं यथा तथा—गो. सचिवादिष्टत्वादिति भावः ॥ † पूर्वजस्य रामस्य अर्थं—सीतान्वेषणरूप इत्यर्थः ॥ ‡ सर्वमिदं स्मरन् लक्ष्मणस्य कोपस्तथातथाऽवर्धतेति भावः ॥

[1] वर्चसः—ज. [2] एतदनन्तरं—सन्ति चौघबलाः केचित् केचिद्वायुबलोत्तराः । अप्रमेयबलाः केचित् तत्रासन् हरिपुङ्गवाः ॥ प्रायः पूगमेवाकाशं सछत्रमेव तद्वनम् । तेन वानरसैन्येन सुग्रीवस्य महात्मनः ॥ ततो द्वाराणि सर्वाणि अङ्गदो राजशासनात् । पर्यधावत दुर्धर्षः नक्षत्राणीव च द्रुमाः—इत्यधिकं—ङ. [3] राविष्कृतायुधाः—ङ. [4] पूर्वजं चार्तमात्म—ङ. [5] दृष्ट्वा—ज.

सदीर्घोष्णमहोच्छ्वासः कोपसंरक्तलोचनः ।
बभूव नरशार्दूलः सधूम इव पावकः[1] ॥ २९ ॥

दीर्घः उष्णः महान् उच्छ्वासः यस्य स तथा ॥ २९ ॥

बाणशल्यस्फुरज्जिह्वः सायकासनभोगवान् ।
स्वतेजोविष[2]संघातः पञ्चास्य इव पन्नगः ॥ ३० ॥

बाणस्य शल्यमेव स्फुरन्ती जिह्वा यस्य स तथा । सायकासनं —धनुरेव भोगः अस्यास्तीति तथा ॥ ३० ॥

तं दीप्तमिव कालाग्निं नागेन्द्रमिव कोपितम् ।
समासाद्याङ्गदस्त्रासात् विषाद[3]मगमद्भृशम् ॥ ३१ ॥

भृशं विषादमगमदिति । नैतावत्कालं रामकार्यं अस्माभि चिन्तितमिति विषादः ॥ ३१ ॥

सोऽङ्गदं रोषताम्राक्षः संदिदेश महायशाः ।
सुग्रीवः कथ्यतां, वत्स! ममागमनमित्युत ॥ ३२ ॥

इत्युतेति । एवंप्रकारेणेत्यर्थः ॥ ३२ ॥

एष रामानुजः प्राप्तः त्वत्सकाश[4]मरिंदमः ।
भ्रातुर्व्यसनसंतप्तः द्वारि तिष्ठति लक्ष्मणः ॥ ३३ ॥

तमेव प्रकारं दर्शयति—एष इत्यादि। एष इति द्वारासन्नस्य परामर्शः॥

*[5]तस्य वाक्यं यदि रुचिः क्रियतां साधु, वानर!
इत्युक्त्वा शीघ्रमागच्छ, वत्स![6] वाक्यमरिन्दम! ॥३४॥

---

* तस्य वाक्ये तव यदि रुचिः, तर्हि साधु-युक्तं, तत्र तव गमनं वा, अत्रैव तस्यानयनं वा क्रियतामित्येतद्वाक्यमुक्त्वा शीघ्रनागच्छ-गो.

[1] एतदनन्तरं—बाणासनमहावीर्यः लक्ष्मणः परवीरहा । प्रविवेश दुराधर्षां पुरीं सुग्रीवपालिताम् ॥ ततो नीलाभ्रसंकाशं तप्तकाञ्चनवेदिकम् । श्रीमद्विमानमासाद्य रमणीयं मनोरमम् ॥ शुश्राव परमस्त्रीणां सोत्कृष्टहसितस्वनम्—इत्यधिकं—ङ. [2]संभृतः-ज. [3] मगमत्परम्—ज. [4] मरिन्दम—ज. [5] तस्य वाक्ये—ङ. [6]वाक्यमिदं मम—च.



तस्य वाक्यमित्यादि । हे अरिन्दम! वत्स! उक्तप्रकारं मद्वाक्यं तस्मा उक्त्वा, अथ स वानरः सुग्रीवः साधु—साधुकारी यथा भवति तथा क्रियताम् । अनन्तरं यद्यस्माद्‌ रुचिर्भवति तदा तस्य वाक्यं च श्रुत्वा शीघ्रमागच्छ ॥ ३४ ॥

लक्ष्मणस्य वचः श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् ।
पितुस्समीपमागम्य सौमित्रिरयमागतः ॥ ३५ ॥

अथाङ्गदस्तस्य[1] वचो निशम्य
संभ्रान्तभावः परिदीनवक्त्रः ।
[2]निपत्य तूर्णं नृपतेस्तरस्वी
*[3] ततः कुमारश्चरणौ ववन्दे ॥ ३६ ॥

लक्ष्मणस्य वचः इति संक्षेपश्लोकस्य विस्तारः—अथाङ्गदस्तस्ये-त्यादि । संभ्रान्तभाव इति । संभ्रान्तचित्त इत्यर्थः ॥ ३६ ॥

संगृह्य पादौ [4]पितुरग्र्यतेजाः
जग्राह †मातुः पुनरेव पादौ ।
पादौ रुमायाश्च निपीडयित्वा
निवेदयामास ततस्तमर्थम् ॥ ३७ ॥

[5]स निद्रामदसंवीतः वानरो न विबुद्धवान् ।
बभूव मदमत्तश्च मदनेन च मोहितः ॥ ३८ ॥

न विबुद्धवानिति । तन्नातिं तद्वचनं चेति शेषः ॥ ३८ ॥

---

* पूर्वं नृपतेश्चरणौ ववन्दे, ततः रुमायाः, तदुपलक्षिततारायाश्च चरणौ ववन्दे—शि.

† मातुः—तारायाः—शि., ति.

[1] सुतीव्रवाचा—ज. [2] निगीर्य पूर्वं—ज. [3] ततो रुमायाश्चरणौ—ज. [4] पुनरुग्रतेजाः—ङ., पितुरुग्रतेजाः—ज. [5] स निद्राक्रान्त—ज.

ततः किलकिलां चक्रुः लक्ष्मणं प्रेक्ष्य वानराः ।
प्रसादयन्तस्तं क्रुद्धं [1]भयमोहितचेतसः ॥ ३९ ॥

तत इति । अङ्गदस्य पितृसमीपगमनानन्तरमित्यर्थः । वानराणां भयक्रोधादिजः उच्चैस्संघातशब्दः किलकिला ॥ ३९ ॥

*[2]ते महौघनिभं दृष्ट्वा वज्राशनिसमस्वनम् ।
सिंहनादं समं चक्रुः लक्ष्मणस्य समीपतः ॥ ४० ॥

सिंहनादं चक्रुरिति । सुग्रीवोद्बोधनायेति शेषः † ॥ ४० ॥

तेन शब्देन महता प्रत्यबुध्यत वानरः ।
मदविह्वलताम्राक्षः व्याकुलस्रग्विभूषणः ॥ ४१ ॥
अथाङ्गदवचः श्रुत्वा ‡ तेनैव च समागतौ ।
मन्त्रिणौ वानरेन्द्रस्य [3]§ संमतोदारदर्शिनौ ॥ ४२ ॥

अथाङ्गदवचः श्रुत्वेति । स्ववचनात् अनुद्बुद्धं पितरं बोधयत इत्युक्तवतोऽङ्गदस्य वचः श्रुत्वा तेन च अङ्गदेन सह मन्त्रिणौ वानरेन्द्रस्य समीपमागतौ बभूवतुः । संमतौ उदारार्थदर्शिनौ च संमतोदारदर्शिनौ ॥ ४२ ॥

[4]प्लक्षश्चैव प्रभावश्च ‖मन्त्रिणावर्थधर्मयोः ।
वक्तुमुच्चावचं प्राप्तं लक्ष्मणं तौ शशंसतुः ॥ ४३ ॥

* महौघनिभमित्यनेन अप्रहृष्टत्वमुच्यते ॥ † परन्तु 'लक्ष्मणस्य समीपतः' इति दर्शनात्, लक्ष्मणनिरोधप्रयत्नसूचकः सिंहनाद इति युक्तम् ॥ ‡ तेनैव समागतौ—तदाह्वानेन समागतौ–गो. § (पा.) संमतौ, दारदर्शिनौ—अन्तःपुरप्रवेशयोग्यौ–ती. ‖ अर्थधर्मयोर्मन्त्रिणौ उच्चावचं वक्तुं प्राप्तं लक्ष्मणं शशंसतुः – इति वा । अनेन तयोः स्वस्वामिनिष्ठा सूचिता ।

[1] लक्ष्मणं समुपस्थितम्–ङ. [2] ते मत्तेभनिभं, ते महेन्द्रनिभं–ङ. [3] संमतौदारदर्शिनौ–छ. [4] प्लक्षश्चैव प्रभासश्च–ङ.



कौ तावित्यतः—प्लक्ष इत्यादि । अर्थधर्मयोरिति । विषय इति शेषः । उच्चावचं स्वराज्ञि वक्तुं तत्प्रस्तावनया तावल्लक्ष्मणं प्राप्तं शशंसतुः ॥ ४३ ॥

प्रसादयित्वा सुग्रीवं वचनैः [1]सामनिश्चितैः [2]।
आसीनं [3]पर्युपासीनौ यथा शक्रं मरुत्पतिम् [4] ॥ ४४ ॥

सामेन सान्त्वसंपादनाय निश्चितानि, तैस्तथा ॥ ४४ ॥

सत्यसन्धौ महाभागौ भ्रातरौ रामलक्ष्मणौ ।
[5]वयस्यभावं संप्राप्तौ राज्यार्हौ राज्यदायिनौ ॥ ४५ ॥
तयोरेको धनुष्पाणिः द्वारि तिष्ठति लक्ष्मणः ।
यस्य भीताः प्रवेपन्तः नादान् मुञ्चन्ति वानराः ॥ ४६ ॥

यस्य भीता इति । यस्मात् भीता इत्यर्थः ॥ ४६ ॥

स एष राघवभ्राता लक्ष्मणो वाक्यसारथिः ।
व्यवसायरथः प्राप्तः तस्य रामस्य शासनात् ॥ ४७ ॥

रामवाक्यरूपः सारथिः—प्रवर्तकः यस्य स तथा ॥ ४७ ॥

अयं च दयितः, राजन्! तारायास्तनयोऽङ्गदः ।
लक्ष्मणेन सकाशं ते प्रेषितस्त्वरयाऽनघ! ॥ ४८ ॥

[1] सार्थनिश्चितैः–ञ. [2] एतदनन्तरं––सुग्रीवसचिवास्सर्वे मन्त्रार्थे समुपाविशन् । विनतश्च सुषेणश्च नीलोऽथ नल एव च ॥ अङ्गदो वायुपुत्रश्च हनुमानपि बुद्धिमान् । एते सर्वे महात्मानः सुग्रीवं वानरोत्तमाः––इत्यधिकं–झ. [3] पर्युपासीनाः शक्रं सुरगणा इव–झ. [4] एतदनन्तरं––बलविक्रमयुक्तश्च मन्त्रिणः स्वार्थनिर्णये । वक्तुमुच्चावचं प्राप्तं लक्ष्मणं ते शशंसिरे । प्रसादयित्वा सुग्रीवं वचनैः सामनिश्चयैः । उवाच हनुमान् वीरः यथा शक्रं बृहस्पतिः––इत्यधिकं–झ. [5] मनुष्यभावं–ञ.

सोऽयं रोषपरीताक्षः द्वारि तिष्ठति वीर्यवान् ।
वानरान्, वानरपते! चक्षुषा निर्दहन्निव ॥ ४९ ॥
तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः सह बन्धुभिः ।
गच्छ शीघ्रं, महाराज! रोषो [1] ह्यस्य निवर्तताम् ॥ ५० ॥
यदाह रामो धर्मात्मा तत्कुरुष्व समाहितः ।
राजन्! तिष्ठ स्वसमये भव [2] सत्यप्रतिश्रवः ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकत्रिंशः सर्गः

---

अर्धार्ध(५१ १/२)मानः सर्गः ॥ ५१ १/२ ॥

---

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकत्रिंशः सर्गः

## द्वात्रिंशः सर्गः

### [हनुमन्मन्त्रालोचना]

* अङ्गदस्य वचः श्रुत्वा सुग्रीवः सचिवैः सह ।
लक्ष्मणं कुपितं श्रुत्वा † मुमोचासनमात्मवान् ॥ १ ॥

अथ कोपनिमित्तं मन्त्रिभिस्सह मन्त्रयन् बालितपात एव निमित्तं नान्यदिति हनुमता बोध्यते । अङ्गदस्येत्यादि ॥ १ ॥

सचिवानब्रवीद्वाक्यं निश्चित्य गुरुलाघवम् ।
मन्त्रज्ञान् [3] मन्त्रकुशलः मन्त्रेषु [4] परिनिष्ठितान् ॥ २ ॥

---

* अङ्गदस्य प्राधान्यात् अङ्गदस्य वचः श्रुत्वेत्युक्तम्–गो. अङ्गदस्य—अङ्गदप्रेरितमन्त्रिणोः–शि. † आसनं मुमोच—भयेनासनादुदतिष्ठत्–गो. आसनात्—शयनासनात्–शि.

[1] ह्ययोपशाम्यताम्–ज. [2] सत्यप्रतिश्रवः–ज. [3] मन्त्रज्ञः–ङ. [4] परिनिष्ठितः–ज.



न मे दुर्व्याहृतं किञ्चिन् नापि मे दुरनुष्ठितम् ।
लक्ष्मणो राघवभ्राता क्रुद्धः किमिति चिन्तये ॥ ३ ॥

दुर्व्याहृतं—अनुचितवचनम् । दुरनुष्ठितं—अनुचितकृत्यम् । अस्तीति शेषः । लक्ष्मण इत्यादि । अथानीत्यादिः ॥ ३ ॥

* असुहृद्भिर्ममामित्रैः नित्यमन्तरदर्शिभिः ।
[1] मम दोषानसंभूतान् श्रावितो राघवानुजः ॥ ४ ॥

कोपकारणं संभावितं तूत्प्रेक्षयति—असुहृद्भिरित्यादि । असुहृद्भिः—वैरिभिः । अमित्रैः—अपकारिभिः ॥ ४ ॥

† अत्र तावद्यथा[2]बुद्धिः सर्वैरेव यथाविधि ।
भावस्य निश्चयस्तावत् विज्ञेयो निपुणं शनैः ॥ ५ ॥

अत्र—मित्रकोपविषये । तावत्—प्रथमतः । यथाबुद्धिः यथा—तत्त्वात्मिका बुद्धिः ज्ञानं यस्मिन् निश्चये स तथा । भावस्य निश्चय इति । कोपनिमित्तस्य निश्चय इत्यर्थः ॥ ५ ॥

‡ न खल्वस्ति मम त्रासः लक्ष्मणान्नापि राघवात् ।
मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमम् ॥ ६ ॥

त्रासो नास्तीति । मदपराधमूल इत्यर्थः । तर्हि कुतश्चिन्तेत्यत्राह—मित्रमित्यादि । अस्थाने—अकाण्डे मदरातिप्रयुक्तमिथ्योपजापेन कुपितं—संजातकोपं यतः, अतः मे तत्तु संभ्रमं—भयं जनयत्येव । 'संभ्रमोऽत्यादरे भये' ॥ ६ ॥

---

* असुहृद्भिः—अशोभनहृदयैः–गो. तथा चेदं अमित्रविशेषणमिति भावः । † यथाविधि यथाबुद्धि च विशेय इति वाऽन्वयः । ‡ निजभयकृतमासनचालनमपह्नुते—न खल्विति–गो. कृतप्रतिष्ठाः खलु स्वदौर्बल्य असहुवत इति कोऽत्रत्तन् ॥

[1] गुणदोषा–ङ. [2] बुद्धि–ङ.

*सर्वथा सुकरं मित्रं दुष्करं परिपालनम् ।
अनित्यत्वात्तु चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥ ७ ॥

अथ मित्रपरिपालनं अमित्रजोपजापपरिहारेण विना दुष्करमित्याह—सर्वथेत्यादि । उपजापतो मित्रभेदस्य संभावने हेतुमाह—अनित्यत्वादिति । अल्पेऽपीति । उपजाप इति शेषः ॥ ७ ॥

अतोनिमित्तं त्रस्तोऽहं रामेण तु महात्मना ।
यन्ममोपकृतं, शक्यं प्रतिकर्तुं न तन्मया ॥ ८ ॥

अतोनिमित्तं—अस्मादेव निमित्तात् । अरातिजोपजापनिमित्तादित्यर्थः । अथ कृतज्ञतां स्वदोषशंकानिवृत्तये मंत्रिभ्यो दर्शयति—रामेणेत्यादि ॥ ८ ॥

†सुग्रीवेणैवमुक्तस्तु हनुमान् [1] मारुतात्मजः ।
उवाच स्वेन तर्केण मध्ये वानरमन्त्रिणाम् ॥ ९ ॥

अथ राज्ञा कोपनिमित्तं निश्चेतव्यमिति मंत्रिष्वनुशिष्टेषु मंत्रिप्रधानो हनुमान् निश्चिनोति निमित्तं—सुग्रीवेणेत्यादि । स्वेनैव तर्केण—स्वया युक्त्या ॥ ९ ॥

सर्वथा नैतदाश्चर्यं यस्त्वं, हरिगणेश्वर!
[2] न विस्मरसि सुस्निग्धं [3] उपकारकृतं शुभम् ॥ १० ॥

निश्चयं विवक्षुस्तावत् स्वस्य गुणग्राहित्वरूपं मंत्रिलक्षणं प्रकटयति—सर्वथेत्यादि ॥ १० ॥

---

* मित्रसंपादनं सुलभं, तस्यैकरूपतया परिपालनं दुष्करमित्यर्थः ॥ † अथ मुख्यमन्त्री हनुमान् कोपनिमित्तं निश्चित्याह—सुग्रीवेणेति—ति.

[1] हरियूथपः—ङ., हरिपुङ्गवः—ज. [2] न विस्मरस्यमुं स्निग्धं—ङ., न विस्मरस्यविक्लबं—ज. [3] उपकारं कृतं—ज.



राघवेण तु [1] वीरेण *भयमुत्सृज्य दूरतः ।
त्वत्प्रियार्थं हतो वाली शक्रतुल्यपराक्रमः ॥ ११ ॥

उपकारगौरवं दर्शयति—राघवेणेत्यादि । भयमुत्सृज्येति । त्वदुपदिष्टवालिबलादिनिमित्तमिति शेषः ॥ ११ ॥

सर्वथा प्रणयात् क्रुद्धः राघवो नात्र संशयः ।
भ्रातरं संप्रहितवान् लक्ष्मणं लक्ष्मिवर्धनम् ॥ १२ ॥

प्रणयात् क्रुद्धः इति । न तु किञ्चिदरातिजोपजापतः इत्यर्थः ॥ १२ ॥

त्वं प्रमत्तो न जानीपे कालं, कालविदां वर!
फुल्लसप्तच्छदश्यामा †प्रवृत्ता तु [2] शरच्छिवा ॥ १३ ॥

ननु प्रणयकोपस्यापि केनाचन्निमित्ताभासेन भाव्यमित्यपेक्षायां तद्दर्शयति—त्वं प्रमत्त इत्यादि । कालमिति । प्रवृत्तिप्रतिश्रुतकालमित्यर्थः ॥ १३ ॥

निर्मलग्रहनक्षत्रा द्यौः प्रणष्टबलाहका ।
[3] प्रसन्नाश्च दिशः सर्वाः सरितश्च सरांसि च ॥ १४ ॥
प्राप्तमुद्योगकालं तु नावैपि, हरिपुङ्गव!
त्वं प्रमत्त इति व्यक्तं लक्ष्मणोऽयमिहागतः ॥ १५ ॥

व्यक्तमिति । ज्ञात्वेति शेषः ॥ १५ ॥

---

* भयं—वालिपराक्रमजं, वालिनश्छद्मेन वधकृतलोकापवादजं वा—ति. † शिवा शरत्, प्रवृत्ता—प्रकर्षेण वृत्ता, गतप्रायेति यावत्—ति.

[1] शूरेण—ङ. [2] शरच्छुभा—ज. [3] सुप्रसन्नाश्च सरितः प्रसन्नानि सरांसि च—ङ.

आर्तस्य हृतदारस्य परुषं पुरुषान्तरात् ।
वचनं मर्षणीयं ते राघवस्य महात्मनः ॥ १६ ॥

पुरुषान्तरात् प्रयुक्तं परुषं—पारुष्योपेतं वचनमपि मर्षणीयमिति । *संभावितमालक्ष्य स्वराज्ञोऽयमुपदेशः ॥ १६ ॥

कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् ।
अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥ १७ ॥

नियुक्तैर्मन्त्रिभिर्वाच्यः ह्यवश्यं पार्थिवो हितम् ।
अत एव भयं त्यक्त्वा ब्रवीम्यवधृतं वचः । ॥ १८ ॥

नियुक्तैरिति । हितोपदेश इति शेषः । भयं त्यक्त्वा ब्रवीमीति । स्वराजानमपि कार्यवशात् परस्मा अञ्जलिमपि कुर्विति निर्भयं वदामीत्यर्थः ॥ १८ ॥

अभिक्रुद्धः समर्थो हि चापमुद्य राघवः ।
सदेवासुरगन्धर्वं वशे स्थापयितुं जगत् ॥ १९ ॥

न स क्षमः कोपयितुं †यः प्रसाद्यः पुनर्भवेत् ।
पूर्वोपकारं स्मरता कृतज्ञेन विशेषतः ॥ २० ॥

तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः [1]ससुहृज्जनः ।
राजन् ! तिष्ठ स्वसमये भर्तुर्भार्येव तद्वशे ॥ २१ ॥

* स्वामिनां सन्निधौ तद्भृत्यैरेवंवचनं लोकन्याय इति भावः ॥ † पौरुषेण रामकोपस्य उत्तरदानं सर्वदाऽशक्यमित्यर्थः ॥

[1] सह बन्धुभि —ङ.



न रामरामानुजशासनं त्वया
कपीन्द्र ! [1]युक्तं मनसाऽप्यपोहितुम् ।
मनो हि ते ज्ञास्यति मानुषं बलं
* [2]सराघवस्यास्य सुरेन्द्रवर्चसः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे द्वात्रिंशः सर्गः

---

मन इत्यादि । सराघवस्य सलक्ष्मणस्यास्य रामस्य मानुषं—मनुष्यमर्यादासिद्धं बलं ते मनः जानात्येव, वालिवधादिना । अतः परं रावणवधे अमानुषमपि बलं ज्ञास्यति । आकार(२२ १/२)-मानः ( ? ) सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे द्वात्रिंशः सर्गः

---

## त्रयस्त्रिंशः सर्गः

### [लक्ष्मणसान्त्वनम्]

अथ प्रतिसमादिष्टः लक्ष्मणः परवीरहा ।
प्रविवेश [3]गुहां [4]रम्यां किष्किन्धां रामशासनात् ॥ १ ॥

अथ राजानुमत्या अन्तःपुरं प्रविष्टात् लक्ष्मणात् भीतेन सुग्रीवेण तारया पत्न्या लक्ष्मणसान्त्वनम् । अथेत्यादि । प्रतिसमादिष्टः—प्रतिसन्देशं प्राप्तः † ॥ १ ॥

* सराघवस्य—राममहितस्य अस्य—लक्ष्मणस्य—शि. ति. † अङ्गदमुखादिति शेषः ॥ रामशासनादिति प्राथमिकनियोगस्मरणेन ॥

[1] शक्यं—ङ. [2] सलक्ष्मणस्यास्य—ङ. [3] शुभां—ङ. [4] घोरां—ङ.

द्वारस्था हरयस्तत्र महाकाया महाबलाः ।
बभूवुर्लक्ष्मणं दृष्ट्वा सर्वे प्राञ्जलयः स्थिताः ॥ २ ॥

निःश्वसन्तं तु तं दृष्ट्वा क्रुद्धं दशरथात्मजम् ।
बभूवुर्हरयस्त्रस्ताः *न चैनं पर्यवारयन् ॥ ३ ॥

स तां रत्नमयीं श्रीमान् दिव्यां पुष्पितकाननाम् ।
रम्यां रत्नसमाकीर्णां ददर्श महतीं गुहाम् ॥ ४ ॥

पुष्पितानि काननानि उपवनानि—यस्यां सा तथा । रत्नसमाकीर्णां—प्रशस्तानेकपदार्थसमाकीर्णाम् ॥ ४ ॥

†हर्म्यप्रासादसंबाधां नाना[1]पण्योपशोभिताम् ।
सर्वकामफलैर्वृक्षैः पुष्पितैरुपशोभिताम् ॥ ५ ॥

अस्यैव प्रपञ्चः—हर्म्येत्यादि । सर्वदा अपेक्षितफलोपेताः—सर्वकामफलाः ॥ ५ ॥

देवगन्धर्वपुत्रैश्च वानरैः कामरूपिभिः ।
दिव्यमाल्याम्बरधरैः शोभितां प्रियदर्शनैः ॥ ६ ॥

चन्दनागरु‡पद्मानां गन्धैः सुरभि[2]गन्धिताम् ।
मैरेयाणां मधूनां च संमोदितमहापथाम् ॥ ७ ॥

पद्मं—पद्माख्यं गन्धद्रव्यम् ॥ ७ ॥

---

* भयाद् उपसर्पितुं नाशक्नुवन्नित्यर्थः । † हर्म्याः—धनिनां गृहाः । प्रासादाः-देवगृहाः—गो. ‡ पद्मानां—आलेपविशेषाणां—गो.

[1] रत्नोप—ञ. [2] गन्धिताम्—ङ.



[1][विन्ध्यमेरुगिरिप्रख्यैः प्रासादैरुपशोभिताम् ।]
ददर्श *गिरिनद्यश्च विमलास्तत्र राघवः ।
†अङ्गदस्य गृहं रम्यं मैन्दस्य द्विविदस्य च ॥ ८ ॥

गवयस्य गवाक्षस्य गजस्य शरभस्य च ।
विद्युन्मालेश्च संपातेः सूर्याक्षस्य हनूमतः ॥ ९ ॥

वीरबाहोः सुबाहोश्च [2]नलस्य [3]च महात्मनः ।
कुमुदस्य सुषेणस्य तारजाम्बवतोस्तथा ॥ १० ॥

दधिवक्त्रस्य नीलस्य सुपाटलसुनेत्रयोः ।
एतेषां कपिमुख्यानां राजमार्गे महात्मनाम् ॥ ११ ॥

ददर्श गृहमुख्यानि ‡महासाराणि लक्ष्मणः ।
पाण्डुराभ्रप्रकाशानि [4]दिव्यमाल्ययुतानि च ॥ १२ ॥

प्रभूतधनधान्यानि स्त्रीरत्नैः शोभितानि च ।
पाण्डुरेण तु [5]सालेन परिक्षिप्तं दुरासदम् ॥ १३ ॥

वानरेन्द्रगृहं रम्यं महेन्द्रसदनोपमम् ।
शुक्लैः प्रासादशिखरैः कैलासशिखरोपमैः ॥ १४ ॥

[6]सर्वकामफलैर्वृक्षैः पुष्पितैरुपशोभितम् ।
महेन्द्रदत्तैः श्रीमद्भिः नीलजीमूतसन्निभैः ।
दिव्यपुष्पफलैर्वृक्षैः शीतच्छायैर्मनोरमैः ॥ १५ ॥

महेन्द्रदत्तैः वृक्षैः—कल्पवृक्षैरित्यर्थः ॥ १५ ॥

---

* गिरिनद्यः—गिरिनदीः, व्यत्ययात् द्वितीया—गो. † एतेषु कपिषु बहवः किष्किन्धाया बहिर्वर्तन्त इति ३९ सर्गे ज्ञायते, अथापि तेषां गृहाणि राजधान्यामपि प्रत्येकं वर्तन्त इति न विरोधः ॥ ‡ महासाराणि—अतिदृढानि—गो.

[1] इदमर्धं कुण्डलितं—ङ. [2] बलस्य—ङ. [3] पनसस्य च—ङ. [4] गन्धमादस्य—ञ. [5] शैलेन—ञ. [6] सर्वकाल—ङ.

हरिभिः संवृतद्वारं बलिभिश्शस्त्रपाणिभिः ।
दिव्यमाल्यावृतं शुभ्रं तप्तकाञ्चनतोरणम् ॥ १६ ॥

सुग्रीवस्य गृहं रम्यं प्रविवेश महाबलः ।
अवार्यमाणः सौमित्रिः महाभ्रमिव भास्करः ॥ १७ ॥

स सप्तकक्ष्या धर्मात्मा [1]नानाजनसमाकुलाः ।
प्रविश्य [2]सुमहद्गुप्तं ददर्शान्तःपुरं महत् ॥ १८ ॥

हैमराजतपर्यङ्कैः बहुभिश्च वरासनैः ।
महार्हास्तरणोपेतैः तत्र [3]तत्रोपशोभितम् ॥ १९ ॥

प्रविशन्नेव सततं शुश्राव मधुर[4]स्वरम् ।
तन्त्रीगीतसमाकीर्णं [5]समगीतपदाक्षरम् ॥ २० ॥

सततं--वीणादिवादनघोषसहितं मधुरस्वरं उच्यमानविशेषणं शुश्राव ॥ २० ॥

बह्वीश्च विविधाकाराः रूपयौवनगर्विताः ।
स्त्रियः सुग्रीवभवने ददर्श स महाबलः ॥ २१ ॥

दृष्ट्वाऽभिजनसंपन्नाः चित्रमाल्यकृतस्रजः ।
*[6]वरमाल्यकृतव्यग्राः भूषणोत्तमभूषिताः ॥ २२ ॥

अभिजनसंपन्नाः---आभिजात्यसंपन्नाः । वरमाल्यकृतव्यग्राः उत्तमस्य माल्यस्य स्रगर्थं ग्रहे कृतव्यग्राः । दिव्यस्रङ्निर्माणव्यग्राः इत्यर्थः ॥ २२ ॥

---

* वरमाल्यानां—उत्तमस्रजां कृतं—करणं, तत्र व्यग्राः—ति.

[1] यानासनसमावृताः-ज. [2] बलिभिर्गुप्तं-ङ. [3] तत्र समावृतम्-ज [4] स्वनम्-ज. [5] समताल-ज. [6] फलमाल्य-ङ.



नातृप्तान्नापि चाव्यग्रान् नानुदात्तपरिच्छदान् ।
सुग्रीवानुचरांश्चापि लक्षयामास लक्ष्मणः ॥ २३ ॥

अव्यग्रान्—परिचर्यात्वराराहितान् । अनुदात्तपरिच्छदान्--प्रशस्तालंकाररहितान् ॥ २३ ॥

कूजितं नूपुराणां च काञ्चीनां निनदं तथा ।
सन्निशम्य ततः श्रीमान् *सौमित्रिर्लज्जितोऽभवत् ॥२४॥

सौमित्रिः लज्जितोऽभवदिति । अस्मदयोध्यायामप्येवं सौभाग्यं नास्ति राज्ञामप्यस्माकमिति लज्जा ॥ २४ ॥

† रोषवेग[1]प्रकुपितः श्रुत्वा चाभरणस्वनम् ।
चकार ज्यास्वनं वीरः दिशश्शब्देन पूरयन् ॥ २५ ॥

आभरणस्वनमपि श्रुत्वा रोषवेगप्रकुपित इति ‡। प्राक् सामान्यतः स्थितरोषेणातिवृद्धिं प्राप्तः इत्यर्थः । नेदानीमपि कामभोगं जयतीति कोपवृद्धिः । तन्नाशाय तु ज्यास्वनं चकार ॥ २५ ॥

चारित्रेण महाबाहुः अपकृष्टः स लक्ष्मणः ।
तस्थावेकान्तमाश्रित्य [2]रामशोकसमन्वितः ॥ २६ ॥

स्त्रीगोष्ठ्यां नास्माभिः प्रवेष्टव्यमिति चारित्रेण--स्वोचितचारित्रेण पर्यालोचनया अपकृष्टः---अपवाहितान्तःपुरप्रवेशः सन्

---

* कोपवेगाविवशस्यान्तःपुरप्रवेशप्रत्यभिज्ञया लज्जा—इति युक्तम् । अत एव तदुपरि नागच्छत् सः । अनन्तरश्लोका द्रष्टव्याः ॥ † रोषवेगप्रकुपितः—रोषप्रवृद्धः । प्रकोपशब्दो ह्यभिवृद्धिवाची-गो. ‡ वस्तुतस्तु तत्रैव स्थित्वा ज्यास्वनकरणे हेतुः—श्रुत्वा चाभरणस्वनमिति ॥

[1] प्रचलितः-ङ. [2] रामकोप-ज.

एकान्तदेशमाश्रित्य रामकोपसमन्वितः—रामकार्यप्रवृत्त्यदर्शनजकोपेन समन्वितः तस्थौ ॥ २६ ॥

तेन चापस्वनेनाथ सुग्रीवः प्लवगाधिपः ।
विज्ञायागमनं त्रस्तः संचचाल वरासनात् ॥ २७ ॥
[1][अङ्गदेन यथा मह्यं पुरस्तात् प्रतिवेदितम् ।
सुव्यक्तमेष [2]संप्राप्तः सौमित्रिर्भ्रातृवत्सलः ॥]
*अङ्गदेन समाख्यातं ज्यास्वनेन च वानरः ।
बुबुधे लक्ष्मणं प्राप्तं मुखं चास्य व्यशुष्यत ॥ २८ ॥

प्राप्तलक्ष्मणावगत्यनुवादपूर्वकं कविः तन्निमित्तं विकारं दर्शयति—अङ्गदेन समाख्यातमिति ॥ २८ ॥

ततस्तारां हरिश्रेष्ठः सुग्रीवः प्रियदर्शनाम् ।
उवाच हितमव्यग्रः त्राससंभ्रान्तमानसः ॥ २९ ॥
किन्नु [3]तत्कारणं, सुभ्रु! प्रकृत्या मृदुमानसः ।
सरोष इव संप्राप्तः येनायं राघवानुजः ॥ ३० ॥

सरोष इव-सरोष एवेत्यर्थः† ॥ ३० ॥

किं पश्यसि कुमारस्य रोषस्थानं, अनिन्दिते!
न खल्वकारणे कोपं आहरेन्नरसत्तमः ॥ ३१ ॥

रोषस्थानं—अपराधम् ॥ ३१ ॥

यदस्य कृतमस्माभिः बुध्यसे किञ्चिदप्रियम् ।
तद्बुद्ध्या संप्रधार्याशु क्षिप्रमर्हसि ‡भाषितुम् ॥ ३२ ॥

अस्य अस्माभिः कृतं यत्किञ्चिदित्यन्वयः ॥ ३२ ॥

* अङ्गदेन समाख्यातं, तेनेति अर्थसिद्धम्। † वस्तुतस्तु—'कुपित इव दृश्यते' इति लोकवदुक्तिरियम्। ‡ भाषितुमिति। मह्यमिति शेषः।

[1] इदं पद्यं कुण्डलितं-ङ. [2] मां प्राप्तः-ङ. [3] तत्कारणं-ज.



अथ वा स्वयमेवैनं द्रष्टुमर्हसि [1]भाषितुम् ।
वचनैः सान्त्वयुक्तैश्च प्रसादयितुमर्हसि ॥ ३३ ॥

निर्निमित्तकोपासंभवात् निमित्तमवश्यं निश्चित्य द्राक् समीपगमनं अनुचितमिति पक्षान्तरं गृह्णाति—अथ वेत्यादि। स्वयमिति। मां विहायेत्यर्थः ॥ ३३ ॥

[2]त्वद्दर्शनविशुद्धात्मा न स कोपं करिष्यति ।
न हि स्त्रीषु महात्मानः क्वचित् कुर्वन्ति दारुणम् ॥३४॥

विशुद्धात्मा—गतक्रोधान्तःकरणः ॥ ३४ ॥

त्वया सान्त्वै*रुपक्रान्तं प्रसन्नेन्द्रियमानसम् ।
ततः कमलपत्राक्षं द्रक्ष्याम्यहमरिन्दमम् ॥ ३५ ॥

उपक्रान्तं—उपक्रान्तक्षमापगम् ॥ ३५ ॥

सा प्रस्खलन्ती मदविह्वलाक्षी
प्रलम्बकाञ्चीगुणहेमसूत्रा ।
[3]सलक्षणा लक्ष्मणसन्निधानं
जगाम तारा नमिताङ्गयष्टिः ॥ ३६ ॥
स तां समीक्ष्यैव हरीशपत्नीं
तस्थावुदासीनतया महात्मा ।
अवाङ्मुखोऽभून्मनुजेन्द्रपुत्रः
स्त्रीसन्निकर्षाद्विनिवृत्त[4]कोपः ॥ ३७ ॥

* उपक्रान्तं—उपागतं-गो.

[1] भामिनि-ज. [2] त्वद्दर्शने-ज. [3] सुलक्षणा-ङ. [4] रोषः-ङ.

हरीशपत्नी—सुग्रीवपत्नीम् । एतत्पत्नीत्वं 'सा प्रस्खलन्ती' इत्यादिप्रागुक्तविशेषणैः स्पष्टम् । 'भर्ता भर्तृहिते युक्ते' इत्यग्रिमवचनप्रामाण्याच्च ॥ ३७ ॥

सा पानयोगाद्विनिवृत्तलज्जा
* दृष्टि[1]प्रसादाच्च नरेन्द्रसूनोः ।
उवाच तारा प्रणयप्रगल्भं
वाक्यं महार्थं [2]परिसान्त्वपूर्वम् ॥ ३८ ॥

प्रणयप्रगल्भं—मैत्रीसमर्थनसमर्थम् ॥ ३८ ॥

किं कोपमूलं, मनुजेन्द्रपुत्र !
कस्ते न संतिष्ठति वाङ्निदेशे ?
कः शुष्कवृक्षं वनमापतन्तं
दवाग्निमासीदति निर्विशङ्कम् ? ॥ ३९ ॥

वाङ्निदेशे—अनुशिष्टकार्यानुष्ठाने । आपतन्तं—दग्ध्वाऽऽगच्छन्तम् ॥ ३९ ॥

स तस्या वचनं श्रुत्वा सान्त्वपूर्व[3]मसंशयम् ।
† भूयः प्रणयदृष्टार्थं लक्ष्मणो वाक्यमब्रवीत् ॥ ४० ॥

भूयः—अभ्यधिकम् । प्रणयप्रकाशनपूर्वं दृष्टः अर्थः यस्मिन् स तथा ॥ ४० ॥

किमयं कामवृत्तस्ते लुप्तधर्मार्थसंग्रहः ।
भर्ता, भर्तृहिते युक्ते ! न चैनमवबुध्यसे ॥ ४१ ॥

अयं ते भर्ता लुप्तधर्मार्थसंग्रहो वर्तते, किमेनं नावबुध्यसे ॥ ४१ ॥

* दृष्टिप्रसादादिति । तस्य कोपशान्त्येत्यर्थः ॥ † भूय इति । तारादर्शनेनैव कोपः शान्तः । तद्वाक्यात्तु प्रीतिरप्यभूदिति भावः ॥

[1] प्रसाराच्च, प्रचाराच्च—ङ. [2] परिसान्त्वरूपम्—ज. [3] मशङ्कितः—ज.



न चिन्तयति *राज्यार्थं नास्मान् शोकपरायणान् ।
† [1]सामात्यपरिषत्, तारे ! पानमेवोपसेवते ॥ ४२ ॥

उक्तमेव लुप्तधर्मत्वादिकं स्पष्टयति—न चिन्तयतीत्यादि । सामात्यपरिषत्, भूत्वेति शेषः ॥ ४२ ॥

स मासांश्चतुरः कृत्वा प्रमाणं प्लवगेश्वरः ।
व्यतीतांस्तान् [2]मदव्यग्रः विहरन्नावबुध्यते ॥ ४३ ॥

न हि धर्मार्थसिद्ध्यर्थं पानमेवं प्रशस्यते ।
पानादर्थश्च धर्मश्च कामश्च परिहीयते ॥ ४४ ॥

धर्मलोपो महांस्तावत् [3]कृते ह्यप्रतिकुर्वतः ।
अर्थलोपश्च मित्रस्य नाशे गुणवतो महान् ॥ ४५ ॥

महान् धर्मलोपः—प्रतिज्ञातिलङ्घनरूपः । तावत्—प्रथमतः कृतः । ततः किमित्यतः—अर्थेत्यादि । अप्रतिकुर्वतः अस्य तु गुणवतो मित्रस्य नाशे सति महान् अर्थलोपश्च प्राप्नोति ॥ ४५ ॥

‡ मित्रं ह्यर्थगुणश्रेष्ठं सत्यधर्मपरायणम् ।
तद्द्वयं तु परित्यक्तं न तु धर्मे व्यवस्थितम् ॥ ४६ ॥

* राज्यार्थं—राज्यरूपं अर्थं इत्यर्थः ॥ † सामात्यपरिषत् राज्यं न चिन्तयति, इति वाऽन्वयः ॥ ‡ गुणशब्दः कामवाची । अर्थकामयोर्मूलत्वात् मित्रं ताभ्यां श्रेष्ठम् । तद्दृशं मित्रं त्यजता सुग्रीवेण तद्द्वयं—अर्थकामद्वयं परित्यक्तम्—ती., ग. वस्तुतस्तु—'अर्थलोपश्च मित्रस्य नाशे' इत्युक्तमेवोपपादयति—मित्रमिति । अर्थस्य—अर्थरूपपुरुषार्थस्य ये गुणाः—स्वेष्टसाधनत्वादयः, तैः श्रेष्ठं मित्रं—तत्त दृशं सत्यधर्मपरायणं मित्रं यदा परित्यक्तं तदा द्वयं अर्थधर्मरूपं द्वयं परित्यक्तमेव । स्वतोऽपि न धर्मे व्यवस्थितम् इत्यर्थः ॥

[1] सामान्यपरिषत्—ज. [2] मदोदग्रः—ज. [3] कृतेऽप्रति—ङ.

मित्रं हीत्यादि । अर्थगुणश्रेष्ठं मित्रार्थसाधनलक्षणप्रशस्तं, तथा सत्यधर्मपरायणमेव च हि मित्रं प्रसिद्धम् । तद्द्वयं—उक्तमित्रलक्षणद्वयं तु तव भर्त्रा परित्यक्तम् । न तु मैत्रीपरिपालनरूपे धर्मे व्यवस्थितम् ॥ ४६ ॥

तदेवं प्रस्तुते कार्ये कार्यमस्माभिरुत्तरम्* ।
यत् कार्यं, कार्यतत्त्वज्ञ ! तदुदाहर्तुमर्हसि ॥ ४७ ॥

तत्—तस्मात् एवं स्थिते सति प्रस्तुते कार्ये तत्सिद्धिनिमित्तं यत् कार्यं अस्माभिः उत्तरं—उत्तरं, तत् कार्यं उदाहर्तुमर्हसि ॥ ४७ ॥

सा तस्य धर्मार्थसमाधियुक्तं
निशम्य वाक्यं [1]मधुरस्वभावम् ।
†[2]ताराऽगतार्थे मनुजेन्द्रकार्ये
विश्वासयुक्तं तमुवाच भूयः ॥ ४८ ॥

धर्मार्थसमाधियुक्तं—तत्संबन्धयुक्तम् । अगतार्थे—अदृष्टप्रयोजने मनुजेन्द्रकार्ये विश्वासयुक्तं—प्रमाणयुक्तं यथा तथा लक्ष्मणं भूयः—पुनश्च उवाच ॥ ४८ ॥

*न कोपकालः, क्षितिपालपुत्र !
[1]न चातिकोपः स्वजने विधेयः ।
त्वदर्थकामस्य जनस्य तस्य
प्रमादमप्यर्हति, वीर ! सोढुम् ॥ ४९ ॥

न कोपकाल इति । अर्थस्यागतत्वादित्याशयः । प्रमादं—अज्ञानमूलापराधम् ॥ ४९ ॥

कोपं कथं नाम गुणप्रकृष्टः
कुमार ! कुर्यादपकृष्टसत्त्वे ।
कस्त्वद्विधः कोपवशं हि गच्छेत्
सत्त्वावरुद्धः† तपसः प्रसूतिः ॥ ५० ॥

सोढव्यतामेव समर्थयति—कोपं कथं नामेत्यादि । †सत्त्वावरुद्धः—सहजसत्त्वगुणावरुद्धव्यापारः । अत एव—तपसः प्रसूतिः ॥

---

* एवं कपिराजेनोपेक्षणे उत्तरं कार्यं—एतदनन्तरकर्तव्यं कार्यं त्वमेव वक्तुमर्हसि—इति लोकवदुक्तिः ॥ † गतार्था—अवगतप्रयोजना—ती. गतार्थे—प्रयोजनयुक्ते—गो. आगतार्था—आगतलक्ष्मणाऽऽगमनप्रयोजना—रा. गतार्थे मनुजेन्द्रकार्ये विश्वासयुक्तं—क्रियाविशेषणं, वाक्यमित्यनुषङ्गो वा—उवाच । गतार्थत्वमेवोच्यते उत्तरत्र—'उद्योगस्तु चिराज्ञप्तः' (श्लो. ५७) इत्यादिना । अत एव 'न कोपकालः' इति च ॥

[1] मधुरस्वभावा—ङ. [2] तारा गतार्थे—ङ.

---

* न कोपकाल इत्यत्र हेतुः ५२ श्लोके स्पष्टः ॥ † अवरुद्धत्वं—सहितत्वं, तच्च कार्ये पर्यवस्यतीत्याशयः ॥

[1] न चापि कोपः—ञ.

जानामि [1]कोपं हरिवीरबन्धोः*

जानामि कार्यस्य च कालसङ्गम् ।

जानामि कार्यं त्वयि यत्कृतं नः

तच्चापि जानामि यदत्र कार्यम् ॥ ५१ ॥

जानामि कोपमिति । रामस्य कोपनिमित्तमित्यर्थः । तत्कोपनिमित्तभूतं कालस्य सङ्गं—विलम्बं च जानामि । त्वय्यायत्तं नः कृतं—कार्यं राज्यदानलक्षणं च जानामि । यदत्र कार्यं—प्रतिकृतंरूपं तदपि च जानामि ॥ ५१ ॥

[2]तच्चापि जानामि यथाऽविषह्यं

बलं, नरश्रेष्ठ! शरीरजस्य ।

जानामि यस्मिंश्च [3]जनेऽवबद्धं

कामेन सुग्रीव†मसक्तमद्य ॥ ५२ ॥

अथापि नेदानीं ते कोपो युक्तः इत्यत्र हेतुमपि जानामीत्याह—तच्चापीत्यादि । शरीरजस्य—कामस्य बलमपि अविषह्यमित्यपि जानामि । तथा सुग्रीवं यस्मिंश्च जने स्त्रीजने कामेनावबद्धं जानामि, तथा अद्य अत्र कृत्ये असक्तमपि जानामि ॥ ५२ ॥

---

* हरिवीरस्य—सुग्रीवस्य बन्धुः रामः ॥ † असक्तं—अनवरतं—गो., ती. सङ्ग—विलम्बः, तद्रहितमित्यर्थः इत्याशयः ॥

[1] रोषं–ङ. [2] इदं पद्यमधिकं–झ. [3] जनेऽनबद्धं–ङ.



* न कामतन्त्रे तव बुद्धिरस्ति

त्वं वै यथा मन्युवशं प्रपन्नः ।

न देशकालौ हि [1]न चार्थधर्मौ

[2]अवेक्षते कामरतिर्मनुष्यः ॥ ५३ ॥

तव च कामतंत्रे—कामस्वभावपरिज्ञाने बुद्धिः नास्ति । कुत एवं ते बुद्धिः इत्यत आह—त्वं वै इत्यादि । त्वं वै यथा स्वानुभवेनैव मन्युवशं प्रपन्नः दृश्यसे, तस्मादेव । कामस्वभावपरिज्ञाने तु तव कोपो न समस्तीत्याशयेनाह—न देशकालावित्यादि ॥ ५३ ॥

तं कामवृत्तं †मम सन्निकृष्टं

कामाभियोगाच्च [3]निवृत्तलज्जम् ।

क्षमस्व तावत्, परवीरहन्तः!

‡त्वद्भ्रातरं वानरवंशनाथम् ॥ ५४ ॥

मम संनिकृष्टमिति । तत्सन्निधौ मम समीपे कामवशात् वर्तमानमित्यर्थः । क्षमस्वेति । परवशप्रवृत्तापराधत्वात् क्षमैवात्र योग्या, न ते कोपो योग्य इत्यर्थः ॥ ५४ ॥

महर्षयो धर्मतपोऽभि[4]कामाः

कामानुकामाः प्रतिबद्धमोहाः ।

अयं प्रकृत्या चपलः कपिस्तु

कथं न सज्जेत सुखेषु राजा ॥ ५५ ॥

---

* कामप्रभावः न त्वया ज्ञातुं शक्यः । किन्तु एतावदुक्तुं शक्यते, यथा वा तव कोप दुर्निग्रहो भाति, तथैवायमपि कामः केनचित् न निगृहीतुं शक्य इति त्वया भाव्यमिति वा ॥ † 'मम सन्निहितबन्धुः' इत्यादि लोकव्यवहार इव सन्निकृष्टत्वं बोध्यम् ॥ ‡ 'त्वद्भ्रातरं' इति अनुनयार्थवचनम् ।

[1] यथार्थधर्मौ–च., ज. [2] अवेक्षते–च., ज. [3] विमुक्तलज्जम्–ज. [4] रामाः–ज.

कामवशप्राप्तिर्गिरि नास्यैकस्यापराधः इत्याह—मर्षयेत्यादि। कामे—कामोपभोगे अनुक्रमः—अभिलाषः येषां ते तथा ॥ ५५ ॥

इत्येवमुक्त्वा वचनं महार्थं
सा वानरी लक्ष्मणमप्रमेयम् ।
पुन[1]स्सखेलं मदविह्वलं च
भर्तुर्हितं वाक्यमिदं बभाषे ॥ ५६ ॥

भर्तुर्हितमिति । उद्दिश्येति शेषः ॥ ५६ ॥

उद्योगस्तु चिराज्ञप्तः सुग्रीवेण, नरोत्तम !
कामस्यापि विधेयेन तवार्थप्रतिसाधने ॥ ५७ ॥

चिराज्ञप्तः—त्वदागमनात् पूर्वमेवेत्यर्थः ॥ ५७ ॥

आगता हि महावीर्याः [2]हरयः कामरूपिणः ।
कोटीशतसहस्राणि नानानगनिवासिनः ॥ ५८ ॥

कामविधेयस्य तस्य उद्योगाज्ञप्तिः अश्रद्धेयेत्याशंक्याह—आगता हीत्यादि । कोटीशतसहस्राणीति बहुत्वमात्रे तात्पर्यम् । न तत्संख्यायाम् ॥ ५८ ॥

तदागच्छ, महाबाहो ! चारित्रं रक्षितं त्वया ।
*अच्छलं मित्रभावेन सतां दारावलोकनम् ॥ ५९ ॥

* ' गुरुणा अन्तःपुरं न प्रवेष्टव्यं ' इति भावनया तव बहिरेवावस्थानेन स्वस्वरूपं संरक्षितम्। परन्तु अस्माभिरेवान्तराह्वानेऽन्तःपुरप्रवेशः कृतः तस्य तव न दुष्यतीत्याशयः—ताराबाक्यस्य ॥

[1] सखेदं मदविह्वलाक्षी-ज. [2] कपयः—ङ.



चारित्रं रक्षितमिति । द्वारगतेःपुरानागमनेनेति शेषः । ननु कथं अन्तःपुरागमनं युज्यते इत्यत आह—अच्छलमित्यादि । छलं अधर्मः, स न भवतीत्यर्थः । मित्रभावेनेति । न तु विकारेणेत्यर्थः ॥

तारया चाभ्यनुज्ञातः त्वरया चापि चोदितः ।
प्रविवेश महाबाहुः अभ्यन्तरमरिन्दमः ॥ ६० ॥

ततः सुग्रीवमासीनं काञ्चने परमासने ।
महार्हास्तरणोपेते ददर्शादित्यसन्निभम् ॥ ६१ ॥

दिव्याभरणचित्राङ्गं दिव्यरूपं यशस्विनम् ।
दिव्यमाल्याम्बरधरं [1]महेन्द्रमिव दुर्जयम् ॥ ६२ ॥

दिव्याभरणमाल्याभिः प्रमदाभिः [2]समं ततः ।
[3]संरब्धतररक्ताक्षः बभूवान्तकसन्निभः ॥ ६३ ॥

प्रमदाभिः समं ददर्शेत्यन्वयः । तत एव हेतोः संरब्धतरः, अत एव रक्ताक्षश्च तथा ॥ ६३ ॥

रुमां तु वीरः परिरभ्य गाढं
वरासनस्थो वरहेमवर्णः ।
ददर्श सौमित्रिमदीनसत्त्वं
विशालनेत्रः [4]सुविशालनेत्रम् ॥ ६४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे त्रयस्त्रिंशः सर्गः

परिरभ्य आसने स्थित एव सन् ददर्श । वात(६४)मानः सर्गः ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे त्रयस्त्रिंशः सर्गः

[1] महेन्द्रसदृशद्युतिम्—ङ. [2] समावृतम्—ङ. [3] तं दृष्ट्वा क्रोधताम्राक्षः—ङ.
[4] स विशाल—ज.

## चतुस्त्रिंशः सर्गः

[सुग्रीवतर्जनम्]

*तमप्रतिहतं क्रुद्धं प्रविष्टं पुरुषर्षभम् ।
सुग्रीवो लक्ष्मणं दृष्ट्वा बभूव व्यथितेन्द्रियः ॥ १ ॥

अथ लक्ष्मणेन सुग्रीवाय रामोपदिष्टकोपवचनम् । तमप्रतिहत-मित्यादि ॥ १ ॥

क्रुद्धं निःश्वसमानं तं प्रदीप्तमिव तेजसा ।
भ्रातुर्व्यसनसन्तप्तं दृष्ट्वा दशरथात्मजम् ॥ २ ॥
उत्पपात हरिश्रेष्ठः हित्वा सौवर्णमासनम् ।
महान् महेन्द्रस्य यथा † स्वलंकृत इव ध्वजः ॥ ३ ॥

महान् महेन्द्रस्य ध्वजः यथा स्वलंकृतः, तथा स्वलंकृतः महेन्द्रध्वज इव उत्पपात ॥ ३ ॥

उत्पतन्तमनूत्पेतुः रुमाप्रभृतयः स्त्रियः ।
सुग्रीवं गगने [1]पूर्णचन्द्रं तारागणा इव ॥ ४ ॥

अनूत्पेतुः—पश्चात् उत्थितवत्यः ॥ ४ ॥

‡ संरक्तनयनः श्रीमान् [2]विचचाल कृताञ्जलिः ।
बभूवावस्थितस्तत्र कल्पवृक्षो महानिव ॥ ५ ॥
रुमाद्वितीयं सुग्रीवं नारीमध्यगतं स्थितम् ।
अब्रवील्लक्ष्मणः क्रुद्धः सतारं शशिनं यथा ॥ ६ ॥

शशिनं यथेति । शशिनमिव स्थितमित्यर्थः ॥ ६ ॥

---

* अप्रतिहतं—केनाप्यप्रतिबद्धं—ति. केनापि प्रतिरोद्धुमशक्यमिति भावः ॥

† स्वलङ्कृतः ध्वज इव स्थितः हरिश्रेष्ठ इति वाऽन्वयः ॥ ‡ संरक्तनयनः, मदेनेति शेषः—गो.

[1] पूर्णं—च. [2] मदलोलः—ङ.



सत्त्वाभिजनसंपन्नः सानुक्रोशो जितेन्द्रियः ।
कृतज्ञः सत्यवादी च राजा लोके महीयते ॥ ७ ॥

राज्यार्हतदनर्हराजलक्षणं प्रकृतोपनयनशेषतया सामान्यतो दर्शयति—सत्त्वेत्यादि ॥ ७ ॥

यस्तु राजा स्थितोऽधर्मे मित्राणामुपकारिणाम् ।
मिथ्याप्रतिज्ञां कुरुते को नृशंसतरस्ततः ? ॥ ८ ॥

अधर्मे स्थितः । अधर्ममार्गावलम्बीत्यर्थः । नृशंसतर इति । क्रूरतर इत्यर्थः ॥ ८ ॥

शतमश्वानृते हन्ति सहस्रं तु गवानृते ।
*आत्मानं स्वजनं हन्ति पुरुषः पुरुषानृते ॥ ९ ॥

असत्यदोषं च प्रकृतशेषतया दर्शयति—शतमित्यादि । एकाश्वनिमित्तके अनृते—दानादिप्रतिश्रवहाने सति सोऽनृतवादी शतं हन्ति—शताश्वहननदोषभाग् भवति । तथा अग्रेऽपि । पुरुषानृते—पुरुषविषयकिञ्चिदुपकारादिप्रतिश्रवनाशने सति, सः पुरुषः प्रथमं आत्मानं हन्ति—निजपुण्यलोकं नाशयति । अनन्तरं स्वजनं च हन्ति—स्वपित्रादिपुण्यलोकं च नाशयति ॥ ९ ॥

पूर्वं कृतार्थो मित्राणां न तत् प्रतिकरोति यः ।
कृतघ्नः सर्वभूतानां स वध्यः, प्लवगेश्वर! ॥ १० ॥

अथ कृतघ्नतादोषं च प्रकृतशेषतया दर्शयति—पूर्वमित्यादि । सर्वभूतानां वध्यः इति कृद्योगे षष्ठी । सर्वलोकबहिष्कार्यः इत्यर्थः ॥

---

* आत्मानं हन्ति—ति., गो.

गीतोऽयं *ब्रह्मणा श्लोकः सर्वलोकनमस्कृतः† ।
दृष्ट्वा कृतघ्नं क्रुद्धेन तं निबोध, प्लवङ्गम ! ॥ ११ ॥

न केवलं पूर्वमित्युक्तश्लोकः स्वकपोलकल्पितः इत्याह—गीत इत्यादि । ब्रह्मणा—श्रीहिरण्यगर्भेण गीतः, अत एव सर्वलोकनमस्कृतः—ब्रह्मदेव सर्वस्मर्तृप्रथमोदाहरणपरिगृहीतः इत्यर्थः । उक्तमर्थं प्रकृते योजयति—दृष्ट्वेत्यादि । त्वां कृतघ्नं दृष्ट्वा क्रुद्धेन रामेण यदुक्तं तं च निबोध—अवगच्छ ॥ ११ ॥

[1]गोघ्ने चैव सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति ‡निष्कृतिः ॥१२॥

किमुक्तमित्यतः—गोघ्न इत्यादि ॥ १२ ॥

अनार्यस्त्वं कृतघ्नश्च मिथ्यावादी च, वानर !
पूर्वं §कृतार्थो रामस्य न तत् प्रतिकरोषि यत् ॥ १३ ॥

परिगणितेषु कोऽहमस्मीत्यत्राह—अनार्यस्त्वमित्यादि । कुतो मे कृतघ्नत्वमित्यतः—पूर्वमित्यादि ॥ १३ ॥

ननु नाम कृतार्थेन त्वया रामस्य, वानर !
सीताया मार्गणे यत्नः कर्तव्यः कृतमिच्छता ॥ १४ ॥

अथ मिथ्यावादित्वं च बोधयति—ननु नामेत्यादि । आमंत्रणप्रसिद्ध्योः ननुनामशब्दौ । मार्गणे यत्न इति । प्राक् प्रतिज्ञात इति शेषः । कृतं इच्छता—कृतस्य प्रतिकृतिं कर्तुमिच्छता । कर्तव्यो नाम ननु हुं ॥ १४ ॥

* ब्रह्मणा—स्वायंभुवमनुना—गो. † नमस्कृतः—आदृतः—ती. ‡ निष्कृतिः—प्रायश्चित्तम्—गो. § रामस्य कृतार्थः—रामनिरूपितकृतार्थत्ववान् इत्यर्थः । एवं समनन्तरश्लोकेऽपि ।

[1] ब्रह्मघ्ने च—ङ.



[1]स त्वं ग्राम्येषु भोगेषु सक्तो मिथ्याप्रतिश्रवः ।
न [2]त्वा रामो विजानीते *सर्पं मण्डूकराविणम् ॥ १५ ॥

ततः किमित्यत्राह—स त्वं ग्राम्येष्वित्यादि । त्वा-त्वां रामः मण्डूकराविणं—स्वगृहीतमण्डूकद्वारा मण्डूकविरावबन्तं सर्पम् । आन्तमनवलोकनात् शब्दमात्रेण मण्डूकमेव जानीते, न सर्पम् । शब्दप्रमाणभावः रामः त्वया वञ्चितोऽभूदित्यर्थः । †यद्वाभट्टस्तु—मण्डूकग्रहणार्थं सर्पः मण्डूकवत् रौति । तेन स्वरेण स्वगण इति मत्वा मण्डूकः तत्समीपमागच्छति । स तं गृह्णाति । एवं वञ्चकं त्वां न जानातीत्याह । भट्टोऽयं सर्वलोकासम्मतं अनृतमपि साहसाद्वक्ति । न हि सर्पस्य मण्डूकरवोऽस्ति । नापि च मण्डूकाः मण्डूकरावायागच्छन्ति । नापि च सर्पाणां एवं भट्टमंत्रः प्रसिद्धः ॥ १५ ॥

महाभागेन रामेण पापः करुणवेदिना ।
हरीणां प्रापितो राज्यं त्वं दुरात्मा महात्मना ॥ १६ ॥

पापस्त्वमित्यन्वयः ॥ १६ ॥

[3]कृतं चेन्नाभिजानीषे [4]रामस्याक्लिष्टकर्मणः ।
सद्यस्त्वं निशितैर्बाणैः हतो द्रक्ष्यसि वालिनम् ॥ १७ ॥

* मण्डूकग्रहणार्थं सर्पो मण्डूकवद्रौति ; तमिव वञ्चकं—ती., गो. † गोविन्दराजः । वस्तुतस्तु—'आर्भाटस्तु महान्, पौरुषं तु शून्यं' इत्यादिलोकोक्तिवदियमुक्तिः—'आकारस्तु सर्पस्य, स्वरस्तु मण्डूकस्य'—इति । अतिशूरं दक्षं च त्वां रामो जानाति, त्वं तु निर्वीर्यः, स्त्रीलोलः, मद्यासक्तश्च—इत्यवहेलनोक्तिरियम्—रूपं तु अतीव सुन्दरम्, स्वरस्तु गर्दभस्येतिवत् । एतच्च समनन्तरश्लोकेऽपि स्पष्टम् ।

[1] यस्त्वं—ङ. [2] त्वां—ङ., ज., झ. [3] कृतं त्वं नाभि—ङ. [4] राघवस्य महात्मनः—ज.

*न च संकुचितः पन्थाः येन वाली हतो गतः।
समये तिष्ठ, सुग्रीव! मा वालिपथमन्वगाः ॥ १८ ॥

न नूनमिक्ष्वाकुवरस्य [1]कार्मुक-
 च्युतान् शरान् पश्यसि वज्रसन्निभान्।
ततः सुखं नाम निषेवसे सुखी
 न रामकार्यं मनसाऽप्यवेक्षसे ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे चतुस्त्रिंशः सर्गः

---

शरान् न पश्यसि–न स्मरसि। ततः–अत एव हेतोः नाम सुखं निषेवसे। रामकार्यं मनसाऽपि नावेक्षसे। धैर्य(१९)मानः सर्गः ॥ १९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे चतुस्त्रिंशः सर्गः

---

## पञ्चत्रिंशः सर्गः

[ताराप्रार्थनम्]

तथा ब्रुवाणं [2]सौमित्रिं प्रदीप्तमिव तेजसा।
अब्रवील्लक्ष्मणं तारा ताराधिपनिभानना ॥ १ ॥

अथ तारया हितोपदेशेन लक्ष्मणकोपशमनम्। तथेत्यादि ॥ १ ॥

नैवं, लक्ष्मण! वक्तव्यः नायं परुषमर्हति।
हरीणामीश्वरः श्रोतुं †तव वक्त्राद्विशेषतः ॥ २ ॥

तव वक्त्रात्–सुहृदः तव मुखादित्यर्थः ॥ २ ॥

---

*न च संकुचित इति। पूर्वं येन पौरुषेण वाली हतः, तदिदं पौरुषं नाद्यापि गलितं–इति लोकवदुक्तः ॥ †मया बहुधा सान्त्वितस्य तव मुखादिति वा। एतच्च समनन्तरश्लोकेषु स्पष्टम् ॥

[1] कार्मुकाच्छरांश्च तान् पश्यसि–ज. [2] काकुत्स्थं–ङ.



नैवाकृतज्ञः सुग्रीवः न शठो नापि दारुणः।
नैवानृतकथः, वीर! न जिह्मश्च कपीश्वरः ॥ ३ ॥

नार्हतीत्यत्र हेतून्यासः–नैवेत्यादि। अनृतकथः–अनृतवचनः ॥

*उपकारं कृतं, वीर! नाप्ययं विस्मृतः कपिः।
रामेण, वीर! सुग्रीवः यदन्यैर्दुष्करं रणे ॥ ४ ॥

रामप्रसादात् [1]कीर्तिं च कपिराज्यं च शाश्वतम्।
प्राप्तवानिह सुग्रीवः रुमां मां च, परन्तप! ॥ ५ ॥

रुमां मां चेति स्पष्टं तारासम्बन्धः ॥ ५ ॥

सुदुःखं शयितः पूर्वं प्राप्येदं सुखमुत्तमम्।
प्राप्तकालं न जानीते विश्वामित्रो यथा मुनिः ॥ ६ ॥

यदि कृतज्ञः तर्हि कथं कालात्ययं न जानीते? इत्यत्राह–सुदुःखमित्यादि। सुदुःखमनुभूतवानिति यावत् ॥ ६ ॥

†घृताच्यां किल संसक्तः दशवर्षाणि, लक्ष्मण!
‡अहोऽमन्यत धर्मात्मा विश्वामित्रो महामुनिः ॥ ७ ॥

विश्वामित्रस्य स्त्रीसंगात् कालापरिज्ञानं दर्शयति–घृताच्यामित्यादि। मेनकायां दशवर्षसहस्रसंभोगः बालकाण्डे उक्तः–'तां ददर्श महातेजाः मेनकां कुशिकात्मजः' इति। एतद्वाक्याच्च कालान्तरे घृताच्यामपि तस्य सङ्गः इत्यवगम्यते ॥ ७ ॥

---

*रामेण कृतमुपकारं न विस्मृतः, कर्तरि क्तः, विस्मृतवान् ॥ †घृताचीति मेनकाया नामान्तरं–ती. घृताचीशब्देन मेनकैवोच्यते–गो. 'आगमस्तु न मे व्यक्तः, श्रुतमात्र ब्रवीम्यहम्' (श्लो. १८) इतिवत् कर्णाकर्णिकाप्रभावस्य, मानवसहजविस्मरणादेर्वा यथावाच्चित्रणं वा महात्मवेरिदम् ॥ ‡अहोऽमन्यत–दशवर्षाणि दिनममन्यत–गो. अमन्यतेति काकुः; किं ज्ञातवान्–अहो–इति वा। तदेतदनन्तरश्लोके स्पष्टम् ॥

[1] सौमित्रे–ङ.

स हि प्राप्तं न जानीते कालं कालविदां वरः।
विश्वामित्रो महातेजाः किं पुनर्यः पृथग्जनः ॥ ८ ॥

[1]देहधर्मं गतस्यास्य परिश्रान्तस्य, लक्ष्मण!
अवितृप्तस्य कामेषु *[2]कामं क्षन्तुमिहार्हसि ॥ ९ ॥

देहधर्मश्च — 'आहारनिद्राभयमैथुनं च सामान्यमेतत्' इत्युद्दिष्टलक्षणः ॥ ९ ॥

न च रोषवशं, तात! गन्तुमर्हसि, लक्ष्मण!
† [3]निश्चयार्थमविज्ञाय सहसा प्राकृतो यथा ॥ १० ॥

निश्चयार्थमिति । कर्तव्यार्थनिश्चयमित्यर्थः ॥ १० ॥

सत्त्वयुक्ता हि पुरुषाः त्वद्विधाः, पुरुषर्षभ!
अविमृश्य न रोषस्य सहसा यान्ति वश्यताम् ॥ ११ ॥

प्रसादये त्वां, धर्मज्ञ! [4]सुग्रीवार्थे समाहिता।
महान् रोषसमुत्पन्नः संरंभस्त्यज्यतामयम् ॥ १२ ॥

रोषसमुत्पन्नः संरम्भः—क्षोभः ॥ १२ ॥

रुमां मां [5]कपिराज्यं च धनधान्यवसूनि च ।
रामप्रियार्थं सुग्रीवः त्यजेदिति मतिर्मम ॥ १३ ॥

आनयिष्यति सुग्रीवः सीतया सह राघवम् ।
शशाङ्कमिव रोहिण्या [6]हत्वा तं रावणं रणे ॥ १४ ॥

* कामं—कामवर्तनं-गो. विषयव्यामोहमिति वा ॥ वाक्यालङ्कारे वा ॥
† निश्चयार्थं–निश्चयरूपमर्थं, सुग्रीवाभिप्रायमिति यावत्–गो.

[1] पशुधर्मं–ङ. [2] रामः–ङ. [3] लोकयात्रा–ङ. [4] सुग्रीवार्थं–ज.
[5] अस्मदं राज्यं–झ. [6] निहत्वा–ङ.



*शतकोटिसहस्राणि लङ्कायां किल [1]राक्षसाः ।
अयुतानि च षट्त्रिंशत् सहस्राणि शतानि च ॥ १५ ॥

सुग्रीवः रावणं हत्वा सीतया सह राघवं आनयिष्यति। कथमेवमित्यत्र, तत्सहायैकसाध्यत्वात् तद्वधस्येत्याशयेनाह—शतकोटीत्यादि । अत्र संख्यायां तात्पर्यमस्ति विशिष्यबोधनात् । अर्बुदं–कोटिशतम् (!), दशकोटिः समुद्रः, शतकोटिः–मध्यम्, मध्यसंख्यानां सहस्रमित्यर्थः । तदुपरि षट्त्रिंशदयुतानि षष्टिसहस्राधिकत्रिलक्षाणीत्यर्थः । तदुपरि सहस्रसहस्राणि तदुपरि शतानि लङ्कायां राक्षसाः सन्ति ॥ १५ ॥

अहत्वा तांश्च दुर्धर्षान् राक्षसान् कामरूपिणः ।
[2]अशक्यं रावणं हन्तुं येन सा मैथिली हृता ॥ १६ ॥
ते न [3]शक्या रणे हन्तुं असहायेन, लक्ष्मण!
†रावणः क्रूरकर्मा च सुग्रीवेण विशेषतः ॥ १७ ॥

तेषां वधे सहायापेक्षा परमशूरस्याप्यस्त्येवेत्याह—त इत्यादि। च—यस्मात् असहायेन रामेण ते हन्तुं न शक्याः, यस्मात् रावणश्च क्रूरकर्मा—क्रूपराक्रमः तस्मात् सुग्रीवेण प्रयोजनं विशेषतः अस्ति। रक्षस्सेनायाः प्रतिसेनाघटनस्य सुग्रीवेण विना अशक्यार्थत्वात् ॥१७॥

* 'अविमृश्य' (श्लो. ११) इत्याद्युक्तं सुग्रीवहननस्याविमृश्यकारित्वं चातुर्येणोपपादयति—शतकोटीत्यादिना ॥ तथा च सुग्रीववधे रामस्येष्टसिद्धिः न स्यादिति भावः ॥
† असहायेन सुग्रीवेण रावणो हन्तुं न शक्यः–गो. अथवा, पञ्चम्यर्थे तृतीया, सुग्रीवापेक्षयाऽपि रावणः क्रूरकर्मा, सुग्रीव इव तर्जनादिना स न जेतुं शक्य इति भावः । असहायेन रामेण ते राक्षसाः, रावणश्च न हन्तुं शक्यः । रामेणैवाशक्यत्वे विशेषतः–सुतरां सुग्रीवेण न हन्तुं शक्यः इति वाऽर्थः । किमर्थं तावत् वानरसेनाऽऽनयतम्! रामः, सुग्रीवश्च सर्वं साधयिष्यत इति शङ्कायां उत्तरमिदम् ॥

[1] रक्षसाम्–ज. [2] न शक्यो रावणो–ङ. [3] शक्यो–ङ.

*एवमाख्यातवान् वाली स ह्यभिज्ञो हरीश्वरः ।
†आगमस्तु न मे व्यक्तः [1]श्रुतमात्रं ब्रवीम्यहम् ॥ १८ ॥

ननु रक्षसां एवं संख्या कथं त्वया ज्ञाता इत्यत्राह—एवमित्यादि। आगमस्तु न मे व्यक्तः इति। रावणस्यैवं संख्याबलसंपत्त्यागमः—प्राप्तिप्रकारस्तु न ज्ञातः। अपि तु संख्यामात्रं प्रसंगात् पूर्वं श्रुतं मच्छ्रोत्रेण। अतोऽहं श्रुतमात्रं ब्रवीमि। अब्रवमिति यावत्। अत्र ‡वृद्धाभट्टः—असहायेन सुग्रीवेण ते हन्तुं न शक्याः—इत्यपूरजन्। तथा तस्य हनने कः प्रसङ्गः? येन निषेधः इति तु न जानीमः। प्रकृतं तु रामस्य सहायापेक्षतासमर्थनम् ॥ १८ ॥

त्वत्सहायनिमित्तं वै प्रेषिता हरिपुङ्गवाः ।
आनेतुं वानरान् युद्धे सुबहून् हरि[2]यूथपान् ॥ १९ ॥

ननु सत्यं स सहाय इति जानीमः। अपि तु तत्प्रवृत्तिं न करोतीति किल नः कोपः इत्यत्राह—त्वत्सहायेत्यादि ॥ १९ ॥

तांश्च प्रतीक्षमाणोऽयं विक्रान्तान् सुमहाबलान् ।
राघवस्यार्थसिद्ध्यर्थं, [3]न निर्याति हरीश्वरः ॥ २० ॥

अत एव इदानीं तदागमनपर्यन्तं न निर्याति ॥ २० ॥

[4]कृता सुसंस्था, सौमित्रे! सुग्रीवेण यथा पुरा ।
[5]अद्य तैर्वानरैस्सर्वैः आगन्तव्यं महाबलैः ॥ २१ ॥

*तारामुखेन अंगदोक्तरामसुग्रीवसख्यकरणवृत्तान्तश्रवणानन्तरं, अतिबलपराक्रमरावणनिरसनविषये मां विहाय दुर्बलं सुग्रीवं रामः कथमवलम्बत इति तारायाः प्रत्युत्तरत्वेनोक्तवानित्यवगम्यते—ती. †आगमः—स्वयमवगमः-गो. ‡गोविन्दराजः.

[1] श्रवात्तस्म ब्रवीम्यहम्—ङ., श्रवात्तस्य ब्रवीम्यहम्—ज., श्रवणात्तद्ब्रवीम्यहम्—झ. [2] पुङ्गवान्—ज. [3] नौदासीन्यं गतो हरिः—ङ. [4] कृतात्र संस्था—ङ. [5] ह्यस्तै—ङ.



तर्हि ते कदा आगमिष्यन्तीत्यत्राह—कृतेत्यादि। सुसंस्थेति। शोभना आगमनकार्यमर्यादा इत्यर्थः। यथापुरा—यथापूर्वं व्यवस्था कृता, तन्मर्यादादृशा अद्य अस्मिन् दिवस एव तैः सर्वैः वानरैः आगन्तव्यम् ॥ २१ ॥

ऋक्षकोटिसहस्राणि गोलाङ्गूलशतानि च ।
अद्य त्वामुपयास्यन्ति जहि कोपं, अरिन्दम !
*कोट्योऽनेकास्तु, काकुत्स्थ! [1]कपीनां दीप्ततेजसाम् ॥

स्वसेनासंख्या रक्षस्सेनापेक्षया बहुतराधिकसंख्यावती। अतः पर्याप्ततरा रक्षोबलप्रातिभट्य इत्याशयेन दर्शयति—ऋक्षेत्यादि। शतकोटिः मध्यं, तद्दशगुणात्मिका सहस्रकोटिः अन्तसंख्या, तावत्संख्याकाः ऋक्षाः इत्यर्थः। गोलाङ्गूलानां शतानि—शतकोटिः। तावत्संख्याकास्ते। कपीनां तु अनेकाः कोट्यः इति। पराधान्ता तु संख्या। ततोऽप्यधिकत्वात् अपरिमिता इत्यर्थः ॥ २२ ॥

तव हि मुखमिदं निरीक्ष्य कोपात्
क्षतजनिभे नयने निरीक्षमाणाः ।
हरिवरवनिता न यान्ति शान्तिं
†प्रथमभयस्य हि शङ्किताः स्म सर्वाः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे पञ्चत्रिंशः सर्गः

———

*अस्यापि उपयास्यन्तीत्यनेनान्वयः। †मरणभयस्यैव सर्वभयापेक्षया तीव्रत्वेन वा प्रथमत्वम्।

[1] हरीणां—ङ.

प्रथमभयस्य शङ्किता इति। प्रथमो ज्येष्ठः वाली, तस्येव भयं, सुग्रीवस्यभयमित्यर्थः। * निषेधेऽपि विषये षष्ठी आर्षी। अगर्व(२३ १/२)मानः सर्गः ॥ २३ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे पञ्चत्रिंशः सर्गः

---

## षट्त्रिंशः सर्गः

### [लक्ष्मणसमाधानम्]

इत्युक्तस्तारया वाक्यं प्रश्रितं धर्मसंहितम्।
मृदुस्वभावः सौमित्रिः प्रतिजग्राह तद्वचः ॥ १ ॥

अथ सुग्रीवप्रश्रयवचःप्रीतेन लक्ष्मणेन स्वरोषवचनक्षमापणम्। इत्युक्त इत्यादि ॥ १ ॥

तस्मिन् प्रतिगृहीते तु वाक्ये हरिगणेश्वरः।
[1]लक्ष्मणात् † सुमहत् त्रासं वस्त्रं ‡क्लिन्नमिवात्यजत् ॥ २ ॥

तस्मिन् वाक्ये—तारायाः क्षमापणवाक्ये लक्ष्मणेन प्रतिगृहीते—अङ्गीकृत सतीत्यर्थः ॥ २ ॥

ततः कण्ठगतं माल्यं चित्रं बहुगुणं महत्।
चिच्छेद विमदश्चासीत् सुग्रीवो वानरेश्वरः ॥ ३ ॥

माल्यं——मालां चिच्छेद——त्यक्तवान्। तत्र हेतुः—चित्र-मित्यादि। विचित्ररचनं बहुगुणं——बहुप्रकारकाममोहमदकरम्। तत्यागफलमेवोक्तं——विमदश्चासीदिति ॥ ३ ॥

---

* 'न लोकाव्यय' इत्यादिना षष्ठ्या निषेधेऽपीत्यर्थः। † सुमहत्—सुमहान्त—रामानुजीयम्. सुमहत्त्रासमित्याकाराभाव आर्षः-गो. ‡ क्लिन्न—आर्द्रं वस्त्रमिव-गो.

[1] लक्ष्मणोत्थं महत्—क.



स लक्ष्मणं भीमबलं सर्ववानरसत्तमः।
अब्रवीत् प्रश्रितं वाक्यं सुग्रीवः संप्रहर्षयन् ॥ ४ ॥

लक्ष्मणं संप्रहर्षयन् इत्यन्वयः ॥ ४ ॥

प्रणष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम्।
रामप्रसादात्, सौमित्रे! पुनः प्राप्तमिदं मया ॥ ५ ॥

कः शक्तस्तस्य देवस्य विख्यातस्य स्वकर्मणा।
*[1]तादृशं विक्रमं, वीर! प्रतिकर्तुं, अरिन्दम! ॥ ६ ॥

तस्य देवस्येति। आदिदेवावतारस्येत्यर्थः। कथमेवं ज्ञायत इत्यत्राह—विख्यातस्येति। अतिमानुषेण ताटकावधादिवालिवधान्त-कर्मणा सुस्पष्टं प्रख्यातमादिदेवांशत्वमित्यर्थः। तादृशं विक्रममिति। तज्जनितोपकारमित्यर्थः ॥ ६ ॥

सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम्।
सहायमात्रेण मया राघवः स्वेन तेजसा ॥ ७ ॥

सहायकृत्यं †किं तस्य येन सप्त महाद्रुमाः।
शैलश्च वसुधा चैव बाणेनैकेन दारिताः ॥ ८ ॥

सहायसाध्यं कृत्यं सहायकृत्यम् ॥ ८ ॥

धनुर्विष्फारयानस्य यस्य शब्देन, लक्ष्मण!
सशैला कंपिता भूमिः सहायैस्तस्य किन्नु वै ॥ ९ ॥

---

*तादृशं तस्य विक्रमं प्रतिकर्तुं—प्रतिरोद्धुं—तत्पुरतः स्थातुमिति यावत्। देवस्येत्यादिकं स्तुतिवचनं लोकवत्। इदं समनन्तरश्लोके स्पष्टम् ॥ †किमित्यधिक्षेपे। किमर्थमिति यावत् ॥

[1] तादृशं प्रतिकुर्वीत अंशेनापि नृपात्मज—ज., झ.

अनुयात्रां नरेन्द्रस्य करिष्येऽहं, नरर्षभ !
गच्छतो रावणं हन्तुं वैरिणं सपुरस्सरम् ॥ १० ॥

अनुयात्रामिति । सेवामित्यर्थः । पुरस्सरैः सहितं रावणम् ॥

यदि किञ्चिदतिक्रान्तं विश्वासात् प्रणयेन वा ।
प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ॥ ११ ॥

विश्वासात्—अयं कृतघ्नो न भवतीति विश्वासात् प्रणयेन वा यदि किञ्चित् अतिक्रान्तमिति । अतिक्रमः अभूदित्यर्थः । तत्तु प्रेष्यस्य दासस्य क्षमितव्यं—क्षन्तव्यमिति यावत् । निरपराधोऽसंभवीत्याह—न कश्चिदित्यादि । यो दासो नापराध्यति तादृशो न कचिदपि समस्ति । परचित्तस्य अप्रत्यक्षत्वात्, अन्ततः चित्तानुवर्तनस्यैव सर्वथा असंभवात् ॥ ११ ॥

इति तस्य ब्रुवाणस्य सुग्रीवस्य महात्मनः ।
अभवल्लक्ष्मणः प्रीतः प्रेम्णा चैनमुवाच ह ॥ १२ ॥

सर्वथा हि मम भ्राता सनाथः, वानरेश्वर !
त्वया नाथेन, सुग्रीव ! प्रश्रितेन विशेषतः ॥ १३ ॥

यस्ते, प्रभावः, सुग्रीव ! यच्च ते *शौचं[1]मीदृशम् ।
अर्हस्त्वं कपिराज्यस्य श्रियं भोक्तुमनुत्तमाम् ॥ १४ ॥

शौचं—अन्तःकरणशुद्धिः ॥ १४ ॥

सहायेन च, सुग्रीव ! त्वया रामः प्रतापवान् ।
वधिष्यति रणे शत्रून् अचिरान्नात्र संशयः ॥ १५ ॥

---

* शौचं—इन्द्रियनिग्रहः—ति.

[1] मार्जवम्—ङ.



धर्मज्ञस्य कृतज्ञस्य संग्रामेष्वनिवर्तिनः ।
उपपन्नं च युक्तं च, सुग्रीव ! तव भाषितम् ॥ १६ ॥

*दोषज्ञः सति सामर्थ्ये कोऽन्यो भाषितुमर्हति ?
वर्जयित्वा मम ज्येष्ठं त्वां च, वानरसत्तम ! ॥ १७ ॥

दोषज्ञः—विद्वान् ॥ १७ ॥

सदृशश्चापि [1] रामस्य विक्रमेण बलेन च ।
सहायो दैवतैर्दत्तः चिराय, हरिपुङ्गव ! ॥ १८ ॥

किन्तु शीघ्रमितः, वीर ! [2]निष्क्राम त्वं मया सह ।
सान्त्वयस्व वयस्यं त्वं भार्याहरण[3]कर्शितम् ॥ १९ ॥

यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम् ।
मया त्वं परुषाण्युक्तः [4]तच्च त्वं क्षन्तुमर्हसि ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे षट्त्रिंशः सर्गः

---

नारी(२०)मानः सर्गः । २० ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे षट्त्रिंशः सर्गः

---

* लोके हि सर्वत्र यः कश्चिद्दोषः सुलभ एव । स्वस्मिन् अन्येन दोषे आरोपिते सामान्यतः सर्वोऽपि अन्यस्मिन् विद्यमानं दोषं प्रतिबन्दित्वेन ब्रूयादिति लोकवृत्तम् । परन्तु विवेकिना, स्वस्मिन् दोषे अन्येनोद्घाटिते, अन्यस्मिन् दोषं पश्यताऽपि स्वस्मिन् तदुक्तो दोषः स्याच्चेत् विनीतेन भवितव्यम् । सोऽयमुदात्तभावः रामे त्वयि चेति उभयत्रैव मया दृष्ट इत्यर्थः ॥

[1] रामेण—ञ. [2] निष्क्रमस्व—ङ. [3] दुःखितम्—ञ. [4] तत्सहस्व सखे मम—ञ.

सप्तत्रिंशः सर्गः

[वानरसेनासंमेलनम्]

एवमुक्तस्तु सुग्रीवः लक्ष्मणेन महात्मना ।
हनुमन्तं स्थितं पार्श्वे सचिवं त्विदमब्रवीत् ॥ १ ॥

अथ सुग्रीवेण अपरिमितदूतप्रेषणपूर्वं अनेककोटिनिजसेना-संमेलनम् । एवमित्यादि ॥ १ ॥

महेन्द्रहिमवद्विन्ध्यकैलासशिखरेषु च ।
मन्दरे पाण्डुशिखरे पञ्चशैलेषु ये स्थिताः ॥ २ ॥

तरुणादित्यवर्णेषु भ्राजमानेषु [1]सर्वतः ।
पर्वतेषु समुद्रान्ते *पश्चिमस्यां तु ये दिशि ॥ ३ ॥

आदित्यभवने चैव गिरौ सन्ध्याभ्रसंनिभे ।
[2]पद्मतालवनं भीमं संश्रिता हरिपुङ्गवाः ॥ ४ ॥

अञ्जनाम्बुदसङ्काशाः [3]कुञ्जरप्रतिमौजसः ।
अञ्जने पर्वते चैव ये वसन्ति प्लवङ्गमाः ॥ ५ ॥

[4]मनःशिलागुहावासाः वानराः कनकप्रभाः ।
मेरुपार्श्वगताश्चैव ये धूम्रगिरिसंश्रिताः ॥ ६ ॥

तरुणादित्यवर्णाश्च पर्वते च महारुणे ।
पिबन्तो मधु मैरेयं भीमवेगाः प्लवङ्गमाः ॥ ७ ॥

वनेषु च सुरम्येषु सुगन्धिषु महत्सु च ।
[5]तापसाश्रमरम्येषु वनान्तेषु समन्ततः ॥ ८ ॥

* पश्चिमस्यामित्यार्षम्—ति.

[1] नित्यशः—ज. [2] पद्माचलवनं—च. ज. [3] कुञ्जरेन्द्रमहौजसः—ज.
[4] महाशैलगुहा—च. ज. एतदादिश्लोकचतुष्टयमधिकं—झ. [5] तापसानां च रम्येषु—ङ.



तांस्तांस्त्वमानय * क्षिप्रं पृथिव्यां सर्ववानरान् ।
सामदानादिभिः कल्पैः आशु प्रेषय वानरान् ॥ ९ ॥

पाण्डुशिखरत्वविशेषणं महेन्द्रादिपञ्चशैलसाधारणम् । तेषु—पञ्चशैलेषु समुद्रान्तपर्वतविशेषणं तरुणादित्येत्यादि । तथा पश्चिमस्यां दिशि अस्तगिरौ, आदित्यभवने—उदयगिरौ च ये, स्थिताः इति सर्वत्रानुकर्षः । महाशैलाख्यः पर्वतविशेषः । क्षिप्रमानयेत्युक्ते अहमेव गमिष्यामीत्यपेक्षायां, नेत्याह—सामेत्यादि । आदिशब्देन अतिदुष्टविषये दण्डश्च । कल्पैः—उपायैः ॥ २–९ ॥

† प्रेषिताः प्रथमं ये च मया [1]ज्ञाता महाजवाः ।
त्वरणार्थं तु भूयस्त्वं हरीन् संप्रेषयापरान् ॥ १० ॥

ननु प्रेषिता एव पुरेत्यपेक्षायामाह—प्रेषिता इत्यादि । 'मया ज्ञाता महाजवाः' इति पाठः । प्रथमं पूर्वमेव महाजवाः दूताः प्रेषिताः इति यत्, तच्च मया ज्ञातमेव । अथापि प्रेषितदूतानां बलानां च त्वरणार्थं—शैघ्र्यार्थं भूयः—अभ्यधिकं पुनश्च अपरान् हरीन् संप्रेषय ॥ १० ॥

ये प्रसक्ताश्च कामेषु दीर्घसूत्राश्च वानराः ।
इहानयस्व तान् सर्वान् शीघ्रं तु मम शासनात् ॥ ११ ॥

कामेषु प्रसक्ताः, अत एव दीर्घसूत्राः—विलम्बितव्यापाराः ॥

* अनयेत्यस्य आनाययेत्यर्थ इति कतकः—ति. † प्रेषिताः—सर्वेषां वानराणामानयनार्थं प्रेषिता ये वानराः ते नाद्यापि प्रत्यागताः । तेषां त्वरणार्थं पुनः प्रेषणम् । एवं तेषु ये कामादिप्रसक्ताः कालं विलम्बयन्ति, तानत्रैवाहूय—शिक्षाद्यर्थम् ॥

[1] दूताः—ङ.

अहोभिर्दशभिर्ये हि नागच्छन्ति ममाज्ञया ।
हन्तव्यास्ते दुरात्मानः राजशासनदूषकाः ॥ १२ ॥
शतान्यथ [1] सहस्राणि कोट्यश्च मम शासनात् ।
प्रयान्तु कपिसिंहानां [2] दिशो मम मते स्थिताः ॥ १३ ॥

प्रेषणीयदूतसंख्यामाह—शतान्यथ सहस्राणि कोटयश्चेति । शतकोटिः मध्यं, तत्सहस्रं परार्धमित्युक्तम् । बहुदूतानामेवैवंसंख्यात्वे बलसंख्यां ईश्वर एव जानाति । तथैव आनन्त्यमेवाग्रे प्रतिपाद्यते ॥

मेघपर्वतसङ्काशाः छादयन्त इवाम्बरम् ।
घोररूपाः कपिश्रेष्ठाः यान्तु मच्छासनादितः ॥ १४ ॥

प्रागुक्तदूतबाहुल्यमेव दर्शितम्—छादयन्त इवाम्बरं इति ॥

*ते गतिज्ञाः गतिं [3] गत्वा पृथिव्यां सर्ववानराः ।
आनयन्तु हरीन् सर्वान् त्वरिताः शासनान्मम ॥ १५ ॥

गतिं गत्वा—तत्तद्देशगमनं प्राप्य ॥ १५ ॥

तस्य वानरराजस्य श्रुत्वा वायुसुतो वचः ।
दिक्षु सर्वासु विक्रान्तान् प्रेषयामास वानरान् ॥ १६ ॥
ते पदं विष्णुविक्रान्तं पतत्रिज्योतिरध्वगाः ।
प्रयाताः प्रहिता राज्ञा हरयस्तत्क्षणेन वै ॥ १७ ॥

विष्णुविक्रान्तं पदमिति । आकाशमिति यावत् । पतत्रिज्योतिरध्वगाः—पक्षिणां नक्षत्राणां च मार्गगताः इत्यर्थः ॥ १७ ॥

---

* गतिं गत्वा—वेगवत्तरां गतिं गत्वा—ति. गतिज्ञाः—गम्यत इति गतिः—वासस्थानम्—गो. रा.

[1] सहस्राणां—ङ. [2] निदेशे मम ये—ज. [3] ज्ञात्वा—ङ.



ते समुद्रेषु गिरिषु वनेषु च सरस्सु च ।
वानरा वानरान् सर्वान् रामहेतोरचोदयन् ॥ १८ ॥
*मृत्युकालोपमस्याज्ञां [1] राजराजस्य वानराः ।
सुग्रीवस्याययुः श्रुत्वा सुग्रीवभयदर्शिनः ॥ १९ ॥

मृत्युः कालश्च उपमा निग्रहविषये यस्य स तथा ॥ १९ ॥

†ततस्तेऽञ्जनसङ्काशाः गिरेस्तस्मा[2]न्महाजवाः ।
तिस्रः कोटयः प्लवङ्गानां निर्ययुर्यत्र राघवः‡ ॥ २० ॥

तस्मात् गिरेरिति । अञ्जनगिरेरित्यर्थः ॥ २० ॥

अस्तं गच्छति यत्रार्कः तस्मिन् गिरिवरे [3] स्थिताः ।
तप्तहेममहाभासः तस्मात् कोट्यो दश च्युताः ॥ २१ ॥
कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् ।
ततः कोटिसहस्राणि वानराणामुपागमन् ॥ २२ ॥
फलमूलेन जीवन्तः हिमवन्तमुपाश्रिताः ।
तेषां कोटिसहस्राणां सहस्रं समवर्तत ॥ २३ ॥

कोटिसहस्रं परार्धमित्युक्तम् । तस्य च सहस्रमित्युक्ते संख्यातीतमेव तद्बलम् ॥ २३ ॥

---

* मृत्युरूपः कालः, मृत्योः काल इति वा । दुरतिक्रमत्वे दृष्टान्तोऽयम् ॥
† 'आययुः' इत्यनेन संग्रहोक्तस्य विवरणं 'ततस्ते' इत्यारभ्य 'पिबन्तीव दिवाकरम्' इत्येतदन्तम् ॥ ‡ यत्र – येन हेतुना राघवो वर्तते, ततः—तस्मादेव हेतोः—गो. ततः—तदनन्तरं, यत्र—देशे, राघव इति प्राधान्यान्निर्देशः, तदर्थमेवानयनात् । अर्थात् किष्किन्धामागमन्नित्यर्थः । उत्तरत्र 'सुग्रीवो यत्र वानरः' (श्लो. ३४) इत्येतदपि द्रष्टव्यम् । तात्पर्यतः उभयं समानार्थकम् । राघवः—लक्ष्मणो वा ॥

[1] कपिराजस्य—ङ. [2] न्महाबलाः—ज. [3] रताः—ज.

[1]अङ्गारकसमानानां भीमानां भीमकर्मणाम् ।
विन्ध्याद्वानरकोटीनां सहस्राण्यपतन् द्रुतम् ॥ २४ ॥
क्षीरोदवेलानिलयाः तमालवनवासिनः ।
नारिकेलाशनाश्चैव तेषां संख्या न विद्यते ॥ २५ ॥

स्ववचनेनैव क्षीरोदनिलयानां संख्या न विद्यत इत्याह—क्षीरोदेत्यादि ॥ २५ ॥

वनेभ्यो गह्वरेभ्यश्च सरिद्भ्यश्च महाजवाः ।
आगच्छद्वानरी सेना *पिबन्तीव दिवाकरम् ॥ २६ ॥
†ये तु त्वरयितुं याताः वानराः सर्ववानरान् ।
ते वीरा [2]हिमवच्छैलं ददृशुस्तं महाद्रुमम् ॥ २७ ॥

तं महाद्रुममिति । प्रसिद्धं भगवन्मूलधामयज्ञवटमित्यर्थः । तं ददृशुरिति । तत्र, हिमवतीति शेषः ॥ २७ ॥

तस्मिन् गिरिवरे [3]रम्ये यज्ञो माहेश्वरः पुरा ।
सर्वदेव[4]मनस्तोषः बभौ दिव्यो मनोहरः ॥ २८ ॥

माहेश्वरः । अनुपचरितः कारणप्रजापतिः यज्ञात्मा अन्वर्थदक्षिणामूर्तिः नः कुलदैवतम् , तद्देवताकः दिव्यो यज्ञ इति । दिव्याश्वमेध इत्यर्थः । सर्वदेवानां मनस्तोषः यस्मिन् स तथा ॥

---

*आकाशदेशाच्छादनात , उत्प्लुत्योत्प्लुत्यागमनाद्वा दिवाकरं पिबन्तीवेति ॥

†तुशब्दः हनुमत्प्रेरितवानरव्यावर्तकः, नीलेन पूर्वं प्रेरिता इत्यर्थः । तेषामेव लक्ष्मणसन्निधाने समागमनम् , सद्यो हनुमत्प्रेरितानां तदसंभवात–गो. ये च त्वरयितु याताः हनुमत्प्रेषिताः, ते महाद्रुमं तं ददृशुः, पूर्वं नीलप्रेषितांश्च ददृशुः । अतस्तेषां तत एव परावृत्तिः–ति. वस्तुतस्तु–सर्ववानरसैन्यागमनमुक्त्वा आनयनार्थं गतानां वानराणां विशेषव्यापार उच्यते–ये त्वित्यादिना—इति स्वरसम् । 'त्वरयितुं' इति पदं चावधेयम् ॥

[1] अङ्गारसमवर्णाना–ङ. [2] हिमवच्छैले–ज. [3] पुण्ये–ज. [4] प्रियकरः–ङ.



अन्ननिष्यन्दजातानि मूलानि च फलानि च ।
अमृतास्वादकल्पानि [1]ददृशुस्तत्र वानराः ॥ २९ ॥

अन्ननिष्यन्देति । दिव्ययज्ञवर्त्यन्नद्रप्सेति यावत् ॥ २९ ॥

तदन्नसम्भवं दिव्यं फलं मूलं मनोहरम् ।
यः कश्चित् सकृदश्नाति मासं भवति तर्पितः ॥ ३० ॥
तानि मूलानि दिव्यानि फलानि च फलाशनाः ।
औषधानि च दिव्यानि जगृहुर्हरियूथपाः ॥ ३१ ॥

औषधानि । सञ्जीविन्यादीनीत्यर्थः ॥ ३१ ॥

तस्माच्च यज्ञायतनात् पुष्पाणि सुरभीणि च ।
आनिन्युर्वानरा गत्वा सुग्रीवप्रियकारणात् ॥ ३२ ॥
ते तु सर्वे हरिवराः पृथिव्यां सर्ववानरान् ।
संचोदयित्वा त्वरिताः यूथानां जग्मुरग्रतः ॥ ३३ ॥

ते तु सर्वे इति । दूतरूपा इत्यर्थः । अग्रतः इति । स्वसंचोदितवानरागमनात् पूर्वमित्यर्थः ॥ ३३ ॥

ते तु तेन मुहूर्तेन यूथपाः शीघ्रगामिनः ।
किष्किन्धां त्वरया प्राप्ताः सुग्रीवो यत्र वानरः ॥ ३४ ॥
ते गृहीत्वौषधीः सर्वाः फलं मूलं च वानराः ।
तं प्रति ग्राहयामासुः वचनं चेदमब्रुवन् ॥ ३५ ॥

ते—प्रेषिताः दूताः ॥ ३५ ॥

सर्वे [2]परिगताः शैलाः [3]समुद्राश्च वनानि च ।
पृथिव्यां वानराः सर्वे शासनादुपयान्ति ते ॥ ३६ ॥

---

[1] जगृहु–ङ. [2] परिसृताः–ज. [3] सरितश्च–ज.

एवं श्रुत्वा ततो हृष्टः सुग्रीवः प्लवगाधिपः ।
प्रतिजग्राह *तत् प्रीतः तेषां सर्वमुपायनम् ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे सप्तत्रिंशः सर्गः

---

गीता(३७)मानः सर्गः ॥ ३७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे सप्तत्रिंशः सर्गः

---

## अष्टात्रिंशः सर्गः

[रामसमीपगमनम्]

प्रतिगृह्य च तत्सर्वमुपायनमुपाहृतम् ।
वानरान् †सान्त्वयित्वा च सर्वानेव व्यसर्जयत् ॥ १ ॥

सुग्रीवस्य रामसन्दर्शनपूर्वं सेनासंमेलननिवेदनम् । प्रतिगृह्येत्यादि ॥ १ ॥

विसर्जयित्वा स हरीन् शूरांस्तान् कृतकर्मणः ।
मेने कृतार्थमात्मानं राघवं च महाबलम् ॥ २ ॥

राघवं चेति । कृतार्थमित्यनुकर्षः ॥ २ ॥

स लक्ष्मणो भीमबलं सर्ववानरसत्तमम् ।
अब्रवीत् प्रश्रितं वाक्यं सुग्रीवं संप्रहर्षयन् ॥
किष्किन्धाया विनिष्क्राम यदि ते, सौम्य! रोचते ॥ ३ ॥

विनिष्क्रामेति संप्रश्ने लोट्, प्रार्थने वा । अत एव उत्तरत्र सुभाषितमित्युक्तम् ॥ ३ ॥

---

* तत्—हिमवत आनीतं मूलफलादिकम् ॥ † अतित्वरयाऽऽगतत्वात् परिश्रान्तत्वेन सान्त्वनम् ॥



तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य सुभाषितम् ।
सुग्रीवः परमप्रीतः वाक्यमेतदुवाच ह ॥ ४ ॥
एवं भवतु गच्छावः *स्थेयं त्वच्छासने मया ॥ ५ ॥

स्थेयं—अनुष्ठेयम् ॥ ५ ॥

तमेवमुक्त्वा सुग्रीवः लक्ष्मणं शुभलक्षणम् ।
विसर्जयामास तदा तारामन्याश्च योषितः ॥ ६ ॥
†एतेत्युच्चैर्हरिवरान् सुग्रीवः समुदाहरत् ।
तस्य तद्वचनं श्रुत्वा हरयः शीघ्रमाययुः ॥ ७ ॥
बद्धाञ्जलिपुटाः सर्वे ये स्युः स्त्रीदर्शनक्षमाः ।
तानुवाच ततः प्राप्तान् राजाऽर्कसदृशप्रभः ॥
उपस्थापयत क्षिप्रं शिबिकां मम, वानराः! ॥ ८ ॥

स्त्रीदर्शनक्षमा इति । स्त्रीगोष्ठ्यामपि राजदर्शनक्षमाः, अत्यासा इत्यर्थः ॥ ८ ॥

श्रुत्वा तु वचनं तस्य हरयः शीघ्रविक्रमाः ।
समुपस्थापयामासुः शिबिकां प्रियदर्शनाम् ॥ ९ ॥
तामुपस्थापितां दृष्ट्वा शिबिकां वानराधिपः ।
लक्ष्मणारुह्यतां शीघ्रमिति सौमित्रिमब्रवीत् ॥ १० ॥
इत्युक्त्वा काञ्चनं यानं सुग्रीवः सूर्यसंनिभम् ।
‡[1]बृहद्भिर्हरिभिर्युक्तं आरुरोह सलक्ष्मणः ॥ ११ ॥

---

* स्थेयं—स्थातव्यम् । त्वच्छासने मया वर्तितव्यमित्यर्थः । व्याख्यादृष्ट्या 'त्वच्छासनं' इति पाठः स्याद्वा ॥ † आङ् इत्युपसर्गपूर्वस्य इण्गताविति धातोः लोण्मध्यमपुरुषबहुवचने 'एत' इति रूपम् । एहीति पाठे जात्येकवचनम् । ‡ बृहद्भिः हरिभिः, बाहकैरिति यावत् ॥

[1] बहुभि—ज.

सलक्ष्मणः आरुरोहेति । एवं एकशिबिकारोहणेन परममैत्री दर्शिता ॥ ११ ॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
शुक्लैश्च वालव्यजनैः धूयमानैस्समन्ततः ॥ १२ ॥

शङ्खभेरीनिनादैश्च [1] हरिभिश्चाभिनन्दितः ।
निर्ययौ प्राप्य सुग्रीवः राज्यश्रियमनुत्तमाम् ॥ १३ ॥

स वानरशतै[2]स्तीक्ष्णैः बहुभिः शस्त्रपाणिभिः ।
परिकीर्णो ययौ तत्र यत्र रामो व्यवस्थितः ॥ १४ ॥

स तं देशमनुप्राप्य श्रेष्ठं रामनिषेवितम् ।
अवातरन्महातेजाः शिबिकायाः सलक्ष्मणः ॥ १५ ॥

आसाद्य च ततो रामं कृताञ्जलिपुटोऽभवत् ।
कृताञ्जलौ स्थिते तस्मिन् वानराश्चाभवंस्तथा ॥ १६ ॥

वानराश्च तथाऽभवन्निति । कृताञ्जलिपुटाः अभवन्नित्यर्थः ॥ १६ ॥

* तटाकमिव तद्दृष्ट्वा रामः कुड्मलपङ्कजम् ।
वानराणां महत् सैन्यं सुग्रीवे प्रीतिमानभूत् ॥ १७ ॥

आह्लादकत्वादितः तटाकदृष्टान्तः । तत् सैन्यमित्यन्वयः ॥

पादयोः पतितं मूर्ध्ना तमुत्थाप्य हरीश्वरम् ।
प्रेम्णा च बहुमानाच्च राघवः परिषस्वजे ॥ १८ ॥

परिष्वज्य च धर्मात्मा निषीदेति ततोऽब्रवीत् ।
† तं निषण्णं ततो दृष्ट्वा क्षितौ रामोऽब्रवीद्वचः ॥ १९ ॥

---

* अञ्जलीनां पद्मसदृशत्वात् सैन्यस्य तटाकत्वरूपणम् ॥ † क्षितौ निषण्णं तमित्यन्वयः ॥

[1] बन्दिभि—च. ज. [2] भीमैः—क.



धर्ममर्थं च कामं च यस्तु काले निषेवते ।
विभज्य सततं, वीर! स राजा, हरिसत्तम! ॥ २० ॥

हित्वा धर्मं [1] तथाऽर्थं च कामं यस्तु निषेवते ।
स वृक्षाग्रे यथा सुप्तः [2] पतितः प्रतिबुध्यते ॥ २१ ॥

वृक्षाग्रसुप्तः यथा पतितः सन् प्रतिबुध्यते, तथा कामैकपरोऽपि पतितः—राज्यभ्रष्टः पश्चादेव प्रतिबुध्यते इत्यर्थः ॥ २१ ॥

अमित्राणां वधे युक्तः मित्राणां सङ्ग्रहे रतः ।
त्रिवर्गफलभोक्ता च राजा * धर्मेण युज्यते ॥ २२ ॥

त्रिवर्गस्य—धर्मार्थकामलक्षणस्य तत्फलस्य च यथाकालं भोक्ता—सेवकः इत्यर्थः ॥ २२ ॥

उद्योगसमयस्त्वेषः प्राप्तः, शत्रुविनाशन!
संचिन्त्यतां हि [3] समयः हरिभिः सह मन्त्रिभिः ॥ २३ ॥

समयः संचिन्त्यतामिति । सीतान्वेषणादिप्रतिज्ञापूर्त्युपायः चिन्त्यतामित्यर्थः ॥ २३ ॥

एवमुक्तस्तु सुग्रीवः रामं वचनमब्रवीत् ।
प्रणष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ॥ २४ ॥

त्वत्प्रसादात्, महाबाहो! पुनः प्राप्तमिदं मया!
तव, देव! प्रसादश्च भ्रातुश्च, जयतांवर! ॥ २५ ॥

कृतं न प्रतिकुर्याद्यः † पुरुषाणां स दूषकः ॥ २६ ॥

---

* धर्मेण-राजधर्मेण-गो. त्रिवर्गेषु धर्मस्यान्तर्भूतत्वादेवं व्याख्यानम् । नानाकारेषु धर्मेषु कक्ष्याभेदेन साध्यसाधनभावापन्नधर्मतात्पर्येण वा तथोक्तिः ॥

† पुरुषाणां स दूषकः—पुरुषाधम इति यावत् ।

[1] ततोऽर्थं—ङ. [2] पतन् प्रति—ङ. [3] पिङ्गेश—ङ

देव—नरदेव! तव, भ्रातुश्चेति । प्रसादादित्यनुकर्षः । पुरुषाणां स दूषक इति । पुरुषाणां मध्ये स एव दूषकः । धर्मनाशकः इत्यर्थः ॥ २६ ॥

एते वानरमुख्याश्च शतशः, शत्रुसूदन!
प्राप्ताश्चादाय बलिनः पृथिव्यां सर्ववानरान् ॥ २७ ॥

एते वानरमुख्याः इति । वानरयूथपतयः इत्यर्थः ॥ २७ ॥

[1]ऋक्षाश्चावहिताः शूराः गोलाङ्गूलाश्च, राघव!
कान्तारवनदुर्गाणां अभिज्ञा घोरदर्शनाः ॥ २८ ॥

देवगन्धर्वपुत्राश्च वानराः कामरूपिणः ।
स्वैः स्वैः परिवृताः सैन्यैः वर्तन्ते *पथि, राघव! ॥२९॥

†शतैः शतसहस्रैश्च कोटिभिश्च प्लवङ्गमाः ।
अयुतैश्चावृता वीराः शङ्कुभिश्च, परन्तप! ॥ ३० ॥

अर्बुदैरर्बुदशतैः मध्यैश्चान्तैश्च वानराः ।
समुद्रैश्च परार्धैश्च हरयो हरियूथपाः ॥

आगमिष्यन्ति ते, राजन्! महेन्द्रसमविक्रमाः ॥३१॥

कोटिलक्षं शङ्कुरित्याहुः । सर्वत्र केचिच्छतैः केचिच्छतसहस्रैः इत्यादिना केचिच्छब्दः योज्यः । परार्धैश्चेति । परिवृता इति सर्वत्रानुकर्षः ॥ ३०–३१ ॥

---

*पथि वर्तन्त इति । आगमिष्यन्त्यचिरादित्यर्थः ॥ †सङ्ख्यालक्षणमुक्तं ज्योतिश्शास्त्रे—एकं दश शतं अस्मात् सहस्रमयुतं ततः परं लक्षम् । प्रयुतं कोटिमथार्बुदवृन्दे खर्वं निखर्वं च । तस्मान्महासरोजं शङ्कुं सरितां पतिं त्वन्तम् । अर्धं परार्धमाहुः यथोत्तरं दशगुणं तथा ज्ञेयम् ' इति—गो.

[1] ऋक्षाश्च वानराः—च. ज.



[1]मेरुमन्दरसङ्काशाः विन्ध्यमेरुकृतालयाः ।
ते त्वामभिगमिष्यन्ति, राक्षसं [2]य सबान्धवम् ॥ ३२ ॥
निहत्य रावणं संख्ये ह्यानयिष्यन्ति मैथिलीम् ॥ ३३ ॥

ये ह्यानयिष्यन्ति तेऽत्राभिगमिष्यन्तीत्यन्वयः ॥ ३३ ॥

ततस्तमुद्योगमवेक्ष्य [3]बुद्धिमान्
हरिप्रवीरस्य निदेशवर्तिनः ।
बभूव हर्षात् वसुधाधिपात्मजः
प्रबुद्धनीलोत्पल[4]तुल्यदर्शनः ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे अष्टात्रिंशः सर्गः

---

वर्ग(३४)मानः सर्गः ॥ ३४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे अष्टात्रिंशः सर्गः

---

## एकोनचत्वारिंशः सर्गः

[वानरसेनानिवेशनम्]

इति ब्रुवाणं सुग्रीवं रामो धर्मभृतां वरः ।
बाहुभ्यां संपरिष्वज्य प्रत्युवाच कृताञ्जलिम् ॥ १ ॥

अथ रामाय स्वस्वयूथसहितानां यूथपानां निवेदनम् । इति ब्रुवाणमित्यादि ॥ १ ॥

यदिन्द्रो वर्षते वर्षं न तच्चित्रं [5]भवेत् क्वचित् ।
आदित्यो वा सहस्रांशुः कुर्याद्वितिमिरं नभः ॥ २ ॥

---

[1] मेरुपर्वत—ज. [2] योद्धुमाहवे—ङ. [3] वीर्यवान्—ज. [4] दर्शनस्तदा—ङ.
[5] भविष्यति—ज.

चन्द्रमा [1]रश्मिभिः कुर्यात् पृथिवीं, सौम्य! *निर्मलाम्।
त्वद्विधो वाऽपि मित्राणां [2]प्रतिकुर्यात्, परंतप!
एवं त्वयि न तच्चित्रं भवेद्यत्, सौम्य! [3]शोभनम् ॥ ३ ॥

शुद्धसत्त्वसुमित्रत्वात् तवोपकारः सहजधर्मः इन्द्रादेरिवेति रामः सुग्रीवं स्तौति—यदिन्द्र इत्यादि। वर्षत इति यत्, तत् न चित्रं, स्वाभाविकत्वादिति शेषः। तथा अग्रेऽपि। निर्मलाम्—मलमिति सौरीकिरणसन्तापः, तद्रहिताम्, शीतलामिति यावत्। त्वद्विधः सात्त्विकः मित्राणां प्रत्युपकारेण प्रीतिं कुर्यादिति यत् तदपि न चित्रम्। यदेवं अतस्तावत् प्रकृते परमसात्त्विकेन त्वयापि एतन्मित्रप्रीणनं न चित्रं, हे सौम्य। तत्–तस्मात् त्वत्कृतं सेनामेलनं शोभनं—भद्रं जातम् ॥२–३॥

जानाम्यहं त्वां, सुग्रीव! सततं प्रियवादिनम्।
त्वत्सनाथः, सखे! संख्ये जेताऽस्मि सकलानरीन् ॥ ४ ॥
[4]त्वमेव मे सुहृन्मित्रं साहाय्यं कर्तुमर्हसि।
यो जहारात्मनाशाय वैदेहीं राक्षसाधमः ॥ ५ ॥
†वञ्चयित्वा तु पौलोमीं अनुह्लादो यथा [5]शचीम्।
[6]नचिरात् तं [7]हनिष्यामि रावणं निशितैः शरैः ॥ ६ ॥

---

* निर्मलां—स्वच्छां—अन्धकाररहितामिति वा ॥ † यथा पौलोमीपितरं वञ्चयित्वा कृतानुमतिकं कृत्वा शचीं योऽनुह्लादो जहारात्मविनाशाय। इन्द्रः तत्पितरं अनुमन्तारं, हर्तारं चानुह्लादं हत्वा शचीं प्रत्यानीतवानिति पुराणगाथा–ति. इन्द्रेणेप्सितां पौलोमीं तत्पितुः पुलोमस्यानुमत्याऽनुह्लादो जहार। इन्द्रस्त्वनुमन्तारं पुलोमं हत्वा तां पुनरानीयोदवहदिति पौराणिकी कथा–गो.

[1] रजनीं कुर्यात् प्रभया–झ. [2] प्रीतिं–च. ज. [3] निर्मलम्–ङ. [4] एतदर्धस्थाने–त्वं मे भ्राता सखा च त्वं प्रियः सौम्य सुहृच्च मे। त्वं मे सुग्रीव वैदेह्याः साहाय्यं कर्तुमर्हसि–इत्यर्धद्वयं–ङ. [5] दिवि–ङ. [6] अचिरात्–ङ. [7] वधिष्यामि–च. ज.



पौलोम्याः पितरं दृप्तं शतक्रतु[1]रिहाहवे ॥ ७ ॥

य इत्यादि। पौलोम्याः शच्याः पितरं वञ्चयित्वा शचीं अनुह्लादः असुरः यथा–इव, वैदेहीं वञ्चयित्वा यो जहार आत्मनाशाय, दृप्तं तं रावणं अरिहा शतक्रतुरिव नचिरात् हनिष्यामीत्यन्वयः। अत्र *यद्वाभट्टस्तु—इन्द्रेणेप्सितां पौलोमीं तत्पितुः पुलोमस्य अनुमत्या अनुह्लादः जहार, इन्द्रस्तु अनुमन्तारं पुलोमं हत्वा तां च प्रत्यानीय उदवहत् इति पौराणिकी कथा अनुसन्धेयेत्याह। एतत्कथासत्त्वं दैवं वेत्ति। प्रसिद्धिस्तु नमुचिहन्ता बलहन्ता वृत्रहा इत्यादिवत् पुलोमहा इति नास्ति। अपि च पितुः स्वपुत्र्याः स्वेच्छानुमतिश्च नापराधः। नापि च अनुमन्तृहननवचनं प्रकृते दृष्टान्तायोपयुज्यते। एवं साहसमप्रयोजनं प्रालपत् ॥ ६–७ ॥

एतस्मिन्नन्तरे [2]चैव रजः समभिवर्तत।
उष्णां तीव्रां सहस्रांशोः छादयद्गगने प्रभाम् ॥ ८ ॥

अभिवर्तत—अभ्यवर्ततेति यावत् ॥ ८ ॥

दिशः पर्याकुलाश्चासन् [3]रजसा तेन मूर्छिता।
चचाल च मही सर्वा सशैलवनकानना ॥ ९ ॥
ततो नगेन्द्रसङ्काशैः तीक्ष्णदंष्ट्रैर्महाबलैः।
कृत्स्ना [4]संछादिता भूमिः असंख्येयैः प्लवङ्गमैः ॥ १० ॥
निमेषान्तरमात्रेण ततस्तैर्हरियूथपैः।
कोटीशतपरीवारैः [5]कामरूपिभिरावृता ॥ ११ ॥

ततो नगेन्द्रेत्युक्तार्थस्यैव प्रपञ्चः—निमेषेत्यादिः ॥ ११ ॥

---

* गोविन्दराजः।

[1] रिवाहवे–ङ. [2] भीमं–ङ. [3] तमसा तेन मूर्छिताः–ङ. [4] वसुमती–ङ. [5] वानरैर्हरियूथपैः–च. ज.

नादेयैः [1]पार्वतीयैश्च सामुद्रैश्च महाबलैः ।
हरिभि[2]र्मेघनिर्ह्रादैः अन्यैश्च [3]वनवासिभिः ॥ १२ ॥

वनवासिभिः । प्रागुक्तपद्मतालवनवासिभिरित्यर्थः ॥ १२ ॥

तरुणादित्यवर्णैश्च शशिगौरैश्च वानरैः ।
पद्मकेसरवर्णैश्च श्वेतै[4]र्मेरुकृतालयैः ॥ १३ ॥
कोटीसहस्रै[5]र्दशभिः श्रीमान् परिवृतस्तदा ।
वीरः शतबलिर्नाम वानरः प्रत्यदृश्यत ॥ १४ ॥
ततः काञ्चनशैलाभः ताराया वीर्यवान् पिता ।
अनेकैर्दशसाहस्रैः कोटिभिः प्रत्यदृश्यत ॥ १५ ॥

ताराया: पिता सुषेणः ॥ १५ ॥

[6]तथा वरेण कोटीनां सहस्रेण समन्वितः ।
पिता रुमायाः संप्राप्तः सुग्रीवश्वशुरो विभुः ॥ १६ ॥

वरेण—श्रेष्ठेन । रुमायाः पिता तारः ॥ १६ ॥

पद्मकेसरसङ्काशः तरुणार्कनिभाननः ।
बुद्धिमान् वानरश्रेष्ठः सर्ववानरसत्तमः ॥ १७ ॥
अनेकैर्बहुसाहस्रैः वानराणां समन्वितः ।
पिता हनुमतः श्रीमान् केसरी प्रत्यदृश्यत ॥ १८ ॥
[7]गोलाङ्गूलमहाराजः गवाक्षो भीमविक्रमः ।
वृतः कोटि[8]सहस्रेण वानराणामदृश्यत ॥ १९ ॥

---

[1] पार्वतेयैश्च—च. [2] मेघसंकाशैः ऋक्षैः—ङ. [3] वनचारिभि:—ङ. [4] हैमकृतालयैः—ङ.
[5] बहुभिः—ङ. [6] तथाऽपरेण—ङ. [7] गोलाङ्गूलाधिप: श्रीमान्—ङ. [8] सहस्राणां शतेन समदृश्यत—ङ.



गोलाङ्गूलमहाराजः गवाक्षः वानराणामनीकैरित्यन्वयः । गोलाङ्गूलानामपि वानरावान्तरजातित्वात् तथा ॥ १९ ॥

ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः ।
वृतः कोटिसहस्राभ्यां द्वाभ्यां समभिवर्तत ॥ २० ॥
*[1]महाचलनिभैर्घोरैः पनसो नाम यूथपः ।
आजगाम महावीर्यः [2]तिसृभिः कोटिभिर्वृतः ॥ २१ ॥
नीलाञ्जनचयाकारः नीलो नामाथ यूथपः ।
अदृश्यत महाकायः कोटिभिर्दशभिर्वृतः ॥ २२ ॥
ततः काञ्चनशैलाभः गवयो नाम यूथपः ।
आजगाम महावीर्यः कोटिभिः पञ्चभिर्वृतः ॥ २३ ॥
[3]दरीमुखश्च बलवान् यूथपोऽभ्यायया तदा ।
वृतः कोटिसहस्रेण सुग्रीवं समुपस्थितः ॥ २४ ॥
मैन्दश्च द्विविदश्चोभौ अश्विपुत्रौ महाबलौ ।
कोटिकोटिसहस्रेण वानराणामदृश्यताम् ॥ २५ ॥
गजश्च बलवान् वीरः कोटिभिस्तिसृभिर्वृतः ।
[आजगाम महातेजाः सुग्रीवस्य समीपतः ॥]
ऋक्षराजो महातेजाः जाम्बवान्नाम नामतः ॥ २६ ॥
कोटिभिर्दशभिः [4]प्राप्तः सुग्रीवस्य वशे स्थितः ।
[5]रुमण्वान् नाम विक्रान्तः वानरो [6]वानरेश्वरम् ॥ २७ ॥

---

* महाबलनिभैः (पा.)—महाबलेन प्रकाशमानैः—रा.

[1] महाबल—च. ज. [2] पञ्चभि:—ङ. [3] दधीमुखश्च—ङ. [4] व्याप्त:—ज.
[5] रूमणो—च. [6] वानरेश्वर:—ङ.

आययौ बलवांस्तूर्णं कोटीशतसमावृतः ।
ततः कोटिसहस्राणां सहस्रेण शतेन च ॥ २८ ॥
पृष्ठतोऽनुगतः प्राप्तः हरिभिर्गन्धमादनः ।
ततः पद्मसहस्रेण वृतः शङ्कुशतेन च ॥
युवराजोऽङ्गदः प्राप्तः पितृतुल्यपराक्रमः ॥ २९ ॥

पद्मसंख्या युद्धकाण्डे अष्टाविंशे शुकवाक्ये द्रष्टव्या *॥ २९ ॥

ततस्ताराद्युतिस्तारः हरिर्भीमपराक्रमः ।
पञ्चभिर्हरिकोटीभिः दूरतः प्रत्यदृश्यत ॥ ३० ॥

ताराद्युतिः—नक्षत्रप्रभः । तारः रुमापितुः अन्योऽयमपि ॥३०॥

[1]इन्द्रजानुः कपिर्वीरः यूथपः प्रत्यदृश्यत ।
एकादशानां कोटीनां ईश्वरस्तैश्च संवृतः ॥ ३१ ॥
ततो रम्भस्त्वनुप्राप्तः तरुणादित्यसंनिभः ।
अयुतेनावृतश्चैव सहस्रेण शतेन च ॥ ३२ ॥
ततो यूथपतिर्वीरः दुर्मुखो नाम वानरः ।
प्रत्यदृश्यत कोटिभ्यां द्वाभ्यां परिवृतो बली ॥ ३३ ॥
कैलासशिखराकारैः वानरैर्भीमविक्रमैः ।
वृतः कोटिसहस्रेण हनुमान् प्रत्यदृश्यत ॥ ३४ ॥

---

* तत्रैवमुक्तम्—शतं शतसहस्राणां कोटिमाहुर्मनीषिणः । शतं कोटिसहस्राणां शंख इत्यभिधीयते ॥ शतं शंखसहस्राणां महाशंख इति स्मृतम् । महाशंखसहस्राणां शतं बृन्दमिति स्मृतम् ॥ शतं बृन्दसहस्राणां महाबृन्दमिति स्मृतम् । महाबृन्दसहस्राणां शतं पद्ममिति स्मृतम् ॥ शतं पद्मसहस्राणां महापद्ममिति स्मृतम् । महापद्मसहस्राणां शतं खर्वमिहोच्यते ॥ शतं खर्वसहस्राणां महाखर्वमिति स्मृतम् । महाखर्वसहस्राणां समुद्रमभिधीयते ॥ शतं समुद्रसाहस्रं ओघ इत्यभिधीयते । शतमोघसहस्राणां महौघ इति विश्रुतः ॥ (युद्ध.–28स. 33–39)

[1] इन्द्रभानुः—च.



नलश्चापि महावीर्यः संवृतो [1]द्रुमवासिभिः ।
कोटीशतेन संप्राप्तः सहस्रेण शतेन च ॥ ३५ ॥
ततो [2]दधिमुखः श्रीमान् कोटिभिर्दशभिर्वृतः ॥ ३६ ॥
[3]संप्राप्तोऽभिमतस्तस्य सुग्रीवस्य महात्मनः ।
शरभः कुमुदो वह्निः वानरो रंह एव च ॥ ३७ ॥
एते चान्ये च बहवः वानराः कामरूपिणः ।
आवृत्य पृथिवीं सर्वां पर्वतांश्च वनानि च ॥ ३८ ॥
यूथपास्समनुप्राप्ताः तेषां संख्या न विद्यते ।
आगताश्च [4]विशिष्टाश्च पृथिव्यां सर्ववानराः ॥ ३९ ॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
अभ्यवर्तन्त सुग्रीवं सूर्यमभ्रगणा इव ॥ ४० ॥
कुर्वाणा बहुशब्दांश्च [5]प्रहृष्टा बाहुशालिनः ।
शिरोभिर्वानरेन्द्राय सुग्रीवाय न्यवेदयन् ॥ ४१ ॥

शिरोभिः न्यवेदयन्निति । नैबिड्यात् दूरे स्थित्वा नमस्कारेणैव आत्मानं न्यवेदयन्नित्यर्थः ॥ ४१ ॥

अपरे वानरश्रेष्ठाः सङ्गम्य च यथोचितम् ।
सुग्रीवेण समागम्य स्थिताः प्राञ्जलयस्तदा ॥ ४२ ॥

*अपरे सङ्गम्य—समीपदेशं प्राप्य यथोचितं निवेदयित्वा जग्मुः । महाप्रभवः हनुमदङ्गदादयः समागम्य प्राञ्जलयः सन्तः समीपे स्थिताः इत्यर्थः ॥ ४२ ॥

---

* 'संगम्य' 'समागम्य' इति पदद्वयसद्भावादेवं व्याख्यानम् । संगम्य—परस्परं मिलित्वा—संघीभूयेति यावत् । संघीभूय सुग्रीवेण समागम्य स्थिता इति वा ॥ 'संयम्य' इति पाठे तु न क्लेशः ॥

[1] शैल–ङ. [2] दरीमुखः–ञ. [3] संप्राप्तो मातुल–ङ., संप्राप्तोऽभिनदं–ञ.
[4] निविष्टाश्च–ञ. [5] प्रकृष्टबल–ङ.

सुग्रीवस्त्वरितो रामे सर्वांस्तान् वानरर्षभान् ।
निवेदयित्वा धर्मज्ञः *स्थितः प्राञ्जलिरब्रवीत् ॥ ४३ ॥

सुग्रीव इत्यादि । धर्मज्ञः—राजधर्मज्ञः सुग्रीवः त्वरितः रामाभिमुखं प्राञ्जलिः स्थित एव भूत्वा सर्वांस्तान् वानरर्षभान् यूथपतीन् रामे निवेद्य अथ तान् यूथपानब्रवीत् ॥ ४३ ॥

यथासुखं पर्वत[1]निर्झरेषु
वनेषु सर्वेषु च वानरेन्द्राः ।
†निवेशयित्वा विधिवद्बलानि
बलं बलज्ञः प्रतिपत्तुमीष्टे ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकोनचत्वारिंशः सर्गः

---

किमिति ? हे वानरेन्द्राः ! यथासुखं पर्वतादिषु यथाविधि बलानि निवेशयित्वा, अथ बलज्ञः—स्वस्वबलनिवेशप्रदेशज्ञो भूत्वा तत्तद्बलाधिप तत्तत्—स्वबलं प्रतिपत्तुं—परिपालयितुं ईष्टे । व्यत्ययाल्लट् । ईश्वरो भवत्वित्यर्थः । भाव(४४)मानः सर्गः ॥ ४४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकोनचत्वारिंशः सर्गः

---

* स्थितः, न तूपविष्ट इत्यर्थः ॥ † एते वानरेन्द्राः बलानि विधिवत् निवेशयित्वा, स्थिता इति शेषः । बलज्ञो भवान् (रामः) एतद्बलं प्रतिपत्तुं—स्वीकर्तुं—आज्ञप्तुं वा ईष्टे—समर्थः । एवं व्याख्याने पूर्वापरभागः स्वरसः ॥

[1] कन्दरेषु—ङ.



## चत्वारिंशः सर्गः

[प्राचीदिक्प्रेषणम्]

*अथ राजा समृद्धार्थः सुग्रीवः प्लवगेश्वरः ।
उवाच नरशार्दूलं रामं परबलार्दनम् ॥ १ ॥

अथ सुग्रीवेण सीतान्वेषणाय पूर्वादिदिक्षु वानरयूथपानां प्रस्थापनम् । अथ राजेत्यादि ॥ १ ॥

आगता विनिविष्टाश्च बलिनः [1]कामरूपिणः ।
[2]वानरा वारणेन्द्राभाः ये मद्विषयवासिनः ॥ २ ॥

विनिविष्टाश्चेति । स्वस्वसेनानिवेश इति शेषः, अन्तर्भावितणिः, विनिवेशिताः इति यावत् । ये मद्विषयवासिनः इति । मम वानरसार्वभौमस्य विषये—राज्ये वासिनः इत्यर्थः ॥ २ ॥

त इमे बहुविक्रान्तैः [3]हरिभिर्भीमविक्रमैः ।
आगता वानरा घोराः दैत्यदानवसंनिभाः ॥ ३ ॥

बहुविक्रान्तैः—बहुस्थलेषु कृतापदानैः, अत एव भीमविक्रमैः स्वस्वयूथैः सहेति शेषः । दैत्यदानवयोः अवान्तरभेदः देवेषु सिद्धविद्याधरादिवत् † ॥ ३ ॥

‡ख्यात[4]कर्मापदानाश्च बलवन्तो जितक्लमाः ।
पराक्रमेषु विख्याताः व्यवसायेषु चोत्तमाः ॥ ४ ॥

---

* गतसर्गान्तिमश्लोकस्य विवरणं 'आज्ञापयितुमर्हसि' इति पर्यन्तम् ॥
† दितिः दनुश्च दक्षप्रजापतिपुत्र्यौ कश्यपपत्न्यौ । तत्सन्ततिभेदात् भेदोऽयम् ।
‡ 'अपदानं कर्म वृत्तम्' इत्यमरः ।

[1] कामचारिणः—च. ज. [2] वानरेन्द्रा महेन्द्राभाः—ज. [3] बलिभि—ज.
[4] कर्मपदाताश्च—ङ.

[1]पृथिव्यम्बुचराः, राम! नानानगनिवासिनः।
[2]कोट्योघाश्च इमे प्राप्ताः वानरास्तव किङ्कराः ॥ ५ ॥

ख्यातं कर्मणि—युद्धकर्मणि अपदानं—शौर्यं येषां ते तथा। पृथिव्यम्बुचरा इति। आसमुद्रपृथिवीचराः, समुद्रमध्यद्वीपचराश्चेत्यर्थः। कोट्योघाश्च इति पाठः। इदं च बाहुल्योपलक्षणम् ॥ ४-५ ॥

निदेशवर्तिनः सर्वे सर्वे गुरुहिते रताः।
अभिप्रेतमनुष्ठातुं तव शक्ष्यन्त्यरिन्दम! ॥ ६ ॥

गुरुहिते—स्वामिहिते। तवाभिप्रेतमित्यन्वयः ॥ ६ ॥

त इमे बहुसाहस्रैः [3]अनीकैर्भीमविक्रमैः।
यन्मन्यसे, नरव्याघ्र! प्राप्तकालं तदुच्यताम् ॥
त्वत्सैन्यं त्वद्वशे युक्तं आज्ञापयितुमर्हसि ॥ ७ ॥

यत् प्राप्तकालं—कालोचितं मन्यसे तदुच्यताम्। नियोगः एषां कर्तव्यः इत्यर्थः। कथं त्वद्बलं मन्नियोज्यमित्यत्राह—त्वत्सैन्यमित्यादि ॥ ७ ॥

काममेषामिदं कार्यं विदितं *[4]मम तत्त्वतः।
तथापि तु [5]यथातत्त्वं आज्ञापयितुमर्हसि ॥ ८ ॥

इदं कार्यमिति। सीतान्वेषणादिकार्यमित्यर्थः। यथातत्त्वं—यथोचितम् ॥ ८ ॥

इति ब्रुवाणं सुग्रीवं रामो [6]दशरथात्मजः।
बाहुभ्यां संपरिष्वज्य इदं वचनमब्रवीत् ॥ ९ ॥

---

* विदितं, सीतान्वेषणार्थमेवानीतत्वात् ॥

[1] पृथिव्यम्बरचराः—ङ. [2] कोट्यग्रशश्च—ङ. [3] अनेकैर्बहु—ञ. [4] वीर—ङ. [5] यथायुक्तं—ञ. [6] बुद्धिमतांवरः—ङ.



ज्ञायतां [1]मम वैदेही यदि जीवति वा न वा।
स च देशः, [2]महाप्राज्ञ! यस्मिन् वसति रावणः ॥१०॥
अधिगम्य तु वैदेहीं निलयं रावणस्य च।
प्राप्तकालं विधास्यामि तस्मिन् काले सह त्वया ॥ ११ ॥

तस्मिन् काल इति। वृत्तान्तावगत्यनन्तरकाल इत्यर्थः ॥११॥

* नाहमस्मिन् प्रभुः कार्ये, वानरेश! न लक्ष्मणः।
[3]त्वमस्य हेतुः कार्यस्य प्रभुश्च, प्लवगेश्वर! ॥ १२ ॥

अस्य कार्यस्येति। सिद्धेरिति शेषः ॥ १२ ॥

त्वमेवाज्ञापय, विभो! मम कार्यविनिश्चयम्।
त्वं हि जानासि [4]यत् कार्यं मम, वीर! न संशयः ॥१३॥
† सुहृद्द्वितीयो विक्रान्तः [5]प्राज्ञः कालविशेषवित्।
भवानस्मद्धिते युक्तः [6]सुकृतार्थोऽर्थवित्तमः ॥ १४ ॥
एवमुक्तस्तु सुग्रीवः विनतं नाम यूथपम्।
अब्रवीद्रामसांनिध्ये लक्ष्मणस्य च धीमतः ॥ १५ ॥
शैलाभं मेघनिर्घोषं [7]ऊर्जितं [8]प्लवगेश्वरः।
[9]सोमसूर्यात्मजैः सार्धं वानरैः, वानरोत्तम! ॥ १६ ॥
देशकालनयैर्युक्तः [10]कार्याकार्यविनिश्चये।
वृतः शतसहस्रेण वानराणां तरस्विनाम् ॥ १७ ॥

---

* अस्मिन्—सीतान्वेषणरूपे कार्ये अहं न प्रभुः, न समर्थः, रावणगत्यागत्यादीनां तवैव ज्ञातत्वात् ॥ त्वत्सैन्यनियोजने नाहं प्रभुरिति वा ॥ † द्वितीयः सुहृद्, लक्ष्मणापेक्षया—ति. 'सुहृद्विनीतः' इति च पाठः—गो.

[1] सौम्य—ञ. [2] महावीर—ङ. [3] त्वमेव—ङ. [4] मे कार्यं—ङ. [5] प्राप्तकाल—ङ [6] सुहृदासो—ङ. [7] जीमूतं—ङ. [8] प्लवगेश्वरम्—ञ. [9] सोमसूर्यनिभैः—ञ. [10] विद्यः कार्य—च. ञ.

अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् ।
तत्र सीतां च वैदेहीं निलयं रावणस्य च ॥ १८ ॥
मार्गध्वं [1] गिरिशृङ्गेषु वनेषु च नदीषु च ॥ १९ ॥

सोमसूर्यात्मजैरिति । सोमसूर्यमण्डलवर्तिनौ अष्टकोटिनिविष्टौ देवौ सोमसूर्यौ । मण्डलाधिपतेः भास्करस्य पुत्रः सुग्रीव एव । कार्याकार्यविनिश्चये तदपेक्षितैः देशकालनयैः युक्तः । नयः—नीतिः सामादिरूपिणी । मार्गध्वमिति सामान्यतो नियोगः ॥१६–१९॥

*नदीं भागीरथीं रम्यां सरयूं कौशिकीं तथा ।
कालिन्दीं यमुनां रम्यां यामुनं च महागिरिम् ॥ २० ॥
सरस्वतीं च सिन्धुं च शोणं मणिनिभोदकम् ।
महीं कालमहीं चैव शैलकाननशोभिताम् ॥ २१ ॥

कालिन्दीं यमुनामिति । कलिन्दपर्वतसम्भूतत्वरूपविशेषणवतीम् । यामुनं च महागिरिमिति । यमुनोत्पत्तिभूमिभूतं कालिन्दीगिरिमित्यर्थः । महीकालमह्यौ नद्यौ ॥ २०–२१ ॥

ब्रह्ममालान् विदेहांश्च मालवान् काशिकोसलान् ।
मागधांश्च महाग्रामान् [2] पुण्ड्रान् वङ्गांस्तथैव च ॥
[3] पत्तनं † कोशकाराणां भूमिं च रजताकराम् ॥ २२ ॥

---

* हेमाचलविन्ध्यमध्यदेशवर्त्यार्यावर्तापेक्षया प्राच्यादिविभागो विवक्षितः, न तु मेर्वपेक्षया, स्वावस्थितमाल्यवदपेक्षया वा—ती. शरावती नाम काचिन्नदी हिमवद्विन्ध्यदेशे वलयाकारेण प्रवहति । तदपेक्षया प्राची दिगिदानीं विचेतव्यत्वेनोच्यते, न किष्किन्धापेक्षया, नापिमेर्वपेक्षया—गो. † कोशकाराणां—राजविशेषाणां—गो. स्वर्णकाराणां—ती.

[1] गिरिदुर्गेषु—ज. [2] पुण्ड्रांस्त्वङ्गां—च. ज. [3] भूमिं च—ज.



अथ प्राच्यदेशानुक्रमः ब्रह्ममालानित्यादि । सर्वत्रात्र हिमवद्विन्ध्यमध्यवर्तिमध्यदेशपूर्वापरविभागापेक्षया, 'प्राचां ग्रामनगराणां' इति शास्त्रीयप्राच्यविभागापेक्षया वा मन्तव्यं प्राच्यत्वम् । कोशकाराणां भूमिमिति । कौशेयोपादानतन्तु(त्वग्यादि)त्पादकमहालताकारभूमिमित्यर्थः । रजताकरामिति । रजतखनिमित्यर्थः ॥ २२ ॥

सर्वमेतद्विचेतव्यं मार्गयद्भिस्ततस्ततः ।
रामस्य दयितां भार्यां सीतां दशरथस्नुषाम् ॥ २३ ॥
समुद्रमवगाढांश्च पर्वतान् पत्तनानि च ।
मन्दरस्य च ये कोटिं संश्रिताः [1] केचिदायताम् ॥ २४ ॥

समुद्रमवगाढान्—समुद्रान्तर्गतान् । आयतां कोटिमित्यन्वयः । द्वीपवर्तिप्रजादर्शनेन तद्देशो विचेयो लक्ष्यते ॥ २४ ॥

*कर्णप्रावरणाश्चैव तथाचाप्योष्ठकर्णकाः ।
घोरा लोहमुखाश्चैव [2] जवनाश्चैकपादकाः ॥ २५ ॥
अक्षया बलवन्तश्च [3] पुरुषाः पुरुषादकाः ।
[4] किरातास्तीक्ष्णचूडाश्च [5] हेमाङ्गाः प्रियदर्शनाः ॥ २६ ॥
आममीनाशनास्तत्र † किराता द्वीपवासिनः ।
अन्तर्जलचरा घोराः नरव्याघ्रा इति श्रुताः ॥ २७ ॥
एतेषामालयास्सर्वे विचेयाः, [6] काननौकसः ! ॥ २८ ॥

---

* कर्णप्रावरणाः—आच्छादितकर्णाः, निष्कर्णा इत्यर्थः—गो. † किराताः—अश्वतनवः—ती.

[1] केचिदाश्रयाः. [2] यवना—ङ. [3] तथैव—ज. [4] किराताः कर्णचूडाश्च—ङ. [5] हेमाभाः—ज. [6] कामरूपिणः—ङ.

कर्णप्रावरणाः—प्रावरणं वस्त्रं, तद्वत् विशालपुटाः। ओष्ठपर्यन्तः कर्णः येषां ते ओष्ठकर्णकाः। लोहमुखाः—लोहवत् कृष्णकठिनमुखाः। एक एव पादः येषां ते एकपादाः। एवमपि जवनाः—वेगगतियुक्ताः। अक्षयाः—अक्षयसन्तानाः। सर्वे एतदुक्ताः पुरुषाः पुरुषादकाः राक्षसभेदाः। तीक्ष्णाः चूडाः—केशपाशाः येषां ते तथा। तैक्ष्ण्यं च सूचीवत्। आममीनाशनाः—आर्द्रमत्स्यभुजः। त एत एव नरव्याघ्राः—नरा एव सन्तः अधः प्रदेशे ऊर्ध्वप्रदेशे च व्याघ्राः। अत एव घोराः। काननौकसः इति सम्बुद्धिः ॥ २५-२८ ॥

*गिरिभिर्ये च गम्यन्ते [1]प्लवनेन प्लवेन च।
[2]रत्नवन्तं यवद्वीपं सप्तराज्योपशोभितम् ॥ २९ ॥
[3]सुवर्णरूप्यकं चैव [4]सुवर्णाकरमण्डितम्।
यवद्वीपमतिक्रम्य शिशिरो नाम पर्वतः ॥ ३० ॥
दिवं स्पृशति शृङ्गेण देवदानवसेवितः।
एतेषां गिरिदुर्गेषु [5]प्रपातेषु वनेषु च ॥
मार्गध्वं सहिताः सर्वे रामपत्नीं यशस्विनीम् ॥ ३१ ॥

गिरिभिः ये द्वीपाः गम्यन्ते—गिरेर्गिरिमाक्रम्येत्यर्थः। ये च द्वीपाः प्लवनेन—केवलं प्लवनेन गम्यन्ते। ये च प्लवेन—उडुपभेदेन गम्यन्ते। ततः परं यवद्वन्तो भूत्वा सप्तराज्योपशोभितं द्वीपं तथा सुवर्णद्वीपं रूप्यकद्वीपं च, ततः परं यवाख्यो द्वीपः, तमतिक्रम्य शिशिरो नाम पर्वतोऽस्ति। एतेषां—उक्तद्वीपानामित्यर्थः ॥ ३१ ॥

* एवं जम्बूद्वीपान्वेषणं विधाय द्वीपान्तरान्वेषणं विधत्ते—गिरिभिरित्यादि—गो.

[1] कङ्कनेन—ज. [2] यत्नवन्तो—ङ. [3] सुवर्णकुडयकं चैव—ङ., सुवर्णरूप्यकद्वीपं—ज. [4] सुवर्णाकर—ज. [5] प्रभूतेषु—ङ.



*ततो रक्तजलं शोणं अगाधं शीघ्रगामिनम्।
गत्वा [1]पारं समुद्रस्य सिद्धचारणसेवितम् ॥ ३२ ॥
तस्य तीर्थेषु रम्येषु विचित्रेषु वनेषु च।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३३ ॥

ततो रक्तजलमित्यादि। ततः समुद्रस्य पारं गत्वा तत्र रक्तजलं रक्तवर्णजलं अत एव शोणाख्यं अगाधं शीघ्रवाहिनं नदं प्राप्य तस्य तीर्थेषु—अवतारभेदेषु ॥ ३२-३३ ॥

पर्वतप्रभवा नद्यः [2]सुरम्या बहुनिष्कुटाः।
मार्गितव्या दरीमन्तः पर्वताश्च वनानि च ॥ ३४ ॥

बहुनिष्कुटाः—बहूपवनप्रदेशाः। दरीमन्तः—दरीयुक्ताः ॥

† ततः समुद्रद्वीपांश्च सुभीमान् द्रष्टुमर्हथ।
ऊर्मिमन्तं [3]समुद्रं च क्रोशन्तमनिलोद्धतम् ॥ ३५ ॥

ततः समुद्रेति। उक्तप्रदेशात्परतोवर्तिसमुद्रान्तर इति यावत्। स च इक्षुसमुद्रः। ऊर्मिमन्तं—ऊर्मियुक्तम्। अत एव क्रोशन्तं—महाघोषम् ॥ ३५ ॥

तत्रासुरा महाकायाः छायां गृह्णन्ति नित्यशः।
ब्रह्मणा समनुज्ञाताः दीर्घकालं बुभुक्षिताः ॥ ३६ ॥

तत्र—इक्षुसमुद्रे। समनुज्ञाताः—समनुज्ञातछायाग्रहणशक्त्यादिमन्तः, छायाग्रहणप्राणिभक्षणानुमतिकाश्चेत्यर्थः ॥ ३६ ॥

* एवं जम्बूद्वीपं लवणसमुद्रं चोक्त्वा प्लक्षद्वीपप्रदेशानाह—तत इत्यादिना—गो.
† अथेक्षुसमुद्रद्वीपानाह—तत इति—गो.

[1] समुद्रपारस्थम्—ङ. [2] सुभीमबहु—ज. [3] महारौद्रं—ज.

तं कालमेघप्रतिमं महोरगनिषेवितम् ।
*[1]अभिगम्य महानादं तीर्थेनैव महोदधिम् ॥ ३७ ॥
ततो रक्तजलं भीमं लोहितं नाम सागरम् ।
[2]गता द्रक्ष्यथ तां चैव बृहतीं कूटशाल्मलीम् ॥ ३८ ॥

इक्षुरसस्यापि श्यामत्वात् तत्समुद्रस्य कालमेघप्रतिनिभत्वम् । तीर्थेनैव—छायाग्राहकासुरपरिहारोपायेन तामसरात्रिगमनेनेत्यर्थः । 'तीर्थं पात्रोपायावतारेषु' इति निघण्टुन्तरम् । ततः—इक्षुसागरात्परतः । रक्तं—रक्तवर्णस्वरूपं जलं यस्मिन् स तथा । अत एव लोहितम् । कूटशाल्मली — शाल्मलीद्वीपत्वप्रयोजकः दिव्यसिद्धिदो वृक्षः, जम्बूद्वीपे जम्बूवत् ॥ ३७–३८ ॥

गृहं च वैनतेयस्य नानारत्नविभूषितम् ।
†तत्र कैलाससङ्काशं विहितं विश्वकर्मणा ॥ ३९ ॥

तत्र—कूटशाल्मलीसमीपे ॥ ३९ ॥

[तत्र शैलनिभा भीमाः मन्देहा नाम राक्षसाः ।
[3]शैलशृङ्गेषु लम्बन्ते नानारूपा भयावहाः ॥
ते पतन्ति जले नित्यं सूर्यस्योदयनं प्रति ।
निहता ब्रह्मतेजोभिः अहन्यहनि राक्षसाः ॥
अभितप्ताश्च सूर्येण लम्बन्ते स्म पुनः पुनः ॥]

शैलशृङ्गेषु—सुरासमुद्रान्तर्वर्तिशैलशृङ्गेषु । लम्बन्ते—लम्बपक्षिवत् अधोमुखाः लम्बन्ते । ते पतन्तीत्यादि । सूर्योदयं प्रति प्राप्य

* तीर्थेन—उपायेन— छायाग्राहिपरिहारेण । यद्वा, तीर्थेन–अवतरणेन गन्तव्यम्, नान्येन, तेन छायाग्राहिपरिहारो भविष्यतीति भावः–गो. † तत्र—शाल्मलिद्वीपे–गो.

[1] अतिक्रम्य–ङ. [2] गत्वा–ञ. [3] तेषु शृङ्गेषु–ङ.



ऊर्ध्वमुखाः सूर्येण सह युध्यमानाः सूर्येणाभितप्ताः तन्मण्डलमध्यवर्तिब्रह्मतेजोभिः तद्विद्यास्त्रतेजोभिः अहन्यहनि त्रैवर्णिकप्रवर्तितैः नित्यं हतास्सन्तः व्यसवः समुद्रजले पतन्ति । पतितास्ते राक्षसाः पुनः पुनश्चोज्जीविताः सर्वां रात्रिं लम्बन्ते स्मेति योजनार्थः । इदं 'शैलशृङ्गेषु लम्बन्ते' इत्यादि श्लोकद्वयं प्रक्षिप्तमेव। एतत्प्रक्षेपकश्च—'रक्षांसि ह वा पुरोनुवाके' इत्यनुवाकवर्तिनः 'तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति' इति वाक्यस्य 'मन्देहाख्यान् राक्षसान् अरुणाख्ये द्वीपे प्रक्षिपन्ती'त्यर्थं मन्यमानः कश्चित् । नात्रारुणद्वीपप्रसङ्गः । अर्थतत्त्वं च वाक्यस्य श्रुतिसंविज्ञानभाष्ये अस्मदीये द्रष्टव्यम् । प्राचीनकोशेषु च न दृश्यते । तदव्याख्येयं कुण्डलनीयमेवेदं* श्लोकद्वयम् ॥ ३९ ॥

ततः पाण्डर[1]मेघाभं क्षीरोदं नाम सागरम् ।
[2]गता द्रक्ष्यथ दुर्धर्षाः मुक्ताहारमिवोर्मिभिः ॥ ४० ॥

ततः पाण्डरमेघाभमित्यादि । †अत्र सुराक्षीरसमुद्रमध्यवर्तिसर्पिर्दधिसमुद्रद्वीपाविचयनं तत्र प्रायो गिरिदुर्गादिगुप्तस्थलाभावात् तात्पर्यतो नोक्तम् । मार्गवशात् स्वयमेव तद्दर्शनं अवर्ज्यं प्राप्तम् । मुक्ताहारमिति मत्वर्थीयाजन्तः । मुक्ताहारवन्तमिवेत्यर्थः ॥ ४० ॥

* सार्धश्लोकद्वयमिति युक्तम् ॥ † अत्र मधुसमुद्रानन्तरं सर्पिर्दधिसमुद्रयोः, कुशक्रौञ्चद्वीपयोश्च वक्तव्यत्वेऽपि तान् विहाय क्षीरोदप्राप्त्यभिधानं तदुभयप्राप्तिमन्तरेण क्षीरोदप्राप्तेरसंभवात् । अतः अनुक्तावपि तावुक्तावेव समुद्रौ द्वीपौ चेति बोध्यम् । यद्वा लवणसमुद्रं तन्मध्यद्वीपांश्चोक्त्वा प्लक्षद्वीपशाल्मलिद्वीपक्रौञ्चद्वीपान् इक्षुसुरासर्पिर्दधिसमुद्रांश्च तन्त्रेण दर्शयति—ततः समुद्रद्वीपांश्च सुभीमान् द्रष्टुमर्हथ (श्लो. ३५) इति–गो.

[1] संघातं–ङ. [2] गत्वा–ञ.

तस्य मध्ये महान् श्वेत ऋषभो नाम पर्वतः ।
दिव्यगन्धैः कुसुमितैः राजतैश्च नगैर्वृतः ॥ ४१ ॥
सरश्च राजतैः पद्मैः ज्वलितैर्हेमकेसरैः ।
नाम्ना सुदर्शनं नाम राजहंसैः समाकुलम् ॥ ४२ ॥

सरश्च नाम्ना सुदर्शनमित्यन्वयः । नामशब्दः प्रसिद्धौ ॥ ४२ ॥

विबुधाश्चारणा यक्षाः किन्नराः साप्सरोगणाः ।
हृष्टाः समभिगच्छन्ति नलिनीं तां रिरंसवः ॥ ४३ ॥

नलिनीम्—प्रागुक्तसुदर्शनं सर इत्यर्थः ॥ ४३ ॥

क्षीरोदं समतिक्रम्य ततो द्रक्ष्यथ, वानराः !
जलोदं सागरश्रेष्ठं सर्वभूतभयावहम् ॥ ४४ ॥

जलोदं—शुद्धजलरूपमुदकं यस्मिन् स तथा ॥ ४४ ॥

तत्र तत् कोपजं तेजः कृतं हयमुखं महत् ।
[1] अस्याहुतं महावेगं ओदनं सचराचरम् ॥ ४५ ॥

तत्र—जलसमुद्रे । तत्—प्रसिद्धं । कोपजं—और्वब्रह्मर्षिकोपजं हयमुखं—बडबामुखं तेजः अस्ति । अस्याहुतं महावेगं प्रति, सचराचरं सर्वं जगत् युगान्ते ओदनं वदन्ति ॥ ४५ ॥

तत्र विक्रोशतां नादः भूतानां सागरौकसाम् ।
श्रूयते [2] च समर्थानां दृष्ट्वा तद्बडबामुखम् ॥ ४६ ॥

तत्र पतनभीत्या विक्रोशतां समर्थानां-प्रबलानामपि सागरौकसां भूतानां नादः श्रूयते ॥ ४६ ॥

---

[1] अस्याहुतस्तन्महा, अत्यद्भुतं महा-ङ. [2] चासमर्थानां—च. ञ.



[1] स्वादूदस्योत्तरे तीरे योजनानि त्रयोदश ।
जातरूपशिलो नाम [2] महान् कनकपर्वतः ॥ ४७ ॥

स्वादूदस्य—शुद्धोदकसमुद्रस्य । उत्तरे तीरे इति पाठः । युष्माभिः प्राप्तशुद्धोदपूर्वदिक्तीरापेक्षया उत्तरतीरप्रदेश इत्यर्थः ॥४७॥

तत्र चन्द्रप्रतीकाशं पन्नगं धरणीधरम् ।
पद्मपत्रविशालाक्षं ततो द्रक्ष्यथ, वानराः ! ॥ ४८ ॥

चन्द्रप्रतीकाशं—श्वेतवर्णमिति यावत् ॥ ४८ ॥

*आसीनं पर्वतस्याग्रे [3] सर्वभूतनमस्कृतम् ।
सहस्रशिरसं देवं अनन्तं नीलवाससम् ॥ ४९ ॥
त्रिशिराः काञ्चनः केतुः तालस्तस्य महात्मनः ।
स्थापितः पर्वतस्याग्रे विराजति सवेदिकः ॥
†पूर्वस्यां दिशि निर्माणं कृतं तत्त्रिदशेश्वरैः ॥ ५० ॥

त्रिशिराः—शिरःप्रदेशवर्तित्रिस्कन्धवानित्यर्थः । सवेदिकः इति । आधारवेदिबन्धसहित इत्यर्थः । अयमेव तालः पूर्वस्यां दिशि पूर्वदिग्व्यवस्थायां त्रिदशेश्वरैः प्रमाणं, अभिज्ञाशङ्कुवत् कृतमित्यर्थः ॥५०॥

ततः परं हेममयः श्रीमानुदयपर्वतः ।
तस्य कोटिर्दिवं स्पृष्ट्वा शतयोजनमायता ॥ ५१ ॥
जातरूपमयी दिव्या विराजति सवेदिका ।
सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ॥ ५२ ॥

---

* आसीनमित्यादि पूर्वश्लोकेनान्वेति । † पूर्वदिगवधित्वेन तालरूपः केतुः कल्पित इत्यर्थः—गो.

[1] जलदस्योत्तरे देशे—ङ. [2] सुमहान् कनकप्रभः—ञ. [3] सर्वदेव—च. ञ.

जातरूपमयैर्दिव्यैः शोभते सूर्यसंनिभैः ॥ ५३ ॥

कोटिः—शिखरम् । सवेदिका—सपातनिकपर्वता ॥ ५१-५३ ॥

तत्र योजनविस्तारं उच्छ्रितं दशयोजनम् ।
शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम् ॥ ५४ ॥

तत्र दशयोजनदीर्घोदयगिरिशिखरे सौमनसं नाम उच्यमानं शृङ्गमस्ति ॥ ५४ ॥

*तत्र पूर्वं पदं कृत्वा पुरा विष्णुस्त्रिविक्रमे ।
द्वितीयं शिखरे मेरोः चकार पुरुषोत्तमः ॥ ५५ ॥

तत्र—सौमनसे प्रथमं पादं पूर्वं कृत्वा द्वितीयं पादं मेरोः शिखरे चकार ॥ ५५ ॥

†उत्तरेण परिक्रम्य जम्बूद्वीपं दिवाकरः ।
दृश्यो भवति भूयिष्ठं शिखरं तन्महोच्छ्रयम् ॥ ५६ ॥

सौमनसशिखरमुत्तरेण जम्बूद्वीपमतिक्रम्य प्राप्य तत्र स्थितानां दिवाकरः दृश्यो भवति ॥ ५६ ॥

---

* विष्णुः त्रिविक्रमे—त्रिविक्रमप्रस्तावे तत्र—सौमनशृङ्गे पूर्वं पदं कृत्वा द्वितीयं पदं मेरोः पश्चिमदिगवधिभूतस्य सावर्णिमेरोः शिखरे चकार । पूर्वपश्चिमदिगवधिभूतयोः उदयाचलसावर्णिमेर्वोः विष्णोः पदविन्यासः बलेः कृत्स्नराज्यग्रहणार्थः । भूमध्यस्थमेरौ पदविन्यासे कृत्स्नाक्रमणं न लभ्येत । वस्तुतस्तु मेरोरेव शिखरे द्वितीयं पदं न्यस्तम् । मेरुशिखरस्य स्वर्गत्वात् । भूमावेकं स्वर्गे द्वितीयं तृतीयं ब्रह्मलोक इति पौराणिकी गाथा—गो. † अस्तानन्तरं उत्तरेण जम्बूद्वीपं परिक्रम्य तन्महोच्छ्रयं शिखरं सौमनसाख्यं प्राप्य स्थितो दिवाकरः जम्बूद्वीपवर्तिनां भूयिष्ठं दृश्यो भवति, सौमनसे शिखर इत्यर्थः । इदं सत्ययुगाभिप्रायम् । त्रेतायां क्षीरसागरमध्यगस्य, द्वापरे सुरोदमध्यगस्य कलौ लङ्कामध्यगस्य जम्बूद्वीपस्य मनुष्यदृश्यताया अन्यत्रोक्तत्वात्—ति.



तत्र वैखानसा नाम वालखिल्या महर्षयः ।
प्रकाशमाना दृश्यन्ते सूर्यवर्णास्तपस्विनः ॥ ५७ ॥

तत्र—सौमनसशिखर इत्यर्थः ॥ ५७ ॥

*अयं सुदर्शनो द्वीपः पुरो यस्य प्रकाशते ।
तस्मिंस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि ॥ ५८ ॥
शैलस्य तस्य[1] शृङ्गेषु कन्दरेषु वनेषु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ५९ ॥

यस्य पुरः—पुरस्तात् सन्निधौ अयं सुदर्शनो द्वीपः—प्रागुक्त सुदर्शनसंज्ञितो द्वीपः प्रकाशते, तस्मिन् सौमनसशिखरे भगवत्युदिते प्राणिनां तेजः—तेजस्सम्बन्धः भवति, चक्षुश्च प्रकाशते; तस्य शैलस्य कन्दरेष्वित्यादि ॥ ५८-५९ ॥

काञ्चनस्य च शैलस्य सूर्यस्य च महात्मनः ।
आविष्टा तेजसा सन्ध्या पूर्वा रक्ता प्रकाशते ॥ ६० ॥

काञ्चनस्य शैलस्य सूर्यस्य च तेजसा पूर्वा सन्ध्या आविष्टा—समाक्रान्ता सती रक्ता प्रकाशमाना सन्ध्या पूर्वा दिगित्येव सैव पूर्वा दिक् निरुच्यते ॥ ६० ॥

†पूर्वमेतत्कृतं द्वारं पृथिव्या भुवनस्य च ।
ये च नोक्ता मया देशाः विचेया तेषु जानकी ॥ ६१ ॥

---

* यस्य तेजसः पुरः—सन्निधौ सर्वप्राणभृतामपि चक्षुः प्रकाशते—विषयग्रहणशक्तं भवति, तत् तेजः सूर्यं स्वयं यस्मिन् द्वीपे प्रकाशते—गो. † पूर्वं—प्रथमं पृथिव्याः एतत् द्वारं—ऊर्ध्वस्थानां पृथिवीप्रवेशस्य द्वारं, पृथिवीस्थानां भुवनस्य—ब्रह्मभुवनस्य प्रवेशद्वारं एतदुदयगिरिरूपं—ति.

[1] कुञ्जेषु—ङ. पृष्ठेषु—ञ.

पूर्वमेतदित्यादि। च—यस्मात् भुवनस्य प्रकाशनहेतोः सूर्यस्योदयं चापेक्ष्य यस्मात् पूर्वं प्रथमं पृथिव्या एतद्द्वारं—एतद्दिग्वर्तिमहद्भूविवरणं सृष्टं ब्रह्मणा, तस्मादेषा दिक् पूर्वेत्युच्यते ॥ ६१ ॥

तस्य शैलस्य पृष्ठेषु निर्झरेषु गुहासु च।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६२ ॥

तस्य शैलस्येति। उदयशैलस्येत्यर्थः ॥ ६२ ॥

ततः परमगम्या स्यात् दिक् पूर्वा त्रिदशावृता।
रहिता चन्द्रसूर्याभ्यां अदृश्या [1]तिमिरावृता ॥ ६३ ॥

ततः परमिति। उदयाद्रेः परस्तादित्यर्थः। त्रिदशावृता-इन्द्रादिभिः तद्दिगधिष्ठातृभिः त्रिदशैः आवृता—अधिष्ठिता। तस्याः परमगम्यत्वे हेतुमाह—रहितेत्यादि ॥ ६३ ॥

शैलेषु तेषु सर्वेषु कन्दरेषु [2]वनेषु च।
ये च नोक्ता मया देशाः विचेया तेषु जानकी ॥ ६४ ॥

उक्तार्थोपसंहारः— शैलेष्वित्यादि ॥ ६४ ॥

एतावद्वानरैः शक्यं गन्तुं, वानरपुङ्गवाः!
अभास्करममर्यादं* न जानीमस्ततःपरम् ॥ ६५ ॥
अधिगम्य तु वैदेहीं निलयं रावणस्य च।
मासे पूर्णे निवर्तध्वं उदयं प्राप्य पर्वतम् ॥ ६६ ॥
ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम।
सिद्धार्थाः सं निवर्तध्वं अधिगम्य च मैथिलीम् ॥ ६७ ॥

सिद्धार्थाः-कृतान्वेषणकृत्याः। समधिगम्य निवर्तध्वमित्यन्वयः ॥

---

* अमर्याद—ग्रामनगरादिमर्यादारहितं, केवलान्धकारभूतमित्यर्थः-गो अभास्करत्वादेव दुरवगमत्वात् अमर्यादमिति वा ॥

[1] तमसा-ङ. [2] नदीषु च-ङ.



महेन्द्रकान्तां वनषण्डमण्डितां
दिशं चरित्वा निपुणेन, वानराः!
अवाप्य सीतां रघुवंशजप्रियां
ततो निवृत्ताः सुखिनो भविष्यथ ॥ ६८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे चत्वारिंशः सर्गः

---

अद्वत्त(६८ १/२)मानः सर्गः ॥ ६८ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे चत्वारिंशः सर्गः

---

## एकचत्वारिंशः सर्गः

[दक्षिणदिक्प्रेषणम्]

ततः प्रस्थाप्य सुग्रीवः तन्महद्वानरं बलम्।
दक्षिणां प्रेषयामास वानरानभिलक्षितान् ॥ १ ॥

अथ दक्षिणदिगन्वेषणप्रेरणम्। ततः प्रस्थाप्येत्यादि। *अभिलक्षितान्—प्रख्यातान् ॥ १ ॥

नीलमग्निसुतं चैव हनुमन्तं च वानरम्।
पितामहसुतं चैव जाम्बवन्तं महाबलम् ॥ २ ॥
सुहोत्रं च शरारिं च शरगुल्मं तथैव च।
गजं गवाक्षं गवयं सुषेणमृषभं तथा ॥ ३ ॥

---

* अभिलक्षितान्—कार्यसमर्थत्वेन निर्णीतान्—ति. दक्षिणदिगभिमुखतया रावणगमनस्य पूर्वं दृष्टत्वात् तद्दिशि समर्थानां प्रेषणम् ॥

[1] सुरेन्द्र-ङ.

मैन्दं च द्विविदं चैव [1]विजयं गन्धमादनम् ।
उल्कामुख[2]मसङ्गं च हुताशनसुतावुभौ ॥ ४ ॥

*अग्निहुताशनयोः सर्वतेजोऽधिष्ठातृदेवतात्वेन हुताशनत्वविशिष्टतदवान्तरविशेषणतश्च भेदः । हुताशनसुताविति पाङ्क्तः ॥ ४ ॥

अङ्गदप्रमुखान् वीरान् वीरः कपिगणेश्वरः ।
वेगविक्रमसम्पन्नान् सन्दिदेश विशेषवित् ॥ ५ ॥

विशेषविदिति । विशिष्यान्वेष्टव्यदेशविशेषविदित्यर्थः ॥ ५ ॥

तेषामसङ्गहं चैव [3]महद्बल†मसङ्गगम् ।
विधाय हरिवीराणां आदिशत् दक्षिणां दिशम् ॥ ६ ॥

असङ्गहमिति । असङ्कोचमिति यावत् । दक्षिणां दिशमादिशदिति । अन्वेष्टव्यत्वेनेति शेषः ॥ ६ ॥

ये केचन समुद्देशाः तस्यां दिशि [4]सुदुर्गमाः ।
कपीशः कपिमुख्यानां स तेषां [5]तानुवाच ह ॥ ७ ॥

तस्यां दिशि ये सुदुर्गमाः तानुवाच इत्यन्वयः ॥ ७ ॥

सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम् ।
नर्मदां च नदीं [6]दुर्गां महोरगनिषेविताम् ॥ ८ ॥

अत्राप्यार्यावर्तापेक्षया दक्षिणत्वं परिगृह्य नियोगः—सहस्रशिरसमित्यादि ॥ ८ ॥

---

*'नीलमग्निसुतं' 'हुताशनसुतौ' इत्यनयोर्विरोधपरिहारार्थं व्याख्या ॥

† असङ्गगं—अविलम्बगामि-गो.

[1] शरभं-ङ. सुषेणं-च. ज. [2] मनङ्गं-ज. [3] महाबलमथाङ्गदम्-ङ.

[4] सुदारुणाः-ङ. [5] तानुदाहरत्-ङ. [6] रम्यां-ज.



ततो [1]गोदावरीं रम्यां कृष्णवेणीं महानदीम् ।
[2]वरदां च [3]महाभागां महोरगनिषेविताम् ॥ ९ ॥

ततो गोदावरीमित्यत्र विन्ध्यपूर्वप्रदेशवर्तिगोदावरीनदीमित्यर्थः । उत्तरत्र 'गोदावरीं च' (१२) इत्यत्र तु दण्डकारण्यवर्तिगोदावरीप्रदेशः विवक्षितः * ॥ ९ ॥

मेखलामुत्कलां चैव दशार्णनगराण्यपि ।
[4]अश्ववन्तीमवन्तीं च सर्वमेवानुपश्यत ॥ १० ॥

मेखलादयो देशभेदाः ॥ १० ॥

[5]विदर्भानृषिकांश्चैव रम्यान् माहिषकानपि ।
तथा [6]वत्सकलिङ्गांश्च [7]कौशिकांश्च समन्ततः ॥ ११ ॥

'ऋषिकां' इति पाठः । वत्साश्च कलिङ्गाश्च वत्सकलिङ्गाः । (उभाः इति देशभेदाः ?) ॥ ११ ॥

[8]अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम् ।
नदीं गोदावरीं चैव सर्वमेवानुपश्यत ॥ १२ ॥
तथैवान्ध्रांश्च पुण्ड्रांश्च चोलान् पाण्ड्यान् सकेरलान् ।
अयोमुखश्च गन्तव्यः पर्वतो धातुमण्डितः ॥
विचित्रशिखरः श्रीमान् चित्रपुष्पितकाननः ॥
सचन्दनवनोद्देशः मार्गितव्यो महागिरिः ॥ १३ ॥

अयोमुखः इति मलयस्य नामान्तरम् । सचन्दनवनत्वलिङ्गात् ॥

---

* अथवा उत्तरवाक्यस्यावान्तरोपसंहारवाक्यत्वाद्वा न पुनरुक्तिदोषः ॥

[1] भोगावतीं रम्यां कृष्णां-ङ. [2] इदमर्धं कुण्डलितं-ज. [3] वरारोहां-ङ.

[4] अश्ववन्तीं ब्रवन्तीं च-ङ., आब्रवन्तीं अवन्तीं च-ज. [5] विदर्भानृष्टिकांश्चैव-ङ. ज.

[6] वङ्ग-ङ., मत्स्य-ज. [7] काशिकांश्च-ङ. [8] अन्विष्य-ङ.

ततस्तामापगां दिव्यां प्रसन्न[1]सलिलां शिवाम् ।
तत्र द्रक्ष्यथ कावेरीं [2]विहितामप्सरोगणैः ॥ १४ ॥

तस्यासीनं नगस्याग्रे मलयस्य महौजसम् ।
*द्रक्ष्यथादित्यसङ्काशं अगस्त्यमृषिसत्तमम् ॥ १५ ॥

तस्येति । अयोमुखपर्यायस्येत्यर्थः ॥ १५ ॥

ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना ।
ताम्रपर्णीं [3]ग्राहजुष्टां तरिष्यथ महानदीम् ॥ १६ ॥

ग्राहजुष्टामिति ताम्रपर्णीविशेषणम् ॥ १६ ॥

सा चन्दन[4]वनैर्दिव्यैः [5]प्रच्छन्ना द्वीपशालिनी ।
कान्तेव [6]युवतिः कान्तं समुद्रमवगाहते ॥ १७ ॥
ततो हेममयं दिव्यं मुक्तामणिविभूषितम् ।
†युक्तं कवाटं पाण्ड्यानां गता द्रक्ष्यथ वानराः ॥ १८ ॥

युक्तं–पुरप्राकारघटितम् ॥ १८ ॥

ततः समुद्रमासाद्य सम्प्रधार्योऽर्थनिश्चयः ।
अगस्त्येनान्तरा तत्र सागरे विनिवेशितः ॥ १९ ॥

---

*तत्राप्यगस्त्याश्रमस्य सत्त्वात् तन्नामकऋष्यन्तरकल्पनाद्वा न पञ्चवटीप्रकरण-विरोधः–रा. यद्यपि पञ्चवटीतः उदग्भागे अगस्त्याश्रमः पूर्वमुक्तः, तथाप्यत्रापि बोधः, वाल्मीकेरनेकदेशेष्वाश्रमवत् । समाननामा अन्य एवायमित्यन्ये–ति. ३५ श्लोकोऽपि द्रष्टव्यः ॥ †युक्तं—योग्यं कवाटं, अनेन नगरं लक्ष्यते–गो. युक्तं—पुरद्वारि निविष्टं, पाण्ड्यानां–राजविशेषाणां कवाटं द्रक्ष्यथ–रा. कवाटमिति नगरनाम वा ॥

[1] सलिलाशयाम्–ज. [2] विहृता–ज. [3] महाग्राहां–ङ. [4] वनैश्चित्रैः–ज.
[5] प्रच्छन्नद्वीपवारिणी–ज. [6] युवती–ज.



[1]चित्रनानानगः श्रीमान् [2]महेन्द्रः पर्वतोत्तमः ।
जातरूपमयः श्रीमान् अवगाढो महार्णवम् ॥ २० ॥

अर्थनिश्चयः संप्रधार्यः–समुद्रतरणरूपकार्यस्य शक्ताशक्तनिश्चयः कर्तव्यः । तत्र तरणसाधनभूतः पर्वतः उपदिश्यते–अगस्त्येनेत्यादि । सागरः इत्यणन्तम्, सागरसम्बन्धिन्यन्तरे—अवकाशे अगस्त्येन विनिवेशितः—प्रतिष्ठापितः नगः—वृक्षः, तस्य श्रीः—समृद्धिः, तद्वान् । अत एव श्रीमान्—सौन्दर्यवान् । अवगाढः—प्रविष्टैकपार्श्वः ॥ १९–२० ।

नानाविधैर्नगैः [3]सर्वैः लताभिश्चोपशोभितम् ।
[4]देवर्षियक्षप्रवरैः अप्सरोभिश्च [5]सेवितम् ॥ २१ ॥
सिद्धचारण[6]सङ्घैश्च प्रकीर्णं सुमनोहरम् ।
*तमुपैति सहस्राक्षः सदा पर्वसु पर्वसु ॥ २२ ॥

सहस्राक्षः तमुपैतीत्यनेन महेन्द्राधिष्ठितत्वात् अन्वर्थनामकत्वं महेन्द्रपर्वतस्य ॥ २२ ॥

द्वीपस्यास्यापरे पारे शतयोजनमायतः ।
अगम्यो मानुषैर्दीप्तः तं मार्गध्वं समन्ततः ॥ २३ ॥
तत्र सर्वात्मना सीता मार्गितव्या विशेषतः ॥ २४ ॥

अस्य द्वीपस्येति । महेन्द्रपर्वतद्वीपस्येत्यर्थः । अपरे पारे इति । पारं–परतीरम् । अपरशब्दो भेदवाची । परतीरविशेषे प्रतिष्ठितमिति शेषः । दीप्तः—स्वर्णभूयिष्ठत्वात् दीप्तः–तेजिष्ठः । सर्वात्मना–सर्वप्रकारेण । विशेषतः इति । एकदेशमप्यनुपेक्ष्येत्यर्थः ॥

---

* सहस्राक्षः, तं पर्वतं पर्वसु पर्वसु समुद्रस्नानायागच्छति–गो.

[1] चित्रनानावनः–ङ, चित्रसानुनगः–ज. [2] नगेन्द्रः–ङ. [3] फुल्लैः–च. ज.
[4] गन्धर्वयक्ष–ङ. [5] शोभितम्–ज. [6] गन्धर्वैः–ङ.

*स हि देशस्तु वध्यस्य रावणस्य [1]दुरात्मनः ।
राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः ॥ २५ ॥

दक्षिणस्य समुद्रस्य मध्ये [2]तस्य तु राक्षसी ।
†अङ्गारकेति विख्याता [3]छायामाकृष्य भोजनी ॥ २६ ॥

भोक्तुं शीलमस्याः इति भोजनी ॥ २६ ॥

एवं निस्संशयान् कृत्वा संशयान् नष्टसंशयाः ।
मृगयध्वं नरेन्द्रस्य पत्नीममिततेजसः ॥ २७ ॥

तमतिक्रम्य लक्ष्मीवान् समुद्रे शतयोजने ।
गिरिः पुष्पितको नाम सिद्धचारणसेवितः ॥ २८ ॥

चन्द्रसूर्यांशुसङ्काशः [4]सागराम्बुसमावृतः ।
भ्राजते विपुलैः शृङ्गैः अम्बरं विलिखन्निव ॥ २९ ॥

‡तस्यैकं काञ्चनं शृङ्गं सेवते यं दिवाकरः ।
श्वेतं [5]राजतमेकं च सेवते यं निशाकरः ॥ ३० ॥

संशयान्–संशयितप्रदेशान् निस्संशयान् कृत्वा, सम्यगन्वेषणेनेति शेषः, ततो नष्टसंशया एव — संप्राप्तसत्त्वासत्त्वनिश्चया एव सन्तः तत्रासत्त्वे सति तमतिक्रम्य मृगयध्वम् । क मार्गणीयमित्यतः — लक्ष्मीवानित्यादि । काञ्चनं शृङ्गं यं भगवान् दिवाकरः सेवते तत्र नित्यं कलया संनिहितो भवतीत्यर्थः । तथा अग्रिममपि व्याख्येयम् ॥

*'मार्गितव्या विशेषतः' इत्यत्र हेतुः—स हीत्यादि । ननु तर्हि इतरदिग्भ्यः कपीनां प्रेषणं किमर्थमिति चेत्—दक्षिणदिशि रावणालयश्रवणेऽपि सीताया अन्यत्र कुत्रापि निवेशनादिसंभावनयेति बोध्यम् ॥ † अङ्गारकेति सिंहिकाया एव नामान्तरं स्याद्वा ॥ ‡ शृङ्गशब्दः अर्धर्चादिः–ति. अतः पुल्लिङ्ग इति शेषः । तस्यैकमिति । दक्षिणायन इति शेषः–गो.

[1] महात्मनः–ङ. [2] बसति–ङ. [3] छायामाक्षिप्य–ज. [4] सागरान्तसमाश्रयः–ङ. [5] रजतशृङ्गं च–ङ.



न तं कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः ।
प्रणम्य शिरसा शैलं तं विमार्गत वानराः ॥ ३१ ॥

एवं महादेवताधिष्ठितत्वात्— न तं कृतघ्ना इत्यादि ॥ ३१ ॥

तमतिक्रम्य, [1]दुर्धर्षः ! सूर्यवान् नाम पर्वतः ।
अध्वना दुर्विगाहेन योजनानि चतुर्दश ॥ ३२ ॥

चतुर्दशेति । उपलक्षित इति शेषः ॥ ३२ ॥

ततस्तमप्यतिक्रम्य वैद्युतो नाम पर्वतः ।
सर्वकामफलैर्वृक्षैः सर्वकाल[2]मनोहरैः ॥ ३३ ॥

तत्र भुक्त्वा [3]वराहाणि मूलानि च फलानि च ।
मधूनि पीत्वा [4]मुख्यानि परं गच्छत वानराः ॥ ३४ ॥

तत्र नेत्रमनःकान्तः कुञ्जरो नाम पर्वतः ।
*अगस्त्यभवनं यत्र निर्मितं विश्वकर्मणा ॥ ३५ ॥

तत्र योजनविस्तारं उच्छ्रितं दशयोजनम् ।
शरणं काञ्चनं दिव्यं नानारत्नविभूषितम् ॥ ३६ ॥

तत्र योजनेति । कुञ्जरपर्वत इत्यर्थः । अगस्त्यभवनस्यैव वर्णनं–योजनेत्यादि । शरणं–गृहम् ॥ ३६ ॥

तत्र भोगवती नाम सर्पाणामालयः पुरी ।
विशाल[5]कक्ष्या दुर्धर्षा सर्वतः परिरक्षिता ॥ ३७ ॥

* इदं तृतीयमगस्त्यस्थानम्–ति. १५ श्लोकोऽत्र द्रष्टव्यः ॥

[1] दुर्धर्षः–ङ. [2] मनोरमैः–ङ. [3] महार्हाणि–ङ. [4] जुष्टानि–ज. [5] रथ्या–ज.

रक्षिता पन्नगैर्घोरैः तीक्ष्णदंष्ट्रैर्महाविषैः ।
सर्पराजो [1] महाप्राज्ञः यस्यां वसति वासुकिः ॥
निर्याय मार्गितव्या च सा च भोगवती पुरी ॥ ३८ ॥

तत्रेति । उक्तलक्षणागस्त्यभवनलक्षितदेश इत्यर्थः । भोगवती नाम सर्पाणामालयः पुरी इति नित्यपुल्लिङ्गत्वात् । ननु भोगवती पाताले, तथा भूमेरधः शेषो महीं बिभर्तीति प्रसिद्धम् । किमिदमुच्यते इह भूमेरुपरि तदुभयमिति ? उच्यते । मेरुमारभ्य चक्रवालभूसन्निवेशस्य क्रमनिम्नत्वात् उक्तस्थलयोः परमनिम्नत्वात् निम्नभूतलमेव रसातलमित्याशयेन इदं वचनम् । वस्तुतस्तु शेषस्य क्षित्याधारत्वं भोगवत्याश्च अन्धकारवति भूमेरधःप्रदेशे अधोभुवनत्वेनैव युज्यते । एवं च इदं रावणस्य जनस्थानवत् भूमावपि सर्पाणां किञ्चित् पुरं भोगवत्याख्यमस्ति । तथा शेषमूर्तिरपि भूम्युपर्यपि योगवैभवादस्तीति ध्येयम् । अगस्त्यस्य यथा कुञ्जरपर्वते विश्वकर्मनिर्मितभवनेवासवत् नक्षत्रपदवासश्च ॥ ३८ ॥

तत्र चानन्तरा देशाः ये केचन सुसंवृताः ।
तं च देशमतिक्रम्य महानृषभ [2] संस्थितः ॥ ३९ ॥
सर्वरत्नमयः श्रीमान् ऋषभो नाम पर्वतः ॥ ४० ॥

ऋषभसंस्थितः— ऋषभाकारसंस्थानवान् । तत्रेति । ऋषभ पर्वत इत्यर्थः ॥ ३९–४० ॥

* गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् ।
दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम् ॥ ४१ ॥

---

* गोशीर्षकादयश्चन्दनभेदाः–ति.

[1] महाघोरः–च. ज. [2] पर्वतः–ङ., संस्थितिः–ज.



न तु तच्चन्दनं दृष्ट्वा स्प्रष्टव्यं च कदाचन ।
रोहिता नाम गन्धर्वाः [1] घोरा रक्षन्ति तद्वनम् ॥ ४२ ॥

तत् दिव्यं चन्दनं न स्प्रष्टव्यमित्यत्र हेतुः—रोहिता इत्यादि ॥

तत्र गन्धर्वपतयः पञ्च सूर्यसमप्रभाः ।
शैलूषो ग्रामणीः [2] शिग्रुः [3] शुभ्रो बभ्रुस्तथैव च ॥ ४३ ॥
रविसोमाग्निवपुषां निवासः पुण्यकर्मणाम् ।
अन्ते पृथिव्या दुर्धर्षाः [4] तत्र स्वर्गजितः स्थिताः ॥ ४४ ॥

ऋषभपर्वतात्परतः पृथिव्या अन्ते पुण्यकर्मणां निवासः । ततः परतः स्वर्गजित एव स्थिता भवन्ति ॥ ४४ ॥

[5] ततः परं न वः सेव्यः पितृलोकः सुदारुणः ।
राजधानी यमस्यैषा कष्टेन तमसा वृता ॥ ४५ ॥

तत एव हेतोः—ततः पितृलोकः न वस्सेव्यः—अगम्यः ॥

एतावदेव युष्माभिः वीरा वानरपुङ्गवाः !
शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः ॥ ४६ ॥
सर्वमेतत् समालोक्य यच्चान्यदपि दृश्यते ।
गतिं विदित्वा वैदेह्याः संनिवर्तितुमर्हथ ॥ ४७ ॥
* यस्तु मासान्निवृत्तोऽग्रे दृष्टा सीतेति वक्ष्यति ।
मत्तुल्यविभवो भोगैः सुखं स विहरिष्यति ॥ ४८ ॥
ततः [6] प्रियतरो नास्ति मम प्राणाद्विशेषतः ।
† कृतापराधो बहुशः मम बन्धुर्भविष्यति ॥ ४९ ॥

---

* मासात्—मासान्तदिनात् अग्रे—पूर्वं–रा. † कृतापराधः—कृतापराधोऽपि ॥

[1] घोरं–च. ज. [2] शिक्षः–ज. [3] भिक्षुः–ङ., शुकः–ज., शुष्कः–झ. [4] ततः–ज. [5] नातः परं नरैः सेव्यः–ङ. [6] प्रियतमो–ङ.

अमितबलपराक्रमा भवन्तः
विपुलगुणेषु कुलेषु च प्रसूताः ।
मनुजपतिसुतां यथा लभध्वं
[1]तदधिगुणं पुरुषार्थमारभध्वम् ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकचत्वारिंशः सर्गः

---

मनुजपतिसुतां यथा लभध्वं—लप्स्यध्वं इति यावत्, तथा तत्—तत्कार्यमुद्दिश्य अधिगुणं—अधिकगुणोपेतं पुरुषार्थं—पुरुषप्रयत्नमारभध्वम् । आशा(५०)मानः सर्गः ॥ ५० ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकचत्वारिंशः सर्गः

---

## द्विचत्वारिंशः सर्गः

[प्रतीचीदिक्प्रेषणम्]

अथ प्रस्थाप्य सुग्रीवः तान् हरीन् दक्षिणां दिशम् ।
अब्रवीन्मेघसङ्काशं सुषेणं नाम [2]यूथपम् ॥ १ ॥

अथ पश्चिमदिगन्वेषणप्रेरणम् । अथ प्रस्थाप्येत्यादि ॥ १ ॥

तारायाः पितरं राजा श्वशुरं भीमविक्रमम् ।
अब्रवीत् प्राञ्जलिर्वाक्यं अभिगम्य प्रणम्य च ॥ २ ॥

प्राञ्जलिः प्रणम्याब्रवीदिति । श्वशुरत्वान्नतिः* ॥ २ ॥

---

* अत एव साक्षात्तं प्रति नाज्ञा, 'सुषेणप्रमुखा यूयं' इतीतरान् प्रत्येवाज्ञा ॥

[1] तदनुगुणं—ङ. [2] वानरम्—ज.



[1]मरीचिपुत्रं मारीचं अर्चिष्मन्तं महाकपिम् ।
वृतं कपिवरैः शूरैः महेन्द्रसदृशद्युतिम् ॥ ३ ॥

बुद्धिविक्रमसम्पन्नं वैनतेय[2]समद्युतिम् ।
* [3]मरीचिपुत्रान् मारीचान् [4]अर्चिर्मालान् महाबलान् ॥
ऋषिपुत्रांश्च तान् सर्वान् प्रतीचीमादिशद्दिशम् ।
द्वाभ्यां शतसहस्राभ्यां कपीनां, कपिसत्तमाः!
सुषेणप्रमुखा यूयं वैदेहीं [5]परिमार्गथ ॥ ५ ॥

मरीचिपुत्रं अर्चिष्मदाख्यं मारीचं प्रधानं, तथा अन्यान् अर्चिर्मालाख्यान् तथा अन्यांश्च मरीचिपुत्रान् मारीचान् । मारीचशब्दस्य अर्थान्तरेऽपि व्युत्पत्तिसम्भवात् मारीचानिति । परिमार्गथ—परिमार्गध्वमिति यावत् ॥ ५ ॥

[6]सुराष्ट्रान् सहबाह्लीकान् शूरान् भीमांस्तथैव च ।
स्फीतान् जनपदान् रम्यान् विपुलानि पुराणि च ॥ ६ ॥

शूराश्च भीमाश्च देशविशेषाः । विपुलानि-विशालानि ॥ ६ ॥

पुन्नागगहनं कुक्षिं वकुलोद्दालकाकुलम् ।
तथा केतकषण्डांश्च मार्गध्वं, [7]हरियूथपाः! ॥ ७ ॥

कुक्षिः—देशविशेषः ॥ ७ ॥

प्रत्यक्स्रोतोद्गमाश्चैव नद्यः शीतजलाः शिवाः ।
तापसानामरण्यानि कान्तारा गिरयश्च ये ॥ ८ ॥

---

* 'मारीचं' इति ज्येष्ठ उक्तः, मारीचा इति तदनुजा उच्यन्ते—गो.

[1] महर्षिपुत्रं—ज. झ. [2] समं जवे—ङ. [3] इदमर्धं अधिकं—झ.
[4] अर्चिर्ज्वालान्—ङ. [5] परिमार्गत—झ. [6] सौराष्ट्रान्—ञ. [7] हरिपुङ्गवाः—ञ.

प्रत्यङ्मुखाः स्रोतोद्गमाः यासां तास्तथा। अरण्यानि। स्थलानीति शेषः ॥ ८ ॥

ततः *स्थलीं मरुप्रायां [1]अत्युच्चशिरसः शिलाः।
गिरिजालावृतां दुर्गां [2]मार्गित्वा पश्चिमां दिशम् ॥ ९ ॥

ततः पश्चिममागम्य समुद्रं द्रष्टुमर्हथ।
[3]तिमिनक्रायुतजलं अक्षोभ्यमथ, वानराः! ॥ १० ॥

पश्चिममागम्यैव समुद्रं द्रष्टुमर्हथ—अत एव पश्चिमं गत्वा समुद्रं द्रक्ष्यथ ॥ १० ॥

ततः केतकषण्डेषु तमालगहनेषु च।
कपयो †विहरिष्यन्ति नारिकेलवनेषु च ॥ ११ ॥

कपय इति। युष्मत्सैनिकाः इति शेषः ॥ ११ ॥

[4]तत्र सीतां च मार्गध्वं निलयं रावणस्य च।
[5]वेलातटनिविष्टेषु पर्वतेषु वनेषु च ॥ १२ ॥
[6]मुरचीपत्तनं चैव [7]मृतं चैव [8]जटीपुरम्।
‡अवन्तीं [9]मङ्गलोपां च [10]तथा चालक्षितं वनम् ॥ १३ ॥
राष्ट्राणि च विशालानि पत्तनानि ततस्ततः ॥ १४ ॥

मृतं—मृताख्यं पुरं। अवन्त्यङ्गलोपे पुरे। आलक्षिताख्यं वनम् ॥

* स्थली—अकृत्रिमा भूमिः—रा. † 'मरुप्रायां' इत्युक्तप्रदेशापेक्षयाऽस्य सुखावहत्वसूचनाय 'विहरिष्यन्ति' इति ॥ ‡ पूर्वस्यां दिश्यवन्तीयमन्या—गो.

[1] अत्युग्रशिखराः—ङ. अत्युच्चशिशिराः—ज. [2] मार्गध्वं—ङ. [3] मीननक्रा—ङ. [4] इदमर्धमधिकं—झ. [5] वेकातल—ज. [6] मुरवीपत्तनं—ङ. [7] रम्यं—ङ. [8] नदीपुरम्, जकापुरम्—ङ., जटापुरम्—ज. [9] मङ्गलेपाश्च—ज. [10] तथा चावक्षितं—ङ.



सिन्धुसागरयोश्चैव सङ्गमे तत्र पर्वतः।
महान् [1]हेमगिरिर्नाम शतशृङ्गो महाद्रुमः ॥ १५ ॥

महान्तो द्रुमाः यस्मिन् स तथा ॥ १५ ॥

तस्य प्रस्थेषु रम्येषु सिंहाः [2]पक्षगमाः स्थिताः।
तिमिमत्स्यगजांश्चैव *नीडान्यारोपयन्ति ते ॥ १६ ॥

तस्य रम्येषु प्रस्थेषु ये स्थिताः पक्षगमाख्याः सिंहविशेषाः ते तिम्यादीन् स्वानि नीडान्यारोपयन्ति। अत्र नीडशब्दात् तेषां सिंहानां पक्षगमत्वं अन्वर्थमित्यवधेयम् ॥ १६ ॥

तानि नीडानि सिंहानां गिरिशृङ्गगताश्च ये।
†दृप्तास्तृप्ताश्च मातङ्गाः तोयदस्वननिःस्वनाः ॥
[3]विचरन्ति विशालेऽस्मिन् तोयपूर्णे समन्ततः ॥ १७ ॥

तोयपूर्णे इति। प्रस्थेष्वित्यनुकर्षः ॥ १७ ॥

तस्य शृङ्गं दिवस्पर्शं काञ्चनं चित्रपादपम्।
सर्वमाशु विचेतव्यं कपिभिः कामरूपिभिः ॥ १८ ॥
कोटिं तत्र [4]समुद्रस्य काञ्चनीं शतयोजनाम्।
दुर्दर्शां ‡पारियात्रस्य गता द्रक्ष्यथ, वानराः! ॥ १९ ॥

कोटिं—शृङ्गम्। समुद्रस्येति। मध्य इति शेषः ॥ १९ ॥

* नीडानि आरोपयन्ति—लालनार्थं नीडेषु स्थापयन्तीत्यर्थः—रा. अत एव महाद्रुमा इति पूर्वमुक्तम्—गो. † दृप्ताः—सपक्षसिंहादृतत्वेन प्राप्तगर्वाः—सिंहानां तानि नीडानि—रा. विचरन्ति—सिंहनीडाश्रयसानुषु विचरन्तीत्यर्थः—गो. ‡ पारियात्रः इति कस्यचित् गिरेर्नाम।

[1] सोमगिरि—ज. [2] पक्षमृगाः—ङ. [3] विहरन्ति—ङ. [4] समुद्रे तु—ङ.

कोट्यस्तत्र [1] चतुर्विंशद्गन्धर्वाणां तरस्विनाम् ।
वसन्त्यग्निनिकाशानां [2] घोराणां [3] पापकर्मणाम् ॥ २० ॥

घोराणां, अत एव पापकर्मणां—संहर्तृणामित्यर्थः । कोट्यः—समवेता इत्यनुकर्षः ॥ २० ॥

[4] पावकार्चिःप्रतीकाशाः समवेताः [5] सहस्रशः ।
* [6] नात्यासादयितव्यास्ते वानरैर्भीमविक्रमैः ॥ २१ ॥

नात्यासादयितव्या इति । अन्यदुर्गमाः, अन्यदुष्प्रधर्षा इति यावत् ॥ २१ ॥

नादेयं च फलं तस्मात् देशात् किञ्चित् प्लवङ्गमैः ।
दुरासदा हि ते वीराः सत्त्ववन्तो महाबलाः ॥ २२ ॥
फलमूलानि ते तत्र [7] रक्षन्ते भीमविक्रमाः ।
तत्र यत्नश्च कर्तव्यः मार्गितव्या च जानकी ॥ २३ ॥
न हि तेभ्यो भयं किञ्चित् † कपित्वमनुवर्तताम् ॥ २४ ॥

नादेयं—अग्राह्यम् । तत्र यत्नश्च कर्तव्य इति । मार्गण इति शेषः । ननु पापकारिणः नात्यासादयितव्याः इत्युक्तम् । तत् कथं परिमार्गणं इत्यत्राह—न हि तेभ्य इत्यादि । कपित्वमिति । तद्देशीयमृगपक्षिवत् प्राकृतकपिमृगस्वभावमवलम्बमानानामित्यर्थः ॥ २२-२४ ॥

तत्र वैडूर्यवर्णाभः वज्रसंस्थानसंस्थितः ।
नानाद्रुमलताकीर्णः वज्रो नाम महागिरिः ॥ २५ ॥

---

* नात्यासादयितव्याः—नातिसमीपं प्राप्तव्याः—गो. † कपित्वमनुवर्ततां—प्रौढभावं परित्यज्य मुग्धभावे तिष्ठतां न भयमित्यर्थः ॥

[1] चतुस्त्रिंशत्—ङ. [2] महतां—झ. [3] कामरूपिणाम्—ज. [4] पाकशासनसं—ङ. [5] समन्ततः—ज. [6] नान्यैस्ते दर्शितव्यास्ते—ङ. [7] रक्षन्तो—ङ.



श्रीमान् * समुदितस्तत्र योजनानां शतं समम् ।
गुहास्तत्र विचेतव्याः प्रयत्नेन, प्लवङ्गमाः ! ॥ २६ ॥

वैडूर्यस्येव वर्णः आभा च यस्य स तथा । वज्रवत् अतिकठिनसंस्थानेन संस्थितः तथा । योजनानां शतं समं सम्पूर्णमवष्टभ्य समुदितः-प्रतिष्ठितः ॥ २५-२६ ॥

चतुर्भागे समुद्रस्य चक्रवान्नाम पर्वतः ।
तत्र चक्रं सहस्रारं निर्मितं विश्वकर्मणा ॥ २७ ॥

चतुर्भाग इति । पश्चिमसमुद्रस्य पश्चिमचतुर्थभागप्रदेश इत्यर्थः ॥

† तत्र पञ्चजनं हत्वा हयग्रीवं च दानवम् ।
आजहार ततश्चक्रं शङ्खं च पुरुषोत्तमः ॥ २८ ॥

पञ्चजनं—तदाख्यम् । हयस्येव ग्रीवा यस्य स तथा ॥ २८ ॥

तस्य सानुषु [1] चित्रेषु विशालासु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २९ ॥
[2] योजनानां ततः षष्टिः वराहो नाम पर्वतः ।
सुवर्णशृङ्गः [3] सुश्रीमान् अगाधे वरुणालये ॥ ३० ॥
तत्र प्राग्ज्योतिषं नाम जातरूपमयं पुरम् ।
यस्मिन् वसति दुष्टात्मा नरको नाम दानवः ॥ ३१ ॥

---

* समुदितः—प्रतिष्ठितः—ति. † चक्ररक्षकं हयग्रीवाख्यं दानवं हत्वा चक्रं, पञ्चजनाख्यं दानवं हत्वा तदस्थिभूतं पाञ्चजन्याख्यं शङ्खं च जग्राह । कृष्णः पञ्चजनं हत्वा पाञ्चजन्यं जग्राहेत्युच्यते, तत् विष्ण्ववतारेऽप्यस्तीति ज्ञेयम्—गो.

[1] रम्येषु—च ज. [2] योजनानि चतुष्षष्टिः—ज. [3] सुमहान्—ज.

[1] तत्र सानुषु [2] चित्रेषु [3] विशालासु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३२ ॥
तमतिक्रम्य शैलेन्द्रं * काञ्चनान्तर[4]निर्दरः ।
पर्वतः सर्वसौवर्णः [5] धाराप्रस्रवणायुतः ॥ ३३ ॥

काञ्चनान्तराः—काञ्चनगर्भाः निर्दराः यस्मिन् स तथा, तं प्राप्य स्थिताः सर्वतो गर्जन्तीत्यन्वयः ॥ ३३ ॥

तं गजाश्च वराहाश्च सिंहा व्याघ्राश्च सर्वतः ।
अभिगर्जन्ति सततं † तेन शब्देन दर्पिताः ॥ ३४ ॥

तेन शब्देन मतङ्गजादिशब्देन उपलक्षितः इत्यर्थः । दर्पिताः गजादयः इति योजना । ३४ ॥

यस्मिन् ‡ हरिहयः श्रीमान् महेन्द्रः पाकशासनः ।
अभिषिक्तः सुरै राजा [6] मेघवान् नाम पर्वतः ॥ ३५ ॥
तमतिक्रम्य शैलेन्द्रं महेन्द्रपरिपालितम् ।
षष्टिं गिरिसहस्राणि काञ्चनानि गमिष्यथ ॥ ३६ ॥
तरुणादित्यवर्णानि भ्राजमानानि सर्वतः ।
जातरूपमयैर्वृक्षैः शोभितानि सुपुष्पितैः ॥ ३७ ॥

तमतिक्रम्येति । मेघवत्पर्वतमतिक्रम्येत्यर्थः । षष्टिं गिरिसहस्राणि इति । षष्टिसंख्यानीति यावत् । शतं ब्राह्मणा इति पङ्क्त्यादिनिपातनात् साधु ॥ ३६-३७ ॥

---

* काञ्चनान्तरनिर्दरः:—सौवर्णमयान्तरप्रदेशवत्कन्दरः-गो. † तेन शब्देन—स्वशब्देन-गो. स्वगर्जितेन-रा. ‡ हरिहयः:—श्यामवर्णाश्वयुक्त-गो. तेन न पौनरुक्त्यमिति भावः ॥

[1] इदं पद्यमधिकं-झ [2] रम्येषु-ङ. ज. [3] काननेषु-ङ. [4] दर्शनम्-ज. [5] नाना-ङ. [6] मेघो नाम स-ज.



तेषां मध्ये स्थितो राजा मेरुरु[1]त्तमपर्वतः ।
आदित्येन प्रसन्नेन शैलो दत्तवरः पुरा ॥ ३८ ॥

तेषां षष्टिसहस्रपर्वतानां मध्ये राजेव स्थितः मेरुः—मेरुवत् काञ्चनः यः उत्तमः श्रेष्ठः पर्वतोऽस्ति । अयं तु सावर्णिमेरुः, सावर्णिस्तु मनुः 'कश्यपोऽष्टमः, स महामेरुं न जहाति' इति कश्यपो भगवान् प्रजापतिः । महामेरुश्च भूमध्ये कैलासादुत्तरतः । अत एवास्माकं मेरोर्दक्षिणपार्श्वे इति सङ्कल्पः । भूमध्यस्थो मेरुः रत्नमयः सर्वतो वृतः इति आर्यभटादिसर्वज्योतिर्विदां सिद्धान्तः । सावर्णिमेरुरयं समुद्रवर्तिपारियात्रवज्रचक्रवन्मेघवत्पर्वतानामपि पश्चिमत इति स्पष्टमुच्यते ॥ ३८ ॥

तेनैवमुक्तः शैलेन्द्रः सर्व एव त्वदाश्रयाः ।
मत्प्रसादाद्भविष्यन्ति दिवा रात्रौ च काञ्चनाः ॥ ३९ ॥

आदित्येन दत्तवरः इत्युक्तः वरः कीदृशः इत्यपेक्षायां -तेनेत्यादि । एवमुक्त इत्येवंशब्दार्थः—सर्व एवेत्यादि ॥ ३९ ॥

त्वयि ये चापि वत्स्यन्ति देवगन्धर्व[2]दानवाः ।
ते भविष्यन्ति * [3] भक्ताश्च प्रभया [4] काञ्चनप्रभाः ॥ ४० ॥
[5] विश्वेदेवाश्च मरुतः वसवश्च दिवौकसः ।
आगम्य पश्चिमां सन्ध्यां †[6]मेरुमु[1]त्तमपर्वतम् ॥ ४१ ॥
आदित्यमुपतिष्ठन्ति तैश्च सूर्योऽभिपूजितः ।
अदृश्यः सर्वभूतानां अस्तं गच्छति पर्वतम् ॥ ४२ ॥

---

* रक्ताः (पा.)–प्रभया रक्ता भविष्यन्तीत्यन्वयः-गो. † मेरुसदृशत्वान्मेरुम्-गो.

[1] त्तर-ङ.झ. [2] सेविताः-ङ. [3] रत्नानां, रक्ताश्च-ङ. [4] काञ्चना इव-ङ. [5] आदित्या वसवो रुद्रा मरुतश्च दिवाकराः-ङ. [6] एतदादि श्लोकद्वयं अधिकम्-झ.

विश्वेदेवादयः तं उक्तपर्वतं सावर्णिमेरुमागम्य तत्र स्थित्वा ततः परं दशसहस्रयोजनात् परतः स्थिते अस्तगिरौ पश्चिमां सन्ध्यां प्राप्तां उपतिष्ठन्ते। तैस्सर्वैः सूर्यः अभिपूजितस्सन् सर्वभूतानामदृश्यो यथा भवति तथा अस्तं गच्छति ॥ ४१-४२ ॥

योजनानां सहस्राणि [1]दश तानि दिवाकरः ।
[2]मुहूर्तार्धेन तं शीघ्रं अभियाति शिलोच्चयम् ॥ ४३ ॥

उ[3]त्तमपर्वतादिति दूरे अस्तगिरिः इत्येतद्दर्शयति—योजनानां सहस्राणीत्यादि । तानीति । उक्तसंख्याकयोजनानीत्यर्थः । मुहूर्तार्धेनेत्यादि । एकघटिकामात्रेणेत्यर्थः । अतीत्येति शेषः । एवंस्थिते—'आगम्य पश्चिमां सन्ध्यां मेरुमु[3]त्तमपर्वतम्' इत्यत्र यद्भाभट्टस्तु—अस्मदपेक्षया पश्चिमसन्ध्यायां उ[3]त्तमपर्वतमेरुमासाद्य वर्तमानं आदित्यमुपतिष्ठन्तीत्याह । एवं अस्मदपेक्षयेति विशेषणमध्याहरता मेरुशब्देन महामेरुरेवोच्यत इति तदाशयो गम्यते । ननु सावर्णिमेरुरेव तेनापि विवक्ष्यते । स्वरूपवर्णनमेव अस्मदपेक्षयेति विशेषणम् इति । एवमपि सन्ध्यायां मेरुमासाद्य वर्तमानत्वजल्पः मिथ्या । ततः परं घटिकात ऊर्ध्वं अस्तगिरिं प्राप्य अस्तादनन्तरं किल सन्ध्या । ननु उत्तरदिगन्वेषणप्रेरणसमये एतस्यैव महामेरुत्वे भूमध्यस्थत्वसङ्कल्पादिविरोधः स्पष्टः । अन्वेषणानियोगस्तु मेरोः मर्त्यस्रोतोऽगम्यत्वस्य सर्वप्रसिद्धत्वात् , स्वेन च तदनवलोकनात् , तत्र वक्ष्यमाणोत्तरदिगन्वेषणानियोगस्य भूमाध्यस्थानापेक्षत्वाच्च ॥ ४३ ॥

शृङ्गे तस्य महद्दिव्यं भवनं सूर्यसंनिभम् ।
प्रासादगणसम्बाधं विहितं विश्वकर्मणा ॥ ४४ ॥

---

[1] शतानि च—ङ. [2] निमेषान्तरमात्रेण देवो याति—क. [3] त्तर—ग.



शोभितं तरुभिश्चित्रैः नानापक्षिसमाकुलैः ।
[1]निकेतं पाशहस्तस्य वरुणस्य महात्मनः ॥ ४५ ॥

प्रासादेत्यादि वरुणपुरीवर्णनम् ॥ ४४-४५ ॥

*अन्तरा [2]मेरुमस्तं च तालो दशशिरा महान् ।
जातरूपमयः श्रीमान् भ्राजते चित्रवेदिकः ॥ ४६ ॥

दशशिराः ताल इति । प्राच्यत्रिस्कन्धतालवत् अत्रापि दशस्कन्धतालः । ४६ ॥

तेषु सर्वेषु दुर्गेषु सरस्सु च सरित्सु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४७ ॥
यत्र तिष्ठति धर्मज्ञः तपसा स्वेन [3]भावितः ।
मेरुसावर्णिरित्येव ख्यातो वै ब्रह्मणा समः ॥ ४८ ॥

ब्रह्मणा सम इति । महामेरुवर्तिप्रजापातसम इत्यर्थः ॥ ४८ ॥

प्रष्टव्यो मेरुसावर्णिः महर्षिः सूर्यसंनिभः ।
प्रणम्य शिरसा भूमौ प्रवृत्तिं मैथिलीं प्रति ॥ ४९ ॥
†एतावज्जीवलोकस्य भास्करो रजनीक्षये ।
कृत्वा वितिमिरं सर्वं अस्तं गच्छति पर्वतम् ॥ ५० ॥
एतावद्वानरैः शक्यं गन्तुं, वानरपुङ्गवाः !
अभास्करममर्यादं न जानीमस्ततः परम् ॥ ५१ ॥

एतावदिति । सावर्णिमेरुपर्यन्तं इत्यर्थः ॥ ५१ ॥

---

* मेरुमस्तं च अन्तरा—मध्ये—रा. † एतावत् उदयास्तादिमध्यं वितिमिरं कृत्वा—गो.

[1] निकेतः—ङ. [2] मेरुमद्रिं च—ङ. [3] भूषितः—क.

अधिगम्य तु वैदेहीं निलयं रावणस्य च ।
अस्तपर्वतमासाद्य पूर्णे मासे निवर्तत ॥ ५२ ॥

निवर्ततेति । निवर्तध्वमिति यावत् ॥ ५२ ॥

ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम ।
सहैव शूरो युष्माभिः श्वशुरो मे गमिष्यति ॥
श्रोतव्यं सर्वमेतस्य भवद्भिर्दिष्टकारिभिः ॥ ५३ ॥
गुरुरेष महाबाहुः श्वशुरो मे महाबलः ।
भवन्तश्चापि विक्रान्ताः प्रमाणं सर्वकर्मसु ॥ ५४ ॥

दिष्ट—सन्दिष्टम् । प्रमाणमिति । कर्तव्याकर्तव्यनिश्चायका इत्यर्थः ॥ ५३-५४ ॥

प्रमाणमेनं संस्थाप्य *पश्यध्वं पश्चिमां दिशम्[2] ।
[दृष्टायां तु नरेन्द्रस्य पत्न्याममिततेजसः ।]
कृतकृत्या भविष्यामः कृतस्य प्रतिकर्मणा ॥ ५५ ॥

अथापि प्रमाणमेनं संस्थाप्य पश्यध्वमित्यर्थः ॥ ५५ ॥

अतोऽन्यदपि यत् कार्यं कार्यस्यास्य [3]हितं भवेत् ।
संप्रधार्य भवद्भिश्च देशकालार्थसंहितम् ॥ ५६ ॥

अस्य कार्यस्येति । रावणवधान्तरामकार्यस्येत्यर्थः ॥ ५६ ॥

ततः सुषेणप्रमुखाः [4]प्लवङ्गाः
सुग्रीववाक्यं निपुणं निशम्य ।

* पश्यध्वं – पश्यत, आत्मनेपदमार्षं—गो.

[1] अवगम्य-ज. [2] एतदनन्तरं—भवन्तः परिपश्यन्तु यथा दृश्येत जानकी— इत्यधिकं—ङ. [3] प्रियं—ज. [4] प्लवङ्गमाः—ज.



आमन्त्र्य सर्वे [1]प्लवगाधिपं ते
जग्मुर्दिशं तां वरुणाभिगुप्ताम् ॥ ५७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे द्विचत्वारिंशः सर्गः

---

वश(५४)मानः ?) सर्गः ॥ ५४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे द्विचत्वारिंशः सर्गः

---

## त्रिचत्वारिंशः सर्गः

### [उत्तरदिक्प्रेषणम्]

ततः संदिश्य सुग्रीवः श्वशुरं पश्चिमां दिशम् ।
वीरं शतबलिं नाम वानरं [2]वानरेश्वरः ॥ १ ॥
उवाच राजा *[3]सर्वज्ञः सर्ववानर[4]सत्तमः ।
वाक्यमात्महितं चैव रामस्य च हितं तदा ॥ २ ॥

अथोत्तरदिगन्वेषणप्रेषणम् । ततः संदिश्येत्यादि । सर्वज्ञ इति । सर्वदेशवृत्तान्ताभिज्ञ इत्यर्थः ॥ १-२ ॥

वृतः शतसहस्रेण [5]त्वद्विधानां वनौकसाम् ।
† वैवस्वतसुतैस्सार्धं [6]प्रतिष्ठस्व स्वमन्त्रिभिः ॥ ३ ॥

वैवस्वतसुतैः—धर्मपुत्रैः ॥ ३ ॥

* सर्वज्ञः—देशवृत्ताभिज्ञः—ति. † वैवस्वतसुतैः—यमसुतैः—ति.

[1] प्लवगाधिपास्ते—ज. [2] वानरर्षभम्—ङ. [3] धर्मज्ञः—ङ., झ. [4] सत्तमम्—ङ. [5] मद्विधानां—ङ. [6] प्रविष्टः सर्वमन्त्रिभिः—ज.

दिशं ह्युदीचीं, [1]विक्रान्त! हिमशैलावतंसिकाम्।
सर्वतः परिमार्गध्वं रामपत्नीं [2]यशस्विनीम् ॥ ४ ॥

विक्रान्तेति शतबलेस्संबुद्धिः। सर्वत इत्यादिना सामान्यतो नियोगः ॥ ४ ॥

अस्मिन् [3]कार्ये विनिर्वृत्ते कृते दाशरथेः प्रिये।
ऋणान्मुक्ता भविष्यामः *कृतार्थार्थविदां [4]वराः ॥ ५ ॥

विनिर्वृत्ते--विशेषेणानुष्ठिते। कृतार्थाः--कृतकृत्याः, अर्थविदः—लब्धाभीष्टार्थाश्च तथा ॥ ५ ॥

कृतं हि प्रियमस्माकं राघवेण महात्मना।
तस्य चेत् प्रतिकारोऽस्ति सफलं जीवितं भवेत् ॥ ६ ॥
†अर्थिनः कार्यनिर्वृत्तिं अकर्तुरपि यश्चरेत्।
तस्य स्यात् सफलं जन्म किं पुनः पूर्वकारिणः ॥ ७ ॥

अर्थिनः--स्वस्मिन् प्रयोजनार्थिनः कार्यनिर्वृत्तिं--स्वप्रयोजनानुष्ठानं यश्चरेत्—अनुतिष्ठेत्, प्रयोजनमिति शेषः ॥ ७ ॥

‡एतां बुद्धिं [5]समास्थाय, दृश्यते जानकी यथा।
तथा भवद्भिः कर्तव्यं अस्मत्प्रियहितैषिभिः ॥ ८ ॥
अयं हि सर्वभूतानां मान्यस्तु नरसत्तमः।
§अस्मासु च गतः प्रीतिं रामः परपुरञ्जयः ॥ ९ ।

*कृतार्थाः, अर्थविदांवर, संधिरार्षः–ति. †अस्माकं अनुपकर्तुरपि अस्मत्साहाय्यार्थिनः कृते यत्किञ्चित् क्रियेत चेत्, तावतैव जन्म सफलं भवेच्चेत्, अस्माकं उपकर्तुर्विषये किं वक्तव्यमिति भावः ॥ ‡अस्मज्जन्मैवानेन सफलं भवेदिति स्वनिश्चयेन जानक्यन्वेष्टव्या, न केवलं भृतकबुद्ध्येति भावः। §स्वयमेव नरोत्तमः अस्मासु च प्रीतिं गतः–इत्यर्थः।

[1] विक्रान्ता–ङ. [2] अनिन्दिताम्–ङ. [3] कार्ये हि. [4] वर–ज. [5] पुरस्कृत्य–ङ.



इमानि बहुदुर्गाणि *नद्यः शैलान्तराणि च।
भवन्तः परिमार्गन्तु बुद्धिविक्रमसंपदा ॥ १० ॥

इमानीति। वक्ष्यमाणानीति शेषः ॥ १० ॥

तत्र म्लेच्छान् पुलिन्दांश्च शूरसेनांस्तथैव च।
प्रस्थलान् भरतांश्चैव कुरूंश्च सह मद्रकैः ॥ ११ ॥

प्रस्थलाः भरताश्च देशविशेषाः। कुरून्—दक्षिणकुरून् ॥

[1]काम्भोजयवनांश्चैव [2]शकानां पत्तनानि च।
[[3]बाह्लीकानृषिकांश्चैव पौरवानथ [4]टङ्कणान्।
चीनान् परमचीनांश्च [5]नीहारांश्च पुनःपुनः।]
अन्वीक्ष्य [6]वरदांश्चैव हिमवन्तं विचिन्वथ ॥ १२ ॥
लोध्रपद्मकषण्डेषु देवदारुवनेषु च।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १३ ॥

लोध्रपद्मकषण्डेष्विति। हैमवतेष्विति शेषः। पद्मकः—दिव्यगन्धवृक्षविशेषः ॥ १३ ॥

ततः सोमाश्रमं गत्वा देवगन्धर्वसेवितम्।
कालं नाम महासानुं पर्वतं तं गमिष्यथ ॥ १४ ॥

तं कालं पर्वतमित्यन्वयः ॥ १४ ॥

महत्सु तस्य [7]शैलस्य पर्वतेषु गुहासु च।
विचिनुध्वं महाभागां रामपत्नीमनिन्दिताम् ॥ १५ ॥

*नद्यः–नदीः–गो. पूर्वार्धं भिन्नं वाक्यं वा, लोकरीत्या। उत्तरार्धे तरसर्वमित्यर्थादापतति।

[1] कांबोजान् पर्वतांश्चैव–ङ. [2] शकानारट्टकानपि–ङ. [3] बह्लीकान् निषधांश्चैव–ङ. [4] कङ्कणान्–ङ. [5] नगरांश्च–ङ. [6] बर्बरांश्चैव–ङ. [7] शैलेषु निर्दरेषु–ङ.

तमतिक्रम्य शैलेन्द्रं हेमगर्भं महागिरिम् ।
ततः सुदर्शनं नाम पर्वतं गन्तुमर्हथ ॥ १६ ॥

तमतिक्रम्येति । कालपर्वतमित्यर्थः ॥ १६ ॥

ततो देवसखो नाम पर्वतः पतगालयः ।
नानापक्षिगणाकीर्णः विविधद्रुमभूषितः ॥ १७ ॥

देवसख इति पर्वतः । पतगाः—पक्षिणः ॥ १७ ॥

तस्य [1]काननषण्डेषु [2]निर्झरेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १८ ॥
तमतिक्रम्य चाकाशं सर्वतश्शतयोजनम् ।
*अपर्वतनदीवृक्षं सर्वसत्त्वविवर्जितम् ॥ १९ ॥

तमतिक्रम्य—देवसखपर्वतमतिक्रम्य । आकाशं—शून्यं देशम् । किंशून्यमित्यतः—अपर्वतेत्यादि ॥ १९ ॥

तं तु शीघ्रमतिक्रम्य कान्तारं रोमहर्षणम् ।
†कैलासं पाण्डुरं [3]प्राप्य हृष्टा यूयं भविष्यथ ॥ २० ॥
तत्र पाण्डुरमेघाभं जाम्बूनद[4]परिष्कृतम् ।
कुबेरभवनं [5]रम्यं निर्मितं विश्वकर्मणा ॥ २१ ॥
विशाला नलिनी यत्र प्रभूतकमलोत्पला ।
हंसकारण्डवाकीर्णा ‡अप्सरोगणसेविता ॥ २२ ॥

नलिनी—सरसी ॥ २२ ॥

---

* हरिणप्रदेश इत्यर्थः ॥ † यद्यपि कैलासो हिमवदेकदेश इति पुराणान्तरोक्तं, तथापि तदविरुद्धं ज्ञेयम्; मध्ये शून्यप्रदेशेऽपि तावत्पर्यन्तं हिमवानिति—गो. ‡ अत्र संधिरार्षः ॥

[1] काञ्चनखण्डेषु—च. ज. [2] निर्दरेषु—च. ज. [3] शैलं प्राप्य हृष्टा—ङ.
[4] परिच्छदम्—ङ. [5] दिव्यं—ङ.



तत्र वैश्रवणो राजा [1]सर्वलोकनमस्कृतः ।
धनदो रमते श्रीमान् गुह्यकैः सह यक्षराट् ॥ २३ ॥
[2]तस्य चन्द्रनिकाशेषु पर्वतेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २४ ॥

तस्येति । धनदस्येत्यर्थः ॥ २४ ॥

क्रौञ्चं तु गिरिमासाद्य *बिलं तस्य सुदुर्गमम् ।
अप्रमत्तैः प्रवेष्टव्यं दुष्प्रवेशं हि तत् स्मृतम् ॥ २५ ॥
वसन्ति हि महात्मानः तत्र सूर्यसमप्रभाः ।
[3]देवैरभ्यर्थिताः सम्यक् [4]देवरूपा महर्षयः ॥ २६ ॥

महात्मानः तत्रेति । क्रौञ्चगुहायामित्यर्थः ॥ २६ ॥

क्रौञ्चस्य तु गुहाश्चान्याः सानूनि शिखराणि च ।
[5]दर्दुराश्च नितम्बाश्च विचेतव्यास्ततस्ततः ॥ २७ ॥
[क्रौञ्चस्य शिखरं चापि निरीक्ष्य च ततस्ततः ।]
†अवृक्षं कामशैलं च मानसं विहगालयम् ।
न गतिस्तत्र भूतानां देवानां न च रक्षसाम्[6] ॥ २८ ॥

कामशैलमिति पर्वतस्य विशेषणं—अवृक्षमिति । मानसमिति पर्वतः ॥ २८ ॥

स च सर्वैर्विचेतव्यः [7]ससानुप्रस्थभूधरः ।
क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः ॥ २९ ॥

---

* बिलं—स्कन्दशक्तिकृतं विवरम्—ति. गो. † अवृक्षं—अवृक्षाख्यं—गो.

[1] सर्वभूत—ङ. [2] तत्र—ङ. [3] देवैरप्यर्चिताः—ङ. [4] दिव्यरूपाः—ङ.
[5] निर्झराश्च, निर्दराश्च—ङ. [6] एतदनन्तरं—तत्र सर्वं विचेतव्यं पर्वतो देवमानसः—इत्यधिकं—झ. [7] पर्वतो बहुकन्दरः—ङ.

स सर्वैरिति । क्रौञ्चपर्वत इत्यर्थः । सानूनि, प्रस्थाः, भूधराः--पर्यन्तभूधराः, तैश्च तैश्च सहितः--ससानुप्रस्थभूधरः । मैनाकपर्वतोऽयं समुद्रमग्नादन्यः ॥ २९ ॥

मयस्य भवनं तत्र दानवस्य स्वयं कृतम् ।
मैनाकस्तु विचेतव्यः ससानुप्रस्थ कन्दरः ॥ ३० ॥
*स्त्रीणामश्वमुखीनां च निकेतस्तत्र तत्र तु ।
तं देशं समतिक्रम्य आश्रमं सिद्धसेवितम् ॥ ३१ ॥
सिद्धा वैखानसा यत्र वालखिल्याश्च तापसाः ।
वन्दितव्यास्ततस्सिद्धाः तपसा वीतकल्मषाः ॥ ३२ ॥
प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ।
हेमपुष्कर[2]संछन्नं तत्र वैखानसं सरः ॥ ३३ ॥

वैखानसानामिदं—वैखानसम् ॥ ३३ ॥

तरुणादित्यसंकाशैः हंसैर्विरचितं शुभैः ।
†औपवाह्यः कुबेरस्य सार्वभौम इति [3]स्मृतः ॥ ३४ ॥
गजः पर्येति तं देशं सदा [4]सह करेणुभिः ।
‡तत्सरस्समतिक्रम्य नष्टचन्द्रदिवाकरम् ॥
अनक्षत्रगणं व्योम निष्पयोद[5]मनादिमत् ॥ ३५ ॥

तत्सर इति । वैखानससर इत्यर्थः । समतिक्रम्य वर्तमानं व्योम--कियानवकाशः । नष्टचन्द्रदिवाकरं--चन्द्रादिसर्वज्योतिर्गण-प्रकाशरहितम् ॥ ३५ ॥

---

* अश्वमुखीनां—किम्पुरुषस्त्रीणां–गो. † औपवाह्यः--वाहनम् । ‡ अथ महामेरुपर्यन्तेत्याश्रितप्रदेशानुपदिशति–तत्सर इति–गो.

[1] भूतलः–ङ. [2] संपन्नं–ङ. [3] श्रुतः–ङ. [4] हस्ति–ङ. [5] मनादितम्–ङ.



गभस्तिभिरिवार्कस्य स तु देशः [1]प्रकाशते ।
विश्राम्यद्भिस्तपस्सिद्धैः देवकल्पैः स्वयंप्रभैः ॥ ३६ ॥

तर्हि किं महानन्धकारः ? नेत्याह —गभस्तिभिरित्यादि । स तु देशः प्रकाशत इति । चन्द्रादिज्योतींष्यभिभूय स्वमहिम्ना स्वगभस्तिभिः स्वयमेव प्रकाशते । तस्य तथा तेजस्वित्वे हेतुमाह—विश्राम्यद्भिरित्यादि । विश्राम्यद्भिः—सुखोपविष्टैः, तपस्सिद्धैः, अत एव देवकल्पैः, अत एव स्वयंप्रभैः—स्वगभस्तिवैभवैः स्वदेशं सूर्यादिवत् भासयद्भिरिति शेषः । एतेन सुस्पष्टं अहि चन्द्रादेरिव तेषां गभस्तिभिः अभिभूतत्वेन चन्द्रादेस्तदभाववर्णनम् । *यद्वा-भट्टस्तु—नियतमार्गवर्तिनां चन्द्रादीनां तत्र संचाराभावात् नष्ट-चन्द्रादिमत्त्वमिति ; पश्यन्तु ततः परं अशेषसुप्रसिद्धचन्द्रादिचारवता-मुत्तरकुरूणामुपदेशे जाग्रति, मध्ये नष्टचन्द्रादिमद्देशवर्णनसाहसम् ॥३६॥

तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा ।
उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः ॥ ३७ ॥
[2]ते नयन्ति परं तीरं सिद्धान् प्रत्यानयन्ति च ।
उत्तराः कुरवस्तत्र कृतपुण्यप्रतिश्रयाः ॥ ३८ ॥

निम्नगेति अस्तीति शेषः । अन्तर्महासुषिरवेणवः—कीचकाः । परं तीरमिति । शैलोदाया इति शेषः । कृतपुण्यानां प्रतिश्रयाः—निवासभूताः, भोगभूमिरिति यावत् ॥ ३७–३८ ॥

ततः काञ्चनपद्माभिः पद्मिनीभिः कृतोदकाः ।
नीलवैदूर्य[3]पत्राढ्याः नद्यस्तत्र सहस्रशः ॥ ३९ ॥

---

* गोविन्दराजः, महेश्वरतीर्थो वा ॥

[1] प्रकाश्यते–ज. [2] तैश्च यान्ति परं तीरं सिद्धाः–ङ. [3] पद्माभाः, पत्राभिः–ङ.

रक्तोत्पल[1]वनैश्चैव मण्डिताश्च हिरण्मयैः ।
तरुणादित्य[2]संकाशाः भान्ति तत्र जलाशयाः ॥ ४० ॥

'ततः काञ्चनपद्माभिः' इत्यादि 'गुणास्तत्र मनोरमाः' (५१) इत्यन्तं उत्तरकुरुदेशस्य भोगभूमित्वप्रदर्शनम् । पद्मिनीभिः—सरसीभिः कृतोदकाः—कृतजलावगाढाः । तथा दिव्यनद्योऽपि सन्तीत्याह—नीलेत्यादि । जलाशयाः—तडाकादयः ॥ ३९-४० ॥

महार्हमणि[3]रत्नैश्च काञ्चनप्रभकेसरैः ।
[4]नीलोत्पलवनैश्चित्रैः स देशः सर्वतो वृतः ॥ ४१ ॥
निस्तुलाभिश्च मुक्ताभिः मणिभिश्च महाधनैः ।
* [5]उद्धूतपुलिनास्तत्र [6]जातरूपैश्च निम्नगाः ॥ ४२ ॥

निस्तुलं—वर्तुलम् । मणिभिः जातरूपैश्च उद्धूतपुलिनाः—उत्क्षिप्तपुलिनवत्यः ॥ ४२ ॥

सर्वरत्न[7]मयैश्चित्रैः अवगाढा † नगोत्तमैः ।
जातरूपमयैश्चापि हुताशनसमप्रभैः ॥ ४३ ॥

अवगाढाः—व्याप्ताः ॥ ४३ ॥

नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः ।
दिव्यगन्धरसस्पर्शाः सर्वकामान् स्रवन्ति च ॥ ४४ ॥

पत्ररथाः—पक्षिणः ॥ ४४ ॥

---

* उद्धूतपुलिनाः (पा.)—उन्नतपुलिनाः—गो. † नगाः—पर्वताः-गो. ति.

[1] वनैश्चारु—ङ. [2] सदृशैः—ङ. [3] पत्रैश्च—ङ. [4] नीलनीरजषण्डैश्च—ङ.
[5] उद्धूत—ङ. [6] जातरूपमयाः शुभाः—ङ. [7] मयैर्दिव्यैः—ङ.



[1]नानाकाराणि वासांसि फलन्त्यन्ये नगोत्तमाः ।
[मुक्तावैदूर्यचित्राणि भूषणानि तथैव च ॥
स्त्रीणां चाप्यनुरूपाणि पुरुषाणां तथैव च ।
सर्वर्तुसुखसेव्यानि फलन्त्यन्ये नगोत्तमाः ॥
[2]महार्हमणिचित्राणि [3]फलन्त्यन्ये नगोत्तमाः ।]
शयनानि प्रसूयन्ते चित्रास्तरणवन्ति च ॥ ४५ ॥
मनःकान्तानि माल्यानि फलन्त्यत्रापरे द्रुमाः ।
[4]पानानि च महार्हाणि भक्ष्याणि विविधानि च ॥ ४६ ॥
* स्त्रियश्च गुणसंपन्नाः रूपयौवनलक्षिताः ।
गन्धर्वाः किन्नराः सिद्धा नागा विद्याधरास्तथा ॥ ४७ ॥
रमन्ते [5]सततं तत्र नारीभि[6]र्भास्वरप्रभाः ॥ ४८ ॥
[7]सर्वे सुकृतकर्माणः सर्वे रतिपरायणाः ।
सर्वे कामार्थसहिताः वसन्ति सहयोषितः ॥ ४९ ॥
गीतवादित्र[8]निर्घोषः सोत्कृष्टहासितस्वनः ।
श्रूयते सततं तत्र सर्वभूत[9]मनोरमः ॥ ५० ॥

'वासांसि फलन्त्यन्ये नगोत्तमाः' इत्यनन्तरं 'शयनानि प्रसूयन्ते' इत्यादिमध्य द्वित्राः श्लोकाः प्रक्षिप्ताः । क्वचित् कोशेषु

---

* रूपयौवनलक्षिताः गुणसंपन्नाः स्त्रियश्च अपरे द्रुमाः फलन्ति-रा

[1] नानारूपाणि—ङ. [2] महार्हाणि च—ङ. [3] हैमान्यन्ये—ङ. [4] फलानि च—ङ.
[5] सहिताः—ङ. [6] भास्कर—ङ. [7] सर्वे च कृत—ङ. [8] निर्घुष्टाः सोद्घुष्टहसितस्वराः । श्रूयन्ते—ङ. [9] मनोरमाः—ङ.

'विद्याधरास्तथा । रमन्ते सततं तत्र' इत्यत्र द्वित्राः श्लोकाः प्रतिक्षिप्ताः ॥ ५० ॥

[1]तत्र नामुदितः कश्चित् नात्र कश्चिदसत्प्रियः* ।
अहन्यहनि वर्धन्ते गुणास्तत्र मनोरमाः ॥ ५१ ॥

असत्—अविद्यमानं प्रियं यस्य स तथा ॥ ५१ ॥

†[2]तमतिक्रम्य शैलेन्द्रं उत्तरः ‡पयसां निधिः ।
तत्र सोमगिरिर्नाम मध्ये [3]हेममयो महान् ॥ ५२ ॥

मध्य इति । उत्तरसमुद्रमध्य इत्यर्थः ॥ ५२ ॥

[इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये ।
देवास्तं समवेक्षन्ते गिरिराजं दिवं [4]गताः ॥]
स तु देशो विसूर्योऽपि तस्य भासा प्रकाशते ।
[5]सूर्यलक्ष्म्याऽभिविज्ञेयः तपतेव विवस्वता ॥ ५३ ॥

स तु देश इति । सोमगिरिद्वीपदेश इत्यर्थः । विसूर्योऽपि—सूर्यकिरणसञ्चाररहितोऽपीत्यर्थः । तस्य भासा—सोमगिरिप्रभया तपता—विवस्वता युक्तदेश इव सूर्यलक्ष्म्या—सूर्यार्पितदेशश्रिया युक्तः प्रकाशते ॥ ५३ ॥

भगवांस्तत्र विश्वात्मा शंभुरेकादशात्मकः ।
ब्रह्मा वसति देवेशः ब्रह्मर्षिपरिवारितः ॥ ५४ ॥

* असत्प्रियः—अविद्यमानाङ्गनः—गो. असत्कर्मविषयकप्रीतिमान्—रा. † अत्र सुमेर्वन्वेषणं नोक्तं, तत्र रक्षसां वासासंभवादित्याहुः—ति. ‡ पयसां निधिः—लवणसमुद्रः—गो.

[1] नात्र—ङ. [2] समतिक्रम्य तं देशं—ङ. [3] हेम—ङ. [4] गतम्—ङ. [5] रवया लक्ष्म्या—ङ.



भगवान्—सह्षाड्गुण्यः । तत्र—सोमगिरौ । अत्र—*यद्वाभट्टस्य श्राद्धप्रलापः—'भगवान्—विष्णुः' इत्येवं प्रलप्य 'शंभुरेकादशात्मकः ब्रह्मा वसति' इति विशेषणत्रयमपि नारायणे योज्य-मित्याह । अयमपि पापिष्ठो ब्रह्मद्वेषः विनष्टचक्षुरन्याय्यं प्रलप्य दुर्ब्राह्मणो नश्यतु । शं अस्मात् भवतीति शंभुः, ब्रह्ममंडलमधिष्ठाय तेनैव सर्वजगत्सुखयात्रोत्पादनस्य प्रसिद्धत्वात् । एकादशात्मकः—एकादशानुवाकार्थैकादशरुद्ररूपः । ब्रह्मा—भगवान् चतुर्मुखः । श्रीरुद्र-चतुर्मुखब्रह्माभेदः अशेषश्रुतिस्मृतिप्रसिद्धः ब्रह्मसिद्धान्तमूलग्रन्थे, बहु-प्रकरणग्रन्थेषु चातिस्पष्टं प्रदर्शितः । इदमप्यपरोक्षब्रह्मरुद्राभेदवचनं तत्र प्रमाणमुपन्यसनीयं मामकैः । प्रकरणं चेदं सूर्यवत्—प्रकाश-प्रतिपादकम् ॥ ५४ ॥

न कथञ्चन गन्तव्यं कुरूणामुत्तरेण वः ।
†अन्येषामपि भूतानां नात्र क्रामति वै गतिः ॥ ५५ ॥

* भगवान्—नारायणः । रूढनामधेयम् । स हि भगवच्छब्देन झटिति प्रतीयते । अयमत्र पदान्वयः—विश्वात्मा भगवान् ब्रह्मर्षिपरिवारितः तत्र वसति । एकादशात्मकः शंभुः ब्रह्मर्षिपरिवारितः तत्र वसति । देवेशो ब्रह्मा, ब्रह्मर्षिपरिवारितः तत्र वसतीति—ती. विश्वात्मा—विश्वशरीरकः भगवान्—षाड्गुण्यपरिपूर्णो वासुदेवः, 'एवमेव महान् शब्दः मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः'—इत्युक्तेः । न चेदमपि शम्भुविशेषणम्, एकादशात्मकत्वविरोधात् । न हि विश्वात्मकत्वं एकादशात्मकत्वं चैकत्र संभवति । एकादशात्मकः—एकादशमूर्तिः शम्भुः—रुद्रः, देवेशः—ब्रह्मा ब्रह्मर्षिपरिवारितस्तत्र वसति । इयं च क्रिया सर्वत्र संबध्यते । यद्यत्र कश्चित् प्रकरणा-भावात् विष्णुरत्र नोच्यत इति कथयेत्, तर्हि रुद्रोऽपि नोच्यते । कथमिति चेत्; शं भावयतीति शम्भुरिति व्युत्पत्त्या 'शंभूब्रह्मत्रिलोचनौ' इति कोशकारवचनाच्च सर्वाण्यपि विशेषणानि ब्रह्मपराणि भवेयुरिति—गो. † अन्येषामपि—शक्तिविशेष-विशिष्टदैत्यादीनामपि । वः—युष्माभिः न गन्तव्यम्—गो.

नात्र गतिः क्रामतीति कार्यब्रह्मलोकत्वात्, ब्रह्मविद्ब्रह्मर्षिव्यतिरिक्तस्य तत्राप्रसङ्गात् ॥ ५५ ॥

स हि [1]सोमगिरिर्नाम देवानामपि दुर्गमः ।
तमालोक्य ततः क्षिप्रं उपावर्तितुमर्हथ ॥ ५६ ॥

तदेवोक्तं—देवानामपि दुर्गम इति ॥ ५६ ॥

एतावद्वानरैः शक्यं गन्तुं, वानरपुङ्गवाः ।
अभास्करममर्यादं न जानीमस्ततः परम् ॥ ५७ ॥

सर्वमेतद्विचेतव्यं यन्मया परिकीर्तितम् ।
यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः ॥ ५८ ॥

तत्रापि मतिः क्रियतामिति । अन्वेषणायेति शेषः ॥ ५८ ॥

ततः कृतं दाशरथेर्महत् प्रियं
महत्तरं चापि ततो मम प्रियम् ।
कृतं भविष्यत्यनिलानलोपमाः !
*विदेहजादर्शनजेन कर्मणा ॥ ५९ ॥

विदेहजायाः—वैदेह्याः दर्शनमुद्दिश्य जातं—विदेहजादर्शनजं, तेन कर्मणा—अन्वेषणकर्मणा ॥ ५९ ॥

ततः कृतार्थाः सहिताः सबान्धवाः
मयाऽर्चिताः सर्वगुणैर्मनोरमैः ।

---

* विदेहजादर्शनजेन—सीतादर्शनजनकेन कर्मणा—रा. वस्तुतस्तु, विदेहजादर्शननिमित्तेन प्राप्तान्वेषणकर्मणेति स्वरसम् । सफलेनान्वेषणकर्मणेति तात्पर्यकं पदमिदम् ॥

[1] हेम—ङ.



चरिष्यथोर्वीं प्रति शान्त[1]शात्रवाः
सहप्रिया *भूतधराः प्लवङ्गमाः ॥ ६० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे त्रिचत्वारिंशः सर्गः

---

भूतधराः—भूतैः ध्रियमाणशौर्योपकारादिसद्गुणाः । अनन्त-(६० १/२)मानः सर्गः ॥ ६० ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे त्रिचत्वारिंशः सर्गः

---

चतुश्चत्वारिंशः सर्गः

[कार्यजवसूचना]

विशेषेण तु सुग्रीवो हनूमत्यर्थमुक्तवान् ।
स हि तस्मिन् हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ॥ १ ॥

अथ सुग्रीवेण हनूमति विशिष्य कार्यसिध्याशंसने सति राम‍-†स्तस्मिन्नभिज्ञानं प्रयच्छति । विशेषेण त्वित्यादि । 'हनूमत्यर्थमुक्तवान्' इत्यत्रोक्तो हेतुः—स हीत्यादि ॥ १ ॥

अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम् ।
सुग्रीवः परमप्रीतः ‡ प्रभुः सर्ववनौकसाम् ॥ २ ॥

---

* भूतधराः—प्राणिभृतः प्राणिभिरुपजीव्या इति यावत्—गो., ति. भृतः प्राप्तजीविका इत्यर्थः—रा. भूतधरामिति पाठे पृथिवीविशेषणम्—छ. वस्तुतस्तु—भूतधराः—पुष्टा इति वा ॥ † दानधंवदानस्याभावेन न्यासमात्ररूपत्वात् सप्तमी ॥ ‡ सर्ववनौकसां प्रभुः—रा.

[1] शत्रवः—ङ.

अथोक्तप्रकार एव प्रदर्श्यते—अब्रवीच्चेत्यादि । सर्ववनौकसामिति । मध्य इति शेषः ॥ २ ॥

न भूमौ *नान्तरिक्षे वा नाम्बरे नामरालये ।
नाप्सु वा [1]गतिसङ्गं ते पश्यामि, हरिपुङ्गव! ॥ ३ ॥

किमब्रवीत्? इत्यतः—न भूमावित्यादि । अन्तरिक्षः पृथिव्यासन्नपक्षिमार्गः आकाशः । अम्बरं—मेघमार्गः । अमरालयः—स्वर्गः । गतिसङ्गः—गतिप्रतिबन्धः ॥ ३ ॥

[2]सासुराः सहगन्धर्वाः [3]सनागनरदेवताः ।
विदिताः सर्वलोकास्ते ससागरधराधराः ॥ ४ ॥

सासुरा इत्यादि लोकविशेषणम् ॥ ४ ॥

गतिर्वेगश्च तेजश्च लाघवं च, महाकपे!
पितुस्ते सदृशं, वीर! मारुतस्य महौजसः ॥ ५ ॥

लाघवं—क्षिप्रकारित्वम् ॥ ५ ॥

तेजसा वाऽपि ते भूतं न समं भुवि विद्यते ।
तद्यथा लभ्यते सीता [4]तत् त्वमेवानुचिन्तय ॥ ६ ॥
त्वय्येव, हनुमन्! [5]अस्ति बलं बुद्धिः पराक्रमः ।
देशकालानुवृत्तिश्च नयश्च, नयपण्डित! ॥ ७ ॥

देशकालानुवृत्तिः—देशकालोचितकर्मानुष्ठानम् । नये—नीतिशास्त्रे पण्डितः—समर्थः, तस्य संबुद्धिः ॥ ७ ॥

---

* अन्तरिक्षे—निरालम्बे मेघादिसंचारमार्गे, अम्बरे—वातचक्राक्रान्तप्रदेशे, अमरालये—प्रबलाधिष्ठिते—स्वर्गे—गो.

[1] गतिभङ्गं—ङ. [2] सामराः, सह्सुराः—ङ. [3] सनागहरि, सनागोरग—ङ. [4] तत्त्व—ङ. [5] स्वस्ति—ङ.



*ततः कार्यसमासङ्गमवगम्य हनूमति ।
विदित्वा हनुमन्तं च चिन्तयामास राघवः ॥ ८ ॥

ततः कार्येति । एवं सुग्रीववचनेनेत्यर्थः । कार्यसमासङ्गं—कार्यसिद्धिं क्षिप्रकारित्वसामर्थ्याद्यनुभवतः स्वयं च कार्यसाधकं विदित्वा, तस्मिन् स्वकर्तव्यं चिन्तयामास ॥ ८ ॥

सर्वथा निश्चितार्थोऽयं हनूमति हरीश्वरः ।
[1]निश्चितार्थतरश्चापि हनूमान् कार्यसाधने ॥ ९ ॥

उक्तार्थं एवाभिनीय प्रकाश्यते—सर्वथेत्यादि । हरीश्वरोऽयं हनूमति निश्चितार्थः, स्वहशाऽपि हनूमान् कार्यसाधने निश्चितार्थतरः ॥

तदेवं प्रस्थितस्यास्य परिज्ञातस्य कर्मभिः ।
भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः † ॥ १० ॥

एवं प्रस्थितस्य, अन्तर्भावितणिनिः, भर्त्रा प्रस्थापितस्य, कर्मभिः परिज्ञातस्य—परीक्षितस्य, परिगृहीतस्य—श्रेष्ठतया पक्षीकृतस्य कार्यफलोदयः—सीतादर्शनप्राप्तिः अस्य ध्रुवः—निश्चितः ॥

तं समीक्ष्य महातेजाः ‡व्यवसायोत्तरं हरिम् ।
कृतार्थ इव [2]संहृष्टः प्रहृष्टेन्द्रियमानसः ॥ ११ ॥

एवं व्यवसायोत्तरं—कार्यसाधनश्रेष्ठं हरिं—मारुतिं तदा समीक्ष्य प्रहृष्टेन्द्रियमानसो बभूव ॥ ११ ॥

---

* अस्मिन् सुग्रीवेण स्वकार्यभारो निक्षिप्त इति ज्ञात्वा—गो. † एतदनन्तरं स्तीति शेषः । ‡ दृढव्यवसायमिति यावत् ।

[1] निश्चितार्थकरं—ङ. [2] संवृत्तः—ङ.

दद्दौ तस्य ततः प्रीतः स्वनामाङ्कोपशोभितम् ।
*अङ्गुलीयमभिज्ञानं राजपुत्र्याः परंतपः ॥ १२ ॥

ततः—निश्चितसाधकत्वादेव हेतोः । राजपुत्र्याः अभिज्ञानं—प्रत्यभिज्ञासाधनम् ॥ १२ ॥

अनेन त्वां, हरिश्रेष्ठ ! चिह्नेन जनकात्मजा ।
मत्सकाशादनुप्राप्तं †अनुद्विग्नाऽनुपश्यति ॥ १३ ॥
व्यवसायश्च ते, वीर ! सत्त्वयुक्तश्च विक्रमः ।
सुग्रीवस्य च संदेशः सिद्धिं कथयतीव मे ॥ १४ ॥
स तद्गृह्य हरिश्रेष्ठः [1]कृत्वा मूर्ध्नि कृताञ्जलिः ।
वन्दित्वा चरणौ चैव प्रस्थितः प्लवगर्षभः ॥ १५ ॥
स तत् प्रकर्षन् ‡हरिणां महद्बलं
बभूव वीरः पवनात्मजः कपिः ।
गताम्बुदे व्योम्नि विशुद्धमण्डलः
शशीव नक्षत्रगणोपशोभितः ॥ १६ ॥

तत् बलमित्यन्वयः ॥ १६ ॥

---

*ननु त्यक्तसकलधनस्य वन्यवृत्त्या वर्तमानस्य कुतोऽङ्गुलीयकमिति चेत्—इदमेकमेतत्कार्यार्थं रक्षितवान् । अत एव 'अङ्गुलीयकमुन्मुच्य' इति नोक्तम् । यद्वा रामनामाङ्कितमङ्गुलीयकं सीतायाः, कदाचित् रावणागमनात् पूर्वं प्रणयपरत्वेन रामेण स्वीकृतमिति बोध्यम् । यद्वा भार्यास्नेहेन कनिष्ठिकायां सदा मुद्रिका धार्यत इति देशाचारः । यद्वा विवाहकाले जनकेन दत्तमिदं वरालङ्कारत्वेन, 'गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम्' (सु. का. 36-4) इत्युक्तेः-गो. †अनुद्विग्ना—उद्वेगरहिता, निरातङ्केति यावत् ॥ ‡दीर्घाभाव आर्षः-गो. ति. रा.

[1] स्थाप्य—ङ.



अतिबल ! बलमाश्रितस्तवाहं
हरिवराविक्रम ! विक्रमैरनल्पैः ।
पवनसुत ! यथाऽधिगम्यते सा
जनकसुता हनुमन् ! तथा कुरुष्व ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे चतुश्चत्वारिंशः सर्गः

---

अतिबलेत्यादिवचनं रामसुग्रीवसाधारणम् । हे अतिबल ! हरिवरविक्रम—सिंहश्रेष्ठविक्रम ! पवनसुत ! हनुमन् ! अहं तवैव बलमाश्रितोऽस्मि । अतः अनल्पैः विक्रमैः जनकसुता यथाऽधिगम्यते, तथा कुरुष्व । *वर्ग(३४)मानः (?) सर्गः ॥ १७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे चतुश्चत्वारिंशः सर्गः

---

## पञ्चचत्वारिंशः सर्गः

[वानरप्रस्थानम्]

†सर्वांश्चाहूय सुग्रीवः प्लवगान् प्लवगर्षभः ।
समस्तांश्चाब्रवीद्राजा रामकार्यार्थसिद्धये ॥ १ ॥

अथ प्रेषितानां हरीणामन्वेषणोद्योगः । सर्वांश्चेत्यादि । सर्वान् तानाहूय भूयोऽब्रवीत् ॥ १ ॥

‡एवमेतद्विचेतव्यं [1]भवद्भिर्वानरोत्तमैः ।
तदुग्रशासनं भर्तुः विज्ञाय हरिपुङ्गवाः ॥
§शलभा इव संछाद्य मेदिनीं संप्रतस्थिरे ॥ २ ॥

---

*कतकेन तु चतुस्त्रिंशत्संख्यश्लोकः सर्गोऽयमुक्तः-ति. †सर्वानाहूय, ततस्समस्तान्—संघीभूतान् प्लवगानब्रवीत् । यद्वा—सम इति छेदः । समः—पक्षपातरहितः-गो. ‡एवमित्यारंभानन्तरं इतिकरणं द्रष्टव्यम् । §शलभा इति बहुत्वमात्रे दृष्टान्तः-गो.

[1] यन्मया परिकीर्तितम्—ङ.

उक्तिप्रकारः—एवमित्यादि । तदुप्रेत्यादिना प्राप्तनियोगानामुद्योगः । शलभाः—उत्पातकालप्रवृत्ताः असंख्याताः प्राणिविशेषाः ॥

रामः प्रस्रवणे तस्मिन् [1]न्यवसत् सहलक्ष्मणः ।
प्रतीक्षमाणस्तं मासं यः सीताऽधिगमे कृतः ॥ ३ ॥

सीताधिगमे—सीतावृत्तान्तपरिज्ञाने ॥ ३ ॥

उत्तरां तु दिशं [2]रम्यां गिरिराजसमावृताम् ।
*प्रतस्थे सहसा वीरः हरिश्शतबलिस्तदा ॥ ४ ॥

गिरिराजः—हिमवान् ॥ ४ ॥

पूर्वां दिशं प्रति ययौ विनतो हरियूथपः ।
ताराङ्गदादिसहितः [3]प्लवगः पवनात्मजः ॥ ५ ॥

अगस्त्याचरितामाशां दक्षिणां हरियूथपः ।
पश्चिमां च दिशं घोरां सुषेणः प्लवगेश्वरः ॥ ६ ॥

प्रतस्थे हरिशार्दूलः दिशं वरुणपालिताम् ।
ततः सर्वा दिशो राजा [4]चोदयित्वा यथातथम् ॥ ७ ॥
[5]कपिसेनापतिर्वीरः मुमोद सुखितः सुखम् ॥ ८ ॥

यथातथं—यथास्वे यथातथमिति निपातः ॥ ८ ॥

---

* प्रतस्थे—प्रस्थातुमुद्युक्तः, सर्गान्ते सुग्रीवसन्निधौ सन्नाहकथनात्–गो.

[1] उवास–ङ. [2] गम्यां–ङ. [3] हनुमान्–च. [4] प्रस्थाप्य विजयाय तान्–ङ
[5] कपिसेनापतीन् मुख्यान्–ङ.



एवं [1]संचोदितास्सर्वे राज्ञा वानर[2]यूथपाः ।
स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥ ९ ॥

अभिप्रेत्य—उद्दिश्य ॥ ९ ॥

*नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
[3]क्ष्वेलन्तो धावमानाश्च [4]विनदन्तो महाबलाः ॥ १० ॥

नादादयः शब्दावान्तरभेदाः सन्नाहोद्रेकजाः ॥ १० ॥

एवं संचोदिताः सर्वे राज्ञा वानरयूथपाः ।
आनयिष्यामहे सीतां हनिष्यामश्च रावणम् ॥ ११ ॥
अहमेको [5]वधिष्यामि प्राप्तं रावणमाहवे ।
ततश्चोन्मथ्य सहसा हरिष्ये जनकात्मजाम् ।
वेपमानां श्रमेणाद्य भवद्भिः स्थीयतामिति ॥ १२ ॥

जनकात्मजाविशेषणं—श्रमेण वेपमानामित्यादि ॥ १२ ॥

एक एवाहरिष्यामि पातालादपि जानकीम् ।
[6]विधमिष्याम्यहं वृक्षान् [7]दारयिष्याम्यहं गिरीन् ॥ १३ ॥
धरणीं दारयिष्यामि [8]क्षोभयिष्यामि सागरान् ।
†अहं योजनसंख्यायाः [9]प्लवेयं नात्र संशयः ॥ १४ ॥
शतयोजनसंख्यायाः शतं समधिकं ह्यहम् ।
भूतले सागरे वाऽपि शैलेषु च वनेषु च ॥ १५ ॥

---

* आनयिष्यामहे इति नदन्त इत्यन्वयः–गो. † अहं योजनसंख्यायाः शतं प्लावितेत्येकस्य वचनम्, योजनसंख्यायाः शतं समधिकमित्यन्यस्य–गो.

[1] संबोधिताः–ङ. [2] पुङ्गवाः–ङ. [3] क्ष्वेडन्तो–ङ. [4] ययुः प्लवगसत्तमाः–ङ. झ.
[5] हनिष्यामि–ङ. [6] विमथिष्याम्यहं–ङ. [7] पातयिष्याम्यहं–ङ. [8] शोषयिष्यामि–ङ.
[9] प्लावता–ङ.

पातालस्यापि वा मध्ये न ममाच्छिद्यते गतिः ।
[1]इत्येकैकस्तदा तत्र वानरा बलदर्पिताः ॥ १६ ॥

ऊचुश्च वचनं [2]तस्य हरिराजस्य सन्निधौ ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे पञ्चचत्वारिंशः सर्गः

---

अतर्क(१७ १/२)मानः सर्गः ॥ १७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे पञ्चचत्वारिंशः सर्गः

---

## षट्चत्वारिंशः सर्गः

[भूमण्डलपरिचयकथनम्]

गतेषु वानरेन्द्रेषु रामः सुग्रीवमब्रवीत् ।
कथं भवान् विजानीते सर्वं वै मण्डलं भुवः ॥ १ ॥

अथ रामेण सुग्रीवस्य कृत्स्नभूमण्डलपरिज्ञानसिद्धिप्रश्ने, उत्तरम् । गतेष्वित्यादि ॥ १ ॥

सुग्रीवश्च ततो रामं उवाच प्रणतात्मवान् ।
श्रूयतां सर्वमाख्यास्ये विस्तरेण, [3]नरर्षभ ! ॥ २ ॥

प्रणतः आत्मा—देहः अस्यास्तीति तथा ॥ २ ॥

---

[1] इत्येकैकं तदा–क. [2] तत्र–ङ. [3] वचो मम–ङ.



*यदा तु दुन्दुभिं नाम दानवं महिषाकृतिम् ।
[1]प्रतिकालयते वाली मलयं प्रति पर्वतम् ॥
तदा विवेश महिषः मलयस्य गुहां प्रति ॥ ३ ॥

यदा तु दुन्दुभिमित्यादितः उक्तार्थानुवादः स्पष्टः । अपि त्वत्र दुन्दुभिमहिषशब्दतः मायावी दानव एव विवक्ष्यते, बिलप्रवेशादितदीयकृत्यानामेवोपदेशात् । 'मायावी नाम तेजस्वी दुन्दुभेः पूर्वजः सुतः' (९-४) इति पूर्वं मायाविनो दुन्दुभिज्येष्ठपुत्रत्वस्योक्तत्वात् दुन्दुभिपुत्रे दुन्दुभिशब्दः । दुन्दुभेर्महिषाकारत्वात् पुत्रोऽपि महिषाकारः ॥ ३ ॥

विवेश वाली तत्रापि मलयं तज्जिघांसया ।
ततोऽहं तत्र निक्षिप्तः गुहाद्वारि †[2]विनीतवत् ॥ ४ ॥

---

* पूर्वोक्तमायाविवृत्तान्तस्यैवेदानीमनूद्यमानत्वात् अत्र दुन्दुभिशब्देनाभेदोपचारात् तत्पुत्रो मायाव्येवोच्यते–ती. केचिदत्र दुन्दुभिशब्देन उपचारान्मायाव्येवोच्यते, मायाविनो वृत्तान्तस्यानुवादादित्याहुः—तन्न—महिषाकृतिमित्यस्य विरोधात् । 'तदा विवेश महिषः', 'महिषो विनशेत्' इति पुनः पुनरुक्तेश्च । रामेण विदितवृत्तान्तश्च न वचनमर्हति च । तर्हि कथमुपपत्तिरिति चेत्—उच्यते—पूर्वं मायाविवृत्तान्ताभिधानात्, अत्र महिषवृत्तान्ताभिधानाच्च तदानीमुभावप्यागताविति वेदितव्यम् । तत्र महिषः कथञ्चित् स्वात्मानं गोपयित्वा वालिनि विनिर्गते, पुनः मत्तः कदाचिदागत्य वालिना हत इत्यविरोधः । वक्ष्यत्येवमन्यत्रापि विषये । रावणेन सीतोपप्लवे उद्युक्ते मन्दोदरी धान्यमालिन्यौ निवारिण्यौ । तत्रैका पूर्वमुक्ता, अन्या वानरसन्निधावनुवादे । तस्मादयमृषेः स्वभाव इति बोध्यम्—गो. परं त्वेवं समर्थने सुग्रीवः प्रथमवारमपराधं कृत्वा तत्फलमनुभूयापि अप्राप्तबुद्धिः द्वितीयवारमपि तमेवापराधं कृतवानिति अत्यन्तमसमञ्जसं स्यात् । वस्तुतस्तु—प्राणिमात्रसहजं बुद्धिवैरूप्यादिकं चित्रयितुं वा एवं ऋषिर्वदतीति युक्तम् ।
† विनीतवत्—विनययुक्तमिति क्रियाविशेषणम्–गो.

[1] परिकालयते–ङ. [2] विनीतवान्–ङ.

न च निष्क्रामते वाली तदा संवत्सरे गते ।
ततः क्षतजवेगेन आपुपूरे तदा बिलम् ॥ ५ ॥

तदहं विस्मितो दृष्ट्वा भ्रातुः शोकविषार्दितः ।
अथाहं *[1] गतबुद्धिस्तु सुव्यक्तं निहतो गुरुः ॥ ६ ॥

शिला पर्वतसंकाशा बिलद्वारि [2] मया कृता ।
अशक्नुवन् निष्क्रमितुं महिषो [3] विनशेदिति ॥ ७ ॥

निहत इति गतबुद्धिः—प्राप्तबुद्धिः । विनशेत्—विनशिष्यतीति यावत् ॥ ७ ॥

ततोऽहं[4] मागां किष्किन्धां निराशस्तस्य जीविते ।
राज्यं च सुमहत् [5] प्राप्य तारां च रुमया सह ॥ ८ ॥

मित्रैश्च सहित[6] स्तस्य वसामि विगतज्वरः ।
आजगाम [7] ततो वाली हत्वा तं †[8] वानरर्षभः ॥ ९ ॥

ततोऽहमददां राज्यं गौरवाद्भययन्त्रितः ।
स मां जिघांसुर्दुष्टात्मा वाली प्रव्यथितेन्द्रियः ॥ १० ॥
परिकालयते [9] वाली धावन्तं सचिवैः सह ॥ ११ ॥

परिकालयते—निष्कासयति स्म । अपि च सचिवैस्सह धावन्तं मां अनुधावति स्मेति शेषः ॥ ११ ॥

---

* गतबुद्धिः—प्राप्तबुद्धिः-गो., रा. † दानवर्षभं (पा.)—मायाविनम्-गो.

[1] कृतबुद्धि-ङ. [2] मयाऽऽवृता-ङ. [3] विनशिष्यति-ङ. [4] मायां-ङ.
[5] प्राप्तं तारया रुमया-ङ. [6] स्तत्र-ङ. [7] तदा-ङ. [8] दानवर्षभम्-ङ.
[9] कोपात्-ङ.



ततोऽहं वालिना तेन *[1] सोऽनुबद्धः [2] प्रधावितः ।
नदीश्च विविधाः पश्यन् वनानि [3] नगराणि च ॥ १२ ॥

ततः तेन वालिना अनुबद्धः—अनुद्रुतः अहं प्रधावितोऽस्मि ॥

आदर्शतलसंकाशा ततो वै पृथिवी मया ।
अलातचक्रप्रतिमा दृष्टा गोष्पदव[4]त्तदा ॥ १३ ॥

ततो वै इति । तदनुधावनहेतोर्मया गोष्पदवत् परिक्रम्यमाणेयं पृथिवी अलातचक्रप्रतिमा, आदर्शतलसंकाशा च दृष्टा । अत्र गोष्पदवदित्यनेन लङ्घनाप्रयासः प्रदर्शितः । आदर्शतलेत्यनेन भूचक्रवर्तिसर्वपदार्थस्यानुभवः ॥ १३ ॥

पूर्वां दिशं ततो गत्वा पश्यामि विविधान् द्रुमान् ।
पर्वतान् सदरीन् रम्यान् सरांसि विविधानि च ॥ १४ ॥

उक्त एवार्थो विव्रियते—पूर्वां दिशमित्यादि ॥ १४ ॥

उदयं तत्र पश्यामि पर्वतं धातुमण्डितम् ।
क्षीरोदं सागरं चैव नित्य†मप्सरसालयम् ॥ १५ ॥

अप्सरसालयमिति । अकारान्तोऽप्सरसशब्दः छान्दसः ॥ १५ ॥

[5] परिकालयमानस्तु वालिनाऽभिद्रुतो ह्यहम् ।
पुनरावृत्त्य सहसा प्रस्थितोऽहं तदा, विभो ! ॥ १६ ॥

पुनरावृत्त्येति । उदयगिरेर्भुवमिति शेषः ॥ १६ ॥

---

* सानुबन्धः (पा.) सामात्यः-गो. † अप्सरसा—अप्सरसाम्, पूर्वसवर्णदीर्घः-गो.

[1] सानुबन्धः-ङ. [2] प्रधर्षितः-ङ. [3] विविधानि च-ङ. [4] त्कृता-च. ज.
[5] परिकाल्यमानस्तु तदा-ज.

[पुनरावर्तमानस्तु वालिनाऽभिद्रुतो द्रुतम् ।]
दिशस्तस्यास्ततो भूयः प्रस्थितो दक्षिणां दिशम् ।
*विन्ध्यपादपसंकीर्णां चन्दनद्रुमशोभिताम् ॥ १७ ॥

†[1]द्रुमशैलान्तरे पश्यन् भूयो दक्षिणतो[2]ऽपराम् ।
[3]पश्चिमां च दिशं प्राप्तः वालिना समभिद्रुतः ॥ १८ ॥

संपश्यन् विविधान् देशान् अस्तं च गिरिसत्तमम् ।
[4]प्राप्य चास्तं गिरिश्रेष्ठं उत्तरं संप्रधावितः ॥
हिमवन्तं च मेरुं च समुद्रं च तथोत्तरम् ॥ १९ ॥

हिमवन्तं च मेरुं चेति । महामेरुं चेत्यर्थः । एवमिहोत्तरदिगनुक्रमेण यथाप्राप्तमेरुवर्णनात् सावर्णिमेरुः पश्चिमभागे भूचक्रस्य ॥ १९ ॥

यदा न [5]विन्दे शरणं वालिना समभिद्रुतः ।
ततो मां बुद्धिसंपन्नः हनूमान् वाक्यमब्रवीत् ॥ २० ॥

इदानीं मे स्मृतं, राजन्! यथा वाली हरीश्वरः ।
मतङ्गेन तदा शप्तः ह्यस्मिन्नाश्रममण्डले ॥ २१ ॥

प्रविशेद्यदि वा वाली मूर्धाऽस्य शतधा भवेत् ।
[6]तत्र वासः सुखोऽस्माकं निरुद्विग्नो भविष्यति ॥ २२ ॥

---

* विन्ध्यपादपेत्यनेन किष्किन्धाया दक्षिणतोऽपि विन्ध्यपर्वतशेषोऽस्तीति गम्यते-गो. † द्रुमान्तरे शैलान्तरे च तद्व्यवहितं वालिनं पश्यन् अपरां पश्चिमां दिशं समभिद्रुत इति शेषः-ति. दक्षिणस्यां दिशि द्रुमशैलान् पश्यन् सन् अपरां—तद्भिन्नां पश्चिमां दिशं प्राप्तः-रा.

[1] द्रुमशैलांस्ततः-ङ. [2] ऽपरान्-ङ. [3] अपरां च-च. ज. [4] प्राप्तः-ङ. [5] विन्दं-ङ. [6] अत्र-ङ.



तत इति । एवं सर्वतो भीषयित्वा विद्रावणे सति बुद्धिसंपन्नो हनूमान् मां प्रत्यब्रवीत् । किमित्यत्र—इदानीमित्यादि । मे स्मृतं—मया स्मृतम् । किं स्मृतमित्यतः—यथेत्यादि । तदा—पूर्वकाले हि—अस्मिन् आश्रममण्डले यदा वाली प्रविशेत् , तदा अस्य मूर्धा शतधा भवेदिति हरीश्वरो वाली मतङ्गेन यथा शप्तः, तथा मया स्मृत इत्यन्वयः । किं तत इत्यतः—तत्रेत्यादि । तदा—पूर्वकाले तत्र—मतङ्गाश्रमप्रदेशे निरुद्विग्नः—निर्भयः सुखः वासः भविष्यतीत्याहेति पूर्वेण संबन्धः ॥ २०–२२ ॥

तत्र पर्वतमासाद्य ऋश्यमूकं, नृपात्मज !
न विवेश तदा वाली मतङ्गस्य भयात्तदा ॥ २३ ॥

आसाद्येति । स्थिताः स्म इति शेषः ॥ २३ ॥

एवं मया तदा, राजन् ! प्रत्यक्षमुपलक्षितम् ।
पृथिवीमण्डलं [1]सर्वं गुहामस्यागतस्ततः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे षट्चत्वारिंशः सर्गः

---

अस्येति । ऋश्यमूकस्येत्यर्थः । अर्धैर(२४ १/२)मानः सर्गः ॥ २४ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे षट्चत्वारिंशः सर्गः

---

[1] कृत्स्नं यथा ह्यादर्शमण्डलम्-ङ.

## सप्तचत्वारिंशः सर्गः

[वानरप्रत्यागमनम् ]

दर्शनार्थं तु वैदेह्याः सर्वतः [1] कपिकुञ्जराः ।
व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरञ्जसा ॥ १ ॥

अथ दक्षिणातिरिक्तदिगन्वेषकाणां पुनरागमनम् । दर्शनार्थं त्वित्यादि । यथोक्तं—स्वस्वान्वेषणायोक्तदेशमनतिक्रम्येत्यर्थः ॥ १ ॥

ते सरांसि * सरित्कक्षान् [2] आकाशं नगराणि च ।
नदीदुर्गांस्तथा [3] देशान् विचिन्वन्ति समन्ततः ॥ २ ॥

आकाशमित्यादि । वनगिर्यनावृतकेवलप्रदेशमित्यर्थः । नदीभिः—महाप्रवाहैः दुर्गाः— गन्तुमशक्याः देशाः नदीदुर्गाः ॥ २ ॥

सुग्रीवेण [4] समाख्याताः सर्वे वानर[5]यूथपाः ।
प्रदेशान् प्रविचिन्वन्ति सशैलवनकाननान् ॥ ३ ॥
विचित्य दिवसं सर्वे सीताऽधिगमने धृताः ।
समायान्ति स्म † मेदिन्यां निशाकालेषु वानराः ॥ ४ ॥

दिवसं विचित्येत्यत्यन्तसंयोगे द्वितीया । दिवसविशेषणं रात्र्यां विचयनायोगात् । धृताः—उद्युक्ता इत्यर्थः । मेदिन्यामिति । यत्नाविचेयभूप्रदेशामित्यर्थः ॥ ४ ॥

---

* कक्षान्—गुल्मान्, लतागृहानित्यर्थः–**गो.** सरित्तीरवर्तिलतागृहानिति यावत् । सरित्प्रदेशानिति वा ॥ † मेदिन्यां सर्वाधारभूतायां, निद्रासौकर्यार्थमिति भावः–**ति.**

[1] कपियूथपाः–ङ. [2] ग्रामांश्च–ङ. [3] शैलान्–ङ. [4] समाख्यातान्–ङ. [5] पुङ्गवाः–ङ.



*[1] सर्वर्तुकांश्च देशेषु वानरास्सफलद्रुमान् ।
आसाद्य रजनीं शय्यां चक्रुः सर्वेष्वहस्सु ते ॥ ५ ॥

तेषु देशेषु सर्वर्तुकान्—नित्यसन्निहितस्वस्वर्तुयुक्तान्, अत एव नित्यफलद्रुमान्, सर्वेष्वहस्सु विचयनसमये समासाद्य—क्रामं प्राश्य, रजनीं—रजन्यां शय्यां चक्रुः ॥ ५ ॥

† तदहः प्रथमं कृत्वा मासे प्रस्रवणं गताः ।
कपिराजेन संगम्य निराशाः कपि[2]कुञ्जराः ॥ ६ ॥

तदह इति । प्रस्थानदिवसमित्यर्थः । तदहः प्रथमं कृत्वा गताः पुनर्मासे प्रस्रवणमागता इति योजना । कपिराजेन संगम्य निराशा अभवन्निति शेषः ॥ ६ ॥

विचित्य तु दिशं पूर्वां यथोक्तां सचिवैः सह ।
अदृष्ट्वा विनतः सीतां आजगाम महाबलः ॥ ७ ॥

उक्तार्थस्यैव प्रपञ्चः—विचित्येत्यादि ॥ ७ ॥

[3] दिशमप्युत्तरां [4] सर्वां विचित्य स महाकपिः ।
आगतः सह सैन्येन वीरः शतबलिस्तदा ॥ ८ ॥
सुषेणः पश्चिमामाशां विचित्य सह वानरैः ।
समेत्य मासे पूर्णे तु सुग्रीवमुपचक्रमे ‡ ॥ ९ ॥

---

* सर्वर्तुकामान् (पा.)–काम्यन्त इति कामाः—पुष्पफलादयः, सर्वर्तुसंभवफलपुष्पादियुक्तान् इत्यर्थः । सफलान्–वानरैरुपभुज्यमानत्वेन सफलान् द्रुमानासाद्य सर्वेष्वहस्सु–एकमासान्तर्गतसर्वदिनेषु रजनीं–रजन्यामेव शय्यां चक्रुः–**गो.** † तदहः–प्रस्थानदिनं प्रथमं कृत्वा—तदारभ्य मासे पूर्णे सति निराशाः—सीतान्वेषणे निरुत्साहाः सन्तः, कपिराजेन संगम्य–तस्मै स्वागमनं निवेद्येत्यर्थः, प्रस्रवणं—माल्यवन्तं गताः–**गो.** ‡ उपचक्रमे–उपागतः–**गो.**

[1] सर्वर्तुकामान्–ङ. [2] यूथपाः–ङ. [3] उत्तरांच दिशं–ङ. [4] सीतां–ङ.

तं प्रस्रवणपृष्ठस्थं समासाद्याभिवाद्य च ।
आसीनं सह रामेण सुग्रीवमिदमब्रुवन् ॥ १० ॥
विचिताः पर्वताः सर्वे वनानि [1] गहनानि च ।
निम्नगाः [2] सागरान्ताश्च सर्वे जनपदाश्च ये ॥ ११ ॥

सागरान्ताः—सागरमध्यवर्तिद्वीपाः ॥ ११ ॥

गुहाश्च [3] विचिताः सर्वाः यास्त्वया परिकीर्तिताः ।
विततास्च महागुल्माः लताविततसंतताः ॥ १२ ॥

लताविततैः—लताप्रतानैः संतताः—समन्तात् व्याप्ताः विततः- विशालाः महागुल्माः—लतागृहविशेषाः ॥ १२ ॥

गहनेषु च देशेषु दुर्गेषु विषमेषु च ।
* सत्त्वान्यतिप्रमाणानि विचितानि हतानि च ॥
[4] ये चैव गहना देशाः विचितास्ते पुनःपुनः ॥ १३ ॥

उदारसत्त्वाभिजनो [5] हनूमान्
स मैथिलीं [6] ज्ञास्यति, [7] वानरेन्द्र !
दिशं तु यामेव गता तु सीता
[8] तामास्थितो वायुसुतो हनूमान् ॥ १४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे सप्तचत्वारिंशः सर्गः

...त्त्वनिश्चयसिद्धमर्थं दर्शयति—उदारसत्त्वेत्यादि ।
अवा... १/२ ॥

...काण्डे सप्तचत्वारिंशः सर्गः

---

अनन्तरसर्गे १६ श्लोकोऽत्र द्रष्टव्यः ॥
...षाः सर्वाः सशैलवनकाननाः—ङ.
...स्यति—ङ. [7] वानरेन्द्रः—ङ.

[4] इ...
[8] ...



## अष्टचत्वारिंशः सर्गः

[कण्डूवनाद्यन्वेषणम्]

सह ताराङ्गदाभ्यां तु सहसा हनुमान् कपिः ।
सुग्रीवेण यथोद्दिष्टं गन्तुं देशं प्रचक्रमे ॥ १ ॥

अथ दक्षिणदिगन्वेषणप्रपञ्चः । सह तारेत्यादि । प्रचक्रमे, अन्वेष्टुमिति शेषः ॥ १ ॥

स तु दूरमुपागम्य सर्वैस्तैः कपिसत्तमैः ।
विचिनोति स्म विन्ध्यस्य गुहाश्च [1] गहनानि च ॥ २ ॥
* पर्वताग्रान् नदी दुर्गान् सरांसि [2] विपुलद्रुमान् ।
वृक्षषण्डांश्च विविधान् पर्वतान् [3] घनपादपान् ॥ ३ ॥
अन्वेषमाणास्ते सर्वे वानराः सर्वतो दिशम् ।
न सीतां [4] ददृशुर्वीराः मैथिलीं जनकात्मजाम् ॥
ते भक्षयन्तो मूलानि फलानि विविधान्यपि ॥ ४ ॥

फलानि विविधान्यपि भक्षयन्तः अन्वेषमाणाः ते इति पूर्वेणान्वयः ॥ ४ ॥

[5][ अन्वेषमाणा दुर्धर्षाः न्यवसंस्तत्र तत्र हि ।
स तु देशो दुरन्वेषो गुहागहनवान् महान् ॥]
निर्जलं निर्जनं शून्यं गहनं घोरदर्शनम् ॥ ५ ॥

---

* पर्वतान् (पा.) विन्ध्यस्य प्रत्यन्तपर्वतान् गोमन्तत्र्यम्बकादीन्—ती.

[1] विपिनानि च—ङ. [2] विपुलानि च—ङ. [3] वनपादपान्—ङ
[4] ददृशुस्सर्वे—ङ. [5] इदं पद्यमधिकं—झ.

अतः परं 'निर्जलं निर्जनं' इति श्लोकः । अत्र यथादर्शित-योजनाशक्तया स्वसौकर्याय मध्ये कञ्चन श्लोकं प्राक्षिपन् केचित् प्राचीनपुस्तकेषु ॥ ५ ॥

[1][ त्यक्त्वा तु तं ततो देशं सर्वे वै हरियूथपाः ।]
तादृशान्यप्यरण्यानि विचित्य भृशपीडिताः ।
स देशश्च दुरन्वेषः गुहागहनवान् महान् ॥ ६ ॥

तादृशान्यपीति । दुरन्वेषाण्यपीत्यर्थः । भृशपीडिता इति । मृगपक्षिमूलफलशून्यत्वात् क्षुत्पिपासाभ्यामिति शेषः । स देश इति प्रागुक्तनिर्जलादिमान् देश इत्यर्थः । स देशो यद्यपि दुरन्वेषः, अथापि तमपि विचित्य तु तं देशं त्यक्त्वाऽन्यं देशं विविशुरित्यन्वयः । * यद्वाभट्टस्तु 'निर्जलं' इत्यर्धानन्तरं 'त्यक्त्वा तु तं ततो देशं' इत्यादि पठति । निर्जलादिदेशं त्यक्त्वेत्यन्वयः सिध्येत् । एवञ्च किमन्विष्टं स्यात् दुरन्वेषदेशानन्वेषणे सति । प्राचीनपाङ्क्पाठश्च तथा नास्ति ॥ ६ ॥

देशमन्यं [2] दुरन्वेषं विविशुश्चाकुतोभयाः ।
यत्र वन्ध्यफला वृक्षाः विपुष्पाः पर्णवर्जिताः ॥ ७ ॥
निस्तोयाः सरितो यत्र मूलं यत्र सुदुर्लभम् ॥ ८ ॥

वन्ध्यफला इति । वन्ध्यं—अनुत्पन्नं फलं येषां ते तथा । यत्र वन्ध्यफलत्वादयो विशेषास्तस्मिन् । तस्य कण्डोर्वन इत्यग्रेण संबन्धः ॥

न सन्ति महिषा यत्र न मृगा न च हस्तिनः ।
शार्दूलाः पक्षिणो वाऽपि ये चान्ये वनगोचराः ॥ ९ ॥

---

* गोविन्दराजः ।

[1] इदमर्धं, तादृशेत्यर्धानन्तरं–ङ. [2] दुराधर्षं–झ.



न चात्र वृक्षा नौषध्यः [1] न लता नापि वीरुधः ।
* स्निग्धपत्राः स्थले यत्र पद्मिन्यः फुल्लपङ्कजाः ॥ १० ॥
प्रेक्षणीयाः सुगन्धाश्च भ्रमरैश्चापि वर्जिताः ।
कण्डुर्नाम महाभागः सत्यवादी तपोधनः ॥
महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ॥ ११ ॥

लताः—वृक्षगुल्मावलम्बिन्यः । वीरुधः — भूप्रतानवत्यः । यत्र स्थले स्निग्धपत्राः पद्मिन्यश्च नेत्यनुकर्षः । भ्रमरैश्चापि वर्जिताः—असंयुक्ताः । फुल्लपङ्कजानि च न सन्ति, यत्र च वने कण्डुर्नाम महर्षिरासीत् ॥ १०–११ ॥

तस्य तस्मिन् वने पुत्रः [2] बालो द्वादशवार्षिकः ।
प्रनष्टो † जीवितान्ताय [3] क्रुद्धस्तेन महामुनिः ॥ १२ ॥

तस्य तस्मिन् वने पूर्वं, इदानीं उक्तलक्षणवर्जित इति शेषः । द्वादशवार्षिकस्तस्य पुत्रो जीवितान्ताय—जीवितान्तं गत्वा, प्रनष्ट इत्यर्थः । तेन—एवं बालदुर्मरणेन क्रुद्धोऽभूत् ॥ १२ ॥

तेन धर्मात्मना शप्तं कृत्स्नं तत्र महद्वनम् ।
अशरण्यं दुराधर्षं [4] मृगपक्षिविवर्जितम् ॥ १३ ॥

---

* स्निग्धपत्रा—इत्यादि । अत्रापि 'न सन्ति' इत्यनुषज्यत इति केचित् (तीर्थः)—तन्न, भ्रमरैश्चापि वर्जिता इत्यनन्वयात् । किन्तु भ्रमरैरप्यनुपभुक्तं स्थलपद्मिनीमात्रमित्यर्थः । सर्वेऽपि महातटाकाः स्थलपद्मिनीत्वं गता इति भावः । अन्यं देशं विविशुरिति पूर्वेणान्वयः–**गो.** † जीवितान्ताय—जीवितान्तकराय वनाय क्रुद्धः–**ती.** तत्र (**पा.**)—वने विषये जीवितान्ताय—तस्य नाशाय–**गो.** प्रध्वंसाय–**रा.**

[1] न वश्यो–ङ. [2] बालः षोडशवार्षिकः–ङ., बालको दशवार्षिकः–झ. [3] क्रुद्धस्तत्र–झ. [4] कृत्स्नं पक्षि–ङ.

ततः तेन धर्मात्मना--शापानुग्रहसमर्थप्रबलधर्मवता तत्र काले महत् वनं शप्तमभूत् । ततः शापात् अशरण्यत्वादिस्वभावमभूत् । अशरण्यं--अनावासम् ॥ १३ ॥

तस्य ते [1]काननांस्तांश्च गिरीणां कन्दराणि च ।
[2]प्रभवानि नदीनां च विचिन्वन्ति समाहिताः ॥ १४ ॥

तस्य त इति । ते वानराः तस्य ऋषेः काननान् तांश्चेत्यादि । नदीनां प्रभवानीति । उत्पत्तिस्थानानीत्यर्थः । इदानीं ता नद्यो निर्जलाः ॥ १४ ॥

तत्र चापि महात्मानः नापश्यन् जनकात्मजाम् ।
हर्तारं रावणं वाऽपि सुग्रीवप्रियकारिणः ॥ १५ ॥
ते प्रविश्य च तं भीमं लतागुल्मसमावृतम् ।
[3]ददृशुर्भीमकर्माणं [4]असुरं सुर[5]निर्भयम् ॥ १६ ॥

ते प्रविश्येति । वनान्तरमिति शेषः । लतागुल्मसमावृतं--छन्नम् । सुरेभ्यो निर्भयः--सुरनिर्भयः, तथा वरदानादिति शेषः ॥ १६ ॥

तं दृष्ट्वा वानरा [6]घोरं स्थितं शैल[7]मिवापरम् ।
गाढं परिहिताः सर्वे दृष्ट्वा तं पर्वतोपमम् ॥ १७ ॥

गाढं परिहिताः--दृढबद्धवस्त्राः, सन्नद्धा इति यावत् ॥ १७ ॥

सोऽपि [8]तान् वानरान् सर्वान् नष्टाः स्थेत्यब्रवीद्बली ।
अभ्यधावत सङ्क्रुद्धः मुष्टिमुद्यम्य [9]संहितम् ॥ १८ ॥

---

[1] काननान्तांश्च--ङ. झ. [2] प्रभूतानि--ङ. [3] ददृशुः क्रूर--ङ. [4] आसुरं--ङ. [5] मर्दनम्--ङ. [6] घोराः--ङ. [7] मिवासुरम्--ङ. [8] मारीचतनयः--ङ. [9] संस्थितान्, दक्षिणम्--ङ.



तमापतन्तं सहसा वालिपुत्रोऽङ्गदस्तदा ।
रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह ॥ १९ ॥

स वालिपुत्राभिहतः वक्त्राच्छोणितमुद्वमन् ।
असुरो न्यपतद्भूमौ पर्यस्त इव पर्वतः ॥ २० ॥

पर्यस्तः--विशीर्णः ॥ २० ॥

ते तु तस्मिन्निरुच्छ्वासे वानरा जितकाशिनः ।
* व्यचिन्वन् प्रायशस्तत्र सर्वं तद्गिरिगह्वरम् ॥ २१ ॥

जितकाशिनः--जितभयाः ॥ २१ ॥

विचितं तु [1]ततस्सर्वं सर्वे ते [2]काननौकसः ।
अन्यदेवापरं † घोरं विविशुर्गिरिगह्वरम् ॥ २२ ॥

विचितं--कृतविचयनम् ॥ २२ ॥

ते विचित्य पुनः खिन्नाः विनिष्पत्य [3]समागताः ।
एकान्ते [4]वृक्षमूले तु निषेदुर्दीनमानसाः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे अष्टचत्वारिंशः सर्गः

---

अङ्गार(२३ १/२)मानः सर्गः ॥ २३ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे अष्टचत्वारिंशः सर्गः

---

* तस्मिन्नसुरे रावणभ्रान्त्या तत्समीपवने चिरमन्वेषितवन्त इति बोध्यम्--गो.
† अपरं--अदूरं, 'परं दूरान्यमुख्येषु' इति वैजयन्ती--गो.

[1] ततः कृत्वा--ङ, झ. [2] काननं पुनः--ङ. [3] समाहिताः--ङ. [4] वृक्षमूलेषु--ङ.

एकोनपञ्चाशः सर्गः

[रजतगिरिगवेषणम्]

अथाङ्गदस्तदा सर्वान् वानरानिदमब्रवीत् ।
[1] परिश्रान्तो महाप्राज्ञः समाश्वास्य शनैर्वचः ॥ १ ॥

पुनश्च तेषामन्वेषणयत्नः । अथाङ्गद इत्यादि । समाश्वास्य, वानरानिति शेषः ॥ १ ॥

वनानि गिरयो नद्यः दुर्गाणि गहनानि च ।
दर्यो गिरिगुहाश्चैव विचितानि समन्ततः ॥ २ ॥
तत्र तत्र महास्माभिः जानकी न च दृश्यते ।
* [2] तद्वा रक्षो हृता येन सीता सुरसुतोपमा ॥ ३ ॥
[3] कालश्च नो महान् यातः सुग्रीवश्चोग्रशासनः ।
तस्माद्भवन्तः [4] सहिताः विचिन्वन्तु समन्ततः ॥ ४ ॥

कालश्च नो महान् यात इति । मासपरिमित इति शेषः । न च शनैर्गम्यत इति वक्तुं शक्यमित्याह-सुग्रीव इत्यादि । यदेवं, अतः—तस्मादित्यादि ॥ ४ ॥

विहाय तन्द्रीं शोकं च [5] निद्रां चैव समुत्थिताम् ।
विचिनुध्वं यथा सीतां पश्यामो जनकात्मजाम् ॥ ५ ॥
अनिर्वेदं च † दाक्ष्यं च मनसश्चापराजयम् ।
कार्यसिद्धिकराण्याहुः तस्मादेतद्ब्रवीम्यहम् ॥ ६ ॥

* जानकी न दृश्यते, तत् रक्षो वा न दृश्यत इत्यन्वयः ॥ † दाक्ष्यं—उत्साहः, 'दक्ष उत्साहे' इत्युक्तेः—गो.

[1] परिश्रान्तान् महाप्राज्ञान्—ङ. [2] तथा रक्षोऽपहर्ता च सीतायाश्चैव दुष्कृती—ङ. [3] कालश्च वो—ङ. [4] सहसा—ङ. [5] निद्रां च समुपस्थिताम्—ङ.



अनिर्वेदं—अखेदम् । दाक्ष्यं—सामर्थ्यम् । अपराजयं—कार्यपराङ्मुखत्वम् । मानसं—मनोव्यापारः । एतदिति वक्ष्यमाणम् ॥

[1] अद्यापीदं वनं दुर्गं विचिन्वन्तु वनौकसः ।
खेदं त्यक्त्वा [2] पुनस्सर्वैः वनमेतद्विचीयताम् ॥ ७ ॥
अवश्यं क्रियमाणस्य दृश्यते कर्मणः फलम् ।
[3] परं निर्वेदमागम्य * न हि नोन्मीलनं क्षमम् ॥ ८ ॥

नोन्मीलनं—अनुन्मीलनमिति यावत् । अनुद्योग इत्यर्थः । न क्षमं—न युक्तम् ॥ ८ ॥

सुग्रीवः [4] क्रोधनो राजा तीक्ष्णदण्डश्च, वानराः !
भेतव्यं † तस्य सततं रामस्य च महात्मनः ॥ ९ ॥

तत्र हेतुः—सुग्रीव इत्यादि ॥ ९ ॥

[5] हितार्थमेतदुक्तं वः क्रियतां यदि रोचते ।
उच्यतां वा क्षमं यन्नः सर्वेषामेव, वानराः ! ॥ १० ॥

यत् नः क्षमं, अन्यद्वा, तदुच्यतामिति योजना ॥ १० ॥

अङ्गदस्य वचः श्रुत्वा वचनं गन्धमादनः ।
[6] उवाचाव्यक्तया वाचा पिपासाश्रमखिन्नया ॥ ११ ॥
सदृशं खलु वो वाक्यं अङ्गदो यदुवाच ह ।
हितं [7] चैवानुकूलं च क्रियतामस्य भाषितम् ॥ १२ ॥

* मीलनं (पा.)—नेत्रमीलनं, कर्तव्यमकृत्वा तूष्णींभाव इत्यर्थः—गो.
† संबन्धसामान्यविवक्षया षष्ठी—रा.

[1] अद्य चान्यद्वनं—ङ. [2] पुनस्सर्वं—ङ. [3] अलं . . . न हि नो मीलनं—ङ. [4] कोपनो—ङ. [5] यथार्थं—ङ. [6] उवाच व्यक्तया—ङ. [7] चैवानुरूपं—ङ.

पुनर्मार्गामहे शैलान् कन्दरांश्च [1]दरीस्तथा ।
काननानि च शून्यानि गिरिप्रस्रवणानि च ॥ १३ ॥

यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना ।
विचिन्वन्तु [2]वनं सर्वे गिरिदुर्गाणि [3]सर्वशः ॥ १४ ॥

ततस्समुत्थाय पुनः वानरास्ते महाबलाः ।
विन्ध्यकानन[4]संकीर्णां विचेरुर्दक्षिणां दिशम् ॥ १५ ॥

ते शारदाभ्रप्रतिमं श्रीमद्रजतपर्वतम् ।
शृङ्गवन्तं दरीमन्तं अधिरुह्य च, वानराः ! ॥ १६ ॥

तत्र [5]लोध्रवनं रम्यं सप्तपर्णवनानि च ।
[6]व्यचिन्वंस्ते हरिवराः सीतादर्शनकाङ्क्षिणः ॥ १७ ॥

तस्याग्रमधिरूढास्ते श्रान्ता विपुलविक्रमाः ।
न पश्यन्ति स्म वैदेहीं रामस्य महिषीं प्रियाम् ॥ १८ ॥

ते तु दृष्टिगतं [7]दृष्ट्वा तं शैलं बहुकन्दरम् ।
[8]अध्यारोहन्तु हरयः वीक्षमाणाः समन्ततः ॥ १९ ॥

दृष्टिगतं — दृष्टिगोचरम् ॥ १९ ॥

अवरुह्य ततो भूमिं [9]श्रान्ता विगतचेतसः ।
स्थित्वा मुहूर्तं तत्राथ वृक्षमूलमुपाश्रिताः ॥ २० ॥

ते मुहूर्तं [10]समाश्वस्ताः *[11]किञ्चिद्भग्नपरिश्रमाः ।
पुनरेवोद्यताः कृत्स्नां मार्गितुं दक्षिणां दिशम् ॥ २१ ॥

---

* किञ्चिद्भग्नपरिश्रमाः——किञ्चिन्न्यूनपरिश्रमाः इति भावः ॥

[1] शिलास्तथा–च. ज. [2] वने सर्वे–ङ. [3] संगताः–ज. [4] संपूर्णां–ङ. [5] कोद्रवनं–ङ. [6] विचिन्वन्तो–ङ. [7] कृत्वा–ङ. [8] अवारोहन्त–ङ., झ. [9] भ्रान्ता–ङ. [10] समायस्ताः–ङ. [11] किञ्चिद्रत–ङ.



हनुमत्प्रमुखास्ते तु प्रस्थिताः प्लवगर्षभाः ।
विन्ध्य[1]मेवादितस्तावत् विचेरुस्ते ततस्ततः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकोनपञ्चाशः सर्गः

---

आदितस्तावत् विन्ध्यमेव विचेरुरिति, अन्वेषणायेति शेषः । तावच्छब्दो वाक्यालङ्कारे । रात्रि(२२)मानः सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकोनपञ्चाशः सर्गः

---

## पञ्चाशः सर्गः

[ऋक्षबिलप्रवेशः]

सह ताराङ्गदाभ्यां तु संगम्य हनुमान् कपिः ।
विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ १ ॥

सिंहशार्दूल[2]जुष्टाश्च [3]शिलाश्च सरितस्तथा ।
विषमेषु नगेन्द्रस्य महाप्रस्रवणेषु च* ॥ २ ॥

अथ ऋक्षबिलप्रवेशः–सहेत्यादि । विषमेषु–क्लेशावहेषु ॥ १-२ ॥

आसेदुस्तस्य शैलस्य कोटिं दक्षिणपश्चिमाम् ।
तेषां तत्रैव वसतां †स कालो व्यत्यवर्तत ॥ ३ ॥

---

* अस्य 'विचिनोति स्म' इत्यनेनान्वयः । †'मासः पूर्णो बिलस्थानां' (पृ. 452) इत्युत्तरत्राङ्गदवचनस्य बिल एवान्यो मासो गत इत्यर्थो वक्ष्यते–गो.

[1] मेवादितः कृत्वा–ङ. [2] जुष्टेषु–ङ. [3] गुहाश्च–ङ.

दक्षिणपश्चिमां तस्य कोटिमिति । नैर्ऋतिभागमित्यर्थः । स काल इति । सुग्रीवकल्पित इत्यर्थः ॥ ३ ॥

*स हि देशो दुरन्वेषः गुहागहनवान् महान् ।
†तत्र वायुसुतः सर्वं विचिनोति स्म पर्वतम् ॥
परस्परेण [1]हनुमान् अन्योन्यस्याविदूरतः ॥ ४ ॥

स हि देश इति । नैर्ऋतविन्ध्यकोटिप्रदेश इत्यर्थः । परस्परेण प्रत्येकं अन्योन्यस्याविदूरतः संगतो भूत्वा हनुमान् विचिनोति स्म ॥

गजो गवाक्षो गवयः शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव सुषेणो हनुमानपि ॥ ५ ॥
अङ्गदो युवराजश्च तारश्च वनगोचरः ।
गिरिजालावृतान् देशान् मार्गित्वा दक्षिणां दिशम् ॥ ६ ॥
विचिन्वन्तस्ततस्तत्र ददृशुर्विवृतं बिलम् ।
दुर्गमृक्षबिलं नाम ‡दानवेनाभिरक्षितम् ॥ ७ ॥
क्षुत्पिपासापरीताश्च श्रान्ताश्च सलिलार्थिनः ।
अवकीर्णं लतावृक्षैः ददृशुस्ते महाबिलम् ॥ ८ ॥

लताश्च वृक्षाश्च—लतावृक्षाः ॥ ८ ॥

[2]ततः क्रौञ्चाश्च हंसाश्च सारसाश्चापि §निष्क्रमन् ।
जलार्द्राश्चक्रवाकाश्च रक्ताङ्गाः पद्मरेणुभिः ॥ ९ ॥

निष्क्रमन्—निष्क्रामन्तीति यावत् ॥ ९ ॥

---

*ननु विचेतव्यप्रदेशेषु बहुषु विद्यमानेषु कथमत्रैव मासं क्षपितवन्त इत्याशङ्कयाऽऽह—स हीति—गो. †तत्रेति । अत्र संगमय्येत्यध्याहार्यम्—गो. ‡दानवेन—मयेन—गो., ति. §निष्क्रमन्—निरक्रमन्—गो., ति.

[1] रहिता—झ. [2] तत्र—ङ.



ततस्तद्बिलमासाद्य सुगन्धि दुरतिक्रमम् ।
विस्मयव्यग्रमनसः बभूवुर्वानरर्षभाः ॥ १० ॥

सुगन्धीति । बिलान्तर्वक्ष्यमाणदिव्यगन्धपुष्पादिसुरभिवातसंगादिति शेषः ॥ १० ॥

*संजातपरिशङ्कास्ते तद्बिलं प्लवगोत्तमाः ।
[1]अभ्यपद्यन्त संहृष्टाः तेजोवन्तो महाबलाः ॥ ११ ॥

संजातपरिशङ्काः—संजातजलसत्त्वसंभावनाः । तेजोवन्त इति मतुप् छान्दसः ॥ ११ ॥

[2]नानासत्त्वसमाकीर्णं दैत्येन्द्रनिलयोपमम् ।
दुर्दर्शमतिघोरं च दुर्विगाहं च सर्वशः ॥ १२ ॥

दैत्येन्द्रनिलयः—पातालम् ॥ १२ ॥

ततः पर्वतकूटाभः हनुमान् [3]पवनात्मजः ।
अब्रवीत् वानरान् [4]सर्वान् कान्तारवन[5]कोविदः ॥

कान्तारवनकोविदः—तत्प्रदेशप्रवेशादिसमर्थः इत्यर्थः ॥ १३ ॥

†गिरिजालावृतान् देशान् मार्गित्वा दक्षिणां दिशम् ।
वयं सर्वे परिश्रान्ताः न च पश्याम मैथिलीम् ॥ १४ ॥
अस्माच्चापि बिलाद्धंसाः क्रौञ्चाश्च सह सारसैः ।
जलार्द्राश्चक्रवाकाश्च निष्पतन्ति स्म [6]सर्वतः ॥ १५ ॥

---

*संजातपरिशङ्काः—किमिदं पातालम् ? उतान्यन्मायामयम् ? इति संदिहानाः—गो. †दक्षिणां दिशं प्राप्य गिरिजालावृतान् मार्गित्वा—रा.

[1] अभ्यपद्यन्त—ङ. [2] महासर्प—ङ. [3] मारुतात्मजः—ञ. [4] घोरान्—ङ. [5] कोविदान्—ङ. [6] सर्वशः—ञ.

नूनं सलिलवानत्र कूपो वा यदि वा ह्रदः ।
तथा चेमे बिलद्वारे स्निग्धास्तिष्ठन्ति पादपाः ॥ १६ ॥

इत्युक्त्वास्तद्बिलं सर्वे विविशुस्तिमिरावृतम् ।
अचन्द्रसूर्यं हरयः ददृशू रोमहर्षणम् ॥ १७ ॥

इत्युक्त्वा इति । हनुमतेति शेषः ॥ १७ ॥

निशाम्य तस्मात् सिंहांश्च [1] तांस्तांश्च मृगपक्षिणः ।
प्रविष्टा हरिशार्दूलाः बिलं तिमिरसंवृतम् ॥ १८ ॥

निशाम्य---अवलोक्य ॥ १८ ॥

न तेषां [2] सज्जते [3] चक्षुः न तेजो न पराक्रमः ।
* वायोरिव गतिस्तेषां दृष्टिस्तमसि वर्तते ॥ १९ ॥

न सज्जते---न प्रतिबध्यते ॥ १९ ॥

ते प्रविष्टास्तु वेगेन तद्बिलं कपिकुञ्जराः ।
प्रकाशमभिरामं च ददृशुर्देशमुत्तमम् ॥ २० ॥

ततस्तस्मिन् बिले [4] दुर्गे नानापादपसंकुले ।
अन्योन्यं संपरिष्वज्य जग्मुर्योजनमन्तरम् ॥ २१ ॥

अन्योन्यं संपरिष्वज्य—आलिङ्गनं कृत्वा, तिमिरदेशविनिर्गमनजसंतोषवशादिति शेषः । † भट्टस्तु—अन्योन्यहस्तावलम्बनं

---

* यद्यपि वायोरिव गतिः; तथापि यतो दृष्टिस्तमसि प्रतिबद्धा वर्तते, अतो वेगेन परस्परहस्तग्रहणपूर्वकं प्रविष्टा इत्यर्थः-ति. † गोविन्दराजः, महेश्वरतीर्थो वा ॥

[1] व्याघ्रांश्च—ङ. [2] विद्यते—ङ. [3] दृष्टिः—ज. [4] भीमे—च. ञ.



कृत्वेत्याह । * नान्धकारः, नापि दुर्बलाः; कुतोऽन्योन्यहस्तावलम्बनप्रसङ्गः । नापि च परिष्वङ्गशब्दः हस्तावलम्बनवाची ॥ २१ ॥

ते नष्टसंज्ञास्तृषिताः संभ्रान्ताः सलिलार्थिनः ।
† परिपेतुर्बिले तस्मिन् कश्चित्कालमतन्द्रिताः ॥ २२ ॥

ते नष्टसंज्ञा इति । तृषावशादिति शेषः । तदेव दर्शितं—तृषिता इत्यादिना । परिपेतुः---अधोमार्गावलम्बनेन गच्छन्ति स्म ॥

ते कृशा दीनवदनाः परिश्रान्ताः प्लवङ्गमाः ।
‡ आलोकं ददृशुर्वीराः निराशा जीविते तदा ॥ २३ ॥

ततस्तं देशमागम्य [1] सौम्यं वितिमिरं [2] वनम् ।
ददृशुः काञ्चनान् [3] वृक्षान् दीप्तवैश्वानरप्रभान् ॥ २४ ॥

आलोकमेव ददृशुः, न तु जलम् । अतो जीविते निराशा यदा बभूवुः, तदा उच्यमानलक्षणं तं देशमागम्य काञ्चनवृक्षान् ददृशुः ॥

[4] सालांस्तालांश्च पुन्नागान् ककुभान् [5] वञ्जुलान् धवान् ।
चम्पकान्नागवृक्षांश्च कर्णिकारांश्च पुष्पितान् ॥ २५ ॥

---

* नान्धकार इति । अत्र १९ श्लोकस्य टिप्पणी द्रष्टव्या । ५२ सर्गस्य १४ श्लोकोऽपि द्रष्टव्यः ॥ † परिपेतुरिति लोकवदुक्तिः, अस्वातन्त्र्यादौ हि तथा व्यपदेशो लोके । ‡ आलोकं—प्रकाशम्—गो. प्रकाशितदेशम्—रा. यदा जीविते निराशा अभवन्, तदाऽकस्मात् आलोकं ददृशुः । ततः तं आलोकदेशमागम्येत्यादि ॥

[1] सर्वे—ङ. [2] समं—ङ. [3] दिव्यान् दीप्तान्—ङ. [4] सालांस्तमालान्—ज.
[5] बकुलान्—ङ.

स्तबकैः काञ्चनैश्चित्रैः रक्तैः किसलयैस्तथा ।
आपीडैश्च लताभिश्च [1]हेमाभरणभूषितान् ॥ २६ ॥

आपीडैः—स्तबकशेखरैः लताभिश्चेति । संयुक्तानिति शेषः ॥

तरुणादित्यसंकाशान् वैदूर्यमयवेदिकान् ।
विभ्राजमानान् वपुषा पादपांश्च हिरण्मयान् ॥ २७ ॥

पादपान् *ददृशुः ॥ २७ ॥

नीलवैदूर्यवर्णाश्च पद्मिनीः [2]पतगावृताः ।
महद्भिः काञ्चनैः [3]पद्मैः वृता बालार्कसन्निभैः ॥ २८ ॥

पद्मिनीः—पद्मवत्यः ॥ २८ ॥

जातरूपमयैर्मत्स्यैः [4]महद्भिश्च सकच्छपैः ।
नलिनीस्तत्र ददृशुः प्रसन्नसलिलावृताः ॥ २९ ॥

उच्यमानविशेषणा नलिनीश्च ददृशुः ॥ २९ ॥

काञ्चनानि विमानानि राजतानि तथैव च ।
तपनीयगवाक्षाणि मुक्ताजालावृतानि च ॥ ३० ॥
हैमराजतभौमानि वैदूर्यमणिमन्ति च ।
ददृशुस्तत्र हरयः गृहमुख्यानिसर्वशः ॥ ३१ ॥

मुक्ताखचितैः जालैः, मुक्तासमूहैर्वा आवृतानि गवाक्षाणि ददृशुः ।
हेमरजतभूमिविकाराणि—हैमराजतभौमानि ॥ ३०-३१ ॥

---

* ददृशुरित्यागामिनाऽन्वय इत्यर्थः ॥

[1] हेमभारवि–ङ. [2] पतगैर्वृताः–ङ. [3] वृक्षैः–ज. [4] महद्भिश्चाथ पङ्कजैः–ङ.



पुष्पितान् फलिनो वृक्षान् प्रवालमणिसन्निभान् ।
काञ्चनभ्रमरांश्चैव मधूनि च समन्ततः ॥ ३२ ॥

प्रवालाः मणयः—वैडूर्याणि च, तत्सन्निभास्तथा ॥ ३२ ॥

मणिकाञ्चनचित्राणि शयनान्यासनानि च ।
[1]महार्हाणि च यानानि ददृशुस्ते समन्ततः ॥ ३३ ॥
हैमराजतकांस्यानां भाजनानां च संचयान् ।
अगरूणां च दिव्यानां चन्दनानां च संचयान् ॥ ३४ ॥
शुचीन्यभ्य वहार्याणि मूलानि च फलानि च ।
महार्हाणि च [3]यानानि मधूनि रसवन्ति च ॥ ३५ ॥

यानं—शिबिकादि ॥ ३५ ॥

दिव्यानामम्बराणां च महार्हाणां च सञ्चयान् ।
कम्बलानां च चित्राणां अजिनानां च संचयान् ॥ ३६ ॥
[4](तत्र तत्र च विन्यस्तान् दीप्तान् वैश्वानरप्रभान् ।
ददृशुर्वानराः शुभ्रान् जातरूपस्य संचयान् ॥)
तत्र तत्र विचिन्वन्तः [5]बिले तस्मिन् [6]महाबलाः ।
ददृशुर्वानराः शूराः स्त्रियं काञ्चिददूरतः ॥ ३७ ॥
तां दृष्ट्वा भृशसंत्रस्ताः चीरकृष्णाजिनाम्बराम् ।
तापसीं नियताहारां ज्वलन्तीमिव तेजसा ॥ ३८ ॥

---

[1] विविधानि विशालानि–ज. एतदादिपद्यत्रयमधिकं–झ. [2] वहाराणि–ज.
[3] मत्स्यानि–ङ., पानानि–ज. [4] इदं पद्यमधिकं–झ. [5] वने–ङ. [6] महाप्रभाः–ज.

विस्मिता हरयस्तत्र [1]व्यवतिष्ठन्त सर्वशः ।
पप्रच्छ हनुमांस्तत्र काऽसि त्वं कस्य वा बिलम् ॥ ३९ ॥

व्यवतिष्ठन्त---व्यवस्थिताः---तूष्णीमवस्थिता बभूवुः ॥ ३९ ॥

ततो हनूमान् गिरिसन्निकाशः
कृताञ्जलिस्तामभिवाद्य वृद्धाम् ।
पप्रच्छ का त्वं *भवनं बिलं च
रत्नानि [2]हेमानि वदस्व कस्य ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे पञ्चाशः सर्गः

---

'पप्रच्छ हनुमान्' इत्यर्थोक्तार्थस्यैव सविशेषं प्रतिपादनं— ततो हनूमानित्यादि । अनभि(४० १/२)मानः सर्गः ॥ ४० ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे पञ्चाशः सर्गः

---

## एकपञ्चाशः सर्गः

### [स्वयंप्रभोपचारः]

इत्युक्त्वा हनुमांस्तत्र †[3]पुनः कृष्णाजिनाम्बराम् ।
अब्रवीत्तां महाभागां तापसीं धर्मचारिणीम् ॥ १ ॥

अथ हनुमत्पृष्टायास्तापस्याः प्रत्युत्तरम् । इत्युक्त्वेत्यादि । 'का त्वं, कस्य भवनं' इत्युक्तरीत्येत्यर्थः ॥ १ ॥

---

* भवनं बिलं इत्यादिकं कस्येत्यन्वयः ॥ † एवं पृष्ट्वा पुनः विस्तरेणाब्रवीदित्यर्थः ॥

[1] व्यवातिष्ठन्त—ङ. [2] चैतानि—ङ. [3] चीर—ञ.



इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् ।
क्षुत्पिपासापरिश्रान्ताः परिखिन्नाश्च सर्वशः ॥ २ ॥

पुनरब्रवीदिति किमब्रवीदित्यतः—इदं प्रविष्टा इत्यादि । सहसा—हठात् * ॥ २ ॥

महद्धरण्या विवरं प्रविष्टाः स्म पिपासिताः ।
इमांस्त्वेवंविधान् भावान् विविधानद्भुतोपमान् ॥
दृष्ट्वा वयं प्रव्यथिताः संभ्रान्ता [1]नष्टचेतसः ॥ ३ ॥

महत् धरण्या विवरमित्यादिनाप्युक्तार्थस्य प्रतिपादनम् । अद्भुतोपमान्—आश्चर्यकल्पान् भावान्—पदार्थान् ॥ ३ ॥

कस्यैते काञ्चना वृक्षाः तरुणादित्यसन्निभाः ।
शुचीन्यभ्य[2]वहार्याणि मूलानि च फलानि च ॥ ४ ॥
काञ्चनानि विमानानि राजतानि गृहाणि च ।
तपनीयगवाक्षाणि मणिजालावृतानि च ॥ ५ ॥
पुष्पिताः फलवन्तश्च पुण्याः सुरभिगान्धिनः ।
इमे जाम्बूनदमयाः पादपाः कस्य तेजसा ॥ ६ ॥

कस्य तेजसेति । संभूता इति शेषः । जाता इत्याकर्षो वा ॥

काञ्चनानि च पद्मानि जातानि विमले जले ।
कथं मत्स्याश्च सौवर्णाः [3]चरन्ति सह कच्छपैः ॥ ७ ॥

---

* अकस्मादिति यावत् ।

[1] नष्टचेतनाः—ङ. [2] वहाराणि—ञ. [3] दृश्यन्ते—ञ.

[1] आत्मानमनुभावं च कस्य चैतत्तपोबलम् ।
अजानतां नः सर्वेषां सर्वमाख्यातुमर्हसि ॥ ८ ॥

आत्मानं—त्वत्स्वरूपम् । अनुभावं—त्वद्वैभवम् । एतत् कस्य तपोबलम्? तव वा? अन्यस्य वा? इत्येवं अजानताम् ॥ ८ ॥

एवमुक्ता हनुमता तापसी धर्मचारिणी ।
प्रत्युवाच हनूमन्तं सर्वभूतहिते [2] रता ॥ ९ ॥

* मयो नाम महातेजाः मायावी [3] दानवर्षभः ।
तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् ॥ १० ॥

तेनेति । मायाविना मयेनेत्यर्थः । मायया—विचित्रनिर्माणशक्त्या ॥ १० ॥

पुरा दानवमुख्यानां विश्वकर्मा बभूव ह ।
येनेदं काञ्चनं दिव्यं निर्मितं भवनोत्तमम् ॥ ११ ॥

को नाम मयः? इत्यपेक्षायां, तत्प्रसिद्धिमाह—पुरेत्यादि । विश्वकर्मेति । शिल्पीति यावत् । येनेदं निर्मितं, स तु पुरा दानवानां विश्वकर्मा बभूव ह—प्रसिद्धम् ॥ ११ ॥

स तु वर्षसहस्राणि तपस्तप्त्वा महावने ।
पितामहाद्वरं लेभे सर्वमौशनसं धनम् ॥ १२ ॥

* मयो नाम त्रिपुराधिपतिः त्रिपुरे नष्टे स्वरक्षणार्थमिदं बिलं कृतवानिति मत्स्यपुराणे त्रिपुरदहनप्रस्तावेऽभिहितम् । मायया विचित्रशक्त्या मायावी—मायायुक्तः दानवर्षभ इत्यनेन नायमसुरतक्षा मय इति सूचितम्—गो.

[1] आत्मनस्त्वनुभावाद्वा—ज. [2] रतम्—ङ. [3] वानरर्षभ—ज.



कथमस्यैवं निर्माणशक्तिरित्यत आह—स तु वर्षेत्यादि । पितामहात् वरं—विचित्रसृष्टिसामर्थ्यं लेभे । अपि च सर्वं औशनसं धनं—एवं निर्माणसाधनपदार्थजातं च लेभे—पितामहाज्ञया शुक्रात् प्राप्तवानित्यर्थः । * भट्टस्तु—औशनसं धनं—शिल्पशास्त्रज्ञानमित्याह । उशनस एव तावत् शिल्पशास्त्रासाधारणज्ञानधनत्वं विमतम् । अपि वा, तथापि तत्सिद्धये तत्सेवैव कर्तव्या, न तु पितामहमुद्दिश्य वर्षसहस्रतपः ॥ १२ ॥

[1] विधाय सर्वं बलवान् सर्वकामेश्वरस्तदा ।
उवास सुखितः कालं कञ्चिदस्मिन् महावने ॥ १३ ॥

बलवानिति । उक्तवरद्वयरूपबलवानित्यर्थः । सर्वकामेति । स्वसृष्टसर्वभोग्यविशेषाणां ईश्वरः भोक्ता सन् सुखित उवास ॥ १३ ॥

† तमप्सरसि हेमायां सक्तं दानवपुङ्गवम् ।
विक्रम्यैवाशनिं गृह्य जघानेशः पुरन्दरः ॥ १४ ॥

हेमाख्यायां अप्सरसि सक्तं, अशनिं गृह्य—गृहीत्वा विक्रम्यैव—युद्धं कृत्वैव पुरन्दरो जघान । ननु असुरशिल्पी मयो नित्यः । तस्य कथं हननम्? ननु इन्द्राणामप्यनित्यत्वे का नाम मयस्य नित्यता? प्रसिद्धिस्तु यो यः असुरशिल्पिपदं प्राप्तः, स स मयाख्यः । ततश्च इन्द्रवदेव पदाविच्छेदात् प्रवाहनित्यत्वम् ॥ १४ ॥

इदं च ब्रह्मणा दत्तं हेमायै [2] वनमुत्तमम् ।
शाश्वताः कामभोगाश्च गृहं चेदं हिरण्मयम् ॥ १५ ॥

* महेश्वरतीर्थः । † तं—स्वपुत्रीं मन्दोदरीं रावणाय दत्तवन्तम्—गो.

[1] वनं विधाय बलवान्—ङ. झ. [2] भवनोत्तमम्—ङ.

तस्मिन् हते इदं च वनं मयमुक्तायै हेमायै भगवता ब्रह्मणा दत्तम्, तस्या एव न्यायप्राप्तत्वात् । अत्र च ब्रह्मद्वेषी * ब्राह्मणाधमो ब्रह्मशब्दार्थापलापायाह । कथम् ? अत्र ब्रह्मशब्दः ब्रह्मनिष्ठदानवविश्वकर्मणीति । कथं दानवस्य तद्विवक्षितपरब्रह्मनिष्ठत्वम् ? कथं च पुरन्दरहेतन दानम् ? ननु पितामहोपासकत्वादेव साकारब्रह्मनिष्ठत्वमस्ति । किं तथोपासका रावणहिरण्यादयोऽपि ब्रह्माणः ? नश्यतु पापी प्रलप्यान्याय्यम् ॥ १५ ॥

दुहिता मेरुसावर्णेः अहं [1] तस्याः स्वयंप्रभा ।
इदं रक्षामि भवनं हेमायाः, वानरोत्तम ! ॥ १६ ॥

स्वयंप्रभेत्यनेनान्वर्थनाम्ना सूर्यालोकप्रसक्तिरहितेऽपि तत्र स्वतेजसा प्रकाशनसामर्थ्यं दर्शितम् ॥ १६ ॥

मम प्रियसखी हेमा नृत्तगीतविशारदा ।
तया दत्तवरा चास्मि रक्षामि [2] भवनोत्तमम् ॥ १७ ॥

ननु हेमाया एव भगवता दत्तत्वात् तवात्र कः प्रसङ्गः ? इत्यत्राह—मम प्रियसखीत्यादि । दत्तवरा — दत्तरक्षणसामर्थ्या । चकारेण, सखीत्वतः प्रार्थितरक्षणा चेत्यर्थः ॥ १७ ॥

† किं कार्यं कस्य वा हेतोः कान्ताराणि प्रपश्यथ ।
कथश्चेदं वनं दुर्गं युष्माभि[3]रुपलक्षितम् ॥ १८ ॥

* महेश्वरतीर्थः । † किं कार्यमिति कार्यस्वरूपप्रश्नः । कस्य वेत्यादि फलप्रश्नः ।

[1] नाम्ना—ङ. [2] भवनं महत्—च. [3] रभिलक्षितम्—ङ.



एवं स्वं वृत्तान्तमुक्त्वा हनुमदादीनां वृत्तान्तं पृच्छति—किं कार्यमित्यादि ॥ १८ ॥

इमान्यभ्य[1]वहाराणि मूलानि च फलानि च ।
भुक्त्वा पीत्वा च पानीयं [2] सर्वं मे [3] वक्तुमर्हथ [4] ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकपञ्चाशः सर्गः

———

अभ्यवहाराणि—अभ्यवहार्याणीत्यर्थः । अर्धैर्य(१९ १/२)मानः सर्गः ॥ १९ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकपञ्चाशः सर्गः

———

[1] वहार्याणि—ङ. [2] सत्यं—ङ. [3] वक्तुमर्हसि.

[4] एतदनन्तरं—एवमुक्ते शुभे वाक्ये तापस्या धर्मसंहिते ।
हनुमान् हरिशार्दूलः प्रत्युवाच स्वयंप्रभाम् ।
अर्थिनः स्म तदर्थे च चर धर्ममनुत्तमम् ॥
मृगमाणान्निराहारान् संजीवय, तपोधने !
तच्छ्रुत्वा वचनं तस्य तापसी धर्मचारिणी ।
आदाय फलमूलानि विधिनोपजहार सा ॥
प्रतिगृह्य तु ते तस्याः तथातिथ्यं वनेचराः ।
क्षुधार्ता भक्षयामासुः प्रशसन्तस्तपोधनाम् ।
ते भक्षयित्वा तत्सर्वं पीत्वा सुरभि वारि च ।
सर्वे ददृशुरालोकान् सर्वतो वानरा गुहाम् ॥
प्रसन्नवदनाश्चासन् सर्वे संहृष्टमानसाः ।
संजातं बलवीर्यं च तत्र तेषां वनौकसाम् ।
तर्पिता विविधैर्मूलैः फलैश्शीतेन वारिणा ॥—इत्यधिकं—ङ.

## द्विपञ्चाशः सर्गः

[बिलप्रवेशकारणकथनम्]

*अथ तानब्रवीत् सर्वान्[1] विश्रान्तान् हरियूथपान् ।
इदं वचनमेकाग्रा तापसी धर्मचारिणी ॥ १ ॥

अथ स्वयंप्रभायै हनुमता स्वीयवृत्तान्तनिवेदनम् । अथेत्यादि । इदं—वक्ष्यमाणम् ॥ १ ॥

वानराः ! यदि वः खेदः प्रणष्टः फलभक्षणात् ।
यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि कथ्यताम् ॥

यदि चैतदिति । 'किं कार्यं कस्य वा हेतोः इत्यादितः प्राक् पृष्टार्थतत्त्वमित्यर्थः ॥ २ ॥

तस्यास्तद्वचनं श्रुत्वा हनुमान् मारुतात्मजः ।
आर्जवेन यथातत्त्वं आख्यातुमुपचक्रमे ॥ ३ ॥
†राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ॥ ४ ॥
लक्ष्मणेन सह भ्रात्रा[3] वैदेह्या चापि भार्यया ।
तस्य भार्या जनस्थानात् रावणेन हृता बलात् ॥ ५ ॥

बलात्—बलात्कारेण ॥ ५ ॥

---

* अथ—'भुक्त्वा पीत्वा' इत्युक्तयनन्तरं, तथैव भुक्त्वा पीत्वा विश्रान्तिस्वीकारानन्तरम् । † सर्वलोकराजत्वोक्त्या तस्येश्वरत्वं सूचितम्—गो. वस्तुतस्तु भृत्यानां स्वस्वामिविषये एवं वादः सहजः, 'दासोऽहं कोसलेन्द्रस्य' इति ह्यात्मानमुद्घोषयति हनुमान् ॥

[1] विक्रान्तान्—ङ. [2] तां कथाम्—ङ. [3] सीतया सह—ङ.



वीरस्तस्य सखा राज्ञः सुग्रीवो नाम वानरः ।
राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥ ६ ॥
अगस्त्याचरितामाशां दक्षिणां यमरक्षिताम् ।
सहैभिर्वानरै[1]र्मुख्यैः अङ्गदप्रमुखैर्वयम् ॥ ७ ॥
रावणं सहिताः सर्वे राक्षसं कामरूपिणम् ।
सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ॥ ८ ॥

'अङ्गदप्रमुखैः वानरैः सहिताः सर्वे यूयं सहिताः—समवेताः सन्तः रावणं सीतया सह मार्गध्वं' इति चोदिताः स्म ॥ ७-८ ॥

विचित्य तु [2] वयं सर्वे समग्रां दक्षिणां दिशम् ।
बुभुक्षिताः परिश्रान्ताः वृक्षमूलमुपाश्रिताः ॥ ९ ॥

अत एव—विचित्येत्यादि ॥ ९ ॥

विवर्णवदनाः सर्वे [3] सर्वे *ध्यानपरायणाः ।
नाधिगच्छामहे पारं मग्नाश्चिन्तामहार्णवे ॥ १० ॥

नाधिगच्छामहे पारमिति । चिन्तामहार्णवस्येति शेषः ॥ १० ॥

चारयन्तस्ततश्चक्षुः दृष्टवन्तो[4] वयं बिलम् ।
लतापादप[5]संछन्नं तिमिरेण समावृतम् ॥ ११ ॥
अस्माद्धंसा जलक्लिन्नाः [6]पक्षैस्सलिल[7]विस्रवैः ।
कुरराः सारसाश्चैव निष्पतन्ति पतत्रिणः ॥ १२ ॥

---

* ध्यानपरायणाः—सुग्रीवाज्ञास्मरणनिरताः—रा. वस्तुतस्तु-चिन्तापराः, तत्रैव चिन्तार्णवे मग्नाः—इति लोकवदुक्तिर्वा ॥

[1] धीरैः—ङ. [2] वनं सर्वं—ज. [3] सदा—ङ. [4] महत्—ज. [5] संपन्नं—ज. [6] निर्यान्ति विवृताद्बिलात्—ङ. [7] रेणुभिः—ज.

शरणं त्वां प्रपन्नाः स्मः सर्वे वै, धर्मचारिणि !
यः कृतः समयोऽस्माकं सुग्रीवेण महात्मना ॥ २ ॥

स च कालो ह्यतिक्रान्तः [1]बिले नः परिवर्तताम् ।
सा त्वमस्मा[2]द्बिलाद्घोरात् उत्तारयितुमर्हसि ॥ ३ ॥

यः समय इति । कालावधिरित्यर्थः ॥ २-३ ॥

[3]तस्मात् सुग्रीववचनात् अतिक्रान्तान् गतायुषः ।
त्रातुमर्हसि नः सर्वान् सुग्रीवभय[4]शङ्कितान् ॥ ४ ॥

गतायुष इति । नष्टजीवितानित्यर्थः । तत्र हेतुः—सुग्रीववचनादतिक्रान्तानिति ॥ ४ ॥

*महच्च कार्यमस्माभिः कर्तव्यं, धर्मचारिणि !
तच्चापि न कृतं कार्यं अस्माभिरिह वासिभिः ॥ ५ ॥

एवमुक्ता हनुमता तापसी वाक्यमब्रवीत्[5] ।
जीवता दुष्करं मन्ये प्रविष्टेन निवर्तितुम् ॥ ६ ॥

तपसस्तु प्रभावेण नियमोपार्जितेन च ।
सर्वानेव बिलादस्मात् [6]उद्धरिष्यामि वानरान् ॥ ७ ॥

प्रविष्टेन—इदं बिलं प्रविष्टेन प्राणिना अस्मात् जीवता निवर्तितुं दुष्करं मन्ये । तर्हि वयं किं कुर्मः ? इत्यत्राह—तपस इत्यादि ॥ ६-७ ॥

[1]निमीलयत चक्षूंषि, सर्वे वानरपुङ्गवाः ।
न हि निष्क्रमितुं शक्यं अनिमीलितलोचनैः ॥ ८ ॥

[2]ततो निमीलिताः सर्वे सुकुमाराङ्गुलैः करैः ।
सहसा पिदधुर्दृष्टिं हृष्टा गमनकाङ्क्षिणः ॥ ९ ॥

निमीलिताः सन्तः, अज्ञानादुन्मीलनभिया सुकुमाराङ्गुलैः करैश्च सहसा दृष्टिं पिदधुः । 'सुकुमाराङ्गुलैः' इति समासान्तः छान्दसः ॥ ९ ॥

वानरास्तु महात्मानः हस्तरुद्धमुखास्तदा ।
निमेषान्तरमात्रेण बिलादुत्तारितास्तया ॥ १० ॥

ततस्तान् वानरान् सर्वान् तापसी धर्मचारिणी ।
निस्सृतान् विषमात्तस्मात् समाश्वास्येदमब्रवीत् ॥ ११ ॥

इदमब्रवीदिति । दिङ्मोहशान्त्यर्थमिति शेषः ॥ ११ ॥

एष विन्ध्यो गिरिः श्रीमान् नानाद्रुमलताकुलः ।
*एष प्रस्रवणः शैलः सागरोऽयं महोदधिः ॥ १२ ॥

---

* ननु तत्कार्यसाधनायागतानां युष्माकं कथं भीतिरित्यत आह—यत् महत् कार्यं—सीतान्वेषणं अस्माभिः कर्तव्यं, तदपि न कृतम्—रा.

[1] बिलेऽस्मिन्—ङ. [2] द्बिलादस्मान्—ङ. [3] अस्मान्—ङ. [4] कर्शितान्—ङ.
[5] एतदनन्तरं—इदं दैवतराजेन पुरा शक्रेण संयुगे । असुरार्थं विमुक्तेन तदा वज्रेण पातितम् । दुर्धर्षं तु दुरासादं नानारत्नसमन्वितम् । महाप्राज्ञेन रत्यर्थं निर्मितं विश्वकर्मणा । एवं दैवविसृष्टे तु बिलेऽस्मिन् वज्रदारिते—इत्यधिकं—ङ.
[6] तारयिष्यामि—ज.

* अयं प्रस्रवणः किष्किन्धासमीपवर्तिप्रस्रवणादन्य इति बोध्यम्—रा. प्रस्रवणः—किष्किन्धासमीपप्रस्रवणादन्योऽयमित्याहुः । अत्युच्चत्वात् ततोऽपि तस्य दर्शनमित्यन्ये—ति.

[1] निमीलयन्तु—ङ. [2] ततः संमीलिताः—ङ. [3] निर्गतान्—ङ.

स्वस्ति वोऽस्तु गमिष्यामि भवनं, वानरर्षभाः!
इत्युक्त्वा तद्बिलं श्रीमत् प्रविवेश स्वयंप्रभा * ॥ १३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे त्रिपञ्चाशः सर्गः

---

श्लोक(१३)मानः सर्गः ॥ १३ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे त्रिपञ्चाशः सर्गः

---

## चतुःपञ्चाशः सर्गः

[अङ्गदनिर्वेदः]

ततस्ते ददृशुर्घोरं सागरं वरुणालयम् ।
अपारमभिगर्जन्तं घोरैरूर्मिभि[1]राकुलम् ॥ १ ॥

अथ बिलादुत्तार्य स्वयंप्रभाबिलगमनानन्तरं, ऋतुलिङ्गतः कालातिपातं निश्चित्याङ्गदस्य प्रायःप्रवृत्तिः। एवमिह पूर्वापेक्षया प्रकरणविच्छेदात् इह सर्गारम्भः। तथा च पाङ्क्तो विच्छेदः प्रकाशते। अन्ये त्विह नावच्छिन्दन्ति ग्रन्थाल्पीयस्त्वादिमत्या। ततस्त इत्यादि ॥ १ ॥

मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् ।
तेषां मासो व्यतिक्रान्तः यो राज्ञा समयः कृतः ॥ २ ॥

समयः कृत इति। अवधिः कृत इत्यर्थः ॥ २ ॥

---

* झ. पुस्तके नात्र सर्गविच्छेदः। महेश्वरतीर्थगोविन्दराजयोरपि नात्र सर्गविच्छेदः संमतः ॥

[1] रावृतम्—ङ.



* विन्ध्यस्य तु गिरेः पादे संप्रपुष्पितपादपे ।
उपविश्य [1] महात्मानः चिन्तामापेदिरे तदा ॥ ३ ॥

विन्ध्यस्य तु गिरेः पाद इति। विन्ध्यगिरेः नैर्ऋतदिग्वर्तिपादपर्वत इत्यर्थः। तदेति। शिशिरारम्भसमय इत्यर्थः ॥ ३ ॥

† ततः पुष्पातिभाराग्रान् लताशतसमावृतान् ।
द्रुमान् वासन्तिकान् दृष्ट्वा बभूवुर्भयशङ्किताः ॥ ४ ॥

पुष्पातिभारयुक्तानि अग्राणि येषां, ते तथा। वासन्तिकान्—वसन्तकालफलवदाम्रादीन् द्रुमान् ॥ ४ ॥

‡ ते वसन्तमनुप्राप्तं [2] प्रतिवेद्य परस्परम् ।
§ नष्टसन्देश[3]कालार्थाः निपेतुर्धरणीतले ॥ ५ ॥

'भयशङ्किता बभूवुः' इत्युक्तार्थस्यैव सविशेषं प्रतिपादनं—त इत्यादि। ते वसन्तं अनुप्राप्तं—प्रकृतशिशिरर्तोरासन्नकालतया प्राप्तम्। नष्टः सन्देशकाले—राजसन्देशप्राप्तमासकाले अनुष्ठेयोऽर्थः येषां, ते तथा ॥ ५ ॥

ततस्तान् कपिवृद्धांस्तु शिष्टांश्चैव वनौकसः ।
वाचा मधुरयाऽऽभाष्य यथावदनुमान्य च ॥ ६ ॥

---

* 'हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुन्धरा' इति भेषजकल्पोक्तिः—**गो.** † ये वसन्ते फलन्ति, ते शिशिरे पुष्प्यन्ति—**गो.** ‡ अनुप्राप्तं—प्रत्यासन्नं, तदानीं हि शिशिरः। तथा हि—शरत्कालान्ते मार्गशीर्षे मासि सेनां सन्निधाप्य पौषमासमवधिं कृत्वा प्रस्थापितवान्। स पौषः, माघश्चातीतः, फाल्गुन एव प्रवृत्त इति तेन वसन्तः प्रत्यासन्न एव, न प्राप्तः—**गो.** § नष्टः सन्देशकालरूपः अर्थः येषां ते—**रा.** निपेतुः, जङ्घाबलक्षयादिति लोकसिद्धमिदम् ॥

[1] महाभागाः—ङ. [2] प्रतिबुद्ध्य, प्रतिबुद्धाः—ङ. [3] कार्यार्थाः—ङ.

स तु सिंहवृषस्कन्धः पीनायतभुजः कपिः ।
युवराजो महाप्राज्ञः अङ्गदो वाक्यमब्रवीत् ॥ ७ ॥

ततस्तानिति । भयात् भूतलपतितानित्यर्थः । अनुमान्य—संपूज्येत्यर्थः । महाप्राज्ञ अङ्गद इत्यसन्धिः छान्दसः ॥ ६-७ ॥

शासनात् कपिराजस्य वयं सर्वे विनिर्गताः ।
मासः पूर्णो बिलस्थानां, हरयः! किं न बुध्यते ॥८॥

शासनात् व्यतिक्रान्तत्वं दर्शयति—मास इति । अस्माकं अन्वेषणावधित्वेन दत्तः पुष्यमास इत्यर्थः । किं न बुध्यत इति । कालात्ययमिति शेषः ॥ ८ ॥

*वयमाश्वयुजे मासि कालसङ्ख्याव्यवस्थिताः ।
प्रस्थिताः सोऽपि चातीतः [1] किमतः कार्यमुत्तरम् ॥ ९ ॥

स्वयमेव कालात्ययप्रकारं दर्शयति—वयमाश्वयुज इत्यादि । अत्रापि आश्वयुजमासासन्नकार्तिकमासान्त इत्यर्थः । कालसंख्या-

---

* वयमाश्वयुजे मासि हनुमच्चोदितेन सुग्रीवेण त्रिपञ्चरात्रसंख्यया नियम्य समाहूताः । ततो मार्गशीर्षे लक्ष्मणचोदितेन तेन दशरात्रसंख्यया समाहूताः । ततः सीतान्वेषणे पौषमासमवधिं दत्वा तेन प्रेषिताः । एवमाश्वयुजमासमारभ्य कालसंख्यया व्यवस्थितानामस्माकं कालविस्मरणं न युक्तमित्यर्थः । यद्वा आश्वयुजे मासि—दशम्यामुत्थितायामितिवत् सामीप्याधिकरणविवक्षया सप्तमी । तेन कार्तिकमास उच्यते, 'कार्तिके समनुप्राप्ते त्वं रावणवधे यत । एष नः समयः सौम्य! प्रविश त्वं स्वमालयम्' इत्युक्तकालातिक्रमप्रयुक्तरामकोपदर्शनात्, कार्तिकान्तो विवक्षितः । 'प्रस्थिताः सोऽपि चातीतः किमतः कार्यमुत्तरम्' इत्यत्र 'अपि च' इत्यनेन मार्गणावधिभूतमार्गशीर्षानन्तरमासः समुच्चीयते—ती. कालसंख्याव्यवस्थिताः—कालसंख्यया नियमिताः वयं आश्वयुजे मासि हनुमच्चोदितेन सुग्रीवेण पञ्चदशरात्रसंख्यया नियम्य समाहूताः । ततो मार्गशीर्षे लक्ष्मणचोदितेन तेन दशरात्रसंख्यया समाहूताः । ततः सीतान्वेषणे पौषमासमवधिंकृत्वा

[1] किमेतत्—ङ.



व्यवस्थिताः । कार्तिकान्ते प्रथमं हनुमद्बोधितेन सुग्रीवेण पञ्चदशरात्रकालसंख्यया वानराणामानयनाय दूता व्यवस्थिताः—नियम्य प्रवर्तिताः ॥ ९ ॥

भवन्तः प्रत्ययं प्राप्ताः नीतिमार्गविशारदाः ।
हितेष्वभिरता भर्तुः [1] निसृष्टाः सर्वकर्मसु ॥ १० ॥

---

तेन प्रेषिताः । एवमाश्वयुजमासमारभ्य कालसंख्यया व्यवस्थितानामस्माकं कालविस्मरणं न युक्तमित्यर्थः । अन्ये त्वाहुः—आश्वयुजे मासि, 'दशम्यां उत्थितायाम्'इतिवत् सामीपिकाधिकरणविवक्षया सप्तमी । तेन 'कार्तिके समनुप्राप्ते त्वं रावणवधे यत' २६-१६ इत्युक्तकालातिक्रमणप्रयुक्तरामकोपदर्शनात् कार्तिकान्तो विवक्षितः । सोऽपि चातीतः, सः—मार्गणावधिभूतमार्गशीर्षमासः । अपि चेत्याभ्यां पदाभ्यां तदनन्तरभूतौ पौषमाघौ समुच्चीयेते । अतश्च फाल्गुन एव प्राप्त इति भाव इति—गो. वयमिति । आश्वयुजे अतीतप्राय इति शेषः । 'कार्तिके समनुप्राप्ते त्वं रावणवधे यत' इत्युक्तेः । ततः पञ्चदशरात्रकालसंख्यया प्रवर्तितदूतैः व्यवस्थिता मिलिताः । एवञ्चामान्तमानेनाश्विनस्योत्तरे दीपोत्सवामायुते पक्षे सर्वसेनागमनं किष्किन्धायां, रामस्य क्रोधस्तु तत्रैव पक्षे कार्तिकसन्निधावपि तदुद्यमाभावकृतः । ततः कार्तिकेऽवधिरन्वेषणस्य ततो मार्गशुक्ल इदं वचनम् । प्रायस्तद्वर्षे पौषः क्षयमासः, 'कार्तिकादित्रये नान्यतः' इत्युक्तेः । अतो मार्गशुक्ल एव आम्रादीनां पुष्पोद्गमः, उत्पाततो वा । तादृशरीत्या पुष्पोद्गमं दृष्ट्वाऽपि वसन्तामन्ननाऽनुमानेन भयोपपत्तिः । कतकादयस्तु—अन्वेषणेऽवधित्वेन दत्तः पौषो मासः । 'आश्वयुजे' इत्यस्य तत्प्रत्यासन्नकार्तिकान्त इत्यर्थः । कालसंख्येति । कार्तिकोत्तरं पञ्चदशरात्रसंख्याकालेनावधिना वानरानयनाय दूतप्रेषणम् । ततः पूर्णिमान्तमानेन मार्गशुक्ले न सर्ववानरानयनम् ततः पौषाद्यदिने दिक्ष्वन्वेषणाय वानरप्रस्थानम् । तत्र पौषे माघकृष्णीयकिञ्चिद्दिनपर्यन्तेऽतीते इद वाक्यमित्याहुः । तेषां—सीतानयनोत्तरं सीतां प्रति द्वादशमासा रावणावधिरिति स्पष्टमेव । पम्पायां चैत्रे आगमन इत्यस्योक्तत्वात्, ततः पूर्वं फाल्गुने सीतापहार इति च स्पष्टमेव । एवं च माघकृष्णे तच्छुक्लादौ वा हनूमतः सीतासमीपगमने हनुमन्तं प्रति 'वर्तते दशमो मासः द्वौ तु शेषौ, प्लवङ्गम?' इति सीतोक्तिविरोधः । किञ्च हनूमतो लङ्काप्रवेशदिने प्रदोषसमय एव पूर्णकलचन्द्रोदयवर्णनं च विरुद्धमित्याहुः—ति.

[1] निर्दिष्टाः, निविष्टाः—ङ.

अथ मार्गशीर्षे लक्ष्मणचोदितेन पुनश्च दशरात्रसंख्यया नियम्य दूताः प्रवर्तिताः। एवं द्विप्रकारप्रवर्तितदूतेभ्यः, प्रत्ययं—राजानियोगं ज्ञात्वा भवन्तः सर्वे प्राप्ताः मार्गशीर्षान्ते। अथ नीतिमार्गविशारदाः भर्तुः हितेष्वभिरता यूयं पौषमासमवधीकृत्य सर्वकर्मसु—सर्वत्रान्वेषणकर्मसु निसृष्टाः ॥ १० ॥

[1]कर्मस्वप्रतिघाताश्च दिक्षु [2]विश्रुतपौरुषाः।
मां पुरस्कृत्य निर्याताः [3]पिङ्गाक्षप्रतिचोदिताः ॥ ११ ॥

ततः—कर्मस्वप्रतिघातत्वादिगुणा यूयं पिङ्गाक्षप्रचोदिताः सन्तः मां पुरस्कृत्यान्वेष्टुं निर्याताः। तेषां नः स कालश्च बिले गतः ॥११॥

इदानीमकृतार्थानां मर्तव्यं नात्र संशयः।
हरिराजस्य सन्देशं अकृत्वा कः सुखी भवेत् ॥ १२ ॥

अतः—इदानीं अकृतार्थानामस्माकं अनुष्ठेयतत्वं-मर्तव्यं-देहत्याग एवानुष्ठेयः, नात्र संशयः। कुत एवमित्यतः—हरिराजस्येत्यादि। सर्वत्रात्रोक्तर्तुमासविशेषवाचिशब्दानां लक्षणाश्रयणबीजं तु 'कार्तिके समनुप्राप्ते त्वं रावणवधे यत। एष नः समयः सम्यक् प्रविश त्वं स्वमालयम्' (२६-१७) इति कार्तिकान्ते प्रवृत्तिप्रतिपादकरामवचनमेव ॥ १२ ॥

तस्मिन्नतीते काले तु सुग्रीवेण कृते स्वयम्।
*प्रायोपवेशनं युक्तं सर्वेषां च वनौकसाम् ॥ १३ ॥

स्वयं प्रायोपवेशनमेव युक्तमिति। प्राणत्यागायेति शेषः। न तु राजनिग्रहात् त्याग इत्यर्थः ॥ १३ ॥

---

* प्रायाय—अन्तगमनाय उपवेशनं- शयनं प्रायोपवेशनम्-**गो.**

[1] कर्मस्वप्रतिमास्सर्वे-**ङ.** [2] विश्रान्त-**ङ.** [3] पिङ्गाक्षेशप्रचो-**ङ.**



तीक्ष्णः प्रकृत्या सुग्रीवः *स्वामिभावे व्यवस्थितः।
न क्षमिष्यति नः सर्वान् अपराधकृतो गतान् ॥ १४ ॥

स्वामिभावे निग्रहानुग्रहादिकृद्राजभावे। व्यवस्थितः—रामानुग्रहेण प्रतिष्ठितः इत्यर्थः ॥ १४ ॥

†अप्रवृत्तौ च सीतायाः पापमेव करिष्यति।
तस्मात् क्षममिहाद्यैव [1]प्रायोपविशनं हि नः ॥
त्यक्त्वा‡ पुत्रांश्च दारांश्च धनानि च गृहाणि च ॥ १५ ॥

प्रायोपविशनमिति छान्दसः ॥ १५ ॥

[2]ध्रुवं नो [3]हिंसिता राजा सर्वान् प्रतिगतानितः।
वधेनाप्रतिरूपेण श्रेयान् मृत्युरिहैव नः ॥ १६ ॥

अपराधमूलप्राणनाशत्वात्—अप्रतिरूपेणेति ॥ १६ ॥

§न चाहं यौवराज्येन सुग्रीवेणाभिषेचितः।
नरेन्द्रेणाभिषिक्तोऽस्मि रामेणाक्लिष्टकर्मणा ॥ १७ ॥
स पूर्वं बद्धवैरो मां राजा दृष्ट्वा व्यतिक्रमम्।
घातयिष्यति दण्डेन तीक्ष्णेन कृतनिश्चयः ॥ १८ ॥

पूर्वं मां—मां प्रति बद्धवैरः स राजा, इदानीं व्यतिक्रमं—आज्ञालङ्घनं दृष्ट्वा घातयिष्यत्येवेति योजना ॥ १८ ॥

---

* स्वामिभाव इति लोकवदुक्तिः, नियमैकसक्तं स्वामिनं तदाश्रिताः एवमेव किल वदन्ति लोके। † अप्रवृत्तौ—अवार्तायां-**गो.** प्रवृत्त्यलाभे-**रा.** ‡ पुत्रादि त्यक्त्वा प्रायोपवेशनं गन्तुं—कर्तुं क्षमं—युक्तमित्यन्वयः-**ति.** §त्वां यौवराज्ये कृतवान् सुग्रीवः कथं हिंस्यादित्यत्राह—न चाहमिति-**गो.**

[1] गन्तुं प्रायोपवेशनम-**ज.** [2] ध्रुवं वो-**ङ.** [3] हिंसते-**ज**

*किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तरे ।
इहैव प्रायमासिष्ये पुण्ये सागररोधसि ॥ १९ ॥

मे जीवितान्तरे — जीवितावधौ — जीवितनाशे मम व्यसनं पश्यद्भिरपि सुहृद्भिः किं साध्यम् ? राजाज्ञया प्रासदुःखे न किमपीत्यर्थः । यदेवं, अतः — इहैवेत्यादि ॥ १९ ॥

एतच्छ्रुत्वा कुमारेण युवराजेन भाषितम् ।
सर्वे ते वानरश्रेष्ठाः करुणं वाक्यमब्रुवन् ॥ २० ॥

†तीक्ष्णः प्रकृत्या सुग्रीवः प्रियासक्तश्च राघवः ।
[1] समीक्ष्याकृतकार्यांस्तु तस्मिंश्च समये गते ॥ २१ ॥

प्रियायां सक्तः — अनुरक्तस्तथा ॥ २१ ॥

[2] अदृष्टायां तु वैदेह्यां दृष्ट्वा चैव समागतान् ।
‡राघवप्रियकामार्थं घातयिष्यत्यसंशयम् ॥ २२ ॥
न क्षमं [3] चापराद्धानां गमनं स्वामिपार्श्वतः ।
[4] प्रधानभूताश्च वयं सुग्रीवस्य समागताः ॥ २३ ॥

स्वामिपार्श्वतः - स्वामिपार्श्वे ॥ २३ ॥

---

*सुहृदो मद्व्यसनप्रदर्शनेन क्लेशयित्वा मम किं प्रयोजनमित्यर्थ –गो.

†इयमपि लोकवदुक्तिः । राजा स्वाधिकारेऽप्रमादं पश्यति । रामस्तु स्वपत्नीविषयमेव महान्तं मन्यत इति लोकसहजोक्तिः ॥ ‡परेषां पुरतः स्वाधिकारप्रदर्शनं हि स्वामिनां स्वभाव इति भावः ॥

[1] इदमर्धं कुण्डलितम्–ङ. [2] एतदाद्यर्धत्रयमधिकम्–झ. [3] सापराधानां–ङ.
[4] इदमर्धं कुण्डलितम्–ङ.



इहैव सीता[1]मन्विष्य प्रवृत्तिमुपलभ्य वा ।
नो चेद्गच्छाम तं वीरं गमिष्यामो यमक्षयम् ॥ २४ ॥

उपलभ्य वा गच्छामः ; नो चेत् — प्रवृत्त्यनुपलंभश्चेत् यमक्षयं इहैव स्थित्वा गमिष्यामः ॥ २४ ॥

प्लवङ्गमानां तु भयार्दितानां
श्रुत्वा वचस्तार इदं बभाषे ।
अलं विषादेन बिलं प्रविश्य
वसाम सर्वे यदि रोचते [2]वः ॥ २५ ॥

बिलं — स्वयंप्रभाबिलम् ॥ २५ ॥

इदं हि मायाविहितं सुदुर्गमं
प्रभूत[3]पुष्पोदकभोज्यपेयकम् ।
इहास्ति नो नैव भयं पुरन्दरात्
न राघवात् वानरराजतोऽपि वा ॥ २६ ॥

कथमिह स्थित्वा प्राणत्राणमित्यत्राह — इदं हीत्यादि ॥ २६ ॥

*श्रुत्वाऽङ्गदस्यापि वचोऽनुकूलं
ऊचुश्च सर्वे हरयः प्रतीताः ।
यथा [4]न हिंस्येम तथा विधानं
असक्तमद्यैव विधीयतां नः ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे चतुःपञ्चाशः सर्गः

———

---

* अङ्गदस्याप्यनुकूलं तारस्य वचनमित्यन्वयः–गो.

[1] मन्वीक्ष्य–ङ. [2] वच:–ङ. [3] वृक्षोदक–ञ. [4] न हन्येम–ङ.

अङ्गदस्यापीत्यपिशब्देन तारस्यापि वच इत्यर्थः । असक्तं—अविलम्बम् । तार(२६)मानः सर्गः ॥ २६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे चतुःपञ्चाशः सर्गः

———

## पञ्चपञ्चाशः सर्गः

### [ हनुमद्वचनम् ]

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि ।
अथ मेने हृतं राज्यं हनुमानङ्गदेन तत् ॥ १ ॥

अथ अप्रतिषिद्धमनुमतमिति न्यायेन तारोक्तबिलावस्थानमनुमन्यताऽङ्गदेन सुग्रीवाज्ञामुल्लङ्घ्य स्वातन्त्र्येण वानरराज्यं प्रतितिष्ठासितं मत्वा सुग्रीवसचिवो हनुमान् अङ्गदाशयानुसारिणो विभेद्य, अथ स्वातन्त्र्यावस्थानमशक्यार्थं तवापीत्यङ्गदमपि बोधयति । तथा ब्रुवतीत्यादि । ताराधिपतिवर्चसि तारे तथा ब्रुवति, तुशब्दात् अङ्गदे च तदनुमन्यमाने सति, अथ—अनन्तरं तत्—तस्मात् तारवचोऽङ्गीकारादेव हेतोः अङ्गदेन राज्यं—स्वस्वामिसुग्रीवकपिसाम्राज्यं हृतं मेने ॥ १ ॥

*बुद्ध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् ।
चतुर्दशगुणं मेने हनुमान् वालिनः सुतम् ॥ २ ॥
आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः ।
शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥ ३ ॥

---

* 'ग्रहणं धारणं चैव स्मरणं प्रतिपादनम् । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः' इत्युक्ताष्टाङ्गयुक्त्या । चतुर्बलसमन्वितं—बाहुबलमनोबलोपायबलबन्धुबलयुक्तम्—**गो.**



बृहस्पतिसमं बुद्ध्या विक्रमे सदृशं पितुः ।
*शुश्रूषमाणं तारस्य [1]शुक्रस्येव पुरन्दरम् ॥ ४ ॥

ननु कथमङ्गदाद्राज्यापहारचिन्ता ? इत्यत्र—तत्सामर्थ्यं तस्मिन् संभावितमिति मन्यत इत्याह—बुद्ध्येत्यादि । अष्टाङ्गया—अष्टगुणया, ते गुणास्तु—'शुश्रूषा श्रवणं शश्वत् ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः' इति प्रसिद्धाः । चतुर्बलं—सामादि चतुरुपायबलम् । चतुर्दशगुणास्तु—'देशकालज्ञता दार्ढ्यं सर्वक्लेशसहिष्णुता । सर्वविज्ञानिता दाक्ष्यं ऊर्जः संवृतमन्त्रता । अविसंवादिता शौर्यं भक्तिज्ञत्वं कृतज्ञता । शरणागतवात्सल्यममर्षित्वमचापलम्' । एवमाद्युच्यमानसर्वगुणकं वालिनः सुतं तारस्य वचः शुश्रूषमाणं यतोऽपश्यत्, ततः हनुमान् अङ्गदेन हृतं राज्यं मेने इत्यन्वयः । शुक्रस्येव पुरन्दरमिति विपरीतोपदेशग्रहे दृष्टान्तः, अभूतोपमेयम् ॥ २-४ ॥

भर्तुरर्थे परिश्रान्तं सर्वशास्त्र[2]विशारदः ।
†अभिसन्धातुमारेभे हनुमानङ्गदं ततः ॥ ५ ॥

भर्तुः—स्वभर्तुः सुग्रीवस्य अर्थे—विनियोगकरणे परिश्रान्तं—विमुखम् । सर्वशास्त्रविशारद इति हनुमद्विशेषणम् । अभिसंधातुं—समाधातुं, समाधित्सुर्हनुमानित्यर्थः ॥ ५ ॥

---

* तारस्य शुश्रूषमाणं—नटस्य शृणोतीतिवत् कारकशेषत्वात् षष्ठी । शुक्रस्येव पुरन्दरमिति पुरन्दरशब्दसन्निधानात् अत्र शुक्रशब्दः बृहस्पतिपरः । यद्वा कस्यांचिदवस्थायां हितमुपदिशतः शुक्रस्य वचनं पुरन्दरः श्रुतवानित्यवगम्यते । 'गुरोरिव पुरन्दरम्' इति क्वचित्पाठः—**गो.** शुक्रस्य शुश्रूषमाणं पुरन्दरमिव, तारस्य शुश्रूषमाणं, प्रतिकूलं अनुकूलमिव भावयन्तमिति वा ॥ † अभिसन्धातुं—अनुकूलयितुम्—**गो.**

[1]गुरोरिव—ङ. [2]विशारदं, विदां वरम्—ङ.

स चतुर्णामुपायानां *[1] द्वितीयमुपवर्णयन् ।
भेदयामास तान् सर्वान् वानरान् वाक्यसंपदा ॥ ६ ॥

उपायचतुष्टयं—सामभेददानदण्डरूपम् । तत्र द्वितीयः—भेदः, तमुपवर्णयन् इति हेतौ शतृप्रत्ययः, भेदोपायावलम्बनेन हेतुनेत्यर्थः । तान् सर्वानिति । अङ्गदानुवर्तिन इत्यर्थः । वाक्यसंपदा — भेदजननक्षमलौकिकालौकिकन्यायोपेतवाक्यसमूहेनेत्यर्थः । 'हीनाश्रयो न कर्तव्यः कर्तव्यो महदाश्रयः' इत्यादीनि तानि वाक्यानि ॥ ६ ॥

तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् ।
भीषणै[2]र्बहुभिर्वाक्यैः कोपापायसमन्वितैः ॥ ७ ॥

अभीषयत् — न्यायप्रदर्शनेन भयमुत्पादयामास । कोपापायसमन्वितैः — कोपापनयनसामर्थ्यसमन्वितैः ॥ ७ ॥

त्वं समर्थतरः † पित्रा युद्धे, तारेय ! वै [3] धुरम् ।
दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥ ८ ॥

भीषणमेव क्रियते— त्वमित्यादिना । त्वं पित्रा — सुग्रीवेण सह युद्धे समर्थतरः । राज्यं—'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति कर्मणि ष्यञ् , राजकृत्यभूतं धुरं—भारं दृढं धारयितुं च शक्तः, यदि कपिराज्यराजकर्तारः सर्वे त्वामन्वयुः ॥ ८ ॥

* तृतीयं—(पा.) भेदं—'साम दानं च भेदश्च दण्डश्चेति यथाक्रमं' इति क्रमनियमात्—गो. † पित्रा—पितुः—गो. पञ्चम्यर्थे षष्ठीति भाव ॥

[1] तृतीय—ङ. [2] विविधै—ङ. [3] ध्रुवम्—ङ.



* नित्यमस्थिरचित्ता हि [1] कपयः, हरिपुङ्गव !
नाज्ञाप्यं विषहिष्यन्ति पुत्रदारान् विना त्वया ॥ ९ ॥

न च तत्समस्तीत्याह—नित्यमित्यादि । नन्वस्थैर्ये किं कारणमित्यत्राह—पुत्रदारान् विनेति । पुत्रदाराणां किष्किन्धावर्तिनां सुग्रीवायत्तत्वात् त्वया सह बिलवर्तने तद्वियोगः स्पष्टः । ननु निगृह्य स्ववशे स्थापयिष्य—इत्यत्र, तदशक्यमित्याह—नाज्ञाप्यमिति । भावे कृत्यः, आज्ञापनं न विषहिष्यन्तीति ; त्वत्तोऽप्यधिकबलत्वादिति शेषः ॥

त्वां नैते † [2] ह्यनुरञ्जेयुः प्रत्यक्षं प्रवदामि ते ।
यथाऽयं जाम्बवान्नीलः सुहोत्रश्च [3] महाकपिः ॥ १० ॥
न ह्यहं [4] त इमे सर्वे सामदानादिभिर्गुणैः ।
दण्डेन वा त्वया शक्याः सुग्रीवादपकर्षितुम् ॥ ११ ॥

यदेवं, अतः—त्वां, विहाय पुत्रदारान् नानुरञ्जयेयुः । न रञ्जयेयुरित्ययमर्थः न परोक्ष इत्याह—प्रत्यक्षं प्रवदामि त इति । तद्यथा स्पष्टं भवति, तथा प्रदर्शयामीति शेषः । प्रदर्शनमेव करोति—जाम्बवानित्यादि । अहमिति स्वस्य च निर्देशः । गुणैः—उपायैः ॥

‡ विगृह्यासनमप्याहुः दुर्बलेन [5] बलीयसा ।
आत्मरक्षाकरस्तस्मात् न विगृह्णीत दुर्बलः ॥ १२ ॥

* पुत्रदारैर्विरहितत्वात् त्वया आज्ञाप्यं—त्वदाज्ञामिति यावत् न विषहिष्यन्ति । त्वं तु यद्यपि शक्तः, परन्तु कपयः न ते सहकरिष्यन्तीति भावः ॥ † नानुयुञ्जेयुः (पा.) —नानुवर्तेरन्—गो. ‡ बलीयसः खलु दुर्बलेन सह विगृह्यासनं—अवस्थानं आहुः—शक्यं भवेदपीति भावः, न तु आत्मरक्षार्थी दुर्बलः बलीयसा सह विगृह्य स्थातुं शक्त इति भावः ॥

[1] हरयः—ङ. [2] ह्यनुयुञ्जेयुः, ह्यनुजीवेयुः—ङ. [3] महाबलः—ङ. [4] न च ते—ङ. [5] बलीयसः—ङ., झ.

ननु गच्छत यूयमपि, मयैव स्थीयत इति मन्यमानं प्रत्याह—विगृह्येत्यादि। बलीयसा पुरुषेण, स्वस्माद्दुर्बलेन विगृह्याप्यासनं शक्यमाहुः, न तु दुर्बलस्य बलीयसा विगृह्य। यदेवं, अतः—तस्मात् आत्मरक्षाकरः—आत्मरक्षार्थी दुर्बलः बलीयसा न विगृह्णीत ॥

यां चेमां मन्यसे *धात्रीं एतद्बिलमिति श्रुतम्।
एतल्लक्ष्मणबाणानां ईषत्कार्यं [1]विदारणे ॥ १३ ॥

अथ तारोपदेशादनिस्तार एवेत्याह—यां चेमामित्यादि। यां चेमां गुहां धात्रीं—धारिकां प्रतिष्ठाकरीं मन्यसे, नेयं प्रतिष्ठेति शेषः। कुत इत्यतः—एतदित्यादि। यदेतद्बिलं—ऋक्षबिलं—निर्भयमिति तारात् श्रुतं, एतत् लक्ष्मणबाणानामित्यादि। एतत्—एतद्विषयकं दारणं लक्ष्मणबाणानां ईषत्कार्यं—ईषत्करमिति यावत्; खलभावः छान्दसः ॥

स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा
लक्ष्मणो निशितैर्बाणैः भिन्द्यात् पत्रपुटं यथा ॥ १४ ॥
लक्ष्मणस्य तु नाराचाः बहवः सन्ति तद्विधाः।
वज्राशनिसमस्पर्शाः गिरीणामपि दारणाः ॥ १५ ॥

पुरा अशनिं क्षिपता—मायाबलेन भूतलान्यतरनिर्मितपुरवर्तिमयवधार्थं अशनिं तत्प्रदेशभुवि क्षिपता इन्द्रेण स्वल्पं विदारणं कृतं भुवः, न तु काञ्चनवनपुरं भूधरवर्ति भग्नं, इदानीं लक्ष्मणस्तु निशितैर्बाणैः पत्रपुटमिवानायासेन सवनं काञ्चनवनं भिन्द्यात्, द्वारस्य पूर्वमेव सिद्धत्वात् अप्रयासः। †अन्यस्तु बिलवासिनं मयमुद्दिश्य अशनिं क्षिपता

* धात्रीं—रक्षकां—गो. ईषत्कार्यं—परिश्रममन्तरा साध्यमित्यर्थः—गो. † महेश्वरतीर्थः, गोविन्दराजो वा। परन्तु लोकक्रममनुसृत्य तैस्तथा व्याख्यातमिति प्रतिभाति।

[1] विदारणम्—ङ.



इन्द्रेण स्वल्पं बिलद्वारं कृतम्। इदानीं लक्ष्मणः पत्रपुटमिव एतद्बिलं भिन्द्यात् इति ब्रूते। द्वारस्य पूर्वमेव सिद्धत्वात् पत्रपुटवदल्पस्य बिलस्य सिद्धये विदारणीयांशस्याभावात् निशितैर्बाणैः बिलं भिन्द्यात् इत्यसत्। तथा इन्द्रेणापि बिलद्वारं स्वल्पं कृतमित्यप्यसत्। पूर्वमेव बिलवासिनो मयस्येति जल्प्यमानत्वात्। तद्विधा इत्यस्य विवरणं—वज्राशनिसमस्पर्शा इति। वज्रं हस्तस्थं, अशनिः मेघस्थः ॥ १५ ॥

*,[1] अवस्थानं यदैव त्वं आसिष्यसि, परन्तप!
तदैव हरयः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥ १६ ॥

हे परन्तप! त्वं यदैव अस्मिन् भूबिले अवस्थानं आसिष्यसि—प्राप्स्यसि, तदैव सर्वे हरयः कृतनिश्चयाः—कृतस्वनाशनिश्चयाः त्वां त्यक्ष्यन्ति ॥ १६ ॥

स्मरन्तः पुत्रदाराणां †नित्योद्विग्ना बुभुक्षिताः।
[2]खेदिता दुःखशय्याभिः त्वां करिष्यन्ति पृष्ठतः ॥ १७ ॥

तथा राज्यवर्तिपुत्रदारादि स्मरन्तः नित्योद्विग्नाः—नित्यं सरामलक्ष्मणात् सुग्रीवात् भीताः बुभुक्षिताः—पुत्रदारादिसुखभोगेप्सवः त्वया दुःखशय्याभिः—दुःखावस्थापनेन खेदिताः सन्तः त्वां पृष्ठतः करिष्यन्ति—तृणीकरिष्यन्ति, एवं कृत्वा सर्वथा त्यक्ष्यन्त्येव ॥ १७ ॥

स त्वं हीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः।
‡ तृणादपि भृशोद्विग्नः स्पन्दमानाद्भविष्यसि ॥ १८ ॥

* अवस्थाने (पा.)—बिले—गो. † पुत्रदारादिवियोगादेव नित्योद्विग्नाः—सदोत्कण्ठिता इति वा ॥ ‡ तृणादपि भयहेतोः भृशं उद्विग्न इति वा ॥ इयमपि लोकवदुक्तिः ॥

[1] अवस्थाने—ङ., झ. [2] दुःखादुःखतरं गत्वा किं करिष्यन्ति दुर्गताः—ङ.

एवं सति--स त्वं हीन इत्यादि। स्पन्दमानात् तृणादपि लघुरिति शेषः। अत एव भृशोद्विग्नो भविष्यसि ॥ १८ ॥

[1]अत्युग्रवेगा निशिताः [2]घोरा लक्ष्मणसायकाः।
*[3]अपावृत्तं जिघांसन्तः महावेगा दुरासदाः ॥ १९ ॥

अतः परं--अत्युग्रवेगाः निशिताः घोराः लक्ष्मणसायकाः अपावृत्तं--च्युत्थितं त्वां जिघांसन्तः भवेयुः। सर्वत्रात्र लक्ष्मणग्रहणं क्रूरस्वभावत्वात्, †रामकृत्यालक्ष्यत्वाच्च ॥ १९ ॥

‡अस्माभिस्तु गतं सार्धं विनीतवदुपस्थितम्।
आनुपूर्व्यात्तु सुग्रीवः राज्ये त्वां स्थापयिष्यति ॥ २० ॥

एवं वास्तवं भयं प्रदर्श्य, सुग्रीवसमाश्रयणमेव ते हितमिति समाधत्ते--अस्माभिरित्यादि। विनीतवत्--विनीतो भूत्वा उपस्थितं त्वां आनुपूर्व्यात्--ज्येष्ठपुत्रत्वप्रयुक्तानुक्रमात् प्राप्ते राज्ये स्थापयिष्यतीति ॥ २० ॥

[4]धर्मराजः पितृव्यस्ते प्रीतिकामो दृढव्रतः।
शुचिः सत्यप्रतिज्ञश्च न त्वां जातु जिघांसति ॥ २१ ॥

अत्र प्रमाणमाह--धर्मराज इत्यादि। धर्ममार्गवर्ती राजा तथा। ते प्रीतिकाम एव भवति, न त्वां जातु जिघांसति ॥ २१ ॥

---

* अपवृत्त (पा)--वृत्तहीन-गो. † रामकृत्यासुग्रीवस्यातिहीनत्वादिति भावः ॥ वस्तुतस्तु--क्रूरस्वभावत्वादित्ययुक्तमेव। लक्ष्मणक्रोधस्यैतैः प्रत्यक्षमनुभूतत्वात् तस्यैव पर्याप्तत्वाद्वा तथोक्तिः ॥ ‡ अस्माभिस्सार्धमित्यन्वयः ॥

[1] न च जातु न हिंस्युस्त्वां--ङ., झ. [2] रामलक्ष्मण--ङ. [3] अपवृत्तं--ङ., झ.

[4] धर्मकामः--ङ., झ.



*प्रियकामश्च ते मातुः तदर्थं चास्य जीवितम्।
तस्यापत्यं च नास्त्यन्यत् तस्मात्, अङ्गद! गम्यताम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे पञ्चपञ्चाशः सर्गः

---

इतश्च सर्वथैवमेवेत्याह--प्रियकाम इत्यादि। अस्य जीवितं तदर्थमिति। त्वन्मातृप्रीतिसंपादनप्रयोजनमित्यर्थः। गम्यतामिति। अस्माभिस्तु सार्धमिति शेषः। रुद्र(२२)मानः सर्गः ॥ २२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे पञ्चपञ्चाशः सर्गः

---

## षट्पञ्चाशः सर्गः

[वानरप्रायोपवेशः]

श्रुत्वा हनुमतो वाक्यं प्रश्रितं धर्मसंहितम्।
स्वामिसत्कारसंयुक्तं अङ्गदो वाक्यमब्रवीत् ॥ १ ॥

अथ अङ्गदे हनुमदुक्तन्यायतः तारोक्तं प्रतिक्षिप्य प्रायमध्यवस्यति सर्वे प्रायमुपविशन्ति। श्रुत्वेत्यादि। स्वामिसत्कारसंयुक्तं--सुग्रीवसन्मानोपेतं, इदं हनुमद्वाक्यविशेषणम् ॥ १ ॥

†स्थैर्यमात्ममनश्शौचं आनृशंस्यमथार्जवम्।
विक्रमश्चैव धैर्यं च सुग्रीवे नोपपद्यते ॥ २ ॥

---

* त्वन्मातृप्रीतिसंपादनपरः, तस्यामेव दत्तजीवितः, पुत्रविहीनश्च तव विप्रियं न कुर्यात् इत्यर्थः ॥ † आत्ममनसोः शौचम्--ति.

आत्मनो मनः—स्वान्तःकरणं, तस्य शौचं—कामादिदोष-राहित्यम् ॥ २ ॥

भ्रातुर्ज्येष्ठस्य यो भार्यां * जीवतो महिषीं प्रियाम् ।
धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥ ३ ॥
कथं स धर्मं जानीते येन भ्रात्रा [1] महात्मना ।
युद्धायाभिनियुक्तेन बिलस्य पिहितं मुखम् ॥ ४ ॥

नोपपद्यत इति प्रतिज्ञातं समर्थयते—भ्रातुरित्यादि । जीवतो मम, समक्षमिति शेषः । जीवतो ज्येष्ठस्य भार्यामित्यन्यः । नैतदस्ति, न हि वालिजीवनसमये तारा सुग्रीवेण स्वीकृता, यदि बिलाशिलाप्रक्षेपानन्तरं स्वीकृतेति कल्प्यते तदा तस्य भ्रातुर्मृतत्वज्ञानमेव । धर्मराज इति यदुक्तं हनुमता, तत् प्रत्याख्याति—कथं स इत्यादि । उक्तरूपजुगुप्सितकर्मकारीत्यर्थः । युद्धायाभिनियुक्तेनेति । युद्धार्थं गच्छता बिलरक्षणनियुक्तेनेत्यर्थः ॥ ३–४ ॥

सत्यात् पाणिगृहीतश्च कृतकर्मा महायशाः ।
विस्मृतो राघवो येन स कस्य तु कृतं स्मरेत् ॥ ५ ॥

सत्यात् अग्निसाक्षिकतया पाणिगृहीतः—मित्रं कृतः राघवोऽपि येन नृशंसेन अस्थिरेण विस्मृतः, सः कस्य सुकृतं—उपकारं स्मरेत्, न कस्यापि । अतः कथं कृतज्ञ इत्यर्थः ॥ ५ ॥

लक्ष्मणस्य भयात् येन नाधर्मभयभीरुणा ।
आदिष्टा मार्गितुं सीतां [2] धर्ममस्मिन् कथं भवेत् ॥ ६ ॥

* जीवत इत्यनेन भ्रातुर्मरणानन्तरं तद्भार्यापरिग्रहः कुलधर्म इत्यवगम्यते—**गो.**

[1] दुरात्मना—**ज**  [2] धर्मस्तस्मिन—**ङ.**



ननु कथमकृतज्ञः ? प्रवर्तमानकार्यत्वादित्यत्रोपाधिमाह—लक्ष्मणस्येत्यादि । धर्मं—धर्मधीमूलं प्रवर्तनं अस्मिन् कथं भवेत् ? प्रवर्तनस्य भयोपाधित्वात् ॥ ६ ॥

तस्मिन् पापे कृतघ्ने तु [1] स्मृतिहीने चलात्मनि ।
आर्यः को विश्वसेज्जातु तत्कुलीनो [2] जिजीविषुः ॥ ७ ॥

यदेवं, अत—तस्मिन् पाप इत्यादि । तत्कुलीनः—तज्ज्ञातिकोटिपतितः ॥ ७ ॥

* राज्ये [3] पुत्रं प्रतिष्ठाप्य सगुणो निर्गुणोऽपि वा ।
कथं शत्रुकुलीनं मां सुग्रीवो जीवयिष्यति ॥ ८ ॥

उक्तार्थस्य विवरणं—राज्य इत्यादि । सुग्रीवः सगुणो निर्गुणोऽपि वाऽस्तु । न मे तद्विचारणं किञ्चित् । अपि तु शत्रुकुलीनं—शत्रुपुत्रं मां पुत्रमिति मत्वा राज्ये प्रतिष्ठाप्य कथं जीविष्यति, न कथमपि । † अन्यस्तु जनिष्यमाणं पुत्रं राज्ये प्रतिष्ठाप्य मां कथं जीवयिष्यतीत्याह । इदानीं पुत्रस्यैवाभावे तत्स्थापनहेतुकतया इदानीं जीवनाभावः कथं शक्यवादः ? ॥ ८ ॥

‡ भिन्नमन्त्रो [4] ऽपराद्धश्च हीनशक्तिः कथं ह्यहम् ।
किष्किन्धां प्राप्य जीवेयं अनाथ इव दुर्बलः ॥ ९ ॥

* तव यौवराज्यस्थापनं किं विस्मृतोऽसीत्यत्राह—राज्य इति । पुत्रः—जनिष्यमाणः स्वपुत्रः—**गो.** † गोविन्दराजः, महेश्वरतीर्थो वा । शिरोमणिरप्येवमेवाह ॥ ‡ भिन्नमन्त्रः—मदाशयस्य मदप्रियैः भवद्भिः ज्ञातत्वात् ।

[1] स्मृतिभिन्ने—**ङ.**  [2] विशेषतः—**ज.**  [3] पुत्रः प्रतिष्ठाप्यः—**ङ., झ.**
[4] विरुद्धश्च—**ङ.**

इतश्च न जीवयिष्यतीत्याह—भिन्नमन्त्र इत्यादि । इदानीं दैवात् कृतबिलप्रवेशरूपः भिन्नः—विरुद्धः मन्त्रः—विचारः यस्य स तथा । एवं मन्त्रस्य कस्यापि मुखाच्छ्रवणे अवश्यंभाविनि सति स्पष्टं अपराद्धश्च भवामि । हीनशक्तिः—तदपेक्षया हीनबलः हनुमदुक्तरीत्या सहायबलहीनश्च । ९ ॥

*उपांशुदण्डेन हि मां [1]बन्धनेनोपपादयेत् ।
शठः क्रूरो नृशंसश्च सुग्रीवो राज्यकारणात् ॥ १० ॥

उपांशुदण्डस्यैव रूपं—बन्धनेनेत्यादि । पुत्र इति कृत्वा न वधिष्यति, अपि तु बालवत् अपराद्ध इति बन्धनमेव करोतीति निरचिनोत् ॥ १० ॥

†बन्धनाद्वाऽवसादान्मे श्रेयः प्रायोपवेशनम् ।
[2]अनुजानीत मां सर्वे गृहं गच्छन्तु वानराः ॥ ११ ॥

तदेव द्रढयन्नाह—बन्धनादित्यादि ॥ ११ ॥

अहं वः प्रतिजानामि नागमिष्याम्यहं पुरीम् ।
इहैव प्रायमासिष्ये श्रेयो मरणमेव मे ॥ १२ ॥
अभिवादनपूर्वं तु [3] राघवौ बलशालिनौ ।
अभिवादनपूर्वं तु [4] राजा कुशलमेव च ॥ १३ ॥

राजा—सुग्रीवः कुशलमेव वाच्य इत्याकर्षः । न त्विदानीं मया दुःखवशादुक्तं कुशलमित्यर्थः । राघवौ बलशालिनौ कुशलं वाच्याविति विपरिणामः ॥ १३ ॥

*उपांशुदण्डेन—रहस्यदण्डरूपेण । उपपादयेत्—प्रापयेत्—गो. †वेति प्रसिद्धौ, बन्धनरूपावसादात्—गो.

[1] बाधनेनो—ङ. [2] अनुजानन्तु—ङ. [3] राजा कुशलमेव च—ङ. [4] राघवौ बलशालिनौ—ङ.



*वाच्यस्तातो यवीयान् मे सुग्रीवो वानरेश्वरः ।
आरोग्यपूर्वं कुशलं वाच्या माता रुमा च मे ॥ १४ ॥

अथ मातृकुशलविज्ञापनानुक्रमप्रकाशनशेषतया, आरोग्यपूर्वत्वविशेषाभिधित्सया च पुनः सुग्रीवकुशलविज्ञापनं—वाच्यस्तात इत्यादि । 'राघवौ बलशालिनौ' इत्यनन्तरं 'वाच्यस्तातः' इति पाङ्क्तः पाठक्रमः । तद्योजनाशक्त्या पाठव्यत्यासं परः पठति स्म ॥ १४ ॥

मातरं चैव मे तारां आश्वासयितुमर्हथ ।
प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी ॥ १५ ॥
विनष्टमिह मां श्रुत्वा व्यक्तं हास्यति जीवितम् ।
एतावदुक्त्वा वचनं वृद्धांस्तानभिवाद्य च ॥
[1]विवेश चाङ्गदो भूमौ रुदन् दर्भेषु [2]दुर्मनाः ॥ १६ ॥

वृद्धाः—जाम्बवदादयः ॥ १६ ॥

तस्य संविशतस्तत्र रुदन्तो वानरर्षभाः ।
नयनेभ्यः प्रमुमुचुः उष्णं वै वारि दुःखिताः ॥ १७ ॥
सुग्रीवं चैव निन्दन्तः प्रशंसन्तश्च वालिनम् ।
परिवार्याङ्गदं सर्वे [3]व्यवसन् प्रायमासितुम् ॥ १८ ॥

सुग्रीवं चैव निन्दन्त इति । अङ्गदपक्ष्या इति शेषः । व्यवसन्—व्यवास्यन् इति यावत् ॥ १८ ॥

[4]मतं तद्वालिपुत्रस्य विज्ञाय प्लवगर्षभाः ।
उपस्पृश्योदकं [5]तत्र प्राङ्मुखाः समुपाविशन् ॥ १९ ॥

* मे यवीयान् तातः—पितृव्यः वानरेश्वरः राजा सुग्रीव इति वाऽन्वयः ॥

[1] संविवेशाङ्गदो—ङ. [2] दुर्मुखः—ज [3] व्यवास्यन्—ङ., झ. [4] तद्वाक्यं वालि—ज. [5] विन्ध्ये—ङ., सर्वे—ज.

दाक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः ।
मुमूर्षवो हरिश्रेष्ठाः एतत् क्षममिति स्म ह ॥ २० ॥

हरिश्रेष्ठा अपि एतत्—प्रायोपवेशनमेव अद्य अस्माकं क्षम — युक्तमिति मन्यन्ते स्मेति शेषः । युवराजानि मूलराजानियुक्त म्रियमाणे तं परित्यज्य गमनं अस्माकं अयुक्तमिति प्रायस्यैव क्षमत्वं मत्वाऽवसायः * ॥ २० ॥

† रामस्य वनवासं च क्षयं दशरथस्य च ।
जनस्थानवधं चैव वधं चैव जटायुषः ॥ २१ ॥
हरणं चैव वैदेह्याः वालिनश्च वधं रणे ।
रामकोपं च वदतां हरीणां भयमागतम् ॥ २२ ॥

'रामस्य वनवासं च' इत्यादिः अग्रिमसर्गविस्तरणीयार्थसंक्षेपः । वदतां, उक्त्वा शोचतां भयं आगतं—आरादग्रिमसर्गप्रदर्श्यमानसंपातिभक्षणवचनजं भयमित्यर्थः ॥ २२ ॥

[1]एवं वदद्भिर्बहुभिर्महीधरः
महाद्रिकूटप्रतिमैः प्लवङ्गमैः ।
बभूव सन्नादित[2]निर्दरान्तरः
भृशं नदद्भिर्जलदै[3]रिवाम्बरम् ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे षट्पञ्चाशः सर्गः

---

* वस्तुतस्तु, वालिपुत्रे प्रीत्या, सुग्रीवाद्भीत्या च तथेति युक्तम् । अनुपदमेवेदं स्पष्टम् । † संकटकाले पूर्ववृत्तचिन्तनं सर्वेषां सहजम् ॥

[1] स संविशद्भिः—ङ. [2] निर्झरा—ङ. [3] रिवोल्बणैः—ङ.



भृशं नदद्भिरिति । उक्तरूपभयवशादिति शेषः* । अंगार-(२३ १/२)मानः सर्गः ॥ २३ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे षट्पञ्चाशः सर्गः

---

## सप्तपञ्चाशः सर्गः

[सम्पातिसङ्गमः]

उपविष्टास्तु ते सर्वे यस्मिन् † प्रायं [1]गिरिस्थले ।
हरयो गृध्रराजश्च तं देशमुपचक्रमे ॥ १ ॥

अथ हरिभिः शोकप्रसङ्गे जटायुर्वधकीर्तने सति तच्छ्रुत्वा संपातेः तद्वृत्तान्तप्रश्नः । उपविष्टा इत्यादि । गिरिस्थले—गिरिप्रवेशे, विन्ध्यनैर्ऋतपादपर्वतस्येत्यर्थः । तथाऽत्र सर्वत्र विधिः ॥ १ ॥

संपातिर्नाम नाम्ना तु चिरजीवी विहङ्गमः ।
भ्राता जटायुषः श्रीमान् प्रख्यातबलपौरुषः ॥ २ ॥
कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः ।
उपविष्टान् हरीन् दृष्ट्वा हृष्टात्मा गिरमब्रवीत ॥ ३ ॥
‡ विधिः किल नरं लोके विधानेनानुवर्तते ।
यथाऽयं विहितो भक्ष्यः चिरान्मह्य[2]मुपागतः ॥ ४ ॥

---

* वस्तुतस्तु 'एवं वदद्भिः' इत्यस्य प्रतिकोटितया इदं मघविशेषणमिति युक्तम् ॥
† प्रायं उपविष्टा इत्यन्वयः ॥ ‡ विधिः विधानेन नरमनुवर्तते इत्यन्वयः । यस्मिन् काले यद्भवितव्यं तत् विधिः संपादयतीति भावः ॥

[1] गिरेस्तटे—ङ. [2] मिह्यागतः—ङ.

विधिः—क्रियाफलम् । नरमिति । प्राणिनामित्यर्थः । विधानेन—प्राचीनकर्मानुसारेण । यथा—तद्यथा उच्यते यस्मादयं अस्माकं विहितः भक्ष्यः—आमिषरूपः इहागतः ॥ ४ ॥

परम्पराणां भक्षिष्ये वानराणां *मृतं मृतम् ।
उवाचेदं वचः पक्षी तान्निरीक्ष्य प्लवङ्गमान् ॥ ५ ॥

यतश्च परम्पराणां—पङ्क्तिः पङ्क्तित उपविष्टानां वानराणां मध्ये मृतं मृतं क्रमात् भक्षिष्ये, तस्मादिति पूर्वेण संबन्धः ॥ ५ ॥

तस्य तद्वचनं श्रुत्वा भक्ष्यलुब्धस्य पक्षिणः ।
अङ्गदः †परमायस्तः हनुमन्तमथाब्रवीत् ॥ ६ ॥

परमायस्तः—परमखिन्नः ॥ ६ ॥

पश्य ‡[1]सीताऽपदेशेन साक्षाद्वैव[2]स्वतो यमः ।
इमं देशमनु[3]प्राप्तः वानराणां विपत्तये ॥ ७ ॥

सीतापदेशेन—सीताव्याजेन, प्राप्तप्रायोपवेशानामिति शेषः ॥

रामस्य न कृतं कार्यं [4]राज्ञो न च वचः कृतम् ।
हरीणामियमज्ञाता विपत्तिः सहसाऽऽगता ॥ ८ ॥

अज्ञाता—अचिन्तिता ॥ ८ ॥

---

* कोटिशो विद्यमानेषु तदा तदा बहूनां मरणस्यावश्यकत्वात्, गृध्राणां मृतप्राणिभक्षकत्वात् एवमुक्तिः । मृतमित्यस्य मारितमिति बाढर्थः ॥ †परमायस्तः—परमोद्विग्नः–गो. ‡अस्माकमेतद्दशाप्राप्तेः सीतैव मूलमिति भावः ॥

[1] गृध्रापदेशेन–ज. [2] स्वतं यमम्–ङ. [3] प्राप्त–ङ. [4] न कृतं राजशासनम्–ङ.



वैदेह्याः प्रियकामेन कृतं कर्म जटायुषा ।
गृध्रराजेन यत्तत्र श्रुतं वस्तदशेषतः ॥ ९ ॥
तथा सर्वाणि भूतानि तिर्यग्योनिगतान्यपि ।
प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान् यथा वयम् ॥ १० ॥

वैदेहीनिमित्तं तिर्यग्योनिनामस्माकमिव तिर्यग्योन्यन्तरस्यापि विपत्तिर्जातेत्याह—वैदेह्या इत्यादि । प्रत्यक्षं ह्रियमाणाया इति शेषः । रामस्य प्रियं कुर्वन्तीत्यनेन राममहिमा दर्शितः ॥ ९-१० ॥

*अन्योन्यमुपकुर्वन्ति स्नेहकारुण्ययन्त्रिताः ।
[1]तेन तस्योपकारार्थं त्यजतात्मानमात्मना ॥ ११ ॥

स्नेहकारुण्ययन्त्रिता इति । रामस्येति शेषः । तत इति । उक्तस्नेहकारुण्ययन्त्रणनिमित्तत इत्यर्थः । तस्येति । रामस्येत्यर्थः ॥

प्रियं कृतं हि रामस्य धर्मज्ञेन जटायुषा ।
राघवार्थे परिश्रान्ता वयं संत्यक्तजीविताः ॥ १२ ॥
कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीम् ।
स सुखी गृध्रराजस्तु रावणेन हतो रणे ॥ १३ ॥

सुखीति । सुखित्वमेव द्राङ्मरणनिर्भयपरलोकगतिप्रदर्शनेन दर्शयति—रावणेनेत्यादि ॥ १३ ॥

† मुक्तश्च सुग्रीवभयात् गतश्च परमां गतिम् ।
जटायुषो विनाशेन राज्ञो दशरथस्य च ॥
हरणेन च वैदेह्याः संशयं [2]हरयो गताः ॥ १४ ॥

---

* स्नेहकारुण्ययन्त्रिताः, तेन कारुण्यादिना तस्य—रामस्योपकारार्थं आत्मानमात्मना—स्वप्रेरणयैवेति भावः, त्यजता अन्योन्यमुपकुर्वन्तीत्यन्वयः ॥ † मुक्तश्चेति । अनेन सर्वतिर्यग्योनिराजत्वं कपीन्द्रस्य सूचितम्–ति.

[1] ततः–ज. [2] मरणे–ङ.

जटायुषो विनाशेनेति। द्राग्विनाशेनेत्यर्थः। यदि पुनश्च घटिकामात्रं युद्धतो निरोधयेत्, तदा द्रागेव रामदृष्टिं प्राप्तो रावणः सीतां न हरिष्यतीत्याशयः। राज्ञो दशरथस्य च द्राग्विनाशेन च हरणः प्राणसंशयं गताः। पुनश्च पक्षमात्रमपि यदि राजा जीवेत्—तदा भरतेन सहागत्य रामं प्रत्यानयेदेवेत्याशयः। हरणेन चेति चकारात् लक्ष्मणप्रस्थापनेन च प्राप्तेन वैदेह्या हरणेनेति योजना॥ १४॥

रामलक्ष्मणयोर्वासः अरण्ये सह सीतया।
राघवस्य च बाणेन वालिनश्च तथा वधः॥ १५॥
*रामकोपादशेषाणां राक्षसानां तथा वधः।
कैकेय्या वरदानेन इदं हि विकृतं कृतम्॥ १६॥

अथ सर्वानर्थपरमकारणमनुस्मृत्य शोचन्ति—रामलक्ष्मणयोरित्यादि। इदं हि प्रसिद्धं विकृतं—सर्वानर्थकृत्यं कैकेय्या राज्ञो वरदानेनैव कृतम्॥ १६॥

तदसुखमनुकीर्तितं †वचः
भुवि पतितांश्च समीक्ष्य वानरान्।
भृश[1]चलितमतिर्महामतिः
कृपणमुदाहृतवान् स [2]गृध्रराट्॥ १७॥

भृशं चलितमतिः—क्षुभितचित्तः। कृपणं—दीनम्॥ १७॥

* राक्षसानां वधः जनस्थाने॥ † वचः समीक्ष्य—श्रुत्वा॥

[1] चकित—ङ. [2] गृध्रराजः—ङ.



[1]तत्तु श्रुत्वा तदा वाक्यं अङ्गदस्य मुखोद्गतम्।
अब्रवीद्वचनं गृध्रः तीक्ष्णतुण्डो [2]महास्वनः॥ १८॥

उक्तसंग्रहश्लोकार्थस्यैव प्रपञ्चः*—तत्त्वित्यादि॥ १८॥

कोऽयं गिरा घोषयति प्राणैः [3]प्रियतरस्य मे।
जटायुषो वधं भ्रातुः कम्पयन्निव मे मनः॥ १९॥

को घोषयति, सोऽयं मया प्रष्टव्य इति शेषः॥ १९॥

कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः।
नामधेयमिदं भ्रातुः चिरस्याद्य मया श्रुतम्॥ २०॥

प्रश्नमेव करोति—कथमित्यादि॥ २०॥

इच्छेयं गिरिदुर्गाच्च भवद्भिरवतारितुम्।
यवीयसो गुणज्ञस्य श्लाघनीयस्य विक्रमैः॥ २१॥
अतिदीर्घस्य कालस्य [4]परितुष्टोऽस्मि कीर्तनात्॥ २२॥

गिरिदुर्गात् भवद्भिरवतारितुं इच्छेयमिति, आत्मानमिति शेषः। अवतारणप्रयोजनमाह—यवीयस इत्यादि। कनिष्ठस्येत्यर्थः। 'स्थूलदूर' इत्यादिना यणादिपरलोपादिः॥ २१-२२॥

†तदिच्छेयमहं श्रोतुं विनाशं, वानरर्षभाः!
भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः॥ २३॥

* आसर्गान्तमिति भावः॥ † अवतारणप्रयोजनं उच्यते विनाशं श्रोतुमिच्छेयमिति। यवीयसः अतिदीर्घस्य कालस्य परिकीर्तनादित्यन्वयः॥

[1] इति—ङ. [2] महाखगः—ङ. [3] प्रियतमस्य—ङ. [4] तुष्टोऽस्मि परिकीर्तने—ङ.

तस्यैव च मम भ्रातुः सखा दशरथः *कथम् ?
यस्य रामः प्रियः पुत्रः ज्येष्ठो गुरुजनप्रियः ॥ २४ ॥

श्रोतुमिच्छेयमिति । युष्मत्समीपमागत्येति शेषः । अन्वयस्तु—यस्य रामः उच्यमानगुणकः प्रियः पुत्रः, स दशरथः तस्य मम भ्रातुरिव मम च सखा । अतः तत्स्नेहात् प्रयतमानस्य जनस्थाननिवासिनस्तस्य जटायुषः मम भ्रातुः विनाशः कथमभूदिति । तस्य विनाशं श्रोतुमिच्छेयमिति । अत्र तु कथं सखेति योजनमशक्यम्, उत्तरत्र एवं सखेत्युत्तराभावात् ॥ २३-२४ ॥

सूर्यांशुदग्धपक्षत्वात् न शक्नोम्युपसर्पितुम् ।
इच्छेयं पर्वतादस्मात् अवतर्तुं, [1] अरिंदमाः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे सप्तपञ्चाशः सर्गः

अथ स्वस्यावतारणापेक्षाहेतुमाह — सूर्येत्यादि । अवतर्तुमिति । अवतारयितुमिति यावत् । मित्र(२५)मानः सर्गः ॥ २५ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे सप्तपञ्चाशः सर्गः

* जटायुषो विनाशः कथमभवदिति तस्य विनाशं श्रोतुमिच्छेयमिति । कथं सखेत्यन्वयस्तु नोचितः, तदुत्तरस्याग्रेऽभावात्—ति. कथं लोकान्तरं गत इति शेषः—रा. अत्र 'कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः', 'सखा दशरथः कथम्' इत्येवमनुवादात् पूर्वमिदमप्यङ्गदेनोक्तमिति ध्येयम्—गो.

[1] प्लवङ्गमाः—ङ.



## अष्टपञ्चाशः सर्गः

### [अङ्गदवाक्यम्]

शोकाद्भ्रष्टस्वरमपि श्रुत्वा [1] ते हरियूथपाः ।
श्रद्दधुर्नैव तद्वाक्यं कर्मणा तस्य शङ्किताः ॥ १ ॥

अथाङ्गदेन गृध्रराजपृष्टप्रत्युत्तरम् । शोकेत्यादि । भ्रष्टस्वरमपीति । भक्षणवचनस्वरापेक्षया भ्रष्टस्वरमित्यर्थः । एवं स्वरेण यद्यप्ययं स्वनुमानशोकः. 'परितुष्टोऽस्मि' (पूर्वसर्गे २२ श्लो.) इति श्रद्धेयवचनश्च ; अथापि न श्रद्दधुः । तत्र हेतुः——कर्मणा शङ्किता इति । भक्षणार्थमतिसन्धानमेव करोतीत्यबुध्यन्त इत्यर्थः ॥ १ ॥

ते प्रायमुपविष्टास्तु दृष्ट्वा गृध्रं प्लवङ्गमाः ।
चक्रुर्बुद्धिं तदा *[2] रौद्रां सर्वान्नो भक्षयिष्यति ॥ २ ॥

तदेव दर्शितं——चक्रुरित्यादि ॥ २ ॥

[3] सर्वथा प्रायमासीनान् यदि नो भक्षयिष्यति ।
कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः ॥
† एतां बुद्धिं ततश्चक्रुः सर्वे ते [4] वानरर्षभाः ॥ ३ ॥

क्षिप्रं सिद्धिमिति । शीघ्रमरणमित्यर्थः ॥ ३ ॥

अवतार्य गिरेः शृङ्गात् गृध्रमाहाङ्गदस्तदा ।
बभूवर्क्ष[5]रजा नाम वानरेन्द्रः प्रतापवान् ॥ ४ ॥

* बुद्धेः रौद्रत्वं भक्षकदृष्ट्या । † एतां बुद्धिं—भक्षणाभीष्टत्वबुद्धिम्—ति.

[1] वानर—ज. [2] क्रूरां—ङ. [3] सर्वांश्च—ङ. [4] हरियूथपाः—ज. [5] रजो—ज.

* ममार्यः [1]पार्थिवः, पक्षिन्! [2]धार्मिकस्तस्य चात्मजौ।
सुग्रीवश्चैव वाली च [3]पुत्रावोघबलावुभौ ॥ ५ ॥

तत्र 'कोऽयं वाषयति' इति प्रथमप्रश्नस्योत्तरं—बभूवर्क्षरजा इत्यादि। आर्यः—पूज्यः ॥ ५ ॥

लोके विश्रुतकर्माऽभूत् राजा वाली पिता मम।
राजा कृत्स्नस्य जगतः इक्ष्वाकूणां [4]महारथः ॥ ६ ॥
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम्।
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥ ७ ॥
पितुर्निदेशनिरतः धर्म्यं पन्थानमाश्रितः।
तस्य भार्या जनस्थानात् रावणेन हृता बलात् ॥ ८ ॥
रामस्य तु पितुर्मित्रं जटायुर्नाम गृध्रराट्।
ददर्श सीतां वैदेहीं ह्रियमाणां विहायसि ॥ ९ ॥
रावणं विरथं कृत्वा †स्थापयित्वा च मैथिलीम्।
परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ॥ १० ॥

रावणेन विहायसीति। ह्रियमाणामिति शेषः। स्थापयित्वा चेति। भूमाववशतयेति शेषः ॥ १० ॥

एवं गृध्रो हतस्तेन रावणेन बलीयसा।
संस्कृतश्चापि रामेण [5]गतश्च गतिमुत्तमाम् ॥ ११ ॥
ततो मम पितुर्व्येण सुग्रीवेण महात्मना।
चकार राघवः सख्यं सोऽवधीत् पितरं मम ॥ १२ ॥

* आर्यः—पितामहः पार्थिवः, वानराणामिति शेषः—ति. आर्यः पितामहः—गो.

† स्थापयित्वा, भूमावति शेषः—ति. रावणेन सीतापहरणं स्तंभयित्वेति भावः ॥

[1] पूर्वकः—ङ. [2] धार्मिकौ तस्य—ञ. [3] पुत्रौ देवबलान्वितौ—ङ. [4] महाबलः—ङ. [5] जगाम—ङ



मम पित्रा [1]निरुद्धो हि सुग्रीवः सचिवैः सह।
निहत्य वालिनं रामः ततस्तमभिषेचयत् ॥ १३ ॥

भ्रातुर्वधे कारणमाह—मम पित्रेत्यादि। निरुद्ध इति निरुद्धराज्य इत्यर्थः ॥ १३ ॥

स राज्ये स्थापितस्तेन सुग्रीवो वानराधिपः।
राजा वानरमुख्यानां [2]तेन प्रस्थापिता वयम् ॥ १४ ॥
एवं रामप्रयुक्तास्तु मार्गमाणास्ततस्ततः।
वैदेहीं नाधिगच्छामः रात्रौ सूर्यप्रभामिव ॥ १५ ॥
ते वयं दण्डकारण्यं विचित्य सुसमाहिताः।
अज्ञानात्तु प्रविष्टाः स्म [3]धरण्या विवृतं बिलम् ॥ १६ ॥
मयस्य मायाविहितं तद्बिलं च विचिन्वताम्।
व्यतीतस्तत्र नो मासः यो राज्ञा समयः कृतः ॥ १७ ॥
ते वयं कपिराजस्य सर्वे वचनकारिणः।
कृतां *संस्थामतिक्रान्ताः भयात् प्रायमुपास्महे ॥ १८ ॥
क्रुद्धे तस्मिंस्तु काकुत्स्थे सुग्रीवे च सलक्ष्मणे।
गतानामपि सर्वेषां तत्र नो नास्ति जीवनम् ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे अष्टपञ्चाशः सर्गः

———

अधिक(१९ १/२)मानः सर्गः ॥ १९ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे अष्टपञ्चाशः सर्गः

———

* संस्थां —व्यवस्थाम्—गो. मर्यादाम्—रा.

[1] विरुद्धा—ङ [2] येन—ञ. [3] धर्मिण्या—ङ.

## एकोनषष्टितमः सर्गः

[सीताप्रवृत्तिश्रवणम्]

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः * ।
[1] सबाष्पान् वानरान् गृध्रः प्रत्युवाच [2] महास्वनः ॥ १ ॥

अथाङ्गदेन पृष्टसीतावृत्तान्तात् संपातेः सीतावृत्तान्तावगतिः । इत्युक्त इत्यादि । त्यक्तजीवितैः—जीवितनिराशैः । सबाष्पान्—अश्रुपूर्णनयनान् ॥ १ ॥

यवीयान् मम स भ्राता जटायुर्नाम, वानराः!
यमाख्यात हतं युद्धे रावणेन बलीयसा ॥ २ ॥

यमाख्यातेति । आख्यान्ति स्मेति यावत् ॥ २ ॥

वृद्धभावादपक्षत्वात् शृण्वंस्तदपि मर्षये † ।
न हि मे शक्तिरस्त्यद्य भ्रातुर्वैरविमोक्षणे ॥ ३ ॥

तदपीति । भ्रातृवधमपीति यावत् ॥ ३ ॥

पुरा वृत्रवधे वृत्ते [3] स चाहं च जयैषिणौ ।
आदित्यमुपयातौ [4] स्वः ज्वलन्तं रश्मिमालिनम् ॥ ४ ॥
आवृत्त्याकाश[5]मार्गेण जवेन [6] स्वर्गतौ भृशम् ।
मध्यं प्राप्ते [7] दिनकरे जटायुरवसीदति ॥ ५ ॥
तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितम् ।
पक्षाभ्यां छादयामास स्नेहात् परम[8]विह्वलम् ॥ ६ ॥

* त्यक्तजीवितैः—त्यक्तजीवनाशभयैः-ति. † नो चेदद्यैव भ्रातृवधप्रतीकारं कुर्यामिति भावः॥

[1] सबाष्पो वानरान् , सबाष्पनयनान्–ङ. [2] महाबलः–ङ. [3] परस्पर–ङ., झ. [4] स्म–ङ. [5] मार्गे तु–ङ. [6] स्म गतौ–ङ. [7] सवितरि–ङ. [8] विह्वल–ङ.



'अद्य मे शक्तिर्नास्ति' इत्युक्तिसूचितां पूर्वकालस्वमहच्छक्तिं दर्शयति—पुरेत्यादि । 'वृत्रवधे वृत्ते' इत्यनेन स्वयोः पतनबल-परीक्षाकालसूचनमात्रम् । जयैषिणाविति । पतनप्राशस्त्यप्रकाशेच्छू इति यावत् । आदित्यमुपयातौ स्वः—येनादित्य उत्पत्य प्रथमं प्राप्यते—स आवयोः प्रबल इति प्रतिज्ञापूर्वमिति शेषः—इति प्राचीनाः * । तैस्तु 'आचचक्षे मुनेस्सर्वं सूर्यानुगमनं तदा' (६२–१) इति संपातिवक्ष्यमाणसूर्यानुगमनमात्रं दृष्ट्वा उक्तम्; न तूत्तरवाक्यवर्ति-वज्रव्रणयुक्तत्ववर्णनं दृष्टम् । अस्माभिस्तूच्यते—'पुरा वृत्रवधे वृत्ते सति स च जटायुरहं च जयैषिणौ—अद्य इन्द्र एव किल प्रबलः, तं जेष्याव इति इन्द्रजयैषिणौ भूत्वा प्रथममाकाशमार्गेण स्वर्गतावभूव । ततः गरुडवद्भृशं जवेन तं विजित्यावृत्त्य ज्वलन्तं रश्मिमालिनमादित्य-मपि दर्पात् उपयातौ स्वः । उपयातयोरावयोर्मध्यं जटायुस्तु सवितरि मध्यं प्राप्तेऽवसीदति स्म । अथ—तमहं भ्रातरमित्यादि । अत्र तु सर्वं पदं सार्थम् । परत्र तु 'स्वर्गतौ' इति पदं नान्वितम् । आवृत्त्येति पदं च व्यर्थम् । इन्द्रप्रसङ्गश्च व्यर्थः । जयैषिणाविति पदं चासङ्गतम्, न किलादित्यं जेतुमेतौ गतौ इत्युक्तम् । नापि चा-न्योन्यं जिगीषया । जिगीषा तु स्पर्धामूला, सा तु नास्ति, इति भ्रातुः स्वपक्षतो दाहपरिहारेण स्पष्टा । एवञ्च 'आदित्यमुपयातौ स्वः, सवितरि मध्यं गते जटायुरवसीदति स्म' इत्येतावत एव वक्तव्यत्वात्,

* महेश्वरतीर्थगोविन्दराजयोरपि इदमेव सम्मतम् । वस्तुतस्तु—बालानामयं स्वभावः, परस्परस्पर्धनं, प्रीतिकरणं च । सूर्यं प्रत्युद्गतयोर्विषये इन्द्रेण वज्रप्रयोगस्तु, तस्य त्रिलोकाधिपतित्वात्, त्रिलोकीयोगक्षेमाधिकृतत्वाच्च । अयमंशः सूर्यं प्रत्युद्गते हनूमति इन्द्रेण वज्रप्रयोगस्य वक्ष्यमाणत्वात् (67–23) स्पष्टः । अतः प्राचीनव्याख्यैव साधीयसी ॥

सर्वमन्यत् व्यर्थं, अमङ्गलं च स्पष्टम् । स्नेहात् पक्षाभ्यां छादयामासेति लिडुत्तमः समाच्छादयमिति यावत् । अपरोक्षेऽप्यार्षो लिट् ॥ ६ ॥

निर्दग्धपक्षः पतितः [1] विन्ध्येऽहं, वानरर्षभाः !
अहमस्मिन् वसन् भ्रातुः प्रवृत्तिं नोपलक्षये ॥ ७ ॥

निर्दग्धपक्ष इति । सूर्यकिरणेनेति शेषः । जटायुषः प्रवृत्तिमित्यन्वयः ॥ ७ ॥

*जटायुषस्त्वेवमुक्तः भ्रात्रा संपातिना तदा ।
युवराजो महाप्राज्ञः प्रत्युवाचाङ्गदस्तदा ॥ ८ ॥
जटायुषो यदि भ्राता श्रुतं ते गदितं मया ।
†आख्याहि यदि जानासि निलयं तस्य रक्षसः ॥ ९ ॥

यदि जटायुषो रामभक्तस्य भ्राता, यदि च मया गदितं रामवृत्तान्तं त्वया श्रुतं यदि च तस्य रक्षसो निलयं जानासि, तर्हि आख्याहि, प्रार्थने लोट् ॥ ९ ॥

अदीर्घ[2]दर्शिनं तं वै रावणं [3] राक्षसाधमम्
अन्तिके यदि वा दूरे यदि जानासि शंस नः ॥ १० ॥

अदीर्घदर्शिनमिति । भाव्यनर्थाकलनाशक्तमिति यावत् । रावणं अन्तिके दूरे वा तिष्ठतीति यदि जानासि तदा नः शंस ॥१०॥

ततोऽब्रवीन्महातेजाः ज्येष्ठो भ्राता जटायुषः ।
आत्मानुरूपं वचनं वानरान् संप्रहर्षयन् ॥ ११ ॥

---

* जटायुषो भ्रात्रेत्यन्वयः । † 'रणेनेन बलीयसा' (श्लो. २) इत्यादिवचनात् रावणपरिचयसंभावनया एवं प्रश्नः । तथैव सोऽपि स्वस्य रावणपरिचयं वक्ष्यति ॥

[1] विन्ध्येऽस्मिन्–ङ. [2] दर्शनं– . [3] राक्षसाधिपम्–ङ.



निर्दग्धपक्षो गृध्रोऽहं [1] हीनवीर्यः, प्लवङ्गमाः !
वाङ्मात्रेण तु रामस्य करिष्ये [2] साह्यमुत्तमम् ॥ १२ ॥

रामस्य साह्यमिति । रामकार्यप्रवृत्तानां युष्माकमित्यर्थः ॥१२॥

जानामि वारुणान् लोकान् विष्णोस्त्रैविक्रमानपि ।
[3] देवासुरविमर्दान् वाऽप्यमृतस्य च मन्थनम् ॥ १३ ॥

वारुणान् लोकान्––जलप्रधानलोकान्––अब्लोकानिति यावत् । तथा विष्णोस्त्रैविक्रमान्––त्रिविक्रमजितान् । भूप्रधानान्––भूरादिलोकानपीत्यर्थः । विमर्दः––युद्धम् । भगवद्वद्गगादितत्क्षणपर्यन्तं सर्वे वृत्तान्ताः परिज्ञाताः निवेदिताः प्रागुक्तविशेषणैः ॥ १३ ॥

रामस्य [4] यदिदं कार्यं कर्तव्यं प्रथमं मया ।
[5] जरया च हृतं तेजः प्राणाश्च शिथिला मम ॥ १४ ॥
तरुणी रूपसंपन्ना सर्वाभरणभूषिता ।
ह्रियमाणा मया दृष्टा रावणेन दुरात्मना ॥ १५ ॥
क्रोशन्ती राम रामेति लक्ष्मणेति च भामिनी ।
भूषणान्यपविध्यन्ती गात्राणि च विधून्वती ॥ १६ ॥
सूर्यप्रभेव शैलाग्रे तस्याः कौशेयमुत्तमम् ।
असिते राक्षसे भाति यथा [6] वा तटिदम्बुदे ॥ १७ ॥
तां तु सीतामहं मन्ये रामस्य परिकीर्तनात् ।
श्रूयतां मे कथयतः निलयं तस्य रक्षसः ॥ १८ ॥

तां त्विति । रावणह्रियमाणां दृष्टां इत्यर्थः । सीतां मन्य इत्यत्र हेतुमाह––रामस्य परिकीर्तनादिति ॥ १८ ॥

---

[1] गतवीर्यः–ङ. [2] प्रियं–ङ. [3] महासुर–ङ. [4] दयितं–ङ.
[5] जरयाऽपहृतं–ङ. [6] विद्युदिवाम्बरे–ज.

पुत्रो विश्रवसः *साक्षात् भ्राता वैश्रवणस्य च ।
अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः ॥ १९ ॥

लङ्कां अध्यास्ते ॥ १९ ॥

इतो द्वीपे समुद्रस्य संपूर्णे शतयोजने ।
तस्मिन् लङ्का पुरी रम्या निर्मिता विश्वकर्मणा ॥ २० ॥

सा च लङ्का इतः शतयोजने—शतयोजनात्परतः स्थिते समुद्रस्य द्वीपे, तिष्ठतीति शेषः । तस्मिन् द्वीपे सा च लङ्कापुरी विश्वकर्मणा निर्मिता ॥ २० ॥

जाम्बूनदमयैर्द्वारैः चित्रैः काञ्चनवेदिकैः[1] ।
प्राकारेणार्कवर्णेन महता सु[2]समावृता ॥ २१ ॥
तस्यां वसति वैदेही दीना कौशेयवासिनी ।
रावणान्तःपुरे रुद्धा राक्षसीभिः [3]समावृता ॥
जनकस्यात्मजा राज्ञः तत्र द्रक्ष्यथ मैथिलीम् ॥ २२ ॥

तत्र द्रक्ष्यथ मैथिलीम् । एतदनन्तरं द्व श्लोके काचित् प्रक्षिप्ते ॥

[4][लङ्कायामथ गुप्तायां सागरेण समन्ततः ।
संप्राप्य सागरस्यान्तं संपूर्णं शतयोजनम् ॥
आसाद्य दक्षिणं तीरं ततो द्रक्ष्यथ रावणम् ।
तत्रैव त्वरिताः क्षिप्रं विक्रमध्वं, प्लवङ्गमाः ॥]
ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ ॥ २३ ॥

* साक्षात्—औरसः—रा.

[1] एतदनन्तरं—प्रासादैर्हैमवर्णैश्च महद्भिः सुसमा कृता—इत्यधिकम्—ङ.
[2] समाहिता—ङ. [3] सुरक्षिता—ङ. [4] इदमधिकं—झ.





अथ—ज्ञानेनेत्यादि । देवयोनित्वादहं खलु दिव्यज्ञानेन यूयं तां दृष्ट्वा प्रत्यागमिष्यथेत्यपि पश्यामि । ततः निस्संशयं गच्छतेति शेषः ॥ २३ ॥

*आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः ।
द्वितीयो [1]बलिभोजानां ये च वृक्षफलाशिनः ॥ २४ ॥
†भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैस्सह ।
श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् ॥ २५ ॥
बलवीर्योपपन्नानां रूपयौवनशालिनाम् ।
षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा ॥
‡वैनतेयाच्च नो जन्म सर्वेषां, वानरर्षभाः ! ॥ २६ ॥

अथ स्वस्य देवयोनित्वप्रदर्शनशेषतया पक्षिमार्गानाह—आद्यः पन्था इत्यादि । आकाशमार्ग इत्यर्थः । कुलिङ्गाः—कलविङ्का इत्यर्थः—ஊர்க்குருவி । अन्ये धान्यजीविनः—पारावतादयः । बलिभोजाः—वायसाः, बलीन् भुञ्जत इति बलिभोजाः, पचाद्यच् । वृक्षफलाशिनः—शुकादयः । भासाः—जलवायसाः । वैनतेयाच्च नो जन्मेति । विनतापुत्रादरुणादित्यर्थः । एतत्तु 'द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च । तस्माज्जातोऽहमरुणात् संपातिस्तु ममाग्रजः' इत्यरण्यकाण्डे (१४-३२) जटायुर्वाक्यात् स्पष्टम् ॥ २४-२६ ॥

* धान्यजीविनः पक्षिविशेषाः कुलिङ्गाः, 'ये चान्ये धान्यजीविनः' इति वचनात्-गो. एवमेव 'वृक्षफलाशिनः' इत्यपि बलिभोजानां विशेषणमित्याशयः ॥
† भासाः-जलवायसाः, श्येनविशेषा इत्यप्याहुः-गो. ‡ अत्र गृध्राणां पृथगुक्तेः संपातिजटायुषोः साधारणगृध्रत्वाभावः सूचितः ॥

[1] बलिपुष्टानां—ङ.

*[1]गर्हितं तु कृतं कर्म येन स्म पिशिताशिना ।
प्रतिकार्यं च मे तस्य वैरं भ्रातुः कृतं भवेत् ॥ २७ ॥

एवं दिव्यज्ञानेन ईषत्सहायकरणं ममापि वैरशुद्धिप्रयोजनायेत्याह—गर्हितमित्यादि । परदारचौर्यहरणरूपं गर्हितं कर्म । येन उक्तरूपं विगर्हितं कर्म कृतं, तस्य पिशिताशिनः भ्रातृकृतं वैरमुद्दिश्य यत् प्रतिकार्यं तच्च मे कृतं भवेत् युष्मत्प्रवर्तनेन ॥ २७ ॥

इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा ।
अस्माकमपि सौपर्णं दिव्यं चक्षुर्बलं तथा ॥ २८ ॥

ननु कथमिहस्थः लङ्कास्थां सीतां पश्यसीति शङ्कां निवर्तयति—इहस्थ इत्यादि । सौपर्णं—सुपर्णालिङ्गकचक्षुष्मती ब्रह्मविद्यासिद्धिजम् । सा च विद्या बह्वृचब्राह्मणगततृतीयपञ्चिकायां गुरुमुखादवगन्तव्या ॥ २८

तस्मादाहारवीर्येण निसर्गेण च, वानराः !
आयोजनशतात् साग्रात् वयं पश्याम नित्यशः ॥ २९ ॥

तस्मात्—उक्तदिव्यविद्यासिद्धिजचक्षुर्बलेन तथा निसर्गेण मांसविशेषाहारबलेन च, आङ् अभिविधौ, साग्रात् शतात् किञ्चिदभ्यधिकात् ॥ २९ ॥

---

* अयं श्लोकः 'चरणयोधिनां' (३१) इत्यनन्तरं निवेशनीय इत्याहुः—गो. अथवा स्वस्य महान्तमपकारं कृतवतः, 'नो जन्म' इति प्रसक्तया मध्ये तदा तदा स्मरणस्य लोकस्वभावत्वादेवमत्र कथनम् । एवञ्च गर्हितं कर्म—स्वभ्रातृवधः । अत एवोत्तरार्धे वैरनिर्यातनमुच्यते । अत्र स्मेति वाक्यशैली ॥

[1] अयं श्लोकः 'विहिता पादमूले' (३०) इत्यर्धानन्तरं पठनीयः—ङ. अयं श्लोकः आधिकः—झ.



अस्माकं विहिता दृष्टिः निसर्गेण च दूरतः ।
विहिता *[1]पादमूले तु वृत्तिश्चरणयोधिनाम् ॥ ३० ॥

अस्माकं तु निसर्गेण—जातिस्वाभाव्येन दूरतः—दूरवर्तिदर्शनबलसंपादकेन भक्ष्यविशेषेणैव वृत्तिः विहिता चरणयोधिनां—कुक्कुटादीनामेव तु स्वावासवृक्षमूलप्रदेशेषु वृत्तिः ॥ ३० ॥

उपायो दृश्यतां कश्चित् लङ्घने लवणाम्भसः[2] ।
[3]अभिगम्य तु वैदेहीं समृद्धार्था गमिष्यथ ॥ ३१ ॥

उपायः दृश्यतां—अन्विष्यताम् गमिष्यथेति । किष्किन्धामिति शेषः ॥ ३१ ॥

समुद्रं †नेतुमिच्छामि भवद्भिर्वरुणालयम् ।
प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः ॥ ३२ ॥

समुद्रं भवद्भिर्मां नेतुमिच्छामि । प्रयत्नभिन्नकर्तृकेऽपि सर्वत्रात्र तुमुन् ॥ ३२ ॥

ततो नीत्वा तु तं देशं तीरं नदनदीपतेः ।
निर्दग्धपक्षं संपातिं वानराः सुमहौजसः ॥ ३३ ॥
पुनस्तं प्रापयित्वा च तं देशं पतगेश्वरम् ।
बभूवुर्वानरा हृष्टाः ‡प्रवृत्तिमुपलभ्य ते ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकोनषष्टितमः सर्गः

---

वर्ग(३३)मानः (?) सर्गः ॥ ३४ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकोनषष्टितमः सर्गः

---

* पादमूले—पादविकीर्णप्रदेशे, वृत्तिः—जीवनम्—गो. न वयं तादृशा इति लोकवदुक्तिरित्याशयः ॥ † नेतुं—नाययितुम्—ति. ‡ प्रवृत्तिं— कर्तव्यमूढानां स्वेषां उत्तरकर्तव्यमार्गमित्यर्थः ।

[1] वृक्षमूले—ज. [2] एतदनन्तरं—द्वीपे द्वीपे समुद्रस्य तस्य धामानि सन्ति वै । यावन्न गच्छेरस्तया तानि सार्धं प्लवङ्गमाः—इत्यधिकं—झ. [3] अधिगम्य—ङ.

## षष्टितमः सर्गः

### [ सुपार्श्ववचनानुवादः ]

* ततस्तदमृतास्वादं गृध्रराजेन भाषितम् ।
निशम्य[1] वदतो हृष्टाः ते वचः प्लवगर्षभाः ॥ १ ॥

अथ जाम्बवता सीतादर्शनादिकं त्वदेकसाक्षिकम् ? अपि वाऽन्यसाक्षिकमपीति दार्ढ्याय पृष्टो गृध्रराजः अन्यसाक्षिकत्वमप्याह । ततस्तदित्यादि । 'निशम्य वदतो हृष्टाः' इति पाठः । ते प्लवगर्षभाः गृध्रराजेन भाषितं अमृतास्वादं वचो निशम्य तत् † वदतः—अनुवदतः हृष्टा बभूवुः । हर्षजोऽनुवादः प्रसिद्धो लोकस्य ॥ १ ॥

जाम्बवान् वानरश्रेष्ठः सह सर्वैः प्लवङ्गमैः ।
भूतलात्[2] सहसोत्थाय[3] गृध्रराजमथाब्रवीत् ॥ २ ॥

भूतलादुत्थायेति ‡ प्रायोपवेशं त्यक्त्वेत्यर्थः । गृध्रराजानमब्रवीदिति । समासान्तस्यानित्यत्वान्न टच् ॥ २ ॥

क्व सीता केन वा दृष्टा को वा[4] हरति मैथिलीम् ।
तदाख्यातु भवान् सर्वं गतिर्भव वनौकसाम् ॥ ३ ॥

किमब्रवीदित्यतः—क्व सीतेत्यादि । जानकीं को वा हरति स ? हृता च सा क्वाद्य वर्तते ? ह्रियमाणा च सीता केन वा दृष्टा ? त्वया ? अन्येन वा ? तत्सर्वं विशिष्य भवानाख्यातुमर्हति ।

---

* 'ततस्तदमृतास्वादं' इत्यारभ्य पञ्च सर्गाः प्रक्षिप्ताः सर्वकोशेष्वदर्शनात्–गो. 'ह्रियमाणा मया दृष्टा' इत्यादिपूर्वविरोधाच्चेति योज्यम् ॥ † वदत इत्यत्र नुमभाव आर्षः–ति. ‡ वस्तुतस्तु प्रश्नौत्कण्ठ्यात्तथा लोकस्वभावः । अत एव 'सहसा' इति ॥

[1] मुदिताः–ङ., वदता–झ. [2] सहसोत्पत्य–ङ. [3] गृध्रराजानमब्र–ज.
[4] जानाति जानकीम्–ङ.



सामान्यतः त्वत्तः श्रुतवृत्तान्ता*दङ्गदमुखाच्छतम् । तच्छ्रुत्वा प्रायादुत्थितानां सर्वेषां विशिष्य वक्तुमर्हतीत्यर्थः ॥ ३ ॥

को दाशरथिबाणानां वज्रवेगनिपातिनाम् ।
स्वयं लक्ष्मणमुक्तानां न चिन्तयति विक्रमम् ॥ ४ ॥

न चिन्तयति विक्रमं, स जानकीहर्ता क इत्यन्वयः ॥ ४ ॥

स हरीन् †[1] प्रीतिसंयुक्तान् सीताश्रुतिसमाहितान् ।
पुनराश्वासयन् प्रीतः इदं वचनमब्रवीत् ॥ ५ ॥

पुनराश्वासयन्निति । अन्यसाक्षिकताप्रदर्शनेन भूयः स्वोक्तार्थं प्रत्याययन्नित्यर्थः ॥ ५ ॥

श्रूयतामिह वैदेह्याः यथा मे हरणं श्रुतम् ।
येन चापि ममाख्यातं यत्र वाऽयतलोचना ॥ ६ ॥

येन चापि समाख्यातं—न केवलं स्वानुभावात् , अपि तु येन मम पुत्रेणाप्याख्यातं वैदेह्या हरणं, यथा मे श्रुतं, यत्र सा आयतलोचना च वर्तते इति श्रुतं, तदपि इह—इदानीं श्रूयताम् ॥ ६ ॥

अहमस्मिन् गिरौ दुर्गे बहुयोजनमायते ।
‡ चिरान्निपतितो वृद्धः क्षीणप्राणपराक्रमः ॥ ७ ॥

प्रतिज्ञातमर्थं प्रतिपादयति—अहमस्मिन्नित्यादि । क्षीणः प्राणः—बलं पराक्रमश्च यस्य सः क्षीणप्राणपराक्रमः ॥ ७ ॥

---

* अङ्गदप्रश्नस्यैव संपातिना उत्तरदानादेवमुक्तिः । † प्रतिसंमुक्तान्–(पा.)—त्यक्तप्रायोपवेशान्–ति. ‡ इन्द्रेण पातितत्वात् पतितः ।

[1] प्रतिसंमुक्तान्–च., ज.

तं मामेवं [1]गतं पुत्रः सुपार्श्वो नाम नामतः ।
आहारेण यथाकालं बिभर्ति पततां वरः ॥ ८ ॥

तीक्ष्णकामास्तु गन्धर्वाः तीक्ष्णकोपा भुजङ्गमाः ।
मृगाणां तु भयं तीक्ष्णं तथा तीक्ष्णक्षुधा वयम् ॥ ९ ॥

तीक्ष्णः कामः—कामविकारो येषां ते तथा । तथाहि श्रुतिः 'स्त्रीकामा वै गन्धर्वाः' इति । तथेति । यथा कामादिविषये गन्धर्वादेस्तैक्ष्ण्यं *स्वभावात्, तथा वयं पतङ्गा अपि तीक्ष्णक्षुधाश्च ॥ ९ ॥

स कदाचित् क्षुधार्तस्य ममाहाराभिकाङ्क्षिणः ।
†[2]गतस्सूर्येऽहनि प्राप्तः मम पुत्रो ह्यनामिषः ॥ १०

यस्मादेवं, तस्मात्—क्षुधार्तस्य, अत एव आहाराकाङ्क्षिण मम आहारार्थं अह्नि सूर्ये—सूर्यो यकाल गत मम पुत्रः मायं अन मिषश्चागतः ॥ १० ॥

स मया [3]वृद्धभावाच्च कोपाच्च परिभर्त्सितः ।
[4]क्षुत्पिपासापरीतेन कुमारः पततांवरः ॥ ११ ॥
स मामाहारसंरोधात् पीडितं [5]प्रीतिवर्धनः ।
अनुमान्य यथातत्त्वं इदं वचनमब्रवीत् ॥ १२ ॥

---

*तैक्ष्ण्यं—अ-ह्यत्वम् । 'क्षुत्पिपासापरीतेन' इति वक्ष्यमाणोपपादकतयाऽयं श्लोकः प्रवृत्तः ॥ †'गतसूर्येऽहनि' इति पाठे सायाह्ने इत्यर्थः । प्रातर्गत इति लोकवदेव स्वयं लभ्यते ॥

[1] गतः–ज. [2] गतसूर्ये–ङ. [3] ऽऽहारसंरोधात् पीडितः प्रीतिवर्धनः–ज.
[4] अयं श्लोकः कुण्डलितः–ज. [5] प्रीतिवर्धनम्–ङ.



यस्मादेवं, तस्मात्—स मयेत्यादि । मम आहारसंरोधात् पीडितः—खिन्नः सः मम प्रीतिवर्धनः सन् मामनुमान्य—क्षमापयित्वा यथातत्त्वं इदं—वक्ष्यमाणं वचनमब्रवीत् ॥ १२ ॥

अहं, तात ! यथाकालं आमिषार्थी खमाप्लुतः ।
महेन्द्रस्य गिरेर्द्वारं आवृत्य च समास्थितः ॥ १३ ॥

ततः सत्त्वसहस्राणां सागरान्तरचारिणाम् ।
पन्थानमेकोऽध्यवसं *सन्निरोद्धुमवाङ्मुखः ॥ १४ ॥

पन्थानं सन्निरोद्धुमित्यन्वयः ॥ १४ ॥

तत्र कश्चिन्मया दृष्टः सूर्योदयसमप्रभाम् ।
[1]स्त्रियमादाय गच्छन् वै भिन्नाञ्जनचयोपमः ॥ १५ ॥

सूर्योदयसमप्रभां—उदितसूर्यसमप्रभाम् ॥ १५ ॥

सोऽहं[2]मभ्यवहारार्थी तौ दृष्ट्वा कृतनिश्चयः ।
तेन साम्ना विनीतेन पन्थानमभियाचितः ॥ १६ ॥

तौ दृष्ट्वेति । स्त्रीपुरुषावित्यर्थः । कृतनिश्चयः इति । इमावेव हत्वा पितुरभ्यवहारार्थं नेष्यामीति कृतनिश्चय इत्यर्थः । ततः तेन विनीतेन सता साम्नैव पन्थानमभियाचितोऽस्मि । अत एव असौ त्यक्त इति शेषः ॥ १६ ॥

न हि सामोपपन्नानां प्रहर्ता विद्यते क्वचित् ।
नीचेष्वपि जनः कश्चित् किं, अङ्ग ! बत मद्विधः ॥ १७ ॥

तत्र हेतुः—न हीत्यादि ॥ १७ ।

---

*सन्निरोद्धुं—आहारार्थं ग्रहणायेति भावः ॥

[1] नारी–ङ. [2] मभ्यवहारार्थं–ज.

*स यातस्तेजसा व्योम संक्षिपन्निव [1] वेगितः ।
अथाहं [2] खेचरैर्भूतैः अभिगम्य †सभाजितः ॥ १८ ॥

अथ–सस्त्रीकस्य तस्य विसर्जनानन्तरं खेचरैर्भूतैः–सिद्धचारणादिभिः सभाजितः–पूजितोऽस्मि ॥ १८ ॥

दिष्ट्या [3] ‡जीवति सीतेति ह्यब्रुवन्मां महर्षयः
कथञ्चित् सकलत्रोऽसौ गतस्ते स्वस्त्यसंशयम् ॥ १९ ॥

किमिति–सा सीता दिष्ट्या जीवति । अतस्तस्या हननं तवैषत्करं, दैवात्तदहननात् तव श्रेयो जात इति । अथ महर्षयश्च मामब्रुवन्निति—किमित्यतः—असौ पुरुषः सकलत्रः—त्वद्दृष्टस्त्रिया त्वदहतया संगतः कथञ्चित् असंशयं सकलत्रो गतश्चेत् ते स्वस्त्यस्तु ॥

एवमुक्तस्ततोऽहं तैः सिद्धैः परमशोभनैः ।
स च मे रावणो राजा रक्षसां प्रतिवेदितः ॥ २० ॥

अथ स च हर्ता रावण इति तैः प्रतिबोधितोऽस्मि, सा च दाशरथेर्भार्येत्यपीति शेषः ॥ २० ॥

[4] हरन् दाशरथेर्भार्यां रामस्य जनकात्मजाम् ।
भ्रष्टाभरणकौशेयां [5] शोकवेगपराजिताम् ॥ २१ ॥
रामलक्ष्मणयोर्नाम [6] क्रोशन्तीं मुक्तमूर्धजाम् ।
एष ‡कालात्ययस्तावत् इति कालविदां वरः ॥
एतमर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत् ॥ २२ ॥

---

* वेगातिशयनिरूपणं 'व्योम संक्षिपन्निव' इति । तदनुगुणशक्तिकथनं 'तेजसा' इति ॥ † सभाजितः–प्रार्थ्यमानतत्त्यागेन प्रशंसितः–रा. अत्र हेतूक्तिः समनन्तरार्धेन ॥ ‡ कालात्ययः–कालातिक्रमहेतुः–गो.

[1] वेगतः–ङ. [2] खचरै–ङ. [3] जीवसि तातेति–ङ. [4] पश्यन्–ज. [5] सीतां शोकपरायणाम्–ङ. [6] विक्रोशन्तीं मुहुर्मुहुः–ङ.



अतः अहं दाशरथेर्भार्यां उच्यमानविशेषणां पश्यन्, स्थित इति शेषः । एष तावत् मे कालात्ययः–कालातिपातहेतुरिति–समग्रं एतं–उक्तं अर्थं वाक्यविदां वरः सुपार्श्वः मे प्रत्यवेदयत् ॥ २२ ॥

तच्छ्रुत्वाऽपि हि मे बुद्धिः नासीत् काचित् पराक्रमे ।
अपक्षोऽहं कथं पक्षी कर्म किञ्चिदुपक्रमे ॥ २३ ॥

तच्छ्रुत्वाऽपीति । पूर्वं सामान्यतो मयाऽनुभूतस्य, पश्चात् हर्ता रावणः, हृता च दाशरथिपत्न्येवेति निश्चित्य श्रुत्वापीत्यर्थः ॥ २३ ॥

यत्तु शक्यं मया कर्तुं *वाग्बुद्धि[1]गुणवर्तिना ।
श्रूयतां तत् प्रवक्ष्यामि भवतां पौरुषाश्रयम् ॥ २४ ॥

वाग्बुद्धिभ्यां साध्यो यो गुणः—उपकारलक्षणः तन्मात्रवर्तनशीलस्तेन तथा । पौरुषस्य विक्रमस्य आश्रयभूतः—प्रतिष्ठाभूतस्तथा ॥ २४ ॥

वाङ्मतिभ्यां तु सर्वेषां करिष्यामि प्रियं हि वः ।
यद्धि दाशरथेः कार्यं मम तन्नात्र संशयः ॥ २५ ॥

युष्मभ्यं क्रियमाणोऽयं वाङ्मत्युपकारः न युष्मत्प्रयोजनः केवलम्, अपि तु मत्प्रयोजनोऽपीत्याह — वाङ्मतिभ्यामित्यादि । दाशरथेः कार्यमुद्दिश्य वः सर्वेषां वाङ्मतिभ्यां हि—यत् प्रियं करिष्यामः, तत् मम कार्यमेव, नात्र संशयः ॥ २५ ॥

[2] तद्भवन्तो मतिश्रेष्ठाः बलवन्तो [3] मनस्विनः ।
[4] प्रेषिताः कपिराजेन देवैरपि दुरासदाः ॥ २६ ॥

---

* वचसा बुद्धिगुणेन—समीचीनोपदेशादिना च–रा.

[1] वशवर्तिना–ङ. [2] ते भवन्तो–ङ. [3] यशस्विनः–ज. [4] सहिताः–ङ.

का चास्मद्वक्तव्यबुद्धिरित्यत्र—कार्यसिद्धिसंशयं मद्वचनप्रामाण्येन त्यक्त्वा त्वरितं कृत्ये प्रवृत्तिरेव कर्तव्येत्याह—तद्भवन्त इत्यादि ॥ २६ ॥

रामलक्ष्मणबाणाश्च *[1] निशिताः कङ्कपत्रिणः ।
त्रयाणामपि लोकानां पर्याप्ता[2] स्त्राणनिग्रहे ॥ २७ ॥

त्राणे च निग्रहश्चेति द्वन्द्वैकवद्भावः ॥ २७ ॥

कामं खलु दशग्रीवः तेजोबलसमन्वितः ।
भवतां तु समर्थानां न किञ्चिदपि दुष्करम् ॥ २८ ॥

न किञ्चिदपि दुष्करमिति । लोकद्वष्ट्याप्रबलोऽपि रावणः रामलक्ष्मणसुग्रीवाणां ईषत्करहनन इत्यर्थः ॥ २८ ॥

तदलं †कालसङ्गेन क्रियतां बुद्धिनिश्चयः ।
न हि कर्मसु ‡ सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे षष्टितमः सर्गः

———

उदर(२८ १/२)मानः सर्गः ॥ २८ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे षष्टितमः सर्गः

———

* विहिताः (पा.), विधात्रेति शेषः—ति., चालिताः—रा. † कालसङ्गः—कालविलम्बः—गो., ति. ‡ सज्जन्ते—अलसा भवन्ति—ति.

[1] विहिताः—च., ज. [6] इशत्रुनिग्रहे—ङ.



## एकषष्टितमः सर्गः

[ संपातिपुराावृत्तम् ]

ततः कृतोदकं स्नातं तं गृध्रं हरि[1]यूथपाः ।
उपविष्टा गिरौ [2] रम्ये परिवार्य समन्ततः ॥ १ ॥

अथ संपातिः पुनश्च स्ववचनविश्वासे दृष्टप्रत्ययत्वं दर्शयिष्यन् तत्पीठिकतया विन्ध्यपतनानन्तरजनितनिजवृत्तान्तमाह । ततः कृतोदकमित्यादि ॥ १ ॥

तमङ्गदमुपासीनं तैस्सर्वैर्हरिभिर्वृतम् ।
*जनितप्रत्ययो हर्षात् संपातिः पुनरब्रवीत् ॥ २ ॥

जनितप्रत्यय—'एष्यन्त्यन्वेषकाः' (श्लोक, ६३-११) इति निशाकरमुनिपुङ्गवोक्तप्रकारेण रामदूतागमनदर्शनात् निशाकरोक्तपक्षप्ररोहादिस्वाभ्युदये च जनितविश्वासः संपातिः उक्तहेतुजहर्षात् पुनश्च समुपासीनं अङ्गदं प्रत्यब्रवीत् ॥ २ ॥

कृत्वा निश्शब्दमेकाग्राः शृण्वन्तु हरयो मम ।
[3] तत्त्वं संकीर्तयिष्यामि यथा जानामि मैथिलीम् ॥ ३ ॥

तत्त्वमित्यादि । मैथिलीं जानामीतीममर्थं यथा चेत तत्त्वं प्रतिपद्यध्वे, तथा संकीर्तयिष्यामि ॥ ३ ॥

अस्य विन्ध्यस्य शिखरे पतितोऽस्मि [4] पुरा ह्यहम् ।
[5] सूर्यातपपरीताङ्गः निर्दग्धः सूर्यरश्मिभिः ॥ ४ ॥

———

* जनितविश्वासो यथा भवति, तथा—गो. जनितः—उत्पादितः प्रत्यय—अङ्गदादिषु विश्वास येन स—रा.

[1] पुङ्गवाः—ङ. [2] दुर्गे—ङ. [3] तथ्यं—झ. [4] पुरा वने, महावने—ङ.
[5] सूर्यताप—ज.

लब्धसंज्ञस्तु *षड्रात्रात् विवशो विह्वलन्निव ।
वीक्षमाणो दिशः सर्वाः नाभिजानामि किञ्चन ॥ ५ ॥

सूर्यरश्मिभिः निर्दग्धः, अत एव विवशः, षड्रात्रात् परं लब्धसंज्ञः । विह्वलन्निव–परमार्त एव सन् ॥ ४-५ ॥

ततस्तु सागरान् शैलान् नदीः सर्वाः सरांसि च ।
[1]वनानि च प्रदेशांश्च समीक्ष्य मतिरागमत् ॥ ६ ॥
हृष्टपक्षिगणाकीर्णः [2]कन्दरोदरकूटवान् ।
दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति [3]निश्चितः ॥ ७ ॥

कन्दराण्युदरे यस्य स तथा । तादृशः कूटः–शृङ्गं अस्यास्तीति तथा ॥ ७ ॥

†आसीच्चात्राश्रमः पुण्यः सुरैरपि सुपूजितः ।
ऋषिर्निशाकरो नाम यस्मिन्नुग्रतपा भवत् ॥ ८ ॥

'उग्रतपा भवत्' इति सन्धिः छान्दसः‡ ॥ ८ ॥

अष्टौ वर्षसहस्राणि तेनास्मिन् ऋषिणा [4]विना ।
वसतो मम, [5]धर्मज्ञाः! स्वर्गते तु निशाकरे ॥ ९ ॥

निशाकरे ऋषौ स्वर्गते तु तेन विना वसत इत्यन्वयः । वर्षसहस्राणि, व्यतीतानीति शेषः ॥ ९ ॥

---

* अत्र 'षण्मासादूर्ध्वं' इति शिरोमणिव्याख्या ॥ † निशाकरः अत्र वसतीति संपातिना पूर्वमेवावगतमिति गम्यते ११ श्लोको द्रष्टव्यः ॥ ‡ भवत्—अभवत् इति पदमित्यर्थः ॥

[1] वनान्युदधिवेलां च–ङ. [2] कन्दरान्तर–ङ. [3] निश्चयः–ङ. [4] गिरौ–ज. [5] धर्मज्ञे–ज.



अवतीर्य च विन्ध्याग्रात् कृच्छ्रेण विषमाच्छनैः ।
तीक्ष्णदर्भां वसुमतीं दुःखेन पुनरागतः ॥ १० ॥
तमृषिं द्रष्टुकामोऽस्मि दुःखेनाभ्यागतो भृशम् ।
जटायुषा मया चैव बहुशोऽधिगतो हि सः ॥ ११ ॥

अथ तत्स्थितिकाले तद्दर्शनप्रवृत्तिमाह—अवतीर्येत्यादि । तीक्ष्णाः दर्भाः यस्यां सा तथा । द्रष्टुकामोऽस्मीति । द्रष्टुकामोऽभूवमित्यर्थः । अत एव–दुःखेन तदभ्याशं भृशदुःखेनाभ्यागतोऽस्मि । ननु कथं तद्वासः त्वया ज्ञायते? इत्यत्राह–जटायुषेत्यादि ॥ १०-११ ॥

तस्याश्रमपदाभ्याशे ववुर्वाताः सुगन्धिनः ।
वृक्षो [1]नापुष्पितः कश्चिद् अफलो वा न [2]विद्यते ॥१२॥
उपेत्य चाश्रमं पुण्यं वृक्षमूलमुपाश्रितः ।
द्रष्टुकामः प्रतीक्षेऽहं भगवन्तं निशाकरम् ॥ १३ ॥
[3]अथापश्यमदूरस्थं ऋषिं ज्वलितचेतसम् ।
कृताभिषेकं दुर्धर्षं उपावृत्तमुदङ्मुखम् ॥ १४ ॥

उदङ्मुखमुपावृत्तं दक्षिणसमुद्रे स्नात्वा उदङ्मुखतया प्रत्यावृत्तमित्यर्थः ॥ १४ ॥

तमृक्षाः सृमरा व्याघ्राः सिंहा [4]नागाः सरीसृपाः ।
परिवार्योपगच्छन्ति [5]धातारं प्राणिनो यथा ॥ १५ ॥

स्वसेवायोग्यताप्रदर्शनाय तिर्यग्योनिभिरपि सेव्यत्वं तस्य तपोमहिमानं दर्शयति––तमृक्षा इत्यादि ॥ १५ ॥

---

[1] वाऽपुष्पितः–ङ. [2] दृश्यते–ज. [3] अथ पश्यामि दूरस्थं–ज. [4] नाना–ज. [5] दातारं–ज.

ततः प्राप्तमृषिं ज्ञात्वा तानि सत्त्वानि वै * ययुः ।
प्रविष्टे राजनि यथा सर्वं सामात्यकं बलम् ॥ १६ ॥

प्राप्तमिति । आश्रमं प्राप्तमित्यर्थः ॥ १६ ॥

ऋषिस्तु दृष्ट्वा मां [1]प्रीतः प्रविष्टश्चाश्रमं पुनः ।
मुहूर्तमात्रान्निष्क्रम्य ततः कार्यमपृच्छत ॥ १७ ॥
† सौम्य! वैकल्यतां दृष्ट्वा रोम्णां ते नावगम्यते ।
अग्निदग्धाविमौ पक्षौ [2]त्वक् चैव व्रणिता तव ॥ १८ ॥

ते रोम्णामित्यन्वयः ॥ १८ ॥

गृध्रौ द्वौ दृष्टपूर्वौ मे मातरिश्वसमौ जवे ।
गृध्राणां चैव राजानौ भ्रातरौ कामरूपिणौ ॥ १९ ॥
ज्येष्ठो हि त्वं तु, संपाते! जटायुरनुजस्तव ।
मानुषं [3]रूपमास्थाय गृह्णीतां चरणौ मम ॥ २० ॥

गृह्णीतां—अगृह्णीताम् ॥ २० ॥

किं ते व्याधिसमुत्थानं पक्षयोः पतनं कथम् ।
दण्डो वाऽयं [4]धृतः केन सर्वमाख्याहि पृच्छतः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकषष्टितमः सर्गः

———

किं त इति । किं—कीदृशमित्यर्थः । व्याधिसमुत्थानमिति षष्ठीतत्पुरुषः । अयं दण्डश्च—प्रहारश्च व्रणकरः केन धृतः—कृतः । कर(२१)मानः सर्गः ॥ २१ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे एकषष्टितमः सर्गः

———

* ययुः—पर्यगच्छन्निति भावः ॥ † रोम्णां वैकल्यात् त्वं न प्रत्यभिज्ञायसे इत्यर्थः । अथवा रोमवैकल्यहेतुर्नावगम्यत इत्यर्थः ॥

[1] हृष्टः–ज. [2] प्राणाश्चापि शरीरके–ज. [3] वपुरा–ङ. [4] कृतः–ङ.



## द्विषष्टितमः सर्गः

[ संपातिशोकः ]

*ततस्तद्दारुणं कर्म दुष्करं [1]साहसात् कृतम् ।
आचचक्षे मुनेः सर्वं सूर्यानुगमनं तदा ॥ १ ॥

अथ पृष्टवृत्तान्तस्य मुनेः संपातिप्रत्युत्तरम् । ततस्तदित्यादि । तत् दारुणं—इन्द्रयुद्धं दुष्करं—अन्येन केनचित्कर्तुमशक्यं यत् कर्म साहसात् बलदर्पजात् कृतं; तत् प्रथममाचचक्षे ॥ १ ॥

भगवन्! व्रणयुक्तत्वात् लज्जया व्याकुलेन्द्रियः ।
परिश्रान्तो न शक्नोमि वचनं प्रतिभाषितुम् ॥ २ ॥

कथमाख्यातवानसीत्यतः तत् प्रतिपादयति—भगवन्नित्यादि । हे भगवन्! व्रणयुक्तत्वात्—इन्द्रयुद्धे इन्द्रप्रहारजव्रणयुक्तत्वात् परिश्रान्तः, तथा पक्षनाशफलकानुचितकर्मजलज्जयाऽऽकुलितेन्द्रियश्च हं सम्यक् प्रतिभाषितुं न शक्नोमि—कथञ्चित् ब्रवीमीति शेषः ॥ २ ॥

अहं चैव जटायुश्च [2]संघर्षाद्दर्पमोहितौ ।
आकाशं पतितौ [3]वीरौ जिज्ञासन्तौ पराक्रमम् ॥ ३ ॥

संघर्षात्—पतनविषयकस्पर्धया । पराक्रमं—पतनविषयकम् ॥

कैलासशिखरे [4]बध्वा मुनीनामग्रतः पणम् ।
रविः स्यादनुयातव्यः यावदस्तं महागिरिम् ॥ ४ ॥

* दुष्करं—अन्यैः कर्तुमशक्यं तत्—इन्द्रकर्तृकपराभवरूपं, दारुणं कर्म—सूर्यानुगमनं च रा. वज्रघातहेतुत्वात् सूर्यानुगमनमेव दारुणमित्युच्यते ॥

[1] सहसा–ज. [2] संघर्षाद् गर्व–ज. [3] दूरात्–ज. [4] कृत्वा–ङ.

पणं बध्वेति । *प्रतिज्ञां कृत्वेति यावत् । तत्स्वरूपमेव प्रदर्श्यते--रविरित्यादि । रविः यावत् अस्तं महागिरिं यायात्, ततः प्राक् आवाभ्यां रविरनुगन्तव्यः—अनुप्राप्तव्य इति ॥ ४ ॥

अथावां युगपत् प्राप्तौ अपश्याव महीतले ।
रथचक्रप्रमाणानि नगराणि पृथक्पृथक् ॥ ५ ॥

एवं प्रतिज्ञाय अथ आवां युगपत् प्राप्ताविति, आकाशमिति शेषः । अपश्याव-दृष्टवन्तौ ॥ ५ ॥

क्वचिद्वादित्रघोषांश्च [1]ब्रह्मघोषांश्च शुश्रुवः ।
गायन्तीश्चाङ्गना बह्वीः पश्यावो रक्तवाससः ॥ ६ ॥

क्वचिदिति । †ऊर्ध्वादिवप्रदेशभेद इत्यर्थः ॥ ६ ॥

तूर्णमुत्पत्य चाकाशं आदित्यपथमाश्रितौ ।
आवामालोकयावस्तत् वनं शाद्वल[2]संस्थितम् ॥ ७ ॥

आकाशमिति । आदित्यपथादर्वाक्तनमिति शेषः । भूवर्ति सर्वं वनं शाद्वलसंस्थितं—शाद्वलानां-बालतृणवद्देशानामिव संस्थितं—संस्थानं यस्य तत् तथा ॥ ७ ॥

‡उपलैरिव संछन्ना दृश्यते भूः शिलोच्चयैः ।
आपगाभिश्च संवीता सूत्रैरिव वसुन्धरा ॥ ८ ॥

उपलैः—सूक्ष्मपाषाणैः ॥ ८ ॥

---

* स्वेन पूर्वं (पृटे. ४८१) अन्यथा व्याख्यातत्वात् एवमत्र व्याख्यानम् ॥ † गृध्राणां सूक्ष्मेन्द्रियशक्तिकत्वात् भूगतानामेव वादित्रादीनामनुभवो वा । अत एवानन्तरश्लोके 'तूर्णमुत्पत्य' इति सुदूरगमनमुच्यते ॥ ‡ वनानि केवलं हरितानि दृश्यन्ते स्म । पर्वताः शिला इव, नद्यः सूत्राणीव च दृश्यन्ते स्मेति भावः ॥

[1] क्वचिद्भूषणनिस्वनान्-ङ. [2] सन्निभम्-ङ.



हिमवांश्चैव विन्ध्यश्च मेरुश्च सुमहान्नगः ।
भूतले संप्रकाशन्ते नागा इव जलाशये ॥ ९ ॥

नागाः—गजाः ॥ ९ ॥

तीव्रः स्वेदश्च खेदश्च भयं चासीत्तदाऽऽवयोः ।
समाविशति *[1]मोहश्च तमो मूर्छा च दारुणा ॥ १० ॥

तदेति । मध्याह्ने सवितृसमीपप्राप्तिकाल इत्यर्थः । मोहः—दिङ्मोहः । ततः—मोहानन्तरं अतिदारुणा मूर्छा—सेन्द्रियमनउपप्लवो मूर्छा ॥ १० ॥

न दिग्विज्ञायते याम्या नाग्नेयी न च वारुणी ।
†युगान्ते नियतो लोकः [2]हतो दग्ध इवाग्निना ॥ ११ ॥

उक्ते एव मोहमूर्छे प्रकाश्येते—न दिगित्यादि । युगान्ते नियतः—नियतदाहोऽपि लोकः आवाभ्यां तत्काले सौराग्निना दग्ध इव दृष्टोऽभूत् ॥ ११ ॥

मनश्च मे हतं भूयः सन्निवर्त्य तु संश्रयम् ।
यत्नेन महता [3]ह्यस्मिन् [4]पुनः संधाय चक्षुषि ॥ १२ ॥
‡यत्नेन महता भूयः रविः समवलोकितः ।
तुल्यः पृथ्वीप्रमाणेन भास्करः प्रतिभाति नौ ॥ १३ ॥

मनश्च मे भूयः—अभ्यधिकं संश्रयं—दर्शनाश्रयं चक्षुः प्राप्य हतं—सौरतेजसा प्रतिहतदर्शनशक्तिकमभूत् । चक्षुषि पुनस्सन्धायेति । मन इति शेषः । कथं रविरवलोकित इत्यत्र तत्प्रकारमाह- तुल्य इत्यादि ॥

---

* मोहः—चित्तविभ्रमः । मूर्छा-इन्द्रियैस्सह मनस उपप्लवः । तमः-अज्ञानम्-गो. † प्रभया प्रच्छन्नानां यथा न दिगादि ज्ञायेत, तथेति वा ॥ ‡ यत्नेन सन्धाय भूयो महता यत्नेन रविः समवलोकित इत्यन्वयः ॥

[1] शोकश्च मोहो-ङ. [2] हतदग्धः-ङ. [3] महान्-ङ. [4] मनः-ञ.

जटायुर्मा[1]मनापृच्छय * निपपात महीं [2] ततः ।
तं दृष्ट्वा तूर्णमाकाशात् आत्मानं मुक्तवानहम् ॥ १४ ॥

तत इति । सूर्यदर्शनानन्तरं इत्यर्थः । अनापृच्छयेति । मोहवशादिति शेषः । तं दृष्ट्वेति । मोहात् पतन्तं जटायुषं दृष्ट्वेत्यर्थः । आकाशादात्मानं मुक्तवानिति । सूर्यसमीपवर्त्याकाशप्रदेशात् स्वशरीरं तूर्णं उपसंहृतवान्, अधःप्रदेशाज्जटायूरक्षणार्थमित्यर्थः ॥ १४ ॥

पक्षाभ्यां च मया गुप्तः जटायुर्न [3] प्रदह्यते ।
प्रमादात्तत्र निर्दग्धः पतन् वायुपथादहम् ॥ १५ ॥
आशङ्कयं[4] निपतितं जनस्थाने जटायुषम् ।
अहं तु पतितो विन्ध्ये दग्धपक्षो जडीकृतः ॥ १६ ॥

प्रमादात्——स्वपक्षयो जटायुपरित्राणविषयकचित्ताभिष्वङ्गात् तत्र——तस्मिन् काले निर्दग्धः—निर्दग्धपक्षः । अथ वायुपथात् पतन्नहं आशङ्कयं—अनुमितवान्, न तु प्रत्यक्षतो दृष्टवानित्यर्थः ॥

राज्येन हीनो भ्रात्रा च पक्षाभ्यां विक्रमेण च ।
[5] सर्वथा मर्तुमेवेच्छन् पतिष्ये शिखराद्गिरेः ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे द्विषष्टितमः सर्गः

———

सर्वथा मर्तुमेवेच्छन् भूत्वा गिरेः शिखरात् पतिष्ये इत्यैच्छमिति शेषः । साय(१७)मानः सर्गः ॥ १७ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे द्विषष्टितमः सर्गः

———

* अनापृच्छय—किञ्चिदप्यनुक्त्वा । तावद्विह्वल इति भावः ॥

[1] मनादृत्य-ङ. [2] प्रति—ङ. [3] प्रदह्यत—ज. [4] आशङ्के तं—ङ. झ.
[5] जनस्थाने—सर्वथा मर्तुकामोऽहं रक्षणीयस्त्वया मुने—झ.



## त्रिषष्टितमः सर्गः

[निशाकरमुनिवाक्यम्]

एवमुक्त्वा मुनिश्रेष्ठं अरुदं दुःखितो भृशम् ।
अथ ध्यात्वा मुहूर्तं तु भगवानिदमब्रवीत् ॥ १ ॥

अथ खिन्नस्य संपातेः ऋषिणा समाश्वासनम् । एवमुक्त्वेत्यादि ॥ १ ॥

पक्षौ च ते प्रपक्षौ च पुनरन्यौ भविष्यतः ।
प्राणाश्च चक्षुषी चैव विक्रमश्च बलं च ते ॥ २ ॥

पक्षप्रपक्षौ—सूक्ष्ममहापक्षौ * ॥ २ ॥

पुराणे सुमहत् कार्यं भविष्यं हि मया श्रुतम् ।
दृष्टं मे तपसा चैव श्रुत्वा च विदितं [1] मया ॥ ३ ॥

'भविष्यं' इत्यकारान्तत्वमार्षम् । पुराण इति । नारदादिभिरुच्यमाने भविष्यद्रामचरितरूप इत्यर्थः । पुराणे श्रुत्वा विदितं मया, तपसा दृष्टं च एवम् ॥ ३ ॥

राजा दशरथो नाम कश्चिदिक्ष्वाकु[2]नन्दनः ।
तस्य पुत्रो महातेजाः रामो नाम भविष्यति ॥ ४ ॥

किं तदित्यतः—राजेत्यादि ॥ ४ ॥

अरण्यं च सह भ्रात्रा लक्ष्मणेन गमिष्यति ।
[3] तस्मिन्नर्थे नियुक्तः सन् पित्रा सत्यपराक्रमः ॥ ५ ॥

तस्मिन्नर्थ इति । अरण्यगमनरूपकृत्य इत्यर्थः ॥ ५ ॥

* पक्षः—महापक्षः । प्रपक्षः—सूक्ष्मपक्षः ॥

[1] मम—ङ. [2] वर्धनः—ङ. [3] अस्मिन्नर्थे—ङ.

नैर्ऋतो रावणो नाम तस्य भार्यां हरिष्यति ।
राक्षसेन्द्रो [1]जनस्थानात् अवध्यः सुरदानवैः ॥ ६ ॥

सा च [2]कामैः प्रलोभ्यन्ती भक्ष्यैर्भोज्यैश्च मैथिली ।
न भोक्ष्यति महाभागा दुःखे मग्ना यशस्विनी ॥ ७ ॥

प्रलोभ्यन्तीति । प्रलोभ्यमानेति यावत् ॥ ७ ॥

परमान्नं तु वैदेह्याः *ज्ञात्वा दास्यति वासवः ।
यदन्नममृतप्रख्यं [3]सुराणामपि दुर्लभम् ॥ ८ ॥

'परमान्नं तु पायसम्' । ज्ञात्वेति । निराहारतामिति शेषः । वासवो दास्यतीति । स्वमनुष्यद्वारेति शेषः ॥ ८ ॥

† तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदं त्विति ।
अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥ ९ ॥

इन्द्रात्—इन्द्रपुरुषादेव, न तु रावणपुरुषादिति विज्ञाय—राम आगमिष्यति, रावणं वधिष्यति, त्वया च संवत्सरतृप्तिकरमिदमन्नं गृहीत्वा देवकार्यसिद्ध्यै प्राणा धर्तव्या इत्यादि वचनतो निश्चित्येत्यर्थः । निर्वपिष्यति—दास्यति ॥ ९ ॥

* ज्ञात्वा, अनशनमिति शेषः—गो. † ननु वैरार्यां अरिष्टप्राणत्रासस्योक्तत्वात् जीवितुं कथं प्रवृत्तेति चेत्-न—तथा सत्यपि क्षीणायां देहे रूपे रावणस्यानुरागभङ्गेन तदनुष्याक्षये तस्य वधो न स्यादिति रूपलावण्याद्यहानाय तदन्नेनाद्दोषात् । रावणस्य तु तथैव रूपादिदर्शनेन मद्दत्ताहारग्रहणेऽपि वन्यफलादीन्याहारं करोतीति बुद्ध्या तस्यां नामनुष्यत्वनिश्चयः । एतेन आहारं—विनाऽपि पूर्वरूपादिदर्शनेन तस्य तस्याममनुष्यत्वबुद्धौ तत्संबन्धात रामेऽपि तत्त्वबुद्धौ रामतो रावणवधो न स्यादित्यपास्तम्—ति. वस्तुतस्तु—६०तमसर्गारम्भे गोविन्दराजोक्तरीत्या (तत्रत्यटिप्पणी द्रष्टव्या) एतेषां सर्गाणां प्रक्षिप्तत्वमेव युक्तं भाति । तर्हि सीता कीदृशमाहारं स्वीकृतवती ? इत्यादिप्रश्नास्तु बालिशानां केवलमिति दिक् ।

[1] जनस्थाने—ङ. [2] प्रलोभिता तेन—ङ. [3] सुराणामति—ङ.



यदि जीवति मे भर्ता [1]लक्ष्मणेन सह प्रभुः ।
देवत्वं गच्छतोर्वाऽपि तयोरन्नमिदं त्विति ॥ १० ॥

दानाय भाषामन्त्रः—यदीत्यादि । यदि जीवति तदाऽप्युपतिष्ठतु । देवत्वमिति । कालान्तर इति शेषः ॥ १० ॥

एष्यन्त्यन्वेषकास्तस्याः रामदूताः प्लवङ्गमाः ।
आख्येया राममहिषी त्वया तेभ्यः, विहङ्गम ! ॥ ११ ॥

सर्वथा हि न गन्तव्यं ईदृशः क्व गमिष्यसि ।
देशकालौ प्रतीक्षस्व पक्षौ त्वं प्रतिपत्स्यसे ॥ १२ ॥

न हि गन्तव्यमिति । इमं देशं विहायेति शेषः ॥ १२ ॥

[2]यदा प्रवृत्तिं तां सर्वां आख्यास्यसि, विहङ्गम !
तदैव पक्षौ वर्णश्च तव सर्वं भविष्यति ॥ १३ ॥

[3]उत्सहेऽहमहं कर्तुं अद्यैव त्वां सपक्षकम् ।
त्वयाऽपि खलु [4]तत्कार्यं तयोश्च नृपपुत्रयोः ॥ १४ ॥

ब्राह्मणानां [5]सुराणां च मुनीनां वासवस्य च ।
इहस्थस्त्वं तु लोकानां हितं कार्यं करिष्यसि ॥ १५ ॥

अद्यैव त्वां सपक्षं कर्तुमुत्सहेयमिति । यदि त्वया देवकार्यायेह न स्थातव्यं स्यादिति शेषः । यद्येवं, अतः—इहस्थ इत्यादि । त्वयाऽपि तयोर्नृपपुत्रयोः कार्यं—कर्तव्यं खलु, तथापि देवयोनित्वादिति शेषः । तदवस्थानस्य लोकहितत्वमेव दर्शयति—ब्राह्मणानामित्यादि । वासवस्य चेति । कार्यमित्यनुकर्षः ॥ १३-१५ ॥

[1] लक्ष्मणो वाऽपि देवरः—ज. [2] इदं पद्यमधिकं—ज. [3] नोत्सहेय—ज. [4] कर्तव्यं—ङ. [5] गुरूणां—ज.

*इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ ।
नेच्छे चिरं धारयितुं प्राणांस्त्यक्ष्ये कलेवरम् ॥
महर्षिस्त्वब्रवीदेवं दृष्टतत्त्वार्थदर्शनः ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे त्रिषष्टितमः सर्गः

---

इच्छामीत्यादि । दृष्टतत्त्वार्थदर्शनः—दृष्टं-सिद्धं तत्त्वार्थदर्शनं यस्य स तथा । एवंविधः महर्षिस्त्वेवं भाव्यर्थमब्रवीदिति यतः, तत एव तु हेतोः अहमपि तदा रामलक्ष्मणौ द्रष्टुमिच्छामि स्म । यदि महर्षिर्नावक्ष्यत्, तदा प्राणानेव चिरं धारयितुं नेच्छे—नैच्छम्, अपि तु कलेवरं त्यक्ष्य इत्यैच्छम् । अमेय(१५ १/२)मानः सर्गः ॥ १६ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे त्रिषष्टितमः सर्गः

---

## चतुष्षष्टितमः सर्गः

[संपातिपक्षप्ररोहः]

एतैरन्यैश्च बहुभिः वाक्यैर्वाक्यविदां वरः ।
मां प्रशस्याभ्यनुज्ञाप्य प्रविष्टः स [1]स्वमाश्रमम् ॥ १ ॥

अथैवमङ्गदादीन् प्रत्यभिज्ञापयतः संपातेः पक्षप्ररोहः । एतैरित्यादि । मां प्रशस्येति । भाविदेवकार्यसाधकत्वेन स्तुत्वा मामनुज्ञाप्य—आमन्त्र्य ॥ १ ॥

---

* अन्ये तु—निशाकरमुनिवाक्यमेवेदं, अहं पदार्थोऽपि स एवेत्याहुः—ति. इदमेव स्वरसम् । 'मां प्रत्येवं वक्तुस्तव रामदिदृक्षा किं नास्ति?' इति प्रश्नस्य सहजत्वात् तदुत्तररूपमिदं पद्यम् ॥

[1] स्वमालयम्—ञ.



कन्दरात्तु विसर्पित्वा पर्वतस्य शनैश्शनैः ।
अहं विन्ध्यं समारुह्य भवतः प्रतिपालये ॥ २ ॥

कन्दरात्तु विसर्पित्वा—ततः परं शनैः निर्दरात्तु विसर्पित्वा अहं विन्ध्यं—विन्ध्यशिखरम् ॥ २ ॥

अद्य त्वेतस्य कालस्य साग्रं वर्षशतं* गतम् ।
देशकालप्रतीक्षोऽस्मि हृदि कृत्वा मुनेर्वचः ॥ ३ ॥

एतस्य कालस्येति । मुनिनाऽवस्थापितस्य तद्वियोगादनन्तरप्रवृत्तकालस्येत्यर्थः । साग्रं वर्षशतमिति । अष्टवर्षसहस्राणीति यावत् । तथा प्रागेव (६१—९) तेनोक्तम् । निशाकरे स्वर्गते त्वनन्तरप्रवृत्तस्यैतस्य कालस्येति योजना ॥ ३ ॥

महाप्रस्थानमासाद्य स्वर्गते तु निशाकरे ।
मां निर्दहति संतापः [1]वितर्कैर्बहुभिर्वृतम् ॥ ४ ॥

वितर्कैः—विचारैः ॥ ४ ॥

[2]उत्थितां मरणे बुद्धिं मुनिवाक्यैर्निवर्तये ।
बुद्धिर्या तेन मे दत्ता [3]प्राणानां रक्षणाय तु ॥
सा मेऽपनयते दुःखं दीप्तेवाऽग्निशिखा तमः ॥ ५ ॥

निवर्तये स्मेति शेषः ॥ ५ ॥

---

* शतशब्दः अनन्तवाची—ति.

[1] विविधै—ङ. [2] उदितां—ङ. [3] प्राणसंरक्षणं मम—ञ.

युद्ध्यता च मया वीर्यं *रावणस्य दुरात्मनः ।
पुत्रः संतर्जितो वाग्भिः न त्राता मैथिली कथम् ॥ ६ ॥

तस्या विलपितं श्रुत्वा तौ च सीताविवर्जितौ ।
न मे दशरथस्नेहात् पुत्रेणापादितं प्रियम् ॥ ७ ॥

रावणस्य वीर्यमिति । अशक्यप्रतियोधमिति शेषः । कथं न त्रातेति संतर्जित इति योजना । ननु सीतेत्यपरिज्ञानात् अत्राणमित्याह —तस्या विलपितमित्यादि । हा राम ! लक्ष्मण ! इत्येवं अस्माकं तस्या विलपितं श्रुत्वा, तद्धूरापविपर्यासौ तौ तया विनाकृतौ रामलक्ष्मणाविति सुज्ञानम्, सा च रामपत्नीति सुज्ञाना । अतः कथं विलपितं श्रुत्वाऽपि न त्रातेति तर्जितः । ननु एवमपि रामलक्ष्मणबन्धुः काचिदियं स्त्रीत्येतावदेव तेन ज्ञातुं शक्यम्, अथापि रक्षणीयत्वप्रयोजकस्वमित्रसंपातितत्त्वज्ञानाभावात् कथमत्राणे तर्जनप्रसङ्गः ?— उच्यते—पित्रा निशाकरर्ष्युपदिष्टार्थस्य बोधितत्वात् रामस्य स्वीयत्वं स्वावगमम् । पुत्रत्वाच्च ऋष्युपदिष्टार्थकथनस्यावश्यकम् । तस्मात्तर्जनम् । एवं दशरथस्नेहात् अवश्यकर्तव्यं प्रियं पुत्रेण मे नापादितम् ॥ ७ ॥

तस्य त्वेवं ब्रुवाणस्य [1]सहितैर्वानरैस्सह ।
उत्पेतुस्तु तदा पक्षौ समक्षं वनचारिणाम् ॥ ८ ॥

तस्य त्वेवमित्यादि । एवं ब्रुवाणस्य तस्य पक्षौ उत्पेततुः ॥

स दृष्ट्वा स्वां तनुं [2]पत्रैः उद्गतैररुण[3]च्छदैः ।
प्रहर्षमतुलं लेभे वानरांश्चेदमब्रवीत् ॥ ९ ॥

* रावणस्य वीर्यं युध्यता —मत्पुत्रवीर्यौदार्यमिति जानता—ति.

[1] संपाते—ङ. [2] पक्षैः—ङ. [3] प्रभैः—ङ.



पत्रैः—पक्षैः अरुणच्छदैः उद्गतैः, अरुणः—सूर्यः, तच्छादनसमर्थतया पूर्ववदुद्गतैरित्यर्थः ॥ ९ ॥

[1]ऋषेर्निशाकरस्यैव [2]प्रभावा[3]दमितौजसः ।
आदित्यरश्मिनिर्दग्धौ पक्षौ मे पुनरुत्थितौ ॥ १० ॥

यौवने वर्तमानस्य ममासीत् यः पराक्रमः ।
[4]तमेवाद्यानुगच्छामि बलं पौरुषमेव च ॥ ११ ॥

सर्वथा क्रियतां यत्नः सीतामधिगमिष्यथ ।
पक्षलाभो ममायं वः सिद्धिप्रत्ययकारकः ॥ १२ ॥

* पौराणं-पुराणसिद्धम् । सिद्धिप्रत्ययः-कार्यसिद्धिविश्वासः ॥

इत्युक्त्वा स हरीन् सर्वान् संपातिः [5]पतगोत्तमः ।
उत्पपात गिरेः शृङ्गात् [6]जिज्ञासुः खगमां गतिम् ॥ १३ ॥

गतिं जिज्ञासुरिति । उत्थितपक्षः प्राग्वत् स्वगतिं ज्ञातुमिच्छुः ॥

तस्य तद्वचनं श्रुत्वा प्रीतिसंहृष्टमानसाः ।
बभूवुर्हरिशार्दूलाः †विक्रमाभ्युदयोन्मुखाः ॥ १४ ॥

विक्रमसाध्ये अभ्युदये सीताऽऽगमलक्षणे उन्मुखाः तथा ॥ १४ ॥

* एतच्च व्याख्यया 'बलं पौरुषमेव च' इत्यत्र 'बलं पौराणमेव च' इति पाठः स्यादिति ॥ † हताशाना तेषां पुनः उत्साहस्य प्राप्तया विक्रमस्य अभ्युदयोन्मुखाः बभूवुरिति वा । एतच्चानन्तरश्लोके स्पष्टम् ॥

[1] निशाकरस्य राजर्षेः—ज. [2] प्रसादा—ज. [3] दमितात्मनः—ङ. [4] तमेवाद्याव—ज. [5] पततां वरः—ङ. [6] संपातिः खगतिस्तदा—ङ.

अथ पवनसमानविक्रमाः
प्लवगवराः प्रतिलब्धपौरुषाः ।
* अभिजि[1]दाभमुखां दिशं ययुः
जनकसुतापरिमार्गणोन्मुखाः ॥ १५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे चतुष्षष्टितमः सर्गः

---

प्रतिलब्धं—प्राप्तं पौरुषं–प्रवृत्तिकालः यैस्ते तथा, अभिजिदभिमुखां—अभिजेतव्यविषयभूतां दिशं—दक्षिणदिशम् । अभिजिन्नक्षत्रयुक्तां दिशमित्यन्यः । प्रसिद्धमेव विशेषणं वाच्यं अभिजिदवाप्रसिद्धं, तस्य दक्षिणदिक्प्रकाशकत्वं अगस्त्योदयादिवत् सुतरामप्रसिद्धम् । अमेय(१५ १/२)मानः सर्गः ॥ १५ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे चतुष्षष्टितमः सर्गः

---

## पञ्चषष्टितमः सर्गः

[समुद्रलङ्घनालोचनम्]

आख्याता गृध्रराजेन † समुत्पत्य प्लवङ्गमाः ।
[2] संगम्य प्रीतिसंयुक्ताः विनेदुः [3] सिंहविक्रमाः ॥ १ ॥

अथ सागरं गत्वा तत्तारणाय विचारः । आख्याता इत्यादि । आख्यातसीतावृत्तान्ता इत्यर्थः ॥ १ ॥

---

* अभिजिदभिमुखाः— अभिजिन्मुहूर्तप्रतं क्षत्राः । एवं प्रक्षिप्ताः पञ्च सर्गाः गताः–गो † समुत्पत्य, संगम्य–इत्यादिकं हर्षसंरम्भकृत्यम् ॥

[1] दभिमुखा–ङ. [2] संगताः–ङ. [3] भीम–ङ.



संपातेर्वचनं श्रुत्वा हरयो * [1] रावणक्षयम् ।
हृष्टाः सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ॥ २ ॥

रावणक्षयं—रावणविनाशमुद्दिश्योक्तं वचनं श्रुत्वा ॥ २ ॥

[2] अभिक्रम्य तु तं देशं ददृशुर्भीमविक्रमाः ।
† कृत्स्नं लोकस्य महतः [3] प्रतिबिम्बमवस्थितम् ॥ ३ ॥

तं देशमिति । आसमुद्रतीरदेशमित्यर्थः । प्रतिबिम्बमवस्थितमिति पाठः । महतो लोकस्य सचन्द्रार्कग्रहस्य कृत्स्नं प्रतिबिम्बं यत्रावस्थितं, तस्य दक्षिणस्येत्यादि । ‡ यद्वाभट्टस्तु—'प्रतिबिम्बमिव स्थितं' इति पठित्वा आदर्शतलमिव स्थितम् । यद्वा लोकस्य प्रतिनिधिरिव स्थितम्–इत्याह––उभयं व्यर्थम्––न हि प्रतिबिम्बशब्द आदर्शवाची । नापि महोर्मिदन्तुरं नीलसमुद्रं आदर्शसमतलं पीतवर्णकम् । लोकान्तर्गतस्य समुद्रस्य कृत्स्नलोकप्रतिनिधित्वं दर्भस्थाने शरवत् किं मुख्यापेक्षया कल्प्यमिति न जानीमः ॥ ३ ॥

दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशम् ।
सन्निवेशं ततश्चक्रुः [4] सहिता वानरोत्तमाः ॥ ४ ॥

सन्निवेशं––सेनानिवेशम् ॥ ४ ॥

---

* रावणक्षयं—रावणनिलयभूतं लङ्काद्वीपमुद्दिश्य–गो. † महतो लोकस्यास्य–लोककारणीभूतस्य सचन्द्रादेः कृत्स्नं प्रतिबिम्बं यत्रावस्थितम्–रा ‡ प्रतिबिम्बाधारभूतादर्शतलमिवेति तीर्थः । प्रतिनिधिमिवेति गोविन्दराजः ॥ वस्तुतस्तु तीर्थव्याख्या स्वरसैव ॥ अपूर्वलोकान्तरमिव स्थितमिति वार्थः ॥ इदं समनन्तरश्लोकेषु स्पष्टम् ॥

[1] रावणालयम्–ञ. [2] अतिक्रम्य–ङ. अभिगम्य–ञ. [3] प्रतिबिम्बमिव–ङ. [4] हरिवीरा महाबलाः–ङ.

[[1]सर्पैर्महद्भिर्विकृतैः क्रीडद्भिर्विविधैर्जले ।
[2]व्यात्तास्यैः सुमहाकायैः ऊर्मिभिश्चसमाकुलम् ॥]

प्रसुप्तमिव चान्यत्र क्रीडन्तमिव चान्यतः ।
क्वचित्पर्वत[3]मात्रैश्च जलराशिभिरावृतम् ॥ ५ ॥

प्रसुप्तमिति निस्तरङ्गप्रदेशे । अन्यतः—अन्यत्र पर्वतसङ्काशैः जलराशिभिरिति—ऊर्मिरूपैरित्यर्थः ॥ ५ ॥

संकुलं दानवेन्द्रैश्च पातालतलवासिभिः ।
रोमहर्षकरं दृष्ट्वा विषेदुः कपिकुञ्जराः ॥ ६ ॥

आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः ।
विषेदुः [4]सहसा सर्वे [5]कथं कार्यमिति ब्रुवन् ॥ ७ ॥

[6]विषण्णां वाहिनीं दृष्ट्वा सागरस्य निरीक्षणात् ।
आश्वासयामास हरीन् भयार्तान् हरिसत्तमः ॥ ८ ॥

[7][तान् *विषादेन महता विषण्णान् वानरर्षभान् ।
उवाच [8]मतिमान् काले वालिसूनुर्महाबलः ॥]

न विषादे [9]मनः कार्यं विषादो [10]दोषवत्तमः ।
विषादो हन्ति [11]पुरुषं बालं क्रुद्ध इवोरगः ॥ ९ ॥

विषादो दोषवत्तरः इत्युक्तमेवार्थं दर्शयति—विषादो हन्तीत्यादि ॥

* विषादेन—विषादकारणेन—गो.

[1] सर्पै—ङ. अयं श्लोकः कुण्डलितः—ञ. [2] व्यत्यस्तैः—ङ. [3] संकाशैः—ङ.
[4] सहिताः—ञ. [5] दुद्रुवुश्च ततस्ततः—ङ. [6] विद्रुतां—ङ. [7] अयं श्लोकः कुण्डलितः—ञ.
[8] वचनं—ङ. [9] न नः—ङ. [10] दोषवत्तरः—ञ. [11] पुरुषान् भीमकर्मा—ङ.



[1]विषादोऽयं प्रसहते विक्रमे [2]पर्युपस्थिते ।
तेजसा तस्य हीनस्य पुरुषार्थो न सिद्ध्यति *[3] ॥ १० ॥

प्रसहते—प्रसह्य प्रवर्तते । तेजसा हीनस्येति । विषादाभिभवादिति शेषः ॥ १० ॥

तस्यां रात्र्यां व्यतीतायां अङ्गदो [4]वानरैस्सह ।
हरिवृद्धैः समागम्य पुनर्मन्त्रममन्त्रयत् ॥ ११ ॥

तस्यां रात्र्यामिति । †पलायितसमाधानरात्र्यामित्यर्थः ॥ ११ ॥

सा वानराणां ध्वजिनी परिवार्याङ्गदं बभौ ।
वासवं परिवार्येव मरुतां वाहिनी [5]स्थिता ॥ १२ ॥

कोऽन्यस्तां वानरीं सेनां शक्तः [6]स्तंभयितुं भवेत् ।
अन्यत्र वालितनयात् अन्यत्र च हनूमतः ॥ १३ ॥

ततस्तान् हरिवृद्धांश्च तच्च सैन्यमरिन्दमः ।
अनुमान्याङ्गदः श्रीमान् वाक्यमर्थवदब्रवीत् ॥ १४ ॥

अनुमान्य—अभिपूज्य ॥ १४ ॥

क इदानीं महातेजाः लङ्घयिष्यति सागरम् ।
कः करिष्यति सुग्रीवं सत्यसन्धमरिन्दमम् ॥ १५ ॥

सत्या सन्धा—सीताप्रत्यर्पणप्रतिज्ञा यस्य स तथा ॥ १५ ॥

* एतदनन्तरं इतिकरणं ऊह्यम् ॥ † एतद्दर्शने—पूर्वश्लोके 'दुद्रुवुश्च ततस्ततः' इति पाठः एतत्संमत इति भाति ॥

[1] यो विषादं—ञ. [2] समुपस्थिते—ञ. [3] एतदनन्तरं—इति ब्रुवति तस्मिंस्तु वालिपुत्रे महामतौ । आदित्योऽस्तं गतस्तत्र रजनी चाभ्यवर्तत—इत्यधिकं—ञ.
[4] वानरर्षभः—ङ. [5] यथा—ङ. [6] भर्त्सयितुं—ङ.

को वीरो योजनशतं लङ्घयेच्च, प्लवङ्गमाः !
इमांश्च यूथपान् सर्वान् [1]मोक्षयेत् को महाभयात् ॥ १६ ॥
कस्य [2]प्रभावात् दारांश्च पुत्रांश्चैव गृहाणि च ।
इतो निवृत्ताः पश्येम सिद्धार्थाः सुखिनो वयम् ॥ १७ ॥
कस्य प्रसादाद्रामं च लक्ष्मणं च महाबलम् ।
अभिगच्छेम संहृष्टाः सुग्रीवं च महाबलम् ॥ १८ ॥
यदि कश्चित् समर्थो वः सागरप्लवने हरिः ।
स ददात्विह नः शीघ्रं पुण्यामभयदक्षिणाम् ॥ १९ ॥
अङ्गदस्य वचः श्रुत्वा न कश्चित् किञ्चिदब्रवीत् ।
स्तिमितेवाभवत् सर्वा तत्र सा हरिवाहिनी ॥ २० ॥
पुनरेवाङ्गदः प्राह तान् हरीन् हरिसत्तमः ।
सर्वे बलवतां श्रेष्ठाः भवन्तो दृढविक्रमाः ॥
[3]व्यपदेश्यकुले जाताः पूजिताश्चाप्यभीक्ष्णशः ॥ २१ ॥

पूजिताश्चेति । महाबलत्वेन सत्कृता इत्यर्थः, राज्ञेति शेषः ॥

न हि वो गमने *[4]सङ्गः कदाचित् कस्यचित् क्वचित् ।
ब्रुवध्वं यस्य या शक्तिः [5]प्लवने, प्लवगर्षभाः ! ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे पञ्चषष्टितमः सर्गः

---

ब्रुवध्वमिति । ब्रूध्वमिति यावत् । ननु अङ्गदादीनां शतयोजनतरणे एवं चिन्तायां इतरदिग्गताः कथं समुद्रानुल्लङ्घ्य भास्करपर्यन्तमन्विष्यागता इति—उच्यते—तेषु समुद्रेषु सर्वत्रासन्नासन्नद्वीपाः सन्ति । लङ्काद्वीप एव परितः शतयोजनसमुद्रो द्वीपः । अत एव रावणेनेदं दुर्गमाश्रितम् । अर्धद्र(२२ १/२)मानः सर्गः ॥ २२ १/२ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे पञ्चषष्टितमः सर्गः

* सङ्गः—प्रतिबन्धः–ति. प्रतिहतिः–गो.

[1] मोचयेत्–ज. [2] प्रसादात्–ज. [3] व्यपदेश–ङ. [4] शक्तिः–ङ.
[5] गमने–ङ



---

षट्षष्टितमः सर्गः

[लङ्घनशक्तिविचिकित्सा]

*ततोऽङ्गदवचः श्रुत्वा सर्वे ते वानरोत्तमाः ।
स्वं स्वं गतौ समुत्साहं [1]आहुस्तत्र यथाक्रमम् ॥ १ ॥

अथ दशयोजनादिशतयोजनपर्यन्तं अङ्गदपृष्टेषु, अङ्गदे चोक्तवति तावता कार्यासिद्ध्या खेदे प्राप्ते कार्यसाधकं जाम्बवान् निर्दिशति । अथाङ्गदेत्यादि ॥ १ ॥

गजो गवाक्षो गवयः शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव सुषेणो जाम्बवांस्तथा ॥ २ ॥
आबभाषे गजस्तत्र प्लवेयं दशयोजनम् ।
गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् ॥ ३ ॥

* यद्यपि गजादयोऽपि शतयोजनलङ्घने शक्ताः ; 'भूतले सागरे वाऽपि शैलेषु च वनेषु च । पातालस्यापि मध्ये वा न ममाच्छिद्यते गतिः ॥' (पु.–413–414) इति सुग्रीवसन्निधौ स्वस्वशक्तेः ख्यापितत्वात् । 'न हि वो गमने सङ्गः कदाचित् कस्यचित् क्वचित्' (65–22) इति पूर्वमङ्गदोक्तेश्च—तथापि रावणाधिष्ठितलङ्काप्रवेशसीतान्वेषणादिकं दुष्करमन्येनेति तत्साधकहनुमत्प्रोत्साहनाय तथोक्तवन्त इति ध्येयम्–गो.

[1] ऊचु–ज.

गवयो वानरस्तत्र वानरांस्तानुवाच ह ।
त्रिंशतं तु गमिष्यामि योजनानां, प्लवङ्गमाः ! ॥ ४ ॥
शरभस्तानुवाचाथ वानरान् वानरर्षभः ।
चत्वारिंशद्गमिष्यामि योजनानां,[1] प्लवङ्गमाः ! ॥ ५ ॥
वानरांस्तु महातेजाः अब्रवीद्गन्धमादनः ।
योजनानां गमिष्यामि पञ्चाशत्तु न संशयः ॥ ६ ॥
मैन्दस्तु वानरस्तत्र वानरांस्तानुवाच ह ।
योजनानां परं षष्टिं अहं प्लवितुमुत्सहे ॥ ७ ॥
ततस्तत्र महातेजाः द्विविदः प्रत्यभाषत ।
गमिष्यामि न संदेहः सप्ततिं योजनान्यहम् ॥ ८ ॥
सुषेणस्तु हरिश्रेष्ठः प्रोक्तवान् कपिसत्तमम् ।
अशीतिं योजनानां तु प्लवेयं, प्लवगेश्वराः ! ॥ ९ ॥
तेषां कथयतां तत्र सर्वांस्ताननुमान्य च ।
ततो [2]वृद्धतमस्तेषां जाम्बवान् प्रत्यभाषत ॥ १० ॥

वृद्धतमस्तेषामिति निर्धारणे षष्ठी ॥ १० ॥

पूर्वमस्माकमप्यासीत् कश्चित् गतिपराक्रमः ।
ते वयं वयसः पारं अनुप्राप्ताः स्म सांप्रतम् ॥ ११ ॥

स्म—स्मः इति यावत् ॥ ११ ॥

*किन्तु नैवं गते शक्यं इदं कार्यमुपेक्षितुम् ।
यदर्थं कपिराजश्च रामश्च कृतनिश्चयौ ॥ १२ ॥

---

* वस्तुगत्या मादृशस्येदानीं स्वशक्तिप्रकटनस्यावसर एव नास्ति, अथापि कार्यगौरवमालोच्य वदामीति आशयः ॥

[1] न संशयः-ज. [2] वृद्धतर-क.



एवं गत इति । एवं कृच्छ्रप्राप्तावित्यर्थः । येऽप्यस्मासु स्थितः सीतान्वेषणसिद्धिरूपोऽर्थः, तं—इति * मध्यमपदलोपी समासः । अर्थसिद्धिं अस्मत्प्रतिष्ठिततया कृतनिश्चयौ । अतः अस्माभिर्नेदं कार्यमुपेक्षितुं शक्यमिति योजनार्थः । कृतनिश्चयाविति कथञ्चिद्द्वन्द्वकत्वाऽसमासः ॥ १२ ॥

सांप्रतं कालभेदेन या गतिस्तां निबोधत ।
नवतिं योजनानां तु गमिष्यामि न संशयः ॥ १३ ॥

या गतिः—गतिसामर्थ्यम् ॥ १३ ॥

तांस्तु सर्वान् हरिश्रेष्ठान् जाम्बवान् पुनरब्रवीत् ।
न खल्वेतावदेवासीत् गमने मे पराक्रमः ॥ १४ ॥
मया [1] महाबलेश्चैव यज्ञे विष्णुः सनातनः ।
प्रदक्षिणीकृतः पूर्वं † क्रममाणस्त्रि[2]विक्रमः ॥ १५ ॥

त्रिविक्रमः—विष्णुः । प्रदक्षिणीकृत इति । तथा च अण्डगोलमेव प्रदक्षिणीकृतमित्युक्तं भवति ॥ १५ ॥

स इदानीमहं वृद्धः प्लवने मन्दविक्रमः ।
यौवने च तदाऽऽसीन्मे बलमप्रतिमं परैः ॥ १६ ॥
संप्रत्ये[3]तावतीं शक्तिं गमने तर्कयाम्यहम् ।
नैतावता च संसिद्धिः कार्यस्यास्य भविष्यति ॥ १७ ॥

---

* 'यदर्थं' इत्यत्र केषुचित् अर्थः—सः यदर्थः इति विग्रह इति भावः ॥
† 'क्रममाणस्त्रिविक्रमम्' इति पाठे (गो.)—त्रयाणां विक्रमाणां समाहारः त्रिविक्रमम् । त्रिविक्रमं क्रममाणो विष्णुरित्यन्वयः ।

[1] वैरोचने यज्ञे प्रभविष्णुः-ज. [2] विक्रमः-ज. [3] तादृशीं शक्तिं-क.

अथोत्तरमुदारार्थं अब्रवीदङ्गदस्तदा ।
अनुमान्य [1]महाप्राज्ञं * जाम्बवन्तं [2]महाकपिः ॥ १८ ॥
अहमेतद्गमिष्यामि योजनानां शतं महत् ।
निवर्तने तु मे शक्तिः [3]स्यान्न वेति न निश्चिता ॥ १९ ॥
तमुवाच हरिश्रेष्ठं जाम्बवान् वाक्यकोविदः ।
ज्ञायते गमने शक्तिः तव, [4]हर्यृक्षसत्तम ! ॥ २० ॥
कामं शतं सहस्रं वा † न ह्येष विधिरुच्यते ।
योजनानां भवान् शक्तः गन्तुं प्रतिनिवर्तितुम् ॥ २१ ॥

न ह्येष विधिरुच्यत इति । प्रेष्येष्वस्मासु स्थितेषु तवैष विधिः—प्लवनकर्म न युक्तमित्युच्यते, अस्माभिरिति शेषः । इममेवार्थं प्रपञ्चयति—योजनानां भवानित्यादि ॥ २१ ॥

न हि प्रेषयिता, तात! स्वामी प्रेष्यः कथञ्चन ।
भवताऽयं जनः सर्वः प्रेष्यः, प्लवगसत्तम ! ॥ २२ ॥
भवान् ‡ कलत्रमस्माकं स्वामिभावे व्यवस्थितः ।
स्वामी कलत्रं सैन्यस्य गतिरेषा, परंतप ! ॥ २३ ॥

भवान् कलत्रमिति । कलत्रवत् दृढं मदीयत्वबुद्ध्या यावत्स्व-प्राणबलं परिपाल्य इत्यर्थः ॥ २३ ॥

---

* जाम्बवन्तं महाकपिं–(रा.)—ऋक्षाणामपि कपिजातिविशेषत्वात् न सामानाधिकरण्यविरोधः–रा. † न ह्येष विधिः–एतावदेव गन्तुं शक्तः ; नाधिकमिति त्वद्विषये वक्तुं न युक्तम्, यतस्त्वं ततोऽपि शक्ततरः—इत्यर्थो वा ॥ ‡ कलत्रं–रक्षणीयं वस्तु–गो.

[1] महाप्राज्ञः–ज. [2] महाकपिम्–ज. [3] न स्यादिति मतिर्मम–ङ. [4] हर्यक्ष–ङ.



तस्मात् कलत्रवत् तत्र प्रतिपाल्यः सदा भवान् ।
अपि चैतस्य कार्यस्य भवान् मूलं, अरिंदम! ॥ २४ ॥

अयमेवार्थः स्पष्टमुक्तः—तस्मात् कलत्रवदित्यादिना ॥ २४ ॥

मूलमर्थस्य संरक्ष्यं एष कार्यविदां नयः ।
मूले हि सति सिद्ध्यन्ति गुणाः [1]सर्वे फलोदयाः ॥ २५ ॥

नयः—निश्चयः । गुणाः—गुणभूताः, अप्रधानाभूता इति यावत् ॥ २५ ॥

तद्भवानस्य कार्यस्य [2]साधनं, सत्यविक्रम !
बुद्धिविक्रमसंपन्नः * हेतुरत्र, परंतप ! ॥ २६ ॥
गुरुश्च गुरुपुत्रश्च त्वं हि नः, कपिसत्तम!
भवन्तमाश्रित्य वयं समर्था ह्यर्थसाधने ॥ २७ ॥
उक्तवाक्यं महाप्राज्ञं जाम्बवन्तं [3]महाकपिः ।
प्रत्युवाचोत्तरं वाक्यं वालिसूनुरथाङ्गदः ॥ २८ ॥
यदि नाहं गमिष्यामि नान्यो वानरपुङ्गवः ।
पुनः खल्विदमस्माभिः कार्यं प्रायोपवेशनम् ॥ २९ ॥
न ह्यकृत्वा हरिपतेः संदेशं तस्य धीमतः ।
तत्रापि गत्वा प्राणानां [4]पश्यामि परिरक्षणम् ॥ ३० ॥
स हि प्रसादे चात्यर्थं कोपे च हरिरीश्वरः ।
अतीत्य तस्य संदेशं विनाशो गमने भवेत् ॥ ३१ ॥

स हीत्यादि । स हरिः—सुग्रीवः प्रसादे चेश्वरः, अत्यर्थं कोपे चेश्वरः । निग्रहानुग्रहाधिकृत इति यावत् ॥ ३१ ॥

---

* साधनपदस्यैव व्याख्या—हेतुरिति–ति.

[1] पुष्पफलोदयाः–ङ., झ. [2] साधने–ङ. [3] महाकपिम्–ज. [4] न पश्ये–ज.

* [1]तत्तथा ह्यस्य कार्यस्य न भवत्यन्यथा गतिः ।
तद्भवानेव दृष्टार्थः संचिन्तयितुमर्हति ॥ ३२ ॥

तत्तथेति । तत्—तस्मात् अस्य कार्यस्य—समुद्रलङ्घनकार्यस्य गतिः—प्राप्तिः अन्यथा यथा न भवति-असिद्धा यथा न भवति, तथा-तेन प्रकारेण भवानेव तदुद्दिश्य चिन्तयितुमर्हति । तत्र हेतुः—दृष्टार्थ इति । चिरवृद्धसुबुद्धित्वात् अपरोक्षीकृतसमस्तकृत्य कृत्यतत्त्वार्थ इत्यर्थः ॥ ३२ ॥

सोऽङ्गदेन तदा वीरः प्रत्युक्तः प्लवगर्षभः ।
जाम्बवान[2]नुत्तरं वाक्यं प्रोवाचेदं ततोऽङ्गदम् ॥ ३३ ॥
† अस्य ते, वीर! कार्यस्य न किञ्चित् [3]परिहीयते ।
एष संचोदयाम्येनं यः कार्यं साधयिष्यति ॥ ३४ ॥

एष इति । एषोऽहमित्यर्थः ॥ ३४ ॥

ततः [4]प्रतीतं प्लवतां वरिष्ठं
एकान्तमाश्रित्य सुखोपविष्टम् ।
संचोदयामास हरिप्रवीरः
हरिप्रवीरं हनुमन्तमेव ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे षट्षष्टितमः सर्गः

---

एकान्तमाश्रित्येति । यूथात् बहिः क्वचिदिति शेषः । मार्ग-(२५)मानः सर्गः ॥ ३५ ॥

इति श्रीरामायणामृतकतकटीकायां किष्किन्धाकाण्डे षट्षष्टितमः सर्गः

---

* अनन्यथासिद्ध उपायं त्वमेव वदेति भावः ॥ † प्रकृतकार्यस्य न क्वापि हानिरिति यावत् ॥

[1] तद्यथा—ङ, झ. [2] नुत्तमं—ज. [3] परिहास्यते-ज. [4] प्रवीरं—ङ.



## सप्तषष्टितमः सर्गः

[हनुमत्प्रभाववर्णनम्]

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् ।
जाम्बवान् समुदीक्ष्यैवं हनुमन्तमथाब्रवीत् ॥ १ ॥

अथ जाम्बवता हनुमदभिजनपराक्रमप्रत्यभिज्ञापनं सहजबलाविर्भावार्थम्; तथा देवकृतः समाधिः । अनेकशतेत्यादि ॥ १ ॥

* वीर! वानरलोकस्य सर्वशास्त्र[1]विशारद !
[2]तूष्णीमेकान्तमाश्रित्य, हनुमन्! किं न जल्पसि ॥ २ ॥

'एवं अब्रवीत्' इति एवंशब्दार्थ एव—वीर वानरेत्यादि । वानरलोकस्य किं जल्पसीति । कृत्यमुद्दिश्येति शेषः ॥ २ ॥

हनुमन्! हरिराजस्य सुग्रीवस्य समो ह्यसि ।
रामलक्ष्मणयोश्चापि तेजसा च बलेन च ॥ ३ ॥
अरिष्टनेमिनः पुत्रः वैनतेयो महाबलः ।
गरुत्मानिति विख्यातः उत्तमः सर्वपक्षिणाम् ॥ ४ ॥
बहुशो हि मया दृष्टः सागरे स महाबलः ।
भुजगानुद्धरन् पक्षी महावेगो महायशाः ॥ ५ ॥
पक्षयोर्यद्बलं तस्य [3]भुजवीर्यबलं तव ।
विक्रमश्चापि [4]वेगश्च [5]न ते † तेनापहीयते ॥ ६ ॥

---

* वानरलोकस्य वीरेत्यन्वयः । निर्धारणे षष्ठी—ति. † तेनेति पञ्चम्यर्थे तृतीया—गो., ती.

[1] विदां वर—ज. [2] तूर्णं—ङ. [3] तावद्भुजबलं, भुजयोस्तद्बलं—ङ. [4] तेजश्च—ज. [5] तेन तेनार—ङ.

अरिष्टनेमिः—काश्यपः, नान्तत्वमार्षम् । तस्य पक्षयोः यद्बलं तव च यत् भुजवीर्यबलं, उभयं तुल्यमिति शेषः । 'पक्षयोर्यद्बलं तस्य भुजवीर्यबलं तव' इति पाठः । योजनाऽशक्त्याऽन्यथा पठति परः । ते वेगो विक्रमश्च तेन—गरुत्मद्बलेन वेगेन च नापहीयते—न्यूना न भवति ॥ ४-६ ॥

बलं बुद्धिश्च तेजश्च सत्त्वं च, हरिपुङ्गवः !
*[1] विशिष्टं सर्वभूतेषु किमात्मानं न [2] बुध्यसे ॥ ७ ॥

विशिष्ट आत्मानं—आत्माभिजनबलपराक्रमवैभवमित्यर्थः ॥७॥

†[3] अप्सराऽप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला ।
अञ्जनेति परिख्याता पत्नी केसरिणो हरेः ॥ ८ ॥

तदेव प्रतिबोधयितुमाह—अप्सराप्सरसामिति । सन्धिः छान्दसः । अप्सरा इत्येकवचनान्तोऽप्यस्ति ॥ ८ ॥

विख्याता त्रिषु लोकेषु रूपेणाप्रतिमा भुवि ।
[4] अभिशापादभूत्, तात ! [5] वानरी कामरूपिणी ॥ ९ ॥

का नाम साऽप्सरा इत्यतः—विख्यातेत्यादि । अप्सरसः केसरीवानरपत्नीत्वे हेतुमाह—अभिशापादित्यादि । ऋषिशापादित्यर्थः । वानरजन्मवतीति यावत् ॥ ९ ॥

---

* सर्वभूतेषु—सर्वजनबलादिषु मध्ये तव बलादि विशिष्टं—अधिकम्-रा. इतरदृश्या पूर्वार्धं पूर्वश्लोकेनान्वेति ॥ † अप्सरसां मध्ये पुञ्जिकस्थलेति विख्याता अभिशापात् अञ्जनेति नाम्ना परिख्याता हरेः केसरिणः पत्नीत्यन्वयः ॥

[1] विशिष्टः-ङ. [2] सज्जसे-ञ. [3] आसीद्-ङ. [4] अतिशापा-ङ
[5] कपित्वे-ञ.



दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः ।
कपित्वे चारुसर्वाङ्गी कदाचित् कामरूपिणी ॥ १० ॥
मानुषं विग्रहं कृत्वा रूपयौवनशालिनी ।
विचित्रमाल्याभरणा [1] महार्हक्षौमवासिनी ॥
अचरत् पर्वतस्याग्रे प्रावृडम्बुदसन्निभे ॥ ११ ॥

कुत्र तज्जन्मेत्यतः—दुहितेत्यादि । कपित्व इति । कपिशरीरत्वेऽपीत्यर्थः । कामरूपिणीति । आत्मनो दिव्यदेवतानैसर्ग्यानुवृत्तेरिति शेषः । अम्बुदसन्निभ इति पर्वताग्रविशेषणम् ॥ १०-११ ॥

तस्या वस्त्रं विशालाक्ष्याः [2] पीतरक्तदशं शुभम् ।
स्थितायाः पर्वतस्याग्रे मारुतोऽपाहरच्छनैः ॥ १२ ॥

पीतरक्ताः दशाः—तन्तवः यस्य तत् तथा ॥ १२ ॥

स ददर्श [3] ततस्तस्याः वृत्तावूरू [4] सुसंहतौ ।
स्तनौ च पीनौ सहितौ [5] सुजातं चारु चाननम् ॥ १३ ॥

सुसंहतौ—सुश्लिष्टौ । पीनौ सहितौ—परस्परसंसक्तौ च तथा ॥ १३ ॥

तां [6] विशालायतश्रोणीं तनुमध्यां [7] यशस्विनीम् ।
दृष्ट्वैव शुभसर्वाङ्गीं पवनः काममोहितः ॥ १४ ॥
स तां भुजाभ्यां [8] दीर्घाभ्यां पर्यष्वजत मारुतः ।
मन्मथाविष्टसर्वाङ्गः * गतात्मा तामनिन्दिताम् ॥ १५ ॥

---

* तां गतात्मा—तद्गतचित्तः-गो.

[1] कदाचित्कामचारिणी-ङ. [2] पीतं-ङ. [3] तदा तस्याः-ङ. [4] सुसंस्थितौ-ङ.
[5] सुजातौ-ङ. [6] बलादायत-ञ. [7] मनस्विनीम्-ङ. [8] पीनाभ्यां-ङ.

मारुतस्तां पर्यष्वजत । अथ मन्मथाविष्टसर्वाङ्गः—कामाक्रान्तकृत्स्नज्ञानकर्मेन्द्रियः, अत एव तां गतात्मा, गमकत्वात् समासः, तद्गर्भप्रविष्टात्मतेजाः बभूव । देवत्वात् विना योनिमर्दनं निजतेजःप्रवेशनमीषत्करम् ॥ १५ ॥

[1] सा तु तत्रैव संभ्रान्ता [2] सुव्रता वाक्यमब्रवीत् ।
* एकपत्नीव्रतमिदं को नाशयितुमिच्छति ॥ १६ ॥

तत्रैवेति । गिरावेवेत्यर्थः ॥ १६ ॥

अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत ।
† न त्वां हिंसामि, सुश्रोणि ! मा भूत्ते, [3] सुभगे ! भयम् ॥

त्वां न हिंसामीति । योनिमर्दनेन तावकमेकपत्नीव्रतं न नाशयामीत्यर्थः । अत एव ते तन्निमित्तं भयं मा भूत् ॥ १७ ॥

‡ [4] मनसाऽस्मि गतो यत्त्वां परिष्वज्य [5] यशस्विनीम् ।
वीर्यवान् बुद्धिसंपन्नः तव पुत्रो भविष्यति ॥ १८ ॥
महासत्त्वो महातेजाः महाबलपराक्रमः ।
लङ्घने प्लवने चैव भविष्यति मया समः ॥ १९ ॥

अपि तु यत्—यस्मात् त्वां परिष्वज्य मनसा—मानससंभोगभावावलम्बनेनैव त्वां गतोऽस्मि—स्वतेजसा त्वद्गर्भं प्राप्तोऽस्मि, तस्मात् तव उच्यमानगुणकः पुत्रो भविष्यति । मया समः—मारुतेन स्वेन समः इत्यर्थः ॥ १८–१९ ॥

---

* एकः पतिः यस्याः, तद्व्रतं—तं धर्मं—ति. † न हिंसामि—पातिव्रत्यान्न प्रच्यावयामि—गो. ‡ मनसेत्युक्त्या व्रतभङ्गाभावो ध्वनितः—रा.

[1] सा तु तत्रैव संभ्रान्ता कुत्सयन्ती च मारुतम् । तद्वचनमपि धारयन्ती सुव्रता वाक्यमब्रवीत्—झ. [2] सुव्रता, संव्रता—ङ. [3] मनसो—ञ. [4] मारुतोऽस्मि—ङ. [5] यशस्विनि—ञ.



एवमुक्ता ततस्तुष्टा जननी ते, महाकपे !
गुहायां त्वां, महाबाहो ! प्रजज्ञे प्लवगर्षभम् ॥ २० ॥

ततस्तुष्टेति । स्वरूपदृष्टमहादैवतमारुतत्वतेजस्संक्रमकथनाभ्यामित्यर्थः । गुहायामिति । तत्पर्वतगुहायां तदानीमेवेत्यर्थः ॥ २० ॥

[1] अभ्युत्थितं ततः सूर्यं बालो दृष्ट्वा महावने ।
फलं चेति जिघृक्षुस्त्वं [2] उत्प्लुत्याभ्युद्गतो दिवम् ॥ २१ ॥

फलमिति जिघृक्षुः सन् उत्प्लुत्य दिवमभ्युद्गतश्च इति योजना । उदयभास्करस्याम्रादिफलवत् रक्तवृत्तानुष्णादिमत्त्वात् फलबुद्धिः । ननु कथं फलं भक्ष्यं ममेति जातमात्रस्य ज्ञानम्? उच्यते—अजशिशोरपि स्तनः पातव्यः इति प्राचीनवासनया प्रत्यक्षा प्रवृत्तिः । एवं वानरशरीरग्रहे तदुचितानादिवासनया तदुचितप्रवृत्तिरविस्मयाय ॥ २१ ॥

* शतानि त्रीणि गत्वाऽथ योजनानां, महाकपे !
तेजसा तस्य निर्धूतः न विषादं गतस्ततः ॥ २२ ॥

तस्य तेजसेति । आदित्यतेजसेत्यर्थः । निर्धूत इति । क्षिप्तोऽपीत्यर्थः ॥ २२ ॥

† [3] तावदापततस्तूर्णं अन्तरिक्षं, महाकपे !
क्षिप्तमिन्द्रेण ‡ ते वज्रं क्रोधाविष्टेन [4] धीमता ॥ २३ ॥
तदा शैलाग्रशिखरे वामो हनुरभज्यत ।
ततो हि नामधेयं ते हनुमानिति कीर्त्यते ॥ २४ ॥

---

* शतानि त्रीणि । एतदनेकशतयोजनानामुपलक्षणम्, 'बहुयोजनसाहस्रं क्रमत्येवः' (३५–२९) इत्युत्तरकाण्डे वक्ष्यमाणत्वात्—गो. 'अङ्कानां वामतो गतिः' इति न्यायेन शताधिकत्रिसहस्राणि—रा. † यतो न विषादं गतः, तत एवान्तरिक्षमापततस्ते—इत्यर्थः । ‡ ते—तव शरीरे—ति.

[1] अभ्युद्यन्तं—ङ. [2] उत्पपाताभ्युत्थितो—ङ. [3] अथाप्युपगत—ङ. [4] चेतसा—ञ.

ततस्त्वां [1] निहतं दृष्ट्वा वायुर्गन्धवहः स्वयम् ।
*त्रैलोक्ये भृशसंक्रुद्धः न ववौ स प्रभञ्जनः ॥ २५ ॥

त्रैलोक्ये न ववौ स्म इत्यन्वयः ॥ २५ ॥

संभ्रान्ताश्च सुराः सर्वे त्रैलोक्ये [2] क्षोभिते सति ।
प्रसादयन्ति संक्रुद्धं मारुतं भुवनेश्वराः ॥ २६ ॥
प्रसादिते च पवने ब्रह्मा तुभ्यं वरं ददौ ।
†अशस्त्रवध्यतां, तात! समरे, सत्यविक्रम! ॥ २७ ॥
वज्रस्यापि निपातेन विरुजं त्वां समीक्ष्य च ।
सहस्रनेत्रः प्रीतात्मा ददौ ते वरमुत्तमम् ॥ २८ ॥
स्वच्छन्दतश्च मरणं ते भूयादिति वै, प्रभो! ॥ २९ ॥

वज्रस्य निपातेन, अपिशब्दात् गिरौ निपातनापि विरुजं--अनुत्पादितव्यथम् ॥ २८-२९ ॥

स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः ।
मारुतस्यौरसः पुत्रः तेजसा चाऽपि तत्समः ॥ ३० ॥

मारुतस्यौरसः पुत्र इति । यथाऽयं भवति, तथा प्रागेव प्रादर्शि ॥ ३० ॥

[3][ईदृशस्य च ते, तात! वर्णयामः कथं बलम् ।
कार्यं चालोकसामान्यं कर्तुं शक्तस्त्वमेव हि ॥
भवान् [4] जीवातवेऽस्माकं, अञ्जनागर्भसंभव!
त्वं हि वायुसुतः, वत्स! प्लवने चापि तत्समः ॥

---

* त्रैलोक्य (पा.) न ववौ—न गच्छति स्म—ति. † अशस्त्रवध्यतां—शस्त्रावध्यताम् ॥

[1] निहतं—ङ. [2] क्षुभिते—ज. [3] एतदादिश्लोकत्रयं कुण्डलितं—ङ. [4] वीरतमो—ङ.



वयमद्य गतप्राणाः भवानस्मात्तु सांप्रतम् ।
दाक्ष्यविक्रमसंपन्नः [1] पक्षिराज इवापरः ॥ ]
*त्रिविक्रमे मया, तात! सशैलवनकानना ।
त्रिस्सप्तकृत्वः पृथिवी परिक्रान्ता प्रदक्षिणम् ॥ ३२ ॥

त्रिस्सप्तकृत्व इति । एकविंशतिवारमित्यर्थः ॥ ३२ ॥

[2] तथा चौषधयोऽस्माभिः संचिता देवशासनात् ।
[3] निष्पन्नममृतं याभिः तदासीन्नो महद्बलम् ॥ ३३ ॥

देवशासनात् संचिता इति । सागरे प्रक्षिप्य मथनार्थमिति शेषः ॥ ३३ ॥

स इदानीमहं वृद्धः [4] परिहीनपराक्रमः ।
सांप्रतं [5] कालमस्माकं भवान् सर्व[6]गुणान्वितः ॥ ३४ ॥

सांप्रतं कालमिति । सांप्रतमित्यव्ययम् । कालमिति सप्तम्यर्थे द्वितीया । अस्माकमिति निर्धारणे षष्ठी । अस्मिन् काले अस्माकं मध्ये भवानेवाभ्यधिकं सर्वगुणान्वित इत्यर्थः ॥ ३४ ॥

तद्विजृम्भस्व विक्रान्तः प्लवतामुत्तमो ह्यसि ।
त्वद्वीर्यं द्रष्टुकामेयं सर्ववानरवाहिनी ॥ ३५ ॥

विजृम्भस्व—निस्सीमनिजबलविजृम्भणं कुरु ॥ ३५ ॥

---

* पृथिवीत्यनेनाण्डकटाहमध्य उक्तः । तस्याः त्रिस्सप्तकृत्वः क्रमणं मध्यप्रदेशे । यद्वा यावती महाबलिभूमिः, तावती पृथिवी अत्र विवक्षिता । तस्याः प्रदक्षिणं तद्बहिःप्रदेशेन संगच्छते । यद्वा क्रमणानन्तरं जाम्बवान् विजयघोषणार्थं पृथिवीमात्रप्रदक्षिणं कृतवानिति प्रसिद्धिः—गो.

[1] कपिराज—च. [2] तदा—ज. [3] निर्मथ्यम—ङ. [4] परिक्षीण—ङ. [5] गतिर—ङ. [6] गुणाधिकः—ङ.

उत्तिष्ठ, हरिशार्दूल ! लङ्घयस्व महार्णवम् ।
*परा हि सर्वभूतानां, हनुमन् ! या गतिस्तव ॥ ३६ ॥

उत्तिष्ठ, लङ्घयस्वेत्यत्रोपपत्तिमाह—परा हीत्यादि । हे हनुमन् ! परा—सर्वश्रेष्ठा तव या गतिः—लङ्काद्वीपगमनं, सा सर्वभूताना-मुपकाराय, न केवलमस्माकमेवेति शेषः ॥ ३६ ॥

विषण्णा हरयस्सर्वे, हनूमन् ! किमुपेक्षसे ।
विक्रमस्व [1]महावेगः [2]विष्णुस्त्रीन् विक्रमानिव ॥ ३७ ॥

विषण्णाः—असाध्यार्थप्राप्तया दीनाः । किमुपेक्षस इति । तानिति शेषः ॥ ३७ ॥

[3]ततस्तु वै जाम्बवता प्रचोदितः
प्रतीतवेगः पवनात्मजः कपिः ।
प्रहर्षयंस्तां हरिवीरवाहिनीं
चकार रूपं [4]पवनात्मजस्तदा ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये किष्किन्धाकाण्डे सप्तषष्टितमः सर्गः

---

रूपमिति । समुद्रतरणोचितमहाविग्रहमित्यर्थः । जल(३८)-मानः सर्गः ॥ ३८ ॥

इति श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे सप्तषष्टितमः सर्गः

---

* सर्वभूतानामिति निर्धारणे वा षष्ठी ॥

[1] महावेग—ज. [2] यथा विष्णुस्त्रिविक्रमः—ङ. [3] ततः कपीनामृषभेण—ज. [4] महदात्मन—ङ.



## अष्टषष्टितमः सर्गः

### [हनुमद्विजृम्भणम्]

[1]तं दृष्ट्वा जृम्भमाणं ते क्रमितुं शतयोजनम् ।
[2]वीर्येणापूर्यमाणं च सहसा वानरोत्तमाः ॥ १ ॥
सहसा शोकमुत्सृज्य प्रहर्षेण समन्विताः ।
[3]विनेदुस्तुष्टुवुश्चापि हनुमन्तं महाबलम् ॥ २ ॥

अथ गृहीतमहाविग्रहस्य हनुमतः वानरबलाश्वासनाय निजबल-प्रख्यापनपूर्वं समुद्रलङ्घनाय महेन्द्रपर्वतारोहणम् । तं दृष्ट्वेत्यादि । जृम्भमाणं—वर्धमानम् ॥ १–२ ॥

प्रहृष्टा विस्मिताश्चैव वीक्षन्ते स्म समन्ततः ।
[4]त्रिविक्रमकृतोत्साहं नारायणमिव प्रजाः ॥ ३ ॥
*संस्तूयमानो हनुमान् व्यवर्धत [5]महाबलः ।
समाविध्य च लाङ्गूलं हर्षाच्च बलमेयिवान् ॥ ४ ॥

समाविध्य—आस्फाल्य ॥ ४ ॥

तस्य संस्तूयमानस्य [6]वृद्धैर्वानरपुङ्गवैः ।
तेजसाऽऽपूर्यमाणस्य रूपमासीदनुत्तमम् ॥ ५ ॥
यथा विजृम्भते सिंहः [7]विवृद्धो गिरिगह्वरे ।
मारुतस्यौरसः पुत्रः [8]तथा संप्रति जृम्भते ॥ ६ ॥

---

* संस्तूयमानः, वानरैरिति शेषः—रा.

[1] 'तं दृष्ट्वा' इत्यादि श्लोकत्रयं 'अशोभत मुखं तस्य' इत्येतत्पूर्वं पठितं—झ. [2] वेगेना—ज. [3] विनेदुर्विस्मिताश्चापि—ज. [4] त्रिविक्रमे—ङ. [5] महाकपिः—ङ. [6] सर्वै—ङ. [7] वितते—ङ., विवृते—ज. [8] तथाऽजृम्भत वीर्यवान्—ङ.

अशोभत मुखं तस्य जृम्भमाणस्य धीमतः ।
*[1] अम्बरीषोपमं दीप्तं विधूम इव पावकः ॥ ७ ॥

अम्बरीषं—भ्राष्ट्रं, 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना'। दीप्तं—प्रज्वलत्, अत एव अङ्गारवर्णप्रतप्तभ्राष्ट्रोपमं तस्य मुखं अशोभत। स तु सर्वात्मना विधूमः पावक इवाशोभत। 'अम्बरीषोपमं दीप्तं विधूम इव पावकः' इति पाठः ॥ ७ ॥

हरीणामुत्थितो मध्यात् संप्रहृष्टतनूरुहः ।
अभिवाद्य हरीन् वृद्धान् हनुमानिदमब्रवीत् ॥ ८ ॥
[2] अरुजन् पर्वताग्राणि हुताशनसखोऽनिलः† ।
बलवानप्रमेयश्च वायुराकाशगोचरः ॥ ९ ॥
तस्याहं शीघ्रवेगस्य शीघ्रगस्य महात्मनः ।
मारुतस्यौरसः पुत्रः प्लवने नास्ति [3] मत्समः ॥ १० ॥

अरुजन्—अत्यर्थं भिन्दमानः हुताशनस्य सखा, तथा। उच्यमानगुणो वायुः वानरस्वभावोऽनिलोऽस्ति, तस्य मारुतस्यौरसः पुत्र इति योजना ॥ ९-१० ॥

उत्सहेय हि विस्तीर्णं आलिखन्तमिवाम्बरम् ।
मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ॥ ११ ॥

---

* अम्बरीषोपमं—सूर्यसदृशम् .... अम्बरीणां—आकाशवतां नक्षत्रगणानां ईषः—तेजसा पराभूतत्वं यस्मादिति, अम्बरिणः—सर्वलोकान्, आकाशचारिणो वा ईषति—स्वतेजसा प्राप्नोतीति वा—रा. † अनिलः—गमनशीलः—गो. नित्यः—रा. वस्तुतस्तु—आत्मविश्वासपूर्वकवाक्यत्वात् 'अनिलः', 'वायुः' इतिपदद्वयप्रयोगः न दोषाय ॥

[1] अम्बरीषमिवा—ङ. [2] अरुजत्—ङ. [3] तत्समः—ज.



मेरुं असङ्गेन—मध्ये विश्रमाय पादविक्षेपसङ्गराहित्येनैव। सहस्रशः परिगन्तुमुत्सह इति। सहस्रवारमेकयत्नेन प्रदक्षिणं कर्तुं शक्नोमीत्यर्थः ॥ ११ ॥

[1] बाहुवेगप्रणुन्नेन सागरेणाहमुत्सहे ।
[2] समाप्लावयितुं लोकं सपर्वतनदीह्रदम् ॥ १२ ॥
ममोरुजङ्घावेगेन भविष्यति समुत्थितः ।
[3] समुच्छ्रितमहाग्राहः समुद्रो वरुणालयः ॥ १३ ॥

उच्यमानगुणकः समुद्रः उत्थितो भविष्यति, मया सहेति शेषः ॥ १३ ॥

पन्नगाशनमाकाशे पतन्तं [4] पक्षिसेविते ।
वैनतेयमहं शक्तः परिगन्तुं *सहस्रशः ॥ १४ ॥

वैनतेयं परिगन्तुमिति। जातिस्वाभाव्यात् प्रदक्षिणमण्डलाकारपरिगमनवन्तं अहमपि सहस्रशः परिगन्तुं शक्तः, सह वा, तमतिक्रम्य वा प्रदक्षिणमण्डलं गन्तुं शक्त इत्यर्थः ॥ १४ ॥

उदयात् प्रस्थितं वाऽपि ज्वलन्तं रश्मिमालिनम् ।
अनस्तमितमादित्यं अभिगन्तुं समुत्सहे ॥ १५ ॥

उदयादित्यादि। उदयगिरेः प्रस्थितमादित्यं प्राप्य तेन सह प्रस्थितः तमादित्यं अनस्तमितमेव—तीव्ररश्मिमालिनमेव सन्तं, ततः पूर्वमस्तगिरिं प्राप्य, पुनश्च प्रत्यावृत्त्य तदभिमुखं गन्तुमुत्सहे। [उत्तरमिति अन्तमित्यनुकर्षः। अन्तः—अवसानम् (?)] ॥ १५ ॥

---

* तस्यैकपातं यावत् अहं सहस्रवारं पतितुं शक्त इति यावत्—ति.

[1] बाहु—ङ. [2] समं—ङ. [3] संमूर्छित—ङ. [4] पक्षिसेवितम्—ङ.

ततो भूमि[1]मसंस्पृश्य पुनरागन्तुमुत्सहे ।
[2]प्रसंगेनैव महता भीमेन, प्लवगर्षभाः ! ॥ १६ ॥

तत इति । उत्तरावधेरित्यर्थः । भूमिमिति । उत्तरावधि-भूमिमित्यर्थः । प्रसङ्गेन—प्रस्तुतवेगेनैव, एकयत्नेनेत्यर्थः । ततश्च एकयत्नेन शतयोजनलङ्घागमनागमनयोः कः प्रयास इति ख्यापितं भवति ॥ १६ ॥

उत्सहेयमतिक्रान्तुं सर्वानाकाशगोचरान् ।
[3]सागरं क्षोभयिष्यामि दारयिष्यामि मेदिनीम् ॥ १७ ॥

आकाशगोचराः—ग्रहनक्षत्रादयः ॥ १७ ॥

पर्वतान् [4]कम्पयिष्यामि प्लवमानः, प्लवङ्गमाः !
हरिष्याम्यूरुवेगेन प्लवमानो महार्णवम् ॥ १८ ॥
लतानां विविधं पुष्पं पादपानां च सर्वशः ।
अनुयास्यति मामद्य प्लवमानं विहायसा ॥ १९ ॥

लता, वीरुत्, अवान्तरभेद इति बहुश उक्तः । पादपानां चेति । पुष्पमित्यनुकर्षः ॥ १९ ॥

भविष्यति हि मे पन्थाः [5]स्वातेः पन्था इवाम्बरे ।
चरन्तं घोरमाकाशं उत्पतिष्यन्तमेव वा ॥ २० ॥
द्रक्ष्यन्ति *निपतन्तं च सर्वभूतानि, वानराः !
[6]महामेघप्रतीकाशं मां च द्रक्ष्यथ, वानराः ! ॥ २१ ॥

---

* निपतन्तं—नितरां आकाशे पतन्तं—इत्यर्थः ॥

[1] मसंस्पृष्ठ्वा—ञ. [2] प्रवेगेनैव—ङ. [3] सागरान्—ञ. [4] चूर्णयिष्यामि—ङ. [5] वायोः—ङ. [6] महामेरु—ञ.



स्वातेः पन्था इति । स्वातिपथः छायापथ इति पर्यायः । स तु प्रकीर्णबहुनक्षत्रकः । अस्य पन्थाश्च प्रकीर्णबहुपुष्पक इत्युपमा । चरन्तं, मध्यमार्गमाकाश इति शेषः । निपतन्तं—पारावार इति शेषः ॥

दिवमावृत्य गच्छन्तं [1]ग्रसमानमिवाम्बरम् ।
विधमिष्यामि जीमूतान् कम्पयिष्यामि पर्वतान् ॥ २२ ॥
सागरं [2]क्षोभयिष्यामि प्लवमानः समाहितः ।
वैनतेयस्य सा शक्तिः मम या मारुतस्य वा[3] ॥ २३ ॥
[4]ऋते सुपर्णराजानं मारुतं वा [5]महाजवम् ।
न तद्भूतं प्रपश्यामि यन्मां प्लुतमनुव्रजेत् ॥ २४ ॥

वैनतेयस्य मारुतस्य वा शक्तिरिति । सर्वभूतातिशायिनी प्लवनशक्तिः नान्यस्येति शेषः । यदेवं, अतः—ऋत इत्यादि । प्लुतं मां योऽनुव्रजेत, तत्तु भूतमित्यन्वयः ॥ २४ ॥

निमेषान्तरमात्रेण निरालम्बनमम्बरम् ।
सहसा निपतिष्यामि घनाद्विद्युदिवोत्थिता ॥ २५ ॥

विद्युद्दृष्टान्तः शैघ्र्येण बहुदेशव्याप्तौ ॥ २५ ॥

भविष्यति हि मे रूपं प्लवमानस्य [6]सागरे ।
*विष्णोर्विक्रममाणस्य तदा त्रीन् विक्रमानिव ॥ २६ ॥

तदेति । त्रिविक्रम इत्यर्थः ॥ २६ ॥

---

* त्रीन् विक्रमान् विक्रममाणस्य विष्णोरिवेत्यन्वयः । वीरवादत्वात् अत्र पौनरुक्त्यादिकं न दोषाय ॥

[1] ग्रसन्तमिव चा—ङ. [2] शोषयिष्यामि—ञ. [3] एतदनन्तरं—महासत्त्वगुणोपेतौ महान्तौ पुरुषर्षभौ । ऋश्यमूकं पुनश्शैलं प्लोषं रामलक्ष्मणौ ॥ नूनं नेष्यामि वैदेहीं रामस्य महषी प्रियाम्—इत्यधिकं—ङ. [4] जाने सुपर्णमात्मानं—ङ. [5] महाबलम्—ङ. [6] सागरं—ञ.

बुद्ध्या चाहं प्रपश्यामि मनश्चेष्टा च मे तथा ।
अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं, प्लवङ्गमाः ! ॥ २७ ॥

अथ 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति न्यायमाह — बुद्ध्या चेत्यादि । स्वान्तःकरणगतनिश्चयज्ञानेनेत्यर्थः । तथा मे मनश्चेष्टा—मनोव्यापारः अनुमानरूपः । किं पश्यसि ! किं विषयिणी ते मनश्चेष्टेत्यत्राह—अहं द्रक्ष्यामीत्यादि ॥ २७ ॥

मारुतस्य समो वेगे गरुडस्य समो जवे ।
अयुतं योजनानां तु गमिष्यामीति मे मतिः ॥ २८ ॥

वेगजवयोरेक एवार्थः मारुतस्य सम इत्यादौ । अयुतमिति संख्या तु अङ्गदान्तोक्तसामान्यप्रमाणदृशा, न तु परिच्छेदोऽस्ति । वस्तुतः रावणोऽपि वक्ष्यति 'न मारुतेरस्ति गतिप्रमाणम्' (सुन्द.–४८–११) इति ॥ २८ ॥

*वासवस्य सवज्रस्य ब्रह्मणो वा स्वयंभुवः ।
विक्रम्य सहसा हस्तात् अमृतं तदिहानये[1] ॥
†लङ्कां वाऽपि समुत्क्षिप्यागच्छयमिति मे मतिः ॥ २९ ॥

तदेवाप्रमेयबलत्वं प्रकाश्यते—वासवस्येत्यादि । वासवहस्ते वशे स्वर्गिभोग्यं अमृतं, ब्रह्मणो हस्ते मुक्तभोग्यं परमामृतं, तदानयनवचनं केवलं बलातिशयप्राकट्यपरम् । ब्रह्मलोकस्यैव प्रथमतो योनिजैर्दुर्गमत्वात् ॥ २९ ॥

---

* 'वासवस्य हस्ताद्वा साक्षात ब्रह्मणो हस्ताद्वा अमृतं आनये' इति लोकवदुक्तिः ॥ † एतावत्युत्साहे मया गन्तव्यदेश एव विस्मृतो भवेद्देति भवद्भिर्न चिन्तनीयमित्याशयेनाह—लङ्कामिति ॥

[1] एतदनन्तरं—तेजश्चन्द्राग्निगृह्णीयां सूर्याद्वा तेज उत्तमम्—इत्यधिकम्—ङ.



तमेवं वानरश्रेष्ठं गर्जन्त[1]ममितौजसम् ।
प्रहृष्टा हरयस्तत्र समुदैक्षन्त विस्मिताः ॥ ३० ॥

तस्य तद्वचनं श्रुत्वा ज्ञातीनां शोकनाशनम् ॥ ३१ ॥

उवाच परिसंहृष्टः जाम्बवान् [2]हरिसत्तमम् ।
वीर ! केसरिणः पुत्र ! [3]वेगवन् ! मारुतात्मज ! ॥ ३२ ॥

ज्ञातीनां विपुलः शोकः त्वया, तात ! विनाशितः ।
तव *कल्याणरुचयः कपिमुख्याः [4]समागताः ॥
मङ्गलं कार्यसिद्ध्यर्थं करिष्यन्ति समाहिताः ॥ ३३ ॥

'वेगवन्' इति संबुद्धिः । कल्याणसिद्धौ रुचिः—अभिलाषा येषां ते तथा ॥ ३२–३३ ॥

ऋषीणां च प्रसादेन कपिवृद्धमतेन च ।
गुरूणां च प्रसादेन प्लवस्व त्वं महार्णवम् ॥ ३४ ॥
†स्थास्यामश्चैकपादेन यावदागमनं तव ॥ ३५ ॥

कपिवृद्धानां मतं—आशीर्वादः इति यावत् । तव यावदागमनं एकपादेन स्थास्याम इति । प्रियं श्रोतुं त्वरयेति शेषः । एकपादेन स्थित्वा तपश्चरिष्याम इत्यन्यः, नैवं तपश्चरणमस्ति हरीणाम् ॥ ३५ ॥

त्वद्गतानि च सर्वेषां जीवितानि वनौकसाम् ।
ततस्तु हरिशार्दूलः तानुवाच वनौकसः ॥ ३६ ॥

---

* तव कल्याणं वाञ्छन्तः—ति. हितकांक्षिणः—ती. † एकपादेन स्थास्याम इति लोकवदुक्तिः ॥

[1] ममितप्रभम्—ज. [2] हरिसत्तमः—ङ. [3] हनुमन्—ङ. [4] समाहिताः—ङ.

[1] नेयं मम मही वेगं प्लवने धारयिष्यति ।
एतानीह नगस्यास्य * शिलासङ्कटशालिनः ॥ ३७ ॥

शिखराणि महेन्द्रस्य स्थिराणि च महान्ति च ।
एषु वेगं करिष्यामि महेन्द्रशिखरेष्वहम् ॥ ३८ ॥

प्लवन इति । सतीति शेषः । शिलासङ्कटं—शिलावरणम् । † कटे वृतौ वर्षे च । अत एव—स्थिराणीति ॥ ३६-३८ ॥

नानाद्रुमविकीर्णेषु धातुनिष्यन्दशोभिषु ।
एतानि मम [2] निक्षेपं पादयोः प्लवतां वराः ! ॥ ३९ ॥
प्लवतो धारयिष्यन्ति योजनानामितः शतम् ॥ ४० ॥

धातुनिष्यन्दः—धातुसमूहः ॥ ३९-४० ॥

ततस्तं मारुतप्रख्यः स हरिर्मारुतात्मजः ।
आरुरोह [3] नगश्रेष्ठं महेन्द्रमरिमर्दनः ॥ ४१ ॥
वृतं [4] नानाविधैर्वृक्षैः मृगसेवितशाद्वलम् ।
लताकुसुमसंबाधं नित्यपुष्पफलद्रुमम् ॥ ४२ ॥

मृगैः सेवितः शाद्वलः—बालतृणदेशः यस्य स तथा ॥ ४२ ॥

सिंहशार्दूल[5] चरितं मत्तमातङ्गसेवितम् [6] ।
मत्तद्विजगणोद्घुष्टं सलिलोत्पीडसंकुलम् ॥ ४३ ॥

सलिलोत्पीडः—निर्झरः ॥ ४३ ॥

---

* शिलासङ्कटशालिनः—शिलातुङ्गप्रदेशभूयिष्ठस्य—गो. † धातुपाठे तु ' कटे वर्षावरणयोः ' इति दृश्यते ॥

[1] कोऽपि लोके न मे वेगं—ज. [2] वेगं हि शिखराणि महान्ति च—ज. [3] गिरिश्रेष्ठं—ङ. [4] नानाविधैः पुष्पैः—ज. [5] सहितं—ज. [6] एतदनन्तरं—अनेकश्वापदाकीर्णं नानाविहगसेवितम् । आक्रम्य शृङ्गं पादाभ्यां उत्पातुमुपचक्रमे—इत्यधिकं—झ.



महद्भिरुच्छ्रितं शृङ्गैः महेन्द्रं स महाबलः ।
विचचार हरिश्रेष्ठः महेन्द्रसमविक्रमः ॥ ४४ ॥

पादाभ्यां पीडितस्तेन महाशैलो महात्मनः ।
[1] ररास सिंहाभिहतः महान् मत्त इव द्विपः ॥ ४५ ॥

ररासेति । स्ववृत्तिप्राणिशब्दद्वारेणेति शेषः ॥ ४५ ॥

मुमोच सलिलोत्पीडान् विप्रकीर्णशिलोच्चयः ।
वित्रस्तमृगमातङ्गः प्रकम्पितमहाद्रुमः ॥ ४६ ॥

[2] नानागन्धर्वमिथुनैः * पानसंसर्गकर्कशैः ।
उत्पतद्भिश्च विहगैः विद्याधरगणैरपि ॥ ४७ ॥

पानसंसर्गे स्त्रीसंसर्गे च कर्कशाः—अत्यासक्तचित्ताः । गन्धर्वाणां तथात्वं स्वाभाव्यम् ॥ ४७ ॥

[3] त्यज्यमानमहासानुः [4] सन्निलीनमहोरगः ।
चलशृङ्गशिलोत्पातः † तदाऽभूत् स महागिरिः ॥ ४८ ॥

शैलशृङ्गस्य शिलानां उत्पातः—पातनं यस्य स तथा ॥ ४८ ॥

---

* पानप्रवृत्तौ दृढाभिनिवेशैः—गो. † उद्घातः (पा.)—समूहः—गो.

[1] रराज—ङ. ररासेत्याद्यर्धत्रयस्थाने—विशीर्णः सहसाऽधस्तात् भूमीसमशिराः स्थितः । हनूमच्चरणद्वन्द्वपीडितस्य गिरेस्तदा । बाष्पासारा इवापेतुः सर्वतस्तत्र निर्झराः । हनूमच्चरणाक्रान्तात् गिरिशृङ्गादधो द्रुताः । लम्बमानास्तु भुजगाः विशीर्णान्त्रा इवाबभुः । सम्भ्रान्तवन्यमातङ्गप्रपीडितमहाद्रुमः—इत्यधिकम्—झ. [2] नागगन्धर्वै—ङ. [3] त्यज्यमानेत्याद्यर्धद्वयस्थाने—वानरेन्द्रपदाघातसंकीर्णतटनिस्वनैः । रक्षसां हि महोत्पातः तदाऽभूत्स महागिरिः ॥ गुहाभ्यो निष्पतद्भिश्च सिंहैरुन्नतकन्धरैः । हरिपादावभग्नोऽद्रिः बलाऽस्थिरिव बभौ—इत्यधिकम्—झ. [4] स्कन्धलीन—ङ.

[1] निःश्वसद्भि[2]स्तदार्तैस्तु भुजङ्गैरर्धनिस्सृतैः ।
सपताक इवाभाति स तदा धरणीधरः ॥ ४९ ॥
* ऋषिभिस्त्रासंभ्रान्तैः त्यज्यमानशिलोच्चयः ।
[3] सीदन् महति कान्तारे सार्थहीन इवाध्वगः ॥ ५० ॥
सवंगवा नु वेगसमाहितात्मा
हरिप्रवीरः [4] परवीरहन्ता ।
[5] मनस्समाधाय महानुभावः
† जगाम लङ्कां मनसा [6] मनस्वी ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसाहस्रिकायां संहितायां
किष्किन्धाकाण्डे अष्टषष्टितमः सर्गः

---

मनसा जगामेति । सस्मारेत्यर्थः । कर्म(५१)मानः सर्गः ॥ ५१ ॥

इति श्रीमन्माधवयोगिविरचितायां श्रीमद्रामायणामृतकतकटीकायां किष्किन्धाकाण्डे
अष्टषष्टितमः सर्गः

किष्किन्धाकाण्डः समाप्तः

---

* ऋषिभिः त्यज्यमानः शिलोच्चयः—पर्वतः महति कान्तारे सार्थहीनोऽध्वग इव सीदन्नास्त-ति. † जगाम—प्राप—रा.

[1] निष्पतद्भि—ङ. [2] स्तदा तैस्तु—ञ. [3] आसीद्—ङ. [4] पवनात्मजः कपिः—ङ. [5] वत—ङ. [6] हनूमान्—ङ.

